श्रीकृष्णः शरणं मम

महर्षिवेदव्यासप्रणीतं

# श्रीमद्भागवतमहापुराणम्

अनेकव्याख्यासमलङ्कृतम्

## चतुर्थः स्कन्धः

तृतीयं फलम्



सम्पादकः
कृष्णशङ्करशास्त्री

वि. सं. २०२२

श्रीहरिः

# समर्पणम्

श्रीवावुलनाथस्य भगवतः पुण्यालये श्रीमद्भागवतस्याष्टोत्तरशतपारायणप्रवचनप्रस्तावे विश्वमेधाविमूर्धन्येभ्यो भारतवर्षजनमनःशिरोऽधिविराजितेभ्यः श्रीराधापति-वचःपीयूषपान-मत्तपूतचित्तेभ्यः, तल्लहरीसमालापित-निखिल-जनपदजनमानसेभ्यः, वेदान्ततत्त्वविद्भ्यः, स्वनामधन्येभ्यः

## भारतराष्ट्रपतिश्रीराधाकृष्णसूरिभ्यः

श्रीमद्भागवतस्य चतुर्थः स्कन्धः समुपायनीक्रियते तस्मिन्नवसरे निवेदनमङ्गलम्—

चतुर्धा संभक्तः प्रकरणविभागैः सुरुचिरः,
चतुर्थोऽयं स्कन्धः हरिकरसरोजस्तु वरदः।
कृपावर्षिश्रीमज्जनगणशिरःशोभिवरदे,
शुभे राधाकृष्णाञ्जलिमृदुपुटे संविलसताम्॥
यैः स्वीकृतं सुमतिभिः कृतिभिः सुविज्ञैः,
प्रेम्णाऽऽदरेण कृपया च समर्पणं नः।
तेषां कृते सुकुसुमाञ्जलिमन्तरेण,
देयं नु वाऽस्ति मधुरेण शुकामृतेन॥

देवदीपोत्सवीया कार्तिकपूर्णिमा
चन्द्रवासरः—२०२३

निवेदयति विनीतः
"अतिथिः"

श्रीकृष्णः शरणं मम

श्रीराधाकृष्णाभ्यां नमः

महर्षिवेदव्यासप्रणीतं

# श्रीमद्भागवतमहापुराणम्

श्रीधरस्वामिविरचित-भावार्थदीपिका, श्रीवंशीधरकृत-भावार्थदीपिकाप्रकाशः, श्रीराधारमणदासगोस्वामिप्रणीत-दीपिनी, श्रीमद्वीरराघवाचार्यभावित-भागवतचन्द्रिका, श्रीमद्विजयध्वजतीर्थरचित-पदरत्नावली श्रीमज्जीवगोस्वामिनिष्पादित-क्रमसंदर्भः, श्रीमद्विश्वनाथचक्रवर्तिसाधित-सारार्थदर्शिनी, श्रीमच्छुकदेवनिर्वर्तित-सिद्धान्तप्रदीपः, गोस्वामिश्रीगिरिधरलाल-विहित-बालप्रबोधिनी, इत्येताभिर्व्याख्याभिः भाषानुवादेन च

समलङ्कृतम् ।

## चतुर्थः स्कन्धः



सम्पादकः

श्रीदलसुखरामात्मजः कृष्णशंकरः शास्त्री

'अभिनवशुकः' वेदान्ताचार्यः साहित्यतीर्थः श्रीभागवतसुधानिधिः ।

प्रकाशकाः

कृष्णशङ्करः शास्त्री

कृष्णराजभाई ठाकरसी

जयराजभाई द्वारकादासः

( श्रीविद्याहितनिधिसदस्याः )

ई. सन् १९६६ ] [ वि. सं. २०२२

प्रकाशकाः
कृष्णशङ्करः शास्त्री
कृष्णराजभाई ठाकरसी
जयराजभाई द्वारकादासः
( श्रीविद्याहितनिधिसदस्याः )



प्राप्तिस्थानानि

कृष्णशङ्करशास्त्री
आतिथेयम्, कालेजरोड
नडियाद, जि० खेड़ा, गुजरात

कृष्णराजभाई ठाकरसी
१६, एपोलोस्ट्रीट, फोर्ट
बम्बई–१

प्राणलाल आचार्यः
श्रीगुर्जर छात्र सहायक समिति
कर्णघंटा, वाराणसी ( उ० प्र० )

मुद्रकः
बलदेवदासः
संसार प्रेस, 'संसार' लिमिटेड
काशीपुरा, वाराणसी

# श्रीमद्भागवतमहापुराणचतुर्थस्कन्धस्थविषयानुक्रमः





ॐ तत्सत्

श्रीगणेशाय नमः

# श्रीमद्भागवतम्

## अनेकव्याख्यासमलङ्कृतम्

## चतुर्थः स्कन्धः

### अथ प्रथमोऽध्यायः

ॐ नमो भगवते वासुदेवाय

मैत्रेय उवाच

मनोस्तु शतरूपायां तिस्रः कन्याश्च जज्ञिरे । आकूतिर्देवहूतिश्च प्रसूतिरिति विश्रुताः ॥ १ ॥
आकूतिं रुचये प्रादादपि भ्रातृमतीं नृपः । पुत्रिकाधर्ममाश्रित्य शतरूपानुमोदितः ॥ २ ॥
प्रजापतिः स भगवान् रुचिस्तस्यामजीजनत् । मिथुनं ब्रह्मवर्चस्वी परमेण समाधिना ॥ ३ ॥
यस्तयोः पुरुषः साक्षाद्विष्णुर्यज्ञस्वरूपधृक् । या स्त्री सा दक्षिणा भूतेरंशभूतानपायिनी ॥ ४ ॥

श्रीधरस्वामिविरचित-भावार्थदीपिका

श्रीगणेशाय नमः

नमः श्रीपरमहंसास्वादितचरणकमलचिन्मकरंदाय भक्तजनमानसनिवासाय श्रीरामचंद्राय ।
अथैकत्रिंशताध्यायैर्विसर्गस्तुर्य ईर्यते । विसर्गस्त्वीश्वराधीनैर्ब्रह्ममन्वादिभिः कृतः ॥ १ ॥
तत्र तु प्रथमेऽध्याये मनुकन्यान्वयाः पृथक् । वर्ण्यंते यत्र यज्ञादिमूर्तिभिः प्रभवो हरेः ॥ २ ॥

मनुकन्यान्वयं विस्तरेण वक्तुमाह । मनोस्त्विति । चकाराद्द्वौ पुत्रौ च ॥ १ ॥ ❋ ❋ तु शब्दादन्यतोऽपि पुत्रलाभः सूचितस्तं दर्शयितुमाह । पुत्रिकाधर्ममाश्रित्येति । "अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् ॥ अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ।" इति भाषाबंधेन कन्यादानं पुत्रिकाधर्मः । स चाभ्रातृकायां कन्यायां पुत्रार्थिन एव प्रसिद्धस्तथापि पुत्रबाहुल्यकामस्तथा कृतवानित्याह । भ्रातृमतीमपीति ॥ २ ॥ ❋ ❋ मिथुनं पुरुषं स्त्रियं च । समाधिना ईश्वरध्यानेन ॥ ३ ॥ ❋ ❋ भूतेर्लक्ष्म्या अंशभूता अतस्तयोर्विवाहो न विरुद्ध इति भावः ॥ ४ ॥

---

१. प्रा० पा०—सुव्रताः ।

## श्रीवंशीधरकृत-भावार्थदीपिकाप्रकाशः

ॐ स्वस्ति श्रीगणेशाय नमः

श्रीकृष्णं बल्लवीनाथं यशोदानन्ददायिनम्। प्रणम्य कुर्वे तुर्य्यस्य स्कन्धस्य व्याकृतिं मुदा ॥ १ ॥

अथ सर्गकथनोत्तरम्। तुर्ये चतुर्थस्कंधे। ईश्वराधीनैरीश्वरप्रेरितैः कृतः सर्गो विसर्गः एकवचनांतस्याप्येकत्रिंशच्छब्दस्य बह्वर्थबोधकत्वादध्यायैरित्यनेनान्वयो न विरुद्धः। 'विंशत्याद्याःसदैकत्वे' इत्यमरात् ॥ ( १ ) ॥ "एकेन मनुकन्यानामन्वयाः कथिता इह। ततो रसैर्दक्षयज्ञध्वंसो भूयः प्रवर्त्तना ॥ ततो ध्रुवस्य चरितं पंचभिः श्रीपृथोस्ततः। एकादशभिरध्यायैरष्टभिश्च प्रचेतसाम्। इत्येवं क्रमशो ज्ञेयो विज्ञैः प्रकरणक्रमः ॥" ॥ यत्र मनुकन्यान्वयेषु। आदिना कपिलादिग्रहः ॥ ( २ ) ॥ पूर्वोक्तमनुवदति प्रस्तुतलाभाय मनोरिति विश्रुताः प्रसिद्धाः ॥ १ ॥ ❀ ❀ मनोस्त्विह तु पदप्रयोगफलं दर्शयति अभ्रातृकां भ्रातृरहिताम्। अस्यां मत्कन्यायाम्। यद्वाकूतेः पुत्रो भगवान्यज्ञो भविष्यतीति सर्वज्ञत्वेन दौहित्रः सन्नपि मे पुत्र एव यथा स्यात्तथा भावेन वा पुत्रिकाधर्ममाश्रितवानिति। नृपः स्वायंभुवः। अनुमोदितः सुष्ठु विमृष्टमित्युक्तः ॥ २ ॥ ❀ ❀ स रुचिः। भगवाननल्पज्ञानः। तस्यामाकूत्याम्। ब्रह्मवर्चस्वी वेदाध्यानादिनातीव तेजस्वी। परमेण श्रीहरिध्यानाविष्टेन। समाधिना चित्तैकाग्र्येण। अनेन रुचेर्ब्राह्मणत्वं लक्ष्यते ॥ ३ ॥ तयोः कन्याकुमारयोर्मध्ये 'धृञ्-धारणे' जकारांतोपि धातुः, 'धातूनामप्यनंतत्वान्नानार्थत्वाच्च सर्वथा' इत्यनुभूतिस्वरूपोक्तेः। 'भूतिः श्रीभस्मजन्मसु' इति यादवः। अतो लक्ष्म्यंशत्वात्। तयोर्यज्ञदक्षिणयोः। इति भाव इति। "लक्ष्मीर्नान्यस्य भार्या स्याद्विना विष्णुं स्वयं प्रभुम्" इत्यादिपुराणादयमाशयः ॥ ४ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

श्रीराधारमणो जयति

चतुर्थे तु चतुर्थेशं चतुर्थाधिकदं प्रभुम्। चतुर्थाश्रमवन्द्यं च श्रीचैतन्यं भजामहे ॥ १ ॥
प्रोत्साहितोऽसि चेन्नाथ ! भावानां दीपने ह्ययम्। तज्ज्वरादिककष्टन्तु कस्मान्मे दीयते प्रभो ॥ २ ॥
त्वत्पाल्यमानेऽप्यारब्धं प्रबलं चेन्महाप्रभो। तदा शास्त्रस्य व्याकोपो राजसंप्रार्थने यथा ॥ ३ ॥

तुर्य्ये चतुर्थस्कंधे कृतश्चराचरसर्गो विसर्गः। एकत्रिंशदध्यायमध्ये यत्र येष्वन्येषु तुशब्दार्थस्तु स्वयमेव व्याख्यास्यते ॥ १ ॥ ❀ ❀ भ्रातृमतीमपीति मनोराचारात्तथादाने विधिरपि दर्शितः। तेन सभ्रातृकामित्यक्षरपरिवर्त्तोऽपि कर्त्तव्यः ॥ २ ॥ ❀ ❀ सृष्ट्यनुकूलवैशिष्ट्यं समाधेः परमत्वम् ॥ ३ ॥ ❀ ❀ तयोर्मिथुनशब्दवाच्यस्त्रीपुरुषयोर्मध्ये। अतः विष्णुलक्ष्मीरूपत्त्वात् तयोर्लोकव्यवहारेण भगिनीभ्रात्रोरपि ॥ ४ ॥

## श्रीमद्वीरराघवव्याख्या

श्रीमते रामानुजाय नमः

तृतीये 'स्वायंभुवस्य च मनोर्वंशः परमसंमतः' इति स्वयंभुवचरित्रतत्संतती पृष्टे। तत्र स्वायंभुवचरितमभिधाय 'एतत्ते आदिराजस्य मनोश्चरितमद्भुतम्। वर्णितं वर्णनीयस्य तदपत्योदयं शृण्वि'ति तत्संततिकथनं प्रतिज्ञाय तावद्देवहूतिसंततिं प्रक्रम्य कलानुसूयादयो नव पुत्रिकाः कपिलाख्यः पुत्रस्तच्चरितमित्येतानि कथितानि इदानीमस्मिँस्कंधे मनुपुत्रस्योत्तानपदः संततिं विस्तरेण वक्ष्यमाणस्तत्रादौ आकूतिप्रसूत्योर्वंशं देवहूतिदुहितृसंततिं चाह मैत्रेयः मनोस्त्विति। हे सुव्रत विदुर ! आकूत्यादयस्तिस्रः कन्याः मनोः स्वायंभुवात्तद्भार्यायाः शतरूपायाः जज्ञिरे। चकारात् द्वौ पुत्रौ जज्ञाते इत्यर्थः ॥ १ ॥ ❀ ❀ तुशब्दादन्योऽपि पुत्रलाभः सूचितस्तद्दर्शयितुमाह आकूतिमिति। नृपो मनुः भ्रातृमतीं प्रियव्रतोत्तानपादभ्रातृमतीमपि स्वदुहितरमाकूतिं पुत्रिकाधर्ममाश्रित्य "अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम्। अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति" इति भाषाबंधनपूर्वकप्रदानं पुत्रिकाधर्ममाश्रित्य पुत्रबाहुल्यकाम उक्तभाषाबंधनं कृत्वा रुचये प्रादात् दत्तवान् ॥ २ ॥ ❀ ❀ स लब्धभार्यो ब्रह्मतेजस्वी ब्रह्मवर्णोचितधर्मानुष्ठानजनिततेजोविशेषयुक्तः भगवान्प्रजापतिः रुचिः सर्वोत्कृष्टेन समाधिना भगवंतमाराध्य तस्यामाकूत्यां मिथुनं स्त्रीपुंमिथुनं अजीजनत् उत्पादयामास ॥ ३ ॥ ❀ ❀ किं तन्मिथुनं यदजीजनत्तत्राह यस्तयोरिति। तयोरपत्ययोर्मध्ये यः पुरुषः स यज्ञः क्रतवस्त एव स्वं रूपं शरीरं तद्बिभर्तीति तथा साक्षाद्विष्णुः विष्णोरंशः अयमपि कपिलवदंशावतारः यज्ञस्वरूपभृदित्यनेन यज्ञनामत्वं सूचितं तयोर्या स्त्री सा नाम्ना दक्षिणा भूतेर्लक्ष्म्या अंशभूता विष्णोरनपायिनी। अतस्तयोर्मिथो विवाहो न विरुद्ध इति भावः ॥ ४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

श्रीमध्ववल्लभहयग्रीवाय नमः

पशुपतिरपि प्रेक्षादक्षो यतोऽगमदुन्नतिं सकलजनतावंद्यं स्थानं भुवो यदनुग्रहात् ।
पृथुरथ महीदोहात्कीर्तिं शुभां समपीपलत्तमिमजितं वंदारूणाममंदमुदं नुमः ॥ १ ॥
अभिनवरविप्रद्योतालीविभासिवपुःश्रियं हरिहयहरब्रह्मश्लाघ्यप्रभूतसदाशिषम् ।
कमलनयनस्वातंत्र्येक्षादयादरसत्क्रियां शरणमनिशं विश्वस्यास्योदयां श्रियमीमहे ॥ २ ॥
तृतीयस्कंधजलधेरुन्मग्नोऽहं कथंचन । चतुर्थस्कंधसरसीमवगाढुं पुनर्यते ॥ ३ ॥
मानेतिहाससंघातैरच्युतांघ्रिसरोरुहे । आत्मप्रद्योतनी भक्तिः पुनश्च प्रतिपाद्यते ॥ ४ ॥

अत्रादौ हरौ निरतिशयप्रेमलक्षणभक्तिविधानाय पशुपतेर्दक्षाध्वरध्वंसलक्षणचरित्रं वक्तुं स्वायंभुवमनुचरितमनुवदति मनोस्त्विति । "पुनः पुनः कथां प्राहुरभ्यासादुत्तमं फलम् । विज्ञापयितुकामास्तु विद्वांसस्तत्र तत्र तु" इति वचनात् पुनरुक्तकथानुवादो न दोषायेति ज्ञातव्यं, विशेषवाचिना तुशब्देनापि फलाधिक्यं विशिनष्टि द्वौ पुत्रौ चेति । पुत्रानुकर्षणार्थश्चकारः ॥ १ ॥ ❋ ❋ भ्रातृमतीमप्याकूतिं पुत्रिकाधर्ममाश्रित्य रुचये प्रादादित्यन्वयः । अस्या यः पुत्रो भवेत्स मत्पुत्र एवेति प्रतिज्ञाय प्रदानं पुत्रिकाधर्मः राजार्थं न पुत्राभावान्मनुना दौहित्रः पुत्रत्वेन वृतः । किंतु स साक्षाद्विष्णुरिति जानता तत्पितृत्वे ज्ञानातिशयवान्मुक्तौ सुखातिशयवान् स्यामिति भ्रातृमतीमित्यनेन पुत्रवत्त्वप्रतीतेः । प्रियव्रतोत्तानपादाविति वक्ष्यमाणत्वाच्च ॥ २ ॥ ❋ ❋ प्रजापतिशब्दस्यानेकाभिधेयवृत्तित्त्वेन कोऽत्र विवक्षित इत्यत उक्तं रुचिरिति राजपुत्रीत्वेन परिचर्यादावहंकारसंभवेन प्रेमाभावेन तत्त्यागसंभवेनापत्यानुत्पत्त्या मनोराशा निष्फलाभूदिति लोकापवादः परिहृतोऽनेन अत एव भगवानिति ॥ ३ ॥ ❋ ❋ मिथुनं विवेचयति यस्तयोरिति । नाम्ना यज्ञ इति स्वरूपधृक् औत्पत्तिकसौंदर्यधारी यज्ञस्वरूपधृगित्येकं वा पदं "यज्ञो विष्णुर्देवता" इति श्रुतेः । अनेन विष्णुनामाज्ञं यजमानं व्यावर्तयति भूतेर्लक्ष्म्याः "भूति श्रीभसजन्मसु" इत्यभिधानम् । अनपायिनी जन्ममरणरहितेत्यनेनास्याः श्रीनारायणवदाविर्भाव एवेति ध्वनयति ॥ ४ ॥

### श्रीमज्जीगोस्वामिकृतः क्रमसन्दर्भः

श्रीकृष्णाय नमः

चतुर्थे क्रमसन्दर्भे सन्दर्भाणां समाहृतिः । क्रियते यन्निदेशेन स मेऽनन्यगतेर्गतिः ॥ १ ॥

अथ चतुर्थस्कन्धस्य क्रमसन्दर्भः, तथापि तत्र भगवज्जन्म ज्ञात्वा तथा कृतवानित्याह अपि भ्रातृमतीमपि अस्मात् सदाचारात् भ्रातृमत्याऽपि तथा दाने विधिर्ज्ञेयः । तेन विधिबलेन मन्त्राक्षरपरिवर्त्तश्च कर्तव्यः ॥ २–७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

प्रणम्य श्रीगुरुं भूयः श्रीकृष्णं करुणार्णवम् । लोकनाथं जगच्चक्षुः श्रीशुकं तमुपाश्रये ॥ १ ॥
गोपरामाजनप्राणप्रेयसेति प्रभूष्णवे । तदीयप्रियदास्याय मां मदीयमहं ददे ॥ २ ॥
चतुर्थे कथ्यते सैकत्रिंशाध्यायवति स्फुटम् । विसर्गो यः कृतो ब्रह्ममन्वाद्यैरीश्वराज्ञया ॥ ३ ॥
एकेन मनुकन्यानामन्वयाः कथिता इह । ततः षड्भिर्दक्षयज्ञध्वंसो भूयः प्रवर्त्तते ॥ ४ ॥
ततो ध्रुवस्य चरितं पञ्चभिः श्रीपृथोस्ततः । एकादशभिरध्यायैरष्टभिस्तु प्रचेतसाम् ॥ ५ ॥
तत्र तु प्रथमेऽध्याय आकूत्यादित्रिकान्वये । वर्ण्यन्ते यज्ञदत्तश्रीनारायणजसत्कथाः ॥ ६ ॥

पूर्व्वस्कन्धे कर्दमकथाप्रसङ्गेन मनोर्द्वितीयायाः कन्याया देवहूतेर्वंशानुक्त्वा पुनस्तस्यान्वयं क्रमेण वक्तुं प्रथमायाः कन्याया आकूतेर्वंशमाह मनोस्त्विति । ब्रह्मणः पुत्राणां मध्ये मनोस्त्विति तुशब्देन मरीच्यादिभ्यस्तस्य भक्त्युत्कर्षः सूचितः, चकारात् द्वौ पुत्रौ च ॥ १ ॥ ❋ ❋ भ्रातृमतीमपि कन्यां पुत्रिकाधर्म्ममाश्रित्य प्रादात् न केवलं पुत्रबाहुल्यकाम एव किन्तु आकूतिपुत्रस्य भगवदवतारत्वं सर्व्वज्ञतया ज्ञात्वा भगवान्मम दौहित्रोऽपि पुत्रोऽपि भूयादिति काम इति भावः । 'अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम् । अस्यां यो जायते पुत्रः स मे पुत्रो भवेदि'ति भाषाबन्धेन कन्यादानं पुत्रिकाधर्म्मः । अत्राभ्रातृकामित्यल्पार्थे नञ् ॥ २ ॥ ❋ ❋ भूतेर्लक्ष्म्या अंशभूता अतस्तयोर्विवाहो न विरुद्ध इति भावः ॥ ४ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

श्रीकृष्णाय नमः

श्रीहंसं श्रीकुमारं च देवर्षिं निंबभास्करम्। श्रुतिसिद्धांतदं नत्वा श्रीगुरुं तदनुग्रहात्॥ १॥
अथैकत्रिंशदध्यायनिबद्धेऽस्मिन् चतुर्थके। विसर्गार्थे मितैर्वर्णैः प्रदीपोऽयं विरच्यते॥ २॥

तृतीये स्वायम्भुवस्यापत्येषु देवहूतिसंततिरुक्ताइदानीमस्मिन्नध्याये स्वायंभुवसंतत्यनुवादपूर्वकमाकूतिप्रसूत्योर्वंशं यज्ञादिरूपेण विष्णोः प्रादुर्भावं देवहूतिदुहितृसंततिं चाह मनोस्त्विति। मनोः सकाशाज्जज्ञिरे जाताः चकारात् द्वौ पुत्रौ जज्ञाते॥ १॥ ❀ ❀ यद्यपि "अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम्। अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति" इति पुत्रिकाधर्मे भाषाबंधस्तथापि पुत्रबाहुल्यकामो नृपः स्वायंभुवः भ्रातृमतीमप्याकूतिं पुत्रिकाधर्ममाश्रित्य रुचये प्रादात् दत्तवान्॥ २॥ ❀ ❀ स ब्रह्मवर्चस्वी ब्रह्मतेजोयुक्तः अत एव परमेण परमेश्वरसंबंधिना समाधिना मिथुनं पुत्रं पुत्रीं च अजीजनत् उत्पादयामास॥ ३॥ ❀ ❀ परमसमाधेः फलमाह य इति। तयोर्मध्ये यः पुरुषः स विष्णुः यतो यज्ञमूर्तिं बिभर्तीति तथा भूतेः श्रियः अंशभूता विष्णोः अनपायिनी अतस्तयोर्विवाहो युक्तः॥ ४॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

श्रीगोपीजनवल्लभाय नमः

[1]यत्पादपङ्कजध्यानं सर्वारिष्टनिवारकम्। पूरकं भक्तकामानां तं मुकुन्दमहं भजे॥ १॥
[2]एवं सर्गस्तृतीये तु सफलः सुनिरूपितः। अथैकत्रिंशताध्यायैर्विसर्गस्तुर्य ईर्यते॥ २॥
विसर्गो लौकिको ह्यत्र कार्यं [3]बुद्ध्या चतुर्विधम्। पौरुषस्त्वयमेवोक्तो माहात्म्यं सर्वथा यतः॥ ३॥
धर्मार्थकाममोक्षाख्यं कार्यं कृष्णाङ्घ्रिसेवया। सिद्ध्य[4]ेत्तु सर्वजीवानां चतस्रः प्रक्रियास्ततः॥ ४॥
सप्तभिः पञ्चभिश्चैव ह्येकादशभिरष्टभिः। अध्यायैः साशयैरत्र क्रमशो विनिरूपिताः॥ ५॥
प्रथमे तु सतीदेहपरित्यागः समीरितः। दक्षस्यापाततोनर्थकरोऽन्ते वस्तुतोऽर्थकृत्॥ ६॥
मनुकन्यान्वयकथा" प्रसङ्गार्थमिहोदिता। सकलश्रोतृवर्गस्यानुग्रहार्थमिति स्थितिः॥ ७॥

पूर्वस्कन्धे तावत्सामर्थ्यकारणीभूतसङ्घातारम्भकभूतमात्रेन्द्रियधियां जन्मरूपं सर्गं निरूप्य तादृशभूतमात्रेन्द्रियादिभिरारब्धस्य सङ्घातस्य यत्कार्यं पुंरुषकारापरपर्यायं सामर्थ्यं विसर्गपदवाच्यं तदिदानीं चतुर्थे स्कन्धे निगद्यते। "विसर्गः पौरुषः स्मृत" इति मूलोक्तविसर्गलक्षणवाक्यात् पुरुषकारस्यैव विसर्गपदार्थत्वात्, तेन च सामर्थ्येनामोघलीलेनाद्भुतकर्मणा भगवतोत्पादितानां प्राणिनां तदनुग्रहेण चतुर्विधपुरुषार्थसिद्धिर्भवतीति प्रदर्शनायात्र चत्वारि प्रकरणानि। तत्र प्रथमेन प्रकरणेन यज्ञात्मकधर्मस्याग्निष्टोमात्यग्निष्टोमोक्थषोडश्यतिरात्राप्तोर्यामवाजपेयभेदैः सप्तसंस्थत्वात्सप्तभिरध्यायैर्दक्षस्य धर्मसिद्धिनिरूपणम्। द्वितीयेन पञ्चभिरध्यायैर्ध्रुवस्यार्थसिद्धिनिरूपणम्। तृतीयेनैकादशभिरध्यायैः पृथोः कामसिद्धिनिरूपणम्। चतुर्थेनाष्टभिरध्यायैः पुरंजनप्राचीनबर्हिःप्रचेतसां मोक्षसिद्धिनिरूपणम्। एवमेकत्रिंशताध्यायैश्चतुर्थस्कन्धे विसर्गनिरूपणम्। तत्र प्रथमेऽध्याये सतीदेहत्यागो निरूपणीयः। स चापाततो दक्षस्यानर्थकरोपि गर्वनिर्हरणद्वारा तस्य धर्मरूपपुरुषार्थसाधक एव, स एवाध्यायार्थः। वंशकथया प्रारंभस्तु प्रसङ्गसङ्गतिबोधनार्थम्, न त्वध्यायार्थत्वेनेति संक्षेपः। अथ व्याख्या। पूर्वस्कन्धे 'स्वायंभुवस्य च मनोर्वंशः परमसंमतः। कथ्यताम्' इत्यादिना मनुवंशं पृच्छन्नादौ रुचिकर्दमदक्षेभ्यो ब्रह्मपुत्रेभ्य आकूतिदेवहूतिप्रसूतीनां वंशविस्तारं विदुरः पृष्टवान् तत्प्रश्नानुसारेण कर्दमाद्देवहूत्यां कपिलावतारचरित्रं प्रथमतः कथयन् मैत्रेयो देवहूतिमोक्षान्तां सर्गलीलां कथितवान्। इदानीं

---

१. श्रीकृष्णाय नमः॥ श्रीवागीश्वराय नमः॥ वंदे वागीशचरणौ शरणं भजतां सताम्॥ धर्मार्थकाममोक्षाख्याः प्रक्रियाः परमा यतः॥ १॥ अथात्र मंगलाचरणे टीकाकारेण स्कन्धार्थो व्यज्यते इति सूक्ष्ममीक्षणीयम्। २ निबंधकारिके अक्षरशोनूदिते, तदर्थस्तु तत्र यथा एवं सर्ग इति। अलौकिकः। अनेन सर्वा लीला शृंखलारूपा अपि प्रत्येकं सफलाः, तेनैकदेशसमुदाययोः सर्वत्र फलसिद्धिर्ज्ञापिता। अथेतीति भिन्नप्रक्रमे। तेन लौकिको विविधः सर्गो निराकृतः विशिष्टः सर्गो हि विसर्गः देवतारूपाः। ते च वसुरुद्रादित्यरूपा देवाः भगवतो लीलाया विपरीतत्वाद्वसवोऽतो निरूप्यन्ते। रुद्रा मध्ये आदित्या आदौ, अत एव सत्रिंशदध्यायाः चतुर्थे स्कन्धे विसर्गलक्षणमाह सर्वयुक्तरजोभाजो इति। सर्वैर्जीवैर्युक्तं यद्रजः क्रियाशक्तिः तेनात्रोत्पद्यमानाः सर्वसामर्थ्ययुक्ता भविष्यंतीति विशिष्टत्वं कार्यपदं मुक्तजीवाभिप्रायम्। अत्रोत्पद्यमानाः सामर्थ्यं प्रकटीकृत्य मुक्ता भविष्यंति। अतोऽलौकिको विसर्गः। एवं स्कंधार्थं निरूप्य प्रकरणभेदार्थमाह--कार्यं बुद्ध्या चतुर्विधमिति। यद्यपि भगवत्सामर्थ्यमनंतं तथापि मद्बुद्ध्या धर्मार्थकाममोक्षा एव साध्या इति। कार्यं चतुर्विधं भागवते विसर्गलक्षणम्। तत्र पौरुषपदं न पुरुषात् ब्रह्मादीनामुत्पत्तिमाह। किंतु माहात्म्यं सर्वथा यतो ज्ञानं भवति तेन पुरुषकारो विसर्ग इति तत्त्वदीपप्रकाशे। ३ तस्येति ख–पुस्तकपाठः। ४ श्चात्रेति ख–पुस्तकपाठः।

धर्मप्रकरणत्वाद्धर्मपीठिकारूपं तासामेव मनुकन्यानामन्वयमनुक्रमेण कथयिष्यन्नादौ पूर्वापरसंगतिप्रदर्शनार्थं पूर्वोक्तमनुवदति—मनोस्त्विति। मनोः सकाशाच्छतरूपायां तत्पत्न्यां तिस्रः कन्या जज्ञिरे प्रादुर्भूताः। चकारेण द्वौ पुत्रौ जाताविति ज्ञेयम्। तासां कन्यानां महत्त्वबोधनार्थं पुण्यार्थं च नामानि निर्दिशति—आकूतिरित्यादिना। चकारेण प्रियव्रतः उत्तानपादिति पुत्रयोर्नाम ज्ञेयम्। विश्रुताः पुराणादौ प्रसिद्धा इत्यर्थः॥ १॥ ❀ ❀ एवं पूर्वोक्तमनूद्येदानीमाकूत्यन्वयं वदन्नादौ ततो यज्ञावतारं निरूपयितुं संक्षेपेण तद्विवाहप्रकारमाह—आकूतिमिति। नृपः स्वायंभुवो मनुर्भ्रातृमतीमप्याकूतिं शतरूपानुमोदितः पुत्रिकाधर्ममाश्रित्य रुचये ब्रह्मपुत्रकर्दमादितुल्याय प्रादादित्यन्वयः। अपिशब्देन लोकदृष्टया शास्त्रविरोधं सूचयति। तथाहि—'अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्। अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति' इति भाषाबन्धेन कन्याप्रदानं पुत्रिकाधर्मः शास्त्रसिद्धः, स चाभ्रातृकायां कन्यायां पुत्रार्थिन एव। अस्य तु पुत्रयोर्विद्यमानत्वात्तथाकरणे शास्त्रविरोध इति। ननु मनुर्धर्मात्मा भूत्वा कथमेवं शास्त्रविरुद्धं कृतवांस्तत्राह—शतरूपानुमोदित इति। पुत्रबाहुल्यकामनया तथा कृतवानिति केचित्। वस्तुतस्तु मनुर्मनीषेति वाक्यात्तस्य भगवद्ध्यानरूपत्वेन शतरूपायाश्च तत्सहचारिणीच्छाशक्तिरूपत्वेनास्यां यज्ञावतारो भविष्यतीति निश्चयात्स्वयं च प्रजापालने ब्रह्मणा समाज्ञप्तस्तस्य च भगवदाश्रयणं विना सम्यक्कर्त्तुमशक्यत्वादतः पत्न्या सह संमंत्र्य रुचिगृहाद्भगवन्तं समानेतुं तथाकृतवान्। 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः' इति भगवद्वाक्यात् भगवदाश्रयणार्थं तथाकरणे न कश्चिच्छास्त्रविरोध इति भावः॥ २॥ ❀ ❀ आकूतिश्च बाह्यः प्रयत्नः प्रसिद्धस्तेनैव यज्ञस्य सिद्धिर्भवतीत्याकूतिनाम्नाऽस्यामपि यज्ञावतारयोग्यता सूचिता। इदानीं रुचावपि तद्योग्यतां सूचयन् यज्ञावतारमाह—प्रजापतिरिति। स प्रसिद्धो रुचिः प्रजापतिः परमेण भगवद्विषयकेण तीव्रेण समाधिना ध्यानेन तस्यामाकूत्यां मिथुनं स्त्रीपुरुषयोर्युगलरूपमजीजनत् जनयामास। समाहितेन मनसा लक्ष्मीनारायणं हृदि समानीयाकूत्यामाविर्भावितवानित्यर्थः। एवंकरणे तस्य योग्यतामाह—भगवानिति, ब्रह्मवर्चस्वीति च। यतो भगवद्भक्तत्वेन तद्वत्तैश्वर्यादिगुणवान् वेदाध्ययनादिजनितालौकिकप्रतापवांश्चातो भगवत्प्रादुर्भावयोग्यत्वात्तस्य मनोरथानुसारेण कृपया भगवांस्तत्र प्रादुर्भूत इति भावः। यद्वा भगवता सह 'वर्त्तमानः। भगवदाविष्ट इत्यर्थः॥ ३॥ ❀ ❀ तस्य मिथुनस्य भगवदवतारत्वं वदन्नाम निर्दिशति—यस्तयोरिति। तयोर्द्वयोर्मध्ये यः पुरुषः स यज्ञस्वरूपधृक् यज्ञनामकोवतारो विष्णुरेव, 'यज्ञो वै विष्णुः' इति श्रुतेः। द्वितीयस्कन्वेऽवतारवर्णनाध्याये 'सुयज्ञ' इत्यपि नाम निर्दिष्टं तत्तु योगवृत्त्यभिप्रायेण, 'शोभनाः सफला यज्ञा यस्मात्स सुयज्ञ' इति व्युत्पत्त्या यज्ञाधिदैविकत्वबोधनात्। यज्ञाधिष्ठातृदेवतां विना फलासंभवेन तत्राधिकारिप्रवृत्तिर्न स्यादित्यन्यत्र विस्तरः। एतेन देवतां विनैव कर्मैव सम्यगनुष्ठितं सत्फलं ददातीति पक्षो निराकृतो वेदितव्यः। या स्त्री सा दक्षिणेति नाम्ना प्रसिद्धा भूतेर्लक्ष्म्या अंशभूता अवताररूपा अनपायिनी अपायोत्र वियोगः स भगवत्प्रतियोगिको नास्ति यस्याः सा तथा सर्वदा सहैव वर्त्तमानेत्यर्थः। अत एवोभयोः सहैवाविर्भाव इति भावः॥ ४॥

### भाषानुवादः

### स्वायम्भुव मनुकी कन्याओंके वंशका वर्णन

श्रीमैत्रेयजी कहते हैं—विदुरजी! स्वायम्भुव मनुके महारानी शतरूपासे प्रियव्रत और उत्तानपाद—इन दो पुत्रोंके सिवा तीन कन्याएँ भी हुई थीं; वे आकूति, देवहूति और प्रसूति नामसे विख्यात थीं॥ १॥ ❀ ❀ आकूतिका, यद्यपि उसके भाई थे तो भी, महारानी शतरूपाकी अनुमतिसे उन्होंने रुचि प्रजापतिके साथ 'पुत्रिकाधर्म'के ❀ अनुसार विवाह किया॥ २॥ ❀ ❀ प्रजापति रुचि भगवान्के अनन्य चिन्तनके कारण ब्रह्मतेजसे सम्पन्न थे। उन्होंने आकूतिके गर्भसे एक पुरुष और स्त्रीका जोड़ा उत्पन्न किया॥ ३॥ ❀ ❀ उनमें जो पुरुष था, वह साक्षात् यज्ञस्वरूपधारी भगवान् विष्णु थे; और जो स्त्री थी, वह भगवान्से कभी अलग न रहनेवाली लक्ष्मीजीकी अंशस्वरूपा 'दक्षिणा' थी॥ ४॥

**आनिन्ये स्वगृहं पुत्र्याः पुत्रं विततरोचिषम्। स्वायम्भुवो मुदा युक्तो रुचिर्जग्राह दक्षिणाम्॥ ५॥**
**तां कामयानां भगवानुवाह यजुषां पतिः। तुष्टायां तोषमापन्नोऽजनयद् द्वादशात्मजान्॥ ६॥**
**तोषः प्रतोषः संतोषो भद्रः शान्तिरिडस्पतिः। इध्मः कविर्विभुः स्वह्नः सुदेवो रोचनो द्विषट्॥ ७॥**
**तुषिता नाम ते देवा आसन् स्वायम्भुवान्तरे। मरीचिमिश्रा ऋषयो यज्ञः सुरगणेश्वरः॥ ८॥**

---

१. अस्मिन्पक्षे स भगवानिति समस्तपदम्। सहशब्दस्य सादेशः। ❀ 'पुत्रिकाधर्म'के अनुसार किये जानेवाले विवाहमें यह शर्त होती है कि कन्याके जो पहला पुत्र होगा, उसे कन्याके पिता ले लेंगे।

## श्रीधरस्वामिविरचित-भावार्थदीपिका

पुत्र्या आकूतेः पुत्रं यज्ञम् ॥ ५ ॥ ❁ ❁ यजुषां यज्ञानां मंत्राणां वा पतिर्विष्णुः ॥ ६ ॥ ❁ ❁ द्विषट् द्वादश ॥ ७ ॥ ❁ ❁ प्रसंगात्स्वायंभुवमन्वंतरगतं षट्कमाह तुषिता इति द्वाभ्याम् । "मन्वंतरं मनुर्देवा मनुपुत्राः सुरेश्वरः । ऋषयोंशावतारश्च हरेः षड्विधमुच्यते ॥" इति वक्ष्यति । तत्र स्वायंभुवो मनुः तुषिता देवाः । मरीचिप्रमुखाः सप्तर्षयः । यज्ञो हरेरवतारः स एव सुरगणेश्वरः इंद्रः ॥ ८ ॥

## श्रीवंशीधरकृत-भावार्थदीपिकाप्रकाशः

स्वायंभुवेनोद्वाहकाले यदुक्तं तन्न विस्मृतमित्याह—आनिन्ये इति । विततं रोचिस्तेजो यस्य तम् ॥ ५ ॥ ❁ ❁ तां दक्षिणां कामयानामुद्वहनेच्छावतीं तुष्यत्यनयेति तुष्टा दक्षिणा । कारितेपि सुभोजने दक्षिणादानाभावे भोक्तुस्तोषो न भवतीत्यवश्यं सा देया । "ब्राह्मणमद्य विदेयं पितृमंतं पैतृमत्यमृषिमार्षेयं सुधातुदक्षिणम् । अस्मद्राता देवत्रा गच्छत दातारमाप्रीणयत" इति श्रुतेः ॥ ६ ॥ ❁ ❁ द्विरावृत्ताः षट् द्विषट् आर्षत्वाद्द्विशब्दस्य द्वयादेशो मध्यमपदलोपश्च ॥ ७ ॥ ❁ ❁ मन्वन्तरलक्षणमष्टमस्कंधे वक्ष्यति । स एव यज्ञ एवं यज्ञस्य द्वैरूप्यात्षट्कमूर्त्तिः ॥ ८-९ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

पुत्रिकाकरणं दर्शयति ॥ ५ ॥ ❁ ❁ तद्गुणादिना तुष्टायां दक्षिणायाम् ॥ ६ ॥ ७ ॥ ❁ ❁ तत्र ! षट्प्रकारेषु मध्ये ॥ ८ ॥

## श्रीमद्वीरराघवव्याख्या

स्वायंभुवो मनुर्मुदा युक्तः मिथुनजन्मनिमित्तहर्षयुक्तः स्वपुत्र्याः आकूत्याः पुत्रं वितततेजस्कं विष्ण्वंशसंभूतं पूर्वकृतभाषाबंधनाद्धेतोः स्वगृहं प्रति आनिन्ये आनीतवान् । रुचिस्तु दक्षिणां स्वकन्यां जग्राह पुत्रिकामेव पुत्रत्वेनापालयदित्यर्थः ॥ ५ ॥ ❁ ❁ कामयानां पतिं कामयमानां तां दक्षिणां यजुषां यज्ञानां मंत्राणां वा पतिर्यज्ञाख्यो भगवान् उवाह यस्यां तुष्टायां स्वस्मिन्प्रीतियुक्तायां दक्षिणायां स्वयमपि प्रीतियुक्तः द्वादशपुत्रानजनयत् । अत्र 'तुष्टयोरभवन्देवा द्वादशैते महाबलाः' इति पाठांतरं तदा तुष्टयोः परस्परसंतोषयुक्तयोर्यज्ञदक्षिणयोर्द्वादशपुत्रा अभवन्नित्यर्थः ॥ ६ ॥ ❁ ❁ तानाह तोष इति । तोषादयो द्विषट् द्वादशपुत्राः सर्वे तुषिता नाम तुषिता इति प्रसिद्धाः परस्परतुष्टाभ्यां पितृभ्यां जातत्वादिति भावः ॥ ७ ॥ ❁ ❁ ते तुषिता देवाः मरीचिप्रभृतयः ऋषयः सुरगणेश्वरो यज्ञश्च स्वायंभुवमन्वंतरे आसन्स्वस्वसन्तानवर्धनेन लोकमर्यादापालनेन चासन् । अनेन स्वायंभुवमन्वंतरगतं षट्कं कथितं मन्वंतरं 'मनुर्देवा मनुपुत्रा महौजसः' ऋषयोऽशांवतारश्च हरेः षड्विधमुच्यते । इति तत्र स्वायंभुवो मनुः तुषिता देवाः मरीचिमुख्या ऋषयः यज्ञो हरेरवतारः स एव सुरगणेश्वरस्तदा इंद्रः ॥ ८ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

स्वायंभुवेन विवाहकाले यदुक्तं तत्सत्यं कर्तुं कार्यांतरासक्त्या न विस्मृतं तेनेति भावेनाह आनिन्य इति ॥ ५ ॥ ❁ ❁ यजुषां पतिः सकलवेदप्रतिपाद्यत्वेन तदनुसारिहेतुत्वेन तत्प्रवर्तकत्वेन वेदपतिरित्यर्थः, हरिणा यदर्थमवतीर्णं तत्प्रयोजनमाह तुष्टायामिति तुष्टायां दक्षिणायाम् ॥ ६ ॥ ❁ ❁ द्विषट् द्वादश ॥ ७ ॥ ❁ ❁ तोषादीनां समुदितं नामाह तुषिता इति । अदित्यामुत्पन्नत्वाद्यथाऽऽदित्या नाम देवास्तथा तुष्टायामुद्भूतत्वात्तुषिता नाम देवाः मरीचिमिश्रा मरीचिमुख्याः सुरगणेश्वर इंद्रः यज्ञः स्वयमिंद्रोऽभूत् ॥ ८ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

नप्तारोऽत्र प्रपौत्रादयो ज्ञेयाः ॥ ८-११ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

यजुषां पतिर्यज्ञरूपी विष्णुः ॥ ५ ॥ ❁ ❁ द्विषट् द्वादश ॥ ६ ॥ ❁ ❁ प्रसङ्गान्मन्वन्तरगतं षट्कमाह तुषिता इति द्वाभ्याम् । 'मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वराः । ऋषयांऽशावताराश्च हरेः षड्विधमुच्यते' इति वक्ष्यति । तत्र स्वायम्भुवस्य मनुत्वाद् यज्ञस्यावतारत्वेनेन्द्रत्वेन च द्वैरूप्यात् षट्कमुक्तं ज्ञेयम् ॥ ७ ॥ ❁ ❁ अनुवृत्तिमनुचरितं तन्मयमेव तदनन्तरं स्वायम्भुवमन्वन्तरमित्यर्थः ॥ ८ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

विततं व्यापकं रोचिर्दीप्तिर्यस्य तम् ॥ ५ ॥ ❁ ❁ तां दक्षिणां कामयमानां भगवंतं नित्यं पतिमिच्छंतीं यजुषां यज्ञानां मंत्राणां वा पतिर्यज्ञः उवाह विवाहितवान् ॥ ६ ॥ ॥ ❁ ❁ तेषां नामान्याह तोष इति ॥ ७ ॥ ❁ ❁ प्रसंगात्स्वायं-

भुवमन्वंतरगतं षट्कमाह तुषिता इति द्वाभ्याम्। 'मन्वंतरं मनुर्देवा मनुपुत्राः सुरेश्वराः। ऋषयोंऽशावतारश्च हरेः षड्विधमुच्यते॥' इति वक्ष्यमाणे षट्के स्वायंभुवो मनुः ते तोषादयः तुषितानाम तुषिता इति प्रसिद्धाः देवाः मरीचिप्रमुखाः सप्त ऋषयः यो हरेरवतारः स एव सुरेश्वरः इंद्रः॥ ८॥

**गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी**

पुत्रवानपि मनुर्यदर्थं पुत्रिकाधर्ममाश्रित्य कन्यां दत्तवान् स तस्य मनोरथः सफलो जात इति सूचयन्मनुर्भगवन्तं स्वगृहमानीतवानित्याह—आनिन्य इति। स्वपुत्र्याः पुत्रं नप्तारं स्वायंभुवो मनुः स्वसङ्कल्पस्य सिद्धत्वान्मुदा युक्तः स्वगृहमानिन्ये अत्यादरेण नीतवान्। यज्ञपदं हित्वा पुत्र्याः पुत्रमित्युक्त्या भाषाबन्धानुसारेण स्वपुत्रतया ग्रहणेपि स धर्मबुद्ध्या तस्याः परमोपकारं मन्यत इति सूचयति। विततरोचिषमिति। वितता सर्वतः प्रसृता रोचिः दीप्तिः प्रकाशस्तेजो यस्य तम्। अनेनेन्द्रासने स्थित्वा धर्मपरिपन्थिनो निराकृत्य धर्मस्थान् पालयिष्यति तेन मनोमहती कीर्त्तिः सर्वतो वितता नायासेनैव भविष्यतीति तस्य सङ्कल्पसिद्धौ हेतुः सूचितः। यत एवंभूतं पुत्रं प्राप अतः स्वसङ्कल्पसिद्ध्या हृष्टो जात इति भावः। मनुपदं हित्वा स्वायंभुवपदग्रहणेन साक्षाद्ब्रह्मपुत्रत्वात्तदाज्ञया सृष्टिकरणे प्रजापालने यज्ञादिधर्मप्रवर्त्तने च भगवदभिप्रेते कार्ये प्रवृत्तत्वात्तस्य भगवत्कृपापात्रत्वं सूचितम्। पुत्रग्रहणमात्र एव भाषाबन्धो न त्वपत्यमात्रग्रहणेऽतो दक्षिणां कन्यां रुचिः प्रजापतिर्जग्राह॥ ५॥ ❀ ❀ एवं पृथक्तया स्थितयोस्तयोरेव विवाहमाह—तामिति। ननु स्वमातुर्युत्पन्नत्वेन तस्याः स्वभगिनीत्वात्तया सह विवाहस्य शास्त्रविरुद्धत्वात्कथं तामुवाह तत्राह—भगवानिति। स्वस्य भगवत्त्वात्तस्याश्च लक्ष्मीत्वान्न तद्विवाहे भगिनीत्वेन शास्त्रविरोध इत्यर्थः। नन्वेवं तत्त्वज्ञदृष्ट्या विरोधाभावेऽपि लौकिकदृष्ट्या विरोधोऽस्त्येवात आप्तकामः कथं लोकविरुद्धं कृतवांस्तत्राह—कामयानामिति। तस्या अनन्यशरणायाः सदा सहचारिण्या उपेक्षायाः स्वस्य परमकृपालोरयुक्तत्वात्तत्कामनापूरणार्थं तामेवोवाह। लौकिकविरोधस्याप्रामाणिकत्वादिति भावः। विवाहे हेत्वन्तरमपि सूचयन्विशिनष्टि—यजुषांपतिरिति। यजुर्मात्रग्रहणं तस्योपयोगबाहुल्याभिप्रायेणोपलक्षणार्थम्, वस्तुतस्तु सकलमन्त्राधिदैविकरूपत्वं ज्ञेयम्। तथाच तस्या यज्ञाधिष्ठातृदेवताया दक्षिणासम्बन्धे सत्येव तत्तत्फलहेतुत्वादन्यथाङ्गवैगुण्येन तत्तत्फलप्रदानासंभवात्तदर्थं तामुवाहेति भावः। एवं पुनः स्वसम्बन्धं प्राप्य तुष्टायां तस्यां दक्षिणायां स्वयमपि तत्सम्बन्धात्तुष्टः प्रसन्नः सन् द्वादशपुत्रानजनयत् उत्पादितवान्॥ ६॥ ❀ ❀ तेषां नामान्याह—तोष इत्यादि। द्वादशेति वक्तव्ये द्विषडित्युक्तिस्तु समुदाये द्वैरूप्यज्ञापनार्था॥ ७॥ ❀ ❀ इदानीं भगवदवतारेण स्वायंभुवस्य मनोः सपरिकरो धर्मः सिद्ध इति सूचयंस्तन्मन्वन्तरगतधर्मोपयोगिषट्कसिद्धिं दर्शयति—तुषिता नामेति द्वाभ्याम्। 'मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वरः। ऋषयोंशावतारश्च हरेः षड्विधमुच्यते' इति हि वक्ष्यति। तत्र स्वायंभुवो मनुः पूर्वस्कन्धे निरूपितः। तुषिता नाम देवा इदानीं निरूपिताः। तोषस्य ज्येष्ठत्वेन तन्नाम्नैव समुदायस्य तुषिता इति निर्देशः। मरीचिप्रमुखाः सप्तर्षयः पूर्वस्कन्धे द्वादशेऽध्याये निरूपिताः। हरेरंशावतारो यज्ञः सोऽत्र निरूपितः। अस्मिन्मन्वन्तरे इन्द्राधिकारयोग्यस्य कस्यचिज्जीवस्याभावात्स्वयमेव सुरगणेश्वर इन्द्रो जातः। अतोंशावतारत्वेन सर्वभोक्तृत्वमिन्द्रत्वेन हविर्भोक्तृत्वमिति कार्यद्वयं तस्यैव। प्रियव्रतोत्तानपादौ मनुपुत्राविति षड्विधत्वमुपपन्नम्॥ ८॥

**भाषानुवादः**

मनुजी अपनी पुत्री आकूतिके उस परम तेजस्वी पुत्रको बड़ी प्रसन्नतासे अपने घर ले आये और दक्षिणाको रुचि प्रजापतिने अपने पास रक्खा॥ ५॥ ❀ ❀ जब दक्षिणा विवाहके योग्य हुई, तो उसने यज्ञ भगवान्‌को ही पतिरूपमें प्राप्त करनेकी इच्छा की, तब भगवान् यज्ञपुरुषने उससे विवाह किया। इससे दक्षिणाको बड़ा सन्तोष हुआ। भगवान्ने प्रसन्न होकर उससे बारह पुत्र उत्पन्न किये॥ ६॥ ❀ ❀ उनके नाम हैं—तोष, प्रतोष, सन्तोष, भद्र, शान्ति, इडस्पति, इध्म, कवि, विभु, स्वह्न, सुदेव और रोचन॥ ७॥ ❀ ❀ ये ही स्वायम्भुव मन्वन्तरमें 'तुषित' नामक देवता हुए। उस मन्वन्तरमें मरीचि आदि सप्तर्षि थे, भगवान् यज्ञ ही देवताओंके अधीश्वर इन्द्र थे और महान् प्रभावशाली प्रियव्रत एवं उत्तानपाद मनुपुत्र थे। वह मन्वन्तर उन्हीं दोनोंके बेटों, पोतों और दौहित्रोंके वंशसे छा गया॥ ८-९॥

**प्रियव्रतोत्तानपादौ मनुपुत्रौ महौजसौ। तत्पुत्रपौत्रनप्तॄणामनुवृत्तं [१]तदन्तरम्॥ ९॥**
**देवहूतिमदात्तात कर्दमायात्मजां मनुः। तत्सम्बन्धि श्रुतप्रायं भवता गदतो मम॥ १०॥**
**दक्षाय ब्रह्मपुत्राय प्रसूतिं भगवान्मनुः। प्रायच्छद्यत्कृतः सर्गस्त्रिलोक्यां विततो महान्॥ ११॥**
**याः कर्दमसुताः प्रोक्ता नव [२]ब्रह्मर्षिपत्नयः। तासां प्रसूतिप्रसवं प्रोच्यमानं निबोध मे॥ १२॥**

---

१. प्रा० पा०—यद०। २. प्रा० पा०—क्ताः क्षत्तर्ब्रह्म०।

## श्रीधरस्वामिविरचित-भावार्थदीपिका

प्रियव्रतोत्तानपादौ मनुपुत्रौ पृथ्वीपालकौ। तदेवं यज्ञस्य द्वैरूप्येण षड्विधत्वम्। तयोः पुत्रपौत्रनप्तॄणां वंशैरनुवृत्तं व्याप्तं पालितं तन्मन्वंतरम्॥ ९॥ ❀ ❀ श्रुतप्रायं बाहुल्येन श्रुतम्। तत्कन्यावंशानामश्रुतत्वात्प्रायग्रहणम्॥ १०–११॥ ❀ ❀ प्रसूतिप्रसवं पुत्रपौत्रादिभिर्विस्तारम्॥ १२॥

## श्रीवंशीधरकृत-भावार्थदीपिकाप्रकाशः

तत्संबंधि तस्या देवहूत्याः पुत्रकन्यादिकम्॥ १०॥ ❀ ❀ भगवान्समर्थः यत्कृतः प्रसूतिदक्षकृतः सर्गः सृष्टिः॥ ११॥ ❀ ❀ ब्रह्मर्षीणां मरीच्यादीनाम्। पत्नय इत्यार्षत्वान्ङीपो ह्रस्वत्वे बुद्धय इतिवत्। तासां कर्दमात्मजानाम्॥ १२॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

द्वैरूप्येण! अवतारत्वेंद्रत्वलक्षणद्वैविध्येन। नप्तारोऽत्र प्रपौत्रादयो ज्ञेयाः। वंशैरित्याकांक्षावशादध्याहृतम्॥ ९॥ ❀ ❀ मम मत्तः॥ १०॥ ❀ ❀ यत्कृतः यया प्रसूत्या कृतः॥ ११–१२॥

## श्रीमद्वीरराघवव्याख्या

प्रिथव्रतोत्तानपादौ मनुपुत्रौ पृथ्वीपालकौ तयोः पुत्रपौत्रनप्तॄणां वंशैरनुवृत्तं व्याप्तं पालितं च तन्मन्वंतरमित्यर्थः॥ ९॥ ❀ ❀ एवमाकूतिसंततिः कथिता। अथ देवहूतिदुहितृसंततिं कथयिष्यन्देवहूतिचरित्रं तु विस्तरेण तृतीये त्वया श्रुतमित्याह देवहूतिमिति तत्संबंधिचरितं गदतो मम मत्तः भवता श्रुतप्रायं बाहुल्येन श्रुतत्वादिति भावः॥ १०॥ ❀ ❀ प्रसूतिसंततिस्तु तत्प्रसंगेन महता प्रबंधेन कथनीयेति सापि पश्चाद्वक्ष्यते इति अभिप्रायेणात्र संगृह्णाति दक्षायेति। यत्कृतः दक्ष-प्रसूतिभ्यां कृतः सर्गः त्रिलोक्यां महान् विततः आकूत्यादिसंतत्यपेक्षया प्रसूतिसंततेर्वैपुल्यमनेन कथितम्॥ ११॥ ❀ ❀ अथ देवहूतिदुहितृसंततिरुच्यते इत्याह या इति। हे क्षत्तः कर्दमस्य सुताः कालादयो मरीच्यादीनां पत्नयः पत्न्यः याः उक्ताः तृतीये तासां कर्दमसुतानां प्रसूतेः प्रभवं पुत्रपौत्रादिसंतानविस्तरं मे मया प्रोच्यमानं कथ्यमानं निबोध॥ १२॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

स्वायंभुवमन्वंतरं कैरनुवृत्तमिति तत्राह प्रियव्रतेति। नप्तारः पौत्रपुत्राः॥ ९॥ ❀ ❀ देवहूतिकथामनुवदति देवहूतिमिति। तत्संबंधिचरितं श्रुतप्रायं प्राचुर्येण श्रुतं किंचिदवशिष्टमस्तीत्यर्थः॥ १०॥ ❀ ❀ प्रसूतिं कस्मा आदादिति तत्राह दक्षायेति॥ ११॥ ❀ ❀ एवमनूद्य वक्तव्यांशमाह याः कर्दमेति पत्नयः पत्न्यः प्रसूतिप्रसरं प्रसूतिप्रपंचम्॥ १२॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

नवब्रह्मर्षिः क्षत्तर्ब्रह्मर्षीति पाठद्वयम्। प्रसूतिप्रसवं पुत्रपौत्रादिविस्तारम्॥ १२॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

प्रियव्रतोत्तानपादौ मनुपुत्रौ पृथ्वीपालकौ तदेवं यज्ञ एव विष्ण्वावतारः इन्द्रश्चेति षड्विधत्वं बोध्यम्। तयोः पुत्रपौत्र-नप्तॄणां वंशैः तदंतरं तन्मन्वंतरमनुवृत्तं व्याप्तं पालितमित्यर्थः॥ ९॥ ❀ ❀ हे तात विदुर! तत्संबंधि देवहूत्याः संबंधि विवाहापत्योदयादि मम गदतः कथयतः श्रुतप्रायं बाहुल्येन श्रुतम्। तत्कन्यावंशो न श्रुत इति प्रायग्रहणाभिप्रायः॥ १०॥ ❀ ❀ यत् याभ्यां दंपतीभ्यां महान् विपुलः सर्गः कृतः त्रिलोक्यां विततोऽभूत्॥ ११॥ ❀ ❀ याः कलाद्याः ब्रह्मर्षीणां मरीच्या-दीनां पत्नयः पत्न्यः तृतीये प्रोक्तास्तासां प्रसूतिप्रसवं पुत्रपौत्रादिविस्तारं मे मया प्रोच्यमानं निबोध शृणु॥ १२॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं स्वायंभुवमन्वन्तरगतं षट्कं निरूप्येदानीं प्रकीर्णानपि धर्महेतून् प्रदर्शयति—तत्पुत्रेति। तयोः प्रियव्रतोत्तानपदोः पुत्रपौत्रनप्तॄणां वंशैस्तदन्तरं तस्य स्वायंभुवस्य मन्वन्तरमनुवृत्तं व्याप्तं पालितमिति यावत्। मन्वन्तरशब्दो 'मन्वन्तराणि सद्धर्म' इति वचनाद्धर्मसाधकषण्णां समुदाये रूढस्तदुपलक्षितकालेऽप्युपचारान्मन्वन्तरमित्युच्यते॥ ९॥ ❀ ❀ एवं स्वायंभुवमनो-र्द्धर्मसाधकमन्वन्तरषट्कसिद्धिप्रयोजकीभूतमाकूत्या वंशं निरूप्य देवहूत्या विवाहादिचरितं पूर्वं प्रदर्शितमपि प्रसङ्गात् संक्षेपेण स्मारयति—देवहूतिमिति। भगवदवताराधिकरणत्वेऽभ्यर्हितत्वं ज्ञापयितुं तस्याः प्रथमनिर्देशः। कन्यान्तरतस्तस्यां प्रेमातिशयं ज्ञापयितुमात्मजामिति विशेषणम्। तातेति सम्बोधनेन विदुरे स्वस्य स्नेहाधिक्यं सूचयति। अन्यथा श्रीकपिलोक्तं पारमरहस्यं नोक्तं स्यादिति भावः। युक्तमयुक्तं वा मनुतेऽवबुध्यते इति मनुरिति व्युत्पत्तिमभिप्रेत्याह—मनुरिति। अनेन पूर्वं यथा भगवता

कर्दमं प्रति तुभ्यं योग्याय मनुः स्वां कन्यां दास्यतीत्युक्तं तथा मनुरपि तं योग्यमवबुध्य तस्मै कन्यां दत्तवानिति तस्य योग्यायोग्यविवेको दर्शितः। तत्संबन्धि कर्दमदेवहूतिसंबन्धि विमानादिरचनत्रिलोकीदर्शनकपिलावतारसाङ्ख्यभक्त्यादिनिरूपणकन्योत्पत्तितदुद्वाहादिरूपं चरित्रं मम गदतो भवता श्रुतप्रायम्। अतो न पुनस्तदत्र मया वक्तव्यमिति भावः। 'भवता गदतो मम' इत्यनेन श्रोतुर्वक्तुश्च समक्षतानिर्देशेन पूर्वकथिते सन्देहं वारयति। तत्र च देवहूतिकन्यान्वयस्यानुक्तत्वेनाश्रुतत्वात् प्रायग्रहणम् ॥ १० ॥ ❀ ❀ अथेदानीं प्रसूतिवंशमाह—दक्षायेति। आकूतिदेवहूत्योर्भगवदवताराधिष्ठानत्वेनाभ्यर्हितत्वात्पूर्वं तयोः प्रथमनिर्देशः कृतः। प्रसूत्यां तु भगवदवताराभावाद्दक्षस्य च धर्मतत्परत्वेन ब्रह्मपुत्रत्वेन चाभ्यर्हितत्वादत्र तस्यैव प्रथमनिर्देश इति बोध्यम्। भगवानिति भगवत्त्वैश्वर्यादिमानित्यर्थः। मनुरित्युक्ताभिप्रायम्। प्रायच्छत् दत्तवान्। प्रकर्षेण सूतिर्यस्याः सा प्रसूतिरिति तन्नामानुरूप एव सर्गो जात इत्याह—यत्कृत इति। यया कृतः सर्गो महान् जात इति शेषः। तन्महत्त्वमेव दर्शयति—त्रिलोक्यां वितत इति। व्याप्त इत्यर्थः ॥ ११ ॥ ❀ ❀ इदानीं धर्मप्रकरणोपयोगित्वाद्देवहूत्या नवकन्यानामन्वयं विस्तरतो वक्तुं प्रस्तौति—या इति। मरीचये कलां प्रादादित्यादिना पूर्वस्कन्धे चतुर्विंशेऽध्याये मरीच्यादिनवब्रह्मर्षीणां पत्नयः पत्न्यः कलादयो या नवकर्दमसुता मया प्रोक्तास्तासां प्रसूतिप्रसवं पुत्रपौत्रादिविस्तारं मे मया प्रोच्यमानं निबोध शृण्वित्यन्वयः। वक्ष्यमाणमपि सामीप्यात्प्रोच्यमानमिति वर्त्तमानतया निर्दिश्यते। तत्र 'कलानुसूया श्रद्धा च हविर्भूश्च गतिः क्रिया। ख्यातिश्चारुन्धतिः शान्तिः कर्दमस्य सुता नव ॥ मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः। भृगुर्वसिष्ठोथर्वा च नव जामातरः स्मृताः ॥ अष्टौ ब्रह्मसुतास्तत्र नवमो वेदविन्मुनिः' ॥ इमानि तासां तत्पतीनां च नामानि तृतीयस्कन्धोक्त्यनुसारेण ज्ञेयानि ॥ १२ ॥

## भाषानुवादः

प्यारे विदुरजी! मनुजीने अपनी दूसरी कन्या देवहूति कर्दमजीको व्याही थी। उसके सम्बन्धकी प्रायः सभी बातें तुम मुझसे सुन चुके हो ॥ १० ॥ ❀ ❀ भगवान् मनुने अपनी तीसरी कन्या प्रसूतिका विवाह ब्रह्माजीके पुत्र दक्षप्रजापतिसे किया था; उसकी विशाल वंशपरम्परा तो सारी त्रिलोकीमें फैली हुई है ॥ ११ ॥ ❀ ❀ मैं कर्दमजीकी नौ कन्याओंका, जो नौ ब्रह्मर्षियोंसे व्याही गयी थीं, पहले ही वर्णन कर चुका हूँ। अब उनकी वंशपरम्पराका वर्णन करता हूँ, सुनो ॥ १२ ॥

पत्नी मरीचेस्तु कला सुषुवे कर्दमात्मजा। कश्यपं पूर्णिमानं च ययोरापूरितं जगत् ॥ १३ ॥
पूर्णिमासूत विरजं विश्वगं च परंतप। देवकुल्यां हरेः पादशौचाद्याभूत्सरिद्दिवः ॥ १४ ॥
अत्रेः पत्न्यनसूया त्रीञ्जज्ञे सुयशसः सुतान्। दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवान् ॥ १५ ॥

## विदुर उवाच

अत्रेर्गृहे सुरश्रेष्ठाः स्थित्युत्पत्त्यन्तहेतवः। किञ्चिच्चिकीर्षवो जाता एतदाख्याहि मे गुरो ॥ १६ ॥

## श्रीधरस्वामिविरचित-भावार्थदीपिका

ययोः पुत्रयोर्वंशेनापूरितम् ॥ १३ ॥ ❀ ❀ कश्यपस्य वंशं षष्ठे वक्ष्यति। द्वितीयस्य वंशं तावदाह पूर्णिमेति। देवकुल्यां नाम कन्यां च। हरेः पादक्षालनाज्जन्मांतरे या दिवः सरिद् गङ्गाऽभूत् ॥ १४ ॥ ❀ ❀ आत्मेशब्रह्मसंभवान्विष्णुरुद्रब्रह्मणामंशैः संभूतान् ॥ १५ ॥ ❀ ❀ किंचित्किंस्वित्। किं कर्तुमिच्छव इत्यर्थः ॥ १६ ॥

## श्रीवंशीधरकृत-भावार्थदीपिकाप्रकाशः

वंशेनेति शेषः। ययोः कश्यपपूर्णिमयोः ॥ १३ ॥ ❀ ❀ परंतपेति विदुरस्येंद्रियजये सामर्थ्यमाह ॥ १४ ॥ ❀ ❀ जज्ञे उत्पादयामास। 'जनी प्रादुर्भावे' इह प्रादुर्भावयतीति प्रादुर्भाव इत्यन्तर्भावितणिजर्थत्वेन सकर्मकोप्ययम्। प्रादुर्भवनं प्रादुर्भाव इति निरुक्त्याश्रयणे त्वकर्मकोयमिति। आत्मशब्देन विष्णोः स्वातंत्र्यमुक्तमन्ययोस्तत्पारतंत्र्यं च "सृजामि तन्नियुक्तोहं हरो हरति तद्वशः। परिपाति स्वयं विष्णुः" इत्युक्तेः। सोमे हि ब्रह्मण आवेशमात्रमेव न तु पृथग्जननमिति तीर्थः ॥ १५ ॥ ❀ ❀ गुरूणां शिष्यसंदेहापनोदनमुचितमित्यभिप्रेत्यासंत्रयति गुरो इति ॥ १६ ॥

---

१. प्रा० पा० यशं च।

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

कश्यपं पूर्णिमानं चेति पुत्रद्वयसंज्ञा । न च पूर्णिमानं चेति स्त्रीत्वमाशंक्यम् अणिमानमितिवत् इमनिच्प्रत्ययेन सिद्धत्वात् ॥ १३ ॥ ❀ ❀ अत एव द्वितीयस्य पुत्रस्य पूर्णिम्नः ॥ १४ ॥ ❀ ❀ 'गौणश्चेन्नात्मशब्दात्' १।१।६ इति न्यायेनात्मशब्देन विष्णोस्स्वातंत्र्यं साक्षात्त्वादितरयोस्तन्नियम्यत्वमसाक्षात्त्वादिति व्यञ्जितम् ॥ १५ ॥ ❀ ❀ एतत् त्रयाणामवतारप्रयोजनम् ॥ १६ ॥

## श्रीमद्वीरराघवव्याख्या

तदेवाह पत्नीति कर्दमसुता मरीचेः पत्नी कला कलानाम्नी कश्यपं पूर्णिमानं च द्वौ पुत्रौ सुषुवे, तौ विशिनष्टि ययोः कश्यपपूर्णिम्नोर्वंशजैर्जगदापूरितं व्याप्तम् ॥ १३ ॥ ❀ ❀ हे सत्तम ! पूर्णिमा मरीचिपुत्रः विरजं विश्वगं चापि पुत्रं देवकुल्यां कन्यां च असूत उत्पादयामास । देवकुल्यां विशिनष्टि हरेर्भगवतः पादशौचात् पादप्रक्षालनाद्या दिवः सरिद्गङ्गा अभूत् सेयं देवकुल्या दिवः सरिदभिमानिनी देवतेत्यर्थः ॥ १४ ॥ ❀ ❀ अत्रेर्या पत्नी अनसूया कर्दमस्य द्वितीया दुहिता सा सुयशसः निर्मलकीर्तिसंपन्नान् त्रीन्सुतान् जज्ञे । तानाह दत्तमित्यादिना तान् विशिनष्टि आत्मेशब्रह्मसंभवान् । आत्मा परमात्मा विष्णुः ईशो रुद्रः ब्रह्मा चतुर्मुखः तेभ्यः संभवान् तदंशभूतानित्यर्थः । यद्वा आत्मेशब्रह्मणां संभवोऽभिव्यक्तिर्येषु तान् अत्रात्मशब्देन तवान्तरात्मा मम चेत्यादिना प्रसिद्धम् । विष्णोः परमात्मत्वम् इतरयोर्जीवत्वं च सूच्यते । ननु परमात्मनः सर्वांतर्यामिणो जीवद्वारा ज्ञानशक्त्याद्यन्यतमगुणाविर्भावरूपांशावतारत्वं युक्तं कथं पुनः परमात्मांशभूतयोरणुस्वरूपयोर्जीवविशेषयोः ब्रह्मरुद्रयोः पुनर्जीवांतरानुप्रवेशरूपांशावतारत्वम् , सत्यम् "अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते । यया क्षेत्रज्ञशक्तिः सावेष्टिता नृप सर्वगा । संसारतापानखिलानवाप्नोत्यतिसंततान् । तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ॥ सर्वभूतेषु भूपाल तारतम्येन वर्तते ॥" इत्युक्तरीत्या जीवस्य यद्धर्मभूतं ज्ञानं तदविद्याकर्मणा तिरोहितं सत्तातारतम्येनावतिष्ठते तत्र परमात्मप्रसादादविद्याख्यावरणस्य निवृत्तावसंकोचेन प्रसृतं भवति । अत एव मुक्तौ निःशेषमावरणनिवृत्तौ "स चानंत्याय कल्पते" इति धर्मभूतज्ञानस्यासंकोचेन प्रसारादानंत्यं जीवस्य श्रुतं सूत्रितं च "प्रदीपवदावेशस्तथा हि दर्शयति" ॥ ४।४।१५ ॥ इति अणोरप्यात्मन एकदेहस्थितस्याप्यसंकुचितधर्मभूतज्ञानद्वारा स्वल्पपरिमाणस्य दीपस्य स्वधर्मभूतप्रभा द्रव्यद्वारेणानेकघटपटादिप्रकाशकत्ववदनेकशरीरपरिग्रह इति सूत्रार्थः । एवं च ब्रह्मरुद्रयोः परमपुरुषप्रसादादज्ञानावरणनिवृत्तिरस्मदाद्यपेक्षया ज्ञानप्रसरबाहुल्यात्तद्धर्मभूतज्ञानस्य दुर्वाससोमयोरनुप्रवेशात्तदंशावतारत्वं तयोरुपपन्नम् । एवमन्यत्रापि यत्र कच्चिज्जीवस्य जीवांतरांशत्वमुच्यते तत्रायमेव न्यायो वेदितव्यः ॥ १५ ॥ ❀ ❀ एवं दत्तादीनामात्माद्यंशावतारत्वमुक्तं तत्रांतरेण निमित्तं परमात्मादीनामवतारणामसंभवात्तत्कारणं पृच्छति विदुरः अत्रेरिति । स्थित्यादिकर्त्तारः सुरश्रेष्ठाः आत्मादयः अत्रेर्गृहे किंस्विच्चिकीर्षवः किं कर्तुमिच्छवो जाता एतज्जन्मप्रयोजनं हे गुरो ! मे मह्यमाख्याहि कथय ॥ १६ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

चंद्रकलाव्यावृत्त्यर्थं कर्दमात्मजेति । ययोः संतत्या ॥ १३ ॥ ❀ ❀ विश्वगां विशिनष्टि देवकुल्येति । दिवः सरित्स्वर्गनन्दी देवकुल्या देवकुलप्रिया ॥ १४ ॥ ❀ ❀ जज्ञे जनयामास आत्मा विष्णुरीशो रुद्रो ब्रह्मा चतुर्मुखः ब्रह्मणः सोमे त्रिशेषावेश एव, न तु पृथग्जननम् ॥ १५ ॥ ❀ ❀ विदुरः श्रुतदत्ताद्यवतारो विशेषजिज्ञासया पृच्छतीत्याह अत्रेरिति । गृहे भार्यायां स्थित्यंतोत्पत्तिहेतवः पालनसंहारसृष्टीनां कारणभूताः ॥ १६ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अत्रेरिति । आत्मशब्देन विष्णोः स्वातन्त्र्यमन्ययोस्तत्पारतन्त्र्यञ्च दर्शितं, तदुक्तं सृजामि तन्नियुक्तोऽहमित्यादि । अत एव च तत्र तत्रात्मशब्देन हरिरेव व्याख्यातः । तदेवमत्रेस्तथा संकल्पा नातिज्ञानादेव भावीति बोधितम् । तथैव शरणमित्यादिकस्तद्दृष्टौ मन्त्रः ॥ १५-१७ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ययोर्वंशेन ॥ १३ ॥ ❀ ❀ कश्यपस्य वंशं षष्ठे वक्ष्यति । देवकुल्यां नाम कन्याञ्च । हरेः पादक्षालनात् सुकृताद्या दिवः सरिद्गङ्गा जन्मान्तरेऽभूत् ॥ १४ ॥ ❀ ❀ आत्मा विष्णुस्तदाद्यंशभूतान् ॥ १५ ॥ ❀ ❀ किंस्वित् किंस्वित् ॥ १६ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

कलानाम्नी कर्दमात्मजा मरीचेः पत्नी कश्यपं पूर्णिमानं च सुषुवे अजनयत् । ययोः कश्यपपूर्णिम्नोः जगदापूरितं व्याप्तमत॥भू १३ ॥ ❀ ❀ तत्र कश्यपवंशं षष्ठे वक्ष्यति पूर्णिम्नो वंशमाप पूर्णिमेति । हे परंतप ! पूर्णिमा विरजं विश्वगं च पुत्रं देवकुल्यां

कन्यां चासूत अजनयत् या हरेः पादशौचात् दिवः सरित् गंगा अभूत् ॥ १४ ॥ ❁ ❁ सुयशसः शोभनकीर्तिधरान् आत्मेश-ब्रह्मसंभवान् हरिहरविरंच्यंशोद्भूतान् जज्ञे अजनयत् ॥ १५ ॥ ❁ ❁ अत्रेर्गृहे किंचिचकीर्षवः किंचित् अन्येष्वसंभावितं कार्यं कर्तुमिच्छवः जाताः । एतत् आख्याहि वद ॥ १६ ॥

**गोस्वामिश्रीगिरधरलालविहिता बालप्रबोधिनी**

तत्रादौ कलायां मरीचेर्वंशमाह तस्य ज्येष्ठत्वात् प्रथमोद्दिष्टत्वाच्च—पत्नीति । कर्दमात्मजा कला मरीचेः पत्नी तु कश्यपं पूर्णिमानं च सुषुवे । ययोर्वंशविस्तारेण सर्वं जगदापूरितमित्यन्वयः ॥ १३ ॥ ❁ ❁ तत्र कश्यपवंशस्य देवदानवादिभिः श्रितत्वात्तद्वर्णनस्यात्र धर्मप्रकरण उपयोगाभावात्प्रत्युत विरुद्धत्वाच्च तं षष्ठस्कन्धे वक्ष्यति । अत्र तु केवलधर्मोपयोगिदेवोत्पत्तिरेव वर्णनीयेति पूर्णिमावंशमाह—पूर्णिमेति । विरजं विश्वगं चेति द्वौ पुत्रौ हरेः पादशौचात् पादप्रक्षालनप्रभावाज्जन्मान्तरे या दिवः सरिद्वरा गङ्गाभूत् तां देवकुल्यानाम्नीं कन्यां च पूर्णिमासूतेत्यन्वयः । हे परंतप इति परान् शत्रून् कामक्रोधादींस्तापयतीति तथेति सम्बोधनेनैवं वंशप्रसङ्गात्तत्तत्स्त्रीनामग्रहणेपि तव मनसि विकारो नास्तीति विदुरस्यैतत्कथायामधिकारित्वं सूचयति ॥ १४ ॥ ❁ ❁ अनसूयायामत्रेर्वंशमाह—अत्रेरिति । सुष्ठु यशो येषां तथाभूतान् त्रीन् सुतान् अनसूया जज्ञे जनयामास । तेषां नामान्याह—दत्तमिति । सुयशस्त्वे हेतुमाह—आत्मेति । आत्मा श्रीविष्णुः । ईशः शङ्करः । विष्णुरुद्रब्रह्मणामंशैः सम्भवः प्रादुर्भावो येषां तान् ॥ १५ ॥ ❁ ❁ महतां त्रयाणामेवमेकत्रावतारस्य दुर्लभत्वं मत्वा तदवतारासाधारणकार्ये विज्ञात एव सन्देहो निवर्त्स्यतीत्याशयेन तत्कार्यविशेषं पृच्छति—अत्रेर्गृह इति । अत्रेर्गृहे सुरश्रेष्ठाः सुरेषु देवेषु श्रेष्ठास्तेषां नियन्तारः किञ्चिच्चिकीर्षवः किञ्चित्कार्यं कर्त्तुमिच्छवः सन्तो जाता इति सामान्यतस्तावज्जानामि, परन्तु तत्कार्यविशेषं न जानाम्यतस्तदेतत्कार्यविशेषं मे मह्यं त्वमाख्याहि कथय । तेषां सुरश्रेष्ठत्वे हेतुत्वेन विशेषणमाह—स्थित्युत्पत्त्यन्तहेतव इति । यत एकैकशः स्थित्याद्येकैककार्य-कर्त्तारोऽतः सर्वे सुरास्तद्वशवर्तिन इति भावः । हे गुरो इति सम्बोधनेन विदुरः स्वस्य मैत्रेयशिष्यत्वं तस्य ज्ञानातिशयवत्त्वं च सूचयति । यतोऽहं तव शिष्यस्त्वं च सर्वज्ञोऽस्यत एतदाख्याहीति भावः । यद्वा किञ्चिदिति किंस्विदित्यर्थः । स्विदिति वितर्के । किं कार्यं कर्त्तुमिच्छवः सन्तो जाता एतन्मह्यमाख्याहीत्यर्थः ॥ १६ ॥

**भाषानुवादः**

मरीचि ऋषिकी पत्नी कर्दमजीकी बेटी कलासे कश्यप और पूर्णिमा नामक दो पुत्र हुए, जिनके वंशसे यह सारा जगत् भरा हुआ है ॥ १३ ॥ ❁ ❁ शत्रुतापन विदुरजी ! पूर्णिमाके विरज और विश्वग नामके दो पुत्र तथा देवकुल्या नामकी एक कन्या हुई । यही दूसरे जन्म में श्रीहरिके चरणोंके धोवनसे देवनदी गङ्गाके रूपमें प्रकट हुई ॥ १४ ॥ ❁ ❁ अत्रिकी पत्नी अनसूयासे दत्तात्रेय, दुर्वासा और चन्द्रमा नामके तीन परम यशस्वी पुत्र हुए । ये क्रमशः भगवान् विष्णु, शङ्कर और ब्रह्माजीके अंशसे उत्पन्न हुए थे ॥ १५ ॥ ❁ ❁ विदुरजीने पूछा—गुरुजी ! कृपया यह बताइये कि जगत्की उत्पत्ति, स्थिति और अन्त करनेवाले इन सर्वश्रेष्ठ देवोंने अत्रिमुनिके यहाँ क्या करने की इच्छा से अवतार लिया था ? ॥ १६ ॥

## मैत्रेय उवाच

**ब्रह्मणा [1]नोदितः सृष्टावत्रिर्ब्रह्मविदां वरः । सह पत्न्या ययावृक्षं कुलाद्रिं तपसि स्थितः ॥ १७ ॥**
**तस्मिन् प्रसूनस्तबकपलाशाशोककानने । वार्भिः स्रवद्भिरुद्घुष्टे निर्विन्ध्यायाः समन्ततः ॥ १८ ॥**
**प्राणायामेन संयम्य मनो वर्षशतं मुनिः । अतिष्ठदेकपादेन निर्द्वन्द्वोऽनिलभोजनः ॥ १९ ॥**
**शरणं तं प्रपद्येऽहं य एव जगदीश्वरः । प्रजामात्मसमां मह्यं प्रयच्छत्विति चिन्तयन् ॥ २० ॥**

**श्रीधरस्वामिविरचित-भावार्थदीपिका**

ऋक्षं नाम कुलाद्रिम् । तपसि स्थितः सन् ॥ १७ ॥ तस्मिन्कुलाद्रौ । प्रसूनानां स्तबका येषु पलाशाशोकेषु तेषां कानने । निर्विंध्या नाम नदी तस्याः स्रवद्भिर्वार्भिरुद्घुष्टे नादिते ॥ १८-२० ॥

**श्रीवंशीधरकृत-भावार्थदीपिकाप्रकाशः**

कुलाद्रिं सप्तकुलाचलांतर्गतम् । तपसि स्थितोभूदिति शेषः ॥ १७ ॥ ❁ ❁ स्तबका गुच्छाः । तेषां काननं यस्मिन्स तथा तस्मिन् । स्वामिचरणैस्तु तदङ्घ्र्यधिकरणके कानन इति पृथक् व्याख्यातम् ॥ १८ ॥ ❁ ❁ निर्द्वंद्वस्त्यक्त-

---

१.—प्रा० प्रा० चो० ।

कामादिद्वंद्वः। वर्षशतमिति "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीयया क्षणमपि पादद्वयेन नातिष्ठदित्युक्तम् ॥ १९ ॥ ❀ ❀ आत्मनः स्वस्य विष्णुमूर्त्तेः समां तुल्याम्। संततिं ददातु। अत्र संगतिश्चेत्थं पूर्वमुपविश्य प्राणायामः पश्चादुपासनाविशेषार्थमेकपादेनोर्ध्वस्थितिः क्त्वाप्रत्ययस्य पूर्वकालाश्रयत्वादूर्ध्वस्थितावेव शरणं तमित्यादिमंत्रचिंतनं शतृप्रत्ययस्य समानकालाश्रयत्वात्। तथापि तस्याप्राकट्ये पुनर्दुःखेन स्वदेहत्यागाय साग्निधारणप्राणायामस्तदर्थं पुनरुपवेश एव ज्ञेयः, औचित्यात्। ततस्तस्य विश्वस्य च दाहारंभे तेषां तत्र सहसा प्राकट्यं ततश्च ते बहिः प्रकटा इति मनस्येव स्फुरिते पुनरुत्थानादिकमिति ज्ञेया ॥ २० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

स्थित उद्यतः सन्निति उद्यमयानयोस्समकालीनत्वं विद्यमानार्थत्वे तु मार्ग एव तपःप्रसक्तिः स्यात् अद्रियात्रावैफल्यं क्रियमाणतपोऽसंगतिश्चेत्यवधेयम् ॥ १७ ॥ ❀ ❀ तस्मिन्निति त्रिकं कुलाद्रौ यत्काननमिति व्यधिकरणे सप्तम्यौ। अत्रेयं संगतिः प्राणायामस्तूपविश्य पूर्वमेव कृतः पश्चादुपासनाविशेषस्य सामान्यतो जगदीशधारणरूपस्य कृतः एकपादेनोर्ध्वस्थितिः क्त्वाप्रत्ययस्य पूर्वकालाश्रयत्वं हि सार्वजनीनम्, झणत्कृत्य पततीत्याद्युदाहरणं समानकालाश्रयत्वबोधकन्तु मुख्यार्थाऽसंभव एव अंगीकृतं भाषावृत्तौ तिष्ठतः प्राणायामाऽभिधानात् ॥ १८-२० ॥

### श्रीमद्वीरराघवव्याख्या

तत्र निमित्तं कथयन्नाह ब्रह्मणा चतुर्मुखेन सृष्टौ निमित्तभूतानां सृष्ट्यर्थमित्यर्थः। चोदित आदिष्टः ब्रह्मविदग्रेसरोऽत्रिःपत्न्या अनुसूयया सह ऋक्षाख्यं कुलाचलं तपसे तपश्चर्तुं स्थित आस्थितः ॥ १७ ॥ ❀ ❀ स च मुनिस्तस्मिन्कुलाद्रौ प्रसूनानां स्तबका येषु पलाशाशोकेषु तेषां कानने निर्विंध्याख्याया नद्याः स्रवद्भिर्वार्भिः समंतादुदुघुष्टे नादिते ॥ १८ ॥ ❀ ❀ प्राणायामेन मनो नियम्य शीतोष्णादिसहः वायुभक्षः संवत्सरशतमेकपादेन भुवमवष्टभ्य तप आतिष्ठत् ॥ १९ ॥ ❀ ❀ यस्यात्रेरभिसंधिविशेषमाह शरणमिति। य एव "यतो वा इमानि भूतानि जायंते" इत्यादिश्रुतिप्रसिद्ध एव जगदीश्वरः जगत्सृष्टिस्थितिप्रलयप्रवर्त्तकः तं शरणमहं प्रपद्ये मह्यमात्मसमां स्वतुल्यां प्रजां प्रयच्छत्विति चिंतयन् अतिष्ठदिति पूर्वेणान्वयः ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

परमभागवतस्यात्रेः प्रियचिकीर्षैव प्रथमं प्रयोजनं द्वितीयं योगप्रवर्तनायावतार इति भावेन मैत्रेयः प्रश्नं वक्तीत्याह ब्रह्मणेति ऋक्षमृक्षनामानं किमर्थं यात इति तत्राह तपसीति गत्वा तपसि स्थितोऽभूदित्यन्वयः ॥ १७ ॥ ❀ ❀ तस्मिन् ऋक्षनाम्नि प्रसूनानां स्तबको येषां ते प्रसूनस्तबकास्तैषां पलाशाशोकानां काननं यस्मिन्स तथा तस्मिन्नाम्ना निर्विन्ध्याया नद्याः स्रवद्भिः स्यंदमानैर्वार्भिर्जलैः समंततोऽप्युद्घुष्टे गर्जिते ॥ १८ ॥ ❀ ❀ वर्षशतमिति द्वितीययैकस्मिन्क्षणेऽपि पादद्वयेन नातिष्ठदिति द्योतयति[1] ॥ १९ ॥ ❀ ❀ तपोविषयमाह शरणमिति किं मनोगतं तव इति तत्राह प्रजामिति ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तस्मिन्निति त्रिकम्। प्राणायामेनेत्यादावियं संगतिः। पूर्वमुपविश्य प्राणायामः पश्चादुपासनाविशेषार्थमेकपादेनोर्ध्वस्थितिः। क्त्वाप्रत्ययस्य पूर्वकालाश्रयत्वात्। ऊर्ध्वस्थितावेव तन्मन्त्रचिन्तनं शतृप्रत्ययस्य समानकालाश्रयत्वात्, तथापि तस्याप्राकट्ये पुनर्दुःखेन स्वदेहत्यागाय साग्निधारणप्राणायामः तदर्थं पुनरुपवेश एव ज्ञेयः औचित्यात्। ततस्तस्य विश्वस्य च दाहारम्भे तेषां तत्र सहसा प्राकट्यं ततश्च ते बहिः प्रकटा इति मनस्येव स्फुरिते पुनरुत्थानादिकमिति ॥ १८-२० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ऋक्षं ऋक्षनामानम् ॥ २७ ॥ ❀ ❀ प्रसूनानां स्तबका येषु तेषां पलाशाशोकानां कानने उद्घुष्टे नादिते ॥ १८-२० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ब्रह्मणा सृष्टौ प्रजोत्पादने चोदितः प्रेरितः ऋक्षं नाम कुलाद्रिं गिरिं ययौ। तत्र तपसि स्थितोऽभूत् ॥ १७ ॥ ❀ ❀ तस्मिन् प्रसूनानां पुष्पाणां स्तबका गुच्छा येषु पलाशाशोकेषु तेषां कानने निर्विंध्याया वार्भिर्जलैः समंततः उद्घुष्टे उत्कृष्टघोषवति एकपादेनातिष्ठदित्युत्तरेणान्वयः ॥ १८ ॥ ❀ ❀ अनिलो वायुरेव भोजनमाधारो यस्य ॥ १९ ॥ ❀ ❀ यो जगदीश्वरः

१. कालाध्वनोरत्यंतसंयोगे द्वितीयेति सूत्रात्।

चिदचिदात्मकस्य जगतः ईश्वरो नियंता तं शरणं प्रपद्ये स मह्यमात्मसमां प्रजां प्रयच्छत्विति चिंतयन् एकपादेनातिष्ठदिति पूर्वेणान्वयः ॥ २० ॥

### गोस्वामिश्रीगिरिधरलालविहिता प्रबोधिनी

एवं विदुरेण पृष्टो मैत्रेयस्तेषामवतारप्रकारं तत्प्रयोजनं च वदन् पूर्वमत्रेस्तपसे प्रवृत्तिमाह—ब्रह्मणेति। ब्रह्मणः सर्वेषां प्रजापतीनां पतित्वेन मुख्यत्वादत्रिपितृत्वाच्च तदाज्ञा तेनावश्यं निर्वाह्यातस्तेन सृष्टौ चोदितः प्रेरितः अत्रिर्ब्रह्मविदां वरः वेदार्थज्ञानिनां मध्ये श्रेष्ठः अत एव तथाभूतब्रह्माज्ञापालनं स्वधर्मस्तच्च भगवत्प्रसादं विना न सेत्स्यतीति जानंस्तत्प्रसादार्थं तपः कर्तुं ऋक्षमृक्षनामानं कुलाद्रिं भारतवर्षमुख्यपर्वतगणनायां गणितं मुख्यपर्वतं पत्न्या अनसूयया सह ययौ। तत्र गत्वा च तपसि स्थित इति सम्बन्धः। भार्यया सह गमनं तु तत्रापि स्वपरिचर्यार्थमिति केचित्। वस्तुतस्तु तस्या अपि तपसि स्थिताया भगवदवताराधिष्ठानयोग्यत्वसिद्ध्यर्थं गृहे स्थितायास्तन्न स्यादिति ज्ञेयम् ॥ १७ ॥ ❀ ❀ स्थानोत्कर्षवर्णनपूर्वकं तपःप्रकारं तस्य भावनां चाह—तस्मिन्निति त्रिभिः। प्रसूनानां स्तवका येषु तेषां पलाशाशोकवृक्षाणां काननानि यत्रेति तथा तस्मिन्। तथा निर्विन्ध्याया नद्याः स्रवद्भिर्वार्भिर्जलैः समन्ततः सर्वत उद्घुष्टे शब्दायमाने तस्मिन्नृक्षपर्वते प्राणायामेन मनः संयम्य य एको जगदीश्वरस्तमहं शरणं प्रपद्ये, स आत्मसमां प्रजां मह्यं प्रयच्छत्विति चिन्तयन् निर्द्वन्द्वोऽनिलभोजनो मुनिरेकपादेन वर्षशतमतिष्ठदिति त्रयाणामन्वयः ॥ १८ ॥ ❀ ❀ कायिकवाचिकमानसिकव्यापाराणां मध्ये शरणप्रपत्तेर्मानसिकव्यापारविशेषत्वात् तस्य च चित्तैकतानरूपस्य स्ववशवर्तिमनःस्थैर्याधीनत्वात्तस्य चाञ्चल्ये तदसम्भवात्तदभावे च भगवत्प्रसादाभावेन कार्यसिद्धिर्न स्यादत आवश्यकत्वात्प्रथमं मनसः स्ववशवर्तित्वं सम्पादनीयम्। तस्य च प्रमत्तगजेन्द्रतुल्यतया यथा गजेन्द्रस्य वशीकरणे शिक्षणमुपवासश्चोपायद्वयं तथास्यापि स्ववशीकरणे श्रवणमननविषयदोषदर्शनादिसाधनसम्पत्त्या विषयेभ्यो वैराग्यं प्राणाधीनवृत्तिकत्वात् तन्निरोधरूपप्राणायामश्चेत्युपायद्वयम्। तत्र श्रवणमननवैराग्यद्वारा वशीकरणं बहुकालसाध्यमतो योगमार्गेण प्राणायामेन मनो वशीकृतवानित्याह—प्राणायामेन संयम्य मन इति। एवं मनःसंयमने तस्य तद्धेतुकदेहाद्यध्यासनिवृत्तेः शीतोष्णसुखदुःखक्षुत्पिपासादिद्वन्द्वनिवृत्तिर्जातेत्याह—निर्द्वन्द्व इति। ननु तर्ह्याहारसञ्चारं विना कथं तस्य देहस्थितिस्तत्राह—अनिलभोजनमिति। देहस्थितिहेतुप्रारब्धवशात्प्राणव्यापारेणान्तःप्रविष्टः पवन एवाहाररूपो जात इत्यर्थः। एवं सर्वसाधनसंपत्त्यापि भगवत्प्रसादस्य दुर्लभत्वं सूचयन्नाह—वर्षशतमेकपादेनातिष्ठदिति ॥ १९ ॥ ❀ ❀ एवं तपःप्रकारं निरूप्य भगवत्प्रसादविलम्बे तस्य कामनाया दुर्लभत्वे हेतुमाह—शरणमिति। य एको जगदीश्वरः रजआदिगुणत्रयनियन्तृत्वेन तत्प्रवाहरूपस्य जगतो नियामकस्तमहं शरणं प्रपद्ये। स आत्मसमां स्वसमानशीलसम्पन्नां प्रजां मह्यं प्रयच्छत्विति चिन्तयन्नतिष्ठदिति पूर्वेणान्वयः। अत एव तत्तत्स्वभाववन्तः पुत्रा जाता इति ज्ञेयम् ॥ २० ॥

### भाषानुवादः

श्रीमैत्रेयजीने कहा—जब ब्रह्माजीने ब्रह्मज्ञानियोंमें श्रेष्ठ महर्षि अत्रिजीको सृष्टि रचनेके लिये आज्ञा दी, तब वे अपनी सहधर्मिणीके सहित तप करनेके लिये ऋक्षनामक कुलपर्वतपर गये ॥ १७ ॥ ❀ ❀ वहाँ पलाश और अशोक के वृक्षोंका एक विशाल वन था। उसमें सभी वृक्ष फूलोंके गुच्छोंसे लदे थे तथा उसमें सब ओर निर्विन्ध्या नदीके जलकी कलकल ध्वनि गूँजती रहती थी ॥ १८ ॥ ❀ ❀ उस वनमें वे मुनिश्रेष्ठ प्राणायामके द्वारा चित्तको वशमें करके सौ वर्षतक केवल वायु पीकर सरदी-गरमी आदि द्वन्द्वोंकी कुछ भी परवा न कर एक ही पैरसे खड़े रहे ॥ १९ ॥ ❀ ❀ उस समय वे मन-ही-मन यही प्रार्थना करते थे कि 'जो कोई सम्पूर्ण जगत् के ईश्वर हैं, मैं उनकी शरणमें हूँ; वे मुझे अपने ही समान सन्तान प्रदान करें' ॥ २० ॥

**तप्यमानं त्रिभुवनं प्राणायामैधसाग्निना। निर्गतेन मुनेर्मूर्ध्नः समीक्ष्य प्रभवस्त्रयः ॥ २१ ॥**
**अप्सरोमुनिगन्धर्वसिद्धविद्याधरोरगैः। वितायमानयशसस्तदाश्रमपदं ययुः ॥ २२ ॥**
**तत्प्रादुर्भावसंयोगविद्योतितमना मुनिः। उत्तिष्ठन्नेकपादेन ददर्श विबुधर्षभान् ॥ २३ ॥**
**प्रणम्य दण्डवद्भूमावुपतस्थेऽर्हणाञ्जलिः[1]। वृषहंससुपर्णस्थान् स्वैः स्वैश्चिह्नैश्च चिह्नितान् ॥ २४ ॥**

### श्रीधरस्वामिविरचित-भावार्थदीपिका

प्राणायाम एव एधः संदीपकं काष्ठं यस्य तेन मुनेर्मूर्ध्नो निर्गतेनाग्निना तप्यमानं समीक्ष्य तदाश्रमपदं ययुरित्युत्तरेणान्वयः ॥ २१ ॥ ❀ ❀ अप्सरःप्रमुखैर्वितायमानं विस्तारेण गीयमानं यशो येषां ते ॥ २२ ॥ ❀ ❀ तेषां

[1] प्रा० पा० स्थे कृताञ्जलिः।

प्रादुर्भावः प्राकट्यं तस्य संयोगः सन्निधिस्तेन विद्योतितं मनो यस्य। उत्तिष्ठन्नुत्कर्षेण तिष्ठन्॥ २३॥ ❁ ❁ अर्हणं पुष्पादिकमंजलौ यस्य। उपतस्थे पूजयामास। वृषाद्यारूढान् स्वैः स्वैश्चिह्नैस्त्रिशूलकमंडलुचक्रादिभिः॥ २४॥

### श्रीवंशीधरकृत-भावार्थदीपिकाप्रकाशः

'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः। त्रयो ब्रह्मविष्णुरुद्राः। प्रभवः समर्थाः॥ २१॥ ❁ ❁ तस्यात्रेराश्रम एव पदं स्थानम्॥ २२॥ ❁ ❁ विबुधर्षभान्सर्वदेवश्रेष्ठान्॥ २३॥ ❁ ❁ आदिना त्रिनेत्रत्वचतुर्मुखत्वचतुर्भुजत्वादिग्रहः॥ २४॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तप्यमानमिति युग्मकम्। अग्नेर्मूर्द्धतो निर्गतत्वं भगवतः प्राकट्याभावे निर्वेदेन देहत्यागार्थं साग्निधारणप्राणायामत्वात् किन्त्वौचित्येन तदर्थं पुनरुपवेशो ज्ञेयः॥ प्रणम्येति सार्द्धकम्॥ २१-२४॥

### श्रीमद्वीरराघवव्याख्या

प्राणायाम एव एधः दारुनिचयो यस्य तेन मुनेरत्रेर्मूर्ध्नः शीर्षकपालान्निर्गतेनाग्निना तपोऽग्निना संतप्यमानं त्रैलोक्यं समीक्ष्य त्रयः प्रभवः आत्मेशब्रह्माणः॥ २१॥ ❁ ❁ अप्सरोमुनिप्रभृतिभिः प्रस्तूयमानकीर्तयस्तदाश्रमस्थानं ययुः अत्र य एव जगदीश्वरस्तं शरणं प्रपद्य इति सृष्टिस्थितिप्रलयप्रवर्त्तकत्वेनाकारेण परमात्मन उपासितत्वात्तस्य ब्रह्मरुद्रांतर्यामितया तादूप्येण सृष्टिसंहारकारणत्वात्तयोर्ब्रह्मरुद्रयोरपि तत्रागमनमुपपन्नमिति वेदितव्यम्॥ २२॥ ❁ ❁ तेषामात्मेशब्रह्मणामाविर्भावः प्राकट्यं तस्य संयोगः सान्निध्यं तेन विद्योतितं मनो यस्य स मुनिरत्रिरेकपादेनोत्तिष्ठन् विबुधश्रेष्ठानात्मेशब्रह्मणो ददर्श॥ २३॥ ❁ ❁ ततो भूमौ दंडवत्प्रणम्य अर्ह्यते पूज्यते अनेनेत्यर्हणं पुष्पादिकमंजलौ यस्य सः उपतस्थे समीपे स्थित्वा तुष्टाव एतदेव प्रपंचयति। गरुडवृषाद्यारूढान्स्वैः स्वैश्चिह्नैः शंखचक्रत्रिशूलकमंडल्वादिभिर्लक्षितान्॥ २४॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अत्रेस्तपोमाहात्म्यं तेन प्रसन्नानां त्रयाणां देवानां तदाश्रमगमनं वक्ति तप्यमानमिति॥ २१॥ ❁ ❁ अप्सरआदिभिर्वितायमानं प्रपंचीक्रियमाणं यशो येषां ते तथा॥ २२॥ ❁ ❁ तत्प्रादुर्भावस्तेषां प्रकाशस्तस्य संबंधस्तेन विद्योतितमतिप्रकाशितं मनो यस्य स तथा॥ २३॥ ❁ ❁ अर्हणमर्घ्यादिसाधनमंजलिश्च यस्य त तथा शूलकमंडलुचक्रादिभिश्चिह्नितानंकितान्॥ २४॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तप्यमानमिति युग्मकम्। प्राणायामेनेति चित्सुखः॥ २१-२३॥ ❁ ❁ प्रणम्येति सार्द्धकम्॥ २४॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

मुनेर्मूर्ध्नः सकाशान्निर्गतेनाग्निना तपोमयेन तप्यमानं वीक्ष्य प्राणायाम एधः काष्ठं यस्य तेन। अत्र तिष्ठन्नेव प्राणायामांश्चकारेति ज्ञेयम्। प्राणायामेन संयम्य मनोऽतिष्ठदिति क्त्वाप्रत्ययो झणत्कृत्य पतति संनिमील्य हसतीत्यादिवत्तुल्यकाल एव ज्ञेयः॥ २१॥ ❁ ❁ तेषां प्रादुर्भावेन हेतुना यः संयोगो मिलनं तेन विद्योतितमनास्तान् प्रत्यभ्युत्थानार्थं तिष्ठन्नेव उत्कर्षेण तिष्ठन्॥ २३॥ ❁ ❁ अर्हणं पुष्पादिकमञ्जलौ यस्य सः॥ २४॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

मुनेर्मूर्ध्नः सकाशान्निर्गतेन प्राणायाम एव एधः इंधनं यस्य तेनाग्निना त्रिभुवनं तप्यमानं समीक्ष्य तदाश्रमपदं त्रयः प्रभवो ययुरित्यन्वयः। य एव जगदीश्वरस्तं शरणं प्रपद्ये इत्यनेन जगदीश्वरः श्रीवासुदेवः। शरणत्वेन वांछितः स एव परमः प्रभुः स्वस्य जगदीश्वरत्वविज्ञापनाय "सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः" इत्येव पूर्वोक्ताभ्यां प्रभुभ्यां सहितः तदाश्रमपदं प्राप्तोभूदित्यर्थः॥ २१॥ ❁ ❁ अप्सरःप्रमुखैर्वितायमानं विस्तीर्यमाणं यशो येषां ते तदाश्रमपदं तस्य आश्रमस्थानम्॥ २२॥ ❁ ❁ तेषां प्रादुर्भावस्य संयोगेन संसर्गेण विद्योतितं मनो यस्य स एकपादेनोत्तिष्ठन्नेव ददृशे॥ २३॥ ❁ ❁ तदा भूमौ दंडवत्प्रणम्य अर्ह्यते पूज्यते अनेनेत्यर्हणं पुष्पादिकमंजलौ यस्य सः स्वैः स्वैश्चिह्नैः कण्ठगतनीलिमभृगुलताचतुर्मुखादिरूपैश्चिह्नितान् उपतस्थे पूजयामास॥ २४॥

### गोस्वामिश्रीगिरधरलाल विहिता बालप्रबोधिनी

तत्तपःप्रभाववर्णनपूर्वकं ब्रह्मादीनां तत्रागमनमाह—तप्यमानमिति द्वाभ्याम्। प्राणायाम एवैधःसंदीपको यस्य तादृशेन मुनेः अत्रेर्मूर्ध्नो बहिर्निर्गतेनाग्निना त्रिभुवनं तप्यमानं वीक्ष्य सर्वज्ञत्वात्स्वस्थाने स्थिता एव ज्ञात्वा त्रयः प्रभवो ब्रह्मविष्णुरुद्राः अप्सरआदिभिर्विर्तायमानयशसस्तदाश्रमपदं ययुरिति द्वयोरन्वयः॥ २१॥ ❀ ❀ अप्सरःप्रमुखैर्देवविशेषैर्वितायमानं यशो येषां ते। तेऽपि तेषां यशो गायन्तस्तैः सहागता इत्यर्थः॥ २२॥ ❀ ❀ ततस्तेषां दर्शनं मुनेर्जातमित्याह—तत्प्रादुर्भावेति। तेषां ब्रह्मादीनां प्रादुर्भावः प्राकट्य तस्य संयोगः सन्निधिस्तेन विद्योतितं प्रकाशितं समाधेर्व्युत्थाय दर्शनार्थं प्रवृत्तं मनो यस्य तादृशो मुनिरत्रिरेकपादेनोत्तिष्ठन्नेव तान् विबुधर्षभान् ददृशे ददर्शेत्यन्वयः॥ २३॥ ❀ ❀ ते च मुनेर्विश्वासार्थं स्वस्ववाहनमारुह्य स्वस्वचिह्नानि च धृत्वैव समागताः, न तु वैलक्षण्यरूपेणेत्याह—वृषहंसेत्यादिना। तत्र वृषो धर्मरूपः शिवस्य वाहनम्, हंसो ज्ञानात्मा ब्रह्मणो वाहनम्, सुपर्णो गरुडो भक्तिरूपो विष्णोर्वाहनम्। अनेनैवंभूतवाहनविशिष्टानां दर्शनमात्रेण तस्य धर्मादयस्त्रयोपि पुष्टा जाता इति सूचितम्। एवं स्ववाहनवृषहंससुपर्णस्थान्। एवं त्रिशूलडमरुनागादीनि शिवचिह्नानि, कमण्डलुकुशादीनि, ब्रह्मचिह्नानि, शङ्खचक्रपद्मादीनि विष्णुचिह्नानि, तैः स्वैःस्वैश्चिह्नैश्चिह्नितान्। तथा कृपया योऽवलोकोवलोकनं तेन हसच्च तद्वदनं तेनोपलम्भितान् प्रसन्नत्वेन ज्ञापितान्, एतादृशमुखारविन्ददर्शनेनैव प्रसन्नता ज्ञाता भवति। चिह्नैश्चेति चकारेण तेषां पार्षदा गृह्यन्ते। स्वस्वपार्षदैश्च सहितानित्यर्थः। एवंभूतान् विबुधर्षभान्ददृशे इति पूर्वेणैव सम्बन्धः। तान् दृष्ट्वा च भूमौ प्रणम्य साष्टाङ्गप्रणामं कृत्वार्हणाञ्जलिः अर्हणद्रव्यं पुष्पफलाक्षतोदकचन्दनधूपदीपादिकमञ्जलौ धृत्वा उपतस्थ उपस्थानं पूजां कृतवानित्यर्थः॥ २४॥

### भाषानुवादः

तब यह देखकर कि प्राणायामरूपी ईंधनसे प्रज्वलित हुआ अत्रिमुनिका तेज उनके मस्तकसे निकलकर तीनों लोकोंको तपा रहा है—ब्रह्मा, विष्णु और महादेव,—तीनों जगत्पति उनके आश्रमपर आये। उस समय अप्सरा, मुनि, गन्धर्व, सिद्ध, विद्याधर और नाग—उनका सुयश गा रहे थे॥ २१-२२॥ ❀ ❀ उन तीनोंका एक ही साथ प्रादुर्भाव होनेसे अत्रिमुनिका अन्तःकरण प्रकाशित हो उठा। उन्होंने एक पैरसे खड़े-खड़े ही उन देवदेवोंको देखा और फिर पृथ्वीपर दण्डके समान लोटकर प्रणाम करनेके अनन्तर अर्घ्य-पुष्पादि पूजनकी सामग्री हाथमें ले उनकी पूजा की। वे तीनों अपने-अपने वाहन—हंस, गरुड़ और बैलपर चढ़े हुए तथा अपने कमण्डलु, चक्र, त्रिशूलादि चिह्नोंसे सुशोभित थे॥ २३-२४॥

कृपालोकेन हसद्वदनेनोपलम्भितान्। तद्रोचिषा प्रतिहते निमील्य मुनिरक्षिणी॥ २५॥
चेतस्तत्प्रवणं युञ्जन्नस्तावीत्संहताञ्जलिः। श्लक्ष्णया सूक्तया वाचा सर्वलोकगरीयसः॥ २६॥

### अत्रिरुवाच

विश्वोद्भवस्थितिलयेषु विभज्यमानैर्मायागुणैरनुयुगं विगृहीतदेहाः।
ते ब्रह्मविष्णुगिरिशाः प्रणतोऽस्म्यहं वस्तेभ्यः क एव भवतां म इहोपहूतः॥ २७॥
एको मयेह भगवान् विविधप्रधानैश्चित्तीकृतः प्रजननाय कथं नु यूयम्।
अत्रागतास्तनुभृतां मनसोऽपि दूराद् ब्रूत प्रसीदत महानिह विस्मयो मे॥ २८॥

### मैत्रेय उवाच[1]

इति तस्य वचः श्रुत्वा त्रयस्ते विबुधर्षभाः। प्रत्याहुः श्लक्ष्णया वाचा प्रहस्य तमृषिं प्रभो॥ २९॥

### देवा ऊचुः

यथा कृतस्ते सङ्कल्पो भाव्यं तेनैव नान्यथा। सत्सङ्कल्पस्य ते ब्रह्मन् यद्वै ध्यायति[2] ते वयम्॥ ३०॥

---

१. प्राचीने पाठे मैत्रेय उवाचेति न। २. प्रा० पा० ध्यायसि।

## श्रीधरस्वामिविरचित-भावार्थदीपिका

कृपयाऽवलोको यस्मिन् हसच्च तद्वदनं च तेनोपलंभितान्प्रसन्नत्वेन ज्ञापितान्। तेषां रोचिषा दीप्त्या ॥ २५ ॥ ❀ ❀ श्लक्ष्णया मधुरया। सूक्तया गंभीरार्थया ॥ २६ ॥ ❀ ❀ अनुयुगं कल्पे कल्पे विभज्य गृहीतो देहो यैस्ते प्रसिद्धा ब्रह्मविष्णुगिरिशा यूयम्। वो युष्मान्प्रणतोऽस्मि। तेभ्यः सकाशादेक एव मे मयोपहूतः शरणं प्रपद्येहमित्येकस्यैव निर्दिष्टत्वात् स च युष्मासु क इति युष्माभिरेव कथ्यतामित्यर्थः ॥ २७ ॥ ❀ ❀ अस्य प्रपंचः। एक इति। विविधैः प्रधानैरुपचारैः। विबुधप्रधान इति वा पाठः। प्रजननाय पुत्रोत्पत्त्यै चित्तीकृतश्चित्तेनैक्यं नीतः। मनसोऽपि दूरा अगोचराः संतः कथं नु त्रयोऽप्यत्रागताः ॥ २८-२९ ॥ ❀ ❀ ते त्वया यथा कृतः संकल्पस्तेन तथैव भाव्यं नान्यथा। यतः सत्संकल्पस्य सत्यसंकल्पस्य ते संकल्पः। तर्हि कथमेकस्मिन्ध्यायमाने त्रयः प्रतीताः स्थ। तत्राहुः यदेकं जगदीश्वराख्यं तत्त्वं भवान् ध्यायति त एते वयं त्रयोऽपि तदेवैकं तत्त्वं नास्माकं भेदोऽस्तीत्यर्थः ॥ ३० ॥

## श्रीवंशीधरकृत-भावार्थदीपिकाप्रकाशः

प्रतिहते प्रतिबद्धदर्शनशक्तिनी ॥ २५ ॥ ❀ ❀ तेषु प्रवणं मग्नं युंजन्कुर्वन्। संहृतांजलिर्बद्धांजलिः। यद्वा सूक्तया "प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव। आस्य जानतो नामचिद्विवक्तनमहस्ते विष्णो सुमतिं भजामहे। इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधास" इत्यादिवेदरूपया ॥ २६ ॥ ❀ ❀ इत्यर्थ इति। भवतामंतर्यामित्वेन सर्वज्ञत्वाद्यूयमेव मदभीष्टमेवं कथयत न मत्तो निजानादरगर्भां वाचं भाषयथेति तात्पर्यम् ॥ २७ ॥ ❀ ❀ तांस्तूष्णीं स्थितान्वीक्ष्य स्वाभिमतं स्पष्टयति अहो मद्भाग्यमलौकिकं यतोऽलभ्यलाभो जात इत्याह—महानिहेति ॥ २८ ॥ ❀ ❀ प्रभो इति। भगवत्कथाश्रवणसमर्थत्वादुक्तं मैत्रेयेण ॥ २९ ॥ ❀ ❀ इत्यर्थ इति। भेदाभावज्ञापनायैवैकाह्वाने त्र्यागमनमिति भावः। अयं भावः—भवता य एव जगदीश्वर इति पूर्णषडैश्वर्यो भगवान्न विवक्षितः। न च महत्स्रष्टृत्वादिविश्वशक्तिकः पुरुषः विसर्गाद्यंशमात्रसिद्धिकामनया तावन्मात्रोपाधितयोपासनाप्रवृत्तेः। यदि च तत्तदुपासनामकरिष्यस्तदा तत्तद्रूपः स स एवाविर्भविष्यदेव। विश्वेत्यादिपद्येप्युद्भवादिशब्दा विसर्गगततन्मात्रपरा एवातो जगदीश्वरशब्देनापि विसर्गादिमात्रशक्तिको विवक्षितः। स चैकत्वेनोपासितोपि 'सृजामि तन्नियुक्तोहम्' इत्यादिन्यायेन सर्वतत्तच्छक्त्याश्रयत्वात् श्रीविष्णुत्वेन प्राप्तोऽपि तद्रूपतया न विवक्षितस्तद्विग्रहादिनिष्ठत्वाभावात्। अथ त्रयाणामभेदोपि न विवक्षितस्तेषां क एवेत्यादिविरोधात्, किं तु सामान्यतयैव विवक्षितः। सामान्यञ्च विशेषाद्विना नोपलभ्यत इत्यतस्त्रयाणामप्याविर्भावो योग्य एवेति तथैवाहुर्यद्वै ध्यायतीति संदर्भः। विश्वनाथस्तु—यत्—यं जगदीश्वरं भवान्ध्यायति ते जगदीश्वरा वयं सत्संकल्पस्य तवाभीष्टदातारो भवामेत्यर्थः। अयं भावः—जगदीश्वरतुल्य एकः पुत्रो मे भूयादिति संकल्पे कतमो जगदीश्वरः स्यादिति संदेहेन त्रय एव वयं ध्याताः पुनश्च ध्यातेषु त्रिषु मध्ये जगदीश्वर एक आयात्विति पुनरेकस्य चित्तस्थीकृतत्वेपि त्रयाणामेवास्माकं जगत्यस्मिन्नैश्वर्य्यात्त्रय एवागता अस्माकं त्रित्वेप्यैक्याद्वयमेक एव नापि त्वया य एव परमेश्वर इति परमेश्वरशब्दः प्रयुक्तोऽत इंद्रशत्रो विवर्द्धस्वेत्यादौ संकल्पादपि साधनस्य प्राबल्यदर्शनात्साधनानुरूपं संकल्पानुरूपं च तव फलं भविष्यतीत्याह। तथा च विग्रहाणां भेदेपि विग्रहिण ऐक्यमेव। एकस्यैवाश्विनीकुमारद्वित्ववत्त्रित्वं तदुक्तं "तस्याऽत्यास्तनवो ब्रह्मा रुद्रो विष्णुश्च" इति मैत्रेयोपनिषदि। पूर्वमप्युक्तं "सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते। स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः" इति नाममात्रेणैव भेदो न वस्तुत इति तात्पर्यम् ॥ ३० ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तच्छोचिषेति सार्द्धकम् ॥ २५-२६ ॥ ❀ ❀ तेभ्यः सकाशाद्य एक एवोपहूतः स चेति यत्तदोर्गम्यमानत्वं युष्माभिरेवेत्यादेरार्थिकार्थत्वादित्यर्थोक्तिः ॥ २७ ॥ ❀ ❀ पुनरुक्तिवारणार्थमाहास्यैव पद्यस्य प्रपंच इति तथा च पूर्वं संग्रहवाक्यमिदञ्च विवरणवाक्यमिति न पौनरुक्त्यम् एवमन्यत्रापि उपचारैः पाद्यादिषोडशभिः चित्तेनैक्यं नीतः ध्रुवानुस्मृतिविषयीकृतः मया भजनं त्रयाणां न कृतं तथापि अत्र मदाश्रमे यूयमागता इति स्पष्टस्य निमित्तस्याभावात्तत्र निमित्तंब्रूतेत्यर्थः ॥ २८ ॥ ❀ ❀ सरलोयं त्राह्मणः असत्तत्त्वाऽज्ञानादिति प्रहस्य ॥ २९ ॥ ❀ ❀ यथा सृष्ट्याद्युपयुक्त गुणशक्त्युपाधिमत्ताप्रकारेण तेन संकल्पेन तथैव भाव्यमिति भावसाधनं यद्यपि सर्वकर्तृत्वेन महत्स्रष्टाऽऽविर्भवेत्तथापि तस्य कारणतत्त्वोपादकत्वादत्रिणा च जगदीश्वर इति विसर्गोत्पादकत्वमात्रोपाधिकस्यालम्बनीकृतत्वाद्विशेषतत्तद्व्यक्तिज्ञानाभावात् सामान्यरूपस्य च विशेषमंतराज्ञाभावात्त्रयोऽपि प्रतीताः किन्तु तत्त्वेन तु त्रयाणामप्यैक्यान्न विस्मयो विधेय इत्यर्थः ॥ ३० ॥

## श्रीमद्वीरराघवव्याख्या

कृपया अवलोको यस्मिन् हसच्च तद्वदनं च तेन उपलंभितान् प्रसन्नत्वेन ज्ञापितान् तेषां शोचिषा दीप्त्या प्रतिहते अक्षिणी नेत्रे निमील्य ॥ २५ ॥ ❀ ❀ चेतश्चित्तं तत्प्रवणं विबुधर्षभासक्तं कृत्वा बद्धांजलिः सन् मुनिरत्रिर्मधुरया वाचा सर्वे-

लोकेभ्यः श्रेष्ठान् विबुधर्षभान्नत्वावीत्स्तुतवान् ॥ २६ ॥ ❀ ❀ स्तुतिमेवाह विश्वेति द्वाभ्यां विश्वस्योद्भवादिषु निमित्तभूतेषु विश्वसर्गाद्यर्थमित्यर्थः । अनुयुगं प्रतिकल्पं विभज्यमानैर्मायागुणैरजस्सत्त्वतमोभिरुपलक्षिता गृहीता देहा यैस्ते यूयं ब्रह्मविष्णुगिरिशाः अतस्तेभ्यो वः युष्मभ्यं प्रणतोऽस्मि युष्माकं मध्ये एक एव भगवान् जगदीश्वर उपहूतः शरणं तं प्रपद्ये इत्येकस्य निर्दिष्टत्वात् स एष युष्मासु कतम इति युष्माभिरेव कथनीयमित्यर्थः ॥ २७ ॥ ❀ ❀ एतदेव प्रपंचयति एक इति प्रधानः सर्वोत्कृष्ट एक एव भगवान् सर्वेश्वरः विविधैरुपचारैर्मया प्रजननाय सर्वेश्वरतुल्यपुत्रलाभाय चित्तीकृतः चित्तविषयीकृतः उपासित इति यावत्, अतस्तनुभृतां देहिनां मनसोऽपि दूराः मनसापि ग्रहीतुमशक्या यूयं त्रयोऽपि कथमत्रागताः तत्र कारणं ब्रूत कथयत । प्रसीदत मह्यं प्रसन्ना भवत । अत्र त्रयाणामागमने मम महान् विस्मयो वर्त्तते ॥ २८ ॥ ❀ ❀ इत्येवं तस्यात्रेर्वचः श्रुत्वा त्रयो ब्रह्मविष्णुशिवाः प्रहस्य श्लक्ष्णया गंभीरया वाचा हे प्रभो ! वश्येंद्रिय ! विदुर ! तमृषिमत्रिं प्रत्याहुः ॥ २९ ॥ ❀ ❀ उक्तिमेवाह ते त्वया यथा कृतः संकल्पस्तेनैव तथा भाव्यं नान्यथा सत्यः सत्संकल्पस्य ते संकल्पः कथमेकस्मिन् ध्याते त्रय आगतास्तत्राहुः हे ब्रह्मन् ! त्वं यदेकं जगदीश्वराख्यं तत्त्वं ध्यायसि तद्वयं तदेव तत्त्वं सद्वारकमद्वारकं च त्रिमूर्त्तिरूपेणावस्थितमित्यर्थः । मूर्तिविशेषनिर्धारणमंतरेण जगत्सृष्टिस्थितिलयहेतुरीश्वर इति हि त्वत्संकल्पः । अतो वयमागता इत्यभिप्रायः । ननु यद्वै ध्यायसि ते वयमित्यनेन त्रिमूर्त्यैक्यं प्रतीयते सत्यमैक्यमस्त्येव ततः किं ब्रह्मशिवयोर्भगवत्पारतंत्र्यमस्मिन्पुराणे पूर्वापरग्रंथेषु श्रूयमाणं विरुध्यत इति चेत्तन्न, "सर्वगत्वादनंतस्य स एवाहमवस्थितः । मत्तः सर्वमहं सर्वं मयि सर्वं सनातनम् ॥" इतिवद्ब्रह्मात्मकत्वबुद्ध्या चतुर्मुखशिवयोरभेदव्यवहारोपपत्तेः । तथा हि तयोर्ब्रह्मात्मकत्वं स्फुटमुच्यते महाभारते "तवांतरात्मा मम च ये चान्ये देहिसंज्ञिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्क्वचिदि"ति सद्वारकं चावस्थितं तद्ब्रह्मैव वयमित्यर्थः । अत्रेदमवधेयं यद्यपि क्वचित्क्वचित् "ब्रह्मा च नारायणः शिवश्च नारायणः ब्रह्मा नारायणाख्योसौ कल्पादौ भगवान् यथा । प्रजाः ससर्ज भगवान् ब्रह्मा नारायणात्मकः ॥ ततः स भगवान्विष्णुरुद्ररूपधरोऽव्ययः । ततः कालाग्निरुद्रोसौ भूत्वा सर्वहरो हरिः ॥ सर्गस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् । संज्ञां स याति भगवानेक एव जनार्दनः ॥" इत्यादिषु त्रिमूर्त्यैक्यं प्रतीयते तथापि "नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते नारायणाद् द्वादशादित्या रुद्रा वसवः सर्वाणि छंदांसि एको ह वै नारायण आसीन्न ब्रह्मा नेशानः । यन्नाभिपद्मादभवन्महात्मा प्रजापतिः, तत्र ब्रह्मा चतुर्मुखोऽजायत सोग्रे भूतानां मृत्युमसृजत् त्र्यक्षं त्रिशिरस्कं त्रिपादं खंडपरशुं ब्रह्मा दक्षादयः कालस्तथैवाखिलजंतवः विभूतयो हरेरेता जगतः सृष्टिहेतवः ॥" इत्यादिषु भगवतस्तयोश्च भेदावगमात्सामानाधिकरण्यस्य च "सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते । हरो हरति तद्वशः" इत्या शानुगुण्येनांतर्यामित्वेनाप्युपपत्तेरभेदो न युक्तः । नन्वेवमपि ब्रह्मविष्णुरुद्रेंद्रास्ते सर्वे संप्रसूयंते इति ब्रह्माद्यविशेषेण विष्णोरप्युत्पत्तिश्रवणात् त्रिमूर्त्युत्तीर्णं तत्त्वांतरमेष्टव्यं तदेवैतत् त्रिमूर्त्याकारेणावस्थितमिति, मैवं सदेवेत्यादिवाक्येषु कंठोक्त्या सर्वं वाक्यं सावधारणमिति न्यायाच्च सावधारणेषु प्रत्येकमेकैकस्य स्वव्यतिरिक्तकारणत्वोपास्यत्वबोधकवाक्यस्थितसामान्यशब्दानां विशेषवाचिपदे सति तत्पर्यवसानस्यापच्छागपशुन्यायसिद्धत्वादचितः सर्वकारणत्वानुपपत्तेरीक्षणाद्यर्थविरोधाच्च विशेष्यव्यवस्थापकत्वानुपपत्तेर्दत्तसमस्तकारणत्वबोधनात्समुच्चित्यकारणत्वानुपपत्तेः चिद्विशेषाणां साधारणब्रह्मरुद्रे्द्रवैश्वानरादिपदवाच्यानां पुरोवादप्रसिद्धेंद्रादीनां कार्यत्वकर्मवश्यत्वयोः श्रुत्यैव प्रतिपन्नत्वात्तद्वाचिनां तेषां विशेष्यव्यवस्थापकत्वानुपपत्तेः श्रीपतेरसाधारणपुरुषनारायणादिपदवाच्यस्य कुत्रापि कर्मवश्यत्वाश्रवणात् तदुत्पत्तेश्च 'अजायमानो बहुधा विजायते' इति अवतारत्वस्य श्रवणे कर्मकृतत्वस्यापोदितत्वादितरोत्पत्तेस्तदपवादाभावात् तस्य सर्वकारणत्वोपपत्तेस्तस्य सकलजगत्कारणत्वबोधकश्रुत्यैकार्थ्यान्नारायणस्यैव सर्वोत्कृष्टत्वमेष्टव्यमित्यन्यत्र विस्तरः ॥ ३० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

कृपया प्रयुक्तेनावलोकितेन लसता वदनेनोपलंभितानुपलक्षितान् तच्छोचिषा तेषां वपुस्तेजसा । प्रतिहते प्रतिबद्धदर्शनशक्तिनी ॥ २५ ॥ ❀ ❀ तत्प्रवणं तेषु मग्नं संहतांजलिर्बद्धांजलिः श्लक्ष्णया मधुरया । सूक्तया वैदिक्या ॥ २६ ॥ ❀ ❀ कान् गुणानुपसंहृत्य तुष्टावेति तत्राह विश्वेति । विश्वस्योद्भवस्थितिलयेषु विभज्यमानैः पृथक् पृथक् क्रियमाणैर्मायायाः प्रकृतेर्गुणैः रजःसत्त्वतमःसंज्ञैरनुगुणं कार्यानुकूलं सृष्ट्ये रजोगुणप्रवर्तकत्वेन, रक्षणाय सत्त्वगुणप्रवर्तकत्वेन, संहाराय तमोगुणप्रवर्तकत्वेन, प्रगृहीतो देहो यैस्ते प्रगृहीतदेहाः स्वीकृतावतारा हे ब्रह्मविष्णुगिरिशाः ! अहं वः "प्रणतोऽस्मि प्रजापते नत्वदेतान्यन्यो विश्वाजातानि परिता बभूव । आस्यजानंतो नाम चिद्विविक्तनमहस्ते विष्णो सुमतिं भजामहे । इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाम्ने" इत्यादिसूक्तोक्ता ये यूयं तेभ्यो वो युष्मभ्यं भूयो भूयः प्रणतोस्मीत्यन्वयः । भक्तिरोमाश्लिष्टमनाः ब्रह्मस्थो रुद्रस्थः पृथक् स्थितः स्वयमपि विष्णुस्त्रिपुरुषसमाः प्रजाः प्रयच्छत्विति यः पूर्वसंकल्पस्तं विस्मरन्निवात्रिर्दुष्टमोहनार्थं विज्ञापयति क एवेति । भवतां मध्ये मयेह क एव स्वित् कोनूपहूत इत्यन्वयः ॥ २७ ॥ ❀ ❀ एतदेव विवृणोति एको मयेति । इह वने तपः कुर्वता मया विबुधप्रधानः सर्वदेवोत्तमो ब्रह्मस्थो रुद्रस्थः स्वयं विष्णुरेको भगवानेव प्रजननाय पुत्रत्रयोत्पत्तये त्रिपुरुषसमानान् पुत्रान् मह्यं ददात्विति चित्तीकृतो ध्यात इत्येवं स्थिते तनुभृतां देहिनां मनसोऽपि

दूरविषया यूयं कथं न्वत्रागतास्तद् ब्रूत सम्भाषणेन प्रसीदत। मे इहास्मिन्नर्थे एकस्मिन्ध्याते त्रयाणामागमनलक्षणे महान् विस्मय इति "ब्रह्मस्थश्चैव रुद्रस्थः स्वयं चापि हरिः प्रभुः। प्रजां त्रिपूरुषसमां यच्छत्वित्यत्रिरैच्छत। तस्मात्स ब्रह्मरुद्राभ्यां सह विष्णुर्जगत्पतिः आगत्य तु त्रिमूर्त्यंशान् प्रादात्पुत्रान् जनार्दनः। भा१वित्वाच्चैव कार्यस्य लोकानां मोहनाय२च" इति वचनात् लोकमोहनार्थमत्रिणा विकल्पितं न तु तत्त्वार्थत्वेन ॥ २८ ॥ ❀ ❀ तत्त्वं विदं कार्यस्य भावित्वात् संकल्पोपेतत्वात् यथा संकल्पस्तथा कार्यमपि भविष्यति। संकल्पस्त्वेक एव तस्माज्झटिति प्रत्ययमर्शनेन तं त्रिलोकमोहनार्थमुक्तविकल्पाभिप्रायं जानंतस्तत्त्वगूहनं विज्ञाय प्रहसंतस्त्रयो देवा आहुरित्याह इतीति ॥ २९ ॥ ❀ ❀ कर्माप्रतीतेः किमाहुरिति तत्राह यथेति। तपश्चरता त्वया यथा संकल्पकृतस्तेन संकल्पेन तथैव भाव्यं कर्तुमकर्तुमन्यथा कर्तुं समर्थानां भवतां मनीषितं मम दुरवगाहमिति तत्राह नान्यथेति। स चासौ संकल्पस्तत्संकल्पस्तत्संकल्पस्यान्यथाभावो नैव त्वत्संकल्पानुसारेणास्मत्संकल्पेऽपि व्याख्यात इति भावेनाहुः यद्वा इति ब्रह्मस्थो रुद्रस्थस्तथा विष्णुः स्वयं च त्रिपुरुषसमानान् पुत्रान् प्रयच्छत्विति यत्संकल्पं ध्यायसि ते वयं ब्रह्मविष्णुरुद्रा इति त्रयस्तुभ्यं पुत्रान् दास्याम इति संकल्प्यात्रागता इति शेषः। निपातद्वयेन प्रमाणांतरप्रसिद्धिं द्योतयति ॥ ३० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

विजृम्भितानिति। चित्सुखः तच्छोचिषेति सार्द्धकम् ॥ २५-२६ ॥ ❀ ❀ विश्वेति। अत्र च श्रीविष्णोरपि मायागुणगृहीतदेहत्वं नेति ज्ञानादेव कल्पितं तथैवाह। यो मे मया उपहूतः स तेभ्यः पृथक् पृथक् तत्तच्छक्तिविग्रहादिविभागेभ्यो हेतुभ्यः भवतां मध्ये क एव स्यात्। इतरद्वयनिरासेन को भवेत्। तस्याविभक्तत्वान्न कोऽपीति संभावयामीत्यर्थः ॥ २७ ॥ ❀ ❀ न च त्रयोऽपि यूयमुपासिताः यत एक इति। मया तु तत्तच्छक्तित्वेनैक एव चित्तीकृतः। ततः स एव चित्तस्थः सन् मदिष्टं सम्पादयेत्। कथं नु यूयमेतावता प्रयासेनात्रागता अतो महानेव संकोचो वा मम जात इति भावः। तथैवाह मनसोऽपीति प्रधानैरिति सम्बन्धोक्तिः पाठान्तरं तदज्ञानं दृष्ट्वैव प्रहस्य ॥ २८-२९ ॥ ❀ ❀ उत्तरमाहुर्यथेति। अयं भावः—भवता य एव जगदीश्वर इति पूर्णषड्गुणैश्वर्यो भगवान् न तावद्विवक्षितः न च महत् स्रष्टृत्वादिविश्वशक्तिकः पुरुषः विसर्गांशमात्रसिद्धकामनया तावन्मात्रोपाधितयोपासनाप्रवृत्तेः। यदि च तत्तदुपासनामकरिष्यस्तदा तत्तद्रूपः स एवाविरभविष्यत्, एवं विश्वे त्यादिपद्येऽप्युद्भवादिशब्दा विसर्गगततन्मात्रपरा एव। अतो जगदीश्वरशब्देनापि विसर्गादिमात्रशक्तिको विवक्षितः। स चैकत्वेनोपासितोऽपि सृजामि तन्नियुक्तोऽहमित्यादिन्यायेन सर्वं तत्तच्छक्त्याश्रयत्वात् श्रीविष्णुः प्राप्तोऽपि तद्रूपतया न विवक्षितः, तद्विग्रहादिनिष्ठत्वाभावात् अथ त्रयाणामभेदोऽपि न विवक्षितः, तेषां क एवेत्यादिविरोधात्। किन्तु सामान्यतयैव विवक्षितः, सामान्यञ्च विशेषान् विना नोपलभ्यते इत्यतस्त्रयाणामप्याविर्भावो योग्य एवेति तथैवाहुः—यद्वै इति ॥ ३० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

स्वैः स्वैश्चिह्नैस्त्रिशूलकमण्डलुचक्रादिभिस्तदपि कृपावलोकेनैव उपलंभितान्। एते ईश्वरा एवैतादृशकृपावलोकान्यथानुपपत्तेरिति ज्ञापितान्। कीदृशेन हसत् प्रसीदद्वदनं यतस्तेन ॥ २५ ॥ ❀ ❀ श्लक्ष्णया मधुरया ॥ २६ ॥ ❀ ❀ अनुयुगं प्रतिकल्पं विभज्यमानैर्मायागुणैर्ये विश्वस्य उद्भवादयस्तेषु प्रवृत्तास्ते प्रसिद्धा एव ब्रह्मादयो यूयं विगृहीतदेहा भवथेति जानामीति भावः। यद्वा मायागुणैरेव विगृहीतदेहा इति विष्णोरपि प्रकृतिसत्त्वमयदेहत्वं ईश्वरत्वस्यैव निर्द्धारासामर्थ्येन भगवत्तत्त्वज्ञानाभावादेव तेनोक्तमिति ज्ञेयं तेभ्यो वो युष्मभ्यं प्रणतोऽस्मि प्रणतिं दददस्मीति कृपया मत्सन्देह उच्छिद्यतामिति भावः। भवतां मध्ये मया इह मदभीष्टसाधने क उपहूतः, 'शरणं तं प्रपद्ये, इत्येकस्यैव निर्दिष्टत्वात् स च जगदीश्वरो भवतां मध्ये क इति भवद्भिरेव कृपया कथ्यतामिति भावः ॥ २७ ॥ ❀ ❀ तूष्णींस्थितांस्तान् पुनः स्पष्टीकृत्याह। एक एव मया विविधैः प्रधानैरुपचारैः विबुधप्रधान इति वा पाठः प्रजननाय पुत्रोत्पत्त्यै चित्तीकृतः चित्तस्थीकृतः, यूयं त्रयः कथमत्रागताः ॥ २८ ॥ ॥ २९ ॥ ❀ ❀ यत् यं जगदीश्वरं भवान् ध्यायति ते जगदीश्वराः वयं सत्संकल्पस्य तवाभीष्टप्रदातारो भवामेत्यर्थः। अयं भावः—जगदीश्वरतुल्य एकः पुत्रो मे भूयादिति संकल्पे कतमो जगदीश्वरः स्यादिति संदेहेन त्रय एव वयं ध्याताः, पुनश्च ध्यातेषु त्रिषु मध्ये जगदीश्वर एक आयात्विति पुनरेकस्य चित्तस्थीकृतत्वेऽपि त्रयाणामेवास्माकं जगत्यस्मिन्नैश्वर्यात् त्रय एवागता अस्माकं त्रित्वेप्यैक्यात् वयमेक एव नापि त्वया य एव परमेश्वर इति परमेश्वरशब्दः प्रयुक्तोऽत इन्द्रशत्रो विवर्द्धस्वेत्यादौ संकल्पादपि साधनस्य प्राबल्यदर्शनात् साधनानुरूपं संकल्पानुरूपञ्च तव फलं भविष्यतीति ॥ ३० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

कृपयावलोको यस्मिन् हसच्च तद्वदनं च तेनोपलंभितान् उपलक्षितान् प्रसन्नतया सूचितान्। तद्रोचिषा तेषां दीप्त्या प्रतिहते द्रष्टुमशक्ते निमील्य ॥ २५ ॥ ❀ ❀ चेतश्चित्तं तत्प्रवणं युंजन्। तदासक्तं कुर्वन् श्लक्ष्णया मधुरया सूक्त्या शोभनार्थयाऽस्तावीत् स्तुतवान् ॥ २६ ॥ ❀ ❀ तत्र विश्वसृष्ट्यादिहेतुत्वादिगुणवर्णनरूपां स्तुतिं कुर्वन् एको जगदीश्वरः

मयोपहूतः, स युष्मासु क इति पृच्छति विश्वेति द्वाभ्याम् । विश्वोद्भवादिषु निमित्तभूतेषु अनुयुगं कल्पे कल्पे विभज्यमानैर्मायागुणैर्विगृहीता सृज्यत्वादिना विशेषतो गृहीता अस्मदादिदेहा यैस्ते प्रसिद्धप्रभावा ब्रह्मविष्णुगिरिशा यूयम् । अतो वो युष्मान् प्रणतोऽस्मि । तेभ्यः सकाशान्मे मया शरणं तं प्रपद्येऽहं य एव जगदीश्वरः, इत्येवं य उपहूतः स भवतां भवत्सु कः । कतम इति युष्माभिरेव कथनीय इत्यर्थः ॥ २७ ॥ ❀ ❀ अस्यैव प्रपंच एक इति । प्रजननाय पुत्रोत्पत्त्यै विबुधप्रधान एको मया चित्तीकृतो ध्यातः, इह तु तनुभृतां मनसोपि दूराः अगोचराः त्रयोऽपि कथमागताः । अत्र त्रयाणामागमने मम महान्विस्मयः, अतो मे महां प्रसीदत कारणं च ब्रूत ॥ २८ ॥ ❀ ❀ हे प्रभो ! ग्रंथतात्पर्यग्रहणे समर्थ ! ॥ २९ ॥ ❀ ❀ हे ब्रह्मन् ! ते त्वया यथा संकल्पः कृतस्तेन तथैव भाव्यम् । यतः सत्संकल्पस्य ते संकल्पोऽन्यथा न भवति । यदेकं जगदीश्वरं परं ब्रह्म भवान्ध्यायति, ते एते वयं त्रयोऽपि तदेकं ब्रह्म नास्माकमत्यंतभेदः । अयमर्थः—"सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः" इति ब्रह्मवचनात् । "एते वयं यस्य वशे महात्मनः स्थिता शकुंता इव सूत्रयंत्रिता" इति शिववचनाच्च वासुदेवस्य नियंतृत्वं ब्रह्मशिवयोर्नियम्यत्वमस्ति तथा सति नियम्यभूतयोर्ब्रह्मशिवयोः स्वरूपतो भिन्नत्वेपि जगदीश्वरान्मुन्युपहूतान्नियंतुर्वासुदेवात् अभिन्नत्वम् । यथा छांदोग्ये स्वरूपेण भिन्नानामपींद्रियाणां प्राणायत्ततया प्राणभिन्नत्वं श्रूयते 'न वै वाचो न चक्षूंषि न मन इत्याचक्षते प्राण इत्येवाचक्षते ।' किंच सर्ववेदेतिहासादिसारभूतेस्मिन् "वासुदेवात्परो ब्रह्मन्न चान्योर्थोस्ति तत्त्वत" इत्याद्युक्तत्वात् "अहो भाग्यमहो भाग्यं नंदगोपव्रजौकसाम् । यन्मित्रं परमानंदं पूर्णं ब्रह्म सनातनम्" इत्यादिवक्ष्यमाणाच्च वासुदेवाख्यं परं ब्रह्म वर्णितम् । तस्मात्सर्वस्य विश्वस्य स्वरूपतो भिन्नस्यापि तज्जत्वादिना तदभिन्नत्वमाह भगवति "सर्वं खल्विदं ब्रह्म तज्जलानिति"ति । ब्रह्मशिवादीनां च वासुदेवजन्यत्वं श्रूयते "नारायणाद्ब्रह्मा जायते नारायणाद्द्वादशादित्या रुद्रा वसवः सर्वाणि छंदांसि एको ह वै नारायणः आसीन्न ब्रह्मा नेशान" इति 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।' इति श्रीमुखवचनाच्च ॥ ३० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं दृष्ट्वा संपूज्यापि तेषामतितेजस्विनां रोचिषा दीप्त्या प्रतिहते द्रष्टुमक्षमे अक्षिणी नेत्रे निमील्य यतो मुनिः मननशीलः अतो धैर्येण चेतस्तत्प्रवणं युञ्जन् तदेकनिष्ठं कुर्वन् संहताञ्जलिः संहतो रचितोञ्जलिः येन स तथाभूतः सन् श्लक्ष्णया मधुरया सूक्तया गम्भीरार्थया वाचा तान् सर्वलोकगरीयसः चतुर्दशभुवनात्मकसर्वलोकस्थप्राणिभ्यो देवासुरमनुष्यादिभ्यो गुरुतमान् पूज्यतमान् पुरुषोत्तमान् अस्तावीत् अस्तौषीदिति सार्द्धश्लोकान्वयः ॥ २५–२६ ॥ ❀ ❀ तत्र तावद्विश्वोद्भवादिकर्तृत्वरूपं तेषां प्रभावं निरूपयन् प्रणमति—विश्वोद्भवेति । विश्वस्य प्रपञ्चस्योद्भवः सत एवाविर्भावः स्थितिः पालनं लयः पुनः स्वकारणे सूक्ष्मरूपेणावस्थानम् । तेषु कार्येषु तत्तन्नियतकार्यार्थं विभज्यमानैर्विभागेन व्यवस्थया स्थापितैर्मायागुणैः गुणसाम्यावस्थाप्रकृतिर्माया, 'मायां तु प्रकृतिं विद्यात्' इति वाक्यात् तस्या गुणैः सत्त्वादिभिर्निमित्तभूतैरनुयुगं प्रतिकल्पं विशेषेण तत्तत्कार्योन्मुखत्वेन गृहीतास्तत्तद्गुणनियामकतया स्वीकृता देहा यैस्ते शास्त्रप्रसिद्धा ब्रह्मविष्णुगिरिशास्तान्वो युष्मानहं प्रणतोऽस्मि । तत्र सृष्ट्यर्थं रजसा ब्रह्मा भवति, पालनार्थं सत्त्वेन विष्णुर्भवति, प्रलयार्थं तमसा रुद्रो भवति । यद्यप्येते प्रथमकल्प एव प्रादुर्भवन्ति तथापि ब्रह्मरुद्रयोः प्रलये सूक्ष्मस्वरूपेण भगवति स्थितयोः पुनः कल्पादौ प्रादुर्भावः । विष्णोरपि 'परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगे युगे' इति वाक्यात्तत्तदवसरे प्रादुर्भावोऽस्तीत्यनुयुगमित्यविरुद्धम् । एवं नमनं कृत्वा संदिग्धं पृच्छति—क इति । तेभ्यः सकाशादेक एव मे मया इहोपहूत आकारितः 'शरणं तं प्रपद्ये' इत्येकस्यैव निर्दिष्टत्वात् । स च भवतां मध्ये क इति युष्माभिः कथ्यतामिति शेषः ॥ २७ ॥ ❀ ❀ प्रसादपूर्वकं वरदानार्थं समागतेभ्यो मया त्वेक उपहूतः स भवत्सु क इत्युक्त्या तेष्वापाततोऽनादरः कृत इति प्रतिभाति तच्छङ्कानिरासार्थं तद्दर्शनमलभ्यलाभत्वेन निरूपयति—एक इति । विविधैः प्रधानैः नानाविधैरुत्कृष्टैः पूजासाधनैः पूजित एक एव भगवान् ऐश्वर्यादिषड्गुणसंपन्नः प्रजननाय पुत्रत्वेन तस्य लाभाय मया इह अन्तःकरणे चित्तीकृतः चित्तेनैक्यं नीतश्चिन्तितः । नु इति वितर्के । कथं नु यूयं त्रयोप्यत्रागताः ? तेषां दर्शनस्य दुर्लभत्वं दर्शयति—तनुभृतामिति । तनुभृतां देहधारिणां सर्वेषामपि मनसोपि दूरा अगोचरा अत इह एवमेकस्य चिन्तया त्रयाणामागमने मे मम महान् विस्मयः संशयोऽस्त्यत एकध्यानेन त्रयाणामागमने कारणं ब्रूत । न हि भवत आज्ञापयामि, किंतु स्वसंशयनिवृत्तये प्रार्थय इत्यभिप्रेत्याह—प्रसीदतेति । मम भक्तस्य संशयनिवृत्तिर्भवतामिष्टा चेत्तदा तन्निवृत्तय उत्तरदानेन प्रसादं कुरुतेति भावः । 'विविधैः प्रधानैः' इत्यत्र 'विबुधप्रधान' इति वा पाठस्तु सुबोधः ॥ २८ ॥ ❀ ❀ एवं प्रश्नं निरूप्य तद्वचनेन तदीयसन्देहं बुध्वोत्तरमुक्तवन्त इत्याह—इतीति । इत्येवं तस्यात्रेर्वचः स्वसन्देहनिवर्त्तकप्रश्नरूपं श्रुत्वा ते विबुधर्षभाः देवश्रेष्ठाः ब्रह्मविष्णुगिरिशा महान्तोप्यस्मन्मायामोहिताः संदिग्धा भवन्तीति प्रहस्य हे प्रभो बोद्धुं समर्थ विदुर, तमृषिं प्रति श्लक्ष्णया मधुरया वाचा आहुस्तस्य सन्देहनिवर्त्तकमुत्तरमुक्तवन्त इत्यर्थः ॥ २९ ॥ ❀ ❀ तदुत्तरवचनमाह—यथेति । हे ब्रह्मन् ते त्वया यथा सङ्कल्पः कृतस्तेन संकल्पेन तथैव भाव्यम्, न त्वन्यथा । तत्र हेतुमाहुः—सत्सङ्कल्पस्येति । यतस्त्वं सत्सङ्कल्पोऽतस्तस्य तव सङ्कल्पो नान्यथा भवितुमर्हति, अन्यथा सत्संकल्पतैव न स्यात् । अनेनान्योपि तव सङ्कल्पः साङ्ग एव सेत्स्यतीति

सूचितम्। ननु कथं सङ्कल्पस्य यथार्थत्वमेकस्मिन्ध्यायमाने त्रयाणां प्रतीतेरन्यथात्वस्य प्रत्यक्षत्वादित्याशङ्क्याहुः—यद्वा इति। यदेकं जगदीश्वराख्यं त्रिगुणात्मकस्य जगतो नियन्तृरूपं तत्त्वं भवान्ध्यायति ते वयं त्रयोपि एकमेकतत्त्वं तत्तद्गुणं पुरस्कृत्य ब्रह्मादित्रितयरूपेण प्रादुर्भूताः। अतो भेदेन प्रतीयमाना अपि वस्तुतो भिन्नत्वाभावान्न सङ्कल्पस्यान्यथात्वमतस्त्वया न सन्देहः कर्तव्यः। कथमेकस्य ध्याने त्रयः प्रादुर्भूता इतीति भावः। 'यो यच्छ्रद्धः स एव सः' इति वचनात्। ब्रह्मन्निति संबोधनेन ब्रह्मतत्परत्वं तस्य सत्सङ्कल्पत्वे हेतुरुक्तः॥ ३०॥

### भाषानुवादः

उनकी आँखोंसे कृपाकी बर्षा हो रही थी। उनके मुखपर मन्द हास्यकी रेखा थी—जिससे उनकी प्रसन्नता झलक रही थी। उनके तेजसे चौंधियाकर मुनिवरने अपनी आँखें मूँद लीं॥ २५॥ ❋ ❋ वे चित्तको उन्हींकी ओर लगाकर हाथ जोड़कर अतिमधुर और सुन्दर भावपूर्ण वचनोंमें लोकमें सबसे बड़े उन तीनों देवोंकी स्तुति करने लगे॥ २६॥ ❋ ❋ अत्रिमुनिने कहा—भगवन्! प्रत्येक कल्पके आरम्भमें जगत्की उत्पत्ति, स्थिति और लयके लिये जो मायाके सत्त्वादि तीनों गुणोंका विभाग करके भिन्न-भिन्न शरीर धारण करते हैं—वे ब्रह्मा, विष्णु महादेव आप ही हैं; मैं आपको प्रणाम करता हूँ। कहिये— मैंने जिनको बुलाया था, आपमेंसे वे कौन महानुभाव हैं?॥ २७॥ ❋ ❋ क्योंकि मैंने तो सन्तानप्राप्तिकी इच्छासे विविध पूजोपचारोंके द्वारा केवल एक ही भगवान्का चिन्तन किया था। फिर आप तीनोंने यहाँ पधारनेकी कृपा कैसे की? आप लोगोंतक तो देहधारियोंके मनकी भी गति नहीं है, इसलिये मुझे यह बड़ा आश्चर्य हो रहा है। आपलोग कृपा करके मुझे इसका रहस्य बतलाइये॥ २८॥ ❋ ❋ श्रीमैत्रेयजी कहते हैं—समर्थ विदुरजी! अत्रिमुनिके वचन सुनकर वे तीनों देव हँसे और उनसे सुमधुर वाणीमें कहने लगे॥ २९॥ ❋ ❋ देवताओंने कहा—ब्रह्मन्! तुम सत्यसङ्कल्प हो। अतः तुमने जैसा सङ्कल्प किया था, वही होना चाहिए। उससे विपरीत कैसे हो सकता था? तुम जिस 'जगदीश्वर' का ध्यान करते थे, वह हम तीनों ही हैं॥ ३०॥

**अथास्मदंशभूतास्ते आत्मजा लोकविश्रुताः। भवितारोऽङ्ग भद्रं ते विस्रप्स्यन्ति च ते यशः॥ ३१॥**
**एवं कामवरं दत्त्वा प्रतिजग्मुः सुरेश्वराः। सभाजितास्तयोः सम्यग्दम्पत्योर्मिषतोस्ततः॥ ३२॥**
**सोमोऽभूद् ब्रह्मणोंऽशेन दत्तो विष्णोस्तु योगवित्। दुर्वासाः शंकरस्यांशो निबोधाङ्गिरसः प्रजाः॥ ३३॥**
**श्रद्धा त्वङ्गिरसः पत्नी चतस्रोऽसूत कन्यकाः। सिनीवाली कुहू राका चतुर्थ्यनुमतिस्तथा॥ ३४॥**
**तत्पुत्रावपरावास्तां ख्यातौ स्वारोचिषेऽन्तरे। उतथ्यो भगवान् साक्षाद् ब्रह्मिष्ठश्च बृहस्पतिः॥ ३५॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

विस्रप्स्यन्ति विस्तारयिष्यन्ति। अन्तर्भूतणिजर्थस्य सृप्लृ-गतावित्यस्य रूपम्॥ ३१॥ ❋ ❋ ताभ्यां सम्यक् सभाजिताः पूजिताः संतः ततः स्थानात्प्रतिजग्मुः॥ ३२॥ ❋ ❋ अंगिरसो ब्रह्मणस्तृतीयपुत्रस्य। निबोध बुद्ध्यस्व॥ ३३॥ ❋ ❋ ताः कन्या निर्दिशति। सिनीवालीति॥ ३४-३५॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तर्हि प्रसन्नाश्चेत्प्रजा मे दत्तेत्यत्रेर्जिह्वाग्रसंचलनावकाशमददाना आहुरथेति। अथैते वयमित्युक्त्यनन्तरमिति वरं ददुरिति। अस्माकं त्रयाणामंशभूतास्त्रयः पुत्रास्ते भविष्यन्ति। अभेददर्शित्वाभावेपि सत्यवक्तृत्वेन तुष्टा आहुः हे अंगेति॥ ३१॥ ❋ ❋ काम्यते इति कामः स चासौ वरश्चेति तमभिलषितवरमित्यर्थः। ताभ्यामत्र्यनुसूयाभ्याम्। ततः ऋक्षगिरेः॥ ३२॥ ❋ ❋ योगवित् योगशास्त्रकर्त्ता॥ ३३॥ ❋ ❋ कृष्णशुक्लचतुर्दशीपंचदश्योरभिमानिन्यस्ताः क्रमाद्बोध्याः॥ ३४॥ ❋ ❋ तत्पुत्रावंगिरःपुत्रौ। "साक्षाद्भगवान्प्रत्यक्षपूज्यः ब्रह्मिष्ठः वैदिकतमः बृहस्पतेर्न परः साम्नो विदुः" इति श्रुतेः। बृहत्या वाचः पालकत्वात्स्वामित्वाद्वा बृहस्पतिः "पारस्करप्रभृतीनि च संज्ञायाम्" इत्यत्रोक्तं-"तद्बृहतोः" इत्यादिना सुट्तलोपाभ्यां सिद्धेर्विशेषणद्वयं बृहस्पतेरेवेति॥ ३५॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अथातो हेतोः अंशेन शक्तिविशेषेण भूताः प्राप्ता आविष्टा इत्यर्थः। भूङ्-प्राप्तावित्यस्मात्॥ ३१-३४॥ ❋ ❋ तत्पुत्रावंगिरसः पुत्रौ॥ ३५॥

### श्रीमद्वीरराघवव्याख्या

अथ हे मुने ! अस्मदंशेन संभूताः सुता लोकविश्रुता भविष्यंति ते तव यशः विस्रप्स्यंति विस्तृतं करिष्यंति, ते भद्रमस्तु ॥ ३१ ॥ ❁ ❁ एवमभीष्टं वरं दत्वा तयोर्दंपत्योः अत्र्यनसूययोः सम्यङ्मिषतोः पश्यतोः सतोः सम्यक् पूजिताः सुरेश्वराः प्रतिजग्मुः ॥ ३२ ॥ ❁ ❁ ततो ब्रह्मणश्चतुर्मुखस्यांशेन सोमो विष्णोरंशेन दत्तात्रेयः शंभोरंशेन दुर्वासाश्च जाताः । अथांगिरस उत्पन्नाः प्रजा मया कथ्यमानाः शृणु ॥ ३३ ॥ ❁ ❁ अंगरिसः पत्नी श्रद्धाख्या कर्दमस्य तृतीया दुहिता चतस्रः कन्यकाः प्रसूतवती कन्याः निर्दिशति सिनीति ॥ ३४ ॥ ❁ ❁ अपरावपि तत्पुत्रौ आंगिरसपुत्रौ उतथ्यः बृहस्पतिरिति ख्यातौ प्रसिद्धौ स्वारोचिषे मन्वंतरे आस्ताम् । भगवान् ब्रह्मिष्ठ इति पुत्रद्वयविशेषणम् ॥ ३५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तर्हि प्रसन्नाश्चेत्प्रजा ददत इत्यत्रेर्जिह्वाग्रसंचलनावकाशमददाना आहुः अथास्मदिति । अथ ब्रह्मरुद्रस्थो विष्णुः स्वयमित्येते वयमित्युक्त्यनंतरं व्यवहारानंतरं विरम्यते । तवात्मजा भवितारो भविष्यन्तीति वरं ददुरित्यर्थः । यद्वा यत एवं च संकल्पोऽथ तस्मादिति लोके ते यशो विस्तृत्य तुभ्यं भद्रं कल्याणं सुखं वितरिष्यंतीत्यन्वयः ॥ ३१ ॥ ❁ ❁ किमन्यद्ददुरिति तत्राह एवमिति । कामवरं कामितपुत्रवरं नान्यमिति शेषः, मिषतोः पश्यतोः सतोः, ततोऽत्रेराश्रमात् ॥ ३२ ॥ ❁ ❁ अंशेनेति तृतीयया सोमः साक्षाद् ब्रह्मणोंऽशो न भवति किं तु तेन विशेषेण सन्निहित एव । तथात्वे विष्णोरंशो दत्तः शंकरस्यांशो दुर्वासा इतीव प्रयोगः स्यात् "ब्रह्मणो नावतारोऽस्ति सन्निधानं तु केवलम् । ऋते विष्णोरात्मनस्तु तदंशोक्तिः प्रवेशतः ॥" इति वचनात् आत्मनो जीवस्य तदंशोक्तिर्विष्ण्वंशवचनं प्रवेशत इति ज्ञेयमित्यर्थः । कथं तर्हि ब्रह्मसंभवानिति प्रत्यक्षोक्तिरिति चेन्न, सृष्टिविशेषान्मानांतरविरुद्धवदुक्तेः तथा चोक्तं "सृष्टिभेदाद्विरूपं तु कथा पंचोत्तरं शतम् । वैरूप्यमन्यद्विज्ञेयं तात्पर्यान्मोहनाय चे"ति । अत्र ग्रंथे कथा पंचोत्तरं शतं सृष्टिभेदाद्विरूपं विपरीतमिव प्रतीयत इति शेषः । अन्यद्वैरूप्यं तात्पर्याज्ञानान्मोहनायोक्तमिति ज्ञेयमित्यर्थः । कल्पादिभेदादपि कथाभेदो भवतीत्यतोऽपि विरोधो नास्ति "ऋते तु पांडवकथां कार्ष्ण्यं रामायणं तथा । विष्णोर्ब्रह्मादितां चैव क्रमाद्व्यत्यस्तशक्तिताम् ॥ एतदापादकं चान्यद्दते कल्पादिभेदतः । कथाभेदस्तु विज्ञेयो मोहायैतेषु भिन्नता ॥" इति वचनात् । विदि-कृताविति धातोर्योगवित् योगशास्त्रकृत् अणिमादियोगज्ञो वा, बोधतेः शब्दविकरणे पठितत्वात् परस्मैपदम् । प्रजाः संततीः ॥ ३३ ॥ ❁ ❁ कन्यकानामान्याह सिनीवालीति । कृष्णचतुर्दश्यभिमानिनी सिनीवाली तत्पंचदश्यभिमानिनी कुहूः शुक्लचतुर्दश्यभिमानिनी अनुमतिः तत्पंचदश्यभिमानिनी राका ॥ ३४ ॥ ❁ ❁ तत्पुत्रौ तस्याः श्रद्धायाः पुत्रौ स्वारोचिषनाममनोः पुत्रयोर्नामाह उचथ्य इति, उचितं स्थापयितुमस्येत्युचथ्यः । साक्षाद्भगवान्प्रत्यक्षपूज्यः बृहत्याः वाचः पालकत्वात्स्वामित्वाद्वा बृहस्पतिः "तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्चे"ति सूत्रात्तकारलोपः सुडागमश्चेति । ब्रह्मिष्ठो वैदिकतमः बृहस्पतेर्न परः साम्नो विदुरिति श्रुतेः ॥ ३५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

फलञ्च तथैव भवेदित्याहुः । अथेति । अतो हेतोः अस्माकमंशो न शक्तिविशेषेण भूताः प्राप्ता आविष्टा इत्यर्थः ॥३१-३५॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अथेति । विष्णोः परमेश्वरत्वख्यापनार्थं विष्ण्वंशो दत्त एवावतारोऽभून्नेतरौ । विस्रप्स्यन्ति विस्तारयिष्यन्ति अन्तर्भूतणिजर्थस्य सृप्लृ-गतावित्यस्य रूपम् ॥ ३१ ॥ ❁ ❁ सभाजिताः पूजिताः मिषतोः पश्यतोः ॥ ३२-३५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अंग हे मुने ! भवितारः भविष्यंति ते तव यशः विस्रप्स्यंति विस्तृतं करिष्यंति ॥ ३१ ॥ ❁ ❁ सभाजिताः पूजिताः मिषतोः पश्यतोः तत आश्रमपदात् प्रतिजग्मुः ॥ ३२ ॥ ❁ ❁ योगविदध्यात्मवित् निबोध बुध्यस्व ॥ ३३-३५ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं मुनेः सन्देहं दूरीकृत्य वरं ददति—अथेति । यस्माद्य एको जगदीश्वरः स मामात्मसमां प्रजां प्रयच्छत्विति तव सङ्कल्पो वयं च त्रयोपि जगदीश्वरा अथ तस्मादस्मदंशभूता लोके तत्तद्गुणैर्विश्रुताः प्रसिद्धास्ते आत्मजा भवितारो भविष्यन्ति ।

ते तव यशो लोके विस्रप्स्यन्ति विस्तारयिष्यन्ति ततस्ते भद्रं भविष्यति। हे अङ्ग इति संबोधनेनास्मदुपासनया त्वमस्मदङ्गभूतो जातोऽस्यतस्त्वय्यवतरणे नास्माकं कश्चित्सन्देह इति सूचयन्ति ॥ ३१ ॥ ❀ ❀ आगमनानन्तरं गमनपर्यन्तं वृत्तं संक्षेपेणाह— एवमिति। एवमनेन पूर्वोक्तप्रकारेण ताभ्यां सम्यक् सभाजिताः पूजानमस्कारस्तुतिभिः सत्कृतास्ते सुरेश्वरास्ताभ्यां कामवरमभिलषितं स्वसमानगुणशीलवत्पुत्रोत्पत्तिरूपं वरं दत्वा दम्पत्योरन्यनुसूययोर्मिषतोः पश्यतोस्ततः स्थानात्स्वधाम प्रतिजग्मुरित्यन्वयः। अनेन तस्य सर्वांशपरिपूर्णसङ्कल्पसिद्धिरुक्ता। तेन च किञ्चिच्चिकीर्षवो जाता इति विदुरप्रश्नस्यात्रेः सङ्कल्पपूर्त्यर्थमेवं जाता इत्युत्तरं वेदितव्यम् ॥ ३२ ॥ ❀ ❀ ततश्च वरानुसारेण तस्य पुत्रा जाता इत्याह—सोम इति। ब्रह्मणोंऽशेन सौम्यस्वभावः सोमश्चन्द्रमा अभूत्। विष्णोस्त्विति तुशब्देन श्रेष्ठत्वं सूचयति। विष्णोरंशेन तु योगेन भगवद्ध्यानेन सर्वं वेत्तीति योगवित् सर्वयोगिजनश्रेष्ठो दत्तोऽभूत्। क्रूरत्वेन प्रसिद्धो दुर्वासाः शङ्करस्यांशोऽवतारोभूदिति। एवमत्रेः सप्रसङ्गं वंशं निरूप्य क्रमप्राप्तं ब्रह्मणस्तृतीयपुत्रस्याङ्गिरसो वंशनिरूपणं प्रतिजानीते—निबोधेति ॥ ३३ ॥ ❀ ❀ श्रद्धात्विति। तुशब्देनास्या अपि धर्मपत्नीनाम्ना प्रसिद्धे धर्मसाधनतां सूचयति। अत एव ततो धर्मकालाभिमानिन्यो देवतारूपाश्चतस्रः कन्या जाताः। तत्र कृष्णपक्षचतुर्दश्यभिमानिनी सिनीवाली अमावास्याभिमानिनी कुहूः, शुक्लपक्षचतुर्दश्यभिमानिनी अनुमतिः, पूर्णमास्यभिमानिनी राका ॥ ❀ ❀ तत्पुत्राविति। तस्याङ्गिरसः पुत्रावपरौ ताभ्यः कन्याभ्यो भिन्नौ स्वारोचिषेऽन्तरे ख्यातौ स्वारोचिषो द्वितीयस्त्वित्यष्टमे वक्ष्यमाणत्वात् स्वारोचिषो द्वितीयो मनुस्तस्य मन्वन्तरे विद्यातपोभ्यां प्रसिद्धावित्यर्थः। तयोर्नामाह—उतथ्य इति। एवं श्रद्धायामङ्गिरसश्चतस्रः कन्या द्वौ पुत्रौ चेत्येवं षडपत्यान्यासन् ॥ ३५ ॥

### भाषानुवादः

प्रिय महर्षे! तुम्हारा कल्याण हो, तुम्हारे यहाँ हमारे ही अंशस्वरूप तीन जगद्विख्यात पुत्र उत्पन्न होंगे और तुम्हारे सुन्दर यशका विस्तार करेंगे ॥ ३१ ॥ ❀ ❀ उन्हें इस प्रकार अभीष्ट वर देकर तथा पति-पत्नी दोनोंसे भलीभाँति पूजित होकर उनके देखते-ही-देखते वे तीनों सुरेश्वर अपने लोकोंको चले गये ॥ ३२ ॥ ❀ ❀ ब्रह्माजीके अंशसे चन्द्रमा, विष्णुके अंशसे योगवेत्ता दत्तात्रेयजी और महादेवजीके अंशसे दुर्वासा ऋषि अत्रिके पुत्ररूपमें प्रकट हुए। अब अङ्गिरा ऋषिकी संतानोंका वर्णन सुनो ॥ ३३ ॥ ❀ ❀ अङ्गिराकी पत्नी श्रद्धाने सिनीवाली, कुहू, राका और अनुमति—इन चार कन्याओंको जन्म दिया ॥ ३४ ॥ ❀ ❀ इनके सिवा उनके साक्षात् भगवान् उतथ्यजी और ब्रह्मनिष्ठ बृहस्पतिजी—ये दो पुत्र भी हुए, जो स्वारोचिष मन्वन्तरमें विख्यात हुए ॥ ३५ ॥

पुलस्त्योऽजनयत्पत्न्यामगस्त्यं च हविर्भुवि। सोऽन्यजन्मनि दह्राग्निर्विश्रवाश्च महातपाः ॥ ३६ ॥
तस्य यक्षपतिर्देवः कुबेरस्त्विडविडासुतः। रावणः कुम्भकर्णश्च तथान्यस्यां विभीषणः ॥ ३७ ॥
पुलहस्य गतिर्भार्या त्रीनसूत सती सुतान्। कर्मश्रेष्ठं वरीयांसं सहिष्णुं च महामते ॥ ३८ ॥
क्रतोरपि क्रिया भार्या वालखिल्यानसूयत। ऋषीन्षष्टिसहस्राणि ज्वलतो ब्रह्मतेजसा ॥ ३९ ॥
ऊर्जायां जज्ञिरे पुत्रा वसिष्ठस्य परन्तप। चित्रकेतुप्रधानास्ते सप्त ब्रह्मर्षयोऽमलाः ॥ ४० ॥
चित्रकेतुः सुरोचिश्च विरजा मित्र एव च। उल्बणो वसुभृद्यानो द्युमान् शक्त्यादयोऽपरे ॥ ४१ ॥
चित्तिस्त्वथर्वणः पत्नी लेभे पुत्रं धृतव्रतम्। [1]दध्यञ्चमश्वशिरसं भृगोर्वंशं निबोध मे ॥ ४२ ॥
भृगुः ख्यात्यां महाभागः पत्न्यां पुत्रानजीजनत्। धातारं च विधातारं श्रियं च भगवत्पराम् ॥ ४३ ॥
आयतिं नियतिं चैव सुते मेरुस्तयोरदात्। ताभ्यां तयोरभवतां मृकण्डः प्राण एव च ॥ ४४ ॥
मार्कण्डेयो मृकण्डस्य प्राणाद्वेदशिरा मुनिः। कविश्च भार्गवो यस्य भगवानुशना सुतः ॥ ४५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

पुलस्त्यो हविर्भुवि पत्न्यामित्यन्वयः। सोऽगस्त्यः जन्मान्तरे दह्राग्निः जठराग्निः। विश्रवाश्च पुलस्त्यस्य सुत इति शेषः ॥ ३६ ॥ ❀ ❀ तस्य विश्रवस इडविडायां पत्न्यां जातः सुतः कुबेरः। अन्यस्यां भार्यायां केशिन्यां रावणादयस्त्रयः

१. प्रा० पा०—दधीचमश्व०।

सुताः ॥ ३७–३८ ॥ ❀ ❀ ज्वलतः प्रकाशमानान् ॥ ३९ ॥ ❀ ❀ चित्रकेतुप्रमुखा जज्ञिरे ते च सप्तर्षयो जाताः ॥ ४० ॥ ❀ ❀ तानेवाह चित्रकेतुरिति । वसुभृद्यानो नामैकः । शक्त्यादयोऽपरेऽन्यस्याः जाताः पुत्राः ॥ ४१–४२ ॥ ❀ ❀ ख्यात्यां पत्न्याम् । पुत्रान्पुत्रौ पुत्रीं च । तानेवाह । धातारमिति ॥ ४३ ॥ ❀ ❀ तयोर्धातृविधात्रोः ॥ ४४ ॥ कविश्च भार्गवो भृगोः पुत्रः यस्य कवेः सुत उशना ॥ ४५–४६ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

त्यक्त्वागादित्यगस्त्य इति त्यागो विषयाणां विन्ध्यगिरेर्वा ज्ञेयोऽत्र ॥ ३६ ॥ ❀ ❀ कुम्बत्यन्येषामैश्वर्यमाच्छादयतीति कुबेरः । कुबि-आच्छादने धातोरौणादिकः प्रयोगः । यद्वा कुत्सितं बेरं शरीरमस्येति कुबेरः, पार्वतीशापाद्रोगाक्रान्तदेह इति वाल्मीकीयादौ स्पष्टम् ॥ ३७–३९ ॥ ❀ ❀ ऊर्जेत्यरुन्धत्या एव नामान्तरम् ॥ ४० ॥ ❀ ❀ शक्तिरादिर्येषां ते । अन्यस्या ऊर्ज्जेतरायाः ॥ ४१ ॥ ❀ ❀ पूर्वमथर्वा ब्रह्मपुत्रेष्वगणितोपि तत्पुत्र एव बोध्यः । किञ्च चित्तिरिति शान्ताया एव नामान्तरमस्ति ॥ ४२ ॥ ❀ ❀ पुत्रौ च पुत्री च पुत्रास्तान् "भ्रातृपुत्रौ स्वसृदुहितृभ्याम्" इत्यनुशासनात्, श्रियं लक्ष्म्यंशभूतां कन्यामत एव भगवत्परामिति ॥ ४३ ॥ ❀ ❀ तयोस्ताभ्यां धातृविधातृभ्यां पुनस्ताभ्यां सकाशात्तयोरायति-नियत्योः क्रमेण मृकण्डप्राणावभूताम् ॥ ४४-४५ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

इति चकारान्वयः ॥ ३६ ॥ ❀ ❀ रावणादयस्त्रयो विश्रवसः सुताः ॥ ३७–३८ ॥ ❀ ❀ क्रिया तच्छक्त्य-धिष्ठात्री ॥ ३९ ॥ ❀ ❀ ते च सप्तर्षयो जाता इति पृथक्वाक्यमन्यथा तच्छब्दस्यानन्वयित्वं स्यात् ते च सप्तर्षयोऽमला इत्यपि पाठष्टीकासम्मतः । ब्रह्मर्षय इति पाठे ब्रह्माणश्च ते ऋषयश्चेत्यर्थस्तथैव ॥ ४०–४१ ॥ ❀ ❀ धृतव्रतनामानं दध्यंचञ्च ॥ ४२ ॥ ❀ ❀ पुत्रास्तान् ॥ ४३ ॥ ❀ ❀ ताभ्यां धातृविधातृभ्यां सकाशात्तयोरायतिनियत्योः ॥ ४४ ॥ ❀ ❀ यस्य कवेः भगवान्सर्वज्ञ उशना शुक्रः ॥ ४५ ॥

## श्रीमद्वीरराघवव्याख्या

पुलस्त्यः पत्न्यां स्वभार्यायां हविर्भुवाख्यायां कर्दमस्य चतुर्थ्यां दुहितरि अगस्त्यमजनयत् । अगस्त्यं विशिनष्टि योऽगस्त्यः अन्यजन्मनि दह्राग्निः जाठराग्निरभूत् तथा महातपाः विश्रवाश्च पुलस्त्यसुत इत्यर्थः ॥ ३६ ॥ ❀ ❀ तस्य विश्रवस इति इलविलासुतः इलविलायां जातः यक्षाणां पतिः प्रभुर्देवः कुबेरः तथा अन्यस्यां भार्यायां कैकस्यां रावणादयस्त्रयः पुत्रा विश्रवस एव जाताः ॥ ३७ ॥ ❀ ❀ पुलहस्य भार्या गत्याख्या कर्दमस्य पंचमी दुहिता सती पतिव्रता त्रीन्सुतानसूत प्रसूतवती । तान्निर्दिशति कर्मश्रेष्ठामिति हे महामते ! ॥ ३८ ॥ ❀ ❀ क्रतोरपि भार्या क्रियाख्या कर्दमस्य षष्ठी सुता ब्रह्मतेजसा ज्वलतः प्रकाशमानान्षष्टि-सहस्राणि वालखिल्यान् वानप्रस्थानृषीनसूयत ॥ ३९ ॥ ❀ ❀ तथा वसिष्ठस्य भार्यायामूर्जायां कर्दमस्य नवम्यां सुतायां हे परंतप ! चित्रकेतुप्रभृतयः सप्त महर्षयः निर्मलाचाराः जज्ञिरे । अरुंधत्या एव नामांतरमूर्जेति वेदितव्यम् ॥ ४० ॥ ❀ ❀ पुत्रान्निर्दिशति चित्रकेतुरिति । द्युमान् तेजस्वीत्यर्थः । शक्त्यादयः अपरे अन्यस्यां भार्यायां जाता इत्यर्थः ॥ ४१ ॥ ❀ ❀ अथर्वणः पत्नी कर्दमस्याष्टमी सुता शांताख्या । चित्तिरिति पाठांतरं तदा तत्तस्या एव नामांतरं धृतव्रतं दध्यंचमश्वशिरसं च पुत्रं लेभे लब्धवती, अथ मे मत्तः भृगोर्वंशं निबोध शृणु ॥ ४२ ॥ ❀ ❀ हे महाभाग ! ख्यात्यां ख्यातिनाम्न्यां कर्दमस्य सप्तम्यां दुहितरि भृगुर्धातृ-विधातारौ पुत्रौ पुत्रानित्यार्षं बहुवचनं भगवत्परां भगवानाश्रयो यस्यास्तां श्रियं लक्ष्म्यंशभूतां कन्यां चाजीजनत् ॥ ४३ ॥ ❀ ❀ मेरुः स्वस्य सुते आयतिं नियतिं च तयोर्धातृविधात्रोरदाद्दत्तवान् । ताभ्यां धातृविधातृभ्यां तयोर्मेरुदुहित्रोरायतिनियत्योर्यथाक्रमं मृकंडुः प्राणश्चाभवत् ॥ ४४ ॥ ❀ ❀ ततः मृकंडोर्मार्कंडेयः प्राणाद्वेदशिरा मुनिरभवत् । उशना शुक्रो यस्य वेदशिरसः सुतः स कविः शुक्रश्च भार्गवः भृगुवंशसंभूत इत्यर्थः ॥ ४५ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

त्यक्त्वागादगस्त्यः स्त्येष्ट्यै-शब्दसंघात इत्यतः शब्दादिविषयजातं प्रति गतो न भवतीति यः सोऽगस्त्योन्यजन्मनि अग्निषु दभ्रो नामाग्निः दभ्रोऽग्निरल्पाग्निरित्यर्थेऽन्यजन्मनीति विशेषणं व्यर्थम्, अत्र पूर्णः पूर्वत्राल्पाग्निरिति विवेकस्तु गवेषणीय इति ॥ ३६ ॥ ❀ ❀ तस्य विश्रवसः कोऽयं यक्षपतिरित्यत उक्तं देवः कुबेर इति, कुबि आच्छादन इति धातोर्धनदानेन

दारिद्र्यं कुंबति आच्छादयतीति कुबेरः । अयमर्थः कस्मिंश्चिद्यक्षेऽप्यतिव्याप्तः स्यादित्यत उक्तमिडिविडासुत इति । अन्यस्यां पत्न्याम् ॥ ३७–३८ ॥ ❀ ❀ वालखिल्या अल्पा येषां ते तथा संततिविधुराः ऊर्ध्वरेतस इत्यर्थः । तान् ब्रह्मतेजसा ब्रह्मनिमित्ततेजसा ॥ ३९–४० ॥ ❀ ❀ अन्येषां नामान्यप्रतिषिद्धत्वात् किमिति नोक्तानीति शंका मा भूदित्याह चित्रकेतुरिति । अपरे सप्तर्भ्योऽन्ये ते के शक्त्यादयः शक्तिमुनिप्रमुखाः ॥ ४१–४३ ॥ ❀ ❀ तयोरायतिनियत्योः ॥ ४४ ॥ ❀ ❀ यस्य कवेः ॥ ४५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

दक्षाग्निरिति सम्बन्धोक्तिः देहाग्निरिति चित्सुखः ॥ ३६–३८ ॥ ❀ ❀ तेजस इति चित्सुखः ॥ ३९ ॥ ❀ ❀ सप्तब्रह्मर्षय इति पाठश्चित्सुखसंमतः । सप्तर्षय इति क्वचित् । टीका तूभयथा लगति ॥ ४०–४५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

हविर्भुवि पत्न्यां सोऽगस्त्यः दह्राग्निर्जाठरः विश्रवाश्च पुलस्त्यस्य पुत्र इति शेषः ॥ ३६ ॥ ❀ ❀ शक्त्यादयोऽपरेऽन्यस्याः पुत्राः ॥ ३७–४२ ॥ ❀ ❀ पुत्रौ च पुत्रीच पुत्रास्तान् पुत्रान् ॥ ४३ ॥ ❀ ❀ तयोस्ताभ्यां धातृविधातृभ्याम् ॥ ४४ ॥ ❀ ❀ कविश्च भार्गवो भृगोः पुत्रः ॥ ४५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पुलस्त्यो हविर्भुवि पत्न्यामगस्त्यं जनयामास । सोऽगस्त्यः अन्यजन्मनि दह्रो जाठरोऽग्निरभूत् । विश्रवाश्च पुलस्त्यस्य सुत इति शेषः ॥ ३६ ॥ ❀ ❀ तस्य विश्रवसः । अन्यस्यां केशिन्यां रावणादयः ॥ ३७–३८ ॥ ❀ ❀ ज्वलतः प्रकाशमानान् ॥ ३९ ॥ ❀ ❀ चित्रकेतुप्रधानाः चित्रकेतुप्रमुखाः ॥ ४० ॥ ❀ ❀ तानेवाह चित्रकेतुरिति वसुभृद्यानो नामैकः शक्त्यादयोऽपरे अन्यस्यां जाताः ॥ ४१ ॥ ❀ ❀ चित्तिः शांतिः ॥ ४२ ॥ ❀ ❀ पुत्रान् पुत्रौ पुत्रीं च ॥ ४३–४४ ॥ ❀ ❀ कविश्च भार्गवः अभावयन् अवर्द्धयन् ॥ ४५–४६ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

ब्रह्मणश्चतुर्थपुत्रस्य पुलस्त्यस्य वंशमाह–पुलस्त्य इति । पुलस्त्यो हविर्भुवि स्वपत्न्यामगस्त्यं पुत्रमजनयत् । सोऽगस्त्योऽन्यस्मिन् जन्मनि दह्राग्निर्जाठराग्निर्जात इति तस्य स्तुतिः । महातपा विश्रवाश्च पुलस्त्यस्य द्वितीयः पुत्र इति शेषः ॥ ३६ ॥ ❀ ❀ तस्य विश्रवसो यक्षाणां पतिः इडविडासुतः इडविडया तस्य भार्यया प्रसूतः कुबेरः पुत्रो जात इति शेषः । स च देवः देवान्तःपाती । अत एव तुशब्देन तस्य भक्तत्वेन रावणादिभ्यो भिन्नपंक्तितामाह । यथान्यस्यां केशिन्यां भार्यायां तस्य रावणः कुम्भकर्णो विभीषणश्चेति त्रयः पुत्रा जाता इति शेषः ॥ ३७ ॥ ❀ ❀ इदानीं ब्रह्मणः पञ्चमपुत्रस्य पुलहस्यान्वयमाह—पुलहस्येति । भार्या गतिः सती पतिव्रता त्रीन् सुतानसूतेत्यन्वयः । नामान्याह—कर्मश्रेष्ठमिति । हे महामते महाबुद्धिमन् विदुर ॥ ३८ ॥ ❀ ❀ ब्रह्मणः षष्ठस्य पुत्रस्य वंशमाह—क्रतोरिति । क्रतोरपि भार्या क्रिया षष्टिसहस्राणि वालखिल्यान् तापसविशेषान् ऋषीन्मंत्रद्रष्टॄन्, अत एव ब्रह्मतेजसा वेदाध्ययनादिजनितप्रभावेण ज्वलतः प्रकाशमानान् असूतेत्यन्वयः ॥ ३९ ॥ ❀ ❀ अथ सप्तमस्य वसिष्ठस्य वंशमाह—ऊर्जायामिति । तृतीयस्कन्धेऽरुन्धतीनाम्ना निर्दिष्टेयमेव । हे परंतप विदुर वसिष्ठस्योर्जायां भार्यायां ते प्रसिद्धाः चित्रकेतुः प्रधानो ज्येष्ठः श्रेष्ठो वा येषां ते जज्ञिरे जाताः । तेषां प्रसिद्धत्वे हेतुमाह—सप्तेति । यतः प्रियव्रतपुत्रस्योत्तमस्य तृतीये मन्वन्तरे ते सप्तर्षयो जाताः, अतः प्रसिद्धा इत्यर्थः । सप्तर्षित्वयोग्यतामाह—अमला इति । शुद्धान्तःकरणा इत्यर्थः । स्त्रीप्रसङ्गकथनेपि विकाराभावसूचकं परंतप इति संबोधनम् ॥ ४० ॥ ❀ ❀ तेषां मध्ये एकस्य नामोक्त्यान्येषां नामानि कथं नोक्तानीत्याकाङ्क्षायां तानि कथयति—चित्रकेतुरिति । वसुभृद्यान इत्येकः एवं द्युमदन्ताः सप्तर्षयः । शक्त्यादयोपरे चित्रकेतुप्रभृतिसप्तभ्योऽन्य इत्यर्थः । अन्यस्यां भार्यायामिति केचित् ॥ ४१ ॥ ❀ ❀ अथर्वा मुनिर्वेदाभिमानिनी देवता, स तृतीये ब्रह्मपुत्रगणनायामगणितोपि तत्पुत्र एव सकर्दमजामातृषु सर्वान्ते निरूपितोप्यत्रिमरीच्यादिभिस्तस्य समकक्षत्वं ज्ञापयितुमत्र तद्वंशं मध्य एव निरूपयति—चित्तिरिति । तृतीये शान्तिनाम्ना निर्दिष्टाया एवास्याश्चित्तिरिति नामान्तरं ज्ञेयम् । नवमस्य भृगोर्वंशनिरूपणं प्रतिजानीते—भृगोरिति । मे मया निरूप्यमाणं भृगोर्वंशं निबोध बुद्ध्यस्वेत्यर्थः ॥ ४२ ॥ ❀ ❀ ख्यात्यां स्वपत्न्यां भृगुः पुत्रानजीजनदित्यन्वयः । तेषां नामान्याह—धातारमिति । लक्ष्मीपितृत्वात्तद्विशेषणं महाभाग इति । महाभाग्यं विना तद्गृहे ब्रह्मादिभिः प्रार्थिताया लक्ष्म्या अवतारो न स्यादिति भावः । लक्ष्म्या एवं महत्त्वे हेतुमाह—भगवत्परामिति । यद्यपि पुत्रानिति

बहुवचनं न संगच्छते-पुत्रद्वित्वात् तथापि लक्ष्म्या भगवत्परत्वेन तस्यां पुत्राभ्यामन्यूनतां ख्यापयितुं बहुवचनम्, स्त्रीत्वोपाधेस्तत्राप्रयोजकत्वात्। यद्वा वक्ष्यमाणकविपुत्राभिप्रायेण बहुवचनम् ॥ ४३ ॥ ❀ ❀ पुत्रयोः पत्न्यौ निर्दिशति—आयतिमिति। तयोर्धातृविधात्रोर्मेरुः सुमेरुपर्वताभिमानी देवः आयतिं नियतिं च द्वे कन्ये यथाक्रममदात्। ताभ्यां धातृविधातृभ्यां तयोरायतिनियत्योर्मृकण्डनामा प्राणनामा च द्वौ पुत्रावभवतां जातावित्यर्थः ॥ ४४ ॥ ❀ ❀ तयोर्वंशमाह—मार्कण्डेय इति। मृकण्डस्य मार्कण्डेयनामा प्राणाच्च वेदशिरोनामा पुत्रोभवदिति शेषः। मुनिरिति द्वयोर्विशेषणम्। भृगोस्तृतीयं पुत्रं दर्शयति—कविश्चेति। कविश्चापि भार्गवः भृगुपुत्रः, चकारोप्यर्थः। यस्य कवेः भगवान् ऐश्वर्यादिमान् उशनाः शुक्रः सुतोभवदिति शेषः ॥ ४५ ॥

## भाषानुवादः

पुलस्त्यजीके उनकी पत्नी हविर्भूसे महर्षि अगस्त्य और महातपस्वी विश्रवा ये दो पुत्र हुए। इनमें अगस्त्यजी दूसरे जन्ममें जठराग्नि हुए ॥ ३६ ॥ ❀ ❀ विश्रवा मुनिके इडविडाके गर्भसे यक्षराज कुबेरका जन्म हुआ और उनकी दूसरी पत्नी केशिनीसे रावण कुम्भकर्ण एवं विभीषण उत्पन्न हुए ॥ ३७ ॥ ❀ ❀ महामते! महर्षि पुलहकी स्त्री परम साध्वी गतिसे कर्मश्रेष्ठ, वरीयान् और सहिष्णु—ये तीन पुत्र उत्पन्न हुए ॥ ३८ ॥ ❀ ❀ इसी प्रकार क्रतुकी पत्नी क्रियाने ब्रह्मतेजसे देदीप्यमान वालखिल्यादि साठ हजार ऋषियोंको जन्म दिया ॥ ३९ ॥ ❀ ❀ शत्रुतापन विदुरजी! वसिष्ठजीकी पत्नी ऊर्जा ( अरुन्धती ) से चित्रकेतु आदि सात विशुद्धचित्त ब्रह्मर्षियोंका जन्म हुआ ॥ ४० ॥ ❀ ❀ उनके नाम चित्रकेतु, सुरोचि विरजा, मित्र, उल्वण, वसुभृद्यान और द्युमान थे। इनके सिवा उनकी दूसरी पत्नीसे शक्ति आदि और भी कई पुत्र हुए ॥ ४१ ॥ ❀ ❀ अथर्वा मुनिकी पत्नी चित्तिने दध्यङ् ( दधीचि ) नामक एक तपोनिष्ठ पुत्र प्राप्त किया, जिसका दूसरा नाम अश्वशिरा भी था। अब भृगुके वंशका वर्णन सुनो ॥ ४२ ॥ ❀ ❀ महाभाग भृगुजीने अपनी भार्या ख्यातिसे धाता और विधाता नामक पुत्र तथा श्री नामकी एक भगवत्परायणा कन्या उत्पन्न की ॥ ४३ ॥ ❀ ❀ मेरुऋषिने अपनी आयति और नियति नामकी कन्याएँ क्रमशः धाता और विधाताको ब्याहीं; उनसे उनके मृकण्ड और प्राण नामक पुत्र हुए ॥ ४४ ॥ ❀ ❀ उनमेंसे मृकण्डके मार्कण्डेय और प्राणके मुनिवर वेदशिराका जन्म हुआ। भृगुजीके एक कविनामक पुत्र भी थे। उनके भगवान् उशना ( शुक्राचार्य ) हुए ॥ ४५ ॥

**त[१] एते मुनयः क्षत्तर्लोकान् सर्गैरभावयन्। एष कर्दमदौहित्रसन्तानः कथितस्तव ॥**
**शृण्वतः श्रद्दधानस्य सद्यः पापहरः परः ॥ ४६ ॥**
**प्रसूतिं मानवीं दक्ष उपयेमे ह्यजात्मजः। तस्यां ससर्ज दुहितॄः षोडशामललोचनाः ॥ ४७ ॥**
**त्रयोदशादाद्धर्माय तथैकामग्नये विभुः। पितृभ्य एकां युक्तेभ्यो भवायैकां भवच्छिदे ॥ ४८ ॥**
**श्रद्धा मैत्री दया शान्तिस्तुष्टिः पुष्टिः क्रियोन्नतिः। बुद्धिर्मेधा तितिक्षा ह्रीर्मूर्तिर्धर्मस्य पत्नयः ॥ ४९ ॥**
**श्रद्धासूत शुभं मैत्री प्रसादमभयं दया ॥**

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अजात्मजो ब्रह्मपुत्रः न तु प्राचेतसः ॥ ४७-४८ ॥ ❀ ❀ युक्तेभ्यः संयतेभ्यो मिलितेभ्यो वा ॥ ४९-५१ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

एते संप्रत्युक्तास्ते। 'सर्वे ते मुनयः' इति पाठस्तीर्थसंमतः। कचित्तु 'नवैते' इत्यपि पाठः। सर्गैस्स्वरचनाभिर्लोकान्नानाजननावर्द्धयन्। यद्वा लोकान्भूरादीन्। दुहितृणामयं दौहित्रस्स चासौ सन्तानः पुनः कर्दमशब्देन तत्पुरुषः। तव तुभ्यम् ॥ ४६ ॥ ❀ ❀ सद्यः श्रवणकाल एवापर उत्कृष्टोऽवश्यमित्यर्थः। उपयेमे "उपाद्यमः स्वकरणे" इत्यात्मनेपदम्। अजात्मजो दक्षः ॥ ४७ ॥ ❀ ❀ तस्यां प्रसूत्याम्। विभुः प्रकृष्टकान्तिः ॥ ४८ ॥ ❀ ❀ भवच्छिदे ज्ञानोपदेशेन संसृतिनिर्मूलकात् 'शिवरूपाज्ज्ञानमहम्' इत्यार्यास्तवोक्तेः। संयतेभ्यो जितेन्द्रियेभ्यः तादृशां कन्यास्वीकारासम्भवं मत्वाह—मिलितेभ्यो वेति ॥ ४९ ॥ ❀ ❀ श्रद्धायाः स्वस्वनामनिरुक्त्या सात्त्विकशक्तीनामधिष्ठात्र्यो देवतास्तद्वंशाश्च तदनुरूपा एव। पत्नय इहायादेश आर्षः ॥ ५० ॥

---

१. प्रा० पा०—सर्वे ते मुन०।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

सर्व इत्यर्द्धकम् । लोकान्नानाविधजनान् अभावयन्नुत्पादितवन्तः ॥ ४६ ॥ ❀ ❀ सात्त्विकशक्त्यधिष्ठातृत्वात्पापहरः ॥ ४७ ॥ ❀ ❀ तस्यां प्रसूत्याम् ॥ ४८ ॥ ❀ ❀ संयतेभ्यः शुद्धान्तःकरणेभ्यः । मिलितेभ्य एकचित्तेभ्य इति एकभार्यत्वेपि दोषः परिहृतः ॥ ४९ ॥ ❀ ❀ श्रद्धा शास्त्रार्थविश्वासशक्त्यधिष्ठात्री देवी शुभं सत्सङ्गाद्यधिष्ठातारं मैत्री हिताचरणशक्त्यधिष्ठात्री, दया निर्हेतुकपरदुःखप्रहाणेच्छाशक्त्यधिष्ठात्री ॥ ५० ॥

### श्रीमद्वीरराघवव्याख्या

देवहूतिदुहितृसंततिमुपसंहरति नवेति । हे क्षत्तः ! एते नव मरीच्यादयः सर्गैः स्ववंशैर्लोकानभावयन् उत्पादयामासुः कर्दमदुहितृसंततिश्रवणफलमाह एष इतिकर्दमदौहित्रः कर्दमदुहितृसंबंधी संतानो मया कथितः श्रद्धापूर्वकं शृण्वतः पापनिवर्तकः ॥ ४६ ॥ ❀ ❀ एवं देवहूतिसंततिमभिधायाथ मनोस्तृतीयायाः दुहितुः प्रसूतेः संतानमाह प्रसूतिमिति । आत्मजो ब्रह्मपुत्रो दक्षः मानवीं स्वायंभुवमनुदुहितरं प्रसूतिमुपयेमे उवोढ तस्यां प्रसूत्यां अमललोचनाः सौंदर्यशालिनीः षोडशदुहितॄः ससर्ज ॥ ४७ ॥ ❀ ❀ तत्र त्रयोदश दुहितॄः विभुस्तत्तदभिप्रायविज्ञानसमर्थो दक्षः धर्माय ददौ एकां दुहितरमग्नये एकां युक्तेभ्यो मिलितेभ्यः पितृभ्य एकां भवच्छिदे भवाय रुद्राय अदात् ज्ञानप्रदत्वाद्रुद्रस्य भवच्छित्त्वं विवक्षितम् ॥ ४८ ॥ ❀ ❀ तत्र धर्मपत्नीस्त्रयोदश दुहितॄ निर्दिशति श्रद्धेति ॥ ४९ ॥ ❀ ❀ तासां प्रत्येकं संततिमाह श्रद्धेति । आसां श्रद्धादिनामत्वं तदपत्यानां शुभादिनामत्वं च श्रद्धादिधर्मयुक्तत्वेन श्रद्धादिकार्यशुभादिधर्मयुक्तत्वेन च बोध्यं नाम्नामन्वर्थत्वात् । यद्वा श्रद्धाशुभाद्यभिमानिदेवतात्वाद्वा तासां तेषां च तन्नामत्वम् ॥ ५० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अभावयन् अवर्द्धयन् ॥ ४६ ॥ ❀ ❀ कर्दमदौहित्रकथाश्रवणफलमाह शृण्वत इति । अजात्मजो दक्षः ॥ ४७–४८ ॥ युक्तेभ्यो योगेभ्यो हरौ मनोयोगसहितेभ्य इति वा । भगवच्छिदे ज्ञानोपदेशेन संसारनिर्मूलनाय ॥ ४९ ॥ ❀ ❀ तासां संततिं स्वनामानुगुणमाह श्रद्धेत्यादिना ॥ ५०–५१ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

एष कर्दमेति । एतास्तद्दुहितरः स्वस्वनामनिरुक्तसात्त्विकशक्तीनामधिष्ठात्र्यः तत्पुत्राश्च तदनुरूपाः एवं दक्षदुहितरश्च ज्ञेयाः ॥ ४६–४९ ॥ ❀ ❀ श्रद्धाऽसूत शुभमित्यत्र ऋतमिति क्वचित् । एष चित्सुखसंमतः ॥ ५० ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

लोकान् नानाविधजनान् उत्पादयन्तः ॥ ४६–४८ ॥ ❀ ❀ युक्तेभ्यो मिलितेभ्यः ॥ ४९ ॥ ❀ ❀ श्रद्धाद्याः स्वस्वनामनिरुक्त्या सात्विकशक्तीनामधिष्ठात्र्यः तद्वंशाश्च तदनुरूपाः ॥ ५० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः ।

मानवीं मनोः कन्याम् अजात्मजः ब्रह्मपुत्रः ॥ ४७–४८ ॥ ❀ ❀ युक्तेभ्यो मिलितेभ्यः ॥ ४९–५१ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

तेषां कर्दमकन्यावंशानां सर्वेषां सामान्यतः कार्यमाह—सर्व इति । हे क्षत्तर्विदुर ! ते पूर्वोक्ताः सर्वे मुनयः मननशीलत्वेन सर्गे भगवदभिप्रायं ज्ञात्वा तदुपासनया लब्धसामर्थ्याः सर्गैः पुत्रपौत्रादिसन्ततिभिः लोकान् त्रीन् अभावयन् पूरितवन्तः । एवं कर्दमजामातॄणां नवानां वंशमुक्त्वोपसंहरति–एष इति । 'श्रुतोनुपठितो ध्यात आदृतो वानुमोदितः । सद्यः पुनाति सद्धर्मो देवविश्वद्रुहोपि हि' इत्येकादशे वसुदेवं प्रति नारदवचनात् धर्मपरिकरत्वाच्चास्य सन्तानस्य धर्मपरिकरः श्रुत एव सर्वं पापं नाशयति, किं पुनरनुष्ठित इति सूचयन्नेतच्छ्रवणफलमाह–शृण्वत इति । श्रवणे श्रद्धाया अङ्गत्वमाह–श्रद्दधानस्येति । श्रद्धां विना श्रवणस्य विकलाङ्गतया तद्रहितस्य शृण्वतोपि यथोक्तं फलं न स्यादिति भावः । एवमन्यत्रापि सर्वत्र श्रवणे श्रद्धाया अङ्गत्वं बोध्यम् । एवं सद्यः पापहरत्वे तस्य धर्मपरिकरत्वेन श्रेष्ठत्वमेव हेतुमाह–पर इति ॥ ४६ ॥ ❀ ❀ एतावता मनुकन्यासु तिसृषु द्वयोर्वंशः प्रदर्शितोऽथ तृतीयाया विवाहानुवादपूर्वकं वंशं निरूपयति–प्रसूतिमिति । प्रसूतिनाम्नीं मानवीं मनोस्तृतीयां पुत्रीमजात्मजः ब्रह्मणो देहाज्जातो दक्ष

उपयेमे विवाहितवान्। हिशब्देन मरीच्यादिब्रह्मपुत्रेषु दक्षस्य प्रसिद्धत्वं द्योतयति। स दक्षस्तस्यां प्रसूत्याममललोचनाः कामक्रोधादिजनितविकाररहितनेत्राः दुहितॄः कन्याः षोडश ससर्ज। अत्रेदं बोध्यम्—धर्मसिद्धितः पूर्वं दक्षस्याभिमानप्राधान्यादभिमानस्य च मनोमूलकत्वात्तस्य च स्वाधिष्ठातृचन्द्राधीनत्वाच्चन्द्रस्य च प्रजापतिसंवत्सरात्मकस्य 'स एष संवत्सरः प्रजापतिः षोडशकलस्तस्य रात्रय एव पञ्चदशकला ध्रुवैवास्य षोडशी कले'ति बृहदारण्यकश्रुतौ पञ्चदशरात्रिशब्दवाच्यास्तिथिरूपा एका स्वरूपभूता ध्रुवा नित्या कला। एवं षोडशकलत्वेन प्रसिद्धत्वात्तदभेदविवक्षायामुपचारान्मनसोपि षोडशकलत्वम्, अतः षोडशकन्या जाता इति ॥ ४७ ॥ ❀ ❀ तासां विवाहमाह—त्रयोदशेति। तासु कन्यासु त्रयोदशधर्मायादात् दत्तवान् दक्षः। तेन श्रद्धादियुक्तस्यैतत्तन्मासेषु धर्ममनुतिष्ठतः पुरुषस्य धर्मः साङ्गः सफलश्च भवति, न तद्रहितस्येति सूचितम्। अग्नय एकामदात्। युक्तेभ्यो मिलितेभ्यः यद्वा मिलितेभ्य इत्यस्यार्थस्य बहुवचनेनैव लभ्यत्वात् युक्तेभ्यः प्रचेतोवदैकमत्याद्भगवद्ध्यानपरेभ्यः पितृभ्य एकामदात्, अत ऐकमत्येन भगवत्परत्वेन च बहूनामेकपत्नीत्वमपि न दोषायेति सूचितं भवति। भवाय रुद्राय भवच्छिदे प्रचेतोमार्कण्डेयप्रभृतीनां ज्ञानभक्त्युपदेशेन संसारनिवर्तकायैकां कन्यामदात्। अत एव दक्षस्यापि सतीविवाहद्वेषोत्पत्तियज्ञविध्वंसद्वारा रुद्रादेवाहन्ता-ममतात्मकस्य संसारस्य विच्छेदो भविष्यतीति सूचितम्। नन्वेवं वैषम्येण न्यूनाधिककन्याप्रदाने दक्षे तद्गृहीतॄणां विरोधः कथं न जात इत्याशङ्क्याह–विभुरिति, योग्यायोग्यविचारपूर्वकदाने समर्थ इत्यर्थः। अतो विचार्य यथायोग्यं दत्तवानतो वैषम्याभावान्न तस्मिंस्तेषां विरोधो जात इति भावः ॥ ४८ ॥ ❀ ❀ तासां दक्षकन्यानां नामानि निर्दिशन्नादौ धर्मपत्नीनां त्रयोदशानां नामान्याह–श्रद्धेति। एताः श्रद्धाद्यभिमानिन्यो देवता ज्ञेयाः। तत्र शास्त्रोक्तपदार्थेष्वदृष्टेष्वप्यास्तिकबुद्धिः श्रद्धा। हिताचरणं मैत्री। परदुःखप्रहाणेच्छा दया। शान्तिः तृष्णाराहित्यम्। यदृच्छालाभेनालंप्रत्ययस्तुष्टिः। देहस्थूलता पुष्टिः। शास्त्रबोधितं कर्म क्रिया। धनधान्यादिवृद्धिरुन्नतिः। विचारपूर्वकनिश्चयात्मिका बुद्धिः। अनुभूतस्य पदार्थस्यान्तःकरणे धारणासामर्थ्यं मेधा। परापराधसहनं तितिक्षा। निन्दिते कर्मणि कृते जुगुप्सा ह्रीः। शुद्धं सत्त्वं शुद्धिशब्दवाच्यं तदभिमानिनी देवता मूर्तिनाम्नी ज्ञेया। एता धर्मस्य पत्नयः पत्न्यः ॥ ४९ ॥ ❀ ❀ श्रद्धादियुक्तस्य धर्मात्मनो यद्यत्फलं भवति तत्तदभिमानिन्यो देवताः श्रद्धाद्यपत्यत्वेन निर्दिशति श्रद्धासूतेति द्वाभ्याम्। श्रद्धा शुभं पुण्यं स्वदृष्टमसूत। 'शोकाक्रान्तः शुचाविष्टः श्रद्धया रहितः पुमान्। देवगुरुद्विजातीनां पूजनं न समाचरेत्' इति स्मृतेः श्रद्धारहितस्याधिकाराभावेन पूजादिनिषेधात् 'अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्। असदित्युच्यते पार्थ न च तत्प्रेत्य नो इहे'ति भगवता श्रद्धाविहीनस्य कर्मणो विफलत्वप्रतिपादनात् 'श्रद्धया परया तप्तं' 'शृण्वतः श्रद्दधानस्य' 'श्रद्दधानाय भक्ताय' इत्यादौ फलप्रकरणे बहुशः श्रद्धाविधानाच्च श्रद्धां विना कर्मणो विफलत्वात् श्रद्धयैव स्वदृष्टं भवतीति निश्चयः। मैत्री प्रसादमसूत। सर्वप्राणिषु मैत्र्या हिताचरणेनान्तःकारणस्य प्रसन्नता भवति, द्रोहे तु मालिन्यमेव। दया अभयमसूत। सर्वजन्तुषु दययैव तेभ्यो यमाच्च भयं निवर्त्तते, अन्यथा 'द्रोग्धुर्वै परतो भयम्' इत्युभयत्र भयश्रवणात्। शान्तिः सुखं स्वरूपानन्दमसूत। तृष्णया विषयेषु धावतस्तस्य तिरोधानात्तृष्णाराहित्येनैव तस्याविर्भावात् 'अशान्तस्य कुतः सुखम्' इति भगवद्वचनाच्च शान्तस्यैव सुखं भवति, न अशान्तस्येति भावः। तुष्टिर्मुदं हर्षमसूत। असन्तुष्टस्य लब्धाधिकमकाङ्क्षतो हर्षासंभवात्। पुष्टिः स्मयं गर्वमसूत। पुष्टस्यैव बलवत्त्वेन गर्वो भवति, कृशस्य दुर्बलत्वेन तदसंभवात् ॥ ५० ॥

### भाषानुवादः

विदुरजी! इन सब मुनिश्वरोंने भी संतान उत्पन्न करके सृष्टिका विस्तार किया। इस प्रकार मैंने तुम्हें यह कर्दमजीके दौहित्रोंकी संतानका वर्णन सुनाया। जो पुरुष इसे श्रद्धापूर्वक सुनता है, उसके पापोंको यह तत्काल नष्ट कर देता है ॥ ४६ ॥ ❀ ❀ ब्रह्माजीके पुत्र दक्षप्रजापतिने मनुनन्दिनी प्रसूतिसे विवाह किया। उससे उन्होंने सुन्दर नेत्रोंवाली सोलह कन्याएँ उत्पन्न कीं ॥ ४७ ॥ ❀ ❀ भगवान् दक्षने उनमेंसे तेरह धर्मको, एक अग्निको, एक समस्त पितृगणको और एक संसारका संहार करनेवाले तथा जन्म-मृत्युसे छुड़ानेवाले भगवान् शङ्करको दी ॥ ४८ ॥ ❀ ❀ श्रद्धा, मैत्री, दया, शान्ति, तुष्टि, पुष्टि, क्रिया, उन्नति, बुद्धि, मेधा, तितिक्षा, ह्री और मूर्ति—ये धर्मकी पत्नियाँ हैं ॥ ४९ ॥ ❀ ❀ इनमेंसे श्रद्धाने शुभ, मैत्रीने प्रसाद, दयाने अभय, शान्तिने सुख, तुष्टिने मोद और पुष्टिने अहङ्कारको जन्म दिया ॥ ५० ॥

शान्तिः सुखं मुदं तुष्टिः स्मयं पुष्टिरसूयत ॥ ५० ॥
योगं क्रियोन्नतिर्दर्पमर्थं बुद्धिरसूयत। मेधा स्मृतिं तितिक्षा तु क्षेमं ह्रीः प्रश्रयं सुतम् ॥ ५१ ॥
मूर्तिः सर्वगुणोत्पत्तिर्नरनारायणावृषी ॥ ५२ ॥
ययोर्जन्मन्यदो विश्वमभ्यनन्दत्सुनिर्वृतम्। मनांसि ककुभो वाताः प्रसेदुः सरितोऽद्रयः ॥ ५३ ॥
दिव्यवाद्यन्त तूर्याणि पेतुः कुसुमवृष्टयः। मुनयस्तुष्टुवुस्तुष्टा जगुर्गन्धर्वकिंनराः ॥ ५४ ॥

नृत्यन्ति स्म स्त्रियो दे[१]व्य आसीत्परममङ्गलम् । देवा ब्रह्मादयः सर्वे उपतस्थुरभिष्टवैः ॥ ५५ ॥

देवा[२] ऊचुः

यो मायया विरचितं निजयाऽऽत्मनीदं खे रूपभेदमिव तत्प्रतिचक्षणाय ।
एतेन धर्मसदने ऋषिमूर्तिनाद्य प्रादुश्चकार पुरुषाय नमः परस्मै ॥ ५६ ॥
सोऽयं स्थितिव्यतिकरोपशमाय सृष्टान् सत्त्वेन नः सुरगणाननुमेयतत्त्वः ।
दृश्याददभ्रकरुणेन विलोकनेन यच्छ्रीनिकेतममलं क्षिपतारविन्दम् ॥ ५७ ॥

एवं सुरगणैस्तात भगवन्तावभिष्टुतौ । लब्धावलोकैर्ययतुरर्चितौ गन्धमादनम् ॥ ५८ ॥
ताविमौ वै भगवतो हरेरंशाविहागतौ । भारव्ययाय च भुवः कृष्णौ यदुकुरूद्वहौ ॥ ५९ ॥
स्वाहाभिमानिनश्चाग्नेरात्मजांस्त्रीनजीजनत् । पावकं पवमानं च शुचिं च हुतभोजनम् ॥ ६० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

सर्वेषां गुणानामुत्पत्तिर्यस्यां सा ॥ ५२-५४ ॥ ❀ ❀ उपतस्थुर्भेजुः ॥ ५५ ॥ ❀ ❀ निजया मायया यस्मिन्नात्मनि खे गगने रूपभेदं गन्धर्वनगरमिवेदं विश्वं विरचितम् । तस्यात्मनः प्रतिचक्षणाय प्रकाशनायात्मानं योऽद्य प्रादुश्चकार प्रकटितवांस्तस्मै पुरुषाय नमः । केन रूपेण प्रादुश्चकार ऋषेर्मूर्तिराकारो यस्मिंस्तेन रूपेण ॥ ५६ ॥ ❀ ❀ सोऽयं नोऽस्मान्सुरगणाननल्पकरुणायुक्तेन विलोकनेन विशिष्टनेत्रेण दृश्यात्पश्यतु । कथंभूतेन—यच्छ्रीनिकेतममलमरविंदं तत्क्षिपता तिरस्कुर्वता । कथंभूतः—अनुमेयं शास्त्रतो विचार्यं न त्वस्माकमपरोक्षं तत्त्वं यस्य । कथंभूतानस्मान्—स्थितेर्जगन्मर्यादाया व्यतिकरोऽन्यथात्वं तस्योपशमाय सत्त्वेन गुणेन सृष्टान् ॥ ५७ ॥ ❀ ❀ लब्धोऽवलोको यैः सुरगणैस्तैरभिष्टुतावर्चितौ सन्तौ ययतुः ॥ ५८ ॥ ❀ ❀ भुवो भारस्य व्ययाय नाशाय । चकार एकवाक्यत्वार्थः । तौ च सांप्रतमिहागतावित्यर्थः । तदुक्तं तन्त्रे "अर्जुने तु नरावेशः कृष्णो नारायणः स्वयम्" इति । यदूद्वहः श्रीकृष्णः कुरूद्वहोऽर्जुनः उभावपि कृष्णनामानौ ॥ ५९ ॥ ❀ ❀ अग्न्यभिमानिनो देवान् । स्वाहा नाम तस्य भार्या । हुतभोजनमिति त्रयाणां विशेषणम् ॥ ६० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स्मयं धर्मेषूत्साहम् । दर्पं तपोयोगादिषु सामर्थ्यप्रख्यापनम् । अन्यौ स्मयदर्पौ त्वधर्मवंश्यौ ज्ञेयौ ॥ ५१ ॥ ❀ ❀ गुणानां कल्याणगुणानामर्णवस्य हरेरुत्पत्तिर्यतः सा तथा शुद्धसत्त्वस्वरूपभगवत्प्रकाशिका शक्तिरियं ज्ञेयेति चक्रवर्ती ॥ ५२ ॥ सुनिर्वृतं पूर्णानन्दयुतमभ्यनन्ददभवत् । यद्वा । विश्वस्थमात्मानं श्लाघयामास धन्या वयं यतो भगवद्दर्शनादिना सर्वसुखमाप्स्याम इति । ककुभो दिशस्तासां प्रसादश्च दूरस्थदर्शनहेतुप्रकाशः । विशेषः वातप्रसादश्च तत्स्पर्शस्य सुखजनकत्वं सरितां प्रसादो नैर्मल्यादिरद्रीणां प्रसादश्च स्वांतस्थमण्यादीनां बहिराविष्करणम् । मनःप्रसादश्च कौटिल्यादित्याग इति विवेकः ॥ ५३ ॥ ❀ ❀ देवैरवाद्यन्त ॥ ५४ ॥ ❀ ❀ अभिष्टवैः स्तोत्रैः ॥ ५५ ॥ ❀ ❀ रूपभेदं मेघवृन्दमिति विश्वनाथः । रूपं सौरचान्द्रकिरणं धूल्यादिमयं भेदश्च तत्कृतः । द्वयोर्द्वन्द्वैक्यं तद्दर्शित्वात्तदाच्छादकत्वाच्चेति सन्दर्भः । रूपं नीलं नभ इत्येवमाकारकम् । भेदो घटाकाशादिमाययाधिष्ठानशक्त्या मिथ्यैव विरचितं तयेति सुष्ठु प्रतिभाति । षण्ढत्वं समाहारद्वन्द्वत्वात् ॥ ५६-५८ ॥ ❀ ❀ ताविमौ भगवतो हरेः श्रीकृष्णस्यांशौ कर्त्तारौ इह द्वापरांते यदूद्वहकुरूद्वहौ । कृष्णौ कृष्णार्जुनौ कर्मभूतावागतौ प्राप्तौ कृष्णार्जुनयोः स्वांशिनोस्तावंशौ नरनारायणौ प्रविष्टावित्यर्थः । तथैव भागवतामृते कारिका "कर्त्तारौ तौ हरेरंशौ नरनारायणावृषी । द्वापरांते कर्मभूतावायातौ कृष्णफाल्गुनौ ॥" इति । इत्यर्थ इति । याविमौ हरेरंशौ तावेवाधुनेह कृष्णार्जुनयोरागताविति भावः । अत्र प्रमाणमाह—तदुक्तमिति । नरस्यर्षेरावेशः प्रवेशः । स्वयं नारायणः कृष्णः कृष्णोस्याश्रयत्वेनास्येवि कृष्णः । मत्वर्थीयोच् । द्वंद्वान्ते श्रूयमाणत्वादुद्वहपदमुभयत्रान्वेतीत्युक्तं यदूद्वहः कुरूद्वह इति ॥ ५९ ॥ ❀ ❀ त्रीन्पावकादीन् ॥ ६० ॥

---

१. प्रा० पा०—दिव्या आसीत् परमसङ्गमम् । २. प्राचीने पाठे 'देवा ऊचुः' नास्ति ।

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

शान्तिरन्तःकरणनिरोधशक्त्यधिष्ठात्री । तुष्टिः संतोषशक्त्यधिष्ठात्री, सात्त्विकशक्तीनां प्रकरणात्स्मयोऽत्र धर्मोत्साहः, एवं दर्पोपि, तपोयोगादिसामर्थ्यख्यापनम् ॥ ५१ ॥ ❀ ❀ मेधा धारणावती धीः, सच्चिदानंदमूर्तेः प्रकाशकत्वेन मूर्तिसंज्ञत्वम् ॥ ५२ ॥ ❀ ❀ ययोरिति त्रिकम् । सुनिर्वृतं परमानन्दविशिष्टं सत् अभ्यनन्दत्समृद्धमासीत् 'टुणदि समृद्धावि'त्यस्मात् अभिष्टवैस्स्तुतिवाक्यैः ॥ ५३–५५ ॥ ❀ ❀ यस्मिन्नात्मनि विरचितं तस्यात्मन इति संबन्धः । गंधर्वनगरमिवेति नश्वरत्वे न तु मिथ्यात्वे "वैधर्म्याच्च न स्वप्नादिवद्" इति न्यायविरोधात् वैराग्यार्थं वा मिथ्यात्व एव तथापि परार्थत्वेन न तत्र तात्पर्य्यम् ॥ ५६ ॥ सोयं सर्वाधारसर्वस्रष्टृत्वेन प्रसिद्धः ॥ ५७–५८ ॥ ❀ ❀ तौ च नरनारायणौ हरेरंशौ कर्तृभूतौ इह जगति भुवो भारापनयनाय यदुकुरूद्वहौ कृष्णौ कृष्णार्ज्जुनौ प्रति आगतौ प्रविष्टौ इति योजना तत्र तयोरागतत्वं सात्वततंत्रे प्रोक्तम् । तत्र अर्ज्जुनस्य श्रीभगवत्सखत्वेन नरांशित्वेपि अर्जुने अंशिनि नरस्य तदंशस्यावेशः प्रवेशः यथा समुद्रे नद्याः । कृष्णो नारायणस्स्वयमित्यंशांशिनोरभेदाभिप्रायेण ॥ ५९–६० ॥

## श्रीमद्वीरराघवव्याख्या

त्रयोदशानां मध्ये मूर्त्याख्या धर्मपत्नी सर्वेषां गुणानां कल्याणगुणानामुत्पत्तिरभिव्यक्तिर्ययोस्तावृषी नरनारायणौ भगवदवतारभूतौ असूत ॥ ५२ ॥ ❀ ❀ ययोर्नरनारायणयोर्जन्मनि जन्मकाले अदः एतद्विश्वं सुखितं सदभ्यनंदत्सर्वेषां मनांसि दिशः सरितः समुद्रा वाताश्च प्रसन्ना अभूवन् ॥ ५३ ॥ ❀ ❀ तूर्याणि वाद्यानि देवैर्वाद्यंत ध्वनितानि ॥ ५४ ॥ ❀ ❀ देव्यः देवानां संबंधिन्यः स्त्रियः अवतीर्णौ नरनारायणौ द्रष्टुं सर्वे ब्रह्मादयो देवा अभिष्टवैरुपतस्थुः आगत्य समीपे अभितः स्थित्वा स्तोत्रैस्तुष्टुवुरित्यर्थः ॥ ५५ ॥ ❀ ❀ स्तुतिमेवाह द्वाभ्यां य इति । निजया आत्मीयया मायया संकल्पेन स्वात्मन्येवाधारभूते खे आकाशे रूप भेदं सितनीलादिरूपभेदमिव विरचितं यदिदं विश्वं रचितं तत्राकाशदृष्टांतेन स्वस्यास्पृष्टस्रज्यवस्तुदोषत्वमुच्यते यद्वा स्वभिन्नात्मनि जीवे आकाशे रूपभेदमिव इदं देवतिर्यगादिरूपभेदं विरचितं तत्राकाशदृष्टांतेन सितनीलादिरूपभेदो मेघादिकृतो वस्तुतस्तु आकाशादतिरिक्तोपि भ्रांतिदृष्टीनामाकाशाभिन्नत्वेन प्रतीतस्तद्वद्देवादिरूपभेदाद्विलक्षणे ह्यात्मस्वरूपे तदभिन्नत्वेनैव भ्रांतिदृष्टीनां प्रतीयमानदेवादिरूपभेद इति विवक्षितं यथोक्तं सितनीलादिभेदेन यथेदं दृश्यते नभः । भ्रांतिदृष्टिभिरात्मापि तथैकः सन्पृथक् पृथगिति अस्मिन् पक्षे यो मायया आत्मनि रचितमित्युक्त्या भगवत्संकल्पादेव जीवस्य बंध इत्युक्तं भवति तत्प्रतिचक्षणाय तस्य देवादिरूपसंसृष्टस्यात्मनः प्रतिचक्षणाय प्रतिबोधनाय देवादिरूपभेदाद्विलक्षणब्रह्मात्मकप्रत्यगात्मस्वरूपबोधनाय तद्द्वारा संसारमोचनायेत्यभिप्रायः एतेन देवमनुष्यादिसजातीयेन स्वसंकल्पोपात्तेन अप्राकृताकर्मवश्येन ऋष्याकारेण धर्मस्य गृहे यो भगवान्प्रादुश्चकार प्रादुर्भूतः । तस्मै परमपुरुषाय ते नमः ॥ ५६ ॥ ❀ ❀ सोयं स्वसंकल्पकृतजगद्धर्मोक्षो भगवान् अनुमेयतत्त्वः शास्त्रैकवेद्यविविधविचित्रशक्तिमत्स्वरूपः स्थितिव्यतिकरोपशमाय-स्थितिः पालनं व्यतिकरः सृष्टिः उपशमः संहारः तेषां समाहारे द्वंद्वः । तस्मै जगत्पालनाद्यर्थं पालनाधिकृतभगवदंशभूतेंद्राद्यभिप्रायेण स्थितिपदं प्रयुक्तं सत्त्वेनेति गुणत्रयोपलक्षणं स्थित्याद्यनुगुणसत्त्वादिगुणविशिष्टत्वेन सृष्टानस्मान्सुरगणान् अदभ्रकरुणेन अनल्पदयायुक्तेन विलोकनेन दृश्यात् आशीर्लिङ आर्धधातुकत्वात्पश्यादेशाभावः । दृश्यानिति द्वितीयांतपाठे तु पश्यत्विति क्रियापदमध्याहर्त्तव्यं दृश्यान् कृपावलोनविषयत्वयोग्यानस्मान्पश्यत्वित्यर्थः । कथंभूते न विलोकनेन यच्छ्रियो लक्ष्म्या निकेतं स्थानमरविंदं कमलं तत् क्षिपता तिरस्कुर्वता ॥ ५७ ॥ ❀ ❀ हे तात ! एवं लब्धः कृपावलोको यैस्ते सुरगणैरभिष्टुतौ भगवंतौ नरनारायणौ गंधमादनाख्यं पर्वतं प्रतिययतुः गतवंतौ ॥ ५८ ॥ ❀ ❀ तावेव हरेरंशतयावतीर्णौ इमौ नरनारायणौ भुवः भारव्ययाय भारक्षपणाय यदुकुरुकुलश्रेष्ठौ इमौ कृष्णार्जुनाविहागतौ तावेव कृष्णार्ज्जुनरूपेणावतीर्णावित्यर्थः ॥ ५९ ॥ ❀ ❀ एवं धर्मपत्नीनां दक्षदुहितॄणां त्रयोदशानां संततिः कथिता । अथ चतुर्दश्या दक्षदुहितुः संतानमाह स्वाहेति । अभिमानिनः स्वाहां भार्यां स्वस्यात्यं तमनुकूलां मन्यमानादग्नेस्तद्भार्यास्वाहा स्वाहाख्या त्रीन् पुत्रान् प्रसूतवती अभिमानिन इत्यात्मजविशेषणं वा त्रेताग्न्यभिमानिनो देवानित्यर्थः । तानाह पावकमिति हुतभोजनमिति त्रयाणां विशेषणं हुतं देवतोद्देशेन त्यक्तं चरुपुरोडाशादिकं भुक्त इति हुतभोजनस्तम् ॥ ६० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

शमदमादिसर्वगुणानामुत्पत्तिर्ययोस्तौ तथा ॥ ५२–५३ ॥ ❀ ❀ अभिष्टवैः स्तोत्रैः ॥ ५५ ॥ ❀ ❀ यो विष्णुर्निजमायया स्वेच्छया । खे रूपभेदमिव यथाकाशे वाय्वादिरूपभेद आकाशाधारतया प्रतीयते तथात्मनि स्वाधारतया विरचितमिदं विश्वं तत्प्रतिचक्षणाय तस्य जगतः स्वस्य चाधाराधेयभावज्ञापनायाद्य धर्मसदने मूर्त्याख्यधर्मभार्यायां एतेनासत्दृष्टिगोचरेण ऋषिमूर्तिना ऋषिवेषधारिणी मूर्तिर्यस्य तत्तथा तेन रूपेण । प्रादुश्चकार तस्मै परस्मै पुरुषाय नम इत्यन्वयः, 'यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् , 'यथाकाशे विमानादिरूपभेदः प्रतीयते । तथा हरौ जगदिदं तत्सामर्थ्यात्प्रतीयते, इत्यादेः ॥ ५६ ॥ ❀ ❀ किमिदानीं विशेषाभीष्टमित्यतस्तत्प्रार्थयते सोयमिति । यो भगवान् भक्ताभीष्टकचिंतामणिः सोयमव-

लोकनेन कटाक्षनिरीक्षणेन सुरगणान्नो दृश्यादवलोकयत्वित्यन्वयः । द्रष्टव्यत्वे स्वगुणान् लक्षयंति । स्थितीति स्थितिव्यतिकरोपशमाय स्थितिविघ्नपरिहाराय सत्त्वेन गुणेन सृष्टान् । अस्माभिरपि न साकल्येन ज्ञातुं शक्यत इति भावेनाहुः अनुमेयतत्त्व इति प्रत्यक्षागमानुगृहीतव्याप्तिकेन लिंगज्ञानेन ज्ञेयं तत्त्वमनारोपितज्ञानस्वरूपं यस्य स तथा । अवलोकनस्य स्वविषये जने गुणार्पकगुणोऽस्ति चेत्प्रार्थनीयतामर्हति तत्कथमत्राहुः अदभ्रे ति । अदभ्रा अनल्पा पूर्णा करुणा यस्य तत्तथा तेन न केवलमनुग्रहगुणः किन्तु कांतिगुणोप्यस्तीत्याहुः क्षिपतेति । अरविंदं क्षिपता । स्वकांतिगुणेन । पद्मकांति निरस्यत इत्यर्थः पद्मस्य कोयं माहात्म्यातिशय इति तत्राहुः यच्छ्रीनिकेतमिति यदरविंदं श्रियो निकेतं निवासस्थानं श्रियो निवासस्थानीयत्वं केनचिद्गुणेन भाव्यं स क इति तत्राहुः अमलमिति ॥ ५७ ॥ ❀ ❀ ततः किं भगवंतावकार्ष्टामिति तत्राह एवमिति ॥ ५८ ॥ ❀ ❀ तौ करतलामलकवत् ज्ञापयति ताविमाविति । यदूद्वहो यादवेश्वरः कृष्णः । कुरूद्वहोऽर्जुनः अस्मिन्नरस्याविशेषावेशाद्धरेरंशत्वं न तु साक्षात् तदुक्तम् । नरे विष्णुः समाविष्टः स्वयं नारायणो हरिः । अर्जुने च नरावेशः कृष्णो नारायणः स्वयमिति ॥ ५९ ॥ ❀ ❀ अग्न्यभिमानिनो देवान् अग्नेः स्वाहा नाम्नी हुतभोजनामातत्रयाणां विशेषणम् ॥ ६० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

योगमिति सार्द्धकम् ॥ ५१ ॥ ❀ ❀ मूर्त्तिरिति सर्वगुणस्य भगवत उत्पत्तिः प्रकाशो यस्याः सा अस्य स्थापनात् तावसूतेति पूर्वेणैवान्वयः भगवदाख्यायाः सच्चिदानन्दमूर्त्तेः प्रकाशहेतुत्वान्मूर्त्तिरित्यर्थः ॥ ५२ ॥ ❀ ❀ ययोरिति त्रिकम् ॥ ५३–५५ ॥ ❀ ❀ य इति । खे रूपं सौरचान्द्रकिरणं धूल्यादिमयं भेदश्च तत्कृतः द्वयोर्द्वन्द्वैक्यं तदस्पर्शित्वात् तदाच्छादकत्वाच्च तदिव सम्प्रति तत्रैव तस्यात्मनः प्रतिचक्षणाय प्रकाशनायेत्यादि योज्यम् ॥ ५७–५८ ॥ ❀ ❀ ताविति । आगताविति कर्त्तरि निष्ठा । कृष्णाविति कर्म्मणि द्वितीया कृष्णौ कृष्णार्ज्जुनौ प्रति ताविमौ प्रविष्टवन्तावित्यर्थः । कृष्णौ कथम्भूतौ भुवो भारव्ययाय यदुकुरूद्वहौ । यदुकुरुवंशे अवतीर्णावित्यर्थः । चकारोऽत्रान्वाचये मुख्यत्वेन तत्तद्भक्तानां तत्तद्वाञ्छादानार्थमित्यर्थः ॥ ५९–६६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृते क्रमसन्दर्भे प्रथमोऽध्यायः ॥ १ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

स्वयं धर्मेपूत्साहं दर्पं तपोयोगादिषु सामर्थ्यप्रख्यापनं अन्यौस्मयदर्पावधर्म्मवंशौ ज्ञेयौ ॥ ५१ ॥ ❀ ❀ सर्वगुणस्य निखिलकल्याणगुणार्णवस्य भगवत उत्पत्तिर्यतः सेति शुद्धसत्वस्वरूपा भगवत्प्रकाशिका शक्तिरियं ज्ञेया ॥ ५२–५५ ॥ ❀ ❀ यस्मिन्नात्मन्यधिष्ठाने निजया मायया कर्त्र्या इदं विराड्रूपं खे नभसि रूपभेदं मेघवृन्दमिव विरचितं तस्यात्मनः स्वस्य प्रतिचक्षणाय प्रकाशनाय एतेन ऋषिमूर्त्तिना यः प्रादुः प्रादुर्भावं चकार । ऋषिमूर्त्तिनेति प्रकृत्यादित्वात्तृतीया तस्मै पुरुषाय नमः अत्र रूपभेदमिति एतेनेति ऋषिमूर्त्तिनेति पदत्रयस्य क्लीबत्वमार्षम् ॥ ५६ ॥ ❀ ❀ स्थितेर्जगन्मर्यादाया व्यतिकरोऽन्यथात्वं तस्योपशमाय विलोकनेन नेत्रेण कीदृशेन यत् श्रीनिकेतममलमरविन्दं तत् क्षिपता तिरस्कुर्व्वता ।। ५७ ॥ ❀ ❀ लब्धोऽवलोकः कृपा माया यैस्तैरर्च्चितौ ॥ ५८ ॥ ❀ ❀ ताविमौ नरनारायणौ हरेः कृष्णस्यांशौ कर्त्तारौ इह द्वापरान्ते यदूद्वहकुरुद्वहौ कृष्णौ कृष्णार्ज्जुनौ मर्मभूतौ आगतौ प्राप्तौ कृष्णार्ज्जुनयोः स्वांशिनोस्तावंशौ प्रविष्टावित्यर्थः । तथैव भागवतामृतोक्ता कारिका यथा । कर्त्तारौ तौ हरेरंशौ नरनारायणावृषी । द्वापरान्ते कर्मभूतावायातौ कृष्णफाल्गुनाविति ॥ ५९ ॥ ❀ ❀ अग्नेर्भार्या स्वाहा अग्न्यभिमानिनस्त्रीनात्मजान् हुतभोजनमिति त्रयाणां विशेषणम् ॥ ६० ॥

### श्रीमच्छुकदेवकृतः सिद्धांतप्रदीपः

सर्वेषां गुणानामुत्पत्तिर्यस्याम् । सुनिर्वृतं सुष्ठु सुखितं सत् अभ्यनंदत् ॥ ५२ ॥ ❀ ❀ प्रसेदुः प्रसन्ना अभूवन् तूर्य्याणि अवाद्यंत देवैरिति शेषः ॥ ५३–५४ ॥ ❀ ❀ अभिष्टवैः स्तोत्रैः उपतस्थुर्भेजुः ॥ ५५ ॥ ❀ ❀ ख इव निर्मले यस्मिन् आत्मनि रूपभेदमिदं विश्वं निजमायया प्रकृत्या विरचितम् ॥ तस्यात्मनः प्रतिचक्षणाय प्रकाशनाय आत्मानं य ऋषिमूर्तिना अद्य प्रादुश्चकार तस्मै नम इत्यन्वयः ॥ ५६ ॥ ❀ ❀ अनुमेयं शास्त्रतो विचारणीयं तत्त्वं यस्य तथाभूतः सोयम् । स्थितिः पालनं, व्यतिकरसृष्टिः, उपशमः संहारस्तेषां समाहारैकवचनं तस्मै स्थित्याद्यर्थं सृष्टान् नोऽस्मान् सत्वेन शांतेन अत एवादभ्रकरुणेनाऽनल्पदयेन यदमलं श्रीनिकेतमरविंदं क्षिपता स्वकांत्या तिरस्कुर्वताऽवलोकनेन दृश्यात् पश्यतु ॥ ५७ ॥ ❀ ❀ लब्धावलोकैरर्चितौ पूजितौ ॥ ५८ ॥ ❀ ❀ तौ इमौ नरनारायणौ हरेर्नारायणस्य अंशौ कर्तृभूतौ भुवो भारस्य व्ययाय नाशाय यदुकुरुद्वहौ कृष्णौ कर्मभूतौ इह आगतौ प्रविष्टावित्यर्थः । तत्र नरः कुरुद्वहं कृष्णमर्जुनं गतः नारायणश्च यदूद्वहमाद्यं नारायणं गतः आद्यो नारायणः श्रीकृष्णः । एष वै भगवान् साक्षादाद्यो नारायणः पुमान् । मोहयन् मायया लोकं गूढश्चरति वृष्णिष्वित्युक्तत्वात् ॥ अयमर्थः ॥ आदिनारायणः स्वयं भगवान् श्रीकृष्णः एते चांशकलाः पुंसः कृष्णस्तुभगवान्स्वयमित्युक्तत्वात् द्वितीयो ना नारायणः

पुरुषः। जगृहे पौरुषं रूपं भगवानित्युक्तत्वात्। तस्य नारायणस्यांशः धर्मगृहेऽवतीर्णस्तृतीयो नारायणः। एतन्नानावताराणां निधानं बीजमित्युक्तत्वात्॥ ५९॥ ❀ ❀ स्वाहा तु स्वभर्तुः सकाशात् अग्न्यभिमानिनो देवान्। पावकादीन् त्रीनात्मजानजीजनत्। हुतभोजनमिति त्रयाणां विशेषणम्॥ ६०–६१॥

**गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी**

क्रिया योगमसूयत। क्रियया लौकिक्या योगस्याप्राप्तप्राप्तिलक्षणस्य प्राणायामादिरूपया ध्यानयोगस्य यज्ञाद्यनुष्ठानरूपया भक्तियोगस्य च प्रसिद्धेः। उन्नतिर्दर्पमसूयत, धनधान्यादिवृद्धिमत एव दर्पस्य स्वस्मिन्नुत्कृष्टप्रत्ययस्याहङ्कारापरपर्यायस्य दर्शनात्। दरिद्रस्य तददर्शनात् 'दरिद्रो निरहंस्तंभ' इति वचनाच्च धनादिनोन्नतस्यैव दर्पो भवति' न दरिद्रस्येति। बुद्धिरर्थमसूयत, बुद्धिमत एवार्थस्य तत्तदभिलषितपदार्थस्य सिद्धेः प्रसिद्धत्वात्। मेधा स्मृतिमसूयत, अनुभूतधारणावत एव मेधाविनः कर्त्तव्याकर्त्तव्यानुसन्धानलक्षणा स्मृतिर्भवति, न प्रमुष्टसंस्कारस्य। तितिक्षां तु क्षेमं सुतमसूयत, तितिक्षावतः परापराधसहनशीलस्यैव क्षेमं कल्याणं भवति। अन्यथा क्रोधमोहाद्याविष्टत्वेन हिंसादौ प्रवृत्तस्य नरकादौ पातात्तन्न भवति। ह्रीः प्रश्रयं सुतमसूयत लज्जावत एव विहितत्वेन वा निन्दिते कर्मणि च कृतेऽन्येन ज्ञाते सति वा नम्रता भवति, न निर्लज्जस्येति सुप्रसिद्धेः॥ ५१॥ ❀ ❀ शुद्धसत्त्व एव भगवदाविर्भावो भवतीति सूचयंस्तथाभूतायामेव मूर्त्यां नरनारायणावतारमाह–मूर्तिरिति। सर्वेषां गुणानां ज्ञानैश्वर्यवैराग्यशमदमादीनामुत्पत्तिर्यया शुद्धसत्त्वात्मिकया शुद्धया सा तथाभूता मूर्तिर्नरनारायणावृषी असूयतेति पूर्वस्यैवानुषङ्गः। साक्षात् क्रियानुक्तिस्तु लौकिकानां प्रसूतिधर्माणां तत्राभावेन तयोरवतारत्वं ज्ञापयितुम्। तत्र नारायणो भगवदवतारः। नरस्तु तस्यांशावेशः। 'नरो विष्णुः समाविष्टः स्वयं नारायणो हरिः' इति वचनात्। अवतारांशयोर्भेदस्तु प्रथमस्कन्धे तृतीयाध्याये 'एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्' इत्यत्र विवृतः। यद्यपि 'तुर्ये धर्मकलासर्गे नरनारायणावृषी' 'धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्यां नारायणो नरसख' इत्यादावेवतारैकत्वमुक्तं तथापि पुष्टिमर्यादाभेदेन कार्यद्वयकरणार्थं मूर्तिद्वयेनावतार इति ज्ञेयम्। अत एवेन्द्रप्रहिताप्सरोगन्धर्वादिषु प्रतिकूलं प्रवृत्तेष्वपि पुष्टिमवलम्ब्य प्रसादोन्मुखो भूत्वा स्वर्लोकभूषणमुर्वशीं तेभ्यो दत्तवन्तौ, अन्यथा तु ते प्रतिकूलं प्रवृत्तास्तपःप्रभावमात्रेण कपिलाश्रमे सगरात्मजवद्भस्मसाद्भवेयुः। मर्यादाकार्यं सर्वोपकारलक्षणं तु 'यो वै भारतवर्षेऽस्मिन् क्षेमाय स्वस्तये नृणाम्॥ धर्मज्ञानशमोपेतमाकल्पादास्थितस्तप' इत्यादिसर्वसङ्ग्रहार्थं तपश्चर्यादि वक्ष्यति। ऋषी इत्यनेन लोकस्य हितचिन्तनमुभयोः साधारणं कार्यं दर्शितम्। तयोर्भगवदवतारत्वज्ञापकं जगदानन्दादिकमाहुः–ययोरिति त्रिभिः। ययोर्नरनारायणयोर्जन्मनि प्रादुर्भावकाले एवादो विश्वं त्रिगुणात्मकत्वात्सुखदुःखमोहादिप्राचुर्यमपि सुनिर्वृतमानन्देन व्याप्तं सत् अभ्यनन्दत् अहोऽस्मद्भाग्यमिति भगवदवतारं सभाजितवत्। न हि भगवदवतारं विनैवं सर्वेषां निरुपाध्यानन्दो भवतीति भावः। अत एव जगत्क्षेमायायमवतार इति सूचितम्। भगवदवतारं ज्ञात्वा स्वस्वोक्तमधर्मान्सर्वे प्रकटितवन्त इत्याह–मनांसीति। साधूनां मनांसि सहसैव प्रसन्नानि जातानि। ककुभो दिशः प्रसेदुः। तासां प्रसादो दूरस्थस्य पदार्थस्य दर्शनहेतुः प्रकाशविशेषो जात इति। वातानां प्रसादः तत्स्पर्शस्य सुखजनकत्वम्। सरितां प्रसादः कमलादिविकासनिर्मलत्वादि। अद्रीणां प्रसादः स्वान्तःस्थानां मण्यादीनां बहिराविष्करणम्॥ ५२॥ ❀ ❀ एवं भूर्लोकस्य प्रसन्नतां निरूप्य तत उपरितनानां सेवाप्रकारमाह–दिवीति द्वाभ्याम्। तूर्याणीत्यन्येषामपि दुन्दुभ्यादिवाद्यविशेषाणामुपलक्षणम्। दिवि स्वर्गे देवैर्वादितानि सर्वाणि वादित्राणि अवाद्यन्तेत्यर्थः। तथा देवैः कृताः कुसुमवृष्टयश्च धर्मसदने पेतुः। मुनयो मननशीलत्वाद्भगवद्गुणज्ञा भगवतोऽवतारं ज्ञात्वा सन्तुष्टास्तुष्टुवुः स्तोत्रं चक्रुः। गन्धर्वकिन्नराः भगवद्यशसो जगुर्गानं कृतवन्तः तुष्टा इत्यस्य योग्यत्वात्सर्वत्रान्वयः॥ ५३॥ ❀ ❀ देव्यः देवानां संबन्धिन्यः स्त्रियोऽप्सरसो नृत्यन्ति स्म ननृतुः। एवं भगवत्प्रभावादेव संतोषेण सर्वे स्वयमेव मङ्गलं कृतवन्तो न तु ब्रह्मादिप्रेरणयेति ज्ञेयम्। एवं भूमौ दिवि च परममङ्गलमुत्सव आसीत्। एवं साधारणानामुत्सवं निरूप्य मुख्यानां ब्रह्मादीनामुपासनमाह–देवा इति। ब्रह्मा आदिर्मुख्यो येषां ते रुद्रेन्द्रवरुणाग्निप्रभृतयः सर्वे देवा धर्मसदने आगत्याभिष्टवैः स्तोत्रैर्भगवन्तमुपतस्थुः तस्योपासनां स्तुतिं चक्रुः॥ ५४॥ ❀ ❀ स्तुतिमेवाह–यो माययेति। खे रूपभेदमिवात्मनि निजया मायया विरचितं यदिदं विश्वं तत्प्रतिचक्षणाय एतेन ऋषिमूर्तिना य आत्मानमद्य धर्मसदने प्रादुश्चकार तस्मै पुरुषाय नम इत्यन्वयः। यदात्मनि स्वस्मिन्निदं दृश्यमानं विश्वं विरचितं तत्प्रतिचक्षणाय तस्य विश्वस्य तदधिष्ठानस्य च तत्त्वस्य 'सर्वं खल्विदं ब्रह्म' पश्यन्तं माययोरुधा स सर्वनामा स च विश्वरूपः इत्यादिवाक्येभ्यः प्रतिचक्षणाय उपदेशतपश्चर्यादिना प्रकाशनायेत्यर्थः। एतेनास्मद्दृष्टिगोचरेणेत्यर्थः। ऋषिमूर्तिनेति ऋषिमूर्तिराकारो यस्मिंस्तेन रूपेणेत्यर्थः। शुद्धसत्त्वावताराभावे तत्सेवां विनाऽधिकारिणां सत्त्वोद्रेकासंभवेन यथार्थज्ञानं न भवेदिति ऋषिरूपेण शुद्धसत्त्वप्रधानेनात्मानं प्रकटीकृतवांस्तेन त्वदुपासनया शुद्धान्तःकरणाः भूतभौतिकाद्यनेकसृष्टिरूपं मनसाप्याकलयितुमशक्यरचनमिदं विश्वं त्वय्येवाधिष्ठाने त्वत्स्वरूपभूतं त्वयोपदेशादिना प्रकाशितं ज्ञात्वा परंपरया त्वन्माहात्म्यं च ज्ञात्वा यथाधिकारं तव स्वरूपमपि ज्ञास्यन्तीति भावः। अहो तव माहात्म्यं येनानायासेनैवैवंविधं विश्वं कृतवानित्याशयेनाहुः–माययेति। माया शक्तिः, इच्छासामर्थ्यमिति नार्थान्तरम्। तन्मात्रेणैवान्यानुपजीवनेन रचितमित्यर्थः। एवं महाप्रभा-

वाया मायाया अपि भगवद्वशवर्त्तित्वमाहुः—निजयेति । नन्वेवमात्मनि विश्वरचने आत्मनो विकृतत्वं परिच्छिन्नत्वं वा घटाद्याधारमृदादिवत्स्यादित्याशङ्कानिरासार्थं दृष्टान्तमाहुः—खे रूपभेदमिवेति । खे आकाशे रूपभेदं घटादिकृतघटाकाशमहाकाशमठाकाशादिस्वरूपभेदमिव विश्वं त्वयि रचितमित्यर्थः । तथाच यथैवंरूपभेदप्रतीतावपि न वस्तुत आकाशस्य भिन्नत्वं परिच्छिन्नत्वं वा तथा भवति नानाविधजगत्प्रतीतावपि 'असङ्गो ह्ययं पुरुषः' 'भूतभृन्न च भूतस्थः' 'यं पृथिवी न वेद' 'यस्य पृथिवी शरीरम्' इत्यादिवचनप्रामाण्यान्न भगवतो विकृतत्वं न वा परिच्छिन्नत्वमिति भावः । एवं च निर्लेपत्वापरिच्छिन्नत्वबोधनायैवात्राकाशो दृष्टान्तीकृतो न तु मिथ्यात्वबोधनार्थम्, अन्यथा तु 'सोयं स्थितिव्यतिकरोपशमाय' इत्यादिना तत्तन्मर्यादास्थापनार्थं देवानां सृष्टिरित्यनुपदं वक्ष्यमाणं बाधितं स्यात् । न हि मिथ्याप्रतीयमाने गन्धर्वनगरादौ काचिन्मर्यादास्ति, येन तत्परिरक्षणार्थमधिकारिणां नियोजनं संभवेदतः सर्वमाहात्म्यप्रतिकूलं जगतो मिथ्यात्वं नात्राभिप्रेतं दृष्टान्तेनेति ज्ञेयम् । धर्मसदने तत्पत्न्यां मूर्त्यामिति शेषः । ब्रह्माण्डगतपुरुषं व्यावर्त्तयितुमाहुः—परस्मा इति । विराट् पुरुषात्परः पुरुषोत्तमस्तस्मा इत्यर्थः । नमोनम इत्येतावदेव सदुपशिक्षितमिति सिद्धान्ताद्भगवति न जीवैरधिकं कर्तुं शक्यमिति सूचनायान्ते नमःपदप्रयोगः ॥ ५५ ॥ ❀ ❀ एते ह्यधिकारिणो देवास्तत्तत्कार्येषु भगवता नियुक्ता अतः स्वाधिकारकार्यं सामान्यतो निवेदयन्तो भगवन्नियोगस्य सर्वदा निर्वाहार्थं तत्कृपावलोकनं प्रार्थयन्ते सोयमिति । यो भगवान्वेदेषु वर्णितमाहात्म्यो भक्ताभीष्टपूरकचिन्तामणिः एवं सामान्यतो ज्ञानेप्यस्माभिरपि यस्याचिन्त्यमहिम्नो महिमा साकल्येन न ज्ञायते यतोनुमेयतत्त्वः सृष्ट्यादिकार्यलिङ्गेनानुमेयं तत्त्वमचिन्त्यं सामर्थ्यं महिमा यस्य सोयमवतीर्णो भवान् स्थितिव्यतिकरोपशमाय स्थितेः जगन्मर्यादायास्तत्तन्नियमस्य व्यतिकरः संकरः विघ्नैरन्यथा भावस्तस्योपशमाय विवृत्तये सत्त्वेन गुणेन सृष्टान् भवतोत्पादितान्नोस्मान् सुरगणान् अदभ्रकरुणेन अदभ्रा अनल्पा सर्वसामर्थ्यजनिका सर्ववाञ्छितफलप्रदा करुणा कृपा यत्र तादृशेनावलोकनेन नेत्रेण दृश्यात् पश्यत्वित्यर्थः । एवं दर्शनेनैव सर्ववाञ्छितफललाभात् सर्वतापोपशमाच्च कृतार्था वयं भविष्यामोऽतो न ततोऽन्यत्किञ्चित्प्रार्थनीयमस्तीति सूचयन्तो नेत्रविशेषणमाहुः—यदिति । यच्छ्रियो निकेतं स्थानमरविन्दं तत् क्षिपता स्वसौन्दर्येण तापहारकत्वेन च तिरस्कुर्वता । तस्यारविन्दस्य लक्ष्मीस्थानयोग्यत्वमाहुः—अमलमिति, शुद्धं म्लानत्वादिदोषरहितमित्यर्थः ॥ ५६ ॥ ❀ ❀ एवं स्तुत्यनन्तरं किं जातमित्याकाङ्क्षायामाह—एवमिति । हे तात विदुर इति संबोधनेन तस्मिन् स्नेहं सूचयति । सुरगणैर्वैदसमूहैर्ब्रह्मादिभिरेवं पूर्वोक्तप्रकारेणाभिष्टुतौ स्तुतिपूर्वकं प्रार्थितौ तत्प्रार्थनानुसारेण कृपादृष्ट्या तानवलोक्य पुनश्च लब्धोऽवलोको यैस्तैर्गन्धपुष्पादिभिरर्चितौ पूजितौ गन्धमादनं पर्वतं तपःसिद्धैः सेवितं तपश्चर्तुं ययतुः जग्मतुः । देवास्तु तदवलोकनमात्रेणैव कृतकृत्या अतो नान्यत्किञ्चित्प्रार्थितवन्तः, किं तु पूजां कृतवन्त इति स्पष्टम् ॥ ५७ ॥ ❀ ❀ प्रसङ्गादिदानीमपि कार्यविशेषार्थं विशेषरूपद्वयेन तयोरागमनं निरूपयति—ताविति । तौ हि प्रसिद्धाविमौ वर्णितगुणौ नरनारायणौ भगवत ऐश्वर्यादिगुणवतो हरेर्भक्तदुःखहरणस्वभावस्यांशौ अवताररूपौ इहास्मिन् भारतखण्डे समागतावित्यन्वयः । तत्रार्जुनेंऽशावेशमात्रम्, श्रीकृष्णस्तु स्वयं भगवानेव, अर्जुने तु नरावेशः, 'कृष्णो नारायणः स्वयम्' इति तन्त्रवचनात् । तस्याप्यंशत्वे 'कृष्णस्तु भगवान्स्वयम्' इति प्रथमोक्तिविरोधाच्च । ननु नरनारायणयोर्बदरिकाश्रमे विद्यमानयोरेव कथमागमनमुच्यते विरोधादिति चेन्न, भगवतोऽनेकरूपधारणे सामर्थ्यात्तत्तत्स्वरूपेण तत्र स्थितयोरेव स्वरूपान्तरेणात्रागमनकथनं न विरुद्धमिति ज्ञेयम् । अवतारान्तरप्रयोजनमाह—भारव्ययाय च भुव इति । भुवो भारस्यासुरवंशस्य व्ययाय नाशायेत्यर्थः । चकारात्पुष्टिमर्यादाभेदेन मार्गद्वयरक्षणाय स्वरूपद्वयेनावतीर्णाविति ज्ञेयम् । 'परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगे युगे' इति वचनात् अवतीर्णयोस्तयोर्मुख्यं नाम निर्दिशति—कृष्णाविति । उभयोरपि धर्मरक्षणादिकं कार्यमेकमेवेति तौ द्वावेकेनैव कृष्णनाम्ना प्रसिद्धौ, तथाप्यसाधारणचिह्नाज्ञानात्कथं नाममात्रेण ज्ञातुं शक्यमत आह—यदुकुरूद्वहाविति—यदूनुद्वहति पालयतीति यदूद्वहः कृष्णः देवकीपुत्रः । कुरून् उद्वहतीति कुरूद्वहः कृष्णः कुन्तीपुत्र इत्यर्थः ॥ ५८ ॥ ❀ ❀ एवं दक्षस्य षोडशकन्यासु त्रयोदशानां वंशमुक्त्वाऽवशिष्टानां तिसृणां वंशं वदन्नादौ चतुर्दश्याः स्वाहाभिधाया वंशमाह—स्वाहेति । अग्नेः सकाशात्स्वाहा त्रीनात्मजान् पुत्रानजीजनदित्यन्वयः । तत्रायमग्निर्न साधारणः, किंतु सर्वाग्नीनामाधिदैविकः 'अग्निः सर्वदेवता' इति श्रुतेः । स्वाहा च तस्य शक्तिरतः सापि तथेति दर्शयति—अभिमानिन इति । तेषां त्रयाणां नामाह—पावकमिति । 'निर्मथ्यः पवमानः स्याद्वैद्युतः पावकः स्मृतः । यश्चासौ तपते सूर्यः शुचिरग्निस्त्वसौ स्मृतः' इति कूर्मोक्तेस्तद्विशेषो ज्ञेयः । त्रयाणां साधारणं धर्मं दर्शयितुं तेषां विशेषणमाह—हुतभोजनमिति । हुतभोक्तृत्वं त्रिष्वपि समानमित्यर्थः । केचित्तु अभिमानिन इति द्वितीयान्तमात्मजविशेषणं मत्वा सर्वाग्नीनामभिमानिनो देवानित्यर्थमाहुः ॥ ५९ ॥ ❀ ❀ ततोऽन्येषामग्नीनामुत्पत्तिमाह—तेभ्य इति । तेभ्यः पावकपवमानशुचिनामभ्यः पञ्चचत्वारिंशदग्नयः समभवन् जाताः । तत्र चत्वारिंशद्विकृतिसंबन्धिनः पञ्च प्रकृतिसंबन्धिनः त एव स्वपितृभिः पावकपवमानशुचिभिस्त्रिभिः स्वपितामहेन मूलरूपेणैकेन चाग्निना सहैकोनपञ्चाशज्जाता इत्यर्थः ॥ ६० ॥

### भाषानुवादः

क्रियाने योग, उन्नतिने दर्प, बुद्धिने अर्थ, मेधाने स्मृति, तितिक्षाने क्षेम और ह्री ( लज्जा ) ने प्रश्रय ( विनय ) नामक पुत्र उत्पन्न किया ॥ ५१ ॥ ❀ ❀ समस्त गुणोंकी खान मूर्तिदेवीने नर-नारायण ऋषियोंको जन्म दिया ॥ ५२ ॥ ❀ ❀

इनका जन्म होनेपर इस सम्पूर्ण विश्वने आनन्दित होकर प्रसन्नता प्रकट की। उस समय लोगोंके मन, दिशाएँ, वायु नदी और पर्वत सभीमें प्रसन्नता छा गयी ॥ ५३ ॥ ❁ ❁ आकाशमें माङ्गलिक बाजे बजने लगे, देवतालोग फूलोंकी वर्षा करने लगे, मुनि प्रसन्न होकर स्तुति करने लगे, गन्धर्व और किन्नर गाने लगे ॥ ५४ ॥ ❁ ❁ अप्सराएँ नाचने लगीं। इस प्रकार उस समय बड़ा ही आनन्द-मङ्गल हुआ तथा ब्रह्मादि समस्त देवता स्तोत्रोंद्वारा भगवान्की स्तुति करने लगे ॥ ५५ ॥ ❁ ❁ देवताओंने कहा—जिस प्रकार आकाशमें तरह-तरहके रूपोंकी कल्पना कर ली जाती है—उसी प्रकार जिन्होंने अपनी मायाके द्वारा अपने ही स्वरूपके अंदर इस संसारकी रचना की है, और अपने उस स्वरूपको प्रकाशित करनेके लिये इस समय इस ऋषि-विग्रहके साथ धर्मके घरमें आपको प्रकट किया है, उन परम पुरुषको हमारा नमस्कार है ॥ ५६ ॥ ❁ ❁ जिनके तत्त्वका शास्त्रके आधारपर हमलोग केवल अनुमान ही करते हैं, प्रत्यक्ष नहीं कर पाते—उन्हीं भगवान्ने देवताओंको संसारकी मर्यादामें किसी प्रकार गड़बड़ी न हो, इसीलिये सत्त्वगुणसे उत्पन्न किया है। अब वे अपने करुणामय नेत्रोंसे—जो समस्त शोभा और सौन्दर्यके निवासस्थान निर्मल दिव्य कमलको भी नीचा दिखानेवाले हैं—हमारी ओर निहारें ॥ ५७ ॥ ❁ ❁ प्यारे विदुरजी! प्रभुका साक्षात् दर्शन पाकर देवताओंने उनकी इस प्रकार स्तुति और पूजा की। तदनन्तर भगवान् नर-नारायण दोनों गन्धमादन पर्वतपर चले गये ॥ ५८ ॥ ❁ ❁ भगवान् श्रीहरिके अंशभूत वे नर-नारायण ही इस समय पृथ्वीका भार उतारनेके लिये यदुकुलभूषण श्रीकृष्ण और उन्हींके सरीखे श्यामवर्ण, कुरुकुलतिलक अर्जुनके रूपमें अवतीर्ण हुए हैं ॥ ५९ ॥ ❁ ❁ अग्निदेवकी पत्नी स्वाहाने अग्निके ही अभिमानी पावक, पवमान और शुचि—ये तीन पुत्र उत्पन्न किये। ये तीनों ही हवन किये हुए पदार्थोंका भक्षण करनेवाले हैं ॥ ६० ॥

तेभ्योऽग्नयः समभवन् चत्वारिंशच्च पञ्च च। त एवैकोनपञ्चाशत्साकं पितृपितामहैः ॥ ६१ ॥
वैतानिके कर्मणि यन्नामभिर्ब्रह्मवादिभिः। आग्नेय्य इष्टयो यज्ञे निरूप्यन्तेऽग्नयस्तु ते ॥ ६२ ॥
अग्निष्वात्ता बर्हिषदः सोम्याः पितर आज्यपाः। साग्नयोऽनग्नयस्तेषां पत्नी दाक्षायणी स्वधा ॥ ६३ ॥
तेभ्यो दधार कन्ये द्वे वयुनां धारिणीं स्वधा। उभे ते ब्रह्मवादिन्यौ ज्ञानविज्ञानपारगे ॥ ६४ ॥
भवस्य पत्नी तु सती भवं देवमनुव्रता। आत्मनः सदृशं पुत्रं न लेभे गुणशीलतः ॥ ६५ ॥
पितर्यप्रतिरूपे स्वे भवायानागसे रुषा। अप्रौढैवात्मनाऽऽत्मानमजहाद्योगसंयुता ॥ ६६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे विदुरमैत्रेयसंवादे[१] प्रथमोऽध्यायः ॥ १ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

पितरस्त्रयः पितामह एकस्तैः साकं सह ॥ ६१ ॥ ❁ ❁ वैतानिके वैदिके कर्मणि यज्ञे येषां नामभिरग्निदेवताका इष्टयो निरूप्यंते क्रियंते त एतेऽग्नयो न लौकिकाः। अतो बहूनां न वैयर्थ्यमिति भावः ॥ ६२ ॥ ❁ ❁ सौम्याः सोमपाः येषामग्नौ करणमस्ति ते साग्नयः तद्रहितास्त्वनग्नयः ॥ ६३ ॥ ❁ ❁ तयोस्तु संततिर्नाभवज्जीवन्मुक्तत्वादित्याह। उभे ते इति ॥ ६४ ॥ ❁ ❁ गुणशीलत आत्मनः सदृशं देवमनुव्रताऽपि सती पुत्रं न लेभे ॥ ६५ ॥ ❁ ❁ तत्र हेतुः। स्वे पितरि दक्षेऽप्रतिरूपेऽसदृशे प्रतिकूले सतीत्यर्थः। आत्मना स्वयमेवात्मानं देहमजहात्त्यक्तवती। योगसंयुता योगमाश्रित्येति ॥ ६६ ॥

इति श्रीभा० म० चतुर्थे टीकायां प्रथमोऽध्यायः ॥ १ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तेभ्यस्त्रिभ्यः। पंचदश पंचदशपुत्रा अभवन्नित्यर्थः। सर्वसंख्यामाह—त इति ॥ ६१ ॥ ❁ ❁ यत एतेषामिष्टयः संति अतो हेतोः। इति भाव इति। तदर्चनमृते यज्ञासिद्धिस्स्यादतस्ते सार्थका एवेत्याशयः ॥ ६२-६३ ॥ ❁ ❁ तेभ्यः समुदितेभ्यः पितृभ्यः ॥ ६४ ॥ ❁ ❁ गुणशीलतः गुणैः शीलेन च तुल्यम् ॥ ६५ ॥ ❁ ❁ तत्र पुत्रा लाभे। इत्यर्थ इति। असदृशपदेन सर्वोत्कर्षग्रहणं माभूदिति भावः ॥ ६६ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे प्रथमोऽध्यायः ॥ १ ॥

---

१. प्राचीने पाठे 'विदुरमैत्रेयसम्वादे' इत्यस्य स्थाने 'दाक्षायनम्' (?) इति पाठः।

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तेभ्यः पावकादिभ्यः पितरस्त्रयः पावकादयस्त्रयः पितामहोऽग्न्यभिमानी देवः ॥ ६१ ॥ ❀ ❀ त एवेत्येवकारव्यावर्त्त्यमाह न लौकिका इति । अतः पृथक् पृथगिष्टिसाधनत्वात् ॥ ६२ ॥ ❀ ❀ पत्रपुटके जलं धृत्वाऽग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहेति वारद्वयं जले होमोऽग्नौ करणं कर्मविशेषः तदस्ति येषां ते साग्नयः ॥ ६३ ॥ ❀ ❀ तेभ्यः पितृभ्यः सकाशात् स्वधानाम्नी तद्भार्याया द्वे कन्ये गर्भे दधार ज्ञानं शास्त्रीयं परोक्षं विज्ञानमनुभवः ॥ ६४, ६५ ॥ ❀ ❀ तत्र पुत्राऽलाभे कचिदसादृश्यं अग्निजलयोरिवेत्यभिप्रेत्य प्रतिकूल इत्यार्थिकोर्थः ॥ ६६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे दीपिन्याख्यायां दीपिकाटिप्पण्यां प्रथमोऽध्यायः ॥ १ ॥

## श्रीमद्वीरराघवव्याख्या

तेभ्यः पावकादिभ्यः पंचचत्वारिंशदग्नयः समभवन् त एव पंचचत्वारिंशदग्नयः पितृपितामहैः साकं सह एकोनपञ्चाशत् । तत्र पितरस्त्रयः पितामह एकः ॥ ६१ ॥ ❀ ❀ पंचचत्वारिंशदग्नीन् विशिनष्टि वैतानिक इति यन्नामभिर्येषामग्नीनां नामभिः वैतानिके वैदिके कर्मणि तथा यज्ञे यद्वा यज्ञरूपे वैतानिके कर्मणि आग्नेय्य अग्निदेवताका इष्टयो यागाः ब्रह्मवादिभिर्वैदिकैर्निरूप्यंते त एतेऽग्नय इत्यर्थः ॥ ६२ ॥ ❀ ❀ अथ पंचदश्या दक्षदुहितुः संततिं वक्ष्यन् तत्पतीन्पितॄन् विभजति अग्निष्वात्ता इति । अग्निष्वात्ता अयज्वानस्तेऽनग्नयः येषामग्नौ करणं नास्ति तेऽनग्नयः ते चाज्यपा ये च बर्हिषदो यज्वानस्ते साग्नयः अग्नौ करणवंतः सोम्याः सोमपाश्च तथाच श्रुतिः 'ये वै यज्वानस्ते वै पितरो बर्हिषदः ये वा अयज्वानो गृहमेधिनस्ते पितरोग्निष्वात्ता इति तेषामुभयविधानां पितॄणां पत्नी दाक्षायणी दक्षदुहिता स्वधाख्या ॥ ६३ ॥ ❀ ❀ तेभ्यः पितृभ्यः मेधां वैतरणीञ्च द्वे कन्ये दधार गर्भे धृतवती प्रसूतवतीत्यर्थः । तयोः संततिर्नास्तीत्याह उभे इति ते उभे मेधावैतरण्यौ ब्रह्मवादिन्यौ ब्रह्मोपदेष्ट्र्यौ ज्ञानशास्त्रजन्यं विज्ञानं विवेकादिजन्यं तयोः पारं अंतं गतवत्यौ सनकादिवदूर्ध्वरेतस्के ते इति भावः ॥ ६४ ॥ ❀ ❀ भवस्य रुद्रस्य या पत्नी सतीनाम्नी सापि गुणशीलादिभिरात्मनः स्वस्याः सदृशं देवं भवं सेवमानापि पुत्रं न लेभे ॥ ६५ ॥ ❀ ❀ तत्र हेतुः स्वे पितरि दक्षे अनागसे निरपधराधिने भवाय रुद्राय रुषा क्रोधेनाप्रतिरूपे असदृशे प्रतिकूले सति आत्मना स्वयमेव आत्मानं देहं अप्रौढैव बालैव सती योगसंयुता अजहात् तत्याज योगाग्निना देहं ददाहेत्यर्थः ॥ ६६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचंद्रिकाख्यायां टीकायां प्रथमोऽध्यायः ॥ १ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तेभ्यस्त्रिभ्यः पितरः पावकादयः पितामहः स्वाहापतिरग्निः ॥ ६१ ॥ ❀ ❀ वैतानिके कर्मणि यज्ञकर्मणि ब्रह्मवादिभिर्येषामग्नीनां नामभिराग्नेय्य अग्निदैवत्या इष्टयो निरूप्यंते तेऽग्नय एतादृशमहिमान इत्यर्थः ॥ ६२ ॥ ❀ ❀ तेषां जातिनामान्याह अग्निष्वात्ता इति तेषामग्नीनाम् ॥ ६३ ॥ ❀ ❀ ब्रह्मवादिन्यौ वेदविचारविचक्षणे ॥ ६४ ॥ ❀ ❀ भवपत्न्याः सत्याः कत्यपत्यानीत्याशंकां परिहरति भवस्येति ॥ ६५ ॥ ❀ ❀ आत्मसमापत्याऽलाभात् तया सत्या किमकारीति तत्राह पितरीति। पितरि दक्षे अनागसे भवायाप्रतिरूपेऽननुकूले विरोधिनि सति अप्रौढैवाऽस्वीकृतैव योगसंयुता प्राणोत्क्रमणनिमित्तयोगनिरतात्मना मनसाऽऽत्मानं हरिं ध्यायंत्यात्मानं देहमजहाद्त्याक्षीदित्यन्वयः ॥ ६६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे श्रीविजयध्वजविरचितायां पदरत्नावल्यां प्रथमोऽध्यायः ॥ १ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

पितरस्त्रयः पितामह एकः तैः साकं सह ॥ ६१ ॥ ❀ ❀ वैतानिके वैदिके कर्मणि यज्ञे येषां नामभिरग्निदेवताका इष्टयो निरूप्यन्ते क्रियन्ते त एवैतेऽग्नयो न लौकिकाः, अतो न बहूनां वैयर्थ्यमिति भावः ॥ ६२ ॥ ❀ ❀ सौम्याः सोमपा येषामग्नौ करणमस्ति ते साग्नयः तद्रहितास्त्वनग्नयः ॥ ६३ ॥ ❀ ❀ तेभ्यः पितृभ्यः सकाशात् स्वधा द्वे कन्ये दधार । गर्भमिति शेषः ॥ ६४, ६५ ॥ ❀ ❀ पुत्रं न लेभे इत्यत्र हेतुः अनागसे भवाय रुषा कोपेन हेतुना स्वे पितरि अप्रतिरूपे असदृशे प्रतिकूले सतीत्यर्थः ॥ ६६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । चतुर्थे प्रथमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

वैतानिके वैदिके कर्मणि यज्ञे येषां नामभिः अग्निर्देवत्या इष्टयो निरूप्यंते एकोनपंचाशत् अग्नयः, वैदिका इति शेषः ॥ ६१ ॥ ❀ ❀ सौम्याः सोमपाः साग्नयः अग्नौकरणवंतः तद्रहिताः अनग्नयः तेषां सर्वेषामेकैव दक्षकन्या स्वधा पत्नी ॥ ६३ ॥ ॥ ६४ ॥ ❀ ❀ गुणशीलत आत्मनः सदृशं भवमनुवृतापि पुत्रं न लेभे ॥ ६५ ॥ ❀ ❀ तत्र हेतुमाह पितरीति स्वे पितरि दक्षे अनागसे निरपराधिने भवाय अप्रतिरूपे प्रतिकूले सति योगमाश्रित्य आत्मना स्वमेव आत्मानं देहं अप्रौढैव रुषा । अजहात् त्यक्तवती ॥ ६६ ॥

इति श्रीमद्भागवते सिद्धांतप्रदीपे चतुर्थस्कंधीये प्रथमाध्यायार्थप्रकाशः

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

ते चाग्नयो न लौकिकाः किंतु श्रौतस्मार्त्तकर्मोपयोगिनोऽलौकिका एवेत्यभिप्रेत्याह–वैतानिके वेदप्रतिपादिते यज्ञरूपे कर्मणि येषामग्नीनां नामभिः ब्रह्मवादिभिः कर्मकाण्डनिष्णातैराग्नेय्या अग्निदेवताका इष्टयो निरूप्यन्ते क्रियन्ते ते एवैतेऽग्नयो न लौकिका इति भावः । तुशब्देनैवकारार्थकेन तेषां लौकिकत्वं वारयति । एवं च सर्वेषां तत्र तत्रोपयोगान्न तेषां बहुत्वं व्यर्थमिति भावः ॥ ६१ ॥ ❀ ❀ दक्षस्य पञ्चदश्याः स्वधाभिधायाः कन्याया वंशमाह–अग्निष्वात्ता इति । एवं तेषां चत्वारि गणनामान्युक्त्वा द्वैविध्यमाह–साग्नय इति । येषामग्नौकरणमस्ति ते साग्नयः, ये तद्रहितास्तेऽनग्नयः । तेषामेवं विभक्तानां दाक्षायणी दक्षकन्या स्वधानाम्नी अभवदिति शेषः ॥ ६२ ॥ ❀ ❀ सा हिं स्वधा सर्वपितृशक्तिरूपा तेभ्यः पितृभ्यो वयुनां धारिणीमिति नाम्न्यौ द्वे कन्ये दधार । वयुनामित्यत्र मेनामिति वा पाठः । तयोर्माहात्म्यमाह–उभे ते इति । ब्रह्मवादिन्यौ ब्रह्मवदनं शीलं ययोस्ते तथा । अत एव ज्ञानविज्ञानपारगे ज्ञानं शास्त्रीयं विज्ञानं स्वरूपानुभवस्तत्प्राप्तवत्यावित्यर्थः । अतस्तयोर्जीवन्मुक्तत्वात्संततिर्न जातेति भावः ॥ ६३ ॥ ❀ ❀ षोडश्या दक्षकन्यायाः सत्या अपत्यं नाभवदित्याह–भवस्येति । सती हि दक्षस्याभिमानांशाज्जाताऽतो ब्रह्मणाहंकाराधिष्ठात्रे भवाय दापिता, सा च तस्य पत्नी तं देवं पुत्रदाने समर्थमप्यनुव्रता तत्सेवातत्परापि गुणशीलाभ्यामात्मनः सदृशं योग्यं पुत्रं न लेभे न प्राप्तवती ॥ ६४ ॥ ❀ ❀ ननु भवस्याशुतोषत्वात्तत्सेवापरायाः पुत्रालाभे हेतुस्तत्प्रार्थनाभाव इति ज्ञायते, तत्कथं न सा पुत्रप्रार्थनां कृतवतीत्याशङ्क्य तत्र हेतुत्वेन तस्याश्चिरकालमनवस्थानं सहेतुकमाह–पितरीति । स्वे पितरि दक्षे भवाय अनागसे निरपराधायाप्यप्रतिरूपे तं लक्ष्यीकृत्य प्रतिकूलाचारपरे सति अप्रौढैव सती रुषा क्रोधेनात्मना स्वयमेव न त्वन्येन प्रेरिता योगमास्थिता भवं भावयन्ती अग्निधारणामाश्रित्य आत्मानं देहमजहात् त्यक्तवती । अतः पुत्रं न लेभे इति भावः । अप्रौढैवेति विशेषणात्तस्या अदीर्घदर्शित्वं सूचितम् । अन्यथा तु भववाक्यमङ्गीकृत्य तत्रैव तिष्ठेत्, न तदनादृत्य तत्र गत्वा देहत्यागं कुर्यादिति भावः । अप्रौढैवेति पाठे तु पुत्रालाभे स्पष्टो हेतुः । अत्र सप्तभिरध्यायैर्दक्षधर्मसिद्धेः प्रकरणित्वं ज्ञापयितुं दक्षकथाध्यायान्त उपक्षिप्ता पितरीत्यादिनात उक्तार्थो निःसन्दिग्ध इति सर्वमनवद्यम् ॥ ६५ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन्स्कन्धे धर्मनिरूपणे ॥ अनर्थरूपकोऽध्यायः प्रथमो विवृतिं गतः ॥ ३ ॥

### भाषानुवादः

इन्हीं तीनोंसे पैंतालीस प्रकारके अग्नि और उत्पन्न हुए । ये ही अपने तीन पिता और एक पितामहको साथ लेकर उनचास अग्नि कहलाये ॥ ६१ ॥ ❀ ❀ वेदज्ञ ब्राह्मण वैदिक यज्ञकर्ममें जिन उनचास अग्नियोंके नामोंसे आग्नेयी इष्टियाँ करते है, वे ये ही हैं ॥ ६२ ॥ ❀ ❀ अग्निष्वात्त, बर्हिषद, सोमप और आज्यप—ये पितर हैं; इनमें साग्निक भी हैं और निरग्निक भी । इन सब पितरोंकी पत्नी दक्षकुमारी स्वधा हैं ॥ ६३ ॥ ❀ ❀ इन पितरोंसे स्वधाके धारिणी और वयुना नामकी दो कन्याएँ हुईं । वे दोनों ही ज्ञान-विज्ञानमें पारङ्गत और ब्रह्मज्ञानका उपदेश करनेवाली हुईं ॥ ६४ ॥ ❀ ❀ महादेवजीकी पत्नी सती थीं, वे सब प्रकारसे अपने पतिदेवकी सेवामें संलग्न रहनेवाली थीं । किन्तु उनके अपने गुण और शीलके अनुरूप कोई पुत्र नहीं हुआ ॥ ६५ ॥ ❀ ❀ क्योंकि सतीके पिता के दक्षने बिना ही किसी अपराधके भगवान् शिवजीके प्रतिकूल आचरण किया था । इसलिये सतीने युवावस्थामें ही क्रोधवश योगके द्वारा स्वयं ही अपने शरीरका त्यागकर दिया था ॥ ६६ ॥

## इति प्रथमोऽध्यायः



# अथ द्वितीयोऽध्यायः

**विदुर उवाच**

**भवे शीलवतां श्रेष्ठे दक्षो दुहितृवत्सलः। विद्वेषमकरोत्कस्मादनादृत्यात्मजां सतीम् ॥ १ ॥**
**कस्तं चराचरगुरुं निर्वैरं शान्तविग्रहम्। आत्मारामं कथं द्वेष्टि जगतो दैवतं महत् ॥ २ ॥**
**एतदाख्याहि मे ब्रह्मन् जामातुः श्वशुरस्य च। विद्वेषस्तु यतः प्राणांस्तत्यजे दुस्त्यजान्सती ॥ ३ ॥**

**मैत्रेय उवाच**

**पुरा विश्वसृजां सत्रे समेताः परमर्षयः। तथामरगणाः सर्वे सानुगा मुनयोऽग्नयः ॥ ४ ॥**
**तत्र प्रविष्टमृषयो दृष्ट्वार्कमिव रोचिषा। भ्राजमानं वितिमिरं कुर्वन्तं तन्महत्सदः ॥ ५ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

द्वितीये प्रथमाध्यायोपक्षिप्तभवदक्षयोः। विद्वेषे वर्ण्यते हेतुर्विश्वसृड्यज्ञसंभवः ॥ १ ॥

सतीं सतीनाम्नीम् ॥ १ ॥ ❋ ❋ न चासौ कस्यचिद्द्वेषार्ह इत्याह। क इति चराचरगुरुं जगतो दैवतं च तं को द्वेष्टि कथं च निर्वैरं द्वेष्टि। निर्वैरत्वे हेतुः। भावे क्तः। शान्तं शान्तिरेव विग्रहो यस्य। कुतः। आत्मन्येवारामो रतिर्यस्य न तु विषये तम्। यद्वा कः प्रजापतिर्दक्षः कथं द्वेष्टि। एवंभूते तस्मिन्द्वेषोऽयुक्तोऽशक्यश्चेत्यर्थः ॥ २ ॥ ❋ ❋ यतो हेतोर्विद्वेषः यतो विद्वेषात्प्राणांस्तत्याज एतदाख्याहि ॥ ३ ॥ ❋ ❋ तदेवाख्यातुमितिहासं प्रस्तौति। पुरेति। समेता आसन् ॥ ४ ॥ ❋ ❋ प्रविष्टं दक्षमिति शेषः। महत्सदो महतीं सभाम् ॥ ५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

प्रथमाध्याये 'पितर्यप्रतिरूपे स्व' इत्यादिनोपक्षिप्तः सूचितो यो भवदक्षद्वेषस्तत्र विश्वसृजां मरीच्यादीनां यागस्य सम्भवो भवनमेव हेतुरस्तीति द्वितीये वर्ण्यते (१) कस्माद्धेतोः। सतीम्—अन्वर्थनामत्वात्तत्पतिना द्वेषो न सङ्गच्छते। भवस्य सौशील्याद्दक्षस्य तदभावेपि दुहितृवात्सल्यादपि द्वेषो न घटत इति भावः ॥ १ ॥ ❋ ❋ असौ भवः। सामान्यार्थक-किंशब्दोपादाने 'कः सर्वमाराधयितुं समर्थः' इति न्यायेन तस्यापि प्रपञ्चवैचित्र्यात्कश्चिद् द्वेष्टा सम्भवत्येवेत्यस्वारस्यादाह—यद्वेति। इत्यर्थ इति। वैरवानप्यशान्तदेहोपि। बहिर्दर्श्यपि जगदनादृतोपि गुरुर्न द्वेषार्हः। किञ्च अन्यगुणविचारस्तिष्ठतु भवस्य जगद्गुरुत्वे जगदिष्टदेवत्वे च दक्षस्य जगदन्तःपातित्वे द्वेषसम्भावनापि नोचितेति भावः ॥ २ ॥ ❋ ❋ यत इत्युभयत्रान्वेति। विशिष्टो द्वेषो विद्वेषः। ब्रह्मन्निति प्रश्नोत्तरसामर्थ्यमाह ॥ ३-४ ॥ ❋ ❋ तत्र सत्रशालायाम् ॥ ५ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

उपक्षिप्ते आरब्धे विश्वसृजां यज्ञे संभवो यस्यानभ्युत्थानादेः विद्वेषानर्हत्वे हेतुः शीलवतां श्रेष्ठ इति ॥ १ ॥ ❋ ❋ को द्वेष्टीति द्वेष्टुरपि जगद्गतत्वात् निष्ठाशांतिपरायण इत्यत्र भाष्ये तथा व्याख्यानाच्छान्तिरत्र ज्ञप्तिः पूर्वार्थे दक्षस्य व्यङ्ग्यमर्य्यादया प्राप्तिरिति साक्षात्प्रकृतार्थमाह यद्वेति ॥ २ ॥ ❋ ❋ तुश्चार्थे जामातुः श्वशुरस्य च यतो हेतोर्विद्वेषः यतश्च विद्वेषात्प्राणांस्तत्याज एतदुभयहेतुमाख्याहीत्यन्वयः ॥ ३ ॥ ❋ ❋ तदेव विद्वेषहेत्वादिकमेव समेता मिलिता आसन्निति शेषः ॥ ४ ॥ ❋ ❋ तत्रेति युग्मकम्। तत्र सत्रे सहाग्नय इति कुंडेभ्योऽग्नयोऽभ्युत्थानं चक्रुः ॥ ५ ॥

### श्रीमद्वीरराघवव्याख्या

भवाय पितर्यप्रतिरूपे सत्यात्मानं तत्याजेति संग्रहेणोक्तं देहत्यागं चाश्रुत्य तद्विस्तरबुभुत्सया पृच्छति विदुरः भव इति त्रिभिः। शीलवतां निर्वैरत्वसमदर्शनत्वादिरूपस्वभाववतां श्रेष्ठे भवे रुद्रे दुहितृषु च सतीं दक्षः सतीनाम्नीमात्मजामनादृत्य

कस्माद्धेतोर्विद्वेषमकरोत्। न च दुहितृजामातरौ विद्वेषार्हाविति भावः ॥ १ ॥ ❀ ❀ इतश्च न भवो विद्वेषार्ह इत्याह क इति। को ब्रह्मा दक्षः चराचराणां गुरुं ज्ञानोपदेष्टारं अचराणामपि ज्ञानसंपादनसमर्थं किमुत चराणामिति कैमुत्यन्यायद्योतनायाचरपदं प्रयुक्तं, जगतः जिज्ञासोर्लोकस्य महद्दैवतं आराध्यं रुद्रस्तारकं ब्रह्म व्याचष्टे ॥ २ ॥ ❀ ❀ शंकराद् ज्ञानमन्विच्छेदिति श्रुतिस्मृतिभ्यां ज्ञानार्थं जिज्ञासुभिराराध्यमिति भावः, निर्वैरं भवं द्वेष्टि अद्वेषीदित्यर्थः। निर्वैरत्वे हेतुः शांतविग्रहं शांतिरेव विग्रहो यस्य शांति प्रचुरमित्यर्थः। आत्मनि सर्वभूतांतरात्मनि परमपुरुषे आरामो रतिर्यस्य तं 'सर्वं खल्विदं ब्रह्म, तज्जलानिति शांत उपासीते'ति श्रुत्युक्तरीत्या शमदमादिभिः सर्वात्मकं ब्रह्मैवोपासीनमित्यर्थः ॥ २ ॥ ❀ ❀ जामातुर्भवस्य श्वशुरस्य दक्षस्य यतो हेतोर्विद्वेषोऽभवत् यतश्च विद्वेषाद्दक्षस्य दुहिता सती प्राणान् तत्याज एतन्मह्यं हे ब्रह्मन्! आख्याहि कथय ॥ ३ ॥ ❀ ❀ एवमापृष्टो मैत्रेयो भवदक्षयोर्मिथो विद्वेषनिमित्तं तन्निमित्तं सतीदेहत्यागं च सप्रपंचमुपपादयिषुरौपोद्घातिकीं कथां प्रस्तौति पुरेति। विश्वसृजां मरीच्यादिप्रजापतीनां सत्रं बहुयजमानकर्तृको यागः सत्रं तस्मिन्परमर्षयस्तथा सभृत्या इंद्रादयः सुरगणाः अग्नयोऽन्याभिमानिन्यो देवताश्च समेताः संघीभूता आसन् ॥ ४ ॥ ❀ ❀ तत्र यज्ञिये देशं प्रविष्टं दक्षमिति शेषः, दृष्ट्वा चतुर्मुखं शिवं च विना सर्वे तस्य दक्षस्य भासा आक्षिप्तमभिभूतं तेजः येषां ते सहाग्नयः अग्न्यभिमानिदेवतासहिताः सदस्याः सदसि संस्थिताः स्वासनेभ्य उदतिष्ठन् उत्थितवंतः दक्षम्। कथंभूतं शोचिषा देहकांत्या आदित्यमिव भ्राजमानं महत्सदः महतीं सभां वितिमिरं यथा तथा कुर्वन्तम् ॥ ५-६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अत्र कतिपयैरध्यायैर्हरेर्भक्तिविधानार्थं तन्माहात्म्यातिशयज्ञापनाय तन्माहात्म्यातिशयाविनाभूतं दक्षाध्वरध्वंसलक्षणं रुद्रस्य माहात्म्यं कथयति। तत्रादौ विदुरः सत्यात्मानमजहादिति श्रुतसतीदेहवियोगविशेषं जिज्ञासुर्मैत्रेयं पृच्छति भवे शीलवतामिति विद्वेषाकरणे हेतवः शीलवत्त्वादिना ज्ञापनायोक्ताः ॥ १ ॥ ❀ ❀ स्वस्य गुरुत्वेपि स्वकर्म निंदितमिति भावेनाह कस्तमिति। आत्मनि परमात्मन्येवारामो रतिर्यस्य स तथा तम् ॥ २ ॥ ❀ ❀ तथा च किमिति तत्राह एतदिति विद्वेषकारणम् ॥ ३ ॥ ❀ ❀ विद्वेषनिमित्तं वक्तुमुपोद्घातं रचयति पुरेति। न केवलं महर्षय एव किं तु मुनिमात्रमप्यत्र समवेतमित्यतो मुनय इति पुनर्वचनम् ॥ ४ ॥ ❀ ❀ किमनेन प्रकृत इति तत्राह तत्रेति प्रविष्टं दक्षमिति शेषः ॥ ५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सतीं यथार्थनाम्नीमित्यर्थः ॥ १-४ ॥ ❀ ❀ तत्रेति युग्मकं, ऋते विरिञ्चात् सर्वा्चेति क्वचित् ॥ ५-७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

द्वितीये बहु निन्दित्वा शिवं दक्षे गते रुषा। युयुधाते शापशस्त्रैर्नन्दीश्वरभृगू मुहुः ॥ १ ॥

शीलेति। भवस्य सौशील्यात् दक्षस्य तद्वत्त्वभावेऽपि दुहितृवात्सल्यात् भवद्वेषो न घटते इति भावः ॥ १ ॥ ❀ ❀ भवस्य सर्वैरेवाद्वेष्यत्वे हेतूनाह क इति। यद्वा कः प्रजापतिः चराचरगुरुं निर्वैरमित्यादिभिर्गुरुर्हि वैरवानप्यशान्तदेहोपि बहिर्हृदयेपि जगदनादृतोपि न द्वेषार्ह इति ध्वनिः। अन्ये गुणा मा विचार्यन्तां नाम भवस्य जगद्गुरुत्वे जगदिष्टदैवत्वे च दक्षस्य तु जगन्मध्यवर्त्तित्वे द्वेषसंभावनापि कथं स्यादित्यनुध्वनिः ॥ २ ॥ ❀ ❀ यतः कारणाद्विद्वेषः एतदाख्याहि यतो विद्वेषाच्च प्राणांस्तत्याज ॥ ३ ॥ ❀ ❀ समेता आसन् ॥ ४ ॥ ❀ ❀ प्रविष्टं दक्षमिति शेषः ॥ ५-७ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

दक्षस्य भवप्रातिकूल्यकारणं वर्ण्यते द्वितीयेनाध्यायेन भव इति ॥ १ ॥ ❀ ❀ शांतः तपोनिष्ठः विग्रहो देहो यस्य तम् आत्मा परमात्मा वासुदेव आरामो रमणस्थानं यस्य तं कथं केन हेतुना द्वेष्टि यद्वा को दक्षः कथं द्वेष्टि ॥ २ ॥ ❀ ❀ यतो विद्वेषः, यतो विद्वेषात्प्राणान् तत्याज एतदाख्याहि ॥ ३ ॥ ❀ ❀ यदेवाख्यातुमितिहासं प्रस्तौति पुरेति सत्रेति। सत्रलक्षणं "कर्तारो बहवो यत्र होज्यंते बहवस्तथा। बहुभ्यो दीयते यत्र तत्सत्रमभिधीयते" इति। अग्नयस्तदधिष्ठातृदेवाः समेता बभूवुः ॥ ४ ॥ ❀ ❀ तत्र सत्रस्थले प्रविष्टं दक्षमिति शेषः, रोचिषा तेजसा अर्कमिव भ्राजमान महत्सदः महतीं सभां वितिमिरं यथा तथा कुर्वाणं दृष्ट्वा ॥ ५ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

सतीदेहपरित्यागाद्दक्षस्यानर्थ ईरितः। तस्यापि हेतुरधुना शापादिकथयोच्यते ॥ १ ॥

पूर्वं हि दक्षकृतभवद्वेषेणावमानाद्योगसंयुता सती देहमजहादित्युक्तम्। तत्र दक्षस्य भवे द्वेषासंभवं मन्यमानो विदुरस्तत्र हेतुं पृच्छति—भव इति। दक्षो भवे कस्माद्विद्वेषमकरोदित्यन्वयः। भवत्यस्मादिति भवः सर्वोद्भवकारणं तथाच धर्मोद्भवकामः

कथं तं द्विष्यादिति तत्र द्वेषासंभवे स्वरूपमेव हेतुरुक्तः। तद्धर्मविचारेपि तत्र द्वेषस्यायोग्यत्वमाह—शीलवतामिति। अदीर्घकोपत्वादाशुप्रसादत्वाच्च शीलवतां श्रेष्ठ इत्यर्थः। संबन्धविचारेणापि द्वेषस्यायुक्तत्वमाह—दुहितृवत्सल इति। तथाच दुहितृवत्सलस्य तत्पतौ विद्वेषोऽसंभावित एवेत्युक्तम्। तद्विद्वेषे दुहितुरनादरस्यावश्यंभावित्वमभिप्रेत्याह—अनादृत्यात्मजामिति। ननु पुत्रीदोषाद् द्वेषः कृत इत्याशङ्क्याह— सतीमिति ॥ १ ॥ ❁ ❁ एवं लौकिकप्रकारेण सर्वथा द्वेषो न घटते इत्युक्तम्, इदानीमलौकिकधर्मविचारेणापि तदनौचित्यं दर्शयति—कस्तमिति। कः प्रजापतिर्दक्षस्तं कथं द्वेष्टि ? तत्र द्वेषस्य सर्वथाऽयुक्तत्वादिति भावः। कथं तत्र द्वेषस्यायुक्तत्वमित्याकाङ्क्षायां लोके वैरिण्येव तद्दर्शनेन निर्वैरिणि तस्मिंस्तस्यायुक्तत्वमित्यभिप्रेत्याह—निर्वैरमिति। निर्वैरत्वमपि तस्य सहजमेव, न तु कृत्रिममिति सूचयंस्तत्स्वरूपमाह—शान्तविग्रहमिति। भावे क्तः। शान्तं शान्तिरेव विग्रहो यस्य। तत्र हेतुमाह—आत्मारामममिति, आत्मन्येवारामो रतिर्यस्य स तथा तम्। तथा च विषयाविष्टचित्तानां विषयप्राप्त्यर्थं परस्परं वैरविद्वेषौ संभवतस्तस्यात्मारामत्वेन सर्वत उदासीनत्वान्नहि तत्र विद्वेषो युक्त इति भावः। किंच सामान्यपुरुष एव केनचिन्निमित्तेन द्वेषो भवति, न तु स्वनियन्तरि पूज्ये गुरावतस्सर्वपूज्यत्वादपि तस्मिन्द्वेषो न युक्त इत्यभिप्रेत्याह—चराचरगुरुमिति। ननु दक्षोपि महानेव प्रजापत्यध्यक्षत्वाद् ब्रह्मपुत्रत्वाच्चातः समत्वात् केनचिन्निमित्तेन तस्य तत्र द्वेषो युक्त इत्याशङ्क्याह—जगतो दैवतं महदिति। तथा च दक्षस्य महत्त्वेपि तद्द्वेषात्सर्वथानिष्टप्रसङ्गः प्रतिभातीति भावः ॥ २ ॥ ❁ ❁ अत आश्चर्यमिदं सर्वथा श्रोतव्यमिति मत्वा मैत्रेयं प्रार्थयति—एतदिति। हे ब्रह्मन् सर्वज्ञ ! त्वमेतदाख्याहि कथय। एतदिति किमित्यपेक्षायामाह—जामातुः श्वशुरस्य च विद्वेष इति। अनेन लोकविगर्हितत्वमपि सूचितम्। विद्वेष इति। विद्वेषकारणमित्यर्थः। महांश्चायं विद्वेषो न स्वल्पो येन तत्कारणश्रवणेच्छा न स्यादिति तुशब्देन सूचितम्। तदेव महत्त्वमाह—यत इति। येन द्वेषेण निमित्तेन सती दुस्त्यजान् प्राणानपि तत्यजे ॥ ३ ॥ ❁ ❁ एवं विदुरेण पृष्टो मैत्रेयो विद्वेषकारणं वक्तुमादौ तत्प्रस्तावकथामाह—पुरेति। पुरा प्रथमकल्पे स्वायंभुवमन्वन्तरे विश्वसृजां मरीच्यादीनां सत्रे यत्र ऋत्विगादयो गुणप्रधानभावं त्यक्त्वाऽहमहमिकया कर्म कुर्वन्ति सर्वे चाविशेषेण फलभागिनो भवन्ति तत्सत्रसंज्ञको यागविशेषस्तत्र परमर्षयो वसिष्ठनारदादयः प्रसिद्धा ऋषयस्तथाऽमरगणा इन्द्रादयः साध्यादयश्च न केवलं प्रसिद्धा एवर्षयः किंत्वप्रख्याताः सर्वेऽपि मुनयोऽग्नयश्च पूर्वोक्ताः समेता मिलिता आसन्निति शेषः ॥ ४ ॥ ❁ ❁ तत्र दक्षस्यागमनमाह—तत्रेति। प्रविष्टं दक्षमिति शेषः। स्वरोचिषा प्रकाशेन तन्महत्सदः तेषां महतां सभां वितिमिरमन्धकाररहितं कुर्वन्तमर्कमिव भ्राजमानं प्रकाशमानं तत्र प्रविष्टं दक्षं दृष्ट्वा ते सहाग्निभिः सहिताः सदस्या ऋषयश्च स्वधिष्ण्येभ्यः स्वासनेभ्य उदतिष्ठन् उत्थिता इति द्वयोरन्वयः ॥ ५ ॥

### भाषानुवादः

### भगवान् शिव और दक्ष प्रजापतिका मनोमालिन्य

विदुरजीने पूछा—ब्रह्मन् ! प्रजापति दक्ष तो अपनी लड़कियों से बहुत ही स्नेह रखते थे, फिर उन्होंने अपनी कन्या सतीका अनादर करके शीलवानोंमें सबसे श्रेष्ठ श्रीमहादेवजीसे द्वेष क्यों किया ? ॥ १ ॥ ❁ ❁ महादेवजी भी चराचरके गुरु, वैररहित, शान्तमूर्ति, आत्माराम और जगत्के परम आराध्य देव हैं। उनसे भला, कोई क्यों वैर करेगा ? ॥ २ ॥ ❁ ❁ भगवन् ! उन ससुर और दामादमें इतना विद्वेष कैसे हो गया, जिसके कारण सतीने अपने दुस्त्यज प्राणोंतककी बलि दे दी ? यह आप मुझसे कहिये ॥ ३ ॥ ❁ ❁ श्रीमैत्रेयजीने कहा—विदुरजी ! पहले एक बार प्रजापतियोंके यज्ञमें सब बड़े-बड़े ऋषि, देवता, मुनि और अग्नि आदि अपने-अपने अनुयायियोंके सहित एकत्र हुए थे ॥ ४ ॥ ❁ ❁ उसी समय प्रजापति दक्षने भी उस सभामें प्रवेश किया। वे अपने तेजसे सूर्यके समान प्रकाशमान थे और उस विशाल सभाभवनका अन्धकार दूर किये देते थे। उन्हें आया देख ब्रह्माजी और महादेवजीके अतिरिक्त अग्निपर्यन्त सभी सभासद तेजसे प्रभावित होकर अपने-अपने आसनोंसे उठकर खड़े हो गये ॥ ५-६ ॥

उदतिष्ठन् सदस्यास्ते स्वधिष्ण्येभ्यः सहाग्नयः। ऋते विरिञ्चं शर्वं च तद्भासाक्षिप्तचेतसः ॥ ६ ॥
सदसस्पतिभिर्दक्षो भगवान् साधु सत्कृतः। [1]अजं लोकगुरुं नत्वा निषसाद तदाज्ञया ॥ ७ ॥
प्राङ्निषण्णं मृडं दृष्ट्वा नामृष्यत्तदनादृतः। उवाच वामं चक्षुर्भ्यामभिवीक्ष्य दहन्निव ॥ ८ ॥
श्रूयतां ब्रह्मर्षयो मे सहदेवाः सहाग्नयः। साधूनां ब्रुवतो वृत्तं नाज्ञानान्न च मत्सरात् ॥ ९ ॥
अयं तु लोकपालानां यशोघ्नो निरपत्रपः। सद्भिराचरितः पन्था येन स्तब्धेन दूषितः ॥ १० ॥

---

१. प्रा. पा—अथ।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

स्वधिष्ण्येभ्यः स्वीयासनेभ्यः ॥ ६-७ ॥ ❀ ❀ प्राक् स्वोपवेशनात्पूर्वमेव निषण्णमुपविष्टं मृडं शिवम्। तदनादृतस्तेनाभ्युत्थानादिभिरकृतादरः नामृष्यन्नासहत। वामं वक्रं यथा भवति तथाऽभिवीक्ष्य ॥ ८ ॥ ❀ ❀ मे वचनं श्रूयताम्। अज्ञानान्मत्सराच्च न ब्रुवतः ॥ ९ ॥ ❀ ❀ स्तब्धेनोचितक्रियाशून्येन। ध्वस्तेनेति पाठे भ्रष्टेन ॥ १० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ब्रह्मपुत्रत्वाद्रुद्रश्वशुरत्वाच्च नायं प्राकृतः पुरुष इति विमृश्य सभ्यादयस्तदादरं चक्रुरित्याह—उदतिष्ठन्निति। तस्य दक्षस्य भासा तेजसा क्षिप्तं संक्षिप्तं तेजो येषां ते तथा क्वचित् 'क्षिप्तचेतस' इति पाठस्तत्र कौतूहलचित्ता इत्यर्थः ॥ ६ ॥ भगवान् ज्ञानवान्। तदाज्ञया ब्रह्माज्ञया ॥ ७ ॥ ❀ ❀ तेन मृडेन। आदिनासनादिग्रहः ॥ ८ ॥ ❀ ❀ मे वचनमिति शेषः। वृत्तं चरितं वक्तुं प्रवृत्तस्य ममासाधूनां निन्दा स्यादेव तत्र भवद्भिरपरामर्शेन दुःखं न प्राप्यतामिति ध्वनिः। शालिक्षेत्राणां यवसाद्यपसारणाभाव इव साधूनामप्यसाधुद्वेषाभावे दुःखं स्याद्द्वेष्टृजनस्य तेषु साधुष्वपराधोपि स्यादित्यनुध्वनिः। ननु शिवस्यासाधुत्वमज्ञानादेव त्वयोच्यते इति चेत्तत्र ममाज्ञानमण्वपि नास्ति, मत्सरस्तु मया जन्मारभ्य न परिचीयत इत्याह—नाज्ञानादिति ॥ ९ ॥ ❀ ❀ अस्यासाधुत्वमेकाग्रमनसा शृणुतेत्याह—लोकपालानां यशोघ्न इति। तुल्यजातीनां सतामेकस्याप्रतिष्ठायां सर्वेषामेव दुर्यशो लोकैरुद्घुष्यत इति भावः। इन्द्रद्वेषिविद्युन्माल्यादिराज्ये प्रवर्षणाभावे स्वभक्ततयाऽनेन वृष्ट्या तद्यशो हृतं, तथा स्वतृतीयाक्ष्युत्थकोपाग्निना कामादिदाहकतयाऽग्नेरपि यशो हृतं, तत्कार्यकरणान्मृत्युञ्जयत्वेन तदनधीनत्वाद्यमस्य, तथा रक्षोधार्य्यास्तृगार्द्रगजचर्मधारित्वेन निर्ऋतेस्तथा वरुणपाल्ययादोगणाधिष्ठितगंगाधृतेर्वरुणस्य, प्रलये निजनिःश्वासशोषिताब्धित्वेन शोषणरूपवायुकार्यकर्तृतया वायोः, सर्वनिधीशकुबेरसखित्वेपि कपालित्वेन कुबेरस्य, तथा ब्रह्मसृष्टसृष्टिभक्षकसृष्टिसर्जकत्वेन ब्रह्मणः, धराधर्तृशेषधारित्वेन शेषस्य च यशोनाशिनः यशोनाशश्च तत्तत्कर्मोल्लङ्घनतद्वत्करणतदनधीनत्वादिभिर्भवत्येवेति। वस्तुतस्तु तदीयसरस्वती शिवं स्तौति यथा यशोघ्नस्तेषां स्वयशसा यशसस्तिरस्कर्ता निर्गता अपत्रा त्राणं येषां तानशरणान्पातीति सः। केन प्रकारेणेत्यत आह—येनासुरादिना सद्भिराचरितः पंथा दूषितस्तस्य। ध्वस्तेन ध्वंसनेन 'स्तब्धेनेति' पाठे स्तब्धानां गर्ववतामिनाः स्वामिनस्तैर्दूषितः पंथा येन हेतुना सद्भिराचरितः दुष्टनाशनेन पुनस्सद्धर्मप्रवर्त्तकः ॥ १० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

भगवान् सृष्टितत्त्वज्ञः ॥ ६-७ ॥ ❀ ❀ स्वोपवेशनाद्दक्षस्योपवेशनात् तेन शिवेन ॥ ८-९ ॥ ❀ ❀ सरस्वतीपक्षे तु यशोघ्नः परमतेजःस्वित्वात् तद्यशआच्छादकः निर्गता अपसमन्तात्त्राणं रक्षणं येषां तानपत्रान् रक्षकहीनान् पातीति तथा स्तब्धेन वेदावमंत्रा पाषण्डिजनेन कर्त्रा दूषितो वेदमार्गो येनैव हेतुना सद्भिराचरितोनुष्ठितः ध्वस्तेनेति पाठे भावे निष्ठा, तथाच केन प्रकारेण रक्षकः सद्भिराचरितः पंथा येन पाषंडेन दूषितस्तस्य ध्वस्तेन ध्वंसनप्रकारेणेति ॥ १० ॥

### श्रीमद्वीरराघवव्याख्या

ततः स भगवान् दक्षः सदसस्पतिभिः साधु यथा तथा सत्कृतः पूजितः लोकगुरुमजं ब्रह्माणं प्रणम्य तस्याजस्याज्ञया निषसाद उपविष्टवान् ॥ ७ ॥ ❀ ❀ प्राक् स्वोपवेशात् पूर्वमेवागत्य निषण्णमुपविष्टं मृडं शिवं दृष्ट्वा तेन मृडेनानादृतः प्रत्युत्थानादिभिरसत्कृतो दक्षः नामृष्यत् न सेहे। वामं वक्रं यथा तथा दहन्निव चक्षुर्भ्यामभिवीक्ष्य उवाच ॥ ८ ॥ ❀ ❀ उक्तिमेवाह श्रूयतामित्यादिना यज्ञभागं न लभतामित्यंतेन। हे सहाग्नयो महर्षयः! साधूनां वृत्तमाचारं ब्रुवतः कथयतो मे मम वाक्यं वक्ष्यमाणं श्रूयतां युष्माभिरिति शेषः। इदं वक्ष्यमाणं वचः अज्ञानान्मत्सराच्च न कथ्यत इत्याह अज्ञानादिति। अज्ञानान्मत्सराच्च न कथयिष्यामीत्यर्थः ॥ ९ ॥ ❀ ❀ अयं रुद्रः नाम्नापि निर्देष्टुमसहमानोऽयमिति सर्वनाम्ना निर्दिष्टवान्। एवमुत्तरत्रापि लोकपालानां यशोनाशकः निरपत्रपः लज्जारहितः स्तब्धेन विहितधर्मपरित्यागिना मूर्खेण वा येन रुद्रेण सद्भिराचरितः अनुष्ठितः पंथा वैदिकाचारः दूषितः दोषं प्रापितः। विनाशित इति यावत् ॥ १० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ब्रह्मपुत्रत्वाद् रुद्रस्य श्वशुरत्वाच्च नायं प्राकृतः पुरुष इति भावेनास्मिन्सभाबहुमानः वाक्त उदतिष्ठन्निति तस्य दक्षस्य भासा ॥ ६ ॥ ❀ ❀ सर्वोत्थानलक्षणसत्काराभावादतो निर्गमनमितरजनबहुमानेनोपवेशनं च सभावितमनयोर्द्वक्षेण किमकारीति तत्राह सदसस्पतिभिरिति ॥ ७ ॥ ❀ ❀ उपविष्टश्चेद्रुद्रविषयकोपोप्युपविष्टः किं तत्राह प्राङ् निषण्णमिति

नामृष्यादित्यस्य किं लिंगं तत्राह उवाचेति ॥ ८ ॥ ❀ ❀ वृत्तं सदाचारम् ॥ ९ ॥ ❀ ❀ किमिदानीं वृत्तं वक्तुं प्राप्तमत्राह अयं त्विति ॥ १० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

साधूनां वृत्तं ब्रुवतः किन्त्वज्ञानान्मत्सराच्च न ब्रुवत इत्यर्थः ॥ ९ ॥ ❀ ❀ क्रोधान्धतया साधूनां वृत्तानुवादमपि त्यक्त्वा साक्षान्निन्दामाह अयन्त्विति ॥ १० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

प्राक् स्वोपवेशात् पूर्वमेव निषण्णमुपविष्टं तदनादृतः तेन मृडेनाभ्युत्थानादिभिरकृतादरः वामं वक्रं यथा स्यात्तथा ॥ ८ ॥ ❀ ❀ मे वचनमिति शेषः । साधूनां वृत्तं चरित्रं ब्रुवतः वक्तुं प्रवृत्तस्य मम साधूनां निन्दा स्यादेव तत्र भवद्भिरामर्षेन दुःखं न प्राप्यतामिति ध्वनिः । शालिक्षेत्राणां यवसाद्यपसारणाभाव इव साधूनामप्यसाधुद्वेषाभावे दुःखं स्यात् अद्वेष्टुर्जनस्य तेषु, साधुष्वपराधोऽपि स्यादित्यनुध्वनिः । ननु शिवस्यासाधुत्वमज्ञानादेव त्वयोच्यते इति चेत्तत्र ममाज्ञानमण्वपि नास्ति मत्सरस्तु मया जन्मारभ्य न परिचीयत इत्याह नाज्ञानादिति ॥ ९ ॥ ❀ ❀ अस्यासाधुत्वमेकाग्रमनसः शृणुतेत्याह लोकपालानां यशोघ्न इति । तुल्यजातीनां सतामेकस्याप्रतिष्ठायां सर्वेषामेव दुर्यशो लोकैरुद्घुष्यत इति भावः । वस्तुतस्तु तदीय-सरस्वती शिवं स्तौति यथा यशोघ्नः स्वयशसा तेषां यशस्तिरस्कर्त्ता निर्गता अपत्रा त्राणं येषां तान् अशरणान् पातीति सः । केन प्रकारेणेत्यत आह-येन असुरादिना सद्भिराचरितः पंथा दूषितस्तस्य ध्वस्तेन ध्वंसनेन, स्तब्धेनेति पाठे स्तब्धानां गर्ववतां इनाः श्रेष्ठास्तैर्दूषितः पन्था येन हेतुनैव सद्भिराचरितः ॥ १० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

स्वधिष्णेभ्यः स्वासनेभ्यः उदतिष्ठन् उत्थिता बभूवुः ॥ ६ ॥ ❀ ❀ सदसस्पतिभिः सभासदैः साधु यथा तथा सत्कृतः अजं ब्रह्माणम् ॥ ७ ॥ ❀ ❀ प्राक् पूर्वं निषण्णमुपविष्टं मृडं भवं दृष्ट्वा तेनानुत्थानादनादृतो नामृष्यत् । नासहत् वामं वक्रं यथा स्यात्तथा चक्षुर्भ्यां दहन्निव अभिवीक्ष्योवाच ॥ ८-९ ॥ ❀ ❀ स्तब्धेनाऽनम्रेण ॥ १० ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

तेषामेवमुत्थाने हेतुत्वेन तत्प्रभावमाह—तद्भासेति । तस्य दक्षस्य भासा प्रभावेण क्षिप्तं तिरस्कृतं तेजो येषां ते । ब्रह्मणः पितृत्वान्महादेवस्येश्वरत्वात्तयोस्तेजसस्तद्भासा तिरस्कारो न जातोऽतस्तौ नोत्थितावित्याह—ऋते विरिञ्चं शर्वं चेति ॥ ६ ॥ ❀ ❀ शिवेनासन्माननाद्दक्षस्य ततः प्रत्यावर्तनं प्राप्तं सदस्यसन्मानात्तत्रोपवेशनं च प्राप्तम्, तत्र स किं कृतवानित्यपेक्षायामाह—सदसस्पतिभिरिति । भगवान् ऐश्वर्यादिमान् दक्षः सभ्यमुख्यैः साधु सम्यक् सन्मानितो लोकगुरुं सर्व-प्राणिश्रेष्ठं पूज्यमजं ब्रह्माणं नत्वा तस्याज्ञया निषसाद उपविवेश । स्वोचितासन इति शेषः । तदाज्ञयेत्यनेन ब्रह्माज्ञापरिपालने तस्य प्रमादो नास्तीति सूचितम् ॥ ७ ॥ ❀ ❀ ततो यज्जातं तदाह—प्राङ्निषण्णमिति । स्वोपवेशनात्प्राक् पूर्वमेव निषण्णमा-सीनं मृडं शिवं दृष्ट्वा नामृष्यदसहमानो जातः । यतस्तेनानादृतः अनुत्थानेनासत्कृतः तदामर्षेण तस्य ज्ञानशक्तिर्विपरीता जातेत्याह—वाममिति । वामं कुटिलं यथा स्यात्तथा चक्षुर्भ्यां मृडमभिवीक्ष्य सदस्यान् प्रत्युवाचेत्यन्वयः । वामत्वमेव विवृणोति—दहन्निवेति । यद्वा वामं शोभनस्वभावमपि महादेवं दहन्निवाभिवीक्ष्येत्यन्वयः, यद्वा तं वाममप्यभिवीक्ष्य स्वदोषेण क्रोधेन स्वात्मानमेव दहन्निवो-वाचेत्यन्वयः । तेन स्वक्रोधोक्त्या स्वस्यैवानिष्टं भविष्यतीति । यद्वा तं दहन्निवाभिवीक्ष्य वामं वक्रं वचनमुवाचेत्यन्वयः ॥ ८ ॥ ❀ ❀ तत्र प्रथममभिमानात्प्रतिज्ञापूर्वकं श्रोतॄन् सावधानान् करोति—श्रूयतामिति सूचितम् । हे देवादिभिः सह वर्त्तमाना ब्रह्मर्षयः, साधूनां वृत्तमाचारं ब्रुवतो मे वचनं भवद्भिः श्रूयतामित्यन्वयः । वेदादिद्रष्टृत्वेन ज्ञानविवेकाद्याधिक्याद् ब्रह्मर्षीणां मुख्यतया संबोधनम्, देवादीनां भोगपरत्वेन विवेकज्ञानादौ दुर्बलत्वाद्गौणत्वेनेति ज्ञेयम् । साधारणानामाचारश्रवणेन किं स्यादित्याशङ्क्याह—साधूनामिति । भ्रमादप्येवं लोको वदत्यहं साधूनां वृत्तं वदामीति तेन किमित्याशङ्क्याह—ज्ञानादिति । भ्रमान्न ब्रवीमि, किंतु निश्चित्येत्यर्थः । ननु ज्ञात्वापि मत्सरेण यथास्थितमर्थं सङ्गोप्यान्यथा कथनमपि संभवतीति ज्ञात्वा कथनेनापि किमित्याशङ्क्याह—न मत्सरादिति । परोत्कर्षासहनं मत्सरस्तस्मादन्यथा न ब्रवीमि किंतु यथार्थमेव ब्रवीम्यतः सावधानतया श्रोतव्यमिति भावः ॥ ९ ॥ ❀ ❀ नन्वेवं साधुवृत्तकथनस्यात्र कः प्रसङ्ग इत्याशङ्क्य प्रसङ्गमाह—अयं त्विति । तुशब्देनास्य भिन्नपङ्क्तितां बोधयति—नैतादृशो ब्रह्मपुत्रः कश्चनान्योऽस्तीति । यतोऽयं शिवो लोकपालानामिन्द्रवरुणाग्न्यादीनां यशोघ्नः कीर्तिनाशकः । कुत एवमत आह-सद्भिरिति । येन स्तब्धेन सदाचाररहितेन सद्भिराचरितः पन्था मार्गो दूषितः । अस्यापि लोकपालमध्यपातित्वात्तेषां

सतामाचारदूषणेन तदकरणेन तद्यशो नाशयति, लोकपालेष्वप्यधुनैवं सदाचारो नष्ट इति। सामान्यतः सर्वेषां लोकपालानामयशःप्राप्तेरिति भावः। ननु कथं लज्जावतैवं कर्तुं शक्यत इत्याशङ्क्याह—निरपत्रप इति। निःशेषेणापगता त्रपा लज्जा यस्मात्स निरपत्रपः अतस्तथा कृतवानिति भावः। वस्तुतस्त्वियं स्वाभिप्रायेण प्रवर्त्तिता दक्षवाणी विषयं न स्पृशति विषयस्यातादृशत्वात्। यद्यपि नाज्ञानान्न च मत्सरादिति स्वाधिकारोत्कर्षो दक्षेण दर्शितस्तथापि तत्प्रौढिवादमात्रमेव। दक्षः प्रजापतित्वेन महानपि जीव एव, न त्वीश्वरावतारः सर्वज्ञोऽतः कथमीश्वरस्य तत्त्वं जानीयात्। तस्माद्धाविप्रावल्यादेवास्य भ्रान्त्या रुद्रे दोषस्फूर्तिरतस्तस्येश्वरत्वाद्वेदरूपत्वाच्च तन्निन्दायां प्रवर्तितापि सरस्वती स्तुतिमेव करोति। तेन स्तुतिपक्षोऽपि व्याख्यायते। तद्यथा अयं त्विति। तुशब्देनास्य भिन्नपङ्क्तित्वं बोधयति। नैतादृशो ब्रह्मपुत्रः कश्चनान्योऽस्ति ईश्वरत्वात्। अत एवायं श्रीरुद्रः लोकपालानां यशोघ्नः स्वप्रभावेण यशस्तिरस्कर्त्ता। यतो येनानेन सद्भिर्लोकपालादिभिराचरितः पन्था अभ्युत्थानादिमार्गो दूषितः स्वयं तदकरणेन त्यक्तः। यतो लोकपालैरभ्युत्थानादेः कृतत्वादनेनाकृतत्वादेतत्तेजसा तेषां तेजसस्तिरस्कारो जात इति भावः। ननु किमित्यनेनान्येषां तिरस्कारः कृत इत्याशङ्क्य तथा स्वभाव एवायं ब्रह्मत्वादित्याभिप्रायेणाह—स्तब्धेनेति। स्तब्धत्वं हि ब्रह्मधर्मः 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं व्याप्तं पूर्णेन सर्वम्' इति श्रुतेः। विधिनियम्यत्वाभावादेवानुत्थानमित्यर्थः। ननु तथापि सभ्यसङ्कोचात्तत्कुतो न कृतवानित्याशङ्क्याह—निरपत्रप इति। अस्य सर्वोपजीव्यत्वेन सर्वेषां नम्रत्वादयं तेभ्यो निःशङ्क इत्यर्थः। यद्वा परानुसन्धानेन चित्तसङ्कोचो लज्जा, साऽस्य सर्वदैवाद्वैतरसे भगवति वासुदेवे निमग्नस्य न संभवति, परानुसन्धानाभावादतोऽलज्जयापि न तत्करणमिति न कोपि दोषः॥ १०॥

### भाषानुवादः

इस प्रकार समस्त सभासदोंसे भलीभाँति सम्मान प्राप्त करके तेजस्वी दक्ष जगत्पिता ब्रह्माजीको प्रणामकर उनकी आज्ञासे अपने आसनपर बैठ गये॥ ७॥ ❀ ❀ परंतु महादेवजीको पहलेसे ही बैठा देख तथा उनसे अभ्युत्थानादिके रूपमें कुछ भी आदर न पाकर दक्ष उनका यह व्यवहार सहन न कर सके। उन्होंने उनकी ओर टेढ़ी नजरसे इस प्रकार देखा मानो उन्हें वे क्रोधाग्निसे जला डालेंगे। फिर कहने लगे॥ ८॥ ❀ ❀ 'देवता और अग्नियोंके सहित समस्त महर्षिगण मेरी बात सुनें। मैं नासमझी या द्वेषवश नहीं कहता, बल्कि शिष्टाचारकी बात कहता हूँ॥ ९॥ ❀ ❀ यह निर्लज्ज महादेव समस्त लोकपालोंकी पवित्र कीर्तिको धूलमें मिला रहा है। देखिये, इस घमण्डीने सत्पुरुषोंके आचरणको लाञ्छित एवं मटियामेट कर दिया है॥ १०॥

एष मे शिष्यतां प्राप्तो यन्मे दुहितुरग्रहीत्। पाणिं विप्राग्निमुखतः सावित्र्या इव साधुवत्॥ ११॥
गृहीत्वा मृगशावाक्ष्याः पाणिं[1] मर्कटलोचनः। प्रत्युत्थानाभिवादार्हे वाचाप्यकृत नोचितम्॥ १२॥
लुप्तक्रियायाशुचये मानिने भिन्नसेतवे। अनिच्छन्नप्यदां बालां शूद्रायेवोशतीं गिरम्॥ १३॥
प्रेतावासेषु घोरेषु प्रेतैर्भूतगणैर्वृतः। अटत्युन्मत्तवन्नग्नो व्युप्तकेशो हसन् रुदन्॥ १४॥
चिताभस्मकृतस्नानः प्रेतस्रङ्न्रस्थिभूषणः। शिवापदेशो ह्यशिवो मत्तो मत्तजनप्रियः।
पतिः प्रमथभूतानां तमोमात्रात्मकात्मनाम्॥ १५॥
तस्मा उन्मादनाथाय नष्टशौचाय दुर्हृदे। दत्ता बत मया साध्वी चोदिते परमेष्ठिना॥ १६॥

### मैत्रेय उवाच

विनिन्द्यैवं स गिरिशमप्रतीपमवस्थितम्। दक्षोऽथाप[2] उपस्पृश्य क्रुद्धः शप्तुं प्रचक्रमे॥ १७॥
अयं तु देवयजन इन्द्रोपेन्द्रादिभिर्भवः। सह[3] भागं न लभतां देवैर्देवगणाधमः॥ १८॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तदेवाह। एष इति। यद्यस्माद्विप्राग्निसमक्षं सावित्रीतुल्याया मे दुहितुः पाणिमग्रहीत्॥ ११॥ ❀ ❀ मृगशावस्य हरिणबालस्याक्षिणी इवाक्षिणी यस्याः। प्रत्युत्थानाभिवादार्हे मय्युचितं सन्मानं वाचाऽपि नाकरोत्॥ १२॥

१. प्रा० पा०—पाणिमर्कन्दुलोच०। २. प्रा० पा०—क्षो ह्याप। ३. प्रा० पा०—यज्ञे।

❀ ❀ अनर्हाय कन्या दत्तेत्यनुतप्यमान आह। लुप्तक्रियायेति सार्धैश्चतुर्भिः। उशतीं शुद्धां वेदलक्षणां गिरम् ॥ १३ ॥ ❀ ❀ प्रेतावासेषु श्मशानेषु व्युप्ता विकीर्णाः केशाः यस्य ॥ १४ ॥ ❀ ❀ चिताभस्मना कृतं स्नानं येन। प्रेतानां स्रजो माल्यानि यस्य स प्रेतस्रक्। नृणामस्थीनि भूषणानि यस्य। शिव इत्यपदेशो नाममात्रं यस्य। तमोमात्रात्मकः केवलतमोरूप आत्मा स्वभावो येषाम् ॥ १५ ॥ ❀ ❀ उन्मादा भूतविशेषास्तेषां नाथाय दुर्हृदे दुष्टचित्ताय। बतेति खेदे ॥ वास्तवस्त्वयमर्थः—लुप्ताः क्रिया यस्मिन् परब्रह्मरूपत्वात् अत एव नास्ति शुचिर्यस्मात् अमानिने अभिन्नसेतवे इति च च्छेदः। तस्य परमेश्वरस्य मदीया मानुषी कन्या कथं योग्या स्यादिति लज्जादिना दातुमनिच्छन्नपि तत्सम्बन्धलाभेन दत्तवान्। शूद्रायेत्यनर्हत्वमात्रे दृष्टान्तो न हीनत्वे पूर्वापरस्ववचनविरोधापत्तेः। एतदुक्तं भवति यथा कश्चिच्छूद्राय वेदमर्थलोभेन ददाति तद्वत् इति प्रेतावासेष्वित्यादि सर्वं विडम्बनमात्रमिति स्वयमेवाह। उन्मत्तवदिति। अन्यथोन्मत्त इत्येवावक्ष्यत्। अशिवो नास्ति शिवो यस्मात्। अमत्तोऽमत्तजनप्रिय इति च च्छेदः। पतिः प्रमथभूतानामिति भक्तवात्सल्यमाह। तामसानपि दोषमपनीय पातीति। नष्टानामपि शौचं शुद्धिर्यस्मात्। दुष्टेष्वप्येते मयाऽनुकंप्या इति हृन्मनो यस्य स दुर्हृत्तस्मै। बतेति हर्षे। ब्रह्मणो वाक्याल्लज्जाभयादिकं परित्यज्य दत्तेत्यर्थः ॥ १६ ॥ ❀ ❀ अप्रतीपमप्रतिकूलं यथा भवत्येवमवस्थितमपि विनिंद्य ॥ १७ ॥ ❀ ❀ देवानां यजनसमये देवैः सह भागं न लभतां किं तु तेभ्यः पूर्वमेव लभताम् अग्रभोजित्वात्। यद्वा तेषु भुक्तवत्सु लभतां सर्वपोषकत्वात्। तत्र हेतुः। देवगणोऽधमो यस्मात्सः ॥ १८ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

"अन्वियातां महावेगैरश्वै राजन्गुरुद्रुहम्" इति स्यमन्तकोपाख्याने श्वशुरेपि गुरुपदप्रयोगात्। तदुक्तं पाद्मे "उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः। मातुलः श्वशुरश्चैव मातामहपितामहौ ॥ वर्णज्येष्ठः पितृव्यश्च पुंसोऽत्र गुरवः स्मृताः" इति वर्णेषु ज्येष्ठो ब्राह्मणः प्राणिमात्रस्य गुरुः "वर्णानामाश्रमाणाञ्च गुरुर्विप्रो न चेतरः। मन्त्रोपादानपठने सर्वसंस्कारकर्मसु ॥" इति संहितोक्तेः। स्तुतिपक्षे तु—ममाशिष्यतामशिष्टतामेतावद्दिनपर्यन्तं गूढामप्येष प्राप्तः सर्वज्ञत्वात्प्रथममेवावगतवानत एवोत्थानादिकं न कृतवानिति भावः। तदपि यद् दुहितुः पाणिमग्रहीत्तत्सावित्र्या इव मद्दुहितर्य्येव गुणमपेक्ष्येति भावः। मे कीदृशस्य साधुवत्साधोरिव मथुराया इवेति मथुरावत् पाटलिपुत्रे प्राकार इतिवत्प्रयोगः। वस्तुतस्त्वसाधोरित्यर्थः ॥ ११ ॥ ❀ ❀ मर्कटान्मर्कटतुल्यान्कामिनोपि कृपयालोचते तत्कामान्सम्पादयतीति तथा। तस्मिन्प्रत्युत्थानाभिवादार्हे मल्लक्षणो जनो वाचाप्युचितं नाकृतेति धिङ्मामिति भावः ॥ १२-१४ ॥ ❀ ❀ शिवो मङ्गलरूपोऽपदेशोऽपकृष्टदेशो यस्मात्स तथा ॥ १५ ॥ ❀ ❀ अत एव परब्रह्मरूपत्वादेव निन्दापक्षे परमेष्ठिना चोदिते सति मदिच्छा तु नासीद् ब्रह्माज्ञापालनमेव मद्दुःखदमभूदिति ब्रह्माप्यनभिज्ञ इति ध्वनिः। मत्पित्रेत्यनुक्तेः। परमेष्ठिनेति नामोच्चारणेन च सोपि मत्पितृत्वायोग्य एवेत्यनुध्वनिः ॥ १६-१७ ॥ ❀ ❀ तत्र देवैस्सह भागालाभे। इत्यर्थं इति, अधमैस्सह भोजनं नोचितमिति भावः। पूर्वव्याख्यानेऽग्रभोजित्वादिति स्वामिचरणैर्हेतुरुक्तस्तदर्थस्तु ब्राह्मणत्वादित्येतच्च तृतीयस्कन्धे दित्युपाख्याने निरूपितम्। "अग्रजन्माग्रभुग्विप्रो ब्राह्मणश्च द्विजोत्तमः" इति धरणिः। वस्तुतस्तु महादेवपदवाच्यत्वात्स्वस्य स्वेतरान्बालान्मत्वा पूर्वमेव भोजयतीत्यत उक्तं यद्वेति ॥ १८ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

एष मेऽशिष्यतां शिष्यलक्षणाऽनाक्रांतत्वं पूर्वमेव प्राप्तः ज्ञातवान् सर्वज्ञत्वात् अत एवाभ्युत्थानादिकं न चकारेत्यर्थः। तथापि साधुवत्साधुतुल्यस्य मे दुहितुः पाणिमग्रहीदिति यत्तत् सावित्र्या इव तस्या गुणत एवेति शेषः ॥ ११ ॥ ❀ ❀ मे दुहितुः पाणिं गृहीत्वा कृपया मर्कटतुल्यकामिनोपि मे लोचकः संबंधेन द्रष्टा बभूवेति शेषः, तथापि यन्मल्लक्षणो जनस्त्वयि वाचाप्युचितं नाकरोत्तन्मां धिगित्यर्थः ॥ १२ ॥ ❀ ❀ लुप्तक्रियायेत्यादीनां वास्तवार्थश्च श्रीस्वामिभिः कृत ऐवेति अनिच्छन्नपीत्यदृष्टवशादेवेत्यर्थः ॥ १३–१४ ॥ ❀ ❀ चितेतिसार्द्धकम्। अत्र वास्तवार्थे प्राप्तसिद्धीनां केषांचिद्वैष्णवानां तथोन्मादोपि पुराणांतरप्रसिद्धो ज्ञेयः। तत्र च हेतुस्स्वभक्तेः गोपनमेवेति ज्ञेयम् ॥ १५ ॥ ❀ ❀ हीनत्वाऽभावे हेतुः पूर्वत्रापरत्र स्तुत्यर्थत्वेन व्याख्यातानि यानि दक्षवचनानि तैस्सहास्य दृष्टान्तस्य विरोधापत्तेः, हीनत्वेनायं दृष्टांत इत्यर्थः। एतदुक्तं भवति दृष्टांतस्यायं निष्कृष्टोर्थःविडंबनमात्रदेहस्य कुत्सितत्वदर्शनार्थं भक्तश्च गोपानार्थमनुकरणमात्रं तादृशव्याख्याप्रतीतौ हेतुः इति स्वयमेवाहेति। अन्यथा विडम्बनाभावे अनुगृहीतुः पितुर्ब्रह्मणः ॥ १६ ॥ ❀ ❀ अथ शीघ्रमेव ॥ १७ ॥ ❀ ❀ अग्रभोजित्वं पित्रादिकरणानामप्रसिद्धमिति नैर्घृण्यव्युदासार्थं यद्वेति तत्र पोषकत्वे। अत्र 'उच्छिष्टभागो वै रुद्र' इति श्रुतिरनुसंधेया ॥ १८ ॥

### श्रीमद्वीरराघवव्याख्या

स्तब्धतामेव प्रपंचयति एष इति द्वाभ्याम् । एष रुद्रः यत् यस्मान् मे मम शिष्यताम् उपगतः मे दुहितुः सत्याः पाणिं विप्राग्निसाक्षिकं साधुवदग्रहीत् साधुवदितिवतिप्रत्ययेन वस्तुतोऽसाधुरिति व्यंजितम् ॥ ११ ॥ ❀ ❀ मर्कटस्येव लोचने यस्य सोयं रुद्रः मृगशावस्य हरिणबालकस्य अक्षिणी वाक्षिणी यस्यास्तस्याः सत्याः पाणिं गृहीत्वा ऊढ्वा प्रत्युत्थानाभिवादनादियोग्ये मयि वाङ्मात्रेणापि उचितं सत्कारं नाकृत न कृतवान् ॥ १२ ॥ ❀ ❀ अनर्हाय कन्यां दत्तवानहमित्यनुतप्यतमान आह लुप्तक्रिया-येतिसार्द्धैश्चतुर्भिः । लुप्तक्रियाय लुप्तः क्रिया सदाचारो येन अत एवाशुचये मानिने दुरहंकारिणे भिन्नसेतवे भिन्नः भ्रंशितः सेतुर्धर्म-मर्यादा येन तस्मै अनिच्छन्नपि दातुमिति शेषः, अहं बालां कन्यामदां दत्तवान् यथा शूद्राय उशतीं निर्दुष्टां वेदलक्षणां गिरं तथेत्यर्थः ॥ १३ ॥ ❀ ❀ प्रेतावासेषु श्मशानेषु घोरैर्विकृतैर्भूतगणैश्च वृतः नग्नः विवसनः व्युप्तकेशः विकीर्णकेशः उन्मत्त इव हसन्रुदंश्च अटति पर्य्यटति ॥ १४ ॥ ❀ ❀ चिताभस्मना श्मशानभस्मना कृतं स्नानं येन प्रेतानां स्रजो माल्यानि यस्य सः त्रस्थिभूषणः नृणामस्थीनि भूषणानि यस्य सः स्वयमशिवोऽमंगलोपि शिवापदेशः शिव इति व्यवहारमात्रं यस्य । स्वयं मत्तो मत्तानां जनानां प्रियश्च तमोमात्रात्मकः केवलतमोरूपः आत्मा स्वभावो येषां तेषां प्रमथभूतानां प्रमथाख्यभूतविशेषाणां पतिः ॥ १५ ॥ ❀ ❀ तस्मै उन्मादानां भूतविशेषाणां नाथाय दुर्हृदे दुष्टचित्ताय नष्टशौचाय आचारहीनाय साध्वी सती कन्या मया दत्ता । परमेष्ठिना चोदित आदिष्टोहं दत्तवानित्यध्याहारः, चोदित इत्यार्षत्वाद् व्यत्ययेन तृतीयार्थे प्रथमा वा । बतेति खेदे । केचिदत्र लुप्तक्रियायाशुचये इत्यादिग्रंथं रुद्रनिंदापरं यथाश्रुतं व्याख्याय वास्तवस्वयमर्थं इत्युपक्रम्य "लुप्ता क्रिया यस्मिन् परब्रह्मरूपत्वात् अत एव न शुचिर्यस्मात् अमानिने आभन्नसेतव इति चच्छेदः, तस्य परमेश्वरस्य मदीया मानुषी कन्या कथं योग्या स्यादिति लज्जया दातुमनिच्छिन्नपि तत्संबंधलोभेन दत्तवान् । शूद्रायेत्यनर्हत्वमात्रे दृष्टांतः, न हीनत्वे, पूर्वापरस्वग्रंथविरोधापत्तेः । एतदुक्तं भवति यथा कथंचिच्छूद्राय वेदमर्थलोभेन ददाति तद्वदिति । प्रेतावासेष्वित्यादि सर्वं विडंबनमात्रमिति स्वयमेवाह उन्मत्तवदिति । अन्यथा उन्मत्त इत्येवावक्ष्यत् । अशिवः नास्ति शिवो यस्मात् अमत्तोऽमत्तजनप्रियः इति च्छेदः, पतिः प्रमथभूतानामिति भक्तवात्सल्यमाह तामसानपि दोषमशेषमपनीय पाति नष्टानामपि शौचशुद्धिर्यस्मात् दुष्टेष्वप्येषु मयानुकंप्या इति हृन्मनो यस्य स दुर्हृत्तस्मै बतेति हर्षे" इति रुद्रस्य प्रशंसापरत्वं व्याचक्षते । तत्रायं वास्तवोर्थः किं दक्षस्याभिप्रेतः उतैतत्पुराणकर्तुः उतान्यस्य त्वादृशस्य कस्यचित् नाद्यः साधूनां ब्रुवतो व्रतं नाज्ञानान्न च मत्सरादिति वास्तविकत्वमुपक्रम्य लोकपालानां यशोघ्नो निरपत्रपः येन स्तब्धेन दूषितः एष मे शिष्यतां प्राप्त इत्यादिना निन्दयतोभिप्रेतत्वासंभवात्, निंदायामेव तस्य तात्पर्यातिशयावगमात् अत एवाह दक्षो गिरित्राय विसृज्य शापं तस्माद्विनिःक्रम्य विवृद्धमन्युर्जगामेति निंदापूर्वकशापकरणत्वविवृद्धक्रोधत्वविनिष्क्रमणादयो वक्ष्यमाणा उपपन्नाः । न द्वितीयः वेदांतार्थोपबृंहणरूपत्वादस्य पुराणस्य वेदांतेषु च 'अनपहतपाप्मा वा अहमास्म, नारायणाद्रुद्रोऽजायत' इत्यादिषु कर्मवश्यत्वकार्यत्वादि-श्रवणात्तद्विरुद्धार्थानामत्र निबद्धुमयुक्तत्वेनैतत्पुराणकर्त्रभिप्रेतत्वासंभवात् । अत एव हि 'सद्योजायत तन्मन्युः कुमारो नीललोहितः । स वै रुरोद देवानां पूर्वजो भगवान्भवः ॥ नामानि कुरु हे धातः ! स्थानानि च जगत्पते ॥ इति वेदांतार्थानुसारेणैव कार्य्यत्वकर्मवश्य-त्वचतुर्मुखकृतनामस्थानादिमत्त्वमुपबृंहितम् । क्वचित्त्रिमूर्त्यैक्यादिकं प्रतीयमानं प्रह्वय येनान्यथाप्युपपन्नमिति पूर्वमेव प्रतिपादितम् न तृतीयः, आग्रहमूलकत्वात्, निंदापरग्रंथस्य यथाकथंचिद्विपरीतार्थपर्य्यवसानकरणे सर्वत्राप्येवमेव स्यादिति स्तुतिनिंदयोर्व्यवस्थानु-पपत्तेश्च । यदप्युक्तं लुप्ता क्रिया यस्मिन् परब्रह्मरूपत्वादिति तदयुक्तं परब्रह्मत्वमपि रामकृष्णाद्यवतारेषु लुप्तक्रियात्वादर्शनेन हेतोर्व्य-भिचारात् । अमानिने अभिन्नसेतव इति पदच्छेद इत्यप्ययुक्तं सद्भिराचरितः पन्था येन स्तब्धेन दूषित इति यज्ञभागं न लभतां देवै-र्देवगणाधम इति पूर्वोत्तरव्याघातात् तस्य परमेश्वरस्य मदीया मानुषी कन्येत्याद्यप्ययुक्तं भवदक्षयोरुभयोरपि चतुर्मुखात्प्रसूतत्वेन दक्षकन्याया मानुषीत्वासंभवात् 'मनोर्जातावन्यतौ युक्ते'ति हि मानुषशब्दो व्युत्पादितः । तामसानामपि दोषमपनीय पातीत्याद्यपि मंदम्, तानहं द्विषतः क्रूरान्संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ॥ मामप्राप्यैव कौंतेय ततो यान्त्यधमां गतिम् ।' इति तामसानां निग्राह्यत्वगानात्तास्याद्यथोक्त एवार्थः ॥ १६ ॥ ❀ ❀ स दक्षः अप्रतीपं अप्रतिक्रियमुदासीनमवस्थितमासीनं गिरिशमेवमुक्तविधया विनिंद्याथ अप उपस्पृश्य आचम्येत्यर्थः क्रुद्धः शप्तुं प्रचक्रमे उपक्रांतवान् ॥ १७ ॥ ❀ ❀ अयं भवो रुद्रः तुर्हेतौ यतः देवगणाधमः सर्वेभ्योऽदेवेभ्योऽधमः ततः इंद्रादिभिर्देवैः सह देवयजने देवोद्देश्यकयागे यज्ञभागं न लभतां न प्राप्नुयात् ॥ १८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

स्वत उत्तमस्य शिवस्य दक्षावमानविषयत्वं कथमत्राह एष इति गायत्रीविषये 'पण-व्यवहार' इति धातोः पाणि व्याहरणमुच्चारणमित्यर्थः । साधुवद्योग्यवत् ॥ ११ ॥ ❀ ❀ मृगशावो मृगपोतः, मर्कटलोचने इव लोचने यस्य स तथा केकराक्ष इत्यर्थः ॥ १२ ॥ ❀ ❀ भिन्नसेतवे लंघितमर्यादाय उशतीं गिरं पौरुषेयत्वादिदोषरहितां वेदवाणीम् ॥ १३ ॥ ❀ ❀ अशुचिकर्मकरणादशुचित्वमुक्तं न तु द्वेषादित्याह-प्रेतावासेष्विति । व्युप्तकेशो मुक्तकेशः ॥ १४ ॥ ❀ ❀ चिताभस्मना

श्मशानभस्मना कृतं स्नानं येन स तथा प्रेतानामस्थिग्रंथयोऽस्थिभिर्ग्रथितमालास्ता एव भूषणानि यस्य स तथा, शिव इति अपदेशो नाम यस्य स तथा स्वयमपि अशिवोऽशुद्धो हि ।। १४ ।। ❀ ❀ उन्मत्तत्वं स्पष्टयति केवलं तमोगुणस्वरूपं मनो येषां ते तथा, तेषाम् । अतः किमनुशोककारणमत्राह तस्मा इति ।। १६ ।। ❀ ❀ न केवलं दक्षेण दोषा एव गणिताः किं तु स्वानर्थहेतुः शापोपि दत्त इत्याह विनिंद्यैवमिति अप्रतीपमप्रतिपक्षम् ।। १७ ।। ❀ ❀ इंद्रोपेंद्रादिभिर्देवैः सह देवयजने यज्ञभागं न लभतामित्यन्वयः ।। १८ ।।

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

शिष्यतां शासनीयत्वम् ।। ११-१२ ।। ❀ ❀ यथा शूद्रायोशतीं गिरं कश्चिदनिच्छन् परवश्यः सन्नेव ददाति तथाहमप्यनिच्छन्नेवास्मै परममहते बालामदाम् । काका किन्तु इच्छन्नेवादामित्यर्थः ।। १३ ।। ❀ ❀ वास्तवार्थे प्रेतावासेष्वित्यादिकं भगवत्प्रेमोन्मादमयं ज्ञेयम् ।। १४ ।। ❀ ❀ चितेति सार्द्धकम् । चितेत्यादिकञ्च प्राप्तसिद्धिवैष्णवानामेवेति पुराणांतरप्रसिद्धम् ।। १५-१९ ।।

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

एष इति । निन्दा स्पष्टा । स्तुतिस्तु मम अशिष्यतां अशिष्टतां एतावद्दिनपर्यन्तं गुप्तामपि एष प्राप्तः सर्वज्ञत्वात् प्रथममेवावगतवान्, अत एवाभ्युत्थानादिकं न कृतवानिति भावः । तदपि यद्दुहितुः पाणिमग्रहीत् तत् साविक्या इव मद्दुहितुर्य्येव गुणमालक्ष्येति भावः । मम कीदृशस्य साधुवत् साधोरिव वस्तुतस्त्वसाधोः ।। ११ ।। ❀ ❀ प्रत्युत्थानाभिवादार्हे श्वशुरे मयि वाचापि उचितं सन्मानं न अकृत नाकरोत् । स्तुतिपक्षे मर्कटान् मर्कटतुल्यान् कामिनोऽपि । कृपया लोचते तत्कामान् सम्पादयति । तस्मिन् प्रत्युत्थानाभिवादार्हे मल्लक्षणो जनः वाचाप्युचितं न अकृतेति धिङ्मामिति भावः ।। १२ ।। ❀ ❀ उशतीं वेदलक्षणां गिरं स्तुतिपक्षे तु लुप्ताः क्रिया यस्मिन् परब्रह्मरूपत्वात् नास्ति शुचिर्यस्मात् अमानिने अभिन्नसेतवे इतिच्छेदः । स्वयोग्यतादृष्टया दातुमनिच्छन्नपि अदां यथा शूद्रा एव उशतीं वेदलक्षणां गिरं ददति अध्यापयन्ति यत्नोपस्याभावो वैकल्पिकत्वात् ।। १३ ।। ❀ ❀ प्रेतावासेष्वित्यादिकं सर्वं भगवत्प्रेमोन्मादमयं लीलामात्रमिति स्वयमेवाह उन्मत्तवदिति अन्यथा उन्मत्त इत्येवावक्ष्यत् ।। १४ ।। ❀ ❀ स्तुतिपक्षे चितेत्यादिकं प्राप्तसिद्धिवैष्णवानामेवेति पुराणांतरप्रसिद्धं अपदेशा अपकृष्टा देशा अपि शिवा मंगला यतः स न विद्यते शिवं मंगलं यतः सः तमोमात्रात्मकः तमोमात्रस्वरूपा आत्मनो येषां स्तुतिपक्षे स्वेच्छया लीलैवेयं शम्भोर्यत्तामसानपि कृपया स्वीकरोतीति ।। १५ ।। ❀ ❀ परमेष्ठिना ब्रह्मणा चोदिते प्रेरिते ममेच्छा नासीत् ब्रह्माज्ञापालनमेव मद्दुःखदमभूदिति ब्रह्माप्यनभिज्ञ इति ध्वनिः । मत् पित्रेत्यनुक्तेः परमेष्ठिनेति नामोच्चारणेन च सोऽपि मत्पितृत्वायोग्य एवेत्यनुध्वनिः । स्तुतिपक्षे कृपया उन्मादानां गणानामपि नाथाय नष्टानामपि शौचं यतः । दुष्टेष्वपि हृत् कृपामयं मनो तस्मै ब्रह्मणो वाक्यादयोग्येनापि मया दत्तेत्यर्थः ।। १६ ।। ❀ ❀ अप्रतीपमजातशत्रुम् ।। १७ ।। ❀ ❀ अयन्त्विति । स्तुतिपक्षे देवयजने यज्ञे देवैः सह भागं न लभतां तत्र हेतुः देवगणा अधमा यस्मात् सः । न ह्यधमैः सह भोजनमुचितम्, अतः सर्वपोषकत्वात् तान् भोजयित्वा भागं लभतामिति भावः ।। १८ ।।

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यद्यतो मे सावित्रीतुल्याया दुहितुः पाणिमग्रहीदतो मे शिष्यतां प्राप्तः ।। ११ ।। ❀ ❀ मृगशावस्याक्षिणी इवाक्षिणी यस्यास्तस्याः उचितं सत्कारं वाचापि नाकृत न कृतवान् ।। १२ ।। ❀ ❀ साधुवदित्यनेनायमसाधुरिति सूचितं भवस्यासाधुत्वं दर्शयन् असाधवे साध्वी दत्तेत्याह सार्द्धैश्चतुर्भिः । लुप्तेति अनिच्छन्नपि बालामदाम् दत्तवान् उशतीं वेदलक्षणाम् ।। १३ ।। ❀ ❀ व्युप्तकेशः विकीर्णकेशः प्रेतावासेषु श्मशानेषु उन्मत्तवत् हसन् रुदन् नग्नः अटति भ्रमति ।। १४ ।। ❀ ❀ प्रेतस्रक् प्रेतानां स्रजो यस्य सः, नृस्थिभूषणः नृणामस्थीनि भूषणानि यस्य सः शिव इत्यपदेशो नाममात्रं यस्य सः तमोमात्रात्मकः केवलतमोरूप आत्मा स्वभावो येषां तेषां पतिः तेषु मुख्य इति भावः ।। १५ ।। ❀ ❀ य उक्तप्रकारस्तस्मै उन्मादनाथाय अत्युन्मत्ताय परमेष्ठिना चोदिते सति साध्वी सर्वथा तद्विपरीतस्वभावेति यावत्, दत्ता ।। १७ ।। ❀ ❀ स अयं श्वशुरत्वादिना गुरुः अयं जामातृत्वादिना शिष्य इति लोकव्यवहारात्मकः गिरिशं तादृशलोकव्यवहारातीतम् अप्रतीपमप्रतिकूलं यथा स्यात्तथाऽवस्थितमप्येवं विनिंद्याप उपस्पृश्याचम्य शप्तुं प्रचक्रमे ।। १७ ।। ❀ ❀ देवयजने देवोद्देश्यकयज्ञे ।। १८ ।।

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

निन्दापक्षे—ननु सामान्यतस्त्वयोक्तमनेन सन्मार्गो दूषित इति तत्कथं त्वद्वचनमात्रेण विश्वासः स्यादतः कथं पन्था दूषितस्तत्प्रकारो विशेषतया वक्तव्य इत्याशङ्क्याह—एष मे शिष्यतां प्राप्त इति । ननु साक्षाद् ब्रह्मपुत्रत्वेन तव तुल्यत्वात् ज्ञान-

पूर्णत्वात्कथमेतस्य तव शिष्यत्वमित्याशङ्कयाह—यदिति। यत् यस्मात् मे मम दुहितुः कन्यायाः सत्याः पाणिमेषः अग्रहीदतो मे शिष्यतां प्राप्त इत्यन्वयः। तत्र दृष्टान्तमाह—सावित्र्या इव साधुवदिति। यथा सावित्र्याः पाणिं 'पण व्यवहारे' इति धात्वनुसारात् उच्चारणरूपं वाग्व्यवहारं कुरुतः कश्चित्साधुपुरुषः गृह्णाति स च तस्य शिष्यो भवति तद्वदित्यर्थः। यद्वा सावित्र्या इव सर्वदोषवर्जिताया मे दुहितुः पाणिमयं यतः साधुवद्रूपं दर्शयित्वा कापट्येनाग्रहीदतो मे शिष्यतां प्राप्त इत्यन्वयः। एवं सावित्र्या इवेति कन्योत्कर्षकथनेन तस्यां स्नेहातिशयः सूचितः। साधुवदित्यनेन त्वया ज्ञात्वा कथमीदृशायेदृशी कन्या दत्तेति स्वोपालम्भो निवारितः। न चेदं पाणिग्रहणं गुप्तं ससाक्षिकत्वादित्याह—विप्राग्निमुखत इति, तत्संमुखे इत्यर्थः। स्तुतिपक्षे तु यद्यप्येष लोकसङ्ग्रहार्थं विप्राग्निमुखतः सावित्र्या इव शुद्धाया मे दुहितुः पाणिमग्रहीत्तथापि मे मम अशिष्यतां शिष्यत्वविपरीततां वन्दनीयतां प्राप्त एवेत्यर्थः। यतोऽयं साधुवत् जीवन्मुक्तवत्, न तु विधिनियम्यो लौकिकः साधुः। ईश्वरत्वेन विधिनियम्यत्वाभावादित्यर्थः॥ ११॥ ❀ ❀ दक्षो भवस्य केवलस्वार्थसाधकत्वेन कृतघ्नत्वमाह—गृहीत्वेति। मृगशावो हरिणपोतस्तस्याक्षिणी इवाक्षिणी यस्याः तस्याः सत्याः पाणिं हस्तमयं मर्कटलोचनः मर्कटस्य लोचने नेत्रे इव लोचने यस्य स तथाभूतोपि गृहीत्वा साधूनां वृत्तं प्रत्युत्थानाभिवादनादि तदर्हे मयि वाचापि उपविष्ट एव वाङ्मात्रेणापि उचितमागन्तव्यं कुशलमस्तीत्यादिकं सन्मानं नाकृत न कृतवानिति। स्तुतिपक्षे तु मर्कटलोचन इति। स्वार्थविमूढाः स्त्र्यादिविषयभोगतत्परा अतिचपलस्वभावा मर्कटतुल्यत्वान्मर्कटास्तेषु लोचनं कथमेवंभूतानामुद्धारो भवेदित्यालोचनं यस्य स तथेत्यर्थः। अत एव दक्षस्याप्यभिमानपुञ्जत्वात्तदभिमाननिवृत्तिं चिन्तयन् मृगशावाक्ष्याः नेत्रादिसर्वसौन्दर्ययुतायास्तत्कन्यायाः पाणिं गृहीत्वा तेन सह संबन्धं विधायाभिमानं दूरीकर्तुं प्रथमं क्रोधमुत्पादयितुं प्रत्युत्थानाभिवादार्हेपि तस्मिन् वाचाप्युचितं सन्मानं न कृतवानित्यर्थः॥ १२॥ ❀ ❀ वस्तुतस्तूचितक्रियामात्रं सर्वमेवानेन त्यक्तमत एतावन्मर्यादात्यागेऽस्य कोऽतिभार इति सूचयन्नेवंभूताय कन्यादानं मयाऽनुचितं कृतमित्याह—लुप्तेति। लुप्ता वेदोक्ताः सर्वाः क्रियाः यस्मात् स तथा तस्मै। अत एव 'गृहस्थस्य क्रियात्यागो व्रतत्यागो बटोरपि' इत्यादौ गृहस्थस्य क्रियात्यागो भ्रष्टत्वेनोक्तः। अस्यापि गृहस्थत्वादुचितक्रियात्यागेन भ्रष्टत्वमित्याशयेनाह—अशुचय इति। न चायमयुक्तं करोमीत्यनुतप्यतेऽन्यशिक्षितं वा गृह्णाति विलज्जते वा अभिमानित्वादित्याह—मानिन इति। अत एव भिन्नसेतव इति। भिन्नो विदीर्णः सेतुर्वेदमर्यादा येन तस्मै बालामदां दत्तवानित्यर्थः। बालामित्यनेन तस्यां स्वस्य दयां सूचयति। एतन्महदनुचितं कृतमिति दृष्टान्तेनाह—शूद्रायेति। यथा उशतीं कमनीयां गिरं वेदवाणीं कश्चिच्छूद्राय ददाति तदत्यनुचितं तथा मयाप्यस्मै कन्यादानमनुचितं कृतमिति भावः। ननु तर्हि कुत एवं ज्ञात्वाप्यस्मै कन्यां दत्तवांस्तत्राह—अनिच्छन्नपीति। ब्रह्मणा चोदित इति शेषः। अग्रे तथा वक्ष्यमाणत्वात्। सरस्वतीपक्षे तु नैतावतानुत्थानादिना शिवस्य काचन क्षतिर्यतस्तस्य ब्रह्मत्वेन सर्वक्रियालोपेपि तदभावादित्याह—लुप्तक्रियायेति। एवं सर्वक्रियारहितत्वेप्यासमन्ताच्छुचये स्वतः सिद्धाय हतपाप्मत्वात् अत एव मानिने सर्वेषां माननीयाय पूज्यतमायेत्यर्थः। ननु क्रियारहितस्य कथं शुचित्वं लोकशास्त्रयोस्तददर्शनादित्याशङ्कयाह—भिन्नसेतव इति। भिन्नो जीवमर्यादाविलक्षणः सेतुर्मर्यादा यस्य स तथा। न हि जीववल्लोकवेदमर्यादां पुरस्कृत्येश्वरस्थितिस्तस्य सर्वनियामकस्य तन्नियम्यत्वाभावादिति भावः। लोके हि यत्कर्तुं न शक्यते तत्रेच्छा नोदेतीति प्रसिद्धमतस्तस्येश्वरत्वेन स्वकीयकन्यायोग्यत्वं मत्वा पूर्वं मम दातुमिच्छा नासीत्पश्चाद् ब्रह्मोपदेशात्सङ्कोचं त्यक्त्वाहं दत्तवानित्याह—अनिच्छन्नपीति। सर्वाधिष्ठातुर्ब्रह्मणो वचनं मान्यथाभूदिति तत्सङ्कोचादीश्वरोपि मदीयां कन्यामङ्गीकृतवान् तदप्युचितमेव जातमिति दृष्टान्तेनाह—शूद्रायेवोशतीं गिरमिति। शूद्रशब्दोऽत्र न जातिवाची, किंतु शुचं शोकं कृपया ज्ञानभक्त्याद्युपदेशेन द्रावयतीति शूद्रः। पृषोदरादित्वाच्चकारलोप उकारस्य दीर्घता च। तथाच यथा परमकृपालोः परोपकारिण एव वेदगीर्योग्या शोभते च। ननु ज्ञानवक्त्रकरयेति तथाभूताय तद्दानमुचितं तथा मदीया कन्यैतद्योग्याऽस्यैव शोभते इत्यस्मै दानमत्युचितं जातमिति भावः॥ १३॥ ❀ ❀ उभयपक्षेपि पूर्वोक्तस्यैव विवरणम्—प्रेतावासेष्विति सार्द्धैस्त्रिभिः। प्रेतावासेषु घोरेषु श्मशानादिभयंकरस्थानेषु प्रेतादिभिर्वृतः व्युप्तकेशः प्रकीर्णकेशः नग्नो दिगम्बरः उन्मत्तवद्धसन् रुदन्नटतीत्यन्वयः। निन्दापक्षस्तु स्पष्ट एव। स्तुतिपक्षे तु 'जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्त्तते। यदा यस्यानुगृह्णाति भगवानात्मभावितः'॥ 'स जहाति मतिं लोके वेदे च परिनिष्ठिताम्॥' 'विकर्म यच्चोत्पतितं कथंचिद्धुनोति सर्वं हृदि संनिविष्टः' इत्यादिवचनेभ्यो ज्ञानिनो भगवद्भक्तस्य लोकवेदमर्यादात्यागे दोषाभावाद्यावल्लोके प्रमत्ततां न प्रदर्शयति तावद्भगवन्निष्ठाविघातकः पुत्रदारादिलौकिकः सम्बन्धो न निवर्त्ततेऽतस्तन्निवृत्त्यर्थं तेन गोमृगादिचर्यया बहिः प्रमत्तताप्रदर्शनं कारयितव्यमिति लोकशिक्षार्थं निवृत्तसर्वानर्थोपि भगवान् रुद्रः प्रमत्ततां प्रदर्शयंस्तपश्चरति। तदुक्तं तृतीये कश्यपेन—'यस्यानवद्याचरितं मनीषिणो गृह्णन्त्यविद्यापटलं बिभित्सवः। निरस्तसाम्यातिशयोपि यत्स्वयं पिशाचचर्यामचरद्गतिः सताम्' इति। अत एवात्राप्युन्मत्तवदित्युक्तम्, नतून्मत्त इति। ऋषभदेवभरतदत्तात्रेयादीनामप्याचारस्य तथादर्शनात्॥ १४॥ ❀ ❀ चिताभस्मना कृतं स्नानं येन स तथा। प्रेतानां स्रजो माल्यानि यस्य स प्रेतस्रक्। नृणामस्थीनि भूषणानि यस्य स न्रस्थिभूषणः। 'प्रेतास्थिग्रन्थिभूषण' इति पाठान्तरम्। निन्दापक्षेऽर्थः स्पष्टः। स्तुतिपक्षे एतदपि विडम्बनमात्रमुक्ताभिप्रायमेव॥ १५॥ ❀ ❀ निन्दापक्षे शिव इत्यपदेशो नाममात्रं यस्य सः। हीति प्रसिद्धौ। प्रसिद्धया त्वशिवः अमङ्गलरूप एव। यतो मत्तो मत्तजनप्रिय

इति। स्वयं मत्तो निषिद्धाचारस्तथाभूता मत्ता एव जनाः प्रिया यस्य स तथाभूतश्चेति। उक्तमेव मत्तजनप्रियत्वं स्पष्टयति—पतिरिति। तमोमात्रात्मकः केवलं तमोरूपः आत्मा स्वभावो येषां ते तथा तेषां प्रमथभूतानां पतिः स्वामीति। स्तुतिपक्षे तु शिवं सर्वपापशोधकं मङ्गलमपदेशो नाम यस्य स शिवापदेशः। हिशब्देन 'यद्द्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसङ्गादघमाशु हन्ति तत्' इत्यादावस्यार्थस्य प्रसिद्धिं द्योतयति। अत एवाशिवः नास्ति शिवोऽन्यो यस्मात्स तथा। अतएवामत्त इति भेदः। विषयासक्तिरहितत्वे सति भगवद्ध्यानपरत्वात्। अत एव प्रचेत आदिवदप्रमत्ता भगवद्भक्ता जनाः प्रिया यस्य स तथा। तथैव प्रचेतःसंवादे वक्ष्यमाणत्वात् 'यः परं रंहसः साक्षात्' इत्यादि। तथापि यान्न कोपि संगृह्णाति तान् स्वयं निःशङ्कः कृपया कृतार्थयतीत्याह—पतिः प्रमथेति। येभ्यो ब्रह्मापि भयं प्राप अलं 'प्रजाभिः सृष्टाभिरीदृशीभिर्मया सह दिशोदहन्तीभिरिति वचनात्तांस्तामसानपि प्रमथादीन् कृपया पातीति तथा एवं तादृशानां निरोधो न जीवस्य साध्य इतीश्वरत्वमेव तस्य दृढीकृतं भवति। निन्दापक्षे, उन्मादा भूतविशेषास्तामसास्तेषां नाथाय स्वामिने नष्टं शौचं पावित्र्यं यस्मात्तस्मै दुर्हृदे दुष्टं हृत् चित्तं यस्य तस्मै तस्मा अनर्हत्वेन प्रसिद्धाय परमेष्ठिना ब्रह्मणा चोदिते सति तदाग्रहान्मया साध्वी कन्या दत्तेति स्वखेदं सूचयति—बतेति। ब्रह्मणः सम्मुखे सभायामनिच्छयाऽनेन चोदिते मया दत्तेति वदंस्तस्याप्यपमानं करोति स्मेति सूचितम्। तेन दक्षस्याभिमानप्राबल्यं दर्शितमन्यथा कथमेवं पितामहापमानं कुर्यादिति। स्तुतिपक्षे तु उन्मादनाथायेति। येषां दर्शनादिना महानप्युन्मत्तो भवति तेषां नाथस्तस्मै तादृशानपि क्रीडासाधनं कृत्वा विहरतीत्यहो तस्य माहात्म्यम्। नष्टशौचायेति। नष्टानामाचारभ्रष्टानामपि शौचं पावित्र्यं यस्मात्स तथा तस्मै। दुर्हृद इति दुष्टेष्वपि हृत् मयाऽनुकम्प्या एते इति मनो यस्य स तथा तस्मै। पूर्वमस्य महत्त्वं ज्ञात्वा संकोचाद्दातुमिच्छाभावेपि परमेष्ठिना सर्वलोकाधिपतिना चोदिते आज्ञप्ते सति तस्मै पूर्वोक्तगुणगणाढ्याय साध्वीसुशीलादिसर्वैर्गुणैरुत्कृष्टा कन्या मया दत्तेति भद्रमेव जातमिति हर्षेणाह—बतेति॥ १६॥ ❀ ❀ एवं निन्दायामपि भवादिषु सर्वेषु तूष्णीं स्थितेषु सत्सु यदि दक्षोपि तूष्णीं स्थितः स्यात् तदा द्वेषस्थैर्याभावेन दक्षस्याभिमाननिवृत्तिद्वारा कृतार्थता न स्यादतो द्वेषस्थैर्यार्थमन्तर्यामिप्रेरितो दक्षः शापं दातुं प्रचक्रम इत्याह—विनिन्द्येति। अप्रतीपमप्रतिकूलं यथा भवत्येवं स्थितमपि गिरिशं शिवमेवं पूर्वोक्तप्रकारेण स दक्षो विनिन्द्य अथ तदनन्तरमप उपस्पृश्य हस्तपादादिक्षालनाचमनादि कृत्वा शप्तुं शापं दातुं प्रचक्रमे प्रारम्भं कृतवान्। ननु तूष्णीं स्थितेऽप्रतिकूले कथं शापेच्छा तस्य जाता तत्राह—क्रुद्ध इति। स्वयं धर्मं न करोति कर्त्तारं च मां न मनुतेऽतोऽस्य यागे सम्बन्धो मास्त्वित्यभिमानेन क्रुद्धो यतोऽतः शप्तुं प्रचक्रम इति भावः॥ १७॥ ❀ ❀ यागे रुद्रभागनिषेधं विना कर्मणि व्यङ्गताभावात्तदभिमाननिवृत्तिहेतुः कर्मध्वंसो न भविष्यतीति तदर्थमनेन रुद्रभागनिराकरणमेव युक्तमित्यभिप्रायेणान्तर्यामिप्रेरितो दक्षः शापं दास्यंस्तदेव करोति—अयं त्विति। तुशब्देनास्य निकृष्टत्वेन पंक्तिबहिष्ट्वं सूचयति। देवयजने देवानां यजनसमये अयं भव इन्द्रादिभिर्देवैः सह भागं न लभताम्। तत्र निकृष्टत्वमेव हेतुमाह—देवगणाधम इति। देवसमूहेष्वधमः सदाचाररहितत्वादित्यभिमान इति निन्दापक्षे। स्तुतिपक्षे तु देवगणा अधमा निकृष्टा यस्मात्स तथा सर्वोत्तम इत्यर्थः। अतः सर्वदेवोत्कृष्टत्वादेव पूजासमये तैः सह भागं न लभतां किन्तु सर्वस्वामित्वात् तेषु भुक्तवत्सु सत्सु पश्चाल्लभताम्। अतः पुनर्यज्ञसन्धाने तथैव भविष्यतीति ज्ञेयम्। तुशब्देनोत्कृष्टत्वादस्य भिन्नपंक्तिता सूचिता॥ १८॥

## भाषानुवादः

बंदरके-से नेत्रवाले इसने सत्पुरुषोंके समान मेरी सावित्रीसरीखी मृगनयनी पवित्र कन्याका अग्नि और ब्राह्मणोंके सामने पाणिग्रहण किया था, इसलिये यह एक प्रकार मेरे पुत्रके समान हो गया है। उचित तो यह था कि यह उठकर मेरा स्वागत करता, मुझे प्रणाम करता; परंतु इसने वाणीसे भी मेरा सत्कार नहीं किया॥ ११-१२॥ ❀ ❀ हाय! जिस प्रकार शूद्रको कोई वेद पढ़ा दे, उसी प्रकार मैंने इच्छा न होते हुए भी भावीवश इसको अपनी सुकुमारी कन्या दे दी। इसने सत्कर्मका लोप कर दिया, यह सदा अपवित्र रहता है, बड़ा घमण्डी है और धर्मकी मर्यादाको तोड़ रहा है॥ १३॥ ❀ ❀ यह प्रेतोंके निवासस्थान भयङ्कर श्मशानोंमें भूत-प्रेतोंको साथ लिये घूमता रहता है। पूरे पागलकी तरह सिरके बाल बिखेरे नंग-धड़ंग भटकता है, कभी हँसता है, कभी रोता है॥ १४॥ ❀ ❀ यह सारे शरीरपर चिताकी अपवित्र भस्म लपेटे रहता है, गलेमें भूतोंके पहननेयोग्य नरमुण्डोंकी माला और सारे शरीरमें हड्डियोंके गहने पहने रहता है। यह बस, नामभरका ही शिव है, वास्तवमें है पूरा अशिव-अमङ्गलरूप। जैसे यह स्वयं मतवाला है, वैसे ही इसे मतवाले प्यारे लगते हैं। भूत-प्रेत-प्रमथ आदि निरे तमोगुणी स्वभाववाले जीवोंका यह नेता है॥ १५॥ ❀ ❀ अरे! मैंने केवल ब्रह्माजीके बहकावेमें आकर ऐसे भूतोंके सरदार, आचारहीन और दुष्ट स्वभाववालेको अपनी भोली-भाली बेटी ब्याह दी'॥ १६॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—विदुरजी! दक्षने इस प्रकार महादेवजीको बहुत कुछ बुरा-भला कहा तथापि उन्होंने इसका कोई प्रतीकार नहीं किया, वे पूर्ववत् निश्चलभावसे बैठे रहे। इससे दक्षके क्रोधका पारा और भी ऊँचा चढ़ गया और वे जल हाथमें लेकर उन्हें शाप देनेको तैयार हो गये॥ १७॥ ❀ ❀ दक्षने कहा, 'यह महादेव देवताओंमें बड़ा ही अधम है। अबसे इसे इन्द्र-उपेन्द्र आदि देवताओंके साथ यज्ञका भाग न मिले'॥ १८॥

निषिध्यमानः स सदस्यमुख्यैर्दक्षो गिरित्राय विसृज्य शापम् ।
तस्माद्विनिष्क्रम्य विवृद्धमन्युर्जगाम कौरव्य निजं निकेतनम् ॥ १९ ॥
विज्ञाय शापं गिरिशानुगाग्रणीर्नन्दीश्वरो रोषकषायदूषितः ।
दक्षाय शापं विससर्ज दारुणं ये चान्वमोदंस्तदवाच्यतां द्विजाः ॥२०॥

य एतन्मर्त्यमुद्दिश्य भगवत्यप्रतिद्रुहि । द्रुह्यत्यज्ञः पृथग्दृष्टिस्तत्त्वतो विमुखो भवेत् ॥ २१ ॥
गृहेषु कूटधर्मेषु सक्तो ग्राम्यसुखेच्छया । कर्मतन्त्रं वितनुते वेदवादविपन्नधीः ॥ २२ ॥
बुद्ध्या पराभिध्यायिन्या विस्मृतात्मगतिः पशुः । स्त्रीकामः सोऽस्त्वतितरां दक्षो बस्तमुखोऽचिरात् ॥ २३ ॥
विद्याबुद्धिरविद्यायां कर्ममय्यामसौ जडः । संसरन्त्विह ये चामुमनु शर्वावमानिनम् ॥ २४ ॥
गिरः श्रुतायाः पुष्पिण्या मधुगन्धेन भूरिणा । मथ्ना चोन्मथितात्मानः सम्मुह्यन्तु हरद्विषः ॥ २५ ॥
सर्वभक्षा द्विजा वृत्त्यै धृतविद्यातपोव्रताः । वित्तदेहेन्द्रियारामा याचका विचरन्त्विह ॥ २६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

स दक्षस्तस्मात्स्थानाद्विनिष्क्रम्य जगाम । हे कौरव्य ॥ १९ ॥ ❀ ❀ गिरिशस्यानुगानामग्रणीर्मुख्यः । रोष एव कषायस्तेन दूषितः आरक्तनेत्र इत्यर्थः । तस्य गिरिशस्यावाच्यतां वचनानर्हतां निंद्यतामित्यर्थः । तेभ्योऽपि शापं विससर्ज ॥ २० ॥ ❀ ❀ दक्षं शपति सार्धैस्त्रिभिः । एतन्मर्त्यं दक्षशरीरमुद्दिश्य श्रेष्ठं मत्वा । अप्रतिद्रुहि प्रतिद्रोहमकुर्वति । पृथग्दृष्टिर्भेददर्शी । तत्त्वतः परमार्थात् ॥ २१ ॥ ❀ ❀ अज्ञत्वमेवाह । गृहेष्विति । कर्मतंत्रं कर्मपरिकरम् । वेदे ये वादा अर्थवादा "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्यादयस्तैर्विपन्ना विनष्टा धीर्यस्य ॥ २२ ॥ ❀ ❀ परो देहादिस्तमेवात्मत्वेनाभितो ध्यातुं शीलं यस्यास्तया बुद्ध्या विस्मृताऽऽत्मनो गतिस्तत्त्वं येन अतः पशुतुल्यः । अतितरां स्त्रीकामोऽस्त्विति द्वितीयः शापः । बस्तस्य छागस्य मुखमेव मुखं यस्येति तृतीयः शापः ॥ २३ ॥ ❀ ❀ अयं च शापोऽस्यानुरूप एवेत्याह–विद्याबुद्धिः इयमेव तत्त्वविद्येति बुद्धिर्यस्य । अतोऽसौ जड एव । द्विजान् शपति संसरंत्विति सार्धद्वाभ्याम् । शर्वमवमन्यत इति तथा तममुं दक्षं ये चानुवर्तंते ते संसरंतु जन्ममरणाद्यनुभवंत्वित्येकः शापः ॥ २४ ॥ ❀ ❀ श्रुताया वेदरूपायाः पुष्पिण्याः पुष्पाणीवार्थवादा मनःक्षोभकत्वात् संति यस्याः । अर्थवादबहुलाया इत्यर्थः । मधुगंधतुल्येन प्ररोचनेन मथ्ना मनःक्षोभकेणोन्मथित आत्मा मनो येषां ते संमुह्यंतु कर्मस्वासक्ता भवंत्विति द्वितीयः शापः ॥ २५ ॥ ❀ ❀ सर्वभक्षा भक्ष्याभक्ष्यविचारशून्याः । वृत्त्यै देहादिपोषणाय न तु मोक्षाय धृतानि विद्यातपोव्रतानि यैः । वित्तादिष्वेवारामो रतिर्येषां ते याचकाः संतो विचरंत्विति च शापचतुष्टयम् ॥ २६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अत्र मदन्यः कोपि न युक्तवादी ततोस्यामधार्मिकसंकुलायां न स्थेयमिति कोपेन ततो निर्ययावित्याह–निषिध्यमानः मा गच्छेत्याद्युच्यमानः । हे कौरव्येति । यथा कौरवाणां दुर्योधनादीनां सभातस्त्वं निर्गतस्तानयोग्यान्मत्वेति कुरुभ्यो निर्गतः कौरव्यस्तदभिप्रायेयमिति । 'स निर्गतः कौरवपुण्यलब्धः' इत्युक्तेः ॥ १९ ॥ ❀ ❀ कषायो रागहेतुर्द्रव्यविशेषो गैरिकादिः । इत्यर्थ इति । अतीव कुपित इति भावः । इत्यर्थ इति । स्तुतेर्वाच्यत्वान्निन्दैवावाच्येति भावः । दारुणं दुःसहम् । तेभ्यो द्विजेभ्यः अन्वमोदन् । अभ्युपागमन्सुष्ठु कृतमित्यवोचन्नित्यर्थः ॥ २० ॥ ❀ ❀ पृथग्दृष्टिः स्वस्माद्भिन्नेषु देहापत्यकलत्रादिष्वेव दृष्टिर्यस्य सः परमार्थाद्भगवत्स्वरूपात् ॥ २१ ॥ ❀ ❀ कूटधर्मेषु तुच्छफलप्रदधर्मवत्सु । 'कूटस्तुच्छेऽनृते राशौ' इति कोशात् ॥ २२ ॥ ❀ ❀ अतोऽनात्मज्ञत्वादेव । "बस्तौ निवासे छागे च वस्ते पके च सर्पिषि" इति निरुक्तिः ॥ २३ ॥ ❀ ❀ अतः क्षयिष्णुफलकर्मसु तत्त्वबुद्धित्वादसौ दक्षः ॥ २४ ॥ ❀ ❀ अर्थवादाः स्तुतिनिंदान्यतरप्रतिपादकवाक्यानि । इत्यर्थ इति । प्ररोचकवाक्याधिक्ययुक्ताया इति भावः ॥ २५ ॥ ❀ ❀ सर्वभक्षा इत्येकः । धृतविद्यादिर्द्वितीयः । वित्तारामादिस्तृतीयः । याचका इति चतुर्थः शापः ॥ २६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तादृशदौःशील्यप्रदर्शनार्थं हे कौरव्येति संबोधनम् ॥ १९ ॥ ❀ ❀ कषायवर्णस्य रक्तवर्णत्वात्तत्वेन रूपेण व्यङ्ग्यार्थमाह ,आरक्तेति ॥ २० ॥ ❀ ❀ भगवानयं न भवतीति भेददर्शी ॥ २१ ॥ ❀ ❀ विनष्टा नश्वरकर्मफलासक्तत्वात्

अर्थवादानां प्रशंसामात्रपरत्वेन मुख्यार्थपरत्वाभावात् ॥ २२ ॥ ❀ ❀ बुद्ध्येतिसार्द्धकम् ॥ २३ ॥ ❀ ❀ अयं च वस्तमुखत्वप्रापकः अतः विपरीतबुद्धित्वात् जड एव संसरंत्वित्यर्द्धकम् अनुवर्तते अनुकूलतया निंदति ॥ २४ ॥ ❀ ❀ मनः क्षोभकत्वादिति साधर्म्योद्देशः प्ररोचनेन रुचिजनकेन धर्मविशेषेण अप्सरोभिस्सह विहरिष्याम इत्यादिना उन्मथितः क्षुब्धः द्विजान्प्रति द्वितीयः शापः ॥ २५ ॥ ❀❀ भक्ष्याभक्ष्यविचारशून्या इति तृतीयः । वृत्त्यै धृतविद्येत्यादिविशेषणविशिष्टास्संतः विचरंतु इह शूद्रादीनां गृहे गृहे इति विशिष्टश्चतुर्थः शापः ॥ २६ ॥

### श्रीमद्वीरराघवव्याख्या

हे कौरव्य ! विदुर ! स दक्षः सदस्यमुख्यैः सभ्यश्रेष्ठैर्निषिध्यमानः निवार्यमाणोपि विवृद्धः मन्युः क्रोधो यस्य सः गिरित्राय रुद्राय शापं यज्ञभागानर्हतारूपं विसृज्य तस्मात्सत्रदेशात् बहिर्निर्गत्य स्वीयं निकेतनं गृहं प्रति जगाम ॥ १९ ॥ ❀ ❀ गिरिशानुगानां रुद्रपार्षदानां अग्रणीर्मुख्यः नन्दीश्वरः दक्षविसृष्टं शापं ज्ञात्वा रोष एव कषायस्तेन रूषितः आरक्तनेत्र इत्यर्थः, दक्षाय दारुणं शापं विससर्ज तथा तस्य रुद्रस्यावाच्यतां वचनानर्हतां विनिद्यतां ये च सदस्या द्विजा अन्वमोदन् अभ्यनन्दन् तेभ्यश्च शापं विससर्जेत्यर्थः ॥ २० ॥ ❀ ❀ तत्र दक्षं शपति सार्द्धैस्त्रिभिः । यो दक्षः अज्ञः देवादिविलक्षणात्मज्ञानरहितः अत एव पृथग्दृष्टिरब्रह्मात्मकस्वतंत्रवस्तुदर्शी अप्रतिद्रुहि प्रतिद्रोहमकुर्वति भगवति भगवदंशावताररूपे भवे मर्त्यमुद्दिश्य मरणादि-धर्मभाजमुद्दिश्य केवलनिकृष्टमज्ञात्वेत्यर्थः । द्रुह्यति अपकरोति । एतत् एतस्मात्कारणात् एतमिति पाठे एतं भवं मर्त्यत्वेन ज्ञात्वे-त्यर्थः । स दक्षः तत्त्वतः प्रकृतिपुरुषेश्वरयाथात्म्यात् विमुखः पराङ्मुखः भवेत् तत्त्वत्रयज्ञानरहितो भवेदित्यर्थः । अयं प्रथमः शापः ॥ २१ ॥ ❀ ❀ एवं तत्त्ववैमुख्यरूपशापं विसृज्य तत्कार्यरूपमतात्त्विकलोककर्माभिरुचिरूपं शापं विसृजति गृहेष्विति कूटधर्मेषु अविचाल्यानि कर्माणि येषु प्राकृतगुणसंसर्गाद्दुर्निवार्य्यकर्मस्विति यावत् गृहेषु ग्राम्यसुखेच्छया सांसारिकवैषयिक-सुखेच्छया सक्तः अत एव वेदवादैः अल्पास्थिरफलसाधनानि कर्माणि अनंतस्थिरफलसाधनत्वेन प्ररोचयद्भिः "अपाम सोमममृता अभूम" "अक्षय्यऽह्वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्यादिभिरर्थवादैर्विपन्ना विनष्टा धीर्बुद्धिर्यस्य सः कर्मतंत्रं कर्मकलापं वितनुतां अल्पस्थिरफलसाधनकर्माणि कुर्यादित्यर्थः । अयं द्वितीयः शापः ॥ २२ ॥ ❀ ❀ परो देहादिः तमेवात्मत्वेनाभिध्यातुं शीलमस्यास्तया बुद्ध्या विस्मृता आत्मगतिः जीवात्मपरमात्मयाथात्म्यावगतिर्येन अत एव पशुः पशुतुल्यः अत एवातितरां नितरां स्त्रीकामः स दक्षः अचिरादाशु बस्तमुखः बस्तस्य मेषस्य मुखमिव मुखं यस्य सः अस्तु भवेत् ॥ २३ ॥ ❀ ❀ तथा कर्म-मय्यां कर्मात्मिकायां अविद्यायामियमेव विद्येति तत्त्वविद्येति बुद्धिर्यस्य अत एवासौ दक्षः अजः अजतुल्यः पशुप्रायः अस्तु स्यादिति तृतीयः शापः । अथ रुद्रावमानिनो दक्षानुकूलान् द्विजान् शपति संसरन्त्विति सार्द्धद्वयेन । शर्वं रुद्रं अवमन्यत इति शर्वावमानी तममुं दक्षमनुसृत्य ये च दक्षकृतशापाभिनंदिन इत्यर्थः । ते इह लोके संसरंतु जन्ममरणादिभाजो भवंतु अयं प्रथमः शापः ॥ २४ ॥ ❀ ❀ ये हरद्विषः ते पुष्पिण्याः पुष्पमात्रफलायाः आपातरमणीयाया इत्यर्थः । यद्वा पुष्पवन्मनःक्षोभ-कत्वादर्थवादाः पुष्पशब्देन विवक्षिताः पुष्पिण्यास्तद्बहुलाया इत्यर्थः । अथवा पुष्पगंधवल्लक्षणमात्रोपभोग्यस्वर्गादिसुखप्रकाशिकायाः श्रुतायाः वेदपूर्वभागरूपाया इत्यर्थः । 'यामिमां पुष्पितां वाचमि'त्यादिवत् मध्वा मनःक्षोभकेण भूरिणा मधुगंधेन मधुगन्धतुल्येन स्वर्गादिसुखप्रकाशनेन उन्मथितः क्षोभित आत्मा मनः येषां ते हरद्विषस्ते संमुह्यंतु मोहं प्राप्नुवंतु । नित्यानित्यधर्माधर्मादिषु सर्वत्र विपरीतज्ञाना भवंत्विति द्वितीयः शापः ॥ २५ ॥ ❀ ❀ सर्वभक्षाः सर्वम् अविहिताप्रतिषिद्धनिषिद्धम् भक्षं भक्ष्यं येषां ते हर-द्विषो द्विजा वृत्त्यै केवलशरीरापत्यकलत्रादिपोषणायैव धृतानि विद्यातपोव्रतानि यैस्ते वित्तदेहादिष्वेवारामो रतिर्येषां ते याचकाः संतो विचरंत्विति तृतीयः शापः ॥ २६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ततः किमकारि दक्षेणेति तत्राह निषिध्यमान इति ॥ १९ ॥ ❀ ❀ एवं दक्षेण शापे शिवाय दीयमाने सति कोपि शिवभक्तस्तमसहमानोभूत्किं तत्राह विज्ञायेति । रोषनाम्ना कषायेण वह्निना दूषितः तस्य शिवस्यावाच्यतां दोषलक्षणम् ॥ २० ॥ कोयं शापो दत्त इति तत्राह य एतदिति । एतन् मर्त्यशरीरमद्य श्वो वा नश्वरमुद्दिश्य अप्रतिद्रुहि द्रोग्धारं प्रत्यद्रोहकर्तरि भगवति भक्त्यादिसौभाग्यवति द्रुह्यति वचनादिनेति शेषः । तत्त्वतो यथार्थज्ञानाद्विमुखो बहिर्मुखो भूयादित्यन्वयः ॥ २१ ॥ ❀ ❀ न केवलं बहिष्कृततत्त्वज्ञानः किंतु श्रीनारायणविषयकर्मव्यापारेषु मग्नश्च स्यादित्याह गृहेष्विति । वेदवादेन स्वर्गादिषु पुष्पवादि-वेदवाक्येन विपन्ना नष्टप्राया धीर्यस्य स तथा अत्र तत्त्वज्ञानविषयः शापस्तात्कालिक एव न तु चिरकालीनः विष्णुवाक्यस्यैव चिर-कालीनत्वात् । तदुक्तं 'ये ज्ञानविषयाः शापा मुक्तिगाश्चाधिकारिणाम् । कादाचित्कास्ते भवंति नैव ते सार्वकालिकाः ॥' तेषां ज्ञानस्य मुक्तेश्च तारतम्यस्य चैव हि भगवन्नियतत्वात्तु शापादिर्नात्र कारणमिति ॥ २२ ॥ ❀ ❀ इतोपि तात्कालिक एव शाप इति भावेन दक्षस्य शापविशेषं मुंचति बुद्ध्यति पराभिध्यायिन्या निरन्तरशब्दादिविषयचिन्ताकातरया बुद्ध्या विस्मृतात्मगतिर्विस्मृतपरमात्म-गतिः विस्मृतपरमात्मज्ञानः पशुर्विवेकशून्यः अतितरां स्त्रीकामः स दक्षोऽचिरात् बस्तमुखोऽस्त्वित्यन्वयः ॥ २३ ॥ ❀ ❀

शापांतरं चाह विद्या बुद्धिरिति। अजो दक्षः अविद्यायां विद्याबुद्धिरस्त्विति शेषः। शङ्करद्वेषिणां च शापविशेषमाह संसरंत्विति ॥ २४ ॥ ❀ ❀ संसारे कारणमाह गिरेरिति। पुष्पिण्याः स्वर्गादिपुष्पप्रतिपादिकायाः गर्भीकृतमुक्तिफलायाः कालकूट-निगिरणात् दैत्याख्यपापनिगिरणाच्च गिरिर्मुख्यप्राणस्तेन शिष्यप्रशिष्यादिषु प्रणीतत्वेन व्याख्यातत्वेन च तस्य सुतायाः वेदवाचो भूरिणा बहुलेन मधुगन्धेन विषयसुखलक्षणमकरन्दपरिमलेन मध्ना कामेनान्मथितो विलोडित आत्मा मनो येषां तथोक्तास्ते हरद्विपः सम्मुह्यन्तु। मोक्षफलप्रतिपादकवेदतात्पर्यापरिज्ञानेनात्मनः स्वर्गादिरेव परमश्रेयोस्त्विति विपरीतज्ञानं गच्छंत्वित्यन्वयः। मुह-वैचित्त्य इति धातोर्वैचित्त्यं विपरीतज्ञानं "गिरिः प्राणः समुद्दिष्टस्तत्सुता वेदवाक् स्मृता। पुष्पं स्वर्गादयः प्रोक्ताः फलं मोक्ष उदाहृत" इति वचनात् उक्त एवार्थो नान्य इति। 'अनङ्गो मन्मथोः मन्थाः कामोंगज उदाहृत'इत्यभिधानात् ॥ २५ ॥ ❀ ❀ हरद्विषां शापान्तरमपि विसृजति सर्वभक्षा इति पलांड्वादिसर्वभक्षा वृत्त्यै जीवनाय। न धर्मायेति शेषः ॥ २६ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तदवद्यतामिति चित्सुखः ॥ २० ॥ ❀ ❀ पृथग्दृष्टिः भगवानयं न भवतीति नीचदृष्टिः ॥ २१ ॥ ❀ ❀ वितनुतां वेदेत्यत्र वितनुताद्वेदेति कचित् ॥ २२ ॥ ❀ ❀ बुद्ध्येति सार्द्धकम् ॥ २३ ॥ ❀ ❀ असावज इति कचित् संसरन्त्वित्यर्द्धकम् ॥ २४-२७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अत्र मदन्ये युक्तवादिनः केऽपि न दृश्यन्ते। तदस्यामधार्मिकसंकुलायां सभायां न स्थातुमुचितमिति कोपेन ततो निर्ययावित्याह-निषिध्यमानः मा क्रुध्य मा गच्छेत्याद्युच्यमानः ॥ १९ ॥ ❀ ❀ रोप एव कषायस्तेन दूषितः अतिरक्तनेत्र इत्यर्थः। ये च तस्य गिरिशस्य अवाच्यतां निन्दां अन्वमोदंस्तेभ्योऽपि ॥ २० ॥ ❀ ❀ दक्षं शपति सार्द्धैस्त्रिभिः य इति। एतद्दक्षशरीरं मर्त्यं मरणधर्मकं उद्दिश्य एतदेवाहमित्यभिमानास्पदीकृत्य द्रुह्यति अतोऽज्ञो भवेत्। अज्ञत्वमेव प्रपञ्चयति-पृथग्दृष्टिः स्वतः पृथग्भूतेषु देहापत्यकलत्रादिष्वेव दृष्टिर्यस्य सः। तस्मात्तत्त्वतो भगवतः सकाशात् विमुखो भवेत् इति प्रथमः शापः ॥ २१ ॥ ❀ ❀ वेदेषु ये वादा 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवती'त्यादयस्तैर्विपन्ना धीर्यस्य सः ॥ २२ ॥ ❀ ❀ परो देहादिस्तमेवात्मत्वेनाभितो ध्यातुं शीलं यस्यास्तया बुद्ध्या पशुः पशुतुल्यः स्त्रीकामोऽस्त्विति द्वितीयः शापः। वस्तस्य छागस्य मुखमिव मुखं यस्येति तृतीयः शापः ॥ २३ ॥ ❀ ❀ शापत्रयमिदमस्मै समुचितमेव यतोऽविद्याबुद्धिरित्यादिरतो जडः। अज इति पाठे छागतुल्यः द्विजानपि शपति सार्द्धद्वाभ्याम्। अमुं दक्षं ये चानुवर्त्तन्ते ते संसरन्तु इत्येकः शापः ॥ २४ ॥ ❀ ❀ श्रुतायाः वेदरूपायाः पुष्पिण्याः पुष्पतुल्यार्थवादबहुलायाः मधुगन्धतुल्येन प्ररोचनेन मध्ना मनःक्षोभकेण च उन्मथितः आत्मा मनो येषां ते संमुह्यन्तु कर्मस्वासक्ता भवन्त्विति द्वितीयः ॥ २५ ॥ ❀ ❀ सर्वभक्षाः भक्ष्याभक्ष्यविचारशून्या इति तृतीयः। वृत्त्यै जीविकार्थमेव न तु धर्मार्थमिति चतुर्थः। वित्तेति पञ्चमः। याचका इति षष्ठः ॥ २६-२८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तस्मात्स्थानात् ॥ १९ ॥ ❀ ❀ रोष एव कषायः विकारहेतुस्तेन दूषितो विकृतः। ये द्विजाः तस्य शिवस्याऽवाच्यतां निन्दामन्वमोदन् तेभ्यश्च ॥ २० ॥ ❀ ❀ तत्र दक्षं प्रतिशापमाह य इति सार्द्धैस्त्रिभिः। मर्त्यं देहं पृथगनात्मनि देहे दृष्टिः आत्मबुद्धिर्यस्य सः अप्रतिद्रुहि प्रतिद्रोहरहिते भगवति द्रुह्यति यो दक्षः स तत्त्वतो विमुखो भवेत् तत्त्वप्रावण्यरहितो भवेत् ॥ २१ ॥ ❀ ❀ कूटधर्मेषु कूटाः वञ्चनाबहुलाः धर्मा येषु तेषु गृहेषु कर्मतन्त्रमैहिकामुष्मिकफलकं कर्मपरिकरं तनुतां विस्तारयतु। वेदवादै रोचनार्थाभिः फलश्रुतिभिरक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीत्यादिभिः विपन्ना इष्टार्थाद्विभ्रष्टा धीर्यस्य सः ॥ २२ ॥ ❀ ❀ परं देहादिकमेवात्मत्वादिनाऽभितो ध्यातुं शीलमस्यास्तया विस्मृताऽऽत्मनो-रूपास्योपासकस्वरूपयोर्गतिर्येन स बस्तमुखश्छागवदनः ॥ २३ ॥ ❀ ❀ द्विजान्प्रति शापमाह संसरंत्विति सार्द्धद्वाभ्याम्। शर्वमवमन्यत इति शर्वावमानी तममुं दक्षं य अनु अनुवर्तिनः दक्षोक्तशापाभिनन्दिनः तेऽपि संसरन्तु जन्ममरणाद्यनुभवन्तु ॥ २४ ॥ ❀ ❀ श्रुतायाः श्रुतिरूपायाः पुष्पिण्याः पुष्पलतावद्रुचिजनिकायाः गिरो मधुगन्धेन मधुगन्धवन्मनोहरेण प्ररोचनेन मध्ना मनःक्षोभकेण उन्मथितः आत्मा मनो येषां ते संमुह्यंतु हेयोपादेयविवेकहीना भवन्तु ॥ २५ ॥ ❀ ❀ वृत्त्यै जीविकायै धृतानि विद्यादीनि यैस्ते वित्तादिष्वेवारामो रतिर्येषां ते ॥ २६ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

ततो दक्षेण किं कृतमित्यपेक्षायामाह—निषिध्यमान इति। निन्दाशापयोरननुमतत्वात्सदस्यमुख्यैर्ब्रह्मादिभिः शापदानं निन्दनं च मा कुर्विति निषिध्यमानोपि स दक्षो गिरित्राय शापं विसृज्य दत्त्वा सभ्यवचनानादरेण द्वेषोत्पादनात्तत्र निःशङ्कं स्थातुमशक्तः कलहान्तरशङ्कया हे कौरव्य विदुर तस्मात्स्थानाद्विनिष्क्रम्य निःसृत्य निजं निकेतनं स्वगृहं प्रति जगामेत्यन्वयः। एवं महतां निषेधेऽपि शापदाने प्रबलो हेतुः क्रोध एवेत्याह—विवृद्धमन्युरिति। उक्ताभिप्रायमेतत् ॥ १९ ॥ ❀ ❀ एवं शापं श्रुत्वापि शिवे तथैव तूष्णीं स्थिते तत्सेवको नन्दीश्वरः स्वस्वामिनिराकृतिमसहमानो दक्षाय शापं दत्तवानित्याह—विज्ञायेति। गिरिशस्यानुगानां पार्षदानामग्रणीर्मुख्यः। एतेनान्येषां रुद्रानुगानां कुतो नासहिष्णुता जाता अस्यैव कुतो जातेति शङ्का निराकृता, तस्य मुख्यत्वेनाभिमानाधिक्यात्। अत एव रोषकषायदूषितः रोष एव कषायः कषायवदनिवर्त्यो दोषस्तेन दूषितः देहप्रकम्पोष्ठस्फुरणनेत्ररक्ततादिविकारं प्राप्तः दक्षाय तथा ये च तद्द्विजाः तदवाच्यतां तस्य शिवस्यावाच्यतां निन्दामन्वमोदंस्तेभ्यश्च दारुणं शापं विससर्ज दत्तवानित्यर्थः ॥ २० ॥ ❀ ❀ तदत्र प्रथमं दक्षं शपति—य इति सार्द्धैस्त्रिभिः। यो धर्माध्यक्षत्वेनाभिमानित्वेन वा प्रसिद्धो दक्षः एतन्मर्त्यं मरणधर्मकं स्वशरीरमुद्दिश्य उत्कृष्टं मत्वा भगवति ज्ञानैश्वर्यादियुक्ते सर्वात्मनि अप्रतिद्रुहि द्रुह्यति स तत्त्वतः 'वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्। ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इत्युक्तलक्षणात् फलरूपाद्विमुखः प्रच्युतो भवेत्। अप्रतिद्रुहीति। यो हि कदाचिद् द्रुह्यति तं प्रति द्रोहं करोति स प्रतिद्रोहीति व्यवह्रियते, अयं तु निन्दादिकर्त्तारं समक्षमपि दक्षं न द्रुह्यतीत्यप्रतिध्रुट् तस्मिन्नित्यर्थः। अप्रतिद्रोहित्वे हेतुस्तस्य सर्वात्मत्वमित्याह—भगवतीति। अनेनैवंभूतस्य द्रोहः प्रत्युत स्वापकारायैव भविष्यति नोत्तमफलायेति सूचितम्। ननु कथं तर्हि द्रुह्यतीति चेत्तत्राह—अज्ञ इति। तस्य तत्त्वं सर्वात्मत्वं न जानाति यतोऽतो द्रुह्यत्यन्यथा द्रोहं न कुर्यादिति भावः। अज्ञत्वे हेतुमाह—पृथग्दृष्टिरिति। यतोऽहं भिन्नः शिवो भिन्न इति पश्यत्यतोऽज्ञस्तस्य सर्वात्मकत्वादिति भावः ॥ २१ ॥ ❀ ❀ सत्सङ्गादिना कदाचिद्वैराग्यादिसाधनसम्पत्त्या फलप्राप्तिः स्यादित्याशङ्क्य तन्निरासार्थं साधनहानिकरान् शापानाह—गृहेष्वित्यादिसार्द्धाभ्याम्। ग्राम्यसुखेच्छया गृहेषु सक्तो वेदवादविपन्नधीः सन् कर्मतन्त्रं कर्मपरिकरं वितनुतां विस्तारयत्वित्यन्वयः। ननु गृहस्याप्याश्रमविशेषत्वेन विहितत्वात् किमिति तन्निन्दा घटते तत्राह—कूटधर्मेष्विति। यद्यपि गृहाश्रमो विहितस्तथापि तत्र कूटाः कापट्यप्रधानाः स्वभावसिद्धा धर्मा बहवः सन्तीति निन्द्य इति भावः। तथा वैषयिकसुखेच्छया 'जितेन्द्रियस्य गृहाश्रमः किं नु करोत्यवद्यमि'ति वचनात्को दोषस्तत्राह—सक्त इति। ननु गृहासक्तस्यापि भगवदर्पितकर्मणा भगवत्कृपया फलं स्यादेव तत्राह—ग्राम्यसुखेच्छयेति। ननु वेदार्थज्ञानवानयं कथमेवं कुर्यात्तत्राह—वेदवादविपन्नधीरिति। वेदः कर्मप्रतिपादकः शब्दराशिस्तत्र यो वादः स्वपक्षस्थापनपरपक्षोत्थापनप्रयोजकः 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवती'त्यादिस्तुतिप्रयोजको वा वागाडम्बरस्तेन विपन्ना कर्मणो भगवदाराधनतात्पर्यत्वेन तद्ग्रहणेऽसमर्था धीर्यस्य सः। तथाच कर्मरतत्वेन सत्सङ्गादाववकाशो मास्त्विति भावः। वितनुते इति पाठे त्वनुवादमात्रं न शापः ॥ २२ ॥ ❀ ❀ शापान्तरमाह—बुद्ध्येति। आत्मनः सकाशात्परं भिन्नं क्षयिष्णु स्वर्गादिफलकं कर्माभिध्यातुं शीलमस्याः तया, यद्वा परो देहादिस्तमेवात्मत्वेनाभितो ध्यातुं शीलं यस्यास्तया बुद्ध्या विस्मृता आत्मनः स्वस्य गतिः परमपुरुषार्थोपयोगि ज्ञानं येन सः। यद्वा आत्मनः परमात्मनो गतिर्ज्ञानं यद्वा आत्मनः स्वस्य गतिः गम्यते इति गतिः परमपुरुषार्थो भगवान् अत एव पशुः पुरुषार्थविमुखत्वात्पशुतुल्य एव। पशुत्वे हेत्वन्तरमाह—नितरां स्त्रीकाम इति। य एवंभूतो दक्षः सोऽचिरात् अल्पकालेनैव बस्तमुखोऽस्त्विति। कामोतोऽस्त्वतितरामिति पाठान्तरं शापान्तरं चेति केचित् ॥२३॥ ❀ ❀ बस्तमुखयोग्यतायां हेतुत्वेन विशेषणान्तरमाह—विद्येति। यतोऽसौ जड एवातो बस्तमुखोऽस्त्विति पूर्वेणान्वयः। जडत्वे हेतुः—यतः कर्ममय्यां कर्मप्रचुरायां वेदत्रय्यां देहात्मभावपोषकत्वेनाविद्यायामेव विद्या बुद्धिर्यस्य तादृशोऽतः यद्वाऽविद्यायां विद्याबुद्धिरसौ जड एवास्त्विति शापान्तरम्। एवं दक्षाय शापं दत्त्वा तदनुसारिणो ये ब्राह्मणास्तेषामपि धर्मसम्बन्धाभावो यज्ञे रुद्रभागप्रतिबन्धाद्दक्षेणैव सम्पादितस्तं विना यज्ञस्य विकलाङ्गत्वेन धर्माजनकत्वात्प्रत्युताधर्मजनकत्वेनानर्थहेतुत्वाच्चात एव दक्षयज्ञेऽनर्थो भवितेति सिद्धमेवार्थं शापव्याजेन स्फुटमनुवदति—संसरन्त्विहेत्यादिसार्द्धाभ्याम्। ये च शर्वावमानिनममुं दक्षमनुवृत्तास्ते सर्वे इह संसारे संसरन्तु अहंममाभिमानेन दक्षवत्तत्त्वविमुखाः पशुपुत्रादिपोषणपराः सन्त इह जन्ममरणादिक्लेशानेवानुभवन्त्वित्यर्थः ॥ २४ ॥ ❀ ❀ ननु वेदनिष्ठानां ब्राह्मणानां तदर्थज्ञानादेवाहंताममताराहित्येन पशुपुत्रादिलौकिकासक्तिविरहात्तेषां कथं संसृतिरित्याशङ्क्य तेषां वेदे कृतश्रमाणामपि तत्तात्पर्यज्ञानं मा भवत्वित्याह—गिर इति। गुरुमुखाच्छ्रुताया वेदरूपाया गिरो मधुगन्धेनोन्मथितात्मानः सन्तो हरद्विषः संमुह्यन्त्विति सम्बन्धः। किंलक्षणाया गिरस्तत्राह—पुष्पिण्या इति। यथा वृक्षेषु पुष्पदर्शनेन फलाशा भवति तथा। 'अपाम सोमममृता बभूविम' इत्यादिनानाप्रकारककामनोद्देशेन प्रवृत्तवाणीदर्शनेप्यतः सा पुष्पिणीत्युच्यते, तस्या गिरः सम्बन्धी यो मधुगन्धस्तद्वन्मादकत्वेन चित्तविक्षेपकस्तत्तत्फलवासनाविशेषस्तेन मध्ना चित्तक्षोभकेणोन्मथितः विक्षिप्तः आत्मा चित्तं येषां ते तथाभूताः सन्तो हरद्विषो भवद्वेषिणः संमुह्यन्तु। भगवदाराधने कर्मकाण्डस्य तात्पर्यं न तु यथाश्रुतफले, फलवचनस्य चित्तप्ररोचनद्वारा प्रवृत्त्यर्थकत्वात्। तत्रैवावस्थायां भगवत्प्रसादा-

भावेन परमफललाभादिति वेदरहस्यं मा जानन्त्वित्यर्थः ॥ २५ ॥ ❀ ❀ हरद्वेषिणां ब्राह्मणानां शापान्तरमाह—सर्वभक्षा इति। भक्षणे निषिद्धानिषिद्धविचाररहितत्वेन रसनावशवर्त्तितया सर्वं भक्षयन्ति ते सर्वभक्षाः तथा वित्तेषु देहेन्द्रियेषु च अहन्तया ममतया च आरमन्ति ते वित्तदेहेन्द्रियारामाः तथा वृत्त्यै जीविकार्थमेव धृतानि विद्यातपोव्रतानि यैस्ते याचका याचनस्वभावाः हरद्विषो द्विजा एवंभूताः सन्त इह संसारे विचरन्त्वित्यन्वयः। भक्षणस्य सर्वजनीनत्वेन न दोषत्वमत आह—सर्वेति। विद्यादीनां श्रेयःसाधनत्वात्तद्धारणे न दोषः। अत आह—वृत्त्यर्थधारणे चित्तशुद्ध्यादिपरमफलाभावात्तेषां व्यर्थत्वमिति भावः। याञ्चाया अपि देहनिर्वाहकत्वान्न दोषत्वमत आह—वित्तेति। देहनिर्वाहार्थयाञ्चा या निर्दुष्टत्वेऽपि वित्तार्जनार्थाया इन्द्रिय-लालनार्थायाश्च तेजोहानिकरत्वाद्दुष्टत्वमेवेति भावः। तथाच सर्वथा विषयासक्तत्वेन चित्तशुद्धिर्वैराग्यं भक्तिर्ज्ञानं वा मा भवतु संसारदुःखमेवानुभवन्त्विति तात्पर्यम् ॥ २६ ॥

## भाषानुवादः

उपस्थित मुख्य-मुख्य सभासदोंने उन्हें बहुत मना किया, परन्तु उन्होंने किसीकी न सुनी; महादेवजीको शाप दे ही दिया। फिर वे अत्यन्त क्रोधित हो उस सभा से निकलकर अपने घर चले गये ॥ १९ ॥ ❀ ❀ जब श्रीशङ्करजी के अनुयायियों में अग्रगण्य नन्दीश्वर को मालूम हुआ कि दक्षने शाप दिया है, तो वे क्रोध से तमतमा उठे और उन्होंने दक्ष तथा उन ब्राह्मणोंको, जिन्होंने दक्षके दुर्वचनों का अनुमोदन किया था, बड़ा भयङ्कर शाप दिया ॥ २० ॥ ❀ ❀ वे बोले—"जो इस मरण-धर्मा शरीरमें ही अभिमान करके किसीसे भी द्रोह न करनेवाले भगवान् शङ्करसे द्वेष करता है वह भेद-बुद्धिवाला मूर्ख दक्ष तत्त्वज्ञानसे विमुख ही रहे ॥ २१ ॥ ❀ ❀ यह 'चातुर्मास्य-यज्ञ करनेवालेको अक्षय पुण्य प्राप्त होता है' आदि अर्थवादरूप वेदवाक्योंसे मोहित एवं विवेकभ्रष्ट होकर विषयसुखकी इच्छासे कपटधर्ममय गृहस्थाश्रम में आसक्त रहकर कर्म-काण्डमें ही लगा रहता है। इसकी बुद्धि देहादिमें आत्मभाव का चिन्तन करनेवाली है; उसके द्वारा इसने आत्मस्वरूपको भुला दिया है; यह साक्षात् पशुके ही समान है, अतः अत्यन्त स्त्रीलम्पट हो और शीघ्र ही इसका मुंह बकरेका हो जाय ॥ २२-२३ ॥ ❀ ❀ यह मूर्ख कर्ममयी अविद्याको ही विद्या समझता है; इसलिए यह और जो लोग भगवान् शङ्करका अपमान करनेवाले इस दुष्टके पीछे-पीछे चलनेवाले हैं, वे सभी जन्म-मरणरूप संसारचक्रमें पड़े रहें ॥ २४ ॥ ❀ ❀ वेद-वाणीरूप लता फलश्रुतिरूप पुष्पोंसे सुशोभित है, उसके कर्मफलरूप मनमोहक गन्ध से इनके चित्त क्षुब्ध हो रहे हैं। इससे ये शङ्करद्रोही कर्मोंके जालमें ही फँसे रहें ॥ २५ ॥ ❀ ❀ ये ब्राह्मणलोग भक्ष्याभक्ष्यके विचारको छोड़कर केवल पेट पालनेके लिये ही विद्या, तप और व्रतादिका आश्रय लें तथा धन, शरीर और इन्द्रियों के सुखको ही सुख मानकर—उन्हींके गुलाम बनकर दुनियामें भीख माँगते भटका करें" ॥ २६ ॥

तस्यैवं [1]वदतः शापं श्रुत्वा द्विजकुलाय वै। भृगुः प्रत्यसृजच्छापं ब्रह्मदण्डं दुरत्ययम् ॥ २७ ॥
भवव्रतधरा ये च ये च तान् समनुव्रताः। पाखण्डिनस्ते भवन्तु सच्छास्त्रपरिपन्थिनः ॥ २८ ॥
नष्टशौचा मूढधियो जटाभस्मास्थिधारिणः। विशन्तु शिवदीक्षायां यत्र दैवं सुरासवम् ॥ २९ ॥
ब्रह्म च ब्राह्मणांश्चैव यद्यूयं परिनिन्दथ। सेतुं विधारणं पुंसामतः पाखण्डमाश्रिताः ॥ ३० ॥
एष एव हि लोकानां शिवः पन्थाः सनातनः। यं पूर्वे चानुसंतस्थुर्यत्प्रमाणं जनार्दनः ॥ ३१ ॥
तद्ब्रह्म परमं शुद्धं सतां वर्त्म सनातनम्। विगर्ह्य यात पाषण्डं दैवं वो यत्र भूतराट् ॥ ३२ ॥

## मैत्रेय उवाच

तस्यैवं वदतः शापं भृगोः स भगवान् भवः। निश्चक्राम ततः किञ्चिद्विमना इव सानुगः ॥ ३३ ॥
तेऽपि विश्वसृजः सत्रं सहस्रपरिवत्सरान्। संविधाय महेष्वास यत्रेज्य ऋषभो हरिः ॥ ३४ ॥
आप्लुत्यावभृथं यत्र गङ्गा यमुनयान्विता। विरजेनात्मना सर्वे स्वं स्वं धाम ययुस्ततः ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे दक्षशापो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

१. प्रा० पा०—वदतः।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

तस्य प्रत्यसृजत्प्रत्यदात् । शापरूपं ब्रह्मदंडम् ॥ २७ ॥ ❀ ❀ सच्छास्त्रस्य परिपंथिनः प्रतिकूलाः ॥ २८ ॥ ❀ ❀ सुरा गौडी पैष्टी माध्वी च । आसवं तालादिसंभवं मद्यम् । द्वंद्वैक्यात्षंढत्वम् । तद्यत्र दैवं पूज्यं देवतावदादरणीयमिति वा ॥ २९ ॥ ❀ ❀ ब्रह्म वेदम् । कथंभूतम् । सेतुं मर्यादारूपम् । तदेवाह । पुंसां वर्णाश्रमाचारवतां विधारणं धारकम् ॥ ३० ॥ ❀ ❀ सेतुत्वं प्रपंचयति द्वाभ्याम् । एष शिवः पंथा यतो यं पूर्वे ऋषयोऽनुसंतस्थुराश्रितवंतः । यद्यस्मिन् जनार्दनः प्रमाणं मूलम् ॥ ३१ ॥ ❀ ❀ भूतराड् भूतानां तामसानां पतिः एवं तस्य वदतः सतः ॥ ३२ ॥ ❀ ❀ अन्योन्यशापेनोभयोर्नाशाद्विमना इवेति । तथापि भगवदनुगृहीतानां नाशो न स्यादिति भावः ॥ ३३ ॥ ❀ ❀ ऋषभः सर्वश्रेष्ठो हरिर्यत्र ईज्यः पूज्यस्तत्सत्रं सम्यग्विधाय । हे महेष्वास विदुर ॥ ३४ ॥ ❀ ❀ यत्र प्रयागेऽन्विता, तत्रावभृथस्नानं कृत्वा ततः स्थानाद्ययुः ॥ ३५ ॥

इति चतुर्थे टीकायां द्वितीयोऽध्यायः ॥ २ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ब्राह्मणानामिदमेवायुधमिति द्योतनाय ब्रह्मदंडमित्युक्तं "वाग्वज्रा मुनयः किल" इति न्यायेन दुरत्ययमपाकर्तुमशक्यम् ॥ २७ ॥ ❀ ❀ भवस्य व्रतं नियमो जटाभस्मास्थ्यादिधारणं तद्धारिणो ये पाशुपता ये च तदनुयायिनस्ते सर्वे सच्छास्त्रं वेदस्तत्परिपंथिनस्तद्विमुखाः संतः पाखंडिनस्तन्निन्दकाः संत्विति ॥ २८ ॥ ❀ ❀ मद्यादिपूजा त्वप्रसिद्धेति चेदाह—देवतावदिति । यद्वा । देवेभ्यो देयं दैवमिति । यद्वा । असूनां तर्पकमासवं सुरासवं नैवेद्यस्थानापन्नमुपलक्षणं चैतन्मांसस्य । शिवदीक्षायां चांडालादिजन्मनामपि "प्रवृत्ते शांभवे यागे नराः सर्वे द्विजोत्तमाः । स्युस्तत्र शंका नो कार्या स्पर्शने भोजनादिषु ॥" इति "सर्वं वस्तु पवित्रं स्यात्सर्वा भोग्याः स्त्रियस्तदा" इत्यादिना विप्रत्वकारणलक्षणायाम् ॥ २९ ॥ ❀ ❀ गिरः श्रुताया इत्यादिना वेदं, सर्वभक्षा इत्यादिशापमिषेण ब्राह्मणांश्च । तदेव सेतुत्वमेव । अतो ब्रह्मब्राह्मणनिंदनात् । "पालनात्सर्वधर्माणां पाशब्देन त्रयी मता । तां खंडयति यो मोहात्पाखंडः स प्रकीर्त्तितः ॥" इत्युक्तलक्षणं पाखंडम् ॥ ३० ॥ ❀ ❀ मूलं स एवात्र साक्षी प्रष्टव्य इति भावः । तीर्थस्तु—यद्यस्य प्रमाणं सम्यग्वक्ता । "प्रमाणं बोधनेयत्तामर्यादाशास्त्रहेतुषु । सम्यग्वक्तरि वाथ स्यात्प्रमाणं मरणे गतौ ॥" इति यादवः ॥ ३१ ॥ ❀ ❀ यत्र पाखंडमार्गे वो युष्माकम् । विश्वनाथस्तु—वेदनिन्दायाः फलमिदं भाव्यमेव मदभिशापश्च पिष्टपेष इवेति भावः । भूतानां राजा भूत एवेति निन्दा, भूतेषु सर्वप्राणिषु राजत इति स्तुतिः ॥ ३२ ॥ ❀❀ इति भाव इति । 'न मे भक्तः प्रणश्यति' इति श्रीगीतोक्तेः । 'यत्प्रमाणं जनार्दनः' इति श्रुत्वा कदाचिज्जनार्दनं तद्भक्तांश्च प्रति किमप्यवद्यं क्रोधादेव नंदीश्वरो वदेदिति शंकमानो भवस्ततो निष्क्रांत इत्याह—तस्यैवमिति विमना इवेति । वस्तुतस्त्वात्मारामत्वान्न विमनास्तेन द्वयोः शापाभ्यां कर्मशैवमार्गौ परिहृत्य वैष्णवमार्ग एव शुद्धत्वेन ग्राह्य इह प्रकरणव्यंग्यं वस्त्वेतदेवेति तात्पर्यम् ॥ ३३ ॥ ❀ ❀ एवं विवादेपि सत्रांतरायो नाभूदित्याह—तेपीति । सानुगदक्षरुद्रौ विनापि सत्रं संविधाय ययुर्न च तद्विरोधजन्यः कोपि विघ्नोऽभूत्तत्र हेतुः—यत्र हरिरेवेज्यानामृषभ इति । संध्यभावस्त्वार्षः । महेष्वासेति । यथा त्वां महेष्वासं विनैव भारतयुद्धमभूत्तथा पिनाकपाणिं विनापि यागोऽभूदित्यभिप्राया संबुद्धिः ॥ ३४ ॥ ❀ ❀ अस्यैव कर्मणः स्वाभीष्टदत्त्वादिदं समाप्य न कर्मांतरं तैरारब्धम् । किं तु स्वगृहगमनमेवानुष्ठितमित्याह स्वं स्वमिति ॥ ३६ ॥

इति श्रीमद्भागवतदीपिकाप्रकाशे चतुर्थस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

द्विजकुलाय द्विजकुलमुद्दिश्य ॥ २७ ॥ ❀ ❀ भवव्रतं चेदं वेदविहितं पूर्वमेवासीत् इदानीं शापात्तत्र पाषंडित्वं विधीयते । अन्यथा पूर्वत एव पापंडित्वे पुनस्तद्विधानाऽसम्भवः ॥ २८ ॥ ❀ ❀ धारकं नियामकम् ॥ ३० ॥ ❀ ❀ जनार्दनः प्रमाणं मूलमित्युक्त्या जनार्दनं मूलममत्वाऽस्वतंत्रोपासनायां भृगुशापो दुरत्ययः 'वैष्णवानां यथा शंभुरि'त्यादिवचनबलेन तस्य वैष्णवतमत्वात्तद्व्रताचरणस्य भगवत्तोषहेतुत्वे शापोप्यकिंचित्कर एव स्यात् 'यत्प्रामाणं जनार्दन' इति तेनैवोक्तत्त्वादिति ज्ञेयम् । यतः शिवनिन्दायां तु नरक एव श्रूयते 'यो मां भजति सर्वत्र एकांतं भावमाश्रितः । विनिंदन् देवमीशानं स याति नरकं ध्रुवमि'ति ॥ ३१ ॥ ❀ ❀ यत्र पाषण्डे ॥ ३२ ॥ ❀ ❀ शापं ददतस्सतः ततो यज्ञसभातः नाशो न स्याद्यतः द्वयोः शापाभ्यां कर्मशैवमार्गौ परिहृतौ श्रीवैष्णवमार्गस्तु शुद्धत्वेन स्थापित एवेति ॥ ३३ ॥ ❀ ❀ तेपीति युग्मकम् । अवभृथस्नानं यज्ञानन्तरस्नानम् ॥ ३४–३६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे दीपिकादीपिन्याख्यायां टिप्पण्यां द्वितीयोऽध्यायः ॥

## श्रीमद्वीरराघवव्याख्या

एवं शपंतं नंदीश्वरमालक्ष्य भृगुः प्रत्यशपदित्याह-मैत्रेयः तस्य नंदीश्वरस्य ब्रह्मकुलायैवमुक्तरीत्या शापं ब्रुवतः सतस्तं शापं श्रुत्वा भृगुर्दुरत्ययं दुरतिक्रमं ब्रह्मदण्डं ब्रह्मदंडकल्पं शापं प्रत्यसृजत् प्रत्यदात् ॥ २७ ॥ ❀ ❀ तमेवाह भवेति भवस्य रुद्रस्य व्रतं पिशाचचर्य्यादिकं तद्ये धरंति ये च भवव्रतधरानतुव्रताः अनुसरंतः ते सर्वे पाषंडिनो वेदविरुद्धकर्मानिष्ठाः सच्छास्त्राणां भगवच्छास्त्राणां पंचरात्रादीनां परिपंथिनः प्रतिकूला भवेयुः ॥ २८ ॥ ❀ ❀ पाषंडित्वमेव विशदयति नष्टशौचा इति। नष्टशौचा दुराचाराः मूढधियः परावरतत्त्वज्ञानरहिताः जटादिधारिणः शिवदीक्षायां "मुद्रिकाषट्कतत्त्वज्ञः परमुद्राविशारदः। भगासनस्थस्तन्मानं ध्यात्वा निर्वाणमृच्छति" इत्याद्युक्तविधशिवदीक्षायां प्रविशन्तो यत्र दीक्षायां सुरा पैष्टी आसवं तालादिसंभवं मद्यं द्वंद्वैक्यात् क्लीवत्वं तद्दैवं दैवमिव पूज्यं सुराकुंभस्थापनतत्स्थदेवपूजादेः शैवागमादिष्वभिधानादेवमुक्तम् ॥ २९ ॥ ❀ ❀ भवतामयं शापोऽनुरूप एवेति वदन् तमेव प्रथयति ब्रह्म चेति। यतो यूयं पाषंडं धर्ममाश्रिता यत् यस्माच्च पुंसां वर्णाश्रमवतां सेतुं स्वर्गापवर्गसाधनयज्ञोपासनादिप्रकाशनेन पुरुषार्थप्रापकं मर्य्यादारूपं वा विधारणंमाता पितृसहस्रवद्धितोपदेशादिना विशेषधारकं प्रवर्तकमिति यावत् एवंभूतं ब्रह्म वेदं ब्राह्मणांश्च परिनिंदथ परिनिंदितवंतः ततो विगर्ह्यं पाषंडं यातेत्युत्तरत्रान्वयः ॥ ३० ॥ ❀ ❀ वेदस्य सेतुत्वविधारणत्वे प्रपंचयति एष इति। एष एव वेद एव लोकानां वर्णाश्रमवतां शिवः सुखकरः पंथाः स्वप्रकाश्ययज्ञोपासनादिद्वारा स्वर्गापवर्गोपायः सनातनः अनादिनिधनः 'अनादिधना ह्येषा वागुत्सृष्टा स्वयंभुवे'त्युक्तत्वात्। यं वेदं तदुक्तयज्ञोपासनादिरूपधर्ममित्यर्थः पूर्वे च सात्त्विका ऋषयः चकारादपरे च अनुसंतस्थुः अनुष्ठितवंतः। अनेन शिष्टपरिग्रहकथनेन शैवागमानां तद्वैपरीत्यमावेदितं जनार्दनो भगवान् यदेव वेदाख्यं ब्रह्म प्रमाणं यस्य सः आर्षत्वात् क्लीवत्वं वेदाः प्रमाणमितिवद्विधेयप्रामाण्यापेक्षया। अनेन ब्रह्मणोपि शास्त्रयोनित्वकथनेन सर्वापि श्रेयःसंपत्तिर्वेदाधीनेत्युक्तम्। यद्वा यस्मिन् वेदे जनार्दनः प्रमाणं मूलं कारणमिति यावत् 'तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेद' इति श्रुतेः। अनेनापौरुषेयत्वकथनेन पौरुषेयत्वप्रयुक्तभ्रमविप्रलंभादिदोषराहित्यसिद्धिः, शैवागमानां पौरुषेयत्वं तत्प्रयुक्तदोषवत्त्वं च सूचितम् ॥ ३१ ॥ ❀ ❀ तत्तस्मात् परमं निरतिशयश्रेयःसाधनप्रकाशकत्वेन सर्वोत्कृष्टं शुद्धमपौरुषेयं सनातनं सतां वर्त्म ब्रह्म वेदं विगर्ह्य विगर्हणाद्धेतोरित्यर्थः, पाषंडं पाषण्डधर्मं यात प्राप्नुत। पाषंडधर्म एव निष्ठावंतो भवतेत्यर्थः। यत्र यस्मिन् पाषंडे वः युष्माकं भूतानां तामसानां पतिः रुद्रो दैवम् ॥ ३२ ॥ ❀ ❀ अथ शापप्रतिशापौ निगमयन् अनंतरकथां प्रस्तौति मैत्रेयः। हे साधो! यस्य भृगोः एवं वदतः सतः भगवान् भवो रुद्रः सानुगः सभृत्यः किंचिद्विमना इव इवशब्देन वस्तुतः समदर्शित्वात् वैमनस्याभावः सूच्यते ततः यज्ञभूमेर्निश्चक्राम निष्क्रान्तवान् ॥ ३३ ॥ ❀ ❀ हे महेष्वास! विदुर! यत्र यस्मिन् सत्रे ऋषभः पुरुषोत्तमो हरिरीज्यः आराधनीयः तद्विश्वसृजां सत्रं सहस्रपरिवत्सरपर्यंतं अनुष्ठेयं संविधाय अनुष्ठाय तेपि भृग्वादयः ॥ ३४ ॥ ❀ ❀ यत्र प्रदेशे गंगा यमुनया सहान्विता युक्ता तत्रावभृथं स्नानं आप्लुत्य कृत्वा ततः स्वं स्वं धाम स्थानं ययुः प्रापुः ॥ ३५ ॥

इति श्रीमद्वीरराघवाचार्य्यकृतायां श्रीभागवतचंद्रचंद्रिकायां चतुर्थे स्कन्धे द्वितीयोऽध्यायः ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ब्राह्मणकुलाय दीयमानं शापं श्रुत्वापि भीत्या कश्चित्प्रतिशापदानसमर्थो नाभूदिति तत्राह़ी तस्यैवमिति। ब्राह्मणानासिदमेवायुधं नान्यदिति द्योतनाय ब्रह्मदंडमित्युक्तम् ॥ २७-२८ ॥ ❀ ❀ शिवदीक्षायां चांडालादिजन्मनां विप्रत्वकारणलक्षणायां सुरयासूनां तर्पणं यस्मिंस्तथोक्तं यद्वा सुरा नाम नारिकेलादिपुष्पसंभवं मधूकपुष्पादिसंभवमासवं वा ॥ २९ ॥ ❀ ❀ तीव्रशापप्रदाने निमित्तं वक्ति ब्रह्मेति। विशेषेण धारयत्याश्रितानिति विधारणम् ॥ ३० ॥ ❀ ❀ सेतुं विशिनष्टि एष इति। यस्य प्रमाणं सम्यग्वक्ता। 'प्रमाणं बोधनेऽत्यंतमर्यादाशास्त्रहेतुषु। सम्यग्वक्तरि वा यः स्यात्प्रमाणं मरणे गतावि'ति यादवः ॥ ३१ ॥ ❀ ❀ ब्रह्म वेदं भूतराड् भैरवः ॥ ३२ ॥ ❀ ❀ स्वाऽपमानं श्रुत्वापि महतां महत्त्वविरोधिविकारो न युक्त इति भावेन तस्य हरस्य ततो निर्गमनं च वक्ति तस्यैवमिति ॥ ३३ ॥ ❀ ❀ एवं विवादेपि सत्रस्यांतरायो नाभूदित्याह तेपीति। अंतरायानुत्पादे निमित्तमाह यत्रेति ॥ ३४ ॥ ❀ ❀ यत्र गंगा भागीरथी यमुनयान्विता संगता तत्र प्रयाग इति शेषः। अस्यैव कर्मणः स्वाभीष्टफलप्राप्तिहेतुत्वादिदं समाप्य न कर्मांतरं प्रारब्धं तैः किंतु स्वगृहगमनमेवानुष्ठितमित्याह विरजेनेति। कर्मणा निर्मलेनांतःकरणेन युक्ता इति शेषः ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे श्रीविजयध्वजतीर्थकृतपदरत्नावल्यां द्वितीयोऽध्यायः ॥ २ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

भवव्रतेति। वेदविहितमेवात्र भवव्रतमनूद्यते अन्यविहितत्वे पाषण्डित्वविधानायोगः स्यात्। पूर्वत एव पाषण्डित्वं सिद्धमेव विवृणोति सच्छास्त्रेत्यादिना पाषण्डमाश्रिता इत्यन्तेन ॥ २८-३० ॥ ❀ ❀ तस्मात् 'स्वतन्त्रत्वेनोपासनायामयं

दोषो यतश्च जनार्दनस्यैव वेदमूलत्वमाह एष इति । स एव वेदलक्षणः यत् प्रमाणं यत्र मूलमित्यर्थः । स्वतन्त्रोपासानायां तत्प्राप्तिः श्रीगीतोपनिषत्स्वेव निषिद्धा । यथा 'येऽप्यन्यदेवताभक्ता' इत्यादिभिः । अन्यदेवाऽवज्ञा च निषिद्धा । यथा गौतमीये 'गोपालं पूजयेद्यस्तु निन्दयेदन्यदेवताम् । अस्तु तावत् परो धर्मः पूर्वधर्मो विनश्यति ॥' 'हयशीर्षा मां पथि देवहेलनादि'ति श्रीनारायण-वर्मणि तदागःप्रायश्चित्तं श्रीशिवावज्ञादौ तु नन्दीश्वरशापश्च विशेषतः संसरन्त्विहेत्यादि दर्शयिष्यते च चित्रकेतुचरिते ॥ ३१-३२ ॥ ❀ ❀ ततश्च नन्दीश्वरस्य क्रोधावेशं दृष्ट्वा कदाचित् श्रीजनार्दनं तदुपासकांश्च प्रत्यवद्यं वदेदिति शंकमानः श्रीशिवः सानुग एव निष्क्रांत इत्याह तस्यैवमिति । विमना इवेति ननु विमना इत्यर्थः, आत्मारामत्वात् । तदेवं द्वयोः शापाभ्यां कर्मशैवमार्गौ परिहृत्य श्रीवैष्णवमार्ग एव शुद्धत्वेन स्थापितः । प्रकरणेऽस्मिन् विशेषजिज्ञासायां भक्तिसन्दर्भो दृश्यः ॥ ३३ ॥ ❀ ❀ तेऽपीति युग्मकम् ॥ ३४-३५ ॥

श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे द्वितीयोऽध्यायः ॥ २ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

सुरा गोडी पैष्टी माध्वी च । आसवस्तालादिसम्भवं मद्यं तयोर्द्वन्द्वैक्यात् षण्ढत्वम् । तदेव यत्र दैवं देवतावदादरणीयम् ॥ २९ ॥ ❀ ❀ ब्रह्म वेदं वेदप्रवर्त्तकान् ब्राह्मणांश्च कीदृशं सन्मार्गे चलतां पुंसां विधारणं धारकं सेतुम् ॥ ३० ॥ ❀ ❀ वेदनिन्दका यूयं कुपथगामिन एवेत्याह एष वेदलक्षणः । यत् यत्र प्रमाणमिति स एवात्र साक्षी प्रष्टव्य इति भावः ॥ ३१ ॥ ❀ ❀ विगर्ह्येति । वेदनिन्दायाः फलमिदं भवद्भिः प्राप्तव्यमेव मदभिशापस्तु पिष्टपेष इवेति भावः । भूतराट् भूतानां राजा भूत एवेति निन्दा । भूतेषु सर्वप्राणिषु राजत इति स्तुतिः ॥ ३२ ॥ ❀ ❀ 'यत्प्रमाणं जनार्दनः' इति श्रुत्वा कदाचिज्जनार्दनं तद्भक्तांश्च प्रति किमप्यवद्यं क्रोधादेव नन्दीश्वरो वदेदिति शंकमानो भवस्ततो निष्क्रान्त इत्याह तस्यैवमिति विमना इवेति । वस्तुत-स्त्वात्मारामत्वान्न विमनाः । तेन द्वयोः नन्दीश्वरभृग्वोः शापग्रस्तान् कर्ममार्गान् शैवांश्च परिहृत्य वैष्णवा एव सुधीभिराश्रयणीया इति प्रकरणव्यंग्यं वस्तु ज्ञेयम् ॥ ३३ ॥ ❀ ❀ तेऽपि रुद्रदक्षौ सगणौ विनैव सत्रं संविधाय ययुः । न च तद्विरोधजन्यः कोऽपि विघ्नो बभूवेत्याह यत्र हरिरेव इज्यानां ऋषभ इति । रुद्रादियजनं विनापि यज्ञपूर्त्यभावो नाभूदिति भावः ॥ ३४-३५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । चतुर्थेऽस्मिन् द्वितीयोऽयं सङ्गतः सङ्गतः सताम् ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

द्विजकुलाय शापं ददतः श्रुत्वा वचनमिति शेषः । शापं शापरूपं ब्रह्मदंडं प्रत्यसृजत् प्रत्यदात् ॥ २७ ॥ ❀ ❀ सच्छास्त्रस्य विधिनिषेधरूपस्य परिपंथिनः प्रतिकूलाः संतः पाषंडिनः स्वेच्छाचारिणो भवन्तु ॥ २८ ॥ ❀ ❀ यत्र यस्यां पाशुपता-द्यागमप्रसिद्धायां शिवदीक्षायां सुरा गौडी पैष्टी माध्वी च आसवस्तालादिरसस्तयोर्द्वन्द्वैक्यात् षंढत्वम् दैववदादरणीयं तस्यां विशंतु ॥ २९ ॥ ❀ ❀ अहं त्वत्र निमित्तमात्रमित्याह ब्रह्मेति । यद्यस्मात् सेतुं पुरुषार्थचतुष्टयप्रतिपादनावधिभूतम् अत एव पुंसां तत्तदधिकारिणां विधारणं तत्तदनुरूपपुरुषार्थबोधकत्वेन धारकम् । ब्रह्म वेदम् । ब्राह्मणान् तद्रक्षकांश्च परिनिंदथ निंदितवंतः । अतः स्वयमेव पाषंडमाश्रिताः ॥ ३० ॥ ❀ ❀ अतोऽहमप्यनुमोदयामि केवलं न तु शापं ददामीत्याशयेनाह एष इति द्वाभ्याम् । यं पूर्वे ब्रह्मादयः अनुसंतस्थुः आश्रितवंतः यद्यस्मिन् जनार्दनः सर्वजननियमनकर्ता वासुदेवः प्रमाणं मूलं स एष एव वेदलक्षणः शिवः सुखरूपः सनातनः अनादिसिद्धः पंथा पुरुषार्थदर्शनमार्गः ॥ ३१ ॥ ❀ ❀ तद् ब्रह्म वेदं सतां वर्त्म विगर्ह्य स्वयमेव पाषंडं स्वेच्छाचारलक्षणं कुपथं यात वो युष्माकं पाषंडिनां यत्र पाषंडे दैवमुपास्यं भूतराट् ॥ ३२ ॥ ❀ ❀ ऋषभः सर्वेश्वरः यत्रेज्यः पूज्यः तत्सत्रं यागं सहस्रपरिवत्सरान् तावत्कालपर्यंतं संविधायानुष्ठाय ॥ ३४ ॥ ❀ ❀ यत्र गंगा यमुनया अन्विता तत्र प्रयागे अवभृथस्नानमाप्लुत्य कृत्वा ततः प्रयागात् ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे सिद्धांतप्रदीपे द्वितीयाध्यायार्थप्रकाशः ॥ २ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं द्विजकुलानां नन्दिनः शापं श्रुत्वा तदसहमानो भृगुरपि भवपक्षपातिभ्यः शापं दत्तवानित्याह—तस्येति । तस्य नन्दिन एवं निरूपितप्रकारेण द्विजकुलाय शापं वदत एव, न तु तूष्णीं स्थितस्य तच्छापं श्रुत्वा भृगुः शापं प्रत्यसृजत् प्रतिकूलतया दत्तवान् । ब्राह्मणानां शापस्यैवायुधत्वं न प्रसिद्धदण्डादेरिति सूचयन्नाह—ब्रह्मदण्डमिति । तस्यान्यैः शस्त्रास्त्रसमूहैरनिराकार्य-

त्वमाह—दुरत्ययमिति ॥ २७ ॥ ❀ ❀ पञ्चभिः शापं दास्यन्नादौ मुख्ये वैदिकधर्मे तान्त्रिकस्य तद्विरोधेन प्रवेशाभावं प्रतिजानीते—भवव्रतधरा इति । ये भवव्रतधरा ये च तान् व्रतधारिणः समनुव्रता अनुसरन्ति ते पाखण्डिनो भवन्त्वित्यन्वयः 'वेदमार्गविरोधेन येषां करणमण्वपि । तेहि पाखण्डिनो ज्ञेया' इत्येतत्पाखण्डलक्षणमभिप्रेत्याह—सच्छास्त्रपरिपन्थिन इति । सच्छास्त्रस्य वेदस्य परिपन्थिनो विरोधिनः । तद्विरुद्धे कल्पिते तन्त्रमार्गे प्रवृत्तत्वादिति भावः ॥ २८ ॥ ❀ ❀ तन्मार्गस्य वेदविरुद्धत्वेनाधर्मत्वं सूचयन्नाह—नष्टशौचा इति । नष्टं शौचं शुद्धत्वं येषां ते मूढा विवेकाकुशला धीर्येषां ते जटादिधारिणः सन्तः शिवदीक्षायां विशन्त्वित्यन्वयः । तस्या अधर्मत्वाभिज्ञापकं लक्षणमाह—यत्रेति । यत्र यस्यां दीक्षायां मार्गे वा सुरा गौडी पैष्टी माध्वी आसवस्तालादिसंभवमद्यविशेषस्तत्समूहः सुरासवं तदेव दैवं परमदैवत्वेनादरणीयमित्यर्थः ॥ २९ ॥ ❀ ❀ इदानीं तेषां वेदनिन्दादिना पाखण्डित्वमेव स्पष्टयति—ब्रह्म चेति । यत् यस्मात् यूयं ब्रह्म वेदं तदर्थज्ञान् ब्राह्मणांश्च परिनिन्दथ अतः पाखण्डं वेदविरुद्धमार्गमेवाश्रिता इत्यन्वयः । वेदनिन्दया कथं पाखण्डित्वमत आह—सेतुमिति । पुंसां वर्णाश्रमाचारनिष्ठानां चतुर्विधपुरुषार्थेच्छूनां सेतुं मर्यादारूपमत एव विधारकमित्यर्थः ॥ ३० ॥ ❀ ❀ एवं तन्मते वेदविरोधेन पाखण्डत्वमुक्त्वा स्वमतस्य वेदमूलत्वेन प्रामाणिकत्वमाह—एष इति । यं वेदमार्गं यूयं परिनिन्दथ एष एव हि लोकानां तत्तद्धर्मेऽधिकृतानां वर्णाश्रमाचारनियामकः शिवः तत्तत्फलजनकत्वात् शुद्धः पन्थाः मार्गः । एवकारेणैतद्विरुद्धमार्गस्याकल्याणकरत्वं नरकादिपातहेतुत्वं सूचयति । हीत्यनेन निश्चितोऽयमर्थो नात्र सन्देह इति दर्शयति । न चैतद्विरुद्धतन्त्राणामिवास्याधुनिकत्वमित्याह—सनातन इति । न च धर्मः स्वरूपत एव कार्यसाधकः; किंत्वनुष्ठित एवेति वेदमार्गस्य शिष्टादरणीयत्वं च सूचयंस्तत्र सदाचारं दर्शयति—यमिति । यं वेदमार्गं पूर्वे ब्रह्मादयोऽनुसन्तस्थुः, यदुक्तं धर्ममनुष्ठितवन्त इत्यर्थः । न चायमप्रामाणिको व्यामुग्धप्रणीतो येन सदनादरणीयः स्यादित्यभिप्रेत्य तत्र प्रमाणं दर्शयति—यदिति । यस्य प्रमाणं वक्ता जनार्दनः जनां मायामर्दयतीति तथा वक्ष्यमाणत्वेन परमाप्तो भगवानित्यर्थः । 'प्रमाणं बोधनेयत्तामर्यादाशास्त्रहेतुषु । सम्यग्वक्तरि चाथ स्यात्' इति कोशात् प्रमाणपदं वक्तृपरम् ॥ ३१ ॥ ❀ ❀ एवं स्वमते वेदस्य धर्मप्रतिपादकत्वं दर्शयित्वा वेदविरुद्धपरमतस्य पाखण्डत्वमाह—तद्ब्रह्मेति । तत्पूर्वोक्तं ब्रह्म वेदं परमं परमात्मभगवत्प्रवर्तितत्वेन सर्वप्रमाणोत्कृष्टमत एव शुद्धं प्रतारकत्वादिदोषरहितमत एव सतां विवेकिनां सनातनं वर्त्म मार्गं विगर्ह्य विनिन्द्य यूयं पाखण्डं भगवन्मायया व्यामुग्धप्रणीतं वेदविरुद्धमार्गं यात गच्छतेत्यर्थः । यत्र मार्गे वो युष्माकं दैवं भूतराट् भूतानां तामसानां राजा रुद्रो भैरवो वा अस्तीति शेषः । अत्रेदं बोध्यम्-दक्षदत्तशापस्य यज्ञे रुद्रभागप्रतिरोधरूपस्य तेनैव स्वयज्ञे तद्भागदानान्निवृत्तिः नन्दिदत्तशापस्यापि 'योऽप्रतिद्विहि द्रुह्यति स तत्त्वतो विमुखो भवेत् । ये चामुमनुशर्वावमानिनं ते संसरन्तु संमुह्यन्तु हरद्विषः' इत्यादेर्हरद्वेषप्रयुक्तत्वात् द्वेषनिवृत्त्या निवृत्तिः । अत एवाग्रे 'तदा वृषध्वजद्वेष-कलिलात्मा प्रजापतिः । शिवावलोकादभवच्छरद्ह्रद इवामलः' इति तस्य निर्मलत्वोक्तिः, भगवत्स्तोत्रे 'शुद्धं स्वधाम्न्युपरता-खिलबुद्ध्यवस्थम्' इत्यादिनिरूपणाद्भगवत्तत्त्वज्ञानं च संगच्छते । अतः शिवद्वेष एव न कार्य इति मुख्यः पक्षः । भृगुदत्त-शापस्य तु न कदापि निवृत्तिः 'ब्रह्मदण्डं दुरत्ययम्' इति तस्यानिवर्त्यत्वोक्तेः । न च तदा भवव्रतधारणं नाम भवभजनमेव, तस्य च पाखण्डित्वप्रयोजकत्वे कथं पुनर्यज्ञे तद्भागकल्पनं कथं वा ब्रह्मप्रजापत्यादीनां स्तुतिकरणं कथं वा "त्र्याणामेकभावानां यो न पश्यति वै भिदाम् । सर्वभूतात्मना ब्रह्मन् स शान्तिमधिगच्छति" इति भगवता स्वाभेदेन तद्भजनविधानं च संगच्छते इति शङ्कनीयम्, 'सच्छास्त्रपरिपन्थिनः । नष्टशौचा मूढधियो जटाभस्मास्थिधारिणः । यत्र दैवं सुरासवं तद्ब्रह्म विगर्हतया पाखण्डम्' इत्यादिविशेषणैर्वेदविरुद्धव्यामुग्धकल्पिततन्त्रादिमार्गेण भजत एव भृगुशापविषयत्वस्य स्पष्टत्वात् । अन्यथा वेदमार्गेण भजतोपि शापविषयत्वे वेदविरुद्धकर्तृत्वेन शापदातुरपि पाखण्डित्वापत्तिः । अतो यज्ञे रुद्रभागादीनां वैदिकत्वात्तेन मार्गेण भजतो भृगुशापाविषयत्वान्न पाखण्डित्वशङ्का । तद्विरुद्धतन्त्रादिमार्गेण भजतां तु तच्छापविषयत्वान्न कदापि शापनिर्मुक्तता, अतो वेदानुसारेण भगवद्भजनं विहाय न तद्विरुद्धान्यमार्गे पतनीयं पाखण्डित्वापत्तेः ॥ ३२ ॥ ❀ ❀ ततो महादेवोपि शीघ्रमेव जगामेत्याह—तस्यैवमिति । तस्य भृगोरेवं पूर्वोक्तप्रकारेण शापं वदत एव स प्रसिद्धो भगवान् भवः किञ्चिद्विमना इव सानुगस्ततः स्थानान्निश्चक्रामेत्यन्वयः । द्वैतोत्पत्त्या पाखण्डप्रचुराच्च विमना उदासीनचित्तो जातः । तथापि स्वस्य क्षत्यभा-वात्किञ्चिदित्युक्तम् । इवेत्यनेन किञ्चित्तदभिप्रेतमपि जातमिति सूचितम् । पाखण्डशास्त्रस्य तत्प्रणीतत्वेन तत्प्रवृत्तिरपि तस्या-भिप्रेता । तदुक्तं पाद्मोत्तरखण्डीयगुणत्रयविवरणाध्याये पार्वतीं प्रति शङ्करेणैव—"शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम् । येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि ॥ प्रथमं हि मया प्रोक्तं शैवं पाशुपतादिकम् । मच्छक्त्यावेशितैर्विप्रैः संप्रोक्तानि ततः परम्" इति । स्वगमनानन्तरं स्वकीयः कश्चित्कलहं कुर्यात्ततश्च विश्वसृजां सत्रे विघ्नः पतेदित्याशङ्क्य अनुगान् सर्वान् गृहीत्वा ततो निःसृत इति भावः ॥ ३३ ॥ ❀ ❀ विश्वसृजोपि स्वयज्ञपूर्तिं कृतवन्त इत्याह—तेपीति । ते प्रसिद्धा याजिनो विश्वसृजो मरीच्यादयः सहस्रपरिवत्सरसाध्यं स्वसत्रं संविधाय समाप्य स्वं स्वं धाम ययुरिति द्वितीयेनान्वयः । सत्रमध्ये तन्नाशकविघ्नः पूर्वोक्तः परस्परकलहरूप उपस्थितोपि तन्नाभिभूतवांस्तत्र हेतुमाह—यत्रेति । यस्मिन् सत्रे ऋषभः सर्वदेवाधिदेवो हरिः भक्तानां दुःखहर्त्ता इज्यः पूज्यः । कर्मणो भगवत्यर्पितत्वे तत्रोत्पन्नस्यापि विघ्नस्य भगवत्कृपया निष्कृतिर्जातेति भावः । हे महेष्वास

इति विदुरसम्बोधनेन यथा भवतां विघ्ननिवारकं धनुरस्ति तथा तेषां भगवति कर्मसमर्पणं विघ्ननिवारकं जातमिति सूचयति ॥ ३४ ॥ ❀ ❀ ततस्ते कृतावभृथस्नानाः कृतकृत्याः स्वं स्वं धाम जग्मुरित्याह—आप्लुत्येति। यत्र प्रयागे यमुनयान्विता गङ्गास्ति तत्र अवभृथं स्नानमाप्लुत्य कर्मसाङ्गतासिद्ध्यर्थं कृत्वा विरजेनात्मना तत्र स्नानेन भगवदर्पितकर्मणः सत्त्वशोधकत्वात् तेन च निर्मलेनान्तःकरणेन युक्ताः सर्वे ततः स्थानात् स्वं स्वं धाम गृहं ययुरिति सम्बन्धः। तत्र गङ्गया त्वलौकिकशरीरसंपत्तिः पूर्वदोषनिवृत्तिश्च भविष्यति, सर्वदोषनिवर्त्तकभगवच्चरणरजोयुक्तत्वात्। कालिन्दी तु पुष्टिमार्गीयेति पुष्ट्यर्थैव सर्वं करिष्यतीति विचार्य तदुभयसङ्गमे स्नात्वा निर्मलतां ययुरिति भावः ॥ ३५ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे धर्मनिरूपणे। द्वितीयो विवृतोऽध्यायोऽनर्थहेतुनिरूपकः ॥ ३ ॥

### भाषानुवादः

नन्दीश्वरके मुखसे इस प्रकार ब्राह्मणकुलके लिये शाप सुनकर उसके बदलेमें भृगुजीने यह दुस्तर शापरूप ब्रह्मदण्ड दिया ॥ २७ ॥ ❀ ❀ जो लोग शिवभक्त हैं तथा जो उन भक्तों के अनुयायी हैं, वे सत्-शास्त्रों के विरुद्ध आचरण करनेवाले और पाखण्डी हों ॥ २८ ॥ ❀ ❀ जो लोग शौचाचारविहीन, मन्दबुद्धि तथा, जटा, राख और हड्डियोंको धारण करनेवाले हैं—वे ही शैव-सम्प्रदायमें दीक्षित हों, जिसमें सुरा और आसव ही देवताओंके समान आदरणीय हैं ॥ २९ ॥ ❀ ❀ अरे! तुमलोग जो धर्ममर्यादा के संस्थापक एवं वर्णाश्रमियों के रक्षक वेद और ब्राह्मणोंकी निन्दा करते हों, इससे मालूम होता है तुमने पाखण्डका आश्रय ले रक्खा है ॥ ३० ॥ ❀ ❀ यह वेदमार्ग ही लोगोंके लिये कल्याणकारी और सनातन मार्ग है। पूर्वपुरुष इसीपर चलते आये हैं और इसके मूल साक्षात् श्रीविष्णुभगवान् हैं ॥ ३१ ॥ ❀ ❀ तुमलोग सत्पुरुषोंके परम पवित्र और सनातन मार्गस्वरूप वेदकी निन्दा करते हो—इसलिये उस पाखण्डमार्गमें जाओ, जिसमें भूतों के सरदार तुम्हारे इष्टदेव निवास करते हैं ॥ ३२ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—विदुरजी! भृगुऋषिके इस प्रकार शाप देनेपर भगवान् शङ्कर कुछ खिन्न-से हो वहाँ से अपने अनुयायियों सहित चल दिये ॥ ३३ ॥ ❀ ❀ वहाँ प्रजापतिलोग जो यज्ञ कर रहे थे, उसमें पुरुषोत्तम श्रीहरि ही उपास्यदेव थे। और वह यज्ञ एक हजार वर्ष में समाप्त होनेवाला था। उसे समाप्त कर उन प्रजापतियोंने श्रीगङ्गा-यमुना के सङ्गममें यज्ञान्त स्नान किया और फिर प्रसन्नमनसे वे अपने-अपने स्थानोंको चले गये ॥ ३४–३५ ॥

### इति द्वितीयोऽध्यायः



# अथ तृतीयोऽध्यायः

## मैत्रेय उवाच

सदा विद्विषतोरेवं कालो वै ध्रियमाणयोः । जामातुः श्वशुरस्यापि सुमहानतिचक्रमे ॥ १ ॥
यदाभिषिक्तो दक्षस्तु ब्रह्मणा परमेष्ठिना । प्रजापतीनां सर्वेषामाधिपत्ये स्मयोऽभवत् ॥ २ ॥
इष्ट्वा स वाजपेयेन ब्रह्मिष्ठानभिभूय च । बृहस्पतिसवं नाम समारेभे क्रतूत्तमम् ॥ ३ ॥
तस्मिन् ब्रह्मर्षयः सर्वे देवर्षिपितृदेवताः । आसन् कृतस्वस्त्ययनास्तत्पत्न्यश्च सभर्तृकाः ॥ ४ ॥
तदुपश्रुत्य नभसि खेचराणां प्रजल्पताम् । सती[1] दाक्षायणी देवी पितुर्यज्ञमहोत्सवम् ॥ ५ ॥
व्रजन्तीः सर्वतो दिग्भ्य उपदेववरस्त्रियः । विमानयानाः सप्रेष्ठा निष्ककण्ठीः सुवाससः ॥ ६ ॥
दृष्ट्वा स्वनिलयाभ्याशे लोलाक्षीर्मृष्टकुण्डलाः । पतिं भूतपतिं देवमौत्सुक्यादभ्यभाषत ॥ ७ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तृतीये तु सती तातयज्ञोत्सवदिदृक्षया । गमिष्यन्ती महेशेन वारिता नीतिहेतुभिः ॥ १ ॥

ध्रियमाणयोरवतिष्ठमानयोः । धृङ्-अवस्थान इत्यस्मात् ॥ १ ॥ ❀ ❀ यद्यपि रुद्रविहीनो यज्ञो नास्त्येव तथापि दक्षस्य रुद्रपरित्यागो द्वेषाद्गर्वाच्च। तत्र द्वेषे हेतुरुक्तः । गर्वे हेतुमाह । यदा तु प्रजापतीनामाधिपत्येऽभिषिक्तस्तदा तस्य स्मयो गर्वोऽभवत् ॥ २ ॥ ❀ ❀ गर्वादेव ब्रह्मिष्ठान्सेश्वरानभिभूय तिरस्कृत्य । "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इति श्रुतेर्वाजपेयेनेष्ट्वा समारेभे ॥ ३ ॥ ❀ ❀ कृतस्वस्त्ययनाः कृतमंगलाः सभर्तृका इति दक्षिणादिभिः प्रथममर्हतानामपि पत्न्यर्हणे पुनरर्हणमुक्तम् ॥ ४ ॥ ❀ ❀ तत्तदा खेचराणां प्रजल्पतां सतां पितृयज्ञमहोत्सवं श्रुत्वा तत्र प्रव्रजन्तीरुपदेवानां गन्धर्वादीनां वरस्त्रियश्च स्वस्य निलयस्याभ्याशे समीपे दृष्ट्वौत्सुक्यात्पतिमभ्यभाषतेति त्रयाणामन्वयः ॥ ५ ॥ ❀ ❀ कथंभूताः स्त्रियो दृष्ट्वा–विमानानि यानानि यासां ताः । प्रेष्ठैः सहिताः । निष्काणि पदकानि कंठेषु यासाम् । शोभमानानि वासांसि यासाम् ॥ ६ ॥ ❀ ❀ लोलानि चंचलान्यक्षीणि यासाम् । मृष्टान्युज्ज्वलानि कुंडलानि यासां ताः ॥ ७ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तातो दक्षः । नीतियुक्तैर्हेतुभिर्वाक्यलक्षणैः ( १ ) । शिवस्य तु द्वेषस्तदज्ञान एव न तु तस्मिन्बाले पितुरिवेति । "द्वयोर्द्वित्वं समादाय त्रयाणां त्रित्वमेव च । विशेषणे स्याद्द्वित्वादि विशेष्यप्रत्ययस्य च ॥" इत्युक्तेर्विद्विषतोरिति षष्ठीद्विवचनम् ॥ १ ॥ ❀ ❀ तत्र द्वयोर्मध्ये द्वेषे हेतुर्नत्यभावादिरुक्तः ॥ २ ॥ ❀ ❀ पाठान्तरे–वाजि पेयं यत्र स वाजिपेयो यागभेदः । आमिक्षावशिष्टं जलं वाजीत्युच्यते इति । "आमिक्षा सा शितोष्णे या क्षीरे स्याद्दधियोगतः" इत्यमरः । श्रुत्यंतरे च "वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इति । वाजिसंज्ञका देवा अपि संति तेभ्यो वाजिनं दद्यादिति । "आमिक्षातोऽवशिष्टं यद्वारि तद्वाजि संस्मृतम्" इति कोशांतराच्च । सेश्वरान् । भवं तत्पक्षीयांश्च भागदानामंत्रणाद्यकरणेन तिरस्कृत्य ॥ ३ ॥ ❀ ❀ तस्मिन्यज्ञे । कृतमंगलाः कृतार्हणाः ॥ ४ ॥ ❀ ❀ खेचराणां विद्याधरादीनाम् ॥ ५–६ ॥ ❀ ❀ भूतानां सर्वदेहिनां पतिमीश्वरम् । औत्सुक्यादुत्कंठातः ॥ ७ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

नीतिहेतुभिः नीत्या युक्तिभिश्च शिवस्य तुच्छे तस्मिन् द्वेषाऽभावेपि दक्षस्य तथा प्रतीतिं विचार्य तथोक्तमिति तदज्ञान एव द्वेषकल्पना ॥ १ ॥ ❀ ❀ तत्र द्वेषगर्वयोर्मध्ये द्वेषे हेतुरनभ्युत्थानादिकम् । गर्वे हेतुः आधिपत्यम् ॥ २-३ ॥ ❀ ❀

---

१. प्रा० पा०—दाक्षायणी महादेवी पितृयज्ञमहोत्सवे ।

तस्मिन् बृहस्पतिसवे कृतमङ्गला कृतं मङ्गलं प्रशस्ताचरणं यैस्तदनन्तरं दक्षेणार्हिता बभूवुरिति भावः, पौनरुक्त्यव्युदासार्थं व्याचष्टे दक्षिणादिभिरिति ॥ ४-६ ॥ ※ ※ तदुपश्रुत्येति त्रिकम् उत्सवाश्चर्यदर्शनादक्ष्णां लोलत्वम् ॥ ७ ॥

### श्रीमद्वीरराघवव्याख्या

दक्षो दुहितृवत्सलः विद्वेषमकरोत् कस्मादिति पृष्टं विद्वेषनिमित्तमुक्तं अथ यतः प्राणान् तत्याज दुस्त्यजान्सतीति पृष्टं प्राणत्यागनिमित्तं तत्प्रकारश्चोच्यते। तत्र प्राणत्यागनिमित्तमरौद्रकयागारम्भः स च गर्वात्। गर्वश्च प्राजापत्यादधिकारादिति वक्ष्यन् तावद्दक्षभवयोर्विद्विषतोः सतोर्महान्कालोतीत इत्याह सदेति। एवमुक्तरीत्या सदा विद्विषतोर्मिथो द्वेषं कुर्वतोर्जामातुर्भवस्य दक्षस्य च म्रियमाणयोः अवतिष्ठमानयोः सतोः सुमहान् भूयान्कालः अतिचक्रमे व्यतीतः ॥ १ ॥ ※ ※ गर्वनिमित्तमाह यदेति। परमेष्ठिना चतुर्मुखेन ब्रह्मणा यदा सर्वेषां प्रजापतीनामाधिपत्ये दक्षोभिषिक्तस्तदा तस्य स्मयो गर्वः अभवत् उत्पद्यते स्म ॥ २ ॥ ※ ※ स्मयाचारौद्रकं यागमारेभ इत्याह इष्ट्वेति। सदक्षः ब्रह्मिष्ठान् ब्रह्मात्मकान्सर्वेषां ब्रह्मात्मकत्वेपि रुद्रादेर्ब्रह्मण आवेशावतारत्वादतिशयेन ब्रह्मत्वमिष्ठन्प्रत्ययेन विवक्षितं रुद्रानुचरतदाराधकाभिप्रायेण बहुवचनं अभिभूय पराभाव्य तेभ्यो यज्ञभागं न दास्यामीत्येवं संकल्प्येत्यर्थः, वाजपेयेनेष्ट्वा वाजपेयाख्यं यागं कृत्वा बृहस्पतिसवं नाम बृहस्पतिसवाख्यं क्रतूत्तममारेभे आरब्धवान् 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते'ति श्रुतेः ॥ ३ ॥ ※ ※ तस्मिन् बृहस्पतिसवे समारब्धे सर्वे महर्षयः तथा देवर्षयः पितरो देवाश्च तथा तेषां पत्न्यश्च कृतस्वस्त्ययनाः कृतमङ्गलाः सर्वालङ्कारभूषिताः सभर्तृकाश्चासन् तत्रागत्योपविविशुरित्यर्थः। सभर्तृका इत्यनेन भर्तृसान्निध्यादानन्दातिशयः सूच्यते ॥ ४ ॥ ※ ※ तत्तथा नभसि खेचराणां प्रजल्पतां पितृयज्ञमहोत्सवं श्रुत्वा दाक्षायणी सती तत्र सर्वाभ्यो दिग्भ्यो व्रजन्तीरुपदेवानां गन्धर्वाणां वरस्त्रियः वरस्त्रीः 'वाम्शसोरि'तीयङ्, स्वनिलयाभ्याशे स्वगृहसमीपे दृष्ट्वा औत्सुक्यात् पतिमभ्यभाषतेति त्रयाणामन्वयः। कथंभूताः स्त्रियः दृष्ट्वा विमानानि यानानि गमनसाधनानि यासां ताः, सप्रेष्ठाः प्रियैः सहिताः, निष्काणि पदकानि कण्ठे यासां, शोभनानि वासांसि यासां लोलानि चञ्चलान्यक्षीणि यासां, मृष्टानि उज्ज्वलानि कुण्डलानि यासां, ताः ॥ ५-७ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अत्र शङ्करदक्षयोर्विवादकथनव्याजेन शङ्करस्य वासुदेवचरणारविन्दस्मरणकथनेन हरेरमितमाहात्म्यमेव प्रकाश्यतेऽस्मिन्नध्याये। तत्रादावस्य वैरस्य दीर्घकालीनत्वं दक्षस्य गर्वाधिक्यं च वक्ति सदा विद्विषतोरिति ॥ १ ॥ ※ ※ यदा दक्षः परमेष्ठिना ब्रह्मणा सर्वेषां प्रजापतीनामाधिपत्येऽभिषिक्तस्तदा तस्य स्मयो मदविशेषोऽभूदित्यन्वयः ॥ २ ॥ ※ ※ अरुद्रभागयज्ञकरणादस्य स्मयो लक्ष्यत इत्याशयेनाह इष्ट्वेति। स दक्षो नाम्ना वाजपेयेन यज्ञेन हरिमिष्ट्वा ब्रह्मिष्ठः कर्मप्रतिपादकवेदे निष्णातोभूदित्यन्वयः। एतच्च कुतो ज्ञातमत्राह भूय इति यज्ञान्तरकरणात्सिद्धमित्यर्थः ॥ ३ ॥ ※ ※ तस्मिन् यज्ञे त्रिलोक्याः सम्मेलनेन दक्षस्य स्मयातिशयो लक्ष्यत इत्याशयेनाह तस्मिन्निति ॥ ४ ॥ ※ ※ ननु किमनेन प्रकृत इति तत्राह तदुपश्रुत्येति। दाक्षायणी सती देवी। मिथः प्रजल्पतां खेचराणां यत् पितृयज्ञविषयवचनन्तदुपश्रुत्यान्तःपुरान्निर्गत्य स्वनिलयसमीपे उपदेववरस्त्रियो दृष्ट्वांतःपुरं प्रविश्य पतिमभ्यभाषतेत्यन्वयः ॥ ५-७ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सदेति। शिवस्य तु द्वेषस्तदज्ञान एव न तु तस्मिन् बाले पितुरिव ॥ १-४ ॥ ※ ※ तदुपश्रुत्येति त्रिकम् ॥ ५-८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तृतीये स्वपितुर्यज्ञं दिदृक्षुर्यास्यती सती। निवारिता नीतिवाक्यैरदत्ताज्ञा हरेण सा ॥

म्रियमाणयोः अवतिष्ठमानयोः क्षमापणञ्चाप्राप्नवतोरित्यर्थः। मृङ् अवस्थान इत्यस्मात् ॥ १ ॥ ※ ※ यदाभिषिक्त इति। शिवद्वेषिणो दक्षस्य सम्पत्तिरियं राजस्यपराधफलमेव पुनरप्यपराधवृद्ध्यर्थमेव। अत एवाह स्मयो गर्वः ॥ २ ॥ ※ ※ गर्वादेव ब्रह्मिष्ठानभिभूय बृहस्पतिसवमिति। 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते'ति श्रुतेः ॥ ३ ॥ ※ ※ कृतस्वस्त्ययनाः कृतार्हणाः सभर्तृका इति तेषां पत्न्यर्हणैः पुनरप्यर्हणमुक्तम् ॥ ४ ॥ ※ ※ तत्तदा खेचराणां प्रजल्पतां मुखात् पितुर्यज्ञमहोत्सवमुपश्रुत्य व्रजन्तीरुपदेववरस्त्रियो दृष्ट्वा पतिमभ्यभाषत ॥ ५-७ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पितृयज्ञमहोत्सवं श्रुत्वा तत्र गंतुमुद्युक्ता सती हरेण हेतुभिर्वारितेत्युच्यते सदा विद्विषतोरिति तृतीयेनाध्यायेन। म्रियमाणयोः तिष्ठमानयोः सतोः। मृङ्-अवस्थाने धातुः, सुमहान् बहुतरः कालः अतिचक्रमे गतवान् ॥ १ ॥ ※ ※ यदाभिषिक्त-

स्तदा स्मयो गर्वोऽभवत् ॥ २ ॥ ❀ ❀ स गर्वाविष्टो दक्षः ब्रह्मिष्ठान् परब्रह्मनिष्ठान् शिवादीन् अभिभूय अनादृत्येत्यर्थः 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेदि'ति श्रुतेः वाजपेयेनेष्ट्वा वाजपेयं यागं कृत्वा बृहस्पतिसवं नाम क्रतूत्तमं समारेभे आरब्धवान् ॥ ३ ॥ ❀ ❀ तस्मिन् क्रतूत्तमे ब्रह्मर्ष्यादयः कृतं स्वस्त्ययनमर्हणं येषां ते दक्षिणादिभिः संपूजिता आसन्नित्यर्थः । सभर्तृका इति प्रथममर्हितानामपि पत्न्यर्हणे पुनरर्हणे पुनरर्हणमुक्तम् ॥ ४ ॥ ❀ ❀ तत्तदा सती खेचराणां प्रजल्पतां वदताम् । पितृयज्ञमहोत्सवं श्रुत्वा तत्र सर्वाभ्यो दिग्भ्यो व्रजंतीरुपदेववरस्त्रियश्च दृष्ट्वौत्सुक्यात्पतिमभ्यभाषतेति त्रयाणामन्वयः ॥ ५ ॥ ❀ ❀ विमानैर्यानं यासां, प्रेष्ठैः सहिताः, निष्कानि पदकाणि कंठेषु यासां, शोभनानि वासांसि यासां ताः ॥ ६ ॥ ❀ ❀ स्वनिलयस्याभ्याशे समीपे । लोलानि चपलान्यक्षीणि यासाम् । मृष्टान्युज्ज्वलानि कुंडलानि यासां ताः ॥ ७ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

तृतीये शिववाक्येन सतीगमनवारणात् । अनर्थहेतुद्वेषस्य स्थिरीकरणमुच्यते ॥ १ ॥

तत्रादौ पूर्वत्रोक्तस्य द्वेषस्य विच्छेदाभावं दर्शयितुं द्वेषावृत्तिं कथयति—सदेति । एवं पूर्वाध्याये निदर्शितप्रकारेण सदा विद्विषतोर्विशेषेण द्वेषं कुर्वतोरेव ध्रियमाणयोः 'धृङ् अवस्थाने' इति धातोरवतिष्ठमानयोर्जामातुः श्वशुरस्यापि भवदक्षयोः सुमहान् कालोऽतिचक्रमे व्यतीत इति संबन्धः । वै इति एवार्थकस्तस्य द्विषतोरित्यनेन सम्बन्धः । यद्यपि कर्माभिमानिना दक्षेण कर्मसु रुद्रभागनिवारणेन सम्बन्धनिवृत्तेर्भवदक्षयोः परस्परस्मरणासंभवादुभयोरपि विद्वेषानुवृत्तिर्न संभवति, तथापि सतीनिमित्त-सम्बन्धादेव तयोः परस्परस्मरणाद् द्वेषानुवृत्तिरत्यभिप्रेत्याह—जामातुः श्वशुरस्यापीति । अपिशब्देनोभयत्र द्वेषस्य तौल्यं दर्शयति । इति लोकदृष्ट्यैवोक्तम् । वस्तुतस्तु न तथाऽस्य सम्बन्धस्य लौकिकत्वात् दक्षस्य जीवत्वेन द्वेपित्वसंभवेऽपि भवस्येश्वरत्वेन तदसंभवात् । पूर्वं तेन किञ्चिदपि नोक्तमग्रे च 'नाघं प्रजेश बालानां वर्णये नानुचिन्तये' इति वक्ष्यमाणत्वादाशुप्रसादत्वाच्च । अन्यथा तस्यापि वस्तुतो द्वेषित्वे दक्षनाश एव स्यान्नहि ब्रह्माण्डनाशकर्तुस्तन्नाशो दुर्घटोऽत एकेन कृतोपि द्वेषो लोकैरुभयत्र व्यवह्रियत इत्ययमर्थो जामातृश्वशुरयोरिति वक्तव्येऽसमस्तपदोपादानेन सूचितः ॥ १ ॥ ❀ ❀ द्वेषनिर्वाहस्तु गर्वेण गर्वस्तु महत्त्वप्राप्त्या भवतीति दक्षस्य महत्त्वप्राप्तिपूर्वकगर्वोत्पत्तिमाह—यदेति । यदा तु दक्षः सर्वेषां प्रजापतीनां मरीच्यादी-नामाधिपत्ये मुख्यत्वेन नियामकत्वे ब्रह्मणा परमेष्ठिनाऽभिषिक्तस्तदा तस्य स्मयो गर्वोऽभवदिति सम्बन्धः । महद्द्वेषस्य पतनहेतुत्वेन भवद्वेषेण दक्षपतनस्यावश्यकत्वेपि तेन यज्ञे रुद्रभागनिषेधेन तस्य व्यङ्गत्वे सत्यन्येषामपि तत्कर्तॄणामनर्थः स्यादतो दक्षस्य पतनं शीघ्रमेव भवतु, येन पुनर्यज्ञे रुद्रभागप्रवृत्तिः स्यात् । शीघ्रपतनहेतुस्तु गर्व एव, अतो गर्वहेतुः सर्वाधिपत्यं ब्रह्मणाऽस्मै दत्तम् । अन्यथा धर्मविरोधिने कथं तद्दद्यात् । अतस्तेन यद्विचारितं तज्जातमित्याह—स्मयोऽभवदिति । ब्रह्मणः पूर्वोक्ताभिप्रायवत्त्वेऽपि दक्षस्य त्वहं सर्वतः श्रेष्ठोऽतो मह्यमयमधिकारो दत्त इत्यभिप्रायेण गर्व एव जात इति भावः । ननु ब्रह्मणा सर्वाधिपत्यदानमन्यैः प्रजापतिभिः कथमङ्गीकृतं स्वन्यूनत्वसंपादकत्वादित्याशङ्क्याह—परमेष्ठिनेति । ब्रह्मणः सर्वस्वामित्वात्तत्कृतं न कोपि प्रतिषेद्धुं समर्थ इति भावः ॥ २ ॥ ❀ ❀ दक्षस्य गर्वेण कृतं कार्यं दर्शयति—इष्ट्वेति । सोऽतिगर्वितो दक्षो ब्रह्मिष्ठान् भवं तत्पक्षी-यांश्चाभिभूय भागदानामन्त्रणाद्यकरणेन तिरस्कृत्य वाजपेयसंज्ञकेन यागेनेष्ट्वा क्रतुषु उत्तमं बृहस्पतिसवनामकं यागविशेषं कर्तुं समारेभे इति सम्बन्धः । ब्राह्मणस्य बृहस्पतिसवो मुख्यस्तत्पूर्वाङ्गत्वेन वाजपेयानुष्ठानं 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते'ति श्रुतेः । एतच्च निबन्धे व्युत्पादितम् ॥ ३ ॥ ❀ ❀ तस्य यज्ञे महोत्सवमाह—तस्मिन्निति । तस्मिन् दक्षप्रारब्धबृहस्पतिसवे ब्रह्मर्ष्यादयः सर्वे तेन कृतस्वस्त्ययना आसन्निति सम्बन्धः । तत्र ब्राह्मणत्वे सति ये ऋषयो मन्त्रद्रष्टारस्ते ब्रह्मर्षयो वसिष्ठादयः । ये देवत्वे सत्यृषयस्ते देवर्षयः सनत्कुमारादयः । पितरोऽर्यमादयः । देवता इन्द्रादयः । तत्पत्न्यश्चेति । तेषां वसिष्ठादीनां पत्न्यश्च कृतस्वस्त्ययना आसन् कृतं स्वस्त्ययनं मङ्गलं पूजनं यासां ताः । सभर्तृका इत्यनेन दक्षिणादिभिः प्रथमपूजितानामपि पत्नीपूजनसमये पुनः पूजनं द्योतितम् ॥ ४ ॥ ❀ ❀ एवं संक्षेपेण यज्ञमहोत्सवं निरूप्य यज्ञध्वंसद्वारा दक्षाभिमानं नाशयितुमस्योद्योगस्या-न्तर्यामिणा भगवता कारितत्वाद्यज्ञोत्सवश्रवणेन तदभिमानांशभूतायाः सत्या उद्बोधो जातस्तमाह—तदुपश्रुत्येति त्रिभिः । नभसि खेचराणां गन्धर्वादीनां प्रजल्पतां सतां तत्पितुर्यज्ञमहोत्सवं सती उपश्रुत्य स्वनिलयाभ्याशे सर्वतो व्रजन्तीः उपदेववरस्त्रियो दृष्ट्वौत्सुक्यात्पतिमभ्यभाषतेति त्रयाणामन्वयः । देवी देवस्य भवस्य पत्नी पतिव्रता । यज्ञदर्शनौत्सुक्ये हेतुमाह—दाक्षायणीति । यतो दक्षस्य कन्येत्यर्थः ॥ ५ ॥ ❀ ❀ उपदेवाः यक्षगन्धर्वादयस्तेषां वराः श्रेष्ठाः सुन्दर्यः स्त्रियः । विमानानि गमनसाधनानि यासां ताः । सप्रेष्ठाः प्रेष्ठैः भर्तृभिः सहिताः । निष्काणि पदकानि कण्ठे यासां ताः निष्ककण्ठीः । शोभनानि वासांसि यासां ताः सुवाससः । एतासां गमनदर्शनमपि सतीगमनेच्छायां हेतुरिति ज्ञेयम् ॥ ६ ॥ ❀ ❀ लोलानि चञ्चलानि अक्षीणि यासां ताः । मृष्टानि शुद्धानि मलरहितानि कुण्डलानि यासां ताः । स्वनिलयस्य स्वगृहस्य अभ्याशे समीपे दृष्ट्वा भूतपतिं कृपया भूतानामपि तामसानां पालकं परमकृपालुं स्वपतिमौत्सुक्याद्गमनेऽत्युत्साहादभ्यभाषत निर्भयतया उक्तवती । भवस्य परमकृपालुत्वात्स्वपतित्वाच्च भयं त्यक्त्वोक्तवतीत्यर्थः । भूतपतित्वेनापाततः प्राप्तां निकृष्टतां वारयति—देवमिति, ईश्वरमित्यर्थः । औत्सुक्यादिति दक्षदुरदृष्टेन तस्या एवं गमनौत्सुक्यं जातमिति ज्ञेयम् । अन्यथा पतिभक्तायास्तस्याः पतिनिमन्त्रणाभावे कथं तत्स्यात् ॥ ७ ॥

भाषानुवादः

सतीका पिताके यहाँ यज्ञोत्सवमें जानेके लिये आग्रह करना

**श्रीमैत्रेयजी कहते हैं**—विदुरजी ! इस प्रकार उन ससुर और दामादको आपसमें वैर-विरोध रखते हुए बहुत अधिक समय निकल गया ॥ १ ॥ ❀ ❀ इस समय ब्रह्माजीने दक्षको समस्त प्रजापतियोंका अधिपति बना दिया । इससे उसका गर्व और बढ़ गया ॥ २ ॥ ❀ ❀ उसने भगवान् शङ्कर आदि ब्रह्मनिष्ठोंको यज्ञभाग न देकर उनका तिरस्कार करते हुए पहले तो वाजपेययज्ञ किया और फिर बृहस्पतिसव नामक महायज्ञ आरम्भ किया ॥ ३ ॥ ❀ ❀ उस यज्ञोत्सवमें सभी ब्रह्मर्षि, देवर्षि, पितर, देवता आदि अपनी-अपनी पत्नियोंके साथ पधारे, उन सबने मिलकर वहाँ माङ्गलिक कार्य सम्पन्न किये और दक्षके द्वारा उन सबका स्वागतसत्कार किया गया ॥ ४ ॥ ❀ ❀ उस समय आकाशमार्गसे जाते हुए देवता आपसमें उस यज्ञकी चर्चा करते जाते थे । उनके मुखसे दक्षकुमारी सतीने अपने पिताके घर होनेवाले यज्ञकी बात सुन ली ॥ ५ ॥ ❀ ❀ उन्होंने देखा कि हमारे निवासस्थान कैलासके पाससे होकर सब ओरसे चञ्चल नेत्रोंवाली गन्धर्व और यक्षोंकी स्त्रियाँ चमकीले कुण्डल और हार पहने खूब सज-धजकर अपने-अपने पतियोंके साथ विमानोंपर बैठी उस यज्ञोत्सवमें जा रही हैं । इससे उन्हें भी बड़ी उत्सुकता हुई और उन्होंने अपने पति भगवान् भूतनाथसे कहा ॥ ६–७ ॥

सत्युवाच[1]

प्रजापतेस्ते श्वशुरस्य साम्प्रतं निर्यापितो यज्ञमहोत्सवः किल ।
वयं च तत्राभिसराम वाम ते यद्यर्थितामी विबुधा व्रजन्ति हि ॥ ८ ॥
तस्मिन् भगिन्यो मम भर्तृभिः स्वकैर्ध्रुवं गमिष्यन्ति सुहृद्दिदृक्षवः ।
अहं च तस्मिन् भवताभिकामये सहोपनीतं परिबर्हमर्हितुम्[2] ॥ ९ ॥
तत्र स्वसॄर्मे ननु भर्तृसम्मिता मातृष्वसॄः क्लिन्नधियं च मातरम् ।
द्रक्ष्ये चिरोत्कण्ठमना महर्षिभिरुन्नीयमानं च मृडाध्वरध्वजम् ॥ १० ॥
त्वय्येतदाश्चर्यमजात्ममायया विनिर्मितं भाति गुणत्रयात्मकम् ।
तथाप्यहं योषिदतत्त्वविच्च ते दीना दिदृक्षे भव मे भवक्षितिम् ॥ ११ ॥
पश्य प्रयान्तीरभवान्ययोषितोऽप्यलंकृताः कान्तसखा वरूथशः ।
यासां व्रजद्भिः शितिकण्ठ मण्डितं नभो विमानैः कलहंसपाण्डुभिः ॥ १२ ॥
कथं सुतायाः पितृगेहकौतुकं निशम्य देहः सुरवर्य नेङ्गते ।
अनाहुता अप्यभियन्ति सौहृदं भर्तुर्गुरोर्देहकृतश्च केतनम् ॥ १३ ॥
तन्मे प्रसीदेदममर्त्य वाञ्छितं कर्तुं भवान्कारुणिको बतार्हति ।
त्वयाऽऽत्मनो[3]ऽर्धेऽहमदभ्रचक्षुषा निरूपिता मानुगृहाण याचितः ॥ १४ ॥

ऋषिरुवाच

एवं गिरित्रः प्रिययाभिभाषितः प्रत्यभ्यधत्त प्रहसन् सुहृत्प्रियः ।
संस्मारितो मर्मभिदः कुवागिषून् यानाह को विश्वसृजां समक्षतः ॥ १५ ॥

श्रीभगवानुवाच

त्वयोदितं शोभनमेव शोभने अनाहुता अप्यभियन्ति बन्धुषु ।
ते यद्यनुत्पादितदोषदृष्टयो बलीयसानात्म्यमदेन मन्युना ॥ १६ ॥
विद्यातपोवित्तवपुर्वयःकुलैः सतां गुणैः षड्भिरसत्तमेतरैः ।
स्मृतौ हतायां भृतमानदुर्दृशः स्तब्धा न पश्यन्ति हि धाम भूयसाम् ॥ १७ ॥

---

१. प्राचीने पाठे 'सत्युवाच' नास्ति । २. प्रा॰ पा॰—मर्पितुम् । ३. प्रा॰ पा॰—त्वया सहार्धे ।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

निर्यापितः प्रवर्तितः। हे वाम शिव ते यद्यर्थिता इच्छा तर्हि वयं च तत्राभिसराम गच्छामः। न चाद्यापि यागो निवृत्तो यतोऽमी विबुधा व्रजंति ॥ ८॥ ❀ ❀ औत्सुक्यं प्रकटयंत्याह तस्मिन्निति षड्भिः। पितृभ्यामुपनीतं दत्तं परिबर्हमलंकारादिद्रव्यं भवता सहार्हितुं स्वीकर्तुमभिकामये। अर्हितमिति पाठे तत्कृतं परिबर्हमिच्छामीति ॥ ९॥ ❀ ❀ स्वसॄर्भगिनीः भर्तृभिः संमिताः सदृशीः सहिता इत्यर्थः। क्लिन्नधियं स्नेहार्द्रचित्ताम्। चिरमुत्कंठमुत्सुकं मनो यस्याः साऽहं द्रक्ष्यामि। हे मृड उन्नीयमानं प्रवर्त्यमानमध्वरेषु ध्वजमिव दृश्यं श्रेष्ठमध्वरम्। यद्वा। उत्क्षिप्यमाणं यज्ञे केतुं यूपं वा ॥ १०॥ ❀ ❀ अहो किं तत्राश्चर्यं येन तवैतदौत्सुक्यमिति चेदत आह। त्वयीति। हे अज एतद्विश्वमाश्चर्यरूपं त्वय्येव त्वन्मायया रचितं विभात्यतो यद्यपि तव नाश्चर्यबुद्धिस्तथाऽप्यहं योषिदुत्सुकस्वभावा तव तत्त्वं न जानाम्यतो दीना कृपणा सती हे भव मे भवक्षितिं जन्मभूमिं दिदृक्षे द्रष्टुमिच्छामि ॥ ११॥ ❀ ❀ दिदृक्षामेव कैमुत्यन्यायेन व्यनक्ति। पश्येति द्वाभ्याम्। हे अभवेति। सुहृद्वियोगदुःखं त्वया नास्वादितमिति भावः। अन्या योषितः संबंधरहिता अपि प्रयांतीः पश्य। कांतसखा भर्तृसहिताः। वरूथशः संघशः। कथंभूताः—यासां विमानैर्नभो मंडितं ताः। हे शितिकंठ नीलकंठेति परानुग्रहाय त्वया विषमपि भक्षितमिति सूचयति ॥ १२॥ ❀ ❀ तदा हे सुरश्रेष्ठ पितृगेहोत्सवं निशम्य सुताया देहः कथं नेंगते द्रष्टुं न प्रचलति। तथाऽप्यनाहूताः संतः कथं गच्छामस्तत्राह। सौहृदं सुहृत्संबंधि केतनं गृहं तथा भर्त्रादीनां च गृहमनाहूता अप्यभियंति संतः। ह्रस्वत्वमार्षम् ॥ १३॥ ❀ ❀ हे अमर्त्य तत्तस्मात्प्रसीद इदं मे वांछितं कर्तुं भवानर्हति। कारुणिकत्वमेवाह अदभ्रचक्षुषाऽनल्पज्ञानेनापि त्वयाऽऽत्मनो देहस्यार्धेऽहं निरूपिता धृता। यतोऽर्धनारीश्वर इति ख्यातोऽस्यतो मामनुगृहाण। याचितः सन् ॥ १४॥ ❀ ❀ अभिभाषितो याचितः। को दक्षो यानाह मर्म भिंदंति ये तान्कुवागिषून्दुरुक्तिबाणान्संस्मारितः सन् ॥ १५॥ ❀ ❀ अनाहूता अपीति त्वया यदुदितमुक्तं तच्छोभनमेव किं त्वनात्म्यं देहादावहंकारस्तत्कृतेन मदेन मन्युना च ते बंधवो यद्यनुत्पादितदोषदृष्टयो भवंति तर्हि न उत्पादिते आरोपिते दोषे दृष्टिर्येषां ते ॥ १६॥ ❀ ❀ ननु विद्यादिगुणयुक्तो दक्षस्त्वादृशेषु महत्सु कथं दोषदृष्टिर्भवेत्तत्राह। विद्यादिभिरेव स्मृतौ हतायां विवेकज्ञाने नष्टे सति भूयसां महत्तमानां धाम तेजो न पश्यंति हि। ननु गुणैः कथं विवेकनाशस्तत्राह। सतां गुणैर्विवेकहेतुभिरप्यसत्तमानामितरैर्दोषभूतैरत एव तैर्भृतो धृतः पुष्टो वाऽहं विद्वांस्तापस इत्यादिर्मानो गर्वस्तेन दुष्टा दृष्टिर्येषां ते ॥ १७॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

प्रजापतयोऽनेके संतीति चेत्तत्राह। ते श्वशुरस्येति। यज्ञपदोपादानात्तत्र तव मुख्यभागित्वमितोऽवश्यं तत्र गंतव्यमिति ध्वनितम्। वामेत्यामंत्रणेनात्र वक्रता न विधेया। सरलोऽसि सुंदरोसि वा तेन गंतव्यमेव 'वामो वक्रेऽतिसुंदरे' इति धरणिः। ॥ ८॥ ❀ ❀ तत्र तव मम वा किं कार्यमत आह—तस्मिन्निति। तासां सभर्तृकाणामर्हणमिव ममापि सभर्तृकाया अर्हणं भवत्विति कामय इत्याह-अहश्चेति "परिबर्हो राजयोग्यद्रव्यपरिच्छद" इति मेदिनी ॥ ९॥ ❀ ❀ किं परिबर्हार्थिनी यियाससीति तत्राह—तत्रेति। तत्र यागोत्सवे। 'यज्ञानां जपयज्ञोसि' इति श्रीमुखोक्तेर्भगवत्स्वरूपयागस्य सर्वयागश्रेष्ठत्वमस्तीति चेत्तत्राह—यद्वेति। यूपस्य दूरतो दृश्यत्वात्केतुत्वमेवेत्याह—यूपं वेति। मृडेति। सर्वसुखदत्वात्तव मदभिलषितपूरणेन मह्यमपि तद्देयमित्याह ॥ १०॥ ❀ ❀ अजत्वात्तव जन्मभूरेव नास्ति यतस्त्वापि मत्तुल्यौत्सुक्यं स्यादित्यभिप्रायः। अतस्त्वन्मायारचितत्वात्। अतस्त्वत्तत्त्वानभिज्ञत्वात्। हे भवेति। मंगलरूपत्वात्तव मंगलकर्मदर्शनाज्ञां देहीति भावः ॥ ११॥ ❀ ❀ न केवलमहमेकैवैतादृशीत्याह—पश्येति। अभवेति। इति भाव इति। जन्मादिमतामेव सुहृद्वियोगादिदुःखं भवतीत्याशयः ॥ १२॥ ❀ ❀ तदौत्सुक्यम्। अहं तु तस्य कन्या भूत्वा कथं धैर्यं धास्यामीत्याह—कथमिति। इह गुरुपदेन श्वशुरोपि गृह्यते देहकृतः पितुः। 'गृहे स्थाने च केतनम्' इति धरणिः ॥ १३॥ ❀ ❀ यतस्त्वममर्त्यो देवोसि। तत्तस्मात् देवा हि प्रार्थिता वाञ्छितं कुर्वंतीति भावः। 'अमर्त्या अमृतान्धसः' इत्यमरः। पूर्वं त्वयाऽकर्त्तव्यमपि कृतमित्याह—आत्मनोर्द्धे इति। अनल्पज्ञानेनात्मारामेण ॥ १४॥ ❀ ❀ ननु दक्षप्रयुक्ताः कटुवागिषवः श्रीशिवस्यात्मारामस्य मर्म कथं भिन्दंति। उच्यते। शिवस्य परमेश्वरत्वादात्मारामत्वे सत्येव तमोगुणोपहितत्वात्कदाचित्परमैश्वर्य्यानुसंधाने सति शोकमोहरागद्वेषादयोपि भवंति। तथैव कृष्णस्य सदैवात्मारामत्वेपि श्रीयशोदादिश्रीबलदेवादिश्रीगोपिकादिविशिष्टत्वे प्रेमवत्त्वादेव स्वीयपारमैश्वर्यानुसंधानाच्छोकमोहरागद्वेषादयः। किन्तु शिवस्य तमोगुणोद्भूतास्ते दुःखाभासानुभवमयाः। कृष्णस्य प्रेमोद्भूतास्ते आनंदपरमकाष्ठानुभवमयाः। प्रेम्णश्चिच्छक्तिसारवृत्तित्वादात्मारामत्वस्याप्यसंकोचकाः असुरादिहिंसादयश्च सत्त्वगुणकार्या एव गुणानां परस्परोपमर्दित्वात्। यथा प्रकाशोंधकारं हंति तथैव सत्त्वगुणस्तमोरजसी हंति तथैव कृष्णोऽसुरादीन्निहंतीति शुद्धसत्त्वरूपे तस्मिन्प्राकृतसत्त्वकार्यास्ते वर्तमाना अपि नापकारका इति व्याख्यातं प्रथमे, सप्तमारंभे च वक्ष्यते ॥ १५-१६॥ ❀ ❀ अत्राशंकते नन्विति। तत्राक्षेपे। पुनराक्षिपति—नन्विति। अत एवासत्तमगुणानां दोषभूतत्वादेव। भृञ्धातोरुभयार्थकत्वाद्विकल्प इति। एतेन दुग्धममृतमपि सर्पास्यप्रविष्टं

विषमेव भवेत्तथाब्धिजलं क्षारमपि मेघप्रविष्टं मिष्टं स्यादिति स्थान एव गुणा गुणायंते, अन्यथा दोषा एवेत्युक्तं तथा दोषा अपि स्थानभेदेन गुणा भवंतीत्यन्यत् ॥ १७ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

प्रवर्तितः। ऋषिभिरिति शेषः। तत्र यज्ञमहोत्सवे ॥ ८ ॥ ❀ ❀ औत्सुक्यं कालयापनायामशक्तत्वं तस्मिन् यज्ञमहोत्सवे ॥ ९ ॥ ❀ ❀ पूर्वार्थे विशेष्याध्वराऽध्याहाराद्वेति ॥ १० ॥ ❀ ❀ तत्र यज्ञे येनाश्चर्येण, अतः आश्चर्यविश्वाधिष्ठानत्वात् ॥ ११-१२ ॥ ❀ ❀ तदाह कैमुत्यमाह ॥ १३-१४ ॥ ❀ ❀ मर्मभिद इति तद्वक्ताभिप्रायेण शिवस्य निरहंकारत्वात् यान् कुवागिषून् यद्यपि इषूणां कथनमनुपपन्नं किंतु वाचामेव तथापि परिणामालङ्कारत्वाद् 'दूरीकरोतु दुरितं गौरीचरणपंकजमि'तिवद्वाचामेव प्राधान्यमिति ज्ञेयम् ॥ १५ ॥ ❀ ❀ यदुक्तं तच्छोभनमेव योग्यमेवेति यत्तदोर्गम्यमानत्वमेव सद्भावे हि दोषस्य तद्दृष्टित्वं न दोषः, किन्तु तदभावेपि आरोपिते वैरभावेन कल्पिते ॥ १६-१७ ॥

### श्रीमद्वीरराघवव्याख्या

हे वाम ! हे शंभो ! ते तव श्वशुरस्य प्रजापतेर्दक्षस्य कर्तरि षष्ठी, यज्ञरूपो महोत्सवः संप्रति निर्यापितः प्रवर्तितः। तत्र च विबुधाः व्रजंति हीत्यपारोक्ष्यं द्योत्यते। यद्यर्थिता अर्थिनो भाव अर्थिता यदीच्छा वर्त्तत इत्यर्थः, तर्हि तत्र वयमपि अभिसराम गच्छामः ॥ ८ ॥ ❀ ❀ स्वाभिप्रायं प्रकटयंत्याह षड्भिः। तस्मिन् यज्ञमहोत्सवे मम भगिन्यः स्वस्वभर्तृभिः सह सुहृद्दिदृक्षवः भगिनीमातापित्रादीन् द्रष्टुमिच्छवः आगमिष्यंति ध्रुवं निश्चयः। आयांतु किं तव तत्राह-अहमपि तस्मिन्नुत्सवे भवता साकम् उपनीतं अस्मत्पित्रादिसमर्पितं परिबर्हं वस्त्राभरणाद्युपायनं ग्रहीतुं कामये इच्छामि ॥ ९ ॥ ❀ ❀ किं च हे मृड ! चिरौत्कंठ्यमना बहुकालमौत्सुक्याविष्टमना अहं मे मम भर्तृभिः समानीताः स्वस्या भगिनीः भर्तृसंगता इत्यनेन स्वस्या अपि भर्त्रा अनुग्राह्यत्वं सूच्यते तथा मातृष्वसृः मातृभगिनीः क्लिन्नधियं मद्दर्शनालाभेन क्लिन्नधियं खिन्नचित्तां मयि प्रेमार्द्रचित्तां वा मातरं महर्षिभिरुन्नीयमानमूर्ध्वं क्रियमाणं अध्वरध्वजं यूपं च द्रक्ष्ये ॥ १० ॥ ❀ ❀ अहो किं तत्राध्वरे आश्चर्यं येन त्वं दिदृक्षसीत्यत्राह त्वयीति। अजात्ममायया अजस्य कर्मायत्तजन्मादिरहितस्यात्मनः परमात्मनो विष्णोर्मायया संकल्पेन विनिर्मितं गुणत्रयात्मकं सत्त्वादिगुणत्रयात्मकप्रकृतिपरिणामात्मकमेतद्विविधविचित्रसन्निवेशं जगत्त्वयि आश्चर्यं भाति, विविधविचित्रसन्निवेशजगद्दर्शनमेव ज्ञानिनि त्वय्याश्चर्यबुद्धिजनकं न तत आश्चर्यकरं किंचित्तवास्तीत्यर्थः। ज्ञानिनो हि विचित्रं जगद् दृष्ट्वा आश्चर्य्यं प्राप्नुवंतीति भावः। अत्राजात्मनस्तव मायया त्वय्येव विनिर्मितं जगदाश्चर्यं भातीत्यन्वयोऽसंगतः, सद्ब्रह्मात्माकाशशिवेंद्रादिशब्दानां छागपशुन्यायेन 'एको ह वै नारायण आसीन्न ब्रह्मा नेशान इति नारायणरूपविशेषे पर्य्यवसानात्तस्यैव कारणत्वेन जगतस्तन्मायया निर्मितत्वात् युक्तं चैतत् 'अनपहतपाप्मा वा अहमस्मीति नारायणाद्रुद्रोऽजायत' इति च कार्यत्वकर्मवश्यत्वादियुक्तस्य रुद्रस्य कारणत्वासंभवात्। अन्यथा पूर्वापरविरोधात् तथापि तवाश्चर्यकरस्यान्यस्याभावेप्यहं योषिच्चांचल्यस्वभावा अतत्त्ववित् परावरतत्त्वमजानती अनेन विशेषणद्वयेन स्थिरचित्तानां तत्त्वविदां च भगवद्विभूतित्वेन जगदवलोकनमेवाश्चर्यजनकमिति सूचितमिति यथोक्त एवार्थः साधीयान्। अतो दीना कृपणा सती हे भव ! मे भवक्षितिं जन्मभूमिं दिदृक्षे द्रष्टुमिच्छामि ॥ ११ ॥ ❀ ❀ दिदृक्षामेव कैमुत्यन्यायेन व्यनक्ति पश्येति द्वाभ्याम्। हे अभव ! अन्या अपि मत्पितृसंबंधरहिता अपि योषितः वरूथशः संघशः प्रयांति। ताः पश्य कथंभूताः स्त्रियः कांतः प्रियः स एव सखा यासां ताः। हे शितिकंठ ! यासां योषितां व्रजद्भिः कलहंसवत्पांडुरैः शुभ्रैर्विमानैर्नभःस्थलं मंडितं भूषितम् ॥ १२ ॥ ❀ ❀ हे सुरवर्य ! सुरश्रेष्ठ ! पितृगेहकौतुकमुत्सवं निशम्य सुताया देहः कथं नेंगते द्रष्टुं न प्रचलति। अथाप्यनाहुताः संतः कथं वा गमिष्यामः तत्राह सौहृदं सुहृदो निकेतनं तथा भर्त्रादीनां गृहान्प्रत्यनाहुता अपि अभियंति गच्छंति संतः। ह्रस्वत्वमार्षम् ॥ १३ ॥ ❀ ❀ उपसंहरति। तदिति हे अमर्त्य ! देव ! तत्तस्मात् प्रसीद इदं मे वांछितं कारुणिको भवान् कर्तुमर्हति। कारुणिकत्वमेवाह-अदभ्रचक्षुषा अनल्पदयादृष्ट्या त्वया आत्मनो देहस्यार्द्धे समेंशे अहं निरूपिता धृता। यतोऽर्द्धनारीश्वर इति प्रख्यातोसि। अतो मया याचितस्त्वं मामनुगृहाण ॥ १४ ॥ ❀ ❀ एवमाभाषितो भवः प्रत्यभाषतेत्याह मैत्रेयः एवमिति। गिरित्रं गिरिं कैलासं त्रायते इति गिरित्रो भवः, एवमुक्तरीत्या प्रियया सत्या अभिभाषितः तस्याः प्रियः सुहृदपि मर्मच्छिदः दक्षस्य मनसि कुवागिषून् कुत्सिता निंदापरा वाच एवेषवस्तान् प्रति संस्मारितः स्मरणं प्रापितः निवृत्तप्रेरणात्स्मरतेर्वा णिजंतात्कर्त्तरि क्तः संस्मरन्नित्यर्थः। बहिः प्रहसन्निव प्रत्यभ्यधत्त प्रत्यभाषत। के ते कुवागिषवः यान् स्मरन् प्रत्यभ्यधत्तेत्यत्राह कः दक्षः विश्वसृजां प्रजापतीनां समक्षतोऽपरोक्षं यान् आह 'अयं हि लोकपालानां यशोघ्नो निरपत्रपः' इत्यादिना उक्तवान् तान्संस्मरन्नित्यर्थः ॥ १५ ॥ ❀ ❀ प्रिययोक्तमनूद्य प्रत्युत्तरयति भवः त्वयोदितमिति यावदध्यायसमाप्ति। हे शोभने ! यत्त्वयोदितमुक्तं अनाहुता अपि बंधुषु अभियंतीति तच्छोभनमेव सत्यमेव। किंतु बलीयसा अनात्म्यं देहाभिमानस्तत्कृतो यो मदस्तेन मन्युना क्रोधेन च ते बंधवो यदि अनुत्पादितदोषदृष्टयः-न उत्पादिता गुणेषु सत्स्वपि दोषेष्वेव दृष्टिः दर्शनं यैस्ते भवंति तर्ह्यनाहुता अप्यभियंतीति

शोभनमित्यर्थः ॥ १६ ॥ ❋ ❋ ननु विद्यादिसंपन्नो दक्षस्तादृशे त्वयि कथमुत्पादितदोषदृष्टिः स्यात्तत्राह विद्येति । सतां साधूनां गुणैर्विद्यातपआदिभिः षड्भिः असत्तमेषु इतरैर्दोषरूपतां प्राप्तैर्विद्यादय एवाश्रयभेदेन गुणा दोषाश्च स्युरिति भावः, स्मृतौ हतायां विवेकज्ञाने नष्टे सति भृतमानदुर्दृशः भृतः पुष्टः मानः अहं विद्वानहं तापस इत्यादिगर्वस्तेन दुष्टा दृग्दृष्टिर्येषां ते भूयसां महत्तमानां तेजः तथा यथावस्थितं न पश्यंति । हीति असत्स्वेतत्प्रसिद्धिं द्योतयति ॥ १७ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

किमभाषतेति तत्राह प्रजापतेरिति । निर्यापितः प्रवर्तितः किल किंवदंती हे वाम ! श्रेष्ठ ! यदि तवार्थितास्मि तत्र तर्हि गमने हेतुमाह अमी इति । हि यस्मात्तस्मात् ॥ ८ ॥ ❋ ❋ गमने निमित्तांतरमप्याह तस्मिन्निति । मयि गतायां तस्मात् जनात्पूजाविशेषोऽपि भविष्यतीत्याह अहं चेति । परिबर्हं च वरवध्वोः दीयमानम् ॥ ९ ॥ ❋ ❋ न केवलमुक्तमेव प्रयोजनमर्थांतरमप्यस्तीत्याह तत्रेति । अध्वरध्वजं यज्ञश्रेष्ठं द्रक्ष्ये इत्यन्वयः । 'ध्वजो शेफसि केतौ च श्रेष्ठे चैत्योन्नतद्रुमे' इत्यभिधानं 'स्वस्ति मेद्रांकयोर्ध्वजः' इति 'अंकश्चिह्नेऽतिकोरसोरि'ति, 'उरस्तु वक्षसि श्रेष्ठे' इति यादवः ॥ १० ॥ ❋ ❋ एवं बहुविधालापैरप्यविकृतेन्द्रियं पतिं दृष्ट्वा तन्माहात्म्यविज्ञापनपूर्वकं स्वाभीष्टमुद्गलयति त्वयीति । हे अज ! रुद्र ! 'अजा विष्णुहरच्छागाः' इति यादवः । आत्मनो हरेर्मायेच्छया विनिर्मितं गुणत्रयात्मकं रजआदिगुणत्रयोपादानकमाश्चर्यं नानावैचित्र्योपेतमेतद्विश्वं त्वयि भाति नित्यापरोक्षितांतस्थजगन्नारायणस्वरूपत्वात्तत्प्रसादेन करतलामलकवदेतद्विश्वं तव ज्ञानकोष्ठे वर्तते । अथापि तव द्रष्टव्यांशाभावेपि हे भव ! मंगल ! हर ! अहं मे भवक्षितिं जन्मभूमिं दिदृक्षे इत्यन्वयः । अत्र हेतुगर्भविशेषणं योषिदिति । युष शब्दादिसेवायाम्, शब्दादिविषयसेवाशीलत्वादित्यर्थः । अत एव ते तव अतत्त्ववित् यथास्थितवस्तुस्वरूपाज्ञानित्वात् दीना क्षीणा ज्ञानदुर्बला ॥ ११ ॥ ❋ ❋ इतोपि गतव्यमिति भावेनाह पश्येति । अन्यस्त्रियोपि प्रयांति किं मयेत्यतो गतव्यमित्यर्थः, शितिकंठ ! कलहंसवत्पांडुभिर्धवलैः ॥ १२ ॥ ❋ ❋ युक्त्यापि गंतव्यत्वं वक्ति कथमिति । नेंगते न चलति आह्वानाभावे कथं गमनं स्यादित्याशंक्याऽनाह्वानेप्येषां गृहगमनमुचितं भवतीत्याह अनाहुता इति । देहकृतः पितुः ॥ १३ ॥ ❋ ❋ उपसंहरति तन्मे इति । यत एवं गंतव्ये बहवो हेतवः संति तत्तस्मात् भवान् पूज्यस्त्वं मम प्रसीद हे अमर्त्य ! देव ! इदं वांछितं कर्तुमर्हसीत्यस्मिन्नर्थे बत कृपा कर्तव्या कारुणिकत्वादित्यर्थः । त्वमेव कारुणिको नान्य इत्याशयेनाह त्वयेति । अदभ्रचक्षुषा सर्वज्ञेन त्वया सहायं धर्मः पूर्णः गरीयान् निरूपित इति यदतः कारुणिकत्वात्प्रार्थितस्त्वमनुगृहाण वांछितमिति शेष इत्यर्थः ॥ १४ ॥ ❋ ❋ तथापि प्रियया प्रार्थितः शंकरः किमुत्तरमभ्यधादिति विदुरस्य मानसीं शंकां परिहर्तुमाह एवमिति । गिरित्रो गिरिशः । कुत्सिता वाच एव इषवः शराः कुवागिषवस्तान् । को दक्षः ॥ १५ ॥ ❋ ❋ किंवा बहुना प्रलापेनाऽनाहूता अप्यभियांतीति यदुक्तं तस्योत्तरं शृण्विति भावेनाह त्वयोदितमिति । किं तदुदितमित्यत उक्तं अनाहुता इति तर्ह्यनभियाने किं कारणमत्राह यदीति । ते बांधवाः अनात्ममदेन देहाभिमाननिमित्तदर्पेण जातेन मन्युना क्रोधेन ॥ १६ ॥ ❋ ❋ असतां विद्यादिकमपि मदविषयजनकत्वेनाप्रयोजकमहेः पयःपानमिवेति भावेनाह विद्यातप इति । असत्तमा विद्यादिभिः षड्भिः सतां योग्यैर्गुणैरुत्पन्नैर्मदैः स्मृतौ हतायां शास्त्रश्रवणोत्पन्नज्ञाने नष्टे, भूयसां महात्मनां धाम प्रभावं न पश्यंति । हि यस्मात्तस्मादित्यन्वयः । अदर्शने कारणमाह अभिमानदुर्दृश इति 'विद्यामदो धनमदस्तृतीयोभिजनो मदः' इति मदलक्षणकामादिदोषदुष्टेंद्रियत्वादित्यर्थः । अत एव तन्ना अंतरिति शेषः ॥ १७ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तस्मिन्निति सार्द्धकम् ॥ ९-१३ ॥ ❋ ❋ अर्हसीति चित्सुखः ॥ १४ ॥ ❋ ❋ अभिभाषित इत्यत्र नाथित इति क्वचित् मर्म्मभिदस्तद्भक्तानाम् ॥ १५-१६ ॥ ❋ ❋ भृतमानेत्यत्र ह्यभिमानेति क्वचित् । स्तब्धा इति चित्सुखस्यापि सम्मतः पाठः ॥ १७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

निर्यापितः प्रवर्त्तितः ते प्रसिद्धा यदमी विबुधा व्रजन्ति हि । अत एव हेतोः वयमपि तत्र अभिसराम हे वाम ! अर्थित्वम् इयं मम प्रार्थनेत्यर्थः ॥ ८ ॥ ❋ ❋ तत्र तव मम वा किं प्रयोजनमत आह तस्मिन् भगिन्य इति । तासां सभर्तृकाणामर्हणमिव ममापि सभर्तृकाया अर्हणं भवत्विति कामये इत्याह । अहञ्चेत्यादि । पितृभ्यामुपनीतं दत्तं परिबर्हं वस्त्रालंकारादिद्रव्यं भवता सह अर्हितुं अर्हयितुं स्वीकर्त्तुमिति यावत् कामये इच्छामि ॥ ९ ॥ ❋ ❋ किं परिबर्हार्थिनी यियाससीति तत्राह तत्रेति । स्निग्धियं स्नेहार्द्रचित्तां उन्नीयमानं प्रवर्त्यमानं अध्वरेषु मध्ये ध्वजमिव श्रेष्ठं, यद्वा उत्क्षिप्यमाणं यज्ञकेतुम् ॥ १० ॥ ❋ ❋ अत्याश्चर्यमिदं यत्तवापि प्राकृतलोकस्येव बन्धुष्वेतावान्मोहस्तत्राह त्वयीति । हे अज ! एतन्मोहादिकं तवात्मारामत्वात् त्वय्येवाश्चर्यं भाति अस्माकन्तु स्वाभाविक एवायं धर्म इति भावः । यतो गुणत्रयात्मकमिदं विश्वमात्ममायया

विनिर्मितमतो मुह्यत्येवेति भावः। तथाप्येतद्विश्वमध्येऽपि अहं योषित्। तत्रापि अतत्त्वविच्च ते तव तत्त्वमजानती अत एव दीना भवक्षितिं जन्मभूमिं दिदृक्षे हे भव!॥ ११॥ ❀ ❀ न केवलमहमेकैवैतादृशीत्याह पश्येति। हे अभवेति सुहृद्वियोगदुःखं त्वया नानुभूतमिति भावः। अन्या योषितः सम्बन्धरहिता अपि कान्तसखा भर्तृसहिताः वरूथशः संघशः यासां विमानैर्नभो मण्डितं हे शितिकण्ठेति परानुग्रहाय त्वया विषमपि भक्षितमत आज्ञां देहीति भावः॥ १२॥ ❀ ❀ अहन्तु तस्य कन्या भूत्वा कथं धैर्य्यं धास्यामीत्याह कथमिति। नेङ्गते न द्रष्टुं प्रचलति। ननु तदप्यनाहूताः कथं गच्छामस्तत्राह अनाहुता अपि सौहृदं सुहृदः केतनं गृहं गुरोः श्वशुरस्य देहकृतः पितुश्च॥ १३॥ ❀ ❀ यदि ते नास्ति जिगमिषा तदपि मदनुरोधेन कृपया गच्छेत्याह तन्म इति। हे अमर्त्त्य! हे देव! त्वया अकर्त्तव्यमपि कृतमित्याह अदभ्रचक्षुषा अनल्पज्ञानेनात्मारामेण आत्मनो देहस्यार्द्धे अहं निरूपिता धृता यतोऽर्द्धनारीश्वर इति ख्यातोऽस्यतो मा माम्॥ १४॥ ❀ ❀ को दक्षो यानाह तान् मर्मभिदः कटुवाक्शरान् प्रियया स्मारितः। ननु दक्षप्रयुक्ताः कटुवागिषवः श्रीशिवस्यात्मारामस्य मर्म्म कथं भिन्दन्ति। उच्यते, शिवस्य परमेश्वरत्वादात्मारामत्वमस्त्येव। तमोगुणयुक्तत्वाच्च कदाचित् पारमैश्वर्यानुसन्धाने सति शोकमोहरागद्वेषादयोऽपि भवन्ति। तथैव कृष्णस्य सदैवात्मारामत्वेऽपि श्रीयशोदादिश्रीबलदेवादिश्रीगोपिकादिविशिष्टत्वे प्रेमवत्त्वादेव स्वीयपारमैश्वर्याननुसन्धानात् शोकमोहरागद्वेषादयः, किन्तु शिवस्य तमोगुणोद्भूतास्ते दुःखाभासानुभवमयाः, कृष्णस्य प्रेमोद्भूतास्ते आनन्दपरमकाष्ठानुभवमयाः। प्रेम्णश्चिच्छक्तिसारवृत्तित्वादात्मारामत्वस्याप्यसंकोचकाः। असुरादिहिंसादयस्तु सत्त्वगुणकार्या एव, गुणानां परस्परोपमर्द्दित्वात् यथा प्रकाशोऽन्धकारं हन्ति तथैव सत्त्वगुणस्तमोरजसी हन्ति। तथैव कृष्णोऽसुरादीन्निहन्तीति शुद्धसत्त्वस्वरूपे तस्मिन् प्राकृतसत्त्वकार्यास्ते वर्त्तमाना अपि नापकारका इति प्रथम एव व्याख्यातं सप्तमारम्भे च वक्ष्यते॥ १५॥ ❀ ❀ अनात्म्यं देहादावहंकारस्तत्कृतेन मदेन मन्युना च ते बंधवो यद्यनुत्पादितदोषदृष्टयो भवंति॥ १६॥ ❀ ❀ ननु विदुषो मत्पितुर्मूढानामिव दोषदृष्टिः कथं सम्भवेत् तत्रासतां विद्यादय एवानर्थहेतव इत्याह। विद्यादिभिरेव षड्भिर्गुणैः स्मृतौ विवेचनायां हतायां सत्यां भृतास्तैरेव पुष्टाः अहं विद्वांस्तापस इत्यादिमानो गर्वस्तेन दुर्दृशोऽन्धा भूयसां महत्तमानां धाम तेजो न पश्यन्ति। ननु तैर्गुणैः कथं स्मृतिभ्रंशस्तत्राह–सतां गुणैरसत्तमानां तु इतरैर्दोषैर्दुग्धममृतमपि सर्पमुखे प्रविष्टं विषमेव भवेदतः स्थान एव गुणा गुणायंत इति भावः॥१७॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

हे वाम! ते श्वशुरस्य यज्ञमहोत्सवः सांप्रतमिदानीं निर्यापितः प्रवर्त्तितः यतोमी विबुधाः व्रजंति। यदि तेर्थिता इच्छा तर्हि वयं च तत्राभिसराम गच्छामः॥ ८॥ ❀ ❀ पित्रादिभिरुपनीतं दत्तं परिबर्हमलंकारादिकं भवता सह अर्हितुं ग्रहीतुं कामये॥ ९॥ ❀ ❀ हे मृड! चिरमुत्कंठमुत्सुकं मनो यस्याः साहम्। तत्र स्थाने भर्तृभिः संमिताः तुल्याः सहिता इति यावत्, मे स्वसृः भगिनीः क्लिन्ना स्नेहार्द्रा धीर्यस्यास्तां मातरं च मातृष्वसृश्च महर्षिभिरुन्नीयमानं प्रवर्त्यमानमध्वरध्वजं क्रतुश्रेष्ठं तत् यूपं वा द्रक्ष्ये॥ १०॥ ❀ ❀ प्रिये किं तत्राश्चर्य्यं यतस्तवौत्सुक्यमत आह हे भव! एतद्गुणत्रयात्मकं विश्वम्। अजात्ममायया अजस्य विष्णोः आत्ममायया स्वासाधारणेन वयुनेन संकल्पेन विनिर्मितं त्वयि योगेश्वरे भाति एवं भूतस्य तव भार्य्याया ममाश्चर्य्यांतरं नापेक्षितं तथापि अहं योषित् अतत्त्वविच्च अतो मे भवक्षितिं जन्मभूमिं दिदृक्षे द्रष्टुमिच्छामि॥ ११॥ ❀ ❀ हे अभव! भवोपलक्षितजन्मादिषड्भिर्मिवर्जित! यद्वा 'अकारो वासुदेवः' तस्माद्भवो जन्म यस्य स तथा हे विष्णुजात "नारायणाद् ब्रह्मा जायते नारायणाद्रुद्रो जायते" इति श्रुतेः "क इति ब्रह्मणो नाम ईशोहं सर्वदेहिनाम्। आवां तवांगसंभूतौ तस्मात्केशवनामवान्" इति स्मृतेश्च। कांतः एव सखा यासां ताः। वरूथशः संघशः॥ १२॥ ❀ ❀ पितृगेहे कौतुकमुत्सवम्। सौहृदं सुहृद्गृहम् अभियंतीत्यत्र ह्रस्वत्वमार्षम्॥ १३॥ ❀ ❀ हे अमर्त्य! देव! अदभ्रचक्षुषा अनल्पया दृष्ट्या आत्मनो देहस्यार्द्धे त्वयाहं निरूपिता नियोजिता तत्ततः प्रसीद प्रसन्नो भव। प्रसन्नः सन् भवान् इदं कर्तुमर्हति। यतश्च कारुणिकोऽतो मा मां याचितः सन् अनुगृहाण॥ १४॥ ❀ ❀ एवमुक्तप्रकारेणाभिभाषितो याचितः गिरिं त्रायते इति गिरित्रः को दक्षो विश्वसृजां समक्षं संमुखे मर्म भिंदंति ये तान् कुवागिपून् "कर्णेनालीकनाराचानुद्धरंति शरीरतः। वाक्सायको न निर्हर्तुं शक्यो हृदिशयो हि सः॥ वाक्सायका वदनान्निष्पतंति यैराहतः शोचति शत्रहानि। परस्य नो मर्मसु ते पतंति तान्पंडितो नावसृजेत्परेषु" इत्युक्तदोषान् दुरुक्तिबाणान् संस्मारितः सन् प्रत्यभ्यधत्त प्रत्युत्तरमुक्तवान्॥ १५॥ ❀ ❀ तदेवाह त्वयोदितमित्यादिना यावदध्यायसमाप्ति। हे शोभने! सुहृदादिगृहमनाहुताः अपि अभियंतीति त्वया यदुदितं तच्छोभनमेव, किंतु ते सुहृदादयो बलीयसा दृढतरेण अनात्म्यमदेन देहाद्यात्माभिमानेन मन्युना च अनुत्पादितदोषदृष्टयो भवंति तर्हि॥ १६॥ ❀ ❀ ननु भवद्विधेषु महत्सु विद्यादिसंपन्नो दक्षः कुतो दोषदृष्टिः स्यादत्राह विद्येति। विद्यादिभिः सतां शिष्टानां गुणैः असत्तमानामितरैर्दोषरूपैः स्मृतौ कार्याकार्यविवेकरूपायां हतायां भृतेन धृतेन अहंमानेन दुर्दृशः कुदृष्टयः अत एव स्तब्धाः अनम्रा भूयसां महतां धाम तेजो न पश्यंति॥ १७॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

तत्र स्वौत्सुक्यं प्रकटयन्त्याह—प्रजापतेरिति सप्तभिः। ते तव श्वशुरस्य प्रजापतेर्दक्षस्य सांप्रतमिदानीं यज्ञमहोत्सवो निर्यापितः प्रवर्त्तितः। हे वाम प्रकृत्या चतुर ! ते तव यद्यर्थिता इच्छा तदा वयं च सर्वे तत्राभिसराम गच्छामेति संबन्धः। वयमिति बहुवचनेन सादरं च सत्कृतं सपरिकरं गमनं सूचयति, नोपेक्षापूर्वकम्। ते श्वशुरस्येत्यनेनान्यप्रजापतिव्यवच्छेदं संबन्धप्रदर्शनेन गमनस्यावश्यकत्वं च दर्शयति। तत्र स्वस्य निश्चयं दर्शयति—किलेति। यज्ञप्रवृत्तौ न सन्देह इत्यर्थः। यदि तेऽर्थितेत्यनेनात्मनस्तदिच्छावशवर्त्तित्वं दर्शयति। ननु यज्ञः प्रवृत्त इति त्वया कथं ज्ञातं तत्राह—अमी इति। एषां व्रजतां देवानां मुखात् श्रुतमिति भावः। तेषां गमनं प्रत्यक्षसिद्धमित्याह—हीति। व्रजन्तीति वर्त्तमाननिर्देशेनाधुना यज्ञसमाप्तिर्न जाताऽतो गमनसमयोऽस्तीति सूचयति ॥ ८ ॥ ❀ ❀ ननु देवानां गमनेपि तत्र भगिन्यादीनां संबन्धिनामागमनानिश्चयात्त्वमेवैका गता कथं शोभिष्यस इत्यत आह—तस्मिन्निति। तस्मिन् यज्ञमहोत्सवे ध्रुवं निश्चितमेतत् मम भगिन्यो गमिष्यन्तीति। नन्वेवं कथं निश्चयस्तत्राह—सुहृद्दिदृक्षव इति। चिरकालं पतिगृहे स्थितानां सुहृदां पित्रादीनां दर्शनेच्छा भवति, परंतु निमन्त्रणं विना गमनं न भवति, यज्ञे निमन्त्रणस्यावश्यकत्वात्तत्र तासामागमनं निश्चितमिति भावः। तथापि पुत्रीणां मध्ये जामातुर्गमनं कथं सङ्गतं तत्राह—भर्तृभिरिति। अतोऽहमपि तस्मिन् यज्ञे पितृभ्यामुपनीतं दत्तं परिबर्हमलङ्कारादिपारितोषिकं भवता सहार्हितुं स्वीकर्तुं कामये इच्छामि। भवता सहेत्यनेन त्वदादरणपूर्वकमेवादातुमिच्छामि, नान्यथा, त्वदादरं विना तु प्राणानपि त्यक्ष्यामीति प्रतिज्ञा सूचिता। अत एव तत्र तद्गागादर्शनात्तथा करिष्यति। अतस्तत्र तवानादरणं न भविष्यति तत्त्वया गन्तव्यमिति भावः ॥ ९ ॥ ❀ ❀ तत्र गमने च सुहृदादीनां दर्शनमानुषङ्गिकलाभो भविष्यतीत्याह—तत्रेति। तत्र पितृगृहे ननु निश्चितं द्रक्ष्ये। द्रक्ष्यामीति पदत्रयं सर्वत्र द्वितीयान्तेन संबध्यते। भर्तृसंमिता भर्तृभिः संमिताः तुल्याः मे स्वसॄः मम भगिनीरहं द्रक्ष्ये, तथा मातृष्वसॄः, क्लिन्ना स्नेहेनार्द्रा धीर्यस्याः सा तथा तां मातरं च। दर्शनस्यावश्यकर्त्तव्ये हेतुं सूचयति—चिरेति। चिरं बहुकालपर्यन्तमुत्कण्ठमुत्सुकं मनो यस्याः साहम्। तथा महर्षिभिः भृग्वादिभिरुन्नीयमानं प्रवर्त्यमानमध्वरध्वजमध्वरेषु यागेषु ध्वजवदुत्कृष्टं यागश्रेष्ठम्। मृड हे सर्वसुखप्रद इति संबोधनेन मामेतत्प्रार्थनाङ्गीकारेण सुखिनीं कुर्विति सूचयति ॥ १० ॥ ❀ ❀ ननु सर्वाश्चर्यमयविश्वकर्त्तारं मां पश्यन्ती किमिति प्राकृतप्रपञ्चरचनामधिकत्वेन मन्वाना तद्दर्शनार्थं समुत्कण्ठसे इति मन्यमानं शिवं प्रत्याह—त्वयीति। हे अज हे भव ! यद्यपि आत्मनस्तव मायया विनिर्मितमत एव त्रिगुणात्मकमेतद्विश्वमाश्चर्यं तर्कागोचरं त्वयि भाति। अतस्त्वां पश्यन्त्या ममान्यत्राश्चर्यदर्शनोत्कण्ठा न युक्तेति शेषः। अथाप्यहं ते तवातत्त्ववित्तत्त्वं यथार्थस्वरूपं न जानामि। यतो योषित् अज्ञानप्रधाना विषयसेवापरा, 'युष सेवायाम्' इति धातोः। अत एव दीना कृपणा भवताऽनुकम्प्या। अतो मे भवक्षितिं मम जन्मभूमिं पितृगृहोपलक्षितं तत्रत्यं सर्वं दिदृक्षे द्रष्टुमिच्छामि। भवत्यस्मात्सर्वमिति भवस्तथा च भव इति संबोधनेन सर्वकारणत्वमुक्तम्। तथापि तस्यान्यतो जन्म स्यादित्याशङ्क्य अजेति संबोधनम्। त्वयीत्येवमादिकथनाच्छिवतत्त्वं जानन्त्यपि तत्र गमनार्थं स्वाज्ञानं दर्शयतीति स्पष्टम्। यद्वा एवं स्वाभिप्रायं प्रदर्श्यापि तत्र गत्वा किमत्याश्चर्यं द्रक्ष्यसि येन तवैवमौत्सुक्यमस्तीति शिवाभिप्रायमालक्ष्याह—त्वयीति। यद्यप्यात्मनो हरेर्मायया विरचितं त्रिगुणात्मकमेतद्विश्वमाश्चर्यरूपं त्वयि भाति भगवद्ध्यानपरत्वेन त्वदन्तःकरणे स्वत एव सर्वं स्फुरति। अतस्तवान्यत्र गत्वा द्रष्टव्यमाश्चर्यं नास्तीति शेषः। अथाप्यहं तवातत्त्ववित् तत्संबन्धि तत्त्वं भगवद्ध्यानलक्षणं न जानामि। यतो योषित् अज्ञानप्रधाना विषयासक्ता अत एव दीना अतो मे भवक्षितिं दिदृक्षे स्वजन्मभूम्युपलक्षितं तत्र सर्वं द्रष्टुमिच्छामि ॥ ११ ॥ ❀ ❀ यदि संबन्धरहिता अपि तत्र गच्छन्ति तदा मम तत्सुताया गमनेच्छा कुतो न स्यादित्याह—पश्येति सार्द्धेन। हे अभव जन्ममरणादिलक्षणसंसाररहित ! एवंभूतस्य यद्यपि तव संयोगवियोगमानापमानादिजनितसुखदुःखादि नास्ति, तथापि अन्ययोषितोऽन्येषां संबन्धरहितानामपि योषितः कान्तसखीः कान्तैर्मनोहरैर्भर्तृभिः सहिताः स्वलंकृताः वरूथशो यूथशः प्रयान्तीः दक्षयज्ञं गच्छन्तीस्त्वं पश्य। यद्येवं तदा हे सुरवर्य सुताया मम देहः पितृगेहकौतुकं यज्ञमहोत्सवं निशम्य श्रुत्वा कथं नेङ्गते कथं तद् द्रष्टुं न प्रचलतीत्युत्तरेण संबन्धः। यज्ञे समाजाधिक्यं सूचयन्त्याह—यासामिति। हे शितिकण्ठ नीलकण्ठ ! यासां योषितां कलहंसपाण्डुभिः श्वेतैर्व्रजद्भिर्विमानैर्नभो मण्डितमिति संबन्धः। शितिकण्ठ इति संबोधनेन यथा हालाहलमपि पीत्वा त्वया देवादिभ्यः सुखं दत्तं तथा ममाप्येतन्मनोरथं पूर्णं कुर्विति सूचयति ॥ १२ ॥ ❀ ❀ हे सुरवर्य इति संबोधयन्ती तव देवश्रेष्ठत्वात्तत्र गमने न कापि क्षतिरिति सूचयति। ननु सर्वा अपि गच्छन्ति परं त्वाहूताः, वयं त्वनाहूताः कथं गन्तुमुत्सहामहे ? तत्राह—अनाहुता अपीति। ह्रस्वत्वमार्षम्। सुहृत्संबन्धि सौहृदं मित्रगृहं तथा भर्तुः पत्युः राज्ञश्च गुरोश्च देहकृतः पितुश्च केतनं गृहमनाहुता अप्यभियन्ति गच्छन्ति। लोका इति शेषः। अतो मम पितृत्वेन मान्यत्वात्तद्गृहगमने आह्वानं विनापि न दोष इति भावः ॥ १३ ॥ ❀ ❀ यस्मादाह्वानाभावेपि दोषो नास्ति, तत्तस्मात् हे अमर्त्य हे ईश ! मे प्रसीद आग्रहस्य मर्त्यधर्मत्वात्तव चेश्वरत्वादाग्रहं त्यक्त्वा दीनयाज्ञापालनमावश्यकमतो युक्तायुक्तविचारं विहाय ममोपरि प्रसादमेव कुर्वित्यर्थः। को वा प्रसादो मया कर्त्तव्यस्तत्राह—वाञ्छितमिति। यतो भवान् कारुणिकोऽतो मम वाञ्छितं दक्षयज्ञमहोत्सवे गमनं कर्तुमर्हत्येव। वतेत्येवकारार्थः। तत्रात्मनि कृतं कारुणिकत्वमेव दर्शयन्ती

पुनरनुग्रहमेव व्याकुलत्वेन प्रार्थयते—त्वयेति । यथा अदभ्रचक्षुषा अनल्पज्ञानेन सर्वज्ञेनापि त्वया कृपया आत्मनः स्वदेहस्यार्द्धेऽहं निरूपिता स्थापिता अर्द्धनारीश्वरत्वेन विख्याततत्वात् । तथा याचितः सन् मामनुगृहाणेत्यनेन तत्र गमननिर्बन्धातिशयो दर्शितस्तेन च यदि तत्र न गमिष्यसि तदा त्वत्रैव प्राणा गमिष्यन्तीति सूचितम् ॥ १४ ॥ ❀ ❀ एवं सत्या प्रार्थितो भवस्तत्र गमनेऽस्या मरणं स्यादिति जानन् प्रथमतो वारणं कृतवानित्याह—एवमिति । एवं पूर्ववर्णितप्रकारेण गिरित्रः शिवः प्रियया सत्या अभिभाषितः संप्रार्थितः सन् प्रत्यभ्यधत्त तां प्रत्युत्तरं दत्तवानिति संबन्धः । यान् कुवागिषून् कुत्सिता वाच एव इषवो बाणाः, अत एव मर्म हृदयं भिन्दन्तीति मर्मभिदस्तान् को दक्षः आह कथितवांस्तान् सतीप्रार्थनया संस्मारितः सन् तस्याः स्त्रीस्वभावादविवेकं दृष्ट्वा प्रहसन् उपहासं कुर्वन् । वाचो बाणत्वे हेतुं सूचयन्नाह—विश्वसृजामिति । यतो विश्वसृजां समक्षतः संमुखे सभामध्ये कुवाचः 'अयं तु देवयजने इन्द्रादिभिः सह भागं न लभताम्' इत्यादिनिन्दावचनान्युक्तवानतस्ता बाणा इव हृदये खेदजनका जाता इति भावः । एवं तद्वाचः स्मरन् सत्या हितमुपदिष्टवान् । तत्र हेतुमाह—सुहृत्प्रिय इति । सुष्ठु हृत् हृदयं येषां तेषां प्रिय इत्यर्थः । एवं हितोपदेष्टृत्वादेव सनन्दादयस्तमुपासत इति भावः ॥ १५ ॥ ❀ ❀ शिववचनान्येव दर्शयति—त्वयोदितमित्यादिदशभिः । हे शोभने इति सोपहाससंबोधनम् । अनाहूता अपि बन्धुषु मित्रादिगृहेषु जना अभियन्ति गच्छन्तीति यत् त्वयोदितमुक्तं तच्छोभनं युक्तमेव, परंतु ते सुहृदादयो यदि बलीयसा अप्रतिकार्येण अनात्म्यमदेन देहाद्यभिमाननिमित्तदर्पेण जातेन मन्युना क्रोधेनानुत्पादितदोषदृष्टयों न उत्पादिते आरोपिते दोषे दृष्टिर्ज्ञानं येषां ते तथाभूता भवन्ति तदा तद्गृहगमने न कश्चिद्दोषः । यदा त्वविद्यमानमपि दोषमारोप्य पश्यन्ति तदा तद्गृहगमने कल्याणं न भविष्यत्यतो न गन्तव्यमिति ॥ १६ ॥ ❀ ❀ अहो दक्षस्य विद्यादिमतोऽपि कथं बुद्धिवैपरीत्यं जातं येन भवं द्वेष्टीति सत्यभिप्रायमालक्ष्य न केवलं दक्षस्यैवैवं वैपरीत्यम्, किंत्वन्येषामप्यसतामिति वदंस्तेषां गृहगमने दोषं च वदंस्तद्गृहगमनं निषेधति—विद्येति त्रिभिः । विद्यादयः षट् सतां ज्ञानवैराग्ययशः श्रीवीर्यैश्वर्याणां हेतुत्वेन गुणा अप्यसतां तु ज्ञानादिनाशकत्वेन दोषा एवातस्तैस्तेषां स्मृतौ हतायां कर्त्तव्यानुसन्धाने नष्टे सति तैरेव प्रत्युत भृतमानदुर्दृशः भृतः पुष्टो यो मानोऽहं विद्यावांस्तापसो धनीत्यादिगर्वस्तेन दुष्टा यथार्थग्रहणासमर्था दृष्टिर्येषां ते स्तब्धा अनम्राः सन्तो भूयसां महत्तमानां धाम प्रभावं हि यस्मात् न पश्यन्ति तस्मात्स्वजनव्यपेक्षया एते स्वजना इति दृष्ट्या एतादृशानामनवस्थितचित्तानां गृहान्न प्रतीयात् न गच्छेदित्युत्तरेणान्वयः । तत्र विद्या शास्त्रीयं ज्ञानं तस्य यथा प्रह्लादादौ भगवन्माहात्म्यज्ञानपूर्वकतत्परत्वहेतुत्वेपि हिरण्यकशिपुप्रभृतौ तु तद्वैमुख्यसंपादकत्वम् । तपः शरीरकर्षणपूर्वकचित्तैकाग्रतालक्षणं तस्य ब्रह्मादौ सृष्ट्यादिहेतुत्वेपि हिरण्यकशिपुप्रभृतौ तन्नाशादिहेतुत्वम् । वित्तं धनं तस्य बल्यम्बरीषप्रभृतौ भगवत्सेवादिहेतुत्वेपि नलकूबरप्रभृतौ स्थावरत्वादिहेतुत्वम् । वपुः सर्वावयवसमुपेतो देहः । वयो यौवनम् । कुलं ब्राह्मणाद्यधिकारिकुले जन्म । एषामपि सत्सु धर्मादिपुरुषार्थहेतुत्वेप्यसत्सु दुराचारहेतुत्वेन नरकपातहेतुत्वं ज्ञेयम् ॥ १७ ॥

## भाषानुवादः

सतीने कहा—वामदेव ! सुना है, इस समय आपके ससुर दक्षप्रजापतिके यहाँ बड़ा भारी यज्ञोत्सव हो रहा है। देखिये, सब देवता वहीं जा रहे हैं। यदि आपकी इच्छा हो तो हम भी चलें ॥ ८ ॥ ❀ ❀ इस समय अपने आत्मीयोंसे मिलनेके लिये मेरी बहिनें भी अपने-अपने पतियोंके सहित वहाँ अवश्य आयेंगी। मैं भी चाहती हूँ कि आपके साथ वहाँ जाकर माता-पिताके दिये गहने, कपड़े आदि उपहार स्वीकार करूँ ॥ ९ ॥ ❀ ❀ वहाँ अपने पतियोंसे सम्मानित बहिनों, मौसियों और स्नेहार्द्रहृदया जननीको देखनेके लिये मेरा मन बहुत दिनोंसे उत्सुक है। कल्याणमय ! इसके सिवा वहाँ महर्षियोंका रचा हुआ श्रेष्ठ यज्ञ भी देखनेको मिलेगा ॥ १० ॥ ❀ ❀ अजन्मा प्रभो ! आप जगत्‌की उत्पत्तिके हेतु हैं। आपकी मायासे रचा हुआ यह परम आश्चर्यमय त्रिगुणात्मक जगत् आपही में भास रहा है। किन्तु मैं तो स्त्रीस्वभाव होनेके कारण आपके तत्त्वसे अनभिज्ञ और बहुत दीन हूँ। इसलिये इस समय अपनी जन्मभूमि देखनेको बहुत उत्सुक हो रही हूँ ॥ ११ ॥ ❀ ❀ जन्मरहित नीलकण्ठ ! देखिये—इनमें कितनी ही स्त्रियाँ तो ऐसी हैं, जिनका दक्षसे कोई सम्बन्ध भी नहीं है। फिर भी वे अपने-अपने पतियोंके सहित खूब सज-धजकर झुंड-की-झुंड वहाँ जा रही हैं। वहाँ जानेवाली इन देवाङ्गनाओंके राजहंसके समान श्वेत विमानोंसे आकाशमण्डल कैसा सुशोभित हो रहा है ॥ १२ ॥ ❀ ❀ सुरश्रेष्ठ ! ऐसी अवस्थामें अपने पिताके यहाँ उत्सवका समाचार पाकर उसकी बेटीका शरीर उसमें सम्मिलित होनेके लिये क्यों न छटपटायेगा। पति, गुरु और माता-पिता आदि सुहृदोंके यहाँ तो बिना बुलाये भी जा सकते हैं ॥ १३ ॥ ❀ ❀ अतः देव ! आप मुझपर प्रसन्न हों; आपको मेरी यह इच्छा अवश्य पूर्ण करनी चाहिये; आप बड़े करुणामय हैं, तभी तो परम ज्ञानी होकर भी आपने मुझे अपने आधे अङ्गमें स्थान दिया है। अब मेरी इस याचनापर ध्यान देकर मुझे अनुगृहीत कीजिये ॥ १४ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—प्रिया सतीजीके इस प्रकार प्रार्थना करनेपर अपने आत्मीयोंका प्रिय करनेवाले भगवान् शङ्करको दक्षप्रजापतिके उन मर्मभेदी दुर्वचनरूप बाणोंका स्मरण हो आया, जो उन्होंने समस्त प्रजापतियोंके सामने कहे थे; तब वे हँसकर बोले ॥ १५ ॥ ❀ ❀ भगवान्

शङ्करने कहा—सुन्दरि ! तुमने जो कहा कि अपने बन्धुजनके यहाँ विना बुलाये भी जा सकते हैं, सो तो ठीक ही है; किन्तु ऐसा तभी करना चाहिये, जब उनकी दृष्टि अतिशय प्रबल देहाभिमानसे उत्पन्न हुए मद और क्रोधके कारण द्वेष-दोषसे युक्त न हो गयी हो ॥ १६ ॥ ❀ ❀ विद्या, तप, धन, सुदृढ शरीर, युवावस्था और उच्च कुल—ये छः सत्पुरुषोंके तो गुण हैं, परन्तु नीच पुरुषोंमें ये ही अवगुण हो जाते हैं; क्योंकि इनसे उनका अभिमान बढ़ जाता है और दृष्टि दोषयुक्त हो जाती है एवं विवेक-शक्ति नष्ट हो जाती है। इसी कारण वे महापुरुषोंका प्रभाव नहीं देख पाते ॥ १७ ॥

नैतादृशानां स्वजनव्यपेक्षया गृहा[1]न् प्रतीयादनवस्थितात्मनाम् ।
येऽभ्यागतान् वक्रधियाभिचक्षते आरोपितभ्रूभिरमर्षणाक्षिभिः ॥ १८ ॥
तथारिभिर्न व्यथते शिलीमुखैः शेतेऽर्दिता[2]ङ्गो हृदयेन दूयता ।
स्वानां यथा वक्रधियां दुरुक्तिभिर्दिवानिशं तप्यति मर्मताडितः ॥ १९ ॥
व्यक्तं त्वमुत्कृष्टगतेः प्रजापतेः प्रियाऽऽत्मजानामसि सुभ्रु सम्मता ।
अथापि मानं न पितुः प्रपत्स्यसे मदाश्रयात्कः परितप्यते यतः ॥ २० ॥
पापच्यमानेन हृदाऽऽतुरेन्द्रियः समृद्धिभिः पूरुषबुद्धिसाक्षिणाम् ।
अकल्प एषामधिरोढुमञ्जसा पदं परं द्वेष्टि यथासुरा हरिम् ॥ २१ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

स्वजनव्यपेक्षया बंधुदृष्ट्या गृहान्न प्रतीयान्नावलोकयेत्। अनवस्थितचित्तत्वमेवाह। ये वक्रधिया कुटिलया बुद्ध्या पश्यंति। आरोपिता उत्तंभिता भ्रूः येषु तान्यारोपितभ्रूणि तैः आरोपिताभिः भ्रूभिरिति वा। अमर्षणैः सक्रोधैरक्षिभिः नेत्रैः ॥ १८ ॥ ❀ ❀ ननु स्वजनानां गृहं सुहृद्भिर्गंतव्यं तेषां दुश्चेष्टितं च विवेकिभिः सोढव्यम् इति चेत् न तस्य दुःसहत्वादित्याह। तथेति। अरिभिः शत्रुभिः शिलीमुखैर्बाणैरर्दितांगः खंडितगात्रोऽपि तथा न व्यथते। यतः शेते स्वपिति। स्वानां दुरुक्तिभिर्मर्मसु स ताडितो यथा दूयता व्यथमानेन हृदा दिवानिशं तप्यति ॥ १९ ॥ ❀ ❀ मयि तत्र गतायां नेयं शंकेति चेत्तत्राह। व्यक्तं निश्चितमुत्कृष्टा गतिः स्थितिर्यस्य तस्यात्मजानां कन्यानां मध्ये त्वं प्रियेति मे संमताऽप्यथापि पितुः सकाशान्मानं न लप्स्यसे। मदाश्रयान्मत्संबंधात् ॥ २० ॥ ❀ ❀ ननु भगवंस्त्वया किमिति दक्षस्तिरस्कृतो यतोऽसौ त्वां द्वेष्टयत आह। पापच्यमानेनालं दह्यमानेन हृदा मनसा दुःखितेंद्रियः। काभिः। पुरुषो जीवस्तस्य बुद्धिश्चित्तं तत्साक्षिणां निरहंकाराणामित्यर्थः। समृद्धिभिः पुण्यकीर्त्यादिभिः। एषां पदं स्थानमैश्वर्यं प्राप्तुमकल्पोऽशक्तः सन्परं द्वेष्टि। असुरा यथा हरिं केवलं द्विषंति ॥ २१ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अत एतादृशाः पित्रादयोप्युपेक्ष्या एवेत्याह—नैतादृशेति। यदि गच्छेत्तदा शत्रुदृष्ट्यैव गच्छेदिति भावः। ननु दुरात्मानोपि स्वापत्यजामात्रादिषु स्निह्यंत्येवेति तत्राह—अनवस्थितात्मनां नायमपि तेषां निश्चय इति भावः। अमर्षणपदेनैव चरितार्थत्वाद्विशेषणानर्थक्यमाशंक्याह। आरोपिताभिः भ्रूभिरिति वेति ॥ १८ ॥ ❀ ❀ पुनराक्षिपति—नन्विति। एतादृशा बंधवोरिभ्योप्यधिका इति भावः ॥ १९ ॥ ❀ ❀ उत्कृष्टगतेरिति विपरीतलक्षणया ॥ २० ॥ ❀ ❀ इहाक्षिपति—नन्विति। परं केवलं तदुक्तं "दह्यमानास्सुतीव्रेण नीचाः परयशोग्निना। अशक्तास्तत्पदं गंतुं ततो निंदां प्रकुर्वते ॥" इति। अयमर्थः- अस्माकं तु त्वत्पितरि दक्षे द्वेषलेशोपि नास्तीति सशपथं वदन् विशिनष्टि-पुरुषः परमेश्वर एव बुद्धेर्भद्राया अभद्राया वा साक्षी येषां तेषामिति हे दाक्षायणि यदि त्वं न प्रत्येषि तदा क्षणं समाधिना परमेश्वरं साक्षात्कृत्वा मद्दोषगुणौ स एव प्रष्टव्य इति भाव इति विश्वनाथः ॥ २१ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

द्वितीयार्थे आरोपिताभिरुज्जृम्भिताभिः भ्रूभिरुपलक्षितैरमर्षणैरक्षिभिः। तत्र वक्रधियेति हेतौ तृतीया ॥ १८ ॥ ❀ ❀ तस्य दुश्चेष्टितस्य स्वपिति कदाचिन्निद्रात्यपीत्यर्थः ॥ १९-२० ॥ ❀ ❀ अहंकारो हि चित्ते भवति तत्साक्षित्वं तत्रोदासीनत्वमेव, तथा च निरहङ्काराणामिति फलितोर्थः ॥ २१ ॥

---

१. प्रा० पा०—गृहात्। २. प्रा० पा०—शेते क्षताङ्गे।

## श्रीमद्वीरराघवव्याख्या

तस्मादेतादृशानामनवस्थितचित्तानां गृहान् स्वजनव्यपेक्षया स्वजन इति बुद्ध्या न प्रतीयात् न गच्छेत् । अनवस्थितात्मत्वमेवाह-ये:वक्रा कुटिला तया दृष्ट्या वक्रधियेति पाठे कुटिलबुद्ध्येत्यर्थः आरोपिता उत्तंभिता भ्रूर्येषां तैरमर्षणैः साक्रोशैरक्षिभिः गृहान् प्रत्यभ्यागतान् पश्यंति ॥ १८ ॥ ❀ ❀ पश्यंत्वेवमथापि सोढ्वा गंतव्यमेव बंधुभिस्तत्राह तथेति । अरिभिः शत्रुभिः शिलीमुखैः बाणैरर्दितांगः भिन्नगात्रोपि तथा न व्यथते यतः शेते स्वपिति यथा स्वानां वक्रधियां दुरुक्तिभिः मर्मसु ताडितः दूयता व्यथमानेन हृदयेन दिवानिशं तप्यति । दुरुक्तीनां सोढुमशक्यत्वान्न तद्गृहान्प्रति गंतव्यमित्यर्थः ॥ १९ ॥ ❀ ❀ मास्तु त्वद्गमनमहमेका व्रजिष्यामीति चेन्मामनादृत्य गतायास्तवापि पितृकृतः पराभवः प्राणविपत्तये स्यादित्याह व्यक्तमिति यावत्समाप्ति । हे सुभ्रु ! यद्यपि त्वमुत्कृष्टगतेः उत्कृष्टा गतिः प्राजापत्याधिकाररूपा गतिर्यस्य तस्य प्रजापतेर्दक्षस्यात्मजानां दुहितॄणां मध्ये प्रिया प्रीतिविषयासीति मे मता ज्ञाता व्यक्तं स्फुटं तथापि मदाश्रयात् मदाश्रयणात् मत्संबंधाद्धेतोस्त्वं पितुः सकाशान्मानं सन्मानं न लप्स्यसे, यतः मत्संबंधात् को दक्षः परितप्यते क्लिश्यति ॥ २० ॥ ❀ ❀ ननु कुतस्त्वया दक्षस्तिरस्कृतः यतोसौ त्वां द्वेष्टि तत्राह पापच्यमानेनेति । पुरुषबुद्धिसाक्षिणां पुरुषो जीवः बुद्धिर्महान् ते साक्षात्पश्यंतीति तथा तेषां ब्रह्मात्मकत्वेन प्रकृतिपुरुषयाथात्म्यविदां ब्रह्मविदामिति यावत् तेषां समृद्धिभिः पुण्यकीर्त्यादिभिः तेषां पुरुषबुद्धिसाक्षिणां पदं स्थानमैश्वर्यमधिकारमधिरोढुं प्राप्तुमसमर्थः । अत एव पापच्यमानेन भृशं तप्यमानेन हृदयेन आतुरेंद्रियः दुखितेंद्रियः तान् परं केवलं द्वेष्टि स्वयं मूर्खोऽज्ञो दुर्भगश्च महद्भिः साम्यमलभमानस्तान् केवलं द्वेष्टि यथा असुरा हरिं द्विषंति ॥ २१ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

किमत इति तत्राह । नैतादृशानामिति । आरोपितभ्रूभिरिति ह्रस्वत्वाभावश्छांदसः, उन्नमितभ्रूभंगैरमर्षणाक्षिभिरसहमानलक्षणोपेतनेत्रैः ॥ १८ ॥ ❀ ❀ दक्षाध्वराऽगमने कारणांतरं चाह तथारिभिरिति । प्रधने युद्धे शिलीमुखैः शरैः ॥ १९ ॥ ❀ ❀ किं बहुनानुलप्यत्वं दक्षस्य प्रियपुत्रीत्वेपि मदाश्रयत्वेन तप्यमानात्पितुः पूजां न प्राप्नोषीत्याह व्यक्तमिति । उत्कृष्टगतेः प्राप्तसर्वाधिपत्यस्य ॥ २० ॥ ❀ ❀ मत्पितुर्ज्ञानाधिकारिष्वेकत्वेन सत्त्वात् कुतो भवति द्वेष इति आशंक्य साम्राज्यमदलक्षणासुरावेशान्मत्पदाधिपत्यं न प्राप्तमतो द्वेष इति भावेनाह तातप्यमानेनेति । पुरुषबुद्धिसाक्षिणां पुरुषेंद्रियप्रेरकाणामस्मत्सदृशानां समृद्धिभिः एषां पुरुषबुद्धिसाक्षिणां परं पदमंजसा तत्त्वेनाधिरोढुमकल्पोऽसमर्थो यतो यस्मात्ततो द्वेष्टि । इदमसुरलक्षणमिति भावेनोक्तं यथेति ॥ २१ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

वक्रधिया हेतुनारोपितभ्रूभिरुपलक्षितैरमर्षणाक्षिभिः येऽभिचक्षते ॥ १८ ॥ ❀ ❀ शेते कदाचिन्निद्रात्यपीत्यर्थः ॥ १९–२१ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

अत ईदृशाः पित्रादयोऽप्युपेक्ष्या एवेत्याह नैतेति । स्वजना इति या विशिष्टा अपेक्षा तया न गच्छेदिति यदि गच्छेत्तदा वरं शत्रुबुद्ध्यैव गच्छेदिति भावः । ननु दुरात्मानोऽपि स्वापत्यजामात्रादिषु स्निह्यंत्येवेति तत्राह । अनवस्थितात्मनां नायमपि तेषां निश्चय इति भावः । ये आरोपिताभिर्भ्रूभिस्तथा अमर्षणाक्षिभिः क्रोधनेत्रैरभिचक्षते पश्यन्ति ॥ १८ ॥ ❀ ❀ तादृशा बन्धवः शत्रुभ्योऽप्यधिका इत्याह–अरिभिः प्रयुक्तैः शिलीमुखैर्बाणैः तथा न व्यथते यतः शेते कदाचित् स्वपिति दूयता दूयमानेनेत्युत्तरेणान्वयः । मयि तत्र गतायां नेयं शंकेति चेत्तत्राह व्यक्तं निश्चितमेव उत्कृष्टगतेरिति विपरीतलक्षणया प्रजापतेर्दक्षस्य आत्मजानां मध्ये त्वं प्रिया अतिस्नेहपात्री भवसि । तथापि तदपि पितुः सकाशात् मानं न प्रतिपत्स्यसे न प्राप्स्यसि यतो मदाश्रयात् मत्संबंधात् ॥ १९ ॥ ❀ ❀ ननु भगवंस्तदा त्वया वा दक्षं प्रति मनसा किञ्चित् द्विष्टं, तत्र नहि नहीति शपथं कुर्वन् दक्षो मत्सरी सदैवास्मदादीन् द्वेष्टि सम्प्रति मदपराधं कल्पयित्वा द्वेषं प्रकटयामासेत्याह पापच्येति । एषामस्मदादीनां समृद्धिभिर्योगैश्वर्यादिभिर्हेतुभिः पापच्यमानेन जाज्वल्यमानेन हृदा आतुरेन्द्रियो द्वेष्टि यथा असुरा हरिम् । कीदृश एषां परं सर्वोत्कृष्टं पदमधिरोढुं अकल्पः असमर्थः अस्माकन्तु दक्षे त्वत्पितरि द्वेषलेशोऽपि नास्तीति सशपथं वदन् विशिनष्टि पुरुषः परमेश्वर एव बुद्धेर्भद्राया अभद्राया वा साक्षी येषां तेषामिति हे दाक्षायणि ! यदि त्वं न प्रत्येषि तदा क्षणं समाधिना परमेश्वरं साक्षात्कृत्य मद्दोषगुणौ स एव प्रष्टव्य इति भावः ॥ २० ॥ ❀ ❀ ननु सत्यं त्वमद्वेष्टैवेति प्रत्येमि, तदपि श्वशुरे तस्मिन् प्रत्युत्थानविनयादिकमुचितमेवेत्यत आह । प्रत्युद्गमनाभिवादनप्रत्यभिवादनादिकं मिथो जनैर्यद्विधीयते तत् प्राज्ञैः परस्मै पुरुषाय गुहाशयायैव चेतसा अत्र मत्श्वशुरे मज्जामातरि च परमेश्वरो वर्त्तते तस्मै नम इति भावनयैव विधीयते न तु देहमानिने । अप्राज्ञैस्तु परमेश्वरस्मरणाभावाद्देहमानिने एव विधीयते, न तत् सम्यगतो दक्षागमनसमये श्रीभगवच्चरणसमाहितचेतस्त्वात् यद्यपि दक्षो मया न दृष्टस्तदपि भगवत्सम्मानेन दक्षसम्मानोऽभूदेव । दक्षस्त्वज्ञानी वृथा कुप्यतीति भावः ॥ २१ ॥

श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः ।

ये वक्रधिया कुटिलया बुद्ध्या आरोपिताभिः भ्रूभिः अमर्षणाक्षिभिः सक्रोधैर्नयनैः अभ्यागतान् अभिमुखे आगतान् चक्षते पश्यंति एतादृशानाम् अनवस्थितात्मनामस्थिरचित्तानां गृहान् स्वजनव्यपेक्षया स्वकीयबुद्ध्या नेयात् न गच्छेत् ॥ १८ ॥ ❀ ❀ अरिभिः कर्तृभिः शिलीमुखैः करणैः अर्दितांगोपि तथा न व्यथते किं तु स्वल्पकालं तप्यति पुनः क्षतनिवृत्तौ सुखी भवति, अत्यंततोऽर्दितांगः शेते वीरशये स्वपिति मृतो भवति, न तु दिवानिशं तप्यति यथा स्वानां दुरुक्तिभिर्मर्मताडितो दिवानिशं तप्यति ॥ १९ ॥ ❀ ❀ यद्यपि उत्कृष्टा गतिः श्रेष्ठा स्थितिर्यस्य तस्य प्रजापतेः आत्मजानां मध्ये त्वं प्रिया संमता चासि इति व्यक्तं निश्चितम् । अथापि हे सुभ्रु पितुः सकाशात् मानं न प्रपत्स्यसे न प्राप्स्यसे । यतो मदाश्रयात् मत्संबंधात्को दक्षः परितप्यते ॥ २० ॥ ❀ ❀ पुरुषाणां बुद्धेः साक्षिणो ये सर्वज्ञाः तेषां समृद्धिभिः पापच्यमानेनात्यर्थं संतप्यमानेन हृदा आतुरेन्द्रियः एषां पदं पदवीम् अधिरोढुमधिगंतुम् अकल्पोऽशक्तः सन् परं केवलं द्वेष्टि यथा हरिमसुरा द्विषंति ॥ २१ ॥

गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

यदि तु स्वजनदृष्ट्या गच्छेत्तदा प्रतिकूलमेव फलं प्राप्नुयान्न त्वभीष्टमिति सूचयंस्तेषां स्वभावसिद्धान् धर्मानाह—य इति । ये वक्रधिया युक्ता अभ्यागतान् आकारणं विनापि प्रीत्या स्वयमेवागतान् आरोपिता उत्तंभिता भ्रूः येषु तान्यारोपितभ्रूणि तैः अमर्षणैः अमर्षणं क्रोधस्तद्युक्तैरक्षिभिः पश्यन्ति । यथार्थव्यवहारयोग्या बुद्धिः ऋजुबुद्धिस्तद्विपरीता बुद्धिर्वक्रबुद्धिस्तया युक्ता इति बुद्धिदोषेणैव तेषां सर्वत्र व्यवहारे वैपरीत्यमिति सूचितम् ॥ १८ ॥ ❀ ❀ ननु तथापि तत्र हे तद्वृत्तज्ञानार्थं कार्यसंपादनार्थं वा बन्धुभिर्गन्तव्यं तत्कृतपराभवश्च सोढव्यः स्वजनत्वादित्याशङ्क्याह—तथारिभिरिति । अरिभिः शत्रुभिः कर्तृभूतैः शिलीमुखैः शरैः करणैरर्दिताङ्गश्छिन्नमस्तकाद्यङ्गोपि पुरुषस्तथा न व्यथते पीडां न प्राप्नोति, यथा स्वानां वक्रधियां दुरुक्तिभिर्निन्दावचनैर्मर्मसु हृदयादिषु ताडितो दूयता कम्पमानेन हृदयेन दिवानिशं तप्यति । कुत एवमत आह—शेत इति । यतश्छिन्नाङ्गः सङ्ग्रामभूमौ शेतेऽतः शीघ्रमेव मरणप्राप्त्या न तथा दुःखानुभवः, अस्य तु मरणाभावाद्दिवानिशं पीडानुभव इति ततो महत्कष्टमिति भावः ॥ १९ ॥ ❀ ❀ नन्वियं वार्त्ता साधारणसुहृदादीनामस्तु, परं मयि तत्र गतायां नाऽपमानः स्यात्तत्स्नेहाधिक्यादित्याशङ्क्याह—व्यक्तमिति । हे सुभ्रु ! प्रजापतेर्दक्षस्यात्मजानां कन्यानां मध्ये त्वं प्रियासि इति व्यक्तं मम निश्चितमथापि तथापि पितुः सकाशान्मानं न प्रपत्स्यसे इति सम्बन्धः । ननु यद्यहं प्रिया तदा कथं ममापमानं करिष्यति तत्राह—संमतेति । यतो ममाज्ञानुसरणात् श्रेष्ठतया मतासि मम संबन्धाच्च को दक्षस्त्वयि परितप्यतेऽतो मानं न प्रपत्स्यसे इत्यर्थः । नन्वितः पूर्वं तु मयि तस्य तापः कदापि नानुभूत इत्याशङ्क्याह—उत्कृष्टगतेः उत्कृष्टा गतिः स्थितिर्यस्य तस्येत्यर्थः । इदानीमधिकारप्राप्त्या तस्याभिमानाधिक्यं जातमतस्तत्र गतां दृष्ट्वा तापमेव करिष्यति न संमानमिति भावः । हे सुभ्रु इति स्नेहात्संबोधनेन सत्यं तव हितमेव वदामि, नात्र काचित्प्रतारणेति सूचयति ॥ २० ॥ ❀ ❀ ननु सर्वगुणोपेते त्वयि किमिति दक्षस्यैवममर्षः शान्तत्वं कुतो नेत्याकाङ्क्षायां तत्र प्राचीनतत्कर्मजन्यदुःस्वभाव एव नियामक इत्यभिप्रेत्याह—पापच्यमानेनेति । पूर्वकर्मजन्यदुःखस्वभावाग्निना पापच्यमानेनातिसन्तप्यमानेन हृदयेन कृत्वा आतुराणि व्याकुलानि इन्द्रियाणि यस्य स तथाभूतो दक्षः स्वकीयाभिलौकिकीभिः सत्कुलजन्माभिजनधनधान्यादिभिः समृद्धिभिरेषामस्मत्सदृशानां पुरुषबुद्धिसाक्षिणां जीवबुद्धिवृत्तिद्रष्टॄणां सर्वज्ञानां पदं परमोत्कृष्टमैच्छिकाऽणिमाद्यैश्वर्यमञ्जसा धनकष्टं विनानायासेनाधिरोढुं प्राप्तुमकल्पोऽसमर्थः सन् वा परं केवलं द्वेष्टि, न प्राप्तुं शक्नोतीत्यर्थः । यद्वा तेषां समृद्धिभिरणिमादिभिः पुण्यकीर्त्यादिभिश्च पापच्यमानेन । अन्यत्समानम् । पच्यमानपदेन यथाग्निनातितप्ते जातस्य श्यामरूपस्यान्यथाकरणमशक्यं तथा शिष्टोपदेशादिनास्यापि स्वभावान्यथाकरणमशक्यमिति सूचितम् । तद्दृष्टान्तेन दृढयति—यथेति । यथा असुराः सद्भिरुपदिश्यमाना अपि न भगवद्भजनपरा भवन्ति तन्माहात्म्यं श्रुत्वा तदारोढुमिच्छवस्तत्रासमर्थाः प्रत्युत तं द्विषन्ति तथेत्यर्थः ॥ २१ ॥

भाषानुवादः

इसीसे जो अपने यहाँ आये हुए पुरुषोंको कुटिल बुद्धिसे भौं चढ़ाकर रोषभरी दृष्टिसे देखते हैं, उन अव्यवस्थितचित्त लोगोंके यहाँ 'ये हमारे बान्धव हैं' ऐसा समझकर कभी नहीं जाना चाहिये ॥ १८ ॥ ❀ ❀ देवि ! शत्रुओंके बाणोंसे बिंध जानेपर भी ऐसी व्यथा नहीं होती, जैसी अपने कटिलबुद्धि स्वजनोंके कुटिल वचनोंसे होती है । क्योंकि बाणोंसे शरीर छिन्न-भिन्न हो जानेपर तो जैसे-तैसे निद्रा आ जाती है, किन्तु कुवाक्योंसे मर्मस्थान विद्ध हो जानेपर तो मनुष्य हृदयकी पीड़ासे दिन-रात बेचैन रहता है ॥ १९ ॥ ❀ ❀ सुन्दरि ! अवश्य ही मैं यह जानता हूँ कि तुम परमोन्नतिको प्राप्त हुए दक्षप्रजापतिको अपनी कन्याओंमें सबसे अधिक प्रिय हो । तथापि मेरी आश्रिता होनेके कारण तुम्हें अपने पितासे मान नहीं मिलेगा; क्योंकि वे मुझसे बहुत जलते हैं ॥ २० ॥ ❀ ❀ जीवकी चित्तवृत्ति के साक्षी अहङ्कारशून्य महापुरुषोंकी समृद्धिको देखकर जिसके हृदयमें सन्ताप और इन्द्रियोंमें व्यथा होती है, वह पुरुष उनके पदको तो सुगमतासे प्राप्त कर नहीं सकता; बस, दैत्यगण जैसे श्रीहरिसे द्वेष मानते हैं, वैसे ही उनसे कुढ़ता रहता है ॥ २१ ॥

प्रत्युद्गमप्रश्रयणाभिवादनं विधीयते साधु मिथः सुमध्यमे।
प्राज्ञैः परस्मै पुरुषाय चेतसा गुहाशयायैव न देहमानिने ॥ २२ ॥
सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः।
सत्त्वे च त¹स्मिन् भगवान् वासुदेवो ह्यधोक्षजो मे नमसा विधीयते ॥ २३ ॥
तत्ते² निरीक्ष्यो न पितापि देहकृद् दक्षो मम द्विट् तदनुव्रताश्च ये।
यो विश्वसृग्यज्ञगतं वरोरु मामनागसं दुर्वचसाकरोत्तिरः ॥ २४ ॥
यदि व्रजिष्यस्यतिहाय मद्वचो भद्रं भवत्या न ततो भविष्यति।
सम्भावितस्य स्वजनात्पराभवो यदा स सद्यो मरणाय कल्पते ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे उमारुद्रसंवादे तृतीयोऽध्यायः ॥ ३ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

ननु त्वया प्रत्युत्थानविनयाद्यकरणादवज्ञात एवासौ तत्राह। हे सुमध्यमे प्रत्युद्गमादिकं मिथो जनैर्यद्विधीयते तत्तु प्राज्ञैः भागवतैः साधु विधीयते। साधुत्वमेवाह। परस्मै श्रीवासुदेवाय। गुहाशयायांतर्यामिण एव। तच्च चेतसैव। परिपूर्णे तस्मिन्कायिकव्यापारायोगात् अतोंतर्यामिदृष्ट्या मनसा सर्वं कृतमिति भावः ॥ २२ ॥ ❀ ❀ किं च न केवलमभ्यागतेष्वेव वासुदेवदृष्ट्या मननं क्रियते किं तु नित्यमेव मनसि वासुदेवश्चिंत्यत इत्याह। विशुद्धं सत्त्वमंतःकरणं सत्त्वगुणो वा वसुदेवशब्दितं वसुदेवशब्देनोक्तम्। कुतः यद्यस्मात्तत्र सत्त्वे पुमान्वासुदेव ईयते प्रकाशते। अपगतमावृतमावरणं यस्मात्सः। अयमर्थः। वसुदेवे भगवति प्रतीयत इति हि वासुदेवः परमेश्वरः प्रसिद्धः स च विशुद्धे सत्त्वे प्रतीयते अतः प्रत्ययार्थेन प्रसिद्धेन प्रकृत्यर्थो निर्धार्यते, ततश्च वासयति देवमिति व्युत्पत्त्या वा वसत्यस्मिन्निति वा वसुः देवो दीव्यति द्योतत इति देवः वा वसुभिः पुण्यैर्दीव्यति प्रकाशत इति वा वसुदेवशब्दवाच्यं शुद्धं सत्त्वम्। ततः "तत्र भवः" इत्यण्। अत्र प्रतीतिर्भवतेरर्थः। ततः किमत आह। सत्त्वे च तस्मिन्मे मया नमसा नमस्कारेणानुविधीयते सेव्यत इत्यर्थः। मनसेति पाठे मनसा विशेषेण धीयते धार्यते चिंत्यत इत्यर्थः। यतोऽधो भूतेषु प्रत्याहृतेष्वक्षेषु इंद्रियेषु जायते प्रकाशते। इंद्रियागोचर इत्यर्थः ॥ २३ ॥ ❀ ❀ तत्तस्मात्त्वया न निरीक्ष्यः। देहकृदपीति पोषकत्वादिभिरौपचारिकपितृत्वव्यावृत्त्यर्थम्। द्विट् शत्रुः। तदेवाह–हे वरोरु यो दक्षो विश्वसृजां यज्ञगतं मां निरपराधं तिरोऽकरोत्तिरस्कृतवान् ॥ २४ ॥ ❀ ❀ विपक्षे दोषमाह। यदीति। मद्वचोऽतिहायातिक्रम्य। यतः संभावितस्य सुप्रतिष्ठितस्य यदा पराभवो भवति तदा स पराभवस्तस्य मरणाय कल्पते ॥ २५ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे टीकायां तृतीयोऽध्यायः ॥ ३ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

सत्यं त्वद्द्वेष्टैवेति प्रत्येमि, तदपि श्वशुरे तस्मिन्प्रत्युत्थानविनयादिकमुचितमेवेति शंकते—नन्विति। तच्च नमनादि। अतः कायिकव्यापारानर्हत्वात्। इति भाव इति। प्राज्ञेतरैः परमेश्वरस्मरणाभावाद्देहमानिन एव विधीयते। तत्र साधु, मम दक्षागमनावसरे भगवच्चरणसमाहितचेतस्त्वात्। यद्यपि दक्षो मया न दृष्टस्तदपि भगवत्संमानेन दक्षसंमानोप्यभूदेव। दक्षस्तु मूर्खो वृथा कुप्यतीत्याशयः ॥ २२ ॥ ❀ ❀ अन्यदाह-किञ्चेति। वसुदेवशब्दोक्तत्वे हेतुं पृच्छति अत्राशयमाह वासुदेव इत्यत्र शैषिकोण् स च परमेश्वरः। अतो व्युत्पत्तेः प्रत्ययार्थेनाणप्रत्ययार्थेन। प्रतीतिरूपेण प्रकृत्यर्थो वसुदेवपदार्थः। यद्वा प्रत्ययार्थेन प्रयोजकलक्षणेनाधिकरणलक्षणेन च। प्रकृतेर्वसधातोरर्थो निवासस्तथा अप्रत्ययेन प्रकृतेर्दिवुधातोरर्थो द्युतिलक्षणश्च निर्द्धार्य्यते निश्चाय्यते। ततश्च निर्धारणात् इति ज्ञातं तथाहि वासयतीत्यादि निवासयतीति। निवासो निवसत्यत्रेति वसिप्रकृत्यर्थ एवात्र निर्द्धारितः। ततः वसुदेवशब्दार्थनिर्द्धारणात्किं जातमित्याक्षेपे। इत्यर्थ इति। उपसर्गवशात्सेवार्थोपीत्यर्थः। इत्यर्थ इति। चिन्तनस्यैव धारणपदार्थत्वादत्रेति भावः। तत्र हेतुः—यत इति। इत्यर्थ इति। "मनसैवानवाप्तव्यम्" इत्यादिश्रुतेरिति भावः। 'मनःषष्ठानीन्द्रियाणि' इति वाक्येन मनसोऽनिन्द्रियत्वोक्तेर्मनसो विषयत्वेपि नाधोक्षजत्वहानिः। यत्तु "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इत्युक्तं तद्बहिर्मुखमनोऽपेक्ष्येत्यवधेयमिह तु भगवदुपास्तिशुद्धमनोविषयत्वोक्तेर्न दोष इत्यनवद्यं सर्वम् ॥ २३ ॥ ❀ ❀ यतो मम द्विट् स तस्मादित्यर्थः। आदिनाध्यापकादिग्रहः। औपचारिकपितृत्वं गौणपितृत्वम्। "अन्नदाता भयत्राता यश्च विद्यां प्रयच्छति। जनको ह्युपनेता च पंचैते पितरः स्मृताः" इति स्मृतेः। 'उपकर्त्ता पितृसमः'

---

१. प्रा० पा०—यस्मि०। २. प्रा० पा०—त्वया।

इति न्यायेन जनकेतराणामपि पितृत्वमस्ति मुख्यं तज्जनकस्यैवेति तत्त्वम्। वरोर्विति। गुप्राङ्गनिरीक्षको हि पितृतोपि प्रियोस्ति स्त्रीणामतो मां विहाय मा गच्छ मदाज्ञापालनमेव त्वद्धर्म इति सम्बुद्ध्यभिप्रायः। श्लेषेण देहं कृंततीति देहकृत् 'कृती छेदने'। देहपातो भावी सूचितः॥ २४॥ ❀ ❀ विपक्षे मदाज्ञात्यागरूपे। ततस्तत्र गमनात्। भवत्यास्तव कल्पते समर्थो भवति स्वजनपराभूतो मरणमेव श्रेष्ठं मनुते स्वस्य पराभवितुश्च। श्रीगीतोपनिषदाचार्येण स्वान्तेवासिनेऽर्जुनाय तु मरणतोप्यधिकः "संभावितस्य चाकीर्त्तिर्मरणादतिरिच्यते" इति प्रतिपादितः। अकीर्त्तेः पराभवजन्यत्वेन कार्यकारणयोरभेद एवेति॥ २५॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे तृतीयोऽध्यायः॥ ३॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

जनैरज्ञैः प्राज्ञैः विद्वद्भिः तच्च प्रत्युद्गमादि॥ २२॥ ❀ ❀ तत्रांतःकरणस्य विशुद्धत्वं भक्त्येकवासितत्वं सत्त्वगुणस्य च तत् अप्राकृतत्वेन जाड्यांशराहित्यम् अगोचरस्य गोचरत्वे हेतुर्हि सत्त्वं विशुद्धं च तत्र सत्त्वता वसुदेवता वा कुतस्तत्राह यद्यस्मादिति वासुदेवप्रकाशाश्रयत्वात्सत्त्वता। वसुदेवशब्दवाच्यत्वे हेतुं व्याचष्टे अयमर्थं इति। प्रतीयते प्रकाशते स च वासुदेवः अतः विशुद्धसत्त्वमंतरान्यत्र तत्प्रतीतिविरहात् प्रत्ययोऽत्राण् तस्यार्थो हि भवार्थस्तेन प्रसिद्धेन प्रकृतिरत्र वसुदेवशब्दस्तस्यार्थस्तावद्विशुद्धसत्त्वमेवेति निर्णीयते। ततश्च प्रत्ययार्थप्रसिद्ध्या प्रकृत्यर्थनिर्द्धारणे सति उक्तपोषार्थं यौगिकनिरुक्तीरपि प्रदर्शयति। वासयतीत्यादिना ततः शुद्धांतःकरणस्य वसुदेवशब्दवाच्यत्वे सति किं प्रकृते समायातमत आह सत्त्वे चेत्यादि। विपूर्वकदधातेः करोत्यर्थत्वात्तत्रानुयोगे अनुकरणमेवार्थः। नमस्कारेणानुकरणं च सेवनमेवेत्याथिकार्थत्वादित्यर्थं इत्युक्तम्। किंत्वन्वधोक्षज इत्येव पाठः। मानसेति पाठे इत्यत्र ह्यधोक्षज इति च पाठ इति पूरणीयम्। तत्रानुशब्दस्याव्याख्यानात् प्रत्युत यत इति हि शब्दस्यैवार्थ इति विवेचनीयम्॥ २३॥ ❀ ❀ तत्तस्मान्निरपराधे मयि वृथा द्वेषकर्तृत्वात् 'जनिता चोपनेता च यस्तु विद्यां प्रयच्छति। अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः॥' अन्नदाता पोषक इत्यौपचारिकपितरः। तदेव शत्रुत्वमेव छन्दसि व्यवहिताश्चेति तिरोऽकरोदिति योजितम्॥ २४॥ ❀ ❀ विपक्षे गत्वा निरीक्षणे तस्य सुप्रतिष्ठस्य कल्पते योग्यो भवति॥ २५॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे दीपिन्याख्यायां दीपिकाटिप्पण्यां तृतीयोऽध्यायः॥ ३॥

श्रीमद्वीरराघवव्याख्या

ननु गुरुभूतो दक्षस्त्वया प्रणामादिभिरसत्कृतस्त्वां द्वेष्टि तत्राह प्रत्युद्गमेति हे। सुमध्यमे! प्राज्ञैरदेहमानिभिर्मिथः परस्परं प्रत्युद्गमप्रश्रयणाभिवादनं प्रत्युत्थानप्रणामाभिवादनं विधीयते मनोवाक्कायैरिति शेषः। प्रज्ञाज्ञसन्निपाते तु प्राज्ञैर्गुहाशयाय अंतर्यामिणे परस्मै पुरुषायैव चेतसैव विधीयते न तु देहाभिमानिने करणत्रयेणेत्यर्थः "प्राज्ञैः परस्परं मनसैव विधीयते परिपूर्णे तस्मिन् कायिकव्यापारायोगाद्" इत्यर्थवर्णनं तु अशोभनम्। प्राज्ञेष्वपि मिथस्तस्य करणत्रयेण "वैष्णवो वैष्णवं दृष्ट्वा दण्डवत्प्रणमेद्भुवि" इत्यादिभिर्विहितत्वात्। अंतर्याम्युद्देशेन मानसिकप्रत्युद्गमनादिकमस्मै देहाभिमानिने दक्षाय विहितमेव मयेति भावः॥ २२॥ ❀ ❀ ननु किं विशेषेण चेतसैव प्रणतिर्विधीयते इत्युच्यते! न तु मनोवाक्कायानामन्यतमेनेत्यत्र कारणमाह सत्त्वमिति। विशुद्धं रजस्तमोभ्यामनभिभूतं सत्त्वं सत्त्वप्रधानं चित्तं वसुदेवशब्दितं वसुदेवशब्देनोच्यत इत्यर्थः। तत्र विशुद्धे सत्त्वे वसुदेवशब्दप्रवृत्तौ निमित्तमाह यदिति। यद्यस्मात्तत्र सत्त्वे पुमान् वासुदेवः अपावृत अपगतमात्मावरणं यस्मात्सः ईयते प्रतीयते प्रकाश्यते इति यावत्। तत्र सत्त्वं निर्मलत्वात्प्रकाशकमित्युक्तरीत्या वासुदेवस्वरूपादिप्रकाशसत्त्वप्रधानत्वाच्चित्तस्य द्योतमानत्वाद्देवत्वं भगवतो वासभूतत्वाच्च वसुत्वमिति वसुदेवशब्दितं सत्त्वमित्यर्थः, तस्मिंश्च सत्त्वाख्ये चित्ते अधोक्षजोऽधःकृतेषु अक्षेषु इंद्रियेषु जायते आविर्भवतीत्यधोक्षजः इंद्रियांतरागोचरः केवलपरिशुद्धचेतसैव ग्राह्यः भगवान् वासुदेवः मे मया नमसा विधीयते नमस्क्रियत इत्यर्थः। अतश्चेतसैव भगवान् प्रणम्यत इति भावः॥ २३॥ ❀ ❀ तस्मात्त्वया पितापि देहकृदपि पालकपितृत्वादिव्यावृत्त्यर्थं देहकृदित्युक्तं मम द्विट्मद्द्वेषी दक्षो न निरीक्ष्यः निरीक्षितुमयोग्यः, तथा तं दक्षं येऽनुव्रतास्तेपि न निरीक्ष्याः। हे वरोरु! यो दक्षः विश्वसृड्यज्ञगतं विश्वसृजां सत्रे गतम् अनागसं निरपराधिनं मां दुर्वचसा दुरुक्त्या तिरोऽकरोत् तिरस्कृतवान्॥ २४॥ ❀ ❀ यदि मद्वचोऽतिहायाऽतिक्रम्य व्रजिष्यसि तर्हि भवत्यास्तव भद्रं संमानं न भविष्यति प्रत्युत पराभव एव स्यादिति भावः। बंधुकृतः पराभवो न दुःखाय भवेदिति चेत्तत्राह संभावितस्य सर्वसम्मानितस्य स्वजनाद्यः पराभवः स सद्यो मरणाय कल्पते भवति॥ २५॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचंद्रिकाख्यायां टीकायां तृतीयोऽध्यायः॥ ३॥

श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अभ्युत्थानाभिवादार्हो भवता न संमानितोऽतो द्वेष इति किं न स्यादिति तत्राह प्रत्युद्गमेति। प्राज्ञैस्तत्त्ववेदिभिः पुरुषैर्वैष्णवेष्वागच्छत्सु मिथः प्रत्युद्गमादिकं चेतसा गुहाशयाय हृदयेस्थिताय परस्मै पुरुषायैव विधीयते क्रियते देहाभिमानिने

जीवाय न क्रियते इदं तूभयोः समत्वे। बंधुता गुरुत्वनिमित्तेन गुरुत्वेनोक्तमतो दक्षायाऽज्ञाय ज्ञानाभावात्तन्निमित्तद्वेषो न संभाव्यत इति ॥ २२ ॥ ❀ ❀ किं च मया प्रत्युत्थानादिना मुख्यतः पूज्यस्तु ब्रह्मादिशरीरांतःस्थितो हरिरित्याह सत्त्वमिति विशुद्धं। सत्त्वं ब्रह्मादिशरीरं वसुदेवशब्दितं पृथिव्यादिषु पदार्थेषु स्थित्वा वियोतते तत्कृतमललेपाभावादिति तच्छब्देन शब्दितमित्यर्थः। तच्छब्दवाच्यत्वे निमित्तमाह यदीयत इति व्याप्तिक्रीडादिगुणाकरः पुमान्नारायणोपावृतो माया-लक्षणावरणरहित ईयते ज्ञायत इति यद्यस्मात्तस्मान्निमित्तांतरं चाह सत्त्वं चेति। तत्सत्त्वं च यस्मिन् हरौ यदधीनतया वर्तते तत्सम्बन्धा-त्तच्छब्दवाच्यमित्यर्थः। एवं च वसुदेवे निवासलक्षणसम्बन्धाद्वासुदेवः सोऽधोक्षजोऽतींद्रियज्ञानी भगवान्मम मनसा विशेषेण धीयते चिंत्यते। तदुक्तं "रुद्रेण धीयते विष्णुर्विष्णोर्ध्येयो न कश्चन" इति। अनेन पुरःस्थितचतुर्मुखब्रह्माणि प्रकाशमानश्रीविष्णुगुण-गणोपसंहारलक्षणोपासनैकाग्रचित्तत्वेन स्थितेन मायाकार्यान्तरं प्रारम्भस्यानुचितत्वात् दक्षः तत्स्थहरिस्मरणसत्कारेण तत्सत्कारोऽपि कृत इति द्वेषे कारणं न पश्यामीत्युक्तं भवति। यद्वा यद्विशुद्धं तमआदिगुणानुपरक्तं सत्त्वं तद्वसुदेवशब्दितं चशब्द एवार्थे तत्सत्त्वं गुणो यस्मिन्पुंस्येवास्ति पुमान् श्रीहरिस्तत्र तस्मिन्नेव पुंस्यपावृत ईयत इति यस्मात्तस्मात्स वासुदेवः सात्त्विकप्रियोऽधोक्षजो भगवान्मे मनसा प्रत्युत्थानादिना विशेषेण चिन्त्यत इत्यतो नासद्गुरुरित्यभिमानमुग्धत्वेन रजोगुणाभिभूतचित्तत्वेन चात्र हरेर्विशेषेण सन्निधानाभावात्तव पिता न सत्कारयोग्य इति कृत्वा प्रत्युत्थानादिना न मानित इति। अनेन तमआदिगुणाभिभूतत्वेन तत्त्वाज्ञानात् द्वेषोद्रेक इत्युक्तं भवति ॥ २३ ॥ ❀ ❀ मम त्वत्पूज्यत्वान्मम द्वेषिजनकोपि त्वया द्रष्टुमेवायोग्यो गुरुध्रुग्-दर्शने दोषोक्तेरित्याह त्वयेति देहकृदपि। केवलमान्तरो द्वेषोपि तु बाह्योपीति भावेनाह तदनुव्रता इति। स्थानं निर्दिशति य इति ॥ २४ ॥ ❀ ❀ बाधकं चाह यदीति मरणं नाम देहवियोगलक्षणं न त्वकीर्तिलक्षणम् ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे श्रीविजयध्वजतीर्थकृतपदरत्नावल्यां तृतीयोऽध्यायः ॥ ३ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

प्रत्युद्गमेति। अवैष्णवविषयमेवेदं वाक्यम्। अथ भागवता यूयं प्रियाः स्थ भगवान् यथेति पुरतस्तदुक्तेः मद्भक्तपूजाभ्यधि-केति भगवदुक्तेश्च। अत एव न देहमानिने बहिर्मुखायेत्युक्तम् ॥ २२ ॥ ❀ ❀ सत्त्वमिति। अयमर्थः–विशुद्धं स्वरूपशक्तित्वा-ज्जाड्यांशेनापि रहितमिति विशेषेण शुद्धसत्त्वं यत् तदेव वसुदेवशब्देनोक्तम्। कुतस्तस्य सत्त्वता वसुदेवता वा तत्राह यत् यस्मात् तत्र तस्मिन् पुमान् वासुदेव ईयते प्रकाशते। सत्त्वं विशुद्धमित्यादिकं द्वितीयसन्दर्भे अष्टादशाधिकशततमवाक्यव्याख्याने विशुद्ध-सत्त्वमित्यादिना व्याख्यातमस्ति, किन्त्वत्र परस्थवासुदेवशब्दस्य पूर्वत्राप्यन्वयः। आद्ये तावदगोचरस्य गोचरता हेतुत्वेन लोक-प्रसिद्धत्वसाम्यात् सत्त्वता व्यक्ता। द्वितीये त्वयमर्थः वसुदेवे भवति प्रतीयत इति वासुदेवः परमेश्वरः प्रसिद्धः। स च विशुद्धसत्त्वे प्रतीयते अतः प्रत्ययार्थेन प्रसिद्धेन प्रकृत्यर्थो निर्धार्य्यते। ततश्च वासयति देवमिति व्युत्पत्त्या वसत्यस्मिन्निति वा वसुः तथा दीव्यति द्योतत इति देवः स चासौ स चेति वसुदेवः वसुभिर्भगवद्धर्म्मलक्षणैः पुण्यैः प्रकाशत इति वा वसुदेवः। तस्माद्वसुदेव-शब्दितं विशुद्धसत्त्वम् इत्थं स्वयं प्रकाशज्योतिरेकविग्रहभगवज्ज्ञानहेतुत्वेन 'कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकं तु यत्। प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतमि'त्यादौ बहुत्र गुणातीतावस्थायामेव भगवज्ज्ञानश्रवणेन च सिद्धमत्र विशुद्धपदावगतं स्वरूपशक्तिवृत्तिभूतस्वप्रकाशताशक्तिलक्षणत्वं तस्य व्यक्तं ततश्च 'सत्त्वे प्रतीयते' इत्यत्र करण एवाधिकरणविवक्षा। स्वरूपशक्ति-वृत्तित्वमेव विशदयति अपावृतः आवरणशून्यः सन् प्रकाशते प्राकृतं सत्त्वं चेत्तर्हि तत्र प्रतिफलनमेवावसीयते। ततश्च दर्पणे मुखस्येव तदन्तर्गततया तस्य तत्रावृतत्वेनैव प्रकाशः स्यादिति भावः। फलितार्थमाह एवम्भूते सत्त्वे तस्मिन् नित्यमेव प्रकाशमाने भगवान् मे मया मनसा विशेषेण धीयते धार्य्यते चिन्त्यत इत्यर्थः। तत् सत्त्वतादात्म्यापन्नेनैव मनसा चिन्तयितुं शक्यते इति पर्य्यवसितं ननु केवलेन मनसैव चिन्त्यतां किं तेन सत्त्वेन तत्राह। हि यस्मादधोक्षजः अधः कृतमतिक्रान्तमक्षजमिन्द्रियजं ज्ञानं येन सः। नमसेति पाठे हि–शब्दस्थानेऽप्यनुशब्दः पठ्यते। ततश्च विशुद्धसत्त्वाख्यया स्वप्रकाशताशक्त्यैव प्रकाशमानोऽसौ नमस्कारादिना केवलमनुविधीयते सेव्यते न तु केनापि प्रकाश्यत इत्यर्थः। तदेवमदृश्यत्वेनैव स्फुरन्नसावदृश्येनैव नमस्कारादिना अस्माभिः सेव्यत इति तत्प्रकरणसंगतिश्च गम्यते। अथ अतो भगवद्विग्रहप्रकाशविशुद्धसत्त्वस्य मूर्त्तित्वं वसुदेवत्वं च तत एव तत्प्रादुर्भावविशेषे धर्मपत्न्यां मूर्त्तित्वं प्रसिद्धम्। श्रीमदानकदुन्दुभौ च वसुदेवत्वमिति विवेचनीयम्। अत्र श्रद्धापुष्ट्यादिलक्षणप्रादु-र्भूतभगवच्छक्त्यंशरूपस्य भगिनीतया पाठसाहचर्येण मूर्त्तेस्तस्यास्तच्छक्त्यंशप्रादुर्भावत्वमुपलभ्यते 'तुर्ये धर्मकलासर्गे नरनारायणावृषी' इत्यत्र कलाशब्देन च शक्तिरेवाभिधीयते ततः शक्तिलक्षणायां तस्यां च नरनारायणाख्यभगवत्प्रकाशफलदर्शनात् वसुदेवाख्य-शुद्धसत्त्वरूपत्वमेवावसीयते। तदेवमेव तस्या मूर्त्तिरित्याख्याप्युक्ता। तथा च श्रद्धाद्या विशदार्थतया विमुच्य सैव निरुक्ता चतुर्थे। 'मूर्त्तिः सर्वगुणोत्पत्तिर्नरनारायणावृषी' इति। सर्वगुणस्य भगवत उत्पत्तिः प्रकाशो यस्याः सा तावसूतेति पूर्वेणैवान्वयः। भगवदा-ख्यायाः सच्चिदानन्दमूर्त्तेः प्रकाशहेतुत्वात् मूर्त्तिरित्यर्थः। तथैव तत्प्रकाशफलत्वदर्शनेन च नामैक्येन च श्रीमदानकदुन्दुभेरपि शुद्धसत्त्वाविर्भावत्वं ज्ञेयम्। तत्रोक्तं नवमे 'वसुदेवं हरेः स्थानं वदन्त्यानकदुन्दुभिमि'ति। अन्यथा हरेः स्थानमिति विशेषणस्या-

किञ्चित्करत्वं स्यादिति। तदेवं ह्लादिन्याद्येकतमांशविशेषप्रधानेन विशुद्धसत्त्वेन यथायथं श्रीप्रभृतीनामपि प्रादुर्भावो विवेक्तव्यः। तत्र च तासां भगवति सम्पद्रूपत्वं तदनुग्राह्ये सम्पत्सम्पादकरूपत्वं सम्पदंशरूपत्वं चेत्यादि त्रिरूपत्वं ज्ञेयम्। तत्र च तासां केवलशक्तिमात्रत्वेनामूर्त्तानां भगवद्विग्रहाद्यैक्यात्म्येन स्थितिस्तदधिष्ठात्रीरूपत्वेन मूर्त्तानां तु तदावरणतयेति द्विरूपत्वमति ज्ञेयमिति दिक्॥ २३॥ ❀ ❀ तत्तु इत्यत्र त्वयेति चिल्सुखः॥ २४-२५॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे तृतीयोऽध्यायः॥ ३॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

त्वया तदानीं कथं समाधिः कृत इति तु नोपालम्भनीयमेव, यतो भगवत्समाधिर्न मदधीनः। किंतु तदधीन एवाहमतो भगवत्स्फूर्तेर्मम नैव समयनियम इत्याह सत्त्वमिति। विशुद्धं सत्त्वमप्राकृतमन्तःकरणं वसुदेवशब्दितं वसुदेवशब्देनोक्तं भवति। यद्वा विशुद्धं चिच्छक्तिवृत्तमयमप्राकृतं सत्त्वमेव वसुदेवो भगवज्जनक उच्यते। कुतः यद् यस्मात्तत्र अपावृतो विगतावरणः पुमान् ईयते प्रकाशते स च वासुदेव एव। वसुदेवे भगवति आविर्भवतीति तच्छब्दस्यार्थः। विशुद्धेऽन्तःकरणे च तस्याविर्भावो दृश्यते। अतो विशुद्धस्यान्तःकरणस्य मदीयस्य वासुदेवेति नामेत्यवगतं, ततश्च वसत्यस्मिन् परमेश्वर इति वसुश्चाप्राकृतत्वाद्देवश्चेति वसुदेव इति तद्व्युत्पत्तिश्च गम्यते। अतस्तस्मिन् सत्त्वेऽन्तःकरणे भगवानधोक्षजः प्राकृतेन्द्रियागोचरः स्फुरन् नमसा नमस्कारोपलक्षितया बहुविधसपर्य्यया अनुविधीयते परिचर्यते विशेषेण धीयते धार्यत इति वा। मनसेति पाठे मनसैव सेव्यते अतस्तदानीं यथा सेव्यमानो भगवानासीदिति अतस्तत्परिचर्यायामवकाशाभावादेव न मे बहिरनुसन्धानमभूदतः कथय को मे दोष इति भावः॥ २३॥ ❀ ❀ तत्तस्मादिति यदि त्वं पतिव्रता भवसीति भावः। देहकृदपि पितेति पोषकादिरूपस्तु पिता किमुतेति भावः। रूपेण देहं कृन्ततीति भावी देहपातश्च सूचितः। मां तिरोऽकरोत् तिरश्चकार॥ २४॥ ❀ ❀ विपक्षे दोषमाह यदीति अपहाय अतिक्रम्य। सम्भावितस्य सुप्रतिष्ठितस्य यदा पराभवो भवति तदा स पराभवः तस्य मरणाय कल्पते॥ २५॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। चतुर्थस्य तृतीयोऽयं सङ्गतः सङ्गतः सताम्॥ ३॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ननु त्वया प्रयुत्थानादिना स न सत्कृतो द्वेष्टीत्यत्राह प्रत्युद्गमेति। "चक्षुर्दद्यान्मनो दद्याद्वाचं दद्यात्सुसूनृताम्। उत्थाय चासनं दद्यात्स यज्ञः पंचदक्षिणः" इत्यादिशास्त्रतः प्रत्युद्गमादिकं मिथो जनैर्यैद्विधीयते प्रत्युद्गमः कायव्यापारः प्रश्रयो विनयो मनोव्यापारः अभिवादनं वाग्व्यापारः तेषां समाहारद्वंद्वैक्यम्, तत्प्राज्ञैः सर्वात्मभूतवासुदेवविद्भिः साधु यथा भवति तथा परस्मै पुरुषाय सर्वात्मने वासुदेवाय गुहाशयायांतर्य्यामिणे एव चेतसा विधीयते क्रियते। तदर्चनेनैव सर्वार्चनसिद्धेः 'यथा तरोर्मूलनिषेचनेन तृप्यंति तत्स्कंधभुजोपशाखाः। प्राणोपहाराच्च यथेंद्रियाणि तथैव सर्वार्हणमच्युतेज्ये'ति वक्ष्यमाणमप्यत्रानुसंधेयम्। न तु देहमानिने देहात्मवादिने यत्रस्थानिने जीवविशेषाय मूलस्थानिवासुदेवार्चनेन सर्वस्यार्चितत्वादिति भावः॥ २२॥ ❀ ❀ ननु तर्हि त्वयापि तथैव दक्षः कुतो न सत्कृत इत्यत्र प्रत्याहृतबाह्येंद्रियस्वमनसि बहुधा वासुदेवं नमस्कारादिना भजाम्यतो मनसैव प्रत्युद्गमादिदक्षांतरात्मने कृतमित्याशयेनाह सत्त्वमिति। विशुद्धं विशेषतः शुद्धम् यतो वसुभिः पुण्यैर्दीव्यतीति वसुदेवशब्दितं वसुदेवशब्दवाच्यं सत्त्वमंतःकरणं यत् तत्र अपावृतस्तत्कृतावरणरहितः जीवो यथांतःकरणेनावृतोस्ति तद्विपरीत इत्यर्थः भगवान् वासुदेव ईयते प्रतीयते। अतस्तस्मिन्सत्त्वे मया नमसा नमस्कारेण विधीयते सेव्यते अतो दक्षोपि मया सत्कृत इति भावः। ननु चक्षुषा दृष्ट्वा कुतो न कायव्यापारेणादृतो दक्ष इत्यत्राह अधोक्षज इति। स अधोभूतेषु प्रत्याहृतेषु अक्षेषु चक्षुरादिषु जीयते प्रकाशते मनसि। अतश्चक्षुरादिनिरोधः कृत इत्यर्थः। अतः प्रिये मया तत्र किमपि नापकृतं वृथैव वाग्बाणैस्ताडित इति भावः॥ २३॥ ❀ ❀ तदेवाह तदिति हे वरोरु! यतो मम द्विट् तत्तस्मात् ते देहकृत् मुख्योपि पितापि दक्षो न निरीक्ष्यो विश्वसृजां यज्ञगतमनागसं निरपराधिनं मां वचसा तिरः अकरोत् तिरस्कृतवान्। किं बहुना ये तदनुवृतास्तेपि न निरीक्ष्याः॥ २४॥ ❀ ❀ विपक्षे दोषमाह यदीति। यदि मद्वचोऽतिहायोल्लंघ्य गमिष्यसि ततो हेतोर्भवत्या भद्रं न भविष्यति। यतः संभावितस्य सुप्रतिष्ठितस्य यदा स्वजनात् पराभवो भवति तदा स पराभवः सद्यो मरणाय कल्पते। नाशहेतुर्भवति॥ २५॥

इति श्रीमद्भागवते सिद्धान्तप्रदीपे चतुर्थस्कंधे तृतीयाध्यायार्थप्रकाशः॥ ३॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

नन्वस्त्वेवं तस्यासत्त्वेन निर्निमित्तं द्वेष्टृत्वं तथापि सत्रे सभायां सदाचारप्राप्तः प्रत्युत्थानादिना दक्षसत्कारो भवता कुतो न कृतस्तत्तात्पर्यं वेदितुमिच्छामीत्याकाङ्क्षायामाह-प्रत्युद्गमेति। प्रत्युद्गमः उत्थाय संमुखागमनम्, प्रश्रयणं स्नेहोचिता क्रिया,

अभिवादनं नमस्कारः, एषां समाहारः, तत् प्राज्ञैः सदाचारविद्भिः साधु समीचीनं विधीयते। कुतस्तद्विधानस्य साधुत्वं तत्राह–यतः परस्मै पुरुषायेति, पुरुषोत्तमायेत्यर्थः। ननु तस्यानुपस्थितत्वात्कथं तस्मा अनुविधानं तत्राह–गुहाशयायैवेति। गुहा हृदयाकाशः तत्र शेतेऽन्तर्यामितया तिष्ठतीति तथा तस्मै अतस्तत्सामीप्यं सर्वेषां सहजमेवेति भावः। तस्यान्तर्यामित्वात्तत्प्रसादे सर्वप्रसादसिद्धेः स एव पूज्यतमो नान्यस्तत्सदृशोस्तीत्येवकारेण सूचयति। ननु मिथोपि जनैः प्रत्युद्गमादि क्रियत तद्दर्शनादित्याशङ्कयाह–देहमानिन इति। अहमुत्कृष्टो ब्राह्मणत्वात्सर्वपूज्य इत्येवमादिदेहाभिमानवते यत् प्रत्युद्गमादि मिथो जनैर्विधीयते तन्न साधु, तस्य प्राकृतत्वेन पूज्यत्वाभावादिति भावः। अतोऽन्तर्यामिदृष्टया मनसा मया प्रत्युद्गमादि सर्वं कृतमेव लोकरीत्या तत्सन्तोषार्थं कर्त्तव्यं तत्तु तदभिमानं दृष्ट्वा तन्निवृत्तये न कृतम्। तेन न ममापराधः कश्चिन्नापि क्षतिरिति ज्ञेयम्। हे सुमध्यमे इति संबोधनं स्ववाक्ये विश्वासार्थम्। सुष्ठु शुद्धं मध्यमं हृदयं यस्याः। शुद्धहृदयस्यैव गुरुवाक्ये विश्वासो भवतीति भावः॥ २२॥ ❀ ❀ एवं शिष्टाचारं लोकाचारं च दर्शयित्वा तत्र 'गुहाशयायैव न देहमानिने' इत्युक्तं तत्र का सा गुहा कश्च तत्र शेत इत्याकाङ्क्षायां तदर्थं दर्शयन् स्वस्यानुक्षणमेव तदुपासनं दर्शयति–सत्त्वमिति। विशुद्धं रजस्तमोभ्यामसंभिन्नं सत्त्वमन्तःकरणं 'सत्त्वं चास्य विनिर्भिन्नम्' इत्यत्रान्तःकरणस्य सत्त्वशब्देनोक्तत्वात्। तदेव पूर्वं गुहाशब्देनाप्युक्तं तदेव वसुदेवशब्दितमवयववृत्त्या वसुदेवशब्देनोक्तम्। अवयववृत्त्या वसुदेवशब्दस्यान्तःकरणे प्रवृत्तिमेव हेतुपूर्विकां दर्शयति–यदिति। यत् यस्मात् तत्र विशुद्धे सत्त्वेऽन्तःकरणे पुमान् भगवान् वासुदेवः यः पूर्वं परपुरुषगुहाशयशब्दैरुक्तः स अपावृतः अपगतमावृतमावरणं माया यस्मात् तथाभूतः सन् ईयते तस्मात्तद्वसुदेवशब्दितमित्यर्थः। तथाच वसति सर्वत्रेति वसुः सर्वान्तर्यामी भगवान्, वसति सर्वमत्रेति वा वसुः, सर्वस्य प्रपञ्चस्याश्रयो भगवानेव। तेन वसुना भगवतान्तर्यामिणा स्वाधिष्ठानेन वा दीव्यति प्रकाशते इति वसुदेव इत्यवयवव्युत्पत्तिर्बोध्या। तादृशे शुद्धसत्त्वात्मके वसुदेवे तिष्ठतीति वासुदेव इति व्युत्पत्तिं दर्शयन् स्वस्य तद्ध्यानपरत्वमाह–सत्त्व इति। तस्मिन् विशुद्धे सत्त्वे अन्तःकरणे भगवान्वासुदेवो मे मया मनसा विधीयते अनुसन्धीयते चिन्त्यते इत्यर्थः। नमसा विधीयते इति पाठे नमस्कारेण सहानुसन्धीयते नमस्कारपूर्वकं चिन्त्यते इति यावत्। तस्यान्तःकरणस्थत्वेन जीववत् स्वरूपतो गुणतो वा प्रच्युतिमाशङ्कयाह–भगवानिति, ऐश्वर्यादिषड्गुणपरिपूर्ण एवेत्यर्थः। तस्य लौकिकेन्द्रियागोचरत्वमाह–अधोक्षज इति। अधः अक्षजं ज्ञानं यस्मात् स तथेत्यर्थः। एतत्प्रसिद्धमित्याह–हीति। अन्यथा तस्य सर्वत्र सिद्धत्वात्सर्वैरेव दृष्टः स्यादिति भावः। यद्वा हेतौ हिशब्दः यस्मादिन्द्रियातीतस्तस्मान्मनसा चिन्त्यत इत्यर्थः। अलौकिकेन्द्रियाणां तु 'दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्' इति वचनाद्ब्रह्मादिभिरनुभूतत्वाच्च तत्कृपया तत्रास्ति विषयतेति ज्ञेयम्। एवं भगवद्ध्यानपरस्य मम ततो व्युत्थाय दक्षसम्मानकरणस्यानुचितत्वान्न तत्कृतम्, मयि द्वेषस्तु तत्स्वभावदोषादेव नात्र ममापराध इति॥ २३॥ ❀ ❀ एवं स्वसिद्धान्तं भगवद्भजनपरत्वं प्रदर्श्यानर्थहेतुत्वाद्दक्षदर्शनादिकं वारयति–तत्त इति। यस्माद्दक्षस्य दोषा उक्ता वक्ष्यमाणाश्च तत्तस्मात्तस्यायोग्यत्वात् स दक्षस्तव देहकृत्पितापि ते त्वया न निरीक्ष्यो न द्रष्टुं योग्य इति सम्बन्धः। यदा द्रष्टुमपि योग्यो न भवति तदा तत्र गमनसम्भाषणमीलनादिसत्कारयोग्यता तु दूरापास्तेति भावः। तत्र हेतुत्वेन पुनर्मुख्यं दोषं द्वेषमेवाह–मम द्विडिति। यतो मम द्वेष्टेत्यर्थः। मुख्यस्य ह्युत्कटो दोषस्तत्संसर्गिणोऽन्यानपि व्याप्नोत्यतस्तेपि तत्सदृशत्वेन तत्पङ्क्तावेव निविष्टास्ततस्तेपि न निरीक्ष्या इत्याह–तदनुव्रताश्च य इति। ये तं दक्षमनुसृत्य वर्तन्ते तेपि न द्रष्टुं योग्या इत्यर्थः। न केवलं मां द्वेष्टि, किन्तु द्वेषकार्यं तिरस्कारमपि कृतवानित्याह– य इति। हे वरोरु! यो विश्वसृजां यज्ञे गतमनागसं निरपराधमपि मां दुर्वचसा ग्रामिणामिवासभ्यवचसा तिरोऽकरोत् मम तिरस्कारं कृतवानित्यर्थः। देहकृदपीत्यनेन अयं पिता देहसम्बन्धी अहं त्वात्मसम्बन्धी अत आत्मालम्बनेऽहमनुसर्त्तव्यो देहालम्बने तु दक्षः। अतो ममाज्ञोल्लङ्घनं न कार्यमिति सूचयति। यद्वा 'जनकश्चोपनेता च यश्च विद्यां प्रयच्छति। अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः' इति स्मृतेरन्यत्राप्यौपचारिकं पितृत्वमस्ति तद्वारयति। हे वरोरु इति स्नेहेन सम्बोधयन् यदि मत्प्रीतिं वाञ्छसि तदा न तत्र गन्तव्यमिति सूचयति॥ २४॥ ❀ ❀ एवं तत्र गमने युक्तिनीतिविरोधं दर्शयित्वा सर्वज्ञत्वाद्भविष्यज्ज्ञत्वात् तत्सूचयन् गमने तवानिष्टं भविष्यतीत्याह–यदीति। यदि मम वचनं निषेधविषयमतिहाय उल्लङ्घ्य पितृगृहं त्वं व्रजिष्यसि तदा ततो गमनात् भवत्यास्तव भद्रं कल्याणं न भविष्यति, किन्तु तद्विरोधि महदनिष्टमेव भविष्यति। कुत एवमत आह–सम्भावितस्येति। सम्भावितस्य श्रेष्ठत्वेनाभिमतस्य सर्वदा सत्कृतस्य यदाकदाचित्स्वजनात्सदा सत्कारकर्त्तुः पराभवस्तिरस्कारो भवति तदा स तिरस्कारस्तस्य मरणाय कल्पते मरणपर्यवसायी भवति। अनेन तवापि सम्भावितत्वात्पराभवस्य च तत्रावश्यंभावित्वान्मरणभिया त्वया न गन्तव्यमिति भविष्यं सूचयन् वारयतीति भावः॥ २५॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥

श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥

रचिता तत्र तुर्येऽस्मिन्स्कन्धे धर्मनिरूपणे ॥ तृतीयो विवृतोऽध्यायो द्वेषस्थितिनिरूपकः ॥ ३ ॥

### भाषानुवादः

सुमध्यमे ! तुम कह सकती हो कि आपने प्रजापतियोंकी सभामें उनका आदर क्यों नहीं किया। सो ये सम्मुख जाना, नम्रता दिखाना, प्रणाम करना आदि क्रियाएँ जो लोकव्यवहारमें परस्पर की जाती हैं, तत्त्व-ज्ञानियोंके द्वारा बहुत अच्छे ढंगसे की जाती हैं। वे अन्तर्यामीरूपसे सबके अन्तःकरणोंमें स्थित परमपुरुष वासुदेवको ही प्रणामादि करते हैं; देहाभिमानी पुरुषको नहीं करते ॥ २२ ॥ ❀ ❀ विशुद्ध अन्तःकरणका नाम ही 'वसुदेव' है, क्योंकि उसीमें भगवान् वासुदेवका अपरोक्ष अनुभव होता है। उस शुद्ध चित्तमें स्थित इन्द्रियातीत भगवान् वासुदेवको ही मैं नमस्कार किया करता हूँ ॥ २३ ॥ ❀ ❀ इसीलिये प्रिये ! जिसने प्रजापतियोंके यज्ञमें, मेरेद्वारा कोई अपराध न होनेपर भी, मेरा कटुवाक्योंसे तिरस्कार किया था, वह दक्ष यद्यपि तुम्हारे शरीरको उत्पन्न करनेवाला पिता है, तो भी मेरा शत्रु होनेके कारण तुम्हें उसे अथवा उसके अनुयायियोंको देखनेका विचार भी नहीं करना चाहिये ॥ २४ ॥ ❀ ❀ यदि तुम मेरी बात न मानकर वहाँ जाओगी, तो तुम्हारे लिये अच्छा न होगा; क्योंकि जब किसी प्रतिष्ठित व्यक्तिका अपने अपमान होता है, तब वह तत्काल उनकी मृत्युका कारण हो जाता है ॥ २५ ॥

## इति तृतीयोऽध्यायः ॥



# अथ चतुर्थोऽध्यायः

## मैत्रेय उवाच

एतावदुक्त्वा विरराम शंकरः पत्न्यङ्गनाशं ह्युभयत्र चिन्तयन् ।
सुहृद्दिदृक्षुः परिशङ्किता भवान्निष्क्रामती निर्विशती द्विधाऽऽस सा ॥ १ ॥
सुहृद्दिदृक्षाप्रतिघातदुर्मनाः स्नेहाद्रुदत्यश्रुकलातिविह्वला ।
भवं भवान्यप्रतिपूरुषं रुषा प्रधक्ष्यतीवैक्षत जातवेपथुः ॥ २ ॥
ततो विनिःश्वस्य सती विहाय तं शोकेन रोषेण च दूयता हृदा ।
पित्रोरगात्स्त्रैणविमूढधीर्गृहा[1]न् प्रेम्णाऽऽत्मनो योऽर्धमदात्सतां प्रियः ॥ ३ ॥
तामन्वगच्छन् द्रुतविक्रमां सतीमेकां त्रिनेत्रानुचराः सहस्रशः ।
स[2]पार्षदयक्षा मणिमन्मदादयः पुरोवृषेन्द्रास्तरसा गतव्यथाः ॥ ४ ॥
तां सा[3]रिकाकन्दुकदर्पणाम्बुजश्वेतातपत्रव्यजनस्रगादिभिः ।
गीतायनैर्दुन्दुभिशङ्खवेणुभिर्वृषेन्द्रमारोप्य विटङ्किता ययुः ॥ ५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

चतुर्थे तु पतिं हित्वा गता पित्राऽवमानिता । रुषा निर्भर्त्स्य तं यज्ञे जहौ देहमितीर्यते ॥ १ ॥

उभयत्रानुज्ञाने बलान्निवारणे चासुहृद्दिदृक्षुर्निष्क्रामंती भवात्परिशंकिता पुनर्निर्विशंती च तदा सती द्विधा आस उभयनिष्ठचित्ता बभूव । न गता न च स्थिता आंदोलावद्वर्तिरभवत् ॥ १ ॥ ❋ ❋ सुहृदां दिदृक्षायाः प्रतिघातेन दुर्मनाः । अश्रूणां कलाभिर्लेशैरतिविह्वला व्याकुला अप्रतिपूरुषं स्वसमानपुरुषांतररहितम् । प्रधक्ष्यती भस्मीकरिष्यतीव । रुषा जातो वेपथुः कंपो यस्याः ॥ २ ॥ ❋ ❋ ततस्तं विहाय पित्रोर्गृहानगात् । कथंभूतम् । यः प्रीत्या तस्यै आत्मनो देहस्यार्धमदात् । त्यागे हेतुः–स्त्रैणं स्त्रीस्वभावस्तेन विमूढा धीर्यस्याः ॥ ३ ॥ ❋ ❋ द्रुतविक्रमां शीघ्रं गच्छंतीम् । सह पार्षदैर्यक्षैश्च वर्तमानाः । मणिमान्मदश्चादिर्येषां ते । पुरः पुरतो वृषेंद्रो येषां ते । गतव्यथा निर्भयाः । रुद्रातिक्रमेण तस्या गमनादागतव्यथा इति वा ॥ ४ ॥ ❋ ❋ तां वृषेंद्रमारोप्य सारिकादिभिः क्रीडोपकरणैः श्वेतातपत्रादिभिश्च महाराजविभूतिभिः सह विटंकिताः शोभिता ययुः । सारिका पठननिरूपिता पक्षिणी । गीतायनैर्गीताश्रयैः ॥ ५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तं दक्षम् ( १ ) । द्विधा द्विचित्ता ॥ १ ॥ ❋ ❋ प्रधक्ष्यतीवात्मानमिति शेषः । भाविसूचनम् । रोदनमिह शिवानुज्ञार्थमपि ज्ञेयम् ॥ २ ॥ ❋ ❋ रोदनेप्यननुज्ञाता स्त्रीस्वभावायत्ता जगामैवेत्याह—"स्त्रैण्यमिति । स्त्रैणशब्दात्स्वार्थे ष्यञ् ॥ ३ ॥ ❋ ❋ निर्भयत्वं हि राज्ञो विना न घटत इति चेदाह–आगतेति ॥ ४ ॥ ❋ ❋ वृषेंद्रो नंदी पठने निरूपिता स्थापिता श्यामवर्णा शुकी । 'मंडुके'ति पाठे मंडुकं जलक्रीडावाद्यं, 'विटंकः शुष्कपर्वते शोभायां धूर्तपूरुषे' इति स्वामी ॥ ५ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तं पितरं निर्भर्त्स्य वाचा तिरस्कृत्य आसेत्यन्वयं बभूवेत्यर्थे ॥ १ ॥ ❋ ❋ जगदात्मानं वा भस्मीकरिष्यंतीवेति व्याख्येयम् ईश्वरे तच्छक्तेरभावात् ॥ २ ॥ ❋ ❋ ततस्तादृशक्रोधानन्तरं तं शिवं मात्रादिविरहजन्येन शोकेन शिवविषयकेण रोषेण च दूयता दुःखितेन 'गृहाः पुंसि च भूम्न्येवे'तिं नियमाद् गृहानिति बहुत्वं मायाया अपि विमूढधीत्वं भगवन्माययेति ज्ञेयम् ॥ ३–५ ॥

---

१. प्रा० पा०—गृहात् । २. प्रा० पा०—स्वपार्षदा ये । ३. प्रा० पा०—सैनिका रुद्रकदर्प० । ४. मूले 'स्त्रैण' इति पाठ एव श्रीधरादिसंमततया परिगृहीतोऽत्र—सं० ।

### श्रीमद्वीरराघवव्याख्या

भवोक्तमर्द्धेनोपसंहरन् भवान्याः स्वाभिप्रेतार्थलाभनिमित्तशोकं तन्निमित्तं भर्तृरि क्रोधं भर्त्तारमनादृत्याध्वरे गमनं तत्र पितृकृतपराभवं तन्निमित्तं देहत्यागप्रकारं चाह–एतावदिति। शंकरः एतावदभिधाय उभयत्र पत्न्यास्तत्र गमनेऽगमने च अनुज्ञादाने बलान्निवारणे च तच्छरीरनाशं चिंतयन् विरराम तूष्णीमास। ततः सा सती सुहृद्दिदृक्षुः मातापित्रादीन् द्रष्टुमिच्छती निष्क्रामती गृहाद्बहिर्निर्गच्छंती पुनः भवात् शंकरात्परिशिंकिता भर्त्तुर्वचोऽतिहाय गमने का वा हानिः स्यादिति परिशंकिता च तदा द्विधा आस बभूव ॥ १ ॥ ❀ ❀ सुहृदां दिदृक्षायाः द्रष्टुमिच्छायाः प्रतिघातः निरोधस्तेन दुर्मना दुःखितचित्ता बंधुषु स्नेहाद्रुदंती अश्रूणां कलाभिर्लेशैरतिविह्वला व्याकुला भवानी सती अप्रतिपूरुषं समदर्शित्वेन प्रतिपक्षरहितं भवं रुद्रं रुषा जातवेपथुः उत्पन्नशरीरकंपा प्रधक्ष्यती भस्मीकुर्वंतीव ऐक्षत अपश्यत् ॥ २ ॥ ❀ ❀ तदा ततः सती विनिश्वस्य दीर्घं निश्वासं विधाय सतां जिज्ञासूनां प्रियो यश्च प्रेम्णा आत्मनो देहस्यार्द्धमदादत्तवान् अनेन त्यागानर्हत्वमुक्तं तं रुद्रं विहाय स्त्रैणं स्त्रीस्वभावस्तेन विमूढा धीः नष्टमतिः शोकेन बंधुदर्शनसंभावनानिमित्तशोकेन रोषेण दिदृक्षाप्रतिघातनिमित्तक्रोधेन पुनर्दूयता भर्तृवचोऽतिक्रमनिमित्तानर्थसंभावनापरितप्तेन हृदा पित्रोर्गृहान् प्रत्यगात् ॥ ३ ॥ ❀ ❀ द्रुतविक्रमां शीघ्रं पादविक्षेपान्कुर्वतीं एकामसहायां तां सतीं त्रिनेत्रानुचराः सहस्रशोऽनुययुः। एतदेव प्रपंचयति सार्द्धेन। पार्षदैर्यक्षैश्च सहिता मणिमान्मदश्चादिर्येषां ते पुरः पुरतः वृषेंद्रो येषां ते तरसा बलेन गतव्यथा निर्भयाः, यद्वा आगतव्यथाः इति च्छेदः, रुद्रगमनाभावादागतव्यथाः सभयाः तरसा बलात् ॥ ४ ॥ ❀ ❀ तां सतीं वृषेंद्रमारोप्य नंदीश्वरे उपवेश्य सारिकादिभिः क्रीडोपकरणैः सारिका पठननिपुणः पक्षिविशेषः, श्वेतातपत्रादिभिः राजचिह्नैश्च विटंकिता अलंकृता ययुः ॥ ५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

हरौ भक्तिविधानार्थं गुर्वादावपि भक्तिरवश्यं कर्तव्येत्यभिप्रेयतेऽस्मिन्नध्याये। तत्र देवीमेवं बाधकं ब्रुवन् शंकरः किं चकारेति तत्राह एतावदिति। शं सुखं करे यस्य सः शं करोतीति वा शंकरः। उभयत्र प्रस्थापने निवारणे च पत्न्या अंगनाशं शरीरनाशं हि यस्मात्तस्माद्विरराम। ततस्तु देवी किमकरोदिति तत्राह सुहृद्दिदृक्षुरिति। सा देवी सुहृद्दिदृक्षुः स्वधाम्नो निष्क्रामती भवात्परिशंकिता स्वधाम निर्विशती चाभूदित्यन्वयः ॥ १ ॥ ❀ ❀ अंतःकरणवृत्तिभेदात् द्विधा प्रवृत्तिमती भवानी किमकृतेत्याशंक्य तस्या भर्तुः कामजनकमंत्रौषधैः स्त्रीस्वभावं वक्ति सुहृद्दिदृक्षेति। सुहृद्दिदृक्षायाः प्रतिघातो भंगस्तेन दुर्मना दुःखितमना अप्रतिपूरुषं प्रतिपक्षपुरुषरहितं अनेन कोपरोदनाभ्यां वशीकरणमंत्राभ्यां वा शिवोभिमतानुमतिप्रदः स्यादिति भावो दर्शितः ॥ २ ॥ ❀ ❀ अनेनापि भावेन स्तिमितसमुद्रवत् स्थितं शिवं दृष्ट्वा तद्गमनप्रकारं वक्ति तत इति। दूयता तापवता, सर्वेश्वर्या एष भावः कथमित्यत उक्तं स्त्रैणेति। स्त्रीणां स्वभावः स्त्रैणं तेन विमूढा धीर्यस्याः सा तथा अज्ञस्त्रियाः स्वभाव एवायं न तु देवस्त्रिया इति भावेनाह प्रेम्णेति। आत्मन इति पदं द्विरावर्तनीयं स्वस्य शरीरस्यार्द्धमरासत अदत्त 'रासृ दान' इति धातुः ॥ ३ ॥ ❀ ❀ स्वशरीरार्धदो हरस्तस्या एकस्या गमनं कथमसहतेत्याशंक्य तद्भावविदामनुचराणां गमनप्रकारं वक्ति तामन्विति। द्रुतम् विक्रमः पादविक्षेपो यस्याः सा तथा तां केचनानुचरा अन्वगच्छन् न तु मुख्या इत्यत उक्तं मणिमन्मदादय इति। पार्षदेषु मुख्यैः सह वर्तमानाः सपार्षदमुख्या आगतव्यथाः स्वस्ति स्यादस्वस्ति वेति प्राप्तमनोदुःखाः ॥ ४ ॥ ❀ ❀ शीघ्रतरं गच्छंत्या रुद्राण्याः पाशाकृष्टैरिवागच्छद्भिरनुचरैः किमभूदित्याशंक्य राज्ञीगमनवदन्वितयात्राभूदित्याह तां सारिकेति। सारिका क्रीडाशुकी मंडुकं जलक्रीडावाद्यं विलंबिता यथा यथा संभूय गमनं स्यात्तथा शनैश्चरंतः। विटंकिता इति पाठे श्रृंगारिता इत्यर्थः ॥ ५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

परिशंकिनीति चित्सुखः ॥ १ ॥ ❀ ❀ प्रधक्ष्यतीव भस्मीकरिष्यतीव आत्मानमिति शेषः। विबोद्धुमर्हतीतिवद्दाहगोचरीभविष्यतीवेति ॥ २ ॥ ❀ ❀ तत इति। स्त्रैण्येति मायापि सा भगवन्मायया मोहिताभूदिति भावः। स्त्रैण्येति सम्बन्धोक्तिः ॥ ३ ॥ ४ ॥ ❀ ❀ सारिकामिति चित्सुखः। पाठान्तरं गच्छन्तीमित्यर्थः। अम्बुजेति चित्सुखः ॥ ५-६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

उभयत्रानुज्ञायां बलान्निवारणे च सुहृद्दिदृक्षुः सा बलान्निष्क्रामन्ती आस भवात् परिशंकिता च पुनर्विशती चेति द्विधा सैका सती द्विविधा अभूत्। औत्सुक्यशंकयोर्द्वयोः संग्रामे तुल्यबलत्वादिति भावः ॥ १ ॥ ❀ ❀ अश्रूणि कलयतीति सा। न विद्यते प्रतिपुरुषस्तुल्यो यस्य तं भवं मां गन्तुं नानुजानीते इति प्रधक्ष्यतीव कटाक्षैर्भस्मीकरिष्यतीव ऐक्षत ॥ २ ॥ ❀ ❀ ततश्चौत्सुक्यशंकयोर्द्वयोरायत्यामौत्सुक्यस्य प्राबल्ये शंकायाः पराभवे च तं भवं विहाय दूयता उपतप्यमानेन पित्रोर्गृहान् अगात्।

कथम्भूतं यः प्रेम्णा आत्मनो देहस्यार्द्धमदात् तम्। त्यागे हेतुः स्त्रैणं स्त्रीस्वभावस्तेन मूढा धीर्यस्याः सा ॥ ३ ॥ ❀ ❀ द्रुतविक्रमां निवारयिष्यतीति शंकया पद्भ्यामेव द्रुतं गच्छंतीं पार्षदैर्यक्षैश्च सह वर्त्तमानः अहो एकाकिन्येवास्माकमभीष्टदेवी चलतीत्यागता व्यथा येषां ते रुद्रानुचरा इति रुद्रस्यैवाभिप्रायमवगम्येति भावः ॥ ४ ॥ ❀ ❀ सारिकेत्यादिभिः खेलनोपकरणैस्तस्याः खेलनव्यसनित्वं गीतायनैर्दुन्दुभ्यादिभिर्गायनी लासिकादिभिश्च तस्या गानव्यसनित्वमवधार्येति भावः। श्वेतातपत्रादिभिर्महा-राजविभूतिभिः सह विटंकिताः शोभिता वा ययुः ॥ ५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

भर्त्रा वार्यमाणापि औत्सुक्यातिशयात्पितृगृहं गता तेनाऽनादृता सती देहं जहाविति वर्णयत्येतावदुक्त्वेति चतुर्थेनाध्यायेन। विरराम निवारणादुपरतोऽभूत् उभयत्र बलान्निवारणे अनिवारणे च सा तु सुहृदः पित्रादीन्द्रष्टुमिच्छंती निष्क्रामती अवलंघिताज्ञः किं करिष्यतीति भवात्परिशंकिता पुनर्निविशतीत्येवं द्विधेवाऽऽस बभूव ॥ १ ॥ ❀ ❀ सुहृदां दिदृक्षया प्रतिघातेनावरोधेन दुर्मनाः परिम्लानचित्ता अश्रुकलाभिरतिविह्वला रुषा जातवेपथुः कंपमाना रुदती अप्रतिपूरुषं प्रतिपुरुषरहितो यो भवस्तं तस्मिन् कार्ये भवान्यनुकूलं कुर्यात्तेन पुरुषेण रहितं प्रधक्ष्यतीवैक्षतापश्यत् ॥ २ ॥ ❀ ❀ स्त्रैण्येन स्त्रीस्वभावेन विमूढा कार्याकार्य-विवेकरहिता धीर्यस्याः सा य आत्मनो देहस्यार्द्धं प्रेम्णा सतीकर्तृकया भक्त्याददात्तं विहाय पित्रोर्गृहान् अगात्। अहो सांसारि-करागस्य महदनर्थहेतुत्वमिति भावः ॥ ३ ॥ ❀ ❀ द्रुतविक्रमां शीघ्रगतिं पार्षदैर्यक्षैश्च सहिताः मणिमान् मदश्च आदिर्येषां ते पुरोऽग्रे वृषेंद्रो येषां ते गतव्यथाः तदानीं तेषां तत्सहगमनस्यैव न्याय्यत्वात् ॥ ४ ॥ ❀ ❀ तां सतीं वृषेन्द्रमारोप्य सारिका शिक्षिता पक्षिणी तदादिभिः गीतायनैर्गानाधारैर्दुंदुभ्यादिभिश्च सह विटंकिताः शोभिता ययुः ॥ ५ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

चतुर्थे शिवविद्वेषं वारितोप्यजहान्न हि। दक्षस्तदा सती देहं जहाविति निरूप्यते ॥ १ ॥

सतीगमनेऽवश्यमस्या मरणं भविष्यति तच्चानभीष्टमिति गमनप्रतिषेधः कृतः, परंतु तस्या अभिमानशक्तित्वात्सा तन्नाङ्गीचकार। तन्निर्वन्धं दृष्ट्वा शिवोपि तूष्णीमासेत्याह—एतावदिति। एतावत् पूर्वप्रदर्शितमेतत्समय उचितं वचनं शंकर उक्त्वा विरराम तूष्णीं जात इति संबन्धः। ननु तस्य तूष्णीम्भावो नोचितो गमने सतीदेहनाशस्य निश्चितत्वादतो बलाद्वारणमेवोचित-मित्याशङ्क्याह-पत्न्यङ्गनाशमिति। उभयत्र बलाद्वारणे तत्र गमने च हिं निश्चयेन चिन्तयन् जानन् बलाद्गमननिवारणे सुहृद्दिदृक्षा-प्रतिघातेन तस्या हठादत्र मरणे स्वस्मिन्दुर्यश आपतेत् मद्द्वेषान्मत्पुत्र्यपि मद्गृहमाजिगमिषन्ती तत्प्रतिरोधं कृत्वाऽनेन मारितेति मत्वा दक्षस्य द्वेषाधिक्यं च स्यात्तदभिमाननिवृत्तिश्च न स्यात्, तत्र गमने तु दक्षापमानान्मरणे तस्यैव दुर्यशोभागित्वं स्यान्न स्वस्यातोऽत्र मरणात्तत्र मरणं वरमिति मत्वोपेक्षां कृतवानिति भावः। सा च सती द्विधा आस गमनागमनद्विविधविचारपरा बभूवेत्यर्थः। तस्य मानसस्य ज्ञापकं क्रियाद्वैविध्यमाह-निष्क्रामती निर्विशतीति। तस्या निःसरणप्रवेशाभ्यां ज्ञायते द्विविधविचारपरा बभूवेत्यर्थः। तत्र द्विविधविचारे हेतुद्वयमाह-सुहृद्दिदृक्षुः परिशङ्किता भवादिति। सुहृदां पित्रादीनां दिदृक्षावशात्तत्र गमनविचारे गृहान्निष्क्रामती भवति यदा तु भवात् परिशङ्किता भीता भवति तदात्र स्थितिविचारेण गृहं निर्विशती भवतीत्यर्थः ॥ १ ॥ ❀ ❀ ततश्च दक्षनाशस्यावश्यंभावित्वात्तद्दुरदृष्टवशात्सत्याः सुहृद्दिदृक्षाकोटेः प्राबल्यं जातमित्यभिप्रेत्याह-सुहृद्दिदृक्षेति। भवेन गमन-वारणात्सुहृदां दिदृक्षाया अपि जातः प्रतिघातः प्रतिरोधस्तेन दुर्मनाः दुःखितं दुष्टमनवस्थितं व्याकुलं वा मनो यस्याः, अत एव पित्रादिस्नेहाद्रुदन्ती अत एव अश्रूणां कलाभिः बिन्दुभिः अतिविह्वला व्याकुला भवानी सती क्रोधेन प्रधक्ष्यतीव भस्मीकरिष्यतीव भवमैक्षत दृष्टवतीत्यन्वयः। भवे तथा दृष्टेः सर्वथायुक्ततां सूचयन्नाह-अप्रतिपूरुषमिति। यस्य कृपालुत्वादिगुणेन प्रतिनिधिरूपोऽन्यः पुरुषो नास्ति तथाभूतमपीत्यर्थः। तथापि तथादर्शने प्रबलो हेतुः क्रोध एवेति सूचयंस्तत्कार्यं दर्शयति-जातवेपथुरिति। क्रोधेन सर्वाङ्गव्याप्तेन जातो वेपथुः कम्पो यस्याः सेत्यर्थः ॥ २ ॥ ❀ ❀ ततस्तु निर्गतैवेत्याह-तत इति। तत एवं कुटिल-दृष्ट्या दर्शनानन्तरं विपरीततया दर्शनेपि निश्चलाम्बुधिवन्निर्विकारतया स्थितं भवं विहाय त्यक्त्वा सती पित्रोर्गृहान् अगादित्यन्वयः। पत्युराज्ञाया उल्लङ्घनेन तस्याः शोकः गमननिषेधकत्वेन तत्र रोषश्च तद्वियोगभयात् हृदि कम्पश्च एतैर्दोषैर्व्याकुला विशेषेण निःश्वस्या-गादित्यर्थः। तं विहायेत्यनेनैतद्देहेन पुनः शिवावलोकाभावः सूचितः। पित्रोरिति द्विवचनेन मातृस्नेहाधिक्याद्गमनमिति सूचयति। शिवत्यागस्य सर्वथा अयोग्यत्वं सूचयन्नाह-य इति। यः शिवः आत्मनो देहस्यार्द्धं सत्यै प्रेम्णैव न तु सेवाद्युपाध्यपेक्षया अदात् दत्तवान्। न च तस्या एवात्मनोर्द्धमेव दत्तवान्, किंत्वन्येभ्योप्यत्युदारतया तत्तद्वाञ्छितं ददात्यत एव संतस्तं प्रेम्णा भजन्तीत्याह-सतां प्रिय इति। अनेन पूर्वं सत्याः साधुत्वेनैव प्रीतः संस्तस्या आत्मनोऽर्धं दत्तवानित्यपि सूचितम्। ननु यथा मात्रादिस्नेहात्तत्र गमनमावश्यकं तथा पतिस्नेहौत्कण्ठ्यादत्रापि स्थितिर्युक्तैव, कुतः तत्र गमनमेव कृतवती तत्राह-स्त्रैण्येति। स्त्रैण्यं स्त्रीस्वभावो दुराग्रहादिरूपस्तेन विषयेण मूढा विवेकाकुशला धीर्यस्याः सा तथेत्यर्थः। स्वबुद्धिमौढ्यात्तं विहाय गतेति भावः। अनेन 'स्वभावो

दुस्त्यजो नाथ' 'नहि स्वभावो भावानां भिद्यते ह्यौष्ण्यवद्द्रव' इत्यादावुक्तं स्वभावस्य दुस्त्यजत्वमपि' दर्शितम् ॥ ३ ॥ ❀ ❀ ततस्तां निर्गतां दृष्ट्वा पार्षदा अपि भवाज्ञापर्यन्तं विलम्बमसहिष्णवस्तदिङ्गितज्ञाः सहसैव सहस्रशो निर्गता इत्याह–तामिति। तां भवार्द्धाङ्गीत्वेन प्रसिद्धां सतीं सहस्रशस्त्रिनेत्रानुचरा अन्वगच्छन्निति सम्बन्धः। आज्ञोल्लङ्घनेन गमनाद्भयाद् द्रुतं शीघ्रं विक्रमो गमनं यस्यास्ताम्। तेषां भवाज्ञां विनाप्यनुगमने हेतुमाह–यत एकामिति। स्वामिनीमेकाकिनीं गच्छन्तीं दृष्ट्वाऽनुचराः कथं न गच्छेयुरिति भावः। तेषां प्राधानिकत्वं ज्ञापयितुं नामप्रसिद्धिमाह–सपार्षदेति। पार्षदैः सह वर्तमाना ये यक्षाः सपार्षदयक्षाः मणिमान् मदश्च आदिर्मुख्यो येषां ते पुरोग्रेसरो वृषेन्द्रो नन्दीश्वरो येषां ते तथा अत एव गतव्यथाः पूर्वं शिवाज्ञोल्लङ्घनेन तां गच्छन्तीं दृष्ट्वाऽस्माभिर्गन्तव्यं न वेति शिवभयशङ्कया व्यथिता अपि पुरतो मुख्यं नन्दीश्वरं गच्छन्तं दृष्ट्वा विगतव्यथाः, अत एव तरसा हर्षोद्वेगेन यद्वा आगतव्यथा इति च्छेदः शिवाज्ञोल्लङ्घनेन तद्गमनेऽनिष्टस्यावश्यंभावित्वेन तच्चिन्तया आगतव्यथा अपि तामेकां गच्छन्तीं दृष्ट्वाऽन्वगच्छन्निति। एवं व्यथितानामप्यनुगमने तत्सेवकत्वं हेतुमाह–यतस्त्रिनेत्रानुचरा इति ॥ ४ ॥ ❀ ❀ एवं पलायनपराया मार्गे शोभा न स्यादित्याशङ्क्य शोभां दर्शयति–तामिति। तां सतीं वृषेन्द्रमारोप्य तस्मिन्नारूढां कृत्वा सारिकादिभिर्विटङ्किताः शोभिता ययुरित्यन्वयः। सारिकेत्यन्येषामपि पठननिरूपितशकुनिविशेषाणां शुकादीनामुपलक्षणम्। ये हि पाठ्यमानाः संस्कृतं प्राकृतं वा श्रुतिमनोहरं सञ्जिरन्ते। कन्दुकाम्बुजे अप्यन्येषां क्रीडोपकरणानामुपलक्षके। दर्पणमवलोकनार्थम्। श्वेतातपत्रादीनि महाराजचिह्नानि। श्वेतमातपत्रम्। व्यजनं प्रसिद्धम्। स्रक् अम्लानपुष्पाणां माला। आदिपदेन चामरायुधादीनि गृहीतव्यानि। गीतायनानि गीतसाधनानि वीणादीनि गाथका वा। दुन्दुभ्यादयो वाद्यविशेषास्तैः ॥ ५ ॥

### भाषानुवादः

### सतीका अग्निप्रवेश

श्रीमैत्रेयजी कहते हैं—विदुरजी! इतना कहकर भगवान् शङ्कर मौन हो गये। उन्होंने देखा कि दक्षके यहाँ जाने देने अथवा जानेसे रोकने—दोनों ही अवस्थाओंमें सतीके प्राणत्यागकी सम्भावना है। इधर सतीजी भी कभी बन्धुजनोंको देखने जानेकी इच्छासे बाहर आतीं और कभी 'भगवान् शङ्कर रुष्ट न हो जायँ' इस शङ्कासे फिर लौट जातीं। इस प्रकार कोई एक बात निश्चित न कर सकनेके कारण वे दुविधामें पड़ गयीं—चञ्चल हो गयीं ॥ १ ॥ ❀ ❀ बन्धुजनोंसे मिलनेकी इच्छामें बाधा पड़नेसे वे बड़ी अनमनी हो गयीं। स्वजनोंके स्नेहवश उनका हृदय भर आया और वे आँखोंमें आंसू भरकर अत्यन्त व्याकुल हो रोने लगीं। उनका शरीर थरथर काँपने लगा और वे अप्रतिमपुरुष भगवान् शङ्करकी ओर इस प्रकार रोषपूर्ण दृष्टिसे देखने लगीं मानो उन्हें भस्म कर देंगी ॥ २ ॥ ❀ ❀ शोक और क्रोधने उनके चित्तको बिल्कुल बेचैन कर दिया तथा स्त्रीस्वभावके कारण उनकी बुद्धि मूढ हो गयी। जिन्होंने प्रीतिवश उन्हें अपना आधा अङ्गतक दे दिया था, उन सत्पुरुषोंके प्रिय भगवान् शङ्करको भी छोड़कर वे लंबी-लंबी साँस लेती हुई अपने माता-पिताके घर चल दीं ॥ ३ ॥ ❀ ❀ सतीको बड़ी फुर्तीसे अकेली जाते देख श्रीमहादेवजीके मणिमान् एवं मद आदि हजारों सेवक भगवान्के वाहन वृषभराजको आगे कर, तथा और भी अनेकों पार्षद और यक्षोंको साथ ले बड़ी तेजीसे निर्भयतापूर्वक उनके पीछे हो लिये ॥ ४ ॥ ❀ ❀ उन्होंने सतीको बैलपर सवार करा दिया तथा मैनापक्षी, गेंद, दर्पण और कमल आदि खेलकी सामग्री, श्वेत छत्र, चँवर और माला आदि राजचिह्न तथा दुन्दुभि, शङ्ख और बाँसुरी आदि गाने-बजानेके सामानोंसे सुसज्जित हो वे उनके साथ चल दिये ॥ ५ ॥

आब्रह्मघोषोर्जितयज्ञवैशसं　विप्रर्षिजुष्टं　विबुधैश्च　सर्वशः।
मृद्दार्वयःकाञ्चनदर्भचर्मभिर्निसृष्टभाण्डं　यजनं　समाविशत् ॥ ६ ॥
तामागतां तत्र न　कश्चनाद्रियद्　विमानितां यज्ञकृतो भयाज्जनः।
ऋते स्वसॄर्वै　जननीं च　सादराः　प्रेमाश्रुकण्ठ्यः　परिषस्वजुर्मुदा ॥ ७ ॥
सौदर्यसम्प्रश्नसमर्थवार्तया　मात्रा च　मातृष्वसृभिश्च　सादरम्।
दत्तां सपर्यां　वरमासनं च　सा　नादत्त　पित्राप्रतिनन्दिता सती ॥ ८ ॥

---

१. एतदग्रेऽधिकं परिदृश्यते क-पुस्तके—वस्तुतस्तु सत्या दक्षाहंकारांशत्वं ज्ञात्वाहंकाराधिष्ठात्रे रुद्राय ब्रह्मणा सा दापिता तद्द्वारैव तस्याभिमाननिवृत्तिर्भाविनी। सत्यां अत्र स्थितायां तन्न स्यात्। तस्याश्च शिवाज्ञानुसारित्वे तत्र गमनासंभवात् अतो दक्षदुरदृष्टानुसारेण भगवदिच्छया तस्यामसंभाविता अपि दोषास्तस्मिन्समये जाता यैस्तदाज्ञामुल्लंघ्य गता। अन्यथा कथं शिवार्द्धांगभूताया अलौकिकायाः साधारणस्त्रीस्वभावप्राकट्यं स्यात्, येन तं विहाय गच्छेदिति बोध्यम्।

अरुद्रभागं तमवेक्ष्य चाध्वरं पित्रा च देवे कृतहेलनं विभौ ।
अनादृता यज्ञसदस्यधीश्वरी चुकोप लोकानिव धक्ष्यती रुषा ॥ ९ ॥
जगर्ह सामर्षविपन्नया गिरा शिवद्विषं धूमपथश्रमस्मयम् ।
स्वतेजसा भूतगणान् समुत्थितान् निगृह्य देवी जगतोऽभिशृण्वतः ॥ १० ॥

श्रीदेव्युवाच

न यस्य लोकेऽस्त्यतिशायनः प्रियस्तथाप्रियो देहभृतां प्रियात्मनः ।
तस्मिन् समस्तात्मनि मुक्तवैरके ऋते भवन्तं कतमः प्रतीपयेत् ॥ ११ ॥
दोषान् परेषां हि गुणेषु साधवो गृह्णन्ति केचिन्न भवादृशा द्विज ।
गुणांश्च फल्गून् बहुलीकरिष्णवो महत्तमास्तेष्वविदद्भवानघम् ॥ १२ ॥
नाश्चर्यमेतद्यदसत्सु सर्वदा महद्विनिन्दा कुणपात्मवादिषु ।
सेर्ष्यं महापूरुषपादपांसुभिर्निरस्ततेजःसु तदेव शोभनम् ॥ १३ ॥
यद् द्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसङ्गादघमाशु हन्ति तत् ।
पवित्रकीर्तिं तमलङ्घ्यशासनं भवानहो द्वेष्टि शिवं शिवेतरः ॥ १४ ॥
यत्पादपद्मं महतां मनोऽलिभिर्निषेवितं ब्रह्मरसासवार्थिभिः ।
लोकस्य यद्वर्षति चाशिषोऽर्थिनस्तस्मै भवान् द्रुह्यति विश्वबन्धवे ॥ १५ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

आ समंताद्यो वेदघोषस्तेनोर्जितं शोभमानं यज्ञसंबंधिपशुविशसनं यस्मिन् । यद्वा तेनोर्जितमतिशयितं यज्ञवैशसं परस्परं स्पर्धा यस्मिन् । तद्यजनं यज्ञस्थानं समाविशद्देवी । विप्रर्षिभिः विबुधैश्च जुष्टम् । मृदादिभिर्निसृष्टानि निर्मितानि भाण्डानि पात्राणि यस्मिन् ॥ ६ ॥ ❀ ❀ कश्चन नाद्रियत् नादृतवान् । यज्ञकृतो दक्षाद्भयं तस्मात् । तत्र हेतुः । तेन विमानिताम् । स्वसृर्जननीं च ऋते विना तास्तु सादराः परिषस्वजुरालिंगितवत्यः । प्रेमाश्रुभिर्निरुद्धः कंठो यासाम् ॥ ७ ॥ ❀ ❀ अप्रतिनंदिताऽनादृता सती नादत्त न गृहीतवती । कथम् । सौदर्येण सोदरत्वेन सम्यक्तया भगिनीनां यः संप्रश्नस्तत्र समर्था योग्या या वार्ता तया सह । तां च नादत्त नाशृणोदित्यर्थः ॥ ८ ॥ ❀ ❀ न विद्यते रुद्रस्य भागो यस्मिंस्तम् । देवे रुद्रे कृतं हेलनमवज्ञामाह्वानाद्यकरणात् ॥ ९ ॥ ❀ ❀ जगर्ह निंदितवती । अमर्षेण कोपेन विपन्नाऽव्यक्ता तया शिवं द्वेष्टीति शिवद्विट् तत् । धूमपथः कर्ममार्गस्तत्र श्रमोऽभ्यासस्तेन स्मयो गर्वो यस्य । दक्षवधाय समुत्थितान्स्वाज्ञया निगृह्य निवार्य ॥ १० ॥ ❀ ❀ निंदामेवाह न यस्येति त्रयोदशभिः । मुक्तवैरके त्यक्तविरोधे तस्मिन् शिवे भवंतमृते विना कतमः प्रतीपयेत्प्रतिकूलमाचरेत् । वैराभावे हेतवः—यस्य लोके अतिशायनोऽतिशयितो नास्ति तथा प्रियश्चाप्रियश्च नास्ति । समासपाठेऽतिशयेन प्रियो नास्ति देहभृतां प्रियोऽयमात्मा तस्य । समस्तस्यात्मनि कारणभूते समस्त इति वा ॥ ११ ॥ ❀ ❀ तस्य च प्रतिकूलकरणं द्वेधा । महत्तमद्रोहेण साक्षात्तद्द्रोहेण च । तत्र पुरुषाणां चातुर्विध्यं वदंती महत्तमद्रोहमाह दोषानिति द्वाभ्याम् । हे द्विजेत्यधिक्षेपः । भवादृशास्त्वद्विधा असूयकाः परेषां गुणेषु दोषानेव गृह्णंति न तु गुणान् ते अधमा उच्यंते । केचिन्मध्यस्था गुणेषु दोषान्न गृह्णंति किं तु यथास्थितान्गुणदोषान्विवेकेन गृह्णंति ते तु महांत उच्यंते। साधवस्तु केवलं गुणानेव गृह्णंति न दोषांस्ते तु महत्तरा उच्यंते । महत्तमास्तु दोषान्न गृह्णंत्येव, ते च प्रत्युत फल्गूंस्तुच्छानपि गुणान्बहुलीकुर्वंतीति करिष्णवो भवंति । तेषु भवानघमविदद्विदितवान् कल्पितवानित्यर्थः । तच्च ब्रह्मिष्ठानभिभूयेत्यनेन सूचितम् ॥ १२ ॥ ❀ ❀ एतच्च दुर्जनेषु युक्तमेवेत्याह नेति । कुणपं जडं शरीरं तदेवात्मेति वदंति ये तेषु ईर्ष्या अक्षांतिः सेर्ष्यं यथा तथा भवत्येवं महतां विनिंदेति यदेतदाश्चर्यं न भवति सेर्ष्यं निरस्तं तेजः प्रभावो येषामिति वा । यद्यपि महापुरुषाः स्वनिंदां सहंते तथापि तत्पादरेणवस्तदसहमानास्तेषां तेजो निरस्यंति । अतोऽशक्तेषु महन्निंदनमेवोचितमित्यर्थः ॥ १३ ॥ ❀ ❀ तदेवं महत्तमद्रोहमुक्त्वा तस्मिन्नेव कृतं द्रोहमाह यदेति द्वाभ्याम् । यद्यस्य द्व्यक्षरमात्रमपि शिव इति तत्प्रसिद्धं नाम नृणां सर्वेषामाश्वघं सर्वं हंति केवलं गिरैवेरितमुच्चारितं न

---

१. प्रा० पा० —तो वि० । २. प्रा० पा०—विमुक्तात्मनि ।

तु मनःपूर्वकम्। तत्तु सकृदपि प्रसंगादपि, तं शिवं न द्वेष्टि न लंघ्यं शासनमाज्ञा यस्य अहो शिवेतरोऽमंगलरूपः ॥ १४ ॥ ❀ ❀ पापहरत्वमुक्तिभुक्तिप्रदत्वेन शिवं वर्णयंत्याह। यस्य पादपद्मं मनांस्येवालयस्तैः ब्रह्मरसो ब्रह्मानंदः स एवासवो मकरंदस्तदर्थिभिः। यच्चार्थिनः सकामस्य लोकस्य तास्ता आशिषो वर्षति। विश्वबन्धवे जगत्पित्रे ॥ १५ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पशुविशसनस्य शोभमानत्वं तु न संगच्छत इति चेत्तत्राह-यद्वेति। परस्परं शास्त्रविचारस्पर्द्धान्योन्यजिगीषयैव जुष्टमिति। 'विप्रं कीर्णजटाच्छन्नं रौरवेणाजिनेन च' इतिवत् ॥ ६ ॥ ❀ ❀ तां सतीम् ॥ ७ ॥ ❀ ❀ तत्र यज्ञे संप्रश्नः कुशलप्रश्नः। तां सपर्याम्। इत्यर्थ इति। कुशले पृष्टे न प्रत्युवाचासनं च न पस्पर्शेति भावः ॥ ८-१० ॥ ❀ ❀ अतिशयितोऽधिको नास्ति ईश्वरत्वात्। प्रियश्चाप्रियश्च नास्ति आत्मारामत्वात्। अतिशायनश्च प्रियश्चेतीतरेतरयोगेपि 'सर्वो द्वंद्वो विभाषयैकवद्भवती' त्येकत्वं पुंस्त्वं त्वार्षम्। अथ च देहधारिणां प्रियात्मनः प्रियात्मस्वरूपस्य तस्मिन्समस्तात्मनि सर्वजगत्कारणे भवंतं विनेति भवानेव प्रतीपयेत् प्रतिकूलं कुर्यात्। यद्वा ऋते सत्यरूपे। तस्मिन्मुक्तवैरके सति भवंतं कः प्रतीपयेत्समुचिता-चरणेन प्रतिकूलं कुर्यात्। एते याज्ञिकसदस्यादयस्तु त्वदन्नैः कुक्षिंभरा एव। किं तु स रुद्र एव वा तदीयो वा कश्चिदेव प्रतीपयेदिति भावः ॥ ११ ॥ ❀ ❀ तस्य रुद्रस्य। तत्र यज्ञे। इत्यर्थ इति। अनेकार्थत्वात्कल्पनार्थोपि विदेर्युक्त इति भावः। तच्चाघ-कल्पनम्। अत्र विश्वनाथः—असाधोस्तव सभायामेते खल्वसाधव एवेति वक्तुं साधूनसाधूंश्च लक्षयति-दोषानिति। परेषां दोषानपि गुणेषु प्रकारविशेषेण गुणांतःपातितयैव ये गृह्णंति यथा कठोरभाषित्वं यदस्य दोषस्तदपि हितकारित्वादयं रोगनिवर्त्तको निम्बरस इव गुण एवेत्येवं ते साधवो महांत एव केचिद्भवंति। हे द्विजेति। तत्र न भवादृशास्तु गुणानपि दोषांतःपातितयैव गृह्णन्ति। यथास्य यत्परोपकारित्वं तत् परद्रव्यजिघृक्षयैवेति दोष एवायमित्येवं ते खल्वसाधव एव। ये तु दोषानपश्यंतो गुणानेव गृह्णंति यथा वणिगयमातिथेयो निस्तीर्णे इत्येवं ते महत्तराः। ये गुणानेव गृह्णंति न तु दोषान् त्यक्तपरिग्रहः भिक्षुरयमुदरपूरमन्नमात्रं यथा तथा गृह्णाति न तु दरिद्रो बह्वाशीत्येवं ते साधवः। तथा ये दोषानेव गृह्णंति न तु गुणान् यथा भिक्षुरयमुदरपूरण सिद्धान्नं यदत्ति तदयं कामी भ्रष्टो मंतव्य इत्येवं तेऽसाधवः। ये तु फल्गूंस्तुच्छानपि गुणान्बहुलीकरिष्णवो बहुलीकरणशीलाः किमुताफल्गून्, दोषांस्तु नैव पश्यंति यथा शीतार्तत्वादेव मदीयवस्त्रमपहरन्नपि शस्त्रपाणित्वेपि दयालुत्वादेव न हिनस्ति तदयं धन्य इत्येवं ते महत्तमास्तथैव ये तुच्छानपि दोषान्बहुलीकरिष्णवो गुणान्नेव गृह्णंति यथा विरक्तोऽयं वनमपहाय यद्गृहस्थगृहेषु तत्प्रचुरधनं चोरयितुकाम इत्येवं तेऽसाधुतमाः। ये तु गुणाभावेपि परेषां गुणानेव पश्यंति यथा जगत्यस्मिन्केपि दुष्टा न संति सर्व एव साधव इति। साधूनां द्वैविध्येप्युक्तेन तमप्प्रत्ययेन युक्तिसंभवेन च महतां चातुर्विध्यमायातं तथैव तमप्तारतम्येन न भवादृशा इति। अवि-दद्भवानघमित्याभ्यामसाधूनामपि द्वैविध्येपि युक्त्या चातुर्विध्यं शुद्धसत्त्वस्वरूपकल्याणगुणमयभक्तियोगतारतम्येन। पुनरप्येवं साधूनामपराधतारतम्येनासाधूनां चातुर्विध्यं ज्ञेयम्। एवं च देहभृतां प्रियात्मनः। "तस्मिन्समस्तात्मनि मुक्तवैरके" श्रीरुद्रस्य सर्वत्रापि प्रीतिमत्त्वेन सर्वत्रादोषदृष्टित्वाच्चातिमहत्तमत्वं तेष्वविदद्भवानघमित्यनेन तस्मिञ्छ्रीरुद्रे दोषमात्रदर्शनात्। तस्य च सर्वात्मत्वात्सर्वजगत्येव दोषदृष्टिप्राप्त्या 'चोदिते परमेष्ठिना' इत्यनेन ब्रह्मण्यपि दोषदृष्ट्या ब्रह्मिष्ठानभिभूयेति महत्स्वपराधेन च दक्षस्यात्यसत्तमत्वं ध्वनितम् ॥ १२ ॥ ❀ ❀ एतत्पूर्वश्लोकोक्तसेर्ष्यपदस्य महद्भिर्निंदनपदेन संबंधे पुनरुक्तिप्रतीत्याह–सेर्व्यं निरस्तमिति। अतो दुर्जनत्वात्। इत्यर्थ इति। "अशक्तास्तत्पदं गंतुं ततो निंदां प्रकुर्वते" इति भावः ॥ १३ ॥ ❀ ❀ तस्मिन्नेव रुद्र एव। "शिवेति द्व्यक्षरं नाम यस्य वाचा प्रवर्त्तते। भस्मीभवंति तस्याशु महापातककोटयः ॥" इति। "शिवेति यद्वाचि हि वर्णयुग्मं प्रवर्त्तते यस्य न तस्य पापम्। स्वर्गस्य लाभः सुलभोन्यधर्माः प्रत्यूहवन्तः कलिदोषदुष्टाः" इति। "शिवेति नाम विमलं येनोच्चारितमादरात्। तेन भूयो न संसारसागरः समवाप्यते" इति। "परं ब्रह्मेति विज्ञेयं शिव इत्यक्षरद्वयम्" इत्यादिबहुशो नाममाहात्म्ये तत्तद्ग्रंथनामपूर्वकमुक्तम् ॥ १४ ॥ ❀ ❀ यस्य शिवस्य। महतां सनकादीनाम्। यच्च पादपद्मम् ॥ १५ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

पूर्वार्थे वेदघोषेण हिंसाशोभाया अश्लीलत्वाद्यद्वेति स्पर्द्धया वर्द्धते विद्येति न्यायेन वेदघोषे तस्या औचित्यमेव स्वारस्यम्। अयःपात्रं सुरार्थकम् ॥ ६ ॥ ❀ ❀ तत्र यज्ञे तत्र दक्षाङ्कये ॥ ७ ॥ ❀ ❀ वार्त्तया नीरूपत्वेन ग्रहणासंभवात्प्रति-योगिप्रमितिं विना तन्निषेधानुपपत्तेः श्रवणे लाक्षणिकत्वादित्यर्थ इत्युक्तम् ॥ ८ ॥ ❀ ❀ लोकदाहस्यासंकल्पादित्येत्युक्तम् ॥ ९-१० ॥ ❀ ❀ अतिशयितोधिकः समासपाठे स्वार्थेऽण् समस्तकारणत्वादि तत्र भगवदभेददृष्ट्या ॥ ११ ॥ ❀ ❀ चातुर्विध्यं असूयकेषु पुरुषत्वाभावात्तान् विहाय पुरुषाणां मध्यस्थमहन्महत्तरमहत्तमरूपं चतुर्विधत्वं वदंती तत्र महत्तमद्रोहसाक्षाद्द्रोह-योर्मध्ये महत्तमद्रोहमाह–अधिक्षेपः महत्तमद्रोहेपि, आहोस्विद्द्विजत्वमिति साभ्यसूयनिन्दादोषानेवेति सर्वं वाक्यं सावधारणमिति न्यायात् एवकारोध्याहृतः। तमप्प्रत्ययस्वारस्यान्महान्त उच्यन्त इत्यादिर्व्याख्यातम्। अघं दोषं वेदनस्य मिथ्यात्वं वक्तुं कल्पितवानिति

जहदजहल्लक्षणया व्याख्यानादित्यर्थ इत्युक्तम् । तच्च दोषकल्पनम् ॥१२॥ ❀ ❀ पूर्वार्थे सेर्ष्यपदस्याऽस्थानपतितत्वमित्युच्चावचार्थान्तरम् । पादपांसुशब्देनात्र प्रभावलेशो लक्षणीयः । तत्रापीर्ष्या उत्प्रेक्षितेति ज्ञेयम् । अतो महन्निन्दयैव तेषां तेजोनिरासात् ॥ १३ ॥ ❀ ❀ नृणामित्युपलक्षणः सर्वेषाम् ॥ १४ ॥ ❀ ❀ नामकीर्त्तनेन पापहरत्वं तच्च पादपद्मम् उत्तरवाक्योपात्तत्वेन यच्छब्दस्य तच्छब्दाऽनपेक्षत्वं तास्तास्तत्तदपेक्षिताः पुत्रादिरूपाः ॥ १५ ॥

## श्रीमद्वीरराघवव्याख्या

आसमंताद् ब्रह्मघोषेण ऊर्जितं व्याप्तं यज्ञसंबंधि वैशसं विशसनं यस्मिन् तद्ब्रह्मघोषोर्जितं च तद्यज्ञवैशसं चेति कर्मधारयः । विप्रर्षिभिः ब्रह्मर्षिभिर्जुष्टं सेवितं तथा विबुधैर्देवैश्च सर्वतो जुष्टं मृदादिभिर्निसृष्टानि निर्मितानि भांडानि पात्राणि यस्मिन् तद्यजनं यागस्थानं समाविशत् ॥ ६ ॥ ❀ ❀ तत्रागतां तां सतीं जननीं स्वसॄश्च ऋते विना कश्चन कोपि नाद्रियत् नादृतवान् । कुतः यज्ञकृतो दक्षात् यद्भयं तस्मात् तत्र हेतुः तेन विमानितां अवमानितां तास्तु सोदराः प्रेमाश्रुभिर्निरुद्धः कंठो यासां तथा-भूतास्तां मुदा परिषस्वजुः आलिंगितवत्यः ॥ ७ ॥ ❀ ❀ सात्रा मातृष्वसृभिः मातृभगिनीभिश्च सोदर्यसंप्रश्नसमस्त-वार्तया सोदरीणां भगिनीनां च संबंधी यः कुशलप्रश्नादिस्तत्पूर्वया समस्तवार्तया सकलवृत्तांतेन सह समर्थवार्तयेति पाठे सोदर्येण सोदरत्वेन भगिनीनां यः संप्रश्नः तत्र समर्था योग्या या वार्त्ता तया सादरं आदरेण सहितं यथा तथा सपर्यां पूजामुत्कृष्टमासनं सती नादत्त न स्वीकृतवती । तत्र हेतुः पित्रा दक्षेण अप्रतिनंदिता अनादृता ॥ ८ ॥ ❀ ❀ अरुद्रभागं न विद्यते रुद्रस्य भागो यस्मिन् तमध्वरं यागं विभौ देवे रुद्रे पित्रा दक्षेण कृतं हेलनम् अपराधं चावेक्ष्य आह्वानाद्यकरणात् यथा स्वयं यज्ञसदसि पित्रा अनादृता च रुषा लोकान् धक्ष्यती भस्मीकुर्वाणेव चुकोप क्रुद्धवती ॥ ९ ॥ ❀ ❀ सा सती देवी अमर्षविपन्नया अव्यक्तगिरा वाचा रुद्रावहेलनादिना समुत्थितान् दक्षं हंतुमुद्यतान् भूतगणान् मणिमन्मदादीन् स्वतेजसा स्वबलेन निगृह्य निवार्य धूमपथश्रमस्मयं धूमपथेषु धूमादिमार्गप्रदकर्मसु परिश्रमोत्थगर्वं शिवं द्वेष्टीति शिवद्विट् तं दक्षं जगर्हे निंदितवती निंदावाक्यान्युक्त-वतीत्यर्थः ॥ १० ॥ ❀ ❀ तान्येवाह न यस्येति त्रयोदशभिः । प्रियात्मनः प्रियः निरतिशयप्रीतिविषयः आत्मा परमपुरुषः यस्य 'प्रियो हि ज्ञानिनोत्यर्थमहमि'ति गीतत्वात् यस्य रुद्रस्य लोके भुवने देहभृतां मध्ये अतिशायनः अतिशयितः प्रियः प्रीतिविषयः तथाऽप्रियो वा नास्ति । सर्वांतरात्मानं परमात्मानमेव निरतिशयप्रीतिरूपापन्नया भक्त्या भजतस्तस्य सर्वं ब्रह्मात्मक-तयानुसंदधतः प्रियाप्रियादिविभागो नास्तीत्यर्थः । तस्मिन्मुक्तवैरके सर्वभूतसुहृदि समस्तात्मनि स समस्तस्यात्मा आत्मवत्प्रियः तस्मिन् । यद्वा समस्ते आत्मा ब्रह्म पूर्णमिति चित्तं यस्य तस्मिन् 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च कक्षीवानृषि-र्विप्र'इत्यादिश्रुत्युक्तविधया सर्वात्मकं ब्रह्म सर्वात्मकत्वेन स्वस्मिन्साक्षात्कुर्वतीति वार्थः, योहं शरीरकः परमात्मा स एव मन्वादिशरीरक इति श्रुत्यर्थः । यद्वा ब्रह्मण आवेशावतारत्वाद्रुद्रे ब्रह्मदृष्ट्यैवेदमुक्तं सर्वात्मनीति । अस्मिन्पक्षे षष्ठीतत्पुरुषः, संमतः एवंविधे रुद्रे भवंतं विना कतमः को वा प्रतीपयेत् प्रातिकूल्यमाचरेत् ॥ ११ ॥ ❀ ❀ एवं ब्रह्मविदग्रेसरस्य रुद्रस्य प्रतीपाविषयत्वमुक्तं, अथैतस्मिन्साधौ ब्रह्मविदि कृतापराधिनो दुर्जनात्त्वत्त उत्पन्नमिदं शरीरं त्यक्ष्यामीति वक्ष्यंती प्रथमं साध्वसाधुलोकौ विभजति दोषानिति । हे द्विज पितृशब्देनाऽसंबोधनं तदधिक्षेपाय भवादृशाः केचित्त्वादृशाः दुर्जनाः परेषां स्वापेक्षया अन्येषां गुणेषु सत्स्वपि दोषानेव गृह्णंति तानेवोद्घाटयंति न तु गुणांस्तेऽसाधव इत्यर्थः । ये पुनः रुद्रादयः दोषान्न गृह्णंति किंतु फल्गूनल्पानपि गुणानेव बहुलीकरिष्णवः वितनोतुमिच्छवो भवंति ते महत्तमाः गुणेषु साधव इति पाठे ये साधवः फल्गूनपि गुणान् बहुलीकरिष्णवस्ते महत्तमा इत्यन्वयः । तेषु च महत्तमेषु भवानेवमपराधम् अविदद् लब्धवान् कृतवानित्यर्थः ॥१२॥ ❀ ❀ असतां त्वादृशमिदं महत्स्वपचरणं युक्तमेवेत्याह नाश्चर्यमिति । कुणपात्मवादिषु कुणपं शवप्रायं शरीरमेवात्मेति ये वदंति तेषु भवादृशेष्वसत्सु सर्वदा सेर्ष्यम् ईर्ष्या-क्षमा सेर्ष्यं यथा भवति तथा महद्भिर्निंदा महत्तमविषयनिन्देति यदेतत्तवाश्चर्यं न भवति । प्रत्युत महापुरुषपादपांसुभिः महापुरुषा महत्तमास्तेषामंघ्रिरजोभिः निरस्तं तेजः प्रभावो येषां तेषु त्वादृशेषु तदेव महद्भिर्निंदनमेव शोभनं उचितम् , यद्यपि महांतः स्वनिन्दां सहंते, तथापि तत्पादरेणवस्तदसहमानास्तेषां तेजो निरस्यंति । अतोऽसत्सु विनिंदनमेवोचितमित्यर्थः ॥ १३ ॥ ❀ ❀ कोसाव-पचारो महत्सु मया कृत इत्यत्राह यदिति द्वाभ्याम् । यस्य रुद्रस्य द्व्यक्षरं शिवं इत्यक्षरद्वयात्मकं नाम नामधेयं प्रसंगादपि सकृद्गिरा वागिं-द्रियेणेरितमुच्चरितं नृणामघं पापमाशु द्राक् हंति विवर्तयति । सतामपि नामोच्चारणादेर्भगवन्नामवदघनिवर्तकत्वादिति भावः, अलंघ्यम-नतिक्रमणीयं शासनमाज्ञा यस्य तं शिवमशिवोऽमंगलो भवान् द्वेष्टि अहो कष्टम् । अमंगलो द्वेष्टीत्यनेन तद्द्वेषाद्भवतोऽमंगलमनंतरभावीति भावः ॥ १४ ॥ ❀ ❀ किंच ब्रह्मरसासवार्थिभिः ब्रह्मरसो ब्रह्मानन्दः स एवासवो मकरंदस्तदर्थिभिः ब्रह्मानंदानुभवमधुलिप्सुभिः महतां मनांस्येवालयो भृंगास्तैर्यस्य रुद्रस्य पादपद्मं निषेवितं 'ईश्वराज्ज्ञानमन्विच्छेदि'ति ज्ञानप्रदत्वादिति भावः । कीदृशं तत्पादपद्मं यन्निषेवितं तत्राह यत्पादपद्मम् अर्थिनो लोकस्य याचमानस्य जनस्य आशिषोऽभीष्टानि वर्षति ददाति तस्मै विश्वबंधवे विश्वानुकूलाय भवान् द्रुह्यति अपकरोति । क्रुधद्रुहेति चतुर्थी ॥ १५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एवं भर्तृप्रेषितानुचरसूचितस्नेहात् शांतमनस्कत्वेन पश्चान्नमता किं तु पुरत एव गत्वा सा यज्ञवाटमाविशदित्याह आब्रह्मेति। आसमंताद्ब्रह्मघोषेण वेदध्वनिना ब्रह्मलोकपर्यंतगामिना ध्वनिना वोर्जितं संकुलं यज्ञार्थं वैशसं पशुसंज्ञपनं पशुहिंसनं यस्मिन् तत्तथा मृच्च दारु च अयश्च कांचनं च दर्भाश्च चर्माणि च तैर्निसृष्टानि निर्मितानि भांडानि यस्मिंस्तथा ॥ ६ ॥ ❀ ❀ तस्या अवज्ञाकरणप्रकारमाह तामागतामिति। यज्ञकृतो दक्षस्य कश्चनेत्यस्य व्यावृत्तिमाह ऋते इति, स्वसारः स्वसृः तत्स्नेहः कुतो ऽवगत इति तत्राह सादराः सानुरागा इति ॥ ७ ॥ ❀ ❀ सती प्रत्यालिंगनादिकं किं कृतवती नेति भावेनाह सौदर्येति। प्रधानावज्ञा दुःसहेति भावेनाह पित्रेति। अप्रतिनंदिता अकृतमनःसंतोषा ॥ ८ ॥ ❀ ❀ ततः किमकरोदिति तत्राह अरुद्र-भागमिति न रुद्रस्य भागो यस्मिन्स तथा तं कृतहेलनं कृतावज्ञम् ॥ ९ ॥ ❀ ❀ अधीश्वर्या कुपितमित्यत्र किं लिङ्गमत्राह जगर्हेति। अमर्षेण विपन्नया गद्गदभावं प्राप्तया धूमपंथाः कर्ममार्गः तद्विषये श्रमः शिक्षा स्मयो गर्वो यस्य स तथा तं कर्ममार्गेऽतिनिष्णा-तमित्यर्थः, स्वतेजसा स्वभावेन निगृह्य निवार्य ॥ १० ॥ ❀ ❀ स्त्रीत्वेपि प्रमाणवद्युक्त्या निर्निंदेत्याह न यस्येति। लोके भुवने विद्यमानानां देहभृतां शरीरिणां प्रियात्मनो मनोभीष्टरूपस्य यस्य रुद्रस्य योग्यतातिरेकेणातिशायनः प्रियोतिप्रियस्त-थाऽप्रियो द्वेष्यश्च नास्ति। तस्मिन् रुद्रं भवंतमृते पुरुषाणां कतमः पुरुषः प्रतीपको न कोपीत्यर्थः। प्रतीपाकरणे हेत्वंतरं चाह समस्तात्मनीति विष्णवादीन् पट् ऋते इंद्रादिसमस्तस्वामिनि नहि कश्चिद्विरोध्य तिष्ठति स्वाम्यपि वैरकृच्चेत्तस्मिन्द्वेषः संभावित इत्यत उक्तमेव हेतुं स्मारयति मुक्तवैरक इति। वैरेत्युपलक्षणं प्रेमापि विमुक्तप्रिय इत्यर्थः ॥ ११ ॥ ❀ ❀ तत्त्वतोपि भवानपि भवद्द्वेषं कर्तुं न योग्य इत्याह दोषानिति। केचिदसाधवो दुर्जनाः परेषामुत्तमानां गुणेषु दोषानेव गृह्णन्ति न गुणान्। तदुक्तं "दोषोप्येको यदि गुणगणे तत्र मुक्त्वा गुणौघान् दोषग्राही भवति हि खलः सच्छिकातुल्यधर्मः" इति भवादृशा महत्तमाः द्विजाः फल्गून् बहुलीकरिष्णवो न दोषान्गृह्णन्ति किं तु गुणानेव "दोषान्मुक्त्वा गुणमनुभवन् स्वल्पमप्येति तृप्तिं साधुर्लोके सलिलमिलि-तक्षीरपायीव हंसः" इति तत्रैवं शास्त्रे स्थिते महत्तमेषु गणितो भवान् भवद्द्वेषादघमविदल्लब्धवान् हि अहो कष्टमिति शेषः, द्विजा इत्यनेन दक्षस्य शास्त्रविचारयोग्यतातिशयं सूचयति ॥ १२ ॥ ❀ ❀ असतां योग्यो महत्तमेष्वेकस्य तव शिवद्वेषो ममाश्चर्य-बुद्धिं जनयतीति भावेनाह नाश्चर्यमिति। कुणं कर्मफलं पिबतीति कुणपो देहः स एवात्मेति वादिनस्तेषु असत्सु ईर्ष्यया सह वर्तमानेषु महतां विनिंदास्तीति यन्नैतदाश्चर्यं किंतु तदेव महद्विनिंदनमेव शोभनमित्यन्वयः। कुणपात्मवादित्वं च विद्वज्जननिषेवाया अभावादित्याह महापुरुपेति। क्वचिद्विद्वज्जनसेवया आप्तशास्त्रज्ञानेन हि तत्त्वज्ञानं स्यात्तद्द्वेषान्नास्त्यतो युक्तं कुणपात्मवादित्वेन महद्विनिंदनं भवान्नैतादृशोऽतो ममाश्चर्यबुद्धिरिति ॥ १३ ॥ ❀ ❀ महद्विनिंदनं मया न कृतमिति वक्तुं न शक्यत इत्याह यद् द्व्यक्षरमिति शिव इति द्वे अक्षरे यस्मिंस्तत् द्व्यक्षरं यस्य भगवतो यत् द्व्यक्षरं नाम तत् सकृत्कथाप्रसंगात् गिरा वागिंद्रि-येणेरितमुच्चारितं नृणामघं अन्येन हंतुमशक्यं दुःखं वाशु हंति नाशयति भवांस्तं शिवं द्वेष्टयहो 'लुप्तक्रियायाशुचये मानिने भिन्नसेतवे' इत्यतो भवाञ्छिवेतरो लुप्तक्रियोऽशुचिः शिवस्त्वशुचीनां पुंसां शुचिहेतुर्दुःखनाशनान्नित्यं शुचिरिति भावेनाह पवित्रेति। शिवनामकीर्तनादेकदा नष्टं दुःखं पुनर्न रोहतीति भावेनाह अलंघ्येति न लंघ्यामन्यथा कर्तुं शक्यं तन्नामकीर्तनादुत्पन्नं शुभं प्रनष्टमशुभं चेति शासनं शास्त्रं यस्य स तथा तम् ॥ १४ ॥ ❀ ❀ प्रेतावासेषु घोरैश्चिताभस्मकृतस्नान इत्यादेः श्लोकद्वयेनोत्तरं ध्वनयति यत्पादपद्ममिति। ब्रह्मरसः ब्रह्मज्ञानजन्य आनंदः स एवासव इंद्रियतृप्तिकरं मधु तस्यार्थनाशीलं येषां ते तथोक्ताः तैर्महतां सनकादीनां मनांस्येवालयः भृंगास्तैर्यस्य पादपद्मं नितरां सेवितं यद्वेवदत्तपादवन्निष्फलं नेत्याह लोकस्येति। आशिषः अभ्युदयलक्षणाः। अनेन गुरुद्रोहित्वं तव प्राप्तमित्युक्तं भवति "सनकादयो रुद्रशिष्यास्तेषामन्ये तु योगिनः। ब्रह्मशिष्यस्तथा रुद्रो ब्रह्मा नारायणस्य च" इति विशेषवचनान्महतामित्यनेन सनकादयो गृह्यन्ते ॥ १५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

विमानिन इति चित्सुखः। प्रेम्णेति सम्बन्धोक्तिः ॥ ७-१० ॥ ❀ ❀ प्रतीयत इति चित्सुखः ॥ ११ ॥ ❀ ❀ केचिदसाधारणाः साधवो गुणेष्वेव दोषान्न गृह्णन्ति प्रकारविशेषेण गुणान्तःपातितयैव मन्यन्ते। अतः साधारणास्तु ते गुणान् दोषांश्च यथावदेव मन्यन्त इत्यर्थः। तदेवं साधवो महान्तस्तेष्वसाधारणास्तु महत्तराः महत्तमाः पुनस्तुच्छानपि गुणान् बहुली-करिष्णवो भवन्ति। स्वभावतः प्रचुरतया मन्यन्ते चकाराद्दोषानपि गुणान् मन्यन्त एवेत्यर्थः। भवादृशास्तु तथा न किन्तु तत्तद्विप-रीतभावाः गुणदोषयोर्यथावदमननात्। गुणानां दोषतया ग्रहणात्। तुच्छस्यापि दोषस्य प्राचुर्यमननात्। पूर्वस्माच्च। अतस्ते क्रमेणाऽसन्तोऽसत्तराः असत्तमाश्च ज्ञेयाः। अत्रासत्तमेषु गुणानां दोषतया ग्रहणमपि पूर्वस्माच्चेत्युक्तं त एते भवादृशा भवदुपमेयोऽ-साधारणगुणिजनः विरोधित्वात्। भवांस्तु महत्तमेष्वपि तथा मननात् सर्वाधम एव किमुत साक्षात् श्रीशिवेऽपीत्यर्थः ॥ १२ ॥ ❀ ❀ एतच्च नाश्चर्यं अनाश्चर्यत्वे हेतुः कुणपेति। एषां शुद्धमात्मानं त्यजतामशुद्धे तस्मिन्नुपादेयबुद्धीनां किमाश्चर्यमिति भावः। सोपहासमाह। तेजोऽन्तररहितेषु मृतकेषु भीषणत्वमिव तदेव तेजस्त्वख्यापनात् शोभनं गौरवापादकं

नान्यत् किमप्यस्तीति तैः किमन्यत् कर्त्तव्यमिति भावः । पादपांशुशब्देनात्र प्रभावलेशो लक्ष्यते । लक्षणा चेयं तेषामतितुच्छत्वव्यञ्जनार्था सेर्ष्या इति चित्सुखः ॥ १३-१५ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

यजनं यज्ञस्थानं कीदृशं आसमन्ताद्यो वेदघोषस्तेनोर्जितं शोभितं यज्ञसम्बन्धिपशुविशसनं यत्र तत् । यद्वा यज्ञे विदुषां शास्त्रविचारस्पर्द्धया परस्परपराबुभूषैव वैशसं विबुधैश्च जुष्टं मृदादिभिर्निसृष्टानि निर्मितानि भाण्डानि यत्र तत् ॥ ६ ॥ ❀ ❀ स्वसॄर्जननीञ्च ऋते विना तं तत्र कश्चनापि नाद्रियत् । तत्र हेतुः यज्ञकृतो दक्षाद् यद्भयं तस्मात् । तैश्च विमानितां तैरनादृतामपि तां स्वजनन्यः सादराः दक्षादविभ्यत्यः परिषस्वजुः ॥ ७ ॥ ❀ ❀ सौदर्याणां भगिनीगणानां संप्रश्नैः कुशलप्रश्नैः समर्था योग्या या वार्त्ता तया सह दत्तां सपर्यां नादत्त न गृहीतवती कुशलप्रश्ने न प्रत्युवाच आसनादिकञ्च न पस्पर्शेत्यर्थः । तत्र हेतुरप्रतिनन्दिता अनादृता ॥ ८ ॥ ❀ ❀ आहुतिमन्त्रान् शृण्वती रुद्रभागहीनमध्वरमवेक्ष्य देवे श्रीरुद्रे स्वावहेलनात् कृतहेलनं ज्ञात्वा चुकोप ॥ ९ ॥ ❀ ❀ अमर्षेण कोपेन विपन्नया सगद्गदया धूमपथे कर्ममार्गे श्रमेणाभ्यासेन स्मयो गर्वो यस्य तं दक्षवधाय समुत्थितान् स्वाज्ञया निगृह्य निवार्य ॥ १० ॥ ❀ ❀ गर्हामेवाह त्रयोदशभिः । न यस्येति । अतिशायनः यस्मादधिको नास्ति ईश्वरत्वात् । प्रियश्चाप्रियश्च नास्त्यात्मारामत्वात् निर्विसर्गपाठे अतिशायनश्च प्रियश्चेतीतरेतरयोगेऽपि सर्वो द्वन्द्वो विभाषयैकवद्भवतीत्येकत्वम् । 'ऊकालोऽज् ह्रस्वदीर्घप्लुतः' इतिवत् । अथ च देहधारिणां प्रियात्मनः प्रियात्मस्वरूपस्य तस्मिन् समस्तात्मनि सर्वजगत्कारणे भवन्तं विनेति भवानेव प्रतीपयेत् प्रतीपं प्रतिकूलं कुर्यात् । यद्वा ऋते सत्यरूपे तस्मिन् मुक्तवैरके सति भगवंतं कः प्रतीपयेत् समुचिताचरणेन प्रतिकूलं कुर्यात् । एते याज्ञिकसदस्यादयस्तु त्वद्दत्तैरन्नैः कुक्षिम्भरा एव । किन्तु स रुद्र एव वा तदीयो वा कश्चिदेव प्रतीपयेदिति भावः ॥ ११ ॥ ❀ ❀ असाधोस्तव सभायामेते खल्वसाधव एवेति वक्तुं साधूनसाधूंश्च लक्षयति दोषानिति । परेषां दोषानपि गुणेषु प्रकारविशेषेण गुणान्तःपातितयैव ये गृह्णन्ति यथा कठोरभाषित्वं यदप्यस्य दोषस्तदपि हितकारित्वादयं रोगनिवर्त्तको निम्बरस इव गुण एवेत्येवं ते साधवो महान्त एव केचिद्भवंति । हे द्विजेत्यधिक्षेपे तत्र न भवादृशा इति । भवादृशास्तु गुणानपि दोषान्तःपातितयैव गृह्णन्ति यथास्य यत्परोपकारित्वं तत् परद्रव्यजिघृक्षयैवेति दोष एवायमित्येवं ते खल्वसाधव एव । ये तु दोषान् अपश्यन्तो गुणानेव गृह्णंति यथा वणिगयमातिथेयो निस्तीर्ण इत्येवं ते महत्तराः । तथैव ये दोषानेव गृह्णन्ति न तु गुणान् यथा भिक्षुरयमुदरपूरं स्निग्धान्नं यदत्ति तदयं कामी भ्रष्टो मन्तव्य इत्येवं ते असाधुतराः । ये तु फल्गून् तुच्छानपि गुणान् बहुलीकरिष्णवः बहुलीकरणशीलाः किमुताफल्गून्, दोषांस्तु नैव पश्यन्ति यथा शीतार्तत्वादेव मदीयवस्त्रमपहरन्नपि शस्त्रपाणित्वेऽपि दयालुत्वादेव न हिनस्ति तदयं धन्य इत्येवं ते महत्तमास्तथैव ये तुच्छानपि दोषान् बहुलीकरिष्णवो गुणानेव गृह्णन्ति यथा विरक्तोऽयं वनमपहाय यद्गृहस्थगृहेषु वसति तत् प्रचुरधनं चोरयितुकाम इत्येवं ते असाधुतमाः । ये तु गुणाभावेऽपि परेषां गुणानेव पश्यन्ति यथा जगत्यस्मिन् केऽपि शिष्टा न सन्ति सर्वे एव दुष्टा इति ते अत्यसाधुतमा इत्येवं सत्त्वतारतम्येन साधव इति साधूनां द्वैविध्येऽप्युक्ते तमप्-प्रत्ययेन युक्तिसम्भवेन च महतां चातुर्विध्यमायातम् । तथैव तमस्तारतम्येन भवादृशा इति अविद्वद्वानघमित्याभ्याम् असाधूनामपि द्वैविध्येऽपि युक्त्या चातुर्विध्यम् । शुद्धसत्त्वकल्याणगुणमयभक्तियोगतारतम्येन पुनरप्येवं साधूनामपराधतारतम्येनासाधूनाञ्चातुर्विध्यं ज्ञेयम् । एवञ्च देहभृतां प्रियात्मनस्तस्मिन् समस्तात्मनि मुक्तवैरक इत्यादिना श्रीरुद्रस्य सर्वत्रापि प्रीतिमत्त्वेन सर्वत्रादोषदृष्ट्या च अतिमहत्तमत्वम् । तेष्वविद्वद्वानघमित्यनेन तस्मिन् श्रीरुद्रे दोषमात्रदर्शनात् तस्य च सर्वात्मत्वात् सर्वजगत्येव दोषदृष्टिप्राप्त्या चोदिते परमेष्ठिनेत्यनेन ब्रह्मण्यपि दोषदृष्ट्या ब्रह्मिष्ठानभिभूय चेति महत्स्वप्यपराधेन च दक्षस्यात्यसत्तमत्वं ध्वनितम् ॥ १२ ॥ ❀ ❀ एतच्च तादृशेषु दुर्जनेषु उचितमेवेत्याह नेति । कुणपं जडं शरीरं तदेवात्मेति वदन्ति ये तेषु असत्सु या सर्वदापि महद्भिर्निंदा एतदाश्चर्यं न कीदृशेषु पांसुभिः क्रमैभिः सेर्ष्यं यथास्यात्तथा निरस्तं तेजः प्रभावो येषां तेषु यद्यपि महान्तः स्वनिंदां सहंते तथापि तत्पादरेणवस्तदसहमानास्तेषां तेजो निरस्यन्तीत्यर्थः । अतोऽसत्सु महद्भिनिन्दनमेव समुचितफलदायकत्वात् शोभनम् ॥ १३ ॥ ❀ ❀ न च महत्स्वपि मध्ये श्रीशिवतुल्यः कोऽप्यन्योऽस्तीत्याह यस्य द्व्यक्षरं शिव इति तत् प्रसिद्धं नाम केवलं गिरैव ईरितं न तु मनसा ध्यातं, तच्च सकृदपि प्रसंगादपि पवित्रकीर्तिमिति माधुर्य्यं अलंघ्यशासनमित्यैश्वर्य्यम् । शिवेतरोऽमङ्गलः ॥ १४ ॥ ❀ ❀ पापहरत्वमुक्तं मुक्तिप्रदत्वमाह यदिति । ब्रह्मरसो ब्रह्मानन्द एवासवो मकरन्दस्तदर्थिभिः भोगप्रदत्वमाह लोकस्येति ॥ १५ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

आब्रह्मघोषेण सर्वतो वेदध्वनिना ऊर्जितमतिशयितं यज्ञवैशसं मिथः पराभवार्थवादो यस्मिन् तत् सर्वशः विप्रर्षिभिर्जुष्टं सेवितम् । विबुधैश्च जुष्टम् । मृदादिभिर्निसृष्टानि निर्मितानि भांडानि यस्मिन् तत् यजनं यागस्थानं समाविशत् । सतीति शेषः ॥ ६ ॥

❀ ❀ तत्र यागस्थानमागतां तां सतीं स्वसॄर्जननीं च ऋते यज्ञकृतो दक्षाद्भयं तस्मात् कश्चन जनो नाद्रियत् नादृतवान्। तत्र हेतुगर्भं विशेषणं विमानितां यज्ञकृतेति विभक्तिव्यत्ययेनान्वयः। तास्तु प्रेमाश्रुभिर्निरुद्धः कंठो यासां ताः सादराः परिषस्वजुः आलिंगितवत्यः ॥ ७ ॥ ❀ ❀ सा पित्रा अप्रतिनंदिता सती मात्रा मातृष्वसृभिर्भगिनीभिश्च सादरं यथा तथा दत्तां सपर्यां पूजामुत्कृष्टमासनं च नादत्त न स्वीकृतवती। किंच सौदर्येण सोदरत्वेन भगिनीनां यः संप्रश्नः कुशलप्रश्नस्तत्र या समर्था योग्या वार्ता तया सह तां चापि नादत्त नाशृणोदित्यर्थः ॥ ८ ॥ ❀ ❀ यज्ञसदसि पूर्वयज्ञसदसि देवे विभौ विपुलज्ञाने पित्रा कृतं हेलनमवेक्ष्य तं वर्तमानमध्वरं चारुद्रभागं न विद्यते रुद्रभागो यत्र तथाभूतमवेक्ष्य तस्मिन्नेवाध्वरे पित्रा स्वयमनादृता अधीश्वरी चुकोपेत्यन्वयः ॥ ९ ॥ ❀ ❀ सा देवी भूतगणान्समुत्थितान् स्वतेजसा निगृह्य निवार्य्य अमर्षेण क्रोधेन विपन्नया क्षुब्धया गिरा धूमपथे कर्ममार्गे यः श्रमोऽभ्यासस्तेन स्मयो गर्वो यस्य शिवं द्वेष्टीति तं जगर्ह गर्हयामास ॥ १० ॥ ❀ ❀ गर्हामेवाह न यस्येति त्रयोदशभिः। यस्य लोके अतिशायनः अतिशयितः प्रियोऽप्रियश्च नास्ति अत एव देहभृतां प्रियः आत्मा स्वभावो यस्य तस्य तस्मिन् मुक्तवैरके समस्ते पूर्णे वासुदेव आत्मा चित्तं यस्य तस्मिन्। यद्वा भर्तरि वासुदेवबुद्ध्यभिप्रायेण वासुदेवावेशावताराभिप्रायेण च महात्मनि शिवे समस्तानामात्मा समस्तात्मेति प्रयोगो युक्तस्तस्मिन् भवंतम् ऋते कतमः प्रतीपयेत् प्रतिकूलमाचरेत् ॥ ११ ॥ ❀ ❀ साधुनिंदकात् उत्पन्नमिदं न धारयिष्ये इति वक्तुं साध्वसाधुलक्षणकथनपूर्वकं दक्षदोषान् शिवगुणानाह दोषानित्यादिना। हे द्विजेत्यधिक्षेपः, ये परेषां गुणेषु सत्सु दोषानेव गृह्णन्ति ते भवादृशाः साधुप्रतियोगिनः असाधव इत्यर्थः। बहुवचनं तेष्वपि तारतम्यं द्योतयति। केचित् गुणेषु दोषान्केवलान् न गृह्णन्ति किं तु दोषान् गुणांश्च विवेकेन गृह्णन्ति। तथोक्तं महाभारते 'शत्रोरपि गुणा वाच्याः दोषा वाच्या गुरोरपी'ति। अत्र गुरुः पित्रादिः, ते लोकमर्य्यादास्थापकाः महांतः केचिच्च गुणानेव गृह्णन्ति किंतु फल्गून् तुच्छानपि गुणान् बहुलीकरिष्णवो भवंति ते महत्तमाः एते भवान् अधमपराधमविदत् लब्धवान् अकल्पयदित्यर्थः। ब्रह्मविधानभिभूय चेत्युक्तत्वाच्च ॥ १२ ॥ ❀ ❀ कुणपं शरीरं तदेवात्मेति तेषु भवादृशेष्वसाधुषु ईर्ष्या अक्षांतिः सेर्ष्यं यथा भवति तथा महद्भिर्निंदेति यदेतदाश्चर्यं न भवति, किं तु तदेव महद्भिर्निंदनमेव शोभनमुचितं भवति। साधवो यद्यपि स्वनिंदां सहंते तथापि तदंघ्रिरेणवस्तेषां तेजो निरस्यंतीत्याशयेन तान् विशिनष्टि महापूरुषपादरेणुभिर्निरस्ततेजःस्विति ॥ १३ ॥ ❀ ❀ यद्यस्य द्व्यक्षरं शिव इति नाम नृणामाशु अघं हंति कथं प्रसंगादुपचारात् तत्रापि सकृदेकवारमेव गिरेरितं सत् ॥ १४ ॥ ❀ ❀ यस्य पादपद्मं महतां मनांस्येवालयस्तैः ब्रह्मरसो भगवदानंदः स एवासवो मकरंदस्तदर्थिभिः निषेवितम्, यच्च अर्थिनः आशिषः विद्यादिसंपदो वर्षति ॥ १५ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं मार्गे शोभां निरूप्य दैवाद्दक्षेणात्यभिमानिना निर्ऋतिगृहीते देवयजने याजयेद्यं कामयेत निर्ऋत्यास्य यज्ञं ग्राहयेयमिति श्रुतिसिद्धे निर्ऋतिगृहीते स्थाने इदं देवयजनं कृतं येनैवमुत्कृष्टपरिकरोपि यज्ञो नष्ट इत्यभिप्रेत्य यज्ञोत्कर्षवर्णनपूर्वकं तत्र सतीप्रवेशमाह-आब्रह्मेति। आ समन्ताद्यो ब्रह्मघोषो वैदिकमन्त्रध्वनिस्तेनोर्जितं शोभमानं च तत् यज्ञवैशससंबन्धि वैशसं पशुहिंसनं यत्र, यद्वा आ समन्ताद्यो ब्रह्मघोषो वैदिकमन्त्रध्वनिस्तेनोर्जितमुत्कृष्टशोभायुक्तं यज्ञे वैशसं ब्राह्मणानां परस्परस्पर्द्धारूपं यत्र सर्वेपि वैदिकास्तुल्यशिक्षा अहमहमिकतया यत्रोत्साहेन मन्त्रान् पठन्तीत्यर्थः। समाजशोभामाह-विप्रर्षिभिर्भृग्वादिभिः सर्वैर्विबुधैर्देवैश्च जुष्टं सेवितम्। यज्ञसंभारशोभामाह-मृदिति। मृदादिभिर्निःसृष्टानि निर्मितानि भाण्डानि पात्राणि यत्र। मृन्मयानि शरावादीनि पुरोडाशाद्यर्थानि। दारुमयानि स्रुगादीनि होमाद्यर्थानि। अयस्मयानि स्वधित्यादीनि अवदानाद्यर्थानि। काञ्चनान्याचमनीकलशादीनि। दर्भमयानि वेदरशनादीनि। चर्ममयानि घृतादिस्थापनार्थानि कुप्यादीनि। एवंभूतं यजनं यज्ञस्थानं सती समाविशत् ॥ ६ ॥ ❀ ❀ ततः शिवेन यदुक्तं तत्र गतानादरं प्राप्स्यसीति तत्तथैव जातमित्याह-तामागतामिति। तां सर्वाभ्यो दक्षकन्याभ्यो विशिष्टां महता गौरवेण समागतां तत्र दक्षयज्ञे कश्चनापि जनो नाद्रियत् तस्या आदरं संमानं न कृतवान्। कुत इत्यपेक्षायामाह-यज्ञकृतो भयादिति। यज्ञकृतो दक्षात्प्राप्तं यद्भयं तस्मादित्यर्थः। ननु तस्माद्भयप्राप्तिरेव कथं तत्राह-विमानितामिति। यतस्तेन विमानिता अतस्तद्वशवर्ती संमाननेधिकृतो जनस्तद्भयात्कोपि नादृतवानित्यर्थः। तर्हि मातृष्वस्रादीनां का व्यवस्था तत्राह-ऋत इति। स्वसॄर्भगिनीः मातरं च ऋते विनाऽन्यः कश्चन नाद्रियत्। भगिनीनां स्वस्वगृहस्वामित्वेन तद्वशवर्त्तित्वाभावात् मातुश्च स्नेहाधिक्येन स्नेहवशवर्त्तित्वात्तास्तु सादराः आदरसहिताः प्रेमाश्रुकण्ठ्यः प्रेम्णा स्नेहेनोद्गतान्यश्रूणि कण्ठे यासां ताः प्रेम्णान्तःस्थः स्वखेद उद्गतो नेत्रद्वारा निर्गतोश्रुपदवाच्यो भवति, तत्प्रदर्शनेऽपशकुनं माभूदित्यश्रूणि निरुद्धानि कण्ठ एव स्थितानि गद्गदतां कुर्वन्ति तथाच गद्गदाक्षराः मुदा परमहर्षेण तां परिषस्वजुः आलिङ्गितवत्य इत्यर्थः ॥ ७ ॥ ❀ ❀ सत्या दृष्टिस्तु पित्रा कृतानादर एवातः स्निग्धानामपि मातृष्वस्रादीनां सत्कारं नाङ्गीकृतवतीत्याह-सौदर्येति। सौदर्येण समानोदरत्वेन भगिनीनां स्नेहाद्यः सम्यक्कुशलप्रश्नस्तत्र समर्था योग्या या वार्त्ता तया सह मात्रादिभिः सादरमादरपूर्विकां दत्तां सपर्यां पारितोषिकं देयविशेषं वरं श्रेष्ठमासनं च ताभिर्दत्तं सा सती नादत्त नाग्रहीदित्यन्वयः। तत्र हेतुमाह-

यतः पित्राऽप्रतिनन्दितेति । यतस्तेन तव सुष्ठु आगमनमिति वाङ्मात्रेणापि न प्रतिनन्दिता । सतीति नामग्रहणेन सतीत्वादस्या अनादरोपि दक्षस्यानर्थहेतुरेवेति सूचितम् ॥ ८ ॥ ❀ ❀ एवमनादरेण खिन्नाया अरुद्रभागाध्वरदर्शनेन क्रोधोपि जात इत्याह-अरुद्रभागमिति । नास्ति रुद्रस्य भागो यस्मिंस्तमध्वरमवेक्ष्य दृष्ट्वा तथा देवे महादेवे विभौ सर्वं कर्तुं समर्थे पित्रा कृतं हेलनं निमन्त्रणाद्यभावेनावज्ञालक्षणं चावेक्ष्य स्वयं च तेनानादृता इति दोषत्रयेण अधीश्वरी सती यज्ञसदसि यज्ञसभामध्ये चुकोप । तदा च रुषा क्रोधेन लोकान् चतुर्दशभुवनानि धक्ष्यतीव भस्मीकरिष्यतीव जातेति शेषेणान्वयः । ननु तस्याः कोपेन कथमेवं स्यादत आह-अधीश्वरीति । यतः सर्वं कर्तुं समर्थेत्यर्थः ॥ ९ ॥ ❀ ❀ ततोऽनुचितकर्माणं दक्षं विनिन्दितवतीत्याह-जगर्हेति । स्वकोपं दृष्ट्वोपद्रवार्थं समुत्थितान् भूतगणान् सा सती स्वतेजसा गौरवेण सूचनामात्रेण निगृह्य निवार्य देवी सर्वपूजार्हतया देदीप्यमाना सती जगतो जगत्संबन्धि तत्रस्थसर्वजनसमूहस्य शृण्वतः सतो येनास्यानौचित्यं सर्वजगति प्रसिद्धं स्यात् अमर्षेण क्रोधेन विपन्नया गद्गदतां प्राप्तया अस्पष्टाक्षरया गिरा शिवद्वेषकर्त्तारं यतो धूमपथे कर्ममार्गे यः श्रमोऽभ्यासस्तेन स्मयो गर्वो यस्य तं सर्वथा निन्दायोग्यं जगर्ह निन्दितवती ॥ १० ॥ ❀ ❀ निन्दावाक्यान्येव दर्शयति त्रयोदशभिः-तत्रादौ तस्मिन्निर्वैरे वैरकरणं सर्वथाऽयुक्तमित्याह-न यस्येति । निर्मुक्तवैरके सर्वथा वैररहिते तस्मिन् शिवे भवन्तमृते विना कतमः प्रतीपयेत् प्रतिकूलमाचरेदित्यन्वयः । कुतस्तस्य निर्वैरत्वमित्याशङ्क्य तत्र वैरहेतूनामभावादित्याशयेनाह-न यस्येति । यदपेक्षया लोके अतिशायनः अतिशयितः ऐश्वर्यादिनोत्कृष्टो नास्तीत्यर्थः । लोके स्वापेक्षयाऽन्यस्योत्कर्षं दृष्ट्वा स्वस्मिंस्तत्सम्पादनाशक्तस्य परोत्कर्षासहनात्तत्र वैरं भवति भवापेक्षयान्यस्योत्कर्षाभावात्तत्कथं स्यादिति भावः । ननु स्वप्रयोजनाभावेपि स्वप्रियस्य मित्रादेः प्रयोजनं पुरस्कृत्य यस्मिन्कस्मिन्वैरदर्शनात्तथा शिवस्य कुतो न स्यात्तत्राह-प्रियस्तथेति । तथापि प्रियोपि यस्य लोके नास्तीत्यर्थः । यद्यप्यस्मदादयो भक्तास्तत्प्रियत्वेन प्रसिद्धास्तथापि तदुपासनानुसारेण फलदाने लक्षणमनुग्रह एव, न तु जीववत् स्वार्थपर्यवसायि प्रियत्वम् । तर्हि कश्चिदप्रियो द्वेष्यः स्याल्लोके व्याघ्रादौ सर्वस्य स्वाभाविकद्वेष्यत्वदर्शनात्तत्राह-तथाऽप्रिय इति । तथा लोके यस्य अप्रियो द्वेष्यश्च नास्ति । लोके प्रियत्वस्य परस्परसापेक्षत्वदर्शनाद्यदि लोके तस्य कश्चिदपि प्रियो नास्ति तदा सोपि कस्यापि प्रियो न स्यादित्याशङ्क्याह-देहभृतामिति । यो देहभृतां प्रियश्चासावात्मा च । तस्य कथमन्यत्र प्रीतिरहितस्यापि सर्वप्राणिप्रीतिविषयत्वमिति शङ्कानिरासार्थमाह-देहभृतां प्रियात्मन इति । 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इति श्रुतेस्तस्य सर्वात्मकत्वेन सर्वप्राणिप्रियत्वमन्यत्र प्रियत्वस्य तदर्थकत्वेनौपाधिकत्वात्तत्र च निरुपाधिकं प्रियत्वमत एव लोकदृष्टान्तेन न तद्विषयकशङ्कावसरः । लोके यदि कश्चित्सर्वात्मा स्यात्तदा तद्दृष्टान्तस्तत्र संगच्छेत, न तु तदस्ति, अतः समस्तात्मत्वेन वैरविषयाभावान्मुक्तवैरके तस्मिन् प्रतिकूलाचरणं सर्वथा न युक्तमिति भावः ॥ ११ ॥ ❀ ❀ किंच सर्वलोकोपकर्तॄणां निर्वैराणां गुणवतां गुणेषु भवान् दोषानाविष्करोति तदयुक्तमेव सर्वथेत्याह-दोषानिति । द्विजेति संबोधनेन तव वैदिकधर्मनिष्ठत्वेन सदाचारपालनमेव युक्तम्, न तदुल्लङ्घनमिति सूचयति । ये भवादृशाः भवत्सदृशाः असाधवो दूषितान्तःकरणास्ते परेषां शत्रुत्वेनाभिमतानां गुणवतामपि पुंसां गुणेषु दोषान्स्वारोपितानेव गृह्णन्ति । केचिदिति एवंभूता दुर्लभा विरला इति सूचयति । केचित्तु महत्तमा भवादयो न परेषां गुणेषु दोषान् गृह्णन्ति, तेषां सर्वत्रात्मभावानां कुत्रापि परत्वदर्शनाभावात्, किंतु भक्तानां फल्गून् तुच्छानपि गुणान् स्तुतिपूजानमस्कारादीन् ते बहुलीकरिष्णवः समृद्धान् कुर्वाणा बहुमन्यमाना भवन्ति, स्वल्पापराधेनाप्याशुतोषत्वेनाविचारितबहुफलदातृत्वेन शिवस्य प्रसिद्धत्वात् । तेष्विति ब्रह्मिष्ठानभिभूयेत्युक्तत्वात् भवत्सत्सदृशेषु महत्सु भवान् अघं दोषमविदत् आरोप्य निन्दितवानिति । महान्बुद्धिव्यतिक्रमो भवत इति भावः । सर्वजनप्रसिद्धमेवैतदुक्तम्, न सन्दिग्धमित्याह-हीति ॥ १२ ॥ ❀ ❀ एवमुक्तेपि तस्य साभिमानत्वेन स्तब्धत्वं दृष्ट्वाधिक्षिपन्ती प्राह-नाश्चर्यमिति । असत्सु अन्तःकरणदोषेण भ्रान्तेषु एतन्नाश्चर्यम्, किंतु तदेव शोभनमिति संबन्धः । एतदिति किमित्यपेक्षायामाह-सेर्ष्यं यत्सर्वदा महद्भिनिन्देति । ईर्ष्या अक्षान्तिः, सेर्ष्यं सत्प्रभावासहनतापेन सहितं यथा भवति तथा यत्सर्वदा महतां विनिन्दा गुणेषु दोषानारोप्य कथनम् । तेषां भ्रान्तत्वमेवाह-कुणपात्मवादिष्विति । कुणपं शववत्कुत्सितं जडं शरीरं तदेवात्मेति वदने शीलं येषां तेषु । ननु कथमेवं तेषां भ्रान्तिरित्याशङ्क्य 'हन्ति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः' इत्यादिवाक्यानुसारेण महदपराधेन यथार्थग्रहणयोग्यताया निरस्तत्वादित्यभिप्रेत्याह-महापूरुषेति । यद्यपि महापूरुषास्तदपराधं न गणयन्ति तथापि तत्पादपांसुभिः रजोभिर्निरस्तं तेजो विवेकज्ञानादियोग्यत्वं येषां तेषु । अतो महद्भिनिन्दनं नाश्चर्यं देहाभिमानजन्यत्वेनाकस्मिकत्वाभावादाकस्मिकमेवाश्चर्यजनकं भवति, न प्रसिद्धसाधनसंपत्त्या सिद्धमतस्तेषु तदेव शोभनं युक्तमसत्त्वसाधकत्वादन्यथा तेषामसत्त्वमेव न स्यादिति भावः । वस्तुतस्त्वाक्षेपपरमपि सतीवाक्यं यथार्थमपि भवितुमर्हति । असत्सु महद्भिनिन्दनं शोभनं शोभाजनकमेवान्यथा तदभावे दण्डाभावादभिमानतादवस्थ्येन कलुषितस्य पुरुषार्थरूपधर्मसिद्धिर्न स्यादतः परम्परया निन्दनादेरेव शोधकत्वेन शोभनत्वं हिरण्यकशिपुकंसशिशुपालप्रभृतीनामपि तथात्वदर्शनादिति संक्षेपः । असत्स्विति बहुवचनं दक्षानुगताभिप्रायेण ॥ १३ ॥ ❀ ❀ एवं सामान्यतो महत्स्वसतामपराधप्रदर्शनेन दक्षमधिक्षिप्य विशेषतः शिवे तस्य साक्षाद्द्वेषमनर्थमूलं प्रदर्शयन्त्यधिक्षिपन्ती प्राह-यद्द्व्यक्षरमिति । यत् यस्य तत् "शिवेति नाम विमलं येनोच्चारितमादरात् । तेन भूयो न संसारसागरः समवाप्यते" इत्यादौ

संसारनिवर्त्तकत्वेन प्रसिद्धं द्व्यक्षरं शिव इति नाम सकृत् एकवारमपि प्रसङ्गात् संकेताद्यनुषङ्गादपि गिरैव, न तु बुद्धिपूर्वकमीरितमुच्चारितं विस्पष्टमस्पष्टं वा नृणां प्राणिनां सर्वेषां पापिनां न तु ब्राह्मणादिवर्णाश्रमोऽत्राधिकारिविशेषणम्। 'ब्रह्महत्यासहस्राणि पुरा कृत्वापि पुष्कसः। शिवेति नाम विमलं श्रुत्वा मोक्षं गतः पुरा' इति शिवरहस्यवचनात् अघं सर्वं पापमाशु शीघ्रमेव हन्ति नाशयति। श्रुत्वेत्यनेन "महादेवेति नामेदं यः शृणोति वदिष्यति। न तस्य नरके वासः सत्यं सत्यं न संशयः" इति वाक्यान्तराच्चोच्चारणवच्छ्रवणस्यापि तथा फलमिति ज्ञेयम्। अर्थवादत्वशङ्कापि न कार्या, "मन्नामकीर्तनफलं विविधं निशम्य न श्रद्दधाति मनुते यदुतार्थवादम्। यो मानुषस्तमिह दुःखचये क्षिपामि संसारघोरविविधार्त्तिनिपीडिताङ्गम्' इति तथात्वाङ्गीकारे दोषश्रवणात्। तं शिवं कल्याणरूपमीश्वरं पवित्रा सर्वपापनिवर्त्तिका कीर्त्तिर्यस्य तमलङ्घ्यमनुल्लङ्घनीयं शासनमाज्ञा यस्य तं भवानहो द्वेष्टि। अहो इत्यनेन स्वल्पेनापि यद्भजनेन सर्वपुरुषार्थसिद्धिर्भवति तद्द्वेषात्पुरुषार्थार्थिनोऽपि भवतः सर्वोऽप्युद्यमः स्वविनाशायैवेति सूचितम्। अत एवाह–शिवेतर इति, कल्याणविरोधिपापचयरूप इत्यर्थः॥ १४॥ ❀ ❀ एवं शिवद्वेषे सर्वानिष्टप्राप्तिस्तदनुसरणे तु सर्वानिष्टनिवृत्तिरिति प्रदर्शितम्। इदानीं ततः सर्वेष्टप्राप्तिं दर्शयन्ती तद्द्रोहस्यायुक्तत्वमाह–यत्पादेति। यस्य शिवस्य पादपद्मं ब्रह्मैव रसः परमानन्दः स एवासवस्सर्वविस्मृतिपूर्वकतृप्तिकरं मधु तदर्थिभिर्महतां सर्वपूज्यानां सनकादीनां मनांस्येवालयस्तैर्निंतरां सेवितम्। एतेन मोक्षेप्सूनां ब्रह्मज्ञानप्रदत्वमुक्तम्। इदानीं धर्माद्यभ्युदयार्थिनां तत्तत्फलदातृत्वमाह–लोकस्येति। यश्च शिवोऽर्थिनो लोकस्याशिषस्तदर्थितास्तास्ता धर्मादिलक्षणा वर्षति अधिकार्यनधिकारिविचारं विनैवालं ददाति तस्मै विश्वबन्धवे जगतो हितकारिणे भवान् द्रुह्यति। अहो भवतो बुद्धिवैपरीत्यमिति शेषः॥ १५॥

## भाषानुवादः

तदनन्तर सती अपने समस्त सेवकोंके साथ दक्षकी यज्ञशालामें पहुँचीं। वहाँ वेदध्वनि करते हुए ब्राह्मणोंमें परस्पर होड़ लग रही थी कि सबसे ऊँचे स्वरमें कौन बोले; सब ओर ब्रह्मर्षि और देवता विराजमान थे तथा जहाँ-तहाँ मिट्टी, काठ, लोहे, सोने, डाभ और चर्मके पात्र रक्खे हुए थे॥ ६॥ ❀ ❀ वहाँ पहुँचनेपर पिताके द्वारा सतीकी अवहेलना हुई, यह देख यज्ञकर्ता दक्षके भयसे सतीकी माता और बहिनोंके सिवा किसी भी मनुष्यने उनका कुछ भी आदर-सत्कार नहीं किया। अवश्य ही उनकी माता और बहिनें बहुत प्रसन्न हुईं और प्रेमसे गद्गद होकर उन्होंने सतीजीको आदरपूर्वक गले लगाया॥ ७॥ ❀ ❀ किन्तु सतीजीने पितासे अपमानित होनेके कारण, बहिनोंके कुशल-प्रश्नसहित प्रेमपूर्ण वार्तालाप तथा माता और मौसियोंके सम्मानपूर्वक दिये हुए उपहार और सुन्दर आसनादिको स्वीकार नहीं किया॥ ८॥ ❀ ❀ सर्वलोकेश्वरी देवी सतीका यज्ञमण्डपमें तो अनादर हुआ ही था। उन्होंने यह भी देखा कि उस यज्ञमें भगवान् शङ्करके लिये कोई भाग नहीं दिया गया है और पिता दक्ष उनका बड़ा अपमान कर रहा है। इससे उन्हें बहुत क्रोध हुआ; ऐसा जान पड़ता था मानो वे अपने रोषसे सम्पूर्ण लोकोंको भस्म कर देंगी॥ ९॥ ❀ ❀ दक्षको कर्ममार्गके अभ्याससे बहुत घमंड हो गया था। उसे शिवजीसे द्वेष करते देख जब सतीके साथ आये हुए भूत उसे मारनेको तैयार हुए, तो देवी सतीने उन्हें अपने तेजसे रोक दिया और सब लोगोंको सुनाकर पिताकी निन्दा करते हुए क्रोधसे लड़खड़ाती हुई वाणीमें कहा॥ १०॥ ❀ ❀ देवी सतीने कहा—पिताजी! भगवान् शङ्करसे बड़ा तो संसारमें कोई भी नहीं है। वे तो सभी देहधारियोंके प्रिय आत्मा हैं। उनका न कोई प्रिय है, न अप्रिय; अत एव उनका किसी भी प्राणीसे वैर नहीं है। वे तो सबके कारण एवं सर्वरूप हैं; आपके सिवा और ऐसा कौन है जो उनसे विरोध करेगा?॥ ११॥ ❀ ❀ द्विजवर! आप-जैसे लोग दूसरोंके गुणोंमें भी दोष ही देखते हैं, किन्तु कोई साधुपुरुष ऐसा नहीं करते। जो लोग दोष देखनेकी बात तो अलग रही—दूसरोंके थोड़े-से गुणको भी बड़े रूपमें देखना चाहते हैं, वे सबसे श्रेष्ठ हैं। खेद है कि आपने ऐसे महापुरुषोंपर भी दोषारोपण ही किया॥ १२॥ ❀ ❀ जो दुष्ट मनुष्य इस शवरूप जड शरीरको ही आत्मा मानते हैं; वे यदि ईर्ष्यावश सर्वदा ही महापुरुषोंकी निन्दा करें तो यह कोई आश्चर्यकी बात नहीं है; क्योंकि महापुरुष तो उनकी इस चेष्टापर कोई ध्यान नहीं देते, परन्तु उनके चरणोंकी धूलि उनके इस अपराधको न सहकर उनका तेज नष्ट कर देती है। अतः महापुरुषोंकी निन्दा-जैसा जघन्य कार्य उन दुष्ट पुरुषोंको ही शोभा देता है॥ १३॥ ❀ ❀ जिनका 'शिव' यह दो अक्षरोंका नाम प्रसङ्गवश एक बार भी मुखसे निकल जानेपर मनुष्यके समस्त पापोंको तत्काल नष्ट कर देता है और जिनकी आज्ञाका कोई भी उल्लङ्घन नहीं कर सकता, अहो! उन्हीं पवित्रकीर्ति मङ्गलमय भगवान् शङ्करसे आप द्वेष करते हैं! अवश्य ही आप अमंगलरूप हैं॥ १४॥ ❀ ❀ अरे! महापुरुषोंके मन-मधुकर ब्रह्मानन्दमय रसका पान करनेकी इच्छासे जिनके चरणकमलोंका निरन्तर सेवन किया करते हैं और जिनके चरणारविन्द सकाम पुरुषोंको उनके अभीष्ट भोग भी देते हैं, उन विश्वबन्धु भगवान् शिवसे आप वैर करते हैं॥ १५॥

---

१. यज्ञदानादिवद्देशकालवयोवस्थादिनियमोऽपि नामसंकीर्त्तने नास्ति "न देशनियमो राजन्न कालनियमस्तथा। विद्यते नात्र संदेहो विष्णोर्नामानुकीर्त्तने॥ गच्छंस्तिष्ठन्स्वपन्वापि पिबन् भुञ्जञ्जपंस्तथा। कृष्ण कृष्णेति संकीर्त्य मुच्यते पापकंचुकात्" इति वचनात्।

किं वा शिवाख्यमशिवं न विदुस्त्वदन्ये ब्रह्मादयस्तमवकीर्य जटाः श्मशाने ।
तन्माल्यभस्मनृकपाल्यवसत्पिशाचैर्ये मूर्धभिर्दधति तच्चरणावसृष्टम् ॥ १६ ॥
कर्णौ पिधाय निरयाद्यदकल्प ईशे धर्मावितर्यसृणिभिर्नृभिरस्यमाने ।
छिन्द्यात्प्रसह्य रुशतीमसतीं प्रभुश्चेज्जिह्वामसूनपि ततो विसृजेत्स धर्मः ॥ १७ ॥
अतस्तवोत्पन्नमिदं कलेवरं न धारयिष्ये शितिकण्ठगर्हिणः ।
जग्धस्य मोहाद्धि विशुद्धिमन्धसो जुगुप्सितस्योद्धरणं प्रचक्षते ॥ १८ ॥
न वेदवादाननुवर्तते मतिः स्व एव लोके रमतो महामुनेः ।
यथा गतिर्देवमनुष्ययोः पृथक् स्व एव धर्मे न परं क्षिपेत्स्थितः ॥ १९ ॥
कर्म प्रवृत्तं च निवृत्तमप्यृतं वेदे विविच्योभयलिङ्गमाश्रितम् ।
विरोधि तद्यौगपदैककर्तरि द्वयं तथा ब्रह्मणि कर्म नर्च्छति ॥ २० ॥
मा वः पदव्यः पि[1]तरस्मदास्थिता या यज्ञशालासु न धूमवर्त्मभिः ।
तदन्नतृप्तैरसुभृद्भिरीडिता अव्यक्तलिङ्गा अवधूतसेविताः ॥ २१ ॥
नैतेन देहेन हरे: कृतागसो देहोद्भवेनालमलं कुजन्मना ।
व्रीडा ममाभूत्कुजनप्रसङ्गतस्तज्जन्म धिग् यो[2] महतामवद्यकृत् ॥ २२ ॥
गोत्रं त्वदीयं भगवान् वृषध्वजो दाक्षायणीत्याह यदा सुदुर्मनाः ।
व्यपेतनर्मस्मितमाशु तद्ध्यहं व्युत्स्रक्ष्य एतत्कुणपं त्वदङ्गजम् ॥ २३ ॥

मैत्रेय[3] उवाच

इत्यध्वरे दक्षमनूद्य शत्रुहन् क्षितावुदीचीं निषसाद शान्तवाक् ।
स्पृष्ट्वा जलं पीतदुकूलसंवृता निमील्य दृग्योगपथं समाविशत् ॥ २४ ॥
कृत्वा समानावनिलौ जितासना सोदानमुत्थाप्य च नाभिचक्रतः ।
शनैर्हृदि स्थाप्य धियोरसि स्थितं कण्ठाद् भ्रुवोर्मध्यमनिन्दितानयत् ॥ २५ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

यदुक्तं शिवापदेशो ह्यशिव इति यच्चोक्तं प्रेतावासेष्वित्यादि तदाक्षिपंत्याह । किं वेति । जटा अवकीर्य श्मशानेऽवसद्वसति स्म तस्य श्मशानस्य मालयानि भस्मानि नृकपालानि च भूषणत्वेन संति यस्य तं त्वत्तोऽन्ये न विदुः किं ? विदंत्येवेति चेन्न तथा सति तेषां तद्दास्यानुपपत्तेरित्याह । तच्चरणादवसृष्टं गलितं निर्माल्यं ये मूर्धभिर्धारयंति ॥ १६ ॥ ❀ ❀ इदानीं देहं त्यक्तुकामा धर्मतत्त्वमाह । कर्णावाच्छाद्य निर्गच्छेत् यद्यदि मर्तुं मारयितुं वा कल्पो न भवति कदा धर्मावितरि धर्मरक्षके ईशे स्वामिन्यसृणिभिर्निरंकुशैर्नृभिरस्यमानेऽधिक्षिप्यमाणे प्रभुः शक्तश्चेत् रुशतीमकल्याणवादिनीं जिह्वां प्रसह्य बलाच्छिंद्यात् । ततोऽपि स्वयं प्राणान्विसृजेदिति यत्स धर्मः ॥ १७ ॥ ❀ ❀ तव त्वत्त उत्पन्नम् शितिकंठो नीलकंठस्तन्निंदकात् । प्रमादादापन्नस्यापवित्रस्य त्यागं विना न शुद्धिरिति दृष्टांतेनाह । जग्धस्य भक्षितस्यान्नस्योद्धरणं वमनमेव पुंसो विशुद्धिं प्रचक्षते ॥ १८ ॥ ❀ ❀ यदुक्तं लुप्तक्रियायाशुचय इति तत्प्रत्याह । नेति । वेदवादान्विधिनिषेधरूपान्स्व एव लोके स्वात्मन्येव रममाणस्य महतो मुनेः सम्यग्विरक्तस्य मतिर्नानुवर्तते निवृत्ताधिकारत्वात् । अधिकारभेदे दृष्टांतः–यथा देवानां गतिराकाश एव मनुष्याणां पृथिव्यामेव । अतः स्व एव धर्मे प्रवृत्तिलक्षणे वा स्थितः सन्परमन्यं धर्मं पुरुषं वा न क्षिपेन्न निंदेत् । व्यवस्थिताधिकारत्वेनोभयोः सत्यत्वात् । न क्षिपेदेवेति वाऽन्वयः ॥ १९ ॥ ❀ ❀ एतदेवोपपादयंत्याह । प्रवृत्तमग्निहोत्रादि, निवृत्तं शमदमादि ऋतं सत्यमेव यतो वेदे आश्रितं विहितं तच्च विविच्य व्यवस्थयाऽऽश्रितं न त्वविशेषेण । व्यवस्थामेवाह–उभयं रागवैराग्यलक्षणं लिंगं चिह्नमधिकारिविशेषणं यस्मिंस्तत् । ननु "यावज्जीवमग्निहोत्रं जुहोति शांतो दांत" इत्यादिषु नैवं व्यवस्था प्रतीयते, सत्यम् । तथाप्यु-

---

१. प्रा० पा०—पितरः सदास्थिता । २. प्रा० पा०—यन्म० । ३. प्राचीने पाठे 'मैत्रेय उवाच' नास्ति ।

भयोरेकाधिकारविरोधात्तथा पर्यवस्यतीत्याह। युगपद्भावो यौगपद्यं यौगपद्येनैकस्मिन्कर्तरि तत्कर्मद्वयं विरोधि। ननु तर्हि निवृत्तं कर्म शिवेनापि कर्तव्यमेव नेत्याह। ब्रह्मणि सदाशिवे किंचिदपि कर्म न ऋच्छति न प्राप्नोति, अतो यथा प्रवृत्तनिवृत्तयोरधिकारिणोः परस्परधर्माकरणे न दोषस्तथेश्वरे एतदुभयधर्माकरणेऽपीति भावः॥ २०॥ ❀ ❀ चिताभस्मकृतस्नानस्तथा नग्न इत्यादिना यो भोगाद्यभाव उक्तस्तत्राह। हे पितः अस्माभिराश्रिता आश्रिताः पदव्योऽणिमादिसमृद्धयो वो युष्माकं मा न संतीत्यर्थः। यतो वः पदव्यो यज्ञशालास्वेव भवंति ताश्च तदन्नेन यज्ञगतेनान्नेन तृप्तैः केवलमीडिता धूमवर्त्मभिश्च भुज्यंते। या अस्मत्पदव्यस्तास्तु नैवंभूताः किं त्वव्यक्तलिंगाः न व्यक्तं लिंगं हेतुर्यासाम्। इच्छामात्रप्रभवत्वात्। अवधूतैर्ब्रह्मविद्भिः सेविताः। अतोऽहमाढ्यो रुद्रो दरिद्र इति गर्वं मा कृथा इति भावः॥ २१॥ ❀ ❀ किं बहुनोक्तेनेमं देहं त्यक्ष्याम्येवेत्याह द्वाभ्याम्। एतेन नालं न पूर्यते किमपि त्वलमेव। कथंभूतेन कुजन्मना। तदेवाह हरे कृतापराधस्य तव देहादुद्भूतेनोत्पन्नेन। ननु श्लाघ्योऽयं देहः कथं त्याज्यस्तत्राह। कुजनस्य कुत्सितजनकस्य तव प्रसंगतः संबंधान्मम लज्जाऽभूत्, अतो यो महतामप्रियकर्ता तस्माद्यज्जन्म तद्धिक् त्वत्संबंधादश्लाघ्यमित्यर्थः॥ २२॥ ❀ ❀ किं च परिहासादिषु विनोदेनापि दाक्षायणीति संबोधयंस्त्वदीयं त्वत्संबंधवाचकं गोत्रं नाम यदा वृषध्वज आह गृह्णाति तदाहं व्यपेतनर्मस्मितं यथा भवत्येवं सुदुर्मना अतिदुःखितचित्ता भवामि तत्तस्माद्धि निश्चितमेतत्कुणपप्रायं व्युत्स्रक्ष्ये त्यक्ष्यामि॥ २३॥ ❀ ❀ दक्षं प्रत्यनुवादं कृत्वा। शत्रुहन् क्रोधादिरिपुघातिन् विदुर, उदीचीमुदीच्यां दिशि पाठांतरे उदङ्मुखी शांतवाक् गृहीतमौना जलं स्पृष्ट्वाऽऽचम्य दृक् दृशम्॥ २४॥ ❀ ❀ योगमार्गमेवाऽऽह कृत्वेति। अनिलौ प्राणापानावूर्ध्वाधोवृत्तिकरौ निरोधेन समानावेकरूपौ नाभिचक्रे कृत्वा तत उदानमुत्थाप्य धिया सह हृदि स्थापयित्वा कंठमार्गेण भ्रुवोर्मध्यमनयत्॥ २५॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तथा सति ज्ञानाभावे सति। तेषां ब्रह्मादीनाम्। तस्य शिवस्य दास्यानुपपत्तेः॥ १६॥ ❀ ❀ "मार्गे वाय्वंकुशे सृणिः" इति निरुक्तिः। ततो जिह्वाच्छेदनापेक्षयापि निंदाश्रवणप्रायश्चित्तं प्रकुर्वन्स्वयं प्राणान्विसृजेदित्यर्थः। यद्वा ततः प्रभुत्वाभावेऽसूंस्त्यजेदित्यर्थः। यद्वा जिह्वाच्छेदादनंतरं यदि स निंदकः प्राणांस्त्यजेत्तदा धर्मस्तस्यानंतनरकभोगप्रशमनात्तद्वधलक्षणोऽधर्मो न भवतीत्यर्थः। अत्रेयं व्यवस्था क्षत्रियस्य दंडाधिकारात्स एव तज्जिह्वां छिंद्यात्, अपरेषामन्यदंडेऽनधिकृतानां त्रयाणां मध्ये वैश्यशूद्रौ तनुत्यागरूपं स्वदंडं कुर्याताम्। ब्राह्मणस्य शरीरदंडानौचित्यात्स तु कर्णौ पिधाय विष्णुं स्मरंस्ततो निर्गच्छेदिति वक्ष्यत्यपि शिशुपालाख्याने "निंदां भगवतः शृण्वंस्तत्परस्य जनस्य वा। ततो नापैति यः सोपि यात्यधः सुकृताच्च्युतः॥" इति॥ १७॥ अहञ्च सर्वैश्वर्यात्सर्वसामर्थ्यात्त्वां ब्रह्माण्डकोटीरपि हंतुं समर्थापि शिव एव स्वभार्याद्वारा दक्षं जघानेति शिवयशोहानिभीत्या न हन्मि। स्वप्रायश्चित्तं करिष्याम्येव पश्य पापिंश्चक्षुर्भ्यामित्याह—अत इति॥ १८॥ ❀ ❀ नानुसरति 'कुशलाचरितेनैषामिह चार्थो न विद्यते। विपर्ययेण वानर्थं' इति। 'स्वैरं चरंति मुनयोपि न नह्यमाना' इति बद्धानां मुक्तानां च मिथः पृथगेव गतिरित्यत्र दृष्टान्तः। यथेति॥ १९॥ ❀ ❀ एतदेव भिन्नगतित्वमेव रागवति निवृत्तं विरोधिवैराग्यवति प्रवृत्तं च विरोधि, अत्राशंकते—नन्विति। उभयोः प्रवृत्तनिवृत्तयोः तथा पर्यवस्यति अधिकारभेदेन पर्यवसानं प्राप्नोति। पुनराशंकते—नन्विति। यतः किंचिन्न प्राप्नोति अतो हेतोः। इति भाव इति। प्रवृत्तस्य शमदमाद्यकरणे न प्रत्यवायो यथा निवृत्तस्याग्निहोत्राद्यकरणे न प्रत्यवायस्तथेश्वरस्योभयस्याप्यकरणे न प्रत्यवाय इति तात्पर्यम्॥ २०॥ ❀ ❀ हन्त हे पुत्रिके ममैव तदभाग्यं यत्परमाप्रतमस्य सदाचारस्य मम कन्या त्वं भिक्षुककदाचारगृहे पतितासि तदपि गुणशीलनिधिस्त्वं स्वभर्तुरपकर्षं यन्न सहसे तत्तव पतिव्रताचूडामणेरुचितमेवेति। तत्र सभर्त्सनमाह—मेति। इत्यर्थ इति। जन्मकोटिभिरपि न भविष्यन्तीति भावः। नन्वेवं कुतो ब्रूषेऽस्माकमपि सिद्धयः संत्येवेति नेत्याह—या यज्ञशालासु तदन्नतृप्तैरुदरंभरैर्वायसादितुल्यैर्धूमवर्त्मभिः कामिभिर्नेडिता न स्तुताः किं त्वव्यक्तलिंगास्त्वादृशैरलक्षितप्रभावाः ब्रह्मविद्भिः सनकादिनारदादिभिः सेविताः सेव्यन्ते, वर्तमाने क्तः। इति भाव इति। "अक्षरत्वाद्वरेण्यत्वाद् भूतसंसारबंधनात्। तत्त्वमस्यर्थसिद्धत्वादवधूतोभिगीयते" इति तत्त्वविवेकोक्तेः ज्ञानिन एवावधूतपदवाच्या अवधूयन्ते सेवोद्यतानामपि पापानि येभ्यस्तेऽवधूताः "येषां संस्मरणात्पुंसां सद्यः शुद्ध्यन्ति वै गृहाः" इत्यादेर्वयमेवाढ्यास्त्वं दरिद्रोसीति तात्पर्यम्॥ २१॥ ❀ ❀ स्वाशयमाह—किं बहुनेत्यादि। तदेवं कुजन्मत्वमेव प्रजापतित्वान्मम देहोद्भूतस्तव देहश्श्लाघ्य एवेत्याशंकते—नन्विति। अतो लज्जाकरत्वात्। इत्यर्थ इति। रुद्रापराधकरणात्त्वमप्यश्लाघ्यो जातस्तज्जातत्वादयं देहोऽतीवाश्लाघ्य इति भावः॥ २२॥ ❀ ❀ कारणान्तरमाह—आह वक्ष्यति भविष्यदर्थे लट्, एवं भवामि भविष्यामि कुणपं कुणपप्रायं मलप्रायं "विट्सारिकायां कुणपी पूतगंधौ शवे पुमान्। शरीरे कुणपं रक्षोमलयोः कर्मणः फले" इति स्वामी। इतः पूर्वमेव देहं त्यक्ष्य इति भावः। चक्रवर्ती—तु परिहासादिषु त्वदीयं त्वत्सम्बन्धज्ञापकं गोत्रं नाम त्वं दाक्षायणी भवसि तव मत्सरद्वेषनिन्दावज्ञादिकं सधर्म एवेति यदा वृषध्वज आह तदाहं विगतनर्मस्मितं यथा स्यादेवं सुदुर्मना भवामीति पूर्ववत्। "गोत्रा भूगव्ययोर्गोत्रः शैले गोत्रं कुलाख्ययोः" इति यादवः॥ २३॥ ❀ ❀ अनूद्य लक्षीकृत्योक्त्वा। हे शत्रुहन्निति। यथा त्वं कामादिरूपशत्रुं

हंसि तथा सापि स्वदेहत्यागमिषेण दक्षं स्वश्वशुरं जघानेति भावः। पाठान्तरे उदीचीति पाठे। पीतदुकूलेति। मर्तुकामानां कुसुंभरंजितवस्त्रधारणौचित्यात्। उदीचीं दिशमुद्दिश्य क्षितौ निषसादेति योज्यम्। देहत्यागस्यायत्नसाध्यत्वेपीतिकृत्यतात्र योगिजनशिक्षणाय फलाधिक्याय वा दर्शिता ॥ २४॥ ❀ ❀ जितासना प्राणादिसंचारवेगदेहसंचलनरहिता। प्रथमं रेचकपूरके कृत्वाऽनिलौ एकविषयगती विधाय ततोऽनन्तरं मूलाधारादुत्क्रमणकर्त्तारं सुषुम्णासञ्चारिणमुदानमुत्थाप्योर्ध्वमुखं कृत्वा नाभिचक्रमानीय ततो नाभिमण्डलाद्धिया निश्चलया बुद्ध्या शनैरुद्वेगं विना हृदि स्थाप्य—संस्थाप्योरसि स्थितं वायुं कण्ठं नीत्वा कंठाद् भ्रुवोर्मध्यमनयदित्यन्वयः। यद्वा सर्वसन्धिसंचारिणं वायुं व्यानमूर्द्ध्वाधोगतिनिमित्तौ प्राणापानौ समानवायुनैकीकृत्य तं समानवायुम्। सोदानमुदानगत्या सहितमुदानेनैकीकृत्योपर्युपरि स्थानं जीवेन सहानयदिति। अत्र द्रव्यनयनशक्तिमता वायुना जीवसंज्ञद्रव्यनयनं न तु तन्मात्रं तस्य योगिनो नित्याभ्यस्तत्वात् ॥ २५॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

आक्षिपन्ती सिद्धांतेन तिरस्कुर्वन्ती त्वत्तोऽन्ये ब्रह्मादयोऽशिवत्वेन किं कुतो न विदुः। तथा सति अशिवत्वेन ज्ञाते सति ॥ १६॥ ❀ ❀ धर्मतत्त्वं धर्मस्य यथावत्स्वरूपं "तत्त्वं वाद्यप्रभेदे स्यात्स्वरूपे परमात्मनी"ति विश्वः। ततोपि जिह्वाछेदे कृतेपि तत्राहं समर्था तथाप्यहो शिवः किंचित् कर्तुमशक्तत्वात् स्त्रीद्वारा दक्षं घातितवान् इति स्वस्वामिकीर्त्तौ दूषणं न स्यादिति भावः ॥ १७॥ ❀ ❀ किन्तु देहत्यागं तु करिष्याम्येवेत्याह अत इति ॥ १८॥ ❀ ❀ तन्निन्दावाक्यं प्रत्याचष्टे एवकारं स्वधर्मसमभिव्याहारेण व्याख्याय निंदाऽत्यंतायोगं वक्तुं क्रियासमभिव्याहारेण व्याचष्टे व्यवस्थितेति। आत्मज्ञानशून्यैः विविदिषार्थं प्रवृत्तधर्म एवानुष्ठेयः तत्सहितैस्तु शमादिनिवृत्तधर्म्म एवेति व्यवस्थितो नियमितोऽधिकारो ययोः प्रवृत्तनिवृत्तधर्म्मयोस्तत्त्वेन ( हे ) मा न क्षिपेदेवेति अत्यंतायोगव्यवच्छेदः ॥ १९॥ ❀ ❀ एतदेव व्यवस्थिताधिकारत्वेन सत्यमेव तच्च विहितत्वं विविच्येत्यस्य व्याख्या सम्यक् व्यवस्थयेति तत्तदधिकारिनियमेनेत्यर्थः, अविशेषेण सामान्यतया यथा 'स्वाराज्यकामो राजा राजसूयेन यजेते'त्यधिकारविधिस्तत्र यथा स्वाराज्यकामना सर्वेषामेव, तथापि राज्ञ इत्यस्याधिकारिविशेषगत्वाद्राज्ञ एव स्वाराज्यकामस्य राजसूयेऽधिकारो नान्यस्य, तथात्र रागवतैव प्रवृत्तं कर्मानुष्ठेयं न तु विरक्तेन, वैराग्यवतैव निवृत्तं कर्मानुष्ठेयं न तु रागवतेति यथासंख्यं उभयमधिकारिविशेषणम्। यत्र प्रवृत्ते च कर्मणि तत् तत्र शङ्कते नन्विति। एवं व्यवस्था अधिकारिविशेषणरूपा न प्रतीयते 'अग्निहोत्रं रागवान् जुहोति वैराग्यवान्' 'शांतो दान्त' इत्यश्रवणात् तथापि अधिकारिविशेषणाऽश्रवणेपि उभयोः प्रवृत्तनिवृत्तकर्मणोः एकस्मिन्नधिकारिणि विरोधेन न हि अग्निहोत्रादिकर्मव्यग्रेण शमादि कर्तुं शक्यते, न च शमादिमता विरक्तेन तादृशं कर्म कर्तुं शक्यते इति विरोधादुभयमपि कर्म तथा तत्तदधिकारिविशेषणरूपया व्यवस्थया पर्य्यवस्यति। अन्यथाऽनुपपत्त्या पर्य्यवसानं प्राप्नोतीत्यर्थः। पुनः शङ्कते नन्विति। जीवानामेवोभयविधे कर्मणि अधिकारो न त्वीश्वरस्येत्यतः ॥ २०॥ ❀ ❀ अत्र संतीति क्रियाध्याहारादित्यर्थोक्तिः। तादृशपदव्यभावे हेतुमाह यतो हेतोः पदव्यः यज्ञानुष्ठानेन कीर्त्यादिसमृद्धयः धूममार्गस्याधिकारो भोक्तुर्यजमानस्यैव न तु ऋत्विगादीनामिति धूमवर्त्मभिरित्यस्य तदन्नतृप्तानां विशेषणत्वायोगात्पृथक्क्रियाद्यध्याहारेण व्याचष्टे धूमवर्त्मभिश्चेति। नैवंभूतास्तदन्नतृप्तेडितत्वादिविशिष्टा न भवंतीति नकारो योजितः। अतः श्रीशिवस्यावधूतसेवितपदवीकत्वात् ॥ २१-२३॥ ❀ ❀ अनुवादं कृत्वा अनुवादमुखेन तद्वाक्यं प्रत्याख्यायेत्यर्थः। उदीचीमिति सप्तम्यर्थे द्वितीया। पाठान्तरे इति तत्रोदीचीति पाठांतरं, तस्यैवोदङ्मुखीति व्याख्येति चक्रवर्त्ती, उदङ्मेति मिश्राः उदास्या इति वय पूर्वत्र लक्षणागौरवात्। पीतदुकूलसंवृतेति सधवानां तत्राचारात् ॥ २४॥ ❀ ❀ नाभिचक्रे मणिपूरके। हृदि अनाहतचक्रे कंठमार्गेण विशुद्धिः चक्रद्वारेत्यर्थः। भ्रुवोर्मध्यम् आज्ञाचक्रम् ॥ २५॥

## श्रीमद्वीरराघवव्याख्या

नन्वमंगलचारत्वात्तन्नामैव न स्मर्तव्यं तत्राह किं वेति। यो रुद्रः श्मशाने जटाः अवकीर्य विक्षिप्य तन्माल्यभस्मनृकपाली श्मशानमाल्यभस्मनरकपालवान् पिशाचैः सह अवसत्तमेवमशिवममंगलाचारं रुद्रं तच्चरणावसृष्टं रज इत्यध्याहारः ये ब्रह्मादयो मूर्द्धभिः शिरोभिर्दधति धारयंति ते त्वदन्ये ब्रह्मादयः मरीच्या[illegible]दिनवब्रह्मप्रभृतयः, यद्वा अतद्गुणसंविज्ञानो बहुब्रीहिः, अन्यथा अजं लोकगुरुं नत्वेत्यादिपूर्वापरविरोधात् शिवाख्यं शिव इति आख्[illegible] नाम यस्य तथाभूतं न विदुः किं विदुरेवेत्यर्थः। अमंगलाचारस्त्वनुकरणमात्रमिति भावः। नन्वस्य परस्य ब्रह्मणो विष्णोः सर्वोत्तमत्वजगत्कारणत्वोपास्यत्वमोक्षप्रदत्वादिप्रतिपादकवेदांतार्थोपबृंहणपरेऽस्मिन्पुराणे मध्ये तत्र तत्र रुद्रादिजीवविशेषस्य का[illegible]र्थकर्मवश्यत्वाद[illegible]प्रतिपाद्य पुनः समस्तात्मनि मुक्तवैरके ब्रह्मादयो ये मूर्द्धभिर्दधति तच्चरणवासृष्टं 'नाहं न यज्ञो न च यूयमन्ये ये [illegible]हभाजो मुनयश्च तत्त्वम्। विदुः प्रमाणं बलवीर्ययोर्वा, त्वमेव भगवन्नेतच्छिवशक्त्योः स्वरूपयोः। विश्वं सृजसि पास्यत्सि क्रीडन्नूर्णपदो यथा ॥ अहं ब्रह्मा च शर्वश्च जगतः कारणं परम्। त्रयाणामेकभावानां यो न पश्यति वै भिदाम् ॥ सर्वभूतात्मनां ब्रह्मन् स शांतिमधिगच्छती'त्यादिपु भवानीब्रह्मविष्ण्वादिवचनेषु सर्वोत्तमत्वजगत्-

कारणत्वोपास्यत्वादीन् विरुद्धान् प्रतिपादयन् भगवान्पाराशर्यः कथं विश्वसनीय इति चेन्न, अत्र पुराणे परस्परविरुद्धार्थकथनं न क्वाप्यस्ति, क्वचित्प्रतीयमानमपि देवतांतरस्योत्तमत्वकारणत्वोपास्यत्वादिकं प्रतर्दनाधिकरणन्यायेन रुद्रादिशरीरकपरमात्माभिप्रायकं रुद्रादेर्भगवदावेशावतारत्वाद्वा भगवद्दृष्ट्योपपन्नमेतत्। अथ वा यथावस्थितभूतपूर्ववृत्तांतस्य वास्मिन्पुराणे कथनात् तत्र तत्र कथासु भवानीप्रभृतिभिर्यानि वाक्यान्यभिहितानि तेषामेवात्र निबद्धत्वात्तत्र भवान्यादिवाक्यानां पतिपाराध्र्यब्रह्मात्मकत्वप्रशंसात्मकत्वादितात्पर्यविशेषप्रवृत्तत्वान्न पाराशर्येण विरुद्धमभिहितम्। नन्वेवमपि ब्रह्मात्मकत्वेनापि रुद्राद्युपासनमपि कर्त्तव्यमिति 'यद्द्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसंगादघमाशु हंति। पवित्रकीर्तिं ये मूर्द्धभिर्दधति तच्चरणावसृष्टमि'त्यादिवचनेभ्यः प्रतीयते क्वचित् क्वचित्सात्त्विकतंत्रे 'नान्यं देवं नमस्कुर्यान्नान्यं देवं निरीक्षयेत्। नान्यं प्रसादमारोहेन्नान्यदायतनं विशेदि'त्यादिभिर्देवतांतरवंदनादिप्रतिषेधः तथा तद्भक्तैः सहदर्शनसमानासनसंस्पर्शसंभाषणदृष्टिभुक्त्यादयः प्रतिषिद्धाः, प्रत्युत देवतांतरतद्भक्तादयस्तत्र तत्र निंद्यंते। अतः सात्त्वतैतत्पुराणयोर्विरोधः, नैवं, ब्रह्मोपासनं हि द्विविधं सद्वारकमद्वारकं चेति। तत्र सद्वारकोपासनं नाम रजस्तमःप्रकृतिब्रह्मरुद्रादिजीवशरीरकपरमात्मोपासनम्। अद्वारकं तु शुद्धसत्त्वमयस्वेच्छोपात्तदिव्यमंगलविग्रहविशिष्टस्य निरस्तनिखिलदोषस्यानंतकल्याणगुणाकरस्य श्रियः पत्युर्नारायणस्योपासकरुच्यनुसारेण वासुदेवसंकर्षणरामकृष्णादिव्यूहविभवादिभेदेनोपासनम्। तत्राद्यमुपासनं तत्तत्फललिप्सुभिः कार्य्यं, द्वितीयं तु मुमुक्षुभिः कामिभिश्च। एतच्च सर्वं भगवता गीताचार्येणैवाभिहितम् 'यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छती'त्यादिना 'अनन्याश्चिंतयंतो मामि'त्यादिना 'देवान् देवयजो यांती'त्यादिना च। अत्राप्युपक्रमे प्रथमस्कंधेऽभिहितं 'रजस्तमप्रकृतयः समशीलान् भजंति वै। पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवः॥ श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युरि'ति तथा द्वितीये 'अकामः सर्वकामो वा मोक्षकाम उदारधीः। तीव्रेण भक्तियोगेन यजेत पुरुषं परमि'ति, वक्ष्यते च 'धर्मार्थकाममोक्षाणां य इच्छेच्छ्रेय आत्मनः। एकमेव हरेस्तस्य कारणं पादसेवनमि'ति। एवं स्थिते द्विविधयाप्युपासनया अव्यभिचारिण्यैव भवितव्यमिति मुमुक्षया भजतां स्वोपास्याद्देवतांतरवैभवादिदर्शनेन नमस्कारादिकरणेन च स्वदेवताभक्तिर्व्यभिचरिता स्यादिति सर्वथा मुमुक्षूणां देवतांतरभजनं निषिध्यते, सर्वदेवतानां ब्रह्मात्मकत्वेनानुसधानं त्वविरुद्धमेवेति न सात्त्वतैतत्पुराणयोर्विरोधः। देवतांतरतद्भक्तादिनिंदा तु 'नहि निंदा निंद्यं निंदितुं प्रवृत्ता, किंतु निंद्यादितरत्स्तोतुमि'ति न्यायेनोपपन्नेत्येवावगंतव्यम्॥ १६॥ ❀ ❀ भवतु, 'बहुधा भवो मयाऽभिभूतस्तथापि किं भवत्या भवितव्यमि'त्यत्राह कर्णाविति द्वाभ्याम्। धर्मावितरि धर्मरक्षके ईशे ईश्वरांशभूते महत्तमे असृंणिभिर्निरंकुशैरनिवारितैर्नृभिर्दुर्जनैरस्य माने अधिक्षिप्यमाणे सति यद्यधिक्षेपं शृण्वन् सुजनः अकल्पः विनिंदकदुर्जनशिक्षायामसमर्थस्तर्हि कर्णौ श्रोत्रे आच्छाद्य ततो निरयान्निर्गच्छेत्। यदि प्रभुः समर्थश्चेदुशतीं दुष्टां जिह्वां प्रसह्य बलात् छिंद्यात् ततः स्वयमप्यसून् प्राणान् विसृजेदिति यत्स धर्मः॥ १७॥ ❀ ❀ अतः शितिकंठगर्हिणः शंकरद्वेषिणस्तव अपादानस्यैव शेषत्वविवक्षया षष्ठी, उत्पन्नं मम मदीयं कलेवरं न धारयिष्ये प्रमादादापन्नस्याऽपवित्रस्य त्यागं विना न शुद्धिरिति दृष्टांतेनाह मोहाज्जग्धस्य भक्षितस्य जुगुप्सितस्य दुष्टस्यांधसोऽन्नस्य उद्गिरणं वमनमेव पुनर्विशुद्धिं प्रचक्षते कथयंति॥ १८॥ ❀ ❀ ननु वृथा किमेवमागृह्णासि यतोऽसावमंगलो रुद्रो वैदिकं पंथानमुल्लंघ्य वर्तते। अतो मया वैदिकमार्गानुवर्तिना श्रेष्ठेनाक्षिप्त इत्यत्राह—स्वे स्वात्मनि लोके लोक्यते परिशुद्धमनसा दृश्यत इति लोकः ब्रह्म तस्मिन् रममाणस्य महामुने रुद्रस्य मतिर्वेदवादान् 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति, अपाम सोमममृता अभूमे'त्यादीन् कर्मप्ररोचकानर्थवादान्नानुवर्तते तेषु नासक्तो भवति। निवृत्तिमार्गनिष्ठस्य न प्रवृत्तिमार्गे रुचिरुत्पद्यत इति न तस्य वैदिकपथाऽननुवर्तनमिति भावः। अनयोः प्रवृत्तिनिवृत्तिधर्मनिष्ठयोराचारः पृथगेव दृश्यते यथा देवमनुष्ययोर्गतिः पृथगेव देवानां गतिराकाश एव, मनुष्याणां गतिः पृथिव्यामेव, तद्वत् अथापि भवानेव श्रेष्ठस्तथाप्युत्कृष्टः स्वकीये धर्मे स्थितो वर्तमानः परं निकृष्टं न क्षिपेन्नाधिक्षिपेदिति यत् स एव धर्मः॥ १९॥ ❀ ❀ प्रवृत्तिधर्ममपि वैदिकत्वाविशेषात्किमिति नानुवर्तते भव इत्यत्राह कर्मेति। प्रवृत्तं स्वर्गादिफलोद्देशेन प्रवृत्तं कर्म तथा निवृत्तं फलकामनातो निवृत्तं च कर्म उभयोर्लिंगं फलाभिसंधिरहितत्वसहितत्वाभ्यां चिह्नाभ्यां युक्तं यथा भवति तथा वेदे विविच्य आश्रितं 'स्वर्गकामो यजेत' 'शांतो दांत उपरतस्तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसा नाशकेन धर्मेण पापमपनुदती'त्यादिवेदे असांकर्येण यद्यपि विहितं तथापि तद् द्वयं प्रवृत्तिनिवृत्तिभेदेन द्विविधं कर्म यौगपद्येनैककर्त्तर्येकस्मिन्नधिकारिणि विरोधिपरस्परविरुद्धमतो ब्रह्मणि ब्रह्मज्ञाने कर्म प्रवृत्तं निवृत्तं चोभयं कर्म नच्छंति न प्राप्नोति साधनतामिति शेषः। केवलं निवृत्तं कर्मैव ज्ञानयोगानुगुणं न तूभयमित्यर्थः। निवृत्तं कर्म शिवेनापि क्रियत इति भावः॥ २०॥ ❀ ❀ यत एवोभयविधं कर्माधिकारिभेदेन व्यवस्थितमत एवास्मदनुष्ठितनिवृत्तधर्मसाध्या अणिमादयः सिद्धयः प्रवृत्तिधर्मपरायणानां भवतां न संतीत्याह—हे पितः, अस्मदाश्रिता अस्माभिराश्रिताः परिगृहीता इत्यर्थः। पदव्यो अणिमादयः सिद्धयः वः युष्माकं मा न संतीत्यर्थः। तर्ह्यस्माकं सिद्धयो रुद्रस्य न संतीति चेत्तत्राह। या भवदीयाः स्वर्गादिपदव्यस्ताः अनुधूमवर्त्मभिः धूमादिमार्गप्रदयज्ञादिकर्मानुयायिभिस्तदन्नतृप्तैर्यज्ञियेन कुत्सितान्नेन तृप्तैरसुभृद्भिः प्राणिभिर्यज्ञशालास्वेवेडिताः स्तुताः। अस्मदाश्रितास्तु पदव्यः अव्यक्तलिंगा दुरवगमचिह्ना दुर्विभाव्या अवधूतैर्निरस्तनिखिलजरामरणादिसांसारिकधर्मैः सेविताः परिगृहीताः। अतः फलतोऽनुष्ठानतश्च महदेव वैलक्षण्यं प्रवृत्तिनिवृत्तिधर्मयोरिति न महत्तमानां प्रवृत्तिधर्मे रुचिरुत्पद्यत इति भावः॥ २१॥

❀ ❀ किं बहुनोक्तेन सर्वथा स्वदेहं त्यक्ष्यत्येवेत्याह नेति द्वाभ्याम्। हरे रुद्रे कृतागसः कृतापराधस्य तव देहोद्भवेन देहादुत्पन्नेन आर्षत्वात्सापेक्षस्यापि समासः, नित्यसापेक्षत्वाद्वा, एतेन कुजन्मना मदीयेन कुत्सितेन देहेन न प्रयोजनम् किंतु मलम्। ननु श्लाध्यमिमं देहं कथं त्यक्ष्यसि तत्राह कुजनस्य तव प्रसंगात्संबंधात् मम व्रीडा लज्जा अभूत्। अतो महतामहद्यकृद्विप्रियकर्त्ता देहः तस्माद्य जन्म तद्धिक् निंदितत्वत्संबंधादश्लाघ्यमित्यर्थः॥ २२॥ ❀ ❀ किंच वृषभध्वजो रुद्रः परिहासादिषु नर्मोक्तिषु मां दाक्षायणीति संबोधयन् त्वत्संबंधकं गोत्रं नाम यदा आह गृह्णाति तदाहं व्यपेतनर्मस्मितं व्यपेतं अपगतं नर्मपरिहासः स्मितं च यथा भवत्येवं सुदुर्मना अतिदुखितचित्ता भवामि तत्तस्माद्धि निश्चितमेव तत्कुणपप्रायं त्वदंगाज्जातमिदं कलेवरं व्युत्सृक्ष्ये त्यक्ष्यामि॥ २३॥ ❀ ❀ हे शत्रुहन्! हे विदुर! इति उक्तप्रकारेण अध्वरे यज्ञे दक्षमनूद्य प्रत्युक्त्वा उदीचीमुत्तरदिशं प्रविश्येति शेषः। शांतवाक् गृहीतमौना निषसाद उपविष्टवती, तत्र जलं स्पृष्ट्वा आचम्येत्यर्थः। पीतदुकूलवस्त्रेण संवृता दृक् दृशमार्षत्वात् द्वितीयायाः लुक् निमील्य योगपथं योगिनां देहत्यागप्रकारं समाविशत् आश्रितवतीत्यर्थः॥ २४॥ ❀ ❀ योगपथाश्रयणमेवाह कृतेति। जितमासनं यया सा क्रमरहिता अनिंदिता निर्दुष्टा सती अनिलौ प्राणापानौ ऊर्ध्वाधोवृत्तिनिरोधेन समानौ समानवृत्ती नाभिचक्रे कृत्वा तत उदानवायुमुत्थाप्य धिया सह शनैर्हृदि स्थाप्य स्थापयित्वा उरसि स्थितमुदानवायुं कंठात्कंठमार्गेण भ्रुवोर्मध्यमनयत्॥ २५॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

त्वदन्ये ब्रह्मा आदिः पिता येषां ते ब्रह्मादयः ब्रह्मपुत्राः सनकादयः यो रुद्रस्तन्माल्यभस्मनृकपाली तस्मिन् श्मशाने विद्यमानप्रेतालंकारमालायोग्यास्थिभस्मनरकपालवान् जटा अवकीर्य प्रसार्य पिशाचैः सह श्मशानेऽवसदिति तं शिवाख्यमशिवं विदुः किं न विदुरेव नित्यशुद्ध इत्येव विदुः। कुत इति तत्राह ये मूर्धभिरिति। ये सनकादयः तच्चरणावसृष्टरजआदिकं मूर्द्धभिर्दधति। अनेन शिवस्याशिवत्वे ज्ञानपूर्वकं तच्चरणरजोधारणाऽसंभवस्तत्कारणाच्चातो नित्यशुद्ध इति तर्कः सूचितः। मूर्धभिर्दधतीत्यनेन पुरुषार्थापेक्षया पादपांसुधारणा न त्वन्यथेति ध्वनयितुं तदुक्तं 'सुपर्णशेषप्रागीशब्रह्मविष्णून् श्रियं गिरम्। ऋते नमति नो रुद्रं क एव पुरुषार्थभागिति॥ १६॥ ❀ ❀ सभायां धर्मसंकटे प्राप्ते सभ्यैः कर्तव्यं धर्ममाह कर्णाविति। धर्मस्याधिपतरि ईशे स्वामिनि। अघृणिभिर्दयागुणरहितैर्नृभिरस्य मानेऽधिक्षिप्यमाणे सति सभ्यो यद्यकल्पः शिक्षितुमसमर्थस्तर्हि स्वकर्णौ पिधाय निरियात्तस्माद्देशान्निर्गच्छेत् प्रभुश्चेदसतां रुशतीं परुषभाषिणीं जिह्वां प्रसह्य छिंद्यात्। तथा प्रभुत्वाऽसंभवेऽसून्वा विसृजेत्स धर्म इत्यन्वयः॥ १७॥ ❀ ❀ अपिशब्देनेदमेव संभावितमिति ध्वनितं स्पष्टयति अतस्तवेति। तव वीर्यादुत्पन्नं शितिकंठगर्हिणो नीलकंठद्वेषिणः अस्मिन्नर्थे न्यायमाह जगधस्येति। जग्धस्य भुक्तस्यांधसोऽन्नस्योद्धरणे वमनं प्रचक्षते वदंति तावद्विद्वांस इति शेषः॥ १८॥ ❀ ❀ ननु ममापराधमेव वदसि मातुलत्वेन गुरुं मां दृष्ट्वाऽभ्युत्थानादिकमकुर्वतस्तस्यापराधं किं न स्मरसीति तत्राह न वेदवादानिति। ज्ञानित्वेन स्वेच्छावृत्तिविधमहामुनेः सर्वज्ञतमस्य शिवस्य स्व एव लोके स्वबिंबभूते प्रकाशमाने हरौ रमतो रममाणस्य तद्दर्शनसुधापानेन नित्यतृप्तस्य मतिर्वेदवादान् वर्णाश्रमप्रयुक्तानभ्युत्थानादिवेदविधीन्नानुवर्तते नानुसरति लौकिकविलक्षणत्वात्। तत्र दृष्टांतमाह यथेति। यथा देवमनुष्ययोर्गतिर्मार्गः पृथग्भिन्नः तस्मात्स्व एव धर्मे स्वविहिते धर्मे स्थितः परमन्यं न क्षिपेत् न दूषयेत्। अतस्तवैवानर्गलोपराध इति भावः॥ १९॥ ❀ ❀ ननु ज्ञानिनः प्रवृत्तिकर्मासंभवेपि निवृत्तिकर्म संभवतीति तत्राह कर्मेति। वेदे प्रवृत्तं निवृत्तमित्युभयलिंगमुभयविधलक्षणं कर्म विविच्याश्रितं प्रतिपादितम्। 'स्वर्गाद्यर्थं प्रवृत्तं स्यान्निवृत्तं मुक्तये तु यदि'ति विवेकं कृत्वा कथितमित्यर्थः। ततः किं तत्राह विरोधीति। तदयं यौगपद्युगपदेककालमेककर्तरि विरोधि प्रकाशतमसोरेकत्रवद्विरुद्धं स्यादित्यर्थः। ततश्च प्रकृते किं तत्राह तथेति। द्वयमित्यनुवर्तते यथा द्वयमेकस्मिन्कर्तरि विरुद्धत्वादुपरतं तथाऽऽब्रह्मणि सम्यक् ज्ञानिनि जीवन्मुक्तेपि द्वयं कर्म नर्च्छति न प्राप्नोति "आब्रह्मस्थितधीर्जीवन्मुक्तश्चेत्यभिधीयते। यस्तस्य न निवृत्तं च प्रवृत्तं कर्म चेष्यते" इति वचनात् ब्रह्मण्यद्वितीये सद्वितीयकर्त्राश्रयं न घटत इत्यर्थस्यानुपपत्तेरुक्त एवार्थः। नन्ववबध्नन्पुरुषं पशुमित्यादिश्रुतेर्देवानामपि कर्मप्रतीते रुद्रस्यापि देवांतर्भावात्तस्य कथं तदनर्हत्वमुच्यत इति चेदुच्यते नास्माभिर्देवस्य कर्ममात्राभाव उच्यते किं तु विष्णोराज्ञया नियताधिकारिकं नियमनामकं कर्मास्त्येव मुक्तौ सुखोद्रेकहेतुत्वात्तदुक्तं "यत्तु देवाः प्रकुर्वंति स महानियमः स्मृतः। स महानियमो नाम कर्म यत्त्वाधिकारिकम्॥ महतो नियमाद्विष्णोः प्रीत्या मुक्तौ सुखोन्नतिः। केचिन्नि[1]वृत्तमित्याहुर्महानियममप्युत" इति। एतदपि उत वेदे विविच्येति ध्वनितं तस्मान्महानियमाख्यकर्माधिकृतस्य स्थितप्रज्ञस्य त्वन्निंदया गुणहीनत्वं नाशंकनीयं "यदि देवाश्च ऋष्याद्या निंद्यंते यत्र कुत्रचित्। न तावता गुणैर्हीना स्थितप्रज्ञा हि ते मताः॥ यथायोग्यं तु तात्पर्यं निंदाया अन्यदेव तु" इति वचनात्॥ २०॥ ❀ ❀ अनंतरातीतग्रंथेन रुद्रदक्षयोः पृथङ्मार्गत्वं ध्वनितं कंठोक्तीकरोति मा व इति। हे पितरस्मदाश्रिता अस्माभिराश्रिताः अवधूतसेविताः

---

१. अत्रेत्थं प्रमेयं-कर्म द्विविधं प्रवृत्तं निवृत्तं चेति। स्वर्गादीच्छया क्रियमाणं प्रवृत्तं, निवृत्तमपि द्विविधं मोक्षोद्देश्येन क्रियमाणं तदनुद्देश्येन केवलमीश्वरप्रीत्यर्थमिति एतदेवाधिकारिकमुच्यते तत्राद्यं देवानां नास्त्येव द्वितीयं महानियमसंज्ञकं तेषामस्तीति—या०।

सनकादियोगींद्रैरभ्यस्ता अव्यक्तलिंगा अन्यैरज्ञातलक्षणा अर्चिरादिमार्गलक्षणा याः पदव्यस्ता वो युष्माकं मा नैव भवंति। यज्ञशालायामासनेन दीक्षालक्षणेन धूमवर्त्म धूमादिमार्गो येषां ते तथोक्ताः तेषां युष्माकं कदन्नतृप्तैः पशुमांसलक्षणेनान्नेन अलंबुद्धिं गतैरसुहृद्भिः पशुप्राणहारिभिः पुरुषैरीडिता या धूमादिलक्षणपदव्यस्ता अस्माकं नैवेति यदतः पृथङ्मार्गत्वात् त्वन्निंदया न रुद्रस्य गुणहीनत्वम्। अतो न तस्य दूषणमुचितमिति भावः ॥ २१ ॥ ❀ ❀ किं बहुनोक्तेनेति स्ववैराग्यमाश्रावयति एतेनेति। हरे रुद्रे कृतागसः— कृतापराधस्य तव देहाद्भवेन देहाजातेन एव कुजन्मना लोके निंदितोत्पत्तिना। कस्मादीदृशं वैराग्यं तवेत्यत आह व्रीडेति। कुत्सितश्चासौ जनः कुजनो भवादृशस्तस्य प्रसंगतो जन्यजनकसंबंधकथालक्षणस्तस्मात् कारणांतरं चाह—तज्जन्मेति। यन्महतामवद्यकृत्मनोविप्रियकारि तज्जन्म धिक् निंदितमित्यर्थः ॥ २२ ॥ ❀ ❀ . ततः किं फलितं तत्राह गोत्रमिति। वृषध्वजो भगवान् दाक्षायणी दक्षपुत्रीति त्वदीयं गोत्रं त्वन्नाम्नोपेतं नामविशेषं यदा यावत्सुदुर्मनास्त्वन्नामस्मरणमात्रेण सुतरां विषण्णमना अत एव व्यपेतनर्मस्मितमिति क्रियाविशेषणं अपगतनर्मवचनयुक्तमंदहासो यथा भवति तथा मां प्रत्याह वक्ष्यति, हे तात तावत्ततः पूर्वमेव त्वदंगजं तव शरीरादुत्पन्नं कुणपं कुत्सितशरीरमुत्स्रक्ष्य इत्यन्वयः। वृषध्वजः स्नेहवशाद्यदा दाक्षायणीति त्वदीयं गोत्रमाह। तावत्तदा आशु त्वदीयद्वेषस्मरणाद्व्यपेतनर्मस्मितं सुदुर्मना भवत्यत इतः परं तथा मा भूदिति कुणपमुत्स्रक्ष्य इति वा। मम देहत्यागतुल्य इति द्योतनायात्मनेपदप्रयोगः ॥ २३ ॥ ❀ ❀ एवं देहत्यागस्यायत्नसाध्यत्वेपीतिकर्तव्यतायाः फलाधिक्यं स्यादिति सूचनाय योगिजनशिक्षणाय च देहत्याग इतिकर्तव्यतां दर्शयत्यस्मिन्नध्याये इतीति। उदीच्यां दिशमुद्दिश्य क्षितौ निषसादेत्यन्वयः। धूमाद्यध्वनि रमयतीत्यध्वरस्तस्मिन्यज्ञे स्पृष्ट्वाचम्य पीतं च तत् दुकूलं च तेन संवृताच्छन्ना दृक् दृशौ निमील्य निमीलनयुक्तदृग्वा योगपथं देहोत्क्रमणयोगमार्गम् ॥ २४ ॥ ❀ ❀ तं विवृणोति कृत्वेति। जितासना प्राणादिसंचारवेगेन देहसंचलनरहिताऽत एवाऽनिंदिताऽकुत्सिता सा सती प्रथमं रेचकपूरके कृत्वाऽनिलौ प्राणापानौ समानौ ऊर्ध्वाधोवृत्तिरहितौ कृत्वा एकविषयगती विधाय मूलाधारादुत्क्रमणकर्तारं सुषुम्नासंचारिणमुदानमुत्थाप्योर्ध्वमुखं कृत्वा नाभिचक्रमानीय ततो नाभिमंडलाद्धिया निश्चलया बुद्ध्या शनैरुद्वेगं विना हृदि स्थाप्य उत्स्थितं वायुं कंठं नीत्वा कंठाद्भ्रुवोर्मध्यमनयदित्यन्वयः। यद्वा सर्वसन्धिसंचारिणं वायुं व्यानमूर्ध्वाधोगतिनिवृत्तौ प्राणापानौ समानवायुनैकीकृत्य तं समानं वायुं सोदानमुदानगत्या सहितमुदानेनैकीकृत्योपर्युपरिस्थानं जीवेन सहानयदिति। अत्र द्रव्यनयनशक्तिमता वायुना जीवसंज्ञद्रव्यनयनं न तु तन्मात्रं तस्य योगिनो नित्याभ्यस्तत्वात् ॥ २५ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

किं वेति वाशब्दः कटाक्षे। किं किमिति न विदुरिति हेतुजिज्ञासा तस्यासूयामात्रात्मताख्यापनाय। यदि च किमिति शिरश्चालने तथापि सोपहासतया वेदनाभाव एव तात्पर्यं सोपहासत्वेनैव विशुद्धं हेतुमाह ये तच्चरणा इति ॥ १६ ॥ ❀ ❀ कर्णाविति। अतिसामर्थ्ये अधिक्षेपकजिह्वाच्छेदस्वप्राणत्यागौ। ततो न्यूनत्वे तच्छेदतत्त्यागसकर्णपिधाननिर्गमा ज्ञेयाः ॥ १७ ॥ ❀ ❀ यस्मात् श्रीशिवादिसंकोचात् तच्छेदे समर्था नाहम् अतस्तवेत्यादि। जुगुप्सितस्य अपथ्यस्य विशुद्धिं रोगशान्तिम् १८-२१ ॥ ❀ ❀ अलंशब्दोऽत्र निवारणे 'अलं भूषणपर्याप्तिशक्तिवारणवाचकमि'त्यमरः। निवारणं च प्रयोजनाभावः यथा अलमतिविस्तरेणेत्यादौ। तस्य च वीप्सा अतिशये, नञ् चात्र शिरश्चालने। ततश्चायमर्थः एतेन देहेन मम व्रीडा नाभूत् किं ? अपि त्वभूदेव। तस्मादेतेनात्यर्थमेव प्रयोजनं नास्तीति। यद्वा एतेनालं प्रयोजनाभावो न, अपि तु प्रयोजनाभाव एव तस्मादेते नालमेवेत्यर्थः ॥ २२-२३ ॥ ❀ ❀ पीतदुकूलेत्यपि तादृश्यास्तदवस्थायामाचारतया ज्ञेयम्। सतीति पूर्वेणान्वयः ॥ २४-२६ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

यदुक्तं शिवापदेशो ह्यशिव इति यच्चोक्तं प्रेतावासेष्वित्यादि तदाक्षिपन्त्याह। यो जटा अवकीर्य श्मशानेऽवसत् तस्य श्मशानस्य माल्यानि भस्मानि नृकपालानि च भूषणत्वेन सन्ति यस्य तं शिवाख्यम् अशिवं त्वत्तोऽन्ये ब्रह्मादयो न विदुः किं विदन्त्येवेति चेत् न। तथा सति तेषां तद्दास्यानुपपत्तेरित्याह तच्चरणादवसृष्टं गलितं निर्माल्यं ये मूर्द्धभिर्धारयन्ति ॥ १६ ॥ ❀ ❀ ननु त्वं साधून् लक्षयन्ती परेषु दोषदर्शनं निषिद्धयसि अथ च मां विप्रं प्रजापतिपतित्वेन जगत्पूज्यं पितरमपि निन्दसीति त्वमप्यसाधुतरैवेति तत्र सम्प्रति निन्दायाः का वार्त्ता शिवद्विषं त्वां यदहं न हन्मि एष मे महापराध इत्यत्र धर्मतत्त्वं शृण्वित्याह कर्णाविति। धर्माऽवितरि धर्मरक्षके महत्तमे ईशे स्वामिनि असृणिभिर्निरंकुशैर्नृभिरस्यमाने अधिक्षिप्यमाणे सति कर्णौ पिधाय निरयान्निर्गच्छेत्। यत् यदि अकल्पः हन्तुं मर्तुं वा यदि न समर्थः स्यात्। प्रभुश्चेद्यदि च समर्थस्स्यादित्यर्थः तदा असतां निन्दकानां रुशतीमकल्याणवादिनीं जिह्वां प्रसह्य बलादेव छिन्द्यात्ततोऽपि निन्दाश्रवणप्रायश्चित्तं कुर्वन् स्वयं

प्राणान् विसृजेत्। यद्वा जिह्वाच्छेदनाद्यदि स निन्दकः प्राणान् विसृजेत् तदा धर्मः तस्यानन्तनरकभोगप्रशमनात्तद्वध-लक्षणोऽधर्मो न भवतीत्यर्थः। तत्रेयं व्यवस्था-क्षत्रियस्य दण्डेऽधिकारात् स एव निन्दकजिह्वां छिन्द्यात्। अपरेषामन्यदंडेऽनधि-कृतां त्रयाणां मध्ये वैश्यशूद्रौ तनुत्यागरूपं स्वदण्डमेव कुर्याताम्। ब्राह्मणस्य शरीरदण्डानौचित्यात् स तु कर्णौ पिधाय विष्णुं स्मरन्नि-र्गच्छेदिति॥ १७॥ ❀ ❀ अहन्तु सर्वैश्वर्यात् सर्वसामर्थ्याच्च त्वां स्वञ्च ब्रह्माण्डकोटीरपि हन्तुं शक्नुवत्यपि स्वभार्याद्वारा शिव एव दक्षं जघानेति शिवयशोहानिभीत्या त्वां न हन्मि। स्वप्रायश्चित्तन्तु करिष्याम्येवेति अरे पापिन् स्वचक्षुर्भ्यां पश्यन्त्याह अत इति। तव त्वत्तः प्रमादाद् गृहीतस्याऽपवित्रवस्तुनस्त्यागं विना न शुद्धिरित्यर्थान्तरन्यासेनाह। जग्धस्य भुक्तस्यान्धसोऽन्नस्य उद्धरणं वमनम्॥ १८॥ ❀ ❀ देहं त्यजाम्येव किन्तु त्वया शास्त्रार्थमविदुषा भगवति श्रीरुद्रे निर्दोषेऽप्यारोपितं लुप्तक्रियायाश्शुचय इत्यादिदोषकण्टकमुद्धृत्यैवेत्याह नेति। स्व एव लोके स्वात्मन्येव रममाणस्य महामुने-र्मतिर्वेदवादान् विधिनिषेधरूपान् अनुलक्ष्यीकृत्य न वर्त्तते तत्रानधिकारादेवेति भावः। यदुक्तं "कुशलाचरितैरेषामिह चार्थो न विद्यते। विपर्ययेण चानर्थं" इति "स्वैरञ्चरन्ति मुनयोऽपि न नह्यमाना" इति। अतो मुक्तानां बद्धानाञ्च मिथः पृथगेव गतिरित्यत्र दृष्टान्तः। यथेति। अत एव स्वे स्वीयें धर्मे स्थितः परं न क्षिपेदिति विधिः॥ १९॥ ❀ ❀ ननु प्रवृत्तं कर्म शिवो मा करोतु निवृत्तं कथं न करोतीत्यत आह-कर्म प्रवृत्तमग्निहोत्रादि निवृत्तं शमदमादि ऋतं सत्यमेव। यतः वेदे आश्रितं विहितं तच्च विविच्य अधिकारव्यवस्थयैव नत्वविशेषेण व्यवस्थामेवाह-उभयं रागो वैराग्यञ्च चिह्नं यत्र तत् रागे सत्यग्नि-होत्रादिवैराग्ये सति शमदमादीनि विविच्याधिकारिद्वये व्यवस्थितमित्यर्थः। तत् कर्मद्वयं यौगपदेन यौगपद्येनैकस्मिन् कर्त्तरि विरोधि रागवति निवृत्तं विरोधि वैराग्यवति प्रवृत्तं विरोधि अविहितमित्यर्थः। तथैव ब्रह्मणि तद्द्वयं प्रवृत्तं निवृत्तञ्चेत्यु-भयमपि न ऋच्छति नाप्नोति। यथा प्रवृत्तनिवृत्तयोः परस्परधर्माऽकरणे न प्रत्यवायस्तथैवेश्वरस्य तदुभयकर्माऽकरणेऽपीति भावः॥ २०॥ ❀ ❀ हन्त पुत्रिके ममैवैतदभाग्यं यत् परमाढ्यतमस्य सदाचारस्य मम कन्या त्वं भिक्षुककदाचारगृहे पतितासि। तदपि सगुणबहुलनिधिस्त्वं स्वभर्तुरपकर्षं यन्न सहसे तत्तव पतिव्रताचूडामणेरुचितमेवेति तत्र सभर्त्सनमाह मेति। हे पितः! अस्माभिराश्रिता आश्रिताः पदव्यः अणिमादिसिद्ध्यैश्वर्यवैराग्यज्ञानप्रेमादिसुखवत्यः वो युष्माकं मा। जन्मकोटि-भिरपि न भविष्यतीत्यर्थः। ननु कुत एवं ब्रूषे ताः सिद्धयोऽप्यस्माकं संत्येव। नेत्याह-याः पदव्यो यज्ञशालासु न सम्भवन्ति तदन्नतृप्तैरुदरम्भरैः काकतुल्यैर्धूमवर्त्मभिः कर्मिभिर्न स्तुताः किन्त्वव्यक्तलिङ्गास्तादृशैरलक्ष्यप्रभावा अवधूतैः सनकादिनारदाद्यैः सेव्यन्ते। वर्त्तमाने क्तः॥ २१॥ ❀ ❀ एवं दक्षं विनिंद्य तत्सम्बन्धात् स्वदेहं निन्दति नैतेनेति। एतेन मम देहेन न अलम्, अपि त्वलमलमेव कुतः हरे शिवे कृतागसस्तव देहादुद्भूतेन यो महतामवद्यकृत् भक्तापराधि एतत् जन्म धिक्॥ २२॥ किञ्च। परिहासादिषु त्वदीयं त्वत्सम्बन्धज्ञापकं गोत्रं नाम त्वं दाक्षायणी भवसि तव मत्सरद्वेषनिन्दावज्ञादिकं स्वधर्म एवेति यदा वृषध्वज आह तदाहं विगतनर्मस्मितं यथा स्यादेवं सुदुर्मना भवामि। तत्तस्मात् हि निश्चितम् एतत् कुणपप्रायं व्युत्सृक्ष्ये त्यक्ष्यामि॥ २३॥ ❀ ❀ अनूद्य दक्षं लक्ष्यीकृत्य उक्त्वा हे शत्रुहन्! स्वदेहत्यागमिषेण दक्षं स्वशत्रुं सा जघानैवेति भावः। उदीची उदङ्मुखी। उदीचीमिति पाठे उदीच्यां दिशि दृग्दृशं पीतदुकूलेति मर्तुकामानां कुसुम्भरञ्जितवसन-धारणौचित्यात्॥ २४॥ ❀ ❀ योगमार्गमेवाह। अनिलौ प्राणापानौ ऊर्ध्वाधोवर्त्तिनौ निरोधेन समानौ एकरूपौ नाभिचक्रे कृत्वा तत उदानं प्रति उत्थाप्य धिया सह हृदि स्थापयित्वा॥ २५॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यदुक्तं शिवापदेशो ह्यशिव इति, प्रेतावासेष्वित्यादि च तदाक्षिपंत्याह किं वेति। यः श्मशाने जटा अवकीर्य विक्षिप्य तस्य श्मशानस्य माल्यानि भस्मानि नृकपालानि च भूषणतया सन्ति यस्य स तथा भूतपिशाचैः सहावसत् एवंभूतं तं शिवाख्यम-शिवं "इत्यादिष्टः स गुरुणा भगवान्नीललोहित" इत्याद्युक्तरीत्या शिवस्य पूज्या ब्रह्मादयो न विदुः। त्वदन्ये ये ब्रह्मपुत्राः तस्य शिवस्य चरणावसृष्टं रजो मूर्द्धभिर्दधति ते च किं न विदुरित्यन्वयः॥ १६॥ ❀ ❀ धर्मस्य अवितरि रक्षके जने भागवते ईशे भगवति वा असृणिभिर्निरंकुशैर्नृभिरस्यमाने आक्षिप्यमाणे सति यद्यकल्पस्तर्हि कर्णौ पिधाय ततः निर्यात् निर्गच्छेत्। प्रभुः कल्पश्चेत् रुशतीं रूक्षवादिनीमसतां तेषां जिह्वां प्रसह्य बलात् अपिशब्दाद्यदि स्वदेहादौ भगवद्भागवतनिंदकसम्बन्धो भवेत्तदा असूनपि विसृजेदिति यत्स धर्मः॥ १७॥ ❀ ❀ एतदेवाह अत इति। शितिकंठगर्हिणः नीलकण्ठनिन्दकस्य तव अपादानस्य शेषत्वविवक्षया षष्ठी, उत्पन्नमिदं कलेवरं न धारयिष्ये। यतो मोहाज्जग्धस्य भक्षितस्य जुगुप्सितस्य विषादिदूषितस्यांधसोऽन्न-स्योद्धरणं वमनमेव विशुद्धिं प्रचक्षते कथयन्ति॥ १८॥ ❀ ❀ ननु वेदोक्तकर्मत्यागिनः कुतो धर्माऽवितृत्वमित्यत्राह नेति। स्वे स्वकीये उपास्ये लोके लोक्यते वेदान्तैरिति लोको भगवान् वासुदेवस्तस्मिन् रमतः महतो मुनेः मननशीलस्य भगवद्ध्यान-निष्ठस्य वेदवादान् वेदेषु वादो येषां तान् प्रवृत्तिधर्मान् मतिर्नानुवर्तते तत्रासक्ता न भवति, यथा देवमनुष्ययोः भुवि खे इति च पृथगेव गतिरस्ति तथा प्रवृत्तनिवृत्तजनयोर्गतिः पृथगेवेत्यर्थः॥ १९॥ ❀ ❀ एतदेव विविच्य दर्शयंत्याह कर्मेति। वेदे

प्रवृत्तं निवृत्तं चेति विविच्य ऋतं सत्यमेव कर्माश्रितमभिहितम्। उभयं बन्धमोक्षलक्षणं चिह्नं फलं यस्य तत् "प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम्। आवर्तेत प्रवृत्तेन निवृत्तेनाश्नुतेऽमृतम्" इति सप्तमस्कन्धात् यथा द्वयं ब्रह्मणि न ऋच्छति न प्राप्नोति तथा युगपद्भावो यौगपदेनैककर्त्ता यौगपदैककर्त्ता तस्मिन् विरोधिसंसाराऽधिकारिणि निवृत्तं न प्राप्नोति। ब्रह्माधिकारिणि प्रवृत्तं च न प्राप्नोतीत्यर्थः। भवन्तः संसारिणः प्रवृत्तकर्मनिष्ठाः वयं ब्रह्माधिकारिणो निवृत्तकर्मनिष्ठा इति भावः॥ २०॥ ❀ ❀ एतदेवाह मा व इति। हे पितः या यज्ञशालासु तदन्नतृप्तैरसुभृद्भिर्युष्माभिर्धूमवर्त्मभिः धूममार्गोऽधिकारिभिरीडिता संस्तुतास्ताः पदव्यः प्रवृत्तकर्मरूपाः अस्मदाश्रिता न भवन्ति, याश्चास्मदाश्रिताः अव्यक्तलिङ्गाः ध्यानादिरूपास्ता वो युष्माकं मा न सन्तीत्यन्वयः। ॥ ११॥ ❀ ❀ यो जनो महतामवद्यकृत् तस्माद्यज्जन्म तद्धिक्, अतो हरे कृतागसस्तव देहाद्दुत्पन्नेन कुजन्मना कुत्सित-जन्मना एतेन नास्ति प्रयोजनं किंत्वलमलम्। कुजनस्य तव प्रसङ्गतो मम व्रीडाभूत्॥ २२॥ ❀ ❀ किं च भगवान् वृषभध्वजः यदा दाक्षायणीति त्वदीयं त्वत्सम्बन्धवाचकं गोत्रं नामाह तदा अहं व्यपेतनर्मस्मितं यथा स्यादेवं सुदुर्मनाः अतिदुःखिता भवामि। तस्मादेतत्कुणपं शवप्रायं त्वदङ्गजं त्वद्देहजं शरीरं व्युत्सक्ष्ये त्यक्ष्यामि॥ २३॥ ❀ ❀ हे शत्रुहन्! क्रोधादिरिपुघातिन्! अध्वरे इत्युक्तप्रकारेण दक्षं प्रत्यनूद्यानुवादं कृत्वा शांतवाक् उपरतवाक् उदीची उत्तराभिमुखी क्षितौ निषसाद उपविष्टा सती जलं स्पृष्ट्वा आचम्य पीतेन दुकूलेन वस्त्रेण संवृता दृक् दृशौ निमील्य योगपथं योगिनां शरीरत्यागमार्गं सम्यगाविशत्॥ २४॥ ❀ ❀ सा सती अनिंदिता पतिविमुखजन्यसंसर्गादिदोषरहिता जितासना अनिलौ प्राणापानौ समानौ कृत्वा नाभिचक्रे एकरूपौ संस्थाप्य पुनर्नाभिचक्रतः उदानमुत्थाप्य धिया सह हृदि अनाहतचक्रे स्थाप्य तत उरसि विशुद्धचक्रे स्थितं कृत्वा ततः कंठाद्ब्रह्ममार्गसम्भवात् शनैश्च भ्रुवोर्मध्यमनयत्॥ २५॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

ननु तथा चेत्किमिति श्मशानादिस्थानेषु वसति निषिद्धं चाचरतीति प्रत्यक्षविरोधमाशङ्क्य परिहरन्ती प्राह—किं वेति। त्वत्तोऽन्ये ये ब्रह्मादयस्त्वच्चरणारविन्दावसृष्टं जलादिकं स्वतः पवित्रतया स्वशुद्ध्यर्थं मूर्द्धभिर्दधति धारयन्ति ते सर्वज्ञाः सर्वोपदेष्टारोऽपि किं श्मशाने जटा अवकीर्य प्रसार्य तस्य श्मशानस्य माल्यानि भस्मानि नृकपालानि च भूषणत्वेन सन्ति यस्य स तथाभूतः शिवः पिशाचैः सहावसत् निवासं कृतवान्। अतः शिवाख्योऽप्यशिव एवेति तं न विदुः न जानन्ति। किंशब्दोऽधिक्षेपे। तथा च यदि ते तदाचरणे निन्द्यमिति विदुस्तदा कचित्तथा वदेयुरेव, न तथोक्तवन्तः, प्रत्युत माहात्म्येनादरात्तच्चरणावसृष्टं धारयन्त्यतस्तदन्यथानुपपत्त्या तदाचरणस्यालौकिकत्वेन शुद्धत्वमेवेति ज्ञेयमिति भावः। अत एवालौकिकपदार्थस्य लोकप्रमाणा-सत्तर्कैरनिर्णेयत्वमाह श्रुतिः—'अलौकिकास्तु ये भावा न तांस्तर्केण योजयेत्' इति। एवमीश्वरतत्त्वमविज्ञाय विश्वसृजां सभायां 'लुप्तक्रियायाशुचये' इत्यादि यदनुचितं त्वयोक्तं तज्जन्यं फलं तु भोक्तव्यमेवेत्यत्र किं मया वक्तव्यम्?॥ १६॥ ❀ ❀ दक्षप्रसङ्गात्तत्सभासदामपि दोषोत्पत्त्याऽनर्थोऽवश्यं भावीति सूचयन्ती धर्ममुपदिशति—कर्णाविति। सभायामीशे कर्तुमकर्तुमन्यथाकर्तुं समर्थे धर्मावितरि धर्मरक्षके असृणिभिर्निरङ्कुशैर्नृभिरस्यमानेऽधिक्षिप्यमाणे सति यत् यदि अकल्पस्तेषां निन्दकानां दण्डने स्वप्राणत्यागे वा असमर्थस्तदा स्वस्मिन् दोषसंस्पर्शाभावार्थं यथा महन्निन्दा स्वकर्णपथे न प्रविशेत्तथा कर्णौ पिधाय ततः सभातो निरयात् निर्गच्छेदित्यर्थः। यदि तद्दण्डने प्रभुः समर्थस्तदा तु रुशतीमकल्याणवादिनीमत एवासतीं दुष्टां तेषां जिह्वां प्रसह्य बलात्कारेण छिन्द्यात् कायाद्भिन्नां कुर्यात्। यथा सर्पेण दष्टस्याङ्गुष्ठस्य त्यागे शेषस्य सङ्घातस्य रक्षा भवति, तथा दुष्टत्वात्त-ज्जिह्वानिराकरणमात्रेण सन्निन्दासंभवात् सर्वरक्षा भवतीति तेषामप्यनुग्रह एवेति भावः। यदि पुनरहमिव जिह्वां छेत्तुं समर्थोऽपि संबन्धगौरवेण लोकापवादेन वान्येन वा केनचिद्बलवता कारणेन तत्कर्तुं न प्रवर्त्तेत मर्तुं च समर्थस्तदा ततो महन्निन्दाश्रवणात् असूनपि अपिशब्देनातिप्रियत्वं सूचयति—अतिप्रियत्वेन दुस्त्यजान् प्राणानपि विसृजेत् परित्यजेदित्यर्थः। स धर्म इति। स एवं व्यवस्थया त्रिविधो धर्म इत्यर्थः। एतेन यद्येते सभासदस्त्रिषु पक्षेषु यथोचितमेकं पक्षं नाङ्गीकरिष्यन्ति तदा दोषभागिनो भविष्यन्ति, शिवापमानस्य सत्त्वादिति सूचितम्। अत एव तथैव फलं भाव्यमिति ज्ञेयम्॥ १७॥ ❀ ❀ एवं सर्वान्धर्मतत्त्वं श्रावयित्वा-त्मनो देहत्यागपक्षं निश्चित्य तत्प्रतिजानीते—अत इति। सर्वथा त्वत्संबन्धस्यानर्थहेतुत्वादित्यर्थः। तव त्वत्तः उत्पन्नमिदं दृश्यमानं कलेवरं शरीरं न धारयिष्ये। मया त्वयि किमपराद्धमित्याशङ्क्याह—शितिकण्ठगर्हिण इति, शिवनिन्दकादित्यर्थः। यो हि जगद्धितार्थे विषमपि पीतवांस्तं भवान्निन्दति, अहं भवत्सन्तोषार्थं तदाज्ञामुल्लङ्घ्यात्रागता, ममापि तत्संबन्धादपमानं कृतवानतो महदपराद्धमिति भावः। नन्वेवं देहत्यागेऽपि मत्संबन्धात्त्वयि जातस्य दोषस्य कथं निवृत्तिरित्याशङ्क्य दृष्टान्तेन तत्साधयति—जग्धस्येति। यथा मोहात्प्रमादात् जग्धस्य भक्षितस्य जुगुप्सितस्य निषिद्धस्य अन्धसः अन्नस्य उद्धरणमुद्वमनमेव शुद्धं शुद्धिकारणं प्रचक्षते। हि यस्मात्तेन शुद्धिः पुंसो भवति तथा त्वत्संबन्धिदेहत्यागादेव मम शुद्धिर्भविष्यति, नान्यथेति भावः॥ १८॥ ❀ ❀ ननु यथा शितिकण्ठ-गर्हित्वादिना मामभिनिन्द्य देहत्यागार्थमुद्यतासि तथा शिवस्यापि विहितक्रियात्यागेन प्रत्युत्थानादिना सत्कारयोग्ये मयि तदकरणेन च दुष्टस्य मया प्राप्ताधिकारेण देवपङ्क्तिबहिष्करणमुचितमेवेति मत्वा क्रोधं परित्यज्य देहपरित्यागो न कर्तव्य इत्याशङ्क्य

धर्मव्यवस्थां प्रदर्शयन्ती तद्दोषं परिहरति—नेति। स्वे लोके आत्मभूते सर्वाधिष्ठाने ब्रह्मणि परमानन्दे भगवति रमतो ध्यानेन प्रत्यक्षीकृत्य तत्र विलसतो मतिर्बुद्धिर्वेदवादान् नानासिद्धान्तानुसारेण विधिनिषेधरूपान् नानुवर्त्तते नानुसरति तदनुरोधेन न प्रचरति। एतेन येऽनात्मविदो देहाद्यभिमानिनो भगवद्विमुखास्तेषामेव मतिर्वेदवादाननुवर्त्तते इत्यर्थादुक्तं भवतीति ज्ञेयम्। भगवत्पराणां ज्ञानिनां तु "नैव तेऽजित भक्तानां ममाहमिति माधव!। नैषां ममाहमिति धीः श्वशृगालभक्ष्य" इत्यादिवचनानुसारेणाहन्ताममताभावेन तदननुसन्धात्। ननु कुत एवं लोकवैलक्षण्यं तत्राह—महामुनेरिति। अतिमननशीलत्वेन हिंसादिदोषवतो विधिनिषेधवाक्यप्रतिपादितान् धर्मान् विहाय सर्वदोषविनिर्मुक्तभगवत्परत्वस्यैवाङ्गीकृतत्वादिति भावः। एवं मार्गभेदे दृष्टान्तमाह—यथेति। यथा देवानां गतिराकाश एव मनुष्याणां तु पृथिव्यामेवेति गतिः पृथक् भिन्ना तथा देहाभिमानिनामेव प्रवृत्तिमार्गस्तद्रहितानां भक्तानां योगिनां ज्ञानिनां तु निवृत्तिमार्ग एव "न कर्मभिस्तां गतिमाप्नुवन्ति विद्यातपोयोगसमाधिभाजाम्, स्वैरं चरन्ति मुनयोपि न नह्यमाना" इत्यादौ तथोक्तत्वात्। मार्गभेदे फलितमाह—स्व एवेति। स्वाधिकारप्राप्ते धर्म एव स्थितः तदाचरन्नेव परं भिन्नाधिकारप्राप्तं धर्मं तदनुष्ठातारं वा न क्षिपेत् न निन्देत् निन्दया ततो न विचालयेदिति यावत् 'कृत्स्नविन्न विचालयेत्' इति भगवद्वचनात्॥ १९॥ ❀ ❀ एवं साहङ्काराणां निरहङ्काराणां मार्गभेदः प्रदर्शितस्तत्र साहङ्कारमार्गेपि प्रवृत्तिनिवृत्तिभेदेन मार्गद्वैविध्यं निरहङ्काराणां तु ब्रह्मभूतानां तु तदसंस्पर्शित्वं च प्रदर्शयन् पूर्वोक्तमेव द्रढयति—कर्मेति। 'स्वर्गाद्यर्थं प्रवृत्तं स्यान्निवृत्तं मुक्तये तु यत्' इति वाक्यात् स्वर्गाद्यर्थं काम्यं कर्माश्वमेधादिप्रवृत्तं कर्मेत्युच्यते, तदेव विरक्तेन भगवति समर्पितत्वेन कृतं चेत्तदा निवृत्तमित्युच्यते। तद् द्विविधमप्यृतं सत्यं सफलमेव यतो वेदे आश्रितं विहितं तच्च विविच्य पृथक्कृत्य व्यवस्थया विहितं न त्वविशेषेणैकस्योभयमिति व्यवस्थामेवाह—उभयलिङ्गमिति। उभयं रागवैराग्यलक्षणं लिङ्गं चिह्नमधिकारिविशेषणं यस्मिंस्तत्। नन्वेवमधिकारिभेदः किमित्यङ्गीकर्त्तव्यः, एक एव कुतो न द्वयं कुर्यादित्याशङ्क्याह—विरोधीति। यतस्तदुभयं परस्परं विरोधि तत् एकेनानुष्ठातुं न शक्यत इत्यर्थः। ननु परस्परविरोधिनोरपि तमःप्रकाशयोः कालभेदेन स्थितिदर्शनात्तयोरपि कालभेदेनैकेन पुरुषेणानुष्ठानं शक्यते तत्राह—यौगपदेति। युगपदो भावो यौगपदं तेनैककालावच्छेदेनेत्यर्थः। एककालावच्छेदेनोप्युभाभ्यामुभयमप्यनुष्ठातुं शक्यत एवात आह—एककर्त्तरीति। न ह्येकेन पुरुषेणैकस्मिन् काले स्वर्गाद्यर्थं तदेव भगवत्प्रीत्यर्थं च कर्म कर्त्तुं शक्यतेऽतो यः स्वर्गादिरागवान् स तदर्थं प्रवृत्तं कर्म कुर्यात्। यस्तु ततो विरक्तः स निवृत्तं कर्म कुर्यादिति रागवैराग्योपाधिभ्यामेव तयोर्विवेचनम्। न ह्यशक्यं वेदेन विधातुं शक्यते तथात्वे तस्याप्रामाण्यापत्तेरिति भावः। अतो यथा प्रवृत्तकर्माकरणे निवृत्ताधिकारिणो निवृत्तकर्माकरणे प्रवृत्तकर्माधिकारिणो वा न कश्चित्प्रत्यवायः। कुतोऽधिकाराभावात्तथाधिकाराभावादेव द्वयमपि प्रवृत्तिनिवृत्तिलक्षणं कर्म ब्रह्मणि भगवति परमात्मनि सर्वदा तत्परत्वेन तन्मयतां प्राप्ते ज्ञानिनि भक्ते योगिनि वा न ऋच्छति न गच्छति। अतः शिवस्येश्वरत्वात्सदा समाधिस्थत्वाच्च न तत्र वेदस्य नियामकत्वमिति भावः॥ २०॥ ❀ ❀ एवमधिकारभेदेन मार्गभेदं व्यवस्थाप्य फलभेदमप्याह—मा वः पदव्य इति। हे पितः इति संबोधनेन नाहं तव संबन्धं विस्मृत्य शिवस्नेहादीर्ष्यातो वदामि, किंतु तव हितार्थं यथार्थमेवेति सूचयति। अस्मदाश्रिताः अस्माभिराश्रिताः पदव्यः ब्रह्मानन्दामृतास्वादरूपा अणिमाद्यैश्वर्यसमृद्धयश्च वो युष्माकं कर्मठानां मा न सन्तीत्यर्थः। यतो या वः पदव्यस्ता यज्ञशालासु तदन्नतृप्तैस्तस्य यज्ञस्य संबन्धिनान्नेन तृप्तैरसुभृद्भिः केवलं प्राणपोषकैरेव धूमवर्त्मभिः धूमो वर्त्म मार्गो येषां तैः धूमादिमार्गगन्तृभिरीडिताः स्तुताः। अस्मदाश्रिताः पदव्यस्तु न तथा, किंतु अवधूतसेविताः अवधूताः त्यक्तपुत्रधनलोकैषणाः शुद्धाः परमहंसाः सनत्कुमारादयस्तैः सेविताः। यतोऽव्यक्तलिङ्गा अव्यक्तमगम्यं कर्मठैर्लिङ्गं साधनं यासां ताः। यज्ञशालासु ईडिता इति ततोऽन्यत्र सतां सभासु तासां स्तुतिर्नास्ति युष्मत्पदवीनां पित्रादिलोकानां पुनरावर्तिस्थानत्वेन सद्भिरुपेक्षितत्वादिति सूचितम्। तदन्नतृप्तैरीडिता इति युष्माकं रोचनार्थं स्तुतिमात्रमेव तैः क्रियते, न स्तुतेर्यथार्थत्वमिति सूचितम्। अत एव तेषां देहाद्यभिमानेन निकृष्टत्वं सूचयति असुभृद्भिरिति। अव्यक्तलिङ्गा इत्यनेन स्वपदवीनां दुर्लभत्वे अवधूतसेविता इति यथार्थत्वं सूचितम्॥ २१॥ ❀ ❀ नन्वेवं शिवपदवीर्यदि श्लाघसे तर्हि पुनस्तत्रैव गच्छेति तत्क्षेपं निराकुर्वती प्राह—नैतेनेति। नैतेन देहेन मम किञ्चित्प्रयोजनमस्तीति शेषः। अत एतेनालं पूर्णमिति संबन्धः। कुत एवमस्माद्विरज्यते तत्राह—अलं कुजन्मनेति। अतिशयेन कुत्सितं जन्म प्रादुर्भावो यस्य तेनेत्यर्थः। कुत एतज्जन्मनः कुत्सितत्वं तत्राह—हर इति। हरे रुद्रे कृतागसः कृतापराधस्य तव देहादुद्भवः प्रादुर्भावो यस्य तेन त्वदुद्भवत्वादेतज्जन्मनः कुत्सितत्वमिति भावः। किंच व्रीडेति कुजनस्य तव प्रसङ्गत इत्यर्थः। पितृत्वेन तव सङ्कोचाच्छिवाज्ञोल्लङ्घनेनात्रागता त्वया चापमानिताऽतो मम महती लज्जा जातेत्यर्थः। अतो यस्त्वं महतां शिवादीनामवद्यकृत् अपराधकर्त्ता तत् तस्माद्यन्मम जन्म तद्धिक्, तस्य तव जन्म धिगिति वा तथा चेमं देहं त्यक्ष्याम्येवेति भावः॥ २२॥ ❀ ❀ नन्वत्रागमनेन तव खेदो जातश्चेत्तदा शिवसमीपं गत्वा यथापूर्वं सुखं वर्तिष्यसे, किं हठाद्देहत्यागेनेत्याशङ्क्य तव सम्बन्धात्तत्रापि सुखं नाभून्न भविष्यत्यतो देहत्यागमेव करिष्य इत्याह—गोत्रमिति। यदा कदाचित् परिहासादिषु वृषध्वजो धर्मधुरीणो भगवान् मां दाक्षायणीति संबोधयंस्त्वदीयं गोत्रं त्वत्संबन्धवाचकं नाम आह गृह्णाति, तदाहं व्यपेतनर्मस्मितं यथा भवति तथा सुदुर्मनाः सुदुःखितचित्ता भवामि। हि यस्मादेवं तत्र गताया अपि त्वत्संबन्धाद् दुःखानुभवस्तत्तस्मात्त्वदङ्गजं तव

देहादुत्पन्नमत एव निन्दितत्वात् कुणपं जीवदपि मृततुल्यमेतत्स्वशरीरमहमाशु शीघ्रमेव व्युत्स्रक्ष्ये विशेषेण यथा पुनस्तव संबन्धो न स्यात्तथा योगमास्थाय भवचरणारविन्दं ध्यायन्ती त्यक्ष्यामीत्यर्थः ॥ २३ ॥ ❀ ❀ एवं देहत्यागं प्रतिज्ञाय योगस्याभीष्टफलदातृत्वात्तन्मार्गेणैव तत्कृतवतीति तत्प्रकारमाह— इतीति चतुर्भिः । इत्येवमुक्तप्रकारेण अध्वरे यज्ञशालामध्य एव दक्षमनूद्य दक्षं प्रत्यनुवादं कृत्वा जलं स्पृष्ट्वा शुद्ध्यर्थमाचमनादि कृत्वा पीते दुकूलेन वस्त्रेण सौभाग्यसंपादकेन संवृता आच्छन्ना शान्तवाक् उपरतवाग्व्यवहारा गृहीतमौनव्रता सती उदीचीमुदीच्यां दिशि क्षितौ पवित्रभूमौ निषसाद उपविवेश । ततश्च दृग् दृशौ निमील्य योगपथं समाविशदिति संबन्धः । क्षितावित्यनेनास्तरणाभावो दर्शितः । दृशौ निमील्येत्युपलक्षणम्, सर्वाणीन्द्रियाणि मनश्च विषयेभ्यः प्रत्याहृत्येत्यर्थः । हे शत्रुहन् इति विदुरं संबोधयन् कामक्रोधादयः शत्रवो देवादिभिरपि जेतुमशक्यास्त्वं तु भगवदनुग्रहेणानायासेनैव जितवानसीति सूचयति ॥ २४ ॥ ❀ ❀ आसनं प्राणायामं च तत्कृतं दर्शयति—कृत्वेति । जितमासनं यया सा जितासना प्राणादिसञ्चारवेगेन चञ्चलं शरीरं स्वस्तिकाद्यासनेन स्थिरं कृत्वेत्यर्थः । सा सतीन्द्रियादिसङ्घातस्य वशीकृतत्वादनिन्दिताऽकुत्सिता सर्वथा शुद्धा अनिलौ प्राणापानावूर्ध्वाधोवृत्तिकौ निरोधेन समानावेकरूपौ नाभ्यां मणिपूरकचक्रे कृत्वा ततश्च नाभिचक्रत उदानमूर्ध्वमुत्थाप्य हृदि अनाहतचक्रे संस्थाप्य तत उरसि कण्ठादधोदेशे विशुद्धचक्रे स्थितं कृत्वा ततः कण्ठे तस्यैव चक्रस्याग्रदेशे संस्थाप्य ततो बहुधा गमनसंभवात् शनैर्बुद्ध्या विचार्य भ्रुवोर्मध्यमाज्ञाचक्रमानयत् ॥ २५ ॥

## भाषानुवादः

वे केवल नाममात्रके शिव हैं, उनका वेष अशिवरूप अमङ्गलरूप है; इस बातको आपके सिवा दूसरे कोई देवता सम्भवतः नहीं जानते; क्योंकि जो भगवान् शिव श्मशानभूमिस्थ नरमुण्डोंकी माला, चिताकी भस्म और हड्डियाँ पहने, जटा बिखेरे, भूत-पिशाचोंके साथ श्मशानमें निवास करते हैं, उन्हींके चरणोंपरसे गिरे हुए निर्माल्यको ब्रह्मा आदि देवता अपने सिरपर धारण करते हैं ॥ १६ ॥ ❀ ❀ यदि निरङ्कुश लोग धर्ममर्यादाकी रक्षा करनेवाले अपने पूजनीय स्वामीकी निन्दा करें तो अपनेमें उसे दण्ड देनेकी शक्ति न होनेपर कान बंद करके वहाँसे चला जाय, और यदि शक्ति हो तो बलपूर्वक पकड़कर उस बकवाद करनेवाली अमङ्गलरूप दुष्ट जिह्वाको काट डाले । इस पापको रोकनेके लिये स्वयं अपने प्राणतक दे दे, यही धर्म है ॥ १७ ॥ ❀ ❀ आप भगवान् नीलकण्ठकी निन्दा करनेवाले हैं, इसलिये आपसे उत्पन्न हुए इस शरीरको अब मैं नहीं रख सकती; यदि भूलसे कोई निन्दित वस्तु खा ली जाय, तो उसे वमन करके निकाल देनेसे ही मनुष्यकी शुद्धि बतायी जाती है ॥ १८ ॥ ❀ ❀ जो महामुनि निरन्तर अपने स्वरूपमें ही रमण करते हैं, उनकी बुद्धि सर्वथा वेदके विधिनिषेधमय वाक्योंका अनुसरण नहीं करती । जिस प्रकार देवता और मनुष्योंकी गतिमें भेद रहता है, उसी प्रकार ज्ञानी और अज्ञानीकी स्थिति भी एक-सी नहीं होती । इसलिये मनुष्यको चाहिये कि वह अपने ही धर्ममार्गमें स्थित रहते हुए भी दूसरोंके मार्गकी निन्दा न करे ॥ १९ ॥ ❀ ❀ प्रवृत्ति ( यज्ञ-यागादि ) और निवृत्ति ( शमदमादि ) रूप दोनों ही प्रकारके कर्म ठीक हैं । वेदमें उनके अलग-अलग रागी और विरागी दो प्रकारके अधिकारी बताये गये हैं । परस्परविरोधि होनेके कारण उक्त दोनों प्रकारके कर्मोंका एक साथ एक ही पुरुषके द्वारा आचरण नहीं किया जा सकता । भगवान् शङ्कर तो परब्रह्म परमात्मा हैं, उन्हें इन दोनोंमेंसे किसी भी प्रकारका कर्म करनेकी आवश्यकता नहीं है ॥ २० ॥ ❀ ❀ पिताजी ! हमारा ऐश्वर्य अव्यक्त है, आत्मज्ञानी महापुरुष ही उसका सेवन कर सकते हैं । आपके पास वह ऐश्वर्य नहीं है और यज्ञशालाओंमें यज्ञान्नसे तृप्त होकर प्राणपोषण करनेवाले कर्मठलोग उसकी प्रशंसा भी नहीं करते ॥ २१ ॥ ❀ ❀ आप भगवान् शङ्करका अपराध करनेवाले हैं । अतः आपके शरीरसे उत्पन्न इस निन्दनीय देहको रखकर मुझे क्या करना है । आप-जैसे दुर्जनसे सम्बन्ध होनेके कारण मुझे लज्जा आती है । जो महापुरुषोंका अपराध करता है, उससे होनेवाले जन्मको भी धिक्कार है ॥ २२ ॥ ❀ ❀ जिस समय भगवान् शिव आपके साथ मेरा सम्बन्ध दिखलाते हुए मुझे हँसीमें 'दाक्षायणी' ( दक्षकुमारी ) के नामसे पुकारेंगे, उस समय हँसीको भूलकर मुझे बड़ी ही लज्जा और खेद होगा । इसलिये उसके पहले ही मैं आपके अङ्गसे उत्पन्न इस शवतुल्य शरीरको त्याग दूँगी ॥ २३ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—कामादि शत्रुओंको जीतनेवाले विदुरजी ! उस यज्ञमण्डपमें दक्षसे इस प्रकार कह देवी सती मौन होकर उत्तर दिशामें भूमिपर बैठ गयीं । उन्होंने आचमन करके पीला वस्त्र ओढ़ लिया तथा आँखें मूँदकर शरीर छोड़नेके लिये वे योगमार्गमें स्थित हो गयीं ॥ २४ ॥ ❀ ❀ उन्होंने आसनको स्थिरकर प्राणायामद्वारा प्राण और अपानको एकरूप करके नाभिचक्रमें स्थित किया; फिर उदानवायुको नाभिचक्रसे ऊपर उठाकर धीरे-धीरे बुद्धिके साथ हृदयमें स्थापित किया । इसके पश्चात् अनिन्दिता सती उस हृदयस्थित वायुको कण्ठमार्गसे भ्रुकुटियोंके बीचमें ले गयीं ॥ २५ ॥

एवं स्वदेहं महतां महीयसा मुहुः समारोपितमङ्कमादरात् ।
जिहासती दक्षरुषा मनस्विनी दधार गात्रेष्वनिलाग्निधारणाम् ॥ २६ ॥
ततः स्वभर्तुश्चरणाम्बुजासवं जगद्गुरोश्चिन्तयती न चापरम् ।
ददर्श देहो हतकल्मषा सती सद्यः प्रजज्वाल समाधिजाग्निना ॥ २७ ॥
तत्पश्यतां खे भुवि चाद्भुतं महद् हाहेति वादः सुमहानजायत ।
हन्त प्रिया दैवतमस्य देवी जहावसून् केन सती प्रकोपिता ॥ २८ ॥
अहो अनात्म्यं महदस्य पश्यत प्रजापतेर्यस्य चराचरं प्रजाः ।
जहावसून् यद्विमताऽऽत्मजा सती मनस्विनी मानमभीक्ष्णमर्हति ॥ २९ ॥
सोऽयं दुर्मर्षहृदयो ब्रह्मध्रुक् च लोकेऽपकीर्तिं महतीमवाप्स्यति ।
यदङ्गजां स्वां पुरुषद्विडुद्यतां न प्रत्यषेधन्मृतयेऽपराधतः ॥ ३० ॥
वदत्येवं जने सत्या दृष्ट्वासुत्यागमद्भुतम् । दक्षं तत्पार्षदा हन्तुमुदतिष्ठन्नुदायुधाः ॥ ३१ ॥
तेषामापततां वेगं निशाम्य भगवान् भृगुः । यज्ञघ्नघ्नेन यजुषा दक्षिणाग्नौ जुहाव ह ॥ ३२ ॥
अध्वर्युणा हूयमाने देवा उत्पेतुरोजसा । ऋभवो नाम तपसा सोमं प्राप्ताः सहस्रशः ॥ ३३ ॥
तैरलातायुधैः सर्वे प्रमथाः सहगुह्यकाः । हन्यमाना दिशो भेजुरुशद्भिर्ब्रह्मतेजसा ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे सतीदेहोत्सर्गो नाम चतुर्थोऽध्यायः ॥ ४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

महतां पूज्यतमेन श्रीरुद्रेण ॥ २६ ॥ ❃ ❃ चरणांवुजे आसवं भजनानंदम् । भर्तुरपरं न ददर्श देहश्च सद्यः प्रज्वलितोऽभूत् । समाधिना जातो योऽग्निस्तेन ॥ २७ ॥ ❃ ❃ खे भुवि च हाहेत्यादिवादः । तमेवाह । हंतेति विषादे दैवतमस्य पूज्यतमस्य प्रिया केन दक्षेण प्रकोपिता सती ॥ २८ ॥ ❃ ❃ महदनात्म्यं दौर्जन्यम् । अस्य सर्वत्र स्नेह एव न्याय्य इत्याहुः । यस्येति । येन विमताऽवज्ञाता ॥ २९ ॥ ❃ ❃ दुर्मर्षमत्यसहनं हृदयं यस्य लोके जनमध्ये च शब्दान्नरकं च यद्यतः स्वीयामंगजां सुतामपराधतः स्वावज्ञया मृतये मरणायोद्यतां न निवारितवान् पुरुषद्विट् शिवद्वेषी ॥ ३० ॥ ❃ ❃ अद्भुतं दृष्ट्वा च ॥ ३१ ॥ ❃ ❃ यत् यज्ञघ्नान्हंतीति यज्ञघ्नघ्नं तेन । अपहतं रक्ष इत्यादिना ॥ ३२ ॥ ❃ ❃ अध्वर्युणा भृगुणा ये तपसा सोमं प्राप्तास्ते ऋभवो नाम देवा उत्थिताः ॥ ३३ ॥ ❃ ❃ ब्रह्मतेजसोशद्भिर्देदीप्यमानैः ॥ ३४ ॥

इति श्रीभा० म० चतुर्थे टीकायां चतुर्थोऽध्यायः ॥ ४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

एवमुक्तरीत्या भ्रूमध्यं वायुं नीत्वा स्वयं च तत्र स्थित्वा मनस्विनीवशीकृतमना महतामिंद्रादीनां महीयसा पूज्यतमेन हरेण गात्रेषु करचरणाद्यवयवेषु । अनिलाग्निधारणां देहभस्मीकरणाय वाय्वग्न्युत्पत्तिलक्षणं ध्यानं दधार चकार अनेकार्थत्वाद्धातूनाम् । दक्षरुषेत्यनेनात्महत्यादोषं मार्ष्टि । "यमुद्दिश्य त्यजेद्देहं पापभागी स जायते । इतो न कोपयेत्कंचित्परलोकसुखाय च ॥" इत्यादिपुराणांतरात् ॥ २६ ॥ ❃ ❃ ततस्तस्मिन्ननिलाग्निधारणाकाले सप्तम्यर्थे तसिः । जगद्गुरोस्सर्वेषां ज्ञानोपदेष्टृत्वादाचार्यस्य स्वभर्तुः शिवस्य चरणयोर्ध्यानेनोत्पन्नानंदलक्षणमासवं मधु चिंतयंत्यास्वादयंती हतं दक्षकन्यात्वाभिमानलक्षणं कल्मषं यतस्तथाभूतो देहः प्रजज्वाल दिदीपे । "ज्वल—दीप्तौ" । सद्यस्तत्क्षण एव न तदुत्तरक्षण इति विद्युदिव प्रदीप्यांतरधादित्यर्थः । तस्या मायाशक्तित्वान्मायायाश्च साकाराया अपि "नित्यैव सा जगन्मूर्तिर्यया सर्वमिदं ततम्" इत्याद्युक्तेर्नित्यत्वान्मायिकवस्तूनामेवानित्यत्वव्यवस्थापनात्तस्या अप्यनित्वे शक्तिशक्तिमतोरभेदात् 'मायिनन्तु महेश्वरम्' इत्युक्तेस्तच्छक्तिमत ईश्वरस्याप्यनित्यत्वं स्यादतस्तद्देहनाशो न व्याख्येयः । अन्यथा स्कांदीयकेदारखंडोक्तशिवधृततद्देहस्य विष्णुकर्तृकचक्रच्छेदाद्योन्यादिक्षेत्रोत्पत्तिवर्णनमसंगतं स्यात् । तीर्थस्तु—दक्षो मद्देहं मा संस्कुर्यादिति देहेग्निधारणां चकारेत्याह ॥ २७ ॥ ❃ ❃ एवं जगत्सुंदरदेहत्यागे कस्याप्यंतःकरणखेदो नाभूदिति चेत्तत्राह-तदिति । तत्सतीदेहप्रज्वलनरूपमाश्चर्यम् ॥ २८ ॥ ❃ ❃ यद्वाऽनात्म्यं न विद्यते आत्मा यस्य स मृतकस्तस्य भावोऽनात्म्यं संज्ञापूर्वकविधेरनित्यत्वाद्वृद्ध्यभावः । येनात्मजायामपि स्नेहो

न कृतः स मृतक एवेति ध्वनितम्। येन मानार्हात्मजाऽवज्ञाता तं धिगिति भावः॥ २९॥ ❀ ❀ य एतादृशमनार्यमकार्षीः सोयं दक्षः। अत्यसहनमतिक्रूरम्। "तत्पुरुषाय" इति श्रुतेः पुरुषो रुद्रः। अनेन विष्णुद्वेषोपि ध्वनितः। "पुरुषो विष्णुरुच्यते" इति श्रुतेः॥ ३०॥ ❀ ❀ अद्भुतं योगाग्निना देहप्रज्ज्वलनलक्षणम्। तत्पार्षदा रुद्रगणाः॥ ३१॥ ❀ ❀ तेषां रुद्रगणानामापततामागच्छतां निशाम्य दृष्ट्वा। "अपहतं रक्ष" इत्यत्र रक्षो यज्ञघ्नं जीवजातमित्यर्थः। आदिना "येनोरसि दुस्तरितासो यदून्यतासो अनृतं वयंतः तेषां वपूंष्यर्चिषा जातवेदश्शुष्कं न वृक्षमुत संदहस्व" इत्यादिग्रहः॥ ३२॥ ❀ ❀ ततः किमत आह अध्वर्युणेति॥ ३३॥ ❀ ❀ 'देवगणाद्ब्राह्मणशक्तिरेव बलीयसी' इति ध्वनयन्नाह-तैरिति। यद्वोशद्भिर्भृगोः संकल्पं कर्त्तुमिच्छद्भिः 'वश कांतौ' "कांतिः स्यादीप्सिवांच्छयोः" इति धरणिः॥ ३४॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे चतुर्थोऽध्यायः॥ ४॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अनलेति वायुयुक्ताग्निधारणाम्॥ २६॥ ❀ ❀ भर्तुरपरम् अन्यं न ददर्शेति प्रेम्णा सर्वत्र तत्स्फूर्त्तिर्जातेत्यर्थः-प्रज्वलितो दीप्तोऽभूत् यथा विद्युत्प्रदीप्यांतर्हिता भवति तथांतर्हिताऽभूदित्यर्थः। मायिकवस्तूनामेवाऽनित्यत्वं न तु मायायास्तथा च योगबलेन तद्देहोऽणुर्भूत्वा मेनागर्भे प्रविष्टो बभूवेति ज्ञेयम्॥ २७॥ ❀ ❀ अत एवाद्भुतं तत्प्रज्वलनं तत्र महत्त्वं चांतर्द्धानविवक्षया तमेव वादमाह॥ २८॥ ❀ ❀ अस्य दक्षस्य न्याय्य उचितः॥ २९॥ ❀ ❀ लोके च कीर्त्तिमित्येव पाठः। चशब्दान्नरकं चेति व्याख्यानादसतीमित्यनेन दुष्कीर्त्तिलब्धौ अप-उपसर्गस्य वैयर्थ्यापत्तेः॥ ३०॥ ❀ ❀ अद्भुतञ्चेति चकारोध्याहृतः। अद्भुतत्वं तु देहस्यांतर्द्धानलक्षणमेव॥ ३१॥ ❀ ❀ अपहृतं रक्षः एकत्वं जात्यपेक्षया॥ ३२॥ ❀ ❀ अंजसा मंत्रहोमादिसाद्गुण्यबलेन सोमं तत्संज्ञके यागे भोक्तृत्वं अमृतं वा॥ ३३-३४॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे दीपिकादीपिन्याख्यायां टिप्पण्यां चतुर्थोऽध्यायः॥ ४॥

## श्रीमद्वीरराघवव्याख्या

महतामपि मध्ये महीयसामहत्तमेन रुद्रेणादरान् मुहुः पुनः पुनरंकमुत्संगं प्रत्यारोपितं स्वदेहमेवं दक्षे क्रोधेन जिहासती त्यक्तुमिच्छन्ती मनस्विनी स्वतंत्रा स्वच्छन्दमरणेत्यर्थः। सती भवानी गात्रेषु अंगेषु अनिलाग्निधारणां दधार अनिलाग्निधारणाख्यां धरणां चकारेत्यर्थः। तथाहि धारणया अनिलाग्नयोरुत्पत्तिः॥ २६॥ ❀ ❀ ततः जगद्गुरोः जगतां जिज्ञासूनां गुरोः स्वभर्तुः रुद्रस्य चरणांबुजासवं चरणांबुजे आसवमानंदं चिंतयंती अनुभवन्ती अत एव हतकल्मषा पापरहिता भर्त्तुरपरं सा न ददर्श न चिंतितवती देहश्च सद्यसमाधिना योऽग्निस्तेन प्रजज्वाल प्रज्वलितोभूत्॥ २७॥ ❀ ❀ तदद्भुतमाश्चर्यं पश्यतां भुवि खे आकाशे च सुमहान्हाहेति वादः घोष अभूत् तदेवाह देवतमस्य देवश्रेष्ठस्य रुद्रस्य देवी प्रिया सती केन दक्षेण प्रकोपिता प्रकोपं प्रापिता असून् प्राणान् जहौ अत्यजत्॥ २८॥ ❀ ❀ अहो प्रजापतेर्दक्षस्य महदनात्म्यं दौर्जन्यमद्य पश्यत चराचरं विश्वं यस्य रुद्रस्य प्रजावत्प्रीतिविषयं विश्वसुहृद इत्यर्थः। तस्य रुद्रस्य सती भार्या यद्वा यस्य दक्षस्य चराचरं प्रजा प्रजावत्स्नेहविषयन् सर्वत्र स्नेह एवाऽस्य न्याय्य इति भावः। तेन दक्षेण विमता विमानिता असून् जहौ नत्वियं विमानयोग्येत्याहुः आत्मजा तत्रापि मनस्विनी प्रशस्तमनस्का गुणवतीत्यर्थः। अत एवाभीक्ष्णं पुनः पुनः मानं सन्मानं प्रत्यर्हति॥ २९॥ ❀ ❀ दुर्मर्षमत्यंतासहमानं हृदयं यस्य सोयं ब्रह्मबन्धुः ब्राह्मणापदेशो दक्षः लोके असतीं कीर्तिञ्च अवाप्स्यति चकारान्नरकं च यद्यतः स्वीयामंगजामपराधतः स्वावज्ञया मृतये मरणाय उद्यतामुद्युक्तां पुरुषद्विट् शिवद्वेषी दक्षः 'तत्पुरुषाय विद्महे महादेवाय इति प्रयोगात् यद्वा रुद्रस्य भगवदात्मकत्वात् रुद्रं द्विषन्नपि भगवंतं द्वेष्टीत्यर्थः। न प्रत्यषेधत् न न्यवारयत्॥३०॥ ❀ ❀ सत्याः दाक्षायण्या अद्भुतमसुयागं प्राणत्यागं दृष्ट्वा जने एवं वदति सति रुद्रपारिषदा दक्षं हन्तुमुद्यतान्यायुधानि यैस्ते उदतिष्ठन् उत्थितवन्तः॥ ३१॥ ❀ ❀ तेषामापततामासमंतादागच्छतां पारिषदानां वेगं निशाम्य दृष्ट्वा भगवान् भृगुः यज्ञघ्नान् हंतीति यज्ञघ्नघ्नं तेन यजुषा "अपहता असुरारक्षांसिपिशाचा" इति मंत्रेण दक्षिणाग्नौ जुहाव हेति विस्मये॥ ३२॥ ❀ ❀ अध्वर्युणा भृगुणा हूयमाने सति ये तपसा सोमं प्राप्तास्ते ऋभवो नाम देवाः सहस्रशः उत्पेतुरुत्थिताः॥ ३३॥ ❀ ❀ ब्रह्मतेजसा उशद्भिर्दीप्यमानैः अलातान्येवायुधानि येषां तैः ऋभुभिर्दह्यमानाः प्रमथाः रुद्रपारिषदाः दिशो भेजुः पलायितवंत इत्यर्थः॥ ३४॥

इति श्रीमद्वीरराघवाचार्यकृतायां श्रीभागवतचंद्रचंद्रिकायां चतुर्थे स्कन्धे चतुर्थोऽध्यायः॥ ४॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एवं भ्रुवोर्मध्यमनिलमानीय स्वयमपि भ्रुवोर्मध्ये स्थिता किं चकारेति तत्राह एवमिति। एवमुक्तप्रकारेण वायुं भ्रूमध्यं नीत्वा स्वयं च तत्रस्थिता मनस्विनी वशीकृतमना महतामिंद्रादीनां महीयसां महत्तमेन रुद्रेणादरान्मुहुः शश्वदंकमारोपितं स्वदेहं

जिहासती त्यक्तुमिच्छती सोमागात्रेषु करचरणाद्यवयवेषु अनिलाग्निधारणं देहभस्मीकरणाय वाय्वग्न्युत्पत्तिलक्षणं ध्यानं दधार चकार। अनेकार्थत्वाद्धातूनां दक्षरुषेत्यनेनात्महत्यादोषं मार्ष्टि ॥ २६ ॥ ❀ ❀ ननु वाय्वग्निध्यानं देहत्यागानंतरं चेदुत्क्रांतस्य वायोरनावृत्तेरग्निसंयोगाभावेनाभीष्टकार्यानुत्पत्तिः पूर्वं चेदात्मनोपि नाससमभवत्सचानुपपन्नश्चेतनस्य नित्यत्वेनानाशादित्याशंक्य समसमयत्वेनोपपत्तेरिति भावेनाह तत इति। ततो वाय्वग्निधारणानंतरं सा सती ज्ञानोपदेष्टृत्वेन जगतां गुरोराचार्यस्य स्वभर्तुः शिवस्य चरणयोर्ध्यानेनोत्पन्नानंदलक्ष्मासवं मधु चिंतयंत्यास्वादयंती अपरं तस्मादन्यं न चिंतयती च शब्दात्परं विष्ण्वादिकं चिंतयंती स्वदेहे विष्ण्वादिकं ददर्श देहं च तत्याजेति वाक्यशेषः। देहत्यागस्यान्यथानुपपत्त्या सिद्धत्वादध्याहृत्यान्वयत इत्यदोषः। 'रुद्रं च ब्रह्मवायू च विष्णुं चैव श्रियं गिरम्। उमा चिंतयती देहं तत्याजान्यं न चास्मरदि'ति वचनाच्चाध्याहारः प्रामाणिक इति प्रतीयते तत इत्यनुवर्तते ततो देहत्यागानंतरं सद्यस्तत्क्षणम् एव पादाद्रिकमेव समाधिजाताग्निना देहः प्रजज्वाल अनेन मृतदेहसंस्कारोपि न पित्रादिना कार्य इति ध्वनयति। हतकल्मषेत्यनेन विष्ण्वादिदर्शनानंतरं पितृकोपनिमित्तकिल्बिषमपि नष्टमिति। सूचयति यद्वा दर्शनस्यानन्यथात्वं द्योत्यते दोषादन्यथा ज्ञानं जायते, न चास्याः सोस्तीत्यर्थः ॥ २७ ॥ ❀ ❀ एवं जगत्सुंदरदेहत्यागे; कस्याप्यंतःकरणे खेदो नाभूत्किं तत्राह तत्पश्यतामिति ॥ २८ ॥ ❀ ❀ किमनेन सिद्धानुवादेन एकत्र दोषाऽनारोपणेनेति तत्राह अहो इति। अनात्म्यं मूर्खकर्म अहो त्वनार्यमिति पाठे अन्याय्यमित्यर्थः। चराचराः प्रजाः यस्य वशे यस्य संततिप्रसूता इति वा ॥ २९ ॥ ❀ ❀ ननु कथमेतदनार्य्यमभूदित्याशङ्क्य तस्य लोकविद्विष्टफलदर्शनादित्याह सोयमिति। य एतादृशमनार्यमकार्षीदसोऽयं दुर्मर्षहृदयो दुःसहहृदयः, अत एव ब्रह्मबंधुर्द्विजातिधर्मो ब्राह्मणानां मृदुहृदयत्वात् अथो अद्यप्रभृति। तस्मादिति हेत्वर्थो वा यद्यस्मादित्यनेन संबध्यते पुरुषं शिवं द्वेष्टीति पुरुषद्विट् तत्पुरुषायेति श्रुतः, अनेन विष्णुद्वेषमपि ध्वनयति 'पुरुषो विष्णुरुच्यते' इति श्रुतेः। मृतये मरणायोद्यतां प्रयतमानाम् ॥ ३० ॥ ❀ ❀ सहमरणयोग्या भूतगणास्तदा किमकार्षुरिति तत्राह वदतीति अजे दक्षे। सत्या देव्याः असुत्यागं प्राणवियोगलक्षणम् ॥ ३१ ॥ ❀ ❀ दक्षादपि भृगोः शिवे द्वेषो महानिति भावेन भूतगणशक्तिह्रासोपायं होमं वक्ति तेषामिति यज्ञघ्ना ये यज्ञविनाशकास्तान् हन्तीति यज्ञघ्नघ्नस्तेन यजुषा येनोरसि दुस्तरितासो ह्रन्मतासो अनृतं वयंतः तेषां वपूर्ष्यर्चिपा जातवेदशुष्क न वृक्षमुत संदहस्वेत्यादियजुर्मंत्रेण ॥ ३२ ॥ ❀ ❀ ततः किमभूदत्राह अध्वर्युणेति। सोमं सोमं भागम् ॥ ३३ ॥ ❀ ❀ अत्र ब्राह्मणशक्तिरेव बलीयसीति ध्वनयन्नेतैर्देवैर्भूतगणानां पराभवं वक्ति तैरिति। अलातान्युल्मुकान्येवायुधानि येषां ते तथोक्तास्तैः। ब्रह्मतेजसा भृगुमंत्रप्रभावेण। उशद्भिर्भृगोः संकल्पं कर्तुमिच्छद्भिरित्यर्थः ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे श्रीविजयध्वजतीर्थकृतपदरत्नावल्यां चतुर्थोऽध्यायः ॥ ४ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

देहं हतकल्मषेति सम्बंधोक्तिः तथा च व्याख्या देहे तदुपलक्षिते हृदीति ॥ २७-२९ ॥ ❀ ❀ ब्रह्मबन्धुरिति केचित्। लोके च कीर्त्तिमसतीमित्येव पाठः। बहुत्र सदपि पाठान्तरं नांगीकृतम्। चशब्दान्नरकञ्चेति व्याख्यानात् ॥ ३०-३४ ॥

श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे चतुर्थोऽध्यायः ॥ ४ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

महतां महीयसा श्रीरुद्रेण ॥ २६ ॥ ❀ ❀ चरणाम्बुजस्यासवं मकरंदमाधुर्यमित्यर्थः। चिन्तयन्ती सती न अपरं किमपि ददर्श। ततश्च समाधिजेनाऽग्निना हतं दक्षकन्यात्वाभिमानलक्षणं कल्मषं यतस्तथाभूतो देहः प्रजज्वाल दिदीपे। ज्वल दीप्तौ। सद्यस्तत्क्षण एव न तदुत्तरक्षण इति विद्युदिव प्रदीप्यान्तरधादित्यर्थः। तस्या मायाशक्तित्वात् मायायाश्च साकाराया अपि नित्यत्वात् मायिकवस्तूनामेवानित्यत्वव्यवस्थापनात्तद्देहनाशो न व्याख्येयः ॥ २७ ॥ ❀ ❀ दैवतमस्य पूज्यतमस्य प्रिया केन दक्षेण प्रकोपिता सती असून् जहाविति लोकप्रतीतिः ॥ २८ ॥ ❀ ❀ अनात्म्यं जीवन्मृतत्वं अस्य दक्षस्य न विद्यते आत्मा यस्य स मृतकस्तस्य भावः अनात्म्यं संपूर्वकविधित्वेनानित्यत्वाद्वृद्ध्यभावः। यस्येति सर्वत्रैव स्नेह उचितः। अथ च स्वकन्यायामपि जीवन्मृतत्वमेवेति भावः। आत्मजा तत्रापि सती तत्रापि मनस्विनीति धिक् दक्षमिति भावः ॥ २९ ॥ ❀ ❀ दुर्मर्षहृदयः अल्पसहिष्णुमनाः पुरुषद्विट् शिवद्वेषी अपराधतः स्वाऽवज्ञया मृतये मरणाय उद्यतां न निवारितवान् ॥ ३०-३१ ॥ ❀ ❀ यज्ञघ्नान् हन्तीति "तेनाऽपहतं रक्ष" इत्यादिना ॥ ३२-३३ ॥ ❀ ❀ ब्रह्मतेजसा उशद्भिर्दीप्यमानैः ॥ ३४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। चतुर्थेऽस्मिन् चतुर्थोऽयं सङ्गतः सङ्गतः सताम् ॥ ४ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

महतां मध्ये महीयसा महत्तमेन आदरान्मुहुः अंकमारोपितं स्वदेहं दक्षरुषा दक्षविषयकक्रोधेन जिहासती त्यक्तुमिच्छती गात्रेषु देहावयवेषु अनिलाग्न्योर्धारणां दधार ॥ २६ ॥ ❀ ❀ ततः सती स्वभर्तुः चरणांबुजे आसवं तद्ध्यानानंदं

चिंतयंती अपरं न ददर्श। देहश्च समाधिजाग्निना सद्यः प्रजज्वाल प्रज्वलितोऽभूत्॥ २७॥ ❀ ❀ तदद्भुतं देहत्यागं पश्यताम्। खे भुवि च हाहेत्यादिवादोऽजायत। तदेवाह हंतेत्यादिना केन दक्षेण प्रकोपिता दैवतमस्याऽसून् जहौ॥ २८॥ ❀ ❀ अहो यस्य चराचरं प्रजाः तस्य प्रजापतेर्दक्षस्य महदनात्म्यं तु पश्यत। या अभीक्ष्णं पुनः पुनर्मानमेवार्हति सा सती यद्विमता येन प्रजापतिना अवज्ञाता। असून् जहौ॥ २९॥ ❀ ❀ सोयं दक्षः दुर्मर्षमसहमानं हृदयं यस्य पुरुषद्विट् शिवद्वेषी अत एव ब्रह्मणि वासुदेवे द्रुह्यतीति ब्रह्मध्रुक् भगवद्भक्तद्वेषी एवं भगवद्द्वेषीत्यर्थः। यद्यतश्च स्वीयामंगजामपराधतः स्वकृताच्छिवावज्ञादिदोषतो मृतये मरणायोद्यतां न प्रत्यषेधत् न न्यवारयत् अतश्च लोके महतीमपकीर्तिमवाप्स्यति॥ ३०॥ ❀ ❀ सत्या अद्भुतम् असुत्यागं दृष्ट्वा एवं प्रागुक्तरीत्या जने वदति सति तस्य शिवस्य पार्षदा दक्षं हन्तुमुदतिष्ठन्॥ ३१॥ ❀ ❀ आपततां सर्वतो बलादागच्छताम्। वेगं निशाम्य दृष्ट्वा। "अपहता असुरा रक्षांसि पिशाचा" इत्यनेन यज्ञघ्नान् हन्तीति यज्ञघ्नघ्नं तेन यजुषा जुहाव ह स्फुटम्॥ ३२॥ ❀ ❀ तदा अध्वर्युणा हूयमाने सति ये तपसा सोमं प्राप्ता ऋभवो नाम देवास्ते सहस्रशः उत्पेतुः॥ ३३॥ ❀ ❀ तैर्ब्रह्मतेजसा उशद्भिर्देदीप्यमानैः अलातानि सामिकाष्ठान्येवायुधानि येषां तैर्हन्यमानाः दिशो भेजुः प्राद्रवन्॥ ३४॥

इति श्रीमद्भागवते सिद्धांतप्रदीपे चतुर्थस्कंधीये चतुर्थाध्यायार्थप्रकाशः॥ ४॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

तत्कृतां धारणामाह—एवमिति। एवं दक्षरुषा निमित्तेन महतां सनकादीनामपि महीयसा पूज्यतमेन शिवेनादरान्मुहुरङ्कं समारोपितमपि स्वदेहं जिहासती त्यक्तुमिच्छती मनस्विनी वशीकृतमना धीरा गात्रेषु करचरणादिसर्वावयवेषु रुद्रेण समालालितस्यास्य देहस्यान्यगतिपरिहारेण महातेजसि लयार्थमनिलाग्निधारणां दधार तेषु तयोश्चिन्तनं कृतवतीत्यर्थः। मनस्विनीत्यनेन तस्या उत्साहः सूचितः, दैन्यं च निवारितम्॥ २६॥ ❀ ❀ ततोऽनवच्छिन्नेन चेतसा पतिचरणौ ध्यायन्ती देहं त्यक्तवतीत्याह—तत इति। ततोऽग्न्यादिधारणानन्तरं जगद्गुरोः जगतो ज्ञानाद्युपदेष्टुः शिवस्य स्वभर्तुः पालकस्य चरणाम्बुजासवं चरणयोर्ध्यानेनोत्पन्नमानन्दलक्षणमासवं सर्वविस्मारकत्वान्मधु चिन्तयन्ती आस्वादयन्ती सती अपरं तस्मादन्यं नैव ददर्शेत्यन्वयः। चकार एवकारार्थः। "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय सदा तद्भावभावितः" इत्यन्ते या मतिः सा गतिरतः पतिव्रतात्वात्तत्प्राप्तिकामा तं चिन्तयन्ती ततोऽन्यं नैव ददर्शेति भावः। ततो देहं च तत्याजेति शेषः, प्रकरणप्राप्तत्वात्। ततश्च तस्या देहो गतकल्मषः शिवचरणाम्बुजध्यानेनैव निवृत्तपितृनिन्दादिनिमित्तसर्वदोषः समाधिजनितेनाग्निना सद्यः प्रजज्वाल भस्मीभूतो जात इत्यर्थः॥ २७॥ ❀ ❀ एवं सतीदेहत्यागः कस्यापि न सम्मत इति सूचयंस्तत्रत्यानां खेदवचनं दर्शयति—तदिति। तत् सतीदेहत्यागरूपं महदद्भुतमत्याश्चर्यं पश्यतां खे आकाशे भुवि च स्थितानां हाहेति वादः शब्दः प्रथमतः सुमहानजायत। पश्चात्किञ्चित्प्रजल्पनमपि जातं तदाह—हन्तेति। दैवतमस्य सर्वदेवश्रेष्ठस्य शिवस्य प्रिया सती देवी सर्वपूज्या केन दक्षेण प्रकोपिता सती असून् प्राणान् जहाविति हन्त महान् खेदो जात इत्यर्थः॥ २८॥ ❀ ❀ दक्षे तेषामाक्रोशोपि जातस्तमाह—अहो इति द्वाभ्याम्। अस्य दक्षस्य प्रजापतेर्महदनात्म्यं देहाद्यभिमानेनात्यनार्यं पश्यत। अहो आश्चर्यमसम्भावितमेवैतज्जातमिति भावः। तु शब्देनान्येपि बहवः प्रजापतयः सन्ति, परन्तु तेषु नैवमनार्यमस्तीति सूचयति। अनार्यमेव दर्शयति—यस्येत्यादिना। यस्य चराचरं सर्वमेव जगत्प्रजाः अतोस्य सर्वसंमाननमेव न्याय्यम्। सती त्वभीक्ष्णं वारं वारं संमानयोग्या भवति। यतः आत्मजा साक्षाद्देहादुत्पन्ना तत्रापि मनस्विनी सुस्वभावादिगुणयुक्ता सैवंभूता येन विमता अवज्ञाता सती दुस्त्यजानसूनपि जहावित्यनेन महदनार्यं कृतमिति भावः॥ २९॥ ❀ ❀ एवमस्य दौर्जन्यं निरूप्य 'अत्युग्रपुण्यपापानामिहैव फलमश्नुते' इति सिद्धान्तमनुरुध्यास्यानिष्टं शीघ्रमेव भविष्यतीति शपन्त इवाहुः—सोयमिति। सोयं दक्षो लोके महाजनमध्ये महतीमपकीर्तिं दुर्यशः चशब्दात्प्राणहान्याद्यनिष्टं चावाप्स्यति। कुतो यत् यस्मात्स्वापराधतः स्वकृतापमानान्मृतये मरणायोद्यतां प्रयतमानां स्वाङ्गजां न प्रत्यषेधत् न वारितवान्। अप्रतिषेधे हेतुमाहुः—पुरुषद्विडिति। पुरुषं शिवं द्वेष्टीति तथा शिवद्वेषेणेत्यर्थः। तद्द्वेषे हेतुमाहुः—दुर्मर्षहृदयमिति। दुर्मर्षं शिवोत्कर्षासहमानं विचाररहितं वा हृदयं यस्य स तथा। अतो न केवलं शिवमेव द्वेष्टि, किंतु तदनुवर्तिनो ब्रह्मिष्ठानपीत्याहुः—ब्रह्मध्रुगिति॥ ३०॥ ❀ ❀ रुद्रपार्षदकृतोप्युपद्रवो जात इत्याह—वदतीति। सत्या अद्भुतमद्भुतप्रकारकमसुत्यागं दृष्ट्वा जन एवं पूर्वोक्तप्रकारेण वदति सति तस्य रुद्रस्य पार्षदा उदायुधा उद्धृतायुधाः सन्तो दक्षं हन्तुमुदतिष्ठन् उद्युक्ता जाता इत्यन्वयः॥ ३१॥ ❀ ❀ तदा तु भृगुस्तेभ्यो रक्षाया उद्यमं कृतवानित्याह—तेषामिति। तेषां रुद्रपार्षदानां प्रमथयक्षभूतप्रेतादीनामापततां वेगं निशाम्य दृष्ट्वा भगवान् रक्षायां शक्तिमान् भृगुः यज्ञघ्नघ्नेन यज्ञघ्ना यज्ञविध्वंसका दैत्यादयस्तान् हन्तीति यज्ञघ्नघ्नं तेन यजुषा मन्त्रेण दक्षिणाग्नौ जुहाव आभिचारिकेण विधिनाहुतिं दत्तवान्। अभिचारार्थं हि

दक्षिणाग्नावेव हूयन्त इति ॥ ३२ ॥ ❋ ❋ ततो यज्ञरक्षकदेवानामुत्पत्तिर्जातेत्याह—अध्वर्युणेति । अध्वर्युणा आध्वर्यवं चरता भृगुणा हूयमाने सति ये पूर्वं तपसा सोमं चन्द्रं यज्ञे सोमभागं वा प्राप्तास्त ऋभवो नाम देवाः सहस्रशः ओजसा महता वेगेन उत्पेतुः आहुतिद्वाराविर्भूता इत्यर्थः ॥ ३३ ॥ ❋ ❋ ततस्तैस्तेषां निराकरणं जातमित्याह—तैरिति । अलाता ज्वलन्ति काष्ठानि ते आयुधानि येषां तैः ऋभुभिः यद्वा तै ऋभुभिः कर्तृभिः अलातायुधैः साधनभूतैर्हन्यमाना गुह्यकसहिताः प्रमथाः सर्वतः पलायनपरा जाताः । नन्वलातैरुद्रपार्षदनिराकरणं कथं संभवति नन्दीश्वरादीनामतिप्रबलत्वादित्याशङ्क्य नालातमात्रं निराकरणं किंतु मुख्यं कारणं मन्त्रशक्तिरेवेत्याह—उशद्भिरिति । ब्रह्मणो भृगूक्तवेदमन्त्रस्य तेजसा प्रभावेण उशद्भिर्दीप्यमानैः ऋभुभिः ॥ ३४ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना । श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये । श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे धर्मनिरूपणे । चतुर्थो विवृतः सत्या देहत्यागनिरूपकः ॥ ३ ॥

## भाषानुवादः

इस प्रकार, जिस शरीरको महापुरुषोंके भी पूजनीय भगवान् शङ्करने कई बार बड़े आदरसे अपनी गोदमें बैठाया था, दक्षपर कुपित होकर उसे त्यागनेकी इच्छासे महामनस्विनी सतीने अपने सम्पूर्ण अङ्गोंमें वायु और अग्निकी धारणा की ॥ २६ ॥ ❋ ❋ अपने पति जगद्गुरु भगवान् शङ्करके चरण-कमल-मकरन्दका चिन्तन करते-करते सतीने और सब ध्यान भुला दिये; उन्हें उन चरणोंके अतिरिक्त कुछ भी दिखायी न दिया । इससे उनका देह सर्वथा निर्दोष, अर्थात् मैं दक्षकन्या हूँ—ऐसे अभिमानसे भी मुक्त होकर तुरंत ही योगाग्निसे जल उठा ॥ २७ ॥ ❋ ❋ उस समय वहाँ आये हुए देवता आदिने जब सतीका देहत्यागरूप यह महान् आश्चर्यमय चरित्र देखा, तब वे सभी हाहाकार करने लगे और वह भयङ्कर कोलाहल आकाशमें एवं पृथ्वीतलपर सभी जगह फैल गया । सब ओर यही सुनायी देता था—'हाय ! दक्षके दुर्व्यवहारसे कुपित होकर देवाधिदेव महादेवकी प्रिया सतीने प्राण त्याग दिये ! ॥ २८ ॥ ❋ ❋ देखो, सारे चराचर जीव इस दक्षप्रजापतिकी ही सन्तान हैं; फिर भी इसने कैसी भारी दुष्टता की है ! इसकी पुत्री शुद्धहृदया सती सदा ही मान पानेके योग्य थी, किन्तु इसने उसका ऐसा निरादर किया कि उसने प्राण त्याग दिये ॥ २९ ॥ ❋ ❋ वास्तवमें यह बड़ा ही असहिष्णु और ब्राह्मणद्रोही है । अब इसकी संसारमें बड़ी अपकीर्ति होगी । जब इसकी पुत्र सती इसीके अपराधसे प्राणत्याग करनेको तैयार हुई, तब भी इस शङ्करद्रोहीने उसे रोकातक नहीं !, ॥ ३० ॥ ❋ ❋ जिस समय सब लोग ऐसा कह रहे थे, उसी समय शिवजीके पार्षद सतीका यह अद्भुत प्राणत्याग देख, अस्त्र-शस्त्र लेकर दक्षको मारनेके लिये उठ खड़े हुए ॥ ३१ ॥ ❋ ❋ उनके आक्रमणका वेग देखकर भगवान् भृगुने यज्ञमें विघ्न डालनेवालोंका नाश करनेके लिये 'अपहतं रक्ष……' इत्यादि मन्त्रका उच्चारण करते हुए दक्षिणाग्निमें आहुति दी ॥ ३२ ॥ ❋ ❋ अध्वर्यु भृगुने ज्यों ही आहुति छोड़ी कि यज्ञकुण्डसे 'ऋभु' नामके हजारों तेजस्वी देवता प्रकट हो गये । इन्होंने अपनी तपस्याके प्रभावसे चन्द्रलोक प्राप्त किया था ॥ ३३ ॥ ❋ ❋ उन ब्रह्मतेजसम्पन्न देवताओंने जलती हुई लकड़ियोंसे आक्रमण किया, तो समस्त गुह्यक और प्रमथगण इधर-उधर भाग गये ॥ ३४ ॥

इति चतुर्थोऽध्यायः ॥



# अथ पञ्चमोऽध्यायः

मैत्रेय उवाच

भवो भवान्या निधनं प्रजापतेरसत्कृताया अवगम्य नारदात् ।
स्वपार्षदसैन्यं च तदध्वरर्भुभिर्विद्रावितं क्रोधमपारमादधे ॥ १ ॥
क्रुद्धः सुदष्टोष्ठपुटः स धूर्जटिर्जटां तडिद्वह्निसटोग्ररोचिषम् ।
उत्कृत्य रुद्रः सहसोत्थितो हसन् गम्भीरनादो विससर्ज तां भुवि ॥ २ ॥
ततोऽतिकायस्तनुवा स्पृशन्दिवं सहस्रबाहुर्घनरुक् त्रिसूर्यदृक् ।
करालदंष्ट्रो ज्वलदग्निमूर्धजः कपालमाली विविधोद्यतायुधः ॥ ३ ॥
तं किं करोमीति गृणन्तमाह बद्धाञ्जलिं भगवान् भूतनाथः ।
दक्षं सयज्ञं जहि मद्भटानां त्वमग्रणी रुद्र भटांशको मे ॥ ४ ॥
आज्ञप्त एवं कुपितेन मन्युना स देवदेवं परिचक्रमे विभुम् ।
मेने तदाऽऽत्मानमसङ्गरंहसा महीयसां तात सहः सहिष्णुम् ॥ ५ ॥
अन्वीयमानः स तु रुद्रपार्षदैर्भृशं नदद्भिर्व्यनदत्सुभैरवम् ।
उद्यम्य शूलं जगदन्तकान्तकं स प्राद्रवद् घोषणभूषणाङ्घ्रिः ॥ ६ ॥
अथर्त्विजो यजमानः सदस्याः ककुभ्युदीच्यां प्रसमीक्ष्य रेणुम् ।
तमः किमेतत्कुत एतद्रजोऽभूदिति द्विजा द्विजपत्न्यश्च दध्युः ॥ ७ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

पंचमे तु सतीदेहत्यागमाकर्ण्य शंकरः । वीरभद्रं रुषोत्पाद्य तेन दक्षमघातयत् ॥ १ ॥

प्रजापतेर्हेतोर्निधनम् । कुतः तेनासत्कृतायाः । तस्याध्वरे ऋभवो देवास्तैः ॥ १ ॥ ❀ ❀ स धूर्जटी रुद्रो घोरः सन् जटामुत्कृत्योत्पाट्योत्थितः संस्तां भुवि विससर्ज । सुदष्ट ओष्ठपुटो येन तडितां वह्नीनां च सटा ज्वालास्तद्वदुग्रं रोचिर्यस्यास्ताम् ॥ २ ॥ ❀ ❀ ततो जटायाः सकाशादतिकायो वीरभद्रो जात इति शेषः । तनुवा तन्वा देहेन दिवं स्पृशन् अत्युच्च इत्यर्थः । घनरुक् कृष्णवर्णः त्रयः सूर्या इव दृशो यस्य करालास्तुंगा दंष्ट्रा यस्य ज्वलदग्निरिव मूर्धजाः केशा यस्य कपालमालायुक्तः विविधान्युद्यतान्यायुधानि यस्य ॥ ३ ॥ ❀ ❀ हे रुद्र हे भट युद्धकुशल मद्भटानां त्वमग्रणीः सन्सयज्ञं दक्षं जहि ब्रह्मतेजो दुर्जयमिति मा मंस्थाः यतस्त्वं मेंशकः ॥ ४ ॥ ❀ ❀ मन्युना रुद्रेण । स वीरभद्रः । परिचक्रमे प्रदक्षिणीचकार । असंगम-प्रतिघातं यद्रंहो वेगस्तेन भोः तात महीयसां बलीयसामपि सहस्सहिष्णुं बलं सोढुं क्षमं मेने ॥ ५ ॥ ❀ ❀ जगदंतको मृत्युस्तस्याप्यंतकं शूलम् । घोषयंति शब्दं कुर्वंतीति घोषणानि नूपुरादीनि भूषणानि ययोस्तावंघ्री यस्य सः ॥ ६ ॥ ❀ ❀ ककुभि दिशि तमो न भवति किं तु रज इति ज्ञात्वाऽऽहुः । रज एतत्कुतोऽभूदिति दध्युश्चिंतयामासुः ॥ ७ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तेन वीरभद्रेण ( १ ) निधने हेतुं पृच्छति कुत इति । तेन दक्षेण । असत्कृताया अवज्ञातायाः । तस्य दक्षस्य ! अपारं महांतम् ॥ १ ॥ ❀ ❀ धूता कंपिता जटा अस्येति धूर्जटिः पृषोदरादिः । सुदष्टे ओष्ठयोः पुटेऽग्रे येन स तथा ।

---

१. प्रा० पा०—तत्पा० । २. प्रा० पा०—महिर्मिहिष्वः । ३. प्रा० पा०—भूषिता० । ४. प्रा० पा०—चुक्रुशुः ।

'पुटमग्रे च संश्लेषे' इति निरुक्तिः । 'सटा जटाकेशरयोः' इति मेदिनी । लक्षितलक्षणामाश्रित्य स्वामिचरणैर्ज्वालेत्युक्तम् । तां जटाम् ॥ २ ॥ ❀ ❀ इत्यर्थ इति । अल्पदेहेन दिवः स्पर्शानुपपत्तेरिति भावः । "करालो दंतुरे तुंगे भीषणे त्वभिधेयवत्" इति मेदिनी ॥ ३ ॥ ❀ ❀ "भटः स्यात्पुंसि वीरे च विशेषे पामरस्य च" इति मेदिनी ॥ ४ ॥ ❀ ❀ "मन्युर्दैन्ये क्रतौ क्रोधे शोक'शंकरबुद्धिषु' इति धरणिः । "नमस्ते रुद्र मन्यव" इति श्रुतेश्च । मन्यू रुद्रः स वीरभद्रो देवदेवं महादेवम् । कथारसाविष्टचेतस्त्वेन प्रीत आह हे तातेति । यद्वाऽसंगत्वात्मारामस्य रुद्रस्य रंहसा बलेन ॥ ५ ॥ ❀ ❀ स वीरभद्रः । प्रसिद्धम् । सुभैरवमतिभयंकरं यथा स्यात्तथा व्यनदत् । शूलविशेषणं वा प्राद्रवदतिवेगेनागच्छत् ॥ ६ ॥ ❀ ❀ अथ वीरभद्रागमनारंभे । प्रथमं तम इति ततस्तम एतन्न किन्तु रज इति ज्ञात्वाहुः । एतद्रजः कुतोऽभूदिति ॥ ७ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तेन वीरभद्रेण हेतोरिति हेतुत्वं च क्रोधोत्पादने निमित्तम् ॥ १ ॥ ❀ ❀ क्रुद्धत्वाद्घोरो भयानकस्सन् ॥ २-४ ॥ ❀ ❀ तदा आज्ञाकाले असङ्गरंहसा लिङ्गेन ॥ ५-६ ॥ ❀ ❀ तमः किमिति काकुः, तथा च तमो न भवतीत्यादि व्याख्या ॥ ७ ॥

### श्रीमद्वीरराघवव्याख्या

एवं सत्याः प्राणत्यागनिमित्तं त्यागप्रकारश्च सप्रपंचमुक्तः अथ तत्प्रसंगात्प्रसक्तं दक्षाध्वरविनाशं पुनस्तत्संधानं च सप्रपंचमाह त्रिभिरध्यायैः । तत्राद्येनाध्वरविनाशप्रकारमाह मैत्रेयः भव इति । प्रजापतेर्दक्षस्य कर्त्तरि षष्ठी, तेनाऽसत्कृतायाः भवान्याः सत्याः निधनं तथा दक्षस्याध्वरे ये ऋभवो देवास्तैर्विद्रावितं पलायितं स्वपार्षदानां सैन्यं च नारदान्मुनेरवगम्य श्रुत्वा अपारं क्रोधमादधे कृतवानित्यर्थः ॥ १ ॥ ❀ ❀ ततः स धूर्जटिः रुद्रः घोरः सन् क्रुद्धस्सन् सुष्ठु दष्टः ओष्ठपुटो येन सः तडितां वह्नीनां च सटा ज्वालाः तद्वदुग्रं रोचिर्यस्यास्तां जटां उत्कृत्य उत्पाट्य उत्थितः गंभीरो नादो यस्य सः हसन् तां जटां भुवि विससर्ज अपातयत् ॥ २ ॥ ❀ ❀ ततो जटायाः सकाशात् अतिकायः वीरभद्रो जात इति शेषः । तं विशिनष्टि तन्वा देहेन दिवं स्पृशन् अत्युच्च इत्यर्थः । घनरुक् कृष्णवर्णः तिस्रः सूर्यसदृशा दृशो यस्य करालाः उग्रा दंष्ट्रा यस्य ज्वलन् अग्निरिव मूर्द्धजा यस्य कपालानां माला अस्य संतीति तथा विविधानि उद्यतान्यायुधानि यस्य सः ॥ ३ ॥ ❀ ❀ किं करोमि किं करवाणीति गृणंतं भाषंतं बद्धांजलिं तं वीरभद्रं भूतनाथो भगवान् रुद्रः आह उवाच हे रुद्र ! हे भट ! युद्धकुशल ! मद्भटानां त्वमग्रणीर्नायकः मे अंशभूतः सयज्ञं दक्षं जहि विनाशय ॥ ४ ॥ ❀ ❀ कुपितेन मन्युना रुद्रेणैवमाज्ञप्तो देवदेवं विभुं रुद्रं परिचक्रमे प्रदक्षिणीचकार तदा ह्यसह्यरंहसा प्रतिघातरहितवेगेन महीयसां बलीयसामपि महः तेजो बलं तत्सहिष्णुं पारिषदैः सोढुमक्षमम् आत्मानं मेने अमन्यत ॥ ५ ॥ ❀ ❀ स तु वीरभद्रः भृशं नदद्भिः ध्वनद्भिः रुद्रपारिषदैरन्वीयमानः परिवेष्टितः सुभैरवम् अतिभयंकरं यथा भवति तथा व्यनदत् ननाद । ततः स वीरभद्रो जगदंतको मृत्युस्तस्याप्यंतकोपमं शूलमुद्यम्य घोषणानि ध्वनंति भूषणानि नूपुरादीनि ययोस्तावंघ्री यस्य सः प्राद्रवत् दक्षाध्वरं प्रत्यगात् ॥ ६ ॥ ❀ ❀ अथ ततः ऋत्विजो दक्षाध्वरे ऋत्विजः यजमानः दक्षः तथा सदस्याः सभ्याः द्विजास्तत्पत्न्यश्च उदीच्यां ककुभि दिशि रेणुं परागं समीक्ष्य तमो नु भवति किंतु रज इति ज्ञात्वा आहुः रज एतत्कुतोऽभूदिति दध्युश्चिंतयामासुः ॥ ७ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

विष्णुद्वेषवत्तद्भक्तद्वेषस्याप्यनर्थहेतुत्वान्मुमुक्षुणा स न कर्तव्य इति ज्ञाप्यतेस्मिन्नध्याये । तत्रादौ नारदश्रुतभवानीमरणाद् भवाद्वीरभद्रोत्पत्तिं वक्तुमाह भव इति । प्रजापतेरवमानेनाऽसत्कृताया धिक्कृतायास्तस्य दक्षस्याध्वरस्येशत इति तदध्वरेशा भृग्वादयस्तैः । तदध्वरं यजंत इति तदध्वरेजः तैस्तदध्वरेड्भिरिति वा पाठः, क्विप् संप्रसारणं च ॥ १ ॥ ❀ ❀ क्रोधफलमाह क्रुद्ध इति । सुदष्टे ओष्ठपुटे यस्य स तथा धूता जटा अस्य संतीति धूर्जटिः मत्वर्थे क्विप् प्रत्ययः, तडिद्वह्निसटा वैद्युताग्निज्वाला तद्वदुग्रं रोचिर्यस्याः सा तथा तां रौद्रो मध्याह्नातप इव तीक्ष्णः 'आतपः कथ्यते रौद्र' इति हलायुधः ॥ २ ॥ ❀ ❀ सा जटा किमभूदिति तत्राह तत इति । ततो जटायाः कश्चित्पुरुषोऽभूदिति शेषः, तनुवा तन्वा शरीरेण । घनरक्तः सांद्रारुणः सूर्यस्तद्वद्रक्ता दृशो यस्य सः, तथा कपालानां माला समूहोऽस्यास्तीति कपालमाली ॥ ३ ॥ ❀ ❀ यदर्थमसावुत्पन्नस्तत्कृत्यमाह तं किमिति । हे रुद्र ! मद्भटानामग्रणीत्वे हेतुर्मे जटांशक इति अनेन जटाया आत्मत्वं सूचयति ॥ ४ ॥ ❀ ❀ 'नमस्ते रुद्रमन्यव' इति श्रुतेर्मन्युना महादेवेन. युयुत्सूनां योधानां वीरस्वभावं वक्ति मेन इति यदा सोऽन्यासाध्यकर्मसाधनार्थमुपदिष्टस्तदात्मानं स्वमसंगरंहसं काप्यसक्तवेगं सहीयसां सहनशक्तिमत्तराणां सहः सहनशक्तिस्तां साहिष्णुं सहनशीलं मेन इत्यन्वयः ॥ ५ ॥ ❀ ❀ यद्यात्राविक्रम एव लोकस्योद्वेगजनकः किमुत तद्युद्धविक्रम इति भावेन तद्यात्राप्रभावं वक्ति अन्वीयमान इति । यथा सुष्ठु. भैरवं भयंकरं

भवति तथा व्यनदत् जगदंतको जगन्मृत्युस्तस्याप्यंतकं संहर्तृ घोषणं शब्दनशीलं भूषणं नूपुरलक्षणमंघ्रौ यस्य स तथा ॥ ६ ॥ ❀ ❀ असौ वीरभद्रो यज्ञवाटनिकटमायादिति वार्ता पुरोगामिनी तत्सेनानां धूलिरेव व्यनक्तीति भावेन ऋत्विगादीनां धूलिदर्शनेन जिज्ञासाप्रकारं वक्ति अथेति । उदीच्यां ककुभि दिशि ऋत्विजो यज्ञप्रवर्तकाः । यजमानो यज्ञे दीक्षितः । सभास्थाने स्थित्वा मंत्रतंत्रकर्म हविर्देवताग्निसंबंधं विवेचयंतः सदस्याः ॥ ७ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तदध्वरर्त्विग्विद्रावितमिति चित्सुखः ॥ १-९ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

पञ्चमे श्रुतवृत्तांतः कुप्यन् दक्षमघातयत् । उत्कृत्य स्वजटोत्थेन वीरभद्रेण धूर्जटिः ॥ १ ॥

प्रजापतेर्हेतोर्निधनं, कुतः तेनासत्कृतायाः तस्याध्वरे ये ऋभवो देवास्तैः ॥ १ ॥ ❀ ❀ सटा ज्वालाः रुद्रो घोरः सन् ॥ २ ॥ ❀ ❀ ततो जटायाः तन्वा दिवं स्पृशन् त्रयः सूर्या इव दृशो यस्य स अभवत् ॥ ३ ॥ ❀ ❀ हे रुद्र ! हे भट ! युद्धकुशल ! त्वं मे अंशक इति ब्रह्मतेजो दुर्जयमिति मा मंस्था इति भावः ॥ ४ ॥ ❀ ❀ मन्युना रुद्रेण परिचक्रमे प्रदक्षिणीचकार । असंगं केनापि सह गन्तुमशक्यं यद्रंहो वेगस्तेन । यद्वा असङ्गस्यात्मारामस्य रुद्रस्य रंहसा महीयसां बलीयसामपि सहः सहिष्णुं बलं सोढुं क्षमं मेने ॥ ५ ॥ ❀ ❀ जगदन्तकस्याप्यन्तकतुल्यं, घोषणानि शब्दायमानानि भूषणानि ययोस्ता-वङ्घ्री यस्य सः ॥ ६ ॥ ❀ ❀ प्रथमं तम इति ततस्तम एतन्न भवति किन्तु रज इति ज्ञात्वाऽऽहुः रज एतत् कुतोऽभूदिति ॥ ७ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

चतुर्थे शिवो वीरभद्रेण यज्ञमघातयदित्याह भव इति । प्रजापतेरत्सत्कृतायाः भवान्या निधनं तस्याऽध्वरे यज्ञे ऋभवस्तैः स्वपार्षदसैन्यं विद्रावितं च अवगम्य अपारं क्रोधमादधे कृतवान् ॥ १ ॥ ❀ ❀ तदा स धूर्जटिः रुद्रः सुष्ठु दष्ट ओष्ठपुटो येन सः क्रुद्धः सन् तडितो वह्नेश्च सटा ज्वाला तद्वदुग्रं रुचिर्यस्यास्तामुत्कृत्योत्पाट्योत्थाय गंभीरनादो हसन् भुवि विससर्ज्ज त्यक्तवान् ॥ २ ॥ ❀ ❀ ततो जटातः अतिकायो बृहच्छरीरो वीरभद्रोऽभूदिति शेषः । तनुवेत्यार्षम् । तन्वा दिवं स्पृशन् अत्युच्चदेह इत्यर्थः । घन इव रुक् कांतिर्यस्य त्रयः सूर्य्या इव दृशो यस्य कराला उग्रा दंष्ट्रा यस्य ज्वलदग्निरिव मूर्द्धजाः केशा यस्य कपालानां माला अस्य संतीति स तथा विविधान्युद्यतान्यायुधानि यस्य सः ॥ ३ ॥ ❀ ❀ तं बद्धां-जलिं किं करोमीति गृणंतं भाषंतम् । भूतनाथ आह हे रुद्र ! शत्रुभयवर्द्धन ! हे भट ! युद्धकोविद ! तत्र हेतुः त्वं मे अंशकः अत एव मे भटानामग्रणीः अत एव सयज्ञं दक्षं जहि विनाशय ॥ ४ ॥ ❀ ❀ एवं कुपितेन मन्युना रुद्रेण आज्ञप्तः स वीरभद्रः विभुं विपुलस्वभावं परिचक्रमे प्रदक्षिणीचकार तदाभीतो असंगेन प्रतिघातेन रंहसा वेगेन आत्मानं महीयसां महद्बलवता-मपि सहः सहिष्णुं सहसो बलस्य सहिष्णुं सोढुं क्षमं मेने ॥ ५ ॥ ❀ ❀ सुभैरवं सुभयंकरं यथा तथा व्यनदत् । तदनंतरं जगदं-तको मृत्युस्तस्याप्यंतकमिव शूलमुद्यम्य घोषणानि ध्वनिमंति भूषणानि नूपुरादीनि ययोस्तावंघ्री यस्य सः स प्राद्रवत् ॥ ६ ॥ ❀ ❀ अथानंतरम् उदीच्यां ककुभि उत्तरस्यां दिशि रेणुं प्रसमीक्ष्य एतत् तमो भवति किम् रज इति ज्ञात्वाहुः एतद्रजः कुतोभूदिति दध्युः चिंतयामासुः ॥ ७ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

पञ्चमे दक्षपापानामत्युग्राणां विपाकतः । सपरीवारयज्ञस्य विनाशो विनिरूप्यते ॥ १ ॥

पूर्वमृभुभिर्हन्यमाना रुद्रपार्षदाः पलायिता इत्युक्तं ते तु लज्जाभयादिना सन्देशकथनार्थमपि रुद्रपार्श्वं नागतास्तदा देवगुह्यकर्तृनारदमुखात्तत्रत्यवृत्तं श्रुत्वा तस्य महान् क्रोधो जात इत्याह–भव इति । भवः सर्वभावनसमर्थः प्रजापतेर्निमित्ताद्भवान्या निधनं तस्याध्वरे जाता ये ऋभवो नाम देवास्तैः स्वपार्षदसैन्यं च विद्रावितं नारदादवगम्य ज्ञात्वा अपारं स्वकार्यकरणमन्तरेणो-पायान्तरेणाप्रतिकार्यक्रोधमादधे आविष्कृतवान् । सतीदेहत्यागस्य प्रजापतिनिमित्तत्वमेवाह–तेनासत्कृताया इति ॥ १ ॥ ❀ ❀ क्रुद्धः सन् यत्कृतवांस्तदाह–क्रुद्ध इति । पुनः क्रोधानुवादः क्रोधानुवृत्तिप्रदर्शनार्थः । स प्रसिद्धः प्रलयकर्त्ता धूर्जटिः शिवः यतः क्रुद्धोऽत एव रुद्रः रौद्ररसाभिनिविष्टत्वेन भयंकरः सुदष्ट ओष्ठपुटो येन सः हसन् स्वजटामुत्कृत्योत्पाट्य सहसोत्थितो गम्भीरनादस्तां भुवि विससर्ज । ओष्ठो हि लज्जारूपा लज्जान्तरोष्ठ इति वचनात् । तां विहाय स दक्षयज्ञध्वंसार्थं प्रयत्नं कृतवानित्योष्ठ-दंशनोक्त्या सूचितम् । स्वस्य प्रलयकर्तुरग्रे दक्षस्यातितुच्छत्वेप्यभिमानेन मोहात्तस्य स्वद्रोहाचरणस्मरणेन हसन् । बलशक्त्या-

विर्भावार्थं गम्भीरो मेघगर्जितवन्नादो यस्य सः। तत्तेजसोतिशयत्वं सूचयन् जटां विशिनष्टि–तडिदिति। तडितां वह्नीनां च सटा ज्वाला तद्वद्रुग्रं रोचिर्यस्यास्तामित्यर्थः॥२॥ ❁ ❁ ततो वीरभद्रोत्पत्तिमाह–तत इति। ततः प्रक्षिप्तजटातोऽतिवायो बृहच्छरीरो वीरभद्रो जात इति शेषः। शरीरस्य महत्त्वमेवाह–तनुवा तन्वा शरीरेण दिवं स्वर्गं स्पृशन्। दक्षयज्ञविध्वंसस्य दुष्कर-त्वात्तदर्थमपेक्षितं तत्र क्रियाशक्त्यतिरेकं दर्शयति–सहस्रबाहुरिति। तत्स्वरूपमपि भयंकरमित्याह–घनरुगिति, घनवत् रुक् कान्तिर्यस्य स श्यामवर्ण इत्यर्थः। तस्य दृष्टयैव भस्मीकरणे सामर्थ्यं दर्शयति–त्रिसूर्यदृगिति। त्रयः सूर्या इव दृशो नेत्राणि यस्य। कराला दंष्ट्रा यस्य सः। ज्वलदग्निरिव मूर्द्धजाः केशा यस्य सः। कपालानां मनुष्यशिरसां मालया युक्तः। एवं स्वरूपेणैव सर्वनिराकरण-सामर्थ्येपि विविधानि नानाप्रकाराणि उद्यतानि उत्थापितानि आयुधानि यस्य सः॥३॥ ❁ ❁ तस्य रुद्राज्ञानुवर्त्तित्वमाह–तमिति। तं वीरभद्रं बद्धाञ्जलिं किं करोमि तदाज्ञापयेति गृणन्तं भगवान् एवंभूतस्याप्याज्ञापने शक्तो भूतनाथो रुद्र आह। किमाहेत्यपेक्षायां तदाज्ञामेव दर्शयति–दक्षमिति। हे रुद्रभट रुद्रस्य मम भट योद्धः! यद्वा रुद्रो भयंकरश्चासौ भटश्च तदेवं संबोधनं तस्योत्साहार्थं मम भटानामग्रणीः संस्त्वं सयज्ञं दक्षं जहि। न च पार्षदानामिव ब्रह्मतेजसा स्वपराभवः शङ्कनीयः। तत्र हेतुमाह–यतस्त्वं मेंऽशक इति॥४॥ ❁ ❁ एवमाज्ञप्तस्ततः किं कृतवानित्यपेक्षायमाह–आज्ञप्त इति। कुपितेन मन्युना रुद्रेण स एवमाज्ञप्त एतत्कृपयैव सर्वं सेत्स्यतीति मत्वा तमेव देवदेवमत एव विभुं सर्वं कर्तुं समर्थं परिचक्रमे। तेन परिक्रमणेन लब्धसामर्थ्यस्याभिमानं दर्शयति–मेन इति। हे तात विदुर! तदा असङ्गरंहसा प्रतिरोधशून्यस्ववेगेन महीयसां महाबलपराक्र-माणामपि सहः सहिष्णुं वेगं सोढुं क्षमं स आत्मानं मेने॥५॥ ❁ ❁ प्राप्ताप्रतिहतगतेर्दक्षयज्ञशालां प्रति गमनं निरूपयति–अन्वीयमान इति। तुशब्देन तस्य बलपराक्रमातिरेकं सूचयति। स वीरभद्रो महाबलपराक्रमवान् घोषणभूषणांघ्रिः घोषणं शब्दनशीलं भूषणं नूपुरलक्षणमंघ्र्योर्यस्य स तथा भृशं नदद्भी रुद्रपार्षदैरन्वीयमानः अनुगम्यमानः स्वयमपि सुभैरवमतिभयङ्करं यथा भवति तथा व्यनदत् नादं कृतवान्। ततश्च स जगदन्तकान्तकं जगदन्तको मृत्युस्तस्याप्यन्तकं मारकं शूलमुद्यम्य उत्थाप्य स प्राद्रवत् अतिवेगेन दक्षयज्ञवाटं जगामेत्यर्थः॥६॥ ❁ ❁ ततश्च यज्ञसभासदां तत्सैन्योद्धूलितरजोदर्शनेन महती चिन्ता जातेत्याह–अथेति। अथशब्दो भिन्नप्रक्रमे पूर्वविलक्षणयज्ञविध्वंसकालज्ञापकः। ऋत्विजो यज्ञप्रवर्त्तकाः, यजमानो यज्ञे दीक्षितः, सभ्याः सभास्थाने स्थित्वा युक्तायुक्तविवेचनपराः, द्विजा अन्ये ब्राह्मणास्तत्पत्न्यश्च उदीच्यां ककुभि दिशि रुद्रभटानामागच्छतामुत्थितं रेणुं प्रसमीक्ष्य प्रथमं भीत्या तमः किमेतदिति वदन्तः पश्चात्तमो न भवति, किंतु रज इति निश्चित्य रज एतत्कुतोभूदिति दध्युश्चिन्तयामासुः॥७॥

## भाषानुवादः

### वीरभद्रकृत दक्षयज्ञविध्वंस और दक्षवध

**श्रीमैत्रेयजी कहते हैं**—महादेवजीने जब देवर्षि नारदके मुखसे सुना कि अपने पिता दक्षसे अपमानित होनेके कारण देवी सतीने प्राण त्याग दिये हैं और उसकी यज्ञवेदीसे प्रकट हुए ऋभुओंने उनके पार्षदोंकी सेनाको मारकर भगा दिया है, तब उन्हें बड़ा ही क्रोध हुआ॥१॥ ❁ ❁ उन्होंने उग्र रूप धारण कर क्रोधके मारे होठ चबाते हुए अपनी एक जटा उखाड़ ली—जो बिजली और आग की लपटके समान दीप्त हो रही थी—और सहसा खड़े होकर बड़े गम्भीर अट्टहासके साथ उसे पृथ्वीपर पटक दिया॥२॥ ❁ ❁ उससे तुरन्त ही एक बड़ा भारी लम्बा-चौड़ा पुरुष उत्पन्न हुआ। उसका शरीर इतना विशाल था कि वह स्वर्गको स्पर्श कर रहा था। उसके एक हजार भुजाएँ थीं मेघके समान श्याम वर्ण था, सूर्यके समान जलते हुए तीन नेत्र थे, विकराल दाढ़ें थीं और अग्निकी ज्वालाओंके समान लाल-लाल जटाएँ थीं। उसके गलेमें नरमुण्डोंकी माला थी और हाथोंमें तरह-तरहके अस्त्र-शस्त्र थे॥३॥ ❁ ❁ जब उसने हाथ जोड़कर पूछा—'भगवन्! मैं क्या करूँ?' तो भगवान् भूतनाथने कहा—'वीर रुद्र! तू मेरा अंश है, इसलिए मेरे पार्षदों का अधिनायक बनकर तू तुरंत ही जाओ और दक्ष तथा उसके यज्ञको नष्ट कर दे'॥४॥ ❁ ❁ प्यारे विदुरजी! जब देवाधिदेव भगवान् शङ्करने क्रोधमें भरकर ऐसी आज्ञा दी, तब वीरभद्र उनकी परिक्रमा करके चलनेको तैयार हो गये। उस समय उन्हें ऐसा मालूम होने लगा कि मेरे वेगका सामना करनेवाला संसारमें कोई नहीं है और मैं बड़े-से-बड़े वीरका भी वेग सहन कर सकता हूँ॥५॥ ❁ ❁ वे भयङ्कर सिंहनाद करते हुए एक अति-कराल त्रिशूल हाथमें लेकर दक्षके यज्ञमण्डपकी ओर दौड़े। उनका त्रिशूल संसारसंहारक मृत्युका भी संहार करनेमें समर्थ था। भगवान् रुद्रके और भी बहुत-से सेवक गर्जना करते हुए उनके पीछे हो लिये। उस समय वीरभद्रके पैरोंके नूपुरादि आभूषण झनन-झनन बजते जाते थे॥६॥ ❁ ❁ इधर यज्ञशालामें बैठे हुए ऋत्विज, यजमान, सदस्य तथा अन्य ब्राह्मण और ब्राह्मणियोंने जब उत्तर दिशाकी ओर धूल उड़ती देखी, तब वे सोचने लगे 'अरे, यह अँधेरा-सा कैसे होता आ रहा है? यह धूल कहाँसे छा गयी?'॥७॥

वाता न वान्ति न हि सन्ति दस्यवः प्राचीनबर्हिर्जीवति होग्रदण्डः ।
गावो न काल्यन्त इदं कुतो रजो लोकोऽधुना किं प्रलयाय कल्पते ॥ ८ ॥
प्रसूतिमिश्राः स्त्रिय उद्विग्नचित्ता ऊचुर्विपाको वृजिनस्यैष तस्य ।
य[१]त्पश्यन्तीनां दुहितॄणां प्रजेशः सुतां सतीमवदध्यावनागाम् ॥ ९ ॥
यस्त्वन्तकाले व्युप्तजटाकलापः स्वशूलसूच्यर्पितदिग्गजेन्द्रः ।
वितत्य नृत्यत्युदितास्त्रदोर्ध्वजानुच्चाट्टहासस्तनयित्नुभिन्नदिक् ॥ १० ॥
अमर्षयित्वा तमसह्यतेजसं मन्युप्लुतं दुर्विषहं भ्रुकुट्या ।
करालदंष्ट्राभिरुदस्तभागणं स्यात्स्वस्ति किं कोपयतो विधातुः ॥ ११ ॥
बह्वेवमुद्विग्नदृशोच्यमाने जनेन दक्षस्य मुहुर्महात्मनः ।
उत्पेतुरुत्पाततमाः सहस्रशो भयावहा दिवि भूमौ च पर्यक् ॥ १२ ॥
तावत्स रुद्रानुचरैर्मखो महान् नानायुधैर्वामनकैरुदायुधैः ।
पि[२]ङ्गैः पिशङ्गैर्मकरोदराननैः पर्याद्रवद्भिर्विदुरान्वरुध्यत ॥ १३ ॥
केचिद्बभञ्जुः प्राग्वंशं पत्नीशालां तथापरे । सद आग्नीध्रशालां च तद्विहारं महानसम् ॥ १४ ॥
रु[३]रुजुर्यज्ञपात्राणि तथैकेऽग्नीननाशयन् । कुण्डेष्वमूत्रयन् केचिद्बिभिदुर्वेदिमेखलाः ॥ १५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

हेत्वंतरासंभवेनौत्पातिकं कल्पयंति । वाता इति । दस्यूनामभावे हेतुः । प्राचीनबर्हिस्तदानींतनो राजा जीवतीति । काल्यंते न शीघ्रं नीयंते ॥ ८ ॥ ❀ ❀ प्रसूतिर्दक्षपत्नी सा मिश्रा मुख्या यासाम् । विपाकः फलम् । 'पश्यंतीनामिति तस्या दुःखाधिक्ये हेतुः अवदध्याववज्ञातवान् । अनागाम् अनागसम् ॥ ९ ॥ ❀ ❀ न चेदं सुतावज्ञामात्रं किं तु रुद्रावज्ञानं चातो नास्य भद्रं भविष्यतीत्याहुः यस्त्विति द्वाभ्याम् । व्युप्तो विकीर्णो जटाकलापो यस्य स्वशूलस्य सूच्यामग्रेऽर्पिताः प्रोताः दिग्गजेंद्रा येन उदितान्युन्नमितान्यस्त्राणि यैस्ते दोषो बाहव एव ध्वजास्तान्वितत्य विस्तार्य । हर्षेण नृत्यति उच्चोऽट्टहासः कठोरो हास एव स्तनयित्नुर्घनगर्जितं तेन भिन्ना विदीर्णा दिशो येन सः ॥ १० ॥ ❀ ❀ अमर्षयित्वाऽसहनयुक्तं कृत्वा मन्युप्लुतं क्रोधव्याप्तम् । उदस्तो विक्षिप्तो भागणो नक्षत्रसंघो येन पुनश्च तं कोपयतो विधातुरपि किं स्वस्ति स्यान्न स्यादेव काऽन्यस्य कथा ॥ ११ ॥ ❀ ❀ उद्विग्ना प्रचलिता दृग्यस्य तेन जनेन बहु यथा भवत्येवमुच्यमाने सत्युत्पाततमा महोत्पाता उत्थिताः पर्यक् सर्वतश्च कथंभूताः महात्मनोऽपि दक्षस्य भयावहः ॥ १२ ॥ ❀ ❀ नानाऽयुधानि येषां वामनकैर्ह्रस्वैः उद्यतायुधैः पिंगैः कपिलैः पिशंगैः पीतैः मकरस्येवोदरमाननं च येषां तैः परितो धावद्भिरवरुद्धः ॥ १३ ॥ ❀ ❀ यज्ञशालायाः पूर्वपश्चिमस्तंभयोरर्पितं पूर्वपश्चिमायतं काष्ठं प्राग्वंशस्तम् । यज्ञशालायाः पश्चिमतः पत्नीशाला ताम् । यज्ञशालायाः पुरतः स्थितं सदो मंडपम् । सदसः पुरो हविर्धानं तस्योत्तरत आग्नीध्रशालाम् । तद्विहारं यजमानगृहम् । महानसं पाकभोजनशालाम् ॥ १४ ॥ ❀ ❀ रुरुजुर्बभंजुः । उत्तरवेद्या मेखलाः सीमासूत्राणि । "आज्ञा गुरूणां ह्यविचारणीया" इति हेतोर्न ते दोषभाजिन इति भावः ॥ १५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पुनरपि विविधं संशेरते—वाता इति । उग्रदंडत्वाद्राज्ये चौरभयं सर्वथा नास्तीति भावः । ह प्रसिद्धम् ॥ ८ ॥ ❀ ❀ तस्य कस्येत्याकांक्षायामाह-यदिति ॥ ९ ॥ ❀ ❀ उन्नमितान्युच्चैःकृतानि ॥ १० ॥ ❀ ❀ एतेन दक्षापराधेन सर्व एव महाविपदि सपापनौरिव निमज्जाम इति भावः । भगण एव भागणः, स्वार्थिकोऽण् ॥ ११ ॥ ❀ ❀ जनेन तत्रत्यलोकेन । महात्मनो विपरीतलक्षणया दुरात्मनः । यद्वा महे यज्ञोत्सवे आत्मा बुद्धिर्यस्य यज्ञाविष्टचेतसः 'कर्मतंत्रं वितनुताम्' इत्यादिनोक्तेः । अपिनाऽतितेजस्विन इत्यर्थः स्वाम्यभिप्रेतः ॥ १२ ॥ ❀ ❀ यावदुत्पाता उत्पन्नास्तावत्कालक्षेपमंतरेण ॥ १३ ॥ ❀ ❀ हविःशालायाः पूर्वभागे यजमानादिस्थित्यर्थे गृहे प्राग्वंशशब्दो वर्त्तते । 'प्राग्वंशः प्राग्घविर्गेहात्' इत्यमरोक्तेः ॥ १४–१५ ॥

---

१. प्रा० पा०—स्यैत । २. प्रा० पा०—प्रप० । ३. प्रा० पा०—नेत्रैः । ४. प्रा० पा०—बभञ्जु० ।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

औत्पातिकत्वं उत्पातजन्यत्वम् ॥ ८ ॥ ❀ ❀ एष अकस्माद्व्रजआगमनरूपः, अवज्ञातवानिति यत् तस्य वृजिनस्येति योज्यम् ॥ ९ ॥ ❀ ❀ यस्त्विति युग्मकम्। असहनयुक्तं कृत्वा इत्यसहनस्य कारणत्वं कोपस्य कार्य्यत्वमिति भेदः। यः स्वत एव प्रलये ईदृशः पुनश्च तं कोपयत इति योज्यम् ॥ १० ॥ ❀ ❀ प्रजापतित्वेन महात्मनः श्रेष्ठजीवस्यापि ॥ ११ ॥ ❀ ❀ आ सर्वत इति कल्पिता टीका परित इत्यनेनैव तदर्थोपपत्तेः। आ सम्यक् वेगेनेत्यर्थः ॥ १२ ॥ ❀ ❀ हविर्द्धानं होमद्रव्यस्थलमिति प्रकरणात्सन्निवेशार्थं रिक्तपूरणम्। आग्नीध्रशालां होमकुण्डस्थलीम् ॥ १३ ॥ ❀ ❀ उत्तरे हविर्धानोत्तरदेशे या वेदी तस्याः सीमासूत्राणि अवधिपरिधयः ॥ १४-१७ ॥

### श्रीमद्वीरराघवव्याख्या

हेत्वंतरासंभवेनौत्पातिकं कल्पयंत आहुः वाता इति। वाताश्चंडवायवः न वांति न प्रसरंति दस्यवश्चोरादयः न संति, तत्र हेतुः हि यस्मात् उग्रदंडो दमनं प्रशासनं यस्य सः प्राचीनबर्हिः तदानींतनो राजा जीवति तस्मिन् जीवति न दस्यवः। हेत्याकस्मिकत्वद्योतकं गावो न काल्यंते न शीघ्रं नीयंते अत इदं रजः कुत उत्थितम् अधुना लोकः प्रलयाय नाशाय कल्पते संभाव्यत इत्यर्थः ॥ ८ ॥ ❀ ❀ प्रसूतिर्दक्षस्य पत्नी तन्मिश्राः तत्सहिताः स्त्रियः उद्विग्नचित्ता उद्विग्नं भीतं चित्तं यासां ता ऊचुः तस्य दक्षस्य यद् वृजिनं यत्पापं तस्यैवायं विपाकः फलं यत् यस्मात् प्रजेशो दक्षः दुहितॄणां पश्यंतीनां सतीनाम् अनेन तस्याः दुःखाधिक्यं सूचितम्, अनागसं निरपराधां सुतां सतीं भवानीमवदध्यौ अवज्ञातवान् ॥ ९ ॥ ❀ ❀ असह्यपराक्रमं रुद्रं कोपयतो दक्षस्याऽमंगलमवश्यं भावीत्याहुः द्वाभ्यां यस्त्विति। यो रुद्रोन्तकाले प्रलयकाले व्युप्तो विकीर्णः जटाकलापो यस्य स्वशूलस्य सूच्या अग्रेण अर्पिता प्रोता दिग्गजेन्द्रा येन उदितानि उन्नमितानि अस्त्राणि यैस्ते दोषः बाहव एव ध्वजास्तान् वितत्य प्रसार्य्य उच्चोऽट्टहासः स एव स्तनयित्नुर्गर्जितं तेन भिन्ना विदीर्णा दिशो येन सः हर्षेण नृत्यति ॥ १० ॥ ❀ ❀ तमेवंभूतमसह्यमप्रतिघातं तेजो यस्य तं रुद्रममर्षयित्वा असहनयुक्तं कृत्वा मन्युना क्रोधेन प्लुतं व्याप्तं अत एव दुर्निरीक्ष्यं द्रष्टुमशक्यं भ्रुकुट्या उग्रदंष्ट्राभिश्च उदस्त उत्क्षिप्तो भागणो नक्षत्रसंघो येन तं कोपयतो विधातुरपि किं स्वस्ति स्यात्। विधातुरप्येवमन्यस्य का कथेत्यर्थः ॥ ११ ॥ ❀ ❀ उद्विग्ना प्रचलिता दृग्यस्य तेन जनेन बहु यथा भवत्येवमुच्यमाने सति सहस्रशः उत्पाततमा महोत्पाता महात्मनः स्थिरचित्तस्यापि दक्षस्य भयावहा दिवि भूमौ च पर्यक् परितः उत्थिताः ॥ १२ ॥ ❀ ❀ तावत्तु आशु रुद्रानुचरैर्महान् मखो यागः हे विदुर ! अन्वरुध्यत प्रत्यवध्यत विनाशित इति यावत्। रुद्रानुचरैः कथंभूतैर्नाना विचित्राणि आयुधानि येषां तैः वामनकैः ह्रस्वैः उद्यतायुधैः पिशंगैः पीतैर्मकरस्येवोदरमाननं च येषां तैः परितो धावद्भिः ॥ १३ ॥ ❀ ❀ मखानुरोधमेव प्रपंचयति केचिद्रुद्रपार्षदाः प्राचीनवंशं बभंजुः त्रुटितवंतः तथा केचिदपरे पत्नीशालां बभंजुरित्यनुषंगः। प्राचीनं पूर्वपश्चिमस्तंभार्पितपूर्वपश्चिमायतं तिर्यक्काष्ठं प्राग्वंशः। तथैके सदः यज्ञशालायाः पूर्वतः स्थितं मंडपं सदः सदसः पुरतो हविर्धानं तस्योत्तरत आग्नीध्रशालां तद्विहारं यजमानगृहं महानसं पाकभोजनशालाम् ॥ १४ ॥ ❀ ❀ रुरुजुः बभंजुः, अमूत्रयन् मूत्रं कृतवंतः। तथोत्तरवेद्या मेखलासीमासूत्राणि बिभिदुः ॥ १५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

न केवलं दध्युरभिदद्ध्युश्चेत्याह वाता इति। चोराणामभावे निमित्तमाह प्राचीनबर्हिरिति उग्रो दंडो यस्य। उग्रेपु दंडो यस्येति वा स उग्रदंडः प्राचीनबर्हिर्नाम तत्कालभवो राजा जीवति सप्राणो वर्तत इत्यन्वयः। हेत्यनेन तज्जीवनं सर्वेषां सिद्धमिति व्यनक्ति ॥ ८ ॥ ❀ ❀ तत्र केचिद्दक्षभयात्कारणं जानंतोपि तूष्णीमासंस्तद्भयहीनाः प्रसूतिमुख्याः कारणमूचुश्चेत्याह। प्रसूतिमिश्रा इति मिश्रशब्दो मुख्यार्थे वर्तते। प्रजेशो दक्षो दुहितॄणां प्रपश्यंतीनां सतीनामनागसमनपराधां नाम्ना सतीं सुतामवदध्यौ अवज्ञातवानिति यद्यस्मात्तस्माद्वृजिनस्य पापस्य विपाकः फलमेवेत्यन्वयः ॥ ९ ॥ ❀ ❀ सत्यवज्ञानोत्पन्नपरमेश्वरकोपादियमनर्थद्योतिनी धूलिरिति भावेन सदाशिवमाहात्म्यं वदंतीत्याह यस्त्विति। व्युप्तजटाकलापः प्रसारितजटासमूहः वितत्य विस्तृत्य बाहूनिति शेषः, उदितान्यस्त्राणि धनुरादीनि येषु ते उदितास्त्रा दोषो भुजा एव ध्वजा दोर्ध्वजा यस्य स तथोक्तः रूक्षोट्टहासः कठोरसिंहनादः स एव स्तनयित्नुः प्रलयकालीनमेघनादस्तेन भिन्ना विद्राविता दिशो यस्य स तथोक्तः। भिन्नदृगिति पाठे स्तनयित्नुवन्मेघवद्भिन्ना व्यक्ता दृग्यस्य स तथेत्यर्थः ॥ १० ॥ ❀ ❀ अनेन प्रकृते किं तत्राह अमर्षयित्वेति। एवंविधं तं शिवममर्षयित्वा। विधातुर्दक्षस्य स्वस्ति स्यात्किं ? न स्यादेवेत्यन्वयः। दंष्ट्राप्रभाभिरुदस्तो निरस्तो भागणो नक्षत्रगणो यस्य स तथोक्तस्तम् ॥ ११ ॥ ❀ ❀ न केवलं तर्कतो दक्षस्यैष्यदरिष्टं ज्ञायते किंतु दुर्निमित्तैरपीत्याह। बह्वेवमिति। किं बहुना पर्यक् सर्वतो दिक्षु ॥ १२ ॥ ❀ ❀ उत्पातानां क्षिप्रं प्रत्यक्षफलमभूदित्याह तावदिति। यावदुत्पाता उत्पन्नास्तावदन्वरुध्यत इत्यन्वयः। नानाविधत्वमेव स्पष्टीक्रियते वामनकैरित्यादिना तावत्कालक्षेपमंतरेण स महामखो रुद्रानुचरैर्वामनकैर्ह्रस्वैर्ह्रस्वशिरोभिश्च पिंगैः कपिलैः पिशंगैर्हरिद्रावर्णैर्मकरवदुदरमाननं च येषां ते तथोक्तास्तैः पर्याप्लवद्भिरितस्तत उत्पतद्भिः ॥ १३ ॥ ❀ ❀ तत्र तत्र स्वस्वानुकूलं रोधं चक्रुरित्युक्तं विशिनष्टि केचिदिति। प्राग्वंशमग्निहोत्रस्थानं यज्ञशालायाः पूर्वपश्चिमस्तंभयोरुपर्यवां-

तरवंशावलंबनं पूर्वपश्चिमायतं दारु वा प्राग्वंशस्तं, यज्ञशालायाः पश्चिमतः पत्नीशाला। यज्ञशालायाः पुरतो मंडपः सदः। मंडपतः पुरतो हविर्धानी। तस्योत्तरतः शालाग्नीध्रशाला। पशुविशसनस्थानम्। तस्याग्नीध्रस्याग्निस्थानं विहारः। महासनः पचनस्थानम् ॥ १४ ॥ ❀ ❀ रुरुजुः रुजो-भंग इति धातुः, वेदिमेखला उत्तरवेदिसीमासूत्राणि ॥ १५-१६ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

यस्त्वन्तकाल इति युग्मकम् ॥ १० ॥ ❀ ❀ अमर्षोऽसहनं कोपस्तु तत्कार्यभूतः ॥ ११-१८ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

पुनरपि विविधं संशेरते वाता इति। प्राचीनबर्हिस्तदानीन्तनो राजा। ह स्पष्टम् ॥ ८ ॥ ❀ ❀ प्रसूतिर्दक्षपत्नी सा मिश्रा मुख्या यासां तास्तस्य वृजिनस्यापराधस्य एष विपाकः फलम्। पश्यन्तीनामिति तस्या दुःखाधिक्ये हेतुः। अवदध्यौ अवज्ञातवान् अनागां निरपराधाम् ॥ ९ ॥ ❀ ❀ न चास्य प्रजापतेस्तेजस्वित्वं श्रीरुद्रे प्रभवतीत्याहुः यस्त्विति द्वाभ्याम्। व्युप्तजटाकलापः विकीर्णजटापुञ्जः। उदितान्युन्नमितानि अस्त्राणि येषु ते दोषो बाहव एव ध्वजास्तान् वितत्य नृत्यति। स्तनयित्नुर्गर्जितं तेन भिन्ना विदीर्णा दिशो येन तम् ॥ १० ॥ ❀ ❀ अमर्षयित्वा कोपयित्वा उदस्त उत्क्षिप्तो भागणो वह्निसूर्यादीनामपि ज्योतिर्गणो येन तम्। पुनरपि प्रेयस्यवमानेन कोपयतो विधातुः प्रजापतेः पितुर्ब्रह्मणोऽपि किं स्वस्ति स्यात्, कान्यस्य कथेति दक्षस्य दौरात्म्येन सर्व एव महाविपदि निमंक्ष्याम इति भावः ॥ ११ ॥ ❀ ❀ हे मातरः! सत्यमेव ब्रूथेत्येवं जनेन तत्रत्यलोकसमूहेनापि बहु उच्यमाने महात्मनोऽपि दक्षस्य। यद्वा विपरीतलक्षणया दुरात्मन इत्यर्थः ॥ १२ ॥ ❀ ❀ वामनकैर्ह्रस्वदेहैः अन्वरुध्यत आव्रियत ॥ १२ ॥ ❀ ❀ यज्ञशालायाः पूर्वपश्चिमस्तम्भयोरर्पितं पूर्वपश्चिमायतं काष्ठं प्राग्वंशः। यज्ञशालायाः पश्चिमतः पत्नीशाला। यज्ञशालायाः पुरतः सदो मण्डपः, सदसः पुरतो हविर्धानं तस्योत्तरत आग्नीध्रशाला तद्विहारो यजमानगृहं महानसं पाकभोजनशाला ॥ १४ ॥ ❀ ❀ रुरुजुर्बभंजुः ॥ १५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

तच्चिंतामेवाह वाता इति। दस्यवो न संति यत उग्रदंडः प्राचीनबर्हिर्नृपो जीवति गावो न काल्यंते न शीघ्रं चाल्यंते रजोहेतुमनुपलभ्य हेतुं कल्पयंति लोकोऽधुना किं प्रलयाय कल्पते इति ॥ ८ ॥ ❀ ❀ प्रसूतिमिश्राः सतीमातृसहिताः तस्य प्रजापतिकर्तृकस्य वृजिनस्य पापस्य एष विपाकः फलम्। यत् यस्मात् प्रजेशः दुहितॄणां पश्यंतीनाम् अनागां निष्पापाम् अवदध्यौ अवज्ञातवान् ॥ ९ ॥ ❀ ❀ यो रुद्रः उच्चः उदात्तः अट्टः कठोरश्च यो हासः स एव स्तनयित्नुर्गर्जितं तेन विदीर्णा दिशो येन अंतकाले प्रलयावसरे व्युप्तो विकीर्णो जटाकलापो यस्य शूलस्य सूच्यामग्रभागे अर्पिता प्रोता दिग्गजेन्द्रा येन उदितानि उन्नमितानि अस्त्राणि येषु ते दोषः बाहव एव ध्वजाः केतवस्तान् वितत्य नृत्यति ॥ २० ॥ ❀ ❀ असह्यं दुःसहं तेजो यस्य तं मन्युना क्रोधेन प्लुतं भ्रुकुट्या दुर्विषहं द्रष्टुमशक्यं करालाभिर्दंष्ट्राभिः उदस्तो विक्षिप्तो भागणो नक्षत्रसमूहो येनैवंभूतं तममर्षयित्वा प्रातिकूल्यं नीत्वा कोपयतो विधातुरपि किं स्वस्ति कुशलं स्यात् ॥ ११ ॥ ❀ ❀ उद्विग्ना भयव्याप्ता दृग्यस्य तेन जनेन एवं बहूच्यमाने सति दक्षस्य दिवि भुवि पर्य्यक् सर्वतो दिक्षु सहस्रशो भयावहाः उत्पाततमाः अत्युत्पाताः उत्पेतुः ॥ १२ ॥ ❀ ❀ वामनकैर्ह्रस्वैः पिंगैः कपिलैः पिशंगैः पीतैः मकरवदुदरमाननं च येषां तैः अन्वरुद्धः व्याप्तोभूदित्यर्थः ॥ १३ ॥ ❀ ❀ प्राग्वंशं यज्ञशालागतपूर्वपश्चिमस्तंभोपरिनिहितं काष्ठम्। सदः सभाम्। विहारं यजमानगृहम् ॥ १४ ॥ ❀ ❀ रुरुजुः बभंजुः। अमूत्रयन् मूत्रं कृतवंतः ॥ १५ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं चिन्ताकुलमनसः कारणान्तरासंभावनापूर्वकं प्रलयं संभावितवन्त इत्याहुः—वाता इति। वातचक्रेणापि रजउत्थानं संभवति, तदपि नास्तीत्यर्थः। अत इदं रजः कुतोभूदिति सर्वत्र सम्बन्धः। तर्हि दस्यूनां विलुम्पतां तद्भविष्यति तत्राहुः—नहीति। दस्यूनामभावे हेतुमाहुः—प्राचीनबर्हिरिति। प्राचीनबर्हिस्तत्कालीनो राजा उग्रो दण्डः उग्रेषु वा दण्डो यस्य सः। नहि तस्मिन् जीवति इह तदनुवर्तिदेशे दस्यवः संभाव्यन्ते। जीवति इति ह्रस्वपाठे हकारः स्फुटताद्योतनार्थः। तर्हि गवां शीघ्रं नीयमानानां रजो भविष्यतीत्याशङ्क्याहुः—गाव इति। एवं संभावितकारणानामभावात् किं लोकोऽधुनैव प्रलयाय कल्पते। किमिति संभावनायाम्। अयं पक्षः संभवति, दक्षेण सत्यपमानादिना प्रलयकर्तृ रुद्रस्य कोपितत्वादिति भावः ॥ ८ ॥ ❀ ❀ एवं दक्षाधीनानां तत्संमुखे स्पष्टं वक्तुमशक्तानां संभावनामुक्त्वा तद्भयरहितानां प्रसूतिप्रभृतीनां वचांसि दर्शयति—प्रसूतिमिश्रा इति त्रिभिः। मिश्रशब्दो मुख्यार्थकः। प्रसूतिर्दक्षपत्नी सा मिश्रा मुख्या यासां ताः स्त्रियो रजोदर्शने उद्विग्नं चित्तं यासां ताः प्रजेशो दक्षः स्वसुतां सतीनाम्नीमनागां अनागसं यदवदध्यौ अवज्ञातवान्, कुशलप्रश्नादिनापि तत्सत्कारं न कृतवांस्तस्यैव वृजिनस्य पापस्यैष

उपद्रवसूचक रजआदिर्विपाकः फलमित्यूचुरित्यन्वयः। दुहितॄणां पश्यन्तीनामित्यनेन समानपङ्क्तिष्ववमानस्यासह्यत्वं सूचितम्। प्रजेशपदेन तस्य सर्वत्र संमानकरणमेवोचितम्, किं पुनः सुतासंमाने वक्तव्यमतस्तदपमानमत्यनुचितमेव कृतमिति सूचितम् ॥ ९ ॥ ❀ ❀ ननु यदि सतीवियोगात्क्रुद्धो महादेवः सैन्यमुपद्रवार्थं प्रेषयेत्तदा पूर्ववद्यज्ञघ्ननाशकमन्त्रेणैव तन्निराकरणं भविष्यत्यतो नोपद्रवो भवितेत्याशङ्क्य यः सर्वस्यापि चराचरस्यानायासेन प्रलयं करोति तदग्रे के यूयं वराका इत्याशयेन तत्सामर्थ्यं दर्शयन्ति—यस्त्विति। तुशब्देन न कोपि तादृशः समर्थ इति सूचयन्ति। अन्तकाले महाप्रलयाव्यवहितपूर्वकाले, व्युप्तो विकीर्णो जटाकलापो यस्य सः किं च स्वशूलस्याऽसाधारणायुधस्य सूची अग्रभागस्तत्रार्पिताः स्वस्थानादुद्धृत्य प्रोता दिग्गजेन्द्रा येन सः। अनेन ये दिशो विष्टभ्य स्थिता येषां चलने द्वीपादिरचनायाः क्षणेनादर्शनं भवति ते सर्वेऽनेन स्वशूले आरोप्यन्त इति महत्सामर्थ्यं दर्शितम्। न चैतावतापि तस्य प्रयाससंभावना यतः परमानन्देन तदानीमपि नरीनर्त्तीत्याहुः—वितत्येति। उदितानि ऊर्ध्वं धृतानि अस्त्राणि येषु तादृशा दोषो भुजास्त एव ध्वजास्तान् वितत्य विस्तृतान् कृत्वा नृत्यति। नानास्त्रोपेता भुजा नृत्याभिनयेन नानाविलासयुक्ता ध्वजवद्भासन्त इत्यर्थः। उच्चः सर्वशब्दोपमर्दकः अट्टः कठोरो यो हासः स एव स्तनयित्नुर्वज्रनिर्घोषस्तेन भिन्ना विशीर्णा दिशो येन स तथा। य एवंभूतस्तममर्षयित्वेत्युत्तरेण संबन्धः॥ १० ॥ ❀ ❀ एवं तस्य स्वभावसिद्धं धर्मं निरूप्य कोपेन तु किं न कुर्यादित्याहुः—अमर्षयित्वेति। तं पूर्वोक्तं प्रलयकारकमतः पूर्वमेव विश्वसृक्सभायां दुर्वचसा तिरस्कारेण मन्युयुतं क्रोधेन व्याप्तमतो भ्रुकुट्या कुटिलया दुर्विषहं भयंकरत्वेन द्रष्टुमप्यशक्यं पुनरमर्षयित्वा सामर्षं कृत्वा सत्यपमानेनासह्यरोषयुक्तं कृत्वा कोपयतो रोषमुत्पादयतो विधातुः प्रजापतेर्दक्षस्य किं स्वस्ति स्यादपि तु न स्यादेवेत्यर्थः। न च कर्मभिः प्रसादितैः सूर्यादिदेवैस्तत्प्रतिकारो भविष्यतीति मन्तव्यम्, यतः करालाभिः भयंकराभिर्दंष्ट्राभिरुदस्तो निरस्तो भागणो ज्योतिःसमूहो येन तम्। अत एवासह्यतेजसमसह्यं तेजो यस्य तम्॥ ११ ॥ ❀ ❀ तदासन्ननाशसूचका उत्पाता अपि जाता इत्याह—बह्विति। भयेनोद्विग्ना इतस्ततः प्रचलिता दृक् यस्य तेन जनेनैवं पूर्वोक्तप्रकारेण बहु यथा स्यात्तथोच्यमाने सति महात्मनोऽतिधीरस्यापि दक्षस्य भयावहा दिवि ग्रहयुद्धादयो भूमौ श्वरोदनादयः पर्यक् सर्वतस्तत्रापि मुहुर्वारंवारमुत्पाततमाः महोत्पाता उत्पेतुः जाताः॥ १२ ॥ ❀ ❀ एवमुत्पातान् दृष्ट्वा यजमानादयो यावत्सावधाना भवेयुस्ततः पूर्वमेव रुद्रानुचरैरागत्य सहसा सर्वेपि संनिरुद्धा इत्याह—तावदिति। कैश्चिद्वामनकैः ह्रस्वाङ्गैः कैश्चित् पिङ्गैः कैश्चित् पिशङ्गैः पीतवर्णैः कैश्चिन्मकरोदराननैः मकरस्येवोदरमाननं च येषां तैः नानाविधान्युद्यतान्यायुधानि येषां तैः परितः आद्रवद्भिराधावद्भिः सोत्पूर्जितो महामखोऽन्वरुध्यत अवरुद्धो जातः। रुद्रानुचराणामाटोपं दृष्ट्वा सर्वे यजमानादयो भयेन कर्मानुष्ठानेऽशक्ता जाता इत्यर्थः। हे विदुर इति संबोधनं तस्य ज्ञानकौशल्यबोधनार्थम्। तेन तेषामीश्वरमाहात्म्यज्ञानाभावान्मखभङ्गो जातस्तत्त्वया ज्ञायत एवेति सूचयति॥ १३ ॥ ❀ ❀ ततस्तत्कृतोपद्रवमाह—केचिदित्यारभ्य यावदध्यायसमाप्ति। यज्ञशालायाः पूर्वपश्चिमस्तम्भयोरर्पितं पूर्वपश्चिमायतं काष्ठं प्राग्वंशस्तम्। यज्ञशालातः पश्चिमतः पत्नीशाला, यत्र यजमानादिपत्न्य उपविशन्ति। यज्ञशालायाः पुरतः सदो मण्डपः, यत्र सभ्यास्तिष्ठन्ति। ततः पुरतो हविर्धानम्। तस्योत्तरत आग्नीध्रशाला, ताम्। तद्विहारं तस्य यजमानस्य गृहम्। महानसं प्रातः भोजनस्थानम्। केचिद्बभञ्जुरिति सर्वत्र द्वितीयान्तेन संबध्यते॥ १४ ॥ ❀ ❀ यज्ञपात्राणि चमसादीनि रुरुजः बभञ्जुः। 'रुजो भङ्गे' इति धातोः, वेदिमेखलाः उत्तरवेद्याः सीमासूत्राणि॥ १५ ॥

## भाषानुवादः

इस समय न तो आँधी ही चल रही है और न कहीं लुटेरे ही सुने जाते है; क्योंकि अपराधियोंको कठोर दण्ड देनेवाला राजा प्राचीनबर्हि अभी जीवित है। अभी गौओंके आनेका समय भी नहीं हुआ है। फिर यह धूल कहाँसे आयी? क्या इसी समय संसारका प्रलय तो नहीं होनेवाला है?' ॥ ८ ॥ ❀ ❀ तब दक्षपत्नी प्रसूति एवं अन्य स्त्रियोंने व्याकुल होकर कहा—प्रजापति दक्षने अपनी सारी कन्याओंके सामने बेचारी निरपराधा सतीका तिरस्कार किया था; मालूम होता है यह उसी पापका फल है॥ ९ ॥ ❀ ❀ (अथवा हो न हो यह संहारमूर्ति भगवान् रुद्रके अनादरका ही परिणाम है।) प्रलयकाल उपस्थित होनेपर जिस समय वे अपने जटाजूटको बिखेरकर तथा शस्त्रास्त्रोंसे सुसज्जित अपनी भुजाओंको ध्वजाओंके समान फैलाकर ताण्डव नृत्य करते हैं, उस समय उनके त्रिशूलके फलोंसे दिग्गज बिंध जाते हैं तथा उनके मेघगर्जनके समान भयङ्कर अट्टहाससे दिशाएँ विदीर्ण हो जाती हैं॥ १० ॥ ❀ ❀ उस समय उनका तेज असह्य होता है, वे अपनी भौंहे टेढ़ी करनेके कारण बड़े दुर्द्धर्ष जान पड़ते हैं और उनकी विकराल दाढ़ोंसे तारागण अस्त-व्यस्त हो जाते हैं। उन क्रोधमें भरे हुए भगवान् शङ्करको बार-बार कुपित करनेवाला पुरुष साक्षात् विधाता ही न हो—क्या कभी

---

१. अनेन 'पुरुषस्य केशान्विदुरंबुवाहानि'ति केशानां मेघत्वोक्त्या तदा ते निर्मुक्तबंधना यथेष्टं जलानि वर्षंति येन क्षणात्समुद्राणामपि प्लावनं भवतीति सूचितम्।

उसका कल्याण हो सकता है ? ॥ ११ ॥ ❋ ❋ जो लोग महात्मा दक्षके यज्ञमें बैठे थे, वे भयके कारण एक-दूसरेकी ओर कातर दृष्टिसे निहारते हुए ऐसी ही तरह-तरहकी बातें कर रहे थे कि इतनेमें ही आकाश और पृथ्वीमें सब ओर सहस्रों भयङ्कर उत्पात होने लगे ॥ १२ ॥ ❋ ❋ विदुरजी ! इसी समय दौड़कर आये हुए रुद्रसेवकोंने उस महान् यज्ञमण्डपको सब ओरसे घेर लिया। वे सब तरह-तरहके अस्त्र-शस्त्र लिये हुए थे। उनमें कोई बौने, कोई भूरे रंगके, कोई पीले और कोई मगर समान पेट और मुखवाले थे ॥ १३ ॥ ❋ ❋ उनमेंसे किन्हींने प्राग्वंश ( यज्ञशालाके पूर्व और पश्चिमके खंभोंके बीचमें आड़े रक्खे हुए डंडा ) को तोड़ डाला, किन्हींने यज्ञशालाके पश्चिमकी ओर स्थित पत्नीशालाको नष्ट कर दिया, किन्हींने यज्ञशालाके सामनेका सभामण्डप और मण्डपके आगे उत्तरकी ओर स्थित आग्नीध्रशालाको तोड़ दिया, किन्हींने यजमानगृह और पाकशालाको तहस-नहस कर डाला ॥ १४ ॥ ❋ ❋ किन्हींने यज्ञके पात्र फोड़ दिये, किन्हींने अग्नियोंको बुझा दिया, किन्हींने यज्ञकुण्डोंमें पेशाब कर दिया और किन्हींने वेदकी सीमाके सूत्रोंको तोड़ डाला ॥ १५ ॥

अबाधन्त मुनीनन्य एके पत्नीरतर्जयन् । अपरे जगृहुर्देवान् प्रत्यासन्नान् पलायितान् ॥ १६ ॥
भृगुं बबन्ध मणिमान् वीरभद्रः प्रजापतिम् । चण्डीशः पूषणं देवं भगं नन्दीश्वरोऽग्रहीत् ॥ १७ ॥
सर्व एवर्त्विजो दृष्ट्वा सदस्याः सदिवौकसः । तैरर्द्यमानाः सुभृशं ग्रावभिर्नैकधाद्रवन् ॥ १८ ॥
जुह्वतः स्रुवहस्तस्य श्मश्रूणि भगवान् भवः । भृगोर्लुलुञ्चे सदसि योऽहसच्छ्मश्रु दर्शयन् ॥ १९ ॥
भगस्य नेत्रे भगवान् पातितस्य रुषा भुवि । उज्जहार सदःस्थोऽक्ष्णा यः शपन्तमसूसुचत्¹ ॥ २० ॥
पूष्णश्चापातयद्दन्तान् कालिङ्गस्य यथा बलः । शप्यमाने गरिमणि योऽहसद्दर्शयन्दतः ॥ २१ ॥
आक्रम्योरसि दक्षस्य शितधारेण हेतिना । छिन्दन्नपि तदुद्धर्तुं नाशक्नोत् त्र्यम्बकस्तदा ॥ २२ ॥
शस्त्रैरस्त्रान्वितैरेवमनिर्भिन्नत्वचं हरः । विस्मयं परमापन्नो दध्यौ पशुपतिश्चिरम् ॥ २३ ॥
दृष्ट्वा संज्ञपनं योगं पशूनां स पतिर्मखे । यजमानपशोः कस्य कायात्तेनाहरच्छिरः ॥ २४ ॥
साधुवादस्तदा तेषां कर्म तत्तस्य शंसताम् । भूतप्रेतपिशाचानामन्येषां तद्विपर्ययः ॥ २५ ॥
जुहावैतच्छिरस्तस्मिन्दक्षिणाग्नावमर्षितः । तद्देवयजनं दग्ध्वा प्रातिष्ठद् गुह्यकालयम् ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे ⁴दक्षयज्ञविध्वंसो नाम पञ्चमोऽध्यायः ॥ ५ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

प्रत्यासन्नान्पलायितान्समीपस्थान्पलायितानपि जगृहुः ॥ १६–१७ ॥ ❋ ❋ ग्रावभिरर्द्यमानाः नैकधा अनेकधा दुद्रुवुः ॥ १८ ॥ ❋ ❋ स्रुवो हस्ते यस्य भवो वीरभद्रः लुलुंचे उत्पाटितवान् ॥ १९ ॥ ❋ ❋ उज्जहारोद्धृतवान्। यः सदःस्थः सभायां स्थितः सन् शपंतं शिवनिंदां कुर्वंतं दक्षमक्ष्णाऽक्षिनिकोचेनासूसुचत्प्रेरितवान् ॥ २० ॥ ❋ ❋ कलिंगदेश-राजस्यानिरुद्धोद्वाहे बलभद्रो यथा द्यूते दंतान्पातितवान् गरिमणि गुरुतरे रुद्रे निंद्यमाने दतो दंतान्दर्शयन्यो जहास, पूष्णोरिति पाठे द्विवचनमैंद्रापौष्णश्चरुर्भवतीत्यत्रान्यसहितस्यापि पूष्णो दंतपातप्राप्त्यर्थं सूचितवान्। तथा हि "पूषा प्रपिष्टभागोऽदंतको हि तं देवा अब्रुवन्" इति विहितस्य पेषणस्य द्विदैवत्याभावात्तत्र तस्य दंताः संतीति वक्तव्यं स्यात्। नं चैतत्संगच्छत इत्याशंक्य तत्रापि तस्य दंतपातोऽवस्थाभेदे प्रवृत्तेन द्विवचनेन प्राप्यते। अत एव पूष्णोऽनुग्रहं द्वेधा वक्ष्यति "पूषा तु यजमानस्य दद्भिर्जक्षतु पिष्टभुक्" इति। केवलश्चेत्प्रपिष्टभुग्भविष्यति अन्यसहितश्चेद्यजमानस्य दद्भिर्भक्षयिष्यतीत्यर्थः ॥ २१ ॥ ❋ ❋ छिंदन्नपीत्यत्र शिर इत्युपरि व्यक्तीभविष्यति। त्र्यंबको वीरभद्रः ॥ २२ ॥ ❋ ❋ अस्त्रान्वितैर्मंत्रसहितैः शस्त्रैरनिर्भिन्ना त्वगयस्य तथाभूतं दृष्ट्वेति शेषः ॥ २३ ॥ ❋ ❋ स पशूनां पतिर्मखे संज्ञपनं योगं कंठनिष्पीडनादिरूपं मारणोपायं दृष्ट्वा तेनोपायेनाहरत् ॥ २४ ॥ ❋ ❋ अन्येषां ब्राह्मणादीनां तद्विपर्ययोऽसाधुवादः अभूदिति शेषः ॥ २५ ॥ ❋ ❋ गुह्यकालयं कैलासं प्रतस्थे ॥ २६ ॥

इति श्रीभा० म० चतुर्थे टीकायां पंचमोध्यायः ॥ ५ ॥

---

१. प्रा० पा०—मुनीनेके। २. प्रा० पा०—मसूचयत्। ३. प्राचीने पाठे 'पूष्णश्चा..........हसद्दर्शयन्दतः' अयं श्लोकः पूर्वश्लोकद्वय-परवर्ती। ४. प्रा० पा०—दक्षप्रशमनं पञ्चमोऽध्यायः।

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

'तिष्ठत, भवतीः संप्रति विधवाः कुर्मे' इत्यश्लीलवचोभिर्वा पत्नीरतर्जयन्। तर्जन्युत्थानपूर्वकमकथयन्। प्रत्यासन्नान्समीपस्थान्॥ १६॥ ❀ ❀ मणिमान्कश्चिद्रुद्रगणनाथः। प्रजापतिं दक्षम्। चंडीशश्चंडेश्वरः॥ १७॥ ❀ ❀ सदस्या विधिदर्शिनः॥ १८॥ ❀ ❀ 'लुञ्च—अपनयने'॥ १९॥ ❀ ❀ अक्षिनिकोचेन नेत्रचालनेन॥ २०॥ ❀ ❀ ऐंद्रापूषाणौ देवते चरोः स ऐन्द्रापौष्णः। "देवाताद्वन्द्वे च। ७। ३। २१।" इति पदद्वयादिवृद्धिः। "देवताद्वन्द्वे च। ६। ३। २६।" इति पूर्वपदस्यानङ्। अन्यसहितस्येंद्रसहितस्यापि दंतपातप्राप्तिरर्थः। प्रयोजनं तदिति द्विवचनमित्यविशेषणं सूचितवान्मैत्रेय इति शेषः। तद्दर्शयति—तथा हीति। प्रकर्षेण पिष्टः प्रपिष्टो गोधूमचूर्णतंडुलचूर्णादिस्तल्लक्षणो भागो यस्य स तथा। अदन्तको दंतरहितः। हि यतो देवास्तं पूषाणमितीत्थमदन्तकमन्त्रवन्निति मंत्रविहितस्य पेषणस्य पिष्टभागस्य पूपेत्येकवचनश्रुतेर्द्विदैवत्याभावात्। तत्रेंद्रसाहित्यावस्थायां तस्य पूष्णः वक्तव्यं स्यात् पिष्टातिरिक्तचरुद्रव्यस्य सत्त्वात्। एतत्सदंतत्वं न च संगच्छते, कुतस्तस्य पूष्णः सदन्तत्वे "पूषा तु यजमानस्य दद्भिर्जक्षतु पिष्टभुक्" इत्यग्रिमानुग्रहस्यायोग्यत्वापातात्। तत्रापींद्रसाहित्यावस्थायामपि। अवस्थाभेदे केवले साहित्यरूपे। अत एवावस्थाभेदेन पूष्णो द्विविधत्वादेव। इत्यर्थः—इति तात्पर्यम्। कालिंगस्य कलिंगदेशनृपस्य॥ २१॥ ❀ ❀ तच्छिर उद्धर्तुं छेत्तुम्। तदा छेदनावसरे॥ २२-२३॥ ❀ ❀ स प्रसिद्धः पशुपतिः वीरभद्रः अंशांशिनोरभेदोपचाराद्भवत्र्यंबकपशुपतिहरशब्दा वीरभद्रवाचका एव वह्निकणवह्निन्यायेन वा। यजमान एव पशुस्तस्य॥ २४॥ ❀ ❀ तेषां रुद्रगणानाम्। साधु कृतमिति जल्पः साधुवादः॥ २५॥ ❀ ❀ तस्मिन्यज्ञे। दक्षिणसंज्ञाग्नौ। स च (दक्षश्च) देवयजनं च (यज्ञश्च) इति समाहारद्वंद्वो वा॥ २६॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे पञ्चमोऽध्यायः॥ ५॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

ग्रावभिः प्रस्तरैः॥ १८-२०॥ ❀ ❀ तत्सहितस्यापि इन्द्रसाहित्यावस्थावतोपि पूष्णः दंतपातप्राप्त्यर्थम् अवस्थानिमित्तं भेदमाश्रित्य मैत्रेयः द्विवचनं सूचितवान्। तथा हि अवस्थाद्वयेपि दंतपातं दर्शयति पूपेति। प्रपिष्टेन चरुणा भागो यागो यस्य तथाभूतः पूषा प्रपिष्टचरुणा पूषाणं यजेतेत्यर्थः। तत्र इंद्रसहितावस्थायां तस्य पूष्णः एतत् अवस्थाभेदेन दंतानां सत्त्वमसत्त्वं च परस्परविरोधान्न संगच्छते इत्याशङ्क्य विचार्य्य चरोर्द्विदैवत्यात् तत्रापि इंद्रसहितावस्थायामपि तस्य पूष्णः अवस्थाभेदे इंद्रसाहित्यावस्थायां केवलावस्थायां च, अत एवावस्थाद्वयेपि दंतपातनिर्णयादेव अन्येनेन्द्रेण सहितः प्रपिष्टभाग इति इदं पेषणं न यज्ञाङ्गं प्रकरणाभावात् वाक्ये पूषमात्रश्रवणाच्च किन्तु पूषस्वरूपप्रयुक्तं स च पूषद्विदैवत्येपि चरौ विद्यते इति इंद्रसाहित्येपि चरौ पेषणं स्यात् इति प्राप्ते तृतीयाध्याये तृतीयपादे सूत्रं 'यथा एकस्मिन्नेकसंयोगादि'ति। एकस्मिन् श्रूयमाणे प्रपिष्टभागे एकस्यैव पूष्णः संयोगाद् द्विदैवत्ये चरौ न पेषणमित्यर्थः। तदुक्तं भट्टैः 'देवता निष्फला नैव पेषणस्य प्रयोजिका। उपादानञ्च यागस्य भागशब्देन विद्यते॥ मुख्यार्थाऽसंभवाद्यागलिलक्षयिषयात्र हि। श्रूयते भागशब्दोयं नानुपादानमस्त्यतः' इति। ननु स च भागशब्दलक्ष्यो यागो द्विदैवत्यः ऐंद्रापौष्णश्चरुर्भवतीति यागांगद्रव्ये चरौ द्वयोः प्राप्तत्वेनैकेन पूष्णा व्यपदेष्टुमशक्यत्वात्, सत्यं यद्यपि भागशब्दलक्ष्यस्य यागस्यापि तदङ्गचरौ द्विदैवत्यश्रुतिसामर्थ्यात् द्विदैवत्यं तथापि पूषाप्रपिष्ट भाग इत्यत्र पूषविशिष्टस्यान्यस्याभावादेकदैवत्ये प्रपिष्टचरौ पेषणं न द्विदैवत्ये चरौ इति इंद्रसाहित्येपि दंताभावात्पूष्णा न भोक्तुं चरुः शक्यते। अत एवानुग्रहे सति यजमानस्य दद्भिर्भक्षणं व्याख्यातमिति निष्कर्षः॥ २१॥ ❀ ❀ उपरि व्यक्तीभविष्यतीत्यतस्तच्छब्देन शिरः परामृश्यते॥ २२॥ ❀ ❀ पशुपतिस्त्र्यम्बक इत्यादिशब्दास्तदंशवीरभद्रे गौणाः॥ २३॥ ❀ ❀ संज्ञपनशब्दः यज्ञीयपशुहिंसाप्रकारपरः॥ २४॥ ❀ ❀ तच्छिरोहरणलक्षणं प्रशंसतां अभूदिति साध्यक्रियाऽध्याहारः॥ २५॥ ❀ ❀ एतत् स्वहस्तस्थम्॥ २६॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे दीपिन्याख्यायां दीपिकाटिप्पण्यां पञ्चमोऽध्यायः॥ ५॥

## श्रीमद्वीरराघवव्याख्या

अतर्जयन् अभर्त्सयन्। अपरे पलायितान्पुनरनुधावनेन प्रत्यासन्नान् देवान् जगृहुर्गृहीतवंतः॥ १६॥ ❀ ❀ मणिमान् रुद्रानुचराग्र्यः भृगुं बबन्ध, वीरभद्रः प्रजापतिं दक्षं चंडीशः पूषणाख्यं देवं भगाख्यं नंदीश्वरः अगृहीत्॥ १७॥ ❀ ❀ सर्वैर्दिवौकोभिः देवैः सहिताः सदस्याः सभ्याः ऋत्विजः रुद्रानुचरैर्वध्यमानान् भृग्वादीन् दृष्ट्वा भृशं ग्रावभिः शिलाभिरर्द्यमाना अनेकधा ताड्यमाना दुद्रुवुः॥ १८॥ ❀ ❀ स्रुवं होमसाधनं हस्ते यस्य तस्य जुह्वतः होमं कुर्वतो भृगोः श्मश्रूणि भगवान् भवो वीरभद्रः लुलुंचे उत्पाटितवान् किं विशेषेण श्मश्रूण्येवोत्पाटितवान्। तत्राह यो भृगुः श्मश्रु दर्शयन् अहसत् रुद्रं परिहसितवान्। अतः श्मश्रूण्येव लुलुंच इत्यर्थः। एवमुत्तरत्रापि॥ १९॥ ❀ ❀ भगवान् वीरभद्रः रुषा क्रोधेन भूमौ पातितस्य भगस्य नेत्रे उज्जहार उद्धृतवान्, यो भगः सदसि सभायां स्थितः सन् शपंतं शिवनिन्दां कुर्वंतं दक्षमक्ष्णा नेत्रेणाऽसूसुचत् सूचितवान् प्रेरितवानित्यर्थः॥ २०॥

कालिंगस्य कलिंगदेशराजस्य बलः बलभद्रः यथा तथा पूष्णः दंतान् अपातयत् पातितवान् यः पूषा गरिमणि गुरुतरे रुद्रे शप्यमाने सति दतः दंतान् दर्शयन् अहसत्। पूष्णोरिति द्विवचनपाठे तु तदिंद्रापौष्णश्चरुर्भवतीत्यत्रान्यसहितस्यापि पूष्णो दंतपातनप्राप्त्यर्थम् ॥ २१ ॥ ❀ ❀ त्र्यंबको वीरभद्रः दक्षस्योरसि। आक्रम्य पादं विन्यस्य शितधारेण निशितधारेण हेतिना खड्गेन छिंदन्नपि तदा तच्छिर इत्यपकृष्यते, उद्धर्तुं तदा नाशक्नोत् असमर्थोऽभवत् ॥ २२ ॥ ❀ ❀ अस्त्रान्वितैर्मंत्रसहितैः शस्त्रैर्न निर्भिन्ना त्वग्यस्य तथाभूतमेनं दक्षं दृष्ट्वेति शेषः। पशुपतिर्हरो वीरभद्रः परं विस्मयमापन्नः प्राप्तः चिरं दध्यौ शिरस उद्धरणोपायं चिंतितवान् ॥ २३ ॥ ❀ ❀ पशूनां पतिः स वीरभद्रः मखे अध्वरे संज्ञपनं मारणं योगमुपायं दृष्ट्वा यागीयपशुवदयं हन्तव्य इति दृष्ट्वा निश्चित्य तस्य यजमानो दक्षः स एव पशुस्तस्य यद्वा यजमानस्य यः पशुः देवतोद्देशेन यजमाने न त्वक्ष्यमाणः पशुस्तस्य संज्ञपनं मारणं योगमुपायं निश्चित्य तेनैव योगेन तस्य दक्षस्य कायाच्छिर आहरत् उद्धृतवान् ॥ २४ ॥ ❀ ❀ तच्छिरश्छेदनरूपं कर्म शंसतां स्तुवतां भूतादीनां साधुवादः अभवत्। अन्येषां ब्राह्मणादीनां तद्विपर्ययः असाधुवादः अभवदित्यर्थः ॥ २५ ॥ ❀ ❀ एतस्य दक्षस्य शिरः तस्मिन् तदध्वरसंबंधिनि दक्षिणाग्नौ अमर्षितः क्रुद्धः जुहाव। तस्य दक्षस्य देवयजनमेवं दग्ध्वा नाशयित्वा गुह्यकालयं कैलासं प्रातिष्ठत् प्रययौ ॥ २६ ॥

**इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचंद्रचंद्रिकाख्यायां टीकायां पञ्चमोऽध्यायः ॥ ५ ॥**

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

मणिमान् कश्चिद्गणनाथः प्रजापतिं दक्षम्। चंडीशश्चंडेश्वरः ॥ १७ ॥ ❀ ❀ सर्वेप्येवमेव निगृहीताः किं नेत्याह सर्व एवेति ॥ १८ ॥ ❀ ❀ भवो वीरभद्रः लुलुंचे उत्पाटयामास। लुञ्च छेदन इति धातुः। अनेन कोऽपराधः कृत इति तत्राह सदसीति विश्वसृजां सदसि ॥ १९ ॥ ❀ ❀ अत्र वीरभद्रः स्वापराधानुकूलं दंडं करोति सर्वेषामित्याह भगस्येति ॥ २० ॥ ❀ ❀ कलिंगस्य दंतवक्रस्य द्यूते बलो बलभद्रः। भृगुणा गरिमणि ज्ञानोपदेष्टृत्वेन गुरुतमे शिवे शप्यमाने सति यः पूषा दतः दंतान् दर्शयन्नहसत्तस्य ॥ २१ ॥ ❀ ❀ वीरभद्रो दक्षं बद्ध्वा किमकरोदिति तत्राह आक्रम्येति। शितधारेण तीक्ष्णाग्रेण त्रीणि अंबकानि नेत्राणि यस्य ॥ २२-२३ ॥ ❀ ❀ ज्ञानफलमाह दृष्ट्वेति। मखे पशूनां संज्ञपने हिंसने योगं मंत्रपूर्वकोपायं यजमान एव पशुस्तस्य तेन योगेन ॥ २४ ॥ ❀ ❀ अयं हि विक्रम उभयेषामुभयथांतःकरणवृत्तिमकार्षीदित्याह साधुवाद इति। अन्येषां दक्षपक्षिणाम् ॥ २५ ॥ ❀ ❀ मंत्रादिशक्त्यैतच्छिरःसंधानमपि न कार्यमिति भावेन शिरश्छेदोत्तरक्रियां वक्ति जुहावेति। ततः परं किमकारीति तत्राह तद्देवयजनमिति। देवयजनं यज्ञं दग्ध्वा विनाश्य गुह्यकालयं कैलासं प्रातिष्ठत्प्रायादिति। अत्र त्र्यंबको हरः पशुपतिरिति विशेषणनामनिर्देशात्किंचन तात्पर्यमस्तीति ध्वनयति। पूर्वं वीरभद्रेण स्वेन रूपेण गत्वा यज्ञशालादिकं भंक्त्वा पश्चान्मूलरूपेण गत्वा दक्षमवधीत्। तत्राप्युपेंद्रेण हरिणा धर्मपुत्रेण हरिणा च जितः शिवोन्यांस्तत्र स्थितान् जित्वा कैलासमगमदिति तदुक्तं वीरभद्राख्यरूपेण स्वेन पूर्वं ययौ हरः मूलरूपेण। पश्चात्तु गत्वा दक्षमथावधीत् तत्रोपेन्द्रेण हरिणा जितो धर्मात्मजेन च अन्यान् जिगाय, प्रययौ कैलासं स्वं निकेतनमिति ॥ २६ ॥

**इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे श्रीमद्विजयध्वजतीर्थपदकृतरत्नावल्यां पञ्चमोऽध्यायः ॥ ५ ॥**

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

पूष्णोरिति पाठे टीकायां तत्सहितस्यापीति। इन्द्रसहितो यः पूषा तस्यापि दन्तपातमकरोदिति प्राप्त्यर्थमित्यर्थः। तत्र तस्य दन्तीति तद्रहितस्येति वक्तव्यं स्यात्। इतीति किं तत्राह दन्ती स तु पूषा दन्तवानित्यर्थः। तस्य दन्ताः सन्तीति वा पाठः। आशंक्य विचार्य। तत्रापि इन्द्रसहितत्वेऽपीति। पूष्ण इत्यादि पूर्वार्द्धम्। शप्यमान इत्यादि परार्द्धं अनयोः पद्यार्द्धयोर्विपर्ययेण पाठस्तु न स्वामिचित्सुखयोः सम्मतः ॥ २१-२६ ॥

**इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे पञ्चमोऽध्यायः ॥ ५ ॥**

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तिष्ठत, भवतीः सम्प्रति विधवाः कुर्महे इति अश्लीलवल्गनैर्वा पत्नीरतर्जयन् ॥ १६-१७ ॥ ❀ ❀ ग्रावभिरर्द्यमानाः नैकधा दुद्रुवुः ॥ १८ ॥ ❀ ❀ भवो वीरभद्रः लुलुञ्चे उत्पाटयामास ॥ १९ ॥ ❀ ❀ शपन्तं दक्षं अक्षिनिकोचेन असूसुचत् प्रेरितवान् ॥ २० ॥ ❀ ❀ कलिङ्गदेशराजस्यानिरुद्धोद्वाहे बलभद्रो यथा दन्तान् द्यूते पातितवान्। गरिमणि गरिमवति रुद्रे। दतो दन्तान् पूष्णोरिति पाठे द्विवचनमैन्द्रापौष्णश्चरुर्भवतीत्यत्रेन्द्रसहितस्यान्यस्यापि पूष्णो दन्तपातनप्राप्त्यर्थं ज्ञेयम् ॥ २१ ॥ ❀ ❀ हेतिना खड्गेन तन्मस्तकं, त्र्यम्बको वीरभद्रः ॥ २२ ॥ ❀ ❀ शस्त्रैः खड्गादिभिः अस्त्रान्वितैः

शरत्रिशूलादिसहितैश्छिन्नत्वचं दृष्ट्वेति शेषः ॥ २३ ॥ ❀ ❀ संज्ञपनं योगं कण्ठनिष्पीडनेन त्रोटनम्। तेनोपायेनाहरत् ॥ २४ ॥ ❀ ❀ अन्येषां विप्रादीनां तद्विपर्ययोऽसाधुवादः ॥ २५ ॥ ❀ ❀ गुह्यकालयं कैलासम् ॥ २६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। चतुर्थे पञ्चमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ५ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अतर्जयन् अभर्त्सयन्। प्रत्यासन्नान् योद्धुमागतान् ॥ १६-१७ ॥ ❀ ❀ नैकधा आद्रवन् अनेकधा दुद्रुवुः ॥ १८ ॥ ❀ ❀ भगवान् वीरभद्रः स्रुवो हस्ते यस्य, श्मश्रूणि लुलुंचे उत्पाटितवान् ॥ १९ ॥ ❀ ❀ शपंतं शापं दातुं प्रवृत्तं दक्षम् अक्ष्णाऽसूचयत् अक्षिसंकोचेन प्रेरितवान् ॥ २० ॥ ❀ ❀ गरिमणि गुरुतरे ॥ २१ ॥ ❀ ❀ त्र्यंबको वीरभद्रः ॥ २२ ॥ ❀ ❀ अस्त्रान्वितैः मंत्रान्वितैः न निर्भिन्ना त्वग्यस्य तं तथाभूतं ज्ञात्वेति शेषः। चिरं दध्यौ चिंतां कृतवान् ॥ २३ ॥ ❀ ❀ मखे संज्ञपने योगं कंठनिष्पीडनादिमारणोपायं दृष्ट्वा तेनोपायेन यजमानरूपस्य पशोः शिरः आहरत् उद्धृतवान् ॥ २४ ॥ ❀ ❀ अन्येषां दक्षपक्षीयाणां विपर्ययः हाहेत्यादिवादोऽभूदिति शेषः ॥ २५ ॥ ❀ ❀ एतच्छिरः एतस्य दक्षस्य शिरः। गुह्यकालयं कैलासम् ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे चतुर्थस्कंधीये पञ्चमाऽध्यायार्थप्रकाशः ॥ ५ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

अबाधन्तेति। दुर्वचनादिभिः पीडितवन्त इत्यर्थः। अतर्जयन्निति क्रौर्यप्रदर्शनेन तासां भयमुत्पादितवन्त इत्यर्थः। भयात्पलायितान् आकस्मिकेन प्रत्यासन्नान् स्वसमीपमागतान् देवान् अपरे जगृहुः धृतवन्त इत्यर्थः ॥ १६ ॥ ❀ ❀ एवं सामान्यानां महान्तमुपद्रवं निरूप्य मुख्यानां तदाह भृगुमिति। प्रजापतिं दक्षं बबन्ध। पूषणमग्रहीदिति संबन्धः ॥ १७ ॥ ❀ ❀ तद् दृष्ट्वान्ये पलायिता इत्याह—सर्व इति। ऋत्विगादयो भृग्वादीनामुपद्रवं दृष्ट्वा स्वयं च ग्रावभिः पाषाणैर्भृशमर्द्यमाना देवैः सहिताः सदस्या नैकधा अनेकधा सर्वतोऽद्रवन् ॥ १८ ॥ ❀ ❀ जुह्वत एवमुपद्रवे प्राप्तेपि यजमानकार्यं साधयिष्यामीत्यभिमानेनाभिचारादिकं कुर्वतोऽत एव स्रुवो हस्ते यस्य तस्य भृगोः श्मश्रूणि भगवान् भवः भवाज्ञध्वंसासामर्थ्यो वीरभद्रो लुलुञ्चे उत्पाटितवान्। अन्यमुपद्रवमुपेक्ष्य श्मश्रुलुञ्चने निमित्तमाह—सदसीति। यो भृगुः सदसि विश्वसृक्सत्रे सभायां शापावसरे श्मश्रु दर्शयन्नहसत्तस्य भृगोरित्यन्वयः। उपद्रवकालेपि जुह्वत इत्यनेन भृगोर्दक्षे स्नेहाधिक्यं शिवे द्वेषाधिक्यं तेनापराधाधिक्यं च सूचितम्। अत्र श्मश्रुलुञ्चनोत्तरकाले बन्धनमवगम्यते, प्रथमतो बन्धने निगृहीतस्य होमकरणासंभवादिति ॥ १९ ॥ ❀ ❀ 'यदधर्मकृतः स्थानं सूचकस्यापि तद्भवेत्' इति वचनाद्भगस्य सूचकत्वेन दक्षतुल्यापराधाधिक्याद्दण्डाधिक्यमित्याह—भगस्येति। रुषा क्रोधेन भुवि पातितस्य भगस्य नेत्रे भगवान् वीरभद्र उज्जहार निःसारितवान्। नेत्रयोरेवोद्धरणे हेतुमाह—सदस्थ इति। यो भगः सदस्थो विश्वसृक्सत्रसभायां स्थितो भवं शपन्तं दक्षमक्ष्णा असूसुचत्तस्य भगस्येत्यन्वयः। एवं येनाङ्गेन यस्यापराधो जातस्तदङ्गभङ्ग एव तस्य दण्ड इति सर्वत्र ज्ञेयम् ॥ २० ॥ ❀ ❀ पूष्णोप्यपराधानुरूपं दण्डं कृतवानित्याह—पूष्णश्चेति। वीरभद्रः पूष्णश्च दन्तान् अपातयत्। तत्र दृष्टान्तमाह—कालिङ्गस्येति। अनिरुद्धविवाहे कलिङ्गदेशराजस्य दन्तान् यथा बलो बलभद्रोऽपातयत्तथेत्यर्थः। दन्तकृतंदपराधमाह—शप्यमान इति। गरिमणि ज्ञानभक्त्याद्युपदेष्टा गुरुः अतिशयेन गुरुर्गरिमा तस्मिन् सर्वगौरवोपेते महादेवे दक्षेण शप्यमाने सति यः पूषा दतो दन्तान् दर्शयन् अहसत् उपहासं कृतवांस्तस्य पूष्ण इत्यन्वयः ॥ २१ ॥ ❀ ❀ ततो दक्षशिरश्छेदार्थं प्रवृत्तस्यापि वीरभद्रस्य तदशक्यं जातमित्याह—आक्रम्येति। दक्षस्योरसि आक्रम्य आरुह्य शितधारेण तीक्ष्णधारेणापि हेतिना शस्त्रविशेषेण तस्य शिरश्छिन्दन्नपि त्र्यम्बको रुद्रस्तदावेशात्स तथाविधोपि वीरभद्रस्तच्छिरः उद्धर्तुं कायात् पृथक् कर्तुं तदा नाशक्नोत् न समर्थो जात इत्यन्वयः ॥ २२ ॥ ❀ ❀ ततश्चास्त्रान्वितैर्मन्त्रसहितैः शस्त्रैश्शिरश्चिच्छेद। एवं तैरपि न निर्भिन्ना त्वगपि यस्य तथाभूतं तं दृष्ट्वेति शेषः, परं विस्मयमापन्नः पशूनां जीवानां पतिर्हरश्चिरं दध्यौ तदुपायं चिन्तयामासेत्यर्थः ॥ २३ ॥ ❀ ❀ ततश्च ध्यानात् स पशूनां पतिर्वीरभद्रो मखे संज्ञपनं योगं कण्ठनिष्पीडनादिलक्षणं प्राणवियोजकोपायं दृष्ट्वा यजमानः पशुरिति श्रुतेरनेनैवोपायेनास्य प्राणवियोगो भविष्यतीति ज्ञात्वा तेनैवोपायेन यजमानरूपस्य पशोः दक्षस्य शिरः कायादहरत् पृथक् कृतवान् ॥ २४ ॥ ❀ ❀ ततश्च तदा तस्य वीरभद्रस्य तत् दक्षशिरश्छेदनरूपं कर्म शंसतां स्तुवतां भूतप्रेतपिशाचानां रुद्रानुचराणां तेषां साधुवादः 'अयं हत इति साधु संपन्नमिति' वादः तदन्येषां दक्षपक्षीयाणां ब्राह्मणादीनां तु तद्विपर्ययः 'असाध्विदं जातमि'ति वादश्च जात इति शेषः ॥ २५ ॥ ❀ ❀ अमर्षितो दक्षकृतं शिवापमानमसहमानो वीरभद्र एतच्छिरस्तस्मिन् दक्षिणाग्नौ जुहाव। शिरसस्तामसत्वेन राक्षसभागत्वात्तस्य होमस्य दक्षिणाग्नौ विधानात्तस्मिन्नेवाजुहोदिति ज्ञेयम्। मण्डपस्थितौ यदाकदाचित्कश्चिच्छायार्थमपि तत्रोपविशेत्तदा तदुपकारजनितधर्मो

दक्षे समागच्छेत्। सोपि माभूदिति मत्वा तस्यापि प्रज्वालनं कृतवानित्याह–तदेवयजनं दग्ध्वेति। ततः कार्यान्तराभावात् कृतकृत्यः सन् गुह्यकालयं कैलासं प्रातिष्ठत्। जयख्यापकप्रतिष्ठापूर्वकं गतवानित्यर्थः। अत्र यज्ञेऽधिदैवं हि शिवस्तस्य दक्षेणाभिमानान्निराकरणाद्यज्ञस्यावैदिकत्वं तेन तन्निराकरणेन दक्षस्य तदनुमोदनपराणां सभ्यानां च दुष्टत्वम्। "सभां न प्रविशेत् प्राज्ञः सभ्यदोषमनुस्मरन्। अब्रुवन् विब्रुवन्नज्ञो नरः किल्बिषमश्नुते। यत्राधर्मः समुत्तिष्ठेत् स्थेयं तत्र न कर्हिचित्॥" अतः कथं वैदिककर्मणां कर्तुस्तत्सहायभूतानामनर्थो जात इति शङ्का निरस्ता॥ २६॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे धर्मनिरूपणे। पञ्चमो विवृतोऽध्यायो यज्ञध्वंसनिरूपकः॥ ३॥

### भाषानुवादः

कोई-कोई मुनियोंको तंग करने लगे, कोई स्त्रियोंको डराने-धमकाने लगे और किन्हींने अपने पास होकर भागते हुए देवताओंको पकड़ लिया॥ १६॥ ❀ ❀ मणिमानने भृगु ऋषिको बाँध लिया, वीरभद्रने प्रजापति दक्षको कैद कर लिया तथा चण्डीशने पूषाको और नन्दीश्वरने भग देवता को पकड़ लिया॥ १७॥ ❀ ❀ भगवान् शङ्करके पार्षदोंकी यह भयङ्कर लीला देखकर तथा उनके कंकड़-पत्थरोंकी मारसे बहुत तंग आकर वहाँ जितने ऋत्विज, सदस्य और देवतालोग थे, सब-के-सब जहाँ-तहाँ भाग गये॥ १८॥ ❀ ❀ भृगुजी हाथमें स्रुवा लिये हवन कर रहे थे। वीरभद्रने उनकी दाढ़ी-मूँछ नोच ली; क्योंकि उन्होंने प्रजापतिकी सभामें मूँछें ऐंठते हुए महादेवजीका उपहास किया था॥ १९॥ ❀ ❀ उन्होंने क्रोधमें आकर भगदेवताको पृथ्वीपर पटक दिया और उनकी आँखें निकाल लीं; क्योंकि जब दक्ष देवसभामें श्रीमहादेवजीको बुरा-भला कहते हुए शाप दे रहे थे, उस समय उन्होंने दक्षको सैन देकर उकसाया था॥ २०॥ ❀ ❀ इसके पश्चात् जैसे अनिरुद्धके विवाहके समय बलरामजीने कलिङ्गराजके दाँत उखाड़े थे, उसी प्रकार उन्होंने पूषाके दाँत तोड़ दिये, क्योंकि जब दक्षने महादेवजीको गालियाँ दी थीं, उस समय ये दाँत दिखाकर हँसे थे॥ २१॥ ❀ ❀ फिर वे दक्षकी छातीपर बैठकर एक तेज तलवारसे उसका सिर काटने लगे, परन्तु बहुत प्रयत्न करनेपर भी वे उस समय उसे धड़से अलग न कर सके॥ २२॥ ❀ ❀ जब किसी भी प्रकारके अस्त्र-शस्त्रोंसे दक्षकी त्वचा नहीं कटी, तब वीरभद्रको बड़ा आश्चर्य हुआ और वे देरतक विचार करते रहे॥ २३॥ ❀ ❀ तब उन्होंने यज्ञमण्डपमें यज्ञपशुओंको जिस प्रकार मारा जाता था, उसे देखकर उसी प्रकार दक्षरूप उस यजमान पशुका सिर धड़से अलग कर दिया॥ २४॥ ❀ ❀ यह देखकर भूत, प्रेत और पिशाचादि तो उनके इस कर्मकी प्रशंसा करते हुए 'वाह-वाह' करने लगे और दक्षके दलवालोंमें हाहाकार मच गया॥ २५॥ ❀ ❀ वीरभद्रने अत्यन्त कुपित होकर दक्षके सिरको यज्ञकी दक्षिणाग्निमें डाल दिया और उस यज्ञशालामें आग लगाकर यज्ञको विध्वंस करके वे कैलासपर्वतको लौट गये॥ २६॥

इति पञ्चमोऽध्यायः



# अथ षष्ठोऽध्यायः

## मैत्रेय उवाच

अथ देवगणाः सर्वे रुद्रानीकैः पराजिताः । शूलपट्टिशनिस्त्रिंशगदापरिघमुद्गरैः ॥ १ ॥
संछिन्नभिन्नसर्वाङ्गाः सर्त्विक्सभ्या भयाकुलाः । स्वयम्भुवे नमस्कृत्य कार्त्स्न्येनैतन्न्यवेदयन् ॥ २ ॥
उपलभ्य पुरैवैतद्भगवानब्जसम्भवः । नारायणश्च विश्वात्मा न कस्याध्वरमीयतुः ॥ ३ ॥
तदाकर्ण्य विभुः प्राह तेजीयसि कृतागसि । क्षेमाय तत्र सा भूयान्न प्रायेण बुभूषताम् ॥ ४ ॥

अथापि यूयं कृतकिल्बिषा भवं ये बर्हिषो भागभाजं परादुः ।
प्रसादयध्वं परिशुद्धचेतसा क्षिप्रप्रसादं प्रगृहीताङ्घ्रिपद्मम् ॥ ५ ॥
आशासाना जीवितमध्वरस्य लोकः सपालः कुपिते न यस्मिन् ।
तमाशु देवं प्रियया विहीनं क्षमापयध्वं हृदि विद्धं दुरुक्तैः ॥ ६ ॥
नाहं न यज्ञो न च यूयमन्ये ये देहभाजो मुनयश्च तत्त्वम् ।
विदुः प्रमाणं बलवीर्ययोर्वा यस्यात्मतन्त्रस्य क उपायं विधित्सेत् ॥ ७ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

षष्ठे तु देवसंघेन सह गत्वा भवं विधिः । सांत्वयामास दक्षादिजीवितार्थमादरात् ॥ ( १ ) ॥

अथ देवगणाः सर्वे स्वयंभुवे न्यवेदयन्निति द्वितीयेनान्वयः ॥ १ ॥ ❋ ❋ शूलादिभिः संछिन्नानि त्रुटितानि भिन्नानि विदीर्णान्यंगानि येषाम् । सह ऋत्विग्भिः सभ्यैश्च वर्तमानाः ॥ २ ॥ ❋ ❋ कस्य दक्षस्य यज्ञे ब्रह्मा विष्णुश्च नेयतुर्न जग्मतुः, यत्रारुद्रको यज्ञस्तत्र नारायणविरिंचावपि नागतौ ॥ ३ ॥ ❋ ❋ विभुर्ब्रह्मा तेजीयस्यतितेजस्विनि पुरुषे कृतागसि कृतापराधे सत्यपि स्वयं तत्र कृतागसां बुभूषतां भवितुमिच्छतां प्रत्यपराधं चिकीर्षतां सा तथाविधा बुभूषा तेषां क्षेमाय न भूयात् । प्रायेणेति लोकोक्तिः न भवेदेवेत्यर्थः । यूयं तु अकृतागस्यपि तस्मिन् कृतकिल्बिषाः । अतः कथं क्षेमं स्यात् ॥ ४ ॥ ❋ ❋ अथापि तं प्रसादयध्वं क्षमापयत ये भवंतो बर्हिषो यज्ञस्य भागभाजं परादुर्दूरादेव खंडितवंतः । प्रगृहीतांघ्रिपद्मं पादौ प्रगृह्येत्यर्थः ॥ ५ ॥ ❋ ❋ अध्वरस्य जीवितं पुनःसंधानं प्रार्थयमानाः संतः यस्मिन्कुपिते सति सपालो लोको न भवेन्नश्येदित्यर्थः ॥ ६ ॥ ❋ ❋ वयं तु तत्र गंतुं बिभीमस्त्वमेव कंचिदुपायं विधत्स्वेति चेदत आह । नेति । यज्ञस्तदानींतन इंद्रः । यस्य तत्त्वं स्वरूपं बलवीर्ययोः प्रमाणमियत्तां च न विदुः । तत्र वीर्यं पराक्रमः, तस्य स्वतंत्रस्य क उपायं कर्तुमिच्छेत् । पापमिति पाठेऽपराधम् ॥ ७–८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

आदिना भृग्वादिग्रहः । द्वितीयादिना श्मश्रुरोहादिग्रहः ॥ ( १ ) ॥

अथ दक्षयज्ञनाशानंतरम् । रुद्रानीकैश्शिवसैन्यैः ॥ १ ॥ ❋ ❋ स्वयंभुवे स्वयंभुवमनुकूलयितुमित्यर्थः । "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति तुमुनोऽप्रयुक्तस्य कर्मणि चतुर्थी, न तु नमोयोगे । उपपदविभक्तेर्बलीयस्त्वाच्छांदसी वा । एतद्वृत्तं कार्त्स्न्येन सामस्त्येन ॥ २ ॥ ❋ ❋ ननु "अग्नौ वैष्णवं पुरोडाशं निर्वपति प्रजापतेन त्वदेतानि" इति श्रुतेस्तौ कथं नाहूतौ तत्र । किञ्चानाहूताग्रे तत्संधानादिप्रार्थनं च कथं युक्तमिति चेदाहूतावपि तत्र न गतावित्याह—उपलभ्य ज्ञात्वा । समष्टिजीवत्वाद् ब्रह्मा परमात्मत्वान्नारायणश्च विश्वात्मेत्युभयोर्विशेषणम् । पुराज्ञाने हेत्वंतरं च भगवानिति । एतदपि द्वयोर्विशेषणम् ॥ ३ ॥ ❋ ❋ तत्र तेजस्विनि तथा बुभूषा कृतागसां तेषां तेजस्विन्यपराधकृतवताम् । इत्यर्थं इति । प्रायेणेत्यनेन कस्यचिन्महदतिक्रमकर्तुरपि क्षेमो भवेदिति न मंतव्यमिति भावः । "हंति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः" इति श्रीदशमोक्तेः

---

१. प्रा॰ पा॰—तस्या॰ । २. प्रा॰ पा॰—भवाय भूयसे भूया॰ । ३. प्रा॰ पा॰—परिशुद्धसत्त्वं । ४. प्रा॰ पा॰—तस्यात्म॰ ।

॥ ४ ॥ ❃ ❃ अथापि यदि बुभूषथेत्यर्थः । इत्यर्थ इति । पादग्रहणमात्रेणैव स प्रसीददिति तदन्तःकरणमहं जानामीति भावः । "प्रणिपातप्रतीकारः संरंभो हि महात्मनाम्" इत्युक्तेः । "उष्णत्वमग्न्यातपसंनियोगाच्छैत्यं हि यत्सा प्रकृतिर्जलस्य" इति न्यायात् । "बर्हिर्यज्ञकुशाग्निषु" इति धरणिः ॥ ५ ॥ ❃ ❃ तस्य कोपेन सपाललोकस्यापि नाशसंभवादतस्तं तूर्णं प्रसादयध्वं, किंच तत्कोपे केवलं दक्षदुरुक्तिरेव न कारणमपि तु प्रियावियोगोपीतीतः शीघ्रं यतध्वमिति भावः ॥ ६ ॥ ❃ ❃ "यज्ञो यज्ञपतिस्त्विन्द्रः पुरुहूतः पुरुष्टुतः" इति तीर्थोक्तेर्यज्ञपदमत्र न विष्णुपरं तस्य "यः सर्वज्ञः सर्ववित्" इति श्रुतेर्व्याकोपात् । तत्त्वं स्वरूपं बलवीर्येत्युपलक्षणं ज्ञानादीनाम् । यद्यपि यज्ञः स्वायंभुवमन्वंतरेंद्रः श्रीविष्णोरवतारः यज्ञाधिष्ठातृत्वेन तस्य प्राचीनबर्हिषो राज्ये षष्ठमन्वंतरेपि स्थितेरिति उक्तं स्वामिचरणैस्तदानीन्तन इंद्र इति ॥ ७ ॥ ❃ ❃ मया सह गमने चैतेषां शिवः क्षिप्रं प्रसेत्स्यतीति महादयालोरजस्य कैलासयात्रामाह-स इति ॥ ८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अथेति युग्मकम् ॥ १-२ ॥ ❃ ❃ एतत् शिवद्वेषफलं यज्ञादिविध्वंसनम् ॥ ३ ॥ ❃ ❃ तन्निवेदनं बुभूषतां भवितुमिच्छतां कीदृशत्वेनेत्याकाङ्क्षायां कृतागसामित्यध्याहृतं आकांक्षाविरहेऽप्रामाण्यात् तथा बुभूषा कृतागस्त्वेन भवितुमिच्छा ॥ ४ ॥ ❃ ❃ यद्यपि क्षेमाय न स्यादथापि प्रगृहीतांघ्रिपद्ममिति क्रियाविशेषणं विधेयतया कथंचिच्छिवस्यैव वा विशेषणम् ॥ ५ ॥ ❃ ❃ हृदि विद्धमिति बहिरङ्गदृष्ट्यैवोक्तम् ॥ ६ ॥ ❃ ❃ तत्त्वं परमार्थरूपं यद्यपि श्रीविष्णोरावेशावतारोयं यज्ञः स्वायंभुवीयमन्वन्तरेन्द्रस्तथापि प्राचीनबर्हिराज्ये षष्ठमन्वंतरेपि यज्ञाधिष्ठातृत्वेन तस्य स्थितत्वात्तदानींतन इत्युक्तम् ॥ ७ ॥

### श्रीमद्वीरराघवव्याख्या

एवं दक्षाध्वरविनाश उक्तः । अथ पुनस्तत्संधानप्रकारं विवक्षुस्तदुपोद्घातरूपं देवकृतरुद्रप्रसादनं वक्ष्यन् तावद्देवानां रुद्रपारिषदताडितानां स्वयंभुवे विज्ञापनं वदन् तेन सह रुद्रसन्निधिं गता इत्याह मैत्रेयः अथेति । अथ दक्षयज्ञविनाशानंतरं सर्त्विक्सभ्या ऋत्विग्भिः सभ्यैश्च सहिताः सर्वे देवगणाः रुद्रानीकैः रुद्रसैन्यैः कर्तृभिः शूलादिभिः साधनैः संच्छिन्नानि विदीर्णानि सर्वाणि अंगानि येषां ते अत एव पराजिताः भयाकुलाः संतः स्वयंभुवे चतुर्मुखाय नमस्कृत्य एतद्वृत्तं कार्त्स्न्येन न्यवेदयन् विज्ञापितवंतः ॥ १-२ ॥ ❃ ❃ किं स्वयंभुवे विज्ञापितवंत इत्युच्यते ब्रह्मापि दक्षाध्वरे आगतस्तद्वृत्तं जानात्येव तत्राह उपलभ्येति । अब्जसंभवो भगवान् ब्रह्मा सर्वांतरात्मा नारायणश्च पुरैवैतद्भाविदक्षाध्वरविनाशनमुपलभ्य ज्ञात्वा भगवान्, विश्वात्मेति विशेषणाभ्यां तयोः सर्वज्ञत्वं सूचितं, तस्य दक्षस्याध्वरं प्रति नेयतुः न गतवंतौ ॥ ३ ॥ ❃ ❃ विभुर्ब्रह्मा तद्देवैर्विनिवेदितमाकर्ण्य श्रुत्वाऽऽह उवाच उक्तिमेवाह तेजीयसीत्यादिना । तेजीयसि तेजिष्ठे रुद्रे कृतमागः अपराधो यैस्तेषां बुभूषतां भवितुमिच्छतां श्रेयस्कामानामिति यावत् भूयसे क्षेमाय श्रेयसे प्रायेण प्रायशः न भूयात् । तेजीयानिति विभक्तिविपरिणामेनानुषज्यते, असत्कृतस्तेजीयान् पश्चात् प्रसाद्यमानोपि क्षेमकृन्न स्यादित्यर्थः । प्रायेणेति लोकोक्तिः ॥ ४ ॥ ❃ ❃ यद्यप्येवमथापि ये भवंतो बर्हिषः यज्ञस्य भागभाजो भागं भजंति प्राप्नुवंतीति तथा तान् पराडुः बहिष्कृतवंतः ते यूयं परिशुद्धचेतसा निष्कपटचित्तेन प्रगृहीतांघ्रिपद्मं पादावुपसंगृह्येत्यर्थः । भवं रुद्रं प्रसादयध्वं, कथं पादोपसंग्रहमात्रेण प्रसन्नो भवेत्तत्राह क्षिप्रप्रसादं पादग्रहणस्याऽनतिक्रमणीयतामालोच्य आश्वनुग्रहकारिणमिति भावः ॥ ५ ॥ ❃ ❃ अध्वरस्य यज्ञस्य जीवितं पुनः संधानं आशासानाः प्रार्थयमानाः यूयं यस्मिन् रुद्रे कुपिते सति सपालः दिक्पालसहितो लोको नास्ति नश्येदित्यर्थः, तं दुरुक्तैः दक्षादीनां दुर्वाक्यैः हृदि विद्धं ताडितमधुना प्रियया भार्यया च विहीनं देवं भवमाशु क्षमापयध्वं प्रसादयध्वम् ॥ ६ ॥ ❃ ❃ वयं तत्र गंतुं बिभीमस्त्वमेव कंचिदुपायं चिंतयेत्यत्र रुद्रं प्रस्तौति नाहमिति । यस्य रुद्रस्य तत्त्वं याथात्म्यं बलवीर्ययोः प्रमाणमियत्तां च अहं न विद्मां यज्ञ इंद्रः न च, न विद्यात् यूयं न च न विद्यात तथा मुनयो येऽन्ये च देहधारिणोतींद्रियार्थदर्शिनो न विदुः, ब्रह्मदृष्ट्य दमुक्तं तस्यात्मनः परमात्मावेशावतारभूतस्य उपायं क्षमोपायं को विधित्सेत्, न कोपि विधातुमिष्यादित्यर्थः । भवद्भिः पादोपसंग्रहणमंतरेणान्यः कः कमुपायं विधित्सेदिति भावः ॥ ७ ॥ ❃ ❃ सोऽजः ब्रह्मा सुरान्प्रत्येवमादिश्याऽऽज्ञाप्य तैर्देवैः सप्रजापतिभिः पितृभिश्च सह स्वधिष्ण्यात् स्वस्थानात् पुरारेः प्रभो रुद्रस्य प्रियं निलयं स्थानभूतं अद्रिश्रेष्ठं कैलासं प्रति ययौ ॥ ८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

भगवदपरोक्षीकरणाय तत्प्रसादवत्प्रस्योत्तमभक्त्युत्कर्षतारतम्येन तदनुमहोप्यापाद्य इत्यभिप्रायो वर्ण्यतेऽस्मिन्नध्याये । तत्र सर्वभक्तोत्तममहादेवप्रसादापादनाय देवानां ब्रह्माणं प्राप्य स्वसंकटविज्ञापनप्रकारः कथ्यते अथ देवगणा इत्यादिना । रुद्रस्यानीकैः सैन्यैः पार्षदैरित्यर्थः ॥ १ ॥ ❃ ❃ एतद्वृत्तम् ॥ २ ॥ ❃ ❃ ननु विष्णुब्रह्मणोर्यज्ञागतेरावश्यकत्वेन तदस्थितौ यज्ञविनाशो ब्रह्माणं गत्वा देवविज्ञापनं च कथं युक्तं 'अग्नावैष्णवपुरोडाशं निर्वपति, प्रजापते न त्वदेतान्यन्ये' इत्यादिश्रुतेरित्यत

आह उपलभ्येति । एतद्भावि कार्यं पुरैवोपलभ्य ज्ञात्वाऽब्जसंभवो ब्रह्मा विश्वात्मा विश्वांतर्यामी त्रिमूर्तिगेन रूपेण नारायणश्च कस्य दक्षस्याध्वरं नेयतुर्न जग्मतुरित्यन्वयः । अतो विष्णुब्रह्मणोस्तत्रानवस्थानाद्यज्ञविनाशो देवानां ब्रह्माणं गत्वा विज्ञापनं च युज्यत इति भावः ॥ ३ ॥ ❀ ❀ विज्ञापितं संकटं श्रुत्वा ब्रह्मणा शिक्षाकरं वाक्यमवादीत्याह तदेति । तेजीयसि बलिष्ठे पुंसि विष्णुवायू विना इत्यतः प्रायेणेत्युक्तम् ॥ ४ ॥ ❀ ❀ तर्हि तूष्णींभावोऽस्माकं किमुपायांतरं वा ज्ञापयसीति तत्राह अथापीति । बर्हिषो यज्ञस्य भागं स्वविहितांशं भजतीति भागभाक् तं पराकृत्यान्यस्मा अदुरित्यर्थः । अथापि कृतापराधानामपि युष्माकं शिवप्रसादनमेवोपाय इत्युक्तं भवति । प्रसादने किं साधनमित्यत उक्तं परिशुद्धेति । राहुग्रस्तचंद्रमंडलवच्चेतस एकस्मिन्नर्थे विकल्पत्वं न स्यादिति परीत्युक्तं न केवलं चेतोनैर्मल्यमलं, किंतु कर्म चापेक्षितमित्याह प्रगृहीतेति । प्रगृहीते अंघ्रिपद्मे यैस्ते तथोक्ताः ॥ ५ ॥ ❀ ❀ न केवलं कालांतरभाविनः श्रेयसः साधनं तत्प्रसादनं किंतु अद्यतनस्यापीति भावेनाह आशासाना इति । अध्वरस्य जीवितं पुनरनुसंधानलक्षणं जीवनमाशासाना आकांक्षमाणा यूयं दक्षदुर्वचनमेव न कारणमीश्वरस्य कोपस्य कारणांतरमप्यस्तीति भावेनोक्तं प्रियेयेति । न तत्कोपेन परमध्वरस्य विनाशोऽपि तु सपालस्य लोकस्यापीत्यतस्तदकरणाद्भवः प्रसादनेन क्षांतो भवति क्षिप्रप्रसादमेति तत्स्वभावादिति भावेनोक्तं लोक इति ॥ ६ ॥ ❀ ❀ बुभूषुणा विष्णुद्वेषवत्तस्य हरेर्मनोनुसारितया वर्तमानस्य श्रीकंठस्य द्वेषः कर्तुं न योग्य इत्याशयेनाह नाहमिति । अहं ब्रह्मशर्मा यस्य विष्णोस्तत्त्वं बलवीर्ययोरित्युपलक्षणं ज्ञानादिगुणानां च प्रमाणं न वेद्मि तथा यज्ञ इंद्रोपि न वेत्ति तथा यूयं न वित्थ तथान्ये प्रजापत्यादयो ये च देहभाजः शरीरिणो मुनयः सनकादयश्च न विदुरित्यन्वयः । तस्य विष्णोरात्मनो मनसस्तंत्रस्य वशस्य रुद्रस्य कः पुमानपराधमुच्चैर्विधित्सेत् कर्तुमिच्छेत् न कोपि बुभूषुरित्यर्थः । यज्ञो यज्ञपत्यादयश्च न विदुरित्यन्वयः । 'यज्ञो यज्ञपतिस्त्विंद्रः पुरुहूतः पुरुष्टुतः' इत्यभिधानादिंद्र एवात्र यज्ञशब्दार्थः । 'नाहं नेंद्रो न चैवान्ये यत्तत्त्वं न विदुः परम् । तस्य विष्णोर्वशो रुद्रो मम वायोरथापि वा ॥ नान्यस्य कस्यचित्पुंसस्तस्येत्थं वः कुतः कृतमि'ति वचनात् स्मृतिसमाख्यानाच्च न यज्ञो विष्णुर्मम वायोरथापि वेत्यनेनात्मनो ब्रह्मणो वायोश्च तंत्रस्येत्ययमर्थोपि ध्वनित इति ज्ञायते । उदित्यनेन संसारनदीमुत्तर्तुकामैः शिवद्वेषो न कर्तव्य इति सूचयति मोक्षस्य शिवाद्युपदिष्टज्ञानापेक्षितत्वात् । तदुक्तं 'मुमुक्षवो ब्राह्मणाश्च शिव इंद्रादिभिस्तथा । श्रुत्वा ज्ञानं परं गुह्यं मुच्यन्ते ब्रह्मणा सहे'ति ॥ ७ ॥ ❀ ❀ मया सह गतं चेदेतेषां देवानाम् एष शिवः क्षिप्रप्रसादो भविष्यतीति महादयालोर्ब्रह्मणः कैलासं प्रतियात्रां वक्ति स इत्थमिति । अजो ब्रह्मा पुरद्विपः प्रियं 'कैलासो गिरिशो मृड' इत्यभिधानात् 'तस्य निवास' इति विग्रहे यथा विहिताणप्रत्ययेन कैलास इति रूपं सिध्यति ॥ ८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अथेति युग्मकम् ॥ १-२ ॥ ❀ ❀ समष्टिजीवत्वात् ब्रह्मा परमात्मत्वान्नारायणो विश्वात्मा कस्य नेयतुरध्वरमिति चित्सुखः ॥ ३ ॥ ❀ ❀ तदाकर्ण्येति । बुभूषतां प्राप्तुमिच्छतां कृतागस्त्वमिति शेषः । कृतागसामिति चित्सुखपुण्यारण्ययोर्मतः । कृतापराधीभवितुमिच्छतामित्यर्थः । यद्वा तेजीयसि तत्र शिवे बुभूषतां सम्बन्धमिच्छतां मध्ये कृतागसि तत्र दक्षे सा सती प्रायेण प्राचुर्य्येण क्षेमाय न भूयात् न भवेदित्यर्थः ॥ ४-५ ॥ ❀ ❀ हृदि विद्धमिति बहिरंगदृष्ट्यैवोक्तम् ॥ ६ ॥ ❀ ❀ यज्ञः स्वायम्भुवमन्वन्तरेन्द्रः श्रीविष्णोरावेशावतारः यज्ञाधिष्ठातृत्वेन तस्य प्राचीनबर्हिराज्ये षष्ठमन्वन्तरेऽपि स्थितेस्तथोक्तं स इत्थमित्यादि चतुर्दशकम् ॥ ७-८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

कैलासवर्णनं षष्ठे तत्रत्यवटमूलगम् । शिवं सह सुरैर्गत्वा स्तुत्वा प्रासादयद्विधिः ॥

स्वयम्भुवे स्वयम्भुवम् ॥ १-२ ॥ ❀ ❀ उपलभ्य सर्वज्ञतया ज्ञात्वा कस्य दक्षस्य, नेयतुः न जग्मतुः ॥ ३ ॥ ❀ ❀ विभुर्ब्रह्मा तेजीयसि महात्मनि जने कृतागसि कृतम् आगोऽपराधो यस्य तथाभूते सति । क्षेमाय स्वकल्याणाय बुभूषतां जिजीविषतां तत्र क्षेमे विषये सा बुभूषा जिजीविषा मा भूयात् न भवतु । श्रीरुद्रे महातेजीयस्यपराधविषयीभूते सति अपराधिनां दक्षादीनां मृतम्रियमाणमरिष्यतां स्वक्षेमाय विषयभोगाद्यर्थं जिजीविषतां सा जिजीविषा मा भवत्वित्यर्थः । दक्षादयोऽपराधिनो म्रियन्तां नाम, मा जीवन्तु जीवित्वा पुनरप्यपराधं करिष्यतां तेषां जीवनेनालं मरणमेव वरमिति भावः । भवतेः सत्तार्थत्वात् सत्तायाश्च जीवनरूपत्वात् बुभूषाजिजीविषयोस्तुल्यार्थता ज्ञेया । प्रायग्रहणं तेषामेव मध्ये केषाञ्चिज्जीवित्वा अपराधमकरिष्यतां जिजीविषा जीवनञ्च भूयादित्यर्थलाभाय ॥ ४ ॥ ❀ ❀ अथापि यदि बुभूषथेत्यर्थः । कृतकिल्बिषा यूयं भवं प्रसादयध्वं ये भवन्तो बर्हिषो यज्ञस्य भागभाजं भवं परादुः दूरादेव खण्डितवन्तः । न च तत्प्रसादो दुष्कर इति वाच्यं प्रगृहीतेति । अंघ्रिपद्मग्रहणमात्रेणैव स प्रसीदत्येवेति तदन्तःकरणमहं जानाम्येवेति भावः ॥ ५ ॥ ❀ ❀ यस्मिन् कुपिते सति सपाल एव लोको न भवेत् तं क्षमापयध्वम् । यूयमध्वरस्य जीवितं प्रार्थयमानाः ॥ ६ ॥ ❀ ❀ ननु त्वामेव वयं प्रपन्नाः । अतस्त्वमेव कमप्युपायं विधत्स्वेति तत्राह । नाहं ब्रह्मापि न यज्ञः इदानीन्तन इन्द्रोऽपि न च यूयं याज्ञिका वेदविदोऽपि यस्य तत्त्वं बलवीर्ययोः प्रमाणमियत्ताञ्च न विदुः ॥ ७-८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

षष्ठे शिवं ब्रह्मा सांत्वयामासेत्युच्यते अथेति। देवगणाः स्वयंभुवे न्यवेदयन्निति द्वितीयेनान्वयः॥ १॥ ❀ ❀ शूलादिभिः सम्यक् छिन्नानि त्रुटितानि विदीर्णानि भिन्नानि अंगानि येषां ते ऋत्विग्भिः सभ्यैश्च सहिता एतद् वृत्तान्तं न्यवेदयन् विज्ञापितवंतः॥ २॥ ❀ ❀ विश्वात्मा सर्वात्मा नारायणः अब्जसंभवस्तत्पुत्रश्च एतद्दक्षयज्ञविघ्नं पुरैवोपलभ्य ज्ञात्वा कस्य दक्षस्याध्वरं नेयतुः नाजग्मतुः॥ ३॥ ❀ ❀ विभुः विपुलबोधो ब्रह्मा तदेव निवेदितम् आकर्ण्य श्रुत्वा तेजीयसि अतितेजस्विनि जने कृतागसि कृतापराधे सति तत्र तेजीयसि बुभूषतामपराधं कर्तुमिच्छतां सा बुभूषा प्रायेण क्षेमाय मंगलाय न भूयात्, किं त्वमंगलं कुर्यादित्यर्थः॥ ४॥ ❀ ❀ ये भवंतो भवं बर्हिषो यज्ञस्य भागभाजं पराद्युः भागाद् बहिश्चक्रुः। एवं कृतकिल्बिषाः यद्यपि यूयमथापि परिशुद्धचेतसा प्रगृहीतांघ्रिपद्मं पादौ गृहीत्वा क्षिप्रप्रसादमाश्वनुग्रहकारिणं प्रसादयध्वम्॥ ५॥ ❀ ❀ यस्मिन् रुद्रे कुपिते सति सपाला लोका न स्युः तं सपाललोकक्षेमकामाः अध्वरस्य जीवितं पुनः संधानमाशासानाः प्रार्थयमानाश्च आशु क्षमापयध्वम्॥ ६॥ ❀ ❀ यस्य बलवीर्ययोस्तत्त्वं मूलं प्रमाणमियत्तां वा अहं न वेद यज्ञ इंद्रो न वेत्ति न यूयं विदथ मुनयोऽन्ये च देहभाजो न विदुः तस्य पापमपराधं को विधित्सेत् विधातुमिच्छेत्॥ ७॥ ❀ ❀ सुरान्प्रतीत्थमादिश्याऽऽज्ञाप्य॥ ८॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

षष्ठे ब्रह्मादिनुतिभिरपराधक्षमापणम्। यज्ञसिद्धेः पूर्वमङ्गं सप्रपञ्चमिहोच्यते॥ १॥
अपराधे पितैवैकः प्रसीदतिं न चेतरः॥ इति ब्रह्मसभां जग्मुः पक्षपाताभिकाङ्क्षया॥ २॥
गमनं बोधनं स्थानवर्णनं स्तवनं तथा। प्रार्थनं चेति पञ्चार्थाः क्रमेणात्र निरूपिताः॥ ३॥
त्रिभिश्चतुर्भिस्त्रिंशद्भिस्त्र्यधिकैरष्टभिस्तथा॥ चतुर्भिश्च क्रमेणात्र तत्तदर्थो निरूप्यते॥ ४॥

एवं पूर्वाध्याये दक्षाभिमानदोषेण यागनाशो निरूपितः। इदानीं स्वोपद्रवशान्तिपूर्वकदक्षजीवनेन यज्ञसंसिद्धिकामाः शिवाद्भीताः स्वापराधेनान्यान्तिकगमनेप्यन्यः कदाचित्कोपमेव कुर्यादिति शङ्कमानाः पिता तु सापराधेष्वपि स्वभावादेव प्रसीदतीति मत्वा सर्वे देवादयो ब्रह्मणे सर्वं वृत्तं निवेदितवन्त इत्याह—अथेत्यादिद्वाभ्याम्। अथैवं यज्ञविध्वंसानन्तरं रुद्रानीकैस्तदनुचरसैन्यैः पराजिताः शूलादिभिः सञ्छिन्नानि त्रुटितानि भिन्नानि विदीर्णानि च सर्वाण्यङ्गानि येषां ते सह ऋत्विग्भिः सभ्यैश्च वर्तमाना भयेनाकुलाः सर्वे देवगणाः स्वयंभुवे ब्रह्मणे नमस्कृत्य कात्स्न्र्येन साकल्येनैतत् रुद्रभागं निराकृत्य यागप्रवर्त्तनतन्नाशपर्यन्तं वृत्तं न्यवेदयन् विज्ञापितवन्त इत्यन्वयः॥ १-२॥ ❀ ❀ ननु ब्रह्मास्मिन् कुतो नागतस्तत्राह—उपलभ्येति। यागनाशात् पुरैवाब्जसंभवो ब्रह्मा नारायणो विष्णुश्च एतद्रुद्रभागं विना प्रवृत्तस्य यज्ञस्य तत्कर्तुश्च नाशं तदनुमोदनपराणामुपद्रवं चोपलभ्य ज्ञात्वा कस्य दक्षस्याध्वरं नेयतुः नागतावित्यन्वयः। ब्रह्मणो ज्ञाने हेतुः—भगवानिति। भगवतः प्रतिलब्धज्ञानशक्तिर्यैत इत्यर्थः। भगवतो ज्ञानेऽन्तर्यामित्वहेतुमाह—विश्वात्मेति। अतो रुद्रभागं विनावश्यंभाविनो यज्ञनाशस्य तयोरप्यभिमतत्वेन न रुद्रस्यात्र कश्चिदपराध इति भावः॥ ३॥ ❀ ❀ यद्यपि देवादयोस्तपितृत्वेनास्मत्पक्षपातं कृत्वा शिवे तदनुरूपं किञ्चिद्दण्डं करिष्यतीति दुरभिप्रायेण तं विज्ञापितवन्तस्तथापि ब्रह्मा तेषामेवापराधित्वकथनपूर्वकं शिवमाहात्म्यमेव बोधितवानित्याह—तदाकर्ण्येति चतुर्भिः। तत् देवादिभिर्निवेदितं वृत्तमाकर्ण्य श्रुत्वा विभुः सर्वाधिपतित्वेन तेषामुपर्याज्ञाकरणे समर्थो ब्रह्मा प्राह। किं प्राहेत्याकाङ्क्षायां तदुक्तं दर्शयति—तेजीयसीति। अतितेजस्विनि कृतागसि कृतापराधेपि पुंसि तत्र स्वापराधं कृत्वा बुभूषतां स्वोद्भवमिच्छतां पुंसां सा स्वोद्भवेच्छा प्रायेण क्षेमाय तेषां कल्याणाय न भूयात् न भवेदेवेत्यर्थः। विष्णुरुद्रविषयकतिरस्कारस्याप्यन्ततः परमपुरुषार्थहेतुत्वस्य "तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत्" "क्रोधोपि देवस्य वरेण तुल्यः" इत्यादिवाक्येभ्योऽग्रे दक्षस्य हिरण्यकशिपुप्रभृतीनां च पुरुषार्थसिद्धेश्चाङ्गीकारात्प्रायग्रहणम्। तथाच स्वापराधेनैव युष्माकमनिष्टं जातम्, नात्र कश्चिद्भवस्यापराध इति भावः॥ ४॥ ❀ ❀ नन्वस्माकं कोपराधः कथं वा तस्य शान्तिरित्यपेक्षायां स्वस्य सर्वदा साङ्गयज्ञप्रवृत्तेरिष्टत्वात्तेषामपराधान्तरं गौणीकृत्य येन यज्ञस्य व्यङ्गता जाता तमेवापराधं पुरस्कृत्य देवैर्यथा नैवं पुनरपराध्येत, न वानुमोचेत तथा शिक्षयन्नपराधशान्त्युपायं ब्रह्माह—अथापीति। यूयं कृतकिल्बिषाः कृतापराधाः। कुतस्तत्र हेतुर्यतो मे यूयं बर्हिषो यज्ञस्य भाजं भवं पराद्युः यज्ञभागादानेन ततो निराचक्रुरिति। कर्तुः शास्तुरनुज्ञातुश्च धर्माधर्मफले तुल्यत्वाद्दक्षकृतरुद्रभागनिराकरणस्य युष्माभिरनुमोदनाद्युष्माकमपि तदपराधे तत्फलं दुर्दशा जातेति भावः। नन्वपराधफलस्य जातत्वादतः परमस्माभिः किं कर्त्तव्यं किं तूष्णीमेव स्थेयमुपायान्तरं वा तत्राह—प्रसादयध्वमिति। यद्यप्येवं यूयं कृतकिल्बिषाः अथापि तं भवं प्रसादयध्वमित्यन्वयः। तत्प्रसादनोपायोन्तर्बहिर्भेदेन द्विविधस्तत्रान्तरुपायमाह—परिशुद्धचेतसेति। चेतसः परिशुद्धत्वं तन्माहात्म्यविचारेण स्वाभिमानं त्यक्त्वा तत्रारोपितदोषदृष्टिं च हित्वा दैन्यभावः। बहिरुपायमाह—प्रगृहीताङ्घ्रिपद्ममिति। प्रगृहीते अङ्घ्रिपद्मे यस्य तम्। पादपद्मे प्रगृह्येत्यर्थः। 'प्रगृहीताङ्घ्रिपद्मा'

इति पाठे प्रगृहीतेऽङ्घ्रिपद्मे यैस्तादृशाः सन्तः इत्यर्थः। न च शङ्कनीयं क्रुद्धत्वादेवमपि न प्रसन्नो भविष्यतीति तस्याशुतोषत्वादित्याह–क्षिप्रप्रसादमिति ॥ ५ ॥ ❀ ❀ केचनाभिमानिनो देवादयो दैन्येनैतत्पादपद्मे गृहीतुं नोत्सहन्ते तान्भीषयन्निदानीमेव प्रसादनं युक्तमित्याह–आशासाना इति। तं देवमाशु क्षमापयध्वमित्यन्वयः। आशु प्रसादने गुणमाह–आशासाना इति। यतो यूयमध्वरस्य जीवितं पुनःसन्धानमाशासाना अतस्तमाशु क्षमापयध्वम्। तत्प्रसादं विना तन्न स्यादिति भावः। क्षमापणं विना भयं दर्शयति–लोक इति। यस्मिन् कुपिते सति सपालो लोको न भवति क्षणादेव नश्यतीत्यर्थः। तस्य क्रोधे हेतुद्वयमाह–यतः प्रियया सत्या विहीनं दक्षादिदुरुक्तैर्दुर्वचोभिर्हृदि विद्धमिति ॥ ६ ॥ ❀ ❀ ननु भवान् स्वयंभूत्वेन सर्वाधिपतिरतो भवत्कृतं नान्यथा भविष्यतीति भवतैव कश्चिदुपायो विधेय इत्याशङ्क्याह–नाहमिति। यस्य शिवस्य तत्त्वं यथार्थस्वरूपं 'ब्रह्मत्वं बलवीर्ययोः' इत्युपलक्षणं ज्ञानादिगुणानां प्रमाणं परिमाणमियत्तां चाहं ब्रह्मा न वेद्मि। यज्ञ इदानींतन इन्द्रो न वेत्ति यूयं देवादयश्च न वित्थ येऽन्ये देहभाजो देहिनो मुनयश्च ते न विदुरित्यन्वयः। अज्ञाने हेतुगर्भं विशेषणमाह–आत्मतन्त्रस्येति। इन्द्रियादिपरवशानां तत्त्वादि ज्ञातुं शक्यते। तस्य स्वतन्त्रस्य यथेष्टं विहरतस्तत्कथं ज्ञातुं शक्यत इति भावः। अतस्तस्मिन् क्रुद्धे सति कोऽस्मदादिसदृशोऽज्ञो जनः कमुपायं विधित्सेत् विधानं कर्तुमिच्छेत्। तन्माहात्म्यस्य दुरवगाह्यत्वेन तत्रोपायस्य कस्याप्यस्फुरणात् तद्विधानेच्छापि दुर्घटा, तद्विधानं तदनुष्ठानं तु दुरापास्तमतस्तत्र गत्वा तत्क्षमापणमेवोपायो नान्य इति भावः ॥ ७ ॥ ❀ ❀ एवमुक्तानपि तान्महादेवसमीपं गन्तुं बिभ्यत उपलक्ष्य तानुपादायैवं युष्माभिर्यज्ञभागनिराकरणादिनापि भवस्य न कापि हानिरिति तेषामभिमानदूरीकरणार्थं भवाधिष्ठितवनादिशोभां दर्शयन् ब्रह्मा स्वयमेव कैलासं जगामेत्याह–स इति। स सर्वपितामहो ब्रह्मा अजः स्वयंभूः सुरानित्थमादिश्योपदेशं कृत्वा तैर्देवैः पित्रादिभिश्च समन्वितः स्वधिष्ण्यात् स्वस्थानात् पुरद्विषः प्रभोः महादेवस्य प्रियं निलयं स्थानमद्रिप्रवरं पर्वतश्रेष्ठं कैलासं ययावित्यन्वयः ॥ ८ ॥

### भाषानुवादः

### ब्रह्मादि देवताओंका कैलास जाकर श्रीमहादेवजीको मनाना

श्रीमैत्रेयजी कहते हैं—विदुरजी ! इस प्रकार जब रुद्रके सेवकोंने समस्त देवताओंको हरा दिया और उनके सम्पूर्ण अङ्ग-प्रत्यङ्ग भूत-प्रेतोंके त्रिशूल, पट्टिश, खड्ग, गदा, परिघ और मुद्गर आदि आयुधोंसे छिन्न-भिन्न हो गये तब वे ऋत्विज और सदस्योंके सहित बहुत ही डरकर ब्रह्माजीके पास पहुँचे और प्रणाम करके उन्हें सारा वृत्तान्त कह सुनाया ॥ १-२ ॥ ❀ ❀ भगवान् ब्रह्माजी और सर्वान्तर्यामी श्रीनारायण पहलेसे ही इस भावी उत्पातको जानते थे, इसीसे वे दक्षके यज्ञमें नहीं गये थे ॥ ३ ॥ ❀ ❀ अब देवताओंके मुखसे वहाँकी सारी बात सुनकर उन्होंने कहा—'देवताओ ! परम समर्थ तेजस्वी पुरुषसे कोई दोष भी बन जाय, तो भी उसके बदलेमें अपराध करनेवाले मनुष्योंका भला नहीं हो सकता ॥ ४ ॥ ❀ ❀ फिर तुम लोगोंने तो यज्ञमें भगवान् शङ्करका प्राप्य भाग न देकर उनका बड़ा भारी अपराध किया है। परन्तु शङ्करजी बहुत शीघ्र प्रसन्न होनेवाले हैं, इसलिये तुमलोग शुद्ध हृदयसे उनके पैर पकड़कर उन्हें प्रसन्न करो—उनसे क्षमा माँगो ॥ ५ ॥ ❀ ❀ दक्षके दुर्वचनरूपी बाणोंसे उनका हृदय तो पहलेसे ही बिंध रहा था, उसपर उनकी प्रिया सतीजीका वियोग हो गया। इसलिये यदि तुम लोग चाहते हो कि वह यज्ञ फिरसे आरम्भ होकर पूर्ण हो, तो पहले जल्दी जाकर उनसे अपने अपराधोंके लिये क्षमा माँगो। नहीं तो, उनके कुपित होनेपर लोकपालोंके सहित इन समस्त लोकोंका भी बचना असम्भव है !! ६ ॥ भगवान् रुद्र परम स्वतन्त्र हैं, उनके तत्त्व और शक्ति-सामर्थ्यको न तो कोई ऋषि-मुनि, देवता और यज्ञस्वरूप देवराज इन्द्र ही जानते हैं और न स्वयं मैं ही जानता हूँ; फिर दूसरोंकी तो बात ही क्या है। ऐसी अवस्थामें उन्हें शान्त करनेका उपाय कौन कर सकता है, ॥ ७ ॥

स इत्थमादिश्य सुरानजस्तैः समन्वितः पितृभिः सप्रजेशैः।
ययौ स्वधिष्ण्यान्निलयं पुरद्विषः कैलासमद्रिप्रवरं प्रियं प्रभोः ॥ ८ ॥

जन्मौषधितपोमन्त्रयोगसिद्धैर्नरेतरैः[1]। जुष्टं [2]किन्नरगन्धर्वैरप्सरोभिर्वृतं सदा ॥ ९ ॥

नानामणिमयैः शृङ्गैर्नानाधातुविचित्रितैः। नानाद्रुमलतागुल्मैर्नानामृगगणावृतैः ॥ १० ॥

नानामलप्रस्रवणैर्नानाकन्दरसानुभिः। रमणं विहरन्तीनां रमणैः[3] सिद्धयोषिताम् ॥ ११ ॥

मयूरकेकाभिरुतं मदान्धालिविमूर्च्छितम्। [4]श्लावितैः रक्तकण्ठानां कूजितैश्च पतत्रिणाम् ॥ १२ ॥

आह्वयन्तमिवोद्धस्तैर्द्विजान् कामदुघैर्द्रुमैः। व्रजन्तमिव मातङ्गैर्गृणन्तमिव निर्झरैः ॥ १३ ॥

---

१. प्रा० पा—निरन्तरैः। २. प्रा० पा०—यक्षकिन्नर०। ३. प्रा० पा०—सिद्धचारणयोषिताम्। ४. प्रा० पा०—सूचितै।

मन्दारैः पारिजातैश्च सरलैश्चोपशोभितम् । तमालैः शालतालैश्च कोविदारासनार्जुनैः ॥ १४ ॥
चूतैः कदम्बैर्नीपैश्च नागपुन्नागचम्पकैः । पाटलाशोकबकुलैः कुन्दैः कुरबकैरपि ॥ १५ ॥
स्वर्णार्णशतपत्रैश्च वररेणुकजातिभिः । कुब्जकैर्मल्लिकाभिश्च माधवीभिश्च मण्डितम् ॥ १६ ॥
पनसोदुम्बराश्वत्थप्लक्षन्यग्रोधहिङ्गुभिः । भूर्जैरोषधिभिः पूगै राजपूगैश्च जम्बुभिः ॥ १७ ॥
खर्जूराम्रातकाम्राद्यैः प्रियालमधुकेङ्गुदैः । द्रुमजातिभिरन्यैश्च राजितं वेणुकीचकैः ॥ १८ ॥
कुमदोत्पलकह्लारशतपत्रवनर्द्धिभिः । नलिनीपु कलं कूजत्खगवृन्दोपशोभितम् ॥ १९ ॥
मृगैः शाखामृगैः क्रोडैर्मृगेन्द्रैर्ऋक्षशल्यकैः । गवयैः शरभैर्व्याघ्रै रुरुभिर्महिषादिभिः ॥ २० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

कैलासं वर्णयति जन्मौषधीत्यादिचतुर्दशभिः । नरेतरैर्देवैर्जुष्टं सेवितम् ॥ ९ ॥ ❀ ❀ शृंगै रमणं रतिप्रदमित्युत्तरेणान्वयः । कथंभूतैः—नानाधातुभिर्विचित्रितैः नाना द्रुमलता गुल्माश्च येषु ॥ १० ॥ ❀ ❀ नाना अमलानि प्रस्रवणानि येषु नाना कंदराः सानवश्च येषु तैः रमणैः सह क्रीडंतीनाम् ॥ ११ ॥ ❀ ❀ मयूराणां केकाभिः स्वनैर्नादितम् । मदांधैरलिभिर्भृंगैः विशेषेण मूर्च्छितं मूर्छना रागगतिविशेषस्तद्वयाप्तं कृतम् । रक्तकंठानां कोकिलानां प्लावितैः प्लुतत्वं नीतैः स्वरैः अन्येषां च पतत्रिणां पक्षिणां कूजितैः ॥ १२ ॥ ❀ ❀ उद्धस्तैरुन्नतशाखैर्द्रुमैर्द्विजान्पक्षिण आह्वयंतमिव आकारयन्तमिव । लोके हि हस्तमुत्क्षिप्योच्चैः स्वरेणाह्वानमर्थिनां द्विजानां कुर्वंति अद्रिश्चोत्क्षिप्तहस्ताकारैर्द्रुमैस्तत्रत्यपक्षिस्वनैश्च तथा लक्ष्यत इत्यर्थः । व्रजद्भिर्मातंगैर्गजैर्व्रजंतमिव निर्झरध्वनिभिर्गृणंतं भाषमाणमिव ॥ १३-१४ ॥ ❀ ❀ चूताम्रयोर्नीपकदंबयोरवांतरजातिभेदः वेणुकीचकयोश्च नीरंध्रसरंध्रत्वेन भेदः ॥ १५ ॥ ❀ ❀ स्वर्णार्णैः स्वर्णवर्णैः शतपत्रैः पुष्पप्रधानगुल्मभेदैर्मंडितम् । वररेणुकजातिभिरित्यत्र वराः श्रेष्ठा रेणुका एला जातिर्मालती ॥ १६-१७ ॥ ❀ ❀ द्रुमजातिभिरित्यत्र जातिरवांतरभेदसामान्यम् ॥ १८ ॥ ❀ ❀ कुमुदादिवनस्य समृद्धिभिर्हेतुभिर्नलिनीपु सरःसु कलं मधुरं यथा भवत्येवं कूजंति यानि पक्षिवृंदानि तैरुपशोभितम् ॥ १९ ॥ ❀ ❀ मृगादिभिर्निर्जुष्टं निषेवितम् । तत्र शाखामृगैर्वानरैः क्रोडैः सूकरैः ऋक्षैर्ऋच्छभल्लैः पूर्वं मृगगणाः शृंगविशेषणत्वेनोक्ता इदानीं तु स्वातंत्र्येणेत्यपौनरुक्त्यम् ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

जन्मना विशिष्टकुलोत्पत्त्या ओषधिना चित्रकाद्यौषधेन । तपसा कृच्छ्रचांद्रायणादिना । मंत्रेण महामृत्युंजयादिना । महामृत्युंजयमंत्रश्च मंत्रमहोदधावुक्तः "महामृत्युंजयं वक्ष्ये दुरितापन्निवारणम् । यं प्राप्य भार्गवः शंभोर्मृतान्दैत्यानजीवयत् (१) तारः खं व्यापिनी चंद्रयुक्ता रश्चतुराननः । अर्वीशबिन्दुसंयुक्तो हंसः सर्गी च भूर्भुवः ।" (२) "सकारबालसर्गाढ्यस्त्र्यंबकं वैदिको मनुः । भूर्भुवः स्वो भुजंगेशस्तारो जूंसर्गवान्भृगुः ॥ आकाशो मनुविन्द्वाढ्यः प्रणवांतो मनूत्तमः" (३) तथा हि "ॐ हौं ॐ जूं सः भूर्भुवः स्वः त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्द्धनम् । उर्वारुकमिव बंधनान्मृत्योर्मुक्षीय मामृतात् भूर्भुवः स्वरों जूं सः हौं ॐ" योगेनाष्टांगेन । एतैः सिद्धैर्नरेतरैर्देवादिभिः ॥ ९ ॥ ❀ ❀ मणयो मरकतादयः । धातवो हरितालादयः सुवर्णादयः । मृगाणां चमर्यादीनां गणाः समूहास्तैरावृतैर्वेष्टितैः ॥ १० ॥ ❀ ❀ "निर्झरः प्रस्रवोंभसाम्" इति हलायुधः । जलस्य नानात्वं मारकतादिस्थलसंपर्कात् । कर्दमराहित्येनामलत्वं न तु शौक्ल्येन तथात्वे नानात्वं, कंदरा गुहा । सानवो नगोर्ध्वसमभूमागाः । रमणं रतिप्रदम् ॥ ११ ॥ ❀ ❀ "क्रमयुक्ताः स्वराः सप्त मूर्च्छना यत्र सा भवेत् ।" स्वरा निषादादयः । प्लुतत्वमुच्चैस्त्वम् । नीतैः प्रापितैः स्वरैश्चाभिरुतम् । यद्वा मयूरकेकाभिः रुतं कृतशब्दम् । रलोपे दीर्घाभावोऽत्र छंदोभंगभयात् "गतोऽसौ पुनराजसु" इतिवत् ॥ १२ ॥ ❀ ❀ इत्यर्थ इति । अत्र कैलासस्य तद्वासस्थानस्याप्यर्थिमनोरथपूरकत्वकथनेन शिवस्य तथात्वं तु कैमुत्यन्यायसिद्धमिति ध्वनितम् ॥ १३ ॥ ❀ ❀ मंदारैः पुष्पद्रुमैः । पारिभद्रैः । सरलैर्देवदारुभिः । तमालैस्तापिच्छैः । शालैस्सर्जैः । तालैस्तृणराजैः । कोविदारैः कांचनारकैः । असनैः प्रियकपुष्पैः । अर्जुनैः ककुभैः ॥ १४ ॥ ❀ ❀ नागो नागकेसरः । पुन्नागः सुरवल्लभः । कुरबकैस्तिलकैः ॥ १५ ॥ ❀ ❀ वरः करवीरः । कुब्जकैः कुंकुमतरुभिः । माधवी वासंती । अत्र संस्कृताधिकारित्वात्पर्यायांतरमेवोक्तमपभ्रंशानां नानात्वात्तैर्बोधनस्याशक्यत्वात् ॥ १६ ॥ ❀ ❀ पनसः प्रकांडोद्भूतमहाफलवृक्षविशेषः । उदुंबरो जंतुफलः । अश्वत्थश्चलदलः । प्लक्षः पर्कटी । न्यग्रोधो

---

१. प्रा० पा०—वृतैः कदम्बनिम्बैश्च । २. प्रा० पा०—गैः पत्रैश्च धवजम्बुभिः । ३. प्रा० पा०—काश्मर्याम्रा० । ४. प्रा० पा०—नलिनीपुलिने कूज० । ५. प्रा० पा०—शल्ल० ।

वटः। हिंगू रामठवृक्षः। भूर्जैर्भूर्जपत्रैः। औषधीभिः सौभांजनादिवृक्षैः ॥ १७॥ ❁ ❁ आम्रातकः विंदुलः। प्रियालो राजादनम्। मधुको मधूकः। इंगुदी तापसवरुः। अवांतरभेदसामान्यमवांतरजातिः॥ १८॥ ❁ ❁ कुमुदाद्याः कमलजातयस्ताभिः। वनर्द्धिभिर्जलसमृद्धिभिः। यद्वा। कुमुदादिवनानां समूहानां समृद्धिभिराधिक्यैः "वनं नपुंसकं नीरे समूहालयकानने" इति कोशात्॥ १९॥ ❁ ❁ शाखामृगा वानराः। क्रोडा वराहाः। मृगेंद्राः सिंहाः। ऋक्षा भल्लूकाः। शल्यकाः कंटकवराहाः। गवया वनगावः। आदिना शरभादयो ग्राह्याः॥ २०-२१॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

स इत्थमित्यादि चतुर्दशकम्। मध्ये द्विबिंदुमस्तकाङ्का टीका क्रमसुबोधाय रचितेति ज्ञेयम्। नानामणिमयैरित्यवांतरयुग्मकम्॥ ८-१०॥ ❁ ❁ सानुः शिखरम्॥ ११॥ ❁ ❁ गतिविशेषः स्वराणामारोहावरोहलक्षणः ॥ १२॥ ❁ ❁ उत्क्षिप्तहस्ताकारैर्द्रुमैरिति द्रुमाणां हस्तस्थानीयत्वे उन्नतशाखैरित्यत्र शाखानामंगुलिस्थानीयत्वं ज्ञेयम्। किंतु उत्क्षिप्तहस्ताकारैरिति उद्धस्तैरित्यस्य व्याख्या तथा चोन्नतशाखैरिति चिन्त्यम्॥ १३॥ ❁ मंदारपारिजातौ देवतरुविशेषौ। कोविदारः कचनारेति ख्यातः। असनो विजयसारः॥ १४॥ ❁ ❁ नीपो धूलिकदंबः। वकुलोत्र मौरसलीति ख्यातः। कुरवकस्तिलकवृक्षः॥ १५॥ ❁ ❁ स्वर्णः स्वणजुही। अर्णः अरणीति ख्यातः द्रुमेषु। वृक्षत्वसामान्यस्यैकत्वाद् बहुवचनमनुपपन्नमित्यवांतरसामान्यं व्याख्यातम्॥ १६॥ ❁ ❁ पनसादयः प्रसिद्धाः ॥ १७-१८॥ ❁ ❁ कुमुदादिवनसमृद्धिभिर्हेतुभिः॥ १९-२१॥

## श्रीमद्वीरराघवव्याख्या

कैलासं वर्णयति जन्मौषधीत्यादिभिश्चतुर्दशभिः। जन्मना ओषध्यादिनिश्चये सिद्धास्तैर्नरेतरैर्देवयोनिभिः तत्र जन्मतः सिद्धा ओषध्याद्यनपेक्षमेव सृष्टिवेलायामेव देवत्वेन सृष्टाः। ओषध्यादिसिद्धास्तु देवत्वसंपादकौषध्याद्युपायैर्देवत्वेन सिद्धाः। योगः रुद्रोपासनारूपयोगः। मंत्रः यावज्जीवं शिवपंचाक्षर्यादिमंत्रावृत्तिः। जुष्टं सेवितम्। तथाच गीतं भगवता 'देवान् देवयजो यांती'ति तथा अप्सरोभिः किन्नरादिभिश्च सदा वृतम्॥ ९॥ ❁ ❁ शृंगैः शिखरैः रमणैः प्रियैः सह विहरंतीनां सिद्धानां या योषितस्तासां रमणं रतिप्रदम्, शृगैः कथंभूतैः नानाधातुभिर्गैरिकादिभिः विचित्रितैः, नानाद्रुमाः लतागुल्मानि च येषु तैः ॥ १०॥ ❁ ❁ नाना अमलानि स्वच्छानि प्रस्रवणानि स्रोतांसि येषु, नाना कंदराः सानूनि च येषु तैः॥ ११॥ ❁ ❁ तथा मयूराणां केकास्वनैः अभितः सर्वतः रुतं नादितम्। मदेन मकरंदपानजनितमदेन अंधैरलिभिर्मृगैः विमूर्च्छितं मूर्च्छनाख्यरागगीतिविशेषेण व्याप्तं रक्तकंठानां कोकिलानां प्लावितैः त्रिमात्रशब्दैस्तथान्येषां पतत्रिणां च कूजितैः॥ १२॥ ❁ ❁ उद्धस्तैः उन्नतशाखैः कामदुघैर्द्रुमैश्च द्विजान् पक्षिण आह्वयन्तमिव स्थितं, लोके हि हस्तमुत्क्षिप्य उच्चैः स्वरेणाह्वानमर्थिनां कामधुक् अद्रिश्च उत्क्षिप्तहस्ताकारैर्द्रुमैः पत्त्रिणां स्वनैश्च तथालक्ष्यत इत्यर्थः। व्रजद्भिर्मातंगैर्गजैत्र्र्जन्तमिव निर्झराणां ध्वनिभिर्गृणंतं भाषमाणमिव स्थितम्॥ १३॥ ❁ ❁ मंदारादिभिर्वृक्षविशेषैः रुपशोभितम्॥ १४॥ ❁ ❁ चूतैराम्रविशेषैः॥ १५॥ ❁ ❁ स्वर्णार्णशतपत्रैः सुवर्णवर्णैः कुशेशयैः कुंदादिभिर्लताविशेषैश्च मण्डितम्। रेणुका एला जातिर्मालती॥ १६॥ ❁ ❁ पनसादिभिर्द्रुमैः॥ १७॥ ❁ ❁ तथान्यैश्च द्रुमजतिभिः द्रुमसामान्यैर्वेणुकीचकैश्च राजितं मंडितं, नीरंध्रसरंध्रत्वेन वेणुकीचयोर्भेदः। द्रुमजातिभिरित्यत्र जातिरवांतरभेदसामान्यम्॥ १८॥ ❁ ❁ कुमुदादिसमृद्धिभिः शतपत्राणां स्वर्णवर्णानां वनानां ऋद्धिभिः राजितं नलिनीषु सरस्सु कलं मधुरं यथा भवति तथा कूजद्भिः खगवृंदैः पक्षिसंघैरुपशोभितम्॥ १९॥ ❁ ❁ मृगादिभिर्निर्जुष्टं निषेवितम्॥ २०॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

कंटकगुल्मखंडैरप्रवेशस्य गंडशैलादिपाषाणैरनारोहस्याचलस्य किं माहात्म्याद्रुद्रप्रियत्वमित्यतस्तं पर्वतं चतुर्दशभिः श्लोकैर्वर्णयति जन्मेत्यादिना। नरेतरैर्नरत्वजातिरहितैर्जन्मना विशिष्टकुलोत्पत्त्या कृष्णचित्रकाद्योषधेन कृच्छ्रचांद्रायणादितपसाऽष्टांगलक्षणयोगेन मृत्युंजयादिमंत्रेण एतैः सिद्धैरमरत्वादिसिद्धिं गतैर्जुष्टमित्यनेन सुखसाधनत्वं ध्वनयति। नरेतरैः किन्नरगंधर्वैर्जुष्टमप्सरोभिर्वृतमिति वा॥ ९॥ ❁ ❁ मनःशिलादिनानाविधधातुभिर्विचित्रैश्चित्राकारं गमितैरिति शृंगविशेषणं नानामृगगणावृतैः नानाद्रुमादिभिश्च वृतम्॥ १०॥ ❁ ❁ 'निर्झरः प्रस्रवोंभसामि'ति हलः। जलस्य नानात्वं मरकतादिस्थलसंपर्कोत्कर्दमराहित्येनामलत्वम्। न तु शौक्ल्येन। तथात्वे नानात्वं वि विरुद्धं, कंदरा गुहाः। सानूनि तटाकानि। रमणैः सह विहरंतीनां सिद्धयोषितां रमणं रतिप्रदम्॥ ११॥ ❁ ❁ मयूरकेकाभिरुतं शब्दितं विमूर्च्छितं विविधं गीतं रक्तकंठानां कोकिलानां प्लावितैः तारस्वरितैरन्येषां पतत्रिणां कूजितैः रुतैः॥ १२॥ ❁ ❁ किं च पक्षिग्राहकैः पुरुषैरुद्धस्तैरुदवृत्तैर्द्विजैः करणैः कामं दुहद्भिर्द्रुमै-

राह्वयंतमिव स्थितम् ॥ १३ ॥ ❀ ❀ पारिजातैः पारिभाद्रकैः सरलैर्देवदारुभिः सालतालैः सर्ज्जतृणराजैः कोविदारैः कांचनारकैः असनैः पिशंगपुष्पैः अर्जुनैः ककुभैः ॥ १४ ॥ ❀ ❀ नागैर्नागकेशरैः पुन्नागैः सुरवल्लभैः कुरवकैस्तिलकैः ॥ १५ ॥ ❀ ❀ सुवर्णः कृतमालः वीरः करवीरं रेणुकं केतकी कुब्जकैः कुंकुमतरुभिः माधवी वासंती। अत्र संस्कृताधिकारित्वात्पर्यायांतरमेव लिख्यते, नानात्वेनापभ्रंशानां तैर्बोधनं न शक्यते ॥ १६ ॥ ❀ ❀ हिंगू रामठः भूर्जैर्भूर्जपत्रैः ओषधीभिर्जनवृक्षैः ॥ १७ ॥ ❀ ❀ काश्मरी कृष्णवृन्तिकः आम्रातको विडुलः आम्रो जिह्वारसकरः प्रियालो लवगः धनुर्वा मधुको मधुकरसः इंगुदः हिंगुदकः तापसतरुर्वा ॥ १८-१९ ॥ ❀ ❀ शाखामृगैर्वानरैः क्रोडैर्वराहैः ऋक्षैर्भल्लूकैः शल्यकः कंटकवराहः गवया वनगावः शरभोऽष्टापदः रुरुर्हरिणेषु महान् ॥ २० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

शृंगाणां पूर्वापरं विशेषणद्वयं नानाद्रुमेत्यस्य नानामृगेति विशेषणम् ॥ १० ॥ ❀ ❀ नानामलेत्यादि द्वयं तु पृथग् पृथगेव ॥ ११ ॥ ❀ ❀ स्वर्णार्णेति। अर्णो वर्णः, हिंगुरत्र करञ्जतुल्यो वृक्षविशेषः ॥ १६-१९ ॥ ❀ ❀ नानामृगेत्यस्यैव विवरणं मृगैरिति। मृगेन्द्रैर्ऋक्षशल्यकैः गवयैः शरभैर्व्याघ्रै रुरुभिर्महिषादिभिः। कर्णोर्णैकपदाश्वास्यैर्निर्जुष्टं मृगनाभिभिरिति क्वचित् पाठः। तत्र कर्णोर्णादयो मनुष्याकारा मृगप्रायाः ॥ २०-२१ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

कैलासं वर्णयति जन्मौषधीत्यादि चतुर्दशभिः। नरेतरैर्देवैः ॥ ९-१० ॥ ❀ ❀ रमणैः कान्तैः सह विहरन्तीनां सिद्धयोषितां रमणं रतिप्रदम् ॥ ११ ॥ ❀ ❀ मयूराणां केका एव अभितो रुतानि गृहस्थानामिवोक्तिप्रत्युक्तिकोलाहला यत्र तं मदान्धानामलीनां गायकानामिव मूर्च्छितानि रागस्वरालापमूर्च्छना यत्र तं रक्तकण्ठानां कोकिलानां पतत्रिणामन्येषाञ्च पक्षिणां प्लावितैः प्लुतत्वं नीतैः कूजितैः तथा उद्धस्तैरुद्गतैर्हस्तैरिव कामदुघैर्द्रुमैर्द्विजान् पक्षिणोऽतिथीन् ब्राह्मणानिव आह्वयन्तम् ॥ १२ ॥ ❀ ❀ व्रजद्भिर्मातङ्गैर्व्रजन्तमिव गृणद्भिर्निर्झरैर्गृणन्तमिव मधुरं भाषमाणमिव मन्दारादिभिर्मण्डितम् ॥ १३-१४ ॥ ❀ ❀ चूताम्रयोर्नीपकदम्बयोरप्यवान्तरजातिभेदः वेणुकीचकयोश्च नीरन्ध्रसरन्ध्रत्वेन। रेणुकजातिभिरिति रेणुका एला जातिर्मालती ॥ १५-१८ ॥ ❀ ❀ नलिनीषु सरःसु ॥ १९ ॥ ❀ ❀ नाभिः कस्तूरीमृगः ॥ २० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अद्रिप्रवरं ययावित्युक्तं तदद्रिप्रवरत्वं दर्शयति जन्मेति चतुर्दशभिः। सिद्धैर्नरेतरैर्देवादिभिर्जुष्टं सेवितम् ॥ ९ ॥ ❀ ❀ रमणैः भर्तृभिः सह विहरंतीनां शृंगैः शिखरैः रमणं रतिप्रदमिति द्वयोरन्वयः। कथम्भूतैः शृङ्गैः ? नानामणिमयैः अनेकजातिमणिमयैः अनेकधातुविचित्रितैः अनेकजातिद्रुमलतागुल्मा येषु तैः ॥ १० ॥ ❀ ❀ नानाविधानि अमलानि प्रस्रवणानि येषु तैः नानाविधाः कंदराः सानवश्च येषु तैः ॥ ११ ॥ ❀ ❀ मयूराणां केकाभिः स्वनैः अभिरुतं सर्वतो नादितम्। मदांधैरलिभिः भ्रमरैर्विमूर्च्छितम्। मूर्च्छनाभिः रागगतिभिर्व्याप्तं कृतमित्यर्थः। रक्तकंठानां कोकिलानां प्लावितैः स्वरैः अन्येषां पक्षिणां कूजितैश्च आह्वयंतमित्युत्तरेणान्वयः ॥ १२ ॥ ❀ ❀ कामदुघैर्द्रुमैः उद्धस्तैः उन्नतशाखैः द्विजान् पक्षिणो मुनींश्चाह्वयंतमिव संतं व्रजद्भिर्मातंगैर्व्रजंतमिव गजरूपं कृत्वा गच्छन्तमिव निर्झरैर्गृणंतं भाषमाणमिव ॥ १३ ॥ ❀ ❀ सदारादिभिरुपशोभितम् ॥ १४ ॥ ❀ ❀ चूतादिभिर्मंडितमिति द्वितीयेनाऽन्वयः। चूतैराम्रविशेषैः कदंबनीपैरिति कदंबैर्नीपैश्च कदंबविशेषैः ॥ १५ ॥ ❀ ❀ वरवेणुकजातिभिः वरवेणुकैः श्रेष्ठैरेलापरपर्यायैः जातिभिः मालतीभिः ॥ १६-१७ ॥ ❀ ❀ वेणुकीचकैः नीरंध्रैः सरंध्रैश्चोभयविधैर्वेणुभिः ॥ १८ ॥ ❀ ❀ कुमुदादिभिः नलिनीषु कमलाकरेषु कलं मधुरं यथा स्यात्तथा कूजद्भिः खगानां वृन्दैः समूहैश्चोपशोभितम् ॥ १९ ॥ ❀ ❀ निर्जुष्टं नितरां सेवितम् ॥ २० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

ननु कण्टकादिना दुष्प्रवेशत्वात् पाषाणादिना दुरारोहत्वात्तस्य पर्वतस्य कथं महादेवप्रियत्वमित्याशङ्क्य शिववासस्थानत्वेनैव सर्वदोषनिवृत्तिपूर्वकसर्वगुणानां तत्राविर्भावान्मैवं शङ्क्यमित्यभिप्रेत्य कैलासं वर्णयति—जन्मौषधीत्यादित्रयोदशभिः। केचिज्जन्मना सिद्धकुलोत्पत्त्यैव सिद्धाः। केचन तत्रत्यौषधीनां सेवनादेव सिद्धाः। ओषधिग्रहणं मणीनामुपलक्षणम्, तेषामप्यचिन्त्यप्रभावत्वात्। केचन कृच्छ्रचान्द्रायणादितपसा सिद्धाः। केचन चित्तवृत्तिनिरोधप्रधानेनाष्टाङ्गयोगेन सिद्धाः। एवं पञ्चधा सिद्धास्ते च नरेतरा नरत्वजातिरहितास्तैर्जुष्टं सर्वदा सेवितम्। तथा किंनरादिभिश्च वृतं रम्यत्वेन विहारार्थमागतैस्तैः सङ्कुलमित्यर्थः ॥ ९ ॥ ❀ ❀ रमणैः स्वपतिभिः सह विहरन्तीनां सिद्धयोषितां नानामणिमयैः शृङ्गैः रमणं रतिप्रदमित्युत्तरे-

णान्वयः। शृङ्गाणां रमणत्वहेतूनामपि तथात्वे हेतुभूतानि नानामणिमयत्वादीनि पञ्च विशेषणानि बोध्यानि। नानाधातुभिर्विचित्रितैः शृङ्गैः नानाद्रुमलतागुल्माश्च येषु तैः। नानामृगगणैरावृतैः ॥ १० ॥ ❀ ❀ नाना अमलानि निर्मलानि प्रस्रवणानि येषु शृङ्गेषु तैः। नानाकन्दरा गुहाः सानवश्च येषु शृङ्गेषु तैः ॥ ११ ॥ ❀ ❀ मयूराणां केकाभिः स्वनैः अभिरुतं नादितम्। मदान्धैरलिभिर्विमूर्च्छितम्, मूर्च्छना रागगतिविशेषः, तद्व्याप्तं कृतम्। तथा रक्तकण्ठानां कोकिलानां प्लावितैः प्लुतत्वं नीतैः शब्दैः अन्येषां च पतत्रिणां पक्षिणां कूजितैराह्वयन्तमिवेत्युत्तरेणान्वयः ॥ १२ ॥ ❀ ❀ कामदुघैः कामान् मनोविषयान् प्रपूरयद्भिर्द्रुमैरुद्धस्तैः उत्क्षिप्तहस्तस्थानीयैर्द्विजान् पक्षिण आह्वयन्तमिव स्थितम्। लोके हि हस्तमुत्क्षिप्योच्चैः स्वरेणार्थिनामाह्वानं कुर्वन्ति अद्रिरप्युत्क्षिप्तहस्ताकारैर्द्रुमैस्तत्रत्यपक्षिस्वनैश्च तथा दृश्यत इत्यर्थः। तथा व्रजद्भिर्मातङ्गैर्व्रजन्तमिव निर्झरध्वनिभिर्गृणन्तं भाषमाणमिव ॥ १३ ॥ ❀ ❀ पारिजातैः पारिभद्रकैः। सरलैर्देवदारुभिः। सालतालैः सर्जतृणराजैः। कोविदारैः काञ्चनारकैः असनैः पिशङ्गपुष्पैः। अर्जुनैः ककुभैः ॥ १४ ॥ ❀ ❀ चूताम्रयोर्नीपकदम्बयोश्चावान्तरभेदः। नागैर्नागकेशरैः। पुन्नागैः सुरवल्लभैः। कुरबकैस्तिलकैः ॥ १५ ॥ ❀ ❀ वीरः करवीरम्। वेणुका एला। जातिर्मालती। वररेणुकेति वा पाठः ॥ १६ ॥ ❀ ❀ सर्वत्र तृतीयान्तेन मण्डितमित्यस्य संबन्धः ॥ १७ ॥ ❀ ❀ द्रुमजातिभिरित्यत्र जातिशब्देनावान्तरभेदसामान्यम्। वेणुकीचकयोश्च नीरन्ध्रसरन्ध्रत्वेन भेदः ॥ १८ ॥ ❀ ❀ कुमुदादिवनसमृद्धिभिर्हेतुभिर्नलिनीषु सरस्सु कलं मधुरं यथा भवति तथा कूजन्ति यानि खगानां पक्षिणां वृन्दानि समूहास्तैरुपशोभितम् ॥ १९ ॥ ❀ ❀ मृगादिभिर्निर्जुष्टं निषेवितमित्यन्वयः। मृगैः हरिणैः। शाखामृगैः वानरैः। क्रोडैः सूकरैः। ऋक्षैः भल्लूकैः। शल्यकैः कण्टकवराहैः। नाभिभिः कस्तूरीमृगैः। कदलीनां खण्डैः समूहैः संरुद्धानि आवृतानि नलिनीनां पुलिनानि तैः श्रीः शोभा यस्मिंस्तम् ॥ २० ॥

### भाषानुवादः

देवताओंसे इस प्रकार कहकर ब्रह्माजी उनको, प्रजापतियोंको और पितरोंको साथ ले अपने लोकसे पर्वतश्रेष्ठ कैलासको गये, जो भगवान् शङ्करका प्रिय धाम है ॥ ८ ॥ ❀ ❀ उस कैलासपर ओषधि, तप, मन्त्र तथा योग आदि उपायोंसे सिद्धिको प्राप्त हुए और जन्मसे ही सिद्ध देवता नित्य निवास करते हैं; किन्नर, गन्धर्व और अप्सरादि सदा वहाँ बने रहते हैं ॥ ९ ॥ ❀ ❀ उसके मणिमय शिखर हैं, जो नाना प्रकारकी धातुओंसे रंग-बिरंगे प्रतीत होते हैं। उसपर अनेक प्रकारके वृक्ष, लता और गुल्मादि छाये हुए हैं, जिनमें झुंड-के-झुंड जंगली पशु विचरते रहते हैं ॥ १० ॥ ❀ ❀ वहाँ निर्मल जलके अनेकों झरने बहते हैं और बहुत-सी गहरी कन्दरा और ऊँचे शिखरोंके कारण वह पर्वत अपने प्रियतमोंके साथ विहार करती हुई सिद्धपत्नियोंका क्रीडास्थल बना हुआ है ॥ ११ ॥ ❀ ❀ वह सब ओर मोरोंके शोर, मदान्ध भ्रमरोंके गुंजार, कोयलोंकी कुहू-कुहू ध्वनि तथा अन्यान्य पक्षियोंके कलरवसे गूँज रहा है ॥ १२ ॥ ❀ ❀ उसके कल्पवृक्ष अपनी ऊँची-ऊँची डालियोंको हिला-हिलाकर मानो पक्षियोंको बुलाते रहते हैं। तथा हाथियोंके चलने-फिरनेके कारण वह कैलास स्वयं चलता हुआ-सा और झरनोंकी कलकल-ध्वनिसे बातचीत करता हुआ-सा जान पड़ता है ॥ १३ ॥ ❀ ❀ मन्दार, पारिजात, सरल, तमाल, शाल, ताड़, कचनार, असन और अर्जुनके वृक्षोंसे वह पर्वत बड़ा ही सुहावना जान पड़ता है ॥ १४ ॥ ❀ ❀ आम, कदम्ब, नीप, नाग, पुन्नाग, चम्पा, गुलाब, अशोक, मौलसिरी, कुन्द, कुरवक, सुनहरे शतपत्र कमल, इलायची और मालतीकी मनोहर लताएँ तथा कुब्जक, मोगरा और माधवीक बेलें भी उसकी शोभा बढ़ाती हैं ॥ १५-१६ ॥ ❀ ❀ कटहल, गूलर, पीपल, पाकर, बड़, गूगल, भोजवृक्ष, ओषधि-जातिके पेड़ ( केले आदि, जो फल आनेके बाद काट दिये जाते हैं ), सुपारी, राजपूग, जामुन, खजूर, आमड़ा, आम, पियाल, महुआ और लिसौड़ा आदि विभिन्न प्रकारके वृक्षों तथा पोले और ठोस बाँसके झुरमुटोंसे वह पर्वत बड़ा ही मनोहर मालूम होता है ॥ १७-१८ ॥ ❀ ❀ उसके सरोवरोंमें कुमुद, उत्पल, कल्हार, और शतपत्र आदि अनेक जातिके कमल खिले रहते हैं। उनकी शोभासे मुग्ध होकर कलरव करते हुए झुंड-के-झुंड पक्षियोंसे वह बड़ा ही भला लगता है ॥ १९ ॥ ❀ ❀ वहाँ जहाँ-तहाँ हरिन, वानर, सूअर, सिंह, रींछ, साही, नीलगाय, शरभ, बाघ, कृष्णमृग, भैंसे, कर्णान्त्र, एकपद, अश्वमुख, भेड़िये और कस्तूरी-मृग घूमते रहते हैं ॥ २० ॥

[1]कर्णान्त्रैकपदाश्वास्यैर्निर्जुष्टं वृकनाभिभिः। कदलीखण्डसंरुद्धनलिनीपुलिनश्रियम् ॥ २१ ॥
पर्यस्तं नन्दया सत्याः स्नानपुण्यतरोदया। विलोक्य भूतेशगिरिं विबुधा विस्मयं ययुः ॥ २२ ॥
ददृशुस्तत्र[2] ते रम्यामलकां नाम वै पुरीम्। वनं सौगन्धिकं चापि यत्र तन्नाम पङ्कजम् ॥ २३ ॥

१. प्रा० पा०—कल्लोलप्रपदैश्चान्यैर्निर्विष्टं मृगनाभिभिः। २. प्रा० पा०—तस्य ते।

नन्दा चालकनन्दा च सरितौ बाह्यतः पुरः । तीर्थपादपदाम्भोजरजसातीव पावने ॥ २४ ॥
ययोः सुरस्त्रियः क्षत्तरवरुह्य स्वधिष्ण्यतः । क्रीडन्ति पुंसः सिञ्चन्त्यो विगाह्य रतिकर्शिताः ॥ २५ ॥
ययोस्तत्स्नानविभ्रष्टनवकुङ्कुमपिञ्जरम् । वितृषोऽपि पिबन्त्यम्भः पाययन्तो गजा गजीः ॥ २६ ॥
तारहेममहारत्नविमानशतसंकुलाम् । जुष्टां पुण्यजनस्त्रीभिर्यथा खं सतडिद्घनम् ॥ २७ ॥
हित्वा यक्षेश्वरपुरीं वनं सौगन्धिकं च तत् । द्रुमैः कामदुघैर्हृद्यं चित्रमाल्यफलच्छदैः ॥ २८ ॥
रक्तकण्ठखगानीकस्वरमण्डितषट्पदम् । कलहंसकुलप्रेष्ठं खरदण्डजलाशयम् ॥ २९ ॥
वनकुञ्जरसंघृष्टहरिचन्दनवायुना । अधि पुण्यजनस्त्रीणां मुहुरुन्मथयन्मनः ॥ ३० ॥
वैदूर्यकृतसोपाना वाप्य उत्पलमालिनीः । प्राप्तं किम्पुरुषैर्दृष्ट्वा त आराद्ददृशुर्वटम् ॥ ३१ ॥
स योजनशतोत्सेधः पादोनविटपायतः । पर्यक्कृताचलच्छायो निर्नीडस्तापवर्जितः ॥ ३२ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

नाभिभिः कस्तूरीमृगैः कदलीषण्डैः कदलीनां षंडैः संघातैः संभृद्धान्यावृतानि नलिनीनां नदीनां पुलिनानि तैः श्रीः शोभा यस्मिंस्तम् ॥ २१ ॥ ❀ ❀ नंदया गंगया पर्यस्तं परिवेष्टितम् । सत्या भवान्याः स्नानेन पुण्यतरमतिसुगंधमुदकं यस्यां तया ॥ २२ ॥ ❀ ❀ तत्र गिरौ वनं च ददृशुः । यत्र वने तन्नाम सौगंधिकं पंकजं भवति जातावेकवचनम् ॥ २३ ॥ ❀ ❀ पुरीं वर्णयति । नंदा चेति चतुर्भिः । सरितौ पुरः पुराद्बाह्यतो भवतः । तीर्थपादस्य हरेः पादांभोजरजसा ॥ २४ ॥ ❀ ❀ ययोर्नद्योः सुरतश्रमकर्शिता विगाह्य प्रविश्य क्रीडंति ॥ २५ ॥ ❀ ❀ ययोरंभो विगततृषोऽपि गजाः पिबंति । तत्र हेतुः । तासां सुरस्त्रीणां स्नानेन विभ्रष्टं गलितं यन्नवं कुंकुमं नवीनकेसरं तेन पिंजरं पीतवर्णम् । गजीः करिणीः ॥ २६ ॥ ❀ ❀ तारं रूप्यम् । तारादिमयविमानानां शतैः संकुलाम् । तडिद्भिः स्त्रीणां घनैर्विमानानां खेन पुर्याः सादृश्यम् ॥ २७ ॥ ❀ ❀ यक्षेश्वरपुरीं हित्वाऽतिक्रम्य तद्वनं च दृष्ट्वा ते देवा आराद् दूराद्वटं ददृशुरिति चतुर्थेनान्वयः । कथंभूतं वनम् । चित्राणि माल्यानि फलानि छदाश्च पत्राणि येषु तैर्द्रुमैर्हृद्यं सुखकरम् ॥ २८ ॥ ❀ ❀ रक्तकंठखगानां कोकिलानामनीकस्य स्वरैर्मंडिताः षट्पदाः षट्पदस्वरा यस्मिन् । कलहंसानां कुलस्य प्रेष्ठमतिशयेन प्रियम् । खरदंडानि पद्मानि तैर्युक्ता जलाशया यस्मिन् ॥ २९ ॥ ❀ ❀ वनकुंजरैः संघृष्टा ये हरिचंदनद्रुमास्तत्संबंधिना वायुना पुण्यजनस्त्रीणां मनः अधि अधिकमुन्मथयन् ॥ ३० ॥ ❀ ❀ यत्र चोत्पलमालिन्यो वाप्यस्तत्किंपुरुषैः प्राप्तं वनं दृष्ट्वा । पाठांतरे किंपुरुषैः प्राप्ता वापीश्च दृष्ट्वेत्यर्थः ॥ ३१ ॥ ❀ ❀ योजनशतमुत्सेध उच्छ्रायो यस्य पादोनैः सर्वतः पंचसप्ततियोजनप्रमाणैर्विटपैः शाखाभिरायतो विस्तृतः पर्यक् सर्वतः कृता अचला छाया येन । निर्गतं नीडं यस्मात् ॥ ३२ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

"पुण्यं धर्मे शोभने च सुगंधे सुकृतौ जले" इति कोशात् ॥ २२ ॥ ❀ ❀ पंकजानि संति सौगंधिकाख्यानि मानससरोवरीयकमलजातीनीत्यर्थः ॥ २३ ॥ ❀ ❀ तीर्थौ तीर्थवत्पवित्रकरौ ध्यानार्चनादिना पादौ यस्य तस्य विष्णोः पदांभोजरजसा । एतेन भगीरथानयनात्पूर्वमप्यलकायां गंगासदृश्यौ नद्यावास्तां ते च भगीरथसंगमादतीव पावन्यावभूतामिति ॥ २४ ॥ ❀ ❀ ययोर्नंदालकनंदयोः । तयो रतिकर्शितदेवस्त्रीपावनकर्तृत्वेन त्वामपि पावयिष्यत इति मा दासीजत्वेनापावनशंकां कुर्वित्यभिप्रेत्याह-क्षत्तरिति । त्वं तु व्यासोद्भूतत्वाच्छुद्ध एवेति भावः ॥ २५ ॥ ❀ ❀ तत्र पाने कुंकुमसंगात्सुगंधं सुवर्णं च वारि दृष्ट्वा पानलोलुपा आसन्नित्यर्थः ॥ २६ ॥ ❀ ❀ "तारं रूप्ये न ना तारे मौक्तिकाद्युच्चशब्दयोः" इति । महारत्नानि हीरकादीनि । संकुलं व्याप्ताम् । पुण्यजना यक्षाः ॥ २७ ॥ ❀ ❀ अलकांतः प्रवेशे तद्वैचित्र्यदर्शनेन तत्स्थेन जनसंल्लापेन कालक्षेपे छिन्नदक्षदेहेन यज्ञानुसंधानं दुष्करं स्यादिति धिया तां पुरीं तद्वनञ्च हित्वा बहिरेव गच्छंतस्ते देवा इति । माल्यानि पुष्पाणि । छदाः पत्राणि ॥ २८-२९ ॥ ❀ ❀ संघृष्टाः कंडूतिवारणार्थम् । उन्मथयद्विलोडयत् ॥ ३० ॥ ❀ ❀ यत्र च वने । पाठांतरे प्राप्ता इति पाठे । इत्यर्थ इति । द्वितीयार्थेयं प्रथमेति भावः । किंपुरुषा देवयोन्यवांतरभेदः ॥ ३१ ॥ ❀ ❀

---

१. प्रा० पा०—रतितर्पिताः । २. प्रा० पा०—दुमैर्जुष्टं । ३. प्रा० पा०—संमृष्ट० । ४. प्रा० पा०—मन्मथः । ५. प्रा० पा०—शतयोजनमुत्सेधः ।

स वटः। "नीडं स्यानकुलाययोः। निश्चयेन स्तुते पक्षिगृहेपि" इति निरुक्तिः। तापेति। शीतस्याप्युपलक्षणं शीतोष्णरहित इत्यर्थः। पक्षिवासरहितत्वादनुपद्रवश्च ॥ ३२ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

'पुण्यन्तु चार्व्वपी'ति कोशात् अतिसुगंधमिति व्याख्यातम्। गंगायास्वतः परमपुण्यत्वात् तस्मान्मन्वंतरांतरेपि गंगाऽऽगमनं प्रकारांतरेण ज्ञेयम्। मध्येंऽतर्द्धानं च विलोक्येत्यर्द्धकम् ॥ २२-२६ ॥ ❀ ❀ तारेति पञ्चकम्। यत्र च वने प्राप्ता इति पाठान्तरम् ॥ २७-३१ ॥ ❀ ❀ ताप आतपः। आधिदैविकादिश्च तेन वर्जितः ॥ ३२ ॥

### श्रीमद्वीरराघवव्याख्या

कर्णोर्णैः गोकर्णाख्यैः ऊर्णामृगैः एकपदैः अश्वमुखैश्च मृगनाभिभिः कस्तूरीमृगैश्च नितरां जुष्टं कदलीषंडैः संरुद्धान्यावृतानि नलनीनां कमलाकराणां पुलिनानि तैः श्रीः शोभा यस्मिन् तम् ॥ २१ ॥ ❀ ❀ स्नानेन पुण्यकरं पुण्यसंपादनम् उदकं यस्यां तया सत्या निर्मलया नंदया गंगया परिवेष्टितम्। भूतेशस्य रुद्रस्य गिरिं कैलासं विलोक्य देवाः विस्मयं ययुः प्रापुः ॥ २२ ॥ ❀ ❀ ते देवाः तत्र गिरौ तस्य रुद्रस्यालकां नाम अलकेति प्रसिद्धां रमणीयां पुरीं सौगंधिकाख्यं वनं चापि ददृशुः। सौगंधिकनाम्नोऽन्वर्थतामाह यत्र वने सौगंधिकं नाम पंकजं भवति जातावेकवचनम् ॥ २३ ॥ ❀ ❀ पुरीं वर्णयति नंदा चेति चतुर्भिः। पुरः पुरात् बाह्ये नंदा अलकनंदा चेति द्वे सरितौ भवतः। सरितौ विशिनष्टि। सार्द्धद्वयेन तीर्थपादस्य हरेः पदांभोजरजसा अतीवात्यंतं पावने भगवत्पदाम्भोजरजोयुक्तत्वादत्यंतपावित्र्यकरे इत्यर्थः ॥ २४ ॥ ❀ ❀ हे क्षत्तः! सुरस्त्रियः स्वधिष्ण्यतः स्वविमानेभ्यः। अवरुह्य च रतिकर्षिताः विहारश्रांताः सत्यः ययोः सरितोर्विगाह्य स्वपुंसः स्वप्रियान् सिंचंत्यः क्रीडंति जलक्रीडां कुर्वंति ॥ २५ ॥ ❀ ❀ ययोः सरितोरंभः वितृषोऽपि विगततृष्णा अपि गजाः गजीः करिणीः अंभः पाययंतः पानं कारयंतः पिबंति। तत्र हेतुः तासां सुरस्त्रीणां स्नानेन विभ्रष्टं गलितं यन्नवं कुंकुमं तेन पिंजरं पीतवर्णम् ॥ २६ ॥ ❀ ❀ पुनः पुरीं विशिनष्टि तारेति। तारं रूप्यं तारादिमयविमानानां शतैः संकुलं पुण्यजनैः यातुधानैस्तेषां स्त्रीभिश्च जुष्टां तत्र दृष्टांतः तडिद्भिर्मेघैः सहितं खमाकाशं यथेति। तत्र विमानानि खमिव पुण्यजना मेघा इव तत्स्त्रियः तडित इव ॥ २७ ॥ ❀ ❀ एवंभूतां यक्षेश्वरस्य कुबेरस्य पुरीमलकां हित्वा अतिक्रम्य तत्सौगंधिकाख्यं वनं च दृष्ट्वा ते देवा आरात् वटं ददृशुरिति चतुर्थेनान्वयः। कथंभूतं वनं चित्राणि माल्यानि मालायोग्यानि पुष्पाणि किसलयादीनि परिच्छदानि क्रीडोपकरणानि येषु तैः कामान् वर्षद्भिर्द्रुमैर्हृद्यं मनोहरम् ॥ २८ ॥ ❀ ❀ रक्तकंठखगानां कोकिलपक्षिणाम् अनीकस्य समूहस्य स्वरैर्मंडिताः षट्पदा यस्मिन् कलहंसानां कुलस्य प्रेष्ठं खरदंडानि पद्मानि तैर्युक्ताः जलाशया यस्मिन् ॥ २९ ॥ ❀ ❀ वनगजैः संघृष्टा हरिचंदनद्रुमास्तत्संबंधिना वायुना पुण्यजनस्त्रीणां मनः अध्यधिकं मुहुरुन्मदयत्परवशीकुर्वत् ॥ ३० ॥ ❀ ❀ वैदूर्यैर्मणिभिः कृतानि कल्पितानि सोपानानि यासु उत्पलानां माला पंक्तयो यासु ताः। आर्षत्वाव्द्यत्ययेन द्वितीया। वाप्यः किंपुरुषैर्व्याप्ताः यस्मिन् वने संति तद्वनं दृष्ट्वा यद्वा वाप्य इति व्यत्ययात्प्रथमा, वनं वापीश्च दृष्ट्वा आरात् समीपे वटं ते देवा ददृशुः ॥ ३१ ॥ ❀ ❀ वटं विशिनष्टि स इति। स वटः योजशनतमुत्सेधः उच्छ्रयो यस्य पादोनैः सर्वतः पंचसप्ततियोजनप्रमाणैर्विटपैः शाखाभिश्चायतो विस्तृतः पर्यक्परितः कृता अचला निश्चला छाया येन। निर्गतं नीडं कुलायं यस्मात् तापेन सूर्याद्यातपेन रहितः ॥ ३२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

कर्णो गोकर्णः कर्णविहीनो वा। 'कर्णः कर्णविहीनः स्यादेडस्तु च्छिन्नपुच्छकः' इति यादवः। कर्णाश्च एकपादाश्चाश्वास्याश्च कर्णौर्णैकपदाश्वास्यास्तैः और्णादयोपि मृगविशेषाः मृगनाभिभिः कस्तूरिकामृगैः कंदलीखंडेन संरुद्धस्य संवृतस्य नलिनीपुलिनस्य पद्माकरसिकतामयोच्चस्थलस्य श्रीर्यस्मिन्स तथा तम् ॥ २१ ॥ ❀ ❀ नंदया गंगाशाखया नद्या पर्यस्तं परिवृतम्। भूतेशगिरिं श्रीकैलासम् ॥ २२ ॥ ❀ ❀ तत्र कैलासे पुनः किं चित्रमपश्यन्निति तत्राह ददृशुरिति। तन्नाम सौगंधिकं नाम ॥ २३ ॥ ❀ ❀ अलकाया बाह्यतो बहिर्भागे तीर्थपादः श्रीनारायणस्तत्पादपद्मरजसा मिश्रितत्वादतीव पावने शुद्धे ॥ २४ ॥ ❀ ❀ स्वधिष्ण्यतः स्वविमानात् ॥ २५ ॥ ❀ ❀ तासां स्नानेन विभ्रष्टं संक्रांतं कुचकुंकुमं तेन पिंजरं पीतरक्तम् ॥ २६ ॥ ❀ ❀ तारै रजतैर्मौक्तिकैर्वा हेमभिः सुवर्णैर्महारत्नैर्माणिक्यादिभिरलंकृतानां विमानानां शतैः संकुलां निविडां कथमिव स्थितां तडितां घनेन च सह वर्तमानं खमाकाशं यथा तथा ॥ २७ ॥ ❀ ❀ अलकांतः प्रवेशे तद्वैचित्र्यदर्शनेन तत्स्थजनसंलापेन कालक्षेपेण च्छिन्नदक्षदेहेन यज्ञानुसंधानं दुष्करं स्यादिति धिया तां पुरीं तद्वनं च दृष्ट्वा हित्वा बहिरेव गच्छन्तस्ते देवा आराद्वटं ददृशुरित्यन्वयः। यक्षेश्वरपुरीं हित्वा तत्सौगंधिकं च वनं दृष्ट्वा समीपे वटं ददृशुरिति वा। तद्वनं विशिनष्टि द्रुमैरित्यादिना। चित्राणि माल्यानि पुष्पाणि फलानि च्छदाः पत्राणि येषु ते तथा तैः ॥ २८ ॥ ❀ ❀ खरो दंडो येषां तानि तथा कलहंसकुलस्य प्रेष्ठानि प्रियतमानि खरदंडानि पद्मानि येषु ते तथोक्ताः ते च जलाशया जलाधाराः कासारा यस्मिंस्तत्तथोक्तम् ॥ २९ ॥ ❀ ❀ वनकुंजरैर्वनगजैः कंडूतिनिरासार्थं संघृष्टानां निष्पिष्टानां हरिचंदनानां रजोगंध-

मिश्रवायुनाऽधिकं पुण्यजनस्त्रीणां मनो मुहुरुन्मथयद्विलोलयत् ॥ ३० ॥ ❀ ❀ उत्पलानां माला यासु विद्यते इत्युत्पलमालिनीरुत्पलमालिन्यः वैदूर्यैः कृतानि सोपानानि कृत्रिमावतारस्थलानि यासु तास्तथा एवंविधा वाप्यो यत्र संतीति शेषः तत्किंपुरुषैर्विलासार्थं व्याप्तम् ॥ ३१ ॥ ❀ ❀ वटं विशिनष्टि सयोजनेति । स वटो योजनानां शतमुत्सेध उन्नतिर्यस्य स तथोक्तः । चतुर्द्धा विभक्तशतस्य पादश्चतुर्थांशः पंचविंशतिसंख्या तयोना रहिता संख्या पंचसप्ततिः । तावद्दीर्घैर्विटपैरायतो विस्तृतः पर्यक् परितो गता कृता पूर्णा अमला च्छाया यस्य स तथा निर्गतानि नीडानि पक्षिमंदिराणि यस्मात्स तथा तापवर्जितः शीतोष्णरहितः ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

'पुण्यन्तु चार्वपी'त्यमरः । चारुत्वं तत्र सौगन्धिकप्रायमेवेति तथा तैर्व्याख्यातम् । अतो मन्वन्तरान्तरेऽपि गंगाया आगमनं प्रकारान्तरेण ज्ञेयं मध्यपदलोपश्च ज्ञेयः । विलोक्येति सार्द्धकम् ॥ २२–२६ ॥ ❀ ❀ तारहेमेति षट्कम् ॥ २७–३२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

कदलीसमूहैः संरुद्धानि आवृतानि नलिनीनां पुलिनानि तैः श्रीः शोभा यत्र तम् ॥ २१ ॥ ❀ ❀ नन्दया गंगया पर्यंतं परिवेष्टितं सत्या रुद्राण्याः स्नानेन पुण्यतरमुदकं यस्याः तया ॥ २२ ॥ ❀ ❀ तन्नाम सौगन्धिकं नाम पंकजं भवति । जातावेकवचनम् ॥ २३ ॥ ❀ ❀ पुरः पुराद्बाह्यतः सरितौ भवतः ॥ २४ ॥ ❀ ❀ ययोर्विगाह्य ॥ २५ ॥ ❀ ❀ ययोरम्भो गजा विगततृषोऽपि पिबन्ति । तत्र हेतुः । तासां सुरस्त्रीणां स्नानेन विभ्रष्टैर्नवकुङ्कुमैः पिञ्जरं पीतवर्णं सुगन्धञ्च ॥ २६ ॥ ❀ ❀ तारो मुक्ता तडिद्भिः स्त्रीणां घनैर्विमानानां खेन पुर्या सादृश्यम् ॥ २७ ॥ ❀ ❀ यक्षेश्वरपुरीं वनञ्च हित्वा अतिक्रम्य ते देवा आराद् दूराद्वटं ददृशुरित्यन्वयः ॥ २८ ॥ ❀ ❀ रक्तकण्ठखगानामनीकस्य स्वरैर्मण्डिताः षट्पदा षट्पदस्वरा यस्मिन् कलहंसकुलप्रेष्ठानि खरदण्डानि पद्मानि येषु ते जलाशया यस्मिंस्तत् ॥ २८ ॥ ❀ ❀ अधिकं मन उन्मथयत् कामोद्दीपकत्वादिति भावः ॥ ३० ॥ ❀ ❀ वाप्यः वापीश्च दृष्ट्वा किम्पुरुषैः प्राप्ताः । प्राप्तमिति पाठे वनविशेषणम् ॥ ३१ ॥ ❀ ❀ योजनशतमुत्सेध उच्छ्रायो यस्य सः । पादोनैः सर्वतः पञ्चसप्ततियोजनप्रमाणैर्विटपैः शाखाभिरायतो विस्तृतः पादोनैः पर्य्यक् सर्वतः कृता अचला छाया येन सः । निर्नीडः पक्षिवासरहितत्वादनुपद्रवः ॥ ३२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

कदलीनां षंडैः समूहैः संरुद्धान्यावृतानि यानि नलिनीपुलिनानि तैः श्रीः शोभा यस्मिन् स्नानं पुण्यतरोदयं यस्यां तया पर्यस्तं परिवेष्टितम् ॥ २१–२२ ॥ ❀ ❀ तत्र गिरौ पुरीं ददृशुः । यत्र वने तन्नामसौगंधिकं पंकजं जातावेकवचनं तद्वनं च ददृशुः ॥ २३ ॥ ❀ ❀ पुरीं वर्णयति नंदेतिचतुर्भिः । सरितौ पुरः पुरात् बाह्यतो स्तः ॥ २४ ॥ ❀ ❀ रतिकर्षिताः क्रीडाश्रांताः स्वधिष्ण्यतः स्वविमानेभ्योऽवरुह्य ययोर्नन्दालकनन्दयोर्विगाह्य प्रविश्य पुंसः पतीन् सिंचंत्यः क्रीडंति ॥ २५ ॥ ❀ ❀ ययोरंभः गजाः गजीः करिणीः पाययंतो वितृषोपि पिबंति तत्र हेतुगर्भं विशेषणम् । तासां सुरस्त्रीणां स्नानेन विभ्रष्टं विगलितं यन्नवं कुंकुमं तेन पिंजरं पीतम् । रुचिविशेषकरमित्यर्थः ॥ २६ ॥ ❀ ❀ तारं रजतं तदादिमयविमानानां शतैः संकुलं व्याप्ताम्, पुण्यजनस्त्रीभिर्जुष्टाम् । तत्र दृष्टांतमाह यथा खं सतडिद्घनमिति ॥ २७ ॥ ❀ ❀ यक्षाणामीश्वरस्य कुबेरस्य पुरीं हित्वा अतिक्रम्य चित्राणि माल्यानि पुष्पाणि फलानि छदाः पत्राणि च येषु तैर्हृद्यं मनोज्ञं वनं वापीश्च दृष्ट्वा ते वटं ददृशुरिति चतुर्थेनान्वयः ॥ २८ ॥ ❀ ❀ कथंभूतं वनं रक्तकंठानां खगानामनीकस्य समूहस्य स्वरैः । वाद्यध्वनितुल्यैर्मण्डिताः शोभिताः षट्पदाः गायकतुल्याः भ्रमरा यस्मिन् तत् कलहंसानां कुलस्य प्रेष्ठम् । खरदण्डैः पंकजैर्युक्ता जलाशयाः यस्मिन् तत् ॥ २९ ॥ ❀ ❀ वनकुञ्जरैः संघृष्टानां हरिचंदनानां वायुना पुण्यजनस्त्रीणां मनः मुहुः अध्यधिकं उन्मथयत् क्षुभितं कुर्वत् ॥ ३० ॥ ❀ ❀ वैदूर्यकृतसोपाना वाप्यः वापीः किंपुरुषैः प्राप्तं सर्वतः सेवितं वटं ते देवाः ॥ ३१ ॥ ॥ ❀ ❀ स वटः योजनशतमुत्सेधः उच्छ्रायो यस्य सः पादोनैः पञ्चसप्ततियोजनैर्विटपैरायतो विस्तृतः पर्य्यक्परितः कृताऽचला छाया येन सः । निर्गतानि नीडानि यस्मात् । तापवर्जितः त्रिविधतापरहित इत्यर्थः ॥ ३२ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

सत्याः भवान्याः स्नानार्थं पुण्यतरं भगवच्चरणरजःसम्बन्धेन अतिशोधकं सर्वपापनिवर्त्तकमुदकं यस्यास्तया नन्दया तन्नाम्न्या गङ्गया पर्यस्तं परिवृतम् । यद्वा सत्याः स्नानेन पुण्यतरमुदं यस्यामिति विग्रहः । तत्रायमाशयः—यद्यपि भगवच्चरणसंबन्धेनैव तस्या जलस्यातिपावनत्वमस्ति तथापि पापिजनसंबन्धात्तत्र मालिन्यं प्राप्तं तस्य भगवद्भक्तसतीसंबन्धान्निवृत्तिः ।

यथोक्तं नवमे—"साधवो न्यासिनः शान्ता ब्रह्मिष्ठा लोकपावनाः। हरन्त्यघं तेऽङ्गसङ्गात्तेष्वास्ते ह्यघभिद्धरिः" इति। एवंभूतमतिशयशोभायुक्तं भूतानामीशस्य महादेवस्य गिरिं कैलासं विलोक्य दृष्ट्वा विबुधा देवा विस्मयं ययुः अत्याश्चर्यं प्राप्ताः॥ २१॥ ❀ ❀ तत्र कैलासे रम्यां मनोहरामलकां नाम प्रसिद्धां कुबेरस्य पुरीं सौगन्धिकं वनं च ते देवादयो ददृशुरित्यन्वयः। सौगन्धिकनामत्वे हेतुमाह—यत्रेति। यस्मिन् वने तन्नाम सौगन्धिकं नाम पङ्कजं भवति ततस्तस्य वनस्यापि सौगन्धिकमिति नामेत्यर्थः। एकवचनं जात्यभिप्रायेण॥ २२॥ ❀ ❀ पुरीं वर्णयति—नन्दा चेति चतुर्भिः। तीर्थपादस्य भगवतः पदाम्भोजरजसातीव पावने लोकान् पुनन्त्यौ नन्दा चालकनन्दा च सरितौ पुरः पुर्या बाह्यतः स्त इति संबन्धः॥ २३॥ ❀ ❀ हे क्षत्तः! रतिकर्शिताः संभोगश्रान्ताः सुरस्त्रियो देवाङ्गनाः श्रमव्यपोहनार्थं स्वपतिभिः सह स्वधिष्ण्यतः स्वस्थानाद्देवलोकादवरुह्य ययोर्नन्दालकनन्दयोर्विगाह्य प्रविश्य पुंसः स्वपतीन् जलेन सिञ्चन्त्यः क्रीडन्तीति सम्बन्धः। क्षत्तरिति सम्बोधनेन पुराधिष्ठातृत्वेन निर्जितकामत्वं तव ज्ञात्वायं स्त्रीविहारस्तवाग्रे कथ्यत इति सूचयति॥ २४॥ ❀ ❀ तासां सुरस्त्रीणां स्नानेन विभ्रष्टं निर्गलितं यन्नवं कुङ्कुमं तेन पिञ्जरं पीतवर्णं ययोर्नद्योरम्भो वितृषः तृड्विरहिता अपि गजाः गजीः पाययन्तः स्वयं पिबन्तीत्यन्वयः॥ २५॥ ❀ ❀ तारं रूप्यं हेम सुवर्णं महारत्नानि माणिक्यादीनि तन्मयानां विमानानां शतैः सङ्कुलां व्याप्ताम्। पुण्यजना यक्षास्तेषां स्त्रीभिर्जुष्टां निषेविताम्। तत्र दृष्टान्तमाह—तडिद्भिर्घनैश्च सह वर्तमानं खमाकाशो यथा शोभते तथा शोभमानामित्यर्थः। तडिद्भिः स्त्रीणां घनैर्विमानानामाकाशेन पुर्याः सादृश्यं ज्ञेयम्॥ २६॥ ❀ ❀ एवंभूतां यक्षेश्वरस्य कुबेरस्य पुरीं हित्वा अतिक्रम्य तदतिरम्यत्वेन प्रसिद्धं सौगन्धिकं वनं च दृष्ट्वा ते देवादय आरात् दूराद्वटं ददृशुरिति चतुर्थेनान्वयः। तद्वनमेव वर्णयति—द्रुमैरिति सपादचतुर्भिः। चित्राणि माल्यानि पुष्पाणि फलानि छदाः पर्णानि च येषु तैरत एव कामदुघैर्द्रुमैर्हृद्यं मनोहरं हित्वेत्यनेन दक्षजीवनयज्ञानुसन्धानमनस्कत्वेन पुर्यन्तः प्रविश्य तच्चमत्कारदर्शने कालविलम्बमसहमानास्तां हित्वा शीघ्रं गता इति सूचितम्॥ २७॥ ❀ ❀ रक्तकण्ठखगानां कोकिलानामनीकस्य स्वरैर्मण्डिताः षट्पदा यस्मिन्। कलहंसानां कुलस्य समूहस्य प्रेष्ठानि खरदण्डानि पद्मानि येषु ते जलाशयाः कासारादयो यस्मिन्॥ २८॥ ❀ ❀ वनकुञ्जरैः स्वकण्डूनिरासार्थं संघृष्टानां हरिचन्दनवृक्षाणां रजो गन्धविमिश्रेण वायुना अधिकं यथा भवति तथा पुण्यजनस्त्रीणां मुहुर्वारं वारं मन उन्मथयन् क्षोभयन्॥ २९॥ ❀ ❀ वैडूर्यैः वैडूर्यमणिभिः कृतानि रचितानि सोपानानि अवतरणसाधनानि यासु ताः। उत्पलानां माला यासु विद्यन्ते ताः। उत्पलमालिनीः उत्पलमालिन्यो वाप्यो यत्र सन्ति तदिति शेषः। किंपुरुषैर्विलासार्थं प्राप्तं वनं दृष्ट्वा आरान् वटं ददृशुरित्यनेन मध्ये वृक्षादिव्यवधानरहितोऽपि देशोऽस्तीति सूचितम्॥ ३०॥ ❀ ❀ वटं वर्णयति—स इति। स वटो योजनशतमुत्सेध उन्नतिर्यस्य स तथा योजनशतापेक्षया पादचतुर्थांशः पञ्चविंशतियोजनानि तैरूनैः सर्वतः पञ्चसप्ततियोजनप्रमाणैर्विटपैः शाखाभिरायतो विस्तृतः। उच्छ्रायात्पादोनविस्तार एव वृक्षः शोभावान् भवति, न समानविस्तारकोऽतस्तस्य शोभातिशयः सूचितः। अत एव पर्यकृता अचला छाया यस्य। सूर्यादिचक्रे चलायमानेऽपि तच्छाया न चलतीत्यलौकिकप्रभावः। निर्गतानि नीडानि पक्षिस्थानानि यस्मात्स तथा तेन निर्मलता दर्शिता। अचलच्छायत्वेनैव तापवर्जितः॥ ३१॥ ❀ ❀ तस्मिन्निति सामीप्ये सप्तमी। तस्याधः आसीनं शिवं ददृशुरिति संबन्धः। महायोगमयमिति। अणिमादिसर्वसिद्धिप्रचुरे तदाश्रितानामणिमादादयो न दुर्लभा इति भावः। तर्हि सकामैः सेव्यत्वमागतमित्याशङ्क्याह—मुमुक्षूणां शरणे आश्रयभूते। एवं तस्य भुक्तिमुक्तिप्रदत्वं सिद्धम्। आसीनमित्यव्यग्रता। ननु तथा प्रियावियोगेन रुष्टत्वात्कथं देवकार्यसिद्धिः स्यादित्याशङ्क्य नहीश्वरस्य प्रियादयः सन्तीत्युक्तत्वादतस्तत्संयोगवियोगादिजनितहर्षशोकादयोऽपि न सन्ति। तस्य स्वाभाविकतेजसः सत्त्वेऽपि दक्षाभिमाननिवृत्त्यर्थं सतीवियोगं निमित्तीकृत्योत्पादितस्य रोषस्य तत्कार्यस्य तदभिमाननिवृत्तिरूपस्य जातत्वेन निवृत्तत्वादिति दृष्टान्तेन सूचयति—त्यक्तामर्षमिवान्तकमिति॥ ३२॥

### भाषानुवादः

तथा वहाँके सरोवरोंके तट केलोंकी पङ्क्तियोंसे घिरे होनेके कारण बड़ी शोभा पाते हैं। उसके चारों ओर नन्दा नामकी नदी बहती है, जिसका पवित्र जल देवी सतीके स्नान करनेसे और भी पवित्र एवं सुगन्धित हो गया है। भगवान् भूतनाथके निवासस्थान उस कैलासपर्वतकी ऐसी रमणीयता देखकर देवताओंको बड़ा आश्चर्य हुआ॥ २१-२२॥ ❀ ❀ वहाँ उन्होंने अलका नामकी एक सुरम्य पुरी और सौगन्धिक वन देखा, जिसमें सर्वत्र सुगन्ध फैलानेवाले सौगन्धिक नामके कमल खिले हुए थे॥ २३॥ ❀ ❀ उस नगरके बाहरकी ओर नन्दा और अलकनन्दा नामकी दो नदियाँ हैं; वे तीर्थपाद श्रीहरिकी चरण-रजके संयोगसे अत्यन्त पवित्र हो गयी हैं॥ २४॥ ❀ ❀ विदुरजी! उन नदियोंमें रतिविलाससे थकी हुई देवाङ्गनाएँ अपने-अपने निवासस्थानसे आकर जलक्रीड़ा करती हैं और उनमें प्रवेशकर अपने प्रियतमोंपर जल उलीचती हैं॥ २५॥ ❀ ❀ स्नानके समय उनका तुरंत लगाया हुआ कुचकुङ्कुम धुल जानेसे जल पीला हो जाता है। उस कुङ्कुममिश्रित जलको हाथी प्यास न होनेपर भी गन्धके लोभसे स्वयं पीते और अपनी हथिनियोंको पिलाते हैं॥ २६॥ ❀ ❀ अलकापुरीपर चाँदी, सोने और बहुमूल्य मणियोंके सैकड़ों विमान छाये हुए थे, जिनमें अनेकों यक्षपत्नियाँ निवास करती थीं।

इनके कारण वह विशाल नगरी बिजली और बादलोंसे छाये हुए आकाशके समान जान पड़ती थी ॥ २७ ॥ ❀ ❀ यक्षराज कुबेरकी राजधानी उस अलकापुरीको पीछे छोड़कर देवगण सौगन्धिक वनमें आये। वह वन रंग-बिरंगे फल, फूल और पत्तोंवाले अनेकों कल्पवृक्षोंसे सुशोभित था ॥ २८ ॥ ❀ ❀ उसमें कोकिल आदि पक्षियोंका कलरव और भौंरोंका गुंजार हो रहा था तथा राजहंसोंके परमप्रिय कमलकुसुमोंसे सुशोभित अनेकों सरोवर थे ॥ २९ ॥ ❀ ❀ वह वन जंगली हाथियोंके शरीरकी रगड़ लगनेसे घिसे हुए हरिचन्दन वृक्षोंका स्पर्श करके चलनेवाली सुगन्धित वायुके द्वारा यक्षपत्नियोंके मनको विशेषरूपसे मथे डालता था ॥ ३० ॥ ❀ ❀ बावलियोंकी सीढ़ियाँ वैदूर्यमणिकी बनी हुई थीं। उनमें बहुत-से कमल खिले रहते थे। वहाँ अनेकों किम्पुरुष जी बहलानेके लिये आये हुए थे। इस प्रकार उस वनकी शोभा निहारते जब देवगण कुछ आगे बढ़े तब उन्हें पास ही एक वटवृक्ष दिखलायी दिया ॥ ३१ ॥ ❀ ❀ वह वृक्ष सौ योजन ऊँचा था तथा उसकी शाखाएँ पचहत्तर योजनतक फैली हुई थीं। उसके चारों ओर सर्वदा अविचल छाया बनी रहती थी, इसलिये घामका कष्ट कभी नहीं होता था; तथा उसमें कोई घोंसला भी न था ॥ ३२ ॥

तस्मिन्महायोगमये मुमुक्षुशरणे सुराः। ददृशुः शिवमासीनं त्यक्तामर्षमिवान्तकम् ॥ ३३ ॥
सनन्दनाद्यैर्महासिद्धैः शान्तैः संशान्तविग्रहम्। उपास्यमानं सख्या च भर्त्रा गुह्यकरक्षसाम् ॥ ३४ ॥
विद्यातपोयोगपथमास्थितं तमधीश्वरम्। चरन्तं विश्वसुहृदं वात्सल्याल्लोकमङ्गलम् ॥ ३५ ॥
लिङ्गं च तापसाभीष्टं भस्मदण्डजटाजिनम्। अङ्गेन संध्याभ्ररुचा चन्द्रलेखां च बिभ्रतम् ॥ ३६ ॥
उपविष्टं दर्भमय्यां बृस्यां ब्रह्म सनातनम्। नारदाय प्रवोचन्तं पृच्छते शृण्वतां सताम् ॥ ३७ ॥
कृत्वोरौ दक्षिणे सव्यं पादपद्मं च जानुनि। बाहुं प्रकोष्ठेऽक्षमालामासीनं तर्कमुद्रया ॥ ३८ ॥

तं ब्रह्मनिर्वाणसमाधिमाश्रितं व्युपाश्रितं गिरिशं योगकक्षाम्।
सलोकपाला मुनयो मनूनामाद्यं मनुं प्राञ्जलयः प्रणेमुः ॥ ३९ ॥
स तूपलभ्यागतमात्मयोनिं सुरासुरेशैरभिवन्दिताङ्घ्रिः।
उत्थाय चक्रे शिरसाभिवन्दनमर्हत्तमः कस्य यथैव विष्णुः ॥ ४० ॥
तथापरे सिद्धगणा महर्षिभिर्ये वै समन्तादनु नीललोहितम्।
नमस्कृतः प्राह शशाङ्कशेखरं कृतप्रणामं प्रहसन्निवात्मभूः ॥ ४१ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

मुमुक्षूणां शरणे आश्रये त्यक्तामर्षोऽतकस्तत्तुल्यम् ॥ ३३ ॥ ❀ ❀ तं विशिनष्टि सनंदनाद्यैरिति पंचभिः। सख्या कुबेरेण चोपास्यमानम् ॥ ३४ ॥ ❀ ❀ विद्या उपासना तपश्चित्तैकाग्र्यं योगः समाधिस्तेषां पंथानं प्रवर्तनद्वारा स्थितं लोकस्य मंगलं हितं तपोवात्सल्यात्स्नेहादाचरंतम् ॥ ३५ ॥ ❀ ❀ संध्याभ्ररुचा रक्तवर्णेनांगेन भस्मादिलिंगं चंद्रलेखां च बिभ्रतम् ॥ ३६ ॥ ❀ ❀ व्रतिनामासनं बृसी, तस्यां ब्रह्म प्रवोचंतम् ॥ ३७ ॥ ❀ ❀ सव्यं पादपद्मं दक्षिणे ऊरौ कृत्वा विन्यस्य जानुनि च सव्यं बाहुं कृत्वा दक्षिणबाहुप्रकोष्ठे मणिबंधस्थाने अक्षमालां च कृत्वा दक्षिणहस्तकृतया तर्कमुद्रयोपलक्षितमासीनमित्यर्थः। तदुक्तं योगशास्त्रे "एकं पादमथैकस्मिन्विन्यसेदूरुसंस्थितम्। इतरस्मिंस्तथा बाहुं वीरासनमिदं स्मृतम् ॥" इति। तर्कमुद्रा चोक्ता "तर्जन्यंगुष्ठयोरग्रे मिथः संयोज्य चांगुलीः। प्रसार्य बंधनं प्राहुस्तर्कमुद्रेति मांत्रिकाः ॥" इति ॥ ३८ ॥ ❀ ❀ ब्रह्मनिर्वाणं ब्रह्मानंदस्तत्र समाधिरैकाग्र्यं तमाश्रितम्। योगकक्षां योगपट्टं च वामजानुदृढीकरणार्थं विशेषेणोपाश्रितवंतम्। मननशीला मनवस्तेषामाद्यं मुख्यम् ॥ ३९ ॥ ❀ ❀ अर्हत्तमो पूज्यतमोऽपि विष्णुर्वामनमूर्तिर्यथा कस्य कश्यपस्य ॥ ४० ॥ ❀ ❀ महर्षिभिः सहिता ये समंतान्नीललोहितमनुवर्तंते तेऽपि तस्मै वंदनं चक्रुः। एवं सर्वैर्नमस्कृतः प्राह। कृतः प्रणामो देवैर्यस्मै तम् ॥ ४१ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तस्मिन्वटे सामीपिकाधारे सप्तमी। महायोगानां सनकानां प्राचुर्यं यत्र तस्मिंस्तथा दक्षकृतापराधस्मृत्यैवेत्युक्तम् ॥ ३३ ॥ ❀ ❀ तं शिवम्। सनंदः सनंदनः ॥ ३४-३५ ॥ ❀ ❀ लिंगं चिह्नं "लिंगं शेफसि वेषे च चिह्ने बुद्ध्यादि-

१. प्रा० पा०—सनकाद्यै०। २. प्रा० पा०—योगसमाधिकक्षाम्। ३. प्रा० पा०—भिवादन०।

संहतौ" इति यादवः ॥ ३६ ॥ ❀ ❀ ब्रह्म वेदं सतां शृण्वतां सनकादीनां मध्ये नारदस्य भक्तत्वाच्छ्रैष्ठ्यम्। वेदस्यापि प्रायो भक्तिप्रतिपादकत्वमेवेति ज्ञेयम् ॥ ३७ ॥ ❀ ❀ इत्यर्थं इति। एतेन वीरासनमुक्तमिति भावः, तत्तथा। तर्कमुद्रा च तत्रैवोक्ता ॥ ३८-४० ॥ ❀ ❀ स शिवः। आत्मयोनिं ब्रह्माणं यथैव कस्य ब्रह्मणो जनकत्वाद्विष्णुरर्हत्तमः पूज्यतमस्तथा रुद्रस्य ब्रह्मेत्यर्थः ॥ ४० ॥ ❀ ❀ तेऽपरेपि। तस्मै ब्रह्मणे। तथा रुद्रवत्। वंदनं नतिम् ॥ ४१ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तस्मिन्निति षट्कम्। महायोगमये समाधिप्राचुर्य्यस्थाने ॥ ३३ ॥ ❀ ❀ शांतैः शान्तिरतिमद्भिः। सम्यक् शांतः शमादिनिष्ठो विग्रहो यस्य तम् उपरतविरोधमिति वा ॥ ३४ ॥ ❀ ❀ तेषां विद्यादीनां पंथानं मार्गमाश्रितं प्रवर्त्तनद्वाराऽऽश्रितं शिक्षामंतराऽऽत्मारामस्य तदनुष्ठाने प्रयोजनाऽभावात्। तदेवाह लोकस्य मंगलमित्यादि चरन्तं कुर्वन्तम् ॥ ३५ ॥ ❀ ❀ तापसाः शैवास्तेषामभीष्टम् ॥ ३६ ॥ ❀ ❀ 'अथ बृंहति बृंहयति तद्ब्रह्मेति श्रुतेः स्वरूपेण गुणैश्चानतिशयं ब्रह्म भगवत्तत्त्वम् ॥ ३७ ॥ ❀ ❀ तर्कमुद्रायास्सार्वदिकत्वाऽभावादुपलक्षणे तृतीया। अत इत्यर्थं इत्युक्तम् ॥ ३७ ॥ ❀ ❀ योगपट्टं योगाङ्गसाधनासनोपयोगि पट्टवस्त्रम् ॥ ३९ ॥ ❀ ❀ स त्विति सार्द्धकम्। अभिवंदितांघ्रिरित्यत्राऽभिवन्दितांघ्रिमित्येव पाठः ॥ ४० ॥ ❀ ❀ नमस्कृत इत्यर्द्धकम्। भयस्यांतरसद्भावात्तत्प्रसत्त्यर्थं प्रहसन्निवेत्युक्तम् ॥ ४१ ॥

### श्रीमद्वीरराघवव्याख्या

महायोगमये महायोगो भगवदुपासनायोगस्तत्प्रचुरे महायोगनिष्ठापुरुषप्राचुर्यात् तत्स्थानस्य महायोगमयत्वम्। मुमुक्षवः अज्ञानान्मोक्तुमिच्छवः, जिज्ञासव इति यावत्। तेषां शरणे आश्रये तस्मिन् वटमूले आसीनमुपविष्टं त्यक्तामर्षो योऽन्तकस्तत्तुल्यं शिवं सुरा ददृशुः ॥ ३३ ॥ ❀ ❀ शिवं विशिनष्टि सनंदाद्यैरिति पंचभिः। महासिद्धैः शान्तैः सनंदाद्यैर्गुह्यकरक्षसां भर्त्रा प्रभुणा सख्या वैश्रवणेन च उपास्यमानं सेव्यमानं संशांतविग्रहं निर्वैरं कृतापराधेषु देवेष्वपि कृपालुमित्यर्थः ॥ ३४ ॥ ❀ ❀ विद्या ज्ञानयोगः तपः कर्मयोगः ताभ्यां युक्तो योगपथः भगवद्भक्तिमार्गः तमास्थितं ज्ञानकर्मानुगृहीतभगवद्भक्तियोगनिष्ठमित्यर्थः। अधीश्वरं जितेंद्रियम्। विश्वसुहृदं चराचराणि सर्वाणि भूतानि भगवद्वपुः। अतस्तदानुकूल्यं मे स्यादित्युक्तरीत्या विश्वानुकूलम्। अत एव वात्सल्याल्लोकानां मंगलं क्षेममेव चरंतं कुर्वंतम् ॥ ३५ ॥ ❀ ❀ संध्याभ्ररुचा रक्तवर्णेन अंगेन तापसाभीष्टं भस्मादि लिंगं चंद्ररेखां च विभ्रतम् ॥ ३६ ॥ ❀ ❀ दर्भमय्यां बृस्यां ब्रुवंतोऽस्यां सीदंतीति बृसी पृषोदरादित्वात्साधुः, आस्तरणविशेषस्तस्यामुपविष्टं पृच्छते नारदाय सतामन्येषां सनंदनादीनां शृण्वतां सतां सनातनं ब्रह्म परमात्मानं प्रणवं वा प्रवोचंतम् ॥ ३७ ॥ ❀ ❀ सव्यं पादं दक्षिणे ऊरौ कृत्वा विन्यस्य जानुनि सव्ये सव्यबाहुं कृत्वा दक्षिणे बाहुप्रकोष्ठे मणिबंधस्थाने अक्षमालां कृत्वा दक्षिणहस्तकृतया तर्कमुद्रयोपलक्षितमासीनमित्यर्थः। तदुक्तं योगशास्त्रे "एकं पादमथैकस्मिन् विन्यसेदूरुसंस्थितम्। इतरस्मिन् तथा बाहुं वीरासनमिदं स्मृतम् ॥" तर्कमुद्रा चोक्ता "तर्जन्यंगुष्ठयोर्मध्यं मिथः संयुज्य चांगुलीः। प्रसार्य बंधनं प्राहुस्तर्कमुद्रेति मांत्रिकाः ॥" इति ॥ ३८ ॥ ❀ ❀ तं ब्रह्मनिर्वाणसमाधिम् आनंदरूपब्रह्मविषयसमाधिसाश्रितं योगकक्ष्यां योगपथं व्यपाश्रितं विशेषेणोपाश्रितं मुनीनामाद्यं मुख्यं मुनिं गिरिशं लोकपालसहिता मुनयः बद्धांजलयः प्रणेमुर्नमस्कृतवंतः ॥ ३९ ॥ ❀ ❀ स तु गिरिशः सुरासुरेशैरभिवंदितौ अंघ्री यस्य तमागतमात्मयोनिं ब्रह्माणमुपलभ्य ज्ञात्वा तस्मै ब्रह्मणे-उत्थायेति पाठांतरं-तदा आसनादुत्थाय शिरसा अभिवंदनं प्रणामं चक्रे, महत्तमो विष्णुर्वामनरूपः यथा कस्य कश्यपस्य प्रजापतेः। यद्वा कस्य चतुर्मुखस्याभिवंदनं चक्रे कस्य रुद्राभिवंद्यत्वं सदृष्टांतमाह महत्तम इति। विष्णुर्यथा रुद्रस्य महत्तमः पूज्यः तथा कोऽपीत्यर्थः ॥ ४० ॥ ❀ ❀ नीललोहितं रुद्रं ये परे सिद्धगणा अनुवर्तंते तैर्महर्षिभिः सह नमस्कृतः आत्मभूः ब्रह्मा कृतप्रणामं कृतः चतुर्मुखविषयः प्रणामो येन तं शशांकशेखरं, 'कृतप्रणाम' इति प्रथमांतपाठे रुद्रेण कृतप्रणामः प्राह ॥ ४१ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सुरा महायोगमये अष्टैश्वर्यस्वरूपे मुमुक्षूणां शरणे निवासभूते तस्मिन्वटमूले आसीनं शिवं ददृशुरित्यन्वयः ॥ ३३ ॥ सख्या वैश्रवणेन ॥ ३४ ॥ ❀ ❀ विद्या च तपश्च योगश्च ते तथा तेषां पंथा मार्गस्तमाश्रितमनुतिष्ठंतं तदधीश्वरं तेषां विद्यादीनामधीश्वरं विषयमुपदेष्टारं स्वामिनं च लोकं मंगलयतीति लोकमंगलं विश्वस्य सुहृदमनिमित्तबंधुं श्रीनारायणं वात्सल्याद्भक्त्युद्रेकाद्ध्यायंतम् ॥ ३५ ॥ ❀ ❀ संध्याभ्ररुचा गौर्यालिंगनेन संक्रांततत्कुचकुंकुमेन रक्तत्वात् स्वतो धवलत्वात्संध्याकालभवमेघवर्णेनांगेन तापसाभीष्टं भस्म च दंडश्च जटा चाऽजिनं च यस्मिंस्तथा तल्लिंगं वेषं 'लिंगं शेफसि वेषे च चिह्ने बुद्ध्यादिसंहताविंति यादवः। चंद्रस्य लेखां कलां च विभ्रतं भस्मोद्वर्तनेन नेत्राद्यवयवानां रक्तत्वाद्वा संध्याभ्ररुचेति ॥ ३६ ॥ ❀ ❀ बृस्यां यतियोग्यासने। 'यतीनामासनं बृसी'ति हलः। सनातनं नित्यं ब्रह्म वेदतत्त्वम् ॥ ३७ ॥ ❀ ❀ दक्षिणे ऊरौ सव्यं पादपद्मं कृत्वा सव्ये जानुनि च सव्यबाहुं दक्षिणे जानुनि च दक्षिणबाहुं कृत्वा प्रकोष्ठे करामेऽक्षमाला यस्य स तथा तं तर्कमुद्रया ज्ञान-

मुद्रयाऽऽसीनम् ।। ३८ ।। ❀ ❀ एवंविधं शिवं दृष्ट्वा किं चक्रुरिति तत्राह तं ब्रह्मेति । मनूनां मननशीलानामुपासकानामाद्यं मनुं ब्रह्मविषये यो निर्वाणसमाधिः शरीराभिमानत्यागलक्षणा चित्तैकाग्रता तादृशीमवस्थामाश्रितं योगकक्ष्यां योगपट्टिकाम् ।। ३९ ।। सर्वेषु प्रणमत्सु सत्सु ब्रह्मा किमकार्षीदित्याशंक्य पितृत्वाद्गणज्येष्ठत्वाद् गुरुत्वाद्धरेः प्रेष्ठत्वाच्चाभ्येत्य शिवशर्माहमभिवादयामीत्यभिवाद्य शिवो ब्रह्माणमस्तौषीदित्याह स तूपलभ्येति । शिरसेत्यनेनाष्टांगविशिष्टां नतिं ध्वनयति, नतिं विशिनष्टि यथेति । यथा विष्णोरष्टांगविशिष्टत्वेन नमनं करोति तथेत्यर्थः । सर्ववंद्यसूर्यादपि तेजिष्ठेन रुद्रेण प्रणतस्य विरिंचस्य माहात्म्यातिशयोऽस्तीति किं वक्तव्यमिति भावेन शिवं विशिनष्टि महत्तम इति । अर्कस्य सकाशादपि महत्तमस्तेजस्वितम इत्यर्थः । गुणगुणिनोरभेदाभिप्रायेणायं प्रयोगः "तेजोऽर्थे उत्तमार्थे च पूज्यार्थे च प्रयुज्यते । महच्छब्दो महःशब्दो मान्यशब्दस्तथैव चे"ति वचनात्तेजोऽर्थो महच्छब्द इति सिद्धम् ।। ४० ।। ❀ ❀ तत्र ब्रह्मा स्वगुरुत्वमभिनयन् भवं वक्तीत्याह तथेति । तथा रुद्रस्य समंतात्स्थिता अपरे ये सिद्धगणास्तैर्महर्षिभिः सह नीललोहितम् अनु नमस्कृतः प्रहसन्निवात्मभूर्ब्रह्माऽऽत्मने कृतप्रणामं शशांकशेखरं प्राहेत्यन्वयः ।। ४१ ।।

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तस्मिन्निति षट्कम् ।। ३३ ।। ❀ ❀ सनन्दनाद्यैरित्यत्र सनकाद्यैरिति सम्बन्धोक्तिः ।। ३४–३५ ।। ❀ ❀ तापसाः शैवाः तेषामभीष्टम् । अंगेनेत्यत्र कक्षेणेति चित्सुखः, कक्षेण योगपदेन ।। ३६ ।। ❀ ❀ ब्रह्म श्रीभगवत्तत्त्वम् । प्रवोचन्तमित्युपदिशन्तमित्यर्थः ।। ३७ ।। ❀ ❀ बाहुं करम् ।। ३८–३९ ।। ❀ ❀ स तूपलभ्येति सार्द्धकं ब्रह्मणः प्रकटेन वन्दनेन सत्त्वं विशुद्धमित्यस्य तथा व्याख्यानं प्रकटीकृतम् । नमस्कृत इत्यर्द्धकम् ।। ४०–४१ ।।

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अन्तकमिवेति तस्मिन् कृतस्यापराधस्य स्मृत्या त्यक्तामर्षमिवेति तदपि स्वेषु क्रोधरहितमिव ।। ३३ ।। ❀ ❀ सिद्धैरुपास्यमानं सख्या कुबेरेण च ।। ३४ ।। ❀ ❀ विद्यातपोयोगानां पन्थानं प्रवर्त्तनद्वारा आस्थितमाश्रितं लोकमंगलं तपश्चरंतम् ।। ३५ ।। ❀ ❀ तापसानां शैवानां सध्याभ्ररुचा रक्तवर्णेनांगेन ।। ३६ ।। ❀ ❀ 'व्रतिनामासनं बृसी' तस्यामुपविष्टं ब्रह्म वेदं शृण्वतां सनन्दनाद्यैरिति पूर्वोक्तैः षष्ठ्यन्तत्वात्तेष्वपि नारदस्य श्रैष्ठ्यं तस्य भक्तत्वात् तत्प्रष्टव्यस्य वेदस्यापि प्रायं शक्तिप्रतिपादकत्वं ज्ञेयम् ।। ३७ ।। ❀ ❀ सव्यं पादपद्मं दक्षिणे ऊरौ कृत्वा जानुनि च सव्ये सव्यं बाहुं कृत्वा दक्षिणबाहुप्रकोष्ठे मणिबन्धस्थाने अक्षमालां कृत्वा दक्षिणपाणिकृतया तर्कमुद्रया उपलक्षितमासीनमित्यर्थः । तदुक्तं योगशास्त्रे "एकं पादमथैकस्मिन् विन्यसेदूरुसंस्थितम् । इतरस्मिंस्तथा बाहुं वीरासनमिदं स्मृतम् ।।" तर्कमुद्रा चोक्ता "तर्जन्यंगुष्ठयोरग्रे मिथः संयोज्य चांगुलीः । प्रसार्य्य बन्धनं प्राहुस्तर्कमुद्रेति मान्त्रिकाः ।।" इति ।। ३८ ।। ❀ ❀ ब्रह्मनिर्वाणं ब्रह्मानन्दम् । "अधोक्षजालम्बमिहाशुभात्मनः शरीरिणः संसृतिचक्रशातनम् । तद्ब्रह्मनिर्वाणसुखं विदुर्बुधा" इति प्रह्लादोक्तेरधोक्षजालम्बनं वा तत्र समाधिं चित्तैकाग्र्यमाश्रितम् । योगकक्षां वामजानुदृढीकरणार्थं योगपट्टञ्च विशेषेणोपाश्रितम् । मनूनां मननशीलानामाद्यं मुख्यम् ।। ३८ ।। ❀ ❀ अभिवन्दनमर्थात्तस्यात्मयोनेश्चक्रे अर्हत्तमः यद्यपि स्वतः पूज्यस्तदपि तस्य पितृत्वादिति भावः, यथा विष्णुर्वामनः कश्यपस्य कश्यपप्रजापतेः । महर्षिभिः सहिताः ये नारदादयो नीललोहितमनुवर्त्तन्ते स्म तेऽपि तस्य वन्दनं चक्रुः । एवं नमस्कृतो ब्रह्मा कृतः प्रणामो देवैर्यस्मै तं शिवमित्यनेनांतर्भयाद्बहिरेव मुखप्रसादः प्रकाशित इत्युक्तम् ।। ४०–४१ ।।

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

महायोगो भगवद्भजनयोगस्तन्मये भगवद्भावे मुमुक्षूणां शरणे गृहे त्यक्तोऽमर्षो येन एवंभूतमन्तकमिवासीनम् ।। ३३ ।। ❀ ❀ त्यक्तामर्षांतकतुल्यतायां हेतुं दर्शयन् शिवं विशिनष्टि सनंदनाद्यैरिति पञ्चभिः । सनंदनाद्यैः स्वज्येष्ठैर्भ्रातृभिः संशान्तविग्रहं दक्षविषयकक्रोधान्निवारितमित्यर्थः, सख्या धनदेनोपास्यमानं च ।। ३४ ।। ❀ ❀ अधीश्वरं लोकनाथम् अत एव वात्सल्यात् लोकानां मंगलं हितं चरंतं विद्या भगवदुपासना तपआदि तत्साधनं ससाधनं भगवदुपासनामार्गमास्थितम् । सर्वलोकाविरोधेन सांगां भगवदुपासनां कुर्वाणमित्यर्थः ।। ३५ ।। ❀ ❀ तत्स्वभावानुरूपं तप आह लिंगं चेति । सन्ध्याभ्ररुचा किंचिदरुणगौरेणांगेन देहेन तापसानामभीष्टं भस्मादिलिंगं तपस्विचिह्नं चन्द्रलेखाञ्च लोकमङ्गलार्थं बिभ्राणम् ।। ३६ ।। ❀ ❀ भगवदुपासनानिष्ठां दर्शयति दर्भमय्यां कुशनिर्मितायां व्रतिनामासने उपविष्टम् । नारदाय कनिष्ठभ्रात्रे सनातनं ब्रह्म "अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम् । यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम् ।।" इति वक्ष्यमाणं भगवन्तं प्रवोचन्तं वर्णयन्तम् ।। ३७ ।। ❀ ❀ किञ्च सव्यं पादपद्मं दक्षिणे ऊरौ कृत्वा वामजानुनि वामबाहुं च कृत्वा दक्षिणबाहुप्रकोष्ठे मणिबन्धस्थाने अक्षमालां कृत्वा दक्षिण-

हस्तकृतया तर्कमुद्रयोपलक्षितमासीनं तादृशासनमुद्रयोर्लक्षणे उक्ते तज्ज्ञैः "एकं पादमथैकस्मिन् विन्यसेदूरुसंस्थितम्। इतरस्मिंस्तथा बाहुं वीरासनमिदं स्मृतम्॥ तर्जन्यंगुष्ठयोरग्रे मिथः संयोज्य चांगुलीः। प्रसार्य बन्धनं प्राहुस्तर्कमुद्रेति मांत्रिकाः"॥ ३८॥ ❀ ❀ ब्रह्मणि वासुदेवे निर्वाणसमाधिमखण्डं चित्तैकाग्र्यमाश्रितं योगकक्षां योगपट्टं च वामजानुदृढीकरणार्थं व्युपाश्रितम्। मनूनां मननशीलानामाद्यं मुख्यं मनुम्। लोकपालैः सहिता मुनयः प्रणेमुः॥ ३९॥ ❀ ❀ कस्य कश्यपस्य विष्णुर्वामनः॥ ४०॥ ❀ ❀ महर्षिभिः सह ये अपरे सिद्धगणाः नीललोहितं समन्तत आसन् तेऽपि अनु अनन्तरमेव तथा तस्मै अभिवन्दनं चक्रुः। एवं सर्वैर्नमस्कृतः कृतः प्रणामो येन तं शशाङ्कशेखरं प्रति प्रहसन्निव अहं वीरभद्रोत एव दक्षादिसंहारहेतुरित्यभिप्रायेण मम गिरिमारूढोऽसि किमित्येवं हसन्निव श्रीशिवस्यापि सत्त्वे च तस्मिन् 'भगवान् वासुदेवो ह्यधोक्षजो मे नमसा विधीयते' इत्याद्युक्तेः श्रीवासुदेवानन्यभक्तत्वेनेश्वरत्वाभावादिवशब्दः। सर्वोपास्यं सर्वशक्तिम्। सर्वकारणकारणं परब्रह्मादिपदवाच्यम्। भगवन्तं शिवसांत्वनार्थे तत्प्रेरकं तदंतर्यामिणं श्रीवासुदेवं प्रत्याह वक्ष्यमाणैश्चतुर्भिः श्लोकैः॥ ४१॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

शिवं विशिनष्टि—सनन्दाद्यैरिति पञ्चभिः। संशान्तः षडूर्मिरहितः पूर्णानन्द एव विग्रहः स्वरूपं यस्य तमत एव शान्तैः क्षुत्पिपासादिषडूर्मिरहितैरत एव महासिद्धैः सर्वथा समर्थैरपि सनन्दाद्यैस्तथा गुह्यकानां यक्षाणां रक्षसां च भर्त्रा पालकेन स्वसख्या कुबेरेण चोपास्यमानं ददृशुरित्यस्यैव क्रियापदस्य पञ्चस्वपि द्वितीयान्तेन संबन्धः॥ ३३॥ ❀ ❀ विद्या उपासना, तपश्चित्तैकाग्र्यम्, योगः अष्टाङ्गः, तेषां पन्थानं मार्गमास्थितमनुतिष्ठन्तम्। ननु तस्येश्वरस्य किमर्थं विद्याद्यनुष्ठानं तत्राह—वात्सल्यादिति। प्राणिषु वात्सल्यादतिस्नेहाल्लोकमङ्गलं लोकस्य तत्राधिकृतस्य मङ्गलमभीष्टप्रदं विद्यादिकं चरन्तमित्यन्वयः। "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः। स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते" इति सिद्धान्तात्स्वस्य श्रेष्ठत्वात्स्वाचारं दृष्ट्वा लोकानां तत्र प्रवृत्त्यर्थं तदाचरणमिति भावः। कथं तस्यैवं लोके वात्सल्यं तत्राह—विश्वसुहृदमिति। विश्वस्य सर्वस्य यतः सुहृत् हितचिन्तकस्तत इत्यर्थः। कथं तस्य सर्वहितैषित्वं तत्राह—तदधीश्वरमिति। तस्य सर्वलोकस्याधीश्वरमुत्पत्तिपालनसंहारकर्तारं स्वामिनमित्यर्थः। यदा स्वामी हितं न कुर्यात्तदा तत्कः कुर्यादिति भावः॥ ३४॥ ❀ ❀ अत एव वेषमपि तथैव बिभर्तीत्याह—लिङ्गमिति। स्वतः शुक्लवर्णत्वेपि भस्मधारणेन सन्ध्याभ्रवद्रुक् कान्तिर्यस्य तेनाङ्गेन तापसानामभीष्टं भस्मादिलिङ्गं चिह्नं चन्द्रलेखां च बिभ्रतमित्यन्वयः॥ ३५॥ ❀ ❀ दर्भमय्यां बृस्यां यतियोग्ये आसने उपविष्टम्। अन्येषां सतां सनन्दनादीनां शृण्वतां सतां पृच्छते नारदाय सनातनं ब्रह्म देवतत्त्वं प्रवोचन्तं उपदिशन्तम्। अनेन महतामपि विद्याप्रदातृत्वेन परमगुरुत्वं शिवस्य प्रदर्शितम्॥ ३६॥ ❀ ❀ दक्षिण ऊरौ सव्यं पादपद्मं कृत्वा विन्यस्य तथा सव्ये जानुनि च सव्यं बाहुं कृत्वा दक्षिणबाहुप्रकोष्ठे कराग्रे मणिबन्धस्थाने अक्षमालां कृत्वा दक्षिणहस्तकृतया तर्कमुद्रया उपलक्षितमासीनमित्यन्वयः। अत्र वीरासनं प्रदर्शितम्। तदुक्तं योगशास्त्रे "एकं पादमथैकस्मिन् विन्यसेदूरुसंस्थितम्। इतरस्मिंस्तथा बाहुं वीरासनमिदं स्मृतम्॥" तर्कमुद्रा च प्रदर्शिता "तर्जन्यङ्गुष्ठयोरग्रे मिथः संयोज्य चाङ्गुलीः। प्रसार्य बन्धनं प्राहुस्तर्कमुद्रेति मान्त्रिकाः" इति॥ ३७॥ ❀ ❀ एवंविधं शिवं दृष्ट्वा तं प्रणेमुरित्याह—तमिति। ब्रह्म परमतत्त्वं भगवान् वासुदेवस्तद्विषयको यो निर्वाणसमाधिः शरीराद्यहंममभावत्यागपूर्वकचित्तैकाग्रतालक्षणस्तमाश्रितं तत्परं "सत्त्वे च तस्मिन् भगवान् वासुदेवो ह्यधोक्षजो मे मनसा विधीयते" इति स्वसमाधेर्वासुदेवविषयकत्वस्य शिवेनैवोक्तत्वात्। तथा योगकक्षां योगपट्टिकां च विशेषेणोपाश्रितवन्तं मनूनां मननशीलानामाद्यं मुख्यं मनुं तं गिरिशं लोकपालैरिन्द्रादिभिः सहिताः मुनयः प्राञ्जलयः रचिताञ्जलिपुटाः सन्तः प्रणेमुरित्यन्वयः॥ ३८॥ ❀ ❀ स त्विति। तुशब्देन तस्येश्वरत्वेन जीववैलक्षण्यं सूचयति। स महादेव ईश्वरः अत एव सुरासुरेशैरभिवन्दिताबङ्घ्री यस्य स तथाविधोपि आत्मयोनिं लोकव्यवहारदृष्ट्या आत्मनः स्वस्य योनिं कारणं पितरं ब्रह्माणमभ्यागतं स्वसंमुखं प्राप्तमुपलभ्य दृष्ट्वा स्वासनादुत्थाय शिरसाभिवन्दनं चक्रे साष्टाङ्गं प्रणामं कृतवानिति संबन्धः। नन्वीश्वरश्चेत्कथं वन्दनं कृतवानित्याशङ्क्याह—अर्हत्तम इति। यथार्हत्तमोपि विष्णुः श्रीवामनमूर्तिः स्वव्यवहारेण लोकप्रवृत्त्यर्थं कस्य कश्यपस्य प्रजापतेरङ्घ्रिवन्दनं करोत्येव तथा लोकसङ्ग्रहार्थं भवोपि तद्वन्दनं कृतवानित्यर्थः॥ ३९॥ ❀ ❀ तथा अपरे ये महर्षिभिः सहिताः सिद्धगणा नीललोहितमनुभवमनुवर्तिनस्तत्र समन्तात् सर्वतो वर्तन्ते तेपि तस्मै प्रणामं कृतवन्त इति शेषः। एवं तैर्नमस्कृतः आत्मभूः ब्रह्मा देवादीनामपराधस्मरणेन तेषां लज्जोत्पादनार्थं प्रहसन्नुपहासमिव कुर्वन् देवैः कृतः प्रणामो यस्मै तं शशाङ्कशेखरं चन्द्रलेखाविशिष्टमस्तकं शिवं प्राहेत्यन्वयः॥ ४०॥ ❀ ❀ एवं कैलासादिविभूतिं निरूप्येदानीं तद्ब्रह्मत्वनिरूपणेन माहात्म्यज्ञापनाय ब्रह्मकृतां स्तुतिं दर्शयति—जान इत्यष्टभिः। तत्र यद्यपि तत्तत्कार्यसिद्ध्यर्थं स्वतन्त्रेणेश्वरेण तमआदिगुणाः स्वीकृतास्तथापि तत्पारवश्याभावान्न ते तस्मिन् कञ्चिज्जीवेष्विवाशुभं दधत्यतः स वस्तुतः स्वरूपनिष्ठत्वादीश्वर एवेति प्रथमं ब्रह्मा भवमीश्वरत्वेन स्तौति—जान इति पञ्चभिः। यद्यपि लोकसंग्रहार्थं त्वं मां पितृत्वेन प्रणमसि तथापि विश्वस्य सर्वस्य जगतो योनिबीजयोः मातृपितृस्थानीययोः शक्तेः प्रकृतेः शिवस्य पुरुषस्य च परं कारणं यद्ब्रह्म व्यापकं निरन्तरं सजातिविजातिस्वगतभेदशून्यं तदीश्वरं त्वामहं जाने इत्यन्वयः॥ ४१॥

भाषानुवाद:

उस महायोगमय और मुमुक्षुओंके आश्रयभूत वृक्षके नीचे देवताओंने भगवान् शङ्करको विराजमान देखा। वे साक्षात् क्रोधहीन कालके समान जान पड़ते थे ॥ ३३ ॥ * * भगवान् भूतनाथका श्रीअङ्ग बड़ा ही शान्त था। सनन्दनादि शान्त सिद्धगण और सखा—यक्ष-राक्षसोंके स्वामी कुबेर उनकी सेवा कर रहे थे ॥ ३४ ॥ * * जगत्पति महादेवजी सारे संसारके सुहृद् हैं, स्नेहवश सबका कल्याण करनेवाले हैं; वे लोकहितके लिये ही उपासना, चित्तकी एकाग्रता और समाधि आदि साधनोंका आचरण करते रहते हैं ॥ ३५ ॥ * * सन्ध्याकालीन मेघकी-सी कान्तिवाले शरीरपर वे तपस्वियोंके अभीष्ट चिह्न—भस्म, दण्ड, जटा और मृगचर्म एवं मस्तकपर चन्द्रकला धारण किये हुए थे ॥ ३६ ॥ * * वे एक कुशासनपर बैठे थे और अनेकों साधु श्रोताओंके बीचमें श्रीनारदजीके पूछनेसे सनातन ब्रह्मका उपदेश कर रहे थे ॥ ३७ ॥ * * उनका बायाँ चरण दायीं जाँघपर रक्खा था। वे बायाँ हाथ बायें घुटनेपर रक्खे, कलाईमें रुद्राक्षकी माला डाले तर्कमुद्रासे* विराजमान थे ॥ ३८ ॥ * * वे योगपट्ट ( काठकी बनी हुई टेकनी ) का सहारा लिये एकाग्रचित्तसे ब्रह्मानन्दका अनुभव कर रहे थे। लोकपालोंके सहित समस्त मुनियोंने मननशीलोंमें सर्वश्रेष्ठ भगवान् शङ्करको हाथ जोड़कर प्रणाम किया ॥ ३९ ॥ * * यद्यपि समस्त देवता और दैत्योंके अधिपति भी श्रीमहादेवजीके चरणकमलोंकी वन्दना करते हैं, तथापि वे श्रीब्रह्माजीको अपने स्थानपर आया देख तुरंत खड़े हो गये और जैसे वामनावतारमें परमपूज्य विष्णुभगवान् कश्यपजीकी वन्दना करते हैं, उसी प्रकार सिर झुकाकर उन्हें प्रणाम किया ॥ ४० ॥ * * इसी प्रकार शङ्करजीके चारों ओर जो महर्षियोंसहित अन्यान्य सिद्धगण बैठे थे, उन्होंने भी ब्रह्माजीको प्रणाम किया। सबको नमस्कार कर चुकनेपर ब्रह्माजीने चन्द्रमौलि भगवान्से, जो अबतक प्रणामकी ही मुद्रामें खड़े थे, हँसते हुए कहा ॥ ४१ ॥

ब्रह्मोवाच

जाने त्वामीशं विश्वस्य जगतो योनिबीजयोः। शक्तेः शिवस्य च परं यत्तद् ब्रह्म निरन्तरम् ॥ ४२ ॥
त्वमेव भगवन्नेतच्छिवशक्त्योः सरूपयोः। विश्वं सृजसि पास्यत्सि क्रीडन्नूर्णपटो[1] यथा ॥ ४३ ॥

त्वमेव धर्मार्थदुघाभिपत्तये दक्षेण सूत्रेण ससर्जिथाध्वरम्।
त्वयैव लोकेऽवसिताश्च सेतवो यान्ब्राह्मणाः श्रद्दधते धृतव्रताः ॥ ४४ ॥
त्वं कर्मणां मङ्गल मङ्गलानां कर्तुः स्म लोकं तनुषे स्वः परं वा।
अमङ्गलानां च तमिस्रमुल्बणं विपर्ययः केन तदेव कस्यचित् ॥ ४५ ॥
न वै सतां त्वच्चरणार्पितात्मनां भूतेषु सर्वेष्वभिपश्यतां तव[2]।
भूतानि चात्मन्यपृथग्दिदृक्षतां प्रायेण रोषोऽभिभवेद्यथा पशुम् ॥ ४६ ॥
पृथग्धियः कर्मदृशो दुराशयाः परोदयेनार्पितहृद्रुजोऽनिशम्।
परान् दुरुक्तैर्वितुदन्त्यरुन्तुदास्तान्मा वधीद्दैववधान्[3] भवद्विधः ॥ ४७ ॥
यस्मिन् यदा पुष्करनाभमायया[4] दुरन्तया स्पृष्टधियः पृथग्दृशः।
कुर्वन्ति तत्र ह्यनुकम्पया कृपां न साधवो दैवबलात्कृते क्रमम् ॥ ४८ ॥
भवांस्तु पुंसः परमस्य मायया दुरन्तया स्पृष्टमतिः समस्तदृक्।
तया हतात्मस्वनुकर्मचेतः स्वनुग्रहं कर्तुमिहार्हसि प्रभो ॥ ४९ ॥
कुर्वध्वरस्योद्धरणं हतस्य भोस्त्वया समाप्तस्य मनोः प्रजापतेः।
न यत्र भागं तव[5] भागिनो ददुः कुयज्विनो येन मखो निनीयते ॥ ५० ॥

---

* तर्जनीको अँगूठेसे जोड़कर अन्य अँगुलियोंको आपसमें मिलाकर फैला देनेसे जो बन्ध सिद्ध होता है, उसे 'तर्कमुद्रा' कहते हैं। इसका नाम ज्ञानमुद्रा भी है। १. प्रा० पा०—क्रीडयोर्ण०। २. प्रा० पा०—भव। ३. प्रा० पा०—दैवहतान्। ४. प्रा० पा०—दुर्लङ्घ्यया। ५. प्रा० पा०—भव।

जीवताद्यजमानोऽयं प्रपद्येताक्षिणी भगः। भृगोः श्मश्रूणि रोहन्तु पूष्णो दन्ताश्च पूर्ववत् ॥ ५१ ॥
देवानां भग्नगात्राणामृत्विजां चायुधाश्मभिः। भवतानुगृहीतानामाशु मन्योऽस्त्वनातुरम् ॥ ५२ ॥
एष ते रुद्रभागोऽस्तु यदुच्छिष्टोऽध्वरस्य वै। यज्ञस्ते रुद्रभागेन कल्पतामद्य यज्ञहन् ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे रुद्रसान्त्वनं नाम षष्ठोऽध्यायः ॥ ६ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

यद्यपि त्वं नीचवन्मां नमस्करोषि तथापि तवैश्वर्यमहं वेद्मीत्याह जान इति। त्वां विश्वस्येशं जाने। तत्र हेतुः। जगतो योनिर्या शक्तिः प्रकृतिर्बीजं च शिवः पुरुषस्तयोः परं कारणम्। तथापि निरंतरं निर्भेदं यद्ब्रह्म निर्विकारं तदेव त्वमिति जाने ॥ ४२ ॥ ❀ ❀ ननु विरुद्धमेतत्तत्राह। त्वमेव सरूपयोरविभक्तयोः शिवशक्त्योः क्रीडन्विश्वसृष्ट्यादि करोषि। ऊर्णपटो यथा ऊर्णनाभिरिव। स्वरूपयोरिति पाठे स्वांशयोः। अतो न विरोधः ॥ ४३ ॥ ❀ ❀ धर्ममर्थं च दोग्धि या त्रयी तस्या अभिपत्तये संरक्षणायाध्वरं सृष्टवानसि। यद्वा हे धर्मार्थदुघ धर्माद्यभिपत्तये तत्प्राप्तये दक्षेण सूत्रेण निमित्तेन सेतवो वर्णाश्रममर्यादाश्च अवसिता निबद्धा निर्णीता इति वा श्रद्दधते श्रद्धयाऽनुतिष्ठंति ॥ ४४ ॥ ❀ ❀ सर्वकर्मफलदाताऽपि त्वमेवेत्याह। हे मंगल त्वं मंगलानां शुभानां कर्मणां कर्तुः स्वः स्वर्गं परं मोक्षं वा तनुषे अमंगलानामशुभानां निषिद्धानां कर्मणां कर्तुश्च तमिस्रं नरकं तनुषे। तत्र केन हेतुना तदेव तस्मिन्नेव कस्यचिद्विपर्ययो भवति ॥ ४५ ॥ ❀ ❀ त्वत्कोपोऽत्र हेतुरित्यसंभावितमिति कैमुत्यन्यायेनाह। न वै सतां सतः रोषोऽभिभवेत्। तव त्वां द्वितीयार्थे षष्ठ्यौ। पशुमज्ञं यथाऽभिभवति तद्वत् ॥ ४६ ॥ ❀ ❀ अतो ये पृथग्धियो भेददृशोऽतः कर्मण्येव दृष्टिर्येषाम्। दुष्ट आशयो येषां परेषामुदयेन संपदा अर्पिता हृदि रुग्येषामरुन्तुदा मर्मभेत्तारः दैवेनैव वधो येषां तान्मृतप्रायान्भवद्विधो निरुपमः साधुर्मा वधीन्न हन्यात् ॥ ४७ ॥ ❀ ❀ प्रत्युत साधूनां वृत्तमालोक्यानुग्रहमेव कर्तुमर्हसीत्याह द्वाभ्याम्। यस्मिन्देशे यदा काले भगवन्मायया स्पृष्टधियो मोहितचित्ताः पृथग्दृशो भेदबुद्धयो भवंति तत्रापराधेऽपि साधवो ह्यनुकंपयाऽनंतरमेव परदुःखासहिष्णुतया चित्तप्रकंपेन कृपां कुर्वंति न तु क्रमं पराक्रमम्। कुतः। दैवबलात्कृतेऽर्थे ममैव दैवमेवंभूतं कोऽत्रापराधस्तेषामिति मत्वा तद्धननं न कुर्वंत इत्यर्थः ॥ ४८ ॥ ❀ ❀ भवांस्तु माययाऽस्पृष्टमतिरत एव समस्तदृक् सर्वज्ञः तया मायया हत आत्मा येषां तेष्वत एव कर्मानुगतचित्तेष्विहापराधेऽनुग्रहं कर्तुमर्हसि ॥ ४९ ॥ ❀ ❀ एवं सामान्येनोक्त्वा प्रस्तुतमाह कुर्विति त्रिभिः। त्वया हतस्यात एवासमाप्तस्य प्रजापतेरध्वरस्य। हे मनो यत्राध्वरे कुयाज्ञिका भागिनोऽपि तव भागं न ददुः। भागार्हत्वमाह। येन त्वया मखो निनीयते फलं प्राप्यते ॥ ५०-५१ ॥ ❀ ❀ हे मन्यो आयुधैरश्मभिश्च भग्नगात्राणामनातुरमारोग्यमस्तु ॥ ५२ ॥ ❀ ❀ भागश्च तवास्त्वित्याह। एष इति ते रुद्र। यावदित्यर्थे यदित्यव्ययम्। यज्ञे कृते यावानुच्छिष्टोऽवशिष्टोऽर्थस्तावानेप तव भागोऽस्तु। हे रुद्र ते भागेनाद्य यज्ञः कल्पतां संपद्यताम्। सिद्धो भवत्वित्यर्थः ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे टीकायां षष्ठोऽध्यायः ॥ ६ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्र विश्वेशत्वे। तथापीशत्वेपि ॥ ४२ ॥ ❀ ❀ अत्राक्षिपति—नन्विति। एतदीशत्वे ब्रह्मत्वं विरुद्धं मायाशबलेशस्य तद्रहितब्रह्मत्वं तेजस्तिमिरैकत्रस्थितिवन्न संगच्छतेऽतो विरुद्धम्। अतस्तयोः 'तदभिन्नाभिन्नस्य तदभिन्नत्वनियमात्' इति न्यायेन तदभिन्नत्वात्। तथा हि–तच्छब्देन ब्रह्म तदभिन्न ईशस्तदभिन्नौ प्रकृतिपुरुषौ तयोस्तदभिन्नत्वं ब्रह्माभिन्नत्वमेवेत्यर्थः। शिवशक्त्योरित्यधिकरणे सप्तमी। तत्र क्रीडन्नित्यर्थः। यद्वा द्वितीयार्थे षष्ठी। ते क्रीडन् क्रीडयिष्यन्नित्यर्थः। तृतीयार्थे षष्ठीति चक्रवर्ती। ताभ्यां क्रीडन्नित्यर्थः ॥ ४३ ॥ ❀ ❀ अभिपूर्वपदे रक्षणार्थानुपलब्धेराह–यद्वेति। अभिपत्तिपदेन धर्माद्यन्वयस्तु प्रसंगबलेनैवेत्याह–तत्प्राप्तये धर्मादिप्राप्तये। "सूत्रं स्यात्तन्तुशास्त्रयोः" इति निरुक्त्युक्तेः। सूत्रपदस्यार्थद्वयवाचकत्वादाह–निर्णीता इति वेति। तथा च सूत्रेण तंतुना वस्त्रमिव निबद्धाः सूत्रेण निर्णीता इति विवेकः। अतो दक्षवधे सति संप्रति धर्मप्रवर्तकस्याभावाद्धर्मस्य लोपे लोकस्य दुर्गतिः स्यादिति भावः ॥ ४४ ॥ ❀ ❀ हे मंगल कल्याणरूप। तत्र शुभाशुभयोर्मध्ये। तस्मिन्नेव शुभाशुभकर्मण्येव। यथा पुण्यकर्तुर्दक्षादेस्तमिस्रं पापं कर्तुरजामिलादेरपवर्ग इति त्वं पृच्छ्यसे इति भावः। तीर्थस्तु–नायं नियमो द्रढीयान्विपर्ययदर्शनादित्याक्षिप्य समादधौ। केनचिद्भक्तद्वेषादिना हेतुना कस्यचिदेव धर्मादेः फलविपर्ययः स्यान्न तु सर्वस्येत्यज्ञानां धर्मसूक्ष्मत्वज्ञानं दुर्लभमिति भावः ॥ ४५ ॥ ❀ ❀ अत्र यज्ञनाशे। चक्रवर्त्ती तु–मम रोषप्रसादावेव तत्र हेतू इति चेन्मैवं तव प्रसाद एव भवेन्न तु रोष इति कैमुत्यन्यायेनाह–आत्मनि परमात्मनि त्वयि। यद्वा आत्मनि स्वस्मिन्नपृथग्भेदेन स्वस्मिन्सुखदुःखे इव भूतान्यपि सुखदुःखवंति दिदृक्षतां द्रष्टुमिच्छतामेव किमुत पश्यतामिति पशव एव रोषवन्तो भवन्ति न तु संतः। प्रायेणेति जयविजय-

विषयकरोषवतां सनकादीनामिव दक्षविषयकस्तव रोष आत्मारामस्याप्यभूदिति सूचयति ॥ ४६ ॥ ❀ ❀ अतो विज्ञानां रोषाभावात् । अतो भेददर्शित्वात् । युष्मत्कोपविषयीभूतत्वे तेषां कदाप्युद्धारो न भावीति भावः ॥ ४७ ॥ ❀ ❀ सर्वसहनशीला अपि साधवः परदुःखासहिष्णवः स्वापराधिनोपि दयंत एवेत्याह–साधुवृत्तमिति । इत्यर्थ इति । "सुखदुःखप्रदो नान्यः पुरुषस्य" इत्याद्युक्तेरिति भावः । "हृदयस्य द्रवीभावो ह्यनुकंपेति कथ्यते । उपकारं कर्तुमिच्छा कृपेत्याहुर्मनीषिणः" इति तीर्थः ॥ ४८ ॥ ❀ ❀ तव तु साधुचूडामणेः कोपो न संभवेदित्याह–भवांस्त्विति । अतो मायाऽस्पृष्टमतित्वात् । समस्तदृक् तेषामपराधफलं महादुःखं पश्यस्येवेति भावः । अत एव मायाहृतात्मत्वादेव । एते खलु मायया हृतबुद्धयः कथं विवेकं लभंतां नानाकर्मग्रस्तमनसः कथं वा साधून्पश्यंत्वित्यत एतेषु मम दयैवोचितेति विचार्यानुग्रहं कर्तुमर्हसीति भावः ॥ ४९ ॥ ❀ ❀ तर्हि संप्रति किं कर्त्तव्यं तद् ब्रूहीति प्रस्तुतमाह–कुर्विति । अत एव त्वया हतत्वादेव । हे मनो मननशील मंत्रमूर्त्ते वा "मनुर्मंत्रे च मनने स्वायंभुवप्रभृतिषु" इति धरणिः । मंत्रैरेव मखसिद्धिरस्ति ते च त्वन्मूर्त्तिभूता अत उक्तं येन त्वयेति स्वामिचरणैः । "यागोऽमंत्रोऽदक्षिणश्च न फलं दास्यति क्वचित्" इति पुराणात् ॥ ५० ॥ ❀ ❀ यजमानसद्भावे यागोद्धारः संभवति तस्य मया हतत्वात्कथं नष्टाक्षाद्यवयवानां स्वभागनिरीक्षणं कथं चायुधाश्मभिर्भग्नगात्राणामृत्विजां च होमांगत्वमित्याशंक्य त्वदनुग्रहसुधासमुद्रमग्नाः सर्वे संपन्ना भवंत्वित्याह-जीवतादिति ॥ ५१ ॥ ❀ ❀ हे मन्यो मूर्त्ते । एतत्समाप्तिं विना तवैवांगभंगो नान्यस्येत्यभिप्रायः ॥ ५२ ॥ ❀ ❀ सर्वं निरवद्यं स्याद्यदि मम भागो भवेदिति चेत्तवायमनुशोको मा भूदित्याह-एष त इति । उच्छिष्टः स्विष्टकृद्भागः "यदग्नये स्विष्टकृते समवद्यति भागधेयेनैव तद्रुद्रं समर्द्धयति सकृत्सकृदवद्यति सकृदेव हि रुद्र उत्तरार्द्धादवद्यत्येषा वै रुद्रस्य दिक् स्वीयायामेव दिशि रुद्रं निरवदयते" इति श्रुतेरिति तीर्थः । उत्कृष्टः शिष्टः उच्छिष्टो न तु भुक्तावशिष्ट इत्यर्थः । अत एव श्रीमहाभारतेऽनुशासनिके इत्युक्तं "रुद्रस्य विक्रमं दृष्ट्वा भीता देवाः सहर्षिभिः" इत्यारभ्य "रुद्रस्य भागं यज्ञे च विशिष्टं ते त्वकल्पयन्" इत्यंतेन । किं च रुद्रस्य देवेषु ब्राह्मणत्वादपि नोच्छिष्टभागार्थता ब्राह्मणस्याग्रभोजित्वात् । "विप्रो वाडवमुख्यौ च सर्वश्रेष्ठोग्रभुग्गुरुः । पुरुषो वीरनामा च ब्राह्मणो ब्रह्मवित्कविः ॥ वैश्वणाग्र्यो द्विजाग्र्यश्च सर्वपूज्यो धरामरः" इति सर्वार्थचिंतामण्युक्तेः । रुद्रस्य ब्राह्मणत्वं तु "त्वं हि भगवन्देवेषु ब्राह्मणोऽहं मनुष्येषु ब्राह्मणः ब्राह्मणो हि ब्राह्मणमुपधावति" इति जाबालश्रुतेः । अतो यागार्थानीतशुद्धावशिष्टद्रव्यमेव रुद्रभागस्तं विना यागो न पूर्यते ततो यागेधिकमेव वस्तुसंपाद्यम् । उच्छिष्टस्य सर्वोत्कर्षताथर्ववेदैकादशकांडचतुर्थानुवाकारंभे प्रोक्ता । तथा हि–"उच्छिष्टे नाम रूपं चोच्छिष्टे लोक आहितः । उच्छिष्ट इंद्रश्चाग्निश्च विश्वमंतः समाहितम् ॥ ( १ ) उच्छिष्टे द्यावापृथिवी विश्वं भूतं समाहितम् । आपः समुद्र उच्छिष्टे चंद्रमा वात आहितः ॥ ( २ ) सन्नुच्छिष्टे प्रसंश्चोभौ मृत्युर्वाजः प्रजापतिः । लौक्या उच्छिष्ट आयत्ता-वश्चंद्रश्चापि श्रीर्मयि ॥ ( ३ ) दृढो दृंहः स्थिरोऽन्यो ब्रह्मविश्वसृजो दश । नाभिमिव सर्वतश्चक्रमुच्छिष्टे देवताः श्रिताः ॥ ( ४ ) ऋक्सामयजुरुच्छिष्ट उद्गीथः प्रस्तुतं स्तुतम् । हिंकार उच्छिष्टे स्वरः साम्नो मेडिश्च तन्मयि ॥ ( ५ ) ऐंद्राग्नं पावमानं महानाम्नीर्महाव्रतम् । उच्छिष्टे यज्ञस्यांगान्यंतर्गर्भ इव मातरि ॥ ( ६ ) राजसूयं वाजपेयमग्निष्टोमस्तदध्वरः । अर्काश्वमेधाउच्छिष्टे जीवबर्हिर्मदि तमः ॥ ( ७ ) अग्न्याधेयमथो दीक्षा कामप्रश्छंदसा सह । उत्सन्ना यज्ञाः सत्राण्युच्छिष्टेऽधिसमाहिताः ॥ ( ८ ) अग्निहोत्रं च श्रद्धा च वषट्कारो व्रतं तपः । दक्षिणेष्टं पूर्त्तं चोच्छिष्टेऽधिसमाहिताः ॥ ( ९ ) एकरात्रो द्विरात्रः सद्यः क्रीः प्रक्रीरुक्थः । ॐ तं निहितमुच्छिष्टे यज्ञस्याणूनि विद्यया ॥ ( १० ) चतूरात्रः पंचरात्रः षड्रात्रश्चोभयः सह । षोडशी शतरात्रश्चोच्छिष्टाज्जज्ञिरे सर्वे ये यज्ञा अमृतेहिताः ॥ ( ११ ) प्रतीहारो निधनं विश्वजिच्चाभिजच्चयः ॥ साह्नातिपत्रावुच्छिष्टे द्वादशाहोपि तन्मयि ( १२ ) सूनृतासंनतिः क्षेमः स्वधोर्जामृतंसह । उच्छिष्टे सर्वे प्रत्यंचः कामाः कामेन तातृपुः ( १३ ) नवभूमीः समुद्रा उच्छिष्टेधिश्रिता दिवः । आसूर्यो भात्युच्छिष्टेहोरात्रे अपि तन्मयि ॥ ( १४ ) उपहव्यं विषूवंतं ये च यज्ञा गुहाहिताः । बिभर्त्ति भर्त्ता विश्वस्योच्छिष्टो जनितुः पिता ( १५ ) पिता जनितुरुच्छिष्टोऽसौ पौत्रः पितामहः । स क्षिपति विश्वस्येशानो वृषा भूम्यामतिघ्नः ॥ ( १६ ) ऋतं सत्यं तपो राष्ट्रं श्रमो धर्मश्च कर्म च । भूतं भविष्यदुच्छिष्टे वीर्यं लक्ष्मीर्बलं बले ॥ ( १७ ) समृद्धिरोज आकूतिः क्षत्रं राष्ट्रं षडुर्व्यः । सँव्वत्सरोप्युच्छिष्ट इडा प्रैषा ग्रहा हविः ॥ ( १८ ) चतुर्होतार आप्रियश्चातुर्मास्यानि नीविदः । उच्छिष्टे यज्ञा होत्राः पशुबंधास्तदिष्टयः ॥ ( १९ ) अर्द्धमासाश्च मासाश्चार्त्तवा ऋतुभिः सह । उच्छिष्टे घोषिणीरापः स्तनयित्नुः श्रुतिर्मही ॥ ( २० ) शर्कराः सिकता अश्मान ओषधयो वीरुधस्तृणाः । अभ्राणि विद्युतो वर्षमुच्छिष्टे संश्रिताश्रिताः ॥ ( २१ ) राद्धिः प्राप्तिः समाप्तिर्व्याप्तिर्महराधतुः । अत्याप्तिरुच्छिष्टे भूतिश्चाहितानिहिता हिता ॥ ( २२ ) यच्च प्राणिति प्राणेन यच्च पश्यति चक्षुषा । उच्छिष्टा जज्ञिरे सर्वे दिवि देवा दिवि श्रिताः (२३) ऋचः सामानि च्छंदांसि पुराणं यजुषा सह । उच्छिष्टा जज्ञिरे (२४) प्राणापानौ चक्षुः श्रोत्रमचितिश्च क्षितिश्च वा । उच्छिष्टाज्ज० (२५) आनंदामोदाः प्रमुदोऽभीमोदो मुदश्च ये । उच्छिष्टाज्जज्ञिरे० ( २६ ) देवाः पितरो मनुष्या गंधर्वाप्सरसश्च ये । उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रिताः ( २७ )" इत्थं सर्वोपादानत्वे उच्छिष्टस्य सर्वोत्कृष्टत्वादेव देवैः श्रीमहादेवस्य स भागः कल्पितोऽन्यथा सर्वदेवगुरोस्तद्दानं न संगच्छते । स्विष्टकृत्संज्ञाहुतिरेवोच्छिष्टपदवाच्या तां विना न यागपूर्त्तिरस्तीति । अपूर्णो हि यागो न फलं दातुं शक्नोति यच्चोपयुक्तावशिष्टं

वस्तु तत्र रुद्रभागोऽस्ति, किं तु यागशालागतमनुपहतं यत्स्थितं तदपि रुद्रभाग एव "यज्ञवास्तुगतं सर्वमुच्छिष्टमृषयः क्वचित्। चक्रुर्भागं हि रुद्राय" इति नवमे नभगोक्तेः। 'उत्कृष्टं शिष्टमुच्छिष्टमि'ति निरुक्तेः। "त्वं हि भगवन्देवेषु ब्राह्मणोऽहं मनुष्येषु" इति जाबालोपनिषदुक्तेरप्रभोक्तुर्ब्राह्मणदेवस्य रुद्रस्योच्छिष्टदानौचित्यादुत्कृष्टभाग एवोच्छिष्टपदार्थ इति ॥ ५३ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

ऐश्वर्यं तत्र प्रतिपाद्यं शैवोपास्यं तत्र ईशत्वे शिवः पुरुषः प्रकृतिनियन्ता जीवो वा शैवानां हि मते सदाशिवः परमकारणं भगवत्प्रकृतिपुरुषा हि तदात्मका एवेति सिद्धान्तः। तथापि कारणत्वेऽपि ॥ ४२ ॥ ❁ ❁ शङ्कते नन्विति। एतत् कारणत्वं निर्विकारत्वं च परस्परविरुद्धं विकारव्याप्यत्वात्कारणत्वस्य शिवशक्त्योर्द्वारभूतयोस्ततोः क्रीडन् तथा च चिन्तामणिर्यथाशक्तिद्वारा तत्तत्पदार्थप्रसवे उपादानं तथा सद्वारकोपादानत्वात्कारणत्वेऽपि निर्विकारत्वमित्यर्थः। न च कारणसद्वारकं न श्रूयते इति वाच्यम्, व्रीहिभिर्यजेत इति व्रीहीणां करणत्वे श्रुतिसिद्धेऽपि पुरोडाशप्रकृतितया तदुपगमात् अविभक्तयोः तन्नायःपिंडवद्विविक्ततयाऽज्ञातयोः पाठान्तरे स्वांशयोः प्रकृतेः शक्तित्वात्पुरुषस्य च चिदंशत्वात्स्वांशत्वम्। अतः प्रकृतिपुरुषद्वारा कारणत्वात्स्वतश्चाकरणत्वात्कारणनिर्विकारत्वयोर्न विरोध इत्यर्थः ॥ ४३ ॥ ❁ ❁ पूर्वार्थे विशेष्यभूतायास्त्रय्या अध्याहाराद्यद्वेति प्रत्यासत्त्या धर्माद्यभिपत्तये इति तु समीचीनमेवेति स्वारस्यम्। सूत्रेण तंतुना निमित्तेन करणेन निबद्धाः निर्णीता इत्यत्र तु सूत्रेण स्वल्पाक्षरमसंदिग्धमित्यादिलक्षणकेन शास्त्रेणेति ज्ञेयं किन्तु सन्निहितत्वात् दक्षरूपेण तंतुनाऽध्वररूपं पटं तन्तुवाय इव त्वं ससर्जिथेत्यपि व्याख्येयम् ॥ ४४ ॥ ❁ ❁ तत्र तयोः शुभाशुभकर्मणोर्मध्ये तदेवेत्यव्ययम्। तस्मिन्नेव कर्मणि कस्यचित्फलविपर्ययो भवति शुभेऽप्यशुभफलम् अशुभेऽपि शुभफलं केन हेतुना भवति। वस्तुतस्तु महदपराधतदनुग्रहयोरेव हेतुत्वमभिप्रेतम् ॥ ४५ ॥ ❁ ❁ अत्र फलवैपरीत्ये प्रायेणेति लोकोक्तिः नाभिभवेदेवेत्यर्थः ॥ ४६ ॥ ❁ ❁ अतस्त्वत्कोपस्य हेतुत्वासंभवात् पुनरतः भेददर्शित्वात् ॥ ४७ ॥ ❁ ❁ पृथग्दृशः साधुषु सापराधा भवं ममैव दैवमिति साधारणसाधुपक्षे भवपक्षे तु तेषां पृथग्दृष्टीनामेव दैवबलात्कृतेऽपराधे सति दैवपारवश्यात्तेषां को दोष इति मत्वा हननं न कुर्वेत इति व्याख्येयम् ॥ ४८ ॥ ❁ ❁ अतः माययाऽस्पृष्टमतित्वात् समस्तदृक् भवतीति पृथग्वाक्यम्। भवांस्तु तु-शब्दः साधारणसाधुभ्यो वैशिष्ट्यं बोधयति, अर्हसि त्वमिति शेषः ॥ ४९ ॥ ❁ ❁ प्रस्तुतं प्रकृतं प्रकरणप्राप्तमिति यावत् हे मनो! मननशील! येन त्वया मखो निनीयते तस्य तव भागं न ददुर्यत्र यज्ञे तस्योद्धरणं कुर्वित्यन्वयः ॥ ५०-५१ ॥ ❁ ❁ हे मन्यो! क्रोधस्वरूप! भवन्तंतरा न कस्याऽप्यत्र सामर्थ्यमिति भावः ॥ ५२ ॥ ❁ ❁ संपद्यतां सिद्ध्यतु ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीराधारमणदासगोस्वामिविरचितदीपिन्याख्यव्याख्यायां षष्ठोऽध्यायः ॥ ६ ॥

### श्रीमद्वीरराघवव्याख्या

रुद्रस्य भगवदात्मकत्वात्तदावेशावतारत्वाच्च रुद्रं ब्रह्मणः सामानाधिकरण्येन निर्दिशन् यन्निकृष्टस्य ब्रह्मणोऽसाधारणं प्रकृतिपुरुषशरीरकत्वजगत्कारणत्वधर्ममर्यादास्थापकत्वानुगृहीतृत्वनिगृहीतृत्वादि तत्सर्वं रुद्रप्रशंसार्थं रुद्ररूपेणाऽवस्थितस्य ब्रह्मण आह जाने त्वामित्यादिभिश्चतुर्भिः। हे ईश! रुद्र! विश्वस्य कृत्स्नस्य चिदचिदात्मकस्य जगतः योनिबीजभूतयोः क्षेत्रे बीजवत्प्रकृतौ पुरुषस्य मिलितत्वात् तयोर्योनिबीजशब्दाभ्यां निर्देशः शक्तेर्ब्रह्मण अपृथक्सिद्धविशेषणभूतायास्त्रिगुणात्मिकायाः प्रकृतेः तथा शिवस्य निर्वाणमय एवायमात्मेत्यादिश्रुत्या प्रत्यगात्मनः सुखरूपत्वाभिधानाज्जीवस्य शिवशब्देन निर्देशः, तस्य च यत्परं विलक्षणं "तस्य परमाम्रेडितम्" इति निर्देशान्न परशब्देन योगे 'अन्यारादितरर्त्तेदिक्शब्दे'त्यादिना पंचमी। प्रकृतिपुरुषाभ्यां स्वरूपतः स्वभावतश्च विलक्षणमित्यर्थः। तद्यन्निरंतरं निर्भेदं तत्प्रकृतिपुरुषांतरात्मतयावस्थितमपि निरस्तनिखिलहेयत्वेन समस्तकल्याणगुणात्मकत्वे चैकरूपमित्यर्थः। यद्वा निरंतरम् अंतरं विच्छेदः तस्मान्निर्गतं सर्वानुस्यूतं सर्वांतरात्मतयाऽवस्थितमिति यावत्। अथवा कार्त्स्न्येन ज्ञानस्वरूपं न तु प्रदेशभेदेन जडमित्यर्थः। तद्ब्रह्म त्वां जाने इदञ्च सामानाधिकरण्यं शरीरात्मभावनिबन्धनमावेशावतारत्वनिबन्धनं च न तु तादात्म्यनिबंधनम् 'एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधसम्भवौ। मया दर्शितपंथानौ सृष्टिसंहारकारकौ ॥ सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते। नारायणाद्रुद्रो जायते अपहतपाप्मा वा अहमस्मी'त्यादिभिः कार्यत्वकर्मवश्यत्वाद्यभिधानेन रुद्रादेर्जीवत्वनिश्चयात् तादात्म्यासंभवात्। अत एव 'भवांस्तु पुंसः परमस्य मायया दुरन्तयाऽस्पृष्टमतिः समस्तदृगि'ति व्यतिरेकेण निर्देक्ष्यति ॥ ४२ ॥ ❁ ❁ एवं ब्रह्मसामानाधिकरण्येन रुद्रं निर्दिश्य ब्रह्मदृष्ट्या तस्य चिदचिच्छरीरकत्वं सृष्ट्यादिकर्तृत्वं चाह त्वमिति। हे भगवन्! स्वांशयोः स्वस्य तव अंशयोः शिवशक्त्योः प्रकृतिपुरुषयोः। अत्र विशिष्टवस्त्वेकदेशत्वरूपमंशत्वं विवक्षितं न तु विशेष्यवस्त्वेकदेशत्वं प्रकृतिपुरुषयोर्विकाररूपमेतज्जगत्त्वमेव सर्वं खल्विदं ब्रह्मेतिवत्सामानाधिकरण्यमिदं शरीरात्मभावनिबन्धनमेव। कथम्-रुद्राख्यजीवविशेषस्य कृत्स्नं प्रपञ्चं प्रति आत्मत्वं जगतश्च शरीरत्वं कथंचिच्छरीरात्मभावसंभवेऽपि शरीरवाचिपदस्य शरीरिवाचकेन

सामानाधिकरण्यमिति चेदुच्यते। न ह्यत्र रुद्राख्यजीवविशेषस्यात्मत्वं जगतस्तच्छरीरत्वं चोच्यते, किन्तु ब्रह्मविदामहंत्वमादिशब्दा अहंत्वमादिबुद्धयश्च ब्रह्मपर्यन्ताः "तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च कक्षीवानृषिश्च विप्रश्चासि त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते तद्योऽहं योऽसौ सोऽहम् अहं हरिः सर्वमिदं जनार्दनः।" इत्यादिश्रुतिस्मृतिभिः स्तथा प्रतीतेः। एवं चात्र प्रस्तोतुश्चतुर्मुखस्य ब्रह्मविद्ग्रेसरत्वेन तत्प्रयुक्ता अहं-त्वमादिशब्दास्तद्बुद्धयश्च ब्रह्मपर्यन्ता इति रुद्रस्य भगवदात्मकत्वेन तत्पर्यन्तत्वमवगम्य ब्रह्मसामानाधिकरण्येन स निर्दिष्ट इति विशेष्यभूतस्य ब्रह्मणः कृत्स्नचिदचिदन्तरात्मत्वं तयोः शरीरत्वं च युक्तमेव। एवमपि कथमात्मवाचिना शरीरवाचिशब्दस्य सामानाधिकरण्यमिति चेत् गवादिशब्दानां जातिगुणादि-मात्रपरतया व्युत्पन्नानां शुक्लो गौरित्यादिषु व्यक्तिगुणादिपर्यन्तत्वमन्तरेणाऽपर्यवसन्नानां यथा व्यक्त्यादिपर्यन्तत्वेन सामाना-धिकरण्यम् एवं जातिगुणादिवत् शरीरस्याऽपृथक्सिद्धविशेषणत्वात्तद्वाचिमात्रपरतया लोके व्युत्पन्नं शरीरिपर्यन्तमभिधत्ते 'आत्मा देवो जातः' इतिवत् तस्यात्मवाचिना सामानाधिकरण्यमुपपन्नमेव। न च व्यक्तेराक्षेपाल्लक्षणया वा 'गौः शुक्लः' इत्यादिप्रयोगोपपत्तिः अपृथक्सिद्धविशेषणवाचिशब्दत्वस्य लक्षणादिप्रतिबन्धकत्वादन्यथा जात्याकृतिगोत्वगुणादिशब्दानामपि लक्षणादिना गोत्वं शुक्लमित्यादिप्रयोगापत्तेः। नन्वेवं जात्यादिशब्दानामप्यपृथक्सिद्धविशेषणवाचिनां व्यक्त्यादिपर्यन्तपर्यवसानेन सामानाधिकरण्या-पत्तिरिति चेन्न, नियतनिष्कर्षवाचिनां कदाचिदपि विशेष्यपर्यन्तत्वाभावस्य भाष्यादिषूक्तत्वात्। अत एव शरीरदेहादिशब्दानां कदाचिदपि नात्मवाचिना सामानाधिकरण्यमिति भाष्यादिषु विस्तरः। कृत्स्नचिदचिदात्मकप्रपञ्चशरीरकस्त्वं क्रीडन्निव विश्वं सृजसि पासि रक्षसि अस्सि संहरसि क्रीडन्नित्यनेन जगद्व्यापारो भगवतो लीलेत्युक्तम्। ऊर्णपट ऊर्णनाभिर्यथेति दृष्टान्तः "यथोर्णनाभिः सृजते गृह्णते चे"ति श्रुतिप्रसिद्धः ॥ ४३ ॥ ❀ ❀ एवं परब्रह्मदृष्ट्या चिदचिच्छरीरकत्वं सृष्ट्यादिकारणत्वमभिधाय पुनस्तद्दृष्ट्या प्रकृताध्वरसंधित्सोत्पादनाय पुरुषार्थावबोधिशास्त्रप्रवर्त्तकत्वं धर्ममर्यादापालकत्वं चाह त्वमेवेति। धर्मार्थधुक् धर्मार्थौ दोग्धीति धर्मार्थधुक् धर्मादिप्रपूरकस्त्वमेव अभिपत्तये पुरुषार्थाऽवाप्तये दक्षेण समर्थेन सूत्रेण सूचितेन शास्त्रेण अध्वरं ससर्जिथ सृष्टवानसि। पुरुषार्थसाधनभूतधर्मार्थसंपादनोपायाऽवबोधिशास्त्रप्रवर्त्तकस्त्वमेवेत्यर्थः। सेतवो वर्णाश्रमधर्ममर्यादाश्च त्वया एवाऽवसिता निबद्धाः। के ते सेतवः येऽवसिता इत्यत्राह-यान् सेतून् धृतव्रता व्रतनिष्ठाः सन्तो ब्राह्मणाः श्रद्धत्ते श्रद्धापूर्वक-मनुतिष्ठन्ति ॥ ४४ ॥ ❀ ❀ पुनर्ब्रह्मदृष्ट्यैव सर्वकर्मकारयिता तत्तत्फलप्रदश्च त्वमेवेत्याह त्वमिति। हे मंगल! शिवलोके मंगलानां कुशलानां कर्मणां कर्तुः कर्त्रे इत्यर्थः। स्वः स्वर्गं परं मोक्षं वा तनुषे प्रददासि, अभिसंहितफलकर्मणां कर्तुः स्वर्गमनभिसंहित-फलकर्मणां कर्तुस्तु मोक्षं तनुष इत्यर्थः। अमंगलानामकुशलानां कर्मणां कर्तुरुल्बणं तमिस्रं निरयं तनुषे। विपर्ययः अमंगलानां कर्मणां कर्तुः कस्यचिदपि स्वर्गमोक्षप्राप्तिरूपः विपर्ययः केन केन हेतुना भवेत् न केनापीत्यर्थः। अतस्तदेव तत्कृतं फलमेव भवति न तद्विपर्यय इत्यर्थः ॥ ४५ ॥ ❀ ❀ एवं ब्रह्मदृष्ट्या रुद्रं प्रस्तूय तस्य प्रसादोदिपिपादयिषया सतां रोषो न युक्त इति कैमुत्यनयेनाह न वा इति। त्वच्चरणे अर्पितम् आत्मा चित्तं येषां सर्वेषु भूतेषु तव 'द्वितीयार्थे षष्ठी' त्वामित्यर्थः। अत्र त्वां त्वमिति पदद्वयं ब्रह्मपर्यन्तं भगवच्चरणारविन्दसमर्पितचित्तानां सर्वाणि भूतानि भगवदात्मतया पश्यतामित्यर्थः। भूतानि चात्मनि परमात्मनि अपृथक् सिद्धानि दिदृक्षतां द्रष्टुमिच्छतां पश्यतामित्यर्थः। सर्वभूतानां भगवच्छरीरतया तदपृथक्सिद्धत्वेन पश्यतामित्यर्थः। एवंभूतानां सताम्, अत्रापि द्वितीयार्थे षष्ठी। सतः वै अनर्थकारित्वेन प्रसिद्धः रोषः नाभिभवेत् अभिभूतान्न कुर्यात् यथा पशुं मूर्खमभिभवेत्, अतस्तव रोषो न युक्त इति किमु वक्तव्यमिति भावः ॥ ४६ ॥ ❀ ❀ कृतापराधेष्वपि महान्तः कृपावन्तो भवन्ति। अतः कृतापराधमपि दक्षम् अनुग्रहीतुमर्हसीत्याह त्रिभिः। पृथग्दृशः अब्रह्मात्मकस्वतन्त्रवस्तुदर्शिनः देवमनुष्यदेहात्माभि-मानभिन्नधियो वा कर्मण्येव दृष्टिर्येषां, दुष्ट आशयोऽन्तःकरणं येषाम्, अनिशं परेषामुदयेन संपदा अर्पिता हृदि रुक् व्यथा येषाम्। अरुन्तुदा मर्मच्छेत्तारः दुरुक्तैः परान् तुदन्ति व्यथयन्ति तानेवंभूतान् दैवेनैव वधो येषां तान्, भवद्विधो निरुपमकरुणः मावधीत् मा हन्यात् ॥ ४७ ॥ ❀ ❀ प्रत्युत साधूनां वृत्तमालोच्यानुग्रहमेव कर्तुमर्हसीत्याह यस्मिन् देशे यदाकाले दुर्लंघ्यया पुष्कर-नाभस्य पद्मनाभस्य मायया मुष्टधियः मोहितचित्ताः पृथग्दृशो भवन्ति ज्ञानैकाकारतया एकरूपेप्यात्मनि देवमनुष्यादिभेददर्शिनः तथाऽब्रह्मात्मकत्वदर्शिनश्च भवन्तीत्यर्थः। तत्रापराधिषु साधवो ह्यनुकम्पया अन्तरमेव परदुःखासहिष्णुतया चित्तप्रकम्पेन कृपां कुर्वन्ति, न त्वक्रमम् अप्रियं, कुतः दैवबलात्कृतेर्थे मम दैवमेवंभूतं कोऽत्रापराधस्तेषामिति मत्वा कृपामेव कुर्वन्तीत्यर्थः ॥४८॥ ❀ ❀ अतो भवान् परमस्य पुंसः परमपुरुषस्य दुरन्तया मायया अस्पृष्टमतिः भगवत्प्रपन्नत्वेन अमोहितबुद्धिः, अत एव समस्तदृक् सर्वार्थदर्शी तया मायया हतात्मसु मोहितचित्तेषु अत एव अनुकर्मचेतस्सु कर्मानुगुणचित्तवृत्तिषु सापराधजनेषु अनुग्रहं कर्तुमर्हसि हे प्रभो! समर्थ! ॥४९॥ ❀ ❀ एवं सामान्येनोक्त्वा प्रस्तुतमाह कुर्विति त्रिभिः। हे मनो! रुद्र! त्वया हतस्य अत एवासमाप्तस्य प्रजापते-र्दक्षस्य अध्वरस्योद्धरणं पुनरुद्धारं कुरु कुर्याः, कस्य कुयाज्ञिकस्य दक्षस्य यत्राध्वरे भागिनः भागार्हस्य तव भागं न ददुः, येन त्वया हेतुना मखो न नीयते न समाप्यते, निनीयते इति पाठान्तरं, तदा किमर्थमध्वरोद्धरणाय मां प्रार्थयसे इत्यत्राह—मखो येन त्वया हेतुना निनीयते समाप्यते, यदपचारान्मखो विनष्टः पुनस्तस्यैव भवतोऽनुग्रहान्मखः समापनीय इति भावः ॥ ५० ॥ ❀ ❀ अयं यजमानो दक्षः जीवतात् जीवतु भगः अक्षिणी प्रपद्येत प्राप्नुयात् ॥५१॥ ❀ ❀ आयुधैरश्मभिश्च भग्नगात्राणाम् ऋत्विजां

देवानां च पुनर्भवता अनुगृहीतानां हे मन्यो ! अनातुरम् आरोग्यमाशु अस्तु ॥ ५२ ॥ ❀ ❀ भागश्च तवास्त्वित्याह एष इति । हे रुद्र ! यावदित्यर्थे यदित्यव्ययम् । अध्वरस्य यदुच्छिष्टः यज्ञे कृते यावानवशिष्टार्थस्तावानेष तव भागोऽस्तु । हे रुद्र ! यज्ञहन् भद्य अधुना तेनैव भागेन यज्ञः कल्प्यतां संकल्प्यताम् ॥ ५३ ॥

**इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रिकायां षष्ठोऽध्यायः ॥ ६ ॥**

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

भक्तद्वेषमसहमानेन शिवांतर्यामिणा दक्षयज्ञविनाशनमकारीति ध्वनयंस्तद्यज्ञसंधिकामस्तस्मिंस्तुष्टे शिवोऽपि तुष्टः स्यात्तस्य भक्तलक्षणत्वाच्छिवस्यासंभाव्यैर्गुणैः शिवांतर्यामिणं नरसिंहं स्तौति जाने त्वामिति । हे ईश ! अखंडैश्वर्य ! विश्वस्याखिलस्य जगतो योनिबीजयोर्मातृस्थानीयायाः शक्तेः प्रकृतेरुमायाः पितृस्थानीयस्य पुरुषशब्दवाच्यस्य शिवस्य च सकाशाद्यत्परमुत्तमं निरंतरं स्वगतभेदरहितं शिवशक्त्योः स्थित्वा मातृत्वपितृत्वलक्षणशब्दप्रवृत्तिनिमित्तापादकं त्वां जान इत्यन्वयः ॥ ४२ ॥ ❀ ❀ शिवशक्त्योर्योनिबीजत्वमौपचारिकं मुख्यं तु तदंतर्यामिणो हरेरेवेत्यभिप्रेत्याह त्वमेवेति । क्रीडयोर्णपट ऊर्णनाभिर्यथोर्णां सृजति तन्मध्ये क्रीडते च तां हरति तथा त्वं प्रतिमावत् स्वरूपयोः साक्षाद्रूपयोः शिवशक्त्योः स्थित्वा ताभ्यां कारणभूताभ्यां भगवंस्त्वमेवैतद्विश्वं सृजसि पासि रक्षस्यत्सि संहरसीत्यन्वयः । प्रसिद्धं परित्यज्याप्रसिद्धांतर्यामिकल्पनायां किं कारणमित्यत उक्तं शक्तेः शिवस्य च परमिति । न हि शिवशक्त्योः परः शिव इति वक्तुं युक्तं, प्रतीतिविरोधात् । तर्हि त्वमित्यादिप्रयोगप्रतीतेः का गतिरिति चेन्न, अन्तर्याम्यपेक्षया चरितार्थत्वम्, तदुक्तं 'क्रियन्ते स्तुतयोऽन्यत्र तदन्तर्याम्यपेक्षया । न जीवेषु गुणाः पूर्णा यथायोग्या हि तद्गताः ॥" इति "तद्वशत्वात्स्वरूपं तु विष्णोः सर्वमुदीर्यते । स्वरूपं स च सर्वस्य बिम्बत्वादेव तूच्यते । साक्षात्स्वरूपं मत्स्याद्या विष्णोर्नान्ये कथंचन । तस्मादन्यगता दोषा न तस्मिन्पुरुषोत्तमे ॥" इति वचनात् शिवादीनामस्वरूपत्वं मत्स्यादीनां साक्षात्स्वरूपत्वं च सिद्धं नापलपनीयमिति भावः ॥ ४३ ॥ ❀ ❀ दक्षयज्ञविनाशनं तदन्तर्यामिणा हरिणा कृतमिति प्रमाणेन ध्वनितं स्फुटयति त्वमेवेति । त्वमेव नान्यो धर्मार्थौ दोग्धीति धर्मार्थधुक् तेन धर्मार्थदुघा सूत्रेण प्रत्युत्थानाद्यकरणनिमित्तदोषसूचकेन दक्षेण हेतुना विसर्जिताध्वरः विनाशितयज्ञो भवसीति शेषः । सोऽपि गुण एवाभूदित्याशयेनाह अभिपत्तय इति । तस्य दोषस्याभिपत्तये प्रतीकाराय परिहाराय 'पाणिं मर्कटलोचनः' इत्यादिदोषसूचकेन दक्षेण यो यज्ञ उपक्रान्तस्तं त्वद्भक्तत्वेऽपि त्वद्भक्तद्वेषित्वात्तद्दोषपरिहाराय भक्तवत्सलस्त्वमेव नाशितवानित्यर्थः । दक्षोऽपि त्वद्भक्तश्चेत्तद्यागविनाशं किमकार्षीरित्यत आह त्वयैवेति । तत्तत्कर्मसु यानि यानि व्रतानि त्वया विहितानि तानि धारयन्तो ये ब्राह्मणा वेदशास्त्रपारगास्ते यान् सेतून् श्रद्धते मद्भक्तोऽपि स्वोत्तममद्भक्तद्वेषादिकं न कुर्यादित्यादिलक्षणधर्मसेतवो लोके वेदे च त्वयैवाऽवसिता निश्चित्य निर्णीता इत्यर्थः ॥ ४४ ॥ ❀ ❀ एवकारेण मन्वादिषु स्थित्वा वर्णाश्रमादिसंहितां विधत्स इति ध्वनितं स्पष्टयति कर्मणामिति । "मगेरलच्" अगिवगिमगिरगिलगिगत्यर्थाः, मगेरच् प्रत्ययो भवति संज्ञाविषये नुमागमश्चकारः स्वरार्थस्तेन मंगलमिति रूपं तस्य सम्बुद्धिर्हे मङ्गलेति हे मङ्गल विष्णो ! त्वञ्जीवलोके स्थित्वा मङ्गलानां पुण्यानाममङ्गलानामशुभानां च कर्मणां कर्त्तासि स्वयमन्यानपेक्षितस्तेषामुभयेषां कर्मणां फलं स्वर्गादिकमुल्बणन्तमिस्रं नरकादिकं च तनुषे स्वस्वयोग्यतानुसारेण विस्तृत्य ददासीत्यन्वयः । ननु नायं नियमो द्रढीयान् विपर्ययदर्शनादित्यत आह विपर्यय इति । केनचिद्भक्तद्वेषादिहेतुना कस्यचिदेव धर्मादेः फलविपर्ययः । न तु सर्वस्येत्यज्ञानां धर्मसूक्ष्मज्ञानं दुर्लभमिति भावः ॥ ४५ ॥ ❀ ❀ नन्वेवं तर्हि ब्रह्मणा हरौ रोषलक्षणदोषारोपः कृत इत्यागतमित्याशंक्य त्वद्भक्तानामप्यनुचितो रोषो नास्ति किमु तवेति भावेनाह न वा इति । त्वच्चरणार्पितात्मनां सर्वेषु भूतेष्वपि स्थितं तव त्वां पश्यतामात्मन्याधारतया भूतानि च पश्यतामेवापृथक् दिदृक्षतां यथार्थज्ञानेच्छूनां सतां प्रायेण तथा रोषो नाभिभवेद्यथा पशोरज्ञानिनोऽभिभवेदित्यन्वयः । अनेन रोषविषयेषु रोषः कर्तव्यो नान्यत्रातो न हरौ दोषारोपो ब्रह्मणा कृत इत्युक्तं भवति । 'चतुर्थ्यर्थे बहुलं छन्दसी'ति सूत्रात् द्वितीयादिचतुर्थ्यर्थे षष्ठी वर्तत इति विधानात्तवेत्यस्य द्वितीयार्थेषु युज्यते "विष्णवधीना जगत्सत्ता प्रतीतिश्चेष्टितं गतिः । इति यन्निश्चितं ज्ञानमपृथग् दर्शनं स्मृतम् ॥ मिथ्या ज्ञानं पृथग्ज्ञानमिति वेदविदो विदुः । यथैवार्थस्तथा ज्ञानमपृथग्दृष्टिरुच्यते" इति वचनात् अपृथग्दर्शनं नाभेदज्ञानं किन्तु यथावस्तुविज्ञानमिति ज्ञायते ॥ ४६ ॥ ❀ ❀ हननयोग्यापराधपुरुषविषये यो रोषः स कथं महतोऽपि नाभिभवेदित्याशंक्य सत्यं स्वदोषेण हन्यमानान्मावधीरिति प्रार्थयामह इति ज्ञापयति पृथग्दृश इति । ये पृथग्दृक्त्वादिदोषाकराः दुरुक्तैः परान्वितुदन्ति हे देव ! भवांस्तान्मा वधीदित्यन्वयः । पृथग्विधान् भिन्नप्रकारान् ज्ञानिलोकविलक्षणानित्यर्थः ॥ ४७ ॥ ❀ ❀ यद्यपि ब्रह्मविज्ञापनेन प्रसन्नस्य रुद्रान्तर्यामिणो हरेः क्षान्त्या रुद्रोऽपि क्षान्तो भवति तथापि रुद्रोऽपि पृथग्वाच्य इति धियाऽधुना दक्षाय कोपो न कर्तव्य इति रुद्रं वक्ति येऽस्मिन्निति । अस्मिन्लोके ये दक्षविधा जना दुर्लंघ्यया पुष्करनाभस्य मायया बन्धकशक्त्या स्पृष्टधियो यथैव पृथग्दृशोऽस्मिन्जने द्वेषादिकं कुर्वन्तीति यदा यस्मात्तस्मात्तत्र तेषु जनेषु भवादृशाः साधवोऽनुकम्पया हृदयद्रवीभावेन कृपां क्षमालक्षणोपकारं कर्तुमिच्छां कथं न कुर्वन्तीत्यन्वयः । "हृदयस्य द्रवीभाव-

स्त्वनुकम्पेति कथ्यते। उपकारं कर्तुमिच्छा कृपेत्याहुर्मनीषिणः" तेऽपि साधुष्वेव केचित्कुत एवं कुर्वन्तीति तत्राह देवेति। तादृग्विधिपूर्वकप्रबोधकस्य देवस्य हरेर्बन्धकशक्तिबलात्तथाकृता इति हेतुगर्भविशेषणं, हिशब्देन योग्यताविशेषं कथयति ॥ ४८ ॥ ❀ ❀ "विष्णुमाया हरेरिच्छा बंधशक्तिश्च तद्वशा। सर्वत्रगा हरेरिच्छा बन्धशक्तिर्ज्ञवर्जिता" इति वचनात् भवान् सर्वज्ञत्वेन बंधशक्तिस्पर्शाभावात्तेष्वेको न स्यात्। अतोऽस्मिन्नज्ञानिजनेऽनुग्रहं कर्तुमर्हतीत्याह भवानिति, हि-शब्दो हेत्वर्थः। तया बन्धकशक्त्या हतात्मसु नष्टबुद्धिगुणेषु अत एवानुकर्मचेतःसु हिंसालक्षणकर्मानुविष्टचित्तेषु दक्षादिष्विति शेषः, अरप्रष्टमतिः ॥ ४९ ॥ ❀ ❀ स्वबोधनेनांतर्यामिहरिप्रसादेन च प्रसादाभिमुखं रुद्रं प्रत्येतादृशोऽनुग्रहः कार्य इति वक्ति कुर्वध्वरस्येति। हतस्य त्वया कृतांतरायेणेति शेषः। अत एवासमाप्तस्याकृताऽवभृथस्नानादिनेति शेषः। मनोर्दक्षस्य कोऽयमध्वर इति तत्राह न यत्रेति। येन त्वया मखो निन्यग्भावेन नीचत्वेन नीयते तस्य भागिनो यज्ञभागार्हस्य तव कुत्सिता स्पर्धा एषामस्तीति कुस्पर्धिन ऋत्विजो देवा यत्र यज्ञे भागं विहितहविर्भागं न ददुस्तस्याध्वरस्य। यद्वा येन यज्ञभागयोग्येन त्वया मखो निकामं नीयते तस्य भागिनो देवा भागं यत्र न ददुस्तस्येति "नि न्यग्भावनिकामयोरि"ति यादवः ॥ ५० ॥ ❀ ❀ यजमानसद्भावे यागोद्धारः सम्भवति। तस्य मया हतत्वात् कथं नष्टाक्षाद्यवयवादीनां स्वभागनिरीक्षणं कथं चायुधाश्मभिर्भग्नगात्राणामृत्विजां होमाङ्गत्वमित्याशंक्य त्वदनुग्रहसुधासमुद्रमग्नाः सर्वसम्पन्ना भवन्त्वित्याह जीवतादित्यादिना ॥ ५१ ॥ ❀ ❀ अनातुरमारोग्यम् ॥ ५२ ॥ सर्वं निरवद्यं स्यात् यदि मम भागोऽस्ति चेदित्याशंक्य तवायमनुशोको माभूदित्याह एष त इति। उच्छिष्टः स्विष्टकृद्भागः "यदग्नये स्विष्टकृते समवद्यति भागधेयेनैव तद्रुद्रं समर्द्धयति सकृत्सकृदवद्यति सकृदिव हि रुद्र उत्तरार्धादवद्यत्येषां वै रुद्रस्य दिक् स्वायामेव दिशि रुद्रं निरवद्यते" इति श्रुतेः ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीविजयध्वजतीर्थपदरत्नावल्यां षष्ठोऽध्यायः ॥ ६ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तत्र शैवमतमाश्रित्य सर्वपरत्वेन स्तौति जाने इति। शैवाः खलु भगवत्प्रकृतिपुरुषान् सदाशिवरूपत्वेन मन्यन्ते, ततश्चायमर्थः। त्वां विश्वस्य प्राकृताऽप्राकृतलक्षणस्य सर्वस्यैवेशं सदाशिवरूपं जाने। यतो जगतः प्राकृतप्रपञ्चस्य योनिबीजयोः परं जाने। योनिबीजे एव क्रमेण व्यनक्ति शक्तेः शिवस्य चेति। तत्र केचिन्निर्भेदं ब्रह्म परमकारणत्वेन यन्मन्यन्ते तच्च त्वामेव जाने इत्याह यत्तदिति ॥ ४२ ॥ ❀ ❀ शिवशक्त्योरिति शिवशक्ती निमित्तीकृत्येत्यर्थः ॥ ४३ ॥ ❀ ❀ त्वमित्यस्य टीकायां निबद्धा इत्यत्र सूत्रेण तन्तुना निर्णीता इति सूत्रेण शास्त्रविशेषरूपेणेति ज्ञेयम् ॥ ४४ ॥ ❀ ❀ विपर्ययः केनेत्यत्र महापराधमहदुपासनस्वभावेनेति तत्त्वं ज्ञेयं वक्ष्यते च कुर्वध्वरस्येत्यादिना तदेवेत्यत्र तु देवेति पुण्यारण्यपाठान्तरम् ॥ ४५ ॥ ❀ ❀ न वै इति। आत्मनि परमात्मनि त्वयि अनन्यत्वेन पश्यताम् ॥ ४६ ॥ ❀ ❀ भवद्विधो भवानिति विशेषः ततो निरुपम इत्येवार्थः। यद्वा भवद्विधोऽपि किमुत भवानित्यर्थः ॥ ४७ ॥ ❀ ❀ ननु पुष्करनाभ एवेश्वरः अहं तु तद्भक्त एव तत्राह यस्मिन्निति द्वाभ्याम्। साधारणा अपि साधवः भगवत्पक्षे तेषां पृथग्दृशामेव दैवबलादिति ज्ञेयम् ॥ ४८ ॥ ❀ ❀ तुशब्दस्तेभ्यो वैशिष्ट्यबोधकः। अर्हसि त्वमिति शेषः ॥ ४९ ॥ ❀ ❀ कुयाजिन इति क्वचित् कुस्पर्द्धिन इति चित्सुखः ॥ ५०–५३ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे षष्ठोऽध्यायः ॥ ६ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

यद्यपि त्वं मां प्रणमसि तदपि परमेश्वरेणैक्यात्तवैश्वर्यमधिकमिति शैवमतमाश्रित्याह जाने इति। शैवाः खलु भगवत्प्रकृतिपुरुषान् सदाशिवरूपत्वेन मन्यन्ते ततश्चायमर्थः। त्वां विश्वस्य प्राकृताऽप्राकृतलक्षणस्य सर्वस्येशं सदाशिवरूपं जाने। यतो जगतः प्राकृतप्रपञ्चस्य योनिबीजयोः परं जाने। योनिबीजे एव क्रमेण व्यनक्ति शक्तेः शिवस्य चेति। यत्तत्प्रसिद्धं निरन्तरं निर्भेदं ब्रह्म तदपि त्वामेव जाने ॥ ४२ ॥ ❀ ❀ शिवशक्त्योः पुरुषप्रकृत्योः स्वरूपयोः स्वांशयोरिति पाठे शिवस्य स्वांशत्वात् शक्तेस्तच्छायारूपत्वात् तत्समानरूपयोः-तृतीयार्थे षष्ठी-ताभ्यां विश्वं सृजसि ॥ ४३ ॥ ❀ ❀ हे धर्मार्थदुघ! अभिपत्तये धर्मरूपार्थस्य प्रवर्त्तनाय दक्षेण दक्षरूपसूत्रेण अध्वररूपं वस्त्रं तन्तुवाय इव त्वं ससर्जिथ तथा लोके सेतवो वर्णाश्रमधर्ममर्यादाश्च त्वयैवावसिता निर्णीताः। अतो दक्षवधे सति सम्प्रति धर्मप्रवर्त्तकस्याभावात् धर्मस्य लोपे लोकस्य दुर्गतिः स्यादिति भावः ॥ ४४ ॥ कर्मफलदातापि त्वमेवेत्याह त्वमिति। हे मंगल! मंगलानां पुण्यानां कर्तुः स्वः स्वर्गलोकं तनुषे परं मोक्षं वा। असंगलानां पापानां कर्तुस्तमिस्रं नरकं तदेव तत्रैव केन हेतुना कस्यचिद्विपर्ययो भवेत्, पुण्यकर्तुरपि दक्षादेस्तमिस्रं पापकर्तुरप्यजामिलादेरपवर्गं इति त्वं पृच्छ्यसे इति भावः ॥ ४५ ॥ ❀ ❀ मम रोषप्रसादावेव तत्र हेतू इति चेन्मैवं तव प्रसाद एव, स भवेन्न तु रोष इति कैमुत्यन्यायेनाह न वा इति। तव त्वां आत्मनि परमात्मनि त्वयि अपृथग् अनन्यत्वेन यद्वा आत्मनि स्वस्मिन्नपृथग्

अभेदेन स्वस्मिन् सुखदुःखे इव भूतान्यपि सुखदुःखवन्ति दिदृक्षतां द्रष्टुमिच्छतामेव किमुत पश्यतां सतां सतः रोषोऽभिभवेत् यथा पशुम् अभिभवेदिति। पशव एव रोषवन्तो भवन्ति न तु सन्तः। प्रायेणेति जयविजयविषयकरोषवतां सनकादीनामिव दक्षविषयस्तव रोष आत्मारामस्याप्यभूदिति सूचयति॥ ४६॥ ❀ ❀ नन्वसत्सु रोषहेतुकसमुचितशास्तिप्रदानेन विना कृतानामागसां फलाऽप्राप्त्या सर्वे एवासन्तो भवेयुस्तत्राह पृथग्धिय इति। परोदयेन परसम्पद्दृष्ट्या अरुन्तुदा मर्मभेत्तारः दैवेनैव वधो येषामिति स्वापराधेनैव ते दक्षादयो मरिष्यन्ति तन्मावधीरिति युष्मत्कोपविषयीभूतत्वे तेषां कदाप्युद्धारो न भावीति भावः॥ ४७॥ ❀ ❀ सर्वसहनशीला अपि साधवः परदुःखासहिष्णवः स्युरतस्ते स्वापराधिनोऽपि दयन्त एवेत्याह। यस्मिन् देशे यदा वा काले स्पृष्टधियः अभिभूतबुद्धयः कुर्वंति दुष्कृतमिति शेषः। तत्र तेषु अनुकम्पया कृपालुत्वस्वभावेन कृपामेव कुर्वंति न तु तेषु दैवेनैव बलात्कृते दुःखदानार्थं बलात्कारे कृते सति क्रमं पराक्रमम्॥ ४८॥ ❀ ❀ तव तु साधुचूडामणेः कोपो नैव सम्भवेदित्याह भवांस्त्विति। अस्पृष्टमतिः अतः समस्तदृक् तेषामपराधफलं महादुःखं पश्यस्येवेति भावः। तेष्वनुग्रहप्रकारमाह तया हतात्मस्विति। अनुकर्मचेतःस्विति तस्मिन्निति। एते खलु मायया हतबुद्धयः कथं विवेकं लभन्तां नानाकर्मग्रस्तमनसः कथं वा साधून् पश्यंत्वित्यत एतेषु मम दयैवोचितेति॥ ४९॥ ❀ ❀ तर्हि सम्प्रति किं कर्त्तव्यं तद्ब्रूहीत्यत आह कुर्विति। त्वया हतस्य अत एवासमाप्तस्य प्रजापतेरध्वरस्य हे मनो! यत्राध्वरे भागिनोऽपि तव भागं न ददुः येन फलदात्रा त्वया मखो निर्नीयते फलं प्राप्यते॥ ५०-५१॥ ❀ ❀ हे मन्यो! अनातुरमारोग्यमस्तु॥ ५२॥ ❀ ❀ एष ते भागोऽस्तु यत् उच्छिष्टः उत्कृष्टः शिष्टोऽवशिष्टोऽर्थः तेन ते भागेन यज्ञः कल्पतां सम्पद्यताम्॥ ५३॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। षष्ठोऽध्यायश्चतुर्थस्य सङ्गतः सङ्गतः सताम्॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

जाने इति। विश्वस्येशं त्वामहं जाने वेद्मि। ननु विश्वस्रष्टारमात्मानं किं तथा जानासि नेत्याह–परं मत्तोऽन्यं किं शिवं नेत्याह शक्तेः शिवस्य च परं किं प्रकृतिप्रेरकम् इत्यत्राह जगतः सर्वप्रपंचस्य योनिबीजयोः प्रकृतितत्प्रेरकयोः परं मूलमित्यर्थः। प्रकृतिस्तत्प्रेरकः पुरुषश्च तयोर्मूलभूतो भगवांश्च त्वत्तः पुमान् समधिगम्य ययास्य वीर्यं धत्ते महान्तमित्यादौ प्रसिद्धः। कस्तमाह स ईश्वर इत्यत्राह यद्ब्रह्म सर्ववेदैकवेद्यं तत् 'सर्वे वेदा यत्पदमामनन्ति सर्वे वेदा यत्रैकीभवन्ति। वेदैश्च सर्वत्र सर्वं च मयि पश्यति। सर्वस्य चाहं हृदि सन्निविष्टः।' इत्यादिश्रीमुखवचनात् सर्वगम्॥ ४२॥ ❀ ❀ ननु सत्या स्वपितृयज्ञे देहत्यागः कृतस्ततः क्रुद्धेन शिवेन दक्षयज्ञनाशः कृतस्तं शिवं विहाय किं मां स्तौषीत्यत्र त्वमेव सर्वविश्वसृष्टिसंहारादिहेतुः शिवशक्तिद्वारा दक्षयज्ञ-विनाशादिहेतुः दक्षद्वारा यज्ञप्रवृत्तिहेतुः भुक्तिमुक्तिहेतुश्चेत्याह त्वमेवेति त्रिभिः श्लोकैः। हे भगवन्! त्वमेव विश्वं सृजसि पासि अत्सि यथा ऊर्णपटः ऊर्णनाभिः "यथोर्णनाभिः सृजते गृह्णते च" इति श्रुतेः। एवं सति स्वरूपयोः स्वस्मात्सर्वकारण-कारणाद्रूपं यतोस्तयोः स्वांशयोः शिवशक्त्योः भवभवान्योः संबंधि एतत् प्रस्तुतं दक्षयज्ञविनाशादि त्वमेव करोषीति शेषः। अतः स्वांशभूतशिवद्वारा यज्ञस्योद्धरणं कुरु इति भावः॥ ४३॥ ❀ ❀ धर्मार्थौ दोग्धीति धर्मार्थदुघा त्रयी तस्या अभिपत्तये रक्षायै दक्षेण सूत्रेण निमित्तेन अध्वरं ससर्जिथ सृष्टवानसि। अतस्त्वमेव शिवद्वारा दक्षशिरः-संयोजनं दक्षेण अध्वरोद्धारं च कुर्विति भावः। किंच वर्णाश्रमधर्ममर्य्यादारूपाः सेतवस्त्वयैवाऽवसिताः निर्धारिताः यान् ब्राह्मणाः श्रद्धधतेऽनुतिष्ठंति। अतः शिवद्वारा श्मश्रुयोजनादिना भृग्वादिब्राह्मणस्वास्थ्यं कुर्विति भावः॥ ४४॥ ❀ ❀ किंच दक्षेण महति पुरुषे शिवे कन्यादानमात्रेण शिष्यबुद्धिः कृता। भवान्या पत्याज्ञालोपः कृतः। भवेन प्रवृत्तिकर्मपरेषु प्रविश्यापि लोकसंग्रहार्थं प्रत्युत्थानादिना श्वशुरः पितृतुल्यो नादृतः। अतः शिरश्छेददेहत्याग-प्रियावियोगादितत्तत्कर्मफलदस्त्वमित्याशयेन स्तौति त्वमिति। के परे ब्रह्मणि सर्वकर्मफलदे त्वयि सति "को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे" इति कोशात् कस्यचिदपि कर्तुर्विपर्ययो नैव भवति शुभाशुभकर्मवैपरीत्यं नैव भवति "अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभमि"ति वाक्यात्। यत्तु "तत्र केन हेतुना तदेव तस्मिन्नेव कस्यचिद्विपर्य्ययो भवति" इति व्याख्यानं तदयुक्तम् उक्तवाक्यविरोधात् "न हि कल्याणकृत् कश्चिद्दुर्गतिं तात! गच्छति" इति श्रीमुखवचनविरोधाच्च क्वचित्प्रसिद्धाशुभकारिणः शुभफललाभः केनापि शुभकर्मणैव, प्रसिद्धशुभकारिणः अशुभफललाभः केनाप्यशुभकर्मणैवेति विद्वद्भिः सिद्धान्तितत्वाच्च तत्तस्मात् हे मंगल! मंगलानां शुभानां कर्तुः सकामस्य निष्कामस्य वा स्वः स्वर्गं परं मोक्षं वा तनुषे यथेति वाचकलुप्तोपमालंकारः तथा अमंगलानामशुभानां कर्मणां कर्तुरुल्बणं घोरं शिरश्छेददेहत्यागादिरूपं फलम् अत्यंतामंगलकर्तुश्च तमिस्रं पुनः पुनर्जन्ममरणलक्षणं तमिस्रं संसारं तनुष इत्यन्वयः॥ ४५॥ ❀ ❀ एवं शिवान्तर्यामिणं नियोजकं भगवन्तं स्तुत्वाऽथ त्वमध्वरस्योद्धरणं कुर्वित्यादि वक्तुं नियोज्यभूतं शिवं स्तौति न वै सतामिति चतुर्भिः। भूतेषु अभिपश्यतामात्मानमिति शेषः। भूतानि च आत्मनि जगत्कारणभूते जिज्ञास्ये "आत्मा वा अरे द्रष्टव्य" इत्यादिश्रुतिप्रसिद्धे दिदृक्षतां कथं दिदृक्षताम् अपृथक् कारणानन्यतया कार्यकारणयोर्भेदाभेदसंबन्धाद् एवंभूतानां त्वच्चरणार्पितात्मनां क्रोधो नाभिभवेत् यदा तदा तव नाभिभवेदिति किं पुनर्वक्तव्यम्।

द्वितीयार्थे षष्ठी, एवं सर्वस्य कारणानन्यत्वदर्शित्वेन त्वदीयान् त्वां च क्रोधो नाभिभवेत् तमोगुणाधिष्ठातृत्वेन प्रयोजनार्थं क्रोधाभिभूतत्वविडम्बनमपि युक्तमेवेति सूच्यते प्रायःशब्देन, यथा पशुं सर्वस्य कारणानन्यत्वमजानन्तं केवलभेददर्शिनमित्यर्थः ॥ ४६ ॥ ❀ ❀ अत एव तत्त्वज्ञान् पशून् प्रति क्रोधं मा कुर्य्यादित्याह पृथगधिय इति। कर्मसु दृष्टिर्येषाम्, दुष्ट आशयो येषाम्, अनिशं निरन्तरं परेषामुदयेनोत्कर्षेणार्पिता हृदि रुग् येषां तान् अरुन्तुदः मर्मच्छेत्तॄन् दैवेनैव वधो येषां तान् पृथगदृशः अतत्त्वज्ञान् दक्षनिभान् भवद्विधस्तत्त्वज्ञः मावधीत् मा हन्यात् ॥ ४७ ॥ ❀ ❀ पुष्करनाभस्य विष्णोर्मायया हि स्पृष्टधियः यस्मिन् काले यदा यस्मिन् देशे पृथग्दृशो भवन्ति साधुषु इतरबुद्ध्याऽपराधं कुर्वन्तीत्यर्थः। तत्र तस्मिन्नेव काले तस्मिन्नेव देशे साधवः अस्मद्दैवबलात्तैः कृतेऽपराधे तेषां न दोष इति मत्वानुकंपया कृपां कुर्वन्ति, न तु क्रमं पराक्रमम् ॥ ४८ ॥ ❀ ❀ परमस्य विष्णोर्मायया भवांस्तु अस्पृष्टमतिः अदूषितबुद्धिः, अत एव समस्तदृक् अखंडितदृष्टिः तया मायया हृतात्मसु नष्टमतिषु अत एव अनुकर्मचेतःसु कर्मानुगतचित्तेषु इहापराधे अनुग्रहमेव कर्तुमर्हसि ॥ ४९ ॥ ❀ ❀ हे मनो ! तव भागिनः भागार्हस्यापि कुयज्विनः अदीर्घदर्शिनो याज्ञिकाः यज्ञाध्वरे भागं न ददुः। तेनैवापराधेन त्वया हतस्यात एवासमाप्तस्याध्वरस्योद्धरणं कुरु येनोद्धरणेन मखो निनीयते सफलीक्रियते ॥ ५० ॥ ❀ ❀ पूर्ववत् भवतु ॥ ५१ ॥ ❀ ❀ आयुधैः अश्मभिश्च भग्नगात्राणां हे मन्यो ! अनातुरं स्वास्थ्यम् ॥ ५२ ॥ ❀ ❀ हे रुद्र ! एष ते भागोऽस्तु कः यावदर्थं यदित्यव्ययम् अध्वरस्य यद् उच्छिष्टः अध्वरे कृते यावानवशिष्टोऽर्थस्तावान् हे यज्ञहन् ते भागेन अद्याधुना यज्ञः कल्पतां संपद्यताम् ॥ ५३ ॥

**इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे षष्ठाध्यायार्थप्रकाशः ॥ ६ ॥**

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

तर्हि प्रकृतिपुरुषयोरेव कारणत्वमागतम्, नेश्वरस्य, तज्जनकत्वेन कुलालपितृवदन्यथासिद्धत्वादित्याशङ्क्याह—त्वमेवेति। हे भगवन्निति सम्बोधनेनैश्वर्यादिषड्गुणवत्त्वात्तवैव सृष्ट्यादिकरणे सामर्थ्यमस्ति नान्यस्येति सूचयति। स्वरूपयोः स्वांशभूतयोः शिवशक्त्योरन्तः स्थितः क्रीडन् त्वमेवैतद्विश्वं सृजसि पासि अत्सि संहरस इत्यन्वयः। ननु सहायान्तरं विना साधनान्तरं च विना कथमेकेन सर्वभेदशून्येनेश्वरेण विश्वसृष्ट्यादिकरणं संभवतीत्याशङ्क्य दृष्टान्तेन संभावयति—ऊर्णपटो यथेति। ऊर्णपटः ऊर्णनाभिः कीटविशेषः स यथा सहायान्तरं साधनान्तरं च विना स्वस्मादेवोर्णां सृजति तत्र विहरति पुनः संहरते च तथेत्यर्थः ॥ ४२ ॥ ❀ ❀ एवं महदादिरूपप्रपञ्चसृष्ट्यादिकारणत्वमुक्तम्, इदानीं वेदादिनामसृष्ट्यादिद्वारा तत्तद्धर्ममर्यादापि त्वयैव कृतेत्याह—त्वमेवेति। धर्ममर्थं च दोग्धि या वेदत्रयी तस्या अभिपत्तये संरक्षणाय सूत्रेण निमित्तभूतेन दक्षेण कृत्वा तदन्तर्यामी त्वमेवाध्वरं ससर्जिथ प्रवर्तितवानसि। न केवलमयमेव यज्ञस्त्वया प्रवर्तितः, किंत्वन्येपि सर्वे सेतवो वर्णाश्रमादितत्तन्मर्यादा त्वयैव शास्त्रप्रवर्त्तकेन लोके वसिताः निबद्धाः यान् धृतव्रताः सन्तो ब्राह्मणाः श्रद्दधते श्रद्धयानुतिष्ठन्ति ॥ ४३ ॥ ❀ ❀ ईश्वरत्वात्तत्कर्मफलदातापि त्वमेवेत्याह—त्वमिति। हे मङ्गल ! मङ्गलानां शुभानां कर्मणां कर्तुः लोकं कामिनां स्वर्गादिलोकं निष्कामानां परं पदं सायुज्यादिमोक्षं वा तनुषे विस्तारयसि ददासीत्यर्थः। तथा अमङ्गलानां पापकर्मणां कर्तुश्चोल्बणं घोरं तमिस्रं नरकं तनुषे। ननु तदा दक्षस्य कथं शुभे कर्मणि विपर्ययो जात इति शङ्कानिरासार्थमाह—विपर्यय इति। केनचित्प्रबलेन निमित्तेन तदेव तस्मिन्नेव कर्मणि कस्यचित् फलविपर्ययोपि भवति। यथा दक्षस्याभिमानात्तव भागनिराकरणेन, यथा च शिशुपालादेर्निषिद्धभगवन्निन्दादि कुर्वतोपि जन्मत्रयानुगुणितध्यानवशात्तत्सायुज्यप्राप्तिरित्यर्थः। हे मङ्गल इत्यनेनेश्वरस्य परमानन्दरूपस्य न शुभाशुभकर्मलेपगन्धोपीति सूचितम्। नास्मिन्निरूपितेर्थे कश्चित्सन्देहः शास्त्रसिद्धत्वादित्याह—स्मेति। तथाच दक्षापराधेनैव तद्विपर्ययो न कश्चित्तवापराध इति भावः ॥ ४४ ॥ ❀ ❀ ननु रुद्रेणैव दोषेण वीरभद्रादिद्वारा कृतस्य दक्षादिनाशस्य प्रत्यक्षत्वात्कथं न तस्यापराध इति देवादीनां शङ्कां मनसि निधाय तां निवर्त्तयन् यथा दोषं प्राणिशिक्षादण्डं विदधतोपीश्वरस्य न दुष्टत्वं रोषाद्यसंभवादित्यभिप्रेत्य तत्र तदसंभवं कैमुत्यन्यायेनाह—न वा इति। सतां सदाचाराणां परोपकारपराणाम्। कथं तेषां परोपकारकर्तृत्वमित्याकाङ्क्षायामाह—त्वच्चरणेति। त्वच्चरणे अर्पितः स्थिरीकृत आत्मा मनो यैस्तेषां सर्वेषु भूतेषु स्थावरजङ्गमेषु तवात्मानमभितो व्यापकतया पश्यतां भूतानि चात्मनि त्वयि स्वस्मिन् वा पश्यतामेवमपृथग्दिदृक्षतां भेददर्शनरहितानामिच्छार्थकः सन्प्रत्ययो न विवक्षितः, पश्यतामित्यनेन विरोधात्। यद्वाऽपृथग्दिदृक्षतां मुमुक्षूणां चेत्यर्थः। त्वद्भक्ताः सर्वत्र त्वां पश्यन्तः सर्वसंमानमेव कुर्वन्तीति भावः। वा इत्येवकारार्थे। एवंभूतानां सतां प्रायेण रोषो नैवाभिभवेत् स्ववशीकृत्यानुचितं नैव कारयेदित्यर्थः। वैधर्म्येण दृष्टान्तमाह—यथा पशुमिति। त्वच्चरणारविन्दाद्विमुखं पशुतुल्यमज्ञं जनं रोषो यथा वशीकृत्याकार्यं कारयति तथैतान्नैव कारयेदित्यर्थः। एवं रोषवशत्वाभावेपि कदाचिद्धर्मबाधे प्राप्ते शिक्षार्थं तेषामपि रोषोद्भवसंभवात्प्रायग्रहणम्। तथाच त्वया रोषेण यज्ञादिनाशः कृत इति तु दूरापास्तमिति भावः ॥ ४५ ॥ ❀ ❀ एवमीश्वरत्वेन स्तुत्वेदानीमुपाधिवैशिष्ट्यमङ्गीकृत्य भगवद्भक्तत्वेन स्तुवंस्तदनुग्रहं प्रार्थयते—पृथग्धिय इति त्रिभिः। तत्रादौ पूर्वोक्तपशुतुल्यानेव दर्शयति। पृथग्धियः जीवेश्वरयोः परस्परं जीवेषु च भेददर्शिनः। अत एव कर्मण्येव दृष्टिस्तत्तत्पुरुषार्थसाधनबुद्धिर्येषां भगवद्भजने तथा बुद्धिरहिता भगवद्विमुखाः। अतो विषया-

विष्टत्वाद् दुष्टो मलिन आशयो येषां ते तथा। अत एव परेषां भगवद्भक्तानां तदनुग्रहेण समृद्धानामुदयेन समृद्ध्या तद्दर्शनमात्रेण अर्पिता हृदि रुक् पीडा येषां स्वार्थं तत्संपादनेऽशक्तानां ते तथा। भगवद्विमुखानां दुष्टानां स्वभावत एव सर्वदा पीडा भवतीत्याह—अनिशमिति। एवं सदा पीडिता अपि पुनरधिकपीडासाधनमेवानुतिष्ठन्ति न श्रेयःसाधनमित्याशयेनाह—परानिति। परान् भगवद्भक्तांस्तदैश्वर्यमसहमाना दुरुक्तैर्वितुदन्ति अतिशयेन व्यथयन्ति। तदपि तेषां स्वाभाविकमेवेत्याशयेनाह—अरुन्तुदा इति। मर्मभेत्तार इत्यर्थः। अतो दैवेन स्वप्रारब्धकर्मणैव वधो येषां तान् भवद्विधो निरुपमो भगवद्भक्तो मावधीत् नैव हन्ति। समर्थोऽप्युपेक्षत इत्यर्थः॥ ४६॥ ❀ ❀ एवं भेददर्शनादिदोषदुष्टैरसद्भिरपराधे कृतेपि साधूनामुपेक्षा भवतीति प्रदर्शितमिदानीमसतां सर्वतो बलिष्ठो दोषो भगवतो मायेति प्रदर्शयंस्तन्मोहितैरपराधे कृतेऽपि साधवस्तु प्रत्युतानुग्रहमेव कुर्वन्तीत्याह—यस्मिन्निति। पुष्करं कमलं ब्रह्माण्डात्मकं नाभौ यस्य तस्य श्रीनारायणस्य भगवतः सर्वकारणस्य मायया मोहनशक्त्या दुरन्तया "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति वाक्यात् भगवदनुग्रहं विना तर्तुमशक्यया स्पृष्टा व्याप्ता मोहिता धीर्येषां भगवद्विमुखानां ते यस्मिन् देशे यदाकाले पृथग्दृशो भेददर्शिनः सन्तो भगवद्भक्तानां साधूनामपराधं कुर्वन्तीति शेषः, तत्र तदाकाले तस्मिन् देशे दुर्जनेषु ते साधवो भगवद्भक्ता अनुकम्पया हृदयद्रवीभावेन कृपां क्षमापूर्वकोपकारमेव कुर्वन्ति, क्रमं तन्नाशार्थं स्वपराक्रमं न कुर्वन्तीत्यर्थः। कुत एवमित्याशङ्क्य तेषां विवेकित्वादित्युत्तरमभिप्रेत्य विवेकित्वमेव दर्शयति—दैवबलात्कृत इति। मम दैवशब्दवाच्यप्रारब्धवशादेवैतैरेवं कृतमत एतेषां कोपराध इति मत्वा तेषां दुराचारदर्शनेन तत्फलस्य नरकपातादेरवश्यं भावित्वेन दुरन्तं दुःखं विचार्यानुकम्पितचित्तास्तद्दोषनिवृत्तये भगवद्वाक्याद्युपदेशेनानुग्रहमेव कुर्वन्तीति भावः। हीति निश्चितमेतन्नात्र संशयः। न च पूर्वं प्रकृतिपुरुषपरत्वेन परब्रह्मत्वं शिवस्योक्त्वेदानीं कथं तस्य जीववद्भगवद्भक्तत्वं वदति, कथं वा भगवन्मायास्पर्शराहित्यं वक्ष्यमाणं संगच्छते? नहि स्वमायया स्वस्य मोहः संभवति पूर्वापरविरोधादिति शङ्कनीयम्, कार्यार्थं स्वकृतस्य गुणस्य स्वतन्त्रे परमेश्वरे स्वातन्त्र्यानन्दैश्वर्यादिगुणतिरोधानात्कर्तृत्वाच्छुद्धत्वमभिप्रेत्य पूर्वापरब्रह्मत्वोक्तिरिदानीमुपाधिवैशिष्ट्यमभिप्रेत्य च सत्त्वस्योत्कृष्टत्वात्तदुपाधेर्भगवतो विष्णोरुत्कृष्टत्वोक्तिस्तमसोपकृष्टत्वात्तदुपाधेः शिवस्य तत्सेवकत्वोक्तिश्च संगच्छत इति ध्येयम्॥ ४७॥ एवं भगवद्भक्तानामाचरणं निरूप्येदानीं भवांस्तु सर्वभक्तशिरोमणिरतो दक्षादिष्ववश्यमेवानुग्रहः कर्त्तव्य इत्याह—भवांस्त्विति। तुशब्देन न भवत्सदृशोन्यो भगवद्भक्तोस्तीति सूचितम्। भवांस्तु परमस्य पुंसः पुरुषोत्तमस्य दुरन्तया अचिन्त्यप्रभावया मायया अस्पृष्टमतिः अमोहितचित्तः, अत एव समस्तदृक् समस्तं तत्तत्कार्याकार्यप्राण्यभिप्रायादिजगज्जातं पश्यति जानातीति सर्वज्ञः, अत एव तया भगवच्छक्तिरूपया मायया हतात्मसु मोहितचित्तेषु अत एव अनुकर्मचेतस्सु तत्तत्पुरुषार्थसाधनत्वेन अनुगतमासक्तं कर्मस्वेव चेतो येषां तेषु दक्षादिषु इह एवमपराधेन विनाशे जातेप्यनुग्रहं कर्तुं त्वमर्हसि। ननु भावित्वेन विनाशस्य जातत्वात्कथमिदानीं मयानुग्रहः कर्तुं शक्यत इत्याशङ्क्य सर्वसमर्थस्य तव न किञ्चिदशक्यमिति सूचयन्संबोधयति—हे प्रभो इति॥ ४८॥ ❀ ❀ एवं स्तुत्वा सामान्यतोनुग्रहं प्राार्थ्य को वानुग्रहो मया सम्पादनीय इत्यपेक्षायां विशेषतोऽनुग्रहं प्रदर्शयन् प्रार्थयते—कुर्विति चतुर्भिः। भो मनो! त्वया हतस्य वीरभद्रादिद्वारा विनाशितस्य अत एव मध्ये विनाशितत्वादसमाप्तस्य प्रजापतेर्दक्षस्याध्वरस्योद्धरणं सर्वाङ्गसंपत्त्या प्रवर्त्तनेन समाप्तिं त्वं कुर्वित्यन्वयः। नन्वभिमानादिदोषेणैव यज्ञस्य नष्टत्वात्त्वया हतस्येति मम दोषः कथमुच्यत इत्याशङ्क्य लोकप्रवादेन तथोक्तम्, वस्तुतस्तु तद्दोष एवेत्याह—न यत्रेति फलेन यस्मिन् यज्ञे कुयज्वनः असूयादिदोषयुक्ता याज्ञिका भागिनो भागार्हस्यापि तव भागं न ददुः। भागार्हत्वमेवाह—येन त्वया मखो निनीयते फलेन संयोज्यते तस्य फलदातुस्तव भागमिति संबन्धः। भो मनो इति संबोधनेन मननशीलत्वात् विचार्य शिवेन दक्षयज्ञो हत इत्यनभिज्ञजनापवादः पाक्षिकोपि यज्ञोद्धरणेनावश्यं परिहर्त्तव्य इति सूचयति॥ ४९॥ ❀ ❀ ननु यजमानस्य दक्षस्य मृतत्वात् ऋत्विजां भागभाजां देवानां च विकलाङ्गत्वात् कथं यज्ञोद्धारः कर्तुं शक्य इत्याशङ्क्य भवदनुग्रहमात्रेण सर्वं सेत्स्यतीत्याह—जीवतादिति द्वाभ्याम्। यजमानोयं दक्षो जीवतात्। भगः अक्षिणी नेत्रे प्रपद्येत प्राप्नोतु। भृगोः श्मश्रूणि आरोहन्तु। पूष्णो दन्ताश्च पूर्ववत् आरोहन्त्वित्यन्वयः॥ ५०॥ ❀ ❀ हे मन्यो आयुधाश्मभिः आयुधैः खड्गादिभिः पाषाणैश्च भग्नानि गात्राणि येषां देवानामृत्विजां च भवतानुगृहीतानामाशु शीघ्रमेवानातुरं यथापूर्वमवयवसंपत्त्या स्वास्थ्यमस्तु॥ ५१॥ ❀ ❀ ननु तथापि मम भागं विना कथं यज्ञस्य साङ्गतासिद्धिरित्याशङ्क्य तव भागं त्वहं कल्पयामीत्याह—एष इति। हे रुद्र! अध्वरस्य यदुच्छिष्टः यज्ञे समाप्ते यावानवशिष्टः पदार्थस्तावान् सर्वोप्येष ते तव भागोस्तु। हे रुद्र हे यज्ञहन्! तेन तव भागेनाद्य शीघ्रमेव यज्ञः कल्पतां संपद्यताम्। सम्बोधनत्रयेण देवान् भीषयन् यदि पुनरेवं तवापमानमेते करिष्यन्ति तदा पुनरेवं दण्डकरणे त्वं समर्थ एवातो न तव कापि क्षतिरिति सूचयति॥ ५२॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥
रचिता तत्र तुर्येऽस्मिन्स्कन्धे धर्मनिरूपणे॥ षष्ठोपि विवृतोऽध्यायः पूर्वाङ्गविनिरूपकः॥ ३॥

भाषानुवादः

श्रीब्रह्माजीने कहा—देव ! मैं जानता हूँ, आप सम्पूर्ण जगत् के स्वामी हैं, क्योंकि विश्वकी योनि शक्ति ( प्रकृति ) और उसके बीज शिव ( पुरुष ) से परे जो एकरस परब्रह्म है, वह आप ही हैं ॥ ४२ ॥ ❀ ❀ भगवन् ! आप मकड़ीके समान ही अपने स्वरूपभूत शिव-शक्तिके रूपमें क्रीडा करते हुए लीलासे ही संसारकी रचना, पालन और संहार करते रहते हैं ॥ ४३ ॥ ❀ ❀ आपने ही धर्म और अर्थकी प्राप्ति करानेवाले वेदकी रक्षाके लिये दक्षको निमित्त बनाकर यज्ञको प्रकट किया है। आपकी ही बाँधी हुई ये वर्णाश्रमकी मर्यादाएँ हैं, जिनका नियमनिष्ठ ब्राह्मण श्रद्धापूर्वक पालन करते हैं ॥ ४४ ॥ ❀ ❀ मङ्गलमय महेश्वर ! आप शुभ कर्म करनेवालोंको स्वर्गलोक अथवा मोक्षपद प्रदान करते हैं तथा पापकर्म करनेवालोंको घोर नरकोंमें डालते हैं। फिर भी किसी-किसी व्यक्तिके लिये इन कर्मोंका फल उल्टा कैसे हो जाता है ? ॥ ४५ ॥ ❀ ❀ जो महानुभाव आपके चरणोंमें अपनेको समर्पित कर देते हैं, जो समस्त प्राणियोंमें आपकी ही झाँकी करते हैं और समस्त जीवोंको अभेददृष्टिसे आत्मामें ही देखते हैं, वे पशुओंके समान प्रायः क्रोधके अधीन नहीं होते ॥ ४६ ॥ ❀ ❀ जो लोग भेदबुद्धि होनेके कारण कर्मोंमें ही आसक्त हैं, जिनकी नीयत अच्छी नहीं है, दूसरोंकी उन्नति देखकर जिनका चित्त रात-दिन कुढ़ा करता है और जो मर्मभेदी अज्ञानी अपने दुर्वचनोंसे दूसरोंका चित्त दुखाया करते हैं; आप जैसे-महापुरुषोंके लिये उन्हें भी मारना उचित नहीं है; क्योंकि वे बेचारे तो विधाताके ही मारे हुए हैं ॥ ४७ ॥ ❀ ❀ देवदेव ! भगवान् कमलनाभकी प्रबल मायासे मोहित हो जानेके कारण यदि किसी पुरुषकी कभी किसी स्थानमें भेदबुद्धि होती है, तो भी साधुपुरुष अपने परदुःखकातर स्वभावके कारण उसपर कृपा ही करते हैं; दैववश जो कुछ हो जाता है, वे उसे रोकनेका प्रयत्न नहीं करते ॥ ४८ ॥ ❀ ❀ प्रभो ! आप सर्वज्ञ हैं, परम पुरुष भगवान्की दुस्तर मायाने आपकी बुद्धिका स्पर्श भी नहीं किया है। अतः जिनका चित्त उसके वशीभूत होकर कर्ममार्गमें आसक्त हो रहा है उनके द्वारा अपराध बन जाय, तो भी उनपर आपको कृपा ही करनी चाहिये ॥ ४९ ॥ ❀ ❀ भगवन् ! आप सबके मूल हैं। आप ही सम्पूर्ण यज्ञोंको पूर्ण करनेवाले हैं। यज्ञभाग पानेका भी आपको पूरा अधिकार है। फिर भी इस दक्षयज्ञके बुद्धिहीन याजकोंने आपको यज्ञभाग नहीं दिया। इसीसे यह आपके द्वारा विध्वस्त हुआ। अब आप इस अपूर्ण यज्ञका पुनरुद्धार करनेकी कृपा करें ॥ ५० ॥ ❀ ❀ प्रभो ! ऐसा कीजिये, जिससे यजमान दक्ष फिर जी उठे, भगदेवताको नेत्र मिल जायँ, भृगुजीके दाढ़ी, मूँछ आ जायँ और पूषाके पहलेके ही समान दाँत निकल आयें ॥ ५१ ॥ ❀ ❀ रुद्रदेव ! अस्त्र-शस्त्र और पत्थरोंकी बौछारसे जिन देवता और ऋत्विजोंके अङ्ग-प्रत्यङ्ग घायल हो गये हैं, आपकी कृपासे वे फिर ठीक हो जायँ ॥ ५२ ॥ ❀ ❀ यज्ञ सम्पूर्ण होनेपर जो कुछ शेष रहे, वह सब आपका भाग होगा। यज्ञविध्वंसक ! आज यह यज्ञ आपके ही भागसे पूर्ण हो ॥ ५३ ॥

इति षष्ठोऽध्यायः ॥



# अथ सप्तमोऽध्यायः

### मैत्रेय उवाच

इत्यजेनानुनीतेन भवेन परितुष्यता। अभ्यधायि महाबाहो प्रहस्य श्रूयतामिति ॥ १ ॥

### श्रीमहादेव[1] उवाच

नाघं [2]प्रजेश बालानां वर्णये नानुचिन्तये। देवमायाभिभूतानां दण्डस्तत्र[3] धृतो मया ॥ २ ॥
प्रजापतेर्दग्धशीर्ष्णो भवत्वजमुखं शिरः। मित्रस्य चक्षुषेक्षेत भागं स्वं बर्हिषो भगः ॥ ३ ॥
पूषा तु यजमानस्य दद्भिर्जक्षतु[4] पिष्टभुक्। देवाः प्रकृतसर्वाङ्गा ये म उच्छेषणं ददुः ॥ ४ ॥
बाहुभ्यामश्विनोः पूष्णो हस्ताभ्यां कृतबाहवः। भवन्त्वध्वर्यवश्चान्ये बस्तश्मश्रुर्भृगुर्भवेत् ॥ ५ ॥

### मैत्रेय उवाच

तदा सर्वाणि भूतानि श्रुत्वा मीढुष्टमोदितम्। परितुष्टात्मभिस्तात साधु साध्वित्यथाब्रुवन् ॥ ६ ॥
ततो मीढ्वांसमामन्त्र्य शुनासीराः सहर्षिभिः। भूयस्तद्देवयजनं समीढ्वद्वेधसो ययुः ॥ ७ ॥
विधाय कार्त्स्न्येन च तद्यदाह भगवान् भवः। संदधुः कस्य कायेन सवनीयपशोः शिरः ॥ ८ ॥
संधीयमाने शिरसि[5] दक्षो रुद्राभिवीक्षितः। सद्यः सुप्त इवोत्तस्थौ ददृशे चाग्रतो मृडम् ॥ ९ ॥
तदा वृषध्वजद्वेषकलिलात्मा प्रजापतिः। शिवावलोकादभवच्छरद्ध्रद इवामलः ॥ १० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

सप्तमे विष्णुरुद्भूतः स्तुतो दक्षभवादिभिः। यज्ञं प्रवर्तयामास दक्षेणेति निरूप्यते ॥ ( १ ) ॥

अजेन योऽनुनीतः प्रार्थितो भवस्तेनाभिहितम्। हे महाबाहो विदुर ॥ १ ॥ ❀ ❀ अघमपराधम् ॥ २ ॥ ❀ ❀ स्वापराधमपह्नुत्यानुगृह्णाति। दग्धं शीर्षं यस्य तस्य प्रजापतेः दक्षस्य अजमुखमजस्य मुखं यस्मिंस्तत्तथाभूतं शिरोऽस्तु। बर्हिषः यज्ञस्य सम्बन्धिनं भागम्। मित्रनाम्नो देवस्य ॥ ३ ॥ ❀ ❀ प्रकर्षेण कृतानि लग्नानि सर्वाण्यंगानि येषां ते भवन्तु। उच्छेषणं यज्ञावशिष्टम् ॥ ४ ॥ ❀ ❀ येषां त्वंगानि नष्टानि ते त्वश्विनोर्बाहुभ्यां कृतबाहवः पूष्णो हस्ताभ्यां कृतहस्ताश्च भवन्तु। अध्वर्यवः अन्ये च ऋत्विजः बस्तस्याजस्य श्मश्रूण्येव श्मश्रूणि यस्य ॥ ५ ॥ ❀ ❀ मीढुष्टमः शिवस्तेनोक्तम्। परितुष्टैश्रितैः ॥ ६ ॥ ❀ ❀ मीढ्वांसं शिवं त्वयागत्य सर्वं कार्यमित्यामन्त्र्य संप्रार्थ्य शुनासीरा देवाः सह मीढुषा वेधसा च वर्तमानाः समीढ्वद्वेधसः ॥ ७ ॥ ❀ ❀ कार्त्स्न्येन वक्त्रहस्तबाह्वादिसाधारण्यं विधाय ॥ ८–९ ॥ ❀ ❀ पूर्वं वृषध्वजद्वेषेण कलिलः कलुषीकृत आत्मा यस्य सः तदा शरत्कालीनो ह्रद इवामलोऽभवत् ॥ १०–१२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

आदिनेंद्रमुनिदेवादिग्रहः ( १ )। इत्युक्तरीत्या धर्मपरिपंथिनो बाधेत इति बाहू महान्तौ बाहू यस्य स तथेति। यमावतारत्वादित्यभिप्रायः। यद्वा स्वसंगिनां तत्त्वोपदेशेन बाधते शोकमोहादिकमिति बाहुर्विवेकी महांश्चासौ बाहुर्विवेकी तत्संबुद्धौ तथा ॥ १ ॥ ❀ ❀ प्रजेशेत्यनेन दंडाधिकारो वस्तुतस्तवैव तवोद्भूतत्वान्ममापि दंडकरणे न दोष इत्युक्तम्। किं च—बालत्वाद्दक्षस्य तदपराधमपि न गणये। ननु तव श्वशुरत्वात्तस्यातिज्येष्ठत्वं कथं तं बालं मन्यसे इति चेदत्र श्रीमद्वाल्मीकीयवाक्येन समाधत्ते तथाहि "गुरुलाघवमर्थानां प्रारंभे कर्मणः फलम्। तत्त्वतो यो न जानाति स बालः प्रोच्यते बुधैः" इत्युक्तबाललक्षणवत्त्वात्स बाल एव। बहुत्वं तद्द्विगपेक्षं तर्हि बालत्वेऽपि श्वशुरत्वादनुतापं तु करोष्येव तत्राह—नानुचिंतये पश्चात्तापं न करोमि। तत्र हेतुः

---

१. प्राचीने पाठे 'श्रीमहादेव उवाच' पाठो न। २. प्रा० पा०—परेश। ३. प्रा० पा०—दण्डस्तु विधृतो। ४. प्रा० पा०—जक्षिति। ५. प्रा० पा०—शीर्ष्णीह।

दंडस्तत्रेति । तत्र दक्षादौ । अपराधाननुरूपदंडे हि पश्चात्तापो भवति मया तु तथा न कृतमिति भावः ॥ २ ॥ ❀ ❀ पुत्रच्छात्रादिभिर्गुरोर्वाक्यं सबहुमानं ग्राह्यमिति दर्शयन्नाह—प्रजापतेरिति । दग्धशीर्षत्वात्पूर्वशिरोऽनुसंधानाभावः । स्वपौरुषजयस्तंभस्थापनायाज्ञजनशिक्षणाय च भगादीनामप्यन्यावयवैरेव स्वनिर्वाहः स्यादित्यभिप्रेत्याह—मित्रस्येति । स्वनेत्रस्य सूचकत्वलक्षणदोषदुष्टत्वादिति भावः । भागं स्वमिति । तद्विधजनचक्षुषः । स्वभोज्यमात्रवस्तुदर्शनतात्पर्यकत्वेन पारमार्थिकत्वाभावाद्वैयर्थ्यमिति भावः ॥ ३ ॥ ❀ ❀ पूषा केवलश्चेत्पिष्टभुग्भवतु, अन्यसहितश्चेद्यजमानस्य दद्भिर्जक्षतु भक्षतु 'जक्ष-भक्षहसनयोः' इति । तस्य दन्तान्प्रकाश्य साधून्हसतः सर्वथैव दंतधारणानौचित्यादिति भावः । उच्छेषणमुत्कृष्टशेषं शिवभागं ददुः । "उच्छेषणभागो वै रुद्र" इति श्रुतेः । ये ये वा मे मह्यं दक्षयज्ञे मामनादृत्य प्रथमं भुक्त्वाच्छिन्नांगा अभूवन्संप्रति ते प्रकृतसर्वांगा भवन्तु । सन्निंदनसमये दक्षपक्षग्रहणाच्छिन्नांगा अप्यधुना मम भागदानात्पूर्णांगाः संत्विति भावः ॥ ४ ॥ ❀ ❀ तन्मध्ये ये केचिदध्वर्यवो दक्षपक्षपातिनो हस्तचालनं चक्रुस्ते च भग्नहस्ता आसन् "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्" इति श्रुतेः । भृगुर्हि दक्षस्य मुख्यामात्योऽतो वस्तमुखस्य दक्षस्य वस्तश्मश्रुरेवामात्य उचित इति भावः ॥ ५-६ ॥ ❀ ❀ प्रणतजनेभ्योऽभीष्टं मिमिहुरिति मीढ्वांसः "मिह-सेचने" क्वसुप्रत्यये रूपं "दाश्वान्साह्वान्मीढ्वांश्च" इति निपातात्सिद्धम् । तेषामतिशयेन मीढ्वान् मीढुष्टमः अनेन तदानीमेवैतन्नामोपलब्धमिति रहस्यं ज्ञायते । परितुष्टात्मभिः प्रसन्नचेतोभिः, तत्र यज्ञे । अथेति मंगले । साधु साध्विति मंगलमब्रुवन् ॥ ७ ॥ ❀ ❀ ततो मंगलध्वनेरनंतरं सुष्ठु नासीरं सेनामुखं येषां ते तथा शुनो वायुः शीरः सूर्यस्तौ विद्येते येषु ते शुनाशीरा इति "अन्येषामपि०" इति पूर्वपदस्य दीर्घ इति तालव्यद्वयकोपि पाठोस्ति । "शुनो वायुः समाख्यातः शीरः सूर्यस्तथा हलम् । नासीरोग्रेसरे प्रोक्तस्तथा सेनामुखेऽपि च" इति हरिदीक्षितः ॥ ८ ॥ ❀ ❀ तद्विधाय मित्रादिर्भगादिभ्यश्चक्षुरादिदानमेव साधारण्यं तत्कृत्वेत्यर्थः । यद्भगवान्मित्रस्य चक्षुषेक्षेतेत्याद्याह तदित्यर्थः । सवनीयपशोर्यज्ञपशोश्छागस्येत्यर्थः । कस्य दक्षस्य ॥ ९ ॥ ❀ ❀ तदा रुद्रदृष्ट्युत्तरमुत्थाने ॥ १० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

दक्षेण द्वारेण अहो बालानां वृथैव दण्डः कृत इति प्रहस्य श्रूयतामित्यभिहितम् ॥ १ ॥ ❀ ❀ पूर्वं श्रूयतामित्युक्तेऽपि महादेव उवाचेति सार्वत्रिकः पाठः । दण्डो हितार्थं शिक्षा ॥ २-३ ॥ ❀ ❀ केवलश्चेत्पिष्टभुग् अन्यसहितश्चेद्यजमानस्य दद्भिर्जक्षत्वित्यनुग्रहः ॥ ४ ॥ ❀ ❀ ये म उच्छेषणं ददुः मामनादृत्य स्वयं प्रथमं भुक्तवात् ये छिन्नाङ्गा बभूवुस्ते संलग्नांगा भवन्त्वित्यर्थः ॥ ५ ॥ ❀ ❀ परितुष्टैश्चित्तैरुपलक्षिताः ॥ ६ ॥ ❀ ❀ मीढ्वांसं वरसेक्तारम् ॥ ७ ॥ ❀ ❀ हस्तबाह्वादिसाधारण्यं यज्ञे हस्तादियुक्ततया सर्वेषां तुल्यत्वं सवनीयपशोः छागस्य कायेन कवन्धेन सह संदधुः संयोजितवन्तः ॥ ८ ॥ ❀ ❀ अभिवीक्षितः अभितः कृपादृष्टिविषयीकृतः ॥ ९-१० ॥

### श्रीमद्वीरराघवव्याख्या

एवं ब्रह्मणा प्रसादितो भवो देवाननुगृह्णन् तद्विज्ञापितमङ्गीचकारेत्याह मैत्रेय इतीति । अजेन ब्रह्मणा अनुनीतेन प्रार्थितेन अत एव परितुष्यता भवेन हे महाबाहो ! विदुर ! प्रहस्य श्रूयतामित्यामंत्र्य अभ्यधायि अभ्यभाषि ॥ १ ॥ ❀ ❀ तदेवाह नाघमिति । हे परेश ! परेषामस्मदादीनामीश प्रभो ! भगवन्मायामोहितानां बालानां मूर्खाणाम् अघमपराधम् अधुना न वर्णये एवमेवमपचरितमिति न कथयामीत्यर्थः । नानुचिन्तये न स्मरामि च, किन्त्वपराधाऽऽचरणदशायां मया दण्डः कृतः शिक्षामात्रं कृतमित्यर्थः ॥ २ ॥ ❀ ❀ तदनुग्रहप्रकारमेवाह प्रजापतेरित्यादिभिस्त्रिभिः । दग्धशीर्ष्णः दक्षिणाग्नौ दग्धं शिरो यस्य तस्य प्रजापतेर्दक्षस्य अजमुखं कंठादुपरि एव अजस्य मुखं यस्मिन् तच्छिरो भवतु । मित्रस्य तन्नाम्नो देवस्य चक्षुषी नेत्रे भवेतां, चक्षुषीक्षेतेत्यत्रार्षत्वादीदूदेद्द्विवचनमिति प्रगृह्यत्वाभावः । मित्रस्य चक्षुर्भंगः पूर्वं कृत इत्यर्थसिद्धं चक्षुषेति तृतीयान्तश्च पठ्यते तदा मित्रस्य चाजमुखं शिरो भवतु । अस्मिन् पक्षे मित्रस्य शिरोभङ्गः पूर्वमर्थसिद्धो ज्ञेयः । भगो भगाख्यो देवः बर्हिषो यज्ञस्य स्वीयं भागं चक्षुषा ईक्षेत पश्यतु । भगस्य नेत्रे उत्पद्येयातामित्यर्थः, अयमेवार्थः । साधु भगस्य नेत्रे भगवान् पातितस्य रुषेति पूर्वं भगस्यैव नेत्रभंगाभिधानात् ॥ ३ ॥ ❀ ❀ पूषा देवः यजमानसंबन्धि पिष्टं भुङ्क्ते इति तथा दद्भिर्दन्तैर्जक्षतु अद्यात् पूष्णो दंता उत्पद्येरन्नित्यर्थः । ये देवा मे मह्यमुच्छेषणं यज्ञावशिष्टं ददुः दत्तवन्तः ते सर्वे प्रकर्षेण कृतानि सम्यक्कृतानि सर्वाण्यंगानि येषां ते भवेयुरित्यर्थः । निकृत्तसर्वांगा इति पाठे ये देवा नितरां भिन्नसर्वावयवा ये च मह्यमुच्छेषणं ददुः दातुं मतिं कृतवन्त इत्यर्थः । अनुग्रहात्पूर्वम् उच्छेषणदानाभावात् ते सर्वे ॥ ४ ॥ ❀ ❀ अध्वर्यव ऋत्विजश्च अश्विनोर्बाहुभ्यां कृतबाहवः उत्पादितबाहवः पूष्णो हस्ताभ्यां कृतहस्ताश्च भवन्त्वित्यन्वयः । भृगुः बस्तश्मश्रुः बस्तस्य मेषस्य श्मश्रूणीव श्मश्रूणि यस्य ॥ ५ ॥ ❀ ❀ एवं रुद्रेणानुगृहीता देवाः किमकुर्वन्नित्यत्राह मैत्रेयः तदिति । मीढुष्टमोदितं मीढुष्टमः शिवतमो रुद्रस्तेनोदितं गदितं श्रुत्वा सर्वाणि भूतानि परितुष्टात्मभिः परितुष्टचित्तैः हे तात ! विदुर ! साधु साध्वित्यूचुः ॥ ६ ॥ ❀ ❀ ततः मीढ्वांसं रुद्रं त्वया आगत्य सर्वं कार्यमित्यामन्त्र्य संप्रार्थ्य सुनासीर

इन्द्रोपलक्षिता देवा ऋभुभिः भृगुणाऽऽहूयमानदक्षिणाग्निप्रभवैः ऋभ्वाख्यैर्देवैः सह समीढ्वद्धेधसः मीढुषा रुद्रेण वेधसा ब्रह्मणा च सहिताः भूयः पुनस्तद्देवयजनं देवा ईज्यन्तेऽस्मिन्निति देवयजनं यागदेशं ययुः जग्मुः ॥ ७ ॥ ❀ ❀ भगवान् भवो रुद्रः यथाह 'प्रजापतेर्दग्धशीर्ष्णो भवत्वजमुखं शिरः' इत्यादिना तथा कार्त्स्न्येन विधाय हस्तबाह्वादिकं विधाय सवनीयपशोरजस्य संबन्धिशिरः कस्य दक्षस्य कायेन शरीरेण संदधुः ॥ ८ ॥ ❀ ❀ सवनीयपशोः शिरसि सन्धीयमाने सति रुद्रेणाऽभिवीक्षितो दक्षः सुप्त इवोत्तस्थौ उदतिष्ठत्। अग्रतः पुरतोऽवस्थितं मृडं रुद्रं ददृशे च ॥ ९ ॥ ❀ ❀ पूर्वं वृषध्वजे रुद्रे द्वेषेण कलिलः कलुषीकृतः आत्मा यस्य स प्रजापतिर्दक्षः शिवावलोकात् शरत्कालीनह्रद इवामलोऽभवत् ॥ १० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अत्र भगवज्ज्ञानोपचितं कर्म हरेः साक्षात्कारसाधनं भवतीति तात्पर्यतो निरूप्यते। तत्र ब्रह्मोक्तमाकर्ण्य तुष्टेन रुद्रेणोच्यमानं प्रतिवचनप्रकारं वक्ति इतीति। धर्मपरिपन्थिनो बाधत इति बाहुः महांश्चासौ बाहुर्यस्य स तथा तस्य सम्बोधनं महाबाहो! "अर्जिदृशिकम्यमिपसिबाधामृजिपशितुक्धुक्दीर्घहकाराश्च" अर्जि-अर्जने दृशि-प्रेक्षणे कमु-कांतौ अम्-रोगे पशि-नाशने बाधृ-लोडने एभ्यो धातुभ्यः कुप्रत्ययो भवति, एषां धातूनां यथासंख्यं तृजि पशि तुक् धुक् दीर्घहकारश्चेत्येते आगमादेशाश्च भवन्ति। ऋजुरवक्रः अव्युत्पन्नो वा पशुर्मंत्रहीनश्चतुष्पाच्च कमेस्तुगागमः कन्तुः कन्दर्पः अमेर्बु गागमः, अम्बु जलं, पंसि पंसेर्दीर्घः पांसू रजः, बाधेर्हकारादेशः बाहुः प्राण्यंगम् ॥ १ ॥ ❀ ❀ किमभ्यधाधीति तत्राह नाघमिति। हे प्रजेश! सर्वजीवराश्युत्तम! अघमपराधं न वर्णये अनेकत्वादप्राप्तकालत्वादिति शेषः। तर्हि पश्चात्तापोऽस्ति किं नेत्याह नानुचिन्तय इति पश्चात्तापं न करोमीत्यर्थः। पश्चात्तापाऽकरणे कारणमाह दण्ड इति। अपराधानुसारिदण्डाकरणे अनुतापः स्यात्तदनुसारिणी शिक्षा मया कृतेत्यर्थः ॥ २ ॥ ❀ ❀ पुत्रच्छात्रादिभिर्गुरुवाक्यं सबहुमानं ग्राह्यमिति भावं दर्शयन् वक्ति प्रजापतेरिति। अजस्य छागस्य मुखं यस्य तत्तथोक्तं पूर्वशिरोऽनुसन्धानाकरणे कारणं दग्धशीर्ष्ण इति स्वपौरुषजयस्तंभस्थापनायाज्ञजनशिक्षणाय च भगादीनामप्यन्यावयवैरेव स्वनिर्वाहः स्यादिति भावेनाह मित्रस्येत्यादिना बर्हिषो यज्ञस्य ॥ ३ ॥ ❀ ❀ दद्भिर्दन्तैः तत्र देवानां विशेषानुग्रहं करोति देवा इति प्रकृतसर्वाङ्गाः पूर्वावस्थाप्राप्तसर्वावयवाः "उच्छेषणभागो वै रुद्र" इति श्रुतेः ये म उच्छेषणं ददुरिति विशेषानुग्रहे हेतुः ॥ ४ ॥ ❀ ❀ ऋत्विजां नैवमित्याह बाहुभ्यामित्यादि। अध्वर्यव ऋत्विजस्तेषां मध्ये केचिच्छिन्नबाहवः केचिच्छिन्नहस्तास्तेपु छिन्नबाहवोऽश्विनोर्बाहुभ्यां कृतबाहवः पूर्वबाहुप्रयोजना भवन्तु। अन्ये च पूष्णो हस्ताभ्यां कृतहस्ता भवन्तु। कूर्परस्योपरिदेशो बाहुस्तदधो हस्तः 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्" इति श्रुतेः सह-दानादानयोरिति धातुः। बस्तस्य श्मश्रूणि यस्य स बस्तश्मश्रुः ॥ ५ ॥ ❀ ❀ कोऽसावुत्तरकथाप्रसंग इति तत्राह तदेति। मिह-सेचन इति धातोः प्रणतजनस्याभीष्टं वर्षन्तो मीढ्वांसस्तेषामतिशयेन मीढ्वान् मीढुष्टमस्तेन कथितम् अनेन तदानीमेतन्नामोपलब्धमिति रहस्यं ज्ञायते ॥ ६ ॥ ❀ ❀ शुनाशीरा देवाः सहिता मीढ्वद्वेधोभ्यां रुद्रब्रह्मभ्यां ये तथोक्ताः ॥ ७ ॥ ❀ ❀ कस्य दक्षस्य सवनीयपशोर्यज्ञियपशोः ॥ ८ ॥ ❀ ❀ शिर्षणि शिरसि ॥ ९ ॥ ❀ ❀ शिवस्याऽवनतपुंस्यनुग्रहसामर्थ्यं व्यनक्ति तदेति "अभ्रं सलिलदे व्योम्नि शस्तं कोदण्ड आयुधे" इति यादवः। शरन्मेघवत् ॥ १० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

महादेव उवाचेति न सार्वत्रिकं, दण्डः किन्तु तेषामेव हितार्थाय शिक्षा इत्यर्थः ॥ १–३ ॥ ❀ ❀ मे म उच्छेषणं यज्ञावशिष्टं ददुरिति मामनादृत्य स्वयं प्रथमं भुक्तत्वात् ये छिन्नाङ्गा बभूवुस्ते प्रकृतसवङ्गा भवन्त्वित्यर्थः ॥ ४–१८ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

शम्भुं स्तुतवता विष्णुराविर्भूतः स तुष्टुवे। दक्षेण ऋत्विगाद्यैश्च यज्ञपूर्त्तिश्च सप्तमे ॥

अजेनाऽनुनीतो यो भवस्तेन ॥ १ ॥ ❀ ❀ हे प्रजेश! परेशेति च पाठः, बालानामज्ञानां दण्डस्तेषां हितार्थं शिक्षारूपः ॥ २ ॥ ❀ ❀ अजमुखमिति तस्य तत्तुल्यवाग्बुद्धित्वादिति भावः। मित्रस्य चक्षुषेति स्वनेत्रसूचकत्वलक्षणदोषदुष्टत्वादिति भावः। भागं स्वमिति तद्विधजनचक्षुषः स्वभोज्यवस्तुमात्रदर्शनतात्पर्य्यकत्वेन पारमार्थिकत्वाभावाद्वैयर्थ्यादिति भावः ॥ ३ ॥ ❀ ❀ पूषा केवलश्चेत् पिष्टभुग् भवतु। अन्यसहितश्चेत् यजमानस्य दद्भिरिति तस्य दन्तान् प्रकाश्य साश्रून् हसतः सर्वथैव दन्तधारणाऽनौचित्यादिति भावः। उच्छेषणं उत्कृष्टं शेषं शिवभागं ये न ददुस्ते देवा अस्मद्द्वेषिणः दक्षस्य यज्ञे भुक्तभागत्वात् छिन्नाङ्गा अभूवन् सम्प्रति प्रकृतसर्वाङ्गा भवन्तु। मन्निन्दनसमये दक्षपक्षस्यग्रहणादिति भावः ॥ ४ ॥ ❀ ❀ तन्मध्ये ये केचिदध्वर्यवो दक्षपक्षपातिनस्तत्समये बाहुहस्तचालनं चक्रुस्ते भग्नबाहुहस्ता अश्विनोर्बाहुभ्यां कृतबाहवः पूष्णो हस्ताभ्यां कृतहस्ता भवन्तु। किञ्च भृगोः श्मश्रूण्युल्लुञ्चितानि स च दक्षस्य मुख्य

एवाऽस्मायोऽतो बस्तमुखस्य तस्य श्मश्रूणि प्राप्नोत्वित्यभिप्रेत्याह बस्तश्मश्रुरिति ॥ ५ ॥ ❀ ❀ अतिशयेन मीढ्वान् कामवर्षी मीढुष्टमः शिवस्तस्योदितं वचनम् ॥ ६ ॥ ❀ ❀ मीढ्वांसं शिवमामन्त्र्य त्वया तत्रागत्य यज्ञः सम्पादनीय इति सम्प्रार्थ्य शुनासीरा देवाः मीढुषा वेधसा च सह वर्त्तमानाः ॥ ७ ॥ ❀ ❀ यदाह तद्विधायेति । मित्रादयो भगादिभ्यश्चक्षुरादीनि दत्वेत्यर्थः । कस्य दक्षस्य ॥ ८ ॥ ❀ ❀ कलिलात्मा कलुषीकृतात्मापि ॥ ९-१२ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एवं पूर्वाध्यायोक्तप्रकारेण ब्रह्मणा शिवप्रेरको भगवान् शिवश्च संस्तुतो यत्कृतवान् तद्वर्णयति सप्तमेनाध्यायेन इत्यजेनेति । हे महाबाहो ! विदुर इत्येवमजेनानुनीतो यो भवस्तेन प्रहस्य इति वक्ष्यमाणं यदभ्यधायि अभिहितं तच्छ्रूयताम् ॥ १ ॥ ❀ ❀ हे प्रजेश ! बालानामतत्त्वज्ञानाम् अघमपराधम् ॥ २ ॥ ❀ ❀ दग्धं शीर्षं दक्षिणाग्नौ शिरो यस्य तस्य प्रजापतेर्दक्षस्य मुखं यस्मिन् तच्छिरो भवतु । भगश्च बर्हिषः संबन्धिनं स्वं भागं मित्रस्य मित्रनाम्नो देवस्य चक्षुषा ईक्षेत ॥ ३ ॥ ❀ ❀ पिष्टभुक् पूषा तु यजमानस्य यज्ञकर्त्तुर्देद्भिर्दन्तैः जक्षतु अद्यात् । ये म उच्छेषणं यज्ञावशिष्टं ददुः ते देवाः प्रकृतानि पूर्ववत् वर्तमानानि सर्वाण्यङ्गानि येषां तथाभूता भवन्तु ॥ ४ ॥ ❀ ❀ अन्येऽध्वर्य्यवो विनष्टबाहुहस्ताः अश्विनोर्बाहुभ्यां कृतबाहवः पूष्णो हस्ताभ्यां कृतहस्ता भवन्तु । बस्तस्य मेषस्य श्मश्रूणि यस्य तथाभूतो भृगुर्भवेत् ॥ ५ ॥ ❀ ❀ मीढुष्टमेन शिवेनोदितम् । परितुष्टैः आत्मभिश्चित्तैः ॥ ६ ॥ ❀ ❀ महर्षिभिः सह शुनासीरा देवाः मीढ्वांसं शिवम् । भवताऽऽगत्य सर्वं समर्थनीयमित्यामन्त्र्य समीढद्वेधसः शिवब्रह्मसहिताः ॥ ७ ॥ ❀ ❀ सवनीयस्य पशोरजस्य शिरः कस्य दक्षस्य कायेन सन्दधुरयोजयन् ॥ ८ ॥ ❀ ❀ मृडं रुद्रम् । प्रजापतिर्दक्षः पूर्वं वृषध्वजद्वेषात्कलिलात्मा मलिनचित्तोऽपि तदा शरत्कालिकह्रद इवामलोऽभवत् ॥ ९-१० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

सप्तमे तु शिवप्रीत्या यज्ञे प्राप्ताङ्गसंपदि । आविर्भूताद्धरेर्दक्षधर्मसिद्धिर्निरूप्यते ॥ ( १ ) ॥

इत्येवमजेन ब्रह्मणानुनीतेनात एव परितुष्यता भवेन देवादिना स्वापमानफलनिरीक्षणेन प्रहस्यैवं चेत्तर्हि श्रूयतामिति तं प्रत्यभ्यधायि कथितम् । हे महाबाहो इति पराक्रमद्योतकेन सम्बोधनेन बलवतां स्वपराक्रमफले जाते संतोषो हर्षश्च भवत्येवेति त्वया ज्ञायत एवेति सूचयति ॥ १ ॥ ❀ ❀ श्रूयतामिति प्रथमं ब्रह्माणं सावधानं कृत्वा तं प्रत्याह—नाघमिति । हे प्रजेश, सर्वस्वामिन्निति सम्बोधयन् एतेषामज्ञत्वान्मम वचनसारनिर्द्धारणे योग्यस्त्वमेवातस्त्वाग्र उच्यत इति सूचयति । अहमेषां दक्षादीनां बालानामज्ञानामघमपराधं न वर्णये । तर्हि तदनुचिन्तया मनसि तापः स्यादित्याशङ्क्याह—नानुचिन्तय इति । तर्हि कथं दक्षादेर्नाशः कृतस्तत्राह—दण्ड इति । तत्रापराधे सति तेषु मया धर्ममर्यादासंरक्षणाय दण्डो धृतः कृतः, अन्यथान्योपि तथा कुर्यात्तदा मर्यादा लुप्येतातो यथावद्दण्डस्य कृतत्वान्नेदानीं तदनुचिन्तनमस्तीति भावः । तेषामज्ञत्वे कारणमाह—देवेति । देवस्य भगवतो वासुदेवस्य मायायाभिभूतानां मोहितानामित्यर्थः ॥ २ ॥ ❀ ❀ मम द्वेषाद्यभावात्त्वया पूर्वेण प्रार्थितत्वाच्च तदस्त्वित्याह—प्रजापतेरिति । अजस्य छागस्य मुखं यस्मिंस्तथाभूतं प्रजापतेर्दक्षस्य शिरोऽस्तु । तथात्वे हेतुमाह—दग्धशीर्ष्ण इति । तच्छिरसो दग्धत्वादित्यर्थः । वस्तुतस्तु नन्दिशापस्यावश्यकत्वाद् ब्रह्मणा तु जीवनमात्रस्य प्रार्थितत्वात् स्वकृतदण्डज्ञापकस्थापनस्याप्यावश्यकत्वाच्चान्यथा कृतो दण्डो न स्मर्येतात एव सर्वत्र वैसादृश्येनैव निर्वाहमात्रं कृतमिति ज्ञेयम् । मित्रस्य मित्रनाम्नो देवस्य चक्षुषा बर्हिषो यज्ञस्य संबन्धिनं स्वं भागमुद्धृतनेत्रो भग ईक्षेत ॥ ३ ॥ ❀ ❀ अन्यचक्षुषान्यस्य कथंचिद्दर्शनसंभवेप्यन्यदन्तैरन्यस्य भोजनासंभवात्पक्षान्तरमाह—पिष्टभुग्वा भवत्विति शेषः । 'पूषा प्रपिष्टभागोऽदन्तको हि स' इति श्रुतेः । प्रकृतानि यथापूर्वं स्थितानि सर्वाण्यङ्गानि येषां ते तथा भवन्त्विति शेषः । एवं देवानां विशेषानुग्रहे हेतुमाह—य इति । ये देवा मे मह्यमुच्छेषणं यज्ञावशिष्टं भागत्वेन ददुरित्यर्थः । भविष्यदपि ब्रह्मवचनस्य यथार्थत्वं मत्वा ददुरिति भूतनिर्देशः ॥ ४ ॥ ❀ ❀ ऋत्विजां तु देवविलक्षणमनुग्रहं करोति—बाहुभ्यामिति । कूर्परस्योपरिदेशो बाहुस्तदधोदेशो हस्तः । ये चान्येध्वर्यव ऋत्विजस्तत्र ये केचन छिन्नबाहवस्तेश्विनोर्बाहुभ्यां कृतबाहवः कृतबाहुप्रयोजना भवन्तु । तथा ये केचन छिन्नहस्तास्ते पूष्णो हस्ताभ्यां कृतहस्ताः कृतहस्तप्रयोजना भवन्तु । तथा बस्तस्य श्मश्रूण्येव श्मश्रूणि यस्य स तथाभूतो भृगुर्भवेत् ॥ ५ ॥ ❀ ❀ एवं यद्यपि यथा देवैर्यथास्थितं यज्ञे रुद्रभागं विहाय तद्विलक्षणो यज्ञावशिष्टस्तद्भागः कल्पितस्तथा शिवेनापि स्वकृतदण्डस्मरणाय पूर्वतो वैलक्षण्येन शिरआदि कल्पितं तथापि सर्वथा विनाशादिदमपि वरमिति मत्वा सर्वैरनुमोदितमित्याह—तदेति । 'मिह-सेचने' । प्रणतानामभीष्टं सिञ्चन्ति वर्षन्ति ते मीढ्वांसस्तेषां मध्येतिशयेन मीढ्वान् मीढुष्टमः शिवस्तेनोदितमुक्तं तदा सर्वाणि भूतानि श्रुत्वा अथानन्तरमेव परितुष्टात्मभिः संतुष्टमनोभिर्युक्तानि भवदुक्तं साधु साध्वित्यब्रुवन् । हे तातेति स्नेहेन सम्बोधयन् महतां स्नेहेन सर्वं सिद्ध्यतीति सूचयति । मीढुष्टमपदेन नैवंविधापराधे एवमनुग्रहमन्यः करोतीति सूचितम् ॥ ६ ॥

ततश्च सर्वदेवसांनिध्ये हि सर्वं कार्यं सेत्स्यतीत्यभिप्रायेण मीढ्वांसं महादेवमपि समामन्त्र्य त्वया तत्र गत्वैव सर्वं कार्यमिति संप्रार्थ्य अतस्तेन मीढुषा वेधसा ब्रह्मणा च सह वर्त्तमानाः समीढ्वद्वेधसः ऋषिभिश्च सहिताः शुनासीराः देवाः भूयः पुनः तस्य दक्षस्य देवयजनं यज्ञवाटं ययुः ॥ ७ ॥ ❁ ❁ तत्र गत्वा यत्कृतं तदाह—विधायेति । यत् भगवान् भव आह तत्सर्वं कार्त्स्न्येन यज्ञाङ्गादिकं पूर्वं विधाय संपाद्य ततश्च 'पशुरेव स देवानाम्' इति श्रुतेर्देवपोषकत्वेन यजमानस्य सवनीयपशोश्च पशुत्वतुल्यत्वात् योग्यतया भवाज्ञया सवनीयपशोः शिरः कस्य दक्षस्य कायेन देहेन संदधुः योजितवन्त इत्यर्थः ॥ ८ ॥ ❁ ❁ एवं देवैर्दक्षकायेन पशुशिरसि सन्धीयमाने सति रुद्रेणामृताभिवर्षिण्या कृपादृष्ट्याभिवीक्षितो दृष्टो दक्षः सद्यः शीघ्रमेव सुप्त इव यथा सुप्तः पुरुषः केनचिदुत्थापितः सर्वक्लेशरहित एवोत्तिष्ठति तथा सर्वक्लेशरहित एवोत्तस्थौ । अग्रे च मृडं शिवं स्थितं ददर्श ॥ ९ ॥ ❁ ❁ पूर्वमभिमानित्वेन शिवकृपाभावाद्वृषध्वजद्वेषेण कलिलः मलिन आत्मा अन्तःकरणं यस्य स तथाविधोऽपि प्रजापतिर्दक्ष इदानीं तु शिवस्य कृपया अवलोकात् तदा तत्क्षण एव शरत्कालीनह्रद इवामलो निर्मलान्तःकरणोऽभवदित्यर्थः ॥ १० ॥

## भाषानुवादः

### दक्षयज्ञकी पूर्ति

श्रीमैत्रेयजी कहते हैं—महाबाहो विदुरजी ! ब्रह्माजीके इस प्रकार प्रार्थना करनेपर भगवान् शङ्करने प्रसन्नतापूर्वक हँसते हुए कहा—सुनिये ॥ १ ॥ ❁ ❁ श्रीमहादेवजीने कहा—प्रजापते ! भगवान्‌की मायासे मोहित हुए दक्ष-जैसे नासमझोंके अपराधकी न तो मैं चर्चा करता हूँ और न याद ही । मैंने तो केवल सावधान करनेके लिये ही उन्हें थोड़ा-सा दण्ड दे दिया ॥ २ ॥ ❁ ❁ दक्षप्रजापतिका सिर जल गया है, इसलिये उनको बकरेका सिर लगा दिया जाय; भगदेव मित्रदेवताके नेत्रोंसे अपना यज्ञभाग देखें ॥ ३ ॥ ❁ ❁ पूषा पिसा हुआ अन्न खानेवाले हैं; वे उसे यजमानके दाँतोंसे भक्षण करें तथा अन्य सब देवताओंके अङ्ग-प्रत्यङ्ग भी स्वस्थ हो जायँ; क्योंकि उन्होंने यज्ञसे बचे हुए पदार्थोंको मेरा भाग निश्चित किया है ॥ ४ ॥ ❁ ❁ अध्वर्यु आदि याज्ञिकोंमेंसे जिनकी भुजाएँ टूट गयी हैं, वे अश्विनीकुमारकी भुजाओंसे और जिनके हाथ नष्ट हो गये हैं, वे पूषाके हाथोंसे काम करें तथा भृगुजीके बकरेकी-सी दाढ़ी-मूँछ हो जाय ॥ ५ ॥ ❁ ❁ श्रीमैत्रेयजी कहते हैं—वत्स विदुर ! तब भगवान् शङ्करके वचन सुनकर सब लोग प्रसन्न चित्तसे 'धन्य ! धन्य !' कहने लगे ॥ ६ ॥ ❁ ❁ फिर सभी देवता और ऋषियोंने महादेवजीसे दक्षकी यज्ञशालामें पधारनेकी प्रार्थना की और तब वे उन्हें तथा ब्रह्माजीको साथ लेकर वहाँ गये ॥ ७ ॥ ❁ ❁ वहाँ जैसा-जैसा भगवान् शङ्करने कहा था, उसी प्रकार सब कार्य करके उन्होंने दक्षके धड़से यज्ञपशुका सिर जोड़ दिया ॥ ८ ॥ ❁ ❁ सिर जुड़ जानेपर रुद्रदेवकी दृष्टि पड़ते ही दक्ष तत्काल सोकर जागनेके समान जी उठे और अपने सामने भगवान् शिवको देखा ॥ ९ ॥ ❁ ❁ दक्षका शङ्करद्रोहकी कालिमासे कलुषित हृदय उनका दर्शन करनेसे शरत्कालीन सरोवरके समान स्वच्छ हो गया ॥ १० ॥

भवस्तवाय कृतधीर्नाशक्नोदनुरागतः । औत्कण्ठ्याद्बाष्पकलया सम्परेतां सुतां[1] स्मरन् ॥ ११ ॥
कृच्छ्रात्संस्तभ्य च मनः प्रेमविह्वलितः सुधीः । शशंस निर्व्यलीकेन भावेनेशं प्रजापतिः ॥ १२ ॥

### दक्ष उवाच

भूयाननुग्रह अहो भवता कृतो मे दण्डस्त्वया मयि भृतो यदपि प्रलब्धः ।
न ब्रह्मबन्धुषु च वां भगवन्नवज्ञा तुभ्यं हरेश्च कुत एव धृतव्रतेषु ॥ १३ ॥
विद्यातपोव्रतधरान् मुखतः स्म विप्रान् ब्रह्माऽऽत्मतत्त्वमवितुं प्रथमं त्वमस्राक् ।
तद्ब्राह्मणान् परम सर्वविपत्सु पासि पालः पशूनिव विभो प्रगृहीतदण्डः ॥ १४ ॥
योऽसौ मयाविदिततत्त्वदृशा सभायां क्षिप्तो दुरुक्तिविशिखैरगणय्य तन्माम् ।
अर्वाक् पतन्तमर्हत्तमनिन्दयापाद् दृष्ट्याऽऽर्द्रया स भगवान् स्वकृतेन तुष्येत् ॥ १५ ॥

---

१. प्रा० पा०—सतीं ।

## मैत्रेय उवाच

क्षमाप्यैवं स मीढ्वांसं ब्रह्मणा चानुमन्त्रितः । कर्म सन्तानयामास सोपाध्यायर्त्विगादिभिः ॥ १६ ॥
वैष्णवं यज्ञसन्तत्यै त्रिकपालं द्विजोत्तमाः । पुरोडाशं निरवपन् वीरसंसर्गशुद्धये ॥ १७ ॥
अध्वर्युणाऽऽत्तहविषा यजमानो विशाम्पते । धिया विशुद्धया दध्यौ तथा प्रादुरभूद्धरिः ॥ १८ ॥
तदा [1]स्वप्रभया तेषां द्योतयन्त्या दिशो दश । मुष्णंस्तेज उपानीतस्तार्क्ष्येण स्तोत्रवाजिना ॥ १९ ॥
श्यामो हिरण्यरशनोऽर्ककिरीटजुष्टो नीलालकभ्रमरमण्डितकुण्डलास्यः ।
[2]कम्ब्वब्जचक्रशरचापगदासिचर्मव्यग्रैर्हिरण्मयभुजैरिव कर्णिकारः ॥ २० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

यदपि यद्यपि प्रलब्धः पराभूतो मया भवांस्तथापि त्वया दण्डो धृतः शिक्षा कृता न तूपेक्षितोऽस्मि युक्तमेवैतदित्याह । ब्रह्मबन्धुषु च ब्राह्मणाभासेष्वपि तुभ्यं तव हरेश्चेति वां युवयोरवज्ञोपेक्षा नास्ति ॥ १३ ॥ ❁ ❁ तत्र हेतुमाह । विद्येति । ब्रह्मा भूत्वा त्वमस्राक्षीः । किमर्थम् । आत्मतत्त्वमवितुम् । यद्वा ब्रह्म वेदमात्मतत्त्वं चावितुं संप्रदायप्रवर्तनेन ज्ञापयितुमित्यर्थः । तत्तस्मात् हे परम उत्कृष्ट ॥ १४ ॥ ❁ ❁ अत्र च प्रत्युपकारो नास्तीत्याह । योऽसाविति । अविदिततत्त्वदृशा अप्राप्ततत्त्वज्ञानेन तद्गणय्य विस्मृत्य अर्हत्तमस्य तव निन्दयाऽर्वागधः पतन्तं मामपाद्रक्षितवान् । स्वकृतेनैव परानुग्रहेणैव तुष्येत् । न मया तत्प्रतिकर्तुं शक्यमित्यर्थः ॥ १५ ॥ ❁ ❁ अनुमन्त्रितोऽनुज्ञातः उपाध्यायसहितैर्ऋत्विगादिभिः अनुवर्तयामास ॥ १६ ॥ ❁ ❁ वीराणां प्रमथादीनां संसर्गकृतदोषस्य शुद्धये निवृत्त्यर्थम् ॥ १७ ॥ ❁ ❁ उपात्तहविषाऽध्वर्युणा सह विशुद्धया बुद्ध्या दध्यौ । हे विशांपते विदुर ॥ १८ ॥ ❁ ❁ स्वया प्रभया तेषां तेजो मुष्णंस्तिरस्कुर्वन् उपानीतः समीपं प्रापितः स्तोत्रे बृहद्रथन्तरे वाजौ पक्षौ तद्वता । "बृहद्रथन्तरे पक्षौ" इति श्रुतेः ॥ १९ ॥ ❁ ❁ तमेवानुवर्णयति श्याम इति द्वाभ्याम् । हिरण्यवद्रशना यस्येति वस्त्रं लक्ष्यते । अर्कतुल्येन किरीटेन जुष्टः नीलालका एव भ्रमरास्तैर्मण्डितं कुण्डलयुक्तमास्यं यस्य कंब्वादिभिरायुधैर्भृत्यरक्षार्थं व्यग्रैर्हिरण्मयैः स्वर्णभूषितैर्भुजैः पुष्पितः कर्णिकार इव शोभमानः । भुजानां हिरण्मयत्वं केयूरकंकणमुद्रिकाद्यलंकारैर्लक्षितम् ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

औत्कण्ठ्यात् स्नेहजन्यात् ॥ ११ ॥ ❁ ❁ भावेन प्रेम्णा ॥ १२ ॥ ❁ ❁ धृतव्रतेषु तपोविद्यायुक्तेषु ॥ १३ ॥ ❁ ❁ तत्रोपेक्षाभावे । अस्राक्षीरिति सिचो लोप आर्षः । भूत्वेति क्रियापदाध्याहारे गौरवमालक्ष्याह—यद्वेति । इत्यर्थ इति । अध्ययनाध्यापनवेदरक्षणार्थमुपदेशविचारादिनात्मतत्त्वरक्षणार्थं चेति भावः । एतेन ब्राह्मणस्यैवात्मतत्त्वोपदेशेऽधिकारो नान्यस्यात एव विदुरो धृतराष्ट्रोपदेशार्थं स्वस्य साक्षाद्यमराजावतारत्वेऽप्यनधिकारिणं मत्वा सनत्सुजातमानाय्यैव धृतराष्ट्रायात्मतत्त्वमुपदेशितवानित्युद्योगपर्वणि महाभारते स्फुटम् । वस्तुतस्तु—"ब्राह्मणस्यैवाधिकारो धर्ममात्रोपदेशने । अन्योपदिष्टधर्मेण फलं प्रायो न जायते ॥ जानानोऽपि स्वयं विप्रमुखात् श्रुत्वा समाचरेत् । अपृष्ट्वा ब्राह्मणं कर्म कर्त्ता नरकमाप्नुयात्" इति संहितोक्तेः । तथैव पंचमे वक्ष्यति । यद्यपि स्वविदितं सकलधर्मं "ब्राह्मं गुह्यं ब्राह्मणैर्दर्शितमार्गेण सामादिभिर्जनतामनुशशास" इति वचनात्स्वयमीश्वरावतारोऽप्यृषभदेवो धर्मरक्षणार्थं तथा चकारेत्यलं प्रसक्तानुप्रसक्त्या । तस्मादात्मतत्त्वरक्षणार्थसृष्टत्वात् । शिष्टाचारप्रवर्त्तकत्वादाह—हे परम हे शीर्षण्य "धर्मात्मा धर्मकर्त्ता च तथा धर्मप्रवर्त्तकः । परमः प्रोच्यते विज्ञैस्तद्धीनोऽपरमो मतः ॥" इति संहितोक्तेः ॥ १४ ॥ ❁ ❁ भवान्कृपासमुद्रोऽहं निर्घृण इत्यभिप्रेत्याह—अत्र चेति । मद्रक्षणलक्षणकर्मणि तन्मत्कृतस्त्वावज्ञानम् अर्हत्तमस्य तव । अधो नरके । इत्यर्थ इति । स्वकर्मणा स्वयमेव तुष्टो भव, न च त्वत्तोषहेतुर्मयि किञ्चिदस्तीति भावः ॥ १५ ॥ ❁ ❁ स दक्षः अनुवर्तयामास प्रवर्त्तयांचकार ॥ १६ ॥ ❁ ❁ वैष्णवं विष्णुदेवताकं त्रिकपालं त्रिकपालसंस्कृतं निरवपन् समन्त्रं ददुः । वीरो वीरभद्रस्तस्य संसर्ग उपद्रवस्तस्य शुद्धये निवृत्त्यै, एतेन दुष्टयागोपि विष्णुपूजनाच्छुध्यतीत्युक्तम् । तण्डुलपिष्टनिर्मितकूर्माकारः पुरोडाशः पुरो दाश्यत इति पुरोडाशोऽत्र दस्य डत्वमार्षम् ॥ १७ ॥ ❁ ❁ यथा दध्यौ तथा तेन रूपेण विशांपते इत्यस्य विशां विषयप्रवेशवतामिन्द्रियाणां पतेर्वशीकर्तुस्तव यथा शुद्धबुद्धित्वाद्धरेः प्रादुर्भावस्तथा तत्रापीत्यभिप्रायः । यद्वा राजभ्रातृत्वाद्विदुरेपि विशांपतित्वमस्त्येवेति ॥ १८ ॥ ❁ ❁ तदा ध्यानकाले बृहद्रथन्तराख्ये वेदोपनिषदाविति श्रुतिपदार्थः ॥ १९ ॥ ❁ ❁ तमेव तत्रागतमेव । यद्वा कम्ब्वादीनि हस्ताग्रस्थितत्वाद्विशिष्टान्यग्राणि येषु तथाभूता हिरण्मया भुजा

---

१. प्रा० पा०—तत्प्रभया । २. प्रा० पा०—शङ्खाब्ज० ।

एव प्रथमातिशयोक्त्याऽष्टैव दलानि तैः शोभमानः कर्णिकारः कमलराज इव मत्त्वर्थीयार्श आदिनाचा वा कर्णिकायामरास्तदाकाराणि दलानि सन्त्यस्येति कर्णिकारः। यद्वा कर्णिकां राति ददातीति व्युत्पत्त्या वा कर्णिकारशब्देनात्र पद्माभिधानात्। "कर्णिकारः पुमानारग्वधद्रौ च द्रुमोत्पले" इति मेदिनी। द्रुमश्चोत्पलञ्च द्रुमोत्पलमिति समाहारद्वन्द्वोपि सम्भवतीति ॥ २० ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

स्तोतुं नाशक्नोत् ॥ ११ ॥ ❋ ❋ इदानीं भयसान्निध्यान्निर्व्यलीकेन किन्तु परत्र सव्यलीकत्वं व्यक्तीभविष्यतीति ज्ञेयम् ॥ १२ ॥ ❋ ❋ शिक्षैव कृता न तूपेक्षितोऽस्तीति भूयाननुग्रहः कृतः इति योज्यम्। एतत् उपेक्षाराहित्यं युक्तमेव ॥ १३ ॥ ❋ ❋ तत्र ब्राह्मणाभासेष्वप्युपेक्षाऽभावे पूर्वार्थे भूत्वेत्यध्याहारेऽपि ब्रह्मणोऽप्रकृतत्वाद्यद्वेति तत्तस्माद्वेदादिप्रवर्त्तनेच्छया स्वयमेव सृष्टत्वात् ॥ १४ ॥ ❋ ❋ अत्र च अपराधेऽपि त्वत्कृतोपकारे योऽसौ परमदयालुत्वेन प्रसिद्धो भवान्। अव्यवधानेन यच्छब्दसान्निध्ये तच्छब्दस्य प्रसिद्धिवाचकतया काव्यप्रकाशे निर्णीतत्वादिति परत्रापि ज्ञेयम्। तत् तिरस्करणम्। तत् अपराधिनोऽपि रक्षणम्। आभासार्थं सङ्ग्रहीतुमित्यर्थ इत्युक्तम् ॥ १५-१६ ॥ ❋ ❋ यज्ञसन्तत्यै यज्ञाऽविच्छेदाय त्रिकपालं कपालत्रयसंस्कृतं वैष्णवं विष्णुदैवत्यं पुरोडाशं जुहुवुः ॥ १७ ॥ ❋ ❋ यथा हरिं दध्यौ तथा प्रादुरभूत् ॥ १८ ॥ ❋ ❋ तदेति त्रिकम्। बृहद्रथन्तरे तत्संज्ञकसामभागौ रशनाया हिरण्मयत्वेन हिरण्यसादृश्याऽसंभवान्मुख्यार्थबाधाद् आधाराधेयसम्बन्धात् वस्त्रं लक्ष्यते, पीतत्वातिशयः प्रयोजनम्। अलकानां भ्रमररूपकेण मुखस्याब्जत्वं कुण्डलयोश्च तत्प्रफुल्लत्वाय सूर्य्यत्वमारोप्यते कनकमयैरष्टभिर्भुजैरष्टदलस्थानीयैः पुष्पितः कर्णिकारः 'कचनार' इति ख्यातः स इव शोभमानः। कश्चित्कर्णिकां राति ददातीति व्युत्पत्त्या पद्मं व्याचष्टे तच्चिन्त्यम्। रूढिर्योगमपहरतीति न्यायात् ॥ १९-२३ ॥

## श्रीमद्वीरराघवव्याख्या

भवस्तवाय रुद्रस्तुतये कृतधीः कृतमनाः सम्परेतां परलोकं गतां सतीम् अनुरागतः स्मरन् तस्यामौत्कण्ठ्याद्बाष्पकला नेत्रजललेशस्तेन नाऽशक्नोत्स्तोतुं नासमर्थोऽभून् ॥ ११ ॥ ❋ ❋ प्रेम्णा विह्वलितः विह्वलचित्तत्वात् कृच्छ्रात् प्रयासेन मनः संस्तभ्य स्ववशं कृत्वा सुधीः स्तुतिसमर्थबुद्धिमान् प्रजापतिर्दक्षः ईशं रुद्रं निर्व्यलीकेन प्रीतियुक्तेन भावेन अभिप्रायविशेषेण शशंस तुष्टाव ॥ १२ ॥ ❋ ❋ यदपि यद्यपि प्रलब्धो मया परिभूतो भवान् तथापि त्वया दण्डो धृतः शिक्षा कृता न तूपेक्षितोऽस्मि। युक्तमेवैतदित्याह ब्रह्मबन्धुषु ब्राह्मणाभासेष्वपि तुभ्यं तव हरेर्विष्णुश्चेति वां युवयोः अवज्ञा उपेक्षा नास्ति, धृतव्रतेषु स्ववर्णाऽश्रमधर्मविशिष्टेषु ब्राह्मणेषु कुत एवाऽवज्ञा स्यात्। न कुतः स्यादित्यर्थः। हे भगवन्! ॥ १३ ॥ ❋ ❋ तत्र हेतुं वदन् "शास्त्रदृष्ट्या तूपदेशो वामदेववद्" इति न्यायेन परमात्मदृष्ट्या स्तौति विद्येति। ब्रह्मा त्वं चतुर्मुखरूपी त्वं प्रथमं कल्पादौ आत्मतत्त्वं जीवपरयाथात्म्यं स्वानुभवोपदेशाभ्याम् अवितुं रक्षितुं विद्याशास्त्रजन्यं ज्ञानं तपःशमदमादिकृच्छ्रचान्द्रायणादिव्रतं स्ववर्णाश्रमोचितधर्म्मैः एतान् बिभ्रतीति तान् विप्रान् मुखतः अस्राक् सृष्टवानसि। तत्तस्मात् हे परम! सर्वविपत्सु सर्वाऽऽपत्सु ब्राह्मणान् पशून् पालः पशुपालक इव प्रगृहीतदण्डः सापराधेषु कृतशिक्षः पासि रक्षसि ॥ १४ ॥ ❋ ❋ स्वस्याकिञ्चन्यं निवेदयन् क्षमापयति योऽसाविति। अविदिततत्त्वदृशा अप्राप्ततत्त्वज्ञानेन मया विगणय्य तृणीकृत्य सभायां दुरुक्तय एव विशिखाः बाणाः तैः क्षिप्तस्ताडितो योऽसौ भवान् अर्हत्तमस्य पूज्यस्य तव निन्दया अर्वाक्पतन्तम् अधोलोकान् गच्छन्तं मां दयार्द्रया दृष्ट्या अपात् विगणय्य विस्मृत्य मत्कृतापराधम् अपात् अरक्षदिति वाऽन्वयः, स भगवान् भवान् स्वकृतेनोपकारेण तुष्येत्, न मया तत्प्रतिकर्तुं शक्यमित्यर्थः। अनेन स्वस्याऽऽकिञ्चन्यं निवेदितम् ॥ १५ ॥ ❋ ❋ स दक्षः मीढ्वांसं रुद्रमेवं क्षमाप्य प्रसाद्य ब्रह्मणा चतुर्मुखेन चकाराद्रुद्रेण चानुमन्त्रितः अनुज्ञातः उपाध्यायसहितैः ऋत्विगादिभिः कर्म अध्वरमनुवर्त्तयामास सम्प्रवर्तयामास। सन्तारयामासेति पाठे सन्तारयामास समापयामास ॥१६॥ ❋ ❋ कथं कृत्वा सन्तारित इत्यत्राह वैष्णवमिति। यज्ञसन्तत्यै यज्ञविच्छेदपरिहाराय वीरसंसर्गशुद्धये च वीराणां प्रमथानां संसर्गकृतदोषशुद्धये वीरभद्रसंसर्गशुद्धये वा वैष्णवं विष्णुदेवताकं त्रिकपालं त्रिषु कपालेषु संस्कृतं पुरोडाशं द्विजोत्तमा ऋत्विजः निरवपन् ॥ १७ ॥ ❋ ❋ हे विशांपते! विदुर! आत्तहविषा उपात्तहविषा अध्वर्युणा सह यजमानो दक्षः विशुद्धया निर्मलया बुद्धया दध्यौ ध्यातवान् तदा तदैव हरिः प्रादुरभूत् आविर्बभूव। तथेति पाठे यथा येन प्रकारेण दध्यौ तथा तं प्रकारमनतिक्रम्य प्रादुर्बभूवेत्यर्थः ॥ १८ ॥ ❋ ❋ दश दिशः द्योतयन्त्या आत्मनः प्रभया तेषां सदस्यानां तेजः मुष्णन् तिरस्कुर्वन् हरिः स्तोत्रे बृहद्रथन्तरे वाजौ पक्षौ यस्य तेन "बृहद्रथन्तरे पक्षावि"ति श्रुतेः स्तोत्रदक्षेण वा तार्क्ष्येण गरुडेन उपानीतः समीपं प्रापितः ॥ १९ ॥ ❋ ❋ आविर्भूतं भगवन्तं वर्णयति श्याम इति द्वाभ्याम्। हिरण्यवद्रशना यस्येति वस्त्रं लक्ष्यते अर्क्कतुल्येन किरीटेन जुष्टं नीलालका एव भ्रमरास्तैर्मण्डितकुण्डलमास्यं यस्य। कम्बुः शङ्खः अब्जं कमलं चापः शार्ङ्गम् असिः खड्गः चर्म खेटः कम्बुप्रभृतिभिरायुधैः भृत्यरक्षणार्थं व्यग्रैः सत्वरैः हिरण्मयैः भुजैः केयूरादिभूषितैः भुजानां हिरण्मयत्वं केयूरादिभिर्भूषितत्वादवगन्तव्यं, पुष्पितैः शाखाविशेषैः कर्णिकार इव शोभमानः ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

बाह्यस्वच्छत्वमेव तस्य न त्वान्तरं तल्लक्षणाभावादिति तत्राह भवस्तवायेति । औत्कंठ्याद्युत्पन्नबाष्पकलया आन्तरनैर्मल्याभावे रुद्रस्तव एव न युक्तः, स चानेन कर्तुं प्रयत्यते तस्मादान्तरी शुद्धिरप्यनुमीयत इति ॥ ११ ॥ ❀ ❀ कायिक एव प्रयत्नो न तु वाचिक इति शङ्का माभूदित्याह कृच्छ्रादिति । भावेन स्नेहेन ॥ १२ ॥ ❀ ❀ दक्षस्य शिवे त्वान्तरो द्वेषो नास्तीति ज्ञापयितुं तदनुगुणगणैः स्तुतिं करोति भूयानिति । त्वया प्रसह्याऽपि मदपराधानुगुणो दण्डो धृत इति यद्यस्मात्तस्माद्भूयाननुग्रहः कृतः । अहो मे महतां पुसामनुकम्पा शिरश्छेदादिलक्षणोऽनुग्रहो न स्यात्किन्तु अत्यन्तोपकार एवायमामरणमेव लोके कोपदर्शनादतो न युक्त इत्याशङ्क्याऽपराधाधिक्ये नायं नियम इति भावेनाह न ब्रह्मेति । ब्रह्मबन्धुषु ब्राह्मणजातिमात्रेषु तुभ्यं तव हरेश्च वां युवयोरवज्ञा नास्ति धृतव्रतेषु दीक्षितेषु कुत एवाऽवज्ञाऽतः कृताऽवज्ञत्वान्मयि दण्डकरणं युक्तमन्यथा युष्मदवज्ञानेनाऽनुत्थानतमःप्राप्तिः स्यादिति ॥ १३ ॥ ❀ ❀ अवज्ञाभावे निमित्तमाह विद्यातप इति । ब्रह्मात्मतां वेदरक्षकतां ब्रह्मणः पूर्णगुणस्य हरेरात्मतां विशेषसन्निधानदेहतां वा प्रथयितुं प्रख्यापयितुम् अस्माक् अस्राक्षीः स्म । यस्मात्तत्तस्मात्त्वत्सन्निधानपात्रभूतान् ब्राह्मणान्विपत्सु पासीत्यन्वयः ॥ १४ ॥ ❀ ❀ भवान् कृपासमुद्रोऽहं निर्घृणो दुष्ट इत्यत्र विवेकयुक्तिमाह योऽसाविति । न विदिता तत्त्वदृग्यस्य स तथा तेनाऽलब्धतत्त्वज्ञानेनैक्षदद्राक्षीत् नास्माकं पुरुषायुषा शतेन त्वत्कृतप्रतिनिधिकरणं शक्यते । अतः स्वकर्मणा स्वयमेव च तुष्टो भवेत्याह स भगवानिति ॥ १५ ॥ ❀ ❀ प्रकृतमनुसरति क्षमाप्येति । सन्तानयामास अनुसंहितं चकार ॥ १६ ॥ ❀ ❀ दुष्टस्य यज्ञस्य प्रायश्चित्तमन्तरेण कथमनुसन्धानं घटत इति तत्राह वैष्णवमिति । वैष्णवं विष्णुदैवत्यं त्रीणि कपालान्यासनानि यस्य सत्रिकपालस्तं वीरो वीरभद्रस्तस्य संसर्गं उपद्रवस्तस्य शुद्धये परिहाराय निर्वापणं समन्त्रपचनम् ॥ १७ ॥ ❀ ❀ अध्वर्योः प्रतिपत्तिफलमाह अध्वर्युणेति । यजुःपतिर्मन्त्रदेवता ॥ १८ ॥ ❀ ❀ तदा प्रत्यक्षस्य हरेः कर्मविशेषं स्वरूपविशेषं चाह तदेति । तार्क्ष्येण गरुडेन स्तोत्रेण सामरूपेण निर्जितो वशीकृतः ॥ १९ ॥ हिरण्मयी रशना काञ्ची यस्य स तथा हिरण्यवत्पीतमम्बरं यस्य स तथेति वा अर्क्कवत् ज्वलता किरीटेन जुष्टः नीलाश्च ते अलकाश्च नीलालकाः त एव भ्रमराश्च कुण्डले च नीलालकभ्रमरकुण्डलानि एतैर्मण्डितमास्यं यस्य स तथा कम्ब्वादिभिर्व्यग्रैर्विवशैः शिक्षाभ्यासदर्शकैरिवाङ्गदादिभूषणायितत्वाद्धिरण्मयैरिव स्थितैर्भुजैर्लक्षितः पुष्पितः कर्णिकारो वृक्षविशेषः ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तदेति त्रिकम् ॥ १९ ॥ ❀ ❀ कम्ब्वब्जादिभिर्विशिष्टानि अग्राणि येषां तैः ॥ २०–२४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

यद्यपि विप्रलब्धस्तिरस्कृतः तदपि मयि दण्डो भृतः धृत आत्मीयत्वबुद्ध्या शिक्षा कृता न तूपेक्षितोऽस्मि युक्तमेवैतदित्याह ब्रह्मबन्धुषु च ब्राह्मणाभासेष्वपि तुभ्यं तव हरेश्चेति वाम् अवज्ञा नास्ति ॥ १३ ॥ ❀ ❀ तत्र हेतुः विद्येति । त्वमेव ब्रह्मा भूत्वा अस्माक् अस्राक्षीः । यद्वा ब्रह्म वेदमात्मतत्त्वञ्च रक्षितुं तत्तस्मात् हे परम ! पशुर्नित्यस्माकं पशुत्वं तव पशुपतित्वम् ॥ १४ ॥ ❀ ❀ एतत् प्रत्युपकर्तुं न शक्नोमीत्याह । योऽसौ भवान् अविदिततत्त्वज्ञानेन तत्तिरस्करणं विगणय्य वस्तुबुद्ध्या न गणयित्वा अर्वागधः पतन्तं कृपामृतेनार्द्रया दृष्ट्या अपात् । अन्यथा मम नरकादुद्धारो नाऽभविष्यदिति भावः । स्वकृतेन परानुग्रहेणैव तुष्येत्, न तु तत्तोषकारणं किमपि मय्यस्तीति भावः ॥ १५ ॥ ❀ ❀ सोपाध्यायैः ऋत्विगादिभिरनुवर्त्तयामास ॥ १७ ॥ ❀ ❀ वैष्णवं विष्णुदेवताकं निरवपन् जुहुवुः । वीराणां प्रमथादीनां संसर्गकृतदोषशुद्ध्यर्थम् ॥ १७ ॥ ❀ ❀ आत्तहविषा अध्वर्य्युणा सह हे विशाम्पते ! विदुर ! तथा दध्यौ यथा प्रादुरभूदिति ॥ १८ ॥ ❀ ❀ तेषां ब्रह्मादीनां तेजो मुष्णन् हरिः उपानीतः समीपं प्रापितः स्तोत्रे बृहद्रथन्तरे वाजौ पक्षौ यद्वता "बृहद्रथन्तरे पक्षावि"ति श्रुतेः ॥ १९ ॥ ❀ ❀ तमेवानुवर्णयति श्याम इति द्वाभ्याम् । हिरण्यरशनः कनककिङ्कणीकः । पीताम्बरस्यार्थतः प्राप्तत्वादनुक्तिः रशनाशब्देन वस्त्रं वा लक्षयितव्यम् । अर्कतुल्योज्ज्वलकिरीटयुक्तः । नीलालका एव भ्रमरास्तैर्मण्डितं कुण्डलयुक्तमास्यं यस्येति भ्रमरपदेनाऽऽस्यस्य पद्मत्वं ततश्च कुण्डलयोस्तत्प्रफुल्लीकरणार्थमागतयोः सूर्यत्वं कम्ब्वादिभिरायुधैर्भृत्यरक्षार्थं व्यग्रैर्हिरण्मयैः कनककेयूरकङ्कणमुद्रिकादिमत्त्वेन कनकमयैर्भुजैः पुष्पितः कर्णिकार इव शोभमानः । यद्वा कम्ब्वादीनि हस्ताग्रस्थितत्वाद्विशिष्टान्यग्राणि येषु तथाभूता हिरण्मया भुजा एव प्रथममतिशयोक्त्या अष्टैव दलानि तैः शोभमानः कर्णिकारः कमलराज इव मत्वर्थीयार्शआदिनाऽचा वा कर्णिकां राति ददातीति व्युत्पत्त्या वा कर्णिकारशब्देनात्र पद्माभिधानम् ॥ २० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अनुरागतः सुतां स्मरन् औत्कण्ठयाद् बाष्पकलया नाऽशक्नोत् ॥ ११ ॥ ❀ ❀ मनः संस्तभ्य सुताविनाशस्मरणशोकान्निवार्य शशंस तुष्टाव ॥ १२ ॥ ❀ ❀ यद्यपि प्रलब्धः मयाभिभूतः तथापि भवता यो मयि दण्डो भृतः

स तु भूयान् अनुग्रहः कृतः। त्वया शिक्षारूपेण दण्डेनाऽऽहतोऽस्मीति भावः। तुभ्यं तव हरेश्च वां युवयोः ब्रह्मबंधुषु ब्राह्मणाभासेष्वपि अवज्ञा नास्ति। धृतव्रतेषु सा कुतो न कुतोऽपीत्यर्थः॥ १३॥ ❀ ❀ आत्मतत्त्वं वेदरूपं स्वकीयं तत्त्वम् आत्मपरमात्मयाथात्म्यं वा अवितुं ब्रह्मा मुखतः प्राधान्येन ब्राह्मणान् प्रथमम् अग्राग् अस्राक्षीत् तत्तान्। ब्राह्मणान् हे परम ! सर्वविपत्सु त्वं पासीत्यन्वयः॥ १४॥ ❀ ❀ योऽसौ मया न विदितं तत्त्वं यया तया दृशा सभायां दुरुक्तिविशिखैः दुर्वाक्शरैः क्षिप्तोऽपि तदपराधमविगणय्य अर्हत्तमनिन्दया अर्वाग् अधस्तमसि पतन्तं माम् अपात् सः स्वकृतेनैव तुष्येत् नाहं प्रतिकर्तुं क्षम इति भावः॥ १५॥ ❀ ❀ स दक्षः ब्रह्मणा अनुमन्त्रितः अनुज्ञातः उपाध्यायसहितैः ऋत्विगादिभिः कर्म सन्तानयामास॥ १६॥ ❀ ❀ ते द्विजोत्तमाः यज्ञसन्तत्यै वीराणां प्रमथादीनां संसर्गकृतदोषस्य शुद्धये वैष्णवं विष्णुदेवताकं त्रिकपालं त्रिषु कपालेषु संस्कृतं पुरोडाशं निरवपन्॥ १७॥ ❀ ❀ हे विशांपते ! विदुर ! आत्तहविषा अध्वर्युणा सह यजमानो दक्षः विशुद्धया भक्तिपूतया धिया दध्यौ हरिं ध्यातवान् तथा ध्यानानुसारेण हरिः प्रादुरभूत्॥ १८॥ ❀ ❀ तदा दश दिशो विद्योतयन्त्या स्वप्रभया तेषां तेजो मुष्णन् 'बृहद्रथन्तरे पक्षावि'ति श्रुतिप्रसिद्धौ स्तोत्रे बृहद्रथन्तरे वाजाऽपरपर्य्यायौ पक्षौ तद्वता तार्क्ष्येण गरुडेन उपानीतः समीपं प्रापितः॥ १९॥ ❀ ❀ कथंभूत इत्याकाङ्क्षायां हरिं वर्णयति श्याम इति द्वाभ्याम्। श्यामः नीलमणिमयगिरिवर्णः हिरण्यवद्रशना वस्त्रं यस्य सः अर्कनिभेन किरीटेन जुष्टः नीलालकरूपैर्भ्रमरैर्मण्डितं मकरकुण्डलयुक्तमास्यं मुखपद्मं यस्य सः। कम्ब्वादिभिर्व्यग्राणि विराजितान्यग्राणि येषां तैर्हिरण्मयैर्ज्योतिर्मयैर्भुजैः पुष्पितः कर्णिकार इव॥ २०॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

कथं तस्य निर्मलत्वं ज्ञेयमित्यपेक्षायामाह—भवस्तवायेति। भवस्य स्तवाय कृता उद्युक्ता धीर्यस्य स तथाविधोऽपि तत्कर्तुं नाशक्नोत्। तत्रासामर्थ्ये हेतुद्वयमाह—अनुरागत इति। स्वस्मिन् कृतापराधेपि तस्य कृपातिरेकं तत्प्रभावं च दृष्ट्वा जातो योऽनुरागस्तेन सत्याः पूर्वं शिवमाहात्म्यं सत्यमुक्तं तदा तद्वचनमङ्गीकृत्य मया यद्ययं सत्कृतः स्यात्तर्हि न कश्चिदुपद्रवः स्यादतो ममाभिमानेनैवोपद्रवो जातः। सा च मृतेति तां मृतां स्वसुतां स्मरन् तत्स्मरणेनौत्कण्ठ्यात् जाता या बाष्पकला अश्रुधारा तया च नाशक्नोदित्यन्वयः। तथा चापकृष्टत्वेनाभिमतभवस्तवोद्योगेन यत्र तन्माहात्म्यज्ञानादनुरागेण स्वदोषस्फूर्त्यां च तस्य शुद्धान्तःकरणत्वं ज्ञेयम्। अन्यथा यथावद्गुणदोषस्फुरणं न स्यादिति भावः॥ ११॥ ❀ ❀ एवं प्रेम्णा विह्वलितः व्याकुलोपि प्रजापतिर्दक्षो यतः सुधीः शुद्धबुद्धिरतः कृच्छ्रात् कष्टात् बलात् मनः संस्तभ्य स्वस्थं कृत्वा निर्व्यलीकेन भावेन निष्कपटेनाभिप्रायेण ईशं महादेवं शशंस स्वापराधनिवेदनपूर्वकं स्तुत्या क्षमापितवानित्यर्थः॥ १२॥ ❀ ❀ तदेवाह—भूयानिति त्रिभिः। यदपि यद्यपि भवान् मया प्रलब्धः विश्वसृक्सभायां निन्दापूर्वकयज्ञभागनिराकरणेन तिरस्कृतः, तथापि मे ममोपरि भवता भूयान् महान् अनुग्रहः कृतः। को वानुग्रह इत्यपेक्षायामाह—दण्ड इति। यः शिरश्छेदादिना मयि त्वया दण्डो भृतः कृतोयमेव। अन्यथा महदपराधेनाधिकारभ्रंशपूर्वकनरकपातादि स्यादिति। अनिर्वचनीयमेव महत्कृपाया वेगप्राबल्यम्, यतः कृतमहापकारेपि प्रवर्तत इति सूचयति—अहो इति। तत्रापि न बलात्कारेण, किन्तु स्वभावत एव, तत्रापि न केवलं तवैव हि किंतु हरेरपीत्याह—नेत्यादि। ब्रह्मबन्धुषु नाममात्रेण ब्राह्मणेषु वस्तुतो ब्राह्मणत्वप्रयोजकगुणक्रियादिरहितेष्वपि तुभ्यं तव हरेश्चेति वां युवयोरवज्ञा एते स्वापराधेन नरकादौ पतन्त्वित्युपेक्षा नास्ति, कुत एवं धृतव्रतेषु दीक्षितेषु मादृशेषु उपेक्षा स्यात्। हे भगवन्निति संबोधयन् यद्यैश्वर्यवीर्यादिमान् मादृशानां रक्षां न कुर्यात्तदा को वान्यः कर्तुं शक्नुयादिति सूचयति॥ १३॥ ❀ ❀ एवं सर्वथा ब्राह्मणरक्षायां हेतुमाह—विद्येति। विद्या ईश्वरोपासना, तपश्चित्तैकाग्र्यम्, व्रतानि तत्तदाश्रमप्रयुक्तनियमाः। तान् धारयन्ति ते तथा तान् विप्रान् प्रथमं क्षत्रियादेः सृष्टेः पूर्वं मुखतः त्वमस्राक् अस्राक्षीः। किमर्थमिति प्रयोजनाकाङ्क्षायामाह—ब्रह्मेति। ब्रह्म वेदमात्मतत्त्वमात्मनो भगवतो याथार्थ्यं च यद्वा ब्रह्मैव आत्मनां स्थावरजङ्गमानां तत्त्वं परमार्थतो विचारेण याथार्थ्यस्वरूपब्रह्मात्मतत्त्वं तदवितुं स्वावधारणपूर्वकान्योपदेशेन परंपरया रक्षितुमित्यर्थः। नहि विद्यादिहीनो ब्रह्मात्मतत्त्वं ज्ञातुं धारयितुमुपदेष्टुं वार्हति, 'तपसा ब्रह्म विजिज्ञासस्वे'ति श्रुतेः तपसा भगवदनुग्रहवत एव ज्ञानोपदेशादिना संप्रदायप्रवर्त्तने सामर्थ्यात्। एतत्तु शास्त्रप्रसिद्धमेवोक्तम्, न स्वोत्प्रेक्षयेत्यभिप्रायेणाह—स्मेति। मुखत इत्यनेनान्येभ्यः क्षत्रियादिभ्यो ब्राह्मणानामुत्कृष्टत्वं सूचयति, क्षत्रियाद्युत्पत्तिस्थानेभ्यो बाह्वादिभ्यो मुखस्योत्कृष्टत्वात्। यस्मादेवं तत् तस्मात् सर्वविपत्सु नरकादिष्वासन्नेषु सत्सु तेभ्यो ब्राह्मणान् पासि। तदपि पालनं न केवलं नरकादिपतनप्रतिरोधमात्रं तावन्मात्रे कृते दोषसद्भावे पुनः कालान्तरे पतनस्यावश्यकत्वात् अतो दण्डप्रदानेन मूलदोषनिवृत्त्यैव रक्षणं करोषीत्यत्र दृष्टान्तमाह—पाल इति। यथा गर्त्तादिपतनमार्गेण गच्छतः पशूंस्तत्पालको दण्डेन ताडनं कृत्वा ततो निवर्त्तयति येन दण्डभयेन पुनर्न तन्मार्गेण गच्छेयुस्तथा त्वमपीत्यर्थः। एवं रक्षायां सामर्थ्यमपेक्षितमतस्तद्द्योतयन् संबोधयति—हे विभो इति। कुत एवं सामर्थ्यमित्यत्र हेतुं सूचयन् पुनः संबोधयति—हे परम इति। परमेश्वरत्वात्सर्वथा समर्थ इत्यर्थः॥ १४॥ ❀ ❀ एवं सामान्यतो ब्राह्मणरक्षकत्वमुक्त्वेदानीं स्वस्मिन् कृतापराधेपि

भवस्य परमानुग्रहं विलोक्य तत्प्रत्युपकारं कर्तुमशक्तः स्वापराधं तदनुग्रहं च निवेदयन् स्वप्रत्युपकारं विनापि तत्संतोषं प्रार्थयते—योसाविति। योसौ मया क्षिप्तोपि तद्विगणय्य मामर्वाक् पतन्तमपात्स स्वकृतेन तुष्येदिति संबन्धः। कुत्रेत्यपेक्षायामाह—सभायामिति। विश्वसृक्सत्रसभायामित्यर्थः। साधनापेक्षायामाह—दुरुक्तिविशिखैरिति। दुरुक्तयो दुर्वचांस्येव विशिखा उल्वणत्वेन पीडाजनकत्वाद्बाणास्तैः क्षिप्तः शापनिन्दादिना तिरस्कृत इत्यर्थः। एवं तिरस्कारकरणे को हेतुरिति वीक्षायां ममाज्ञानमेवेत्याह—अविदिततत्त्वदृशेति। न विदितं न स्पृष्टं भवतस्तत्त्वमचिन्त्यं माहात्म्यं यया तादृशी दृक् ज्ञानं यस्य तेनेत्यर्थः। माहात्म्यज्ञानाभावात्तिरस्कृत इति भावः। सभायामित्यनेन महाजनमध्ये तिरस्कारकरणेन स्वस्य महापराधित्वं दर्शयति। तत् ममापराधं विगणय्य पृष्ठतः कृत्वा। अर्वाक् नरके। तत्र हेतुः—अर्हत्तमस्य पूज्यतमस्य निन्दयेति। अन्यस्य निन्दयापि दोषाद् दुर्गतिर्भवत्येव, भवादृशां महतां निन्दया तु नरकपात एवेति भावः। आर्द्रया कृपामृतपूर्णया दृष्ट्या स्वकृतेनैवानुग्रहेण। एवं संतोषे योग्यतापि तस्यैवेत्याह—भगवानिति। ऐश्वर्यादिपूर्णत्वादिति। न हि सर्वथा पूर्णस्यापूर्णेन मया प्रत्युपकारं कर्तुं शक्यत इति भावः॥ १५॥ ❀ ❀ स दक्ष एवं मीढ्वांसमनुग्रहवृष्टिकर्त्तारं भवं क्षमाप्य ब्रह्मणा चानुमन्त्रितोऽनुज्ञातः उपाध्यायसहितैः ऋत्विगादिभिः कर्म यज्ञं संतानयामास प्रवर्त्तयामास॥ १६॥ ❀ ❀ ननु रुद्रगणैरग्न्यादेर्नाशितत्वादवशिष्टस्य तत्स्पर्शेन दुष्टत्वात् प्रायश्चित्तं विना कथं यज्ञप्रवृत्तिरित्याशङ्क्याह—वैष्णवमिति। यज्ञस्य नष्टस्य सन्तत्यै साङ्गतासिद्ध्या प्रवृत्त्यर्थं वीराणां रुद्रगणे विद्यमानानां भूतप्रेतादीनां संसर्गेण जातस्य दोषस्य शुद्धये निवृत्त्यर्थं च द्विजोत्तमाः ब्राह्मणश्रेष्ठाः अत एव भगवद्व्यतिरिक्तेनैतत्संपादनमशक्यं भगवता विष्णुनैव सर्वं सेत्स्यतीति मत्वा तत्प्रादुर्भावार्थं वैदिककर्मप्रकरणत्वात्तेनैव मार्गेण वैष्णवं विष्णुदेवताकं पुरोडाशं तत्संज्ञकं हविर्विशेषं त्रिकपालं निरवपन् त्रिषु कपालेषु मन्त्रपूर्वकं पाचितवन्त इत्यर्थः॥ १७॥ ❀ ❀ एवं निर्वापानन्तरं यदा होतुं प्रवृत्तस्तदा भगवान् प्रादुरभूदित्याह—अध्वर्युणेति। आत्तं गृहीतं हविः पुरोडाशः येन तेनाध्वर्युणा सह यजमानो दक्षो विशुद्धया धिया यथा भगवन्तं दध्यौ तथा तेनैव स्वरूपेण हरिः स्वजनक्लेशहर्त्ता भगवान् विष्णुः प्रादुरभूत् प्रकटो जातः। विशांपते हे विदुर इति सम्बोधनेन यो यथा ध्यायति तस्य तथैव भगवान् प्रादुर्भवतीति त्वयानुभूतमेवेति सूचयति॥ १८॥ ❀ ❀ कथं प्रादुरभूदिति प्रकारापेक्षायां तदाह—तदेति। यदा यजमानेन ध्यातस्तदा दश दिशो द्योतयन्त्या प्रकाशयन्त्या स्वप्रभया दीप्त्या तेषां ब्रह्मादीनां सर्वेषां तेजो मुष्णन् तिरस्कुर्वन्। स्तोत्रे बृहद्रथन्तरे वाजौ पक्षौ यस्य तेन तार्क्ष्येण गरुडेन उपानीतः समीपं प्राप्तः। 'बृहद्रथन्तरे पक्षौ' इति श्रुतेः॥ १९॥ ❀ ❀ प्रादुर्भूतं भगवन्तमेव वर्णयति—श्याम इति द्वाभ्याम्। मेघवत् श्यामवर्णः। हिरण्मयी रशना काञ्ची यस्य सः हिरण्यवत् रशना पीतं वस्त्रं यस्येति वा स हिरण्यरशनः। अर्कवत्प्रकाशमानेन किरीटेन जुष्टः युक्तः। नीलाश्च ते अलकाश्च नीलालकास्ते एव कुञ्चितत्वेन भ्रमरसदृशत्वात् भ्रमरास्ते च कुण्डले च नीलालकभ्रमरकुण्डलानि तैर्मण्डितमास्यं यस्य स तथा। तथा कंव्वाद्यायुधयुक्तैर्व्यग्रैः भृत्यरक्षार्थं प्रस्फुरद्भिरङ्गदादिभूषणविभूषितत्वाद्धिरण्मयैरष्टभिर्भुजैः पुष्पितः कर्णिकारवृक्ष इव शोभमानः। विष्णुर्हि सतो यज्ञादेः पालकश्चतुर्भुजः, अत्र तु यज्ञस्वरूपसत्तामपि विधाय स पालनीय इति द्विगुणक्रियाशक्तिप्रादुर्भाव इत्यष्टभुजत्वं ज्ञेयम्॥ २०॥

## भाषानुवादः

उन्होंने महादेवजीकी स्तुति करनी चाही, किन्तु अपनी मरी हुई बेटी सतीका स्मरण हो आनेसे स्नेह और उत्कण्ठाके कारण उनके नेत्रोंमें आँसू भर आये। उनके मुखसे शब्द न निकल सका॥ ११॥ ❀ ❀ प्रेमसे विह्वल, परम बुद्धिमान् प्रजापतिने जैसे-तैसे अपने हृदयके आवेगको रोककर विशुद्धभावसे भगवान् शिवकी स्तुति करनी आरम्भ की॥ १२॥ ❀ ❀ दक्षने कहा—भगवन्! मैंने आपका अपराध किया था, किन्तु आपने उसके बदलेमें मुझे दण्डके द्वारा शिक्षा देकर बड़ा ही अनुग्रह किया है। अहो! आप और श्रीहरि तो आचारहीन, नाममात्रके ब्राह्मणोंकी भी उपेक्षा नहीं करते—फिर हम-जैसे यज्ञ-यागादि करनेवालोंको क्यों भूलेंगे॥ १३॥ ❀ ❀ विभो! आपने ब्रह्मा होकर सबसे पहले आत्मतत्त्वकी रक्षाके लिये अपने मुखसे विद्या, तप और व्रतादिके धारण करनेवाले ब्राह्मणोंको उत्पन्न किया था। जैसे चरवाहा लाठी लेकर गौओंकी रक्षा करता है, उसी प्रकार आप उन ब्राह्मणोंकी सब विपत्तियोंसे रक्षा करते हैं॥ १४॥ ❀ ❀ मैं आपके तत्त्वको नहीं जानता था, इसीसे मैंने भरी सभामें आपको अपने वाग्बाणोंसे बेधा था। किन्तु आपने मेरे उस अपराधका कोई विचार नहीं किया। मैं तो आप-जैसे पूज्यतम महानुभावोंका अपराध करनेके कारण नरकादि नीच लोकोंमें गिरनेवाला था, परन्तु आपने अपनी करुणाभरी दृष्टिसे मुझे उबार लिया। अब भी आपको प्रसन्न करनेयोग्य मुझमें कोई गुण नहीं है; बस, आप अपने ही उदारतापूर्ण बर्तावसे मुझपर प्रसन्न हों॥ १५॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—आशुतोष शङ्करसे इस प्रकार अपना अपराध क्षमा कराकर दक्षने ब्रह्माजीके कहनेपर उपाध्याय, ऋत्विज आदिकी सहायतासे यज्ञकार्य आरम्भ किया॥ १६॥ ❀ ❀ तब ब्राह्मणोंने यज्ञ सम्पन्न करनेके उद्देश्यसे रुद्रगण-सम्बन्धी भूत-पिशाचोंके संसर्गजनित दोषकी शान्तिके लिये तीन पात्रोंमें विष्णुभगवान्के लिये तैयार किये हुए पुरोडाश नामक चरुका हवन किया॥ १७॥ ❀ ❀ विदुरजी! उस हविको हाथमें लेकर खड़े हुए

अध्वर्युके साथ यजमान दक्षने ज्यों ही विशुद्ध चित्तसे श्रीहरिका ध्यान किया, त्यों ही सहसा भगवान् वहाँ प्रकट हो गये ॥ १८ ॥ ❁ ❁ 'बृहत्' एवं 'रथन्तर' नामक साम-स्तोत्र जिनके पंख हैं, उन गरुड़जीके द्वारा समीप लाये हुए भगवान्ने दसों दिशाओंको प्रकाशित करती हुई अपनी अंगकान्तिसे सब देवताओंका तेज हर लिया—उनके सामने सबकी कान्ति फीकी पड़ गयी ॥ १९ ॥ ❁ ❁ उनका श्याम वर्ण था, कमरमें सुवर्णकी करधनी तथा पीताम्बर सुशोभित थे। सिरपर सूर्यके समान देदीप्यमान मुकुट था, मुखकमल भौंरोंके समान नीली अलकावली और कान्तिमय कुण्डलोंसे शोभायमान था, उनके सुवर्णमय आभूषणोंसे विभूषित आठ भुजाएँ थीं, जो भक्तोंकी रक्षाके लिये सदा उद्यत रहती हैं। आठों भुजाओंमें वे शङ्ख, पद्म, चक्र, बाण, धनुष, गदा, खड्ग और ढाल लिये हुए थे तथा इन सब आयुधोंके कारण वे फूले हुए कनेरके वृक्षके समान जान पड़ते थे ॥ २० ॥

वक्षस्यधिश्रितवधूर्वनमाल्युदारहासावलोककलया रमयंश्च विश्वम् ।
पार्श्वभ्रमद्व्यजनचामरराजहंसः श्वेतातपत्रशशिनोपरि रज्यमानः ॥ २१ ॥
तमुपागतमालक्ष्य सर्वे सुरगणादयः । प्रणेमुः सहसोत्थाय ब्रह्मेन्द्रत्र्यक्षनायकाः ॥ २२ ॥
तत्तेजसा हतरुचः सन्नजिह्वाः ससाध्वसाः । मूर्ध्ना धृताञ्जलिपुटा उपतस्थुरधोक्षजम् ॥ २३ ॥
अप्यर्वाग्वृत्तयो यस्य महि त्वात्मभुवादयः । यथामति गृणन्ति स्म कृतानुग्रहविग्रहम्[1] ॥ २४ ॥
दक्षो गृहीतार्हणसादनोत्तमं यज्ञेश्वरं विश्वसृजां परं गुरुम् ।
सुनन्दनन्दाद्यनुगैर्वृतं मुदा गृणन् प्रपेदे प्रयतः कृताञ्जलिः ॥ २५ ॥

दक्ष उवाच

शुद्धं स्वधाम्न्युपरताखिलबुद्ध्यवस्थं चिन्मात्रमेकमभयं प्रतिषिध्य मायाम् ।
तिष्ठंस्तयैव पुरुषत्वमुपेत्य तस्यामास्ते भवानपरिशुद्ध इवात्मतन्त्रः ॥ २६ ॥

ऋत्विज ऊचुः

तत्त्वं न ते वयमनञ्जन रुद्रशापात् कर्मण्यवग्रहधियो भगवन्विदामः ।
धर्मोपलक्षणमिदं त्रिवृदध्वराख्यं ज्ञातं यदर्थमधिदैवमदोव्यवस्थाः ॥ २७ ॥

सदस्या उचुः

उत्पत्त्यध्वन्यशरण उरुक्लेशदुर्गेऽन्तकोग्रव्यालान्विष्टे[2] विषयमृगतृष्णात्मगेहोरुभारः ।
द्वन्द्वश्वभ्रे खलमृगभये शोकदावेऽज्ञसार्थः पादौकस्ते शरणद कदा याति कामोपसृष्टः ॥ २८ ॥

रुद्र उवाच

तव वरद वराङ्घ्रावाशिषेहाखिलार्थे[3] ह्यपि मुनिभिरसक्तैरादरेणार्हणीये ।
यदि रचितधियं माविद्यलोकोऽपविद्धं जपति न गणये तत्त्वत्परानुग्रहेण ॥ २९ ॥

भृगुरुवाच

यन्मायया गहनयापहृतात्मबोधा ब्रह्मादयस्तनुभृतस्तमसि स्वपन्तः ।
नात्मन्[4] श्रितं तव विदन्त्यधुनापि तत्त्वं सोऽयं प्रसीदतु भवान् प्रणतात्मबन्धुः ॥ ३० ॥

---

१. प्रा० पा० ग्रविग्रहद्दया । २. प्रा० पा० लाकृष्टे । ३. प्रा० पा०—शिषां चाखिला० । ४. प्रा० पा०—नात्माश्रितं ।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

वक्षस्यधिश्रिता वधूर्लक्ष्मीर्यस्य सः उदारो हासोऽवलोकश्च तयोः कलया लेशेन पार्श्वे उभयतो भ्रमती व्यजनचामरे एव राजहंसौ यस्मिन्सः रज्यमानः शोभातिशयं नीयमानः ॥ २१ ॥ ❀ ❀ ब्रह्मेन्द्रत्र्यक्षा नायका मुख्या येषां ते ॥ २२ ॥ ❀ ❀ हतरुचस्तिरस्कृतप्रभाः सन्नजिह्वाः सन्ना स्खलिताक्षरा जिह्वा येषाम् ते गद्गदवाच इत्यर्थः। ससाध्वसास्तन्महिम्ना क्षुभितचित्ताः उपतस्थुस्तुष्टुवुः ॥ २३ ॥ ❀ ❀ यस्य महि महिमानं प्रति तु अर्वागेव वृत्तिर्येषां तेऽपि यथामति गृणन्ति स्मास्तुवन्। कृतः प्रकटीकृतोऽनुग्रहार्थं विग्रहो येन तम्। यद्वा तेषामर्वाग्वृत्तित्वे हेतुः। ते तु यस्य महि महिमा विभूतिमात्ररूपा इत्यर्थः ॥ २४ ॥ ❀ ❀ तत्र तावद्दक्षस्तुतिप्रकारमाह। दक्ष इति। गृहीतमर्हणसादनोत्तमं येन तम्। उत्तमे पात्रे आसाद्यार्हणेषु समर्पितेषु प्रीत्या सार्हणपात्रं स्वयमेव येन गृहीतमित्यर्थः। यद्वा कथं प्रपेदे गृहीतमर्हणसादनोत्तमं यथा भवति तथा तद्गृहीत्वा प्रपेदे इत्यर्थः। गृहीत्वेति पाठस्तु सुगमः। गृणन्स्तुवन्प्रपेदे शरणं जगाम। "दक्ष ऋत्विक्सदस्येशभृगुब्रह्मेन्द्रयोपितः। ऋषयश्च तथा सिद्धा यजमानो च लोकपाः ॥ योगिनब्रह्मागिनदेवाश्च स्तुवन्ति जगदीश्वरम्। तथा गन्धर्वविद्याधरब्राह्मणाश्च पृथक्स्तवैः" ॥ २५ ॥ ❀ ❀ ननु साक्षात्परमेश्वर एव रुद्रस्तस्य ब्रह्मपुत्रत्वेन जीवत्वमनुकारमात्रं हन्त! किमिति त्वया भेददृष्टयाऽसावज्ञात इति मां भगवानाक्षेप्स्यतीत्याशंक्याप्रच्युतस्वरूपस्य जीवधर्मेनास्त्रं तवैव संगच्छते नान्यस्येत्याह। शुद्धमिति। स्वधाम्नि स्वस्वरूपे तिष्ठन्भवान् शुद्धं चिन्मात्रं चैतन्यघनः। शुद्धत्वे हेतुः। उपरता नित्यनिवृत्ताऽखिला बुधद्वस्था यस्मात्। अतः एकं भेदशून्यम् अत एवाश्रयम्। "द्वितीयाद्वै भयं भवति" इति श्रुतेः। जीवस्यापि वस्तुत एवंभूतत्वात्तद्वैलक्षण्यार्थमुक्तम्। मायां प्रतिषिध्याभिभूय स्वतंत्र एव संस्तया मायया पुरुषत्वं मनुष्यनाट्यमुपेत्य तस्यां मायायां तिष्ठन्नपरिशुद्ध इव रागादिमानिवास्ते। रामकृष्णाद्यवतारे तथा प्रतीयते भवानित्यर्थः। अन्ये त्वविद्योपाधयो मायाऽभिभूताः संसरंति। अतस्त्वमेवेश्वरो न रुद्रादय इति भावः। अत एवेमां दृष्टिं भगवान्वारयिष्यति। "अहं ब्रह्मा च शर्वश्च जगतः कारणं परम्।" इत्यादिना ॥ २६ ॥ ❀ ❀ ऋत्विजोऽपि स्वस्यापराधं परिहरंतः स्तुवंति। भो अनंजन उपाधिमलशून्य यद्यपि त्वमेव रुद्रादिदेवतारूपस्तथापि नंदीश्वरशापात् कर्मण्येव दुराग्रहधियः संतस्तव तत्त्वं न विद्मः। किंतु धर्मस्यापूर्वस्योपलक्षणभूतं त्रिवृत् त्रयीप्रतिपाद्यमध्वराख्यं तव रूपमस्माभिर्ज्ञातम्। कीदृशम्। यदर्थं यस्य सिद्धयेऽधिदैवं देवताऽधिकारेणादौ व्यवस्थाः अमूर्व्यवस्थाः। अत्रेयमेव देवता नान्येत्येवंभूता नियमाः प्रवृत्ता इत्यर्थः। यद्वा व्यवस्था इत्याख्यातम्। अडागमाद्यभाव आर्षः। यदर्थमद इदमिन्द्राद्यधिदैवं रूपं विशेषेण स्थितवानसीत्यर्थः ॥ २७ ॥ ❀ ❀ सदस्यास्तु निरीश्वरेऽपि दक्षाध्वरे धनलोभेन स्वप्नवृत्तिमनुचिन्त्यानुतप्ता विरक्तिमाशासानाः स्तुवन्ति। हे शरणद आश्रयप्रद उत्पत्त्यध्वनि संसारमार्गे वर्तमानोऽज्ञानां सार्थः समूहस्ते पादौकस्त्वत्पादरूपमोको निवासं कदा यास्यति। कथंभूते संसारमार्गे। अशरणे विश्रामस्थानशून्ये उरुक्लेशा एव दुर्गमस्थानानि यस्मिन् अंतक एवोग्रो व्यालस्तेनान्विष्टे लक्ष्यीकृते विषयरूपा मृगतृष्णमृगतृष्णिका यस्मिन् आत्माहंकारास्पदं शरीरं ममत्वास्पदं गेहं च स एवोरुर्भारो यस्य सः। द्वन्द्वानि सुखदुःखादीन्येव श्वभ्राणि गर्ता यस्मिन् खला एव मृगा व्याघ्रादयस्तेभ्यो भयं यस्मिन् शोक एव दावाग्निर्यस्मिन्। कामेनोपसृष्टः पीडितः ॥ २८ ॥ ❀ ❀ श्रीरुद्रस्तु पूर्वं मम निन्दा दुःसहाऽऽसीदिदानीं तु तां न गणयामीत्याह। तवेति। आशिषा कामेनाऽसक्तैर्निष्कामै रचितधियमभिनिवेशितचित्तं मा मामविद्यो विद्याहीनो लोको यद्यपविद्धं जपत्याचारभ्रष्टं जल्पति तज्जल्पनमहं न गणये। तत्र हेतुः तव यः परोऽनुग्रहस्तेन त्वत्पराणां वा योऽनुग्रहस्तेन ॥ २९ ॥ ❀ ❀ भृगुस्तु स्वभावतस्तत्त्वज्ञानहीना जीवा अतोऽज्ञानकृतं मम दुश्चेष्टितं क्षमस्वेत्याह। यन्मायेति। आत्मन्नात्मनि श्रितमनुगतं तव तत्त्वं न विदन्ति प्रणतानामात्मा बंधुश्च भवान् ॥ ३० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

उदारयोर्महामाधुर्यरंगवर्षिणोर्हासावलोकयोः कलया वैदग्ध्या विश्वमेव रमयन् किं पुनर्भक्तान्। तथा च सर्वोपरि शशी तत्तले किरीटरूपोर्कः तत्तले आस्यरूपं कमलं तत्पार्श्वद्वये नृत्यत्कुण्डलरूपं पुनरर्कद्वयं तत्पार्श्वद्वये चामररूपं हंसद्वयं मुखकमलतले लक्ष्मीरूपा विद्युत् सर्वसमुचितं पुनरष्टदलमेकं कमलमेव चन्द्रार्कविद्युद्भ्रमरहंसशंखचक्रगदापद्मचापशरचर्मासियुक्तमत्यद्भुतं स विष्णुरदृश्यतेत्यर्थः ॥ २१-२३ ॥ ❀ ❀ स्तुतिसाधनवागिन्द्रियस्य सन्नत्वात्तद्व्यापाराभावे कथं ते तुष्टुवुस्तत्राह–अपीति। महि प्रति अनंतत्वादर्वाग्वृत्तयोऽप्राप्तवाङ्मनसव्यापारा अपि। महिशब्दस्य महिमार्थवाचकत्वेपि प्रतिपदाध्याहारे गौरवं मत्वाह–यद्वेति। वेदाः प्रमाणमितिवद्यस्य भगवत आत्मभुवादयो महीति प्रयोगः। इत्यर्थ इति। न हि शक्तीनां शक्तत्वं संभवतीति भावः ॥ २४ ॥ ❀ ❀ तत्र तेष्वात्मभुवादिषु। यक्षस्य यजमानत्वेन मुख्यत्वात्तावदादौ तत्कर्तृकस्तुतिप्रकारमाह–उत्तमे पात्रे स्वर्णादिनिर्मिते पात्रे। आगते प्राप्तेऽर्हणेषु पूजाद्रव्येषु समर्पितेषु स्थापितेषु सत्सु। इत्यर्थ इति। पूजाद्रव्यसहितं पात्रं स्थालमेव येन भक्तिपारवश्यात्स्वीकृतमिति भावः। अर्ह्यते पूज्यते एभिरित्यर्हणानि पुष्पाक्षतादीनि। तानि साद्यन्ते स्थाप्यन्तेऽस्मिन्नित्यर्हणसादनं

तत्रोत्तममर्हणसादनोत्तमम्। यद्वा साद्यतेऽस्मिन्निति सादनं तत्रोत्तमं सादनोत्तममर्हणसादनोत्तममिति। संभवत्वात्प्रकारान्तरमाह—यद्वेति। इत्यर्थ इति। पूजनपात्रमादाय स्तुतिं कुर्वन्प्रापेति भावः। दक्षादय ऊनविंशतिसंख्याकाः पृथक्पृथक्त्वैर्निजनिजाभिमतवाक्यैः। पृथक्पृथक्छंदोभिश्च सर्वेश्वरं स्तुवंतीति स्वामिचरणैस्संगृहीतश्लोकार्थः॥ २५॥ ❀ ❀ स्वयमाक्षिप्य समादधान आह—नन्विति। तस्य रुद्रस्य बुद्ध्यावस्था जागरणादयः। 'बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति वृत्तयः' इत्युक्तेः। अतो निवृत्ताखिलबुद्ध्यवस्थत्वात्। भेदश्च विश्वतैजसादिरूपो जाग्रदादिकृत एवेत्यर्थः। अत एवैकत्वादेव। स्फुटार्था श्रुतिर्न व्याख्याता। इत्यर्थ इति। विद्योपाधिरीश्वरस्त्वमेव यतो मनुष्यनाट्यं यथार्थमभिनेतुं सत्राजितं श्वशुरं मृतं श्रुत्वा "अहो नः परमं कष्टमित्यस्राक्षौ विलेपतुः" इति सत्यभामासन्निधौ सराग इवारोदीत्तथा रामावतारे पितृमृतिं श्रुत्वा सर्वसन्निधावेव चित्रकूटे व्यलपत्सीताहरणोत्तरमतीव कामार्त्त इव लक्ष्मणपार्श्वे शुशोच। तेन च किं तवात्मारामता प्रच्युता ? नेति भावः। इति भाव इति। अविद्योपाधयो रुद्राद्यास्त्वद्दृष्टया मानुष्यनाट्यं कुर्वन्तोऽप्यभिनेतुं न जानंति यतो मयि श्वशुरे सभायामात्मारामत्वं प्रकाशितवानतस्त्वमेवाखिलकलाविचक्षण ईश्वरोसि नान्य इत्याशयः। पुनरपि श्रीरुद्रे कटाक्षः श्रीरुद्रापराधशेषेणैव भगवद्विग्रहे मायिकबुद्धिरपीति ज्ञेयम्। अत एवेश्वरत्वादेव। छंदश्चेदं "वसंततिलका तभजा जगौ गः" इति लक्षणवत्त्वात्॥ २६॥ ❀ ❀ इत्यर्थ इति। देवताधिकरणे पूर्वमीमांसायां तत्तद्देवताधिकारेण तत्तत्कर्मव्यवस्थाः कृतास्त्वयैव जैमिन्यादिरूपेणेति भावः। भवतु व्यवस्था, किं तया ममेति चेदर्थांतरमाह—यद्वेति। आख्यातं तिङन्तम्। इत्यर्थ इति। यज्ञकर्मनिष्पत्तय एवैकस्त्वमिन्द्रादिदेवतारूपेण बहुधासीति भावः। अनंजनेत्यामन्त्रणेन त्वां विना सर्वे सोपाधिका एवातस्त्वमेवोपाधिनिवृत्तये सेव्य इत्युक्तम्॥ २७॥ ❀ ❀ "सदस्या विधिदर्शिनः" इत्यमरः। "शरणं गृहरक्षित्रोः" इत्यमरश्च। हे आश्रयप्रदेति। यदि त्वामाश्रयप्रदं नाश्रयेत तदा त्वया किं कर्तव्यमिति दक्षे कटाक्षाभिप्राया संबुद्धिः। उत्पत्तिरूपो योऽध्वा तस्मिन्नुत्पत्तिपदमुपलक्षणं मृत्यादेः, कदा याति "विभाषा कदाकर्ह्योः" इति भविष्यति लट्। छन्दश्चेदं मन्दाक्रान्ता "मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्" इति लक्षणात्॥ २८॥ ❀ ❀ तवांघ्रौ त्वच्चरणे। मालिनी वृत्तम्। "ननमयययुतेयं मालिनी भोगिलोकैः" इति लक्षणात्॥ २९॥ ❀ ❀ अतस्तत्त्वज्ञानहीनत्वात्। ब्रह्मादय इति रुद्रे कटाक्षः। यद्वा ब्रह्माऽऽदिकारणं येषां ते तथा तत्त्वं स्वरूपं न विदन्ति। जानीम इत्यभिमानग्रस्ता अन्यानेवाज्ञानिनो वदन्तीति भावः। अहं तु यथार्थवादित्वादपराधी भवाम्येवेति भावः। भवांस्तु न ब्रह्मादीनां न मद्विधानां किं तु प्रणतानां नम्रस्वभावानामकिंचनानां बंधुर्हितकरस्तदपि प्रसीदतु मदपराधं क्षाम्यतु। वसंततिलका वृत्तम्॥ ३०॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

पूर्वार्थे प्रतीत्यध्याहाराद् अर्वाग्वृत्तित्वे हेत्वनभिधानाच्च यद्वेति॥ २४॥ ❀ ❀ तत्र ब्रह्मादिमध्ये तावदादौ आसाद्य धृत्वा पूर्वार्थे पात्रग्रहणे नार्हणग्रहणमर्थाक्षिप्तमित्यरुचेर्यद्वेति क्रियाविशेषणे वृत्तिगौरवाद् गृहीत्वेति पाठस्तु सुगमः॥ २५॥ दक्षेत्यादिसंग्रहश्लोकौ स्वरूपे तिष्ठन् भवान् शुद्धं मायाऽशबलितं चिन्मात्रं ब्रह्मैवेति मुख्यमेव सामानाधिकरण्यं न तु लाक्षणिकम् अत एव चैतन्यघन इति व्याख्यातम्। ब्रह्मणः शुद्धत्वे हेतुः उपरतेत्यादि। न च ब्रह्मणो निर्विशेषत्वाल्लक्षणां विना कथं सामानाधिकरण्यमिति वाच्यम्। प्राकृतविशेषाऽभावेऽपि स्वरूपात्मकविशेषस्य श्रीशङ्कराचार्य्यैस्सूत्रभाष्ये स्वीकृतत्वात्। तथाहि असत्यपि कर्मणि सवितुः सविता प्रकाशते इति कर्तृत्वव्यपदेशदर्शनादसत्यपि ज्ञानकर्मणि ब्रह्मणस्तदैक्षतेति कर्तृत्वव्यपदेशोपपत्तेर्न दृष्टान्तवैषम्यमिति तस्य ब्रह्मण आनन्दरूपत्वेऽपि यदि स्वरूपभूतेन शक्तिशब्दवाच्येन ज्ञानेन स्वानन्दानुभवो न स्यात्तदा जडत्वमेव स्यादिति तादृशपुरुषार्थसाधने प्रवृत्तिरपि न स्यात्। अत एव जीववैलक्षण्यार्थमुक्तं मायां प्रतिषिध्येति मायाऽभिभवोऽपि स्वरूपशक्तिमन्तरा न स्यात् तथैवोक्तं श्रीमदर्ज्जुनेन "मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनी"ति, तया चिच्छक्त्यभिभूतया मायया जीवविषयिण्या मनुष्यनाट्यं प्राकृतमनुष्यानुकरणमुपेत्य अवतारसमये मायायां तत्कार्य्ये प्रपञ्चे सर्वदा तु तस्यामेव नियन्तृतया तिष्ठन् अविद्योपाधीनां जीवानां प्राकृतमनुष्यवद्विषयरागादिमानिव प्रतीयते। अतः स्वरूपशक्त्या मायाभिभवकर्तृत्वात् त्वमेवेश्वरो न रुद्रादय इति अन्येषां तथात्वेऽपि वैष्णवगुरौ शिवेऽपि तथा कटाक्षस्तु अपराधसद्भावादेव 'शिवस्य हृदयं विष्णुः विष्णोश्च हृदयं शिवः' इत्यादिभिस्तस्य तत्तुल्यत्वाङ्गीकाराद् अत एव तादृशाक्षेपाभिप्रायादेव॥ २६॥ ❀ ❀ तत्त्वं निर्विकारस्यैव सर्वात्मकत्वम् अपूर्वस्य कालान्तरफलोत्पादककर्मशक्तेः पूर्वार्थे एकत्वं बहुवचने, अत्र कर्मणि इयमेवेत्यादिकल्पनागौरवमतो यद्वेति व्यवस्थितेति वक्तव्ये त्वव्यवस्था इत्यत्राडागमाभाव आर्षः। आदिना आत्मनेपदञ्चार्षम् अत एव इत्यर्थ इत्युक्तम्॥ २७॥ ❀ ❀ उत्पत्त्यध्वनीत्यस्यैव विशेषणं विषयमृगतृष्णेति। किन्तु विषयमृगतृष्णे इति वक्तव्ये 'सुपां सुपः सुलोपश्चे'त्यनेन ङेर्लोपः॥ २८॥ ❀ ❀ कामेन विषयेच्छया भोगेन वा सङ्गरहितैस्तथा च निष्कामैरिति व्याख्यातम्॥ २९॥ ❀ ❀ तमसि अज्ञाने अधुनापीत्यपिनाऽज्ञानस्यानादित्वं सूचितम्। अनुगतं विस्फुलिङ्गे वह्निमिव व्याप्तं तत्त्वं स्वरूपं "तत्त्वं वाद्यप्रभेदे स्यात्स्वरूपे परमात्मनी"ति विश्वः, आत्मा आत्मत्वेन प्रकाशमानः॥ ३०॥

**श्रीमद्वीरराघवव्याख्या**

वक्षस्यधिश्रिता वधूर्लक्ष्मीर्यस्य वनमाला अस्यास्तीति वनमाली उदारहासयुक्तो योऽवलोकः तस्य कलया अपाङ्गेन विश्वं रमयन् पार्श्वयोरुभयोर्भ्रमती व्यजने चामरे एव राजहंसौ यस्य सः शुभ्रातपत्रमेव शशी तेनोपरि रज्यमानः शोभाऽतिशयं नीयमानः ॥ २१ ॥ ❀ ❀ उपागतं समीपे प्राप्तं तं भगवन्तमालक्ष्य दृष्ट्वा त्र्यक्षेन्द्रत्र्यक्षनायका मुख्या येषान्ते सर्वे सुरगणादयः सहसा त्वरयोत्थाय प्रणेमुः नमश्चक्रुः ॥ २२ ॥ ❀ ❀ तस्य भगवतस्तेजसा हतरुचस्तिरस्कृतप्रभाः सन्नजिह्वाः गद्गदवाचः ससाध्वसाः तन्महिम्ना क्षोभितचित्ताः मूर्ध्ना धृतानि अञ्जलिपुटानि येषां ते मूर्द्धसु धृताञ्जलिपुटा इत्यर्थः, अधोक्षजमुपतस्थुः तुष्टुवुः ॥ २३ ॥ ❀ ❀ यस्य भगवतो महिमानं प्रत्यग्वाग्वृत्त्योऽधस्तादेव वृत्तयो येषां ते कात्स्न्र्येन तन्महिमानमवगन्तुमनर्हमनोवृत्तयोऽपि भवादयः शर्वादयः कृताऽनुग्रहविग्रहं कृतः प्रकटीकृतः अनुग्रहार्थं विग्रहो येन तम् , यद्वा कृतोऽनुग्रह एव विग्रहो येन तं भक्तानुग्रहैकप्रधानमूर्त्तिमित्यर्थः, यथामति गृणन्ति स्म । स्मेति विस्मये वाङ्मनसाऽगोचरमहिमानं वाङ्मनोवृत्तिभिस्तुष्टुवुरित्याश्चर्यम् ॥ २४ ॥ ❀ ❀ तत्र तावद्दक्षस्तुतिप्रकारमाह दक्ष इति । गृहीतार्हणसाधनोत्तमम् अर्ह्यते पूज्यते अनेनेत्यर्हणम् अर्हणसाधनं गन्धपुष्पादिकं गृहीतमर्हणं येन स चासौ साधनोत्तमस्तं साधनेषूत्तमः तम् पुरुषार्थप्रापकानां मध्ये उत्तममित्यर्थः । तथाच वक्ष्यति 'धर्मार्थकाममोक्षाख्यं य इच्छेदि'त्यादि । अनेन समीहितफलसाधनप्रक्रान्ताध्वरापेक्षया सुखेन पुरुषार्थप्रापकत्वादुत्तमोपायभूतमित्युक्तं भवति । यद्वा प्रगृहीतं कर्त्तव्यत्वेनोपात्तं प्रक्रान्तमिति यावद् अर्हणं भगवदाराधनभूतयागरूपं पूजनं तस्य यानि साधनानि निर्वर्त्तकानि प्रयाजादीनि तेभ्य उत्तमं यागनिर्वर्त्तकमित्यर्थः । "इष्टाऽऽपूर्त्तं बहुधाजातं जायमानं विश्वं बिभर्त्ति भुवनस्य नाभिरि"ति श्रुतेः बिभर्त्ति पोषयति निर्वर्त्तयतीति यावद् । अत एव हि पूर्वं तदागमनाभावाद्यागानिर्वृत्तिः । न केवलं यागादिनिर्वर्त्तक एवाऽपि तु तत्फलप्रदो भोक्ता चेत्याह यज्ञेश्वरं यज्ञानां भोक्तारं तत्फलदं चेत्यर्थः । तथा च गीतम् "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव चे"ति । अत्रेश्वरत्वाक्षिप्तं भोक्तृत्वं रक्षकत्वं च ईश्वरो हि स्वं भुङ्क्ते रक्षति च । न केवलं यज्ञस्यैव रक्षकः अपि तु यज्ञकर्तुर्यजमानस्य दक्षस्यापीत्याह विश्वसृजां मरीच्यादीनां पतिं पालयितारं स्रष्टृत्वस्याप्युपलक्षणमिदं पतित्वमपि हितोपदेशेनेत्याह गुरुं हितोपदेष्टारं सुनन्दप्रभृतिभिः भृत्यैरनुगैः सुरैर्वृतं परिवेष्टितम् । अनेन नित्यभूत्यधिपतित्वमुक्तम् एवंभूतं भगवन्तं कृताञ्जलिर्बद्धाञ्जलिर्दक्षो गृणन् स्तुवन् प्रयतः समाहितचित्तः प्रपेदे शरणङ्गतः ॥ २५ ॥ ❀ ❀ तत्र प्रकृतिपुरुषविलक्षणं परमात्मस्वरूपं सर्वशक्तिमद्विशोध्य तमनुसन्दधानः प्रपद्यते दक्षः । शुद्धमिति । शुद्धमपापविद्धं कर्मरूपोपाधिरहितमकर्मवश्यमिति यावद् । अत एव स्वधाम्नि स्वस्वरूपे मायां प्रतिषिध्य निरस्य स्वेन रूपेण अस्पृष्टप्रकृतिजन्यदोषमित्यर्थः । शुद्धत्वे हेतुः-उपरताखिलबुद्ध्यवस्थम् उपरताः शश्वन्निवृत्ता अखिलाः सर्वा बुद्ध्यवस्था मनोवृत्तयो यस्य तत् नित्यनिवृत्तप्रकृतिपरिणामरूपान्तर्बाह्येन्द्रियसर्ववृत्तित्वादपापविद्धमिति भावः । यद्वा स्वधाम्नि उपरता प्रशान्ता अखिला बुद्ध्यवस्था यस्य तत् स्वस्वरूपानुभवेनैव नित्यनिवृत्तसर्वमनोवृत्तिरित्यर्थः । तत्कुतः, एकं समाभ्यधिकरहितं स्वस्वरूपस्य निःसमाभ्यधिकानन्दरूपत्वात्तदेकाऽनुभवेन नित्यनिवृत्तसर्वेन्द्रियवृत्तित्वाच्छुद्धमित्यर्थः । किमेवंविधस्वरूपं जडं नेत्याह चिन्मात्रं ज्ञानैकरसं क्वचिदप्यजडं न केवलं स्वयमेव शुद्धमपि त्वन्येषामपि शुद्धत्वापादकमित्याह । अभयं न विद्यते भयं यस्मात्तदभयं यदुपासनादशुद्धत्वापादकभयाख्यसंसारनिवृत्तिस्तदभयमित्युच्यते । तथाच श्रुतिः "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवती"ति । एवंरूपं स्वरूपं प्रतितिष्ठन् अजहदित्यर्थः । तथैव मायथैव पुरुषत्वं पुरुषाकारतामुपेत्य मायां देवादिशरीररूपेण परिणमय्य तस्मिन् जीवान्तरात्मतयाऽवस्थायेत्यर्थः । स्वयमात्मतन्त्रः स्वतन्त्रो भवान् तस्यां मायायाम् अपरिशुद्धः कर्मवश्य इवास्ते । अहो महदिदं सर्वशक्तित्वमिति भावः ॥ २६ ॥ ❀ ❀ अथ ऋत्विजः परमात्मतत्त्वाऽनभिज्ञतामात्मीयामावेदयन्तस्तं सर्वज्ञाराध्यत्वेन स्तुवन्ति तत्त्वमिति । हे अनञ्जन ! निरञ्जन ! पुण्यापुण्यरूपमलरहितेत्यर्थः । वयं नन्दिकेश्वरस्य शापात् कर्मण्येव अवग्रहधियः दुराग्रहचित्तास्ते तव तत्त्वं याथात्म्यं न विदामः न विजानीमः । किन्तु हे भगवन् ! पूर्णषाड्गुण्यमूर्त्ते ! त्रिवृत् त्रयाणां सत्त्वादीनां गुणानां वृत् भावे क्विप् वर्त्तनं यस्मिन् तत् त्रिभिर्गुणैर्वर्तत इति वा 'त्रैगुण्यविषया वेदाः' इत्युक्तरीत्या तत्तद्गुणानुसारेण ह्यध्वरादि कर्मविहितं धर्मोपलक्षणं धर्मस्य क्रियाजन्यस्यापूर्वस्य देवताप्रसादस्य वा उपलक्षणम् उपलक्ष्यतेऽनेनेत्युपलक्षणं ज्ञापकम् उत्पादकमित्यर्थः । तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्प्पयतीति देवताप्रसादादेर्ज्ञापकत्वे हि चोदितम् । इदमध्वराख्यं कर्म ज्ञातम् । अस्माभिरिति शेषः । कीदृशं तत्कर्म तत्राह यदर्थं यत्प्रयोजनाय यत्कर्मफलप्रदानाय यत्कर्माराध्यत्वाय चेत्यर्थः । अदः एतद्दैवम् इंद्रादिदैवतम् अधिव्यवस्था विशेषेण अधिष्ठाय स्थितवानित्यर्थः । व्यवस्था इत्यत्राडागमाभाव आर्षः । अनेन इन्द्रादिरूपेण सर्वयज्ञाराध्यस्तत्फलदश्च त्वमेवेत्युक्तं भवति ॥ २७ ॥ ❀ ❀ अथ सदस्यास्तापत्रयाऽभिघातार्ताः जननपदव्या हेयतामाविष्कुर्वन्तो भगवच्चरणारविन्दशरणागतिं प्रार्थयन्त आहुः—उत्पत्त्यध्वनीति । हे शरणद ! उपायनिर्वर्तक शरणप्रद ! शरण्येति यावत् , उत्पत्त्यध्वनि संसारमार्गे वर्तमानोऽज्ञानां सार्थः समूहः कामेनोपसृष्टः पीडितः ते तव पादौकः पादावेव ओकः विश्रान्तिस्थानं कल्पतरुमूलवद्विश्रान्तिजनकस्थानमित्यर्थः, कदा याति शरणं गच्छति । कथंभूते उत्पत्त्यध्वनि अशरणे विश्रमस्थानशून्ये उरुक्लेश एव दुर्गमस्थानानि यस्मिन् अन्तक एवोग्रो व्याधः तेनान्विष्टे लक्ष्यीकृते

विषयमृगतृष्णात्मगेहोरुभारे विषयरूपा मृगतृष्णिका आत्माभिमानास्पदं च शरीरं गेहं ममतास्पदं गृहं तान्येवोरुभारो यस्मिन् । प्रथमान्तपाठे अञ्जसार्थस्य विशेषणं विषयमृगतृष्णादय एव उरुभारो यस्य स इति । द्वन्द्वानि सुखदुःखादीन्येव श्वभ्राणि गर्ता यस्मिन् खला दुर्जना एव मृगा व्याघ्रादयस्तेभ्यो भयं यस्मिन् शोक एव दावाग्निर्यस्मिन् ॥ २८ ॥ ❀ ❀ रुद्रस्तु मम निन्दा दुःसहासीत् पूर्वमिदानीन्तु तां न गणयामीत्याह तवेति । हे वरद ! इहास्मिन् लोके आशिषा कामेन अखिलैरर्च्ये आराधनीये तथाऽसक्तैर्मुमुक्षुभिश्चादरेणार्हणीये तव वराङ्घ्रौ निरतिशयसुकुमारत्वसुगन्धत्वादियुक्ते चरणारविन्दे रचितधियं न्यस्तचित्तं माम् अविद्यलोकोऽज्ञलोकः यदि यद्यपि अपविद्धम् आचारहीनं जपति जल्पति तथापि तज्जल्पनं न गणये न गणयामि, निन्दकान्न निगृह्णामीत्यर्थः । कुतः त्वत्परानुग्रहेण तव यः परानुग्रहः परेषु अनुग्रहः तेन हेतुना तव परानुग्रहैकनिरतत्वात्त्वच्चरणारविन्दासक्तचित्तानामस्माकमपि परानुग्रह एवोचित इति भावः ॥ २९ ॥ ❀ ❀ भृगुस्त्वविद्यातिरोहितस्वरूपत्वेन देहपरवशत्वात्सर्वे ब्रह्मादयो जीवा अपराधैकपरास्त्वं तु अपराधसहनैकशीलोऽसि अतः प्रकृतोऽपराधस्त्वया क्षन्तव्य इत्याह-यन्माययेति । ब्रह्मादयः सर्वे तनुभृतो देहिनः जीवा इति यावत् गहनया दुरत्यया यस्य तव मायया अपहृतः तिरोहित आत्मनो बोधः धर्मभूतं ज्ञानं येषां ते अत एव तमसि तमःशब्दवाच्यसूक्ष्मप्रकृतिपरिणामरूपे शरीरे स्वपन्तः शयाना वर्तमाना यद्वा तमःकार्ये जन्मजरामरणादिरूपे संसारे शयानाः आत्मन् आत्मनि श्रितम् आश्रितं जीवान्तरात्मतयाधिष्ठितं तव तत्त्वं स्वरूपयाथात्म्यम् अधुनापि न विदन्ति न जानन्ति सोऽयं प्रणतानां शरणागतानाम् आत्मबन्धुः आत्मवन्निरतिशयप्रीतिविषयः प्रीतिमांश्च बन्धुः, यद्वा प्रणतानामात्मनां बन्धुः प्रसीदतु अस्माननुगृह्णातु ॥ ३० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

वक्षस्यधिश्रिता वधूर्भार्या यस्य स तथा पुत्रभार्यावत्प्रेमास्पदत्वद्योतनायाधिश्रितरम इति वक्तव्ये वधूरित्युक्तं, 'वहेश्च' वहेर्धातोरूप्रत्ययो भवति पुत्रभार्यायां गम्यमानायां चकारात्कनीयो भ्रातृभार्यायां धकारश्चान्तादेशः स्वभार्या च वधूः, सापि सेवार्थमत्र वसति न त्वालिङ्गनादिसुखावाप्त्यर्थमतः श्रितेति । उदारहासावलोकयोः कलया चन्द्रकलावदाह्लादिकया पार्श्वे भ्रमद्व्यजनचामरा-ख्यराजहंसाभ्यामुपरि शुभ्रातपत्रशशिना लक्ष्यमाणो दृश्यमानः एवंविधस्तार्क्ष्येणोपानीत इति पूर्वेणान्वयः ॥ २१ ॥ ❀ ❀ ब्रह्मरुद्रौ विष्णुसमानाविति लोकप्रवादं परिहरंस्तत्पूर्वं देवतानां श्रीनारायणप्रणामं वक्ति तमुपागतमिति । ब्रह्मा चतुर्मुख इन्द्रो वायुस्त्र्यक्षो रुद्र एते नायका येषान्ते तथोक्ताः ॥ २२ ॥ ❀ ❀ ननु न प्रणाममात्रमुत्तमत्वादिनिश्चयात्मकं समानानामपि मिथो दर्शनादिति तत्राह तत्तेजसेति । सन्नजिह्वाः जिह्वाशक्तिरहिताः गद्गदवाच इत्यर्थः । अत्र निमित्तं ससाध्वसा इति । ननु सन्नजिह्वत्वेन किं पश्चाज्जगुरिति तत्राह मूर्ध्नीति ॥ २३ ॥ ❀ ❀ स्तुतिलक्षणवागिन्द्रियादिव्यापाराभावेन केवलोपस्थाने किं प्रयोजनमत्राह अप्यर्वागिति । यस्य महित्वे माहात्म्यविषयेऽनन्तत्वादर्वाग्वृत्तयोऽपि अप्राप्तवाङ्मनोव्यापारा अपि स्वभूर्ब्रह्मा तदादयः कृतानुग्रहविग्रहं भक्तानुग्रहार्थं कृतो विग्रहो येन स तथा तं श्रीनारायणं यथामति गृणन्ति स्मेत्यन्वयः ॥ २४ ॥ ❀ ❀ स्तुतिप्रबन्धकथने ग्रन्थाधिक्यं स्यादिति मत्वा यदर्थं हरेराविर्भावस्तस्य दक्षस्य भगवत्प्रतिपत्तिप्रकारं वक्ति दक्ष इति ॥ २५ ॥ ❀ ❀ प्रतिपत्तिर्नाम निर्गुणत्वेन निराकारत्वेन चेत् प्रतिपाद्यमानविषयानुसारिणी स्यात् "केवलो निर्गुणश्चाकाशं ब्रह्म अनादिर्वायमाकाशः शून्यो लौकिक" इति श्रुतेरन्यथा प्रतिपत्तिदोषेणाऽनर्थापत्तिः स्यादिति तत्राह शुद्धिमिति । यद्रूपं शुद्धं निर्दोषत्वेन शोधितम् । कथं शोधितमत्राह स्वधाम्नीति । स्वधाम्नि स्वस्वरूपे उपरता नित्यनिवृत्ता अखिला बुद्धेरवस्था जाग्रदादिजीवावस्था यस्य तत्तथा तर्हि तन्निराकारं किन्नेत्याह चिन्मात्रमिति । केवलं ज्ञानात्मकं जीवस्याप्येतादृक्त्वात् किं विशिष्योच्यत इति तत्राह एकमिति । एकं प्रधानं सर्वोत्तमम् । न हीदृशमन्यदस्तीत्याह अभयमिति "द्वितीयाद्वै भयं भवती"ति श्रुतेः, एतादृशस्यान्यस्याभावात् कालत्रयेऽपि निरस्तभयम्, कुत एतत् सर्वमित्यत आह प्रतिषिध्येति । मायां जडात्मिकां प्रतिषिध्य दूरीकृत्य तिष्ठंस्तादृग्रूपो भवांस्तया माययोपादानत्वेन महदादि सृष्ट्वा महदाद्युपादानत्वेनाण्डं सृष्ट्वा तदन्तस्त्रिवृदहङ्कारविकृताकाशाद्युपादानत्वेन पुरुषशब्दवाच्यशरीराणि सृष्ट्वा तदन्तःस्थितिमत्तया पुरुषत्वं पुरुषशब्दवाच्यत्वमुपेत्य तदन्तर्यामिरूपेण व्यक्तो भूत्वा तस्यां कार्यकारणलक्षणायां प्रकृतावास्ते । "तुच्छ्येनाभ्वपिहितमि"ति श्रुतेः । तत्राज्ञामायावादिनोऽपरिशुद्धमुपहिते जीवमिवामनन्ति तस्मै तुभ्यं नम इति वाक्यशेषः । व्यक्तिलक्षणमेव पुरुषत्वं न तु जीवलक्षणमित्यस्मिन्नर्थे इव शब्दः । "उत्पत्तिर्हरिरूपाणां व्यक्तिरेव न संशयः । उत्पत्तिरेव जीवानां देहोत्पत्तिरुदीर्यते ॥" इति वचनात् "जडमाया न तस्यास्ति शरीरत्वेन कुत्रचित् । सृष्ट्वा तथा शरीराणि तत्स्थितेः पुरुषः स्मृतः ॥ मायायामशरीरायामपि विष्णुः स्वयं स्थितः । तस्मात्प्राकृत इत्येव जीववत्तं वदन्ति हि ॥ अस्पृष्टत्वेऽपि तद्धर्मैस्तद्गत्वादेव कारणाद्" इति वचनात् नेन्द्रजाललक्षणा मायात्रोच्यते । किन्तु जडा जगदुपादानभूता प्रकृतिरेव ॥ २६ ॥ ❀ ❀ ऋत्विगादिवैदिकैः श्रीनारायण एव स्तुत्यो वन्द्यश्चेति भावेन तत्प्रतिपत्तिप्रकारं वक्ति तत्त्वं न त इति । अनञ्जन ! पुण्यपापलेपरहित ! ऋत्विजो वयं ते तव तत्त्वं न विदामः । कस्मात्

अज्ञानमत्राहुः 'रुद्रशापादिति यज्ञादिकर्मण्यवग्रहधियो दुराग्रहबुद्धित्वादित्यर्थः। नन्वेवं तर्हि एतस्मिन् कर्मणि भवत आविर्भावः कथं घटत इति शङ्का मा भूदित्याह धर्मेति। सदाशिवस्य प्रसन्नदृष्ट्यवलोकनात्फुल्लतत्त्वज्ञानैरस्माभिः क्रियमाणमिदमध्वराख्यं कर्म ज्ञातं त्वत्पूजात्वेनेति शेषः। कथमेतदवगतमित्यत उक्तं धर्मेति। भक्त्यादिधर्माणामुपलक्षकत्वादित्यर्थः। किमत्र प्रमाणमित्यतस्तद्ध्वनयति त्रिवृदिति। त्रीन् प्रत्यक्षानुमानागमानावृणोतीति तदानींतनैः पुरुषैर्दृश्यमानत्वात् प्रत्यक्षं प्रथमप्रमाणं द्वितीयं हरेराविर्भावलिङ्गं, तृतीयम् "एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः। यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदे"त्यागमं, प्रत्यक्षस्य तु लोकविडम्बनार्थत्वोपपत्तेर्लिङ्गस्य च विनोददर्शनाय संभवादागमस्य च स्तुतिरूपत्वेनार्थवादत्वोपपत्तेः। अतो निर्णायकाभावात् सिकतावनिग्रहनिर्माणवत्सर्वं शिथिलमभूदिति तत्राह यदर्थमिति। त्वं यस्याध्वरस्य भागस्वीकारार्थमदोऽधिदैवं मुत्तमदैवं ब्रह्मादिदेवताशरीरे आस्था इति यदत इदं निर्णायकं प्रमाणमित्यर्थः। "भुङ्क्ते यज्ञभुजो देवानाविश्य पुरुषोत्तमः।" इति वचनं चास्मिन्नर्थे मानम्। यद्वा कुतो न विदाम इति तत्राह धर्मेति। धर्ममदृष्टमुपलक्षयतीति तथोक्तं ज्ञानिभिरिदमध्वराख्यं कर्म यदर्थं यस्त्वमर्थो विषयो यस्य तत्तथा ज्ञातं कुतः कर्मणस्त्वद्विषयत्वमत्राह अधिदैवमिति। सत्त्वमधिदैवमास्था 'अहं हि सर्वयज्ञानां भोक्ते'ति यदतस्त्वद्विषयो यज्ञ इति तद्यजनमस्माभिरिन्द्रादिविषयत्वेन ज्ञातमतो न विदाम इति॥ २७॥ ❀ ❀ हे शरणद! मोक्षलक्षणगृहप्रद! अशरणे रक्षितृपुरुषरहिते उरवो बहवः "अविद्यास्मितारागद्वेषाऽभिनिवेशाः पञ्च क्लेशाः" तैर्दुर्गैरन्तकाख्येनोग्रेण व्यालेनाऽजगरेण सर्पेणाऽक्रष्टे द्वन्द्वानि सुखदुःखान्येव श्वभ्राणि गर्तान्यस्मिन्स तथा तस्मिन्। खलाः पिशुनास्त एव मृगास्तैर्भयं यस्मिंस्तथा तस्मिन्। शोको मनःपीडा स एव वनवह्निर्यस्मिन्नेवंविधे। उत्पत्त्यध्वनि जननमरणादिमार्गे। अज्ञसार्थः अज्ञानि परिपत्तव शस्तौ पादौ कदा याति न कदापीति मन्यामहे। कुत इति तत्राह कामेति। कामेनोपहृतत्वात्, कामोपहृतत्वं स्फुटयति विषयेति। विषयमृगतृष्णा शब्दादिविषयाख्यमरीचिकाजलम् उद्दिश्यात्मयत्नः गेहं गृहम् एतद्द्वयमुरुभारो यस्य स तथा "आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि। यत्नेऽर्केऽग्नौ मतौ वाते" इति यादवः। यद्वा विषयमृगतृष्णैवात्मगेहं स्वनिवासस्थानं तदेवोरुभारो यस्य स तथा॥ २८॥ ❀ ❀ रुद्रस्तुत्या सर्वलोकस्य हरेः सर्वोत्तमत्वे संशयमुन्मूलयति तवेति। हे वरद! तवाशिषा कारणेनानभिध्ये अभिध्यानाविषये आशीरर्थं ध्यातुमयोग्ये। असक्तैर्निःसंगैर्मुनिभिर्ब्रह्मादिज्ञानिभिरप्यादरेणार्हणीये पूज्ये वराङ्घ्रौ वरणीयगुणे श्रीपादे यदि रचितधियं कृतबुद्धिं मां विद्धि मां जानासि–लडर्थे लोट्–कथंभूतं मां लोकापविद्धं लोकबाह्यम्। अनेन रुद्रस्य ज्ञान्युत्तमत्वं द्योतयति। तर्हि जगति त्वत्परानुग्रहेण न गणये यङ्कञ्चन पुरुषं न प्रार्थय इत्यर्थः। फलेच्छया ध्यानाभावेऽपि निष्कामत्वेन ध्यानादन्याशिषोऽपि भवन्तीत्यस्मिन्नर्थे चशब्दः। हिशब्देन गतिमर्ण्वीं प्रयुङ्क्ष इति वाक्यं सूचयति॥ २९॥ ❀ ❀ ब्रह्मादीनामपि श्रीनारायणतत्त्वज्ञानं दुर्लभं किमुतास्माकं ततो रुद्रे द्वेषस्तत्तत्त्वाज्ञानहेतुक इति भावं ध्वनयन् भृगुस्तं भगवन्तं स्तौति यन्माययेति श्लोकद्वयेन। गहनया गम्भीरया यस्य तव माययाऽपहृत आत्मबोधः[1] स्वरूपज्ञानं येषां ते तथा अत एव तमस्यविद्यायां स्वपन्तः शयाना ब्रह्मा आदिर्येषां देवानां ते ब्रह्मादयस्तनुभृतः शरीरिणः। अनेन देहवत एव ज्ञानग्रहणयोग्यतां सूचयति। आत्मसु जीवेषु प्रेरकत्वेनाश्रितं स्थितं तव तत्त्वमधुनापीत्यनेनोत्पाद्य दीर्घकालगतिं सूचयति न विदन्ति सोऽयं प्रणतानामात्मनां जीवानां बन्धुर्भवान्प्रसीदत्वित्यन्वयः। यद्वा ब्रह्मादिः कारणं येषां ते ब्रह्मादयस्तनुभृतो जीवा आत्मानं हृदयमाश्रितमन्यत् समम्॥ ३०॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अर्वाग्वृत्तित्वमेव सर्वेषां दर्शयति दक्ष इत्यादिना॥ २५॥ ❀ ❀ गुणसंसर्गिणामस्माकं तदावेशो नाद्भुतः, यतः सृजामि तन्नियुक्तोऽहमित्यादिन्यायेनास्वतन्त्रतया ब्रह्मरुद्रावपि कदाचित्तदाविष्टौ भवतः। किन्तु भवानेव तत्संसर्गेऽपि तदनाविष्ट इति स्वदोषमार्जनार्थमाह शुद्धमिति। शुद्धमित्यादिलक्षणं यत्तत्त्वं तद्रूपो भवान् श्रीभगवद्रूपे स्वधाम्नि स्वरूपशक्तिवैभवे परमवैकुण्ठे तिष्ठन् शुद्धसत्त्वादौ हेतुः मायां प्रतिषिध्य न यत्र मायेत्युक्तत्वात् स्वरूपशक्त्याविष्कारेण तत्सम्बन्धं परिहृत्येति तदेवं तिष्ठन्नेवात्मतन्त्रः सन्नंशेन तयैव मायया पुरुषत्वं तद्द्रष्टृत्वमुपेत्य तस्यामेव मायायां स्वकार्यायां तत्तन्नियमादिना अपरिशुद्ध इवास्ते। तथा प्रतीयते मात्रमित्यर्थः॥ २६॥ ❀ ❀ व्यवस्येति चित्सुखपाठान्तरम्॥ २७॥ ❀ ❀ सदस्यास्तु कर्ममार्गैर्नानादुःखं विचार्य तदुपरतिसदनं तच्चरणोपसरणमेव प्रार्थयन्ते। उत्पत्तीति। व्यालाक्रष्टेति चित्सुखः॥ २८॥ ❀ ❀ श्रीरुद्रस्तु अन्यैर्दुरुहं स्वरहस्यं भक्त्यावेशेन प्रकटयन्नेव स्तौति तवेति। आशिषा कामनया हेतुना

---

१. तद्भृत्यनन्दिशापात्।

२. अधिकाश्च ते देवाश्चाधिदेवाः ब्रह्मादयः तेषामिदं शरीरमधिदैवम्। यद्वा देवानां ब्रह्मादीनामिदं शरीरं दैवम्, अधिकं च तत् दैवं चेति विग्रहः। एतेनाधिदेवानामिदमाधिदैवमिति स्यात् कथमधिदैवमिति शङ्का परास्ता। इति दीपिका।

अखिलार्थे तद्दातरीत्यर्थः। आशिषमाशयाढ्ये इति चित्सुखः। माविद्येत्यादौ मां विद्धि लोकानपि स्वानजितेति चित्सुखः ॥ २९ ॥ ❀ ❀ नात्माश्रितमिति पुण्यारण्यः ॥ ३० ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

वधूर्लक्ष्मीः। उदारयोर्महामाधुर्यरत्नवर्षिणोर्हासावलोकयोः कलया वैदग्ध्या विश्वमेव रमयन् किं पुनर्भक्तान् पार्श्वयोर्भ्रमती व्यजनचामरे एव राजहंसौ यस्मिन् सः। श्वेतातपत्रमेव शशी तेन उपरिस्थितेनेति। सर्वोपरि शशी तत्तले किरीटरूपोऽर्कः तत्तले आस्यरूपं कमलं तत्पार्श्वद्वये नृत्यत् कुण्डलरूपं पुनरर्कद्वयं तत्पार्श्वद्वये चामररूपे हंसद्वयम्। मुखकमलतले लक्ष्मीरूपा विद्युत् सर्वसमुदितं पुनरष्टदलमेकं कमलमेव चन्द्राऽर्कविद्युद्भ्रमरहंसशङ्खचक्रगदापद्मचापशरचर्माऽसि-युक्तमत्यद्भुतं स विष्णुरदृश्यत इत्यर्थः ॥ २१ ॥ ❀ ❀ ब्रह्मेन्द्रत्र्यक्षा नायका येषान्ते ॥ २२ ॥ ❀ ❀ सन्नजिह्वाः सगद्गदवाचः ससाध्वसाः ससम्भ्रमं क्षुभितचित्ताः मूद्ध्र्ना मूर्ध्नि ॥ २३ ॥ ❀ ❀ महि तु महिमानं प्रति तु अर्वागेव वृत्तिर्येषां तेऽपि ॥ २४ ॥ ❀ ❀ गृहीतमर्हणसादनोत्तमं यत्र तद्यथा स्यात्तथा सादनं पात्रं गृहीत्वेति च पाठः ॥ २५ ॥ ❀ ❀ शुद्धं चिन्मात्रमेव भवान्मायां प्रतिषिध्य स्वधाम्नि स्वरूपे तिष्ठन्नेव भवान् तयैव मायया पुरुषत्वं मनुष्य-नाट्यमुपेत्य तस्यां मायायां रामकृष्णाद्यवतारेषु अपरिशुद्ध इव रागादिमानिवास्ते, अतस्त्वमेवेश्वरो विद्योपाधिरन्ये त्वविद्योपाधयो रुद्राद्यास्तद्दृष्ट्या मनुष्यनाट्यं कुर्वन्तोऽभिनेतुं न जानन्ति। श्वशुरे मयि सभायामात्मारामत्वं प्रकाशितवन्तः। त्वन्तु श्वशुरं सत्राजितं मृतं श्रुत्वा "अहो नः परमं कष्टमित्यस्राक्षौ विलेपतुः" इति सत्यभामासन्निधौ सराम एवारोदीरिति तेन किं तवात्मा-रामत्वं प्रच्युतमिति भगवानेवाऽखिलकलाविचक्षण इति पुनरपि श्रीरुद्रे कटाक्षः। श्रीरुद्राऽपराधशेषेणैव भगवद्विग्रहे मायिकत्व-बुद्धिरपीति ज्ञेयम्। किञ्च स्वधाम्नि वैकुण्ठे तिष्ठन्नेव तयैव मायया सहितः पुरुषत्वं महत्स्रष्टृरूपमुपेत्य तस्यां मायायां मायिकेषु समष्टिव्यष्टिषु च आस्ते अन्तर्यामिरूपेण वसति। यदुक्तं "विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः। एकन्तु महतः स्रष्टृ द्वितीयन्त्वण्डसंस्थितम्। तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते ॥" इति। अपरिशुद्ध इव न त्वपरिशुद्धः मायायां स्थितोऽपि तत्सम्बन्धाभावादिति भावः। इति तु वास्तवार्थो ज्ञेयः ॥ २६ ॥ ❀ ❀ हे अनञ्जन! मायोपाधिरहित! नन्दीश्वरशापात् कर्मणि दुराग्रहधियो वयमपि न विद्मो दक्षः कथं ज्ञास्यतीति दक्षे कटाक्षः। तर्हि किं जानीथेति तत्राहुः। धर्मे उपलक्ष्यतेऽनेनेति तत् त्रिवृत् त्रयीप्रतिपाद्यम् अध्वराख्यं तव स्वरूपमेव ज्ञातमस्माभिः। यदर्थं यस्य सिद्धये अधिदैवं देवाधिकरणे अदो व्यवस्था इयमत्र देवतेत्येवमपूर्व्यवस्था भवन्ति ॥ २७ ॥ ❀ ❀ उत्पत्त्यध्वनि संसारमार्गे अशरणे विश्रामशून्ये द्वन्द्वानि सुखदुःखादीन्येव श्वभ्राणि गर्त्ता यस्मिन् खला एव मृगाः व्याघ्रादयस्तेभ्यो भयं यस्मिन् शोक एव दावाग्निर्यत्र तस्मिन्। अज्ञानां समूहः ते पादौ कदा याति यास्यति नैव प्राप्स्यति ते चाज्ञाः सम्प्रति दक्षस्तदीया ऋत्विगादय एवैते दृश्यन्त इति दक्षादिषु कटाक्षः। हे शरणद! हे आश्रयप्रदेति त्वां यदि स नैवाश्रयते तदा त्वया किं कर्तव्यमिति भावः। कीदृशः विषयरूपा मृगतृष्णा यस्मिन् तथाभूत आत्मा देहोऽहन्तास्पदं गेहञ्च उरुर्भारो यस्य सः। कामेनोपसृष्टः कामपीडितः ॥ २८ ॥ ❀ ❀ आशिषा कामेन हेतुना अखिलार्थे अखिलार्थदातर्यपि असक्तैर्निष्कामैः अर्हणीये सेवितुमर्हे अङ्घ्रौ रचितधियमावेशितबुद्धिं मा मां न विद्यते विद्या ज्ञानं यस्य तथाभूतो लोको दक्षादिर्यदि अपविद्धमाचारभ्रष्टं जपति जल्पति तदपि तज्जल्पनं तव यः परोऽनुग्रहस्त्वत्पराणां वानुग्रहस्तेन न गणये ॥ २९ ॥ ❀ ❀ ब्रह्मादय इति श्रीरुद्रे कटाक्षः। तमसि स्वपन्त इति तेऽप्यविद्याग्रस्ता एव आत्मन् श्रितं स्वप्रकाशं तव तत्त्वम् अधुनापि न विदन्ति जानीम इत्यभिमानग्रस्ता अन्यानेवाज्ञानिनो वदन्तीति भावः। प्रसीदत्विति अहन्त्वपराधी यथार्थवादित्वाद्भवाम्येवेति भावः। भवांस्तु न ब्रह्मवादिनां नापि मद्विधानां किन्तु प्रणतानां नम्रस्वभावानामकिञ्चनानां बन्धुः। तदपि प्रसीदतु मदपराधमिमं क्षाम्यतु ॥ ३० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

वक्षस्यधिश्रिता वधूः श्रीर्यस्य सः वनमालाऽस्यास्तीति वनमाली उदारहाससहितस्यावलोकस्य कलया विश्वं रमयन् पार्श्वे उभयतो भ्रमन्तौ व्यजनचामररूपौ राजहंसौ यस्मिन् स श्वेतातपत्रमेव शशी तेनोपरि रज्यमानः शोभमानः ॥ २१ ॥ ❀ ❀ ब्रह्मादयो नायकाः नेतारो येषां ते ॥ २२ ॥ ❀ ❀ तस्य तेजसा प्रभया हतरुचोऽभिभूतप्रभाः ससाध्वसाः ससंभ्रमाः सन्नजिह्वास्त्यक्तान्यवाचः उपतस्थुः तुष्टुवुः ॥ २३ ॥ ❀ ❀ यस्य भगवतः महि तु महिमानं प्रति तु अर्वागेव पारं गन्तुम-नर्हाः एव वृत्तयो येषां तेऽपि यथामति मतिमनतिक्रम्य कृत आविष्कृतोऽनुग्रहेण विग्रहो येन तं गृणन्ति स्म अस्तुवन् ॥ २४ ॥ तत्र तावद्दक्षः गृहीतार्हणसादनोत्तमं कृपया दक्षहस्ताद् गृहीतमर्हणसादनोत्तमम् अर्हणयुक्तपात्रोत्तमं येन तं गृणन् स्तुवन् प्रपेदे शरणं

जगाम ॥ २५ ॥ ❀ ❀ "भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं विविधं ब्रह्ममेतत्। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" इत्यादिश्रुतिस्मृतिप्रसिद्धानि त्रीणि तत्त्वानि तत्र मायाकार्येषु भोग्यपदार्थेषु प्रविष्टः स्वस्वकर्मवशाद् ब्रह्मादिपिपीलिकान्तभेदवान् ईशानीशादिनामभाक् नानाभिमानवान् कर्मफलभोक्ता मायावृतज्ञानो जीवः अशुद्धः। भवांस्तु चिदचिदनन्तशक्तिः करुणागुणगणसिन्धुः स्वभावतोऽपास्तसमस्तदोषः नित्यधामस्थः परमानन्दस्वरूपः "विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः। आद्यन्तु महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम्। तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते" इति शास्त्रोक्तानि जगद्धिताय रूपाण्याऽविष्करोति इत्याह भगवदनुग्रहाल्लब्धतत्त्वज्ञानः श्रीदक्षः शुद्धमिति। "योऽस्याध्यक्षः स परमे व्योमन् ब्रह्मणः सदनादूर्ध्वं तद्विष्णोः परमं पदं शुद्धं सनातनं ज्योतिः परं ब्रह्मेति यद्विदुरि" त्यादिश्रुतिस्मृतिप्रसिद्धेः "दर्शयामास लोकं स्वं गोपानां तमसः परमि"ति वक्ष्यमाणे स्वधाम्नि तिष्ठन् मायां प्रकृतिं जीवमोहिनीं स्वशक्तिं प्रतिषिध्य स्वधाम्ना विधूय अभिभूय देहेन्द्रियादिरूपां स्वभोगार्थमनारोप्येत्यर्थः। मायामयं देहादिकं विनैव स्वासाधारणेन रूपेणेत्यर्थः। तथैव मायया निमित्तभूतया 'अध्ययनेन वसतीतिवत्' तृतीया तां महदादिरूपां कर्तुमित्यर्थः। पुरुषत्वं महत्स्रष्टृपुरुषत्वमुपेत्य कथंभूतं शुद्धं मायिकदोषवर्जितं यतश्चिन्मात्रं मायाकृतजाड्यवर्जितम्। अत एव उपरताऽखिलबुद्ध्यवस्थम् उपरता नित्यनिवृत्ताः अखिलाः सङ्गद्वेषादिरूपा जागरादिरूपाश्च बुद्ध्यवस्था यस्मात् तम् एकं निःसमानाधिकम्। अभयं नास्ति भयं यस्मात्तं "यदा ह्येवैष एतस्मिन् अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विंदते अथ सोऽभयं गतो भवती" ति श्रुतेः, तस्यां मायायाम् अपरिशुद्ध इव बद्धजीव इव यथा जीवः सुपर्णस्तथा तत्सखः सुपर्णः भवानास्ते "द्वा सुपर्णा सयुजा सखायौ" इति श्रुतेः। तत्र च समष्टिजीवसखो भगवानण्डस्थपुरुषरूपः व्यष्टिजीवसखः सर्वभूतस्थपुरुष इति विवेकः। ननु तर्हि तत्र जीववन्ममापि देहादिपारतन्त्र्यं किमित्यत आह आत्मतन्त्र इति। एवंभूतं त्वां शरणं गतोऽस्मीति शेषः ॥ २६ ॥ ❀ ❀ ऋत्विजस्तु दक्षः त्वत्तत्त्वज्ञः वयं तु त्वत्तत्त्वानभिज्ञाः केवलवेदत्रयीरूपं यज्ञरूपं च त्वां विजानीम इत्याहुः तत्त्वमिति। हे अनञ्जन! हे निर्दोष! रुद्रस्य नन्दीश्वरस्य शापात् ते तत्त्वं स्वरूपगुणादियाथात्म्यं न विदामः, किन्तु कर्मण्येव अवग्रहा आग्रहवती बुद्धिर्येषान्ते धर्मस्योपलक्ष्यते ज्ञाप्यतेऽनेनेत्युपलक्षणं ज्ञापकं त्रिवृत् ऋगादिरूपं ब्रह्म अध्वराख्यं च ते रूपं ज्ञातमस्माभिः यदर्थम् अध्वराख्यरूपार्थम् अद इदमिन्द्राद्यधिदैवरूपं व्यवस्थाः अडागमाग्रभाव आर्षः। विशेषेणाऽऽस्थितवानसीत्यर्थः ॥ २७ ॥ ❀ ❀ सदस्यस्तु अतत्त्वज्ञस्तत्त्वज्ञो वा त्वत्कृपां विना त्वत्पादौ नैव प्राप्नोतीत्यतः त्वत्पादप्राप्त्यसाधारणकारणं कृपां कुर्वित्याशयेन स्तुवन्ति उत्पत्त्यध्वनीति। हे शरणद! आश्रयप्रद त्वमेव कृपां कुर्यास्तदा त्वत्पादपद्मप्राप्तिर्भवेदिति संबोधनाऽभिप्रायः। अन्यथा तु उत्पत्त्यध्वनि उत्पत्त्युपलक्षिते संसारमार्गे वर्त्तमानः विषयमृगतृष्णात्मगेहोरुभारः विषयाख्या मृगतृष्णा च आत्मा आत्मत्वेन गृहीतः देहश्च गेहं गृहं च तान्येवोरुभारो यस्य न तु तपोवृत्तवेदान्ताभ्यासादयः सः अत एव कामैर्वासनाभिरुपसृष्टो व्याप्तः एवंभूतः तत्त्वज्ञानहीन इत्यर्थः। ज्ञसार्थः एकस्य त्वत्कृपावर्जितस्य तु का कथा ज्ञानां तत्त्वज्ञानां सार्थः समूह इत्यर्थः। ते पादौकः कदा याति यास्यति न कोऽपि कदापि यास्यतीत्यर्थः। कथम्भूते उत्पत्त्यध्वनि अशरणे सुखविश्रामरहिते उरुक्लेशैर्दुर्गे अन्तकरूपेण उग्रेण दुर्निवारणेन व्यालेन दुष्टगजेन दुष्टसर्पेण वा अन्विष्टे उपरुद्धे "व्यालो दुष्टगजे सर्पे" इति मेदिनीकोशात् द्वन्द्वानि रागद्वेषशीतोष्णादीन्येव श्वभ्राणि गर्ता यस्मिन् खला एव मृगाः सिंहास्तेषां भयं यस्मिन् शोक एव दावो वनाग्निर्यस्मिन् ॥ २८ ॥ ❀ ❀ श्रीरुद्रस्तु पूर्वं निन्दामसहमानेन मयाऽध्वरनाशः कृतः, इदानीन्तु त्वत्कृपया त्वद्ध्यानासक्तस्तां न गणयामीत्याह तवेति। हे वरद! आशिषा कामेन असक्तैरकामैर्मुनिभिरर्हणीये त्वत्परानुग्रहेण त्वदीयया परया कृपया रचितधियं ध्यानासक्तम् अविद्यः त्वद्ध्यानरूपविद्याऽनभिज्ञो लोकः यदि अपविद्धमाचारविभ्रष्टं मा मां जपति वदति तर्हि तद्वचनं न गणये ॥ २९ ॥ ❀ ❀ भृगुस्तु भगवन्मायामोहिताः ब्रह्मादयो भगवत्प्रसादं विना आत्मानमपि न जानन्ति कुतो भगवन्तं परमात्मानमिति वदन् भगवत्प्रसादं प्रार्थयते यन्माययेति। यस्य तव गहनया दुरुहया मायया अपहृत आत्मबोधो येषां ते आत्मन् आत्मनि जीवे श्रितं विद्यमानमपि तव तत्त्वं न विदन्ति सोऽयं प्रसीदतु प्रसादं करोतु, प्रणत आत्मा मनो येषां तेषां बन्धुः ॥ ३० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

वक्षस्यधिश्रिता स्थिता वधूर्लक्ष्मीर्यस्य सः। लक्ष्मीकृपादृष्ट्या दक्षयज्ञे समृद्ध्याधिक्यं भवत्वित्यभिप्रेत्य तामपि सहानीतवानिति ज्ञेयम्। वनपुष्पाणां मालाऽस्यास्तीति वनमाली। उदारः सर्वभक्तजनमनोरथपूरको यो हासः अवलोकश्च तयोः कलया लेशेन। चन्द्रकलावदाह्लादकत्वात्कलापदप्रयोगः। विश्वं रमयन् आह्लादनेन स्वस्मिन् आसक्तं कुर्वन्। पार्श्वे उभयतो भ्रमती व्यजने चामरे एव राजहंसवच्छुभ्रत्वाद्राजहंसौ यस्य सः। श्वेतमातपत्रं छत्रमेव शशिवच्छोभमानत्वेन तापहारकत्वेनाह्लादकत्वेन च शशी तेनोपरि रज्यमानः शोभातिशयं प्राप्यमाणः एवंभूतो भगवांस्ताक्ष्र्येणोपानीत इति पूर्वेणैव संबन्धः ॥ २१ ॥ ❀ ❀ एवमागतं भगवन्तं दृष्ट्वा देवादयः किं कृतवन्तस्तत्राह—तमिति। तं भगवन्तमुप समीपमागतमालक्ष्य दृष्ट्वा ब्रह्मा इन्द्रः त्र्यक्षो रुद्रः एते त्रयो नायकाः मुख्या येषां ते सर्वे सुरगणादयः आदिशब्देन ऋषिगन्धर्वादीनां तत्र स्थितानां सर्वेषां ग्रहणं, सहसा झटिति

उत्थाय प्रणेमुः दण्डवत् प्रणामं कृतवन्त इत्यर्थः। ब्रह्मादीनामुत्तमानामप्येवं तत्प्रणामेन भगवतः सर्वोत्तमत्वं स्पष्टं दर्शितम् ॥ २२ ॥ ❀ ❀ ननु प्रणाममात्रं कथं सर्वोत्तमत्वज्ञापकं समानेष्वपि मिथो दर्शनादित्याशङ्क्य तस्य सर्वोत्तमत्वसिद्ध्यर्थं तत्तेजसा तिरस्कृताः सर्वे तत्स्तुतिं कृतवन्त इत्याह—तत्तेजसेति। तस्य प्रादुर्भूतस्य भगवतस्तेजसा हता तिरस्कृता रुक् प्रभा येषां ते तथा। अत एव ससाध्वसाः ससंभ्रमाः तत्प्रभावेण भ्रमच्चित्ताः। अत एव सन्नजिह्वाः सन्ना यथेष्टं वक्तुमसमर्था जिह्वा येषां ते। मूर्ध्नि धृतोऽञ्जलिपुटो यैस्ते। तृतीयान्तपाठे मूर्ध्ना सह धृतः संयोजितोऽञ्जलिपुटो यैस्ते। अधोक्षजं अधः अक्षजमिन्द्रियजन्यं ज्ञानं यस्मात्तं भगवन्तमुपतस्थुः तुष्टुवुः ॥ २३ ॥ ❀ ❀ ननु कथमिन्द्रियाद्यविषयस्य स्तुतिकरणं संगच्छते यथावन्माहात्म्यज्ञानाभावादित्याशङ्क्याह—अपीति। आत्मभूः ब्रह्मा आदिर्मुख्यो येषां तेऽपि यद्यपि यस्य महित्वे महिमविषये अर्वाग्वृत्तयः अर्वाक् अधः चित्तवृत्तिर्येषां ते तथा तथापि तं यथामति गृणन्ति स्म तुष्टुवुरिति संबन्धः। महित्वा इति सन्धिरार्षः। अर्वाग्वृत्तित्वेऽपि यथामति स्तुतेरावश्यकत्वे हेतुं सूचयन् विशिनष्टि—कृतेति। कृतः प्रकटीकृतोऽनुग्रहेण विग्रहो येन तम् ॥ २४ ॥ ❀ ❀ यथामति गृणन्ति स्मेत्युक्तम्। तत्रैकेनैव मुख्येन कृता स्तुतिः सर्वेषामुपकाराय भवत्यन्यत्र तथोपलम्भात् किमर्थमत्र पृथक् पृथक् स्तुतिकरणमिति न शङ्कनीयम्, अपराधस्य प्रत्येकं भिन्नत्वात्स्वस्वापराधनिवृत्त्यर्थं तथा निरपराधिनोऽपि ब्रह्मरुद्रादयो भगवतः सर्वोत्तमत्वात्तत्प्रसादार्थं च दक्षादिब्राह्मणान्ताः एकविंशतिसङ्ख्याकाः स्वस्वमत्यनुसारेण पृथक् पृथगेव स्तुतिं कृतवन्तः। न च तर्हि यथा दक्षयज्ञदोषनिवृत्त्यर्थं वैदिकमेव वैष्णवं कर्म कृतवन्तस्तथा स्वदोषनिवृत्त्यर्थं कुतो न कृतवन्त इति शङ्क्यम्, यथा मुख्ययागनाशे 'वैष्णवं त्रिकपालं निर्वपेदि'ति प्रतिप्रसवो विष्णुयागस्यास्ति तथा स्वापराधनिवर्त्तककर्मणः प्रतिप्रसवाभावात्तदर्थं कर्म न कृतवन्तः, किंच भगवत्प्रादुर्भावार्थं हि कर्म कर्त्तव्यं न तु क्षमापणार्थम्। तस्य सदानन्दस्वरूपस्य प्रादुर्भावे तु सेवकानां स्वदैन्यप्रदर्शनपूर्वकतत्स्तुत्यैव क्षमापणमुचितमिति सर्वे स्तुतिमेव कृतवन्त इति न कश्चिद्विरोधाशङ्कावकाशः। तत्र प्रत्येकं सर्वेषां स्तुतिं निरूपयिष्यन्नादौ दक्षकृतस्तुतिप्रकारमाह—दक्ष इति। दक्षः प्रयतः प्रयत्नेन शरीरेन्द्रियान्तःकरणादिसङ्घातं वशीकृत्य तदेकाग्रचित्तः कृताञ्जलिः रचिताञ्जलिश्च सन् मुदा हर्षेण वचसा गृणन् स्तुवन् मनसा प्रपेदे शरणं जगाम। एवं सर्वथा नष्टे मम धर्मे तद्रक्षकोऽयं भगवानेवेति निश्चयं गत इत्यन्वयः। सर्वथा शरणयोग्यत्वज्ञापनाय भगवन्तं विशिनष्टि—गृहीतेत्यादिना। गृहीतानि पूज्यतमत्वादनेकत्र स्वीकृतानि अर्हणानि सादनोत्तमानि पात्रश्रेष्ठानि येन तम्। पूज्यतमे आगते पात्रसहितमेवार्हणं समर्प्यते, तेनापि तथैव गृह्यतेऽतो यत्र भगवानाविर्भूतस्तत्रानेकत्रायं व्यवहारस्तथाभूतम्। एवं पूजायां हेतुमाह—विश्वेति। विश्वसृजां ब्रह्मादीनामपि परं गुरुं हितोपदेष्टृत्वफलदातृत्वादिना पूज्यतमम्। तत्रापि हेतुः—यज्ञेश्वरमिति। यज्ञादिप्रवर्त्तकमित्यर्थः। यदा भगवान् यज्ञादिप्रवर्त्तकः फलं न दद्यात् तदान्यस्य तद्दाने सामर्थ्याभावात् फलाभावे च तत्र कोऽपि न प्रवर्तेत तदा तत्प्रवर्त्तनस्य व्यर्थता स्यादतस्तद्ददात्येवातस्तस्य पूज्यतमत्वमित्यर्थः। सुनन्दादिभिः अनुगैः पार्षदैर्वृतं सेवितम्। कृतापराधस्य लज्जादिना पश्चात्तापः संभवति, सोऽपि भगवत्कृपां दृष्ट्वा दक्षस्य नासीदिति सूचयंस्तद्विरोधिगुणं दर्शयति—मुदेति ॥ २५ ॥ ❀ ❀ दक्षेण कृतां स्तुतिमेव दर्शयति—शुद्धमिति। भवान् मायां कार्यकरणात्मकप्रपञ्चरूपेण क्रीडनेच्छां प्रतिषिध्य उपसंहृत्य स्वधाम्नि स्वरूपे निजलोके वा तिष्ठन् शुद्धत्वादिगुणकं यद् ब्रह्म तद्रूपोऽपि पुनस्तस्यामात्मनो जगद्रूपेण क्रीडनेच्छायां ते तयैवेच्छया पुरुषत्वं प्रकृत्याधिष्ठातृत्वं विराड्रूपमन्तर्यामित्वं चैवं त्रिविधं पुरुषत्वमुपेत्य अङ्गीकृत्य अपरिशुद्ध इवास्त इत्यन्वयः। अपरिशुद्ध इवेत्युपलक्षणम्। जन्ममरणादिविकारवानिव परिच्छिन्न इव जड इव अज्ञ इव दुःखीव च भासत इत्यर्थः। मायापदस्येच्छापर्यायत्वं दर्शितं तृतीयस्कन्धे—"भगवानेक आसेदमग्र आत्मात्मनां विभुः। आत्मेच्छानुगतावात्मा नानामत्युपलक्षणः॥ स वा एष तदा द्रष्टा नापश्यद् दृश्यमेकराट्। मेने सन्तमिवात्मानं सुप्तशक्तिरसुप्तदृक्॥ स वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका। माया नाम महाभाग ययेदं निर्ममे विभुः" इति। तथा पुरुषत्रित्वमप्युक्तम्—"विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः। प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम्॥ तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते" इति। ब्रह्मणः कथं शुद्धत्वमित्याकाङ्क्षायामाह—उपरतेति। उपरता निवृत्ता अखिला बुद्ध्यवस्था जाग्रत्स्वप्नसुषुप्तिरूपा यस्मात्तत्, अत एव चिन्मात्रं केवलं ज्ञानात्मकम्। अत एवैकं सजात्यादिभेदशून्यम्। अत एवाभयं 'द्वितीयाद्वै भयं भवति' इति श्रुतेः। ननु कथमेवंभूतो भगवान् स्वेच्छया अपरिशुद्ध इव भवतीत्याशङ्क्याह—आत्मतन्त्र इति। नहि भवान् कथमेवमपरिशुद्धेन रूपेण क्रीडतीति परमेश्वर उपालब्धुं शक्यते स्वतन्त्रत्वात्। वस्तुतस्तथात्वाभावाच्चेत्याह—इवेति। तथाच सर्वेश्वरत्वात्तत्कृपया मम शरणागतस्य धर्मसिद्धिर्भविष्यत्येवेति किं मया विशेषतो विज्ञापनेनेति भावः ॥ २६ ॥ ❀ ❀ ऋत्विजस्तु स्वाज्ञत्वं निवेदयन्तः क्षमापयन्ति—तत्त्वमिति। हे अनञ्जनेति संबोधनेन मायावशवर्त्तित्वाभावेन त्वं धर्माधर्मरागद्वेषादिदोषशून्यो वयं तु तद्वशवर्त्तित्वेन रागद्वेषादिमलपूर्णा इति सूचयन्ति। अत एवैश्वर्यादिषड्गुणपूर्णस्त्वं वयं च तद्रहिता इति सूचयन्तः पुनः संबोधयन्ति—हे भगवन्निति। वयं ते तव तत्त्वं न विदामः न विद्म इत्यन्वयः। तत्त्वाज्ञाने हेतुमाहुः—रुद्रशापादिति। 'संसरन्त्विह ये चामुमनुशर्वावमानिनम्। गिरः श्रुतायाः पुष्पिण्या मधुगन्धेन भूरिणा॥ मथ्ना चोन्मथितात्मानः संमुह्यन्तु हरद्विषः" इति रुद्रांशस्य नन्दीश्वरस्य शापात् यतः कर्मण्येवावग्रहः आग्रहो यस्याः सा तथाभूता धीर्बुद्धिर्येषां ते तथाभूता वयमतस्तव तत्त्वं ब्रह्मादिसर्वात्मत्वं न विद्म इत्यर्थः। किं त्विदं धर्मोपलक्षणं धर्मस्य दृष्टस्योपलक्षणं

जनकं त्रिवृन् वेदत्रयीप्रतिपाद्यमध्वराख्यमस्माभिर्ज्ञातम्। यदर्थं यस्याध्वरस्य सिद्धये अदः इन्द्राद्यधिदैवं रूपं व्यवस्थाः विशेषेणा- त्रेयमेव देवतेति व्यवस्थापूर्वकमवस्थाः आस्थितवानसीत्यर्थः। अडागमाद्यभाव आर्षः। तथाच नन्दीश्वरशापात्त्वमेव रुद्रादितत्त- देवतारूपेण वर्त्तस इति तत्त्वज्ञानाभावाद्दक्षानुसारितया रुद्रभागं निरस्य यागे प्रवृत्ताः, अतस्तदपराधफलं प्राप्येदानीं रुद्रानुगृहीतानां दक्षादीनामस्माकं रुद्रविषयकद्वेषनिवृत्तेः शापस्य द्वेषप्रयुक्तत्वात्सोपि निवृत्तोतस्त्वमेव सर्वरूपेण वर्त्तस इति ज्ञातवन्तोतः शिवापराध एव, स चाज्ञानकृतत्वात्त्वया क्षन्तव्य इति भावः ॥ २७ ॥ ❀ ❀ सदस्याः स्तुवन्ति—उत्पत्त्यध्वनीति। हे शरणद स्वभक्तानां सर्वतो निर्भयस्वचरणारविन्दलक्षणस्थानप्रद ! उत्पत्त्यध्वनि जन्ममरणादिलक्षणसंसारमार्गे वर्त्तमानोऽज्ञानां जनानां सार्थः समूहस्ते तव पादौकः त्वच्चरणारविन्दरूपं निर्भयनिवासस्थानं त्वत्कृपां विना कदा याति ? न कदापीत्यन्वयः। संसारमार्गे पतितस्य भगवदनु- नुग्रहं विना ततो निःसरणमशक्यमिति सूचयन्तस्तं वर्णयन्ति—अशरणे त्वां विना रक्षकरहिते उरवः अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशा एव दुर्गा दुर्गसस्थानानि यस्मिंस्तस्मिन्। किमन्तकः काल एवोग्रो भक्षको व्यालस्तेनान्विष्टे लक्ष्यीकृते। द्वन्द्वानि क्षुत्पिपा- साशीतोष्णसुखदुःखादीन्येव श्वभ्राणि गर्ता यस्मिंस्तस्मिन्। यथा गर्त्तानां स्वेषु पतितानां प्राणिनां पीडाकरत्वं तथा क्षुत्पिपासादी- नामप्यतो गर्तत्वम्। खला वञ्चका एव मृगाः प्राणधनाद्यपहारकत्वेन व्याघ्रादयस्तेभ्यो भयं यस्मिंस्तस्मिन्। शोक एव तापकत्वा- द्दावोऽग्निर्यस्मिंस्तस्मिन्। एवंभूतमार्गपतने हेतुमाहुः—कामोपसृष्ट इति। कामेन तत्तद्विषयेच्छारूपेण ज्ञानावरकेण उपसृष्टः अभिभूतः। अत एवाज्ञः आत्मनो भगवतश्च तत्त्वज्ञानरहितः। तदुक्तं गीतासु—"आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा। कामरूपेण कौन्तेय दुष्पूरेणानलेन च" इति। कामाभिभूतत्वादेव विषयाः शब्दस्पर्शरूपरसगन्धा एव दुःखदत्वात् मृगतृष्णाजलं तदर्थमात्माहंकारास्पदं शरीरं गेहे गेहोपलक्षितं ममतास्पदं सर्वं च उरुर्भारो यस्य सः तत्तत्कामनयाभिभूतविवेकज्ञानस्तत्तद्विषयान् धावमानो देहगेहादिनिर्वाहभारमुद्वहन् संसारे पतित इत्यर्थः। तथा च वयमपि कामाभिभूताः संसारान्तःपातिनस्त्वद्विमुखा एव। अत एव "सभां न प्रविशेत्प्राज्ञः सभ्यदोषमनुस्मरन्। अब्रुवन् विब्रुवन्नज्ञो नरः किल्बिषमश्नुते" इति निषेधे सत्यपि रुद्रभागनिराकरणादन्यायेन प्रवृत्तेपि दक्षयज्ञे लोभेन प्रवृत्त अतस्तदपराधोऽस्माकमपि जात एव स त्वया क्षन्तव्य इति भावः ॥ २८ ॥ ❀ ❀ श्रीरुद्रस्तु–सेवकत्वान्मम सर्वोपि प्रभावस्त्वदनुग्रहेणैवेत्यभिप्रायेण स्तौति—तवेति। हे वरद ! तव वराङ्घ्रौ रचितधियं स्थिरीकृतचित्तमपि मां यद्ययं लोकोपविद्धं सदाचारभ्रष्टं जपति जल्पति तदा त्वत्परानुग्रहे तव यः परो मयि अनुग्रहस्तेनाहं तज्जल्पनं न गणय इति संबन्धः। हे वरद इति संबोधनेन वरं दातुं समर्थस्यैवानुग्रहः सफलो भवति नान्यस्य। तव च तथाविधत्वाच्च त्वदनुग्रहो मयि सफलो जात इति सूचितम्। अङ्घ्रेर्वरत्वमेव भुक्तिमुक्तिप्रदत्वेन दर्शयति—आशिषेति। इह संसारे आशिषा तत्तत्कामनया अखिलार्थे यथाभिलषितसर्वपदार्थप्राप्त्यर्थं सकामैस्तथा विषयेष्वसक्तैर्निष्कामैर्मुमुक्षुभिर्मुक्त्यर्थं तथा मुनिभिः जीवन्मुक्तैरपि स्वभावत एवादरेणार्हणीये पूजनयोग्ये। हिशब्दो हेत्वर्थकः। यस्माद् भुक्तिमुक्तिप्रदस्तस्माद्वर इत्यर्थः। ननु कथं सर्वपुरुषार्थहेतुध्यानपरं त्वामाचारभ्रष्टं लोको जपतीत्याशङ्क्याह—अविद्येति। यस्मादविद्यः 'सा विद्या तन्मतिर्यया' इति वचनात्सर्वशास्त्रं भवद्भजनप्रतिपादनपरमिति तात्पर्यज्ञानं विद्या तद्रहितस्तस्मान्मामेवं जपतीत्यर्थः ॥ २९ ॥ ❀ ❀ भृगुस्तु–ब्रह्मादयोपि तव तत्त्वं न जानन्ति तत्र मम का वार्त्तातोऽज्ञानतो मया शिवापमानं कृतं तदपराधं सर्वेश्वर ! त्वं क्षमस्वेत्यभिप्रायेण स्तौति–यन्माययेति। ब्रह्मा आदिर्मुख्यः कारणं वा येषां ते ब्रह्मादयः तनुभृतः शरीरिणः जीवाः सर्वेपि आत्मनि स्वस्मिन् श्रितं स्थितमपि तव भगवतस्तत्त्वं यथार्थस्वरूपमधुनापि अनन्तकोटिजन्मोपलक्षितकाले व्यतीतेपि न विदन्ति न जानन्ति। सोयं भगवान् ममापराधिनोपि प्रसीदत्वित्यन्वयः। सापराधेपि तव प्रसाद एव युक्त इत्यत्र हेतुमाह–प्रणतात्मबन्धुरिति। यस्मात्प्रणतानां निर्व्यलीकत्वेन शरणागतानामात्मा भवति सर्वात्मत्वेपि तेषां स्वात्मत्वेन प्रकाशते बन्धुः हितकृच्च भवत्यतोऽ- हमपि, शरणागतः, ममोपर्यपि तव प्रसादो युक्त एवेति भावः। तव प्रसादं विना मायातरणाभावात्तन्मोहितानां ब्रह्मादीनां न तत्त्वज्ञानमित्याह—यन्माययेति। यत् यस्य भगवतो गहनया गम्भीरया भगवत्कृपां विना तर्तुमशक्यया "दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति वाक्यात् माययापहृत आच्छादितः आत्मनः स्वस्य भगवतश्च बोधो ज्ञानं येषां ते अपहृतात्मबोधाः। अत एव तमसि देहगेहादिविषयकाहन्ताममतादिरूपे संसारे स्वपन्तो वर्त्तमाना इत्यर्थः। यथा तमसो यथास्थितवस्त्वावरकत्वं तथाहन्ताममतादेरप्यतो गौण्या तमस्त्वमुक्तम्। एवं यथा सुप्तस्य स्वप्नाननुभवतोपि न यथार्थज्ञानं तथा संसारे वर्त्तमानानामपीति गौण्यैव स्वपन्त इत्युक्तम् ॥ ३० ॥

### भावानुवादः

प्रभुके हृदयमें श्रीवत्सका चिह्न था और सुन्दर वनमाला सुशोभित थी। वे अपने उदार हास और लीलामय कटाक्षसे सारे संसारको आनन्दमग्न कर रहे थे। पार्षदगण दोनों और राजहंसके समान सफेद पंख और चँवर डुला रहे थे। भगवान्के मस्तकपर चन्द्रमाके समान शुभ्र छत्र शोभा दे रहा था ॥ २१ ॥ ❀ ❀ भगवान् पधारे हैं—यह देखकर इन्द्र, ब्रह्मा और महादेवजी आदि देवेश्वरोंसहित समस्त देवता, गन्धर्व और ऋषि आदिने सहसा खड़े होकर उन्हें प्रणाम किया ॥ २२ ॥

❀ ❀ उनके तेजसे सबकी कान्ति फीकी पड़ गयी, जिह्वा लड़खड़ाने लगी, वे सब-के-सब सकपका गये और मस्तकपर अञ्जलि बाँधकर भगवान्‌के सामने खड़े हो गये ॥ २३ ॥ ❀ ❀ यद्यपि भगवान्‌की महिमातक ब्रह्मा आदिकी मति भी नहीं पहुँच पाती, तो भी भक्तोंपर कृपा करनेके लिये दिव्यरूपमें प्रकट हुए श्रीहरि की वे अपनी-अपनी बुद्धिके अनुसार स्तुति करने लगे ॥ २४ ॥ ❀ ❀ सबसे पहले प्रजापति दक्ष एक उत्तम पात्रमें पूजाकी सामग्री ले नन्द-सुनन्दादि पार्षदोंसे घिरे हुए, प्रजापतियोंके परम गुरु भगवान् यज्ञेश्वरके पास गये और अति आनन्दित हो विनीतभावसे हाथ जोड़कर प्रार्थना करते हुए प्रभुके शरणापन्न हुए ॥ २५ ॥ ❀ ❀ दक्षने कहा—भगवन् ! अपने स्वरूपमें आप बुद्धिकी जाग्रदादि सम्पूर्ण अवस्थाओंसे रहित, शुद्ध, चिन्मय, भेदरहित, अत एव निर्भय हैं। आप मायाका तिरस्कार करके स्वतन्त्ररूपसे विराजमान हैं; तथापि जब मायासे ही जीवभावको स्वीकारकर उसी मायामें स्थित हो जाते हैं, तब अज्ञानी-से दीखने लगते हैं ॥ २६ ॥ ❀ ❀ ऋत्विजोंने कहा—उपाधिरहित प्रभो ! भगवान् रुद्रके प्रधान अनुचर नन्दीश्वरके शापके कारण हमारी बुद्धि केवल कर्मकाण्डमें ही फँसी हुई है, अत एव हम आपके तत्त्वको नहीं जानते। जिसके लिये 'इस कर्मकी यही देवता है' ऐसी व्यवस्था की गयी है—उस धर्मप्रवृत्तिके प्रयोजक, वेदत्रयीसे प्रतिपादित यज्ञ को ही हम आपका स्वरूप समझते हैं ॥ २७ ॥ ❀ ❀ सदस्योंने कहा—जीवोंको आश्रय देनेवाले प्रभो ! जो अनेक प्रकारके क्लेशोंके कारण अत्यन्त दुर्गम है, जिसमें कालरूप भयङ्कर सर्प ताकमें बैठा हुआ है, द्वन्द्वरूप अनेकों गढ़े हैं, दुर्जनरूप जंगली जीवोंका भय है तथा शोकरूप दावानल धधक रहा है—ऐसे, विश्रामस्थलसे रहित संसारमार्गमें जो अज्ञानी जीव कामनाओंसे पीड़ित होकर विषयरूप मृगतृष्णाजलके लिये ही देह-गेहका भारी बोझा सिरपर लिये जा रहे हैं, वे भला आपके चरणकमलोंकी शरणमें कब आने लगे ॥ २८ ॥ ❀ ❀ रुद्रने कहा—वरदायक प्रभो ! आपके उत्तम चरण इस संसारमें सकाम पुरुषोंको सम्पूर्ण पुरुषार्थोंकी प्राप्ति करानेवाले हैं; और जिन्हें किसी भी वस्तुकी कामना नहीं है, वे निष्काम मुनिजन भी उनका आदरपूर्वक पूजन करते हैं। उनमें चित्त लगा रहनेके कारण यदि अज्ञानी लोग मुझे आचारभ्रष्ट कहते हैं, तो कहें; आपके परम अनुग्रहसे मैं उनके कहने-सुननेका कोई विचार नहीं करता ॥ २९ ॥ ❀ ❀ भृगुजीने कहा—आपकी गहन मायासे आत्मज्ञान लुप्त हो जानेके कारण जो अज्ञान-निद्रामें सोये हुए हैं, वे ब्रह्मादि देहधारी आत्मज्ञानमें उपयोगी आपके तत्त्वको अभीतक नहीं जान सके। ऐसे होनेपर भी आप अपने शरणागत भक्तोंके तो आत्मा और सुहृद् हैं, अतः आप मुझपर प्रसन्न होइये ॥ ३० ॥

ब्रह्मोवाच

नैतत्स्वरूपं भवतोऽसौ पदार्थभेदग्रहैः पुरुषो यावदीक्षेत् ।
ज्ञानस्य चार्थस्य गुणस्य चाश्रयो मायामयाद् व्यतिरिक्तो यतस्त्वम् ॥ ३१ ॥

इन्द्र उवाच

इदमप्यच्युत विश्वभावनं वपुरानन्दकरं मनोदृशाम् ।
सुरविद्विट्क्षपणैरुदायुधैर्भुजदण्डैरुपपन्नमष्टभिः ॥ ३२ ॥

पत्न्य ऊचुः

यज्ञोऽयं तव यजनाय केन सृष्टो विध्वस्तः पशुपतिनाद्य दक्षकोपात् ।
तं नस्त्वं शवशयनाभशान्तमेधं यज्ञात्मन्नलिनरुचा दृशा पुनीहि ॥ ३३ ॥

ऋषय ऊचुः

अनन्वितं ते भगवन् विचेष्टितं यदात्मना चरसि हि कर्म नाज्यसे ।
विभूतये यत उपसेदुरीश्वरीं न मन्यते स्वयमनुवर्ततीं भवान् ॥ ३४ ॥

सिद्धा ऊचुः

अयं [1]त्वत्कथामृष्टपीयूषनद्यां मनोवारणः क्लेशदावाग्निदग्धः ।
तृषार्तोऽवगाढो न सस्मार [2]दावं न निष्क्रामति ब्रह्मसम्पन्नवन्नः ॥ ३५ ॥

१. प्रा० पा०—ते कथा० । २. प्रा० पा०—दाहं ।

यजमान्युवाच

स्वागतं ते प्रसीदेश तुभ्यं नमः श्रीनिवास श्रिया कान्तया त्राहि नः ।
त्वामृतेऽधीश नाङ्गैर्मखः शोभते शीर्षहीनः कबन्धो यथा पूरुषः ॥ ३६ ॥

लोकपाला ऊचुः

दृष्टः किं नो दृग्भिरसद्ग्रहैस्त्वं प्रत्यग्द्रष्टा दृश्यते येन दृश्यम् ।
माया ह्येषा भवदीया हि भूमन् यस्त्वं षष्ठः पञ्चभिर्भासि भूतैः ॥ ३७ ॥

योगेश्वरा ऊचुः

प्रेयान्न तेऽन्योऽस्त्यमुतस्त्वयि प्रभो विश्वात्मनीक्षेन्न पृथग्य आत्मनः ।
अथापि भक्त्येशतयोपधावतामनन्यवृत्त्यानुगृहाण वत्सल ॥ ३८ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

ब्रह्मादयो न विदंतीति भृगुणोक्ते तदसहमानो ब्रह्मा तत्त्वज्ञानमाविष्कुर्वन्निवाह । नैतदिति । पदार्थभेदग्राहकैरिंद्रियैः गुणस्येंद्रियस्य यद्वा ज्ञानार्थयोः कारणस्य सत्त्वादेः अत एवासतो मायामयाद्व्यतिरिक्तो भवान् ॥ ३१ ॥ ❀ ❀ इंद्रस्त्विंद्रियविषयः सर्वोऽपि मिथ्येति ब्रह्मणोक्तमसहमान आह । इदं तव वपुरप्युपपन्नमेव न तु प्रपंचवदनिर्वचनीयतयाऽनुपपन्नम् । सुराणां विद्विषः क्षपयंतीति तथा तैर्भुजदंडैरुपलक्षितम् ॥ ३२ ॥ ऋत्विजां पत्न्यः स्तुवंति । यज्ञोऽयं तव यजनाय त्वां यष्टुं केन ब्रह्मणा पूर्वं सृष्टः । हे यज्ञात्मंस्त्वं तं नोऽस्माकं यज्ञं नलिनकांत्या दृशा नेत्रेण पुनीहि पवित्रं कुरु । कथंभूतं यज्ञम् । शवाः शेरते यस्मिन्निति शवशयनं श्मशानं तद्वदाभा प्रतीतिर्यस्य स चासौ शांतमेधश्चोपरतोत्सवः । मेधशब्देन पशुहिंसाद्युत्सवो लक्ष्यते । शवमुदकं तत्र शेते इति तथा । पद्मं तन्नाभेति संबोधनं वा ॥ ३३ ॥ ❀ ❀ ऋषयस्तु कर्माण्यनुतिष्ठंतस्तत्पुण्येन तत्फलेन च युज्यंते भगवति तु तदभावमालक्ष्य विस्मिताः स्तुवंति । अनन्वितमघटमानं यद्यस्मादात्मना स्वयं कर्माचरस्यनुतिष्ठसि न तद्व्यसे लिप्यसे यतश्चान्ये विभूतये संपदे ईश्वरीं लक्ष्मीमुपसेदुर्भेजुः । यद्वा यत इति सार्वविभक्तिकस्तसिः यामित्यर्थः । भवांस्तु स्वयमेवानुवर्तमानां तां न मन्यते नाद्रियते ॥ ३४ ॥ ❀ ❀ सिद्धास्तु तत्कथासुखमभिनंदंतः स्तुवंति । अयं नो मनोगजस्त्वत्कथैव मृष्टं शुद्धं पीयूषं तन्मयी या नदी तस्यामवगाढः प्रविष्टो दावाग्नितुल्यं संसारतापं न संस्मरति स्म न च ततो निर्गच्छति ब्रह्मसंपन्नवद्ब्रह्मैक्यं प्राप्त इव ॥ ३५ ॥ ❀ ❀ यजमानी दक्षपत्नी स्तौति । ते स्वागतं भद्रमागमनं जातम् । हे अधीश यथा शिरसा हीनः कबंधमात्रः पुरुषोंऽगैः करचरणाद्यवयवैः शोभमानैरपि न शोभते, तथा त्वां विना केवलं प्रयाजादियागाङ्गैर्मखो न शोभतेऽतोस्माञ्छ्रिया सह त्रायस्व त्वद्भक्तान्कुर्वित्यर्थः ॥ ३६ ॥ ❀ ❀ लोकपालास्त्वीश्वरत्वाभिमानारूढा भगवतस्तत्त्वमपश्यंत ऊचुः । दृष्टः किं न दृष्ट इत्यर्थः । कुतः असद्ग्रहैः । पुंस्त्वमाविष्टलिंगत्वात् । असत्प्रकाशरूपाभिर्दृग्भिरिंद्रियैः । अयं भावः—शुद्धचित्तानां त्वं शुद्धसत्त्वमूर्तिर्भासि, अस्माकं तु बहिर्मुखेंद्रियाणां पंचभूतोपलक्षितो जीवविशेष इवावभासि । अतस्त्वमस्मदिंद्रियगोचरो न भवसि धिगस्मज्जीवितमिति ॥ ३७ ॥ ❀ ❀ योगेश्वरास्तदभेदेन भजतामनुग्रहभाक्त्वं मन्यमानाः स्वामिभृत्यभावेन भजतामप्यनुग्रहं प्रार्थयमानाः स्तुवंति द्वाभ्याम् । प्रेयानिति । विश्वात्मनि परब्रह्मणि त्वयि य आत्मनः पृथक्त्वं नेक्षेत अमुतोऽमुष्मादन्यस्ते प्रेष्ठो नास्ति । आत्मनो जीवात्पृथङ् नेक्षेतेति वा । हे वत्सल भक्तजनप्रिय अनन्यवृत्त्याऽव्यभिचारिण्या भक्त्या भजतोऽनुगृहाणेत्यर्थः ॥ ३८ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यावदीक्षेत तावत्सकलमेतद्भवतः स्वरूपं नेत्यन्वयः । यत एतद् दृश्यं ज्ञानार्थेन्द्रियाणां मायामयानामाश्रयो विषयः अर्थोन्तःकरणं त्वं तु तद्रहित इत्यर्थः स्वामिसंमतः । विश्वनाथस्तु—पदार्थानां शब्दस्पर्शादीनां भेदग्राहकैरिन्द्रियैस्त्वैतत्स्वरूपं श्रीमूर्त्तिं यावन्न पश्येत्तावदेव ज्ञानस्याधिदैवस्यार्थस्याधिभूतस्य गुणस्याध्यात्मत्वस्य चाश्रयः स्यात् । त्वत्स्वरूपे साक्षाद्दृष्टे सति न ज्ञानादेराश्रयः । किं त्वप्राकृत एव स्याद्यतस्त्वं मायामयादधिदैवादेर्व्यतिरिक्तश्चिद्रूपो न तैर्गृह्यस इत्येतावत्तत्त्वं वयं जानीमोत एते प्राकृतेंद्रियाः पश्याम इत्यभिमानवन्तोऽपि तत्स्वरूपं नैव पश्यंतीति भृग्वादिषु कटाक्षः । संदर्भस्तु—श्रीब्रह्मापि भृगुवाक्यमनुमोदमान एवाह—इंद्रियैः करणभूतैः पुरुषो यावद्वस्तु जानाति तावति वस्तुनि भवत एतच्छ्रीविग्रहात्मकं स्वरूपं न स्यात्किन्तु

तावदतिक्रम्यैव स्यात् "यतो वाचो निवर्त्तन्ते" इत्यादिश्रुतेः। तर्हि किं लक्षणं तत्राह–ज्ञानस्येति। तदेतद्विग्रहलक्षणत्वमेवाश्रयः "नातः परं परम यद्भवतः स्वरूपम्" इत्याद्युक्तेः। तस्मात्कृपया स्वयमेव प्रकाशत इति भावः। व्यतिरिक्तोमतस्त्वमिति चित्सुखसंमतः पाठः। तत्र व्यतिरिक्तश्चासावोमोंकारश्चेति व्यतिरिक्तोम् अतस्त्वमिति च्छेदः॥ ३१॥ ❀ ❀ हे अच्युतेति। ते सर्वाणि रूपाणि च्युतिवर्जितान्येवेत्याह–इदमष्टभुजं वपुः शुभाकारं तनुः 'शुभाकारे तनौ वपुः' इति यादवः। विश्वं भावयति भाववंतं करोतीति तथा। अस्मदाद्यानंदान्यथानुपपत्तिरेवात्र प्रमाणमिति ब्रह्मणि कटाक्षः। उपजातिरिदं छंदः सहजासीधुच्छंदसो-र्लक्षणवत्त्वात् आद्यपादे तु "सहजा ससजं गुरुर्यदा" इति लक्षणमन्येषु सीधुरस्ति "इह सीधुः सभरा लगौ यदि" इति लक्षणात्॥ ३२॥ ❀ ❀ अंतरायितस्य कर्मणः पूर्णफलवत्त्वसिद्धिः श्रीनारायणकटाक्षेणैवेत्यभिप्रेत्य पत्न्यः स्तुवंति यज्ञात्मन्नित्यस्य "यज्ञो वै विष्णुः" इति श्रुतेर्यज्ञस्य तव रूपत्वादेतदपूर्त्तौ त्वदंगवैकल्यमेव स्यात्तच्च नोचितमतोऽस्य पूर्त्तिमेव संपादयेत्यभिप्रायः। शवशयनादिनाऽशुचितां प्राप्तस्य शोधनं त्वत्कृपादृष्ट्यैव नान्यथेति भावः। यत्र त्वदागमनं नास्ति तत्र तु तव नामोच्चारणमेव वैकल्यमपाकरोति। "मंत्रतस्तंत्रतश्छिद्रं देशकालार्हवस्तुतः। सर्वं करोति निश्छिद्रं नामसंकीर्त्तनं तव" इति वक्ष्यमाणत्वात्। "यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु। न्यूनं संपूर्णतां याति तं ध्यायेदच्युतं सदा॥" इति पुराणांतराच्च। साक्षादत्र तवागमने यद्यपि यज्ञपूर्त्तौ संशयो नास्ति तथाप्यत्युदारात्त्वत्तः किञ्चित्प्रार्थनमुचितमेवास्माकं स्त्रीस्वभावत्वाद्वेति मत्वाहुः पुनीहीति। यद्वा शयनाभेति सर्वादिकारणस्य तवैवैतदपि संपाद्यमित्यभिप्रायेणाहुः। शवमित्युदक-पर्यायत्वेन वैदिकनिघण्टौ प्रसिद्धं मेदिन्यामप्युक्तं "शवः स्यात्कुणपे पुमान्। नपुंसकं तु पानीये" इति हिंसार्थकत्वान्मेधृधातोः तव सन्निधानं विना सप्रयत्नैरप्येतैर्न किञ्चित्सिध्यतीत्यवगतमस्माभिरिति सर्वेषु कटाक्षः। प्रहर्षिणीवृत्तं "त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम्" इति लक्षणात्॥ ३३॥ ❀ ❀ भगवन्नित्यतर्क्यैश्वर्यमाह–कर्मकारिणस्त्वन्ये सर्वे लिप्यंत एवेति ब्रह्मादिषु कटाक्षः। लक्ष्मीरप्यप्राप्तप्राप्तये भजतीति न जानामि किं कर्तुर्धर्मवज्जालस्यंदनवद्भक्तिकरणमस्याः स्वभाव एवेति जानामीत्यर्थः। रुचिरावृत्तम् "जभौ सभौ गुरु रुचिरा चतुर्ग्रहैः" इति तल्लक्षणात्॥ ३४॥ ❀ ❀ सिद्धाः केवलया मुक्त्यैव प्रेमसिद्धिं प्राप्ता इत्यर्थः। देवयोनिविशेषा वा किं कर्मकरणाकरणलेपालेपविचारेण भगवतो लीलाकथामृत एव निमज्जतेति ऋषिषु कटाक्षः। भुजंगप्रयातं वृत्तम् "चतुर्भिर्यकारैर्भुजंगप्रयातम्" इति लक्षणात्॥ ३५॥ ❀ ❀ दक्षपत्नी प्रसूतिः। ईश श्रीनिवासाधीशेति संबुद्धित्रयेण स्वस्य भगवज्ज्ञाने स्वायंभुवपुत्रीत्वेन देवहूतिस्वसृत्त्वेन मातृष्वसृत्वात्तद्दत्तत्कृपाकटाक्षं बोधयतीति ज्ञेयं, प्रथम-मीशोक्त्या शिवेति प्रसंगस्तद्वारणायाहाधीशेति। तथापि ब्रह्मणः सुरज्येष्ठत्वात्सर्वप्रवर्त्तकत्वात्तत्र प्रसक्तिवारणाय श्रीनिवासेति। यतश्श्रिया सह मद्गृहमागतोऽस्यतो रुद्रापराधविध्वस्तान्नस्त्राहीति यतो न शोभतेऽतो हेतोः। इत्यर्थ इति। भक्त्यैव साक्षाद्भवस्यतो भक्तिदानेन नोऽनुगृहाणेति भावः। त्वामृते इत्युक्त्या सर्वदेवेषु कटाक्षः। स्रग्विणीवृत्तं "कीर्तितैषा चतूरेफिका स्रग्विणी" इति लक्षणात्॥ ३६॥ ❀ ❀ इत्यर्थ इति। भक्त्या विना त्वद्रूपदर्शनं न संभवति "पश्यंति ते मे रुचिराण्यंब संतो दिव्यानि रूपाणि" इत्याद्युक्तेरिति भावः। स्वयमेवोक्तार्थाशयमाह स्वामी। अयं भाव इति। अतोऽन्यथा प्रतीतेः। चक्रवर्त्ती-असद्ग्रहैर्विषयग्राहिभिरिन्द्रियैस्त्वं किं नो दृष्टोऽपि तु दृष्ट एवेत्यर्थः। प्रत्यगपि द्रष्टापि त्वं त्वत्कृपयैव दृश्यः स्या इत्यर्थः। यतस्त्वं षष्ठः पंचभूतातिरिक्तोऽपि पंचभिर्भूतैर्भौतिकशरीरो भासीत्येषा भवदीया मायैव कृपैव वा। ये तु त्वदीयश्रीविग्रहस्य भौतिकत्वं मन्यंते जरासंधादिभिरिव दृष्टोऽपि त्वं माधुर्यानुपलंभान्नैव दृष्ट इति। भूमन्निति व्यापकस्यापि व्याप्यत्वेन प्रतीतिर्विना अनुग्रहं न घटत इति तात्पर्यकम्। शुष्कज्ञानिषु देवेष्वृषिषु च कटाक्षः। शालिनीवृत्तम् "मात्तौ गौ चेच्छालिनी वेदलोकैः" इति लक्षणात्। सन्दर्भकारस्त्वत्र श्रीविग्रहस्य लोकपालास्तु दृश्यत्वं भौतिकत्वं च निवारयंति दृष्टः किन्न इति। किं तु स्वयमेव प्रकाशस इत्यर्थः। तत्र हेतुः षष्ठः पंचभूतातिरिक्तो यस्त्वं पञ्चभिर्भूतैः स्वोपाधिभिरेव भासि नात्मनेति यस्त्वैषा त्वदीया मायैव मायाभिभूतानामेव तथा विवेको भवतीत्यर्थः। प्रत्यग्द्रष्ट्रेति चित्सुखः॥ ३७॥ ❀ ❀ केवलस्य स्वस्याभेद-दर्शनेऽप्यन्यजीवानां तथाऽदर्शनेनाद्वैतसिद्धिरत आहात्मनो जीवानिति। जीवेषु स्वस्याप्यागतत्वान्नाद्वैतहानिरिति भावः। इत्यर्थ इति। भक्तवत्सलनामत्वादिति भावः। नामैकदेशोच्चारणन्यायेन वत्सलपदेन भक्तवत्सल एव लभ्यते यथा 'देवविश्रब्धहोपि हि' इत्येकादशे स्कंधे देवपदेन वसुदेवग्रहः। यद्यपि ज्ञानिनस्ते प्रेयान्नान्यः 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इति त्वदुक्तेस्तथापि तदपि भृत्येशतयाऽहं ते भृत्यस्त्वं म ईश इति भावेनोपधावतां भजतां भक्त्या अनन्यवृत्तिर्वर्त्तनमनुवृत्तिस्तयैव तद्दानेनैवास्माननुगृहाण। निकृष्टा वयं त्वदभेदभावं प्राप्तुं कथं शक्नुम इति द्योतितया व्याजस्तुत्या दासा एव तवातिप्रिया इति ज्ञानिषु कटाक्षस्तदुक्तं त्वयैव "न तथा मे प्रियतम आत्मयोनिर्न शंकरः। न च संकर्षणो न श्रीर्नैवात्मा च यथा भवान्" इति "नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना" इति तत्र लिंगं वत्सलेति। त्वं भक्तवत्सल इति सर्वत्र श्रूयसे न ज्ञानिवत्सल इति। संदर्भकारस्तु–प्रस्तुतत्वादस्मान् ज्ञानिभक्तानप्यनुगृहाणेति लभ्यत इत्याह। "वीरासिका स्यात्तयुगं यदा यरौ" इति लक्षणवत्त्वा-द्वीरासिकावृत्तम्। 'भृत्येशतया' इति पाठोऽपि व्याख्यातः। 'भक्त्येश' इति पाठे ईशेति संबुद्धिरनुग्रहे सामर्थ्यबोधिका। 'भक्त्येश तवोपधावताम्' इति पाठे तवेति द्वितीयार्थे षष्ठी। अत्र विश्वनाथः–ननु परब्रह्मणो मम मायाशबल्य एव साकारत्वं तस्मिंश्च सति भृत्येशभावस्तत्र च सति भक्तवात्सल्यमिति केचिद्व्याचक्षते सत्यं ते भ्रांता एवेत्याहुः॥ ३८॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

यावद्वस्तु इन्द्रियैरीक्षेत जानाति तावति प्राकृते वस्तुनि एतत् श्रीविग्रहात्मकं ते स्वरूपं नैव किन्त्वप्राकृतं ब्रह्मात्मकमेव। तदुक्तं ब्रह्मतर्के "देहदेहिभिदा चात्र नेश्वरे विद्यते क्वचित्। न विष्णोर्नं च मुक्तानां क्वापि भिन्नो गुणो मतः" इति। तत्र हेतुः यतस्त्वम् इन्द्रियजन्यज्ञानस्य गुणस्येन्द्रियस्य अर्थस्य च ज्ञानविषयघटादेराश्रयः प्रकाशकः अद्वयवादिमते तत्तत् प्रतीतेरधिष्ठानं, नहिं प्रकाशः प्रकाशविषयो भवति न चाऽधिष्ठानमध्यस्तज्ञानविषयं भवतीति उभयत्र तात्पर्यम्। तत्रैव हेत्वन्तरं मायामयात् बहिरङ्गशक्तिकार्यात्स्वरूपात्मकविग्रहस्त्वं व्यतिरिक्तः परमते तु अज्ञानकार्यादधिष्ठानरूपस्त्वं व्यतिरिक्तः, किन्तु विवर्त्तवादेऽपि गले गृहीतन्यायेनाऽधिष्ठानेऽपि स्वरूपभूता शक्तिस्तैरवश्यं मन्तव्यैव किञ्चित्करत्वमेव शक्तिस्तथा च यथा शुक्तावेव रजतभ्रान्तिर्न त्वङ्गारादौ तथा ब्रह्मण्येव जगद्भ्रान्तिर्नान्यत्रेति नियमात्मा शक्तिरस्त्येव। अन्यथाऽज्ञानेनैव विवर्ततां किं तदरिक्तब्रह्मस्वीकारेण तदुक्तं श्रीशङ्कराचार्य्यचरणैस्स्वभाष्ये 'शक्तिश्च कारणकार्यनियमात्मा कल्प्यमाना नान्याऽसती कार्यं नियच्छेत् असत्त्वाऽविशेषात्' अन्यथाऽविशेषाच्च, तस्मात्कारणस्यात्मभूता शक्तिः शक्तेश्चात्मभूतं कार्यमिति अलमतिप्रसङ्गेन प्रकृतमनुसरामः। पूर्वार्थे गुणशब्दस्य गुणकार्ये लक्षणेत्यरुचौ यद्वेति॥ ३१॥ ❀ ❀ उपपन्नमेव सत्यत्वेन सिद्धमेव यदि भवत्कृपयाऽस्मदिन्द्रियगोचरं न स्यात्तदाऽऽनन्दोऽपि न स्यात् तस्मादिन्द्रियैर्नेक्षेदिति ब्रह्मोक्तिरसङ्गतेति कटाक्षः॥ ३२॥ ❀ ❀ दृशा पुनीहीति त्वत्सांनिध्यमन्तरा न किमपि सिद्ध्यतीति भावः॥ ३३॥ ❀ ❀ अघटमानत्वे हेत्वन्तरं यतश्चेति पूर्वार्थे चकाराध्याहारः। यत इत्यधिकश्च यद्यस्मादित्यनेनैवोभयवाक्यस्यैव हेतुत्वोपपत्तेरित्यरुचौ यद्वेति ईश्वरीं जगल्लक्ष्मीम्॥ ३४॥ ❀ ❀ सिद्धा आत्मारामाः ततः पीयूषनद्यास्सकाशान्न निस्सरति ब्रह्मसम्पन्नवदिति निर्गमनाभावमात्रे दृष्टान्तः, न त्वानन्दसाम्ये "या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणेन वा स्यात्। सा ब्रह्मणि स्वमहिमन्यपि नाथ! माभूद्" इत्यादिनाऽऽनन्दतारतम्यप्रतिपादनात्॥ ३५॥ ❀ ❀ स्तौति सर्वदेवेष्वाक्षेपपूर्वकमिति शेषः। प्रयाजाद्यंगानि 'समिधो यजति इडां यजति बर्हिर्यजति तनूनपातं यजति स्वाहाकारं यजती'ति पञ्चविधानि प्रयाजसंज्ञकान्यङ्गानि। आदिना व्रीह्यादिपरिग्रहः, दर्शपौर्णमासयोः स्वर्गजननं प्रति कथम्भावाकाङ्क्षायां समिदादीनां कथं भावाकाङ्क्षोपशमकत्वेनान्वयात्तेषामंगत्वेन विनियोगः प्रकरणाज्ज्ञेयः। अतस्त्वां विनाङ्गानामशोभाकरत्वात् श्रिया सह त्रायस्वेति यदि संसारान्मुक्तीच्छामात्रं त्राणं स्यात्तदा श्रीसाहित्यमपुष्टार्थं स्यात्। तस्माद्दास्यभावेच्छैव गम्यते इत्यभिप्रेत्य त्वद्भक्तान् कुर्विति फलितोऽर्थः॥ ३६॥ ❀ ❀ भगवत्तत्त्वमपश्यन्तः किन्तु विशेष्यमात्रं निर्विशेषत्वमेव परत्वेन मन्यन्त इति पूरणीयम्। भगवत्कृपया भगवतः प्रत्यक्षेऽपि तदमननात् पष्ठः पञ्चभूतातिरिक्तस्सच्चिदानन्ददेह इत्यर्थः। पञ्चभिर्भूतैरुपलक्षितो भौतिकदेह इव यत्प्रतीयसे एषा भवदीया माया प्रतारणशक्तिर्भवति "नाहं प्रकाशः सर्वस्य योगमायासमावृतः" इति श्रीगीतोक्तेः भावार्थे पञ्चभूतोपलक्षित इति जहदजहल्लक्षणामाश्रित्योक्तमतो धिगसज्जीवितमित्युक्त्या भगवद्विग्रहे लक्षणावादिनो धिक्कृता इति गम्यते। तदुक्तं पाद्मे "यो वेत्ति भौतिकं देहं कृष्णस्य परमात्मनः। स सर्वस्माद्बहिष्कार्यः श्रौतस्मार्तादि कर्मणः॥ मुखं तस्याऽवलोक्यापि सचैलः स्नानमाचरेद्" इति॥ ३७॥ ❀ ❀ अनुग्रहभाक्त्वं कृपापात्रत्वं मन्यमाना आत्मनः स्वस्य पृथक्त्वं स्वतन्त्रसत्ताकत्वं किन्त्वत्र व्याजस्तुत्या यद्यपि ज्ञानिनः श्रेष्ठास्तथाप्यस्माकन्तु स्वामिभृत्यभावेन भजन एवाऽभिरुचिरित्युक्त्या दासा एव तवातिप्रिया इति ज्ञानिष्वाक्षेपो व्यज्यते। तत्र हेतुः हे वत्सल! सर्वत्र भक्तवत्सल इत्येव नाम न तु ज्ञानिवत्सलेति "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इत्यादौ ज्ञानिवत्सलत्वं यत् श्रूयते तच्चतुर्विधा भजन्ते इत्यत्र भजनश्रवणाद्भगवज्ज्ञानी एव प्रस्तूयते न तु शुष्कज्ञानी, "श्रेयःसृतिं भक्तिमुदस्य ते प्रभो क्लिश्यन्ति ये केवलबोधलब्धये" इत्यादौ तस्य निन्दाश्रवणात्॥ ३८॥

### श्रीमद्वीरराघवव्याख्या

अथ ब्रह्मा 'नात्मन् श्रितं तव विदन्त्यधुनापि तत्त्वमि'ति भगवत्तत्त्वस्य वेद्यत्वं यद् भृगुणोक्तं तदेव प्रपञ्चयन्नाह नैतदिति। भवत एतद्वाङ्मनसागोचरं स्वरूपं पुरुषो जीवः पदार्थानां भेदं स्वाऽसाधारणं धनं गृह्णन्तीति पदार्थभेदग्रहाः पदार्थभेदो गृह्यत एभिरिति वा पदार्थभेदग्रहाः रूपस्पर्शादिग्राहकैश्चक्षुरादिभिरिन्द्रियैरित्यर्थः। नेक्षेत् न साक्षात्कुर्यात्, कुतः यावत् यावता यत इत्यर्थः। असौ पुरुषः ज्ञानस्य ज्ञायते अनेनेति ज्ञानं करणे ल्युट् तस्य इन्द्रियवर्गस्य अर्थस्य शब्दादेर्विषयस्य गुणस्य च ज्ञानार्थयोः कारणस्य सत्त्वादिगुणस्य च आश्रयः त्वन्तु मायामयात् मायापरिणामरूपात् असतो देहादेः तत्संसृष्टाच्च जीवात् व्यतिरिक्तोऽत्यन्तविलक्षणः प्राकृतं हि चक्षुरादीन्द्रियादेर्विषयस्य प्राकृतमेव गृह्णीयान्न त्वप्राकृतं त्वत्स्वरूपमिति भावः॥ ३१॥ ❀ ❀ इन्द्रस्तु भगवदवतारस्य धर्मसंस्थापनार्थत्वमनुसन्दधदाह इदमिति। हे अच्युत! इदं तव वपुः शरीरं विश्वभावनं विश्वं भावयति सुखिनं करोतीति विश्वभावनम्। अत एव मनोदृशां मनसां दृशाञ्च आनन्दं करोतीत्यानन्दकरम्। अस्य रूपस्य धर्मसंस्थापनार्थत्वात् तस्य चाधर्मविरतिपूर्वकत्वादधार्मिकविरत्युपयुक्तत्वं विग्रहस्याह। सुरविद्विषः सुराणां विद्विषः असुरास्तान्क्षपयन्तीति तैः उद्धृतान्यायुधानि यैस्तैरष्टभिर्भुजदण्डैः दण्डवद्दीर्घैर्भुजैरुपपन्नं युक्तम्॥ ३२॥ ❀ ❀ ऋत्विक्पत्न्यस्तु भवदाराधनत्वेनोपक्रान्तं विच्छिन्नमध्वरे कृपादृष्ट्या पवित्रीकुर्वित्याहुः यज्ञ इति। अयं यज्ञस्तव यजनाय आराधनाय केन ब्रह्मणा दक्षेण वा पूर्वं सृष्टः

आरब्धः स चेदानीं पशुपतिना रुद्रेण दक्षे कोपात् विध्वस्तः, हे यज्ञात्मन् ! यज्ञ आत्मा मूर्तिर्यस्य तस्य संबुद्धिः नोऽस्माकं यज्ञं नलिनकान्त्या दृशा नेत्रेण पुनीहि पवित्रं कुरु । कथंभूतं यज्ञं शवाः शेरते यस्मिन्निति शवशयनं श्मशानं तद्वदाभा प्रतीतिर्यस्य सः मेधशब्देन पशुहिंसाद्युत्सवो लक्ष्यते शान्तः मेधो यस्य सः उपरतोत्सवः शवशयनाभश्चासौ शान्तमेधश्चेति कर्मधारयः ॥ ३३ ॥ ❀ ❀ ऋषयस्तु यत्परमात्मनोऽसाधारणमपहतपाप्मत्वं देवमनुष्यादिपुण्यापुण्यसजातीयचेष्टितत्वेऽपि तत्फलाननुभवितृत्व-रूपं तदनुसन्दधानाः परिपूर्णत्वेन स्तुवन्ति अनन्वितमिति । हे भगवन् ! ते तव विचेष्टितमिदमनन्वितमघटमानं विस्मयनी-यमित्यर्थः । किं तत्राह आत्मना स्वयं कर्म पुण्यापुण्यसजातीयं कर्म चरसि अनुतिष्ठसि नाऽज्यसे तत्कृतेन फलेन न लिप्यसे इत्यर्थः । इदमप्यन्यदनन्वितमित्याहुः यत इति चतुर्थ्यर्थे तसिः तस्य सार्वविभक्तिकत्वात् यस्यै विभूतये यद्विभूत्यर्थम् ईश्वरीं लक्ष्मीम् उपसेदुः भेजुः ब्रह्मादय इति शेषः । द्वितीयार्थे वा तसिः, विभूतये सम्पदे यामीश्वरीं भेजुस्तां स्वयमनुवर्तिनीं स्वयमेवानुवर्तमानां भवान्न मन्यते नाद्रियते उपेक्षत इत्यर्थः । अनेन परिपूर्णत्वमुक्तम् ॥ ३४ ॥ ❀ ❀ सिद्धास्तु तत्कथासुखमभिनन्दन्तः स्तुवन्ति अयमिति । अयं नोऽस्माकं मनोवारणः मनोगजः क्लेशा आध्यात्मिकादयस्तापास्त एव दावाग्नयस्तैर्दग्धः अत एव तृषा शब्दादि-विषययाऽसक्त्या आर्त्तः पीडितः ते तव त्वत्कथैव मृष्टं शुद्धं पीयूषं तन्मयी या नदी तस्याम् अवगाढः प्रविष्टो दावं दावाग्नितुल्य-सांसारिकाध्यात्मिकादितापं न सस्मार न स्मरति । न च ततो निर्गच्छति ब्रह्मसम्पन्नवत् मुक्तवत् सुखित एवाऽवतिष्ठत इत्यर्थः ॥ ३८ ॥ ❀ ❀ दक्षपत्नी यजमानी स्तौति स्वागतमिति । हे ईश ! ते तव स्वागतं भद्रमागमनं जातं हे श्रीनिवास ! प्रसीद प्रसन्नो भव अस्माकमिति शेषः, ते तुभ्यं नमः, हे अधीश ! यथा शिरसा हीनः कबन्धमात्रः पुरुषः अङ्गैः करचरणाद्यवयवैः शोभनैरपि न शोभते तथा त्वां विना केवलं प्रयाजाद्यङ्गैर्मखो न शोभते । अतो नः श्रिया कान्तया सह त्रायस्व पालयेत्यर्थः ॥ ३६ ॥ ❀ ❀ लोकपालास्तु भगवतः सौलभ्यं तन्मायावैभवम् अनुसन्दधानाः स्तुवन्ति दृष्ट इति । त्वं वाङ्मनसागोचरस्वरूपस्वभावस्त्वं नः अस्माकं दृग्भिः मांसचक्षुर्भिः किं दृष्टः कथं दृष्ट इत्यर्थः । स्वयं वाङ्मनसाऽवेद्यस्वरूपस्वभावत्वे सति अखिलजननयनविषयतागतत्वरूप-सौलभ्येनैव दृष्ट इत्यर्थः । नो इति निपातो वा नञ्पर्यायः, दृग्भिर्नो दृष्टः किं दृष्ट एवेत्यर्थः । सौलभ्यमेवात्र कारणमिति भावः । यद्वा एषाऽदृग्विषयोऽपि दृग्विषयो जात इत्येषा भवदीया माया भवदीयो विचित्रः सङ्कल्प इत्यर्थः । मायाशब्दस्य विचित्रसर्गकारिशक्तिविशेष-परत्वे पूर्वोक्त एवान्वयः साधुः । इदमपि तव मायाकार्यमेवेत्याह असद्ग्रहैः । असति देहे तदनुबन्धिनि च ग्रहः आग्रहः अहंममताऽभि-मानः येषां तैर्देहात्माभिमानिभिरित्यर्थः। दृश्यं शरीरं येन कारणेन प्रत्यग्दृष्ट्या दृश्यते प्रत्यक्त्वेन दृश्यते आत्मतत्त्वत्वेनाऽभिमन्यत इत्यर्थः । एषां दृश्यस्य प्रत्यक्त्वेन दृष्टिः भवदीया माया विचित्रा शक्तिरित्यर्थः । तत्कारणभूता भवदीया मायेति भावः । हिशब्दः श्रौतीं स्मार्तीं च प्रसिद्धिं द्योतयति "अस्मान् मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः । नासदासीन्नोसदासीत्तदानीन्तन आसीत् तमसा गूढमग्रे प्रकेतं" "दैवी ह्येषा गुणमयी मम माया दुरत्यया" इत्यादिश्रुतिस्मृतिश्चात्रानुसन्धेया । एतेन देहात्मभ्रमो भगवन्मायामूल एवेत्युक्तं भवति । एवं जीवेशैक्यभ्रमोऽपि त्वन्मायामूल एवेत्याहुः । हे भूमन् ! अनेन जीववैलक्षण्यं सूचितं जीवस्याणुस्वरूपत्वात् यस्त्वं प्रकृतिपुरुषविलक्षणस्त्वं पञ्चभिर्भूतैः पृथिव्यादिभिः सहित इति शेषः । अत्र पञ्चभिः भूतैरित्यनेन तत्परिणामरूपं शरीरं लक्ष्यते तद्विशिष्टः षष्ठोऽचिद्विलक्षणो जीवः, पञ्चभूतप्रस्तावात् षष्ठ इत्युक्तिः । भासि जीवत्वेन प्रतीयसे एषापि प्रतीतिस्त्वन्मायैव मायाकार्यभूतैवेत्यर्थः । हिशब्दः स्वतन्त्रात्मभ्रमवत्पुरुषेषु प्रसिद्धिद्योतकः ॥ ३७ ॥ ❀ ❀ लोकपालै-र्भगवतो रूपसौलभ्यानुसन्धानपूर्वकं मायावैभवरूपजीवेशैक्यप्रतीतेर्भ्रमत्वे चोक्ते योगीश्वराः परमपुरुषात्स्वतन्त्रभेदं वारयन्त-स्तद्भेदस्य पारतन्त्र्यं तस्य च शरीरशरीरिभावशेषशेषिभावादिनिबन्धनत्वञ्चाविष्कुर्वन्तो वात्सल्यगुणविशिष्टत्वेन स्तुवन्ति प्रेयानिति ।

हे प्रभो ! विश्वात्मनि विश्वस्य चिदचिदात्मप्रपञ्चस्यान्तः प्रविश्य स्वयमपरित्यक्तस्वरूपस्वभावत्वेन प्रशासनेन धारके, अनेन विश्वस्य शरीरत्वमुक्तमिति जीवानां परतन्त्रभेदोऽभ्युपगत इति वेदितव्यं, विश्वात्मनि त्वयि विश्वस्माद्विलक्षणे त्वयि यः पुमान् आत्मनः स्वस्य पृथक्त्वं पृथक् सिद्धत्वं स्वस्याब्रह्मात्मकत्वमित्यर्थः । नेक्षेत् न पश्येत् स्वात्मानं परमात्मशरीरत्वेनाऽपृथक् सिद्धत्वेन ब्रह्मात्मकत्वेनाऽनुपश्येदित्यर्थः । अमुतः अमुष्मात् तत्त्वदर्शिनः अन्यस्ते तव प्रेयान् प्रीतिविषयो नास्ति । तथैव हि भगवता "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इति गीतमिति भावः । अत्र पृथक्त्वं नेक्षेदित्यनेन तादात्म्येन दर्शनं विहितमित्यर्थवर्णनं त्वयुक्तं विश्वात्मनि भृत्येशतयेति पूर्वोक्तव्याघातात् विश्वतादात्म्यन्तु सर्वसमयविरुद्धं जडाजडयोरप्यैक्यप्रसङ्गात् । अतो विश्वात्म-नीति व्यतिरेकनिर्देश एव । अत आत्मनः पृथक् सिद्धत्वेनैव दर्शनं प्रतिषिध्यते । अनेन परतन्त्रभेद उक्तः शरीरात्मभाववचनेन तन्दतर्भूताः शेषशेषिभावादयोऽप्यर्थादुक्ताः । एवं शरीरत्वेन शेषत्वेन चात्मानमनुसन्दधानो मत्प्रिय इति त्वयैवोक्तमिति यस्त्वया-नुगृह्यत इति सिद्धमेव । किन्तु योऽसौ शास्त्रसिद्धशरीरात्मभावादिज्ञानशून्यः केवलस्वस्वामिभावज्ञानवान् सोऽपि वात्सल्यवता त्वयानुग्राह्य एवेत्याहुः तदापीति । यद्यप्यात्मनोऽपृथक्त्वं न पश्यति लोकसिद्धं स्वामिभृत्यभावमेव पश्यति तथापि भृत्येशतया भृत्यस्वामिभावेन उपधावतां समीपगतिं प्रक्रान्तानाम् अनिष्पन्नज्ञानानामित्यर्थः । अनन्यवृत्त्या अनुग्रहैकदृष्ट्या अनुगृहाण प्रसीद हे वत्सल ! दोषेऽपि गुणबुद्धिर्वात्सल्यं यथा मातुः पुत्रे वत्सलस्य तवाज्ञानुग्रह उचित इति भावः । यद्वा अनन्यवृत्त्या अव्यभि-चारिण्या भक्त्या उपधावताम् अनुगृहाणेत्यन्वयः ॥ ३८ ॥

श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सर्वस्य हरेस्तत्त्वविषयाज्ञानमुक्त्वेदानीं तत्सत्त्वप्रमाणाभावेन शून्यप्रायं तत्स्यादित्यतोऽव्यक्तादिविशेषज्ञानिप्रत्यक्षं प्रमाणमिति भावेनाह नैतदिति। एतदव्यक्तादि भवतः स्वरूपं सच्चिदानन्दात्मकं न भवति इह जगति यो वैराग्यभक्त्यादिसाधनसामग्रीमान् असौ पदार्थभेदग्रहोऽव्यक्तादिपदार्थविशेषज्ञानी ब्रह्माद्यन्यतमः पुरुषो यावत्पदार्थजातं तावत् पृथगीक्षेत् पश्यतीति यस्मात्तस्मादित्यर्थः। "भेदोऽन्तरं विशेषश्च सूक्ष्मेक्ष्यं चाभिधीयते" इति वचनात् अत्र भेदो विशेषः। नन्वव्यक्तादेर्व्यतिरिक्तं चेत्तत्त्दर्शनं प्रमाणं स्यात्तदेव कुत इति तत्राह ज्ञानस्येति। ज्ञानस्येत्युपलक्षणं जातावेकवचनम्। ज्ञानेन्द्रियाणां कर्मेन्द्रियाणामर्थस्य शब्दादितन्मात्राणां चाकाशादिभूतानां च गुणस्य सत्त्वादेश्च च शब्दात्तत्कार्ययोर्महदहंकारयोश्चाश्रयान्मायामयात् प्रकृतिविकारात् प्रपञ्चाद्व्यतिरिक्तोऽत्यन्तविलक्षणः केवलचिदानन्दात्मकनित्यदेहस्त्वमिति यतोऽत इति तदुक्तं "अव्यक्तादिपदार्थानां विशेषज्ञानिनापि तु। न देहो वैष्णवो ज्ञेय आनन्दः प्राकृतो न हि" इति, अव्यक्तादिपदार्थानां विशेषज्ञानिना वैष्णवो देहो व्यक्तादिपदार्थानां सम्बन्धेन निर्मितो न ज्ञेयः। तत्र हेतुमाह आनन्द इति। यद्वाऽसौ पदार्थभेदग्रहः पुरुषो यावदीक्षेत् तावदेतदव्यक्तादि भवतः स्वरूपं न भवतीति प्रत्येति ज्ञानिदर्शनस्य यथार्थत्वनियमात्। अनेनाज्ञानिपक्ष एवाव्यक्तादि स्वरूपं न ज्ञानिपक्ष इत्युक्तम्, अन्यत्समम्। असत इति पाठे अमाङ्गल्यादित्यर्थः॥ ३१॥ ❀ ❀ अनन्तरातीते श्लोके प्रत्यक्षमेतत् भवतः स्वरूपं न भवतीत्यन्यथा प्रतीतिमिन्द्रस्तुतिव्याजेन निरस्यति इदमिति। अच्युत ! हेयोपादेयरहित ! हरे ! इदं दृश्यमानं तव वपुर्विश्वभावनं जगदुत्पादकं ब्रह्मैवेत्यन्वयः। वपुःशब्दस्यार्थान्तरमाह आनन्दकरमिति 'शुभाकारे तनौ वपु'रित्यभिधानं यावद्गुणानुपसंह्रत्योपास्ते तदनुसारिफलं च स्वस्यापि स्यादित्याशयेनाह सुरविद्विडिति सुरविद्विषोऽसुरास्तान् क्षपयन्तीति सुरविद्विट्क्षपणास्तैः॥ ३२॥ ❀ ❀ अन्तरायितस्य कर्मणः पूर्वफलत्वसिद्धिः श्रीनारायणकटाक्षेणैवेत्यभिप्रायेण पत्न्यः स्तुवन्तीत्याह यज्ञोऽयमिति। शवं जलं तस्मिन् शेत इति शवशयः 'अधिकरणे शेतेरि'ति कर्त्तर्य्यच्प्रत्ययः, कमलं नाभौ यस्य स तथोक्तः तस्य सम्बुद्धिः शवशयनाभ ! कमलनाभ ! शान्तमेधमुपरतं एकपदपक्षे शवाः प्रेताः शेरतेऽस्मिन्निति शवशयः 'पुंसि संज्ञायां घः प्रायेणे'त्यधिकरणे घः प्रत्ययः, श्मशानं तस्य आभेव आभा यस्य सः श्मशानकान्तिश्चासावुपरतश्चासावध्वरश्चेति स तथोक्तस्तं पुनीहि शुद्धं कृत्वा पूर्णफलं कुर्वित्यर्थः॥ ३३॥ ❀ ❀ इतोऽपीदं रूपमुपनिषदेकवेद्यं न मायामयमिति भावेन ऋषयः स्तुवन्तीत्याह अनन्वितमिति। भगवंस्तव विचेष्टितमनन्वितं लोककर्मविलक्षणं कुतस्त्वमात्मनाऽन्यसहायमन्तरेण यत्कर्म चरसि करोषि तेन कर्मणा नाज्यसे न लिप्यसे हि यस्मात्तस्मात् "स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष" इति श्रुतेः असङ्गित्वं तवैवोचितमित्याहुः। विभूतय इति। यतो यस्याः श्रियः प्रसादाद्विभूतयः ईश्वरान् ब्रह्मादीनुपसेदुः प्रापुस्तां श्रियं स्वयमनुवर्तिनीं स्वत एव निषेवमाणां भवान्न मन्यते मन ज्ञान इति धातोः अप्राप्तफलार्थं सेवते इति न जानाति, किन्तु ऋतुधर्मवज्जलस्यन्दनवत् भक्तिकरणमस्याः स्वभाव इत्येव जानातीत्यर्थः॥ ३४॥ ❀ ❀ ते तव कथामृष्टपीयूषनद्यामवगाढो मग्नोऽयं मनोवारणः संसाराख्यं दावं न सस्मार स्मरणाभावे निमित्तमाह ब्रह्मेति। ब्रह्मसम्पन्नस्यापि निर्गमने स्मृतिः सम्भवतीत्यत उक्तं निष्क्रामतीति। कथानद्यवगाहे हेतुमाह क्लेशेत्यादिना। अनेनाप्यस्य रूपस्य ब्रह्मत्वं निरणायीति ज्ञायते॥ ३५॥ ❀ ❀ पूर्वस्य यजमानेन यथातत्त्वं स्तुतम्। अत्र लोकसंस्कारपूर्वकमौत्सुक्याच्च स्वाभीष्टसिद्धये यजमान्या प्रसूत्या स्तूयते स्वागतमित्यादिना। श्रिया कान्तया सह त्राहि रक्ष, कबन्ध इत्यनेन शिरोराहित्ये सिद्धेऽपि स्पष्टत्वाच्च शीर्षहीन इत्युक्तम्, अङ्गैर्ऋत्विगादिभिरन्यत्र करचरणादिभिस्सहितोऽप्यनेन सर्वोत्तमत्वं हरेर्द्योतितम्॥ ३६॥ ❀ ❀ लोकपालस्तुत्यापि हरेरिदं रूपमनारोपितमिति ज्ञायत इति आह दृष्टः किमिति। येन त्वया विश्वं सर्वं दृश्यते ज्ञातं भवति स प्रत्यग्दृष्ट्या ज्ञानदृष्ट्या च दृश्यस्त्वम्। नोऽस्माकं असद्ग्रहैः शब्दाद्यमङ्गलविषयग्राहिभिर्दृग्भिः किं प्रयोजनमुद्दिश्य दृष्टोऽनुग्रहमन्तरेणेति शेषः। पञ्चः पञ्चभूतव्यतिरिक्तशरीरस्त्वं पञ्चभिर्भूतैर्निर्मितशरीरवद्भिर्दृष्टो भासीति यदेषा भवदीया माया हि भवत्सामर्थ्यमेव। न ह्यमांसदृष्टिगोचरस्वभावस्य तद्गोचरत्वं सामर्थ्यं विना युज्यते भगवन्महिमैवासौ यद् दृश्यो भगवान् स्वयमिति वाक्यं हिशब्दगृहीतं भूमन्नित्यनेन पूर्णस्यायं स्वभाव इति दर्शयति, यद्वा प्रत्यग्दृष्ट्या दृष्टस्त्वमस्माकं दृग्भिर्दृष्टः किमहो अस्मद्भाग्यं दिव्यदृष्टिगोचरस्यान्यदृष्टिगोचरत्वमिति यत्पञ्चभिर्भूतैः सह पञ्चो भासीति यच्च सेयं भवदीया माया हीति॥ ३७॥ ❀ ❀ योगेश्वरस्तुत्या प्रतीतं पञ्चभूतात्मकत्वं निवारयति प्रेयानिति। अमृतप्रिय मुक्तप्रिय प्रभो ! समर्थ ! विष्णो ! यो जीवो विश्वात्मनि जगदन्तर्यामिणि त्वयि पृथक्त्वमन्यथात्वं नेक्षेन्न पश्येत् सुरनरतिर्यगादिषु जीवराशिषु प्रेरकत्वेन स्थितानां तव रूपाणां गुणादीनां चाणुमात्रं भेदं न पश्यतीत्यर्थः। तस्मादात्मनो जीवादन्यः प्रेयांस्तव नास्ति। हे भृत्येश ! भृत्यानां दासानामस्माकमीश ! भक्तवत्सलया "भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन" इति प्रसिद्धा तयाऽनन्यवृत्त्या उपधावतां सेवमानानामस्माकमनुग्रहोऽस्त्येव, अथापि पुनरनुगृहाणेत्यन्वयः "यथार्थज्ञानिनो नान्यः प्रियो विष्णोस्तु कश्चन। तथाप्यधिकसन्तुष्ट्यै प्रसीदेत्यर्थनं पुनः" इति वचनादुपपन्ना प्रार्थनेति। अत्राभेदज्ञानिनो हरेरधिकप्रियत्वमुच्यते इत्ययमर्थः "पृथक् ज्ञानं तदित्याहुर्यत्किञ्चिद्वीक्ष्यतेऽन्यथा। ज्ञानं ज्ञेयाऽविरोधेन त्वपृथग्वस्तुनो दृशिः॥ केचिद्भेदं विनिन्दन्ति ह्यासुरज्ञानवृत्तयः। निराकुर्वन्त्यथो मन्दा भेदस्य परमार्थताम्॥ ये तु तत्त्वविदो मुख्या भेदं ब्रह्मान्यवस्तुनोः। परमार्थमिति ज्ञात्वा नित्यं विष्णुमु-

पासते" इत्यादिप्रमाणविरुद्ध इति ज्ञातव्यम्। आचार्येणापि न पृथग्य आत्मनः अन्यथा यो न पश्यतीति पृथगित्येतदन्यथेति व्याख्यातं न भेदमिति ॥ ३८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

श्रीब्रह्मापि भृगुवाक्यमनुमोदमान एवाह नैतदिति। इन्द्रियैः करणभूतैः पुरुषो यावद्वस्तु जानाति तावति वस्तुनि भवत एतत् श्रीविग्रहात्मकं स्वरूपं न स्यात्। किन्तु तावदतिक्रम्यैव स्यादित्यर्थः। तर्हि किं लक्षणं तत्राह ज्ञानस्येति। तदेव तद्विग्रहलक्षणस्त्वमेवाश्रयः नातः परं परमं यद्भवतः स्वरूपमित्यादेः तस्मात् कृपया स्वयमेव प्रकाशत इति भावः। व्यतिरिक्तोमतस्त्वमिति चित्सुखपाठान्तरम्। व्यतिरिक्तश्चासौ ॐकारश्चेति ॥ ३१ ॥ ❀ ❀ प्रायोऽसौ चतुर्भुज एवाविर्भवति सम्प्रति त्वष्टभुज इति साश्चर्यमिन्द्र उवाच। इदमपीति। न केवलमानन्दकरं भुजबाहुल्येनासुरक्षपणाऽतिशयायुक्तेश्च ॥ ३२ ॥ ❀ ❀ यज्ञपत्न्यस्तु तत्कृपादृष्ट्यार्द्रितचित्ताः दुःखं निवेदयन्ति यज्ञ इति ॥ ३३ ॥ ❀ ❀ ईश्वरीं जगल्लक्ष्मीम्, अनुवर्त्तनीमिति चित्सुखः ॥ ३४ ॥ ❀ ❀ सिद्धा अत्र आत्मारामाः ते इति चित्सुखः ॥ ३५ ॥ ❀ ❀ यजमाना इति चित्सुखः ॥ ३६ ॥ ❀ ❀ लोकपालास्तु तच्छ्रीविग्रहस्य दृश्यत्वं भौतिकत्वं च निवारयन्ति। दृष्टं किं न इति। किन्तु स्वयमेव प्रकाशस इत्यर्थः। तत्र हेतुः पष्ठः पञ्चभूतातिरिक्तो यस्त्वं सपञ्चभिर्भूतैः स्वोपाधिभिरेव भासि नात्मनेति यत् सैषा त्वदीया मायैव। मायाभिभूतानामेव तथा विवेको भवतीत्यर्थः। प्रत्यग्दृष्ट्या इति चित्सुखः ॥ ३७ ॥ ❀ ❀ प्रेयानिति। अयमर्थः यस्त्वयि विश्वात्मनि आत्मनो जीवान् ईक्षेत त्वच्छक्तित्वात्त्वदनन्यत्वेनैव जानाति न तु पृथक् स्वतन्त्रत्वेनेक्षेत अमुतः अमुष्मात् यद्यपि ते प्रेयान्नास्ति। वत्सल! हे भृत्यप्रिय! भृत्येशभावेन ये भजन्ति तेषां या अनन्या वृत्तिः अव्यभिचारिणी निजभक्तिस्तयैवानुगृहाण। प्रस्तुतत्वेनास्मान् ज्ञानिभक्तानिति लभ्यत इति ॥ ३८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

पदार्थभेदग्रहैर्विषयग्राहकैरिन्द्रियैस्तव एतत्स्वरूपं श्रीमूर्त्तिं यावन्न पश्येत् तावदेव ज्ञानस्याऽधिदैवस्यार्थस्याऽधिभूतस्य गुणस्याऽध्यात्मस्य चाश्रयः स्यात्। तत्स्वरूपे साक्षाद्दृष्टे सति न ज्ञानादेराश्रयः किन्त्वप्राकृत एव स्यात् यतस्त्वं मायामयादस्तोऽधिदैवादेर्व्यतिरिक्तश्चिद्रूपो न तैर्गृह्यसे इत्येतावत्तत्त्वन्तु वयं जानीमोऽत एते प्राकृतेन्द्रियाः पश्याम इत्यभिमानवन्तोऽपि तत्स्वरूपं नैव पश्यन्तीति भृग्वादिषु कटाक्षः ॥ ३१ ॥ ❀ ❀ इदं तव वपुर्विश्वमपि कृपया भाववन्तं करोतीति तत्। सुरविद्विट्क्षपणैर्दुष्टसंहारकैरित्यष्टभुजमिदं ते वपुरस्माभिः प्राकृतेन्द्रियैरप्यनिर्वाच्यया त्वत्कृपया दृष्टमेव आनन्दकरमित्यस्मदाद्यानन्दान्यथानुपपत्तिरेवात्र प्रमाणमिति ब्रह्माणि कटाक्षः ॥ ३२ ॥ ❀ ❀ केन ब्रह्मणा। शवशब्दस्योदकवाचित्वात् शवशयनं कमलं तन्नाभ शान्तमेधमुपरतपशुहिंसोत्सवं दृशा पुनीहीति त्वत्सन्निधानं विना वर्तमानैः सप्रयत्नैरप्येतैः किमपि न सिध्यतीत्यवगतमिति सर्वेष्वेव कटाक्षः ॥ ३३ ॥ ❀ ❀ अनन्वितमघटमानं यद् यस्मादात्मना स्वयं कर्माचरसि अनुतिष्ठसि अथ च नाप्यसे न लिप्यसे। कर्मकारिणस्त्वन्ये सर्वे लिप्यन्ते एवेति ब्रह्मादिषु कटाक्षः। यतश्च अन्ये विभूतये सम्पदे ईश्वरीं लक्ष्मीम् उपसेदुः भेजुः। यद्वा यत इति सार्वविभक्तिकस्तसिः यामित्यर्थः। भवांस्तु स्वयमेवानुवर्त्तमानां तां न मन्यते नाद्रियते ॥ ३४ ॥ ❀ ❀ सिद्धा इति केवलया भक्त्या प्रेमसिद्धिं प्राप्ता इत्यर्थः। त्वत्कथैव मृष्टपीयूषनदी शुद्धामृतनदी तस्याम् अवगाढः निमग्नः दावं संसारज्वालां विस्मृतवान्। अतस्ततो न निष्कामति ब्रह्मसम्पन्नवत् ब्रह्मैक्यं प्राप्त इवेति। किं कर्मकरणाकरणलेपालेपविचारेण भगवतो लीलाकथामृते निमज्जामेति ऋषिषु कटाक्षः ॥ ३५ ॥ ❀ ❀ यजमानी दक्षपत्नी प्रसूतिः। श्रिया कान्त्येति मयि त्वद्दासस्वायम्भुवमनोः पुत्र्यां देवहूताविव तव महती कृपास्तीत्यवगतम्। यतः स्वकान्तां श्रियं मद्गृहमनैषीस्तन्नोऽस्मान् रुद्रापराधविध्वस्तान् त्राहि। त्वामृते इति ब्रह्मादिसर्वदेवेषु कटाक्षः ॥ ३६ ॥ ❀ ❀ असद्ग्रहैर्विषयग्राहिभिरिन्द्रियैस्त्वं किं नो दृष्टः अपि तु दृष्ट इत्यर्थः। असद्ग्रहैरिति पुंस्त्वमजहल्लिङ्गत्वात्। प्रत्यगपि द्रष्टापि त्वं त्वत्कृपयैव दृश्यः स्या इत्यर्थः। यतस्त्वं पष्ठः पञ्चभूतातिरिक्तोऽपि पञ्चभिर्भूतैर्भौतिकशरीरो भासीत्येषा भवदीया मायैवेति त्वदीयश्रीविग्रहस्य भौतिकत्वं ये मन्यन्ते तैर्जरासन्धादिभिरिव दृष्टोऽपि त्वं माधुर्यानुपलम्भात् नैव दृष्ट इति शुष्कज्ञानिषु ऋषिषु देवेषु च कटाक्षः ॥ ३७ ॥ ❀ ❀ त्वयि विश्वात्मनि आत्मनो जीवान् यः पृथङ्नेक्षेत् त्वच्छक्तित्वात्त्वदनन्यत्वेनैव जानाति अमुतः अमुष्माद् यद्यपि ते प्रेयानन्यो नास्ति "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इति त्वदुक्तेः। तथापि तदपि भृत्येशतया अहं ते भृत्यस्त्वं मे ईश इति भेदेन दासप्रभुभावेन उपधावतां सेवमानानां या अनन्यवृत्तिः अनन्यभक्त्या अनुवृत्तिस्तयैव तद्दानेनैवास्माननुगृहाण। वयं निकृष्टास्त्वदभेदभावं प्राप्तुं कथं शक्नुम इति द्योतितया व्याजस्तुत्या दासा एव तवातिप्रिया इति ज्ञानिषु कटाक्षः। यदुक्तं त्वयैव "न तथा मे प्रियतम आत्मयोनिर्न शङ्करः। न च सङ्कर्षणो न श्रीर्नैवात्मा च यथा भवान्" इति। 'नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विने'ति। तत्र लिङ्गं हे वत्सलेति। त्वं भक्तवत्सल इति सर्वत्र श्रयसे न तु ज्ञानिवत्सल इति ॥ ३८ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ब्रह्मा त्वज्ञानावधिमाह नैतदिति। असौ पुरुषो जीवः यावत् ज्ञानस्य श्रोत्रादिज्ञानेन्द्रियवर्गस्य गुणस्य गुणकार्यस्य आश्रयः देहेन्द्रियात्माभिमानवान् अर्थस्य गृहादेराश्रयास्तत्र ममेदमित्यभिमानवान् तावत्पदार्थभेदग्रहैः मायामयपदार्थभेदमात्रग्राहकैर्बाह्यवृत्तिभिरिन्द्रियैः भवतः एतत्स्वरूपं न ईक्षेत्। यतस्त्वं मायामयात् बाह्यवृत्तीन्द्रियग्राह्यात् मायिकपदार्थात् व्यतिरिक्तः ॥ ३१ ॥ ❀ ❀ इन्द्रस्तु अनात्मज्ञो बहिर्वृत्तिभिरिन्द्रियैर्भगवतो रूपं पितामहोक्तं नेक्षते तन्महताऽऽदरेण स्तौति इदमिति। सुरविद्विषामसुराणां क्षपणैस्तत्क्षपणार्थमेवोदायुधैरष्टभिर्भुजदण्डैरुपलक्षितं तवेदं वपुरुपपन्नं सुनिष्पन्नं श्रुतिनिर्णीतमित्यर्थः। हे अच्युत! यथा त्वमच्युतस्तथा तवानुरूपं तव वपुरिति सम्बोधनाभिप्रायः। कथंभूतं विश्वं भावयत्युत्पादयतीति तत् विश्वपूर्ववर्ति विश्वविलक्षणं नित्यमप्राकृतमित्यर्थः ॥ ३२ ॥ ❀ ❀ ऋत्विजां पत्न्यस्तु प्रस्तुतं यज्ञं प्रसङ्गादस्मांश्च कृपाऽवलोकनेन पुनीहि इति प्रार्थयन्ते यज्ञ इति। तव यजनाय केन ब्रह्मणा प्रथममयं यज्ञः सृष्टः स चेदानीं पशुपतिना विध्वस्तः, हे यज्ञात्मन्! हे यज्ञमूर्ते! तं यज्ञं नोऽस्मांश्च दृशा नेत्रेण पुनीहि। नलिनरुचेत्यनेन स्वविषये तत्कृपावलोकने औत्सुक्यं सूच्यते। कीदृशं यज्ञं शवाः शेरते यत्र तच्छवशयनं श्मशानं तद्वदाभा यस्य स चासौ शान्तमेधः उपरतोत्सवस्तम् ॥ ३३ ॥ ❀ ❀ ऋषयस्तु सर्वं परायत्तं कर्मवश्यमपूर्णं च ज्ञात्वा स्वायत्तत्वेन कर्मावश्यत्वेन च भगवन्तं स्तुवन्ति अनन्वितमिति। हे भगवन्! यद्यस्मात् आत्मना स्वेच्छानुसारेणैव न तु परायत्ततया कर्म चरसि अनुतिष्ठसि न त्वज्यसे न लिप्यसे यस्माच्च, यत इत्यत्र सार्वविभक्तिकस्तसिः, यामीश्वरीं लक्ष्मीं विभूतये सम्पदे ब्रह्मादयः उपसेदुः भेजुः तां स्वयमनुवर्ततीमनुवर्तमानामपि भवान्न मन्यते स्वविभूतिदात्रीं न मन्यते स्वतः सिद्धसर्वविभूतिमत्त्वात्। तस्मात्ते विचेष्टितं तव वृत्तम् अनन्वितं त्वदन्यत्रासंभावितं त्वय्येव सुसङ्गतमित्यर्थः ॥ ३४ ॥ ❀ ❀ सिद्धास्तु विषयानन्दवासनां निर्नाशयिषवः ब्रह्मानन्दप्राप्तिकामाः शास्त्रानन्दमभिनन्दन्तः स्तुवन्ति अयमिति। अयं नोऽस्माकं मन एव वारणो गजः क्लेशा आध्यात्मिकादयस्तापा एव दावाग्नयस्तैर्दग्धः सन्तप्तः तृषा विषयवासनया आर्त्तः त्वत्कथैव मृष्टं शुद्धं पीयूषं तन्मयी या नदी तस्यामवगाढो निमग्नः दावं संसाराख्यवनभवं आध्यात्मिकादिक्लेशरूपमग्निं न सस्मार ब्रह्मसम्पन्नवत्ततो न निष्क्रामति त्वत्कथाश्रवणं न त्यजतीत्यर्थः ॥ ३५ ॥ ❀ ❀ त्वामङ्गिनं विनाङ्गभूतैरन्यैर्देवैस्त्वदाराधनार्थो यज्ञो न शोभतेऽतस्तवागमनं शोभनमित्येवं दक्षपत्नी स्तौति स्वागतमिति। ते स्वागतं शोभनमागमनं जातम्। श्रिया लक्ष्म्या सह नोऽस्मान् त्राहि त्वदेकशरणान् कुरु इदमेव यज्ञफलमिति भावः ॥ ३६ ॥ ❀ ❀ लोकपालास्तु भगवदनुग्राह्यैरिन्द्रियैरेव भगवान् गृह्यते न तु बाह्यवृत्तिभिरिन्द्रियैरित्याहुः। असद्ग्रहैः असति अनित्ये संसारे ग्रहोऽभिनिवेशो येषां तैरिन्द्रियैः दृग्भिर्मनोबुद्ध्यादिवृत्तिभिश्च प्रत्यग्द्रष्टा प्रत्यक्षोऽतीन्द्रियस्यापि द्रष्टा त्वं नोस्माभिर्दृष्टः किं निर्भ्रमत्वेन निश्चितः किं नेत्यर्थः "न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चिदेनं न चक्षुषा गृह्यते नापि वाचा" इत्यादिश्रुतिभ्यः। असद्ग्रहैरित्यनेन त्वदनुगृहीतैः सद्ग्रहैस्तु त्वां त्वदनन्याः पश्यन्तीति द्योत्यते "मनसैवानुद्रष्टव्यः, दृश्यते सूक्ष्मया बुद्ध्या, दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्" इत्यादिशास्त्रात्। अत एव यस्त्वं पञ्चः पञ्चभूतकारणभूतः पञ्चभिर्भूतैः विश्वाकारेण स्थितैर्भासि विश्वरूपो भासि सोऽपि नो दृष्टः किं नेत्यर्थः। कारणविज्ञानेन कार्यविज्ञानप्रतिज्ञानात् येन त्वया विज्ञानेन तु दृश्यं सर्वं दर्शनार्हं दृश्यते। तथा च श्रुतिः "यद्विज्ञानेन सर्वं विज्ञातं भवती"ति। ननु लोकपालानां भवतामप्येवंविधेऽज्ञाने को हेतुरित्यत्राहुः मायेति। हे भूमन्! एषाऽस्मज्ज्ञानावरणकर्त्री भवदीया माया प्रकृत्याख्या त्वदीया शक्तिः, "मम माया दुरत्यया" "माययापहृतज्ञाना" इत्यादिश्रीमुखोक्तेः ॥ ३७ ॥ ❀ ❀ योगेश्वरास्तु "तत्त्वमसि" "क्षेत्रज्ञं चापि मां विद्धि" "अंशो नानाव्यपदेशादन्यथा चापि दासकितवादित्वमधीयत एके" इत्यादिश्रुतिस्मृतिसूत्रसिद्धान्तभूतद्वैताद्वैताख्यजीवब्रह्मसम्बन्धविज्ञानी भक्तस्तवातिप्रियोऽपि तथापि केवलभेदबुद्धयः लोकप्रसिद्धेन स्वस्वामिभावेन त्वां भजन्तो जना भक्तवत्सलेन त्वयाऽनुग्राह्या इति प्रार्थयमानाः स्तुवन्ति प्रेयानिति। हे प्रभो! आत्मनः जीवान् त्वदंशभूतान् परस्परं त्वत्तश्च भिन्नस्वरूपानपि विश्वात्मनि सर्वात्मनि अंशिनि त्वयि पृथक् भिन्नान् यो नेक्षेन्नपश्येत् अमुतः अमुष्मात् अन्यस्ते प्रेयान् प्रेष्ठो नास्ति "ज्ञानी त्वात्मैव मे मतम्" इति श्रीमुखोक्तेश्च। अथापि ईशितया नृपेत्यादिवत् केवलनियन्तृतया अव्यभिचारिण्या भक्त्या उपधावताम्। हे वत्सल! हे भक्तवत्सल! अनुगृहाण प्रसीद ॥ ३८ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

ब्रह्मा तु भृगुणोक्तं स्वाज्ञत्वं श्रुत्वा तत्त्वज्ञानं भवतु मा वा, तथापि भगवद्भक्तानामेव कृतार्थत्वं नान्येषामतोहं भगवद्भक्तत्वात्संसारे पतितोपि कृतार्थ एवेत्यभिप्रेत्य स्तौति–नैतदिति। पदार्थभेदग्रहैस्तत्तद्भेदान् पश्यन्नसौ पुरुषो यावद्भवत एतद्दृश्यमानं भक्तोद्धारकं स्वरूपं सर्वत्र सर्वदा नेक्षेत् न पश्यति तावदेव संसारे भ्रमतीति शेषः। अर्थात्तथादर्शने तु कृतार्थ एव। तदुक्तं प्रह्लादमुद्दिश्य दितिं प्रति कश्यपेन–"अन्तर्बहिश्चामलमब्जनेत्रं स्वपूरुषेच्छानुगृहीतरूपम्। पौत्रस्तव श्रीललनाललामं द्रष्टा स्फुरत्कुण्डलमण्डिताननम्" इति। तथा कंसमुद्दिश्य शुकेनाप्युक्तम्–"चिन्तयानो हृषीकेशमपश्यत्तन्मयं जगत्" इति। एवं

व्यवस्थायां हेतुद्वयमाह–मायामयादिति। प्रपञ्चस्य प्रकृतिगुणकार्यत्वेन जडत्वात्तत्राऽभक्तानां बन्धः। त्वं तु यतस्तस्मान्मायामयात् प्रकृतिकार्याज्जडात्प्रपञ्चाद्व्यतिरिक्तः सच्चिदानन्दरूपस्तस्मात्त्वां सर्वत्र पश्यतां मोक्ष इत्यर्थः। तदुक्तं तृतीये–"चेतः खल्वस्य बन्धाय मुक्तये चात्मनो मतम्। गुणेषु सक्तं बन्धाय रतं वा पुंसि मुक्तये" इति। प्रपञ्चव्यतिरिक्तत्वसिद्धये तदाश्रयत्वमाह–ज्ञानस्येति। ज्ञानस्येत्युपलक्षणं ज्ञानकर्मेन्द्रियाणां तत्तद्देवतानां तत्तद्वृत्तीनां चेत्यर्थः। अर्थस्येति, आकाशादिमहाभूतपञ्चकस्य शब्दादिविषयपञ्चकस्य चेत्यर्थः। गुणस्येति। सत्त्वादेस्तत्साम्यस्य प्रकृतेः तत्कार्ययोर्महदहंकारयोश्चेति सर्वप्रपञ्चस्याश्रयो यतस्त्वमतस्तस्माद्व्यतिरिक्त एवा-धाराधेययोर्भिन्नत्वनियमादित्यर्थः॥ ३१॥ ❀ ❀ इन्द्रस्तु देवोपकारित्वादिदमपि स्वरूपमस्माकमानन्दकरमिति स्तौति–इदमपीति। यथा द्विभुजचतुर्भुजवपुरस्मदादीनां मनसां दृशां नेत्राणां चानन्दकरं भवति, तथा हे अच्युत स्वरूपतो गुणतश्च च्युतिरहित! इदमपि वपुः तव स्वरूपमित्यन्वयः। कुत इत्यपेक्षायां परमोपकारित्वादिति हेतुमभिप्रेत्योपकारमेव दर्शयति–विश्वभावनमिति। विश्वं भावयति पालयतीति तथा तत्। पालनप्रकारमेव सूचयन् पुनर्विशिनष्टि–सुरविद्विडिति। सुराणां विद्विषो ये दैत्यादयस्तान् क्षपयन्ति नाशयन्तीति सुरविद्विट्क्षपणास्तैः उद्यतानि आयुधानि यैस्ते उदायुधास्तैरष्टभिर्भुजदण्डैरुपपन्नं विशिष्टमित्यर्थः॥ ३२॥ ❀ ❀ दक्षदोषेण नष्टस्य प्रमथादीनां स्पर्शेन दुष्टस्याप्यस्य यज्ञस्य भगवत्कृपाकटाक्षेण पूर्णत्वं शुद्धत्वं सफलत्वं च भविष्यतीति निश्चित्य ऋत्विगादीनां पत्न्यो भगवन्तं प्रार्थयन्ते–यज्ञोऽयमिति। अयं यज्ञस्तव यजनाय पूजनाय केन दक्षेण सृष्टः प्रवर्त्तितस्तत्र रुद्रभागनिरासेन सत्यपमानेन च दक्षकोपात्पशुपतिना रुद्रेण सोद्य विध्वस्तो नष्टस्तं शवशयनाभशान्तमेधं शवाः मृताः शेरते यस्मिंस्तच्छवशयनं श्मशानं तद्वदाभा प्रतीतिर्यस्य स चासौ शान्तमेधश्च शान्त उपरतो मेधः मेधृ-हिंसायां पशुहिंसाद्युपलक्षित उत्सवो यत्र स तं नोऽस्माकं यज्ञं त्वं नलिनवत् रुक् कान्तिर्यस्यास्तया स्वदृशा नेत्रेण पुनीहि पवित्रं कुरु। पूर्णत्वं सफलत्वं चानुक्तमप्यर्थादायातीति ज्ञेयम्॥ ३३॥ ❀ ❀ ऋषयस्तु भगवतो निर्लेपत्वं वर्णयन्तः स्वापराधं क्षमापयन्ति–अनन्वितमिति। हे भगवन् ऐश्वर्यादिगुणगणार्णव! ते तव विचेष्टितमाचरणमनन्वितमद्भुतं लोकविलक्षणम्। कुतो विलक्षणमित्यत आहुः–यदिति। यत् यस्मात् आत्मना स्वशरीरेण लौकिकालौकिकनानाविधं कर्मा-चरसि करोषि परंतु नाज्यसे तज्जनितपुण्यपापाभ्यां तत्फलेन सुखदुःखादिना वा न लिप्यसे। एवं निर्लेपत्वे हेतुर्निरपेक्षत्वमेव तदपि लोकविलक्षणमेवेति दर्शयन्ति–विभूतय इति। तसेः सार्वविभक्तिकत्वादत्र द्वितीयार्थकत्वं, तेन यत इति यामीश्वरीं लक्ष्मीं विभूतये विभूतिप्राप्त्यर्थं लोका उपसेदुः भजन्ति स्म, तां स्वयमनुवर्त्ततीं सेवमानामपि भवांस्तु न मन्यते नाद्रियते। अतो निरपेक्ष-त्वाद्भवान्निर्लेपः। अत्र "न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा" इत्यादि प्रमाणं सूचयन्ति–हीति। अतो वयं प्रतिष्ठादिकामन-यात्रान्याययज्ञे प्रवृत्ताः, सोपराधस्त्वया क्षन्तव्य इति भावः॥ ३४॥ ❀ ❀ सिद्धास्तु त्वत्कथारसे निमग्नानां बहिरनुसन्धान-रहितानां यदि कश्चिदपराधो जातस्तदा त्वयैव क्षन्तव्य इत्याशयेन स्तुवन्ति–अयमिति। अयमस्माकं मनोवारणः मन एव दुर्दम्यत्वाद्वारणः यतः क्लेशदावाग्निदग्धः क्लेश एव तापकत्वाद्दावाग्निस्तेन दग्धः अतस्तृषार्त्तः सुखतृष्णया पीडितः सन् त्वत्कथा-मृष्टपीयूषनद्यां त्वत्कथैव मृष्टं शुद्धं सर्वदोषविवर्जितं पीयूषं तन्मयी नदी तस्यामवगाढः प्रविष्टः परमानन्दमनुभवन् दावं दावाग्नितुल्यं संसारक्लेशं न सस्मार। न च ततो निष्क्रामति न निःसरति। तत्र दृष्टान्तमाह–ब्रह्मसंपन्नवद्ब्रह्मप्राप्तवत् "न स पुनरावर्त्तते" इति श्रुतेः॥ ३५॥ ❀ ❀ प्रसूतिस्तु यदि पूर्वमेव भगवानागच्छेत्तदा विघ्नमेव नोत्पद्येतेदानीं जातेपि विघ्न आगतश्चे-त्तदापि तन्निवारणेन रक्षायां शक्त इत्यभिप्रेत्य रक्षां प्रार्थयते–स्वागतमिति। हे ईश! ते तव स्वागतं भद्रमागमनम्। यतः त्वामृते विनाङ्गैः प्रयाजादिभिर्मखो न शोभते। भो अधीश इति संबोधनेन सर्वोत्तमत्वेन सर्वनियन्तृत्वेन फलदातृत्वेन च भगवतो मुख्यत्वं सूचयति। तत्र दृष्टान्तः यथा शीर्षहीनः शिरसा रहितः कबन्धः कायमात्रः पुरुषोऽङ्गैः करचरणाद्यवयवैर्न शोभते तथेति! कबन्ध इत्यनेनैव शिरोहीनत्वलाभेपि पुनः शीर्षहीन इति स्पष्टत्वार्थम्। हे ईश तुभ्यं नमस्त्वं प्रसीद। प्रसन्नेन मया किं कर्त्तव्यं तत्राह–हे श्रीनिवास! कान्तया स्वभार्यया श्रिया सह नोऽस्मान् त्राहि त्रायस्वेति। हे ईश इति रक्षायां तव सामर्थ्यमस्तीति सूचयति। श्रियो निवासो यस्मिन्निति तथा संबोधयन् श्रियोपि तदधीनत्वं द्योतयतीति न पृथक् तत्प्रार्थनेति॥ ३६॥ ❀ ❀ लोकपालास्त्वलभ्यलाभ मिव भगवद्दर्शनं प्राप्याश्चर्ययुक्ता भगवन्तं स्तुवन्ति–दृष्ट इति। यः सर्वस्य प्रत्यगन्तःकरणे स्थितः द्रष्टा अन्तर्बहिः सर्वसाक्षी येनानुग्राहकेणानुगृहीतैश्चेतनतां प्राप्तैरिन्द्रियैर्दृश्यं विश्वं दृश्यते स त्वं नोऽस्माभिरसद्ग्रहैः प्राकृतपदार्थग्राह-कैर्दृग्भिरिन्द्रियैः किं दृष्टः कथं दृष्टः?। न हि त्वद्दर्शने इन्द्रियाणां सामर्थ्यमस्त्यतस्त्वं स्वेच्छयैव दर्शनं गत इत्यर्थः। एतदेव स्फुटयन्ति–मायेति। यस्त्वं पञ्चभूतेभ्यो व्यतिरिक्तः षष्ठोपि पञ्चभिर्भूतैर्विशिष्ट इव भासि सैषा भवदीया माया हि इच्छैव। नहि भगवदिच्छां विना तद्दत्तसामर्थ्यं विना केनापि स द्रष्टुं शक्यः। "दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्" इति वाक्यात्। हे भूमन्निति व्यापकस्यापि परिच्छिन्नतया दर्शनमपि त्वदिच्छयैवेति सूचितम्॥ ३७॥ ❀ ❀ योगेश्वरास्तु तदभेदेन भजतामनुग्रहं दृष्ट्वा भेदेन भजतामपि तत्प्रार्थयमाना नमस्यन्ति–प्रेयानिति द्वाभ्याम्। हे प्रभो! यस्त्वयि विश्वात्मनि परब्रह्मणि आत्मनः स्वस्य पृथक् पृथक्त्वं नेक्षेत् यद्वा आत्मनो जीवान् पृथङ् नेक्षेत् अमुतः अमुष्मादभेदद्रष्टुरन्यस्ते तव प्रेयान् प्रेष्ठो नास्ति। यद्यप्येवमथापि तथापि हे ईश हे वत्सल! तया शास्त्रेषु सर्वपुरुषार्थहेतुत्वेन प्रतिपादितया अनन्यवृत्त्या अव्यभि-

चारिण्या भक्त्या उपधावतां भजतोऽस्माननुगृहाणेत्यर्थः। ईश इत्यनेनानुग्रहे सामर्थ्यं द्योतयन्ति। वत्सल इत्यनेन कृपालोरनुग्रहकरणे योग्यत्वं सूचितम् ॥ ३८ ॥

### भाषानुवादः

ब्रह्माजीने कहा—प्रभो ! पृथक्-पृथक् पदार्थोंको जाननेवाली इन्द्रियोंके द्वारा पुरुष जो कुछ देखता है, वह आपका स्वरूप नहीं है; क्योंकि आप ज्ञान, शब्दादि विषय और श्रोत्रादि इन्द्रियोंके अधिष्ठान हैं—ये सब आपमें अध्यस्त हैं। अत एव आप इस मायामय प्रपञ्चसे सर्वथा अलग हैं ॥ ३१ ॥ ❀ ❀ इन्द्रने कहा—अच्युत ! आपका वह जगत्‌को प्रकाशित करनेवाला रूप देवद्रोहियोंका संहार करनेवाली आठ भुजाओंसे सुशोभित है, जिनमें आप सदा ही नाना प्रकारके आयुध धारण किये रहते हैं। यह रूप हमारे मन और नेत्रोंको परम आनन्द देनेवाला है ॥ ३२ ॥ ❀ ❀ याज्ञिकोंकी पत्नियोंने कहा—भगवन् ! ब्रह्माजीने आपके पूजनके लिये ही इस यज्ञकी रचना की थी; परन्तु दक्षपर कुपित होनेके कारण इसे भगवान् पशुपतिने अब नष्ट कर दिया है। यज्ञमूर्ते ! श्मशानभूमिके समान उत्सवहीन हुए हमारे उस यज्ञको आप नील कमलकी-सी कान्तिवाले अपने नेत्रोंसे निहारकर पवित्र कीजिये ॥ ३३ ॥ ❀ ❀ ऋषियोंने कहा—भगवन् ! आपकी लीला बड़ी ही अनोखी है; क्योंकि आप कर्म करते हुए भी उनसे निर्लेप रहते हैं। दूसरे लोग वैभवकी भूखसे जिन लक्ष्मीजीकी उपासना करते हैं, वे स्वयं आपकी सेवामें लगी रहती हैं; तो भी आप उनका मान नहीं करते, उनसे निःस्पृह रहते हैं ॥ ३४ ॥ ❀ ❀ सिद्धोंने कहा—प्रभो ! यह हमारा मनरूप हाथी नाना प्रकारके क्लेशरूप दावानलसे दग्ध एवं अत्यन्त तृषित होकर आपकी कथारूप विशुद्ध अमृतमयी सरितामें घुसकर गोता लगाये बैठा है। वहाँ ब्रह्मानन्दमें लीन-सा हो जानेके कारण उसे न तो संसाररूप दावानलका ही स्मरण है और न वह उस नदीसे बाहर ही निकलता है ॥ ३५ ॥ ❀ ❀ यजमानपत्नीने कहा—सर्वसमर्थ परमेश्वर ! आपका स्वागत है। मैं आपको नमस्कार करती हूँ। आप मुझपर प्रसन्न होइये। लक्ष्मीपते ! अपनी प्रिया लक्ष्मीजीके सहित आप हमारी रक्षा कीजिये। यज्ञेश्वर ! जिस प्रकार सिरके बिना मनुष्यका धड़ अच्छा नहीं लगता, उसी प्रकार अन्य अङ्गोंसे पूर्ण होनेपर भी आपके बिना यज्ञकी शोभा नहीं होती ॥ ३६ ॥ ❀ ❀ लोकपालोंने कहा—अनन्त परमात्मन् ! आप समस्त अन्तःकरणोंके साक्षी हैं, यह सारा जगत् आपके ही द्वारा देखा जाता है। तो क्या मायिक पदार्थोंको ग्रहण करनेवाली हमारी इन नेत्र आदि इन्द्रियोंसे कभी आप प्रत्यक्ष हो सके हैं ? वस्तुतः आप हैं तो पञ्चभूतोंसे पृथक्; फिर भी पाञ्चभौतिक शरीरोंके साथ जो आपका सम्बन्ध प्रतीत होता है, यह आपकी माया ही है ॥ ३७ ॥ ❀ ❀ योगेश्वरोंने कहा—प्रभो ! जो पुरुष सम्पूर्ण विश्वके आत्मा आपमें और अपनेमें कोई भेद नहीं देखता, उससे अधिक प्यारा आपको कोई नहीं है। तथापि भक्तवत्सल ! जो लोग आपमें स्वामिभाव रखकर अनन्य भक्तिसे आपकी सेवा करते हैं, उनपर भी आप कृपा कीजिये ॥ ३८ ॥

जगदुद्भवस्थितिलयेषु दैवतो बहुभिद्यमानगुणयाऽऽत्ममायया ।
रचितात्मभेदमतये स्वसंस्थया विनिवर्तितभ्रमगुणात्मने नमः ॥ ३९ ॥

### ब्रह्मोवाच

नमस्ते श्रितसत्त्वाय धर्मादीनां च सूतये । निर्गुणाय च यत्काष्ठां नाहं वेदापरेऽपि च ॥ ४० ॥

### अग्निरुवाच

यत्तेजसाहं सुसमिद्धतेजा हव्यं वहे स्वध्वर आज्यसिक्तम् ।
तं यज्ञियं पञ्चविधं च पञ्चभिः स्विष्टं यजुर्भिः प्रणतोऽस्मि यज्ञम् ॥ ४१ ॥

### देवा ऊचुः

पुरा कल्पापाये स्वकृतमुदरीकृत्य विकृतं त्वमेवाद्यस्तस्मिन् सलिल उरगेन्द्राधिशयने ।
पुमान् शेषे सिद्धैर्हृदि विमृशिताध्यात्मपदविः स एवाद्याक्ष्णोर्यः पथि चरसि भृत्यानवसि नः ॥ ४२ ॥

---

१. प्रा० पा०—द्युतिव० ।

गन्धर्वा ऊचुः

अंशांशास्ते देव मरीच्यादय एते ब्रह्मेन्द्राद्या देवगणा रुद्रपुरोगाः ।
क्रीडाभाण्डं विश्वमिदं यस्य विभूमन् तस्मै नित्यं नाथ नमस्ते करवाम ॥ ४३ ॥

विद्याधरा ऊचुः

त्वन्माययार्थमभिपद्य कलेवरेऽस्मिन् कृत्वा ममाहमिति दुर्मतिरुत्पथैः स्वैः ।
क्षिप्तोऽप्यसद्विषयलालस आत्ममोहं युष्मत्कथामृतनिषेवक उद्व्युदस्येत् ॥ ४४ ॥

ब्राह्मणा ऊचुः

त्वं क्रतुस्त्वं हविस्त्वं हुताशः स्वयं त्वं हि मन्त्रः समिद्दर्भपात्राणि च ।
त्वं सदस्यर्त्विजो दम्पती देवता अग्निहोत्रं स्वधा सोम आज्यं पशुः ॥ ४५ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

अन्यभिचारिणी भक्तिः कथं स्याद्भजनीयानां बहुत्वादित्याशंक्याहुः । जगत उद्भवादिषु निमित्तेषु दैवतो जीवाद्दृष्टाद्बहुधा भिद्यमाना गुणा यस्यास्तया स्वमाययाऽऽत्मनि स्वरूपे रचिता ब्रह्मादिभेदमतिर्येन तस्मै स्वसंस्थया केवलस्वरूपावस्थानेन च विनिवर्तितो भेदभ्रमो गुणाश्च तद्धेतव आत्मनि येन तस्मै ॥ ३९ ॥ ❋ ❋ शब्दब्रह्म स्तौति नमस्त इति । श्रितं स्वीकृतं सत्त्वं येनातो धर्मादिफलप्रसवित्रे । ननु तत्त्वगुणत्वं चैकस्य कथमित्याशंक्याह । यस्य काष्ठां तत्त्वं नाहं वेद्मि अपरे ब्रह्मादयश्च न विदुस्तस्मै ॥ ४० ॥ ❋ ❋ अग्निस्तु यज्ञमूर्तिं प्रणमति । यस्य तेजसा सुष्ठु प्रसिद्धं प्रदीप्तं तेजो यस्य सोऽहं प्रशस्तेऽध्वरे हविर्वहामि तं यज्ञियं यज्ञाय हितं पालकम् । यज्ञं यज्ञमूर्तिम् । पंचविधत्वमैतरेयके उक्तम् "स एष यज्ञः पंचविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः" इति । पंचभिर्यजुर्भिर्यज्ञमंत्रैः स्विष्टं सुपूजितम् । तथाच श्रुतिः "आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पंचाक्षरं द्व्यक्षरो वषट्कारः ।" इति । स्मृतिश्च "चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पंचभिरेव । हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥" इति ॥ ४१ ॥ ❋ ❋ देवास्तु सत्यं वयमपि देवास्तथापि जगदाद्यंतयोस्त्वमेव नान्यः कश्चिदित्याहुः । पुरेति । कल्पापाये प्रलये विकृतं कार्यजातमुदरीकृत्य संहृत्य त्वमेवाद्यः पुमानुरगेंद्र एवाधिकं शयनं शय्या तस्मिन् शेषे शयनं करोषि । सिद्धैर्जनल्लोकादिवासिभिर्विमृशिता विचिंतिताऽध्यात्मपदवी ज्ञानमार्गो यस्य स एव त्वं य इदानीमक्ष्णोः पथि चरसि प्रत्यक्षोऽसि अवसि रक्षसि ॥ ४२ ॥ ❋ ❋ गंधर्वाप्सरसस्तु वयं भिया केवलं सर्वानपि परमेश्वरत्वेनोपश्लोकयामस्त्वमेव तु परमेश्वरोऽन्ये तु त्वदंशा एवेत्याहुः । अंशांशा इति । हे विभूमन्महत्तम क्रीडाभांडं क्रीडोपकरणं विश्वं ब्रह्मांडं यस्य तस्मै ते नमनं कुर्मः ॥ ४३ ॥ ❋ ❋ विद्याधरास्तु केवलं विद्याभिः संपदः प्राप्यंते अहंकारादिव्यामोहनिवृत्तिस्तु त्वत्कथाश्रवणं विना नास्तीत्याहुः । त्वन्माययेति । अर्थं पुरुषार्थसाधनं कलेवरमभिपद्य प्राप्य त्वन्माययाऽस्मिन्ममेत्यहमिति चाभिमानं कृत्वेममात्ममोहं युष्मत्कथामृतनिषेवक उदुच्चैर्व्युदस्येत्परित्यजेन्नान्यः । ननु स्वैः पुत्रादिभिरधिक्षिप्तो दुःखितः सन्परित्यजेदेवं नेत्याहुः । क्षिप्तोऽपि दुर्मतिः असत्सु विषयेष्वेव लालसा तृष्णा यस्य सः ॥ ४४ ॥ ❋ ❋ ब्राह्मणाः स्तुवंति त्वमिति त्रिभिः । सदस्याश्च ऋत्विजश्च ॥ ४५ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

विनिवर्त्तितो भेदरूपो गुणात्मा गुणबुद्धिर्यत्र तस्मै । "आत्मा यत्नो धृतिर्बुद्धिः" इत्यमरः । संदर्भस्तु—ननु योगेश्वरत्वाभिमाने सति भृत्येशत्वाद्यभिमानः कुतः स्यात्तत्राह—सर्वोप्यन्योभिमानस्तन्मायागुणभेदभ्रमेणैव जीवेषु रचितस्ततः स्वस्फूर्त्या तस्मिन्निवर्त्तिते त्वत्प्रसादात्सोपि स्यादित्याहुर्जगदिति । आत्मनां जीवानां भेदमतिर्नानाभिमानः । यद्वा हे निवर्त्तितभ्रम ज्ञानानंदादिकल्याणगुणवते नमः ॥ ३९ ॥ ❋ ❋ शब्दब्रह्म तत्रत्योपयोगी कर्मप्रतिपादको वेदः । 'वेदस्तत्त्वं तपो ब्रह्म' इत्यमरः । अतः स्वीकृतसत्त्वत्वात् । धर्मादीहादिना ज्ञानवैराग्यैश्वर्यग्रहः । एकस्य सत्त्वगुणत्वनिर्गुणत्वमाक्षिपति—नन्विति । अपरे ज्ञानप्रतिपादका वेदाश्च न विदुः किमुतैते । एतेन स कर्मज्ञानिषु कटाक्षः "काष्ठोत्कर्षे सीम्नि दिशि याथार्थ्येपि च कथ्यते" इति यादवः ॥ ४० ॥ ❋ ❋ यज्ञकुंडस्थोग्निराह—केवलं हविर्वहामि न तु तव तत्त्वं जानामि । जानीम इति ज्ञानाभिमानिषु याज्ञिकेषु कटाक्षः 'स एष' इत्यादिश्रुतिः स्पष्टार्था । तथा चेत्युक्तावपि तथा स्मृतेश्च चतुर्भिरित्यादिपदं वर्णसंख्यापरं स यज्ञरूपः । उपजातिश्छंदः । इंद्रवज्रेंदुवंशयोः पादवत्त्वात् तृतीयपादे इंदुवंशा "स्यादिंदुवंशा तयुगं यदा जरौ" इति लक्षणात् । अपरेषु

त्विंद्रवज्रा "स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति लक्षणात् ॥ ४१ ॥ ❀ ❀ त्वत्पालितैर्भृत्यैरेव त्वं दृश्यसे नान्यैरिति याज्ञिककर्मवत्सु ज्ञानिषु च कटाक्षः। "रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति लक्षणवत्त्वाच्छिखरिणीवृत्तम् ॥ ४२ ॥ ❀ ❀ हे देव सर्वेषु देदीप्यमान, अत एव विभूमन्सर्वेश्वर मरीच्याद्योंऽशांशा अंशो ब्रह्मा तदंशा ब्रह्माद्या अंशा एव। यद्वा ब्रह्मापि त्वन्नाभिकञ्जोद्भूतत्वादंशांश एव। रुद्राद्या अपि ब्रह्मोद्भूतत्वादंशांशा एव त्वदंशत्वात्तेषां वस्तुतत्वामेव स्तुवीमः। ते तु खल्वीश्वराभिमानिन एव, न त्वीश्वरा इति ब्रह्मादिषु कटाक्षः। मत्तमयूरं वृत्तम् "वेदै रंध्रैर्म्तौ यसगा मत्तमयूरम्" इति लक्षणात् ॥ ४३ ॥ ❀ ❀ अत्राक्षिपति—नन्विति। अत्र शुष्कज्ञानिषु कटाक्षः। वसंततिलकावृत्तम् ॥४४॥ ❀ ❀ स्रग्विणी छंदोद्वयम् ॥४५॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

स्वस्वरूपे भानुस्थानीये रचिता प्रकटिता रश्मिस्थानीयानां ब्रह्मादीनां भेदमतिर्नानात्वज्ञानं येन तद्रूपा वा भेदमतिर्येन तथा च भजनीयास्ते ब्रह्मादयो न स्वतन्त्रा इति तान्विहायाऽव्यभिचारिणी भक्तिरसम्भवत्येवेत्यर्थः। तस्य स्वतन्त्रत्वे हेतुमाह स्वसंस्थयेति। केवलेति मायाशाबल्यव्युदासः। भेदभ्रमो हि मायावशीकृते जीव एव सम्भवति न तु मायानियन्तरि भगवति। तद्धेतवः भ्रमजनकाः गुणा अपि तत्रैव प्रभवन्ति 'गुणा जीवस्य नैव मे' इत्युक्तत्वात् ॥ ३९ ॥ ❀ ❀ स्वीकृतं स्वसान्निध्येनोपकृतम् अतः श्रितसत्त्वत्वात् धर्मादीत्यादिना ज्ञानवैराग्यादिपरिग्रहः। तत्त्वं नाहं वेदोऽपि वेदेति एकस्य सत्त्वगुणत्वनिर्गुणत्वमध्यमाकारत्वविभुत्वादीनामचिन्त्यशक्तिमयत्वं वेदेनैव व्यवस्थापितम् ॥ ४० ॥ ❀ ❀ अग्निहोत्रम् "अग्निहोत्रं जुहोति स्वर्गकामः" इति श्रुतेः अग्निहोत्रशब्दश्चात्र तत्प्रख्यन्यायेन कर्मनामधेयपरः, अग्निहोत्राख्यहोमेनेष्टं भावयेदिति वाक्यार्थः। दर्शपौर्णमासौ "दर्शपौर्णमासाभ्यां यजेत" इति श्रुतेः दर्शपौर्णमाससंज्ञकेन यागेनेष्टं भावयेदिति वाक्यार्थः। चातुर्मास्यानि "चातुर्मास्येन यजेत" इति श्रुतेः चातुर्मास्यसंज्ञकेन यागेनेष्टं भावयेदिति वाक्यार्थः। पशुः "पशुना यजेते"ति श्रुतेः पशुना यागं भावयेदिति वाक्यार्थः। सोमः "सोमेन यजेते"ति श्रुतेः। अत्र गुणकर्मणोर्मानान्तरेणाऽप्राप्तत्वान्मत्वर्थलक्षणया विशिष्टविधानम्। न चोभयविधाने सोमेन यागं भावयेत् यागेनेष्टं भावयेदिति वाक्यभेदः, विशिष्टस्यैकस्य विधानात् तथा च सोमवता यागेनेष्टं भावयेदिति वाक्यार्थः। यज्ञमन्त्रैरिति प्रयोगसमवेतार्थस्मारका मन्त्राः प्रयोगकाले व्याम्रियन्ते प्रयोगविधौ मन्त्रैणैव स्मर्त्तव्यमिति नियमविध्याश्रयणात्। स्मृतौ श्रुत्युक्तमन्त्रा एवानुस्मृताः। शिष्टं स्पष्टम् ॥ ४२ ॥ ❀ ❀ देवाः पूज्याः। यः प्रत्यक्षोऽसि अवसि च स त्वं य आद्यन्तयोर्वर्त्तमानः पुरुषः स एवाऽसि ॥ ४१–४३ ॥ ❀ ❀ अन्यः भक्तिरहितो विद्यावानपि ॥ ४४–४५ ॥

### श्रीमद्वीरराघवव्याख्या

ननु भगवतो विश्वात्मकत्वे विश्वगतदोषाणां परमात्मन्यापत्तिस्ततः सुखदुःखाद्यनुभवश्च जीववत्तत्राहुः जगदिति। जगत उत्पत्तिस्थितिलयेषु निमित्तभूतेषु जगदुद्भवाद्यर्थमित्यर्थः, दैवतो दैवात् देवो भगवान् तत्सम्बधिसङ्कल्पो दैवस्तस्मात् बहुभिद्यमानगुणया बहुधा भिद्यमाना गुणाः ब्रह्मरुद्रादिदेहरूपेण परिणम्यमानाः सत्त्वादिगुणाः यस्यास्तयात्ममायया रचितात्मभेदमतये रचितः आत्मनि यो भेदः देवत्वमनुष्यत्वादिरूपः तद्विषया मतिर्बुद्धिर्यस्य तस्मै देहात्माभिमानान्वितक्षेत्रज्ञशरीरायेत्यर्थः। यद्वा बहुभिद्यमानगुणया बहुभिद्यमानाः देवमनुष्यपशुपादपादिरूपेण परिणम्यमानाः सत्त्वादिगुणा यस्याः तया आत्मनः परमात्मनो मायया तच्छरीरभूतया माययेत्यर्थः "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः जनयन्तीं सरूपाः। गुणैर्विचित्राः सृजतीं सरूपाः प्रकृतिं प्रजाः" इत्यादिकमत्रानुसन्धेयम्। एवम्भूतया मायया दैवात् भगवत्सङ्कल्पात् जगदुद्भवस्थितिलयेषु सत्सु अत्रात्ममाययेत्यनेन आत्मसम्बन्धित्वावगमात्सम्बन्धसामान्यस्य विशेषपर्यवसानजिज्ञासायां "यस्याक्षरं शरीरं यस्याव्यक्तं शरीरम्" इति श्रुतिव्यवस्थापितशरीरशरीरिभावरूपसम्बन्धविशेषे पर्यवसानात् ब्रह्मात्मिकाया मायाया जगदुपादानत्वमवगन्तव्यम्। जगदुपादानभूतया मायया जगदुत्पत्त्यादिषु सत्सु स्वसंस्थया स्वस्य संस्था सम्यगवस्थितिः तया रचितात्मभेदमतये रचिता आत्मभेदा आत्मगता देवत्वमनुष्यत्वादयो भेदास्तद्विषया मतिर्यस्य "तस्मै तत्सृष्ट्वा, तदेवानुप्राविशत्, तदनुप्रविश्य। सच्च त्यच्चाभवत् अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि नामरूपे व्याकरोदि"त्यादिश्रुत्युक्तरीत्या स्वस्य चिदचिदन्तरात्मतयाऽनुप्रवेशेन चिदचिद्गतनामरूपभेदस्य स्वपर्यन्तत्वव्याचिकीर्षव इत्यर्थः। चिदचिद्गतनामरूपभेदस्य चिदचिद्द्वारा स्वपर्यन्तत्वात्तद्द्रष्ट्र इत्यर्थः। एवंभूतायापि विनिवर्तितभ्रमगुणात्मने विशेषेण निवर्तिता विनिवर्तिता नित्यनिवर्त्तिता भ्रमः अन्यथाज्ञानविपरीतज्ञानादिरूपाः गुणाः तद्धेतवो रजस्तमआदिगुणाः आत्मनि येन तस्मै। स्वेनैव प्रकाशेन नित्यनिवर्तितहेयायेत्यर्थः। अनेन विश्वगतदोषापत्तिः परिहृता, एवंभूताय ते नमः केवलं नमस्कुर्मो न तु त्वद्गुणान् वर्णयितुं शक्नुम इति भावः ॥ ३९ ॥ ❀ ❀ योगीश्वरैः निरस्तनिखिलहेयत्वेन स्तुते भगवति स भगवान् किं निर्गुण इत्याशङ्कायां निरस्तनिखिलहेयः समस्तकल्याणगुणश्चेति स्तुवन्नमस्करोति शब्दब्रह्मणे नम इति। अत्र शब्दब्रह्मशब्देन वेदा विवक्षिताः। निर्गुणाय निर्गताः सत्त्वरजस्तमआदयो हेयगुणा यस्मात् तस्मै निरस्तनिखिलदोषायेत्यर्थः। कल्याणगुणवत्त्वमाह–धर्मादीनां धर्मार्थादीनां प्रसूतये प्रकृष्टा सूतिर्यस्मात् स प्रसूतिः तस्मै प्रसवित्र इत्यर्थः।

धर्मप्रसवितृत्वं धर्मादिप्रकाशकवेदोत्सर्जनद्वारा। तथा च श्रुतिः "तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेद इति। यो ब्रह्माणं विदधाति पूर्वं यो वेदांश्च प्रहिणोति तस्मै" इति। स्मृतिश्च "अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा। आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतयः" इति अनेन मन्त्रेण सर्वकारणत्वतदुपयुक्तसर्वज्ञत्वसर्वशक्तित्वहितोपदेष्टृत्ववात्सल्यादिकल्याणगुणजातं विवक्षितं, तर्हि कति कल्याणगुणा इत्यत्र तेषामानन्त्यमाह तत्काष्ठां तेषां तत्स्वरूपरूपगुणविभूतीनां काष्ठाम् अवधिमहं शब्दब्रह्म न वेद न जानामि। अपरे ब्रह्मादयो न विदुः। अहमेव न जानामि कुतोऽपरे मदायत्तसूक्ष्मदर्शिनो जानीयुरिति कैमुत्यनयोऽत्र विवक्षितः। अत्र ज्ञेयत्वनिषेधो न स्वरूपगुणादिविषयः, किन्तु तदियत्ताविषयः। तथा च श्रूयते "यस्यामतं तस्य मतं मतं यस्य न वेद सः। यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। अविज्ञातं विजानतां विज्ञातमविजानताम्" इति परिच्छिन्नत्वेन जानतोऽमतम् अपरिच्छिन्नत्वेन जानतस्तु मतमित्यर्थः॥ ४०॥ ❁ ❁ एवं शब्दब्रह्मणि निरस्तनिखिलहेयत्वेन समस्तकल्याणगुणविशिष्टत्वेन भगवन्तं स्तुतवति तदभिनन्याग्निः सर्वतेजसामाच्छादकत्वसर्वतेजःप्रकाशाऽऽपादकत्वादिकल्याणगुणान्तरविशिष्टत्वेन स्तुवन्नमस्करोति यत्तेजसेति। यस्य भगवतस्तेजसा प्रकाशेन सुष्ठु समिद्धं प्रदीप्तं तेजो यस्य सोऽहम्, अनेन स्वस्य तत्प्रकाशेन सुसमिद्धतेजस्त्वकथनेन तत्तेजसा विना स्वस्यासुसमिद्धतेजस्त्वमुक्तम्। एतदेव हि सर्वतेजसामाच्छादकत्वं यत्स्वायत्तं सर्वतेजसां प्रकाशनमिति, अहमिति सूर्यादीनामुपलक्षणं, तथा च श्रूयते "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति त्वदाहितशक्तीनामेवास्माकं स्वस्वकार्यक्षमत्वमित्याह यत्तेजसा सुसमिद्धतेजाः, अहमध्वरे आज्यसिक्तं हविर्वहामि उद्देश्यामिन्द्रादिदेवतां प्रति नयामीत्यर्थः। तं यज्ञियं यज्ञाय हितं यज्ञोद्देश्येन्द्रादिदेवतामूर्तिमित्यर्थः। पञ्चविधं त्रेतासभ्यावसथ्यरूपेण पञ्चविधाग्निशरीरिणं पञ्चभिर्यजुर्भिः 'आश्रावयेति चतुरक्षरम्' अस्तु श्रौषडिति चतुरक्षरं, यजेति द्व्यक्षरं, ये यजामह इति पञ्चाक्षरं, 'द्व्यक्षरो वषट्कारः' इति श्रुत्युक्तैः पञ्चभिर्यजुर्भिः स्विष्टं सुष्ठु पूजितं तथा चोक्तं "चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च। हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु" इति नित्यं प्रणतोऽस्मि नमस्कृतवानस्मि॥ ४१॥ ❁ ❁ अग्नाविन्द्रादिदेवतात्मकत्वेन सर्वयज्ञमूर्तित्वेन च भगवन्तं स्तुतवतो जगत्कारणस्य तदेवं सर्वमुपपन्नमिति मन्वाना देवाः सौलभ्यादिति कल्याणगुणान्तरविशिष्टत्वेन स्तुवन्ति पुरेति। आद्यः सर्वोपादानभूतः पुमान् पुरा अग्रे सृष्टेः प्रागित्यर्थः। कल्पापाये प्राक्तनकल्पान्ते स्वकृतं स्वसृष्टं विकृतं कार्यवर्गमुदरीकृत्य उदरे निक्षिप्य संहृत्येति यावत् उरगेन्द्रः शेषः स एवाधिशयनं शय्या यस्मिन् तस्मिन् सलिले शेषे शयितवानसि। सिद्धैर्जनलोकवासिभिः हृदि विमृशिता अध्यात्मपदवी स्वात्मतत्त्वज्ञानमार्गो यस्य स योगपरिशुद्धमनोग्राह्य इत्यर्थः, एवंभूतोऽपि त्वमेवाद्य अधुना अक्ष्णोः पथि चरसि प्रत्यक्षोऽसि वाङ्मनसागोचरस्त्वं सौलभ्यातिरेकात्प्रत्यक्षोऽसीत्यर्थः। भृत्यान्नः अस्मान् अवसि पालयसि, अनेन भृत्यानुग्रहकातरत्वमुक्तम्॥ ४२॥ ❁ ❁ देवेषु सर्वकारणत्वसौलभ्यादिगुविशिष्टत्वेन स्तुतवत्सु गन्धर्वाप्सरसस्त्वत्कार्यभूतमिदं कृत्स्नं जगत्त्वल्लीलोपकरणमिति स्तुवन्तो नमस्कुर्वन्ति अंशांशा इति। हे भगवन्! कृत्स्नं जगदन्तर्बहिश्च व्याप्य वर्तमान! हे देव! द्योतमान! मरीचिरादिर्मुख्यो येषां तथा ब्रह्मेन्द्रौ आद्यौ मुख्यौ येषां, रुद्रः पुरोगो मुख्यो येषाम्, एते देवगणास्ते तव अंशांशाः। अत्र देवगणानां मरीचिब्रह्मेन्द्ररुद्रमुख्यत्वकथनं सृष्टिस्थित्याद्यधिकाराधिकृतदेवताबहुत्वाभिप्रायेण। तत्र व्यष्टिस्रष्टॄणां मध्ये चतुर्मुखस्य मरीच्यादीनां च प्रधानत्वात् ब्रह्मादयो मरीच्यादय इति चोक्तं तत्रापि प्राधान्याप्राधान्याभिप्रायेण ब्रह्मादयो मरीच्यादय इति च कोटिद्वयेनोक्तिः। इन्द्रपुरोगत्वकथनं पालनाधिकारिदिगीशान्तराभिप्रायेण, रुद्रपुरोगत्वकथनं तु संहाराधिकार्यभिप्रायेण, एवं सर्वेषां भगवदंशांशत्वं ज्ञानशक्तिबलादिभगवद्गुणलेशाऽभिव्यक्तिकृतमिति वेदितव्यम्। विशिष्टवस्त्वेकदेशरूपांशत्वन्तु सर्वजीवसाधारणमिति तद्विशिष्य न वक्तव्यम्। क्रीडाभाण्डं क्रीडापरिकरः इदं विश्वं ब्रह्माण्डं यस्य तस्मै ते तुभ्यं नमः। हे नाथ! ते करवाम कैङ्कर्य्यमिति शेषः॥ ४३॥ ❁ ❁ एवं दक्षादिषु गन्धर्वाप्सरोऽन्तेषु तत्तत्कल्याणगुणविशिष्टं भगवन्तं स्तुतवत्सु तावदास्तां कल्याणगुणवर्णनमसङ्ख्येयत्वात्तेषाम्। इदन्त्वद्भुतमाहात्म्यं त्वत्कथामृतमित्याहुः विद्याधराः त्वन्माययेति। त्वन्मायया त्वत्सङ्कल्पेन अर्थं सर्गपुरुषार्थसाधनं नृदेहमभिपद्य अस्मिन् कलेवरे तदनुबन्धिनि च ममाहमिति दुर्मतिं दुर्बुद्धिं कृत्वापि, दुर्मतिरिति प्रथमान्तपाठेऽहमिति शेषः, अहं ममाहमभिमानं कृत्वेत्यर्थः। अत एव दुर्मतिः वैषयिकसुखलाभे दुःखितचित्तोऽपि उत्पथैः लोकवेदमर्यादोल्लङ्घिभिः स्वैः पुत्रादिभिः क्षिप्तोऽपि तिरस्कृतोऽपि असद्विषयेषु प्रकृतिपरिणामरूपशब्दादिविषयेष्वासक्तोऽपि यदि युष्मत्कथामृतनिषेवकः युष्मत्कथामृतं तन्नितरां सेवत इति युष्मत्कथामृतनिषेवकः। सेवनमत्र श्रवणश्रावणादिरूपं विवक्षितं, तर्हि आत्समोहम् अहङ्कारममकाररूपं मोहम् उद्व्युदस्येत् उच्चैर्व्युदस्येत् परित्यजेत् मुक्तो भवेदिति भावः। अहंममाभिमानग्रस्तस्यासद्विषयप्रवणस्याऽत्ममोहनिवर्त्तनद्वारा मुक्तिसाधनं त्वत्कथामृतमेव नान्य उपायोऽस्तीति इदं त्वत्कथामृतमाहात्म्यमत्यद्भुतमिति भावः॥ ४४॥ ❁ ❁ ब्राह्मणास्तु-तावदास्तां कथामृतमाहात्म्यमिदं त्वद्भुततमं त्वन्नाममाहात्म्यमिति कथयिष्यन्तः प्रकृतयज्ञनिर्वृत्यादिकाङ्क्षया यज्ञं यज्ञसाधनमूर्तित्वेन स्तुवन्तस्तत्प्रसादं प्रार्थयन्ते त्वमिति त्रिभिः। त्वं क्रतुर्यज्ञः हविः पुरोडाशादिः सदस्याश्च ऋत्विजश्च ते त्वमेव हुताशस्तेतारूपः देवता इन्द्रादयः अग्निहोत्राख्यकर्मविशेषः क्रतुरित्यनेन यागात्मकत्वमुक्तम् अग्निहोत्रमिति होमात्मकत्वं देवतोद्देशेन द्रव्यत्यागात्मको यागः, स एव प्रक्षेपादिको होमः। सर्वत्र सामानाधिकरण्यं शरीरात्मभावनिबन्धनम्॥ ४५॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

विश्रान्तर्यामित्वं तत्स्वामित्वं च हरेरेव मुख्यमित्याशयेनाहुः जगदिति। जगदुद्भवस्थितिलयेषु जगदुत्पत्तिस्थितिसंहारेषु लीलया प्रविभज्यमानगुणया सृष्टौ रजः स्थितौ सत्त्वं संहारे तम इति प्रकारेण विभज्यमानाः पृथक्क्रियमाणाः सत्त्वादिगुणा यस्याः सा तयात्माधीनया मायया प्रकृत्या जडया मिथ्याज्ञानं जनयतीश्वरः तस्य भ्रमश्च। 'सत्त्वाद्या न सन्ति परमेशितुरि'ति वचनात् प्रकृत्या रचिता कृताऽऽत्मनां जीवानां भेदमतिर्मिथ्याज्ञानं येन स तथा तस्मै। स्वसंस्थया एवार्थे हिशब्दः स्वरूपस्थित्यैव महिमलक्षणया अतिवर्तिता निरस्ता भ्रमो गुणाश्च सत्त्वाद्या यस्मात्स तथा स चासौ आत्मा चेत्यतिवर्तितभ्रमगुणात्मा तस्मै। हे अतिवर्तितभ्रम ज्ञानानन्दादिगुणात्मन् इति भिन्नं वा पदं, हिशब्दो ज्ञानानन्दात्मनो हरेरुपाधिना भ्रमयोग्यत्वं निवारयति ॥ ३९ ॥ ❀ ❀ हे अमित! अनन्त! ते तुभ्यं नमः। तत्त्वायाऽद्वयज्ञानाय अमितायाऽऽरोपितरूपायेति वा धर्मादीनामस्माकं च सूतय उत्पत्तिकारणाय चशब्देनास्मत्कारणत्वं निवारयति कारणस्य रजआदिगुणसंसर्गो नास्तीत्याह निर्गुणायेति। सृष्टौ प्रवर्तमानस्य तद्गुणाऽस्पर्शो माहात्म्यातिशयाद्युज्यत इतीममर्थं चशब्देन वक्ति। अत्र प्रणतिः सम्यक् स्वरूपज्ञानाऽभावेऽपि सामान्यज्ञानेन घटत इति भावेनाह यत्काष्ठामिति "काष्ठोत्कर्षे सीम्नि दिशि" इति यादवः। अपरे मदर्वाचीनाः कुतो विदुर्न कुतोऽपीत्यर्थः। अनेनाऽस्य परमात्मत्वे न कोऽपि सन्देह इति दर्शितम् ॥ ४० ॥ ❀ ❀ अनेनापि मदाशङ्कामुन्मूलयति यत्तेजसेति। यस्य हरेस्तेजसा "यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमि"ति वचनात् सुसमिद्धतेजाः पूज्यत्वेन सम्यक् प्रवृद्धं तेजो बलं यस्य स तथा अहं जातवेदा अध्वरे यज्ञे आज्यसिक्तमाज्येन युतं हव्यं वहामि देवान्प्राप्य विभज्यार्पयामीत्यर्थः। 'ओश्रावय अस्तु श्रौषट् यज ये यजामहे वौषडि'ति यजुर्वेदगतैर्यजुर्भिः पञ्चमन्त्रैः स्विष्टं सुष्ठु पूजितं तं पञ्चविधं पञ्चधा विभक्तविग्रहं यज्ञं यज्ञपुरुषं यज्ञेशं यज्ञभावनं यज्ञभुजमित्येवंविधं भगवन्तं प्रणतोऽस्मीत्यन्वयः। यज्ञं यज्ञेशमित्यादिपञ्चविधमिति वा योज्यम्। उक्तं च "यज्ञो यज्ञपुमांश्चैव यज्ञेशो यज्ञभावनः। यज्ञभुक् चेति पञ्चात्मा यज्ञेष्विज्यो हरिः स्वयम् ॥" इति "ओश्रावयास्तु श्रौषड्यजाथो ये यजामहे। वषट्कारान्तकैर्नित्यं यजुर्भिः पञ्चभिर्विभुः ॥" इति ॥ ४१ ॥ ❀ ❀ कल्पापाये प्रलये स्वेन कृतं विकृतं कार्यरूपं जगदुदरीकृत्य उदरे निधाय यज्जलं सृष्टिकाले त्वया पीतं तस्मिन्सलिले उरगेन्द्र एवाधिकं शयनम् उरगेन्द्राधिशयनं तस्मिन्नाद्यः पुमांस्त्वं शेषे। अत्र प्रमाणं चाहुः सिद्धैर्मुक्तैर्वेदैर्वा विमृशिता विचारिता अध्यात्मनः परमात्मनः पदवी यस्य स विमृशिताध्यात्मपदविः य एवंविधः श्रीनारायणः स एव नान्यः अद्य नोऽक्ष्णोः पथि चक्षुर्विषये चरसि भृत्यानस्मानवसि, चशब्देन भृत्यरक्षणमेव प्रयोजनं नान्यदित्यर्थं निर्द्धारयति नैतत्स्वरूपं भवत इत्यादिना यदुक्तं तन्निर्धारितमनेनेति ॥ ४२ ॥ ❀ ❀ हे देव! आशासानाः फलमाकाङ्क्षमाणा य एते मरीच्यादयो य एते ब्रह्मेन्द्राद्या देवगणा य एते रुद्रपुरोगा भूतगणा इतीदं विश्वं विभूम्नो यस्य तव क्रीडाभाण्डं क्रीडोपकरणं वर्तत इत्यन्वयः। हे नाथ! तस्मै ते तुभ्यं नित्यं नमः करवाम इत्यनेनापि सर्वशङ्कोन्मूलिता ॥ ४३ ॥ ❀ ❀ अव्यक्तादेस्त्वद्रूपकल्पनायास्त्वदिच्छाधीनत्वात्त्वत्प्रसादेनैव निरासः स्यादित्याशयेन विद्याधराः स्तुवन्तीत्याह त्वन्माययेति। त्वन्मायया त्वदिच्छया त्वदधीनया प्रकृत्या च रचितमर्थं देहकलत्रादिलक्षणमभिपद्य दुर्मतिर्दुःखितमतिः अस्मिन्कलेवरे ममाहमिति मतिं कृत्वाऽत एव उत्पथैर्दुर्मार्गवर्तिभिः स्वैरिन्द्रियैः क्षिप्तोऽसत्स्वमङ्गलेषु विषयेषु लालस उत्कण्ठावानपि पुमान्युष्मत्कथारसनिषेवक आत्मा मुह्यत्यनेनेत्यात्ममोहः संसारस्तमुदव्युदस्येन्निरस्यतीत्यन्वयः ॥ ४४ ॥ ❀ ❀ ब्राह्मणाः स्तुतिव्याजेन हरेः सर्वस्वातन्त्र्यं द्रढयन्ति। त्वं क्रतुरित्याद्यभेदेनोक्तिरन्तर्यामिविषयेति ज्ञातव्यम्। तदुक्तम् 'सर्वशब्दाभिधेयत्वं सर्वान्तर्यामिकत्वतः। न तु सर्वस्वरूपत्वात्सर्वभिन्नो यतो हरिरि'ति। अपभ्रष्टचेतनैक्याभावेऽपि ब्रह्मरुद्रादिविशिष्टचेतनैक्यं किं न स्यादिति चेत्तन्न, प्रमाणविरुद्धत्वात्। तदुक्तम् "अन्तर्यामिस्वरूपेण ब्रह्मरुद्राद्यभिन्नता। न तु जीवस्वरूपेण जीवा भिन्ना यतो हरेः॥ विशेषाभेदवचनं सन्निधानविशेषतः। सन्निधानं तु तत्प्रोक्तं सामर्थ्यव्यञ्जनं हरेः ॥" इति ॥ ४५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

ननु योगेश्वरत्वाद्यभिमाने सति भृत्यत्वाद्यभिमानः कुतः स्याद् उच्यते। सर्वोऽप्यन्योऽभिमानस्त्वन्मायागुणभेदभ्रमेणैव जीवेषु रचितः। ततः स्वस्फूर्त्या तस्मिन्निवर्तिते त्वत्प्रसादात् सोऽपि स्यादित्याहुः जगदिति। आत्मनां जीवानां भेदमतिर्नानाऽभिमानः ॥ ३९ ॥ ❀ ❀ शब्दब्रह्मोवाचेति अत्रायं विरिञ्चिः पूर्वत्र तु यज्ञाधिकारीति वा। पक्षे चात्र पूर्वं ब्रह्माऽपेक्षया यदिन्द्रस्य ज्ञानाधिक्यं स्वामिभिर्दर्शितं तदपि युक्तमेव मन्तव्यम् ॥ ४०–४९ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ननु परब्रह्मणो मम मायाशबलय एव साकारत्वं तस्मिंश्च सति भृत्येशभावस्तत्र च सति भक्तवात्सल्यमिति केचिद् व्याचक्षते। सत्यं ते भ्रान्ता एवेत्याहुः। जगदिति। दैवतो जीवाऽदृष्टात् बहुधा भिद्यमाना गुणा यस्यास्तया स्वमायया रचिता आत्मनि स्वस्वरूपे सृष्ट्याद्यर्थं ब्रह्मादिभेदमतिर्येन तस्मै स्वसंस्थया स्वरूपावस्थानेन तु विनिवर्त्तितो भ्रमरूपो गुणात्मा गुणबुद्धिर्येत्र

तस्मै । 'आत्मा यत्नो धृतिर्बुद्धिरि'त्यमरः ॥ ३९ ॥ ❁ ❁ ब्रह्मोवाचेति । तत्रत्योपयोगी कर्मप्रतिपादको वेदः 'वेदस्तत्त्वं तपो ब्रह्मे'त्यमरः । श्रितं सत्त्वं सत्त्वगुणोऽयं धर्मज्ञानवैराग्यैश्वर्याणां सूतये उत्पत्त्यै काष्ठां तत्त्वम् अपरेऽपि ज्ञानप्रतिपादका वेदाश्च न विदुः, किमुतैते इति कर्मिषु ज्ञानिषु च कटाक्षः ॥ ४० ॥ ❁ ❁ यज्ञकुण्डस्थोऽग्निराह यत्तेजसेति । स्वध्वरे प्रशस्तयज्ञे हव्यं हविर्वहामि केवलं न तु तव तत्त्वं जानामीति ज्ञानाभिमानियाज्ञिकेषु कटाक्षः । तं यज्ञियं यज्ञाय हितं पञ्चविधत्वमैतरेयक उक्तम् । स एव यज्ञः । पञ्चविधोऽग्निहोत्रं दर्शपौर्णमासश्चातुर्मास्यानि पशुसोम इति पञ्चभिर्यजुर्भिर्मन्त्रैः स्विष्टम् । तथा च श्रुतिः– 'आश्रावयेति चतुरक्षरम् अस्तु श्रौषडिति चतुरक्षरं यजेति द्वाभ्यां ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कारः ।' इति, स्मृतिश्च 'चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च । हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदत्विति' यज्ञं यज्ञमूर्त्तिम् ॥ ४१ ॥ ❁ ❁ स्वकृतं स्वसृष्टं विकृतं कार्यजातम् उदरीकृत्य उदरस्थीकृत्य विमृशिता अध्यात्मपदवी ज्ञानमार्गो यस्य सः । भृत्यान् अवसि पालयसीति पथि चरसीत्याभ्यां द्वाभ्यां त्वत्पालितैर्भृत्यैरेव त्वं दृश्यसे ज्ञायसे नान्यैरिति याज्ञिककर्मिषु ज्ञानिषु च कटाक्षः ॥ ४२ ॥ ❁ ❁ तुभ्यमेव नित्यं नमः करवामेति वयं यस्य सभां प्रविशामस्तमेव परमेश्वरत्वेन स्तुवाना अपि तेषां त्वदंशांशत्वात्त्वामेव वस्तुतः स्तुवामेति । ते खल्वीश्वराभिमानिन एव, न त्वीश्वरा इति ब्रह्मादिषु कटाक्षः ॥ ४३ ॥ ❁ ❁ अर्थविषयमभिपद्य प्राप्य ममाहमित्यभिमानञ्च कृत्वा दुर्मतिः स्वैः पुत्रादिभिः क्षिप्तोऽप्यसद्विषयलालस एव इममात्ममोहं युष्मत्कथामृतनिषेवकः सन् उच्चैर्व्युदस्येत् परित्यजेन्नान्य इति शुष्कज्ञानिषु कटाक्षः ॥ ४४ ॥ ❁ ❁ सदस्याश्च ऋत्विजश्च ते ॥ ४५ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ननु सर्वे आत्मानः परमात्मनः स्वांशभूतास्तत्र य आत्मपरमात्मसम्बन्धवित् स मत्प्रियो भवतु । परन्तु अन्येष्वत्यन्तभेदमतयः कुत आगताः, तस्यात्यन्तभेदबुद्धिश्च केनापनीतेत्यत्र कारणं वदन्तो भगवन्तं प्रणमन्ति जगदिति । जगतः उद्भवादिषु निमित्तेषु बहुभिद्यमानगुणया आत्ममायया स्वमायया दैवदिनादिभूताज्जीवकर्मप्रवाहात् निमित्ताद् रचिता अनादिसिद्धा एव प्रबोधिताः आत्मसु जीवेषु भेदमतयः परमात्मनः सकाशादत्यन्तभेदबुद्धयो येन त्वया परमात्मना तस्मै स्वसंस्थया कस्यचिज्ज्ञानार्हस्य शास्त्राचार्यानुग्रहतः हृदि या स्वस्य तव संस्था संस्थितिस्तया विनिवर्तितोऽपनीतो भ्रमोऽत्यन्तभेदभ्रमो गुणा भ्रमहेतवश्च आत्मना ज्ञानार्हस्य जीवस्य तस्मै नमः ॥ ३९ ॥ ❁ ❁ शब्दब्रह्म तु परं ब्रह्म प्राकृतगुणरहितत्वेन स्वाभाविकमङ्गलगुणाकरत्वेनेयत्तानवच्छिन्नत्वेन च स्तुवन्नमस्करोति । ते निर्गुणाय निर्गता नित्यं निवृत्ताः प्राकृता गुणा यस्मात्तस्मै "अशब्दमस्पर्शमगन्धमि"त्यादिश्रुतेः श्रितं स्वीकृतं सत्त्वमप्राकृतं शरीरं येन तस्मै 'आप्रणखात्सुवर्ण' इत्यादि श्रुतेः, धर्मादीनां सूतये पुरुषार्थचतुष्टयदात्रेऽथवाधर्मोऽत्र धर्मप्रवर्तकं शब्दब्रह्म आदिना ब्रह्मादयस्तेषां वेदब्रह्मादीनां सूतिर्यस्मात्तस्मै शास्त्राचार्यप्रवर्तकाय "अस्य महतो भूतस्य निश्वसितमेतत् यदृग्वेदो यजुर्वेदो, यो ब्रह्माणं विदधाति पूर्वमि" त्यादिश्रुतेः, यस्य काष्ठामियत्ताम् अहं न वेद न वेद्मि अपरे ब्रह्मादयश्च न विदुस्तस्मै नमः, "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहे" त्यादिश्रुतेः ॥ ४० ॥ ❁ ❁ सर्वप्रकाशकनानायज्ञमूर्तित्वादिगुणैरग्निर्भगवन्तं स्तौति यदिति । यद्यस्य तेजसा प्रकाशेन सुष्ठु समिद्धं प्रदीप्तं तेजो यस्य सः । अग्न्युपलक्षितं सर्वं यत्तेजसैव विभाति "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती" ति श्रुतेः, एवम्भूतोऽहम् स्वध्वरे प्रशस्ते यज्ञे हविर्वहामि उद्देश्यां देवतां प्रतिनयामि । आज्यसिक्तमिति विशेषणं भगवत्तेजोयोगं विनाऽग्नेर्विनाशं सूचयति मरुत्तयज्ञे बह्वाज्यसिक्तहविर्भक्षणेनाग्निर्मृतकल्पोऽभूत् । पुनः खाण्डवं दत्वा सोऽर्जुनेन–भगवतैव रक्षित इति महाभारते स्थितं, यज्ञियं यज्ञाय हितं यज्ञपालकं यज्ञं यज्ञमूर्त्तिं प्रणतोऽस्मि । कथंभूतं पञ्चविधं पञ्चविधत्वम् ऐतरेयके दर्शितं स एव यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुसोम इति 'आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेदिति द्व्यक्षरो वषट्कार' इति श्रुतिसिद्धैः पञ्चभिर्यजुभिर्यजुर्मन्त्रैः स्विष्टं सुपूजितं च ॥ ४१ ॥ ❁ ❁ देवास्तु सर्वकारणत्वादिगुणवत्त्वेन भगवन्तं स्तुवन्ति पुरेति । पुरा वर्तमानकल्पात्प्राक् यः कल्पः तस्याऽपायेऽन्ते यः स्वकृतं विकृतं कार्यमुदरीकृत्य तस्मिन् प्रसिद्धे ब्रह्माण्डमध्यगे सलिले उरगेन्द्र एवाधिकं शयनं शय्या तत्र शेषे शयनं करोषि । कथंभूतः सिद्धैर्जनलोकादिवासिभिः विमृशिता विचिन्तिताऽध्यात्मपदवी तत्त्वज्ञानमार्गो यस्य स एव आद्यः पुमान् अद्य इदानीम् अक्ष्णोः पथि चरसि नोऽस्मान् भृत्यान् अवसि, धन्या वयमिति भावः ॥ ४२ ॥ ❁ ❁ गन्धर्वास्तु वयं त्वदंशभूतानां ब्रह्मादीनां त्वत्तोंशिनः पृथक् स्थितिप्रवृत्त्याद्यभावेन त्वदात्मकत्वात्तानपि परमेश्वरत्वेनैवोपश्लोकयामः । ब्रह्मादयः स्वकर्मानुरूपाऽत्यल्पत्वद्दत्तदेहगेहादिस्वामिनस्त्वन्तु सर्वचेतनाचेतनात्मकविश्वस्वामीत्याहुः अंशांशास्ते इति ॥ ४३ ॥ ❁ ❁ विद्याधरास्तु "अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति श्रुत्युक्तं नित्यबद्धं मुमुक्षुं च जीवविशेषं वर्णयन्तो भगवन्तं स्तुवन्ति त्वदिति । दुर्मतिर्नित्यबद्धो जीव अर्थं फलमभिपद्य प्राप्य त्वन्मायया अनादितो जीवविमोहिन्या कलेवरे अहमिति अस्मिन् प्रसिद्धे गृहादौ ममेति च कृत्वा उत्पथैर्मुक्तिमार्गबहिष्कृतिभिः स्वैरिन्द्रियैः क्षिप्तोऽपि पुनः पुनर्जन्ममरणप्रवाहे प्रक्षिप्तोऽपि असद्विषयलालसो भवति, न तु कदापि विरज्यत इत्यर्थः । युष्मत्कथामृतनिषेवको मुमुक्षुस्तु आत्ममोहं देहे अहमिति गेहे ममेति विषयप्रावण्यरूपं च आत्मनः मनसः मोहम् उद्व्युदस्येत् वारयेत् ॥४४॥

ब्राह्मणास्तु—क्रियाक्रियावतोर्गुणगुणिनोः अवयवावयविनोः कार्यकारणयोः शक्तिशक्तिमतोश्च सर्वत्र भेदाभेदं सम्बन्धं पश्यन्तश्चि-दचिदात्मकस्य सर्वस्य भगवच्छक्तिरूपत्वात्तद्भिन्नत्वेऽपि तदभिन्नत्वमिति मुमुक्षूणां भगवदुपासनविरोधिस्पर्द्धासूयादिनिवृत्त्यर्थं वदन्तो वराहाद्यवतारैः कृतमुपकारं संस्मरन्तो भगवन्तं प्रार्थयन्ते त्वमिति त्रिभिः। हुताशोऽग्निः सदस्याश्च ऋत्विजश्च देवता इन्द्राद्याः अग्निहोत्रं होमः कर्मविशेषः सर्वं त्वमेव "सर्वं खल्विदं ब्रह्म" ति श्रुतेः। अत्र सर्वस्य भगवच्छक्तिमयस्य भगवदधीन-स्थित्यादिमत्त्वेन भगवदभिन्नत्वं बोध्यम्। स्वरूपेणाऽचेतनपदार्थस्य बन्धमोक्षार्हस्य चेतनपदार्थस्य च बन्धमोक्षप्रदेन नित्यमुक्त-प्राप्येन भगवता सहाभेदासम्भवात् 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिसम्पद्यते' इति मुक्तौ स्वरूपभेदश्रवणाच्च आरोपापवाद-वादिपशवस्तु अध्यासगिरिवज्रप्रभृतिषु ग्रन्थेषु पूर्वैर्निर्मूलीकृता इत्यत्रोपरम्यते ॥ ४५॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एकस्यैव भगवतः कथं भिन्नत्वाभिन्नत्वे इत्याशङ्क्य तयोरपि तत्कृतत्वं वर्णयन्तो नमस्यन्ति—जगदिति। जगत उद्भव उत्पत्तिः स्थितिः पालनं लय उपसंहारः तेषु निमित्तेषु दैवतः प्राण्यदृष्टात् बहुधा त्रिधा भिद्यमाना रजःसत्त्वतमोरूपा गुणाः यस्यास्तया आत्मनः स्वस्य मायया रचिता आत्मनि स्वस्मिन् ब्रह्मादिभेदमतिर्येन तस्मै नमः। तत्र जगदुत्पत्त्यर्थं रजोगुणमधिष्ठाय ब्रह्मा जातः, पालनार्थं सत्त्वमधिष्ठाय विष्णुर्जातः, संहारार्थं तमोगुणमधिष्ठाय रुद्रो जात इति भेदः। स्वसंस्थया स्वरूपावस्थानेन विशेषतः सर्वथा निर्वर्त्तितः दूरमपसारितो भेदो भ्रमस्तद्धेतवो गुणाश्च आत्मनि येन तस्मै नमः-इत्यभेदश्च दर्शितः। अतो भेदस्यापि त्वत्कृतत्वाद्भेदेन भजतामप्यनुग्रहो युक्त एवेति भावः॥ ३९॥ ❀ ❀ वेदस्तु विरुद्धधर्माश्रयत्वेन स्तौति—नम इति। श्रितं स्वीकृतं सत्त्वं सत्त्वगुणो येन तस्मै नमः। अत एव धर्मादीनां धर्मार्थकाममोक्षाणां चतुर्विधपुरुषार्थानां सूतये प्रसवित्रे दात्रे च नमः। चकारो नमःशब्दावृत्त्यर्थः। निर्गुणाय च नमः। ननु कथमेकस्यैव सत्त्वगुणाश्रितत्वं निर्गुणत्वं च निर्गुणत्वे च कथं धर्मादिफलदातृत्वं संगच्छत इत्याशङ्क्याह—यदिति। यत् यस्य भगवतस्तव काष्ठां कथमेकस्य सगुणत्वं निर्गुणत्वं चेति तत्त्वमहं प्रमाणरूपो वेदोऽपि न वेद न वेद्मि, अपरे ब्रह्मादयोऽपि न विदुः। चकारो निषेधावृत्त्यर्थः॥ ४०॥ ❀ ❀ भगवतो लब्धसामर्थ्योऽग्निर्यथातत्त्वं निवेदयन् स्तौति—यत्तेजसेति। यस्य तव तेजसा सुसमिद्धतेजाः सुष्ठु अतिशयेन समिद्धं दीप्तं तेजो यस्य सोऽहं स्वध्वरे प्रशस्ते अध्वरे आज्यसिक्तं घृतप्लुतं हव्यं हविर्वहे वहामि विभज्य तांस्तान् देवान् प्रापयामि तं यज्ञियं यज्ञोपहितं यज्ञपालकं यज्ञं यज्ञमूर्तिं विष्णुं 'यज्ञो वै विष्णुः' इति श्रुतेः पञ्चविधं 'स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः' इत्यैतरेयोक्तलक्षणं पञ्चभिर्यजुर्भिः यजुर्वेदगतमन्त्रैः स्विष्टं सुपूजितं त्वां प्रणतोऽस्मि। पञ्चमन्त्राश्च श्रुतौ प्रदर्शिताः—"आश्रवयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कारः" इति। तदनुसारिणी स्मृतिश्च "चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च। हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु" इति॥ ४१॥ ❀ ❀ देवास्तु सर्वदैव भगवान् पालयतोऽधुनापि पालयिष्यत्येव किं प्रार्थनयेत्यभिप्रेत्य पालकत्वं निवेदयन्तः स्तुवन्ति—पुरेति। पुरा पूर्वं तत्रापि कदेत्यपेक्षायामाह—कल्पस्य प्रपञ्चस्यापायो नाशो यदा तदा प्रलये स्वकृतं स्वेन वोत्पादितं विकृतं विकारजातं स्थावरजङ्गमात्मकं सर्वप्रपञ्चमुदरीकृत्य स्वोदरे निधाय त्वमेवाद्यः पुमान् श्रीनारायणः तस्मिन् सर्वविप्लवकारके सलिले उरगेन्द्रः शेषः एवाधिक उत्कृष्टं शयनं शय्या तस्मिन् शेषे शयनं करोषि। कथंभूतः? सिद्धैर्जनलोकादिवासिसनकादिभिः हृदि विमृशिता चिन्तिता अध्यात्मपदवी ज्ञानमार्गो यस्य स एव त्वं योऽद्येदानीं सृष्टिसमयेऽस्माकमक्ष्णोः पथि चरसि दृष्टिगोचरो भवसि नोऽस्मान् भृत्यानवसि रक्षसि॥ ४२॥ ❀ ❀ गन्धर्वा अपि सर्वानर्थनिवृत्तिः सर्वाभीष्टप्राप्तिश्च भगवत्प्रसादेनैव भवति सर्वोत्तमत्वा-दिति मत्वा तस्य सर्वोत्तमत्वं वर्णयन्तः प्रणमन्ति—अंशांशा इति। हे देवते मरीच्यादयः प्रजापतयः ब्रह्मा आद्यो जनको येषां ते ब्रह्माद्याः रुद्रः पुरोगः मुख्यत्वादग्रेसरो येषामिन्द्रादीनां ते देवगणास्ते तवांशांशाः त्वत्तः सामर्थ्यं प्रतिलभ्य स्वस्वाधिकारनिर्वाहं कुर्वन्ति न स्वतन्त्राः। इदं च विश्वं चतुर्दशभुवनात्मकं ब्रह्माण्डं यस्य तव क्रीडाभाण्डं क्रीडोपकरणम्। न केवलमिदमेकमेव, किंतु कोटिश एवंभूतब्रह्माण्डानि तव क्रीडाभाण्डानि सन्तीति द्योतयन्तः संबोधयन्ति—हे विभूमन् महत्तमेति। ईदृक्क्रीडायां सामर्थ्यं तवैवास्तीति द्योतयन्तः संबोधयन्ति—हे देव इति। अतो हे नाथ सर्वस्वामिन्! तस्मै ते तुभ्यं नित्यं सर्वदा वयं नमः करवामः नमनं कुर्मः॥ ४३॥ ❀ ❀ विद्याधरास्तु विद्यानां सम्पद्धेतुत्वेऽपि त्वत्कथामन्तरेण मोहनिवृत्त्यभावान्मोहेन वयमत्र यागे प्रवृत्तास्तदस्माकमपराधं क्षमस्वेत्यभिप्रायेण स्तुवन्ति—त्वन्माययेति। अर्थं त्वद्भजनद्वारा पुरुषार्थसाधनं शरीरम-भिपद्य प्राप्यापि दुर्मतिः दुष्टा त्वत्तो विमुखा मतिर्बुद्धिर्यस्य स त्वन्मायया मुह्यतीति शेषः। मोहमेव दर्शयन्ति—स्वैरिति। स्वैः स्वकीयैः पुत्रादिभिः इन्द्रियादिभिर्वा क्षिप्तोऽभिभूतः तिरस्कृतो दुःखितोऽप्यस्मिन् कलेवरे ममाहमित्यभिमानं कृत्वा असद्विषयलालसः असत्सु मलिनेषु दुःखप्रदेषु विषयेषु लालसा तृष्णा यस्य स तथाविधो भवति। स्वकीयानामपि पुत्रादीनामिन्द्रियादीनां वा स्वाधिक्षेपे हेतुमाहुः—उत्पथैरिति। तेषामपि विषयोन्मुखत्वेनान्यायवर्तित्वाद् दुःखदातृत्वमिति भावः। युष्मत्कथामृतनिषेवकस्तु त्वद्भक्त एवंभूतमात्मनो मोहमुत् उच्चैः दूरतो विशेषेण यथा पुनर्न स्यात्तथा उत् सर्वशः अस्येत् त्यजेत्। स्वादुविशेषत्वेनान्य-

तृष्णानिवर्त्तकत्वेन जन्ममरणादिनिवर्त्तकत्वेन संसारविस्मारकत्वेन च कथाया अमृतत्वम्। तां नित्यं सेवमानस्य भगवद्भक्तस्य मोहकारणमायानिवृत्तेः कदापि विषयतृष्णादिरूपो मोहो न भवतीति भावः। पामराणां शरीराद्भिन्नात्मज्ञानरहितानां शरीरेऽहमित्यभिमानः। शास्त्रतर्कादिना शरीराद्भिन्नात्मज्ञानवतां शास्त्रिणामपि ममेदं शरीरमित्यभिमानः विषयतृष्णा तूभयत्र साधारणा। भगवद्भक्तानां तु मायानिवृत्त्या सर्वत्र तत्स्फूर्त्या न शरीरादावहन्ता ममता न वा विषयतृष्णेति विवेकः॥ ४४॥ ❀ ❀ ब्राह्मणास्तु भगवतो यज्ञस्वरूपत्ववर्णनपूर्वकं नमस्यन्तस्तत्प्रसादं प्रार्थयन्ते—त्वमिति त्रिभिः। क्रतुर्यज्ञरूपस्त्वम् कुत इत्याशङ्क्य तदङ्गत्वादित्यभिप्रेत्य यज्ञाङ्गत्वमपि दर्शयन्ति—त्वं हविरित्यादिना। हुताशः अग्निः। समिधः काष्ठानि। दर्भाः कुशाः। सदस्याः ऋत्विजश्च। दम्पती यजमानस्तत्पत्नी च। अग्निहोत्रं अग्नौ हवनम्। स्वधा पितृभार्या। इत्यनेन न केवलं यज्ञाङ्गत्वं किंतु श्राद्धाङ्गत्वमपीति सूचितम्। सोमः सोमलता। आज्यं घृतम्॥ ४५॥

### भाषानुवादः

जीवोंके अदृष्टवश जिसके सत्त्वादि गुणोंमें बड़ी विभिन्नता आ जाती है, उस अपनी मायाके द्वारा जगत्‌की उत्पत्ति, स्थिति और प्रलयके लिये ब्रह्मादि विभिन्न रूप धारण करके आप भेदबुद्धि पैदा कर देते हैं; किन्तु अपनी स्वरूपस्थितिसे आप उस भेदज्ञान और उसके कारण सत्त्वादि गुणोंसे सर्वथा दूर हैं। ऐसे आपको हमारा नमस्कार है॥ ३९॥ ❀ ❀ ब्रह्मस्वरूप वेदने कहा—आप ही धर्मादिकी उत्पत्तिके लिये शुद्ध सत्त्वको स्वीकार करते हैं, साथ ही आप निर्गुण भी हैं। अत एव आपका तत्त्व तो न मैं जानता हूँ और न ब्रह्मादि कोई और ही जानते हैं; आपको नमस्कार है॥ ४०॥ ❀ ❀ अग्निदेवने कहा—भगवन्! आपके ही तेजसे प्रज्वलित होकर मैं श्रेष्ठ यज्ञोंमें देवताओंके पास घृतमिश्रित हवि पहुँचाता हूँ। आप साक्षात् यज्ञपुरुष एवं यज्ञकी रक्षा करनेवाले हैं। अग्निहोत्र, दर्श, पौर्णमास, चातुर्मास्य और पशु-सोम—ये पाँच प्रकारके यज्ञ आपके ही स्वरूप हैं तथा 'आश्रावय', 'अस्तु श्रौषट्', 'यजे', 'ये यजामहे' और 'वषट्'—इन पाँच प्रकारके यजुर्मन्त्रोंसे आपका ही पूजन होता है। मैं आपको प्रणाम करता हूँ॥ ४१॥ ❀ ❀ देवताओंने कहा—देव! आप आदिपुरुष हैं। पूर्वकल्पका अन्त होनेपर अपने कार्यरूप इस प्रपञ्चको उदरमें लीनकर आपने ही प्रलयकालीन जलके भीतर शेषनागकी उत्तम शय्यापर शयन किया था। आपके आध्यात्मिक स्वरूपका जनलोकादिवासी सिद्धगण भी अपने हृदयमें चिन्तन करते हैं। अहो! वही आप आज हमारे नेत्रोंके विषय होकर अपने भक्तोंकी रक्षा कर रहे हैं॥ ४२॥ ❀ ❀ गन्धर्वोंने कहा—देव! मरीचि आदि ऋषि और ये ब्रह्मा, इन्द्र तथा रुद्रादि देवतागण आपके अंशके भी अंश हैं। महत्तम! यह सम्पूर्ण विश्व आपके खेलकी सामग्री है। नाथ! ऐसे आपको हम सर्वदा प्रणाम करते हैं॥ ४३॥ ❀ ❀ विद्याधरोंने कहा—प्रभो! परम पुरुषार्थकी प्राप्तिके साधनरूप इस मानवदेहको पाकर भी जीव आपकी मायासे मोहित होकर इसमें मैं-मेरेपनका अभिमान कर लेता है। फिर वह दुर्बुद्धि अपने आत्मीयोंसे तिरस्कृत होनेपर भी असत् विषयोंकी ही लालसा करता रहता है। किन्तु ऐसी अवस्थामें भी जो आपके कथामृतका सेवन करता है, वह इस अन्तःकरणके मोहको सर्वथा त्याग देता है॥ ४४॥ ❀ ❀ ब्राह्मणोंने कहा—भगवन्! आप ही यज्ञ हैं, आप ही हवि हैं, आप ही अग्नि हैं, स्वयं आप ही मन्त्र हैं, आप ही समिधा, कुशा और यज्ञपात्र हैं तथा आप ही सदस्य, ऋत्विज, यजमान एवं उसकी धर्मपत्नी, देवता, अग्निहोत्र, स्वधा, सोमरस, घृत और पशु हैं॥ ४५॥

त्वं पुरा गां रसाया महासूकरो दंष्ट्रया पद्मिनीं वारणेन्द्रो यथा।
स्तूयमानो नदँल्लीलया योगिभिर्व्युज्जहर्थ त्रयीगात्र यज्ञक्रतुः॥ ४६॥
स प्रसीद त्वमस्माकमाकाङ्क्षतां दर्शनं ते परिभ्रष्टसत्कर्मणाम्।
कीर्त्यमाने नृभिर्नाम्नि यज्ञेश ते यज्ञविघ्नाः क्षयं यान्ति तस्मै नमः॥ ४७॥

मैत्रेय[1] उवाच

इति दक्षः कविर्यज्ञं भद्र रुद्राभिमर्शितम्। कीर्त्यमाने हृषीकेशे संनि[2]न्ये यज्ञभावने॥ ४८॥
भगवान् स्वेन भागेन सर्वात्मा सर्वभागभुक्। दक्षं बभाष आभाष्य प्रीयमाण इवानघ॥ ४९॥

श्रीभग[3]वानुवाच

अहं ब्रह्मा च शर्वश्च जगतः कारणं परम्। आत्मेश्वर उपद्रष्टा स्वयंदृगविशेषणः॥ ५०॥

---

१. प्राचीने पाठे 'मैत्रेय उवाच' नास्ति। २. प्रा० पा०—सान्निध्ये। ३. प्राचीने पाठे 'श्रीभगवानुवाच' नास्ति।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

गां पृथ्वीं रसाया रसातलाद्दंष्ट्रया व्युज्जहर्थ विशेषेणोद्धृतवानसि। योगिभिः स्तूयमानः। हे त्रयीगात्र वेदमूर्ते यज्ञो यागः सयूपस्तद्विशेषः क्रतुस्तद्रूपी यज्ञसंकल्परूप इति वा, यज्ञः क्रतुः कर्म यस्येति वा ॥ ४६ ॥ ❀ ❀ स त्वमस्माकं त्वद्दर्शनमाकांक्षतां प्रसीद अस्मद्यज्ञमप्युद्धरेत्यर्थः। न चाशक्यं तवैतत्। यतस्तव नाम्नि कीर्त्यमान एव यज्ञविघ्नाः क्षयं यांति एवंप्रभावो यस्तस्मै नमः ॥ ४७ ॥ ❀ ❀ इत्यनेन प्रकारेण सर्वैः कीर्त्यमाने हे भद्र विदुर संनिन्ये प्रवर्तयामास ॥ ४८ ॥ ❀ ❀ सर्वात्मतया सर्वभागभोक्ताऽपि भगवान्निजानंदतृप्तोऽपि स्वेन भागेन त्रिकपालपुरोडाशेन प्रीयमाण इव दक्षमाभाष्य संबोध्य बभाषे ॥ ४९ ॥ ❀ ❀ योऽहं जगतः कारणम् आत्मा चेश्वरश्च उपद्रष्टा साक्षी च स्वयंदृक्स्वयंप्रकाशश्च निरुपाधिश्च स एव ब्रह्मा च शर्वश्चेत्यन्वयः ॥ ५० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

त्रयीगात्रेति। वेदस्य सर्वप्रकाशकत्वेन सर्वरूपतास्तीति भावः ॥ ४६ ॥ ❀ ❀ कीर्त्यमान एव किं पुनः कीर्त्तिते किंतरां तत्साक्षात्सन्निधौ यज्ञविघ्ना रुद्रानुचरा इति तेषु कटाक्षः। अत्र स्तावकानामन्यत्र कटाक्षैर्भगवतो भक्तेश्च प्राय उत्कर्षपोषान्न दोष आख्येयः ॥ ४७ ॥ ❀ ❀ भद्रेति। भगवद्भक्तत्वान्मंगलरूप सर्वेषां भद्रचिंतकत्वाद्वा। भद्रेति। विदुरे लक्षणया भद्रत्वस्थापनेनास्वारस्यं मत्वाह–यद्वेति। भद्ररुद्रो भद्राख्यरुद्रो वीरभद्रस्तेन दूषितम् ॥ ४८ ॥ ❀ ❀ प्रीयमाण इदानीं प्रीयमाण इवेति। रुद्रापराधित्वान्न वस्तुतः प्रीत इति भावः। तीर्थस्तु-पूर्वं प्रीयमाण इवेत्युभयार्थाभिप्रायेणेवशब्दः। "इवोभयार्थे सादृश्ये" इत्यभिधानात्। यद्वा न पुरोडाशमात्रं प्रीतिहेतुः किं तु भक्तिरेवेतीवशब्दोपादानम्। हे अनघेति। निर-पराधिनामेव प्रीणातीत्यत्र त्वमेव प्रमाणमित्यभिप्रायः ॥ ४९ ॥ ❀ ❀ मा पुनरपराधं कार्षीरिति हितमुपदिशति अविशेषणः। त्रयाणामस्माकं नास्ति विशेष इत्यर्थः ॥ ५० ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

यागो यूपः तस्यैव विशेषः सयूपः क्रतुः ॥ ४६ ॥ ❀ ❀ एतद्यज्ञोद्धरणम् ॥ ४७ ॥ ❀ ❀ यज्ञभावने यज्ञपालके ॥ ४८ ॥ ❀ ❀ दक्षस्य शिवे आक्षेपाऽनिवृत्तेस्सम्यक् प्रसत्त्यभावादिवेत्युक्तम् ॥ ४९ ॥ ❀ ❀ आत्मा मूलस्वरूपः ॥ ५० ॥

## श्रीमद्वीरराघवव्याख्या

यज्ञानुष्ठानोपयुक्तपृथिव्युद्धर्ता यज्ञाऽवबोधिविध्यर्थवादादिरूपेणावस्थितवेदमूर्तिश्च त्वमेवेत्याहुः त्वमिति। पुरा कल्पादौ महाशूकरः श्वेतवाराहरूपस्त्वं वारणेन्द्रो गजश्रेष्ठः पद्मिनीं यथा सरसीमिव अभूतोपमेयं नहि वारणेन्द्रेण पद्मिन्युद्धरणं क्वचिद् दृष्टं, रसाया रसातलात् गां पृथिवीं दंष्ट्रया उत्पाटयन् योगिभिः स्तूयमानः व्युज्जहर्थ विशेषेणोद्धृतवानसि। हे त्रयीगात्र! वेदमूर्ते! अतस्त्वमेव यज्ञक्रतुः यज्ञो यागः क्रतुराराधनरूपं कर्म यस्य सः। यद्वा हे यज्ञ! विष्णो! 'यज्ञो वै विष्णुः' 'यज्ञायाचरतः कर्मे'ति श्रुतिस्मृतिभ्यां क्रतुः क्रतुमूर्तिरित्यर्थः ॥ ४६ ॥ ❀ ❀ स एवंभूतस्त्वं परिभ्रष्टं सत्कर्मवैदिकं त्वदाराधनरूपं यागाख्यं कर्म येषाम् अत एव तद्भ्रंशपरिहाराय त्वत्सन्दर्शनमाकाङ्क्षतां कामयमानानाम् अस्माकं प्रसीद प्रसन्नो भव। हे यज्ञेश! यस्य ते तव नाम्नि नृभिः नरैः कीर्त्यमाने सति यज्ञस्य विघ्नाः क्षयं नाशं यान्ति तस्मै ते नमः ॥ ४७ ॥ ❀ ❀ दक्षादीनां स्तुतिमुपसंहरन् तैः स्तुतो भगवान्ताननुगृह्णन् आबभाष इत्याह मैत्रेय इतीति द्वाभ्याम्। हे भद्र! विदुर! इत्यनेन प्रकारेण सर्वैर्विश्वभावने विश्वकारणे हृषीकेशे कीर्त्यमाने सति कविः कर्मसु कुशलो दक्षः रुद्राऽभिमर्शितं रुद्रेण विहतं यज्ञं सन्निन्ये प्रवर्तयामास। रुद्रेण संस्पृष्टमिति वा पूर्वं रौद्रभागाभावात् रुद्रानभिमर्शितमिदानीं तु तद्भागप्रदानात् तदभिमर्शितमित्यवगन्तव्यम् ॥ ४८ ॥ ❀ ❀ सर्वात्मा सर्वस्यात्मा सर्वात्मतया सर्वभागभोक्तापि भगवान् स्वेन भागेन त्रिकपालपुरोडाशेन प्रीयमाण एव दक्षमाभाष्याभिमुखीकृत्य बभाषे ॥ ४९ ॥ ❀ ❀ तत्र हितोपदेष्टा भगवान् कार्यकारण-रूपेणावस्थितः प्रकृतिपुरुषशरीरकोऽहमेक एव मच्छरीरभूतब्रह्मरुद्राख्यजीवाऽनुप्रवेशेन जगत्सृजामि संहरामि स्वावताररूपेण पालयामि। अतो मत्तः मच्छरीरभूताच्च न व्यतिरिक्तं वस्त्वस्तीति अब्रह्मात्मकस्वतन्त्रवस्तुदृष्टिः देहात्मभ्रान्तिस्वतन्त्रात्मभ्रान्तिमूला न तु तात्त्विकी, सर्वस्य ब्रह्मात्मकत्वदृष्टिस्तु तात्त्विकी मुक्त्युपायभूतेत्याह अहमिति पञ्चभिः। अहं निरस्तनिखिलहेयत्वेन समस्तकल्याणगुणात्मकत्वेन च भवद्भिः स्तुतः समाभ्यधिकरहितोऽहं ब्रह्मा च शर्वश्च मदनुप्रविष्टत्वेन मत्सृज्यत्वेन मदायत्त-सृष्ट्याद्युपयुक्तज्ञानवत्त्वेन च प्रसिद्धौ मत्प्रयोज्यौ ब्रह्मरुद्रौ च जगतः परं कारणं स्थित्युद्भवलयकारणं "अनेन जीवेनात्मनानु-

प्रविश्य नामरूपे व्याकरवाणि। यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधसम्भवौ॥ मदादर्शितपन्थानौ सृष्टिसंहारकारकौ। सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते" इत्यादिश्रुतिस्मृत्यनुरोधादयमर्थो लभ्यते। ननु प्रतिनियतसृष्ट्याद्यधिकारभेदेन पृथक् त्रयाणां कारणत्वेऽभिहिते कथं कृत्स्नस्य जगतः ब्रह्मैककारणत्वमुच्यते। अत एव हि तत्र तत्र "ब्राह्मणो वै सर्वा देवता न किरिन्द्रत्वमुत्तरः अग्निः सर्वा देवता एक एव रुद्रः सोमः पवते जनिता मतीनां जनिता पृथिव्या जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितेति विष्णोः आपो वा इदं सर्वम्" इत्यादिभिः ब्राह्मणाग्नीन्द्रादीनामपि समाभ्यधिकराहित्यप्रतीतेरर्थवत्त्वमव्याकुलम्। अत्रोच्यते, सर्वेषां पृथक्कारणत्वे समाभ्यधिकराहित्ये च प्रतीतेऽपि तद्वचाहतम् अन्यपरतयाधिगतं चेत्यनादरणीयम्। अत एव तत्त्वप्रधानेषु सृष्टिप्रलयप्रकरणेषु यदेव स्वरूपेण गुणैश्च निरतिशयबृहदुक्तं तदेकमेव ब्रह्म जन्मस्थितिप्रलयसमुदायरूपेण जिज्ञास्यलक्षणेन लक्षितं सूत्रकारेण "जन्माद्यस्य यतः" इति। तत्र हि कारणभूतवस्तुपरामर्शिना यत इत्यनेन कारणवाक्येषु छागो वा मन्त्रवर्णादिति सौत्रन्यायात्सद्ब्रह्मादिशब्दानां सामान्यानां नारायणादिविशेषपर्यवसायित्वावश्यम्भावात्सर्वश्रुतीनां नारायण एव पर्यवसानभूमिरिति यतो वा इमानीत्यादिश्रुतेर्हृदयमिति सूत्रकाराभिप्रायो ज्ञायते। अतः सृष्ट्यादिभिर्लक्ष्यं कारणमेकमेव न तु नानाभूतम्। 'अहं ब्रह्मा च शर्वश्चे'त्यादिभिः प्रतिनियतस्थित्यादिकारणत्वकीर्त्तनं तु प्रयोज्यप्रयोजकभावेन। नन्वेवमपि सृष्ट्यादीनां प्रत्येकं लक्षणत्वात्तल्लक्ष्यमपि कारणं वस्तु नानाभूतमिति चेन्न, समुदायस्यैव लक्षणत्वात् सृष्टिस्थितिप्रलयानां समुदायो हि लक्षणं न त्वेकैकम्। समुदायस्य लक्षणत्वं हि श्रुतिस्वारस्यादवसीयते 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ती'त्यत्र न प्रतिवाक्यं तद्ब्रह्मेत्युक्तम् अन्यथैकतरलक्षणवैयर्थ्यञ्च स्यात्। ननु समुदितं न लक्षणं व्यावर्त्याभावात्, न हि जगदुत्पत्तौ निमित्तोपादानभूतस्थित्यादिकारणत्वव्यवच्छेदकं किमपि वस्त्वस्तीति चेत्, सत्यम्। व्यवच्छेद्यं नेष्यते, तथापि श्रुत्यनुरोधात् सूत्रकारेण जन्मादीत्येकवचनान्तेन समुदायवाचिना समुदायस्य लक्षणत्वमुक्तं, श्रुतिश्च 'तद्विजिज्ञासस्वे'ति विधित्सितोपासनोपयोगिनिरतिशयबृहत्त्वविपरीतबृहत्त्वशङ्काव्यवच्छेदार्थं समुदायमाह। शङ्कितव्यवच्छेदेनापि हि सप्रयोजनत्वं स्यात्, लक्ष्याकारविपरीताकारशङ्कानिराकरणेन विना लक्ष्याकारनिश्चयायोगात्। न च जन्मादिष्वेकैककारणत्वं लक्ष्याकारविपरीतशङ्कानिराकरणक्षमं, तथा हि उत्पत्तिकारणत्वेऽभिहितेऽपि स्थित्यादिकारणत्वं न चेत् तदनुगुणज्ञानशक्तिविरहात् स्थितिप्रलयकारणभूतवस्त्वन्तरसद्भावाच्च जन्ममात्रकारणस्य निरतिशयबृहत्त्वं न स्यात्। मुक्तेर्लयान्तर्भावान्मोक्षप्रदतयोपास्यस्यैव प्राप्यत्वाच्च मोक्षप्रदत्वप्राप्यत्वानुगुणैश्च बृहत्त्वं न सिद्ध्यति। अतो जन्मकारणत्वमात्रस्य समस्तवस्तुव्यवच्छेदक्षमत्वेऽपि जन्मादिसमुदायकारणत्वस्यैव निरतिशयबृहत्त्वौपयिकसृष्टिस्थितिप्रलयसमुदायकारणत्वं लक्षणमिति ज्ञापितम्। अतः समुदायस्यैव लक्षणत्वादपि तल्लक्ष्यं वस्त्वेकमेव साक्षाद्ब्रह्मादीन्प्रति प्रयोजकत्वेन च कारणमिति सुस्थम्। नन्वेकस्यैव तव सद्वारकतयाऽद्वारकतया च कारणत्वेऽपि सृष्टेः प्राक् कथमवस्थितः कथं स्रक्ष्यसि कथंतरां ब्रह्मरुद्रादीनां सञ्ज्ञानां त्वयि पर्य्यवसानमित्यत्राह सार्द्धेन आत्मेश्वर इति, आत्मनः स्वस्य ईश्वरः आत्मेश्वरः। 'पतिं विश्वस्यात्मेश्वरमि'ति श्रुतेः। अनेन स्वस्य प्रयोजकान्तराप्रयोज्यत्वमुक्तम्। आत्मनां स्वस्मिन् लीनानां जीवानामीश्वरः अन्तः प्रविश्य नियन्तृत्वेनावस्थित इति वा उपद्रष्टा उपद्रश्यदेवमनुष्यादिनामरूपाभावात् केवलं द्रष्टृत्वेनावस्थित इत्यर्थः। अनेन पदद्वयेन नामरूपविभागानर्हसूक्ष्मप्रकृतिपुरुषशरीरकत्वं फलितम्। 'यस्याक्षरं शरीरं यस्याव्यक्तं शरीरम्। असद्वा इदमग्र आसीत्। तद्धेदन्तर्ह्यव्याकृतमासीदि'ति च श्रवणात्। एवञ्च नामरूपविभागानर्हसूक्ष्मचिदचिद्वैशिष्ट्यं नैव कारणवस्तुस्थितिरित्युक्तं भवति। कारणत्वोपयुक्तकल्याणगुणत्वमाह स्वयंदृगिति। नित्याविर्भूतासङ्कुचितज्ञान इत्यर्थः। स्वयम् आत्मना पश्यतीति स्वयंदृगिति व्युत्पत्तेः। अनेन निमित्तत्वोपयुक्तनिरुपाधिकसर्वज्ञत्वमुक्तं स्वयन्दृगिति। उपादानत्वोपयुक्तसर्वशक्तित्वादेरप्युपलक्षणं, हेयगुणराहित्यमाह अविशेषणः विशेषणानि प्रकृतिपुरुषगतजडत्वपरिणामित्वाऽसर्वज्ञत्वदुःखित्वादयो व्यावर्तकाकाराः तद्रहित इत्यर्थः। अविशेषण इति न सर्वगुणनिषेधः, स्वयन्दृगिति कल्याणगुणविधानात् कारणत्वोपयुक्तगुणकथनसापेक्षितत्वान्निषेधस्य विहितेतरविषयत्वाच्च॥ ५०॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

रसाया रसातलात् योगिभिः सनकादिभिः यज्ञक्रतुर्यज्ञसंकल्पः॥ ४६॥ ❁ ❁ सामगीः सामगायनध्वनिः तया परिभ्रष्टानि विस्रस्तानि सत्कर्माणि येषां ते तथोक्तास्तेषां यज्ञविघ्ना राक्षसाः॥ ४७॥ ❁ ❁ भद्ररुद्रो वीरभद्रः। उन्निन्ये ऊर्ध्वं नीतवान् समासं कृतवानित्यर्थः॥ ४८॥ ❁ ❁ सर्वात्मेति हेतुभर्गविशेषणम्। सर्वभूतान्तर्यामित्वेन सर्वभागभुक् स्वेन भागेन हेतुना सर्वभागं भुङ्क्ते इति सर्वभागभुक् पूर्वं प्रीयमाण इदानीं प्रीयमाण इत्युभयार्थाभिप्रायेणेवशब्दः 'इवोभये च सादृश्ये' इत्यभिधानात् यथा प्रीयमाणः प्रियं वक्ति तथेति वा॥ ४९॥ ❁ ❁ ननु भगवान् स्वागतं बभाष इति न युक्तं, दक्षस्य प्रागेव तत्र स्थितत्वात् अन्यद्वक्तव्यं न प्रतीयत इत्याशङ्क्य स्वात्मानं दक्षायोपदिशतीत्याह अहमिति। आत्मेश्वरः आत्मनां जीवानामीश्वर ईशनशीलः उपद्रष्टा सर्वस्मादधिको द्रष्टा स्वयंदृक् स्वयंप्रकाशः अविशेषणः सर्वोत्तमोऽहं विष्णुर्जगतः परं पॄ-पालनपूरणयोरिति धातुः, पालकं कारणं ब्रह्मा ब्रह्मसंज्ञोऽहं परं सृष्ट्यापूरकं कारणं, शर्वः शर्वसंज्ञोऽहं जगतः परमुत्कृष्टं कारणं विक्षेपकं संहारकं कॄ-विक्षेप इति। मामेवंविधं जानीहीति शेषः॥ ५०॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

स्वावतारत्वोपदेशेन ब्रह्मशिवावप्यादरयति। अहमिति॥ ५०-५१॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

त्रयीगात्र हे वेदमूर्त्ते! यज्ञः सयूपः, क्रतुर्निर्यूपः॥ ४६॥ ❀ ❀ नाम्नि कीर्त्यमान एव किं पुनः कीर्त्तिते किन्तरां तत् साक्षात् सन्निधौ यज्ञविघ्ना रुद्रानुचरा इति तेषु कटाक्षः। अत्र स्तावकानामन्यत्र कटाक्षैर्भगवतो भक्तेश्च प्राय उत्कर्षपोषान्न दोष आख्येयः॥ ४७॥ ❀ ❀ हे भद्र। यद्वा भद्ररुद्रेण वीरभद्रेण अभिमर्षितं विदूषितं संनिन्ये प्रवर्त्तयामास॥ ४८॥ ❀ ❀ भगवत्त्वेनानन्दपूर्णोऽपि सर्वात्मत्वेन सर्वभागभुगपि स्वेन भागेन प्रीयमाण इवेति रुद्रापराधित्वान्न वस्तुतः प्रीतः। हे अनघेति निरपराधिन्येव भगवान् प्रीणातीत्यत्र त्वमेव प्रमाणमिति भावः॥ ४९॥ ❀ ❀ मा पुनरपराधं कार्षीरिति हितमुपदिशति अहमिति। स्वयंदृक् स्वप्रकाशः अविशेषणः त्रयाणामस्माकं नास्ति विशेष इत्यर्थः॥ ५०॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

हे त्रयीगात्र! वेदमूर्ते! हे यज्ञ 'यज्ञो वै विष्णुरि'ति श्रुतेः महाशूकरः क्रतुः अध्वररूपी त्वमेव पुरा योगिभिः स्तूयमानः नदन् सन् यथा वारणेन्द्रः पद्मिनीं पद्मलतां दंष्ट्रया उद्धरति तद्वत् गां पृथ्वीं दंष्ट्रया रसायाः रसातलात् लीलयैव उज्जहर्थोद्धृतवान्॥ ४६॥ ❀ ❀ हे यज्ञेश! तस्मै उक्तप्रभावाय ते तुभ्यं नमः। ते नाम्नि कीर्त्यमाने यज्ञविघ्नाः क्षयं यान्ति, अतस्ते दर्शनमाकाङ्क्षमाणानां परिभ्रष्टं सत्कर्म येषां नोऽस्माकं स त्वं प्रसीद। अत्रेदं बोध्यं दक्षादीनां ब्राह्मणपर्यन्तानां लब्धभगवद्दर्शनानां भगवज्ज्ञानभक्तिमतां मुक्तिः प्रारब्धकर्मक्षये ज्ञेया। अत एव दक्षस्य पुनर्जन्म। एवं सर्वत्रोह्यम्॥ ४७॥ ❀ ❀ हे भद्र विदुर! इत्येवं सर्वैः यज्ञभावने हृषीकेशे कीर्त्यमाने रुद्रेण अवमर्षितमवज्ञातं यज्ञं संनिन्ये प्रवर्त्तयामास॥ ४८॥ ❀ ❀ हे अनघ! भगवान् स्वानन्दतृप्तोऽपि सर्वात्मा अत एव सर्वभागभुगपि भक्तिनिवेदितप्रियतया स्वेन भागेन त्रिकपालपुरोडाशेन प्रीयमाण इव दक्षमाभाष्य हे प्रजापते! इत्यादि सम्बोध्य बभाषे॥ ४९॥ ❀ ❀ अथ सर्वशक्तिः सर्वात्मा सर्वभिन्नाभिन्नः समानातिशयशून्यः स्वाश्रयः स्वप्रकाशः सर्वकारणभूतोऽहमेव मुमुक्षुभिर्ध्येयः कारणं तु ध्येयमिति स्वनिगमोक्तसिद्धान्तं सर्वेभ्य उपदिशन् स्वात्मके ब्रह्मणि शिवे च दक्षभृग्वादीनां स्पर्द्धासूयादिदोषं जगति च चेतनाचेतनरूपे स्वात्मके ब्रह्मशिवयोः स्पर्द्धासूयादिदोषं निवारयितुं "सर्वं खल्विदं ब्रह्म। ऐतदात्म्यमिदं सर्वं सर्वं विष्णुमयं जगत्। वासुदेवः सर्वमिति समहात्मा सुदुर्लभः। सर्वमिदमहं च वासुदेवः। मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव। अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते। क्षेत्रज्ञं चापि मां विद्धि, अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम्। मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम्॥ पिताहमस्य जगतो माता धाता पितामहः। वेद्यं पवित्रमोंकार ऋक् साम यजुरेव च॥ गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत्। प्रभवः प्रलयस्थानं निधानं बीजमव्ययम्। तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च। अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन॥" "तदनन्यत्वमारम्भणशब्दादिभ्यः, आत्मत्वेनावगच्छन्ति ग्राहयन्ति च"। इत्यादिश्रुतिस्मृतिसूत्रसिद्धं सर्वस्य स्वात्मकत्वं दर्शयति भगवान् अहमिति पञ्चभिः। अविशेषणः समानस्य अधिकस्य च अभावात् तदपेक्षया यद्विशेषणं तद्रहितः स्वयंदृक् स्वप्रकाशः आत्मेश्वरः स्वानन्येश्वरः ईश्वरान्तररहितः "न यस्य कश्चिज्जनिता न चाधिपः" इत्यादिश्रुतेः। जगतः ब्रह्मशिवादिसहितस्य सर्वस्य चेतनाचेतनस्य कारणम् उपादानं निमित्तं च 'तदात्मानं स्वयमकुरुते'ति श्रुतेः कथंभूतं कारणं परं प्रकृतिकालादीनां जगदुत्पत्तौ निमित्तभूतानामपि परम्। ब्रह्मशिवयोरपि परमपुरुषजन्यत्वं श्रूयते "यो ब्रह्माणं विदधाति पूर्वम्, एतस्य ध्यानान्तस्थस्य ललाटात्त्र्यक्षः शूलपाणिः पुरुषोऽजायतेति स्मर्यते च क इति। ब्रह्मणो नाम... ईशोऽहं सर्वदेहिनाम्। आवां तवांगसम्भूतौ तस्मात्केशवनामवान्।' इति उपद्रष्टा साक्षी च ब्रह्मा शिवश्च चकारात्सर्वं वस्तुजातम् अहमेवेत्यन्वयः। अत्रैव ब्रह्मशिवादिसहितस्य सर्वस्य वासुदेवात्मकत्वं प्रपञ्चितं द्वितीयस्कन्धे अहं भव इत्यादिना॥ ५०॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

हे त्रयीगात्र वेदत्रयमूर्त्ते! यज्ञः सयूपः क्रतुर्निर्यूपो यागविशेषस्तद्रूपी त्वमेव महासूकरः सन् योगिभिः सनकादिभिः स्तूयमानः स्वयं च नदन् लीलया अनायासेनैव पुरा सृष्टिप्रारम्भसमये प्रथमे मन्वन्तरे प्रजानां स्थित्यर्थं रसाया रसातलात् गां पृथ्वीं दंष्ट्रया व्युज्जहर्थं विशेषेणोद्धृतवानसि। अनायासेनोद्धारे दृष्टान्तमाहुः—पद्मिनीं कमलं वारणेन्द्रो यथेति॥ ४६॥ ❀ ❀ हे यज्ञेश यज्ञप्रवर्त्तकत्वेन तत्फलद! तस्मै सर्वलोकस्य परमोपकारिणे तुभ्यं नमः। स सर्वात्मा सर्वेश्वरस्त्वमस्माकं ते तव दर्शनमाकाङ्क्षतां प्रसीद प्रसन्नो भव। किमर्थं मम दर्शनमाकाङ्क्षथ, तत्राहुः—परिभ्रष्टेति। "धर्मव्यतिक्रमो ह्यस्य समाजस्य ध्रुवं भवेत्। यत्राधर्मः समुत्तिष्ठेन्न स्थेयं तत्र कर्हिचित्" इति निषेधादत्रान्यायसभाप्रवेशेन परिभ्रष्टं सर्वतो नष्टं सत्कर्म पुण्यं येषां

तेषामस्माकं तत्पूर्त्यर्थं त्वद्दर्शनमाकाङ्क्षितमिति भावः। मम दर्शनेन कथं सत्कर्म पूर्णं स्यादित्याशङ्क्याहुः–कीर्त्यमान इति। ते तव नाम्नि नृभिः कीर्त्यमाने सति यज्ञविघ्नाः सर्वसत्कर्मविघ्नाः क्षयं यान्ति नश्यन्ति। अतः सत्कर्मसंपूर्तिर्भवति तदा किं वक्तव्यं त्वद्दर्शननमस्कारादिना सा भवतीत्यत्रेति भावः॥ ४७॥ ❁ ❁ एवं सर्वेषां स्तुतिनिरूपणं कृत्वा यज्ञप्रवृत्तिं कथयति–इतीति। इत्यनेन पूर्वोक्तप्रकारेण हृषीकेशे हृषीकाणामिन्द्रियाणामीशेन्तर्यामिणि यज्ञभावने यज्ञप्रवर्त्तके यज्ञपालके यज्ञस्वरूपे भगवति वासुदेवे दक्षादिभिः सर्वैः कीर्त्यमाने स्तूयमाने सति कविः स्वस्तोत्रकरणेन परस्तोत्रश्रवणेन च निर्मलान्तःकरणो दक्षः भद्ररुद्रावमर्शितं भद्ररुद्रो वीरभद्रस्तेन नाशितं यद्वा हे भद्र विदुर! रुद्रेण नाशितं यद्वा रुद्रेणावमर्शितमङ्गकल्पनयानुसन्धितं यज्ञं संनिन्ये प्रवर्त्तयामास॥ ४८॥ ❁ ❁ तदा भगवानपि दक्षमुपदिष्टवानित्याह–भगवानिति। सर्वात्मा अतस्तत्तद्रूपेण सर्वेषां देवानां भागान् स एव भुङ्क्त इति सर्वभागभुगपि ऐश्वर्यादिगुणपूर्णोपि स्वेन भागेन त्रिकपालपुरोडाशेन प्रीयमाण इव दक्षमाभाष्य हे दक्ष इति संबोध्य बभाषे। निजानन्दपूर्णस्य यज्ञभागेन प्रीत्युत्पत्तेरसंभवात्प्रीत्यनुकरणमात्रमित्यभिप्रेत्याह–इवेति। यदि प्रीत्यनुकरणं न कुर्यात्तदा तस्याप्रीतिमालक्ष्य तस्मिन् कर्मण्यन्यः कोपि न प्रवर्त्तेत तथाच पुरुषार्थभ्रष्टः स्यात्तच्चानभिप्रेतमतो लोकहितार्थं तदनुकरणं भगवान् करोतीति भावः। हे अनघ इति विदुरं संबोधयन् निर्दोषमेव पुरुषं भगवानेवमुपदिशत्येतत्स्वदृष्टान्तेन ज्ञेयमिति सूचयति॥ ४९॥ ❁ ❁ भगवान्यदुपदिष्टवांस्तदाह–अहमिति। जगतः परं स्वकारणरहितं कारणम्। तत्राप्युपादानमित्याह–आत्मेति। निमित्तकारणत्वमाह–ईश्वर इति, उत्पादको नियामकश्चेत्यर्थः। उपद्रष्टा साक्षी। स्वयंदृक् स्वयंप्रकाशश्च। अविशेषणः सर्वसङ्गविनिर्मुक्तश्च एवंभूतो योऽहं स एव ब्रह्मा च शर्वो रुद्रश्च। नास्माकं भेदोस्तीत्यर्थः॥ ५०॥

## भाषानुवादः

वेदमूर्ते! यज्ञ और उसका सङ्कल्प दोनों आप ही हैं। पूर्वकालमें आप ही अति विशाल वराहरूप धारणकर रसातलमें डूबी हुई पृथ्वीको लीलासे ही अपनी दाढ़ोंपर उठाकर इस प्रकार निकाल लाये थे, जैसे कोई गजराज कमलिनीको उठा लाये। उस समय आप धीरे-धीरे गरज रहे थे और योगिगण आपका यह अलौकिक पुरुषार्थ देखकर आपकी स्तुति करते जाते थे॥ ४६॥ ❁ ❁ यज्ञेश्वर! जब लोग आपके नामका कीर्तन करते हैं, तब यज्ञके सारे विघ्न नष्ट हो जाते हैं। हमारा यह यज्ञरूप सत्कर्म नष्ट हो गया था, अतः हम आपके दर्शनोंकी इच्छा कर रहे थे। अब आप हमपर प्रसन्न होइये। आपको नमस्कार है॥ ४७॥ ❁ ❁ श्रीमैत्रेयजी कहते हैं—भैया विदुर! जब इस प्रकार सब लोग यज्ञरक्षक भगवान् हृषीकेशकी स्तुति करने लगे, तब परम चतुर दक्षने रुद्रपार्षद वीरभद्रके ध्वंस किये हुए यज्ञको फिर आरम्भ कर दिया॥ ४८॥ ❁ ❁ सर्वान्तर्यामी श्रीहरि यों तो सभीके भागोंके भोक्ता हैं; तथापि त्रिकपाल पुरोडाशरूप अपने भागसे और भी प्रसन्न होकर उन्होंने दक्षको सम्बोधन करके कहा॥ ४९॥ ❁ ❁ श्रीभगवान् ने कहा—जगत्का परम कारण मैं ही ब्रह्मा और महादेव हूँ; मैं सबका आत्मा, ईश्वर और साक्षी हूँ तथा स्वयंप्रकाश और उपाधिशून्य हूं॥ ५०॥

**आत्ममायां समाविश्य सोऽहं गुणमयीं द्विज। सृजन् रक्षन् हरन् विश्वं दध्रे संज्ञां क्रियोचिताम्॥ ५१॥**
**तस्मिन् ब्रह्मण्यद्वितीये केवले परमात्मनि। ब्रह्मरुद्रौ च भूतानि भेदेनाज्ञोऽनुपश्यति॥ ५२॥**
**यथा पुमान्न स्वाङ्गेषु शिरःपाण्यादिषु[1] क्वचित्। पारक्यबुद्धिं कुरुते एवं भूतेषु मत्परः॥ ५३॥**
**त्रयाणामेकभावानां यो न पश्यति वै भिदाम्। सर्वभूतात्मनां ब्रह्मन् स शान्तिमधिगच्छति॥ ५४॥**

## मैत्रेय उवाच

**एवं भगवताऽऽदिष्टः प्रजापतिपतिर्हरिम्। अर्चित्वा क्रतुना स्वेन देवानु[3]भयतोऽयजत्॥ ५५॥**
**रुद्रं च स्वेन भागेन ह्युपाधावत्समाहितः। कर्मणोद[4]वसानेन सोमपानितरानपि।**
**उदवस्य सहर्त्विग्भिः सस्नाववभृथं ततः॥ ५६॥**
**तस्मा अप्यनुभावेन स्वेनैवावाप्तराधसे। धर्म एव मतिं दत्त्वा त्रिदशास्ते दिवं ययुः॥ ५७॥**
**एवं दाक्षायणी हित्वा सती पूर्वकलेवरम्। जज्ञे हिमवतः क्षेत्रे मेनायामिति शुश्रुम॥ ५८॥**
**तमेव दयितं भूय आवृङ्क्ते पतिमम्बिका। अनन्यभावैकगतिं शक्तिः सुप्तेव पूरुषम्॥ ५९॥**

---

१. प्रा० पा०—देहात्मबुद्धिर्भूतानि। २. प्रा० पा०—ण्यादिना। ३. प्रा० पा० वान् भगवतोऽयजत्। ४. प्रा० पा०—णो ह्यव०।

एतद्भगवतः शम्भोः कर्म दक्षाध्वरद्रुहः। श्रुतं भागवताच्छिष्यादुद्धवान्मे बृहस्पतेः ॥ ६० ॥
इदं पवित्रं परमीशचेष्टितं यशस्यमायुष्यमघौघमर्षणम्।
यो नित्यदाऽऽकर्ण्य नरोऽनुकीर्तयेद् धुनोत्यघं कौरव भक्तिभावतः ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे दक्षयज्ञसंधानं नाम सप्तमोऽध्यायः ॥ ७ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

कुत इत्यत आह। अहमेवात्ममायामधिष्ठाय जगत्सृष्ट्यादि कुर्वन्स च स च सन्सर्वशक्तिक्रियोचितां कर्मशक्तियोजितां संज्ञां धारयामि ॥ ५१ ॥ ❀ ❀ तस्मिन्केवलेऽद्वितीये समानासमानजातीयभेदरहिते ब्रह्मणि मयि ब्रह्मरुद्रौ भूतानि च भेदेनाज्ञः पश्यतीत्यर्थः ॥ ५२ ॥ ❀ ❀ विद्वांस्तु भेदं न पश्यतीति सदृष्टांतमाह। यथेति ॥ ५३ ॥ ❀ ❀ तस्मादेवमैक्यं पश्यन्कृतार्थो भवतीत्याह। त्रयाणां ब्रह्मविष्णुरुद्राणामेको भावः स्वरूपं येषाम् ॥ ५४ ॥ ❀ ❀ स्वेन क्रतुना त्रिकपालेष्ट्या उभयतोंऽगैः प्रधानेन च ॥ ५५ ॥ ❀ ❀ स्वेन भागेन यज्ञावशिष्टेन उदवस्यते समाप्यतेऽनेनेत्युदवसानं तेन कर्मणा सोमपानितरानप्युपाधावदयजदित्यनुषंगः। ततश्चोदवस्य कर्म समाप्यावभृथरूपं यथा भवति तथा स्नातवान् ॥ ५६ ॥ ❀ ❀ स्वेनैवानुभावेनाप्तराधसे प्राप्तसिद्धये तस्मा अपि ॥ ५७-५८ ॥ ❀ ❀ आवृंक्ते भजते स्म। अनन्यभावानां स्वात्मन्येकनिष्ठानामेकैव गतिर्यस्तम्। केवलप्रलयकाले सुप्ता शक्तिरीश्वरमिव ॥ ५९ ॥ ❀ ❀ बृहस्पतेः शिष्यान्मया श्रुतम् ॥ ६० ॥ ❀ ❀ परं पवित्रं य आकर्ण्य तथाऽनुकीर्तयेत् हे कौरव विदुर! स आत्मनः परस्याप्यघं संसारव्यसनं सर्वदा धुनोति ॥ ६१ ॥

इति श्रीभा० म० चतुर्थे टीकायां सप्तमोऽध्यायः ॥ ७ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ननु परमेश्वरः खल्वेक एव शास्त्रेषूच्यते त्रित्वं तस्य त्वया कुत उक्तमित्यत्राह–क्रियासु सृष्टिस्थितिसंहृतिषूचिताम्। स्रष्टा पालकः संहर्त्तेत्येवंरूपां ब्रह्मविष्णुरुद्राख्याम् ॥ ५१ ॥ ❀ ❀ ननु ब्रह्मणो हिरण्यगर्भत्वेन जीवत्वाद्रुद्रस्येश्वरत्वेपि गुणस्पर्शात्कथं तयोस्त्वदभेदस्तत्र कैमुत्यन्यायमाह–इत्यर्थ इति। ब्रह्मरुद्रौ च भूतानि जीवानपि भेदेनाज्ञ एव पश्यति किमुत ब्रह्मरुद्रौ, भूतानां मदीयतटस्थशक्तित्वाद्ब्रह्मरुद्रयोस्तु गुणावतारत्वान्मदभेद एवेति भावः ॥ ५२ ॥ ❀ ❀ यथा स्वशिरःपाण्यादिसुखदुःखे तथैव सर्वभूतेष्वपि सुखःदुःखे पश्येदित्येव भक्तानामभेददर्शनमित्यर्थः ॥ ५३ ॥ ❀ ❀ यतः पारक्यधीरनुचिता तस्माद्धेतोः। त्रिदेव्या ऐक्यमेकरूपत्वम्। संदर्भस्तु–त्रयाणामेकः पुरुषस्यैव भावः "पार्थिवाद्दारुणो धूमः" इति न्यायेन यथायथं प्राकट्यं येषु तेषां सर्वभूतस्यात्मनां तत्तत्कार्यप्रवर्त्तकानामित्याह। इममर्थं कालिदासोपि कुमारसंभवे प्राह–तथाहि "एकैव मूर्त्तिर्बिभिदे त्रिधासौ सामान्यमेषां प्रथमावरत्वम्। विष्णोर्हरस्तस्य हरिः कदाचिद्वेधास्तयोस्तावपि धातुराद्यौ" इति। सोऽभेददर्शी शांतिं मोक्षम् ॥ ५४-५५ ॥ ❀ ❀ "आग्नेयं पञ्चकपालमुदवसानीयं निर्वपेत्" इति श्रुत्युक्तेन पञ्चकपालपुरोडाशनिर्वपनलक्षणेनोदवसानकर्मणा सोमपानिति पाणिनेरपि सर्वज्ञेन व्यासेन प्रयुक्तत्वात्क्विप्प्रत्ययः प्रायिक इति ज्ञातव्यम्। अत्र च डप्रत्ययो बोध्यः। ततश्च उदवसानेष्ट्यनंतरमवभृथं यज्ञान्तस्नानं यथा स्यात्तथा ॥ ५६ ॥ ❀ ❀ तस्मै दक्षाय। स्वेनैवानुभावेन भगवन्महिम्नैव 'राध–संसिद्धौ' इतोऽसुः सिद्धिरत्र यागस्यान्या पुनर्जीवनादिरूपा वा ज्ञेया। ये यज्ञे आगतास्ते इत्यर्थः ॥ ५७ ॥ ❀ ❀ मेनायां मेनकायाम् ॥ ५८ ॥ ❀ ❀ ननु पतिव्रतायाः पत्या सहैव मुक्तिश्रवणाद्दक्षात्मजया सत्या पत्यौ जीवति निजदेहत्यागोऽनुचितः कृत इति चेन्न, सा मुक्तिमिता किन्तु तमेव देहांतरेणावापेत्याह–तमेवेति। सुप्ता उपरता शक्तिमायारूपा सृष्ट्यारंभे ईश्वरं यथा भजति तथेत्यर्थः ॥ ५९ ॥ ❀ ❀ दक्षस्याध्वरं यागं द्रोहितवान्नाशितवानिति दक्षाध्वरध्रुक् तस्य ॥ ६० ॥ ❀ ❀ यशसे हितं यशस्यमेवमायुष्यम्। अघानां पातकानामोघं प्रवाहं मृष्यति हिनस्तीति तथा मृषिरत्र हिंसायामनेकार्थत्वात् भक्तिभावेन प्रेम्णा तृतीयार्थे तसिल्। कौरवेति। कुरुवंशोद्भूतत्वेन तव भक्तिभावोस्त्येवेत्यभिप्रायः ॥ ६१ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तवैव ब्रह्मशिवत्वं कुतः सोऽहं कारणादिस्वरूपः सर्वशक्तिः सृष्ट्यादिसामर्थ्यं तथा याः सृष्ट्यादिक्रियास्तदुचिताम् ॥ ५१ ॥ ❀ ❀ अस्थानस्थचकारस्योचितस्थाने आकर्षणादित्यर्थोक्तिः, भेदेन दर्शने एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा-

१. प्रा० पा०—एवं भग०। २. प्रा० पा०—नित्यमाक०। ३. प्रा०पा०—यज्ञसमुद्भवः सप्त०।

विरोधादज्ञ एव भेदेन पश्यति ॥५२॥ ❀ ❀ अज्ञानां न शरीरेणाङ्गिना सजातीयविजातीयभेदौ, किन्तु स्वगतभेद एव, तथा माया-जीवयोस्तच्छक्तित्वेन तदभेदान्न सजातीयविजातीयभेदौ, किन्तु स्वगत एवेति सर्वत्र सिद्धान्तः ॥ ५३ ॥ ❀ ❀ तस्माद्विदुषो भेददर्शनाभावात् सर्वभूतात्मनां सर्वभूतमात्रस्य तत्तत्कार्येषु प्रवर्त्तकत्वेनात्मनां तथा च पार्थिवाद्दारुणो धूम इति न्यायेन तत्तत्ता-रतम्यन्त्ववर्जनीयमेवेति भेददर्शनञ्च तयोर्विष्णुतः स्वातन्त्र्याभावादेव । विष्णोस्तु परमस्वातंत्र्यमेव यथोक्तं श्रीब्रह्मणैव "सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः । विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक्" इति सर्वथा साम्यदर्शने तु दोषोऽपि श्रूयते यथा पाद्मे "यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः । समत्वेनैव वीक्षेत स पाषण्डी भवेद् ध्रुवम् ॥" इति ॥ ५४ ॥ ❀ ❀ अङ्गैः प्रयाजा-दिभिः प्रधानेन दर्शपौर्णमासादिना ॥ ५५ ॥ ❀ ❀ तेन कर्मणा समाप्तीष्टया अनुषङ्गः । अन्वितस्य क्रियापदस्य पुनस्सम्बन्धः ॥ ५६ ॥ ❀ ❀ ततश्च सर्वयजनानन्तरम् उदवस्येत्यर्द्धकम् ॥ ५७-५८ ॥ ❀ ❀ एकैव गतिर्गम्यः यथा प्रलये मायाशक्तिः पुरुष एव निलीय तिष्ठति सृष्टौ यथा तमेव भजते इति सत्या निजशक्तित्वं व्यञ्जितम् ॥ ५९ ॥ ❀ ❀ एतत्कर्म चरितम् ॥ ६० ॥ ❀ ❀ तथाऽऽकर्णनानुसारेण भक्तिभावितः श्रीवैष्णवगुरोः भक्त्या भावितः शोधितः सन् ॥ ६१ ॥

**इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीराधारमणदासगोस्वामिविरचितायां दीपिन्याख्यायां दीपिकाटिप्पण्यां सप्तमोऽध्यायः ॥ ७ ॥**

## श्रीमद्वीरराघवव्याख्या

सोऽहं सूक्ष्मप्रकृतिपुरुषशरीरको निरस्तनिखिलहेयः समस्तकल्याणगुणात्मकोऽहं हे द्विज ! दक्ष गुणमयीं त्रिगुणात्मिकाम् आत्ममायां आत्मीयां प्रकृतिं समाविश्य जीवद्वारा संकल्परूपज्ञानेनानुप्रविश्य जगत् सृजन् ब्रह्मद्वारा सृजन् रक्षन् अद्वारा पालयन् हरन् रुद्ररूपेण संहरन् क्रियोचितां सद्वारकाद्वारकसर्गादिक्रियोचितां संज्ञां ब्रह्मविष्णुशिवात्मिकां संज्ञां दध्रे बिभर्मि । अतः कृत्स्न-चिदचिदात्मकप्रपञ्चरूपकार्यरूपेण सूक्ष्मावस्थप्रकृतिपुरुषशरीरकत्वेन कारणरूपेणावस्थितोऽहमेक एवेति न मद्व्यतिरिक्तं वस्त्व-स्तीति भावः । तथा च श्रूयते "नामरूपे व्याकरवाणि तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत्" नन्वनुप्रविश्य नाम-रूपे व्याकरवाणीत्यनुप्रवेशपूर्वकत्वं सृष्टेः प्रतीयते 'तत्सृष्ट्वा तदेवानु प्राविशदि'त्यनुप्रवेशस्य सृष्टिपूर्वकत्वं प्रतीयते, कथमेतद्विप्रति-षिद्धमुपपद्यते ? उच्यते, अत्र ह्यनुप्रवेशसृष्ट्योः समानकर्तृत्वमात्रमेव विवक्षितं न तु पौर्वापर्यमपीति ज्ञापनाय विप्रतिपिद्धनिर्देशः, अत एव हि 'तस्य त्वष्टा विदधद्रूपमेती'त्यनुप्रवेशसृष्ट्योर्यौगपद्यमन्यत्र स्फुटम् । तत्सृष्ट्वा तदेवानुप्राविशदिति स्थित्यर्थोनुप्रवेशो वा वेदितव्यः ॥ ५१ ॥ ❀ ❀ एवं हि सर्वस्य भेदात्मकत्वान्मद्व्यतिरिक्तस्वतन्त्रवस्त्वभावादमदात्मकस्वतन्त्रवस्तुदृष्टिर्देहात्म-भ्रान्तिमूलेत्याह तस्मिन्निति । तस्मिन् कार्यावस्थकारणावस्थप्रकृतिपुरुषेश्वरे किं नियन्तृत्वं राजादिवन्नेत्याह परमात्मनि प्रकृतिपुरुष-योरन्तः प्रविश्य तद्गतैर्दोषैरस्पृष्टे प्रशासनेन भर्त्तरि, एवमेव हि परमात्मशब्दार्थो गीताचार्येणोक्तः "उत्तमः पुरुषस्त्वन्यः परमात्मे-त्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः" इति अत्र लोकत्रयमित्यनेन प्रकृतिपुरुषावुक्तौ तदात्मकत्वाल्लोकत्रयस्य । आविश्येत्यत्र 'अन्तः प्रविष्टः शास्ते'ति श्रुत्यनुरोधादन्तः प्रविश्येत्यर्थः । अव्यय इत्यनेनाविकारित्वादिना प्रकृतिपुरुषगतदोषास्पर्शित्व-मुक्तम्, ईश्वर इत्यनेन नियन्तृत्वमभिहितं बिभर्तीत्यनेन धारकत्वं फलितं, किमेवंभूतस्त्वदन्यः कश्चिदस्ति नेत्याह । अद्वितीये स्वसमानद्वितीयवस्त्वन्तररहित इत्यर्थः "यथा चोलनृपः सम्राडद्वितीयोऽस्ति भूतले" इतिवत् केवले स्वाधिकवस्त्वन्तररहिते तथा च श्रूयते "न तत्समश्चाभ्यधिकश्च दृश्यते" स्मर्यते च "नत्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य" इति । यदि ब्रूयादद्वितीय इति स्वसमानवस्तु-निषेधादेव तदधिकवस्तुनिषेधः कैमुत्यन्यायसिद्ध इति तर्हि केवले निरस्तनिखिलहेये ब्रह्मणि स्वरूपेण गुणैश्च निरतिशयबृहति अनन्तकल्याणगुणात्मकस्वरूप इत्यर्थः । एवंभूते मयि भूतानि मदन्तरात्मकतया मदायत्तसत्तास्थितीनि मच्छरीरतया मदपृथक्-सिद्धत्वेन स्थितानि ब्रह्मरुद्रादिभूतानि भेदेन पृथक्सिद्ध्यर्हत्वेन स्वतन्त्राणि अज्ञो ब्रह्मात्मकत्वज्ञानरहितः देहात्मबुद्धिश्च विपश्यति । अनेन देहात्मभ्रान्तिः स्वतन्त्रात्मभ्रान्तिश्च भेददर्शनमूलमित्युक्तम् ॥ ५२ ॥ ❀ ❀ सर्वस्य मदात्मकत्वज्ञानिनस्तु न भूतानि भेदेन पश्यन्तीति सदृष्टान्तमाह यथेति । पुमान् देहात्मभ्रान्तिमानपि पुरुषः स्वाङ्गेषु स्वपृथक्स्थित्यनर्हेषु शिरःपाण्याद्यवयवेषु मध्ये कचित्कस्मिंश्चिदप्यवयवे पारक्यबुद्धिं परस्येदं परकं तस्य भावः पारक्यं तेन पृथक्सिद्ध्यनर्हत्वं लक्ष्यते, परकीयं ह्यङ्गं स्वस्मात् पृथक्स्थित्यर्हं तद्बुद्धिं न कुरुते, एवं मत्परः मदासक्तचित्तः सर्वस्य ब्रह्मात्मकत्वज्ञानसम्पन्न इत्यर्थः । भूतेषु मत्पृथक्स्थित्यर्हत्वबुद्धिं कुरुत इत्यर्थः ॥ ५३ ॥ ❀ ❀ एवं कृत्स्नस्य जगतः स्वात्मकत्वेन स्वपृथक्स्थित्यनर्हविशेषणस्वप्रकारतामुपपाद्य पृथगीश्वरत्वेन शङ्कितयोर्ब्रह्मरुद्रयोरपि मदायत्तसत्तादिमत्त्वेन मत्प्रकारत्वज्ञानं मनःप्रशान्तिद्वारा मुक्तिसाधनमित्याह त्रयाणामिति । हे ब्रह्मन् दक्ष, एकभावानां एको भावः सत्ता येषां तेषां भाव इति स्थित्यादीनामप्युपलक्षणम्, एकविधसत्तादिमतां मदायत्तसत्तादिमतामित्यर्थः । एकस्मिन् भावो येषामिति व्यधिकरणबहुव्रीहिर्वा, त्रयाणां ब्रह्मविष्णुरुद्राणां, तत्र ब्रह्मरुद्रयोः परमात्मायत्तसत्तादि-मत्त्वकथनेन तयोः परमात्मानं प्रति अपृथक्सिद्धप्रकारतोक्ता । विष्णोस्तु विष्ण्वायत्तसत्तादिमत्त्वकथनेनानन्याधीन-सत्तादिमत्त्वं फलितम् । तथा च श्रूयते "स्वे महिम्नि प्रतिष्ठितः पतिं विश्वस्यात्मेश्वरम्" इति । एकशब्देन मूर्तित्रयातिरिक्तं

परं वस्तूपलक्ष्य त्रयाणां तदायत्तभावादिमत्त्वकथनं त्वसङ्गतं, परत्वस्य जगत्कारणनिष्ठत्वात्कारणत्वस्यात्मेश्वर उपद्रष्टेत्यादिना विष्णोरेव प्रतिपादितत्वात्तदतिरिक्तोत्कृष्टवस्त्वन्तराभावात्तस्मिन् ब्रह्मण्यद्वितीये केवले परमात्मनीति विष्णोः परत्वस्यैवोक्तत्वाच्च एकभावानां एकस्वरूपाणामिति त्रयाणां तादात्म्यवर्णनन्त्वयुक्तम्। ब्रह्मरुद्रयोः कर्मवश्यत्वसृज्यत्वपाल्यत्वनियाम्यत्वादेः "अनपहतपाप्मा वा अहमस्मि नारायणाद्रुद्रो जायते" इत्यादिषु श्रुतत्वाज्जीवत्वनिश्चयात् यद्यपि "ब्रह्मा नारायणः शिवश्च नारायणः। ब्रह्मा नारायणाख्योऽसौ कल्पादौ भगवान् यथा। प्रजाः ससर्ज भगवान् ब्रह्मा नारायणात्मकः॥ ततः स भगवान् विष्णुः रुद्ररूपधरोऽव्ययः। ततः कालाग्निरुद्रोऽसौ भूत्वा सर्वंहरो हरिः। सर्गस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम्॥ ससंज्ञां याति भगवानेक एव जनार्दनः" इत्यादिप्रमाणात् त्रिमूर्त्यैक्यमङ्गीकार्यं, तथापि "नारायणाद्रुद्रो जायते नारायणात् द्वादशादित्या रुद्रा वसवः सर्वाणि छन्दांसि नारायणादेव समुत्पद्यन्ते एको ह वै नारायण आसीन्न ब्रह्मा नेशान एको ह वै नारायण आसीन्न ब्रह्मा न च शङ्करः स मुनिर्भूत्वा समचिन्तयत् तत एते व्यजायन्त विश्वे हिरण्यगर्भोऽग्निर्यमवरुणरुद्रेन्द्राः यन्नाभिपद्मादभवत् स महात्मा प्रजापतिः तत्र ब्रह्मा चतुर्मुखोऽजायत सोऽग्रे भूतानां मृत्युमत्यसृजत् त्र्यक्षं त्रिशिरस्कं त्रिपादं खण्डपरशुं ब्रह्मणः पुत्राय ज्येष्ठाय, ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः। विभूतयो हरेरेता जगतः सृष्टिहेतवः॥ रुद्रः कालान्तकाद्याश्च समस्ताश्चैव जन्तवः" इत्यादिषु भगवतस्तयोश्च परस्परभेदावगमात् सामानाधिकरण्यस्य "सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते! हरो हरति तद्वश" इत्याद्यानुगुण्येनान्तर्यामित्वेनाप्युपपत्तेः, भेदनिर्देशस्य स्वाभाविकभेदाभ्युपगमेन विनानुपपत्तेश्च न त्रिमूर्त्यैक्यमुपपन्नम्। तस्माद्यथोक्त एवार्थः सर्वभूतात्मनां तत्र विष्णोः सर्वभूतात्मत्वम् "एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा ममान्तरात्मा तव च ये चान्ये देहिसंज्ञिताः" इत्यादिश्रुतिस्मृत्युक्तसर्वभूतान्तरात्मस्वरूपमितरयोस्त्वणोश्चेतनस्य चेतनान्तरव्याप्यत्वासम्भवेन सर्वभूतानां ब्रह्मरुद्राख्यजीवव्याप्यत्वासम्भवात् नान्तरात्मत्वरूपं सर्वभूतात्मत्वम्, अपि तु "तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च कक्षीवानृषिर्विप्रः त्वं वाहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते तद्योऽहं योऽसौ सोऽहम् अहं हरिः सर्वमिदं जनार्दनः। आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इत्यादिश्रुतिस्मृतिसूत्रोक्तविधया सर्वभूतान्तरात्मत्वेन प्रत्यक्षितपरमात्मस्वरूपं कथमेकस्य सकृदुपात्तस्य सर्वभूतात्मशब्दस्यार्थद्वयपरत्वम्? उच्यते, एकस्यापि सर्वभूतात्मशब्दस्य कृतैकशेषस्य बहुवचनान्तस्य निर्देशात् भिन्नार्थकानामपि शब्दानां स्वरूपाणामेकशेषविधानात् यथोक्तार्थपरत्वोपपत्तिः। अनेन ब्रह्मरुद्रयोः सर्वभूतान्तरात्मत्वेन प्रत्यक्षितमत्स्वरूपत्वेन 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः। ज्ञानी त्वात्मैव मे मतमि'ति मदुक्तरीत्या निरतिशयमत्प्रीतिविषयत्वाद् मच्छरीरत्वाच्च तद्विषये कृतोऽपराधो मय्येव पर्यवस्यतीत्यभिप्रेतम्। एवं च ब्रह्मरुद्रपरौ सर्वभूतात्मशब्दौ सर्वभूतेष्वात्मा परमात्मा ययोस्ताविति व्यधिकरणबहुव्रीही वेदितव्यौ। एवंभूतानां त्रयाणां यः पुमान् भिदां न पश्यति ईश्वरात्मत्य इति न पश्यति अपि त्वेक एव ब्रह्मरुद्ररूपेण स्वावताररूपेण च स्थित इति पश्यतीत्यर्थः। पूर्वापरानुगुण्यात्प्रमाणान्तरानुरोधाच्च हे ब्रह्मन्! स सर्वात्मब्रह्मदर्शनशान्तिं मनःप्रशान्तिम् अधिगच्छति शान्त्यधिगमद्वारा मुक्तो भवेदित्यर्थः॥ ५४॥ ❀ ❀ दक्षाध्वरप्रसंगमुपसंहरति मैत्रेय एवमिति। भगवतैवमादिष्टः प्रजापतीनां पतिः प्रजापतिः ब्रह्मा पतिर्यस्य इति वा दक्षः स्वेन स्वकर्तृकेन क्रतुना हरिमर्चित्वा स्वेन त्रिकपालवैष्णवयागेन हरिमर्चित्वेति वा उभयतो देवान् दिविष्ठान् भूमिष्ठांश्च अयजत्। स्वस्वभागादिभिर्यथायोग्यमाराधितवानित्यर्थः॥ ५५॥ ❀ ❀ तथा समाहितचित्तः रुद्रं च स्वेन भागेन उच्छेषणरूपेण भागेन उपाधावत् अन्ववर्तत अयजदित्यर्थः। उदवस्यते समाप्यतेऽनेनेत्युदवसानं तेन कर्मणा सोमपानितरानसोमपांश्च देवान् उपाधावदित्यनुषङ्गः॥ ५६॥ ❀ ❀ ऋत्विग्भिः सहोदवस्यं कर्म समाप्य अवभृथरूपं यथा भवति तथा सस्नौ स्नातवान् स्वेनैवानुभावेनावाप्तराधसे प्राप्तसिद्धये तस्मै दक्षायापि धर्मविषये एव बुद्धिं दत्वा अस्य मतिर्धर्मासक्ता स्यादित्यनुगृह्येत्यर्थः। ते त्रिदशा देवा दिवं ययुः॥ ५७॥ ❀ ❀ प्रकृतं परमप्रकृतेन संगमयति एवमिति। एवमुक्तरीत्या दाक्षायणी सती पूर्वशरीरं हित्वा हिमवतः क्षेत्रभूतायां मेनायां जज्ञे उद्बभूवेति शुश्रुम पराशरादिभ्य इति शेषः। अनेन स्वोक्तेः प्रामाण्यं सूचितम्॥ ५८॥ ❀ ❀ भूयो द्वितीये जन्मनि अम्बिका पार्वती अनन्यभावा पतिपारार्थ्यज्ञानवती एकगतिम् एका अम्बिकैव गतिः प्रवृत्त्युपायो यस्य तं तामेव चिन्तयन्तमत एव दयितं प्रीतिविषयं तमेव पतिमावृङ्क्ते भजति स्म यथा प्रलयकाले पुरुषं सुप्ता लीना शक्तिः। यथा चिच्छक्तिः प्रलये लीने पुनः सृष्टिदशायां तत्प्रकारैकस्वभावे तदधीने तथा आवृङ्क्ते स्मेति भावः॥५९॥ ❀ ❀ उक्तायाः कथायाः साम्प्रदायिकतामाह एतदिति। दक्षाध्वरद्रुहः दक्षाध्वरविनाशिनः भगवतः शंभोरेतच्चरितं बृहस्पतेः शिष्याद्भागवतादुद्धवान्मे मया श्रुतम्॥ ६०॥ ❀ ❀ उक्तायाः कथायाः श्रवणादिफलमाह इदमिति। परमेशचेष्टितं परो मा न यस्मात्स परमो भगवान् स एवेशो यस्य तस्य रुद्रस्य चेष्टितं परमेशयोश्चेष्टितमिति वा यशस्यं यशस्करमायुष्यं पवित्रमत एव अघौघमर्षणं पापनिचयनिवर्त्तकं यः पुमानाकर्ण्य तथा यथाश्रुतमनुकीर्तयेत् श्रावयेत् सर्वदा भक्तिभावनः भक्तिं भावयतीति भक्तिभावनः भगवद्भक्तिनिष्ठः द्वितीयान्तपाठे चेष्टितविशेषणं, हे कौरव! अघं धुनोति क्षिपति नाशयतीत्यर्थः॥ ६१॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचंद्रचंद्रिकाख्यायां टीकायां सप्तमोऽध्यायः॥ ७॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एतदेव स्पष्टयति स इति। हे द्विज दक्ष! योऽहमेवं त्रिरूपः स एवाहं सत्त्वादिगुणमयीमात्ममायां मदधीनजडप्रकृतिमाविश्य रजोगुणोपादानत्वेन ब्रह्माणं सृष्ट्वा ब्रह्माख्यमद्रूपेण तं प्रविश्य जगत्सृजन्, सत्त्वगुणप्रवर्तकत्वेन विष्णुरूपेण विश्वं रक्षन्, तमोगुणोपादानत्वेन शिवं सृष्ट्वा शिवाख्यमद्रूपेण तं प्रविश्य विश्वं हरन् संहरन् तत्तत्क्रियोचिताः संज्ञा अभिवृद्धिहेतुत्वाद् ब्रह्मनाम। सविलासव्याप्तिहेतुत्वाद्विष्णुनाम। संहारहेतुत्वाद्धरनामेति दध्र इत्यन्वयः। अनेन ब्रह्मरुद्रस्थमद्रूपाभ्यां विष्णुरूपेण चाहमेव जगत्सृष्ट्यादित्रयकृदित्यतो ब्रह्मशिवयोः प्रसिद्धयोः सृष्टिसंहारकर्तृत्ववचनं भ्रान्तिमूलमित्युक्तं भवति ॥ ५१ ॥ ❀ ❀ एतदेव स्पष्टयति तस्मिन्निति। योऽहं विश्वस्य मुख्यकारणं तस्मिन्मयि केवले प्रकृतिसम्बन्धरहिते। ब्रह्मणि गुणपूर्णेऽद्वितीये समाधिकरहिते परमात्मनि स्थिते सति देहात्मबुद्धिर्देहोऽहमिति बुद्धिर्यस्य स तथा जीवो भूतानि ब्रह्मादीनि। भेदेन स्वातन्त्र्येण। स्वत एव सृष्ट्यादिप्रवृत्तिमन्ति न केनचिन्नियतानीत्यनुपश्यतीत्यन्वयः। अज्ञ इति हेतुगर्भविशेषणम्। यद्वा भेदेन स्थितानि ब्रह्मादिभूतानि परमात्मन्यनुपश्यतीत्यभेदेनेति शेषः ॥ ५२ ॥ ❀ ❀ अज्ञानिदर्शनमुक्त्वा ज्ञानिदर्शनप्रकारमाह यथेति। पुमान् जीवः शिरःपाण्यादिषु स्वाङ्गेषु क्वचिदपि पारक्यबुद्धिं यथा न कुरुते किन्तु स्वकीयबुद्धिमेव करोति एवं मत्परो ब्रह्मादिभूतेषु मामकत्वबुद्धिं करोति न स्वातन्त्र्यबुद्धिम् ॥ ५३ ॥ ❀ ❀ अतः फलितमाह त्रयाणामिति। हे ब्रह्मन्! एवमुक्तप्रकारेण ममैव स्वातन्त्र्यादन्येषामस्वातन्त्र्यात् ब्रह्मशिवस्थत्वेन ब्रह्मशिवाख्ययोर्मद्रूपयोः पृथक्स्थितस्य विष्ण्वाख्यस्य मद्रूपस्य चेति त्रयाणां त्रित्वसंख्योपेतानामेकभावानामेकरूपाणामेकैश्वर्याणां सर्वभूतात्मनां सर्वभूतान्तर्यामित्वेन यो जीवो भिदां न पश्यति स शान्तिं मोक्षं गच्छतीत्यन्वयः। यद्वा त्रयाणां ब्रह्मविष्णुशिवाख्यानां सर्वभूतस्वामिनामेकचित्तानां भिदां मिथो विरोधबुद्धिविषयत्वं न पश्यति स शान्तिं स्वस्थबुद्धितया भगवन्निष्ठामाप्नोति। ब्रह्मादिजीवानां हरिणाऽभेद वचनस्य का गतिरिति चेन्न, तद्वशत्वतत्प्रियत्वदृष्टिस्तुतिविषयत्वात् तदुक्तम् "हरेर्वशत्वदृष्टिभूतानामपृथग्दृशिः। प्रियत्वदृष्टिरथवा ब्रह्मादीनां विशेषतः" इति ॥ ५४ ॥ ❀ ❀ शान्तिमधिगच्छतीत्यनेन हरेः स्वात्मोपदेशश्चेत्समाप्तः, परं दक्षेण किमकारीति तत्राह एवमिति। आदिष्ट उपदिष्टः प्रजापतिः दक्षः स्वेन क्रतुना स्वयज्ञेन स्वेच्छया वा भागवतः भगवद्भक्तः स्वांशवतो वा देवानयजत् पूजयामास। उभयत इति पाठे कथमुभयतः सोमतो विष्टरादिभिश्च 'कथमुभयतः सोमतो हविषश्चेति वा ॥ ५५ ॥ ❀ ❀ उपाधावदुपास्त ततो निरपराधत्वेन शुद्धश्चाभूत्, धावु-गतिशुद्ध्योरिति धातुः। उदवसानेन समाप्तीष्टिलक्षणेन कर्मणा 'आग्नेयं पञ्चकपालमुदवसानीयं निर्वपेदि'ति श्रुतेः। सोमपानिति पाणिनेरपि सर्वज्ञेन व्यासेन प्रयुक्तत्वाद्विच्प्रत्ययः प्रायिक इति ज्ञातव्यम्। इतरानसोमपानित्यर्थः। उदवस्य समाप्तीष्टिं कृत्वा स्वेनानुभावेन भगवन्महिम्नैवावाप्तराधसे प्राप्तयज्ञसिद्धये ॥ ५६–५७ ॥ ❀ ❀ ननु दक्षकोपेन योगमुक्तदेहया दक्षपुत्र्या सत्या देव्या निवृत्तिलक्षणा मुक्तिरवापीति न युज्यते, भर्तुः शिवस्यामुक्तदेहत्वात्सतीनामङ्गनानां भर्तृभिः सह मुक्तिश्रवणात्, अतोऽनया किमकारीत्याशङ्कां हृद्गतां परिहरति एवमिति। क्षेत्रे भार्यायाम् ॥ ५८ ॥ ❀ ❀ अत्र निमित्तमाह अनन्यभावेति। एकः शंकरो गतिर्यस्याः सा तथा अनन्यभावत्वात् अन्यभक्तिरहितत्वात् अस्मिन्नर्थे दृष्टान्तमाह शक्तिरिति। प्रलये सुप्ता हरावेव रता। सृष्टिव्यापारं विना स्थिता। शक्तिर्भार्या लक्ष्मीः पुरुषमिव यथा भजति तथेत्यर्थः। तदुक्तम् "शक्तित्वाद्विष्णुशक्तिस्तु शक्तिशब्देन चोच्यते। शक्यत्वात्प्रकृतिश्चापि स्वापः सृष्टिं विना हरौ। रतिस्तस्यास्तु कथितो न ह्यन्यः स्वाप इष्यते॥" इति ॥ ५९ ॥ ❀ ❀ भवतेदं कस्मात् श्रुतमिति तत्राह एतदिति। बृहस्पतेः शिष्यादवताराच्च दक्षस्याध्वरं यज्ञं द्रोहितवान् हिंसितवान्नाशितवानिति दक्षाध्वरध्रुक् तस्य ॥ ६० ॥ ❀ ❀ संप्रदायवचनमुक्त्वा तच्छ्रवणादिफलमाह इदमिति ॥ ६१ ॥ ❀ ❀ 'शंकरः स्वां सतीमवाप्य किमकार्षीदिति तत्राह सतीमिति। शतमित्युपलक्षणं बह्वीः समा इत्यर्थः ॥ ६२ ॥ ❀ ❀ अनेन रेतउत्सर्जनावधिः सूचितः। तत्र कुत्रेदमुत्ससर्ज! तस्यां देव्यामुतान्यत्र। न प्रथमः, प्राप्तपरित्यागे कारणाभावात्, न द्वितीयः अनुपपत्तेरिति तत्राह स्ववीर्येति। अकल्पामसमर्थाम् अनेनासामर्थ्यकारणमुक्तं भवति इयमेवोपपत्तिः—आकाशस्य नीरूपत्वेन तद्धारणायोगात् अधः पतत्तद्रेत आकाशनदी गङ्गा जग्राहेत्याह गङ्गेति ॥ ६३ ॥ ❀ ❀ गङ्गाया अप्यशक्तिं निरीक्ष्य वह्निस्तत्पीत्वा स्वान्तरजीर्णं स्वाहाद्वारेण नदीतीरे शरकानने चच्छर्देत्याह पीत्वेति।

---

१. सतीं मेनात्मजान्तात! प्राप्य जायाम्भवः पुनः। तया मैथुनमारभ्य रेमे देवः समाः शतम् ॥ ६२ ॥
स्ववीर्यधारणेऽकल्पां ज्ञात्वा जायां स धूर्जटिः। उत्ससर्जाम्बरे रेतो गङ्गा जग्राह तन्नदी ॥ ६३ ॥
पीत्वान्तरजरं वह्निश्चच्छर्द शरकानने। कुमारोऽभूत्ततस्तस्मै स्तनं षट्कृत्तिका ददुः ॥ ६४ ॥
षड्भिर्मुखैस्तनं पीत्वा स बालः षण्मुखोऽभवत्। ततश्चक्रुः सैन्यपालं सर्वासुरभयङ्करम् ॥ ६५ ॥

इति विजयध्वजसम्मतोऽधिकः पाठः।

स्वाहाद्वारेणेति कस्मात् कल्प्यत इत्यत आचार्यैर्भारतोक्तेरित्युक्तेः भारतस्य निर्णायकग्रन्थत्वात्। अमोघरेतसो हरस्य वीर्यं निष्फलं भवितुं नार्हति। अत्र तूपगमादि निष्फलमिव प्रतीयते इति तत्राह कुमार इति। ततो रेतसः मातृरहितस्य कुमारस्य स्तनपानं कथमत्राह तस्मादिति ॥ ६४ ॥ ❋ ❋ एकेन मुखेन षट्कृत्तिकास्तनपानं कथं घटत इति तत्राह षड्भिरिति। किमधिकारः कुमार इति तत्राह तत इति। सुरा इति शेषः, सर्वासुराणां भयं भीतिं स्वस्थानच्युतिं च करोतीति ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां सप्तमोऽध्यायः ॥ ७ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

स्वस्य तदुभयेश्वरत्वेऽपि तदादरार्थं तदनन्यत्वन्यायेनाभेदमुपपादयति भूतानीति। कैमुत्येन दृष्टान्तः ॥ ५२ ॥ ❋ ❋ प्रकाशश्च निरुपाधिश्च स एव ब्रह्मा च शर्वश्चेत्यन्वयः। शर्वस्य मदात्मकत्वान्मत्परस्तु भूतेष्वपि स्वाङ्गेष्विव ममतामेव करोतीत्याह यथेति ॥ ५३ ॥ ❋ ❋ त्रिदेव्यां पृथगीश्वरत्वमपश्यन्नेव कृतार्थो भवतीत्याह। त्रयाणामेकः पुरुषस्यैव भावः "पार्थिवाद्दारुणो धूमः" इति न्यायेन यथायथं प्राकट्यं येषु तेषां सर्वभूतस्य आत्मनां तत्तत्कार्ये प्रवर्त्तकानाम् ॥ ५४-५६ ॥ ❋ ❋ उदवस्येत्यर्द्धकम् ॥ ५७-६० ॥ ❋ ❋ भावेन इति चित्सुखपाठान्तरम् ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे सप्तमोऽध्यायः ॥ ७ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ननु परमेश्वरः खल्वेक एव। स च भवानेव शास्त्रेपूच्यत इति तत्राह आत्मेति। समाविश्याधिष्ठाय स प्रसिद्धो गुणातीत एक एवाहं क्रियाः सृष्टिस्थितिसंहृतयस्तासु समुचितां संज्ञां स्रष्टेति पालक इति संहर्त्तेत्याख्याम् ॥ ५१ ॥ ❋ ❋ ननु ब्रह्मणो हिरण्यगर्भत्वेन जीवत्वात् रुद्रस्येश्वरत्वेऽपि गुणस्पर्शात् कथं तयोस्त्वदभेदस्तत्र कैमुत्यन्यायेनाह ब्रह्मरुद्रौ चेति। भूतानि जीवानपि अज्ञ एव भेदेन पश्यति न तु विज्ञः, किमुत ब्रह्मरुद्रौ, भूतानां मदीयतटस्थशक्तित्वात् ब्रह्मरुद्रयोर्गुणावतारत्वान्मदभेद इत्यर्थः ॥ ५१ ॥ ❋ ❋ भूतानि तु मद्भक्तोऽपि स्वाभेदेन पश्येदित्याह स्वशिरःपाण्यादिषु सुखदुःखे यथा तथैव सर्वभूतेष्वपि सुखदुःखे पश्येदित्येव भक्तानामभेददर्शनमित्यर्थः ॥ ५३ ॥ ❋ ❋ अभेददर्शनस्य फलमाह त्रयाणामिति ॥ ५४ ॥ ❋ ❋ प्रजापतिपतिर्दक्षः उभयतः अङ्गैः प्रधानेन च ॥ ५५ ॥ ❋ ❋ उदवस्यते समाप्यतेऽनेनेत्युदवसानं तेन। उदवस्य समाप्य अवभृथस्नानं चकारेत्यर्थः ॥ ५६ ॥ ❋ ❋ तस्मै दक्षाय अवाप्तराधसे प्राप्तसिद्धये ॥ ५७ ॥ ❋ ❋ मेनायां मेनकायाम् ॥ ५८ ॥ ❋ ❋ आवृङ्क्ते भजते स्म, न विद्यतेऽन्यस्मिन् भावो यस्याः सा। एकं गतिरूपं प्रलयकाले सुप्ता शक्तिः पूरुषमीश्वरमसुप्तमिव ॥ ५९ ॥ ❋ ❋ बृहस्पतेः शिष्यादुद्धवात् सकाशात् ॥ ६०-६१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। चतुर्थे सप्तमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ७ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

स्वस्य स्वरूपतो निर्विकारत्वं शक्तितो विकारित्वं च दर्शयन् सर्वकारणत्वमाह आत्ममायामिति। समाविश्य अधिष्ठाय सृजन् ब्रह्मेति स्वांशविशेषद्वारा हरन् हर इति स्वांशविशेषद्वारा रक्षन् विष्णुरिति स्वावतारद्वारा च क्रियोचितां संज्ञाम् अहमेव दध्रे धारयामि ॥ ५१ ॥ ❋ ❋ तस्मिन् सर्वकारणे परमात्मनि सर्वेषामात्मनामात्मनि ब्रह्मणि बृहत्वरूपगुणशक्तिमति केवले अन्यनिरपेक्षस्थितिप्रवृत्यादिके अत एवाद्वितीये समानाधिकशून्ये मयि भेदेन स्वतन्त्रसत्तया ब्रह्मरुद्रौ भूतानि चराचराणि सर्वाणि वस्तूनि च अज्ञः पश्यति ॥ ५२ ॥ ❋ ❋ एतदेव दृष्टान्तेन स्पष्टयति यथेति। एवं मत्परो मदुपासकः भूतेषु चेतनाचेतनमच्छक्तिमयेषु ब्रह्मादिस्तम्बपर्यन्तेषु पारक्यबुद्धिं न कुर्यात् ॥ ५३ ॥ ❋ ❋ एकः स्थितिप्रवृत्तिमूलभूतो भावः आश्रयः परः वासुदेवाख्यो येषां तेषां त्रयाणां ब्रह्मविष्णुशिवानाम् उपलक्षणमेतत्सर्ववस्तूनाम् "सर्वेषामपि वस्तूनां भावार्थो भवति स्थितः। तस्यापि भगवान्कृष्णः किमतद्वस्तु रूप्यताम्" इति वक्ष्यमाणात् ॥ ५४ ॥ ❋ ❋ प्रजानां जगतां पतिर्भगवान् पतिर्यस्य सः दक्षः भगवता आदिष्टः मत्परः सर्वं ब्रह्मशिवादिकं मदभिन्नं पश्येदित्युपदिष्टः स्वेन क्रतुना हरिम् उभयतो भगवदङ्गभूतदेवादिद्वारा साक्षाच्च त्रिकपालपुरोडाशादिना अर्चयित्वा देवान् तदङ्गतया अयजत् ॥ ५५ ॥ ❋ ❋ रुद्रं च स्वेन भागेन यज्ञावशेषेण उपाधावत्समाराधयत्। उदवस्यते समाप्यते अनेनेत्युदवसानं कर्म तेन समाप्त्येष्ट्वा इतरान् सोमपानुपाधावत्। उदवस्य यज्ञं समाप्य ततः ऋत्विग्भिः अवभृथरूपं यथा भवति तथा सस्नौ स्नातवान् ॥ ५६ ॥ ❋ ❋ स्वेनैव भगवदुपदेशलब्धेन अनुभावेन अवाप्तराधसे लब्धबोधायापि

तस्मै दक्षाय धर्मे मतिं दत्वा दिवं ययुः ॥ ५७ ॥ ❀ ❀ हिमवतः हिमाचलस्य क्षेत्रे भार्य्यायाम् ॥ ५८ ॥ ❀ ❀ अनन्यभावानामनन्यभक्तानामेको गतिर्यस्तं प्रियं भवं भूयः पतिम् आवृङ्क्ते स वृतवतीत्यर्थः। यथा प्रलयवेलायां सुप्ता शक्तिः पूरुषं सृष्ट्यर्थमुत्थितं परमेश्वरम् ॥ ५९ ॥ ❀ ❀ बृहस्पतेः शिष्यात् उद्धवात् मे मया श्रुतम् ॥ ६० ॥ ❀ ❀ हे कौरव ! विदुर ! इदमीशस्य चेष्टितं परं पवित्रम् अघौघानां मर्षणं मार्जनं यो भक्तिभावितः आकर्ण्य गुरुमुखात् श्रुत्वा नित्यदा कीर्तयेत्स अघं धुनोति, आत्मनः श्रोतॄणां चेति शेषः ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे सप्तमाध्यायार्थप्रकाशः ॥ ७ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

ननु कथं तर्हि भेदप्रतीतिरित्याशङ्क्योपाधिभेदान्नाममात्रेण भेदो न वस्तुत इत्यभिप्रायेणाह–आत्ममायामिति। स परमकारणभूतोहमेवात्ममायां स्वाधीनां प्रकृतिं रजआदिगुणमयीं विभक्तगुणां समाविश्याधिष्ठायाङ्गीकृत्य विश्वसृष्ट्यादि कुर्वन् क्रियोचितां संज्ञां दध्रे धारयामि। तत्र रजोगुणमधिष्ठाय विश्वं सृजन् तद्वृद्धिहेतुत्वाद्ब्रह्मेति संज्ञा। तथा सत्त्वगुणमधिष्ठाय विश्वं रक्षन् सर्वरक्षाया व्यापकाधीनत्वात् व्यापकत्वाद्विष्णुरिति संज्ञा। तथा तमोगुणमधिष्ठाय विश्वं हरन् हरणाद्धर इति संज्ञा। एवं क्रियोचितां संज्ञां धारयामि ॥ ५१ ॥ ❀ ❀ ननु कथं तर्हि लोके भेददर्शनमित्याशङ्क्य तस्याज्ञानप्रयुक्तत्वादित्याह–तस्मिन्निति। तस्मिन् सर्वकारणकारणे ब्रह्मणि व्यापके अद्वितीये सजातीयविजातीयस्वगतभेदरहिते केवले सर्वसङ्गविनिर्मुक्ते परमात्मनि सर्वान्तर्यामिणि सर्वसाक्षिणि मय्येव ब्रह्मा भिन्नः रुद्रो भिन्नः भूतानि भिन्नानीति भेदेनाज्ञोनु सर्वत्र सर्वदा पश्यति ॥ ५२ ॥ ❀ ❀ मद्भक्तो विद्वांस्तु न भेदबुद्धिं कुरुते इति सदृष्टान्तमाह–यथेति। पुमान् सर्वोऽपि प्राणिवर्गो यथा शिरःपाण्यादिषु स्वाङ्गेषु क्वचित् कस्मिन्नपि देशे कस्मिन्नपि काले कस्यामप्यवस्थायां पारक्यबुद्धिं स्वभेदबुद्धिं न कुरुते एवं मत्परः अहमेव पर उत्कृष्टः पूज्यो यस्य स ममानन्यभक्तो विद्वान् विनिर्मुक्तमायाबन्धनः सर्वेषु भूतेषु चराचरात्मकेषु भेदबुद्धिं कस्मिन्नपि देशे कस्मिन्नपि काले न कुरुत इत्यर्थः ॥ ५३ ॥ ❀ ❀ एवं भेदाभेददर्शनव्यवस्थां निरूप्य तत्र केन निःश्रेयससमधिगमस्तन्मयानुष्ठेयमित्याकाङ्क्षायामाह–त्रयाणामिति। वस्तुत एक एव भावः स्वरूपं येषां तेषामेकभावानां त्रयाणां ब्रह्मविष्णुरुद्राणां सर्वाणि भूतानि स्थावरजङ्गमात्मकानि आत्मानः स्वरूपाण्येव येषां ते सर्वभूतात्मानस्तेषां यो भिदां भेदं न पश्यति स वै स एव शान्तिं सर्वोपद्रवनिवृत्तिपूर्वकपरमानन्दस्वरूपं मामधिगच्छति प्राप्नोति, नान्यः। हे ब्रह्मन्निति संबोधनेन ब्राह्मणत्वेनाधिकारित्वादभेददर्शनस्य वेदसिद्धत्वात्त्वयाऽभेददर्शनमेव कर्त्तव्यमिति सूचयति ॥ ५४ ॥ ❀ ❀ ततश्च भगवदुपदेशात्प्राप्तैक्यदर्शनो दक्षः कर्मसमाप्तिं कृतवानित्याह–एवमिति सार्द्धाभ्याम्। एवमुक्तप्रकारेण भगवता आदिष्टः उपदिष्टः प्रजापतीनां पतिर्दक्षस्त्रिकपालेष्ट्या हरिमर्चित्वा तेन संशुद्धेन स्वेन पूर्वप्रवर्त्तितेन क्रतुना उभयतः अङ्गैः प्रधानेन च देवान् अयजत् अपूजयत्। तथा समाहितः भगवतः सकाशाच्छिवे भेदबुद्धिरहितां स्वेन यज्ञावशिष्टेन भागेन रुद्रं च हि निश्चयेन उपाधावत् अपूजयदित्यर्थः ॥ ५५ ॥ ❀ ❀ उदवस्यते समाप्यतेनेनेत्युदवसानं तेन कर्मणा समाप्तीष्ट्या इतरान् पूर्वोक्तदेवव्यतिरिक्तान् सोमपान् सोमभोगिनोपि उपाधावदित्यनुषङ्गः। ततश्च उदवस्य कर्म समाप्य अवभृथं यथा भवति तथा ऋत्विग्भिः सह सस्नौ स्नातवान् अवभृथसंबन्धि स्नानं कृतवानित्यर्थः ॥ ५६ ॥ ❀ ❀ एवं भगवत्कृपया प्राप्तधर्मायापि देवास्तस्मै वरं दत्त्वा स्वलोकं ययुरित्याह–तस्मा इति। स्वेनैवानुभावेन भगवदाराधनप्रभावेणावाप्तराधसे प्राप्तधर्मसिद्धयेपि तस्मै दक्षाय ते यज्ञे संपूजिताः त्रिदशा देवा धर्मे एव मतिं दत्त्वा धर्मे एव तव मतिर्भवत्विति वरं दत्त्वा दिवं स्वर्गं ययुः ॥ ५७ ॥ ❀ ❀ एवं भगवत्प्रसादाद्दक्षस्य धर्मसिद्धिर्जातेति निरूप्येदानीं कथं पतिव्रतायाः सत्याः शिवेन वियोगो जात इत्याशंक्यान्ते शिवं चिन्तयन्ती शरीरं त्यक्तवत्यतः पुनरपि तमेव प्रापेत्याह–एवमिति द्वाभ्याम्। एवं पूर्वोक्तप्रकारेणानलधारणया दक्षयज्ञे दाक्षायणी दक्षकन्या सती पूर्वकलेवरं हित्वा त्यक्त्वा पुनर्हिमवतः पर्वताभिमानिदेवस्य क्षेत्रे भार्यायां मेनायां जज्ञे जातेति वयं शुश्रुम श्रुतवन्तः ॥ ५८ ॥ ❀ ❀ भूयः पुनश्च तं शिवमेव दयितं प्रियं पतिमम्बिका माता पार्वती आवृङ्क्ते भजते स्म। तत्प्राप्तौ हेतुं सूचयन्नाह–अन्येति। नास्त्यन्येषु देवतान्तरेषु विषयेषु च भाव आसक्तिर्येषां तेऽनन्यभावास्तेषां स्वैकनिष्ठानां गतिः प्राप्यो यस्तम्। अतः सत्यास्तदेकनिष्ठत्वात्सा तं प्राप्तवतीति भावः। तत्र दृष्टान्तमाह–शक्तिरिति। प्रलयकाले सुप्ता शक्तिः पुनः सृष्टिप्रारम्भकाले पुरुषमीश्वरं यथा भजते तथेत्यर्थः ॥ ५९ ॥ ❀ ❀ विदुरस्य विश्वासार्थं संप्रदायप्राप्तत्वं कथयति–एतदिति। दक्षाध्वरद्रुहः दक्षयज्ञनाशकस्य भगवतः ऐश्वर्यादिमतः शम्भोरेतत् पूर्ववर्णितकर्म चरितं मे मया उद्धवात् श्रुतम्। न चात्राऽविश्वासस्त्वया कार्यस्तस्याप्तत्वादिति सूचयन्नाह–भागवतात् भगवद्भक्तादिति, बृहस्पतेः शिष्यादिति च। न ह्येवंभूतोऽन्यथा वदतीति भावः ॥ ६० ॥ ❀ ❀ प्रकरणस्य समाप्तत्वादेतच्छ्रवणकीर्त्तनयोः फलमाह–इदमिति। इदमीशयोः शिवस्य विष्णोश्च चेष्टितं दक्षयज्ञनाशतत्पूर्तिलीलात्मकं शृण्वतः कीर्त्तयतश्च परं पवित्रमन्तःकरणशोधकं कुतो यतः अघौघमर्षणं पापसमूहनाशकं यशस्यं लोके यशःप्रदमायुष्यमायुषो वर्द्धनं यो नरो नित्यदा

आकर्ण्यानुकीर्त्तयेत् शृणोति कीर्त्तयति वा स भक्तिभावतः श्रवणात् कीर्त्तनाज्जातो यो भक्तिलक्षणो भावः निरुपाधिकप्रेमा तस्माद्धेतोरात्मनः अघं दुःखात्मकं संसारं धुनोति नाशयति । हे कौरव हे विदुर ॥ ६१ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे धर्मनिरूपणे ॥ विवृतः सप्तमोऽध्यायो धर्मसिद्धिनिरूपकः ॥ ३ ॥

### भाषानुवादः

विप्रवर ! अपनी त्रिगुणात्मिका मायाको स्वीकार करके मैं ही जगत्‌की रचना, पालन और संहार करता रहता हूँ और मैंने ही उन कर्मोंके अनुरूप ब्रह्मा, विष्णु और शङ्कर—ये नाम धारण किये हैं ॥ ५१ ॥ ❀ ❀ ऐसा जो भेदरहित विशुद्ध परब्रह्मस्वरूप मैं हूँ, उसीमें अज्ञानी पुरुष ब्रह्मा, रुद्र तथा अन्य समस्त जीवोंको विभिन्न रूपसे देखता है ॥ ५२ ॥ ❀ ❀ जिस प्रकार मनुष्य अपने सिर हाथ आदि अङ्गोंमें 'ये मुझसे भिन्न हैं' ऐसी बुद्धि कभी नहीं करता, उसी प्रकार मेरा भक्त प्राणिमात्रको मुझसे भिन्न नहीं देखता ॥ ५३ ॥ ❀ ❀ ब्रह्मन् ! हम—ब्रह्मा, विष्णु और महेश्वर—तीनों स्वरूपतः एक ही हैं और हम ही सम्पूर्ण जीवरूप हैं; अतः जो हममें कुछ भी भेद नहीं देखता, वही शान्ति प्राप्त करता है ॥ ५४ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—भगवान्‌के इस प्रकार आज्ञा देनेपर प्रजापतियोंके नायक दक्षने उनका त्रिकपाल-यज्ञके द्वारा पूजन करके फिर अङ्गभूत और प्रधान दोनों प्रकारके यज्ञोंसे अन्य सब देवताओंका अर्चन किया ॥ ५५ ॥ ❀ ❀ फिर एकाग्रचित्त हो भगवान् शङ्करका यज्ञशेष उनके भागसे यजन किया तथा समाप्तिमें किये जानेवाले उदवसान नामक कर्मसे अन्य सोमपायी एवं दूसरे देवताओंका यजन कर यज्ञका उपसंहार किया और अन्तमें ऋषियोंके सहित अवभृथ-स्नान किया ॥ ५६ ॥ ❀ ❀ फिर जिन्हें अपने पुरुषार्थसे ही सब प्रकारकी सिद्धियाँ प्राप्त थीं, उन दक्षप्रजापतिको 'तुम्हारी सदा धर्ममें बुद्धि रहे' ऐसा आशीर्वाद देकर सब देवता स्वर्गलोकको चले गये ॥ ५७ ॥ ❀ ❀ विदुरजी ! सुना है कि दक्षसुता सतीजीने इस प्रकार अपना पूर्वशरीर त्यागकर फिर हिमालयकी पत्नी मेनाके गर्भसे जन्म लिया था ॥ ५८ ॥ ❀ ❀ जिस प्रकार प्रलयकालमें लीन हुई शक्ति सृष्टिके आरम्भमें फिर ईश्वरका ही आश्रय लेती है, उसी प्रकार अनन्यपरायणा श्रीअम्बिकाजीने उस जन्ममें भी अपने एकमात्र आश्रय और प्रियतम भगवान् शङ्करको ही वरण किया ॥ ५९ ॥ ❀ ❀ विदुरजी ! दक्ष-यज्ञका विध्वंस करनेवाले भगवान् शिवका यह चरित्र मैंने बृहस्पतिजीके शिष्य परम भागवत उद्धवजीके मुखसे सुना था ॥ ६० ॥ ❀ ❀ कुरुनन्दन ! श्रीमहादेवजीका यह पावन चरित्र यश और आयुको बढ़ानेवाला तथा पापपुञ्जको नष्ट करनेवाला है । जो पुरुष भक्तिभावसे इसका नित्यप्रति श्रवण और कीर्तन करता है, वह अपनी पापराशिका नाश कर देता है ॥ ६१ ॥

### इति सप्तमोऽध्यायः



# अथाष्टमोऽध्यायः

## मैत्रेय उवाच

सनकाद्या नारदश्च ऋभुर्हंसोऽरुणिर्यतिः। नैते गृहान् ब्रह्मसुता ह्या[1]वसन्नूर्ध्वरेतसः ॥ १ ॥
मृषाधर्मस्य भार्याऽऽसीद्दम्भं मायां च शत्रुहन्। असूत मिथुनं तत्तु[2] निर्ऋतिर्जगृहेऽप्रजः ॥ २ ॥
तयोः समभवल्लोभो निकृतिश्च महामते। ताभ्यां क्रोधश्च हिंसा च यद्दुरुक्तिः स्वसा कलिः ॥ ३ ॥
दुरुक्तौ कलिराधत्त भयं मृत्युं च सत्तम। तयोश्च मिथुनं जज्ञे यातना निरयस्तथा ॥ ४ ॥
संग्रहेण मयाऽऽख्यातः प्रतिसर्गस्तवानघ। त्रिःश्रुत्वैतत्पुमान् पुण्यं विधुनोत्यात्मनो मलम् ॥ ५ ॥
अथातः कीर्तये वंशं पुण्यकीर्तेः कुरूद्वह। स्वायम्भुवस्यापि मनोर्हरेरंशांशजन्मनः ॥ ६ ॥
प्रियव्रतोत्तानपादौ शतरूपापतेः सुतौ। वासुदेवस्य कलया रक्षायां जगतः स्थितौ ॥ ७ ॥
जाये उत्तानपादस्य सुनीतिः सुरुचिस्तयोः। सुरुचिः प्रेयसी पत्युर्नेतरा यत्सुतो ध्रुवः ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

दक्षकन्यान्वये प्राप्ता दक्षयज्ञकथोदिता। मनुपुत्रान्वये प्राप्ता ध्रुवचर्याऽथ पंचभिः ॥ १ ॥
अष्टमे गुरुदारोक्तरोषमत्सरतः पुरात्। निर्गतेन ध्रुवेणाह तपसा तोषणं हरेः ॥ २ ॥

वंशा वर्णितास्तत्रावशिष्टं किंचिदाह सनकाद्या इति। नावसन्नाश्रिताः किंतु ऊर्ध्वरेतसो नैष्ठिका आसन्। अतस्तेषां वंशो नास्ति ॥ १ ॥ ❋ ❋ एवं तावन्मनुकन्याऽन्वयोक्त्यैव मरीच्यादीनां ब्रह्मपुत्राणामधर्मोऽपि ब्रह्मपुत्रस्तस्य वंशमाह मृषेति चतुर्भिः। दंभः परप्रतारणं माया तदुचिता चेष्टा तयोः सोदरयोरपि दांपत्यमधर्मांशतया एवमुपर्यपि। अप्रजोऽपुत्रः ॥ २ ॥ ❋ ❋ निकृतिः शठता यत् याभ्यां कलिश्च तस्य स्वसा दुरुक्तिश्चेत्यर्थः ॥ ३ ॥ ❋ ❋ यातना तीव्रवेदना ॥ ४ ॥ ❋ ❋ प्रतिसर्गोऽनुसर्ग इव यद्वा प्रतिसर्गः प्रलयः। अधर्मस्य प्रलयहेतुत्वात्प्रतिसर्गत्वम्। एतदंतमधर्मवंशम्। पुण्यमिति वर्जनद्वारा पुण्यहेतुत्वात् ॥ ५ ॥ ❋ ❋ मनोः पुत्रवंशम्। हरेरंशो ब्रह्मा तस्यांशाद्देहार्धाज्जन्म यस्य ॥ ६ ॥ ❋ ❋ जगतो रक्षायां स्थितौ ॥ ७ ॥ ❋ ❋ सुनीतिः सुरुचिश्च जाये तयोर्मध्ये नेतरा सुनीतिः ॥ ८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पंचभिरधुनोच्यत इति शेषः (१)। गुरुदारा मातृसपत्नी तस्या उक्तेर्यो रोषो मत्सरश्च भ्रातुरुत्कर्षासहनजस्ताभ्यामिति द्विवचनान्ताभ्यां तसिः (२)॥

तत्र ब्रह्मपुत्रेषु अत ऊर्ध्वरेतस्त्वात्। तेषां सनकादीनाम् ॥ १ ॥ ❋ ❋ हेयत्वेन त्यक्तुमधर्मवंशमाह हे शत्रुहन्निति। अधर्म एव शत्रुस्तं भवद्विध एव हंतीत्यभिप्रायः। तत् मिथुनम्। निर्ऋतिरिति नरकाधिष्ठातृदेवता रक्षस्तुल्यस्वभावास्ति। यद्वा दिक्पालोऽलक्ष्म्यधिष्ठातृदेवता "निर्ऋतिः स्यादलक्ष्म्यां तु दिक्पाले नरकाधिपे" इति कोशात् ॥ २ ॥ ❋ ❋ तयोर्दंभमाययोः। हे महामते तव महे सर्वपूज्ये हरावासमंतान्मतिर्यस्य तथाविधत्त्वाल्लोभादयो न सन्तीति भावः। ताभ्यां लोभनिकृतिभ्याम्। इत्यर्थ इति व्याख्येयम् ॥ ३ ॥ ❋ ❋ सत्तमेति। कलिसंबंधाभावमाह "कलिना धीरभीरुणा" इत्याद्युक्तेः। तयोर्मृत्युभययोः ॥ ४ ॥ ❋ ❋ इह शास्त्रेऽभिधेयत्वेन तस्याश्चानुकूलप्रतिकूलवस्तुजिज्ञासायां वर्जनीयत्वेनाधर्मवंशो नरकांतः संग्रहेण संक्षेपेणोक्तः। अनुसर्गः पश्चात्सर्गः पृष्ठभागीय इत्यर्थः। "अधर्मः पृष्ठतो यस्मात्" इत्युक्तेः। अनघेति त्वयायं नानुभूत इति भावः। त्रिः श्रवणं तु दृढीकरणार्थम्। आत्मनश्चेतसो मलं दंभादिरूपमेव ॥ ५ ॥ ❋ ❋ वक्तव्यकथायाः समाप्तत्वादतः

---

१. प्रा० पा०—ह्यव०। २. प्रा० पा०—तत्र।

परं किं वक्तव्यमिति तत्राह अथात इति। अथेत्यनेन पूर्वस्माद्वक्ष्यमाणस्यार्थस्य मंगलत्वं वक्ति। यतोऽधर्मादिकं हेयमत उपादेयं कथयामीत्यत इति। यद्वा "अथातो ब्रह्मजिज्ञासा" 'अथात आदेशमप्राक्ष्म' इतिवत् श्रुतिसूत्रतुल्यत्वमस्योपाख्यानस्य सूचितमिति। अपिना वंशाधिक्यं च सूचितम्। कुरूद्वहेति। भवदीयवंशवदयमपि वंशो वर्णनार्ह एवेत्याह। यद्वा हरेरंशानां ध्रुवपृथुदत्तयज्ञर्षभाणां जन्म यतस्तस्य यज्ञदत्तयोर्दौहित्रत्वं ध्रुवस्य पौत्रत्वं पृथोर्ध्रुवप्रपौत्रत्वमृषभस्यापि प्रपौत्रत्वं चास्तीति विवेकः। अत्रैवं बोध्यं "वत्सां मनोरुत्तानपदः स्वसारम्" इति कर्दमप्रार्थनायां मुनिकर्तृकपूर्वनामोच्चारणेन ज्येष्ठत्वे प्रतीतेप्युत्तानपदस्तथापि प्रियव्रतोत्तानपदोः स्वसेयमित्यत्रान्यत्रापि "प्रियव्रतोत्तानपादौ शतरूपापतेः सुतौ" अत्रापि च द्वंद्वे प्रियव्रतस्यैव ज्येष्ठत्वेन प्राधान्यात्पूर्वनिपाताज्ज्येष्ठत्वं सिद्ध्यति। तद्वंशस्य प्रथमं वर्णनीयत्वाद्यदुत्तानपदो वंशवर्णनं पूर्वं कृतं तद्वक्तबाहुल्योत्सुकतयेति बोध्यं, स्वतंत्रेच्छस्य मुनेः पर्यनुयोगानर्हत्वादिति न्यायेन वा बोध्यम्। किञ्च पूर्वं प्रियव्रतेनैव राज्यं कृतं यदा विरजसंतत्यंतस्तद्वंशः समाप्तिमितस्तदा पुनरुत्तानपादाजाभूत्। प्रियव्रतादिराज्यकाले स योगसमाधिनिष्ठस्तपोनिष्ठो वा तद्वंशसमाप्तौ स्वर्गादागत्य मनुना ब्रह्मणा च पुनस्तस्मै राज्यं दत्तं समाधेरुत्थाप्य मन्वागमनं हि ध्रुवानुशासनार्थागमनवत्संभावितमेव। अन्यथा प्रथमं प्रियव्रतराज्याभावे भूमंडलजलधिमेखलमाकलय्येति ध्रुवचरितोक्तिः समुद्रमुपविस्तीर्णमिति प्राचेतसोपाख्यानोक्तिश्च न संगच्छेत। प्रियव्रतात्पूर्वं समुद्राद्यभावात्समुद्रादीनां तद्रथचरणनेमिनिम्नोद्भूतत्वस्य "यो नेमिनिम्नैरकरोच्छायां घ्नन्सप्तवारिधीन्" इत्यादिनोक्तत्वादिति प्रतिभाति। युगपदेकभूमंडले चक्रवर्तिद्वयासंभवात्॥ ६॥ ❀ ❀ वासुदेवस्य कलया कलारूपेण विष्णुना या जगतो रक्षा तस्यां स्थितौ विष्णोर्वासुदेवकलारूपत्वं श्रीदशमस्कंधोपक्रमे वर्णयिष्यामः॥ ७॥ ❀ ❀ प्रियव्रतोत्तानपात्पत्नी पितरौ तु ग्रंथांतरादवसेयौ। उक्तमपि स्कांदीयकेदारखंडे "कर्दमस्य सुता देवी काम्या नाम्नी प्रियव्रतम्। पतिं लेभे सूनृता तु धर्मकन्योत्तानपादकम्" इति प्रियव्रतस्य विश्वरूपदुहिता बर्हिष्मत्यपि भार्यासीदिति वक्ष्यति पञ्चमस्कंधे। सूनृतेति। सुनीतेरेव नामांतरमेवं सुरुचिपितापि तदानींतनः प्रजापतिविशेषो ज्ञेयः। तयोः सुनीतिसुरुच्योः। इतरा सुनीतिः॥ ८॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अथ दक्षयज्ञकथनान्तरं पञ्चभिरध्यायैर्ध्रुवचरित्रं वर्ण्यत इति शेषः। रोषमत्सरतः क्रोधेर्ष्याभ्यां ध्रुवेण कर्त्रा तपसा करणेन हरेः हरिकर्मकं तोषणं वर्ण्यते मैत्रेयेणेति शेषः। तत्र ब्रह्मपुत्रवंशवर्णने किञ्चित् सनकादीनां नैष्ठिकत्वं अधर्मस्य वंशवर्णनमवशिष्टमाह अतो नैष्ठिकत्वात्॥ १॥ ❀ ❀ उपर्य्यपि अग्रेऽपि निर्ऋतिः नैर्ऋतकोणाधिपती राक्षसविशेषः॥ २॥ ❀ ❀ तयोर्दम्पत्योर्दम्भमाययोः एतत्कथनं वर्ज्जनार्थं न तु पुण्यमिति विचारय बुद्ध्या इति महामते! इति सम्बोधितम्। ताभ्यां लोभशठताभ्यां दम्पतिभ्यां यत् ताभ्यां क्रोधहिंसाभ्यां दम्पतिभ्यां कलिश्च भ्राता तस्य कलेः तस्येत्यध्याहारादित्यर्थोक्तिः॥ ३॥ ❀ ❀ भियं कन्यां मृत्युं पुत्रञ्च तयोश्च भीमृत्व्योर्दम्पत्योः तथेति चार्थे॥ ४॥ ❀ ❀ सङ्ग्रहेण संक्षेपेण अनुसर्गः गौणसर्गः प्रत्याख्यानवत्प्रतिशब्दस्य स्वसमभिव्याहृतविरुद्धार्थप्रतिपादकत्वादनुसर्गेऽर्थेऽप्रसिद्धेश्च यद्वेति। वर्ज्जनद्वारा अकरणद्वारा दम्भादिकं न कुर्यात् चेत्पुण्यं स्यादित्यर्थः॥ ५॥ ❀ ❀ अथ मरीच्यादिवंशवर्णनानन्तरम् अतः ब्रह्मपुत्रत्वेन तद्वर्णनस्यापि प्रकृतत्वात्, अपिरत्र मरीच्यादिकं समुच्चिनोति॥ ६॥ ❀ ❀ कलया अंशेन॥ ७॥ ❀ ❀ इतरा सुनीतिः॥ ८-९॥

### श्रीमद्वीरराघवव्याख्या

'प्रसूतिं मानवीं दक्ष उपयेमे ह्यजात्मजः। तस्यां ससर्ज दुहितॄः षोडशामललोचनाः॥' इत्यादिना प्रसूतिवंशमुपक्रम्य तत्प्रसक्तानुप्रसक्तमभिहितम्, एवं तावन्मनुकन्यान्वयो वर्णितः। अथ मनुपुत्रान्वयं विवक्षुरनुसर्गकथनेऽवशिष्टं किंचिदाह सनकाद्या इति। यतिरिति प्रत्येकं सनकादिविशेषणं तन्त्रेणोपात्तं प्रत्येकाभिप्रायेणैकवचनान्तनिर्देशः अरुणिविशेषणं वा प्रत्यासत्तेः। एते ब्रह्मपुत्राः गृहान् गृहाश्रमान् नावसन् नाश्रिताः, तत्र हेतुः ऊर्ध्वरेतसः नैष्ठिकाः। अतस्तेषां वंशो नास्तीति॥ १॥ ❀ ❀ अधर्मोऽपि ब्रह्मपुत्रः तस्य वंशमाह मृषेति चतुर्भिः। अधर्मस्य भार्या मृषा दम्भः परप्रतारणं माया तदुचिता चेष्टा एदुभयात्मकं मिथुनम् असूत प्रसूतवती हे शत्रुहन्! सोदरयोरपि मायादम्भयोर्दाम्पत्यमधर्मांशतया। एवमुपर्यपि द्रष्टव्यं तच्च दम्भमायात्मकं मिथुनम् अप्रजोऽपुत्रो निर्ऋतिर्जगृहे गृहीतवान् दम्भे पुत्राभिमानं मायायां स्नुषाभिमानं च कृतवानित्यर्थः॥ २॥ ❀ ❀ हे महामते! तयोर्मायादम्भयोर्लोभः निकृतिः शठता च ताभ्यां निकृतिलोभाभ्यां क्रोधोऽमर्षो हिंसा च समभवदित्युनुषङ्गः। यत् याभ्यां क्रोधहिंसाभ्यां कलिश्च तस्य स्वसा भगिनी दुरुक्तिश्च समभवत्॥ ३॥ ❀ ❀ दुरुक्तौ कलिः भियं भीतिं मृत्युं च आधत्त उत्पादयामास हे सत्तम! ताभ्यां भीतिमृत्युभ्यां यातना स्त्री निरयः पुमान् एतदुभयात्मकं मिथुनं जज्ञे[1]॥ ४॥ ❀ ❀ अधर्मवंशमुपसंहरन् तस्य संसृतिहेतुत्वाद् बुभुक्षुभिरसेव्यतामाह।

१. 'एते ह्यधर्मवृक्षस्य वंश्याः संसृतिहेतवः। श्रेयस्कामो न सेवेत नितरामाश्रमोत्तमः॥ ४॥'

इति वीरराघवसम्मतः श्लोकः तैलंगश्रीधरीयेऽपि निष्टीकांको मूलपाठस्तथैव विजयध्वजीयेऽपि मूलं टीका च तथैव।

एत इति। अधर्म एव वृक्षस्तस्य वंश्याः वंशे भवाः शाखारूपा इति भावः। हि यस्मात् संसृतिहेतवः अतः श्रेयस्कामः स्वर्गापवर्गकामः न सेवेत अधर्मवंश्यानिति शेषः। विभक्तिविपरिणामेनानुषङ्गो वा। आश्रमोत्तमः उत्तमः आश्रमो यस्य सः चतुर्थाश्रमनिष्ठ इत्यर्थः। आहिताग्न्यादित्वादाश्रमशब्दस्य पूर्वनिपातः, नितरां न सेवेत ॥ ४ ॥ ❀ ❀ अथाधर्मवंशस्य प्रतिसर्गान्तर्भावं वदंस्तमुपसंहरन् तच्छ्रवणफलमाह संग्रहेणेति। हे अनघ! तव तुभ्यं मया प्रतिसर्गः संग्रहेण ख्यातः। प्रलयहेतुत्वादधर्मवंशस्य प्रतिसर्गत्वम् एतदधर्मवंशं पुण्यं वर्जनद्वारा पुण्यहेतुत्वात्पुण्यं श्रुत्वा पुमानात्मनः स्वस्य मलं पापं विधुनोति ॥ ५ ॥ ❀ ❀ एवं कन्यान्वयमभिधायाथ मनुपुत्रान्वयं वक्तुमुपक्रमते। अथात इति। हे कुरूद्वह! अथ "मनोस्तु शतरूपायां तिस्रः कन्याः प्रजज्ञिरे" इत्युपक्रान्तमनुकन्यान्वयकथनानन्तरम् अत उपक्रान्तस्य वृत्तत्वाद्धेतोः स्वायम्भुवस्य मनोर्वंशं पुत्रान्वयं कीर्तये कथयामीति सम्बन्धः। अत्र मनुकन्यामनुपुत्रवंशकथनयोः पौर्वापर्ये हेतुहेतुमद्भावे च समासव्यासत्वहेतुकस्वेच्छायत्तोपक्रान्तत्वोपक्रमिष्यमाणत्वमेव निबन्धनम्। काकदन्तश्रवणवदश्राव्यत्वशङ्कामपनुदन् मनुं विशिनष्टि—पुण्यकीर्तेः पुण्या शुश्रूषतां पुण्या पवित्रा कीर्तिर्यस्य। तत्र हेतुः हरेरंशांशजन्मनः स्मरणमात्रेण आश्रितदुरितहारिणो भगवतः अंशो ब्रह्मा तस्य अंशाच्छरीराज्जन्म यस्य तस्य हर्यंशांशसंभूतत्वाद्धरिभक्तत्वाच्च हरिचरित्रवन्मनुपुत्रान्वयकथनश्रवणादिकमपि दुरितविनाशनद्वारा पुण्यसंपादकमित्यर्थः ॥ ६ ॥ ❀ ❀ प्रतिज्ञातमनुवंशं वर्णयति प्रियव्रतोत्तानपादावित्यादिना। आभूगोलवर्णनात् प्रियव्रतश्चोत्तानपादश्च तौ इमे अन्वर्थनामनी प्रियं भगवत्प्रीतिकरं व्रतं यस्य स प्रियव्रतः उत्तानौ उन्नतौ पादौ यस्येति उत्तानपादः शतरूपापतेर्मनोः सुतौ वासुदेवस्य कलयावन्तिसरात्मभगवद्गुणविशेषाविर्भावेन जगतो रक्षायां स्थितौ ॥ ७ ॥ ❀ ❀ तयोर्मध्ये योऽग्रज उत्तानपादस्तस्य सुनीतिः सुरुचिश्चेति जाये भार्ये तयोः सुनीतिसुरुच्योर्मध्ये सुरुचिः पत्युरुत्तानपादस्य प्रेयसी नितरां प्रीतिविषया, इतरा सुनीतिस्तु न प्रेयसी, यत्सुतः यस्या अप्रेयस्याः सुनीतेः सुतः पुत्रो ध्रुवः ॥ ८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

संसारविरक्तस्य पुंसः श्रीनारायणश्रीपादपद्ममूलमेव शरणमिति निरूपयत्यस्मिन्नध्याये। तत्र परमभागवतस्य ध्रुवस्य चरित्रमनुवर्णयितुं हेयत्वेनाधर्मवंशानुचरितमाह सनकाद्या इति। गृहान्नावसन् गृहस्थाश्रमं नाभजन्नित्यर्थः। ऊर्ध्वरेतस इत्यनेन संन्यासाश्रमं सूचयति ॥ १ ॥ ❀ ❀ अप्रजः सन्ततिरहितः ॥ २-३ ॥ ❀ ❀ अत्र मायादयः स्त्रियोऽन्ये पुमांसः संसारहेतवो हि यस्मात्तस्माच्छ्रेयस्काम एतान्न सेवेतेत्यन्वयः। आश्रमोत्तमी संन्यासी ॥ ४ ॥ ❀ ❀ मयाख्यात अनुसर्ग इत्यत्र सन्ध्यभावः। संग्रहोक्त्याल्पत्वं न ज्ञातव्यम्। महानयं ग्रन्थबहुलत्वाल्लोके दृश्यमानत्वाच्चेति प्रदर्शनार्थं इति ज्ञातव्यम्। अस्यानुसर्गस्य श्रवणफलमाह त्रिःश्रुत्वेति। आत्मनो मनसो मलं विधुनोति निरस्यति ॥ ५ ॥ ❀ ❀ वक्तव्यायाः कथायाः समाप्तत्वादतः परं किं वक्तव्यमिति तत्राह। अथात इति। अथेत्यनेन पूर्वस्माद्वक्ष्यमाणस्यार्थस्य मङ्गलत्वं वक्ति यतोऽधर्मादिकं हेयमत उपादेयं कथयामीत्यत इति। अपिशब्देन वंशस्यानल्पत्वं श्रुतिस्मृतिभ्यां संभावितत्वमाह हरेरिति। हरेरंशांशेन विशेषावेशेन संहितं जन्म यस्य स तथा तस्य "आविष्टा हरिणा जीवा ब्रह्मा दक्षो मनुः पृथुः। शक्राद्या ऋषयश्चैव मत्स्यव्यासादयो हरिः॥" इति ॥ ६ ॥ ❀ ❀ प्रियव्रतोत्तानपदोर्मनुपुत्रत्वेन पूर्वमुक्तयोः पुनरत्रोक्तिर्वंशस्यादित्वज्ञापनाय अनुवदति। प्रियव्रतेति। वासुदेवस्य राजराजाख्यस्य कलया सन्निहितौ तदुक्तम् "प्रियव्रतोत्तानपादप्रमुखेषु हरिः स्वयम्। आविष्टः सर्वभूतेषु ऋषभाद्याः स्वयं हरिः॥" इति ॥ ७ ॥ ❀ ❀ प्रियव्रतोत्तानपदोर्मध्ये प्रियव्रतविक्रमस्य प्रथमं वक्तव्यत्वे सत्युत्तानपादपुत्रस्य ध्रुवस्यातिरमणीयत्वेन विरक्तिभक्तिजनकत्वेन श्रोतुः श्रद्धाजनकत्वेन भगवदुपास्तौ क्षिप्रप्रवृत्तिजनकत्वेनाऽऽश्चर्यबुद्धिजनकत्वेन च प्रथमं तच्चरितं वक्तुमुपक्रमते। जाये इति। यस्याः सुनीतेः सुतः ॥ ८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

एवं श्रीकर्दमकन्यारूपाणां सात्त्विकशक्तिदेवीनां विवरणमुक्त्वा तामसशक्तिदेवीनामाह मृषेति। निर्ऋतिर्नैर्ऋतकाणाधिपतिः ॥ १-१६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

विमातुर्वाग्विषप्लुष्टो मातुर्वागमृताप्लुतः। ध्रुवोऽष्टमे मधुवने तपसातोषयद्धरिम् ॥

तदेवं मनोः कन्यावंशोक्त्यैव मरीच्यादीनां ब्रह्मपुत्राणामपि वंशा वर्णिताः। इदानीं तस्य पुत्रवंशे वक्तव्येऽपि लाघवादवशिष्टानां ब्रह्मपुत्राणां वंशजिज्ञासायामाह सनकाद्या इति ॥ १ ॥ ❀ ❀ अधर्मोऽपि ब्रह्मपुत्रस्तस्य वंशमाह मृषेति। हे शत्रुहन्निति अधर्म्म एव शत्रुस्तं भवद्विध एव हन्तीत्यर्थः। दम्भः परप्रतारणं माया तदुचिता क्रिया। तयोः सोदरयोरपि

दाम्पत्यमधर्मांशतया निर्ऋतिर्नैर्ऋतकोणाधिपतिः ॥ २ ॥ ❀ ❀ निकृतिः शठता यन् याभ्यां कलिश्च तस्य स्वसा दुरुक्तिश्च ॥ ३ ॥ ❀ ❀ एवमत्र शास्त्रे भक्तेरभिधेयत्वेन तस्याश्चानुकूलप्रतिकूलवस्तुजिज्ञासायां वर्ज्जनीयत्वेनाधर्मवंशो नरकान्त उक्तः ॥ ४ ॥ ❀ ❀ सङ्ग्रहेण संक्षेपेण प्रतिसर्गः प्रलयः प्रलयहेतुत्वात्प्रलयः, हे अनघेति अधर्मवंशोऽयं त्वया नानुभूत इति भावः। पुण्यं वर्ज्जनद्वारा पुण्यकरम् ॥ ५ ॥ ❀ ❀ हरेरंशांशानां कपिलदत्तयज्ञपृथुऋषभादीनां जन्म यतस्तस्य ॥ ६ ॥ ❀ ❀ वासुदेवस्य कलया कलारूपेण विष्णुना या जगतो रक्षा तस्यां क्रियायां स्थितौ ॥ ७ ॥ ❀ ❀ तयोर्जाययोर्मध्ये ॥ ८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

श्रैष्ठ्यं भगवतः षड्भिरुक्तं सत्याः प्रसंगतः। ध्रुवाख्यानमुखेनाथ पञ्चभिस्तदिहोच्यते ॥ ( १ ) ॥

एवं तावद् ब्रह्मपुत्रस्य मनोः कन्यान्वयः मरीच्यादीनां ब्रह्मपुत्राणां चान्वयो वर्णितः। इदानीमवशिष्टब्रह्मपुत्रान्वयकथनपूर्वकं मनुपुत्रान्वयमाह एकोनचत्वारिंशदध्यायैः सनकाद्या इति। एते गृहान्नावसन् गृहाश्रमान् नाश्रिताः यतः ऊर्ध्वरेतसः नैष्ठिकाः, अतस्तेषां पुत्रपौत्रादिरूपो वंशो नास्ति शिष्यप्रशिष्यादिरूपस्त्वस्तीति बोध्यम्। तथाहि श्रीमुखवचनम् "महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा। मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥" इति ॥ १ ॥ ❀ ❀ ब्रह्मणः पृष्ठतः उत्पन्नस्य अधर्मस्य ब्रह्मपुत्रस्य वंशमाह मृषेति चतुर्भिः। अधर्मस्य भार्या मृषा आसीत् सा दम्भं परप्रतारणार्थं स्वोत्कर्षख्यापनं मायां तदनुरूपां वञ्चनां च असूत उत्पादयामास। तच्च मिथुनम् अप्रजः अपुत्रः निर्ऋतिः जगृहे गृहीतवान्। मायादम्भयोः सोदरयोः दम्पतिभावः अधर्मवंश्यत्वादेवमग्रेऽपि ॥ २ ॥ ❀ ❀ तयोर्मायादम्भयोः अपत्यम् लोभोऽन्यायेनान्यार्थग्रहणसङ्कल्पः निकृतिः शाठ्यं च समभवत्। ताभ्यां निकृतिलोभाभ्यां क्रोधो हिंसा च समभवत्, यद्याभ्यां क्रोधहिंसाभ्यां कलिः दुरुक्तिः स्वसा च समभवत् ॥ ३ ॥ ❀ ❀ कलिर्दुरुक्तौ भार्यायां भियं कन्यां मृत्युं सुतं चाधत्ताजनयत्। तयोर्भीमृत्य्वोर्निरयः सुतः यातना तीव्रवेदना कन्या एतन्मिथुनं जज्ञे ॥ ४ ॥ ❀ ❀ हे अनघ! प्रतिसर्गः प्रलयः सङ्ग्रहेण संक्षेपेण मया तवाख्यातो वर्णितः सपरिकरोऽधर्मः प्रलयहेतुरतस्तद्वर्णनेन प्रलय एव वर्णित इति भावः। एतदेनं प्रतिसर्गं पुमान् त्रिःश्रुत्वा आत्मनो मलं पापं दुर्गतिहेतुं विधुनोति, पुण्यं सुगतिहेतुं प्राप्नोतीति शेषः। यथा तस्करादिसङ्कुलं दुर्मार्गं श्रुत्वा तच्छ्रवणमात्रेणैव तत्त्यागी दुःखं विधुनोति सुखं प्राप्नोतीति भावः ॥ ५ ॥ ❀ ❀ हरेरंशो ब्रह्मा तदंशाद्देहार्द्धाज्जन्म यस्य तस्य वंशं पुत्रपौत्रादिसन्ततिम् ॥ ६ ॥ ❀ ❀ वासुदेवस्य कलया जगतः पालिन्या शक्त्या जगतो रक्षायां स्थितौ शतरूपापतेर्मनोः सुतौ बभूवतुः ॥ ७ ॥ ❀ ❀ तत्रोत्तानपादस्य जाये भार्ये तयोर्जाययोर्मध्ये सुरुचिः पत्युः प्रेयसी इतरा सुनीतिः यस्या ध्रुवः सुतः सा न ॥ ८ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं सप्तभिरध्यायैर्धर्मसिद्धिर्निरूपिता। दक्षस्य हरिसन्तुष्ट्या महतोपि प्रजापतेः ॥ ( १ ) ॥
अतः पञ्चभिरध्यायैरर्थप्रकरणं मतम्। बालस्यापि हरौ प्रीते सिद्ध्येदर्थो न चान्यथा ॥ ( २ ) ॥
साधनेन च साध्येन राज्यदोषेण हानतः। फलेन च ततो ह्यत्र पञ्चाध्यायाः प्रवर्त्तिताः ॥ ( ३ ) ॥
अष्टमे धर्मसर्गश्च निर्गतस्य ध्रुवस्य च। नारदोक्तप्रकारेण तपश्चर्या निरूप्यते ॥ ( ४ ) ॥

एवं सप्तभिरध्यायैर्भगवदनुग्रहाद्दक्षस्य धर्मसिद्धिर्जातेति निरूप्येदानीं तत्प्रसादादेव ध्रुवस्यार्थसिद्धिर्जातेति पञ्चभिरध्यायैर्निरूप्यते। तत्र तपआदिसाधनेन तत्साध्यभगवत्प्रादुर्भावेन च राज्याङ्क्रोधादिदोषेण च मनूपदेशात्तन्निवृत्त्या च ध्रुवलोकफलप्राप्त्या चेति पञ्चप्रकारे ध्रुवस्यार्थसिद्धिर्जाता। ततोऽत्र प्रकरणे पञ्चाध्यायाः कृताः। तत्र यद्यपि पूर्वं सर्गलीलायामेव मुक्तजीवसृष्टिनिरूपणे "सनकं च सनन्दं च सनातनमथात्मभूः। सनत्कुमारं च मुनीन्निष्क्रियानूर्ध्वरेतसः ॥ तान् बभाषे स्वभूः पुत्रान् प्रजाः सृजत पुत्रकाः। तन्नैच्छन्मोक्षधर्माणो वासुदेवपरायणाः" इति सनकादीनामुत्पत्तिस्तत्सर्गाभावश्च निरूपितः, तथापि विहितत्वेन मर्यादायां धर्मानुष्ठानं तदौपयिकं गार्हस्थ्यं च मुक्तमपि पुष्टिलीलायां त्वप्रयोजकत्वात्तन्न तदुक्तमतो विवेकिभिस्तत्त्याज्यमेवेति विज्ञापयितुं धर्मप्रकरणानन्तरं पुनस्तत्सर्गाभावं कथयति—सनकाद्या इति। एते सनकाद्याश्चत्वारो नारदादयश्च पञ्च ब्रह्मपुत्राः गृहान् नावसन् गार्हस्थ्यं नाङ्गीकृतवन्तः। यतः ऊर्ध्वरेतसः जन्मत एव नैष्ठिकब्रह्मचारिणो जाताः। अतस्तेषां सर्गो न जात इति भावः ॥ १ ॥ ❀ ❀ तर्हि विहितत्यागे प्रत्यवायसम्भवाद्धर्मप्रतिपक्षो ह्ययं मार्ग इत्याशङ्क्य नायं मार्गो धर्मविरुद्धो "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति विहितत्वाद्धर्मप्रतिपक्षस्त्वन्य एव तं प्रदर्शयामीत्यभिप्रेत्याधर्मस्य ब्रह्मपुत्रस्य वंशमाह—मृषेति चतुर्भिः। हे शत्रुहन्निति विदुरं सम्बोधयन्नधर्मवंशप्रभवा एत एव मुख्यशत्रवोऽतो निरसनीया एवेति सूचयति। अधर्मस्य भार्या मृषा मिथ्याभाषणरूपासीत्। सा दम्भं परप्रतारणात्मकं पुत्रं मायां च परप्रतारणोचितां

चेष्टामित्येव मिथुनं युग्ममसूत। तत्तु मिथुनं निर्ऋतिः राक्षसो यतोऽप्रजः सन्ततिरहितोऽतो जगृहे स्वगृहं नीतवान् ॥ २ ॥ ❀ ❀ तयोर्दम्भमाययोः सोदरयोरप्यधर्मांशत्वाद्दाम्पत्यापन्नयोर्लोभः पुत्रः निकृतिः शठता कन्या च समभवत्। ताभ्यां लोभनिकृतिभ्यां क्रोधः पुत्रो हिंसा कन्या च समभवत्। यत् याभ्यां कलिः कलहः पुत्रस्तस्य स्वसा दुरुक्तिश्च समभवत्। हे महामत इति सम्बोधयन् एतैः सम्बन्धवर्जने बुद्धेर्महत्त्वमपेक्षितमिति सूचयति ॥ ३ ॥ ❀ ❀ दुरुक्तौ स्वभार्यायां कलिर्भियं कन्यां मृत्युं च पुत्रमाधत्त उत्पादितवान्। हे सत्तम श्रेष्ठ इति सम्बोधयन् अधर्मवंशे सर्वत्र सोदरयोरेव दाम्पत्यं श्रुत्वाश्चर्यं मा कुर्वधर्मांशत्वादिति सूचयति। तथा तयोर्मृत्युभियोरपि यातना कन्या निरयश्च पुत्र एवं मिथुनं जज्ञे जातम् ॥ ४ ॥ ❀ ❀ कथितस्याधर्मवंशस्यापि श्रवणफलं कथयति—संग्रहेणेति। हे अनघ निर्दोष विदुर! तव मया प्रतिसर्गः अधर्मस्य प्रलयहेतुत्वात्तत्सर्गः प्रतिसर्गः अन्यसर्गहानिकरः अत एव बीभत्सत्वात् विस्तृतत्वेपि संग्रहेण संक्षेपेण आख्यातः प्रकथितः। एतदधर्मवंशाख्यानं वर्जनद्वारा पुण्यहेतुत्वात् पुण्यं पुमान् प्राणी त्रिःश्रुत्वात्मनो मनसो मलं पापं मोहं वा विधुनोति नाशयति ॥ ५ ॥ ❀ ❀ अर्थसिद्धिश्च द्विधा अधर्मादिना भगवत्प्रसादेन च। तत्राधर्मादिनार्थसिद्धेर्नरकपातादिहेतुत्वादर्थशब्दवाच्यर्थतोनर्थत्वाद्धेयत्वमेवेत्यधर्मवंशकथनेन प्रदर्शितम्। इदानीं ध्रुवस्य भगवत्प्रसादादर्थसिद्धिं प्रदर्शयिष्यंस्तत्पूर्वकथामाह—अथेति। अथशब्दो भिन्नप्रक्रमे अधर्मवंशादस्य वंशस्य वैलक्षण्यं द्योतयति। तदेवाह—पुण्यकीर्तेरिति। पुण्या पवित्रा शुद्धा स्तुत्या कीर्तिर्यस्य तस्य। अधर्मकीर्तेर्निन्द्यत्वात्ततोस्य वैलक्षण्यम्। पुण्यकीर्तित्वहेतुः हरेरंशो ब्रह्मा तदंशाज्जन्म यस्य तस्य स्वायंभुवस्यापि मनोर्वंशं पुत्रपौत्रादिसन्ततिं कीर्त्तये। अतःशब्दो हेतौ। अपिशब्दो दृष्टान्ते। यतः पुण्यकीर्तिर्भगवत्प्रसादगोचरत्वादिना विलक्षणः अतो गतार्थत्वात् पूर्ववन्मनोर्वंशमपि कथयामीत्यन्वयः। हे कुरूद्वह इति सम्बोधयंस्तस्यापि पुण्यकीर्तित्वं सूचयति ॥ ६ ॥ ❀ ❀ शतरूपापतेः स्वायम्भुवस्य मनोः प्रियव्रतोत्तानपादौ सुतौ जगतो रक्षायां पालने स्थितौ। यतः पालकस्य भगवतो वासुदेवस्य कलयावतीर्णाविति शेषः ॥ ७ ॥ ❀ ❀ तत्र यद्यपि प्रियव्रतस्य ज्येष्ठत्वात्तस्य वंशः प्रथमं निरूपणीयस्तथापि स पूर्वं विरक्तत्वेन त्यक्तव्यवहारः पश्चाद् ब्रह्माज्ञया राज्ये प्रवृत्तस्तद्वंशोपि पश्चादेव जातस्तथापि स्थानलीलायामुपयोगो नात्रेति स्थानलीलानिरूपके पञ्चमस्कन्धे स निरूपयिष्यते। उत्तानपदो वंशस्याऽत्रोपयोगात्प्रथमवृत्तत्वाच्च प्रथमतस्तमेव निरूपयति—जाये इति। सुनीतिः सुरुचिश्च द्वे उत्तानपादस्य जाये भवतः। तयोर्द्वयोर्मध्ये पत्युः सुरुचिः प्रेयसी, तत इतरा सुनीतिर्यस्याः सुतो ध्रुवः सा पत्युर्न प्रेयसीत्यन्वयः ॥ ८ ॥

## भाषानुवादः

### ध्रुवका वनगमन

श्रीमैत्रेयजी कहते हैं—शत्रुसूदन विदुरजी! सनकादि, नारद, ऋभु, हंस, अरुणि और यति—ब्रह्माजीके इन नैष्ठिक ब्रह्मचारी पुत्रोंने गृहस्थाश्रममें प्रवेश नहीं किया (अतः उनके कोई सन्तान नहीं हुई)। अधर्म भी ब्रह्माजीका ही पुत्र था, उसकी पत्नीका नाम था मृषा। उसके दम्भ नामक पुत्र और माया नामकी कन्या हुई। उन दोनोंको निर्ऋति ले गया; क्योंकि उसके कोई सन्तान न थी ॥ १-२ ॥ ❀ ❀ दम्भ और मायासे लोभ और निकृति (शठता) का जन्म हुआ, उनसे क्रोध और हिंसा तथा उनसे कलि (कलह) और उसकी बहिन दुरुक्ति (गाली) उत्पन्न हुए ॥ ३ ॥ ❀ ❀ साधुशिरोमणे! फिर दुरुक्तिसे कलिने भय और मृत्युको उत्पन्न किया तथा उन दोनोंके संयोगसे यातना और निरय (नरक) का जोड़ा उत्पन्न हुआ ॥ ४ ॥ ❀ ❀ निष्पाप विदुरजी! इस प्रकार मैंने संक्षेपसे तुम्हें प्रलयका कारणरूप यह अधर्मका वंश सुनाया। यह अधर्मका त्याग कराकर पुण्य-सम्पादनमें हेतु बनता है; अतएव इसका वर्णन तीन बार सुनकर मनुष्य अपने मनकी मलिनता दूर कर देता है ॥ ५ ॥ ❀ ❀ कुरुनन्दन! अब मैं श्रीहरिके अंश (ब्रह्माजी) के अंशसे उत्पन्न हुए पवित्रकीर्ति महाराज स्वायम्भुव मनुके पुत्रोंके वंशका वर्णन करता हूँ ॥ ६ ॥ ❀ ❀ महारानी शतरूपा और उनके पति स्वायम्भुव मनुसे प्रियव्रत और उत्तानपाद—ये दो पुत्र हुए। भगवान् वासुदेवकी कलासे उत्पन्न होनेके कारण ये दोनों संसारकी रक्षामें रहते थे ॥ ७ ॥ ❀ ❀ उत्तानपादके सुनीति और सुरुचि नामकी दो पत्नियाँ थीं। उनमें सुरुचि राजाको अधिक प्रिय थी; सुनीति, जिसका पुत्र ध्रुव था, उन्हें वैसी प्रिय नहीं थी ॥ ८ ॥

**एकदा सुरुचेः पुत्रमङ्कमारोप्य लालयन्। उत्तमं नारुरुक्षन्तं ध्रुवं राजाभ्यनन्दत ॥ ९ ॥**
**तथा चिकीर्षमाणं तं सपत्न्यास्तनयं ध्रुवम्। सुरुचिः शृण्वतो राज्ञः सेर्ष्यमाहातिगर्विता ॥ १० ॥**
**न वत्स नृपतेर्धिष्ण्यं भवानारोढुमर्हति। न गृहीतो मया यत्त्वं कुक्षावपि नृपात्मजः ॥ ११ ॥**
**बालोऽसि बत नात्मानमन्यस्त्रीगर्भसम्भृतम्। नूनं वेद भवान् यस्य दुर्लभेऽर्थे मनोरथः ॥ १२ ॥**

---

१. प्रा० पा० —सम्भवम्।

तपसाऽऽराध्य पुरुषं तस्यैवानुग्रहेण मे। गर्भे त्वं साधयात्मानं यदीच्छसि नृपासनम् ॥ १३ ॥

मैत्रेय उवाच

मातुः सपत्न्याः स दुरुक्तिविद्धः श्वसन् रुषा दण्डहतो यथाहिः।
हित्वा मिषन्तं पितरं सन्नवाचं जगाम मातुः प्ररुदन् सकाशम् ॥ १४ ॥
तं निःश्वसन्तं स्फुरिताधरोष्ठं सुनीतिरुत्सङ्ग उदूह्य बालम्।
निशम्य तत्पौरमुखान्नितान्तं सा विव्यथे यद्गदितं सपत्न्या ॥ १५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तयोः प्रियाप्रियत्वे प्रपंचयन्ध्रुवचरित्रमाह पंचभिरध्यायैः। सुरुचेः पुत्रमुत्तमसंज्ञं लालयन् ॥ ९ ॥ ❀ ❀ तथा अङ्कारोहणं चिकीर्षमाणम् ॥ १० ॥ ❀ ❀ गर्वोक्तिमेवाह त्रिभिः। नेति। नृपतेर्धिष्ण्यमासनं नृपात्मजोऽपि भवान्नारोढुमर्हति ॥ ११-१२ ॥ ❀ ❀ पुरुषमीश्वरम् ॥ १३ ॥ ❀ ❀ मिषंतं पश्यंतम्। सन्नवाचं कुंठितवाचम् ॥ १४ ॥ ❀ ❀ उदूह्यारोप्य। अंतःपुरजनमुखात् श्रुत्वा ॥ १५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

नाभ्यनंदत नांग्यकरोत् ॥ ९ ॥ ❀ ❀ सेर्ष्यं यथा भवति तथा ॥ १० ॥ ❀ ❀ वत्सेति साक्षेपा संबुद्धिः वत्सवदज्ञोसीत्यभिप्रायः। नृपात्मज इति। न हि नृपात्मजत्वमेव राज्यासनारोहकरं किन्तु राज्ञ्यात्मजत्वम्। नृपात्मजत्वस्य दास्यादिपुत्रेपि संभवादित्यभिप्रायः। नैवं धृत इति पाठे एवमुत्तमवत्कुक्षौ न धृतः, अपि न कदाचिल्लालनार्थं कुक्षौ कटिंपरिदेशे न गृहीत इत्युक्तम्। वस्तुतस्तु यस्त्वं हरिभक्तो मया लालनार्थमपि कुक्षौ न धृतोस्यहो मे भाग्यमांद्यमिति वागर्थः। तथा नृपतेर्धिष्ण्यमात्रमारोढुं नार्हसि किं तु सर्वोत्कृष्टं विष्णुपदं, हे नृपतेर्नरपालकस्य विष्णोर्वत्स प्रिय! नृपपदमत्रोपलक्षणं नृप आत्मजो यस्येति तथा तव पुत्रस्यापि राज्यं भविष्यति तव तत्र कः संदेह इति भावः। "वत्सः पुत्रे प्रिये चाद्यवर्षे धेनुसुते च ना। उरसि क्लीवम्" इति धरणिः ॥ ११ ॥ ❀ ❀ दुर्लभे राज्यासनारोहणरूपे यस्य तव ॥ १२ ॥ ❀ ❀ तर्हि राज्यासनलाभः कथं स्यात्तत्राह—तपसेति। पुरुषं नारायणम्। तस्य पुरुषस्य गर्भे साधय संप्रत्येव त्रिचतुरैः पंचषैर्त्रं तैर्मद्वर्तप्राप्तिसाधनैर्हरिं संतोष्य त्वं शीघ्रं म्रियस्व। त्वन्मातरं रुदंतीं पश्येयमित्येवं तव च मम च सुखं भवत्विति भावः। पुरुषमाराध्येति भक्तंमन्येयं नृपसंन्निधाने न तु भक्तेयमिति भावः ॥ १३-१४ ॥ ❀ ❀ पुरेंऽतःपुरे भवाः पौरा दासीजनास्तेषां मुखात्। अत्रापि पुरपदमेकदेशोच्चारणन्यायेनांतःपुरं वक्तीति निशम्य भानुनंदनीतिवत्। तत्सपत्न्युदितम्। नितांतमतिशयेन सा सुनीतिः। विव्यथे दुःखिता बभूव ॥ १५ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

शृण्वत इत्यनादरे षष्ठी ॥ १० ॥ ❀ ❀ नृपात्मजोऽपीति नृपेऽप्यनादरो व्यञ्जितः ॥ ११-१४ ॥ ❀ ❀ तत् गर्ववाक्यम् ॥ १५-१६ ॥

### श्रीमद्वीरराघवव्याख्या

तत्र सुनीत्या अप्रेयस्त्वमेव प्रपञ्चयन् तत्सुतध्रुवचरित्रमाह। एकदेत्यादिना पञ्चभिरध्यायैः। एकदा कदाचित् राजा उत्तानपादः सुरुचेः पुत्रमुत्तमसंज्ञमारुरुक्षन्तम् अङ्कमारोढुमिच्छंतम् अङ्कमारोप्य उत्संगे निधाय लालयन् तथा चिकीर्षमाणम् अङ्कारोहादि कर्तुमिच्छन्तं सपत्न्याः सुनीतेस्तनयं तं ध्रुवं नाभ्यनन्दत। यद्वा उत्तममङ्कमारोप्य लालयन् अङ्कमारुरुक्षन्तं ध्रुवं नाभ्यनन्दतेति संबन्धः। सुरुचिः राज्ञोऽभिप्रायज्ञा तथा चिकीर्षमाणं तं ध्रुवं प्रति राज्ञः शृण्वतः सतः अतिगर्विता सती अत एव सेर्ष्यं क्षमारहितं यथा भवति तथा आह उवाच ॥ ९-१० ॥ ❀ ❀ गर्वोक्तिमेवाह। न वत्सेति त्रिभिः। हे वत्स! नृपतेर्धिष्ण्यमासनमारोढुं भवान्नार्हति, नृपात्मजोऽहमारोढुमर्ह एव तत्राह त्वं नृपात्मजोऽपि यद्यस्मात् मया कुक्षौ न गृहीतः न

१. प्रा० पा०—यदीच्छास्ति नृपासने। २. प्रा० पा०—सुतं निजोत्सङ्गमुदूह्य।

धृतः। मद्गर्भज एव नृपासनार्ह इत्यभिप्रायः ॥ ११ ॥ ❀ ❀ त्वं मया कुक्षौ न गृहीत इत्यहमेव न वेद्मि अपि तु भवानपि वेदेत्याह। बालोऽसीति। भवान् बालोऽप्यात्मानमन्यस्त्रीगर्भसंभृतं मत्सपत्नीगर्भभृतं न वेद बत न वेद किम् अपितु वेदैवेत्यर्थः। नूनमिति निश्चये, यद्वा बालो भवान्न जानाति अहं तु वेद्मीत्याह बाल इति। अपिस्त्वर्थकः भवानित्यनेन संबध्यते बाल इति हेतुगर्भं भवांस्तु बालत्वादात्मानमन्यस्त्रीगर्भसंभृतं न वेद अहं तु वेद्मीत्यभिप्रायः। अतो यस्य तव दुर्लभे लब्धुमयोग्ये अर्थे नृपासनारोहणरूपेऽप्यर्थे मनोरथ आसीदित्यर्थः। बतेत्याश्चर्ये ॥ १२ ॥ ❀ ❀ यदि दुर्लभोऽर्थो मया साध्य इति तवाग्रहः तर्ह्येवं साधयेत्याह तपसेति। यदि त्वं नृपासनमिच्छसि तर्हि तपसा पुरुषं परमपुरुषमाराध्य तस्याराधितस्य परमपुरुषस्यानुग्रहेणैव न तूपायान्तरेणेत्यर्थः। मे मम गर्भे आत्मानं साधय आत्मनो मद्गर्भे उत्पत्तिं साधयेत्यर्थः ॥ १३ ॥ ❀ ❀ एवमुक्तो ध्रुवः किमकरोदित्यत्राह मैत्रेयः मातुरिति। सपत्न्या मातुः दुरुक्तेन दुर्वचसा भावे क्तः विद्धः ताडितो ध्रुवः दण्डेन हतः सर्पो यथा तथा रुषा श्वसन् श्वासं मुञ्चन् मिषन्तं पश्यन्तं सन्नवाचं संकुचितवाचं पितरं हित्वा प्ररुदन् नितरामश्रूणि विमुञ्चन् मातुर्जनन्याः सुनीतेः समीपे जगाम ॥ १४ ॥ ❀ ❀ तं सकाशमागतं निश्वसन्तं स्फुरितः कम्पितः अधरोष्ठो येन तं बालं ध्रुवं सपत्न्या गदितं सा सुनीतिरुत्संगं उदूह्य अङ्के आरोप्य पौरमुखादन्तःपुरजनमुखात् निशम्य श्रुत्वा नितान्तं नितरां विव्यथे व्यथितवती ॥ १५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सुनीतिः कथं पत्युः प्रेष्ठा नाभूदिति ज्ञायत इति तं प्रकारं वक्ति। एकदेति। नाम्नोत्तमम् आरुरुक्षन्तमङ्कमारोढुकामम् ॥ ९ ॥ ❀ ❀ तथा चिकीर्षमाणमङ्कमारोढुमिच्छन्तं सपत्न्याः सुनीतेः सेर्ष्यमिति क्रियाविशेषणम् ॥ १० ॥ ❀ ❀ धिष्ण्यं सिंहासनम् अनर्हत्वे निमित्तमाह। न गृहीत इति ॥ ११ ॥ ❀ ❀ नेदमाश्चर्यमित्याह बाल इति। ततः किमिति तत्राह नात्मानमिति। स्वायोग्यमिच्छन्यतिष्यतीति भावेनाह। यस्येति यस्य तव ॥ १२ ॥ ❀ ❀ तर्हि त्वत्पुत्रभावित्वे किङ्कर्तव्यमत्राह। तपसेति। पुरुषं विष्णुम् ॥ १३ ॥ ❀ ❀ ध्रुवः सपत्न्याः सुरुच्याः वाक्यं श्रुत्वा किमकार्षीदिति तत्राह। मातुरिति। मिषन्तं पश्यन्तं सन्नवाचं तूष्णींभूतं आमिषं हित्वा मातुरिव स्थितस्वबिलस्य सकाशमहिरिवेति वा ॥ १४ ॥ ❀ ❀ अस्यामवस्थायां सुनीत्या किमकारीति तत्राह तं निःश्वसन्तमिति ॥ १५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

सुरुचेः पुत्रमुत्तमसंज्ञम् ॥ ९-१० ॥ ❀ ❀ धिष्ण्यमासनं यद्यस्मात् नृपात्मजोऽपि त्वं मया कुक्षौ न गृहीतः। त्वं बालोऽस्यत एव नात्मानमित्यादि ॥ ११-१२ ॥ ❀ ❀ पुरुषमाराध्येति भक्तम्मन्येयं राज्ञः सन्निधौ न तु वस्तुतो हरिभक्तेयम्। त्वमात्मानं मम गर्भे साधयेति संप्रत्येव त्रिचतुरैः पञ्चषैर्वा व्रतैर्मद्गर्भे प्राप्तिसाधनैर्हरिं संतोष्य त्वं शीघ्रं म्रियस्व। त्वन्मातरमहं रुदतीं पश्येयमित्येवं तव च मम च सुखं भवत्विति भावः ॥ १३ ॥ ❀ ❀ मिषन्तं पश्यन्तं सन्नवाचं स्त्रैणत्वात् कुण्ठितवाचम् ॥ १४ ॥ ❀ ❀ उदूह्य आरोप्य ॥ १५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

उत्तममङ्कमारोप्य लालयन् ध्रुवन्तु अङ्कं स्वत एव आरुरुक्षन्तमपि नाभ्यनन्दत ॥ ९ ॥ ❀ ❀ तथा स्वत एव अङ्कारोहणं चिकीर्षमाणं न तूत्तमवदङ्कारूढं तथापि सेर्ष्यमाह तदपि राज्ञः शृण्वतः यतोऽतिगर्विता ॥ १० ॥ ❀ ❀ धिष्ण्यमासनम् ॥ ११-१२ ॥ ❀ ❀ पुरुषं वासुदेवम्। आत्मानं साधय उत्पादय ॥ १३ ॥ ❀ ❀ मिषन्तं तदनादरयन्तं सन्नवाचं भार्याप्रतिषेधार्थं ध्रुवसान्त्वनार्थं चाऽब्रुवाणम् ॥ १४ ॥ ❀ ❀ उत्सङ्गे अङ्के उदूह्य आरोप्य यत्सपत्न्या गदितं तन्नितान्तं पौरमुखादन्तःपुरजनमुखात् ॥ १५ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

तयोः प्रियाप्रियत्वे प्रपञ्चयति—एकदेति। एकदा सुरुचेः पुत्रमुत्तममङ्कमारोप्य लालयन् राजा ध्रुवमङ्कमारुरुक्षन्तमारोढुमिच्छन्तं नाभ्यनन्दत सुरुचिप्रेमभङ्गभियाऽङ्के नारोपितवान्। अनेन धर्मरक्षार्थमवतीर्णोपि स्त्रिया जड एव जात इति सूचितम्। 'बालाश्च कुलवृद्धाश्च निर्दहन्त्यवमानिताः' इति निषेधोल्लङ्घनात् ॥ ९ ॥ ❀ ❀ तथा अङ्कारोहणं चिकीर्षमाणं तं ध्रुवं सुरुचिः सेर्ष्यमाह। तथोक्तौ निमित्तमाह—सपत्न्यास्तनयमिति। तथापि स्वतुल्यत्वात्कथं तस्याः सुतमेवमुक्तवती तत्राह—गर्वितेति। राज्ञः स्ववशवर्त्तित्वेन गर्वितेत्यर्थः ॥ १० ॥ ❀ ❀ तस्या गर्वोक्तिमेवाह—नेति त्रिभिः। हे वत्स! भवान्नृपात्मजः राजपुत्रोपि नृपतेर्धिष्ण्यमङ्कमारोढुं नार्हति, यत् यस्मात्त्वं मया स्वकुक्षौ न गृहीतो न धृतः ॥ ११ ॥

❀ ❀ यस्य भवतो दुर्लभेऽर्थे राजोत्सङ्गारोहणे मनोरथोऽस्ति स भवान्नूनं निश्चितमेतत् मत्तोऽन्यस्त्रीगर्भे संभृतमात्मानं न वेद न जानाति, यद्येवं जानीयात्तदैवं मनोरथं न कुर्यादिति भावः। नन्वन्यस्त्रीगर्भसंभृतत्वेपि राजपुत्रत्वात्कथं राजोत्सङ्गारोहणं दुर्लभं तत्राह—बालोसीति। बतेति खेदे। बालोस्यत एतद्रहस्यं न जानासि। राज्ञो बह्व्यः स्त्रियो भवन्ति तथापि न तासां सर्वासां तुल्यत्वम्, किन्तु यस्यां राज्ञः सम्मानाधिक्यं सैव मुख्या, अतस्तस्याः पुत्र एव राजासनयोग्यो नान्यः पुत्रः। अतो मयि राज्ञः सम्मानाधिक्यात् मम पुत्र एव राजासनयोग्यो न त्वम्, अन्यस्त्रीगर्भसंभृतत्वादिति भावः॥ १२॥ ❀ ❀ तर्हि मया किं कर्त्तव्यमित्याशङ्क्याह—तापसेति। यदि त्वं नृपासनमिच्छसि तदा तपसा पुरुषं पुरुषोत्तमं भगवन्तमाराध्य तस्यानुग्रहेण वरदानेनात्मानं स्वदेहं मे मम गर्भे साधयेत्यन्वयः। एवकारेण नातोन्य उपायोस्तीति दर्शयति। अनेन प्रसन्नस्यापि भगवतः प्रसादं गौणीकृत्य स्वगर्भसम्भवत्वस्य राजासनारोहहेतुत्वकथनात्तेनैव स्वदोषेणास्याः सपुत्राया विनाशो जात इति ज्ञेयम्॥ १३॥ ❀ ❀ सुरुचेर्वचनं श्रुत्वा ध्रुवः किं कृतवानित्यपेक्षायामाह—मातुरिति। मातुः सपत्न्याः सदुरुक्तयः अत्यन्तासम्बद्धवाक्यानि ताभिर्हृदि विद्धो ध्रुवः अत एव रुषा श्वसन् ऊर्ध्वंश्वासान् विमुञ्चन् प्ररुदन् मिषन्तं सुरुचिचरितं पश्यन्तमपि तत्संकोचात्सन्नवाचं तूष्णीं स्थितं पितरं हित्वा मातुः सुनीतेः सकाशं समीपं जगामेत्यन्वयः। क्रोधेन श्वासविमोचने दृष्टान्तमाह—दण्डेन हतोऽहिर्यथेति॥ १४॥ ❀ ❀ तं ध्रुवमागतं दृष्ट्वा सुनीतिः किं चकारेत्यपेक्षायामाह—तमिति। तं बालं ध्रुवं सा सुनीतिरुत्सङ्ग उदूह्य आरोप्य सपत्न्याः सुरुचेर्यद्गदितं वचनं नितान्तं ध्रुवस्य रोदनादेः कारणं तत्पौरमुखात् अन्तःपुरजनमुखान्निशम्य श्रुत्वा विव्यथे व्यथां प्रापेत्यन्वयः॥ १५॥

### भाषानुवादः

एक दिन राजा उत्तानपाद सुरुचिके पुत्र उत्तमको गोदमें बिठाकर प्यार कर रहे थे। उसी समय ध्रुवने भी गोदमें बैठना चाहा, परन्तु राजाने उसका स्वागत नहीं किया॥ ९॥ ❀ ❀ उस समय घमंडसे भरी हुई सुरुचिने अपनी सौतके पुत्र ध्रुवको महाराजकी गोदमें आनेका यत्न करते देख उनके सामने ही उससे डाहभरे शब्दोंमें कहा॥ १०॥ ❀ ❀ 'बच्चे! तू राजसिंहासनपर बैठनेका अधिकारी नहीं है। तू भी राजाका ही बेटा है, इससे क्या हुआ; तुझको मैंने तो अपनी कोखमें नहीं धारण किया॥ ११॥ ❀ ❀ तू अभी नादान है; तुझे पता नहीं है कि तूने किसी दूसरी स्त्रीके गर्भसे जन्म लिया है; तभी तो ऐसे दुर्लभ विषयकी इच्छा कर रहा है॥ १२॥ ❀ ❀ यदि तुझे राजसिंहासनकी इच्छा है तो तपस्या करके परम पुरुष श्रीनारायणकी आराधना कर और उनकी कृपासे मेरे गर्भमें आकर जन्म ले'॥ १३॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—विदुरजी! जिस प्रकार डंडेकी चोट खाकर साँप फुफकार मारने लगता है, उसी प्रकार अपनी सौतेली माँके कठोर वचनोंसे घायल होकर ध्रुव क्रोधके मारे लंबी-लंबी साँस लेने लगा। उसके पिता चुपचाप यह सब देखते रहे, मुँहसे एक शब्द भी नहीं बोले। तब पिताको छोड़कर ध्रुव रोता हुआ अपनी माताके पास आया॥ १४॥ ❀ ❀ उसके दोनों होठ फड़क रहे थे और वह सिसक-सिसककर रो रहा था। सुनीतिने बेटेको गोदमें उठा लिया और जब महलके दूसरे लोगोंसे अपनी सौत सुरुचिकी कही हुई बातें सुनीं, तब उसे भी बड़ा दुःख हुआ॥ १५॥

सोत्सृज्य धैर्यं विललाप शोकदावाग्निना दावलतेव बाला।
वाक्यं सपत्न्याः स्मरती सरोजश्रिया दृशा बाष्पकलामुवाह॥ १६॥
दीर्घं श्वसन्ती वृजिनस्य पारमपश्यती बालकमाह बाला।
मामङ्गलं तात परेषु मंस्था भुङ्क्ते जनो यत्परदुःखदस्तत्॥ १७॥
सत्यं सुरुच्याभिहितं भवान्मे यद् दुर्भगाया उदरे गृहीतः।
स्तन्येन वृद्धश्च विलज्जते यां भार्येति वा वोढुमिडस्पतिर्माम्॥ १८॥
आतिष्ठ तत्तात विमत्सरस्त्वमुक्तं समात्रापि यदव्यलीकम्।
आराधयाधोक्षजपादपद्मं यदीच्छसेऽध्यासनमुत्तमो यथा॥ १९॥
यस्याङ्घ्रिपद्मं परिचर्य विश्वविभावनायात्तगुणाभिपत्तेः।
अजोऽध्यतिष्ठत्खलु पारमेष्ठ्यं पदं जितात्मश्वसनाभिवंद्यम्॥ २०॥
तथा मनुर्वो भगवान् पितामहो यमेकमत्या पुरुदक्षिणैर्मखैः।

इष्टाभिपेदे दुरवापमन्यतो भौमं सुखं दिव्यमथापवर्ग्यम् ॥ २१ ॥
तमेव वत्साश्रय भृत्यवत्सलं मुमुक्षुभिर्मृग्यपदाब्जपद्धतिम् ।
अनन्यभावे निजधर्मभाविते मनस्यवस्थाप्य भजस्व पूरुषम् ॥ २२ ॥
नान्यं ततः पद्मपलाशलोचनाद् दुःखच्छिदं ते मृगयामि कंचन ।
यो मृग्यते हस्तगृहीतपद्मया श्रियेतरैरङ्ग विमृग्यमाणया ॥ २३ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

शोक एव दावाग्निस्तेन दावाग्निगता लतेव स्थिता सा बाला विलापं चकार ॥ १६ ॥ ❁ ❁ वृजिनस्य दुःखस्य अमंगलमपराधं परेषु मा मंस्थाः । यद्यतः परेभ्यो दुःखं ददाति यः स स्वदत्तमेव तद्दुःखं भुंक्ते ॥ १७ ॥ ❁ ❁ दुर्भगया मया उदरे गृहीतस्तस्या एव स्तन्येन वृद्धश्च । दुर्भगत्वमेवाह । यां मामिडस्पतिर्भूपतिर्भार्येति वोढुं स्वीकर्तुं विलज्जते वाशब्दाद्दासीत्यपि ॥ १८ ॥ ❁ ❁ पितृभार्यात्वेन मात्रा समा मातुः सपत्नी तथापि यदुक्तं तपसाराध्य पुरुषमित्यादि तदातिष्ठ कुरु । अध्यासनं यदीच्छसि ॥ १९ ॥ ❁ ❁ परिचर्ये निषेव्य विश्वस्य विभावनाय पालनायात्ता स्वीकृता गुणाभिपत्तिः सत्त्वगुणाधिष्ठानं येन तस्य जित आत्मा मनः श्वसनः प्राणश्च यैस्तैरभिवंद्यम् ॥ २० ॥ ❁ ❁ एकमत्या सर्वांतर्यामिदृष्ट्या ॥ २१ ॥ ❁ ❁ मृग्या पदाब्जयोः पद्धतिर्मार्गो यस्य तमेवाश्रय शरणं व्रज ततो भजस्व नान्यस्मिन्भावोऽभिप्रायो यस्य तस्मिन् । निजधर्मैर्भाविते शोधिते ॥ २२ ॥ ❁ ❁ तमेवेत्यनेन सूचितं सर्वोत्तमत्वं प्रपंचयति । नान्यमिति हस्तेन गृहीतं दीपवत्पद्मं यया तया श्रिया इतरैर्ब्रह्मादिभिः ॥ २३ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

दावलतापि वह्निस्पर्शाच्चटचटेति शब्दं कुर्वती प्रस्विन्नेव जलमप्यश्रुवन्मुञ्चतीति भावः । हेतौ तृतीया । प्राप्तेति-पदाध्याहारो वा । बालेति परिचारकस्त्रीतुल्यतामाह—"बाला त्रुटिस्त्रियोः" इति मेदिनी ॥ १६ ॥ ❁ ❁ शलभभक्षित-सस्यवत्पूर्वकृतकर्मणोऽपरिहार्यत्वं पश्यंत्याह—हे तातेति । प्रियत्वं द्योतयन्ती तत्र स्वासामर्थ्यमाहेत्यभिप्रायः ॥ १७ ॥ ❁ ❁ परेण द्वेषादुक्तमपि गुणग्राहिणस्तत्पथ्यमेव प्रतिभातीत्याह-सत्यमिति । विलज्जते मद्रक्षणपालने यो भारस्तं वोढुं त्रपत इत्यर्थः । स्वास्याननुरूपतामनेनेति भावः । इडस्पतिरिहेडाया इडसादेशश्छान्दसः । इडा भूमिस्तस्याः पतिः मे दुर्भगाया इति षष्ठ्यौ तृतीयार्थे, तस्या दुर्भगाया एव स्तन्येन क्षीरेण न तु पितृदत्तरसायनेनेति भावः ॥ १८ ॥ ❁ ❁ मात्रा समा समाता तया विमात्रापि त्वद्वधमभिलषंत्यापि यत्तप उक्तं तत्कुरु अव्यलीकं प्रियं तत्, न हि हरिभजनं कस्याप्यप्रियम्भवति विमत्सरः तस्या द्वेषं परित्यज्येत्यर्थः । मम रोदनमाजन्म विधात्रा ललाटे लिखितं तव सुखं भवत्विति भावः । "अलीकमप्रियेऽपि स्याद्दिव्ये सत्ये नपुंसकम्" इति मेदिनी । विशेषेणालीकं व्यलीकं न व्यलीकमव्यलीकम् । अध्यासनमधिकमासनम् उद्गतं तमोऽज्ञानं यस्य स तथा यथा ज्ञानी भगवत्प्राप्तये तत्पादं सेवते तं च प्राप्नोति तथा त्वमपि तं प्राप्स्यसीति भावः ॥ १९-२० ॥ ❁ ❁ चतुर्मुखस्य भगवत्पुत्रत्वेन तत्प्रसादयोग्यतया तस्य तादृशैश्वर्यप्राप्तिर्युक्तैवास्मत्पूर्वजेन केनाप्तं येन श्रद्धयास्माकमपि तत्र झटिति प्रवृत्तिः स्यात्तत्राह—तथेति । यथाऽजस्तथा अन्यतो भक्त्यादिव्यतिरिक्तसाधनेनान्येभ्यो देवेभ्यो वा भौमं मन्वंतराधिपत्यं दिव्यं स्वर्गसम्बन्धि आपवर्ग्यं कैवल्यसम्बन्धि, अथेत्यनेन देहत्यागानन्तरमेवापवर्गसुखावाप्तिर्न जन्मातरं प्राप्येत्याह ॥ २१ ॥ ❁ ❁ किं बहूक्त्या सारं वक्ष्यामीत्याह—तमिति । एवेति । देवतांतरनिरासाय यत्किंचिद्दोषदृष्ट्या विमुखो न भविष्यतीत्याह—भृत्यवत्सलमिति । चक्रवर्त्ती तु—मद्विधमातृकोटितोपि त्वयि भृत्ये तस्य वात्सल्यमुदेष्यत्यतो दुःखगन्धमपि न प्राप्स्यतीति भावः । यं त्वं प्राप्स्यसि तस्य पदाब्जयोः पद्धतिर्मार्ग एव मुमुक्षुभिर्मृग्यते, न तु तैरपि सुलभ इति भावः । एतेन न केवलं सकामैरेव स सेव्योऽपि तु मोक्षेप्सुभिरपीत्युक्तम् । आश्रितस्य च नान्यस्मिन्भाव आसक्तिर्यस्य तादृशे मनसि । वत्सेति । पञ्चवार्षिकस्य ते कर्मान्तरानधिकाराद्भक्तिरेव कार्येत्याह—निजधर्मैर्भक्तिधर्मैर्यमनियमादिभिः पुरुषमित्यनेन स्वांतस्थमेव तं न देशांतरादानेयमित्युक्तम् ॥ २२ ॥ ❁ ❁ कुतोयमेवाशेषपुरुषार्थावाप्तौ नियमोऽन्यः किं न स्यादिति चेत्सुखाराध्यस्यापि देवतान्तरस्य नश्वरफलदायित्वात् त्वद्दुःखं निर्मूलयितुमसमर्थस्य भजनपरिणामदर्शिन्यहं नोपदिशामीत्याह—नेति । यो युष्माकं कुलदेवता लक्ष्मीकांतः स्तुतस्तस्मात्पद्मपलाशलोचनादित्यनेन तस्य दृष्टिपातेनैव तप्तस्त्वं शीतलीभविष्यसीति ध्वनितं, त्वयानन्विष्यैतदुक्तं विचारिते कश्चित्स्यादेवेत्यत आह—मृगयामि विचारेणान्यं तादृशं न पश्यामीति भावः । लक्ष्मीरेव स कुतो न स्यात्तत्राह य इति । श्रीत्वं तु भारत्यादावप्यस्तीत्यत आह—इतरैरिति । तर्हि संपल्लक्षणा श्रीरेव सा स्यादित्यत आह-हस्तेति । अनेन श्रीप्रिया मूर्त्तिमती साक्षाल्लक्ष्मीरिति ज्ञायते मृग्यत इत्यनेन हरेर्गुणतः स्वरूपतश्चोत्कर्षो ध्वनितः । विमृग्यमाणयेत्यनेन श्रीकटाक्षमोक्षस्य दुःसाधनत्वमुक्तम् ॥ २३ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

दीर्घं यथा स्यात्तथा ॥ १७ ॥ ❀ ❀ दुर्भगाया दुर्भगया मया यद्यस्मादुदरे गृहीतः तस्मात्सुरुच्या सत्यमभिहितम् ॥ १८ ॥ ❀ ❀ समाता मात्रा समा तयाप्युक्तं यद्वचस्तत्त्वं कुरु तत्र हेतुः यतोऽव्यलीकं व्यलीकमप्रियं वञ्चकञ्च तद्विरुद्धं प्रियं निष्कपटं च भगवद्भजनस्य सर्वप्रियत्वात् परमहितत्वाच्चातो विमत्सरस्सन्निति द्वेषं परित्यज्येत्यर्थः। तेन तव सुखं भवतु, मम तु ललाटे विधात्रा रोदनमेव लिखितमिति भावः ॥ १९ ॥ ❀ ❀ ननु तदाराधने किं तस्या एवोदरे मम प्रवेशो भविष्यतीति चेत्तत्राह। यस्येति। तथा किमेतेन तुच्छेन पैत्रराज्येन तदाराधने ब्रह्मपदमपि न दुर्लभमिति भावः ॥ २० ॥ ❀ ❀ न केवलं ब्रह्मपदमेव तत्फलं किन्तु "विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिणः" इत्युक्तो मोक्षोऽपि सुलभ एवेत्याह। तथा मनुरिति। अपवर्गोऽत्र पञ्चमस्कन्धगद्योक्तानन्यनिमित्तभक्तिस्तदुत्थं प्रेमसुखमापवर्ग्यम् ॥ २१ ॥ ❀ ❀ भृत्यवत्सलं मद्विधकोटि-मातृतोऽपि भृत्येषु वात्सल्यवन्तं, भावो रतिः अनुपनीतस्य कर्मानधिकारात् निजधर्मैर्भागवतधर्मैः ॥ २२ ॥ ❀ ❀ विलासाद् गृहीतं पद्मं दीपत्वेनोत्प्रेक्षितं विमृग्यमाणयेति सिद्धपदसान्निध्यात् ॥ २३ ॥

## श्रीमद्वीरराघवव्याख्या

व्यथामेवाह सेति। सा सुनीतिर्धैर्यमुत्सृज्य हित्वा विललाप। शोक एव दावाग्निस्तेन दावाग्निना दग्धा लतेव स्थिता सा बाला सुनीतिः सपत्न्याः वाक्यं स्मरन्ती सरोजश्रिया सरोजस्य श्रीरिव श्रीः शोभा यस्यास्तया दृशा बाष्पकलाम् अश्रुकणिका-मुवाह दधार ॥ १६ ॥ ❀ ❀ सपत्नीगदितव्यथया दीर्घं यथा तथा श्वासं मुञ्चन्ती वृजिनस्य दुःखस्य पारमवधि-मपश्यन्ती अपारदुःखाक्रान्तेत्यर्थः, बाला सुनीतिर्बालकं ध्रुवमाह हे तात! अमङ्गलमपराधं परेषु मा मंस्थाः मा कार्षीः, यत् यस्मात् यो जनः परदुःखदः परेभ्यो दुःखं ददातीति परदुःखदः सः तद्दुःखमेव भुङ्क्ते अनुभवति ॥ १७ ॥ ❀ ❀ सुरुच्याभिहितं सोपालम्भमनुवदन्त्यात्मजं तपसे चोदयति सत्यमिति। सुरुच्या यदभिहितं तत्सत्यमिति संबन्धः। किमभिहितं तत्राह दुर्भगायाः भाग्यहीनायाः मे मया उदरे भवान् गृहीतः मदुदरे जात इत्यर्थः। न केवलं जात एव मद्गर्भे अपि तु तस्या एव मम स्तन्येन स्तनयोर्भवं स्तन्यं तेन वृद्धश्च। दुर्भगत्वमेवाह इडा भूमिः डलयोरभेदात्पारस्करादित्वात् सुडागमौ, इडस्पतिर्भूपतिर्मां भार्येत्यावोढुं स्वीकर्तुं वाचा वक्तुं वा विलज्जते ॥ १८ ॥ ❀ ❀ हे तात! तस्मात्त्वं विमत्सरः विगतमत्सरः। समात्रा समाता मातुः सपत्नी तयापि यदुक्तं तपसाराध्यपुरुषमित्यादि तदव्यलीकं निर्दोषं यथा भवति तथा आतिष्ठ कुरु। समात्रा यदुक्तमिति सामान्येनोक्तं विशेषनिष्ठं करोति उत्तमो यथा तथा त्वमप्यध्यासनं नृपासनमिच्छसि तर्हि अधोक्षजपादपद्ममाराधय ॥ १९ ॥ ❀ ❀ किं कश्चिदधोक्षजपादपद्ममाराध्य नृपासनादि स्वाभिलषितमवाप्येत्यत्र ब्रह्माणं मनुं च निदर्शयति यस्येति द्वाभ्याम्। विश्वविभावनाय विश्वस्य पालनाय आत्तगुणाभिपत्तेः गुणानां कल्याणगुणानामभिपत्तिर्वृत्तिर्यस्याम् आत्ता स्वीकृता गुणाभिपत्तिः कल्याणगुणाश्रयदिव्यमङ्गलमूर्तिर्येन तस्य यस्याधोक्षजस्य जितः आत्माः मनः श्वसनः प्राणवायुर्यैरभिवन्द्यम् अङ्घ्रिपद्मं परिचर्य्य आराध्य अजो ब्रह्मा पारमेष्ठ्यं पदं चतुर्दशभुवनानां मध्ये उत्कृष्टं सर्वोपरि वर्त्तमानं सत्यलोकरूपं स्थानमध्यतिष्ठदधिष्ठितवान् खलु ॥ २० ॥ ❀ ❀ तथा वः युष्माकं पितामहः पितः पिता भगवान् मनुरपि एकमत्या अव्यभिचरितभक्त्या पुरुदक्षिणैर्बहु-दक्षिणैर्मखैः क्रतुभिः यं भगवन्तमिष्ट्वा आराध्य अन्यतः अन्यैर्दुरापं दिव्यं दिवि भवं दिव्यं सुखं स्वर्गं भौमं सुखम्। सार्वभौमत्वम् आपवर्ग्यं मोक्षसुखं चाभिपेदे। अनेनाधोक्षजस्य कुलदैवतत्वमुक्तम्। अन्यतः एकमतिव्यतिरिक्तोपायान्तरेण दुरवापं यमिति वा संबन्धः। अन्यतः अन्यस्माद् ब्रह्मरुद्रादेः दुरवापं सुखत्रयमिति वा संबन्धः ॥ २१ ॥ ❀ ❀ भजन्तमपि मां राजद्वेषाद्यसद्गुणदृष्ट्यो-पेक्षेत तत्राह तमिति। हे वत्स! भक्तवत्सलं भक्तेषु वत्सलस्तं सत्स्वपि दोषेषुताननादृत्य भोग्यताबुद्धिमत्त्वं वात्सल्यं तमेवाश्रय। अनेनाश्रयणसौकर्यापादकगुणसंपत्तिरुक्ता. आश्रितकार्यापादकगुणसंपत्तिमाह मुमुक्षुभिः संसारबन्धनान्मोक्षमिच्छद्भिर्मृग्या अन्वेषणीया चिन्तनीयेति यावत् पदाब्जयोः पद्धतिर्मार्गो यस्य तं मुक्तिप्रदमिति भावः। अनेन नित्यसंसारिणां नित्यसूरिपरिषत्संघटनोपयोगित्व-रूपाघटितघटनासामर्थ्यरूपाश्रितकार्यापादकसंपत्तिरुक्ता। कथमाश्रयामीत्यत्र स्ववर्णाश्रमधर्मानुगृहीतभक्तियोगेनाश्रयेत्याह अनन्यभावे न विद्यतेऽन्यस्मिन् भावो यस्मिन् विजातीयप्रत्ययान्तराव्यवहित इत्यर्थः। निजधर्मभाविते निजधर्मैः स्ववर्णा-श्रमोचितधर्मैः भाविते निष्पादिते मनसि तैलधारावदविच्छिन्नस्मृतिसंतानरूपे मनोव्यापारो विजातीयप्रत्ययान्तराव्यवहिततैल-धारावदविच्छिन्नस्मृतिसंतानरूपा हि भक्तिः, अवस्थाप्य विषयीकृत्य पुरुषं पूःसंज्ञकशरीरान्तःस्थितदहरकुहरे वसन्तं परमपुरुषं भजस्व ॥ २२ ॥ ❀ ❀ तमेवेत्यनेन सूचितं सर्वोत्तमत्वं सुखत्रयप्रदत्वं च कथयति नान्यमिति। पद्मपलाशलोचनात्पुण्डरी-काक्षादन्यं पुरुषं तव दुःखच्छिदं दुःखनिवारकं न मृगयामि अन्विष्यापि न पश्यामीति भावः। अनेन तापत्रयनिरसनद्वारा सुखत्रयप्रदो भगवानेवेत्युक्तं भवति। सर्वोत्तमत्वमाह—यो भगवानितरैर्ब्रह्मादिभिः स्वाभिलषितसिद्धये विमृग्यमाणया मनःप्रणिधानेन चिन्त्यमानया हस्तेन गृहीतं पद्मं यया तया श्रिया महालक्ष्म्या अंग हे ध्रुव! मृग्यते अनेन लक्ष्मीपतित्वमुक्तं तेन च सर्वेश्वरत्वं जगत्कारणत्वं च सामर्थ्यादुक्तं भवति ॥ २३ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

धातोरनेकार्थत्वात् कीदृशी व्यथा तयाकारीति तत्राह सोत्सृज्येति। विलापस्योदरताडनाविनाभूतत्वेन तत्पूर्वकं तया परिदेवितमित्यर्थः। शोकदावाग्निना शोकाख्यवनवह्निना दह्यमानेति शेषः। दावलता वनवल्ली बाष्पकलां नेत्रजलधाराम्॥ १६॥ ❀ ❀ वृत्या सस्यभक्षणवद्राज्ञा कृतावज्ञानस्यापरिहार्यत्वात्संप्राप्तदुःखस्यावसानमचक्षाणा आत्मनो निर्दुष्टमनस्कत्वं दर्शयन्ती बालं शिक्षयतीत्याह दीर्घं श्वसन्तीति। परदुःखदो जनस्तद्दुःखं स्वयं भुङ्क्ते इति यद्यस्मात्तस्मात्परेष्वमङ्गलं मा मंस्थाः न निरूपयेत्यन्वयः॥ १७॥ ❀ ❀ परेण द्वेषादुक्तमपि गुणग्राहिणः स्वात्मनः पथ्यमेव भवतीति भावेनाह सत्यमिति। चार्थो वाशब्दः, इडस्पतिः राजा यां मां भार्येति च वोढुं वक्तुं विलज्जते भवांस्तस्या दुर्भगायाः दुःखहेत्वदृष्टाया मे उदरे गृहीतोऽत एव स्तन्येनैव वृद्धो न तु पितृदत्तरसायनेनेति यस्मात्तस्मात्सुरुच्या तपसाराध्येति यदभिहितं तत्सत्यमित्यन्वयः॥ १८॥ ❀ ❀ एतदेव विवृणोति आतिष्ठेति। मत्पुत्र उत्तमो यथा तथा यद्यध्यासनमिच्छसे आत्मनो हि तमाकांक्षसि तर्ह्यधोक्षजपादपद्ममाराधयेति यत्समात्रा सुरुच्या कथितं तदव्यलीकं कर्तुमातिष्ठ। तप इति शेषः॥ १९॥ ❀ ❀ केनचित् श्रीनारायणश्रीचरणपरिचर्याफलं निरुपममवाप्तं चेत्तर्हि श्रोतुस्तत्र क्षिप्रं प्रवृत्तिर्भवतीति तत्राह यत्पादेति। परिचर्य परिपूज्य विश्वविभावनाय विश्वस्य विविधसृष्ट्यर्थमात्तगुणाभिपत्तेः अङ्गीकृतसार्वज्ञ्यादिगुणप्राप्तिहेतोरजो ब्रह्मा जितात्मा वशीकृतमनाः श्वसनस्य वायोरपि विभागराहित्येन गन्तुं योग्यं वन्द्यम्॥ २०॥ ❀ ❀ चतुर्मुखस्य भगवत्पुत्रत्वेन तत्प्रसादयोग्यतया तस्य तादृशैश्वर्यावाप्तिर्युक्ताऽस्मत्पूर्वजेन केनाप्तं येन श्रद्धयास्माकमपि तत्र झटिति प्रवृत्तिः स्यात् अतस्तदनुभावयेति तत्राह तथेति। अन्यतो भक्त्यादिव्यतिरिक्तसाधनेनाऽन्याभ्यो देवताभ्यो वा भौमं मन्वन्तराधिपत्यं दिव्यं स्वर्गसम्बन्धि आपवर्ग्यं कैवल्यसम्बन्धि अथेत्यनेन देहत्यागानन्तरमेवापवर्गसुखावाप्तिर्न जन्मान्तरं प्राप्येत्याह॥ २१॥ ❀ ❀ किं बहुनोक्तेन सारं वक्ष्यामीत्याह तमेवेति। यत्किंचिद्दोषदृष्ट्या विमुखो न स्यादित्यत उक्तं भृत्येति। न केवलं विषयलोलैरेवाराध्यं किं तु संसारमोक्षेच्छुभिरपीति भावेनोक्तं मुमुक्षुभिरिति। अत्र प्रधानसाधनमिदमिति ध्वनयति अनन्यभाव इति। अन्यो भावो विषयो न यस्य स तथा तस्मिन् तस्य भक्तिसाधनत्वं ध्वनयति निजधर्मेति। यमनियमादयो निजधर्मास्तैर्भाविते कृततत्स्वात्मभावे॥ २२॥ ❀ ❀ कुतोऽयमेवापेक्षिताशेषपुरुषार्थावाप्ताविति नियमोऽन्यः किं न स्यादिति तत्राह। नान्यं तत इति। वो युष्माकं कुलदेवता लक्ष्मीकान्तस्ततस्तस्मात्पद्मपलाशलोचनादनेनाकाशवन्नीरूपस्योपासनं न संगच्छत इति चोद्यं परिहृतं, त्वया नान्विष्योक्तं विचारिते कश्चित्स्यादित्यत उक्तं मृगयामीति। लक्ष्मीतत्त्वं स्यादिति तत्राह य इति। श्रीत्वं भारत्यादावप्यस्तीत्यत उक्तं इतरैरिति। इतरैर्ब्रह्मादिभिः सेव्यापि संपल्लक्षणा श्रीः किं न स्यादित्यत उक्तं हस्तेति। अनेन श्रीः प्रिया मूर्तिमती साक्षाल्लक्ष्मीरिति ज्ञायते मृग्यत इत्यनेन हरेर्गुणतः स्वरूपतश्चोत्तमत्वं ध्वनयति। विमृग्यमाणेत्यनेन श्रीकटाक्षमोक्षस्य दुःसाधनत्वमाह॥ २३॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

वाचोढुमिति चित्सुख-पुण्यारण्यौ। वाचा ऊढुं वक्तुमित्यर्थः॥ १८–१९॥ ❀ ❀ यस्याङ्घ्रीति। परिचर्य निषेव्य आत्ता सान्निध्यमात्रेणापकृता गुणाभिपत्तिर्गुणसाम्यं प्रकृतिर्येन तस्य वन्द्यमित्यत्र पद्यमिति सम्बन्धसम्मतपाठान्तरम्॥ २०–२२॥ ❀ ❀ श्रिया जगदधिष्ठात्र्या हस्तगृहीतपद्मयेति तल्लोचनसाम्येनाधिकतद्रुचेः। सर्वसम्पत्तिनिधानेन तेन पद्मेन सेवाभिलाषाद्वा॥ २३॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

दावलता वनलता॥ १६॥ ❀ ❀ अमङ्गलं दोषं विमात्रे मा देहि प्राचीनस्वकृतदुष्कृतफलमेव त्वमन्वभूरित्याह यद् यतः परेभ्यो दुःखं ददाति यः स्वदत्तमेव भुङ्क्ते॥ १७॥ ❀ ❀ गृहीतः धृतः दुर्भगत्वमेवाह। यां मामिडस्पतिर्भूपतिर्भार्येति वोढुमियं मे भार्या भवतीति बुद्ध्या यो मद्रक्षणपालनभारस्तं वोढुं लज्जते। स्वस्याननुरूपतामननेनेति भावः। वाशब्दाद्दासीति-भावमपि॥ १८॥ ❀ ❀ मात्रा समा समाता तया विमात्रापि त्वद्धमभिलपन्त्यापि यदुक्तं तत् आतिष्ठ कुरु। अव्यलीकं तदप्रियं न भवति। न हि हरिभजनं कस्याप्यप्रियमतो विमत्सरस्तस्याः द्वेषं परित्यज्येत्यर्थः। मम रोदनमाजन्म विधात्रा ललाटे लिखितमेव, तव तु सुखं भवत्विति भावः॥ १९॥ ❀ ❀ ननु किं हरिमाराध्य तस्याः पापीयस्याः गर्भं प्रवेक्ष्यामीति तत्र सा वराकी खलु का? तस्याः किंकरस्त्वत्पितैव वराको दीनबुद्धिस्त्वं ब्रह्मपदादप्युत्कृष्टं पदं प्राप्तुं पारयिष्यसि। तदितः शीघ्रं व्रज हरिं भज मा विषीदेत्याह यस्येति चतुर्भिः। विश्वस्य विभावनाय पालनाय आत्ता स्वीकृता गुणाभिपत्तिः सत्त्वगुणाधिष्ठानं येन तस्य जितात्मश्वसनैर्विजितमनःप्राणैर्योगिभिरभिवन्द्यम्॥ २०॥ ❀ ❀ एकमत्या एकाग्रबुद्ध्या॥ २१॥ ❀ ❀ भृत्यवत्सलमिति। मद्विधमातृकोटितोऽपि त्वयि भृत्ये तस्य वात्सल्यमुदेष्यत्यतो दुःखगन्धमपि न प्राप्स्यसीति भावः। यं त्वमाश्रयिष्यसि तस्य पदाब्जयोः पद्धतिर्मार्ग एव मुमुक्षुभिर्मृग्यते, न तु सा तैरपि सुलभा इति भावः।

आश्रित्य च न अन्यस्मिन् भाव आसक्तिर्यस्य तादृशे मनसि पञ्चवार्षिकस्य ते कर्मानधिकारात् निजधर्मैर्भक्तिधर्मैर्भाविते शोधिते मनसि पुरुषम् अवस्थाप्य भजस्व ॥ २२ ॥ ❀ ❀ सुखाराध्यस्यापि देवतान्तरस्य नश्वरफलदायित्वात्त्वद्दुःखं निर्मूलयितुमसमर्थस्य भजनं परिणामदर्शिन्यहं त्वां नोपदिशामीत्याह नान्यमिति । पद्मपलाशेति । तस्य दृष्टिपातेनैव तप्तस्त्वं शीतलीभविष्यसीति भावः । हस्ते गृहीतं दीपवत् पद्मं यया, इतरैर्ब्रह्मादिभिः ॥ २३ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सा माता ध्रुवमाता सपत्न्या वाक्यं स्मरती शोकरूपेण दवाग्निना दावदग्धलतेव प्रतीयमाना विललाप सरोजस्य इव श्रीर्यस्यास्तया दृशा बाष्पकलां चोवाह ॥ १६ ॥ ❀ ❀ सा वृजिनस्य दुःखस्य पारमवधिमपश्यन्ती दीर्घं यथा भवति तथा श्वसन्ती बालकमाह हे तात ! परेषु अमंगलमपराधं मा मंस्थाः यत् यः परदुःखदः स एव तद्दुःखं भुङ्क्ते ॥ १७ ॥ ❀ ❀ सुरुच्या सत्यमभिहितमुक्तम् । यद्यस्मात् यां मामिडस्पतिः भूपः भार्येति वा-शब्दाद्दासीति वोढुं स्वीकर्तुं विलज्जते, तया मया भवान् उदरे गृहीतः तस्याः दुर्भगायाः मे मम स्तन्येन दुग्धेन वृद्धश्च ॥ १८ ॥ ❀ ❀ तत्तस्मात् हे तात ! समात्रापि मातृसपत्न्यापि तपसाराध्य पुरुषमित्यादि अव्यलीकं सत्यमेव यदुक्तं तत् विमत्सरः सन् तदुक्त्यै आदरं कृत्वा उत्तमवदध्यासनेच्छां च त्यक्त्वा आतिष्ठ कुरु यदि विमत्सरो भवितुं न शक्नोषि मातृसपत्न्यभिहितं न स्वीकरोषि उत्तमवदध्यासनं च यदीच्छसि तदापि अधोक्षजपादपद्ममेवाराधय । सुरुच्या उक्तः यः पुरुषः स एव मुक्तिं चोपासकानां ददातीति फलितोऽर्थः ॥ १९ ॥ ❀ ❀ ननु मुक्तिदो भुक्तिदः कुतो भवेत् ? न हि अभयदो भयदो भवतीति प्रसिद्धेरित्यत्राधिकार्यनुसारेण मुमुक्षुभिः सेवितो यथा मुक्तिं ददाति तथा बुभुक्षुभिः सेवितो भुक्तिमपि ददातीति मुमुक्षुबुभुक्षुमनोरथपूरकत्वं भगवतो दर्शयन्ती भगवन्तमेव सर्वपुरुषार्थप्रदमाश्रयेत्याह यस्येति त्रिभिः । विश्वविभावनाय विश्वगतमुमुक्षुबुभुक्षुजनपालनाय आत्ता आविष्कृता गुणाभिपत्तिः गुणाभिव्यक्तिर्येन तस्य जितः आत्मा मनः श्वसनः प्राणश्च यैस्तैर्मुमुक्षुभिरभिवन्द्यम् अङ्घ्रिपद्मम् अजो ब्रह्मा परिचर्य्य निषेव्य पारमेष्ठ्यं पदम् अध्यतिष्ठत् ॥ २० ॥ ❀ ❀ एकमत्या "आत्मत्वेनावगच्छन्ति ग्राहयन्ति" इति सूत्रोक्तेन तादात्म्यसम्बन्धेन मखैरिष्ट्वा भौमं दिव्यं च सुखं भुक्तिसुखम् आपवर्ग्यं मुक्तिसुखं च अभिपेदे ॥ २१ ॥ ❀ ❀ मुमुक्षुभिर्मृग्या अन्वेषणीया पदाब्जयोः पद्धतिर्मार्गं आराधनविधिर्वा यस्य तमेव नास्त्यन्यस्मिन्नुपाये उपेये वा भावो यस्य तस्मिन् स्वधर्मेण भाविते शोधिते निवेश्य आश्रय उपायोपेयभावेन शरणं व्रज अध्यासनेच्छायां सत्यां विशेषतो भज ॥ २२ ॥ ❀ ❀ तदन्यः सर्वपुरुषार्थप्रदो नास्तीत्युपदिशति । नान्यमिति ॥ २३ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

तद्व्यथाया औत्कण्ठ्यं दर्शयति—सेति । शोक एव तापकत्वाद्दावाग्निस्तेन दावाग्निमध्यगता लतेव मूर्च्छिता ;सा बाला धैर्यमुत्सृज्य त्यक्त्वा विललाप दुःखनिर्वचनपूर्वकं रोदनं चकार । सरोजश्रिया दृशा कमलवत्सुन्दरेण नेत्रेण बाष्पकलामश्रुधारामुवाह । एवं शोके हेतुमाह—वाक्यं सपत्न्याः स्मरतीति ॥ १६ ॥ ❀ ❀ सुरुच्या द्वेषाद्विषमिवोक्तमपि सुनीतेर्गुणग्राहिकायाः पथ्यमेव जातमिति धैर्यमालम्ब्य ध्रुवमुपदिष्टवतीत्याह—दीर्घमिति । राजकृतापमानस्यापरिहार्यत्वात्तद्धेतुकस्य वृजिनस्य दुःखस्य पारमन्तमपश्यती बालकं ध्रुवमाह । तत्कृतमुपदेशमेव दर्शयति—मामङ्गलमिति सार्द्धषड्भिः—हे तात ! इति स्नेहेन सम्बोधयन्ती समाश्वासयति । परेष्वमङ्गलं वक्रोक्त्यापराधं मा मंस्थाः । यत् यस्मात् यो जनः परदुःखदः स तत् स्वदत्तं दुःखमेव भुंक्ते । अतोस्माकं प्रारब्धमेवेदृक्, तस्याः कोपराध इति भावः ॥ १७ ॥ ❀ ❀ त्वं राजासनयोग्यो नेति सुरुच्या सत्यमभिहितमुक्तम् । यतो दुर्भगाया मम उदरे त्वं गृहीतः संभूतस्तस्या एव स्तन्येन वृद्धश्च । राजपत्नीत्वाद् दुर्भगत्वं कथमित्याशङ्क्याह—यामिति । यां मामिडस्पतिर्भूपतिर्भार्येति वोढुमङ्गीकर्तुं विलज्जते । वाशब्दाद्दासीत्यपि वोढुं विलज्जत इति ॥ १८ ॥ ❀ ❀ यथा मत्पुत्र उत्तमो राजासनमध्यास्ते तथा यदि त्वमध्यासनमिच्छसि तदा अधोक्षजस्य भगवतो वासुदेवस्य पादपद्ममाराधयेति यत् समात्रा मम सपत्न्या रोषादुक्तं तदपि अव्यलीकं यथार्थमेव । अतो हे तात ! विमत्सरः तस्यां दोषदृष्टिरहितः संस्तत् भगवदाराधनमातिष्ठ कुर्वित्यर्थः ॥ १९ ॥ ❀ ❀ ननु समात्रा रोषादुक्तं कथं यथार्थं स्यादित्याशङ्क्य मैवं ब्रह्मादीनामपि भगवदाराधनेनैव सर्वोत्कृष्टपदप्राप्तेरित्यभिप्रेत्याह—यस्येति द्वाभ्याम् । विश्वस्य विभावनाय पालनाय आत्ता स्वीकृता गुणाभिपत्तिः ऐश्वर्यादिषड्गुणाधिष्ठातृत्वं येन तस्य । अनेन भगवतो गुणाङ्गीकारः परार्थ एव न स्वार्थः, स्वरूपानन्देन पूर्णत्वादिति सूचितम् । यस्याङ्घ्रिपद्मं चरणकमलं परिचर्य निषेव्य अजो ब्रह्मा पारमेष्ठ्यं सर्वोत्कृष्टं पदमध्यतिष्ठत् प्राप्तवान् । नात्र संशयो निश्चितत्वादित्याह—खल्विति । सर्वोत्कृष्टत्वमेव पदस्य दर्शयति—जितेति । जितः स्ववशीकृतः आत्मा मनः श्वसनः प्राणश्च यैस्तैरभिवन्द्यं सत्कृतं यत्प्राप्त्य एव योगाभ्यासं कुर्वन्तीत्यर्थः ॥ २० ॥ ❀ ❀ तत्पुत्रत्वात्तेन ततः पारमेष्ठ्यं पदं प्राप्तं ततो ममेष्टसिद्धिः कथमित्याशङ्क्य तव पितामहस्यापि तत एवेष्टसिद्धिर्जातेत्याह—तथेति । तथा ब्रह्मणा यथा भगवन्तमाराध्योत्कृष्टं पदं प्राप्तं तथा वो युष्माकं

प्रियव्रतपुत्रान् गृहीत्वा बहुवचनं पितामहो भगवान् भगवद्दत्तभगशब्दवाच्यैश्वर्यादिमत्त्वेनेदानीं प्रसिद्धो मनुर्यं भगवन्तमेकमत्या देवादिषु तदभेददृष्ट्या पुरुदक्षिणैर्मखैरिष्ट्वा संपूज्य अन्यतो देवान्तरात् भगवदाराधनव्यतिरिक्तसाधनतो वा दुरवापं प्राप्तुमशक्यं भौमं मन्वन्तराधिपत्यजं दिव्यं स्वर्गसंबन्धि च सुखं अथ देहत्यागानन्तरमापवर्ग्यं मोक्षसुखं च अभिपेदे प्राप्तवान् ॥ २१ ॥ ❀ ❀ अतस्त्वमपि तमेव भजेत्याह—तमेवेति। हे वत्स इति स्नेहेन संबोधयन्ती त्वं पुत्रत्वान्मम स्नेहपात्रमतो न त्वां प्रतारयामि, किंतु सत्यमेव वदामीति सूचयति। तमेव पुरुषमाश्रय शरणं गच्छ ततश्च भजस्वेत्यन्वयः। तद्भजनादेव मनोरथपूर्त्तिर्भवतीत्याशयेनाह—भृत्यवत्सलमिति। कृपया भृत्यानां स्वसेवकानां मनोरथपूरकमित्यर्थः। न केवलं सकामानामेव धर्मार्थकामानेव पूरयति, किन्तु मुमुक्षूणां मोक्षदातापि स एवातस्तेपि तमेव भजन्त इत्याह—मुमुक्षुभिरिति। मुमुक्षुभिरपि मोक्षप्राप्त्यर्थं मृग्या अन्वेषणीया पदाब्जयोः पद्धतिर्मार्गो यस्य तमित्यर्थः। कथं भजनं कर्त्तव्यमित्याकांक्षायां तत्प्रकारमाह—अनन्येति। नास्ति भगवतोन्यस्मिन् देवतान्तरे पदार्थान्तरे वा भावो भावना यस्य तस्मिन् मनसि पुरुषं पुरुषोत्तमं भगवन्तमवस्थाप्य भजस्व ध्यायस्वेत्यर्थः। एवं मनसोऽनन्यभावत्वं कथं स्यात्तत्राह—द्विजेति। निजधर्मैर्यमनियमादिभिर्भाविते शोधिते। अशुद्धं हि मनो विवेकाशक्तं तुच्छान् भावयति शुद्धं तु परमार्थभूतं भगवन्तमेवेति भावः ॥ २२ ॥ ❀ ❀ ननूपास्यान्तरसद्भावात्तमेव भजस्वेति कथमुच्यत इत्याशङ्क्य तव बालकस्य दुःखनिवर्तकः स एव सर्वोत्तमत्त्वादित्याशयेनाह—नान्यमिति। पद्मपलाशवद्भक्तजनतापहारके शोभमाने लोचने यस्य तस्मादन्यं कञ्चनापि ते तव दुःखनिवर्त्तकं न मृगयामि विचारेण न पश्यामि। भगवतः सर्वोत्तमत्वमेव दर्शयति—य इति। इतरैर्ब्रह्मादिभिः प्रसादार्थं विमृग्यमाणया अन्विष्यमाणयाऽपि लीलया हस्तगृहीतपद्मया श्रिया स्वस्मिंस्तत्प्रसादार्थं यो मृग्यते अपेक्ष्यत इति। अङ्ग इति संबोधनं विश्वासार्थम् ॥ २३ ॥

### भाषानुवादः

उसका धीरज टूट गया। वह दावानलसे जली हुई बेलके समान शोकसे सन्तप्त होकर मुरझा गयी तथा विलाप करने लगी। सौतकी बातें याद आनेसे उनके कमल-सरीखे नेत्रोंमें आँसू भर आये ॥ १६ ॥ ❀ ❀ उस बेचारीको अपने दुःखपारावारका कहीं अन्त भी नहीं दिखायी देता था। उसने गहरी साँस लेकर ध्रुवसे कहा, 'बेटा! दूसरोंके लिये किसी प्रकारके अमङ्गलकी कामना मत कर। जो मनुष्य दूसरोंको दुःख देता है, उसे स्वयं ही उसका फल भोगना पड़ता है ॥ १७ ॥ ❀ ❀ सुरुचिने जो कुछ कहा है, ठीक ही है, क्योंकि महाराजको मुझे 'पत्नी' तो क्या, 'दासी' स्वीकार करनेमें भी लज्जा आती है। तूने मुझ मन्दभागिनीके गर्भसे ही जन्म लिया है, और मेरे ही दूधसे तू पला है ॥ १८ ॥ ❀ ❀ बेटा! सुरुचिने तेरी सौतेली माँ होनेपर भी बात बिल्कुल ठीक कही है; अतः यदि राजकुमार उत्तमके समान राजसिंहासनपर बैठना चाहता है तो द्वेषभाव छोड़कर उसीका पालन कर। बस, श्रीअधोक्षज भगवान्के चरणकमलोंकी आराधनामें लग जा ॥ १९ ॥ ❀ ❀ संसारका पालन करनेके लिये सत्त्वगुणको अङ्गीकार करनेवाले उन श्रीहरिके चरणोंकी आराधना करनेसे ही तेरे परदादा श्रीब्रह्माजीको वह सर्वश्रेष्ठ पद प्राप्त हुआ है, जो मन और प्राणोंको जीतनेवाले मुनियोंके द्वारा भी वन्दनीय है ॥ २० ॥ ❀ ❀ इसी प्रकार तेरे दादा स्वायम्भुव मनुने भी बड़ी-बड़ी दक्षिणाओंवाले यज्ञोंके द्वारा अनन्यभावसे उन्हीं भगवान्की आराधना की थीं, तभी उन्हें दूसरोंके लिये अति दुर्लभ लौकिक, अलौकिक तथा मोक्षसुखकी प्राप्ति हुई ॥ २१ ॥ ❀ ❀ बेटा! तू भी उन भक्तवत्सल श्रीभगवान्का ही आश्रय ले। जन्म-मृत्युके चक्रसे छूटनेकी इच्छा करनेवाले मुमुक्षुलोग निरन्तर उन्हींके चरणकमलोंके मार्गकी खोज किया करते हैं। तू स्वधर्मपालनसे पवित्र हुए अपने चित्तमें श्रीपुरुषोत्तम भगवान्को बैठा ले तथा अन्य सबका चिन्तन छोड़कर केवल उन्हींका भजन कर ॥ २२ ॥ ❀ ❀ बेटा! उन कमल-दल-लोचन श्रीहरिको छोड़कर मुझे तो तेरे दुःखको दूर करनेवाला और कोई दिखायी नहीं देता। देख, जिन्हें प्रसन्न करनेके लिये ब्रह्मा आदि अन्य सब देवता ढूँढ़ते रहते हैं, वे श्रीलक्ष्मीजी भी दीपककी भाँति हाथमें कमल लिये निरन्तर उन्हीं श्रीहरिकी खोज किया करती हैं ॥ २३ ॥

### मैत्रेय[1] उवाच

**एवं संजल्पितं[2] मातुराकर्ण्यार्थागमं वचः। संनियम्यात्मनाऽऽत्मानं निश्चक्राम पितुः पुरात् ॥ २४ ॥**
**नारदस्तदुपाकर्ण्य ज्ञात्वा तस्य चिकीर्षितम्। स्पृष्ट्वा मूर्धन्यघघ्नेन पाणिना प्राह विस्मितः ॥ २५ ॥**
**अहो तेजः क्षत्रियाणां मानभङ्गममृष्यताम्। बालोऽप्ययं हृदा धत्ते यत्समातुरसद्वचः ॥ २६ ॥**

---

१. प्राचीनपुस्तके 'मैत्रेय उवाच' नास्ति। २. प्रा० पा०—संकल्पितं।

नारद उवाच

नाधुनाप्यवमानं ते सम्मानं वापि पुत्रक। लक्षयामः कुमारस्य सक्तस्य क्रीडनादिषु ॥ २७ ॥
विकल्पे विद्यमानेऽपि न ह्यसंतोषहेतवः। पुंसो मोहमृते भिन्ना यल्लोके निजकर्मभिः ॥ २८ ॥
परितुष्येत्ततस्तात तावन्मात्रेण पूरुषः। दैवोपसादितं यावद्वीक्ष्येश्वरगतिं बुधः ॥ २९ ॥
अथ मात्रोपदिष्टेन योगेनावरुरुत्ससि। यत्प्रसादं स वै पुंसां दुराराध्यो मतो मम ॥ ३० ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

संजल्पितं विलापम्। ततोऽर्थस्यागमः प्राप्तिर्यस्मात्तथाभूतं वच आकर्ण्य ॥ २४-२५ ॥ ❀ ❀ विस्मित इत्युक्तं तदेवाह। अहो तेजः प्रभावः ॥ २६-२७ ॥ ❀ ❀ विकल्पे मानापमानविवेके सत्यपि भिन्ना न सन्ति। किन्तु मोहकल्पिता एव ते इत्यर्थः। कुतः। यत्सुखं दुःखं वा तन्निजकर्मभिरेव भवति यतः ॥ २८ ॥ ❀ ❀ उपशमोपदेशेन निवर्तयति। परितुष्येदिति षड्भिः। ईश्वरगतिं वीक्ष्येश्वरानुकूल्यं विना नोद्यमाः फलहेतव इति ज्ञात्वा परितुष्येत्संतोषमेव कुर्यात् ॥ २९ ॥ ❀ ❀ दुष्करश्च तवायमुद्यम इत्याह अथेति द्वाभ्याम्। यस्य प्रसादमवरोद्धुं प्राप्तुमिच्छसि ॥ ३० ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

बालत्वाद्रोषतोषयोः क्षणकालीनत्वेन समत्वान्मातृवचः श्रुत्वापि गृह एवावस्थानं हृदि संनिधाय तत्समर्थनाय ततो निर्गमनं वा युक्तमिति ध्रुवेण द्वयोर्मध्ये किमकारीत्यांतरीं शङ्कां परिहर्तुमाह—एवमिति। ततो विलापाकर्णनानन्तरम्। अर्थस्याभिप्रेतस्य। आत्मना धैर्येणात्मानं मनः ॥ २४ ॥ ❀ ❀ ध्रुवस्याभीष्टसिद्धिलक्षणं नारदसंवादं वक्ति नारद इति। उपाकर्ण्येत्यनेन नारदस्य दूरश्रवणशक्तिर्योगींद्रत्वात्स्वाभाविकीति सूचयति। सर्वप्राणिचित्तविषयं ज्ञानं वा योगसिद्धं स्पृष्ट्वेति गुरुप्रसादं ध्वनयति—अघघ्नेनेति। सर्वदुरितविनाशकेन पित्रादिद्वेषनिमित्तदोषनाशं वक्ति ॥ २५ ॥ ❀ ❀ तदेव विस्मितत्वमेव तेजो धैर्यलक्षणम्। अमृष्यतामसहमानानां समातुः समानमातुः सुरुच्याः ॥ २६ ॥ ❀ ❀ पुत्रकेति पुत्रसदृशत्वाच्छिष्यस्येत्यभिप्रेत्योक्तम्। सादृश्येऽपि कप्रत्ययः ॥ २७ ॥ ❀ ❀ असन्तोषहेतवो दुःखहेतवोऽमानादयस्तत्कर्त्तारो वा। इत्यर्थ इति। अज्ञानकल्पिता एवेति भावः। अत्र विश्वनाथः–विकल्पो भेदस्तस्मिन्विद्यमानेपि ज्ञानयोगिनां तावद्विकल्पो नास्त्येवेति को वाऽसन्तोषः के वा तस्य हेतवः। भक्तियोगिनां कर्मयोगिनां च विकल्पो विद्यत एवेति विद्यमाने विकल्पे पुंसो मोहं विनाऽसन्तोषस्य हेतवोऽपमानादयस्तत्कर्त्तारश्च भिन्ना न सन्ति किं तु मोह एवेत्यर्थः। यद्यस्माल्लोके सर्वत्र निजकर्मभिरेवापमानादयो भवंतीत्यात्मानं विना कस्मै दोषो देय इत्यत एव विवेकिनो भक्ताः सकर्षणश्च केचिद्भवंतीति भावः ॥ २८ ॥ ❀ ❀ निवर्त्तयति-तपस इति। यतः कर्मैव दुःखादिहेतुस्ततो हेतोः यत्र फलप्रापकं तत्रैवेश्वरानुकूल्यं भवतीति दैवोपपादितेनैव तुष्येदिति भावः। बुध इति। स्वोपार्जितविवेकबुद्ध्येत्याह इति ज्ञात्वेश्वरप्रेरितमेव कर्म फलतीति विचार्य ॥ २९ ॥ ❀ ❀ तव तु प्रारिप्सितोयमुद्यमोतिकठिन इत्याह—अथेति। अथ यदि योगेनोपायेन मातृपदमत्रोभयमातृपरं ज्ञेयं सुरुच्यापि तपसाराध्य पुरुषमित्युपदिष्टत्वात्। दुराराध्यस्य कुतः प्रसादः कुतस्तरां फलाप्तिरिति भावः। वा इत्यनेन स्वानुभवसिद्धमिति दर्शयति ॥ ३० ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

ततो विलापश्रवणानन्तरम् अर्थस्य पुरुषार्थस्य आत्मना बुद्ध्या आत्मानं मनो निरुद्ध्य ॥ २४ ॥ ❀ ❀ भक्तसंगतेर्यादृच्छिकत्वाद्यदृच्छयागतो नारदः तत्पुरान्निष्क्रमणं तत्पुरवासिभ्य उप समीप एव श्रुत्वा अस्य ध्रुवस्य चिकीर्षितं कर्तुमभीष्टं हरेराराधनं प्राह स्वगतम् ॥ २५ ॥ ❀ ❀ तदेव विस्मितत्वमेव यद्यस्मात् हृदा धत्त एव न तु विस्मरति ॥ २६ ॥ ❀ ❀ पूर्वोक्तं स्वगतं नारद उवाचेति स्फुटोक्तयाऽगम्ये अपिः सम्भावनायाम् ॥ २७ ॥ ❀ ❀ असंतोषहेतव अपमानादयस्तत्कर्त्तारश्च मोहमज्ञानम् ऋते विना न सन्ति कारणं विना कार्य्याभावात्। अत एव किन्त्वित्यादिरार्थिकोऽर्थः कार्य्यकारणभावे हेतुः यतो मोहादभिन्ना इति अकारप्रश्लेषमन्तरा ऋते भिन्ना इति पौनरुक्त्यमेव स्यात्। भिन्ना न सन्तीति अभिन्ना इत्यस्य व्याख्यानं यतो हेतोः तथा चापमानादिकार्य्यसुखदुःखयोः कर्ममूलकत्वात् किमर्थं परस्मै क्रोधादिकं कर्त्तव्यमिति भावः ॥ २८ ॥ ❀ ❀ ईश्वरानुकूल्यं विनेत्यादिव्याख्यानात् दैवेन प्राचीनकर्मणा प्रापितं यावत् यत्प्रमाणकं सुखं दुःखं तावन्मात्रेण परितुष्येत् ॥ २९ ॥ ❀ ❀ योगेन भजस्व पुरुषमित्युक्तेः भक्तियोगेन वास्तवार्थे अन्येषां पुंसां दुराराध्यः भक्तेस्सुदुर्लभत्वात् तव तु स्वाराध्यः ॥ ३० ॥

## श्रीमद्वीरराघवव्याख्या

सुनीत्युक्तमुपसंहरन् ध्रुवस्य चेष्टामाह मुनिः। एवमिति। मातुः संजल्पितं विलापनं ततः अर्थागमम् अर्थस्य स्वाभिलषितस्यार्थस्यागमो यस्मात्तथाभूतं वच आकर्ण्य आत्मना स्वेनैवात्मानं मनः सन्नियम्य समाधाय पितुरुत्तानपादस्य पुरान्निश्चक्राम निर्गतः॥ २४॥ ❀ ❀ तन्निष्क्रमणमुपाकर्ण्य आश्रुत्य त्रैकालज्ञो नारदः अस्य ध्रुवस्य चिकीर्षितं ज्ञात्वा चागत्येति शेषः। अघघ्नेन दुरितहारिणा पाणिना शिरसि संस्पृश्य विस्मितः प्राह॥ २५॥ ❀ ❀ विस्मित इत्युक्तं तदेवाह। अहो इति। मानभङ्गम् अभिमानविहितम् अमृष्यताम् असहमानानां क्षत्रियाणां तेजः प्रभावः अहो विस्मियनीयः, यत् यस्मात् अयं ध्रुवः बालोऽपि समातुः मातुः सपत्न्या असद्वचः दुष्टवाक्यं यत् हृदा हृदयेन धत्ते मनसि स्थापयतीत्यर्थः॥ २६॥ ❀ ❀ † नारदोक्तिमेवाह क्वेति। हे वत्स! भवान् ऋद्धिमत् समृद्धिमत् स्वगृहं हित्वा एकः असहायः क्व याति गच्छति अङ्ग हे ध्रुव! त्वां स्वजनादुत्थया उत्पन्नया अवमत्या पराभूत्या संतप्तं नितरां तप्तमालक्षये उत्प्रेक्षये॥ २६ अ॥ ❀ ❀ अत्र क्वचित्पुस्तकेषु "किमेतद्भगवन् ध्यानात् दृष्टं तद्योगराधसा। नोत्सहे सुरुचेर्वाचा समाधातुं मनः क्षतम्॥" इत्यधिकः श्लोकः पठ्यते। तत्रायं ध्रुवोत्तरत्वेन व्याख्येयः हे भगवन्! नारद! एतन्मम स्वजनोत्थपराभवसंतापादिकं योगराधसा योगप्रभावेण यद्ध्यानं सर्ववस्तुसाक्षात्कारापादकं तस्मात् दृष्टं किन्त्वयेति शेषः। अहं तु सुरुचेर्वाचा क्षतं व्यथितं मनः समाधातुं नोत्सहे न शक्नोमि। एवमुक्तो नारदः पुनराह। नाधुनाप्यवमानमिति। एतच्छ्लोकाभावे सर्वोऽपि ग्रन्थो नारदोक्तिपरत्वेन व्याख्येयः। हे पुत्रक! कुमारस्य अत एव क्रीडनादिष्वासक्तस्य तव अधुना बाल्यदशायाम्। अवमानं सन्मानं वा न पश्यामि। बालो हि मानावमानावनादृत्य परं क्रीडासक्तः अतस्तवापि मानावमानौ न स्त इति पश्यामीत्यभिप्रायः॥ २७॥ ❀ ❀ यदि ब्रूयात् अहं वयसा बालो न बुद्ध्येति तत्राह विकल्प इति। विकल्पे मानावमानविवेके सत्यपि विमोहं विना भिन्ना व्यतिरिक्ताः असन्तोषहेतवो न सन्ति, किन्तु मोह एवासन्तोषे हेतुरित्यर्थः। कुतः यत्सुखं दुःखं वा लोके तन्निजकर्मभिरेव भवति। यद्वा अहं बालोऽपि मानावमानबुद्धिमानिति ब्रूयास्तर्हीयम् असन्तोषमूला बुद्धिर्देहात्मभ्रममूला न तात्त्विकीत्याह। विकल्प इति। सर्वत्र ज्ञानैकाकारतया एकरूपे आत्मनि विकल्पे देवमनुष्यादिभेदे अविद्यमाने इति छेदः। असत्यपि देवमनुष्यादिभेदानामात्माकारत्वाभावेऽपीत्यर्थः। पुंसां जीवानां मोहमृते देवादिशरीरेष्वात्माभिमानं विना असन्तोषहेतवो न सन्ति, देहात्मभ्रम एवासन्तोषहेतुरित्यर्थः। विद्यमान इति वा छेदः, अपिशब्द उक्तसमुच्चयार्थः विकल्प इत्यनेन सम्बध्यते। विकल्पे देवमनुष्यादिभेदे अपि शब्दात्तत्प्रयुक्तमानावमानादिके च सति मोहं देहात्माभिमानमृते असन्तोषहेतुरन्यो नास्तीत्यर्थः। असन्तोषस्य देहात्माभिमानाधीनत्वे हेतुमाह भिन्ना यदिति। अत्र लोका इति प्रथमान्तपाठस्सुगमः, लोकाश्चेतनवर्गा निजकर्मभिरेव भिन्नाः कर्मकृतदेवादिदेहभिन्ना इति यत् अतो देहे सति तत्रात्मभ्रम एवावमानद्वारा असन्तोषहेतुः। असन्तुष्टस्य चेतनस्य देहात्माभिमानित्वादित्यर्थः। यद्वा सप्तम्यन्तपाठः। भिन्नेति भावे क्तः स्त्रीत्वमार्षं भिदेत्यर्थः, देवादिदेहभेदे को हेतुस्तत्राह। लोके ज्ञानैकाकारे चेतनवर्गभिन्ना देवमनुष्यादिभिदा यत् यतः कर्मभिर्भवति। अनेन कर्मकृतो देवादिदेहभेदस्तत्कृतो मानावमानमूलो देहात्मभ्रमस्ततोऽसंतोषरूपं दुःखमित्यभिप्रेतम्॥ २८॥ ❀ ❀ एतदेवोपशमोपदेशेन निवर्तयति परितुष्येदिति षड्भिः। ततो देहात्मभ्रमस्यैवासन्तोषहेतुत्वाद् बुधः देहविलक्षणात्मज्ञानी पुरुषः ईश्वरगतिं वीक्ष्य ईश्वरानुकूल्यं विना नोद्यमाः फलहेतवः इति ज्ञात्वा यावत्सुखं दैवेनोपसादितं प्रापितं तावन्मात्रेण परितुष्येत् नाधिकं लिप्सेत्। अतोऽधिकसुखार्थं नोद्यमः कार्य इति भावः॥ २९॥ ❀ ❀ दुष्करश्च तवायम् उद्यम इत्याह। अथेति द्वाभ्याम्। अथ ननु मात्रोपदिष्टेन भक्तियोगेन यस्य भगवतः प्रसादम् अवरोद्धुं प्राप्तुमिच्छसि स वै भगवान् पुंसां दुःखेनाप्याराधयितुमशक्य इति मे मया ज्ञातो मतः॥ ३०॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

बालत्वाद्रोषतोषयोः क्षणकालीनत्वेनासमत्वान्मातृवचः श्रुत्वापि गृह एवावस्थानं हृदि सन्निधाय तत्समर्थनाय ततो निर्गमनं वा युक्तमिति ध्रुवेण द्वयोर्मध्ये किमकारीत्यान्तरीं शङ्कां परिहर्तुमाह। एवमिति। अर्थस्याभिप्रेतस्यागमः प्राप्तिर्यस्मात्तत्तथा तदा आत्मानं मनः आत्मना धैर्यगुणेन॥ २४॥ ❀ ❀ ध्रुवो नाम महात्मेति द्योतयंस्तस्य स्वाभीष्टसिद्धिलक्षणं नारदसंवादं वक्ति नारद इति। उपाकर्ण्येत्यनेन नारदस्य दूरश्रवणशक्तिर्योगीन्द्रत्वात् स्वाभाविकीति सूचयति सर्वप्राणिचित्तविषयं ज्ञानं

---

† क्व यात्येको भवान् वत्स! हित्वा स्वगृहमृद्धिमत्। लक्षये त्वावमत्याङ्ग! सन्तप्तं स्वजनोत्थया॥

ध्रुव उवाच

किमेतद्भगवन्! ध्यानाद्दृष्टं किं योगराधसा। नोत्सहे सुरुचेर्वाचा समाधातुं मनः क्षतम्॥

इति वीरराघवविजयध्वजयोरधिकः पाठः टीका च।

वा योगसिद्धमिति स्पृष्ट्वेत्यादिना गुरुप्रसादं ध्वनयति अघघ्नेन सर्वदुरितविनाशकेनेति पित्रादिद्वेषनिमित्तदोषनाशं सूचयति ॥ २५ ॥ ❀ ❀ विस्मित इत्युक्तमभिनयति अहो इति । तेजो धैर्यलक्षणम् अमृष्यतामसहमानानां समातुः समानमातुः सुरुच्याः ॥ २६ ॥ ❀ ❀ किं प्राहेति तत्राह क यातीति । लक्ष्ये लक्षणवृत्त्या जानामि ॥ २६ अ ॥ ❀ ❀ अत्र ध्रुवेण किमुत्तरं दत्तमिति तत्राह । किं न त इति । ध्यानेन ज्ञानं लक्षयति कार्यकारणसम्बन्धात् ते त्वया ध्यानजातेन योगराधसाऽष्टांगयोगजनितदूरदर्शनशक्तिलक्षणसामर्थ्येन वा किं न दृष्टं सर्वं दृष्टमेव तथापि वक्ष्यामीति शेषः । किं तदिति तत्राह । नोत्सह इति ॥ २६ ब ॥ ❀ ❀ नारदेनापि किं प्रत्युत्तरमुक्तमत्राह । नाधुनेति ॥ २७ ॥ ❀ ❀ ननु क्रीडनादिषु सक्तस्य बालस्य न युक्तमन्यस्य विवेकिनः कथमित्याशङ्क्य नितरामीदृशस्य सन्तोषहेतुत्वमिति बोधयति । विकल्प इति । * विकल्पे शत्रुमित्रादिविविधकल्पने विद्यमानेऽपि पुंसो मोहमृते भ्रममन्तरेणाऽसन्तोषहेतवो मनःखेदजनका न सन्ति । कुतः लोका जना भिन्नाः स्वानुष्ठितैर्निजकर्मभिरुत्तमाधममध्यमभेदेन नानाविधा इति यस्मात् ॥ २८ ॥ ❀ ❀ तत ईश्वरगतिं बुधो विद्वान्यद्दैवोपसादितं वीक्ष्य तावन्मात्रेण परितुष्येदित्यन्वयः । ईश्वरगतिं वीक्ष्य यावद्दैवोपसादितं तावन्मात्रेणेति वा अनेन सुरुच्या दुर्वचस्तव सन्तापकारणं न भवतीत्युक्तं भवति ॥ २९ ॥ ❀ ❀ हरेः प्रसादजनके तपसि स्थितां बुद्धिं दृढां विधातुं बाधकमभिधत्ते । अथेति । अथ यदि मात्रोपदिष्टेन योगेनोपायेन हरेः प्रसादार्थं हरिमत्रावरुरुत्ससि अनुग्रहोन्मुखीकर्तुमिच्छसि तर्ह्यपि स हरिर्मम पुंसां दुराराध्यो मतः कुतस्तरां फलाप्तिरित्यर्थः । वा इत्यनेन स्वानुभवसिद्धमिति दर्शयति ॥ ३० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

नारदो यदृच्छयैवागतः सन्निति ज्ञेयम् ॥ २५ ॥ ❀ ❀ अहो इति स्वगतं वाक्यम्, उवाचेत्यग्रे स्फुटोक्तिख्यापनात् । तेजः परिभवेच्छा ॥ २६-२७ ॥ ❀ ❀ विकल्पे विद्यमानेऽपि असन्तोषहेतवो मोहमृते न सन्तीत्येव यतोऽमी मोहाद्भिन्नाः । यच्च सुखं दुःखं कर्मभिरिति लोके श्रूयते तत्र च पक्षे तानि मोहमृते न सन्तीत्यर्थः ॥ २८ ॥ ❀ ❀ यत्र फलप्रापकं दैवं तत्रैवेश्वरानुकूल्यं भवतीति दैवोपसादितेनैव परितुष्येदिति भावः । दैवमीश्वरो वा ॥ २९-३१ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

प्राह स्वगतम् ॥ २५-२७ ॥ ❀ ❀ विकल्पो भेदस्तस्मिन् विद्यमानेऽपीति ज्ञानयोगिनां तावद्विकल्पो नास्त्येवेति को वाऽसन्तोषः के वा तस्य हेतवः । भक्तियोगिनां कर्मयोगिनां विकल्पो विद्यत एवेति विद्यमानेऽपि विकल्पे पुंसो मोहं विना असन्तोषस्य हेतवोऽवमानादयस्तत्कर्तारश्च भिन्ना न सन्ति किन्तु मोह एवेत्यर्थः । यद्यस्माल्लोके सर्वत्र निजकर्मभिरेवाशुभैरसन्तोषहेतवोऽवमानादयः तत्कर्त्तारश्च भवन्तीत्यात्मानं विना कस्मै दोषो देय इत्यत एव विवेकिनो भक्ताः कर्मिणश्च केचिन्निर्मत्सरा भवन्तीति भावः ॥ २८ ॥ ❀ ❀ यस्मादेव तस्माद्दैवेन प्राचीननिजकर्मणा उपसादितं प्रापितं यावत् यत्प्रमाणकं सुखं दुःखं वा तावन्मात्रेण परितुष्येत् विवेकेन स्वोपार्जितबुद्ध्येति भावः । तत्र ईश्वरगतिं वीक्ष्य ईश्वरप्रेरितमेव कर्म फलतीति ज्ञात्वेत्यर्थः ॥ २९ ॥ ❀ ❀ तव तु प्रारिप्सितोऽयमुद्यमोऽतिकठिन इत्याह अथेति । अवरोद्धुं प्राप्तुमिच्छसि ॥ ३०-३१ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

संजल्पितं विलापं ततः अर्थस्य भजनीयस्य आगमः अवधारणं यस्मात्तद्वचः आकर्ण्य आत्मना बुद्ध्या आत्मनं मनः ॥ २४ ॥ ❀ ❀ नारदो भगवान् सर्वदेशकालज्ञस्तदुपाकर्ण्य अस्य ध्रुवस्य चिकीर्षितं च ज्ञात्वा विस्मितः सन् तन्निकटमागत्य अघघ्नेन पाणिना मूर्ध्नि स्पृष्ट्वा प्राह ॥ २५ ॥ ❀ ❀ अमृष्यतामसहमानानाम् अहो तेजः प्रभावः, यद्यतो बालोऽपि अयं समातुः मातृसपत्न्याः असद्वचः हृदा धत्ते ॥ २६ ॥ ❀ ❀ क्रीडनम् आदिर्येषां भोजनशयनादीनां तेषु ॥ २७ ॥ ❀ ❀ विकल्पे सन्मानावमानभेदे सत्यपि पुंसो मोहमृते भिन्नाः मोहव्यतिरिक्तकृताः असन्तोषस्य सन्मानावमानप्राप्तौ रागद्वेषरूपमनोवृत्त्यनुपरामस्य हेतवो न हि सन्ति, किन्तु मोहः स्वकृतकर्माबोध एव हेतुः, यत् यौ सन्मानावमानौ निजकर्मभिर्भवतः ॥ २८ ॥ ❀ ❀ एवमसंतोषनिवृत्तिप्रकारं प्रदर्श्य सन्तोषरहस्योपदेशेन तन्निवृत्तिप्रकारं दर्शयन् निवर्तयति परितुष्येदित्यादिषड्भिः । यस्मात्स्वकर्मजन्यसन्मानावमानभुग्अयं जीवस्ततः कारणात् हे तात ! यावत् दैवेन कर्मफलदेन भगवतोपसादितं तावत् ईश्वरगतिं प्राणिकर्मद्वारैव तदनुरूपपदार्थदातृत्वं वीक्ष्य बुद्ध्या परितुष्येत् ॥ २९ ॥ ❀ ❀ मात्रोपदिष्टेन योगेन भक्तियोगेन यस्य प्रसादं त्वमवरुरुत्ससि सः पुंसां दुराराध्यो मम मतः ॥ ३०-३१ ॥

---

* विकल्पे इत्यस्यान्यथाज्ञाने इति मोहमित्यस्यापि तथैव प्रतीतेः अतस्तात्पर्यानुसारेण व्याख्याति शत्रुमित्रादीति । तेन विशब्दः विविधत्वार्थ इत्युक्तं भवति मोहमित्यस्य भ्रममिति ।

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं मातृपदेशं श्रुत्वा ध्रुवः किं चकारेत्यपेक्षायामाह—एवमिति। एवमुक्तप्रकारकं मातुः संजल्पितं रोदनपूर्वककथितमर्थस्य स्वाभिलषितपदार्थस्यागमः प्राप्तिर्यस्मात्तथाभूतं वच आकर्ण्य श्रुत्वा आत्मना बुद्ध्या आत्मानं मनः संनियम्य धैर्ययुक्तं कृत्वा ध्रुवः पितुः पुरान्निश्चक्राम भगवदाराधने तत्र विक्षेपमालक्ष्य तदाराधनार्थं ततो निर्गत इत्यर्थः ॥ २४ ॥ ❁ ❁ एवं मातृवचनविश्वासान्निःसृतस्यापि ध्रुवस्य सकामत्वात्तादृशफलकामाधिकारिकतद्विधिश्रवणाभावेन तत्प्रकारस्याज्ञानादयथाकरणे हठाद्बालत्वान्मरणमेव स्यादिति ज्ञात्वा सर्वज्ञः परमदयालुर्नारद आगत्य तमुपदिष्टवानित्याह—नारद इति। सर्वज्ञत्वात्स्वस्थाने स्थित एव तत् सुनीत्युपदेशवचनमाकर्ण्य श्रुत्वास्य ध्रुवस्य चिकीर्षितं कर्तुमिष्टं भगवदाराधनं च ज्ञात्वा विस्मितः संस्तत्रागत्याऽघघ्नेन पापनिवर्त्तकेन स्वपाणिना तस्य मूर्द्धनि स्पृष्ट्वा प्राहेत्यन्वयः ॥ २५ ॥ ❁ ❁ विस्मित इत्युक्तं तमेव विस्मयमभिनयेन दर्शयति—अहो इति। मानभङ्गममृष्यतामसहमानानां क्षत्रियाणामहो तेजः आश्चर्यजनकः प्रभावः। कुतः यत् यस्मादयं ध्रुवो बालोपि समातुः मातुः सपत्न्याः सुरुच्याः असद्वचः तिरस्कारवचनं हृदा धत्ते धारयति ॥ २६ ॥ ❁ ❁ नारदो यत् प्राह तद्दर्शयति—नाधुनेत्यष्टभिः। हे पुत्रक इति सम्बोधनमाश्वासनार्थे। अधुनापि आयुषः पञ्चवर्षातीतेपि ते तव अवमानं संमानं वापि न लक्षयामः अवमानसंमानानुसंधानं न पश्यामः। कुतो बालकत्वादित्यभिप्रेत्याह—कुमारस्येत्यादिना ॥ २७ ॥ ❁ ❁ ननु यद्येतदनुसन्धानं न स्यात्तदा कुतो गृहान्निर्गतः स्यामित्याशङ्क्याह—विकल्पेति। विकल्पे मानापमानानुसन्धाने विद्यमानेपि पुंसोऽसंतोषहेतवः अपमानहेतवः शत्रवो मोहमृते भिन्ना बहिर्हि निश्चयेन न सन्ति, मोहकल्पिता एव ते। कुतः यत् यस्माल्लोके सुखदुःखादि सर्वं निजकर्मभिर्भवेत् ॥ २८ ॥ ❁ ❁ इदानीं परितोषमुपदिशन् कामनां व्यावर्त्तयति—परितुष्येदिति। यस्मात्स्वकर्मनिर्मितमेव लोको भुङ्क्ते ततस्तस्मात् हे तात! स्वकर्मानुसारेण सुखदुःखादिकमीश्वरो ददात्येवातस्तामीश्वरगतिं वीक्ष्य यावद्दैवेन स्वप्रारब्धेन तदनुसारेणेश्वरेण वोपसादितं प्रापितं तावन्मात्रेण बुधः पुरुषः परितुष्येदित्यन्वयः। अतः स्वप्रारब्धप्राप्तं तु त्वया भुज्यत एव, ततोधिककामनया त्वं गृहान्निर्गतोसि तदयुक्तमिति भावः ॥ २९ ॥ ❁ ❁ ननु प्रारब्धमप्युल्लङ्घ्य ततोऽधिकं दातुं भगवान् समर्थ एव परमेश्वरत्वादित्याशङ्क्याह—अथेति। अथ मदुक्ताद्भिन्नप्रकारेण मात्रोपदिष्टेन योगेनोपायेन यस्य भगवतः प्रसादं त्वमवरुरुत्ससि अवरोद्धुं प्राप्तुमिच्छसि स वै निश्चयेन मम पुंसां दुराराध्यो दुःखेनाराध्यो मतः ॥ ३० ॥

## भाषानुवादः

श्रीमैत्रेयजी कहते हैं—माता सुनीतिने जो वचन कहे, वे अभीष्ट वस्तुकी प्राप्तिका मार्ग दिखानेवाले थे। अतः उन्हें सुनकर ध्रुवने बुद्धिद्वारा अपने चित्तका समाधान किया। इसके बाद वे पिताके नगरसे निकल पड़े ॥ २४ ॥ ❁ ❁ यह सब समाचार सुनकर और ध्रुव क्या करना चाहता है, इस बातको जानकर नारदजी वहाँ आये। उन्होंने ध्रुवके मस्तकपर अपना पापनाशक करकमल फेरते हुए मन-ही-मन विस्मित होकर कहा ॥ २५ ॥ ❁ ❁ 'अहो! क्षत्रियोंका कैसा अद्भुत तेज है, वे थोड़ा-सा भी मान-भङ्ग नहीं सह सकते। देखो, अभी तो यह नन्हा-सा बच्चा है; तो भी इसके हृदयमें सौतेली माताके कटु वचन घर कर गये हैं' ॥ २६ ॥ ❁ ❁ तत्पश्चात् नारदजीने ध्रुवसे कहा—बेटा! अभी तो तू बच्चा है, खेल-कूदमें ही मस्त रहता है; हम नहीं समझते कि इस उम्रमें किसी बातसे तेरा सम्मान या अपमान हो सकता है ॥ २७ ॥ ❁ ❁ यदि तुझे मानापमानका विचार ही हो, तो बेटा! असलमें मनुष्यके असन्तोषका कारण मोहके सिवा और कुछ नहीं है। संसारमें मनुष्य अपने कर्मानुसार ही मान-अपमान या सुख-दुःख आदिको प्राप्त होता है ॥ २८ ॥ ❁ ❁ तात! भगवान्की गति बड़ी विचित्र है, इसलिये उसपर विचार करके बुद्धिमान् पुरुषको चाहिये दैववश उसे जैसी भी परिस्थितिका सामना करना पड़े, उसीमें सन्तुष्ट रहे ॥ २९ ॥ ❁ ❁ अब, माताके उपदेशसे तू योग-साधनद्वारा जिन भगवान्की कृपा प्राप्ति करने चला है—मेरे विचारसे साधारण पुरुषोंके लिये उन्हें प्रसन्न करना बहुत कठिन है ॥ ३० ॥

मुनयः पदवीं यस्य निःसङ्गेनोरुजन्मभिः। न विदुर्मृगयन्तोऽपि तीव्रयोगसमाधिना ॥ ३१ ॥
अतो निवर्ततामेष निर्बन्धस्तव निष्फलः। यतिष्यति भवान् काले श्रेयसां समुपस्थिते ॥ ३२ ॥
यस्य यद् दैवविहितं स तेन सुखदुःखयोः। आत्मानं तोषयन्देही तमसः पारमृच्छति ॥ ३३ ॥
गुणाधिकान्मुदं लिप्सेदनुक्रोशं गुणाधमात्। मैत्रीं समानादन्विच्छेन्न तापैरभिभूयते ॥ ३४ ॥

### ध्रुव उवाच

सोऽयं शमो भगवता सुखदुःखहतात्मनाम्। दर्शितः कृपया पुंसां दुर्दर्शोऽस्मद्विधैस्तु यः ॥ ३५ ॥

अथापि मेऽविनीतस्य क्षात्त्रं घोरमुपेयुषः । सुरुच्या दुर्वचोबाणैर्न भिन्ने श्रयते हृदि ॥ ३६ ॥
पदं त्रिभुवनोत्कृष्टं जिगीषोः साधु वर्त्म मे । ब्रूह्यस्मत्पितृभिर्ब्रह्मन्नन्यैरप्यनधिष्ठितम् ॥ ३७ ॥
नूनं भवान् भगवतो योऽङ्गजः परमेष्ठिनः । वितुदन्नटते वीणां हिताय[१] जगतोऽर्कवत् ॥ ३८ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

निःसंगेन तीव्रयोगेन युक्तेन समाधिना मृगयन्तोऽपि यस्य पदवीं मार्गं न विदुः स देवो दुराराध्यः ॥ ३१ ॥ ❋ ❋ श्रेयसां काले वृद्धत्वे ॥ ३२ ॥ ❋ ❋ सुखदुःखयोर्मध्ये सुखे सति पुण्यं क्षीयत इति । दुःखे सति पापं क्षीयत इत्यात्मानं तोषयंस्तमसः पारं मोक्षं प्राप्नोति ॥ ३३ ॥ ❋ ❋ किं च गुणैरधिकात्पुंसः इति ल्यब्लोपे पञ्चमी । तं दृष्ट्वा प्रीतिं कुर्यात् न त्वसूयामित्यर्थः । अनुक्रोशं कृपां लिप्सेत न तु तिरस्कारम् । समानान्मैत्रीं न तु स्पर्धाम् ॥ ३४–३५ ॥ ❋ ❋ क्षात्रं स्वभावं प्राप्तवतोऽत एवाविनीतस्य दुर्वाक्यबाणैर्भिन्ने हृदि न श्रयते न तिष्ठति ॥ ३६ ॥ ❋ ❋ अन्यैरनधिष्ठितं त्रिभुवने उत्कृष्टं पदं जेतुमिच्छोर्मे साधु वर्त्म मार्गं ब्रूहि ॥ ३७ ॥ ❋ ❋ अंकज इति पाठे उत्संगाज्जातो यो नारदः स भवान्खलु तत्र लिंगम् । वीणां वितुदन्वादयन् हितायाटति ॥ ३८–३९ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

मुनयोऽपि यन्मार्गं समाराध्यं न जानंति बालकस्त्वं किमुतेति भावः ॥ ३१ ॥ ❋ ❋ यतः स दुराराध्योऽस्त्यतो निवर्त्तताम् । एष तत्प्रसादनलक्षणो हठः । वास्तवोऽर्थस्तु-विनिश्चितं फलं यत्र तथाभूत एव सन्निवर्त्ततां काले प्राप्यवसरे एवास्मिन् यतिष्यतीति वर्त्तमानसामीप्ये ॥ ३२ ॥ ❋ ❋ तेन दैवविहितेन ॥ ३३ ॥ ❋ ❋ मनोदुःखाभावे उपायांतरमाह—किं चेति । गुणाश्शमदमादयः । इत्यर्थ इति । तादृशगुणाप्तयेऽन्यथा तद्गुणाप्तिर्न स्यादिति भावः । कृपामिति । अयमपि मादृशो भवत्वित्यर्थः । न तु स्पर्द्धामिति । स्पर्द्धया नरकपातादि स्यादित्यर्थः ॥ ३४ ॥ ❋ ❋ नारदेनैवं बोधितोऽपि ध्रुवस्तं प्रशस्य स्वहार्दं विज्ञापयति सोऽयं शमो भगवन्निष्ठालक्षणः । सुखदुःखाभ्यां पीडितमनसाम् ॥ ३५ ॥ ❋ ❋ त्वया यद्यप्यनधिकारिणेऽपि मह्यं कृपयेदमुपशमामृतं दत्तम् । अथापि तथापि । अत एव स्वभावं प्राप्तत्वादेव । भिन्ने मृद्भाजनवद्विदीर्णे न तिष्ठतीति व्याजस्तुत्या शौर्यादिहीनान् दुर्बलान् ब्राह्मणानेवोपशमामृतं पायय, मम तु महाघोरशौर्यवतः क्षत्रियकुमारस्य दृष्टिरप्यत्र न पततीति भावः ॥ ३६ ॥ ❋ ❋ तर्हि तवाकांक्षायाः कियानवधिरित्याकांक्षायामाह—पदमिति । त्रिभुवनोत्कृष्टत्वेऽप्यस्मत्पितृभिरिति या मामवमन्यते स्म तत्पतिनोत्तानपादेन तत्पित्रा मनुना तत्पित्रा ब्रह्मणा तदन्यैरपि ब्रह्मपुत्रपौत्रादिभिरनधिष्ठितमप्राप्तं पदं जेतुमिच्छोर्वर्त्म ब्रूहीति त्वं तावद्वर्त्ममात्रमुपदिशन्नचिरेणैव तद्विजये किञ्चन शौर्य्यं मे पश्येति भावः । एतेन ब्रह्माद्यप्राप्ये पदे तत्पुत्रस्योत्तमस्य तु मनोरथोऽपि दुर्घट इत्यसूचि । किञ्च राजसिंहासनस्यानित्यत्वेन तपसा तन्नाकांक्ष इति च ध्वनितम् ॥ ३७ ॥ ❋ ❋ मम त्वयं मनोरथः सेत्स्यत्येव यद् गृहान्निष्क्राम्यत एव भवद्दर्शनमिदमेवात्र ज्ञापकमित्याह—नूनमिति । अंगादुत्संगादाविर्भूतो लोकहिताय भगवदवतार एवं त्वं न कस्यापि पुत्र इति भावः, पाठांतरं स्वामिचरणैर्व्याख्यातमेव । तत्र नारदत्वे श्रीनारदस्यैवैतादृशत्वात् नारं नरसमूहं दयते हितोपदेशेन पालयतीति निरुक्तेरन्वर्थत्वात् ॥ ३८ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

समाधिना न विदुः किन्तु भक्तियोगेन तु विंदुरेव 'भक्त्या ममाभिजानाति यावान् यश्चास्मि तत्त्वतः' इत्याद्युक्तेः ॥ ३१ ॥ ❋ ❋ वास्तवार्थे यतस्समाधिना तत्प्राप्तिर्नस्यात्किन्तु भक्तियोगेनैव, अतः मात्रोपदिष्टे योगे भवान्नितरां वर्त्तताम् । एष अधोक्षजाराधनविषयकस्तव निर्बन्धः हठो निश्चितं फलं यत्र तादृश एव 'न वै जातु कथंचनात्रजेन्मुकुन्दसेव्यन्यवदङ्ग ! संसृतिमि'ति तेनैवोक्तत्वात् । तस्मात्काले कौमार एवाचरेत्प्राज्ञो धर्म्मान् भागवतानिहेत्युक्तेर्भजनयोग्य एवास्मिन्नवसरे भवान् यतिष्यति । अत एव समुपस्थिते इत्युक्तम् उपस्थितं परित्यज्यानुपस्थितवार्द्धक्यविचारे मानाभावात् तस्य च भजनकालस्य श्रेयस्संबन्धित्वं 'श्रेयस्सृतिं भक्तिमुदस्य ते विभो !' इत्यादिप्रामाण्यादेव ॥ ३२ ॥ ❋ ❋ सुखदुःखयोर्मध्ये यत्सुखं दुःखं वा यस्य प्राचीनकर्मणा विहितं रचितं स तेन दैवरचितेन सुखेन दुःखेन वात्मानं तोषयन् मोक्षं प्राप्नोतीत्यर्थः । तोषप्रकारं व्याचष्टे । सुखे सतीत्यादि ॥ ३३ ॥ ॥ ३४ ॥ ❋ ❋ सोऽयं मुमुक्षुकर्त्तव्यत्वेन प्रसिद्धः शमश्चित्तनिरोधः ॥ ३५ ॥ ❋ ❋ यद्यपि कृपयैव दर्शितः, अथापि घोरं क्षात्रमिति एतदुपशमामृतं ब्राह्मणबालकानेव पायय, न तु मां परधर्म्मत्वेनानभिरुचेरिति भावः ॥ ३६ ॥ ❋ ❋

---

१. प्रा० पा०—हिताय ।

मार्गमात्रं ब्रूहि पुनस्त्वत्कृपया पश्य मे विक्रममिति भावः ॥ ३७ ॥ ❀ ❀ तत्र नारदत्वे 'लिङ्गं चिह्नेऽनुमाने चे'ति विश्वः ॥ ३८ ॥

### श्रीमद्वीरराघवव्याख्या

निःसङ्गेन देहतदनुबन्धिसंगान्निर्गतेन तीव्रयोगः विघ्नानुपहतो ज्ञानयोगः कर्मयोगश्च तद्युक्तेन समाधिना यस्य भगवतः पदवीं मार्गं मृगयन्तोऽपि मुनयो बहुजन्मभिरपि न विदुः स देवो भगवान् दुराराध्यो मम मत इति पूर्वेण संबन्धः ॥ ३१ ॥ ❀ ❀ अतो देवस्यापि दुराराध्यत्वाद्धेतोः निवर्ततां गृहान् प्रति यातु भवान् तवैष निर्बन्धः निष्फलः अनर्थः। अयतमानस्य मम कथं श्रेयःप्राप्तिरित्याशङ्कमानं प्रत्याह। यतिष्यतीति दैवात् श्रेयसां काले समुपस्थिते भवान् यतिष्यति यत्नं करिष्यतीति अधुना तूद्यमो निष्फल इति भावः ॥ ३२ ॥ ❀ ❀ किञ्च यस्य पुंसः यत् सुखं दुःखं वा दैवेनेश्वरेण विहितं स पुमान् दैवविहितयोः सुखदुःखयोर्मध्ये तेन दैवविहितेन सुखेन दुःखेन वा आत्मानं तोषयन् सुखे सति पुण्यं क्षीयते असुखे त्वपुण्यमतः पुण्यापुण्यक्षयेन संसृतेर्मोक्षामीत्यात्मानं तोषयन्नित्यर्थः। देही देहवान् तमसः पारं प्रकृतिमण्डलातीतं विष्णोः पदमृच्छति इति ॥ ३३ ॥ ❀ ❀ अपि च यः पुमान् गुणैरधिकः स्वापेक्षयाधिकस्तस्मादियं ल्यब्लोपे पञ्चमी, गुणाधिकं दृष्ट्वेत्यर्थः। मुदं लिप्सेत् लब्धुमिच्छेत् प्रीतिं कुर्यात् न त्वसूयामित्यर्थः। गुणाधमात् गुणाधमं वीक्ष्य अनुक्रोशं कृपां लिप्सेन्न तु तिरस्कारं समानान्मैत्रीं न तु स्पर्द्धां सः तापैराध्यात्मिकादितापैः नाभिभूयते, तापत्रयाभिहतो न भवतीत्यर्थः ॥ ३४ ॥ ❀ ❀ एवं नारदेनोपदिष्टक्रमो ध्रुवः स्वमनीषितेऽविचाल्यमतिस्तद्दर्शनं तदुक्तिं चाभिनन्दन् प्रत्याह सोऽयमिति चतुर्भिः। भगवता सुखदुःखाभ्यां हतः पराभूत आत्मा मनो येषां तेषां पुंसामस्माकं सोऽयं शमः मनःप्रशान्त्युपायः कृपया दर्शितः ज्ञापितः, यो भगवांस्त्वमस्मद्विधैर्मादृशैर्दुर्दर्शः द्रष्टुमशक्यः यद्वा यः शमः अस्मद्विधैर्दुर्दर्शः ज्ञातुमशक्य इति शमप्रशंसा ॥ ३५ ॥ ❀ ❀ अथापि त्वयोपदिष्टशमस्यापि मम घोरं क्षात्रं स्वभावम् उपेयुषः प्राप्तवतोऽत एवाविनीतस्य सुरुच्याः दुर्वचांस्येव बाणास्तैर्भिन्ने हृदि न श्रयते शम इत्यनुषंगः। शमो न तिष्ठतीत्यर्थः ॥ ३६ ॥ ❀ ❀ अतो मन्मनीषानुसारेणैव मामनुगृह्य मनीषितोपायप्रकारं ब्रूहीत्याहापदमिति। अस्मत्पितृभिस्तेभ्योऽन्यैरप्यनधिष्ठितं त्रिभुवनोत्कृष्टं पदं जेतुमिच्छोर्मे साधुवर्त्म मार्गं ब्रूहि स्वोपदेशोल्लंघनान्मां निगृह्यादित्याशङ्क्य तं प्रसादयति ॥ ३७ ॥ ❀ ❀ नूनमिति। भवान्परमेष्ठिनो ब्रह्मणः जगद्धितकारिणोऽङ्गजः देहजः, अंकज इति पाठे उत्संगाज्जातः, वीणां वितुदन् ध्वनयन् जगतो हिताय सूर्यवदटतिं चरति, अतो मन्मनीषापादनमेव जगद्धितकारिणस्तवोचितमिति भावः ॥ ३८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

मुनयोऽपि यन्मार्गं समाराध्य न जानन्ति बालकस्त्वं किमुतेत्याह। मुनय इति ॥ ३१ ॥ ❀ ❀ ततः किं तत्राह। अत इति। तर्हि निःश्रेयसाय प्रयतमानस्य पुंसो जन्मनो निरर्थकत्वमित्याशंक्य नायं कालः किंतु कालान्तर इत्याह यतिष्यतीति, काले वार्धके ॥ ३२ ॥ ❀ ❀ सुखदुःखयोर्मध्ये यत्सुखं दुःखं वा यस्य दैवेन विहितं स देही तयोरेकेन तेनात्मानं तोषयंस्तमसः परमज्ञानस्यान्तं मोक्षमृच्छति गच्छतीत्यन्वयः ॥ ३३ ॥ ❀ ❀ मनोदुःखाभावे उपायान्तरमाह। गुणाधिकादिति। शमदमादिगुणाधिकात्पुरुषादिति प्रत्येकं संबध्यते। अनुक्रोशं दयां मैत्रीं सौहार्दं तापैर्मनःखेदकरैर्भावैः ॥ ३४ ॥ ❀ ❀ नारदेनैवं बोधितोऽपि ध्रुवस्तं मार्गं प्रशस्य स्वहार्दं विज्ञापयति सोऽयमिति। योऽस्मद्विधैर्दुर्दर्शः शास्त्रदृष्ट्या ज्ञातुमशक्यः सोऽयं शमो भगवन्निष्ठालक्षणो भगवता सुखदुःखाभ्यां हतात्मनां पीडितमनसां पुंसां कृपया दर्शितो यद्यपि ॥ ३५ ॥ ❀ ❀ अथापि तथापि अविनीतस्य कुतः क्षात्रं घोरं धर्ममुपेयुषो गच्छतो मे सुरुच्या दुर्वचोबाणैर्भिन्ने हृदि स शमो न श्रयते स्थितिं न लभत इत्यन्वयः ॥ ३६ ॥ ❀ ❀ तर्हि तव काङ्क्षायाः कियानवधिरिति तत्राह पदमिति। अनेन राजसिंहासनस्यानित्यत्वेन न तपःसाध्यत्वेनाकांक्ष्यत्वमिति सूचितम्। अस्मत्पितृभिरित्यादिनोत्तमस्य मनोरथेनाप्यनवाप्यमित्यसूचि ॥ ३७ ॥ ❀ ❀ भवान् लोकहितार्थाटनत्वान्मदभीष्टमुपदिशतीत्याशयेनाह नूनमिति ॥ ३८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अत इति वास्तवार्थे। निश्चितं फलं यत्र तथाभूत एव सन्निवर्त्तताम्। काले प्राप्तावसर एवास्मिन्। यतिष्यतीति वर्तमानसामीप्ये ॥ ३२ ॥ ❀ ❀ यस्येति। निष्कामकर्मान्यत्राधिकारी ॥ ३३-३४ ॥ ❀ ❀ अस्मद्विधैर्यो दुर्दर्शः सोऽपि यद्यपि कृपया दर्शितः ॥ ३५ ॥ ❀ ❀ अथापि तथापि ॥ ३६-३७ ॥ ❀ ❀ भवान् परमेष्ठिनोऽङ्गजोऽपि अङ्कज इति पाठे उत्सङ्गाज्जातोऽपि यद्वीणां वितुदन्नटति तन्नूनं जगत एव हितायेति। अत्र श्रीमैत्रेय उवाचेति कचित् इतीति। सनिर्बन्धं स्वस्मिन् विश्वासयुक्तं सर्वोत्कृष्टसाधनसाध्यलिप्सायुक्तञ्च अत एव प्रीतः ॥ ३८-४१ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

श्रेयसां काले वयसो वृद्धत्वे ॥ ३२ ॥ ❀ ❀ सुखदुःखयोर्मध्ये तेन सुखेन दुःखेन वा तोषयन् सुखे सति पुण्यं क्षीयते दुःखे सति पापं क्षीयते इति बुद्ध्येत्यर्थः। तमसः संसारात् ॥ ३३ ॥ ❀ ❀ किञ्च गुणाधिकात् गुणाधिकं प्राप्येति ल्यब्लोपे पञ्चमी, मुदं लब्धुमिच्छेत् नत्वसूयाम्। अनुक्रोशं कृपां न त्ववज्ञां, मैत्रीं न तु स्पर्द्धां लिप्सेदिति। यदि स्वस्वभावदोषान्न लभेत तदपि लब्धुं कामयतोऽपीत्यभिप्रायः ॥ ३४ ॥ ❀ ❀ त्वया यद्यप्यनधिकारिणेऽपि मह्यं कृपयेदमुपशमामृतं दत्तम्। अथापि क्षात्रं स्वभावं प्राप्तवतो मम हृदि भिन्ने विदीर्णमृद्भाजन इव न श्रयते न तिष्ठतीति व्याजस्तुत्या शौर्यहीनान् दुर्बलान् ब्राह्मणानेवैतदुपशमामृतं पायय। मम तु महाघोरशौर्यवतः क्षत्रियकुमारस्य नात्र दृष्टिरपि पततीति व्यञ्जितम् ॥ ३५-३६ ॥ तर्हि त्वं किमिच्छसीत्यत आह पदमिति। त्रिभुवनोत्कृष्टत्वेऽपि अस्मत्पितृभिरिति। यो मामवमन्यते स तेन सुरुचेः पत्या उत्तानपादेन तत्पित्रा ब्रह्मणापि अन्यैरपि ब्रह्मणः पुत्रपौत्रादिभिः अनधिष्ठितमप्राप्तं पदं जिगीषोः स्वीचिकीर्षोर्वर्त्म ब्रूहीति त्वं तावत् वर्त्ममात्रमुपदिशन्नचिरेणैव तद्विजये किञ्चन शौर्यं मे पश्येति भावः ॥ ३७ ॥ ❀ ❀ ममायन्तु मनोरथः सेत्स्यत्ये-वेत्यत्र गृहान्निष्क्राम्यत एव भवद्दर्शनमेव लिङ्गमित्याह। नूनमिति। अङ्काद्गुत्सङ्गादाविर्भूतो लोकहिताय भगवदवतार एव त्वं न कस्यापि पुत्र इति भावः। अङ्गज इति पाठे भवान् परमेष्ठिनोऽङ्गजोऽपि यद्वीणां वितुदन्नटति तज्जगतो हितायैव ॥ ३८-४१ ॥

## श्रीमच्छुकदेवकृतः सिद्धांतप्रदीपः

श्रेयसां श्रेयःसाधनानां ज्ञानभक्त्यादीनां काले बाल्यनिवृत्त्यनन्तरम् यतिष्यति ज्ञानभक्त्यादियत्नं करिष्यति ॥ ३२ ॥ ❀ ❀ तमसः प्रकृतेः पारं विष्णुपदम् ऋच्छति प्राप्नोति 'आदित्यवर्णं तमसः परस्तादि'ति श्रुतेः ॥ ३३ ॥ ❀ ❀ किञ्च यो गुणाधिकात् ल्यब्लोपे पञ्चमी गुणैरधिकं दृष्ट्वा मुदं लिप्सेत् प्राप्तुमिच्छेत् प्रीतिं कुर्यात् गुणाधमात्, गुणाधमं दृष्ट्वानुक्रोशं कुर्यात्, समानात् स्वसमं दृष्ट्वा मैत्रीमन्विच्छेत्स तापैर्नाभिभूयते ॥ ३४ ॥ ❀ ❀ सुखदुःखाभ्यां हतोऽभिभूतः आत्मा मनो येषां तेषां पुंसां यः शमः भगवता कृपया दर्शितः सोऽयमस्मद्विधैः पुंभिर्दुर्दर्शः दुर्लभ इत्यर्थः ॥ ३५ ॥ ❀ ❀ अथापि दुर्लभपदार्थलाभेऽपि मे मम अविनीतस्य भगवद्भक्तस्य मानार्हस्य तत्र हेतुगर्भं विशेषणं घोरं क्षात्रं क्षत्रियस्वभावमुपेयुषः प्राप्तवतो हृदि न श्रयते न स्थीयते ॥ ३६ ॥ ❀ ❀ हे ब्रह्मन्! त्रिभुवनादुत्कृष्टम् अस्मत्पितृभिरन्यैश्चाप्यनधिष्ठितं पदं जिगीषोर्मे साधु वर्त्म मार्गं साधनं ब्रूहि ॥ ३७ ॥ ❀ ❀ वितुदन् वादयन् ॥ ३८ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

कथं भवतो दुराराध्यत्वनिश्चय इत्याशङ्क्याह—मुनय इति। निःसङ्गेन सर्वतः सङ्गत्यागेन तीव्रयोगेन निरंतरप्राणाया-मादिना युक्तेनापि समाधिना तत्राप्युरुजन्मभिर्यस्य पदवीं मार्गं मृगयन्तोपि मुनयो मननशीला मनस्विनोपि तां पदवीमपि न विदुः स पुंसां दुराराध्य इति पूर्वेणैव संबन्धः। तथाच त्वया सकामेन बालेन कथं तदाराधनं कथं वा तत्प्रसादः कथं वा ततः फलावाप्तिः सर्वथा सर्वं दुर्घटमिति भावः ॥ ३१ ॥ ❀ ❀ अतस्तदाराधनस्य त्वया कर्तुमशक्यत्वात्तवैष तदाराधनाग्रह-लक्षणो निष्फलो निर्बन्धो हठो निवर्त्ततामत्र त्वया हठो न कार्य इत्यर्थः। हठत्यागे हेत्वन्तरमप्याह—पतिष्यतीति। यदि कथंचिद्भ-गवान् प्रसन्नो भविष्यति तदा धर्मार्थकाममोक्षाणां चतुर्विधानां श्रेयसां पुरुषार्थानां न कोपि दुर्लभस्तस्मिन् काले समुपस्थिते प्राप्ते भवान् पतिष्यति परमपुरुषार्थात् भ्रष्टो भविष्यति। भवतः कामनाया अर्थविषयकत्वात् न हिं स परमपुरुषार्थः, परमपुरुषार्थस्तु "मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम्। नेच्छन्ति सेवया पूर्णाः कुतोन्यत्कालविद्रुतम्" इति वचनात् भगवत्सेवौपयिक-विग्रहप्राप्तिपूर्वकतत्सेवासुखानुभवलक्षणो मोक्ष एव, तूभयतो नेष्टोतस्ततः पतिष्यतीति भावः। यतिष्यतीति पाठान्तरे तु ननु भगवदाराधनाद्वैमुख्ये मम पुरुषार्थसिद्धिर्न स्यादित्याशङ्क्याह—यतिष्यतीति। इदानीं बालकत्वाद्भगवदाराधनपूर्वकश्रेयसां प्राप्तिकालो नास्ति, तद्योग्ये काले समुपस्थिते संप्राप्ते युवावस्थायां भवान् यतिष्यति तदा श्रेयोऽवाप्स्यतीति शेषः ॥ ३२ ॥ ❀ ❀ नन्वेवं भगवदाराधननिर्बंधं हित्वा गृहं प्रविष्टस्य विषयासक्त्या पुनस्तदाराधनासंभवान्न कोपि पुरुषार्थः सिद्ध्येदित्या-शङ्क्य गृहं प्रविष्टेनापि विषयासक्तिर्न कार्या, किंतु सावधानतया शनैः प्रयत्नो विधेयः, परमपुरुषार्थस्य दुर्लभत्वात् प्रथमतो मनस्येव वासनावतरति मनसो मालिन्येन तद्ग्रहणे सामर्थ्याभावात्। शनैः साधनतो मनसो नैर्मल्येन विवेके सति तदर्थं प्रयतमानस्य भगवत्कृपया परमपुरुषार्थोपि सिद्ध्यति। न सहसा सर्वस्यैव लोकस्येयमेव रीतिर्न तवैवेत्यभिप्रेत्य सर्वसाधारणेन मुख्यं साधनमुपदिशति—यस्येति द्वाभ्याम्। सुखदुःखयोर्मध्ये यस्य पुरुषस्य यत् सुखं दुःखं वा दैवविहितं दैवेनेश्वरेण स्वप्रारब्धानुरूपं दत्तं स देही तेन सुखदुःखान्यतरेणात्मानं तोषयन् स्वप्रारब्धमेव मया भुज्यतेऽत्रान्यस्य कोपराध इति मनःसंतोषं कुर्वन् विशुद्धान्तः-करणः नित्यानित्यविवेकं प्राप्य परमपुरुषार्थस्वरूपं ज्ञात्वा भगवन्तमाराध्य तत्प्रसादेन तमसः महामोहात्मकसंसारसागरस्य पारमुक्तलक्षणं परमपुरुषार्थं मोक्षमृच्छति गच्छति प्राप्नोति ॥ ३३ ॥ ❀ ❀ ननु लोकावमानादिजनिततापपीडितेन कथमेव-

मात्मसन्तोषः कर्तुं शक्यते तत्राह—गुणाधिकादिति। विद्याधनाभिजनादिगुणैरधिकात् ल्यब्लोपे पञ्चमी सर्वत्र स्वापेक्षया गुणाः अधिकाः यस्मिंस्तं गुणाधिकं पुरुषं दृष्ट्वा मुदं लिप्सेत् तस्मिन् प्रीतिं कुर्यात् नासूयाम्। तथा स्वापेक्षया गुणाधमं दृष्ट्वा अनुक्रोशं तत्र दयां कुर्यात् न तिरस्कारम्। तथा स्वसमानगुणं दृष्ट्वा तत्र मैत्रीं कुर्यान्न स्पर्धाम्। एवं कुर्वन् तापैर्लोकापमानादिजनितान्तःकरणवृत्तिविशेषैर्नाभिभूयते न पीड्यते ॥ ३४ ॥ पूर्वजन्मनि तपः कुर्वाण ऋषिः कञ्चन राजकुमारं दृष्ट्वा तत्स्पृहावान् जातस्ततस्तद्वासनावानेव मृत इति जन्मान्तरे ध्रुवो जात इति पुराणान्तरप्रसिद्धेरेवं नारदेन कामे वारितेपि न कामनिवृत्तिर्जाता, प्रत्युत पूर्वसंस्कारोद्बोधात् कामदार्ढ्यं तपस्याग्रहश्च जातोतस्तदुपायमेव प्रार्थयते—सोयमिति चतुर्भिः। योस्मद्विधैर्विषयाविष्टान्तःकरणैर्दुर्दर्शो द्रष्टुं ज्ञातुमप्यशक्यस्तदनुष्ठानं तु दूरतः सोयमात्मसन्तोषलक्षणः शमः सुखदुःखहतात्मनां सुखदुःखाभ्यां तिरस्कृतविवेकशक्तिचित्तानां मादृशां पुंसां कर्त्तव्यत्वेन भगवता सर्वज्ञेन त्वया यद्यपि कृपया दर्शितोऽथापीत्युत्तरेणान्वयः ॥ ३५ ॥ ❀ ❀ अथ तथापि क्षात्रं क्षत्रियस्वभावं घोरमसहनलक्षणमुपेयुषः प्राप्तवतोऽत एवाविनीतस्य भवद्भिः विशिक्षितेपि नम्रतारहितस्य मे मम सुरुच्या दुर्वचांस्येव पीडाकरत्वाद्बाणास्तैर्भिन्ने हृदि न श्रयते न तिष्ठति ॥ ३६ ॥ ❀ ❀ तर्हि त्वं किमाकांक्षसे मया वा तव को वा उपकारः कार्य इत्याकाङ्क्षामालक्ष्याह—पदमिति। अस्मत्पितृभिर्मन्वादिभिरन्यैरप्यनधिष्ठितमप्राप्तं त्रिभुवनेपु उत्कृष्टं पदं स्थानं जिगीषोः जेतुमिच्छोर्मे तस्य साधु सुकरं वर्त्म मार्गं ब्रूहि! हे ब्रह्मन्नित्यनेन यद्यप्यहं जनन्युपदिष्टं मार्गं जानामि, तथापि तस्य दुराराध्यत्वोक्तेः सर्वज्ञं त्वां पृच्छामि स एव मार्गः समीचीनोन्यो वेति सूचयति। केनाप्यप्राप्तमित्यनेन लोकेऽविद्यमानः साधारणः पदार्थोर्थशब्दवाच्यः, विद्यमानः साधारणः पदार्थः काम इत्यभिधीयत इति विभागोपि ज्ञेयम्। नहि ध्रुवस्थानं पूर्वं केनचित्प्राप्तं ज्ञातमपि वेति तस्यार्थत्वमिति ॥ ३७ ॥ ❀ ❀ जगद्धितकारिणा त्वया ममापि हितमवश्यं कर्त्तव्यमित्याशयेनाह—नूनमिति। यो भवान् परमेष्ठिनो ब्रह्मणोऽङ्गजः स नूनं निश्चितं भगवतो जगत्पालकस्य वासुदेवस्य परमभक्त इति शेषः। कथमेवं निश्चयस्तत्राह—वितुदन्निति। यो जगतो हितार्थं वीणां वितुदन् वादयन्नटते। तत्र दृष्टान्तमाह—अर्कवदिति। यथा अर्को भगवत्तेजसा युक्तोऽतो लोकस्य हितार्थमटतेऽन्यथान्धकारावृतत्वेन कालविशेषपरिज्ञानाभावेन तत्तत्कालविहितक्रियालोपेन जगद्विनष्टमेव स्यादिति भावः ॥ ३८ ॥

### भाषानुवादः

योगीलोग अनेकों जन्मोंतक अनासक्त रहकर समाधियोगके द्वारा बड़ी-बड़ी कठोर साधनाएँ करते रहते हैं परन्तु भगवान्‌के मार्गका पता नहीं पाते ॥ ३१ ॥ ❀ ❀ इसलिये तू यह व्यर्थका हठ छोड़ दे और घर लौट जा; बड़ा होनेपर जब परमार्थसाधनका समय आवे, तब उसके लिये प्रयत्न कर लेना ॥ ३२ ॥ ❀ ❀ विधाताके विधानके अनुसार सुख-दुःख जो कुछ भी प्राप्त हो, उसीमें चित्तको सन्तुष्ट रखना चाहिये। यों करनेवाला पुरुष मोहमय संसारसे पार हो जाता है ॥ ३३ ॥ ❀ ❀ मनुष्यको चाहिये कि अपनेसे अधिक गुणवान्‌को देखकर प्रसन्न हो; जो कम गुणवाला हो, उसपर दया करे और जो अपने समान गुणवाला हो, उससे मित्रताका भाव रक्खे। यों करनेसे उसे दुःख कभी नहीं दबा सकते ॥ ३४ ॥ ❀ ❀ ध्रुवने कहा—भगवन्! सुख-दुःखसे जिनका चित्त चञ्चल हो जाता है, उन लोगोंके लिये आपने कृपा करके शान्तिका यह बहुत अच्छा उपाय बतलाया। परन्तु मुझ-जैसे अज्ञानियोंकी दृष्टि यहाँतक नहीं पहुँच पाती ॥ ३५ ॥ ❀ ❀ इसके सिवा, मुझे घोर क्षत्रियस्वभाव प्राप्त हुआ है, अतएव मुझमें विनयका प्रायः अभाव है; सुरुचिने अपने कटुकवचनरूपी बाणोंसे मेरे हृदयको विदीर्ण कर डाला हैं; इसलिये उसमें आपका यह उपदेश नहीं ठहर पाता ॥ ३६ ॥ ❀ ❀ ब्रह्मन्! मैं उस पदपर अधिकार करना चाहता हूँ, जो त्रिलोकीमें सबसे श्रेष्ठ है तथा जिसपर मेरे बाप-दादे और दूसरे कोई भी आरूढ़ नहीं हो सके हैं। आप मुझे उसीकी प्राप्तिका कोई अच्छा-सा मार्ग बतलाइये ॥ ३७ ॥ ❀ ❀ आप भगवान् ब्रह्माजीके पुत्र हैं और संसारके कल्याणके लिये ही वीणा बजाते सूर्यकी भाँति त्रिलोकीमें विचरा करते हैं ॥ ३८ ॥

### मैत्रेय[1] उवाच

**इत्युदाहृतमाकर्ण्य भगवान्नारदस्तदा। प्रीतः प्रत्याह तं बालं सद्वाक्यमनुकम्पया ॥ ३९ ॥**

### नारद उवाच

**जनन्याभिहितः पन्थाः स वै निःश्रेयसस्य ते। भगवान् वासुदेवस्तं भज तत्प्रवणात्मना ॥ ४० ॥**

**धर्मार्थकाममोक्षाख्यं य इच्छेच्छ्रेय आत्मनः। एकमेव हरेस्तत्र कारणं पादसेवनम् ॥ ४१ ॥**

---

१. प्राचीने पाठे 'मैत्रेय उवाच' इत्यारभ्य 'मनुकम्पया' इत्येतावदंशो मूले नास्ति टिप्पण्यां वर्तते।

तत्तात गच्छ भद्रं ते यमुनायास्तटं शुचि। पुण्यं मधुवनं यत्र सांनिध्यं नित्यदा हरेः ॥ ४२ ॥
स्नात्वानुसवनं तस्मिन् कालिन्द्याः सलिले शिवे। कृत्वोचितानि निवसन्नात्मनः कल्पितासनः ॥ ४३ ॥
प्राणायामेन त्रिवृता प्राणेन्द्रियमनोमलम्। शनैर्व्युदस्याभिध्यायेन्मनसा गुरुणा गुरुम् ॥ ४४ ॥
प्रसादाभिमुखं [1]शश्वत्प्रसन्नवदनेक्षणम्। सुनासं सुभ्रुवं चारुकपोलं सुरसुन्दरम् ॥ ४५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

निःश्रेयसस्याभिप्रेतार्थस्य पंथाः कोऽसावित्यत आह। भगवान्वासुदेवोऽत एवं तं भज ॥ ४०-४१ ॥ ❁ ❁ मधुवनाख्यं यमुनायास्तटं गच्छ। यत्र मधुवने ॥ ४२ ॥ ❁ ❁ अध्ययनाद्यभावेऽप्यात्मन उचितानि योग्यानि देवतानमस्कारादीनि कृत्वेति यमनियमा उक्ताः। आसनकल्पनं च कुशादिभिः स्वस्तिकादिभिश्च ॥ ४३ ॥ ❁ ❁ प्राणेन्द्रियमनसां मलं चांचल्यं व्युदस्येति प्राणायामप्रत्याहारौ। धारणामाह अभिध्यायेदित्यादिषड्भिः। गुरुणा धीरेण मनसा गुरुं श्रीहरिम् ॥ ४४ ॥ ❁ ❁ सुरेषु सुन्दरम् ॥ ४५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यादृच्छिकमुनित्वात्तदुक्तमाकर्ण्य स्मित्वा योगित्वेनादृश्यशक्तित्वात्तूष्णीं गतमुत किमप्युक्तमिति तत्राह—इतीति ॥ ३९ ॥ ❁ ❁ प्रागुक्तं दृढीकर्तुमाह—जनन्येति। वा-इत्येवार्थः। यो जनन्याऽभिहितः स एव ते निःश्रेयसस्य परमसुखस्य स्यान्नान्य इत्येवान्वयः। कोसाविति तत्राह—यो हरेर्विग्रहेषु वासुदेवनामा भगवांस्तं, तस्मिन्प्रवणस्तत्प्रवणः स चासावात्मा मनस्तेन "प्रवणो ना चतुर्मार्ग्यां क्रमनिम्नमहीतले। प्रह्वे च जठरे लग्ने प्रकृष्टवचनेपि च ॥" इति कोशात् ॥ ४० ॥ ❁ ❁ हरिसेवनमेव सर्वाभीष्टहेतुरित्याह। तस्येति शेषः। तस्य तत्र तत्प्राप्तावेकमेव कारणांतरव्यावर्त्तकं हरेः पादसेवनं कारणमित्यर्थः ॥ ४१ ॥ ❁ ❁ अभीष्टसाधनं क्षेत्रं चोपदिशति—यस्माद्धरेरेव प्रधानसाधनत्वं तत्तस्माद्य-मुनायास्तटं गच्छ। किंभूतं तटं "वीरहा माधवो मधुः" इति सहस्रनामसु पठितत्वान्मधोरन्वयोद्भूतत्वाद्वा मधोर्विष्णोर्वनो भजनं यत्र तन्मधुवनं 'वन संभक्तौ' इत्यतो घञर्थे कविधानमिति कप्रत्यये भावे वननं वन इति। हरेर्नित्यञ्च सांनिध्यं यत्र तदेस्तीति। एतेन व्रजांतर्गतं तल्लक्ष्यते। तत्रैव भगवतो नित्यविहारस्य नारदपुराणादौ "नित्यं श्रीयमुनातटे व्रजभुवि लेलायते माधवः" इत्याद्युक्तेः श्रवणात्। अत एव शुचि पवित्रतापादकत्वेन दीप्तं पुण्यं तपस्यं 'पुण-शुभे कर्मणि' पुणाय हितं पुण्यं सर्वक्षेत्रेषु मुख्यं सिद्धिस्थानम्। यद्वा-मधुवनस्य नित्यत्वेनाविर्भावतिरोभावावेव तस्य स्तोऽतो ध्रुवकालेपि तदस्त्येवेति मंतव्यम्। स्वामिचरणोक्तिस्तु—मधुवनमाख्यातवानिति मधुवनाख्यमिति डांता बोध्या ॥ ४२ ॥ ❁ ❁ तत्र किं कर्त्तव्यमिति तत्राह—स्नात्वेति। अनुसवनं त्रिकालं प्रथमादिना चैलाजिनग्रहः। "चैलाजिनकुशोत्तरम्" इति गीतोक्तेः। यद्वा—काशादि ग्राह्यमादिना। स्वस्तिकादिभिरित्यत्रादिना पद्मासनादिग्रहः ॥ ४३ ॥ ❁ ❁ त्रिवृता पूरकादित्रित्वसंख्यायुक्तेन। यद्वा—प्रणवेन व्युदस्येत्युक्त्या प्रत्याहारोपि ध्वनितः। मनसश्चेन्द्रियाणां च विषयेभ्यः प्रत्याहरणमेव व्युदास इति शुद्धत्वाच्छ्रेष्ठेनेति वा गुरुणेत्यस्यार्थः ॥ ४४-४५ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अत्र मैत्रेय उवाचेति क्वचित्पाठः। उदाहृतं सनिर्बंधत्वेनोत्कृष्टं वचनं यद्यपि वास्तवार्थे पूर्वमपि सद्वाक्यमेव, तथाप्यत्र स्फुटार्थत्वात्सद्वाक्यमित्युक्तम् ॥ ३९ ॥ ❁ ❁ अत एव श्रेयःपथत्वादेव तत्प्रवणात्मना तदेकनिष्ठेन मनसा ॥ ४० ॥ ❁ ❁ श्रेयःपथत्वमेव दर्शयति धर्मार्थेति। तत्र धर्म्मादिश्रेयसि एकमेव मुख्यमेव अन्यानि च तदभावादेव विधीयन्त इति भावः। सर्वासामपि सिद्धीनां मूलं तच्चरणार्च्चनमित्युक्तेः ॥ ४१ ॥ ❁ ❁ तत्तस्मात् पादसेवनस्य मूलकारणत्वात् तातेत्यनुकम्पायां भद्रं ते शीघ्रसिद्धये आशीर्वादः, नित्यदा स्वभावत एव हरेस्सांनिध्यं अर्थात्तत्रत्यानामिति शेषः ॥ ४२ ॥ ❁ ❁ स्नात्वेत्यष्टकम्। अत्र वहुवाचैकवाक्यत्वाट्टीकाक्रमलाभाय मध्ये द्विबिन्दुमस्तका अङ्काः कर्त्तव्याः अनुसवनं त्रिकालम् ॥ ४३ ॥ ❁ ❁ त्रिवृता कुम्भकादित्रिविधेन चाञ्चल्यव्युदास एव प्रत्याहारः। धारणां सविशेषणाम् अभिसामान्यतो ध्यायेदिति धारणैव व्याख्येया। अन्यथा वक्ष्यमाणध्यानेन सांकर्य्यं स्यादिति ज्ञेयम्। आश्रयविशेषे सामान्यतश्चित्तस्थिरीकरणं हि धारणा, चेतसस्तु चिन्मात्रशेषतासजातीयप्रत्ययप्रवाहो हि ध्यानम् ॥ ४४ ॥ ❁ ❁ सुन्दरं श्लाघ्याङ्गसंनिवेशम् ॥ ४५ ॥

---

१. प्रा० पा०—सम्यक्प्र०।

### श्रीमद्वीरराघवव्याख्या

एवं दृढसंकल्पस्य ध्रुवस्य वच आश्रुत्य तदनुगृह्णन्नारद आहेत्याह मैत्रेय इति । उक्तप्रकारेण उदीरितं गदितमाकर्ण्य भगवान्नारदः दृढसंकल्पदर्शनेन नितरां प्रीतः तं बालकं प्रति कृपया सद्वाक्यं हितवाक्यमाह ॥ ३९ ॥ ❀ ❀ उक्तमेवाह जनन्या इत्यादिना । विरक्तश्चेन्द्रियरताविरन्तेन तत्र तावद्भगवानेव भक्त्या प्रसन्नो धर्मादिपुरुषार्थचतुष्टयप्रदस्ततस्तद्भक्तिरेव कार्य्येति वदन् उपासनोपयुक्तं देशमाचारं ध्येयस्य भगवतो ध्यानप्रकारं जप्यं मन्त्रं भगवत्सपर्याप्रकारमाहारनियमं च कथयन्नेव-माराधितो भगवानेव त्वत्समीहितमभिनिर्वर्तयतीत्याह । जनन्या सुनीत्या उक्तः यः पन्था उपायः स वै स एव ते तव निःश्रेयसाय निश्चितं श्रेयः निःश्रेयसं तस्मै भवति । जनन्याभिहितोपाय एव त्वदभिप्रेतार्थसाधनमित्यर्थः । कोऽसौ जनन्याभिहितः पन्थास्तत्राह भगवान् वासुदेव एव, अतस्तत्प्रवणात्मना भगवत्प्रवणचित्तेन तं भगवन्तं भज ॥ ४० ॥ ❀ ❀ भगवान् वासुदेव एव इत्येतदेव प्रपञ्चयति धर्मेत्यादिना । यः पुमान् धर्मांद्यन्यतमं श्रेयः आत्मनः स्वस्य इच्छेत् तत्र हरेः पादसेवनमेकमेव कारण-मुपायः ॥ ४१ ॥ ❀ ❀ तत्तस्माद्भगवत्पादसेवनस्यैव धर्मादिसाधनत्वात् हे तात ! यमुनायाः शुचि शुद्धं तटं तीरं गच्छ ते तव भद्रं मङ्गलमस्तु । तटं विशिनष्टि–यत्र तटे पुण्यं पुण्यावहं मधुवनमस्ति कथंभूतं मधुवनं सर्वदा हरेर्भगवतः सांनिध्यं सांनिध्यवत्तटशब्दस्य तटस्थितमधुवने लक्षणा वा । तत्कथंभूतं मधुवनं यत्र मधुवने हरेः सांनिध्यमस्ति ॥ ४२ ॥ ❀ ❀ कालिन्द्या यमुनायाः शिवे मङ्गले सलिले त्रिषवणं स्नात्वा तत्र वने आत्मनः स्वस्य उचितानि योग्यानि देवतानमस्कारादीनि कृत्वा कुशादिभिः स्वस्तिकादिभिश्च कल्पितमासनं यस्य सः निवसन् उपाविशन् त्रिवृता त्रयाणां रेचकपूरककुम्भकानां वृत् वर्त्तनं यस्मिन् तेन प्राणायामेन त्रिवृता प्रणवेन प्रणवानुसंधानपूर्वकमिति वार्थः । प्राणानामिन्द्रियाणां मनसश्च मलं चाञ्चल्यं शनैर्व्युदस्य अपोह्य गुरुणा श्रेष्ठेन प्राणायामैर्निर्मलेनेत्यर्थः, मनसा गुरुं भगवन्तं ध्यायेत् । अत्र उचितानि कृत्वेति यमनियमा उक्ताः । कल्पितासन इत्यासनं, मलं व्युदस्येति प्राणायामप्रत्याहारौ, ध्यायेदिति ध्यानम् । धारणाप्यनेनैवोक्ता, धारणापूर्वकत्वाद्ध्यानस्य एवमष्टाङ्गयुक्तो योग उपदिष्टः ॥ ४३-४४ ॥ ❀ ❀ ध्येयं गुरुं विशिनष्टि । प्रसादेति । शश्वत्सदा प्रसादे अनुग्रहेऽभिमुखं प्रसन्नं वदनमीक्षणं च यस्य तं शोभना नासिका यस्य शोभने भ्रुवौ यस्य चारू सुन्दरौ कपोलौ यस्य सुरसुन्दरं देववत्सुन्दरं, सुरेभ्योऽपि सुन्दरमिति वा ॥ ४५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

यादृच्छिकगतित्वात्तदुक्तमार्ण्यं स्मित्वा योगित्वेनादृश्यशक्तिमत्त्वात्तूष्णीं गतमुत किमप्युक्तमिति तत्राह । इतीति । तद्वाक्यं प्रति प्रीतः ॥ ३९ ॥ ❀ ❀ प्राक् स्वोक्तमेव दृढीकर्तुमुक्तमन्यद्वा संभवादुभयोरिति तत्राह जनन्येति । वा इत्येवार्थः, यो जनन्याऽभिहितः पन्था स एव ते निःश्रेयसस्य स्यान्नान्य इत्यन्वयः । कोऽसाविति तत्राह भगवानिति । यो हरेर्विग्रहेषु वासुदेवनामा भगवांस्तं प्रवणात्मना भजेत्यन्वयः ॥ ४० ॥ ❀ ❀ अस्मिन्नर्थेऽन्यः किं न स्यादिति तत्राह धर्मार्थेति । कारणमितरव्यावर्तकं साधनम् ॥ ४१ ॥ ❀ ❀ अभीष्टसिद्धिसाधनं क्षेत्रं चोपदिशति । तत्तातेति । यस्माद्धरेरेव प्रधानसाधनत्वं तत्तस्मान्मधोः पूर्णानन्दस्य हरेर्वनं भजनं यस्माद्भवति तन्मधुवनं नाम्ना सूचितमर्थं प्रकाशयति । यत्रेति ॥ ४२ ॥ ❀ ❀ तत्र किं कर्तव्यमिति तत्राह । स्नात्वेति । उचितानि तर्पणादीनि ॥ ४३ ॥ ❀ ❀ त्रिवृता रेचकादित्रित्वसंख्योपेतेन यद्वा य-र-व इति त्र्यक्षरयुक्तेन यद्वा प्रणवयुक्तेन प्राणानामवशत्वमिन्द्रियाणां विषयाभिमुखत्वं मनसोऽनवस्थितत्वमिति मलत्रयं गुरूणां गुरु-मुपदेष्टारम् ॥ ४४ ॥ ❀ ❀ पुरुषायुषशतेनाऽप्रसन्नतादिगुणवांश्चेत् किमनेनेत्यतोऽश्रद्धा न कर्तव्येति ध्येयस्वरूपमुपदिशति । प्रसादाभिमुखमित्यादिना ॥ ४५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अतिशयकृपया सुखाराध्यत्वोपायमुपदिशति । तत्तातेति, तातेत्यनुकम्पायां विघ्नविघाताय शुभाशीर्वादः, भद्रं त इति, नित्यदा स्वभावत एव नत्वध्ययनादिसाधनवशात् ॥ ४२ ॥ ❀ ❀ स्नात्वेत्यष्टकम् ॥ ४३ ॥ ❀ ❀ गुरुणामिति चित्सुखः, ह्रस्वश्छान्दसः ॥ ४४-४५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तव जनन्या यदभिहितं तदेव मदभिहितम्, इमञ्च विशेषमुपदिशामीत्याह तत्तातेति । मधुवनमिति सर्वेषु सिद्धक्षेत्रेषु तस्यैव मुख्यत्वात् ॥ ४२ ॥ ❀ ❀ अध्ययनाद्यभावेऽप्यात्मन उचितानि योग्यानि देवतानमस्कारादीनि ॥ ४३ ॥ ❀ ❀ त्रिवृता रेचकपूरककुम्भकात्मकेन गुरुणा विशुद्धत्वात् श्रेष्ठेन ॥ ४४ ॥ ❀ ❀ सुरेभ्योऽपि सुन्दरम् ॥ ४५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सति वासुदेवे साध्ये वाक्यं साधनप्रतिपादकं वाक्यम् ॥ ३९ ॥ ❀ ❀ यो जनन्याऽभिहितो भगवान् वासुदेवः स वै निश्रेयसस्य पुरुषार्थस्य पन्थाः पुरुषार्थस्य प्रदः । तमेव तत्प्रवणात्मना वासुदेवाभिनिविष्टेन चेतसा भज ॥ ४० ॥ ❀ ❀ पुरुषार्थानां धर्मादीनां मध्ये यो हि जनः आत्मनः प्रियं धर्मादिकमिच्छेत् तत्र धर्मादिके साध्ये कारणं साधनं एकं हरेः पादसेवनमेव स जनः कुर्यादिति शेषः ॥ ४१ ॥ ❀ ❀ तत्र मधुवने हरेः सर्वव्यापकस्याऽपि नित्यं सांनिध्यम् । श्रीमथुरामण्डले नित्य वैकुण्ठवत् हरिः प्रकटो वर्तते इत्यर्थः । तत्र भागवता अपि नित्यं वर्त्तन्ते नित्यदा हरिसान्निध्योपपत्तेः । अनेन श्रीमथुरामण्डलस्य भगवत्प्रियत्वं सर्वतीर्थेभ्य उत्कृष्टत्वं शीघ्रं भगवत्प्रापकत्वं च दर्शितम् । तथा च श्रुतिः "मथुरायां स्थितिर्ब्रह्मन्सर्वदा मे भविष्यती"ति ॥ ४२ ॥ ❀ ❀ शिवे मङ्गले अनुसवनं त्रिकालं स्नात्वा उचितानि कृत्यानि कृत्वेति यमनियमा उक्ताः, कुशादिभिः स्वस्तिकादिभिश्च कल्पितं संपादितमासनं येन सः ॥ ४३ ॥ ❀ ❀ त्रिवृता पूरककुम्भकरेचक रूपेण प्राणादीनां मलं चापल्यं व्युदस्य अपोह्य गुरुणा सह गुरुं हरिमभिध्यायेत् श्रीगुरुध्यानपूर्वकं श्रीहरिध्यानं कुर्यादित्यर्थः ॥ ४४ ॥ ❀ ❀ "यस्य देवे परा भक्तिर्यथा देवे तथा गुरावि"ति श्रुतेरुभयोर्विशेषणानि । प्रसादाभिमुखम् अनुग्रहेऽभिमुखं प्रसन्नं वदनमीक्षणे च यस्य शोभने भ्रुवौ यस्य तम् । चारुकपोलं सुन्दरगण्डम् । सुरेभ्यः सुन्दरम् ॥ ४५ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं तन्निर्बन्धं दृष्ट्वा परमकृपालुर्नारदो भगवदाराधनप्रकारमुपदिष्टवानित्याह—इतीति । इत्येवं ध्रुवेणाहृतं कथितं निर्व्यलीकं भगवद्भक्तियुक्तं वाक्यमाकर्ण्य श्रुत्वा भगवान् सर्वज्ञो भगवदिच्छैवमिति ज्ञात्वा नारदस्तदा तस्मिन्नेव समये तं बालं प्रति सद्वाक्यं तन्मनोरथसाधनपरं वाक्यं कृपयाऽऽहेत्यन्वयः ॥ ३९ ॥ ❀ ❀ नारदकृतमुपदेशमेव दर्शयति—जनन्येति द्वाविंशतिभिः । यस्तव जनन्याभिहितः कथितः पन्था मार्गः स वै स एव मान्यः, यस्ते तव निःश्रेयसस्य अभीष्टार्थस्य प्रापक इति शेषः । कोसावित्यपेक्षायामाह—भगवानिति । भगवान् ऐश्वर्यादिषड्गुणपूर्णः । स्वयं पूर्ण एवान्यं पूरयति नापूर्ण इति भावः । किंच वासुदेवः वसति जगदस्मिन्निति वासुः स एव दीव्यति प्रकाशत इति तथा सः जगत्प्रकाशकस्तदाधारभूतः यद्वा वसति सर्वत्रेति वासुः स देवः प्रकाशक इति तथा सर्वान्तर्यामी अतस्तत्प्रवणात्मना तदेकाग्रचित्तेन तं भजेत्यन्वयः ॥ ४० ॥ ❀ ❀ त्वन्मनोरथस्तु केवलमर्थविषयको भगवद्भजनं तु पुरुषार्थचतुष्टयस्य कारणमतस्तदवश्यं त्वया कर्त्तव्यमित्यभिप्रायेणाह—धर्मेति । धर्मार्थकाममोक्षाख्यं समुदितं प्रत्येकं वा श्रेयो यः पुरुष आत्मनः स्वस्येच्छेत्तस्य तत्र तत्प्राप्तौ हरेः पादसेवनमेव कारणं नान्यत् । अन्यदत्तपदार्थस्याशुतरविनाशित्वादित्येवकाराभिप्रायः । हिं यस्मादेवम् ॥ ४१ ॥ ❀ ❀ तत् तस्मात् हे तात ! ते तव भद्रं भवतु, त्वं भगवदाराधनार्थं यमुनायास्तत्प्रियायास्तटं मधुवनाख्यं शुचि पवित्रं पुण्यं पापनिवर्तकं पुण्यजनकं गच्छ । यत्र मधुवने नित्यदा सर्वदा हरेः सांनिध्यमस्ति हरिस्तत्र नित्यं वसति । तत्राराधने शीघ्रं प्रत्यक्षो भवतीति भावः ॥ ४२ ॥ ❀ ❀ तत्र गत्वाऽष्टाङ्गयोगस्त्वया कार्य इत्याह—स्नात्वेति । तस्मिन् मधुवने निवसन्ननुसवनं शिवे परमपावने कालिन्द्याः सलिले स्नात्वा उचितानि योग्यानि वक्ष्यमाणानि भगवत्परिचर्याजपादीनि कृत्वा ध्यायेदित्युत्तरेण क्रियापदेन संबन्धः । एवं नियमा उक्ताः । यमास्त्वहिंसादयोर्थसिद्धा ज्ञेयाः । आसनमाह—आत्मनः चैलाजिनकुशादिभिः स्वस्तिकादिभिश्च कल्पितमासनं येन स तथा ॥ ४३ ॥ त्रिवृता पूरकरेचककुंभकात्मकेन त्रिविधेन प्राणायामेन शनैः प्राणेन्द्रियमनोमलं व्युदस्य निरस्येति प्राणमनसोर्मलं चाञ्चल्यं तत् निरस्य स्थैर्यं कृत्वेति प्राणायाम उक्तः । इन्द्रियाणां मलं विषयोन्मुखत्वं तन्निरासकथनेन प्रत्याहार उक्तः । धारणामाह—अभिध्या-येत्यादिद्वादशाक्षराधिकैः षड्भिः गुरुणा धीरेण मनसा गुरुं सर्वोत्तमं परमपूज्यं भगवन्तमभिध्यायेदिति प्रथमपुरुषप्रयोगेण न केवलं त्वदर्थेयं रीतिः, किं त्वन्योऽपि यः कश्चित् श्रेयोर्थी स एवं कुर्यादिति सूचयति । एवमग्रेपि तत्प्रयोगो द्रष्टव्यः ॥ ४४ ॥ ❀ ❀ ध्येयं भगवन्तं दर्शयति—प्रसादाभिमुखमिति षड्भिः । प्रसादाभिमुखं प्रसादाय वरदानाय अभिमुखमुद्युक्तम् । ध्यायेदित्यस्यैव क्रियापदस्य सर्वत्रान्वयः । शश्वत् सर्वदा प्रसन्नं मुखमीक्षणे च यस्य तम् । सुष्ठु नासा यस्य तम् । सुष्ठु भ्रुवौ यस्य तम् । चारुणी मनोहरे कपोले यस्य तम् । सुरेषु देवेषु सुन्दरम् ॥ ४५ ॥

### भाषानुवादः

श्रीमैत्रेयजी कहते हैं—ध्रुवकी बात सुनकर भगवान् नारदजी बड़े प्रसन्न हुए और उसपर कृपा करके इस प्रकार सदुपदेश देने लगे ॥ ३९ ॥ ❀ ❀ श्रीनारदजी कहते हैं—बेटा ! तेरी माता सुनीतिने तुझे जो कुछ बताया है, वही तेरे लिये परम कल्याणका मार्ग है । भगवान् वासुदेव ही वह उपाय हैं, इसलिये तू चित्त लगाकर उन्हींका भजन कर ॥ ४० ॥ ❀ ❀ जिस पुरुषको अपने लिये धर्म, अर्थ, काम और मोक्षरूप पुरुषार्थकी अभिलाषा हो, उसके लिये उनकी प्राप्तिका उपाय एकमात्र श्रीहरिके चरणोंका सेवन ही है ॥ ४१ ॥ ❀ ❀ बेटा ! तेरा कल्याण होगा, अब तू श्रीयमुनाजीके तटवर्ती

परम पवित्र मधुवनको जा। वहाँ श्रीहरिका नित्य निवास है॥ ४२॥ ❋ ❋ वहाँ श्रीकालिन्दीके निर्मल जलमें तीनों समय स्नान करके नित्यकर्मसे निवृत्त हो यथाविधि आसन बिछाकर स्थिरभावसे बैठना॥ ४३॥ ❋ ❋ फिर रेचक, पूरक और कुम्भक—तीन प्रकारके प्राणायामसे धीरे-धीरे प्राण, मन और इन्द्रियके दोषोंको दूरकर धैर्ययुक्त मनसे परमगुरु श्रीभगवान्का इस प्रकार ध्यान करना॥ ४४॥ ❋ ❋ भगवान्के नेत्र और मुख निरन्तर प्रसन्न रहते हैं; उन्हें देखनेसे ऐसा मालूम होता है कि वे प्रसन्नतापूर्वक भक्तको वर देनेके लिये उद्यत हैं। उनकी नासिका, भौंहें और कपोल बड़े ही सुहावने हैं; वे सभी देवताओंमें परम सुन्दर हैं॥ ४५॥

तरुणं रमणीयाङ्गमरुणोष्ठेक्षणाधरम्। प्रणताश्रयणं नृम्णं शरण्यं करुणार्णवम्॥ ४६॥
श्रीवत्साङ्कं घनश्यामं पुरुषं वनमालिनम्। शङ्खचक्रगदापद्मैरभिव्यक्तचतुर्भुजम्॥ ४७॥
किरीटिनं कुण्डलिनं केयूरवलयान्वितम्। कौस्तुभाभरणग्रीवं पीतकौशेयवाससम्॥ ४८॥
काञ्चीकलापपर्यस्तं लसत्काञ्चननूपुरम्। दर्शनीयतमं शान्तं मनोनयनवर्धनम्॥ ४९॥
पद्भ्यां नखमणिश्रेण्या विलसद्भ्यां समर्चताम्[1]। हृत्पद्मकर्णिकाधिष्ण्यमाक्रम्यात्मन्यवस्थितम्॥५०॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

रमणीयान्यंगानि यस्य ओष्ठश्च ईक्षणा ईक्षणं च ओष्ठेक्षणे अरुणे ओष्ठेक्षणे धारयतीति तथा तम्। अरुणमोष्ठमीक्षणं चाधारयतीति वा। नृम्णं सुखकरम्। यद्वा नृम्णं धनम्। सर्वपुरुषार्थनिधिमित्यर्थः। शरण्यं रक्षितारम्॥ ४६॥ ❋ ❋ पुरुषं पुरुषलक्षणयुक्तम्॥ ४७॥ ❋ ❋ कौस्तुभस्याभरणं ग्रीवा यस्य॥ ४८॥ ❋ ❋ कांचीकलापेन पर्यस्तं परिवेष्टितम्। मनोनयनयोर्वर्धनं हर्षकरम्॥ ४९॥ ❋ ❋ हृत्पद्मकर्णिकाया धिष्ण्यं मध्यस्थानं तदाक्रम्य समर्चतां भक्तानाम्। आत्मनि मनसि स्थितम्॥ ५०॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

नृम्णपदस्यार्थद्वयवाचित्वादर्थान्तरमाह—यद्वेति। "नृम्णं स्यात्सुन्दरे धने" इति धरणिः। इत्यर्थ इति। सर्वधनरूपत्वं हरेरेव कल्याणहेतुत्वात्तद्धनं यत्सुखप्रदमिति भावः। नेत्रारुण्यस्य भयहेतुत्वेपि प्रांतारुण्यस्य शोभाहेतुत्वमपीत्यभिप्रेत्याह—अरुणेति॥ ४६॥ ❋ ❋ श्रीवत्सार्थो हि श्रीकृष्णावतारवर्णने स्फुटीभविष्यतीति। पुरुषलक्षणं श्यामवर्णशंखचक्रादि तद्युक्तम्॥ ४७॥ ❋ ❋ कौस्तुभस्याभरणं भूषणरूपं ग्रीवा यस्य तम्। न तु कौस्तुभेन ग्रीवाशोभा ग्रीवयैव कौस्तुभशोभेत्यर्थः॥ ४८॥ ❋ ❋ कांचीकलापेन तत्संज्ञभूषणेन "कलापो भूषणे बर्हे समूहे चन्द्रमस्यपि" इति निरुक्तिः॥ ४९-५०॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

रमणीयाङ्गमिति सुन्दरत्वस्यैवोद्देशः ईक्ष्यतेऽनेनेतीक्षणं नेत्रं जातावेकवचनम्। पूर्वार्थे नेत्रार्थलक्षणैव प्रतीयत इत्यरुचौ अर्थान्तरं नृम्णमिति छान्दसं पूर्वार्थे नृम्णशब्दस्य सुखकरत्वरूपोऽर्थोऽप्रसिद्ध इत्यरुचौ यद्वेति धनशब्दस्य पुरुषार्थवाचकत्वं लक्षणया अत एवेत्यर्थ इत्युक्तम्॥ ४६॥ ❋ ❋ पुरुषलक्षणयुक्तं द्वात्रिंशन्महापुरुषलक्षणविशिष्टम्॥ ४७॥ ❋ ❋ भूषणभूषणाङ्गमित्युक्ते कौस्तुभस्याभरणमिति व्याख्यातम्॥ ४८॥ ❋ ❋ शान्तं निर्विकारं मनस इन्द्रियाणाञ्चाणुत्वाद् वृद्धिर्न संगच्छते इति मुख्यार्थबाधः वृद्धिहर्षयोः कार्यकारणभावः संबन्धः, हर्षातिशयः प्रयोजनमित्यभिप्रेत्य हर्षकरमिति व्याख्यातम्॥ ४९॥ ❋ ❋ मनसि स्थितं स्फुरन्तम्। एतत्पर्यन्तं सविशेषणधारणवर्णनम्॥ ५०॥

## श्रीमद्वीरराघवव्याख्या

तरुणं बालं रमणीयान्यंगानि यस्य तमधरोष्ठेक्षणारुणम् अधरोष्ठौ ईक्षणे चारुणे यस्य तमरुणोष्ठेक्षणाधरमिति पाठान्तरं तदा अरुणमोष्ठमीक्षणे चाधारयतीति तं प्रणतैर्भक्तैराश्रयणमाश्रयणीयं नृम्णं सुखरूपं यद्वा नृम्णं धनं सर्वपुरुषार्थनिधिमित्यर्थः। शरण्यं समीहितोपायत्वेनाध्यवसनीयं करुणानिधिम्॥ ४६॥ ❋ ❋ श्रीवत्समङ्कं चिह्नं यस्य घनश्यामं नीलाम्बुदश्यामं पुरुषं पुरुषलक्षणयुक्तं वनमाला अस्यास्तीति वनमाली तं शंखादिभिरभिव्यक्ताः शोभमानाश्चत्वारो भुजा यस्य तम्॥ ४७॥ ❋ ❋ किरीटमस्यास्तीति तं कुण्डले अस्य स्त इति तं केयूराभ्यां वलयाभ्यां च युक्तं कौस्तुभाख्यमाभरणं ग्रीवायां यस्य तं पीतं कौशेयं वासो वस्त्रं यस्य तम्॥ ४८॥ ❋ ❋ कांचीकलापेन पर्यस्तं परिवेष्टितं लसत् काञ्चने नूपुरे यस्य तम् अतिशयेन द्रष्टुं

[1] प्रा० पा०—समर्चितम्।

योग्यं शान्तम् अनुग्रं ध्यातॄणां मनसो नयनयोश्च वर्द्धनं हर्षकरम् ॥ ४९ ॥ ❀ ❀ नखा एव मणयस्तेषां श्रेण्या पङ्क्त्या विलसद्भ्यां युक्तं समर्चतां हृत्पद्मकर्णिकाधिष्ण्यं मध्यस्थानं तदाक्रम्य अर्चतां आत्मनि स्थितम् ॥ ५० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अरुणत्वलक्षणज्ञापनाय पुनरीक्षणं कचिद्धरिं पीतवर्णं कचित्कृष्णम् ॥ ४६ ॥ ❀ ❀ कचिद्धनवत् श्यामं नीलं पुरुषलक्षणसामग्रीसूचनाय पुरुषग्रहम् ॥ ४७-४८ ॥ ❀ ❀ 'कलापो भूषणे बर्हे' इति वचनात् काञ्चीकलापेन पर्यस्तं संवेष्टितम् ॥ ४९ ॥ ❀ ❀ नखमणिश्रेण्या विलसद्भ्यां समर्चतां भक्तानामात्मनि मध्यदेहे हृदयपद्मकर्णिकाधिष्ण्यमाक्रम्यावस्थितम् ॥ ५० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

ओष्ठमुपरि अधरस्त्वधस्तात् । नृम्णमिति छान्दसम् ॥ ४६ ॥ ❀ ❀ पुरुषं पुरुषस्य भगवतो लक्षणेनान्वितमित्यर्थः । शङ्खादिभिः सर्वत्र विख्याताश्चत्वारो भुजा यस्य तम् ॥ ४७ ॥ ❀ ❀ कलापविन्यस्तमिति चित्सुखः ॥ ४९ ॥ ❀ ❀ आत्मन्यवस्थितं मनसि स्फुरन्तम् ॥ ५० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

उपर्यधः स्थितौ दन्तच्छदावोष्ठाधरावुच्येते । प्रणतानामाश्रयणं नृम्णं तेषां धनरूपम् ॥ ४६ - ४७ ॥ ❀ ❀ कौस्तुभस्याभरणं ग्रीवायां यस्य ॥ ४८ ॥ ❀ ❀ काञ्चीकलापेन क्षुद्रघण्टिकासमूहेन । पर्यस्तं परिवेष्टितम् ॥ ४९ ॥ ❀ ❀ समर्चतां भक्तानां धिष्ण्यं स्थानम् । आत्मनि बुद्धौ जीवे च ॥ ५० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तरुणं षोडशवार्षिकम् । रमणीयान्यङ्गानि यस्य, अरुणे ओष्ठेक्षणे आधारयतीति तम् । नृम्णं धनं चिन्तामणिवद्भक्ताभीष्टप्रदमित्यर्थः ॥ ४६ ॥ ❀ ❀ श्रीवत्समङ्कं चिह्नं यस्य तम् । शङ्खादिभिः अभिव्यक्ता उपलक्षिताश्चत्वारो भुजा यस्य तम् ॥ ४७ ॥ ❀ ❀ केयूरैः कटकैश्चान्वितम् । कौस्तुभरूपमाभरणं ग्रीवायां यस्य तम् ॥ ४८ ॥ ❀ ❀ काञ्चीकलापेन पर्य्यस्तं परिवेष्टितम् । मनोनयनयोर्वर्द्धनमुत्साहकरम् ॥ ४९ ॥ ❀ ❀ पद्भ्यां समर्चतां हृत्पद्मकर्णिकैव धिष्ण्यमासनमाक्रम्यावस्थितम् । आत्मनि जीवे चावस्थितमित्यन्वयः, आविर्भवति जीवस्वरूपे आराग्रपरिमाणे जीवनियमनार्थं च तिष्ठति तमिति 'अन्तःप्रविष्टः शास्ता जनानामि'ति श्रुतेः ॥ ५० ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

रमणीयानि मनोहराणि अङ्गानि करचरणादीनि यस्य तम् । अरुणमोष्ठमीक्षणे च आधारयतीति तथा तम् । प्रणतानां शरणागतानामाश्रयणमाश्रयभूतम् । नृम्णं सुखकरं सर्वपुरुषार्थभूतम् । करुणायाः कृपाया अर्णवं समुद्रमत एव शरण्यं शरणयोग्यमाश्रयणीयमित्यर्थः ॥ ४६ ॥ ❀ ❀ श्रीवत्सो रोमावर्त्तविशेषः अङ्को यस्य तम् । पुरुषं पुरुषाकारम् । शङ्खादिभिश्चतुर्भिरभिव्यक्ताः प्रकाशमानाः शोभिताश्चत्वारो भुजा यस्य तम् ॥ ४७ ॥ ❀ ❀ केयूरवलयाभ्यामन्वितं युक्तं भूषितम् । कौस्तुभाभरणं ग्रीवायां यस्य तम् । पीते कौशेये कोशजन्ये वाससी यस्य तम् ॥ ४८ ॥ ❀ ❀ काञ्चीकलापेन कटिभूषणेन पर्यस्तं परिवेष्टितम् । लसती शोभमाने काञ्चने नूपुरे चरणभूषणे यस्य तम् । दर्शनीयतमं दर्शनयोग्या दर्शनीयास्तेषां श्रेष्ठम् । कुत एवं यतो मनोनयनवर्द्धनं तयोर्हर्षकरम् । तत्रापि हेतुमाह—शान्तमिति । सौम्यस्वरूपमित्यर्थः ॥ ४९ ॥ ❀ ❀ समर्चतां भक्तिपूर्वकं पूजयतां निजभक्तानामात्मनि देहे हृत्पद्मकर्णिकालक्षणं धिष्ण्यं स्थानं नखान्येव मणयस्तेषां श्रेणिः पङ्क्तिस्तया विलसद्भ्यां पद्भ्यामाक्रम्यावस्थितम् ॥ ५० ॥

### भाषानुवादः

उनकी तरुण अवस्था है; सभी अङ्ग बड़े सुडौल हैं; लाल-लाल होठ और रतनारे नेत्र हैं। वे प्रणतजनोंको आश्रय देनेवाले, अपार सुखदायक, शरणागतवत्सल और दयाके समुद्र हैं ॥ ४६ ॥ ❀ ❀ उनके वक्षःस्थलमें श्रीवत्सका चिह्न है, उनका शरीर सजल जलधरके समान श्यामवर्ण है; वे परम पुरुष श्यामसुन्दर गलेमें वनमाला धारण किये हुए हैं और उनकी चार भुजाओंमें शङ्ख, चक्र, गदा एवं पद्म सुशोभित हैं ॥ ४७ ॥ ❀ ❀ उनके अङ्ग-प्रत्यङ्ग किरीट, कुण्डल, केयूर और

कङ्कणादि आभूषणोंसे विभूषित हैं; गला कौस्तुभमणिकी भी शोभा बढ़ा रहा है तथा शरीरमें रेशमी पीताम्बर है ॥ ४८ ॥ ❋ ❋ उनके कटिप्रदेशमें काञ्चनकी करधनी और चरणोंमें सुवर्णमय नूपुर ( पैंजनी ) सुशोभित हैं। भगवान्का स्वरूप बड़ा ही दर्शनीय, शान्त तथा मन और नयनोंको आनन्दित करनेवाला है ॥ ४९ ॥ ❋ ❋ जो लोग प्रभुका मानसपूजन करते हैं, उनके अन्तःकरणमें वे हृदयकमलकी कर्णिकापर अपने नख-मणिमण्डित मनोहर पादारविन्दोंको स्थापित करके विराजते हैं ॥ ५० ॥

स्मयमानमभिध्यायेत्सानुरागावलोकनम्। नियतेनैकभूतेन मनसा वरदर्षभम् ॥ ५१ ॥
एवं भगवतो रूपं सुभद्रं ध्यायतो मनः। निर्वृत्या परया तूर्णं सम्पन्नं न निवर्तते ॥ ५२ ॥
जप्यश्च परमो गुह्यः श्रूयतां मे नृपात्मज। यं सप्तरात्रं प्रपठन् पुमान् पश्यति खेचरान् ॥ ५३ ॥

"ॐ नमो भगवते वासुदेवाय"

मन्त्रेणानेन देवस्य कुर्याद् द्रव्यमयीं बुधः। सपर्यां विविधैर्द्रव्यैर्देशकालविभागवित् ॥ ५४ ॥
सलिलैः शुचिभिर्माल्यैर्वन्यैर्मूलफलादिभिः। शस्ताङ्कुरांशुकैश्चार्चेत्तुलस्या प्रियया प्रभुम् ॥ ५५ ॥
लब्ध्वा द्रव्यमयीमर्चां क्षित्यम्ब्वादिषु वार्चयेत्। आभृतात्मा मुनिः शान्तो यतवाङ्मितवन्यभुक् ॥ ५६ ॥
स्वेच्छावतारचरितैरचिन्त्यनिजमायया। करिष्यत्युत्तमश्लोकस्तद् ध्यायेद्धृदयङ्गमम् ॥ ५७ ॥
परिचर्या भगवतो यावत्यः पूर्वसेविताः। ता मन्त्रहृदयेनैव प्रयुञ्ज्यान्मन्त्रमूर्तये ॥ ५८ ॥
एवं कायेन मनसा वचसा च मनोगतम्। परिचर्यमाणो भगवान् भक्तिमत्परिचर्यया ॥ ५९ ॥
पुंसाममायिनां सम्यग्भजतां भाववर्धनः। श्रेयो दिशत्यभिमतं यद्धर्मादिषु देहिनाम् ॥ ६० ॥
विरक्तश्चेन्द्रियरतौ भक्तियोगेन भूयसा। तं निरन्तरभावेन भजेताद्धा विमुक्तये ॥ ६१ ॥
इत्युक्तस्तं परिक्रम्य प्रणम्य च नृपार्भकः। ययौ मधुवनं पुण्यं हरेश्चरणचर्चितम् ॥ ६२ ॥
तपोवनं गते तस्मिन्प्रविष्टोऽन्तःपुरं मुनिः। अर्हितार्हणको राज्ञा सुखासीन उवाच तम् ॥ ६३ ॥

नारद उवाच

राजन् किं ध्यायसे दीर्घं मुखेन परिशुष्यता। किं वा न रिष्यते कामो धर्मो वार्थेन संयुतः ॥ ६४ ॥

राजोवाच

सुतो मे बालको ब्रह्मन् स्त्रैणेनाकरुणात्मना। निर्वासितः पञ्चवर्षः सह मात्रा महान्कविः ॥ ६५ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

ध्यानमाह। स्मयमानमिति। नियतेन प्रागुक्तया धारणया सुस्थिरेणात एवैकभूतेनैकाग्रेण। धारणोक्तानि विशेषणानि ध्यानेऽपि द्रष्टव्यानि। यद्वा यथोक्तमात्रमेव। तदुक्तमेकादशस्कन्धे "नान्यानि चिंतयेद् भूयः सुस्मितं भावयेन्मुखम्।" इति ॥ ५१ ॥ ❋ ❋ समाधिमाह। एवमिति। परया निर्वृत्या आनंदेन तूर्णं शीघ्रं सम्पन्नं सत् ॥ ५२ ॥ ❋ ❋ जप्यो मन्त्रः ॥ ५३-५४ ॥ ❋ ❋ द्रव्याण्येवाह। सलिलैरिति। शस्तैर्दूर्वाङ्कुरैर्वन्यैरेवांशुकैर्भूर्जत्वगादिभिः ॥ ५५ ॥ ❋ ❋ पूजाया अधिष्ठानमाह। लब्ध्वा संपाद्य। द्रव्यमयीं शिलादिनिर्मिताम् अर्चां प्रतिमाम्। पूजासाद्गुण्यहेतूनाह सार्धाभ्याम्। आभृतात्मा धृतचित्तः। मितं वन्यं फलमूलादि भुंक्त इति तथा ॥ ५६ ॥ ❋ ❋ यत्करिष्यतीति तदानीमवतारप्राचुर्याभावाल्लट् ॥ ५७ ॥ पूर्वसेविताः पूर्वं सेवनं कारिताः कार्यत्वेन विहिता इत्यर्थः। मंत्रहृदयेन द्वादशाक्षरेण ॥ ५८ ॥ ❋ ❋ एवमुक्तरीत्या मनोगतं यथा भवति तथा कायादिभिर्भक्तिमत्या परिचर्यया सेवया परिचर्यमाणो भगवान् ॥ ५९ ॥ ❋ ❋ अमायिनां निष्कपटानां पुंसां धर्मार्थकामेषु यदभिमतं तच्छ्रेयो दिशतीति द्वयोरन्वयः ॥ ६० ॥ ❋ ❋

---

१. प्रा० पा०—दयं गतम्। २. प्रा० पा०—अर्हितोऽर्हणया।

इन्द्रियरतो विषयभोगे विरक्तः सन्भजेत्। किमर्थं विमुक्तये ॥ ६१ ॥ ❀ ❀ हरेश्चरणाभ्यां चर्चितं मण्डितम् ॥ ६२ ॥ ❀ ❀ अर्हितं सत्कृत्य समर्पितमर्हणमर्घ्यादिकं यस्मै ॥ ६३ ॥ ❀ ❀ किं वा न रिष्यते न नश्यतीति सवितर्कः प्रश्नः ॥ ६४ ॥ ❀ ❀ मात्रा सह निर्वासितः निष्कासितः। मात्रेत्युक्तिः तस्या अप्यनादृतत्वात् ॥ ६५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अतः संस्थितत्वात्। धारणोक्तानि "प्रसन्नवदनेक्षणम्" इत्यादीनि तथा च धारणाध्यानयोर्भेदो न सेत्स्यति तुल्यविशेषणत्वादुभयोरिति चेत्तत्राह—यद्वेति ॥ ५१ ॥ ❀ ❀ 'समाधिश्चित्तवृत्तिनिरोधः' इति लक्षणसद्भावादाह—समाधिमाह एवमिति। परया निर्वृत्त्योद्रिक्तानन्देन सम्पन्नं पूर्णं ध्येयादितरत्र न गच्छतीत्यर्थः ॥ ५२ ॥ ❀ ❀ नृपात्मजेति। नरपालकपुत्रत्वात्त्वमपि न राज्यपालयिष्यसीत्यतस्त्वां गोप्यमपि वदामीत्यभिप्रायः। खेचरान् देवान् प्रकृष्टं तदाकारचेतस्त्वेन पठन् ॥ ५३ ॥ ❀ ❀ ध्रुवस्य पंचवर्षत्वेन "एकादशे राजन्यमुपनयीत" इति श्रुतेरुपनयनाभावेपि सर्वज्ञनारदकर्तृक-सप्रणवमंत्रोपदेशाद्वैष्णवमंत्राणां नायं नियमो यदुपनीतस्यैव ब्राह्मणादेरुपदेष्टव्यास्तथा सति श्रीनारदस्तं कथमुपदिशेदिति ज्ञेयमत्र विज्ञैः। अस्य मंत्रस्य विनियोगांगन्यासादि तु षष्ठस्कन्धे नारायणवर्मव्याख्याने वर्णयिष्यामः। जपितुं योग्यो जप्यः। द्रव्यमयीं द्रव्यप्रधानाम्। सपर्यां पूजाम्। "अर्चा पूजा सपर्या स्यात्" इति कोषात् ॥ ५४ ॥ ❀ ❀ शुचिभिश्शूद्रादि-भिरनानीतैः। "शूद्रानीतैः स्त्रियानीतैर्यैस्स्नापयति केशवम्। स याति नरकं घोरं वस्त्रापूतैस्तथा जलैः॥" इत्यादिपुराणात्। आदिना त्वगादिग्रहः। अंशुकैः सूक्ष्मैर्वस्त्रैः पत्रैर्वा। "अंशुकं सूक्ष्मवस्त्रे स्याद्वस्त्रमात्रोत्तरीययोः।" इति मेदिनी। तदुक्तं हरिभक्तिचन्द्रोदये "दूर्वांकुरं तु हरये पूजाकाले प्रयच्छति। पूजाफलं शतगुणं सम्यगाप्नोति मानवः॥ शमीपत्रैश्च देवेशं पूजयंत्यसुरद्विषम्। यममार्गं महाघोरं न ते पश्यन्ति नारद॥ धात्रीपत्रैर्बिल्वपत्रैस्तथैवाश्वत्थपत्रकैः। नवीनैर्मृदुभिर्ये च पूजयन्ति जनार्दनम्। न तेषां पुनरावृत्तिर्वैकुण्ठाज्जायते द्विज॥ धात्री धुनोति पापानि शमी शमयतेऽशुभान्। दूर्वा हरति दुःखानि तुलसी सर्वकामदा। श्रियं ददति बैल्वान्याश्वत्थान्यारोग्यसंपदः॥" इति। प्रिययेति तुलस्या भगवतो हृदयजत्वात्प्रिय-त्वमन्यपुष्पपत्राद्यपेक्षया। तदुक्तं तुलस्युपनिषदि तथा हि—"नमः श्रीकृष्णाय निःश्रेयसारण्यविविधविचित्रानंतपारिजातादि-पुष्पामोदानन्दॐहीश्वरहृदयानन्दरूपाहृद्यामनोरमासुन्दर्येवाभूत् ता ॐ सपत्नी ॐ ब्रह्ममहिषी असूयमाणा शशाप त्वं जडा भवेति सा वृक्षरूपा भगवत्करस्थिता दिव्यपरिमला तर्पयंतीॐह्रियमाणां शिरसा धारयामीत्युद्यनि स्थापितवान् परब्रह्मपत्नी स्वशक्तिभिः परि-बृंहिताॐ सपरिकरदिव्याभरणाभूषितां विचिक्रीडिषयोद्यानमागता ॐ हितच्चरणनूपुरध्वन्युद्भवाप्रमदोत्तमा तत्स्वरूप ॐ हि ध्यात्वोप-चारैर्दिव्यपरिमलकरजातुलसीमहाहारैः सपर्यां प्राप्ता ॐ सा ननाम सा होवाच वरं वृणीष्वेति युगलतच्चरणपरिचर्य्यारतांतिके तिष्ठा-मीत्यब्रुवाणा ॐ होवाच त्वच्छेमुषीसमुत्थिता ॐ हि दिव्यगुणज्वालांगां स्त्रियं समातरं वैकुंठमहिषीप्रियां निवेशयिष्यामीत्यंतर्हितै-कदा ध्यायंती स्ववाक्योद्भवा गायंती वीणा कणिताब्जहस्ता तदंतिके भगवंतं दृष्ट्वा प्रणम्य स्थितवतीति सर्वज्ञः सपुत्रिकां प्रेक्ष्योवाच त्वं का किमर्थमागतासीति लीलया पृच्छन्तं ॐ हिदेव्युवाच त्वच्छक्त्युद्भवा ॐ हं त्वत्कैंकर्यमिच्छती ॐ हीत्यभिनंद्य तत्पुत्रिकां भक्ति हरिवल्लभां कारयामास। इदमत्र ॐ ह वै तुलस्यसंस्कृतं ॐ पुरुषाराधनानर्हं भवति न तेन विष्णुः प्रीणाति तस्मात्तुलसीमिश्रित ॐ समर्पणं कुर्यात् तुलसीरहितं निवेदितं यो भुंक्ते स किल्बिष ॐ सर्वं भुंजानः पापीयान्भवति स सर्वलोकगर्हितो भवति कृष्णे अभक्तो भवति" इति श्रुतेः ॥ ५५ ॥ ❀ ❀ आदिना सुवर्णादिग्रहः। "अर्चा स्यात्प्रतिमा पूजा" इति कोशात् ॥ ५६ ॥ ❀ ❀ करिष्यतीति भविष्यन्निर्देशः तदानीं स्वायंभुवमन्वंतरे। यत्कंसवधादिलक्षणं चरितम् ॥ ५७ ॥ ❀ ❀ पूर्वैराचार्यैः सेविताः या विहिताः परिचर्या धूपगन्धादिसमर्पणलक्षणाः पूजास्ताः सर्वा अपि मन्त्राणां हृदयेन मुख्येन "हृदयं मानसे मुख्ये वक्षसीश्वरबुक्कयोः" इति निरुक्तेः। मन्त्रमूर्त्तये मन्त्राक्षरप्रतिपाद्याय वासुदेवाय मन्त्रेषूपवर्णिता मूर्तिर्यस्य। यद्वा मंत्रो वेदः स एव मूर्तिर्यस्य तस्मै ॥ ५८–६० ॥ ❀ ❀ इंद्रियरतौ विषयभोगे योभिमतं ददाति तम् ॥ ६१ ॥ ❀ ❀ तं नारदम्। चरणचर्चितमिति भूतभविष्यत्त्वापेक्षया। यद्वा "मथुरा भगवान्यत्र नित्यं सन्निहितो हरिः" इति श्रीदशमे वक्ष्यमाणत्वात्तत्र सदैव हरेः स्थितत्वाद् ध्रुवकालेपि तच्चरणचर्चितत्वं नासंगतम् ॥ ६२ ॥ ❀ ❀ तपसे हितं तपोहितं तच्च तद्वनं तपोवनं मध्यमपदलोपी समासः। तस्मिन् ध्रुवे मुनिर्नारदः। 'अर्हितोर्हणया' इति पाठे अर्हणया पूजासाधनेनार्हितोचिंत इत्यर्थः। क्वचित् 'अर्हिताभ्यर्हणः' इति पाठोप्यस्ति ॥ ६३ ॥ ❀ ❀ रिष्यत इति। 'रिष-हिंसायाम्' आत्मनेपद-मार्षम् ॥ ६४ ॥ ❀ ❀ स्त्रैणेन स्त्रीवशवर्तिना। न करुणा दयात्मनि चित्ते यस्य तादृशेन। निर्वासितो निष्कासितः। कविरिति ज्ञानित्वं द्योतयति। यतोऽसौ राजसिंहासनतोप्युत्तमं पदं साधयामीति निरूप्य मात्रादींस्त्यक्त्वा पुरान्निरगादिति। महानिति मानयोग्यतामाह ॥ ६५ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अत एवास्थिरत्वादेव पूर्वार्थे विशेषणसाम्ये धारणाध्यानयोर्भेदोऽस्फुट इत्यरुचौ यद्वेति ॥ ५१ ॥ ❀ ❀ न निवर्त्तते ध्येयाकारेण परिणमतीत्यर्थः। तदुक्तं योगशास्त्रे "मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः। याऽसंप्रज्ञातनामासौ समाधि-

रभिधीयते" इति ॥ ५२ ॥ ❁ ❁ प्रपठन् वाचिकमपि जपन् किमुतोपांशु मानसं वा पुमानिति सर्वाधिकारता सूचिता। खेचरान् पार्षदान् ॥ ५३ ॥ ❁ ❁ अथ दक्षिणकर्णे मन्त्रमुपदिशति ओमिति। ओंकारवाच्याय षडैश्वर्य्यपूर्णाय श्रीवसुदेवनन्दनाय विशुद्धसत्त्वे प्रकाशमानाय च नम इति सप्रणवानामपि वैष्णवमन्त्राणां द्विजत्वाद्यनपेक्षत्वं सिद्धान्तितं ध्रुवस्यानुपनीतत्वात्। द्रव्यमयीं द्रव्यैकसाध्यां सपर्य्यां पूजां देशकालविभागविदिति श्रीवृन्दावनादिदेशे वसन्तादिकाले तत्तदुचितसेवां कुर्य्यादित्यर्थः ॥ ५४ ॥ ❁ ❁ वन्यैर्गन्धधूपादिभिः अर्च्चेदिति पाठान्तरम् ॥ ५५ ॥ ❁ ❁ लब्ध्वेत्यर्द्धकम्। अर्च्चां श्रीमत्प्रतिमां क्षित्यम्ब्वादिषु चेत्यधिष्ठानांतरवर्णनम् ॥ ५६ ॥ ❁ ❁ आभृतेति सार्द्धकम्। हृदयं गतं मनोहरं चरितम् ॥ ५७ ॥ ❁ ❁ पूर्वैः कार्य्यत्वेन विहिताः सदाचारलब्धा इत्यर्थः। परिचर्य्याः पूजासामग्र्यः गन्धचन्दनाद्याः छत्रचामराद्याश्च यावत्यः सन्ति ॥ ५८ ॥ ❁ ❁ एवमिति युग्मकम्। मनोगतं मनसि प्रविष्टं यथा स्यात्तथा मनो दत्त्वेत्यर्थः। भक्तिमत्या श्रवणकीर्त्तनादियुक्तया परिचर्य्यया-परिचर्य्या तु सेवोपकरणादिपरिष्क्रियेति लक्षणाक्रान्तया परिचर्य्यमाणः सेव्यमानः अमायिनां निष्कामानाम् अत एव सम्यग्भजतान्तु स्वस्मिन्भावं रतिमेव वर्द्धयति ॥ ५९ – ६० ॥ ❁ ❁ भूयसा निष्कामेन भक्तियोगेन श्रवणकर्त्तनादि-चेष्टारूपया भक्त्या इन्द्रियरतौ विरक्तस्सन् तं भगवन्तं निरन्तरो ज्ञानाद्यनावृतो यो भावः दास्याद्येकतमस्तेन साक्षादेव भजेत सेवेत, न तु शिष्यपुत्रादिद्वारा तत्र फलमाह। विमुक्तय इति। विशिष्टा मुक्तिर्हि सप्रेमपार्षदत्वलक्षणा तस्यै। तदुक्तं श्रीरसामृत-सिंधौ "धनशिष्यादिभिर्द्वारैर्या भक्तिरुपपाद्यते। विदूरत्वादुत्तमताहान्या तस्याश्च नाङ्गता॥" इति ॥ ६१ ॥ ❁ ❁ हरेश्चरण-चर्चितमिति प्रतिकल्पं श्रीकृष्णस्य तत्राविर्भावात् अप्रकटत्वेनापि नित्यं तत्र वर्त्तमानत्वाच्च ॥ ६२ – ६४ ॥ ❁ ❁ तस्या मातुरप्यनादृतत्वादिति अनादृतत्वमेव निर्वासितत्वेनोत्प्रेक्षितम् ॥ ६५ ॥

## श्रीमद्वीरराघवव्याख्या

स्मयमानमीषद्धसन्तम् अनुरागयुक्तोऽवलो को यस्य पुरुषोत्तमं नियतेन विजातीयप्रत्ययरहितेन एकभूतेन एकाग्रेण मनसा अभितः पादादिशिरःप्रभृति ध्यायेत् ॥ ५१ ॥ ❁ ❁ एवं ध्येयमाकारमभिधायेदृशशुभाश्रयध्यानसुखितं मनस्तत-स्तूर्णं न निवर्तयेदित्याह एवमिति। सुभद्रं निरतिशयमङ्गलगुणाकरं ध्यानविषयं भगवतो रूपमभिध्यायेदिति शेषः। परया निर्वृत्त्या निरतिशयेन सुखेन संपन्नं युक्तं मन इति शेषः, तूर्णं न निवर्त्तते। यद्वा परया निर्वृत्त्या संपन्नं मनस्तूर्णं यथा न निवर्त्तते तथा भगवतो रूपं ध्यायेदिति क्रियाविशेषणत्वानुषङ्गाभ्यां योजनीयम् ॥ ५२ ॥ ❁ ❁ एवमष्टाङ्गयुक्तं भक्तियोगमभिधाय तदनुग्राहिकां द्रव्यमयीं सपर्यामभिधास्यन् तदुपयुक्तं जप्यं मन्त्रं सप्रभावमाह जप्यश्चेति। हे नृपात्मज ! परमो निरतिशयः अत एव गुह्यो गोपनीयः मन्त्रः मे मत्तः श्रूयतां यं मन्त्रं पुमान्सप्तरात्रं प्रपठन् खेचरान् पश्यति ॥ ५३ ॥ ❁ ❁ कोऽसौ मनुरित्यत आह ओमिति। अयं वासुदेवद्वादशाक्षरो मन्त्रः, अस्यार्थस्तु संप्रदायतोऽवगन्तव्यः। एतन्मंत्रपूर्वकद्रव्यमयीमर्चामाह मन्त्रेणेति। देवस्य अनेन मन्त्रेण नानाविधैर्द्रव्यैः द्रव्यमयीं द्रव्यप्रचुरां सपर्यां देशकालयोः सपर्योपयुक्तानुपयुक्तदेशकालयोर्विभागं वेत्तीति देशकालविभागवित्कुर्यात्सपर्योपयुक्तो देशः चण्डालपतितयवनाद्यसेवितः, कालस्तु प्रातर्मध्यंदिनसायाह्नादिरूपः, तदितराव-नुपयुक्तौ देशकालौ ॥ ५४ ॥ ❁ ❁ द्रव्याण्याह सलिलैरिति। शुचिभिरिति सलिलादिभिः सर्वैरन्वेति वन्यैः वनेषु भवैः शस्तांकुरांशुकैः प्रशस्तैर्दूर्वाद्यंकुरैर्वन्यैरेवांशुकैः भूर्जत्वगादिभिः प्रियया भगवतः प्रीतिविषयया तुलस्या हरिमर्चयेत् आराधयेत् ॥ ५५ ॥ ❁ ❁ एवं द्रव्यमयीमर्चां लब्ध्वा संपाद्य क्षित्यम्ब्वादिषु चक्राब्जमण्डलादिभिरलंकृतायां क्षितौ गङ्गाजलादिषु आदिशब्दाद्वित्रादित्यमंडलादिषु च अर्चयेत्। पूजासाद्गुण्यहेतूनाह सार्द्धाभ्याम्। आदृतात्मा आदृतचित्तः मुनिः ध्यानानुपयुक्त-दशासु शुभाश्रयसंशीलनपरः शान्तः जितेंद्रियः यतवाक् मितभाषणः मितं यथा भवति तथा वन्यं भुङ्क्त इति तथा ॥ ५६ ॥ ❁ स्वेच्छावतारचरितैः स्वेच्छयैवोपात्ता न तु कर्मणा ये अवतारा वराहादयस्तेषां चरितैः व्यापारैः निजमायया आत्मीयसंकल्पेन उत्तमश्लोको भगवान् यत् अचिन्त्यं कर्मवश्यदेवमनुष्यादिसजातीयत्वेन चिंतयितुमशक्यं साधुपरित्राणदुष्कृतविनाशनादिकं करोति तं हृदयंगमं मनोहरं ध्यायेत्। तदानीमवतारप्राचुर्याभावात्करिष्यतीति भविष्यन्निर्देशः ॥ ५७ ॥ ❁ ❁ यावत्यो भगवतः परिचर्याः पूर्वसेविताः सेवनं कारिताः कार्यत्वेन विवक्षितास्ताः सर्वा मन्त्रहृदयेनैव द्वादशाक्षरमन्त्रानुसन्धानयुक्तमनसैव मन्त्रः मूर्त्तिर्विग्रहो यस्य तस्मै भगवते प्रयुञ्ज्यात् युक्ताः कुर्यात् ॥ ५८ ॥ ❁ ❁ एवमाराधितो भगवान् आराधकानां समीहितधर्मादिश्रेयो दिशतीत्याह एवमिति द्वाभ्याम्। अमायिनामवञ्चकानामत एव सम्यक् भजतां कर्मायत्तदेहभृतां पुंसां मानवर्द्धनः सम्मानकारी भगवान् भक्तिमती या परिचर्या तया परिचर्यमाणः धर्मादिषु यदाराधकाभिमतं तच्छ्रेयो दिशतीत्यु-भयोरन्वयः ॥ ५९–६० ॥ ❁ ❁ एवं धर्मादिसाधारण्येन तत्साधनभूता भक्तिरभिहिता। तत्र मुक्तिसाधनभूतायां भक्त्यां विशेषं वदन्नुपसंहरति विरक्त इति। इन्द्रियरतौ इन्द्रियसाध्यक्रीडायां विरक्तः निरन्तरभावेन विजातीयप्रत्ययान्तराव्यवहित-प्रत्ययेन भूयसा बह्वङ्गोपकृतेनाप्रायणादनुवर्तमानेन भक्तियोगेन प्रेमात्मकानुध्यानरूपेण "प्रीतिपूर्वमनुध्यानं भक्तिरित्यभिधीयते" इति हि स्मृतिः। अत्र हि विरक्त इति विमोकोक्त्या साधनसप्तकं विवक्षितं, भूयसेत्यनेन ज्ञानयोगशमदमबाल्यपाण्डित्यमौनादयो विवक्षिताः, एवंभूतेन भक्तियोगेन विमुक्तये तं भगवन्तमद्धा साक्षाद्भजेत्। अद्धेत्यनेन सद्वारकोपासनं व्यावर्त्तितम् ॥ ६१ ॥ ❁ ❁

एवमुपदिष्टभगवदाराधनप्रकारो ध्रुवो मधुवनं गतवानिति वदन्नन्तरा नारदोत्तानपादयोः संवादमाह इतीत्यादिना। इत्युक्तरीत्या उक्तः नृपार्भको ध्रुवः तं नारदं परिक्रम्य प्रदक्षिणीकृत्य प्रणम्य च हरेर्भगवतश्चरणाभ्यां चर्चितं सञ्चारितमत एव पुण्यं मधुवनं ययौ॥ ६२॥ ❀ ❀ तस्मिन् ध्रुवे तपोवनं गते सति मुनिर्नारदः अन्तःपुरं प्रविष्टः राज्ञा उत्तानपादेन अध्यर्हितं सत्कृत्य समर्पितमर्हणमर्घ्यादिकं यस्य सः सुखासीनः सुखावहे आसने यथासुखमासीनो नारद उवाच॥ ६३॥ ❀ ❀ हे राजन्! परितः शुष्यता मुखेन दीर्घं किं ध्यायसे? अर्थेन संयुतः सहितः कामो धर्मश्च चशब्दो वाशब्दार्थः धर्मो वा किं न रिष्यति? न नश्यतीति सवितर्कः प्रश्नः॥ ६४॥ ❀ ❀ एवमुक्तो राजाह सुत इति। हे ब्रह्मन्! स्त्रैणेन स्त्रीपुभवः स्त्रैणः स्त्रीणामयमिति वा स्त्र्यधीनेन स्त्रीनिर्जितेनेति यावत्, अत एवाकरुणात्मना करुणारहितचित्तेन मया मे मम सुतः इत्यनेन अपरित्याज्यता गम्यते, पंचवर्ष इत्यनेन नितरां, मात्रा सह निर्वासितः। तस्या अप्यनादृतत्वेन निर्वासितप्रायत्वात् मात्रा सहेत्युक्तिः। तथा च भार्यापुत्रयोरपरित्याज्यता स्मृता "वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः। अप्यकार्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत्॥" इति। ननु 'त्यजेदेकं कुलस्यार्थे' इत्युक्तरीत्योत्पथश्चेत्सुतोऽपि त्याज्य एव तत्राह महान् कविः महान् विनयादिगुणसम्पन्नः कविर्बुद्धिमान्॥ ६५॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

मनसैवंविधं भगवतो रूपं ध्यायेदित्यन्वयः। किंविशिष्टेन मनसा नियतेन परिणततयाभ्यस्ततया प्राप्तपरिपाकत्वेनैकस्मिन्ध्येये वस्तुनि भूतेन बाह्यविषयाभिनिवेशरहितेन॥ ५१॥ ❀ ❀ निर्वृत्त्योद्रिक्तानन्देन संपन्नं पूर्णं ध्येयादितरत्र न विवर्तते न गच्छति॥ ५२॥ ❀ ❀ जप्यो मन्त्रः॥ ५३॥ ❀ ❀ द्रव्यमयीं द्रव्यप्रधानाम्, 'अर्चा पूजा सपर्या स्यादि'त्यभिधानम्॥ ५४॥ ❀ ❀ द्रव्याण्याह। सलिलैरिति वन्यैर्वनभवैः॥ ५५॥ ❀ ❀ द्रव्यमयीमर्चां शिलादिप्रतिमाम् 'अर्चा तु प्रतिमा प्रोक्ते' त्यभिधानं क्षितौ स्थण्डिले आदित्यशब्दादादित्यमण्डलेऽग्नौ वा आहृतात्मा विषयेभ्य आकृष्य वशीकृतमनाः मितं नियतादर्धं फलमूलादिवन्यं भुङ्क्ते इति मितवन्यभुक्॥ ५६॥ ❀ ❀ निजमायया स्वरूपभूतमहिम्ना स्वेच्छया कृतावतारस्तस्य चरितैः कंसवधादिलक्षणैश्चरितं गुणसमूहं हृदयङ्गमान् यान् विभुर्विक्रमान् करिष्यति तान् ध्यायेदित्यन्वयः॥ ५७॥ ❀ ❀ परिचर्यादि सङ्क्षिप्य तत्करणप्रकारं वक्ति। परिचर्या इति यावतीर्यावत्यः पूर्वाचार्यैः कल्पितास्ता मन्त्रहृदयेन मन्त्रेण मनःशब्देन च ओं नमो भगवते वासुदेवायेत्यनेन मन्त्रमूर्त्तये मन्त्राक्षरप्रतिपाद्यवासुदेवाय प्रयुञ्ज्यात्कल्पयेदित्यन्वयः॥ ५८॥ ❀ ❀ एवंविधोपासनाफलमाह एवमिति। भक्तिमन्तः सन्तस्तेषां परिचर्यया शुश्रूषया देहिनां धर्मादिषु यदभिमतं श्रेयस्तद्दिशतीत्यन्वयः॥ ५९-६०॥ ❀ ❀ सर्वस्मात्साधनाद्विरक्तिभक्ती मुक्तिसाधने इत्याशयेनाह। विरक्तश्चेति। तयोरवश्यकर्तव्यत्वे चशब्दः इन्द्रियरतौ विषयभोगे विरक्तः॥ ६१॥ ❀ ❀ उत्तरकथाप्रसंगमाह। इत्युक्त इति॥ ६२॥ ❀ ❀ नन्वस्त्वियं कथा पुनर्नारदः कुत्रायासीदत्राह। तपोवनमिति। अर्हणया पूजासाधनेनार्हितः पूजितः॥ ६३॥ ❀ ❀ न रिष्यते न हिंस्यते॥ ६४॥ ❀ ❀ नारदेन पृष्टो राजोत्तरमाह सुतो म इति। निर्वासितः निष्कासितः कविरित्यनेन ज्ञानित्वं द्योतयति॥ ६५॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अभिध्यायेत्तत्तद्वैशिष्ट्येन चिन्तयेदित्यर्थः॥ ५१॥ ❀ ❀ न निवर्तते ध्येयं न त्यजति॥ ५२॥ ❀ ❀ प्रपठन् वाचिकमपि जपन् किमुतोपांशु मानसं वा खेचरान् पार्षदान् अथ दक्षिणकर्णे रह उपदिशति। ओमिति। अनेनानुपनीताय ध्रुवाय सप्रणवमहामन्त्रोपदेशेन वैष्णवमन्त्राणां द्विजत्वाद्यवस्थापेक्षा परिहृता॥ ५३-५५॥ ❀ ❀ लब्ध्वेत्यर्द्धकम्। अर्चां श्रीमत्प्रतिमाम्॥ ५६॥ ❀ ❀ आभृतेति सार्द्धकम्। आहृतेति चित्सुखः। शान्तो मितवन्यफलादिभुगिति चित्सुखः॥ ५७॥ ❀ ❀ पूर्वसेविता इति सेवनमात्रानुशीलनं तच्चात्र श्रवणं ततो णिच्प्रयोगात् पूर्वं सलिलैरित्यादिना श्राविता इत्यर्थः, पूर्वैः सेविताः सदाचारलब्धा इति वा॥ ५८॥ ❀ ❀ एवमिति युग्मकम्। त्रिवर्गमात्रस्यापि दाने कारणमाह। भाववर्द्धन इति। तत्तदुपकारेण स्वस्मिन् भक्तिं वर्द्धयतीति॥ ५९-६०॥ ❀ ❀ अतस्तेभ्यो विरक्तो भजेत्। किमर्थं विशिष्टा मुक्तिर्भक्तिस्तदर्थम्॥ ६१-६२॥ ❀ ❀ अर्हतः अर्हणायेति चित्सुखः॥ ६३-६५॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

नियतेनासक्तेन एकभूतेन एकाग्रेण॥ ५१॥ ❀ ❀ न निवर्त्तते योगिनो मन इव ध्येयं न त्यजति॥ ५२॥ ❀ ❀ जप्यो मन्त्रः श्रूयतां दक्षिणः कर्ण आधीयतामुपदिशामीत्यर्थः, प्रपठन् वाचिकमपि जपन् किमुतोपांशु मानसं वा। खेचरान् पार्षदान् ओमिति। अनेनानुपनीताय सप्रणवमहामन्त्रोपदेशेन वैष्णवमन्त्राणां द्विजत्वाद्यवस्थापेक्षापहृता॥ ५३-५४॥ ❀ ❀ वन्यैरंशुकैर्भूर्ज्जत्वगादिभिः॥ ५५॥ ❀ ❀ द्रव्यमयीं शिलादिनिर्मितामर्च्चां प्रतिमां प्राप्य

तामर्चयेत् । पुनः क्षित्यम्ब्वादिष्वपि ॥ ५६ ॥ ❀ ❀ आभृतात्मा सम्यग्धृतचित्तः । यत् करिष्यतीति तदानीमवतारप्राचुर्याभावात् ॥ ५७ ॥ ❀ ❀ पूर्वसेविताः पूर्वपूर्वभक्तैरनुष्ठितास्ताः परिचर्य्याः गन्धचन्दनताम्बूलच्छत्रचामरादिविविधद्रव्यवतीर्मन्त्रहृदयेनैव मूलमन्त्रोच्चरणेनैव मनसा प्रकल्प्यानीतैरेवोपचारैरित्यर्थः । विरक्तस्य प्रस्तुततत्तद्वस्त्वभावादिति भावः । मन्त्रमूर्त्तये मन्त्रेणैव ध्याता मूर्त्तिर्यस्य तस्मै तं प्रसादयितुं प्रयुञ्ज्यात् विदधीत ॥ ५८ ॥ ❀ ❀ एवमुक्तरीत्या मनोगतं यथा स्यात्तथा कायादिभिर्भक्तिमत्या श्रवणकीर्त्तनादिभक्तियुक्तया परिचर्य्यया धर्मादिषु मध्ये यदभिमतं तत्तद्दिशति ददाति ॥ ५९-६० ॥ ❀ ❀ यस्तु इन्द्रियरमणे त्रिवर्गे विरक्तः चकारान्मोक्षेऽपि स च निरन्तरो ज्ञानकर्मादिव्यवधानशून्यो भावो दास्यादिर्यत्र तेन । विशिष्टमुक्तये प्रेमवत्पार्षदत्वाय ॥ ६१ ॥ ❀ ❀ हरेः प्रतिकल्पमाविर्भावात् श्रीकृष्णस्य चरणाभ्यां चर्च्चितम् ॥ ६२ ॥ ❀ ❀ अर्हितं सत्कृत्य समर्पितमर्हणमर्घ्यादि यस्मै ॥ ६३ ॥ ❀ ❀ न रिष्यते न नश्यति किं वेति सवितर्कः प्रश्नः ॥ ६४ ॥ ❀ ❀ सह मात्रेति तस्या अप्यनादृतत्वात् ॥ ६५-६६ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

नियतेन विषयेभ्यो निरुद्धेन एकभूतेनैकाग्रेण मनसा स्मयमानं मन्दहसितयुक्तम् अभिध्यायेत् ॥ ५१ ॥ ❀ ❀ ध्यानान्तान्यङ्गान्युक्त्वा समाधिमाह । एवं सुभद्रं भगवतो रूपमभिध्यायतो मनः परमया ध्यानजन्यया निर्वृत्त्या सुखसंपत्त्या तूर्णं शीघ्रं संपन्नं सत् ततो न निवर्तते ॥ ५२ ॥ ❀ ❀ एवमष्टाङ्गं भगवद्भजनयोगमुक्त्वा जप्यं मन्त्रं द्रव्यमयीं सपर्यां चाह । जप्य इत्यादिना । जप्यः जपनीयो मन्त्रः ॥ ५३ ॥ ❀ ❀ सपर्यां पूजाम् ॥ ५४ ॥ ❀ ❀ द्रव्याण्याह । सलिलैरिति । शस्ताङ्कुरैः दूर्वाङ्कुरैः अंशुकैः भूर्जत्वगादिरूपैर्वस्त्रैः ॥ ५५ ॥ ❀ ❀ एवं द्रव्यमयीमर्चां लब्ध्वा संपाद्य क्षित्यम्ब्वादिषु आदिशब्देन गुरुमनोव्योमादिषु अर्चयेत् । आभृतः इतरविषयेभ्यो निवारितः भगवदाराधनेतरचेष्टाशून्यः 'शान्त उपासीते'ति श्रुतेः । मितमल्पं वन्यं फलादिकं भुङ्क्ते इति मितवन्यभुक् ॥ ५६ ॥ ❀ ❀ स्वानां भक्तानां स्वस्यैव चेच्छया येऽवतारा भविष्या नृहरिदाशरथिप्रभृतयस्तेषां चरितैः अचिन्त्यया अतर्क्यया निजमायया निजज्ञानेन स्वसंकल्पेन "माया च वयुनं ज्ञानमि"ति निघण्टुः, अचिन्त्या वा निजेषु स्वानन्यभक्तेषु माया कृपा तया वा "माया दम्भे कृपायां चे"ति विश्वः, यदुत्तमश्लोकः करिष्यति, तच्छास्त्रसिद्धं हृदयंगमं मनोहरं ध्यायेत् ॥ ५७ ॥ ❀ ❀ भगवतो यावत्यः पूर्वसेविताः प्रथमं वर्णिताः परिचर्य्यास्ताः सर्वा मन्त्रहृदयेन वासुदेवमन्त्रेण मन्त्रमूर्त्तये मन्त्रो मूर्त्तिर्यस्य तस्मै प्रयुञ्ज्यात् ॥ ५८ ॥ ❀ ❀ एवं भक्तिमत्कर्तृका या परिचर्य्या तया कायादिभिः परिचर्यमाणो भगवान् अमायिनामदम्भिनां पुंसां धर्मादिषु धर्मार्थकाममोक्षेषु यदभिमतं श्रेयस्तदैव दिशति । तत्रापि सम्यग्भजतां मनोगतमकथनीयं मुक्तेरपि गरिष्ठं पुत्रत्वादिरूपे स्वस्मिन् भावमित्यर्थः, यतो भाववर्द्धनोऽतो दिशतीति द्वयोरन्वयः । अनेनैवाभिप्रायेण 'मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगं, भक्तिः सिद्धेर्गरीयसी'त्यादिवाक्यानि सुसंगतानीति ज्ञेयम् ॥ ५९-६० ॥ ❀ ❀ मुमुक्षोर्मुख्यं कृत्यमाह । इन्द्रियरतौ विरक्तः सन् भूयसा भक्तियोगेन तमेवाह । निरन्तरभावेन ध्रुवस्मृतिलक्षणेन विमुक्तये भगवद्भावापत्तये तं भगवन्तमद्धा साक्षादुपासनया भजेदिति ॥ ६१ ॥ ❀ ❀ चरणचर्चितं चरणाभ्यां मण्डितम् ॥ ६२ ॥ ❀ ❀ अर्हितमर्पितमध्यर्हणमर्घ्यादि यस्मै सः ॥ ६३ ॥ ❀ ❀ न रिष्यते न हीयते किम् ॥ ६४ ॥ ❀ ❀ मात्रा सह महान् कविः, अनेन पुत्रसहितायाः सुनीतिदेव्या नित्यं शास्त्रश्रवणं गम्यते । आदराभावेन मयैव निर्वासितः ॥ ६५ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

ध्यानमाह—स्मयमानमिति । नियमेन पूर्वोक्तधारणया वशीकृतेन अत एवैकभूतेन एकाग्रेण मनसा स्मयमानं हसन्तम् सानुरागं भक्तविषयकानुरागसहितमवलोकनं यस्य तम् । वरदर्षभं वरदानां ब्रह्मादीनां मध्ये ऋषभं श्रेष्ठं यथेष्टदातारं भगवन्तमभिध्यायेदित्यन्वयः ॥ ५१ ॥ ❀ ❀ समाधिं दर्शयति—एवं सुभद्रं परममङ्गलं भगवतो रूपं ध्यायतः पुरुषस्य मनः तूर्णं शीघ्रमेव परया निर्वृत्त्या परमानन्देन भगवता संपन्नं मिलितं सत् ततो न निवर्त्तते पृथङ् न भवति ॥ ५२ ॥ ❀ ❀ एवं साङ्गं योगं निरूप्येदानीं पूर्वं यदुक्तमुचितानि कृत्वेति तानि भगवत्परिचर्यादीनि निरूपयति—जप्यश्चेति षड्भिः । चकारेण पूर्वोक्तयोगस्य जपपूजादेश्च समुच्चयं दर्शयति । जप्यो मन्त्रः परम उत्कृष्टः अत एव गुह्यः न सर्वतः प्रसिद्धः । हे नृपात्मज इति सम्बोधनेन स्वकृपां सूचयति । उत्कृष्टत्वमेव दर्शयति—यमिति । खेचरान् आकाशगामिनो द्रष्टुमयोग्यानपि पश्यति ॥ ५३ ॥ ❀ ❀ एवं संमुखीकृत्य मन्त्रमाह—ओमिति । अनेन मन्त्रेण देवस्य भगवतो वासुदेवस्य द्रव्यमयीं द्रव्यप्रधानां सपर्यां पूजां बुधः कुर्यादित्यन्वयः । तत्र न सर्वत्र सर्वदा सर्वैर्द्रव्यैर्विशेषेणैव पूजा सिध्यतीति नियमः, किन्तु यस्मिन् देशे यस्मिन् काले यानि योग्यानि द्रव्याणि लभ्यन्ते तैरिति दर्शयति—देशेति ॥ ५४ ॥ ❀ ❀ पूजाद्रव्याणि दर्शयति—सलिलैरिति चतुर्भिः । शुद्धैः सलिलैः पाद्याचमनीयानीत्यादिभेदभिन्नत्वाद्बहुवचनम् । माल्यैः पुष्पैः वन्यैः वनप्रभवैर्मूलफलादिभिः शस्तैः शास्त्रविहितैः अङ्कुरैः दूर्वादिभिः । अंशुकैर्भूर्जत्वगादिभिः भगवतः प्रियया तुलस्या च प्रभुमर्चयेदित्यन्वयः ॥ ५५ ॥ ❀ ❀ कृत्रेत्यधिष्ठा-

नापेक्षायामाह—लब्ध्वेति। द्रव्यमयीं शिलादिमयीमर्चां प्रतिमां लब्ध्वा संपाद्य क्षित्यादिषु वा प्रभुं भगवन्तमर्चयेदिति संबन्धः। आदिपदेनादित्यमण्डलाग्निविप्रगुरुग्रहणम्। एवं बहिरङ्गसाधनान्युक्त्वान्तरङ्गसाधनान्याह—आभृतात्मेति सार्द्धेन। आभृतो वशीकृत आत्मा चित्तं येन स तथा। अत एव शान्तो विक्षेपरहितः। मुनिर्मननपरः सावधानः। यतवाक् गृहीतमौनः। मितं वन्यं मूलफलादिकं भुङ्क्त इति तथा सः। वन्यपदेन शुद्धत्वं सूचितम्। कृष्यादिनोत्पन्नस्य बलीवर्दादिपीडाहेतुकत्वेनाशुद्धत्वात् तेन बुद्धेर्मालिन्यप्रसङ्गात्। एवं पथ्यमित्यपि बोध्यम्। अन्यथाऽमितेन शुद्धेनापि भुक्तेनाधिकभोजनादजीर्णादिना शरीरास्वास्थ्ये पूजानिर्वाहो न स्यात्। आहारमानं तु—"द्वौ भागौ पूरयेदन्नैरेकं तोयेन पूरयेत्। मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत्" इति ज्ञेयम्॥ ५६॥ ❁ ❁ अचिन्त्यया दुर्वितर्कया निजया स्ववशवर्त्तिन्या मायया शक्त्या स्वेच्छयावतारचरितैरवतारा एव चरितानि तैरुत्तमश्लोकः उत्तमास्तमसोऽज्ञानस्य निवर्त्तकाः श्लोकाः यशांसि यस्य स भगवान् यद्यद् हृदयङ्गमं मनोहरं पराक्रमं करिष्यति तद्धयायेत्। तदानीं प्रथमे स्वायम्भुवे मन्वन्तरेऽवतारप्राचुर्याभावात्करिष्यतीति भाविनिर्देशः॥ ५७॥ ❁ ❁ मन्त्रेणानेन देवस्य सपर्यां कुर्यादित्युक्तमेव द्रढयति—परिचर्या इति। भगवतो यावत्यः परिचर्याः पूर्वसेविताः सेवनं कारिताः सलिलादिभिः कर्तव्यत्वेन प्रदर्शितास्ता मन्त्रमूर्त्तये श्रीभगवते वासुदेवाय मन्त्रहृदयेनैव द्वादशाक्षरेण प्रयुञ्ज्यात् कुर्यादित्यन्वयः। यद्वा भगवतो यावत्यः यावतीः परिचर्याः पूर्वैराचार्यैः सेविता अनुष्ठितास्ता अनेन मन्त्रहृदयेनैवानुष्ठिता अत इदानींतनोपि मन्त्रमूर्त्तये ता मन्त्रहृदयेनैव कुर्यादित्यर्थः॥ ५८॥ ❁ ❁ तत्र सकामा निष्कामाश्च भगवद्भक्ता द्विविधाः। तत्र सकामानामेव भजताभ्युदयलक्षणं फलमभिलाषानुरूपं भवतीत्याह—एवमिति द्वाभ्याम्। एवमुक्तप्रकारेण मनोगतं दृढतरं यथा भवति तथा कायेन सलिलादिभिः मनसा ध्यानादिभिः वचसा जपादिभिः भक्तिमत्या प्रेमपूर्विकया परिचर्यया सेवया परिचर्यमाणः सेव्यमानो भगवान् भाववर्द्धनः भावान् भक्ताभिलषितान् वर्द्धयतीति तथा सः। अमानिनां दम्भरहितानामत एव सम्यक् प्रेमपूर्वकं भजतां पुंसां देहिनां देहवतां धर्मार्थकामेषु त्रिविधपुरुषार्थेषु यदभिमतं वांछितं तच्छ्रेयो दिशति ददातीति द्वयोरन्वयः। पुंसामित्युक्त्वापि पुनर्देहिनामित्युक्त्या न भगवत्प्रसादे स्त्रीपुरुषत्वादेर्वर्णाश्रमादेर्वा हेतुत्वं किंतु भक्तेरेवेति सूचयति। तथा च वक्ष्यति पञ्चमे हनूमान्—"न जन्म नूनं महतो न सौभगं न वाङ् न बुद्धिर्नाकृतिस्तोषहेतुः। तैर्यद्विसृष्टानपि नो वनौकसश्चकार सख्ये बत लक्ष्मणाग्रजः" इति॥ ५९-६०॥ ❁ ❁ निष्कामस्य तु साक्षान्मोक्ष एव फलमित्याह—विरक्तश्चेति। इन्द्रियरतौ विषयभोगे विरक्तश्चेत् यदि भूयसा भक्तियोगेन तं भगवन्तं भजेत तदा तद्भजनं तस्याद्धा साक्षाद्विमुक्तये भवतीत्यन्वयः। भक्तेर्भूयस्त्वमनवच्छिन्नत्वमेवेति सूचयंस्तां विशिनष्टि निरन्तरभावेनेति। अनवच्छिन्नप्रेमलक्षणेनेत्यर्थः। अद्धेत्यनेन यद्यपि सकामानामपि भगवद्भक्तानां मोक्षो भवत्येव "न मय्यावेशितधियां कामः कामाय कल्पते। भर्जिता कथिता धाना प्रायो बीजाय नेष्यते" इति भगवद्वचनात्, तथापि मध्ये तेषां भोगप्रतिबन्धो भवति, निष्कामस्य तु साक्षादिति विशेषं दर्शयति॥ ६१॥ ❁ ❁ नारदेनेत्येवमुक्तो ध्रुवस्तं परिक्रम्य प्रणम्य च मधुवनं ययौ। पुण्यं पापनिवर्त्तकं पुण्यजनकम्। तत्र हेतुः हरेश्चरणाभ्यां चर्चितं मण्डितम्। अनेन तत्र भगवतो नित्यदा विहारो दर्शितः॥ ६२॥ ❁ ❁ एवं तस्मिन् ध्रुवे तपस्तप्तुं मधुवनं गते सति भगवदिच्छा तथेति ज्ञात्वा राजापि बालस्य वृथा मरणं मा भवत्विति चिन्तया व्याकुलोऽस्त्यतस्तन्मनुष्यप्रेषणादिना तपःप्रतिबन्धो माभूदिति मनसि निधाय तत्प्रतिबन्धनिवृत्त्यर्थं मुनिः राज्ञोऽन्तःपुरं प्रविष्टः राज्ञा अर्हितं समर्पितमर्हणमर्घादि यस्मै सोर्हितार्हणकः सुखेनासीनस्तं राजानमुवाच स्वयं जानन्नपि तन्मुखाच्छ्रोतुं पृष्टवान्॥ ६३॥ ❁ ❁ हे राजन्निति संबोधनेन चिन्तानर्हत्वं द्योतयति। चिन्तानर्होपि त्वं परिशुष्यता मुखेन युक्तः किं ध्यायसे चिन्तयसि? चिन्ताहेतुमेव सवितर्कं पृच्छति-किं चेति। अर्थेन सहितः कामो धर्मो किं न रिष्यते न नश्यति?॥ ६४॥ ❁ ❁ एवं नारदेन पृष्टो राजोत्तानपादो वृत्तं कथयति-सुत इति त्रिभिः। मे मम सुतो ध्रुवो मया निर्वासितो गृहान्निष्कासितः। गृहान्निःसरणस्यानादरहेतुकत्वादनादरकरणेनोपचारान्निष्कासित इत्युक्तम्। न केवलं स एवानादृतः किंतु तन्मातापीत्याह-सह मात्रेति। तर्हि का चिन्ता पुनरागमिष्यतीत्याशङ्क्य बालत्वाद्विभेमीत्याह-बालक इति। कतिवर्ष इत्यपेक्षायामाह-पञ्चवर्ष इति। गतस्तर्हि गच्छतु, तवान्यः पुत्र उत्तमोऽस्त्येवेत्याशङ्कयाह-महान् कविरिति। बालोपि गुणैर्महान् कविर्बुद्धिमांश्च, तादृश उत्तमो न इति भावः। तर्हि किमित्यनादृतवांस्तत्राह-अकरुणात्मनेति। निर्दयचित्तेन मयेति। नन्वेवं चित्तकठिनता कथं जातेत्याशङ्क्य स्त्र्यधीनत्वादित्याह-स्त्रैणेनेति। हे ब्रह्मन्निति सम्बोधनेन सर्वज्ञस्त्वमतो जानासि क्व गतः किं चिकीर्षतीति तद्वदेति सूचयति॥ ६५॥

## भाषानुवादः

इस प्रकार धारणा करते-करते जब चित्त स्थिर एकाग्र हो जाय, तब उन वरदायक प्रभुका मन-ही-मन इस प्रकार ध्यान करे कि वे मेरी ओर अनुरागभरी दृष्टिसे निहारते हुए मन्द-मन्द मुसकरा रहे हैं॥ ५१॥ ❁ ❁ भगवान्‌की मङ्गलमयी मूर्तिका इस प्रकार निरन्तर ध्यान करनेसे मन शीघ्र ही परमानन्दमें डूबकर तल्लीन हो जाता है और फिर वहाँसे लौटता नहीं॥ ५२॥ ❁ ❁ राजकुमार! इस ध्यानके साथ जिस परम गुह्य मन्त्रका जप करना चाहिये, वह भी बतलाता

हूँ—सुन। इसका सात रात जप करनेसे मनुष्य आकाशमें विचरनेवाले सिद्धोंका दर्शन कर सकता है ॥ ५३ ॥ ❀ ❀ वह मन्त्र है—'ॐ नमो भगवते वासुदेवाय'। किस देश और किस कालमें कौन वस्तु उपयोगी है—इसका विचार करके बुद्धिमान् पुरुषको इस मन्त्रके द्वारा तरह-तरहकी सामग्रियोंसे भगवान्की द्रव्यमयी पूजा करनी चाहिये ॥ ५४ ॥ ❀ ❀ प्रभुका पूजन विशुद्ध जल, पुष्पमाला, जंगली मूल और फलादि, पूजामें विहित दूर्वादि अङ्कुर, वनमें ही प्राप्त होनेवाले वल्कल वस्त्र और उनकी प्रेयसी तुलसीसे करना चाहिये ॥ ५५ ॥ ❀ ❀ यदि शिला आदिकी मूर्ति मिल सके तो उसमें, नहीं तो पृथ्वी या जल आदिमें ही भगवान्की पूजा करे। सर्वदा संयतचित्त, मननशील, शान्त और मौन रहे तथा जंगली फल-मूलादिका परिमित आहार करे ॥ ५६ ॥ ❀ ❀ इसके सिवा पुण्यकीर्ति श्रीहरि अपनी अनिर्वचनीया मायाके द्वारा अपनी ही इच्छासे अवतार लेकर जो-जो मनोहर चरित्र करनेवाले हैं, उनका मन-ही-मन चिन्तन करता रहे ॥ ५७ ॥ ❀ ❀ प्रभुकी पूजाके लिये जिन-जिन उपचारोंका विधान किया गया है, उन्हें मन्त्रमूर्ति श्रीहरिको द्वादशाक्षर मन्त्रके द्वारा ही अर्पण करे ॥ ५८ ॥ ❀ ❀ इस प्रकार जब हृदयस्थित हरिका मन, वाणी और शरीरसे भक्तिपूर्वक पूजन किया जाता है, तब वे निश्छल-भावसे भलीभाँति भजन करनेवाले अपने भक्तोंके भावको बढ़ा देते हैं और उन्हें उनकी इच्छाके अनुसार धर्म, अर्थ, काम अथवा मोक्षरूप कल्याण प्रदान करते हैं ॥ ५९-६० ॥ ❀ ❀ यदि उपासकको इन्द्रियसम्बन्धी भोगोंसे वैराग्य हो गया हो, तो वह मोक्ष-प्राप्तिके लिये अत्यन्त भक्तिपूर्वक अविच्छिन्नभावसे भगवान्का भजन करे ॥ ६१ ॥ ❀ ❀ श्रीनारदजीसे इस प्रकार उपदेश पाकर राजकुमार ध्रुवने परिक्रमा करके उन्हें प्रणाम किया। तदनन्तर उन्होंने भगवान्के चरणचिह्नोंसे अङ्कित परम पवित्र मधुवनकी यात्रा की ॥ ६० ॥ ❀ ❀ ध्रुवके तपोवनकी ओर चले जानेपर नारदजी महाराज उत्तानपादके महलमें पहुँचे। राजाने उनकी यथायोग्य उपचारोंसे पूजा की; तब उन्होंने आरामसे आसनपर बैठकर राजासे पूछा ॥ ६३ ॥ ❀ ❀ श्रीनारदजीने कहा—राजन्! तुम्हारा मुख सूखा हुआ है, तुम बड़ी देरसे किस सोच-विचारमें पड़े हो? तुम्हारे धर्म, अर्थ और काममेंसे किसीमें कोई कमी तो नहीं आ गयी? ॥ ६४ ॥ ❀ ❀ राजाने कहा—ब्रह्मन्! मैं बड़ा ही स्त्रैण और निर्दय हूँ। हाय, मैंने अपने पाँच वर्षके नन्हे-से बच्चेको उसकी माताके साथ घरसे निकाल दिया। मुनिवर! वह बड़ा ही बुद्धिमान था ॥ ६५ ॥

अप्यनाथं वने ब्रह्मन्मा[१]स्मादन्त्यर्भकं वृकाः। श्रान्तं शयानं क्षुधितं परिम्लानमुखाम्बुजम् ॥ ६६ ॥
अहो मे बत दौरात्म्यं स्त्रीजितस्योपधारय। योऽङ्कं प्रेम्णाऽऽरुरुक्षन्तं नाभ्यनन्दमसत्तमः ॥ ६७ ॥

नारद उवाच

मा[२] मा शुचः स्वतनयं देवगुप्तं विशाम्पते। तत्प्रभावमविज्ञाय प्रावृङ्क्ते यद्यशो जगत् ॥ ६८ ॥
सु[३]दुष्करं कर्म कृत्वा लोकपालैरपि प्रभुः। एष्यत्यचिरतो राजन् यशो विपुलयंस्तव ॥ ६९ ॥

मैत्रेय[४] उवाच

इति देवर्षिणा प्रोक्तं विश्रुत्य जगतीपतिः। राजलक्ष्मीमनादृत्य पुत्रमेवान्वचिन्तयत् ॥ ७० ॥
तत्राभिषिक्तः प्रयतस्तामुपोष्य विभावरीम्। समाहितः पर्यचरदृष्यादेशेन पूरुषम् ॥ ७१ ॥
त्रिरात्रान्ते त्रिरात्रान्ते कपित्थबदराशनः। आत्मवृत्त्यनुसारेण मासं निन्येऽर्चयन्हरिम् ॥ ७२ ॥
द्वितीयं च तथा मासं षष्ठे षष्ठेऽर्भको दिने। तृणपर्णादिभि[५]ः शीर्णैः कृतान्नोऽभ्यर्चयद्विभुम् ॥ ७३ ॥
तृतीयं चानयन्मासं नवमे नवमेऽहनि। अब्भक्ष उत्तमश्लोकमुपाधावत्समाधिना ॥ ७४ ॥
चतुर्थमपि वै मासं द्वादशे द्वादशेऽहनि। वायुभक्षो जितश्वासो ध्यायन्देवमधारयत् ॥ ७५ ॥
पञ्चमे मास्यनुप्राप्ते जितश्वासो नृपात्मजः। ध्यायन् ब्रह्म पदैकेन तस्थौ स्थाणुरिवाचलः ॥ ७६ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

मा स्मादंति किंस्विन्न खादंतीत्यर्थः ॥ ६६-६७ ॥ ❀ ❀ देवेन श्रीहरिणा गुप्तमात्मसात्कृत्वा रक्षितम्। यस्य यशो जगत्प्रावृंक्ते व्याप्नोति ॥ ६८ ॥ ❀ ❀ विपुलयन्विस्तारयन् ॥ ६९-७० ॥ ❀ ❀ ध्रुवो मधुवने किमकरोदित्यपेक्षा-

१. प्रा० पा०—न खादन्त्यर्भकं। २. प्रा० पा०—मा शुचस्त्वं स्वतन०। ३. प्रा० पा०—स कृत्वा दुष्करं कर्म। ४. प्राचीने पाठे 'मैत्रेय उवाच' नास्ति। ५. प्रा० पा०—दिभिर्जीर्णैः।

यामाह तत्रेत्यादिना। अभिषिक्तः स्नातः यस्यां प्राप्तस्तां रात्रिम् ॥ ७१ ॥ ❀ ❀ कपित्थानि बदराणि चाशनं यस्य। आत्मवृत्तिर्देहस्थितिस्तदनुसारेण ॥ ७२-७३ ॥ ❀ ❀ तृतीयं च आनयन्नीषदिव नयन्नुपाधावदित्यन्वयः। प्रतिमाससमाहार-संकोचं तपोऽतिरेकं च कृतवानित्यर्थः ॥ ७४-७६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अनाथमरक्षितं वृका व्याघ्राः। इत्यर्थ इति। वितर्केण वदति नारदं प्रति क्षुधा परिम्लानास्यं चलनेन श्रांतमत एव शयानं रक्षकांतरहीनमर्भकत्वात्स्वयमकल्पं वनगं कथं न वृकादयो भक्षयिष्यंतीति भावः। ब्रह्मन्निति। सर्वज्ञो भवान्मे संशयमपनुदत्विति भावः ॥ ६६ ॥ ❀ ❀ वत खेदे ॥ ६७ ॥ ❀ ❀ विशां पत इति। देवस्य हरेः सामर्थ्यं त्वत्तोधिकं त्वं तु प्रजापतिरेव स तु त्वाद्दृगनंतपतिरतस्तद्गुप्तं को वराको वृकादिरित्यभिप्रायः। प्रावृंक्त इति। वर्त्तमाननिर्देशस्तु तदुपरि भगवत्प्रसादस्य निश्चितत्वादेव। उक्तमर्थं विशदयति यत्त्वयोक्तं स्त्रैणेनाकरुणात्मनेति तेन तवाकरुणत्वेपि स तु भगवान्कारुण्य-सागरोस्ति, अत एवानाथनाथः यद्यमात्मसात्कृत्वात्मीयं मत्वा तस्मिन्प्रहर्तुममी प्रसिद्धा वृकादयः के किं कर्तुं शक्ताः? न किमपीति भावः। श्लोकोयं प्रक्षिप्तोपि प्रकृतोपयुक्तत्वाद्व्याख्यातः ॥ ६८ ॥ ❀ ❀ प्रभुः प्राप्तभगवत्प्रसादत्वात्समर्थः। राजन्निति। त्वमपि राजभोगासक्तत्वात्कर्म कर्तुमशक्त इत्याह। किञ्च तत्कर्मणैव तव यशोऽधिकं भविष्यतीत्याह-यश इति ॥ ६९ ॥ ❀ ❀ एवं विस्रब्धस्यापि राज्ञोऽनुतापपरंपरामाह-इतीति। अनेन संसारस्य दुस्तरत्वमसूचीति ॥ ७० ॥ ❀ ❀ तत्र मधुवने। प्रयतः पूतः यस्यां विभावर्यां तत्र गतस्तां रात्रिमुपोष्योपवासं कृत्वा ऋष्यादेशेन नारदाज्ञया। पूरुषं हरिम्। अनेन तीर्थव्रतमपि तेन कृतमित्युक्तम् ॥ ७१ ॥ ❀ ❀ तस्य तपस्यतोऽशनमाह-त्रिरात्रांत इति। कपित्थो विल्वफलसमफलो वृक्षः। यावता देहस्थितिर्भवेत्तावन्मात्रमेवाशानेत्यर्थः ॥ ७२ ॥ ❀ ❀ शीर्णैः स्वतः पतितैः। आदिना शुष्कफलग्रहः कृतमन्न-मशनं येन स तथा ॥ ७३ ॥ ❀ ❀ इत्यर्थ इति। धैर्यसंपन्नत्वादतीव दुष्करं तपो विहितवानिति भावः ॥ ७४-७५ ॥ स्थाणुः कीलः "स्थाणुः कीले हरे पुमान्। अस्त्री ध्रुवे" इति मेदिनी ॥ ७६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

किं स्विदिति अपि किं स्म स्विन् मा खादन्ति मा खादेयुरित्यर्थः ॥ ६६-६७ ॥ ❀ ❀ मामेति। हर्षेण सान्त्वने वीप्सा। सर्वथा शोकं मा कुरु। व्याप्नोतीति व्याप्स्यति, वर्त्तमानसामीप्ये वर्त्तमानवद्वा ॥ ६८ ॥ ❀ ❀ प्रभावमाह। सुदुष्कर-मिति ॥ ६९-७० ॥ ❀ ❀ तत्र मधुवने कालिन्द्यां स्नातः ऋष्यादेशेन श्रीनारदोपदेशानुसारेण पुरुषं हरिम् ॥ ७१-७३ ॥ ❀ ❀ ईषदिवेति तद्ध्यानावेशेन क्लेशाभाससूचितः। भक्ष्यस्थाने अपां स्वीकारादब्भक्ष इत्युक्तम् ॥ ७४ ॥ ❀ ❀ चतुर्थमपि मासमभिव्याप्य अधारयत् चित्ते स्थापयामास ॥ ७५ ॥ ❀ ब्रह्म ब्रह्त्तमत्वाद्भगवद्रूपम् ॥ ७६ ॥

### श्रीमद्वीरराघवव्याख्या

हे ब्रह्मन्! वने क्षुधितं श्रान्तमतः परितः परिम्लानं मुखाम्बुजं यस्यात एव शयानमर्भकमनाथं रक्षकहीनं वृकाः मास्मादन्त्यपि मास्म खादन्ति किंस्विदित्यर्थः ॥ ६६ ॥ ❀ ❀ आत्मानं निन्दति। अहो इति। स्त्रिया जितस्य मे मम दौरात्म्यं अवधारय निश्चिनु अहो बतेति खेदे, दौरात्म्यं दर्शयति योऽहमसत्तमः अङ्कमारुरुक्षन्तमारोढुमिच्छन्तं सुतं प्रेम्णा नाभ्यनन्दं नाभिनन्दितवानस्मि ॥ ६७ ॥ ❀ ❀ एवमुक्तो नारदस्तमाश्वासयन्नाह मेति। हे विशाम्पते! मनुजपते दैवगुप्तमिति हेतुगर्भं दैवेन ईश्वरेण गुप्तत्वात् रक्षितत्वात् तनयं प्रति तस्य तनयस्य प्रभावमविज्ञाय अज्ञात्वा अविज्ञायेत्यत्र क्त्वान्तस्य वीत्युपसर्गेण समासे क्त्वो ल्यबादेशे च पश्चान्नञ्समासः, अतोऽनञ्पूर्व इति न ल्यप्निषेधः। मा मा शुचः मा शुच इत्यर्थः। वीप्सातात्पर्येण माङो द्विरुक्तस्य प्रयोगः। प्रभावमेव विवृणोति। प्रावृङ्क्ते इति सपादेन श्लोकेन यत् यस्य तव पुत्रस्य यशः जगत् प्रावृङ्क्ते व्याप्नोति ॥ ६८ ॥ ❀ ❀ प्रभुर्जितेन्द्रियो ध्रुवः लोकपालैरिन्द्रादिभिरपि सुदुष्करं कर्तुमशक्यं कर्म तपसा भगवत्तोषणपूर्वकसर्वोत्कृष्टपदसम्पादनरूपं कर्म कृत्वा अत एव च यशो विपुलयन् विस्तारयन् हे राजन्! अचिरतः आशु एष्यत्याग-मिष्यति ॥ ६९ ॥ ❀ ❀ एवं नारदेनाभाषितो राजा पुत्रमेवानुचिन्तयन्नासीदित्याह मैत्रेयः। इतीति। इत्येवं देवर्षिणा नारदेन प्रोक्तं विमृश्य सविमर्शमाश्रुत्य जगतीपतिरुत्तानपादः राज्यलक्ष्मीमनादृत्य ध्रुवमेवान्वचिन्तयत् ॥ ७० ॥ ❀ ❀ ध्रुवो मधुवने किमकरोदित्यत्राह तत्रेत्यादिना। अभिषिक्तः स्नातः यमुनायामिति शेषः, यस्यां प्रयातः तपसे प्रयातवान् तां प्रथमां रात्रिं तत्र मधुवने उपोष्य विभावरीमित्यन्तसंयोगे द्वितीया, उपवसतेरभुक्त्यर्थस्य आधारस्तु वनमिति, तत्र तत्रेति सप्तमी बोध्या। समाहितचित्तः दिष्टादेशेन उपदिष्टमार्गेण पुरुषं परमपूरुषं पर्यचरत् परिपूजितवान् ॥ ७१ ॥ ❀ ❀ तिसृणां रात्रीणां समाहारस्त्रिरात्रं तस्यान्ते कपित्थानि बदराणि च फलानि अशनं यस्य सः आत्मनो देहस्य वृत्तिस्थितिस्तदनुसारेण देहधारणमात्रोप-

युक्ताहारेणेत्यर्थः, हरिमर्चयन् मासं निन्ये अतिचक्रमे ॥ ७२ ॥ ❀ ❀ अर्भको ध्रुवः षष्ठे षष्ठे दिने जीर्णैस्तृणादिभिः कृतमन्नं यस्य जीर्णतृणाद्यशनः विभुमर्चयन् द्वितीयं मासं निन्य इत्यनुषङ्गः ॥ ७३ ॥ ❀ ❀ नवमे नवमेऽहनि अब्भक्षोऽप एव भक्षयन् तृतीयं च मासं नयन् उत्तमश्लोकं भगवन्तं समाधिना उपाधावत् आराधितवान् ॥ ७४ ॥ ❀ ❀ वायुभक्षः वायुमेव भक्षयन् चतुर्थमपि मासं नयन् जितश्वासः जितप्राणः देवं भगवन्तं ध्यायन् आराधयन् धारणां कृतवान्। प्रतिमासमाहारसंकोचं तपोतिरेकं च कृतवानित्यर्थः ॥ ७५ ॥ ❀ ❀ पञ्चमे मासि त्वनुप्राप्ते जितप्राणो राजसुतः ब्रह्म भगवन्तं ध्यायन् एकेन पदा चरणेन स्थाणुरिव निश्चलो भूत्वा तस्थौ स्थितवान् ॥ ७६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

यतोऽसौ सिंहासनपदादप्युत्तमपदं साधयामीति निरूप्य मात्रादीन्विहाय पुरान्निरगमदित्येवमनुमिमानोऽपि राजा तद्गतं दुःखमुद्वलयति अप्यनाथमिति ॥ ६६ ॥ ❀ ❀ एवमनुतप्य स्वदौरात्म्यं मुनिमपि सम्बोधयति अहो इति। त्वया किमकारीवि तत्राह योऽङ्कमिति ॥ ६७ ॥ ❀ ❀ प्रवक्ता नारदस्तु मदाज्ञाभिमानस्य गतत्वादस्य हरिरेव रक्षक इति कृत्वा पुत्रं तं मानुतपेत्याह मामेति। ततोऽप्यनुतापो न गच्छतीत्यतः अज्ञानमूलाऽसावित्याह। तत्प्रभावमिति प्रावृङ्क्ते व्याप्नोति ॥ ६८ ॥ ❀ ❀ असन्निमित्तवैराग्येन गतः पुत्रो न पुनरेष्यतीति खेदो माभूदित्याह सुदुष्करमिति। तत्कर्म तस्य ध्रुवस्यैव योग्यत्वात् लोकपालानां दुष्करं न तु तेषामशक्यत्वात् "नाशक्यं देवतानां तु यदन्यैः शङ्कितं क्वचित्। शक्ता अपि न कुर्वन्ति यदन्यविहितं बुधाः" इति वचनादपिपदेन सूचनात् ॥ ६९ ॥ ❀ ❀ एवं विस्रब्धस्यापि राज्ञोऽनुतापपरम्परामाह इतीति। अनेन संसारस्य दुस्तरस्य दुस्तरत्वमसूचि ॥ ७० ॥ ❀ ❀ ध्रुवो मधुवनं प्राप्य किमकार्षीदत्राह। तत्रेति आदेशेनोपदेशेन नारदोक्तमार्गेण कृतया दृष्ट्या निरूपणया पुरुषं वासुदेवं पर्यचरदित्यन्वयः ॥ ७१ ॥ ❀ ❀ तस्य तप आतिष्ठमानस्यासन-प्रकारमाह त्रिरात्रान्त इति। कपित्थबदरयोः फलमशनं यस्य स तथोक्तफलभुक् अशननियतिं कथयति। आत्मवृत्तीति। यावतात्मनः शरीरस्य वृत्तिस्तदनुसारेण ॥ ७२-७३ ॥ ❀ ❀ उपाधावत् उपास्त ॥ ७४ ॥ ❀ ❀ अपारयदतिक्रान्तवान् ॥ ७५ ॥ ❀ ❀ अचलः स्थिरः ॥ ७६ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

मा खादन्ति अर्भकं किं खादेयुरेवेत्यर्थः। न खादन्तीति चित्सुखः ॥ ६६-६९ ॥ ❀ ❀ विश्रुत्येत्यत्र विश्रभ्येति चित्सुखः ॥ ७०-७६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

मा मा सर्वथैव शोकं मा कुरु। तत्प्रभावमविज्ञाय वर्त्तमान इत्यर्थः, प्रावृङ्क्ते व्याप्स्यति वर्त्तमानसामीप्ये वर्त्तमानत्वम् ॥ ६८-६९ ॥ ❀ ❀ विश्रुत्य विश्रभ्येति च पाठः ॥ ७० ॥ ❀ ❀ मधुवने ध्रुवः किमकरोदित्यपेक्षायामाह तत्रेति। अभिषिक्तः स्नातः। प्रयतः पूतः ॥ ७१ ॥ ❀ ❀ कपित्थबदरमात्रभोजी आत्मनो वृत्तेर्जीविकाया अनुसारः स्वीकारस्तेन ॥ ७२-७३ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

मा स्वादन्ति न खादन्ति किम् ॥ ६६ ॥ ❀ ❀ महानपि मादृशः प्रमाद्यतीत्याश्चर्ये अहो इति। अत्युत्तमपुत्रवियोगात् बतेति खेदे ॥ ६७ ॥ ❀ ❀ यस्य यशः जगत् प्रावृङ्क्ते व्याप्नोति तं स्वतनयं मा मा शुचः, तत्र हेतुगर्भं विशेषणं दैवगुप्तमिति ॥ ६८ ॥ ❀ ❀ विपुलयन् वर्द्धयन् ॥ ६९ ॥ ❀ ❀ अन्वचिन्तयत् तद्ध्यानपरोऽभवत् ॥ ७० ॥ ❀ ❀ एवं प्रासंगिकमुक्त्वा प्रस्तुतं ध्रुवचेष्टितमाह तत्रेत्यादिना। तत्र मधुवने प्रयतः वासार्थं कृतप्रयत्नः अभिषिक्तः स्नातः कालिन्द्यामिति शेषः, यस्यां तत्र गतस्तां विभावरीं रात्रिमुपोष्य अत्यन्तसंयोगे द्वितीया-तस्यामुपवासं कृत्वेत्यर्थः, दृष्ट्यादेशेन श्रीनारदकर्तृकेन दृष्टेः आदेशेन लब्ध्वा द्रव्यमयीमर्चामित्यादिना या दृष्टिः प्रतिमादिषु भगवद्दृष्टिस्तदुपदेशेनेत्यर्थः, पुरुषं श्रीवासुदेवं समाहितः सावधानः सन् पर्यचरत् ॥ ७१ ॥ ❀ ❀ आत्मना देहस्य वृत्तिर्वर्तनं जीवनं तस्यानुसारेणानुरोधेन कपित्थादीनि अशनं भोजनं यस्य सः ॥ ७२-७३ ॥ ❀ ❀ नवने नवमेऽहनि अब्भक्षः जलभोजन उत्तमश्लोकं समाधिनोपाधावन् सन् तृतीयं मासम् आनयत् ईषदिव समापितवानित्यन्वयः। प्रतिमासमाहारसंकोचेन भजनानन्दसंतुष्टिः सूच्यते ॥ ७४ ॥ ❀ ❀ द्वादशे द्वादशेऽहनि प्राणायामविधिना वायुभक्षः अन्यत्र जितश्वासः चतुर्थं मासं नयन् देवं वासुदेवं ध्यायन् हृदि अधारयत् ॥ ७५-७६ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

उक्तमेव द्वाभ्यां विवृण्वंस्तत्र बालकतद्वृकादिभ्यः प्राप्तं भयं दर्शयति—अर्पति। अर्भकं बालमत एव मार्गे चलनात् श्रान्तं क्षुधितं चात एव परिम्लानं शुष्कं मुखाम्बुजं यस्य तं शयानमनाथं रक्षकरहितं वृका मा स्मादन्ति किंस्विन्न खादन्ति ? अपीति संभावनायाम्, एवं संलपतीत्यर्थः। हे ब्रह्मन्निति सम्बोधयन् परब्रह्मणो भगवतो वासुदेवस्योपासकः सर्वसमर्थस्त्व-मतस्त्वत्कृपयैवं मा भवत्विति सूचयति ॥ ६६ ॥ ❋ ❋ बतेति खेदे। अहो आश्चर्यरूपमप्यसंभावितं दौरात्म्यमनार्य्यं स्त्रीवश्यत्वेन जातमुपधारय पश्य। तदेवाह—य इति। प्रेम्णाङ्कमारुरुक्षन्तमारोढुमिच्छन्तं बालं योऽहमसत्तमः स्त्रिया जडीकृतो नाभ्यनन्दं तस्येत्यन्वयः ॥ ६७ ॥ ❋ ❋ एवं ध्रुवप्रभावानभिज्ञस्य राज्ञो वचनं श्रुत्वा नारदस्तपोविघ्ननिवृत्त्यर्थं तत्प्रभावं दर्शयन् राजानं बोधयति—मामेति। हे विशांपते राजन्! तत्प्रभावमविज्ञाय स्वतनयं त्वं शोचसि, तं मा मा शुचः, तमुद्दिश्य शोकं मा कुरु। वीप्सया तदशोच्यत्वं दर्शयति। कुत इत्याशङ्क्याह—देवगुप्तमिति। तस्य भयशङ्का नास्ति भगवद्रक्षितत्वादित्यर्थः। न केवलं रक्षा, किंतु भगवत्कृपया यस्य ध्रुवस्य यशो जगत् प्रावृङ्क्ते व्याप्नोति। भगवत्कृपायां तत्र संदेहाभावाद्भाविनोपि वर्त्तमानत्वेन निर्देशः ॥ ६८ ॥ ❋ ❋ न केवलं तद्यशोविस्तारः किंतु तवापि यशोविस्तारो भविष्यतीति मनुष्यप्रेषणादितदानयनप्रयत्नेन तत्तपोविघ्नं मा कुर्वित्यभिप्रायेणाह—सुदुष्करमिति। हे राजन्! लोकपालैरिन्द्रादिभिरपि सुदुष्करमसाध्यं कर्म भगवदाराधनं कृत्वा प्रभुस्तत्करणे समर्थस्ततो वरान् प्राप्य तव यशो विपुलयन् विस्तारयन्नचिरत एष्यतीत्यन्वयः। तव पुत्रत्वात् तद्यशोवृद्धौ तवापि यशोवृद्धेरवश्यंभावित्वादिति भावः। हे राजन्निति संबोधयन् यद्यपि महाराजोसि तथापि त्वद्यशसो भगवत्कृपया तद्यशस आधिक्यं भविष्यतीति सूचयति ॥ ६९ ॥ ❋ ❋ तपःप्रतिबन्धशङ्कया ध्रुवस्य मधुवनगमनं नोक्तम्। सामान्यतस्तत्प्रभावं विश्राव्य राजानं प्रबोध्य नारदो गत इति ज्ञेयम्। ततो राजा न तदानयनार्थं प्रयत्नं कृतवान्, किंतु नारदवचनविश्वासात्तत्र स्थित एव पुत्रमचिन्तयदित्याह—इतीति। इति एवम्। जगतीपतिः पृथ्वीपतिः ॥ ७० ॥ ❋ ❋ एवं राजवृत्तमुदीर्य मधुवने ध्रुवो यत् कृतवांस्तदाह—तत्रेति सप्तभिः। तत्र मधुवने ध्रुवः प्रयत्नवान् समाहितः सावधानश्च सन् यस्यां तत्र प्राप्तस्तां विभावरीं रात्रिमुपोष्य ऋष्यादेशेन नारदोक्तप्रकारेण पूरुषं पुरुषोत्तमं भगवन्तं पर्यचरत् सेवितवानित्यर्थः ॥ ७१ ॥ ❋ ❋ तत्र प्रतिमासमाहारसङ्कोचं तपोतिरेकं च कृतवानित्याह—त्रिरात्रान्त इति। त्रिरात्रान्ते त्रिरात्रान्ते कपित्थानि बदराणि चाशनं यस्य स तथा। तदपि न यथेष्टं किंतु आत्मनः शरीरस्य वृत्तिर्वर्तनं स्थितिस्तदनुसारेण यावता अशितेन शरीरनिर्वाहः स्यात्तावदश्नन् हरिं चार्चयन् मासं निन्ये ॥ ७२ ॥ ❋ ❋ षष्ठे षष्ठे दिने हिंसापरिहारार्थं स्वयं शीर्णैः पतितैः शुष्कैस्तृणपर्णादिभिः कृतान्नः कृताहारः सन् द्वितीयं च मासं नयन् विभुं व्यापकं भगवन्तं वासुदेवमभ्यर्चयदित्यन्वयः ॥ ७३ ॥ ❋ ❋ तृतीयं च मास-मानयन् ईषद्विनायासेन नयन् नवमे नवमे अहनि दिवसे अब्भक्षः सन्नुत्तमश्लोकं महान्धकारनिवर्त्तकयशसं भगवन्तं समाधिना तदेकप्रवणचित्तेन उपाधावत् अचिन्तयत्। अनेन तृतीयमासमारभ्य सलिलादिभिर्बहिः पूजायामशक्तो जात इति गम्यते ॥ ७४ ॥ चतुर्थमपि मासं नयन् द्वादशे अहनि वायुभक्षः सन् देवं भगवन्तं ध्यायन् देहमधारयदित्यन्वयः। नन्वेवं प्राणनिरोधः कर्तुं कथं शक्यते तत्राह—जितश्वास इति ॥ ७५ ॥ ❋ ❋ पञ्चमे मास्यनुप्राप्ते सति वायुभक्षणमपि त्यक्त्वा जितश्वासः कृतकुम्भको नृपात्मजो ध्रुवोऽक्षरं ब्रह्म ध्यायन् एकेन पदा स्थाणुरिवाचलस्तस्थौ ॥ ७६ ॥

### भाषानुवादः

उसका कमल-सा मुख भूखसे कुम्हला गया होगा, वह थककर कहीं रास्तेमें पड़ गया होगा। ब्रह्मन्! उस असहाय बच्चेको वनमें कहीं भेड़िये न खा जायँ ॥ ६६ ॥ ❋ ❋ अहो! मैं कैसा स्त्रीका गुलाम हूँ! मेरी कुटिलता तो देखिये—वह बालक प्रेमवश मेरी गोदमें चढ़ना चाहता था, किन्तु मुझ दुष्ट ने उसका तनिक भी आदर नहीं किया ॥ ६७ ॥ ❋ ❋ श्री नारदजीने कहा—राजन्! तुम अपने बालककी चिन्ता मत करो। उसके रक्षक भगवान् हैं। तुम्हें उसके प्रभावका पता नहीं है, उसका यश सारे जगत्में फैल रहा है ॥ ६८ ॥ ❋ ❋ वह बालक बड़ा समर्थ है। जिस कामको बड़े-बड़े लोकपाल नहीं कर सके, उसे पूरा करके वह शीघ्र ही तुम्हारे पास लौट आयेगा। उसके कारण तुम्हारा यश भी बढ़ेगा ॥ ६९ ॥ ❋ ❋ श्रीमैत्रेयजी कहते हैं—देवर्षि नारदजीकी बात सुनकर महाराज उत्तानपाद राजपाटकी ओर उदासीन होकर निरन्तर पुत्रकी ही चिन्तामें रहने लगे ॥ ७० ॥ ❋ ❋ इधर ध्रुवजीने मधुवनमें पहुँचकर यमुनाजीमें स्नान किया और उस रात पवित्रता-पूर्वक उपवास करके श्रीनारदजीके उपदेशानुसार एकाग्रचित्तसे परमपुरुष श्रीनारायणकी उपासना आरम्भ कर दी ॥ ७१ ॥ ❋ ❋ उन्होंने तीन-तीन रात्रिके अन्तरसे शरीरनिर्वाहके लिये केवल कैथ और बेरके फल खाकर श्रीहरिकी उपासना करते हुए एक मास व्यतीत किया ॥ ७२ ॥ ❋ ❋ दूसरे महीनेमें उन्होंने छः-छः दिनके पीछे सूखे घास और पत्ते खाकर भगवान्का भजन किया ॥ ७३ ॥ ❋ ❋ तीसरा महीना नौ-नौ दिनपर केवल जल पीकर समाधियोगके द्वारा श्रीहरिकी आराधना करते हुए बिताया ॥ ७४ ॥ ❋ ❋ चौथे महीनेमें उन्होंने श्वासको जीतकर बारह-बारह दिनके बाद केवल वायु पीकर

ध्यानयोगद्वारा भगवान्‌की आराधना की ॥ ७५ ॥ ❀ ❀ पाँचवाँ मास लगनेपर राजकुमार ध्रुव श्वासको जीतकर परब्रह्मका चिन्तन करते हुए एक पैरसे खंभेके समान निश्चल भावसे खड़े हो गये ॥ ७६ ॥

सर्वतो मन आकृष्य हृदि भूतेन्द्रियाशयम् । ध्यायन्भगवतो रूपं नाद्राक्षीत्किंचनापरम् ॥७७॥
आधारं महदादीनां प्रधानपुरुषेश्वरम् । ब्रह्म धारयमाणस्य त्रयो लोकाश्चकम्पिरे ॥ ७८ ॥
यदैकपादेन स पार्थिवार्भकस्तस्थौ तदङ्गुष्ठनिपीडिता मही ।
ननाम तत्रार्धमिभेन्द्रधिष्ठिता तरीव सव्येतरतः पदे पदे ॥ ७९ ॥
तस्मिन्नभिध्यायति विश्वमात्मनो द्वारं निरुध्यासुमनन्यया धिया ।
लोका निरुच्छ्वासनिपीडिता भृशं सलोकपालाः शरणं ययुर्हरिम् ॥ ८० ॥

देवा ऊचुः

नैवं विदामो भगवन् प्राणरोधं चराचरस्याखिलसत्त्वधाम्नः ।
विधेहि तन्नो वृजिनाद्विमोक्षं प्राप्ता वयं त्वां शरणं शरण्यम् ॥ ८१ ॥

श्रीभगवानुवाच[1]

मा भैष्ट बालं तपसो दुरत्ययान्निवर्तयिष्ये प्रतियात स्वधाम ।
यतो हि वः प्राणनिरोध आसीदौत्तानपादिर्मयि संगतात्मा ॥ ८२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे ध्रुवचरितेऽष्टमोऽध्यायः ॥ ८ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

भूतानि शब्दादीनि इंद्रियाणि च आशेरते यस्मिंस्तस्मिन् आकृष्य भगवतो रूपं ब्रह्म ध्यायन् ॥ ७७ ॥ ❀ ❀ धारयमाणस्य सतस्तस्य तेजः सोढुमशक्नुवंतः संतः कंपिताः ॥ ७८ ॥ ❀ ❀ तस्यांगुष्ठेन निपीडिता आक्रांता सती मही तत्र तदा अर्धं ननाम । समेंऽशके अर्धशब्दस्य नपुंसकत्वादंशांशिनोरभेदाच्चैवं सामानाधिकरण्यम् । इभेंद्रेणाधिष्ठिता तरी नौर्यथा पदे पदे सव्यतो दक्षिणतश्च नमति तद्वत् ॥ ७९ ॥ ❀ ❀ अन्यदप्याश्चर्यमाह । तस्मिन्ध्रुवे विश्वं विश्वात्मकं विष्णुमात्मनः सकाशादनन्यया धियाऽऽत्माभेददृष्ट्याऽभिध्यायति सति किं कृत्वा असुं प्राणं तद्द्वारं च निरुध्य लोका निरुच्छ्वासनिपीडिता विश्वरूपं विष्णुमात्मन्येकीकृत्य स्वप्राणनिरोधे कृते विश्वस्य प्राणनिरोधो जात इति भावः ॥ ८० ॥ ❀ ❀ एवं प्राणनिरोधं कदाचिदपि न विद्मः, अखिलसत्त्वधाम्नः सर्वप्राणिशरीरस्य तस्माद् वृजिनात्क्लेशात् ॥ ८१ ॥ ❀ ❀ यतो बालात् कोऽसौ बालः कथं च तस्मात्प्राणनिरोध इत्यत आह । उत्तानपादस्य पुत्रो मयि विश्वरूपे संगतात्मा ऐक्यं प्राप्तो वर्तत इति ॥ ८२ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे टीकायामष्टमोऽध्यायः ॥ ८ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

भूतानां प्राणिनामिंद्रियेषु न शेते न विषयीभवतीति तथाभूतं भगवद्रूपं "यतो वाचो निवर्तंते" इत्यादिश्रुतेः । यद्वा आ ईषच्छेते न तु जागर्त्ति तदगम्यमित्यर्थः ॥ ७७ ॥ ❀ ❀ सर्वात्मकत्वेन बृहत्तमत्वाद्भगवतो रूपमेव ब्रह्म अत एवाधारमपि ततस्तादृशत्वेन धारणात्तदात्मकताप्राप्त्या यदा भारविशेषेण कंपते स्म तदा विश्वमति कंपते स्मेति भावः ॥ ७८ ॥ ❀ ❀ 'पुंस्यर्द्धोऽर्द्धं समेंऽशके' इत्यमरः । अंशी मही अंशस्तस्या अर्द्धं भागः तस्याङ्गुष्ठेन निपीडिता मही अर्द्धमर्द्धं प्रदेशं व्याप्य ननाम । यत्र स्वांगांशेन भारं विन्यस्यति स्म तत्रांशेन पृथिव्या नमनमपि युक्तमेव । "स्त्रियां नौस्तरणिस्तरिः" इत्यमरः । नमतिं नतोन्नता भवति ॥ ७९ ॥ ❀ ❀ इति भाव इति । तत्र ध्रुवसंज्ञकशरीरस्य प्राणेषु निरोधनीयेषु बालत्वात्समष्टेरेव प्राणान्यरुन्ध

---

१. प्राचीने पाठे 'श्रीभगवानुवाच' पाठो नास्ति ।

अत एवानन्यधियोक्तं व्यष्टिसमष्ट्योरैक्यबुद्धिरेव तत्र कारणमित्याशयः ॥ ८० ॥ ❁ ❁ हे भगवन्निति। त्वमेवात्र साक्षीत्यभिप्रायः। "सत्त्वं तु प्राणिद्रव्ययोः गुणभेदेपि" इति हलायुधः ॥ ८१ ॥ ❁ ❁ बालत्वादेव स्वप्राणेषु निरुध्यमानेषु प्राणान्यरुंद्ध। अतोऽस्मान्हनिष्यतीति बुद्धया तस्मान्न भेतव्यमित्याह–मयि संगतचित्तः कमपि नैव जिघांसतीत्यर्थः ॥ ८२ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धेऽष्टमोऽध्यायः ॥ ८ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

समेंशके नपुंसकत्वेपि मह्या अर्द्धं ननामेति वक्तव्यमित्याशङ्क्योत्तरमाह। अंशांशिनोरिति। सामानाधिकरण्यं समानविभक्तिकत्वम्। यत्तु कालभावाध्वेत्यादिनार्द्धदेशमभिव्याप्येति व्याख्यातं तद्देशशब्दाध्यहारादिगौरवादुपेक्षणीयम् ॥ ७९ ॥ ❁ ❁ विश्वात्मकमिति। "एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा। परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगदि"ति विष्णुपुराणोक्तेः विश्वस्य तच्छक्तित्वाच्छक्तेश्च शक्तिमदव्यतिरेकाद्विश्वरूपमित्यर्थः। परमते तु अधिष्ठानस्यैवाध्यस्तरूपतया प्रतीतत्वाद्बाधितसामानाधिकरण्यम्। स्वाभेददृष्ट्येति स्वस्मादभिन्नदृष्ट्या विश्वात्मकोऽहमिति व्यष्टिसमष्ट्योरभेदेनाहंग्रहोपासनया विष्णुं ध्यायति सति तदुपासनसामर्थ्यात् स्वप्राणनिरोधे विश्वस्य प्राणनिरोधो जात इति भावः ॥ ८०–८१ ॥ ❁ ❁ ऐक्यमहंग्रहोपासनरूपम् ॥ ८२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे दीपिन्याख्यायां दीपिकाटिप्पण्यामष्टमोऽध्यायः ॥ ८ ॥

श्रीमद्वीरराघवव्याख्या

भूतेन्द्रियाशयं भूतानि भूतसूक्ष्माणि शब्दादीनि तद्ग्राहकाणीन्द्रियाणि श्रोत्रादीनि शब्दादिविषयप्रवणानीन्द्रियाणीत्यर्थः, तानि आशेरते यस्मिन् शयनमत्र निर्व्यापारं अव्यापारितश्रोत्रादींद्रियवन्मनः सर्वतः संकल्पविकल्पादेराकृष्य निवर्त्य हृदि हृदयपुण्डरीके भगवतो रूपं दिव्यविग्रहं ध्यायन् भगवतो रूपादपरमन्यन्नाद्राक्षीत् नापश्यत्। अन्यन्नाद्राक्षीदित्यनेन ध्यानस्य विजातीयप्रत्ययान्तराव्यवहितत्वकथनेन ध्यानस्य परिनिष्पत्तिर्नाम फलाव्यवहितपूर्वदशोक्ता ॥ ७७ ॥ ❁ ❁ तामेव प्रपञ्चयिष्यन् तावत्तत्प्रभावमाह। आधारमिति त्रिभिः। महदादीनां भूतानां तत्संसृष्टानां चेतनानां च आधारं धारकम्, अनेन स्थूलचिदचिच्छरीरकत्वमुक्तं सूक्ष्मचिदचिच्छरीरकत्वमाह। प्रधानपुरुषेश्वरं प्रधानं सूक्ष्ममचित्तत्त्वं पुरुषास्तत्संसृष्टचेतनाः तेषामीश्वरम् अन्तः प्रविश्य नियन्तारम् 'अन्तः प्रविष्टः शास्तेति श्रुतेः' अनेन यन्महदादीनां धारकत्वमुक्तं तदप्यन्तः प्रविश्य नियमनेनैवेति विशेषनिष्ठं बोध्यम्। एवंभूतं भगवन्तं ब्रह्म धारयमाणस्य सतः तस्य तेजः सोढुम् अशक्नुवन्तस्त्रयो लोकाः चकम्पिरे कम्पिताः ॥ ७८ ॥ ❁ ❁ स पार्थिवार्भको ध्रुवः एकेन पादेन यदा तस्थौ तत्र तदा तस्याङ्गुष्ठेन निपीडिता नितरां पीडिता सती मही भूमिरर्धेन धिष्ठिता ननाम प्रह्वीबभूव। अर्धशब्दस्यात्र समांशवाचित्वाभावेऽपि विधेयनमनक्रियाविशेषणत्वाभिप्रायेण क्लीबत्वनिर्देशः। इभेन्द्रेण गजश्रेष्ठेन निधिष्ठिता अधिष्ठिता तरीव नौर्यथा पदे पदे प्रतिपदं सव्येतरतः सव्यतो वामतश्च नमति तद्वत् ॥ ७९ ॥ ❁ ❁ किञ्च तस्मिन् ध्रुवे आत्मनः स्वस्य विश्वं द्वारं सर्वाणीन्द्रियाणि-द्वारशब्दः श्रोत्रादीन्द्रियपरः-असुं प्राणं च निरुध्य अनन्यया विषयान्तररहितया धिया ध्यायति सति भगवन्तमिति शेषः। यद्वा विश्वशब्दो भगवत्परः, विष्णोर्नामसहस्रमित्युपक्रम्य विश्वं विष्णुरित्युक्तत्वात् विश्वात्मकत्वात् विश्वो विष्णुः, लोका इन्द्रादिभिः सहिता भृशं नितरां निरुच्छ्वासेन उच्छ्वासाभावेन निपीडिताः हरिं शरणं ययुः प्रापुः ॥ ८० ॥ ❁ ❁ शरणप्राप्तिमेव प्रपञ्चयति नैवमिति। हे भगवन्! चराचरस्य एवंविधं प्राणनिरोधं न विदामः। कदाचिपि न जानीमः। अचरग्रहणं दृष्टान्तार्थम्। तेषामुच्छ्वासनिरुच्छ्वासयोरभावात् यथा अचरस्य उच्छ्वासादिर्नास्ति तथा चरस्यापि प्राप्त इति तत् तस्मात् अखिलसत्त्वधाम्नः चिदचिच्छरीरकस्य तव नः संबन्धिनामस्माकं वृजिनात्प्राणनिरोधरूपात् दुःखात् विमोक्षं विधेहि कुरु। वयं शरण्यं समीहितसाधनत्वेनाध्यवसनीयं त्वां शरणमुपायं प्राप्ताः। उपायत्वेनाध्यवस्याम इत्यर्थः ॥ ८१ ॥ ❁ ❁ एवं शरणं गतानाह। शरण्यो भगवान् मामैष्टेति माभैष्ट भयं मा कुरुत तपसा दुरत्ययम् अनुल्लङ्घ्यं बालं निर्वर्त्तयिष्ये निष्पादयिष्यामि समीहितेन संयोजयामीत्यर्थः। अतो यूयं स्वधाम स्वस्थानं प्रति यात गच्छत। कोऽसौ बालः कथं चैकस्मात् प्राणनिरोधात् विश्वस्य प्राणनिरोध इत्यत आह यतो यदीयप्राणनिरोधाद्धेतोर्वः युष्माकं प्राणनिरोध आसीत् स औत्तानपादिः उत्तानपादस्य पुत्रो बालो ध्रुवो मयि विश्वप्राणे प्राणनहेतुभूते मयि "को ह्येवान्यात्कः प्राण्यादेष आकाश आनन्दो न स्यात् यत्साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेति यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः योऽपानेनापानेनेति स त आत्मा सर्वान्तरः" इति श्रुतेः, संगतः आत्मा अन्तःकरणं यस्य सोऽभूत्स्वप्राणनिरोधेनोच्छ्वासनिश्वासयोरप्यक्षममाणस्य विश्वप्राणिप्राणनहेतुभूतस्य मम तेन निरुद्धत्वात् सर्वप्राणिप्राणनिरोधोऽभूदिति भावः ॥ ८२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रिकायामष्टमोऽध्यायः ॥ ८ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

देवा ध्रुवस्य यशोविस्तृत्यर्थं तत्तपोविघ्नं चक्रुरित्याह । देवा इति । स्वस्वसिद्धमाययेन्द्रजालेन कूष्माण्डाः पिशाचविशेषाः तान्नापश्यदित्यनेन ध्रुवस्य देवेभ्योऽप्यधिकशक्तिमत्त्वं नाभिप्रेतं, किन्तु परमभागवतत्वेन यशोविस्तृत्यै विघ्नकरणं न तु तत्तपः-खण्डनाय । तदुक्तम् "यत्र देवैः कृते विघ्ने खण्डितो न पुमान् भवेत् । तत्र तद्यशसे विघ्नं कुर्युर्न तु विघातने ।। यत्र खण्डितता तत्र खण्डनायैव केवलम् । सत्यकामा यतो देवास्ते चित्ताद्यभिमानिनः ।। अतो विमोहनायैव प्राप्नुयुस्ते पराजयम् । तेषामशक्तितोक्तिश्च विमोहाय सुरद्विषामि"ति ।। ७६ ।। ❋ ❋ नापश्यदित्येतद्विवृणोति ! सर्वत इति । आकाशादिभूतानां तदुत्पन्नानां प्राणिनां चेन्द्रियाणामाश्रयं भगवतो रूपं ध्यायन्नपरं जगत्किंचनाल्पमस्वतन्त्रमद्राक्षीत् स्वतन्त्रं नाद्राक्षीदित्यन्वयः ।। ७७ ।। ❋ ❋ एकाग्रमनसा तस्य वासुदेवं ध्यायतः सत इदमेकमाश्चर्यमभूदित्याह । आधारमिति ।। ७८ ।। ❋ ❋ सर्वाधारं ब्रह्म धारयमाणे ध्रुवे स्थिरत्वेन भाव्यं तत्र लोकानां कम्पनं कथमित्याशङ्क्योपपत्तिमाह यदैकपादेनेति । तत्र तस्मिन् भागे तयोर्मध्ये इभेन्द्रेण गजेन गरिम्णाधिष्ठिता तरीव यथा नौर्नता भवति तथा । तदेव विशिनष्टि सव्येतरत इति । सव्येतरयोर्वामदक्षिणयोः पादयोः पदे पदे नुन्ना नता भवति ।। ७९ ।। ❋ ❋ न केवलं चलनमेव लोकानामभून्, किंतु श्वासोच्छ्वासयोः प्रवृत्तिस्तम्भेन मरणाधिक-क्लेशोऽभूदित्याह । तस्मिन्निति । तस्मिन्ध्रुवेऽनन्यया ध्येयैकविषयतां गतया धिया श्वासप्रवृत्तिकारणममुं प्राणं निरुध्य कुम्भकीकृत्यात्मनो जीवराशेरुत्पत्त्यादेर्द्वारं कारणं विश्वं विष्णुमभितः परित इन्द्रियाभिमानिदेवैः सह ध्यायति निरुच्छ्वासेन निरुद्धप्राणवृत्त्या निपीडिताः सलोकपाला लोका हरिं शरणं ययुरित्यन्वयः । अत्र भृशमित्यनेन क्षिप्रवाचिना लोकानामेव निरुच्छ्वासो न लोकपालानां देवतानामनन्यप्रवृत्तिहेतूनां स्वोत्तमानुग्रहेण स्वावरानधीनप्रवृत्तीनां तास्तु लोकश्वासार्थं कृपालवो हरिं शरणं ययुरिति ध्वनयति उक्तं च "ध्यातुर्ध्रुवस्य कीर्त्यर्थं हरिणा सह देवताः । लोकोच्छ्वासान्निरुध्याथ श्वासार्थं च हरिं ययुः ।। अन्यप्रवृत्तयस्तेभ्यो न तेषामन्यतः क्वचित् । स्वोत्तमेभ्यस्तु देवेभ्यस्तेषां स्युश्च प्रवृत्तयः" इति ।। ८० ।। ❋ ❋ किमर्थं शरणं गता इति तत्राह नैवमिति । अखिलानां सत्त्वानां प्राणिनां धाम समूहो यत्र तत्तथोक्तं तस्य "तेजः शक्तिः समूहश्च गृहं धामेति कथ्यते" इत्यभिधानात् । वृजिनाद् दुःखात् ।। ८१ ।। ❋ ❋ हरेः शरणं गतानां देवानां भयनिवर्तकप्रतिवचनप्रकारमाह माभैष्टेति । यतो यस्माद्वो युस्माकं सकाशात्प्राप्तप्रवृत्तीनां लोकानां प्राणनिरोध आसीत् तं तपसो निवर्त्तयिष्ये इत्यन्वयः । कोसाविति तत्राह औत्तानपादिरिति । मयि सम्यग्गत आत्मा मनो यस्य स तथा ध्रुव इत्युक्ते कस्य पुत्रः किंजातिरयमिति शङ्का स्यादित्यत औत्तानपादिरिति ।। ८२ ।।

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे श्रीविजयध्वजतीर्थकृतपदरत्नावल्यामष्टमोऽध्यायः ॥ ८ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सर्वात्मकत्वेन बृहत्त्वसत्त्वाद्भगवतो रूपमेव ब्रह्म । अत एव आधारमपि । ततस्तादृशत्वेन धारणात्तदात्मकताप्राप्त्या यदा भावविशेषेण कम्पते स्म तदा विश्वमपि कम्पते स्म ।। ७८ ।। ❋ ❋ ततो यत्र स्वाङ्गांशेन भारं विन्यस्यति स तत्रांशे पृथिव्या नमनमपि युक्तम् ।। ७९ ।। ❋ ❋ लोकगौरवादिति चित्सुखः । चकम्पिरे इति शेषः ।। ८० ।। ❋ ❋ तस्मादेव लोकनिरुच्छ्वासतापि ।। ८१-८२ ।।

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे अष्टमोऽध्यायः ॥ ८ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

भूतानां प्राणिनामिन्द्रियेषु न शेते विषयीभवतीति तथाभूतं भगवद्रूपम् । यद्वा आ सम्यक् शेते न तु जागर्त्तीति तेषामगम्य-मित्यर्थः ।। ७७ ।। ❋ ❋ धारयतः ध्यायतः ध्यायति सतीत्यर्थः ।। ७८ ।। ❋ ❋ तदा तस्याङ्गुष्ठेन निपीडिता मही अर्द्धमर्द्धप्रदेशं व्याप्य ननाम । कालभावेत्यादिना कर्मत्वम् । इभेन्द्रेणाधिष्ठिता तरी नौर्यथा पदे पदे सव्यतो दक्षिणतश्च नमति तद्वत् ।। ७९ ।। ❋ ❋ तस्मिन् ध्रुवे आत्मनो देहस्य विश्वं सर्वमेव द्वारमसुं प्राणञ्च निरुध्य हरिं ध्यायति सति लोका निरुच्छ्वास-निपीडिता इति व्यष्टेर्ध्रुवसंज्ञकशरीरस्य प्राणेषु निरोधनीयेषु बालत्वात् समष्टेरेव प्राणान् न्यरुन्ध । अत एव अनन्यया धियेति व्यष्टि-समष्ट्योरैक्यबुद्धिरेव तत्र कारणमित्यर्थः ।। ८० ।। ❋ ❋ एवं प्राणनिरोधं कदापि न विद्मः, अखिलधाम्नः सर्वप्राणिशरीरस्य ।। ८१ ।। ❋ ❋ बालमिति बालत्वादेव स्वप्राणेषु निरुध्यमानेषु युष्माकमपि प्राणान् न्यरुन्ध । अतोऽस्मान् हनिष्यतीति बुद्ध्या तस्मान्न भेतव्यमित्याह । यतो ध्रुवात् स मयि संगतचित्तः कमपि नैव जिघांसतीत्यर्थः ।। ८२ ।।

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । चतुर्थे त्वष्टमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ८ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

भूतानि इन्द्रियविषयाः इन्द्रियाणि च शेरते यत्र तन्मनः सर्वत आकृष्य भगवतो रूपं ध्यायन् अपरं किंचन नाद्राक्षीत् ॥ ७७ ॥ ❀ ❀ महदादीनामनित्यानामाधारं धारकम्, प्रधानपुरुषयोः प्रकृतिजीवयोः स्वस्य शक्त्यंशयोर्नित्ययोरीश्वरं ब्रह्म बृहत्स्वरूपगुणादियुक्तं वासुदेवं हृदि धारयमाणस्य तेजसा त्रयो लोकाश्चकम्पिरे ॥ ७८ ॥ ❀ ❀ एवं सर्वाधारे सर्वेश्वर-परब्रह्मादिपदवाच्ये वासुदेवे स्वानन्यभक्तेन हृदा वृते सति गजचरणेन नौकामिव भूमिमेकतो नम्रामवधार्य ध्रुवे निर्जितश्वासे निरुद्धश्वासत्वमात्मनोऽवधार्य तन्मूलमजानन्तो देवाः हरिं शरणं गता इत्याह। यदेति द्वाभ्याम्। यस्य पादः नृपासनात्समात्रा निरा-कृतः स एव तेनैव पादेन यदा हरिध्यानकाले तस्थौ तत्र तदा इभेन्द्रेण धिष्ठिता आक्रान्ता तरी नौर्यथा पदे पदे सव्येतरतः वामतो दक्षिणतश्च नमति तथा तस्य नृपार्भकस्याङ्गुष्ठनिपीडिता सती मही अर्द्धं ननाम। आत्मनोऽर्द्धेन भागेन किंचिन्नता सती तत्पादगौरवं सूचयामासेत्यर्थः ॥ ७९ ॥ ❀ ❀ यो दीर्घं निःश्वासं क्रोधवशात् मातृसपत्नीसमीपे प्रवर्त्यापि तेन किमपि प्रयोजनं न कृतवान् तस्मिन्नेव ध्रुवे आत्मनः तमेवासुं निश्वासं निरुध्य विश्वं सर्वात्मानं भगवन्तमभिध्यायति तु लोकाः सलोकपालाः भृशमत्यर्थं निरुच्छ्वासेन पीडिताः सन्तः निःश्वासविमुक्तिमन्यतोऽलभमानाः हरिं शरणं ययुः। अहो अद्भुतं हरि-प्रावण्यमिति ॥ ८० ॥ ❀ ❀ अखिलसत्त्वानां धाम्नः शरीरस्य चराचरस्य जङ्गमस्थावररूपस्य प्राणरोधं कुत इति न विदामः। ततः त्वां शरण्यं शरणागतरक्षणे कुशलं शरणं रक्षितारं प्राप्ताः, नो वृजिनात् क्लेशाद्विमोक्षं विधेहि ॥ ८१ ॥ ❀ ❀ यतः औत्तानपादिः उत्तानपादस्य पुत्रः मयि विश्वरूपे सम्यग् गतः आत्मा मनो यस्य सः अहं प्राणप्रवर्तकः सर्वरूपस्तेन जितप्राणेन हृदि रुद्धोऽस्मीत्यर्थः। ततो हि वः प्राणनिरोध आसीत्, तथापि यूयं मा भैष्ट, धाम प्रतियात, बालं दुरत्ययात् अन्येन विघट-यितुमशक्यात् तपसो निवारयिष्ये ॥ ८२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे अष्टमाध्यायार्थप्रकाशः ॥ ८ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

ततश्च भूतेन्द्रियाशयं मनः सर्वतो विषयत आकृष्य हृदि भगवतो रूपं ध्यायंस्ततोऽपरं किंचनापि नाद्राक्षीदित्यन्वयः ॥ ७७ ॥ ❀ ❀ एवं ध्रुवचर्यां निरूप्येदानीं तस्यैवं ध्यायतः प्रथमं जगत्कारणं भगवत्पदमक्षरं ब्रह्म मुख्यप्राणयुतमाविर्भूतम्। तस्य मुख्यप्राणस्य निरोधात्सर्वस्यैव प्राणनिरोधो जातस्तदा सर्वे भगवच्छरणं गता इत्याह—आधारमिति त्रिभिः। प्रधान-पुरुषयोरपीश्वरं कारणमत एव महदादीनामप्याधारमक्षरब्रह्म ध्यानेन प्रादुर्भूतं धारयमाणस्य सतो ध्रुवस्य त्रयो लोका जडचेतना-त्मकाश्चकंपिरे कंपिता जाता इत्यन्वयः ॥ ७८ ॥ ❀ ❀ एतदेव विवृणोति—यदेति द्वाभ्याम्। स पार्थिवार्भको राजपुत्रो ध्रुवो यदा एकपादेन तस्थौ तत्र तदा तस्याङ्गुष्ठेन निपीडिता आक्रान्ता सती मही अर्द्धं ननामेत्यन्वयः। यद्यपि मह्या अर्द्धमिति वक्तव्यं तथाप्यंशांशिनोरभेदविवक्षया सामानाधिकरण्यम्। समेंशके अर्द्धशब्दस्य नपुंसकत्वनियमात्तथा प्रयोगः। नमने दृष्टान्त-माह—इभेन्द्रेति। इभेन्द्रेणाधिष्ठिता आक्रान्ता तरी नौर्यथा पदे पदे सव्यतो दक्षिणतश्च नमति तथेत्यर्थः। अनेन सर्वस्य जडवर्गस्य प्रकम्पः प्रदर्शितो ज्ञेयः ॥ ७९ ॥ ❀ ❀ इदानीं चेतनपीडां निरूपयति—तस्मिन्निति। आत्मनः सकाशात् अनन्यया धिया अभेददृष्ट्या विश्वात्मकमक्षरब्रह्म तस्मिन् ध्रुवेऽभिध्यायति सति भृशमत्यन्तं निरुच्छ्वासनिपीडिताः श्वासनिरोधेन पीडिताः सन्तो लोकपालैः सहिता लोकाः त्रिलोकस्था जना अन्यच्छरणमपश्यन्तो हरिमेव शरणं ययुरित्यन्वयः। ननु कथमेवमेकदा सर्वप्राणनिरोधो जातस्तत्राह—द्वारं निरुध्यासुमिति। असुं प्राणं मुखनासिकादि तद्द्वारं च निरुध्येत्यर्थः। विश्वात्मकमक्षरं स्वाभेदेन ध्यायन् प्राण-निरोधे कृते मुख्यस्य प्राणस्य निरोधात्सर्वप्राणनिरोधो जात इति भावः ॥ ८० ॥ ❀ ❀ भगवच्छरणं गतानां विज्ञप्तिं दर्शयति—नैवमिति। हे भगवन्! अखिलसत्त्वानां सर्वप्राणिनां धाम्नः समूहस्य 'तेजः शक्तिः समूहश्च गृहं धामेति कथ्यते' इत्यभिधानादत्र धामशब्दः समूहवाचकः, सत्त्वशब्दस्य गुणपरत्वशङ्कां वारयितुं पुनर्विशेषणम्। चराचरस्येति। एवमेकदा प्राणरोधं न विदामः न विद्मः। यदि कदाचिदेवं प्राणनिरोधोऽनुभूतः स्यात्तदा ततो विमोक्षोपायो विज्ञातः स्यात्। न च तदस्त्यतो वयं सर्वथा अशक्तास्त्वां शरणं रक्षकं प्राप्ताः। शरणस्य रक्षां कर्तुं योग्यश्च त्वं यतो भगवान् अतस्तत् तस्मात्प्राणनिरोधजनितात् वृजिनात् क्लेशात् नोऽस्माकं विमोक्षं विधेहि कुर्वित्यर्थः ॥ ८१ ॥ ❀ ❀ एवं लोकपालादिभिः प्रार्थितस्य भगवतः प्रतिवचन-माह—मा भैष्टेति। मा भैष्ट यूयं भयं मा कुरुत। स्वकीयं धाम गृहं प्रतियात गच्छत। यतो हि तपसो वो युष्माकं प्राणनिरोध आसीत् जातस्तस्माद् दुरत्ययात् मत्प्रसादं विना विघटयितुमशक्यात् तपसः सकाशात् बालमहं निवर्त्तयिष्ये। कोसौ बालः कथंभूतं तत्तपो येनास्मत्प्राणनिरोधो जात इत्यपेक्षायामाह—औत्तानपादिरिति। उत्तानपादस्य पुत्रो मयि विश्वात्मके सङ्गतः

ऐक्यं प्राप्तः आत्मा स्वरूपं यस्य स तथा। तथा च मयि विश्वात्मके आत्मानमेकीकृत्य प्राणनिरोधे कृते युष्माकं प्राणनिरोधो जातस्तस्य प्राणनिरोधनिवर्त्तने कृते युष्माकमपि तन्निरोधनिवृत्तिर्भविष्यतीति भावः ॥ ८२ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना । श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये । श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे ह्यर्थनिरूपणे । अष्टमे विवृतोध्यायस्तत्साधननिरूपकः ॥ ३ ॥

### भाषानुवादः

उस समय उन्होंने शब्दादि विषय और इन्द्रियोंके नियामक अपने मनको सब ओरसे खींच लिया। हृदयस्थित हरिके स्वरूपका चिन्तन करते हुए चित्तको किसी दूसरी ओर न जाने दिया ॥ ७७ ॥ ❀ ❀ जिस समय उन्होंने महदादि सम्पूर्ण तत्त्वोंके आधार तथा प्रकृति और पुरुषके भी अधीश्वर परब्रह्मकी धारणा की, उस समय (उनके तेजको न सह सकनेके कारण) तीनों लोक काँप उठे ॥ ७८ ॥ ❀ ❀ जब राजकुमार ध्रुव एक पैरसे खड़े हुए, तब उनके अँगूठेसे दबकर आधी पृथ्वी इस प्रकार झुक गयी, जैसे किसी गजराजके चढ़ जानेपर नाव पद-पदपर दायीं-बायीं डगमगाने लगती है ॥ ७९ ॥ ❀ ❀ ध्रुवजी अपने इन्द्रियद्वार तथा प्राणोंको रोककर अनन्यबुद्धिसे विश्वात्मा श्रीहरिका ध्यान करने लगे। इस प्रकार उनकी समष्टि प्राणसे अभिन्नता हो जानेके कारण सभी जीवोंका श्वास-प्रश्वास रुक गया। इससे समस्त लोक और लोकपालोंको बड़ी पीड़ा हुई और वे सब घबराकर श्रीहरिकी शरणमें गये ॥ ८० ॥ ❀ ❀ देवताओं ने कहा—भगवन्! समस्त स्थावर-जङ्गम जीवोंके शरीरोंका प्राण एक साथ ही रुक गया है—ऐसा तो हमने पहले कभी अनुभव नहीं किया। आप शरणागतोंकी रक्षा करनेवाले हैं, अपनी शरणमें आये हुए हमलोगोंको इस दुःखसे छुड़ाइये ॥ ८१ ॥ ❀ ❀ श्रीभगवान्ने कहा—देवताओं! तुम डरो मत। उत्तानपादके पुत्र ध्रुवने अपने चित्तको मुझ विश्वात्मामें लीन कर दिया है, इस समय मेरे साथ उसकी अभेद-धारणा सिद्ध हो गयी है, इसीसे उसके प्राणनिरोधसे तुम सबका प्राण भी रुक गया है। अब तुम अपने-अपने लोकोंको जाओ, मैं उस बालकको इस दुष्कर तपसे निवृत्त कर दूँगा ॥ ८२ ॥

### इत्यष्टमोऽध्यायः



# अथ नवमोऽध्यायः

## मैत्रेय उवाच

त एवमुत्सन्नभया उरुक्रमे कृतावनामाः प्रययुस्त्रिविष्टपम् ।
सहस्रशीर्षापि ततो गरुत्मता मधोर्वनं भृत्यदिदृक्षया गतः ॥ १ ॥
स वै धिया योगविपाकतीव्रया हृत्पद्मकोशे स्फुरितं तडित्प्रभम् ।
तिरोहितं सहसैवोपलक्ष्य बहिःस्थितं तदवस्थं ददर्श ॥ २ ॥
तद्दर्शनेनागतसाध्वसः क्षिताववन्दताङ्गं विनमय्य दण्डवत् ।
दृग्भ्यां प्रपश्यन् प्रपिबन्निवार्भकश्चुम्बन्निवास्येन भुजैरिवाश्लिषन् ॥ ३ ॥
स तं विवक्षन्तमतद्विदं हरिर्ज्ञात्वास्य सर्वस्य च हृद्यवस्थितः ।
कृताञ्जलिं ब्रह्ममयेन कम्बुना पस्पर्श बालं कृपया कपोले ॥ ४ ॥
स वै तदैव प्रतिपादितां गिरं दैवीं परिज्ञातपरात्मनिर्णयः ।
तं भक्तिभावोऽभ्यगृणादसत्वरं परिश्रुतोरुश्रवसं ध्रुवक्षि[1]तिः ॥ ५ ॥

अन्वयः—एवम् उत्सन्नभयाः ते उरुक्रमे कृतावनामाः त्रिविष्टिपम् प्रययुः ततः सहस्रशीर्षा अपि भृत्य-दिदृक्षया गरुत्मता मधोः वनम् गतः ॥ १ ॥ * * सः वै योगविपाकतीव्रया धिया हृत्पद्मकोशे स्फुरितम् तडित्प्रभम् तिरोहितम् उपलक्ष्य सहसा एव बहिः स्थितम् तदवस्थम् ददर्श ॥ २ ॥ * * तद्दर्शनेन आगतसाध्वसः अर्भकः दृग्भ्याम् प्रपश्यन् प्रपिबन् इव आस्येन चुम्बन् इव भुजैः आश्लिषन् इव अंगम् क्षितौ दण्डवत् विनमय्य अवन्दत ॥ ३ ॥ * * सः अस्य च सर्वस्य हृदि अवस्थितः हरिः तम् विवक्षन्तम् कृताञ्जलिम् बालम् अतद्विदम् ज्ञात्वा कृपया ब्रह्ममयेन कम्बुना कपोले पस्पर्श ॥ ४ ॥ * * परिज्ञातपरात्मनिर्णयः भक्तिभावः ध्रुवक्षितिः सः तदा एव प्रतिपादितम् दैवीं गिरम् परिश्रुतोरुश्रवसम् तम् असत्वरम् वै अभ्यगृणात्, ॥ ५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

नवमे तु हरिं स्तुत्वा लब्ध्वा तस्माद्वरान्ध्रुवः । प्रत्यागत्याकरोद्राज्यं पित्रा दत्तमितीर्यते ॥ १ ॥

एवं भगवद्वाक्येन गतभयाः ॥ १ ॥ * * स वै ध्रुवो योगस्य विपाकेन दार्ढ्येन तीव्रया निश्चलया गरुडाधि-रूढं पुरतः स्थितमपि यदांऽतर्दृष्टित्वादसौ नापश्यत्तदा भगवतैवांतःस्थं रूपमाकृष्टमतस्तिरोहितमुपलक्ष्य व्युत्थितः सन् तदवस्थं यादृगंतः स्फुरितस्तादृशम् ॥ २ ॥ * * आगतसाध्वसो जातसंभ्रमः विनमय्य आनतं कृत्वा । संभ्रममेवाह । दृग्भ्यां प्रपिबन्निव प्रपश्यन्नवंदत आस्येन चुंबन्निवावंदत भुजाभ्यामाश्लिषन्निवावंदतेत्यर्थः ॥ ३ ॥ * * विवक्षंतं तद्गुणान्वक्तु-मिच्छंतम् । अतद्विदं स्तुत्यादि कर्तुमजानंतम् । अस्य ध्रुवस्य सर्वस्य च हृद्यवस्थितत्वात् ज्ञात्वा ब्रह्ममयेन वेदात्मकेन शंखेन ॥ ४ ॥ * * भगवता प्रतिपादितां गिरं प्रतिपद्येति शेषः । प्रतिपद्यतामिति पाठे तां वेदात्मिकाम् । परिज्ञातः परात्मनोरीश्वरजीवयोर्निर्णयो येन सः । अत एव भक्त्या भावः प्रेमा यस्य असत्वरं स्थैर्येण परितः श्रुतं विख्यातमुरु श्रवः कीर्तिर्यस्य तम् । ध्रुवा क्षितिः स्थानं यस्येति भाविनिर्देशः ॥ ५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तस्माद्धरेः (१) ।

ते देवाः । उरुक्रमाय सप्तमी चतुर्थ्यर्थे । गर्भोदशायिनाऽभेदविवक्षया सहस्रशीर्षेति । तदानींतनोऽवतारस्तु पृश्निगर्भाख्यो भागवतामृते उक्तः । गरुत्मता गरुडेन । भक्तेति वक्तव्येऽवश्यमर्तव्यत्वविवक्षया भृत्येति ॥ १ ॥ * * यत आकृष्टमतो

[1] प्रा० पा०—स्थितिः ।

तोः ॥ २ ॥ ❀ ❀ ज्ञातानंदवेगः । इत्यर्थ इति । दृग्भ्यां मुखारविंदमाधुर्मेत्यादरेण गृह्णन्निव । आस्येन चरणारविंदमाधुर्यं चुंबन्निव भुजाभ्यां चरणांगुलिशिखराणि स्पृशन्निव ननामेति भावः । भुजैरिति बहुत्वेन भुजयोर्व्यापारबाहुल्यं लक्षयित्वाऽऽनंदकंपो ध्वनितः ॥ ३ ॥ ❀ ❀ स हरिः । तं ध्रुवं व्याकरणाद्यज्ञानात्संस्कृतं प्रयोक्तुमशक्नुवन्तम् । अस्य ध्रुवस्य कपोले कपोलोपलक्षिते वदने । यद्वा 'कपोले वसते वाणी' इत्याद्युक्तेस्तत्र सरस्वती सुप्तेव स्थिता, सा भगवता वेदमयशंखेनैव संचाल्योत्थापिता मय्यागतेति सुप्तैवेति भावः । "पांचजन्यो वा एष आम्नाय उत्" इति श्रुतेः । 'स्याच्छंखः कंबुरस्त्रियाम्' इत्यमरः ॥ ४ ॥ ❀ ❀ स ध्रुवः । प्रतिपादितां दत्ताम् । अत एव ज्ञातजीवेश्वरस्वरूपत्वादेव ॥ ५ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

प्रत्यागत्य प्रत्यावृत्य ततो देवानां प्रयाणानन्तरं सहस्रशीर्षेति ध्रुवलोकाधिष्ठातुः पृश्निगर्भस्य तदभेदात् ॥ १ ॥ ❀ ❀ व्युत्थितः समाधेरुपरतः ॥ २ ॥ ❀ ❀ भुजैरिति द्विवचनार्थे बहुवचनत्वादित्ययं इत्युक्तम् ॥ ३ ॥ ❀ ❀ वेदात्मकेनेति स्पर्शमणिन्यायेन कपोलांतस्थतद्वाण्या अपि वेदार्थमयत्वं व्यज्यते ॥ ४ ॥ ❀ ❀ तदैव स्पर्शनकाल एव दैवीं भगवद्विषयां निर्णयोऽत्र द्वयोश्चिद्रूपत्वेऽपि विभुत्वाणुत्वाद्यवच्छिन्नप्रतियोगिताकभेदवन्तावेव द्वौ न तु सर्वथाभेदस्तयोरिति निश्चयः "पृथगात्मानं प्रेरितारं च मत्वा, जुष्टस्ततस्तेनामृतत्वमेती"ति श्रुतेः, 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति न्यायाच्च । अत एवेतादृशभेदज्ञानादेव भक्त्या ध्यानदर्शनादिरूपया प्रेमतल्लिङ्गमश्रुकम्पादिकम् अन्यथा विषयाश्रयालम्बनादिभेदाभावेन प्रेम्णः स्वरूपहानिस्स्यादिति । अत एव स्थैर्येणेत्युक्तम् ॥ ५ ॥

## श्रीमद्वीरराघवव्याख्या

एवं भगवतोक्तेषु देवेषु स्वधामगतेषु भगवान् भक्तानुजिघृक्षया ध्रुवेण प्रात्यक्षितस्तेन स्तुतस्तं समीहितेन संयोज्य स्वधामागात् तथापि ध्रुवोऽपि संसाधितसमीहितः स्वधाम जगामेत्याह । नवमेन मुनिः एवं भगवद्वाक्येन उत्सन्नभया गतभया देवा उरुक्रमे भगवति विषये कृतः प्रणामो यैस्ते त्रिविष्टपं सुरलोकं ययुः जग्मुः । सहस्रशीर्षा भगवानपि भृत्यदिदृक्षया भृत्यदर्शनेच्छया मधोर्वनं गरुत्मता वाहनभूतेन सह गतः जगाम ॥ १ ॥ ❀ ❀ स वै ध्रुवः योगविपाकतीव्रया योगस्य ध्यानयोगस्य विपाकः-आपरोक्ष्यप्रीतिरूपत्वादिविशेषणविशिष्टत्वं तेन तीव्रया विजातीयप्रत्ययान्तराव्यवहितया धिया प्रथमं हृत्पद्मकोशे स्फुरितं साक्षात्कृतं ततः सहसैव आश्वेव तिरोहितं ततः पुनः बहिस्थितं तडित्प्रभं अन्तराविर्भूतस्य सहसा तिरोधानेन तडित्साम्यमभिप्रेत्य तडित्प्रभमित्युक्तं तदवस्थं यादृगन्तरस्फुरत्तादृशमुपलक्ष्य प्रत्यभिज्ञाय ददर्श साक्षात्कृतवान् ॥ २ ॥ ❀ ❀ तस्य भगवतो दर्शनेन आगतसाध्वसः जातसंभ्रमः अर्भकः ध्रुवः अङ्गं शरीरं क्षितौ भूमौ दण्डवद्विनमय्य नतं कृत्वा अवन्दत नमस्कृतवान् । संभ्रममेवाह दृग्भ्यां पिबन्निव प्रपश्यन्निव अवन्दत आस्येन चुम्बन्निव अवन्दत, भुजाभ्यामाश्लिषन्नालिङ्गन्निवावन्दत । भुजैरिति बहुवचनमार्षम् ॥ ३ ॥ ❀ ❀ तं ध्रुवं विवक्षन्तं गुणान् वक्तुमिच्छन्तं तुष्टूपन्तमित्यर्थः । पुनरतद्विदं स्तोतुमजानन्तम् अस्य ध्रुवस्य सर्वस्य लोकस्य च हृदि हृदये अवस्थितः हेतुगर्भमिदं हृदि अवस्थितत्वात् ज्ञात्वा स हरिः ब्रह्ममयेन ब्रह्म प्रणवः वेदो वा तत्प्रचुरेण ध्वनेः प्रणवाद्यनुकारित्वाद् ब्रह्म अमयेनेत्युक्तम् कम्बुना शङ्खेन कपोले गण्डे बालं ध्रुवं कृपया पस्पर्श ममार्ज ॥ ४ ॥ ❀ ❀ स वै ध्रुवः दैवीं देवस्य संबन्धिनीं देवेन भगवताविर्भावितामित्यर्थः । तां वेदार्थप्रचुरां गिरं वाचं तदैव स्पर्शोत्तरकालमेव प्रतिपद्य लब्ध्वा परितः ज्ञातः कात्स्न्येन विदितः परात्मनोः परमात्मजीवात्मनोः निर्णयो याथात्म्यं येन अत एव भक्तिभावः भक्त्यात्मको भावोऽभिप्रायो यस्य ध्रुवा स्थिरा शाश्वती क्षितिः स्थानं यस्य अयं भाविनिर्देशः, असत्वरः त्वरारहितः परिश्रुतं सर्वतो विख्यातमुरु निरवधिकं श्रवः कीर्तिर्यस्य तं भगवन्तम् अभ्यगृणात् अस्तौषीत् ॥ ५ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

हरेः केवलं मोक्षाख्यपुरुषार्थस्य प्राप्तिरेव न किंत्वैहिकस्यापीतीममर्थं प्रतिपादयत्यस्मिन्नध्याये । तत्रादौ देवानां स्वलोकगमनं हरेर्ध्रुवनयात्रां च वक्ति त एवमिति । सहस्रशीर्षा श्रीवासुदेवः "गरुत्मान् गरुडस्तार्क्ष्य" इत्यभिधानम् ॥ २ ॥ ❀ ❀ ध्रुवस्य हरिदर्शनप्रकारं वक्ति स वा इति । योगपरिपाकेन ध्यानपरिणत्या तीव्रया स्वत एव भगवदुन्मुख्या । तदवस्थं हृत्पद्मकोशे याऽवस्था तया विशिष्टम् ॥ २ ॥ ❀ ❀ गुरूक्तगुणानुपसंहृत्य भगवदुपाप्तौ सक्तस्य ध्रुवस्य किं पुनर्वन्दनादाविति भावेन तत्प्रावण्यप्रकारमाह तद्दर्शनेति । आगतसाध्वसः प्राप्तसंभ्रमः बालस्वभावं दर्शयन्निव भक्त्यतिशयमाह दृग्भ्यामिति ॥ ३ ॥ ❀ ❀ भक्तानुकम्पित्वं प्रकटयतो हरेस्तदनुग्रहविशेषमाह स तमिति । विवक्षन्तं स्तुतिरूपां वाचं वक्तुकामं न तद् ब्रह्मतत्त्वं वेत्तीत्यतत्त्ववित्तं ब्रह्ममयेन वेदमयेन 'पाञ्चजन्यो वा एष आम्नाय उदि'ति श्रुतेः कम्बुना पाञ्चजन्याख्यशङ्खेन ॥ ४ ॥ ❀ ❀ तत्फलमाह स वा इति । स वै सोऽपि । या गीः पूर्वमज्ञाता तां गिरं दैवीं देवेषु सर्वेषु देवेषु गुणैर्द्योतमानस्तद्विषयां

गिरमुपलब्धिफलमाह परिज्ञातेति । यावत्स्वयोग्यं परितो ज्ञातः परमात्मनस्तत्त्वनिर्णयो येन स तथोक्तः तद्भक्त्या भावो रोमाञ्चादिक्रियाविशेषो यस्य तथोक्तः "भावो लीला क्रिया चे"ति यादवः, असत्वरमिति क्रियाविशेषणं यथा स्खलितं न भवति अनेन संभ्रमलुप्तादिबालवचनस्वभावं व्यावर्त्तयति अत्वरया सह वर्तत इत्यसत्वरस्तमिति भगवद्विशेषणं वा परिश्रुतं व्याप्तमुरु बृहत् श्रवणमङ्गलं श्रवो यशो यस्य स तथा तं ध्रुवा नित्या क्षितिर्वैकुण्ठादिस्थानं यस्य स तथा तं ध्रुवः क्षितिमिति वा पाठः, क्षि-निवासगत्योरिति धातोः क्षितिं गतिमित्यर्थः ॥ ५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सहस्रशीर्षेति ध्रुवलोकाधिष्ठातुस्तदभेदात् ॥ १ ॥ ❀ ❀ तडित्प्रभं यथा स्यात्तथा सहसैव तिरोहितम् ॥ २ ॥ ❀ ❀ प्रपिबन्निवेत्यादिसर्वात्मावेशमात्रतात्पर्यकम् । यद्वा यथा प्रपश्यन् प्रपिबन्निवेत्यत्र प्रदर्शनमेव प्रपानत्वेनोत्प्रेक्षते । तथा वास्तवार्थमोष्ठस्पन्दनेन चुम्बनं तत्राञ्जलिबन्धार्थं बाहुद्वयघटनयालिङ्गनमपीति ज्ञेयम् । भुजेन वेति क्वचित् ॥ ३-४ ॥ ❀ ❀ दैवीं भगवद्विपयां निर्णयामीति । ध्रुवक्षितिमिति चित्सुखः ॥ ५-८ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

हरिस्तुतिर्वरप्राप्तिः स्वानुतापो गृहागमः । बन्धुभिर्मेलनं राज्यं ध्रुवस्य नवमेऽभवत् ॥

गर्भोदशायिना अभेदात् सहस्रशीर्षा तदानीन्तनोऽवतारः पृश्निगर्भो भागवतामृतादवगन्तव्यः ॥ १ ॥ ❀ ❀ स च गत्वा योगनिमीलिताक्षस्य ध्रुवस्यान्तःकरणं प्रविश्य दर्शनं दत्त्वा तत्रैव पुनरन्तर्द्धाय बहिस्तदग्रे तस्थावित्याह स वा इति । ध्यानयोगस्य परिपाकेन तीव्रया धिया हृदि सहसैव स्फुरितं तडित्प्रभं यथा स्यात्तथा तिरोहितञ्च उपलक्ष्य स्वसमीप एव दृष्ट्वा लब्धनष्टधन इव व्याकुलो भग्नसमाधिरुद्घाटितनेत्रस्तदवस्थं स्थितं तं बहिर्ददर्श ॥ २ ॥ ❀ ❀ आगतसाध्वसो जातानन्द-सम्भ्रमः दृग्भ्यां मुखारविन्दमाधुर्यं प्रपिबन्निव प्रपश्यन् आस्येन चरणारविन्दमाधुर्यं चुम्बन्निव अवन्दत भुजाभ्यामाश्लिष्यन्निव चरणाङ्गुलिशिखरान् पस्पर्श । बहुवचनेन भुजयोर्व्यापारबाहुल्यं लक्षयित्वा आनन्दकम्पो ध्वनितः ॥ ३ ॥ ❀ ❀ विवक्षन्तं तद्गुणान् वक्तुमिच्छन्तम् । अथ च अतद्विदं व्याकरणाद्यज्ञानात् संस्कृतं प्रयोक्तुमशक्नुवन्तं ज्ञात्वेत्यत्र हेतुः । अस्पृशेत्यादि ब्रह्ममयेन वेदात्मकेन शङ्खेन ॥ ४ ॥ ❀ ❀ प्रतिपद्य प्राप्य प्रतिपादितामिति पाठे प्राप्येति शेषः । परिज्ञातः परात्मनोरीश्वरजीवयो-र्निर्णयो येन सः । भक्तावेव न तु सांख्ययोगादिषु भावोऽभिप्रायः स्वभावो वा यस्य सः । असत्वरं स्थैर्यमालम्ब्य परिश्रुतोरु-श्रवसं विख्यातबहुयशसम् । ध्रुवा प्रलयेऽप्यनश्वरा क्षितिः स्थानं यस्येति भाविसूचनम् ॥ ५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

नवमे ध्रुवस्य भगवद्दर्शनादिकं वर्णयितुमाह ते इति । उत्सन्नं निवृत्तं भयं येषां ते कृतः प्रणामो यैस्ते ततस्तद्गमना-नन्तरमेव भृत्यदिदृक्षयागत इत्यनेन भगवतोऽपि स्वभृत्यदर्शनायौत्सुक्यं सूच्यते । मधोर्वनमागत इत्यनेन व्यापकस्यापि भगवतो दूरत्वनिकटत्वगमनार्हत्वसर्वज्ञत्वादयोऽचिन्त्या गुणाः द्योतिताः ॥ १ ॥ ❀ ❀ योगस्य भगवद्ध्यानस्य विपाकेन सौष्ठवेन तीव्रया भगवत्स्वरूपगुणादिग्रहणे कुशलया पूर्वं हृत्पद्मकोशे स्फुरितं पुनः सहसैव तिरोहितमालक्ष्य पुनस्तदवस्थं यथा हृत्पद्मे दृष्टं तथैव बहिः स्थितं ददर्श । तडित्प्रभमित्यनेन हृत्पद्मे बहिश्चेत् स्वविग्रहस्यैव भगवतो व्यापकस्यैव स्वेच्छयाविर्भावतिरोभाव-शक्तिर्द्योत्यते ॥ २ ॥ ❀ ❀ तस्य भगवतो दर्शनेन आगतसाध्वस उत्पन्नसंभ्रमः अङ्गं श्रीविग्रहं दृग्भ्यां प्रपश्यन् प्रपिबन्निव आस्येन चुम्बन्निव भुजैराश्लिषन्निव स्वकीयमङ्गं क्षितौ विनमय्यावन्दतेत्यन्वयः । दृग्भ्यां प्रपिबन्नित्यादिना भगवन्मूर्तेर्मनोनयनादिभ्यः सर्वेभ्योऽत्यन्तानन्दप्रदत्वमुक्तम् ॥ ३ ॥ ❀ ❀ विवक्षन्तं स्तुतिं कर्तुमिच्छन्तम् । ब्रह्ममयेन आत्मानात्मपरमात्मादिस्वरूपगुणादि-याथात्म्यबोधकवेदमूर्तिना ॥ ४ ॥ ❀ ❀ यः श्रीनारदेन भगवद्दर्शने वेदवाणीधारणार्हः कृतः सः दैवीं देवस्य विष्णोर्निश्वासभूतां वेदरूपां प्रतिपद्य प्राप्य अतो हि श्रीनारदेन संक्षेपतः प्रबोधितोऽपि वेदलम्भनानन्तरं परितः सर्वतो यथेष्टं ज्ञातः परस्य परमात्मनः आत्मनो जीवस्य निर्णयो येन सः, अत एव भक्त्या भावः प्रेम यस्य सः उभयस्वरूपादिज्ञानाभावे भक्त्यभावेन परमात्मभावा-पत्तिलक्षणमुक्त्यभावः उभयस्वरूपादिनिर्णयविस्तरः श्रीवेदान्तकौस्तुभे वेदान्तरत्नमञ्जूषादिषु च द्रष्टव्यः । ध्रुवा कर्मकालादिभि-रन्यथा कर्तुमशक्या क्षितिर्वैकुण्ठाख्यं स्थानं यस्य सः परितः श्रुतं विख्यातमुर्वगाधं श्रवः कीर्त्तिर्यस्य तम् अभ्यगृणात् तुष्टाव द्वादशभिः ॥ ४ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

हरिं स्तुत्वा वरान् लब्ध्वा पुरमागत्य वै ध्रुवः । नवमे प्राप्तवान् राज्यं पितुरेतत्प्रकीर्त्यते ॥ १ ॥

एवं तपश्चर्यादिसाधनं निरूप्य तत्साध्यं भगवत्प्रसादं निरूपयन्नादौ तदागमनमाह—त इति । त इन्द्रादयो लोकपाला एवं भगद्वाक्यश्रवणेन उत्सन्नभयाः उत्सन्नं गतं भयं येषां ते तस्मिन् उरुक्रमे उरवो बहवः क्रमा गतयो लीलाप्रकारा भक्तरक्षादि-

प्रकाराश्च यस्य तस्मिन् कृतावनामाः सन्तः त्रिविष्टपं स्वर्गं ययुः। ततस्तदनन्तरमेव सहस्रशीर्षा भगवानपि भृत्यस्य स्वसेवकस्य ध्रुवस्य दिदृक्षया गरुत्मता गरुडेन मधोर्वनमागतः। गरुडो हि कालात्मा स चेत्तस्मिन् स्वप्रसादं द्रक्ष्यति तदा तं न ग्रसिष्यतीत्यभिप्रायेण सोपि सहानीत इति ज्ञेयम्॥ १॥ ❁ ❁ स वै ध्रुवो योगविपाकेन प्राणायामादिदार्ढ्येन तीव्रया निश्चलया धिया भगवन्तं पश्यन् यदैनं स्वमनोरथपूरणायागतमपि भगवन्तं न ददर्श तदा तस्य सर्वकार्यं तु बहिष्ठेनैव रूपेण सेत्स्यतीत्यन्तःस्थितौ प्रयोजनाभावात् तडित्प्रभं हृत्पद्मकोशे स्फुरितमपि रूपं झटिति तिरस्कृतवांस्तदा सहसैव तदपि रूपं तिरोहितमुपलक्ष्य व्युत्थितः संस्तदवस्थं यादृशमन्तः स्फुरितं तादृशं रूपं बहिः स्थितं ददर्श॥ २॥ ❁ ❁ तस्य भगवतो दर्शनेन आगतः प्राप्तः साध्वसः संभ्रमो यस्य सोऽर्भको बालो ध्रुवः अङ्गं शरीरं क्षितौ दण्डवद्विनमय्य आनतं कृत्वा अवन्दतेत्यन्वयः। संभ्रममेव दर्शयति—दृग्भ्यामित्यादिना। प्रपश्यन् दृग्भ्यां प्रपिबन्निव लक्षितः। आस्येन मुखेन चुम्बन्निव लक्षितः। भुजैराश्लिषन्निव च लक्षित इत्यर्थः। अनेन संभ्रमेण ध्रुवस्य भगवति प्रेमातिशयो दर्शितः॥ ३॥ ❁ ❁ भगवतोपि तस्मिन् कृपातिरेकं दर्शयति स तमिति। हरिस्तं ध्रुवं कृताञ्जलिं विवक्षन्तं स्वगुणान् वक्तुमिच्छन्तं तथापि बालकत्वादतद्विदं तान् स्वगुणान् अजानन्तं ज्ञात्वा तस्य सामर्थ्यसिद्धये ब्रह्ममयेन वेदात्मकेन कम्बुना शङ्खेन कृपया कपोले पस्पर्शेत्यन्वयः। ननु कथं तस्य स्वस्तुताविच्छा तत्रासामर्थ्यं च भगवता ज्ञातं न ह्यन्यस्येच्छादिभाषणं विनान्येन ज्ञातुं शक्यते इत्याशङ्क्य नहि ध्रुवस्यैवेच्छादि स ज्ञातवान्, किंतु सर्वस्यैव जानाति सर्वान्तर्यामित्वादित्याह—अस्येति। अस्य ध्रुवस्य सर्वस्य च जगतो हृद्यवस्थित इत्यर्थः॥ ४॥ ❁ ❁ प्रकृतोपयोगिस्पर्शफलमाह—स वा इति। स वै ध्रुवस्तदैव शङ्खस्पर्शक्षण एव या गीः पूर्वं नासीत्तां दैवीं देवः सर्वात्मना क्रीडमानो द्योतमानो वा भगवांस्तद्विषयां गिरं प्रतिपद्य परितो ज्ञातः परात्मनो निर्णयो येन सः। अत एव भक्त्या प्रेम्णा भावो मुखविकासरोमाञ्चादिविक्रियाविशेषो यस्य सः। ध्रुवा क्षितिः स्थानं यस्य सः। स्तुतिसमये स्थानप्राप्तेर्भावित्वेपि मैत्रेयकथनसमये भूतत्वात्तथा निर्देशः। असत्वरं यथा भवति तथेति क्रियाविशेषणम्। तेन स्खलनादिबालवचनस्वभावदोषं व्यावर्त्तयति। यद्वा कृपावशात्त्वरया रहितमिति भगवद्विशेषणम्। परितः श्रुतं व्याप्तमुरु बृहत् श्रवः यशो यस्य तं भगवन्तमभ्यगृणात् तुष्टावेत्यर्थः॥ ५॥

### भाषानुवादः

### ध्रुवका वर पाकर घर लौटना

श्रीमैत्रेयजी कहते हैं—विदुरजी! भगवान्‌के इस प्रकार आश्वासन देनेसे देवताओंका भय जाता रहा और वे उन्हें प्रणाम करके स्वर्गलोकको चले गये। तदनन्तर विराट्स्वरूप भगवान् गरुडपर चढ़कर अपने भक्तको देखनेके लिये मधुवनमें आये॥ १॥ ❁ ❁ उस समय ध्रुवजी तीव्र योगाभ्याससे एकाग्र हुई बुद्धिके द्वारा भगवान्‌की बिजलीके समान देदीप्यमान जिस मूर्तिका अपने हृदयकमलमें ध्यान कर रहे थे, वह सहसा विलीन हो गयी। इससे घबराकर उन्होंने ज्यों ही नेत्र खोले कि भगवान्‌के उसी रूपको बाहर अपने सामने खड़ा देखा॥ २॥ ❁ ❁ प्रभुका दर्शन पा कर बालक ध्रुवको बड़ा कुतूहल हुआ, वे प्रेममें अधीर हो गये, उन्होंने पृथ्वीपर दण्डके समान लोटकर उन्हें प्रणाम किया। फिर वे इस प्रकार प्रेमभरी दृष्टिसे उनकी ओर देखने लगे मानो नेत्रोंसे उन्हें पी जायँगे, मुखसे चूम लेंगे और भुजाओंमें कस लेंगे॥ ३॥ ❁ ❁ वे हाथ जोड़ प्रभुके सामने खड़े थे और उनकी स्तुति करना चाहते थे, परन्तु किस प्रकार करें—यह नहीं जानते थे। सर्वान्तर्यामी हरि उनके मनकी बात जान गये; उन्होंने कृपापूर्वक अपने वेदमय शङ्खको उनके गालसे छुआ दिया॥ ४॥ ❁ ❁ ध्रुवजी भविष्यमें अविचल पद प्राप्त करनेवाले थे। इस समय शङ्खका स्पर्श होते ही उन्हें वेदमयी दिव्यवाणी प्राप्त हो गयी और जीव तथा ब्रह्मके स्वरूपका भी निश्चय हो गया। वे अत्यन्त भक्तिभावसे धैर्यपूर्वक विश्वविख्यात कीर्तिमान् श्रीहरिकी स्तुति करने लगे॥ ५॥

### ध्रुव उवाच

योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां संजीवयत्यखिलशक्तिधरः स्वधाम्ना।
अन्यांश्च हस्तचरणश्रवणत्वगादीन् प्राणान्नमो भगवते पुरुषाय तुभ्यम्॥ ६॥

एकस्त्वमेव भगवन्निदमात्मशक्त्या मायाख्ययोरुगुणया महदाद्यशेषम्।
सृष्ट्वानुविश्य पुरुषस्तदसद्गुणेषु नानेव दारुषु विभावसुवद्विभासि॥ ७॥

त्वद्दत्तया वयुनयेदमचष्ट विश्वं सुप्तप्रबुद्ध इव नाथ भवत्प्रपन्नः।
तस्यापवर्ग्यशरणं तव पादमूलं विस्मर्यते कृतविदा कथमार्तबन्धो॥ ८॥

नूनं विमुष्टमतयस्तव मायया ते ये त्वां भवाप्ययविमोक्षणमन्यहेतोः।

अर्चन्ति कल्पकतरुं कुणपोपभोग्यमिच्छन्ति यत्स्पर्शजं निरयेऽपि नृणाम् ॥ ९ ॥
या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणेन वा स्यात् ।
सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत् किंत्वन्तकासिलुलितात्पततां विमानात् ॥ १० ॥
भक्तिं मुहुः प्रवहतां त्वयि मे प्रसङ्गो भूयादनन्त महताममलाशयानाम् ।
येनाञ्जसोल्बणमुरुव्यसनं भवाब्धिं नेष्ये भवद्गुणकथामृतपानमत्तः ॥ ११ ॥
ते न स्मरन्त्यतितरां प्रियमीश मर्त्यं ये चान्वदः सुतसुहृद्गृहवित्तदाराः ।
ये त्वब्जनाभ भवदीयपदारविन्दसौगन्ध्यलुब्धहृदयेषु कृतप्रसङ्गाः ॥ १२ ॥

अन्वयः—अखिलशक्तिधरः यः स्वधाम्ना अन्तः प्रविश्य मम इमाम् प्रसुप्ताम् वाचम् च अन्यान् हस्तचरणश्रवणत्वगादीन् प्राणान् संजीवयति भगवते पुरुषाय तुभ्यम् नमः ॥ ६ ॥ ❁ ❁ भगवन् त्वम् एकः एव पुरुषः मायाख्यया उरुगुणया आत्मशक्त्या महदादि अशेषम् इदम् सृष्ट्वा दारुषु विभावसुवत् तदसद्गुणेषु अनुविश्य सुप्तनाना इव विभासि ॥ ७ ॥ ❁ ❁ नाथ भवत्प्रपन्नः त्वद्दत्तया वयुनया इदं विश्वम् प्रबुद्धः इव अचष्ट आर्तवन्धो कृतविदा तस्य तव आपवर्ग्यशरणम् पादमूलम् कथम् विस्मर्यते ॥ ८ ॥ ❁ ❁ यत् स्पर्शजम् नृणाम् निरये अपि तत् कुणपोपभोग्यम् सुखम् ये इच्छन्ति च भवाप्ययविमोक्षणम् कल्प कतरुम् त्वाम् अन्यहेतोः अर्चन्ति ते तव मायया नूनम् विमुष्टमतयः सन्ति ॥ ९ ॥ ❁ ❁ नाथ या निर्वृतिः तनुभृताम् तव पादपद्मध्यानात् वा भवज्जनकथाश्रवणेन स्यात् सा स्वमहिमनि ब्रह्मणि अपि मा भूत् तु अन्तकासिलुलितात् विमानात् पतताम् किम् ॥ १० ॥ ❁ ❁ अनन्त त्वयि भक्तिम् प्रवहताम् अमलाशयानाम् महताम् प्रसङ्गः मुहुः मे भूयात् येन अञ्जसा उल्बणम् उरुव्यसनम् भवाब्धिम् भवद्गुणकथामृतपानमत्तः नेष्ये ॥ ११ ॥ ❁ ❁ अब्जनाभ ईश ये तु भवदीयपदारविन्दसौगन्ध्यलुब्धहृदयेषु ते अतितराम् प्रियम् मर्त्यम् न स्मरन्ति च ये सुतसुहृद्गृहवित्तदाराः अदः; अनु तान् अपि ॥ १२ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

ईशानुग्रहसंप्राप्तवागाद्यद्भुतवृत्तिभिः ॥ द्वादशादित्यसंकाशैः श्लोकैरस्तोद्धरिं ध्रुवः ॥ १ ॥

यो मम प्रसुप्तां लीनां वाचमन्यांश्च प्राणानिंद्रियाणि स्वधाम्ना चिच्छक्त्या संजीवयति यतः अखिलाश्चक्षुरादिज्ञानक्रियाशक्तीर्धारयतीति तथा पुरुषायांतर्यामिणे ॥ ६ ॥ ❁ ❁ ननु वागादींद्रियशक्तिधरा वह्न्यादयः प्रसिद्धा नाहमित्यत आह । एक इति । अनुविश्य पुरुषोंतर्यामी त्वमेक एव तस्या मायाया असत्सु गुणेष्विंद्रियादिषु स्थितः संस्तत्तद्देवतारूपो नानेव भासि । यतस्त्वद्व्यतिरेकेण ज्ञानक्रियाशक्तिधरो न कश्चिदस्तीत्यर्थः ॥ ७ ॥ ❁ ❁ अपि च किं वक्तव्यं वह्न्यादयो ज्ञानादिशक्तिधरा न भवंतीति यस्माद् ब्रह्मणोऽपि ज्ञानं त्वदधीनमेवेत्याह । त्वद्दत्तया वयुनया ज्ञानेन भवंतं शरणं प्रपन्नो ब्रह्मा इदं विश्वमचष्टापश्यत् । कथम् ? सुप्तः पुरुषः प्रबुद्धः सन्यथा पश्यति तद्वत् । अत आपवर्ग्या मुक्तास्तेषामपि शरणम् । कृतविदा सर्वेन्द्रियजीवनेन त्वत्कृतमुपकारं जानता कथं विस्मर्यते । एवंभूतं त्वामभजंतः कृतघ्ना इत्यर्थः ॥ ८ ॥ ❁ ❁ ये च मादृशाः कामाद्यर्थं भजंति तेऽतिमूढा इत्याह नूनमिति । भवाप्ययौ जन्ममरणे तद्विमोक्षे हेतुं त्वामन्यहेतोः कामाद्यर्थं ये भजंति ते नूनं विमुष्टमतयो वंचितचित्ताः यतस्ते कल्पतरुं त्वामर्चंति ततः कुणपतुल्येन शवतुल्येन देहेनोपभोग्यं सुखमिच्छंति न चेच्छायोग्यं तदित्याह । यत्स्पर्शजं विषयसंबंधजन्यं सुखं तन्नरके[1]ऽपि भवति ॥ ९ ॥ ननु स्वर्गादिसुखं सकामैः प्राप्यते निष्कामभजने तु तन्न स्यादित्यत आह येति । स्वमहिमनि निजानंदरूपेऽपि मा भूत् न भवतीत्यर्थः । अंतकस्यासिना शस्त्ररूपेण कालेन लुलितात्खंडिताद्विमानात्पततां सा नास्तीति किमु वक्तव्यम् ॥ १० ॥ ❁ ❁ अतस्ते ;कथाश्रवणाय सत्संगतिं देहीत्याह । भक्तिं त्वयि प्रवहतां सातत्येन कुर्वताम् । ननु मोक्षं किं न याचसेऽत आह । येन महत्प्रसंगेनांजसा अयत्नत एवोरूणि व्यसनानि यस्मिंस्तम् । नेष्ये पारं गमिष्यामि भवद्गुणकथैवामृतं तस्य पानेन मत्तः सन् ॥ ११ ॥ ❁ ❁ कथामृतपानस्य मादकत्वमाह । तेऽतितरां प्रियमपि मर्त्यं देहं न स्मरंति नानुसंदधते ये च सुतादयः अदः मर्त्यमनुसंबद्धास्तानपि । के ते न स्मरंति ये कृतप्रसंगाः । केषु भवदीयपदारविंदसौगंध्ये लुब्धं हृदयं येषां तेषु । तुशब्देनान्येषां केवलयोगादिनिष्ठानां देहाद्यभिमानानिवृत्तिं दर्शयति ॥ १२ ॥

---

१. प्रा॰ पा॰—नरके ।

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

"भगवद्दत्तवेदार्थज्ञानस्तुष्टाव यद्ध्रुवः। वेदार्थो हि स एवेति नात्र संशेरते बुधाः" अकस्मादेव स्वीयवागादिसर्वेंद्रियाणां भगवदुन्मुखीभावमालक्ष्यैषामीदृशमप्राकृतत्वं श्रीभगवत्कृतमिति जानन्स स्वस्मिन्भगवतो निरुपमां निरुपाधिकां तां कृपामेव साक्षादनुभवन्निति विस्मयेन नमस्यति–य इति। मम त्वद्दासस्येमां वैखरीं नाम वाचं त्वत्स्वरूपगुणलीलादिकमेव वर्णयित्रीम्। इदंशब्देन वैखरीग्रहणं तु "तुरीयां वाचं मनुष्या वदंति" इति श्रुतेरेव ध्वनितम्। तुरीयां परापश्यंतीमध्यमावैखरीति चतुःसंख्यासु वाक्षु चतुर्थीम्। प्रसुप्तामेव तत्कालपर्यंतं सुप्तेव स्थितां मृतामिव संजीवयति या तु स्वीयान्नपानादिप्रकृतभोगवार्तां विषयीकुर्वती जाग्रत्येव वागासीत्तामत आरभ्य शाययति स्म नाशयति स्मेति भावः। न केवलं वागिंद्रियमेवापि त्वन्यानपि त्वत्परिचर्य्यादिकं विषयीकरिष्णून्प्राणांश्च त्वदुन्मुखानिति ध्रुवस्येंद्रियादीनां चिन्मयत्वेनाप्राकृतत्वं सद्योजातमिति सूचितम्। अत्र ममेतीमामिति विशेषाभ्यां वागादींद्रियाणि विशिष्टान्येवोपलभ्यंते "असुप्तः सुप्तानभिचाकशीति" इति श्रुतिरीशस्येंद्रियादिप्रबोधने मानं "ब्रह्मणो वा एतानि करणानि" इति श्रुतिश्च ब्रह्मणः सकाशादेतानींद्रियाण्यवाप्तचेष्टानीत्यर्थः॥ ६॥ ❁ ❁ इत्यर्थ इति। "योध्यात्मिकोयं पुरुषः सोऽसावेवाधिदैविकः" इत्युक्तेरिति भावः। अत्र विश्वनाथः–त्वद्भक्तानामिन्द्रियाणि त्वत्प्रसादात्त्वामेव विषयीकुर्वन्ति त्वन्मयान्यप्राकृतान्येव भवंति। अन्येषाञ्च तानि मायामेव विषयीकुर्वन्ति मायामयान्येवेति। स्वधाम्नेति मायाख्येति पदाभ्यां सिद्धांतो ध्वनित इत्याह॥ ७॥ ❁ ❁ यतस्त्वद्दत्तज्ञानेनैव सर्वेन्द्रियप्रबोधो भवेदतो हेतोः। इत्यर्थ इति। त्वत्प्रसादावाप्तसर्वेंद्रियशक्तयो यदि त्वां न भजंति तदा ते कृतघ्नशिरोमणय एवेति भावः। नाथेति। त्वमेव सर्वैश्वर्यदोसीत्याह। आर्त्तस्य भक्तस्य बंधो इति, एवञ्च ज्ञानिभक्तो जिज्ञासुभक्त आर्त्तभक्तश्चेति त्रयो गीतोपनिषदुक्ता भक्ता व्याख्याताः॥ ८॥ ❁ ❁ यश्चतुर्थोर्थार्थी मद्विधो भक्तः स त्वतिनिकृष्टो मूढ इत्याह–नूनमिति। ततः कल्पतरोः कुणपो मृतदेहस्तत्सदृशेन "कुणपः शवदुर्गंध्योः" इति मेदिनी। तद्द्वारा भोगं च दक्षिणस्यां दिशि कुरुक्षेत्रादौ श्मशानवृत्तिकब्रह्मबंधुषु महादक्षिणालोभेन शवहस्ते बद्धब्रह्वर्वीकृतपायसादिभोजनेन प्रसिद्धमिति नरकेपि तत्तुल्यशूकरादियोनावपि तथा च तन्नेच्छायोग्यमिति भावः॥ ९॥ ❁ ❁ अत्राक्षिपति नन्विति। इत्यर्थ इति। इह लडर्थे लुङ् "माङि लुङ्" इति सर्वलकारविषये लुङो विधानादिति भावः। अत्र विश्वनाथः–ननु तर्हि भवाप्ययविमोक्षणमित्युक्त्या ब्रह्मसायुज्यमेवार्चनफलं ब्रूषे तस्यैव कुणपोपभोग्यत्वाभावात्तदिच्छंत एव भवन्मतेऽभिज्ञास्तत्र नहि नहि इत्याह–येति। ध्यानादित्युपलक्षणं श्रवणादेरपि श्रवणेनेत्युपलक्षणं ध्यानादेरपि, सा निर्वृतिः स्वस्य महिमरूपे ब्रह्मणि ब्रह्मानंदेपि मा भून्न भवति। महतो भावो महिमा त्वं महांस्तत्तु तव महत्त्वं सर्वव्यापकत्वलक्षणो धर्म एवेति त्वन्निष्ठा यावती निर्वृतिस्तावती तत्र कथं वर्ततामिति भावः। "मदीयं महिमानं च परं ब्रह्मेति शब्दितम्" इति मत्स्यदेवोक्त्यापि ब्रह्मणो भगवन्महिमत्वमवगतं ततश्चांतकासीति. स्वामिचरणैर्व्याख्यातमेव। विमानात्स्वर्गीयात् ततश्च स्वर्गापवर्गाभ्यामन्यस्य कस्यापि फलत्वाश्रवणात् त्वद्भक्तेर्वास्तवं फलं त्वद्भक्तिरेवेति भक्तेः स्वतः फलत्वं भक्तानां च निष्कामत्वमुपपादितम्॥ १०॥ ❁ ❁ सा च श्रवणकीर्तनादिमयी भक्तिः। सत्संगं विना न सुरसीभवतीति सत्संगं प्रार्थयते अत इति। यतश्श्रवणादिभक्तिरेव मुख्यातो हेतोः अत्राशंकते तर्हि संसाराब्धेर्भयं ते स्यास्यत्येवातो मोक्षं वरयेति चेत्साटोपं सभुजास्फोटं चाह–येनेति। नेष्ये ग्रहीष्यामि स यदि ममाभिमुखमभ्येति तदारात्तु द्रक्ष्यामि किं मे कर्तुं शक्नुयादिति भावः। किं चामृतं पिबंतं मृत्युरपि स्प्रष्टुं न शक्नोतीति तथा स्पर्द्धावज्ञाद्वेषादयश्च तं न व्यथयितुं शक्नुवंतीति भावः। अत्र सत्संगोत्थया भक्त्या भगवंतं साक्षात्कृत्यापि पुनः सत्संगस्य प्रार्थनाद्भक्तिकारणमपि भक्तिफलमपि भक्तिरपि सत्संग इति भक्तानां मतं व्यंजितम्॥११॥ ❁ ❁ ननु तदप्यहंतास्पदममतास्पदयोर्विद्यमानत्वे खलु द्वेषो दुर्वार इत्यत आह–त इति। भक्तानां निष्कामत्वद्योतकः स्वभाव एव वस्तुतस्तु "कथमनुवर्त्ततां भवभयं तव यद्भ्रुकुटिः सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयम्" इति। "जरयत्याशु या कोशं निगीर्णमनलो यथा" इत्यादेरननुसंहितं भक्तेः फलं संसारनिवृत्तिरस्त्येव॥ १२॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

वागाद्यद्भुतवृत्तिभिरिति। अद्भुतत्वमत्राप्राकृतत्वमेवात एव मृत्योः कृत्वैव मूर्ध्न्यङ्घ्रिमारुरोह हरेः पदमित्युक्तम्। आदित्यसंकाशत्वं भगवदादिसर्वप्रकाशकत्वान्निर्णायकत्वाच्च वह्न्यादित्यादेयमन्तरा सर्वप्रकाशः मण्यादिपरीक्षानिर्णयश्च स्यादिति चिच्छक्त्या संजीवयतीत्युक्त्या वागादीनामपि स्पर्शमणिन्यायेन चिदात्मकत्वं व्यज्यते॥ ६॥ ❁ ❁ तत्तद्देवतानां तत्तटस्थशक्त्यात्मकत्वात्तद्व्याप्यत्वात्तन्नियम्यत्वात्तत्तद्देवतारूप इति माध्वाः "यस्य पृथिवी शरीरमि"त्यादि श्रुतेः तत्तद्देवतानामपि तच्छरीरत्वं शरीरवाचकाश्च शब्दाः शरीरिपर्य्यन्तधावका एव, व्यक्तिपर्य्यन्तधावकत्वं यथा जातिवाचकानामिति श्रीरामानुजीयाः। तत्तद्देवतानां तस्मिन्नेव कल्पितत्वात् बाधितसामानाधिकरण्यं श्रीस्वामिव्याख्या तु सर्वानुगतेति यथारुचि ग्राह्यमिति॥ ७॥ ❁ ❁ ज्ञानादीत्यादिना क्रियाशक्तिपरिग्रहः। यस्माद्धेतोः अतः ब्रह्मादिसर्वज्ञानस्य त्वदधीनत्वात् मुक्ता जीवन्मुक्ताश्च तेषामपि शरणं रक्षकमाश्रयणीयं च, तत्र जीवन्मुक्तानां शरणं "जीवन्मुक्ताः प्रपद्यन्ते पुनः संसारवासनाम्। यद्यचिन्त्यमहाशक्तौ भगवत्य-

पराधिनः ॥" इति वासनाभाष्योक्तेः तद्भजनमन्तरा तेषां पुनः संसारश्रवणात् विदेहमुक्तानामप्याश्रयणीयं, मुक्ता अपि लीलया विग्रहं कृत्वा भजन्त इति भाष्योक्तेरेव ॥ ८ ॥ ❀ ❀ ततोऽर्चनात् तत् विषयसुखम् ॥ ९ ॥ ❀ ❀ निजानन्दरूपेऽपि असाधारणानन्दमात्रे विशेषे असम्यगाविर्भावरूपे ब्रह्मण्यपि न भवतीति लकारव्यत्ययादित्यर्थोक्तिः । एवमानन्दतारतम्यस्य बहुत्रोपपादनाच्छ्रीविग्रहस्य तत्कथादेश्च घनानन्दमयत्वं निरुपाधिकत्वमभिव्यज्यते । अत एवैषां पद्यानां सम्यक् तत्त्वनिर्द्धारकत्वेनादित्यरूपत्वं स्वामिभिरुक्तमिति ज्ञेयम् ॥ १० ॥ ❀ ❀ अतः ब्रह्मानन्दादपि कथानन्दस्य वैशिष्ट्यात् । ननु भवत्वानन्दवैशिष्ट्यं संसारान्मुक्तिस्तु न स्यादिति मोक्षं किं न याचसे इति पूरयित्वा शङ्काग्रन्थो व्याख्येयः । पानमत्त इत्यत्रै तदुक्तं भवति यथा मधुपानासक्तानां तदास्वादनमेव मुख्यं फलं शीतादितरणं चानुषङ्गिकं तथा गुणकथासुधापानरसिकानां निरन्तरं तत्पानमेव मुख्यं फलं मोक्षादिकन्तु नान्तरीयकं स्वत एव सिद्धत्वादिति ॥ ११ ॥ ❀ ❀ अन्येषां कथामृतविमुखानाम् ॥ १२ ॥

### श्रीमद्वीरराघवव्याख्या

तत्र स्वकीयवागीन्द्रियसंजीवयितृत्वेन स्वानुभवसिद्धेन ज्ञानप्रदं चिदचिच्छरीरं निखिलजगदेककारणं निरस्तनिखिलहेयगन्धं मुक्त्यपायत्वमुक्तिप्रदत्वाश्रितदुरितौघनिवर्त्तकत्वनिरतिशययशःसम्पन्नत्वनिरतिशयानन्दत्वाद्यपरिमितोदारगुणसागरत्वेन भगवन्तं पञ्चभिः प्रस्तुत्य तस्मिन्स्वमनःप्रावण्यमेकेन संप्रार्थ्य तत्पदारविन्दध्यानासक्त्यै चित्तस्य देहतदनुबन्धिहेतुकसुखदुःखाद्यननुभूतिमेकेनाभिध्याय ततः साधुपरित्राणाय स्वेच्छोपात्ताप्राकृतदिव्यमङ्गलविग्रहपरत्वेन शङ्कितब्रह्मादिदेवतानामपि कारणभूतं स्वावतारेण साक्षाज्जगदवितारं त्रिभिः प्रस्तुत्यैकेन तं शरणमागत्य पुरुषार्थमूर्तेस्तस्य भजनादाशिषां सत्यतां वदन् निरतिशयवात्सल्यमेकेन स्तौति य इति द्वादशभिः । तत्र तावद्वागादीन्द्रियसंजीवयितृत्वेन स्वस्मै निदर्शितेन ज्ञानप्रदत्वं निश्चिन्वन्नमस्करोति । य इति यो भगवान्प्रसुप्तां स्वकार्याक्षमां इमां तु प्रवृत्तां मे स्तोतृकामस्य मम वाचं वागीन्द्रियमन्तः प्रविश्य संकल्परूपज्ञानेनात्रानुप्रवेश उच्यते पूर्वमेव प्रविष्टत्वात् संजीवयति तत्र हेतुः अखिलशक्तिधरः अघटितघटनादिसर्वशक्तेस्तवेदमुपपन्नमिति भावः, तथा स्वधाम्नः स्वधामभूतान् स्वशरीरभूतानिति यावत् । तृतीयान्तपाठे स्वधाम्ना स्वकीयसंकल्परूपेण ज्ञानेनान्तः प्रविश्येत्यन्वयः । हस्तचरणश्रवणत्वगादीन् हस्तचरणग्रहणं पायूपस्थयोः कर्मेन्द्रिययोरुपलक्षणं श्रवणत्वग्ग्रहणमवशिष्टज्ञानेन्द्रियाणाम् , आदिशब्देनान्तःकरणचतुष्टयाधिष्ठातृदेवतासंग्रहः अन्यान्प्राणान् इन्द्रियाणि संजीवयति तस्मै भगवते पूर्णषाड्गुण्यमूर्तये पुरुषाय पुरुषान्तर्यामिणे अनेन जीवान्तर्यामित्वमुक्तं पूर्वमचिदन्तर्यामित्वकथनात् तुभ्यं नमः कृत्स्नचिदचिदन्तरात्मत्वेन तत्सञ्जीवयितृत्वेन ज्ञानप्रदत्वं त्वय्येवोपपन्नमिति भावः ॥ ६ ॥ ❀ ❀ ननु "तत्सृष्ट्वा तदेवानुप्राविशत्, अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति जगत्स्रष्टुरेवानुप्रवेशश्रवणात् नाहंचिदचिदन्तरात्मेत्यत्र जगत्स्रष्टापि त्वमेवेत्याह एक इति । हे भगवन् ! इदं परिदृश्यमानं महदादिसमष्टिव्यष्ट्यात्मकमशेषं सर्वं जगत् उरुगुणया विविधपरिणामक्षमसत्त्वादिगुणया आत्मशक्त्यात्मनः स्वस्य संबन्धिन्या शक्त्या कार्योपयोग्यपृथक्सिद्धिविशेषणभूतया मायाख्यया प्रकृत्या सृष्ट्वा सदसद्गुणेषु कार्यकारणभूतेषु सत्त्वादिगुणमयपदार्थेषु पुरुषो जीवशरीरकः अनुविश्य त्वमेक एव सन् दारुषु ह्रस्वदीर्घऋजुवक्रादिभेदभिन्नेषु दारुषु विभावसुवदग्निवन्नानेव बह्वेव विभासि । अत्र विभावसुदृष्टान्तेन स्वशरीरभूतचिदचिद्गतगुणास्पर्शो विवक्षितः । इवशब्देन वस्तुत एकत्वं देवमनुष्यादिशरीरसंसृष्टजीवान्तरात्मकत्वकृतं बहुत्वमपि विवक्षितम् ॥ ७ ॥ ❀ ❀ एवं निखिलजगदेककारणत्वेन कृत्स्नचिदचिदन्तरात्मत्वेन निरस्तनिखिलदोषत्वेन च वागादीन्द्रियसंजीवयितृत्वात्तस्यैव ज्ञानप्रदत्वमुक्तं तदेव निदर्शयन् तस्यैव निरतिशयपुरुषार्थसाधनत्वेन भजनीयतामाह त्वद्दत्तयेति । त्वदीयया "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तमि"ति वदता त्वया दत्तया वयुनया ज्ञानेन स्त्रीत्वमार्षम् । हे नाथ ! भवन्तं प्रपन्नः शरणं गतो ब्रह्मा चतुर्मुखः सुप्तप्रबुद्ध इव पूर्वं सुप्तः पश्चात्प्रबुद्ध इव विश्वमचष्ट अपश्यत् । विश्वरचनोपयोगिज्ञानविधुरस्त्वत्प्रपत्त्या त्वद्दत्तज्ञानेनासृजदित्यर्थः । नात्र भूतार्थविवक्षा पश्यतीत्यर्थः । हे आर्तबंधो ! आर्तानां तापत्रयातुराणां बन्धो अपवर्गशरणं मुक्त्युयभावपवर्ग्यमिति पाठे स्वार्थे ष्यन् अपवर्गे भवमापवर्ग्यं सुखं तत्साधनमिति वा तव पादमूलं कृतविदा सर्वेन्द्रियोपजीवनेन ज्ञानप्रदत्वाद्युपकारज्ञेन कथं विस्मर्यते । एवं महोपकारिणं त्वामभजन्तः कृतघ्ना एवेत्यर्थः ॥ ८ ॥ ❀ ❀ तथा त्वां भजन्तोऽपि मादृशाः सकामा मन्दभाग्या एवेत्याह नूनमिति । कल्पकतरुं कल्पकतरुतुल्यम् आश्रिताभीष्टार्थप्रदत्वेन कल्पतरुतौल्यं विवक्षितं, ततो निरतिशयगुणवत्तामाह भवाप्ययविमोक्षणं भवो जन्म अप्ययो मरणं तयोर्मोक्षणं मोचनं यस्मात्तं यद्वा भवाप्ययौ विमोक्षयतीति ण्यन्तात्कर्तरि ल्युट् बाहुलकात् मुक्तिप्रदमित्यर्थः । एवंभूतं त्वां ये मादृशा लोकाः अन्यहेतोः अन्यस्य त्रिवर्गस्य हेतोः कारणात् भजन्ति ते जनास्तव मायया 'मम माया दुरत्यये'त्युक्तविधया विमुष्टमतयः अपहृतज्ञानाः नूनमिति निश्चये । कुतस्ते विमुष्टमतय इत्यत्राह । यद्यस्मात्स्पर्शजं विषयेन्द्रियसंबंधजमत एव वै निरया . त ! स्थानस्य परमात्मन इत्युक्तविधया नरकप्रायेऽपि संसारे नृणां कुणपोपभोग्यं कुणपेन शवतुल्येन शरीरेणोपभोग्यं सुखमिति शेषः, इच्छन्ति ॥ ९ ॥ ❀ ❀ ननु स्वर्गस्यापि सुखत्वप्रतिपत्तेः किं तदर्थं भजमानान् निन्दित्वा निष्कामान् प्रशंससीत्याशङ्कायां स्पर्शजस्याल्पास्थिरत्वान्निन्दामीत्यभिप्रेत्य किं वक्तव्यं निष्कामभक्तिसाध्यस्यापवर्गिकसुखस्य निरवधिकत्वात् न तेन स्पर्शजस्य साम्यमिति यतस्त्वच्चरणध्यानत्वद्भक्तजनकथाश्रवणजन्यसुखेनापि न कैवल्यमपि समानमिति कैमुत्यनयेनाह येति । तनुभृतां देहिनां तव चरणकमलध्यानात्

भवज्जना भागवतास्तेषां कथा श्रवणेन वा या निर्वृतिः सुखं स्यात्सा निर्वृतिः हे नाथ ! स्वमहिमन्यपि स्वाभाविकगुणाष्टकरूपमहिम्नि ब्रह्मणि शुद्धात्मन्यनुभूयमानेऽपि मा भून्नास्तीत्यर्थः । अन्तकासिलुलितान् अन्तकाख्यशस्त्रक्षतात् विमानात्पततां स्वर्गिणां निर्वृतिः स्यात्किं नास्त्येवेत्यर्थः ॥ १० ॥ ❀ ❀ एवं नित्यनिरतिशयानन्दसाधनभूतं त्वां क्षयिष्णुसातिशयाल्पसुखसाधनत्वेन भजन्तो मादृशा मन्दभाग्या एवेत्युक्त्वा स्वस्य सत्संगतिकथाश्रवणादिप्रणाड्या भक्तिमहैतुकीं प्रार्थयति भक्तिमिति । हे अनन्त ! देशकालवस्तुपरिच्छेदरहित ! त्वयि निरस्तनिखिलदोषसार्वज्ञ्यनिरतिशयानन्दत्वाद्यपरिमितोदारगुणसागरे त्वयि मुहुः पुनः पुनः निरन्तरमित्यर्थः । भक्तिं प्रवहतां कुर्वतामत एवामलः आशयोऽन्तःकरणं येषां महतामक्रोधाद्यात्मगुणयुक्तानां प्रसंगः प्रकृष्टः सङ्गः महतामिति संबंधमात्रे षष्ठी, महत्संबन्धिसंगमः महत्सुसंगम इत्यर्थः । मे स्यात् येन महत्संगेन हेतुना प्रवृत्ता या भवतो गुणकथा सैव मधु तस्य पानेन मत्तः तृप्तः निरस्ततापत्रय इत्यर्थः । उरुव्यसनम् अधिकदुःखं गर्भमत एवोल्बणं दुस्सहं नेष्ये तरामि ॥ ११ ॥ ❀ ❀ न केवलं सत्संगतेः कथाश्रवणादिप्रणाड्यापवर्गिकसुखसाधनत्वमेव किंतु जीवद्दशायामपि देहतदनुबन्धिनिमित्तसुखदुःखाद्यहेतुत्वमपीत्याह । त इति ! हे ईश ! मर्त्यं मरणशीलमपि अतितरां प्रियं शरीरं ये च अनुमर्त्यमनुसृत्य गच्छन्ति वर्त्तन्ते इत्यनुगाः सुतादयः तांस्तु ते जना न स्मरंति नाभिमन्यन्ते इत्यर्थः । के त इत्यत्राह । हे अब्जनाभ ये जना भवदीयपदारविन्दयोः यत्सौगंध्यं तेन तस्मिन् वा लुब्धं हृदयं येषां तेषु भागवतेषु कृतः प्रसंगो यैस्ते इत्यर्थः ॥ १२ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

यदीयं स्तुतिर्वेदसिद्धगुणानुरूपा तर्हि ब्रह्ममयेत्युक्तिः सफला स्यादित्यतस्तत्सिद्धैर्गुणैरभिष्टौति योऽन्तरिति । प्रसुप्तां निद्रितामिमां वैखरीं नाम वाचं संजीवयति संस्कारात्मना बोधयति अन्यान् हस्तादीन् प्राणानिन्द्रियाणि स्वस्वविषयाणि करोति तस्मै तुभ्यं नम इत्यन्वयः । असुप्तः सुप्तानभिचाकशीतीति श्रुतिः । ब्रह्मणा वा एतानि करणानीति च ॥ ६ ॥ ❀ ❀ पुरि शयनात्पुरुषश्रेष्ठपुराणां नानात्वाद्धरेरपि नानात्वेनाद्वितीयत्वभङ्ग इति तत्राह एकस्त्वमिति । एकस्यापि विभावसुवदग्निवन्नानात्वमविरुद्धमित्यर्थः । "तत् सृष्ट्वा तदेवानुप्राविशत् तदनु प्रविश्य सच्च त्यच्चाभवदि"ति श्रुतिः । तस्या असन्तोऽमङ्गला गुणाः सत्त्वादयो येषु महदादिषु ते तथा तेषु अनेन स्वगतभेदराहित्यं पुरुषशब्देन प्रवृत्तिनिमित्तं चोक्तं भवति पुरि शयनात्पुरुष इति एकमेवाद्वितीयमिति च ॥ ७ ॥ ❀ ❀ अस्मिन्नर्थे किं प्रमाणमत्राह त्वद्दत्तयेति । वयुनया ज्ञानेन कृतज्ञेन अनेन दातृदेययोर्हिभेदं दातुरेकत्वं विश्वस्य हर्यधीनत्वं च पश्यतो ज्ञानिनः प्रत्यक्षं प्रमाणमित्युक्तं भवति । अचष्टापश्यत् सोऽज्ञानाद्विमुक्तो ज्ञानी भवतीति श्रुतिं सूचयति । सुप्तः प्रबुद्ध इवेत्यनेनेति ॥ ८ ॥ ❀ ❀ भगवत्प्रसादादेव भगवद्विषयं ज्ञानं स्यात्तदेव विपक्षे बाधकप्रदर्शनेन द्रढयति । नूनमिति । ये अन्यस्य हेयत्वेनानित्यस्य सुखस्य हेतोर्भवाप्ययविमोक्षणं जननमरणात्मकसंसारमुक्तिदं कल्पकं तरुमिव भक्ताभीष्टदं त्वामर्चन्ति ते तव मायया बन्धकशक्त्या विमुष्टमतय इत्यन्वयः । विषयसुखं दुर्लभं चेत्कथं निन्द्यं स्यादित्यत उक्तं कुणपेति, निरयेपि सुलभमित्यर्थः । यच्छब्दो हेत्वर्थः ॥ ९ ॥ ❀ ❀ भवान् भगवत्प्रसाद एव प्रार्थनीय इति रोचयति तस्मात्किं फलं दृष्टं इति तत्राह । या निर्वृतिरिति । सा निर्वृतिः स्वमहिमनि अनन्याधारलक्षणमाहात्म्ये ब्रह्मणि परब्रह्मणि स्थितस्य जीवस्याऽपि माभूत् ध्यानादिकमन्तरेण न स्यात् कुतः "तद्यत्रैतत्सुप्तः संप्रसन्नः स्वप्नं य विजानाति एष आत्मेति होवाचैतदमृतं मे तदभयमेतद् ब्रह्मेति" । सहशान्तहृदयः प्रवव्राज सहप्राप्यैव देवानेतद्भयं ददर्श नाहं खल्वयमेवैवं संप्रत्यात्मानं जानात्ययमहमस्मीति नाविलुलितात्पर्यस्ताद्विमानात्पततां पुंसां सा निर्वृतिर्न स्यादिति किमु । एतदुक्तं भवति कर्मसाध्यज्ञानात्स्वर्गादिलक्षणविमानं प्राप्य इतस्ततो नन्दनादिषु विहारार्थं पततां गच्छतां पुंसां निर्वृतिर्नास्तीति किमु वक्तव्यमिति विमानाद् भ्रश्यतामित्यर्थांगीकारे तत्र दुःखप्राचुर्यात् सा निर्वृतिर्न स्यादिति वक्तुमयुक्तत्वादुक्त एवार्थः । अन्तकासिलुलितत्वमनित्यत्वद्योतनायोक्तमिति । ज्ञातव्यम् अत्र ध्यानं ज्ञानोत्पत्तावन्तरङ्गसाधनं कथाश्रवणं तत्साधनं श्रुतगुणानां पश्चादुपसंहारोपपत्तेरिति ज्ञातव्यम् । अधिकारिणामनन्तत्वात्तत्तद्योग्यताविशेषादेवमुक्तमिति वा ॥ १० ॥ ❀ ❀ भवज्जना भगवद्भक्ताः तेषां मुखनिःसृताया भगवत्कथायाः श्रवणलक्षणोपासनयेत्युक्तं तत्र भवज्जनस्य चरितलक्षणकथाश्रवणेतीममर्थमभिप्रेत्य भगवज्जनसंगतौ भगवत्कथासु श्रवणं सुलभं स्यादिति मत्वा तत्संगतिं प्रार्थयते भक्तिं मुहुरिति । येन प्रसंगेन भवाब्धिं नेष्ये तरिष्यामि । न प्राप्स्यामीति वा इषु गताविति धातुः ॥ ११ ॥ ❀ ❀ भक्तानां लक्षणमाह तेनेति । ये स्वान् सुतसुहृद्गृहवित्तदारान् संपदः स्मरन्ति ते अतितरां प्रियमाद्यमीश त्वां न स्मरन्ति हे अब्जनाभ ! ये भवदीयपदारविन्दसौगन्ध्यलुब्धहृदयेषु भवद्भक्तेषु कृतप्रसंगा भवद्भक्तभक्तास्ते स्वान् सुतादीन् संपदं न स्मरन्तीत्यन्वयः । अनेन श्रीहरिभक्तिरेव न भवाब्धिसंतारिणी किंतु तद्भक्तभक्तिरपीति सूचितम् ॥ १२ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

यथा केचित् कल्पतरुमाश्रयन्ते । अथ च तत् सकाशादेव मृतकद्वारा भोगमिच्छन्ति तद्द्वारा भोगश्च कुरुक्षेत्रादौ श्मशानवृत्तिकब्रह्मबन्धुषु तद्दत्तेन भोजनादिरूपः प्रसिद्धः ॥ ९ ॥ ❀ ❀ ये शुद्धभक्तास्ते भवाप्ययमोक्षाविर्भावि ब्रह्मसुखमपि

न बहुमन्यन्त इत्याह येति ॥ १० ॥ ❀ ❀ अमलाशयानां निष्कामानां येन परमपुरुषार्थतयाभिमतेन अञ्जसा अयत्नतः एव उरूणि व्यसनानि यस्मिन् नेष्ये गमयिष्यामि तस्यानुभवमात्रं दूरीकरिष्यामीत्यर्थः ॥ ११-१२ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

'भगवद्दत्तवेदार्थज्ञानस्तुष्टाव यत् ध्रुवः। वेदार्थो हि स एवेति नात्र संशेरते बुधाः॥' अकस्मादेव स्वीयवागादिसर्वेन्द्रियाणां भगवदुन्मुखभावमालक्ष्य एषामीदृशमप्राकृतत्वं श्रीभगवत्कृतमिति जानन् स्वस्मिन् भगवतो निरुपमां निरुपाधिकां तां कृपामेव साक्षादनुभवन्नतिविस्मयेन नमति। य इति। स्वेन धाम्ना चिच्छक्त्या इमां मम त्वद्दासस्य वाचं त्वत्स्वरूपगुणलीलादिकमेव वर्णयित्रीं प्रसुप्तामेतावत्कालपर्यन्तं शयित्वेव स्थितां मृतामिव सञ्जीवयति, यातु स्वीयान्नपानादिप्रकृतभोगवार्त्तां विषयीकुर्वती जाग्रत्येव वागासीत् तामत आरभ्य शाययति स्म नाशयति स्मैवेति भावः। न केवलं वागिन्द्रियमेव अपि त्वन्यान् हस्तपादादीनपि त्वत्परिचर्यादिकं विषयीकरिष्णून् प्राणांश्च त्वदुन्मुखानिति ध्रुवस्येन्द्रियादीनां चिन्मयत्वेनाप्राकृतत्वं सद्याजातमिति सूचितम्। अत्र ममेति इमामिति विशेषणाभ्यां वागादीन्द्रियाणि विशिष्टान्येव लभ्यन्ते॥ ६॥ ❀ ❀ साधारणानि तानि जडानि तु सर्वसाधारणजगतां त्वं मायाशक्त्या सह प्रविश्यान्तर्यामी सन्नुदासीन एव चेतयसीति जानाम्येवेत्याह एक इति। अनुप्रविश्य पुरुषोऽन्तर्यामी तस्या मायाया असत्सु गुणेषु इन्द्रियादिषु चेतयितुं स्थितः सन् नानेव भासि, तेन त्वद्भक्तानामिन्द्रियाणि त्वत्प्रसादात्त्वामेव विषयीकुर्वन्ति त्वन्मयान्यप्राकृतान्येव भवन्ति, अन्येषान्तु तानि मायामेव विषयीकुर्वन्ति मायामयान्येवेति स्वधाम्नेति पदाभ्यां सिद्धान्तो ध्वनितः॥ ७॥ ❀ ❀ त्वमेव सर्वशक्तिधरस्त्वद्दत्तज्ञानादिमतां भक्तानामेव कृतज्ञानां त्वं भजनीयो भवसीत्याह त्वद्दत्तयेति। भवत्प्रपन्नो ब्रह्मादिः सनकादिर्वा ज्ञानिभक्तः त्वद्दत्तया वयुनया ज्ञानेन इदं विश्वमचष्ट अपश्यत्। कथं सुप्तः पुरुषः प्रबुद्धः सन् यथा पश्यति तद्वत्। अतः कृतविदा त्वत्कृतमेवमुपकारं जानता तस्य तव पादमूलं कथं विस्मर्येते? कीदृशं—आपवर्ग्यस्य अपवर्गो मुक्तिस्तदर्हस्य जिज्ञासुभक्तस्य शरणमेवम्भूतं त्वां त्वत्त एव लब्धज्ञाना अपि त्वामभजन्तः कृतघ्ना एवेत्यर्थः। हे आर्त्तभक्तस्य बन्धो! एवञ्च ज्ञानिभक्तो जिज्ञासुभक्त आर्त्तभक्तश्चेति श्रीगीतोपनिषदुक्तास्त्रयो भक्ता व्याख्याताः॥ ८॥ ❀ ❀ यश्चतुर्थोऽर्थार्थिभक्तो मद्विधः स त्वतिनिकृष्टो मूढ इत्याह। नूनं निश्चितमेव विमुष्टमतयो वञ्चितबुद्धयस्ते भवन्ति। के ये भवाप्ययौ जन्ममरणे तयोर्मोक्षकं त्वां अन्यहेतोस्तुच्छफलार्थं अर्चन्ति, अतस्ते त्वां कल्पतरुमर्चन्ति अथ च कुणपेन मृततुल्यदेहेन उपभोग्यं सुखमिच्छन्ति। न चेच्छायोग्यं तदित्याह यत् स्पर्शजं विषयसम्बन्धजन्यं सुखं तन्नरकेऽपि शूकरादियोनावपि भवति॥ ९॥ ❀ ❀ ननु तर्हि भवाप्ययविमोक्षणमित्युक्त्या ब्रह्मसायुज्यमेवार्चनस्य फलं ब्रूषे तस्यैव कुणपोपभोग्यत्वाभावात् तदिच्छन्त एव भवन्मतेऽभिज्ञास्तत्र नहि नहीत्याह येति। ध्यानादीत्युपलक्षणं श्रवणादेरपि श्रवणेनेत्युपलक्षणं ध्यानादेरपि सा, निर्वृतिः स्वस्य महिमरूपे ब्रह्मणि ब्रह्मानन्देऽपि माभूत् न भवति। महतो भावो महिमा त्वं महान् तत्तु तव महत्त्वं सर्वव्यापकत्वलक्षणो धर्म एवेति त्वन्निष्ठा यावती निर्वृतिस्तावती तत्र कथं वर्त्ततामिति भावः। 'मदीयं महिमानञ्च परब्रह्मेति शब्दितमि'ति मत्स्यदेवोक्त्यापि ब्रह्मणो भगवन्महिमत्वमवगतम्। ततश्च अन्तकासिना कालेन लुलितात् विमानात् स्वर्गीयात् पततां नास्तीति किमु वक्तव्यम्। ततश्च स्वर्गापवर्गाभ्यामधिकस्यापि फलाश्रवणात् त्वद्भक्तेर्वास्तवं फलं त्वद्भक्तिरेवेति भक्तेः स्वतः फलत्वं भक्तानाञ्च निष्कामत्वमुपपादितम्॥ १०॥ ❀ ❀ सा च श्रवणकीर्त्तनादिमयी भक्तिः सत्सङ्गं विना न सुरसीभवतीति सत्सङ्गं प्रार्थयते। भक्तिं त्वयि प्रवहतां प्रवाहरूपेणाविच्छिन्नामेव दधताम्। ननु तर्हि संसारदुःखाब्धेर्भयं ते स्यास्यत्येवेति तत्र साटोपं सभुजास्फोटमाह। येन महत्सङ्गबलेन उल्बणमपि बहु व्यसनयुक्तमपि भवाब्धिं नेष्ये प्रहीष्यामि। यदि स मदभिमुखमभ्येति तदा आयातु, द्रक्ष्यामि किं मे कर्त्तुं शक्नुयादिति भावः। कीदृशः सन् भगवद्गुणकथैव अमृतं तत्पानेन मत्त इति स्पर्द्धावज्ञाद्वेषादयः सांसारिका धर्मा मत्तं न दुःखयितुं शक्नुवन्ति, नापि मृत्युरमृतं पिबन्तं स्प्रष्टुमपि शक्नुयादिति भावः। अत्र सत्सङ्गोत्थयैव भक्त्या भगवन्तं साक्षात्कृत्यापि पुनः सत्संगस्य प्रार्थनाद्भक्तिकारणमपि भक्तिफलमपि स्वयं भक्तिरपि सत्सङ्ग इति भक्तानां मतं व्यञ्जितम्॥ ११॥ ❀ ❀ ननु तदाप्यहन्तास्पदममतास्पदयोर्विद्यमानत्वे खल्वुद्वेगो दुर्वार इत्यत आह। ते अतितरां प्रियमपि मर्त्यं देहं न स्मरन्ति नानुसन्दधते। ये च अदो मर्त्यमनुलक्ष्यीकृत्य वर्त्तमानाः सुतादयस्तानपि के ते ये भवदीयेत्यादि, तुशब्देनान्येषां केवलयोगादिनिष्ठानां देहाभिमाननिवृत्तिं दर्शयतीति स्वामिचरणाः। भक्तानां निष्कामत्वद्योतकः स्वभाव एवायं वस्तुतस्तु कथमनुवर्त्ततां भवभयं तत्र 'यद्भ्रुकुटिः सृजति मुहुस्त्रिगुणैरभवच्छरणेषु भयमिति जरयत्याशु वा कोषं निगीर्णमनलो यथे'त्यादेरननुसंहितं भक्तः फलं संसारनिवृत्तिरस्त्येव॥ १२॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तत्रादौ 'वाचो वाक् चक्षुषश्चक्षुरि'त्यादिश्रुतिमुपबृंहयन् स्तौति य इति। अखिलाः समस्ताः शक्तीः धारयतीति तथा मम प्रसुप्तां वाचमन्यांश्च हस्तादीन् स्वधाम्ना स्वेनान्तर्यामिरूपेण अन्तः प्रविश्य संजीवयति यः तस्मै भगवते पुरुषाय तुभ्यं

नमः ॥ ६ ॥ ❁ ❁ एवं सर्वशक्तित्वसर्वकरणप्रवर्तकत्वकरणत्वकरणविलक्षणत्वादिना स्तुत्वा विश्वहेतुत्व-प्रकृतितद्-गुणनियन्तृत्व-कार्यकारण-प्रकृतिविलक्षणत्वादिना स्तौति एक इति। त्वमेक एव स्वशक्त्या अशेषं विश्वं सृष्ट्वा तस्याः शक्तिभूतायाः मायायाः असत्कारणं तद्भिन्नेषु असद्गुणेषु विश्वरूपेण स्थितेषु देहेन्द्रियवाक्प्राणादिषु प्रविश्य तत्तत्प्रवर्तकतया नानेव विभासि ॥ ७ ॥ ❁ ❁ अथ 'यो ब्रह्माणं विदधाति तस्मै वेदांश्च प्रहिणोती'त्यादिश्रुतिमुपबृंहयन् स्तौति त्वद्दत्तयेति। हे नाथ ! भवत्प्रपन्नः पाद्मोऽपि त्वद्दत्तयैव वयुनया ज्ञानेन सुप्तप्रबुद्ध इव आदौ सुप्तः पश्चात्प्रतिबुद्ध इव विश्वमचष्ट अपश्यत्। तस्य तव पादमूलम् आपवर्ग्यं स्वार्थे ष्यञ्, अपवर्गरूपं मुक्तौ प्राप्यं च शरणं साधनावस्थायां सर्वतो रक्षकं च तत्तथा साध्यसाधनरूपमित्यर्थः, हे आर्तबन्धो ! कृतविदा कृतज्ञेन कथं विस्मर्यते न कथमपीत्यर्थः ॥ ८ ॥ ❁ ❁ मोक्षप्रदं प्राकृतभोगार्थं येऽर्चन्ति ते मायामोहिता इत्याह नूनमिति। नूनं निश्चितं ते जनास्तव मायया विमुष्टमतयः ये त्वां भवाप्ययमोक्षणं जन्ममरणनिवर्तकं मुक्तिदमित्यर्थः, कल्पतरुम् अन्यहेतोः प्राकृतपदार्थलाभार्थम् अर्चन्ति ते कुणपोपभोग्यं कुणपानां शवतुल्यानां जीवन्मृतानामुपभोग्यं स्पर्शजं दारापत्यादिसंबन्धजं सुखं नरकेऽपि शूकरादियोनावपि नृणां जीवानां भवति तदिच्छन्ति ॥ ९ ॥ ❁ ❁ चतुर्विधं हि सुखं 'निरञ्जनः परमं साम्यमुपैति, मद्भावायोपपद्यते' इति श्रुतिस्मृतिप्रोक्तं परब्रह्मभावापत्तिलक्षणमाद्यं तद्भजनजं द्वितीयं क्षेत्रज्ञस्वरूपप्राप्तिजं तृतीयं सांसारिकं चतुर्थम्। तत्र निष्कामभक्तानां भगवद्भावापत्तिमोक्षप्रदं तद्भजनानन्दे यदानन्देत्तत्क्षेत्रज्ञब्रह्मप्राप्तावपि नास्ति, कुतः दारापत्यादिप्राकृतपदार्थसंबन्धेनेत्याह या निर्वृतिरिति । स्वमहिमनि देहेन्द्रियादिविलक्षणे स्वस्वरूपे ब्रह्मणि अक्षरे जीवात्मनि माभूत् न भवति, अन्तकस्य मृत्योः असिः कालस्तेन लुलितात् खण्डितात् विमानात् पततां स्वर्गिणां दारापत्यादिसुखासक्तानामपि सा नास्तीति किमु वक्तव्यम् ॥ १० ॥ ❁ ❁ एवं सांसारिकसुखं जीवस्वरूपप्राप्तिसुखमनादृत्य भजनसुखमुक्तमथ भजनफलभूतभगवद्भावोपपत्तिलक्षणमोक्षसिद्ध्यर्थं भगवद्भजननिष्ठानां महतां संगं प्रार्थयते भक्तिमिति। येन त्वद्भजननिष्ठापादकेन संगेन उरुव्यसनं संसारं बहुदुःखमुल्वणं प्रचण्डं भवाब्धिं नेष्ये पारं गमिष्यामि ॥ ११ ॥ ❁ ❁ महत्संगिनां संसारतापप्रददेहाद्यासक्तिराहित्यमाह ते इति। हे ईश ! हे अब्जनाभ ! ये भवदीयपदारविन्दसौगन्ध्ये लुब्धं हृदयं येषां तेषु महत्सु कृतप्रसंगाः ते अन्येषां प्रियमपि मर्त्यं मरणधर्मकं शरीरं न स्मरन्ति, ये चान्वदः शरीरमनु सुतादयस्तांस्त्वतितरां न स्मरन्ति ॥ १२ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

स्तुतिमेव दर्शयति। योन्तः प्रविश्य मम प्रसुप्तां निद्रितां लीनामिमां वैखरीसंज्ञां वाचमन्यांश्च हस्तचरणश्रवणत्वगादीन् प्राणानिन्द्रियाणि स्वधाम्ना स्वतेजसा चिच्छक्त्या संजीवयति पूर्वसंस्कारोद्बोधनेन स्वस्वव्यापारे प्रवर्त्तयति तस्मै भगवते ऐश्वर्यादिगुणयुक्ताय पुरुषायांतर्यामिणे तुभ्यं नम इत्यन्वयः। ननु तत्र वागादीनहं कथं जीवयामीत्याशङ्क्य न केवलं ममैव किंतु सर्वस्यैव प्राणिवर्गस्य वागादीनां प्रवृत्तिस्त्वत्त एवेत्यभिप्रेत्य तत्र हेतुमाह—अखिलशक्तिधर इति। 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानक्रिया बलं च' इति श्रुतेः। प्रसुप्तामित्यनेनास्य पूर्वर्षित्वं सूचितं भवति ॥ ६ ॥ ❁ ❁ ननु वागाद्यधिष्ठातारो वह्न्यादयोऽतस्तेषां प्रवृत्तिस्तेभ्य एव भवति कथं मत्तस्तेषां प्रवृत्तिरित्युच्यत इत्याशङ्क्य तेषामपि प्रवृत्तेर्भगवदधीनत्वमाह—एक इति। हे भगवन् ! उक्तगुणया सत्त्वादित्रिगुणात्मिकया मायाख्यया निजशक्त्या इदं महदाद्यशेषं जगत् सृष्ट्वा तदनुप्रविश्य पुरुषः अन्तर्यामी त्वमेक एव तस्याः मायाया असत्सु निन्दितविषयोन्मुखेषु गुणेषु देहेन्द्रियदेवतादिरूपेण परिणतेषु स्थितः सन्नानेव भासीत्यन्वयः। एकस्यैव नानात्वेन भाने दृष्टान्तमाह—दारुष्विति। यथा विभावसुरग्निरेक एव नानाकारेषु काष्ठेषु स्थितः काष्ठाकारानुसारेण ह्रस्वदीर्घादिनानाकारवान्नानेव भाति, परं न वस्तुतो नाना, तथाग्न्यादिष्वपि त्वमेव स्थितः प्रेरयसीति त्वदधीनैव सर्वप्रवृत्तिरित्यर्थः। हे भगवन्निति संबोधयंस्तवैवैवमैश्वर्यं नान्यस्येति सूचयति ॥ ७ ॥ ❁ ❁ यदि सर्वदेवाधिष्ठातुर्ब्रह्मणोपि ज्ञानसामर्थ्यादि त्वत्प्रसादेनैव तदान्येषां देवानां त्वद्वशवर्तित्वे किं वक्तव्यमित्याशयेनाह—त्वद्दत्तयेति। हे नाथ सर्वाधिपते ! ब्रह्मा पूर्वं यतः स्वयं जातस्तं त्वां विचिन्वन्नपि सृष्ट्यर्थं प्रयतमानोपि त्वां नापश्यत्, येन प्रपञ्चनिर्माणं भवेत् तज्ज्ञानं सामर्थ्यं च न प्राप। यदा तु खिन्नः सन् भवत्प्रपन्नः भवन्तं भगवन्तं सर्वेश्वरं शरणमागतस्तदा त्वद्दत्तया वयुनया ज्ञानेन त्वां त्वयि लीनमिदं विश्वं चाचष्ट अपश्यत् त्वत्तो लब्धसामर्थ्यश्च सृष्टिं चकार। तत्र दृष्टान्तमाह—सुप्तप्रबुद्ध इवेति। सुप्तः पुरुषः प्रबुद्धः सन् यथापूर्वं स्थितान् पदार्थान् पश्यति तत्र व्यापारं च करोति तद्वदित्यर्थः। तस्य तव आपवर्ग्यानां मुक्तानामपि शरणमाश्रयं पादमूलं चरणकमलं कृतविदा तत्तदिन्द्रियादिचेतनीकरणेन तत्तद्विषयभोगसुखप्रदानरूपत्वत्कृतमुपकारं जानता कथं विस्मर्यते ? न कथमपि। अथ एवं सर्वोपकारकर्तारं त्वां ये न भजन्ति ते मूर्खाः कृतघ्ना एवेति भावः। हे आर्त्तबन्धो इति संबोधनेन यतः आर्त्तानां जन्ममृत्युजराव्याध्यादिभिः पीडितानां बन्धुः हितकर्त्ता तत उद्धारकस्त्वमेव। अतस्त्वद्वैमुख्यादेव जन्ममरणादिसंसारदुःखमनुभवन्तीति सूचयति ॥ ८ ॥ ❁ ❁ अतः सकामान् निन्दति—नूनमिति। भवाप्ययौ जन्ममरणे ततो विमोक्षणं यस्मात्तं त्वां येन्यहेतोः अर्थकामादिप्राप्त्यर्थमर्चन्ति भजन्ति ते नूनं निश्चयेन तव मायया विमुष्टमतयः मोहितचित्ताः

एतदेव स्पष्टयति—यतः कुणपोपभोग्यं कुणपेन मृततुल्येन शरीरेण उपभोग्यं सुखमिच्छन्ति। न च तदिच्छायोग्यमित्याह—यदिति। त्वत्स्पर्शजं तत्तद्विषयसंबन्धजन्यं सुखं तन्नृणां प्राणिनां नरकेपि भवति नारकिनामपि श्वसूकरादीनां स्त्र्यादिभोगजन्यसुखस्यास्मदादिसुखतुल्यत्वात्तदिच्छतां तैस्तुल्यत्वापत्तेरिति भावः। ननु तर्हि निन्दितप्रदानं भगवतोप्यनुचितमेवेति तटस्थशङ्कां वारयति—कल्पकतरुमिति। कल्पतरुस्वभावो भवान् यथा सर्वप्रदानसमर्थस्यापि कल्पतरोर्याचकेच्छानुरूपं निकृष्टं ददतोपि न कश्चिद्दोषस्तथा भवतोऽपीति भावः॥ ९॥ ❀ ❀ ननु सकामानामपि स्वर्गादिप्राप्त्योत्कृष्टसुखलाभो भवति, कथं तान्निन्दसीत्याशङ्क्याह—येति। हे नाथ सर्वस्वामिन्! तनुभृतां देहिनां तव पादपद्मस्याध्यात्मिकादित्रिविधतापनिवर्तकस्य ध्यानात् भवज्जनैः भगवद्भक्तजनैः सह भवत्कथाश्रवणेन वा या निर्वृतिः य आनन्दः स्यात् भवति सा निर्वृतिः स्वमहिमनि तव महिमात्मकेऽक्षरब्रह्मणि स्थितस्यापि माभून्न भवति। यद्येवं तर्हि अन्तकस्य कालस्याऽसिना लवनिमेषादिना लुलितात् खण्डितात् विमानात् पततां स्वर्गिणां सा निर्वृतिर्नास्तीति किमु वक्तव्यम्?॥ १०॥ ❀ ❀ यद्यपि ध्यानकथाश्रवणयोः परमानन्दजनकत्वमुक्तं तथापि ध्यानस्य दुष्करत्वं कथाश्रवणं तु सुकरमिति तदर्थं महज्जनसङ्गतिं प्रार्थयते—भक्तिमिति। हे अनन्त! परिच्छिन्नतया प्रतीतावपि सर्वत्र व्यापक इति त्वमेव प्रार्थनायोग्य इति सूचयति। महतां मे मम प्रकृष्टः सङ्गो भूयादित्यन्वयः। ननु कीदृग् महत्त्वं तवाभिमतं कुलेन वा धनेन वा विद्यादिगुणैर्वा वयसा वेत्यपेक्षायामाह—भक्तिं मुहुः प्रवहतां त्वयीति। त्वयि भगवति वासुदेवे मुहुः निरन्तरं भक्तिं प्रेमलक्षणां प्रवहतां कुर्वतां महतामित्यर्थः। त्वद्भक्तत्वमेव महत्त्वं, सत्कुलजन्मादिना महत्त्वस्य लौकिकत्वात् नहि सत्कुलजन्मादितत्तदभिमानवतां विषयाविष्टचित्तत्वेन त्वद्विमुखानां तेन महत्त्वेन मम कार्यं सेत्स्यतीति भावः। ननु लोकस्य विषयोन्मुखत्वात्कथं तेषां तद्विलक्षणो मयि प्रेमप्रवाहः संभवतीत्याशङ्क्य तत्र हेतुमाह—अमलाशयानामिति। अमलो विषयवासनालक्षणमलरहितः आशयः अन्तःकरणं येषामित्यर्थः। शुद्धान्तःकरणत्वेन नित्यानित्यविवेकसामर्थ्यादनित्यान् विषयान् विहाय नित्ये त्वय्येव प्रवाहं प्रवर्त्तयन्तीति भावः। तत्प्रसङ्गेन तव किं प्रयोजनं सेत्स्यतीत्याकांक्षायामाह—येनेति। येनैवंभूतमहत्प्रसङ्गेन भवद्गुणकथैव जन्ममरणादिदुःखनिवारकत्वात् संसारविस्मारकत्वात् स्वादुविशेषत्वाच्चामृतं तस्य पानेन मत्तः परमानन्दे निमग्नः सन् भवाब्धिं संसारसमुद्रमञ्जसा अनायासेनैव नेष्ये तरिष्यामि। ननु कथमेवं संसाराद्बिभेषीत्याशङ्क्य विशिनष्टि—उरुव्यसनमिति। उरूणि आध्यात्मिकादिभेदेन बहूनि व्यसनानि दुःखानि यस्मिंस्तम्। अत एवोल्बणं भयंकरम्। अतः सर्वथा तत्तरणमेव युक्तमिति भावः॥ ११॥ ❀ ❀ नन्वेवं तवैव मनोरथोस्त्वन्ये केचित्तीर्णा वेत्याशङ्क्य बहव एवं कृतार्था जाता इत्याह—त इति। हे ईश हे अब्जनाभ! ये तु भवदीयपदारविन्दयोः सौगन्ध्ये लुब्धं हृदयं येषां त्वद्भक्तानां तेषु कृतः प्रकृष्टः सङ्गो यैस्ते भगवत्कथारसपानमत्ता अतितरां प्रियं मर्त्यदेहं ये चादो मर्त्यमनुसंबद्धाः सुतादयस्तांश्च न स्मरन्तीत्यन्वयः। तुशब्देन योगादिनिष्ठा भवद्विमुखास्तेषामभिमाननिवृत्तिर्न कदापीति सूचयति॥ १२॥

## भाषानुवादः

ध्रुवजीने कहा—प्रभो! आप सर्वशक्तिसम्पन्न हैं; आप ही मेरे अन्तःकरणमें प्रवेशकर अपने तेजसे मेरी इस सोई हुई वाणीको सजीव करते हैं तथा हाथ, पैर, कान और त्वचा आदि अन्यान्य इन्द्रियों एवं प्राणोंको भी चेतनता देते हैं। मैं आप अन्तर्यामी भगवान्‌को प्रणाम करता हूँ॥ ६॥ ❀ ❀ भगवन्! आप एक ही हैं, परन्तु अपनी अनन्त गुणमयी मायाशक्तिसे इस महदादि सम्पूर्ण प्रपञ्चको रचकर अन्तर्यामीरूपसे उसमें प्रवेश कर जाते हैं। फिर इसके इन्द्रियादि असत् गुणों में उनके अधिष्ठातृ-देवताओंके रूपमें स्थित होकर अनेक रूपमें भासते हैं—ठीक वैसे ही जैसे तरह-तरहकी लकड़ियोंमें प्रकट हुई आग अपनी उपाधियोंके अनुसार भिन्न-भिन्न रूपोंमें भासती है॥ ७॥ ❀ ❀ नाथ! सृष्टिके आरम्भमें ब्रह्माजीने भी आपकी शरण लेकर आपके दिये हुए ज्ञानके प्रभावसे ही इस जगतको सोकर उठे हुए पुरुषके समान देखा था। दीनबन्धो! उन्हीं आपके चरणकमलोंमें मुक्त पुरुष भी आश्रय लेते हैं, कोई भी कृतज्ञ पुरुष उन्हें कैसे भूल सकता है?॥ ८॥ ❀ ❀ प्रभो! इन शवतुल्य शरीरोंके द्वारा भोगा जानेवाला, इन्द्रिय और विषयोंके संसर्गसे उत्पन्न सुख तो मनुष्योंको नरकमें भी मिल सकता है। जो लोग इस विषयसुखके लिये लालायित रहते हैं और जो जन्म-मरणके बन्धनसे छुड़ा देनेवाले कल्पतरुस्वरूप आपकी उपासना भगवत्-प्राप्तिके सिवा किसी अन्य उद्देश्यसे करते हैं उनकी बुद्धि अवश्य ही आपकी मायाके द्वारा ठगी गयी है॥ ९॥ ❀ ❀ नाथ! आपके चरणकमलोंका ध्यान करनेसे और आपके भक्तोंके पवित्र चरित्र सुननेसे प्राणियोंको जो आनन्द प्राप्त होता है, वह निजानन्दस्वरूप ब्रह्ममें भी नहीं मिल सकता। फिर जिन्हें कालकी तलवार काटे डालती है, उन स्वर्गीय विमानोंसे गिरनेवाले पुरुषोंको तो वह सुख मिल ही कैसे सकता है?॥ १०॥ ❀ ❀ अनन्त परमात्मन्! मुझे तो आप उन विशुद्धहृदय महात्मा भक्तोंका सङ्ग दीजिये, जिनका आपमें अविच्छिन्न भक्तिभाव है उनके सङ्गमें मैं आपके गुणों और लीलाओंकी कथा-सुधाको पी-पीकर उन्मत्त हो जाऊँगा और सहज ही इस अनेक प्रकारके दुःखोंसे पूर्ण भयङ्कर संसारसागरके उस पार पहुँच जाऊँगा॥ ११॥ ❀ ❀ कमलनाभ प्रभो! जिनका चित्त आपके चरणकमलकी सुगन्धमें लुभाया हुआ है, उन महानुभावोंका जो लोग सङ्ग करते हैं—वे अपने इस अत्यन्त प्रिय शरीर और इसके सम्बन्धी पुत्र, मित्र, गृह और स्त्री आदिकी सुधि भी नहीं करते॥ १२॥

तिर्यङ्नगद्विजसरीसृपदेवदैत्यमर्त्यादिभिः परिचितं सदसद्विशेषम् ।
रूपं स्थविष्ठमज ते महदाद्यनेकं नातः परं परम वेद्मि न यत्र वादः ॥ १३ ॥
कल्पान्त एतदखिलं जठरेण गृह्णन् शेते पुमान् स्वदृगनन्तसखस्तदङ्के ।
यन्नाभिसिन्धुरुहकाञ्चनलोकपद्मगर्भे द्युमान् भगवते प्रणतोऽस्मि तस्मै ॥ १४ ॥
त्वं नित्यमुक्तपरिशुद्धविबुद्ध आत्मा कूटस्थ आदिपुरुषो भगवांस्त्र्यधीशः ।
यद्बुद्ध्यवस्थितिमखण्डितया स्वदृष्ट्या द्रष्टा स्थितावधिमखो व्यतिरिक्त आस्से ॥ १५ ॥
यस्मिन् विरुद्धगतयो ह्यनिशं पतन्ति विद्यादयो विविधशक्तय आनुपूर्व्यात् ।
तद्ब्रह्म विश्वभवमेकमनन्तमाद्यमानन्दमात्रमविकारमहं प्रपद्ये ॥ १६ ॥
सत्याशिषो हि भगवंस्तव पादपद्ममाशीस्तथानुभजतः पुरुषार्थमूर्तेः ।
अप्येवमार्य भगवान् परिपाति दीनान् वाश्रेव वत्सकमनुग्रहकातरोऽस्मान् ॥ १७ ॥

### मैत्रेय उवाच

अथाभिष्टुत एवं वै सत्संकल्पेन धीमता । भृत्यानुरक्तो भगवान् प्रतिनन्द्येदमब्रवीत् ॥ १८ ॥

### श्रीभगवानुवाच

वेदाहं ते व्यवसितं हृदि राजन्यबालक । तत्प्रयच्छामि भद्रं ते दुरापमपि सुव्रत ॥ १९ ॥
नान्यैरधिष्ठितं भद्र यद्भ्राजिष्णु ध्रुवक्षिति । यत्र ग्रहर्क्षताराणां ज्योतिषां चक्रमाहितम् ॥ २० ॥

अन्वयः—परम अज तिर्यङ्नगद्विजसरीसृपदेवदैत्यमर्त्यादिभिः परिचितम् सदसद्विशेषम् महदाद्यनेकम् ते स्थविष्ठम् रूपम् वेद्मि अतः परम् यत्र वादः न तत् न ॥१३॥ ❀ ❀ पुमान् कल्पान्ते एतत् अखिलम् जठरेण गृह्णन् स्वदृक् अनन्तसखः तदङ्के शेते यन्नाभिसिन्धुरुहकाञ्चनलोकपद्मगर्भे द्युमान् तस्मै भगवते प्रणतः ॥ १४ ॥ ❀ ❀ त्वम् नित्यमुक्तपरिशुद्धविशुद्धः आत्मा कूटस्थः आदिपुरुषः भगवान् त्र्यधीशः यत् बुद्ध्यवस्थितिम् अखण्डितया स्वदृष्ट्या द्रष्टा स्थितौ अधिमखः व्यतिरिक्तः आस्से ॥ १५ ॥ ❀ ❀ विरुद्धगतयः, विद्यादयः विविधशक्तयः आनुपूर्व्यात् अनिशम् यस्मिन् पतन्ति तत् विश्वभवम् एकम् अनन्तम् आद्यम् आनन्दमात्रम् अविकारम् ब्रह्म अहम् प्रपद्ये ॥ १६ ॥ ❀ ❀ भगवन् पुरुषार्थमूर्तेः तव पादपद्मम् तथा अनुभजतः आशिषः सत्या आशीः एवम् अपि आर्य अनुग्रहकातरः भगवान् दीनान् अस्मान् वाश्रा वत्सकम् इव परिपाति ॥ १७ ॥ ❀ ❀ अथ सत्संकल्पेन धीमता एवम् वै अभिष्टुतः भृत्यानुरक्तः भगवान् प्रतिनन्द्य इदम् अब्रवीत् ॥ १८ ॥ ❀ ❀ राजन्यबालक अहम् ते हृदि व्यवसितं वेद सुव्रत ते भद्रम् दुरापम् अपि तत् प्रयच्छामि ॥ १९ ॥ ❀ ❀ भद्र यत् भ्राजिष्णु ध्रुवक्षिति अन्यैः न अधिष्ठितम् यत्र ग्रहर्क्षताराणाम् ज्योतिषाम् चक्रम् आहितम् ॥ २० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

नन्वेवं विद्वानपि त्वं किमित्यभिमानं वहस्यत आह तिर्यगिति । तिर्यङ्नगपक्षिसर्पादिभिः परिचितं व्याप्तं संतोऽसंतश्च विशेषा यस्य महदादीन्यनेकानि कारणानि यस्य हे परम हे अज ते इदं स्थविष्ठं विराड्रूपं केवलं वेद्मि । अतः परमीश्वरस्वरूपं न वेद्मि । यत्र वादः शब्दव्यापारो नास्ति तद्ब्रह्मरूपं च न वेद्मि । अतोऽभिमानो न निवर्तत इति भावः ॥ १३ ॥ ❀ ❀ तदेवं भगवदनुकंपया तद्रूपद्वयं ज्ञात्वेश्वररूपमनुवर्णयन्नमस्करोति कल्पांत एतदिति । एतत्त्रैलोक्यं यः पुमान् शेते स्वस्मिन्नेव दृक् न बहिर्यस्य योगनिद्रारूढत्वात् अनंतसखः शेषसहायः तदंके शेषोत्संगे यस्य नाभिरेव सिंधुः समुद्रस्तस्मिन् रोहतीति तथा तस्मिन् काञ्चनलोकपद्मस्य हिरण्मयलोकरूपकमलस्य गर्भे कर्णिकायां द्युमांस्तेजस्वी ब्रह्मा भवति तं प्रणतोऽस्मीत्यर्थः ॥ १४ ॥ ❀ ❀ ननु ममापि स्वापाद्यवस्थावत्त्वे को जीवाद्विशेष इत्यत आह । त्वं तु व्यतिरिक्तो जीवविलक्षण आस्से तिष्ठसि । वैलक्षण्यमेवाह—त्वं तु

---

१. प्रा० पा० च विश्वमज ते महदाद्यशेषं । २. प्रा० पा०—न्तरे तदखि । ३. प्रा० पा०—मात्र । ४. प्रा० पा०—तत्र । ५. प्रा० पा०—स्थिति ।

नित्यमुक्तो जीवस्तु त्वत्प्रसादान्मुच्यते। त्वं परिशुद्धः स तु मलिनः। त्वं तु विबुद्धः स त्वज्ञः। त्वमात्मा स तु जडः। त्वं कूटस्थः स तु विकारी। त्वमादिपुरुषः स त्वादिमान्। त्वं तु भगवान्स भगहीनः। त्वं त्रयाणां गुणानामधीशः स तु परतंत्रः। कुत एतद्वैलक्षण्यं यद्यतो बुद्ध्यवस्थितिं बुद्धेस्तां तामवस्थामखंडितया स्वदृष्ट्या चिच्छक्त्या द्रष्टा पश्यसि। द्रष्टेति तृन्प्रत्ययांतः शब्दः। अतो बुद्ध्यवस्थितिमित्यत्र षष्ठ्यभावः। तथाभूत एव त्वं स्थितौ पालनेऽधिमखो यज्ञाधिष्ठाता श्रीविष्णुः॥ १५॥ ❀ ❀ तमेव ब्रह्मरूपेण ज्ञातं नमस्करोति। यस्मिन्निति। पतंत्यकस्मादुद्भवंति विश्वस्य भवो जन्म यस्मात्। एकमखंडम्। आद्यमनादिम्॥ १६॥ ❀ ❀ सकामभजनादपि मोक्षमाशासान आह। हे भगवन्पुरुषार्थः परमानंदः स एव मूर्तिर्यस्य तस्य तव पादपद्ममाशिषो राज्यादेः सकाशात्सत्या आशीः परमार्थफलं हि निश्चितम्। कस्य तथा तेन प्रकारेण त्वमेव पुरुषार्थ इत्येवं निष्कामतया अन्वनुभजतः, यद्यप्येवं तथापि हे आर्य स्वामिन्दीनान्सकामानप्यस्मान्भगवान्भवान्परिपाति संसारभयाद्रक्षत्येव। यतः अनुग्रहे हिताचरणे कातरः परवशः यथा वाश्रा नवप्रसूता धेनुर्वत्सं क्षीरं पाययति वृकादिभ्यो रक्षति च तद्वत्॥१७-१८॥ ❀ ❀ व्यवसितं संकल्पितम्॥ १९॥ ❀ ❀ तत्प्रयच्छामीत्युक्तं किं तदित्यपेक्षायामाह नान्यैरिति सार्धद्वाभ्याम्। हे भद्र ध्रुवा क्षितिर्निवासो यस्मिन्। यत्र यस्मिन् आहितमर्पितम्॥ २०॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

एवं जानासि चेत्तर्हि मत्पित्रादिभ्योप्यप्राप्तं पदं साधयामीति संकल्पः। किमिति तद्भजनमेव कुतो नाकार्षीरित्याक्षिपति—नन्विति। न वेद्मीति "वर्तमानसामीप्ये वर्तमानवद्वा" इति विधानादेतावंतं कालं नावेदिषमित्यर्थः। अजेति परमेति च विराड्रूप एव मेऽनाद्यंतदृष्टिरस्ति दुर्ज्ञेयमतः परं यद्रूपमस्ति तत्र मे बुद्धिर्नारोहतीति भावमाह। अतस्तज्ज्ञानाभावात्। इति भाव इति। "अहं ममेति भावोयं विना ज्ञानं न नश्यति" इति पूर्वं बालत्वेनाज्ञत्वात्तथादुर्भावनामकरवमधुना त्वदीयकंबुस्पर्शेन सर्वमेव वेदार्थमज्ञासिषमत एव श्रीमच्चरणेष्वेवं निवेदयामीति तात्पर्यम्॥ १३॥ ❀ ❀ ननु मां जानासि चेत्तर्हि त्वामहं परीक्षिष्ये कथय कोहमिति चेत्तत्रैव भगवदेतदुक्तिसमकालमेव कांचनलोकपद्मस्यागंतुकसौवर्णवर्णकमलस्य। इत्यर्थ इति। तं प्रसादयितुं नतोस्मि केवलं, न तु परिचरितुं किमपि शक्नोमीति भावः॥ १४॥ ❀ ❀ अत्राक्षिपति—नन्विति। नित्यमुक्तः अविद्याकर्माजनितस्वरूपत्वात् परिशुद्धः शुद्धसत्त्वात्मकरूपत्वात् विबुद्धस्तत एव स्वरूपसिद्धज्ञानस्यानावरणात् प्रत्युतोल्लासात् आत्मा स्वरूपाभिन्नत्वात्, कूटस्थ एकरूपतया कालव्यापी, स तु नानारूपतयैव, आदिपुरुष आदित एव पुरुषाकारः स्वभावसिद्धरूपत्वात्। चक्रवर्ती तु—आदिकारणं पुरुषाकारश्च स तु न कारणं स्त्रीपुंनपुंसकाकारश्चेत्याह। भगवान् पूर्णशक्त्याश्रयः वस्तुलक्षणरूपत्वात् त्र्यधीशस्त्रिगुणशक्तेर्नियामकः तदतिरिक्तस्वरूपशक्त्यात्मकरूपत्वात् तस्मात्तव रूपस्य च प्रकृत्यतीतशक्तिमयत्वादेकात्मकत्वेनान्याभ्यां रूपिरूपाभ्यां विशेष एवेति संदर्भः। तां तां स्वापाद्यवस्थाम्। जीवस्तु—बुद्ध्यवस्थाभिः खंडितदृष्टिः त्वं तु स्थितौ जगत्पालनकर्मण्यास्से, स तु स्वपालनेप्यसमर्थः। त्वं यज्ञादिकर्माधिष्ठाता स तु यज्ञादिकर्माधीनः। अतस्त्वं तस्माद्विविक्त एवास्से तव योगनिद्रादिकं च चिच्छक्तिविलास इति जानाम्येवेति भाव इति विश्वनाथः। अतस्तृन्प्रत्ययांतत्वात् "न लोकाव्ययनिष्ठाखलर्थतृनाम्" इति निषेधात् षष्ठी न॥ १५॥ सविशेषं स्वरूपमुक्त्वा निर्विशेषमाह—यस्मिन्निति। अविकारं केवलमानंदमात्रमेव नित्यचिदानंदात्मकनानाविशेषग्रहणासमर्थानां दूरस्थानां केवलशांतानां भक्तिमिश्रज्ञानदृष्ट्या भातं तद्ब्रह्म त्वन्महिमस्वरूपं प्रपद्य यस्मिन् निःशक्तिकत्वेन प्रतीतेपि विश्वशक्त्योऽनिशं स्थिता आनुपूर्व्योत्पतंति प्रतीता भवंति। अत एव त्वं भक्तितारतम्येन सामीप्यतारतम्यवतां विशेषतारतम्यग्रहणसमर्थानां भक्तिमिश्रज्ञानिभ्यः किंचिदधिकभक्तिमतां प्रथमं विद्याशक्तिमानात्मेति भासि। ततोऽप्यधिकभक्तिमतां मायाशक्तिमान्पुरुषो जगत्कारणमिति। अत एव विश्वभवमिति विशेषणं ततः संपूर्णभक्तिदृष्ट्या ऐश्वर्यमाधुर्याद्यनंतशक्तिमान्भगवानिति। तत्राप्यतिप्रविष्टधियां लीलालावण्यकलाकुतूहलवैदग्धीमहोदधिरिति त्वमनुभवगोचरीभवसि। यथा नगरस्यातिदूरस्थजना विशेषमनुपलभमाना इदमग्रे स्थितं वस्तुमात्रमिति तदेव पश्यंति अनतिदूरस्था वृक्षखण्डमिति समीपस्था विविधनिष्कुटाट्टपुरगोपुरगृहध्वजपताकादियुक्तं नगरमिति तत्र प्रविष्टास्तु विचित्रतडागरथ्याविपणिशृङ्गाटकाजिरनृत्यगीतवादित्रादिसकलसुखास्पदमित्यनुभवंति। यथाहुः प्राचोपि—"चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम्। विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः" इति। शक्तयः कद्रूयः विरुद्धगतय इति विद्याविद्ययोः सर्गसंहारयोर्जन्मवत्ताजत्वयोरनीहत्वसलीलत्वयोरात्मारामत्वभक्तवात्सल्ययोर्विरोधेपि तत्तच्छक्तीनामतर्क्यैव त्वयि नित्या स्थितिरेवेति॥ १६॥ ❀ ❀ ननु भो बालक सत्यमेव त्वं मत्स्वरूपं जानास्येव, किं तु तव सांप्रतिकनिष्कामत्वेपि यथापूर्वसंकल्पमेव फलमहं दास्यामि गृहाणेति, तत्र स्वस्याज्ञत्वं विवृण्वन्प्रेममाधुर्यमाशासान आह—सत्येति। हे भगवन्निति। निरतिशयानंदयुक्तत्वमाह—तव पादपद्ममेवाशिषो राज्यादेः सकाशात्सत्याऽऽशीः परमार्थफलं कस्य तथा तेन प्रकारेण त्वमेव पुरुषार्थमूर्तिरित्येवं निष्कामतयाऽत्वनुभजतः, एवमपि दीनानस्मान्कृतसकामभजनानपि परिपाति निष्कामप्राप्यपादपद्मकिंचिन्माधुर्यदानेनेत्यर्थः। तत्र हेतुः अनुग्रहकातरः बालत्वाद्ययं शुद्धभक्तिन्न जानाति तदपि तत्फलं स्वमाधुर्यमास्वादयामीति बुद्ध्येत्यर्थः। वाश्रा धेनुर्यथा वत्सकमज्ञं स्वामभजंतमपि स्वदुग्धं पाययति रक्षति च सिंहादिभ्यस्तद्वन्मामपि स्वचरणमाधुर्यमास्वादयतु सकामत्वादिभक्तिविघ्नेभ्यश्च रक्षत्विति भावः॥ १७॥ ❀ ❀ अथ स्तुत्याकर्णनानंतरम्। सत्सत्योऽभ्यर्हितः संकल्पो

वा उच्चैःपदाभिरूपो यस्य तेन "सत्सत्येऽभ्यर्हिते श्रेष्ठे साधीयसि भवत्यपि" इति यादवः। धीमता योग्यायोग्यविमर्शवता ॥ १८ ॥ राजन्यबालकेति। तवैश्वर्यस्पृहा स्वाभाविक्येव तदहं ते प्रयच्छामीत्युक्ते तर्हि स्वप्रेमाणं न दास्यतीति कातरमुखं तमाश्वासयति—भद्रं त इति। मा चिन्तय प्रेमाणमपि दास्यामीत्यपिकारार्थः॥ १९ ॥ ❀ ❀ त्वया पूर्वं यथा प्रार्थितं "पदं त्रिभुवनोत्कृष्टं जिगीषोः साधुवर्त्म" इत्यादि यत्तद् गृहाणेत्याह—नेति। चक्रं शिंशुमारलक्षणम्। केचित्तु तिलपीडनोलूखलं मेढीत्याहुः। कल्पवासिनां दैनंदिनप्रलयस्थायिनाम्। महाप्रलये सति ध्रुवस्य महावैकुंठारोहणमिति केचित्। ब्रह्मांडमध्यवर्त्तित्वेपि श्वेतद्वीपमथुराद्वारकादीनामिव ध्रुवलोकस्यापि "सुदुर्लभं यत्परमं पदं हरेः" इति 'ततो गंतासि मत्स्थानम्' इति 'आतिष्ठ जगतां वंद्यं तद्विष्णोः परमं पदम्' इति 'ध्रुवस्य वैकुंठपदाधिरोहणम्' इत्यादिप्रमाणेभ्यो भगवल्लोकत्वेन नित्यत्वान्महाकल्पवासिनामपि परस्तादित्यपरे ॥२०-२१॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

एवं विद्वान् कथामृतादिनाभिमाननिवृत्तेरानुषङ्गिकत्वं जानन्नपि अतो विराड्रूपात् परमित्युक्तयेश्वररूपस्य चिदानन्दमयत्वं व्यज्यते। यत्र निर्विशेषे ब्रह्मणि शब्दव्यापारोऽभिधादिर्नास्ति तस्य सविशेषविषयत्वात् किन्त्वारोपितनिवृत्तावेव शब्दस्य व्यापारो न तद्बोधे तादृशं ब्रह्मरूपमपि न वेद्मि। चकारोऽप्यर्थे, तेन च तज्ज्ञानस्येश्वरज्ञानान्न्यूनत्वमभिप्रेतम्। अतः शाब्दज्ञानित्वेऽप्यनुभवाभावात् ॥ १३ ॥ ❀ ❀ तदेव तादृशं दैन्यविज्ञप्तिकाल एव ईश्वरस्य स्वरूपं गर्भोदशायिपद्मनाभाख्यं तदुक्तं लघुभागवतामृते "गर्भोदकशयः पद्मनाभोसावनिरुद्धकः। सोऽयं हिरण्यगर्भस्य प्रद्युम्नत्वे नियामकः" इति काञ्चनलोकपद्मस्य प्रकाशवहुललोकात्मककमलस्य भवतीत्यध्याहारात् कर्मणि चतुर्थीत्यभ्युपगमादित्यर्थम् इत्युक्तम् ॥ १४ ॥ ❀ ❀ स्वापाद्यवस्थावत्त्वे स्वापादीत्यादिना जाग्रदादिपरिग्रहः, स तु जड इति। तस्य चिद्रूपत्वेऽपि जडतादात्म्याध्यासेन जडप्रायत्वाज्जड इत्युक्तम्। आदिमत्त्वमपि तदध्यासेनैव। अतः तृच्प्रत्ययान्तत्वाभावात्किन्तु तृन्प्रत्ययान्तत्वात् भगवति स्वापाद्यवस्थास्तु स्वरूपानन्दोल्लासलीला एवेति न जीवसाम्यमिति ज्ञेयम् ॥ १५ ॥ ❀ ❀ तमेवेश्वरं कस्मिंश्चिदधिकारिणि असम्यगाविर्भावाद्ब्रह्मरूपेण ज्ञातं यस्मिन् निःशक्तिकत्वेन प्रतीतेऽपि आनुपूर्व्यात् भक्तितारतम्यप्रयुक्तक्रमात् अकस्मादिति नियतकारणानियम्यत्वमेवाकस्मिकत्वं तत्र विरुद्धगतय इति विद्यासर्वज्ञत्वशक्तिः। ततोऽविरुद्धाऽविद्याभक्तवात्सल्यलीलया "ततो वत्सानदृष्ट्वैत्य पुलिनेऽपि च वत्सपान्। उभावपि वने कृष्णो विचिकाय समंततः" इतिवत् अननुसंधानरूपा मोहाख्या 'क्व शोकमोहौ स्नेहो वा भयं वा येऽज्ञसंभवाः' इत्यत्राज्ञसंभवा इति विशेषणस्य व्यावर्त्तकत्वाद्विज्ञसंभवानां तु तेषां तत्र स्वीकारात् अनिशमित्यनेन शक्तीनां नित्यत्वमभिप्रेतम्। तत्र वस्तुन एकत्वेऽपि चयस्त्विषामिति न्यायेन निर्विकल्पकस्फूर्त्तेः प्राथमिकत्वात्सविकल्पकायाश्च तस्यास्तदनन्तरजत्वाज्ज्ञानमय्योपासनया तदेव तत्त्वमसम्यगाविर्भवद्ब्रह्मेत्युच्यते। तदेवात्र प्रस्तूयते, अत एवानन्दमात्रमित्युक्तम्। ऐश्वर्य्यज्ञानभक्त्या तु परमात्मशुद्धभक्त्या तु भगवानिति दृष्टितारतम्यादेव तथा तथा स्फूर्त्तिरिति विवेचनीयम्। अखण्डं त्रिविधपरिच्छेदशून्यं सजातीयादित्रिविधभेदशून्यं वा ॥ १६ ॥ ❀ ❀ सकामजनादपि साधनान्मोक्षं संसारनिवृत्तिं मूर्त्तिः श्रीविग्रहः यद्यपि देहदेहिभावाभावात् अन्यपदार्थबहुव्रीहिर्न संगच्छते, तथापि "उभयव्यपदेशात्त्वहिकुण्डलवत्" इति न्यायात् 'राहोः शिरः' इतिवदभेदषष्ठी। यद्यप्येवं त्वत्पादपद्मस्यैव परमपुरुषार्थत्वं तथापि आर्य्य आ सर्वात्मना अर्य्य स्वामिन् 'अर्य्यः स्वामिवैश्ययोरि'ति निपातादृद्धस्वादिरेवायम् ॥१७॥ ❀ ❀ सन्सत्यः उत्कृष्टधामविषयकः संकल्पो यस्य तेन अर्थात् स्तुत्यनन्तरं प्रतिनन्द्य स्तुतिं संश्लाघ्य ॥ १८ ॥ ❀ ❀ संकल्पितमर्थं संकल्पादपि परमोत्कृष्टपददानेच्छया ते भद्रमित्याशीः ॥ १९ ॥ ❀ ❀ नान्यैरिति सार्द्धकम्। अवान्तरकल्पवासिनां दैनंदिनप्रलयपर्य्यंतस्थायिनामपि परस्तात् लोकत्रयनाश इति त्रिलोकपक्षाभिप्रायेणोक्तमन्यथा 'सुदुर्लभं यत्परं पदं हरेरि'ति 'ततो गंतासि मत्स्थानमि'ति 'आतिष्ठज्जगतां वन्द्यं तद्विष्णोः परमं पदमि'ति ध्रुवस्य वैकुण्ठपदाधिरोहणमित्यादिवाक्यानि व्याकुप्येयुः ॥ २० ॥

## श्रीमद्वीरराघवव्याख्या

अब्जनाभेत्यनेन निरतिशयसौगन्ध्यवद्दिव्यमङ्गलविग्रहवैशिष्ट्यमुक्तं महदाद्यशेषं सृष्ट्वानुप्रविश्य पुरुष इत्यनेन प्रकृतिप्राकृतपुरुषशरीरकत्वं च, एवं स्थूलसूक्ष्मशरीरद्वयमुक्तम्। अनन्तेत्यनेन सत्यज्ञानानन्दलक्षणं दिव्यात्मस्वरूपमेतत्त्रितयमेव यथावद्विवेचयन् शरणं व्रजति तिर्यगित्यादिभिश्चतुर्भिः। तत्राद्येन स्थूलरूपं प्रपञ्चयति तिर्यगिति। हे परम ! स्थूलसूक्ष्मरूपाभ्यां विलक्षण निःसमाभ्यधिक ! अत एवाज ! स्थूलरूपगतोत्पत्तिविनाशरहित नगाः स्थावराणि एतच्चराणामप्युपलक्षणं तिर्यञ्चः पशुमृगादयः द्विजा अण्डजाः एषां तिर्यक्त्वादेव संग्रहे सिद्धे गोबलीवर्दन्यायेन पृथग्ग्रहणम्। एवं सरीसृपग्रहणं च, आदिशब्देन स्वेदजोद्भिज्जसंग्रहः, तिर्यगादिभिः परिचितं परितो व्याप्तं सदसत् चिदचिदात्मकं विशेषं विशेषः पृथिवी सोऽस्यास्तीति विशेषम् अर्शआदेराकृतिगणत्वादच् विशेषपर्यन्तमित्यर्थः। महदादि महान् आदिर्यस्य अनेकं विविधविचित्रसंनिवेशं स्थविष्ठं स्थूलं ब्रह्माण्डात्मकं ते तव रूपं वेद्मि त्वच्छरीरत्वेन वेद्मीत्यर्थः। अतः स्थूलरूपात्परं विलक्षणं यद्दिव्यमङ्गलविग्रहात्मकं सूक्ष्मं रूपं तदपि न वेद्मीति न, किन्तु त्वत्प्रसादाद्वेद्मयेवेत्यर्थः। परं रूपं विशिनष्टि। यत्र यद्विषये वादः प्राकृतत्वाप्राकृतत्ववादः

प्रवर्त्तत इत्यर्थः। यद्वा अवेद्मीतिच्छेदः, अवेद्मीत्यकारो निपातो नञ्पर्यायः। ततश्च अतः स्थविष्ठाद्रूपात्परं विलक्षणं "न भूतसंघसंस्थानो देहोऽस्य परमात्मनः" इत्युक्ताप्राकृतदिव्यविग्रहात्मकं रूपं ततः परं दिव्यात्मस्वरूपं सत्यं ज्ञानमनन्तमित्युक्तविधमवेद्मीति न, किन्तु त्वत्प्रसादाज्ज्ञानाम्येवेत्यर्थः। रूपं स्वरूपं बोधयन् विशिनष्टि यत्र वाद इति। यत्र स्वरूपे च वादः देवतिर्य्यङ्मनुष्यादिजातीयवादः निर्विशेषत्ववादश्च प्रवर्त्तत इत्यर्थः। यत्र वादः शब्दव्यापारो नास्ति तद्ब्रह्मस्वरूपं च न वेद्मीति व्याख्यानं त्वयुक्तम् "सर्वे वेदा यत्पदमामनन्ति, शास्त्रयोनित्वात्, वचसां वाच्यमुत्तमं नतास्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती, वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिश्रुतिसूत्रस्मृतिभिः शास्त्रैकवेद्यत्वाभिधानात्॥ १३॥ ❀ ❀ किंच यः पुमानेतच्चिदचिदात्मकं जगत्कल्पान्ते प्रलये जठरे गृह्णन् कुक्षौ निवेश्येत्यर्थः। स्वस्मिन् दृक् यस्य स्वानुभवैकशील इत्यर्थः, अनन्तसखः शेषसहायः तदन्ते अनन्तभोगे शेते योगनिद्रारूढो भवति। यस्य पुंसो नाभिरेव सिन्धुस्तस्मिन् उद्भूतं काञ्चनमयं लोकात्मकं पद्मं तस्य गर्भे कर्णिकायां द्युमान् तेजस्वी ब्रह्मा भवति तस्मै भगवते तुभ्यं प्रणतोऽस्मि॥ १४॥ ❀ ❀ एवं रूपं विशिष्य पुनः स्वरूपं विशिनष्टि त्वमिति द्वाभ्याम्। ननु जीववन्ममापि स्थूलसूक्ष्मशरीरत्वे ततः को विशेष इत्यत्राह त्वमिति। त्वमकर्मायत्तस्वेच्छोपात्ताप्राकृतदिव्यमङ्गलगुणास्पदविशिष्टस्त्वं स्थितौ निमित्तभूतायां जगत्पालनार्थमित्यर्थः, अधिमखः यज्ञाराध्यो यज्ञफलप्रदश्च व्यतिरिक्तः प्रकृतिपुरुषविलक्षणः आस्से तिष्ठसि। अत्राधिमख इत्यनेन स्थितावित्यनेन च 'परित्राणाय साधूनामि'त्युक्तरीत्या सर्वयज्ञाराध्यत्वाय साधुपरित्राणाय च त्वज्जन्म, न तु जीववत्कर्मायत्तमित्यवगम्यते। अव्यतिरिक्त इति छेदे प्रकृतिपुरुषविलक्षण एव ताभ्यामपृथक्त्वेनावस्थित इत्यर्थः। नन्वनंतविचित्रस्थिरचरात्मकस्य जगतो धारणपोषणभोगाद्यात्मकं पालनं कथमेकेन मया युगपत्कर्तुं शक्यमित्यत्राह। बुद्ध्यवस्थितं बुद्धाववस्थितं विषयीभूतं संकल्परूपज्ञानविषयमिति यावत्, अखण्डितया असंकुचितया स्वदृष्ट्या संकल्परूपज्ञानेन द्रष्टा साक्षात्कर्त्तासि कृत्स्नस्य जगतः सर्वदेशकालावस्थास्वनिष्टनिरसनेष्टप्रापणात्मकपरिपालनोपयोग्यसंकुचितत्वसंकल्परूपज्ञानाश्रयोऽसीत्यर्थः। स्थितावधिमजव्यतिरिक्त इत्यपि पाठः। तत्र अजः प्रकृतिपुरुषगतस्वरूपान्यथाभावरूपोत्पत्त्यादिरहितः, अत एव व्यतिरिक्तः प्रकृतिपुरुषाभ्यां विलक्षणः, स्थितावधिं व्यवस्थितावधिं मत्स्यावतारपर्य्यन्तं वा यत्त्वं जगत्सर्वमखण्डितज्ञानेन साक्षात्कुर्वन् आस्से इत्यर्थः। एवं तत्त्वं नित्यमुक्तः व्याप्यवस्तुगतदोषास्पृष्टः अनेनाचिद्व्यावृत्तिः। अचिद्द्रव्यं हि अव्यक्तमहदादिकं स्वकार्येषु पृथिव्यादिषु व्याप्तं तद्गतदोषैः स्पृष्टम्। एवं जीवव्यावृत्तिश्च जीवोऽपि देवादिशरीरेषु व्याप्तः परमार्थतस्तद्गतदोषैरस्पृष्टोऽप्यहंममाभिमानाभ्यां क्लिश्यतीति न नित्यमुक्तः। त्वं तु नित्यमुक्त इति भावः। तत्र हेतुः विशुद्धः अकर्मवश्यः नित्यमुक्तशब्दात्परस्य सुपो लोप आर्षः कर्मधारयो वा, विशुद्धत्वे हेतुः परिबुद्धः असंकुचितज्ञानः जीवो हि कर्मायत्तसंकोचविकासभाग् भावरूपज्ञानाश्रयो न परिशुद्ध इति भावः। तत्र हेतुः कूटस्थः निर्विकारः स्वरूपतः स्वभावतोऽपि निर्विकारस्त्वं जीवस्तु स्वभावतो विकारी। ननु नित्यमुक्तत्वपरिबुद्धत्वविशुद्धत्त्वानि मुक्तेषु नित्यसिद्धेषु चातिव्याप्तानि तत्राह। आत्मा तेष्वन्तःप्रविश्य धारकः न चात्मत्वमप्यतिप्रसक्तमत उक्तमादिपुरुषो भगवान् अधीश इति आदिपुरुष इति कर्मधारयः, आदिशब्दश्च कारणवाची कारणं हि कार्य्यस्यादि. जगत्कारणभूतः पुरुष इत्यर्थः। जगत्कारणत्वञ्च न मुक्तेषूपपन्नं "जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च भोगमात्रसाम्यलिङ्गाच्चेति" मुक्तेषु जगद्व्यापाराभावस्य सूत्रितत्वात् भगवच्छब्देन समग्रषाड्गुण्यपरिपूर्णत्वमुच्यते तदप्यनतिप्रसक्तमेव। अधीशः त्रयाणां सत्त्वरजस्तमसां तत्परिणामरूपाणां त्रयाणां लोकानां वा अधीशः, इदमप्यनतिप्रसक्तमेवेति त्रिविधचेतनव्यावृत्तिः॥ १५॥ ❀ ❀ ननु कथमचेतनेषु चावस्थितस्यापि तद्गतदोषास्पर्शः, न चाकर्मवश्यत्वादुपपत्तिः पुण्यापुण्यसजातीयचेष्टितानि कुर्वतस्तदवश्यत्वानुपपत्तेरित्यत्राह यस्मिन्निति। विरुद्धमतयः विरुद्धा मतिर्यासु ता आश्रयान्तरेषु सामानाधिकरण्यानर्हा विद्यादयो ज्ञानादयः विविधाः शक्तयः आनुपूर्व्यात्क्रमेण यस्मिन् पतन्त्याविर्भवन्ति, शक्तिर्हि कार्योपयोग्यपृथक्सिद्धविशेषणं तत्र सृष्टिस्थित्यन्तःप्रवेशनियमनसंहारादीनां क्रमिकत्वेन पौर्वापर्यात्तदुपयुक्तशक्तीनामपि तद्द्वारा पौर्वापर्यमत्र विवक्षितं, सर्वदा सर्वशक्तेस्तस्य क्रमेण शक्त्याश्रयत्वायोगात्। एवं च सर्वशक्तेस्तस्य सर्वमुक्तमुपपन्नमिति भावः। उक्ताकारं ब्रह्म जगत्कारणत्वेन लक्षणेन लक्षयन् संग्रहेण तत्स्वरूपमपि शोधयन् शरणं व्रजति

तदिति। तद्ब्रह्म विश्वभवमेकमित्यनेन "यतो वा इमानि भूतानी"ति वाक्यं स्मारितम्। अविकारमानन्दतन्मात्रमनन्तमिति पदत्रयेण "सत्यं ज्ञानमनन्तं ब्रह्मे"ति वाक्यं स्मारितं तत्राह जन्मादिवाक्ये जगत्कारणत्वेनोपलक्षितस्य ब्रह्मणः स्वरूपं सत्यादिवाक्ये शोधितम्, एवमत्रापि। तथाहि विद्यादयो विविधशक्तय इत्यनेन सृष्ट्याद्युपयुक्ताः 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'त्युक्तशक्तीनामभिधानेन जगज्जन्मादयोऽप्युपस्थापिताः। सर्वशक्तिमत्त्वेन प्रसिद्धं ब्रह्म यस्मिन्निति यच्छब्देनानूद्योपस्थितानां जन्मादीनां लक्षणत्वमुच्यते विश्वभवमिति। भवत्यस्मादिति भवं विश्वस्य भवं विश्वभवं विश्वोत्पत्तिकारणमित्यर्थः। एकशब्देनोपादानत्वं निमित्तत्वं स्थितिसंहारकारणत्वं चैकस्यैवेति विवक्षितम्। 'तद्ब्रह्मे'त्यनेन 'अधीहि भगवो ब्रह्मे'त्युपक्रमे पृष्टस्य प्रतिवचनत्वसमर्थकं 'तद्विजिज्ञासस्व तद्ब्रह्मे'ति वाक्यं स्मारितम्। एवं जगत्कारणत्वेनोपलक्षितं ब्रह्म स्वरूपतो लक्षयति अविकारमिति। अनेन सत्यपदं स्मारितम्, तेन हि सततपरिणामिनोऽचेतनात्तत्संसृष्टाच्चेतनाच्च वैलक्षण्यमुक्तम्। एवमत्राप्यविकारपदेन आनन्दमात्रं मात्रचा क्वापि जडत्वव्यावृत्तिः। अनेन ज्ञानपदं स्मारितम्। अनुकूलज्ञानमेव हि आनन्दः

श्रौतस्यापि ज्ञानपदस्यानन्दरूपज्ञानपर्यवसानत्वद्योतनायानन्दशब्दः प्रयुक्तः । अनेनानन्दपदेन नित्यासंकुचितानुकूलज्ञानाश्रयत्वं विवक्षितं, तेन मुक्तचेतनव्यावृत्तिः, ते हि बद्धदशायां संकुचितज्ञानत्वेन न नित्यासंकुचितज्ञानाः, अनन्तपदेन देशकालवस्तु-परिच्छेदराहित्यं विवक्षितं अनेन नित्यसिद्धव्यावृत्तिः, तेषां स्वरूपस्याणुपरिमाणत्वेनानन्तत्वाभावात् । तत्र देशपरिच्छेदो नाम इदमत्र न भवतीति कालपरिच्छेदो नाम इदमिदानीं न भवतीति एवंरूपः एतद्द्वयरहितः । वस्त्वपरिच्छेदो नाम सर्ववस्तुसामानाधिकरण्यार्हत्वम् , एवंभूतं ब्रह्माडं प्रपद्ये शरणं गतोऽस्मि ॥ १६ ॥ ॐ ॐ एवं ब्रह्मस्वरूपगुणान् विशोध्य तं प्रपद्यैतद्भजनस्य फलाविनाभूतत्वमाविष्कुर्वन् वात्सल्यनिधेस्तस्याभिमतार्थादप्यतिशयितपुरुषार्थप्रदत्वमाह सत्याशिष इति । हे भगवन् ! सत्याशिषः आशिषः सत्याः क्रियन्ते येन स सत्याशीः तस्य पुरुषार्थमूर्तेः स्वयं पुरुषार्थभूतस्वरूपस्य तव पाद-पद्मं यथा आशीः तथा इच्छानुरूपमित्यर्थः, अनुभजतोऽत एव दीन त्रिवर्गनिष्ठानप्येवम्भूतानस्मान् अनुग्रहकातरः अनुग्रहैकविवशः भगवान् षाड्गुण्यपरिपूर्णः भवान् वत्सकं स्वार्थे कः व. १५ नवप्रसूता धेनुरिव हे आर्य स्वामिन् परिपाति अभिमतप्रदानेन परिपाति परीत्युपसर्गेण सर्वतः पाति संसारभयाच्च पातीत्ययमर्थो विवक्षितः ॥ १७ ॥ ॐ ॐ स्तुतिमुपसंहरति अथेति । सत्संकल्पेन दृढसंकल्पेन धीमता ध्रुवेणैवमभिष्टुतः स्तुतः अनन्तरं भक्तेष्वनुरक्तो निरतिशयप्रीतिमान् भगवान्प्रतिनन्द्य स्तुति-मिति शेषः, इदं वक्ष्यमाणमब्रवीत् ॥ १८ ॥ ॐ ॐ उक्तमेवाह वदेति । हे राजन्यबालक ! ते त्वया हृदि व्यवसितम् अभिमतविषय-त्वेन निश्चितमहं वेद जानामि, ते त्वया व्यवसितमितरैर्दुरापं दुर्लभमपि हे सुव्रत ! ते तुभ्यं प्रयच्छामि ददामि ॥ १९ ॥ ॐ ॐ व्यवसितमेव प्रपञ्चयति नान्यैरिति सार्द्धद्वयेन । हे भद्र ! ध्रुव ! ध्रुवा शाश्वती क्षितिर्वासो यस्मिन् भ्राजिष्णु दीप्तिमत् अन्यै-रनधिष्ठितं यत्र स्थाने ज्योतिषां ज्तोतिरूपाणां ग्रहादीनां चक्रमाहितमर्पितम् ॥ २० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ब्रह्मादीनामपि त्वत्प्रसादात् ऋते त्वद्रूपदर्शनमसुकरं किमुत मादृशानामिति भावेनाह तिर्यङ् नगेति । हे अज ! अशेषं सर्वावयवोपपन्नं महदादि महत्तत्त्वमादिर्यस्य तत्तथोक्तं सता पृथिव्यादिभूतत्रयेणासता वाय्वादिभूतद्वयेन विशेषो यस्य तत्तथोक्तं स्थविष्ठं स्थूलतमं तिर्यगादिभिर्विरचितं ब्रह्माण्डाख्यं रूपं वेद्मि, हे परम ! अतः स्थूलात्परं सूक्ष्मं रूपं न वेद्मि । अत्र हेतुगर्भविशेषणमाह यत्रेति । वाच इत्युपलक्षणं, वेदाभिमानिनो लक्ष्म्यादयो यत्र यद्विषयज्ञानवन्तो न भवन्ति, किमुक्तं भवति लक्ष्मीब्रह्माद्या अनुदिनं पश्यन्तोऽपि किंचिदनन्तत्वेन जानन्ति, किन्वहं तदुक्तम् "पश्यमानोऽपि तु हरिं न तु वेत्ति कथंचन । वेत्ति किंचित्प्रसादेन हरेरथ गुरोस्तथा ॥ द्वे वा व ब्रह्मणो रूपे मूर्तं चैवामूर्तं च, यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इत्यादिश्रुतेः ॥ १३ ॥ ॐ ॐ सृष्टिसंहारकर्त्रोर्ब्रह्मरुद्रयोर्लोकदृद्रतां विष्णुसमत्वशङ्कां निवर्तयितुमाह कल्पान्ते इति । अनन्तः सखा यस्य स तथोक्तः स्वदृक् स्वयं प्रकाशः पुमान् कल्पान्ते एतदखिलं जगज्जठरेणोदरेण गृह्णन् संहरंस्तस्या-नन्तस्याङ्के शेते यस्य नाभिसिन्धुरुहं नाभिसरसो जातं तदेव काञ्चनं सुवर्णवर्णं लोकात्मकं पद्मं तस्य गर्भे द्युमानतिद्युतिमान् ब्रह्मा जात इति शेषः । अनेन रुद्रस्य संहर्तृत्वं ब्रह्मणः स्रष्टृत्वं च द्वारमात्रमिति ज्ञातव्यम् । एवंविधमाहात्म्यस्य हरेस्त्वया किमुपक्रियत इति तत्राह भगवत इति ॥ १४ ॥ ॐ ॐ पङ्के प्रवर्तमानस्य पङ्कलेप इव सृष्ट्यादौ प्रयतमानस्य हरेरनित्यत्वं दोषबद्धत्वमशुद्धत्वं च स्यादित्याशङ्क्य योगिनोऽपि दुर्भगशरीरस्थस्य तद्गतदुःखाद्यनुभवो नास्ति, किमुत नित्यमुक्तस्य नित्यशुद्धस्यात एवाप्रतिहतबोधस्येति भावेनाह त्वं नित्येति । किमेवंभूतः परिच्छिन्न इति नेत्याह । आत्मेति आततत्वादात्मा, तर्हि तत्तत्पदार्थ-संबन्धेन तत्तद्धर्माः संगम्यन्ते इत्यत उक्तं कूटस्थ इति । षड्विकारशून्यः एवंविधः कोऽयमत्राह । आदिपुरुष इति । आदीत्युपलक्षणं जगत आदावन्ते च वर्तमानः पुरुषः पूर्णषड्गुणः श्रीनारायणः, पूर्णषड्गुणत्वं स्पष्टमाह भगवानिति । 'ऐश्वर्यस्य समग्रस्ये'ति स्मृतेः । कुतोऽस्य समग्रैश्वर्यमवगम्यत इत्यत उक्तं त्र्यधीश इति । त्रयाणां लोकानां मुक्तामुक्तसंसारिणां वर्तमानादिकालानां वा जाग्रदाद्य-वस्थानामृगादिवेदानां वा इत्यादित्रित्वसंख्यावतामधीशः इन्द्रादिव्यावृत्त्यर्थमधीश इत्युक्तं, तमेव विशिनष्टि इति । यद्यस्माद-खण्डितया स्वबुद्ध्या स्वरूपज्ञानेन वधि संसारस्यावधिभूतं बुद्ध्यवस्थितं बुद्धौ स्थितं त्वां दृष्ट्वावस्थिता ये पुरुषास्तैः सहातो-ऽस्मात्प्रपञ्चाद्व्यतिरिक्तस्त्वमास्स इत्यन्वयः । "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरि"ति वचनादल्लोपः प्रामाणिकः ॥ १५ ॥ ॐ ॐ अघटितघटनशक्तिमत्त्वादयमेवाभीष्टसिद्धये प्रार्थनीय इत्याह यस्मिन्निति । विरुद्धगतयो लोके विरुद्धविषया विद्याद-यो विविधशक्तयः स्थूलत्वमणुत्वह्रस्वत्वमित्यादयो यस्मिन् हरावनिशं पतन्ति वर्तन्ते । तत्र प्रमाणमाह आनुपूर्व्येति "आनुपूर्वी श्रुतिश्चैव त्रयी चाम्नाय उच्यत" इत्यभिधानात् 'विचित्रशक्तिः पुरुषः पुराणः, अस्थूलमनण्वह्रस्वमि'त्यादिकया श्रुत्या सिद्धमित्यर्थः । अहं तद्ब्रह्म शरणं प्रपद्य इत्यन्वयः । जगत्कारणं ब्रह्मात्र विवक्षितं न जीव इति भावेनाह । विश्वभवमिति विश्वस्य भव उत्पत्तिर्यस्मात्तत्तथा नैतल्लक्षणं परमाणुष्वतिव्याप्तमित्याह एकमिति । परमाणूनामनेकत्वादिदमेव मुख्यं कारणमित्यर्थः । कारणत्वं मृद्वन्नेत्याह अविश्वमिति । जगतोऽन्यत् अनन्तमिति पाठे जीवाश्रितं कर्म कारणमस्तीत्याशङ्क्य कर्मणः क्षणभङ्गुरत्वेना-नित्यत्वादनेकत्वाच्च कारणत्वानुपपत्तिरित्यर्थः । विश्वस्याद्यन्तवत्त्वेनानित्यत्वादस्य तदभावात्कारणत्वं युक्तमित्याह आद्यमिति ।

आद्यमित्युपलक्षणं, विश्वस्यादावन्ते च भवतीति अनाद्यनन्तत्वं प्रधानस्याख्यातीयत उक्तमानन्दमात्रमिति। इतोऽपि प्रधानस्य कारणत्वमनुपपन्नमित्याह अविकारमिति ॥ १६ ॥ ❀ ❀ इतरदेवतानुग्रहात्त्वदनुग्रह एवाभीष्टफलप्राप्तिहेतुरित्याह सत्याशिष इति। पुरुषार्थमूर्तेरानंदानुभवरूपस्य तव पादमूलमनुभजतः पुरुषस्याशिष्ययः आचार्यशिष्टाः सत्याशिषो यथार्थशुभफलप्रदा ह्येव, एवमपि तथापि आर्य पूज्य! अनुग्रहकातरो भवान् दीनानस्मान्शिष्यान्विशिनष्टि फलप्राप्तये पुनः वास्रेव नवप्रसूता गौरिव वत्सं परिपातीत्यन्वयः। 'वास्रेव विद्युन्मिमाति वत्सं न माता सिषक्ती'ति श्रुतिः ॥ १७ ॥ ❀ ❀ सत्संकल्पेन 'सत्सत्येऽभ्यर्हिते श्रेष्ठे साधीयसि भवत्यपी'ति यादवः ॥ १८ ॥ ❀ ❀ भूयसां महतां योगिनामपि दुरापमित्यनेनायोग्यानामेव दुष्प्रापं न तु योग्यानां तेषां साधनसामग्र्याः सुलभत्वादित्यर्थः। सूचयत इत्युत्तरग्रंथेन ज्ञायत इति भावेन विशिनष्टि नान्यैरिति। ध्रुवा नित्या क्षितिर्निवासो यस्मिंस्तत्तथोक्तं, मेढीति तिलपीडोलूखलं, कल्पलयेपि लयो नास्तीत्याशयेनाह स्थास्न्विति। अनेन ध्रुवक्षितीत्यस्यार्थविशेषो दर्शितः, पुरस्तादग्रे धर्मादयो यत्स्थानं प्रदक्षिणीकृत्य चरन्ति तत्तुभ्यं दास्यामीत्यन्वयः। वनौकसो वानप्रस्थाः ॥ १९-२१ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अथ तथा कस्मादाविर्भूतं श्रीभगवन्तमनुभूय निजपूर्वावस्थामनुशोचति तिर्य्यगिति। न वेद्मि वर्त्तमानसामीप्ये वर्त्तमानवद्वेति विधानात् एतावन्तं कालं नावेदिषमित्यर्थः। येनान्यथा सङ्कल्प्य तवाराधनं कृतमिति भावः। यथा विराड्रूपे सत्यत्वासत्यत्वविचारमयो वादस्तथा यत्र नास्तीति प्रौढिवचनम् ॥ १३ ॥ ❀ ❀ तदेतद्दृश्यमानपरमस्वरूपमेव सर्वाश्रयत्वेन प्रतिपादयति कल्पान्त इति ॥ १४ ॥ ❀ ❀ ननु रूपित्वे सति विराड्व्यष्टिरूपिरूपेभ्यः प्रपञ्चेभ्यो मम को विशेषः येन रूपस्यापि वैलक्षण्यं हेतुत्वेन तर्क्यते तत्राह। त्वं नित्यमुक्तः अविद्याकर्म्मजनितरूपत्वात् परिशुद्धः शुद्धसत्त्वात्मकरूपत्वात् विबुद्धः तत एव स्वरूपसिद्धज्ञानस्यानावरणात् प्रत्युतोल्लासात्। आत्मा स्वरूपाभिन्नत्वात् कूटस्थ एकरूपतया कालव्यापी। सदातनः सर्वरूपत्वात् आदिपुरुषः आदित एव पुरुषाकारः स्वभावसिद्धत्वात्। भगवान् पूर्णशक्त्याश्रयः वस्तुलक्षणत्वात् अधीशः त्रिगुणशक्तेर्नियामकः तदतिरिक्तस्वरूपशक्त्यात्मकरूपत्वात्। तस्मात्तव रूपस्य च प्रकृत्यतीतशक्तिमयत्वादेकात्मकत्वेनान्याभ्यां रूपिरूपाभ्यां विशेष एव तदतीतशक्तिमयत्वमेव योजयति। यदिति ॥ १५ ॥ ❀ ❀ तदुभयशक्तियुक्तत्वाच्च तव नायुक्तम्। सर्वशक्तित्वात् विरुद्धः शक्तिनिधानमेव हि त्वमित्याह यस्मिन्निति। आनुपूर्व्यात् स्वस्ववर्गे उत्तममध्यमकनिष्ठभावेन वर्तमाना विविधशक्तयः प्रायः परस्परं विरुद्धगतयोऽपि यस्मिन् यदाश्रित्याऽनिशं पतन्ति प्रवर्तन्ते स्वस्वव्यापारं कुर्वन्तीत्यर्थः ॥ १६ ॥ ❀ ❀ तस्मात्त्वद्रूपस्य स्वरूपपूर्णपरमानन्दरूपत्वात् परमपुरुषार्थः त्वमेवेति साधूक्तं या निर्वृतिरित्यादिकमित्याह सत्येति। आशिष्टयेति चित्सुखः। हे अर्य्येति। 'अर्य्यः स्वामिवैश्ययोरि'ति निपातात् ह्रस्वादिरेवायम् ॥ १७ ॥ ❀ ❀ भद्रन्त इति पदं त्रिभुवनोत्कृष्टं जिगीषोः साधु वर्त्म मे इति प्राचीनसङ्कल्पानुरूपमपि लभमानस्य ते दुरापं मत्पदप्राप्त्या ततो वैशिष्ट्ये न भद्रमेव भविष्यतीति शुभाशीर्वादाभिप्रायः। तत् प्रयच्छामि तथान्यैर्दुरापमपि प्रयच्छामीत्यन्वयः ॥ १८ ॥ ❀ ❀ नान्यैरिति सार्धकम् ॥१९॥ ❀ ❀ कल्पवासिनां दैनन्दिनप्रलयपर्यन्तस्थायिनामपि परस्तात् स्थास्नु। मेध्यामिति क्वचित् पाठः ॥ २० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

नन्वेवं चेज्जानासि तर्हि मत्पित्रादिप्राप्तेभ्योऽप्युत्कृष्टं पदं साधयानीति सङ्कल्प्य किमिति तद्भजनमकार्षीः। तत्राह तिर्य्यगादिभिः परिचितं व्याप्तं सन्तोऽसन्तश्च विशेषा यस्य तत् महदादीन्यनेकानि कारणानि यस्य स्थविष्ठं विराड्रूपमेव तवाहं वेद्मि, वर्त्तमानसामीप्ये वर्त्तमानवद्वेति एतावन्तं कालमवेदिषमित्यर्थः। अतः स्थविष्ठात् परमेतदप्राकृतं चिदानन्दघनं तव स्वरूपं हे परम! नावेदिषं यत्र वादः शब्दव्यापारो नास्ति तद्ब्रह्म स्वरूपञ्च नावेदिषम्। अत एव बालत्वेनाज्ञत्वात्तथा दुर्भावनामकरवम्। साम्प्रतन्तु त्वदीयकम्बुस्पर्शं प्राप्य सर्व्वमेव वेदार्थमज्ञासिषमत एवं श्रीमच्चरणेषु निवेदयामीति भावः ॥ १३ ॥ ❀ ❀ ननु मां जानासि चेत् त्वामहं परीक्षिष्ये कथय कोऽहमिति तत्राह कल्पान्त इति त्रिभिः। स्वस्मिन्नेव दृक् न तु बहिर्यस्य योगनिद्रारूढत्वात् तस्यानन्तस्य शेषस्याङ्के उत्संगे शेते। यस्य नाभिसिन्धुरुहे नाभिकमले आगन्तुकं काञ्चनवर्णं लोकात्मकं यत् पद्मं तस्य गर्भे कर्णिकायां द्युमांस्तेजस्वी ब्रह्मा भवति तस्मै तं त्वां प्रसादयितुं नतोऽस्मि केवलं, न तु परिचरितुं किमपि शक्नोमीति भावः ॥ १४ ॥ ❀ ❀ ननु ममापि शयनाद्यवस्थावत्त्वे को जीवाद्विशेषस्तत्राह। यद् यतस्त्वं नित्यमुक्तः जीवस्तु त्वत्प्रसादान्मुच्यते। त्वं परिशुद्धः स च मलिनः। त्वं विबुद्धः सर्वज्ञः स त्वल्पज्ञः। त्वमात्मा स तु देहाध्यासी जडः। त्वं कूटस्थो निर्विकारः स तु विकारी। यद्वा त्वं कूटस्थ एकरूपतया कालव्यापी स तु नानारूपतयैव। त्वमादिः कारणं पुरुषः पुरुषाकारश्च स तु न कारणं स्त्री-पुंनपुंसकाकारश्च। त्वं भगवान् स तु भगहीनः। त्वं त्र्यधीशः स तु त्रिगुणाधीनः। त्वं बुद्ध्यवस्थितिं जीवस्य बुद्धेरवस्थां स्वापादिकमखण्डितया स्वदृष्ट्या चिच्छक्त्या साक्षित्वेन

द्रष्टा, स तु बुद्ध्यवस्थाभिः खण्डितदृष्टिः। त्वं स्थितौ सर्वजगत्पालने कर्मण्यास्से स तु स्वपालनेऽप्यसमर्थः। त्वमधिमखः मखादिकर्माधिष्ठाता स तु मखादिकर्माधीनः। अतस्त्वं तस्माद्व्यतिरिक्त एवास्से, तव योगनिद्रादिकन्तु चिच्छक्तेर्विलास इति जानाम्येवेति भावः॥ १५॥ ❀ ❀ सविशेषं भगवत्स्वरूपमुक्त्वा निर्विशेषब्रह्मस्वरूपमाह यस्मिन्निति। निर्विकारं केवलमानन्दमात्रमेव। नित्यचिदात्मकनानाविशेषग्रहणासमर्थानां दूरस्थानां केवलशान्तानां भक्तिमिश्रज्ञानदृष्ट्या भातं तद्ब्रह्म त्वन्महिमस्वरूपं प्रपद्ये, यस्मिन् निःशक्तिकत्वेन प्रतीतेऽपि विद्यादयो विविधशक्तयोऽनिशं स्थिता आनुपूर्व्यात् पतन्ति प्रतीता भवन्ति। अत एव त्वं भक्तितारतम्येन सामीप्यतारतम्यवतां विशेषतारतम्यग्रहणसमर्थानां भक्तिमिश्रज्ञानिभ्यः किञ्चिदधिकभक्तिमतां प्रथमं विद्याशक्तिमानात्मेति भासि। ततोऽप्यधिकभक्तिमतां मायाशक्तिमान् पुरुषो जगत्कारणमिति। अत एव विश्वभवमिति विशेषणं ततः सम्पूर्णभक्तिदृष्ट्या ऐश्वर्याद्यनन्तशक्तिमान् भगवानिति। तत्राप्यतिप्रविष्टधियां लीलालावण्य-कलाकुतूहलवैदग्धीमहोदधिरिति त्वमनुभवगोचरीभवसि। यथा नगरस्यातिदूरस्थजना विशेषमनुपलभमाना इदमग्रे स्थितं वस्तुमात्रमिति तदेव पश्यन्ति अनतिदूरस्था वृक्षषण्डमिति। समीपस्थास्तु विविधनिष्कुटाट्टपुरगोपुरगृहध्वजपताकादियुक्तं नगरमिति। तत्र प्रविष्टास्तु विचित्रतडागरथ्याविपणिशृङ्गाटकाजिरनृत्यगीतवादित्रादिसकलसुखास्पदमित्यनुभवन्ति। यथाहुः प्राञ्चोऽपि "चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभावितात्कृतिम्। विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः॥" इति। शक्तयः कीदृश्यः विरुद्धगतयः इति विद्याविद्ययोः सर्गसंहारयोर्जन्मवत्त्वाजत्वयोरनीहत्वसलीलत्वयोरात्मारामत्व-भक्तवात्सल्ययोर्विरोधेऽपि तत्तच्छक्तीनामतर्क्यैव त्वयि नित्या स्थितिरेव॥ १६॥ ❀ ❀ ननु भो बालक! सत्यमेव त्वं मत्स्वरूपं जानास्येव, किन्तु तव साम्प्रतिकनिष्कामत्वेऽपि यथापूर्वसंकल्पमेव फलमहं दास्यामि गृहाणेति। तत्र स्वस्याज्ञत्वं विवृण्वन् प्रेममाधुर्यमाशासान आह सत्येति। हे भगवंस्तव पादपद्ममेव आशिषो राज्यादेः सकाशात् सत्या आशीः परमार्थफलं! कस्य तथा तेन प्रकारेण त्वमेव पुरुषार्थमूर्तिरित्येवं निष्कामतया अन्वनुभजतः, एवमपि दीनानस्मान् कृतसकामभजनानपि परिपाति निष्कामप्राप्यपादपद्मकिञ्चिन्माधुर्यदानेनेत्यर्थः। तत्र हेतुः—अनुग्रहकातरः बालत्वाद्यद्यप्ययं मच्छुद्धभक्तिं न जानाति तदपि तत्फलं स्वमाधुर्यमिममास्वादयामीति बुद्ध्येत्यर्थः। वाश्रा धेनुर्यथा वत्सकमज्ञं स्वमभजन्तमपि दुग्धं पाययति वृकादिभ्यो रक्षति च तद्वन्मां स्वचरणभक्तिमाधुर्यमास्वादयतु सकामत्वादिभ्यो भक्तिविघ्नेभ्यो रक्षतु चेति भावः॥ १७-१८॥ ❀ ❀ राजन्यबालकेति, तवैश्वर्यस्पृहा स्वाभाविक्येवेति तदहं प्रयच्छानीत्युक्ते तर्हि स्वप्रेमाणं न दास्यसीति कातरमुखं तमाश्वासयति भद्रन्ते इति। मा चिन्तय प्रेमाणमपि प्रयच्छामीत्यपिकारार्थः॥ १९॥ ❀ ❀ त्वया पूर्वं यथा प्रार्थितं "पदं त्रिभुवनोत्कृष्टं जिगीषोः साधु वर्त्म मे। ब्रूह्यस्मत्पितृभिर्ब्रह्मन्नन्यैरप्यनधिष्ठितमि"ति तदिदं स्थानं गृहाणेत्याह। नान्यैरिति। ध्रुवा नित्या क्षितिर्निवासो यत्र तत् आहितमर्पितं धान्याक्रमणाय भ्राम्यमाणानां पशूनां बन्धनस्तम्भो मेढी, यस्यां बलीवर्द-समूहवत् अवान्तरकल्पवासिनां परस्तान्महाकल्पपर्यन्तं स्थास्नु ततो महाप्रलये सति ध्रुवस्य महावैकुण्ठारोहणमिति केचित्। ब्रह्माण्डमध्यवर्त्तित्वेऽपि श्वेतद्वीपमथुराद्वारकादीनामिव ध्रुवलोकस्यापि 'सुदुर्लभं यत् परमं पदं हरेरि'ति 'ततो गन्तासि मत्स्थानमि'ति 'आतिष्ठ जगतां वन्द्यं तद्विष्णोः परमं पदमि'ति ध्रुवस्य वैकुण्ठपदाधिरोहणमित्यादिप्रमाणेभ्यो भगवल्लोकत्वेन नित्यत्वान्महाकल्पवासिनामपि परस्तादित्यपरे॥ २१॥

## श्रीमच्छुकदेवकृतः सिद्धांतप्रदीपः

एवं भगवदनुग्रहेण प्राप्तज्ञानो यथाशक्ति स्तुत्वाथ कैमुतिकन्यायेन भगवन्तमियत्तानवच्छिन्नत्वेन स्तौति तिर्यगिति। हे अज हे परम! तिर्यगादिभिः परिचितं व्याप्तम्। सन्तः स्थूलाः असन्तः सूक्ष्माश्च विशेषो विभागो यस्मिन् तत् महदादिभिरवयवैरनेकं बहुभेदयुक्तम्। स्थविष्ठं स्थूलं वैराजं ते रूपमपि यदि कार्त्स्न्येन न वेद्मि तर्हि यत्र सर्वकारणे सेश्वर-निरीश्वरादीनां वादः "सर्वे वेदा यत्पदमामनन्ति, वेदैश्च सर्वैरहमेव वेद्यः" इत्यादिश्रुतिस्मृतिभ्यः शास्त्रैकवेद्यम् अतः स्थविष्ठात् परं रूपं न वेद्मीति किंमु वक्तव्यमित्यर्थः। यदुक्तम् अतः परमीश्वरं न वेद्मि यत्र वादः शब्दव्यापारो नास्ति तद् ब्रह्मस्वरूपं च न वेद्मीति। तत्र, जगत्कारणादीश्वरादन्यस्य ब्रह्मणः सूत्रकारेणाप्रतिपादितत्वात् शब्दव्यापारवर्जितवस्त्वभावाच्च॥ १३॥ ❀ ❀ एवमियत्तानवच्छिन्नत्वेन स्तुत्वाथ लोकत्रयप्रवेशस्थानत्वादिना स्तुवन्नमस्करोति कल्पान्त इति। यः पुमान् पुरुषः एतज्जगज्जठरेण गृह्णन् उदरे निवेश्य स्वदृष्टिः अनन्तसखस्तस्य वाङ्के शेते, यस्य च नाभिरेव सिन्धुस्तस्मिन् रोहतीति तथा तस्मिन् काञ्चनवदुज्ज्वललोकपद्मस्य गर्भे मध्ये पुमान् ब्रह्मा भवति तस्मै॥ १४॥ ❀ ❀ अथ "भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्, उभयव्यपदेशात्त्वहिकुण्डलवदि"त्यादिश्रुतिसूत्रसिद्धं विश्वभिन्नाभिन्नं भगवन्तं वर्णयन् शरणं व्रजातत्वमिति द्वाभ्याम्। त्वं श्रुतिप्रोक्तेषु त्रिविधेषु पदार्थेषु भोक्त्रादिषु अधीशः प्रेरयितृशब्दार्थः भोक्तृभोग्यविलक्षणस्वरूप-स्तदुभयनियन्तेत्यर्थः। तदुभयविलक्षणस्वरूपत्वमुपपादयति नित्यमुक्तः परिशुद्धः विशुद्धः त्वं नित्यमुक्तेभ्योऽपि परिशुद्धो विशुद्धश्च किं पुनर्बद्धेभ्य इति जीवेभ्यो वैलक्षण्यमुक्तम्। आत्मेति अनात्मवर्गात्कालादितो वैलक्षण्यमुक्तम्। सर्वनियन्तृत्वमुप-पादयति सर्वहेतुतया षाड्गुण्यनिधित्वेन च आदिपुरुषः सर्वहेतुः भगवान् षाड्गुण्यनिधिश्च, सर्वज्ञत्वेन सर्वपालकत्वेन च

सर्वविलक्षणत्वं सर्वनियंतृत्वं चाह बुद्ध्यवस्थितिं अखंडितया देशकालवस्तुभिरप्रतिहतया स्वदृष्ट्या द्रष्टा साक्षात्पश्यसि, स्थितौ सर्वपालने अधिमखः यज्ञाधिष्ठातृतया वर्तसे, एवंभूतो भवान् यत् येभ्यश्चेतनाचेतनेभ्यः अव्यतिरिक्त आस्ते तेभ्यो भिन्नोऽप्यभिन्न आस्ते इत्यर्थः ॥ १५ ॥ ❀ ❀ ननु कथं भगवतः सर्वभिन्नाभिन्नत्वमित्यत्र हेतुमाह यस्मिन्निति । यस्मिन् आधारे आधेयभूताः विरुद्धा आधारस्वरूपात्सर्वाधारत्वस्वायत्तत्वादिगुणयुक्तात् विलक्षणा आधेयत्वपरायत्तत्वादिरूपा गतिर्येषां ते विरुद्धगतयो लोकाः अनेककोटिब्रह्माण्डानि आनुपूर्व्यात्सृष्टिसंहारक्रमेण अनिशं पतन्ति, इत्येवं सर्वाधारत्वेन सर्वभिन्नाभिन्नत्वं भगवतो दर्शितम् । विद्याश्चेतनरूपाः शक्तयः, आदिना अचेतनरूपाः शक्तयश्च यस्मिन् पतन्ति इत्येवं भगवतः सर्वशक्तित्वेन सर्वभिन्नाभिन्नत्वं दर्शितम् । विश्वभवं सर्वकारणमित्यनेन सर्वकारणत्वेन भगवतः सर्वभिन्नाभिन्नत्वं दर्शितम् । श्रुत्यापि सर्वस्य ब्रह्मजत्वादिनैव ब्रह्माभिन्नत्वमुक्तं न तु स्वरूपैक्येन । 'सर्वं खल्विदं ब्रह्म, तज्जलानिती'ति यत आद्यं सर्वपूर्ववर्ति सर्वोपादानभूतम् । शक्तिपरिणामाभिप्रायेण स्वरूपतोऽविकारित्वमाह अविकारमिति । सर्वदुःखरहितत्वमाह आनन्दमात्रमिति । एवंभूतमेकमनेकचेतनाचेतनाश्रयं ब्रह्म वासुदेवं प्रपद्ये इति संक्षेपार्थः ॥ १६ ॥ ❀ ❀ हे भगवन् ! पुरुषार्थः मुक्तगम्यो योऽर्थः स एव मूर्तिर्यस्य तस्य तव पादपद्ममेव आशिषस्त्रिवर्गरूपात् इतरफलात् सत्या समीचीना आशीः फलम् । कस्य तथात्र भगवत्पादपद्ममेव समीचीनं फलमित्येवं दार्ढ्येनानुभजतः यद्यप्येवम् , तथापि दीनान् सकामान् अस्मानपि भगवान् भवान् हे आर्य्य ! परिपाति परितः सर्वतः भुक्तिदानेन संसाराद्भयदानेन च रक्षति यथा वत्सकं दुग्धदानेन वृकादिभयाच्च वाश्रा धेनुः परिपाति तद्वत् ॥ १७-१८ ॥ ❀ ❀ व्यवसितं वाञ्छितम् ॥ १९ ॥ ❀ ❀ तदेव वर्णयति सार्द्धद्वाभ्यां नान्यैरिति । हे भद्र ! ध्रुवा क्षितिः स्थितिर्यस्मिन् ज्योतिषां चक्रं शिशुमाराख्यं यत्राहितमर्पितम् ॥ २० ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

ननु 'तरति शोकमात्मवित् , तमेव विदित्वातिमृत्युमेति' इत्यादौ ज्ञानेनैव संसारतरणस्योक्तत्वात्तेनैव तरिष्यसि, किं सत्सङ्गप्रार्थनयेत्याशङ्क्य स्थूलस्वरूपज्ञानसत्त्वेपि सूक्ष्मस्वरूपस्य ज्ञानं मम नास्तीत्याह—तिर्यगिति । तिर्यञ्चो गोमृगादयः नगा वृक्षपर्वतादयः द्विजाः पक्षिणः सरीसृपाः सर्पादयः देवा इन्द्रादयः दैत्याः प्रह्लादादयः मर्त्याः मनुष्यास्तैस्तिर्यगादिभिः परिचितं व्याप्तम् । सदसद्विशेषं सन्ति स्थूलानि पृथ्व्यादीनि पञ्च महाभूतानि असन्ति भूतसूक्ष्माणि शब्दादीनि विशेषा यस्य तत् । यद्वा तिर्यगादिष्वेव केचित्सन्त उत्कृष्टा देवादयः केचिदसन्तो निकृष्टा दैत्यादयस्ते विशेषाः परस्परं विलक्षणा यस्मिंस्तत् । महदादीन्यनेकानि कारणानि यस्य तत् । एवंभूतं ते तव स्थविष्ठं विराड्रूपं केवलमहं वेद्मि । अतः परं यत्र वादो 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतेर्लौकिकशब्दव्यापारो नास्ति तत्सूक्ष्मं स्वरूपं न वेद्मि । अतस्तज्ज्ञानं विना कथं मोक्ष इति भावः । ननु महदादेर्जन्यत्वात्तद्रूपत्वेन ममापि किं जन्यत्वमिति शङ्कां वारयन् संबोधयति—हे अज इति । कथं तर्हि तद्रूपत्वमित्याशङ्क्य पुनः संबोधयति—हे परम इति । परमेश्वरे त्वय्युभयमविरुद्धं महदादिरूपेण जन्यत्वेपि स्वरूपेणाजन्यत्वादिति भावः ॥ १३ ॥ ❀ ❀ ननु यदि त्वयि मम ज्ञानं नास्ति तदा कथमखिलशक्तिधरो वागादीन् जीवयतीति एकस्त्वमेव भगवन्निदमात्मशक्त्या सृष्ट्वे ति त्वदुक्तयेति सा निर्वृतिर्ब्रह्मणि नास्तीति च कथयसीत्याशङ्क्य यथाकथंचित् स्वबुद्ध्यनुसारेण ज्ञाने सत्यपि दुरवगाह्यमहिमत्वेन तत्रानाश्वासात् सत्सङ्गेन भजनस्य सुकरत्वात्तत्प्रार्थयामीत्यभिप्रेत्य स्वबुद्ध्यनुसारेण भगवन्तं वर्णयन्नमस्यंश्च शरणं व्रजति—कल्पान्त इति त्रिभिः । कल्पान्ते कल्पस्य सृष्टिसमयस्यान्ते प्रलयसमय एतत् त्रैलोक्यमखिलं सर्वं जठरेण उदरेण गृह्णन् उदरे संनिवेश्य अनन्तसखः अनन्तः शेषः सखा सहायभूतो द्वितीयो यस्य सः । तदङ्के तस्य शेषस्योत्सङ्गे यः पुमान् श्रीनारायणः शेते, अत एव स्वदृक् प्रपञ्चक्रीडोपरत्या योगनिद्रारूढत्वात् स्वस्मिन्नेव न बहिर्दृक् दृष्टिर्यस्य सः । यद्वा ननु त्रिलोक्या उदरीकरणे तदा सूर्यादिप्रकाशाभावादन्धकारावृतः स्यादित्याशङ्क्याह—स्वदृगिति । स्वयंप्रकाश इत्यर्थः । यस्य नाभिरेव गाम्भीर्यात् सिन्धुः समुद्रस्तस्मिन् रोहतीति तथा तदेव प्रकाशबहुलात् काञ्चनं सुवर्णवर्णं त्रिलोकात्मकं पद्मं तस्य गर्भे कर्णिकायां द्युमान् अतिद्युतिमान् तेजस्वी ब्रह्मा जातः सः भवानिति शेषः । तस्मै तुभ्यं भगवते अचिन्त्यमहिम्ने, तं त्वां भगवन्तमचिन्त्यशक्तिमहं प्रणतोस्मि ॥ १४ ॥ ❀ ❀ एवं भगवतोपि स्वापाद्यवस्थावत्त्वकथनेन प्राप्तं जीवसाम्यं तद्वैलक्षण्यप्रदर्शनेन वारयति—त्वमिति । त्वं व्यतिरिक्त आस्से तिष्ठसीत्यन्वयः । व्यतिरिक्त इत्यस्य प्रतियोगिसापेक्षत्वात्प्रकरणात्पूर्वोक्तस्वापाद्यधर्मवज्जीव एव प्रतियोगी । तथाच जीवात्त्वं व्यतिरिक्तः विलक्षण एवेत्यर्थः । कुतो वैलक्षण्यमित्याशङ्क्य यत् यस्मात्त्वं नित्येत्यादिना तदेव वैलक्षण्यं साधयति—त्वं नित्यमुक्तः सर्वदा अविद्यादिबन्धरहितः जीवस्तु त्वदनुग्रहाद्विमुच्यते । अत एव त्वं परिशुद्धः रागद्वेषादिमलरहितः जीवस्तु तद्वत्त्वान्मलिनः । त्वं त्वात्मा व्यापकः जीवस्तु परिच्छिन्नः । त्वं कूटस्थो निर्विकारः जीवस्तु विकारवान् । त्वमादिपुरुषः जीवस्तु त्वदुत्पन्नत्वादादिमान् । त्वं भगवान् ऐश्वर्यादिगुणपरिपूर्णः जीवस्तु तद्धीनः । त्वं त्र्यधीशः त्रयाणां सत्त्वरजस्तमसां मायागुणानां यद्वा त्रयाणां लोकानां यद्वा त्रयाणां भूतभविष्यद्वर्त्तमानानां कालानामधीशो नियन्ता जीवस्तु तत्परतन्त्रः । सर्वज्ञत्वं सर्वविकाराराहित्यं च सर्वबुद्धिवृत्तिसाक्षित्वेन समर्थयति । सर्वप्राण्यन्तःकरणे स्थितः सन्नखण्डितया निरवच्छिन्नया स्वदृष्ट्या चैतन्यशक्त्या बुद्ध्यवस्थितिं तां तां बुद्धेरवस्थां

द्रष्टा पश्यसि । द्रष्टेति तृन्प्रत्ययान्तमत एव बुद्ध्यवस्थितिमिति द्वितीयाप्रयोगोऽन्यथा षष्ठी स्यात् । जीवस्तु स्वबुद्ध्यवस्थितिमेव विस्मरति । सत्कर्मणां तत्तत्फलदातापि त्वमेवेत्याह–स्थिताविति । जगतः स्थित्यर्थमधिमखो मखाधिष्ठाता तत्फलदाता विष्णुस्त्वम् । असत्कर्मणामपि फलदाता त्वमित्यपि ज्ञेयं दुष्टनिग्रहं विना पालनासंभवात् । जीवस्तु त्वद्दत्तमिष्टमनिष्टं वा भुङ्क्ते इति ॥ १५ ॥ ❀ ❀ इदानीं विरुद्धधर्माश्रयत्वानन्तशक्तित्ववर्णनपूर्वकं शरणं व्रजति–यस्मिन्निति । विरुद्धगतयः लोके विरुद्धा एकत्रानवस्थानलक्षणा गतिः स्वभावो येषामणुत्वमहत्त्वादीनां ते लोके नियमेन विभिन्नाश्रया धर्मा यस्मिन्ननिशं निरंतरं पतन्ति वर्त्तन्ते । हीत्यनेन "तदेजति तन्नैजति, अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" इत्यादिप्रमाणं सूचयति । तथा विद्यादयो विविधशक्तयो यस्य सेवायामनिशं निरन्तरमानुपूर्व्यात् पर्यायेण स्वस्वाधिकारानुसारेण पतन्ति उपतिष्ठन्ते । आदिशब्दात् "श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्जया । विद्ययाऽविद्यया शक्त्या मायया च निषेवितम्" इति दशमोक्ताः नियमेन शक्तयो ज्ञेयाः । यद्ब्रह्म व्यापकं "सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति" इति वचनात् तस्य सर्वशक्तिमत्त्वेन जगत्कारणत्वमाह– विश्वभवमिति । विश्वस्य भवो जन्म यस्मात्तत् । तथापि तत्कारणं किञ्चिदन्यत् स्यादिति शङ्कां वारयति–आद्यमिति । स्वयमनादीत्यर्थः । तथात्वेपि विनाशि स्यादित्याशङ्काव्युदासार्थमाह–अनन्तमिति । अतो विनाशस्तद्रहितमित्यर्थः । तथात्वेपि सद्वितीयत्वं स्यादित्याशङ्क्याह–एकमिति । सजातीयविजातीयस्वगतभेदशून्यमित्यर्थः । नन्वेवं भेदशून्यत्वे सर्वात्मकत्वेन सविकारं स्यादित्याशङ्क्य तन्निराकरणार्थमाह–अविकारमिति । वृद्धिक्षयादिविकाररहितमित्यर्थः । तथाप्यनादेयं स्यात्तत्राह–आनन्दमात्रमिति । नहि परमानन्दः कस्याप्यनादेयो भवति । तदहं प्रपद्ये शरणं व्रजामीत्यन्वयः ॥ १६ ॥ ❀ ❀ एवं विरक्तवन्महत्सङ्गतिप्रार्थनां कृत्वापि सुरुच्या दुर्वचोबाणविद्धहृदयत्वेन पूर्वजन्मवासनाप्राबल्याच्चेदानीमर्थमेव प्रार्थयते–सत्येति । हे भगवन् ! यद्यपि पुरुषार्थमूर्तेः पुरुषार्थः सर्वपुरुषप्रार्थनाविषयः परमानन्दः स एव मूर्तिर्यस्य तस्य तव पादपद्मं सर्वतापनिवर्त्तकं चरणकमलं तथाऽनुभजतस्तथा परमपुरुषार्थपरमानन्दस्वरूपत्वमेवेति मत्वाऽन्यकामनाराहित्येन अनु निरन्तरं भजतः पुरुषस्य तदेव तव पादपद्ममन्याशिषो राज्यादेः सकाशात् सत्या आशीः परमार्थफलं, राज्यादेस्तारतम्येन विनाशित्वेन च तापजनकत्वात् । एवं हि निश्चितं नात्र सन्देहस्तथापि हे आर्य पूज्य ! दीनान् सकामानप्यस्मान्भवान् परिपाति तत्तन्मनोरथपूरणेन पालयत्येव, यतोऽनुग्रहे भक्तहिताचरणे कातरः स्नेहपरवशः । स्नेहपारवश्ये दृष्टान्तः वाश्रेति । वाश्रा नवप्रसूता धेनुर्यथा क्षीरेण वत्सं पालयति तद्वत् । ननु तत्तन्मनोरथपूरणे तथा सामर्थ्यमप्यपेक्षितम्, न केवलेन स्नेहेन तत्संभवति तत्राह–भगवानिति । तथा च समर्थः सर्वज्ञश्च भवान् मम मनोरथं जानात्येव तं संपादयितुं किं विशेषनिरूपणेनेति भावः ॥ १७ ॥ ❀ ❀ एवं वर्णितप्रकारेण ध्रुवेणाभिष्टुतो भगवान् प्रार्थितदाने समर्थः । अथ वै स्वमनोरथप्रार्थनानन्तरमेव तां प्रतिनन्द्येदं वक्ष्यमाणमब्रवीदित्यन्वयः । एतत्प्रतिनन्दने हेतुः–भृत्यानुरक्त इति । भृत्ये ध्रुवे यतोऽनुरागवान् यो यत्रानुरक्तो भवति स तद्वचनं प्रतिनन्दति । अनुरागे हेतुं सूचयन्नाह–सत्सङ्कल्पेनेति । सति भगवदभिप्रेते सङ्कल्पो मनोरथो यस्य तेन । अत एवाह–धीमतेति । भगवदभिप्रेतानुकूल्येनैव बुद्धिमत्त्वं नान्यथेति सिद्धान्तात् ॥ १८ ॥ ❀ ❀ यद्यपि 'भक्तिं मुहुः प्रवहताम्' इत्यादिना प्रथमं सत्सङ्गेन भजनप्रार्थना कृता, अन्ते चाप्येवमित्यनेन सर्वोत्कृष्टस्थानप्रार्थना कृता, तथापि पुष्टिमार्गे भगवदिच्छाया एव बलिष्ठत्वात्प्रार्थनाद्वयाविशेषेपि स्वविचारितार्थप्रार्थनस्यैवाभिनन्दनं भगवता कृतं न पूर्वप्रार्थितस्य, तदभिनन्दनेन तद्दाने तु शीघ्रं मोक्षप्रसङ्गेनार्थासिद्ध्या स्वाभिप्रेतलीलैव न सिद्ध्येत्, तद्दानस्य च मोक्षप्रकरणे एवोचितत्वादस्यार्थप्रकरणत्वादत्र सर्वोत्कृष्टस्थानदानमेव भगवतोऽभिप्रेतमिति तदेवाभिनन्द्य ददाति–वेदाहमिति । हे राजन्यबालक ! ते भद्रं कल्याणं भवतु, यत्ते हृदि व्यवसितं सर्वोत्कृष्टं स्थानमाकाङ्क्षितं तदहं सर्वज्ञो वेद जानामि । तदन्यैर्दुरापं दुर्लभमपि तुभ्यं प्रयच्छामि । एवं दुर्लभप्रदाने हेतुं सूचयन् संबोधयति–हे सुव्रत इति । सुष्ठु तीव्रं व्रतं यस्य स तथा । राजन्यबालक इत्यनेन तस्मिन् स्वकृपाधिक्यं सूचयति । अत एवाशीर्वचनं ते भद्रं भवत्विति ॥ १९ ॥ ❀ ❀ तद्दुरापं प्रयच्छामीत्युक्तं तत्र तत्पदेन किमुच्यते कथं वा तस्य दुर्लभत्वमित्यपेक्षायां दुर्लभत्वं प्रदर्शयंस्तन्निर्दिशति–नान्यैरिति । यत् स्थानं त्वदन्यैर्मन्वादिभिर्महद्भिरप्यनधिष्ठितं न प्राप्तम् । भ्राजिष्णु प्रकाशमानम् । तत्र हेतुः यत्र ग्रहादीनां चक्रमाहितं निबद्धं परिक्रमतीति शेषः । ग्रहा आदित्यादयो नव । ऋक्षाणि अश्विन्यादीनि नक्षत्राणि सप्तविंशतिः, तारास्ततोऽन्याः । मेढ्यामिति । धान्यक्रमणाय भ्राम्यमाणानां पशूनां बन्धस्तम्भो मेढी, तस्यां गोचक्रवत् बलीवर्दसमूहवत् । ध्रुवा क्षितिर्निवासो यस्मिंस्तत् । सापेक्षं ध्रुवत्वमेव दर्शयति–स्थास्न्विति । अवान्तरकल्पवासिनां परस्तादपि स्थास्नु लोकत्रयनाशेपि स्थितिशीलम् । एवंभूतस्यापि स्थानस्य दाने योग्यतां सूचयन्संबोधयति–हे भद्र इति ॥ २० ॥

### भाषानुवादः

अजन्मा परमेश्वर ! मैं तो पशु, वृक्ष, पर्वत, पक्षी, सरीसृप (सर्पादि रेंगनेवाले जन्तु), देवता, दैत्य और मनुष्य आदिसे परिपूर्ण तथा महदादि अनेकों कारणोंसे सम्पादित आपके इस सदसदात्मक स्थूल विश्वरूपको ही जानता हूँ; इससे परे जो आपका परम स्वरूप है, जिसमें वाणीकी गति नहीं है, उसका मुझे पता नहीं है ॥ १३ ॥ ❀ ❀ भगवन् ! कल्पका अन्त होनेपर

योगनिद्रामें स्थित जो परमपुरुष इस सम्पूर्ण विश्वको अपने उदरमें लीन करके शेषजीके साथ उन्हींकी गोदमें शयन करते हैं तथा जिनके नाभि-समुद्रसे प्रकट हुए सर्वलोकमय सुवर्णवर्ण कमलसे परम तेजोमय ब्रह्माजी उत्पन्न हुए, वे भगवान् आप ही हैं, मैं आपको प्रणाम करता हूँ ॥ १४ ॥ ❀ ❀ प्रभो ! आप अपनी अखण्ड चिन्मयी दृष्टिसे बुद्धिकी सभी अवस्थाओंके साक्षी हैं तथा नित्यमुक्त, शुद्धसत्त्वमय, सर्वज्ञ, परमात्मस्वरूप, निर्विकार, आदिपुरुष, षडैश्वर्यसम्पन्न एवं तीनों गुणोंके अधीश्वर हैं। आप जीवसे सर्वथा भिन्न है तथा संसारकी स्थितिके लिये यज्ञाधिष्ठाता विष्णुरूपसे विराजमान हैं॥ १५ ॥ ❀ ❀ आपसे ही विद्या-अविद्या आदि विरुद्ध गतियोंवाली अनेकों शक्तियाँ धारावाहिक रूपसे निरन्तर प्रकट होती रहती हैं। आप जगत्के कारण, अखण्ड, अनादि, अनन्त, आनन्दमय, निर्विकार ब्रह्मरूप हैं। मैं आपकी शरण हूँ ॥ १६ ॥ ❀ ❀ भगवन् ! आप परमानन्दमूर्ति हैं—जो लोग ऐसा समझकर निष्कामभावसे आपका निरन्तर भजन करते हैं, उनके लिये राज्यादि भोगोंकी अपेक्षा आपके चरणकमलोंकी प्राप्ति ही भजनका सच्चा फल है। स्वामिन् ! यद्यपि बात ऐसी ही है, तो भी गौ जैसे अपने तुरंतके जन्मे हुए बछड़ेको दूध पिलाती और व्याघ्रादिसे बचाती रहती है, उसी प्रकार आप भी भक्तोंपर कृपा करनेके लिये निरन्तर विकल रहनेके कारण हम-जैसे सकाम जीवोंकी भी कामना पूर्ण करके उनकी संसार-भयसे रक्षा करते रहते हैं॥ १७ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—विदुरजी ! जब शुभ सङ्कल्पवाले मतिमान् ध्रुवजीने इस प्रकार स्तुति की तब भक्तवत्सल भगवान् उनकी प्रशंसा करते हुए कहने लगे ॥ १८ ॥ ❀ ❀ श्रीभगवान्ने कहा—उत्तम व्रतका पालन करनेवाले राजकुमार ! मैं तेरे हृदयका सङ्कल्प जानता हूँ। यद्यपि उस पदका प्राप्त होना बहुत कठिन है, तो भी मैं तुझे वह देता हूँ। तेरा कल्याण हो ॥ १९ ॥ ❀ ❀ भद्र ! जिस तेजोमय अविनाशी लोकको आजतक किसीने प्राप्त नहीं किया, जिसके चारों ओर ग्रह, नक्षत्र और तारागणरूप ज्योतिश्चक्र उसी प्रकार चक्कर काटता रहता है जिस प्रकार मेढीके* चारों ओर दँवरीके बैल घूमते रहते हैं, अवान्तर कल्पपर्यन्त रहनेवाले अन्य लोकोंका नाश हो जानेपर भी जो स्थिर रहता है ॥ २० ॥

मेढ्यां गोचक्रवत्स्थास्नु परस्तात्कल्पवासिनाम् ।
धर्मोऽग्निः कश्यपः शुक्रो मुनयो ये वनौकसः । चरन्ति दक्षिणीकृत्य भ्रमन्तो यत्सतारकाः ॥ २१ ॥
प्रस्थिते तु वनं पित्रा दत्त्वा गां धर्मसंश्रयः । षट्त्रिंशद्वर्षसाहस्रं रक्षिताव्याहतेन्द्रियः ॥ २२ ॥
त्वद्भ्रातर्युत्तमे नष्टे मृगयायां तु तन्मनाः । अन्वेषन्ती वनं माता दावाग्निं सा प्रवेक्ष्यति ॥ २३ ॥
इष्ट्वा मां यज्ञहृदयं यज्ञैः पुष्कलदक्षिणैः । भुक्त्वा चेहाशिषः सत्या अन्ते मां संस्मरिष्यसि ॥ २४ ॥
ततो गन्तासि मत्स्थानं सर्वलोकनमस्कृतम् । उपरिष्टादृषिभ्यस्त्वं यतो नावर्तते ऽगतः ॥ २५ ॥

मैत्रेय उवाच

इत्यर्चितः स भगवानतिदिश्यात्मनः पदम् । बालस्य पश्यतो धाम स्वमगाद्गरुडध्वजः ॥ २६ ॥
सोऽपि संकल्पजं विष्णोः पादसेवोपसादितम् । प्राप्य संकल्पनिर्वाणं नातिप्रीतोऽभ्यगात्पुरम् ॥ २७ ॥

विदुर उवाच

सुदुर्लभं यत्परमं पदं हरेर्मायाविनस्तच्चरणार्चनार्जितम् ।
लब्ध्वाप्यसिद्धार्थमिवैकजन्मना कथं स्वमात्मानममन्यतार्थवित् ॥ २८ ॥

मैत्रेय उवाच

मातुः सपत्न्या वाग्बाणैर्हृदि विद्धस्तु तान् स्मरन् । नैच्छन्मुक्तिपतेर्मुक्तिं तस्मात्तापमुपेयिवान् ॥ २९ ॥

ध्रुव उवाच

समाधिना नैकभवेन यत्पदं विदुः सनन्दादय ऊर्ध्वरेतसः ।
मासैरहं षड्भिरमुष्य पादयोश्छायामुपेत्यापगतः पृथङ्मतिः ॥ ३० ॥

---

* कटी हुई फसल धान-गेहूँ आदिको कुचलनेके लिये घुमाये जानेवाले बैल जिस खंभेमें बँधे रहते हैं, उसका नाम 'मेढी' है।

१. प्रा० पा० यतिः ।

अन्वयः—ये वनौकसः सतारकाः धर्मः अग्निः कश्यपः शुक्रः मुनयः कल्पवासिनाम् परस्तात् स्थास्नु यत् दक्षिणीकृत्य मेढ्याम् गोचक्रवत् भ्रमन्तः चरन्ति ॥ २१ ॥ ❀ ❀ पित्रा गाम् दत्त्वा वनम् प्रस्थिते धर्मसंश्रयः षट्त्रिंशद्वर्षसाहस्रम् अव्याहतेन्द्रियः रक्षिता ॥ २२ ॥ ❀ ❀ सा माता त्वद्भ्रातरि उत्तमे मृगयायाम् नष्टे तन्मनाः वनम् अन्वेषती दावाग्निम् प्रवेक्ष्यति ॥ २३ ॥ ❀ ❀ यज्ञहृदयम् माम् पुष्कलदक्षिणैः यज्ञैः इष्ट्वा इह सत्याः आशिषः भुक्त्वा अन्ते माम् संस्मरिष्यसि ॥ २४ ॥ ❀ ❀ ततः त्वम् यतः गतः न निवर्तते ऋषिभ्यः उपरिष्टात् सर्वलोकनमस्कृतम् मत्स्थानम् गंता असि ॥ २५ ॥ ❀ ❀ अर्चितः सः गरुडध्वजः भगवान् इति आत्मनः पदम् अतिदिश्य बालस्य पश्यतः स्वं धाम अगात् ॥ २६ ॥ ❀ ❀ सः विष्णोः पादसेवोपसादितम् संकल्पनिर्वाणम् संकल्पजम् प्राप्य न अतिप्रीतः पुरम् अगात् ॥ २७ ॥ ❀ ❀ अर्थवित् यत् मायाविनः सुदुर्लभम् हरेः चरणार्चनार्जितम् परमम् पदम् एकजन्मना लब्ध्वा अपि स्वम् आत्मानम् असिद्धार्थम् इव कथम् अमन्यत ॥ २८ ॥ ❀ ❀ तु मातुः सपत्न्या वाग्बाणैः हृदि विद्धः तान् अनुस्मरन् मुक्तिपतेः मुक्तिम् न ऐच्छत् तस्मात् तापम् उपेयिवान् ॥ २९ ॥ ❀ ❀ सनन्दादयः ऊर्ध्वरेतसः नैकभवेन समाधिना यत् पदम् विदुः अमुष्य पादयोः छायाम् षड्भिः मासैः उपेत्य पृथङ्मतिः अपगतः ॥ ३० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

धान्याक्रमणाय भ्राम्यमाणानां पशूनां बंधनस्तंभो मेढी, तस्यां बलीवर्दसमूहवत् अवांतरकल्पवासिनां परस्तादपि स्थास्नु लोकत्रयनाशेऽप्यनश्वरम्। धर्माग्न्यादयो नक्षत्ररूपाः वनौकसः सप्तर्षयो यत्प्रदक्षिणीकृत्य भ्रमंतश्चरंति ॥ २१ ॥ ❀ ❀ एतच्च राज्यानंतरं भविष्यतीत्याह प्रस्थित इति। तुभ्यं पृथ्वीं दत्त्वा वनं प्रस्थिते। भावे क्तः। वनं प्रति दीर्घगमने कृते सति धर्मसंश्रयः राजधर्मं समाश्रयन्नित्यर्थः। अव्याहतानि अविरुद्धार्थसेवीनि इंद्रियाणि यस्य गां पृथ्वीं रक्षिता रक्षिष्यसि ॥ २२ ॥ ❀ ❀ त्वया असंकल्पितमपि मद्भक्तस्य तव द्रोहादेवं भविष्यतीत्याह त्वद्भ्रातरीति। सा सुरुचिर्दावाग्निं वनवह्निं प्रवेक्ष्यति ॥ २३ ॥ ❀ ❀ किं च त्वमिष्ट्वा माम्। यज्ञो हृदयं प्रिया मूर्तिर्यस्य तम् ॥ २४ ॥ ❀ ❀ यतः स्थानात् ॥ २५ ॥ ❀ ❀ अतिदिश्य दत्त्वा ॥ २६ ॥ ❀ ❀ संकल्पजं मनोरथम्। पादसेवया प्रापितं प्राप्य। संकल्पस्य निर्वाणं समाप्तिर्यस्मात् ॥ २७ ॥ ❀ ❀ मायाविनः सकामस्य यत्सुदुर्लभं हरेः पदं तदेकेनैव जन्मना लब्ध्वाऽपि स्वमात्मानं मनोसिद्धार्थमप्राप्तमनोरथमिव कथममन्यत। पुरुषार्थविदपि ॥ २८-२९ ॥ ❀ ❀ तापमेवाह समाधिनेति सार्धैः षड्भिः। नैके अनेके भवा यस्मिन्। बहुजन्माभ्यस्तेनेत्यर्थः। प्रणामस्तुत्यादिसमये गरुडाधिरूढस्य हरेः पादच्छायायां स्थितमात्मानं स्मरन्नाह छायामुपेत्येति। पृथङ्मतिर्भेददृष्टिः सन्। हा कष्टमिति भावः ॥ ३० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

एतन्मदुक्तम्। राज्यानंतरं राज्यभोगोत्तरकाले। भावे क्त इत्युक्तेर्वनमिति न कर्मणि द्वितीया, किं तु प्रतियोग इति ॥ २२ ॥ ❀ ❀ पूर्वमपि निगूढभक्तिसंस्कारस्य तव मद्भक्तस्य नारदसंगादुद्बुद्धभक्तेः। तस्मिन्नुत्तमाख्ये पुत्रे मनो यस्यास्सा तन्मनाः ॥ २३ ॥ ❀ ❀ लोके यशश्च तव भविष्यतीत्याह—किं चेति। सत्या—मत्संबंधेनैव भोगात् "धर्मार्थकाम इति योऽभिहितस्त्रिवर्ग ईक्षा तपश्शमदमौ विविधा च वार्त्ता। मन्ये तदेतदखिलं निगमस्य सत्यं स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः" इति प्रह्लादोक्तेः ॥ २४ ॥ ❀ ❀ यतो देहत्यागे विभाव्यमाने मत्स्मरणात् यतिः इंद्रियसंयमपूर्वकभगवत्स्मरणे कृतप्रयत्नः नावर्त्तते नायाति। एतेन नित्यत्वमुक्तम् ॥ २५-२६ ॥ ❀ ❀ सोपि ध्रुवोपि संकल्पनिदानमपि तदतीतविष्णुपदरूपत्वात्संकल्पनिर्वाणं तत्र हेतुः विष्णोः पादसेवार्चनं विष्णोरेव संकल्पजमिति वा कृपया प्रापितमित्यर्थः। तथापि स्वसंकल्पजत्वानुसंधानेन तादृशत्वाज्ञानान्नातिप्रीतः तादृशज्ञानेपि स्वस्य तुच्छसंकल्पत्वमेवाधिकृत्य तिरस्काराद्वेति ॥ २७ ॥ ❀ ❀ नातिप्रीत इत्याकर्ण्य पृच्छति—स्विति। मायाविन इति। हरेर्विशेषणं वा स्वमायया स्त्रीपुत्रधनमानादिरूपयैव लोकं मोहयति। स्वमार्गप्रवृत्तं तत्प्रेमपरीक्षणार्थमतस्तत्सर्वमुत्सृज्य कश्चिदेव कथंचन तदाप्नोतीति भावः। यद्वा मायाविनः कृपालोः ॥ २८ ॥ ❀ ❀ मुक्तिं भक्तिमत्पार्षदत्वं "विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिणः" इति पाद्मोत्तरखंडोक्तेः। 'न वै मुकुंदस्य' इत्यादिवक्ष्यमाणवचनैकवाक्यत्वानुरोधाच्च सायुज्यं न व्याख्येयं "या निर्वृतिस्तनुभृताम्" इत्यादिना तत्र तदरोचकत्वज्ञापनात्। ननु नैच्छदिति न संगच्छते 'भक्तिं मुहुः प्रवहताम्' इति तद्वाक्येन भक्तेरेव तदिच्छाविषयत्वावगतेः। सत्यम्। अत्र स्मरन्निति वर्तमाननिर्देशान्मातृसपत्नीवाग्बाणस्मरणदशायामेव नैच्छदतस्तदैव मधुवने आगत्य मत्पित्रादिदुर्लभपरमोच्चपदप्राप्तिकामो भगवंतं भजे इति संकल्प्य तपश्चकार। भगवत्साक्षाद्दर्शनसमये तु 'योऽन्तः प्रविश्य' इति तदुक्तेस्तदीयसर्वेन्द्रियाणां भगवदाकारत्वात्कुतः सुरुचिवाग्बाणस्मरणं किं तु 'वेदाहं ते व्यवसितम्' इति भगवद्वाक्येन स्मृतपूर्वस्वीयसंकल्पो मत्सकामत्वलक्षणं व्यभिचारं प्रभुर्मे जानातीति जातापत्रपोन्वतप्यत्। हंत हंत दुर्बुद्धिरहं कथमेवं संकल्पमकरवं "भक्तिं मुहुः प्रवहताम्" इति सांप्रतिकीं भक्तिप्रार्थनां मे मत्प्रभुर्मत्कपटमेव जानाति स्म,

अतस्तदनुरूपं किमपि स्पष्टं नावोचत्। किं तु पूर्वसंकल्पानुरूपमेव वरं ददौ 'त्वद्भ्रातर्युत्तमे नष्टे' इत्यादिना पुरातनं मन्मात्सर्यमपि मां स्मारयामासेत्येवं तस्य लज्जानुतापदैन्यनिर्वेदास्तदुक्तश्लोकषट्के द्रष्टव्या इति विश्वनाथः। संदर्भस्तु—'अत्राहो बत' इत्यादिवक्ष्यमाणवचने च श्रीध्रुवस्य यदपूर्णमन्यत्वं तदुच्चपदकामनयैव तत्प्रार्थितवता तेन लब्धमनोरथातीतवरेणापि स्वसंकल्पमेव तिरस्कर्तुमुक्तमिति घटेत। मनोरथातीतत्वञ्चोक्तं श्रीविदुरेण "सुदुर्लभं यत्परमं पदं हरेः" इति स्वयं श्रीध्रुवप्रियेण "ततो गंतासि मत्स्थानं सर्वलोकनमस्कृतम्। उपरिष्टादृषिभ्यस्त्वं यतो नावर्त्तते यतिः॥" इति वक्ष्यते पार्षदाभ्यामपि "आतिष्ठ जगतां वंद्यं तद्विष्णोः परमं पदम्"। सूतेन च "ध्रुवस्य वैकुंठपदाधिरोहणम्" इति। पञ्चमे ज्योतिश्चक्रवर्णने "विष्णोर्यत्परमं पदं प्रदक्षिणं प्रक्रमंति" इति यत्तद्विष्णोः परं पदमपि वदंतीति प्रपञ्चांतर्गतत्वेपि तद्धर्मातीतत्वमुक्तं जीवन्मुक्तवत्। अतोस्मिन्पद्ये प्रापंचिकस्य बहिरंशस्यैव प्रलयो ज्ञेयस्तस्य तु तदानीमंतर्धानमेव। एतदालंब्यैव हिरण्यकशिपुनोक्तं "किमन्यैः कालनिर्धूतैः कल्पांते वैष्णवादिभिः" इति। येऽद्यापि तथा ब्रुवंति ते तत्तुल्या एवेति भाव इत्याह। मुमुक्षुणा विषयाभिलाषो न कार्य इत्यभिप्रेत्य ध्रुवेणानिन्दीति तीर्थः॥ २९॥ ❀ ❀ इति भाव इति। पुनर्दुःखबहुले संसारे पतितः, अहो मे भाग्याल्पतेत्याशयः। छायापदमाश्रयपरं देवानां छायाया अभावात्, पृथग्भावतोन्यत्र विषयेषु मतिर्यस्य स तथा अत एव प्रभुर्मां स्वधाम स्वसंगेन नानैषीदिति भावः॥ ३०॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

यातु श्रीध्रुवस्य नक्षत्ररूपेण स्थितिः सा लोकहितार्थं वैकुण्ठस्थस्यैव तस्य प्रतिच्छविरेव मन्तव्या। धर्मादयोऽपि पुच्छान्तस्थितध्रुवस्य शिशुमाराकृतेर्नक्षत्रव्यूहस्यावयवस्था मन्तव्या इति॥ २१॥ ❀ ❀ पित्रा कर्त्रा प्रस्थिते प्रस्थाने कृते सति प्रस्थानं प्रस्थितमिति भावे क्तः, प्रस्थानार्थकप्रस्थितशब्दस्य दीर्घगमनोऽर्थष्टीकाकृद्भिः कृतः। अनद्यतनभविष्यदर्थे हि रक्षितेति लुट्, स चात्र न संगच्छते, तद्राज्याभिषेकस्य बहुदिनानन्तरभावित्वादत एव रक्षिष्यतीति लकारव्यत्ययेन व्याख्यातम्॥ २२॥ ❀ ❀ असंकल्पितमपि समातुर्मरणमेवं मृगयादिप्रकारेण॥ २३॥ ❀ ❀ सत्याः राज्यस्य मदिच्छया स्वीकाराद्भोगानां च मदर्पितानामेव स्वीकारात् सत्यफलत्वेन सत्याः। अन्ते षट्त्रिंशद्वर्षसहस्रान्ते॥ २४॥ ❀ ❀ ततः स्मरणानन्तरं यतिः भक्त्यात्मकयत्नवान्॥ २५॥ ❀ ❀ दत्त्वा वरत्वेनेति शेषः। पश्यत इत्यनादरे षष्ठी, स्वभक्तोत्कण्ठावर्द्धनार्थं पश्यन्तमपि तमुपेक्ष्येत्यर्थः॥ २६॥ ❀ ❀ मनोरथस्य संकल्पजत्वेऽपि संकल्पातीतफलाधिक्यलाभात्संकल्पनिर्वाणमित्युक्तम्। अत एव प्राक्तनराजसंकल्पस्य स्वकृतस्यानुतापेन नातिप्रीत इत्युक्तम्। तस्य पूर्वोत्तरावस्थावत्त्वमुक्तं श्रीरसामृतसिन्धौ "स क्षीणतत्तद्भावः स्याच्छुद्धभक्त्यधिकारवान्। यथेभः शौनकादिश्च ध्रुवस्स च चतुस्सनः॥" इति॥ २७॥ ❀ ❀ तदेव विदुरप्रश्नेनाभिव्यनक्ति सुदुर्लभमिति। पुरुषार्थविदपि सारासारविवेक्यपि इति तस्य किं भगवद्धाम्न्यप्यनित्यत्वभ्रान्तिर्जातेत्यभिप्रायेण प्रश्नः॥ २८॥ ❀ ❀ तस्य तुच्छराज्येच्छासंकल्प एवानुतापस्समजनि, न तु धाम्नोऽनित्यबुद्ध्येत्युत्तरमाह मातुरिति। मुक्तिं विष्ण्वङ्घ्रिलाभरूपां यथोक्तं पाद्मोत्तरखण्डे 'विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिणः।' इति प्रथमेऽपि 'येनापवर्गाख्यमदभ्रबुद्धिर्लेभे खगेन्द्रध्वजपादपद्ममि'ति॥ २९॥ ❀ ❀ यद्यपि देवानां छाया नास्तीति प्रसिद्धिस्तथापि ध्रुवप्रियस्यावतारत्वादवतारस्य च प्रपञ्चावतरणरूपत्वात् प्रपञ्चानुकरणे रामकृष्णाद्यवतारेष्वपि छायायाः प्रसिद्धिरेवेति नान्यथा व्याख्यातम्। भेददृष्टिः शत्रुमित्रादिविषयज्ञानवान्॥ ३०॥

### श्रीमद्वीरराघवव्याख्या

धान्याक्रमणाय भ्राम्यमाणानां पशूनां बन्धनस्तम्भो मेढिः। तस्यां गोचक्रवद्बलीवर्दसमूहवन्निहितमित्यर्थः। कल्पवासिना-मवांतरकल्पवासिनां परस्तादपि स्थास्नु लोकत्रयनाशेऽप्यनश्वरं, धर्मोग्न्यादयो नक्षत्ररूपाः वनौकसो मुनयः सप्तर्षयः यत्प्रदक्षिणीकृत्य भ्रमन्तश्चरन्ति॥ २१॥ ❀ ❀ तत्स्थानं राज्यादनन्तरं प्राप्स्यसीत्याह प्रस्थित इति। तुभ्यं गां पृथिवीं दत्त्वा पित्रा उत्तानपादेन वनं प्रस्थिते इति भावे क्तः, वनं प्रति गमने सति धर्मसंश्रयः वर्णाश्रमधर्मपरिपालकः भवान् षट्त्रिंशद्वर्षसाहस्रं वर्षाणां सहस्राणि ततः समाहारे द्विगुः, अव्याहतेन्द्रियः अविहतेन्द्रियः रक्षिता रक्षिष्यति गामित्यनुषङ्गः॥ २२॥ ❀ ❀ त्वया संकल्पितमपि मद्भक्ते त्वयि द्रोहादेवं भविष्यतीत्याह केन त्वद्भ्रातरीति। उत्तमाख्ये त्वद्भ्रातरि मृगयायां नष्टे सति तस्मिन्नुत्तमे मनो यस्याः सा माता सुरुचिः वनं प्रविश्य दावाग्निं प्रवेक्ष्यति॥ २३॥ ❀ ❀ किं च यज्ञहृदयं यज्ञस्य हृदयं तात्पर्यभूमिं यज्ञाराध्यमित्यर्थः। मां यज्ञानां प्रभुं पुष्कलदक्षिणैरराध्य इह राज्ये सत्याः दृढसंकल्पजाः आशिषः इच्छाविषयान् भुक्त्वा अनुभूय अन्ते भोगानन्तरं मा अनुस्मरिष्यसि॥ २४॥ ❀ ❀ ततः सर्वैर्लोकैः सप्तर्षिपर्यन्तैः नमस्कृतं मदनुग्रहाल्लब्धं स्थानं गन्तासि प्राप्स्यसि। स्थानं विशिनष्टि—सप्तर्षिभ्य उपरिष्टात्स्थितं यतिः मनःप्रयतनशीलः गत्वा यतः स्थानात्पुनर्नावर्त्तते नार्वागवरोहति अपि तु ततो वैकुण्ठमेव यातीत्यर्थः॥ २५॥ ❀ ❀ भगवदुक्तिमुपसंहरन् भगवान् तिरोऽधादित्याह। मुनिः इत्युक्तप्रकारेणार्चितः आराधितो भगवान् आत्मनः पदं स्थानं अतिदिश्य दत्त्वा बालस्य ध्रुवस्य पश्यतः सतः गरुडध्वजो गतवान्। तदंकितध्वजश्च भगवान् स्वं धाम वैकुण्ठस्थानमगात्प्रापद्यत॥ २६॥ ❀ ❀ सोऽपि ध्रुवोऽपि विष्णोः पादसेवया उपसादितं प्रापितं संकल्पजं तपश्चर्यारम्भे फलसंकल्पनिर्वाणं संकल्पस्य निर्वाणं समाप्तिर्यस्मिन् कृतकसुखं न तु स्वाभाविकानन्दाविर्भावम्,

प्राप्यापि नातिप्रीतः नितरामहृष्टचित्तः पुरमगात् ॥ २७ ॥ ❀ ❀ अनतिप्रीतिकारणं पृच्छति विदुरः सुदुर्लभमिति । प्राप्यापि मायाधिपतेः संबन्धित्वेन दत्तमित्यर्थः । इतरैः सुदुर्लभम् अतिदुःखेनाप्यलभ्यं यत्पदं तत्स्थानं भगवतश्चरणार्चनेनार्जितं संपादितं तत्स्थानम् एकजन्मना लब्ध्वापि द्वितीये शरीरे असत्यवल्लब्ध्वेत्यर्थः । स्वमात्मानमसिद्धार्थमिव अपरिपूर्णार्थमिव कथममन्यत । मुक्त्यर्थकभगवदनाराधनमेवाप्रीतिकारणमिति वदंस्तस्य परितापमाहर्षिः मातुरिति । सपत्न्या मातुः सुरुचेर्वाच एव वाणाः तैर्हृदि विद्धः जातव्यथः तान् वाग्बाणान् स्मरन्मुक्तिप्रदाद्भगवतः मुक्तिं नैच्छत् । तत्प्रयुक्तं पश्चात्तापमुपेयिवान् प्राप्तः ॥ २८–२९ ॥ ❀ ❀ पश्चात्तापविषयां ध्रुवोक्तिमाह समाधीति सार्धैः षड्भिः । ऊर्ध्वरेतसो जितेन्द्रियाः सुनन्दादयः नैकभवेन नैके अनेके भवा यस्मिन् बहुजन्मना अभ्यस्तेनेत्यर्थः । समाधिना यस्य भगवतः पदं स्वरूपं विदुः साक्षात्कृतवन्तः अमुष्य भगवतः पादयोः छायामहं षड्भिरेव मासैरुपेत्यापि प्रणामस्तुत्यादिसमये गरुडारूढस्य हरेः पादच्छायायां स्थित्वापीत्यर्थः । पृथङ्मतिः देहात्माभिमान-स्वातन्त्र्याभिमानतः अपगतः भगवत्पादच्छायायाः सकाशाद् दूरीकृतः ॥ ३० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सिंहासनाधिपतिरपि भूयादिति भावेनाह । प्रस्थित इति गां भूमिम् ॥ २२ ॥ ❀ ❀ उत्तमे भ्रातरि सति कथं सिंहासनाप्तिरिति तत्राह त्वद्भ्रातरीति । तस्मिन्नेव मनो यस्याः सा तन्मनाः वनमन्वेषती मार्गमाणा, अनेन तन्मातृभयमपि प्रत्युक्तमिति ज्ञायते ॥ २३ ॥ ❀ ❀ पुष्कलदक्षिणैः 'पुरुषं पुष्कलं पूर्णमि'ति हलायुधः । अनेन यज्ञानामुत्तमकल्पत्वं ध्वनयति । मामनुस्मरिष्यसीत्यनेन सर्वदा स्मरन्नपि मरणकाले विशेषतो मत्स्मरणं कुर्विति विधत्ते एष्यदर्थत्वादुभयोरिति ॥ २४ ॥ ❀ ❀ ततः किमत्राह तत इति । यतो नावर्तते यतिरित्यनेन ध्रुवस्य मुक्तेर्नियतत्वं ध्वनयति ॥ २५ ॥ ❀ ❀ अतिसृज्य दत्त्वा ॥ २६ ॥ ❀ सोऽपि ध्रुवोऽपि संकल्पजं संकल्पाज्जातं विष्णोः पादसेवयोपसादितं प्राप्तं संकल्पनिर्वाणं प्रतिज्ञाफलं प्राप्य ॥ २७ ॥ ❀ ❀ विदुरो मुक्तेरितरेषु पुरुषार्थेषु विरक्तेन भाव्यमिति जानन्नपि तत्प्रकटनाय पृच्छति सुदुर्लभमिति । मायाविनो भक्ताभीष्टफलप्रदानसामर्थ्यवतः असिद्धार्थमसाधितप्रयोजनं अर्थवित्तत्तत्कालोचितप्रयोजनं वेत्तीति ॥ २८ ॥ ❀ ❀ विदुषाऽपि सांसारिको निर्वन्धो दुस्त्यज इति भावेन तद्बोधं परिहरति मातुरिति ॥ २९ ॥ ❀ ❀ अनेकभवेनेति भवपदमावृत्त्य व्याख्येयं, तथाहि अनेकेषु भवेषु जन्मसु भवति समुत्पद्यत इति तेनामुष्य हरेः पादयोश्छायां प्राप्य पृथङ्मति-विषयबुद्धित्वादपहतस्तिर्यक्ताडित इवाभूवम् ॥ ३० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

धर्मादयो गोधाकृतेः पुच्छान्तस्थितध्रुवक्षितेर्नक्षत्रव्यूहस्यावयवस्थाः । तत्र विष्णोरपि हृदयस्थत्वे यद्गणनं कृतं तत्तु तन्निज-मण्डलाभ्यन्तरमण्डलस्थस्य तस्य लोकहितार्थं प्रतिच्छविमात्रदर्शनादिति गम्यते ॥ २१–२२ ॥ ❀ ❀ पूर्वमपि निगूढभक्ति-संस्कारेण मद्भक्तस्यैव तव द्वेषात्तयोरेवं स्यादित्याह त्वदिति ॥ २३ ॥ ❀ ❀ सत्या मत्सम्बन्धेनैव भोगादयोऽर्थाः ॥ २४–२६ ॥ ❀ ❀ सङ्कल्पनिदानमपि तदतीतविष्णुपदरूपत्वात् सङ्कल्पनिर्वाणं तत्र हेतुः विष्णोः पादेति । पादसेवा-त्वार्चनं विष्णोरेव सङ्कल्पजं तत् सङ्कल्पजिदिति क्वचित् । कृपया प्रापितमिति वा हेत्वन्तरं, तथापि स्वसङ्कल्पत्वानुसन्धानेन तादृशत्वाज्ञानान्नातिप्रीतः तादृशत्वाज्ञानस्यापि स्वस्य तुच्छसङ्कल्पमेवाधिकृत्य तिरस्काराद्वा ॥ २७ ॥ ❀ ❀ अर्थवित् सारा-सारविवेकी ॥ २८ ॥ ❀ ❀ मुक्तिः श्रीभगवद्दास्यम् । 'विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिणः' इति पाद्मोत्तरखण्डात् । न वै मुकुन्दस्येत्यादि वक्ष्यमाणमैत्रेयवचनैकवाक्यत्वानुरोधाच्च । अत्र अहोबतेत्यादिवक्ष्यमाणवचने च श्रीध्रुवस्य यदपूर्णम्मन्यत्वं तदुच्चपदं कामनयैव तत्प्रार्थितवता तेन लब्धमनोरथातीतवरेणापि स्वसङ्कल्पमेव तिरस्कर्तुमुक्तमिति घटते । मनोरथातीतत्वं चोक्तं श्रीविदुरेण । सुदुर्लभं यत्परमं पदं हरेरिति स्वयं श्रीध्रुवप्रियेण । 'ततो गन्तासि मत्स्थानं सर्वलोकनमस्कृतम् । उपरिष्टा-दृषिभ्यस्त्वं यतो नावर्त्तते यतिरि'ति वक्ष्यते पार्षदाभ्यामपि आतिष्ठ जगतां वन्द्यं तद्विष्णोः परमं पदं सूतेन च ध्रुवस्य वैकुण्ठ-पदाधिरोहणमिति पञ्चमे ज्योतिश्चक्रवर्णने । 'विष्णोर्यत्परमं पदं प्रदक्षिणं प्रक्रमन्तीति यत्तत् विष्णोः परमं पदमपि वदन्तीति ।' प्रपञ्चान्तर्गतत्वेऽपि तद्धर्म्मातीतत्वमुक्तं "विकारान्तर्वर्त्ति च तथाहि स्थितिमाह" इति न्यायेन । अतोऽस्मिन् लोके प्रापञ्चिकस्य बहि-रंशस्यैव प्रलयो ज्ञेयः । तस्य तु तदानीं अन्तर्द्धानमेव एतदालम्ब्यैव हिरण्यकशिपुनोक्तं 'किमन्यैः कालनिर्धूतैः कल्पान्ते वैष्णवादिभि-रि'ति । अतोऽद्यापि ये तथा वदन्ति ते तत्तुल्या इति भावः ॥ २९ ॥ ❀ ❀ तथैवाह समाधिनेति । छायामाश्रयमित्यर्थः । देवानां छायाया अभावात् । पृथग् भगवतोऽन्यत्र मतिर्यस्य सः ॥ ३० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

धर्म्माग्न्यादयो नक्षत्ररूपाः । वनौकसः सप्तर्षयः ॥ २१ ॥ ❀ ❀ एतच्च राज्यभोगानन्तरं भविष्यतीत्याह प्रस्थिते इति । तुभ्यं गां पृथ्वीं दत्त्वा वनं प्रस्थिते इति भावे क्तः । रक्षिता गां रक्षिष्यति ॥२२॥ ❀ ❀ मद्भक्ते त्वयि समातृके अपराधिन्याः

सुरुचेर्यद्भविष्यति तच्छृणिवत्याह। त्वद्भ्रातरीति ॥ २३ ॥ ❀ ❀ लोके यशश्च तत्र भविष्यतीत्याह। इष्ट्वेति ॥ २४ ॥ यतो नावर्त्तते इति नित्यत्वं व्यञ्जितम् ॥ २५ ॥ ❀ ❀ अतिदिश्य दत्त्वा ॥ २६ ॥ ❀ ❀ सङ्कल्पस्य निर्वाणं समाप्तिर्यस्मात् तत्पदमिति पूर्वेणैवानुषङ्गः ॥ २७ ॥ ❀ ❀ नातिप्रीत इति श्रुत्वा पृच्छति सुदुर्लभमिति। मायाविनः कृपालोः अर्थविद्धिज्ञोऽसि ॥ २८ ॥ ❀ ❀ मुक्तिं भक्तिमत्पार्षदत्वं 'विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिणः' इति पाद्मोत्तरखण्डात् सायुज्यन्तु न व्याख्येयं 'या निर्वृतिस्तनुभृतामि'ति वाक्येन तत्र तदरोचकत्वज्ञापनात्। ननु नैच्छदिति न सञ्चच्छते, भक्तिं मुहुः प्रवहतामिति तद्वाक्येन भक्तेरेव तदिच्छाविषयत्वावगतेः। सत्यम्, अत्र स्मरन्निति वर्त्तमाननिर्देशात् मातृसपत्नीवाग्बाणव्यथास्मरणदशायामेव नैच्छत् अतस्तदैव मधुवने आगत्य मत्पित्रादिदुर्लभपरमोच्चपदप्राप्तिकामो भगवन्तं भजिष्ये इति सङ्कल्प्य तपश्चकार। भगवत्साक्षादर्शनसमये तु योऽन्तःप्रविश्येति तदुक्तेस्तदीयसर्वेन्द्रियाणां भगवदाकारत्वात् कुतः सुरुचेर्वाग्बाणस्मरणं किन्तु 'वेदाहं ते व्यवसितमि'ति भगवद्वाक्येन स्मृतपूर्वस्वीयसङ्कल्पो मनुसकामत्वलक्षणव्यभिचारं प्रभुर्मे जानातीति जातापत्रपोऽन्वतप्यत्-हन्त हन्त दुर्बुद्धिरहं कथमेवं सङ्कल्पमकरवं भक्तिं मुहुः प्रवहतामिति साम्प्रतिकीं भक्तिप्रार्थनां मे मत्प्रभुर्मत्कपटमेव जानाति स्म, अतस्तदनुरूपं किमपि स्पष्टं नावोचत्। किन्तु पूर्वसङ्कल्पानुरूपमेव वरं ददौ 'त्वद्भ्रातर्युत्तमे नष्टे' इत्यादिना पुरातनमन्मातृसर्यमपि मां स्मारयामासेत्येवं तस्य लज्जानुतापदैन्यनिर्वेदास्तदुक्तश्लोकषट्के द्रष्टव्याः ॥ २९ ॥ ❀ ❀ नैकभवेन बहुजन्माभ्यस्तेन गरुडारूढस्य हरेः पादच्छायायां स्थितमात्मानं स्मरन्नाह–छायामुपेत्य अपगतोऽधःपतितः यतस्तस्मात् पृथग्विषये मतिर्यस्य सः अत एव मां स्वसङ्गेन प्रभुः स्वधाम नानैषीदिति भावः ॥ ३० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

कुत्र किम्वत् मेढ्यां धान्यानां निस्तुसारत्वसाधनभूते खले आरोपितायां गोचक्रवत् गोवृषसमूहवत् धर्मादयो नक्षत्ररूपाः वनौकसः सप्तर्षयः सतारकाः कल्पवासिनां परस्तात् स्थास्नु स्थिरं यत् प्रदक्षिणीकृत्य भ्रमन्तश्चरन्ति ॥ २१ ॥ ❀ ❀ तत्स्थानं भूमण्डलरक्षापूर्वकमद्धजनं कृत्वा गन्तासीत्याह प्रस्थिते इति चतुर्भिः। गां भूमिं दत्त्वा तुभ्यमिति शेषः। पित्रा उत्तानपादेन वनं प्रस्थिते भावे क्तः, वनं प्रति गमने कृते सति धर्मसंश्रयः भुवो मण्डलं रक्षिता रक्षिष्यति ॥ २२ ॥ ❀ ❀ सा सुरुचिः ॥ २३ ॥ ❀ ❀ यज्ञो हृदयमन्तःकरणशुद्धिद्वारा प्रापकं यस्य तम्, मुख्यं स्वप्रापकमाह मां संस्मरिष्यसीति ॥ २४ ॥ ❀ ❀ यतः स्थानात् यतिर्मदुपासकः ॥ २५ ॥ ❀ ❀ अतिदिश्य दत्त्वा अगमत् ॥ २६ ॥ ❀ ❀ स ध्रुवोऽपि संकल्पस्य निर्वाणं समाप्तिर्यस्मात्तत् संकल्पजं स्वमनोरथं राजासनम्। विष्णोः पादसेवयोपसादितं प्रापितं प्राप्यापि नातिप्रीतः पुरमभ्यगात् ॥ २७ ॥ ❀ ❀ मायाविनः प्रकृत्यधिपतेः हरेः परमं पदं यदितरैः सुदुर्लभं तदेकेनैव जन्मना लब्ध्वापि कथं स्वमात्मानमसिद्धार्थमिवामन्यत ॥ २८ ॥ ❀ ❀ यद्यपि भगवता भक्तवत्सलेन यतो नावर्त्तते यतिस्तन्मुक्तगम्यं पदं दत्तमपि तथापि सुरुचिवाग्बाणव्यथितस्तत्प्राप्त्यर्थं भगवन्तं नाराधितवान्, किंतु तमधिराजासनार्थमाराधितवान्। तदपि भगवद्दत्तं तत्परमपदप्राप्त्यंतरायभूतं मन्वानस्तापमुपेयिवानित्याह। मातुरिति ॥ २९ ॥ ❀ ❀ यत्पदं सनंदादयो विदुः छान्दोग्यप्रसिद्धाः अस्मद्गुरोः श्रीनारदस्य गुरव इत्यर्थः। ते एव अनायासेन जानन्ति स्वत आगतविज्ञाना इत्यादिमोक्षधर्मोक्तेः, अन्ये ऊर्ध्वरेतसोऽपि नैके बहवो भवाः जन्मानि यस्मिन् तेन बहुजन्माभ्यस्तेन समाधिना यद्विदुः, तत्पदभिन्ने अधिराजासने मतिर्यस्य सः अत एव अमुष्य भगवतः पादयोः छायां सामीप्यमुपेत्याप्यपगतः वियोगं प्राप्तोऽस्मि ॥ ३० ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

धर्मादयो नक्षत्रमण्डले वर्त्तमानाः वनौकसो वानप्रस्थाः मुनयः सप्तर्षयः सतारका यत्स्थानं प्रदक्षिणीकृत्य भ्रमन्तश्चरन्ति तत्ते प्रयच्छामीति पूर्वेणैवान्वयः ॥ २१ ॥ ❀ ❀ एतत्स्थानप्राप्तिस्तु राज्यसुखभोगानन्तरं भविष्यति, तत्प्रथमे तु राज्यादिकमित्याह–प्रस्थित इति। गां पृथिवीं तुभ्यं दत्त्वा पित्रा वनं प्रस्थिते मदाराधनार्थं वनं प्रति गमने कृते सति त्वमव्याहतेन्द्रियः न व्याहतानि श्रान्तानीन्द्रियाणि यस्य तथाभूतः तथा धर्मसंश्रयः धर्मः संश्रयः आश्रयो यस्य स तथा धर्मानुसारेण षट्त्रिंशद्वर्षसहस्रपर्यन्तं पृथिवीं रक्षिता रक्षिष्यति ॥ २२ ॥ ❀ ❀ ननूत्तमे विद्यमाने मम राज्यप्राप्तावपि कथं भोगसिद्धिरित्याशङ्क्याह–मद्भक्तस्य तव द्रोहात् तपसा पुरुषमाराध्य त्वं मे गर्भे आत्मानं साधयेत्युक्त्या ममाप्यपमानात् त्वयापि दुःखेन चिन्तितत्वात् सुरुच्या उत्तमस्य च मरणमेव भविष्यतीत्याह–त्वद्भ्रातरीति। त्वद्भ्रातर्युत्तमे मृगयायां नष्टे सति तस्मिन्नेव मनो यस्याः सा तन्माता तु वनमन्वेष्यती वने उत्तमान्वेषणं कुर्वती तत्रोत्थितं दावाग्निं प्रवेक्ष्यतीत्यन्वयः ॥ २३ ॥ ❀ ❀ किं च इष्ट्वेति। पुष्कलदक्षिणैरित्युपलक्षणमुत्तमोपस्कराणाम्। इह भूलोके पुष्कलदक्षिणैरुत्तमोपस्करैर्यज्ञहृदयं प्रिया मूर्त्तिर्यस्य तं मामिष्ट्वा सत्या आशिषः उत्तमान् भोगान् भुक्त्वा अन्ते भोगावसाने मां स्मरिष्यसीत्यन्वयः ॥ २४ ॥ ❀ ❀ ततस्तदनन्तरमृषिभ्य उपरिष्टाद्वर्त्तमानं सर्वलोकनमस्कृतं मत्स्थानं त्वं गन्तासि गमिष्यसि। यतः स्थानात्तत्र गतो यतिर्नावर्त्तते प्रच्युतो न भवति। यतिरित्यनेन संन्यासिनामेव गमनयोग्यं न गृहस्थानाम्, तुभ्यं तु कृपादत्तमिति सूचितम् ॥ २५ ॥ ❀ ❀ स भक्तवत्सलो भगवान् सर्वमनोरथसंपादने शक्त

इत्येवं पूर्ववर्णितप्रकारेणार्चितः अर्चनपूर्वकमाराधित आत्मनः पदं स्थानं तस्मै ध्रुवायातिदिश्य दत्त्वा तस्य बालस्य पश्यत एव सतो गरुडारूढः स्वं धामायात् गतः ॥ २६ ॥ ❀ ❀ स ध्रुवोपि सङ्कल्पजं मनोरथं तदपि न यथाकथंचित् किंतु सङ्कल्पनिर्वाणं संकल्पस्य निर्वाणं समाप्तिर्यस्मात् तं पूर्णं मनोरथं विष्णोः परिपूर्णस्य भगवतः पादसेवयोपसादितं प्राप्यापि नातिप्रीतः किञ्चित्-प्रसन्नोपि सर्वथा प्रसन्नो न जातस्तथाभूतः सन् पुरमभ्यगात् आगतः ॥ २७ ॥ ❀ ❀ एवं ध्रुवस्याप्रसन्नतां श्रुत्वा शङ्कितचित्तो विदुरस्तत्कारणं पृच्छति—सुदुर्लभमिति । मायाविनो मायामोहितत्वेन विषयाविष्टचित्तस्य लाभपूजार्थदम्भेन भक्तत्वं प्रकटयतः पुंसोतिदुर्लभं यत्परमं सर्वत उत्कृष्टं हरेः पदं तत् तस्य हरेश्चरणार्चनेनाऽर्जितं प्रापितमेकेनैव जन्मना अनेकजन्मसाधनसाध्यम् । 'यतो नावर्त्तते यतिः' इत्युक्तेः । तदप्येकस्मिन्नेव जन्मनि स्वल्पकालसाधनेन लब्ध्वापि स्वमात्मानमसिद्धार्थमप्राप्तमनोरथमिव कथममन्यत ? न च स मूर्खः प्राप्तस्यार्थस्य तत्त्वं न ज्ञातवांस्तेनैवममन्यतेति वाच्यं-यतोऽर्थविदिति ॥ २८ ॥ ❀ ❀ एवं पृष्टो मैत्रेयस्तत्र कारणमाह—मातुरिति । मातुः सपत्न्याः सुरुच्या वाच एव पीडाकरत्वाद्बाणास्तैर्विद्धो ध्रुवः प्रथमं भक्तिं मुहुः प्रवहतामित्या-दिना मुक्तिपतेर्भगवतो मुक्तिं याचित्वापि तान् वाग्बाणान् स्मरंस्तां नैच्छत् तामनादृत्य सर्वोत्कृष्टस्थानं याचितवांस्तद्दत्त्वा भगवतो गमनानन्तरं गुणैर्नारदस्य वाक्यमहिम्ना भगवद्दर्शनमहिम्ना चान्तःकरणशुद्ध्या विवेकवैराग्यादौ जाते तस्मान्मुक्त्यनादरात्तापमु-पेयिवान् प्राप्तोऽतो न प्रसन्नो जात इत्यर्थः ॥ २९ ॥ ❀ ❀ एवं तस्याप्रसन्नतायां कारणमुक्त्वा कीदृशस्ताप इति वीक्षायां तापमेव प्रदर्शयति—समाधिनेति सार्द्धैः षड्भिः । नैकभवेन नैके अनेके भवा यस्मिंस्तेन बहुजन्माभ्यस्तेन समाधिना यत्पदं यस्य भगवतो वासुदेवस्य स्वरूपं सनन्दादय ऊर्ध्वरेतसः जन्मप्रभृतिनिरुद्धेन्द्रियान्तःकरणादिसंघाता अपि केवलं विदुः ज्ञातवन्तः । दर्शनं तु दूरतस्तस्यामुष्य भगवतः पादयोश्छायामहं तत्कृपया षड्भिरेव मासैरुपेत्य प्राप्याप्यपगतस्ततो निवृत्तः पुनर्दुःखार्णवे संसारे पतितः । एवं पुरुषार्थं प्राप्यापि ततः पतने कारणमाह—यः पृथङ्मतिः भेददर्श्यहमिति ॥ ३० ॥

## भाषानुवादः

तथा तारागणके सहित धर्म, अग्नि, कश्यप और शुक्र आदि नक्षत्र एवं सप्तर्षिगण जिसकी प्रदक्षिणा किया करते हैं, वह ध्रुवलोक मैं तुझे देता हूँ ॥ २१ ॥ ❀ ❀ यहाँ भी जब तेरे पिता तुझे राजसिंहासन देकर वनको चले जायँगे; तब तू छत्तीस हजार वर्षतक धर्मपूर्वक पृथ्वीका पालन करेगा । तेरी इन्द्रियोंकी शक्ति ज्यों की-त्यों बनी रहेगी ॥ २२ ॥ ❀ ❀ आगे चलकर किसी समय तेरा भाई उत्तम शिकार खेलता हुआ मारा जायगा, तब उसकी माता सुरुचि पुत्र-प्रेममें पागल होकर उसे वनमें खोजती हुई दावानलमें प्रवेश कर जायगी ॥ २३ ॥ ❀ ❀ यज्ञ मेरी प्रिय मूर्ति है, तू अनेकों बड़ी-बड़ी दक्षिणाओंवाले यज्ञोंके द्वारा मेरा यजन करेगा तथा यहाँ उत्तम-उत्तम भोग भोगकर अन्तमें मेरा ही स्मरण करेगा ॥ २४ ॥ ❀ ❀ इससे तू अन्तमें सम्पूर्ण लोकोंके वन्दनीय और सप्तर्षियोंसे भी ऊपर मेरे निज धामको जायगा, जहाँ पहुँच जानेपर फिर संसारमें लौटकर नहीं आना होता है ॥ २५ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—बालक ध्रुवसे इस प्रकार पूजित हो और उसे अपना पद प्रदानकर भगवान् श्रीगरुडध्वज उसके देखते-देखते अपने लोकको चले गये ॥ २६ ॥ ❀ ❀ प्रभुकी चरणसेवासे सङ्कल्पित वस्तु प्राप्त हो जानेके कारण यद्यपि ध्रुवजीका सङ्कल्प तो निवृत्त हो गया, किन्तु उनका चित्त विशेष प्रसन्न नहीं हुआ । फिर वे अपने नगरको लौट गये ॥ २७ ॥ ❀ ❀ विदुरजीने पूछा—ब्रह्मन् ! मायापति श्रीहरिका परमपद तो अत्यन्त दुर्लभ है और मिलता भी उनके चरणकमलोंकी उपासनासे ही है । ध्रुवजी भी सारासारका पूर्ण विवेक रखते थे; फिर एक ही जन्ममें उस परमपदको पा लेनेपर भी उन्होंने अपनेको अकृतार्थ क्यों समझा ? ॥ २८ ॥ ❀ ❀ श्रीमैत्रेयजीने कहा—ध्रुवजीका हृदय अपनी सौतेली माताके वाग्बाणोंसे बिंध गया था तथा वर माँगनेके समय भी उन्हें उनका स्मरण बना हुआ था; इसीसे उन्होंने मुक्तिदाता श्रीहरिसे मुक्ति नहीं माँगी । अब जब भगवद्दर्शनसे वह मनोमालिन्य दूर हो गया तो उन्हें अपनी इस भूलके लिये पश्चात्ताप हुआ ॥ २९ ॥ ❀ ❀ ध्रुवजी मन-ही-मन कहने लगे—अहो ! सनकादि ऊर्ध्वरेता ( नैष्ठिक ब्रह्मचारी ) सिद्ध भी जिन्हें समाधिद्वारा अनेकों जन्मोंमें प्राप्त कर पाते हैं, उन भगवच्चरणोंकी छायाको मैंने छः महीनेमें ही पा लिया, किन्तु चित्तमें दूसरी वासना रहनेके कारण मैं फिर उनसे दूर हो गया ॥ ३० ॥

**अहो बत ममानात्म्यं मन्दभाग्यस्य पश्यत । भवच्छिदः पादमूलं गत्वायाचे यदन्तवत् ॥ ३१ ॥**
**मतिर्विदूषिता देवैः पतद्भिरसहिष्णुभिः । यो नारदवचस्तथ्यं नाग्राहिषमसत्तमः ॥ ३२ ॥**
**दैवीं मायामुपाश्रित्य प्रसुप्त इव भिन्नदृक् । तप्ये द्वितीयेऽप्यसति भ्रातृभ्रातृव्यहृद्रुजा ॥ ३३ ॥**
**मयैतत्प्रार्थितं व्यर्थं चिकित्सेव गतायुषि ।**
**प्रसाद्य जगदात्मानं तपसा दुष्प्रसादनम् । भवच्छिदमयाचेऽहं भवं भाग्यविवर्जितः ॥ ३४ ॥**

स्वाराज्यं यच्छतो मौढ्यान्मानो मे भिक्षितो बत । ईश्वरात्क्षीणपुण्येन फलीकारानिवाधनः ॥ ३५ ॥

मैत्रेय उवाच

न वै मुकुन्दस्य पदारविन्दयो रजोजुषस्तात भवादृशा जनाः ।
वाञ्छन्ति तद्दास्यमृतेऽर्थमात्मनो यदृच्छया लब्धमनःसमृद्धयः ॥ ३६ ॥

आकर्ण्यात्मजमायान्तं सम्परेत्य यथाऽऽगतम् । राजा न श्रद्दधे भद्रमभद्रस्य कुतो मम ॥ ३७ ॥
श्रद्धाय वाक्यं देवर्षेर्हर्षवेगेन धर्षितः । वार्ताहर्तुरतिप्रीतो हारं प्रादान्महाधनम् ॥ ३८ ॥
सदश्वं रथमारुह्य कार्तस्वरपरिष्कृतम् । ब्राह्मणैः कुलवृद्धैश्च [1]पर्यस्तोऽमात्यबन्धुभिः ॥ ३९ ॥
शङ्ख[2]दुन्दुभिनादेन ब्रह्मघोषेण वेणुभिः । निश्चक्राम पुरात्तूर्णमात्मजाभीक्षणोत्सुकः ॥ ४० ॥

अन्वयः—अहो मन्दभाग्यस्य मम अनात्म्यम् पश्यत बत यत् भवच्छिदः पादमूलम् गत्वा अन्तवत् अयाचे ॥ ३१ ॥ ❀ ❀ यः असत्तमः नारदवचः तथ्यम् अपि न अग्राहिषम् मतिः पतद्भिः असहिष्णुभिः देवैः विदूषिता ॥ ३२ ॥ ❀ ❀ दैवीम् मायाम् उपाश्रित्य प्रसुप्त इव अहम् भिन्नदृक् द्वितीये असति अपि भ्रातृभातृव्यहृद्रुजा तप्ये ॥ ३३ ॥ ❀ ❀ मया तपसा दुष्प्रसादनम् जगदात्मानम् प्रसाद्य पतत् गतायुषि चिकित्सा इव व्यर्थम् प्रार्थितम् यतः भाग्यविवर्जितः अहम् भवच्छिदम् भवम् अयाचे ॥ ३४ ॥ ❀ ❀ क्षीणपुण्येन मे स्वाराज्यम् यच्छतः मौढ्यात् अधनः ईश्वरात् फलीकारान् इव मानः भिक्षितः ॥ ३५ ॥ ❀ ❀ तात मुकुन्दस्य पदारविन्दयोः रजोजुषः यदृच्छया लब्धमनःसमृद्धयः भवादृशाः जनाः तद्दास्यम् ऋते आत्मनः अर्थम् वै न वाञ्छन्ति ॥ ३६ ॥ ❀ ❀ राजा यथा संपरेत्य आगतम् तथा आत्मजम् आयान्तम् आकर्ण्य अभद्रस्य मम भद्रम् कुतः इति मत्वा न श्रद्दधे ॥ ३७ ॥ ❀ ❀ तथापि सः देवर्षेः वाक्यं श्रद्धाय हर्षवेगेन धर्षितः अतिप्रीतः वार्ताहर्तुः महाधनम् हारम् प्रादात् ॥ ३८ ॥ ❀ ❀ कार्तस्वरपरिष्कृतम् सदश्वम् रथम् आरुह्य ब्राह्मणैः कुलवृद्धैः च अमात्यबन्धुभिः पर्यस्तः ॥ ३९ ॥ ❀ ❀ आत्मजाभीक्षणोत्सुकः शंखदुन्दुभिनादेन ब्रह्मघोषेण वेणुभिः तूर्णम् पुरात् निश्चक्राम ॥ ४० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अनात्म्यमात्मशून्यत्वमज्ञत्वम् । भवच्छेतुर्यद्दंतवत्तद्याचे याचितवानस्मि ॥ ३१ ॥ ❀ ❀ अज्ञत्वे कारणं संभावयति मतिरिति । पतद्भिर्मदपेक्षयाधःस्थानं प्राप्तुवद्भिरत एवासहनशीलैः 'नाधुनाप्यवमानं ते' इत्यादि सत्यमपि नारदस्य वचो यो न गृहीतवानस्मि तस्य मे मतिर्विदूषिता ॥ ३२ ॥ ❀ ❀ किं च दैवीमिति । प्रसुप्तः स्वप्नानिव पश्यन् द्वितीयेऽसत्यपि भ्रातैव भ्रातृव्यः शत्रुरिति दृष्ट्या हृद्रुजा हृदयशोकेन तप्ये तापमनुभवामि ॥ ३३ ॥ ❀ ❀ किं च मया प्रसाद्य यत्प्रार्थितं तद्व्यर्थमित्याह भवच्छिदमिति ॥ ३४ ॥ ❀ ❀ एतदेव सदृष्टांतमाह । स्वाराज्यं निजानंदं प्रयच्छतः सकाशादभिमानः क्षीणपुण्येन मया भिक्षितो याचितः । क्षीणेन पुण्येनेति वा दृष्टांत एव संबंधः । यथाऽधन ईश्वराच्चक्रवर्तिनः फलीकारान्सतुषतंडुलकणान् याचते तद्वत् ॥ ३५ ॥ ❀ ❀ एवं निःस्पृहत्वं तस्य युक्तमित्याह । तस्य दास्यं विनान्यमर्थमात्मनो नैव वांछंति । यदृच्छयैव लब्धेन मनसः समृद्धिर्येषां ते ॥ ३६ ॥ ❀ ❀ प्रस्तुतमाह । आकर्ण्येति । संपरेत्य मृत्वाऽऽगतमाकर्ण्य यथा तथा न श्रद्दधे विश्वासं न चकार । अभद्रस्य मम भद्रं कुत इति मत्वा ॥ ३७ ॥ ❀ ❀ एष्यत्यचिरत इति देवर्षेर्वाक्यं श्रद्धाय ॥ ३८ ॥ ❀ ❀ ब्राह्मणादिभिः पर्यस्तः परिवृतः ॥ ३९-४० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अत्र तादृशत्वाज्ञानपक्षः स्पष्ट एव । पक्षान्तरन्तु—महां स्वयं स्वपददानेन भवच्छिदस्तस्य पादमूलं प्राप्यापि स्वयं त्वहं त्रिभुवनोत्कृष्टपदरूपत्वेनांतवदेव याचे तन्निर्बंधं न परित्यक्तवानस्मि । 'अप्येवमार्ये भगवान्परिपाति दीनान्" इत्याद्युक्तेः । न तु तत्पादसेवां तत्पादमेवेत्यर्थः । अत एव राज्यादिकमपि विघ्नत्वेन लब्धमिति भावः । चक्रवर्ती तु-भवच्छिदोऽप्रार्थितोपि यो भक्तस्य भवं छिनत्ति वैष्णव्या दीक्षया तस्य पादमूलं प्राप्य यत्तमहमंतवद्याचे प्राप्तुं संकल्पमकरवं तन्ममैव दोषः । प्रभुस्तु तदपि कृपयानश्वरमेव ददौ 'ततो गंतासि मत्स्थानम्' इति तदुक्तेरित्याह ॥ ३१ ॥ ❀ ❀ तन्निर्बंधात्याग एवाज्ञत्वं तत्र हेतुं कल्पयति अत एवाधस्स्थत्वादेव । यद्वाऽधःपतनपर्यवसानैः ॥ ३२ ॥ ❀ ❀ एतत्स्फुटयति—किं चेति । द्वितीये सिंहव्याघ्रादिरूपेऽसत्यपि

---

१. प्रा० पा०—परीतो । २. प्रा० पा०—तूर्यनिना० ।

तज्जामार्ति यथा स्वप्ने प्राप्नोति। भ्रातरं व्ययति नाशयतीति भ्रातृव्यः नाशार्थाभावेऽपि व्ययतेरनेकार्थत्वाड्डप्रत्यये टिलोपे रूपसिद्धेः। यद्वा "व्यन्सपत्ने" इति शत्रौ वाच्ये भ्रातृशब्दाद् व्यन्। 'भ्रातृव्यौ रिपुबांधवौ" इति धरणिः। यत आत्मदृष्ट्याऽहं स च मद्भ्रातृत्युभावपि भगवतो जीवाख्यतटस्थशक्तिवृत्तिरूपौ देहदृष्ट्याप्युभयोरपि पांचभौतिकत्वान्मायाशक्तिवृत्तिरूपत्वमतो भगवन्माययैव तस्मिञ्छत्रुदृष्ट्या मुह्यामीति भावः। देवस्य विष्णोरियं दैवी तां "देवात्मशक्तिं स्वगुणैर्निगूढाम्" इत्यादिश्रुतेः ॥३३॥ ❀ ❀ आधिपत्यादेरनित्यत्वं प्रेक्ष्याह—किञ्चेति। भोग्यवस्तुनो भवकारणत्वाद्भवत्वमेव। गतं नष्टमायुर्यस्य तस्मिन्निश्रितासाध्यसन्निपातादिरोगजिते पुंसि। चिकित्सा तदपनयनौषधप्रदानम् ॥३४॥ ❀ ❀ एतदेव व्यर्थप्रार्थनमेव। स्वस्मिन्भक्त्या राजत इति स्वमेव राट् राजा येषां ते स्वराजो दासास्तेषां भावः स्वाराज्यं दास्यं यच्छतः ददतः स तु विदग्धः परमोदारो राजा यथा तस्मै तन्मनोरथातीतां सम्पत्तिं ददाति तथैव भगवान्मह्यं स्वधामवासित्वमित्यहो मम दुर्बुद्धित्वपरमकाष्ठा भगवतश्च कारुण्यौदार्य्यसीमेति क्षणं सविस्मयस्मितोऽभूदिति भावः ॥ ३५ ॥ ❀ ❀ रजोजुषः परागरसास्वादिनः लब्धेन वस्तुना ॥ ३६ ॥ ❀ ❀ ततो मधुवनाद् ध्रुवस्य बंधुमेलनादिकमाह—प्रस्तुतमिति। भद्रं पुत्रागमनरूपम् ॥ ३७ ॥ ❀ ❀ हर्षस्यात्मजागमनजानंदस्य वेगेनोद्रेकेण धर्षितो वशीकृतः। वार्त्ताहर्त्तुर्ध्रुव आयातीति वक्तुः महांति धनानि रत्नानि यस्मिन्स तम् यद्वा महांति धनानि मूल्यानि यस्य तम् ॥ ३८ ॥ ❀ ❀ "कार्त्तस्वरं महारत्नं सुवर्णं कलधौतकम्" इति कोशात् सुवर्णभूषितम् ॥ ३९ ॥ ❀ ❀ राज्ञस्स्नेहोद्रेकमाह—शंखेति ॥ ४० ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अन्तवत्प्राकृतं राज्यम् ॥ ३१ ॥ ❀ ❀ मतिर्विदूषितेत्यपि पूर्ववासनानुतापेनैवोक्तम्। न तु भगवद्धाम्नि प्राकृतत्वदृष्ट्या "विकारावर्ति च तथाहि स्थितिमाह" इति न्यायेन तस्य नित्यत्वप्रतिपादनात्, अस्य च श्रीभगवत्साक्षात्कारादिभावेन यथार्थज्ञानवत्त्वात् महाप्रलये तु श्रीमधुपुर्य्यादिवदन्तर्धानमेव स्यादिति तस्मादद्यापि 'किमन्यैः कालनिर्धूतैः कल्पान्ते वैष्णवादिभिरि'ति हिरण्यकशिपुवत्तथा वदन्तोऽसुरा एवेति ज्ञेयम् ॥ ३२ ॥ ❀ ❀ दैवीं देवस्य विष्णोर्जीवविषयां व्यामोहनशक्तिमुपाश्रित्य स्वविषयकत्वेन लब्ध्वा द्वितीये राज्यादिप्रपञ्चेऽसत्यपि अपुरुषार्थेऽपि सति ॥ ३३ ॥ ❀ ❀ मयेति सार्द्धकं भवं राज्यादिप्रपञ्चं प्रसाद्येति तद्दर्शनात्पूर्वमिति ज्ञेयं 'या निर्वृतिस्तनुभृतामि'त्यादितद्वाक्यात् ॥३४॥ ❀ ❀ एतदेव व्यर्थप्रार्थनमेव अभिमानस्तद्धेतू राज्यप्रपञ्चः ॥ ३५ ॥ ❀ ❀ यदृच्छयैव याच्ञां विनैव लब्धेन सामीप्यादिमोक्षेण मनस्समृद्धिर्दर्शनपरिचर्य्यादिविषयकोल्लासो येषामिति व्याख्येयम्। अन्यलाभेनैकान्तिनां मनःसमृद्धेरनौचित्यात् ॥ ३६ ॥ ❀ ❀ प्रासङ्गिकं तापप्रकारमुक्त्वा प्रस्तुतं वर्णनीयं ध्रुवचरितमाह मृत्वाऽऽगतं यथा कश्चन न श्रद्दधाति तथा न श्रद्दध इति योजनीयम् ॥ ३७ ॥ ❀ ❀ महाधनं बहुमूल्यम् ॥ ३८ ॥ ❀ ❀ सदश्वमिति युग्मकम् ॥ ३९-४० ॥

## श्रीमद्वीरराघवव्याख्या

अनात्मा देहः तस्य कर्म आनात्म्यं दौर्जन्यमित्यर्थः। तत् पश्यत तच्छोच्यमिति अहो बतेति। आ कष्टमिति भावः। शोककरणं व्यनक्ति यत् यस्मात् भवच्छिदः गर्भजन्मजरामरणात्मकसंसारभयनिवर्त्तकस्य भगवतः पादमूलं गत्वा साक्षात्कृत्य अन्तवत् फलं याचे याचितवान्, न तु निरतिशयानन्दापहतपाप्मत्वादिगुणाष्टकाविर्भावपूर्वकब्रह्मानुभवात्मकानन्दमिति भावः। स्वस्याल्पास्थिरसांसारिकभोगयाच्ञाकारणं निश्चिनोति मतिरिति। पतद्भिः स्वस्य भोगान्ते स्वर्गात्पतद्भिः पतनशीलैः अत एवासहिष्णुभिः मदपेक्षयाधः पदप्राप्तत्वात् परसमृद्धिमसहिष्णुर्भिर्देवैर्मे मम मतिः बुद्धिर्विदूषिता सांसारिकभोगलौल्यसंपादनेन दोषं प्रापिता। स्वदौर्जन्यमेव व्यञ्जयन् परितपति योऽहमसत्तमः दुर्जनः अत एव नारदवचो 'विकल्पे विद्यमानेऽपि न ह्यसन्तोषहेतवः इत्यादिनोक्तं वचः तथ्यं नाग्रहीषं न गृहीतवान् ॥ ३२ ॥ ❀ ❀ प्रसुप्तवदहमपि दैवीं गुणमयीं दुरत्ययां मायामुपाश्रित्य तया अत एव भिन्नदृक् देहात्माभिमानस्वतन्त्रात्माभिमानी द्वितीये अब्रह्मात्मकस्वतन्त्रवस्तुन्यसत्यपि भ्रातैव भ्रातृव्यः शत्रुरिति या रुग् रोगस्तया तप्ये तापमनुभवामि ॥ ३३ ॥ ❀ ❀ किञ्च मया यत्प्रार्थितं तद्व्यर्थमित्याह मयेति। दुःखेनापि प्रसादयितुमशक्यं भवच्छिदं जगदन्तरात्मानं तपसा प्रसाद्य भवं संसारमेव याचे याचितवानस्मि। हेति खेदे, यतोऽहं भाग्यविवर्जितः दुर्भगः ॥ ३४ ॥ ❀ ❀ दुर्भाग्यमेव सदृष्टान्तं व्यनक्ति। स्वाराज्यं स्वराट् अकर्मवश्यस्तस्य भगवतः स्वाराज्यं "स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवती"त्युक्तं मुक्तैश्वर्य्यं यच्छतो ददतो भगवतः सकाशात्केवलं मे मया मानः अभिमानः अभिमिक्षितः याचितः निर्धनः क्षीणं च तत्पुण्यं तेन ईश्वरात् सार्वभौमात् फलीकारानिव सतुषतण्डुलकणानिवेति दृष्टान्तः ॥ ३५ ॥ ❀ ❀ दुर्लभार्थं प्राप्यापि कथमेवं तपतीति त्वया न शङ्क्यमित्याह। मुनिः न वा इति। मुकुन्दस्य मुक्तिप्रदस्य भगवतः पदारविन्दयोर्यद्रजः परागस्तज्जुषः सेवमानाः भवादृशा जनाः अस्य भगवतो दास्यं शेषत्वमृते विना अन्यमर्थमात्मनः स्वस्य न वाञ्छन्ति यतस्ते जनाः यदृच्छया दैवात् लब्धा मनसः समृद्धिर्येषां ते ॥ ३६ ॥ ❀ ❀ प्रस्तुतमाह आकर्ण्येति। राजा उत्तानपादः आत्मजं ध्रुवं आयान्तम् आकर्ण्यापि संपरेत्य मृत्वा यथागतं पुनरागतमिव न श्रद्दधे न विश्वस्तवान्। संपरेत्य

गतमित्यागमनदौर्लभ्यमुच्यते। तच्च भाग्यहीनत्वाभिप्रायेण तमेव व्यनक्ति अभद्रस्य भाग्यहीनस्य मम भद्रं पुत्रप्रत्यागमनरूपं मङ्गलं कुतो हेतोः स्यादित्यभिप्रायेण न श्रद्दध इत्यन्वयः॥ ३७॥ ❀ ❀ ततो देवर्षेर्नारदस्य वाक्यं 'एष्यत्यचिरतो राजन् यशो विपुलयंस्तवे'ति वाक्यं तात्कालिकं वा श्रद्धाय विश्वस्य हर्षयोगेन प्रत्यागमननिमित्तसन्तोषयोगेन धर्षितः प्रगल्भितः उद्रिक्तानन्द इति यावत्, वार्त्ताहर्तुः पुत्रागमनवार्त्ताहर्तुः पुत्रागमनवार्त्तां कथयितुः महाधनमनर्घ्यं हारं मुक्तामणिमयं प्रीत्यादात्॥ ३८॥ ❀ ❀ अमात्यबान्धवैरिति द्वन्द्वः, ब्राह्मणादिभिः पर्यस्तः परिवृतः॥ ३९॥ ❀ ❀ ब्रह्मघोषेण स्वस्तिवाचनात्मकेन आत्मजावेक्षणोत्सुकः निश्चक्राम निष्क्रान्तवान्॥ ४०॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

राजभटादिना ताडितस्येव तस्य पश्चात्तापोद्रेकं वक्ति अहो बतेति। अनात्म्यं जाड्यम्। अन्तवदित्यनेन स्वस्यानित्याधिपत्यं सूचयति। तदुक्तम् "आधिपत्यमनित्यं तु ध्रुवलोकस्य तद्ध्रुवे" यतो नावर्त्तते यतिरित्युक्तिरपि युज्यत इत्याह न तु तत्स्थानगंतॄणां यतीनां स्थितिरुत्तमेति आधिपत्यमनित्यं चेत्ततो निवृत्त्या न कदापि तस्य मुक्तिरित्यत आह तस्यापि मुक्तिर्नियतेति तर्हि जानता विष्णुनेदं पदं किमिति दत्तं तत्राह नियतं चापि तत्पदं तस्य क्लृप्तत्वाद्दत्तमित्यर्थः। तर्हि ध्रुवेण किमित्यनिन्दीति तत्राह तथापि कामनानिन्दा ध्रुवेण सुकृता बतेति मुमुक्षुणा विषयाभिलाषो न कर्त्तव्य इति शिक्षणार्थमित्यर्थः। कामना विषयाभिलाषः। तस्य निन्दा धिक्कारः॥ ३१॥ ❀ ❀ शास्त्रशिक्षितबुद्धेस्तव कथं बुद्धिव्यामोहः प्राप्त इति तत्राह मतिर्विदूषितेति। 'नाधुनाप्यवमानं ते' इत्यादिनारदवचनम्॥ ३२॥ ❀ ❀ एतदेव विशदयति दैवीमिति। सर्वत्र निर्मलत्वेन द्योतमानस्य देवस्य हरेर्विद्यमानां मायां बन्धकशक्तिमुपाश्रित्य स्पष्ट्वा प्रसुप्तोऽज्ञाने शयितो यथा भिन्नदृग्यथावस्तु न पश्यति, विपरीतं पश्यति च तथाहमपि भ्रातायमुत्तमो भ्रातृव्यः शत्रुरिति हृद्रुजा हृदयभेदिरोगेण तप्ये स्वतन्त्रस्याऽन्यस्य हरेः द्वितीयसद्भावे सन्तापः संभावित इति नेत्याह द्वितीय इति। द्वितीयस्वतन्त्रेऽन्यस्मिन्नसत्यविद्यमानेऽपि सर्वस्वातन्त्र्येण सर्वैश्वर्येणाद्वितीयत्वमीश्वरत्वं च ब्रह्मादीशितव्यस्य भावात्परमेश्वरत्वं हरेरेव युक्तमिति इममर्थमपिपदेन ध्वनयति। तदुक्तम् "द्वितीयस्य स्वतन्त्रस्य त्वभावादद्वयवर्जितः। ईश्वरस्येशितव्यस्य भावात्स परमेश्वरः" इति॥ ३३॥ ❀ ❀ ध्रुवलोकस्याधिपत्यस्यानित्यत्वात्सुतरां सिंहासनाधिष्ठानस्य संप्रार्थ्ये भिक्षणं व्यर्थमित्याह मयैतदिति। जगतामिति बहुवचनेनान्येषामाधिपत्यं श्लथयति, तेन द्वितीयस्वातन्त्र्याभावो निश्चीयत इति ज्ञातव्यम्॥ ३४॥ ❀ ❀ अभीष्टपुरुषार्थदानसामर्थ्याभावान्न भिक्षितमिति न मन्तव्यमित्याह भवच्छिदमिति। ञिभी-भयसंचलनयोरिति धातोर्भयमात्राहित्यं चेद्विवक्षितं लोकेऽप्यस्तीति किमित्यनुशोक इत्यत उक्तं विशिनष्टि तादात्म्यमिति। तादात्म्यं हरिं नियतचित्ततया गृहवद्धरिप्रवेशलक्षणो मोक्षः। तदुक्तम् "हरौ नियतचित्तत्वाद् गृहवत्तत्प्रवेशनात्। मोक्षं तादात्म्यमित्याहुर्न तु तद्रूपतः क्वचित्" इति 'नैकात्मतां मे स्पृहयन्ति केचिदि'त्यत्र हरिणाकाङ्क्षितकाङ्क्षितत्वमेवैकात्म्यम्। न तु तत्स्वरूपत्वम्। 'हरीच्छितेच्छितैकात्म्यं न तेनैकस्वरूपते'ति वचनात् कामेन मे काम आगादित्युपास्तिसमये प्रार्थनोक्तिश्च मे मनो बत दुःखानुभवयोग्यं वस्तु भिक्षितं क्षीणपुण्येन कारणेन अत्र दृष्टान्तमाह पुलाकानिति। पुलाकास्तुच्छधान्यानि कुलित्थादीनि भक्तसिक्थानीव "स्यात्पुलाकस्तुच्छधान्ये संक्षेपे भक्तसिक्थके" इति यादवः॥ ३५॥ ❀ ❀ मैत्रेयो ध्रुवस्यानुशोके तात्पर्यमाह न वा इति। तदास्यमित्यनेन तादात्म्यमित्येतद्विवृतमर्थतः। अन्यपुरुषार्थं कुतो न वाञ्छन्तीति तत्राह यदृच्छयेति। यदृच्छया भगवदिच्छया आकाङ्क्षामन्तरेणापि मनोभीष्टानां प्राप्तत्वादित्यर्थः॥ ३६॥ ❀ ❀ एवमस्तूत्तरकथाप्रसंगः क इति वैदुरीं शङ्कां परिहरन्निवाहाकर्ण्येति॥ ३७॥ ❀ ❀ नन्वश्रद्धया राज्ञः प्राक्तनो द्वेषोऽनुमीयते अभद्रवचनं चौपचारिकं निश्चायकप्रमाणाभावादिति शङ्का माभूदित्याह श्रद्धायेति। हर्षवेगेन हर्षोद्रेकेण धर्षितो विवशीकृतः, महान्ति धनानि यस्य स तथा॥ ३८॥ ❀ ❀ सन्तोऽभ्यर्हिता अश्वा यस्य स तथा तं पर्यस्तः परिवृतः॥ ३९॥ ❀ ❀ इदमपि राज्ञः स्नेहोद्रेकलक्षणमिति भावेनाह शङ्खेति॥ ४०॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अहो इत्यादि। अत्र तादृशत्वाज्ञानपक्षः स्पष्टः। पक्षान्तरेऽपि महां स्वयं स्वपाददानेन भवच्छिदस्तस्य पादमूलं प्राप्यापि स्वयं त्वहं त्रिभुवनमात्रोत्कृष्टपदरूपत्वेनान्तवदेव याचे तन्निर्बन्धं न परित्यक्तवानस्मि। अप्येवमर्ये भगवान् परिपाति दीनान् इत्यादेः। न तु तत्पादसेवां तत्पदमेवेत्यर्थः। अत एव राज्यादिकमपि विघ्नत्वेन लब्धमिति भावः। अत्र प्रकरणे विशेषजिज्ञासा चेद्भगवत्सन्दर्भो दृश्यः॥ ३१॥ ❀ ❀ तन्निर्बन्धत्यागे हेतुमाह मतिरिति। पतद्भिः पतनपर्यवसानैः॥ ३२॥ ❀ ❀ भिन्नदृक् श्रीभगवतोऽन्यत्र पुरुषार्थबुद्धिर्यस्य सः कश्चित् सति। ततो द्वितीये असति पुरुषार्थेऽपि सति॥ ३३॥ ❀ ❀ मयैतदिति सार्द्धकम्॥ ३४-३५॥ ❀ ❀ यदृच्छया अनायासेनैव लब्धा हस्तगता इवोपसन्ना मनःसमृद्धयः अणिमादिलक्षणाः सार्ष्ट्यादिलक्षणा वा येषां तथाभूता अपि॥ ३६-४०॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

अनात्म्यमात्मशून्यत्वमज्ञत्वम्। भवच्छिदः अप्रार्थितोऽपि यो भक्तस्य भवं छिनत्ति तस्य पादमूलं गत्वा वैष्णव्या दीक्षयैव प्राप्य यदन्तवत् तत् अहं याचे प्राप्तुं संकल्पमकरवमिति ममैव दोषः। प्रभुस्तु तदपि कृपया अनश्वरमेव पदं ददौ। ततो गन्तासि मत्स्थानमिति तदुक्तेरिति भावः॥ ३१॥ ❀ ❀ स्वस्याज्ञतायां कारणं सम्भावयति मतिरिति। पतद्भिर्मदपेक्षया अधः पतद्भिः अत एवासहनशीलैर्नारदवचः 'नाधुनाप्यवमानन्ते' इत्यादि॥ ३२॥ ❀ ❀ प्रसुप्तः स्वप्नान् पश्यन् यथा द्वितीये असत्यपि व्याघ्रसर्पादिभ्यः खिद्यति तद्वत्। भ्रातैव भ्रातृव्यः शत्रुस्तस्मात् या हृद्रुक् पीडा तयाहं तप्ये वृथैव। यत आत्मदृष्ट्या अहं स च मद्भ्रातेत्युभावपि भगवतो जीवाख्यतटस्थशक्तिवृत्तिरूपौ। देहदृष्ट्याप्युभयोरपि पाञ्चभौतिकत्वान्मायाशक्तिवृत्तिरूपत्वमतो भगवन्माययैव तस्मिन् भ्रातृव्यत्वदृष्ट्या मुह्यामीत्यर्थः॥ ३३॥ ❀ ❀ भोग्यवस्तुनो भवकारणत्वात् भवम्॥ ३४॥ ❀ ❀ स्वस्मिन् भक्त्या राजन्ते इति किं वा स्वमेव राट् राजा येषां ते स्वराजो दासास्तेषां भावः स्वाराज्यं दास्यं यच्छतो ददतः सकाशादभिमानः क्षीणपुण्येन क्षीणचारुत्वेन यथा अधनः महाराजचक्रवर्त्तिनः सकाशात् फलीकारान् सतुषतण्डुलकणान् भिक्षते तद्वत्। स तु विदग्धः परमोदारो राजा यथा तस्मै तन्मनोरथातीतां सम्पत्तिं ददाति तथैव भगवान् मह्यं स्वधामवासित्वमित्यहो मम निर्बुद्धित्वपरमकाष्ठा भगवतश्च कारुण्यौदार्यसीमेति क्षणं सविस्मयस्तिमितोऽभूदिति भावः॥ ३५॥ ❀ ❀ एवं निस्पृहत्वं तस्य युक्तमित्याह नेति। रजोजुषः परागरसास्वादिनः दास्यमृते आत्मनोऽर्थमन्यं न वाञ्छन्ति, यदृच्छया लब्धेन वस्तुना मनसः समृद्धिर्येषाम्॥ ३६॥ ❀ ❀ ततो मधुवनात् ध्रुवस्य स्वदेशगमनबन्धुनिधनादिकं वर्णयति आकर्ण्येति।॥ ३७॥ ❀ ❀ एष्यत्यचिरत इति देवर्षेर्वाक्यं श्रद्धाय॥ ३८॥ ❀ ❀ पर्यस्तः परिवृतः॥ ३९-४०॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अनात्मा अल्पबुद्धिस्तस्य भावस्तत्त्वम् अनुदरीतिवदत्र नञोऽर्थः, पदं तावदनित्यं तदयाचे अप्येवमर्थं भगवानित्यादि वा याचितवानस्मि॥ ३१॥ ❀ ❀ पतद्भिः पुनरावृत्तलोकस्थैः अत एव ममोत्कर्षमसहिष्णुभिः नारदोक्तेन समोपदेशेनायं वैकुण्ठं मा गच्छत्विति बुद्ध्या मे मतिर्विदूषिता, अत एव तथ्यं यथार्थं नारदवचः निर्विघ्नतया वैकुण्ठप्रापकसमत्वबोधकं वाक्यं नाग्राहिषम् न गृहीतवानस्मि। देवैर्वैकुण्ठगमनान्निवारितः अनित्ये राज्यसुखाकारे दुःखे मतिदूषणद्वारा पातितोऽस्मीति भावः॥ ३२॥ ❀ ❀ अथ यथार्थगुरुवाक्याग्रहणादौ अनादिमायाकृतं मोहं हेतुं सूचयन् शोचति दैवीमिति। देवस्य भगवतो मायां विश्वमोहिनीं शक्तिमाश्रित्य असति द्वितीये अब्रह्मात्मकतया अविद्यमानेऽपि संसारे भिन्नदृक् भेदबुद्धिरब्रह्मात्मकमिति मोहवान् भ्रातैव भ्रातृव्यः शत्रुरिति बुद्ध्या हृद्रुजा हृदयशोकेन तप्ये यथा प्रसुप्तः स्वप्नमोहितः स्वकीयं परं मत्वा तप्यते तद्वत्॥ ३३॥ ❀ ❀ यथा गतायुषि चिकित्सा व्यर्था तद्वन्मयाप्येतदधिराजासनं व्यर्थं प्रार्थितम्। अहो भवच्छिदं प्रसाद्य भवमयाचे॥ ३४॥ ❀ ❀ स्वेन रूपेणान्यनिरपेक्षेण राजत इति स्वराट् भगवान् तस्य भावः स्वाराज्यं भगवद्भावापत्तिं यच्छतः सकाशात् मे मया मानः अहो भिक्षितः धिग्मामिति भावः फलीकारान् तुषान्॥ ३५॥ ❀ ❀ यदृच्छालब्धेनैव भोजनाच्छादनेन मनसः समृद्धिः पूर्णता येषां ते॥ ३६॥ ❀ ❀ अभद्रस्यामङ्गलस्य भद्रं मङ्गलं कुत इति मत्वा न श्रद्दधे विश्वासं न कृतवान्॥ ३७॥ ❀ ❀ देवर्षेर्वाक्यम् एष्यत्यचिरत इति॥ ३८॥ ❀ ❀ पर्य्यस्तः परित आवृतः॥ ३९॥ ❀ ❀ आत्मजस्य आगच्छत ईक्षणे उत्सुकः उत्साहवान्॥ ४०॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

बतेति हा कष्टं जातमहो आश्चर्यमिदं ममानात्म्यं हृदयराहित्यं पश्यत। कथं तव हृदयराहित्यमित्यपेक्षायामाह—भवच्छिदः संसारोच्छेदकस्य पादमूलं गत्वापि यदन्तवत् राज्यं ध्रुवलोकादिचिरकालस्थाय्यप्यन्ततो विनाश्येव तदयाचे याचितवानस्मि। एवं भगवन्तं प्राप्य तत्सेवनमेवोचितं न पदार्थान्तरयाचनम्। यदि कथंचिद्याचेत तदा परमपुरुषार्थं मोक्षमेव नान्यद्विनाशि। यद्यप्येवं तथापि न हि पुण्यपुञ्जं विना फलसमय एवं विवेकधैर्यादि संभवतीत्यभिप्रेत्याह—मन्दभाग्यस्येति॥ ३१॥ ❀ ❀ तादृशभाग्याभावात् प्रथमत एव देवैस्तत्तदिन्द्रियमनआद्यधिष्ठातृभिर्मम मतिर्विदूषिता। कथं योऽहमसत्तमो दूषितान्तःकरणो नारदवचो बालकत्वादधुना तव मानापमानादि नास्ति भोगाभिनिवेशो न कार्यो दैवलब्धेनैव संतोषः कार्यः, फलकाले परमफलात्पतिष्यसीत्यादि तथ्यं सत्यमपि नाग्राहिषं न गृहीतवान्। ननु देवानां परमतिभ्रंशने को हेतुरित्याशङ्क्य परोत्कर्षासहनं स्वभोगनाशश्चेति हेतुद्वयमभिप्रेत्याह—पतद्भिरिति। 'पशुरेव स देवानाम्' इति वाक्याद्यावत्पुरुषः कामासक्तस्तावदेव देवान् पूजयति, न विरक्तोऽतो वैराग्येण मोक्षं ते न सहन्ते। तथात्वे स्वपूजाहानिः स्यात्तथा स्वयं संसारे पतिताः परस्य मोक्षं न सहन्ते उत्कृष्टत्वात्ततो विघ्नार्थं मतिं दूषयन्तीति भावः॥ ३२॥ ❀ ❀ देवकृतमतिभ्रंशादेव भेददृष्ट्या तापो जात इत्याह—दैवीमिति। दैवीं देवानां

शक्तिरूपां मायां जगन्मोहनीमुपाश्रित्य द्वितीये भगवद्व्यतिरिक्ते वस्तुन्यसत्यपि भ्रातृभ्रातृव्यहृद्रुजा भ्रातैव दुःखदत्वाद् भ्रातृव्यः शत्रुरिति भेददृष्ट्या हृदयरोगेणैव तापजनकशोकेन तप्ये तापमनुभवामि। तत्र दृष्टान्तः प्रसुप्त इवेति। प्रसुप्तः पुरुषः स्वप्नान् पश्यन् यथा तत्र स्वव्यतिरिक्तद्वितीयेऽसत्यपि द्वितीयं शत्रुं मत्वा तप्यते तद्वदिति॥ ३३॥ ❀ ❀ दुष्प्रसादनमन्यैः प्रसादयितुमशक्यमपि तपसा प्रसाद्य मया भाग्यहीनेन दुर्बुद्धिना एतत् राज्यादि व्यर्थमेव प्रार्थितं याचितं यथाभिलषितस्य परमानन्दस्यासाधकत्वात्तत्साधकत्वं तु भगवद्दासस्यैवेति भावः। व्यर्थत्वे दृष्टान्तः—चिकित्सेव गतायुषीति। गतं समाप्त-मायुर्यस्य तस्मिन् चिकित्सा इष्टस्य जीवनस्य साधकत्वाद्यथा व्यर्था तद्वदित्यर्थः। भगवतो दुष्प्रसादत्वे हेतुमाह—भवच्छिदमिति। भवः अहन्ताममताद्यात्मकः संसारस्तं छिनत्तीति तथा तम्। संसाराद्धुद्धारकम्। तत्रापि हेतुमाह—भवमिति। यतो दुःखात्मकं राज्यादि संसारमयाचे इत्यर्थः। एवं प्रतिकूलयाञ्चायामुक्तमेव हेतुमाह भाग्यविवर्जित इति॥ ३४॥ ❀ ❀ उक्तमेव स्वमूर्खत्वं पुनः सदृष्टान्तमाह—स्वाराज्यमिति। स्वाराज्यं निजानन्दं स्वलीलायां प्रवेशेन तदनुभवजन्यपरमानन्दं यच्छतो भगवतः सकाशान्मे मया क्षीणपुण्येन बत अहो कष्टं मौढ्यान्मानोऽभिमानहेतुः राज्यादिर्भिक्षितो याचितः। तत्र दृष्टान्तः यथा ईश्वरात् बहुमूल्यरत्नादि दातुं समर्थात्प्रसन्नतया यथेष्टं प्रतीच्छेत्युक्तवतः सकाशाद्भाग्यहीनोऽधनः फलीकारान् सतुषतण्डुलकणान् याचेत तद्वदित्यर्थः॥ ३५॥ ❀ ❀ एवं ध्रुवस्याप्रसन्नतायां कारणं विश्राव्य न केवलं तस्यैवैवं विषयभोगे निःस्पृहत्वं जातं किं त्वेकान्तिनां भगवद्भक्तानां सर्वेषामयं स्वाभाविको धर्म एवेत्याह—न वै इति। हे तात इति संबोधनेन भगवद्भक्तत्वेन विदुरे स्वस्नेहं सूचयति। वैशब्द एवकारार्थकः। हे तात! ये भवादृशा निरुपाधिकभगवद्भक्ता मुकुन्दस्य मुक्तिदातुर्भगवतो वासुदेवस्य पादारविन्दयो रजोजुषः चरणारविन्दसेवातत्पराः ते तस्य दास्यमृते सेवां विना अन्यमर्थमात्मनो नैव वाञ्छन्ति। तर्हि तेषामाकाङ्क्षाभावेन याञ्चादिप्रयत्नाभावाद्भोगसिद्धिर्न स्यादित्याशङ्क्याह—यदृच्छयेति। याञ्चादिप्रयत्नं विनैव सुदामवदिच्छया लब्धेनैव मनसः समृद्धिर्मनोरथपूर्तिर्येषां ते तथा "तेषां सततयुक्तानां, योगक्षेमं वहाम्यहम्" इति ज्ञानाद् भूरिभोजनत्वाच्च भगवद्भ-क्तानपि भूर्येव ददातीति वाञ्छा याञ्चाभावेपि न तेषां भोगे न्यूनतेति भावः॥ ३६॥ ❀ ❀ एवं विरक्तोपि ध्रुवो वरप्रदानेन भगवत इच्छां तत्रैव ज्ञात्वा तदिच्छां विना तत्प्राप्त्युपायान्तराभावात् तदाज्ञोल्लङ्घनभयाच्च गृहमेव गतस्तदा राजा तं राज्ये संस्थाप्य स्वयं वनं गत इत्याह—आकर्ण्येति यावत्समाप्ति। आत्मजं पुत्रमायान्तमाकर्ण्य श्रुत्वापि अभद्रस्य भाग्यहीनस्य दुष्कृतवतो मम भद्रं पुत्रागमनं कल्याणं कुत इति मत्वा राजोत्तानपादो न श्रद्दधे विश्वासं न चकार। तत्र दृष्टान्तः—संपरेत्य मृत्वाऽऽगतं श्रुत्वा यथा जनो न श्रद्धत्ते तद्वत्॥ ३७॥ ❀ ❀ ततश्चैश्वर्यचिरत इत्यादि देवर्षेर्नारदस्य वाक्यं श्रद्धाय हर्षवेगेन धर्षितः तिरस्कृतो व्याकुलोऽतिप्रीतश्च सन् महाधनं हारं वार्त्ताहर्तुः प्रादादित्यन्वयः॥ ३८॥ ❀ ❀ सन्तः श्रेष्ठाः अश्वाः यस्मिंस्तं कार्तस्वरं सुवर्णं तेन परिष्कृतं भूषितं रथमारुह्य ब्राह्मणादिभिः पर्यस्तः परिवृतः पुरात्तूर्णं शीघ्रं निश्चक्रामेत्युत्तरेणान्वयः॥ ३९॥ ❀ ❀ शङ्खादिशब्दानां मङ्गलत्वात्तदर्थवादनं ध्रुवे राज्ञोऽतिस्नेहसूचकम्। ब्रह्मघोषो वेदपाठशब्दस्तेन। वेणुभिः वेणुशब्दैश्च सह एवं शीघ्रं निःसरणे हेतुमाह—आत्मजेति। आत्मजस्य पुत्रस्याभीक्षणे दर्शने उत्सुकः उत्साहवानित्यर्थः॥ ४०॥

### भाषानुवादः

अहो! मुझ मन्दभाग्यकी मूर्खता तो देखो, मैंने संसारपाशको काटनेवाले प्रभुके पादपद्मोंमें पहुँचकर भी उनसे नाशवान् वस्तुकी ही याचना की!॥ ३१॥ ❀ ❀ देवताओंको स्वर्गभोगके पश्चात् फिर नीचे गिरना होता है, इसलिये वे मेरी भगवत्प्राप्तिरूप उच्च स्थितिको सहन नहीं कर सके; अतः उन्होंने ही मेरी बुद्धिको नष्ट कर दिया। तभी तो मुझ दुष्टने नारदजीकी यथार्थ बात भी स्वीकार नहीं की॥ ३२॥ ❀ ❀ यद्यपि संसारमें आत्माके सिवा दूसरा कोई भी नहीं है; तथापि सोया हुआ मनुष्य जैसे स्वप्नमें अपने ही कल्पना ही किये हुए व्याघ्रादिसे डरता है, उसी प्रकार मैंने भी भगवान्‌की मायासे मोहित होकर भाईको ही शत्रु मान लिया और व्यर्थ ही द्वेषरूप हार्दिक रोगसे जलने लगा॥ ३३॥ ❀ ❀ जिन्हें प्रसन्न करना अत्यन्त कठिन है, उन्हीं विश्वात्मा श्रीहरिको तपस्याद्वारा प्रसन्न करके मैंने जो कुछ माँगा है, वह सब व्यर्थ है; ठीक उसी तरह, जैसे गतायु पुरुषके लिये चिकित्सा व्यर्थ होती है। ओह! मैं बड़ा भाग्यहीन हूँ, संसारबन्धनका नाश करनेवाले प्रभुसे मैंने संसार ही माँगा॥ ३४॥ ❀ ❀ मैं बड़ा ही पुण्यहीन हूँ! जिस प्रकार कोई कँगला किसी चक्रवर्ती सम्राट्‌को प्रसन्न करके उससे तुषसहित चावलोंकी कनी माँगे, उसी प्रकार मैंने भी आत्मानन्द प्रदान करनेवाले श्रीहरिसे मूर्खतावश व्यर्थका अभिमान बढ़ानेवाले उच्चपदादि ही माँगे हैं॥ ३५॥ ❀ ❀ श्रीमैत्रेयजीने कहा—तात! तुम्हारी तरह जो लोग श्रीमुकुन्दपादा-रविन्द-मकरन्दके ही मधुकर हैं—जो निरन्तर प्रभुकी चरण-रजका ही सेवन करते हैं और जिनका मन अपने आप आयी हुई सभी परिस्थितियोंमें सन्तुष्ट रहता है, वे भगवान्‌से उनकी सेवाके सिवा अपने लिये और कोई भी पदार्थ नहीं माँगते॥ ३६॥ ❀ ❀ इधर जब राजा उत्तानपादने सुना कि उनका पुत्र ध्रुव घर लौट रहा है, तो उन्हें इस बातपर वैसे ही विश्वास नहीं हुआ जैसे कोई किसीके यमलोकसे लौटनेकी बातपर विश्वास न करे। उन्होंने यह सोचा कि 'मुझ अभागेका ऐसा भाग्य कहाँ'॥ ३७॥ ❀ ❀ परन्तु फिर उन्हें देवर्षि नारदकी बात याद आ गयी। इससे उनका इस बातमें विश्वास

हुआ और वे आनन्दके वेगसे अधीर हो उठे। उन्होंने अत्यन्त प्रसन्न होकर यह समाचार लानेवालेको एक बहुमूल्य हार दिया ॥ ३८ ॥ ❀ ❀ राजा उत्तानपादने पुत्रका मुख देखनेके लिये उत्सुक होकर बहुतसे ब्राह्मण, कुलके बड़े-बूढ़े, मन्त्री और बन्धुजनोंको साथ लिया तथा एक बढ़िया घोड़ोंवाले सुवर्णजटित रथपर सवार होकर वे झटपट नगरके बाहर आये। उनके आगे-आगे वेदध्वनि होती जाती थी तथा शङ्ख, दुन्दुभि एवं वंशी आदि अनेकों माङ्गलिक बाजे बजते जाते थे ॥ ३९-४० ॥

सुनीतिः सुरुचिश्चाथ महिष्यौ रुक्मभूषिते। आरुह्य शिबिकां सार्धमुत्तमेनाभिजग्मतुः ॥ ४१ ॥
तं दृष्ट्वोपवनाभ्याश आयान्तं तरसा रथात्। अवरुह्य नृपस्तूर्णमासाद्य प्रेमविह्वलः ॥ ४२ ॥
परिरेभेऽङ्गजं दोर्भ्यां दीर्घोत्कण्ठमनाः श्वसन्। विष्वक्सेनाङ्घ्रिसंस्पर्शहताशेषाघबन्धनम् ॥ ४३ ॥
अथाजिघ्रन्मुहुर्मूर्ध्नि शीतैर्नयनवारिभिः। स्नापयामास तनयं जातोद्दाममनोरथः ॥ ४४ ॥
अभिवन्द्य पितुः पादावाशीर्भिश्चाभिमन्त्रितः। ननाम मातरौ शीर्ष्णा सत्कृतः सज्जनाग्रणीः ॥ ४५ ॥
सुरुचिस्तं समुत्थाप्य पादावनतमर्भकम्। परिष्वज्याह जीवेति बाष्पगद्गदया गिरा ॥ ४६ ॥
यस्य प्रसन्नो भगवान् गुणैर्मैत्र्यादिभिर्हरिः। तस्मै नमन्ति भूतानि निम्नमाप इव स्वयम् ॥ ४७ ॥
उत्तमश्च ध्रुवश्चोभावन्योन्यं प्रेमविह्वलौ। अङ्गसङ्गादुत्पुलकावस्रौघं मुहुरूहतुः ॥ ४८ ॥
सुनीतिरस्य जननी प्राणेभ्योऽपि प्रियं सुतम्। उपगुह्य जहावाधिं तदङ्गस्पर्शनिर्वृता ॥ ४९ ॥
पयः स्तनाभ्यां सुस्राव नेत्रजैः सलिलैः शिवैः। तदाभिषिच्यमानाभ्यां वीर वीरसुवो मुहुः ॥ ५० ॥
तां शशंसुर्जना राज्ञीं दिष्ट्या ते पुत्र आर्तिहा। प्रतिलब्धश्चिरं नष्टो रक्षिता मण्डलं भुवः ॥ ५१ ॥
अभ्यर्चितस्त्वया नूनं भगवान् प्रणतार्तिहा। यदनुध्यायिनो धीरा मृत्युं जिग्युः सुदुर्जयम् ॥ ५२ ॥
लाल्यमानं जनैरेवं ध्रुवं सभ्रातरं नृपः। आरोप्य करिणीं हृष्टः स्तूयमानोऽविशत्पुरम् ॥ ५३ ॥
तत्र तत्रोपसंक्लृप्तैर्लसन्मकरतोरणैः। सवृन्दैः[४] कदलीस्तम्भैः पूगपोतैश्च तद्विधैः ॥ ५४ ॥
चूतपल्लववासःस्रङ्मुक्तादामविलम्बिभिः। उपस्कृतं प्रतिद्वारमपां कुम्भैः सदीपकैः ॥ ५५ ॥
प्राकारैर्गोपुरागारैः शातकुम्भपरिच्छदैः। सर्वतोऽलंकृतं श्रीमद्विमानशिखरद्युभिः ॥ ५६ ॥
मृष्टचत्वररथ्याट्टमार्गं चन्दनचर्चितम्। लाजाक्षतैः पुष्पफलैस्तण्डुलैर्बलिभिर्युतम् ॥ ५७ ॥
ध्रुवाय पथि दृष्टाय तत्र तत्र पुरस्त्रियः। सिद्धार्थाक्षतदध्यम्बुदूर्वापुष्पफलानि च ॥ ५८ ॥
उपजह्रुः प्रयुञ्जाना वात्सल्यादाशिषः सतीः। शृण्वंस्तद्वल्गुगीतानि प्राविशद्भवनं पितुः ॥ ५९ ॥
महामणिव्रातमये स तस्मिन् भवनोत्तमे। लालितो नितरां पित्रा न्यवसद्दिवि देववत् ॥ ६० ॥

अन्वयः—अस्य महिष्यौ सुनीतिः च सुरुचिः रुक्मभूषिते उत्तमेन सार्धम् शिबिकाम् आरुह्य अभिजग्मतुः ॥ ४१ ॥ ❀ ❀ प्रेमविह्वलः नृपः आयान्तम् तम् उपवनाभ्याशे दृष्ट्वा तरसा रथात् अवरुह्य तूर्णम् आसाद्य ॥ ४२ ॥ ❀ ❀ दीर्घोत्कण्ठमनाः श्वसन् विष्वक्सेनाङ्घ्रिसंस्पर्शहताशेषाघबन्धनम् अङ्गजम् दोर्भ्याम् परिरेभे ॥ ४३ ॥ ❀ ❀ अथ जातोद्दाममनोरथः मूर्ध्नि मुहुः अजिघ्रत् शीतैः नयनवारिभिः तनयम् स्नापयामास ॥ ४४ ॥ ❀ ❀ सज्जनाग्रणीः सत्कृतः पितुः पादौ अभिवन्द्य आशीर्भिः अभिमन्त्रितः शीर्ष्णा मातरौ ननाम सुरुचिः पादावनतम् तम् अर्भकम् समुत्थाप्य परिष्वज्य बाष्पगद्गदया गिरा जीव इति आह ॥ ४६ ॥ ❀ ❀ भगवान् हरिः मैत्र्यादिभिः गुणैः यस्य प्रसन्नः तस्मै भूतानि आपः स्वयम् निम्नम् इव नमन्ति ॥ ४७ ॥ ❀ ❀ उत्तमः च ध्रुवः उभौ प्रेमविह्वलौ अन्योन्यम् अङ्गसङ्गात् उत्पुलकौ मुहुः अस्रौघम् ऊहतुः ॥ ४८ ॥ ❀ ❀ अस्य जननी सुनीतिः प्राणेभ्यः अपि प्रियम् सुतम् उपगुह्य तदङ्गस्पर्शनिर्वृता आधिम् जहौ ॥ ४९ ॥ ❀ ❀ वीर तदा नेत्रजैः शिवैः सलिलैः अभिषिच्यमानाभ्याम् वीरसुवः स्तनाभ्याम् पयः मुहुः सुस्राव ॥ ५० ॥ जनाः तां राज्ञीम् शशंसुः ते आर्तिहा चिरम् नष्टः पुत्रः दिष्ट्या प्रतिलब्धः भुवः मण्डलम्

---

१. प्रा० पा० —शान्तै०। २. प्रा० पा०—वाद्य। ३. प्रा० पा० —चानुम०। ४. प्रा० पा०—सवृन्तैः।

रक्षिता ॥ ५१ ॥ ❀ ❀ यदनुध्यायिनः वीराः सुदुर्जयम् मृत्युम् जिग्युः प्रणतार्तिहा भगवान् त्वया नूनम् अभ्यर्चितः ॥ ५२ ॥ ❀ ❀ नृपः एवम् लाल्यमानम् सभ्रातरम् ध्रुवम् करिणीम् आरोप्य जनैः स्तूयमानः हृष्टः पुरम् अविशत् ॥५३॥ ❀ ❀ तत्र तत्र उपसंक्लृप्तैः मकरतोरणैः सवृन्दैः कदलीस्तम्भैः च तद्विधैः पूगपोतैः लसत् ॥ ५४ ॥ ❀ ❀ चूत-पल्लववासःस्रङ्मुक्तादामविलम्बिभिः सदीपकैः अपाम् कुम्भैः प्रतिद्वारम् उपस्कृतम् ॥ ५५ ॥ ❀ ❀ शातकुम्भपरिच्छदैः श्रीमद्विमानशिखरद्युभिः प्राकारैः गोपुरागारैः सर्वतः अलंकृतम् ॥ ५६ ॥ ❀ ❀ मृष्टचत्वररथ्याट्टमार्गम् चन्दनचर्चितम् लाजाक्षतैः पुष्पफलैः तण्डुलैः बलिभिः युतम् ॥ ५७ ॥ ❀ ❀ पुरस्त्रियः तत्र तत्र पथि दृष्ट्वा ध्रुवाय वात्सल्यात् सतीः आशिषः प्रयुञ्जानाः सिद्धार्थाक्षतदध्यम्बुदूर्वापुष्पफलानि उपजह्रुः च तद्वल्गुगीतानि शृण्वन् पितुः भवनम् प्राविशत् ॥ ५८-५९ ॥ ❀ ❀ सः तस्मिन् महामणिव्रातमये भवनोत्तमे पित्रा नितराम् लालितः दिवि देववत् न्यवसत् ॥ ६० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अस्य राज्ञो महिष्यौ मध्ये उत्तमं निधाय एकामेव शिविकां नरविमानमारुह्य ॥ ४१ ॥ ❀ ❀ उपवनस्याभ्याशे समीपे ॥ ४२ ॥ ❀ ❀ विष्वक्सेनस्य विष्णोरंघ्रिसंस्पर्शेन हतमशेषमघं बन्धनं च यस्य तम् ॥ ४३ ॥ ❀ ❀ आप्त उद्दामो महान्मनोरथो यस्य ॥ ४४ ॥ ❀ ❀ अभिमन्त्रितः पितुराशीर्भिः तेन सह कृतसम्भाषणः ॥ ४५-४६ ॥ ❀ ❀ सुरुच्याः प्रीतिर्नासम्भावितेत्याह यस्येति । नमंत्यनुसरन्ति आपो यथा स्वयमेव निम्नं देशमवतरन्ति ॥ ४७ ॥ ❀ ❀ ऊहतुर्दधतुः ॥ ४८-४९ ॥ ❀ ❀ हे वीर वीरसुवो ध्रुवमातुः अभिषिच्यमानाभ्यां स्तनाभ्यां पयस्तदा सुस्राव ॥ ५० ॥ ❀ ❀ चिरं नष्टो दर्शनमप्राप्तः रक्षिता रक्षिष्यति ॥ ५१-५२ ॥ ❀ ❀ एवमिति व्यवहितं पित्राद्युपलालनं परामृश्यते ॥ ५३ ॥ ❀ ❀ पुरं वर्णयति तत्र तत्रेति चतुर्भिः । सवृंदैः फलमञ्जरीयुक्तैः पूगानां पोतैर्बाल-वृक्षैस्तद्विधैः सवृन्दैरुपस्कृतं प्रतिद्वारमित्युत्तरेणान्वयः ॥ ५४ ॥ ❀ ❀ चूतपल्लवाश्च वासांसि च स्रजश्च मुक्तादामानि च येषां विशिष्टं लम्बनमस्ति तेषु कुंभेषु ॥ ५५ ॥ ❀ ❀ गोपुरैर्बहिर्द्वारैरगारैः गृहैश्च शातकुंभाः परिच्छदाः परिकरा येषु विमानानामिव शिखरे द्युतिर्येषां तैः ॥ ५६ ॥ ❀ ❀ चत्वरमंगणम् । रथ्या महामार्गः । अट्ट उच्चगृहस्योपरि निर्मिता भूमिका । मार्ग अवांतरः । मृष्टाः संमार्जिताश्चत्वरादयो यस्मिन् ॥ ५७ ॥ ❀ ❀ सिद्धार्थः श्वेतसर्षपः अक्षता यवाः ॥ ५८ ॥ ❀ ❀ उपजह्रुर्व्यकिरन् । सतीः सत्यः ॥ ५९-६० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ध्रुवस्य निष्क्रमणदिने राजा बहुतरमुद्विग्नस्तदा श्रीनारदाश्वासनेन ध्रुवमात्र एव सौभाग्यं ददावुत्तममात्रे च दौर्भाग्यं ददौ, तदपि सुनीतिर्विनयराशिस्तां सपुत्रां स्वशिविकायामेवारोहयामासेति तत्त्वमत्राह—सुनीतिरिति । 'रुक्मं कांचनं हेम' इति कोशात् ॥ ४१ ॥ ❀ ❀ तं ध्रुवम् । "अभ्याशस्तु समीपेऽर्थे स तालव्यः प्रकीर्तितः । पूर्वरूपे च मनने संमुखस्थे स दंत्यकः ॥" इति शब्दार्थविवेके, तरसा वेगेनाङ्गजं सुतं परिरेभे इति योज्यम् । विष्वक्सेनांघ्रीत्यादि विशेषणेन तत्स्प्रष्टुरपि पापहानिरिति ध्वनितम् ॥ ४२-४३ ॥ ❀ ❀ अथालिंगनानंतरं शीतैश्शीतलैः सुखलक्षणतयाऽवसितैः । "अंतो ह्यवसिते मृत्यौ स्वभावे परमात्मनि" इति यादवः । "शमं तोषं च शं सुखम्" इति हलायुधः । अनेन राज्याभिषेकमदूरे सूचयति । एतमर्थं ध्वनयन्नाह—आप्तेति । आप्त उद्दाम उत्कटो मनोरथः ज्येष्ठाय राज्यासनप्रदानलक्षणो येन स तथा ॥ ४४ ॥ ❀ ❀ भगवद्भक्तस्यापि रागद्वेषादिदोषो नास्ति किंमुत हरेरितीममर्थं ध्वनयन्ध्रुवः पित्राद्युचितक्रियामाचरतीत्याहाभिवंद्येति । मातरावित्युक्तेः पूर्वांतःकरणकालुष्यं दूरीकृतमिति व्यनक्ति । शीर्ष्णा ननामेत्युक्तेः पितृतो मातुर्गुरुत्वाधिक्यं सूचितम् । तदुक्तमपि "पितुर्दशगुणं माता गौरवेणातिरिच्यते" इति । ननु सुरुचिं दुःखदायिनीं कथं ननामेति तत्राह—सज्जनाग्रणीरिति ॥ ४५ ॥ अत्र क्वचित्पुस्तकेषु "अंबांब भगवान्नूनं प्रसादात्तव सुव्रते । सात्वतानामभयदं व्यदधान्मूर्ध्नि मे करम्" इत्यधिकोऽपि श्लोकः पठ्यते, स च सुगम एवेति । परन्तु मूर्ध्नि भगवत्करदानस्य पूर्वमनुक्तेर्विगीत एवेत्युपेक्षितः । यद्वा श्रीनारदस्यापि भगवदवतारत्वात् "स्पृष्ट्वा मूर्द्धन्यघघ्नेन पाणिना" इति तत्करदानापेक्षया वोक्तम् । यद्वाऽस्य शिरसि राज्ञः कर इति किंवदत्या मूर्द्धकरदानपदे-नानुग्रहो लक्ष्यते । ध्रुवस्य मरणमिच्छंत्या सुरुच्या जीवेति वाक्कथमुक्तेति तं चेदाह—सुरुच्याः प्रीतिरिति । तं ध्रुवम् । अर्भकमिति लुप्तोपमा, अर्भकं प्रेंखच्छिशुमिवेति स्नेहविशेषो ध्वनितः ॥ ४६ ॥ ❀ ❀ आदिना करुणादिग्रहः ॥ ४७ ॥ ❀ ❀ अस्रौघं बाष्पप्रवाहम् । "ओघः परम्परायां स्याज्जलस्रोतसि संचये" इति यादवः ॥ ४८ ॥ ❀ ❀ सुनीतेः पश्चान्मेलना-नन्दमूर्च्छाभंगे सतीति ज्ञेयमिति विश्वनाथः । सूचीकटाहन्यायेनेति तीर्थः । आधिं क्लेशम् ॥ ४९ ॥ ❀ ❀ हे वीरेति । यथा त्वं वीरस्तादृशो ध्रुवस्तं सूते या तस्याः "यशसं वीरवत्तमम्" इति श्रुतेः ॥ ५०-५१ ॥ ❀ ❀ यं भगवंतमनुध्यातुं शीलं येषां ते यदनुध्यायिनः । मृत्युजये तव पुत्रस्यैवोदाहरणम् । किं च—यदि प्रणतार्तिहरो हरिस्त्वया नाभ्यर्चितस्तर्हि

चिरं नष्टः पुत्रो न प्रतिलब्धः स्यात् न तथा तस्मादाभ्यर्चित इति निश्चितमेव ॥ ५२ ॥ ❀ ❀ व्यवहितं 'परिरेभेंगजं दोर्भ्याम्' इत्यादिनोक्तम् । "कलभश्चैव कन्यानां करिणी बालमंगले"ति वचनात्करिणीमित्युक्तम् ॥ ५३ ॥ ❀ ❀ उपसंक्लृप्तैस्तदानीमेवोद्यानादिभ्य आनीयारोपितैः लसन्मकराणि पत्रादिनिर्मितमकराकाराणि तोरणानि यत्र तैः ॥ ५४ ॥ ❀ ❀ उपस्कृतमलंकृतम् । प्रथमं कुंभं रक्तपीतादिवस्त्रेणावृत्य ततश्चाम्रपल्लवमालया ततः पुष्पहारेणावरणं कार्य्यमभ्युदयकर्म्मणीति प्रसिद्धेः ॥ ५५ ॥ ❀ ❀ शातकुंभास्सौवर्णाः परिच्छदाः कलशाद्याः परिकराः सामग्र्य इत्यर्थः । प्राकारः परितो वेष्टनभित्तिविशेषः ॥ ५६ ॥ ❀ ❀ लाजा भ्रष्टव्रीहयः, तंडुलानां पृथगुक्तेरक्षता यवाः "यवास्तिलास्तण्डुलाश्च कर्म्मभेदेन चाक्षताः" इत्युक्तेः ॥ ५७ ॥ ❀ ❀ तत्र तत्र स्थले सार्द्धेनान्वयः ॥ ५८ ॥ ❀ ❀ शृण्वन्नित्यर्धकम् ॥ ५९ ॥ ❀ ❀ स ध्रुवः ॥ ६० ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

एकामेव शिविकामिति तत्प्रभावेण वैषम्यं नष्टप्रभूदिति सूचितम् ॥ ४१ ॥ ❀ ❀ तमिति युग्मकम् । आसाद्य ध्रुवं प्राप्य ॥ ४२-४३ ॥ ❀ ❀ अथ आलिङ्गनानन्तरं शीतलैः नयनवारिभिरश्रुभिः स्नापयामास ॥ ४४ ॥ ❀ ❀ अभिमन्त्रितः अभिमन्त्रणं सम्भाषणं तस्य विषयीकृतः तथा च तेन कृतसम्भाषण इति व्याख्यातम् । सुरुचेरपि प्रणामे तुः सज्जनाग्रणीरिति ॥ ४५-४६ ॥ ❀ ❀ मैत्र्यादिभिर्भक्त्युत्थैरन्यथा प्रसादजननायोगात् ॥ ४७ ॥ ❀ ❀ तत्रोत्तमस्य प्रेमविह्वलत्वे 'रज्यन्ति जन्तवस्तत्र स्थावरा जङ्गमा अपि' इति भक्तिप्रभाव एव ध्रुवस्यापि 'निर्मत्सराणां सतामि'त्युक्तेः स एवेति ज्ञेयम् ॥ ४८ ॥ ❀ ❀ सुनीतेस्तु स्वाभाविकमप्यतिशयमाह । सुनीतिरिति ॥ ४९ ॥ ❀ ❀ तादृशवात्सल्यदर्शनाश्चर्य्येण सम्बोधनं वीरेति ॥ ५० ॥ ❀ ❀ अनद्यतनभविष्यत्काले राजसम्पत्तेः भविष्यत्सामान्यतया रक्षिष्यतीति व्याख्यातम् ॥ ५१ ॥ ❀ ❀ नूनमिति सम्भावनायाम् । यस्यानुध्यायिनो ध्यानपरायणाः ॥ ५२ ॥ ❀ ❀ लाल्यमानमिति पञ्चकम् । तत्र बहुवाक्यैकवाक्यत्वाट्टीकाक्रमलाभाय द्विबिन्दुमस्तकाङ्काः कल्पनीयाः । व्यवहितं यस्येत्यादिपद्यषट्ककृतव्यवधानं दृष्ट्वेत्यादिप्रकारकं पित्रादिकर्तृकोपलालनम् ॥ ५३ ॥ ❀ ❀ बालवृक्षैस्तद्विधैस्सवृन्दैः ॥ ५४ ॥ ❀ ❀ उपस्कृतमलङ्कृतम् ॥ ५५ ॥ ❀ ❀ श्रीमदिति विमानविशेषणम् ॥ ५६-५७ ॥ ❀ ❀ ध्रुवायेति सार्द्धकम् । सत्य इति पुरस्त्रीणां विशेषणम् ॥ ५८ ॥ ❀ ❀ शृण्वन्नित्यर्धकम् । तासां पुरस्त्रीणां वल्गुगीतानि शृण्वन् ॥ ५९-६० ॥

## श्रीमद्वीरराघवव्याख्या

अस्य राज्ञो महिष्यौ भार्य्ये सुनीतिः सुरुचिश्च उत्तमेन सार्द्धं शिविकां नरवाहनमारुह्याभिजग्मतुः ॥ ४१ ॥ ❀ ❀ उपवनाभ्याशे उपवनसमीपे आयान्तं तं ध्रुवं दृष्ट्वा तरसा आशु रथादवरुह्य तूर्णं पुत्रमासाद्य प्रेम्णा विह्वलः परवशः नृपः उत्तानपादः ॥ ४२ ॥ ❀ ❀ दीर्घोत्कण्ठमनाः अत एव श्वसन् श्वासं मुञ्चन् दोर्भ्याम् अङ्गजं पुत्रं परिरेभे । अङ्गजं विशिनष्टि विष्वक्सेनस्य भगवतः अङ्घ्रिसंस्पर्शेन हतमशेषमाध्यात्मिकं बन्धनं संसृतिकारणं यस्य तम् ॥ ४३ ॥ ❀ ❀ जात उद्यमो महान्मनोरथो यस्य सः राजा, द्वितीयांतपाठे तनयविशेषणं, मूर्ध्नि आजिघ्रन् आघ्राणं कुर्वन् शीतैर्नयनवारिभिः अश्रुभिः स्नापयामास ॥ ४४ ॥ ❀ ❀ पितुरुत्तानपादस्य पादावभिवन्द्य नमस्कृत्य पितुराशीर्भिः अभिमंत्रितः कृतसंभाषणः सत्कृतः संमानितः सज्जनाग्रणीः सज्जनश्रेष्ठः ध्रुवः शिरसा मातरौ सुरुचिसुनीती ननाम ॥ ४५ ॥ ❀ ❀ सुरुचिः पादयोरवनतमर्भकं ध्रुवमुत्थाप्य परिष्वज्यालिङ्ग्य बाष्पैर्गद्गदस्वरयुक्तया गिरा वाचा चिरं जीवेत्याह ॥ ४६ ॥ ❀ ❀ सुरुच्याः प्रीतिर्न संभावितेत्याह यस्येति । मैत्र्यादिभिरात्मगुणैः यस्य हरिः प्रसन्नः तस्मिन् सर्वभूतानि नमन्ति प्रह्वीभवन्ति आपो यथा स्वयमेव निम्नं देशं प्रतिप्रवहन्ति ॥ ४७ ॥ ❀ ❀ उत्तमः ध्रुवश्चोभौ भ्रातरौ प्रेमविह्वलौ अङ्गसंगादालिङ्गनादुत्पुलकौ उदञ्चत्पुलकौ अस्रौघं आनन्दाश्रुकणसमूहं मुहुः पुनः पुनरूहतुः मुमुञ्चतुः ॥ ४८ ॥ ❀ ❀ अस्य ध्रुवस्य जननी सुनीतिः उपगुह्यालिङ्ग्य तस्य तनयस्यास्पर्शनेन निर्वृताङ्गसुखिता आधिं मनःपीडां जहौ तत्याज ॥ ४९ ॥ ❀ ❀ हे वीर ! वीरसुवः वीरस्य ध्रुवस्य जनन्याः सुनीत्याः शिवैः शान्तैर्नेत्रजैः सलिलैरभिषिच्यमानाभ्यां स्तनाभ्यां पयः सुस्राव ॥ ५० ॥ ❀ ❀ उत्तानपादं जनाः प्रशशंसुः । प्रशंसामेवाह हे राजन् ! आर्त्तिहा दुःखापहर्त्ता पुत्रः चिरं नष्टो दर्शनमप्राप्त इदानीं दिष्ट्या भाग्येन त्वया प्रतिलब्धः प्राप्तः । अयं भुवो मण्डलं रक्षिता रक्षिष्यति ॥ ५१ ॥ ❀ ❀ प्रणतार्त्तिहा भक्तानां दुःखापहर्त्ता भगवान् त्वया नूनं जन्मान्तरेऽभ्यर्चितः, यस्य भगवतोऽनुध्यायिनो ध्यातारः सुदुर्जयं मृत्युं संसारं जिग्युः जितवन्तः ॥ ५२ ॥ ❀ ❀ एवं जनैर्लाल्यमानं राजा सभ्रातरं सोत्तमं ध्रुवं हृष्टः करिणं हस्तिनमारोप्य जनैः स्तूयमानः पुरमविशत् ॥ ५३ ॥ ❀ ❀ अतः पुरं वर्णयति तत्र तत्रेति चतुर्भिः । उपसर्गपि सम्यक्कल्पितैर्मकरतोरणैः सवृन्दैः फलमञ्जरीयुक्तैः कदलीस्तम्भैः तद्विधैः सवृन्दैः पूगानां पोतैर्लतावृक्षैः ॥ ५४ ॥ ❀ ❀ चूतपल्लवाश्च वासांसि च स्रजश्च मुक्तादामानि च तेषां विशिष्टं बंधनमस्ति येषु तैः सदीपकैः अपां कुम्भैः प्रतिद्वारमुपस्कृतम् अलंकृतम् ॥ ५५ ॥ ❀ ❀ गोपुरैरट्टालैश्च कथंभूतैः शातकौम्भाः स्वर्णमयाः परिच्छदाः परिकरा येषां तैः सर्वतः परितः

अलंकृतं श्रीमत्सर्वसमृद्धिमत् विमानानामिव शिखरैर्द्युतिर्यस्मिन् ॥ ५६ ॥ ❀ ❀ रथ्या राजमार्गः अट्टः उच्चस्य प्राकारस्योपरि निर्मिता भूमिका, मार्गोऽवान्तरः, मृष्टाः संमार्जिताश्चत्वरादयो यस्मिन् चन्दनचर्चितं चन्दनाम्बुभिः संसिक्तम् ॥ ५७ ॥ ❀ ❀ सिद्धार्थाः श्वेतसर्षपाः उपजह्नुः व्यकिरन् । सतीः सत्यः विभक्तिव्यत्यय आर्षः । तासां सतीनां वल्गूनि श्राव्याणि गीतानि शृण्वन् पितुर्भवनं गृहं प्राविशत् ॥ ५८-५९ ॥ ❀ ❀ अनर्घ्यमणिसमूहमये भवनश्रेष्ठे पित्रा नितरां लालितः दिवि देववत् अवसत् ॥ ६० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

हरेः शक्तिरचिन्त्येति ध्वनयन् सुनीतिसुरुच्योर्यात्रां चाह सुनीतिरिति । रुक्मं हेम शिविके आन्दोलिके ॥४१॥ ❀ ❀ दूरप्रदेशे दर्शनं सार्वजनीनं न स्यादिति हरिणा पुरनिकट एव घटितमिति भावेन पुरोपवनसमीपे कुमारदर्शनं तदनन्तरं राज्ञो माननक्रियाविशेषं चाह । तं दृष्ट्वेति ॥ ४२ ॥ ❀ ❀ अङ्गजं पुत्रम् । विष्वक्सेनाङ्घ्रीति विशेषणेनालिङ्गनव्याजेन तत्स्प्रष्टुरपि पापपरिहारः स्यादिति ध्वनयति ॥ ४३ ॥ ❀ ❀ किमनेनालिङ्गनमात्रेणानन्दातिरेकलक्षणज्ञापकेनेत्यतस्तद्विशिनष्टि अथेति । शान्तैः सुशीतलैः सुखलक्षणतयाऽवसितैर्वा "अन्तो स्त्र्यवसिते मृत्युस्वभावे परमात्मनी"ति यादवः, 'शर्म तोषं च शं सुखमि'ति हलायुधः । अनेन राज्याभिषेकमदूरे सूचयति एतमर्थं च ध्वनयंस्तं विशिनष्टि आप्तेति । आप्तः उद्दामः उत्कृष्टो मनोरथो वीरासनादिलक्षणो येन स तथा तम् ॥ ४४ ॥ ❀ ❀ भगवद्भक्तस्यापि रागद्वेषादिदोषो नास्ति किमुत हरेरितीममर्थं ध्वनयन् ध्रुवोऽपि पित्राद्युचितक्रियामाचरतीत्याहाभिवन्द्येति । मातराविल्युक्त्या पूर्वान्तःकरणकालुष्यं दूरीकृतमिति व्यनक्ति शीर्ष्णा ननामेत्यनेन । पितुर्मातुर्गुरुत्वाधिक्यं सूचयति तदुक्तम् "दशाचार्यसमो भ्राता शतभ्रातृसमः पिता । पितुर्दशशतं माता गौरवेणातिरिच्यते" इति सुरुच्या मुख्यमातृत्वाभावेऽपि सत्स्वभावत्वेन भेदबुद्धिर्न कृतेति द्योतनाय सज्जनाग्रणीरिति विशेषितम् ॥ ४५ ॥ ❀ ❀ ध्रुवप्रणामे सुरुच्या द्वेषं विहाय किमभ्यधायीति तत्राह सुरुचिरिति । अर्भकमिति लुप्तोपमा अर्भकं प्रेङ्खच्छिशुमिवेत्यनेन स्नेहविशेषात् ज्ञानगुरुत्वमविगणय्य समुत्थाप्येति ज्ञायते ॥ ४६ ॥ ❀ ❀ ध्रुवस्य मरणमाकांक्षमाणा सुरुचिः, कथं जीवेति वाण्युदस्थायीति तत्राह यस्येति । मैत्र्यादिभिर्मैत्रीकरुणादिभिर्नमन्ति प्रह्वीभवन्ति ॥ ४७ ॥ ❀ ❀ उत्तमस्य भूतेष्वेकत्वेन ध्रुवद्वेषाशङ्का दूरोत्सादितेति तयोः प्रणयोद्रेकनिमित्तं क्रियामाह उत्तमश्चेति । अस्रौघं वाष्पप्रवाहं 'ओघः परंपरायां स्याज्जलस्रोतसि संचये' इति यादवः ॥ ४८ ॥ ❀ ❀ सूचीकटाहन्यायेन ध्रुवे सुरुच्यादिप्रणयक्रियां प्रोच्याधुना सुनीतिविषयामाह सुनीतिरस्येति ॥ ४९ ॥ ❀ ❀ अस्य जननीति विशेषेण विशिनष्टि पय इति । औरसपुत्रस्मरणादिना मातृस्तनयोः स्तन्यप्रस्रवणेन तज्जनकत्वानुमानं सुलभमित्यर्थः । वीरं पुत्रं सुवतीति वीरसूः, तस्याः वीरे पुत्रे 'यशसं वीरवत्तममि'ति श्रुतिः ॥ ५० ॥ ❀ ❀ सुनीतिकथापि श्रोतॄणां पापप्रणाशिन्यपि भवतीति भावेन तां विशिनष्टि । तां शशंसुरिति 'दिष्ट्या स्यान्मंगलादिष्वि'त्यभिधानात् दिष्ट्या पुण्येन ॥ ५१ ॥ ❀ ❀ पुण्यमपि विशिष्यन्तीत्याह अभ्यर्चित इति । यदि प्रणतार्तिहरो हरिस्त्वया नाभ्यर्चितस्तर्हि चिरं नष्टः पुत्रो न प्रतिलब्धः स्यान्न तथा तस्मादभ्यर्चित इति तर्कः । किंविशिष्टो भगवानिति तत्राह यदनुध्यायिन इति । अनेन तर्कस्याप्रतिपक्षतां दर्शयति ॥ ५२ ॥ ❀ ❀ ध्रुवस्य जनपालनप्रक्रियां संक्षिप्सुरिव मैत्रेयो राज्ञः पुरप्रवेशमाह लाल्यमानमिति । 'कलभश्चैव कन्यानां करिणी बालमङ्गले' इति वचनात् करिणीमित्युक्तम् ॥ ५३ ॥ ❀ ❀ सवृन्दैः पुष्पवन्धनसहितैस्तद्विधैः पुष्पबंधनसहितैः ॥ ५४ ॥ ❀ ❀ विलंबीनि चूतपल्लवादीनि येषु ते तथा तैः प्रतिद्वारमुपस्कृतमलंकृतम् ॥ ५५ ॥ ❀ ❀ शातकुम्भपरिच्छदैः सुवर्णालंकारैः श्रीमतां विमानानां शिखराणां द्युतिभिरलंकृतं, अनेन देवादीनां विमानानामागमनं सूचयति ॥ ५६ ॥ ❀ ❀ चत्वरश्चतुष्पथः, रथ्या रथमार्गः, आदिशब्देन तिर्यगाद्यवान्तरमार्गो गृह्यते ॥ ५७ ॥ ❀ ❀ सिद्धार्थः सितसर्षपः ॥ ५८ ॥ ❀ ❀ तासां पुरस्त्रीणां वल्गूनि चारूणि गीतानि ॥ ५९ ॥ ❀ ❀ कशिपूत्तमे मञ्चोत्तमे भोजनाच्छादनादिना प्रेष्ठे वा ॥ ६० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तमिति युग्मकम् ॥ ४२-४३ ॥ ❀ ❀ जात इत्यत्र स्नात इति चित्सुखः । निस्तीर्ण इत्यर्थः ॥ ४४ ॥ ❀ ❀ पूर्वं पितुः पादौ शीर्ष्णाभिवन्द्य मातरौ ननाम तैश्चाशीर्भिः सहाभिमन्त्रितः कृतसम्भाषणः सत्कृतो मानितश्च सुरुचावपि तथा भक्तौ हेतुः सज्जनेति ॥ ४५-५२ ॥ ❀ ❀ लाल्यमानमिति पञ्चकम् ॥ ५३-५७ ॥ ❀ ❀ ध्रुवायेति सार्द्धकम् ॥ ५८ ॥ ❀ ❀ शृण्वन्नित्यर्द्धकम् ॥ ५९-६० ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

उत्तमेन बालकेन सह एकां शिबिकामारुह्येति ध्रुवस्य निष्क्रमणदिनत एव राज्ञा बहुतरमनुतप्तेन नारदाश्वासितेन ध्रुवमात्रे एव सौभाग्यं दत्तमुत्तममात्रे तु दौर्भाग्यम् । तदपि ध्रुवमाता सुनीतिर्विनयराशिस्तां सपुत्रां स्वशिबिकायामे-

वारोहयामासेति तत्त्वम् ॥ ४१-४४ ॥ ❀ ❀ ननु सुरुचिं दुःखदायिनीं कथं शीर्ष्णा ननाम तत्राह सज्जनाग्रणीरिति ॥ ४५-४६ ॥ ❀ ❀ तस्मिन् ध्रुवे सुरुच्याः प्रीतिर्नासम्भावितेत्याह यस्येति ॥ ४७-४८ ॥ ❀ ❀ सुनीतेः पश्चान्मिलनमानन्दमूर्च्छाभङ्गे सतीति ज्ञेयम् ॥ ५२ ॥ ❀ ❀ हे वीर! त्वामिव भगवद्धर्मवीरं ध्रुवं सूते इति तस्याः सुनीतेः ॥ ५०-५१ ॥ ❀ ❀ अभ्यर्चित इत्यत एव स्वपुत्रस्य मृत्युं त्वमजैषीरिति भावः ॥ ५२ ॥ ❀ ❀ एवं नृपोऽपि दिष्टयेति। पादोनश्लोकद्वयेन जनैः स्तूयमानः पुरमविशत् ॥ ५३ ॥ ❀ ❀ पुरं वर्णयति तत्र तत्रेति चतुर्भिः। उपसंक्लृप्तैस्तदानीमेवोद्यानादिभ्य आनीयारोपितैः। लसन्मकराणि तोरणानि यत्र तैः। सवृन्तैः फलमञ्जरीयुक्तैः। कदलीस्तम्भैरुपस्कृतप्रतिद्वारमित्यन्वयः ॥ ५४ ॥ ❀ ❀ चूतेति अपां कुम्भैरित्यस्य विशेषणम् ॥ ५५ ॥ ❀ ❀ गोपुराणि पुरद्वाराणि गोपुरैरगारैश्च विमानशिखराणामिव द्यौर्द्युतिर्येषां तैः ॥ ५६ ॥ ❀ ❀ चत्वरमङ्गणं रथ्या महामार्गः ॥ ५७ ॥ ❀ ❀ सिद्धार्थाः श्वेतसर्षपाः। अक्षता यवाः। उपजह्रुर्व्यकिरन्, सतीः सत्यः ॥ ५८-६१ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

उत्तमेन सह ॥ ४१-४२ ॥ ❀ ❀ विष्वक् सर्वत्र सेना यस्य भगवतोऽङ्घ्रिस्पर्शेन हतानि अघरूपाणि बन्धनानि यस्य तम् ॥ ४३ ॥ ❀ ❀ जात उद्दामो महान् मनोरथो यस्य सः ॥ ४४ ॥ ❀ ❀ सज्जनाग्रणीः ध्रुवोऽपि पितुः पादावभिवन्द्य तेनाशीर्भिरभिमंत्रितः ननाम ताभ्यां सत्कृतः ॥ ४५-४७ ॥ ❀ ❀ मुहुः पुनः पुनः ऊहतुः। तस्य ध्रुवस्याङ्गस्पर्शेन निर्वृता सुखिता आधिं मनोव्यथां जहौ तत्याज ॥ ४८-४९ ॥ ❀ ❀ हे वीर विदुर! तदा वीरसुवः ध्रुवजनन्याः शिवैः शुभैर्नेत्रजैः सलिलैरभिषिच्यमानाभ्यां स्तनाभ्यां पयः सुस्राव ॥ ५० ॥ ❀ ❀ ते पुत्रः चिरं नष्टोऽदर्शनं प्राप्तः दिष्ट्या भद्रं पुनः प्रतिलब्धः भुवो मण्डलं रक्षिता रक्षिष्यति इति शशंसुः ॥ ५१ ॥ ❀ ❀ यस्यानुध्यायिनः ध्यातारः मृत्युं जन्ममरणप्रवाहं जिग्युर्जितवन्तः ॥ ५२ ॥ ❀ ❀ जनैस्तूयमानः पुरमविशत् ॥ ५३ ॥ ❀ ❀ पुरं वर्णयति तत्र तत्रेति चतुर्भिः। तत्र तत्र उपसंक्षिप्तैरुपयोजितैः लसद्भिः मकराकारैस्तोरणैः सवृन्दैः फलादिसहितैः कदलीस्तम्भैः तद्विधैः सवृन्दैः पूगानां पोतैर्बालवृक्षैः प्रतिद्वारमुपस्कृतमित्यग्रिमेणान्वयः। चूतपल्लवादीनां विशिष्टं लम्बनमस्ति येषु तैः कुम्भैश्चोपस्कृतमुपशोभितम् ॥ ५४-५५ ॥ ❀ ❀ विमानशिखराणां विमानाग्राणामिव द्युतिः कांतिर्येषां तैः शातकुम्भाः स्वर्णमयाः परिच्छदाः परिकरा येषां तैः प्राकारैः गोपुरैरगारैश्च सर्वतोऽलंकृतम् ॥ ५६ ॥ ❀ ❀ मृष्टा निर्मलीकृताश्चत्वरादयो यस्मिन् तत्। तत्र चत्वरमङ्गणम्, रथ्या महामार्गः, अट्ट उच्चस्थानोपरि रचितः मार्गोऽवान्तरः। चन्दनैश्चर्चितं तज्जलैः संसिक्तम् ॥ ५७ ॥ ❀ ❀ पुरस्त्रियः ध्रुवाय सतीः सत्या आशिषः प्रयुञ्जानाः सिद्धार्थैः श्वेतसर्षपस्तदादीनि उपजह्रुः व्यकिरन् इति द्वयोरन्वयः ॥ ५८-६३ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

रुक्मभूषिते सुवर्णाभरणैर्भूषिते। अनेन सुरुच्या अप्युत्साहो जात इति सूचितम्। भगवत्कृपया परस्परं द्वेषोपि गत इति सूचयन्नाह—आरुह्येति। उत्तमेन सहैकामेव शिविकां नरयानमारुह्य अभि ध्रुवाभिमुखं जग्मतुः ॥ ४१ ॥ ❀ ❀ तमङ्गजं पुत्रमायान्तमुपवनस्याभ्याशे समीपे दृष्ट्वा प्रेमविह्वलो नृपस्तूर्णं शीघ्रमेव रथादवरुह्य तरसा वेगेन आसाद्य प्राप्य दोर्भ्यां भुजाभ्यां परिरेभे इत्युत्तरेणान्वयः ॥ ४२ ॥ ❀ ❀ श्वसन् दीर्घश्वासान् मुञ्चन्। तत्र हेतुः—दीर्घोत्कण्ठमना इति। दीर्घं बहुकालपर्यन्तमुत्कण्ठायुक्तं मनो यस्य सः। ननु पूर्वमनादृतवतः कथमेवं प्रेमवत्त्वमित्याशङ्क्य भगवन्महिम्नेत्यभिप्रेत्याह—विष्वक्सेनेति। विष्वक् सर्वतः सेना आज्ञा यस्य स तथा तस्य भगवतोऽङ्घ्रिसंस्पर्शेन हतमशेषमघं रागद्वेषादि च यस्य तम् ॥ ४३ ॥ ❀ अथ परिरम्भानन्तरं जातः संसिद्ध उद्दामो महान् पुत्रप्राप्तिलक्षणो मनोरथो यस्य स मुहुस्तनयं मूर्ध्नि जिघ्रन् शान्तैः प्रेमोद्भवैर्नयनवारिभिः स्नापयामासेत्यन्वयः ॥ ४४ ॥ एवं राज्ञा कृतं ध्रुवसत्कारं निरूप्य ध्रुवकृतं तं दर्शयति—अभिवन्द्येति। प्रथमतो ध्रुवः पितुः पादावभिवन्द्य तेनाशीर्भिः सहाभिमन्त्रितः कुशलप्रश्नादिना कृतसंभाषणः सत्कृतश्च मातरौ द्वे अपि शीर्ष्णा ननाम। ननु सुरुच्या पूर्वं तिरस्कृतः कथं तां ननाम तत्राह—सज्जनाग्रणीरिति। पूर्वं तस्य वाग्बाणैर्विद्धोहंकारप्राबल्यात्तान् स्मरन् गृहान्निःसृतोपीदानीं भगवदुपासनादिना तत्कृपयाहंकारादिदोषनिवृत्तेः सज्जनानां भगवद्भक्तानां निरहंकारिणामग्रणीर्मुख्यो जातोतः पूज्यत्वेन तां ननामेति भावः ॥ ४५ ॥ ❀ ❀ सुरुचिरपि तस्मिन् स्नेहं कृतवतीत्याह—सुरुचिरिति। सुरुचिस्तं पादावनतं पादयोः पतितमर्भकं बालकं सम्यक् प्रीतिपूर्वकमुत्थाप्य परिष्वज्य बाष्पगद्गदया स्नेहोद्गलिताश्रुरुद्धकण्ठत्वेन स्खलिताक्षरया गिरा जीवेत्याशीर्वचनमाहेत्यन्वयः ॥ ४६ ॥ ❀ ❀ ननु महाभिमानवत्यास्तस्या दुष्टचित्तायास्तत्र कथमेवं प्रीतिर्जातेत्याशङ्क्याह—यस्येति। न केवलं सुरुच्या एव ध्रुवे प्रीतिर्जाता, किन्तु यस्य कस्यापि मैत्र्यादिभिर्गुणैर्भगवान् पूर्णैश्वर्यादिगुणको हरिः शरणागतदुःखहर्त्ता दुःखं हर्तुं प्रसन्नो भवति तदा तस्मै तं सर्वाण्येव भूतानि स्वयमेव नमन्ति नमनपूर्वकमनुसरन्ति। तत्र दृष्टान्तः—यथा निम्नं प्रदेशं स्वयमेवापोऽनुसरन्ति तद्वत्। आदिपदेन प्रीतिदयासंतोषादयो गुणा ग्राह्याः ॥ ४७ ॥ ❀ ❀ उत्तम-

ध्रुवयोरपि परस्परं प्रीतिर्जातेत्याह—उत्तमश्चेति । अन्योन्यमङ्गसङ्गादुत्पुलकौ रोमाञ्चितौ । तत्र हेतुः—यत् उभौ प्रेमविह्वलौ असौघं वाष्पप्रवाहं मुहुरुद्वहतुः मुमुचतुः ॥ ४८ ॥ ❀ ❀ इदानीं सुनीतिप्रेमचेष्टां दर्शयति द्वाभ्याम्—सुनीतिरिति । अस्य ध्रुवस्य जननी प्राणेभ्योऽपि प्रियं सुतं ध्रुवमुपगूह्य तस्याङ्गस्पर्शेन निर्वृता आनन्दिता सती आधिं तद्वियोगजां मनःपीडां जहावित्यन्वयः ॥ ४९ ॥ ❀ ❀ हे वीर विदुर ! तदा वीरसुवो ध्रुवमातुः शिवैरानन्दोद्भवैर्नेत्रजैः सलिलैरश्रुभिरभिषिच्यमानाभ्यां स्तनाभ्यां पयो मुहुः सुस्रावेत्यन्वयः ॥ ५० ॥ ❀ ❀ जनैः कृतां सुनीतिप्रशंसां दर्शयति—तामिति द्वाभ्याम् । तां राज्ञीं सुनीतिं जनाः प्रशशंसुः । कथमित्यपेक्षायां तेषां वचनमेव दर्शयति—चिरं नष्टो बहुकालमदर्शनं गतस्ते तव पुत्र इदानीं सर्वेषां तवास्माकं चार्त्तिहा तद्वियोगजन्यार्तिनाशकः सन्नुपलब्धो दर्शनं गत एतद्दिष्ट्या महद्भद्रं जातम् । भगवता दत्तस्य राज्यस्यावश्यंभावित्वाज्जनानामपि मनस्यकस्मादेव तत्स्फुरितमत आहुः—भुवो मण्डलं रक्षिता रक्षिष्यतीति ॥ ५१ ॥ ❀ ❀ नह्येवं चिरनष्टस्य पुत्रस्यागमनमद्भुतप्रभावश्च भगवत्कृपां विना संभवतीति तेन तया तदाराधनं निश्चित्याहुः—अभ्यर्चित इति । नूनं निश्चितमेतत् यदनुध्यायिनः यस्य ध्यानपरायणा धीरा योगिजनाः सुदुर्जयमपि मृत्युं जिग्युः जितवन्तः स प्रणतार्त्तिहा शरणागततापनिवारको भगवान् सर्वथा सर्वकरणे समर्थस्त्वयार्चितः पूजितो नान्यथैवं भाग्यमिति भावः ॥ ५२ ॥ ❀ ❀ एवं जनैः सर्वैरेव लाल्यमानं ध्रुवं सभ्रातरं करिणीमारोप्य बन्दिजनैः स्तूयमानो नृपो हृष्टः सन् पुरमविशदित्यन्वयः ॥ ५३ ॥ ❀ ❀ पुरं वर्णयति—तत्र तत्रेति चतुर्भिः । तत्र तत्रोपसंक्लृप्तैः रचितैर्लसद्भिः शोभमानैर्मकरतोरणैः । तथा सवृन्दैः फलपुष्पादिसहितैः कदलीस्तम्भैः । तथा पूगानां पोतैर्बालवृक्षैस्तद्विधैः सवृन्दैः ॥ ५४ ॥ ❀ ❀ चूता आम्रास्तेषां पल्लवाश्च वासांसि च स्रजश्च मुक्तादामानि च तेषां विलम्बनमस्ति येषु तैः सदीपकैरपां कुम्भैश्च प्रतिद्वारमुपस्कृतमलंकृतमिति द्वयोरन्वयः ॥ ५५ ॥ ❀ ❀ प्राकारादिभिः सर्वतोलंकृतमित्यन्वयः । गोपुरैः पुरद्वारैः । अगारैः गृहैश्च । कथंभूतैः ? शातकुम्भाः स्वर्णमयाः परिच्छदाः परिकरा येषु तैः । श्रीमतां विमानानामिव शिखरैर्द्युतिर्येषां प्राकारादीनां तैः । श्रीमदिति पृथग्वा पुरविशेषणम् ॥ ५६ ॥ ❀ ❀ चत्वरः चतुष्पथः, रथ्या रथयोग्यो राजमार्गः, अट्ट उच्चस्योपरि निर्मिता भूमिका, मार्गोऽवान्तरः, मृष्टाः संमार्जिताश्चत्वरादयो यस्मिन् । चन्दनचर्चितं चन्दनमिश्रितजलैश्चत्वरादिषु सिक्तम् । लाजादिभिर्युतमिति ध्रुवस्य मङ्गलार्थं विप्रादिभिर्गृहीतैर्लाजादिभिर्युक्तमित्यर्थः । तत्र लाजाः भ्रष्टधानाः । अक्षताः यवाः । बलयः मृष्टान्नानि भूषावस्त्रादीनि वा ॥ ५७ ॥ ❀ ❀ यदि गृहागतेपि भगवत्कृपयैवं मातापित्रादिसत्कारस्तदा परमफले भगवद्दत्ते लोके किं सुखं न स्यादिति ध्रुवस्य विश्वासार्थं भगवत्प्रेरितसर्वजनकृतं सत्कारं निरूप्य गृहप्रवेशेन तत्रत्यं सुखं राज्यादिप्राप्तिश्च निरूपयति—ध्रुवायेति यावदध्यायसमाप्ति । सिद्धार्थः श्वेतसर्षपः । सिद्धार्थादीन्युपजह्रुरित्युत्तरेणान्वयः ॥ ८५ ॥ ❀ ❀ तत्र तत्र पथि मार्गे दृष्टाय ध्रुवाय पुरस्त्रियो वात्सल्यात् स्नेहात् सतीः श्रेष्ठा आशिषः प्रयुञ्जानाः सत्यः सिद्धार्थादीन्युपजह्रुः समर्पितवत्य इति द्वयोरन्वयः । ध्रुवश्च तासां वल्गूनि मनोहराणि गीतानि शृण्वन् पितुर्भवनं प्राविशदित्यन्वयः ॥ ५९ ॥ ❀ ❀ तस्मिन् भवनोत्तमे नितरां पित्रा लालितः सत्कृतो न्यवसदित्यन्वयः । तस्य सुखातिशयं सूचयन् दृष्टान्तमाह—दिवि देववदिति ॥ ६० ॥

### भाषानुवादः

उनकी दोनों रानियाँ सुनीति और सुरुचि भी सुवर्णमय आभूषणोंसे विभूषित हो राजकुमार उत्तमके साथ पालकियोंपर चढ़कर चल रही थीं ॥ ४१ ॥ ❀ ❀ ध्रुवजी उपवनके पास आ पहुँचे, उन्हें देखते ही महाराज उत्तानपाद तुरंत रथसे उतर पड़े। पुत्रको देखनेके लिये वे बहुत दिनोंसे उत्कण्ठित हो रहे थे। उन्होंने झटपट आगे बढ़कर प्रेमातुर हो, लंबी-लंबी साँसें लेते हुए, ध्रुवको भुजाओंमें भर लिया। अब ये पहलेके ध्रुव नहीं थे, प्रभुके परम पुनीत पादपद्मोंका स्पर्श होनेसे इनके समस्त पाप-बन्धन कट गये थे ॥ ४२-४३ ॥ ❀ ❀ राजा उत्तानपादकी एक बहुत बड़ी कामना पूर्ण हो गयी। उन्होंने बार-बार पुत्रका सिर सूँघा और आनन्द तथा प्रेमके कारण निकलनेवाले ठंडे-ठंडे * आँसुओंसे उन्हें नहला दिया ॥ ४४ ❀ ❀ तदनन्तर सज्जनोंमें अग्रगण्य ध्रुवजीने पिताके चरणोंमें प्रणाम किया और उनसे आशीर्वाद पाकर, कुशल-प्रश्नादिसे सम्मानित हो दोनों माताओंको प्रणाम किया ॥ ४५ ॥ ❀ ❀ छोटी माता सुरुचिने अपने चरणोंपर झुके हुए बालक ध्रुवको उठाकर हृदयसे लगा लिया और अश्रुगद्गद वाणीसे 'चिरञ्जीवी रहो' ऐसा आशीर्वाद दिया ॥ ४६ ॥ ❀ ❀ जिस प्रकार जल स्वयं ही नीचेकी ओर बहने लगता है—उसी प्रकार मैत्री आदि गुणोंके कारण जिसपर श्रीभगवान् प्रसन्न हो जाते हैं, उसके आगे सभी जीव झुक जाते हैं ॥ ४७ ॥ ❀ ❀ इधर उत्तम और ध्रुव दोनों ही प्रेमसे विह्वल होकर मिले। एक दूसरेके अङ्गोंका स्पर्श पाकर उन दोनोंके ही शरीरमें रोमाञ्च हो आया तथा नेत्रोंसे बार-बार आँसुओंकी धारा बहने लगी ॥ ४८ ॥ ❀ ❀ ध्रुवकी माता सुनीति अपने प्राणोंसे भी प्यारे पुत्रको गले लगाकर सारा सन्ताप भूल गयी। उनके सुकुमार अङ्गोंके स्पर्शसे उसे बड़ा ही आनन्द प्राप्त हुआ ॥ ४९ ॥

* आनन्द या प्रेमके कारण जो आँसू आते हैं वे ठंडे हुआ करते हैं और शोकके आँसू गरम होते हैं।

❁ ❁ वीरवर विदुरजी ! वीरमाता सुनीतिके स्तन उसके नेत्रों से झरते हुए मङ्गलमय आनन्दाश्रुओंसे भीग गये और उनसे बार-बार दूध बहने लगा ॥ ५० ॥ ❁ ❁ उस समय पुरवासीलोग उनकी प्रशंसा करते हुए कहने लगे, 'महारानीजी ! आपका लाल बहुत दिनोंसे खोया हुआ था; सौभाग्यवश अब वह लौट आया, यह हम सबका दुःख दूर करनेवाला है। बहुत दिनोंतक भूमण्डलकी रक्षा करेगा ॥ ५१ ॥ ❁ ❁ आपने अवश्य ही शरणागत भयभञ्जन श्रीहरिकी उपासना की है। उनका निरन्तर ध्यान करनेवाले धीर पुरुष परम दुर्जय मृत्युको भी जीत लेते हैं' ॥ ५२ ॥ ❁ ❁ विदुरजी ! इस प्रकार जब सभी लोग ध्रुवके प्रति अपना लाड़-प्यार प्रकट कर रहे थे, उसी समय उन्हें भाई उत्तमके सहित हथिनीपर चढ़ाकर महाराज उत्तानपादने बड़े हर्षके साथ राजधानीमें प्रवेश किया। उस समय सभी लोग उनके भाग्यकी बड़ाई कर रहे थे ॥ ५३ ॥ ❁ ❁ नगरमें जहाँ-तहाँ मगरके आकारके सुन्दर दरवाजे बनाये गये थे तथा फल-फूलोंके गुच्छोंके सहित केलेके खंभे और सुपारीके पौधे सजाये गये थे ॥ ५४ ॥ ❁ ❁ द्वार-द्वारपर दीपकके सहित जलके कलश रक्खे हुए थे—जो आमके पत्तों, वस्त्रों, पुष्पमालाओं तथा मोतीकी लड़ियोंसे सुसज्जित थे ॥ ५५ ॥ ❁ ❁ जिन अनेकों परकोटों, फाटकों और महलोंसे नगरी सुशोभित थी, उन सबको सुवर्णकी सामग्रियोंसे सजाया गया था तथा उनके कँगूरे विमानोंके शिखरोंके समान चमक रहे थे ॥ ५६ ॥ ❁ ❁ नगरके चौक, गलियों, अटारियों और सड़कोंको झाड़बुहारकर उनपर चन्दनका छिड़काव किया गया था और जहाँ-तहाँ खील, चावल, पुष्प, फल, जौ एवं अन्य माङ्गलिक उपहार-सामग्रियाँ सजी रक्खी थीं ॥ ५७ ॥ ❁ ❁ ध्रुवजी राजमार्गसे जा रहे थे। उस समय जहाँ-तहाँ नगरकी शीलवती सुन्दरियाँ उन्हें देखनेको एकत्र हो रही थीं। उन्होंने वात्सल्य-भावसे अनेकों शुभाशीर्वाद देते हुए उनपर सफेद सरसों, अक्षत, दही, जल, दूर्वा, पुष्प और फलोंकी वर्षा की। इस प्रकार उनके मनोहर गीत सुनते हुए ध्रुवजीने अपने पिताके महलमें प्रवेश किया ॥ ५८-५९ ॥ ❁ ❁ वह श्रेष्ठ भवन महामूल्य मणियोंकी की लड़ियोंसे सुसज्जित था। उसमें अपने पिताजीके लाड़-प्यारका सुख भोगते हुए वे उसी प्रकार आनन्दपूर्वक रहने लगे, जैसे स्वर्गमें देवतालोग रहते हैं ॥ ६० ॥

पयःफेननिभाः शय्या दान्ता रुक्मपरिच्छदाः । आसनानि महार्हाणि यत्र रौक्मा उपस्कराः ॥ ६१ ॥
यत्र स्फटिककुड्येषु महामारकतेषु च । मणिप्रदीपा आभान्ति ललनारत्नसंयुताः ॥ ६२ ॥
उद्यानानि च रम्याणि विचित्रैरमरद्रुमैः । कूजद्विहङ्गमिथुनैर्गायन्मत्तमधुव्रतैः ॥ ६३ ॥
वाप्यो वैदूर्यसोपानाः पद्मोत्पलकुमुद्वतीः । हंसकारण्डवकुलैर्जुष्टाश्चक्राह्वसारसैः ॥ ६४ ॥
उत्तानपादो राजर्षिः प्रभावं तनयस्य तम् । श्रुत्वा दृष्ट्वाद्भुततमं प्रपेदे विस्मयं परम् ॥ ६५ ॥
वीक्ष्योढवयसं तं[१] च प्रकृतीनां च सम्मतम् । अनुरक्तप्रजं राजा ध्रुवं चक्रे भुवः पतिम् ॥ ६६ ॥
आत्मानं च प्रवयसमाकलय्य विशाम्पतिः । वनं विरक्तः प्रातिष्ठद्विमृशन्नात्मनो गतिम् ॥ ६७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे राज्याभिषेकवर्णनं[२] नाम नवमोऽध्यायः ॥ ९ ॥

अन्वयः—यत्र पयःफेननिभाः शय्याः रुक्मपरिच्छदाः दान्ताः महार्हाणि आसनानि रौक्माः उपस्कराः ॥ ६१ ॥ ❁ ❁ यत्र महामारकतेषु च स्फटिककुड्येषु ललनारत्नसंयुताः रत्नप्रदीपाः आभान्ति ॥ ६२ ॥ ❁ ❁ उद्यानानि विचित्रैः अमरद्रुमैः कूजद्विहङ्गमिथुनैः च गायन्मत्तमधुव्रतैः रम्याणि आसन् ॥ ६३ ॥ ❁ ❁ वैदूर्यसोपानाः पद्मोत्पल-कुमुद्वतीः वाप्यः हंसकारण्डवकुलैः चक्राह्वसारसैः जुष्टाः ॥ ६४ ॥ ❁ ❁ उत्तानपादः राजर्षिः तनयस्य तम् अद्भुत-तमम् प्रभावम् श्रुत्वा दृष्ट्वा परम् विस्मयम् प्रपेदे ॥ ६५ ॥ ❁ ❁ राजा तम् ध्रुवम् ऊढवयसम् च प्रकृतीनाम् संमतम् च अनुरक्तप्रजम् वीक्ष्य भुवः पतिम् चक्रे ॥ ६६ ॥ ❁ ❁ विशांपतिः आत्मानम् प्रवयसम् आकलय्य आत्मनः गतिम् विमृशन् विरक्तः वनम् प्रातिष्ठत् ॥ ६७ ॥

इति नवमोऽध्यायः ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

यत्र भवनोत्तमे ॥ ६१-६३ ॥ ❁ ❁ कुमुत् कुमुदम्। पद्मादिमत्यो वाप्यः ॥ ६४-६५ ॥ ऊढवयसं प्राप्तयौवनम्। अनुरक्ताः प्रजा यस्मिन् ॥ ६६ ॥ ❁ ❁ प्रवयसं वृद्धम् ॥ ६७ ॥

इति श्रीभा० म० चतुर्थे टीकायां नवमोऽध्यायः ॥ ९ ॥

---

१. प्रा० पा०—पुत्रं प्रकृ०। २. प्रा० पा०—ध्रुवचरिते नवराज्या०।

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

दान्ता हस्तिदंतनिर्मितपादाः रुक्मपरिच्छदाः स्वर्णतंतुमिश्रितकौशेयादिवस्त्राच्छादनयुताः। उपस्कराः पात्रादयः रौक्मा हैमाः ॥ ६१ ॥ ❀ ❀ यत्रेति द्विकम्। ललनारत्नैः स्त्रीरत्नैः 'रत्नं श्रेष्ठेऽपि निर्दिष्टम्' इति हलधरः ॥ ६२ ॥ ❀ ❀ अमरद्रुमैः संतानादिभिः ॥ ६३ ॥ ❀ ❀ वैदूर्याणां विद्रुमाणां सोपानानि आरोहणावरोहणा मार्गा यासां ताः ॥ ६४ ॥ ❀ ❀ तमलौकिकम् ॥ ६५ ॥ ❀ ❀ प्राप्तयौवनम् 'वयो यौवनपक्षिणोः' इति धरणिः। एतेन राज्यपालनसामर्थ्यम्। प्रकृतीनां मंत्र्यादीनाम् ॥ ६६ ॥ ❀ ❀ प्रगतं वयो यस्य तम्। आकलय्य संचिंत्य आत्मनः स्वस्य गतिं हरिम् ॥ ६७ ॥

**इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे नवमोऽध्यायः ॥ ९ ॥**

**श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या**

उपस्करास्सामग्र्यः ॥ ६१ ॥ ❀ ❀ यत्रेति त्रिकम् ॥ ६२–६४ ॥ ❀ ❀ तं श्रीभगवत्प्रसादवैभवरूपं "प्रभावस्सर्वजित्स्थितिरि"ति रसामृते तल्लक्षणात्तादृशस्थितिलक्षणं प्रभावं श्रीनारदादिभ्यः श्रुत्वा दृष्ट्वा सुरुच्यादिसर्वजनताप्रीतिलिङ्गेन स्वयञ्चानुमाय ॥ ६५–६६ ॥ ❀ ❀ आत्मनस्स्वस्य गतिं प्राप्यं श्रीहरिम् ॥ ६७ ॥

**इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे दीपिकादीपिन्याख्यायां टिप्पण्यां नवमोऽध्यायः ॥ ९ ॥**

**श्रीमद्वीरराघवव्याख्या**

भवनं वर्णयति। यत्र भवने शय्याः दान्ताः क्षीरफेनवन्निर्मलाः शुभ्राश्च रुक्मपरिच्छदाः सुवर्णमयाः परिकराः अनर्घ्याणि आसनानि रौप्या राजता उपस्कराश्च सन्ति ॥ ६१ ॥ ❀ ❀ यत्र भवने स्फटिकमयकुड्येषु इन्द्रनीलमणिखचितेषु प्रतिफलिता ललनाः स्त्रियः रत्नानि तैः संयुताः। मणिप्रदीपाः उपमितसमासः ॥ ६२ ॥ ❀ ❀ अथातिरम्याण्युद्यानानि च यत्र सन्तीत्यनुषङ्गः। तान् विशिनष्टि विचित्रैरमरद्रुमैः संतानपारिजातादिभिर्द्रुमैः कथंभूतैः कूजन्ति विहङ्गानां मिथुनानि येषु गायन्तो मधुपानमत्ता मधुव्रता भृङ्गा येषु तैर्द्रुमैः युक्तानीति शेषः ॥ ६३ ॥ ❀ ❀ वाप्यश्च यत्र सन्तीत्यन्वयः। वापीर्विशिनष्टि। वैडूर्यमणिमयाः सोपाना यासाम्। पद्मानि उत्पलानि कुमुदानि च यासु सन्ति ताः विभक्तिव्यत्यय आर्षः, हंसानां कारण्डवानां च कुलैः संघैश्चक्रवाकैः सारसैश्च घुष्टाः शब्दिता विस्मयमाश्चर्यं प्रपेदे ॥ ६४–६५ ॥ ❀ ❀ अथ कतिपयवर्षानन्तरमूढवयसं प्राप्तयौवनं प्रकृतीनां मंत्रिणां सम्मतमनुरक्ताः अनुरागयुक्ताः प्रजा यस्मिन् तं पुत्रं ध्रुवं वीक्ष्य भुवः पतिं चक्रे राज्याभिषिक्तमकरोत् ॥ ६६ ॥ ❀ ❀ तत आत्मानं प्रवयसं वृद्धमाकलय्य आलोच्य विशाम्पतिः राजा आत्मनः स्वस्य गतिं मुक्त्युपायं विमर्शयन् अत एव विरक्तः वनं प्रातिष्ठत् प्राविशत् ॥ ६७ ॥

**इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्य्यकृतायां श्रीभागवतचंद्रचंद्रिकायां नवमोऽध्यायः ॥ ९ ॥**

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

कशिपूत्तम इत्युक्तं प्रपञ्चयति। पयःफेननिभा इति। दान्ता दन्तनिर्मिताः रुक्मपरिच्छदाः सुवर्णपरिच्छदाः उपर्याच्छादनपटा यासां तास्तथा उपस्कराः पात्राणि रौक्माणि सुवर्णनिर्मितानि ॥ ६१ ॥ ❀ ❀ 'रत्नं श्रेष्ठे च निर्दिष्टमि'ति हलायुधः, ललनारत्नैः संयुताः शय्यादय आभान्ति तस्मिन्निति ॥ ६२–६४ ॥ ❀ ❀ ध्रुवप्रभावो देवादीनामाश्चर्यबुद्धिजनकः किंन्वितरेषामिति भावेनोत्तानपादान्तःकरणप्रवृत्तिविशेषं वक्ति उत्तानपाद इति ॥ ६५ ॥ ❀ ❀ विस्मयफलमाह वीक्ष्येति। ऊढवयसमित्यनेन राज्यपालनशक्तिं व्यनक्ति ॥ ६६ ॥ ❀ ❀ तत्र स्वयं किमकारीति तत्राह। आत्मानं चेति आकलय्य ज्ञात्वा आत्मनः स्वस्य हरेश्च गतिं स्थितिं विमृशन्विचारयन्निति ॥ ६७ ॥

**इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे विजयध्वजकृतपदरत्नावल्यां नवमोऽध्यायः ॥ ९ ॥**

**श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः**

यत्रेति त्रिकम् ॥ ६२–६७ ॥

**इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमजीवगोस्वामिकृतक्रमसन्दर्भे नवमोऽध्यायः ॥ ९ ॥**

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

सन्ति ॥ ६२–६५ ॥ ❀ ❀ ऊढवयसं प्राप्तयौवनम् ॥ ६६–६७ ॥

**इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। चतुर्थे नवमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥**

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पद्मं चोत्पलं च कुमुत् कुमुदं च तानि विद्यन्ते यासां ताः पद्मादिमत्यः। विभक्तिव्यत्यय आर्षः ॥ ६४-६५ ॥ ❀ ❀ ऊढवयसं प्रवृत्तयौवनम्। प्रकृतीनाममात्यादीनाम्। अनुरक्ताः प्रजाः यस्मिन् तम् ॥ ६६ ॥ ❀ ❀ प्रवयसं वृद्धमाकलय्य संख्याय आत्मनः परमात्मनः गतिं मार्गं विमृशन् विचारयन् वनं निरुपद्रवं हरिभजनस्थानमित्यर्थः ॥ ६७ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे टीकायां नवमोऽध्यायः ॥ ९ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

भवनस्योत्तमत्वमेव दर्शयति-पय इति चतुर्भिः। पयःफेननिभा इति शय्यानामास्तरणादिप्रयुक्तं शुभ्रत्वं कोमलत्वं च सूचितम्। स्वरूपशोभामाह-दान्ताः इति। दान्ताः हस्तिदन्तनिर्मिताः। रुक्मपरिच्छदा इति सुवर्णनिर्मिताः परिच्छदाः परिकराः पात्रादयो यासु ताः, यद्वा रुक्मा रुक्मसूत्रनिर्मिताः परिच्छदाः उपर्याच्छादनपटाः यासां ताः। महार्हाणि अतिश्रेष्ठानि। रौक्माः सुवर्णनिर्मिताः उपस्कराः पात्रादयः यत्र भवनोत्तमे आभान्तीति सर्वत्र प्रथमान्तेन संबन्धः ॥ ६१ ॥ ❀ ❀ यत्र स्फटिकादिकुड्येषु मणय एव प्रदीपा इव प्रकाशका आभान्ति। तथा रत्नसंयुताः नानारत्नाभरणैर्भूषिताः ललनाश्रेष्ठाः स्त्रियः परिचारिका आभान्ति ॥ ६२ ॥ ❀ ❀ विचित्रैः नानावर्णैः अमरद्रुमैर्देववृक्षैः रम्याणि मनोहराण्युद्यानानि चाभान्ति। कथंभूतैः ? कूजन्ति विहङ्गमिथुनानि येषु तैः। गायन्तो मत्ता मधुव्रता भ्रमरा येषु तैः ॥ ६३ ॥ ❀ ❀ वैडूर्यमणिरचितानि सोपानानि यासां ताः। कुमुत् कुमुदं पद्मादिमत्यो हंसादिभिः पक्षिभिर्जुष्टाः सेविता वाप्यो यत्राभान्तीति ॥ ६४ ॥ ❀ ❀ अद्भुततममत्याश्चर्यजनकं तं भगवन्तमाराध्य ततो मन्वाद्यनधिष्ठितपदप्राप्तिलक्षणं श्रुत्वा तथा भगवत्कृपया तेजस्वित्वं प्रजाद्यनुरागविषयत्वादिलक्षणं च तनयस्य प्रभावं दृष्ट्वा उत्तानपादो राजर्षिः परमं विस्मयं प्रपेदे प्राप ॥ ६५ ॥ ❀ ❀ ततश्च राज्यं दत्तवानित्याह-वीक्ष्येति। ऊढवयसं प्राप्तयौवनं राज्यनिर्वाहयोग्यं प्रकृतीनाममात्यादीनां प्रजापालनक्षमत्वेन संमतमनुरक्ताः प्रजा यस्मिंस्तं तमेवंगुणकं ध्रुवं वीक्ष्य राजोत्तानपादो भुवः पतिं चक्रे राज्येऽभिषिक्तवान् ॥ ६६ ॥ ❀ ❀ आत्मानं च प्रवयसं वृद्धमाकलय्य दृष्ट्वा विशांपतिः राजा विषयभोगाद्विरक्तः सन् गृहस्थितौ पुनरासक्त्या पुरुषार्थहान्यापत्तेर्भीतः आत्मनः परमात्मनो भगवतो वासुदेवस्य गतिं तत्त्वं विमृशन् विचारयन् वनं प्रातिष्ठदित्यन्वयः। भगवद्भक्तस्य ध्रुवस्य राज्यदानादिसत्कारेण तस्यापि भगवत्कृपया विषयवैतृष्ण्येन भगवत्परता जातेति भावः ॥ ६७ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे ह्यर्थनिरूपणे। नवमो विवृतोध्यायः साध्यप्राप्तिनिरूपकः ॥ ३ ॥

## भाषानुवादः

वहाँ दूधके फेनके समान सफेद और कोमल शय्याएँ हाथीदाँतके पलंग, सुनहरी कामदार परदे, बहुमूल्य आसन और बहुत-सा सोनेका सामान था ॥ ६१ ॥ ❀ ❀ उसकी स्फटिक और महामरकतमणि ( पन्ने ) की दीवारोंमें रत्नोंकी बनी हुई स्त्रीमूर्तियोंपर रक्खे हुए मणिमय दीपक जगमगा रहे थे ॥ ६२ ॥ ❀ ❀ उस महलके चारों ओर अनेक जातिके दिव्य वृक्षोंसे सुशोभित उद्यान थे, जिनमें नर और मादा पक्षियोंका कलरव तथा मतवाले भौंरोंका गुंजार होता रहता था ॥६३॥ ❀ ❀ उन बगीचोंमें वैदूर्यमणि ( पुखराज ) की सीढ़ियोंसे सुशोभित बावलियाँ थीं—जिनमें लाल, नीले और सफेद रंगके कमल खिले रहते थे तथा हंस, कारण्डव, चकवा एवं सारस आदि पक्षी क्रीड़ा करते रहते थे ॥ ६४ ॥ ❀ ❀ राजर्षि उत्तानपादने अपने पुत्रके अति अद्भुत प्रभावकी बात देवर्षि नारदसे पहले ही सुन रक्खी थी; अब उसे प्रत्यक्ष वैसा ही देखकर उन्हें बड़ा आश्चर्य हुआ ॥ ६५ ॥ ❀ ❀ फिर यह देखकर कि अब ध्रुव तरुण अवस्थाको प्राप्त हो गये हैं, अमात्यवर्ग उन्हें आदरकी दृष्टिसे देखते हैं तथा प्रजाका भी उनपर अनुराग है, उन्होंने उन्हें निखिल भूमण्डलके राज्यपर अभिषिक्त कर दिया ॥ ६६ ॥ ❀ ❀ और आप वृद्धावस्था आयी जानकर आत्मस्वरूपका चिन्तन करते हुए संसारसे विरक्त होकर वनकी ओर चल दिये ॥६७॥

इति नवमोऽध्यायः



# अथ दशमोऽध्यायः

## मैत्रेय उवाच

प्रजापतेर्दुहितरं शिशुमारस्य वै ध्रुवः । उपयेमे भ्रमिं नाम तत्सुतौ कल्पवत्सरौ ॥ १ ॥
इलायामपि भार्यायां वायोः पुत्र्यां महाबलः । पुत्रमुत्कलनामानं योषिद्रत्नमजीजनत् ॥ २ ॥
उत्तमस्त्वकृतोद्वाहो मृगयायां बलीयसा । हतः पुण्यजनेनाद्रौ तन्मातास्य गतिं गता ॥ ३ ॥
ध्रुवो भ्रातृवधं श्रुत्वा कोपामर्षशुचार्पितः । जैत्रं स्यन्दनमास्थाय गतः पुण्यजनालयम् ॥ ४ ॥
गत्वोदीचीं दिशं राजा रुद्रानुचरसेविताम् । ददर्श हिमवद्द्रोण्यां पुरीं गुह्यकसंकुलाम् ॥ ५ ॥
दध्मौ शङ्खं बृहद्बाहुः खं दिशश्चानुनादयन् । येनोद्विग्नदृशः क्षत्तरुपदेव्योऽत्रसन्भृशम् ॥ ६ ॥
ततो निष्क्रम्य बलिन उपदेवमहाभटाः । असहन्तस्तन्निनादमभिपेतुरुदायुधाः ॥ ७ ॥

अन्वयः—ध्रुवः शिशुमारस्य प्रजापतेः भ्रमिं नाम दुहितरम् उपयेमे तत्सुतौ कल्पवत्सरौ ॥ १ ॥ ❀ ❀ च महाबलः वायोः पुत्र्याम् इलायाम् भार्यायाम् योषिद्रत्नम् उत्कलनामानम् पुत्रम् अजीजनत् ॥ २ ॥ ❀ ❀ तु अकृतोद्वाहः उत्तमः मृगयायाम् बलीयसा पुण्यजनेन अद्रौ हतः तन्माता अस्य गतिम् गता ॥ ३ ॥ ❀ ❀ ध्रुवः भ्रातृवधम् श्रुत्वा कोपामर्षशुचार्पितः जैत्रम् स्यन्दनम् आस्थाय पुण्यजनालयम् गतः ॥ ४ ॥ ❀ ❀ राजा रुद्रानुचरसेविताम् उदीचीम् दिशम् गत्वा हिमवद्द्रोण्याम् गुह्यकसंकुलाम् पुरीम् ददर्श ॥ ५ ॥ ❀ ❀ क्षत्तः सः बृहद्बाहुः खम् च दिशः अनुनादयन् शंखम् दध्मौ येन उपदेव्यः उद्विग्नदृशः भृशम् अत्रसन् ॥ ६ ॥ ❀ ❀ ततः तम् निनादम् असहन्तः बलिनः उपदेवमहाभटाः उदायुधाः निष्क्रम्य अभिपेतुः ॥ ७ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

दशमे भ्रातृहंतॄणां यक्षाणामकरोद्वधम् । एक एवालकां गत्वेत्यस्य विक्रम उच्यते ॥ ( १ ) ॥

❀ ❀ योषितां रत्नमिवातिमनोहरम् । कन्यारत्नं चाजीजनदिति वा ॥ २ ॥ ❀ ❀ यक्षेणाद्रौ हिमवति हतः, आजाविति पाठे युद्धे । अस्य गतिं गता मृतेत्यर्थः ॥ ३ ॥ ❀ ❀ कोपामर्षशुचा द्वंद्वैक्यम् । तेनार्पितो व्याप्तः । जैत्रं जयहेतुम् । पुण्यजनालयमलकाम् ॥ ४ ॥ ❀ ❀ रुद्रानुचरा भूतादयः ॥ ५ ॥ ❀ ❀ दध्मौ वादितवान् । येन शंखवादनेन हे क्षत्तः उपदेव्यो यक्षस्त्रियः ॥ ६–७ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अलकां कुबेरपुरीम् ( १ ) उपयेमे विवाहविधिना स्वीचक्रे । एतद्विवाहः पितुर्वनगमनात्पश्चादवगम्यते तत्सुतौ भ्रमिसुतौ ॥१॥ ❀ ❀ इलायां पूर्वमुद्वाहितायामपि योषिद्रत्नं श्रेष्ठां कन्याम् ॥२॥ ❀ ❀ उत्तमस्यापि ध्रुवभ्रातृत्वात्कथा वर्णनीयेति चेत्तत्राह उत्तमस्त्विति । मृगयाव्यसनित्वेन सदैव वनाद्यटनशीलत्वादनुद्वाहित एव मृतस्तन्माता सुरुचिरपि । इत्यर्थ इति । वने पुत्रान्वेषणार्थं गता दवानलेन दग्धेति वक्ष्यमाणरीत्या मृतेति भावः ॥३॥ ❀ ❀ भागुरिमते शुचाशब्दोऽप्यस्ति । तथा च कोपामर्षशुचाभिः क्रोधासहनशोकैर्व्याप्तः । जैत्रं जयहेतुकमुहूर्त्तघटितम् ॥४॥ ❀ ❀ आदिना पिशाचादिग्रहः । "द्रोणी निम्नतटे गिरेः" इति कोशात् । गुह्यका यक्षास्तैर्निबिडाम् ॥ ५ ॥ ❀ ❀ क्षत्तरिति । यथा त्वं पापशकलीकरणे समर्थस्तद्वत्सोऽपीत्याह । 'क्षद-शकलीकरणे' धातुस्ततस्तृप्रत्यये क्षत्तेति रूपम् ॥ ६ ॥ ❀ ❀ ततः शंखध्वन्याकर्णनोत्तरम् ॥ ७ ॥

---

१. प्रा० पा०—भृतिं । २. प्रा० पा०—योगेश्वरमजी० । ३. प्रा० पा०—क्रोधाम० । ४. प्रा० पा०—उपदेवा महाभयाः ।

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

उपयेम इति उत्तानपादवनगमनानन्तरमेवेति ज्ञेयम् ॥ १ ॥ ❀ ❀ इलायां पूर्वं परिणीतायां पूर्वपक्षे योषिद्रत्नमिति पुत्रविशेषणम्। परत्र चकारोऽध्याहृतः ॥ २ ॥ ❀ ❀ त्वद्भ्रातर्युत्तमे नष्ट इति भगवद्वाक्यस्य सत्यतामाह। उत्तमस्त्विति। अद्राविन्यत्राजाविति पाठान्तरम्। गतिमवस्थाम् ॥ ३ ॥ ❀ ❀ कोपश्चामर्षश्चासहनं शुक् च तासां समाहारः कोपामर्षशुक्, तेन ॥ ४-५ ॥ ❀ ❀ येनेति यच्छब्दस्योत्तरवाक्यस्थत्वात्तच्छब्दापेक्षा नास्ति "साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके" इतिवत् ॥ ६ ॥ ❀ ❀ ततोऽलकातः ॥ ७ ॥

## श्रीमद्वीरराघवव्याख्या

अथ दशमेन ध्रुवः कृतोद्वाह उत्पादितपुत्रो जितभ्रातृहन्तृपुण्यजन आसेत्याह मुनिः प्रजापतेरिति। शिशुमाराख्यस्य प्रजापतेः दुहितरं भ्रमिमुपयेमे उदवोढ। तयोर्ध्रुवभ्रम्योः सुतौ कल्पवत्सराख्यौ ॥ १ ॥ ❀ ❀ पुनरूढायां वायोर्दुहितरि इडाख्यायां भार्यायां महाबलो ध्रुवः उत्कलनामानं पुत्रं कथंभूतं योषितां रत्नमिवातिमनोहरं कन्यारत्नमिति वा पुत्रमजीजनत् उत्पादयामास ॥ २ ॥ ❀ ❀ उत्तमस्त्वकृतोद्वाह एव कदाचिन्मृगयायां बलीयसा पुण्यजनेन यक्षेण अद्रौ हिमवति हतः। तस्योत्तमस्य माता सुरुचिः तस्य पुत्रस्य गतिं गता। मरणं प्राप्तेत्यर्थः ॥ ३ ॥ ❀ ❀ ध्रुवः भ्रातुरुत्तमस्य वधमाकर्ण्य कोपामर्षशुगिति समाहारद्वन्द्वः, तेन। अमर्षः अक्षमा अर्पितः व्याप्तः जैत्रं जयशीलस्यन्दनं रथमास्थायाधिरुह्य पुण्यजनालयम् अलकां पुरीं गतः गतवान् ॥ ४ ॥ ❀ ❀ रुद्रानुचरा भूतादयस्तैः सेवितां गुह्यकैर्यक्षैः सङ्कुलां व्याप्तां पुरीमलकां हिमवतो द्रोण्यां ददर्श ॥ ५ ॥ ❀ ❀ बृहद्बाहुः खमन्तरीक्षं दिशः दश दिशश्चानुनादयन् प्रतिध्वनयन् शङ्खं दध्मौ नादितवान्। येन शङ्खनिनादेन उद्विग्ना चलिता दृग् यासान्ता उपदेव्यो यक्षस्त्रियः हे क्षत्तः! भृशं नितरामत्रसन् भीतवत्यः ॥ ६ ॥ ❀ ❀ उपदेवाश्च महाभटास्ते बलिनः ततः अलकाया निष्क्रम्य तस्य ध्रुवस्य शङ्खनिनादमसहन्तः उद्यतायुधा उद्यतास्त्रशस्त्राः अभितः पेतुः उपर्यागतवन्तः ॥ ७ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अत्र न केवलं मोक्ष एव भगवत्प्रसादायत्तः किंतु बाह्याभ्यन्तरशत्रुजयोऽपीत्यतस्तन्माहात्म्यं वर्ण्यते। तत्रादौ ध्रुवविवाहादिप्रकारः कथ्यते प्रजापतेरित्यादिना। तत्सुतौ तस्या भ्रमेः सुतौ कल्पो वत्सरश्च ॥ १ ॥ ❀ ❀ योगेश्वरमणिमाद्यष्टाङ्गयोगानामीश्वरम्। अनेन राज्यानिच्छुत्वात् पश्चाद्मुक्तिरिति ज्ञायते ॥ २ ॥ ❀ ❀ राजपुत्र उत्तमः किमभूत् ध्रुवभ्रातृत्वेन तत्कथाया अपि श्रवणार्हत्वात् सापि वक्तव्येति; तत्राह उत्तमस्त्विति। तन्माता तस्योत्तमस्य माता सुरुचिस्तस्योत्तमस्य गतिं मरणलक्षणां गतिं गता ॥ ३ ॥ ❀ ❀ अत्र प्राकृतस्वभावेन ध्रुवेण किमकारीति तत्राह ध्रुव इति। कोपामर्षशुचार्पितः भागुरिन्यायेनास्य शब्दस्य टावन्तत्वं साधु। पुण्यजनालयमलकां पुरीम् ॥ ४ ॥ ❀ ❀ पुररक्षकानाह रुद्रेति। हिमवतो गिरेर्द्रोण्यां निम्नतटे गुह्यका यक्षास्तैः संकुलां निबिडां स्तिमिताम् ॥ ५ ॥ ❀ ❀ उपदेव्यो यक्षस्त्रियः ॥ ६ ॥ ❀ ❀ उदतिष्ठन्निति वा पाठः ॥ ७ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

प्रजेति। अस्मादुद्वाहतः पूर्वमेवोत्तानपादवनगमनमिति गम्यते। भ्रम्यादावपि पूर्ववद्भगवच्छक्त्यादिरूपत्वं ज्ञेयम् ॥ १ ॥ ❀ ❀ इलायां पूर्वपरिणीतायाम् ॥ २-८ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ध्रुवो भ्रातुर्वधं यक्षैः श्रुत्वा गत्वालकां पुरीम्। यक्षान् युद्धे जघानेति दशमे कथ्यते कथा ॥ ( १ ) ॥

योषिद्रत्नं कन्यारत्नं च ॥ १-२ ॥ ❀ ❀ अद्रौ हिमवति। आजाविति पाठे तैः सह युद्धे। अस्य गतिं पुत्रमन्विष्यन्ती दावानलान्मृत्युम् ॥ ३ ॥ ❀ ❀ अर्पितो व्याप्तः ॥ ४-५ ॥ ❀ ❀ उपदेव्यो यक्षस्त्रियः ॥ ६-८ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यदुक्तं भगवता 'त्वद्भ्रातर्युत्तमे नष्टे मृगयायां तु तन्मनाः। अन्वेषन्ती वनं माता दावाग्निं सा प्रवेक्ष्यती'ति तदुत्तमविनाशं तत्प्रसंगाद्यक्षवधादिकं च वर्णयति। ध्रुवविवाहतत्पुत्रजन्मकथनपूर्वकं प्रजापतेरिति दशमेनाध्यायेन ॥ १ ॥ ❀ ❀ योषिद्रत्नं कन्याम् ॥ २ ॥ ❀ ❀ बलीयसा बलवता पुण्यजनेन यक्षेण अद्रौ हिमवति अस्योत्तमस्य गतिं गता तदन्वेषणपरा तीव्रदावाग्नौ दग्धा ॥ ३ ॥ ❀ ❀ कोपोऽनुपकारिणि पुण्यजने क्रोधः, अमर्षः अक्षांतिः, शुक् भ्रातृवियोगजाधिः, तासां समाहारद्वन्द्वैक्यं तेनार्पितो व्याप्तः जैत्रं जयप्रदं पुण्यजनालयमलकाम् ॥ ४ ॥ ❀ ❀ राजा ध्रुवः गुह्यकैर्यक्षैः संकुलां व्याप्ताम् ॥ ५ ॥ ❀ ❀ उपदेव्यो यक्षभार्याः ॥ ६ ॥ ❀ ❀ अभिपेतुः अभितो जग्मुः ॥ ७ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

राज्यस्यानर्थहेतुत्वबोधाय दशमे स्फुटम्। ध्रुवेनापि कृतो यक्षवधोऽध्याये निरूप्यते ॥ (१)॥

पूर्वाध्याये ध्रुवस्य तपःप्रभृतिसाधनसाध्यराज्यादिप्राप्तिर्निरूपिता, इदानीं राज्यस्य क्रोधहिंसाद्यनर्थहेतुत्वं दर्शयति। तत्रादौ ध्रुवस्य विवाहपूर्वकपुत्राद्युत्पत्तिमाह—प्रजापतेरिति द्वाभ्याम्। प्रजापतेः शिशुमारस्य दुहितरं कन्यां भ्रमिं नाम प्रसिद्धां ध्रुव उपयेमे विवाहितवान्। तत्सुतौ तस्याः भ्रमेः सुतौ ॥ १ ॥ ❀ ❀ तथा वायोः पुत्र्यामिलायामपि भार्यायां महाबलो ध्रुवो योषितां रत्नमिवातिमनोहरमुत्कलनामानं पुत्रमजीजनदित्यन्वयः। यद्वा उत्कलनामानं पुत्रं योषिद्रत्नं मनोहरां कन्यां चेत्यर्थः ॥ २ ॥ ❀ ❀ उत्तमस्य त्वपत्यं किमपि नाभूत्। यतो वरदानसमये यथोक्तं भगवता तथैवाकृतोद्वाह एव स मृगयायां बलीयसा पुण्यजनेन यक्षेणाद्रौ हिमवति हतः। तन्माता तस्योत्तमस्य माता सुरुचिः अस्योत्तमस्य गतिं मरणं गता ॥ ३ ॥ ❀ ❀ कोपामर्षशुचां द्वन्द्वैक्यं तेनार्पितो व्याप्तः जैत्रं जयप्रदं स्यन्दनमास्थाय पुण्यजनानां यक्षाणामालयं स्थानमलकापुरीं गतः ॥ ४ ॥ ❀ ❀ राजा ध्रुवः रुद्रानुचरा भूतप्रेतपिशाचादयस्तैः सेविताम्। गुह्यका यक्षास्तैः संकुलां व्याप्ताम् ॥ ५ ॥ ❀ ❀ तेषां युद्धाय निःसरणार्थं शङ्खं दध्मौ वादितवान्। स च शब्दो महान् जातो येन हे क्षत्तः विदुर! उपदेव्यो यक्षस्त्रिय उद्विग्नदृशः सत्यो भृशमत्रसन्निति ॥ ६ ॥ ❀ ❀ ततः पुरीतः उपदेवस्य कुबेरस्य महाभटा योद्धारः अभिपेतुः युद्धार्थं संमुखमाययुः ॥ ७ ॥

## भाषानुवादः

### उत्तमका मारा जाना, ध्रुवका यक्षोंके साथ युद्ध

श्रीमैत्रेयजी कहते हैं—विदुरजी! ध्रुवने प्रजापति शिशुमारकी पुत्री भ्रमिके साथ विवाह किया, उससे उनके कल्प और वत्सर नामके दो पुत्र हुए ॥ १ ॥ ❀ ❀ महाबली ध्रुवकी दूसरी स्त्री वायुपुत्री इला थी। उससे उनके उत्कल नामके एक पुत्र और एक कन्यारत्नका जन्म हुआ ॥ २ ॥ ❀ ❀ उत्तमका अभी विवाह नहीं हुआ था कि एक दिन शिकार खेलते समय उसे हिमालय पर्वतपर एक बलवान् यक्षने मार डाला। उसके साथ उसकी माता भी परलोक सिधार गयी ॥ ३ ॥ ❀ ❀ ध्रुवने जब भाईके मारे जानेका समाचार सुना तो वे क्रोध, शोक और उद्वेगसे भरकर एक विजयप्रद रथपर सवार हो यक्षोंके देशमें जा पहुँचे ॥ ४ ॥ ❀ ❀ उन्होंने उत्तर दिशामें जाकर हिमालयकी घाटीमें यक्षोंसे भरीहुई अलकापुरी देखी, उसमें अनेकों भूत-प्रेत-पिशाचादि रुद्रानुचर रहते थे ॥ ५ ॥ ❀ ❀ विदुरजी! वहाँ पहुँचकर महाबाहु ध्रुवने अपना शङ्ख बजाया तथा सम्पूर्ण आकाश और दिशाओंको गुँजा दिया। उस शङ्खध्वनिसे यक्षपत्नियाँ बहुत ही डर गयीं; उनकी आँखें भयसे कातर हो उठीं ॥ ६ ॥ ॥ ❀ ❀ वीरवर विदुरजी! महाबलवान् यक्षवीरोंको वह शङ्खनाद सहन न हुआ। इसलिये वे तरह-तरहके अस्त्र-शस्त्र लेकर नगरसे बाहर निकल आये और ध्रुवपर टूट पड़े ॥ ७ ॥

स तानापततो वीर उग्रधन्वा महारथः। एकैकं युगपत्सर्वानहन् बाणैस्त्रिभिस्त्रिभिः ॥ ८ ॥
ते वै ललाटलग्नैस्तैरिषुभिः सर्व एव हि। मत्वा निरस्तमात्मानमाशंसन्[1] कर्म तस्य तत् ॥ ९ ॥
तेऽपि चामुममृष्यन्तः पादस्पर्शमिवोरगाः। शरैरविध्यन् युगपद् द्विगुणं प्रचिकीर्षवः ॥ १० ॥
ततः परिघनिस्त्रिंशैः प्रासशूलपरश्वधैः। शक्त्यृष्टिभिर्भुशुण्डीभिश्चित्रवाजैः शरैरपि ॥ ११ ॥
अभ्यवर्षन् प्रकुपिताः सरथं सहसारथिम्। इच्छन्तस्तत्प्रतीकर्तुमयुतानि त्रयोदश ॥ १२ ॥
औत्तानपादिः[2] स तदा शस्त्रवर्षेण भूरिणा। न उपादृश्यत च्छन्न आसारेण यथा गिरिः ॥ १३ ॥
हाहाकारस्तदैवासीत्सिद्धानां दिवि पश्यताम्। हतोऽयं मानवः सूर्यो मग्नः पुण्यजनार्णवे ॥ १४ ॥
नदत्सु यातुधानेषु जयकाशिष्वथो मृधे। उदतिष्ठद्रथस्तस्य नीहारादिव भास्करः ॥ १५ ॥
धनुर्विस्फूर्जयन्दिव्यं[3] द्विषतां खेदमुद्वहन्। अस्त्रौघं व्यधमद्बाणैर्घनानीकमिवानिलः ॥ १६ ॥
तस्य ते चापनिर्मुक्ता भित्त्वा वर्माणि रक्षसाम्। कायानाविविशुस्तिग्मा गिरीनशनयो यथा ॥ १७ ॥
भल्लैः संछिद्यमानानां शिरोभिश्चारुकुण्डलैः। ऊरुभिर्हेमतालाभैर्दोर्भिर्वलयवल्गुभिः ॥ १८ ॥
हारकेयूरमुकुटैरुष्णीषैश्च महाधनैः। आस्तृतास्ता रणभुवो रेजुर्वीरमनोहराः ॥ १९ ॥

---

१. प्रा० पा०—नं शशंसुः कर्म। २. प्रा० पा०—अथ औत्तानपादिः सशस्त्र०। ३. प्रा० पा०—विस्फारयन्नुग्रं द्विष०।

हतावशिष्टा इतरे रणाजिराद् रक्षोगणाः क्षत्रियवर्यसायकैः ।
प्रायो विवृक्णावयवा विदुद्रुवुर्मृगेन्द्रविक्रीडितयूथपा इव ॥ २० ॥

अन्वयः—सः उग्रधन्वा वीरः महारथः आपततः तान् सर्वान् एकैकम् त्रिभिः त्रिभिः बाणैः युगपत् अहन् ॥ ८ ॥ ❋ ❋ ते सर्वे एव ललाटलग्नैः तैः इषुभिः हि निरस्तम् आत्मानम् मत्वा तस्य तत् कर्म वै आशंसन् ॥ ९ ॥ ❋ ❋ च ते अपि उरगाः पादस्पर्शम् इव अमृष्यन्तः प्रचिकीर्षवः द्विगुणम् शरैः अमुम् युगपत् अविध्यन् ॥ १० ॥ ❋ ❋ ततः प्रकुपिताः तत् प्रतीकर्तुम् इच्छन्तः त्रयोदश अयुतानि परिघनिस्त्रिंशैः प्रासशूलपरश्वधैः शक्त्यृष्टिभिः भुशुण्डीभिः चित्रवाजैः शरैः अपि सरथम् सहसारथिम् अभ्यवर्षन् ॥ ११–१२ ॥ ❋ ❋ तदा सः औत्तानपादिः भूरिणा शस्त्रवर्षेण यथा गिरिः आसारेण छन्नः न उपादृश्यत ॥ १३ ॥ ❋ ❋ तदा एव दिवि पश्यताम् सिद्धानाम् हाहाकारः आसीत् अयम् पुण्यजनार्णवे मग्नः मानवः सूर्यः हतः ॥ १४ ॥ ❋ ❋ अथो तस्य रथः मृधे जयकाशिषु यातुधानेषु नदत्सु भास्करः नीहारात् इव उदतिष्ठत् ॥ १५ ॥ ❋ ❋ दिव्यम् धनुः विस्फूर्जयन् द्विषताम् खेदम् उद्वहन् बाणैः अस्त्रौघम् अनिलः घनानीकम् इव व्यधमत् ॥ १६ ॥ ❋ ❋ तस्य चापनिर्मुक्ताः तिग्माः ते रक्षसाम् वर्माणि भित्त्वा कायान् यथा अशनयः गिरीन् आविविशुः ॥ १७ ॥ ❋ ❋ भल्लैः संछिद्यमानानाम् चारुकुण्डलैः शिरोभिः हेमतालाभैः ऊरुभिः वलयवल्गुभिः दोर्भिः हारकेयूरमुकुटैः च महाधनैः उष्णीषैः आस्तृताः ताः रणभुवः वीरमनोहराः रेजुः ॥ १८–१९ ॥ ❋ ❋ हतावशिष्टाः इतरे रक्षोगणाः प्रायः क्षत्रियवर्यसायकैः विवृक्णावयवाः मृगेन्द्रविक्रीडितयूथपाः इव रणाजिरात् विदुद्रुवुः ॥ २० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

एकैकं त्रिभिस्त्रिभिरित्येवं सर्वांस्त्रयोदशायुतानि यक्षान्युगपदहन् जघान ॥ ८ ॥ ❋ ❋ निरस्तं पराजितम् । तस्य ध्रुवस्य तत्कर्माशंसंस्तुष्टुवुः ॥ ९ ॥ ❋ ❋ तेऽपि तत्कर्मासहमाना अमुमविध्यन् ध्रुवकृतविक्रमात् द्विगुणं यथा भवत्येवं षड्भिः षड्भिरिपुभिः प्रतिकर्तुमिच्छंतः ॥ १० ॥ ❋ ❋ विचित्रवाजैर्विचित्रपक्षैः ॥ ११–१२ ॥ ❋ ❋ धारासंपातेन छन्नो गिरिरिव नैवादृश्यत ॥ १३ ॥ ❋ ❋ सूर्यतुल्यः ॥ १४ ॥ ❋ ❋ यातुधानेषु राक्षसेषु जयकाशिषु जितंजितमिति जयप्रकाशकेषु सत्सु ॥ १५ ॥ ❋ ❋ व्यधमत्संचूर्णयामास ॥ १६ ॥ ❋ ❋ वर्माणि कवचानि ॥ १७ ॥ ❋ ❋ शिरःप्रमुखैरास्तृताः प्रकीर्णा रणभुवो रेजुरिति द्वयोरन्वयः ॥ १८–१९ ॥ ❋ ❋ प्रायो बाहुल्येन विवृक्णाः संछिन्ना अवयवा येषाम् ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स ध्रुवस्तान्यक्षान् । युगपदेककालावच्छेदेन ॥ ८ ॥ ❋ ❋ ते यक्षाः निरस्तं दीनम् । तस्य ध्रुवस्य । तत्कर्म सर्वेषां युगपत्ताडनरूपम् । आशंसन् श्लाघयामासुः ॥ ९–१० ॥ ❋ ❋ परिघो लोहवद्धलगुडः । ऋष्टिभिर्द्विधारखड्गैः । "उड्डीयोड्डीय च प्राप्य नदन्ती दशकर्त्रिका । क्रमते चानतांगी या सा भुशुंडी निगद्यते" इति नागेशोक्तेः ॥ ११ ॥ ❋ ❋ अयुतानां त्रिंशत्सहस्राधिकैकलक्षसंख्याकाः ॥ १२ ॥ ❋ ❋ आसारेण 'धारासंपात आसारः' इत्यमरः ॥ १३ ॥ ❋ ❋ पुण्यजनार्णवे सूर्यः सूर्यतुल्यः इति तेषां सरस्वत्या ध्रुवस्य कोऽपि नापकारोऽभूदिति व्यज्यते । न ह्यर्णवे मग्नस्य सूर्यस्य किमपि कष्टं भवतीति ॥ १४ ॥ ❋ ❋ अथो मज्जनानंतरमेव । तस्य ध्रुवस्य ॥ १५–१६ ॥ ❋ ❋ ते बाणाः । अशनयो वज्राणि 'दंभोलिरशनिर्द्वयोः' इत्यमरः । अत्र च 'गिरीनशनयो यथा' इति 'आसारेण यथा गिरिः' इति दृष्टांताभ्यां यक्षाणां बाणाः ध्रुवस्याकिंचित्कराः प्रत्युतोत्साहवर्द्धका एव यथा धारासंपातेन गिरयः क्षालितमला उद्दीप्ता एव भवंति ध्रुवस्य शराश्च यक्षाणां प्राणहारिण एव यथाऽशनिभिर्गिरयो विदीर्यंत एवेति व्यंजितम् ॥ १७ ॥ ❋ ❋ हेमतालाभैर्गौरवर्णत्वेन दीर्घत्वेन च स्वर्णतालतरुसदृशैः "तालो माने तरौ गानकालमाने च वाद्यके" इति धरणिः । वलयैः कंकणैः । "वलयः कंठरोगे ना कङ्कणे पुंनपुंसकम्" इति मेदिनी ॥ १८ ॥ ❋ ❋ 'उष्णीषं तु शिरोवेष्टे' इति कोशात् । वीरमनोहराः शूरप्रियाः ॥ १९ ॥ ❋ ❋ मृगेन्द्रस्य विक्रीडितेन यूथपा हस्तिन इव गजसिंहयोः परस्परविरोधप्रसिद्धेरत्र यूथपपदं गजपरमेव ज्ञेयम् ॥ २० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

एकैकं त्रिभिस्त्रिभिरित्युक्ते सर्वानित्यधिकं स्यादिति इत्येवमध्याहृतम् ॥ ८ ॥ ❋ ❋ तत् युगपत्त्रिभिस्त्रिभिर्बाणैर्हननलक्षणं कर्म प्राशंसन् ॥ ९–१० ॥ ❋ ❋ ततः परिघेति युग्मकम् । ततः शरवेधानन्तरं प्रासः धोपेति ख्यातः शक्तिर्बरछीति

१. प्रा० पा०—निकृत्तावयवाः ।

ख्यातः ऋष्टिः गुर्जेति ख्यातः भुशुण्डी पोलादीति ख्यातः ॥ ११-१२ ॥ ❀ ❀ नोपादृश्यत संछन्न इति स्वाम्यसंमतः पाठः ॥ १३ ॥ ❀ ❀ हतः प्रतिबद्धः "मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः" इत्यमरः ॥ १४ ॥ ❀ ❀ भास्कर इवेति तद्व-त्स्वाभाविकशक्त्यैवावरणव्यावृत्तिर्न तु विक्रमापेक्षेति सूचितम् ॥ १५ ॥ ❀ ❀ स्ववेगैरनिलो यथा मेघसमूहं नाशयति ॥ १६ ॥ ❀ ❀ तस्य ध्रुवस्य ते बाणाः ॥ १७ ॥ ❀ ❀ भल्लैरिति युग्मकम् । महाधनैरनर्घ्यैः ॥ १८-१९ ॥ ❀ ❀ विक्रीडितेत्यत्र विद्राविततेति क्वचित् ॥ २० ॥

### श्रीमद्वीरराघवव्याख्या

उग्रं भीमं धनुर्यस्य महारथो ध्रुवः आपततः सर्वान् वीरान् युगपदेव प्रत्येकं त्रिभिस्त्रिभिर्बाणैरहन् प्रत्येकं त्रिभिस्त्रिभिर्बाणैः सर्वान् त्रयोदशायुतानि युगपन्निजघान ॥ ८ ॥ ❀ ❀ ते वै उपदेवाः सर्वे ललाटलग्नैस्तैस्त्रिभिरिषुभिरात्मानं निरस्तं पराजितं मत्वा तस्य तत्कर्म आशंसन् प्रशशंसुः ॥ ९ ॥ ❀ ❀ तेऽपि च यक्षा उरगाः सर्पाः पादस्पर्शं पादासक्तिमिव अमुं ध्रुवममृष्यन्तः असहमाना द्विगुणं यथा भवति तथा षड्भिः प्रतिकर्तुमिच्छन्तः शरैर्युगपदेवाविध्यन् निजघ्नुः । ततः परिघादिभिः शस्त्रविशेषै-रविध्यन् तथा चित्रवाजैश्चित्रपक्षैः शरैरपि नितरां कुपिताः अयुतानां त्रयोदश यक्षास्तत्प्रतिकर्तुं तत्प्रतिक्रियां कर्तुमिच्छन्तः सरथं ससारथिमभ्यवर्षन् ॥ १०-१२ ॥ ❀ ❀ तथा स चौत्तानपादिः ध्रुवः भूरिणा शस्त्रवर्षेणाच्छन्न आवृतः आसारेण धारा-वर्षेण यथा गिरिः पर्वत इव नोपादृश्यत नैवादृश्यत ॥ १३ ॥ ❀ ❀ तदैव दिवि पश्यतां सिद्धानां महान् हाहाकार आसीत् मनोर्गोत्रापत्यं पुमानयं ध्रुव एव सूर्यः, पुण्यजना एव अर्णवः समुद्रस्तस्मिन् मग्नः, हंत हा कष्टमित्येवंरूपो हाहाकार आसीत् ॥ १४ ॥ ❀ ❀ ततो मृधे युद्धे यातुधानेषु राक्षसेषु जयकाशिषु जितं जितं मयेति जयप्रकाशकेषु सत्सु जयशालिष्विति पाठे जयकाशिषु सत्सु नीहाराद्भास्करः सूर्यः इव तस्माच्छरवर्षात् रथात् ल्यब्लोपे पञ्चमी, रथे आस्थाय उदतिष्ठत् उत्थितः ॥ १५ ॥ ❀ ❀ तत उग्रधनुः विस्फूर्जयन् व्याघातं कुर्वन् द्विषतां पुण्यजनानां खेदमुद्वहन् प्रापयन् बाणैरस्त्रौघं द्विषत्प्रयुक्तमस्त्रसमूहमनिलो वायुरिव मेघपङ्क्तिं व्यधमत् चूर्णयामास ॥ १६ ॥ ❀ ❀ तस्य ध्रुवस्य चापात् धनुषो विनिर्मुक्तास्तिग्मास्तीक्ष्णा बाणाः गिरीन् पर्वता-नशनयो यथा रक्षसां वर्माणि कवचानि छित्वा कायान् देहान् आसमन्ताद्विविशुः ॥ १७ ॥ ❀ ❀ भल्लैः बाणैः संछिद्य-मानानां रक्षसां चारूणि सुन्दराणि कुण्डलानि येषु तैः शिरोभिः स्वर्णमयतालवृक्षसदृशैरुरुभिः वलयैः सुन्दरैर्बाहुभिर्महाधनैरनर्घ्यैः हारादिभिश्चालंकृताः छन्नास्ता रणभूमयः वीराणां मनोहरा विरेजुः बभुः ॥ १८-१९ ॥ ❀ ❀ हतेभ्योऽवशिष्टा इतरे रक्षोगणा क्षत्रियवर्यस्य ध्रुवस्य सायकैः बाणैः प्रायः बाहुल्येन विवृक्णाः संछिन्नाः अवयवा येषां रणाजिरात् रणभूमेः सिंहेन विक्रीडितगजा इव दुद्रुवुः पलायितवन्तः ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अहन् हतवान् ॥ ८ ॥ ❀ ❀ 'पत्री रोप इषुर्द्वयोरि'त्यमरः । ध्रुववीरकर्मस्तवनेन गुह्यकानां रणवीरत्वमसूचि ॥ ९ ॥ ❀ ❀ तत्कर्म प्रशस्य गुह्यकैः किं पृष्ठतः प्रसुप्तमिति तत्राह । तेऽपि चेति युगपत्सम्भूय ध्रुवकृतविक्रमात् द्विगुणं प्रकर्षेण कर्तुं-मिच्छन्त एव न तु कर्तुं समर्थाः ॥ १० ॥ ❀ ❀ चित्रा नानावर्णा वाजाः पक्षा येषान्ते चित्रवाजास्तैः ॥ ११ ॥ ❀ ❀ अयुतानां त्रयोदश लक्षादुपरि त्रिंशत्सहस्राणि प्राधान्यविवक्षयैतत् ॥ १२ ॥ ❀ ❀ तदा ध्रुवः किमभूदत्राह । औत्तानपादिरिति । आसारेण भगवता वर्षेण सन्तर्तानिविडवर्षधारयेत्यर्थः ॥ १३ ॥ ❀ ❀ मानवः मनोः पौत्रः सूर्यः ज्ञानिप्रियः सूर्य इव सूर्यो वा ॥ १४ ॥ ❀ ❀ नन्वत्र मग्नस्य श्वासनिरोधेन मरणं जलं संस्तभ्यावस्थानमधोगमनमन्यत उन्मज्जनमिति पक्षेष्वेकः सम्भवति, अन्यत उन्मज्जने पलायनापरपर्याये जैत्रं स्यन्दनमित्येतदनुपपन्नं स्यादतः किमभूदिति तत्राह । नदत्स्विवति अथ मज्जनानन्तरमेव ध्रुवरथस्तस्माद्यु-द्धादुदतिष्ठदित्यन्वयः । जलमग्नस्य सूर्यस्यान्यत उन्मज्जनं भवतीति मत्वा यत्र निमज्जनं तद्दृष्टान्तत्वेन नीहारादिति ॥ १५ ॥ ❀ ❀ द्विषतामस्त्रौघं व्यधमन्नष्टमकरोत् ॥ १६ ॥ ❀ ❀ एकत्र प्रयोगेण यक्षाणां गालधमनं तेषां चर्मभेदनं शरीरच्छेदनं चेति कार्य-त्रयमभूदित्याह तस्य त इति । पविरशनिः शतधारं वज्रं कुलिशं दम्भोलिरिति हलायुधः 'दम्भोलिरशनिर्द्वयोरि'त्यमरः ॥१७॥ ❀ ❀ वीररसमाह भल्लैरिति । भल्लैरर्धचन्द्राकारैर्वराहशरैर्वा हेमतालाभैः सुवर्णतालसमानैरुरुभिरुत्सङ्गैः ॥ १८-१९ ॥ ❀ ❀ क्वापि सर्वनाशो न दृष्टश्रुतपूर्व इति किंवदन्तीमनुसरन्नाह । हतेति मृगेन्द्रेण सिंहेन विगतक्रीडोपक्रमा यूथपा गजाः ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

ततः परिघेति युग्मकम् ॥ ११-१३ ॥ ❀ ❀ पुण्यजनेत्यादिकं दैत्यदानववत् यक्षरक्षसोरभेदनिर्देशात् । हतः प्रतिबद्धः "मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः" इत्यमरः । हतोऽयमित्यत्र हन्तेति चित्सुखः ॥ १४ ॥ ❀ ❀ नीहारादिव भास्कर इति तद्वच्छक्त्यैव तदतिक्रमो ज्ञेयः ॥ १५-१७ ॥ ❀ ❀ भल्लैरिति युग्मकम् ॥ १८-१९ ॥ ❀ ❀ क्रीडिता इत्यत्र द्राविता इति क्वचित् ॥ २०-२१ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

द्विगुणं यथा स्यात्तथा षड्भिः प्रतिकर्तुमिच्छवः ॥ १० ॥ ❀ ❀ चित्रवाजैर्विचित्रपक्षैः ॥ ११-१२ ॥ ❀ ❀ आसारेण धारासम्पातेन छन्नो गिरिरिव नैवादृश्यत ॥ १३ ॥ ❀ ❀ सूर्य्यैः सूर्य्यतुल्यः पुण्यजनार्णव इति तेषां सरस्वत्या ध्रुवस्य कोऽपि नापकारोऽभूदिति व्यज्यते, नह्यर्णवे मग्नस्य सूर्यस्य किमपि कष्टं भवेदिति ॥ १४ ॥ ❀ ❀ जयकाशिषु जितं जितमिति स्वजयप्रकाशकेषु सत्सु ॥ १५ ॥ ❀ ❀ व्यधमत् संचूर्णयामास ॥ १६ ॥ ❀ ❀ गिरीनशनयो यथेति आसारेण यथा गिरिरिति दृष्टान्ताभ्यां यक्षाणां शराः ध्रुवस्याकिञ्चित्कराः प्रत्युतोत्साहवर्द्धका एव यथा धारासम्पातेन गिरयः क्षालितमला उद्दीप्ता एव भवन्ति। ध्रुवस्य शरास्तु यक्षाणां प्राणापहारिण एव यथा अशनिभिर्गिरयो विदीर्यन्ते एवेति व्यञ्जितम् ॥ १७-१८ ॥ ❀ ❀ आस्तृता आच्छन्नाः ॥ १९-२० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

उग्रं धनुर्यस्य सः एकैकं त्रिभिस्त्रिभिरित्येवं सर्वान् त्रयोदशायुतसंख्याकान् युगपदहन् जघान ॥ ८ ॥ ❀ ❀ आशंसन् प्रशशंसुः ॥ ९ ॥ ❀ ❀ तेऽपि उरगाः पादस्पर्शमिव तत्कर्म अमृष्यन्तः असहमानाः द्विगुणं प्रतिचिकीर्षवः प्रतिकर्तुमिच्छवः अमुं शरैर्युगपदविध्यन् ॥ १०-१२ ॥ ❀ ❀ आसारेण महावृष्ट्या ॥ १३ ॥ ❀ ❀ मानवो मनुवंशजः सूर्यः प्रतितेजस्वी ॥ १४ ॥ ❀ ❀ जयकाशिषु जयं द्योतयत्सु यातुधानेषु राक्षसेषु ॥ १५-१९ ॥ ❀ ❀ प्रायः विवृक्णाः संछिन्ना अवयवा येषां ते मृगेन्द्रेण विक्रीडिताः यूथपा इव विदुद्रुवुः ॥ २० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

स ध्रुवः एकैकं त्रिभिस्त्रिभिर्बाणैः सर्वांस्तान् त्रयोदशायुतानि यक्षान् युगपत् एकदैवाहन् जघानेत्यन्वयः। तत्रैवं हनने भगवता शङ्खस्पर्शेन संपादितं सामर्थ्यं सूचयति—वीर इति। आयुधसंपत्तिमाह—उग्रधन्वेति। उग्रं प्रतिपक्षिभिरप्रधृष्यं धनुर्यस्य स तथा। वाहनसंपत्तिमाह—महारथ इति। महान् रथो यस्य स तथा ॥ ८ ॥ ❀ ❀ ते सर्व एव हि यक्षास्तैर्ललाटे लग्नैरिषुभिर्बाणैरात्मानं निरस्तं तिरस्कृतं मत्वा तस्य ध्रुवस्य तत् एवमेकदैव झटिति सर्वेषां हननलक्षणं कर्माशंसन् श्लाघितवन्त इत्यर्थः ॥ ९ ॥ ❀ ❀ ततस्ते यक्षा अमृष्यन्तः तत्कर्मासहमानाः प्रचिकीर्षवः प्रतिकर्तुमिच्छवः द्विगुणं यथा भवति तथा षड्भिः षड्भिः शरैर्युगपदमुं ध्रुवमविध्यन्। तत्कर्मासहने दृष्टान्तः—यथा पादस्पर्शमुरगा न सहन्ते तद्वत् ॥ १० ॥ ❀ ❀ एवं पृथक्पृथक्शरैर्विध्वा ततश्च तस्य कर्म प्रतिकर्तुमिच्छन्तः प्रकुपिताः अयुतानां त्रयोदश त्रयोदशायुतानि परिघादिभिः शस्त्रैः चित्राः वाजाः पक्षा येषां तैः शरैरपि सरथं सहसारथिं ध्रुवमभ्यवर्षन् आच्छादयामासुरिति द्वयोरन्वयः ॥ ११-१२ ॥ ❀ ❀ स औत्तानपादिर्ध्रुवस्तदा भूरिणा शस्त्रवर्षेण च्छन्नो नोपादृश्यतेत्यन्वयः। एवं छन्नत्वेपि न तस्य कापि क्षतिरिति। तत्र दृष्टान्तमाह—आसारेणेति। यथा धारासम्पातेन च्छन्नो गिरिर्येद्यप्यदृश्यो भवति तथापि न तस्य कापि क्षतिस्तद्वदित्यर्थः ॥ १३ ॥ ❀ ❀ हाहाकारः खेदाद्धाहाशब्दः। हाहाकरणे तेषामभिप्रायमाह—हतोऽयमिति। मानवः मनुपौत्रोयं सूर्यः सूर्यतुल्यः पुण्यजना यक्षा एवार्णववद्दुस्तरत्वादर्णवस्तस्मिन् मग्नः प्रविष्टः सन् हत इत्यर्थः ॥ १४ ॥ ❀ ❀ मृत्ते रणभूमौ यातुधानेषु राक्षसेषु नदत्सु नादं कुर्वत्सु जयकाशिषु अस्माभिर्जितं जितमिति स्वजयप्रकाशकेषु सत्सु शस्त्रकूटात्तस्य ध्रुवस्य रथ उदतिष्ठत् उद्भूत इत्यन्वयः। तत्र दृष्टान्तः—यथा नीहाराद्भास्करः सूर्य उत्तिष्ठति तद्वत् ॥ १५ ॥ ❀ ❀ उग्रमप्रधृष्टत्वाच्छत्रूणां भयजनकं स्वधनुर्विस्फूर्जयन् टङ्कारघोषयुक्तं कुर्वन् द्विषतां खेदमुद्वहन् प्रापयंस्तेषामस्त्रौघं बाणैर्व्यधमत् निरस्तं कृतवान्। तत्र दृष्टान्तः—यथाऽनिलो घनानीकं दूरीकरोति तद्वत् ॥ १६ ॥ ❀ ❀ तस्य ध्रुवस्य चापाद्विनिर्मुक्ता ये द्विषतामस्त्रौघं व्यधमंस्त एवैकदा प्रयुक्ता बाणा रक्षसां वर्माणि भित्त्वा कायान् शरीराणि आविविशुः प्रविष्टा इत्यन्वयः। तत्र दृष्टान्तः—यथा इन्द्रप्रयुक्ता अशनयो वज्राणि गिरीन् प्रविशन्ति तद्वदिति ॥ १७ ॥ ❀ ❀ भल्लैरर्द्धचन्द्राकारबाणविशेषैः संच्छिद्यमानानां यक्षाणां चारूणि कुण्डलानि येषु तैः शिरोभिः हेमतालाभैः सुवर्णतालसदृशैरुरुभिरुत्सङ्गैः वलयैर्वल्गुभिर्मनोहरैर्दोर्भिर्भुजैः हारादिभिः महान्ति धनानि येषु तैरुष्णीषैश्चास्तृताः प्रकीर्णास्ता रणभुवो वीराणां मनोहराः सत्यो विरेजुः शोभितवत्य इति द्वयोरन्वयः ॥ १८-१९ ॥ ❀ ❀ हतेभ्योवशिष्टा उर्वरिताः अत एव क्षत्रियवर्यस्य ध्रुवस्य सायकैः प्रायो बाहुल्येन विवृक्णाः संच्छिन्ना अवयवा हस्तादयो येषां त इतरे रक्षोगणा रणाजिरात् युद्धाङ्गणतो विदुद्रुवुः पलायिता जाता इत्यन्वयः। तत्र दृष्टान्तः मृगेन्द्रेण सिंहेन विक्रीडिताः विद्राविताः यूथपाः गजा इवेति ॥ २० ॥

## भाषानुवादः

महारथी ध्रुव प्रचण्ड धनुर्धर थे। उन्होंने एक ही साथ उनमेंसे प्रत्येकको तीन-तीन बाण मारे ॥ ८ ॥ ❀ ❀ उन सभीने जब अपने-अपने मस्तकोंमें तीन-तीन बाण लगे देखे, तब उन्हें यह विश्वास हो गया कि हमारी हार अवश्य होगी। वे ध्रुवजीके इस अद्भुत पराक्रमकी प्रशंसा करने लगे ॥ ९ ॥ ❀ ❀ फिर जैसे सर्प किसीके पैरोंका आघात नहीं सहते,

उसी प्रकार ध्रुवके इस पराक्रमको न सहकर उन्होंने भी उनके बाणोंके जवाबमें एक ही साथ उनसे दूने—छः-छः बाण छोड़े ॥ १० ॥ ❀ ❀ यक्षोंकी संख्या तेरह अयुत ( १३०००० ) थी। उन्होंने ध्रुवजीका बदला लेनेके लिये अत्यन्त कुपित होकर रथ और सारथीके सहित उनपर परिघ, खड्ग, पाश त्रिशूल, फरसा, शक्ति, ऋष्टि, भुशुण्डी तथा चित्र-विचित्र पंखदार बाणोंकी वर्षा की ॥ ११–१२ ॥ ❀ ❀ इस भीषण शस्त्रवर्षासे ध्रुवजी बिल्कुल ढक गये। तब लोगोंको उनका दीखना वैसे ही बंद हो गया, जैसे भारी वर्षासे पर्वतका ॥ १३ ॥ ❀ ❀ उस समय जो सिद्धगण आकाशमें स्थित होकर यह दृश्य देख रहे थे, वे सब हाय-हाय करके कहने लगे—'आज यक्षसेनारूप समुद्रमें डूबकर यह मानव-सूर्य अस्त हो गया' ॥ १४ ॥ ❀ ❀ यक्षलोग अपनी विजयकी घोषणा करते हुए युद्धक्षेत्रमें सिंहकी तरह गरजने लगे। इसी बीचमें ध्रुवजीका रथ एकाएक वैसे ही प्रकट हो गया, जैसे कुहरेमेंसे सूर्यभगवान् निकल आते हैं ॥ १५ ॥ ❀ ❀ ध्रुवजीने अपने दिव्य धनुषकी टङ्कार करके शत्रुओंके दिल दहला दिये और फिर प्रचण्ड बाणोंकी वर्षा करके उनके अस्त्र-शस्त्रोंको इस प्रकार छिन्न-भिन्न कर दिया, जैसे आँधी बादलोंको तितर-बितर कर देती है ॥ १६ ॥ ❀ ❀ उनके धनुषसे छूटे हुए तीखे तीर यक्ष-राक्षसोंके कवचोंको भेदकर इस प्रकार उनके शरीरोंमें घुस गये, जैसे इन्द्रके छोड़े हुए वज्र पर्वतोंमें प्रवेश कर गये थे ॥ १७ ॥ ❀ ❀ विदुरजी! महाराज ध्रुवके बाणोंसे कटे हुए यक्षोंके सुन्दर कुण्डलमण्डित मस्तकोंसे, सुनहरी तालवृक्षके समान जाँघोंसे, वलयविभूषित बाहुओंसे, हार, भुजबन्ध, मुकुट और बहुमूल्य पगड़ियोंसे पटी हुई वह वीरोंके मनको लुभानेवाली समरभूमि बड़ी शोभा पा रही थी ॥ १८–१९ ॥ ❀ ❀ जो यक्ष किसी प्रकार जीवित बचे, वे क्षत्रियप्रवर ध्रुवजीके बाणोंसे प्रायः अङ्ग-अङ्ग छिन्न-भिन्न हो जानेके कारण युद्धक्रीडामें सिंहसे परास्त हुए गजराजके समान मैदान छोड़कर भाग गये ॥ २० ॥

अपश्यमानः स तदाऽऽततायिनं महामृधे कंचन मानवोत्तमः।
पुरीं दिदृक्षन्नपि नाविशद् द्विषां न मायिनां वेद चिकीर्षितं जनः ॥ २१ ॥
इति ब्रुवंश्चित्ररथः स्वसारथिं यत्तः परेषां प्रतियोगशङ्कितः।
शुश्राव शब्दं जलधेरिवेरितं नभस्वतो दिक्षु रजोऽन्वदृश्यत ॥ २२ ॥

क्षणेनाच्छादितं व्योम घनानीकेन सर्वतः। विस्फुरत्तडिता दिक्षु त्रासयत्स्तनयित्नुना ॥ २३ ॥
ववृषू रुधिरौघासृक्पूयविण्मूत्रमेदसः। निपेतुर्गगनादस्य कबन्धान्यग्रतोऽनघ ॥ २४ ॥
ततः खेऽदृश्यत गिरिर्निपेतुः सर्वतोदिशम्। गदापरिघनिस्त्रिंशमुसलाः साश्मवर्षिणः[2] ॥ २५ ॥
अहयोऽशनिनिःश्वासा वमन्तोऽग्निं रुषाक्षिभिः। अभ्यधावन् गजा मत्ताः सिंहव्याघ्राश्च यूथशः ॥ २६ ॥
समुद्र ऊर्मिभिर्भीमः प्लावयन् सर्वतो भुवम्। आससाद महाह्रादः कल्पान्त इव भीषणः ॥ २७ ॥
एवंविधान्यनेकानि त्रासनान्यमनस्विनाम्। ससृजुस्तिग्मगतय आसुर्या माययासुराः ॥ २८ ॥
ध्रुवे प्रयुक्तामसुरैस्तां मायामतिदुस्तराम्। निशम्य तस्य मुनयः शमाशंसन् समागताः ॥ २९ ॥

[3]मुनय ऊचुः

औत्तानपादे भगवांस्तव शार्ङ्गधन्वा देवः क्षिणोत्ववनतार्तिहरो विपक्षान्।
यन्नामधेयमभिधाय निशम्य चाद्धा लोकोऽञ्जसा तरति दुस्तरमङ्ग मृत्युम् ॥ ३० ॥

[4]इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे दशमोऽध्यायः ॥ १० ॥

अन्वयः—मानवोत्तमः सः तदा महामृधे आततायिनम् कञ्चन अपश्यमानः द्विषाम् पुरीम् दिदृक्षन् अपि न अविशत् जनः मायिनाम् चिकीर्षितम् न वेद ॥ २१ ॥ ❀ ❀ इति स्वसारथिम् ब्रुवन् परेषाम् प्रतियोगशंकितः यत्तः चित्ररथः जलधेः ईरितम् इव नभस्वतः शब्दम् शुश्राव अनु दिक्षु रजः अदृश्यत ॥ २२ ॥ ❀ ❀ व्योम क्षणेन सर्वतः दिक्षु विस्फुरत्तडिता त्रासयत्स्तनयित्नुना घनानीकेन आच्छादितम् ॥ २३ ॥ ❀ ❀ अनघ रुधिरौघासृक्पूय-विण्मूत्रमेदसः ववृषुः अस्य अग्रतः गगनात् कबन्धानि निपेतुः ॥ २४ ॥ ❀ ❀ ततः खे गिरिः अदृश्यत सर्वतः

१. प्रा० पा०—क्षन्निव। २. प्रा० पा०—वर्षणाः। ३. प्राचीने पाठे 'मुनय ऊचुः' नास्ति। ४. प्राचीने पाठेऽत्राध्यायसमाप्तिर्न।

दिशम् गदापरिघनिस्त्रिंशमुसलाः साश्मवर्षिणः निपेतुः ॥ २५ ॥ ❀ ❀ रुषा अक्षिभिः अग्निम् वमन्तः अशनिनिः-श्वासाः अहयः मत्ताः गजाः च सिंहव्याघ्राः यूथशः अभ्यधावन् ॥ २६ ॥ ❀ ❀ महाह्रादः भीमः समुद्रः ऊर्मिभिः सर्वतः भुवम् प्लावयन् कल्पान्ते भीषणः इव आससाद ॥ २७ ॥ ❀ ❀ तिग्मगतयः असुराः आसुर्या मायया एवं-विधानि अनेकानि, अमनस्विनाम् त्रासनानि ससृजुः ॥ २८ ॥ ❀ ❀ असुरैः ध्रुवे प्रयुक्ताम् ताम् अतिदुस्तराम् मायाम् निशम्य समागताः मुनयः तस्य शम् आशंसन् ॥ २९ ॥ ❀ ❀ अङ्ग औत्तानपादे लोकः यन्नामधेयम् अभिधाय निशम्य अद्धा दुस्तरम् मृत्युम् अञ्जसा तरति भगवान् अवनतार्तिहरः शार्ङ्गधन्वा देवः तव विपक्षान् क्षिणोतु ॥ ३० ॥

इति दशमोऽध्यायः

## श्रीधरस्वामिविरचिता भावार्थदीपिका

आततायिनं शस्त्रपाणिम् ॥ २१ ॥ ❀ ❀ इति ब्रुवन्नित्यत्रापि न मायिनामित्यादेरनुषंगः । चित्ररथो ध्रुवः । यत्तो यत्नवान् । प्रतियोगः पुनरुद्योगस्तस्माच्छंकितः । नभस्वतो वायोर्हेतोः ॥ २२ ॥ ❀ ❀ विस्फुरंत्यस्तडितो यस्मिंस्तेन त्रासयंतः स्तनयित्नवोऽशनयो यस्मिंस्तेन ॥ २३ ॥ ❀ ❀ ववृषुर्निपेतुरित्यर्थः । न मृजति शरीरमित्यसृग्गिह श्लेष्मादि । मेदसः पुंस्त्वमार्षम् । मेदांसि अस्याग्रतो निपेतुः ॥ २४ ॥ ❀ ❀ साश्मवर्षिणः अश्मसहितं यद्वर्षं तद्वंतः ॥ २५ ॥ ❀ ❀ अशनिवन्निःश्वासो येषाम् ॥ २६-२७ ॥ ❀ ❀ त्रासनानि भयंकराणि । तिग्मा क्रूरा गतिः प्रवृत्तिर्येषाम् । असुरराक्षसादि-शब्दैरदूरांतरत्वेन यक्षा एवोच्यंते ॥ २८ ॥ ❀ ❀ तस्य शं कल्याणमाशंसन्प्रार्थितवंतः ॥ २९ ॥ ❀ ❀ तव विपक्षाञ्छत्रून्नाशयतु । अद्धा साक्षात् । अंजसा सुखेनैव मृत्युं तरति ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे टीकायां दशमोऽध्यायः ॥ १० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अत्र तत्पुरं प्रविश्य तत्सर्वस्वं गृहीत्वा गमनं तत्रावस्थानं चेदुभयोरेकं प्राप्तं तत्र ध्रुवेण किमकारीत्याशंक्योभयमपि न कृतं मायिजनकुचेष्टाशंकयेत्याह-अपश्यमान इति । स ध्रुवः । तदा यक्षसेनाद्रावणोत्तरकाले सुवर्णाद्यलंकृतामलकां दिदृक्षुरपि यतो मायिजनकुचेष्टा दुर्ज्ञेयाऽतो नाविशदिति ॥ २१ ॥ ❀ ❀ इति 'न मायिनां वेद' इत्यादिवाक्यमितिपदार्थः । अत एव स्वामिचरणैरित्यत्रापीत्युक्तम् ॥ २२-२३ ॥ ❀ ❀ अस्य ध्रुवस्य मेघा इति शेषः ॥ २४ ॥ ❀ ❀ ततः कबंधपातोत्तरम् ॥ २५ ॥ ❀ ❀ अशनिर्मेघवह्निज्वाला ॥ २६ ॥ ❀ ❀ महान् ह्रादो यस्य स महाह्रादः "आन्महतः" इत्यादिना टेरात्वं लक्षणप्रतिपदोक्तपरिभाषा तु समानाधिकरणसामर्थ्यान्न प्रवर्तते ॥ २७ ॥ ❀ ❀ एवंविधानि कृत्यानि अदूरांतरत्वेन तुल्यकर्मत्वेन तुल्यदेवयोनित्वेनैकस्थानोद्भूतत्वेन च यैरुक्तं जक्षतेमं ब्रह्माणं ते यक्षा यैरुक्तं रक्षत ते राक्षसा यैरुक्तं न सुरांस्त्यजेम तेऽसुरा इति वाल्मीकीये सुरासुरविभागप्रकरणे उक्तं यक्षरक्षसां समानजन्मभूमित्वं तृतीयस्कंधे विंशाध्याये वर्णितमित्युक्तं स्वामि-चरणैरदूरांतरत्वेनेति ॥ २८ ॥ ❀ ❀ निशाम्य दृष्ट्वा निशम्येति पाठे श्रुत्वेत्यर्थः । 'समाशंसन्' इति पाठेऽपि सं सुखं "संनभेदे समीचीने सुष्ठुपूजासुखेषु च" इति यादवोक्तेः । "यजौ शसाविति प्राच्या" इति व्याकरणांतरसूत्राद्वा । अत एव मा मां जक्षतेत्यत्र जस्थाने यकारो जात इति पूर्वोक्तमनुसंधेयम् । सूत्रार्थस्तु-प्राचां मते यकारजकारौ शकारसकारौ चान्योन्यस्थाने भवत इति ॥ २९ ॥ ❀ ❀ मृत्युं तरंति यक्षमायां न तरिष्यसि किं तु तरिष्यस्येवेति नारायणास्त्रं स्मारयामासुरित्यर्थः । यद्वा "यन्नामधेयमभिधाय" इत्यनेन भगवन्नाम स्मृत्वा युध्यतस्तव शत्रुजयः स्यादित्युपदिष्टमिति ध्येयम् । औत्तानपाद इति । क्षत्रियत्त्वात्तव युद्धे भयं नोचितं, यद्वा-उत्तानावुच्चौ सामंतराजमूर्द्धसु पादौ यस्य स उत्तानपात्तस्यापत्यं त्वमपि तादृश एवाधुनैवैषां मूर्ध्नि पदं धास्यसीत्यभिप्रायः । अंगेति संबोधनेऽव्ययम् ॥ ३० ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे दशमोऽध्यायः ॥ १० ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

चिकीर्षितं न वेदेति विचिन्त्य दिदृक्षन्नपि नाविशत् ॥ २१ ॥ ❀ ❀ अत एवेति ब्रुवन्नित्यत्रापि द्विषामित्यादेर-न्वितस्यापि पुनरन्वयोऽनुषङ्गः ॥ २२ ॥ ❀ ❀ आच्छादितमित्यत्र छुरितमिति चित्सुखः ॥ २३ ॥ ❀ ❀ रुधिरस्य सत्त्वेन पौनरुक्त्या न सृजतीत्यादियोगवृत्त्या व्याख्यातम् । श्लेष्मादीत्यादिना चर्ममांसास्थिपरिग्रहः ॥ २४-२६ ॥ ❀ ❀ कल्पान्ते प्रलये ॥ २७ ॥ ❀ ❀ अनेकान्यशुभानि ॥ २८-२९ ॥ ❀ ❀ अद्धा साक्षाज्जन्मान्तरव्यवधानमन्तरैव ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीराधारमणदासगोस्वामिविरचितदीपिन्याख्यव्याख्यायां दशमोऽध्यायः ॥ १० ॥

### श्रीमद्वीरराघवव्याख्या

तदा मानवश्रेष्ठः स ध्रुवः महामृधे महति युद्धे आततायिनं शस्त्रपाणिमपश्यमानः पुरीं दिदृक्षन्नपि द्रष्टुकामोऽपि मायिनां द्विषां पुण्यजनानां चिकीर्षितं जनो न वेदेत्येवं बुद्ध्वा नाविशत् न प्रविष्टवान् ॥ २१ ॥ ❀ ❀ स चित्ररथो ध्रुवः सारथिं प्रति इति न मायिनां वेद चिकीर्षितं जन इत्येवं वदन् परेषां विद्विषां प्रतियोगं प्रतिक्रियां प्रति शङ्कितः शङ्कमानः अत एव अन्तः यत्नवान् जलदैर्मेघैरिवेरितं शब्दितं गर्जितमिवेत्यर्थः । शब्दं शुश्राव ततः समनन्तरमेव नभस्वता वायुना सह दिक्षु रजः धूलिरदृश्यत दृष्टम् ॥ २१ ॥ ❀ ❀ व्योमांबरं विफुरन्त्यस्तडितो यस्मिन् त्रासयन्तः स्तनयित्नवोऽशनयो यस्मिन् तेन मेघसमूहेन सर्वतः छुरितं व्याप्तम् ॥ २३ ॥ ❀ ❀ रुधिरौघादयः ववृषुः निपेतुरित्यर्थः । न सृजतीति शरीरमित्यसृगिह श्लेष्मादिः रुधिरस्य पृथगुपादानात् मेदसः पुंस्त्वमार्षं मेदांसि कबन्धानि शिरोहीनशरीराणि गगनात्तस्य ध्रुवस्याग्रतः निपेतुः ॥ २४ ॥ ❀ ❀ ततः खे आकाशे गिरिरदृश्यत सर्वतो दिशं सर्वासु दिक्षु साश्मवर्षिणः अश्मसहितं यद्वर्षणं तद्वन्तः गदादयः निपेतुः ॥ २५ ॥ ❀ ❀ अशनिवन्निश्वासो येषां ते अहयः सर्पाः अक्षिभिरग्निं वमन्तः उद्गिरन्तः क्रुद्धा गजाः सिंहा व्याघ्राश्च यूथशः संघशः अभ्यधावन् अभिमुखं तूर्णमागतवन्तः ॥ २६ ॥ ❀ ❀ ऊर्मिभिस्तरङ्गैर्भीमो भयङ्करः समुद्रः समन्तात् ध्रुवं प्लावयन् प्रलय इव महान् ध्वनिर्यस्मात्तं एवातिभीषणः आससाद प्राप्तः ॥ २७ ॥ ❀ ❀ उक्तविधान्यन्यानि च अमनस्विनामज्ञानां त्रासकानि भयंकराणि । तिग्मा क्रूरा गतिः प्रवृत्तिर्येषां तेऽसुरा मायया ससृजुः । असुरैर्ध्रुवे प्रयुक्तामतिदुस्तरां तां मायां निशम्य दृष्ट्वा आगताः सर्वे मुनयः तेऽस्य ध्रुवस्य शं सुखं मङ्गलमाशंसन् प्रार्थितवन्तः ॥ २९ ॥ ❀ ❀ आशंसामेव विवृणोति । औत्तानपाद इति । अङ्ग हे औत्तानपादे ! ध्रुव ! अवनतार्तिहरः भृत्यदुःखापहर्त्ता शार्ङ्गधन्वा भगवान् देवः तव विपक्षान् शत्रून् क्षिणोतु नाशयतु भगवन्तं विशिनष्टि यस्य भगवतो नामधेयं निशम्य श्रुत्वा अभिधाय उक्त्वा लोकः अद्धा साक्षात् अञ्जसा सुखेनैव दुस्तरं तरति ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रिकायां दशमोऽध्यायः ॥ १० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अस्यामवस्थायां पुरीं प्रविश्य तत्सर्वमपहृत्य गमनं तत्रावस्थानं वेत्युभयस्मादेकं प्राप्तं तत्र ध्रुवेण किमकारीत्याशङ्क्य भयमपि न कृतं मायिजनकुचेष्टाशङ्कयेति भावेनाह अपश्यमान इति । तथाहि जनो मायिनां चिकीर्षितं न वेद न जानाति यदत इति ॥ २१ ॥ ❀ ❀ इदं चिन्तनमुत वाचिकमिति न ज्ञायते इति अतो विविनक्ति । इति ब्रुवन्निति । प्रतियोगेन पुनरुद्यमेन शङ्कितः जलधेरुत्पन्नमिव नभस्वता वायुनेरितम् ॥ २२ ॥ ❀ ❀ पुनः किं किं शङ्काकरमभूदिति प्रपञ्चयति । क्षणेनेत्यादिना । छादितं छन्नं विस्फुरन्त्यस्तडितो यस्मिंस्तथा तेन स्तनयित्नुना गर्जितेन ॥ २३ ॥ ❀ ❀ ववृषुर्मेघा इति शेषः । कबन्धानि शिरोरहितशरीराणि ॥ २४ ॥ ❀ ❀ अश्मवर्षिणो गिरेर्गदादीनि सर्वतो दिशं निपेतुः ॥ २५ ॥ ❀ ❀ दृषद्गरलयोरश्मवेश्मधामप्रवेशयोरित्यभिधानात् अश्मवर्षिण इत्यहिविशेषणं वा, अहयश्च निपेतुरशनिर्मेघवह्निज्वाला तद्वन्निःश्वासो येषां ते तथा ॥ २६ ॥ ❀ ❀ ह्रादो नादः ॥ २७ ॥ ❀ ❀ अमनस्विनां मनोमलरहितानां तिग्मगतयस्तीक्ष्णप्रवृत्तय आसुर्या असुरजनप्रियया ॥ २८ ॥ ❀ ❀ स्वकर्तव्यतया मुनयो भगवत्प्रसादेन सर्वत्राजिताय ध्रुवाय हितमुपदिशन्तीत्याह ध्रुव इति । शं सुखं "शमभेदे समीचीने सुष्ठु पूजा सुखे सुचे"ति यादवः, पपौ शसाविति प्राच्या इति सूत्राद्वा शं सुखमिति ज्ञायते ॥ २९ ॥ ❀ ❀ यन्नामधेयमभिधायेत्यनेन भगवन्नामस्मृत्वाभिधाय युध्यतस्तव शत्रुजयः स्यादित्युपदिष्टमिति ज्ञातव्यम् ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां दशमोऽध्यायः ॥ १० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

चित्ररथस्तन्नामा ध्रुवः व्यदृश्यतेति तु गौडपादः ॥ २२ ॥ ❀ ❀ क्षणेन छुरितमिति चित्सुखः ॥ २३–२८ ॥ ❀ ❀ ध्रुवे इति । समाशंसन्निति चित्सुखः जयमिति शेषः ॥ २९–३० ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे दशमोऽध्यायः ॥ १० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

आततायिनं शस्त्रपाणिम् ॥ २१ ॥ ❀ ❀ इति न मायिनामिति वाक्यं ब्रुवन् चित्ररथो ध्रुवः । अनु अनन्तरं नभस्वतो हेतोर्दिक्षु रजः ॥ २२–२३ ॥ ❀ ❀ न सृजति शरीरमित्यसृक् श्लेष्मादि मेदसः पुंस्त्वमार्षं मेदांसि ववृषुर्मेघा इति

शेषः। अस्य ध्रुवस्याग्रतः ॥ २४ ॥ ❀ ❀ साश्मवर्षिणः अश्मवर्षिभिः सह वर्त्तमानाः ॥ २५-२७ ॥ ❀ ❀ अमनस्विनां शौर्यशून्यानाम् असुरा असुरतुल्याः ॥ २८-२९ ॥ ❀ ❀ मृत्युं तरति किं यक्षमायां त्वं न तरिष्यसीति नारायणं स्मारयामासुः ॥ ३० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। चतुर्थे दशमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १० ॥

श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

कंचन अपि आततायिनं शस्त्रपाणिमपश्यमानो यदा पुरीं दिदृक्षन्नपि नाऽऽविशत्तदा चित्ररथो ध्रुवो यत्तः सावधानः परेषां प्रतियोगशङ्कितः स्वसारथिं मायिनां चिकीर्षितं जनो न वेद इति ब्रुवन्नेव शब्दं शुश्राव अथ नभस्वतो वायोर्हेतोः रजो व्यदृश्यतेत्ति द्वयोरन्वयः ॥ २१-२२ ॥ ❀ ❀ विस्फुरन्त्यस्तडितो यस्मिन् तेन त्रासयन्तस्तनयित्नवोऽशनयो यस्मिन् तेन घनानीकेन व्योम क्षणेनाच्छादितम् ॥ २३ ॥ ❀ ❀ न सृजति न त्यजति देहमित्यसृक् श्लेष्मादिः रुधिरस्योक्तत्वात् मेदस इति पुंस्त्वमार्षम् ॥ २४ ॥ ❀ ❀ खे गिरिरदृश्यत, ततो गिरेः सकाशात् गदादयो निपेतुः। कथंभूताः साश्मवर्षिणः अश्मसहितं यद्वर्षं तद्वन्तः ॥ २५ ॥ ❀ ❀ अशनिवन्निश्वासो येषां ते अहयः गजाश्च अभ्यधावन् ॥ २६ ॥ ❀ ❀ आससाद निकटमगात् ॥ २७ ॥ ❀ ❀ तिग्मगतयः क्रूरप्रवृत्तयः ॥ २८ ॥ ❀ ❀ शं कल्याणम् ॥ २९-३० ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे सिद्धांतप्रदीपे दशमाऽध्यायार्थप्रकाशः ॥ १० ॥

गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

चित्रो विचित्रो रथो यस्य स तथा मानवेषु मनुवंशेषु उत्तमः स ध्रुवस्तदा तस्मिन् महामृधे युद्धभूमौ कंचनाप्याततायिनं शस्त्रपाणिमपश्यमानोपि परेषां शत्रूणां प्रतियोगः पुनरुद्योगस्तस्माच्छङ्कितः अत एव यत्तः प्रयत्नवानेव मायिनां द्विषां चिकीर्षितं जनो न वेदातः सावधानतयैव स्थितिर्युक्तेति स्वसारथिं प्रति ब्रुवन् पुरीं दिदृक्षन् द्रष्टुमिच्छन्नाविशदिति द्वयोरन्वयः ॥ २१ ॥ ❀ ❀ ततश्च जलधेरीरितमुत्पन्नं शब्दमिव शब्दं शुश्राव नभस्वतो वायोर्हेतोः सर्वदिक्षु रजोन्वदृश्यत ॥ २२ ॥ ❀ ❀ विस्फुरन्त्यः प्रकाशमानास्तडितो यस्मिंस्तेन त्रासयन्तः स्तनयित्नवोऽशनयो यस्मिंस्तेन घनानीकेन सर्वतो दिक्षु क्षणेन व्योमाच्छादितं जातमित्यन्वयः ॥ २३ ॥ ❀ ❀ न सृजति शरीरमित्यसृक् श्लेष्मादि रुधिरस्यासृक्शब्दवाच्यस्य पृथग्ग्रहणात् मेदस इति पुंस्त्वमार्षं तस्य नियमेन नपुंसकत्वात्। रुधिरादीनि सर्वतो ववृषुर्मेघा इति शेषः। तथा हे अनघ विदुर ! गगनादस्य ध्रुवस्याग्रतः कवन्धानि शिरोरहितानि शरीराणि निपेतुरित्यन्वयः। अनघेत्यनेन त्वमेवं बीभत्सदर्शनदोषाद्दुर्वरितो येन युद्धोद्यमं दृष्ट्वा भगवद्भजनपरायणः सन् गृहान्निःसृतोसीति सूचयति ॥ २४ ॥ ❀ ❀ ततश्च खे गिरिरदृश्यत। ततश्च साश्मवर्षिणः अश्मसहितं वर्षमस्य तस्माद्गिरेः सकाशात्सर्वतो दिशं गदादयः शस्त्रविशेषा निपेतुरित्यन्वयः ॥ २५ ॥ ❀ ❀ अशनिर्मेघवह्निज्वाला तद्वन्निःश्वासो येषां ते तथा रुषा क्रोधेनाक्षिभिरग्निं वमन्तोऽहयो गजादयश्च यूथशः अभ्यधावन् वेगेन संमुखमाजग्मुरित्यन्वयः ॥ २६ ॥ ❀ ❀ ऊर्मिभिः सर्वतो भुवं प्लावयन् महाह्रादः प्रचण्डशब्दवान् अत एव भीमः भयंकरः समुद्रः आससाद सर्वतः समीपमाजगामेत्यन्वयः। तत्र दृष्टान्तः—कल्पान्त इति। कल्पान्ते प्रलयसमये यथा सर्वतो भुवं प्लावयन् भीषणे भवति तद्वदित्यर्थः ॥ २७ ॥ ❀ ❀ तिग्मा क्रूरा गतिः प्रवृत्तिर्येषां ते तथाभूता असुराः स्वसंबन्धिन्या आसुर्या मायया एवंविधान्यनेकान्यमनस्विनामधीराणामेव त्रासनानि भयंकराणि वस्तूनि ससृजुरित्यन्वयः ॥ २८ ॥ ❀ ❀ असुरैर्मृधे प्रयुक्तामतिदुस्तरां भगवत्स्मरणं विनोपायान्तरेण निवर्त्तयितुमशक्यां तां मायां निशाम्य दृष्ट्वा मुनयस्तत्र समागताः सन्तस्तस्य ध्रुवस्य शं कल्याणं कल्याणकरं वाक्यमाशंसन् उक्तवन्तः इत्यन्वयः ॥ २९ ॥ ❀ ❀ हे औत्तानपादे इत्यनेन सम्बोधनेन त्वमुत्तानपादकृतापमानदशायां दुराराध्यमपि भगवन्तमाराधितवानसीति स्मारयन्ति। तव विपक्षान् शत्रून् भगवान् क्षिणोतु नाशयतु। नाशने साधनमपेक्षितमत आहुः—शार्ङ्गधन्वेति। शार्ङ्गनामकं धनुर्धृत्वेत्यर्थः। न च तस्य तत्र प्रयास इत्यभिप्रेत्याहुः—देव इति। यो हि जगद्रूपेण दीव्यति क्रीडति तस्य शत्रुनाशने कः प्रयास इति भावः। तत्र हेतुः यतोऽवनतार्तिहर इति। त्वं त्ववन्तोतस्तवार्तिहरणं तस्यावश्यकमिति भावः। तर्हि कथमुपेक्षत इत्याशङ्क्य त्वयेदानीं विस्मृतत्वादित्यभिप्रेत्याहुः यन्नामेति। यन्नामाभिधाय उच्चार्य निशम्य श्रुत्वा वा लोकः प्राणिमात्रमद्धा साक्षात् अञ्जसा सुखेनैव दुस्तरमपि मृत्युं तरति। हे अङ्ग इति प्रेम्णा संबोधयन्तस्त्वमस्मिन् सङ्कटे तं कथं न स्मरसीति सूचयन्ति ॥ ३० ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे ह्यर्थनिरूपणे। विवृतो दशमोऽध्यायो राज्यदोषनिरूपकः ॥ ३ ॥

भाषानुवादः

नरश्रेष्ठ ध्रुवजीने देखा कि उस विस्तृत रणभूमिमें अब एक भी शत्रु अस्त्र-शस्त्र लिये उनके सामने नहीं है, तो उनकी इच्छा अलकापुरी देखनेकी हुई; किन्तु वे पुरीके भीतर नहीं गये 'ये मायावी क्या करना चाहते हैं इस बातका मनुष्यको पता नहीं लग सकता' सारथिसे इस प्रकार कहकर वे उस विचित्र रथमें बैठे रहे तथा शत्रुके नवीन आक्रमणकी आशङ्कासे सावधान हो गये। इतनेमें ही उन्हें समुद्रकी गर्जनाके समान आँधीका भीषण शब्द सुनायी दिया तथा दिशाओंमें उठती हुई धूल भी दिखायी दी ॥ २१–२२ ॥ ❀ ❀ एक क्षणमें ही सारा आकाश मेघमालासे घिर गया। सब ओर भयङ्कर गड़गड़ाहटके साथ बिजली चमकने लगी ॥ २३ ॥ ❀ ❀ निष्पाप विदुरजी! उन बादलोंसे खून, कफ, पीब, विष्ठा, मूत्र एवं चर्बीकी वर्षा होने लगी और ध्रुवजीके आगे आकाशसे बहुत-से धड़ गिरने लगे ॥ २४ ॥ ❀ ❀ फिर आकाशमें एक पर्वत दिखायी दिया और सभी दिशाओंमें पत्थरोंकी वर्षाके साथ गदा, परिघ, तलवार और मूसल गिरने लगे ॥ २५ ॥ ❀ ❀ उन्होंने देखा कि बहुत-से सर्प वज्रकी तरह फुफकार मारते रोषपूर्ण नेत्रोंसे आगकी चिनगारियाँ उगलते आ रहे हैं; झुंड-के-झुंड मतवाले हाथी, सिंह और बाघ भी दौड़े चले आ रहे हैं ॥ २६ ॥ ❀ ❀ प्रलयकालके समान भयङ्कर समुद्र अपनी उत्ताल तरङ्गोंसे पृथ्वीको सब ओरसे डुबाता हुआ बड़ी भीषण गर्जनाके साथ उनकी ओर बढ़ रहा है ॥ २७ ॥ ❀ ❀ क्रूरस्वभाव असुरोंने अपनी आसुरी मायासे ऐसे ही बहुत-से कौतुक दिखलाये जिनसे कायरोंके मन काँप सकते थे ॥ २८ ॥ ❀ ❀ ध्रुवजीपर असुरोंने अपनी दुस्तर माया फैलायी है, यह सुनकर वहाँ कुछ मुनियोंने आकर उनके लिये मङ्गल-कामना की ॥ २९ ॥ ❀ ❀ मुनियोंने कहा—उत्तानपादनन्दन ध्रुव! शरणागत-भयभञ्जन शार्ङ्गपाणि भगवान् नारायण तुम्हारे शत्रुओंका संहार करें। भगवान्का तो नाम ही ऐसा है, जिसके सुनने और कीर्तन करनेमात्रसे मनुष्य दुस्तर मृत्युके मुखसे अनायास ही बच जाता है ॥ ३० ॥

॥ इति दशमोऽध्यायः ॥



# अथैकादशोऽध्यायः

**मैत्रेय उवाच**

निशम्य गदतामेव मृषीणां धनुषि ध्रुवः । संदधेऽस्त्रमुपस्पृश्य यन्नारायणनिर्मितम् ॥ १ ॥
संधीयमान एतस्मिन्माया गुह्यकनिर्मिताः । क्षिप्रं विनेशुर्विदुर क्लेशा ज्ञानोदये यथा ॥ २ ॥
तस्यार्षास्त्रं[2] धनुषि प्रयुञ्जतः सुवर्णपुङ्खाः कलहंसवाससः ।
विनिःसृता[3] आविविशुर्द्विषद्बलं यथा वनं भीमरवाः शिखण्डिनः ॥ ३ ॥
तैस्तिग्मधारैः प्रधने शिलीमुखैरितस्ततः पुण्यजना उपद्रुताः ।
तमभ्यधावन् कुपिता उदायुधाः सुपर्णमुन्नद्धफणा इवाहयः ॥ ४ ॥
स तान् पृषत्कैरभिधावतो मृधे निकृत्तबाहूरुशिरोधरोदरान् ।
निनाय लोकं परमर्कमण्डलं व्रजन्ति निर्भिद्य यमूर्ध्वरेतसः ॥ ५ ॥
तान् हन्यमानानभिवीक्ष्य गुह्यकाननागसश्चित्ररथेन भूरिशः ।
औत्तानपादिं कृपया पितामहो मनुर्जगादोपगतः[4] सहर्षिभिः ॥ ६ ॥

अन्वयः—ध्रुवः एवम् गदताम् ऋषीणाम् निशम्य उपस्पृश्य यत् नारायणनिर्मितम् अस्त्रम् धनुषि संदधे ॥१॥ ❀ ❀ विदुर यथा ज्ञानोदये क्लेशाः एतस्मिन् सन्धीयमाने गुह्यकनिर्मिताः मायाः क्षिप्रम् विनेशुः ॥ २ ॥ ❀ ❀ आर्षास्त्रम् धनुषि प्रयुञ्जतः तस्य सुवर्णपुंखाः कलहंसवाससः विनिःसृताः शराः यथा भीमरवाः शिखण्डिनः वनम् द्विषद्बलम् आविविशुः ॥ ३ ॥ ❀ ❀ प्रधने तैः तिग्मधारैः शिलीमुखैः उपद्रुताः पुण्यजनाः कुपिताः उदायुधाः उन्नद्धफणाः अहयः सुपर्णम् इव तम् इतस्ततः अभ्यधावन् ॥ ४ ॥ ❀ ❀ सः मृधे अभिधावतः पृषत्कैः निकृत्तबाहूरुशिरोधरोदरान् तान् ऊर्ध्वरेतसः अर्कमण्डलम् निर्भिद्य यम् व्रजन्ति परम् लोकम् निनाय ॥ ५ ॥ ❀ ❀ पितामहः मनुः तान् अनागसः गुह्यकान् चित्ररथेन भूरिशः हन्यमानान् अभिवीक्ष्य कृपया ऋषिभिः सह उपगतः औत्तानपादिम् जगाद ॥ ६ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

एकादशे तु यक्षाणां क्षयं दृष्ट्वा मनुः स्वयम् । आगत्य वारयामास ध्रुवं तत्त्वोपदेशतः ॥ ( १ ) ॥

एवं गदतां वचनमुपदेशमिव निशम्य उपस्पृश्याचम्य यन्नारायणनिर्मितं नारायणास्त्रं तत्संदधे ॥ १ ॥ ❀ ❀ क्लेशा अविद्यास्मितारागद्वेषाभिनिवेशा यथा ॥ २ ॥ किं च तस्य ध्रुवस्यार्षास्त्रमृषेर्नारायणादुद्भूतमस्त्रं प्रयुंजतः संदधतः सतः सुवर्णमयाः पुंखा मूलप्रांता येषाम् । कलहंसानां वासांसि पक्षा येषां ते शरा विनिःसृता इति द्रष्टव्यम् । उपरिष्टाच्छिलीमुखग्रहणात् ॥ ३ ॥ ❀ ❀ प्रधने युद्धे उन्नद्धा उच्छ्रिताः फणा येषां तेऽहयः सर्पाः ॥ ४ ॥ ❀ ❀ पृषत्कैर्बाणैर्निकृत्ता बाह्वादयो येषां तान् । परं लोकं निनाय । कथंभूतं लोकम् । ऊर्ध्वरेतसः संन्यासिनोऽर्कमंडलं निर्भिद्य यं व्रजंति तम् ॥ ५ ॥ ❀ ❀ताननागसो निरपराधान् ॥ ६ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तत्त्वोपदेशतः ज्ञानोपदेशेन (१) आसुरमायानाशे समर्थं नारायणास्त्रमेवेति जानन्ध्रुवो मुनिभिरप्येतदेवोपदिष्टमिति तदस्त्रं संदधे ॥ १ ॥ ❀ ❀ एतस्मिन्नारायणास्त्रे योजिते सति क्लेशाः पञ्च "अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः" इति पतंजलिसूत्रात् । विदुरेति । यथा तव वेदनशीलस्य क्लेशो नास्तीत्यभिप्रायः ॥ २ ॥ ❀ ❀ तस्यास्त्रस्य फलमाह—किं चेति । सुवर्णालंकृताः पुंखा ज्यानुसंधानप्रदेशाः येषां ते तथा । 'वस-आच्छादने' वस्त आत्मानमनेनेति वासस्तेन पक्षा लक्ष्यंते, कलहंसानां

---

१. प्रा० पा०—सूत उवाच । २. प्रा० पा०—तस्याप्यथास्त्रं । ३. प्रा० पा—सृताश्चाविवि० । ४. प्रा० पा०—गतो महर्षिभिः ।

वासांसि पक्षा इव पक्षा येषां ते कलहंसवाससः ॥ ३ ॥ ❀ ❀ "तिग्मं तीक्ष्णं खरं तद्वत्" इत्यमरः । तं ध्रुवम् ॥ ४ ॥ ❀ ❀ स तान् परं सत्यलोकं, भगवद्भक्तहस्तमृतितो विशिष्टस्वर्गिणो बभूवुः 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन' इति गीतोक्तेरावर्त्तयिष्यत एव तेन तु संन्यासिसाहचर्यात्तेषां मुक्तिर्व्याख्येया । स्वयं भगवन्तं श्रीकृष्णं विना संग्राममृतानां कालनेम्यादीनामवतारांतरेभ्योऽपि मोक्षाश्रवणादर्शनाभ्याम् ॥ ५ ॥ ❀ ❀ चित्रोऽद्भुतो रथांतरविलक्षणो रथो गमनसाधन-साधर्म्याद्धरिपदप्रापकस्तपोविशेषो यस्य स चित्ररथः । यद्वा—चैत्ररथं कुबेरोद्यानं गतो यक्षनाशमुद्दिश्येति चित्ररथः अत्रार्षत्वाद्भूत-भव्यवृद्ध्यभावोऽण् प्रत्ययश्च गतार्थे, तथा च ध्रुव इति निर्णीतम् । यद्वा—चित्ररथेन विमानेनर्षिभिः सहोपयातो मनुरिति योज्यम् ॥ ६ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

स्वयं साक्षादेव न तु केनापि द्वारा तत्त्वोपदेशेन परमात्मोपदेशं कृत्वा 'तत्त्वं वाद्यप्रभेदे स्यात्स्वरूपे परमात्मनी'ति विश्वः ॥ १ ॥ ❀ ❀ एवं श्रीनारायणप्रार्थनामयमुपदेशमिवेति अत एव नारायणस्मरणपूर्वकं नारायणास्त्रसंधानमिति तथाध्याहृतम् ॥ १ ॥ ❀ ❀ संधीयमाने धनुषि संयुज्यमाने सति रागादय इत्यादिनाऽविद्यादिचतुर्णां परिग्रहः ॥ २ ॥ ❀ ❀ अस्त्रस्य प्रभावान्तरमप्युच्यत इति किञ्चेत्यस्यार्थः । शिखण्डिरवस्य शरजशब्दसादृश्यायोगात् भीमरवा इति शिखण्डिनामेव विशेषणम् ॥ ३-४-५ ॥ ❀ ❀ स्ववाक्यप्रामाण्यदार्ढ्याय सहर्षिभिरिति ॥ ६ ॥

## श्रीमद्वीरराघवव्याख्या

मुनिभिरेवमाशंसितो ध्रुवः स्वधनुःप्रयुक्तनारायणास्त्रो विनाशितप्रतिपक्षः स्वपितामहानुनीतहृदयः स्वपुरं गत इत्याहै-कादशेन मुनिः निशम्येति । एवं वदतामृषीणां निशम्य श्रुत्वा वच इति शेषः । उपस्पृश्य अप इति शेषः । आचम्येत्यर्थः । यन्नारा-यणनिर्मितं तन्नारायणास्त्रं संदधे ॥ १ ॥ ❀ ❀ एतस्मिन्नारायणास्त्रे संधीयमाने प्रयुज्यमाने सति गुह्यकैर्यक्षैर्निर्मिता मायाः हे विदुर ! ज्ञानोदये सति यथा क्लेशा रागाद्वेषादय इव क्षिप्रमाशु विनेशुर्नाशं प्राप्ताः ॥ २॥ ❀ ❀ आर्षम् ऋषेर्नारायणादुद्भू-तम् अस्त्रं धनुषि तस्य ध्रुवस्य प्रयुञ्जतः । संदधतः सतः स्वर्णमयाः पुङ्खा मूलप्रान्ता येषां ते शरा विनिःसृताः धनुषो विनिर्गता द्विषतां बलमाविविशुः आविष्टवन्तः यथा भीमः भयंकरो रवो ध्वनिर्येषां ते शिखण्डिनः मयूरा यथा वनं विशन्ति तद्वत् भीमरवा इति दार्ष्टान्तिकेऽप्यन्वेतव्यम् ॥ ३ ॥ ❀ ❀ तैः तिग्मधारैस्तीक्ष्णधारैः शिलीमुखैर्बाणैः प्रधने युद्धे उपद्रुताः ताड्यमानाः पुण्य-जना इतस्ततः तं ध्रुवं प्रकुपिताश्च ते ऊर्ध्वमुद्धृतायुधाः सन्तः उन्नद्धा उच्छ्रिताः फणा येषां ते अहयः सर्पा इव सुपर्णगरुडम् अभ्य-धावन् ॥ ४ ॥ ❀ ❀ मृधे युद्धे अभिमुखं धावतः पृषत्कैर्बाणैर्निकृत्ताः संच्छिन्ना बाह्वादयो येषां तान् पुण्यजनान् परं लोकं निनाय कथंभूतमूर्ध्वरेतसः संन्यासिनः अर्कमण्डलं निर्भिद्य यं व्रजन्ति ॥ ५ ॥ ❀ ❀ एवमनागसो निरपराधिनः चित्ररथेन ध्रुवेण बहुशः हन्यमानान् पीड्यमानान् गुह्यकान् यक्षान् वीक्ष्य ध्रुवस्य पितामहो मनुः स्वायम्भुवः कृपया महर्षिभिः सहोपगतः समीपं प्राप्तः औत्तानपादिं जगाद उवाच ॥ ६ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

असुरमायाविनाशे समर्थं नारायणास्त्रमिति जानन् ध्रुवो मुनिभिरपि तदेवोपदिष्टमिति निरूप्य तदस्त्रं धनुषि सन्दध इत्याह । निशम्येति ॥ १ ॥ ❀ ❀ तस्यास्त्रस्य माहात्म्यमचिन्त्यमिति भावेनाह । संधीयमान इति । अविद्यास्मितारागद्वेषाभि-निवेशाः ॥ २ ॥ ❀ ❀ आर्षास्त्रम् ऋषिच्छन्दोदेवतासहितास्त्रं ज्ञानास्त्रं वा ऋषि-ज्ञान इति धातोः, सुवर्णालंकृताः पुङ्खा ज्यानु-संधानप्रदेशा येषां ते सुवर्णपुङ्खाः वस-आच्छादन इति धातोः वासःशब्देन पक्षा लक्ष्यन्ते कलहंसानां वासांसि पक्षा इव पक्षा येषां ते कलहंसवाससः शिखण्डिनो मयूराः भीमो भयंकरो रवो नादो येषां ते तथा ॥ ३ ॥ ❀ ❀ पुण्यजनानां वीररस-माह तैरिति । तिग्मधारैरुग्राग्रैः शिलीमुखैः शरैः सुपर्णं गरुडं उन्नद्धफणा उद्धृतफणाः ॥ ४ ॥ ❀ ❀ अर्कमण्डलं निर्भिद्य यं लोकं व्रजन्ति तं परं लोकं निनायेत्यन्वयः ॥ ५ ॥ ❀ ❀ किमेवं ध्रुवः सर्वानवशिष्टानकरोदित्यस्योपयोगिकथान्तरमाह । तान्हन्यमानानिति । अनागसो वधयोग्यापराधरहितान् चित्ररथेन ध्रुवेण ॥ ६ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सम्बन्धोक्तिमते त्वत्राध्यायो नास्ति । चतुर्थस्कन्धश्चोनत्रिंशदध्यायात्मक इति ॥ १-२ ॥ ❀ ❀ भीमरवा इति शरा-णामेव विशेषणम् ॥ ३-४ ॥ ❀ ❀ परं सत्याख्यं लोकम् ॥ ५-१० ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

यक्षाणां क्षयमालक्ष्य मनुरेकादशे ध्रुवम्। तद्वधाद्वारयामास शास्त्रतत्त्वोपदेशतः ॥

ऋषीणां वचः ॥ १ ॥ ❁ ❁ एतस्मिन्नारायणास्त्रे ॥ २ ॥ ❁ ❁ आर्षास्त्रम् ऋषेर्नारायणस्यास्त्रं पुङ्खाः मूलप्रान्ता बाजाख्यपक्षाः विनिःसृताः शरा इति शेषः ॥ ३–४ ॥ ❁ ❁ पृषत्कैर्बाणैर्निकृत्तबाह्वादीन् तान् परं सत्यलोकं निनाय यं लोकमूर्ध्वरेतसः संन्यासिनोऽर्कमण्डलं निर्भिद्य व्रजन्तीति भगवद्भक्तहस्तमृत्युतो विशिष्टस्वर्गिणस्ते बभूवुः। 'आब्रह्मभवनाल्लोकाः पुनरावर्तिनोऽर्जुन, इति श्रीगीतोक्तेरावर्तिष्यन्त एव ते। न तु सन्न्यासिसाहचर्येण तेषां मुक्तिर्व्याख्येया। स्वयं भगवन्तं श्रीकृष्णं विना संग्राममृतानां कालनेम्यादीनामवतारान्तरेभ्योऽपि मोक्षादर्शनात् ॥ ५–६ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एकादशे पुण्यजनहनने प्रवृत्तं ध्रुवं सदुपदेशेन मनुर्निवारयेदिति वर्ण्यते निशम्येति उपस्पृश्याचम्य ॥ १–२ ॥ ❁ ❁ आर्षं नारायणर्षिप्रकाशितम् ॥ ३–४ ॥ ❁ ❁ पृषत्कैर्बाणैः उर्ध्वरेतसो नैष्ठिकादयः ॥ ५ ॥ ॥ ❁ ❁ भूयसा महाप्रभावेण चित्ररथेन ध्रुवेण ॥ ६ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

पितामहेन गर्वस्य दोषस्यापि निवारणम्। एकादशे कृतं तस्य ध्रुवस्येति निरूप्यते ॥

एवं वदतामृषीणां वचनमुपदेशमिव निशम्य प्रबुद्धो ध्रुव उपस्पृश्य हस्तपादप्रक्षालनं कृत्वा यन्नारायणनिर्मितं नारायणास्त्रं तद्धनुषि सन्दधे तन्मंत्रं पठित्वा शरं धनुषि योजितवानित्यन्वयः ॥ १ ॥ ❁ ❁ एवमेतस्मिन्नस्त्रे सन्धीयमाने सति गुह्यकनिर्मिता माया मेघादिरूपाः क्षिप्रमेव विनेशुः। तत्र दृष्टान्तः—ज्ञानस्योदये सति यथा अविद्यास्मितारागद्वेषाभिनिवेशात्मकाः पञ्च क्लेशा नश्यन्ति तद्वदिति ॥ २ ॥ ❁ ❁ न केवलं तेनास्त्रेण मायामात्रविनाशो जातः, किन्तु द्विषतां विनाशोपीत्याह—तस्येति त्रिभिः। ऋषेर्नारायणादुद्भूतमार्षमस्त्रं तस्य ध्रुवस्य धनुषि प्रयुञ्जतः संदधतः सतस्ततः सुवर्णमयाः मूलप्रान्ताज्याऽनुसन्धानप्रदेशा येषां ते तथा कलहंसानामिव वासांसि पक्षा येषां ते शरा विनिःसृताः सन्तो द्विषतां शत्रूणां बलं सेनां विविशुः। तेषां वेगेन शब्दं कुर्वतां तत्र प्रवेशे दृष्टान्तमाह—यथेति। भीमो भयंकरो रवः शब्दो येषां ते शिखण्डिनो मयूरा यथा वनं प्रविशन्ति तद्वत् ॥ ३ ॥ ❁ ❁ तदा च तैस्तिग्मधारैस्तीक्ष्णाग्रभागैः शिलीमुखैः शरैः प्रधने युद्धभूमौ इतस्ततः सर्वतः पुण्यजना यक्षा उपद्रुताः अत एव कुपिताः उदायुधाः उद्यतानि आयुधानि यैस्ते तं ध्रुवमभ्यधावन् तं मारयितुमेकयैव हेलया संमुखमागताः। तत्र तेषामकिञ्चित्करत्वं मत्वा दृष्टान्तमाह—सुपर्णमिति। यथोन्नद्धफणाः उत्थितफणा अहयः सुपर्णं गरुडं हन्तुमायान्ति तद्वदिति ॥ ४ ॥ ❁ ❁ स ध्रुवस्तान् यक्षान् मृधे युद्धेऽभिधावतः पृषत्कैः शरैर्निकृत्ता बाह्वादयो येषां तान् परं लोकं निनाय प्रापितवानित्यन्वयः। कथंभूतं लोकम्? अर्कमण्डलं निर्भिद्य यं लोकमूर्ध्वरेतसः संन्यासिनो व्रजन्ति तम् ॥ ५ ॥ ❁ ❁ भूयसा बलिना चित्ररथेन ध्रुवेण तान् गुह्यकान् यक्षान् अनागसः उत्तमहन्तुरन्यत्वेन निरपराधानपि हन्यमानानभिवीक्ष्य कृपया परिप्लुतः पितामहोऽतः शिक्षायां समर्थो मनुस्तथापि स्ववचनानुमोदनार्थं गुरुत्वार्थं च ऋषिभिः सह तत्रोपगतः आगतः सन् औत्तानपादिं ध्रुवं प्रति जगादेत्यन्वयः ॥ ६ ॥

## भाषानुवादः

### स्वायम्भुव मनुका ध्रुवजीको युद्ध बंद करनेके लिये समझाना

श्रीमैत्रेयजी कहते हैं—विदुरजी! ऋषियोंका ऐसा कथन सुनकर महाराज ध्रुवने आचमन कर श्रीनारायणके बनाये हुए नारायणास्त्रको अपने धनुषपर चढ़ाया ॥ १ ॥ ❁ ❁ उस बाणके चढ़ाते ही यक्षोंद्वारा रची हुई नाना प्रकारकी माया उसी क्षण नष्ट हो गयी, जिस प्रकार ज्ञानका उदय होनेपर अविद्यादि क्लेश नष्ट हो जाते हैं ॥ २ ॥ ❁ ❁ ऋषिवर नारायणके द्वारा आविष्कृत उस अस्त्रको धनुषपर चढ़ाते ही उससे राजहंसके-से पक्ष और सोनेके फलवाले बड़े तीखे बाण निकले और जिस प्रकार मयूर केकारव करते वनमें घुस जाते हैं, उसी प्रकार भयानक सॉय-सॉय शब्द करते हुए वे शत्रुकी सेनामें घुस गये ॥ ३ ॥ ❁ ❁ उन तीखी धारवाले बाणोंने शत्रुओंको बेचैन कर दिया। तब उस रणाङ्गणमें अनेकों यक्षोंने अत्यन्त कुपित होकर अपने अस्त्र-शस्त्र सँभाले और जिस प्रकार गरुड़के छेड़नेसे बड़े-बड़े सर्प फन उठाकर उनकी ओर दौड़ते हैं, उसी प्रकार वे इधर-उधरसे ध्रुवजीपर टूट पड़े ॥ ४ ॥ ❁ ❁ उन्हें सामने आते देख ध्रुवजीने अपने बाणोंद्वारा उनकी भुजाएँ, जाँघें, कंधे और उदर आदि अङ्ग-प्रत्यङ्गोंको छिन्न-भिन्न कर उन्हें उस सर्वश्रेष्ठ लोक ( सत्यलोक ) में भेज दिया, जिसमें ऊर्ध्वरेता

मुनिगण सूर्यमण्डलका भेदन करके जाते हैं ॥ ५ ॥ ❀ ❀ अब उनके पितामह स्वायम्भुव मनुने देखा कि विचित्र रथपर चढ़े हुए ध्रुव अनेकों निरपराध यक्षोंको मार रहे हैं, तो उन्हें उनपर बहुत दया आयी। वे बहुत-से ऋषियोंको साथ लेकर वहाँ आये और अपने पौत्र ध्रुवको समझाने लगे ॥ ६ ॥

## मनुरुवाच

अलं वत्सातिरोषेण तमोद्वारेण पाप्मना। येन पुण्यजनानेतानवधीस्त्वमनागसः ॥ ७ ॥
नास्मत्कुलोचितं तात कर्मैतत्सद्विगर्हितम्। वधो यदुपदेवानामारब्धस्तेऽकृतैनसाम् ॥ ८ ॥
नन्वेकस्यापराधेन प्रसङ्गाद्[1] बहवो हताः। भ्रातुर्वधाभितप्तेन त्वयाङ्ग भ्रातृवत्सल ॥ ९ ॥
नायं मार्गो हि साधूनां हृषीकेशानुवर्तिनाम्। यदात्मानं पराग्गृह्य पशुवत् भूतवैशसम्[2] ॥ १० ॥
सर्वभूतात्मभावेन भूतावासं हरिं भवान्। आराध्याप दुराराध्यं विष्णोस्तत्परमं पदम् ॥ ११ ॥
स त्वं हरेरनुध्यातस्तत्पुंसामपि सम्मतः। कथं त्ववद्यं कृतवाननुशिक्षन् सतां व्रतम् ॥ १२ ॥
तितिक्षया करुणया मैत्र्या चाखिलजन्तुषु। समत्वेन च सर्वात्मा भगवान् सम्प्रसीदति ॥ १३ ॥
सम्प्रसन्ने भगवति पुरुषः प्राकृतैर्गुणैः। विमुक्तो जीवनिर्मुक्तो ब्रह्म निर्वाणमृच्छति ॥ १४ ॥
भूतैः पञ्चभिरारब्धैर्योषित्पुरुष एव हि। तयोर्व्यवायात्संभूतिर्योषित्पुरुषयोरिह ॥ १५ ॥
एवं प्रवर्तते सर्गः स्थितिः संयम एव च। गुणव्यतिकराद्राजन् मायया परमात्मना ॥ १६ ॥
निमित्तमात्रं तत्रासीन्निर्गुणः पुरुषर्षभः। व्यक्ताव्यक्तमिदं विश्वं यत्र भ्रमति लोहवत् ॥ १७ ॥
स खल्विदं भगवान् कालशक्त्या गुणप्रवाहेण विभक्तवीर्यः।
करोत्यकर्तैव निहन्त्यहन्ता चेष्टा विभूम्नः खलु दुर्विभाव्या ॥ १८ ॥

अन्वयः—वत्स त्वम् येन एतान् अनागसः पुण्यजनान् अवधीः तमोद्वारेण पाप्मना अतिरोषेण अलम् ॥ ७ ॥ ❀ ❀ तात यत् ते अकृतैनसाम् उपदेवानां वधः आरब्धः एतत् सद्विगर्हितम् कर्म अस्मत्कुलोचितम् न ॥ ८ ॥ ❀ ❀ भ्रातृवत्सलः भ्रातुः वधाभितप्तेन त्वया एकस्य अपराधेन प्रसंगात् ननु बहवः हताः ॥ ९ ॥ ❀ ❀ आत्मानम् पराक् गृह्य पशुवत् यत् भूतवैशसम् अयम् हृषिकेशानुवर्तिनाम् साधूनाम् हि मार्गः न ॥ १० ॥ ❀ ❀ भवान् भूतावासम् दुराराध्यम् हरिम् सर्वभूतात्मभावेन आराध्यम् विष्णोः तत् परमम् पदम् आप ॥ ११ ॥ ❀ ❀ सः हरेः अनुध्यातः तत्पुंसाम् अपि संमतः सताम् व्रतम् अनुशिक्षन् त्वम् तु अवद्यम् कथम् कृतवान् ॥ १२ ॥ ❀ ❀ सर्वात्मा भगवान् तितिक्षया करुणया च मैत्र्या च अखिलजन्तुषु समत्वेन संप्रसीदति ॥ १३ ॥ ❀ ❀ भगवति संप्रसन्ने पुरुषः प्राकृतैः गुणैः विमुक्तः जीवनिर्मुक्तः निर्वाणम् ब्रह्म ऋच्छति ॥ १४ ॥ ❀ ❀ आरब्धैः पञ्चभिः भूतैः योषित् हि पुरुष एव इह तयोः व्यवायात् योषित्पुरुषयोः सम्भूतिः ॥ १५ ॥ ❀ ❀ राजन् एवम् परमात्मनः मायया गुणव्यतिकरात् सर्गः स्थितिः च संयमः एव प्रवर्तते ॥ १६ ॥ ❀ ❀ यत्र व्यक्ताव्यक्तम् इदम् विश्वम् लोहवत् भ्रमति निर्गुणः पुरुषर्षभः तत्र निमित्तमात्रम् आसीत् ॥ १७ ॥ ❀ ❀ कालशक्त्या गुणप्रवाहेण विभक्तवीर्यः सः भगवान् इदम् अकर्ता इव करोति अहन्ता निहन्ति खलु विभूम्नः चेष्टा दुर्विभाव्या ॥ १८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तमसो नरकस्य द्वारेण येन रोषेण ॥ ७-८ ॥ ❀ ❀ ननु मद्भ्रातृहंतारः कथमकृतैनसोऽत आह। नन्विति ॥ ९ ॥ ❀ ❀ नन्वेकस्य दोषः सर्वेषां संसर्गिणां भवतीत्याशंक्य सत्यप्यपराधे तवैतदुचितं न भवतीत्याह। नायमिति। पराग्गृह्य पराग्भूतं देहमात्मानं गृहीत्वा आत्मत्वेन पशवो यथा देहाभिमानादन्योन्यं घ्नंति तथा भूतानां वैशसं हिंसेति यत् ॥ १० ॥ ❀ ❀ त्वं च बाल्ये साधुः सन्निदानीं कथमन्यथा कृतवानित्याह सर्वभूतात्मभावेनेति द्वाभ्याम् ॥ ११ ॥ ❀ ❀ अनुध्यातो हरेर्हृदि स्थितो विज्ञातो वा तत्पुंसां हरिदासानामपि साधुत्वेन मतः ॥ १२ ॥ ❀ ❀ सतां व्रतमेवाह।

१. प्रा० पा०—तत्सङ्गाद्। २. प्रा० पा०—वायसं०।

महत्सु तितिक्षया नीचेषु करुणया समेषु मैत्र्याऽखिलेषु जंतुषु समत्वेन च ॥ १३ ॥ ❀ ❀ ततः कृतार्थो भवतीत्याह । संप्रसन्ने सति गुणैर्विमुक्तोऽत एव तत्कार्येण जीवेन लिंगशरीरेण निर्मुक्तः सन्निर्वाणं सुखात्मकं ब्रह्म प्राप्नोति ॥ १४ ॥ ❀ ❀ भ्रातृहंतृत्वमंगीकृत्योक्तम्-इदानीं तु नात्मनो भ्रातृपुत्रादिसंबंधो न चान्योन्यं हंतृत्वादिकमपीत्याह भूतैरिति दशभिः । भूतैः पंचभिरारब्धैर्देहाद्याकारेण परिणतैर्योषित्पुरुषश्चेति प्रसिद्धिः । तयोर्व्यवायान्मैथुनात्संभूतिरन्ययोर्योषित्पुरुषयोरिह संसारे भवति ॥ १५ ॥ ❀ ❀ एवं तावत्सर्गः प्रवर्त्तते । एवं पालकाकारेण परिणतैर्भूतैरेव स्थितिर्हंतृदेहाकारेण परिणतैः संयमः संहारः । स च परमात्मनो मायया गुणानां व्यतिकरान्न तु स्वतः ॥ १६ ॥ ❀ ❀ ननु जडानां देहानां गुणानां वा कथं सर्गादिहेतुत्वं तत्राह । निमित्तमात्रं पुरुषर्षभ ईश्वरः यत्र यस्मिन्निमित्ते सति कार्यकारणात्मकं विश्वं भ्रमति परिवर्तते यथायस्कांते निमित्ते सति लोहं प्रवर्तते तद्वत् ॥ १७ ॥ ❀ ❀ ननु स चेन्निमित्तं तर्हि तस्याविशेषाद्युगपदेव सर्गादित्रयं भवेदत आह । स खल्विति । कालशक्त्या क्रमेण गुणानां प्रवाहः क्षोभस्तेन विभक्तं सृष्ट्यादिविषयं वीर्यं शक्तिर्यस्य । ननु कालोऽपि गुणान्युगपदेव क्षोभयतु तत्राह । चेष्टा कालशक्तिर्दुर्विभाव्याऽचिंत्या ॥ १८ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

वत्सेति । वत्सोपलक्षितध्रुवभाणामतिरोषो भवति तद्वत्तव ह्ययुक्तस्तत्साम्यावाप्तेरित्याह । यद्वा प्रियत्वात्त्वामहं वारयामीत्यभिप्रायः । तमोद्वारेण यथार्थज्ञानप्रतिबंधकत्वेन मोक्षनिरोधकत्वात्संसारहेतुनेत्यर्थः ॥ ७-८ ॥ ❀ ❀ अत्राक्षिपति-नन्वकृतापराधत्वं कथं भ्रातृवधलक्षणापराधप्रसिद्धेरिति चेत्तत्राह-नन्विति । ननु निश्चये एकस्य त्वद्भ्रातृहंतुर्यक्षस्यापराधेन तत्संगाद्धेतोरित्यर्थः । भ्रातृवत्सलेति । भगवद्भक्तस्य सर्वत्र भगवंतं पश्यतस्तव देहसंबंधिषु देहेषु स्नेहो नोचितः, किन्तु सर्वत्रैवेति भावः ॥ ९ ॥ ❀ ❀ उक्तमर्थं विशदयन्नाह व्यावहारिकस्नेहपारवश्यं भक्तानां नोचितं किं पुनस्तेन परहिंसेत्यभिप्रायेण स्वाम्याह-सत्यपीति । एतद्यक्षहिंसनं पराग्भूतं जडम् आत्मानं गृहीत्वात्मत्वेन मत्वा पशवो मूढाः "पशुर्मूढे वृषादौ च देवदेयबलौ तथा" इति निरुक्तिः । परेति पाठे 'परा-निराकरणेऽर्थे' आत्मानमगृहीत्वाऽज्ञात्वेत्यर्थः । हृषीकेशानुवर्त्तिनां सर्वत्रांतर्यामित्वेन भगवंतं पश्यताम् । इति यत् अयमिति विधेयापेक्षं पुंस्त्वम् ॥ १० ॥ ❀ ❀ हृषीकेशानुवर्त्तित्वं तस्याप्याह-त्वं चेति ! तत्प्रसिद्धम् । भूतेषु प्राणिष्वावासो यस्य भूतान्यावसंत्यस्मिन्निति वा भूतावासस्तम् ॥ ११ ॥ ❀ ❀ तव तु भक्तेष्वप्यतिप्रियस्यैतदत्यंतमनुचितमित्याह । यस्तत्पदमाप स त्वं हरेरनु निरंतरं ध्यातं ध्यानं यस्मिन्स तथा वात्सल्याद्धरिणापि स्मर्यमाण इत्यर्थः । तत्पुंसां नारदादीनामपि संमतः । कृपापात्रीकृतः । संदर्भस्तु-तत्पुंसामिति हर्य्यनुसंध्यातत्वेपि न प्रौढिमान् किं तु तद्भक्तजनसंमतिं गृहीत्वैव सर्वमनुष्ठातेत्यर्थः । यथोक्तमंबरीषमुद्दिश्य स वै मन इत्यादौ 'यथोत्तमश्लोकजनाश्रया रतिः, इति ॥ १२ ॥ ❀ ❀ महत्सु तितिक्षयेति । पूर्वोक्त'गुणाधिकान्मुदं लिप्सेत्' इति न्यायानुरोधेन ध्येयम् । चक्रवर्त्ती तु-समत्वेन स्वतुल्यहर्षशोकक्षुत्पिपासादिभावनया । तदुक्तम् "आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन । सुखं वा यदि दुःखं स योगी परमो मतः ॥" इति । सर्वात्मेति । सर्वभूतेषु तुष्यत्सु भगवत्तोषोऽनुमेय इत्यर्थः ॥ १३ ॥ ❀ ❀ ततस्तितिक्षादिभिर्भगवत्तोषात् । अत एव प्राकृतगुणविमुक्तत्वादेव निर्वाणं ज्ञानी चेत्सायुज्यं भक्तश्चेदधोक्षजालंबनकं दास्यम् । "अधोक्षजालंबमिहाशुभात्मनः शरीरिणः संसृतिचक्रशातनम् । तद्ब्रह्मनिर्वाणसुखं विदुर्बुधाः" इति प्रह्लादोक्तेस्तदा प्राकृतैर्गुणैर्विमुक्तोऽप्राकृतैर्विशिष्ट इत्यर्थः ॥ १४ ॥ ❀ ❀ इदं भ्रातृहंतृत्वं यक्षाणामंगीकृत्योक्तमिदानीं तु विचार्यमाणे तु वस्तुनि कः कस्य हंता वध्यो वेत्याह-नात्मन इत्यादिना ॥ १५ ॥ ❀ ❀ पालकाकारेण नृपाद्याकारेण हंतृदेहा दस्युव्याघ्रसर्पाद्यास्तदाकारेण परिणतैर्नाशश्च व्यतिकरादन्यतमाधिक्यात् रजसा सर्गः सत्त्वेन स्थितिस्तमसा संहार इत्यर्थः ॥ १६ ॥ ❀ ❀ पुनरत्राक्षिपति-नन्विति । प्रवर्त्तते जडमपि चेतनीभवति लोहं प्रवर्त्तते तद्वद्यथा निश्चेष्टमपि सचेष्टं भवतीत्यर्थः ॥ १७ ॥ ❀ ❀ पुनः प्रतिवंद्याक्षिपति-नन्विति । करोतीति गुणकालजीवानां तच्छक्तित्वेन तद्भेदाभावात्स एवोपादानकारणं स एव निमित्तकारणं चेत्यर्थः । अकर्त्तेति । तेषां गुणादीनां स्वरूपभूतत्वाभावात् एवं हंतेत्यहंतेत्यपि । अत्र पुनराक्षिपति-ननु विश्वं किमर्थं करोति सर्वदा किं न करोतीति विषमं किं करोतीति सर्वाक्षेपपरिहारार्थमाह चेष्टेति-अचिंत्याऽतर्क्या ॥ १८ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

पाप्मना हिंसाजनकेन उत्तरवाक्यस्थत्वाद्यच्छब्दस्य तच्छब्दानपेक्षत्वम् ॥ ७ ॥ ❀ ❀ आरब्ध इति यत् एतत् आरम्भलक्षणं कर्म ॥ ८ ॥ ❀ ❀ पुण्यजनेनेत्येकवचनादेकस्यैवापराधः किन्तु तत्सम्बन्धादिति योजनीयम् ॥ ९ ॥ ❀ ❀ पराग् बाह्येन्द्रियैः ग्राह्यं दृश्यं देहमेवात्मानं गृहीत्वा मत्वा अयं हिंसालक्षणः ॥ १० ॥ ❀ ❀ अन्यथा साधुत्वप्रातिकूल्येन सर्वभूतेषु आत्मा परमात्मा एक एवास्ते इति भावेन भावनया ॥ ११ ॥ ❀ ❀ साधुभिर्भ्रस्तहृदय इत्युक्तत्वाद्धृदि स्थित इति व्याख्यातम् ॥ १२ ॥ ❀ ❀ अखिलजन्तुष्वित्युपलक्ष्य महत्स्वित्यादिविषयभेदो व्याख्यातः । समत्वेन स्वतुल्यहर्ष-

शोकक्षुत्पिपासादिमत्त्वभावनया ॥ १३ ॥ ❀ ❀ ततः प्रसादानन्तरं भगवत्प्रसादाविर्भूतगुणव्यावर्त्तनार्थं प्राकृतैरिति गुणविशेषणम्। अत एव गुणविमुक्तत्वादेव तत्कार्येण गुणकार्येण ॥ १४ ॥ ❀ ❀ एवकारो चार्थे हीति प्रसिद्धौ ॥ १५ ॥ ❀ ❀ एवमित्यस्यावृत्तिं कृत्वा पालकाकारेणेत्यादि व्याख्यातम्। पालकाकारेण पितृमात्राद्याकारेण हन्तृदेहाकारेण दस्युसर्पव्याघ्राद्याकारेण मायया निमित्तशक्त्या इच्छाभासरूपया गुणानामुपादानकारणानां न तु स्वत इति निरीश्वरसांख्यमतं निराकृतम् ॥ १६ ॥ ❀ ❀ तदेव स्फुटीकर्तुं शङ्कते नन्विति। मात्रपदेन मायाद्वारोपादानत्वाद्विकारशङ्का दूरोत्सारिता ॥ १७ ॥ ❀ ❀ तस्य निमित्तस्याविशेषात्तुल्यत्वात् विभक्तं स्वसाद्विभक्तीकृतं शक्तिर्जीवशक्तिर्मायाशक्तिश्च तथा च तत्तच्छक्तीनां शक्तिमतोऽभिन्नत्वात्स एवोपादानं निमित्तं चेत्यर्थः ॥ १८ ॥

## श्रीमद्वीरराघवव्याख्या

उक्तमेवाह अलमित्यादिना। हे वत्स! तमोद्वारेण संमोहनात्मकाज्ञानहेतुना "क्रोधाद्भवति संमोहः" इति स्मरणात् पाप्मना निरयहेतुना रोषेणालं येन रोषेणानागसोऽपि तान् पुण्यजनान् त्वमवधीर्हतवानसि ॥ ७ ॥ ❀ ❀ हे तात! सद्भिर्विगर्हितमत एवैतत्कर्मास्मत्कुलोचितं न भवति अकृतागसां यक्षाणामयं वधस्ते त्वया आरब्धः ॥ ८ ॥ ❀ ❀ ननु मद्भ्रातृहन्तार एते उपदेवाः कथमनागसस्तत्राह नन्विति। अङ्ग हे भ्रातृवत्सल! भ्रातुरुत्तमस्य यो वधस्तेनाभितप्तेन त्वया एकस्य यक्षस्यापराधेन हेतुना तस्यापराधिनः संगात्सम्बन्धाद्बहवो हताः घातिताः ॥ ९ ॥ ❀ ❀ आत्मानं मनः असंगृह्य अनियम्य परागृह्येति पाठे पराभवविषयं देहमात्मत्वेन गृहीत्वा पशवो यथा देहाभिमानेनान्योऽन्यं घ्नन्ति तथा भूतानां वैशसं हिंसेति यद्यं भगवद्भक्तानां साधूनां मार्गो न भवति ॥ १० ॥ ❀ ❀ सत्यं भगवद्भक्तानामयं मार्गो न भवतीति मम तूचितमित्यत्राह। सर्वभूतात्मभावेनेति। आवसन्त्यस्मिन्नित्यावासः आवसतीति वा आवासः भूतानामावासं धारकमन्तरात्मानञ्च इतरैरब्रह्मात्मकस्वतन्त्रवस्तुदर्शिभिः दुराराध्यं हरिं सर्वभूतात्मभावेन सर्वभूतान्तरात्मत्वेनाकारेणाराध्यं परमं सर्वोत्कृष्टं तत्प्रसिद्धं विष्णोः पदं लोकं अपि प्राप्तवानसि। इतः पूर्वमप्राप्तमपि भगवता दत्तत्वात्प्राप्तप्रायमिति मत्वा आपेत्युक्तम् ॥ ११ ॥ ❀ ❀ हरेरनुध्यानाद्धजनात्सः हरिभक्तस्त्वं तत्पुंसां हरिभक्तानामपि संमतः भागवतोत्तमत्वेन संमतः सतां साधूनां व्रतमनुशिक्षन् अनुशिक्षयन् लोकस्येति शेषः, कथमवद्यं वक्तुमप्यनर्हं पापं कृतवान् भगवद्भक्तस्य नितरामेतदनुचितमित्यर्थः ॥ १२ ॥ ❀ ❀ भूतद्रोहेण भगवद्भक्तेः को विरोध इत्यत्राह तितिक्षयेति। तितिक्षया अपराधिषु सहनेन करुणया परदुःखासहिष्णुत्वेन अखिलजन्तुषु तरतमभावेन व्यवस्थितेषु मैत्र्या स्वसाम्यबुद्धिकृतहिताचरणेन समत्वेन देहाकारान् प्रकृतिपरिणामत्वेन जीवान् ज्ञानैकाकारत्वेन परमात्मानं तु सर्वान्तरात्मत्वेनेत्येवंरूपसमत्वेन वा सर्वात्मा भगवान् संप्रसीदति। सर्वात्मेति हेतुगर्भं भगवतः सर्वात्मकत्वादेतत्सर्वान्तरात्मतया देवमनुष्यादिरूपेणावस्थितत्वात्सर्वेषां शरीराणामीश्वरशरीरत्वेन शरीरकृतो द्रोहः शरीरिण्यात्मन्येव भगवति पर्य्यवस्यतीति भूतद्रुहे भगवान्न प्रसीदतीत्यर्थः ॥ १३ ॥ ❀ ❀ भगवत्प्रसादफलमाह प्रसन्न इति। पुरुषः सर्वात्मब्रह्मोपासनपरः पुमान् तितिक्षादिभिर्भगवति प्रसन्ने सति प्राकृतैः क्रोधादिभिर्जीवदशायां विमुक्तः अन्ते अजीवात्मकृतैर्नितरां मुक्तः निर्वाणं निरतिशयानन्दरूपं ब्रह्म ऋच्छति प्राप्नोति ॥ १४ ॥ ❀ ❀ एवं सर्वभूतसुहृत्त्वादीन् भगवत्प्रसादहेतून् प्रसादफलभूतान् ब्रह्मप्राप्तिं चाभिधाय तत्त्वोपदेशमन्तरेण भ्रातृमरणदुःखितस्यास्य न मनः प्रशाम्यतीत्यभिप्रेत्य न भ्रातुर्हननकर्मत्वं नापि यक्षाणां तत्कर्तृत्वं किन्तु दैवमेव कारणमिति वक्तुं भ्रात्रादिशरीराणामुत्पत्तिमरणादिकं यथावद्विवेचयन् तदुपयुक्तमीश्वरस्यानन्तविविधशक्तिमत्त्वमाह भूतैरिति। पञ्चभिर्भूतैः पृथिव्यादिभिरारब्धः देवमनुष्यादिशरीररूपेण परिणतः योषित् पुरुषश्चेत्ययं द्विविधो जनः प्रसिद्धः। तयोर्योषित्पुरुषयोरन्योऽन्यव्यवायान्मैथुनात्संभूतिरिह भवति तस्मादुद्भूतं प्राणिजातमित्यर्थः। पञ्चभूतपरिणामरूपस्त्रीपुरुषात्मकशरीरद्वयसंबन्धादुद्भूतमपि प्राणिजातं पञ्चभूतात्मकमेवेति भावः ॥ १५ ॥ ❀ ❀ एवं व्यष्टिसर्ग उक्तः। अथ सर्वशरीराणां पञ्चभूतारब्धत्वेपि कदा भूतसृष्टिः तैः शरीरारम्भस्थितिकारणं संहारकारणं च किं तच्च द्वयं कदा कदा वा ईश्वरकृत्यं च किंरूपमित्यत्राह एवमिति। एवं यथा स्त्रीपुंसात्मको जनः तद्व्यवायसंभव एवं परमात्मनः मायायाः परमात्माधिष्ठितायास्तच्छरीरभूताया मायाया गुणानां सत्त्वादीनां व्यतिकरात् तारतम्येन संबन्धात् हे राजन्! ध्रुव! सर्गः सृष्टिः स्थितिः संहारश्च प्रवर्त्तते। तत्र रजसो वृद्धावितरयोर्ह्रासे सर्गः, सत्त्वस्य वृद्धावितरयोर्ह्रासे स्थितिः, तमसो वृद्धौ तु संयमः, त्रयाणां साम्यं त्रितयाभावः ॥ १६ ॥ ❀ ❀ ननु स्त्रीपुंसात्मकशरीराणां वैषम्येण संबन्धानां गुणानां वा जडत्वेन प्रवृत्तिशून्यानां व्यष्टिसमष्ट्यात्मनां कथं परिणामसामर्थ्यं सामर्थ्येऽपि कथं देवमनुष्यादिवैचित्र्यं सुखदुःखतारतम्यं चेत्यत्राह निमित्तमात्रमिति। निमित्तमेव निमित्तमात्रं न त्वनिमित्तमित्यर्थः। तत्र गुणानां महदाद्याकारेण परिणामं देवादिवैचित्र्ये सुखदुःखयोश्च निर्गुणः सत्त्वादिगुणरहितः पुरुषर्षभः ईश्वरः निमित्तमात्रं गुणानां परिणामस्य तेषां तत्स्वाभाव्यनिबन्धनत्वाद्देवादिवैचित्र्यस्य सुखदुःखतारम्यस्य च कर्मनिबन्धत्वादीश्वरः साधारणकारणं कालाकाशादिवदित्यर्थः। निमित्तत्वमेव दृष्टान्तत्वेन विशदयति। यत्र परमात्मनि निमित्ते अयस्कान्तसंनिधौ लोहवत् इदं

व्यक्ताव्यक्तम् अव्यक्तं प्रधानं तत्कार्यं महदादि व्यक्तं कार्य्यकारणात्मकं विश्वं भ्रमति प्रवर्त्तते अत्र लोके मृत्कुलालयोर्विभिन्नयोरेव निमित्तत्वोपादानत्वदर्शनादुपादानस्य परमात्मनो जगत्सृष्ट्यादिनिमित्तत्वानुपपपत्तिरितीमामाशङ्कां निराचिकीर्षुणा मात्रपदं प्रयुक्तं, न तूपादननिराचिकीर्षया परमात्मनो मायाया गुणव्यतिकरादित्युपादानत्वाभिधानात् संबन्धसामान्याभिधायिन्या अपि षष्ठ्याः 'यस्याव्यक्तं शरीरमि'त्यादिश्रुत्यनुसारेण शरीरात्मभावरूपसंबन्धविशेषे पर्यवसानाच्छरीरस्य कार्योपयोग्यपृथक्सिद्धाकारत्वात् श्लक्ष्णतादिविशिष्टमृदादिकार्यभूतघटादीनामिव महदादिकार्याणां प्रकृत्यादिशरीरकपरमात्मकार्यत्वात्। अत्र निर्गुण इत्यनेन सत्त्वादिगुणवश्यत्वायत्तकर्तृत्वसुखदुःखादिभोगजीववैलक्षण्यमभिप्रेतम्॥ १७॥ ❀ ❀ तदेव विशदयति स इति। भगवान् हेयप्रतिभटपूर्णषाड्गुण्यः कालशक्त्या कालात्मिकया स्वापृथक्सिद्धकार्योपयोगिविशेषणभूतया शक्त्या गुणक्षोभहेतुभूतया यो गुणानां सत्त्वादीनां प्रवाहः तेन विभक्तवीर्यैः विभक्ते कर्मायत्तदेवमनुष्यादिवैचित्र्येण सुखदुःखतारतम्येन च व्यवस्थापितं वीर्यं शक्तिः जगदिति यावत् "एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा। परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत्॥" इत्युक्तत्वाद् अत्र स्वामित्यध्याह्रियते, विभक्तवीर्यैः स्वामिति इदं करोति सृजतीत्यन्वयः। गुणक्षोभनिमित्तकालप्रकृतिपुरुषशरीरकोऽहं जगत्स्रष्टा-नन्तविविधविचित्रस्थितिरत्र सरूपः स्वामिति संकल्पेनेदं जगत्सृजतीत्यर्थः। यद्वा गुणप्रवाहेणेति हेत्वर्थे तृतीया। हेतुश्चात्र फलमध्ययनेन वसतीतिवत्, ततश्च गुणप्रवाहेण गुणप्रवाहार्थं प्रवाहशब्देन गुणकार्ये सृष्ट्यादित्रयं विवक्षितं सृष्ट्याद्यर्थं विभक्तं वीर्यं सृष्ट्याद्युपयुक्तं सामर्थ्यं येन सः ब्रह्मविष्णुरुद्ररूपो भूत्वेत्यर्थः। अकर्तैव देवादिवैचित्र्ये सुखदुःखादौ चाकर्तैव देवादिवैचित्र्या-देस्तत्तज्जीवादृष्टायत्तत्वात् इदं जगत्करोति उत्पादयति तथा अहन्तैव स्वयं हननायनाश्रय एव हन्ति "चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः। तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम्॥, प्रधानकारणीभूतो यतो वै सृज्यशक्त्यहम्" इति स्मृतेः "हंता चेन्मन्यते हन्तुर्हतश्चेन्मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यते" इति श्रुतेश्च अत्र कर्तृत्वं हन्तृत्वं च प्रयोजकरूपेण अकर्तृत्वं तु प्रयोज्यरूपेणेति विवेकः। नन्विदमघटमानं कर्तृत्वमकर्तृत्वं चैकस्मिन्कथमुपपद्यते तत्राह विभूम्नः भगवतः "भूमा त्वेव विजिज्ञासितव्यः" इति श्रुतेः चेष्टा दुर्विभाव्या अप्रतर्क्या खलु॥ १८॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

आगत्य निःशेषं हनेत्युक्तं किं नेत्याह अलमिति। तमोद्वारेण यथार्थज्ञानप्रतिबन्धकत्वेन नरकद्वारेण पाप्मना पापहेतुना॥ ७॥ ❀ ❀ किंच धर्मशास्त्रानुवर्तिनामस्माकं कुलधर्मो न भवत्ययमित्याह नास्मदिति। अकृतैनसामिति पदम्॥ ८॥ ❀ ❀ अकृतापराधत्वं कथं भ्रातृवधलक्षणापराधकरणादिति तत्राह नन्विति। नन्वेवार्थे वर्तते अपराधेनेति संबध्यते॥ ९॥ ❀ ❀ तस्यापराधिनः संगात्तदपरित्यागात्तेऽप्यपराधिन इति सूक्ष्मदर्शनं भागवतानां नोपपन्नमित्याह नायमिति। आत्मानं मनोऽसंगृह्यानियम्य पशुवन्मूढवत्॥ १०॥ ❀ ❀ इतोऽप्येकापराधेन बहूनां वधो न युक्तः, सर्वप्राणि-नामन्तर्यामित्वेन हरिमुपास्य प्राप्ततत्प्रसादत्वादित्याह सर्वभूतेति। सर्वभूतानामात्मभावेनान्तर्यामित्वेन भूतेषु प्राणिष्वावासो यस्य स तथा भूतान्यावसन्त्यस्मिन्निति वा तम्॥ ११॥ ❀ ❀ प्राप्तपदत्वादद्य हरिणा किमिति भावो न तवास्तीत्याह सत्त्वमिति। तस्य हरेः पुंसां भक्तानां संमतः ततः किं तत्राह कथमिति॥ १२॥ ❀ ❀ किं तत्सतां व्रतं तेन किं फलं तत्राह तितिक्षयेति। शत्रुषु शत्रुत्वदर्शनं सुहृत्सु सुहृत्त्वदर्शनं समत्वम्॥ १३॥ ❀ ❀ तत्प्रसादफलमाह संप्रसन्न इति। ततः किं तत्राह जीवेति। जीवत्वाभिमानान्निरतरां मुक्तो भवति तत्फलमाह ब्रह्मेति। नित्यनिर्मुक्तशरीरं परमानन्दं वा ब्रह्म ऋच्छत्याप्नोतीत्यन्वयः। ब्रह्मनिर्वाणं ब्रह्मणि नाशमृच्छतीत्यङ्गीकारे मुक्तेः शून्यभावत्वेन न केनाप्याश्रितं स्यात्॥ १४॥ ❀ ❀ सृष्टिप्रकारज्ञाने ततो विरक्त्या प्रकृतिबन्धहानेच्छा स्यादतस्तामाह भूतैरिति। पुरुषो योषिच्चेति भावः पञ्चभिः। पृथिव्यादिभूतैरारब्धः सृष्टः अतः परं कथं प्रारम्भ इत्यत आह तयोरिति। इह जीवराशौ तयोर्योषित्पुरुषयोर्व्यवायेन मैथुनधर्मेण संभूतिः करचरणादिविभागलक्षणं जन्म भवति, समित्यनेन पृथिव्यादिसंयोगेन जन्म सूचयति॥ १५॥ ❀ ❀ न केवलमादिसर्गः किंतूत्तरत्राप्येवमेवेत्याह एवमिति। स्थितिसंहारयोः सर्गविपरीतत्वात्कथं सर्गवदित्युच्यत इत्यत्राह गुणव्यतिकरादिति। रजआदिगुणानां विषमसमावस्था-भेदकारणात् परप्रेरणामन्तरेण जडेभ्यो गुणेभ्य एवं प्रवृत्तिः कथमत्राह माययेति। परमात्मनो माययेच्छया प्रेरितेभ्य इति शेषः। इदमत्राकूतम्। रजोगुणकार्यभूतारब्धदेहास्थितिः तमोगुणकार्यभूतारब्धदेहात्संयम इति च एतत्सर्वमीश्वरेच्छाधीनमिति॥१६॥ ❀ ❀ एतदेव विशिनष्टि निमित्तमात्रमिति। यत्र यस्येश्वरस्य सन्निधाने व्यक्ताव्यक्तं कार्यकारणात्मकमिदं विश्वं भ्रमति चेष्टते किमिव अयस्कान्तस्य सन्निधाने लोहं खर्वं यथा तथा सः निर्गुणः सत्त्वादिगुणशक्त्यनुपहतशक्तिरात्मा परमात्मा तत्र सृष्ट्यादौ निमित्तमात्रं न तूपादानकारणम्॥ १७॥ ❀ ❀ तर्हि मुख्यकर्तृत्वं हरेर्गतमत्राह स खल्विति। खलुशब्दोऽन्यकारण-शक्तिनिषेधार्थः। स भगवान्योगशक्त्या गुणप्रवाहेषु सृष्ट्यादिषु तत्तत्क्रियानुसारेण विभक्तवीर्यो विभक्तमाहात्म्यः अक्लिष्टकर्तृ-त्वादकर्तेव जगत्करोति अहन्तैव शत्रुभावरहितत्वान्निहन्ति संहरति। अनेन हरेः समत्वभंगो निरस्त इति एकस्य विरुद्धकर्तृत्वं कथमित्यत उक्तं चेष्टेति। दुर्विभाव्या ज्ञातुमशक्याऽस्मादृशैरिति शेषः, कर्तृत्वसामान्यनिषेधे "हरिरक्लिष्टकारित्वादयस्कान्तवदुच्यते।

कार्यकर्मस्वभावेषु काले चावस्थितो हरिः। सर्वकारणभूतः संस्तत्तन्नाम्नाभिधीयते॥" इति वाक्यविरुद्धं स्यादिति नायमर्थः शोभते॥ १८॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तत् पुंसामपि सम्मत इति हर्य्यनुध्यानत्वेऽपि। न प्रौढिमान् किन्तु तद्भक्तजनसम्मतिं गृहीत्वैव सर्वमनुष्ठतेत्यर्थः। यथोक्तमम्बरीषमुद्दिश्य। स वै मन इत्यादौ 'यथोत्तमश्लोकजनाश्रया रतिरि'ति॥ १२॥ ❀ ❀ द्विषत्सु तितिक्षया हीनेषु करुणया समेषु मैत्र्या, अखिलेषु जन्तुषु समत्वेन सुखदुःखादिष्वात्मसाम्यज्ञानेन॥ १३॥ ❀ ❀ ब्रह्मणस्तत्सुखस्यापि निर्वाणं लयोऽन्तर्भावो यत्र तत् श्रीभगवत्सुखमित्यर्थः। निर्वाणपदस्य विशेषणवैयर्थ्यात्॥ १४-१७॥ ❀ ❀ शक्तीनां क्रमेण प्रवर्त्तनया कर्तृत्वादित्वेऽपि अकर्तृत्वादिना च चेष्टाया दुर्विभाव्यत्वं ज्ञेयम्॥ १८-२०॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

उपदेवानां यक्षाणाम्॥ ८॥ ❀ ❀ ननु निश्चितमेकस्य त्वद्भ्रातृहन्तुर्यक्षस्यापराधेन तत्सङ्गात् तत्सङ्गहेतोरित्यर्थः॥ ९॥ ❀ ❀ व्यावहारिकस्नेहपारवश्यं भक्तानामनुचितं किं पुनस्तेन परहिंसेत्यत्राह नायमिति। यदात्मानं देहं परागृह्य परागभूतमपि आत्मत्वाभिमानेन गृहीत्वा पशवो यथा देहसम्बन्धेनान्योऽन्यं घ्नन्ति तथा भूतानां वैशसं हिंसेति यत्। छन्दसि क्त्वो ल्यप्। परागृह्येति पाठे परेति निषेधार्थकम्। जीवात्मानमगृहीत्वेत्यर्थः॥ १०॥ ❀ ❀ तव तु भक्तेष्वप्यतिश्रेष्ठस्यै-तदत्यन्तमनुचितमित्याह द्वाभ्याम्। सर्वेषु भूतेष्वात्मनः स्वस्यैव भावो भावना तेन॥ ११॥ ❀ ❀ हरेरनुध्यातः अनु निरन्तरं ध्यातं ध्यानं यस्मिन् सः। वात्सल्याद्धरिणापि स्मर्यमाण इत्यर्थः। तत् पुंसां नारदादीनामपि कृपापात्रीभूतः॥ १२॥ ❀ ❀ सतां व्रतमेवाह महत्सु तितिक्षया नीचेषु करुणया समेषु मैत्र्या एवमखिलजन्तुषु समत्वेन स्वतुल्यहर्षशोकक्षुत्पिपासादिमत्त्व-भावनया। यदुक्तम् "आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन। सुखं वा यदि वा दुःखं स योगी परमो मतः" इति। सर्वात्मेति सर्वभूतेषु तुष्यत्सु भगवत्तोषोऽनुमेय इत्यर्थः॥ १३॥ ❀ ❀ जीवेन लिङ्गशरीरेण निर्मुक्तः। ब्रह्मनिर्वाणं ज्ञानी चेत् सायुज्यं भक्तश्चेत् अधोक्षजालम्बनकं दास्यम् अधोक्षजालम्बनमिहेत्यत्र 'तद्ब्रह्म निर्वाणसुखं विदुर्बुधाः' इति प्रह्लादोक्तेस्तदा प्राकृतैर्गुणैर्विमुक्तः। अप्राकृतैस्तु विशिष्ट इत्यर्थः॥ १४॥ ❀ ❀ वस्तुनि विचार्यमाणे तु कः कस्य हन्ता वध्यो वेत्याह दशभिः। भूतैः पृथिव्या-दिभिरारब्धैर्देहैर्योषित् पुरुषश्च तयोर्व्यवायादन्ययोर्योषित्पुरुषयोः सम्भूतिरुत्पत्तिर्भवति॥ १५॥ ❀ ❀ एवंभूतैर्यथा सर्गः प्रवर्त्तते तथा तैरेव पितृमात्राद्याकारैः स्थितिः पालनं तैरेव दस्युव्याघ्रसर्पाद्याकारैः संयमो नाशश्च। तत्र किञ्च परमात्मनो मायया गुणव्यतिकरादेव न तु स्वतः रजसा सर्गः सत्त्वेन स्थितिः तमसाहङ्कार इत्यर्थः॥ १६॥ ❀ ❀ ननु जडानां योषित्-पुरुषादिदेहानां गुणानां वा चैतन्याधिष्ठानं विना कथं सर्गादिहेतुत्वं तत्राह। निमित्तमात्रं पुरुषर्षभ ईश्वरोऽधिष्ठाता यत्र यस्मिन्निमित्ते सति कार्यकारणात्मकं विश्वं भ्रमति जडमपि चेतनीभवत् देवमनुष्यादिरूपेण तथा तथा परिवर्तते। यथा अयस्कान्ते निमित्ते सति लोहं निश्चेष्टमपि सचेष्टं भवति॥ १७॥ ❀ ❀ ननु स चेन्निमित्तं तर्हि तस्याविशेषात् युगपदेव सर्गादित्रयं भवतु। मैवं, रजःसत्त्वतमसां कालशक्त्या क्रमेणैव क्षोभो भवति, नतु युगपदतः क्रमेणैव सर्गादित्रयं भवतीत्याह स खल्विति। कालशक्त्या क्रमेण गुणानां प्रवाहः क्षोभस्तेन विभक्तमात्मनः सकाशात् विभक्तीकृतं वीर्यं चिदाभासं जीवशक्त्यात्मकं मायाशक्ति-प्रविष्टं यस्य सः। करोतीति गुणकालजीवानां शक्तित्वेन तद्भेदाभावात् स एवोपादानकारणं स एव निमित्तकारणञ्चेत्यर्थः। अकर्तेति तेषां गुणादीनां स्वरूपभूतत्वाभावात्। एवं निहन्ता हन्त्रेत्यपि। ननु विश्वं किमर्थं करोति सदैव वा किं न करोति विषमं वा किं करोतीति सर्वाक्षेपपरिहारार्थमाह। चेष्टा दुर्विभाव्या अतर्क्या विभूम्नो विभुत्वादिति। एतदेतस्य विभुत्वमित्यर्थः॥ १८-२०॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

येन रोषेण॥ ७॥ ❀ ❀ अकृतैनसान्ते त्वया वध आरब्धः इति यत्तदेतत्कर्म अस्मत्कुलोचितं न भवति॥ ८॥ ❀ ❀ अकृतैनस्त्वं तेषामाह। नन्विति॥ ९॥ ❀ ❀ परागभूतं देहमात्मानं गृह्य गृहीत्वा पशवो यथान्यं घ्नन्ति तद्वद्भूतानां वैशसं हननमिति यतः अयं साधूनां भवद्विधानां मार्गो न भवति॥ १०-११॥ ❀ ❀ अनुध्यातः अनुध्यान-तस्तत्पुंसां संमतः॥ १२-१३॥ ❀ ❀ जीवनिर्मुक्तः लिङ्गशरीरेण निर्मुक्तः निर्वाणं निरतिशयम् ब्रह्म ऋच्छति प्राप्नोति॥ १४॥ ❀ ❀ एकस्यापराधे सर्वान् हन्तुं प्रवृत्तः लोकरीत्या 'अलं वत्सातिरोषेणे'त्यादिना निवारितः। अथ जीवकर्मानुसारेण सर्वं भगवानेव करोति त्वया तु वृथैव गिरिशभ्रातुर्हेलनं कृतमतस्तं प्रसादयेत्याह। यावदध्यायसमाप्ति भूतैरिति। आरब्धैः पञ्चीकृतैः योषित् पुरुषश्च उत्पद्यते इति शेषः। तयोर्व्यवायादन्ययोर्योषित्पुरुषयोः सम्भूतिरिह भवति॥ १५॥ ❀ ❀ हे राजन्! एवं परमात्मनः मायया शक्त्या गुणव्यतिकरात् सर्गादि प्रवर्तते॥ १६॥ ❀ ❀ ननु 'एकमेवाद्वितीयं ब्रह्मे'त्यादिश्रुतयः, अत्रापि च 'स वै किलायं पुरुषः पुरातनो य एक आसीदि'त्यादिषु जगत्कारणमेकमेवासीदिति निश्चयः। तत्र

भूतैरित्यनेन व्यक्तं माययेत्यनेनाव्यक्तं जगत्कारणं प्रतीयते, परमात्मन इति सम्बन्धमात्रनिर्देशेन ब्रह्मणोऽपि सर्गादिपूर्ववर्तित्वमात्रमुक्तं तद्विरुद्धमित्यत्राह। निमित्तमात्रमिति। निमित्तमात्रमिदमस्तीति स्वायत्ततायामिति शेषः। वस्तुतस्तु ब्रह्मायत्तस्थित्यादिमत् तदिदं विश्वं व्यक्ताव्यक्तं कार्य्यकारणरूपं यत्र चुम्बकमण्यनुगृहीतास्वाधीनलोहवत् भ्रमति सः पुरुषर्षभः सर्वेषां पुरुषाणां स्वांशानां जीवानामृषभः स्वामी निर्गुणः अनभिव्यक्तशक्तिगुणः गुप्तशक्तिः अखिलैरंशैः शक्तिभिश्च युक्त इत्यर्थः। तत्र सर्गादिः पूर्वत्र आसीत् तत एव जगदभिन्ननिमित्तोपादानकारणात्सर्गादिः प्रवर्तते इति फलितोऽर्थः॥ १७॥ ❀ ❀ भगवतः सर्गादिहेतुत्वं दुर्ज्ञेयचेष्टत्वं च वदन् जगत्सर्गादिर्नियतकालत्वं दर्शयति स इति। स विश्वसर्गादिहेतुकालशक्त्या गुणानां प्रवाहः क्षोभस्तत्र सर्गकालेन रजसः स्थितिकालेन सत्त्वस्य संयमकालेन तमसः क्षोभस्तेन विभक्तं सृष्ट्यादिविषयवीर्यं शक्तिर्यस्य सः अकर्तैव अन्येनानुत्पादित एव करोति। अन्येनापालित एव पालयति। अहंता नास्ति हंता यस्य स हन्त्रन्तरशून्य एव निहन्ति इदं विश्वमित्यर्थः॥ १८॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

मनुवाक्यान्येव दर्शयति—अलमित्यष्टाविंशतिभिः। हे वत्स! येन त्वमनागसो निरपराधानप्येतान् पुण्यजनान् अवधीः हतवांस्तेन पाप्मना पापजनकेनात एव तमसो नरकस्य द्वारेणातिरोषेणालं पूर्णमतोऽग्रे त्वया रोषो न कर्त्तव्यः। हे वत्सेति स्नेहेन संबोधयंस्तव हितमुपदिशाम्यतो न मद्वचनोपेक्षा युक्तेति सूचयति॥ ७॥ ❀ ❀ हे तात! तवैतत्कर्म अस्माकं धर्मशास्त्रानुवर्त्तिनां कुले उचितं न भवति। एतदिति किमित्यपेक्षायामाह—वध इति। अकृतैनसां न कृतं एनः पापमपराधो यैस्तेषामुपदेवानां यक्षाणां यस्त्वया वध आरब्धस्तदित्यर्थः। कुतोऽस्मत्कुलोचितं न भवति तत्राह—सद्भिर्गर्हितमिति। सद्भिर्विगर्हितं निन्दितम्। यतो 'न हिंस्यात्सर्वभूतानि' इति हिंसानिषेधादिति॥ ८॥ ❀ ❀ ननु मद्भ्रातृवधलक्षणापराधस्य कृतत्वात्कथं निरपराधित्वमेषामित्याशङ्क्याह—नन्विति। ननु निश्चितमेतत् येन तव भ्राता हतस्तस्यैकस्यापराधेन तत्प्रसङ्गात्त्वया बहवो हताः। एवं निरपराधिवधे तव संताप एव हेतुरित्यभिप्रेत्य विशिनष्टि—भ्रातुर्वधाभितप्तेनेति। एवं संतापेपि भ्रातरि स्नेहाधिक्यमेव हेतुरित्यभिप्रेत्य संबोधयति—हे भ्रातृवत्सल इति। तथा च मोहान्निरपराधिवधे प्रत्युत तवैवापराधो जात इति भावः। हे अङ्ग इति संबोधनेन नात्र मया परपक्षपातेनोच्यते, किन्तु मदङ्गत्वात्तव कल्याणार्थमेवेति सूचयति॥ ९॥ ❀ ❀ एवं निरपराधित्वमङ्गीकृत्योक्तमिदानीं सापराधेष्यस्माकमेतदुचितं न भवति, भगवन्मार्गविरोधादित्याह—नायमिति। यत् पराग्बहिर्भूतं देहमात्मानं प्रत्यग्भूतं गृह्य मत्वा पशुवद्भूतवैशसं यथा पशवो देहमेवात्मत्वेन मत्वा तदर्थं परस्परं घ्नन्ति तद्वद् भूतानां प्राणिनां वैशसं हिंसनं सोऽयं साधूनां सदाचाराणां विचारकुशलानां हृषीकेशानुवर्त्तिनां हृषीकाणि इन्द्रियाणि तेषामीशो नियन्ता भगवानन्तर्यामी तदनुवर्त्तिनां भगवत्प्रेरणयैव सर्वे तत्तत्कार्ये प्रवर्त्तन्ते न स्वत इति निश्चयवतां मार्गो न भवतीत्यन्वयः॥ १०॥ ❀ ❀ लोके हि विचाराभावेन पूर्वं क्रूरोपि पश्चाद्विचारे समर्थः सन् क्रूरत्वं त्यजति, तव चेष्टा तु विपरीतैव दृश्यते, बाल्ये साधुत्वेपीदानीं क्रूरत्वाङ्गीकारादित्यभिप्रेत्याह—सर्वभूतेति द्वाभ्याम्। भूतानि आवसन्ति यस्मिंस्तं यद्वा भूतेषु आवसतीति यथा तं भगवन्तं वासुदेवं हरिं भक्तजनसंसारदुःखहर्त्तारमत एव दुराराध्यमपि भवान् सर्वभूतात्मभावेन सर्वेषां भूतानां स्थावरजङ्गमानामात्मत्वेनाऽऽराध्यं ध्यात्वा प्रत्यक्षीकृत्य ततो यद्विष्णोस्तस्य परमं सर्वोत्कृष्टं पदं स्थानं तदाप प्राप्तवानित्यन्वयः॥ ११॥ ❀ ❀ य एवंभूतः स त्वं हरेर्मनस्यनुध्यातः स्वकीयत्वेन चिन्तितः अत एव तत्पुंसां भगवदीयानामपि भगवदीयत्वेन संमतः। नारदात्सतां व्रतमनुशिक्षन्नपि कथं त्वद्य निन्द्यं प्राणिहिंसनं कृतवानित्यन्वयः॥ १२॥ ❀ ❀ नारदोपदिष्टं सतां व्रतमेव स्मारयति—तितिक्षयेति। महत्सु तितिक्षया तत्कृततिरस्कारसहनेन निकृष्टेषु करुणया समेषु मैत्र्या अखिलजन्तुषु तिर्यगादियोनिगतेष्वपि सर्वप्राणिषु समत्वेन स्वसमानदुःखादिदर्शनेन दण्डादित्यागेन च भगवान् संप्रसीदतीत्यन्वयः। एवं सत्येव भगवत्प्रसादो नान्यथेत्यत्र हेतुमाह—सर्वात्मेति। नहि सर्वात्मनस्तस्य क्वचित्संमाने क्वचिच्चापमाने प्रसन्नता भवति, किन्तु सर्वत्र संमानेनैवेति भावः॥ १३॥ ❀ ❀ भगवति प्रसन्ने किं भवति तत्राह—संप्रसन्न इति। भगवति संप्रसन्ने सति पुरुषः प्राणिमात्रं यः कश्चिदपि प्राकृतैर्गुणैः रजःसत्त्वतमोभिर्विशेषेण मुक्तोत एव तत्कार्येण जीवेन 'एवं पञ्चविधं लिङ्गं त्रिवृत्षोडशविस्तृतम्। एष चेतनया युक्तो जीव इत्यभिधीयते' इति वाक्यानुसारेण जीवशब्दवाच्यलिङ्गदेहेनापि विनिर्मुक्तो निर्वाणं संसारातीतं ब्रह्म तमेव भगवन्तमृच्छति प्राप्नोति॥ १४॥ ❀ ❀ एवं स्ववशवर्तित्वेन हन्तृत्वादिकमङ्गीकृत्य तत्करणमनुचितमित्युक्तमिदानीं तु न परस्परं स्वातन्त्र्येण हन्तृत्वादिकं भगवदधीनत्वादित्याह—भूतैरिति द्वादशभिः। तत्र प्रथमं सर्गप्रकारमाह पञ्चभिः—पृथिव्यप्तेजोवाय्वाकाशैर्महाभूतैरारब्धैः देहाद्याकारेण परिणतैरेव योषित् पुरुषश्च व्यवह्रियते। तयोरेव स्त्रीपुंसयोर्व्यवायात् मैथुनादन्ययोर्योषित्पुरुषयोः संभूतिः जन्म भवति। हीति प्रत्यक्षसिद्धमेतदिह संसार इत्यन्वयः॥ १५॥ ❀ ❀ एवमेव पूर्वोक्तप्रकारेण योषित्पुरुषादिदेहाकारेण परिणतैः पञ्चमहाभूतैरेव रजआदिगुणव्यतिकरात् तेषां न्यूनाधिकभावात् सर्गादिः प्रवर्त्तत इत्यन्वयः। तत्र रजस औत्कट्ये सर्गः। सत्त्वस्यौत्कट्ये स्थितिः पालनम्। तमस औत्कट्ये संयमः उपसंहारश्च। एवं गुणव्यतिकरः कथं भवतीत्याकाङ्क्षायामाह—माययेति। परमात्मनो भगवतो मायया इच्छयेत्यर्थः। हे राजन्निति संबोधयन् स्वामीच्छयैव कार्यवैचित्र्यं भवति

नान्यथेति राजत्वात्स्वदृष्टान्तेनैतज्ज्ञेयमिति सूचयति ॥ १६ ॥ ❀ ❀ नन्वेवमीश्वरो जगत्सर्गादिकर्ता चेत्तदा तत्र तस्यासक्तिरायासश्च स्यादित्याशङ्क्याह—निमित्तमात्रमिति । पुरुषर्षभः पुरुषोत्तमस्तु तत्र सर्गादाविच्छाद्वारा निमित्तमात्रमासीन्नतु तत्र तस्यासक्तिर्न वा प्रयासः । कुतः एवमत आह—निर्गुण इति । सर्वत्रासक्तिः प्रयासश्च प्राकृतगुणवतामेव दृष्टः, भगवतः प्राकृतगुणरहितत्वात्तौ न स्त इति भावः । निमित्तमात्रत्वमेव स्फुटयति—व्यक्तेति । तत्र यस्मिन्निमित्ते सति व्यक्ताव्यक्तं स्थूलसूक्ष्मात्मकं कार्यकारणात्मकं वा विश्वं भ्रमति सृष्ट्यादौ परिवर्त्तते । नन्वचेतनानां कथमिच्छामात्रेण प्रवृत्तिरित्याशङ्क्य दृष्टान्तमाह—लोहवदिति । यथाऽयस्कान्तसन्निधानमात्रेणाचेतनमपि लोहं प्रवर्त्तते तद्वत् ॥ १७ ॥ ❀ ❀ नन्वेवं तस्य मुख्यं कर्तृत्वं नायातीत्याशङ्क्य सर्वात्मकत्वान्मुख्यकर्तृत्वं तस्यैवेत्याह—स खल्विति । गुणप्रवाहेण सृष्ट्यादिनिमित्तेन कालाख्यया स्वशक्त्या विभक्तं वीर्यं रजआदिशक्तिर्यस्य स भगवानेवेदं विश्वमकर्त्तैव करोति, अहत्तैव हन्तीत्यन्वयः । अपालक एव पातीत्यनुक्तमपि ज्ञेयम् । इदमपि विरुद्धमेवोच्यत इत्याशङ्क्याह—चेष्टेति । विभूम्नो महत्तमस्य भगवतश्चेष्टा लीला खलु निश्चयेन दुर्विभाव्या अचिन्त्येत्यर्थः ॥ १८ ॥

### भाषानुवादः

मुनिजीने कहा—बेटा ! बस, बस ! अधिक क्रोध करना ठीक नहीं । यह पापी नरकका द्वार है । इसीके वशीभूत होकर तुमने इन निरापराध यक्षोंका वध किया है ॥ ७ ॥ ❀ ❀ तात ! तुम जो निर्दोष यक्षोंके संहारपर उतर रहे हो, यह हमारे कुलके योग्य कर्म नहीं है; साधु पुरुष इसकी बड़ी निन्दा करते हैं ॥ ८ ॥ ❀ ❀ बेटा ! तुम्हारा अपने भाईपर बड़ा अनुराग था, यह तो ठीक है; परन्तु देखो, उसके वधसे सन्तप्त होकर तुमने एक यक्षके अपराध करनेपर प्रसङ्गवश कितनोंकी हत्या कर डाली ॥ ९ ॥ ❀ ❀ इस जड शरीरको ही आत्मा मानकर इसके लिये पशुओंकी भाँति प्राणियोंकी हिंसा करना यह भगवत्सेवी साधुजनोंका मार्ग नहीं है ॥ १० ॥ ❀ ❀ प्रभुकी आराधना करना बड़ा कठिन है, परन्तु तुमने तो लड़कपनमें ही सम्पूर्ण भूतोंके आश्रयस्थान श्रीहरिकी सर्वभूतात्मभावसे आराधना करके उनका परमपद प्राप्त कर लिया है ॥ ११ ॥ ❀ ❀ तुम्हें तो प्रभु भी अपना प्रिय भक्त समझते हैं तथा भक्तजन भी तुम्हारा आदर करते हैं । तुम साधुजनोंके पथप्रदर्शक हो, फिर भी तुमने ऐसा निन्दनीय कर्म कैसे किया ? ॥ १२ ॥ ❀ ❀ सर्वात्मा श्रीहरि तो अपनेसे बड़े पुरुषोंके प्रति सहनशीलता, छोटोंके प्रति दया, बराबरवालोंके साथ मित्रता और समस्त जीवोंके साथ समताका बर्ताव करनेसे ही प्रसन्न होते हैं ॥ १३ ॥ ❀ ❀ और प्रभुके प्रसन्न हो जानेपर पुरुष प्राकृत गुण एवं उनके कार्यरूप लिङ्गशरीरसे छूटकर परमानन्दस्वरूप ब्रह्मपद प्राप्त कर लेता है ॥ १४ ॥ ❀ ❀ बेटा ध्रुव ! देहादिके रूपमें परिणत हुए पञ्चभूतोंसे ही स्त्री-पुरुषका आविर्भाव होता है और फिर उनके पारस्परिक समागमसे दूसरे स्त्री-पुरुष उत्पन्न होते हैं ॥ १५ ॥ ❀ ❀ ध्रुव ! इस प्रकार भगवान्की मायासे सत्त्वादि गुणोंमें न्यूनाधिकभाव होनेसे ही जैसे भूतोंद्वारा शरीरोंकी रचना होती है, वैसे ही उनकी स्थिति और प्रलय भी होते हैं ॥ १६ ॥ ❀ ❀ पुरुषश्रेष्ठ ! निर्गुण परमात्मा तो इनमें केवल निमित्तमात्र है, उसके आश्रयसे यह कार्यकारणात्मक जगत् उसी प्रकार भ्रमता रहता है, जैसे चुम्बकके आश्रयसे लोहा ॥ १७ ॥ ❀ ❀ काल-शक्तिके द्वारा क्रमशः सत्त्वादि गुणोंमें क्षोभ होनेसे लीलामय भगवान्की शक्ति भी सृष्टि आदिके रूपमें विभक्त हो जाती है, अतः भगवान् अकर्ता होकर भी जगत्की रचना करते हैं और संहार करनेवाले न होकर भी इसका संहार करते हैं । सचमुच उन अनन्त प्रभुकी लीला सर्वथा अचिन्तनीय है ॥ १८ ॥

सोऽनन्तोऽन्तकरः कालोऽनादिरादिकृदव्ययः । जनं जनेन जनयन्मारयन्मृत्युनान्तकम् ॥ १९ ॥
न वै स्वपक्षोऽस्य विपक्ष एव वा परस्य मृत्योर्विशतः समं प्रजाः ।
तं धावमानमनुधावन्त्यनीशा यथा रजांस्यनिलं भूतसङ्घाः ॥ २० ॥
आयुषोऽपचयं जन्तोस्तथैवोपचयं विभुः । उभाभ्यां रहितः स्वस्थो दुःस्थस्य विदधात्यसौ ॥ २१ ॥
केचित्कर्म वदन्त्येनं स्वभावमपरे नृप । एके कालं परे दैवं पुंसः काममुतापरे ॥ २२ ॥
अव्यक्तस्याप्रमेयस्य नानाशक्त्युदयस्य च । न वै चिकीर्षितं तात को वेदाथ[1] स्वसम्भवम् ॥ २३ ॥
न चैते पुत्रक भ्रातुर्हन्तारो धनदानुगाः । विसर्गादानयोस्तात पुंसो दैवं हि कारणम् ॥ २४ ॥
स एव विश्वं सृजति स एवावति हन्ति च । अथापि ह्यनहंकारान्नाज्यते गुणकर्मभिः ॥ २५ ॥
एष भूतानि भूतात्मा भूतेशो भूतभावनः । स्वशक्त्या मायया युक्तः सृजत्यत्ति च पाति च ॥ २६ ॥

१. प्रा० पा०—वेदास्य च संभ० ।

तमेव मृत्युममृतं तात दैवं सर्वात्मनोपेहि जगत्परायणम् ।
यस्मै बलिं विश्वसृजो हरन्ति गावो यथा वै नसि दामयन्त्रिताः ॥ २७ ॥
यः पञ्चवर्षो जननीं त्वं विहाय मातुः सपत्न्या वचसा भिन्नमर्मा ।
वनं गतस्तपसा प्रत्यगक्षमाराध्य लेभे मूर्ध्नि पदं त्रिलोक्याः ॥ २८ ॥
तमेनमङ्गात्मनि मुक्तविग्रहे व्यपाश्रितं निर्गुणमेकमक्षरम् ।
आत्मानमन्विच्छ विमुक्तमात्मदृग् यस्मिन्निदम्भेदमसत्प्रतीयते ॥ २९ ॥
त्वं प्रत्यगात्मनि तदा भगवत्यनन्त आनन्दमात्र उपपन्नसमस्तशक्तौ ।
भक्तिं विधाय परमां शनकैरविद्याग्रन्थिं विभेत्स्यसि ममाहमिति प्ररूढम् ॥ ३० ॥
संयच्छ रोषं भद्रं ते प्रतीपं श्रेयसां परम् । श्रुतेन भूयसा राजन्नगदेन यथाऽऽमयम् ॥ ३१ ॥
येनोपसृष्टात्पुरुषाल्लोक उद्विजते भृशम् । न बुधस्तद्वशं गच्छेदिच्छन्नभयमात्मनः ॥ ३२ ॥

अन्वयः—सः जनम् जनेन जनयन् आदिकृत् अन्तकम् मृत्युना मारयन् अन्तकरः कालः अनन्तः अनादिः अव्ययः ॥ १९ ॥ ❀ ❀ परस्य मृत्योः समम् प्रजाः विशतः अस्य स्वपक्षः वा विपक्षः वै एव न अनीशाः भूतसंघाः धावमानम् तम् अनु यथा रजांसि अनिलम् धावन्ति ॥ २० ॥ ❀ ❀ स्वस्थः उभाभ्याम् अपचयोपचयाभ्यां रहितः असौ विभुः दुःस्थस्य जन्तोः आयुषः अपचयम् तथा एव उपचयम् विदधाति ॥ २१ ॥ ❀ ❀ नृप केचित् एनम् कर्म अपरे स्वभावम् एके कालम् परे दैवम् उत अपरे पुंसः कामम् वदन्ति ॥ २२ ॥ ❀ ❀ तात अव्यक्तस्य अप्रमेयस्य च नानाशक्त्युदयस्य चिकीर्षितम् कः वै न वेद अथ स्वसंभवम् ॥ २३ ॥ ❀ ❀ पुत्रक एते धनदानुगाः भ्रातुः हन्तारः न च हि तात दैवम् पुंसः विसर्गादानयोः कारणम् ॥ २४ ॥ ❀ ❀ सः एव विश्वम् सृजति सः एव अवति च हन्ति अथ अपि हि अनहंकारात् गुणकर्मभिः न अज्यते ॥ २५ ॥ ❀ ❀ एषः भूतात्मा भूतेशः भूतभावनः स्वशक्त्या मायया युक्तः भूतानि सृजति च अत्ति च पाति ॥ २६ ॥ ❀ ❀ तात यथा नसि दामयन्त्रिताः गावः वै विश्वसृजः यस्मै बलिं हरन्ति तम् एव मृत्युम् अमृतम् जगत्परायणम् दैवम् सर्वात्मना उपेहि ॥ २७ ॥ ❀ ❀ सपत्न्याः मातुः वचसा भिन्नमर्मा यः पञ्चवर्षः त्वम् जननीम् विहाय वनम् गतः तपसा प्रत्यगक्षम् आराध्य त्रिलोक्याः मूर्ध्नि अङ्ग आत्मदृक् यस्मिन् असत् इदंभेदम् प्रतीयते तम् एनम् मुक्तविग्रहे आत्मनि व्यपाश्रितम् निर्गुणम् एकम् अक्षरम् विमुक्तम् आत्मानम् अन्विच्छ ॥ २९ ॥ ❀ ❀ तदा त्वम् प्रत्यगात्मनि अनन्ते आनन्दमात्रे उपपन्नसमस्तशक्तौ भगवति परमाम् भक्तिम् विधाय शनकैः अहम् मम इति प्ररूढम् अविद्याग्रन्थिम् विभेत्स्यसि ॥ ३० ॥ ❀ ❀ राजन् भूयसा श्रुतेन श्रेयसाम् परम् प्रतीपम् रोषम् यथा अगदेन आमयम् संयच्छ ते भद्रम् ॥ ३१ ॥ ❀ ❀ लोकः येन उपसृष्टात् पुरुषात् भृशम् उद्विजते आत्मनः अभयम् इच्छन् बुधः तद्वशम् न गच्छेत् ॥ ३२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

ननु पित्रादिः सृजति पालयति राजादिर्निहंति च चोरादिर्न त्वीश्वरस्तत्राह स इति । जनेन पित्रादिना जनं पुत्रादिं जनयन्नादिकृत् अंतकं चोरादिकं तन्मृत्युहेतुना राजादिना मारयन्नंतकरः स्वयं त्वनंतोऽनादिश्च अव्ययोऽक्षीणशक्तिश्च । अयं भावः—पित्रादयोऽन्यत उत्पत्त्यादिमंतो न स्वातंत्र्येण कारणं किं त्वीश्वर एव तन्नियंता सर्वकारणमिति ॥ १९ ॥ ❀ ❀ न चैवं कुर्वतोऽपि वैषम्यप्रसक्तिः—पक्षापाताभावादित्याह द्वाभ्याम् । न वा इति । मृत्युरूपस्य समं यथा भवति तथा प्रजाः कर्मभूता विशतः तस्य साम्येऽपि भूतेषु फलवैषम्यं तत्कर्मवशादिति सदृष्टांतमाह । तं धावंतमन्वनीशाः कर्माधीना भूतसंघा धावंति अनिलं धावंतमनु रजांसीव तत्र यथा रजसां तमःप्रकाशजलाग्न्यादिप्रवेशेऽपि नानिलस्य वैषम्यमेवमीश्वरस्यापीति भावः ॥ २० ॥ ❀ ❀ अपचयमकालमृत्युम् । उपचयं कालमृत्योरपि रक्षाम् । यद्वा अपचयं मशकादावुपचयं देवादौ । स्वस्थत्वादुभाभ्यामुपचयापचयाभ्यां रहितोऽसौ विभुर्दुःस्थस्य कर्माधीनस्य जन्तोर्जीवस्य विदधाति ॥ २१ ॥ ❀ ❀ एवंभूतश्चेश्वरः सर्ववादिसंमतो विवादस्तु नाममात्र इत्याह केचिदिति । पुंसः कामं वात्स्यायनादयः । श्रुतिश्च—"कामोऽकार्षीत्कामः करोति कामः कर्ता कामः कारयिता" इत्यादिः ॥ २२ ॥ ❀ ❀ ननु कर्मादीनां जडत्वादिना स्वरूपतोऽपि भिन्नत्वात्कथमैकमत्यं तत्राह । अव्यक्तस्यात एवाप्रमेयस्य । तथाप्यस्य सत्त्वे हेतुः । नानाशक्तीनां महदादीनामुदयो यस्मात् ।

१. प्रा० पा०—मेवम० ।

चिकीर्षितमेव तावत्कोऽपि न वेद अथ स्वस्य संभवो यस्मात्तमीश्वरं को वेद न कोऽपि। अद्धेति पाठे साक्षात्। अतस्तस्य तत्त्वज्ञानाभावाद्विशेषांशे विवाद इत्यर्थः। तथा च श्रुतिः-"को अद्धा वेद क इह प्रवोचत्कुत आजाता कुत इयं विसृष्टिः। अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव॥" इत्यादिः॥ २३॥ ❀ ❀ ईश्वरत्वादस्य प्रकृतोपयोगमाह। न चैते भ्रातुर्हंतारः। अत्रोक्तमेव हेतुमनुवदति। विसर्गादानयोर्मृत्युजन्मनोः। यद्वा विसर्गः सृष्टिः आदानं संहारः। दैवमीश्वर एव हि कारणम्॥ २४॥ ❀ ❀ तथापि निर्लेपतामाह। स एवेति॥ २५॥ ❀ ❀ अनहंकारत्वे हेतुमाह। एष इति॥ २६॥ ❀ ❀ सत्यमीश्वर एव कर्ता तथाप्यहंकारादि मया न त्यक्तुं शक्यमिति चेदत आह तमेवेति चतुर्भिः। मृत्युमभक्तानां भक्तानां त्वमृतम् उपेहि शरणं गच्छ तमेवेत्यवधारणे हेतुः। यस्मै नसि नासिकायां दामभिर्बद्धा गाव इव विश्वसृजोऽपि नामभिर्यंत्रिता बद्धाः संतो बलिं हरंति तत्कारितं कर्म कुर्वंतीत्यर्थः॥ २७॥ ❀ ❀ तदाराधनं च तव सुशकमेवेत्याह। यः पंचवर्षः स त्वं यमाराध्य त्रिलोक्या मूर्ध्नि पदं स्थानं लेभे लब्धवानसि इदानीं तमेवान्विच्छावलोकयेत्युत्तरेणान्वयः। प्रत्यंचि अक्षाणि इन्द्रियाणि यस्मिन्। क्रियाविशेषणं वा॥ २८॥ ❀ ❀ हरिं ध्यायंतं प्रत्याह। हे अंग ध्रुव मुक्तविरोधे आत्मनि मनसि व्यपाश्रितमवस्थितं परमात्मानमात्मदृक् प्रत्यग्दृष्टिः सन्। इदंभेदमिति समस्तं पदम्। अयं दृश्यमानो भेदो यस्मिंस्तदिदंभेदमसदेव विश्वं यस्मिन्नधिष्ठाने प्रतीयते॥ २९॥ ❀ ❀ तदन्वेषणफलमाह। त्वं तदा अन्वेषणकाल एव॥ ३०॥ ❀ ❀ उपदेशसारमाह संयच्छेति द्वाभ्याम्। प्रतीपं प्रतिकूलम्। अगदेनौषधेन यथा रोगं नियच्छति॥ ३१॥ ❀ ❀ येन रोषेणोपसृष्टाद्व्याप्तात्॥ ३२॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पुनराक्षिपति—नन्विति। अत्राशयमाह—अयं भाव इति। अव्ययः चिंतामणिरिव सर्वप्रसवितापि व्ययशून्यः॥ १९॥ ❀ ❀ तर्हि विषमरस चेदाह—न चेति। तत्कर्म तथात्वात्तेषां भूतानां कर्मण एव तथात्वाद्वैषम्यजनकत्वात्। इति भाव इति। ईश्वरस्तु—जडानां कर्मणां प्रेरकतया तदनुसारेणैव फलं ददाति न स्वतोऽतस्तत्र वैषम्यं नास्तीत्याशयः॥ २०॥ ❀ ❀ आयुरादिफलयाचकत्वेनांतादिकर इत्युक्तं स्पष्टयति। अकालमृत्युं दुर्मृतिं "शृंगिदंष्ट्रिगरव्यालनीराग्न्युद्वन्धनैस्तथा। विद्युन्निर्घातवृक्षैश्च विप्रैश्चैवात्मना मृताः॥ व्रणसंजातकीटाश्च म्लेच्छैश्चैव हता नराः। पापमृत्यव एवैते ह्यन्येपि बहवस्तथा॥ दुर्मृतिः पापमरणमकालमरणं तथा। पर्याया एव विज्ञेया न कालेन विना मृतिः" इति पराशरादिभिरुक्तत्वात्। कालमृत्युस्त्वायुर्षते स्वभावत एव देहपातः। हानिवृद्धिरूपप्रसिद्धाक्षरार्थत्यागेन तंत्रातरावलंबनेन चोपचयापचयपदव्याख्याने गौरवं मत्वाह—यद्वेति। आदिना दंशादिग्रहः। मशकादीनामेकस्मिन्नेव दिवसेऽनेकजन्मलाभोपलंभादपचयत्वमेव। द्वितीयादिना गंधर्वादिग्रहः, देवादीनां यावदधिकारस्थितिश्रवणात् स्वस्थत्वात्स्वरूपस्थितिमत्त्वात्। असाविति। प्रकृतपरामर्शी कालशक्तिरीश्वर इत्यर्थः॥ २१॥ ❀ ❀ एवंभूत उपचयापचयरहितः। केचिन्मीमांसकाः। अपरे चार्वाकादयः। एके पौराणिकादयः। परे मौहूर्तिकाः। दैवं ग्रहादिरूपां देवताम्। अपरे वात्स्यायनादयः। आदिना भारतादिग्रहः। कामस्य सर्वहेतुत्वे प्रमाणमाह—श्रुतिश्चेति कामः संकल्पः। नृपेति। एते वादा नृपत्वात्त्व श्रुतप्राया एव राज्ञां सर्वविधविद्वत्संगस्य सुलभत्वादित्यभिप्रायः। अतो ज्ञानाभावात्। इत्यर्थ इति। अनेकविधवादस्तत्पदार्थतात्पर्यापरिज्ञानेनैवेति ध्येयम्। वस्तुतस्तु तत्तन्नाम्नैव भेद इति। एनं प्रकृतम्। अन्वादेशत्वादेतद एनदादेशः॥ २२॥ ❀ ❀ अत्राक्षिपति—नन्विति। अव्यक्तस्य कैरपि बलबुद्ध्यादिभिर्व्यक्तीकर्तुमशक्यस्य अत एव अव्यक्तत्वादेव। अप्रमेयस्य प्रत्यक्षादिप्रमाणैः प्रमातुमशक्यस्य नानाशक्तीनां कालकर्मस्वभावकामादीनामुदयो यस्मादिति। तस्यैकैकां शक्तिमाश्रित्यैव विवदमानानां तेषां शक्तिमति तस्मिन्वस्तुतो नास्त्येव वाद इति भावः। अथास्येत्यर्थः। चिकीर्षितमपि यस्य न ज्ञायते तस्य ज्ञानं तु कथं स्यादिति। तदुक्तं भीष्मेण "न ह्यस्य कर्हिचिद्राजन्पुमान्वेद विधित्सितम्। यद्विजिज्ञासया युक्ता मुह्यंति कवयोऽपि ही" ति। तीर्थस्तु—'को वेदाद्धास्य संभवम्' इति पाठमाह—को ब्रह्माऽस्य संभवं वेद सोप्यद्धा न जानातीति व्याचख्यौ च। तदपरिज्ञाने प्रमाणमाह—तथा चेति। सर्ग उत्पत्तिस्तद्विरुद्धो विसर्गो मृत्युः॥ २३॥ ❀ ❀ आदानमत्र देहस्वीकारः विसर्गस्य सृष्टिपरत्वादादानस्य च संहारपरत्वादाह—यद्वेति। "आदानं स्वीकृतौ नाशे विसर्गः सृष्टिदानयोः" इति स्वाम्युक्तेः। पुत्रस्य कं सुखं येन स पुत्रकः पौत्रस्तत्संबुद्धौ तथा। तव हिंसादिकर्मपरत्वे तस्य सुखं न स्यादिति भावः॥ २४॥ ❀ ❀ तथापि विसर्गादानयोर्हेतुत्वेपि कर्दमक्षेत्रप्रवृत्तदेवदत्तवद् गुणकर्मभिर्गुणकार्यभूतैः सृष्ट्यादिभिरस्य लेपो नास्ति अहं कर्त्तासीत्याद्यभिमानाभावात्॥ २५॥ ❀ ❀ मायया युक्तः मायया बहिरंगत्वेन स्वरूपशक्तित्वाभावात्तत्कार्येषु तस्याहंकारो नोदयत इति भावः। भूतानामात्मा कारणमीशो नियामकः भावनस्तद्रूपतापादकस्तत्र हेतुः स्वशक्त्येति संदर्भः॥ २६॥ ❀ ❀ अतिप्रियत्वादाह—तातेति। यद्वा—तातस्य पितुर्दैवमुपास्यम्। इत्यर्थ इति। "सृजामि तन्नियुक्तोहं हरो हरति तद्वशः" इत्याद्युक्तेरिति भावः। तत्प्रपत्तिं विना ज्ञानेनाहंकारापगमो दुःशक इति भावः॥ २७॥ ❀ ❀ प्रत्यंचि प्राप्तानि। तत्र सर्वेन्द्रियप्राप्तिमशक्यां मत्वाह—क्रियाविशेषणं वेति। तीर्थस्तु—प्रति प्रतिगतमतींद्रियं यस्य तमनेन मत्क्रियमाणं कर्म नासौ द्रक्ष्यतीति प्रत्युक्तम्॥ २८॥ ❀ ❀ अयं भेदोऽयं शत्रुरयं मित्रादिरित्ययंशब्दनिर्दिष्टो भेदः। यस्मिन्ननिविष्टे सति असदभद्रमेवारोचक-

मेवेति चक्रवर्ती ॥ २९ ॥ ❀ ❀ तदा पंचवर्षवयसि किमिदं स्मरसीति "अभिज्ञावचने लट्" इति। भूतकाल एव लडिति विश्वनाथः ॥ ३० ॥ ❀ ❀ व्यावहारिकलोकमनुकुर्वंस्तादृशेऽपि भ्रातरि प्रणयं लोके प्रथयन्नप्यपि बहिरेव रोषं धत्से, तथापि मदाज्ञया तमपि संयच्छापाकुरु। श्रुतेन मदुपदेशवाक्येन। आमयमिवेति। त्वादृशानां भक्तानां लोके प्रतिष्ठाप्रख्यापनमपि रोग एवेति भावः ॥ ३१ ॥ ❀ ❀ लोक उद्विजते क्रोध्ययमेतत्पार्श्वे न गंतव्यमुपहासेप्ययं प्रहरिष्यतीति बिभेतीत्यर्थः। तद्वशं रोषवशम्। अभयं गुणातीतत्वं "यः समुत्पतितं देह आकाशान्मन्युमुल्बणम्। आत्मजिज्ञासया यच्छेत्स गुणानतिवर्त्तते" इति प्रचेतसः प्रति पितामहोक्तेः ॥ ३२ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

कालशक्तेस्तदिच्छावशत्वेनानुयोक्तव्यत्वाभावादचिन्त्यत्वमित्यर्थः। उत्पत्त्यादौ पित्रादीनां प्रयोज्यत्वमेव न तु प्रयोजकत्वं परतन्त्रत्वादिति भावं व्याचष्टे। अयं भाव इति ॥ १९ ॥ ❀ ❀ एवं स्वातन्त्र्येणोत्पत्त्यादि कुर्वतोऽपि तस्य अन्तर्यामिणः तेषां तेषां पुण्यपापादिकर्मणां तथात्वाद्वैषम्यम् ॥ २० ॥ ❀ ❀ अपचयोपचयशब्दयोर्ह्रासवृद्धिवाचकत्वात् मृत्युरक्षयोर्लाक्षणिकत्वमतो यद्वेति अपचयं ज्ञानादिह्रासमुपचयं ज्ञानादिवृद्धिम् ॥ २१ ॥ ❀ ❀ एवंभूतः जडकर्मफलप्रदः केचिन्मीमांसकाः देवतां कर्म्माधीनां मन्यमानाः, अपरे लोकायतिकाः स्वभावं संस्कारम्, एके कालोपासकाः, परे ज्योतिर्विदः दैवं ग्रहादि, पुंसः कामं मनसिजं पुत्रादिकमकार्षीत् कर्त्ता करिष्यति कारयिता प्रयोजकः ईश्वरधर्म्मान् कर्तृत्वादीन् भ्रान्त्या कर्मादिष्वेवारोपयन्तीत्यर्थः। तस्माज्जगत्कर्त्तरीश्वरे विवादाभावेऽपि स्वरूपानुभवाभावान्नाममात्र एव विवाद इति तथावतारितम् ॥ २२ ॥ ❀ ❀ कर्मणो जडत्वमादिना स्वभावस्य परिणामहेतुत्वं कालस्य गुणक्षोभकत्वं ग्रहादेस्तत्तल्लग्नाद्यधिपत्वं कामस्य स्त्रीसङ्गहेतुत्वं गृह्यते। तेन स्वरूपतोऽपि परस्परं भिन्नत्वात्, अपिना ईश्वरभेदस्समुच्चीयते अथ तदा तत्त्वज्ञानाभावात्स्वरूपस्य याथार्थ्यानुभवाभावात्, तथा चेश्वरस्य दुर्ज्ञेयत्वे प्रमाणं श्रुतिः प्रावोचद्यथावत्कोऽवर्णयत् कुतः केन कृतेयं विविधा सृष्टिः कुत उपादानादायाता प्राप्ता, नच देवैः कृतेति वाच्यम्, अस्य देवादिसर्वविश्वस्य विसर्ज्जनेन हेतुना देवा अपि अर्वाक् अर्वाचीना एव, अथ अतः सर्वमिदं यत आवभूव तं भगवन्तं को वेदेति श्रुत्यर्थः ॥ २३ ॥ ❀ ❀ प्रासंगिकस्येश्वरवर्णनस्य प्रकृते यक्षवधनिवृत्तौ उपयोगमुपकारं न वै त इति। उक्तमेव निमित्तमात्रमित्यादिना वर्णितमेव। विसर्गादानशब्दयोर्मृत्युजन्मार्थेऽप्रसिद्धत्वाद्यद्वेति हि यतः ॥ २४ ॥ ❀ ❀ कारणे श्रमादिविकारलेपदर्शनात् तथापि कारणत्वेऽपि अनहंकारात् लेपहेतुप्राकृताहंकाराभावात् गुणैः रजआदिभिः कर्मभिः सृष्ट्यादिभिश्च ॥ २५ ॥ ❀ ❀ मायया युक्त इति मायायाः स्वाश्रयाव्यामोहकत्वात् विषयस्यैव मोहकत्वादनहंकारत्वमिति भावः ॥ २६ ॥ ❀ ❀ कर्मण्येव बलित्वाध्यवसानात् इत्यर्थं इत्युक्तम् ॥ २७ ॥ ❀ ❀ प्रत्यञ्चि विषयप्रातिकूल्येनाभिमुखगामीनीन्द्रियाणि यस्मिन् तं भगवन्तं, क्रियाविशेषणपक्षे निरुद्धेन्द्रियं यथा स्यात्तथेति ॥ २८ ॥ ❀ ❀ प्रत्यग्दृष्टिः असज्जडानात्मभ्यः प्रातिकूल्येनाञ्चति प्रकाशते इति प्रत्यक् परमात्मा तस्मिन्नेव दृष्टिर्यस्य तथाभूतस्सन् इदंभेदमित्येकं पदम् असदेव मिथ्यैव प्रतीयते रज्ज्वां भुजगवदित्यद्वैतवादिनः। तत्रायं भेदः शत्रुमित्रादिरूपः वैष्णवानां मते तु यस्मिन्भगवति स्फुरिते सति असदपुरुषार्थः प्रतीयते 'चतुर्वर्गं तृणोपममि'त्युक्तेः ॥ २९ ॥ ❀ ❀ आनन्दमात्र इति, विशेष्यं शक्तयो विशेषणानि विशिष्टो भगवान्। यद्यपि "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः" इत्यादिप्रामाण्यात् ध्रुवस्य श्रीभगवत्साक्षात्कारात् हृदयग्रन्थिर्नास्त्येव तथापि प्रतीत्यभिप्रायेण तथोक्तम्। वस्तुतस्तु 'अभिज्ञावचने लट्' इति भूतकाल एव लट्, व्यभिन इत्यर्थः। यद्यपि स्मृतिवाच्युपपदविरहात् 'स्मरसि कृष्ण गोकुले वत्स्यामः' इत्युदाहरणान्न तथा प्रतिपत्तिस्तथापि यः पञ्चवर्षो जननीं विहायेत्यत्र तदेत्यत्र च स्मृतेः प्रतिपादनात् स्मरसीति गम्यमेव परोक्षवादत्वात् ॥ ३० ॥ ❀ ❀ श्रुतेन मदुपदेशेन ॥ ३१-३२ ॥

## श्रीमद्वीरराघवव्याख्या

प्रयोजयितृत्वमेव विशदयति स इति। सः कालः कालशरीरकः परमात्मा जनेन पित्रादिना प्रयोज्यकर्त्रा जनमुत्पत्त्युन्मुखान् पुत्रादीन् जनयन् आदिकृत् अन्तकं विनाशोन्मुखं मृत्युना प्रयोज्यकर्त्रा मारयन् स्वयं त्वनादिरुत्पत्तिरहितः अव्ययः नाशरहितः अनन्तः अन्तकरः। पित्रादिद्वारा जनकः मृत्व्यादिद्वारा अन्तकरः, न तु साक्षात्। अतः साक्षादकर्तृत्वं सद्वारकं कर्तृत्वं चैकस्मिन् विविधविचित्रानन्तशक्तिमतीश्वर उपपन्नमिति भावः ॥ १९ ॥ ❀ ❀ ननु प्रयोजयितृत्वमपि कथमीश्वरस्योपपन्नं वैषम्यनैर्घृण्यादिप्रसंगादित्याशङ्कायां तत्कर्मानुरूपं प्रयोजयितुः पक्षपाताभावादुपपन्नमेव प्रयोजयितृत्वमित्याह न वा इति। मृत्योः संसारात् परस्यास्पृष्टसंसारस्येत्यर्थः। यद्वा मृत्युशरीरकस्य "यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरम्" इति श्रुतेः परस्य परमात्मनः समं यथा भवति तथा प्रजाः कर्मभूताः विशतः तत्तत्कर्मानुरूपनियमनार्थमन्तरात्मतया प्रविशतः न स्वपक्षः नापि विपक्षो वास्ति। पक्षपाताभावं दृष्टान्तेनोपपादयति तमिति। यथा रजांसि धावमानमनिलम् अनुसृत्य धावन्ति तथा अनीशा अनियन्तारः कर्मानुरूपनियम्या इत्यर्थः। भूतसंघास्तत्तत्कर्मानुसारं धावमानं नियन्तारं परमात्मानमनुसृत्य धावन्ति प्रवर्त्तन्ते यथा हर्म्यतलस्थभ्रादिषु रजांस्यनुनेतुर्न वायोर्वैषम्यमस्त्येवं परमात्मन्यपीत्यर्थः ॥ २० ॥ ❀ ❀ कर्मानुरूपनियमनमेवोपपादयति आयुष इति।

विभुः सर्वान्तरोऽसौ भगवान् जन्तोः कर्मवश्यस्य कर्मायत्तसुखदुःखादिभाजः आयुषः अपचयं ह्रासं तथा उपचयं वृद्धिं च स्वयमुभाभ्यामुपचयापचयाभ्यां रहितः अत एव स्वस्थः स्वेनैव हेयप्रतिभटकल्याणैकतानस्वभावेन स्थितः विदधाति करोति, एवमुत्पत्तिमरणयोर्देहादिवैचित्र्यं सुखदुःखयोश्चाद्वारकं कारणं तत्तत्कर्मैव। ईश्वरस्तु प्रयोजयितृत्वकारणमित्युक्तं भवति ॥ २१ ॥ ❀ ❀ एवं सर्वभूतान्तरात्मानं स्वसंकल्पकृतं जगदुदयविभवलयं सर्वज्ञत्वसर्वशक्तित्वाद्यपरिमितोदारगुणसागरं तत्तत्कर्मानुरूपं जगन्नियन्तारं सर्वभूतसुहृदं परमात्मानमविज्ञाय एतमेव कालकर्मादिरूपेण विवदन्ते केचिदित्याह केचिदिति। एवं सुखदुःखादिहेतुं केचित् कर्म पुण्यापुण्यरूपं कर्मेति वदन्ति। हे नृप! अपरे स्वभावं प्रकृतिपुरुषयोः स्वरूपान्यथाभावः स्वभावान्यथाभावरूपपरिणामस्वभावं वदन्ति। एके कालं सत्त्वादिगुणक्षोभहेतुं कालं वदन्ति। परे पुनर्दैवं विधिम्। अपरे उत अपरे पुनः पुंसः परमपुरुषस्य कामं सङ्कल्पं वदन्ति। अयमेव पक्षः श्रेयान् पुण्यापुण्यरूपस्य कर्मणस्तज्जन्यादृष्टस्यापि भगवन्निग्रहानुग्रहरूपत्वेन तत्संकल्पानतिरिक्तत्वात् कालस्वभावयोरपि तत्संकल्पायत्तत्वात्। पुंसो जीवस्य काम इति व्याख्यानं त्वयुक्तं दुःखविषयस्य कामानुपपत्तेः। अतो यथोक्तार्थ एव साधुः ॥२२॥ ❀ ❀ पुंसः काममिति पक्षस्यैव साधुत्वं ज्ञापयन् कामस्य दुर्ज्ञेयत्वमाह अव्यक्तस्येति। हे तात! अव्यक्तस्य व्यक्तैरिन्द्रियैर्न व्यज्यत इत्यव्यक्तः अत एवाप्रमेयस्य देशादिभिरपरिच्छिन्नस्य ऐन्द्रियकं हि सर्वदेशकालादिभिः परिच्छिद्य गृह्यते। अनेन विशेषणद्वयेन प्रकृतिपुरुषवैलक्षण्यसिद्धिः, प्रकृतेर्व्यक्तत्वात्पुरुषस्याणुत्वात्। उभयवैलक्षण्यापादकं विशेषणान्तरमाह नानाशक्तीनां विविधशक्तीनां "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतेः, उदयः अभिव्यक्तिर्यस्मात्। तस्य भगवतः चिकीर्षितं कर्तुमिच्छाविषयं कथंभूतं स्वसंभवं स्वस्य लोकस्य संभवं जगदुत्पत्तिरूपं संभवग्रहणं संहारादीनामप्युपलक्षणम् अद्धा तत्त्वतः को लोको वेद न कोऽपीत्यर्थः। प्रकृतिपुरुषविलक्षणस्यानन्तविविधशक्तेः परमपुरुषस्य कर्तव्यतासंकल्पविषयं जगदुत्पत्तिस्थितिसंहारादिरूपं व्यापारम् एवंविधमिति तत्त्वतः कोऽपि न जानातीत्यर्थः। तथा च श्रूयते 'क इत्थावेद यत्र सः, क इह प्रावोचत् कुत आयाता कुत इयं विसृष्टिरि'त्यादिका। अत्र भगवत्स्वरूपस्यैवातीन्द्रियत्वात्संकल्पविषययोः सुतरां दुर्विज्ञेयत्वज्ञापनायाऽव्यक्तस्येत्युक्तम् ॥ २३ ॥ ❀ ❀ एवमुपपादितं भगवत एवोत्पत्तिमरणादिनिमित्तत्वं प्रकृते उपसंहरति न चैत इति। हे पुत्रक! एते धनदस्य कुबेरस्यानुगा भृत्याः त्वद्भ्रातृहन्तारो न भवन्ति, किंतु पुंसः कर्मवश्यस्य विसर्गादानयोः उत्पत्तिमरणयोर्दैवमीश्वर एव हि कारणम् ॥ २४ ॥ ❀ ❀ नन्वीश्वरश्चेदुत्पत्त्यादिकारणं तर्हि जीववत्सोऽपि सत्त्वादिगुणविशिष्टत्वात् तत्प्रयुक्तजगद्व्यापाररूपक्रियाश्रयत्वाच्च गुणकर्मभिर्बध्येत तत्राह स इति। यद्यपि स एवेश्वरो विश्वं सृजति अवति रक्षति हन्ति च, तथापि अनहंकारात् देहात्मनोस्तादात्म्याभिमानोऽहंकारः तदभावात् गुणकर्मभिः गुणानां सत्त्वादीनां कर्मभिः गुणकार्यभूतैः कर्मभिर्नाज्यते न बध्यते। यद्यपि जगदुत्पत्त्यादीन् गुणकार्यभूतान् व्यापारान् करोतीश्वरः, तथापि स्वशरीरभूतप्रकृतिपुरुषात्मकेषु देवादिपदार्थेषु स्वसंकल्पकृतोत्पत्तिस्थितिलयेषु तादात्म्याभिमानाभावात् स्वयमजहत्स्वभावत्वाच्च न कर्मभिर्बध्यते, जीवस्तु कर्मणा संकुचितज्ञानत्वेन जहत्स्वाभाव्याद्देवादिशरीरेषु स्वतादात्म्याभिमानाच्च बध्यत इत्यर्थः ॥ २५ ॥ ❀ ❀ एवं भ्रात्रादिशरीराणामुत्पत्तिमरणादिनिमित्तं निमित्तस्य चानन्तविविधविचित्रशक्तियोगत्वमत एव नित्यमुक्तत्वं चाभिहितम्। अथ य एवंभूतो भगवांस्तमेव रागद्वेषादिभिर्विमुक्तस्त्वं सर्वात्मना भजस्वेत्याह एष इत्यादिना। य एष भगवान् भूतात्मा भूतानां देवमनुष्यादीनामात्मा स किं जीवः नेत्याह। भूतेशः "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" इत्युक्तरीत्या चिदचिदात्मकभूतानामन्तः प्रविश्य तत्तत्कर्मानुरूपं नियन्ता न केवलं भूतेश एव अपितु तत्कारणं चेत्याह भूतभावनः। भूतानि भावयत्युत्पादयतीति भूतभावनः, यद्वा भूतानि भावयति सृष्ट्यादिभिः सत्तादिमन्ति करोतीति भूतभावनः तथा भूतानां सत्तास्थितिप्रवृत्तिहेतुरित्यर्थः। कारणत्वमपि न निकृष्टस्वरूपेण अपितु विशिष्टविशेषेणेत्याह। स्वशक्त्या कार्योपयोगिस्वापृथक्सिद्धविशेषणभूतया मायया युक्तः 'माया वयुनं ज्ञानं' ज्ञानपर्यायोऽप्यत्र मायाशब्दो जीववाची। अनेन निर्विकारत्वश्रुतिविरोधोऽपि परिहृतः। विकाराणां पुरुषगतत्वात् भूतानि सृजति अत्ति संहरति पाति रक्षति च ॥ २६ ॥ ❀ ❀ तमुक्तविधं मृत्युमभजतां बंधकं भजतां त्वमृतं मोचकं दैवं स्वतेजसा विद्यमानं जगतां परमयनं प्राप्यं प्रापकमाधारं च सर्वात्मना सर्वप्रकारेण मनोवाक्कायैरित्यर्थः, सर्वात्मकपरब्रह्मभावेनेति वा। यद्वा प्राप्यं प्रापकमाधारश्चेति बुद्ध्या एतदेव जगत्परायणमित्यनेनाभिप्रेतम् उपेहि शरणं गच्छ। युक्तं चैतदित्याह। यस्मै भगवते विश्वसृड्ढारश्चतुर्मुखमरीच्यादयः बलिं पूजां हरन्ति कुर्वन्ति। विश्वसृजो हि हरन्ति इत्यनेन सर्वेश्वरेश्वरत्वमुक्तं विश्वसृजो हि सर्वेषामीश्वरास्तेषामपि पूज्य इति तत्सिद्धिः। ननु विश्वसृजो हरन्तु बलिं, तस्यापि गोत्राह्मणादिपूज्यत्वादित्याशङ्क्यां निराकर्तुं दृष्टान्तमाह। गावो बलीवर्दा यथा नसि नासिकायां दाम्ना सूत्रेण यन्त्रिताः प्रोताः पुरुषस्य कर्म कुर्वन्तस्तथा तद्वशं गता बलिं हरन्ति। अनेन सर्ववशित्वं सिद्धं यस्य वशे सर्वं वर्त्तते स सर्ववशीत्युच्यते। तथा च श्रूयते "सर्वस्येशानः एव भूतपालः एष सेतुर्विधरणः एषां लोकानामसंभेदाय न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गं स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" इति। यो यदधीनस्तस्य तदनुवर्त्तनं युक्तमिति भावः ॥ २७ ॥ ❀ ❀ भवतु विशिष्य तद्भजनमेव युक्तमाबाल्यं तत्रैवाभ्यस्तत्वादित्याह य इति। यो भवान् पञ्चवर्षाणि अस्य पञ्चवर्षः सन् सपत्न्या मातुर्वचसा भिन्नं मर्म हृदयं यस्य सः जननीं सुनीतिं विहाय वनं प्रविष्टस्तत्र तत्र प्रत्यगक्षं प्रत्यञ्चि अक्षाणीन्द्रियाणि यस्मिन् कर्मणि यथा तथा अव्याहतेन्द्रियमित्यर्थः। क्रियाविशेषणमिदं यं भगवन्त-

माराध्य विलोक्य मूर्ध्नि उपरिष्टात् पदं स्थानं लेभे लब्धवान् ॥ २८ ॥ ❁ ❁ तमेवात्मानं परमात्मदृक् तच्छरीरभूतजीवात्मदर्शी अन्विच्छ अनुवर्तस्वेत्यन्वयः । अन्वेषणप्रकारमेवाह—अङ्ग हे ध्रुव ! यस्मिन् जीवात्मनि इदमसत् देवमनुष्यादिरूपं सततपरिणामिवस्त्वसच्छब्दवाच्यं सततपरिणामिनो वस्तुन उत्तरोत्तरावस्थाप्राप्तौ पूर्वपूर्वावस्थात्यागात्सर्वदा सदिति व्यपदेष्टुमनर्हत्वात् । तदुक्तं श्रीवैष्णवे पुराणे "महीघटत्वं घटतः कपालः कपालिका चूर्णरजस्ततोऽणुः । जनैः स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तुसत् ॥ सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् । अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते । तत्तु नाशि न संदेहो नाशिद्रव्योपपादितम् ॥" इति विश्वं प्रतीयते असदित्यस्य विशेषणत्वे तु अस्मिन् जीवे इदं विश्वमसत् प्रतीयते अविद्यमानमेव प्रतीयते स्वतो जीवे देवमनुष्याद्यात्मकं विश्वमविद्यमानमपि पुण्यापुण्यरूपकर्मणा प्रतीयते नतु मिथ्या प्रतीयत इत्यर्थः । तस्मिन् मुक्तविग्रहे निरवयवे आत्मनि जीवे व्यपाश्रितं व्यवस्थितं निर्गुणं निरस्तहेयगुणमेकं निस्समाभ्यधिकमक्षरं निर्विकारं विमुक्तं नित्यमुक्तं तमात्मानं एवमुक्तवक्ष्यमाणप्रकारेण अन्विच्छेत्यर्थः ॥ २९ ॥ ❁ ❁ ननूपासित एव मया भगवान् किमधुना भजस्वेत्युच्यते इत्याशङ्कायां मुनिराह । ममाभिमानेन त्रिवर्गलिप्सुना त्वयोपासितो भगवानत एव प्राकृतस्थानमगाः । इदानीं निर्हेतुकभक्तिं विधाय मोक्ष्यसीत्याह त्वमपि प्रत्यक् जीवस्तस्यात्मनि जीवान्तरात्मनि प्रत्यक् आत्मा शरीरं यस्येति वा पूर्णषाड्गुण्ये त्रिविधपरिच्छेदरहिते आनन्दमात्रे आनन्दैकरसे न तु क्वापि जड इत्यर्थः, उपपन्नसमस्तशक्तौ उपगताशेषज्ञानबलक्रियादिशक्तौ परमपुरुषे त्वं परमां अहैतुक्यव्यवहितेत्युक्तविधां भक्तिं शनकैः समाहितचित्तः विधाय तदा ममाहमभिमानाभ्यां रूढमूलमविद्यात्मकं ग्रन्थिं विशेषेण निर्मूलं छेत्स्यसि ॥ ३० ॥ ❁ ❁ यदर्थं तत्त्वोपदेशस्तमाह संयच्छेति । श्रेयसां पुरुषार्थानां परं केवलं प्रतीपं प्रतिकूलं रोषं भूयसा श्रुतेन तत्त्वश्रवणेन अगदेन औषधेन आमयं रोगं यथा तथोपसंहरेत्यर्थः ॥ ३१ ॥ ❁ ❁ रोषस्य श्रेयःप्रतीपत्वमेव प्रपञ्चयति । येन रोषेणोपसृष्टाद् व्याघ्रात्पुरुषाल्लोकः भृशं नितरामुद्विजते बिभेति । लोकोद्वेजनात् अधर्मात् पुरुषार्थनाश इति भावः, आत्मनः स्वस्याभयं निःश्रेयसमिच्छन् बुधो विद्वान् तद्वशं न गच्छेत् न प्राप्नुयात् ॥ ३२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

दुर्विभाव्यत्वमाह सोऽनन्त इति । य एवंविधः स हरिरस्य विश्वस्यान्तकरः स्वयमनन्तः स्वमारकमृत्युरहितः "अन्तोऽस्त्र्यवसिते मृत्यौ" इति यादवः, देवदत्तवत्स्वयं दण्डमादाय हन्ति किं नेत्याह काल इति । आयुरादिफलपाचकत्वात् । पूर्वापरत्वविशेषोऽपि नास्तीत्याह अनादिरिति । न केवलमन्तकरः किंत्वादिकृच्च चौरवत्संवृतो न करोत्यतोऽव्यय इति । अव्ययोऽसंवृतः निमित्तमात्रत्वं स्पष्टयन्नुक्तमेव द्रढयति जनमिति । जनेन पित्रादिशरीरेण जनं पुत्रादिशरीरं जनयन्नात्मनोऽधीनेन मृत्युना कालरूपेण मारयन् शरीरवियोगं कारयन्वर्तत इत्यन्वयः ॥ १९ ॥ ❁ ❁ एवं प्रवर्तमानस्य नैर्घृण्यादिदोषापत्तिर्नास्ति समत्वादित्याह न वा इति । वा इत्यनेनावैषम्यादिसूत्रप्रसिद्धिं दर्शयति समं पुण्यपापानुसारेण । मृत्योः परस्य विलक्षणस्य । रुद्रादीनां मारकत्वादिकमेतत्कटाक्षोपक्षिप्तमिति भावेनाह । तं धावमानमिति ॥ २० ॥ ❁ ❁ आयुरादिफलपाचकत्वेनान्तादिकर इत्युक्तम् । स्पष्टयति आयुष इति ॥ २१ ॥ ❁ ❁ बहवः कालकर्मादिकमस्योत्पत्त्यादेः कारणमिति संगिरन्ते । तत्पदार्थतात्पर्यापरिज्ञानादिति संतोष्टव्यं, यतस्तत्तद्वस्तुषु स्थित्वा तत्तत्क्रियार्थप्रवर्तकत्वेन तत्तन्नाम्नायमेवोच्यत इति भावेनाह केचिदिति । केचिन्मीमांसकाः अपरे चार्वाकादयः एके पौराणिकादयः परे मौहूर्तिकाः अपरे वात्स्यायनकोविदाः कामकर्मस्वभावेष्विति वचनात् अयमेव निश्चीयत इति ॥ २२ ॥ ❁ ❁ कामकर्मादिशब्दानां कथं निर्वचनं येन तेषां भगवद्विषयत्वं ज्ञायत इति तत्राह । अव्यक्तस्येति । प्रत्यक्षादिप्रमाणाविषयश्चेत् शून्यकल्पोऽयमित्यत उक्तं नानाशक्तीति । कर्मादिनानाशक्तीनामुदयो यस्मात्स तथोक्तस्तस्य । अनेन परिशेषप्रमाणसिद्धिं सूचयति चिकीर्षितं कर्तुमिष्टं कर्म अस्य सम्भवमुत्पत्तिं निरुक्तप्रकारं च को ब्रह्मा वेत्ति चेत् सोऽप्यद्धा न जानातीत्यर्थः ॥ २३ ॥ ❁ ❁ एवं सर्वत्र हरेः स्वातन्त्र्यमुपपाद्य फलितमाह नैवेति । विसर्गादानयोर्मरणजन्मनोः विसर्गस्यादानस्याङ्गीकारस्य चेति वा, हिशब्दो हेतौ ॥ २४ ॥ ❁ ❁ किं तद्दैवमित्यतो यज्जगत्कारणं ब्रह्म तदेवात्रोक्तमिति सृष्ट्यादिविशेषणैर्विशिनष्टि स एवेति । कर्दमक्षेत्रप्रवृत्तदेवदत्तस्य गुणकर्मलेपो नास्ति अहंकर्तेत्यभिमानाभावादित्याह । अथापीति ॥ २५ ॥ ❁ ❁ अनेनापि गुणकर्मलेपः कथमुद्घाटित इति तत्राह एष इति । स्वशक्त्या स्वाधीनया स्वरूपशक्त्या वा ॥ २६ ॥ ❁ ❁ कार्यपदप्रयोगाभावान्नेदं मनुष्यातुं योग्यमित्याशङ्क्यैवंविधं दैवमिति गुणान्तरसमर्पणेनोपसंहरति तमेवेति । अमृतं नित्यमुक्तं नसि नासिकायां यन्त्र-बन्धन इति धातुः, दाम्ना यन्त्रिता बद्धाः ॥ २७ ॥ ❁ ❁ श्रीनारायणप्रसादेनावाप्तसमस्तसंपदस्तव तन्नियतभूतद्रोहो न घटत इति भावेनाह यः पञ्चवर्ष इत्यादिना । सर्वप्राणिनः प्रति प्रतिगतमक्षमिन्द्रियं यस्य स तथा तम् । अनेन मया क्रियमाणं कर्म नासौ पश्यतीत्येतत्परिहृतम् ॥ २८ ॥ ❁ ❁ विमुक्तविग्रहैर्योगिभिर्व्यपाश्रितं निषेवितम् । अनेन भूतविग्रहोऽस्य प्रियो न भवतीत्युक्तं निर्गुणमावृत्तिशून्यं कुपितत्वात्पुनः प्रसादानभिमुखमित्यर्थः । भूतद्रोहे क्रुद्धस्यास्य तपसापि पुनः प्रसादापादनं दुष्करं तवेति ध्वनितम् । अनेन शब्दाद्यविषयं वा वागादिनापि प्रसादयितुं दुःशकमित्यर्थः । कुतः निर्गुणमतीन्द्रियमिन्द्रियाविषयत्वादित्यर्थः "गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु" इति यादवः । एवं केवलमक्षरं मूलकारणमात्मानं परमात्मानं

विशिष्टा मुक्तिर्यस्मात्स तथा तम् एवंगुणविशिष्टं हरिमात्मनि हृद्यन्विष्यालोक्य भजस्वेत्यन्वयः। तत्स्वरूपं कीदृशमिति न प्रश्नार्हम् इति भावेनोक्तमात्मदृगिति पूर्वमात्मानं दृष्टवानिति यत्तस्मात् कथमित्यत उक्तं यस्मिन्निति। असदस्वतन्त्रं भिन्नं पञ्चविध-भेदोपेतमिदं चेतनाचेतनात्मकं विश्वं यस्मिन् यदाधारतया प्रतीयत इति॥ २९॥ ❀ ❀ ननु आत्मदर्शिनो मम संसारपाशच्छेदः किमिति नाभूदित्यतस्तादृग्गुणानुपसंहृत्य बिम्बोपास्त्यभावादतस्तथोपास्तौ स स्यादिति भावेन तदुपास्तिप्रकारं विदधान आह त्वं प्रत्यगात्मनीति। प्रत्यगात्मनि तवाभिमुखे बिम्बरूपे भक्तिमुपास्तिलक्षणां सेवां अन्यत्रानुपपन्ना अत्रोपपन्ना अविरुद्धाः समस्ता अस्थूलानण्वादिलक्षणाः शक्तयो यत्र स तथा तस्मिन्॥ ३०॥ ❀ ❀ तत्र प्रथमसाधनमिदमित्याह संयच्छेति॥ ३१॥ ❀ ❀ श्रेयसां प्रतीपत्वं कथमत्राह येनेति। येन रोषेणोपसृष्टाद्युपरक्तात् सज्जनानुग्रहस्यापेक्षित-त्वाल्लोको ज्ञानिजनोऽत्रोच्यते, लुक्-प्रकाश इति धातोः॥ ३२॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अनिलदृष्टान्तस्तथापि साम्यमित्यत्रांशे धावत्यनीशो यथा रजांस्यनिलं भूतसंघ इति चित्सुखः॥ २०॥ ❀ ❀ स्वस्थः स्वानन्दमग्न एव सन् स्वैरितयैव नत्वन्यभावभावितयेत्यर्थः। अतो वैषम्यनैर्घृण्ये अपि परिहृते॥ २१॥ ❀ ❀ केचिदेनं कर्मादिकं वदन्तीति। अस्य ये कर्तृत्वादयो धर्मास्तान् कर्मादिष्वेवारोपयन्तीत्यर्थः। दैवं ग्रहादि। कामं संकल्पं दृष्टि-सृष्टिवादिनः॥ २२॥ ❀ ❀ चिकीर्षितमिच्छाशक्तिलेशमपि किं पुनः सर्वशक्त्याश्रयन्तमित्यर्थः॥ २३-२५॥ ❀ ❀ कथं सृजतीत्यादौ तत्राह। एष इति। भूतस्यात्मा कारणम्। ईशो नियामकः। भावनस्तत्तद्रूपताप्रापकश्च तत्र हेतुः स्वरूपशक्त्या मायया च युक्तः। बहिरङ्गशक्तिमायाकार्ये तस्याहङ्कारत्वञ्च योजितम्॥ २६-२७॥ ❀ ❀ य इत्यत्र यो लेभे स त्वमुपेहीति पूर्वेणैवान्वयः॥ २८॥ ❀ ❀ आत्मानं परमात्मानं यस्मिन् स्फुरिते सति। असदपुरुषार्थमिदं नेदमसत् प्रतीक्षते इति चित्सुखः। अनुभवादिदं युक्त्यसहत्वान्नेदमिति॥ २९-३२॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अन्यच्च तस्य विभुत्वं पश्येत्याह। स स्वयमनन्तः नाशरहितः। अथ चान्येषामन्तकरो नाशकरः, केन रूपेणेत्यत आह। कालः स्वयमनादिः जन्मशून्यः अथ चान्येषामादिकृत्। अव्ययः चिन्तामणिरिव सर्वंप्रसवितापि व्ययशून्यः। स्वयमेवादिकृदपि जनेन पित्रादिना जनं पुत्रादिं जनयन् स्वयमेवान्तकृदपि मृत्युना मृत्युहेतुना कालाग्निरुद्रेण अन्तकं यममपि मारयन्॥ १९॥ ❀ ❀ न चैवं कुर्वतोऽपि वैषम्यप्रसक्तिः पक्षपाताभावादित्याह न वा इति द्वाभ्याम्। मृत्योर्मृत्युरूपस्य समं यथा स्यात्तथा प्रजा विशतः तस्य साम्येऽपि भूतेषु फलवैषम्यं तत्तत्कर्मणस्तथा भावादिति सदृष्टान्तमाह। तं धावन्तमनु अनीशाः कर्माधीना भूतसङ्घा धावन्ति अनिलं धावन्तमनुधावन्ति रजांसीव तत्र रजसां तमःप्रकाशजलाग्न्यादिप्रवेशेऽपि नानिलस्य वैषम्यम्। एवमीश्वरस्यापीति भावः॥ २०॥ ❀ ❀ तत्राप्यायुषोऽपचयं मशकादावुपचयं देवादौ दुःस्वस्य कर्माधीनस्य॥ २१॥ ❀ ❀ ननु तर्हि कर्मैव सुखदुःखजन्ममरणादिकारणमस्तु, सत्यमत्रैवं वादिनो विवदन्त इत्याह केचिदिति। केचिन्मीमांसकाः एनं सुखदुःखप्रदं कर्म, अपरे लोकायतिकाः स्वभावं, एके व्यावहारिकाः कालं, परे ज्यौतिषिका दैवं ग्रहादिरूपां देवताम्, अपरे वात्स्यायनादयः कामं श्रुतिश्च 'कामोऽकार्षीत् कामः करोति कामः कर्ता कामः कामयिते'त्यादि॥ २२॥ ❀ ❀ नन्वेषां विवदमानानां मध्ये को व्यवस्थापकस्तत्र तत्तन्मूलतत्त्ववस्तुनोऽज्ञानान्न कोपीऽत्याह। अव्यक्तस्य कैरपि बलबुद्ध्यादिभिर्व्यक्तीकर्तुमशक्यस्य तत्र हेतुरप्रमेयस्य प्रत्यक्षादिप्रमाणैः प्रमातुमशक्यस्य नानाशक्तीनां कालकर्मस्वभावकामादीनामुदयो यस्मादिति तस्यैकैकां शक्तिमाश्रित्यैव विवदमानानां तेषां शक्तिमति तस्मिन् वस्तुतो नास्त्येव विवाद इति भावः। तस्य भगवतश्चिकीर्षितमेव कोऽपि नो वेद स्वस्य सम्भवो यस्मात्तं को वेद। यदुक्तं भीष्मेण "न ह्यस्य कर्हिचिद्राजन्! पुमान् वेद विधित्सितम्। यद्विजिज्ञासया युक्ता मुह्यन्ते कवयोऽपि हि" इति। तथाच श्रुतिः 'कोऽद्धा वेद क इह प्रावोचत कुत आयाता कुत इयं विसृष्टिः। अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूवे''त्यादि॥ २३॥ ❀ ❀ फलितमाह न चैत इति। विसर्गादानयोः सृष्टिसंहार-योर्दैवमीश्वरः॥ २४॥ ❀ ❀ तथापि तस्य निर्लेपतां पश्येत्याह स एवेति॥ २५॥ ❀ ❀ अनहङ्कारत्वे हेतुमाह एष इति। स्वशक्त्या मायाया युक्त इति मायया बहिरङ्गत्वेन स्वरूपशक्तित्वाभावात् तत्कार्येषु तस्य नाहङ्कारो भवतीति भावः॥ २६॥ ❀ ❀ नन्वेवं त्वया प्रबोधितोऽप्यहङ्कारं त्यक्तुं न प्रभवामीत्यत आह तमेवेति चतुर्भिः। उपेहि प्रपद्यस्व तत्प्रपत्तिं विना ज्ञानेनाहङ्कारापगमो दुःशक इति भावः॥ २७॥ ❀ ❀ त्वन्तु तं प्रपन्नो मत्कुलपद्ममेवासीत्याह य इति। प्रत्यञ्चि अक्षाणि योगिनां यस्मिंस्तम्॥ २८॥ ❀ ❀ तमेव सम्प्रत्यपि अन्विच्छ अलं तव व्यावहारिकभद्राभद्र-भावनयेति भावः। न च तत्रान्येषामिव तव प्रयास इत्याह। आत्मनि तन्मनसि मुक्तविग्रहे निर्विरोधे विशेषेण वात्सल्यात् कृतनिवासं आत्मदृक् प्रत्यग्दृष्टिः सन् यस्मिन् अन्विष्टे सति इमे शत्रुमित्रादयो भेदा यत्र तदिदं भेदं जगत् असत् अभद्रमरोच-कमेव प्रतीयते॥ २९॥ ❀ ❀ तदा पञ्चवर्षवयसि किमिदं स्मरसीत्यर्थः, अविद्याग्रन्थिं विभेत्स्यसि 'अभिज्ञावचने लृडि'ति

भूतकाल एव लट् व्यभिन इत्यर्थः ॥ ३० ॥ ❀ ❀ तदपि व्यावहारिकलोकमनुकुर्वंस्त्वं तादृशेऽपि भ्रातरि प्रणयं लोके प्रथयन् बहिरेव रोषं धत्से ममाज्ञया तमपि संयच्छ श्रुतेन मदुपदेशवाक्येन अगदेन औषधेन आमयमिवेति त्वादृशानां भक्तानां लोके प्रतिष्ठा प्रख्यापनमप्येको रोग एवेति भावः ॥ ३१ ॥ ❀ ❀ नीतिमाह। येन रोषेण उपसृष्टात् व्याप्तात् ॥ ३२ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

स एव कालः कालशक्तिः शक्तेः स्वरूपेण भिन्नत्वेऽपि शक्तिमन्निरपेक्षस्थित्याद्यभावादभेदेन निर्देशः तत्तत्कालक्रमेणेत्यर्थः। जनेन पित्रादिना जनं पुत्रादिं जनयन् आदिकृत् अन्तकश्चोरादिं मृत्युना राजादिना मारकेन मारयन् अन्तकरः, स्वयन्तु अनन्तः मरणरहितः अनादिः जन्मरहितः अव्ययो निर्विकारश्च ॥ १९ ॥ ❀ ❀ मृत्योः प्राणिकर्मानुसारेण मारकस्य समं यथा भवति तथा प्रजा विशतः परस्य सर्वनियन्तुः अस्य स्वपक्षो विपक्षो वा नैव। तमेव धावमानं क्रियां कुर्वन्तं संघाः धावन्ति क्रियां कुर्वन्ति यथानिलं रजांसि तद्वत् ॥ २० ॥ ❀ ❀ दुःस्थस्य कर्माधीनस्य उपचयं वृद्धिमपचयं ह्रासम् ॥ २१ ॥ ❀ ❀ एकैकदेशनिष्ठानामल्पज्ञानां मतानि दर्शयन् भगवतः सर्वशक्तित्वेन सर्वरूपत्वं सूचयन् इयत्तानवच्छिन्नत्वमाह केचिदिति द्वाभ्याम् ॥ २२-२३ ॥ ❀ ❀ प्रकृतमाह। नेति। हे पुत्रक! विसर्गादानयोः सृष्टिसंहारयोः दैवं कर्मफलदः परमेश्वरः ॥ २४-२६ ॥ ❀ ❀ मृत्युं मरणहेतुममृतं जीवहेतुं दैवं कर्मफलदम् उपेहि शरणं व्रज ॥ २७ ॥ ❀ ❀ यः पञ्चवर्षः भजनानर्होऽपि प्रत्यगक्षं निरुद्धेन्द्रियं यथा स्यात्तथाराध्य त्रिलोक्याः मूर्ध्नि पदं स्थानं लेभे लब्धवानसि तमेवान्विच्छेत्युत्तरेण सम्बन्धः ॥ २८ ॥ ❀ ❀ हे अङ्ग! मुक्तविग्रहे त्यक्तविरोधे आत्मनि मनसि तं भगवन्तं व्यपाश्रितमवस्थितं निर्गुणं प्राकृतगुणशून्यम् एकं सजातीयविजातीयभेदशून्यं स्वगतभेदस्येष्टत्वात् अक्षरं निर्विकारमात्मानं सर्वात्मानं विमुक्तं विविधा मुक्ता यस्मात्तं मुक्तिदम् आत्मदृक् सन् एवमुक्तप्रकारेण अन्विच्छ अनुवर्तस्व। ननु दुस्त्यजो विरोधस्तदनुवर्तने प्रतिबन्धक इत्यत्र सर्वस्य तच्चिदचिच्छक्तिमयत्वान्न विरोधविषयं किंचिदस्तीत्याह अयं भूजलादिरूपो भेदो यत्र तदिदंभेदं स्थूलमसत्सूक्ष्मं च वस्तुजातं यस्मिन्नेव प्रतीयते न तत्पृथगित्यर्थः "यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति। तस्याहं न प्रणश्यामि स च मे न प्रणश्यति" इति श्रीमुखोक्तेः। यत्तु सजातीयविजातीयस्वगतभेदशून्यं ब्रह्मेति मतं तत्तुच्छम् "सन्मूलाः सौम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इत्यादिश्रुतिविरोधात् ॥ २९-३१ ॥ ❀ ❀ येन रोषेणोपसृष्टात् अभिभूतात् ॥ ३२ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

नन्वेवमपि कालशक्त्येत्युक्तेः कालस्यैव प्राबल्यं प्रतिभातीत्याशङ्क्य शक्तिशक्तिमतोरभेदात् कालरूपोपि भगवानेवेत्याशयेनाह—स इति। कालोपि भगवानेव न ततः पृथक्, अत एव स्वयमनादिः जन्मरहितः अनन्तः अविनाशी अव्ययः स्वरूपतः शक्तितश्च क्षयरहितः जनेन पित्रादिना जनं पुत्रादिं जनयन्नादिकृत् सृष्टिकर्त्ता भवति। तथान्तकं चोरव्याघ्रादिकमपि मृत्युना मारयन्नन्तकरः संहारकर्त्ता भवति। तथा पालकाकारेण जनेन पालयन् पालकश्च भवतीत्यपि ज्ञेयम्। ततोन्यस्योत्पत्त्यादिमत्त्वेनास्वातन्त्र्यात् सामर्थ्याभावाच्च तस्यैव स्वतन्त्रस्य सर्वसामर्थ्यप्रदत्वेन मुख्यं कर्तृत्वादिकम्। तदुक्तम्—"द्रव्यं कर्म च कालश्च स्वभावो जीव एव च। यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया" इति ॥ १९ ॥ ❀ ❀ नन्वेवं तस्य वैषम्यनैर्घृण्ये स्यातामित्याशङ्क्य तस्य भगवतः समत्वेपि प्राणिषु फलवैषम्यं तत्कर्माधीनमेवेति सदृष्टान्तमाह—न वा इति। अस्य मृत्योः मरणादिहेतोः कालरूपस्य स्वपक्षः स्वकीयो विपक्षः शत्रुर्वा नैवास्तीत्यन्वयः। वै इति श्रुत्यादिषु प्रसिद्धमेतदिति दर्शयति। अत एव समं यथा भवति तथा प्रजाः कर्मभूताः विशतः। स्वपक्षाद्यभावे हेतुं सूचयन् विशिनष्टि—परस्येति। नहि परमात्मन एवं वैषम्यं सम्भवतीति भावः। ननु तर्हि कथं प्राणिषु जन्ममरणसुखदुःखादिफलवैषम्यं तत्राह—तमिति। तं कालरूपं भगवन्तं धावमानं सर्वसमतया निरन्तरं गच्छन्तं वेगवन्तं प्राप्यानीशाः कर्माधीनाः भूतसङ्घाः अनुधावन्ति जन्मादिषु प्रवर्तन्ते। तत्र दृष्टान्तः—यथेति। यथाऽनिलं धावन्तं रजांसि तमनुधावन्ति। तत्र प्रथमत उत्थितानि पश्चात् पश्चादुत्थितानि प्रथमतः तत्रापि कानिचिज्जले कानिचिदग्नौ पतन्ति नहि तत्रानिलस्य वैषम्यम्, किन्तु तेषां गुरुत्वलघुत्वादिवशादेव तथा पतनात्। तथा भगवतोऽपि न वैषम्यम्, प्राणिजन्ममरणदुःखसुखादेस्तत्कर्माधीनत्वादित्यर्थः ॥ २० ॥ ❀ ❀ प्राणिकर्मानुसारेण फलदातृत्वाद्वैषम्यराहित्यं पूर्वोक्तमेव स्फुटयति—आयुष इति। दुःखस्य कर्मवशात् स्वर्गनरकादौ गच्छतो जन्तोर्जीवस्यासौ भगवान् तत्कर्मानुसारेण देवादियोनावायुष उपचयं वृद्धिं तथैव पिपीलिकादियोनावायुषोपचयं ह्रासं विदधाति इच्छया करोतीत्यन्वयः। एवंविधाने सामर्थ्यमाह—विभुरिति। सामर्थ्येपि हेतुमाह—उभाभ्यामायुषोपचयोपचयाभ्यां रहितो यत इत्यर्थः। तद्राहित्ये हेतुमाह—स्वस्थ इति। स्वस्थत्वेन कर्मासंस्पर्शित्वादित्यर्थः ॥ २१ ॥ ❀ ❀ ननु तर्हि शास्त्रिणोपि कथं कर्मादीनां हेतुत्वं वदन्तीत्याशङ्क्यास्यैव तत्तद्रूपेण स्थितत्वेन नामरूपभेदेपि वस्तुभेदाभावादित्याह—केचिदिति। केचिन् मीमांसकाः एनमेव कर्मेति वदन्ति। अपरे चार्वाका एनमेव स्वभावं वदन्ति। एके पौराणिका एनमेव कालं वदन्ति। परे ज्योतिर्विद

एनमेव दैवं ग्रहादिरूपं वदन्ति। अपरे वात्स्यायनादयोऽप्येनमेव पुंसः कामं वदन्ति। वस्तुतस्तु नहि कालमनपेक्ष्य स्वोत्पत्तिमात्रे-णैव कर्म फलति, न वा कामं विना कर्मोत्पत्तिर्जडे तदभावेन तददर्शनात्। नच स्वभाववैलक्षण्यं न वा कर्मनिरपेक्षं दैवं फलति, सर्वान्प्रति सुखादिफलस्य निर्विशेषत्वापत्तेः। नच जन्मकाल एव तत्र नियामक इति शङ्क्यम्, तस्यापि कर्मसापेक्षत्वात्। तथा चैकैकसत्त्वेपि कार्यादर्शनात्सर्वेषामेव फलजनकत्वं सिद्ध्यति। प्रत्येकं हेतुत्वकथनं तु स्वस्वमत्यनुसारेणैव भगवल्लीलाया दुर्ज्ञेयत्वादिति ज्ञेयम्। एतद्विचारे त्वं कुशलोसीति सूचयन् संबोधयति—हे नृपेति॥ २२॥ ❀ ❀ ननु किमर्थमेवं नानारूपो भवति किं वा तस्य मूलस्वरूपमित्याकांक्षायामाह—अव्यक्तस्येति। हे तात इति स्नेहेन संबोधयन् स्वस्याप्रतारकत्वं सूचयति। भगवतश्चिकीर्षितं कर्तुमिष्टमेव तावत्को वेद किमर्थमेवं नानारूपो भवति पूर्णानन्दत्वेनाप्तकामत्वेनोक्तस्य प्रयोजनासंभवात्। स्वस्य संभवः प्रादुर्भावो यस्मात्तं भगवन्तं तु कोपि नैव वेद। अतो ज्ञानाभावादेतद्वक्तुं न शक्यत इति भावः। अज्ञाने हेतुमाह—अप्रमेयस्येति। प्रमा यथार्था बुद्धिस्तदविषयस्येत्यर्थः। तदविषयत्वेपि हेतुमाह—अव्यक्तस्येति। केनापि प्रमाणेन न व्यज्यते सोऽव्यक्तस्तस्येत्यर्थः। व्यक्तस्यैव बुद्धिविषयत्वं प्रसिद्धम्, अयं तु न तथा ततो न तथेति भावः। तर्हि कथं तत्सत्त्वसिद्धिरित्याशङ्क्याह—नानेति। नानाशक्तीनां मायाविद्यामहदादीनामुदयो यस्मात्तस्य। सृष्ट्यादिकार्यान्यथानुपपत्त्या तत्कारणत्वेन तत्सिद्धिरिति भावः॥ २३॥ ❀ ❀ एवं भगवदधीनत्वे फलितमाह—न चेति। हे पुत्रक! एते धनदानुगाः कुबेरानुचरास्तव भ्रातुरुत्तमस्य हन्तारो न भवन्ति, चकारात् त्वमपि तेषां हन्ता न भवसीति ज्ञेयम्। कुत एवं तत्राह—विसर्गेति। हे तात! तर्हि यस्मात् पुंसो विसर्गादानयोर्मृत्युजन्मनोर्दैवं भगवानेव कारणम्। संबोधनद्वयं तस्य रोषशान्त्यर्थम्॥ २४॥ ❀ ❀

नन्वेवं सति भगवतः पुण्यपापादिसंबन्धः स्यादित्याशङ्क्याह—स एवेति। यद्यपि स भगवानेव विश्वसृष्ट्यादि करोति, अथापि हि निश्चितमेतदनहंकारात् अहं करोम्येतत्फलं भोक्ष्य इत्यहंकाररहितत्वाद्गुणैः रजःप्रभृतिभिः कर्मभिस्तज्जनितैरदृष्टैः पुण्य-पापादिभिश्च नाज्यते न संबद्धो भवति॥ २५॥ ❀ ❀ तस्याहंकाराभावे भेददर्शनाभावं हेतुमाह—एष इति। यस्मात् एष भगवान् भूतेशः सर्वनियन्ता भूतभावनः सर्वपालकः भूतात्मा सर्वात्मत्वेन भेददर्शनरहितः सन्नेव स्वशक्तिरूपया मायया युक्तो भूतानि स्थावरजङ्गमात्मकानि सर्वाणि सृजत्यत्ति संहरते च पाति च तस्मादनहंकाराद् गुणकर्मभिर्नाज्यत इति पूर्वस्यानुषङ्गः। एवं त्वमप्यभेददर्शनेन निरहंकारी भव येन यक्षादिवधनिमित्तदोषस्पर्शो न स्यादिति भावः॥ २६॥ ❀ ❀ ननु कथमेवं स्यादित्युपायाकाङ्क्षायां तमाह—तमिति चतुर्भिः। स्वविमुखानां मृत्युरूपं स्वभक्तानां चामृतं जन्ममरणादिनिवर्त्तकं विश्वस्य दैवं परमेश्वरं नियन्तारं जगतः परायणमुत्कृष्टमाश्रयं तं भगवन्तमेव हे तात! सर्वात्मना सर्वान् विहाय तदेकाग्रचित्ततया त्वमुपेहि शरणं व्रज। तत्कृपयैवाभेददर्शनेन सर्वदुःखनिवृत्तिर्नान्यथेत्यत्र महतां तदनुवृत्तित्वं हेतुत्वेन दर्शयति—यस्मा इति। वै निश्चितमेतत् नसि नासिकायां दामनि यन्त्रिता बद्धा गावो बलीवर्दा यथा स्वामिकार्यं कुर्वन्ति तथा विश्वसृजो ब्रह्मादयोपि नाम-भिर्बद्धाः सन्तो यस्मै भगवते बलिं हरन्ति स्वस्वाधिकारे स्थिता यस्याज्ञां पालयन्तीत्यर्थः॥ २७॥ ❀ ❀ यत्प्रसादात्सुदुर्लभं स्थानं त्वं प्राप्तवांस्तत्पराङ्मुखता सर्वथा न युक्ता। तत्पराङ्मुखत्वेनैवाहंकारेणानर्थे प्रवृत्तोऽस्यतः पूर्वमाराधितत्वेनेदानीमपि तदा-राधनस्य तव सुकरत्वात् सर्वानर्थनिवर्त्तकत्वाच्च तदर्थं तमेवाराधयेत्याह—य इति द्वाभ्याम्। यः पञ्चवर्षः स त्वं मातुः सपत्न्याः सुरुच्या वचसा भिन्नं मर्म हृदयं यस्य स तथाभूतः स्वजननीं गृह एव विहाय वनं गतः सन् प्रत्यगक्षं प्रत्यञ्चि अन्तर्मुखानि अक्षाणि यस्मिन् यद्विषयकाणि तमाराध्य त्रिलोक्या मूर्ध्नि पदं स्थानं लेभे लब्धवानसि स त्वं तमेवंभूतं परमदयालुमिदानीमप्यन्विच्छ पश्येत्युत्तरेणान्वयः॥ २८॥ ❀ ❀ स क्वास्ति यत्र द्रष्टव्य इति स्थानापेक्षायामाह—आत्मनीति। आत्मनि स्वान्तःकरणे व्यपाश्रितमवस्थितम्। निर्गुणं प्राकृतगुणातीतम्। अत एव विमुक्तं त्रिगुणात्मकसंसारबन्धसंस्पर्शरहितम्। एकं सजातीयविजातीय-स्वगतभेदशून्यम्। नन्वनन्तस्य भेदस्य विद्यमानत्वात् कथं भेदशून्यत्वमित्याशङ्क्याह—आत्मानमिति। तस्य स्थावरजङ्गम-सर्वविश्वात्मकत्वान्न केनापि भेदः सुवर्णस्य कटककुण्डलादिनेवेत्यर्थः। ननु तथापि तथात्वं स्यादित्याशङ्क्याह—अक्षरमिति। विश्वस्य विकारित्वेपि न तस्य स्वरूपतो धर्मतो वा क्षतिर्यथा कटकादेर्विकारित्वेपि सुवर्णस्य न कापि क्षतिस्तद्वदित्यर्थः। नन्वेवं सर्वात्मकत्वं चेत्तदा यत्र कुत्राप्यासक्तौ कृतार्थता स्यादलं तदन्वेषणेनेत्याशङ्क्य प्रपञ्चस्य भगवद्रूपत्वेन सत्यत्वेऽपि न तद्रूपेण तत्राऽऽसक्तौ कृतार्थता। किन्तु भगवत्स्वरूपध्यानेनैवातः प्रपञ्चाद्वैराग्यार्थं तस्य मिथ्यात्वमाह—यस्मिन्निति। नन्वन्तःकरणेस्ति चेत्कुतो न प्रतीयत इत्याशङ्क्याप्रतीतौ तव दोषद्वयं बहिर्मुखत्वं विरोधव्याप्तत्वं चेत्येतद् द्वयं त्यक्त्वा तं द्रक्ष्यसीत्यभिप्रायेणाह—मुक्तविग्रह इति। मुक्तविग्रहेन्तःकरणे आत्मदृक् प्रत्यग्दृष्टिः सन्नन्विच्छेति। हे अङ्ग इति संबोधयन् पौत्रत्वेनाङ्गतुल्यत्वात्त्वामेतद्रहस्यमुप-दिशामीति सूचयति॥ २९॥ ❀ ❀ एवं भगवद्भक्त्या तत्कृपया सर्वभेदभ्रमनिरासेनानर्थमूलाहन्ताममतानाशे सति त्वं कृतार्थो भविष्यसीत्याह—त्वमिति। त्वं भगवति ज्ञानैश्वर्यादिपरिपूर्णे भक्तिं विधाय तत्कृपयाऽविद्याग्रन्थिमज्ञानकृतं स्वबन्धनं विभेत्स्यसि छेत्स्यसीत्यन्वयः। ग्रन्थिस्वरूपमाह—ममाहमिति। एतद्भेदनमतिदुष्करमित्यभिप्रेत्याह—प्ररूढमिति। अतिदृढमित्यर्थः। अविद्याग्रन्थेर्दुर्भेदत्वादेव। "माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोधिकः। स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा" इति भक्तेर्माहात्म्यज्ञानपूर्विकाया एव मुक्तिहेतुत्वमुक्तमतो माहात्म्यज्ञानार्थं भगवन्तं विशिनष्टि—प्रत्यगात्मनीत्यादिना। स्वरूपभूत

इत्यर्थः । न हि स्वभिन्नतया भगवज्ज्ञानमहन्ताममतानिवर्त्तकं भेदप्रतीतेर्विद्यमानत्वात् । "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति श्रुतेरात्मन्यतिरिक्ते प्रियत्वस्यात्मोपाधिकत्वेनात्मभेदप्रतीतौ तत्र स्नेहस्य सर्वाधिक्यं च न स्यात् । अनन्त इति देशकाल-परिच्छेदरहित इत्यर्थः । करचरणमुखादेरादिमत्त्वेपि न तेषां प्राकृतत्वं किंत्वानन्दमात्रत्वमेवेति ज्ञानेपि तत्र स्नेहाधिक्यं भवति, सर्वस्यैवानन्दार्थित्वादित्यभिप्रेत्याह—आनन्दमात्र इति । तस्य विरुद्धधर्माश्रयत्वमाह—उपपन्नसमस्तशक्ताविति । अन्यत्रैकत्रा-नवस्थानेन विरुद्धा अप्युपपन्नाः सम्यक्स्थितिं प्राप्ता विद्याविद्यादयः समस्ता शक्तयो यस्मिंस्तस्मिन् । उक्तं च—"यस्मिन् विरुद्धगतयोऽनिशं पतन्ति" इति, "यच्छक्तयो वदतां वादिनां वै विवादसंवादभुवो भवंति" "कुर्वन्ति चैषां मुहुरात्ममोहम्" इति च । इति माहात्म्यं प्रदर्शितम् । भक्तेर्दार्ढ्यार्थमाह—सदेति । सर्वत आधिक्यमाह—परमामिति । ग्रन्थेर्दुर्भेदत्वेन झटित्येक-दैव तत्कर्तुमशक्यत्वाद्विलम्बे उद्वेगो न कार्य इत्यभिप्रेत्याह—शनकैरिति ॥ ३० ॥ ❀ ❀ तत्र क्रोधाभिभूतस्य किमपि श्रेयो न सिद्ध्यति, भगवत्प्रसादस्तु दूरतोऽतस्तं नियच्छेत्याह—संयच्छेति द्वाभ्याम् । श्रेयसां धर्मार्थकाममोक्षाणां परमत्यन्तं प्रतीपं विघातकं रोषं संयच्छ उपसंहर । एवमेव ते भद्रं भविष्यति नान्यथा । तत्र सदृष्टान्तमुपायं चाह—श्रुतेनेति । अगदेन औषधेन यथामयं रोगं जनो नियच्छति तथा श्रुतेन भूयसा बहुधा श्रुतशास्त्रबलेन रोषं नियच्छेत्यर्थः ॥ ३१ ॥ ❀ ❀ येन रोषेण उपसृष्टात् व्याप्तात् पुरुषात् लोकः प्राणी भृशमुद्विजते भयेनात्यन्तमुद्वेगं प्राप्नोति ततश्च लोकपालकस्य भगवतोऽपि रोषो भवति ततश्चोद्वेगकर्त्तुः रुष्टस्यापि भयं भवत्यत आत्मनोऽभयमिच्छन् बुधस्तस्य रोषस्य वशं न गच्छेत् अन्यथा तस्यापि भयं स्यादिति भावः ॥ ३२ ॥

## भाषानुवादः

ध्रुव ! वे कालस्वरूप अव्यय परमात्मा ही स्वयं अन्तरहित होकर भी जगत्का अन्त करनेवाले हैं तथा अनादि होकर भी सबके आदिकर्ता हैं । वे ही एक जीवसे दूसरे जीवको उत्पन्न कर संसारकी सृष्टि करते हैं तथा मृत्युके द्वारा मारनेवालेको भी मरवाकर उसका संहार करते हैं ॥ १९ ॥ ❀ ❀ वे कालभगवान् सम्पूर्ण सृष्टिमें समानरूपसे अनुप्रविष्ट हैं । उनका न तो कोई मित्रपक्ष है और न शत्रुपक्ष । जैसे वायुके चलनेपर धूल उसके साथ-साथ उड़ती है, उसी प्रकार समस्त जीव अपने-अपने कर्मोंके अधीन होकर कालकी गतिका अनुसरण करते हैं—अपने-अपने कर्मानुसार सुख-दुःखादि फल भोगते हैं ॥ २० ॥ ❀ ❀ सर्वसमर्थ श्रीहरि कर्मबन्धनमें बँधे हुए जीवकी आयुकी वृद्धि और क्षयका विधान करते हैं, परन्तु वे स्वयं इन दोनोंसे रहित और अपने स्वरूपमें स्थित हैं ॥ २१ ॥ ❀ ❀ राजन् ! इन परमात्माको ही मीमांसकलोग कर्म, चार्वाक स्वभाव, वैशेषिकमतावलम्वी काल, ज्योतिषी दैव और कामशास्त्री काम कहते हैं ॥ २२ ॥ ❀ ❀ वे किसी भी इन्द्रिय या प्रमाणके विषय नहीं हैं । महदादि अनेक शक्तियाँ भी उन्हींसे प्रकट हुई हैं । वे क्या करना चाहते हैं, इस बातको भी संसारमें कोई नहीं जानता, फिर अपने मूल कारण उन प्रभुको तो जान ही कौन सकता है ॥ २३ ॥ ❀ ❀ बेटा ! ये कुबेरके अनुचर तुम्हारे भाईको मारनेवाले नहीं हैं, क्योंकि मनुष्यके जन्म-मरणका वास्तविक कारण तो ईश्वर है ॥ २४ ॥ ❀ ❀ एकमात्र वही संसारको रचता, पालता और नष्ट करता है, किन्तु अहङ्कारशून्य होनेके कारण इसके गुण और कर्मोंसे वह सदा निर्लेप रहता है ॥ २५ ॥ ❀ ❀ वे सम्पूर्ण प्राणियोंके अन्तरात्मा, नियन्ता और रक्षा करनेवाले प्रभु ही अपनी मायाशक्तिसे युक्त होकर समस्त जीवोंका सर्जन, पालन और संहार करते हैं ॥ २६ ॥ ❀ ❀ जिस प्रकार नाकमें नकेल पड़े हुए बैल अपने मालिकका बोझा ढोते रहते हैं, उसी प्रकार जगत्की रचना करनेवाले ब्रह्मादि भी नामरूप डोरीसे बँधे हुए उन्हींकी आज्ञाका पालन करते हैं । वे अभक्तोंके लिये मृत्युरूप और भक्तोंके लिये अमृतरूप हैं तथा संसारके एकमात्र आश्रय हैं । तात ! तुम सब प्रकार उन्हीं परमात्माकी शरण लो ॥ २७ ॥ ❀ ❀ तुम पाँच वर्षकी ही अवस्थामें अपनी सौतेली माताके वाग्बाणोंसे मर्माहत होकर माकी गोद छोड़कर वनको चले गये थे । वहाँ तपस्याद्वारा जिन हृषीकेश भगवान्की आराधना करके तुमने त्रिलोकीसे ऊपर ध्रुवपद प्राप्त किया है और जो तुम्हारे वैरभावहीन सरल हृदयमें वात्सल्यवश विशेषरूपसे विराजमान हुए थे, उन निर्गुण अद्वितीय अविनाशी और नित्यमुक्त परमात्माको अध्यात्मदृष्टिसे अपने अन्तःकरणमें ढूँढो । उनमें यह भेदभावमय प्रपञ्च न होनेपर भी प्रतीत हो रहा है ॥ २८-२९ ॥ ❀ ❀ ऐसा करनेसे सर्वशक्तिसम्पन्न परमानन्दस्वरूप सर्वान्तर्यामी भगवान् में अन्तमें तुम्हारी सुदृढ भक्ति होगी और उसके प्रभावसे तुम मैं-मेरेपन के रूपमें दृढ़ हुई अविद्याकी गाँठको काट डालोगे ॥ ३० ॥ ❀ ❀ राजन् ! जिस प्रकार औषधिसे रोग शान्त किया जाता है—उसी प्रकार मैंने तुम्हें जो कुछ उपदेश दिया है, उसपर विचार करके अपने क्रोधको शान्त करो । क्रोध कल्याणमार्गका बड़ा ही विरोधी है । भगवान् तुम्हारा मङ्गल करें ॥ ३१ ॥ ❀ ❀ क्रोधके वशीभूत हुए पुरुषसे सभी लोगोंको बड़ा भय होता है, इसलिये जो बुद्धिमान् पुरुष ऐसा चाहता है कि मुझसे किसी भी प्राणीको भय न हो और मुझे किसीसे भय न हो, उसे क्रोधके वशमें कभी न होना चाहिये ॥ ३२ ॥

हेलनं गिरिशभ्रातुर्धनदस्य त्वया कृतम् । यज्जघ्निवान् पुण्यजनान् भ्रातृघ्नानित्यमर्षितः ॥३३॥
तं प्रसादय वत्साशु संनत्या प्रश्रयोक्तिभिः । न[1] यावन्महतां तेजः कुलं नोऽभिभविष्यति ॥३४॥
एवं स्वायम्भुवः पौत्रमनुशास्य मनुर्ध्रुवम् । तेनाभिवन्दितः साकमृषिभिः स्वपुरं ययौ ॥३५॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे एकादशोऽध्यायः ॥ ११ ॥

अन्वयः—यत् भ्रातृघ्नान् इति अमर्षितः पुण्यजनान् जघ्निवान् त्वया गिरिशभ्रातुः धनदस्य हेलनम् कृतम् ॥३३॥ ❀ ❀ वत्स यावत् महताम् तेजः नः कुलम् न अभिभविष्यति तम् सन्नत्या प्रश्रयोक्तिभिः आशु प्रसादय ॥ ३४ ॥ ❀ ❀ एवम् स्वायंभुवः मनुः ध्रुवम् पौत्रम् अनुशास्य तेन अभिवन्दितः ऋषिभिः साकम् स्वपुरम् ययौ ॥ ३५ ॥

इत्येकादशोऽध्यायः ॥ ११ ॥

## श्रीधरस्वामिविरचित-भावार्थदीपिका

अन्यच्च त्वया कार्यमित्याह हेलनमिति द्वाभ्याम् । यद्यतः जघ्निवान् घातितवान् ॥ ३३–३५ ॥

इति श्रीभा० म० चतुर्थे टीकायामेकादशोऽध्यायः ॥ ११ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अन्यदुक्तेतरत् । भक्तस्य तवैतन्नोचितमित्याह—जघ्निवानिति । यत्तदेव हेलनमवज्ञानं त्वया कृतमित्यन्वयः । भ्रातृघ्ना इति वा स्वामिपाठः । वैश्रवणस्येशसखत्वात्तदवज्ञानेन शिवावज्ञानं स्यात्तदवज्ञानेन श्रीनारायणविषयं ज्ञानमपि नोदेति "ज्ञानमिच्छेन्महेश्वरात्" इति स्मृतेस्तस्यैव देवेपूपदेशाधिकारित्वाद्ब्राह्मणदेवत्वादत एव वाराणस्यां तदधीनानेकदेवांतरसत्त्वेप्यन्येषां ब्राह्मणदेवत्वाभावात्स एव सर्वेभ्यो देहांते तारकोपदेशेन ज्ञानं दत्त्वा मोचयतीत्यभिप्रेत्योक्तं गिरिशभ्रातुरिति । धनं विना राज्यपालनमपि दुर्घटं तद्दातृत्वादपि तस्यापराधो नोचित इत्यभिप्रेत्याह—धनदस्येति ॥ ३३ ॥ ❀ ❀ वत्सेति । प्रियत्वाभिप्रायेण । यद्वा—तर्णकस्वभावनिवृत्त्यर्थं साक्षेपाभिप्रायेण वेति । महतामिति बहुत्वं रुद्राद्यपेक्षया । नाभिभविष्यति न धक्ष्यति ॥ ३४ ॥ ❀ ❀ ऋषिभिः साकमिति । यदि मनुबोधितो न बुध्येत तदा वयं तं बोधयाम एतदर्थमेवर्षयो मनुना सहागतास्स च तद्बोधित एव निवृत्तवैशसो जातस्ततः परमृषिस्थितिप्रयोजनाभावात्तेपि तेनैव साकं ययुरित्याशयः । स्वपुरं स्वं लोकम् । यद्वा तेन प्रार्थितो मनुर्ऋषिभिः सहैव स्वपुरं ध्रुवराजधानीपुरमित्यर्थः ॥ ३५ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे एकादशोऽध्यायः ॥ ११ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

भ्रातृघ्नान् जघ्निवानिति यत् तदेव हेलनमित्यन्वयाकरणात् प्रत्युत यद्यत इति व्याख्यानात् भ्रातृघ्ना इत्येव स्वामिसम्मतः पाठः । अन्यथा इति पदस्यासंबद्धत्वमेवेति ज्ञेयम् ॥ ३३ ॥ ❀ ❀ महतामिति श्रीरुद्राद्यपेक्षया बहुत्वम् ॥ ३४–३५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीराधारमणदासगोस्वामिविरचितदीपिकादीपनटीकायामेकादशोऽध्यायः ॥११॥

## श्रीमद्वीरराघवव्याख्या

किंच गिरिशस्य रुद्रस्य यो भ्राता कुबेरस्तस्य हेलनमवमानं त्वया कृतं यत् यत् पुण्यजनान् यक्षान् भ्रातृघ्नानिति बुद्ध्या अमर्षितः क्रुद्धः जघ्निवान् घातितवान् । भ्रातृघ्नानित्यस्येति शब्दान्वये प्रथमान्तत्वं यद्यपि न्याय्यं भ्रातृघ्ना इति बुद्ध्या जघ्निवान् इति क्रोडीकारात्, तथापि पुण्यजनविशेषणत्वदृष्ट्या द्वितीया प्रयुक्ता ॥ ३३ ॥ ❀ ❀ तं धनदं संनत्या प्रणयेन प्रियोक्तिभिर्विनयवाग्भिश्च हे वत्स ! आशु प्रसादय प्रसन्नं कारय । महतां धनदादीनां तेजः अस्माकं कुलं यावन्नाभिभविष्यति न नंक्ष्यति ततः पूर्वमेवाशु प्रसादयेत्यर्थः ॥ ३४ ॥ ❀ ❀ मनूक्तिमुपसंहरति एवमिति । स्वायंभुवो मनुः पौत्रं ध्रुवमेवमुक्तप्रकारेणानुशास्य आदिश्य तेन ध्रुवेणाभिनन्दितः अभिमतः ऋषिभिः सह स्वपुरं ययौ ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्यकृतभावगतचन्द्रचन्द्रिकायामेकादशोऽध्यायः ॥ ११ ॥

---

१. प्रा० पा०—न च यावन्महातेजाः ।

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

वैश्रवणस्य सत्त्वेकत्वेनास्यावज्ञाननिमित्तरोषोऽपि परिहरणीय इत्याह हेलनमित्यादिना। वैश्रवणे हेलनमपि शिवावज्ञानं स्यात्तदवज्ञानेन श्रीनारायणविषयज्ञानमपि नोदेतीत्यभिप्रायेणोक्तं गिरिशभ्रातुरिति। अत एव महतामिति बहुवचनम्॥ ३३-३४॥ ❀ ❀ ध्रुवस्य च सत्तमत्वाद् गुर्वनुशासनानुज्ञानं तथा मनोश्च पौत्रमभिनन्द्य स्वपुरगमनं वक्ति इत्युक्त इति। शोचत इत्यनेन पूर्ववैरानुसन्धानेन ध्रुवेण तूष्णीं स्थितं भ्रातृमातृमरणप्रतिक्रियां कर्तुं समर्थेनापीति जनश्रुतिपरिहर्तुमिव यक्षवधे प्रवृत्तमिति ध्वनयति॥ ३५-३६॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यामेकादशोऽध्यायः॥ ११॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

जघ्निवानिति यत् तदेव हेलनं कृतमित्यन्वयः। भ्रातृघ्ना इति वा स्वामिपाठः। महतामिति श्रीरुद्राद्यपेक्षया बहुत्वम्॥ ३२॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्यैकादशोऽध्यायः॥ ११॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

वैष्णवस्य तवानौचित्यं शृण्वित्याह हेलनमिति। जघ्निवानिति यत् तदेव हेलनमित्यन्वयः। इतिशब्दः समाप्त्यर्थकः सर्वान्ते वा देयः॥ ३३-३५॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। एकादशश्चतुर्थस्य सङ्गतः सङ्गतः सताम्॥ ११॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

गिरिशस्य भ्रातुः सख्युः॥ ३३॥ ❀ ❀ यावन्महतां पुण्यजनानां तेजो नः कुलं नाभिभविष्यति तावत् पुण्यजनानां राजानं प्रसादय॥ ३४-३५॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपटीकायामेकादशाध्यायार्थप्रकाशः॥ ११॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

अन्यदपि त्वया कर्तव्यमस्ति तच्छृणु हेलनमिति। गिरिशभ्रातुः गिरिशेन भ्रातृत्वेन स्वीकृतस्य धनदस्य हेलनमवज्ञानं त्वया कृतं यत् यस्माद् भ्रातृघ्नान् इत्येवं मत्वाऽमर्षितः असहमानः पुण्यजनान् तदनुचरान् यक्षान् जघ्निवान् घातितवान्॥ ३३॥ ❀ ❀ यस्मादेवं तस्माद्धे वत्स! तव हितं वदामि त्वं संनत्या नमस्कारेण प्रश्रयोक्तिभिः नम्रीभावपूर्वकस्तुतिभिश्च तं धनदमाशु शीघ्रमेव प्रसादय। आशु प्रसादयेत्युक्तं तत्र कारणं वदंस्तदवधिमाह—यावदिति। गिरिशभ्रातुरित्युक्तेः सोपि तत्सहायः। अस्य देवदेवत्वात् देवा अप्येतत्पक्षपातिन एवातस्तेषां क्रोधाग्निप्रज्वलिते तव विरोधादस्माकं कुलस्य सर्वस्यैवाभिभवः स्यात्। अतो यावत्तेषां क्रोधाग्निर्न प्रज्वलितस्तावदेव शीघ्रं तं प्रसादयेति॥ ३४॥ ❀ ❀ स्वायंभुवो मनुः स्वपौत्रं ध्रुवमेवमनुशास्य शिक्षित्वा तेनाभिवन्दित ऋषिभिः साकं स्वपुरं ययावित्यन्वयः॥ ३५॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे ह्यर्थनिरूपणे। एकादशो गतो वृत्तिं दोषहानिनिरूपकः॥ ३॥

### भाषानुवादः

तुमने जो यह समझकर कि ये मेरे भाईको मारनेवाले हैं, इतने यक्षोंका संहार किया है, इससे तुम्हारे द्वारा भगवान् शङ्करके सखा कुबेरजीका बड़ा अपराध हुआ है॥ ३३॥ ❀ ❀ इसलिये बेटा! जबतक कि महापुरुषोंका तेज हमारे कुलको आक्रान्त नहीं कर लेता, इसके पहले ही विनम्र भाषण और विनयके द्वारा शीघ्र इन्हें प्रसन्न कर लो॥ ३४॥ ❀ ❀ इस प्रकार स्वायम्भुव मनुने अपने पौत्र ध्रुवको शिक्षा दी। तब ध्रुवजीने उन्हें प्रणाम किया। इसके पश्चात् वे महर्षियोंके सहित अपने लोकको चले गये॥ ३५॥

इत्येकादशोऽध्यायः॥ ११॥



# अथ द्वादशोऽध्यायः

मैत्रेय उवाच

ध्रुवं निवृत्तं प्रतिबुद्ध्य वैशसादपेतमन्युं भगवान् धनेश्वरः ।
तत्रागतश्चारणयक्षकिन्नरैः संस्तूयमानोऽभ्यवदत्कृताञ्जलिम् ॥ १ ॥

धनद उवाच

भो भोः क्षत्रियदायाद परितुष्टोऽस्मि तेऽनघ । यस्त्वं पितामहादेशाद्वैरं दुस्त्यजमत्यजः ॥ २ ॥
न भवानवधीद्यक्षान्न यक्षा भ्रातरं तव । काल एव हि भूतानां प्रभुरप्ययभावयोः ॥ ३ ॥
अहं त्वमित्यपार्था धीरज्ञानात्पुरुषस्य हि । स्वाप्नीवाभात्यतद्ध्यानाद्यया बन्धविपर्ययौ ॥ ४ ॥
तद्गच्छ ध्रुव भद्रं ते भगवन्तमधोक्षजम् । सर्वभूतात्मभावेन सर्वभूतात्मविग्रहम् ॥ ५ ॥
भजस्व भजनीयाङ्घ्रिमभवाय भवच्छिदम् । युक्तं विरहितं शक्त्या गुणमय्याऽऽत्ममायया ॥ ६ ॥
वृणीहि कामं नृप यन्मनोगतं मत्तस्त्वमौत्तानपदेऽविशङ्कितः ।
वरं वरार्होऽम्बुजनाभपादयोरनन्तरं त्वां वयमङ्ग शुश्रुम ॥ ७ ॥

मैत्रेय उवाच

स राजराजेन वराय चोदितो ध्रुवो महाभागवतो महामतिः ।
हरौ स वव्रेऽचलितां स्मृतिं यया तरत्ययत्नेन दुरत्ययं तमः ॥ ८ ॥
तस्य प्रीतेन मनसा तां दत्त्वैडविडस्ततः । पश्यतोऽन्तर्दधे सोऽपि स्वपुरं प्रत्यपद्यत ॥ ९ ॥
अथायजत यज्ञेशं क्रतुभिर्भूरिदक्षिणैः । द्रव्यक्रियादेवतानां कर्म कर्मफलप्रदम् ॥ १० ॥

अन्वयः—भगवान् धनेश्वरः ध्रुवम् अपेतमन्युम् वैशसात् निवृत्तम् प्रतिबुद्ध्य तत्र आगतः चारणयक्षकिन्नरैः संस्तूयमानः कृताञ्जलिम् अभ्यवदत् ॥ १ ॥ ❀ ❀ भो अनघ भो क्षत्रियदायाद यः त्वम् पितामहादेशात् दुस्त्यजम् वैरम् अत्यजः परितुष्टः अस्मि ॥ २ ॥ ❀ ❀ भवान् यक्षान् न अवधीत् यक्षाः तव भ्रातरम् न हि भूतानाम् अप्ययभावयोः कालः एव प्रभुः ॥ ३ ॥ ❀ ❀ यया बन्धविपर्ययौ अहम् त्वम् इति अपार्था धीः पुरुषस्य अज्ञानात् अतद्ध्यानात् स्वाप्नी इव हि आभाति ॥ ४ ॥ ❀ ❀ ध्रुव तत् गच्छ ते भद्रम् सर्वभूतात्मभावेन सर्वभूतात्मविग्रहम् अधोक्षजम् भवच्छिदम् गुणमय्या शक्त्या आत्ममायया युक्तम् विरहितम् भजनीयाङ्घ्रिम् भगवन्तम् अभवाय भजस्व ॥ ५–६ ॥ ❀ ❀ अङ्ग वयम् त्वाम् अम्बुजनाभपादयोः अनन्तरं शुश्रुम यत् वरार्हः नृप औत्तानपदे त्वम् अविशङ्कितः मत्तः मनोगतम् वरम् कामम् वृणीहि ॥ ७ ॥ ❀ ❀ सः महाभागवतः महामतिः ध्रुवः राजराजेन वराय चोदितः सः यया अयत्नेन दुरत्ययम् तमः तरति हरौ अचलिताम् स्मृतिम् वव्रे ततः ऐडविडः प्रीतेन मनसा ताम् दत्त्वा तस्य पश्यतः अन्तर्दधे सः अपि स्वपुरम् प्रत्यपद्यत ॥ ९ ॥ ❀ ❀ अथ भूरिदक्षिणैः क्रतुभिः द्रव्यक्रियादेवतानाम् कर्म कर्मफलप्रदम् यज्ञेशम् अयजत ॥ १० ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

द्वादशे धनदेनाभिनंदितः पुरमागतः । यज्ञैरिष्ट्वा हरेः स्थानमारुरोहेति कीर्त्यते ॥ ( १ ) ॥

वैशसाद्वधान्निवृत्तं ज्ञात्वा ॥ १ ॥ ❀ ❀ हे क्षत्रियदायाद क्षत्रियपुत्र, अत्यजः त्यक्तवानसि ॥ २ ॥ ❀ ❀ न च वैरस्य कारणमस्तीत्याह न भवानिति । अप्ययभावयोर्मृत्युजन्मनोः ॥ ३ ॥ ❀ ❀ कथं तर्ह्यहं हंतेत्यादिबुद्धिस्तत्राह

१. प्रा० पा०—वरार्होऽत्यज० ।

अहं त्वमिति। आभाति प्रकाशते जायत इत्यर्थः। अतद्ध्यानाद्देहानुसंधानात् यया धिया कर्मात्मको बंधः विपर्ययो दुःखादिश्च ॥ ४ ॥ ❀ ❀ तत्तस्माद्गच्छ गत्वा च भगवंतं भजस्वेत्युत्तरेणान्वयः। सर्वभूतात्मको विग्रहो यस्य तम् ॥ ५ ॥ ❀ ❀ भजनीयावंघ्री यस्य तम्। गुणमय्या शक्त्या युक्तम्। किं तत्त्वतः। न, आत्ममायया। अतस्तत्त्वतस्तया विरहितं यद्वा शक्त्यात्ममायया विरहितं च सगुणनिर्गुणभेदेन ॥ ६ ॥ ❀ ❀ काममसंकोचेन अविशंकितो निर्भयः अनन्तर-मतिनिकटम् ॥ ७ ॥ ❀ ❀ स वराय चोदित इत्यनुवादरूपं पृथग्वाक्यम्। अतः स वत्र इति तच्छब्दस्यापौन-रुक्त्यम् ॥ ८-९ ॥ ❀ ❀ द्रव्यादिशब्दैर्यज्ञादिकर्म लक्ष्यते। द्रव्यक्रियादेवतानां कर्म साध्यं तत्फलरूपं कर्मफलप्रदं चेत्यर्थः ॥ १० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

"युद्धे हिंसाक्रूरयोश्च वैशसस्त्रिषु वर्त्तते" इति निरुक्तिः। यत्र मनुनोपदिष्टं तत्रेत्यर्थः ॥ १ ॥ ❀ ❀ भो भो इति संबुद्धिद्वये पृथग्योज्यम्। क्षत्रियदायादेति युद्धलक्षणक्षत्रधर्मनिष्ठत्वात्। अनघेति समर्थेनापि प्राक्तनमात्सर्याद् भ्रातृहंता न हत इति लोकापवादरूपाद्यतिवर्त्तनायैवं त्वया यक्षवधादि कृतम्, अन्यथा हरिभक्तस्य तवात्र प्रवृत्तिर्न संभवतीत्यभिप्रायः। स्वधर्मनिष्ठत्वा-ल्लोकापवादभीतत्वाच्च तवाहं प्रीतोस्मि। परितोषे कारणांतरमप्याह। यस्त्वमिति ॥ २ ॥ ❀ ❀ मद्भृत्ययक्षहंतृत्वं तव नास्तीति ममापि त्वया साकं वैरं नास्तीति मनोः स्वस्य चैकमत्यं व्यंजयन्नाह—न भवानिति। प्रभुः कारणम् ॥ ३ ॥ ❀ ❀ अत्र ध्रुवः शंकते—कथमिति। पुरुषस्यात्मनोऽज्ञानात्। इत्यर्थ इति। अनेकार्थत्वाद्धातूनामत्र भातेराविर्भावार्थकत्वमुपसर्गवशाद्वेति भावः ॥ ४ ॥ ❀ ❀ यतोऽहंकारादिकमात्माज्ञानकार्यमेव, तन्निवृत्तये भगवद्भजनमेव कार्यमतस्तदपवादार्थं "भज सर्वात्मना हरिम्" इति श्रीरुद्रगीतोक्तेस्तस्माद्धेतोः, विग्रहो देहः ॥ ५ ॥ ❀ ❀ युक्तं सृष्ट्यादिकाले विरहितमन्यदा ॥ ६ ॥ ❀ ❀ नृपेति। राज्यपालनोपयोगिवरदानार्हस्त्वमसीत्याह। तत्र हेतुत्वेन पितृनाम्ना मंत्रयति—औत्तानपद इति। त्वं राजास्यहं च राजराजोस्म्यतोन्वर्थनामकरणेच्छया वरदाने प्रवृत्तिः! वस्तुतस्तु हरिभक्तस्य तवादरे हरिरेवादृतः स्यादित्याह—वराहं इति ॥ ७ ॥ ❀ ❀ तमः संसारम् ॥ ८ ॥ ❀ ❀ तस्य ध्रुवस्य ततः तां भगवत्यचलितस्मृतिम्। इडविडाया अपत्यमै-लविलः डलयोरैक्यं कुबेरः। ततो वरदानानंतरम्। सोऽपि ध्रुवोऽपि ॥ ९ ॥ ❀ ❀ अथ नगरमागत्य। इत्यर्थ इति। द्रव्यक्रियादेवतानां पुरोडाशावहननेंद्रादिदेवतार्चनाभिर्भगवानेव फलरूपेण साध्यते। स एव कर्मवैगुण्यनिवर्त्तकत्वेन सत्फलदाता चेति भावः। विश्वनाथस्तु—द्रव्यक्रियादेवतासंबंधिकर्मप्रदं कर्मफलप्रदञ्चेत्यर्थः। स एव कर्म कारयति स एव कर्मफलं योजयतीति भाव इत्याह ॥ १० ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

यज्ञैः भगवदर्पितैः हरिमिष्ट्वा तत्र यत्र मनुरुपदिष्टवांस्तत्रैव ॥ १ ॥ ❀ ❀ क्षत्रियदायादेति संबुद्धिः दुस्त्यजत्वे हेतुः यद्यस्मात् ॥ २-३ ॥ ❀ ❀ अज्ञानात् स्वरूपाज्ञानात् ॥ ४ ॥ ❀ ❀ तदिति युग्मकम्। तत् तस्मात् सर्वत्र तस्यैव हेतुत्वात् गच्छ तमेव प्राप्नुहि गत्वा चेत्यस्यैकवाक्यतायै अध्याहृते भजस्व छत्रचामरादिभिः सेवस्व सर्वभूतानामात्मा मूलस्वरूपमिति भावनया यतो मध्यमाकारत्वेऽपि सर्वभूतात्मकः सर्वभूतव्यापको विग्रहो यस्येति निर्गुणपक्षे, सगुणपक्षे पातालपादादिकतया सर्वभूतस्वरूपो विराड् विग्रहो यस्य ॥ ५-७ ॥ ❀ ❀ अनुवादरूपमुक्तस्याभिधानोपसंहाररूपम्। अतः। पृथग्वाक्यत्वात् ॥ ८ ॥ ❀ ❀ ततः वरप्रदानानन्तरम् ॥ ९ ॥ ❀ ❀ अथ पुरप्रतिपत्त्यनन्तरं राजत्वव्यवहार-निष्पत्त्यर्थं स्वप्रतिमूर्तिद्वारैव यज्ञेशमयजत। द्रव्यं व्रीह्यादि, क्रिया अवधातादि, देवताग्न्यादि तेषां कर्म तैः क्रियते साध्यते इति कर्म द्रव्याद्यात्मकयज्ञसाध्यं फलं तद्रूपम् "एतस्यैवानन्दस्य सर्वाणि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः अन्तर्यामितया तादृशफलप्रदं च "फलमत उपपत्तेः" इति न्यायात् चकाराध्याहारादित्यर्थ इत्युक्तम् ॥ १० ॥

## श्रीमद्वीरराघवव्याख्या

एवं पितामहेन स्वायंभुवेनानुशिष्टो ध्रुवः पुण्यजनवधान्निवृत्तः कुबेराल्लब्धवरः स्वधर्माराधितगोविन्दो गुप्ताखिलक्षिति-मण्डलो लब्धध्रुवक्षितिर्बभूवेत्याह मुनिर्द्वादशेन ध्रुवमिति। मनूपदेशेनापगतक्रोधमत एव वैशसात् यक्षाणां वधान्निवृत्तं ध्रुवं प्रतिबुद्ध्य ज्ञात्वा भगवान् धनेश्वरस्तत्र ध्रुवसंनिधावागतश्चारणादिभिः संस्तूयमानः बद्धाञ्जलिं ध्रुवमभ्यवदत् उवाच ॥ १ ॥ ❀ ❀ उक्तमेवाह भो भो इति षड्भिः। हे क्षत्रियदायाद! क्षत्रियपुत्र! ध्रुव! क्रोधत्यागनिमित्तहर्षातिशयात् द्विरुक्तिः, हे अनघ! यक्षवधनिमित्तपापरहित! ते तुभ्यं परितुष्टोऽस्मि कुतः यत् यस्मात् पितामहस्य स्वायंभुवस्योपदेशादनु-शासनाद्दुस्त्यजमपि वैरमत्यजः त्यक्तवानसि ॥ २ ॥ ❀ ❀ ननु नाहमनघः पुण्यजनहननकर्तृत्वनिमित्तपापसंबन्धात्तत्राह

नेति। भवान् नापि यक्षान् हतवान् नापि यक्षास्त्वद्भ्रातरं हतवन्तः। कुतः हि यस्मात् भूतानामप्ययभावयोर्मरणोत्पत्त्योः कालः कालशरीरक ईश्वर एव प्रभुः समर्थः कारणमित्यर्थः॥ ३॥ ❀ ❀ ननु हन्तृत्वं तत्प्रयुक्तस्वेदश्रमादिकं च मया यक्षैश्चापरोक्षमनुभूयमानमपह्नुत्येश्वर एव कथं हन्तेत्युच्यते तत्राह अहं त्वमिति। पुरुषस्याज्ञानात् देहविलक्षणात्मयाथात्म्यज्ञानाभावात् अतद्देहः तस्य ध्यानात् असद्ध्यानादिति पाठेऽप्ययमेवार्थः। अहं त्वमिति। अत्र हन्तेत्यध्याह्रियते सामर्थ्यात् देवादिदेहेषु तत्संसृष्टेषु जीवेषु च ;अहं हन्ता त्वं हन्ता इत्येवंरूपा अत एवापार्था अर्थशून्या अहं त्वमिति प्रतीतौ योऽर्थो विषयः प्रत्यगूपस्तद्रहिता हन्तेति प्रतीतौ योऽर्थो विषयस्तद्रहिता च अन्यथाज्ञानविपरीतज्ञानरूपेति यावत्, बुद्धिः स्वाप्नीव स्वाप्नधीरिव आभाति। धर्म्यन्तरे धर्मान्तरप्रतीतिरन्यथाज्ञानं यथा पीतः शङ्ख इति शुक्ले पीतिम्नः प्रतीतिः। धर्म्यन्तरस्य धर्म्यन्तरत्वेन प्रतीतिर्विपरीतज्ञानं यथेदं रजतमिति शुक्त्याश्रयस्य धर्मिणो रजतत्वाश्रयत्वेन प्रतीतिः। हन्ताहमिति ज्ञानं तूभयविधमपि अहमर्थस्य देहरूपधर्मिणोऽहमर्थात्मरूपधर्म्यन्तरत्वेन प्रतीतेर्विपरीतज्ञानरूपत्वम्। अहंपर्य्याये देहे च हन्तृत्वादिरूपधर्मान्तरप्रतीतेश्चान्यथाज्ञानरूपत्वं च आभाति प्रतीयत इत्यर्थः। प्रतीतिः प्रमिताप्रमितसाधारणं ज्ञानम्। आत्मनोऽहन्तृत्वादिकं भगवता गीतं "य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यते॥" इति यद्यप्यहन्तुरात्मनोऽज्ञानाद्धन्तृत्वादिप्रतीतिमात्रं तथापि देहस्य तदस्त्येवेति चेत् मैवं, देहस्यापि नित्यं जातमृतस्य तदभावात्। तथा चोक्तम् "अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम्। तथापि त्वं महाबाहो! नैनं शोचितुमर्हसि॥" इति। नित्यं मृतमिति हेतुगर्भं नित्यं मृतत्वात् पुनरस्य मरणकर्तृत्वप्रयुक्तशोको न कार्य इत्यर्थः। एवं च हननकर्तृकर्मत्वानाश्रययोर्देहात्मनोर्हन्तृत्वादिबुद्धिरन्यथाज्ञानविपरीतज्ञानजनकानाद्यविद्यात्मकाज्ञानकार्यत्वात्स्वप्नबुद्धिरिव बाधितविषयेति भावः। अज्ञानस्यानात्मन्यात्मबुद्धिरूपविपरीतज्ञानजनकत्वमुक्तम् "अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः। अविद्यातरुसंभूतं बीजमेतद्द्विधा स्थितम्॥" इति। अत्र स्वाप्नीवापार्था भातीत्यनेन दृष्टान्तेन धियो बाधितविषयत्वं विवक्षितं, विषयस्यापि बाधो नाम तत्र वृत्तिप्रतिबन्ध एव न त्वसत्यत्वं दृष्टान्तदार्ष्टान्तिकयोरुभयोरपि ज्ञानतद्विषययोः पारमार्थ्यात् तत्र यथा स्वाप्नानां गजतुरङ्गादीनां "न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते" इति श्रुतेरीश्वरसृष्टानां स्वप्नद्रष्टैकानुभाव्यानां तत्कालमात्रावसायिनां परमार्थानामपि तेषु क्षणिकत्वेन गजतुरगाद्यर्थिनः प्रवृत्तिप्रतिबन्धरूपो बाधः। एवं देहे आत्मभ्रान्तिनिमित्तकोपादित्सया प्रवर्त्तितुमिच्छोः प्रवृत्तिप्रतिबन्धरूपो बाधः, आत्मनि देहे च हन्तृत्वादिनिमित्तशोकादौ प्रवृत्तिप्रतिबन्धरूपो बाध इत्युभयत्रानुगतोऽर्थः क्रोडीकर्तव्यः। देहात्मबुद्धिः स्वाप्नधीवन्न तात्त्विकसुखदुःखादिमात्रहेतुरपि तूत्तरोत्तरजन्ममरणादिरूपसंसृतिहेतुत्वेन महदनर्थकरी चेत्याह ययेति। यया अहं त्वमिति बुद्ध्या बाधः जन्ममरणादिरूपः संसारस्तत्प्रयुक्तो विपर्ययः स्वाभाविकापहतपाप्मत्वाद्याकारस्तद्विपरीतानपहतपाप्मत्वाद्याकारश्च भवत इत्यर्थः। अयं भावः—यद्यप्यपरोक्षं त्वया यक्षैश्चानुभूयते हन्तृत्वादिकं तत्प्रयुक्तस्वेदश्रमादिकं च, तथापि देहात्मनोरुभयोरपि "हन्ता चेन्मन्यते हतम्, य एनं वेत्ति हन्तारम्, अथ चैनं नित्यजातम्" इत्यादिप्रमाणैर्हन्तृत्वादिबुद्धेरज्ञानमूलत्वप्रतिपादनात् "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा" इत्यादिभिरीश्वरस्यैव कालशरीरकस्य हन्तृत्वप्रतिपादनाच्च स्वेदश्रमादेश्च सद्वारकतयापीश्वर एव "काठिन्यवान् यो बिभर्ति तस्मै भूम्यात्मने नमः" इत्युक्तभूमिद्वारककाठिन्यवदुपपत्तेः न कोऽपि प्रमाणबाध इति॥ ४॥ ❀ ❀ तत्तस्मात्कालशरीरकस्य भगवत एवोत्पत्तिमरणादिहेतुत्वात्तमेव भगवन्तं सर्वाणि भूतानि पृथिव्यादीनि आत्मा जीवश्च विग्रहः शरीरं यस्य तमधोक्षजं सर्वभूतात्मविग्रहमित्यनेन यक्षेष्वपि भगवदात्मकत्वबुद्धिः कार्येति विवक्षितं, भजस्वेत्युत्तरत्रान्वयः। अभवाय मुक्तये हे ध्रुव! ते तुभ्यं भद्रं मङ्गलमस्तु गच्छ गृहान् प्रतीति शेषः। भजनप्रकारमाह सर्वभूतात्मभावेन। चिदचिच्छरीरकत्वेन प्रकारेण अधोक्षजम् अधः कृताः परावृत्ताः अक्षजा इन्द्रियवृत्तयो यस्मात् तमिन्द्रियागोचरमित्यर्थः, नन्वधोक्षजश्चेत्कथं भजनीयस्तत्राह। भजनीयौ अङ्घ्री चरणौ यस्य तम् अतीन्द्रियत्वेऽपि योगयुङ्मनसा ध्येयचरणमित्यर्थः। नन्वस्मदादिवत्तस्यापि संसारित्वात्कथममुमेव भजस्वेत्युच्यते तत्राह। भवच्छिदं भवं संसारं छिनत्तीति तं न केवलं स्वयमसंसार्येव अपितु भजतामपि भवच्छिदित्यर्थः। ननु प्रकृतिसम्बन्धतत्कार्यादिकमेव हि संसारः। एवं च जीववत्सर्वभूतात्मविग्रहमिति प्रकृतिसंबन्धविधानात्कथं तस्य भवच्छित्त्वं तत्राह। सत्त्वादिगुणमय्या शक्त्या कार्योपयुक्तस्वापृथक्सिद्धविशेषणभूतया आत्मनः स्वस्य संबन्धिन्या मायया प्रकृत्या युक्तं नियन्तृत्वेन युक्तं तया विशेषेण रहितं तदाधीन्येन तया विरहितमित्यर्थः। जीवस्तु मायापरवश इति संसारी परमेश्वरस्तु तस्याः प्रभुरित्यसंसारीति भावः॥ ५-६॥ ❀ ❀ एवं परमपुरुषार्थलक्षणमोक्षसाधनत्वेन प्रकृतिपुरुषशरीरकस्यामृतेश्वरस्य भगवतो भक्तिं विधेहीत्युपदिश्य तन्मनःपरिशीलनाय त्रिवर्गे तं प्रलोभयति वृणीहीति। हे औत्तानपदे! नृप! यन्मनोगतं मनीषितं तं कामं वरमविशङ्कितः असंकोचेन त्वं वृणीहि वरय, धर्मादीनां त्रयाणां मध्ये यत्तवेप्सितं तद्वृणीहीत्यर्थः। त्रिवर्गवरणं तवानुचितमिति व्यञ्जयन् विशिनष्टि। अङ्ग! हे ध्रुव! परं केवलं परैर्ब्रह्मादिभिरप्यर्ह्येते पूज्येते इत्यर्हौ अम्बुजनाभस्य भगवतः पादौ तयोरनन्तरमव्यवहितचित्तमित्यर्थः। त्वां शुश्रुम॥ ७॥ ❀ ❀ एवं त्रिवर्गे प्रलोभितो महाभागवतो ध्रुवस्त्रिवर्गमनादृत्य भगवच्चरणारविन्दभक्तिदार्ढ्यमेवावृणोदित्याह मुनिः स इति। राजराजेन कुबेरेण वरवरणाय चोदितः प्रवर्त्तितः स ध्रुवः महाभागवतः भागवतश्रेष्ठः महामतिः धर्मादिष्वल्पा-

स्थिरमतिः हेतुगर्भमिदं विशेषणद्वयं, भागवतानां त्रिवर्गस्य निरयप्रायत्वादिति भावः। हरौ भगवति अचलितां दृढां स्मृतिं वव्रे। स वराय चोदित इत्यनुवादरूपं पृथग्वाक्यम्, अतः स वव्र इति तच्छब्दस्य न पौनरुक्त्यम्। दृढायाः स्मृतेः फलमाह। यतः अचलितायाः स्मृतेः दुरत्ययं दुरतिक्रमणीयमपि तमः तमःकार्यं संसारात्मकं बन्धं तरति व्यपोहति ॥ ८ ॥ ❀ ❀ ऐलविलः कुबेरः प्रीतेन मनसा तुष्टेन मनसा तां भगवत्यचलितां स्मृतिं दत्त्वा तस्य ध्रुवस्य पश्यतः सतः अन्तर्दधे अन्तर्हितवान् सोऽपि ध्रुवोऽपि स्वपुरं प्रत्यपद्यत अगात् ॥ ९ ॥ ❀ ❀ अथानन्तरं भूरिदक्षिणैः द्रव्यं पुरोडाशादिक्रिया ऋत्विग्व्यापारः देवता इन्द्रादिस्तेषां सम्बन्धमात्रे षष्ठी द्रव्यादिसम्बन्धिभिः द्रव्यादिसमवायरूपैरिति यावत्, क्रतुभिः कर्मसाध्यम् आराध्यमिति यावत्, न केवलं कर्मैव अपितु कर्मणां फलप्रदं यज्ञानामीशं प्रयोजयितारं चायजत यष्टवान्। कामकर्मफलप्रदमिति पाठे विहितप्रतिषिद्धयोः फलमित्यर्थः ॥ १० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

साधनसामग्र्यां भगवत्प्रसादात्स्वरूपानन्दानुभवलक्षणो मोक्षोऽपि तत्तद्योग्यतानुसारेण प्राप्यते पुरुषैरिति निर्दिश्यतेऽस्मिन्नध्याये। तत्रादौ ध्रुवकृतापराधं क्षान्त्वा वैश्रवणेन ध्रुवाय वरप्रदानप्रकारं वक्ति। ध्रुवं निवृत्तमित्यादिना। वैशसाद्युद्धात् ॥ १ ॥ ❀ ❀ परितोषहेतुमाह। यस्त्वमिति ॥ २ ॥ ❀ ❀ स्वस्य मनोश्चैकमत्यं व्यनक्ति। न भवानिति। अप्ययभावयोर्मरणजन्मनोः ॥ ३ ॥ ❀ ❀ नन्वहं मच्छत्रूनवधिषं न त्वमेतदकार्षीरिति प्रदर्शनं कथमत्राह। अहं त्वमिति। पुरुषस्य परमेश्वरस्य कर्तृत्वाज्ञानादहं-त्वं कर्तेति धीरपार्था भ्रान्ता भाति "नाहं कर्ता न त्वं कर्ता कर्ता यस्तु स्वयं प्रभुः" इत्यनेन परमेश्वरकर्तृत्वस्य प्रामाणिकत्वप्रतीतेः कथमिव स्वाप्नीव यथा स्वप्ने जाग्रत्त्वबुद्धिः आत्मन्यविद्यमानकर्तृत्वाभिमानादनर्थोऽपि स्यादित्याह। अनुध्यानादिति। अनुध्यानात्पुनः पुनरात्मनि कर्तृत्वस्मरणात् यया कर्तृत्वधिया सुखादिरूपस्यात्मनो बन्धेन पुत्रमित्रादिस्नेहबन्धेन विपर्ययो दुःखादिर्भवतीत्यतस्तादृशी बुद्धिस्त्वया न कार्येति भावः ॥ ४ ॥ ❀ ❀ ननु जीवकृतकार्योपक्रमोपसंहारदर्शनात्कथं तस्य जीवस्य कर्तृत्वाभाव इत्याशङ्क्य कर्तृत्वादौ नियमाभावात्तद्दत्तमेव कर्तृत्वं न मम स्वतन्त्रकर्तृत्वमिति निश्चित्य तत्क्रियाविशिष्टं भगवन्तं भजस्वेत्याह तद्गच्छेति। सर्वभूतानामात्मभावेन कर्तृत्वदानादानयोः कर्ता परमात्मेति स्नेहलक्षणया बुद्ध्या सर्वभूतेष्वात्मा विग्रहो ज्ञानादिगुणपूर्णा मूर्तिर्यस्य स तथा तं यद्वा सर्वभूतानामात्मनि देहे विग्रहः प्रादेशत्वादिलक्षणो यस्य स तथा तम् ॥ ५ ॥ ❀ ❀ प्रादेशाद्याकारत्वेनावस्थानं कथं गुणशक्तिमन्तरेणेत्यत उक्तं युक्तमिति। आत्मसामर्थ्याख्यया शक्त्या युक्तं गुणमय्यात्माधीनया मायया प्रकृत्या विरहितम् ॥ ६ ॥ ❀ ❀ यद्यपि हरेः करुणावर्षधारापात्रत्वेनान्यतः प्राप्यो वरस्तस्य नास्ति तथापि वैश्रवणो ध्रुवे प्रसन्नः किलेति द्योतनाय वरं वरयेति वक्ति। वृणीहीति। अन्यतः कथं वृणोमीत्यविशङ्कितः अम्बुजनाभस्य हरेः पादयोः सेवायां निरन्तरं सदातनं तदेकमानसमित्यर्थः ॥ ७ ॥ ❀ ❀ मुमुक्षुणायमेव वरो वरणीय इति शिक्षणाय तस्य वरादानप्रकारमाह। सराजराजेनेति ॥ ८ ॥ ❀ ❀ ऐलविलः इलविलपुत्रो वैश्रवणः ॥ ९ ॥ ❀ ❀ ब्रह्मज्ञानोत्पत्त्यै यज्ञ एव कर्तव्य इति प्रकटनाय तस्य यज्ञकरणप्रकारमाह। अथेति। अथ विषयासक्तिं विहाय पुरप्राप्त्यनन्तरं मङ्गलं कर्म प्रारब्धवान्। किं तदित्यत उक्तम् अयजतेति द्रव्यक्रियादेवतानां कर्म विषयम् अकर्मफलप्रदं मोक्षाख्यफलप्रदम् ॥ १० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

भो भो इत्यादिका देवताभिमानोक्तयः ॥ १-३ ॥ ❀ ❀ अज्ञानात् उपाध्यभिमानादेव या अहं त्वमिति धीः साऽपार्थैव अतद्ध्यानादित्यत्र अनुध्यानादिति चित्सुखः ॥ ४ ॥ ❀ ❀ तदिति युग्मकम्। सर्वभूतानामात्मरूपो विग्रहो यस्य तमिति विग्रहस्यैव परमतत्त्वरूपत्वात्। शक्त्या स्वरूपभूतया मुख्यशक्त्या युक्तं त्रिगुणमय्या स्वात्माधीनमायया विरहितं स्वाश्रययापि तया न स्पृष्टमित्यर्थः ॥ ५-६ ॥ ❀ ❀ वृणीहीति पद्यं व्याख्येयम् ॥ ७ ॥ ❀ ❀ महाभागवतोऽपि अचलां स्मृतिं वव्र इति न यावन्महतां तेज इत्यादिपितामहवाक्याद्भगवत्स्मरणादौ विघ्नमाशङ्क्येति भावः ॥ ८-९ ॥ ❀ ❀ द्रव्यक्रियादेवतामिति। द्रव्याद्यात्मकस्य यज्ञस्येत्यर्थः ॥ १०-१२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

द्वादशे धनदाल्लब्धवरो गत्वा पुरीं हरिम्। यज्ञैरिष्ट्वा विरज्यागात् सशरीरो हरेः पदम् ॥ (१) ॥

वैशसात् वधात् ॥ १-३ ॥ ❀ ❀ अतद्ध्यानादेहानुसन्धानात् बन्धः संसारश्च ततो ज्ञानानन्दमयस्य जीवात्मनो विपर्ययोऽज्ञानदुःखादिकश्च तौ ॥ ४ ॥ ❀ ❀ सर्वेषु भूतेषु आत्मनः स्वस्यैव भावो भावना तेन सर्व्वभूतानि आत्मनि विग्रहे यस्य तम्। अभवाय नास्ति भवो यस्मात्तं विष्णुं प्राप्तुं मायायाः स्वशक्तित्वाद् युक्तं स्वरूपभूतत्वाभावाद्वि-

रहितम् ॥ ५-६ ॥ ❀ ❀ अनन्तरमव्यवधानमतिनिकटमित्यर्थः ॥ ७ ॥ ❀ ❀ राज्ञा सह वर्त्तमानेषु सर्व्वेषु लोकेषु राजत इति सराजराजः कुबेरस्तेन ॥ ८ ॥ ❀ ❀ ऐडविडः कुबेरः ॥ ९ ॥ ❀ ❀ द्रव्यक्रियादेवतासम्बन्धि कर्म्मप्रदं कर्म्मफलप्रदश्चेति स एव कर्म्म कारयति स एव कर्म्मफलं भोजयतीत्यर्थः ॥ १० ॥

**श्रीमच्छुकदेवकृतः सिद्धांतप्रदीपः**

ध्रुवो धनदेनानुमोदितः स्वपुरं गत्वा यज्ञैर्हरिमाराध्य तत्पदमवापेति वर्णयति ध्रुवं निवृत्तमिति द्वादशेनाध्यायेन। वैशसाद्धिंसनात् ॥ १ ॥ ❀ ❀ यद्यतः दुस्त्यजं वैरमत्यजस्त्यक्तवान् अतः परितुष्टोऽस्मि ॥ २ ॥ ❀ ❀ अप्ययभावयोः नाशोद्भवयोः कालः "ज्ञः कालकाल"इति श्रुतिसिद्धः कालशक्तिर्भगवान् ॥ ३ ॥ ❀ ❀ अज्ञानात् आत्मस्वरूपाबोधात् अहं हिं हन्ता त्वं वध्यः इत्यादिधीः अपार्था आभाति यथा अतद्ध्यानात् पुरुषेतरभूतव्याघ्रमृगादिध्यानात् स्वाप्नी अहं व्याघ्रो हन्ताऽयं मृगो वध्य इत्यादिधीस्तद्वत् ययैव बन्धः पुनः पुनः शरीरग्रहणं विपर्य्ययः पुनः पुनस्तत्त्यागः ॥ ४ ॥ ❀ ❀ हे ध्रुव ! भद्रं भवतु गृहं गच्छ यतः स एवाप्ययभावयोः प्रभुः तत्तस्मात् तमेव भजस्वेत्युत्तरेण संबन्धः। सर्वेषां भूतानां ब्रह्मादिस्तम्ब-पर्य्यन्तानामात्मनि अन्तरात्मनि यो भावो भक्तिस्तेन सर्वभूतात्मभावेन सर्वभूतात्मत्वेन वा सर्वेषां भूतानामचेतनानामात्मनां चेतनानां च यो विग्रह आधारस्तं सर्वभूतस्वरूपो वा विग्रहो यस्य तम् ॥ ५ ॥ ❀ ❀ गुणमय्या आत्मनां जीवानां बद्धानां मायया विमोहिन्या शक्त्या शक्तिमत्तया युक्तम्। विशेषतः सर्वेश्वरत्वस्वभावतोपास्तसमस्तदोषत्वादिस्वासाधारणधर्मतस्तया रहितं तद्दोषास्पृष्टम् कामं यथेष्टम् अनन्तरं दत्तचित्तं त्वां शुश्रुम ॥ ६-७ ॥ ❀ ❀ तमः संसारम् ॥ ८-९ ॥ ❀ ❀ द्रव्या-दीनां कर्मसाध्यम् ॥ १० ॥

**गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी**

वरं लब्ध्वा हरिं चेष्ट्वा महीं मुक्त्वा वने सतः। द्वादशे तु फलं तस्य स्वर्गारोहणमीर्यते ॥ ( १ ) ॥

तदेवं पूर्वाध्याये मनूपदेशेन ध्रुवस्याहंकारादिदोषनिवृत्तिः प्रदर्शिता, इदानीं तस्य भगवद्दत्तस्थानारोहणं वक्ष्यन्नादौ बालकत्वात्तत्कृतयक्षादिवधमुपेक्ष्य तत्रागतो धनदो भगवद्भक्तत्वेन तस्मिन् स्वप्रीतिं ज्ञापयन् वरं दत्तवानित्याह—ध्रुवमिति। एवं मनूपदेशादपेतमन्युं शान्तक्रोधमत एव वैशसात् यक्षादीनां हिंसनान्निवृत्तं ध्रुवं प्रतिबुध्य चारमुखाज्ज्ञात्वा भगवान् भगवत्कृपयैश्वर्यादिमान् अत एव चारणयक्षकिन्नरैः संस्तूयमानो यत्र ध्रुवोऽस्ति तत्रागतः संस्तं कृताञ्जलिं ध्रुवमभ्यवदत् प्रीतिपूर्वक-मुवाचेत्यन्वयः ॥ १ ॥ ❀ ❀ धनदवाक्यान्येव दर्शयति—भो इति षड्भिः। भो भो क्षत्रियदायाद इति बालकत्वाद-पराधोपेक्षां सूचयति। हे अनघ निर्दोष इति संबोधयन् राज्यसंबन्धात्तवाहंकारादिदोषो जातः, सोपीदानीं मनूपदेशान्निवृत्त इति सूचयति। अहं ते परितुष्टोस्मि। तत्र हेतुमाह—यदिति। यत् यस्मात् पितामहस्यादेशादुपदेशाद् दुस्त्यजमपि वैरं त्वमत्यजः त्यक्तवानसि। यस्त्वमिति पाठान्तरम् ॥ २ ॥ ❀ ❀ मनूपदिष्टमेव तत्त्वं वैश्रवणोपि सङ्क्षेपेण तस्य तत्र दृढतासिद्ध्येनु-वदति—न भवानिति चतुर्भिः। यक्षान् भवान्नावधीत् न हतवान्, न च तव भ्रातरमुत्तमं यक्षा हतवन्त इति शेषः। ननु वधे कृतेपि कथं तदकरणमित्याशङ्क्य तत्र हेतुमाह—काल इति। हि यतो भूतानामप्ययभावयोः मृत्युजन्मनोः काल एव प्रभुः समर्थः। जीवास्तत्प्रेरिता एव तथा तथा चेष्टन्तेऽतो न तेषां मुख्यकर्तृत्वमिति भावः ॥ ३ ॥ ❀ ❀ नन्वेवं चेत्तर्हि कथमहं हतवांस्त्वं हतवानिति मुख्यतया व्यवहारस्तत्राह—अहमिति। आत्मस्वरूपाज्ञानात् अतस्तस्मिन् आत्मन्यतिरिक्ते देहे आत्मबुद्धिर्भवति। ततश्च तस्य देहस्य ध्यानात् आत्मत्वेनानुसन्धानात् स्वदेहेऽहमिति परदेहे त्वमिति धीः पुरुषस्य अज्ञस्य प्राणिजातस्यापार्था मिथ्यैव आभाति भवति। हिशब्दोवधारणे। तत्र दृष्टान्तमाह—स्वाप्नीवेति। यथा स्वप्नदृष्टस्यार्थस्य बाध्यत्वात् स्वाप्नी धीर्मृषा तथात्रापि देहे आत्मत्वबाधादियमपि मृषेत्यर्थः। अत एव ततोऽनर्थ एव भवतीत्याह—ययेति। यया भ्रान्तिरूपया धियानन्दरूपस्यात्मनो भार्यापुत्रादिस्नेहेन तत्तत्कर्मभिश्च बन्धो दुःखित्वादिविपर्ययश्च भवति तथा चेयमनर्थकारणं त्वया सर्वथा त्याज्येति भावः ॥ ४ ॥ ❀ ❀ कथमियं बुद्धिर्निवर्तेतेत्याकाङ्क्षायां भगवद्भजनादेवेत्याह—तदिति द्वाभ्याम्। यस्मादहंत्वमिति भेद-बुद्धिरनर्थकारणं तत्तस्मात्तन्निवृत्त्यर्थं राज्याधिकारित्वाद्गृहं गच्छ, गत्वा भगवन्तं भजस्वेति द्वयोरन्वयः। अधोक्षजमधः अक्षजमिन्द्रियजन्यं ज्ञानं यस्मात् तं लौकिकेन्द्रियजन्यज्ञानाविषयम्। एवं निराकारत्वमेव तस्य किं न स्यादित्याशङ्कां वारय-न्नाह—भजनीयेति। भजनीयौ अवश्यं भजनयोग्यावङ्घ्री यस्य तम्। भजनीयाङ्घ्रित्वे हेतुमाह—भवच्छिदमिति। संसार-निवर्त्तकं मुक्तिदमित्यर्थः। अतो भवायाहन्ताममतात्मकसंसारनिवृत्तये तं भजस्वेति। अधोक्षजत्वे हेतुमाह—विरहितमिति। गुणमय्यात्मशक्त्या मायया प्रकृत्या विरहितं प्राकृतकरचरणादिविग्रहरहितम्। नन्वेवमिन्द्रियातीतस्य भजनं कथं कर्तुं शक्य-मित्याशङ्क्य यावत्कृपया तद्दत्तदिव्यचक्षुषा तद्दर्शनं स्यात् तावत्। 'तावत्स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेत' इति वाक्यात स्थूलमेव स्वरूपं भजस्वेत्याह—सर्वेति। सर्वभूतात्मको विग्रहो यस्य तम्। सर्वभूतात्मत्वेनैव भजस्व। सर्वे-

भूतात्मत्वे हेतुः गुणमय्या मायया शक्त्या युक्तमिति। हे ध्रुव! अहं हितमुपदिशामि। एवमेव ते तव भद्रं कल्याणं भविष्यति ॥ ५-६ ॥ ❀ ❀ एवं भगवद्भजनमुपदिश्य तस्य भगवद्भक्तत्वं तु पूर्वत एव ज्ञातमतोऽस्य मनसि मया यक्षादिवधेन धनदस्यापराधः कृत इति शङ्कालेशोऽपि माभूदित्येतदर्थं स्वप्रीतिं दर्शयन् वराय चोदयति—वृणीहीति। हे औत्तानपदे इति ह्रस्वं छन्दोनुसारेणार्षम्। हे औत्तानपादे हे नृप! इति संबोधयन् यद्यपि त्वं मनुपौत्रत्वान्महाराजस्तथाप्यहं लोकपालत्वाद्राजराज इति सूचयति। अतो मत्तस्त्वमविशङ्कितो मया यक्षादिवधेनापराधः कृत इति शङ्कारहितः सन् स्वमनोगतं स्वाभिलषितं वरं काममसङ्कोचेन वृणीहीत्यन्वयः। ननु कथमेवं प्रार्थनां विनापि वराय चोदयसि तत्राह—वरार्ह इति। वरदानपात्रभूतोसीत्यर्थः। कथमित्याकाङ्क्षायामाह—अम्बुजं विश्वात्मकं कमलं नाभौ यस्य तस्य भगवतः पादयोरनन्तरं निकटं तत्समीपवर्त्तिनं त्वां वयं शुश्रुम श्रुतवन्तोऽतो भगवद्भक्तत्वात्त्वमस्मदङ्गतुल्यो जातोसीति सूचयन्संबोधयति—हे अङ्गेति। तथाच भगवत्कृपापात्रत्वात्तव वरदानेनास्मदुपर्यपि भगवत्कृपा स्यादिति भावः ॥ ७ ॥ ❀ ❀ एवं स ध्रुवो राजराजेन वराय वरं याचितुं यदा चोदितः प्रेरितस्तदा स ध्रुवो हरौ हरिविषयिकामचलां विघ्नैश्चालयितुमशक्यां यया स्मृत्या जनो दुरत्ययमुपायान्तरेणात्येतुं निवर्त्तयितुमशक्यं तमः आत्मावरकमज्ञानमयत्नेनानायासेनैव तरति निवर्त्तयति तां स्मृतिं वव्रे धनदाद् वृतवान्। एवं धनादिकमुपेक्ष्य तस्य हरिस्मृतिवरणे हेतुमाह—महामतिरिति। यतो महती उदारा धनाद्यपेक्षात्यागसमर्थबुद्धिमान् भवितुमर्हतीति भावः ॥ ८ ॥ ❀ ❀ तस्य ध्रुवस्य तामचलां भगवत्स्मृतिमैडविलः इडविलायाः पुत्रो धनदः प्रीतेन प्रीतियुक्तेन मनसा दत्त्वा ततस्तदनन्तरं तस्य पश्यत एवान्तर्दधेऽन्तर्हितवान्। स ध्रुवोपि स्वपुरं प्रत्यपद्यत आजगाम ॥ ९ ॥ ❀ ❀ अथ गृहागमनानन्तरं भूरिदक्षिणैः विधानतोऽप्यधिका दक्षिणा येषु तैः क्रतुभिर्यज्ञैर्यज्ञेशं यज्ञफलदातारं भगवन्तं विष्णुमयजत पूजितवान्। न केवलं यज्ञस्यैव फलदाता स किंतु सर्वेषामेव कर्मणामित्याह—द्रव्येति। द्रव्यं देहः क्रियाः इन्द्रियाणि देवतास्तदधिष्ठात्र्यस्तासां यानि सर्वाणि दानाध्ययनादीनि शुभाशुभप्रवृत्तिलक्षणानि तेषां फलप्रदमित्यर्थः। 'कर्मकर्मफलप्रदम्' इति पाठान्तरम्। तत्रापि द्विरुक्तिः कर्मसाफल्यज्ञापनार्थम् ॥ १० ॥

### भाषानुवादः

### ध्रुवजीको कुबेरका वरदान और विष्णुलोककी प्राप्ति

श्री मैत्रेयजी कहते हैं—विदुरजी! ध्रुवका क्रोध शान्त हो गया है और वे यक्षोंके वधसे निवृत्त हो गये हैं, यह जानकर भगवान् कुबेर वहाँ आये। उस समय यक्ष, चारण और किन्नर लोग उनकी स्तुति कर रहे थे। उन्हें देखते ही ध्रुवजी हाथ जोड़कर खड़े हो गये। तब कुबेरने कहा ॥ १ ॥ ❀ ❀ श्रीकुबेरजी बोले—शुद्धहृदय क्षत्रियकुमार! तुमने अपने दादाके उपदेशसे ऐसा दुस्त्यज वैर त्याग दिया; इससे मैं तुमपर बहुत प्रसन्न हूँ ॥ २ ॥ ❀ ❀ वास्तवमें न तुमने यक्षोंको मारा है और न यक्षोंने तुम्हारे भाईको, समस्त जीवोंकी उत्पत्ति और विनाशका कारण तो एकमात्र काल ही है ॥ ३ ॥ ❀ ❀ यह मैं-तू आदि मिथ्याबुद्धि तो जीवको अज्ञानवश स्वप्नके समान शरीरादिको ही आत्मा माननेसे उत्पन्न होती है। इसीसे मनुष्यको बन्धन एवं दुःखादि विपरीत अवस्थाओंकी प्राप्ति होती है ॥ ४ ॥ ❀ ❀ ध्रुव! अब तुम जाओ, भगवान् तुम्हारा मङ्गल करें। तुम संसारपाशसे मुक्त होनेके लिए सब जीवोंमें समदृष्टि रखकर सर्वभूतात्मा भगवान् श्रीहरिका भजन करो। वे संसार-पाशका छेदन करनेवाले हैं तथा संसारकी उत्पत्ति आदिके लिये अपनी त्रिगुणात्मिका मायाशक्तिसे युक्त होकर भी वास्तवमें उससे रहित हैं। उनके चरणकमल ही सबके लिये भजन करने योग्य हैं ॥ ५-६ ॥ प्रियवर! हमने सुना है, तुम सर्वदा भगवान् कमलनाभके चरणकमलोंके समीप रहनेवाले हो; इसलिये तुम अवश्य ही वर पानेयोग्य हो। ध्रुव! तुम्हें जिस वरकी इच्छा हो, मुझसे निःसङ्कोच होकर माँग लो ॥ ७ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—विदुरजी! यक्षराज कुबेरने जब इस प्रकार वर माँगनेके लिये आग्रह किया, तब महाभागवत महामति ध्रुवजीने उनसे यही माँगा कि मुझे श्रीहरिकी अखण्ड स्मृति बनी रहे, जिससे मनुष्य सहज ही दुस्तर संसारसागरको पार कर जाता है ॥ ८ ॥ ❀ ❀ इडविडाके पुत्र कुबेरजीने बड़े प्रसन्न मनसे उन्हें भगवत्स्मृति प्रदान की। फिर उनके देखते-ही-देखते वे अन्तर्धान हो गये। इसके पश्चात् ध्रुवजी भी अपनी राजधानीको लौट आये ॥ ९ ॥ ❀ ❀ वहाँ रहते हुए उन्होंने बड़ी-बड़ी दक्षिणावाले यज्ञोंसे भगवान् यज्ञपुरुषकी आराधना की, भगवान् ही द्रव्य, क्रिया और देवता सम्बन्धी समस्त कर्म और उसके फल हैं तथा वे ही कर्मफलके दाता भी हैं ॥ १० ॥

**सर्वात्मन्यच्युतेऽसर्वे तीव्रौघां भक्तिमुद्वहन्। ददर्शात्मनि भूतेषु तमेवावस्थितं विभुम् ॥ ११ ॥**
**तमेवं शीलसम्पन्नं ब्रह्मण्यं दीनवत्सलम्। गोप्तारं धर्मसेतूनां मेनिरे पितरं प्रजाः ॥ १२ ॥**
**षट्त्रिंशद्वर्षसाहस्रं शशास क्षितिमण्डलम्। भोगैः पुण्यक्षयं कुर्वन्नभोगैरशुभक्षयम् ॥ १३ ॥**

एवं बहुसवं कालं महात्माविचलेन्द्रियः। त्रिवर्गौपयिकं नीत्वा पुत्रायादान्नृपासनम् ॥ १४ ॥
मन्यमान इदं विश्वं मायारचितमात्मनि। अविद्यारचितस्वप्नगन्धर्वनगरोपमम् ॥ १५ ॥
आत्मस्त्र्यपत्यसुहृदो बलमृद्धकोशमन्तःपुरं परिविहारभुवश्च रम्याः।
भूमण्डलं जलधिमेखलमाकलय्य कालोपसृष्टमिति स प्रययौ विशालाम् ॥ १६ ॥
तस्यां विशुद्धकरणः शिववार्विगाह्य बद्ध्वाऽऽसनं जितमरुन्मनसाऽऽहृताक्षः।
स्थूले दधार भगवत्प्रतिरूप एतद् ध्यायंस्तदव्यवहितो व्यसृजत्समाधौ ॥ १७ ॥
भक्तिं हरौ भगवति प्रवहन्नजस्रमानन्दबाष्पकलया मुहुरर्द्यमानः।
विक्लिद्यमानहृदयः पुलकाचितांगो[1] नात्मानमस्मरदसाविति मुक्तलिङ्गः[2] ॥ १८ ॥
स ददर्श विमानाग्र्यं नभसोऽवतरद् ध्रुवः। विभ्राजयद्दश दिशो राकापतिमिवोदितम् ॥ १९ ॥
तत्रानु देवप्रवरौ चतुर्भुजौ श्यामौ किशोरावरुणाम्बुजेक्षणौ।
स्थिताववष्टभ्य गदां सुवाससौ किरीटहाराङ्गदचारुकुण्डलौ ॥ २० ॥

अन्वयः—सर्वात्मनि असर्वे अच्युते तीव्रौघाम् भक्तिम् उद्वहन् आत्मनि भूतेषु अवस्थितम् तम् एव विभुम् ददर्श ॥ ११ ॥ प्रजाः एवम् शीलसम्पन्नम् ब्रह्मण्यम् दीनवत्सलम् धर्मसेतूनाम् गोप्तारम् तम् पितरम् मेनिरे ॥१२॥ ❀ ❀ भोगैः पुण्यक्षयम् अभोगैः अशुभक्षयम् कुर्वन् षट्त्रिंशद्वर्षसाहस्रम् क्षितिमण्डलम् शशास ॥ १३ ॥ ❀ ❀ अविचलेन्द्रियः महात्मा एवम् बहुसवम् कालम् त्रिवर्गौपयिकम् नीत्वा इदम् विश्वम् आत्मनि मायारचितम् अविद्यारचितस्वप्नगन्धर्वनगरोपमम् मन्यमानः पुत्राय नृपासनम् अदात् ॥१४-१५॥ ❀ ❀ सः आत्मस्त्र्यपत्यसुहृदः बलम् ऋद्धकोशम् अन्तःपुरम् च रम्याः परिविहारभुवः जलधिमेखलम् भूमण्डलम् कालोपसृष्टम् इति आकलय्य विशालाम् प्रययौ ॥ १६ ॥ ❀ ❀ तस्याम् शिववाः विगाह्य विशुद्धकरणः आसनम् बद्ध्वा जितमरुत् मनसा आहृताक्षः भगवत्प्रतिरूपे स्थूले एतत् दधार ध्यायन् अव्यवहितः समाधौ तत् व्यसृजत् ॥ १७ ॥ ❀ ❀ भगवति हरौ अजस्रम् भक्तिम् प्रवहन् आनन्दबाष्पकलया मुहुः अर्द्यमानः विक्लिद्यमानहृदयः पुलकाचिताङ्गः मुक्तलिङ्गः आत्मानम् असौ इति न अस्मरत् ॥ १८ ॥ ❀ ❀ सः ध्रुवः नभसः अवतरत् उदितम् राकापतिम् इव दश दिशः विभ्राजयत् विमानाग्र्यम् ददर्श ॥ १९ ॥ ❀ ❀ अनु तत्र चतुर्भुजौ श्यामौ किशोरौ अरुणाम्बुजेक्षणौ सुवाससौ गदाम् अवष्टभ्य स्थितौ किरीटहाराङ्गदचारुकुण्डलौ देवप्रवरौ ॥ २० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

सर्वस्यात्मनि असर्वे सर्वोपाधिवर्जिते ॥ ११-१२ ॥ ❀ ❀ भोगैरैश्वर्यादिभिः अभोगैर्यज्ञाद्यनुष्ठानैः ॥ १३ ॥ ❀ ❀ बहवः सवा यागाः संवत्सरा वा यस्मिंस्तं कालं त्रिवर्गौपयिकं त्रिवर्गसाधकं नीत्वा अविचलानि संयतानींद्रियाणि यस्य ॥ १४ ॥ ❀ ❀ इदं देहादि भगवन्माययात्मनि स्वस्मिन् रचितं मन्यमानः। अत्राविद्यासृष्टिं दृष्टांतयति। अविद्यारचितेति ॥ १५ ॥ ❀ ❀ आत्मा देहः। आत्मादि मायिकमपि पुनः कालेनोपसृष्टमनित्यमाकलय्य विचिंत्य विशालां बदरिकाश्रमम् ॥ १६ ॥ ❀ ❀ तत्र तत्कृतमष्टांगयोगमाह। तस्यां शिवं वाः उदकं विगाह्य प्रविश्येति स्नानादिनियमा उक्ताः। विशुद्धकरण इति शमादयो यमाः। आसनादीनि स्फुटमेवोक्तानि। जितो मरुत्प्राणो येन आहृतान्यक्षाणि येन भगवतः प्रतिनिधिभूते स्थूले विराड्रूपे एतन्मनो दधार ध्यायन्नव्यवहितो ध्यातृध्येयभेदशून्यः सन्समाधौ स्थितस्तत्स्थूलं व्यसृजत् ॥ १७ ॥ ❀ ❀ एवमजस्रं नित्यं हरौ भक्तिं प्रकर्षेण वहन्नसौ ध्रुवोऽहमित्यात्मानं न सस्मार। यतो मुक्तलिंगस्त्यक्तशरीराभिमानः। तत्र हेतवः आनंदबाष्पस्य कलया बिन्दुप्रवाहेणाभिभूयमानः विक्लिद्यमानं द्रवद् हृदयं यस्य पुलकैर्व्याप्तांगः ॥ १८-१९ ॥ ❀ ❀ अन्वनन्तरं देवप्रवरौ ददर्शेत्यनुषंगः। गदामवष्टभ्य स्थितौ किरीटादिभिः सहिते चारुणी कुण्डले ययोः ॥ २० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

राजानो हि देवब्राह्मणादितर्पकान् क्रतून्कुर्वंति। तान्विना न राज्ञो व्यवहारसिद्धिरिति तदनुरोधेनैव तस्य यज्ञादिकर्मकरणं स्वप्रतिमूर्तिद्वारैव। वस्तुतस्तु—स स्वयमवकाशमेव कर्मणि नैव लभत इत्याह—सर्वात्मनीति। तीव्रौघां कालव्यवधान-

---

१. प्रा० पा०—कान्विता०। २. प्रा० पा०—मुक्तसङ्गः।

रहिताम्। आत्मन्यंतःकरणे भूतेषु बहिरपि तद्ध्यानपरिपाकात्स्फूर्त्या तमेव यं पुरा तपसा प्रत्यक्षीचकारेत्यर्थः। अत्र तीर्थोऽकार-प्रश्लेषं विना व्याचख्यौ–सर्वे पूर्णे "विश्वः पूर्णस्तथा सर्वस्समस्तश्चाभिधीयते" इत्यभिधानात्। "सर्वः शर्वः शिवः स्थाणुः" इति नामत्वात्सर्वनामसंज्ञाभावात्स्मिन्नादेशाभावः। "सर्वादिः सर्वकार्यी स्यान्न चेद्गौणोऽथ वाभिधा" इत्युक्तेः॥ ११-१२॥ ❁ ❁ आदिना व्रतनियमादिग्रहः। कुर्वन् कर्तुमिच्छन्नित्यर्थः। अत्र तुमर्थे शतृप्रत्ययः। तुमुनि च सर्वत्रेच्छतिराक्षेपलब्ध एव। यथा देवदत्तो भोक्तुं व्रजतीत्यत्र भोक्तुमिच्छन्व्रजतीत्यर्थो लभ्यते इति तस्य पुण्यपापक्षयचिकीर्षा दैन्येनैव। वस्तुतस्तूत्पन्नप्रेमत्वात्तस्य पुण्यपापे नैव स्त इति पूर्वं भगवदवतारेषु गणनयापि तस्य ते नोचिते इति भावः॥ १३॥ ❁ ❁ "सर्वः संधानयज्ञाब्द-सामकालोद्भवेषु च" इति निरुक्तिः। नीत्वा गमयित्वा॥ १४॥ ❁ ❁ गंधर्वनगरं तु वायुनिर्मितहर्म्यगोपुरगजाश्वादिव-त्प्रतीयमानार्कांशुसंवलितोत्तराशामेघालिवैचित्र्यमेव। तच्च क्षणिकमेव॥ १५॥ ❁ ❁ उपसृष्टं ग्रस्तम् "विशाला बदरी प्रोक्ता पुरी भूमिश्च निम्नगा" इति कोशात्। स ध्रुवः॥ १६॥ ❁ ❁ तत्र विशालायाम्। तत्कृतं ध्रुवकृतम्। तस्यां विशालायाम्। जितमरुदिति प्राणायाम उक्तः। मनसा हृताक्ष इति प्रत्याहार उक्तः। दधार धारणामकरोत्। प्रतिनिधिभूते प्रतिमासदृशे "शिलावत्प्रतिमैषा हि विष्णोर्लोकचतुर्दशी" इति तीर्थोक्तेः॥ १७॥ ❁ ❁ एतच्च सर्वं तत्रत्यानां योगिनां सदाचारसंमानार्थं द्वित्रिदिनमेवानुरोधेन चकार। वस्तुतस्तु तस्य योगेऽवकाश एव नास्तीत्याह—भक्तिमिति। इति हेतोरेव न तु योगाद्धेतोः। गार्हस्थे कर्मयोगो वैराग्ये भक्तियोगश्च तस्य लोकप्रदर्शनार्थक एव बभूवेति भावः। तत्र मुक्तलिंगत्वेन हि देहाभि-मानिन आनंदाश्रुनिपातहृदयक्लेदपुलकांगानि प्रादुर्भवंतीति॥ १८॥ ❁ ❁ राकापतिं पूर्णचंद्रम्॥ १९॥ ❁ ❁ तत्र विमाने। अवष्टभ्य धृत्वा॥ २०॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तस्य स्वयं कर्मणि अवकाशाभावं व्यञ्जयन् सन्ततां भक्तिं दर्शयति सर्वात्मनीति। तीव्रो ज्ञानकर्माद्यनावृत ओघः प्रवाहो यस्यास्तां भक्तिमुद्वहन् सातत्येन कुर्वन् तद्ध्यानपरिपाकात्स्फूर्त्युत्पत्तिमेव सर्वत्र ददर्श, यतो विभुं स्वाभाविक्याचिन्त्यशक्त्या मध्यमा-कारत्वेपि व्यापकमित्यर्थः॥ ११–१२॥ ❁ ❁ भोगैरित्यादिलोकानुकरणमात्रम्॥ १३॥ ❁ ❁ नीत्वा गम-यित्वा॥१४॥ ❁ ❁ मन्यमान इति युग्मकम्। भगवन्मायया सतोऽप्रतीतावसतः प्रतीतिकारिण्या रचितमध्यस्तम्। अत्र मायारचितत्वे मायिकमपि प्रातीतिकमपि अनित्यं नश्वरमिति मिथ्यात्वानित्यत्वयोः स्फुटमेव भेदोऽवगमितः॥ १५॥ ❁ ❁ तत्र बदरि-काश्रमे एतदष्टाङ्गयोगानुष्ठानादि तत्रत्ययोगिनामवज्ञाभावाय द्वित्रिदिनं बाह्यत एव, नत्वान्तरीणमित्यग्रिमग्रन्थानुसारेण ज्ञेयम्॥ १७॥ ❁ ❁ योगानुष्ठाने तस्यावकाशाभावं दर्शयन् सन्ततामेव भक्तिं दर्शयति भक्तिमिति। तस्माद्गार्हस्थ्ये कर्मयोगो वैराग्यं तत्राष्टाङ्गयोगादिकं च ईश्वराज्ञापालनार्थमेवेति ज्ञेयम्॥ १८॥ ❁ ❁ राकापतिमिवेत्यत्र सादृश्यं निरूपितत्वसंबन्धेन राकापतावन्वेति, तच्च प्रयोजकत्वसम्बन्धेन समानधर्मे, स च स्वरूपसम्बन्धेन विमाने। तथाच राकापतिनिरूपितसादृश्यप्रयोजकधर्म-वदभिन्नविमानमिति बोधः। एवं सर्वत्रोपमानस्थविभक्तिस्साधुत्वमात्रार्था॥ १९॥ ❁ ❁ तत्र विमाने अनु विमानदर्शनानन्त-रम्, अनुषङ्गोऽन्वितस्य पुनस्सम्बन्धः॥ २०॥

## श्रीमद्वीरराघवव्याख्या

न केवलं यज्ञैरेवायजत अपितु पितामहाद्युपदेशानुसारेण सर्वात्मकत्वेन भगवन्तमभजत चेत्याह सर्वात्मनीति। सर्वेषामात्मनि अन्तः प्रविश्य प्रशासनेन धारके अत एव सर्वे सर्वशब्दवाच्ये सत्त्व इति पाठे शुद्धसत्त्वमयदिव्य-मङ्गलविग्रहविशिष्ट इत्यर्थः। असत्त्व इति छेदे तु सत्त्वादिगुणरहित इत्यर्थः। अच्युते आश्रितत्रातरक्षैकदीक्षे भगवति तीव्रौघामविच्छिन्नप्रसरां भक्तिमुद्वहन् कुर्वन् आत्मनि स्वस्मिन् सर्वेषु भूतेषु चावस्थितमात्मत्वेनावस्थितं भगवन्तं तमेवाच्युतं ददर्श साक्षात्कृतवान्॥ ११॥ ❁ ❁ प्रजाः शीलसंपन्नं सुखभावसद्वृत्त्यादियुक्तं ब्रह्मण्यं ब्राह्मणसेवा-परायणं दीनेषु वत्सलं दोषानपेक्ष्य रक्षकं धर्ममर्यादानां पालकं तमेव ध्रुवमेव पितरं मेनिरे पितरमिवामन्यन्ते-त्यर्थः॥ १२॥ ❁ ❁ भोगैः सुखानुभवैः पुण्यक्षयमभोगैर्दुःखानुभवैरशुभक्षयं पापक्षयं च कुर्वन् पुण्यपापयोरपि स्वफल-जननद्वारा ब्रह्मप्राप्तिविरोधित्वेन अनुभवेनैव पुण्यपापे विधुन्वन्नित्यर्थः; षट्त्रिंशद्वर्षसाहस्रवर्षाणां सहस्राण्येव साहस्राणि ततः समाहारद्विगुः, षडधिकविंशतिसहस्रसंख्याकवर्षपर्यन्तमित्यर्थः। क्षितिमण्डलं शशास अनुशिष्टवान्॥ १३॥ ❁ ❁ बहुसवं बहवः सवाः संवत्सरा यस्मिन् तं त्रिवर्गौपयिकं त्रिवर्गसाधनं कालमविकलेन्द्रियः अव्याहतेन्द्रियः तथापि महात्मा जितेन्द्रियो नीत्वा पुत्राय नृपासनमदात्॥ १४॥ ❁ ❁ तत इदं देवमनुष्याद्यात्मकं विश्वमात्मनि जीवे मायारचितमविद्याशब्दस्तदन्यव्युत्पत्त्या प्रकृतिवाची, प्रकृतिपरिणामरूपं स्वप्नगन्धर्वनगरोपमं स्वाप्नगंधर्वनगरमिव स्थितं मन्यमानः॥ १५॥ ❁ ❁ तथा आत्मा देहस्त्रियो दाराः अपत्यानि पुत्रादयः सुहृदश्च तान् ऋद्धं समृद्धं पूर्वोत्तरान्वयि बलं चतुरङ्गबलयुक्तं सैन्यं कोशं धनं रमणीयाः परिविहारभुवः

परितो विहारभुवः, प्रतिविहारभुव इत्यपि पाठेऽप्ययमेवार्थः। जलधिर्मेखला यस्य तत् जम्बूद्वीपात्मकं भूमण्डलं च सर्वं कालोपसृष्टं कालेनोपद्रुतमस्थिरमिति यावत् आकलय्य विचार्य्य सः ध्रुवः विशालां बदरिकाश्रमं ययौ ॥ १६ ॥ ❀ ❀ तत्र कृतमष्टाङ्गयोगमाह तस्यामिति। तस्यां विशालायां शिवं वाः निर्मलं पवित्रं च वारि विगाह्य प्रविश्य अनेन स्नानादिनियम उक्तः, विशुद्धकरणः विशुद्धेन्द्रियः अनेन शमदमादयो यमा उक्ताः, बद्धानि आसनानि स्वस्तिकादीनि येन, संजितो मरुत्प्राणो येन सः, मनसा आहृतानि प्रत्याहृत्यानि अक्षाणि श्रोत्रादीनि इन्द्रियाणि येन, एवमासनादीनि स्फुटमेवोक्तानि, स्थूले भगवत्प्रतिरूपे भगवद्दिव्यविग्रहे दिव्यात्मरूपापेक्षया स्थौल्यमत्र विवक्षितं, दधार मनो निवेशितवान्। एवं धारणा उक्ता, एतद्भगवत्प्रतिरूपमव्यवहितविजातीयप्रत्ययान्तररहितः ध्यायन् तदियात्मस्वरूपम् "ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति स्मरणात् समाधौ व्यसृजत् अनुसंहितवान्। यद्वा तद् भगवत्प्रतिरूपं व्यसृजत् अनुसंहितवान् विसृष्टवान् दिव्यविग्रहं विसृज्य दिव्यात्मस्वरूपमनुसंहितवानित्यर्थः। शुभाश्रये मनसो निवेशमात्रं धारणा, शुभाश्रयगतकान्तिसौकुमार्यादिगुणचिन्तनं ध्यानं, तज्जनितानन्दातिशयात्पारवश्यं समाधिरिति भेदः ॥ १७ ॥ ❀ ❀ एवमजस्रं भगवति नित्यं प्रकर्षेण भक्तिं वहन् कुर्वन् असौ ध्रुवः आत्मानं न सस्मार मनुष्यत्वादिबाह्याकारविशिष्टत्वेन न स्मृतवान्। यतो मुक्तलिङ्गः त्यक्तदेहात्माभिमानः। तत्र हेतवः आनन्दबाष्पकलया बिन्दुप्रवाहेणाभिभूयमानः विक्लिद्यमान इव हृदयं यस्य सः पुलकैर्व्याप्ताङ्गः ॥ १८ ॥ ❀ ❀ स ध्रुवः उद्यतमुदितं राकापतिमिव पौर्णिमाचन्द्रमिवौ दशदिशः विभ्राजयत् नभसः अवतरत् अवरोहत् विमानश्रेष्ठं ददर्श ॥ १९ ॥ ❀ ❀ अनु अनन्तरं तत्र विमानाग्रे देवप्रवर ददर्शेत्यनुषङ्गः। तौ विशिनष्टि किशोरौ यौवनारम्भजुषौ गदामवष्टभ्य स्थितौ किरीटादिभिः सहिते चारु कुण्डले ययोः ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सर्वात्मनि सर्वान्तर्यामिणि सर्वे "पूर्णे विश्वः पूर्णस्तथा सर्वः समस्तश्चाभिधीयते" इत्यभिधानात् "सर्वः शर्वः शिवस्थाणुः" इति नामत्वात् सर्वनामसंज्ञा नास्ति। आत्मनि स्वस्मिन् भूतेषु चावस्थितं तं विभुं व्याप्तं यं पुरा तपसा प्रत्यक्षीचकार तमित्यर्थः ॥ ११ ॥ ❀ ❀ तस्य प्रजानुरञ्जनविधानमाह। तमेवमिति ॥ १२ ॥ ❀ ❀ पुरा कतिपयैर्मासैरेव भगवदनुग्रहमवाप्याभीष्टमाप्तवतो ध्रुवस्य किमु वक्तव्यमेतैरिति भावेन तस्य क्षितिपालनकालावधिमाह। षट्त्रिंशदिति। प्रारब्धपुण्यक्षयमशुभक्षयं ज्ञानसामर्थ्यात् ॥ १३ ॥ ❀ ❀ बहुसवं बहुतिथमविकलेन्द्रियो वशीकृतेन्द्रियः जरसा चक्षुरादीन्द्रियवैकल्यादन्धत्वादिलक्षणं न प्राप्त इति वा। त्रयाणां वर्गाणां धर्मकामार्थानामौपयिकमुपयोगसाधनं देहं नीत्वा देहयात्रां विधायेत्यर्थः ॥ १४ ॥ ❀ ❀ पुत्राय सिंहासनं दत्त्वायं किमकार्षीत् गृह एवावस्थितश्चेद्वैराग्यादिसाधनह्रासेन लोकोपहासविषयः स्यादितः स्वपुरं विहाय देशान्तरं गत इति वक्तव्यमतः कं देशं शुचितीर्थमगमदिति तत्राह मन्यमान इत्यादिना। स ध्रुव इदं विश्वं कालोपसृष्टमियता कालेन नष्टं भवतीति मन्यमानो विशालां बदरिकाश्रमे स्यन्दमानां नदीं प्रययौ इत्यन्वयः। "विशाला बदरी प्रोक्ता नगरीनिम्नगा तथा" इत्यभिधानं, कीदृशं विश्वमात्मन्याधारतया हरेर्मायेच्छया रचितम् "अनिषेधे पुमान्विष्णौ" इत्यभिधानादस्य विष्णोर्विद्ययेच्छया रचिते स्वप्नगन्धर्वनगरे उपमा यस्य तत्तथोक्तम् "महामायेत्यविद्येति नियतिर्मोहिनीति च। प्रकृतिर्वासनेत्येव तवेच्छानन्त कथ्यते" इत्यनेन निरुपपदमायाशब्दस्य हरेरिच्छावाचित्वं कथमितीयमाशङ्का परिहृतेति ज्ञायते ॥ १५ ॥ ❀ ❀ नन्विदमीश्वरेच्छारचितमिति वक्तुं न युक्तम्, तथात्वे मिथ्याभूतस्वप्नादिसाम्यकथनमनुपपन्नं तदुच्यते तस्मान्मायाशब्देनेन्द्रजालमेवोच्यते उक्तमानस्यानेकार्थवृत्तिगवादिशब्दवदुपपत्तेरित्यत उक्तं कालेति। उर्वारुकश्यामतादिवत्कालान्तरेऽन्यथा दर्शनाद्यद्दृष्टं तन्नष्टमिति क्षणभङ्गुरत्वात्स्वप्नादिसाम्यं न तु मिथ्यात्वात्तस्य चार्थक्रियाकारित्वेन सत्यत्वस्य प्रामाणिकत्वात्तदुक्तम् "अन्यथात्वात्क्षिप्रनाशाज्जगत्स्वप्नादिवत्स्मृतम्। वर्तमाननित्यत्वैव सदैव परमात्मनी"ति आत्मनि इत्युक्त्या च सत्यत्वमवगम्यते। अनादिनित्यनिरस्तकुहकस्य हरेरिन्द्रजालाश्रयत्वं न युज्यते सदानिरस्तकुहकमिति स्वोक्तेश्च 'निष्कलं निष्क्रियं शान्तमि'ति श्रुतेः निष्क्रियब्रह्मैक्यमात्मनो जानतो ध्रुवस्य विशालागमनक्रियायोगाच्च, आत्मस्त्रीपुत्रादीनां विश्रान्तभूतत्वेन तद्ग्रहणेन गृहीतानामपि पुनर्वचनं दुष्करं तत्त्यागमपि कृतवानिति ध्रुवस्य वैराग्यातिशयद्योतनायेति परितो विहारभुवः आकलय्य निश्चित्य ॥ १६ ॥ ❀ ❀ तत्र गतोऽपि पितापुत्रविषयस्नेहमुक्त्वा वैराग्यदृढीयस्तया भगवद्भक्तिरामालिङ्गितस्य मुग्धस्येव स्थितस्य तदुपास्तिप्रकारं वक्ति तस्या इति। तस्या विशालायाः शिवं वाः मङ्गलवारिं स्थूले पातालादिके नैतन्निजमित्यत उक्तं प्रतिरूप इति शिलावत्प्रतिमास्थाने। तदुक्तम् 'शिलावत्प्रतिमैषा हि विष्णोर्लोकचतुर्दशी'ति, समाधौ निरायासेन चित्तस्य ध्येयवस्तुविषयीकरणमतिप्रवाहे सति अभ्यस्तत्वात्स्थूलध्यानं विसृजन् स्वबिम्बोपास्तेरावश्यकत्वेन स्थूलसन्निहितरूपैक्येन सूक्ष्मरूपमस्मरदित्यर्थः। अव्यवहितः स्थूलसंनिहितसूक्ष्मरूपयोरभेदं पश्यन्नित्यर्थः ॥ १७ ॥ ❀ ❀ तस्यासंप्रज्ञातसमाध्यवस्थामाह भक्तिमिति। अहमसौ ध्रुव इत्यात्मानं नास्मरत् किंतु भगवन्तमेवास्मरदित्यनेन जीवन्मुक्तत्वं लक्षयति। मुक्तलिङ्गः सूक्ष्मशरीराभिमानरहितः ॥ १८ ॥ ❀ ❀ ध्रुवस्य हरेरपरोक्षज्ञानोत्पन्नप्रसादचिह्नमाह स ददर्शेति। विभ्राजयत् दीपयत् राकापतिं पूर्णचन्द्रम् ॥ १९ ॥ ❀ ❀ वृक्षात्पतत्पर्णमिव स्वर्गाच्च्युतं नक्षत्रमिव विमानं नाद्राक्षीत् किंतु सनाथमित्याह। तत्रेति। अनु अनन्तरं तत्र विमाने स्थितौ ॥ २० ॥

**श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः**

भोगैरित्यादिकं लोकानुकरणमात्रं मायया ॥ १३ ॥ ❁ ❁ अविचलानि विपरिणामादिरहितानि इन्द्रियाणि यस्य ॥ १४ ॥ ❁ ❁ मन्येति युग्मकम् । मायया रचितमध्यस्तम् । आत्मा स्वपत्येति चित्सुखः । असवः प्राणाः ॥ १५-२२ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

राजानो हि देवब्राह्मणादिसन्तर्पकान् क्रतून् कुर्वन्ति । तान् विना न राज्ञः व्यवहारसिद्धिरिति तदनुरोधेनैव तस्य यज्ञादिकर्मकरणं स्वप्रतिमूर्त्तिद्वारैव । वस्तुतस्तु स स्वयमवकाशमेव कर्मणि नैव लभत इत्याह सर्वात्मनि । अथ चासर्वे सर्वव्यतिरिक्तस्वरूपे आत्मन्यन्तःकरणे सर्वभूतेषु बहिरपि तद्ध्यानपरिपाकात् स्फूर्त्या ददर्श ॥ ११-१२ ॥ ❁ ❁ अभोगैर्व्रतनियमादिभिरशुभक्षयं कुर्वन् कर्तुमिच्छन्नित्यर्थः । अत्र तुमर्थे शतृप्रत्ययः । तुमुनि च सर्वत्र इच्छतिराक्षेपलब्ध एव भवति । यथा देवदत्तो भोक्तुं व्रजतीत्यत्र भोक्तुमिच्छन् व्रजतीत्यर्थो लभ्यते इति तस्य पुण्यपापक्षयचिकीर्षादैन्येनैव । वस्तुतस्तूत्पन्नप्रेमत्वात्तस्य पुण्यपापे नैव स्तः ॥ १३-१४ ॥ ❁ ❁ बहवः संवत्सरा यत्र तं त्रिवर्गोपयोगिनं कालं नीत्वा गमयित्वा ॥ १५ ॥ ❁ ❁ इदं मायारचितं मायारचितत्वात् सत्यमपि आत्मनि या अविद्या तया रचितैः स्वप्नगन्धर्वनगरैः सहोपमा यस्य तत् असत्यमिवानुभवन्नित्यर्थः ॥ १५ ॥ ❁ ❁ आत्मा देहस्तदादिकं सर्वं कालेनोपसृष्टं ग्रस्तमित्याकलय्य विशालां बदरिकाश्रमं ययौ ॥ १६ ॥ ❁ ❁ विशुद्धकरण इत्यादीनि यमाद्यष्टाङ्गानि भगवत्प्रतिरूपे प्रतिनिधिभूते विराड्रूपे दधार धारणामकरोत् । एतद्ध्यायन्नव्यवहितः भगवत्स्वरूपे व्यवधानशून्यः सन् समाधौ स्थितः तत् स्थूलं व्यसृजत् ॥ १७ ॥ ❁ ❁ एतच्च सर्व्वं तत्रत्यानां योगिनां सदाचारसम्मानार्थं द्वित्रदिनमेवानुरोधेन चकार । वस्तुतस्तु योगे तस्यावकाश एव नास्तीत्याह भक्तिमिति । इति हेतोरेव मुक्तलिङ्गस्त्यक्तदेहाभिमानः न तु योगाद्धेतोरिति गार्हस्थ्ये कर्मयोगो वैराग्येऽष्टाङ्गयोगश्च तस्य लोकप्रदर्शनार्थक एव बभूवेति भावः ॥ १८-१९ ॥ ❁ ❁ तत्र विमाने अनु अनन्तरं देवप्रवरौ ददर्श ॥ २० ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

सर्वेति । 'यस्मिन् सर्वं यतः सर्वं यः सर्वः सर्वरूपधृगि'त्यादिस्मृतिप्रसिद्धे ॥ ११-१२ ॥ ❁ ❁ अभोगैर्व्रतादिभिः ॥ १३ ॥ ❁ ❁ बहुसवं बहुसंवत्सरात्मकम् । त्रिवर्गौपयिकं धर्मार्थकामसाधनम् । अविचलेन्द्रियः संयतकरणः ॥ १४ ॥ ❁ ❁ विश्वं मायारचितं प्रकृत्या निजशक्त्या महदादिक्रमेण विरचितं भगवतेति शेषः । तत्रात्मनि जीवस्थाने अविद्यया स्वरूपज्ञानाभावेन रचितमिदं प्रसिद्धं शरीरं च स्वप्नगन्धर्वनगरोपमं तद्वदनित्यं मन्यमानः ॥ १५ ॥ ❁ ❁ आत्मनस्त्र्यादिकं च कालोपसृष्टं कालग्रस्तमाकलय्य निर्धार्य विशालां प्रययौ ॥ १६ ॥ ❁ ❁ तस्यां विशालायां शिवं पवित्रं वाः गाङ्गं जलं विगाह्य प्रविश्य स्नानादिनियमान्विधायेत्यर्थः । विशुद्धकरणः सम्पादितशमादियमः आसनं कुशादिना स्वस्तिकमुद्रया च बध्वा जितमरुत् कृतप्राणायामः मनसा आहृताक्षः कृतप्रत्याहारः भगवत्प्रतिरूपे भगवद्विग्रहे स्थूले एतन्मनो दधार धारणां कृतवान् । सामान्यतः सर्वस्मिन् विग्रहे मनोनिवेशनं धारणा । पुनर्ध्यायन् ध्यायन् विशेषतः चरणाद्यङ्गध्यानं कुर्वन् समाधौ अव्यवहितः परमानन्दादवहिर्भूतः तद्ध्यानं व्यसृजत् ध्यानजन्यपरमानन्दनिमग्नत्वलक्षणं समाधिं लब्धवानित्यर्थः ॥ १७ ॥ ❁ ❁ एवमजस्रं नित्यं हरौ भक्तिं प्रवहन् आनन्दबाष्पकलया भजनानन्दजाश्रुधारया मुहुरर्द्यमानः विक्लिद्यमानहृदयः द्रवितचित्तः आत्मानमप्यसौ ध्रुवो न सस्मार कुतः संसारमिति भावः । इतिशब्दो हेत्वर्थे, यतो मुक्तलिङ्गः मुक्ताऽहंकारादिरूपसांसारिकचिह्नः ॥ १८-१९ ॥ ❁ ❁ तत्र विमाने अनु अनन्तरं देवप्रवरौ ददर्शेति पूर्वेणान्वयः ॥ २० ॥

**गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी**

एवं यज्ञादिभिः शुद्धान्तःकरणस्य सर्वत्र भगवद्दर्शनं जातमित्याह—सर्वात्मनीति । सर्वस्य स्थावरजङ्गमात्मकस्यात्मनि अत एव सर्वे 'पूर्णे विश्वः पूर्णस्तथा सर्वः समस्तश्चाभिधीयते' इत्यभिधानात् नामत्वान्न सर्वनामसंज्ञेति बोध्यम् । एवमप्यच्युते स्वरूपतो धर्मतश्च च्युतिरहिते तीव्रौघामखण्डितप्रवाहां भक्तिं चित्तवृत्तिमुद्वहन् स्वात्मनि सर्वभूतेषु च तमेव विभुं व्यापकमवस्थितं ददर्शेत्यन्वयः ॥ ११ ॥ ❁ ❁ तमेवं पूर्वोक्तं शीलं भगवद्भक्तिलक्षणं तेन संपन्नं ब्राह्मणभक्तं दीनवत्सलं दीनेषु दयायुक्तं धर्मसेतूनां वर्णाश्रमधर्ममर्यादानां गोप्तारं रक्षकं सर्वाः प्रजाः पितरं मेनिर इत्यन्वयः ॥ १२ ॥ ❁ ❁ तस्य धर्माद्यविरोधेन भोगान् भुञ्जानस्य राज्ये स्थितिमाह—षट्त्रिंशद्वर्षेति । भोगैः रूपरसगन्धस्पर्शशब्दानां विषयाणां धर्माद्यविरोधेन भोगैः प्रारब्धपुण्यस्य क्षयं तथा अभोगैः व्रतोपवासादिभिः प्रारब्धस्याशुभस्य पापस्य क्षयं नाशं च कुर्वन् षट्त्रिंशद्वर्षसाहस्रं कालं तावत्कालपर्यन्तं

क्षितिमण्डलं शशास अस्खलितादेशः सन् पालितवान्। अभोगैरित्यनेन तस्य भगवदनुगृहीतस्य लोकवद्दुःखभोगैरशुभक्षयस्यासंभवः सूचितः ॥ १३ ॥ ❀ ❀ एवं भगवत्प्रसादेन मनूपदेशेन धनदवरेण यज्ञादिशुभक्रियानुष्ठानेन भोगेन प्रारब्धसमाप्त्या चाध्यात्मिकादिसर्वदोषनिवृत्त्या शुद्धस्य ध्रुवस्य वैराग्यमभूत्तदा पुत्राय राज्यं दत्तवानित्याह—एवमिति। एवं भोगान् भुञ्जानोप्यविकलेन्द्रियः न विकलानि निषिद्धभोगोन्मुखानि भोगैः श्रान्तानि वा इन्द्रियाणि यस्य स तथा। तत्कुत इत्यपेक्षायामाह—यतो महात्मेति। अनेकसाधनसंपत्त्या भगवत्प्रसादेन महान् अत्युदारो निषिद्धत्यागे समर्थ आत्मा चित्तं यस्य सः। तथा च मनसो वशवर्त्तित्वात्तद्वशगानीन्द्रियाण्यपि तद्वशगानीति भावः। स बहवः सवाः संवत्सरा यस्मिंस्तं त्रयाणां वर्गाणां धर्मार्थकामानामौपयिकमुपभोगस्य साधनं कालं नीत्वा भोगाद्विरक्तः सन्नृपासनं पुत्राय वत्सरायादात् ॥ १४ ॥ ❀ ❀ विरक्तौ तदभिप्रायमाह—मन्यमान इति। मायया त्रिगुणात्मिकया प्रकृत्या रचितमतः सत्यमपीदं विश्वं यस्मिन्निदं भिन्नमसत्प्रतीयत इति वैराग्यार्थोक्तमनुवाक्यादात्मन्यविद्यारचितस्वप्नगन्धर्वनगरोपमं मन्यमानस्ततो विरक्तः सन्नृपासनं पुत्रायादादिति पूर्वेणान्वयः ॥ १५ ॥ ❀ ❀ एवं पुत्राय राज्यं दत्त्वापि तत्रैव स्थितौ विरक्तस्यापि पुनरासक्तिः स्यात्तत्श्च स्वार्थभ्रंशभिया सर्वं त्यक्त्वा बदरिकाश्रमं ययावित्याह—आत्मेति। आत्मा देहः, सुहृदो मित्राणि, बलं सेना, ऋद्धः वृद्धः कोशः, रम्याः परिविहारभुवः उद्यानानि च, जलधिः समुद्रो मेखला परिखा यस्य तत् भूमण्डलम्, आत्मादिकं सर्वं कालोपसृष्टं कालव्याप्तं नश्वरमित्याकलय्य विचार्य तद्विहित्वा नित्यस्थानारोहणेच्छया भगवन्तमाराधयितुं विशालां बदरिकाश्रमं ययावित्यन्वयः ॥ १६ ॥ ❀ ❀ तत्र गत्वाष्टाङ्गयोगं कृतवानित्याह—तस्यामिति। विशालायामित्यर्थः। शिवं पवित्रं वार्जलं विगाह्य प्रविश्य जले स्नात्वेति स्नानादिनियमा उक्ताः। विशुद्धकरणः विशुद्धानि करणानि अन्तःकरणमिन्द्रियाणि च यस्य स तथेति शमदमादयो यमा उक्ताः। स्वस्तिकाद्यासनं बध्वा जितो मरुत् प्राणवायुर्येन स तथेति प्राणायाम उक्तः। मनसाहृतानि स्वस्वविषयेभ्यः परावर्त्तितानि अक्षाणि इन्द्रियाणि येन स तथेति प्रत्याहारो दर्शितः। धारणामाह—स्थूल इति। भगवतः प्रतिनिधिभूते स्थूले विराड्रूपे एतन्मनो दधारेत्यन्वयः। 'ददर्शात्मनि भूतेषु तमेवावस्थितं विभुम्' इति पूर्वमुक्त्वापि पुनरत्र स्थूलधारणोक्त्या ध्रुवस्य किञ्चिद्बहिर्मुखता जातेति लक्ष्यते, भगवद्धारणायाः स्थूलधारणाफलत्वात्तत्र शक्तस्य स्थूलधारणायां प्रयोजनाभावात्। तदुक्तं द्वितीये—'यावन्न जायेत परावरेऽस्मिन् विश्वेश्वरे द्रष्टरि भक्तियोगः। तावत्स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेत्' इति। ध्यानं समाधिं चाह—ध्यायन्निति। तद्ध्यायन्नव्यवहितो ध्यातृध्येयध्यानभेदस्फुरणरहितः समाधौ स्थितः संस्तदपि स्थूलं रूपं व्यसृजत् विस्मृतवानित्यर्थः ॥ १७ ॥ ❀ ❀ एवं स्थूलधारणादिफलं तस्य भगवद्धारणादिसामर्थ्यं जातं तदा स तन्निष्ठः सन् जीवन्मुक्तो बभूवेत्याह—भक्तिमिति। हरौ सर्वदुःखहर्त्तरि भगवति परमपुरुषार्थभूते अजस्रं निरन्तरं भक्तिं चित्तवृत्तिं प्रवहन्नसौ ध्रुवोहमित्यात्मानं नास्मरत् न सस्मारेत्यन्वयः। तत्र हेतुमाह—मुक्तलिङ्ग इति। त्यक्तः कार्यकारणसंघाताभिमानो यतः इत्यर्थः। तत्रापि हेतूनाह—आनन्देति। भगवद्ध्यानेन तद्दर्शनानन्देन जातया बाष्पकलया अश्रुबिन्दुप्रवाहेण मुहुरर्द्यमानः अभिभूयमान इत्यर्थः। विक्लिद्यमानं द्रवीभूतं हृदयं यस्य स तथेति। पुलकैः उत्थितरोमभिराचितानि व्याप्तान्यङ्गानि यस्य स तथेति ॥ १८ ॥ ❀ ❀ एवं निरन्तरं भगवन्निष्ठस्य यदा भगवद्दत्तस्थानारोहणसमय आगतस्तदा भगवत्प्रस्थापितं विमानमागतं ददर्शेत्याह—स इति। स ध्रुवः उदितं राकापतिं चन्द्रमिव दश दिशो विभ्राजयत् प्रकाशयत् नभसः सकाशादवतरद्विमानाग्र्यं श्रेष्ठं विमानं ददर्शेत्यन्वयः ॥ १९ ॥ ❀ ❀ तत्र विद्युदिवाकस्मान्नभसः पतितं किंतु शनैरवतरितमधिष्ठातृसहितं चेत्याह—तत्रेति। अनु विमानदर्शनानन्तरं तत्र विमाने देवप्रवरौ भगवत्पार्षदौ सुनन्दनन्दौ ददर्शेति पूर्वस्यानुषङ्गः। तौ वर्णयति—चतुर्भुजावित्यादिना। किरीटादिसहिते चारुणी कुण्डले ययोस्तौ। गदामवष्टभ्य अवलम्ब्य स्थितौ ॥ २० ॥

## भाषानुवादः

सर्वोपाधिशून्य सर्वात्मा श्रीअच्युतमें प्रबल वेगयुक्त भक्तिभाव रखते हुए ध्रुवजी अपनेमें और समस्त प्राणियोंमें सर्वव्यापक श्रीहरिको ही विराजमान देखने लगे ॥ ११ ॥ ❀ ❀ ध्रुवजी बड़े ही शीलसम्पन्न, ब्राह्मणभक्त, दीनवत्सल और धर्ममर्यादाके रक्षक थे; उनकी प्रजा उन्हें साक्षात् पिताके समान मानती थी ॥ १२ ॥ ❀ ❀ इस प्रकार तरह-तरह के ऐश्वर्यभोगसे पुण्यका और भोगोंके त्यागपूर्वक यज्ञादि कर्मोंके अनुष्ठानसे पापका क्षय करते हुए उन्होंने छत्तीस हजार वर्षतक पृथ्वीका शासन किया ॥ १३ ॥ ❀ ❀ जितेन्द्रिय महात्मा ध्रुवने इसी तरह अर्थ, धर्म और कामके सम्पादनमें बहुतसे वर्ष बिताकर अपने पुत्र उत्कलको राज्यसिंहासन सौंप दिया ॥ १४ ॥ ❀ ❀ इस सम्पूर्ण दृश्य-प्रपञ्चको अविद्यारचित स्वप्न और गन्धर्वनगरके समान मायासे अपनेमें ही कल्पित मानकर और यह समझकर कि शरीर, स्त्री, पुत्र, मित्र, सेना, पूरा खजाना, जनाने, महल, सुरम्य विहारभूमि और समुद्रपर्यन्त भूमण्डलका राज्य—ये सभी काल के गालमें पड़े हुए हैं, वे बदरिकाश्रमको चले गये ॥ १५-१६ ॥ ❀ ❀ वहाँ उन्होंने पवित्र जलमें स्नानकर इन्द्रियोंको विशुद्ध ( शांत ) किया। फिर स्थिर आसन से बैठकर प्राणायामद्वारा वायुको वशमें किया। तदनन्तर मनके द्वारा इन्द्रियोंको बाह्य विषयोंसे हटाकर मनको भगवान्‌के स्थूल विराट्स्वरूपमें स्थिर कर दिया। उसी विराट् रूपका चिन्तन करते-करते वे अन्तमें ध्याता और ध्येयके

भेदसे शून्य निर्विकल्पक समाधिमें लीन हो गये और उस अवस्थामें विराट्रूपका भी परित्याग कर दिया ॥ १७ ॥ ❀ ❀ इस प्रकार भगवान् श्रीहरिके प्रति निरन्तर भक्तिभावका प्रवाह चलते रहने से उनके नेत्रोंमें बार-बार आनन्दाश्रुओंकी बाढ़-सी आ जाती थी। इससे उनका हृदय द्रवीभूत हो गया और शरीरमें रोमाञ्च हो आया। फिर देहाभिमान गलित हो जानेसे उन्हें 'मैं ध्रुव हूँ' इसकी स्मृति भी न रही ॥ १८ ॥ ❀ ❀ इसी समय ध्रुवजीने आकाशसे एक बड़ा ही सुन्दर विमान उतरते देखा। वह अपने प्रकाशसे दसों दिशाओंको आलोकित कर रहा था; मानो पूर्णिमाका चन्द्र ही उदय हुआ हो ॥ १९ ॥ ❀ ❀ उसमें दो श्रेष्ठ पार्षद गदाओंका सहारा लिये खड़े थे। उनके चार भुजाएँ थीं, सुन्दर श्याम शरीर था, किशोर अवस्था थी और अरुण कमलके समान नेत्र थे। वे सुन्दर वस्त्र, किरीट, हार, भुजबन्द और अति मनोहर कुण्डल धारण किये हुए थे ॥ २० ॥

विज्ञाय तावुत्तमगायकिङ्करावभ्युत्थितः साध्वसविस्मृतक्रमः।
ननाम नामानि गृणन्मधुद्विषः पार्षत्प्रधानाविति संहताञ्जलिः ॥ २१ ॥
तं कृष्णपादाभिनिविष्टचेतसं बद्धाञ्जलिं प्रश्रयनम्रकन्धरम्।
सुनन्दनन्दावुपसृत्य सस्मितं प्रत्यूचतुः पुष्करनाभसम्मतौ ॥ २२ ॥

[1]सुनन्दनन्दावूचतुः

भो भो राजन् सुभद्रं ते वाचं[2] नोऽवहितः शृणु। यः[3] पञ्चवर्षस्तपसा भवान्देवमतीतृपत् ॥ २३ ॥
तस्याखिलजगद्धा[4]तुरावां देवस्य शार्ङ्गिणः। पार्षदाविह सम्प्राप्तौ नेतुं त्वा भगवत्पदम्[5] ॥ २४ ॥
सुदुर्जयं विष्णुपदं जितं त्वया यत्सूरयोऽप्राप्य विचक्षते परम्।
आतिष्ठ तच्चन्द्रदिवाकरादयो ग्रहर्क्षतारा: परियन्ति दक्षिणम् ॥ २५ ॥

अन्वयः—तौ उत्तमगायकिंकरौ विज्ञाय अभ्युत्थितः मधुद्विषः पार्षत्प्रधानौ इति साध्वसविस्मृतक्रमः संहताञ्जलिः नामानि गृणन् ननाम ॥ २१ ॥ ❀ ❀ पुष्करनाभसम्मतौ सुनन्दनन्दौ कृष्णपादाभिनिविष्टचेतसम् बद्धाञ्जलिम् प्रश्रयनम्रकन्धरम् तम् उपसृत्य सस्मितम् प्रत्यूचतुः ॥ २२ ॥ ❀ ❀ भोः भोः राजन् ते सुभद्रम् यः भवान् पञ्चवर्षः तपसा देवम् अतीतृपत् अवहितः नः वाचम् शृणु ॥ २३ ॥ ❀ ❀ तस्य अखिलजगद्धातुः देवस्य शार्ङ्गिणः पार्षदौ आवाम् त्वाम् भगवत्पदम् नेतुम् इह संप्राप्तौ ॥ २४ ॥ ❀ ❀ सूरयः यत् अप्राप्य परम् विचक्षते तत् सुदुर्जयम् विष्णुपदम् त्वया जितम् चंद्रदिवाकरादयः ग्रहर्क्षताराः दक्षिणम् परियन्ति तत् आतिष्ठ ॥ २५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

उत्तमगायः पुण्यश्लोको हरिस्तस्य किंकरौ तौ विज्ञाय मधुद्विषः पार्षदप्रधानाविति हेतोः साध्वसेन संभ्रमेण विस्मृतपूजाक्रमः केवलं तस्य नामानि गृणन्ननाम ॥ २१-२२ ॥ ❀ ❀ सुभद्रमिति सशरीरस्यैव विष्णुपदारोहाभिप्रायम्। अतीतृपत्तर्पितवान् ॥ २३ ॥ ❀ ❀ आवां तस्य पार्षदौ ॥ २४ ॥ ❀ ❀ सुदुर्जयत्वे हेतुः। सूरयः सप्तर्षयोऽपि यदप्राप्य केवलमधः स्थिताः पश्यंति—यच्चन्द्रादयः दक्षिणं प्रदक्षिणं यथा भवत्येवं परिक्रामंति तदातिष्ठाधितिष्ठ ॥ २५-२६ ॥

### श्रीवंशीधरकृत-भावार्थदीपिकाप्रकाशः

प्रागदृष्टश्रुतवस्तुदर्शनसाध्वसलक्षणांतःकरणवृत्तिविशेषः संभ्रमो भवति तेन विस्मृतः। नामानि जय नारायण जय गोपाल जय गोविन्देत्याद्युच्चारयन्ननामेत्यर्थः ॥ २१-२२ ॥ ❀ ❀ भो भो इति वीप्सादरे। राजन्निति। सर्वदा दीप्तिमांस्त्वं भविष्यसीत्याह ॥ २३-२७ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

पूजाक्रमविस्मरणं च युक्तमेव मद्भक्तपूजाभ्यधिकेत्युक्तेः केवलमिति अन्याङ्गव्यावृत्तिः। नामोच्चारणं च तयोः प्रीत्यर्थमेव ॥ २१ ॥ ❀ ❀ प्रत्यूचतुः प्रीत्योचतुरिति पाठद्वयम् ॥ २२ ॥ ❀ ❀ भोभोरित्यर्द्धकम्। सशरीरस्येति। श्रीगुरूपदेशानन्तरं सर्वेषामेवोपासकानां चिन्मयदेहप्रादुर्भावक्रमेण भौतिकदेहप्रध्वंसोऽभिप्रेतः। अन्यथा प्रदर्शनं तु बहिर्मुखमतोत्खाताभावार्थमेव,

---

१. प्राचीने पाठे न। २. प्रा० पा०—वाचो। ३. प्रा० पा०—यं। ४. प्रा० पा०—द्धातुर्देवदेवस्य। ५. प्रा० पा०—त्पुरम्।

भक्तितत्त्वस्य परमसुगोप्यत्वात् ॥ २३ ॥ ❀ ❀ यः पञ्चेति सार्धकम् । तपसा ध्यानरूपेण ॥ २४ ॥ ❀ ❀ सूर्यादीनां स्वगत्या वामावर्त्तित्वेऽपि दक्षिणं परियन्तीति ज्योतिश्चक्रगत्योक्तं ध्रुवस्य तत्त्वतस्तदसक्तत्वात् ॥ २५-२७ ॥

### श्रीमद्वीरराघवव्याख्या

उत्तमगायः पुण्यश्लोको भगवान् तस्य किङ्करौ विज्ञाय मधुद्विषः परिषत्प्रधानाविति हेतोः साध्वसेन संभ्रमेण विस्मृतपूजाक्रमः केवलं तस्य नामानि गृणन् संहताञ्जलिर्बद्धाञ्जलिर्ननाम ॥ २१ ॥ ❀ ❀ कृष्णस्य पादयोर्निविष्टा चेतना चित्तं यस्य प्रश्रयेण विनयेन नम्रा प्रह्वीभूता कन्धरा यस्य तं ध्रुवमुपसृत्य समीपमागत्य पुष्करनाभस्य भगवतः संमतौ भृत्यौ सुनन्दनन्दौ स्मितेन सहितं यथा तथा प्रीत्या प्रीतिपूर्वमूचतुः ॥ २२ ॥ ❀ ❀ हे राजन् ! ते तुभ्यं भद्रमस्तु, नोऽस्माकं वाचमवहितः सावधानचित्तस्त्वं शृणु किं तत्राह । यो भवान् पञ्चवर्षः तपसा देवं भगवन्तमतीतृपत् तर्पितवान् ॥ २३ ॥ ❀ ❀ तस्याखिलजगन्निर्माणचतुरस्य सर्वेश्वरेश्वरस्य शार्ङ्गिणो भगवतः पार्षदावावां त्वां भगवत्पदं प्रति नेतुं इह संप्राप्तौ ॥ २४ ॥ ❀ ❀ सुदुर्जयं त्वदितरैर्दुःखेनाप्यसाध्यं विष्णुपदं त्वया जितं साधितम् । सुदुर्जयत्वमेवाह—सूरयः सर्वेषामुपरिष्टादवस्थिताः सप्तर्षिप्रभृतयः यत्पदमप्राप्यैव परं केवलं विचक्षते पश्यन्ति तथा यत्पदं चन्द्रादयः सोमप्रभृतिग्रहादयश्च प्रदक्षिणं यथा भवत्येवं परियन्ति परितो भ्रमन्ति ॥२५॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

उत्पन्ननिर्दोषज्ञानत्वात् सहसा विमानपुरुषदर्शनात्तदा तस्य भ्रान्तिज्ञानं नाभूदिति भावेन तत्सत्कारप्रकारमाह विज्ञायेति । प्रागदृष्टश्रुतवस्तुदर्शने साध्वसलक्षणान्तःकरणवृत्तिविशेषः संभ्रमो भवति, तेन सन्नो नष्टो विक्रमः प्रवृत्तिविशेषो यस्य स तथोक्तः उत्तमो भावो लीला क्रिया वा विभूतिर्वा यस्य स तथोक्तः तस्य हरेः किंकरौ संदाक्षिगतौ भृत्यौ संहताञ्जलिर्बद्धाञ्जलिः ॥ २१ ॥ ❀ ❀ आत्मनो देवत्वेन हस्तादिसंज्ञया स्वागमनज्ञापनं विनैव स्वाभिप्रायसूचतुरित्याह तमिति । उपलभ्य दृष्ट्वा ॥ २२ ॥ ❀ ❀ भवान् यं देवमतीतृपत् तृप्तमकार्षीत्तस्य हरेः पार्षदौ त्वां भगवत्पदं नेतुमिह प्राप्तौ विद्धीत्यन्वयः ॥ २३-२४ ॥ ❀ ❀ वैकुण्ठं नेतुं किं नेत्याहतुरिति ब्रूते सुदुर्जयमिति । जितं साधितं सूरयः सप्तऋषिप्रभृतयो यदप्राप्य परं दूराद्विचक्षते पश्यन्ति तर्हि तद्वहनं विपिनं किं नेत्यत उक्तं चन्द्र इति । चन्द्रदिवाकरादयो ग्रहा ऋक्षाणि सप्तविंशतिसंख्याता अश्विन्यादयस्तारा मेषादिराशयो व्योमतले दृश्यमाना ज्योतिर्मूर्तयो वा दक्षिणं परियन्ति प्रदक्षिणं कुर्वन्ति तदातिष्ठेत्यन्वयः ॥ २५ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

भो भो इत्यर्द्धकम् ॥ २३ ॥ ❀ ❀ यं पञ्चेति सार्धकम् ॥ २४ ॥ ❀ ❀ सुदुर्जयमिति । यदप्राप्यैव परं ब्रह्मान्वेषयन्ति न तु तत् प्राप्यापि । तस्यैव परब्रह्मरूपत्वात् सूर्यादीनां स्वगत्या वामावर्त्तत्वेऽपि प्राप्तिः परियन्ति दक्षिणमिति । ज्योतिश्चक्रगत्या व्यपदिश्यते ध्रुवपदस्य तदसक्तत्वात् ॥ २५-२८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

साध्वसेन सम्भ्रमेण विस्मृतः पूजाक्रमः केवलं तस्य नामानि जय नारायण ! जय गोपाल ! जय गोविन्देत्याद्युच्चारयन्ननाम ॥ २१-२२ ॥ ❀ ❀ सुभद्रं त इति । सशरीरस्यैव विष्णोः पदारोहणाभिप्रायः ॥ २३-२४ ॥ ❀ ❀ सूरयः सप्तर्षयोपि यदप्राप्य केवलमधः स्थिताः पश्यन्ति । चन्द्रादयः दक्षिणं परियन्ति प्रदक्षिणीकुर्वन्ति ॥ २५-२६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

उत्तमैः सनकनारदादिभिर्गीयते इत्युत्तमगायस्तस्य किंकरौ विज्ञाय अभ्युत्थितः साध्वसेन संभ्रमेण विस्मृतः सत्कारक्रमो येन सः इतिहेतोः पार्षत्प्रवरौ केवलं ननाम । किं कुर्वन् मधुद्विषो नामानि गृणन् ॥ २१ ॥ ❀ ❀ सस्मितं यथा स्यात्तथा प्रत्यूचतुः ॥ २२-२४ ॥ ❀ ❀ यत्पदं सूरयः सप्तर्षयः अप्राप्य परं केवलं अधः स्थितं विचक्षते पश्यन्ति यच्चन्द्रादयः दक्षिणं प्रदक्षिणं यथा स्यात्तथा परियन्ति परितो गच्छन्ति तदातिष्ठ ॥ २५ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

तावुत्तमगायस्य पुण्ययशसो भगवतः किंकरौ निदेशकारिणौ विज्ञायाभ्युत्थितस्तद्दर्शनजनितानन्दजातेन साध्वसेन संभ्रमेण विस्मितः पूजाक्रमो येन स मधुद्विषो मधुसूदनस्य पार्षत्प्रधानौ सुनन्दनन्दौ युवामिति तयोर्नामानि गृह्णन् उच्चारयन् संहताञ्जलिः संयोजितहस्ताग्रो ननाम दण्डवत्प्रणामं कृतवान् ॥ २१ ॥ ❀ ❀ कृष्णपादयोरभिनिविष्टं चेतश्चित्तं यस्य स तथा तं बद्धाञ्जलिं प्रश्रयेण विनयेन नम्रा आनता कन्धरा ग्रीवा यस्य तं पुष्करनाभस्य भगवतो नारायणस्य पार्षदेषु श्रेष्ठत्वेन संमतौ

सुनन्दनन्दावुपसृत्य तत्समीपं गत्वा सस्मितं स्मितपूर्वकं यथा भवति तथा स्वप्रसन्नतां सूचयन्तौ तं प्रत्यूचतुरित्यन्वयः ॥ २२ ॥ ❀ ❀ तयोर्वचनान्येव दर्शयति-भो भो इति पञ्चभिः। भो भो राजन्निति वीप्साऽऽदरार्था। अत एव ते भद्रं कल्याणं भवत्वित्याशीर्वचनम्। अवहितः सावधानः सन्नोऽस्माकं वाचं त्वं शृणु। पञ्चवर्षो भवान् तपसा यं देवमतीतृपत् तृप्तमकार्षीत्तस्याखिलजगद्धातुः सर्वजगत्पालकस्य अत एव शार्ङ्गिणः पालनप्रतिपक्षिदुष्टनिरासाय गृहीतशार्ङ्गधनुषः पार्षदौ भगवत्पदं भगवद्दत्तस्थानं प्रति त्वां नेतुमिहास्मिन् स्थाने प्राप्तावावां विद्धीति शेषेण द्वयोरन्वयः। न इति तु बहुवचनं स्वमहत्त्वाभिप्रायेण ॥ २३-२४ ॥ ❀ ❀ सुदुर्जयमतिदुर्जयं विष्णुपदं त्वया जितं तत्प्रसादात् प्राप्तं तदातिष्ठ अधितिष्ठेत्यन्वयः। दुर्लभत्वमेव दर्शयतः-यत्सूरय इति। सूरयः सप्तर्षयोपि यदप्राप्य तदधः स्थिता दूरतः परं केवलं विचक्षते पश्यन्ति। यच्च चन्द्रादयो दक्षिणे यथा भवन्ति तथा परियन्ति परिक्रमन्ति। ग्रहा आदित्यादयो नव। ऋक्षाणि अश्विन्यादीनि सप्तविंशतिसङ्ख्याकानि। अन्यास्ताराः ॥ २५ ॥

### भाषानुवादः

उन्हें पुण्य श्लोक श्रीहरिके सेवक जान ध्रुवजी हड़बड़ाहटमें पूजा आदिका क्रम भूलकर सहसा खड़े हो गये और ये भगवान्‌के पार्षदोंमें प्रधान हैं—ऐसा समझकर उन्होंने श्रीमधुसूदनके नामोंका कीर्तन करते हुए उन्हें हाथ जोड़कर प्रणाम किया ॥ २१ ॥ ❀ ❀ ध्रुवजीका मन भगवान्‌के चरणकमलोंमें तल्लीन हो गया और वे हाथ जोड़कर बड़ी नम्रतासे सिर नीचा किये खड़े रह गये। तब श्रीहरिके प्रिय पार्षद सुनन्द और नन्दने उनके पास जाकर मुसकराते हुए कहा ॥ २२ ॥ ❀ ❀ सुनन्द और नन्द कहने लगे—राजन्! आपका कल्याण हो, आप सावधान होकर हमारी बात सुनिये। आपने पाँच वर्षकी अवस्थामें ही तपस्या करके सर्वेश्वर भगवान्‌को प्रसन्न कर लिया था ॥ २३ ॥ ❀ ❀ हम उन्हीं निखिलजगन्नियन्ता शार्ङ्गपाणि भगवान् विष्णुके सेवक हैं और आपको भगवान्‌के धाममें ले जानेके लिये यहाँ आये हैं ॥ २४ ॥ ❀ ❀ आपने अपनी भक्तिके प्रभावसे विष्णुलोकका अधिकार प्राप्त किया है, जो औरोंके लिये बड़ा दुर्लभ है। परमज्ञानी सप्तर्षि भी वहाँ तक नहीं पहुँच सके, वे नीचेसे केवल उसे देखते रहते हैं। सूर्य और चन्द्रमा आदि ग्रह, नक्षत्र एवं तारागण भी उसकी प्रदक्षिणा किया करते हैं। चलिये, आप उसी विष्णुधाममें निवास कीजिये ॥ २५ ॥

अनास्थितं ते पितृभिरन्यैरप्यङ्ग कर्हिचित्। आतिष्ठ जगतां वन्द्यं तद्विष्णोः परमं पदम् ॥ २६ ॥
एतद्विमानप्रवरमुत्तमश्लोकमौलिना। उपस्थापितमायुष्मन्नधिरोढुं त्वमर्हसि ॥ २७ ॥

### मैत्रेय उवाच

निशम्य वैकुण्ठनियोज्यमुख्ययोर्मधुच्युतं वाचमुरुक्रमप्रियः।
कृताभिषेकः [1]कृतनित्यमङ्गलो मुनीन् प्रणम्याशिषमभ्यवादयत् ॥ २८ ॥
परीत्याभ्यर्च्य धिष्ण्याग्र्यं पार्षदावभिवन्द्य च। इयेष तदधिष्ठातुं बिभ्रद्रूपं हिरण्मयम् ॥ २९ ॥
[2]तदोत्तानपदः पुत्रो ददर्शान्तकमागतम्। मृत्योर्मूर्ध्नि पदं दत्त्वा आरुरोहाद्भुतं गृहम् ॥ ३० ॥
तदा दुन्दुभयो नेदुर्मृदङ्गपणवादयः। गन्धर्वमुख्याः प्रजगुः पेतुः कुसुमवृष्टयः ॥ ३१ ॥
स च स्वर्लोकमारोक्ष्यन् सुनीतिं जननीं ध्रुवः। अन्वस्मरदगं हित्वा दीनां [3]यास्ये त्रिविष्टपम् ॥ ३२ ॥

अन्वयः—अङ्ग ते पितृभिः अन्यैः अपि कर्हिचित् अनास्थितम् जगताम् वंद्यम् तत् विष्णोः परमम् पदम् आतिष्ठ ॥ २६ ॥ ❀ ❀ आयुष्मन् त्वम् उत्तमश्लोकमौलिना उपस्थापितम् एतत् विमानप्रवरम् अधिरोढुम् अर्हसि ॥२७॥ ❀ ❀ उरुक्रमप्रियः वैकुण्ठनियोज्यमुख्ययोः मधुच्युतम् वाचम् निशम्य कृताभिषेकः कृतनित्यमङ्गलः मुनीन् प्रणम्य आशिषम् अभ्यवादयत् ॥ २८ ॥ ❀ ❀ हिरण्मयम् रूपम् बिभ्रत् धिष्ण्याग्र्यम् परीत्य अभ्यर्च्य पार्षदौ अभिवन्द्य च तत् अधिष्ठातुम् इयेष ॥ २९ ॥ ❀ ❀ तदा उत्तानपदः पुत्रः आगतम् अन्तकम् ददर्श मृत्योः मूर्ध्नि पदम् दत्त्वा अद्भुतम् गृहम् आरुरोह ॥ ३० ॥ ❀ ❀ तदा दुन्दुभयः मृदंगपणवादयः नेदुः गन्धर्वमुख्याः प्रजगुः कुसुमवृष्टयः पेतुः ॥ ३१ ॥ ❀ ❀ सः ध्रुवः स्वर्लोकम् आरोक्ष्यन् सुनीतिम् जननीम् अन्वस्मरत् च दीनाम् हित्वा अगम् त्रिविष्टपम् यास्ये ॥ ३२ ॥

---

१. प्रा० पा०—कृतकृत्यम०। २. प्राचीने पाठे 'तदोत्तान···' इत्यारभ्य···'गृहम्' इति सम्पूर्णश्लोको न। ३. प्रा० पा०—यास्यन्।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

आयुष्मन्नित्यपि संबोधनं सशरीरयानाभिप्रायमेव ॥ २७ ॥ ❀ ❀ मधु च्यवते स्रवतीति मधुच्युत्ताम् । पाठांतरे मधु च्युतं स्रुतं यस्यांताममृतस्राविणीमित्यर्थः । कृतं नित्यं कर्म मंगलं चालंकरणं येन अभ्यवादयद्वादयामास ॥ २८ ॥ ❀ ❀ तदेव रूपं हिरण्मयं प्रकाशबहुलं बिभ्रत्सन्नियेष ऐच्छत् ॥ २९ ॥ ❀ ❀ गृहं विमानम् । अयं भावः । यदा ध्रुवो विमानमारोढुमैच्छत्तदा मृत्युरागत्य प्रणम्योवाच । हे महाराज मामंगीकुरु । उवाच ध्रुवः । स्वागतं ते क्षणं तावदुपविश । एवमुक्त्वा ध्रुवो विष्णोः स्मरणं कृत्वा मृत्योर्मूर्ध्नि पदं दत्त्वा विमानाग्र्यमारुरोह ॥ ३०-३१ ॥ ❀ ❀ दीनां जननीं हित्वा कथमगं दुर्गमं त्रिविष्टपं यास्यामीत्यन्वस्मरत् ॥ ३२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

मधु क्षौद्रं तद्वदास्वादजनकमक्षरवृंदं, पाठांतरे मधुच्युतामिति । मंगलं भूषणादावप्यस्तीति ॥ २८ ॥ ❀ ❀ परीत्य प्रदक्षिणीकृत्य धिष्ण्याग्रं विमानं 'भगवद्विमानाय नमः' इति पुष्पगंधादिभिः संपूज्य ॥ २९-३० ॥ ❀ ❀ गंधर्वेषु मुख्यास्तुंबुरुप्रभृतयः ॥ ३१ ॥ ❀ ❀ स च ध्रुवः । अत्र भगवता नाहमेव सत्यसंकल्पः किं तु मद्भक्तोपीति भावेन स्फुरितांतःकरणवृत्तिविशेषो ध्रुव एतादृशं पुत्रं सूतवत्याः स्वकृते त्यक्तविषयभोगायाः सुनीतेः पुत्रेण सह देवलोकाप्तिर्नाभूत्स्वयं च नास्मार्षीदिति लोकापवादं मन्वान इव यदा स्वमातरमस्मार्षीत्तदा कैटभारेः संकल्पज्ञानवन्तौ पार्षदौ तस्य पुरतो यांतीं दर्शयामासतुरिति ध्रुवस्य सत्यसंकल्पत्वं ज्ञापितमिति ॥ ३२ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

पाठान्तरे मधुच्युतामिति पाठे नित्यं कर्म चात्र भगवदर्चनादिरूपम् अलङ्करणं च तिलकमालादिरूपम् ॥ २८ ॥ ❀ ❀ परीत्य प्रदक्षिणीकृत्य हिरण्मयं शुद्धसत्त्वतेजोविशेषरूपम् ॥ २९-३२ ॥

### श्रीमद्वीरराघवव्याख्या

ते तव पितृभिर्मन्वादिभिः तथान्यैरपि अङ्ग हे ध्रुव ! कदाचिदप्यनास्थितमनधिष्ठितमत एव जगतां वन्द्यं विष्णोः संबन्धि परमं सर्वोत्कृष्टं तत्त्वया जितं पदं स्थानमातिष्ठ अधितिष्ठ ॥ २६ ॥ ❀ ❀ हे आयुष्मन् ! उत्तमश्लोकमौलिना उत्तमश्लोकमुख्येन भगवता एतद्विमानश्रेष्ठमुपस्थापितं प्रेषितमेतद्विमानाग्र्यमधिरोढुं त्वमर्हसि । अत्रायुष्मन्निति संबोधनं सशरीरयात्राभिप्रायकम् । अत्र वैकुण्ठपरमपदविष्णुपदादिशब्दा भगवत्स्थानसाम्यात्परमव्योम्नीव विष्ण्वभिमानविषये ध्रुवलोके प्रयुज्यन्ते । तत्रापि हि भक्तानुजिघृक्षया भगवान् सर्वदा सन्निहितः भक्तानुग्रहादेव पार्षदविमानादिप्रेषणमुपपन्नम् ॥ २७ ॥ ❀ ❀ वैकुण्ठनियोज्यमुख्ययोर्भगवत्पार्षदप्रवरयोः मधुच्युताममृतस्राविणीं वाचं निशम्य भगवत्प्रियो ध्रुवः कृतमङ्गलस्नानः कृतं नित्यं कर्म मङ्गलमलङ्करणं च येन सः मुनीन् प्रणिपत्याशिषमभ्यवादयत् वाचयामास ॥ २८ ॥ ❀ ❀ विमानश्रेष्ठं परीत्य परिक्रम्य तदेव रूपं पुनर्हिरण्मयं ज्योतिर्मयं बिभ्रत्सन् तद्विमानाग्र्यमधिष्ठातुमियेष ऐच्छत् ॥ २९ ॥ ❀ ❀ पेतुः पतितवत्यः । स च ध्रुवः स्वर्लोकं आरोक्ष्यन् दीनां मातरं हित्वा अगं दुर्गमं त्रिविष्टपं यास्ये इत्येवं जननीमन्वस्मरत् ॥ ३० ॥ ❀ ❀ इत्येवंभूतं तस्य ध्रुवस्य व्यवसितमभिप्रायं ज्ञात्वा सुरोत्तमौ सुनन्दनन्दौ देवयानेन देवप्रवरोपस्थापितेन विमानेन गच्छन्तीं देवीं सुनीतिं दर्शयामासतुः ॥ ३१-३२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

इतोऽपीदमास्थेयमिति प्रतिपादयत इत्याह । अनास्थितमिति अन्यैरनधिष्ठितं चेत्किं श्मशानं तदित्यत उक्तं जगतामिति । सा किं वसतिरित उक्तं तद्विष्णोरिति । "शिशुमारो ध्रुवश्चैव संस्थितो यत्पुरे सदा । तत्पश्यन्ति न यान्त्यन्ये लोकं यान्ति सुरान्विना ॥" इति वचनेन तत्र तात्पर्यमवगन्तव्यम् ॥ २६ ॥ ❀ ❀ केनेदं विमानं प्रेषितमिति शङ्कां निवारयत इत्याह । एतदिति । उत्तमश्लोकमौलिना शिशुमारमूर्तिना हरिणा ॥ २७ ॥ ❀ ❀ मैत्रेयो विदुरायाह । भगवद्भक्तमाहात्म्यं शृण्विति भावेन तस्य पदमारोढुमितिकर्तव्यतां वक्ति निशम्येति । वैकुण्ठस्य हरेर्नियोज्यानां पार्षदानां मध्ये मुख्ययोः मधु पुष्परसमिव रसं च्योतति स्रवतीति मधुच्युत्तां कृतं नित्यकर्माख्यं मङ्गलं येन स कृतनित्यमङ्गलः अभ्यवादयदभिवादयामास ॥ २८ ॥ ❀ ❀ नेदं ध्रुवस्यैव मङ्गलशकुनमन्येषामपि महतां भवतीति ध्वनयंस्तद्यात्राप्रारम्भमाङ्गल्यं वक्ति परीत्येत्यादिना ॥ २९ ॥ ❀ ❀ यदा धिष्ण्याग्र्यं विमानमधिष्ठातुमियेष तदा दुन्दुभ्यादयो नेदुरित्यन्वयः ॥ ३०-३१ ॥ ❀ ❀ नाहमेव सत्यसंकल्पशिरोमणिः किंतु भक्तोऽपीति भावेन हरिणा स्फुरितान्तःकरणवृत्तिविशेषो ध्रुव एतादृशं पुत्रं सूतवत्याः स्वकृते त्यक्तविषयभोगायाः

सुनीतेः पुत्रेण सह स्वर्लोकप्राप्तिर्नाभूत् स्वयं वा नास्माषींदिति लोकापवादं मन्वान इव यदा स्वमातरमस्मार्षीत्तदा कैटभारेः संकल्पं जानानौ तौ पार्षदौ तस्य पुरतो यान्तीं मातरं दर्शयामासतुरित्याह स चेति। अनेन ध्रुवस्यापि सत्यसंकल्पत्वं लोके प्रकाशितमिति ज्ञायते ॥ ३२ ॥

**श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः**

तदेव रूपं हिरण्मयं शुद्धसत्त्वतेजोविशेषरूपम् ॥ २९-३२ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

आयुष्मन्नित्यपि सशरीरगमनाभिप्रायम् ॥ २७ ॥ ❀ ❀ नियोज्याः किङ्कराः मधु च्यवते स्रवतीति मधुच्युत् तां, मधुच्युतामिति पाठे मधु च्युतं यस्यां ताम् अभ्यवादयत् वाचयामास ॥ २८ ॥ ❀ ❀ परीत्य विमानं प्रदक्षिणीकृत्य अभ्यर्च्य गन्धपुष्पादिभिर्भगवद्विमानाय नम इति सम्पूज्य तदेव स्वीयं रूपं हिरण्मयं तेजोबहुलं बिभ्रत् सन् आरोढुमैच्छत् ॥ २९-३१ ॥ ❀ ❀ अगं सर्वागम्यं त्रिविष्टपं विष्णुपदम् ॥ ३२ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

पितृभिश्चतुर्मुखस्वायंभुवोत्तानपादैः अत एव जगतां चतुर्दशभुवनस्थानां वन्द्यम्। परमं पदमिति परवैकुण्ठस्यैव भगवताविष्कृतत्वं यतो नावर्तते यतिरिति श्रीभगवतैवोक्तत्वात् ॥ २७ ॥ ❀ ❀ आयुष्मन्निति भगवदनुग्रहादेव श्रीनारद-वच्छुद्धां भागवतीं तनुं प्राप्य मरणशङ्काशून्य इति द्योत्यते। उत्तमश्लोकमौलिना पवित्रकीर्तिमुख्येनोपस्थापितं प्रेषितम् ॥ २७ ॥ ❀ ❀ वैकुण्ठनियोज्यमुख्ययोर्विष्णुभृत्यश्रेष्ठयोर्मधुच्युतां वाचं निशम्य श्रुत्वा कृताभिषेकः कृतनित्यमङ्गलः मुनीन् प्रणम्य तैराशिषमभ्यवादयत् स्वस्तिवाचनमकारयत् ॥ २८ ॥ ❀ ❀ धिष्ण्याग्र्यं विमानश्रेष्ठमभ्यर्च्य परीत्य प्रदक्षिणीकृत्य हिरण्मयं भागवतमप्राकृतं रूपं बिभ्रत् तदधिष्ठातुं विमानश्रेष्ठमधिरोढुमियेष ऐच्छत् ॥ २९ ॥ ❀ ❀ तदा दुन्दुभिनादादिमङ्गलमभूदित्याह। तदेति ॥ ३० ॥ ❀ ❀ स्वरति शब्दायते स्वरत्युपतापयति स्वविमुखान् वा स्वर्विष्णुस्तस्य लोकमारोक्ष्यन् स्वृ-शब्दोपतापनयोः, दीनां मातरं हित्वा यत्र राजपत्नीत्वात् सा गमिष्यति तत् विशन्ति पुण्यकर्मिणो यस्मिन् तद्विष्टपं तृतीयं विष्टपं त्रिविष्टपं च हित्वा अगं पूर्वोक्तरीत्या ब्रह्ममन्वादीनामपि दुर्गमं विष्णुलोकं यास्ये इति अन्वस्मरत्। यद्वा मातरं हित्वा कर्मनिष्ठप्राप्यात् प्रसिद्धत्रिविष्टपादितरमगं त्रिविष्टपं विशन्ति भागवता यस्मिंस्तद्विष्टपं त्रयाणां भक्तिज्ञानविरागाणां फलभूतत्वात् तत्संबन्धि त्रिविष्टपं यास्ये इत्यन्वयः ॥ ३१-३२ ॥

**गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी**

पुनरपि दुर्लभत्वमेवाहतुः—अनास्थितमनधिष्ठितम् ॥ २६ ॥ ❀ ❀ उत्तमाः श्लोकाः यशांसि येषां ते उत्तम-श्लोकास्तेषां मौलिवत् शिरोमणिवद्विराजमानो भगवांस्तथा तेनैतद्विमानप्रवरं श्रेष्ठं विमानं तत्स्थानगमनार्थमुपस्थापितं त्वत्समीपे प्रेषितम्। तदेतत्त्वमधिरोढुमर्हसि। हे आयुष्मन्निति संबोधयन् देहत्यागं विना तेनैव देहेनारोहणं सूचयतः ॥ २७ ॥ ❀ ❀ तच्छ्रुत्वा किं कृतवानित्याकाङ्क्षायां पदारोहणेतिकर्त्तव्यतां तत्कृतां दर्शयति—निशम्येति। वैकुण्ठस्य भगवतो नियोज्यानां पार्षदानां मुख्ययोस्तयोर्मधुच्युतं मधु च्यवते स्रवतीति मधुच्युत्ताममृतस्राविणीमिव वाचं निशम्य श्रुत्वा उरवो बहवः क्रमाः पादप्रक्षेपाः गतयो लीला यस्य तस्य प्रियो ध्रुवः कृताभिषेकः कृतस्नानः नित्यकर्म सन्ध्यावन्दनादिकं मङ्गलं तिलकादिकं च येन स तथाभूतः सन् मुनीन् बदरिकाश्रमनिवासिनः प्रणम्य तेभ्य आशिषमभ्यवादयत् वाचयामास ॥ २८ ॥ ❀ ❀ धिष्ण्याग्र्यं विमानश्रेष्ठ-मभ्यर्च्य संपूज्य परीत्य प्रदक्षिणीकृत्य पार्षदौ चाभिवन्द्य यदा तद्विमानमधिष्ठातुमधिरोढुमियेष ऐच्छत् तदा हिरण्मयं रूपं बिभ्रज्जातः तदेव रूपं सुवर्णवत्प्रकाशमानं तेजोमयं भगवत्पदे स्थितियोग्यं जातमित्यर्थः ॥ २९ ॥ ❀ ❀ उत्कृष्टपदारोहणेऽमर्षेण देवकृतविघ्नसंभवान्मतिविंदूषिता देवैरित्युक्तत्वात्तदिदानीं तस्य भगवत्प्रसादान्नाभूत् प्रत्युत तैरप्युत्सवः कृत इत्याह—तदेति। देवैर्वादिता दुन्दुभ्यादयो नेदुः तथा तैर्विसर्जिताः कुसुमवृष्टयः पेतुः ॥ ३० ॥ ❀ ❀ तदा च तस्य मनोरथान्तरमपि जातमित्याह—स च ध्रुवः स्वर्लोकमारोक्ष्यन् स्वजननीं सुनीतिमन्वस्मरत्। तत्स्मरणमेवाभिनयेन दर्शयति—अगमिति। मद्वियोगेन दीनां दुःखितां जननीं हित्वा अगं दुर्गमस्थानं त्रिविष्टपं स्वर्गं कथं यास्य इति ॥ ३१ ॥ ❀ ❀ इत्येवं तस्य ध्रुवस्य व्यवसित-मभिप्रायं व्यवसाय निश्चित्य सुरोत्तमौ भगवत्पार्षदौ देवीं सुनीतिं यानेन पुरः पुरतो गच्छन्तीं दर्शयामासतुरित्यन्वयः। इत्यनेन पूर्वं यदुक्तं 'सत्संकल्पेन धीमता' इति सत्संकल्पत्वं तद्विशदीकृतं ज्ञेयम् ॥ ३२ ॥

**भाषानुवादः**

प्रियवर ! आजतक आपके पूर्वज तथा और कोई भी उस पदपर कभी नहीं पहुँच सके। भगवान् विष्णुका वह परमधाम सारे संसारका वन्दनीय है, आप वहाँ चलकर विराजमान हों ॥ २६ ॥ ❀ ❀ आयुष्मन् यह श्रेष्ठ विमान

पुण्यश्लोकशिखामणि श्रीहरिने आपकेलिये ही भेजा है, आप इसपर चढ़ने योग्य हैं ॥ २७ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—भगवान्‌के प्रमुख पार्षदोंके ये अमृतमय वचन सुनकर परम भागवत ध्रुवजीने स्नान किया, फिर सन्ध्या-वन्दनादि नित्य-कर्मसे निवृत्त हो माङ्गलिक अलङ्कारादि धारण किये। बदरिकाश्रममें रहनेवाले मुनियोंको प्रणाम करके उनका आशीर्वाद लिया ॥ २८ ॥ ❀ ❀ इसके बाद उस श्रेष्ठ विमानकी पूजा और प्रदक्षिणा की और पार्षदोंको प्रणाम कर सुवर्णके समान कान्तिमान् दिव्य रूप धारण करके उसपर चढ़नेको तैयार हुए ॥ २९ ॥ ❀ ❀ इतनेमें ही ध्रुवजीने देखा कि काल मूर्तिमान् होकर उनके सामने खड़ा है। तब वे मृत्युके सिरपर पैर रखकर उस अद्भुत विमानपर चढ़ गये ॥ ३० ॥ ❀ ❀ उस समय आकाश में दुन्दुभि मृदङ्ग और ढोल आदि बाजे बजने लगे, श्रेष्ठ गन्धर्व गान करने लगे और फूलों की वर्षा होने लगी ॥ ३१ ॥ विमानपर बैठकर ध्रुवजी ज्यों ही भगवान्‌के धामको जानेके लिये तैयार हुए, त्यों ही उन्हें अपनी माता सुनीतिका स्मरण हो आया। वे सोचने लगे, 'क्या मैं बेचारी माताको छोड़कर अकेला ही दुर्लभ वैकुण्ठधामको जाऊँगा ?' ॥ ३२ ॥

इति व्यवसितं तस्य व्यवसाय सुरोत्तमौ। दर्शयामासतुर्देवीं पुरो यानेन गच्छतीम् ॥ ३३ ॥
तत्र तत्र प्रशंसद्भिः पथि वैमानिकैः सुरैः। अवकीर्यमाणो ददृशे कुसुमैः क्रमशो ग्रहान् ॥ ३४ ॥
त्रिलोकीं देवयानेन सोऽतिव्रज्य मुनीनपि। परस्ताद्यद् ध्रुवगतिर्विष्णोः पदमथाभ्यगात् ॥ ३५ ॥
यद् भ्राजमानं स्वरुचैव सर्वतो लोकास्त्रयो ह्यनु विभ्राजन्त[1] एते।
यन्नाव्रजञ्जन्तुषु येऽननुग्रहा[2] व्रजन्ति भद्राणि चरन्ति येऽनिशम् ॥ ३६ ॥
शान्ताः समदृशः शुद्धाः सर्वभूतानुरञ्जनाः[3]। यान्त्यञ्जसाच्युतपदमच्युतप्रियबान्धवाः ॥ ३७ ॥
इत्युत्तानपदः पुत्रो ध्रुवः कृष्णपरायणः। अभूत्त्रयाणां लोकानां चूडामणिरिवामलः ॥ ३८ ॥
गम्भीरवेगोऽनिमिषं ज्योतिषां चक्रमाहितम्[4]। यस्मिन् भ्रमति कौरव्य मेढ्यामिव गवां गणः ॥ ३९ ॥
महिमानं विलोक्यास्य नारदो भगवानृषिः। आतोद्यं वितुदञ्श्लोकान् सत्रेऽगायत्प्रचेतसाम् ॥ ४० ॥

अन्वयः—सुरोत्तमौ तस्य इति व्यवसितम् व्यवसाय यानेन पुरः गच्छतीम् देवीम् दर्शयामासतुः ॥ ३३ ॥ ❀ ❀ तत्र तत्र पथि प्रशंसद्भिः वैमानिकैः सुरैः कुसुमैः अवकीर्यमाणः क्रमशः ग्रहान् ददृशे ॥ ३४ ॥ ❀ ❀ अथ ध्रुवगतिः सः देवयानेन त्रिलोकीं मुनीन् अपि अतिव्रज्य यत् परस्तात् विष्णोः पदम् अभ्यगात् ॥ ३५ ॥ ❀ ❀ एते त्रयः लोकाः स्वरुचा एव भ्राजमानम् यत् अनु सर्वतः हि विभ्राजन्ते ये जन्तुषु अननुग्रहाः ते यत् न आव्रजन् ये अनिशम् भद्राणि चरन्ति ते व्रजन्ति ॥ ३६ ॥ ❀ ❀ शान्ताः समदृशः शुद्धाः सर्वभूतानुरञ्जनाः अच्युतप्रियबान्धवाः अञ्जसा अच्युतपदम् यान्ति ॥ ३७ ॥ ❀ ❀ इति कृष्णपरायणः उत्तानपदः पुत्रः ध्रुवः त्रयाणाम् लोकानाम् अमलः चूडामणिः इव अभूत् ॥ ३८ ॥ ❀ ❀ कौरव्य यस्मिन् आहितम् ज्योतिषाम् चक्रम् मेढ्याम् गम्भीरवेगः गवाम् गणः इव अनिमिषम् भ्रमति ॥३९॥ ❀ ❀ भगवान् नारदः ऋषिः अस्य महिमानम् विलोक्य आतोद्यम् वितुदन् प्रचेतसाम् सत्रे श्लोकान् अगायत् ॥४०॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

व्यवसितमभिप्रायं व्यवसाय ज्ञात्वा ॥ ३३–३४ ॥ ❀ ❀ देवयानेन देवमार्गेण विमानेनेति वा मुनीन्सप्तर्षीनपि ततः परस्ताद्यद्विष्णोः पदं तदभ्यगात्। ध्रुवा गतिर्यस्य सः ॥ ३५ ॥ ❀ ❀ यद्भ्राजमानमनु यस्य रुचा लोका विभ्राजंते येऽननुग्रहा निष्कृपास्ते यन्नाव्रजन्न गतवंतः ॥ ३६ ॥ ❀ ❀ अच्युतः प्रियो बांधवो येषाम् ॥ ३७–३८ ॥ ❀ ❀ अनिमिषमनलसं ज्योतिषां चक्रं यस्मिन्नाहितमर्पितं सद्भ्रमति। मेढ्यामाहितो गंभीरवेगो गवां गण इव ॥ ३९ ॥ ❀ ❀ आतोद्यं वीणां वितुदन्वादयन्प्रचेतसां ब्रह्मसत्रे भगवन्माहात्म्यप्रसंगेन ध्रुवमहिमप्रतिपादनपरांश्लोकानगायत् ॥ ४० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

व्यवसायेति। "न ल्यपि" इत्युक्तेर्नेत्वं, "विमाने देवमार्गे च देवयानं सुरार्चने" इति निरुक्तिः ॥ ३३ ॥ ❀ ❀ ग्रहान्सूर्यचंद्रादीन् ॥ ३४ ॥ ❀ ❀ अथ मंगले ॥ ३५ ॥ ❀ ❀ तत्पदाधिकारिणोऽन्वयव्यतिरेकाभ्यामाह—यदिति। भद्राणि हरिभजनादीनि ॥ ३६–३८ ॥ ❀ ❀ यस्मिन्नित्यनेनोपरि प्रतीतिं वारयति मेढीसमीपे तथा परितो गवां गणः तथात्रापीत्यर्थः ॥ ३९ ॥ ❀ ❀ "आतोद्यं वाद्यमिष्यते" इति हलायुधोक्तेर्नारदस्य वीणैव वाद्यम् ॥ ४० ॥

---

१. प्रा० पा०—विभ्रा०। २. प्रा० पा०—ये दत्सला जन्तुषु येऽप्यनुग्रहं। ३. प्रा० पा०—रञ्जकाः। ४. प्रा० पा—मर्पितम्।

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

देवीं ध्रुववच्छुद्धसत्त्वतेजोविशेषरूपाम् ॥ ३३-३४ ॥ ❀ ❀ गतिः स्थानम् ॥ ३५ ॥ ❀ ❀ स्वरुचैव भ्राजमानं स्वप्रकाशं भद्राणि श्रवणकीर्त्तनादीनि ॥ ३६ ॥ ❀ ❀ शान्ताः भगवन्निष्ठबुद्धयः 'शमो मन्निष्ठता बुद्धेरि'ति भगवद्वचनात् अच्युतप्रियाः वैष्णवाः ॥ ३७ ॥ ❀ ❀ ध्रुवस्य पृश्निगर्भपरायणत्वेऽपि कृष्णपरायण इत्युक्तिस्सर्वावताराणां तदन्तर्भावविवक्षया ॥ ३८ ॥ ❀ ❀ अनलसत्त्वस्य गम्भीरवेगेन साम्यम् ॥ ३९ ॥ ❀ ❀ भगवान् सर्वज्ञस्तत्रापि ऋषिर्भक्तितत्त्वज्ञः ॥ ४० ॥

## श्रीमद्वीरराघवव्याख्या

तत्र तत्र पथि विमानारूढैर्देवैः प्रशंसद्भिः कुसुमवृष्टिभिरवकीर्यमाणो ग्रहान् आदित्यादिस्थानानि क्रमशो दृष्टवान् ॥ ३३-३४ ॥ ❀ ❀ देवयानेन सुनन्दनन्दनाख्यदेवप्रवरोपस्थापितविमानेन त्रिलोकीं मुनीन् सप्तर्षीनप्यतिव्रज्यातिक्रम्य ततः परस्तात् यद्विष्णोः पदं तद्ध्रुवा शाश्वती गतिर्यस्य सः ध्रुवः आकल्पस्थायित्वाद्गतेर्ध्रुवत्वमभ्यगात् प्राप्तवान् ॥ ३५ ॥ ❀ ❀ विष्णोः पदं विशिनष्टि यदिति । स्वरुचैव यत् भ्राजमानमनुसृत्य तस्य रुचा एते त्रयो लोका भ्राजन्ते यत्र जन्तुषु भूतेषु येऽननुग्रहा निरनुग्रहाः निष्कृपास्ते नात्रजन्न गतवन्तः ये च जन्तुषु भद्राणि सुहृत्त्वादीन्यनिशं चरन्ति कुर्वन्ति ते व्रजन्ति तत्पदमध्यगादिति पूर्वेण संबन्धः । ध्रुवस्थानं प्राप्तानामपि सत्यलोकगतानामिव प्रायेण पुनरावृत्त्यभावात्कल्पान्ते मोक्ष्यमाणत्वाद् भूतसुहृत्त्वादीनामेव मुक्तिहेतुत्वाच्चैवमुक्तम् ॥ ३६ ॥ ❀ ❀ किंच यदच्युतपदमच्युतः प्रियो येषां भागवतानां ते बान्धवा येषां ते शान्ताः शमदमादियुक्ताः समदृशः देहात्मेश्वराणां प्रकृतिपरिणामरूपत्वज्ञानैकाकारत्वसर्वान्तरात्मत्वादिरूपसमदर्शिनः अत एव सर्वभूतानि यथायोग्यं दानमानादिभिरनुरञ्जयन्ति प्रीतिं कुर्वन्तीति सर्वभूतानुरञ्जनाः सिद्धप्राया न तु नितरां सिद्धाः, तेषामचिरादिगत्या ब्रह्मलोकाप्राप्तेः, अञ्जसा सुखेन यान्ति तत्पदमध्यगादिति पूर्वेणान्वयः । अयमर्थः शमदमादिभिः सर्वभूतसुहृत्त्वादिभिश्च परब्रह्मोपासननिष्ठा अपि केचित्प्रारब्धवशाद् बुभुक्षावशाद्वान्तरायविहताः सत्यलोकं ध्रुवलोकं गतास्तत्रत्यभोगोत्तरं परिपूर्णयोगा मुच्यन्त इति ॥ ३७ ॥ ❀ ❀ इत्युक्तप्रकारेण कृष्णो भगवान् परमयनं प्राप्यं प्रापकमाधारो यस्य स ध्रुवस्त्रयाणां लोकानाममलश्चूडामणिः शिखामणिरिवाभूत् । अमल इति दृष्टान्तदार्ष्टान्तिकयोरुभयोरपि विशेषणम् ॥ ३८ ॥ ❀ ❀ हे कौरव्य विदुर ! मेढ्यां धान्याक्रमणाय बलीवर्दबन्धनस्तम्भविशेषे गम्भीरवेगो गवां गणः बलीवर्दसमूह इव ज्योतिषां चक्रं यस्मिन् ध्रुवे आहितं सत् अनिशं भ्रमति ॥ ३९ ॥ ❀ ❀ अस्य ध्रुवस्य महिमानं विलोक्य भगवान्नारद ऋषिः आतोद्यं वीणां वितुदन्नादयन्प्रचेतसां सत्रे भगवन्माहात्म्यप्रसंगेन श्लोकान् ध्रुवस्य महिमप्रतिपादनपरान् त्रीन् श्लोकानगायत् ॥ ४० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अग्रगामग्रतो गच्छन्तीम् ॥ ३३-३४ ॥ ❀ ❀ ध्रुवा निश्चला गतिर्यस्य स तथा देवयानेन मार्गेण ॥ ३५ ॥ ❀ ❀ तत्पदप्राप्त्यधिकारिणोऽन्वयव्यतिरेकाभ्यामाह न त इति । ये तु जन्तुषु खलास्ते यन्न व्रजन्ति ये तु जन्तुषु अनुग्रहाद्दयालक्षणादनिशं भद्राणि चरन्ति ते यद्व्रजन्ति ॥ ३६ ॥ ❀ ❀ एतदेव विशिनष्टि । शान्ता इति एते खिला इति पाठे जन्तुषु ये भद्राणि चरन्ति एते खिला विष्णोरनुग्रहाद्व्रजन्ति । भद्राचरणं विशिनष्टि येऽनिशमिति । येऽनिशं शान्त्यादिगुणयुक्तास्तेऽच्युतपदं यान्तीत्यन्वयः । एतत्पदं प्राप्य स्वरूपाविर्भावयोग्यान् विना पुरस्तादन्यैरित्युक्तम् ॥३७-३८॥ ❀ ❀ चन्द्रदिवाकरादय इत्यत्र ज्योतिश्चक्रेण प्रदक्षिणीक्रियमाणमेतत् स्थानमित्युक्तं तत्कियद्दूरत इति न प्रतीतं तदिदानीं लक्षयति गम्भीरेति । गम्भीरवेगानि आनिमीषीव गम्भीरवेगानिर्मीषि तेषां मिष-निमिष इति धातोः, न निमिषन्ति न मिलन्तीत्यनिमिषः, तेषामगच्छतामित्यर्थः । यस्मिन्नित्यनेनोपरीति प्रतीतिं निवारयति । मेढ्यामिति अनेन मेढ्याः समीपे परितो भ्रमन्तीति यथा प्रतीतं तथात्रापीत्यर्थः ॥ ३९ ॥ ❀ ❀ इति केनायं महिमा लालितो येनास्माकमपि तत्र श्रद्धातिशयः स्यादित्यत आह महिमानमिति । आतोद्यं महद्वीणावद्यं 'आतोद्यं वाद्यमिष्यते' इति हलायुधः ॥ ४० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

देवीं ध्रुववद्धिरण्मयस्वरूपामित्यर्थः ॥ ३३-४० ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

व्यवसितमभिप्रायं व्यवसायं ज्ञात्वा ॥ ३३-३४ ॥ ❀ ❀ मुनीन् सप्तर्षीनपि ततः परस्तात् यद्विष्णोः पदं तदभ्यगात् । ध्रुवा गतिर्यस्य सः ॥ ३५-३६ ॥ ❀ ❀ यद् भ्राजमानमनु यत् पश्चात् यस्य रुचा लोका विभ्राजन्ते

॥ ३७-३८ ॥ ❃ ❃ अनिमिषं जाग्रदेव कालरूपं गम्भीरवेगो गवां गण इव ॥ ३९ ॥ ❃ ❃ आतोद्यं वीणां वितुदन् वादयन् ॥ ४० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

इत्येवं ध्रुवस्य व्यवसितमाशयं व्यवसायं ज्ञात्वा देवीं सुनीतिं पुरोऽग्रतो यानेन विमानान्तरेण गच्छन्तीं दर्शयामासतुः ॥ ३३-३४ ॥ ❃ ❃ ध्रुवा पुनरावृत्तिवर्जिता गतिर्यस्य सः यत्स्वरुचैव भ्राजमानम् एते त्रयो लोकाः अनुविभ्राजन्ते ये अननुग्रहा निर्दयाः यत्रात्रजन् न गतवन्तः ये जन्तुषु भद्राणि मङ्गलानि हिताचरणानि चरन्ति ते व्रजन्ति ॥ ३५-३६ ॥ ❃ ❃ किंच शान्तत्वादिगुणवन्तः अच्युतप्रिया एव बान्धवा येषां ते ॥ ३७ ॥ ❃ ❃ त्रयाणां लोकानां वैकुण्ठादधः स्थितानां चूडामणिरिव शिखामणिरिवाभूत् ॥ ३८ ॥ ❃ ❃ कथंभूतः यस्मिन् ध्रुवे ज्योतिषां चक्रं मेढ्यां गवां गण इवार्पितं सत् अनिशं भ्रमति सः ॥ ३९ ॥ ❃ ❃ अस्य ध्रुवस्य महिमानं प्रभावं विलोक्य आतोद्यं वीणारूपं वाद्यं वितुदन् वादयन् प्रचेतसां सत्रे श्लोकानगायत् ॥ ४० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

पथि मार्गे तत्र तत्र प्रशंसद्भिः वैमानिकैर्विमानस्थैः सुरैः कर्तृभिः कुसुमैः पूजासाधनैः अवकीर्यमाणः आच्छाद्यमानो ध्रुवः क्रमशः ग्रहान् आदित्यादीन् ददृशे ददर्शेत्यन्वयः ॥ ३३ ॥ ❃ ❃ ध्रुवा निश्चला गम्यत इति गतिः स्थानं यस्य स ध्रुवगतिर्ध्रुवो देवयानेन देवमार्गेण भगवत्प्रस्थापितविमानेन त्रिलोकीं मुनीन् सप्तर्षीनप्यतिव्रज्य उल्लङ्घ्य ततः परस्तात् उपरिष्टाद्वर्त्तमानं यद्विष्णोः पदं तत् अथ ग्रहदर्शनाद्यनन्तरमभ्यगात् सुखेन प्राप्तवान् ॥ ३४ ॥ ❃ ❃ पदस्योत्कृष्टत्वं वदंस्तत्र गमनागमनयोरधिकारिणो दर्शयति-यदिति द्वाभ्याम्। यद्विष्णोः पदं स्वरुचैव स्वप्रकाशेनैव सर्वतो भ्राजमानम्। एते त्रयो लोकाः हि निश्चितमनु तद्रुचैव विभ्राजन्ते। ये जन्तुषु प्राणिष्वननुग्रहाः कृपारहिताः क्रूरस्वभावास्ते यन्नाव्रजन् कदापि न गतवन्तः। ये तु दयालवो जन्तुष्वनिशं निरंतरं भद्राणि हितानि चरन्ति ते यद् व्रजन्ति तदभ्यगादिति पूर्वेणैवान्वयः ॥ ३५ ॥ ❃ ❃ अच्युतः स्वरूपतो भगवानेव प्रियो बान्धवो येषां पुत्रदारादिसर्वतो विरक्तानां तेऽच्युतप्रियबान्धवास्तेऽच्युतपदं 'यतो नावर्त्तते यतिः' इत्युक्तत्वाच्च्युतिरहितं पदं, यद्वाऽच्युतस्य पदमञ्जसा तत्कृपयाऽनायासेन यान्ति। यदेवंभूतं तदभ्यगादिति पूर्वसंबन्धः। ननु सर्वतो विरक्त्या भगवत्परता तत्कृपां विना न संभवत्यतस्तत्कृपायां को हेतुरित्याशङ्क्याह-सर्वेति। सर्वाणि भूतानि तद्धिताचरणेनानुरञ्जयन्तीति ते तथा। सर्वभूतहिताचरणेन भगवत्कृपापात्रभूता इति भावः। सर्वानुरञ्जने हेतुमाह-समदृश इति। यतः सर्वत्र स्वदृष्टान्तेन सुखदुःखादि पश्यन्तीत्यर्थः। समदर्शने हेतुमाह-शांता इति। तत्तद्विषयभोगवासनारहिता इत्यर्थः। स्वभोगेऽभिनिवेशाभावात्सर्वत्र समदर्शनमिति भावः। वासनाराहित्ये हेतुमाह-शुद्धा इति। भगवदर्पिततत्तत्कर्मानुष्ठानेन रजस्तमआदिमलरहितान्तःकरणा यत इत्यर्थः ॥ ३६ ॥ ❃ ❃ ध्रुवस्य भगवत्पदारोहणकथामुपसंहरति-इतीति। इत्येवं वर्णितेन प्रकारेणोत्तानपदः पुत्रो ध्रुवस्त्रयाणां लोकानां चूडामणिरिवाभूत् त्रिलोक्यां मूर्ध्नि स्थानं प्रापेत्यर्थः। तस्य तत्प्राप्तौ भगवत्कृपैव हेतुरित्यभिप्रेत्य कृपायां हेतुमाह-कृष्णपरायण इति। कृष्ण एव परं सर्वत उत्कृष्टमयनमाश्रयो यस्य स तथा कृष्णैकशरण इत्यर्थः। तदेकशरणत्वे भगवदीयकृपैवासाधारणो हेतुरिति सूचयन्नाह-अमल इति। स्पृष्ट्वा मूर्द्धन्यघघ्नेन पाणिना प्राहेत्युक्तेर्भगवद्भक्तनारदकरस्पर्शेन तदुपदेशात्तपश्चर्यादिना शुद्धान्तःकरणत्वात्तस्य भगवदेकशरणता जातेत्यर्थः ॥ ३७ ॥ ❃ ❃ पूर्वं निर्दिष्टमपि स्थानं दुर्लभत्वद्योतनाय पुनर्निर्दिशति-गंभीरेति। अनिमिषं श्रमरहितं निरन्तरं यथा भवति तथा ज्योतिषामादित्यादीनां चक्रं यस्मिन् ध्रुवप्राप्तेः स्थान आहितं समर्पितं सद् भ्रमति। हे कौरव्य विदुर ! तत्र दृष्टान्तमाह-मेढ्यामिति। धान्यक्रमणाय भ्राम्यमाणानां पशूनां बन्धनस्तम्भो मेढी, तस्यामाहितो गम्भीरवेगोऽव्यवच्छिन्नवेगो गवां गणो यथा भ्रमति तथेत्यर्थः ॥ ३८ ॥ ❃ ❃ इदानीं महतां सभायां परमभागवतनारदकर्तृकगानेन ध्रुवमाहात्म्यस्यात्युत्कृष्टत्वं सूचयन्नाह-महिमानमिति। अस्य ध्रुवस्य महिमानं विलोक्य दृष्ट्वा नारदः प्रचेतसां राज्ञां सत्रे यज्ञसभायां भगवद्भक्तमाहात्म्यकथनप्रसङ्गे ध्रुवमाहात्म्यस्योत्कृष्टतया तत्प्रतिपादकान् वक्ष्यमाणांस्त्रीन् श्लोकान् आतोद्यं वीणां वितुदन् वादयन्नगायदित्यन्वयः। प्रचेतसां ध्रुवान्वयोद्भवत्वेन स्वपूर्वजमहिमगाने तेषां स्वविषयकप्रसन्नतामालक्ष्य तेभ्यः कंचिल्लाभमनुद्दिश्य तत्प्रीत्यर्थं तन्महिमगानं नारदेन कृतं भविष्यतीत्याशङ्कां वारयितुमाह-भगवानिति। भगवदुपासकत्वेन तत्प्रसादादैश्वर्यादिपरिपूर्णोऽतस्तस्यान्यतः कश्चिल्लाभोद्देशो नास्तीति भावः। तर्हि भ्रान्त्या गानं कृतं स्यादित्याशङ्क्याह-ऋषिरिति ॥ ३९ ॥ ❃ ❃ नारदगीतान् श्लोकानेव दर्शयति-नूनमिति। नूनं निश्चितमेतत् पतिरेव देवता यस्यास्तस्याः सुनीतेः सुतस्य ध्रुवस्य यत्तपस्तत्प्रभावस्य तस्य माहात्म्यस्य तां सर्वोत्कृष्टां गतिं फलमधिगन्तुं प्राप्तुं वेदवादिनो वेदवेदनशीला वेदोपदेष्टारोऽपि अभ्युपायान् ध्रुवेणानुष्ठितान् यद्वा वेदज्ञत्वाद्वेदे

प्रतिपादितान् दृष्ट्वापि नैव प्रभवन्ति। यद्येवं तदान्ये नृपा एतदुपायज्ञानरहिता तत्प्राप्तुं न प्रभवन्तीत्यत्र किं पुनर्वक्तव्यमित्यन्वयः। पतिदेवताया इत्यनेन तत्पातिव्रत्यमहिम्ना तस्य तादृक्तपःसिद्धिरिति सूचयति ॥ ४० ॥

### भाषानुवादः

नन्द और सुनन्दने ध्रुवके हृदयकी बात जानकर उन्हें दिखलाया कि देवी सुनीति आगे-आगे दूसरे विमानपर जा रही हैं ॥ ३३ ॥ ❁ ❁ उन्होंने क्रमशः सूर्य आदि सभी ग्रह देखे। मार्ग में जहाँ तहाँ विमानों पर बैठे हुए देवता उनकी प्रशंसा करते हुए फूलों की वर्षा करते जाते थे ॥ ३४ ॥ उस दिव्य विमानपर बैठकर ध्रुवजी त्रिलोकीको पारकर सप्तर्षि-मण्डलसे भी ऊपर भगवान् विष्णुके नित्यधाममें पहुँचे। इस प्रकार उन्होंने अविचल गति प्राप्त की ॥ ३५ ॥ ❁ ❁ यह दिव्य धाम अपने ही प्रकाश से प्रकाशित है, इसी के प्रकाशसे तीनों लोक प्रकाशित हैं। इसमें जीवों पर निर्दयता करनेवाले पुरुष नहीं जा सकते। यहाँ तो उन्हींकी पहुँच होती है, जो दिन-रात प्राणियोंके कल्याण के लिए शुभ कर्म ही करते रहते हैं ॥ ३६ ॥ ❁ ❁ जो शान्त, समदर्शी, शुद्ध और सब प्राणियों को प्रसन्न रखनेवाले हैं तथा भगवद्भक्तोंको ही अपना एकमात्र सच्चा सुहृद् मानते हैं—ऐसे लोग सुगमतासे ही इस भगवद्धामको प्राप्त कर लेते हैं ॥ ३७ ॥ ❁ ❁ इस प्रकार उत्तानपादके पुत्र भगवत्परायण श्रीध्रुवजी तीनों लोकोंके ऊपर उसकी निर्मल चूडामणि के समान विराजमान हुए ॥ ३८ ॥ ❁ ❁ कुरुनन्दन ! जिस प्रकार गायँ चलाने के समय खंभेके चारों ओर बैल घूमते हैं, उसी प्रकार यह गम्भीर वेगवाला ज्योतिश्चक्र उस अविनाशी लोकके आश्रय ही निरन्तर घूमता रहता है ॥ ३९ ॥ ❁ ❁ उसकी महिमा देखकर देवर्षि नारदने प्रचेताओं की यज्ञशालामें वीणा बजाकर ये तीन श्लोक गाये थे ॥ ४० ॥

### नारद उवाच[1]

नूनं सुनीतेः पतिदेवतायास्तपःप्रभावस्य सुतस्य तां गतिम्।
दृष्ट्वाभ्युपायानपि वेदवादिनो नैवाधिगन्तुं प्रभवन्ति किं नृपाः ॥ ४१ ॥
यः पञ्चवर्षो गुरुदारवाक्शरैर्भिन्नेन यातो हृदयेन दूयता।
वनं मदादेशकरोऽजितं प्रभुं[2] जिगाय तद्भक्तगुणैः[3] पराजितम् ॥ ४२ ॥
यः क्षत्रबन्धुर्भुवि तस्याधिरूढमन्वारुरुक्षेदपि वर्षपूगैः।
षट्पञ्चवर्षो[4] यदहोभिरल्पैः प्रसाद्य वैकुण्ठमवाप तत्पदम् ॥ ४३ ॥

### मैत्रेय उवाच

एतत्तेऽभिहितं सर्वं यत्पृष्टोऽहमिह त्वया। ध्रुवस्योद्दामयशसश्चरितं सम्मतं सताम् ॥ ४४ ॥
धन्यं यशस्यमायुष्यं पुण्यं स्वस्त्ययनं महत्। स्वर्ग्यं ध्रौव्यं सौमनस्यं प्रशस्यमघमर्षणम् ॥ ४५ ॥
श्रुत्वैतच्छ्रद्धया[5]भीक्ष्णमच्युतप्रियचेष्टितम्। भवेद्भक्तिर्भगवति यया[6] स्यात्क्लेशसंक्षयः ॥ ४६ ॥
महत्त्वमिच्छतां[7] तीर्थं श्रोतुः शीलादयो गुणाः। यत्र तेजस्तदिच्छूनां मानो यत्र मनस्विनाम् ॥ ४७ ॥
प्रयतः कीर्तयेत्प्रातः समवाये द्विजन्मनाम्। सायं च पुण्यश्लोकस्य ध्रुवस्य चरितं महत् ॥ ४८ ॥
पौर्णमास्यां सिनीवाल्यां द्वादश्यां श्रवणेऽथवा। दिनक्षये व्यतीपाते सङ्क्रमेऽर्कदिनेऽपि[8] वा ॥ ४९ ॥
श्रावयेच्छ्रद्दधानानां तीर्थपादपदाश्रयः। नेच्छंस्तत्रात्मनाऽऽत्मानं सन्तुष्ट इति सिध्यति ॥ ५० ॥
ज्ञानमज्ञाततत्त्वाय यो दद्यात्[9]सत्पथेऽमृतम्। कृपालोर्दीननाथस्य देवास्तस्यानुगृह्णते ॥ ५१ ॥
इदं मया तेऽभिहितं कुरूद्वह ध्रुवस्य विख्यातविशुद्धकर्मणः।
हित्वार्भकः क्रीडनकानि मातुर्गृहं च विष्णुं शरणं यो[10] जगाम ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे ध्रुव[11]चरितं नाम द्वा[12]दशोऽध्यायः ॥ १२ ॥

---

१. प्राचीने पाठे 'नारद उवाच' पाठो न। २. प्रा० पा०—विभुं। ३. प्रा० पा०—तद्भक्तगणैः। ४. प्रा० पा०—यत्पञ्च०। ५. प्रा० पा०—श्रुत्वेमं श्रद्ध०। ६. प्रा० पा०—यस्य। ७. प्रा० पा०—च्छतोऽत्यर्थं श्रोतुः। ८. प्रा० पा०—ऽथवा। ९. प्रा०पा०—द्याच्छुद्धधीमते। १०. प्राचीने पाठे 'यो' नास्ति। ११. प्रा० पा०—ध्रुवारोहणं। १२. प्रा० पा०—एकादशो०।

अन्वयः—वेदवादिनः पतिदेवतायाः सुनीतेः सुतस्य तपःप्रभावस्य ताम् गतिम् अभ्युपायान् दृष्ट्वा अपि अधिगन्तुम् नूनम् न एव प्रभवन्ति नृपाः किम् ॥ ४१ ॥ ❀ ❀ पञ्चवर्षः यः गुरुदारवाक्शरैः भिन्नेन दूयता हृदयेन वनम् यातः मदादेशकरः तद्धक्तगुणैः पराजितम् अजितम् प्रभुम् जिगाय ॥ ४२ ॥ ❀ ❀ षट्पञ्चवर्षैः अल्पैः अहोभिः वैकुण्ठम् प्रसाद्य यत् अवाप तत् तस्य अधिरूढम् पदम् भुवि यः क्षत्रबन्धुः वर्षपूगैः अपि अन्वारुरुक्षेत् ॥ ४३ ॥ ❀ ❀ यत् त्वया अहम् इह पृष्टः सताम् संमतम् एतत् उद्दामयशसः ध्रुवस्य सर्वम् चरितम् ते अभिहितम् ॥ ४४ ॥ ❀ ❀ धन्यम् यशस्यम् आयुष्यम् पुण्यम् स्वस्त्ययनम् महत् स्वर्ग्यम् ध्रौव्यम् सौमनस्यम् प्रशस्यं अघमर्षणम् ॥ ४५ ॥ ❀ ❀ एतत् अच्युतप्रियचेष्टितम् श्रद्धया अभीक्ष्णम् श्रुत्वा भगवति भक्तिः भवेत् यया क्लेशसंक्षयः स्यात् ॥ ४६ ॥ ❀ ❀ यत्र महत्त्वम् इच्छताम् तीर्थम् श्रोतुः शीलादयः गुणाः यत्र तदिच्छूनाम् तेजः मनस्विनाम् मानः ॥ ४७ ॥ ❀ ❀ प्रयतः भूत्वा पुण्यश्लोकस्य ध्रुवस्य महत् चरितम् प्रातः च सायम् द्विजन्मनाम् समवाये कीर्तयेत् ॥ ४८ ॥ ❀ ❀ अथवा पौर्णमास्याम् सिनीवाल्याम् द्वादश्याम् श्रवणे दिनक्षये व्यतीपाते संक्रमे अपि वा अर्कदिने ॥ ४९ ॥ ❀ ❀ तीर्थपादपदाश्रयः न इच्छन् श्रद्दधानानाम् श्रावयेत् तत्र आत्मना आत्मानम् सन्तुष्टः इति सः सिद्ध्यति ॥ ५० ॥ ❀ ❀ यः अज्ञाततत्त्वाय सत्पथे अमृतम् ज्ञानम् दद्यात् तस्य कृपालोः दीननाथस्य देवाः अनुगृह्णते ॥ ५१ ॥ ❀ ❀ कुरूद्वह यः अर्भकः क्रीडनकानि च मातुः गृहम् हित्वा विष्णुम् शरणम् जगाम विख्यातविशुद्धकर्मणः ध्रुवस्य इदम् मया ते अभिहितम् ॥ ५२ ॥

इति द्वादशोऽध्यायः ॥

### श्रीधरस्वामिविरचित-भावार्थदीपिका

नूनमिति। पतिरेव देवता यस्यास्तस्याः सुतस्य यस्तपःप्रभावस्तस्य तां गतिं फलमधिगंतुं वेदवादशीला ब्रह्मर्षयोऽपि नैव प्रभवंति। अभ्युपायान्भगवद्धर्मान् दृष्ट्वापि किं पुनर्नृपाः ॥ ४१ ॥ ❀ ❀ तपःप्रभावं गतिं च विशिनष्टि द्वाभ्याम्। गुरुदाराः पितृपत्नी सुरुचिस्तस्या वाक्छरैर्भिन्नेनात एव दूयता हृदयेन वनं यातः सन्नजितमपि यो जिगाय वशीकृतवान् ॥ ४२ ॥ ❀ ❀ तस्याधिरुढं तेन प्राप्तं पदं यो भुवि क्षत्रबंधुः क्षत्रियो भवेत्स तमनु वर्षसमूहैरप्यारोढुमिच्छेदपि किम्। तत्संकल्पोऽप्यशक्यो दूरत आरोहणमित्यर्थः। कथंभूतं पदम्! षड्वा पंच वा वर्षाणि यस्य सः अल्पैरेवाहोभिर्वैकुंठं प्रसाद्य यत्तस्य पदमवाप तत् ॥ ४३ ॥ ❀ ❀ उद्दाममुत्कृष्टं यशो यस्य ॥ ४४ ॥ ❀ ❀ धनादेर्निमित्तम्। ध्रौव्यं ध्रुवस्थानप्रापकम्। प्रशस्यं प्रशंसार्हम्। अघमर्षणं पापनाशनम् ॥ ४५ ॥ ❀ ❀ अच्युतप्रियस्य ध्रुवस्य चेष्टितं श्रुत्वा यो वर्तते तस्य भक्तिर्भवेत् ॥ ४६ ॥ ❀ ❀ तीर्थं महत्त्वावाप्तिस्थानम्। गुणा यत्र भवंति ॥ ४७ ॥ ❀ ❀ समवाये सभायाम् ॥ ४८-४९ ॥ ❀ ❀ नेच्छन्निष्कामस्तत्र श्रवणे आत्मनैवात्मानं प्रति संतुष्टो भवतीति हेतोः सिद्धिं प्राप्नोति ॥ ५० ॥ ❀ ❀ किं च सत्पथे भगवन्मार्गेऽमृतरूपं ज्ञानं यो दद्यात् ॥ ५१ ॥ ❀ ❀ ध्रुवस्य चरितं मया तेऽभिहितम्। मातुर्गृहं च हित्वा ॥ ५२ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे टीकायां द्वादशोऽध्यायः ॥ १२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अभ्युपायानन्तरंगसाधनानि ॥४१॥ ❀ ❀ दूयता तप्यमानेन 'टुदु—उपतापे'। तत्पूर्वोक्तं मधुवनं यातः ॥ ४२ ॥ ❀ ❀ क्षत्रेण क्षतत्राणेन बध्नाति दस्युगणानिति क्षत्रबंधुः। क्षत्रियोत्तमोऽपि कस्तत्पदं प्राप्तुं शक्नुयादिति। इत्यर्थ इति। तत्पदारोहणसंकल्पस्याप्यशक्तत्वे कुतस्तदारोहणमिति भावः। गर्भापेक्षया षडित्युक्तिरस्ति सर्वज्ञशिरोमणेश्श्रीव्यासदेवस्य संशयानुपपत्तेः। यद्वा—षडिति पृथक्पदमेव यः पञ्चवर्ष इति पूर्वश्लोकानुरोधात्, तच्चाहोभिरित्यंतेनान्वेति प्रथमांतमपि तृतीयार्थेऽस्ति, अहश्चात्रोपलक्षणं रात्रेरपि स चाहोरात्रोऽप्यत्र पैत्रो ग्राह्यः। पैत्रो मासेनेत्यमरोक्तेः। 'मासैरहं षड्भिरमुष्य पादयोः' इति ध्रुवोक्तेः। यद्वा—कियद्वर्षोयं बाल इति केनचित्पृष्टो बालपिता यथा पञ्चषडब्दोयमित्युत्तरयति तथा लोकोक्तिवदियमुक्तिर्ज्ञेयेति ॥ ४३-४५ ॥ ❀ ❀ यथा भक्त्या। क्लेशानामविद्यादीनां क्षयः ॥ ४६ ॥ ❀ ❀ "तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजस्सु च। अवतारर्षिजुष्टांबुपात्रोपाध्यायमंत्रिषु" इति मेदिनी। तदिच्छूनां तेज आकांक्षमाणानां यत्र यस्मिंश्चरितेऽभ्यस्यमाने तेजो भवतीत्यर्थः। मनस्विनां मानेप्सूनां मानः पूजा च भवति। यद्वा मनस्विनां स्थिरचेतसां मध्ये मानोऽस्य श्रोतुर्वक्तुर्वा भवतीत्यर्थः ॥ ४७ ॥ ❀ ❀ "समवायः समूहे च संबंधेऽपि निगद्यते" इति ॥ ४८ ॥ ❀ ❀ सिनीवाल्यां दृष्टेंदुकलायाममावस्यायां श्रवणर्क्षस्य हरिदेवताकत्वेन पर्वत्वमस्तीति दिनक्षयेऽवमदिने। व्यतीपाते विष्कंभाद्यन्तर्गते योगविशेषे। यद्वा—"श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके। यद्यमा रविवारेण व्यतीपातः स उच्यते ॥" नागदैवतमाश्लेषा मस्तकं मृगशिरः, प्रथमपाद इत्यन्ये। स च सर्वेषामित्युक्तलक्षणे संक्रमे रविसंक्रांतौ अपिनाऽन्यस्मिन्नपि पुण्यकाले चूडामण्यादियोगे "सप्तम्यां रविवारेण

योगश्चूडामणिस्स्मृतः" इत्याद्युक्तेः ॥ ४९ ॥ ❀ ❀ श्रद्धधानानामिति द्वितीयार्थे षष्ठी। निष्कामस्तद्वेतनं किमपि द्रव्यं न प्रतिगृह्णन् तत्र हेतुरात्मानं प्रत्यात्मनैव संतुष्टः मत्कथ्यमानां कृष्णकथां भक्ताः श्रद्धया शृण्वंत्वित्येतदेव मम वेतनमिति मन्यमानः, इत्यत एव सिद्धिं सर्वाभीष्टनिष्पत्तिं प्राप्नोति ॥ ५० ॥ ❀ ❀ जीवनिस्तारकं किमपि ज्ञानं श्रावयत एव महाफलं किमुतेद्दग्भक्तध्रुवचरितमित्याशयेनाह—किञ्चेति। तस्य भागवतज्ञानदातुर्न केवलं भगवानेवानुगृह्णाति किं तु तदिन्द्रियाभिमानिनो देवा "दिग्वातार्कप्रचेताश्विवह्नींद्रोपेंद्रमित्रकाः" इत्युक्ता अप्यनुगृह्णंतीत्यर्थः ॥ ५१ ॥ ❀ ❀ पुनरपि तन्माहात्म्यं सूचयन्नुपसंहरति। शुद्धकुलप्रादुर्भूतत्वेन श्रद्धधानत्वात्त्वमेतच्छ्रावणयोग्योसीत्यभिप्रायेणाह—कुरूद्वहेति। अर्भको बालः सन् ॥ ५२ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

सुनीतेरिति। तस्या निर्मत्सरोपदेशनीत्यैव श्रीहरिः प्रीत इति भावः। यतः पतिदेवतायाः पतिव्रतायाः वस्तुतस्तु स वै पतिस्स्यादित्यादिन्यायेन पतिः श्रीकृष्ण एव देवता यस्याः तस्याः सुतः कथं नैवंभूतः स्यादिति भावः। तपःप्रभावस्य तादृशध्यानस्य या सर्वजित्स्थितिस्तस्याः प्रभावस्सर्वजित्स्थितिरिति रसामृतोक्तेः दृष्ट्वापि ज्ञात्वापि तादृशविश्वासाभावात् प्रत्युत वेदवादित्वेन विप्रतिपन्नमतित्वादिति भावः ॥ ४१ ॥ ❀ ❀ वनं मधुवनमत एवाजितमपि जिगाय ॥ ४२ ॥ ❀ ❀ पञ्चवर्षत्वेऽपि तथैव लोकोक्तिः ॥ ४३ ॥ ❀ ❀ एतदिति युग्मकम्। यदर्थजातं प्रति त्वयाहं पृष्टः इति ध्रुवचरितमपि पृष्टं ज्ञेयम् ॥ ४४–४५ ॥ ❀ ❀ भवेदिति क्रियायां भक्तेः कर्तृत्वात्तस्याः श्रवणे तत्त्वायोगात् क्त्वाप्रत्ययस्य च समानकर्तृकत्वात् श्रुत्वा यो वर्त्तते इत्यध्याहृत्य व्याख्यातम् ॥ ४६ ॥ ❀ ❀ तदिच्छूनां तेज इच्छूनां मनस्विनां मानमिच्छताम् ॥ ४७ ॥ ❀ ❀ प्रयत इति युग्मकम्। अर्कदिने रविवारे ॥ ४८–४९ ॥ ❀ ❀ सिद्धिं मुक्तिम् ॥ ५० ॥ ❀ ❀ ज्ञानं तत्साधनं ध्रुवचरितं देवाः भगवदादयः ॥ ५१–५२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे दीपिन्याख्यायां दीपिकाटिप्पण्यां द्वादशोऽध्यायः ॥ १२ ॥

### श्रीमद्वीरराघवव्याख्या

श्लोकानेवाह नूनमिति। पतिदेवतायाः सुनीतेः सुतस्य ध्रुवस्य यस्तपःप्रभावस्तस्य फलभूतां गतिं अभ्युपायान् गतिसाधनभूतान्भगवदाराधनरूपानुपायानपि दृष्ट्वा वेदवादिनोऽपि ऋषयोऽपि अधिगंतुं प्राप्तुं नैव प्रभवन्ति न समर्था भवन्ति किं पुनर्नृपाः नृपा न भवन्तीति किंमु वक्तव्यमित्यर्थः ॥ ४१ ॥ ❀ ❀ गुरुदाराः पितृपत्नी सुरुचिस्तस्या वाचोबाणास्तैर्भिन्नेनात एव दूयता तप्तेन हृदयेन यो ध्रुवः पञ्चवर्ष एव वनं प्रति गतस्तत्रापि मदाज्ञावशवर्ती अजितमपि विभुं भगवन्तं गुणैर्भगवद्भक्तानां गुणैर्भूतमैत्र्यादिभिः पराजितं वशंगतम् 'अहं भक्तपराधीनो ह्यस्वतन्त्रः' इति भगवदुक्तेः भक्तपराधीनमित्यर्थः। जिगाय वशीकृतवान् ॥४२॥ ❀ ❀ तस्य ध्रुवस्य अधिरूढं प्राप्तं पदमित्यर्थः। पदं स्थानं यो भुवि क्षत्रबन्धुः क्षत्रियाभासः वर्षसमूहैरपि अधिरोढुमिच्छेदपि किं तत्संकल्पोऽप्यशक्यः दूरतः आरोहणमित्यर्थः। कथंभूतं पदं पञ्च वर्षाणि यस्य सः अल्पैरेवाहोभिर्दिनैर्वैकुण्ठमासाद्य आसन्नं कारयित्वा यत्तस्य पदमवाप ॥ ४३ ॥ ❀ ❀ ततः ध्रुवचरितं निगमयन् तच्छ्रवणादिफलमाह मुनिः। एतदिति। त्वया यत्प्रतिपृष्टोऽहं तत्सर्वं तुभ्यं कथितं किं तत्राह। उद्दामयशसः उत्कृष्टकीर्तेः ध्रुवस्य चरितं सतां हरिभक्तानां सम्मतम् ॥ ४४ ॥ ❀ ❀ धन्यं धनेच्छया शृण्वतां श्रावयतां च धनसंपादकं तथा यशस्यं यशस्करमायुष्करं स्वस्त्ययनं मङ्गलकरं स्वर्गसम्पादकं ध्रौव्यं ध्रुवस्थानप्रापकं सौमनस्यं मनःपीडाविनाशकं प्रशस्यं प्राशस्त्यसंपादकम् अघमर्षणं पापनिरासकम् ॥ ४५ ॥ ❀ ❀ एतदच्युतप्रियस्य ध्रुवस्य चेष्टितमभीक्ष्णं पौनःपुन्येन श्रद्धया श्रुत्वा यो वर्त्तते तस्य भगवति भक्तिर्भवति। भक्तिफलमाह यया भक्त्या क्लेशानामाध्यात्मिकादीनां संक्षयो भवति ॥ ४६ ॥ ❀ ❀ महत्त्वं सर्वोत्कृष्टत्वमिच्छतां कामयमानानां तीर्थं महत्त्वं प्राप्तुमुपायो भवेदित्यनुषङ्गः। तथा श्रोतुं शीलादयो गुणाः भवेयुरित्यनुषक्तस्य वचनविपरिणामेनान्वयः। यत्र यस्मिन् ध्रुवचरिते श्रूयमाण इति शेषः। तदिच्छूनां तेज इच्छतां तेजो भवेत्। तेजसो विधेयत्वेन बुद्धिस्थत्वात्सन्निहितत्वात् प्रकृतत्वात्तच्छब्देन परामर्शाद्दुद्देश्यविशेषणत्वोपपत्तिः, तथा यत्र यस्मिन् चरिते मनस्विनां प्रशंसायां नित्ययोगे वा मत्वर्थीयः 'अस्मायामेधास्रजो विनिरि'ति विनिः प्रत्ययः, मनःप्राशस्त्यं भगवति मनसो नित्ययोगं वेच्छतां मनः प्रशस्तं नित्यमुक्तं वा मनो भवेदित्यर्थः ॥ ४७ ॥ ❀ ❀ अर्थसामर्थ्यात्प्रातः सायं च सायङ्काले च प्रयतः मनःप्रणिधानयुक्तः द्विजन्मनां ब्राह्मणानां समवाये सभायां पुण्यश्लोकस्य ध्रुवस्य महत्समीहितस्य साधनं चरितं कीर्त्तयेत् ॥ ४८ ॥ ❀ ❀ पौर्णमास्यां सिनीवाल्यां दृष्टेन्दुकलायाममावस्यायां श्रवणनक्षत्रयुक्ते दिने अर्कदिने सप्तमीभानुवासरादौ च कीर्त्तयेदिति सम्बन्धः ॥ ४९ ॥ ❀ ❀ नेच्छन्निष्कामः तीर्थं पादे यस्य सः तीर्थपादो भगवान् तस्य पदाश्रयः भागवतः श्रद्धधानान् श्रद्धायुक्तान् प्रति इदं चरितं श्रावयेत् भागवतस्य नितरामेतच्चरितश्रावणं युक्तमिति भावः। तत्र निष्कामतया श्रावणे

आत्मना स्वयमेवात्मानं श्रावयित्राध्यात्मानं प्रति सन्तुष्ट इति सन्तुष्टो भगवान् भवेदिति हेतोः सिद्ध्यति। निष्कामतया यः श्रावयति तस्मिन् भगवान् स्वयमेव सन्तुष्ट इति सोऽपि सिध्यत्येव मुक्तिं प्राप्नोत्येवेत्यर्थः ॥ ५० ॥ ❀ ❀ न केवलं निष्कामतया श्रावयितारं भगवानेवानुगृह्णाति अपि तु सर्वे एव देवा अनुगृह्णत इत्याह ज्ञानमिति। अज्ञातं तत्त्वं तत्त्वत्रययाथात्म्यं येन तस्मै सत्पथे सतां मार्गे भगवन्मार्गे इत्यर्थः, अमृतरूपं ज्ञानं यो दद्यात् तस्य कृपालोरत एव दीननाथस्य देवा अनुगृह्णते अनुग्रहं कुर्वन्ति ॥ ५१ ॥ ❀ ❀ हे कुरूद्वह! विख्यातं प्रसिद्धं विशुद्धं कर्म यस्य सः श्रृण्वतामप्यघकर्मणां शोधनं कर्म चेष्टितं यस्य तस्य ध्रुवस्येदं चरितं तुभ्यं मयाभिहितं कथितं यो ध्रुवः अर्भक एव सन् मातृगृहं क्रीडनकानि क्रीडासाधनानि च त्यक्त्वा विष्णुं शरणं जगामेति पुनः-पुनर्विस्मयते ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवकृतभागवतचंद्रचंद्रिकाख्यायां टीकायां द्वादशोऽध्यायः ॥ १२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तपसः प्रभावो माहात्म्यं यस्य स तथा तस्य "प्रतापमाहात्म्ययोः प्रभावः स्यात्" इति यादवः ॥ ४१ ॥ ❀ ❀ अजितं जिगाय वशीचकार ॥ ४२-४४ ॥ ❀ ❀ ध्रौव्यं ध्रुवस्य मोक्षस्य साधनम् ॥ ४५ ॥ ❀ ❀ अच्युतप्रियस्य ध्रुवस्य चेष्टितम् ॥ ४६ ॥ ❀ ❀ तीर्थमुपायः साधनं मन्त्राद्युपदेष्टा 'तेजो बले प्रभावेऽन्ने ज्योतिष्यर्चिषि रेतसि। नवनीतेऽनले धर्मे दाने हस्तिमदेऽपि च ॥' इत्यभिधानात् तदिच्छूनां तेज आकांक्षमाणानां यत्र यस्मिंश्चरितेऽभ्यस्यमाने तेजो भवतीत्यर्थः ॥ ४७ ॥ ❀ ❀ समवाये समूहे कीर्तयेदित्यतस्तत्पर्यायादिदमिति वक्ति। पुण्यश्लोकस्येति ॥ ४८-४९ ॥ ❀ ❀ श्रावयन् फलाभिसंधिं न कुर्यादिति भावेनाह नेच्छन्निति। तत्र चरिते श्राविते श्रुते वा फलन्नेच्छन् वर्तते इति शेषः, कथं तर्हि फलसिद्धिरित्यत आह आत्मनेति। तत्रेत्युत्तरत्रापि संबध्यते तत्र चरिते श्राव्यमाणे आत्मना मनसात्मानं परमात्मानं प्रति संतुष्टः सिध्यति प्राप्ताभीष्टफलो भवति ॥ ५० ॥ ❀ ❀ ध्रुवचरितव्याख्यानव्याजेन भागवतं ज्ञानमुपदिशतो न केवलं भगवानेवानुग्रहं करोति किं तु तदिन्द्रियाभिमानिनो देवा अपीत्याह। ज्ञानमिति ॥ ५१ ॥ ❀ ❀ पुनरपि तन्माहात्म्यं सूचयन्नुपसंहरति। इदं मयेति ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां द्वादशोऽध्यायः ॥ १२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

नूनमिति। तां गतिं दृष्ट्वापि तस्य अभ्युपायान् अन्तरङ्गसाधनान्यप्यधिगन्तुं देववादनशीला ब्रह्मर्षयोऽपि नैव प्रभवन्ति किमुत ताम् यद्यप्येवं तेऽपि न तर्हि किमुततरां नृपा इत्यर्थः। दृष्ट्वाभ्युपायाति इति चित्सुखः ॥ ४१ ॥ ❀ ❀ य इत्यत्र क इति कश्चित् चित्सुखसम्मतश्च। किन्तु स्वाम्यसम्मतः ॥ ४२-४३ ॥ ❀ ❀ एतदिति युग्मकम्। यत् पृष्टोऽहमित्यनुसारेण ध्रुवस्य चरितमपि पृष्टमित्यवगन्तव्यम् ॥ ४४-४७ ॥ ❀ ❀ प्रयत इति युग्मकम् ॥ ४८-५० ॥ ❀ ❀ ज्ञानमिति। सत्पथे सन्मार्गान्तर्मुखजननाय। य इति कश्चिन्नास्ति ॥ ५१-५२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य द्वादशोऽध्यायः ॥ १२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

तपःप्रभावरूपस्य सुतस्य तां प्रसिद्धां गतिं फलं दृष्ट्वापि तस्या अभ्युपायान् अन्तरङ्गसाधनान्यप्यधिगन्तुं न प्रभवन्ति किमुत ताम्। यद्येवं तेऽपि न तर्हि किमुततरां नृपा इत्यर्थः ॥ ४१ ॥ ❀ ❀ दूयता दूयमानेन ॥ ४२ ॥ ❀ ❀ क्षत्रबन्धुः क्षत्रियोत्तमोऽपि तमपेक्ष्य क्षत्रियाधमो यः तस्य रूढं पदमनु पश्चात् आरोढुमिच्छेत् स किं वर्षसमूहैरपि आरोहेदिति शेषः। यद् यस्मात् षड्वा पञ्च वा वर्षाणि वयांसि यस्येति वयःशब्दस्य वृत्तावन्तर्भावः ॥ ४३-४४ ॥ ❀ ❀ धनादिकामनावतां धन्यमित्यादि ध्रौव्यं ध्रुवस्थानप्रापकं सुमनसो देवास्तदहं तेऽप्येतत् श्रोतुं वक्तुञ्चार्हन्तीत्यर्थः ॥ ४५ ॥ ❀ ❀ श्रुत्वा स्थितस्येति शेषः ॥ ४६ ॥ ❀ ❀ तीर्थमिदं कारणं यत्र श्रुते सति ॥ ४७-४९ ॥ ❀ ❀ श्रद्दधानानामिति द्वितीयार्थे षष्ठी। नेच्छन् तद्वेतनं किमपि द्रव्यं न प्रतिगृह्णन् तत्र हेतुः आत्मानं प्रति आत्मनैव सन्तुष्टः तत्र श्रावणे मत्कथ्यमानां कृष्णकथां भक्तः श्रद्धया श्रृणोतीत्येतदेव मम वेतनमिति मन्यमान इत्यत एव सिद्धिं प्राप्नोति ॥ ५० ॥ ❀ ❀ जीवनिस्तारकं किमपि ज्ञानं श्रावयत एव महाफलं किमुत ध्रुवचरितमित्याह। ज्ञानेति ॥ ५१-५२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। चतुर्थे द्वादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

नूनं निश्चितं पतिरेव देवता यस्यास्तस्याः सुतस्य अभ्युपायान् भगवद्धर्मान् दृष्ट्वा लक्ष्यीकृत्य यस्तपसः भगवद्धर्मानुष्ठानस्य प्रभावस्तस्य गतिं फलं वेदवादिनोऽपि अधिगन्तुं नैव प्रभवन्ति नृपाः किमुत ॥ ४१ ॥ ❀ ❀ अजितमपि जिगाय जित-

वान् तत्र हेतुगर्भं विशेषणं भक्तगुणैः पराजितमिति ॥ ४२ ॥ ❀ ❀ यो ध्रुवः षट् पञ्च वा वर्षाणि यस्य सः तत्राल्पैरहोभिर्वैकुण्ठं हरिं प्रसाद्य यत्पदमवाप तस्याधिरूढं तत्पदं भुवि बलेन वयसा प्रसिद्धोऽपि क्षत्रबन्धुः वर्षपूगैरपि किमन्वारुरुक्षेत् ? आरोहणस्य तु का कथा आरोहणेच्छामपि कुर्यान्नैवेति काकुः ॥ ४३ ॥ ❀ ❀ उद्दामं महद्यशो यस्य तस्य ॥ ४४ ॥ ❀ ❀ ध्रौव्यं ध्रुवपदप्रापकम् ॥ ४५ ॥ ❀ ❀ एतत्श्रवणफलमाह । श्रुत्वैतदिति द्वाभ्याम् । क्लेशानां सम्यक्क्षयः संसारनिवृत्तिपूर्वकभगवत्प्राप्तिः ॥ ४६ ॥ ❀ ❀ तीर्थं महत्त्वप्रापकम् । श्रोतुः शीलादयो गुणाः स्युः ॥ ४७ ॥ ❀ ❀ एतच्छ्रवणफलमाह । प्रयत इति पञ्चभिः समवाये समूहे ॥ ४८ ॥ ❀ ❀ सिनीवाल्याममावास्यायां दिनक्षये तिथिनाशे ॥ ४९ ॥ ❀ ❀ यः तीर्थानि पादयोर्यस्य तस्य हरेः पदाश्रयः सः नैच्छन् निष्कामः सन् श्रद्धधानानां श्रद्दधानान् प्रति श्रावयेत् तत्र श्रावणे आत्मानं श्रावयितारं प्रति आत्मना स्वेच्छयैव सन्तुष्टो भवति भगवानिति शेषः । इतिशब्दो हेत्वर्थः । अतो हेतोः सिद्ध्यति श्रावयिता भगवन्तं प्राप्नोति ॥ ५० ॥ ❀ ❀ सत्पथे भगवन्मार्गे ज्ञानं भगवत्स्वरूपगुणादिविषयममृतं मोक्षं यो दद्यात्तस्य देवा अनुगृह्णते अनुग्रहं कुर्वन्ति ॥ ५१ ॥ ❀ ❀ उपसंहरति । इदमिति ॥ ५२ ॥

**इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे द्वादशाध्यायार्थप्रकाशः ॥ १२ ॥**

**गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी**

एवं सामान्यत उक्त्वा विशेषतस्तत्पःप्रभावं दर्शयति–य इति । यो ध्रुवः पञ्चवर्षोऽतिबालोपि गुरुदाराः पितृपत्नी सुरुचिस्तस्या वाच एव पीडाकरत्वेन वरास्तैर्निर्भिन्नेनात एव दूयता कम्पमानेन हृदयेन युक्तो वनं यातस्तत्र मदादेशकरो मदुपदिष्टतपश्चर्यादि कुर्वन् अजितं दुराराध्यमपि प्रभुं भगवन्तं जिगाय प्रत्यक्षीकृतवान् । जिगायेति जयोक्तिस्तु तत्तपसः प्राबल्यद्योतनार्था । नन्वजितं जिगायेत्येतदपि विरुद्धमेव, न ह्यजितो जेतुं शक्यतेन्यथाऽजितत्वमेव न स्यादित्याशङ्क्याह–तदिति । तस्यैव ये भक्तास्तेषां ये गुणा मैत्रीकरुणादयस्तैः पराजितं वशीकृतमित्यर्थः । विषयाविष्टैर्दुराराध्येति तद्वैमुख्येन मैत्र्यादिभिर्भगवदाराधनपरैर्भगवान् सुलभ एवेति तस्य सुलभो जात इति भावः ॥ ४१ ॥ ❀ ❀ अधुना ध्रुवप्राप्तां गतिमेव दर्शयति–य इति । यः कोपि महानपि भुवि क्षत्रबन्धुः क्षत्रियो भवेत् स तस्य ध्रुवस्याधिरूढं तेन प्राप्तं पदमनु तत्पश्चात् वर्षपूगैर्वर्षसमूहैरपि साधनकालैः शनैः शनैरारुरुक्षेदपि किमारोढुमपीच्छेत् ? दुःसाध्यतया तदिच्छाप्यसंभाविता तदारोहणं सुदूरत इति भावः । ध्रुवस्तु षट्पञ्चवर्षो बालोप्यल्पैरेवाहोभिर्दिवसैः षण्मासपरिमितैर्वैकुण्ठं दुराराध्यमपि भगवन्तं प्रसन्नं कृत्वा यदन्येषां दुर्लभं तत्तस्य भगवतः पदमवाप प्राप्तवान् । अल्पैरहोभिरित्यनेन तत्तपसस्तीव्रत्वं सूचयति ॥ ४२ ॥ ❀ ❀ ध्रुवस्य स्वर्गारोहणमुपसंहृतमपीदानीं सामान्यतस्तच्चरितमुपसंहरति–एतदिति । यद् ध्रुवचरितं त्वयाहं पृष्टस्तदेतत्सर्वमिहास्मिन् प्रकरणे ते तुभ्यं मयाऽभिहितं कथितमित्यन्वयः । अत्र पृथक्तया ध्रुवचरितप्रश्नस्य मूलेऽनुपलभ्यमानत्वेप्यनयैवोक्त्या तदपि दृष्टमिति ज्ञेयम् । यद्वा यत् यस्मादादावेव प्रश्नाध्याये 'धर्मार्थकाममोक्षाणां निमित्तान्यविरोधतः । दानस्य तपसो वापि यच्चेष्टापूर्त्तयोः फलम् ॥ येन वा भगवांस्तुष्येद्धर्मयोनिर्जनार्दनः । संप्रसीदति वा येषामेतदाख्याहि चानघ' इत्यादि त्वयाहं पृष्टस्तस्मादेतद् ध्रुवस्य चरितं ते तुभ्यमिहार्थप्रकरणेऽभिहितमित्यन्वयः । ध्रुवचरितनिरूपणेनैवार्थस्वरूपं तत्साधनं तपःस्वरूपं तत्फलमिष्टापूर्त्तफलं भगवद्धर्माः भगवत्प्रसादपात्रं चैतत्सर्वं निरूपितं धर्मस्वरूपं तत्साधनं च धर्मप्रकरणे निरूपितम् । कामस्य मोक्षस्य च तद्वक्ष्यते । ध्रुवचरितवर्णनेनैव प्रश्नोत्तरदाने हेतुं सूचयति–उद्दामयशस इति । उद्दाममुत्कृष्टं यशो यस्य तस्य । एतादृशस्यैव चरितनिरूपणेनानेकप्रश्नोत्तरं दातुं शक्यते । नान्यथेति । साक्षात्स्वमुखत उत्तरदाने स्वारस्येन मनसि नावतरतीति भावः । अत एव श्रेयःसाधनत्वात्कर्त्तव्यतया सतां भगवद्भक्तानां विदुषां संमतमभिप्रेतम् ॥ ४३ ॥ ❀ ❀ प्रकरणस्य समाप्तत्वादेतच्छ्रवणकीर्त्तनपराणां फलं निरूपयति–धन्यमित्यादिसप्तभिः । तत्र प्रथमं तत्तत्कामनावतां तत्तदर्थसाधकत्वमाह–महत् विस्तृतं ध्रौव्यं ध्रुवचरितम् । श्रोतृवक्त्रोर्धनेच्छावतोर्धन्यं धनसाधकम् । यशइच्छावतोर्यशस्यं यशःसाधकम् । आयुरिच्छतोरायुष्यमायुर्वर्धनम् । धर्ममिच्छतोः पुण्यं पुण्यसाधकम् । स्वस्त्ययनं पुत्रजन्मादिमङ्गलकरं तदिच्छतोः स्वर्ग्यं स्वर्गप्रदम् । मनःशुद्धिमिच्छतोः सौमनस्यं सुष्ठु मनो यस्मात् मनश्शोधकम् । कुतः यतः अघमर्षणं पापनाशकम् अत एतैर्गुणैः प्रशस्यं प्रशंसायोग्यम् ॥ ४४ ॥ ❀ ❀ निष्कामानां श्रोतॄणां फलमाह–श्रुत्वैतदिति । अच्युतप्रियस्य ध्रुवस्य चेष्टितमेतच्छ्रद्धयाभीक्ष्णं पुनःपुनर्यः श्रुत्वावर्त्तते तस्य भगवति वासुदेवे भक्तिर्भवेत् । यया भक्त्याऽविद्यास्मितारागद्वेषाभिनिवेशानां पञ्चक्लेशानां सम्यक् यथा न पुनरुत्पत्तिः स्यात्तथा क्षयः स्यादित्यन्वयः ॥ ४५ ॥ ❀ ❀ न केवलं कामिनां केवलं धनादिहेतुः किंत्वन्येषामपीत्यभिप्रेत्याह–महत्त्वमिति । महत्त्वमिच्छतां तीर्थं महत्त्वावाप्तिसाधनम् । यत्र यस्मिन् ध्रुवचरिते श्रुते श्रोतुः शीलादयो गुणा भवंति । श्रोतुरिति वक्तुरप्युपलक्षणम् । तदिच्छूनां तेज आकाङ्क्षतां तेजो भवति । यत्र मनस्विनां मानः संमानो भवति सर्वलोककृतः ॥ ४६ ॥ ❀ ❀ इदानीं 'न देशनियमो राजन्न कालनियमस्तथा' इति वाक्यात् श्रवणादौ देशकालनियमाभावेप्यधिकपुण्यजनकत्वविवक्षया देशकालनि वशेषा दर्शयन् कीर्त्तने

प्रयत्नं विधत्ते–प्रयत इति द्वाभ्याम्। प्रातः कीर्त्तयेत् द्विजन्मनां समवाये समाजे च कीर्त्तयेत् सायं च कीर्त्तयेदिति संबन्धः ॥ ४७ ॥ ❀ ❀ सिनीवाल्यां कृष्णचतुर्दश्याम्। दिनक्षये तिथिक्षयदिने सङ्क्रमे सङ्क्रान्तिदिने। अर्कदिने आदित्यवारे। प्रयतः कीर्त्तयेदिति सर्वत्र सप्तम्यन्तेन संबन्धः ॥ ४८ ॥ ❀ ❀ यद्यपि वक्त्रादेर्बहूनि धनादीनि फलानि भवन्ति तथापि तान्यनादृत्य तीर्थपादपदाश्रयः भगवदेकशरणः सन् श्रद्दधानानां श्रवणे श्रद्धावतां श्रावयेदित्यन्वयः। एवं तस्य किं फलं स्यादित्याकाङ्क्षायामाह–नेच्छन्निति। यस्मात् किञ्चिदपि फलं नेच्छन् तत्र चरिते कीर्तिते श्रुते वा आत्मना धैर्ययुक्तया बुद्ध्यैवात्मानं मनःप्रति संतुष्टो वर्त्तते इति हेतोः सिद्ध्यति भगवत्प्रसादरूपां परमां सिद्धिं प्राप्नोतीत्यर्थः ॥ ४९ ॥ ❀ ❀ किंच 'यद्यपि पशुरेव स देवानाम्' इत्यादौ मनुष्यादेर्देवाराधकत्वेन तत्पशुतुल्यत्वान्न मनुष्यादेर्मुक्तिर्देवानां रोचते तथापि सत्पथे भगवन्मार्गे अज्ञाततत्त्वाय दीनाय यो ज्ञानममृतं संसारनिवर्त्तकं दद्यात्तस्य दीननाथस्य दीनोद्धारकस्य कृपालोर्देवा इन्द्रियाधिष्ठातारोऽनुगृह्णते विघ्नं न कुर्वन्ति प्रत्युतानुग्रहमेव कुर्वन्तीत्यर्थः ॥ ५० ॥ पूर्वमुपसंहृत्याप्युत्कृष्टत्वज्ञापनाय पुनर्ध्रुवचरितमुपसंहरति––इदमिति। ध्रुवस्य चरितमिति शेषः। विशुद्धं कर्म यस्य तस्य। तदेव दर्शयति––हित्वेति ॥ ५१ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे ह्यर्थनिरूपणे। द्वादशो विवृतोध्यायः फलप्राप्तिनिरूपकः ॥ ३ ॥

### भाषानुवादः

नारदजीने कहा—इसमें सन्देह नहीं, पतिपरायणा सुनीतिके पुत्र ध्रुवने तपस्या द्वारा अद्भुत शक्ति संचित करके जो गति पायी है, उसे भागवतधर्मोंकी आलोचना करके वेदवादी मुनिगण भी नहीं पा सकते; फिर राजाओंकी तो बात ही क्या है ॥ ४१ ॥ ❀ ❀ अहो! वे पाँच वर्षकी अवस्थामें ही सौतेली माता के वाग्बाणोंसे मर्माहत होकर दुःखी हृदयसे वन में चले गये और मेरे उपदेशके अनुसार आचरण करके भी उन अजेय प्रभु को जीत लिया, जो केवल अपने भक्तोंके गुणोंसे ही वश में होते हैं ॥ ४२ ॥ ❀ ❀ ध्रुवजीने तो पाँच-छः वर्षकी अवस्थामें कुछ दिनोंकी तपस्यासे ही भगवान्‌को प्रसन्न करके उनका परमपद प्राप्त कर लिया; किन्तु उनके अधिकृत किये हुए इस पदको भूमण्डलमें कोई दूसरा क्षत्रिय क्या वर्षोंतक तपस्या करके भी पा सकता है? ॥ ४३ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—विदुरजी! तुमने मुझसे उदारकीर्ति ध्रुवजीके चरित्रके विषय में पूछा था, सो मैंने तुम्हें वह पूरा-का-पूरा सुना दिया। साधुजन इस चरित्र की बड़ी प्रशंसा करते हैं ॥ ४४ ॥ ❀ ❀ यह धन, यश और आयुकी वृद्धि करनेवाला, परम पवित्र और अत्यन्त मङ्गलमय है। इससे स्वर्ग और अविनाशी पद भी प्राप्त हो सकता है। यह देवत्वकी प्राप्ति करानेवाला बड़ा ही प्रशंसनीय और समस्त पापोंका नाश करनेवाला है ॥ ४५ ॥ ❀ ❀ भगवद्भक्त ध्रुवके इस पवित्र चरित्रको जो श्रद्धापूर्वक बार-बार सुनते हैं, उन्हें भगवान्‌की भक्ति प्राप्त होती है, जिससे उनके सभी दुःखोंका नाश हो जाता है ॥ ४६ ॥ ❀ ❀ इसे श्रवण करनेवालेको शीलादि गुणोंकी प्राप्ति होती है; जो महत्त्व चाहते हैं, उन्हें महत्त्व की प्राप्ति करानेवाला स्थान मिलता है, जो तेज चाहते हैं, उन्हें तेज प्राप्त होता है और मनस्वियोंका मान बढ़ता है ॥ ४७ ॥ ❀ ❀ पवित्रकीर्ति ध्रुवजीके इस महान् चरित्रका प्रातः और सायङ्काल ब्राह्मणादि द्विजातियोंके समाजमें एकाग्र चित्तसे कीर्तन करना चाहिये ॥ ४८ ॥ ❀ ❀ भगवान्‌के परम पवित्र चरणोंकी शरणमें रहनेवाला जो पुरुष इसे निष्कामभावसे पूर्णिमा, अमावास्या, द्वादशी, श्रवण नक्षत्र, तिथिक्षय, व्यतीपात, संक्रान्ति अथवा रविवारके दिन श्रद्धालु पुरुषोंको सुनाता है, वह स्वयं अपने आत्मामें ही सन्तुष्ट रहने लगता है और सिद्ध हो जाता है ॥ ४९-५० ॥ यह साक्षात् भगवद्विषयक अमृतमय ज्ञान है; जो लोग भगवन्मार्गके मर्मसे अनभिज्ञ हैं—उन्हें जो कोई इसे प्रदान करता है, उस दीनवत्सल कृपालु पुरुषपर देवता अनुग्रह करते हैं ॥ ५१ ॥ ❀ ❀ ध्रुवजीके कर्म सर्वत्र प्रसिद्ध और परम पवित्र हैं, वे अपनी बाल्यावस्थामें ही माताके घर और खिलौनोंका मोह छोड़कर श्रीविष्णुभगवान्‌की शरणमें चले गये थे। कुरुनन्दन! उनका यह पवित्र चरित्र मैंने तुम्हें सुना दिया ॥ ५२ ॥

इति द्वादशोऽध्यायः ॥

# अथ त्रयोदशोऽध्यायः

सूत उवाच

निशम्य कौषारविणोपवर्णितं ध्रुवस्य वैकुण्ठपदाधिरोहणम् ।
प्ररूढभावो भगवत्यधोक्षजे प्रष्टुं पुनस्तं विदुरः प्रचक्रमे ॥ १ ॥

विदुर उवाच

के ते प्रचेतसो नाम कस्यापत्यानि सुव्रत । कस्यान्ववाये प्रख्याताः कुत्र वा सत्रमासत ॥ २ ॥
मन्ये महाभागवतं नारदं देवदर्शनम् । येन प्रोक्तः क्रियायोगः परिचर्याविधिर्हरेः ॥ ३ ॥
स्वधर्मशीलैः पुरुषैर्भगवान् यज्ञपूरुषः । इज्यमानो भक्तिमता नारदेनेरितः किल ॥ ४ ॥
यास्ता देवर्षिणा तत्र वर्णिता भगवत्कथाः । मह्यं शुश्रूषवे ब्रह्मन् कार्त्स्न्येनाचष्टुमर्हसि ॥ ५ ॥

मैत्रेय उवाच

ध्रुवस्य चोत्कलः पुत्रः पितरि प्रस्थिते वनम् । सार्वभौमश्रियं नैच्छदधिराजासनं पितुः ॥ ६ ॥
स जन्मनोपशान्तात्मा निःसङ्गः समदर्शनः । ददर्श लोके विततमात्मानं लोकमात्मनि ॥ ७ ॥
आत्मानं ब्रह्म निर्वाणं प्रत्यस्तमितविग्रहम् । अवबोधरसैकात्म्यमानन्दमनुसन्ततम् ॥ ८ ॥

अन्वयः—विदुरः कौषारविणा उपवर्णितम् ध्रुवस्य वैकुण्ठपदाधिरोहणम् निशम्य भगवति अधोक्षजे प्ररूढभावः पुनः तम् प्रष्टुम् प्रचक्रमे ॥ १ ॥ ❋ ❋ सुव्रत ते प्रचेतसः के नाम कस्य अपत्यानि कस्य अन्ववाये प्रख्याताः वा कुत्र सत्रम् आसते ॥ २ ॥ ❋ ❋ येन हरेः परिचर्याविधिः क्रियायोगः प्रोक्तः नारदम् महाभागवतम् देवदर्शनम् मन्ये ॥ ३ ॥ ❋ ❋ भक्तिमता नारदेन स्वधर्मशीलैः पुरुषैः इज्यमानः भगवान् यज्ञपूरुषः किल ईरितः ॥ ४ ॥ ❋ ❋ ब्रह्मन् देवर्षिणा तत्र याः वर्णिता भगवत्कथाः ताः शुश्रूषवे मह्यम् कार्त्स्न्येन आचष्टुम् अर्हसि ॥ ५ ॥ ❋ ❋ च ध्रुवस्य उत्कलः पुत्रः पितरि वनम् प्रस्थिते पितुः सार्वभौमश्रियम् अधिराजासनम् न ऐच्छत् ॥ ६ ॥ ❋ ❋ सः जन्मना उपशान्तात्मा निःसङ्गः समदर्शनः लोके आत्मानम् आत्मनि लोकम् विततम् ददर्श ॥ ७ ॥ ❋ ❋ आत्मानम् निर्वाणम् प्रत्यस्तमितविग्रहम् अवबोधरसैकात्म्यम् आनन्दम् अनुसन्ततम् ब्रह्म ॥ ८ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

एवं पंचभिरध्यायैर्ध्रुवचर्यानुवर्णिता । अथैकादशभिश्चित्रं पृथुचारित्रमुच्यते ॥ ( १ ) ॥
तत्र त्रयोदशे वक्तुं पृथोर्जन्म ध्रुवान्वये । अंगो वेनपिता पुत्रकौर्या[?]त इतीर्यते ॥ ( २ ) ॥

प्ररूढो भावो भक्तिर्यस्य सः ॥ १ ॥ ❋ ❋ अन्ववाये वंशे ॥ २ ॥ ❋ ❋ नारदेन प्रचेतसां सत्रे वर्णिताः कथाः प्रष्टुं तन्महिमानमाह मन्य इति । देवस्य दर्शनं यस्य हरेः परिचर्याप्रकारः क्रियायोगः पंचरात्रे येन प्रोक्तः ॥ ३ ॥ ❋ ❋ स्वधर्मशीलैः पुरुषैः प्रचेतोभिः ॥ ४–५ ॥ ❋ ❋ ध्रुवस्य वंशे ते जाता इति वक्तुं ध्रुवस्य वंशमनुक्रामति ध्रुवस्येत्यादिना । पितुः सार्वभौमश्रियं नैच्छदधिराजासनं च ॥ ६ ॥ ❋ ❋ अनिच्छायां हेतुमाह—स इति चतुर्भिः ॥ ७ ॥ ❋ ❋ आत्मानं स्वरूपभूतं ब्रह्मावरुंधान आप्नुवन् जानन्नात्मनो नान्यं तदैक्षत । स्वयं तु सर्वस्मादन्यः सन् । कथभूतं ब्रह्म । निर्वाणं शांतम् । प्रत्यस्तमितविग्रहं प्रत्यस्तमितः प्रतिसंधानेनास्तमितः शांतो विग्रहो भेदो यस्मिन् । अवबोधरसेनैकात्म्यं यस्य ॥ ८ ॥

---

१. प्रा० पा०—भगवता ।

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

चित्रमद्भुतम् ( १ ) तत्रैकादशसु मध्ये ( २ ) । तं कौषारविम् ॥ १ ॥ ❀ ❀ त्वादृशां हरिचर्यावर्णनायैव व्रतोऽस्तीत्याशयेनाह–सुव्रतेति ॥ २ ॥ ❀ ❀ ननु महाभागवतेन विदुरेण हरिकथाप्रश्नं त्यक्त्वा प्रचेतसां प्रश्नः किमिति कृत इति चेत्तेषां कथापि हरिकथाऽविनाभूतैव श्रीनारदेन प्रोच्यमानत्वान्नारदस्त्वन्यकथां न वक्ति भागवतचूडामणित्वादित्याह–मन्य इति । देवं श्रीकृष्णं दर्शयत्युपदेशेनेति देवदर्शनः । यद्वा–देवैर्भक्त्या देदीप्यमानैर्दृश्यत इति । तत्र हेतुः–येन नारदेन भगवत्साक्षात्कारार्थमेव पंचरात्रे पूजनविधानं तस्यैव मोक्षहेतुत्वोक्तेः । येन क्रियानैपुणेन । "मर्त्यो यायादमर्त्यताम्" इत्युद्धवोक्तेः ॥ ३ ॥ ❀ ❀ स्वधर्मेति । अत्रायं भावः–साक्षान्नारायण एव चरुपुरोडाशादिद्रव्यस्वामित्वेन तदभिमान्यग्न्यादिदेवतांतर्यामित्वेन तच्छब्दप्रवृत्तिनिमित्तस्य मुख्यत्वेन देवतात्वेन च मंत्रमूर्त्तित्वेनेज्यमान एव नारदेन प्रतिपादित इति ॥ ४ ॥ ❀ ❀ ततः किं फलितमित्यत्राह–यास्ता इति । कथनसामर्थ्यं प्रथयन्नाह–ब्रह्मन्निति ॥ ५–६ ॥ ❀ ❀ जन्मना जन्मप्रभृति ॥ ७ ॥ ❀ ❀ प्रत्यस्तमितविग्रहं निरस्तविवादम् ॥ ८–१० ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तत्रैकादशाध्यायमध्ये सूत उवाचेति ध्रुवचरितवर्णनानन्तरं विदुरेण किमन्यत्पृष्टमित्यपेक्षायां प्रेमस्थगितायाः शुकवाचः पूरणं सूत एवाकरोदित्यर्थः । एवमन्यत्रापि ज्ञेयम् । प्ररूढभावः प्रोद्दीप्तरतिः ॥ १ ॥ ❀ ❀ आसत अकुर्वत ॥ २ ॥ ❀ ❀ महाभागवतं वैष्णवसम्प्रदायगुरुं देवस्य श्रीभगवतः दर्शनं तत्त्वज्ञानम् ॥ ३ ॥ ❀ ❀ नारदेनेडितः शुद्धभक्त्यैवाराध्योऽसौ न तु धर्म्मादिमिश्रतयेति स्तुत इत्यर्थः ॥ ४ ॥ ❀ ❀ तत्र प्रचेतसां सत्रे ॥ ५ ॥ ❀ ❀ अनुक्रामति । अनुक्रमेण कथयति तादृशसंपत्तिहेतुमधिराजासनं चेति ॥ ६ ॥ ❀ ❀ विततमनुगतमात्मन्यधिष्ठाने ॥ ७ ॥ ❀ ❀ सर्वंप्रपञ्चोपाधिकब्रह्मज्ञानमुक्त्वा निरुपाधिकं तदाह । आत्मानमिति युग्मकम् । आत्मनः शुद्धजीवादन्यत्तद् ब्रह्म नैक्षत अभेदांशमात्रानुसन्धानात् ऐकात्म्यमभेदः प्रत्यस्तमितः सर्वभावेन नाशमितो विग्रह उपाधिर्यस्तन्निरुपाधिकमित्यर्थः । अनुसन्ततं सर्वत्रानुस्यूतम् ॥ ८ ॥

## श्रीमद्वीरराघवव्याख्या

एवं कार्त्स्न्येन श्रुतध्रुवचेष्टितो विदुरो महिमानं विलोक्यास्य नारदो भगवानृषिः आतोद्यं वितुदन् श्लोकान् सत्रेऽगायत्प्रचेतसामित्युक्तप्रचेतसस्तद्ब्रह्मसत्रं च तत्र सम्भावितभगवत्कथाबुभुत्सयापृच्छदित्याह शुकः । निशम्येति । कौषारविणा मैत्रेयेणोपवर्णितं यद्ध्रुवस्य वैकुण्ठस्थानाधिरोहणं तन्निशम्य श्रुत्वा पुनरधोक्षजे भगवति प्ररूढः प्रवृद्धः भावो भक्तिर्यस्य स तं कौषारविमन्यत्प्रष्टुमुपक्रान्तवान् प्रश्नमेवाह के त इति । ते प्रचेतसां सत्र इत्युक्ताः प्रचेतसः के इति जातिप्रश्नः । हे सुव्रत ! मैत्रेय कस्यापत्यानि पुत्रा इति योनिसम्बन्धप्रश्नः । कस्यान्ववाये प्रख्याताः प्रसिद्धा इति वंशप्रश्नः । कुत्र वा सत्रमासत इति सत्रदेशप्रश्नः ॥ १–२ ॥ ❀ ❀ नारदेन प्रचेतसां वर्णिताः कथाः प्रष्टुं तन्महिमानमाह मन्य इति । देवदर्शनः देवो भगवान् तस्य दर्शनं येन करणे ल्युट्, तत्त्वोपदेशेन भगवत्साक्षात्कारोपायभूत इत्यर्थः । देवस्य दर्शनं साक्षात्कारो यस्य तस्मादिति बहुव्रीहिस्तमत एव महाभागवतं मन्ये । तमेव विशिनष्टि-येन नारदेन हरेः परिचर्याविधिः पूजाप्रकाररूपः क्रियायोगः प्रोक्तः पञ्चरात्राद्युपदेशेन कथितः ॥ ३ ॥ ❀ ❀ क्रियायोगमेव विशदयन् नारदं प्रस्तौति स्वधर्मेति । भक्तिमता निरतिशयभगवद्भक्तिमता नारदेन यज्ञपुरुषः यज्ञानां भोक्ता प्रभुश्च भगवान् स्वधर्मशीलैः स्वस्ववर्णाश्रमोचितभगवदाराधनरूपपञ्चमहायज्ञाद्यनुष्ठानपरैः पुरुषैरिज्यमान आराध्यमान ईरितः कथितः किल सर्वयज्ञाराध्यभगवत्परिचर्यारूपत्वेन स्ववर्णाश्रमोचिता धर्मा अनुष्ठेया इति पञ्चरात्रादौ नारदेन भगवता कथितमित्यर्थः ॥ ४ ॥ ❀ ❀ एवं नारदं प्रस्तुत्य प्रचेतोभ्यस्तदुपदिष्टकथाः पृच्छति या इति । देवर्षिणा नारदेन तत्र प्रचेतसां ब्रह्मसत्रे या भगवत्कथा वर्णिताः ताः कथाः शुश्रूषवे मह्यं कार्त्स्न्येन वक्तुमर्हसि ॥ ५ ॥ ❀ ❀ एवमापृष्टो मुनिः प्रचेतसो ध्रुववंशे जात इति वक्तुं ध्रुववंशमनुश्रावयति ध्रुवस्येति । ध्रुवस्य पुत्रः उत्कलाख्यः पितरि ध्रुवे वनम् प्रति गच्छति सति सार्वभौमश्रियं पितुरधिराजासनं च नैच्छत् ॥ ६ ॥ ❀ ❀ अनिच्छायां किं कारणमित्यपेक्षायां बहुजन्मसिद्धयोगमाहात्म्यप्रत्यक्षितस्वात्मयाथात्म्यानुभवतृप्तत्वादन्यत्पुरुषार्थजातं नैच्छदिति वक्तुं तस्य स्वात्मानन्दानुभवमाह स इति । स उत्कलः जन्मना जन्मप्रभृति उपशान्तः रागादिभिरकलुषित आत्मा मनो यस्य अत एव निस्संगः रागिभिः संगरहितः समदर्शनः सन् लोके विततं व्याप्तमात्मानमात्मनि लोकं च ददर्श । लोके विततमात्मानमिति शरीरव्यापकत्वमुक्तमात्मनि लोकमित्यात्मनो धारकत्वमुक्तं लोक्यते इति लोकः शरीरम् ॥ ७ ॥ ❀ ❀ आत्मानं प्रत्यगात्मानं ब्रह्म धर्मभूतज्ञानबृहत्तया ब्रह्मशब्दवाच्यं निर्वाणं सुखस्वरूपं प्रत्यस्तमितविग्रहं देहविनिर्मुक्तम् "अशरीरं शरीरेषु" इति श्रुतेः, अवबोधरसैकात्म्यं अवबोध एव रसः ऐका-

त्यमेकस्वभावत्वं यस्य तं कचिदप्यंशे जाड्यरहितमित्यर्थः । आनन्दं धर्मभूतानन्दगुणविशिष्टं 'गुणवचनेभ्यो मतुपो लुग्वक्तव्यः' इत्यनुशासनात् अतिसंततमत्यन्तं नित्यम् ॥ ८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अत्र हरितद्भक्तकथाश्रवणेन शुद्धान्तःकरणस्य बिम्बप्रतिबिम्बज्ञानादेवापवर्गः स्यादिति दीप्यतेऽस्मिन्नध्याये । तत्रादौ विदुरस्य प्रचेतसां विषयप्रश्नप्रकारस्तदुत्तरत्वेन मैत्रेयेणाऽस्य वंशावलिवर्णनं क्रियते निशम्येत्यादिना । प्ररूढभावः प्रवृद्धभक्तिः सत्रेऽगायत्प्रचेतसामित्युक्तिः प्रश्नबीजम् ॥ १ ॥ ❀ ❀ अन्ववाये वंशे ॥ २ ॥ ❀ ❀ महाभागवतेन विदुरेण हरिकथा-प्रश्नं विहाय प्रचेतसां प्रश्नः किमिति क्रियते इत्याशङ्क्य तेषां कथापि हरिकथाविनाभूता नारदेन प्रोच्यमानत्वान्नारदस्त्वन्यकथां न वक्ति भागवतचूडामणित्वादित्याह मन्य इति । क्रियायोगः स क इति तत्राह । परिचर्याविधिर्हरेरिति ॥ ३ ॥ ❀ ❀ प्रवृत्तानां योग्यः कथं निवृत्तिविषयो भवतीत्याशङ्क्य संकल्पविशेषात्स्यादित्याशयेनाह स्वधर्म्मशीलैरिति । अयं भावः साक्षान्नारायण एव चरुपुरोडाशादिद्रव्यस्वामित्वेन तदभिमानित्वेनाग्न्यादिदेवतान्तर्यामित्वेन तच्छब्दप्रवृत्तिनिमित्तस्य मुख्यत्वेन देवतात्वेन च मन्त्रमूर्तित्वेनेज्यत इति नारदेन प्रतिपादित इति ॥ ४ ॥ ❀ ❀ ततः किं फलितमित्यत्राह यास्ता इति ॥ ५ ॥ ❀ ❀ अधिराजासनं राजासनमधिकृत्य वर्तमानं सार्वभौमश्रियं नैच्छदित्यन्वयः ॥ ६ ॥ ❀ ❀ कुतो नैच्छदिति तत्राह स जन्मनेति । जन्मप्रभृति भगवन्निष्ठादिगुणयुक्तत्वात् समदर्शनत्वं स्पष्टयति ददर्शेति । आत्मानं परमात्मानं लोके विततं ददर्श लोकमात्मनि परमात्माधारतया स्थितमद्राक्षीदित्यन्वयः ॥ ७ ॥ ❀ ❀ तदेव विशिनष्टि आत्मानमिति । ददर्शेत्यनुवर्तते, आत्मानं स्वबिम्बं हरिमेवं ददर्शेत्यन्वयः । कथं ब्रह्मा "अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन्गुणाः" इति श्रुतेः गुणतो देशतो व्याप्तं हृदयगुहा-काशस्याल्पत्वेन तस्थितस्यापि तथात्वात्कथं व्याप्तमित्युच्यत इत्याशङ्क्य प्राकृतवैकृतरूपवत एवानुपपत्तिः व्याप्तत्वेन हरेस्तादृश-शरीराभावादिति भावेनोक्तम् । निर्वाणमिति । "एतद्बाणमवष्टभ्य" इति श्रुतौ बाणशब्दस्य शरीरे प्रयोगात् देहविनाशे तत्रस्थस्यापि विनाशसंभवात्कथं ब्रह्मत्वमुच्यत इत्यतो वाह निर्वाणमिति । निर्गतो नाशो यस्मात्तथोक्तम् "निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने" इति यादवः । अनेन देहिनो जीवस्य देहोऽहमिति तन्निमित्तदुःखित्वेऽपि हरेस्तन्नास्तीति ज्ञापितम् । हरेः प्राकृतदेहो नास्तीति स्पष्टमाह प्रत्यस्तमितेति । "गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः" इत्यमरः । प्रतीत्युपसर्गयोगेन यानि यान्यवताररूपा-ण्यन्तर्यामिरूपाणि च तानि तानि सर्वाण्यपि प्राकृतशरीररहितानीति सूचनेन मूलरूपस्य किमु वक्तव्यमित्यायातं तर्हीदं शून्यकल्प-मित्यत उक्तमवबोधेति । अवबोधरसो ज्ञानरसः स एवैकमात्मनोऽभिन्नं रूपं यस्य तत्तथोक्तं प्राकृतज्ञानमिश्रितं न भवतीत्येकेत्युक्तम् । तस्यापि ज्ञानवाचित्वादवगच्छतीत्यादौ सिद्धत्वात् "ज्ञानज्ञानः सुखसुख" इति श्रुतिरपि सूचिता स्यात् । रूपरूपिणोरभेदद्योतानायै-कात्म्यमित्युक्तम् "ऐकात्म्यप्रत्ययसारम्" इति श्रुतिश्च । एवं चेद्विज्ञानवादानुप्रवेश इति तत्राह आनन्दमिति । आनन्दयतीत्यानन्दः सुखानुभवरूपमित्यर्थः । "विज्ञानमानन्दं ब्रह्म" इति श्रुतेः उपसंहरति । अनुसंततमिति । अतः सर्वप्राणिष्वनुगत्वेन तद्बहिश्च न च गुणगुणिनो रूपरूपिणोरभेदेन ततं व्याप्तमित्युपपन्नमित्यर्थः । "समभेद" इति यादवः ॥ ८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

श्रीसूत उवाच श्रीशुकदेववाक् शेषत्वेन स्थितं स्वयमेवापूरयदित्यर्थः ॥ १-२ ॥ ❀ ❀ महाभागवतं वैष्णव-सम्प्रदायगुरुं देवदर्शनं श्रीभगवत्तत्त्वज्ञं भगवत्सर्वमङ्गलदर्शनञ्च । अनुकम्पेषु भगवदनुभवहेतुं वा ॥ ३ ॥ ❀ ❀ तादृशेनापि नारदेनेडितः ॥ ४-६ ॥ ❀ ❀ आत्मानमिति युग्मकम् । ददर्श लोके इत्यनेन प्रथमं सोपाधिकब्रह्मदर्शनमुक्तमधुना निरुपाधिकब्रह्मदर्शनमाह प्रत्यस्तमितमिति । निरुपाधिकमित्यर्थः । अनुसन्ततं सर्वत्रानुस्यूतं स्वरूपं परमकारणरूपमात्मनो जीववच्छुद्धात्तदन्यन्नैक्षत अभेदांशमात्रानुसन्धानात् ॥ ७-११ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

त्रयोदशेऽङ्गराजस्य पुत्रेष्ट्या यः सुतोऽजनि । वेणुस्तस्यातिदौरात्म्यान्नृपो निर्विद्य निर्गतः ॥ ( १ ) ॥

सत्रेगायत् प्रचेतसामित्याकर्ण्य पृच्छति । के ते इति । अन्ववाये वंशे ॥ १-२ ॥ ❀ ❀ क्रियायोगः परिचर्या-प्रकारः पञ्चरात्रे येन प्रोक्तः ॥ ३ ॥ ❀ ❀ स्वधर्मशीलैः प्रचेतोभिः ॥ ४-५ ॥ ❀ ❀ ध्रुवस्य वंश एव ते जाता इति तद्वंशकथायामेव प्रचेतसां कथा आयास्यतीत्यभिप्रायेणाह ॥ ६ ॥ ❀ ❀ जन्मना उत्पत्त्यैव उपशान्तात्मा ज्ञानी ॥ ७ ॥ ❀ ❀ आत्मानं जीवं स्वरूपं स्वरूपभूतं ब्रह्म अवरुन्धानो जानन् निर्वाणं शान्तं प्रत्यस्तमितविग्रहं निरस्त-विवादमात्मानं कीदृशम् । अवबोधरसेनैकात्म्यं यस्य तम् अव्यवच्छिन्नेन निरन्तरेण योगाग्निना दग्धं कर्ममलं यस्य तथाभूत आशयो यस्य सः । आत्मनः शुद्धजीवादन्यत् नैक्षत ॥ ८-९ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अथ ध्रुववंशेऽवतीर्णस्य दशभिस्तत्र त्रयोदशे वेणुदौःशील्यात्तत्पिताङ्गो वनं गत इति वर्ण्यते। कौषारविणा मैत्रेयेण प्ररूढो दृढो भावो भक्तिर्यस्य ॥ १ ॥ ❀ ❀ अपत्यानि पुत्राः कस्यान्ववाये अन्वये प्रख्याताः विख्याताः ॥ २ ॥ ❀ ❀ श्रीनारदेन प्रचेतःसंनिधौ वर्णितां हरिकथां प्रष्टुं श्रीनारदमहत्त्वमाह मन्ये इति। देवस्य दर्शनं यस्मात् यत्कृपया जनानां देवदर्शनं भवतीत्यर्थः। येन हरेः परिचर्याविधिरूपः क्रियायोगः पञ्चरात्रे प्रोक्तः ॥ ३ ॥ ❀ ❀ स्वधर्मशीलैः प्रचेतोभिर्यत्र भगवान् इज्यमानस्तत्र भक्तिमता नारदेन किलावश्यं भगवान् ईडितः ॥ ४ ॥ ❀ ❀ अतस्तत्र देवर्षिणा या वर्णितास्ता आचष्टुं वक्तुमर्हसि ॥ ५ ॥ ❀ ❀ कस्यापत्यानीति प्रश्ने ध्रुववंशजस्य प्राचीनबर्हिषोऽपत्यानीति वक्तुं ध्रुववंशमनुक्रामति ध्रुवस्येत्यादिना। सार्वभौमश्रियमधिराजासनं च नैच्छत् ॥ ६ ॥ ❀ ❀ आत्मानं विश्वकारणं भगवन्तं लोके चेतनाचेतनात्मके लोके चात्मनि ददर्श "यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति। तस्याहं न प्रणश्यामि स च मे न प्रणश्यति" इति श्रीमुखोक्तेः ॥ ७ ॥ ❀ ❀ आत्मानं जीवं ब्रह्मधर्मभूतबृहद्ज्ञानाश्रयं निर्वाणं निर्विकारं प्रत्यस्तमितः स्वरूपज्ञानेन निवारितो विग्रहः देहात्मभावो यस्मात्तम्, अवबोधरसेन परब्रह्मणा ऐकात्म्यमपृथक्स्वरूपस्थितिप्रवृत्त्यादिमत्त्वं यस्य तम्। अनुसंततं सर्वेषु सर्वास्ववस्थासु च संततं स्थितिमन्तं ददर्शेति पूर्वेणान्वयः ॥ ८ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

पञ्चभिरर्थसिद्धिस्तु ध्रुवस्य विनिरूपिता। एकादशभिरध्यायैः पृथोः कामो निरूप्यते ॥ १ ॥
कामेन सिद्धः सर्वेषां कामस्य च स साधकः। कामाः संपादिताः स्वस्य कामप्रकरणं ततः ॥ २ ॥
एकादशेन्द्रियैः कामस्तेनाध्यायास्तथा मताः। चतुर्भिश्च तथा द्वाभ्यां पञ्चभिश्च क्रमात्त्रयम् ॥ ३ ॥
तत्र त्रयोदशेऽध्याये कामहेतुर्जनस्य वै। निर्गमः पुत्रदोषेण ह्यङ्गस्य विनिरूप्यते ॥ ४ ॥

पञ्चभिरध्यायैर्ध्रुवस्यार्थसिद्धिं निरूप्येदानीं धर्मार्थकाममोक्षाणां निमित्तान्यविरोधत आख्याहीति विदुरप्रश्नक्रमप्राप्तां पृथोः कामसिद्धिमेकादशभिरध्यायैर्निरूपयति। सर्वेषामृष्यादीनां कामनया पृथुः प्रादुर्भूतः सन् सर्वेषां कामस्य साधको जातस्तेन स्वस्य च कामाः संपादितास्तस्मादिदं कामप्रकरणम्। न चान्ते निरूपितस्य पृथुमोक्षस्य कथं कामशब्दवाच्यत्वं स्त्रीसंभोगादिजन्य-सुखस्यैव कामशब्दवाच्यत्वप्रसिद्धेरिति शङ्कनीयम्। 'अकामः सर्वकामो वा मोक्षकाम उदारधीः' इत्यादिवाक्यानुसारेण कामितस्य मोक्षस्यापि कामनाविषयत्वाविशेषेण कामान्तर्गतत्वेन कामशब्दवाच्यत्वात्। किंच एकादशेन्द्रियैः कामः सिद्ध्यतीति ज्ञापयितुमेका-दशैवाध्याया अस्य प्रकरणस्य। अतोऽध्यायसङ्ख्ययाप्यस्य कामप्रकरणत्वमेव निश्चीयते। तत्र चतुर्भिः सहेतुकपृथुप्रादुर्भावनिरूपणम्, द्वाभ्यां सर्वकामसाधननिरूपणम्, पञ्चभिः स्वकामसाधननिरूपणमित्येवमेकादशाध्यायप्रवृत्तिः। ध्रुवचरितं श्रुत्वा विदुरः किं तूष्णीमास किं वान्यत्किञ्चित् पृष्टवानित्यपेक्षायामाह—निशम्येति। कौषारविणा मैत्रेयेणोपवर्णितं ध्रुवस्य वैकुण्ठपदाधिरोहणं भगवत्स्थानप्राप्तिं निशम्य श्रुत्वा भगवत्यधोक्षजे प्ररूढो दृढतां गतो भावो भक्तिर्यस्य स तथाभूतो विदुरः पुनस्तं मैत्रेयं प्रष्टुं प्रचक्रमे पृष्टवान् ॥ १ ॥ ❀ ❀ विदुरप्रश्नानेव दर्शयति—के त इति चतुर्भिः। नारदो ध्रुवमहिमानं प्रचेतसां सत्रेऽगायतेत्युक्तं तत्र येषां सत्रेऽगायत ते प्रचेतसो नाम क इत्यन्वयः। नन्वतीतांस्तान् कथमिदानीं त इम इति प्रदर्शयितुं शक्यत इत्याशङ्क्याह—कस्यान्ववाये प्रख्याता इति। कस्य वंशे प्रसिद्धा इत्यर्थः। एकस्यापि वंशे तुल्यनामानो बहवो भवन्तीति वंशकथनेपि तन्निर्द्धारो न स्यादित्यत आह—कस्यापत्यानीति। कुत्र वा सत्रसंज्ञकं यागमासत अकुर्वत। न जानामीति न वक्तव्यम्, यतोऽतितीव्रब्रह्मचर्यादिव्रत-धारणेन भगवत्प्रसादात्सर्वज्ञस्त्वमित्यभिप्रायेण संबोधयति—सुव्रत इति ॥ २ ॥ ❀ ❀ ननु भगवन्माहात्म्यपूर्वकध्रुवचरितं श्रुतवतः परमभागवतस्य तव भगवतो भगवदीयानां वा कथां विहाय कथं प्रचेतसां कथाश्रवणे प्रवृत्तिर्जातेत्याशङ्क्य प्रचेतसां कथाप्रश्नस्तु प्रासङ्गिकस्तात्पर्यं तु भगवत्कृपायामेवेति स्वाभिप्रायं प्रकटयति—मन्य इति त्रिभिः। नारदं महाभागवतमेकान्तभक्तमहं मन्ये। कुतः? यतो देवस्य भगवतो वासुदेवस्य दर्शनं यस्य तम्। नहि भक्त्युद्रेकं विना भगवान् दृश्यो भवतीति भावः। किंच येन नारदेन पञ्चरात्रे क्रियायोगः प्रोक्तः। क्रियापदस्य यज्ञादिसाधारणाद्यज्ञादिप्रवचनेन कथं भक्तत्वसिद्धिरित्याशङ्क्य विशिनष्टि—हरेः परिचर्याविधिरिति। हरेः सेवाप्रकार इत्यर्थः ॥ ३ ॥ ❀ ❀ सत्यं नारदो महाभागवतस्ततः किमित्याकाङ्क्षायामाह—स्वधर्मेति किलेत्यवधारणे। तत्र सत्रे स्वधर्मशीलैः प्रचेतःप्रभृतिभिः पुरुषैरिज्यमानः पूज्यमानो भगवानेव नारदेनेडितः स्तुतो नान्यः। कुतस्तत्राह—भक्तिमतेति। न हि तादृशो भगवद्भक्तस्तं विहायान्यं स्तोतुमुत्सहते। त्वया चोक्तं सत्रेऽगायतेत्यतो ज्ञायते तेन तत्र भगवत्कथा वर्णितेति ॥ ४ ॥ ❀ ❀ अतो हे ब्रह्मंस्तत्र प्रचेतसां सत्रे देवर्षिणा नारदेन या भगवत्कथा वर्णितास्ता मह्यं शुश्रूषवे कार्त्स्न्येन साकल्येनाचष्टुं कथितुमर्हसि। ब्रह्मन्निति संबोधनेन ज्ञानातिशयवत्त्वेन कथने सामर्थ्यं सूचयति ॥ ५ ॥ ❀ ❀ यद्यपि प्रचेतसः कस्यान्ववाये प्रख्याता इत्यस्य प्रश्नस्य ध्रुवस्येत्येतावतैवोत्तरं संभवति तथापि प्रसाधिता भगवद्भक्तिर्गौणं फलमर्थकामादिकं दत्त्वापि न कुण्ठितशक्तिर्भवति, किंतु मुख्यमपि फलं पुरुषोत्तमस्वरूपं प्रापयत्येवेति ध्रुवेण

साधितया भक्त्यैव तत्प्रभृतिषु गौणफलं प्रचेतस्सु मुख्यं फलं च जातमन्यथा कथं तेषामकस्माच्छिवेन समागमः स्यादित्यादि सूचयन्नादितो ध्रुववंशमनुक्रमति-ध्रुवस्येत्यादिना। चकारस्तुशब्दार्थकः। ध्रुवस्य पुत्र उत्कलस्तु पितरि ध्रुवे वनं प्रस्थिते प्रस्थातुमुद्यते सति ज्येष्ठत्वात्पित्रा दीयमानमपि पितुः सार्वभौमश्रियं पितृपालितभूसंबन्धिनीं संपदमधिराजासनं च नैच्छत्॥ ६॥ ॐ ॐ तस्यानिच्छायां हेतुमाह-स इति चतुर्भिः। स चोत्कलो जन्मनैव जन्मत एवोपशान्तात्मा उपशान्तः विषयभोगाभिलाषरहित आत्मान्तःकरणं यस्य सः। अत एव समदर्शनः आत्मौपम्येन सर्वजन्तुषु सुखदुःखादिकं पश्यति यथा मम सुखमिष्टं दुःखं चानिष्टं तथा सर्वस्यापीति। यद्वा समदर्शनत्वमेव विशदयति-ददर्शेति। लोके आत्मानं भगवन्तं विततं व्याप्तं ददर्श तथाऽऽत्मनि भगवति लोकं च स्थितं ददर्शेति। अत एव मनसोऽनवस्थितत्वात्पुनर्विषयासक्तिर्मा भूदित्येतदर्थं निःसङ्गः सर्वसङ्गवर्जितः॥ ७॥ ॐ ॐ ननु लोके भगवन्तं ददर्शेत्युक्त्याऽऽधाराधेयतया दृश्यदर्शनद्रष्टृतया च भेदप्रतीतेः 'भयं द्वितीयाभिनिवेशतः स्यात्' इत्यादिषु भेददर्शनस्य भयहेतुत्वश्रवणात्तस्य भेददर्शिनो राज्यादिनिरपेक्षित्वेपि कथं निर्ममत्वं स्यादित्याशङ्क्योपासनायां पूर्वोक्तभेददर्शनवत्त्वेपि ज्ञाने भेदस्फूर्तिर्नास्त्येवेत्यभिप्रेत्याभेददर्शनमाह-आत्मानमिति। आत्मानं स्वरूपं स्वरूपभूतं जीवं ब्रह्मावरुन्धानः भगवत्स्वरूपमेव जानन् आत्मनः सकाशादन्यं तदा ज्ञानदशायां नैक्षत नापश्यदिति द्वितीयेनान्वयः। ब्रह्मस्वरूपमेव वर्णयति-निर्वाणमिति। सर्वाधारभूतमित्यर्थः। प्रत्यस्तमितः सर्वतो निवृत्तो विग्रहो भेदो यस्मात्तत् प्रत्यस्तमितविग्रहम्। प्रधानव्यावृत्त्यर्थमाह-अवबोधेति। अवबोधो ज्ञानं तदेकरसेनैकात्म्यं यस्य तत्तथा ज्ञानैकरसमित्यर्थः। तथापि तस्य दुःखात्मत्वं वारयन् सर्वोपादेयत्वमाह-आनन्दमिति। परिच्छिन्नत्वं व्यावर्त्तयति-अनुसंततमिति। सर्वव्यापकमित्यर्थः॥ ८॥

## भाषानुवादः

### ध्रुववंशका वर्णन, राजा अङ्गका चरित्र

श्रीसूतजी कहते हैं—शौनकजी! श्रीमैत्रेय मुनिके मुखसे ध्रुवजीके विष्णुपदपर आरूढ होनेका वृत्तान्त सुनकर विदुरजीके हृदयमें भगवान् विष्णुकी भक्तिका उद्रेक हो आया और उन्होंने फिर मैत्रेयजीसे प्रश्न करना आरम्भ किया॥ १॥ ॐ ॐ विदुरजीने पूछा—भगवत्परायण मुने! ये प्रचेता कौन थे? किसके पुत्र थे? किसके वंशमें प्रसिद्ध थे और उन्होंने कहाँ यज्ञ किया था?॥ २॥ ॐ ॐ भगवान्के दर्शनसे कृतार्थ नारदजी परम भागवत हैं—ऐसा मैं मानता हूँ। उन्होंने पाञ्चरात्रका निर्माण करके श्रीहरिकी पूजापद्धतिरूप क्रियायोगका उपदेश किया है॥ ३॥ ॐ ॐ जिस समय प्रचेतागण स्वधर्मका आचरण करते हुए भगवान् यज्ञेश्वरकी आराधना कर रहे थे, उसी समय भक्तप्रवर नारदजीने ध्रुवका गुणगान किया था॥ ४॥ ॐ ॐ ब्रह्मन्! उस स्थानपर उन्होंने भगवान्की जिन-जिन लीला-कथाओंका वर्णन किया था, वे सब पूर्णरूपसे मुझे सुनाइये; मुझे उनके सुननेकी बड़ी इच्छा है॥ ५॥ ॐ ॐ श्रीमैत्रेयजीने कहा—विदुरजी! महाराज ध्रुवके वन चले जानेपर उनके पुत्र उत्कलने अपने पिताके सार्वभौम वैभव और राज्यसिंहासनको अस्वीकार कर दिया॥ ६॥ ॐ ॐ वह जन्मसे ही शान्तचित्त, आसक्तिशून्य और समदर्शी था तथा सम्पूर्ण लोकोंको अपनी आत्मामें और अपनी आत्माको सम्पूर्ण लोकोंमें स्थित देखता था॥ ७॥ ॐ ॐ उसके अन्तःकरणका वासनारूप मल अखण्ड योगाग्निसे भस्म हो गया था। इसलिये वह अपनी आत्माको विशुद्ध बोधरसके साथ अभिन्न, आनन्दमय और सर्वत्र व्याप्त देखता था। सब प्रकारके भेदसे रहित प्रशान्त ब्रह्मको ही वह अपना स्वरूप समझता था तथा अपनी आत्मासे भिन्न कुछ भी नहीं देखता था॥ ८-९॥

अव्यवच्छिन्नयोगाग्निदग्धकर्ममलाशयः। स्वरूपमवरुन्धानो नात्मनोऽन्यं तदैक्षत॥ ९॥
जडान्धबधिरोन्मत्तमूकाकृतिरतन्मतिः। लक्षितः पथि बालानां प्रशान्तार्चिरिवानलः॥ १०॥
मत्वा तं जडमुन्मत्तं कुलवृद्धाः समन्त्रिणः। वत्सरं भूपतिं चक्रुर्यवीयांसं भ्रमेः सुतम्॥ ११॥
स्वर्वीथिर्वत्सरस्येष्टा भार्यासूत षडात्मजान्। पुष्पार्णं तिग्मकेतुं च इषमूर्जं वसुं जयम्॥ १२॥
पुष्पार्णस्य प्रभा भार्या दोषा च द्वे बभूवतुः। प्रातर्मध्यन्दिनं सायमिति ह्यासन् प्रभासुताः॥ १३॥
प्रदोषो निशिथो व्युष्ट इति दोषासुतास्त्रयः। व्युष्टः सुतं पुष्करिण्यां सर्वतेजसमादधे॥ १४॥
स चक्षुः सुतमाकूत्यां पत्न्यां मनुमवाप ह। मनोरसूत महिषी विरजान्नड्वला सुतान्॥ १५॥
पुरुं कुत्सं त्रितं द्युम्नं सत्यवन्तमृतं व्रतम्। अग्निष्टोममतीरात्रं प्रद्युम्नं शिबिमुल्मुकम्॥ १६॥

उल्मुकोऽजनयत्पुत्रान्पुष्करिण्यां षडुत्तमान् । अङ्गं सुमनसं ख्यातिं क्रतुमङ्गिरसं गयम् ॥ १७ ॥
सुनीथाङ्गस्य या पत्नी सुषुवे वेनमुल्बणम् । यद्दौःशील्यात्स राजर्षिर्निर्विण्णो निरगात्पुरात् ॥ १८ ॥
यमङ्ग शेपुः कुपिता वाग्वज्रा मुनयः किल । गतासोस्तस्य भूयस्ते ममन्थुर्दक्षिणं करम् ॥ १९ ॥
अराजके तदा लोके दस्युभिः पीडिताः प्रजाः । जातो नारायणांशेन पृथुराद्यः क्षितीश्वरः ॥ २० ॥

अन्वयः—स्वरूपम् अवरुन्धानः अव्यवच्छिन्नयोगाग्निदग्धकर्ममलाशयः तत् आत्मनः अन्यम् न पेक्षत ॥९॥ ❀ ❀ अतन्मतिः बालानाम् पथि जडान्धबधिरोन्मत्तमूकाकृतिः प्रशान्तार्चिः अनलः इव लक्षितः ॥ १० ॥ ❀ ❀ समन्त्रिणः कुलवृद्धाः तम् जडम् उन्मत्तम् मत्वा भ्रमेः वत्सरं यवीयांसम् सुतम् भूपतिम् चक्रुः ॥ ११ ॥ ❀ ❀ वत्सरस्य इष्टा स्वर्वीथिः भार्या पुष्पार्णम् तिग्मकेतुं इषं ऊर्जम् वसुम् च जयम् षट् आत्मजान् असूत ॥ १२ ॥ ❀ ❀ पुष्पार्णस्य भार्या प्रभा च दोषा द्वे बभूवतुः हि प्रातः मध्यंदिनम् सायम् इति प्रभासुताः आसन् ॥ १३ ॥ ❀ ❀ प्रदोषः निशिथः व्युष्टः इति त्रयः दोषासुताः व्युष्टः पुष्करिण्याम् सर्वतेजसम् सुतम् आदधे ॥ १४ ॥ ❀ ❀ सः आकूत्याम् पत्न्याम् चक्षुः मनुम् सुतम् हि अवाप मनोः महिषी नड्वला विरजान् सुतान् असूत ॥ १५ ॥ ❀ ❀ पुरुम् कुत्सम् त्रितम् द्युम्नम् सत्यवन्तम् ऋतम् व्रतम् अग्निष्टोमम् अतीरात्रम् प्रद्युम्नम् शिबिम् उल्मुकम् ॥ १६ ॥ ❀ ❀ उल्मुकः पुष्करिण्याम् अङ्गम् सुमनसम् ख्यातिम् क्रतुम् अङ्गिरसम् गयम् षट् उत्तमान् पुत्रान् अजनयत् ॥ १७ ॥ ❀ ❀ अङ्गस्य या सुनीथा पत्नी उल्बणम् वेनम् सुषुवे यद्दौःशील्यात् निर्विण्णः सः राजर्षिः पुरात् निरगात् ॥ १८ ॥ ❀ ❀ अङ्ग वाग्वज्राः कुपिताः मुनयः यम् शेपुः भूयः ते गतासोः तस्य दक्षिणम् करम् किल ममन्थुः ॥ १९ ॥ ❀ ❀ अराजके लोके प्रजाः दस्युभिः पीडिताः तदा नारायणांशेन आद्यः क्षितीश्वरः पृथुः जातः ॥ २० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

कथंभूतः । अव्यवच्छिन्नो निरंतरो यो योगः स एवाग्निस्तेन दग्धः कर्ममल आशयो वासना च यस्य ॥ ९ ॥ ❀ ❀ जडादीनामिवाकृतिर्यस्य तथाभूतो लक्षितः अतन्मतिः न तेषामिव मतिर्यस्य सर्वज्ञत्वात् । प्रशांतान्यर्चींषि ज्वाला यस्यानलस्य तद्वत्स्थितः ॥१०॥ ❀ ❀ यवीयांसमुत्कलात्कनिष्ठम् ॥११॥ ❀ ❀ इष्टा प्रिया भार्या ॥ १२-१३ ॥ निशिथो निशीथः ॥ १४ ॥ ❀ ❀ स सर्वतेजाश्चक्षुःसंज्ञं मनुं सुतं पुत्रमवाप मनोर्महिषी नाम्ना नड्वला विरजान् शुद्धान्पुरुप्रमुखान् द्वादश सुतानसूत ॥ १५-१८ ॥ ❀ ❀ अंग हे विदुर वागेव वज्रं येषाम् ॥ १९ ॥ ❀ ❀ मंथने हेतुः अराजक इति । आद्यः पुरग्रामादीनां तेन रचितत्वात् ॥ २० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

उत्कलः सर्वापेक्षया ज्येष्ठस्ततः कनीयान्वत्सरस्तत्कनीयान्कल्य इति बोध्यमन्यथा कल्यं विहाय वत्सरस्याभिषेकोऽसंगतः स्यादृशमाध्यायारंभे 'प्रजापतेर्दुहितरम्' इत्यादिना पुत्रकथनमात्रं न तु क्रमो विवक्षितः, अन्यथोत्कलस्य सर्वापेक्षया कनिष्ठत्वमापद्येतेति ॥ ११-१२ ॥ ❀ ❀ अत्र यं यमादाय कथा प्रवर्त्तते स स एव वंशहेतुभूतः, अन्ये त्वकृतोद्वाहा योगिनोऽप्रजाश्चेति ध्येयमिति तीर्थः । स्त्रियः सुताश्च कालादितत्तद्वस्त्वभिमानिन एवेति च ॥ १३-१४ ॥ ❀ ❀ चक्षुःसंज्ञं "षष्ठस्तु चक्षुषः पुत्रश्चाक्षुषो नाम वै मनुः" इत्यष्टमे वक्ष्यमाणत्वात् । अत्र चक्षुश्शब्देन चाक्षुष एव ग्राह्यस्तद्धिताभावस्त्वार्ष इति ध्येयम् । मार्कंडेयेऽपि "अन्यजन्मनि जातोऽसौ चक्षुषः परमेष्ठिनः । चाक्षुषत्वमतस्तस्य जन्मान्यस्मिन्नपि द्विजे" इति क्रोष्टुकिं प्रति मार्कंडेयोक्तेः चक्षुःसुतं चक्षुष उद्भूतत्वाच्चक्षुःपुत्रमथोचाक्षुषं पुत्रं भाविनं मनुमवाप जनयामास । किञ्चायमेव कारणांतरेण दक्षवशिष्ठादिवद्वक्ष्यमाणषष्ठस्कंधीयवसुवंशेप्येतन्नाम्नैव भविष्यतीति ध्येयम् ॥ १५-१७ ॥ ❀ ❀ निर्विण्णो विरक्तः ॥ १८ ॥ ❀ ❀ यं वेनं, गतासोर्मृतस्य, तस्य वेनस्य ॥ १९ ॥ ❀ ❀ तदा वेननाशे । यद्वा—प्रचलितराजवंशो हि वेननाशान्नष्ट एव मुनिभिः पृथुमुत्पाद्य पुनः प्रचारितः पृथुतः प्रथमं प्रचलनात्तस्यैवाद्यत्वम् ॥ २० ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

प्रशान्तार्चिरिव दग्धोपाधिः ॥ ९-१४ ॥ ❀ ❀ अचक्षुरित्यर्द्धकम् । स चक्षुःसंज्ञः सर्वतेजाः सुतं मनुं चाक्षुषनामानमवापेत्यर्थः । 'षष्ठश्च चक्षुषः पुत्रश्चाक्षुषो नाम वै मनुरि'त्यष्टमे वक्ष्यमाणत्वात् अत एव टीकायामपि चक्षुःसंज्ञ इति प्रथमान्तपाठ एव सांप्रदायिको न तु द्वितीयान्त इति ज्ञेयम् । मनोरिति सार्द्धकम् । द्युम्नमित्येव पाठः धूम्रमिति क्वचित् ॥१५-१९॥ ❀ ❀ तेन पृथुना ॥ २०-२१ ॥

## श्रीमद्वीरराघवव्याख्या

स्वरूपं स्वस्वरूपभूतमवरुन्धानः अनुसंदधानः अत एव अव्यवच्छिन्नयोगाग्निदग्धकर्ममलाशयः अव्यवच्छिन्नः निरन्तरः योगः आत्मयाथात्म्यज्ञानयोगः स एवाग्निस्तेन दग्धं कर्मरूपमलं यस्य सः आशयोऽन्तःकरणं यस्येति बहुव्रीहिगर्भो बहुव्रीहिः; अन्यत् आत्मस्वरूपादन्यत् पुरुषार्थभूतदेहतदनुबन्ध्यादिकं स्वयमन्यः देहादिभ्यो विलक्षणः नैक्षत नापश्यत् ॥९॥ ❋ ❋ जडादितुल्यवेषः अतन्मतिः जडादितुल्यमतिरहितः, प्रशान्तानि अर्चीषि ज्वाला यस्य सोऽग्निरिव स्थितः बालानां पथि मार्गे स्वमाहात्म्यानाविष्काररूपेण लक्षितः ॥ १० ॥ ❋ ❋ तमुत्कलं मन्त्रिभिः सहिताः सर्वे तत्कुलवृद्धाः जडमुन्मत्तं च ज्ञात्वा तं विहायेत्यर्थः । भ्रमेः सुतं यवीयांसं कनीयांसं वत्सरं भूपतिं राजानं चक्रुः ॥ ११ ॥ ❋ ❋ वत्सरस्येष्टा शीलरूपगुणादिभिः नितरामनुकूला स्वर्वीथ्याख्या भार्या पुष्पार्णादीन् षट् पुत्रानसूत सुषुवे ॥ १२ ॥ ❋ ❋ तत्र षण्णां पुत्राणां मध्ये पुष्पार्णाख्यस्य ज्येष्ठस्य प्रभादोषे द्वे भार्ये बभूवतुः । तत्र प्रभायाः सुताः प्रातरादयस्त्रयो बभूवुः ॥ १३ ॥ ❋ ❋ दोषासुताः प्रदोषादयस्त्रय आसन् । अत्र व्युष्टः पुष्करिण्याख्यायां भार्यायां सर्वतेजआख्यं सुतमादधे जनयामास ॥ १४ ॥ ❋ ❋ स सर्वतेजाः आकूतिनाम्न्यां पत्न्यां चक्षुःसंज्ञं सुतं मनुमवाप मनोः चक्षुःसंज्ञस्य नड्वलाख्या महिषी भार्या विरजान् शुद्धान् सुतान् पुरुप्रमुखान् द्वादश पुत्रानसूत ॥ १५-१६ ॥ ❋ ❋ तत्रोल्मुकः पुष्करिण्यां भार्यायामुत्तमान् श्रेष्ठान् अङ्गादीन् षट् पुत्रानजनयत् ॥ १७ ॥ ❋ ❋ तत्राङ्गस्य या सुनीथाख्या भार्या सा उल्बणं दुरात्मानं वेननामकं पुत्रं सुषुवे । दौरात्म्यमेव प्रपञ्चयति यदित्यादिना । यस्य वेनस्य दौःशील्यात्तद्दुष्टस्वभावाद्धेतोः स राजर्षिरङ्गः निर्विण्णः नितरां दुःखितः पुरान्निरगात् निर्गतः ॥ १८ ॥ ❋ ❋ हे अङ्ग हे विदुर ! मुनयः कुपिताः वेनेन कोपं प्रापिताः वागेव वज्रं येषां ते यं वेनं शेपुः किल शप्तवन्तः । शापाहृतप्राणस्य तस्य वेनस्य दक्षिणकरं हस्तं पुनस्ते मुनयो ममन्थुः मथितवन्तः ॥ १९ ॥ ❋ ❋ मथने हेतुमाह अराजक इति । तदा शापानन्तरं लोके अराजके राज्ञा रहिते सति अत एव दस्युभिः पीडिताः प्रजा बभूवुः तदा पृथुर्नाम आद्यः पुरग्रामादीनां तेन रचितत्वात् क्षितीश्वरो राजा नारायणांशेन जातः ॥ २० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ज्ञानाग्निना दग्धबाह्यान्तःकरणस्यैतादृशभगवद्रूपदर्शनं संगच्छत इत्याह अव्यवच्छिन्नेति । योगशब्देन तज्जनितज्ञानं लक्ष्यते अव्यवच्छिन्नयोगेन निरन्तरध्यानलक्षणोपासनया जातेन ज्ञानाग्निना दग्धं भस्मीभूतं कर्ममलं पापक्रियानिमित्तं मलं किट्टं यस्य स तथा तादृश आशयोऽन्तःकरणं यस्य स तथा निर्मलान्तःकरणपात्रे प्रज्वलितेन ज्ञानदीपेन लोके विततमात्मानमात्मनि ततं लोकं च ददर्शेत्युक्त्या द्वयोः समत्वमायातमिति मन्दाशङ्कामपनुदन्विशदयति । स्वरूपमिति । ( १ ) स्वरूपं जीवस्य बिम्बरूपं परमात्मानमवरुन्धानः स्वज्ञानान्तःस्थितं कुर्वाणः साक्षात्कृतं कुर्वाणोऽस्माद्धरेरन्यत्स्वतन्त्रमनियतं तज्जगन्नैक्षत, किन्तु तत्सृष्टं तत्स्थापितं तन्नियतं तत्संहृतं तज्ज्ञापितं तद्बद्धं तन्मोचितमपश्यदित्यर्थः । तदा स्वरूपं प्रतिबिम्बमस्माद्बिम्बादन्यद्भिन्नं नैक्षतेति बिम्बप्रतिबिम्बयोरत्रैक्यमुच्यत इति वक्तुं न युक्तम् । अवरुन्धान इत्यस्य निर्विषयत्वात् तदेति कालस्य पृथङ्निर्देशानुपपत्तेश्च ददर्शेत्यत्र लोकात्मनोराधाराधेयत्वोक्तेश्च तस्य च भेदनिष्ठत्वात् । तदुक्तम् "भिन्नस्वरूपममिदं स्वरूपं तु द्विधा हरेः । भिन्नस्वरूपं ब्रह्माद्यं मत्स्याद्यमिदमुच्यते" इति ॥ ९ ॥ ❋ ❋ एवंविधोऽपि लोकसंभाषणविसर्जनार्थमविवेकिनामेवं दृष्ट इत्याह जडेति । अतन्मतिस्तत्तद्वस्तुविषयज्ञानशून्यः विवेकिनां पक्षे एव सर्वविलक्षणे विष्णौ यया संसारं तरति सा मतिर्यस्य सोऽतन्मतिरिति प्रशान्तार्चिर्भस्मगर्भितोऽग्निरिव ॥ १० ॥ ❋ ❋ अस्मिन्नेवं गते कोऽत्र राजाभूदत्राह मत्वेति । कालाधयवस्य वत्सरस्य राज्यार्हत्वं कथमित्यत उक्तं यवीयांसमिति । कुलवृद्धा ज्येष्ठे कल्पनाम्नि सुते स्थिते वत्सरं राजानं कथमकुर्वन्नित्येतच्चोद्यं "कल्पः कल्पाभिमानी सन् शिंशुमारानुगः स्थितः । वत्सरो राज्यमकरोत्पित्रा दत्तं महाबलः । चक्रे नारायणः साक्षात्किंस्तुघ्नः कल्पमात्मजम्" इत्यनेन परिहर्तव्यम् ॥ ११ ॥ ❋ ❋ वत्सरोऽपि नाम्ना स्वर्वीथ्यां भार्यायां षट् सुतानवापेत्याह स्वर्वीथीति । स्वर्गमार्गाभिमानित्वात्स्वर्वीथीति ॥ १२ ॥ ❋ ❋ अत्र यं यमादाय कथा प्रवर्तते स एव वंशे हेतुभूतः, अन्ये त्वकृतोद्वाहाः योगिनोऽप्रजाश्चेति तात्पर्यं ज्ञातव्यम् । एताः स्त्रियः सुताश्च कालादितत्तद्वस्त्वभिमानिन इति च ॥ १३-१४ ॥ ❋ ❋ स सर्वतेजाश्चक्षुर्नामानं सुतं नाम्नाकूत्यां पत्न्यामवापेत्यन्वयः । मनोर्महिषी नाम्ना नड्वला वैराजा वैराजापुत्री पुरुकुत्सादीन् दशसुतानसूतेत्यन्वयः ॥ १५-१७ ॥ ❋ ❋ अङ्गस्य या सुनीथानाम पत्नी सोल्बणमसुरप्रकृतिं वेनं सुषुव इत्यन्वयः ॥ १८ ॥ ❋ ❋ यं वेनं अङ्ग विदुर ! गतासोर्मृतस्य ॥ १९ ॥ ❋ ❋ ततः किमभूत्तत्राह । जात इति ॥ २० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

स चक्षुरित्यर्द्धकम् । स चक्षुःसंज्ञः सर्वतेजाः सुतं चाक्षुषं मनुत्वेनावापेत्यर्थः । वक्ष्यते ह्यष्टमे—'षष्ठश्च चक्षुषः पुत्रश्चाक्षुषो नाम वै मनुरि'ति । तस्मात् टीकायामपि चक्षुःसंज्ञ इति प्रथमान्तपाठ एव सम्मतः । मनोरिति । वैराजमिति चित्सुखः । वैराजादीन् सुतान् ॥ १५-२१ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

पथि बालैर्जडाद्याकृतिभिर्लक्षितः। अतन्मतिः न जडादीनामिव मतिर्यस्य सः ॥ १०-१४ ॥ ❀ ❀ स सर्वतेजा एव चक्षुः चाक्षुषं सुतं मनुमवापेति व्याख्येयम्। 'षष्ठश्च चक्षुषः पुत्रश्चाक्षुषो नाम वै मनुरि'त्यष्टमात् ॥ १५-१९ ॥ ❀ ❀ मथने हेतुः अराजके इति। जातो मथ्यमानात् करात्। आद्यः क्षितीश्वर इति पुरग्रामादिविधायकत्वांशेन ॥ २० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तत्तदा अव्यवच्छिन्नेन योगाग्निना दग्धानि कर्ममलानि यस्य स आशयोऽन्तःकरणं यस्य सः उक्तप्रकारस्वरूपमुपासकस्वरूपमवरुन्धानः भगवदंशतया अनुसंदधानः आत्मनो विश्वकारणात् पूर्वोक्तादुपास्यादन्यं नैक्षत "सर्वं पुरुष एवेदं, सर्वं खल्विदं ब्रह्म, तज्जलानिति" इत्यादिश्रुतेः अंशित्वांशत्वाभ्यां ब्रह्मजीवयोः स्वरूपेण भिन्नत्वेऽप्यंशस्यांशिनिरपेक्षस्थित्याद्यभावात्तदभिन्नं ददर्शेत्यर्थः ॥ ९ ॥ ❀ ❀ प्रशान्तान्यर्चींषि ज्वाला यस्य स भस्मच्छन्नोऽनल इव जडादीनामिवाकृतिर्यस्य स तथाभूतो बालानामविवेकिनां पथि लक्षितः अतन्मतिः न जडादीनामिव मतिर्यस्य सः ॥ १०-१३ ॥ ❀ ❀ आदधे उत्पादयामास ॥ १४ ॥ ❀ ❀ स सर्वतेजाः आकूत्यां चक्षुःसंज्ञं मनुं सुतमवाप विरजान् शुद्धान् ॥ १५-१८ ॥ ❀ ❀ हे अङ्ग ! वागेव वज्रं येषां ते ॥ १९ ॥ ❀ ❀ आद्यः क्षितीश्वरः तदनन्तरसंस्थापितधर्मसेतुपालकेभ्यः पूर्वो भूपः ॥ २० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं ज्ञानं तस्य कथं जातमिति साधनापेक्षायामाह-अव्यवच्छिन्नेति। अव्यवच्छिन्नो निरन्तरमभ्यस्यमानो यो योगः सर्वत्र भगवदनुसन्धानलक्षणः स एवाग्निस्तेन दग्धं कर्मफलं कर्मवासनात्मको दोषो यस्य तथाभूत आशयोऽन्तःकरणं यस्य। तथाच निर्मलान्तःकरणत्वेनैवं ज्ञानं जातमिति भावः ॥ ९ ॥ ❀ ❀ एवंभूतोपि सर्वसङ्गपरिहाराय पथि मार्गे बालानामज्ञानां जडादीनामिवाकृतिर्यस्य तथाभूतो लक्षितः। तर्हि जडत्वादिधर्मक एव कुतो नेत्याशङ्क्याह-अतदिति। न तेषामिव मतिर्यस्य सर्वज्ञत्वादिति भावः। तत्र दृष्टान्तमाह-प्रशान्तेति। प्रशान्तान्यर्चींषि ज्वाला यस्य सोऽनलो यथा भस्मनावगुण्ठितो दाहकत्वादिना न प्रतीयते तथापि तदस्त्येवायमपि जडाद्यनुकरणेनाच्छन्नः सर्वज्ञत्वादिना न प्रतीयते तथापि तदस्तीत्यर्थः ॥ १० ॥ ❀ ❀ अतस्तमुत्कलं जडमुन्मत्तमतोऽनधिकारिणं मत्वा मन्त्रिसहिताः कुलवृद्धाः यवीयांसमुत्कलात्कनिष्ठमपि भ्रमेः सुतं वत्सरसंज्ञकं भूपतिं चक्रुरित्यन्वयः। न च कल्पोपि ज्येष्ठः पुत्रोतस्तस्य राज्ये स्थापनं कुतो नेति शङ्क्यम्, वरं प्राप्यागतस्य भगवद्विरहानुतापेन विरक्ततादशायामुत्पन्नस्य कल्पस्यापि विरक्तत्वेन राज्यानर्हत्वादिति बोध्यम् ॥ ११ ॥ ❀ ❀ इदानीं प्राप्तराज्यस्य वत्सरस्य वंशमाह-स्वर्वीथिरिति। वत्सरस्येष्टा प्रिया भार्या। तान् पुत्रान् दर्शयति-पुष्पार्णमित्यादि ॥ १२ ॥ ❀ ❀ तिग्मकेतुप्रभृतीनां वंशे केचिद्देवा जाताः केचिन्मुक्ता जाता इति तेषामत्र कामप्रकरणे वर्णन उपयोगाभावात्तद्वंशान्विहाय प्रकरणोपयोगित्वेन प्रचेतोजन्मवत्त्वेन प्रश्नोत्तरोपयोगित्वेन च पुष्पार्णवंशमेवाह-पुष्पार्णस्येति। अत्रेदं बोध्यम्—कालचक्राधिष्ठातृध्रुवात्मजोपि वत्सरो वत्सरात्मककालाभिमानी देव एव तस्य भार्या स्वर्वीथिरपि स्वर्गमार्गाभिमानिनी देवतैवातस्तद्वंशे स्त्रीपुत्रपौत्रादयोपि तत्तत्कालावयवाभिमानिदेवतारूपा एवेति प्रभायां भार्यायां पुष्पार्णस्य प्रातरादिदिवसावयवकालाभिमानिनस्त्रयः पुत्रा जाता इत्याह-प्रतिरिति ॥ १३ ॥ ❀ दोषायां तस्य रात्र्यवयवकालाभिमानिनस्त्रयः पुत्रा जाता इत्याह-प्रदोष इति। निशिथ इति ह्रस्वश्छन्दोऽनुरोधेन। निशीथ इत्यर्थः। सर्वतेजसं तन्नामानं सुतमादधे उत्पादितवानित्यर्थः ॥ १४ ॥ ❀ ❀ स सर्वतेजाः आकूत्यां चक्षुःसंज्ञकं मनुं सुतमवाप उत्पादितवान्। मनोर्महिषी नड्वला विरजान् रागादिदोषरहितान् सुतान् सूतेत्यन्वयः ॥ १५ ॥ ❀ ❀ तानेव द्वादशसुतान्दर्शयति-पुरुमित्यादिना ॥ १६ ॥ ❀ ❀ उत्तमान् शीलादिशुभगुणसंपन्नान् षट्पुत्रान् अजनयत्। तान् दर्शयति-अङ्गमित्यादिना ॥ १७ ॥ ❀ ❀ अङ्गस्य या पत्नी सुनीथा सा उल्बणं सर्वेषां भयंकरं वेनसंज्ञं सुतं सुषुवे, यस्य वेनस्य दौःशील्याद् दुष्टस्वभावत्वाद्धेतोः स राजर्षिर्धर्मात्माङ्गो निर्विण्णो विरक्तः सन् पुरात् निरगात् निर्जगाम ॥ १८ ॥ ❀ ❀ वेनस्य स्वक्रौर्येणैव प्राणहानिरपि जातेत्याह-यमिति। यमतिक्रूरस्वभावं वेनं वागेव वज्रं येषां तेऽतिप्रभावा मुनयः कुपिताः सन्तः शेपुः। किलेति निश्चयेन मारणार्थमेवेत्यर्थः। हे अङ्ग विदुर इति संबोधयंस्त्वं तु क्षत्रियोपि क्रूरतात्यागेनास्मदङ्गतुल्यतां प्राप्तोऽसीति निर्दोषत्वं सूचयति। पुनस्तस्य गतासोर्निर्गतप्राणस्य वेनस्य दक्षिणं करं ते मुनयो ममन्थुरित्यन्वयः ॥ १९ ॥ ❀ ❀ मथने हेतुमाह-अराजक इति। यदाङ्गो दुःखान्निर्गतो वेनस्तु राज्ये स्थितो मुनिशापेन मृतस्तदा लोके अराजके सति दस्युभिः प्रजाः पीडिता जाताः, अतस्तासां रक्षार्थं राजोत्पादनाय ममन्थुरिति। तेषां मुनीनां सत्यसन्धानां मनोरथपूरणार्थं नारायणांशेनाद्यः क्षितीश्वरः प्रथमो राजा पृथुर्वेनस्य करात् जातः। ततः पूर्वमपि राज्ञां सत्त्वेपि पुरग्रामादिरचनायास्तत्कृतत्वात्तस्याद्यत्वं बोध्यम् ॥ २० ॥

### भाषानुवादः

वह अज्ञानियोंको रास्ते आदि साधारण स्थानोंमें बिना लपटकी आगके समान, मूर्ख, अन्धा, बहिरा, पागल अथवा गूँगा-सा प्रतीत होता था-वास्तवमें ऐसा था नहीं ॥ १० ॥ ❀ ❀ इसलिये कुलके बड़े-बूढ़े तथा मन्त्रियोंने उसे मूर्ख और पागल समझकर उसके छोटे भाई भ्रमिपुत्र वत्सरको राजा बनाया ॥ ११ ॥ ❀ ❀ वत्सरकी प्रेयसी भार्या स्वर्वीथिके गर्भसे पुष्पार्ण, तिग्मकेतु, इष, ऊर्ज, वसु और जय नामके छः पुत्र हुए ॥ १२ ॥ ❀ ❀ पुष्पार्णके प्रभा और दोषा नामकी दो स्त्रियाँ थीं; उनमेंसे प्रभाके प्रातः, मध्यन्दिन और सायं—ये तीन पुत्र हुए ॥ १३ ॥ ❀ ❀ दोषाके प्रदोष, निशीथ और व्युष्ट—ये तीन पुत्र हुए। व्युष्टने अपनी भार्या पुष्करिणीसे सर्वतेजा नामका पुत्र उत्पन्न किया ॥ १४ ॥ ❀ ❀ उसकी पत्नी आकूतिसे चक्षुः नामक पुत्र हुआ। चाक्षुष मन्वन्तरमें वही मनु हुआ। चक्षु मनुकी स्त्री नड्वलासे पुरु, कुत्स, त्रित, द्युम्न, सत्यवान्, ऋत, व्रत, अग्निष्टोम, अतिरात्र, प्रद्युम्न, शिवि और उल्मुक—ये बारह सत्त्वगुणी बालक उत्पन्न हुए ॥ १५-१६ ॥ ❀ ❀ इनमें उल्मुकने अपनी पत्नी पुष्करिणीसे अङ्ग, सुमना, ख्याति, क्रतु, अङ्गिरा और गय—ये छः उत्तम पुत्र उत्पन्न किये ॥ १७ ॥ ❀ ❀ अङ्गकी पत्नी सुनीथाने क्रूरकर्मा वेनको जन्म दिया, जिसकी दुष्टतासे उद्विग्न होकर राजर्षि अङ्ग नगर छोड़कर चले गये थे ॥ १८ ॥ ❀ ❀ प्यारे विदुरजी! मुनियोंके वाक्य वज्रके समान अमोघ होते हैं; उन्होंने कुपित होकर वेनको शाप दिया और जब वह मर गया तब कोई राजा न रहनेके कारण लोकमें लुटेरोंके द्वारा प्रजाको बहुत कष्ट होने लगा। यह देखकर उन्होंने वेनकी दाहिनी भुजाका मन्थन किया, जिससे भगवान् विष्णुके अंशावतार आदिसम्राट् महाराज पृथु प्रकट हुए ॥ १९-२० ॥

### विदुर उवाच

तस्य शीलनिधेः साधोर्ब्रह्मण्यस्य महात्मनः। राज्ञः कथमभूद् दुष्टा प्रजा यद्विमना ययौ ॥ २१ ॥
किं वांहो वेन उद्दिश्य ब्रह्मदण्डमयूयुजन्। दण्डव्रतधरे राज्ञि मुनयो धर्मकोविदाः ॥ २२ ॥
नावध्येयः प्रजापालः प्रजाभिरघवानपि। यदसौ लोकपालानां बिभर्त्योजः स्वतेजसा ॥ २३ ॥
एतदाख्याहि मे ब्रह्मन् सुनीथात्मजचेष्टितम्। श्रद्दधानाय भक्ताय त्वं परावरवित्तमः ॥ २४ ॥

### मैत्रेय उवाच

अङ्गोऽश्वमेधं राजर्षिराजहार महाक्रतुम्। नाजग्मुर्देवतास्तस्मिन्नाहूता ब्रह्मवादिभिः ॥ २५ ॥
[1]तमूचुर्विस्मितास्तत्र यजमानमथर्त्विजः। हवींषि हूयमानानि न ते गृह्णन्ति देवताः ॥ २६ ॥
राजन् हवींष्यदुष्टानि श्रद्धयाऽऽसादितानि ते। छन्दांस्ययातयामानि योजितानि धृतव्रतैः ॥ २७ ॥
न विदामेह देवानां हेलनं वयमण्वपि। यन्न गृह्णन्ति भागान् स्वान् ये देवाः कर्मसाक्षिणः ॥ २८ ॥

### मैत्रेय उवाच

अङ्गो द्विजवचः श्रुत्वा यजमानः सुदुर्मनाः। तत्प्रष्टुं व्यसृजद्वाचं सदस्यांस्तदनुज्ञया ॥ २९ ॥
नागच्छन्त्याहुता देवा न गृह्णन्ति ग्रहानिह। सदसस्पतयो ब्रूत किमवद्यं मया कृतम् ॥ ३० ॥

अन्वयः—यत् विमनाः ययौ दुष्टा प्रजा तस्य शीलनिधेः साधोः ब्रह्मण्यस्य महात्मनः राज्ञः कथम् अभूत् ॥ २१ ॥ ❀ ❀ वा धर्मकोविदाः मुनयः दण्डव्रतधरे वेने राज्ञि किम् अंहः उद्दिश्य ब्रह्मदण्डम् अयूयुजन् ॥ २२ ॥ ❀ ❀ यत् असौ स्वतेजसा लोकपालानाम् ओजः बिभर्ति अघवान् अपि प्रजापालः प्रजाभिः न अवध्येयः ॥ २३ ॥ ❀ ❀ ब्रह्मन् परापरवित्तमः त्वम् एतत् सुनीथात्मजचेष्टितम् श्रद्दधानाय भक्ताय मे आख्याहि ॥ २४ ॥ ❀ ❀ अङ्गः राजर्षिः अश्वमेधम् महाक्रतुम् आजहार तस्मिन् ब्रह्मवादिभिः आहूताः देवताः न आजग्मुः ॥ २५ ॥ ❀ ❀ अथ ते विस्मिताः ऋत्विजः तत्र तम् यजमानम् ऊचुः देवताः हूयमानानि ते हवींषि न गृह्णन्ति ॥ २६ ॥ ❀ ❀ राजन् अदुष्टानि हवींषि श्रद्धया ते

१. प्रा० पा०—तदूचु०।

आसादितानि धृतव्रतैः अयातयामानि छंदांसि योजितानि ॥ २७ ॥ ❀ ❀ ये देवाः कर्मसाक्षिणः यत् स्वान् भागान् न गृह्णन्ति अणु अपि इह देवानाम् हेलनम् न विदाम ॥ २८ ॥ ❀ ❀ यजमानः अंगः द्विजवचः श्रुत्वा सुदुर्मनाः तत् सदस्यान् प्रष्टुम् तदनुज्ञया वाचम् व्यसृजत् ॥ २९ ॥ ❀ ❀ सदसस्पतयः इह देवाः आहुताः अपि न आगच्छन्ति ग्रहान् न गृह्णन्ति मया अवद्यम् किम् कृतम् ब्रूत ॥ ३० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

यद्यस्याः प्रजाया हेतोर्विमनाः सन्ययौ ॥ २१ ॥ ❀ ❀ किं वा अंहः अपराधं वेने उद्दिश्य आलक्ष्य ॥ २२ ॥ ❀ ❀ यतोऽयमधर्म इत्याह। नावध्येयोऽवज्ञेयोऽपि न भवति ॥ २३ ॥ ❀ ❀ परावरविदां मध्येऽतिश्रेष्ठस्त्वम् ॥ २४ ॥ ❀ ❀ अभावी पुत्रः काम्यकर्मणा बलादापादितो न सुखाय भवेदिति द्योतयन्नंगस्य पुत्रोत्पत्तिक्रममाह अंग इत्यादिना ॥ २५–२६ ॥ ❀ ❀ अयातयामान्यगतवीर्याणि ॥ २७–२८ ॥ ❀ ❀ यज्ञे गृहीतमौनोऽपि वाचं व्यसृजत्प्रायुंक्त ॥ २९ ॥ ❀ ❀ आहुता आहूताः ग्रहान्सोमपात्राणि इह यज्ञे न गृह्णंति ॥ ३० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तस्यांगस्य ॥ २१ ॥ ❀ ❀ "दंडोऽस्त्री शासने राज्ञां हिंसायां लकुटे गुडे" इति यादवः। दंडव्रतधरे शासनाख्यव्रतं बिभ्रति। न तेष्वज्ञानलेशः संभाव्यते इत्याह—धर्मकोविदा इति ॥ २२ ॥ यतोयं राजावमानोऽधर्मोऽतो न कार्य इत्याह—अघवान्पापशीलोपि। लोकपालानामिंद्रादीनामोजो बलं दीप्तिं वा "ओजो दीप्ताववष्टंभे प्रकाशबलयोरपि" इति मेदिनी। तस्मिन्नवज्ञाते इंद्राद्यवज्ञा स्यादिति भावः ॥ २३–२५ ॥ ❀ ❀ तमंगम्। अथ देवावाहनोत्तरम्। स्नेहादाह—तातेति। 'तातः स्याज्जनके प्रिये' इति कोशात् ॥ २६ ॥ ❀ ❀ द्रव्यादिदोषान्न गृह्णंतीति चेदाह—राजन्निति। हवींषि चरुद्रव्याणि। अदुष्टान्यतीव शोभनानि दातुः श्रद्धाराहित्यादपि तथा भवति तदत्र नास्तीत्याहुः—श्रद्धयेति। निर्बलमंत्रप्रयोगात्तथात्वमिति तत्राह—छंदांसीति "अस्थानोच्छ्वासविच्छेदघोषणाध्ययनादिकम्। प्रमादोपनतं वाथ यातयामत्वकारकम्" इति कात्यायनस्मृतेः। अस्यार्थः—उक्तोदात्तादिस्थाने निश्वासस्य विच्छेदेन त्यागेन युक्तं यद् घोषणमध्ययनाध्यापनादि। यद्वा-अध्ययनसमये चांचल्यादिना यथावच्छ्रवणाभावश्च छंदसां यातयामत्वं निर्बलतां करोतीत्यर्थः। एतद्यज्ञगतविप्रैस्तु यथाविहितमेव तदधीतमिति न यातयामता छंदसामस्तीति भावः। किं च "अयातयामैश्छन्दोभिर्यत्कर्म क्रियते द्विजैः। क्रीडमानैरपि सदा तत्तेषां सिद्धिकारकम् ॥" इत्यपि तेनैवोक्तमतो न ज्ञायते किमत्र कारणं यतो देवा न स्वभागान्स्वीकुर्वंतीति भावः। दुर्वृत्तविप्रोच्चारणादप्यत्र तथात्वं न संभाव्यते—धृतव्रतैरिति "देवपूजापितृपूजानिरताः सर्वदा द्विजाः। यथालाभेन संतुष्टास्तेऽत्र ज्ञेया धृतव्रताः ॥ अभक्ष्यभक्षकाहिंस्राः पैशून्यानृतवादिनः। क्रोधेर्ष्यादंभिनो वेदविमुखास्त्वधृतव्रताः ॥ पूर्वे योग्याः परेऽयोग्याः श्रौते स्मार्त्ते च कर्मणि" इति वारतांतविः ॥ २७ ॥ ❀ ❀ इह यज्ञकर्मणि। हेलनमवज्ञानम्। यद्यतो हेलनात् ॥ २८ ॥ ❀ ❀ तदनुज्ञया ब्राह्मणानुज्ञां प्राप्य। तद्देवानागमनभागाग्रहणवृत्तम् ॥ २९ ॥ ❀ ❀ "ग्रहः सूर्यादिनवके यज्ञपात्रोपरागयोः" इति धरणिः। अवद्यमपराधः ॥ ३० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

वेन इति सप्तम्यन्त एव पाठः ॥ २२ ॥ ❀ ❀ अवज्ञेयोऽपि न भवति किं पुनर्वध्यः यद्यस्मात् ॥ २३ ॥ ❀ ❀ एतत्तादृशविप्रापराधहेतुं तादृशराज्ञस्तादृशी प्रजा कथमिति विस्मयेन तत्रार्थे श्रद्दधानाय श्रद्धां कुर्वते ॥ २४ ॥ ❀ ❀ काम्यकर्मणा सकामविष्णुयजनेन सुखायैहिकाय न भवेत् किन्तु तद्यजनस्य प्रभावात् वैराग्योत्पादनाय तु भवेदेवेत्यर्थः ॥ २५–२६ ॥ ❀ ❀ अदुष्टानीत्यादिविशेषणत्रयेण द्रव्ययजमानर्त्विग्दोषा व्यावृत्ताः ॥ २७ ॥ ❀ ❀ इह जन्मनि स्वल्पमपि हेलनं न जानीमः किन्त्वनुमानं तु करवामेति शेषः। यद्यस्मात् ॥ २८ ॥ ❀ ❀ तद्भागाग्रहणे हेतुं हेलनम् ॥ २९ ॥ ❀ ❀ इह यज्ञे ॥ ३०–३१ ॥

### श्रीमद्वीरराघवव्याख्या

एवं दुष्टपुत्रः कथमभूत् अजायत यतः दुष्टायाः प्रजाया हेतोर्विमनाः दुःखितमना ययौ पुरान्निर्गतः ॥ २१ ॥ ❀ ❀ दण्डः असाधुनिग्रहरूपो दण्डः एव व्रतं तद्बिभर्तीति तत्तस्मिन् राज्ञि धर्मकोविदा मुनयः किं वांह अपराधम् उद्दिश्यालक्ष्य वेनं ब्रह्मदण्डं अयूयुजन् ब्रह्मशापेन युक्तं कृतवन्तः। प्रजापरिपालननिष्ठे राज्ञि शापकरणं मुनिभिरनुचितमिति भावः ॥ २२ ॥ ❀ ❀ तदेवाह नेति। अघवानपि अपराध्यपि प्रजापालः राजा प्रजाभिर्नावध्येयः अवज्ञेयो न भवति यत् यस्मादसौ प्रजापालः लोकपालानामोजः स्वतेजसा बिभर्त्ति ॥ २३ ॥ ❀ ❀ हे ब्रह्मन्! एतत् सुनीथात्मजस्य चेष्टितं श्रद्दधानाय शुश्रूषात्वरायुक्ताय

भक्ताय मे मह्यम् अनेन स्वस्य श्रवणे योग्यतोक्ता। परापरवित्तमः परः परमात्मा अपरः प्रकृतिपुरुषादिः तद्विदां मध्ये श्रेष्ठस्त्वम्, अनेन कथने योग्यतोक्ता आख्याहि कथय ॥ २४ ॥ ❀ ❀ एवमापृष्टो मुनिः ब्रह्मवित् काम्यकर्मणि बलादापातितोऽपि तेन न तुष्यतीति द्योतयन्नत्राङ्गस्य पुत्रोत्पत्तिक्रममाह। अङ्ग इत्यादिना। राजा चासौ ऋषिरङ्गः क्रतूनां मध्ये उत्तममश्वमेधमाजहार आरब्धवान् तस्मिन्नश्वमेधे क्रतौ ब्रह्मवादिभिः श्रुत्वाध्ययनादिसम्पन्नैः ऋत्विग्भिराहूताः सत्यो देवता नाजग्मुः नागतवत्यः ॥ २५ ॥ ❀ ❀ हे तात! ते ऋत्विजो विस्मिता यजमानमङ्गमूचुः उक्तमेवाह। तं त्वया त्वत्सम्बन्धीनि हूयमानानि देवतोद्देशेन प्रक्षेपपूर्वकं त्यक्तानि अयातयामानि अगतवीर्याणि सारवन्तीत्यर्थः। हवींषि पुरोडाशादीनि देवता न गृह्णन्ति ॥ २६ ॥ ❀ ❀ हे राजन्! हवींषि अदुष्टानि शुद्धानि ते त्वया श्रद्धयासादितानि सम्पादितानि च तथा छन्दांसि क्रत्वङ्गभूता मन्त्रा अयातयामानि स्वरवर्णादिभिरगतवीर्याणि। तत्र हेतुः दृढव्रतैः स्वरवर्णादियुक्तत्वेन मन्त्रोच्चारणमेव दृढं व्रतं येषां तैर्ऋत्विग्भिर्योजितानि प्रयुक्तानि ॥ २७ ॥ ❀ ❀ एवं यथावत् अनुष्ठीयमाने क्रतौ देवहेलनं देवान् प्रति हेलनमपराधमणु अल्पमपि वयं न विदामो न जानीमः यत् यस्मात् हेलनात् स्वकीयान् भागान् कर्मसाक्षिणः कर्मणां गुणदोषद्रष्टारो देवा न गृह्णन्ति, अतोऽवश्यं केनचिद्देवहेलनेन भवितव्यं, परन्तु तद्वयं न विदाम इत्यर्थः ॥ २८ ॥ ❀ ❀ एवमृत्विग्भिरुक्तोऽङ्गस्ताना-हेत्याह मुनिः। द्विजवचः श्रुत्वा अथानन्तरं सुतरां दुःखितमना यजमानोऽङ्गः यज्ञे गृहीतमौनोऽपि सदस्यान् सदसि स्थितान् प्रति तदनुज्ञया सदस्यानुज्ञया त्यक्तमौनस्तद्देवतानागमनकारणं प्रष्टुं वाचं व्यसृजत् प्रायुङ्क्त ॥ २९ ॥ ❀ ❀ वाग्विसर्गमेवाह। नागच्छन्तीति इह क्रतौ देवता आहूता नागच्छन्ति ग्रहान् सोमपात्राणि न गृह्णन्ति हे सदसस्पतयः मया किमवद्यं हेलनं कृतं तद्यूयं ब्रूत ॥ ३० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

श्रावणमङ्गलत्वात्सामान्यतः कथितं विशेषतो विदुरः श्रोतुं पृच्छतीत्याह तस्येति। यद्विमनाः यस्या दुष्टप्रजाया विषण्णमनाः ॥ २१ ॥ ❀ ❀ दण्डव्रतं हिंसाख्यं व्रतं धारयतीति दण्डव्रतधरः "दण्डोऽस्त्री शासने राज्ञां हिंसायां लकुटे गुड" इति यादवः। यद्वा शासनाख्यं व्रतं बिभ्रति न तेष्वज्ञानलेशः संभाव्यत इत्याह। धर्मकोविदा इति ॥ २२ ॥ ❀ ❀ नावध्येयो नावज्ञेयः तत्र निमित्तमाह। यदसाविति ॥ २३ ॥ ❀ ❀ यत एवं तत्त्वं तस्मादत्र महन्निमित्तमस्ति एतन्मे आख्याहीत्यन्वयः। ममात्रेतिहासज्ञानं नास्तीति वक्तुं न शक्यमित्यत उक्तं परावरेति ॥ २४ ॥ ❀ ❀ सूचितमर्थं विस्तरतो वक्तुमुपक्रमते। अङ्ग इति ॥ २५-२६ ॥ ❀ ❀ न द्रव्यादिदोषादित्याहुरित्याह राजन्निति। आसादितान्यापादितानि अयातयामान्यगतवीर्याणि ॥ २७ ॥ ❀ ❀ हेलनमवज्ञानम् ॥ २८-२९ ॥ ❀ ❀ आहुता आहूताः ग्रहान् हविःपिण्डान् ॥ ३० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

वेणमुद्दिश्येति चित्सुखस्यासम्मतम् ॥ २२-२४ ॥ ❀ ❀ प्राचीनबलवत्तरापराधविशेषेण प्रतिहतपुत्रभाग्यत्वेऽपि तस्य श्रीविष्णुप्रयजनमाहात्म्यात् पुत्रो जातः। तथा तेन दूषिततद्भाग्यत्वेऽपि तस्मादेवासौ वैराग्यहेतुर्जातः पौत्रश्च तदवतार एवेत्याह। अङ्ग इत्यादिना ॥ २५-२६ ॥ ❀ ❀ अत्रोपकरणानि तु समीचीनान्येवेत्याहुः। राजन्निति। पौरुषवान् इति। तस्य निरर्गलत्वमुक्तं तथापि न गृह्णन्तीति पूर्वेणैवान्वयः ॥ २७-३० ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

यद्यतो विमानः सन् ॥ २१ ॥ ❀ ❀ किञ्च अंहोऽपराधं राज्ञीति राज्ञ एव दण्डेऽधिकारो न तु राज्ञोऽपि दण्डे मुनीनामधिकार इत्यर्थः ॥ २२-२८ ॥ ❀ ❀ यज्ञे गृहीतमौनोऽपि वाचं व्यसृजत् प्रायुङ्क्त ॥ २९ ॥ ❀ ❀ ग्रहान् सोमपात्राणि ॥ ३०-३२ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तस्याङ्गस्य यद्यतो विमनाः वनं ययौ ॥ २१ ॥ ❀ ❀ धर्मकोविदा मुनयः दण्डोऽधार्मिकदमनमेव व्रतं यस्य तस्मिन् राज्ञि किमंहः अपराधमुद्दिश्य वेनं प्रति दण्डमयूयुजन्नित्यन्वयः ॥ २२-२३ ॥ ❀ ❀ अघवानपि नावध्येय इत्युक्तं स तु धर्मकोविदैर्मुनिभिर्हतोऽत्यन्तमंहस्तेन कृतं तदाख्याहीति पृच्छति। एतदिति। सुनीथात्मजस्य एतदत्यन्तांहो-चेष्टितम् ॥ ३४ ॥ यत् पृष्टं तस्य शीलनिधेः साधोः ब्रह्मण्यस्य महात्मनः दुष्टा प्रजा कथमभूदिति तत्रातिनिर्बन्धसंपादितत्वाद-धर्मवंशोद्भवायामुत्पादितत्वाच्छीलनिधित्वादिगुणयुक्ताङ्गगृहेऽधार्मिको वेनो बभूवेत्युत्तरमाह। अङ्ग इत्यादिना। तेनाभवद-धार्मिक इत्यन्तेन ॥ २५-३८ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं सङ्क्षेपतो वर्णितमङ्गस्य पृथोश्च चरितं श्रुत्वा सन्दिहानो विदुरः पृच्छति—तस्येति चतुर्भिः। तस्याङ्गस्य राज्ञो दुष्टः पुत्रः कथमभूत्! यत् यस्मात् पुत्राद्धेतोर्विमनाः सन् पुरान्निर्ययावित्यन्वयः। ननु लोके दुष्टापि प्रजा भवत्येव किं तत्राश्चर्यमित्याशङ्क्य तथा लोके भवतु, तथापि तस्य तन्न संभवतीत्यभिप्रेत्य तत्र हेतुगर्भाणि तद्विशेषणान्याह शीलनिधेरित्यादिना। शीलनिधेः सदा सर्वत्र सुखभावस्य। तत्रापि हेतुमाह—साधोरिति। सदाचारनिष्ठत्वेन शुद्धान्तःकरणत्वात्सुखभावत्वमिति भावः। ब्रह्मण्यस्येति, ब्राह्मणभक्तस्येत्यर्थः। अतो ब्राह्मणप्रसादादपि न तस्य दुष्टा प्रजा संभवतीति भावः। महात्मन इति महान् अत्युदारः आत्मा मनो यस्य तस्येत्यर्थः। अत्युदारमनस्त्वेन सर्वोपकारिणस्तस्य दुष्टा प्रजा न संभवतीति भावः॥ २१॥ ❀ ❀ एवमङ्गविषयकं पृष्ट्वा वेनविषयकं पृच्छति—किंचेति। किंच तस्यांहः अपराधमुद्दिश्य आलक्ष्य मुनयो वेनं ब्रह्मदण्डमयूयुजन् शेपुरित्यर्थः। प्रजासु तत्कृतमुग्रं शासनं दृष्ट्वा शेपुरित्याशङ्क्याह दण्डेति। दण्डः शासनमेव व्रतमाचरणं धारयतीति तस्मिन् राज्ञि शापः सर्वथाऽनुचित एव शासनस्य तद्धर्मत्वात्। न च ते मूर्खाः किंतु धर्मकोविदाः। तत्र हेतुमाह—मुनय इति॥ २२॥ ❀ ❀ एवं मुनीनां तत्र शापस्यानुचितत्वमुक्त्वा तत्पीडिताभिः प्रजाभिः प्रेरिता मुनयः शेपुरित्याशङ्क्य प्रजानामपि तदनुचितमित्याह—नावध्येय इति। अघवान् क्रौर्यादिमानपि प्रजापालो राजा प्रजाभिर्नावध्येयः अवज्ञेयो न भवति। कुतः यत् यस्मादसौ राजा स्वतेजसा स्वप्रभावेण लोकपालानामिन्द्रादीनामोजः वृष्ट्यादिसामर्थ्यं बिभर्त्ति। तथा चावर्षणादिकाले वृष्ट्यादिना परमोपकारस्य सत्त्वात्तदवज्ञाने कृतघ्नतया महानधर्मः स्यादिति भावः॥ २३॥ ❀ ❀ अतो येन धर्मज्ञा मुनयोपि क्रुद्धास्तदेतत्सुनीथात्मजस्य वेनस्य चेष्टितमाचरणं हे ब्रह्मन् मे मह्यं त्वमाख्याहि प्रकथयेत्यन्वयः। अवश्यं च त्वया वक्तव्यमिति सूचयन् स्वस्य श्रवणेऽधिकारित्वं दर्शयति—श्रद्दधानायेति। 'श्रद्धावांल्लभते ज्ञानम्' इति वचनाच्छ्रद्धावानेव श्रवणेऽधिकारी। सा च मय्यस्त्यतोऽहमपि तथाऽत आख्याहीति भावः। ननु भक्तिहीनस्याग्रे कथनेनापि किं स्यादित्याशङ्क्याह—भक्तायेति। तव चाधोक्षजस्य चेति शेषः। न वक्तव्यमहं न जानामीति, यतस्त्वं परावरवित्तमः। भूतभविष्यद्वर्त्तमानकालपदार्थज्ञानां मध्येऽतिश्रेष्ठ इत्यर्थः॥ २४॥ ❀ ❀ एवं विदुरेण पृष्टो मैत्रेयः सङ्क्षेपतः कथितमपि पुनर्विस्तरेण कथयति—अङ्ग इति। राजर्षिरङ्गो महाक्रतुं क्रतुश्रेष्ठमश्वमेधमाजहार प्रवर्त्तयामास। तस्मिन्नश्वमेधे ब्रह्मवादिभिर्मन्त्रज्ञैरप्याहूता देवता नाजग्मुरित्यन्वयः॥ २५॥ ❀ तद्वचनान्येव दर्शयति—हवींषीति सार्द्धाभ्याम्। हूयमानानि हवींषि देवता न गृह्णन्तीत्यन्वयः॥ २६॥ ❀ ❀ तर्हि हविष्षु कश्चिद्दोषः स्यादित्याशङ्क्याहुः—हे राजन्! हवींष्यदुष्टानीति। तर्हि मम श्रद्धाहीनत्वं स्यादित्याशङ्क्याहुः—ते त्वया श्रद्धया आसादितानि तानि प्रापितानीति। तर्हि मंत्रेषु वर्णस्वरादिस्खलनेन विपर्ययेन वा वीर्यहीनत्वं भविष्यतीत्याशङ्क्याहुः—छन्दांसीति। छन्दांसि मन्त्राः अयातयामानि वर्णस्खलनादिदोषराहित्येनागतवीर्याणीत्यर्थः। तर्हि युष्मासु व्रतभङ्गादिः कश्चिद्दोषो भविष्यतीत्याशङ्क्याहुः—धृतव्रतैरेवास्माभिर्योजितानि प्रयुक्तानीति॥ २७॥ ❀ ❀ तर्हि केनापराधेन देवाः स्वभागान् न गृह्णन्ति तद्विचार्यतां तत्राहुः—न विदामेति। ये देवाः कर्मसाक्षिणः कर्माङ्गभूता मुख्यास्ते यत् येनापराधेन स्वान् भागान्न गृह्णन्ति तद्देवानां हेलनमपराधं वयमण्वपि स्वल्पमपि इहास्मिन् यज्ञे न विदाम न विद्म इत्यन्वयः॥ २८॥ ❀ ❀ अङ्गो द्विजानामृत्विजां वचः श्रुत्वा सुदुर्मना जातः। यतो यजमानो यज्ञफलाभिलाषी। ततश्च यज्ञे गृहीतमौनोपि सदस्यान् प्रति तत्प्रष्टुं देवानागमनकारणं स्वदोषं प्रष्टुं तदनुज्ञया तेषामृत्विगादीनामाज्ञया वाचं व्यसृजत् प्रयुक्तवानित्यन्वयः॥ २९॥ ❀ ❀ तद्वाक्यमेव दर्शयति—नेति। हे सदसस्पतयः! इह मम यज्ञे आहुता देवा नागच्छन्ति, ग्रहान् सोमपात्राणि च न गृह्णन्ति। तत्र हेतुर्ममावद्यमेव यजमानत्वात्, तथाच मया किमवद्यं कृतं तद्यूयं ब्रूतेत्यन्वयः॥ ३०॥

### भाषानुवादः

विदुरजीने पूछा—ब्रह्मन्! महाराज अङ्ग तो बड़े शीलसम्पन्न, साधुस्वभाव, ब्राह्मण-भक्त और महात्मा थे। उनके वेन-जैसा दुष्ट पुत्र कैसे हुआ, जिसके कारण दुःखी होकर उन्हें नगर छोड़ना पड़ा॥ २१॥ ❀ ❀ राजदण्डधारी वेनका भी ऐसा क्या अपराध था, जो धर्मज्ञ मुनीश्वरोंने उसके प्रति शापरूप ब्रह्मदण्डका प्रयोग किया॥ २२॥ ❀ ❀ प्रजाका कर्तव्य है कि वह प्रजापालक राजासे कोई पाप बन जाय तो भी उसका तिरस्कार न करे; क्योंकि वह अपने प्रभावसे आठ लोकपालोंके तेजको धारण करता है॥ २३॥ ❀ ❀ ब्रह्मन्! आप भूत-भविष्यकी बातें जाननेवालोंमें सर्वश्रेष्ठ हैं, इसलिये आप मुझे सुनीथाके पुत्र वेनकी सब करतूतें सुनाइये। मैं आपका श्रद्धालु भक्त हूँ॥ २४॥ ❀ ❀ श्रीमैत्रेयजीने कहा—विदुरजी! एक बार राजर्षि अङ्गने अश्वमेध-महायज्ञका अनुष्ठान किया। उसमें वेदवादी ब्राह्मणोंके आवाहन करनेपर भी देवतालोग अपना भाग लेने नहीं आये॥ २५॥ ❀ ❀ तब ऋत्विजोंने विस्मित होकर यजमान अङ्गसे कहा—'राजन्! हम आहुतियोंके रूपमें आपका जो घृत आदि पदार्थ हवन कर रहे हैं, उसे देवतालोग स्वीकार नहीं करते॥ २६॥ ❀ ❀ हम जानते हैं आपकी होम-सामग्री दूषित नहीं है; आपने उसे बड़ी श्रद्धासे जुटाया है तथा मन्त्र भी किसी प्रकार बलहीन नहीं हैं; क्योंकि उनका

प्रयोग करवाले ऋत्विजगण याजकोचित सभी नियमोंका पूर्णतया पालन करते हैं ॥ २७ ॥ ❀ ❀ हमें ऐसी कोई बात नहीं दीखती कि इस यज्ञमें देवताओंका किंचित् भी तिरस्कार हुआ है—फिर भी कर्माध्यक्ष देवता लोग क्यों अपना भाग नहीं ले रहे हैं ?' ॥ २८ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—ऋत्विजोंकी बात सुनकर यजमान अङ्ग बहुत उदास हुए। तब उन्होंने याजकोंकी अनुमतिसे मौन तोड़कर सदस्योंसे पूछा ॥ २९ ॥ ❀ ❀ 'सदस्यों! देवतालोग आवाहन करनेपर भी यज्ञमें नहीं आ रहे हैं और न सोमपात्र ही ग्रहण करते हैं; आप बतलाइये मुझसे ऐसा क्या अपराध हुआ है ?' ॥ ३० ॥

### सदसस्पतय ऊचुः

नरदेवेह भवतो[1] नाघं तावन्मनाक् स्थितम्। अस्त्येकं प्राक्तनमघं[2] यदिहेदृक् त्वमप्रजः ॥ ३१ ॥
तथा साधय भद्रं ते आत्मानं सुप्रजं नृप। इष्टस्ते पुत्रकामस्य पुत्रं दास्यति यज्ञभुक् ॥ ३२ ॥
तथा स्वभागधेयानि ग्रहीष्यन्ति दिवौकसः। यद्यज्ञपुरुषः साक्षादपत्याय हरिर्वृतः ॥ ३३ ॥
तांस्तान् कामान् हरिर्दद्याद्यान् यान् कामयते जनः। आराधितो यथैवैष तथा पुंसां फलोदयः ॥ ३४ ॥
इति व्यवसिता विप्रास्तस्य राज्ञः प्रजातये। पुरोडाशं निरवपन् शिपिविष्टाय विष्णवे ॥ ३५ ॥
तस्मात्पुरुष उत्तस्थौ हेममाल्यमलाम्बरः। हिरण्मयेन पात्रेण सिद्धमादाय पायसम् ॥ ३६ ॥
स विप्रानुमतो राजा गृहीत्वाञ्जलिनौदनम्। अवघ्राय मुदा युक्तः प्रादात्पत्न्या उदारधीः ॥ ३७ ॥
सा[3] तत्पुंसवनं राज्ञी प्राश्य वै पत्युराद्धे। गर्भं काल उपावृत्ते कुमारं सुषुवेऽप्रजा ॥ ३८ ॥
स बाल एव पुरुषो मातामहमनुव्रतः। अधर्मांशोद्भवं मृत्युं तेनाभवदधार्मिकः ॥ ३९ ॥
स शरासनमुद्यम्य मृगयुर्वनगोचरः। हन्त्यसाधुर्मृगान् दीनान् वेनोऽसावित्यरौज्जनः ॥ ४० ॥

अन्वयः—नरदेव इह भवतः अघम् तावत् मनाक् न स्थितम् यत् इह ईदृक् त्वम् अप्रजः एकम् प्राक्तनम् अघम् अस्ति ॥ ३१ ॥ ❀ ❀ नृप पुत्रकामस्य ते इष्टः यज्ञभुक् पुत्रम् दास्यति तथा आत्मानम् सुप्रजम् साधय ते भद्रम् ॥३२॥ ❀ ❀ यत् साक्षात् यज्ञपुरुषः हरिः अपत्याय वृतः तथा दिवौकसः स्वभागधेयानि ग्रहीष्यन्ति ॥ ३३ ॥ ❀ ❀ जनः यान् यान् कामान् कामयते तान् तान् हरिः दद्यात् एषः यथा एव आराधितः तथा एव पुंसाम् फलोदयः स्यात् ॥ ३४ ॥ ❀ ❀ इति व्यवसिताः विप्राः तस्य राज्ञः प्रजातये शिपिविष्टाय विष्णवे पुरोडाशम् निरवपन् ॥ ३५ ॥ ❀ ❀ तस्मात् हेममाली अमलाम्बरः पुरुषः हिरण्मयेन पात्रेण सिद्धम् पायसम् आदाय उत्तस्थौ ॥ ३६ ॥ ❀ ❀ सः विप्रानुमतः उदारधीः राजा अञ्जलिना ओदनम् गृहीत्वा अवघ्राय मुदा युक्तः पत्न्यै प्रादात् ॥ ३७ ॥ ❀ ❀ अप्रजा सा राज्ञी तत् पुंसवनम् प्राश्य पत्युः गर्भम् वै आदधे काले उपावृत्ते कुमारम् सुषुवे ॥ ३८ ॥ ❀ ❀ सः बालः एव पुरुषः मातामहम् अधर्मांशोद्भवम् मृत्युम् अनुव्रतः तेन अधार्मिकः अभवत् ॥ ३९ ॥ ❀ ❀ असाधुः सः मृगयुः वनगोचरः शरासनम् उद्यम्य दीनान् मृगान् हन्ति जनः असौ वेनः इति अरौत् ॥ ४० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

इह जन्मनि न तावन्मनागीषदप्यघं स्थितम्। कथंचिज्ज्ञातस्याघस्य सद्य एव प्रायश्चित्तैः क्षालनात्। किं तु प्राक्तनमेकमघमस्ति यद्यस्मादीदृक् गुणाधिकोऽपि त्वं प्रजारहितः ॥ ३१ ॥ ❀ ❀ अतो यथा देवा हविर्गृह्णंति तथात्मानं सुप्रजं साधय। कथं साधनीयं तदाहुः। इष्ट इति ॥ ३२ ॥ ❀ ❀ तथा सति स्वभागान्ग्रहीष्यंति। यद्यतो हरिः साक्षाद् वृतः स्यात् अतस्तेन सह सर्वे देवा आगमिष्यंतीत्यर्थः ॥ ३३ ॥ ❀ ❀ नन्वतितुच्छान्कामान्हरिः कथं दद्यात्तत्राह। तांस्तानिति ॥ ३४ ॥ ❀ ❀ प्रजातये पुत्रोत्पत्तये शिपिविष्टाय शिपिषु पशुषु यज्ञरूपेण प्रविष्टाय। तथा च श्रुतिः "यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति" इति ॥ ३५ ॥ ❀ ❀ तस्मादिति योग्यतयाग्नेः ॥ ३६ ॥ ❀ ❀ पत्न्यै प्रादात् ॥ ३६ ॥ ❀ ❀ पुमांसं सूतेऽनेनेति तथा तदन्नं प्राश्य पत्युः सकाशाद्गर्भमादधे अप्रजाः सती ॥ ३८ ॥ ❀ ❀ मातामहं मृत्युम्। मृत्योर्हि पुत्री सुनीथा ॥ ३९ ॥ ❀ ❀ मृगयुर्लुब्धकः सन् तं दृष्ट्वा वेनोऽसावागच्छतीति जनः सर्वोऽप्यरौच्चुक्रोश ॥ ४० ॥

---

१. प्रा० पा०—भवता चावद्यं किं क्रियान्वितम्। २. प्रा० पा०—प्राक्तनावद्यम्। ३. प्रा० पा०—यावत्पुंस०।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

नरदेवेत्यस्याधुनिकपापस्य महादानादिना प्रायश्चित्तेनापाकरणसमर्थस्त्वमित्यभिप्रायः। प्राक्तनं पूर्वजन्मभवमेकावल-हत्यादिरूपं किञ्चिदस्तीत्यनुमीयते तत्र हेतुः यतोऽघात् ॥ ३१ ॥ ❀ ❀ यज्ञभुक् हरिः ॥ ३२ ॥ ❀ ❀ इत्यर्थ इति। सर्वेश्वरत्वाद्धरेस्तदनुगा एवान्ये नरदेवं भृत्या इवेति भावः ॥ ३३ ॥ ❀ ❀ अत्राक्षिप्य समाधत्ते-नन्विति ॥ ३४ ॥ ❀ ❀ तंडुलपिष्टनिर्मितकूर्माकृतिर्बलिः पुरोडाशः। "प्रादेशनं निर्वपनमपवर्जनमंहतिः" इत्यमरः। श्रुतिः स्पष्टार्था ॥ ३५-३६ ॥ ❀ ❀ सोंगः ॥ ३७ ॥ ❀ ❀ सा सुनीथा। अप्रजेति। समासांतविधेरनित्यत्वान्नाऽसिच्। असिजंतो वा पाठस्तत्सत्त्वेऽपि छंदोभंगाभावात् ॥ ३८ ॥ ❀ ❀ परुषो निष्ठुरो मातामहं मातुः पितरं मृत्युनामानमसुरवरमनुव्रत इति हेतुनाऽधार्मिको धर्मद्वेष्यभूत्। अधर्मांशोद्भवमिति विशेषणेन धर्मांशोद्भवो मृत्युरन्योस्तीति रहस्यमवगंतव्यम्। "मृत्युर्देवो यमभ्राता वेनमाता-महोऽसुरः" इति विजयध्वजः। प्रायेणेति कथनात्केचिदेवेत्यर्थः। ब्रह्मवैवर्तेपि "जनः पैतृकदोषेण दोषान्मातामहस्य च। गुरुदोषा-त्त्रिभिर्दोषैर्हरिद्वेषी भवेद् ध्रुवम् ॥" इति ॥ ३९ ॥ ❀ ❀ किन्नामायं बाल इत्यतस्तत्कर्मानुसृतं नाम लोका अरूरुवन्नित्याह स इति। वेनयति पीडयतीति वेनः "पीडां वेन इति प्राहुर्वेनोऽसौ पीडनाद्भवेत्" इति तीर्थः। वेनयति चिंतायुक्तान्करोति सर्वानिति वेनः 'वेनृ-गतिज्ञानचिंतानिशामनवादित्रग्रहणेषु' अतोऽच् ॥ ४० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अतः अप्रजस्य भागाग्रहणात् ॥ ३२ ॥ ❀ ❀ तथा सति पुत्रलाभे सति दिवौकसां भागग्रहणं यज्ञपुरुषवरणस्य हेतुत्वमार्थिकार्थतया व्याचष्टे अत इति ॥ ३३-३४ ॥ ❀ ❀ तथा च शिपिशब्दस्य पशुवाचकत्वे प्रमाणं श्रुतिः ॥ ३५ ॥ ❀ ❀ तस्मादिति। तच्छब्दस्य पूर्वपरामर्शकत्वात् पूर्वत्राग्निशब्दाभावात् अर्थाबाधरूपा वाक्यार्थहेतुर्योग्यता गृहीता। तच्छब्देनाग्निर्विवक्षितः। यथा सिञ्चति तेनेत्युक्ते तच्छब्देन जलविवक्षणं तद्वदित्यर्थः ॥ ३६-३८ ॥ ❀ ❀ तेन मृत्युवनुसरणेन ॥ ३९-४० ॥

### श्रीमद्वीरराघवव्याख्या

हे नरदेव! इह जन्मनि भवतः ब्रह्मविदस्तावन्मनागीषदप्यवद्यं न स्थितं किन्तु प्राक्तनमेकमघमस्ति यद्यस्मादघादीदृग् गुणाधिकस्त्वमप्रजः प्रजारहितो बभूविथ ॥ ३१ ॥ ❀ ❀ अतो देवा यथा हवींषि गृह्णीयुस्तथात्मानं सप्रजं सपुत्रं साधय। कथं साधनीयं तत्राहुः। इष्ट इति। यज्ञभुग् भगवान् पुत्रं कामयमानस्य ते त्वया इष्ट इज्यमानस्तुभ्यं पुत्रं दास्यति ॥ ३२ ॥ ❀ ❀ तथा सति दिवौकसो देवाः स्वभागधेयानि स्वभागान् "भागरूपनामभ्यो धेयः" इति स्वार्थे धेयप्रत्ययः, ग्रहीष्यन्ति। यद्यतः यज्ञपुरुषो हरिः साक्षादपत्याय पुत्रार्थं वृतः स्यादतस्तेन सह सर्वे देवा आगमिष्यन्तीत्यर्थः ॥ ३४ ॥ ❀ ❀ नन्वतितुच्छान् कामान् हरिः कथं दद्यात् तत्राहुः। तांस्तानिति। जनो यान् कामान् प्रार्थयते तांस्तान् हरिर्दद्यात् यथा येन प्रकारेण भगवानाराधितो जनैस्तेषां तथा स्वस्वकामानुसारेण फलोदयः फलावाप्तिर्भवति ॥ ३४ ॥ ❀ ❀ इत्थं व्यवसिता निश्चिन्वाना ऋत्विजः राज्ञोऽङ्गस्य प्रजातये प्रजोत्पत्त्यै शिपिविष्टाय शिपिविष्टत्वगुणविशिष्टाय विष्णवे पुरोडाशं निरवपन्। शिपिभिः रश्मिभिः विष्टः आविष्टः शिपिविष्टः तस्मै। तथा च मन्त्रः "किमिते विष्णोपरि चक्ष्यं भूत्प्रयत्नवक्षे शिपिविष्टे अस्मी"त्यादिः अर्थ-वादश्च पशोर्भूमायाप्रष्टिस्तद्विष्णुः शिपिविष्ट इत्यादिनिरुक्तं च यदुत प्रवृधे शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः शिपयोऽत्र रश्मय उच्यन्ते तैराविष्टो भवतीति। यद्वा शिपिषु पशुषु यज्ञरूपेण प्रविष्टाय तथा च श्रुतिः "यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति" इति ॥ ३५ ॥ ❀ ❀ तस्मात् अग्ने रित्यर्थः। अर्थसामर्थ्यात् हेममयानि माल्यानि अम्बराणि च यस्य सः पुरुषः हिरण्मय-पात्रेण सिद्धं सम्यक् पक्वं पायसपात्रं गृहीत्वा उत्तस्थौ उत्थितवान् ॥ ३६ ॥ ❀ ❀ बुद्धिमान् स राजा अङ्गः विप्रानुमतः विप्रैरभ्यनुज्ञातः अञ्जलिना ओदनपायसं गृहीत्वा स्वयमाघ्राय हर्षेण युक्तः पत्न्यै प्रादात् ॥ ३७ ॥ ❀ ❀ सा राज्ञी राज्ञः स्त्री सुनीथी पुंसवनं पुमांसं सूते अनेनेति पुंसवनं तदोदनं प्राश्य भुक्त्वा पत्युः सकाशात् गर्भमादधे धृतवती। अप्रजाः सती गर्भकाले गर्भधारणकाले उपावृते अतीते सति कुमारं सुषुवे ॥ ३८ ॥ ❀ ❀ सः पुरुषः कुमारो बाल एव बाल्यात्प्रभृतीत्यर्थः, अधर्मांशोद्भवं मातामहं मृत्युं मृत्योर्हि पुत्री सुनीथा अनुव्रतः अनुसृतोऽभूत्। तेन मातामहानुसारेणायमप्यधार्मिकोऽ-भवत् ॥ ३९ ॥ ❀ ❀ अधार्मिकत्वमेव प्रपञ्चयति। स इति। स आङ्गः शरासनं धनुरुद्यम्य धनुष्यारोपितशर इत्यर्थः। मृगयुर्लुब्धकः सन् अत एव वनगोचरः असाधुः दीनान् मृगान् हन्ति अवधीत् तं दृष्ट्वा सवेन आगच्छतीति सर्वो जनः अरौत् चुक्रोश ॥ ४० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

राज्ञा पृष्टान् यजमानकर्मगुणदोषान्विविच्य तत्परिहृत्य कर्मप्रवर्तनायामन्त्रिताः सदस्या ऋत्विजः किंविशिष्टमवलोक्य प्रोचुरिति तत्राह नरदेवेति। इहास्मिन् जन्मनि ईदृशः दृष्टोऽप्रजोऽनपत्य इति यदतः प्राक्तनं पूर्वजन्मार्जितमघं बालहत्यादि-

कमेकमघमस्तीत्यनुमीयते ॥ ३१ ॥ ❀ ❀ तथा तस्मात्ते आत्मानं सप्रजं पुत्रेण सह वर्तमानं साधय कुरु । ततो भद्रं भवति तत्र क उपाय इति तमाहुरित्याह इष्ट इति ॥ ३२ ॥ ❀ ❀ किं भद्रं स्यादित्यत्राह यथेति । दिवौकसां हरेरङ्गोत्पन्नत्वेन तदाश्रितत्वेन स्थितेस्तन्मनस्कत्वेन तत्तुष्टया तत्तुष्टेः स्वभागादानानादानयोस्तदिच्छाविनाभूतत्वादधुना तदिष्टत्वात्सर्वं समंजसं भवतीति भावेनाहुरित्याह । यज्ञपुरुष इति । अनेनापुत्रस्य लोको नास्तीति प्रायिकं सद्धर्मवतो धर्मबलाल्लोको भवत्येव हरीच्छया विशिष्टपुरुषोत्पत्तये देवैर्हविर्नाहृतम् । अङ्गस्यापि बालहत्यादिदोपादनपत्यत्वादि कल्प्यत इति ज्ञायते तदुक्तम् "अनपत्योऽपि सद्धर्मा लोकजिन्नात्रसंशयः । देवैस्तु पृथुजन्मार्थे हविरङ्गस्य नो हृतमि"ति ॥ ३३ ॥ ❀ ❀ न केवलं हरिपूजया पुत्रकामस्य पुत्रावाप्तिस्तत्तत्कामेन तत्तदवाप्तिरपि स्यादित्याह । तांस्तानिति । फलाकांक्षानुसारेण पूजापि तादृशीति भावेनाहुः आराधित इति ॥ ३४ ॥ ❀ ❀ हितमुक्त्वा ते तूष्णीमभूवन्किंनेत्याह इतीति । प्रजातये संतत्यै शिपिविष्टो नाम पुत्रकामेष्टिदेवता हरेरूपान्तरम् अत एव "शिपिविष्टस्तु खलतौ दुश्चर्मणि महेश्वरे" इत्यन्यवृत्तिनिवारणाय विष्णव इति ॥ ३५ ॥ ❀ ❀ तस्मान्निरुप्तपुरोडाशात् ॥ ३६ ॥ ❀ ❀ अञ्जलिनौदनमिति पाठः ॥ ३७ ॥ ❀ ❀ पुमांसं सूत इति पुंसवनं पायसमुपावृत्ते प्राप्ते अप्रजाः पुत्ररहिता ॥ ३८ ॥ ❀ ❀ बाल एव कौमारवया एव अधर्मांशेनोद्भवो यस्य तथा तं मातामहं मातुः पितरं मृत्युनामानमसुरवरमनुव्रत इतिं यत्तेन स पुरुषोऽधार्मिको धर्मविरुद्धकर्मकृदभूदित्यनेन विशेषणेन धर्मांशोद्भवो मृत्युरन्योऽस्तीति रहस्यमवगन्तव्यं तदुक्तं "मृत्युर्देवो यमभ्राता वेनमातामहोऽसुर" इति ॥ ३९ ॥ ❀ ❀ किंनामायं बाल इत्यतस्तत्कर्मानुसृतं नाम लोका अरुरुवन्नित्याह । सशरासनमिति । वेनयति पीडयतीति वेनः "पीडां वेनेति च प्राहुर्वेनोऽसौ पीडनादभूत्" इति वचनादसाधुर्दुर्जनः ॥ ४० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

नरदेव ! भवतो नावद्यं किञ्चिदास्थितं, अस्त्येकं प्राक्तनावद्यमिति कचित् पाठः चित्सुखसम्मतश्च । प्राक्तनाऽवद्यं जन्मान्तरीयापराध इति व्याख्यानात् ॥ ३१–४२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

भागधेयानि भागरूपाणि धेयानि पत्रेपु धार्याणि हवींषि ॥ ३३–३४ ॥ ❀ ❀ पुरोडाशं यज्ञियद्रव्यं निरवपन्नदुः । शिपिषु ,ग्रुपु यज्ञरूपेण प्रविष्टाय । तथाच श्रुतिः "यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति" इति ॥३५–३८॥ ❀ ❀ तेनेति । मातृदोषादधार्मिकोऽपि विष्णुयज्ञोद्भूतत्वात् पितुर्वैराग्यकारणीभूतत्वेन पितुरुपकारकः । पृथुजनकत्वेन तद्यशो वर्द्धितञ्च बभूवेति ज्ञेयम् ॥ ३९ ॥ ❀ ❀ तं दूरादेव दृष्ट्वा वेनोऽसावस्मत्प्राणघाती समेतीत्यरौत् चुक्रोश ॥ ४० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

स बाल एव । अधर्मांशोद्भवं मातामहं सुनीथापितरं मृत्युं यतोऽनुव्रतस्तेनाधार्मिकोऽभवत् ॥ ३१–३९ ॥ ❀ ❀ अरौत् भयाच्चुक्रोश ॥ ४० ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं राज्ञा पृष्टाः सदसस्पतय उत्तरमाहुः—नरदेवेति । नरदेवेहास्मिन् जन्मनि भवतोऽघं मनाक् ईषदपि न स्थितं कथंचित्कस्यचिज्ज्ञातस्याप्यघस्य सद्य एव प्रायश्चित्तादिना क्षालनात् । इति स्वभावतस्तु राज्ञो धार्मिकत्वं सूचितम् । परंतु प्राक्तनं पूर्वजन्मनि भवं प्रमादाद्यथाकालं स्वधर्माननुष्ठानजनितमेकमस्तीति कार्यद्वारा ज्ञायते यत् यस्मात्त्वमिहास्मिन् जन्मनि ईदृक् स्वभावतो धार्मिकोपि विवाहद्वारा अधर्मांशेन मृत्युना संबद्धस्तत्पुत्र्यां सुनीथायामासक्तश्चेति । किंच वंशस्य धर्ममूलत्वात्तदभावादप्यघं ज्ञायत इत्यभिप्रेत्याहुः—अप्रज इति ॥ ३१ ॥ ❀ ❀ ननु प्राक्तनस्याप्यघस्यानेनाश्वमेधेनैव निवृत्तिर्भविष्यति 'सर्वं पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते' इति श्रुतौ तेनैव सर्वपापनिवृत्तेरुक्तत्वादित्याशङ्क्याहुः—तथेति । 'नापुत्रस्य लोकोस्ति' इति श्रुतेर्मर्यादानुसारेण यावत्तव पुत्रोत्पत्तिर्न भविष्यति तावद्देवाः स्वभागं न ग्रहीष्यन्ति । न च तेन विना यागसिद्धिर्न च तया विना पापनिवृत्तिर्नच तद्विना पुत्रोत्पत्तिरित्यन्योन्याश्रयान्नानेनाधिदैविकस्य बलिष्ठस्य दोषस्य निवृत्त्याभिलषितकार्यसिद्धिरतो यथा देवाः स्वभागान् गृह्णीयुस्तथा प्राक्तनदोषनिवृत्तिपूर्वकमात्मानं सुप्रजत्वं साधय एवमेव भद्रं भविष्यति । तत्साधने त्वं समर्थोसीति सूचयन्ति—हे नृप इति । तत्कथं साधनीयमित्यपेक्षायामाहुः—इष्ट इति । ते तव पुत्रकामनावतस्त्वयेष्टो यज्ञेन पूजितो यज्ञभुक् यज्ञभोक्ता भगवान् पुत्रं दास्यति । अतस्त्वया वैष्णवो यागः प्रवर्त्तनीय इति शेषः ॥ ३२ ॥ ❀ ❀ तथा सति दिवौकसो देवा अपि स्वभागान् ग्रहीष्यन्ति । तत्र हेतुमाहुः—

यदिति। यत् यस्मात् यज्ञपुरुषो हरिरेव साक्षात्त्वयापत्याय वृतः स्यान्नहि तस्मिन् प्रसन्ने तदङ्गभूता देवा अन्यथा कर्तुं शक्नुवन्तीति भावः ॥ ३३ ॥ ❀ ❀ ननु यदि देवा इव हरिरपि न प्रसीदेत्तदा किमपि कार्यं न सिद्धयेत्त-दीयोपि यागः प्रवर्त्तितो निष्फलः स्यादित्याशङ्क्याहुः—तांस्तानिति। आराधको जनो यान्यान् कामान् कामयत इच्छति तांस्तान् कामांस्तस्मै हरिर्दद्यात्। कुत एवं यतो यथा यस्य कामनया एष हरिराराधितो भवति पुंसां तथा तस्यैव फलस्योदयः प्राप्तिर्भवतीति शास्त्रे नियमः। तथाच भगवदाराधनार्थं यज्ञेनैव पूर्वदोषनिवृत्तिः पुत्रोत्पत्तिर्देवानां स्वभागग्रहणं तव मोक्षश्चेति सर्वं फलं सेत्स्यत्यतो नास्य यागस्य वैफल्यमिति भावः ॥ ३४ ॥ ❀ ❀ ततः किं जातमित्यपेक्षायामाह—इतीति। इत्येवं सदसस्पतीनां वाक्यं श्रुत्वा विप्रा ऋत्विजो व्यवसिताः भगवद्यज्ञप्रवर्त्तने कृतनिश्चयाः सन्तस्तस्याङ्गस्य राज्ञः प्रजातये पुत्रोत्पत्तये शिपिविष्टाय 'यज्ञो वै विष्णुः पशवः शिपिर्यज्ञपशुषु प्रतितिष्ठति' इति श्रुतेः यज्ञरूपेण शिपिषु पशुषु प्रविष्टाय विष्णवे पुरोडाशं हविर्विशेषं निरवपन् विष्णूद्देशेन हविः संपाद्य होमं कृतवंत इत्यर्थः ॥ ३५ ॥ ❀ ❀ तदा च हिरण्मयेन पात्रेण सिद्धं पक्वं पायसमादाय हेममाल्यमलाम्बरः अमले शुद्धे अम्बरे यस्य स तथाभूतः पुरुषस्तस्माद्धोमाधारभूतादग्नेरुत्तस्थौ निस्सृत इत्यन्वयः ॥ ३६ ॥ ❀ ❀ स राजा विप्रानुमतः विप्रैरनुज्ञातः अञ्जलिना ओदनं पयसि पक्वं पायसं गृहीत्वा मुदा हर्षेण युक्तः अवघ्राय तत्पत्न्यै सुनीथायै प्रादात्। उदारधीः उदारा दाने असङ्कुचिता सर्वोपकारिणी धीर्यस्य स तथेत्यनेन सर्वेषामृ-त्विगादीनां भूरिदानसंमानादिना संतोषपूर्वकं तेन यज्ञसमाप्तिः कृतेति सूचयति ॥ ३७ ॥ ❀ ❀ सा सुनीथा राज्ञी पूर्वमप्रजा पुत्ररहिता सती तत् पुंसवनं पुमांसं पुत्रं सूतेऽनेनेति तथा तत् पायसं प्राश्य अतिहर्षेण भुक्त्वा पत्युः सकाशाद्गर्भमादधे धृतवती। ततश्च सूतिकाले उपावृत्ते प्राप्ते सति कुमारं सुषुवे जनयामासेत्यन्वयः ॥ ३८ ॥ ❀ ❀ स पुरुषो यतोऽङ्गस्य राज्ञः प्राक्तना-धर्मांशेन जातोऽतो बाल एव बाल्यावस्थात एवाधर्मांशोद्भवं स्वमातामहं मृत्युमेवानुव्रतः अनुसृतः तदिच्छानुसरणशीलो जातस्तेन हेतुनाऽधार्मिकः धर्मविरुद्धकर्मकृदभवदित्यन्वयः ॥ ३९ ॥ ❀ ❀ तत्कृतमधर्ममेव दर्शयति—स इति द्वाभ्याम्। वनं गतः स बालो वनगोचरः सन् मृगयुर्लुब्धकश्च सन् शरासनं धनुरुद्यम्य आकृष्य दीनान् मृगान् हन्ति स्मेत्यन्वयः। अनेन तस्य निर्दयत्वं सूचितम्। तत्र हेतुमाह—असाधुरिति दुर्जन इत्यर्थः। अत एव तं दृष्ट्वा वेनोसौ आयातीति सर्वोपि जनः अरौत् चुक्रोश ॥ ४० ॥

### भाषानुवाद:

सदस्योंने कहा—राजन्! इस जन्ममें तो आपसे तनिक भी अपराध नहीं हुआ; हाँ, पूर्वजन्मका एक अपराध अवश्य है, जिसके कारण आप ऐसे सर्वगुण-सम्पन्न होनेपर भी पुत्रहीन हैं ॥ ३१ ॥ ❀ ❀ आपका कल्याण हो! इसलिये पहले आप सुपुत्र प्राप्त करनेका कोई उपाय कीजिये। यदि आप पुत्रकी कामनासे यज्ञ करेंगे, तो भगवान् यज्ञेश्वर आपको अवश्य पुत्र प्रदान करेंगे ॥ ३२ ॥ ❀ ❀ जब सन्तानके लिये साक्षात् यज्ञपुरुष श्रीहरिका आवाहन किया जायगा, तब देवतालोग स्वयं ही अपना-अपना यज्ञ-भाग ग्रहण करेंगे ॥ ३३ ॥ ❀ ❀ भक्त जिस-जिस वस्तुकी इच्छा करता है, श्रीहरि उसे वही-वही पदार्थ देते हैं। उनकी जिस प्रकार आराधना की जाती है, उसी प्रकार उपासकको फल भी मिलता है ॥ ३४ ॥ ❀ ❀ इस प्रकार राजा अङ्गको पुत्रप्राप्ति करनेका निश्चय कर ऋत्विजोंने पशुमें यज्ञरूपसे रहनेवाले श्रीविष्णुभगवान्के पूजनके लिये पुरोडाश नामक चरु समर्पण किया ॥ ३५ ॥ ❀ ❀ अग्निमें आहुति डालते ही अग्निकुण्डसे सोनेके हार और शुभ्र वस्त्रोंसे विभूषित एक पुरुष प्रकट हुए; वे एक स्वर्णपात्रमें सिद्ध खीर लिये हुए थे ॥ ३६ ॥ ❀ ❀ उदारबुद्धि राजा अङ्गने याजकोंकी अनुमतिसे अपनी अञ्जलिमें वह खीर ले ली और उसे स्वयं सूँघकर प्रसन्नतापूर्वक अपनी पत्नीको दे दिया ॥ ३७ ॥ ❀ ❀ पुत्रहीना रानीने वह पुत्रदायिनी खीर खाकर अपने पतिके सहवाससे गर्भ धारण किया। उससे यथासमय उसके एक पुत्र हुआ ॥ ३८ ॥ ❀ ❀ वह बालक बाल्यावस्थासे ही अधर्मके वंशमें उत्पन्न हुए अपने नाना मृत्युका अनुगामी था (सुनीथा मृत्युकी ही पुत्री थी); इसलिये वह भी अधार्मिक ही हुआ ॥ ३९ ॥ ❀ ❀ वह दुष्ट बालक धनुष-बाण चढ़ाकर वनमें जाता और व्याधेके समान बेचारे भोले-भाले हरिणोंकी हत्या करता। उसे देखते ही पुरवासी लोग 'वेन आया! वेन आया!' कहकर पुकार उठते ॥ ४० ॥

**आक्रीडे क्रीडतो बा[1]लान् वयस्यानतिदारुणः। प्रसह्य निरनुक्रोशः पशुमारममारयत् ॥ ४१ ॥**
**तं विचक्ष्य खलं पुत्रं शासनैर्विविधैर्नृपः। यदा न शासितुं कल्पो भृशमासीत्सुदुर्मनाः ॥ ४२ ॥**
**प्रायेणाभ्यर्चितो देवो येऽप्रजा गृहमेधिनः। कदपत्यभृ[2]तं दुःखं ये न विन्दन्ति दुर्भरम् ॥ ४३ ॥**

१. प्राचीने पाठे 'बालान्वयस्यानतिदारुणः।' अयं खण्डितोंऽशः। २. प्रा० पा० —त्यर्श्रितं।

यतः पापीयसी कीर्तिरधर्मश्च महान्नृणाम् । यतो विरोधः सर्वेषां यत आधिरनन्तकः ॥ ४४ ॥
कस्तं प्रजापदेशं वै मोहबन्धनमात्मनः । पण्डितो बहु मन्येत यदर्थाः क्लेशदा गृहाः ॥ ४५ ॥
कदपत्यं वरं मन्ये सदपत्याच्छुचां पदात् । निर्विद्येत गृहान्मर्त्यो यत्क्लेशनिवहा गृहाः ॥ ४६ ॥
एवं स निर्विण्णमना नृपो गृहान्निशीथ उत्थाय महोदयोदयात् ।
अलब्धनिद्रोऽनुपलक्षितो नृभिर्हित्वा गतो वेनसुवं प्रसुप्ताम् ॥ ४७ ॥
विज्ञाय निर्विद्य गतं पतिं प्रजाः पुरोहितामात्यसुहृद्गणादयः ।
विचिक्युरुर्व्यामतिशोककातरा यथा निगूढं पुरुषं कुयोगिनः ॥ ४८ ॥
अलक्षयन्तः पदवीं प्रजापतेर्हतोद्यमाः प्रत्युपसृत्य ते पुरीम् ।
ऋषीन् समेतानभिवन्द्य साश्रवो न्यवेदयन् पौरव भर्तृविप्लवम् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥

अन्वयः—अतिदारुणः निरनुक्रोशः आक्रीडे क्रीडतः वयस्यान् बालान् प्रसह्य पशुमारम् अमारयत् ॥ ४१ ॥ ❀ ❀ नृपः तम् खलम् पुत्रम् विचक्ष्य विविधैः शासनैः शासितुम् यदा न कल्पः भृशं सुदुर्मनाः आसीत् ॥ ४२ ॥ ❀ ❀ ये गृहमेधिनः अप्रजाः ये कदपत्यभृतम् दुर्भरम् दुःखम् न विंदन्ति प्रायेण देवः अभ्यर्चितः ॥ ४३ ॥ ❀ ❀ यतः पापीयसी कीर्तिः नृणाम् महान् अधर्मः यतः सर्वेषाम् विरोधः च यतः अनन्तकः आधिः ॥ ४४ ॥ ❀ ❀ यदर्थाः गृहाः क्लेशदाः तम् प्रजापदेशम् आत्मनः मोहबन्धनम् कः पण्डितः वै बहु मन्येत ॥ ४५ ॥ ❀ ❀ सदपत्यात् कदपत्यम् वरम् मन्ये यत् मर्त्यः शुचाम् पदात् गृहात् निर्विद्येत गृहाः क्लेशनिवहाः ॥ ४६ ॥ ❀ ❀ एवम् निर्विण्णमनाः अलब्धनिद्रः सः नृपः महोदयोदयात् गृहात् निशीथे उत्थाय नृभिः अनुपलक्षितः प्रसुप्ताम् वेनसुवम् हित्वा गतः ॥ ४७ ॥ ❀ ❀ पुरोहितामात्यसुहृद्गणादयः प्रजाः निर्विद्य गतम् पतिम् विज्ञाय अतिशोककातराः यथा कुयोगिनः निगूढम् पुरुषम् उर्व्याम् विचिक्युः ॥ ४८ ॥ ❀ ❀ पौरव प्रजापतेः पदवीम् अलक्षयन्तः हतोद्यमाः ते पुरीम् प्रत्युपसृत्य समेतान् ऋषीन् अभिवन्द्य साश्रवः भर्तृविप्लवम् न्यवेदयन् ॥ ४९ ॥

इति त्रयोदशोऽध्यायः ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

आक्रीडे क्रीडास्थाने बालान्पशूनिवामारयत् ॥ ४१ ॥ ❀ ❀ विचक्ष्य दृष्ट्वा ॥ ४२ ॥ ❀ दुर्मनसस्तस्य कुपुत्रनिंदावाक्यान्याह प्रायेणेति त्रिभिः । अप्रजासो ये तैरभ्यर्चितः । तत्र हेतुः । कुत्सितैरपत्यैः संभृतं दुर्भरं धारयितुमशक्यं दुःखं ये न विंदंति ॥ ४३ ॥ ❀ ❀ सर्वेषां सर्वैः सह आधिर्मानसी व्यथा ॥ ४४ ॥ ❀ ❀ तं प्रजापदेशं पुत्रनाममात्रमप्यात्मनो मोहेन बंधनम् । यदर्था यन्निमित्ताः क्लेशदा गृहा भवंति ॥ ४५ ॥ ❀ ❀ इदानीं निर्वेदहेतुत्वेन कुत्सितमेवापत्यमभिनंदति । कदपत्यमिति । शुचां पदाद्विरहादौ शोकानां स्थानात् । वरत्वे हेतुः निर्विद्येतेति । तत्कुतः यद्यतः । कदपत्यात् गृहाः क्लेशनिवहा भवंति ॥ ४६ ॥ ❀ ❀ महतामुदयानां विभूतीनामुदयो यस्मिंस्तस्माद् गृहाद्गतः या वेनं सूते स ताम् ॥ ४७ ॥ ❀ ❀ प्रजाः पुरोहितादयश्च विचिक्युरन्वेषितवंतः । तं तत्रैव संतमपि नापश्यन्निति दृष्टांतेनाह । यथेति ॥ ४८ ॥ ❀ ❀ साश्रवो रुदंतः । भर्तुर्विप्लवं नाशमदर्शनमित्यर्थः ॥ ४९ ॥

इति श्रीभा० म० चतुर्थे टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

निरनुक्रोशो निर्दयः ॥ ४१ ॥ ❀ ❀ सुदुर्मना अत्याकुलचेताः ॥ ४२ ॥ ❀ ❀ तत्र देवाभ्यर्चने । संभृतं संपूर्णीकृतम् ॥ ४३ ॥ ❀ ❀ यतः कदपत्यात् । पापीयसी कीर्त्तिर्निन्दाऽहो यस्यायं सुरापो दुर्व्यसनी पुत्रः सोऽपि मंदभाग्य इत्येवंरूपा भवतीत्यर्थः । पापसंगान्महानधर्मो महापातकी च स्यात् 'तत्संसर्गी च पञ्चमः' इति स्मृतेः । ये तं निन्दंति तैर्विरोधोऽपि अनंतको यावज्जीवव्यापी ॥ ४४ ॥ ❀ ❀ वस्तुतो दुःखसमुद्रमेव पुत्रनामधरमित्यर्थः । तस्माल्लोकलज्जामनस्तापादिबहुलेभ्यो गृहेभ्यो निस्सृत्य क्वचिदलक्षिते प्रदेशे शाकमूलादिवृत्तिरष्टावेव यामान्भगवन्तं भजन्नवशिष्टमायुस्त्यार्थी

कुर्वन् कृतार्थीभविष्यामीति निश्चिकाय ॥ ४५ ॥ ❀ ❀ निश्चित्य च स्वनिर्वेदामृतप्राप्तिकारणं पुत्रमेव स्मृत्वा भगवतैव परमकृपया विषयभोगांधं मां स्वचरणांतिकं बलान्निनीषुणा पुत्रोयं मह्यं दत्त इत्याह—कदपत्यमिति। शुचां पदाद् गृहादिति वा ॥ ४६ ॥ ❀ ❀ तां सुनीथां, प्रसुप्तामिति। यदैव सा स्वपिति स्म तदैव स्वस्य वेषांतरं कृत्वेत्यर्थः। निशीथेर्द्धरात्रेऽनुपलक्षितोऽदृष्टः 'लक्ष-दर्शनांकनयोः' इति ॥ ४७ ॥ ❀ ❀ तं नृपं, तत्रैव नगरे एव, निलीय वसंतमपि कुयोगिनो योगच्छन्नेनेंद्रियतर्पणपराः ॥ ४८ ॥ ❀ ❀ इत्यर्थं इति। णशधातोरदर्शनार्थत्वादिति भावः। पौरवेति। पूरुर्यथा भवद्वंशप्रवर्त्तकः स्वभार्यां देवहूतिं राज्येन सह त्यक्त्वा ययौ तथायमपीति नात्र विस्मय इति भावः ॥ ४९ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

पशुमारमिति क्रियाविशेषणम् ॥ ४१–४२ ॥ ❀ ❀ प्रायेणेति दुःखोक्तिमात्रम्। अप्रजगृहमेधिनां नियमेन यदर्चनाभावात् कुपुत्रभावमात्रस्य तत्फलस्वाभावाच्च न विन्दन्ति न लभन्ते ॥ ४३ ॥ ❀ ❀ यत इति युग्मकम्। यतः ममतास्पदत्वेन स्नेहविषयात् ॥ ४४–४५ ॥ ❀ ❀ अनिष्टाशङ्कीनि बन्धुहृदयानीति न्यायाच्छुचां पदादिति ॥ ४७–४८ ॥ ❀ ❀ विप्लवशब्दस्य नाशवाचकत्वात् नाशशब्दस्य धात्वर्थपुरस्कृतयोगवृत्त्याऽदर्शनवाचकत्वं क्लेशेनोपलब्धमत इत्यर्थ इत्युक्तम् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीराधारमणदासगोस्वामिविरचितदीपिन्याख्यव्याख्यायां त्रयोदशोऽध्यायः ॥ १३ ॥

## श्रीमद्वीरराघवव्याख्या

आक्रीडे क्रीडास्थाने वयस्यान् यूनोऽपि बालान् दारुणः क्रूरः अत एव निरनुक्रोशः कृपारहितः सन् पशुमारममारयत् पशूनिवामारयत् ॥ ४१ ॥ ❀ ❀ स नृपः अङ्गः खलं दुरात्मानं पुत्रं नानाविधैः शासनैः सामाद्युपायैर्विचक्यानुशास्येत्यर्थः। यदा भृशं नितरां सुदुर्मनाः दुःखितमनाः आस ॥ ४२ ॥ ❀ ❀ तस्य पुत्रनिन्दावाक्यान्याह त्रिभिः। ये गृहमेधिनो गृहाश्रमिणः अप्रजा अपुत्रा ये च पुत्रिणोऽपि कुत्सितापत्यकृतं दुर्भरं धारयितुमशक्यं दुःखं न विन्दन्ति न लभन्ते तैर्भवान् देवः प्रायेणाभ्यर्चितः ॥ ४३ ॥ ❀ ❀ यतः कदपत्यात्पापीयसी कीर्तिः अपकीर्तिर्महानधर्मश्च नृणां भवेत् यथा यतः कदपत्यात्सर्वेषां विरोधः अनन्तोऽपारः आधिः मानसी व्यथा च जायते ॥ ४४ ॥ ❀ ❀ तं प्रजापदेशं पुत्रनाममात्रमपि आत्मनो मोहेन बन्धनं कः पण्डितो बहु मन्येत, यदर्थाः यत्पुत्रापदेशनिमित्ताः क्लेशसंपादका गृहाः भवन्ति पुत्रापदेशमात्रमपि क्लेशकरगृहादिहेतुत्वेनात्मनो बन्धकत्वात्पण्डितो न बहु मन्येतेत्यर्थः ॥ ४५ ॥ ❀ ❀ इदानीं निर्वेदहेतुत्वेन कुत्सितमेवापत्यमभिनन्दति कदपत्यमिति। शुचां पदात् शोकानां स्थानात् उत्तरोत्तरं गृहासक्तिजननद्वारा संसारदुःखहेतुत्वादिति भावः। सदपत्यात्कदपत्यं वरं श्रेष्ठं मन्ये। वरत्वे हेतुः मर्त्यो गृहान्निर्विंद्येत निर्वेदं प्राप्नुयात् यतः कदपत्यात् गृहाः शोकावहाः भवन्ति। कदपत्ये परमिति पाठे तस्य परत्वे वैराग्यहेतुत्वात् ॥ ४६ ॥ ❀ ❀ एवमुक्तप्रकारेण निर्विण्णमनाः सः नृपः अङ्गः महतामुदयानां विभूतीनामुदयः समृद्धिर्यस्मिन् तस्माद् गृहान्निशीथे उत्थाय अलब्धनिद्रस्त्यक्तनिद्रः प्रसुप्तां वेनसुवं वेनस्य जननीं सुनीथां हित्वा नरैरनुपलक्षितः अदृष्टः गतः वनं प्रतीति शेषः ॥ ४७ ॥ ❀ ❀ पुरोहितादयः सर्वाः प्रजाः पतिं राजानं निर्विंद्य गतं निर्वेदं प्राप्य गतं विज्ञाय अत एवात्यन्तशोकेन कातराः सन्तः उर्व्यां पृथिव्यां विचिक्युः अन्वेषणं चक्रुः, न तु तत्रैव वसन्तमपि नापश्यन्निति दृष्टान्तेनाह यथेति। निरूढं हृदये वसन्तमपि तिरोहितं पुरुषं परमपुरुषं यथा कुयोगिनोऽन्वेषयन्ति तथेति ॥ ४८ ॥ ❀ ❀ प्रजापतेः राज्ञः पदवीं मार्गमलक्षयन्तोऽजानन्तः अत एव हतप्रयत्नाः ते पुरोहितादयः पुरीं प्रत्युपसृत्य आगत्य हे पौरव ! विदुर ! साश्रवः शोकाश्रुसहिताः समेतान् संघीभूतानृषीन् प्रणम्य भर्तृविप्लवं नाशमदर्शनं न्यवेदयन् विज्ञापितवन्तः ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्य्यकृतायां श्रीभागवतचंद्रचंद्रिकायां त्रयोदशोऽध्यायः ॥ १३ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

आक्रीडे क्रीडास्थाने पशुमारमिति लुप्तोपमा यथा पशुमारो गोघ्नश्चाण्डलस्तथेति ॥ ४१ ॥ ❀ ❀ स्वशासनमुल्लङ्घ्य वर्तमानं पुत्रमवलोक्य पित्रा किमकारीति तत्राह तं विलक्ष्येति। 'दुरशोभनदुःखयोरि'त्यनेन सुष्ठु दुःखितमनाः ॥ ४२ ॥ ❀ ❀ प्रलापात् दुःखं चावगम्यत इत्याह प्रायेणेति। ये गृहमेधिनोऽप्रजा एवं दुर्भरं कदपत्यकृतं दुःखं न विन्दन्ति तैः सर्वैरति प्रायेण देवो नारायणोऽभ्यर्चित इत्यन्वयः ॥ ४३ ॥ ❀ ❀ अपकीर्त्यादिदोषहेतुत्वात्पण्डितो नरकत्राणाहेतुत्वात्साधुरयं पुत्र इति बहुमानं न करोतीत्याह। यत इति ॥ ४४–४५ ॥ ❀ ❀ न केवलं दुःखमेव कदपत्यात्किन्तु विवेकिनः प्रयोजनं चास्तीत्याह

कदपत्यमिति। क्लेशसमूहेनातुरो मर्त्यः स्वगृहान्निर्विर्येतेति यस्माद्वित्तैषणादिशुचां पदात्सदपत्यात्कदपत्यं वैराग्यहेतुत्वात्साधु मन्ये इत्यन्वयः। हलन्तादपि टापश्चेति वचनाच्छुचेति रूपं साधु ॥ ४६ ॥ ॐ ॐ नन्वत्र शोकान्मरणं देशान्तरगमनं वा स्यात् तत्र किमनेनाकारीति तत्राह। एवं स इति। महानुदयो महती विभूतिस्तस्या उदयादुद्रेको यस्मिंस्तत्तथा तस्मात् 'लक्षदर्शनाङ्कनयोरि'-ति धातोरनुपलक्षितोऽदृष्टः॥ ४७ ॥ ॐ ॐ जलादौ मृतो दूरं गतो वेति संशये तयोरेकं निश्चित्य किमकार्षुस्तदीया इति तत्राह विज्ञायेति। विचिक्युरन्विष्यादृष्टवन्तः हृदि गूढं पुरुषं हरिम् ॥ ४८ ॥ ॐ ॐ अन्विष्यादृष्टवन्तः किमकुर्वन्नित्यत आह। अलक्षयन्त इति। पौरव! विदुर! साश्रवः बाष्पसहिताः साधीयसो विष्णुयाजिनोऽङ्गस्यैवं दुष्टपुत्रोत्पत्तिस्तन्निमित्तेन विप्लवश्च कथमभूदितीदं चोद्यं न "अनपत्यत्वकर्मासौ बालहत्याकृतेः पुरा। अवो दुष्टोऽभवत्पुत्र इष्टो विष्णुरतः पृथुः॥" इति ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे विजयध्वजकृतपदरत्नावल्यां त्रयोदशोऽध्यायः ॥ १३ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

प्रायेणेति दुःखोक्तिमात्रम् ॥ ४३ ॥ ॐ ॐ यत इति युग्मकं गृहाणां दोषमाह। तदिति ॥ ४४–४९ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे त्रयोदशोऽध्यायः ॥ १३ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

पशुमारं पशूनिवामारयत् ॥ ४१–४२ ॥ ॐ ॐ ये अप्रजा अनपत्यास्तैः अभ्यर्चितः। तत्र हेतुः कदपत्येन भृतं पूर्णीकृतं दुर्भरं धारयितुमशक्यं दुःखं ये न विन्दन्ति ॥ ४३–४४ ॥ ॐ ॐ प्रजापदेशं नाम्नैव प्रजां वस्तुतस्त्वात्मनो दुःखसमुद्रमित्यर्थः। तस्माल्लोकलज्जामनस्तापादिबहुलेभ्यो गृहेभ्यो निःसृत्य कचिदलक्षिते प्रदेशे शाकमूलफलादिवृत्तिरष्टावेव यामान् भगवन्तं भजन्नवशिष्टमायुरव्यर्थीकुर्वन् कृतार्थीभविष्यामीति निश्चिकाय ॥ ४५ ॥ ॐ ॐ निश्चित्य च स्वनिर्वेदामृतप्राप्तिकारणं पुत्रमेव स्मृत्वा भगवतैव परमकृपया विषयभोगान्धं मां स्वचरणान्तिकं बलान्निनीषुणा पुत्रोऽयं मह्यं दत्त इत्याह। कदपत्य-मिति ॥ ४६ ॥ ॐ ॐ महोदयस्य महासम्पत्तेरुदयो यत्र तस्मात्। वेनं सूते वेनसूस्तां सुनीथां प्रसुप्तामिति यदैव सा प्रकर्षेण स्वपिति स्म तदैव स्वस्य वेशान्तरं कृत्वेत्यर्थः॥ ४७ ॥ ॐ ॐ पुरुषं परमात्मानं निगूढमिति दृष्टान्तेन तस्मिन् दिने तत्रैव स्वपुर्यां राजा निगूढ एवासीदिति लभ्यते ॥ ४८ ॥ ॐ ॐ हे पौरव! विदुर! भर्तुर्विप्लवं नाशमदर्श-नमित्यर्थः ॥ ४९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। चतुर्थे त्रयोदशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १३ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

आक्रीडे बालविहारस्थले क्रीडतः बालान् वयस्यान् मित्रत्वेन संगतान् पशुमारं यज्ञे कण्ठपीडनादिना पशूनिव अमार-यत् ॥ ४१–४२ ॥ ॐ ॐ कदपत्यभृतं कुत्सितैरपत्यैर्भृतं दुर्भरं धारयितुमशक्यं दुःखं न विन्दन्ति न लभन्ते ॥ ४३ ॥ ॐ ॐ यतः खलात् पुत्रात् ॥ ४४ ॥ ॐ ॐ प्रजापदेशं प्रजानाममात्रेणोपस्थितम् आत्मनो मोहेन बन्धनम्। यदर्थापन्निमित्ताः गृहाः क्लेशदाः सन्ति ते पुत्रं कः पण्डितः सन् बहु मन्येत आद्रियेत ॥ ४५ ॥ ॐ ॐ सारग्राहिगुणवतामात्मन आश्रित्याह। कदपत्यमिति। शुचां शोकानां पदात् मूलात् ॥ ४६ ॥ ॐ ॐ महोदयानां महासंपदामुदयो यस्मिन् तस्मात् वेनं सूते इति वेनसूस्ताम् ॥ ४७ ॥ ॐ ॐ विचिक्युः अन्वेषणं चक्रुः। पुरुषं परमेश्वरम् ॥ ४८ ॥ ॐ ॐ ते पौराः पुरीं प्रत्युपसृत्य पुनरागत्य भर्तृविप्लवं स्वाम्यदर्शनम् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

आक्रीडे क्रीडास्थाने क्रीडतो वयस्यान् समानवयस्कान् बालान् पशुमारं यथा भवति सौनिका यथा पशून् मारयन्ति तथा अमारयत्। ननु तुल्यवयस्कान् कथमेवं मारयितुं शक्त इत्याशङ्क्य तस्य बलाधिक्यं सूचयन्नाह—प्रसह्येति। बलात्का-रेणेत्यर्थः। बलसत्त्वेपि मारणे दयया प्रतिबन्धः स्यादपि परंतु सैव तस्य नास्तीत्याह—निरनुक्रोश इति। दयोत्पत्तियोग्यतैव तस्य नास्तीत्याह—दारुण इति। कठिनचित्त इत्यर्थः॥ ४१ ॥ ॐ ॐ स नृपोऽङ्गस्तं वेनं स्वपुत्रं खलं प्राणिपीडातिरतं विचक्ष्य दृष्ट्वा विविधैर्नानाप्रकारैस्ताडनतर्जनबन्धनानुपदानादिभिः शासनैः शिक्षणैर्यदा शासितुं शिक्षितुं शिक्षया सन्मार्गे नेतुं

न कल्पः समर्थो न जातस्तदा भृशमत्यन्तं सुदुर्मनाः दुःखितचित्त आसीदित्यन्वयः ॥ ४२ ॥ ❀ ❀ एवं खिन्नः सन् सामान्यतः कुपुत्रनिन्दां कृतवान् प्रायेणेति त्रिभिः । गृहमेधिनो गृहस्थाः सर्वेऽपि ये अप्रजाः पुत्रादिरहितास्तैर्देवो भक्तदुःखनिवर्त्तको भगवान् प्रायेण बाहुल्येनाभ्यर्चितः प्रेम्णा पूजितः । ननु कथमेवमुच्यते लोके प्रजार्थप्रयत्नदर्शनात् त्वयापि प्रयत्नेनोत्पादितत्वात्तत्राह—कदपत्येति । कुत्सितैरपत्यैः भृतं स्वस्मिन् धृतं दुर्भरं धारयितुमशक्यं दुःखं ये न विन्दन्ति न लभन्ते ॥ ४३ ॥ ❀ ❀

यतो येभ्यः कुत्सितापत्येभ्यः कन्यापुत्रलक्षणेभ्यो नृणां पित्रादीनां पापीयसी कीर्तिर्दुर्यशो भवति । तत्र हेतुमाह—यत इति । यस्मात्कदपत्यनिमित्तात् सर्वेषां सर्वैः प्राणिभिः सह विरोधो भवति । यद्यपि पित्रादिषु कश्चिदपि दोषो नास्ति तथापि तेषां स्नेहवशात्कदपत्यमपि त्यक्तुमशक्यत्वेन कदपत्यापराधं तेष्वारोप्य तैर्विरोधं च कृत्वा लोकास्तन्निन्दामेव कुर्वन्त्यतः कदपत्यवतामयं लोको दुर्यशसा नष्टो भवतीति भावः । तत्संसर्गेण तत्कृताधर्मसंसर्गात्परलोकोपि नश्यत्येवेत्यभिप्रेत्याह—अधर्मश्च महानिति । एवमुभयलोकस्य नष्टत्वात्तेषां मनस्यनन्तं दुःखमेव, न सुखलेशोपीत्याह—यत आधिरिति । आधिर्मानसी पीडा ॥ ४४ ॥ ❀ ❀

प्रजापदेशं प्रजेति कथनमात्रं यत्र वस्तुतस्त्वात्मनः स्वस्य मोहबन्धनमहंताममतात्मकमोहद्वारा संसारोत्पादकमेव । यदर्थाः यन्निमित्ताः गृहाः क्लेशदा भवन्ति पित्राद्यृणापाकरणार्थं हि गार्हस्थ्यस्याङ्गीकारेणापत्योत्पादनं तच्चेत्कुत्सितं जातं तदा तेनर्णापाकरणाभावात्प्रत्युताधर्मापकीर्त्याद्युत्पादनाच्च सर्वमेव गार्हस्थ्यं क्लेशदं भवतीत्यर्थः । अत एव गृहा इति बहुवचनम् । अतः पण्डितश्चेत्तदातद्बहु मन्येत आद्रियेत । मुक्तावुपयोगाभावात्प्रत्युत बन्धहेतुत्वाच्च मूर्खाणामेवापत्यार्थं प्रयत्नो मयापि मौर्ख्येणैव स कृत इति भावः ॥ ४५ ॥ ❀ ❀ एवं धर्मार्थकामविषयिण्या स्थूलदृष्ट्या धर्मादिविरोधित्वेन कदपत्यनिन्दां कृत्वाधुना मोक्षविषयिण्या

सूक्ष्मदृष्ट्या मोक्षोपयोगित्वेन कदपत्यं स्तौति—कदपत्यमिति । सदपत्यात् धर्मादिसद्गुणत्वेनाभिमतान् प्रेमास्पदात् कदपत्यं क्रौर्याधर्मादिदोषवत्त्वेनाभिमतं निन्दास्पदमपत्यमहं वरं श्रेष्ठं मन्ये । तस्य श्रेष्ठत्वे हेतुमाह—यतो मर्त्यो मनुष्यः शुचां पदात् शोकानां स्थानात् गृहात् निर्विद्येत विरक्तो भवेत् । कुतः कदपत्यहेतुका गृहविरक्तिरित्याशङ्क्याह—यदिति । यत् यस्माद्धेतोर्गृहाः गृहसंबंधिनः सर्वेपि जनाः पदार्थाः क्लेशनिवहाः दुःखदाः प्रतिभान्ति । तथाच ततो विरक्तस्तांस्त्यक्त्वा मोक्षार्थं यतते तदा कृतार्थो भवति । सदपत्ये तु स्नेहाऽधिक्यात्तद्धेतोः शोकहेतवोपि गृहाः सुखदाः प्रतिभान्ति । ततस्तत्रासक्तो मोक्षलक्षणपरमपुरुषार्थान् परिभ्रष्टः संसरति ततः । परंपरया मोक्षहेतुत्वात्सदपत्यात्कदपत्यस्य श्रेष्ठत्वमिति भावः ॥ ४६ ॥ ❀ ❀ भगवद्यज्ञानुष्ठानेन भगवत्कृपया प्राक्तनदोषस्य वेनरूपेण जातत्वाच्छुद्धस्य सर्वतो विरक्तस्य मोक्षार्थप्रयत्ने प्राप्ताधिकारस्य तत्प्रतिबन्धकगृहपरित्यागमाह—

एवमिति । स नृपो गृहाद्गत इत्यन्वयः । गमने हेतुमाह—एवं पूर्वोक्तप्रकारेण निर्विण्णं सर्वतो विरक्तं मनो यस्य स तथा । विरक्तो हेतुमाह—अलब्धेति । पुत्रदुराचारनिमित्तशोकान्न लब्धा निद्रापि येन, सुखान्तरं तु दूरतः । न चान्यया कयाचिदनुपपत्त्या ययाविति मन्तव्यमिति सूचयन् गृहं विशिनष्टि—महोदयोदयादिति । महतामुदयानां विभूतीनामुदयो यस्मिंस्तस्मादित्यर्थः ।

नचैवमपि गते वेनो दुराचारं हित्वा सदाचारमङ्गीकृत्य मां संमानपूर्वकमानेष्यतीत्यभिप्रायेण गत इति मन्तव्यम्, मोक्षार्थं प्रयत्नं विधातुमेव गतत्वादिति ज्ञापयितुमाह—निशीथे अर्द्धरात्रसमये नृभिरलक्षितः अज्ञात इति । तथाभिप्रायेण गच्छेत्तदा प्रसिद्धतया गच्छेदिति भावः । तस्य वैराग्यातिशयमाह—वेनसुवमिति । वेनं सूत इति तथा तां वेनमातरं सुनीथां प्रसुप्तां हित्वा त्यक्त्वेत्यर्थः । पूर्वं दोषवशात् तस्यामधर्मांशोद्भूतमृत्युपुत्र्यामतिप्रसक्तोपीदानीं दोषस्य निवृत्तितोपि विरक्तस्तांस्त्यक्त्वा गत इति भावः ॥ ४७ ॥ ❀ ❀ तस्मिन्नेवं निर्गते सति पुरोहितादयः किं कृतवन्त इत्यपेक्षायां यद्यपि वेनस्तत्पुत्रोस्ति तथापि तस्य राज्याभिषेकस्तु राजाज्ञयैवोचितः, राजा तु तदाज्ञामदत्त्वैव गतः । वैनस्य दौःशील्यं तु जानन्ति तज्ज्ञात्वापि तस्य राज्याभिषेके

कृते तत्कृतोपद्रवजनितदोषस्य स्वस्मिन्नासक्तिं पश्यन्तः पुरोहितादयो राजानमन्वेषितवन्त इत्याह—विज्ञायेति । पतिं राजानं निर्विद्य वैराग्यं कृत्वा गतं विज्ञायातिशोकेन कातरा विह्वलाः प्रजादय उर्व्यां विचिक्युरन्वेषितवन्तः । तं तत्रैव यत्र कुत्र विद्यमानमपि नापश्यन्निति शेषः । तत्र दृष्टान्तमाह—यथेति । यथा निगूढं माययाच्छन्नं पुरुषमन्तर्यामिणं हृदये सन्तमपि कुयोगिनो विषयाविष्टचित्ता अन्वेषन्तोपि न पश्यंति तद्वदित्यर्थः ॥ ४८ ॥ ❀ ❀ हे पौरव पुरुवंशोद्भव विदुर ! ते प्रजाः पुरोहितादयः प्रजापतेरङ्गस्य पदवीं मार्गं स्थानमलक्षयन्तः अपश्यन्तः अत एव द तो निष्फलतां गतः उद्यमोऽन्वेषणलक्षणो येषां ते पुरीं प्रत्युपसृत्य आगत्य तत्र समेतान् एकत्र मिलित्वा स्थितान् राज्ञो निर्विद्य गमने सतीदानीमस्माभिः किं कर्त्तव्यं राज्ये कः स्थापनीय इति विचारतत्परान् ऋषीन् भृग्वादीन् अभिवन्द्य साश्रवः रुदन्तः सन्तो भर्तृविप्लवं राज्ञोऽदर्शनं न्यवेदन् विज्ञापितवन्त इत्यन्वयः ॥ ४९ ॥

**इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना । श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥**
**श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये । श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥**
**रचिता तत्र तुर्येऽस्मिन् स्कंन्धे कामनिरूपणे । त्रयोदशो गतो वृत्तिं कामहेतुनिरूपकः ॥ ३ ॥**

भाषानुवादः

वह ऐसा क्रूर और निर्दयी था कि मैदानमें खेलते हुए अपनी बराबरीके बालकोंको पशुओंकी भाँति बलात्कारसे मार डालता था ॥ ४१ ॥ ❀ ❀ वेनकी ऐसी दुष्ट प्रकृति देखकर महाराज अङ्गने उसे तरह-तरहसे सुधारनेकी चेष्टा की; परन्तु वे उसे सुमार्गपर लानेमें समर्थ न हुए। इससे उन्हें बड़ा ही दुःख हुआ ॥ ४२ ॥ ( वे मन-ही-मन कहने लगे— ) 'जिन गृहस्थोंके पुत्र नहीं हैं, उन्होंने अवश्य ही पूर्वजन्ममें श्रीहरिकी आराधना की होगी; इसीसे उन्हें कुपूतकी करतूतोंसे होनेवाले असह्य क्लेश नहीं सहने पड़ते ॥ ४३ ॥ ❀ ❀ जिसकी करनीसे माता-पिताका सारा सुयश मिट्टीमें मिल जाय, उन्हें अधर्मका भागी होना पड़े, सबसे विरोध हो जाय, कभी न छूटनेवाली चिन्ता मोल लेनी पड़े और घर भी दुःखदायी हो जाय—ऐसी नाममात्रकी सन्तानके लिये कौन समझदार पुरुष ललचावेगा ? वह तो आत्माके लिये एक प्रकारको मोहमय बन्धन ही है ॥ ४४-४५ ॥ ❀ ❀ मैं तो सपूतकी अपेक्षा कपूतको ही अच्छा समझता हूँ, क्योंकि सपूतको छोड़नेमें बड़ा क्लेश होता है। कपूत घरको नरक बना देता है, इसलिये उससे सहज ही छुटकारा हो जाता है ॥ ३६ ॥ ❀ ❀ इस प्रकार सोचते-सोचते महाराज अङ्गको रातमें नीद नहीं आयी। उनका चित्त गृहस्थीसे विरक्त हो गया। वे आधी रातके समय बिछौनेसे उठे ! इस समय वेनकी माता नीदमें बेसुध पड़ी थी। राजाने सबका मोह छोड़ दिया और उसी समय किसीको भी मालूम न हो, इस प्रकार चुपचाप उस महान् ऐश्वर्यसे भरे राजमहलसे निकलकर बनको चल दिये ॥ ४७ ॥ ❀ ❀ यह जानकर सभी प्रजाजन, पुरोहित, मन्त्री और सुहृद्गण आदि अत्यन्त शोकाकुल होकर पृथ्वीपर उनकी खोज करने लगे। ठीक वैसे ही जैसे योगका यथार्थ रहस्य न जाननेवाले पुरुष अपने हृदयमें छिपे हुए भगवान्को बाहर खोजते हैं ॥ ४८ ॥ ❀ ❀ जब उन्हें अपने स्वामीका कहीं पता न लगा, तब वे निराश होकर नगरमें लौट आये और वहाँ जो मुनिजन एकत्रित हुए थे, उन्हें यथावत् प्रणाम करके उन्होंने आँखोंमें आँसू भरकर महाराजके न मिलनेका वृत्तान्त सुनाया ॥ ४९ ॥

इति त्रयोदशोऽध्यायः ॥ १३ ॥



# अथ चतुर्दशोऽध्यायः

## मैत्रेय उवाच

भृग्वादय[1]स्ते मुनयो लोकानां क्षेमदर्शिनः। गोप्तर्यसति वै नृणां पश्यन्तः पशुसाम्यताम् ॥ १ ॥
वीरमातरमाहूय सुनीथां ब्रह्मवादिनः। प्रकृत्यसम्मतं वेनमभ्यषिञ्चन् पतिं भुवः ॥ २ ॥
श्रुत्वा नृपासनगतं वेनमत्युग्रशासनम्। निलिल्युर्दस्यवः सद्यः सर्पत्रस्ता इवाखवः ॥ ३ ॥
स आरूढनृपस्थान उन्नद्धोऽष्टविभूतिभिः। अवमेने महाभागान् स्तब्धः सम्भावितः स्वतः ॥ ४ ॥
एवं मदान्ध उत्सिक्तो निरङ्कुश इव द्विपः। पर्यटन् रथमास्थाय कम्पयन्निव रोदसी ॥ ५ ॥
न यष्टव्यं न दातव्यं न होतव्यं द्विजाः क्वचित्। इति न्यवारयद्धर्मं भेरीघोषेण सर्वशः[2] ॥ ६ ॥
वेनस्यावेक्ष्य[3] मुनयो दुर्वृत्तस्य विचेष्टितम्। विमृश्य लोकव्यसनं कृपयोचुः स्म सत्त्रिणः[4] ॥ ७ ॥
अहो उभयतः प्राप्तं लोकस्य व्यसनं महत्। दारुण्युभयतो दीप्ते इव तस्करपालयोः ॥ ८ ॥

अन्वयः—ते लोकानाम् क्षेमदर्शिनः भृग्वादयः मुनयः नृणाम् गोप्तरि असति पशुसाम्यताम् पश्यन्तः ब्रह्मवादिनः वीरमातरम् सुनीथाम् आहूय प्रकृत्यसंमतम् वेनम् भुवः पतिम् अभ्यषिञ्चन् ॥ १-२ ॥ ❀ ❀ दस्यवः अत्युग्रशासनम् वेनम् नृपासनगतम् श्रुत्वा सर्पत्रस्ताः आखवः इव सद्यः निलिल्युः ॥ ३ ॥ ❀ ❀ आरूढनृपस्थानः अष्टविभूतिभिः उन्नद्धः सः स्तब्धः स्वतः संभावितः महाभागान् अवमेने ॥ ४ ॥ ❀ ❀ एवम् मदान्धः निरङ्कुशः उत्सिक्तः द्विपः इव रथम् आस्थाय रोदसी कम्पयन् इव पर्यटन् ॥ ५ ॥ ❀ ❀ द्विजाः क्वचित् न यष्टव्यम् न दातव्यम् न होतव्यम् इति सर्वशः भेरीघोषेण धर्मम् न्यवारयत् ॥ ६ ॥ ❀ ❀ मुनयः दुर्वृत्तस्य वेनस्य विचेष्टितम् अवेक्ष्य लोकव्यसनम् विमृश्य कृपया सत्त्रिणः ऊचुः स्मः ॥ ७ ॥ ❀ ❀ अहो दारुणि उभयतः दीप्ते इव तस्करपालयोः उभयतः लोकस्य महत् व्यसनम् प्राप्तम् ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

चतुर्दशे तु दुष्पुत्रभयादंगे गते द्विजैः। अभिषिक्तस्य वेनस्य रोषात्तैर्वध उच्यते ॥ ( १ ) ॥

क्षेमदर्शिनः क्षेमचिंतकाः पशुसमानरूपतां पश्यंतः ॥ १ ॥ ❀ ❀ अमात्यादीनां प्रकृतीनामसंमतम्। पाठांतरे प्रकृत्या स्वभावेनासंमतम् ॥ २ ॥ ❀ ❀ चोराः सर्वे लीना बभूवुः ॥ ३ ॥ ❀ ❀ आरूढं नृपस्थानं राजासनं येन अष्टविभूतिभिर्लोकपालैश्वर्यैः ॥ ४-६ ॥ ❀ ❀ सत्त्रिणो मिलिताः संतः ॥ ७ ॥ ❀ ❀ मूलतश्चाग्रतश्च दीप्ते प्रज्वलिते काष्ठे तन्मध्यवर्तिनां पिपीलिकादीनां यथोभयतो व्यसनमेवं तस्करेभ्यः पालकाच्च दुःखं प्राप्तमित्यर्थः ॥ ८ ॥

### श्रीवंशीधरकृतो भावार्थदीकाप्रकाशः

तैर्द्विजैः ( १ )। पशुसाम्यतां यथा सिंहादयो मेषादीन्स्वार्थे नाशयंति तथा दस्यवो नृन्नाशयिष्यंतीति पश्यंत इत्यर्थः। "क्षेमो ना प्राप्तरक्षायाम्" इति यादवः ॥ १ ॥ ❀ ❀ आदिना सुहृदादिग्रहः। "स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च। राज्यांगानि प्रकृतयः" इत्यमरः। पाठांतरे 'प्रकृत्यासंमतम्' इति पाठे ॥ २ ॥ ❀ ❀ तस्मिन्नभिषिक्ते सत्येको गुणो राज्यस्याभूदित्याह-श्रुत्वेति। सर्वे इत्युक्त्या "नारायणो नाम नरो नराणां प्रसिद्धचौरः प्रथितः पृथिव्याम्। अनेकजन्मार्जितपापसंचयं हरत्यशेषं स्मृतमात्र एव" इति वचनान्नारायणोपि कस्यचिच्चेतसि नायातीति भावः। 'आखुर्मूषिक उंदरः' इति कोशात् ॥ ३ ॥ ❀ ❀ यद्वाऽष्टदिग्वर्त्तिनीभिः संपद्भिरिति सप्तद्वीपाधिपत्यं ध्वनितं, स्तब्धो गर्वी स्वतः स्वेनैव संभावितः शूरोऽहं पंडितोऽहमित्येवं कृतात्मकत्थनः ॥ ४ ॥ ❀ ❀ उत्सिक्त उद्वृत्तः ॥ ५ ॥ ❀ ❀ भेरीघोषेण भेरीवादनपूर्वकं सर्वलोकान्श्रावणेन

---

१. प्रा० पा०—यस्तु ऋषयो। २. प्रा० पा०—सर्वतः। ३. प्रा० पा०—वेन्य। ४. प्रा० पा०—मन्त्रिणः।

॥ ६ ॥ ❀ ❀ तत्र सर्वनिग्रहानुग्रहसमर्था मुनयः किमकार्षुरिति तत्राह-वेनस्येति। मिलिता इत्यार्थिकोऽयमर्थः। "सत्रं यज्ञे सदादानाच्छादनारण्यकैतवे" इति मेदिन्युक्तेर्यज्ञो हि मिलितैरेव बहुभिस्साध्यते, तेनात्रापि सत्रपदेन मेलनं लक्ष्यते। दुर्वृत्तस्य दुःशीलस्य विरुद्धं चेष्टितं यज्ञदानादिनिवारणरूपं लोकानां व्यसनं दुःखहेतुं धर्मे निवृत्ते सति सर्वे लोका नश्येयुरित्येवं विचार्योचुः ॥ ७ ॥ ❀ ❀ इत्यर्थ इति। वनदुर्गादौ गमने तस्करेभ्यो राष्ट्रे स्थितौ पालात् नृपाद्भयमिति भावः ॥ ८ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तैर्द्विजैः, कर्तृभूतैः भृग्वादयः युग्मकम्। प्रकृत्यसंमतमिति पाठान्तरम् ॥ १-३ ॥ ❀ ❀ लोकपाला इन्द्रादयः तेषामैश्वर्य्यैरिति सप्तद्वीपाधिपत्वं व्यञ्जितम् "सप्तद्वीपाधिपतयो नृपा वैन्यगयादयः" इत्युक्तेः, स्वतः स्वेनैव संभावितः शूरोऽहं बुधोऽहमिति कृतात्मश्लाघनः ॥ ४ ॥ ❀ ❀ एवमिति युग्मकम्। सर्वतः सर्वदेशेषु ॥ ५-६ ॥ ❀ ❀ सत्रे हि सर्वमिलनं स्यादिति मिलिता इति व्याख्यातम् ॥ ७ ॥ ❀ ❀ तन्मध्यवर्त्तिनामित्याद्यध्याहारादित्यर्थ इत्युक्तम् ॥ ८ ॥

## श्रीमद्वीरराघवव्याख्या

एवं पुरोहितादिभिर्निवेदिता ऋषयः तमेव खलं वेनमभिषिच्य पुनस्तेन पीडिताः स्वतेजसा निहत्य तद्वाहुमथनादवतीर्णं भगवदंशभूतं पृथुं नृपत्रियमभिषिच्य राज्ये प्रतिष्ठापयामासुरित्याह चतुर्दशेन मुनिः। भृग्वादय इति। लोकानां क्षेमदर्शिनः क्षेमचिन्तकास्ते विज्ञापिता भृग्वादय ऋषयः नृणां गोप्तरि त्रातर्यसत्यविद्यमाने सति पशुसाम्यतां पशुसमानरूपतां पश्यन्तः। पशुसाम्यतामिति पाठे पशुभिः साम्यं येषां ते पशुसाम्यास्तेषां भावः पशुसाम्यता तां पश्यन्तः ॥ १ ॥ ❀ ❀ ब्रह्मवादिनः वीरस्य वेनस्य मातरं सुनीथामाहूय तस्यै विज्ञाप्येत्यर्थः। प्रकृतीनाममात्यादीनामसंमतमपि वेनं भुवः पतिमभ्यषिञ्चन् भुवः पतिं चक्रुरित्यर्थः ॥ २ ॥ ❀ ❀ अत्युग्रदण्डं वेनं राजासने प्रतिष्ठितं श्रुत्वा दस्यवश्चोरादयः सर्पेभ्यः त्रस्ता भीताः आखवः मूषका इव सद्यः निलिल्युर्लीना बभूवुः ॥ ३ ॥ ❀ ❀ स वेनः आरूढं नृपस्थानं राजासनं येन सः अष्टविभूतिभिः लोकपालैश्वर्यैः अणिमादिभिर्वा उन्नद्धः गर्वितः अत एव स्तब्धः विवेकशून्यः स्वतः स्वयं संभावितः न त्वितरैरिति भावः। आत्मानं महाभागं महाबुद्धिमन्तं महाभाग्यवन्तं वा मेने ॥ ४ ॥ ❀ ❀ एवं तथा ऐश्वर्यमदेनान्धः अज्ञः निरङ्कुशो गज इवोत्सिक्तः उत्थितः रथमास्थाय अधिरुह्य रोदसी द्यावापृथिव्यौ कम्पयन्निव पर्यटन् ॥ ५ ॥ ❀ ❀ हे द्विजाः! क्वचिदपि यागदानहोमादिकं न कर्त्तव्यमित्येवंरूपं धर्मं धर्माभासं भेरीध्वनिना न्यवारयत् यत एवमतो दुर्मदः ॥ ६ ॥ ❀ ❀ मुनयो भृग्वादयः सत्रिणः याज्ञिका अपि मिलिताः सन्तः दुर्वृत्तस्य वेनस्य चेष्टितमवेक्ष्य लोकानां व्यसनं दुःखं विमृश्य कृपया ऊचुः ॥ ७ ॥ ❀ ❀ उक्तमेवाह अहो इति। मूलतश्चाग्रतश्च प्रदीप्ते ज्वलिते काष्ठे तन्मध्यवर्तिनां यथोभयतो व्यसनमेवं तस्करेभ्यः पालकात् पार्थिवाच्च दुःखं प्राप्तमित्यर्थः ॥ ८ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

गुरुवाक्यं श्रद्धयानुतिष्ठतामिहामुत्र श्रेयः स्यादकुर्वतामनर्थश्चेत्येतन्निरूप्यतेऽस्मिन्नध्याये। तत्रादौ भृग्वादिऋषिभिः क्रियमाणं राज्ये वेनस्याभिषेकं वक्ति। भृग्वादय इति। 'क्षेमो ना प्राप्तरक्षायामि'ति यादवः, पशुसाम्यतां पशुसाधर्म्यं साङ्कर्यम् ॥ १ ॥ ❀ ❀ हे वीर! प्रकृत्या स्वभावेनामात्यादिवुद्ध्या राज्यासंमतमनुचितम् ॥ २ ॥ ❀ ❀ अस्मिन्नभिषिक्ते सत्येको गुणो राज्यस्य स्यादित्याह श्रुत्वेति। निलिल्युर्निलीनाः ॥ ३ ॥ ❀ ❀ पालके राज्ञि बहवो गुणा भवन्ति तत्रैको गुण इति विशिष्योच्यत इति चेत् सत्यमस्य सर्वे दोषा एव सन्तीति वक्तुमुपक्रमते स आरूढेति। आरूढं नृपस्थानं सिंहासनं येन स तथामन्त्र्यामात्यदूतराज्यकोशदुर्गजनपदपुरोहिताख्यैर्वाणिमादिभिर्वाष्टविभूतिभिरुन्नद्धः स्तब्धः महत्सूत्थानाद्याचारशून्यः ॥ ४ ॥ ❀ ❀ अतो लोकस्य किमवद्यमभूदत्राह एवं मदान्ध इति। उत्सिक्त उद्वृत्तः ॥ ५ ॥ ❀ ❀ हे द्विजाः! ॥ ६ ॥ ❀ ❀ तत्र निग्रहानुग्रहसमर्थाः मुनयः किमकार्षुरिति तत्राह वेनस्येति। सत्रिणो यज्वानः ॥ ७ ॥ ❀ ❀ उभयतस्तस्करपालयोः। दारुणीति सप्तमी पञ्चम्यर्थे, दारुण उभयतो दीप्तो वह्निः ॥ ८ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

भृग्वादय इति युग्मकम् ॥ १-३ ॥ ❀ ❀ स्वतः स्वेनैव सम्भावितः शूरोऽहं पण्डितोऽहमित्येवं कृतात्मसम्भावनः। आत्मसम्भावित इति चित्सुखः ॥ ४ ॥ ❀ ❀ एवमिति युग्मकम् ॥ ५-६ ॥ ❀ ❀ सत्रिणः सत्रित्वावस्थायां मिथो मिलनं भवतीति तदा मिलिताः सन्तीत्यर्थः ॥ ७ ॥ ❀ ❀ उभयत इति वनदुर्गादौ पलायने तस्करेभ्यः राष्ट्रे स्थितौ पालादित्यर्थः ॥ ८ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

चतुर्दशेऽभिषिक्तस्य वेनस्याधर्मवर्त्तिनः। प्रबोधितहतस्योरुमथनं मुनिभिः पुनः ॥ ( १ ) ॥

साम्यतामिति स्वार्थे ष्यञ्, पश्यन् मेषादीन् यथा शृगालवृकादयो नाशयन्ति तथैव नून् दस्यव इत्यर्थः ॥ १ ॥ ❀ ❀ प्रकृत्यसंमतं प्रकृत्या सम्मतमिति पाठद्वयं, प्रकृतिरमात्यादिः स्वभावश्च तासां तया च असम्मतः ॥ २-३ ॥ ❀ ❀ अष्टविभूतिभिरष्टदिग्वर्तिनीभिः सम्पत्तिभिरिति सप्तद्वीपाधिपत्यं ध्वनितम्। स्तब्धो गर्ववान् स्वतः स्वेनैव सम्भावितः शूरोऽहं पण्डितोऽहमिति कृतात्मकथनः ॥ ४-७ ॥ ❀ ❀ मूलतश्चाग्रतश्च दीप्ते प्रज्वलितकाष्ठे तन्मध्यवर्त्तिनां पिपीलिकादीनां यथा उभयतो व्यसनमेवं लोकस्य दुर्गादौ पलायने तस्करात् राष्ट्रे स्थितौ पालकात् राजतो भयमित्यर्थः ॥ ८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पालकाभावात् वेनस्याभिषेको दुर्वृत्तत्वाद्वधश्च मुनिभिः कृत इति चतुर्दशे वर्ण्यते। भृग्वादय इति ॥ १ ॥ ❀ ❀ प्रकृत्यसंमतममात्यादीनामसंमतमपि धर्मपालकं वंशजत्वपक्षपातेनाभ्यषिञ्चन् ॥ २ ॥ ❀ ❀ निलिल्युः अलक्षिता बभूवुः ॥ ३ ॥ ❀ ❀ आरूढं नृपस्थानं येन सः अष्टविभूतिभिर्लोकपालैश्वर्य्यैः उन्नद्धः उद्धतः अत एव स्तब्धोऽनम्रः ॥ ४-५ ॥ ❀ ❀ हे द्विजाः! त्रैवर्णिकाः क्वचिदपि देशे काले वा यष्टव्यं नेत्यादि वाक्यश्रावणपूर्वकेण भेरीघोषेण सर्वतो धर्मं न्यवारयत् ॥ ६ ॥ ❀ ❀ सत्रं बहुकर्तृको यागः सोऽस्ति येषां ते ॥ ७ ॥ ❀ ❀ उभयतो दारुणि काष्ठे निरुद्धजन्तोरिव लोकस्योभयतो व्यसनं दुःखं प्राप्तं भवति ॥ ८-९ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

रक्षकाभावरूपो हि कामहेतुर्निरूपितः। तस्य कार्यं त्वधर्माख्यं चतुर्दशे निरूप्यते ॥ ( १ ) ॥

तदेवं त्रयोदशेऽध्याये सर्वजनानां रक्षकादिकामनाहेतू रक्षकाभावो निरूपितः। तस्यावान्तरकार्यं त्वधर्मस्थितिरूपमत्र निरूप्यते। तत्र पूर्वाध्यायान्ते प्रजापुरोहितादिभिर्भृग्वादीन् प्रति राजाप्राप्तिर्निरूपिता, ते सर्वज्ञत्वाद्राजपदवीं जानन्तोपि तत्रागत्य स्वयंराज्यकरणे मुक्तौ प्रतिबन्धः स्यात्। तादृशदुष्टपुत्रराज्यदानेपि तत्कृतप्रजाद्रोहादिदोषप्रसक्त्या मुक्तिर्न स्यादतो मोक्षाधिकारिणस्तन्मार्गे प्रवृत्तस्य राज्ञस्तत्प्रतिबन्धो माभूदित्यभिप्रेयाङ्गविज्ञापनं कृतवन्तः, किंतु सर्वासंमतमपि वेनमेव राज्ये स्थापितवन्त इत्याह—भृग्वादय इति द्वाभ्याम्। ते पूर्वोक्ताः प्रजादिभिर्निवेदितभर्तृविप्लवा भृग्वादयो मुनयः सर्वज्ञत्वेन भूतभाव्युपद्रवाभिज्ञा अपि प्रकृतीनाममात्यादीनामसंमतमपि प्रकृत्या इति दीर्घपाठे स्वभावतः क्रौर्येण सर्वस्य राज्याभिषेकेऽसंमतमपि वेनं भुवः पतिमभ्यषिञ्चन्निति द्वयोरन्वयः। वीरस्य तस्य वेनस्य मातरं सुनीथामाहूय तां पृष्ट्वेति मातृत्वेनोभयोरधर्मांशोद्भवत्वसाम्येन च स्नेहवशात् तस्यास्तत्र संमतिः सूचिता। ब्रह्मवादिन इति तेषामेव राज्याभिषेककरणे मुख्यत्वं दर्शयति। एवं दुष्टस्यापि राज्ये स्थापने कारणमाह—गोप्तरीति। गोप्तरि रक्षके असति नृणां पशुसाम्यतां परस्परं परस्त्रीपरवित्तभोगोन्मुखतां पश्यन्तस्तत्परिहारार्थमित्यर्थः। ननु तद्वधेन तत्परिहारेपि तदुपद्रवेणैव लोकविनाशः स्यादित्याशङ्क्याह—लोकानां क्षेमदर्शिन इति। राजपुत्रे तस्मिन् विद्यमानेऽन्यस्य तत्र स्थापनमयुक्तमेवान्यस्य स्थापनेऽपि तेन बलवता सह विरोधे प्रजानां कल्याणं न स्यात्। राज्यप्राप्तेः पूर्वं तस्य राज्यप्रयुक्तोत्कटदोषाभावेन तदानीं मारणस्यायुक्तत्वात्तस्य वीरस्य मरणं विना तद्देहे मथनस्याशक्यत्वादतो राज्येऽभिषिक्तो यद्युपद्रवं करिष्यति तदा तं मारयित्वा तस्याधर्मांशं दूरीकृत्य राजांशेन सत्पुरुषमुत्पाद्य तस्य राज्याभिषेके सर्वलोककल्याणं भविष्यतीत्यभिप्रायेण तमभिषिक्तवन्त इति भावः ॥ १-२ ॥ ❀ ❀ वेनस्य राज्येऽभिषेकान्नृणां पशुसाम्यता निवृत्तेत्याह—श्रुत्वेति। वेनं नृपासनगतं श्रुत्वा दस्यवस्तस्कराः सद्यस्तच्छ्रवणकाल एव निलिल्युः लीना बभूवुः। तत्र हेतुमाह—अत्युग्रशासनमिति। अत्युग्रं शासनं दण्डः आज्ञा वा यस्य तम्। तेषां भयेन लये दृष्टान्तमाह—सर्पेति। सर्पात् त्रस्ता भीताः आखवो मूषका यथा लीना भवन्ति तथेत्यर्थः ॥ ३ ॥ ❀ ❀ एवं चोराणां लयेप्यभिषिक्ताद्वेनादेव धर्महानिर्जातेत्याह—स इति त्रिभिः। स वेनो महाभागान् स्ववर्णाश्रमधर्मतत्परान् अवमेने तिरस्कृतवान्। यतः स्वतः स्वभावत एव स्तब्धः अनम्रः। अत एव सर्वैर्जनैर्दुर्जनत्वेन संभावितो निश्चितः। एवंभूतोऽपीदानीमष्टविभूतिभिः अष्टलोकपालैश्वर्यैः कोशादिभिः उन्नद्धः त्यक्तमर्यादाबन्धनः। तत्र हेतुः—आरूढनृपस्थान इति। आरूढं प्राप्तं नृपस्थानं राजासनं येन सः ॥ ४ ॥ ❀ ❀ उक्तानुवादपूर्वकं सतामाचारप्रतिषेधेन तेषामपमानमेव विशदयति—एवमिति द्वाभ्याम्। एवं प्राप्तराजासनत्वेन प्राप्तैरैश्वर्यैर्जातो यो मदो गर्वस्तेनान्धः अत एवोत्सिक्तस्त्यक्तलोकवेदाचारबन्धनः। तत्र दृष्टान्तः—निरङ्कुशो द्विपो हस्ती यथा तद्वत्। रथमास्थाय क्रौर्येण रोदसी द्यावाभूमी कम्पयन्निव पर्यटन् भो द्विजाः क्वचित् कापि कदाचिदपि न यष्टव्यं न दातव्यं न होतव्यमित्येवं भेरीघोषेण सर्वतो धर्मं न्यवारयदिति द्वयोरन्वयः ॥ ५-६ ॥ ❀ ❀ एवं सर्वधर्मलोपे मुनीनां महान् विचारो जात इत्याह—वेनस्येति। दुर्वृत्तस्य दुराचारस्य वेनस्य चेष्टितं सदाचारप्रतिबन्धलक्षणमवेक्ष्य दृष्ट्वा ते नरलोकस्य सज्जनस्य व्यसनं स्वधर्महान्या कष्टं विमृश्य विचार्य कृपया पीडिताः

सत्रिणः परस्परं मिलिताः सन्त ऊचुर्विचारितवन्त इत्यर्थः। स्मेति लोकप्रसिद्धिं सूचयति। लोके हि महत्युपद्रव उपस्थित एवमेव परस्परं मिलिताः सर्वे विचारयन्तीति प्रसिद्धमिति॥ ७॥ ❀ ❀ मुनीनां विचारवाक्यानि दर्शयति—अहो इति सार्द्धपञ्चभिः। तत्र चोरादिदुर्जनदण्डस्येष्टत्वेप्यहो आश्चर्यं लोकस्य सत्कर्मनिष्ठस्य जनस्योभयतो महद्व्यसनं दुःखं प्राप्तम्। उभयशब्दार्थमेव दर्शयन्ति—तस्करपालयोरिति। षष्ठी पञ्चम्यर्था, तस्करेभ्यः पालकाच्चेत्यर्थः। तत्र दृष्टान्तमाहुः—दारुणीति। दारुणि काष्ठे उभयतो मूलतोऽग्रतश्च दीप्ते प्रज्वलिते सति तन्मध्यवर्त्तिनां जन्तूनां यथोभयतो दुःखं भवति तथेत्यर्थः॥ ८॥

### भाषानुवादः

### राजा वेनकी कथा

श्रीमैत्रेयजी कहते हैं—वीरवर विदुरजी! सभी लोकोंकी कुशल चाहनेवाले भृगु आदि मुनियोंने देखा कि अङ्गके चले जानेसे अब पृथ्वीकी रक्षा करनेवाला कोई नहीं रह गया है, सब लोग पशुओंके समान उच्छृङ्खल होते जा रहे हैं॥ १॥ ❀ ❀ तब उन्होंने माता सुनीथाकी सम्मतिसे, मन्त्रियोंके सहमत न होनेपर भी वेनको भूमण्डलके राजपदपर अभिषिक्त कर दिया॥ २॥ ❀ ❀ वेन बड़ा कठोर शासक था। जब चोर-डाकुओंने सुना कि वही राजसिंहासनपर बैठा है, तब सर्पसे डरे हुए चूहोंके समान वे सब तुरंत ही जहाँ-तहाँ छिप गये॥ ३॥ ❀ ❀ राज्यासन पानेपर वेन आठों लोकपालोंकी ऐश्वर्यकलाके कारण उन्मत्त हो गया और अभिमानवश अपनेको ही सबसे बड़ा मान कर महापुरुषोंका अपमान करने लगा॥ ४॥ ❀ ❀ वह ऐश्वर्यमदसे अंधा हो रथपर चढ़कर निरङ्कुश गजराजके समान पृथ्वी और आकाशको कँपाता हुआ सर्वत्र विचरने लगा॥ ५॥ ❀ ❀ 'कोई भी द्विजातिवर्णका पुरुष कभी किसी प्रकारका यज्ञ, दान और हवन न करे' अपने राज्यमें यह ढिंढोरा पिटवाकर उसने सारे धर्म-कर्म बंद करवा दिये॥ ६॥ ❀ ❀ दुष्ट वेनका ऐसा अत्याचार देख सारे ऋषि-मुनि एकत्र हुए और संसारपर संकट आया समझकर करुणावश आपसमें कहने लगे॥ ७॥ ❀ ❀ 'अहो! जैसे दोनों ओर जलती हुई लकड़ीके बीचमें रहनेवाले चींटी आदि जीव महान् सङ्कटमें पड़ जाते हैं, वैसे ही इस समय सारी प्रजा एक ओर राजाके और दूसरी ओर चोर-डाकुओंके अत्याचारसे महान् सङ्कटमें पड़ रही है॥ ८॥

अराजकभयादेष कृतो राजातदर्हणः। ततोऽप्यासीद्भयं त्वद्य कथं स्यात्स्वस्ति देहिनाम्॥ ९॥
अहेरिव पयःपोषः पोषकस्याप्यनर्थभृत्[1]। वेनः प्रकृत्यैव खलः सुनीथागर्भसम्भवः॥ १०॥
निरूपितः प्रजापालः स जिघांसति वै प्रजाः। तथापि सान्त्वयेमामुं नास्मांस्तत्पातकं स्पृशेत्॥ ११॥
तद्विद्वद्भिरसद्वृत्तो वेनोऽस्माभिः कृतो नृपः। सान्त्वितो यदि नो वाचं न ग्रहीष्यत्यधर्मकृत्॥ १२॥
लोकधिक्कारसन्दग्धं[3] दहिष्यामः स्वतेजसा। एवमध्यवसायैनं मुनयो गूढमन्यवः।
उपव्रज्याब्रुवन् वेनं सान्त्वयित्वा च सामभिः॥ १३॥

मुनय[5] ऊचुः

नृपवर्य निबोधैतद्यत्ते विज्ञापयाम भोः। आयुःश्रीबलकीर्तीनां तव तात विवर्धनम्॥ १४॥
धर्म आचरितः पुंसां वाङ्मनःकायबुद्धिभिः[6]। लोकान् विशोकान् वितरत्यथानन्त्यमसङ्गिनाम्॥ १५॥
स ते मा विनशेद्वीर प्रजानां क्षेमलक्षणः। यस्मिन् विनष्टे नृपतिरैश्वर्यादवरोहति॥ १६॥

अन्वयः—अतदर्हणः एषः अराजकभयात् राजा कृतः अद्य तु ततः अपि भयम् आसीत् देहिनाम् स्वस्ति कथम् स्यात्॥ ९॥ ❀ ❀ प्रकृत्या एव खलः सुनीथागर्भसम्भवः वेनः अहेः पयःपोषः इव पोषकस्य अपि अनर्थभृत्॥ १०॥ सः निरूपितः प्रजापालः प्रजाः वै जिघांसति तथापि अमुम् सान्त्वयेम तत्पातकम् अस्मान् न स्पृशेत्॥ ११॥ ❀ ❀ असद्वृत्तः वेनः तद्विद्वद्भिः अस्माभिः नृपः कृतः सः अधर्मकृत् सान्त्वितः यदि नः वाचम् न ग्रहीष्यति लोकधिक्कारसन्दग्धं स्वतेजसा दहिष्यामः॥ १२॥ ❀ ❀ गूढमन्यवः मुनयः एवम् अध्यवसाय एनम् वेनम् उपव्रज्य च सामभिः सान्त्वयित्वा अब्रुवन्॥ १३॥ ❀ ❀ भोः नृपवर्य यत् ते विज्ञापयाम एतत् तात तव आयुःश्रीबलकीर्तीनाम् विवर्धनम् निबोध॥ १४॥ ❀ ❀ पुंसाम् वाङ्मनःकायबुद्धिभिः आचरितः धर्मः विशोकान् लोकान् अथ असङ्गिनाम् आनन्त्यम्

---

१. प्रा० पा०—देव। २. प्रा० पा०—कृत। ३. प्रा० पा०—दिग्धं। ४. प्रा० पा०—त्वाथ सा०। ५. प्राचीने पाठे 'मुनय ऊचुः' अयमंशो न। ६. प्रा० पा०—शुद्धिभिः।

वितरति ॥ १५ ॥ ❀ ❀ वीर यस्मिन् विनष्टे नृपतिः ऐश्वर्यात् अवरोहति सः प्रजानाम् क्षेमलक्षणः ते धर्मः मा विनशेत् ॥ १६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तदेवाहुः अराजकभयादिति । अतदर्हणो राज्यानर्हः ॥ ९ ॥ ❀ ❀ अस्माकमप्यनिष्टं जातमित्याहुः । अहेर्यथा पयःपोषः क्षीरेण पोषणं पोषकस्याप्यनर्थं विषद्वारा बिभर्ति पुष्णाति । तदेवाहुः । वेन इति । खलत्वे हेतुः सुनीथागर्भसंभव इति मृत्योर्दौहित्र इत्यर्थः ॥ १० ॥ ❀ ❀ निरूपितो नियुक्तोऽस्माभिः । सांत्वयेमोपपत्तिभिः प्रार्थयिष्यामः । तस्य पातकम् ॥ ११ ॥ ❀ ❀ स्वस्य तत्तत्पातकस्पर्शहेतुः । तत्पातकित्वं विद्वद्भिः ॥ १२ ॥ ❀ ❀ गूढो मन्युर्येषाम् । सामभिः प्रियोक्तिभिः ॥ १३–१४ ॥ ❀ ❀ निष्कामानामानंत्यं मोक्षमपि ॥ १५ ॥ ❀ ❀ मा विनशेन्मा विनश्यतु ॥ १६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तदेवोभयतो दुःखमेव । अराजके लोकेऽवृष्टिदस्युरोगादितो महाभयं भारते वर्णितं तन्निवृत्तिहेतोः ततोपि राजतोपि ॥ ९ ॥ ❀ ❀ देहिनां का कथास्माभिरेवायमभिषिक्तः संप्रत्यस्मानेव न यष्टव्यमित्याद्याज्ञया शास्तीत्याहुरस्माकमिति । तदेवाहितुल्यत्वमेव । सुनीथागर्भसंभव इति हेतुगर्भितं विशेषणं सुनीथागर्भसंभवत्वादिति ॥ १० ॥ ❀ ❀ सांत्वयेम प्रबोधयाम तत् तथा सत्यस्मान्पातकं पापं न स्पृशेदन्यथा तु पापं स्पृशेदेवेत्यर्थः ॥ ११ ॥ ❀ ❀ नोऽस्माकं वाचं सांत्वनरूपाम् ॥ १२ ॥ ❀ ❀ दहिष्यामो धक्ष्यामः । इडागमस्त्वार्षः । स्वतेजसा तपोबलेन दग्धस्य दाहेनापि नास्माकं पापमुत्पत्स्यत इत्याह—लोकधिक्कारेति । सांत्वयित्वा प्रबोध्य ॥ १३ ॥ ❀ ❀ तातेति । स्वयंकृतत्वेन प्रियत्वमस्ति "विषवृक्षोपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्" इति न्यायेन । किञ्च नायं नृपाणामपि धर्मो यं त्वमुपास्से कुतो नृपवर्यस्यात्यंतधर्मशीलांगात्मजस्य तवेत्यतोऽस्मदुक्तं गृह्यतामित्यभिप्रायेणाहुर्नृपवर्येति । श्रीः संपत्तिः ॥ १४ ॥ ❀ ❀ विशोकान्—शोकरहितान् ब्रह्मलोकादीन् । निष्कामानां फलाभिसंधिशून्यानाम् । मोक्षस्यानंत्यत्वं तु वक्ष्यते "तत्रापि मोक्ष एवार्थ आत्यंतिकतयेष्यते" इति सनत्कुमारः । अंतमतिक्रांतोऽत्यंतः स एवात्यंतिकस्तस्य भावस्तत्ता तयेति वक्ष्यमाणात्यंतिकपदार्थः ॥ १५ ॥ ❀ ❀ स धर्मः । वीरेति—तद्रक्षणे सामर्थ्यमुद्बोधयति । यस्मिन्धर्मे । अवरोहति अधो याति ॥ १६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तदेवाहुरुभयतो भयमेवाहुः अराजकभयादिति सार्द्धकम् । यथानर्थं पुष्णाति तथा ततोऽपि राजत्वेन पुष्टादपि भयमासीदिति योजनीयम् ॥ ९ ॥ ❀ ❀ तदेव भयनिवर्त्तकाद्राजतोऽपि भयमेव ॥ १० ॥ ❀ ❀ तस्य राज्ञः पातकं प्रजाहिंसालक्षणं स्वस्य मुनिसमूहस्य राजकृतपातकस्पर्शे ॥ ११–१२ ॥ ❀ ❀ स्वतेजसा तपोबलेन ॥ १३ ॥ ❀ ❀ मुनय ऊचुरिति बहुत्र नास्ति ॥ १४ ॥ ❀ ❀ लोकान् भोगान् असंगिनां निष्कामानामानन्त्यं मोक्षमपि ॥ १५–१७ ॥

### श्रीमद्वीरराघवव्याख्या

तदेवाहुः अराजकभयादिति । अतदर्हणः राज्यानर्होऽप्येष वेनः अराजकभयाद्राजा कृतः । ततो राज्ञोऽप्यद्य भयमासीत् देहिनां कथं स्वस्ति सुखं स्यात् ॥ ९ ॥ ❀ ❀ अस्माकमप्यनिष्टं जातमित्याहुः अहेः सर्पस्य यथा पयःपोषः क्षीरेण पोषणं पोषकस्याप्यनर्थं करोति तथा तदेवाहुः सुनीथाया अङ्गात् संभूतो वेनः प्रकृत्या स्वभावेनैव खलः दुरात्मा ॥ १० ॥ ❀ ❀ अस्माभिः प्रजापालो निरूपितः नियुक्तः स एव प्रजाः जिघांसति हन्तुमिच्छति तथापि घातुकत्वेऽप्यमुं वेनं सान्त्वयेम उपपत्तिभिः प्रार्थयिष्यामः ततस्तस्य पातकमस्मान्न स्पृशेत् ॥ ११ ॥ ❀ ❀ निषेधस्य प्रसक्तिपूर्वकत्वात्तमाहुः तत्तस्य दौरात्म्यं विद्वद्भिर्जानद्भिरप्यस्माभिरसद्वृत्तो वेनः नृपः कृतः । अस्माभिर्नृपीकरणाद्धेतोरयं भूतानि द्रुह्यति, अतोऽस्माभिः सान्त्वितश्चेन्न भूतद्रोहकृतं पापमस्मान् स्पृशतीत्यर्थः । सान्त्वनेनाप्रसन्ने सति कृत्यमाहुः सान्त्वित इति । सान्त्वितः प्रार्थितः अधर्मकृदयं वेनोऽस्माकं याच्ञां न ग्रहीष्यति चेत् तर्हि लोकानां धिक्कारेण निन्दया नितरां दग्धं स्वतेजसा स्वेषामस्माकं तेजसा तपोबलेन दहिष्यामः ॥ १२ ॥ ❀ ❀ एवमध्यवसाय निश्चित्य गूढा मुनयः एनमुपव्रज्य समीपमागत्य सामभिः प्रियोक्तिभिः वेनं सान्त्वयित्वा अब्रुवन् प्रार्थनापूर्वकमब्रुवन्नित्यर्थः ॥ १३ ॥ ❀ ❀ हे नृपवर्य ! वयं यद्विज्ञापयामहे तन्निबोध सावधानचित्तः आधत्स्व कथंभूतं तत् तव आयुरादीनां विवर्द्धनं विशेषेण वर्द्धकम् ॥ १४ ॥ ❀ ❀ किं तदित्याहुः धर्म इत्यादिभिरष्टभिः । पुंसां वाङ्मनःकायानां वृत्तिभिर्व्यापारैः धर्मः ईश्वराराधनरूपो धर्मः आचरितोऽनुष्ठितः लोकान् विशोकान् निर्दुःखान् वितरति कुरुते, असंगिनां विरक्तानामानन्त्यं मोक्षसुखानन्त्यमपि वितरति ॥ १५ ॥ ❀ ❀ हे वीर ! सः लोकसुखकरो मोक्षसुखानन्त्यकरश्च मा विनश्येत् न नश्येत्, यस्मिन्नुक्तधर्मे विनष्टे सति नृपतिः पार्थिवः ऐश्वर्यादवरोहति भ्रश्यति ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

दारुण इव उभयतो व्यसनं कथमत्राह अराजक इति। न तस्य राज्यस्यार्हणो योग्यो भवतीति अतदर्हणः॥ ९॥ ❀ ❀ अयमप्यस्माकमनर्थकर इत्याहुरित्याह अहेरिवेति॥ १०॥ ❀ ❀ युष्माभिः कथं पोषित इति तत्राह प्रकृत्येति। सुनीथागर्भसंभवत्वात् अस्माभिः प्रजापालो निरूपितः स सांप्रतं प्रजा जिघांसति वै हन्तुमेवाकांक्षति वै॥ ११॥ ❀ ❀ तर्हि किं क्रियते इति तत्राह तथापीति। प्रकृत्या खलत्वादस्मदुक्तं न शृणोति यद्यपि तथापीति। सांत्वने हेतुमाह मास्मानिति। युष्मत्सांत्वनाग्रहणे किं बाधकं करिष्यन्ति तदशक्तौ तत्सांत्वनं व्यर्थमाह। तद्विद्वद्भिरिति। असद्वृत्त इति। तस्य दौरात्म्यं विद्वद्भिः॥ १२-१३॥ ❀ ❀ एवं जिज्ञासमानाः कालक्षेपं नाकुर्वन्नित्याह। एवमिति॥ १४॥ ❀ ❀ आनन्त्यमसंगिनां फलाभिसंधिरहितानाम्॥ १५॥ ❀ ❀ स धर्मो मा विनशेत् नष्टो न स्यात् बाधकमाहुरित्याह यस्मिन्निति। अवरोहति अधो याति॥ १६॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अराजकेति सार्द्धकम्॥ ९॥ ❀ ❀ टीकायां पुष्णातीत्यनन्तरम्। तथा ततोऽप्यासीद्भयमित्यन्वय इति ज्ञेयम्॥ १०-१३॥ ❀ ❀ मुनय ऊचुरिति बहुत्र नास्ति॥ १४-१७॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अतदर्हणः राज्यानर्हः देहिनामन्येषां का कथा अस्माभिरेवायमभिषिक्तः सम्प्रत्ययमस्मानेव न यष्टव्यमित्याद्याज्ञया शास्तीत्याहुः अहेरिति॥ ९-१०॥ ❀ ❀ सान्त्वयेम उपपत्तिभिः प्रबोधयाम तथा सति अस्मान् पापं न स्पृशेत्, अन्यथा तु पापं स्पृशेदेवेत्याहुः। तत् पातकं विद्वद्भिरिति॥ ११-१२॥ ❀ ❀ दहिष्यामः धक्ष्यामः॥ १३-१४॥ ❀ ❀ असंगिनां निष्कामाणामानन्त्यं मोक्षम्॥ १५॥ ❀ ❀ मा विनशेत् मा विनश्यतु॥ १६॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यथाहेः पयसा पोषः पोषणं पोषकस्याप्यनर्थकृद्भवति तथा प्रकृत्या स्वभावेनैव खलो वेनः प्रजापालो निरूपितस्तन्निरूपणमस्माकमप्यनर्थभृदित्युत्तरेण योजना॥ १०॥ ❀ ❀ तत्पातकमस्मदभिषिक्तवेनस्य पातकम्॥ ११-१४॥ ❀ ❀ पुंसां सकामानां विशोकान् दृष्टशोकवर्जितान् बहुकालसुखदानित्यर्थः, वितरति ददाति। असंगिनां निष्कामानामानन्त्यम् अनन्तस्य भगवतः साधर्म्यं वितरति॥ १५-१७॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

उभयतो भयमेव प्रपञ्चयन्ति—अराजकभयादिति। राजाभावे चोरादिकृतोपद्रवभयादतदर्हणः राज्यानर्होऽप्येष वेनस्ततो रक्षार्थमस्माभी राजा कृतः। अद्य इदानीं ततोपि वेनात् स्वधर्मत्यागलक्षणं भयमासीत् प्राप्तमतो देहिनां सज्जनानां कथं तु स्वस्ति कल्याणं स्यादित्यन्वयः। तुशब्दो दुर्जनव्यावृत्त्यर्थकः॥ ९॥ ❀ ❀ अस्य राज्ये स्थापनं न केवलं लोकस्यानर्थकरम्, किंत्वस्मत्कृतमस्माकमप्यनर्थकरं जातमिति दृष्टान्तेनाहुः—अहेरिवेति। अहेः सर्पस्य यथा पयसा पोषः पोषणं यदा क्रुद्धोऽहिः पोषकं दशति तदा तस्याप्यनर्थं बिभर्त्ति करोति तथास्माभिरस्य राज्याभिषेकः कृतस्तेन स्वधर्मलोपलक्षणं तत्कृतपातकभागित्वं चेत्युभयविधमनिष्टमस्माकं जातमित्यर्थः। उक्तानुवादपूर्वकं स्वदोषपरिहारोपायं चिंतयन्ति—वेन इति त्रिभिः। वेनः प्रकृत्यैव स्वभावत एव न तु दुर्जनादिसङ्गतः खलो दुष्टः। स्वत एव खलत्वे हेतुमाहुः—सुनीथेति। अधर्मवंश्यस्य मृत्योः पुत्री तस्या गर्भात्संभवो यस्य स तथा। स एवंभूतोस्माभिः प्रजापालो निरूपितः प्रजापालकत्वेन स्थापितः स वै स एव प्रत्युत प्रजा जिघांसति तद्धर्मलोपेन नरके पातयितुमिच्छतीत्यर्थः॥ १०॥ ❀ ❀ यद्यप्येवं धर्मनिषेधं करोति तथाप्यमुं सान्त्वयेम सदुक्तिभिरनुनयामः। तत्प्रयोजनमाहुः—नेति। तस्मिन् सन्मार्गेनुनीते सति तत्कृतं पातकमस्मान्न स्पृशेत्। अन्यथा तत्कृतपातकभागित्वमस्माकं स्यादिति भावः। कथं युष्माकं तत्कृतपातकस्पर्श इत्याशङ्क्य तत्र हेतुमाहुः—तद्विद्वद्भिरिति। तस्य दुष्टत्वं जानद्भिरप्यस्माभिरसावसद्वृत्तो दुराचारी वेनो यतो नृपः कृतोऽतोऽस्माकं तत्कृतपातकस्पर्श आवश्यक इत्यर्थः॥ ११॥ ❀ ❀ ननु दुर्वृत्तत्वाद्युष्मद्वचनं यदि न ग्रहीष्यति तदा कथं न पातकस्पर्शस्तत्राहुः—सान्त्वित इति। सान्त्वितोनुनीतोप्यधर्मकृत्त्वाद्यदि नोऽस्माकं वाचं न ग्रहीष्यति तदा लोकधिक्कारेण संदग्धं मृतप्रायमेव स्वतेजसा स्वकोपाग्निना दहिष्याम इत्यन्वयः। लोकधिक्कारसन्दग्धमित्यनेनैवंभूतस्य मारणे नास्माकं कश्चिद्दोष इति सूचितम्॥ १२॥ ❀ ❀ गूढो बहिरलक्षितो मन्युः क्रोधो येषां ते मुनय एवं पूर्वोक्तप्रकारेणाध्यवसायं निश्चयं कृत्वा एनं वेनमुपव्रज्य समीपं गत्वा सामभिः प्रियोक्तिभिः सान्त्वयित्वा सावधानं कृत्वा

अथानन्तरमन्नुवन्नुपदेशं कृतवन्त इत्यन्वयः ॥ १३ ॥ ❁ ❁ तत्र सावधानीकुर्वन्ति नृपवर्येति। भो नृपवर्य नृपेषु श्रेष्ठ! भो तात! वयं यत्तवायुःश्रीबलकीर्त्तीनां विवर्द्धनं साधनं ते तुभ्यं विज्ञापयाम तदेतत्त्वं सावधानतया निबोध अवधारयेत्यन्वयः। आयुर्जीवनम्, श्रीः सम्पत्, बलं देहादिसामर्थ्यम्, कीर्तिर्यशः, तासाम् ॥ १४ ॥ ❁ ❁ एवं राजानमभिमुखीकृत्य धर्मं प्रदर्शयन् तत्तत्प्रचारं प्रार्थयन्तेऽष्टभिः। तत्र प्रथमं सर्वेषां सामान्यतो धर्मस्य श्रेयस्करत्वमाहुः—धर्म इति। पुंसां वर्णाश्रमवतामधिकारिणां स्वस्वाधिकारिणां स्वस्वाधिकारानुरूपं श्रुतिस्मृत्यादिविहितो यागादिभिराचरितोऽनुष्ठितो धर्मो विशोकान् शोकरहितान् स्वर्गादिवैकुण्ठान्तान् स्वस्वफलभूतान् लोकान् वितरति ददाति। अथापि असङ्गिनां तत्तल्लोकभोगाकाङ्क्षाशून्यानामानन्त्यं सायुज्यमोक्षमपि ददातीत्यन्वयः। तत्र वाचा स्तोत्रपाठमन्त्रजपादिरूपः। मनसा परोपकारचिन्तनभगवद्ध्यानादिरूपः। कायेन तीर्थपर्यटनभगवत्परिचर्यादिरूपः। बुद्धिभिस्तत्तद्बुद्धीन्द्रियैर्भगवतो दर्शनस्पर्शनकथाश्रवणप्रसादास्वादनादिरूपः ॥ १५ ॥ ❁ ❁ एवं सामान्यत उक्त्वा विशेषतस्तस्य धर्मं प्रदर्शयन्तस्तस्य विनाशो माभूदिति प्रार्थयन्ते—स इति। स्वर्गादिलोकफलदो धर्मस्ते तव हे वीर मा विनशेदित्यन्वयः। को वा एवंभूतो महाफलदो मम धर्म इत्याकाङ्क्षामाशङ्क्य तं धर्मं दर्शयन्ति—प्रजानामिति। प्रजापालनरूप इत्यर्थः। हे वीर इति संबोधनेन यदा कस्यचिदशक्तस्य राज्ञोऽशक्त्या धर्मलोपो भवेत्तदा किं कर्त्तव्यं, त्वं तु वीरः पालनादिकरणे समर्थः, अतस्तव धर्मविनाशः सर्वथा न युक्त इति सूचयन्ति। ननु तद्विनाशे को दोष इत्याशङ्क्य तमाहुः—यस्मिन्निति। यस्मिन् प्रजापालनलक्षणे धर्मे विनष्टे सति नृपतिरैश्वर्यात् राज्यात् अवरोहति भ्रष्टो भवति। नृपतिरिति सामान्योक्त्या न केवलं तवैवैष दोषो भविता, किंतु सर्वस्यैव स्वधर्मत्यागिनो राजमात्रस्येति सूचितम् ॥ १६ ॥

### भाषानुवादः

'हमने अराजकताके भयसे ही अयोग्य होनेपर भी वेनको राजा बनाया था; किन्तु अब उससे भी प्रजाको भय हो गया। ऐसी अवस्थामें प्रजाको किस प्रकार सुख-शान्ति मिल सकती है ? ॥ ९ ॥ ❁ ❁ सुनीथा की कोख से उत्पन्न हुआ यह वेन स्वभावसे ही दुष्ट है। परन्तु साँपको दूध पिलानेके समान इसको पालना पालनेवालोंके लिये अनर्थका कारण हो गया ॥ १० ॥ ❁ ❁ हमने इसे प्रजाकी रक्षा करनेके लिये नियुक्त किया था, यह आज उसीको नष्ट करनेपर तुला हुआ है। इतना सब होनेपर भी हमें इसे समझाना अवश्य चाहिये; ऐसा करनेसे इसके किये हुए पाप हमें स्पर्श नहीं करेंगे ॥ ११ ॥ ❁ ❁ हमने जान-बूझकर दुराचारी वेनको राजा बनाया था; किन्तु यदि समझानेपर भी यह हमारी बात नहीं मानेगा, तो लोकके धिक्कारसे दग्ध हुए इस दुष्टको हम अपने तेजसे भस्म कर देंगे।' ऐसा विचार करके मुनिलोग वेनके पास गये और अपने क्रोधको छिपाकर उसे प्रिय वचनोंसे समझाते हुए इस प्रकार कहने लगे ॥ १२-१३ ॥ ❁ ❁ मुनियोंने कहा—राजन्! हम आपसे जो बात कहते हैं, उसपर ध्यान दीजिये। इससे आपकी आयु, श्री, बल और कीर्तिकी वृद्धि होगी ॥ १४ ॥ ❁ ❁ तात! यदि मनुष्य मन, वाणी, शरीर और बुद्धिसे धर्मका आचरण करे, तो उसे स्वर्गादि शोकरहित लोकोंकी प्राप्ति होती है। यदि उसका निष्कामभाव हो, तब तो वही धर्म उसे अनन्त मोक्षपदपर पहुँचा देता है ॥ १५ ॥ ❁ ❁ इसलिये वीरवर! प्रजाका कल्याणरूप यह धर्म आपके कारण नष्ट नहीं होना चाहिए। धर्मके नष्ट होनेसे राजा भी ऐश्वर्यसे च्युत हो जाता है ॥ १६ ॥

राजन्नसाध्वमात्येभ्यश्चोरादिभ्यः प्रजा नृपः। रक्षन् यथा बलिं गृह्णन्निह प्रेत्य च मोदते ॥ १७ ॥
यस्य राष्ट्रे पुरे चैव भगवान् यज्ञपूरुषः। इज्यते स्वेन धर्मेण जनैर्वर्णाश्र[1]मान्वितैः ॥ १८ ॥
तस्य राज्ञो महाभाग[2] भगवान् भूतभावनः। परितुष्यति विश्वात्मा तिष्ठतो निजशासने ॥ १९ ॥
तस्मिंस्तुष्टे किमप्राप्यं जगतामीश्वरेश्वरे। लोकाः सपाला ह्येतस्मै हरन्ति बलिमादृताः ॥ २० ॥

अन्वयः—राजन् असाध्वमात्येभ्यः च चोरादिभ्यः प्रजा रक्षन् यथा बलिम् गृह्णन् नृपः इह प्रेत्य च मोदते ॥ १७ ॥ यस्य राष्ट्रे च पुरे एव वर्णाश्रमान्वितैः जनैः भगवान् यज्ञपूरुषः स्वेन धर्मेण इज्यते ॥ १८ ॥ ❁ ❁ महाभाग भूतभावनः विश्वात्मा भगवान् निजशासने तिष्ठतः तस्य राज्ञः परितुष्यति ॥ १९ ॥ ❁ ❁ जगताम् ईश्वरेश्वरे तस्मिन् तुष्टे अप्राप्यम् किम् आदृताः सपालाः लोकाः एतस्मै बलिम् हि हरन्ति ॥ २० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

असाधवो ये अमात्यास्तेभ्यः यथा यथाशास्त्रम् ॥ १७-२० ॥

---

१. प्रा० पा०—श्रमात्मकैः। २. प्रा० पा०—राज।

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

कोऽसौ धर्मो यो लोकान्ददाति तत्राहुः—राजन्निति। असाधवो ह्यमात्या उत्कोचग्राहिणः, आदिना धाटीग्रहः। "परोक्षं लुंठकश्चौरो धाटी प्रत्यक्षलुंठकः" इत्युक्तेः। व्यभिचारिणां वादिपदार्थः, तेऽपि वर्णसंकरकारकत्वेन प्रजाधर्मनाशकत्वात्प्रजानाशका एव। यथाशास्त्रं षष्ठांशम्। प्रेत्य लोकांतरे॥ १७॥ ❀ ❀ वर्णाश्रमेष्वात्मा मनो येषां तैः॥ १८-१९॥ ❀ ❀ एतस्मै सर्वेश्वराय हरये॥ २०॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

यस्य राष्ट्र इति युग्मकम्। वर्णाश्रमधर्मेष्वात्मा मनो येषां तैः॥ १८-१९॥ ❀ ❀ एतस्मै परमप्रसिद्धाय॥ २०॥

## श्रीमद्वीरराघवव्याख्या

हे राजन्! असाधवो ये अमात्यास्तेभ्यः चोरादिभ्यः यथा यथाशास्त्रं प्रजाः पालयन् ताभ्यो बलिं पूजां गृह्णन् स्वीकुर्वन् इह लोके प्रेत्य परलोकं प्राप्य च मोदते सुखी भवति॥ १७॥ ❀ ❀ यस्य राज्ञो राज्ये पुरे च स्थितैश्चातुर्वर्ण्यचातुराश्रम्यरूपतया व्यवस्थितैर्जनैः यज्ञानां भोक्ता प्रभुश्च भगवान् स्वधर्मेण पञ्चयज्ञादिरूपेण इज्यते आराध्यते॥ १८॥ ❀ ❀ हे महाभाग! तस्य निजशासने निजं स्वकीयं यच्छासनं शास्त्रविहितं प्रजापालनादिरूपं कर्म तस्मिन् तिष्ठतः राज्ञः विश्वात्मा सर्वात्मा भूतभावनः भूतानि भावयत्युत्पादयतीति भूतभावनः जगत्कारणभूतो भगवान् परितुष्यति॥ १९॥ ❀ ❀ परितुष्यतु भगवान् किं तेन तत्राह तस्मिन्निति। जगतामीश्वरा ब्रह्मादयस्तेषामपीश्वरे तस्मिन् भगवति तुष्टे सति सपालकाः पालकैः सहिताः लोका आदृताः आदरेण युक्ता एतस्मै परितुष्टभगवते राज्ञे बलिं हरन्ति प्रापयन्ति॥ २०॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

कोऽसौ धर्मो यो लोकान् दधातीति तत्राहुरित्याह राजन्निति। असाधवो दुर्जनाः अमात्याः सचिवास्तेभ्यः "साधुस्त्रिपूचिते सौम्ये सज्जने वार्धुषौ पुमान्" इत्यभिधानम् "यथा सादृश्ययोग्यत्ववीप्सास्वार्थानतिक्रमे" इति वचनात्। यथायोग्यं षष्ठांशं बलिं करम्॥ १७-१९॥ ❀ ❀ तत्तुष्ट्या किं फलं स्यादित्यत्राह। तस्मिन्निति॥ २०॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

यस्य राष्ट्रे इति युग्मकम्॥ १८-२१॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

वर्णाश्रमधर्मेषु आत्मा मनो येषां तैः॥ १८-२०॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

वर्णाश्रमेषु तदनुरूपेषु धर्मेषु आत्मा मनो येषां तैः॥ १८॥ ❀ ❀ निजशासने स्वकीये प्रजापालनादिधर्मे॥ १९-२०॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं प्रजापालनादिधर्मत्यागे राज्ञो दोषमुक्त्वा तदनुष्ठाने गुणं दर्शयन्ति—राजन्निति। हे राजन्! असाधवः शुल्कं गृहीत्वा रागलोभादिनान्यथाकर्त्तारो ये अमात्यास्तेभ्यश्चौरादिभ्यश्च प्रजा रक्षन् यथा यथाशास्त्रं ताभ्यो बलिं करं गृह्णन् वा नृपः इहास्मिन् लोके प्रेत्य परलोके च मोदत इत्यन्वयः। हे राजन्निति संबोधयन् राजत्वात्त्वमपि स्वमोदप्राप्त्यर्थं तदनुष्ठानं कुर्विति सूचयन्ति॥ १७॥ ❀ ❀ एवं प्रजापालनादिस्तव राज्ञो धर्म इत्युक्त्वेदानीं मुख्यस्तु धर्मो भगवदाराधनलक्षणस्तस्यानुष्ठानमवश्यमेव कर्तव्यम्, तत्र कर्तुः शास्तुरनुमोदितुश्च फलस्य तुल्यत्वात्तत्राप्रवृत्तान् प्रवर्त्तयन्तः स्वयं प्रवृत्तानामनुमोदनं कुर्विति प्रार्थयन्ते—यस्येति पञ्चभिः। तत्र प्रजाभिराराधितोऽपि भगवान् राज्ञः परितुष्यतीत्याहुः—यस्येति द्वाभ्याम्। यस्य राज्ञो राष्ट्रे आज्ञानुवर्तिनि देशे पुरे च वर्णाश्रमात्मकैर्वर्णाश्रमवद्भिरधिकारिभिर्जनैः स्वेनाधिकारानुरूपेण धर्मेण भगवान् यज्ञपुरुषः यज्ञादितत्तत्कर्मफलदाता इज्यते आराध्यते तस्य राज्ञोऽपि भगवान् परितुष्यत्येवेति द्वयोरन्वयः। नात्र सन्देह इत्येवकारार्थः। अतो जनान् स्वधर्मे प्रवर्त्तयेति भावः। राज्ञः परितोषे हेतुमाहुः—तिष्ठत इति। "राज्ञो हि परमो धर्मः स्वधर्मस्यानुपालनम्। शासतोऽन्यान्

यथाशास्त्रमनापुत्पथगानिह" इति निजशासने वर्तमानस्येत्यर्थः। किमिति राजन्येवमनुशासनं तत्राहुः—भूतभावन इति, भूतानि भावयति पालयतीति तथा। सर्वभूतपालनं स्वस्वधर्मानुष्ठानद्वारा भगवान् करोत्यन्यथा त्वस्य वैषम्यनैर्घृण्ये स्याताम्। धर्मानुष्ठानं तु राजानुकूल्येनैव भवत्यतो राज्ञां तथानुशासनमिति भावः। किमिति भूतानि भावयतीत्याकाङ्क्षायामाहुः—विश्वात्मेति। यतस्तत्तद्रूपः स्वयमेव क्रीडार्थं जातोतस्तत्तद्रूपं संरक्षन् क्रीडतीति भावः। हे महाराजेति संबोधनेन तवापि राजमध्यवर्तित्वाद्धर्मानुष्ठात्रनुसरणं युक्तमिति सूचयन्ति॥ १८-१९॥ ❀ ❀ नन्वेवं भगवांस्तुष्यतु, तत्संतोषेण किं स्यात्तत्राह—तस्मिन्नति। तस्मिन् भगवति सन्तुष्टे सति किमप्राप्तं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थेषु किं फलं दुर्लभम्? न किमपीत्यर्थः। तत्र हेतुमाह—जगतामिति। यतो जगतां चतुर्दशलोकानामीश्वरो ब्रह्मा तस्यापीश्वरः सोऽतः सर्वं दातुं समर्थ इति भावः। किंच सर्वमूलत्वादपि यथा वृक्षमूलसेककर्त्रे सर्वा एव शाखाः फलं ददति तथा तस्मै भगवदुपासकाय लोकपालैः सहिताः सर्वेपि लोकाः प्राणिनः आदृताः सादरा बलिं हरन्ति भोगं संपादयन्ति। हिशब्देन ध्रुवप्रह्लादाम्बरीषादीनां भगवद्भक्तानां प्रसिद्धोयं महिमेति दर्शयन्ति॥ २०॥

### भाषानुवादः

जो राजा दुष्ट मन्त्री और चोर आदिसे अपनी प्रजाकी रक्षा करते हुए न्यायानुकूल कर लेता है, वह इस लोकमें और परलोकमें दोनों जगह सुख पाता है॥ १७॥ ❀ ❀ जिसके राज्य अथवा नगरमें वर्णाश्रम-धर्मोंका पालन करनेवाले पुरुष स्वधर्मपालनके द्वारा भगवान् यज्ञपुरुषकी आराधना करते हैं, महाभाग! अपनी आज्ञाका पालन करनेवाले उस राजासे भगवान् प्रसन्न रहते हैं; क्योंकि वे ही सारे विश्वकी आत्मा तथा सम्पूर्ण भूतोंके रक्षक हैं॥ १८-१९॥ ❀ ❀ भगवान् ब्रह्मादि जगदीश्वरोंके भी ईश्वर हैं, उनके प्रसन्न होनेपर कोई भी वस्तु दुर्लभ नहीं रह जाती। तभी तो इन्द्रादि लोकपालोंके सहित समस्त लोक उन्हें बड़े आदरसे पूजोपहार समर्पण करते हैं॥ २०॥

तं सर्वलोकामरयज्ञसंग्रहं त्रयीमयं द्रव्यमयं तपोमयम्।
यज्ञैर्विचित्रैर्यजतो भवाय ते राजन् स्वदेशाननुरोद्धुमर्हसि॥ २१॥
यज्ञेन युष्मद्विषये द्विजातिभिर्वितायमानेन सुराः कला हरेः।
स्विष्टाः सुतुष्टाः प्रदिशन्ति वाञ्छितं तद्धेलनं नार्हसि वीर चेष्टितुम्॥२२॥

### वेन उवाच

बालिशा बत यूयं वा अधर्मे धर्ममानिनः। ये वृत्तिदं पतिं हित्वा जारं पतिमुपासते॥ २३॥
अवजानन्त्यमी मूढा नृपरूपिणमीश्वरम्। नानुविन्दन्ति ते भद्रमिह लोके परत्र च॥ २४॥
को यज्ञपुरुषो नाम यत्र वो भक्तिरीदृशी। भर्तृस्नेहविदूराणां यथा जारे कुयोषिताम्॥ २५॥
विष्णुर्विरिञ्चो गिरिश इन्द्रो वायुर्यमो रविः। पर्जन्यो धनदः सोमः क्षितिरग्निरपाम्पतिः॥ २६॥
एते चान्ये च विबुधाः प्रभवो वरशापयोः। देहे भवन्ति नृपतेः सर्वदेवमयो नृपः॥ २७॥
तस्मान्मां कर्मभिर्विप्रा यजध्वं गतमत्सराः। बलिं च मह्यं हरत मत्तोऽन्यः कोऽग्रभुक् पुमान्॥ २८॥

### मैत्रेय[2] उवाच

इत्थं विपर्ययमतिः पापीयानुत्पथं गतः। अनुनीयमानस्तद्याच्ञां न च[3]क्रे भ्रष्टमङ्गलः॥ २९॥

अन्वयः—राजन् सर्वलोकामरयज्ञसङ्ग्रहम् त्रयीमयम् द्रव्यमयम् तपोमयम् तम् विचित्रैः यज्ञैः ते भवाय यजतः स्वदेशान् अनुरोद्धुम् अर्हसि॥ २१॥ ❀ ❀ वीर युष्मद्विषये हरेः कलाः सुराः द्विजातिभिः वितायमानेन यज्ञेन स्विष्टाः सुतुष्टाः वाञ्छितम् प्रदिशन्ति तद्धेलनम् चेष्टितुम् न अर्हसि॥ २२॥ ❀ ❀ बत अधर्मे धर्ममानिनः यूयम् वै बालिशाः ये वृत्तिदम् पतिम् हित्वा जारम् पतिम् उपासते॥ २३॥ ❀ ❀ अमी मूढाः नृपरूपिणम् ईश्वरम् अवजानन्ति ते इह लोके च परत्र भद्रम् न अनुविन्दन्ति॥ २४॥ ❀ ❀ यथा भर्तृस्नेहविदूराणाम् कुयोषिताम् जारे वः यत्र ईदृशी भक्तिः यज्ञपुरुषः कः नाम॥ २५॥ ❀ ❀ विष्णुः विरिञ्चः गिरिशः इन्द्रः वायुः यमः रविः पर्जन्यः धनदः सोमः क्षितिः अग्निः अपांपतिः

---

१. प्रा० पा०—वै। २. प्राचीने पाठे 'मैत्रेय उवाच' इत्यंशो न। ३. प्रा० पा०—मेने।

॥ २६ ॥ ❀ ❀ एते च अन्ये वरशापयोः प्रभवः विबुधाः नृपतेः देहे भवन्ति नृपः सर्वदेवमयः ॥ २७ ॥ ❀ ❀ विप्राः तस्मात् गतमत्सराः कर्मभिः माम् यजध्वम् च मह्यम् बलिम् हरत मत्तः अन्यः अग्रभुक् पुमान् कः ॥ २८ ॥ ❀ ❀ इत्थम् विपर्ययमतिः पापीयान् उत्पथम् गतः अनुनीयमानः भ्रष्टमङ्गलः तद्याच्ञाम् न चक्रे ॥ २९ ॥

### श्रीधरस्वामिविरचित-भावार्थदीपिका

सर्वांल्लोकांश्च तत्पालानमरांश्च तत्प्रापकान्यज्ञांश्च संगृह्णाति नियच्छतीति तथा तं विचित्रैर्द्रव्ययज्ञतपोज्ञानादिभिः भवाय समृद्धये स्वदेशांस्तद्वासिनो जनान् अनुरोद्धुमनुवर्तितुम् ॥ २१ ॥ ❀ ❀ युष्मद्विषये त्वद्देशे हरेः कला अंशाः सुराः, तेषां सुराणां हेलनमवज्ञाम् ॥ २२ ॥ ❀ ❀ बालिशा अज्ञाः वृत्तिदमन्नादिप्रदं मां हित्वा ॥ २३-२४ ॥ ❀ ❀ भर्तृस्नेहो विदूरो येषाम् ॥ २५-२६ ॥ ❀ ❀ देहे भवंति नृपतेरतो नृपतिरेवेश्वर इतरे तदंशा इति भावः ॥ २७ ॥ ❀ ❀ बलिं च करादिकम् । अग्रभुगाराध्यः ॥ २८-२९ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

नियच्छति नियोजयति पालयति वा, त्रयीमयं त्रयीप्रतिपाद्यं तद्रूपं वा, द्रव्यमयं सर्वस्वरूपम् । तपोमयं तत्प्राप्यं ते भवाय यजतः 'भवो भद्रे हरे प्राप्तौ' इति यादवः । अनुवर्त्तितुं वा ॥ २१-२२ ॥ ❀ ❀ ऋषीणां वाक्यामृतं शिरसि वज्रपातोपममिव मन्वानो गूढाक्षेपाभिसंधिर्वेनः प्रतिवक्ति वेन उवाचेति । ये भवंतः वृत्तिदं माम् अद्यैव मया फलमूलादित्रोटने निषिद्धे सद्य एव मरिष्यंतीति भावः । जारं वयोहरं तत्परिचर्यायां निरर्थं वयो गमयंतीति भावः । तेनाहमेव वृत्तेर्दाने निरोधे च प्रभुरतोऽहमेवार्च्य इति ध्वनितम् ॥ २३ ॥ ❀ ❀ अमीति । मुनिवृंदमुद्दिश्याह येऽमी इह लोके नृपकोपात्तेपामनर्थाप्तिः प्रसिद्धैव परलोकेऽपि सर्वदेवमयनृपावज्ञातो महानर्थाप्तिश्रूयत एव "क्लिश्यंत्येव महाघोरनरके ह्यनिशं नराः । देवब्राह्मणभूपालधेनूनामवहेलनात् ॥" इत्यादिपुराणांतरात् ॥ २४ ॥ ❀ ❀ पुनरपि स्वस्मिन्छापयोग्यापराधं कर्त्तुमाह-क इति । कुयोषितां स्वैरिणीनाम् ॥ २५ ॥ ❀ ❀ अस्मद्भक्तिविषयो नाम्ना विष्णुः सृष्ट्यादिकारिणस्तदाज्ञानियता विरिंच्यादयस्तत्परिवारभूता इति भ्रांतिर्मा भूद्यत एते विष्णुप्रभृतयो मयि संनिहिताः, अतस्तत्तच्छक्तिमत्त्वादहमेवाखिलोत्तम इत्याह-विष्णुरित्यादिना । अपां पतिर्वरुणः । पर्जन्यो धर्मः स च यमाद्भिन्नो देवविशेषः वर्षति निखिलमभीष्टमिति निरुक्तेः । 'पृषु-वर्षणे' पृषेरंत्यस्य जोऽन्यप्रत्ययश्चोणादौ प्रतिपादितः । यद्वा पर्जन्य इति सर्वेषां विशेषणम् ॥ २६ ॥ ❀ ❀ अन्येऽश्विन्यादयश्च प्रभवः समर्थाः ॥ २७ ॥ ❀ ❀ यतोऽहं सर्वदेवमयस्तस्माद्धेतोः कर्मभिर्यज्ञाद्यनुष्ठानैः । अस्मत्सदृशो मनुष्योयमिति मत्सरं परित्यज्येत्यर्थः ॥ २८ ॥ ❀ ❀ अनुनीयमानः प्रबोध्यमानः । तेषामृषीणां, याच्ञां प्रार्थनाम् । यतो भ्रष्टानि मंगलानि शुभकर्माणि जीवनादिहेतुभूतानि यस्य स तथा ॥ २९ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

नियच्छत्यधितिष्ठति अनुवर्त्तितुं तत्रैव यजने प्रवर्त्तयितुम् ॥ २१-२२ ॥ ❀ ❀ अधर्मे जारोपासने वृत्तिदमिति अद्यैव मया फलमूलादित्रोटने निषिद्धे सद्य एव मरिष्यथ इति भावः ॥ २३-२५ ॥ ❀ ❀ विष्णुरिति युग्मकम् ॥ २६-२७ ॥ ❀ ❀ तस्मादीश्वरत्वात् ॥ २८ ॥ ❀ ❀ अनुनीयमानस्सामभिः प्रबोध्यमानः ॥ २९ ॥

### श्रीमद्वीरराघवव्याख्या

सर्वान् लोकान् तत्पतींश्चामरानमरत्वप्रापकान् यज्ञांश्च संगृह्णाति नियच्छतीति तथा त्रयीमयं धर्माधर्मादिबोधकत्रयीप्रचुरं वेदैकप्रमाणकत्वेन तत्प्राचुर्य्यं विवक्षितं त्रयीभागद्वयात्मकत्वात् किंरूपं पूर्वभागप्राचुर्य्यं किंरूपं चोपरितनभागप्राचुर्य्यमित्यत्र तद्विवेचयन् विशिनष्टि यज्ञमयं तपोमयमिति । यज्ञप्रचुरं पूर्वभागोदितानां तेषामाराधनत्वे तत्प्राचुर्य्यं विवक्षितम् । आराधनप्रकारप्रकाशकत्वेन पूर्वभागस्य तस्मिन् प्रामाण्यमिति भावः । अत्र "सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । वेदैश्च सर्वैरहमेव वेद्यः" इत्यादिकमनुसंधेयं, तपोमयं तपांसि उपासनानि तत्प्रचुरमाराध्यस्वरूपगुणादिप्रकाशकत्वेनोपरितनभागस्य प्रामाण्यमिति भावः । तं विचित्रैर्द्रव्यदेवतादिभिर्नानाविधैर्यज्ञैः ते अभवाय मुक्तये, भवायेति छेदे ते तव समृद्धय इत्यर्थः । यजतः यागं कुर्वाणान् स्वदेशान् तद्वासिनो जनान् अनुरोद्धुम् अनुवर्त्तितुं हे राजन् ! अर्हसि ॥ २१ ॥ ❀ ❀ यस्य राज्ञो देशवासिभिर्जनैर्भगवानिज्यते सोऽपि मुच्यत इत्यभिप्रायेण ते भवायेत्युक्तं तदेव प्रपञ्चयति । यज्ञैरिति । युष्मद्विषये तव देशे द्विजातिभिर्वितायमानेन निरन्तरं क्रियमाणेन यज्ञेन हरेर्भगवतः कलाः शरीरभूताः सुराः इन्द्रादयो देवाः स्विष्टाः यथाशास्त्रमिज्यमाना अत एव तुष्टास्तव वाञ्छितं प्रदिशन्ति प्रयच्छन्ति हे वीर ! तद्धेलनं तेषां देवानां हेलनम् अवज्ञां चेष्टितुं कर्तुं भवान्नार्हति ॥ २२ ॥ ❀ ❀ एवं विज्ञापितो वेन आहेत्याह वेन इति । यूयं

बालिशा अज्ञाः वै नूनं कुतः यतः अधर्मे धर्ममानिनः धर्मं मन्वानाः। तदेव प्रपञ्चयति–ये त्वादृशा जनाः वृत्तिदम् अन्नादिप्रदं प्रभुं हित्वा जारं पतिमुपासते ॥ २३ ॥ ❀ ❀ ये च मूढाः नृपरूपेणावस्थितमीश्वरमवजानन्ति अवज्ञां कुर्वन्ति ते जना इह परत्र च लोके भद्रं कल्याणं न विन्दन्ति न प्राप्नुवन्ति किन्तु दुःखिता भवन्तीत्यर्थः ॥ २४ ॥ ❀ ❀ भर्तृस्नेहे विघातो यासां तासां कुयोपितां निजस्त्रीणां यथा जारपुरुषे भक्तिस्तथा यज्ञपुरुषे वः युष्माकमीदृशी भक्तिः स यज्ञपुरुषः को नाम ? किंशब्दः कुत्सायाम् असम्भावनायां वा ॥ २५ ॥ ❀ ❀ वरशापयोरनुग्रहनिग्रहयोः प्रभवः समर्थाः विष्ण्वादयोऽन्ये च देवा नृपते राज्ञो देहे वसन्ति, अतो नृपः सर्वदेवमयः सर्वदेवताप्रचुरः ॥ २६–२७ ॥ ❀ ❀ तस्मात् नृपस्य सर्वदेवमयत्वात् मामेव हि विप्रा गतमत्सरा यूयं यजध्वं मह्यमेव बलिं स्वामिग्राह्यभागादिकं हरत समर्पयत। अग्रभुक् आराध्यः कः पुमानस्ति ॥ २८ ॥ ❀ ❀ इत्थमेवं विपरीतमतिः पापीयान् उत्पथं दुर्मार्गं प्राप्तः अनुनीयमानोऽपि प्रार्थ्यमानोऽपि तेषामृषीणां याच्ञां न चक्रे यतोऽयं भ्रष्टमङ्गलः ॥ २९ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

इतोऽपि श्रीनारायण एवेज्यत इत्याहुरित्याह तं सर्वेति। सर्वशब्दः प्रत्येकमभिसंबध्यते सर्वान् लोकानमरान् यज्ञान् सङ्गृह्णातीति सर्वलोकामरयज्ञसंग्रहस्तं त्रय्या त्रिभिर्वेदैः प्रतिपाद्येषु मुख्यप्रतिपाद्यत्वात्त्रयीमयस्तं सर्वद्रव्याणां भगवद्विषयत्वाद्धरिर्द्रव्यमयस्तम् अनेनैव तपोमयमिति व्याख्यातम्। "सर्वसंग्रहणाद्विष्णुः सर्वसंग्रह उच्यते। वेदस्य तस्य वक्तृत्वात्प्राधान्यं तु त्रयीमयः ॥ सर्वं तद्विषयत्वेन मुख्यं सर्वमयस्ततः ॥" इति वाक्यं चात्र मानम्, एवंविधं श्रीहरिं विचित्रैर्यज्ञैस्ते तव भवाय भद्राय यजतः स्वदेशान् स्वस्य तव देश आदेश उपदेशो येभ्यो यद्विभ्यस्ते स्वदेशास्तान्, स्वस्य देशो विसर्जनं दानं येषां ते तथा तान्विप्रांस्त्वमनुरोद्धुमनुकूलीकर्तुमर्हसीत्यर्थः, "भवो भद्रे हरे प्राप्तौ" इति यादवः ॥ २१ ॥ ❀ ❀ इन्द्रादिविषयेण स्वर्गादिफलप्रदेन यज्ञेन हरियजनं कथं संगच्छते प्रत्युत तद्विघातेनानर्थ एव स्यादित्याशङ्क्येन्द्रादयो विष्णोर्मुख्यसन्निधानपात्रत्वेन तदिज्यया तत्प्रीत्या प्रीता यजमानाय यद्यदभीष्टं तत्तद्दिशन्त्यन्यथा यजने तदवज्ञयानर्थमेव प्रयच्छन्तीत्याहुरित्याह यज्ञेनेति। विष्णोः "सन्निहितत्वात्तु सर्वे देवा हरेः कलाः" इति वचनान्मत्स्यादिवत्कला न भवन्तीति ज्ञातव्यं, कल-बन्धन इति धातोरात्मनि हरेः सन्निधानं बध्नन्तीति कला इत्यर्थः ॥ २२ ॥ ❀ ❀ ऋषीणां वाक्यामृतं शिरसि वज्रपातोपममिव मन्यमानो गूढाक्षेपाभिसंधिर्वेनः प्रतिवक्तीत्याह। वेन इति ॥ २३ ॥ ❀ ❀ स्वबुद्ध्या बालिशत्वमुपपादयति। अवजानन्तीति ॥ २४ ॥ ❀ ❀ पुनरपि वेनः शापयोग्यापराधमात्मनि कर्तुं वक्ति। को यज्ञ इति ॥ २५ ॥ ❀ ❀ अस्मद्भक्तिविषयो नाम्ना विष्णुः सृष्ट्यादिकारिणस्तदाज्ञानियता विरिञ्च्यादयस्तत्परिवारभूता इति भ्रान्तिर्माभूद्यत एवैते विष्णुप्रभृतयो मयि सन्निहिता अतस्तत्तच्छक्तिमत्त्वादहमेवाखिलोत्तम इज्यतम इत्याह विष्णुरित्यादिना ॥ २६ ॥ ❀ ❀ वरशापयोर्दाने प्रभवः सर्वदेवमय इत्युपसंहारः ॥ २७–२८ ॥ ❀ ❀ किं फलितं तदाह इत्थमिति। तेषामृषीणां याच्ञाम् ॥ २९ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

विष्णुरिति युग्मकम् ॥ २६–३६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ते भवाय तवैव भूत्यै यजतो यजनकर्तॄन् स्वदेशवर्तिनो जनान् अनुरोद्धुं तत्रैव यजने प्रवर्तयितुम् ॥ २१ ॥ ❀ ❀ चेष्टितुं कर्तुम् ॥ २२ ॥ ❀ ❀ वृत्तिदं पतिमिति अद्यैव मया फलमूलादित्रोटने निषिद्धे सद्य एव मरिष्यथेति भावः ॥ २३–२९ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

हे राजन्! यथा मूले स्कन्धादीनां संग्रहो भवति एवं सर्वेषां लोकनाममराणां तद्वासिनां यज्ञानां तत्प्रापकाणां च संग्रहो यस्मिन् सर्वात्मनि तं त्रयीमयं यज्ञबोधकवेदत्रयीरूपं द्रव्यमयं यज्ञियद्रव्यरूपं तपोमयं तप आलोचनं ज्ञानं मोक्षरूपं तत्साधनरूपं विचित्रैः स्वाधिकारप्राप्तैः प्रवृत्तिरूपैर्निवृत्तिरूपैश्च यजतः स्वदेशान् उभयविधान् स्वदेशस्थान् अनुरोद्धुं तत्तद्धर्मे नियोजयितुं त्वमर्हसि। कस्मै प्रयोजनाय ते भवाय ऋद्ध्यै, अभवायेति छेदे मोक्षाय, एवं कृते तवापि भुक्तिर्मुक्तिश्च भविष्यतीत्यर्थः ॥ २१ ॥ ❀ ❀ तद्धेलनं तस्य सर्वात्मनो हरेर्हेलनमवज्ञानं चेष्टितुं हे वीर! नार्हसि ॥ २२ ॥ ❀ ❀ बालिशा अज्ञाः वृत्तिदं पतिं मां हित्वा नार्य इव जारं यज्ञपुरुषमुपासते ॥ २३–२४ ॥ ❀ ❀ भर्तुः स्नेहो विदूरे यासां तासां कुयोषितां यथा जारे भक्तिस्तथा मत्स्नेहविदूराणां वो युष्माकं यत्र ईदृशी भक्तिः स यज्ञपुरुषः क वर्तते ॥ २५ ॥ ❀ ❀ पर्जन्यः वृष्ट्यधिष्ठात्री देवता, स इन्द्राभिन्न एव पर्जन्यो भगवानिन्द्र इति वक्ष्यमाणात् ॥ २६–२९ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

भगवतः सर्वमूलत्वमेव प्रदर्शयन्त आहुः—तमिति। सर्वांश्चतुर्दशात्मकान् लोकान् अमरान् तत्तल्लोकपालांश्च लोकप्रापकान् यज्ञांश्च वृक्षं बीजवत्स्वस्मिन् संगृह्णातीति सर्वलोकामरयज्ञसङ्ग्रहस्तं त्रयीमयं ऋगादिवेदत्रयात्मकं द्रव्यमयं तत्तद्द्रव्यात्मकं तपोमयं तपसा द्रष्टुं योग्यं तं सर्वात्मकं भगवन्तं विचित्रैः स्वाध्यायद्रव्यादिमयैर्यज्ञैस्ते तव भवायोद्भवाय यजतः स्वदेशान् स्वदेशवासिनो जनान् अनुरोद्धुं तदनुरोधी भवितुमर्हसि। ननु देशस्थजनकृतस्य यजनस्य मदुद्भवहेतुत्वं कथमित्याशङ्क्य राजत्वेन प्रजाकृतसुकृतस्य षष्ठांशभागित्वात्प्रजाकृतस्य तवोद्भवहेतुत्वमिति सूचयन्तः संबोधयन्ति—हे राजन्निति॥ २१॥ ❀ ❀ ननु तत्तद्यज्ञैस्तत्तद्देवयजनं प्रसिद्धं कथं तैर्भगवतो यजनं कथं वा ततः फलप्राप्तिरित्याशङ्क्य तत्तद्देवानां तदंशत्वात्तेषां यजनमपि तद्यजनमेव, फलमपि भगवन्नियुक्तेभ्य एव तेभ्यो भवतीत्याहुः—यज्ञेनेति। युष्मद्विषय इति बहुत्वं तस्य महत्त्वप्रदर्शनाय त्वद्देश इत्यर्थः। द्विजातिभिः त्रैवर्णिकैर्वितायमानेन प्रवर्त्यमानेन यज्ञेन हरेः सकलदुःखहर्तुर्भगवतः कला अंशाः सुरा देवा इंद्रादयः स्विष्टाः सम्यक् पूजिताः अत एव सुतुष्टाः सन्तो यज्ञकर्तृणां देशाधिपतित्वेन तव च वाञ्छितमभिलषितं प्रदिशन्ति सर्वं संपादयन्ति। अतो हे वीर! तेषां देवानां तदंशिनो भगवतो वा हेलनं यज्ञादिप्रतिषेधेनावज्ञां चेष्टितुं कर्तुं नार्हसि। पूज्यावज्ञाया द्वेषोत्पादकत्वात्तद्द्वेषेण तवानिष्टं स्यादिति भावः। प्रदिशंतीति वर्त्तमाननिर्देशेन धर्मिष्ठस्य तव पितुरनुमोदनेन यज्ञादिभिः पूजितानां देवानां प्रसादादेव तव जनस्य चैवं वैभवो नात्र तव कश्चित्प्रभावलेशोऽस्तीति सूचितम्। हे वीर इति संबोधनेन समर्थस्य तवापि यज्ञानुष्ठानमावश्यकमेव, तद्यदि न करोषि तदान्यानुष्ठितस्यानुमोदनं कुरु, तत्प्रतिषेधस्तु सर्वथा तवानर्थकर इति ज्ञापितम्॥ २२॥ ❀ ❀ एवं मुनिवाक्यानि श्रुत्वा वेनो यदुक्तवांस्तद्दर्शयति—बालिशा इति षड्भिः। यतो यूयमधर्मे मद्भजनत्यागपूर्वकविष्णुभजने धर्ममानिनोऽतो बालिशा वै भ्रान्ता एवेत्यन्वयः। बतेति खेदे। यतः पामराणां भ्रमो भवति स युष्माकं मुनीनां कथं जात इति भावः। भ्रममेव दर्शयति—य इति। यथा कुयोषितो वृत्तिदं स्वपतिं हित्वा स्वार्थपरमन्यं नरं स्वपतित्वेन कल्पितमुपासते, तथा ये भवन्तो वृत्तिदं जीविकाप्रदं राजानं पतिं पालकं मां हित्वा जारवत्कल्पितं पतिं विष्णुमुपासतेऽतो बालिशा इत्यन्वयः। यथा जारो न सर्वदा सर्वथा ताः स्त्रियः पाति, किन्तु यावत्प्रयोजनमेव तथा विष्णुरपि न सर्वदा सर्वथा युष्मान् पालयिष्यति, किंतु यावत्तदनुसेवनं तावदेवातः सर्वदा सर्वथा पालकं मां हित्वा तदुपासका यूयं भ्रान्ता एवेति भावः॥ २३॥ ❀ ❀ नृपं हित्वान्यभजनस्य भ्रान्तिमूलत्वादेव तं नृपरूपिणमीश्वरं येऽवजानन्ति तं हित्वान्यभजनेन तदपमानं कुर्वन्ति ते अमी इहास्मिंल्लोके परत्र परलोके चानु कदापि भद्रं कल्याणं न विन्दन्ति न लभन्त इत्यन्वयः॥ २४॥ ❀ ❀ हरेः कलाः सुरा इति यद्देवानां भगवदंशत्वमुक्तं तदसहमानो भगवत्सहितानां तेषां स्वांशत्वं दर्शयति—क इति त्रिभिः। मदंशाद्भिन्नो यज्ञपुरुषो यज्ञाधिष्ठाता विष्णुर्नाम प्रसिद्धः कोऽस्ति? यत्र यज्ञपुरुषे वो युष्माकमीदृशी अत्युत्कटा भक्तिरस्तीत्यन्वयः। तत्र पूर्वं सूचितमेव दृष्टान्तं दर्शयति—भर्त्रिति। भर्तृस्नेहो विदूरो यासां तासां कुयोषितां निन्दितस्त्रीणां जारे परपुरुषे यथा भक्तिर्भवति तथेत्यर्थः॥ २५॥ ❀ ❀ पर्जन्यो मेघाभिमानी देवः। अपांपतिर्वरुणः॥ २६॥ ❀ ❀ एते पूर्वश्लोकोक्ता विष्ण्वादयोऽन्येऽनुक्ताश्च विबुधा देवा वरशापयोर्ये प्रभवः समर्थास्ते सर्वे यतो नृपतेर्देहावयवभूता भवन्ति ततः सर्वदेवमयो नृप इत्यन्वयः॥ २७॥ ❀ ❀ एवं सामान्यतो नृपाणां सर्वदेवमयत्वमुक्त्वेदानीं स्वस्य रूपत्वेन सर्वदेवमयत्वं मत्वा स्वाराधनमेवाज्ञापयति—तस्मादिति। यस्मान्नृपत्वादहमेव सर्वदेवमयस्तस्मान्मत्तोऽन्योऽग्रभुक् प्रथमभोक्ता पुमान् यज्ञपुरुषः कः? न कोपीत्यन्वयः। अतः सर्वदेवमयं मां हित्वा यद्युष्माकमन्याराधनं तत्केवलं मदुत्कर्षासहनरूपमत्सरेणैवेति तं त्यक्त्वा गतमत्सराः शुद्धचित्ताः सन्तो भो विप्राः मामेव कर्मभिर्यजध्वम्, यैः कर्मभिरहमाराधितः प्रसन्नः स्यां तान्येव कर्माणि कुरुतेत्यर्थः। तथा बलिं शुल्कं च मह्यं हरत समर्पयत। हे विप्रा इति संबोधनेन विप्राणां विचारवतां युष्माकंमय्युपासनमेवोचितम्, नांशोपासनमिति सूचयति॥ २८॥ ❀ ❀ एवं विरुद्धवादिनं वेनं निन्दति—इत्थमिति। इत्थं नृपवर्यं निबोधेत्यादिपूर्वोक्तप्रकारेण मुनिभिरनुनीयमानोपि वेनस्तेषां मुनीनां याच्ञां सदाचारप्रवृत्तिविषयां नाङ्गीचक्र इत्यन्वयः। तद्याच्ञायास्तदुद्भवहेतुत्वेप्यनङ्गीकारे हेतुमाह—विपर्ययमतिरिति। विपर्ययं प्राप्ता भ्रान्ता मतिर्यस्य सः। तत्र हेतुः पापीयानिति। तत्रापि हेतुमाह—उत्पथं गत इति। सन्मार्गाद्विरुद्धं मार्गं गत इत्यर्थः। तत्रापि हेतुमाह—भ्रष्टमङ्गल इति। मङ्गलात् शुभाचारात् भ्रष्टो यत इत्यर्थः॥ २९॥

## भाषानुवादः

राजन्! भगवान् श्रीहरि समस्त लोक, लोकपाल और यज्ञोंके नियन्ता हैं, वेदत्रयीरूप, द्रव्यरूप और तपःस्वरूप हैं। इसलिये आपके जो देशवासी आपकी उन्नतिके लिये अनेक प्रकारके यज्ञोंसे भगवान्का यजन करते हैं, आपको उनके अनुकूल ही रहना चाहिए॥ २१॥ ❀ ❀ जब आपके राज्यमें ब्राह्मणलोग यज्ञोंका अनुष्ठान करेंगे, तब उनकी पूजासे प्रसन्न होकर भगवान्के अंशस्वरूप देवता आपको मनचाहा फल देंगे। अतः वीरवर! आपको यज्ञादि धर्मानुष्ठान बंद करके देवताओंका तिरस्कार नहीं करना चाहिए॥ २२॥ ❀ ❀ वेनने कहा—तुमलोग बड़े मूर्ख हो! खेद है, तुमने अधर्ममें ही धर्मबुद्धि

कर रक्खी है। तभी तो तुम जीविका देनेवाले मुझ साक्षात् पतिको छोड़कर किसी दूसरे जारपतिकी उपासना करते हो ॥ २३ ॥ ❀ ❀ जो लोग मूर्खतावश राजारूप परमेश्वरका अनादर करते हैं, उन्हें न तो इस लोकमें सुख मिलता है और न परलोकमें ही ॥ २४ ॥ ❀ ❀ अरे! जिसमें तुमलोगोंकी इतनी भक्ति है, वह, यज्ञपुरुष है कौन, यह तो ऐसी ही बात हुई जैसे कुलटा स्त्रियाँ अपने विवाहित पतिसे प्रेम न करके किसी परपुरुषमें आसक्त हो जायँ ॥२५॥ ❀ ❀ विष्णु, ब्रह्मा, महादेव, इन्द्र, वायु, यम, सूर्य, मेघ, कुबेर, चन्द्रमा, पृथ्वी, अग्नि और वरुण तथा इनके अतिरिक्त जो दूसरे वर और शाप देनेमें समर्थ देवता हैं, वे सब-के-सब राजाके शरीरमें रहते हैं; इसलिये राजा सर्वदेवमय है और देवता उसके अंशमात्र हैं ॥२६-२७॥ ❀ ❀ इसलिये ब्राह्मणो! तुम मत्सरता छोड़कर अपने सभी कर्मोंद्वारा एक मेरा ही पूजन करो और मुझीको बलि समर्पण करो। भला मेरे सिवा और कौन अग्रपूजाका अधिकारी हो सकता है? ॥ २८ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—इस प्रकार विपरीत बुद्धि होनेके कारण वह अत्यन्त पापी और कुमार्गगामी हो गया था। उसका पुण्य क्षीण हो चुका था, इसलिये मुनियोंके बहुत विनयपूर्वक प्रार्थना करनेपर भी उसने उनकी बातपर ध्यान न दिया ॥ २९ ॥

इति तेऽसत्कृतास्तेन द्विजाः पण्डितमानिना। भग्नायां भव्ययाच्ञायां तस्मै विदुर चुक्रुधुः ॥ ३० ॥
हन्यतां हन्यतामेष पापः प्रकृतिदारुणः। जीवञ्जगदसावाशु कुरुते भस्मसाद् ध्रुवम् ॥ ३१ ॥
नायमर्हत्यसद्वृत्तो नरदेववरासनम्। योऽधियज्ञपतिं विष्णुं विनिन्दत्यनपत्रपः ॥ ३२ ॥
को वैनं[1] परिचक्षीत[3] वेनमेकमृतेऽशुभम्। प्राप्त ईदृशमैश्वर्यं यदनुग्रहभाजनः ॥ ३३ ॥
इत्थं व्यवसिता हन्तुमृषयो रूढमन्यवः। निजघ्नुर्हुङ्कृतैर्वेनं हतमच्युतनिन्दया ॥ ३४ ॥
ऋषिभिः स्वाश्रमपदं गते पुत्रकलेवरम्। सुनीथा पालयामास विद्यायोगेन शोचती ॥ ३५ ॥
एकदा मुनयस्ते तु सरस्वत्सलिलाप्लुताः[4]। हुत्वाग्नीन् सत्कथाश्चक्रुरुपविष्टाः सरित्तटे ॥ ३६ ॥
वीक्ष्योत्थितान्महोत्पातानाहुर्लोकभयङ्करान्[5]। अप्यभद्रमनाथाया दस्युभ्यो न भवेद्भुवः ॥ ३७ ॥
एवं मृशन्त ऋषयो धावतां सर्वतोदिशम्। पांसुः समुत्थितो भूरिश्चोराणामभिलुम्पताम् ॥ ३८ ॥
तदुपद्रवमाज्ञाय लोकस्य वसु लुम्पताम्। भर्तर्युपरते तस्मिन्नन्योन्यं च जिघांसताम् ॥ ३९ ॥
चोरप्रायं जनपदं हीनसत्त्वमराजकम्। लोकान्नावारयञ्छक्ता अपि तद्दोषदर्शिनः ॥ ४० ॥

अन्वयः—विदुर पण्डितमानिना तेन इति असत्कृताः ते द्विजाः भव्ययाच्ञायाम् भग्नायाम् तस्मै चुक्रुधुः ॥ ३० ॥ ❀ ❀ पापः प्रकृतिदारुणः एषः हन्यताम् हन्यताम् असौ जीवन् ध्रुवम् आशु जगत् भस्मसात् कुरुते ॥ ३१ ॥ ❀ ❀ यः अनपत्रपः अधियज्ञपतिम् विष्णुम् विनिन्दति असद्वृत्तः अयम् नरदेववरासनम् न अर्हति ॥ ३२ ॥ ❀ ❀ वा यदनुग्रहभाजनः ईदृशम् ऐश्वर्यम् प्राप्तः तम् एनम् विष्णुम् एकम् अशुभम् वेनम् ऋते कः परिचक्षीत ॥ ३३ ॥ ❀ ❀ इत्थम् हन्तुम् व्यवसिताः रूढमन्यवः ऋषयः अच्युतनिन्दया हतम् वेनम् हुङ्कृतैः निर्जघ्नुः ॥ ३४ ॥ ❀ ❀ सुनीथा शोचती ऋषिभिः स्वाश्रमपदम् गते पुत्रकलेवरम् विद्यायोगेन पालयामास ॥ ३५ ॥ ❀ ❀ एकदा ते मुनयः तु सरस्वत्सलिलाप्लुताः अग्नीन् हुत्वा सरित्तटे उपविष्टाः सत्कथाः चक्रुः ॥ ३६ ॥ ❀ ❀ लोकभयङ्करान् महोत्पातान् उत्थितान् वीक्ष्य अनाथायाः भुवः दस्युभ्यः अपि अभद्रम् न भवेत् आहुः ॥ ३७ ॥ ❀ ❀ ऋषयः एवम् मृशन्तः सर्वतोदिशम् चोराणाम् अभिलुम्पताम् धावताम् भूरिः पांसुः समुत्थितः ॥ ३८ ॥ ❀ ❀ तत् तस्मिन् भर्तरि उपरते लोकस्य वसु लुम्पताम् च अन्योन्यम् जिघांसताम् उपद्रवम् आज्ञाय जनपदम् चोरप्रायम् अराजकम् हीनसत्त्वम् तद्दोषदर्शिनः शक्ता अपि लोकान् न अवारयन् ॥ ३९-४० ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

तेनासत्कृताः भग्नायां याच्ञायां चुक्रुधुः क्रोधं चक्रुः ॥ ३०-३२ ॥ ❀ ❀ परिचक्षीत निंदेत अशुभं वेनं विना। कृतघ्नतामाहुः। यदनुग्रहविषयः सन्नीदृशमैश्वर्यं यः प्राप्तः ॥ ३३ ॥ ❀ ❀ पूर्वं गूढमन्यव इदानीं रूढमन्यवः प्रकटकोपाः हुंकृतैर्हुंकारैः ॥ ३४ ॥ ❀ ❀ स्वाश्रमपदं प्रति ऋषिभिर्गते गमने कृते सति विद्यायोगेन मंत्रसहितया युक्त्या पालयामास ॥ ३५ ॥ ❀ ❀ पुंवद्भाव आर्षः, सरस्वत्याः सलिले आप्लुताः कृतस्नानाः विष्णुकथाश्चक्रुः ॥ ३६ ॥ ❀ ❀ तदा

---

१. प्रा० पा०—देवं। २. प्रा० पा०—तं। ३. प्रा० पा०—परिरक्षेत। ४. प्रा० पा०—सरित्स्वच्छजला०। ५. प्रा० पा०—भयान्तरान्।

तूत्पातान्वीक्ष्य नृपरहिताया: भुवोऽभद्रं न भवेत्किमित्याहुश्च ।। ३७ ।। ❁ ❁ एवं मृशंतस्तर्कयंत ऋषयः स्थिताः तदा धावतां चोराणां भूरिः पांसुः धूलिः समुत्थितः ।। ३८ ।। ❁ ❁ तत्तदा तेषां लोकस्य वसु धनं लुंपतां जिघांसतां चोपद्रवमाज्ञाय ।।३९।। ❁ ❁ तथा चोरप्रायमराजकं हीनसत्त्वं च जनपदमाज्ञाय शक्ता अप्यवारणे दोषदर्शिनोऽपि जना लुंपतो लोकान्नावारयन्नित्यन्वयः ।। ४० ।।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पंडितमानिना मूर्खेण तेन वेनेन ते मुनयः असत्कृता अवमानिताः । भव्या मंगलरूपा या याच्ञा तस्यां भग्नायामगृहीतायां त्वमपि दुष्टस्वभावमेतत्तुल्यं दुर्योधनं यथा बोधितवानित्यभिप्रायेणाह—विदुरेति । यद्वा—भव्येत्यपि संबुद्धिरेव । त्वमपि तेषां भव्यहेतुत्वाद्दर्षिवद्भव्योऽसीत्यभिप्रायः ।। ३० ।। ❁ ❁ कुरुते करिष्यते, तस्मादयमेव भस्मसात्कर्त्तव्य इति एकस्मिन्नस्मिन्हतेऽनेकेषां रक्षासिद्धेर्नैतद्धनने दोष इति भावः ।। ३१ ।। ❁ ❁ नरदेवानां वरासनं सिंहासनम् । अधियज्ञो यज्ञाधिष्ठाता स चासौ पतिः पालकस्तम् । न अपत्रपा लज्जा यस्य स यथा 'लज्जा सापत्रपान्यतः' इत्यमरः ।। ३२ ।। ❁ ❁ एतं विष्णुम् । भाजनशब्दस्य पुंस्त्वमार्षम् । तीर्थस्तु—भाजनमित्येव पपाठ । विश्वनाथस्तु—यद्यस्मादीदृशमैश्वर्यं प्राप्तो हि अनुग्रहभाजनं भवति तस्मान्निरनुग्रहादयं हंतव्य इति भाव इति व्याचख्यौ ।। ३३ ।। ❁ ❁ निर्जघ्नुर्मारयामासुः । तद्धनने दोषाभावमाह हतमिति ।। ३४ ।। ❁ ❁ युक्त्या औषधिसहिततैलप्रक्षेपाद्युपायेन ।। ३५ ।। ❁ ❁ यैर्भृग्वादिभिर्वेनो मारितस्ते सतोऽभ्यर्हितस्य विष्णोः कथाः इत्यर्थः । आर्ष इति सरस्वत्पदेन सरसीमद्देशीयजलकृतस्नाना इति भ्रांतिर्मा भूदिति भावः ।। ३६ ।। ❁ ❁ तदा सत्कथावसरे न भवेत्किमपि तु भवेदेवेत्यर्थः ।। ३७ ।। ❁ ❁ पांसुर्धूलिः ।। ३८ ।। ❁ ❁ तस्मिन्वेने ।। ३९ ।। ❁ ❁ शक्ता अपि जनाः क्षत्रादयः समर्था अपि दोषदर्शिनोऽपि यद्यधर्मकर्त्तारं शक्ता न वारयंति सोऽधर्मस्तानपि स्पृशत्येवेति जानंतोपि ।। ४० ।।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

भव्यायां श्रेष्ठायाम् ।। ३० ।। ❁ ❁ ध्रुवमिति संभावनायाम् ।। ३१-३४ ।। ❁ ❁ मन्त्रिभिस्सह मन्त्रणं नीतिविचारो मन्त्रस्तत्सहितया तैलद्रोण्यां क्षेपणलक्षणया युक्त्या ।। ३५-३६ ।। ❁ ❁ महोत्पातानित्यत्र तदोत्पातानित्येव स्वामिसंमतः पाठः ।। ३७-३८ ।। ❁ ❁ तदिति युग्मकम् । दुष्टेभ्यो लुण्ठकेभ्योऽवारणे दोषदर्शिनोऽपि क्षत्रिया आत्मन एव रक्षन्तो किमस्माकमन्यैरित्युदासीनाः सन्तः जनान् दुर्बलांल्लुम्पतः निःस्वं कुर्वतो लोकांश्चोरान्नावारयन्नित्यन्वयः ।। ३९-४० ।।

### श्रीमद्वीरराघवव्याख्या

इतीत्थं पण्डितमात्मानं मन्वानेन तेनासत्कृता अवज्ञातास्ते मुनयः भव्ययाच्ञायां लोकशुभावहयाच्ञायां सत्यां हे विदुर ! तस्मै चुक्रुधुः कुपितवन्तः ।। ३० ।। ❁ ❁ क्रोधमेव प्रपञ्चयति हन्यतामिति । प्रकृत्या स्वभावेन दारुणो घातुकः अत एव पापीयानेष वेनो हन्यतां, कोपाद् द्विरुक्तिः । यतोऽसौ जीवन् जगत् भस्मसात् भस्मभूतमाशु कुरुते ध्रुवं नूनम् ।। ३१ ।। ❁ ❁ असद्वृत्तोऽयं वेनो राजासनं प्रति नार्हति योग्यो न भवति हि यस्मात् यो वेनः अनपत्रपो निर्लज्जः यज्ञपतिं विष्णुं विनिन्दति ।। ३२ ।। ❁ ❁ अशुभमशुभाचारं वेनमेकमृते विना को वै पुमान् तं विष्णुं परिचक्षीत निन्देत वेनस्य कृतघ्नतामाह । यस्य विष्णोरनुग्रहभाजनः अनुग्रहविषयः सन्नीदृशमैश्वर्यं प्राप्तः ।। ३३ ।। ❁ ❁ इत्थं व्यवसिता निश्चिन्वाना ऋषयः रूढमन्यवः पूर्वं गूढमन्यव इदानीं रूढमन्यवः सन्तः पूर्वमेव भगवन्निन्दया हतप्रायं वेनं हुंकारैर्निजघ्नुः ।। ३४ ।। ❁ ❁ एवं हुंकारैरेव वेनं निहत्य ऋषिभिः स्वाश्रमस्थाने गते प्राप्ते सति शोचती सुनीथा पुत्रस्य कलेवरं विद्यायोगेन मन्त्रसहितया युक्त्या पालयामास ।। ३५ ।। ❁ ❁ पुंवद्भाव आर्षः । ते मुनयः एकदा सरस्वत्याः सलिलैराप्लुताः स्नाता अग्निं हुत्वा प्रातरग्निकार्य्यं कृत्वा सरितस्सरस्वत्यास्तटे उपविष्टाः सन्तः सत्कथां भगवत्कथां चक्रुः कथयामासुः ।। ३६ ।। ❁ ❁ तदा उत्थितान् महोत्पातान् वीक्ष्य उत्पातैर्यल्लोकानां भयं तेनातुरा दुःखिताः अनाथाया भुवः दस्युभ्यश्चौरादिभ्यो भद्रं न भवेत्किमित्याहुः ।। ३७ ।। ❁ ❁ एवम् ऋषिषु ब्रुवत्सु सत्सु सर्वतो दिशं सर्वासु दिक्षु धावतामभितो धनादिकं लुम्पतां हरतां चोराणां भूरिर्बहुलः पांसुः समुत्थितोऽभूत् । वसु धनं लुम्पतां चोराणां भर्तरि राज्ञि उपरते नष्टे सति अन्योऽन्यं जिघांसतां हन्तुमिच्छतां लोकानां तथाविधमुपद्रवम् ।। ३८-३९ ।। ❁ ❁ तथा चोरप्रायमराजकं राजहीनं सत्त्वं च जनपदमाज्ञाय ज्ञात्वा शक्ता अपि वेनमिव हुङ्कारेणैव चौरान्निहन्तुं शक्ता अपि ऋषयः तद्दोषदर्शिनः तस्माच्चौरादिहननाद्यो दोषः पापं तं पश्यन्तः 'घातं न घातको विप्रः' इति स्वधर्मं पश्यन्त इति भावः, नावारयन् न निवारितवन्तः ।। ४० ।।

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

आत्मनि शापसामर्थ्ये समुल्लसति कर्णौ पिधाय निर्याणमनुचितमिति पश्यन्तः शापात्पूर्वभाविकोपायुधमुपय उदाहरन्नित्याह इतीति । इति शब्दः प्रकारवचनः, भव्यविषययाच्ञायाम् ।। ३० ।। ❁ ❁ ऊचुश्चेत्याह, हन्यतामिति ।

जीवंश्च जगद्भस्मसात्करोति ॥ ३१-३२ ॥ ❀ ❀ निन्द्यदोषसद्भावान्निन्दतीति किं न स्यादत्राह । को वेति "निरनिष्टो निरवद्यः" इति श्रुतेरशुभोऽयमेव निन्द्यदोषाकर इति भावः । यस्य हरेरनुग्रहस्य भाजनं यस्यानुग्रहो यस्मिन्स यदनुग्रहः पुमान् स एव भाजनं वा तदनुग्रहरहितत्वादयं हन्तव्य इत्यर्थः । अत्र क्रोधवचनयोः क्रमकरणमेकैकं दृष्ट्वास्मानयं क्षमापयेदिति बुद्ध्या कृतमिति ज्ञातव्यम् ॥ ३३ ॥ ❀ ❀ मरेत्युक्तिः श्रोतॄणां श्रोत्रदुःसहेति प्रकारान्तरेण तं जघ्नुरित्याह इत्थमिति । एवं मारितो वेनः कं लोकमवाप ऋषीणां तन्मतदूषकत्वात् के तस्यानुयातारस्तन्मतनिरासिनः पृथोश्च क्षिप्रभावित्वादुत्सन्नप्रायमिति च वक्तुं न युक्तं तत्र तत्र दृश्यमानत्वादिति सर्वम् "अहं ब्रह्मेति वेनस्तु ध्यायन्नापाधरं तमः । तद्राद्धान्तो महीं व्याप्तो मेर्याख्यापयतोऽनिशम् ॥ असुरा राक्षसाश्चैव पिशाचास्तत्पथि स्थिताः । भूमौ तत्पृथुना सर्वं निरस्तं महिमात्मना । पुनः कलियुगे प्राप्ते अष्टाविंशतिमे मनोः । वैवस्वतस्य समये जाताः क्रोधवशा भुवि । ख्यापयन्ति दुरात्मानो मणिमांस्तत्पुरःसरः ॥" इत्यतोऽत्र तु ग्रन्थबाहुल्यादन्यत्र विस्तृतत्वाच्च ज्ञातुमनभ्यर्थितत्वाच्च न प्रपञ्चितमिति ज्ञातव्यम् । तेषां क्रोधवशानां पुरःसरोऽग्रगन्ता मुख्य इत्यर्थः ॥ ३४ ॥ ❀ ❀ वेनस्य पुत्राभावादृषीणां क्रोधात् पुरोहितस्य भीतत्वात्प्रेतकार्यमन्त्रवक्त्रभावात्परं कलेवरं किं कृतमत्राह ऋषिभिरिति । विद्यायोगेन मन्त्रौषधादिविद्योपायेन शोचतीत्यनेन मातृस्वभावो दर्शितः ॥ ३५ ॥ ❀ ❀ एवं वेनं शप्त्वा तपोबलादन्यमेकं राजानं चक्रुस्तद्वंश्याभावात्तूष्णीमासुः । कलेवरं मुनयः किमकुर्वन्निति परीक्षितः शङ्कां परिहरन्नुत्तरकथाप्रसंगमाह एकदेति । सरयूनाम्नो नद्याः सलिले आप्लुता कृतस्नानाः सतोऽभ्यर्हितस्य विष्णोः कथा यदा चक्रुः ॥ ३६ ॥ ❀ ❀ तदा महोत्पातान् वीक्ष्याहुरित्यन्वयः । किमाहुरिति तत्राह अपीति । अपिशब्दस्य भवेदित्यनेनान्वयः । अनाथाया हेतुगर्भविशेषणादभद्रं संभावितमिति प्रावोचन्नित्यर्थः ॥ ३७ ॥ ❀ ❀ वसु लुम्पतां चोराणां सकाशाद्भूमेः पांसुः समुत्थित इत्यन्वयः ॥ ३८ ॥ ❀ ❀ ततः किमभूदत्राह तदुपद्रवमिति । तत्तदा लोकस्य चोराणामुपद्रवमाज्ञायैव निश्चित्य मृतस्य वेनस्य महीपतेरूरुं तरसा ममन्थुरित्यन्वयः ॥ ३९ ॥ ❀ ❀ युष्मत्तोऽन्ये तन्निवारका न सन्ति किमिति तटस्थचोद्यं परिहरन्तीत्याह चोरप्रायमिति । सत्यं तद्दोषदर्शिनो यद्यधर्मकर्तारं न वारयन्ति स दोषस्तानपि स्पृशेदिति दोषं पश्यन्तः किञ्च शक्तास्तन्निवारणे समर्था अपि लोकाः लुकृ-प्रकाशन इति धातोः विशिष्टज्ञाना जना हीनसत्त्वं पराक्रमविधुरमराजकं प्रजापालकरहितं जनपदं वीक्ष्य चोरादीन्नावारयन्निति यदत इत्यर्थः ॥ ४० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

वीक्ष्येति । तदोत्पातानित्येव स्वामी ॥ ३७-३८ ॥ ❀ ❀ तदिति युग्मकम् । चौरेति शक्तानामपि तेषां तदनपवारणहेतुः वरशापाभ्यां तस्मिन्निवारणे तपःक्षयरूपदोषदर्शिनः ॥ ३९-४० ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तेनासत्कृताः ॥ ३० ॥ ❀ ❀ भस्मसात्कुरुते, करिष्यते तस्मादयमेव भस्मीकर्त्तव्य इति भावः ॥ ३१-३२ ॥ ❀ ❀ एनं विष्णुं को वा परिचक्षीत निन्देत् । वेनं विना यद्यस्मादीदृशमैश्वर्यं प्राप्तो हि अनुग्रहभाजनं भवति तस्मान्निरनुग्रहो हन्तव्य एवेति भावः ॥ ३३-३४ ॥ ❀ ❀ विद्यायोगेन मन्त्रसहितया तैलादिप्रक्षेपयुक्त्या ॥ ३५ ॥ ❀ ❀ सरस्वदिति पुंवद्भाव आर्षः ॥ ३६-३७ ॥ ❀ ❀ एवं मृशन्तो विचारयन्तः ऋषयो यावत् स्थिताः तावदेवेति शेषः ॥ ३८ ॥ ❀ ❀ तत्तदा तेषां लोकस्य धनं लुम्पतां जिघांसताञ्चोपद्रवमाज्ञाय तथा चौरप्रायं जनपदञ्चाज्ञाय ये शक्ता अप्यवारणे दोषदर्शिनोऽपि जनाः क्षत्रियलोकाः आत्मन एव रक्षन्तः किमस्माकमन्यैरित्युदासीना अन्यान् लुम्पतो लोकान्नावारयन्नित्यन्वयः ॥ ३९-४० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

हे भव्य ! ॥ ३०-३१ ॥ ❀ ❀ अनपत्रपः निर्लज्जः ॥ ३२ ॥ ❀ ❀ यदनुग्रहभाजनः अत एव ईदृशमैश्वर्यं प्राप्तः एवंभूतः कः एनमैश्वर्यप्रदं हरिं वेनं कृतघ्नमृते परिचक्षीत विनिन्देत् न कोऽपीत्यर्थः ॥ ३३ ॥ ❀ ❀ रूढः प्रवृद्धो मन्युर्येषां तैर्हुंकृतैर्हुंकारैः ॥ ३४ ॥ ❀ ❀ स्वाश्रमपदं स्वाश्रमस्थानं प्रति गते गमने कृते विद्यायोगेन पुत्रकलेवरं पालयामास ॥ ३५ ॥ ❀ ❀ सरस्वत्सलिलाप्लुताः सरस्वत्या जले स्नाताः ॥ ३६ ॥ ❀ ❀ तदा महोत्पातान् वीक्ष्य अनाथाया भूपतिहीनाया दस्युभ्यः अभद्रं न भवेत् किमित्याहुः ॥ ३७ ॥ ❀ ❀ यदेवं मृशन्तो विचारयन्त ऋषयः स्थिताः तदा धावतां चोराणां भूरिः पांसुः समुत्थितः ॥ ३८ ॥ ❀ ❀ तस्मिन् वेने भर्तरि भूपतौ उपरते नष्टे सति तत्तेषां चोराणां लोकस्य वसु धनं लुम्पताम् अन्योऽन्यं जिघांसतां च उपद्रवमाज्ञाय ॥ ३९ ॥ ❀ ❀ अराजकं गोप्तृहीनं हीनसत्त्वं च जनपदं चौरप्रायमाज्ञाय शक्ताः समर्था अपि लोकान् जनवसुलुम्पकान् अन्योऽन्यं जिघांसतः नावारयन् । तत्र हेतुं दर्शयितुं मुनीन् विशिनष्टि तद्दोषदर्शिन इति । तस्मिन् चोरनिवारणे कर्मणि ते हिंसादिदोषदर्शिन इत्यर्थः । तथोक्तं महाभारते "ब्राह्मणानां परो धर्मो वेदानां धारणादपि । अहिंसा सत्यवचनं क्षमा सन्तोष इत्यपि" इति ॥ ४० ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

वेनवचनश्रवणानन्तरं मुनयः किं कृतवन्त इत्याकाङ्क्षायामाह—इतीति। इत्येवं पूर्ववर्णितप्रकारेण भव्या वेनस्यैवोद्भवहेतुभूता या याच्ञा भव्ययाच्ञा तस्यां भग्नायां सत्यां प्रत्युत पण्डितमानिना आत्मानं पण्डितं मन्यमानेन तेन वेनेन 'बालिशा बते'त्यादिदुर्वचोभिरसत्कृता द्विजाः भृग्वादयो मुनयस्तस्मै वेनाय हे विदुर! चुकुधुरित्यन्वयः। हे विदुर इति संबोधनं भगवद्विमुखानामेवं विपर्ययमतिर्विप्रकोपादिना विनाशश्च भवति, न भगवद्भक्तानामिति रहस्यं भगवद्भक्तत्वात्तव विदितमेवेति संमत्यर्थम्॥ ३०॥ ❀ ❀ द्विजानां क्रुद्धानां वचांस्याह—हन्यतामिति त्रिभिः। तत्रान्यान् प्रत्यन्ये मुनय आहुः—एष वेनो हन्यतां हन्यतामिति। वीप्सया हननस्यावश्यकत्वं सूचयन्ति। तत्र हेतुमाहुः—पाप इति। अतिपापीयानित्यर्थः। तत्रापि हेतुमाहुः—प्रकृतिदारुण इति। प्रकृत्या स्वतः सिद्धस्वभावेनैव न तु दुःसङ्गेन दारुणः भयंकरः। अत एवास्माभिरनुनीतोऽपि न मन्यत इति भावः। हननाभावे दोषमाहुः—जीवन्निति। असौ वेनो जीवन् सर्वं जगदेव स्वदुराचारेणाग्निना भस्मसात्कुरुते करिष्यति ध्रुवं निश्चितमेतन्नात्र सन्देहः। तत्रापि शीघ्रमेवेति ज्ञापयितुं वर्त्तमानप्रयोगः कुरुत इति॥ ३१॥ ❀ ❀ ननु राजा प्रजाभिर्नावज्ञेय इत्याशङ्क्यास्य राज्यायोग्यत्वान्न कश्चिद्दोष इत्यभिप्रायेणाहुः—नायमिति। नरदेवस्य राज्ञो वरमुत्कृष्टमासनमसद्वृत्तत्वादयं वेनो नार्हति राजासनस्थितियोग्यो न भवति। तस्यासद्वृत्तत्वमेव दर्शयन्ति—य इति। अधियज्ञो यज्ञाधिष्ठाता च विश्वपालकत्वात्पतिश्च तमधियज्ञपतिं विष्णुं यो वेनो विनिन्दति तथाप्यनपत्रपः अनिर्लज्जः आत्मानं निर्लज्जं न मन्यत इत्यर्थः। अथवा उपसर्गार्थो न विवक्षितः, तथा च न अपत्रपा लज्जा यस्य स अनपत्रपः निर्लज्ज इत्यर्थः॥ ३२॥ ❀ ❀ ईदृशो दुष्टः कृतघ्नोऽन्यो नास्तीत्याहुः—को वेति। यस्य भगवतोऽनुग्रहभाजनः अनुग्रहविषयः सन्नीदृशमत्युत्कृष्टमैश्वर्यं प्राप्तस्तमेनं भगवन्तमशुभं पापमयं वेनमेकमृते को वा परिचक्षीत विनिन्देदित्यन्वयः॥ ३३॥ ❀ ❀ एवं निश्चित्य किं कृतं तत्राह—इत्थमिति। इत्थमनेन प्रकारेण हन्तुं व्यवसिताः कृतनिश्चया ऋषयः स्वसंकल्पितं संपादयितुं समर्थाः पूर्वं तूत्थितस्यापि क्रोधस्य तदनुनयार्थमाच्छादनात् गूढमन्यवोऽपीदानीं हनननिश्चयात् रूढमन्यः प्रकटितक्रोधाः सन्तो वेनं हुङ्कृतैर्हुंङ्कारैरेव निजघ्नुरित्यन्वयः। तद्धनने तेषां दोषमाशङ्क्याह—हतमिति। भगवन्निन्दकस्तन्निन्दया हत एवातो नैव तस्य हनने कश्चिद्दोषो भवत्यतो वेनस्य तथात्वान्न तद्धनने तेषां दोष इति भावः॥ ३४॥ ❀ ❀ एवं वेनं हत्वर्षिभिः स्वाश्रमपदं स्वस्थानं गते गमने कृते सति भाव्यवतारभगवदिच्छावशात्सुनीथा पुत्रमरणाच्छोचती सती मृतस्य पुत्रस्य कलेवरं शरीरं विद्यायोगेन विद्या मन्त्रविशेषस्तत्सहितेन योगेन जलौषधादिप्रयोगरूपशरीररक्षोपायेन पालयामास रक्षितवतीत्यन्वयः॥ ३५॥ ❀ ❀ ततश्च मुनीनां भाव्युपद्रवसूचकापशकुनदर्शनं जातमित्याह—एकदेति द्वाभ्याम्। एकदा तु यैर्वेनो हतस्ते भृग्वादयो मुनयः सरस्वत्सलिलाप्लुताः सरस्वत्या नद्याः सलिले कृतस्नानास्तस्या एव सरितस्तटे उपविष्टा अग्निं हुत्वा सत्कथा भगवत्कथाश्चक्रुरित्यन्वयः॥ ३६॥ ❀ ❀ तदा तु ते लोकभयङ्करान् लोकस्य भयसूचकान् महोत्पातान् वामाङ्गस्फुरणहृदयकम्पश्वानरोदनादिरूपान् उत्थितान् वीक्ष्येदानीमनाथाया भुवो दस्युभ्योऽभद्रमपि न भवेत् मा भवत्वित्याहुरित्यन्वयः। अपीति संभावनायाम्। रक्षकाभावादुपद्रवः संभवतीति भावः॥ ३७॥ ❀ ❀ ततश्चोत्पातसूचित उपद्रवो जात इत्याह—एवमिति। यावदृषय एवं मृशन्तो विचारयन्तः स्थितास्तावद्धनमभिलुम्पतां राजभयाभावाद्बलात्कारेण गृह्णतां सर्वतो दिशं धावतां चोराणां भूरिः पांसुः समुत्थित इत्यन्वयः॥ ३८॥ ❀ ❀ तत् तदा च ते मुनयस्तस्मिन् वेने भर्त्तरि पालके उपरते मृते सति वसु धनं लुम्पतां चोराणां तथान्योन्यं च जिघांसतां दुर्जनानां कृतं लोकस्य साधुजनस्योपद्रवमाज्ञाय॥ ३९॥ ❀ ❀ तथा अराजकं राजरहितमत एव चोरप्रायं चोरबाहुल्यमत एव हीनसत्त्वं त्यक्तधैर्यं लोकपरलोकार्थोद्यमत्यागपूर्वकमूर्च्छितप्रायं जनपदमाज्ञाय लोकान् उपद्रवकर्तृजनान् वारयितुं वेनवन्नाशयितुं शक्ताः समर्था अपि नावारयन् न निवारितवन्त इति द्वयोरन्वयः। ननु यदि शक्तास्तदा कुतो न निवारितवन्त इत्याशङ्क्याह—तद्दोषदर्शिन इति। तस्मिन्निवारणे तेषां मरणे प्राप्ते सति। 'नाततायिवधे दोषो हन्तुर्भवति कश्चन' इति वाक्यात् तेषामाततायिनां वधे राज्ञो दोषाभावेऽपि तत्र स्वाधिकाराभावात् स्वस्य तद्धत्याप्रसङ्गदोषदर्शिनो यतोऽतो न निवारितवन्त इत्यर्थः॥ ४०॥

### भाषानुवादः

विदुरजी! अपनेको बड़ा बुद्धिमान् समझनेवाले वेनने जब उन मुनियोंका इस प्रकार अपमान किया, तब अपनी कल्याणकारिणी माँगको व्यर्थ हुई देख वे उसपर अत्यन्त कुपित हो गये॥ ३०॥ ❀ ❀ 'मार डालो! इस स्वभावसे ही दुष्ट पापीको मार डालो! यह यदि जीता रह गया तो कुछ ही दिनोंमें संसारको अवश्य भस्म कर डालेगा॥ ३१॥ ❀ ❀ यह दुराचारी किसी प्रकार राज्य-सिंहासनके योग्य नहीं है; क्योंकि यह निर्लज्ज साक्षात् यज्ञपति श्रीविष्णुभगवान्की निन्दा करता है॥ ३२॥ ❀ ❀ अहो! जिनकी कृपासे इसे ऐसा ऐश्वर्य मिला, उन श्रीहरिकी निन्दा अभागे वेनको छोड़कर और कौन कर सकता है?'॥ ३३॥ ❀ ❀ इस प्रकार अपने छिपे हुए क्रोधको प्रकट कर उन्होंने उसे मारनेका निश्चय कर लिया। वह तो भगवान्की निन्दा करनेके कारण पहले ही मर चुका था, इसलिये केवल हुङ्कारोंसे ही उन्होंने उसका काम तमाम कर दिया॥ ३४॥ ❀ ❀ जब मुनिगण अपने-अपने आश्रमोंको चले गये, तब इधर वेनकी शोकाकुला माता सुनीथा

मन्त्रादिके बलसे तथा अन्य युक्तियोंसे अपने पुत्रके शवकी रक्षा करने लगी ॥ ३५ ॥ ❁ ❁ एक दिन वे मुनिगण सरस्वतीके पवित्र जलमें स्नान कर अग्निहोत्रसे निवृत्त हो नदीके तीरपर बैठे हुए हरिचर्चा कर रहे थे ॥ ३६ ॥ ❁ ❁ उन दिनों लोकोंमें आतङ्क फैलानेवाले बहुत-से उपद्रव होते देखकर वे आपसमें कहने लगे, 'आजकल पृथ्वीका कोई रक्षक नहीं है; इसलिये चोर-डाकुओंके कारण उसका कुछ अमङ्गल तो नहीं होनेवाला है?' ॥ ३७ ॥ ❁ ❁ ऋषिलोग ऐसा विचार कर ही रहे थे कि उन्होंने सब दिशाओंमें धावा करनेवाले चोरों और डाकुओंके कारण उठी हुई बड़ी भारी धूल देखी ॥ ३८ ॥ ❁ ❁ देखते ही समझ गये कि राजा वेनके मर जानेके कारण देशमें अराजकता फैल गयी है, राज्य शक्तिहीन हो गया है और चोर-डाकू बढ़ गये हैं; यह सारा उपद्रव लोगोंका धन लूटनेवाले तथा एक-दूसरेके खूनके प्यासे लुटेरोंका ही है। अपने तेजसे अथवा तपोबलसे लोगोंको ऐसी कुप्रवृत्तिसे रोकनेमें समर्थ होनेपर भी ऐसा करनेमें हिंसादि दोष देखकर उन्होंने इसका कोई निवारण नहीं किया ॥ ३९-४० ॥

ब्राह्मणः समदृक् शान्तो दीनानां समुपेक्षकः। स्रवते ब्रह्म तस्यापि भिन्नभाण्डात्पयो यथा ॥ ४१ ॥
नाङ्गस्य वंशो राजर्षेरेष संस्थातुमर्हति। अमोघवीर्या हि नृपा वंशेऽस्मिन् केशवाश्रयाः ॥ ४२ ॥
विनिश्चित्यैवमृषयो विपन्नस्य महीपतेः। ममन्थुरूरुं तरसा तत्रासीद्बाहुको नरः ॥ ४३ ॥
काककृष्णोऽतिह्रस्वाङ्गो ह्रस्वबाहुर्महाहनुः। ह्रस्वपान्निम्ननासाग्रो रक्ताक्षस्ताम्रमूर्धजः ॥ ४४ ॥
तं तु तेऽवनतं दीनं किं करोमीति वादिनम्। निषीदेत्यब्रुवंस्तात स निषादस्ततोऽभवत् ॥ ४५ ॥
तस्य वंश्यास्तु नैषादा गिरिकाननगोचराः। येनाहरज्जायमानो वेनकल्मषमुल्बणम् ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे पृथुचरिते निषादोत्पत्तिर्नाम चतुर्दशोऽध्यायः ॥ १४ ॥

अन्वयः—समदृक् शान्तः ब्राह्मणः दीनानाम् समुपेक्षकः तस्य अपि ब्रह्म स्रवते यथा पयः भिन्नभाण्डात् ॥ ४१ ॥ ❁ ❁ एषः राजर्षेः अङ्गस्य वंशः संस्थातुम् न अर्हति हि अस्मिन् वंशे केशवाश्रयाः नृपाः अमोघवीर्याः ॥ ४२ ॥ ❁ ❁ ऋषयः एवम् विनिश्चित्य विपन्नस्य महीपतेः ऊरुम् तरसा ममन्थुः तत्र बाहुकः नरः आसीत् ॥ ४३ ॥ ❁ ❁ काककृष्णः अतिह्रस्वाङ्गः ह्रस्वबाहुः महाहनुः ह्रस्वपात् निम्ननासाग्रः रक्ताक्षः ताम्रमूर्धजः ॥ ४४ ॥ ❁ ❁ ते तु अवनतम् दीनम् किम् करोमि इति वादिनम् तम् निषीद इति अब्रुवन् तात ततः सः निषादः अभवत् ॥ ५ ॥ ❁ ❁ येन जायमानः उल्बणम् वेनकल्मषम् अहरत् तस्य वंश्याः तु नैषादाः गिरिकाननगोचराः आसन् ॥ ४६ ॥

इति चतुर्दशोऽध्यायः ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

शक्तानां क्षत्रियाणामवारणे न दोष इति किं वक्तव्यम्। समदृगपि शांतोऽपि ब्राह्मणोऽपि यदि दीनानां समुपेक्षको भवेत्तर्हि तस्यापि ब्रह्म तपः स्रवति ॥ ४१ ॥ ❁ ❁ अत उपेक्षादोषपरिहाराय नांगस्येत्यादि विनिश्चित्य महीपतेरूरुं तरसा ममंथुरित्यन्वयः। संस्थातुं नाशं गंतुम्। यद्वा ऋषय एव लुंपतो लोकान्नावारयन्। कथंभूताः। हुंकारेणैव वेनं निवारयितुं शक्ता अपि। तत्किम्। तस्मिन्निवारणे तन्मरणादिदोषदर्शिनः न चोदासत, चोरोपद्रुते दीनोपेक्षायां तपोहानिप्रसंगात्। न चान्यं तन्निवारकं राजानमकुर्वन्। अंगवंशोच्छेदस्यानर्हत्वात्। अतो वेनस्यैव देहं ममंथुरिति योज्यम् ॥ ४२ ॥ ❁ ❁ बाहुको वामनः ॥ ४३ ॥ ❁ ❁ तमेवाह। काक इव कृष्णः महत्यौ हनू कपोलप्रांतौ यस्य। ह्रस्वौ पादौ यस्य ॥ ४४-४५ ॥ ❁ ❁ गिरिः काननं च गोचर आश्रयो न तु पुरादिप्रवेशो येषाम्। तत्र हेतुः। येन कारणेनासावहरत्ततस्तस्य वंश्यास्तथाभूताः ॥ ४६ ॥

इति श्रीमद्भागवते चतुर्थे टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

"ब्रह्म सत्यतपोधर्मपरात्मब्राह्मणेषु च" इति कोशात्। तस्यापि ब्राह्मणस्यापि। पयो नीरम्। "पयः स्यात्क्षीरनीरयोः" इति विश्वः ॥ ४१ ॥ ❁ ❁ नन्वेवं चेत्तर्हि भृग्वादयस्ते मुनयः कथं निश्चिन्ताः स्थिताः, सत्यं, त एव स्वैर्दस्युवधप्रजापालनाख्यां तपःक्षयविक्षेपादिकमालक्ष्य कोऽप्येको जनो राजा कर्त्तव्य इति व्यवस्थायां परामृश्याहुर्नांगस्येति। यतो दीनोपेक्षा तपोनाशिकाऽतो हेतोः सा न कार्येति स्वाम्यवतरणिकार्थः। नृपा भविष्यन्तीति शेषः। पूर्वव्याख्याने जनानावारयन्नित्युक्तं तत्र च तेजोबलादिहीन-

---

१. प्रा० पा०—भ्रुकुटीकुटिलाननः। २. प्रा० पा०—योऽपाहरज्जायमानो। ३. प्राचीने पाठे 'इति श्री...' इत्यारभ्य परवर्त्यध्यायस्य 'मैत्रेय उवाच' पर्यन्तांशो नास्ति।

सामान्यजनस्य प्रबलदस्युवारणासामर्थ्येनास्वारस्यप्रतीतेराह—यद्वेति। हुंकारेण वेनमिव तानपि वारयितुं शक्ताः, तत्तर्हि किन्नावारयन्निति चेदाह—तस्मिन्निवारणे हुंकारेण निवारणे तन्मरणादिदोषदर्शिनो लोकानां मरणादिरूपो यो दोषः तं पश्यंतीत्यर्थः। यथा हुंकारेण निवारणे वेनो मृतस्तथेमे मा म्रियेरन्निति तर्हि किमुदासीना बभूवुरिति चेदाह—न चेति। तर्हि किं कंचिदन्यं राजानं चक्रुस्तत्राह न चान्यमिति। तत्र हेतुः—अंगवंशेति। वंशानुच्छेदज्ञानं तु तपोयोगबलेनैवेति ज्ञेयं, यतोंगवंश उच्छेदानर्होऽतो हेतोः। "बाहुको वामनो ह्रस्वः खर्वोऽल्पतनुपृश्निकौ" इति कोशात्। प्रथमं तद्देहतो मात्रंशः पृथग्भूय प्रकटीबभूवेति चक्रवर्त्ती। कमूरुमित्याकांक्षाशमनं ग्रन्थांतरसंमत्या करोति "अंगानुक्तौ दक्षिणं स्याद्दिगनुक्ताविंद्रदिङ्मता। रत्नानुक्तौ सुवर्णं स्याद्द्रनुक्तौ हविर्घृतम्" इति कात्यायनोक्तेर्दक्षिणमूरुं निर्मथ्य स्वमतप्रवृत्त्यर्थं वेनदेहं योगेन प्रविष्टं पापरूपं नास्तिकं निषादरूपेण मुनयो निष्कासयामासुरिति ग्रंथांतरे स्पष्टम्॥ ४२-४३॥ ❀ ❀ तं बाहुकनरम्। 'कपोलौ तत्परा हनुरित्यमरः' निम्ननासाग्रोऽधोनतघ्राणशिराः, ताम्रमूर्द्धजो रक्तकेशः॥ ४४॥ ❀ ❀ निषीदेति। नासौ राज्ययोग्य इति व्यवसाय तमकथयन्नित्यर्थः। मातृविकृत्यंशवत्त्वेनात्मनस्तादृशत्वं संचिंतयानं प्रत्याह—तातेति। त्वं तु साक्षाद्धर्मावतारत्वात्सर्वजनद्वेष्यनिषादापेक्षया सर्वोत्तमोसीत्यभिप्रायः॥ ४५॥ ❀ ❀ सपादम्। येन कारणेनासौ जायमानो वेनकल्मषमहरज्जग्राह ततस्तेन हेतुना स निषादो नीचजातिरभवत्। तस्य वंश्याश्च नैषादा अतिनीचा अभवन्नित्यन्वयः। तत्र पुराद्यवेशे "चांडालानां गृहा नैव कार्या ग्रामपुरादिपु। अरण्ये पर्वते वापि वसेयुर्नगराद्बहिः" इति स्मृतेः। "निषादः स्वरभेदे च चांडाले धीवरांतरे" इति मेदिनी। तथाभूता गिरिकाननगोचराः। उल्वणमुग्रम्॥ ४६॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे चतुर्दशोऽध्यायः॥ ११॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

ब्राह्मण इति युग्मकम्। स्रवति नश्यति। अतः क्षत्रियाणां का वार्त्ता ब्राह्मणानामप्यवारणे दोषश्रवणात् पूर्वार्थे क्षत्रिया नावारयन् तेषामेव दोषः समजनि, ब्राह्मणास्तु एवं विनिश्चित्य ममन्थुरिति वाक्यभेदोऽसंबद्धार्थः प्रतीयेतेत्यरुचौ यद्वेति। तत्किं शक्तानामप्यवारणं किमर्थमित्यर्थः। तन्मरणादिदोषे तपःक्षयदोषो दर्शितः॥ ४१-४२॥ ❀ ❀ विनिश्चित्येति युग्मकम्। द्वितीययोजनायान्तु ब्राह्मण इति चतुष्कमिति ज्ञेयम्॥ ४३-४५॥ ❀ ❀ ततः दोषहरणात् तथाभूताः पुरप्रवेशादिभोगहीनाः॥ ४६॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीराधारमणदासगोस्वामिविरचितदीपिकादीपनटीकायां चतुर्दशोऽध्यायः॥१४॥

### श्रीमद्वीरराघवव्याख्या

नन्वेवमृषीणामपि शक्तानां चोरोपद्रुतदीनलोकोपेक्षायां तपोनाशप्रसङ्गः स्यादिति ब्राह्मणः समदृगित्यनेनाशङ्क्य स्वतपसो नाशाभावार्थं राजान्तरमेव संपाद्य तन्मुखेनैव दीनपरित्राणं कार्यमित्यभिप्रायेण राजान्तरकरणोपायभूतमन्थनादिकं चक्रुरित्याह नाङ्गस्येति द्वाभ्याम्। समदृक् सर्वस्य ब्रह्मात्मकत्वदर्शी तदुपयुक्तशमादिसंपन्नोऽपि ब्राह्मणो यदि दीनानां समुपेक्षकः स्यात् तर्हि तस्य ब्रह्म तप इति यावत् स्रवते गच्छति यथा भिन्नभाण्डस्थं जलं तद्वत्॥ ४१॥ ❀ ❀ अत उपेक्षारूपदोषपरिहाराय नाङ्गस्येत्यादि विनिश्चित्य महीपतेरूरुं तरसा ममन्थुरित्यन्वयः। राजर्षेरङ्गस्यैष वंशः संस्थातुं अवसानं प्राप्तुं नार्हति। हि यतोऽस्मिन्वंशे जाता नृपा अमोघवीर्याः तत्र हेतुः केशवाश्रयाः॥ ४२॥ ❀ ❀ एवमित्थं विनिश्चित्य ऋषयः विपन्नस्य विपत्तिं प्राप्तस्य मृतस्येत्यर्थः। ऊरुं तरसा बलेन ममन्थुः मथितवन्तः, तत्र मथिते ऊरौ बाहुको नाम नर आसीत् उद्बभूव॥ ४३॥ ❀ ❀ बाहुकमेव विशिनष्टि काकेति। काक इव कृष्णः अतीव ह्रस्वाङ्गः ह्रस्वौ बाहू यस्य महान्तौ हनू कपोलप्रान्तौ यस्य ह्रस्वा वाक् यस्य निम्नं नतं नासिकाग्रं यस्य रक्ते अक्षिणी यस्य ताम्रवर्णा मूर्द्धजाः केशा यस्य सः॥ ४४॥ ❀ ❀ तं बाहुकं दीनं किङ्करोमीति दीनवादिनं च राज्यानर्हमभिप्रेत्य निषीदेति उपविशेत्युक्तवन्तः हे तात! ततः निषीदेति ऋषिवचनात् स बाहुकः निषादोऽभवत् स च निषादजातीयोऽभवदित्यर्थः॥ ४५॥ ❀ ❀ तस्य बाहुकस्य एव वंश्यास्ते नैषादा गिरिः काननं गोचरः आश्रयो न तु पुरादिप्रवेशो येषां ते अभवन्। तत्र हेतुः येन करणेनासौ बाहुको जायमानमुल्बणमुत्कटं कल्मषं पापमहरत् स्वीकृतवान् ततस्तस्य वंश्यास्तथाभूता इत्यर्थः॥ ४६॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां चतुर्दशोऽध्यायः॥ १४॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सामान्यमुक्त्वा जातिविशेषस्य दोषाधिक्यमाहुरित्याह ब्राह्मण इति। ब्रह्मेति भावप्रधानो निर्देशः, दुष्टोपद्रवेण दीनानां जनानामुपद्रवं दृष्ट्वा समुपेक्षकस्तूष्णींभूतः स्यात्तस्य ब्रह्मत्वं ब्राह्मण्यं स्रवते नश्यति तन्निदर्शयन्ति। भिन्नेति तस्माद्दस्माभिरनुष्ठेयमिति भावः॥ ४१॥ ❀ ❀ इतोऽपीत्याहुरित्याह नाङ्गस्येति। संस्थातुं नाशं प्राप्तुं कुत इत्यत उक्तममोघेति॥ ४२॥ ❀ ❀

यथामृतमन्थने कालकूटमादावुदभूदेवं तत्रापीति भावेनाह तत्रेति। तत्र मथ्यमाने सति बाहुको वामनः "कुब्जक्षुद्रदीर्घखर्वह्रस्ववामनबाहुका" इत्यभिधानम्॥ ४३॥ ❀ ❀ विशिनष्टि काकेति। महाहनुः स्थूलकपोलः निम्ननासाग्रोऽधोनतघ्राणशिराः॥ ४४॥ ❀ ❀ ततो निषीदेति वचनात्॥ ४५॥ ❀ ❀ स क इति तं विशिनष्टि। योऽपाहरदिति। अनेन वेनश्चतुर्धा विभक्त इति ज्ञायत इति। तथाहि तामसो राजसः सात्त्विकस्तामसतामस इति। तत्र तामसांशो निषादः। राजसांशः स्वर्गस्य गन्ता। सत्त्वांशः पृथुः। तामसतामसांशो वेनः स्वयमन्धन्तमोगतः। तदुक्तम् "त्र्यंशो वेनः समुद्दिष्टः सत्त्वांशः पृथुतामगात्। रजोंऽशश्च दिवं प्राप निषादस्तामसोऽभवत्॥ स्वयं वेनश्चतुर्थस्तु महातमसि पातितः।" इति रजोंऽशो वेनो दिवङ्गत इति केनावगम्यत इति चोद्यम् "पापरूपी पृथग् जातो निषादो वेनदेहतः। यस्मात्तस्मात्पृथोः पुत्राद्रजो वेनो दिवं ययौ" इत्यनेन परिहृतमिति ग्रन्थान्तरसिद्धत्वादत्र न विस्तृतम्॥ ४६॥

( अस्यां टीकायां नास्त्यध्यायसमाप्तिरत्र सं० )।

**श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः**

तर्हुपेक्षन्तामेव तत्राह। ब्राह्मण इति चतुष्कम्॥ ४१॥ ❀ ❀ तर्हि किं कर्त्तव्यं तत्राह। नाङ्गस्येत्यादि॥ ४२-४६॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य चतुर्दशोऽध्यायः॥ १४॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

शक्तानां क्षत्रियाणामवारणे दोष इति किं वक्तव्यं समदृगपि शान्तोऽपि ब्राह्मणो दीनानां समुपेक्षको भवेत्तर्हि तस्यापि ब्रह्म तपः स्रवति॥ ४१॥ ❀ ❀ नन्वेवञ्चेत्तर्हि भृग्वादयस्ते मुनयः कथं निश्चिन्ताः स्थिताः। सत्यं, त एव स्वैर्दस्युवधप्रजापालनाभ्यां तपःक्षयविक्षेपादिकमालक्ष्य कोऽप्येको जनो राजा कर्त्तव्य इति व्यवस्थायां परामृश्याहुः नाङ्गस्येति। संस्थातुं नष्टीभवितुं, बाहुको वामन इति प्रथमं तद्देहान्मात्रांशः पृथग्भूय प्रकटीबभूवेत्यर्थः॥ ४२-४४॥ ❀ ❀ निषीदेति। नासौ राजयोग्य इति व्यवसायेत्यर्थः॥ ४५॥ ❀ ❀ येन कारणेनासौ जायमानो वेनकल्मषमहरत् जग्राह तेन स निषादो नीचजातिरभवत्। तस्य वंश्यास्तु नैषादा अतिनीचा अभूवन्नित्यन्वयः॥ ४६॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। चतुर्दशश्चतुर्थस्य सङ्गतः सङ्गतः सताम्॥ १४॥

**श्रीमच्छुकदेवकृतः सिद्धांतप्रदीपः**

किञ्च दीनसमुपेक्षकस्य विप्रस्य तपोहानिमङ्गवंशस्य विनाशानर्हतां च विनिश्चित्य दीनरक्षार्थमङ्गवंशप्रवृत्त्यर्थञ्च वेनस्योरुं ममन्थुरित्याह ब्राह्मण इति त्रिभिः। समदृगपि शान्तोऽपि ब्राह्मणोऽपि यदि दीनानां समुपेक्षको भवेत्तर्हि तस्यापि ब्रह्म तपः स्रवते॥ ४१॥ ❀ ❀ संस्थातुं नाशं गन्तुम्॥ ४२॥ ❀ ❀ विपन्नस्य मृतस्य बाहुको ह्रस्वकायः॥ ४३॥ ❀ ❀ महत्यौ हनू कपोलप्रान्तौ यस्य ह्रस्वौ पादौ यस्य सः॥ ४४-४५॥ ❀ ❀ येन स जायमानः वेनकल्मषं स्वस्मिन् अहरत् तेन हेतुना तस्य वेनकल्मषरूपिणो वंश्याः पुत्रपौत्रादयः गिरिकाननगोचराः गिरयः काननानि च गोचरा विषया वासस्थानानि येषां ते न तु पुरादिवासा इत्यर्थः॥ ४६॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे चतुर्दशाध्यायार्थप्रकाशः॥ १४॥

**गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी**

उपेक्षायामपि दोषं पश्यन्तो न चोपेक्षितवन्तः। तत्र को दोष इत्यपेक्षायां तत्रापि दोषमाह—ब्राह्मण इति। ब्राह्मण इति वर्णत उत्तमत्वम्। समं ब्रह्म पश्यतीति समदृगिति क्रियात उत्तमत्वम्। शान्तो रागादिदोषरहितः सर्वतो विरक्त इति स्वभावत उत्तमत्वमुक्तम्। एवंभूतोपि यदि दीनानां समुपेक्षको भवेत्तर्हि तस्यापि ब्रह्म तपः स्वाध्यायादिजनितं तेजः स्रवते। स्रवणं च न ज्ञायत इत्यत्र दृष्टान्तमाह—भिन्नभाण्डात् पयो यथेति। अपिशब्देन कैमुतिकन्यायं सूचयति। यद्येवंभूतस्य ब्राह्मणस्यापि दीनोपेक्षायां तेजोहानिस्तदा क्षत्रियादीनां सुकृतहानिर्भवतीति किं वक्तव्यमिति। अतो दीनोपेक्षायामपि तेजोहानिरूपं दोषं पश्यन्तो नोपेक्षितवन्त इति भावः॥ ४१॥ ❀ ❀ नच तन्निवारणायान्यं राजानं चक्रुस्तथा सति भगवद्भक्ताङ्गवंशोच्छेदकर्तृत्वरूपदोषप्रसङ्गस्य तादवस्थ्यात्। किंत्वेवं विचार्य वेनदेहं विमथ्य ततो राजानं निष्पादितवन्त इत्याह—नाङ्गस्येति। राजर्षेरङ्गस्यैष वंशः संस्थातुं नाशं गन्तुं नार्हति। तत्र हेतुमाह—अमोघेति। हि यस्मादस्मिन् मनुवंशे केशवाश्रयाः भगवद्भक्ताः अत एवामोघवीर्या महानुभावाः प्रियव्रतोत्तानपादध्रुवादयो जाता इति शेषेणान्वयः॥ ४२॥ ❀ ❀ ऋषय एवं विनिश्चित्य निश्चयं कृत्वा विपन्नस्य मृतस्य सुनीथया रक्षितस्य महीपतेर्वेनस्य दोषांशस्य दूरीकरणार्थं प्रथममधोभागमूरुं तरसा वेगेन ममन्थुरित्यन्वयः। तत्र ततो मथ्यमानादूरोर्बाहुको वामनको नरः पुरुष आसीत् जातः। ऋषय इत्यनेन तेषामेवमुत्पादनेऽलौकिकं सामर्थ्यं भाविज्ञानादिकं

च सूचितम् ॥ ४३ ॥ ❀ ❀ तं वेनस्य दोषांशेन जातं नरं वर्णयति—काकेति । काकवत्कृष्णवर्णः । अतिह्रस्वमङ्गं शरीरं यस्य स तथा । तदेव प्रपञ्चयति—ह्रस्वौ बाहू यस्य सः । महत्यौ हनू कपोलप्रान्तौ यस्य सः । ह्रस्वौ पादौ यस्य सः । निम्नो नासाया अग्रभागो यस्य सः । रक्ते अक्षिणी यस्य सः । ताम्रवद्रक्ता मूर्द्धजाः केशा यस्य सः ॥ ४४ ॥ ❀ ❀ तं तु नरमवनतं नम्रशीर्षकं दीनं मनसापि नम्रीभूतं किं कार्यं भगवत्संतोषकरमहं करोमीति वादिनं प्रार्थयमानं ते मुनयो निषीद स्थितो भवेत्यब्रुवन् । ननु मुनिभिरनुनये कृतेऽपि वेनोऽनुनीतो नाभूत्तदंशोत्पन्नोयं कथं नम्रतादिगुणको जात इत्याशङ्क्य भगवल्लीलाया दुर्ज्ञेयत्वादेवमाश्रयं मां कुर्वित्यभिप्रायेण संबोधयति—हे तातेति । तस्य नाम निर्वक्ति—स इति । स नरः ततो निषीदेति मुनिवचनात् निषादो निषादनाम्ना प्रख्यातो जात इत्यर्थः ॥ ४५ ॥ ❀ ❀ इदानीमपि तद्वंशानुवृत्तिं दर्शयति—तस्येति । तुशब्दोवधारणे । तस्य निषादस्य वंश्या एव नैषादाः । ते कुत्र सन्तीत्यपेक्षायामाह—गिरीति । गिरिः काननं च गोचरः आश्रयो वासस्थानं येषां ते तथा । ते पुरग्रामादिषु कुतो न वसन्ति तत्राह—येनेति । येन हेतुना जायमानोऽसौ पुरुष उल्बणमुग्रं भयंकरं वेनस्य कल्मषं पापमहरत् तद्धृत्वा जातस्तेन मुनिभिः स गिरिवनादिषु स्थापितोतस्तद्वंश्या अपि तत्रैव निवसन्तीत्यर्थः ॥ ४६ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना । श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये । श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे कामनिरूपणे । चतुर्दशो गतो वृत्तिमधर्मस्थितिरूपकः ॥ ३ ॥

### भाषानुवादः

फिर सोचा कि 'ब्राह्मण यदि समदर्शी और शान्तस्वभाव भी हो तो भी दीनोंकी उपेक्षा करनेसे उसका तप उसी प्रकार नष्ट हो जाता है जैसे फूटे हुए घड़ेमेंसे जल बह जाता है ॥ ४१ ॥ ❀ ❀ फिर राजर्षि अङ्गका वंश भी नष्ट नहीं होना चाहिये; क्योंकि इसमें अनेकों अमोघ-शक्ति और भगवत्परायण राजा हो चुके हैं' ॥ ४२ ॥ ❀ ❀ ऐसा निश्चय कर उन्होंने मृत राजाकी जाँघको बड़े जोरसे मथा तो उसमेंसे एक बौना पुरुष उत्पन्न हुआ ॥ ४३ ॥ ❀ ❀ वह कौएके समान काला था; उसके सभी अङ्ग और खासकर भुजाएँ बहुत छोटी थीं, जबड़े बहुत बड़े, टाँगें छोटी, नाक चपटी, नेत्र लाल और केश ताँबेकेसे रंगके थे ॥ ४४ ॥ ❀ ❀ उसने बड़ी दीनता और नम्रभावसे पूछा कि 'मैं क्या करूँ ?' तो ऋषियोंने कहा— 'निषीद ( बैठ जा ) ।' इसीसे वह 'निषाद' कहलाया ॥ ४५ ॥ ❀ ❀ उसने जन्म लेते ही राजा वेनके भयङ्कर पापोंको अपने ऊपर ले लिया, इसीलिये उसके वंशधर नैषाद भी हिंसा, लूट-पाट आदि पापकर्मोंमें रत रहते हैं; अतः वे गाँव और नगरमें न टिककर वन और पर्वतोंमें ही निवास करते हैं ॥ ४६ ॥

इति चतुर्दशोऽध्यायः ॥ १४ ॥



# अथ पञ्चदशोऽध्यायः

## मैत्रेय उवाच

अथ तस्य पुनर्विप्रैरपुत्रस्य महीपतेः । बाहुभ्यां मथ्यमानाभ्यां मिथुनं समपद्यत ॥ १ ॥
तद् दृष्ट्वा मिथुनं जातमृषयो ब्रह्मवादिनः । ऊचुः परमसन्तुष्टा विदित्वा भगवत्कलाम् ॥ २ ॥

## ऋषय ऊचुः

एष विष्णोर्भगवतः कला भुवनपालिनी । इयं च लक्ष्म्याः सम्भूतिः पुरुषस्यानपायिनी ॥ ३ ॥
अयं तु प्रथमो राज्ञां पुमान् प्रथयिता यशः । पृथुर्नाम महाराजो भविष्यति पृथुश्रवाः ॥ ४ ॥
इयं च सुदती देवी गुणभूषणभूषणा । अर्चिर्नाम वरारोहा पृथुमेवावरुन्धती ॥ ५ ॥
एष साक्षाद्धरेरंशो जातो लोकरिरक्षया । इयं च तत्परा हि श्रीरनुजज्ञेऽनपायिनी ॥ ६ ॥

## मैत्रेय[3] उवाच

प्रशंसन्ति स्म तं विप्रा गन्धर्वप्रवरा जगुः । मुमुचुः सुमनोधाराः सिद्धा नृत्यन्ति स्वःस्त्रियः ॥ ७ ॥
शङ्खतूर्यमृदङ्गाद्या नेदुर्दुन्दुभयो दिवि । तत्र सर्व उपाजग्मुर्देवर्षिपितृणां गणाः ॥ ८ ॥
ब्रह्मा जगद्गुरुर्देवैः सहासृत्य सुरेश्वरैः । वैन्यस्य दक्षिणे हस्ते दृष्ट्वा चिह्नं गदाभृतः ॥ ९ ॥
पादयोररविन्दं च तं वै मेने हरेः कलाम् । यस्याप्रतिहतं चक्रमंशः स परमेष्ठिनः ॥ १० ॥

अन्वयः—अथ विप्रैः पुनः मथ्यमानाभ्याम् अपुत्रस्य तस्य महीपतेः बाहुभ्याम् मिथुनम् समपद्यत ॥ १ ॥ ❀ ❀ ब्रह्मवादिनः ऋषयः तत् जातम् मिथुनम् दृष्ट्वा भगवत्कलाम् विदित्वा परमसंतुष्टाः ऊचुः ॥ २ ॥ ❀ ❀ एषः भगवतः विष्णोः भुवनपालिनी कला च इयम् पुरुषस्य अनपायिनी लक्ष्म्याः संभूतिः ॥ ३ ॥ ❀ ❀ अत्र पुमान् तु राज्ञाम् प्रथमः यशः प्रथयिता पृथुः नाम पृथुश्रवाः महाराजः भविष्यति ॥ ४ ॥ ❀ ❀ च इयम् सुदती वरारोहा गुणभूषणभूषिता देवी अर्चिः नाम पृथुम् एव अवरुंधती ॥ ५ ॥ ❀ ❀ एषः साक्षात् हरेः अंशः लोकरिरक्षया जातः च इयम् हि अनपायिनी तत्परा श्रीः अनुजज्ञे ॥ ६ ॥ ❀ ❀ विप्राः तम् प्रशंसन्ति स्म गंधर्वप्रवराः जगुः सिद्धाः सुमनोधाराः मुमुचुः स्वःस्त्रियः नृत्यन्ति स्म ॥ ७ ॥ ❀ ❀ दिवि शंखतूर्यमृदङ्गाद्याः दुन्दुभयः नेदुः सर्वे देवर्षिपितृणाम् गणाः तत्र उपाजग्मुः ॥ ८ ॥ ❀ ❀ जगद्गुरुः ब्रह्मा सुरेश्वरैः देवैः सह आसृत्य वैन्यस्य दक्षिणे हस्ते गदाभृतः चिह्नम् दृष्ट्वा ॥ ९ ॥ ❀ ❀ च पादयोः अरविन्दम् तम् वै हरेः कलाम् मेने यस्य चक्रम् अप्रतिहतम् सः परमेष्ठिनः अंशः ॥ १० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

ततः पंचदशे विप्रैर्मथनाद्वेनबाहुतः । जातस्य तु पृथोरुक्तमभिषेकार्हणादिकम् ॥ (१) ॥

किमूचुरित्यत आह—एष इति चतुर्भिः । लक्ष्म्याः संभूतिः कला ॥ १–३ ॥ ❀ ❀ अत्र यः पुमान्स तु महाराजो भविष्यति ॥ ४ ॥ ❀ ❀ सुदती शोभनदंतवती गुणानां भूषणरूपा अवरुंधती भर्तृत्वेन भजंती भविष्यति ॥ ५ ॥ ❀ ❀ अत्र हेतुः । लोकस्य रिरक्षया रिरक्षयिषया ॥ ६ ॥ ❀ ❀ स्वःस्त्रियः अप्सरसो नृत्यंति स्म ॥ ७–८ ॥ ❀ ❀ देवैः सहासृत्यागत्य वैन्यस्य पृथोः चिह्नं रेखात्मकं चक्रम् ॥ ९ ॥ ❀ ❀ अप्रतिहतं रेखांतरैरभिन्नं चक्रं यस्य चिह्नं स परमेश्वरस्यांशः ॥ १० ॥

---

१. प्राचीने पाठे 'तद्दृष्ट्वा'··· इत्यारम्य '····पुरुषस्यानपायिनी' इत्यवध्यंशो न । २. प्रा० पा०—देवी सुदती । ३. प्राचीने पाठे 'मैत्रेय उवाच' अयमंशो न ।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

आदिना स्तवनादिग्रहः। अर्हणमुपढौकनम् (१)। अथ मात्रंशनिषादोत्पत्त्यनंतरम्। पित्रंशो विष्णुयज्ञप्रभावश्च कीदृगभवदित्यपेक्षायामाह–अथेति। तस्य वेनस्य ॥ १ ॥ ❀ ❀ क्षात्रं तेजो भगवत्प्रभावश्च क्षत्रियस्य बाहोरेव तिष्ठतीत्यभिप्रेत्य बाहुमथनमिति। कला विभूतिः ॥ २ ॥ ❀ ❀ अपायो वियोगस्तद्रहिता। एष पुरुषरूपो यो मिथुनांतर्गतः। अनपायत्वे प्रमाणं तु "देवत्वे देवता साक्षात्मानुषत्वे तु मानुषी" इति पराशरपुराणोक्तिरेव ॥ ३ ॥ ❀ ❀ अत्र मिथुने यः पुमान्स तु पुरग्रामादिकल्पकत्वाद्राज्ञा प्रथमायत्तो यशः प्रथयिताऽतः पृथुरिति प्रसिद्धः पृथुश्रवा महाराजो भविष्यतीति सर्वत्र योजना। अत्रायं तु प्रथमो राज्ञामिति प्रचुरः पाठो यद्यपि दृश्यते, तथापि न स श्रीधरसंमतः। अत्र य इत्यादिव्याख्यानात् ॥ ४ ॥ ❀ ❀ एकदेहोद्भूतयोर्ययुभयोरुद्वाहो नोचितस्तथापि लक्ष्म्यंशाया अर्चिषो विष्ण्वंशं पृथुं विनान्यायोग्यत्वान्न दोषः। पुरा विमृश्यैव मुनिभिरुभयबाहुभ्यामुभयोत्पादनं कृतम्, अन्यथैकबाहोः पृथुमेवोत्पादयेयुरिति भावः ॥ ५ ॥ ❀ ❀ अत्र पृथ्ववरोधे ॥ ६ ॥ ❀ ❀ प्रशंसन्ति स्तुवंति, तं पृथुं, स्मयोगे लट्। सुमनसां पुष्पाणां धारा इव धाराः ॥ ७ ॥ ❀ ❀ तत्र पृथ्व्याविर्भावदेशे ॥ ८ ॥ ❀ ❀ ब्रह्मेति सार्द्धकम्। गदाभृतो हरेश्चिह्नं गदैव तच्चिह्नं तं वैन्यम्। चिह्नं पाणितल इति शेषः, "यस्य रेखांतराभिन्नं चक्रं पाणितले भवेत्। स भवेत्पृथिवीपालो विष्णोरंशसमुद्भवः" इति सामुद्रिकात् ॥ ९–१० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अथ निषादलक्षणमलापगमानन्तरं तस्य शुद्धस्य ॥ १–२ ॥ ❀ ❀ ऋषय ऊचुरिति पाठः स्वाम्यसम्मतः किमूचुरिति व्याख्यानेन पौनरुक्त्यप्रत्यायनात्। अनपायिनी स्वरूपशक्तित्वादभिन्ना ॥ ३ ॥ ❀ ❀ अत्र यः पुमान् इति व्याख्यानात् अत्र यः प्रथम इत्येव स्वामिसम्मतः पाठः। अयन्त्विति पाठे अयमित्यस्य स इत्यर्थकल्पना यच्छब्दस्याध्याहारः अत्रेत्यस्यापीति ज्ञेयम् ॥ ४ ॥ ❀ ❀ भूषणभूषणमित्येव स्वामिसम्मतः पाठः, भूषणरूपेति रूपकतया व्याख्यानात्। योगेन तु भूषणेत्यपि संगच्छते ॥ ५ ॥ ❀ ❀ अत्र पृथोरेव भजने हेतुः ॥ ६–७ ॥ ❀ ❀ तत्र पृथुगृहे ॥ ८ ॥ ❀ ❀ ब्रह्मेति सार्द्धकम् ॥ ९ ॥ ❀ ❀ यस्येत्यर्द्धकम्। अभिन्नमसंमिश्रम् ॥ १०–१३ ॥

### श्रीमद्वीरराघवव्याख्या

अथानन्तरं तस्य अपुत्रस्य महीपतेर्वेनस्य बाहुभ्यां पुनर्विप्रैर्मथ्यमानाभ्यां मिथुनं स्त्रीपुंसात्मकं समपद्यत उद्बभूव ॥ १ ॥ ❀ ❀ ब्रह्मवादिन ऋषयः तज्जातं मिथुनं दृष्ट्वा भगवत्कलां भगवदंशं विदित्वा अत एव परमसंतुष्टा ऊचुः ॥ २ ॥ ❀ ❀ किमूचुरित्यत आह एष इति चतुर्भिः। एष पुमान् भगवतो विष्णोर्भुवनपालिनी कला भुवनपालनार्थं कलयावतीर्ण इत्यर्थः, इयं स्त्री लक्ष्म्याः संभूतिः संभवः कलेत्यर्थः। तत्र हेतुः पुरुषस्यानपायिनी पुरुषमविहाय जातेति भावः, "राघवत्वे भवेत्सीता रुक्मिणी कृष्णजन्मनि। अन्येषु चावतारेषु विष्णोरेषानपायिनी" इति वचनार्थोऽत्रानुसंधेयः ॥ ३ ॥ ❀ ❀ अयं मिथुने यः पुमान् सोऽयं राजा प्रथमः मुख्यः यतोऽयं यशः कीर्तिं प्रथयिता विस्तारयिता, अतः पृथुकीर्तिसम्पन्नः पृथुर्नाम महाराजो भविष्यति। नामशब्दः प्रसिद्धौ। प्रथयति यशः पृथुरिति योगरूढिभ्यां प्रख्यातो महाराजो भविष्यतीत्यर्थः ॥ ४ ॥ ❀ ❀ इयं तस्मिन् मिथुने सेयं सुदती शोभनदन्तवती इतरस्याप्युपलक्षणमिदं वरारोहा स्त्री यतो गुणानां भूषणानां च भूषणा भूषणवदौज्ज्वल्यविशिष्टाश्रयभूतेत्यर्थः। ततोऽर्चिर्नाम अर्चते उज्ज्वलतीत्यर्चिरिति योगरूढिभ्यां प्रख्याता पृथुमेवावरुन्धती भविष्यति ॥ ५ ॥ ❀ ❀ अत्र हेतुः। एष इति। रक्षितुमिच्छा रिरक्षा लोकस्य रिरक्षया साक्षाद्धरेरंश एव पृथुर्जातः आवेशावतारः, तत्परा तदनन्यार्हा अत एवानपायिनी श्रीः लक्ष्मीरियं जज्ञे, लक्ष्म्यंशजातेत्यर्थः ॥ ६ ॥ ❀ ❀ तं पृथुं विप्राः प्रशंसन्ति स्म प्रशशंसुः गन्धर्वश्रेष्ठा जगुः गानं कृतवन्तः सिद्धाः सुमनोधाराः पुष्पवृष्टीर्मुमुचुः स्वःस्त्रियः स्वः स्वर्गस्तत्रत्याः स्त्रियः अप्सरसः नृत्यन्ति ननृतुः ॥ ७ ॥ ❀ ❀ शङ्खादयो दुन्दुभ्यादयः विनेदुः। तत्र पृथोः समीपे देवादीनां गणाः उपाजग्मुः आगताः। गुरुः पिता हितोपदेष्टा च ब्रह्मा चतुर्मुखः देवैः सहागत्य वैन्यस्य वेनापत्यस्य पृथोर्दक्षिणे हस्ते गदाभृतो भगवतश्चिह्नं रेखात्मकं चक्रादिकं दृष्ट्वा ॥ ८ ॥ ❀ ❀ तथा पादयोररविन्दं च दृष्ट्वेत्यर्थः, हरेः कलामंशं मेने। अप्रतिहतं रेखान्तरैरभिन्नं चक्रं सुदर्शनं यस्य चिह्नं तस्य परमेष्ठिनः परमपुरुषस्यांशस्य व्यधिकरणे इमे षष्ठ्यौ, परमेष्ठिनेति तृतीयान्तपाठे तु तस्य पृथोः परमेष्ठिना ब्रह्मणा ब्राह्मणैः सहाभिषेकः आरब्ध इत्यन्वयः। अंशः सन्निति पाठे अप्रतिहतं रेखान्तरैरसंकीर्णं चक्रं रेखात्मकं चक्रम् अंशः सन् सुदर्शनांशः सन् यस्य स्थितमिति शेषः। अंशशब्दापेक्षया सन्निति पुंल्लिङ्गनिर्देशः ॥ ९–१० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अथ सत्त्वांशात्पृथोरुत्पत्तिं वक्ति। अथेति ॥ १–२ ॥ ❀ ❀ एष विष्णोः कलेति लिङ्गव्यत्ययेन मत्स्यादिवत्साक्षाद्धरेरंशतावचः साक्षादंशो नायं किंतु विशेषावेशात्तदंश इति वचनमिति ध्वनयति। तदुक्तं "पृथुहैहयादयो जीवास्तेष्वाविष्टो

हरिः स्वयम्। विशेषावेशतस्तेपु साक्षाद्धर्यंशतावचः॥ किंस्तुधन्व्यासऋषभकपिला मत्स्यपूर्वकाः। आकृतिजैतरेयौ च धर्मजत्रयमेव च। धन्वन्तरिर्हयग्रीवो दत्तात्रेयश्च तापसः। स्वयं नारायणस्त्वेते नाणुमात्रविभेदिनः। बलतो रूपतश्चैव गुणैरपि कथंचन" इति। इयं च लक्ष्मीः संभूतिरिति विशेषणात् पृथुरपि हरेः साक्षादंशः, इतरथास्य तत्पतित्वायोगादिति बुद्धिव्यामोहो न कर्तव्यः, "तत्र सन्निहिता श्रीश्च यत्र सन्निहितो हरिः। नास्यासन्निधिमात्रेण रमा पत्नीत्वमात्रजेत्। 'साक्षादेव तु साक्षाच्च हरेः सन्निधितः क्वचित्। गोप्यादिरूपा भवति विपरीतं न तु क्वचित्॥" इति निर्णायकवचनात् 'पुरुपोंधातुपुनीपुनात् पुंस्त्वात्मपरमात्मनो'रित्याभिधानात् प्रकरणबलाच्च पुरुषं परमात्मानमपहाय न तिष्ठतीत्यभिप्रायेणोक्तं पुरुषस्यानपायिनीति लक्ष्मीविशेषणवती कापि रमणी भर्तृवियोगशून्या जातेति तात्पर्यमिति॥

( श्रीमद्विजयध्वजानुसारं चतुर्दशाध्यायसमाप्तिः। ) ॥ ३ ॥

श्रीनारायणचरणारविन्दमकरन्दनिषेविणां महतां पुरुषाणामिहामुत्रानभिमता अपि भगवदिच्छया सकलाः संपदो भवन्तीति निरूप्यतेऽस्मिन्नध्याये पृथुकथाकथनव्याजेन। तत्रादौ विप्राणां पृथुप्रशंसाप्रकारं वक्ति अत्रेति। तुशब्देन भेदवादिना पृथोर्हरेश्च महान् भेदोऽस्तीति सूच्यते। एतदर्थद्योतकप्रमाणसद्भावात्, तथा ह्युक्तम्—"ब्रह्मण्यनन्ते गरुडे रुद्रे कामे शचीपतौ। अनिरुद्धे मनौ चैव पृथौ च कृतवीर्यजे॥ नारदे चैवमाद्येपु विशेषात् सन्निधिर्हरेः। सुदर्शनादिष्वस्त्रेपु तथा सन्निहितो हरिः॥ नरलक्ष्मणौ बलश्चैव शेषस्यांशाः प्रकीर्तिताः। तथा भरतशत्रुघ्नौ शङ्खचक्रावुदाहृतौ॥ प्रद्युम्नश्च कुमारश्च स्कन्दः कामांशकाः स्मृताः॥" इति। 'वैन्ये पृथौ सन्निहितो राजरूपी जनार्दनः' इति विशेषवचनेनायं वैन्यः पृथुः श्रीनारायणांशः अन्यः, तथा कश्चित् पृथुनामा तत्रोच्यत इति शङ्का निर्मूलितेति ज्ञातव्यम्। अत्रास्मिन् वर्षे राज्ञां गणनसमये प्रथमः कथं यतो यशः प्रथयिता अतः प्रथयितृत्वात् पृथुर्नाम महाराजेत्यत्र टच्प्रत्ययाभावस्तेभ्यो वैशिष्ट्यद्योतनार्थः॥ ४॥ ❀ ❀ सुदती शोभमानदन्ता अर्चिनाम गुणैरर्चितत्वाद् भूषणैर्ज्वलितत्वात् "अर्चिर्भा ज्वाला" इत्यभिधानं, वरो वरणीय आरोहो नितम्बो यस्याः सा तथोक्ता अवरुन्धती पतित्वेन स्वीकुर्वाणा भविष्यतीत्यर्थः॥ ५॥ ❀ ❀ एष पृथुः साक्षात् हरेः श्रीनारायणस्यांश इति सप्तसु प्रथमेति सूत्रादंशस्य सन्निधानस्य मुख्यं पात्रं लोकरिरक्षया जनरक्षणेच्छया, यद्वा 'प्रत्यक्षसदृशोः साक्षादि'त्यभिधानाद्धरेः साक्षादंशः पृथोर्या जातिस्तज्जातिसदृशजातिरूपेण सन्निहित इत्यर्थः। तदुक्तं 'राजरूपी जनार्दनः' इति, यतो हरेः पृथौ सन्निधानविशेषात्तदंशत्वं तस्माच्छ्रियोऽपि तथा वचनमित्यस्मिन्नर्थे हिशब्दः "हिर्हेतावबधारणे" इति यादवः। अवधारणार्थत्वे उक्तस्मृतिविरोधः॥ ६॥ ❀ ❀ गन्धर्वप्रवरादयस्तत्र द्विजप्रशंसासमये गानादिकं चक्रुरित्यन्वयः॥ ७-८॥ ❀ ❀ तत्र देवान्विशिनष्टि, ब्रह्मेति। तस्मिन् पृथौ सन्निहितां हरेः कलां मेन इत्यन्वयः॥ ९-१०॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

ऋषय ऊचुरिति बहुत्र, किन्तु किमूचुरिति पौनरुक्त्या स्वाम्यसम्मतोऽयम्॥ १-३॥ ❀ ❀ अयं राज्ञां भाविनां प्रथमः तेपां तदनुसारिचेष्टायां यशः प्रथयिता च। अत एव पृथुश्रवाः। अत्र य इति पाठस्तु स्वामिसम्मतः॥ ४॥ ❀ ❀ भूपणमित्येव स्वामिमतम्। रूपकत्वेन निर्देशात्॥ ५-६॥ ❀ ❀ मैत्रेय उवाचेति क्वचिन्नास्ति॥ ७-८॥ ❀ ❀ ब्रह्मेति सार्द्धकम्॥ ९-१०॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

तद्वेनबाहुमथनजन्मनः सार्च्चिषश्च पृथोः। अभिषेकोपायनाद्याहृतिः पञ्चदशेऽभवत्॥ ( १ )॥

अथात्र पित्रंशो विष्णुयज्ञप्रभावश्च कीदृश उद्भवेदित्यपेक्षायां मुनिभिर्मथनमाह। अथेति॥ १-२॥ ❀ ❀ सम्यक् भूतिः सम्पत्तिस्तद्रूपा लक्ष्मीः॥ ३॥ ❀ ❀ बाहुभ्यामिति क्षात्रं तेजो भगवत्प्रभावश्च क्षत्रियस्य बाह्वोरेव तिष्ठतीत्यभिप्रायेण। अत्र यः पुमान् प्रथमः स प्रथयितेति निरुक्त्या पृथुः॥ ४॥ ❀ ❀ गुणानां भूषणानाञ्च भूषणरूपा अवरुन्धती भक्त्या वशीकुर्वती भविष्यति॥ ५॥ ❀ ❀ रिरक्षया रिरक्षिषया॥ ६॥ ❀ ❀ सुमनसां पुष्पाणां धारा इव धारा मुमुचुः॥ ७-९॥ ❀ ❀ अप्रतिहतं रेखान्तरैरभिन्नं पाणितल इत्यर्थः। परमेष्ठिनः परमेश्वरस्य॥ १०॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पञ्चदशे श्रीपृथोर्जन्माद्युत्सवमाह अथेति। समपद्यत प्रादुरभूत्॥ १-२॥ ❀ ❀ सम्भूतिः कला॥ ३॥ ❀ ❀ यतो यशः प्रथयिता अतः पृथुश्रवाः विपुलकीर्तिः पृथुर्नाम महाराजो भविष्यति॥ ४॥ ❀ ❀ गुणा एव भूषणानि यासां

१. साक्षादेवेति—यत्र हरिः कृष्णादिरूपेणावतीर्णः तत्र साक्षात् रुक्मिण्यादिरूपेण लक्ष्मीर्हरेः पत्नीत्वमाव्रजेत्। विपरीतमिति। हरिरन्यस्मिन्यत्र सन्निहितः तत्र रमा साक्षादवतीर्य पत्नी न भवतीत्यर्थः। दी०।

ताः गुणभूषणास्तासामपि भूषणा चूडामणितुल्या पृथुमेवावरुन्धती पतित्वेनाश्रयन्ती सती अर्चिर्नाम महाराज्ञी भविष्यति ॥ ५-८ ॥ ❀ ❀ आसृत्यागत्य चिह्नं रेखारूपं चक्रम् ॥ ९ ॥ ❀ ❀ अप्रतिहतं रेखान्तरैरदूषितम् ॥ १० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

**पूरणाय तु कामानां प्रादुर्भूतः पृथौ हरिः । प्रोक्तं पञ्चदशे तस्य कृतं राज्याभिषेचनम् ॥ ( १ ) ॥**

एवं पूर्वाध्याये वेनस्योरुमन्थनेन विप्रैर्दोषांशो दूरीकृत इत्युक्तम् । इदानीं शुद्धात् क्षत्रियांशात्ततः प्रजाकामपूरणयोग्यपुरुषोत्पादनचिकीर्षवः क्षत्रियाणां बाहुजत्वात्तेषां बाहुभ्यामेव कामपूरकत्वाच्चोत्पाद्यमानस्य क्षत्रियत्वकामपूरकत्वसिद्धयर्थमङ्गान्तरं हित्वा तस्य बाह्वोरेव मन्थनं कृतवन्तस्ततश्च प्राकृतपुरुषोत्पत्तावेतैर्मेपिता व्यापादित इति ज्ञात्वा प्रजासु द्वेषमेव कुर्यादिति पुनरपि नेष्टसिद्धिः स्यादतः सर्वेष्टसिद्धयर्थं पृथुतनौ भगवतः प्रादुर्भाव जात इत्याह—अथेति द्वाभ्याम् । अथाधर्मांशदूरीकरणानन्तरमपुत्रस्य पुत्ररहितस्य महीपतेर्वेनस्य बाहुभ्यां विप्रैः पुनर्मथ्यमानाभ्यां मिथुनं समपद्यत जातमित्यन्वयः । अपुत्रस्येत्यनेन यदि वेनस्य कश्चित्पुत्रो भवेत्तर्हि तस्य वैराज्याधिकारित्वान्नान्यापेक्षातोऽयमुद्यमो न विधेयः स्यादिति सूचितम् ॥ १ ॥ ❀ ❀ तज्जातं मिथुनं दृष्ट्वा भगवत्कलां विदित्वा ज्ञात्वा परमसंतुष्टाः सन्त ऋषय ऊचुरित्यन्वयः । भगवदंशत्वज्ञाने हेतुमाह—ऋषय इति । भगवद्ध्यानशीलत्वेन तल्लक्षणज्ञा इत्यर्थः । तत्रापि हेतुमाह—ब्रह्मवादिन इति । यतो वेदार्थविद इत्यर्थः ॥ २ ॥ ❀ ❀ तेषां वचनान्येव दर्शयति—एष इति चतुर्भिः । मिथुनमध्ये य एष पुरुषः स भगवतो विष्णोः कला अंशः । तदवतारप्रयोजनं सूचयन्ति—भुवनपालिनीति । चतुर्दशभुवनपालकत्वादिदानीं भूर्लोकपालनायावतीर्ण इति भावः । तत्र येयं स्त्री सा लक्ष्म्याः संभूतिः अंशः । तदवतारे हेतुमाहुः—पुरुषस्येति । पुरुषस्य भगवतः अपायो वियोगस्तद्रहिता अनपायिनी । अतस्तेन सहावतीर्णेति भावः ॥ ३ ॥ ❀ ❀ योयं पुमान्स तु पुरग्रामादिविशेषकल्पकत्वाद्राज्ञां प्रथमो भविष्यतीति । न च प्रथमत्वेप्यन्यसाधारणो भविष्यति, किंतु महाराजोन्यसर्वराजापेक्षयोत्कृष्टो भविष्यति भगवदवतारत्वादित्यर्थः । ननु भगवदवतारत्वेपि कथमुत्कर्ष इत्याशङ्कयाहुः—यशः प्रथयितेति । गिरिचूर्णीकरणपृथिवीदोहनाद्यपूर्वकर्मभिः स्वयशोविस्तारको भविष्यतीत्यर्थः । ननु लोकेऽपूर्वकर्मकर्तृणामपि केषांचिन्महत्त्वं न दृश्यतेऽतस्तथात्वेपि कथमस्य महत्त्वं स्यादित्याशङ्कयाहुः—पृथुश्रवा इति । जीवानामपूर्वकर्मकर्तृत्वेपि प्रारब्धाधीनत्वात्तदभावे यशोविस्ताराभावान्महत्त्वं न दृश्यते । अस्य तु भगवदंशत्वेन पूर्णयशोवत्त्वात्तद्विस्तारस्य प्रारब्धाधीनत्वाभावान्नायं पृथुश्रवा भविष्यति, एतद्यशोगानं सर्वे लोकाः महत्त्वं सेत्स्यतीति भावः । किं बहुना पृथुश्रवस्त्वान्नाम्नापि पृथुरिति विख्यातो भविष्यतीत्याहुः—पृथुर्नामेति ॥ ४ ॥ ❀ ❀ इयं स्त्री च देवी देदीप्यमाना सुदती शोभनदन्तवती गुणभूषणभूषणा गुणानां सौशील्यादीनां भूषणानां च भूषणभूता शोभाजननी वरारोहा वरः शोभनः आरोहः उत्सङ्गो यस्याः सा अर्चिर्नाम्ना प्रख्याता सती पृथुमेवावरुन्धती पतित्वेनाङ्गीकर्त्री भविष्यतीति पूर्वस्यानुषङ्गः ॥ ५ ॥ ❀ ❀ ननु तयोरेकस्माद् देहात्सहजातयोर्भ्रातृभगिनीत्वात्कथं तद्विरुद्धो दम्पतिभावो युक्त इत्याशङ्कय पूर्वोक्तिमेव भगवदवतारत्वं हेतुमाहुः एष इति । हि यस्मात् एष साक्षाद्धरेरंश एव लोकरिरक्षया जातः । इयं च तत्परा भगवत एकान्तभक्ता अत एवानपायिनी तद्वियोगमसहमाना श्रीर्लक्ष्मीरनुजज्ञे तेन सह जाता । अतोऽनयोर्दम्पतीभावो न विरुद्ध इति भावः ॥ ६ ॥ ❀ ❀ एवं पूर्णगुणस्य भगवतः सर्वकामपूरणार्थमवतीर्णस्यापि सहजानां गुणानामुद्रेकेण बहिःप्राकट्यार्थं यथा मुनिभिर्गुणवर्णनं कृतं तथान्येपि तदर्थं भगवतः सत्कारं कृतवन्तस्तं दर्शयति प्रशंसन्तीति । विप्राः पूर्वेभ्योऽन्ये साधारणाः प्रशंसन्ति स्म तुष्टुवुः । गन्धर्वप्रवरा विश्वावस्वादयस्तद्यशो जगुः । सिद्धाः सुमनसां धारा मुमुचुः । स्वःस्त्रियः अप्सरसो नृत्यन्ति स्मेत्यत्रानुषङ्गः ॥ ७ ॥ ❀ ❀ देवैर्वादिताः । शङ्खतूर्यमृदङ्गाद्या दुन्दुभयश्च दिवि स्वर्गे नेदुः । तत्रेति यत्र पृथ्ववतारो जातस्तस्मिन् स्थाने देवर्षिपितॄणां सर्वे गणाः समूहा उपाजग्मुरित्यन्वयः ॥ ८ ॥ ❀ ❀ यत्र यत्र स्वगणमुख्यो गच्छति तत्र तत्र तदनुयामिनः सर्वे गच्छन्त्येवेति देवादीनामागमनकारणत्वेन भगवत्संमानार्थं तद्गणमुख्यस्य ब्रह्मण आगमनमाह—ब्रह्मेति । सुरेश्वरैः देवश्रेष्ठैरिन्द्रादिलोकपालैः सनकादिभिः सिद्धैर्मरीच्यादिप्रजेशैश्च सह ब्रह्मा तत्रासृत्य आगत्य गदाभृतो भगवतो विष्णोश्चिह्नं वैन्यस्य पृथोर्दक्षिणे हस्ते अप्रतिहतं चक्रं पादयोररविन्दरेखात्मकं कमलं च दृष्ट्वा यस्य दक्षिणे हस्ते अप्रतिहतं रेखान्तरैरसंमिश्रितं रेखात्मकं चक्रं भवति स परमेष्ठिनः परमेश्वरस्य भगवतोऽश इति सिद्धान्तात्तं पृथुं हरेः सर्वदुःखहारकस्य भगवतः कलां वै अंशमेव मेन इति द्वयोरन्वयः । ब्रह्मणो मुख्यत्वमाह—जगद्गुरुरिति । तत्र हेतुमाह—देव इति । देदीप्यमानः सर्वतोऽतितेजस्वीत्यर्थः ॥ ९-१० ॥

## भाषानुवादः

### महाराज पृथुका आविर्भाव और राज्याभिषेक

**श्रीमैत्रेयजी कहते हैं—विदुरजी !** इसके बाद ब्राह्मणोंने पुत्रहीन राजा वेनकी भुजाओंका मन्थन किया, तब उनसे एक स्त्री-पुरुषका जोड़ा प्रकट हुआ ॥ १ ॥ ❀ ❀ ब्रह्मवादी ऋषि उस जोड़ेको उत्पन्न हुआ देख और उसे भगवान्का अंश

जान बहुत प्रसन्न हुए और बोले ॥ २ ॥ ❁ ❁ ऋषियोंने कहा—यह पुरुष भगवान् विष्णुकी विश्वपालिनी कलासे प्रकट हुआ है और यह स्त्री उन परम पुरुषकी अनपायिनी ( कभी अलग न होनेवाली ) शक्ति लक्ष्मीजीका अवतार है ॥ ३ ॥ ❁ ❁ यह पुरुष अपने सुयशका प्रथन—विस्तार करनेके कारण परम यशस्वी 'पृथु' नामक सम्राट् होगा। राजाओंमें यही सबसे पहला होगा ॥ ४ ॥ ❁ ❁ यह सुन्दर दाँतोंवाली एवं गुण और आभूषणोंको भी विभूषित करनेवाली सुन्दरी इन पृथुको ही अपना पति बनायेगी। इसका नाम अर्चि होगा ॥ ५ ॥ ❁ ❁ पृथुके रूपमें साक्षात् श्रीहरिके अंशने ही संसारकी रक्षाके लिये अवतार लिया है और अर्चिके रूपमें, निरंतर भगवान्‌की सेवामें रहनेवाली उनकी नित्य-सहचरी श्रीलक्ष्मीजी ही प्रकट हुई हैं ॥ ६ ॥ ❁ ❁ श्रीमैत्रेयजी कहते हैं—विदुरजी ! उस समय ब्राह्मण लोग पृथुकी स्तुति करने लगे, श्रेष्ठ गन्धर्वोंने गुणगान किया, सिद्धोंने पुष्पोंकी वर्षा की, अप्सराएँ नाचने लगीं ॥ ७ ॥ ❁ ❁ आकाशमें शङ्ख, तुरही, मृदङ्ग और दुन्दुभी आदि बाजे बजने लगे। समस्त देवता, ऋषि और पितर अपने-अपने लोकोंसे वहाँ आये ॥ ८ ॥ ❁ ❁ जगद्गुरु ब्रह्माजी देवता और देवेश्वरोंके साथ पधारे। उन्होंने वेनकुमार पृथुके दाहिने हाथमें भगवान् विष्णुकी हस्तरेखाएँ और चरणोंमें कमलका चिह्न देखकर उन्हें श्रीहरिका ही अंश समझा; क्योंकि जिसके हाथमें दूसरी रेखाओंसे बिना कटा हुआ चक्रका चिह्न होता है, वह भगवान्‌का ही अंश होता है ॥ ९-१० ॥

तस्याभिषेक आरब्धो ब्राह्मणैर्ब्रह्मवादिभिः । [1]आभिषेचनिकान्यस्मै आजह्रुः सर्वतो जनाः ॥ ११ ॥
सरित्समुद्रा गिरयो नागा गावः खगा मृगाः । द्यौः क्षितिः सर्वभूतानि समाजह्रुरुपायनम् ॥ १२ ॥
सोऽभिषिक्तो महाराजः सुवासाः साध्वलङ्कृतः । पत्न्यार्चिषालङ्कृतया विरेजेऽग्निरिवापरः ॥ १३ ॥
तस्मै जहार धनदो हैमं वीर वरासनम् । वरुणः सलिलस्रावमातपत्रं शशिप्रभम् ॥ १४ ॥
वायुश्च बालव्यजने[2] धर्मः कीर्तिमयीं[3] स्रजम् । इन्द्रः किरीटमुत्कृष्टं दण्डं संयमनं यमः ॥ १५ ॥
ब्रह्मा ब्रह्ममयं [4]वर्म भारती हारमुत्तमम् । हरिः सुदर्शनं चक्रं तत्पत्न्यव्याहतां श्रियम् ॥ १६ ॥
दशचन्द्रमसिं रुद्रः शतचन्द्रं तथाम्बिका । सोमोऽमृतमयानश्वांस्त्वष्टा रूपाश्रयं रथम् ॥ १७ ॥
अग्निराजगवं चापं सूर्यो रश्मिमयानिषून् । भूः पादुके योगमय्यौ[5] द्यौः पुष्पावलिमन्वहम् ॥ १८ ॥
नाट्यं सुगीतं वादित्रमन्तर्धानं च खेचराः । ऋषयश्चाशिषः सत्याः समुद्रः शङ्खमात्मजम् ॥ १९ ॥
सिन्धवः पर्वता नद्यो रथवीथीर्महात्मनः । सूतोऽथ मागधो वन्दी तं स्तोतुमुपतस्थिरे ॥ २० ॥
स्तावकांस्तानभिप्रेत्य पृथुर्वैन्यः प्रतापवान् । मेघनिर्ह्रादया वाचा प्रहसन्निदमब्रवीत् ॥ २१ ॥

अन्वयः—ब्रह्मवादिभिः ब्राह्मणैः तस्य अभिषेकः आरब्धः जनाः सर्वतः अस्मै आभिषेचनिकानि आजह्रुः ॥११॥ ❁ ❁ सरित्समुद्राः गिरयः नागाः गावः खगाः मृगाः द्यौः क्षितिः सर्वभूतानि उपायनम् समाजह्रुः ॥ १२ ॥ ❁ ❁ अलंकृतया अर्चिषा पत्न्या सह अभिषिक्तः सुवासाः साध्वलंकृतः महाराजः सः अपरः अग्निः इव विरेजे ॥ १३ ॥ ❁ ❁ वीर धनदः तस्मै हैमम् वरासनम् जहार वरुणः सलिलस्रावम् शशिप्रभम् आतपत्रम् ॥ १४ ॥ ❁ ❁ च वायुः बालव्यजने धर्मः कीर्तिमयीम् स्रजम् इन्द्रः उत्कृष्टम् किरीटम् यमः संयमनम् दंडम् ॥ १५ ॥ ❁ ❁ ब्रह्मा ब्रह्ममयम् वर्म भारती उत्तमम् हारम् हरिः सुदर्शनम् चक्रम् तत्पत्नी अव्याहताम् श्रियम् ॥ १६ ॥ ❁ ❁ रुद्रः दशचन्द्रम् असिम् तथा अम्बिका शतचंद्रम् सोमः अमृतमयान् अश्वान् त्वष्टा रूपाश्रयम् रथम् अग्निः आजगवम् चापम् सूर्यः रश्मिमयान् इषून् भूः योगमय्यौ पादुके द्यौः अन्वहम् पुष्पावलिम् खेचराः नाट्यम् सुगीतम् वादित्रम् च अन्तर्धानम् ऋषयः सत्याः आशिषः समुद्रः आत्मजम् शङ्खम् च सिन्धवः पर्वताः नद्यः महात्मनः रथवीथीः अथ सूतः मागधः बन्दी तम् स्तोतुम् उपतस्थिरे ॥ १७-२० ॥ ❁ ❁ प्रतापवान् वैन्यः पृथुः स्तावकान् तान् अभिप्रेत्य प्रहसन् मेघनिर्ह्रादया वाचा इदम् अब्रवीत् ॥ २१ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

आभिषेचनिकान्यभिषेकसाधनानि ॥ ११-१३ ॥ ❁ ❁ हे वीर विदुर वरासनमुक्तमासनम्। सलिलस्य स्रवो यस्मात् ॥ १४ ॥ ❁ ❁ द्वे बालव्यजने ॥ १५ ॥ ❁ ❁ ब्रह्ममयं वेदमयं वर्म कवचं तत्पत्नी श्रीः श्रियं संपदम्

१. प्रा० पा०—अभिषेच०। २. प्रा० पा०—जनं। ३. प्रा० पा०—मित्र। ४. प्रा० पा०—धर्मं। ५. प्रा० पा०—माया।

॥ १६ ॥ ❀ ❀ दशचंद्राकाराणि बिंबानि कोशे यस्य तं असिं खड्गं शतचंद्रं चर्मरूपाश्रयमतिसुंदरम् ॥ १७ ॥ ❀ ❀ अजस्य गोश्च शृंगाभ्यां निर्मितं चापम्। योगमय्यौ पादस्पर्शमात्रेणाभीष्टदेशप्रापिके ॥ १८ ॥ ❀ ❀ नाट्यादिकौशलं खेचराः आत्मजं स्वप्रभवम् ॥ १९ ॥ ❀ ❀ तं स्तोतुमुपस्थिताः ॥ २० ॥ ❀ ❀ स्तावकान् स्तोतुमुद्यतान् अभिप्रेत्य ज्ञात्वा ॥ २१ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अस्मै पृथवे ॥ ११ ॥ ❀ ❀ "उपायनमुपाहार उपढौकनमित्यपि" इत्यमरः ॥ १२-१३ ॥ ❀ ❀ यथा स संग्रामवीरत्वात्सवैरर्चितस्तथा त्वमपि हरिभक्तेष्वर्चितत्वाद्वीरोसीत्याह-वीरेति ॥ १४ ॥ ❀ ❀ वालव्यजने चामरयुगलम्। संयम्यंतेऽधर्मिणस्ताड्यन्तेऽनेनेति संयमनम्। यमो यमराजः ॥ १५-१८ ॥ ❀ ❀ खेचराः विद्याधरादयो देवविशेषाः ॥ १९ ॥ ❀ ❀ रथवीथी रथमार्गान्। "वीथी पंक्तौ गृहांगे च रूपकांतरवर्त्मनोः" इति मेदिनी। महात्मनो महे प्रजापालनोत्सवे आत्मा बुद्धिर्यस्य तस्य। अथोपायनप्रदानोत्तरं, तं पृथुम्। सूतमागधवंदिन इति। ते च "पुराणस्थनृपस्तोता सूत इत्यभिधीयते। मृतशूरनृपस्तोता मागधः परिकीर्त्तितः॥ वर्त्तमाननृपस्तोता बंदीति प्रोच्यते बुधैः" इति जैमिनिनोक्ताः। ते च पृथक्पृथग्जातीयास्त्रिवर्णेतरा एव ॥ २० ॥ ❀ ❀ इदं वक्ष्यमाणम् ॥ २१ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तस्मै इति सार्द्धषट्कम्। किन्तु बहुवाक्यैरेकवाक्यत्वान्मध्येऽङ्का विज्ञेयाः ॥ १४-१५ ॥ ❀ ❀ अव्याहतामविच्छिन्नाम् ॥ १६ ॥ ❀ ❀ चर्मेति ढालेति व्याख्यातम् ॥ १७-१८ ॥ ❀ ❀ नाट्यादिदानस्यासम्भवाल्लक्षणया तत्तत्कौशलं व्याख्यातम् ॥ १९ ॥ ❀ ❀ सिन्धव इत्यर्द्धकम्। रथवीथी रथाश्वादिमार्गान् ॥ २० ॥

## श्रीमद्वीरराघवव्याख्या

आभिषेचनिकानि अभिषेकसाधनानि सर्वतो दिग्भ्यो जनाः अस्मै पृथवे आजह्रुः आहृतवन्तः ॥ ११ ॥ ❀ ❀ सरितः समुद्राश्च गिरयो हिमवदादयः नागाः सर्पाः खगाः शकुनयो द्यौरादयश्चेत्येवं सर्वभूतान्युपायनं सान्मानिकं समाजह्रुः ॥ १२ ॥ ❀ ❀ स महाराजः पृथुरभिषिक्तः सुवासाः कौशेयादिमहार्हवस्त्रः स्रग्वी स्रग्वैजयन्ती अस्यास्तीति स्रग्वी, अलंकृतः किरीटाद्याभरणैरिति शेषः, तथालंकृतया भार्यया अर्चिषा सह अपरोऽग्निरिव रेजे रराज ॥ १३ ॥ ❀ ❀ सर्वभूतानि समाजह्रुरुपायनमित्येतत्प्रपञ्चयति तस्मा इति। हे वीर! तस्मै पृथवे धनदः हैमं हिरण्मयं श्रेष्ठं सिंहासनं जहार। सलिलस्य स्रावो यस्मात्तथाभूतं शशिप्रभमातपत्रं वरुणः आजहारेत्यनुषङ्गः ॥ १४ ॥ ❀ ❀ वायुर्द्वे वालव्यजने कीर्त्तिमयीं कीर्त्तिप्रचुरां-कीर्त्तिसंपादकत्वेन तत्प्राचुर्यमत्र विवक्षितं, स्रजं धर्म आजहारेति सर्वत्रानुषङ्गः। संयमनं दुष्कृद्विषयसमीचीननियमनसाधनं दण्डम् ॥ १५ ॥ ❀ ❀ ब्रह्मा चतुर्मुखः ब्रह्ममयं वेदमयं ब्रह्मप्रवचनापादकसामर्थ्यवत्त्वेन ब्रह्मप्राचुर्यमत्र विवक्षितं, वर्म कवचं भारती सरस्वती उत्तमं महार्हहारं हरिः उपेन्द्रः सुदर्शनचक्रं यदा पृथौ भगवदंशोऽनुप्रविष्टः तदेदं चक्रमपि सुदर्शनांशेनानुप्रविष्टमिति भावः। तत्पत्नी हरिपत्नी श्रीः अव्याहतां श्रियं सम्पदम् ॥ १६ ॥ ❀ ❀ दशचन्द्राकाराणि बिम्बानि कोशे यस्य तमसिं खड्गं रुद्र आजहार, पत्नी अम्बिका शतं चन्द्राकाराणि बिम्बानि यस्मिन् तत् शतचन्द्राख्यं खेटापरपर्य्यायश्चर्मेत्यर्थः, सोमश्चन्द्रः अमृतमयान्-अमृतस्रावित्वेन तत्प्राचुर्य्यमत्र विवक्षितम्-अश्वानाजहार। रूपाश्रयमतिसुन्दरं रथम् ॥ १७ ॥ ❀ ❀ अग्निराजगवमजस्य गोश्च शृङ्गाभ्यां निर्मितं चापं सूर्यः रश्मिमयान् रश्मिवत्सर्वत्र प्रवेशसामर्थ्येन तत्प्राचुर्यमत्र विवक्षितं, भूर्धरणी योगमय्यौ-योगवदभीष्टदेशप्रापणसमर्थत्वेन तत्प्राचुर्य्यमत्र विवक्षितम्। अन्वहमहरहर्वलिं पूजार्हं पुष्पं द्यौराजहार ॥ १८ ॥ ❀ ❀ खेचराः सिद्धसाध्यगन्धर्वादयः नाट्यादीन्याजह्रुः प्रापयामासुः। ऋषयः सत्याः आशिषः आजह्रुः कृतवन्त इत्यर्थः। समुद्रः आत्मजं स्वस्माद्भवं शङ्खमाजहार ॥ १९ ॥ ❀ ❀ सिन्धवो नदाः नद्यः पर्वताश्च महात्मनः पृथोः रथवीथीः रथमार्गान् आजह्रुः ददुः। धातूनामनेकार्थत्वादाने वृत्तिः। ततः सूतादयस्तं पृथुं स्तोतुमुपतस्थिरे उप समीपे स्थितवन्तः ॥ २० ॥ ❀ ❀ तान् सूतादीन् स्तावकान् स्तोतुमुद्युक्तानभिप्रेत्य प्रतापवान् महाप्रभावः वेनस्यापत्यं पृथुः मेघनिर्ह्रादया मेघगर्जनवद्गम्भीरया वाचा प्रहसन् स्मितपूर्वमिदं वक्ष्यमाणमब्रवीत् ॥ २१ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एवं प्रशस्य ब्राह्मणैः किमकारीति तत्राह तस्येति। अभिषेकसाधनानि स्वयं संपादितानि किं वान्यैरित्यत आह। आभिषेचनिकानीति ॥ ११ ॥ ❀ ❀ तत्रोपायनानि के आजह्रुरिति तत्राह। सरिदिति ॥ १२-१३ ॥ ❀ ❀ न केवलं

सरिदादय उपायनं ददुः, किंत्वन्ये लोकपालादयोऽपीत्याह। तस्मा इति ॥ १४–१५ ॥ ❀ ❀ तस्य हरेः पत्नी लक्ष्मीः ॥ १६ ॥ ❀ ❀ नाम्ना दशचन्द्रं खड्गं त्वष्टा विश्वकर्मा रूपाश्रयं रथम् ॥ १७ ॥ ❀ ❀ योगमये ऽणिमादियोग-साधने ॥ १८ ॥ ❀ ❀ अन्तर्धानमदृश्यतामात्मजमात्मनो जातम् ॥ १९ ॥ ❀ ❀ रथवीथीः रथमार्गान्। यथात्मविद्यं राजा निषेवणीय इति भावेन सूतादीनामुपस्थानप्रकारं वक्ति। सूतोऽथेति ॥ २० ॥ ❀ ❀ पृथोर्निरहङ्कारत्व-प्रकटनाय वक्ति स्तावकानिति। मेघनिर्ह्रादवत् मेघध्वनिवत् ध्वनिर्यस्याः सा तथा तया ॥ २१ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सूत इत्यर्द्धकम् ॥ २०–२३ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ब्रह्ममयं वेदमयं वर्म कवचं, तत्पत्नी लक्ष्मीः श्रियं सम्पत्तिम् ॥ १६ ॥ ❀ ❀ दशचन्द्राकाराणि बिम्बानि कोशे यस्य तमसिं खड्गम्। शतचन्द्रं चर्म। रूपाश्रयमतिसुन्दरम् ॥ १७ ॥ ❀ ❀ अजस्य गोश्च शृङ्गाभ्यां निर्मितं चापम्। योगमय्यौ पादस्पर्शमात्रेणाभीष्टदेशप्रापिके ॥ १८ ॥ ❀ ❀ आत्मजं स्वभवम् ॥ १९–२१ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

आभिषेचनिकानि अभिषेकार्हाणि वस्तूनि ॥ ११–१३ ॥ ❀ ❀ वीरवरासनं महाराजासनम्, सलिलस्रावं सलिलस्य पीयूषस्य स्रावो यस्मात्तथाभूतम् ॥ १४ ॥ ❀ ❀ वालव्यजने चामरद्वयम् ॥ १५ ॥ ❀ ❀ भारती सरस्वती तस्य हरेः पत्नी श्रीः अव्याहतामक्षयां श्रियं सम्पदम् ॥ १६ ॥ ❀ ❀ दश चन्द्रा यस्मिन् तथा तमसिं खड्गं शतचन्द्रं, खड्गसाहचर्य्याच्चर्मेत्यध्याहारः ॥ १७ ॥ ❀ ❀ अजानां गवां च शृङ्गैर्निर्मितमाजगवम्, योगमय्यौ यथेष्टगतिसाधनभूते ॥ १८ ॥ ❀ ❀ आत्मजं स्वोद्भवम् ॥ १९–२१ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

ब्राह्मणैस्तस्य पृथो राज्याभिषेके आरब्धे सति अस्मै पृथवे सर्वतः सर्वदिग्भ्य आभिषेचनिकानि अभिषेकसाधनवस्तूनि जना आजह्रुः आनीय समर्पितवन्त इत्यन्वयः। वेदार्थज्ञैरेव ब्राह्मणैः कृतः संस्कारः समीचीनो भवति, नान्यथेति सूचयन् ब्राह्मणान् विशिनष्टि–वेदवादिभिरिति ॥ ११ ॥ ❀ ❀ तस्याभिषेके सिद्धे तस्मै उपायनं स्वस्वाधिकारानुरूपं राज्ञे निवेदितुं योग्यं वस्तु सरित्समुद्रादयः सर्वे जनाश्च सम्यगादरेण आजह्रुः निवेदितवन्तः ॥ १२ ॥ ❀ ❀ इदानीं तस्याभिषिक्तस्य तेजोतिशय-माह–स इति। स महाराजो ब्राह्मणैरभिषिक्तः सुवासाः साधु यथा भवति तथा ब्रह्मादिभिर्निवेदितैश्चामरच्छत्रादिभिः किरीटकुण्ड-लादिभिश्चालंकृतः अलंकृतयार्चिर्नाम्न्या पत्न्या सह हैमे राजसिंहासने स्थितोऽपरो द्वितीयोग्निरिव विरेजे विराजमानो जात इत्यन्वयः ॥ १३ ॥ ❀ ❀ उपायनमाजह्रुरित्युक्तं तदेव पृथक् पृथगाहरणं दर्शयति–तस्मा इतिसार्द्धषड्भिः। हे वीर इति विदुरं संबोधयन् क्षत्रियत्वात्त्वया राज्याभिषेकप्रकारो ज्ञायत एवेति सूचयति। तस्मै पृथवे जहार निवेदितवानिति पदद्वयस्य सर्वत्रान्वयः। धनदः कुबेरः हेमनिर्मितं वरासनमुत्तमासनम्। वरुणः सलिलस्य स्रावो यस्मात्तत् शशिप्रभं शुभ्रमातपत्रं छत्रम् ॥ १४ ॥ ❀ ❀ वायुः बालव्यजने द्वे चामरे। धर्मः कीर्त्तिमयीं यस्या धारणे कीर्त्तिर्वितता स्यात्तामम्लानपुष्पां स्रजम्। इन्द्रः उत्कृष्टमुत्तमं किरीटम्। यमः स्वदण्डादुत्पाद्य संयमनं शत्रुवशीकारकं दण्डम् ॥ १५ ॥ ❀ ❀ ब्रह्मा ब्रह्ममयं वेदमयं वर्म कवचम्। भारती सरस्वती उत्तमं हारम्। हरिर्विष्णुरपि लोकव्यवहारापन्नः स्वचक्रादुत्पाद्यं सुदर्शनं चक्रम्। तत्पत्नी तस्य हरेः पत्नी श्रीः अव्याहतां व्याहृतिः क्षयस्तद्रहितामक्षयां श्रियं संपदम् ॥ १६ ॥ ❀ ❀ रुद्रः शिवः दशचन्द्राकाराणि चिह्नानि यस्मिंस्तमसिम्। अम्बिका पार्वती च शतं चन्द्राकारचिह्नानि यस्मिंस्तत् चर्म। सोमश्चन्द्रमाः अमृतमयान् मरणश्रान्तिखेदोद्गमादिधर्मरहितान् अश्वान्। त्वष्टा विश्व-कर्मा रूपाश्रयमतिसौन्दर्ययुक्तं रथम् ॥ १७ ॥ ❀ ❀ अग्निः अजस्य गोश्च शृङ्गाभ्यां निर्मितमाजगवं चापं धनुः। सूर्यो रश्मिमयान् रश्मिवत् झटिति दूरदेशगामिनः इषून् बाणान्। भूः भूमिर्योगमय्यौ पादधारणमात्रेणाभीष्टदेशप्रापिके पादुके। द्यौः स्वर्गाभि-मानिनी देवता अन्वहं प्रतिदिनं पुष्पावलिं पुष्पवृष्टिमहं करिष्य इति प्रतिज्ञां कृतवती ॥ १८ ॥ ❀ ❀ खेचराः आकाशगामिनो गन्धर्वविद्याधरादयः स्वस्वाधिकारानुरूपं नाट्यादि कौशलं वरत्वेन ददुः। ऋषयश्च सत्याः यथार्था आशिषो ददुः। समुद्रः क्षारोदः आत्मजं स्वप्रभवं शङ्खम् ॥ १९ ॥ ❀ ❀ सिन्धवः सप्तसमुद्राः समुद्रादयो महात्मनः विष्णववतारस्य पृथोः रथवीथीः रथमार्गान् वरत्वेन ददुः। अथ सर्वैरुपायननिवेदनानन्तरं सूतादयस्तं स्तोतुमुपतस्थिरे उपस्थिताः। तत्र "सूताः पौराणिकाः प्रोक्ता मागधा वंशशंसकाः। वन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः" इति विवेकः ॥ २० ॥ ❀ ❀ तान् सूतादीन् स्तावकान्

स्तोतुमुद्यतानभिप्रेत्य ज्ञात्वा पृथुः प्रहसन् मेघानामिव तत्तज्जनाश्वासनकरो निर्ह्रादो ध्वनिर्यस्यां तया वाचा इदं स्तुतिनिषेधपरं वक्ष्यमाणं वाक्यजातमब्रवीदित्यन्वयः। कुतः स्तोत्रनिषेधं कृतवानित्याकाङ्क्षायामिदानीं जातत्वेन स्तोत्रालम्बनकर्मणामप्रसिद्धेरित्यभिप्रेत्याह—वैन्य इति। यतो वेनाङ्गादिदानीं जात इति भावः। ननु पराक्रमाभावेप्यारोपितैरेव तैरात्मानं स्तावयन्तो जना दृश्यन्त इति चेत्सत्यम्, परं सत्कर्म कर्तुमसमर्थानां मन्दबुद्धीनां तथा व्यवहारो नोत्तमानामयं तूत्तम इत्यभिप्रेत्याह—प्रतापवानिति॥ २१॥

### भाषानुवादः

वेदवादी ब्राह्मणोंने राजा पृथुके अभिषेकका आयोजन किया। सब लोग उसकी सामग्री जुटानेमें लग गये॥११॥ ❀ ❀ उस समय नदी, समुद्र पर्वत, सर्प, गौ, पक्षी, मृग, स्वर्ग, पृथ्वी तथा अन्य सब प्राणियोंने भी उन्हें तरह-तरहके उपहार भेंट किये॥ १२॥ ❀ ❀ सुन्दर वस्त्र और आभूषणोंसे अलंकृत महाराज पृथुका विधिवत् राज्याभिषेक हुआ। उस समय अनेकों अलंकारोंसे सजी हुई महारानी अर्चिके साथ वे दूसरे अग्निदेवके सदृश जान पड़ते थे॥ १३॥ ❀ ❀ वीर विदुरजी! उन्हें कुबेरने बड़ा ही सुन्दर सोनेका सिंहासन दिया तथा वरुणने चन्द्रमाके समान श्वेत और प्रकाशमय छत्र दिया, जिससे निरन्तर जलकी फुहियाँ झरती रहती थीं॥ १४॥ ❀ ❀ वायुने दो चँवर, धर्मने कीर्तिमयी माला, इन्द्रने मनोहर मुकुट, यमने दमन करनेवाला दण्ड, ब्रह्माने वेदमय कवच, सरस्वतीने सुन्दर हार, विष्णु भगवान्ने सुदर्शनचक्र, विष्णुप्रिया लक्ष्मीजीने अविचल सम्पत्ति, रुद्रने दस चन्द्राकार चिह्नोंसे युक्त कोषवाली तलवार, अम्बिकाजीने सौ चन्द्राकार चिह्नवाली ढाल, चन्द्रमाने अमृतमय अश्व, त्वष्टा (विश्वकर्मा) ने सुन्दर रथ, अग्निने बकरे और गौके सींगोंका बना हुआ सुदृढ़ धनुष, सूर्यने तेजोमय बाण, पृथ्वीने चरणस्पर्शमात्रसे अभीष्ट स्थानपर पहुँचा देनेवाली योगमयी पादुकाएँ, आकाशके अभिमानी द्यौदेवताने नित्य-नूतन पुष्पोंकी माला, आकाशविहारी सिद्ध-गन्धर्वादिने नाचने-गाने, बजाने और अन्तर्धान हो जानेकी शक्तियाँ, ऋषियोंने अमोघ आशीर्वाद, समुद्रने अपनेसे उत्पन्न हुआ शङ्ख तथा सातों समुद्र, पर्वत और नदियोंने उनके रथके लिये बेरोक-टोक मार्ग उपहारमें दिये। इसके पश्चात् सूत, मागध और वन्दीजन उनकी स्तुति करनेके लिये उपस्थित हुए॥ १५-२०॥ ❀ ❀ तब उन स्तुति करनेवालोंका अभिप्राय समझकर वेनपुत्र परमप्रतापी महाराज पृथुने हँसते हुए मेघके समान गम्भीर वाणीमें कहा॥ २१॥

### पृथुरुवाच

भोः[1] सूत हे मागध सौम्य वन्दिँल्लोकेऽधुनास्पष्टगुणस्य मे स्यात्।
किमाश्रयो मे स्तव एष योज्यतां मा मय्यभूवन् वितथा गिरो वः॥ २२॥
तस्मात्परोक्षेऽस्म[2]दुपश्रुतान्यलंकरिष्यथ स्तोत्रमपीच्यवाचः।
सत्युत्तमश्लोकगुणानुवादे जुगुप्सितं न स्तवयन्ति सभ्याः॥ २३॥
महद्गुणानात्मनि कर्तुमीशः कः स्तावकैः स्तावयतेऽसतोऽपि।
[3]तेऽस्याभविष्यन्निति विप्रलब्धो जनावहासं कुमतिर्न वेद॥ २४॥
प्रभवो ह्यात्मनः स्तोत्रं जुगुप्सन्त्यपि विश्रुताः। ह्रीमन्तः परमोदाराः पौरुषं वा विगर्हितम्॥ २५॥
वयं त्वविदिता लोके सूताद्यापि वरीमभिः। कर्मभिः कथमात्मानं गापयिष्याम बालवत्॥ २६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे पृथुचरिते पञ्चदशोऽध्यायः॥ १५॥

अन्वयः—भो सूत हे मागध सौम्य वंदिन् लोके अधुना अस्पष्टगुणस्य मे किमाश्रयः स्तवः स्यात् एषः योज्यताम् वः गिरः मयि वितथाः मा अभूवन्॥ २२॥ ❀ ❀ अपीच्यवाचः तस्मात् परोक्षे अस्मदुपश्रुतानि अलम् स्तोत्रम् करिष्यथ सभ्याः उत्तमश्लोकगुणानुवादे सति जुगुप्सितम् न स्तवयन्ति॥ २३॥ ❀ ❀ महद्गुणान् आत्मनि कर्तुम् ईशः कः पुरुषः असतः अपि स्तावकैः स्तावयते अस्य ते अभविष्यन् इति विप्रलब्धः कुमतिः जनावहासम् न वेद॥ २४॥ ❀ ❀ परमोदाराः प्रभवः विश्रुताः ह्रीमन्तः अपि आत्मनः स्तोत्रम् वा विगर्हितम् पौरुषम् हि जुगुप्सन्ति॥ २५॥ ❀ ❀ सूत वयम् तु लोके अद्यापि वरीमभिः कर्मभिः अविदिताः अतः बालवत् आत्मानम् कथम् गापयिष्याम॥ २६॥

इति पञ्चदशोऽध्यायः॥

---

१. प्रा० पा०—भो। २. प्रा० पा०—दुपाश्रि॥ ह्यलं०। ३. प्रा० पा०—गुणा भविष्य०।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

लोके स्पष्टगुणस्य सतो मे स्तुतिः स्यात् अधुना तु किमाश्रयो मे स्तवो योज्यताम्। अतो वो गिरोऽधुना मयि वितथा मा भूवन्। यद्वा लोकेऽधुनाऽस्पष्टगुणस्य मे किमाश्रयः स्तवः स्यात्। अतः एष क्रियमाणः स्तवो मदन्यस्य योज्यतां न तु मे। वितथाभिधानापत्तेरित्यर्थः॥ २२॥ ❀ ❀ तस्मात्परोक्षे कालांतरे स्पष्टेषु गुणेषु सत्स्वस्माकमुपश्रुतानि यशांसि प्रतिस्तोत्रमलमत्यर्थं करिष्यथ। हे अपीच्यवाचो मधुरगिरः सभ्यैः प्रेरिता वयं त्वामेव स्तुम इति चेत्तत्राह। उत्तमश्लोकस्य गुणानुवादे कार्ये सति जुगुप्सितमर्वाचीनं न स्तावयंति॥ २३॥ ❀ ❀ ननु संभावितैरेव गुणैरात्मानं जनः स्तावयतीति चेत्तत्राह। महतां गुणानात्मनि संपादयितुं शक्तोऽप्यसतो गुणान्संभावनामात्रेण कः स्तावयते। यद्वा आदावेव सतोऽपि कः स्तावयते स्वत एव प्रख्यातिसिद्धेः। अन्यस्तु मिथ्यागुणस्तुतिश्लाघी मंद इत्याह। त इति। यद्ययं शास्त्राभ्यासादिकमकरिष्यत्तर्ह्यस्य ते विद्यादयो गुणा अभविष्यन्निति क्रियातिपत्त्या विप्रलब्धो जनानामवहासं न वेद॥ २४॥ ❀ ❀ किं च प्रभवोऽपि विश्रुता अपि ह्रीमंतोऽपि जुगुप्संति वेति दृष्टांते यथाऽतिस्तुतौ क्रियमाणायां विगर्हितं ब्राह्मणवधादि पौरुषमपि निंदंति तथोचितामपि स्तुतिं न सहंत इत्यर्थः॥ २५॥ ❀ ❀ वरीमभिरिंति दीर्घत्वमार्षं, भवितृप्रधानोऽयं निर्देशः। वरिष्ठैः कर्मभिरविदिता इत्यर्थः॥ २६॥

इति श्रीभा० म० चतुर्थे टीकायां पंचदशोऽध्यायः॥ १५॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

क आश्रयो यस्य स किमाश्रयः भवद्भिरिति शेषः। योज्यतां योज्यते लडर्थे लोट्। यद्वा योज्यतां स्तुतिं प्रयुजानानां वो युष्माकमिति योज्यम्। यतोधुना स्तवाश्रयत्वं नास्ति, अतो हेतोः वितथा असत्याः स्पष्टगुणस्य तु स्वत एव स्यादिति चेदाह—यद्वेति। अत एवास्पष्टगुणत्वादेव। किमाश्रयो मे इहामे इति च्छेदः कार्यस्तेनामे सदन्यस्य इत्यर्थ इति। असदभिधानाद्भवत्स्वेव दोषो भविष्यति न मय्यीति भावः। नमेऽमे इति तत्पुरुषे नञो नलोपे विभक्तेरलुगार्ष एवेति॥ २२॥ ❀ ❀ ननु भो गुणरत्नाकर भवतो निखिला एवैते गुणाः स्पष्टीभविष्यंत्येवेति ज्ञात्वैव स्तुम इति चेत्तत्राह–तस्मादिति। यस्माद् गुणा भविष्यंति तस्माद्धेतोः करिष्यंत्येव न तु कुरुथ। तदा के युष्मान्निषेत्स्यन्तीति भावः। तदापि परोक्ष एव न तु मत्साक्षात्। न हि स्तव्यः संमुख एव स्तुत्वा ह्रेपयितुं युज्यत इति भावः। अपीच्यवाचः मनोज्ञवाक्कौशलाभिज्ञाः, वाचोमनोज्ञत्वं सत्याया एवान्यथा युष्मत्करिष्यमाणस्तुत्यां न कस्याप्यादरो भविष्यतीत्यभिप्रायः। संबुद्धेः अर्वाचीनं मद्विधम्। अत एवोत्तमश्लोकस्तावकत्वादेव। इत्यर्थ इति। उत्तमश्लोकस्तावकत्वाभावे सभ्यत्वमेव न सेत्स्यतीति भावः॥ २३॥ ❀ ❀ अत्राक्षिपति नन्विति। अकारप्रश्लेषेणार्थांतरमाह–यद्वेति। क्रियातिपत्त्या स्तुतिकाले विद्याभ्यासादिक्रियाया अनिष्पत्त्या। अत्र विश्वनाथः–ननु स उत्तमश्लोकस्त्वमेवेति तत्राह–महतो भगवतो गुणान्स्वात्मनि स्वस्मिन्कर्तुं शिरःशेखरीकर्तुमीशः समर्थोपि कोभिज्ञ आत्मानं स्तावयते न कोपि। सतो वर्तमानानपि किं पुनरवर्तमानानित्याह॥ २४॥ ❀ ❀ प्रभवोप्यात्मस्तोत्रं न बहु मन्यंते किं पुनरहमित्याह–किं चेति। वाशब्दो दृष्टांते इवार्थे। विगर्हितं पौरुषमिव अहो अयं सतां धर्मध्वंसे परमसमर्थस्तथापि प्रबलगोब्राह्मणहननेऽयं शूर इत्यादिलक्षणं पौरुषं विगर्हितमेव। इत्यर्थ इति। यद्यपि प्रबलहननेन मां स्तौति तथापि गोब्राह्मणपदोपादानान्मां निंदत्येवायमिति तं वारयस्येवेति भावः॥ २५॥ ❀ ❀ वरस्य भावो वरिमा, तैः। इत्यर्थ इति। अत्र भवितुर्वरिष्ठकर्मणः प्राधान्येन निर्देशो न तु भावस्य। तथात्वे तु वरिष्ठत्वैरित्यर्थः स्यादिति भावः॥ २६॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे पञ्चदशोऽध्यायः॥ १५॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

सूत इत्यर्द्धकम्। पूर्वार्धेऽधुनेत्यस्योत्तरार्द्धेऽन्वितत्वेनास्थानपतितत्वं मे इत्यस्याधिकत्वं वाक्यभेदश्चेत्यस्वरसाद्यद्वेति हेतोर्व्यंग्यत्वादित्यर्थोक्तिः॥ २१–२२॥ ❀ ❀ किञ्च परोक्षे चापरोक्षे च तदेव युक्तमित्याह। सतीति॥ २३॥ ❀ ❀ पूर्वार्थेऽपेरस्थानपतितत्वमकारप्रश्लेषगौरवञ्चातो यद्वेति॥ २४–२५॥ ❀ ❀ भवति पूर्वं तिष्ठति पश्चाद्विकृतिं गच्छति इति भविता प्रकृतिः, तत्प्रधानोऽयं वरिमशब्दः। अन्यथा वरत्वकर्मणोस्सामानाधिकरण्याऽसम्भवात्॥ २६॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे दीपिन्याख्यदीपिका टिप्पण्यां पञ्चदशोऽध्यायः॥ १५॥

### श्रीमद्वीरराघवव्याख्या

उक्तमेवाह हे सूतादयः। लोकेऽधुनाऽस्पष्टगुणस्य सतो मे मम एषः युष्माभिः करिष्यमाणः स्तवः किमाश्रयो योज्यतां, लोके प्रख्याता हि गुणाः स्तोत्रविषया अप्रख्यातगुणस्य मे स्तवो विषयाभावाद्वितथः स्यात्। अतो वो युष्माकं स्तुतिगिरः मयि

वितथा माभूवन्। युष्माकं चानिष्टापत्तिः स्यादिति भावः ॥ २२ ॥ ❀ ❀ तस्मात्परोक्षे कालान्तरे स्पष्टगुणेषु सत्सु अस्मानुपाश्रितानि यशांसि प्रति स्तोत्रमलमत्यर्थं करिष्यथ हे अपीच्यवाचः! मधुरवाचः सूतादयः! अनवसरे समीरितानां मधुरगिरां शोभा नोपपद्यत इत्यभिप्रायः। सभ्यैः प्रेरिता वयं त्वामेव स्तुम इति चेत्तत्राहुः उत्तमश्लोकस्य भगवतो गुणानुवादेन कार्य्ये सति जुगुप्सितमनुत्तमश्लोकगुणानुवादमीदृशं सभ्या न स्तावयन्ति स्तुतिं न कारयन्ति ॥ २३ ॥ ❀ ❀ ननु गुणानामधुनास्पष्टत्वेऽपि भविष्यद्गुणैरात्मानं जनः स्तावयेदिति चेत्तत्राह महद्गुणानिति। अधुनाऽसतोऽपि महतो गुणानात्मनि स्वस्मिन् कर्तुं सम्पादयितुमीशः शक्तोऽपि स्तावकैः स्तोतृभिः कः स्तावयते स्तुतिं कारयते, न कोऽपीत्यर्थः। यदि कश्चिदेते गुणाः अभविष्यन्निति करिष्यमाणशत्रुजयादिभिः शौर्यादयो गुणाः स्वस्मिन्नभविष्यन्निति बुद्ध्यात्मानं स्तावयते स कुमतिः विप्रलब्धोऽधिक्षिप्तो जनानामपहासं न वेद ॥ २४ ॥ ❀ ❀ सुमतयः स्वात्मस्तुतिं निन्दन्तीत्याह प्रभव इति। परमोदाराः निरतिशयौदार्यादिगुणसंपन्नाः प्रभवोऽपि सद्गुणानात्मनि सम्पादयितुं शक्ता अपि विश्रुताः प्रख्याता अपि ह्रीमन्तो लज्जायुक्ताः सन्तः आत्मनः स्वस्य विगर्हितं पौरुषं तद्विषयं स्तोत्रं वा जुगुप्सितं निन्दन्ति ॥ २५ ॥ ❀ ❀ हे सूताद्याः सूतप्रभृतयः लोके अविदिता अप्रख्याता वयन्तु वरीमभिः नितरां वरिष्ठैः, दीर्घ आर्षः, सूताद्यापीति पाठे सूतेति जात्यभिप्रायैकवचनं, तच्च मागधानामप्युपलक्षणं, हे सूतादयः अद्यापि अधुनापि वरीमभिः वरिष्ठैः कर्मभिर्लोके अविदिता वयमतः कथं वयं बालवदात्मानं गापयिष्यामः, णिच्यात्वे 'अर्तिह्रीव्लीरी'-त्यादिना पुक्, तस्मात् लृडुत्तमबहुवचनं स्तावयिष्याम इत्यर्थः ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिकायां पञ्चदशोऽध्यायः ॥ १५ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

हे सूताद्याः! योज्यतां स्तुतिं प्रयुज्यतां वो युष्माकमेष स्तवो मे किमाश्रयः कं गुणमाश्रित्य वर्तमानः स्यादित्यन्वयः। तव शौर्यादिगुणमाश्रित्य वर्तत इति तत्राह लोक इति। अस्पष्टगुणस्याप्रकाशितपराक्रमादिगुणस्य यद्वा यद्यहं प्रख्यातगुणः स्यां तर्ह्येष वः स्तवो योज्यताम्। न च तथा तस्मात्किमाश्रयो योज्यते, यत एवमतो वो मयि प्रयुक्ता गिरो वितथा माभूवन्नित्यन्वयः ॥ २२ ॥ ❀ ❀ किमिदानीं फलितमत्राह तस्मादिति। यस्मादिदानीमनाविष्कृतगुणा वयं तस्मादीडयवाचो यूयं परोक्षे कालान्तरे कृतविक्रमानन्तरमस्मदुपाश्रितान्यस्मद्विषयाणि कर्माण्याश्रित्यालमत्यर्थं स्तोत्रं करिष्यथेत्यन्वयः। यद्वा कथंकारं चेदं वितथाः स्युरस्मद्गिर इति तत्राह तस्मादिति। यतो वयमप्रकाशितगुणास्तत्र प्रवर्तमानविषयाणामसत्त्वाद्वैतथ्यमालभन्ते, तस्मात्तद्दोषपरिहारार्थमस्मदपरोक्षे चास्मन्निकटेऽस्मद्दूरप्रदेशे वर्तमानो यो हरिस्तस्येडयवाचो हरेराश्रितानि चरितान्यङ्गीकृत्य स्तोत्रमलं करिष्यथ भूषितं कुरुत। अन्यथा दूषितमेव स्यादतस्तस्य गुणानां नित्यत्वात्तद्विषया युष्मद्गिरः सफलाः स्युः। अविद्यमानकथका वन्दिनः परिकीर्तिता इति युष्मद्दोषोऽपि परिहृतः स्यादिति भाविनो गुणान् समूह्य स्तुम इति तत्राह सतीति। उत्तमश्लोकगुणानामनुवादे सत्यभ्यर्हितेऽपि सभ्या आत्मस्तवनं जुगुप्सितमिति न स्तावयन्ति 'आत्मप्रशंसा मरणमि'ति स्मृतेः ॥ २३ ॥ ❀ ❀ वयं तत्र तत्र तं प्रभुं स्तुत्वा ततः फलं लभामहे। तत्कथमित्याशङ्क्य तन्मूर्खविषयं न विद्वद्विषयमित्याशयेनाह महद्गुणानिति। अनभिव्यक्तत्वेन बाल्येऽविद्यामानानपि महतां पृथिव्यादीनां क्षमादेर्गुणानात्मनि कर्तुमिच्छन् प्रकाशयितुकामः को विद्वान् स्तावकैर्भवादृशैः स्तावयते न कोऽपीत्यन्वयः। कथं तन्मूर्खविषयमभूदिति तत्राह स वा इति। यद्वा यदुक्तं हरिविषयं स्तोत्रमलं करिष्यथेति तद्गुणसंदब्धं स्तोत्रं निर्गुणे हरौ कथं संगच्छते, तथात्वे योऽस्मद्गिरां वैतथ्यं सुलभं स्यादिति तत्राह सतीति। उत्तमश्लोकस्य हरेर्गुणानामनुवादे सति स्तोतॄणां पापहरत्वेन प्रशस्ते, सभ्याः पण्डिताः विण्मूत्रपूर्णं 'मदुपैति कान्ये'ति जुगुप्सितमात्मानं न स्तावयन्तीत्यन्वयः। सभ्येष्वेकोऽपि तथाविधः किं न स्यादिति शङ्कमानो मूर्ख एवेति भावेनाह महद्गुणानिति। आत्मन्यसतो महतः 'अणोरणीयान्महतो महीयानि'ति श्रुतिसिद्धस्य हरेर्गुणानौदार्यादिकानात्मनि कर्तुमिच्छन् स्तावकैः को विद्वान् स्तावयते, अपिपदेनोक्तं जुगुप्सितमित्यनुकर्षति। किमित्याक्षेप इत्यतो लोकापवादविषयत्वादित्याशयेनाह स वा इति ॥ २४ ॥ ❀ ❀ सद्गुणाः प्रभवोऽप्यात्मस्तुतिं जुगुप्सन्ते, किमुत वयमिति भावेनाह। प्रभवोऽपीति। विद्यमानगुणसंदब्धस्तोत्रं प्रत्यक्षप्रमितं पारमार्थिकं पौरुषमपि निन्दन्तीत्यर्थः ॥ २५ ॥ ❀ ❀ वरीमभिर्वरणीयैः श्रेष्ठैरित्यर्थः ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां पञ्चदशोऽध्यायः ॥ १५ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तस्मात् परोक्षे कालेन व्यवधाने देशेन वा स्पष्टेषु गुणेषु सत्सु अस्माकमुपश्रुतानि यशांसि प्रतिस्तोत्रमलमत्यर्थं करिष्यथ। हे अपीच्यवाचः! मधुरगिरः, अपीड्येति चित्सुखः। ईड्याः पूज्या वाचो येषाम्। अथ परोक्षे चापरोक्षे चैतदेव युक्तमित्याह। सतीति ॥ २३ ॥ ❀ ❀ अन्यस्तु सर्वथा तुच्छ इत्याह महदिति ॥ २४ ॥ ❀ ❀ अन्ये तु प्रभवं स्तावयितुं योग्याः स्वस्तोत्रं जुगुप्सन्ति। तथापि विश्रुताः तत्तद्गुणैर्विख्याताः ते के तत्राह ह्रीमन्तः परमा महान्तश्चेति ॥ २५-२६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे पञ्चदशोऽध्यायः ॥ १५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

लोके अधुना अस्पष्टगुणस्य मे स्तवोऽयं किमाश्रयः स्यात् कं गुणं मे दृष्ट्वा स्तुध्वे इत्यर्थः। स्तवं विना स्थातुं न शक्नुम इति चेत् अमे मद्भिन्नस्य कस्यचिदयोग्यजनस्य एष क्रियमाणः स्तवो योज्यतां ननु मे। ननु कोऽत्र ते दोषस्त्वं किं बिभेषीति तत्र न मे दोषः, किन्तु युष्माकमेव दोषप्रसक्तेर्बिभेमीत्याह मेति। मयि विषये वो गिरो मा वितथा भवन्तु॥ २२॥ ❀ ❀ ननु भो गुणरत्नाकर! भवतो निखिला एवैते गुणाः स्पष्टीभविष्यन्त्येवेति ज्ञात्वैव स्तुम इति चेत्तत्राह तस्मादिति। यस्मादस्मद्गुणा भविष्यन्ति तस्मात् अस्मदुपश्रुतानि यशांसि प्रति स्तोत्रमलमत्यर्थं करिष्यथैव, न तु कुरुथ, तदा के युष्मान्निषेत्स्यन्तीति भावः। तदापि परोक्ष एव न तु मत्साक्षात्। हे अपीच्यवाचः! मनोज्ञवाक्कौशलाभिज्ञाः न हि स्तव्यः संमुख एव स्तुत्वा ह्रेपयितुं युज्यते इति भावः। ननु किं कुर्मः सभ्यैः प्रेरिता वयमधुनारभ्यैव त्वामेव स्तुम इति चेन्मृषैव ब्रूथेत्याह। उत्तमश्लोकस्य गुणानुवादे सदैव सर्वथैव स्तवनीये सति जुगुप्सितमर्वाचीनं मद्विधं जनं न स्तावयन्ति सभ्यत्वान्यथानुपपत्तेरिति भावः॥ २३॥ ❀ ❀ ननु स तूत्तमश्लोको भवानेवेति तत्राह। महतो भगवतो गुणान् आत्मनि स्वस्मिन् कर्तुं शिरःशेखरीकर्तुमीशः समर्थोऽपि कोऽपि कोऽभिज्ञः आत्मानं स्तावयते न कोऽपि सतो वर्त्तमानानपि किं पुनरवर्त्तमानान्। मन्दस्तु अनीशोऽपि अवर्त्तमानानपि स्तावयत एवेति भावः। स च कुमतिर्जनावहासं न वेद, कीदृशः तेऽस्येति यद्ययं शस्त्रशास्त्रकलाभ्यासादिकमकरिष्यत्तदा वीरः पण्डितो विदग्धोऽप्यभविष्यदिति क्रियातिपत्त्या विप्रलब्धः उपहसितः॥ २४॥ ❀ ❀ स्वस्तावकाः प्रभवो न ज्ञेयाः यतः प्रभवो ह्रीत्यादि। वाशब्द इवार्थे, विगर्हितं पौरुषमिव यथायं सतां धर्मध्वंसे परमसमर्थं इत्यादिस्तोत्रं निन्दन्ति॥ २५॥ ❀ ❀ वरीमभिरिति दीर्घत्वमार्षं, वरिमभिः श्रेष्ठत्वैर्वयमविदिता अविख्याताः। अतः कथं कर्मभिरात्मानं गापयिष्यामः॥ २६॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। पञ्चदशश्चतुर्थस्य संङ्गतः सङ्गतः सताम्॥ १५॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

भोः सूत! मागध! हे वन्दिन्! सौम्येति सर्वेषां विशेषणम्। लोके अस्पष्टगुणस्य मे स्तवः किमाश्रयः स्यात्, अतो मयि वो गिरो वितथा मा भूवन्, अधुना एष मे स्तवो मा योज्यतामित्यन्वयः॥ २२॥ ❀ ❀ तस्मात् हे अपीच्यवाचः! मङ्गलवचनाः! परोक्षे कालान्तरे अस्मद्यशःप्रचारकाले अस्मदुपश्रुतानि यशांसि प्रति स्तोत्रमलं लोकभूषणं करिष्यथ। सूतादेः स्वस्तवे नियोजकान् प्रत्याह उत्तमकीर्तेर्वासुदेवस्य गुणानुवादे कार्ये सति लोकेऽप्रसिद्धत्वादिना जुगुप्सितं न स्तवयन्ति॥ २३॥ ❀ ❀ महद्गुणान् आत्मनि कर्तुं संपादयितुमीशः समर्थोऽपि असतोऽविद्यमानान् तान् स्तावकैः कः स्तावयते। वैपरीत्ये तु यद्ययं महद्यत्नमपि अकरिष्यत् तदाप्यस्य ते महद्गुणाः अभविष्यन्निति क्रियातिपत्त्या विप्रलब्धः कुमतिर्जनावहासं न वेद॥ २४॥ ❀ ❀ विश्रुता विख्यातगुणा अपि प्रभवः पुनः पुनर्बहून् गुणान् सम्पादयितुं शक्ता अपि परमोदारा ह्रीमन्तः आत्मनः स्तोत्रं जुगुप्सन्ति वाशब्द इवार्थे, विगर्हितं पौरुषमिव॥ २५॥ ❀ ❀ हे सूत! अपि निश्चितम् अद्य अधुना अविदिताः अप्रकाशितगुणा इत्यर्थः, वरीमभिर्दीर्घत्वमार्षं, कर्मभिः बालवदात्मानं कथं गापयिष्यामः॥ २६॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे सिद्धान्तप्रदीपे पञ्चदशाध्यायार्थप्रकाशः॥ १५॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

तद्वाक्यजातमेव दर्शयति—भो सूत इति पञ्चभिः। उत्साहेन स्तोत्रे प्रवृत्तानां सूतादीनां तन्निषेधे तेषां वैमनस्यं माभूदिति तानाश्वसयन् संबोधयति—भो सूत! हे मागध! हे सौम्य बन्दिन्! लोके स्पष्टगुणस्य सतो मे स्तवः स्यात्, अधुना तु मम स्तवालम्बनस्पष्टगुणाभावान्मे स्तवः किमाश्रयः स्यात् कान् गुणानाश्रित्य स्यात्? ननु भवतः संभावितान् गुणानाश्रित्य स्तवः स्यादेवेत्याशङ्क्याह—मामयेति। मयि प्रयुक्ता वो युष्माकं गिरो वितथा माभूवन्। यदि युष्मद्वर्णिता गुणा मयि नोत्पद्येरंस्तदा युष्मद्वाचां मिथ्यात्वं स्यादिति भावः। तर्ह्यस्मद्वाचां कुत्र सार्थक्यमित्याकाङ्क्षायामाह—एष योज्यतामिति। एष क्रियमाणः स्तवः स्पष्टपूर्णगुणस्य भगवतो योज्यतामिति॥ २२॥ ❀ ❀ उक्तमेव स्पष्टयति—तस्मादिति। हे अपीच्यवाचः मधुरगिरः! इत्युक्ताभिप्रायेणैव पुनः सूतादीन्संबोधयति। यस्मादधुना वयमस्पष्टगुणास्तस्मात्परोक्षे कालान्तरे गुणेषु स्पष्टेषु सत्सु अस्माकमुपश्रुतानि यशांसि प्रति अलमत्यर्थं स्तोत्रं करिष्यथेत्यन्वयः। ननु सभास्था जनास्त्वामेव स्तोतुं प्रेरयन्तीत्याशङ्क्याह—सतीति। उद्गच्छति तमः संसारकारणमात्मावरकमज्ञानं यस्मात्स उत्तमस्तथाभूतः श्लोको यशो यस्य तस्य भगवतः पूर्णगुणकस्य गुणानामैश्वर्यादीनामनुवादे कर्तव्ये सत्यपि जुगुप्सितमप्रसिद्धगुणकं मां सभ्या न स्तवयन्ति न स्तावयन्ति स्तावयितुं न योग्या भवन्तीत्यर्थः। पृथोरंशावतारत्वेन पूर्णज्ञानाद्यप्राकट्यात्स्वतोभेदेन भगवतो निर्देशः कृत इति ज्ञेयम्॥ २३॥ ❀ ❀ पूर्वं 'मा मय्यभूवन्वितथा गिरो वः' इत्यनेन गुणानां संभावनामात्रेण स्तोत्रे प्रवृत्तौ स्तोतृवचसां पक्षे मिथ्यात्वं स्यादित्युक्तम्। इदानीं तथा सति स्तुत्यस्यापि जनावहासास्पदत्वमाह—महद्गुणानिति। महतां सज्जनानां गुणाः सौशील्यस्वपरधर्मानुगुण्यादयो महद्गुणास्तानात्मनि स्वस्मिन् कर्तुं संपादयितुमीशः

समर्थोऽप्यसतोऽविद्यमानान् गुणान् संभावनामात्रेण स्तावकैः सूतादिभिः को वा सन्मतिः स्तावयते ? न कोपीत्यर्थः। ननु लोके संभावनामात्रेणाप्यात्मानं स्तावयन् दृश्यत इति चेत्सत्यं दृश्यते, परंतु स कुमतिर्दुर्बुद्धिरेव ज्ञेयः। तस्य कुमतित्वे हेतुमाह—त इति। यद्ययं शास्त्राभ्यासादिकमकरिष्यत्तदास्य ते प्रसिद्धा विद्यादयो गुणाः अभविष्यन्नित्येवमुक्त्या स्तावकैर्जनैर्विप्रलब्धः उपहसितोपि तेषामवहासं यतो न वेद प्रत्युतोत्साहितः सन्नात्मानं महान्तं मन्यतेऽतोऽसौ कुमतिरेव॥ २४॥ ❀ ❀ इदानीमुत्तमानां वृत्तमाह—प्रभव इति। परमोदारा विशदचित्ता ह्रीमन्तस्तु विश्रुताः प्रख्याता अपि प्रभवो विद्यमानगुणसंपादने समर्था अप्यात्मनः स्तोत्रं जुगुप्सन्ति हि निवारयन्त्येव। गुणानां स्वत एव प्रख्याततत्वात्स्वसंमुखं वर्णनेन किमिति भावः। स्तोत्राच्छादने दृष्टान्तमाह—पौरुषमिति। वाशब्दो यथाशब्दार्थकः। विगर्हितं निंदितं पौरुषं गोत्राह्मणवधादिकं प्रमादाज्जातं यथा जना जुगुप्सन्ति तथेत्यर्थः॥ २५॥ ❀ ❀ गुणैर्विश्रुता अपि ये लज्जयात्मनः स्तोत्रं जुगुप्सन्ति त उत्तमाः ये विद्यमानगुणाः सन्त आत्मानं स्तावयन्ति ते मध्यमाः ये तु गुणानामविद्यमानत्वेप्यात्मानं स्तावयन्ति तेऽतिमन्दा इति निर्णये सिद्धेऽधुनास्मद्गुणानामप्रसिद्धेः संभावनामात्रेण स्तुतौ मन्दकोटौ प्रवेशः स्यात्स तु न युक्त इत्याशयेनाह—वयं त्विति। वरीमभिरितीकरास्य दीर्घता छन्दोनुरोधेन। हे सूत ! वयं तु लोके वरीमभिर्वरिष्ठैः कर्मभिरद्याप्यविदिताः अज्ञाताः, अतो बालवदज्ञवत्कथमात्मानं गापयिष्यामेत्यन्वयः॥ २६॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे कामनिरूपणे। पञ्चदशो गतो वृत्तिं पृथुराज्यनिरूपकः॥ ३॥

## भाषानुवादः

पृथुने कहा—सौम्य सूत, मागध और बन्दीजन ! अभी तो लोकमें मेरा कोई भी गुण प्रकट नहीं हुआ। फिर तुम किन गुणोंको लेकर मेरी स्तुति करोगे ? मेरे विषयमें तुम्हारी वाणी व्यर्थ नहीं होनी चाहिये। इसलिये मुझसे भिन्न किसी औरकी स्तुति करो॥ २२॥ ❀ ❀ मृदुभाषियो ! कालान्तरमें जब मेरे अप्रकट गुण प्रकट हो जायँ, तब भरपेट अपनी मधुर वाणी से मेरी स्तुति कर लेना। देखो, शिष्ट पुरुष पवित्रकीर्ति श्रीहरिके गुणानुवादके रहते हुए तुच्छ मनुष्योंकी स्तुति नहीं किया करते॥ २३॥ ❀ ❀ महान् गुणोंको धारण करनेमें समर्थ होनेपर भी ऐसा कौन बुद्धिमान् पुरुष है, जो उसके न रहनेपर भी केवल सम्भावनामात्रसे स्तुति करनेवालों द्वारा अपनी स्तुति करायेगा ? यदि वह विद्याभ्यास करता तो इसमें अमुक-अमुक गुण हो जाते—इस प्रकारकी स्तुतिसे तो मनुष्यकी वञ्चना की जाती है। वह मन्दमति यह नहीं समझता कि इस प्रकार तो लोग उसका उपहास ही कर रहे हैं॥ २४॥ ❀ ❀ जिस प्रकार लज्जाशील उदार पुरुष अपने किसी निन्दित पराक्रमकी चर्चा होनी बुरी समझते हैं, उसी प्रकार लोकविख्यात समर्थ पुरुष अपनी स्तुतिको भी निन्दित मानते हैं॥ २५॥ ❀ ❀ सूत-गण ! अभी हम अपने श्रेष्ठ कर्मोंके द्वारा लोकमें अप्रसिद्ध ही हैं, हमने अबतक कोई भी ऐसा काम नहीं किया है, जिसकी प्रशंसा की जा सके। तब तुमलोगोंसे बच्चोंके समान अपनी कीर्तिका किस प्रकार गान करावें ?॥ २६॥

## इति पञ्चदशोऽध्यायः॥ १५॥

# अथ षोडशोऽध्यायः

मैत्रेय उवाच

इति ब्रुवाणं नृपतिं गायका मुनिचोदिताः। तुष्टुवुस्तुष्टमनसस्तद्वागमृतसेवया ॥ १ ॥
नालं वयं ते महिमानुवर्णने यो देववर्योऽवततार मायया।
वेनाङ्गजातस्य च पौरुषाणि ते वाचस्पतीनामपि बभ्रमुर्धियः ॥ २ ॥
अथाप्युदारश्रवसः पृथोर्हरेः कलावतारस्य कथामृतादृताः।
यथोपदेशं मुनिभिः प्रचोदिताः श्लाघ्यानि कर्माणि वयं वितन्महि ॥ ३ ॥
एष धर्मभृतां श्रेष्ठो लोकं धर्मेऽनुवर्तयन्। गोप्ता च धर्मसेतूनां शास्ता तत्परिपन्थिनाम् ॥ ४ ॥
एष वै लोकपालानां बिभर्त्येकस्तनौ तनूः। काले काले यथाभागं लोकयोरुभयोर्हितम् ॥ ५ ॥
वसु काल उपादत्ते काले चायं विमुञ्चति। समः सर्वेषु भूतेषु प्रतपन् सूर्यवद्विभुः ॥ ६ ॥
तितिक्षत्यक्रमं वैन्य उपर्याक्रमतामपि। भूतानां करुणः शश्वदार्तानां क्षितिवृत्तिमान् ॥ ७ ॥
देवेऽवर्षत्यसौ देवो नरदेववपुर्हरिः। कृच्छ्रप्राणाः प्रजा ह्येष रक्षिष्यत्यञ्जसेन्द्रवत् ॥ ८ ॥
आप्याययत्यसौ लोकं वदनामृतमूर्तिना। सानुरागावलोकेन विशदस्मितचारुणा ॥ ९ ॥
अव्यक्तवर्त्मैष निगूढकार्यो गम्भीरवेधा उपगुप्तवित्तः।
अनन्तमाहात्म्यगुणैकधामा पृथुः प्रचेता इव संवृतात्मा ॥ १० ॥

अन्वयः—तद्वागमृतसेवया तुष्टमनसः गायकाः इति ब्रुवाणम् नृपतिम् मुनिचोदिताः तुष्टुवुः ॥ १ ॥ ❀ ❀ यः देववर्यः मायया अवततार ते महिमानुवर्णने वयम् न अलम् च वाचस्पतीनाम् अपि धियः वेनाङ्गजातस्य ते पौरुषाणि बभ्रमुः ॥ २ ॥ ❀ ❀ अथ अपि उदारश्रवसः हरेः कलावतारस्य पृथोः कथामृतादृताः मुनिभिः प्रचोदिताः वयम श्लाघ्यानि कर्माणि यथोपदेशम् वितन्महि ॥ ३ ॥ ❀ ❀ एषः धर्मभृताम् श्रेष्ठः लोकम् धर्मे अनुवर्तयन् धर्मसेतूनाम् गोप्ता च तत्परिपन्थिनाम् शास्ता ॥ ४ ॥ ❀ ❀ एषः एकः तनौ काले काले यथाभागम् उभयोः लोकयोः हितम् लोकपालानाम् तनूः वै विभर्ति ॥ ५ ॥ ❀ ❀ अयम् सर्वेषु भूतेषु समः प्रतपन् विभुः सूर्यवत् वसु काले उपादत्ते च काले विमुञ्चति ॥ ६ ॥ ❀ ❀ क्षितिवृत्तिमान् करुणः वैन्यः उपरि आक्रमताम् अपि आर्तानाम् भूतानाम् आक्रमम् शश्वत् तितिक्षति ॥ ७ ॥ ❀ ❀ नरदेववपुः हरिः असौ एषः देवः देवे अवर्षति कृच्छ्रप्राणाः प्रजाः अंजसा इंद्रवत् रक्षिष्यति ॥ ८ ॥ ❀ ❀ असौ सानुरागावलोकेन विशदस्मितचारुणा वदनामृतमूर्तिना लोकम् आप्याययति ॥ ९ ॥ ❀ ❀ एषः पृथुः संवृतात्मा अव्यक्तवर्त्मा निगूढकार्यः गंभीरवेधाः उपगुप्तवित्तः अनन्तमाहात्म्यगुणैकधामा प्रचेताः इव अस्ति ॥ १० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

षोडशे सर्वलोकेशैः सत्कृतं भार्यया युतम्। मुनिप्रयुक्ताः सूताद्याः स्तुवंति स्मेति वर्ण्यते ॥ (१) ॥

गायकाः सूतादयः ॥ १ ॥ ❀ ❀ नालं न समर्थाः। भवामः अवतारेष्वप्यस्याधिक्यमाहुः। वेनस्यांगाज्जातस्य ते पौरुषाणि प्रत्यवितर्क्यतया ब्रह्मादीनामपि धियो बभ्रमुः। कुतः पुनर्वयं तद्वर्णने समर्था भवेम ॥ २ ॥ ❀ ❀ अथापि यथावद्वर्णयितुमशक्ता अपि कथामृते सादराः मुनिभिः कृत उपदेशो योगबलेन हृदि प्रकाशनं तदनतिक्रम्य वितन्महि विस्तारयामः ॥ ३-४ ॥ ❀ ❀ तनौ स्वदेहे लोकपालानां तनूर्मूर्तीः काले काले बिभर्ति यथाभागं पालनपोषणानुरंजनादिकार्यानुसारेण यज्ञादिप्रवर्तनेन स्वर्गस्य हितं वृष्ट्यादिना च भूर्लोकस्य हितं यथा भवति तथा ॥ ५ ॥ ❀ ❀ सूर्यादितनुधारणमेवाहाष्टभिः।

वसु धनं करादानकाले आदत्ते दुर्भिक्षादिकाले विमुंचति च। अष्टौ मासान्सूर्यो यथा वसु जलमादत्ते वर्षासु विमुंचति तद्वत्॥ ६॥ ❀ ❀ मस्तके पादेनाक्रमतामप्यार्तानां भूतानामतिक्रमं सहिष्यते क्षितेर्वृत्तिः सर्वसहनं सा वृत्तिर्यस्यास्ति स तथा॥ ७॥ ❀ ❀ देवेऽवर्षति एष कृच्छ्रं गताः प्राणा यासां ताः प्रजाः स्वयं वृष्टिं कृत्वा रक्षिष्यति। अत्र हेतुः। असौ नरदेववपुर्हरिरिति॥ ८॥ ❀ ❀ वदनमेवामृतमूर्तिश्चन्द्रस्तेन सानुरागोऽवलोको यस्मिन्। विशदं शुभ्रं यत्स्मितं तेन चारुणा। अत्र च क्वचिद्वर्तमाननिर्देशो "वर्तमानसामीप्ये वर्तमानवद्वे"ति भूतनिर्देशश्च "आशंसायां भूतवच्च" इति द्रष्टव्यः॥ ९॥ ❀ ❀ न व्यक्तं वर्त्म प्रवेशनिर्गममार्गो यस्य। निगूढं निष्पत्तेः पूर्वमविज्ञातं कार्यं यस्य तच्च कार्यं गंभीरं किमर्थमेतत्कृतमित्यन्यैरज्ञाताभिप्रायं विधत्त इति तथा उपगुप्तं सुरक्षितं वित्तं यस्य अनंतमाहात्म्यश्चासौ गुणानामेकं धाम विष्णुर्यस्मिन्। अनंतमाहात्म्योपेता गुणा एवैकं धाम स्थानं यस्येति वा। संवृतात्मा संयतमूर्तिः समुद्रचरत्वेन वरुणस्याप्येते गुणा द्रष्टव्याः॥ १०॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यद्वा-मायया कृपया स्वशक्त्याऽर्चिषा सहेत्यर्थः॥ १-२॥ ❀ ❀ तर्हि निवर्ततामित्यत्राह—अथापीति। यद्यपि कथामृतादरत्वान्मनो न निवर्तेत इत्यर्थः। मुनिवचनोल्लङ्घनभियापि यथामति स्तोष्यामः॥ ३॥ ❀ ❀ एष पृथुः। तत्परिपंथिनां धर्मसेतुविरोधिनाम्॥ ४-५॥ ❀ ❀ "वसु तोये महाधने" इत्यभिधानात्॥ ६॥ ❀ ❀ अक्रममपराधम्। आर्त्तानां दारिद्र्यादिपीडितानाम्॥ ७॥ ❀ ❀ अत्र वृष्टिकरणे हरिरिन्द्रो विष्णुर्वा कृच्छ्रं कष्टं गता अन्नानाप्त्या प्राणा इंद्रियाणि शरीरधारकवायवो वा॥ ८॥ ❀ ❀ 'विशदश्वेतपांडुराः' इत्यमरः। अत्र च पृथुवर्णने। अत्र च चंद्रतनुधारणमुक्तम्॥ ९॥ ❀ ❀ वरुणतनुत्वमाह अव्यक्तेति॥ १०॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

मुनिप्रयुक्ता मुनिभिर्विनियुक्ताः॥ १॥ ❀ ❀ आधिक्यमस्य पृथोरसर्ववृत्तिसंपादनप्रयुक्तादिराजत्वांशेन ज्ञेयम्। अन्यथाऽऽवेशत्वेन तत्त्वानुपपत्तेः 'कृष्णस्तु भगवान् स्वयमि'ति परिभाषाशास्त्रविरोधाच्चेति। चकारोऽप्यर्थे, तद्वर्णने महिमानुवर्णने॥ २॥ ❀ ❀ आदृताः आदरणमादृतिस्सा विद्यते येषां ते। तथा च सादरा इति व्याख्यातम्, भावे क्तिन्, ततोऽर्श आदिभ्यो मत्वर्थीयोऽच्॥ ३॥ ❀ ❀ धर्मसेतूनां गोपनं हि त्रेधा भवति स्वयमाचरणेन तच्छिक्षणेन तद्विरोधिशासनेन चेति त्रिविधमपि क्रमेण विशेषणत्रयेण दर्शितमिति धर्मसेतुवर्णनमेव विधेयम्॥ ४॥ ❀ ❀ मूर्तीस्तत्तच्छक्तिरूपाः॥ ५-७॥ ❀ ❀ अत्र वृष्टिं कृत्वा रक्षणे॥ ८॥ ❀ ❀ अत्र वदनमेवामृतमूर्त्तिश्चन्द्र इति मयूरव्यंसकादिसमासाश्रयणात्परिणामालंकृतिः, वदने आरोप्यमाणस्यामृतमूर्त्तेः आरोपविषयवदनात्मना परिणतिमन्तरा सानुरागावलोकनादिक्रियार्थत्वासंभवात्। तथैव च तल्लक्षणं "परिणामः क्रियार्थश्चेद् विषयी विषयात्मना" इति, नात्र पूर्वपदार्थप्रधान उपमितिसमास आशङ्क्यः, आप्यायनक्रियायाश्चन्द्रगतत्वेनैव प्रसिद्धेः, वदने तादृशक्रियानुगुण्यासंभवादित्यालङ्काराः। भूतनिर्देशश्च दुदुहे आजहारेत्यत्राशंसायां प्रार्थनायां प्रशंसायां वा अर्थे द्योत्ये सति भूतवत्प्रयोगो द्रष्टव्यः॥ ९॥ ❀ ❀ द्वितीयार्थे अनन्तमहिमयुक्ताः कारुण्यादयो भगवद्गुणा एकमेकं मुख्यं स्थानं संकीर्त्तनादिना रमणं विषयो यस्य सः॥ १०॥

### श्रीमद्वीरराघवव्याख्या

एवमविकत्थयित्रा पृथुनात्मस्तुतौ वारिता अपि तुष्टमनसो गायकास्तुष्टुवुरित्याह मुनिः पञ्चदशेन इतीति। गायकाः सूतादयस्तस्य पृथोर्वाग्गेवामृतं तस्य सेवया तुष्टं मनो येषां मुनिभिर्भगवदंशभूतस्य पृथोरविकत्थयितृत्वादिकल्याणगुणजाताभिज्ञैर्मुनिभिः प्रचोदिताः स इत्युक्तप्रकारेण ब्रुवन्तमपि नृपतिं पृथुं तुष्टुवुः॥ १॥ ❀ ❀ तत्र गायकाः पृथोः कल्याणगुणानुवर्णनात्मकस्तुतावात्मनामसामर्थ्यमापादयन्तः पुनः मुन्यनुगृहीताः सन्तस्तत्सामर्थ्यमाहुः। नालमिति द्वाभ्याम्। ते तव महिम्नः अनुवर्णने वयं नालं न समर्थाः, कुतः यो भवान् देवदेवः देवानां सद्गुणैर्दीव्यमानानामपि ब्रह्मादीनां देवः निरतिशयानन्तकल्याणगुणजातेन दीप्यमानो भवान् मायया आत्मीयसंकल्परूपज्ञानेन "माया वयुनं ज्ञानम्" इति मायाशब्दस्य ज्ञानपर्यायत्वात् अवततार अवतीर्णः अनन्तकल्याणगुणाकरो भगवानेव त्वद्रूपेणावतीर्णः। अतः कथमनन्तानां गुणानां वर्णने वयं प्रभव इत्यर्थः। ननु सत्यमनन्तानां भगवद्गुणानां वर्णने यूयमसमर्था इति। अहं तु मानुषस्तत्कथं मद्गुणानुवर्णने यूयमप्रभवस्तत्राहुः—वेनस्याङ्गाज्जातस्यावतीर्णस्यापि अजहदनन्तकल्याणगुणजातस्य भगवदंशभूतस्य पौरुषाणि प्रतीति शेषः, अप्रतर्क्यतया वाचस्पतीनां ब्रह्मादीनामपि धियो बुद्धयः किमु वक्तव्यं वयमसमर्था इति यतो ब्रह्मादय एव मुमुहुरित्यर्थः॥ २॥ ❀ ❀ यद्यपि त्वन्महिमानुवर्णने वयं नालं, तथापि विपुलकीर्तेः हरेरंशावतारभूतस्य पृथोः कथामृते आदृताः सादरा वयं मुनिभिरुपदेशो यथा भवति तथा प्रणोदिताः

प्रेरिताः सन्तः श्लाघ्यान्यनवद्यानि कर्माणि वितन्महे विस्तारयामः ॥ ३ ॥ ❀ ❀ विस्तारमेव प्रपञ्चयति एष इति । एष पृथुः धर्मभृतां वर्णाश्रमानुबन्धिधर्मानुष्ठानपराणां मध्ये श्रेष्ठः "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते" इत्युक्तरीत्या स्वयं कृत्स्नविदप्यकृत्स्नविल्लोकसंग्रहार्थं नितरां स्ववर्णाश्रमोचितधर्मानुष्ठानपर इत्यर्थः । अत एव लोकमकृत्स्नविल्लोकं धर्मे अनुवर्तयन् अनुवर्तयिता स्वस्ववर्णाश्रमोचितधर्ममनुष्ठापयिता धर्मः सेतुर्येषां तेषां, सेतुर्हि तीरान्तर-प्रतिलम्भकः तद्वच्छ्रौतस्मार्तधर्मः स समीहितप्रापको येषां ते धर्मसेतवः धर्मैकशरणाः साधव इति यावत्, तेषां गोप्ता तत्परि-पन्थिनां धर्मविरोधिनामसाधूनां शास्ता । यद्वा धर्मा एव सेतवः मर्यादा येषां तेषां गोप्ता केनाकारेणेत्यपेक्षायां लोकं धर्मेण वर्तयन् इत्यपेक्षितप्रकारनिर्देशः ॥ ४ ॥ ❀ ❀ एष पृथुः स्वयमेक एव लोकपालानां सूर्येन्द्रादीनां तनुः तनुवत्कार्योपयोग्य-पृथक्सिद्धविशेषणभूतानितरसाधारणान् गुणान् । तनुशब्दस्य शरीरपरत्वेऽपि कार्योपयोग्यपृथक्सिद्धविशेषणत्वमेव प्रवृत्तिनिमित्तं, तद्गुणपरत्वेऽपि तुल्यं तनौ स्वदेहे कालं काले यथाभागं भागमनतिक्रम्य उभयोर्लोकयोर्हितं यथा भवति तथा विभर्तीत्यर्थः ॥ ५ ॥ ❀ ❀ तत्र सूर्यादितनुधारणमेवाहुरष्टभिः । वसु धनं काले उपादत्ते स्वीकरोति काले दुर्भिक्षकाले विमुञ्चति । अष्टौ मासान् सूर्यो यथा प्रतपन् वसु जलमादत्ते वर्षासु विमुञ्चति तद्वत्, अत एव सर्वेषु भूतेषु समः ॥ ६ ॥ ❀ ❀ वैन्यः प्रभुरुपरि मस्तके पादादिना आक्रमतामप्यार्तानां भूतानां करुणः करुणावान् अतिक्रमं तितिक्षति सहिष्यते । अतः क्षितिवृत्तिमान् भूमेर्या वृत्तिः सहनं तद्वृत्तिर्यस्यास्तीति ॥ ७ ॥ ❀ ❀ तथा देवे अवर्षति सति कृच्छ्रङ्गताः प्राणा यासां ताः प्रजाः स्वयं वृष्टिं कृत्वा इन्द्रवद्रक्षिष्यति, अत्र हेतुः असौ नरदेववपुर्हरिरिति ॥ ८ ॥ ❀ ❀ असौ पृथुर्वदनामृतमूर्तिना वदनमेवामृतमूर्तिश्चन्द्रस्तेन लोकमाप्याययति वर्द्धयति । वदनामृतमूर्तिना कथंभूतेन अनुरागसहितोऽवलोको यस्मिन् विशदं यत् स्मितं तेन चारु सुन्दरं तेन । अत्र क्वचित् क्वचित् वर्तमाननिर्देशो 'वर्तमानसामीप्ये वर्तमानवद्वे'ति भूतनिर्देशः 'आशंसायां भूतवच्चे'ति द्रष्टव्यः ॥ ९ ॥ ❀ ❀ अव्यक्तं प्रवेशनिर्गमयोरविज्ञातं वर्त्म मार्गो यस्य, निगूढं निष्पत्तेः प्रागविज्ञातं कार्यं यस्य, गम्भीरवेदी किमर्थमेवं कृतवानिति परैरज्ञाताभिप्रायः, उपगुप्तं सुरक्षितं वित्तं धनं यस्य सः, अनन्तमाहात्म्याद्धेतोर्गुणानामेकं धाम आश्रयः मुख्यं, प्रचेता इव संवृतात्मा समुद्रावरणेन वरुण इव चतुर्भिः समुद्रैः जलप्राकारादिभिर्वा परिवेष्टितमूर्तिः । वरुणस्याप्युक्तगुणा द्रष्टव्याः ॥ १० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

पृथुस्तुतिव्याजेन हरौ भक्त्यवतारार्थं तन्माहात्म्यं निरूप्यते अस्मिन्नध्याये । नन्वत्र सूतादयः स्तुतौ पृथुना निवारिताः । अन्ये के स्तोतारो येन ततः स्तुत्या हरौ भक्तिरवतार्येत इत्याशङ्क्य मुनिप्रेरितास्त एव तुष्टुवुरिति तत्स्तुतिंप्रकारमुपक्रमते इति त्राणमित्यादिना ॥ १ ॥ ❀ ❀ वयं स्तोष्याम इति प्रारम्भ एव श्रेयान्न तु तत्र समर्था इत्याहुरित्याह नालमिति । अलं समर्थाः पृथुसन्निहितश्रीहरिमहिमसंदृब्धत्वादिति भावेनोच्यते य इति । यो देवदेवः श्रीनारायणो मायया भक्तानुकम्पेच्छया अवततार तस्य वेनाङ्गजं वेनस्याङ्गादवयवाज्जन्म अतस्य 'अत सातत्यगमन' इति धातोर्विशेषसन्निहितत्वेन प्राप्तस्य, ते त्वयि स्थितस्य हरेः पौरुषाणि वर्णयितुं वाचस्पतीनां ब्रह्मादीनामपि धियो बभ्रमुरिति यस्मात्तस्माद्वयं न समर्था इतिं किमु वर्णनीयम् । चशब्दः कैमुत्यार्थः, अन्यत्र देवो हरिस्तस्य देवो देवनं क्रीडनं यस्मिन् पृथौ स देवदेवः पृथुः मायया भगवदिच्छोद्बोधितमुनीच्छयाऽ-वततार प्रकाशितोऽभूत्तस्य ते वेनस्याङ्गादवयवाज्जातस्य पौरुषाणि कथयितुं वाचस्पतीनां कवीनां धियो बभ्रमुरिति यदत इति धीशब्देन मनो लक्ष्यते 'मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरती'ति श्रुतेः वाचो भ्रमंतीति किमु वक्तव्यमित्यर्थः ॥ २ ॥ ❀ ❀ तर्हि निवर्ततामित्याहुरित्याह अथापीति । असमर्था अपि कथामृतादततत्वान्निवर्तितुं मनो नायातीत्यर्थः । तर्हि किं न कुर्वन्ति किं तत्राहुरित्याह यथोपदेशमिति । साकल्येन स्तवनाशक्तौ निवर्तनं वरमित्यत उक्तं मुनिभिरिति । आज्ञोल्लङ्घनभीरुत्वाद्वितन्महे प्रपञ्चयामः ॥ ३ ॥ ❀ ❀ किंगुणविशिष्टः प्रपञ्च इत्यत्रोच्यते एष इति । तत्परिपन्थिनां तस्य धर्मसेतोर्विरोधिनाम् ॥ ४ ॥ एष पृथौ सन्निहितो हरिस्तनौ स्वदेहे तनूः शक्तिलक्षणा मूर्तीः यथाभागं बिभर्ति ॥ ५ ॥ ❀ ❀ भरणप्रकारं दर्शयति वस्वित्यादिना । 'वसुर्हदेऽग्नौ योक्त्रंशे वसु तोये महाधने'इत्यभिधानात् यथासम्भवं योज्यं, करादानकाले वसु धनमुपादत्ते दुर्भिक्षादौ दानयोग्यपुरुषागमनकाले विमुञ्चति । सूर्योऽपि ग्रीष्मादिकाले वसु जलमुपादत्ते वर्षादौ मुञ्चति । समो यथायोग्यं दण्डादिषु प्रतपन् प्रतापं कुर्वन्नन्यत्र यथर्तु प्रतपन् ॥ ६ ॥ ❀ ❀ उपर्याक्रमतामात्मानमतिक्रम्य वर्तमानानां सतामक्रमम-पराधं तितिक्षति सहते । दारिद्र्येणार्तानां क्षितिवृत्तिमान् भूमिलक्षणवृत्तिदाता, भूमार्थो मतुवर्थः ॥ ७ ॥ ❀ ❀ देवेऽवर्षति अनावृष्टौ सत्यां बुभुक्षया कृच्छ्रप्राणाः क्लिष्टेन्द्रियचेष्टाः प्रजा रक्षिष्यतीत्यन्वयः ॥ ८ ॥ ❀ ❀ वदनामृतमूर्तिना मुखचन्द्रेण ॥ ९ ॥ ❀ ❀ अव्यक्तं सूक्ष्मं वर्त्म चारैः प्रवेशमार्गो यस्य स तथा अव्यक्तानां योगिनां वर्त्म यस्येति वा । नितरां गुढं कार्यं कर्तव्यं यस्य । उपगुप्तवित्तः सुरक्षितकोशः सुरक्षितयशा वा "वित्तं यशो धनं वित्तो विद्वान् विश्रुत एव च" इत्यभिधानम् । अनन्तानां माहात्म्यगुणानामेकं धामाश्रयो यस्य स तथा अनन्तमाहात्म्यगुणा एवैकं धाम यस्य स तथा वा, अन्यत्र शेषस्य माहात्म्यगुणैकधामा । संवृत आत्मा स्वरूपं यस्य स तथा ॥ १० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

वेनाङ्गजस्यापीति चकारेण लभ्यते ॥ १-३ ॥ ❀ ❀ स्वयं धर्मभृतां श्रेष्ठो लोकं च धर्मेऽनुवर्त्तयंस्तत्परिपन्थिनां शास्तेति। धर्मसेतूनां गोप्तेत्यर्थः ॥ ४ ॥ ❀ ❀ तनूः शक्तीः ॥ ५-६ ॥ ❀ ❀ सम्भृतात्मेति चित्सुखः, परिपूर्णरूप इत्यर्थः ॥ १०-१७ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

मुनिप्रयुक्ताः सूताद्याः षोडशे तुष्टुवुः पृथुम्। स्तवश्च पृथ्वीदोहादिभावितद्वृत्तिसूचकः ॥ (१) ॥

नालं न समर्थाः, मायया कृपया। यद्वा स्वशक्त्या अर्चिषा सह ते तव पौरुषाणि प्रति ब्रह्मादीनामपि धियो बभ्रुः ॥ १-२ ॥ ❀ ❀ यथोपदेशं मुनिभिरस्मदन्तःकरणं प्रविश्य कृतमुपदेशमनतिक्रम्य ॥ ३-४ ॥ ❀ ❀ एक एवैष तनौ स्वमूर्त्तावेव लोकपालानां तनूर्मूर्तीर्बिभर्ति काले काले प्रतिसमयं लोकयोरिति यज्ञादिप्रवर्त्तनेन स्वर्गस्य वृष्ट्यादिना भूर्लोकस्य च हितं भागं भगसम्बन्धि यथा स्यात्तथा "भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु" इत्यमरः ॥ ५ ॥ ❀ ❀ सूर्यादितनुधारणमाहाष्टभिः। वसु धनं करादानकाले आदत्ते दुर्भिक्षादिकाले विमुञ्चति च अष्टौ मासान् सूर्यो यथा वसु जलमादत्ते विमुञ्चति च वर्षासु तद्वत् ॥ ६ ॥ ❀ ❀ अक्रममनतिक्रमं तितिक्षति सहते क्षितिवृत्तिमान् पृथ्वीस्वभावयुक्तः ॥ ७ ॥ ❀ ❀ रक्षिष्यति स्वयमेव वृष्टिं दत्त्वा पालयिष्यति ॥ ८ ॥ ❀ ❀ वदनमेवामृतमूर्तिश्चन्द्रस्तेनेति चन्द्रतनूधारणमुक्तम् ॥ ९ ॥ ❀ ❀ न व्यक्तं वर्त्म अन्तःप्रवेशननिर्गमयोर्मार्गो यस्य सः। निगूढं निष्पत्तेः पूर्वमविज्ञातं कार्यं यस्य सः। तच्च कार्यं गम्भीरमन्यैरज्ञाताभिप्रायं यथा स्यात्तथा विधत्ते इति वेधाः। उप आधिक्येन गुप्तं वित्तं धनं ज्ञानञ्च यस्य सः। अनन्तस्य विष्णोरिव माहात्म्यं गुणाश्च एकं मुख्यं धाम प्रभावश्च यस्य सः संवृतात्मा अन्यालक्षितस्वभावः। प्रचेताः वरुण इवेति समुद्रचरत्वेन वरुणस्याप्येते गुणा द्रष्टव्याः ॥ १० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

षोडशे मुनिचोदितैः सूताद्यैः श्रीपृथुस्तुतिः कृतेति वर्ण्यते इतीति। मुनिभिस्तत्प्रभावाभिज्ञैश्चोदिता गायकाः सूताद्याः तद्वागेवामृतं तत्सेवया तुष्टमनसस्तुष्टुवुः ॥ १ ॥ ❀ ❀ यो देववर्यः सर्वदेवपूज्यः मायया कृपया अवततार तस्य वेनाङ्गजातस्य ते महिमानुवर्णने वयं नालं न शक्ताः। किं बहुना वाचस्पतीनां ब्रह्मादीनामपि धियः ते पौरुषाणि प्रति बभ्रमुः ॥ २ ॥ ❀ ❀ अथापि कथामृतमादृतं प्रीतिविषयं येषां ते मुनिभिः प्रचोदिता यथोपदेशमुपदेशमनतिक्रम्य पृथोर्हरेः कर्माणि वितन्महि विस्तारयामः ॥ ३-४ ॥ ❀ ❀ काले काले यथाकालं यथाभागं पालनादिकार्यानुसारेण उभयोरैहिकामुष्मिकयोर्यज्ञादिना वृष्ट्यादिना यथा हितं भवति तथा लोकपालानां तनूर्मूर्तीः एक एवैषः पृथुर्हरिर्बिभर्ति ॥ ५ ॥ ❀ ❀ एतदेव प्रपञ्चयति वसुकाल इत्यष्टभिः—यथा सूर्यो जलं ग्रहणकाले उपादत्ते त्यागकाले विमुञ्चति च तथा श्रीपृथुर्हरिः वसु धनम् ॥ ६ ॥ ❀ ❀ क्षितेर्वृत्तिः सर्वसत्त्वापराधसहनरूपास्यास्तीति तथाभूतः अतिक्रममपराधं तितिक्षति सहिष्यते ॥ ७ ॥ ❀ ❀ कृच्छ्रं कष्टं प्राप्ताः प्राणा यासां ताः मरणाभिमुखाः, इन्द्रवत् पर्जन्यरूपी रक्षिष्यति ॥ ८ ॥ ❀ ❀ अनुरागसहितोऽवलोको यस्मिन् तेन विशदेन स्मितेन चारु सुन्दरं तेन वदनामृतमूर्तिना मुखचन्द्रेण आप्याययति वर्द्धयति। अत्र क्वचिद्वर्तमाननिर्देशो "वर्तमानसामीप्ये वर्तमानवद्वा" इति भूतनिर्देशश्च "आशंसायां भूतवच्च" इति द्रष्टव्यः ॥ ९ ॥ ❀ ❀ एष पृथुर्हरिः अव्यक्तवर्त्मा अलक्षितमार्गः, दुर्ज्ञेयगतिरित्यर्थः। इदं करिष्ये इत्येवं शत्रुदमनादिकार्यप्रकाशने शत्रुपलायनादिदोषवारणार्थं निगूढकार्यो गुप्तकर्मा गम्भीरं साहसादिदोषराहित्येन देशकालाद्यनुसारेण विधत्ते इति गम्भीरवेधाः। उपगुप्तं सुरक्षितं वित्तं यस्य सः अनन्ते हरौ माहात्म्यं महत्त्वं येषां ते गुणाः शान्त्यौदार्यकारुण्यादयः एकं धाम यस्य सः। संयतः आत्मा मनो देहो वा यस्य सः प्रचेता इव ॥ १० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

आविष्टस्य पृथोर्देहे वर्णिता वै हरेर्गुणाः। सूतमागधबन्द्याद्यैः षोडशे तन्निरूप्यते ॥ (१) ॥

इत्येवं ब्रुवाणं नृपतिं पृथुं तापहारकत्वेन तस्य वागेवामृतं तस्य सेवया श्रोत्रद्वारान्तःस्थापनेन तुष्टं मनो येषां ते गायकाः सूतादयो मुनिभिश्चोदिताः सन्तस्तुष्टुवुरित्यन्वयः ॥ १ ॥ ❀ ❀ स्तुतिमेव दर्शयति—नालमित्यादिना आसमाप्तेः। यो देववर्यो विष्णुर्मायया निजेच्छायावततार तस्य ते तव महिमानुवर्णने वयं सूतादयो नालं न समर्थाः। कुतो न शक्ता इत्याकाङ्क्षायामेतदवतारचरितस्य पृथिवीदोहनादिरूपस्यात्यपूर्वत्वेन दुर्ज्ञेयत्वादित्यभिप्रेत्याहुः—वेनेति। वेनस्याङ्गाज्जातस्य ते तव पौरुषाणि प्रति वाचस्पतीनां ब्रह्मादीनामपि धियो वभ्रमुः अचिन्त्यतया भ्रान्ता जातास्तत्रास्माकं का गणनेति ॥ २ ॥ ❀ ❀ ननु न समर्थाश्चेत्तर्हि

कथं वर्णयितुं प्रवृत्ता इति वीक्षायामाहुः—अथापीति। यद्यपि साकल्येन वर्णयितुमसमर्थाः, अथापि तथापि मुनिभिः प्रचोदिताः प्रेरिताः सन्तो यथोपदेशं मुनिभिर्यथोपदिष्टं तदनतिक्रम्य पृथोः श्लाघ्यानि मुख्यानि श्लाघायोग्यानि यानि तानि कर्माणि वयं वितन्महि विस्तारयामो विस्तरेण वर्णयाम इत्यन्वयः। न केवलं मुनिप्रेरणामात्रमेतन्महिमवर्णने प्रवृत्तौ हेतुः, किंतवस्माकमप्येतत्कथामृतवर्णन आदरोऽस्तीत्याहुः—कथामृतादृता इति। नत्वेतत्कथाया अमृतत्वं श्रवणसुखजनकत्वस्वादुत्वमात्रम्, किंतु सर्वपुरुषार्थहेतुत्वमपीत्यभिप्रेत्याहुः—उदारश्रवस इति। उदारो धर्मादिचतुर्विधपुरुषार्थहेतुः श्रवो यशो यस्य तस्येत्यर्थः। यशसस्तथात्वेपि हेतुमाहुः—हरेरिति। यतो हरेरंशावतारस्तत उदारश्रवा इति भावः॥ ३॥ ❁ ❁ एवं प्रतिज्ञां कृत्वा महिमानं वर्णयन्ति—एष इति। अत्र भविष्यतोपि सामीप्यात् कचिद्वर्तमाननिर्देशः। कचिच्च सिद्धवत्कृत्वा भूतनिर्देशः। एष पृथुर्धर्मभृतां श्रेष्ठः। कुतोऽस्य श्रेष्ठत्वमिति विवक्षायां तद्विवृण्वन्ति—लोकमिति। सज्जनाः स्वयं धर्मिष्ठा भवन्ति। अयं तु स्वयमपि धर्मिष्ठो लोकस्थं जनसमूहं स्वस्वधर्मेनुवर्तयन् धर्मसेतूनां वर्णाश्रमधर्ममर्यादानां गोप्ता रक्षकस्तत्परिपन्थिनां धर्ममर्यादाविघटकानां दुराचाराणां शास्ता दण्डयिता चातः श्रेष्ठ इत्यर्थः॥ ४॥ ❁ ❁ वा इत्यवधारणे। एष एकः सहायान्तरनिरपेक्ष एव यथाभागं यथायोग्यं धर्मादिपुरुषार्थाविरोधेनोभयोर्लोकयोर्यज्ञादिप्रवर्त्तनेन देवलोकस्य वृष्ट्यादिसंपादनेन मनुष्यलोकस्य च हितमाचरन् स्वतनौ स्वशरीरे लोकपालानामादित्येन्द्रादीनां तनूः मूर्तीः काले काले तत्तदवसरे बिभर्ति धारयतीत्यन्वयः। तत्तत्कार्यं स्वयमेव करिष्यतीत्यर्थः॥ ५॥ ❁ ❁ लोकपालादीनां तनुधारणमेव प्रपञ्चयन्ति—वसिवत्यष्टभिः। अयं पृथुः सर्वेषु भूतेषु प्राणिमात्रेषु समः रागद्वेषादिराहित्येन निग्रहादिशून्यः सन् प्रतपन् स्वप्रतापं प्रकटयन् काले करादानकाले वसु धनं प्रजाभ्य आदत्ते दुर्भिक्षादिकाले विमुञ्चति ददाति च यतो विभुः तथाकरणे समर्थ इत्यन्वयः। तत्र दृष्टान्तमाह—सूर्यवदिति। सूर्यो यथा सर्वेषु समं प्रतपन्नष्टौ मासाञ्जलमादत्ते वर्षासु विमुञ्चति च तद्वदित्यर्थः। अनेन सूर्यतनुधारणमुक्तम्॥ ६॥ ❁ ❁ पृथिवीतनुधारणमाहुः—तितिक्षतीति। वैन्यः वेनाङ्गात् जातः पृथुः आर्त्तानां पीडितानामत एवोपरि मस्तके पादेनाक्रमतामपि भूतानामक्रममतिक्रमं तितिक्षति सहत इत्यन्वयः। अक्रममित्यत्र तिलोपश्छन्दोनुरोधेन। सहनमपि न कदाचित् किंतु सर्वदेत्याहुः—शश्वदिति। तत्र हेतुगर्भविशेषणमाहुः—क्षितिवृत्तिमानिति। क्षितेर्वृत्तिः सर्वापराधसहनं सा यस्यास्ति स तथा। तद्वृत्तित्वेपि हेतुः—करुण इति। यतः करुणया सर्वपालनार्थं वेनाङ्गाज्जात इत्यर्थः॥ ७॥ ❁ ❁ इन्द्रतनुधारणमाहुः—देव इति। देवे इन्द्रे अवर्षति वर्षमकुर्वति सति कृच्छ्रप्राणाः कृच्छ्रं कष्टं गताः प्राणा यासां ताः प्रजा एष पृथुरञ्जसा अनायासेन इन्द्रवत् वृष्टिं कृत्वा रक्षिष्यतीत्यन्वयः। एवं रक्षायां सामर्थ्ये हेतुमाहुः—हीति। हि यस्मादसौ नरवपुर्धरो हरिरेवातस्तत्र समर्थ इत्यन्वयः॥ ८॥ ❁ ❁ चन्द्रतनुधारणमाहुः—आप्याययतीति। वदनमेवामृतमूर्तिश्चन्द्रस्तेनासौ लोकं जनमाप्याययति तर्पयति। वदनचन्द्रस्यैव विशेषणद्वयम्। सानुरागोऽवलोको यस्मिंस्तेन। विशदं स्वच्छं यत्स्मितं तेन चारुणा मनोहरेण॥ ९॥ ❁ ❁ वरुणमूर्तिधारणमाहुः—अव्यक्तेति। एष पृथुः प्रचेता इवेति संबन्धः। कुतः प्रचेतसः सादृश्यमिति वीक्षायां तद्गुणवत्त्वादिति हेतुमभिप्रेत्य तद्गुणान् वर्णयन्ति। न व्यक्तं वर्त्म प्रवेशनिर्गममार्गो यस्य सोऽव्यक्तवर्त्मा। निगूढं प्रवृत्तेः पूर्वमविज्ञातं कार्यं कर्त्तव्यं यस्य स निगूढकार्यः। गंभीरं किमर्थमेतद्विधातीत्यविज्ञातफलकं कार्यं विधत्त इति गम्भीरवेधाः। उपगुप्तं सुरक्षितं वित्तं यस्य। अनन्तमाहात्म्यश्चासौ गुणानां सत्यसौशील्यादीनामेकं मुख्यं धाम स्थानमाश्रयश्चेति तथा। संवृतः प्रकृत्यादिभिरावृतः सुरक्षित आत्मा यस्य स संवृतात्मा॥ १०॥

## भाषानुवादः

### वन्दीजनद्वारा महाराज पृथुकी स्तुति

श्रीमैत्रेयजी कहते हैं—महाराज पृथुने जब इस प्रकार कहा, तब उनके वचनामृतका आस्वादन करके सूत आदि गायकलोग बड़े प्रसन्न हुए। फिर वे मुनियोंकी प्रेरणासे उनकी इस प्रकार स्तुति करने लगे॥ १॥ ❁ ❁ 'आप साक्षात् देवप्रवर श्रीनारायण ही हैं, जो अपनी मायासे अवतीर्ण हैं; हम आपकी महिमाका वर्णन करनेमें समर्थ नहीं हैं। आपने जन्म तो राजा वेनके मृतक शरीरसे लिया है, किन्तु आपके पौरुषोंका वर्णन करनेमें साक्षात् ब्रह्मादिकी बुद्धि भी चकरा जाती है॥ २॥ ❁ ❁ तथापि आपके कथामृतके आस्वादनमें आदर-बुद्धि रखकर मुनियोंके उपदेशके अनुसार उन्हींकी प्रेरणासे हम आपके परम प्रशंसनीय कर्मोंका कुछ विस्तार करना चाहते हैं, आप साक्षात् श्रीहरिके कलावतार हैं और आपकी कीर्ति बड़ी उदार है॥ ३॥ ❁ ❁ ये धर्मधारियोंमें श्रेष्ठ महाराज पृथु लोकको धर्ममें प्रवृत्त करके धर्ममर्यादाकी रक्षा करेंगे तथा उसके विरोधियोंको दण्ड देंगे॥ ४॥ ❁ ❁ ये अकेले ही समय-समयपर प्रजाके पालन, पोषण और अनुरञ्जन आदि कार्यके अनुसार अपने शरीरमें भिन्न-भिन्न लोकपालोंकी मूर्तिको धारण करेंगे तथा यज्ञ आदिके प्रचारद्वारा स्वर्गलोक और वृष्टिकी व्यवस्थाद्वारा भूलोक—दोनोंका ही हित-साधन करेंगे॥ ५॥ ❁ ❁ ये सूर्यके समान अलौकिक महिमान्वित प्रतापवान् और समदर्शी होंगे। जिस प्रकार सूर्यदेवता आठ महीने तपते रहकर जल खींचते हैं और वर्षा ऋतुमें उसे उँडेल देते हैं, उसी प्रकार ये कर आदिके द्वारा कभी धन-सञ्चय करेंगे और कभी उसका प्रजाके हितके लिये व्यय कर

डालेंगे ॥ ६ ॥ ❀ ❀ ये बड़े दयालु होंगे। यदि कभी कोई दीन पुरुष इनके मस्तकपर पैर भी रख देगा, तो भी ये पृथ्वीके समान उसके इस अनुचित व्यवहारको सदा सहन करेंगे ॥ ७ ॥ ❀ ❀ कभी वर्षा न होगी और प्रजाके प्राण सङ्कटमें पड़ जायँगे, तो ये राजवेषधारी श्रीहरि इन्द्रकी भाँति जल बरसाकर अनायास ही उसकी रक्षा कर लेंगे ॥ ८ ॥ ❀ ❀ ये अपने अमृतमय मुखचन्द्रकी मनोहर मुसकान और प्रेमभरी चितवनसे सम्पूर्ण लोकोंको आनन्दमग्न कर देंगे ॥ ९ ॥ ❀ ❀ इनकी गतिको कोई समझ न सकेगा, इनके कार्य भी गुप्त होंगे तथा उन्हें सम्पन्न करनेका ढंग भी बहुत गम्भीर होगा। इनका धन सदा सुरक्षित रहेगा। ये अनन्त माहात्म्य और गुणोंके एकमात्र आश्रय होंगे। इस प्रकार मनस्वी पृथु साक्षात् वरुणके ही समान होंगे ॥ १० ॥

दुरासदो दुर्विषह आसन्नोऽपि विदूरवत्। नैवाभिभवितुं शक्यो वेनारण्युत्थितोऽनलः ॥ ११ ॥
अन्तर्बहिश्च भूतानां पश्यन् कर्माणि चारणैः। उदासीन इवाध्यक्षो वायुरात्मेव देहिनाम् ॥ १२ ॥
नादण्ड्यं दण्डयत्येष सुतमात्मद्विषामपि। दण्डयत्यात्मजमपि दण्ड्यं धर्मपथे स्थितः ॥ १३ ॥
अस्याप्रतिहतं चक्रं पृथोरामानसाचलात्। वर्तते भगवानर्को यावत्तपति गोगणैः ॥ १४ ॥
रञ्जयिष्यति यल्लोकमयमात्मविचेष्टितैः। अथामुमाहू राजानं मनोरञ्जनकैः प्रजाः ॥ १५ ॥
दृढव्रतः सत्यसन्धो ब्रह्मण्यो वृद्धसेवकः। शरण्यः सर्वभूतानां मानदो दीनवत्सलः ॥ १६ ॥
मातृभक्तिः परस्त्रीषु पत्न्यामर्ध इवात्मनः। प्रजासु पितृवत्स्निग्धः किङ्करो ब्रह्मवादिनाम् ॥ १७ ॥
देहिनामात्मवत्प्रेष्ठः सुहृदां नन्दिवर्धनः। मुक्तसङ्गप्रसङ्गोऽयं दण्डपाणिरसाधुषु ॥ १८ ॥
*एष दोग्धा महीं वीरो गां सतीमोजसौषधीः। समां करिष्यते चेमां धनुष्कोट्या समन्ततः ॥

अयं तु साक्षाद्भगवांस्त्र्यधीशः कूटस्थ आत्मा कलयावतीर्णः।
य[१]स्मिन्नविद्यारचितं निरर्थकं पश्यन्ति नानात्वमपि प्रतीतम् ॥ १९ ॥

अन्वयः—अयम् वेनारण्युत्थितः अनलः दुरासदः दुर्विषहः आसन्नः अपि विदूरवत् अभिभवितुम् न एव शक्यः ॥ ११ ॥ ❀ ❀ भूतानाम् अन्तः च बहिः चारणैः कर्माणि पश्यन् देहिनाम् अध्यक्षः आत्मा वायुः इव उदासीनः ॥ १२ ॥ ❀ ❀ धर्मपथे स्थितः एष अदंडयम् आत्मद्विषाम् सुतम् अपि न दण्डयति दण्ड्यम् आत्मजम् अपि दंडयति ॥ १३ ॥ ❀ ❀ अस्य पृथोः अप्रतिहतम् चक्रम् यावत् भगवान् अर्कः गोगणैः तपति आमानसाचलात् वर्तते ॥ १४ ॥ ❀ ❀ यत् अयम् मनोरंजनकैः आत्मविचेष्टितैः लोकम् रंजयिष्यति अथ प्रजाः अमुम् राजानम् आहुः ॥ १५ ॥ ❀ ❀ दृढव्रतः सत्यसन्धः ब्रह्मण्यः वृद्धसेवकः सर्वभूतानाम् शरण्यः मानदः दीनवत्सलः भविष्यति ॥ १६ ॥ ❀ ❀ परस्त्रीषु मातृभक्तिः पत्न्याम् आत्मनः अर्धः इव प्रजासु पितृवत् स्निग्धः ब्रह्मवादिनाम् किंकरः ॥ १७ ॥ ❀ ❀ अयम् देहिनाम् आत्मवत् प्रेष्ठः सुहृदाम् नन्दिवर्धनः मुक्तसङ्गप्रसङ्गः असाधुषु दण्डपाणिः ॥ १८ ॥ ❀ ❀ यस्मिन् अविचारचितम् प्रतीतम् अपि नानात्वम् निरर्थकम् पश्यन्ति अयम् तु साक्षात् भगवान् त्र्यधीशः कूटस्थः आत्मा कलया अवतीर्णः ॥ १९ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

दुरासदः शत्रोर्मनसापि प्राप्तुमशक्यः दुर्विषहः शत्रुभिः सोढुमशक्यः विदूरवत्पौरुषेणाभिभवितुमशक्यः वेन एवारणिस्तस्मादुत्थितः ॥ ११ ॥ ❀ ❀ चारणैर्गुप्तभृत्यैः पश्यन्नपि स्वस्तुतिनिंदादावुदासीन इव वर्तिष्यते यथा देहिनामध्यक्षोऽविकृत आत्मभूतो वायुः सूत्रात्मा तद्वत् ॥ १२ ॥ ❀ ❀ आत्मद्विषां सुतमिति सुतग्रहणं स्वात्मजसाम्यार्थम्। द्विषां सुतमपि दंडानर्हं न दंडयति आत्मनः सुतमपि दंडार्हं दंडयत्येवेत्यर्थः। धर्मपथे यमस्य वृत्ते स्थितः ॥ १३ ॥ ❀ ❀ चक्रमाज्ञा सेना वा रथस्य वा चक्रं मानसाचलमभिव्याप्य प्रवर्तते। किंपर्यंतमित्यत आह। अर्को रश्मिगणैर्यावत्तपति तावत् ॥ १४ ॥ ❀ ❀ यद्यस्माद्रञ्जयिष्यत्यथ तस्मान्मनोरंजनैर्हेतुभिरमुं राजानमाहुः। मनोरंजनकैरिति चेष्टितविशेषणं

---

१. प्रा० पा०—पुत्र०। * इदं पद्यं श्रीधरादिभिर्न व्याख्यातम् अयं श्लोकः वीरराघवविजयध्वजशुकदेवैर्व्याख्यातः, श्रीधरस्वामिभिरव्याख्यातत्वेन जीवगोस्वामिचक्रवर्तिराधारमणदासगोस्वामिभिः प्रतीकं धृत्वोपेक्षितः। २. प्राचीने पाठे 'यस्मिन्नविद्या०....' इत्यारभ्यैकविंशश्लोकसमाप्त्यवध्यंशो मूले नास्ति, टिप्पण्यां वर्तते।

वा ॥ १५-१६ ॥ ❀ ❀ मातरीव भक्तिर्भजनं यस्य। आत्मनो देहस्यार्ध इव पत्न्यां प्रीतिमान् ॥ १७ ॥ ❀ ❀ नंदिं सुखं वर्धयतीति तथा। मुक्तसंगेपु साधुपु प्रकृष्टः संगो यस्य दंडपाणिरित्यपराधानुपेक्षणमुच्यते। नादंड्यमित्यत्र पक्षपाताभाव उक्तः ॥ १८ ॥ ❀ ❀ अयं त्विति। तुशब्देन निरुपमत्वं दर्शयति। कोसावात्मा तमाह। यस्मिन्प्रतीतमपि नानात्वमर्थशून्यं पश्यंति ॥ १९ ॥

## श्रीवंशीधरकृत-भावार्थदीपिकाप्रकाशः

वह्नितनुत्वं चाह दुरासद इति ॥ ११ ॥ ❀ ❀ वायुधर्ममाह अंतरिति 'वायुर्वै गौतमसूत्रम्' इति श्रुतेः सूत्रात्मेति ॥ १२ ॥ ❀ ❀ धर्मराजतनुतामाह नेति ॥ १३ ॥ ❀ ❀ सूर्यतनुतामाह-अस्येति ॥ १४ ॥ ❀ ❀ अथातः। अन्यस्तु राजतीति निरुक्त्यायं तु रंजयति राजतीति निरुक्तिद्वयेनैव राजेति रजेः कनिर्नलोपवृद्धी च औणादिकौ ॥ १५ ॥ ❀ ❀ सत्यसंधः सत्यप्रतिज्ञः 'संधा स्थितिप्रतिज्ञयोः' इति मेदिनी। व्रतसंधयोः शास्त्रीयलौकिकत्वाभ्यां भेदो ज्ञेयः। दीना वत्सलाः प्रिया यस्य सः ॥ १६ ॥ ❀ ❀ स्निग्धः स्नेहकरः। ब्रह्मवादिनां वेदार्थानुसंधानवताम् ॥ १७ ॥ ❀ ❀ मुक्तसंगेषु विरक्तेषु। यद्वा-मुक्तानां ज्ञानिनामपि संग आसक्तिर्यस्मिन्स मुक्तसंगो हरिः। "प्रायेण मुनयो राजन्निवृत्ता विधिषेधतः। नैर्गुण्यस्था रमंते स्म गुणानुकथने हरेः" इत्युक्तेः। "आत्मारामाश्च मुनयो निर्ग्रंथा अप्युरुक्रमे। कुर्वन्त्यहैतुकीं भक्तिम्" इत्युक्तेश्च। तस्मिन्प्रकृष्टः कायवाङ्मनोभिः संगो यस्य स तथा। क्रियाभेदमादाय धर्मराजस्य पुनरुपादानम्। असाधुषु वेदाननुयायिषु ॥ १८ ॥ ❀ ❀ ननु देवमनुजांतरेष्वप्येते गुणाः संतीति न तत्साम्यमित्याह अयं तु साक्षादिति। यतः स एव कलया शक्त्या सहावतीर्णोऽस्मिन्प्रविष्टः आत्मा परमात्मा सर्वातिशयगुणत्वमेवाहुः। यस्मिन्भगवति साक्षात्सति नानात्वं स्वात्मनि देवमनुष्यादिभेदं निरर्थकं पुरुषार्थशून्यं पश्यंति। अविद्याकल्पितत्वेनातितुच्छत्वादिति भाव इति संदर्भः। विश्वनाथस्तु-यस्मिन्वर्तमाना मुनयोऽविद्यया रचितमेकस्यापि जीवस्य स्थूलसूक्ष्मदेहाध्यासान्नानात्वं स्वप्ने च नानात्वं प्रतीतमपि निरर्थकमवस्थामिव पश्यंतीत्याह। स्वामिव्याख्याने यस्मिन्नात्मनि प्रतीतं जाग्रदाद्यवस्थाभेदेन विश्वादिरूपं नानात्वमित्यर्थः ॥ १९ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

विदूरस्थस्य हि पौरुषेणाभिभवो न भवतीति धर्मलुप्ता ज्ञेया ॥ ११ ॥ ❀ ❀ परस्तुतिनिन्दादौ हि लोक उदासीनो वर्त्तते, अयन्तु स्वस्तुतिनिन्दादावपि तथैवेति इवशब्दार्थः, अविकृतः अपञ्चीभूतत्वाद्विकारशून्यः, आत्मभूतः समष्टिलिङ्गत्वान्मुख्योपाधिः ॥ १२ ॥ ❀ ❀ वैरिणमप्यदण्ड्यं न दण्डयतीत्येतावतैव चारितार्थ्ये सुतग्रहणं स्वात्मजसाम्यार्थम् ॥ १३-१४ ॥ ❀ ❀ मनोरञ्जनैर्हेतुभिः मनसः प्रसादनैश्चेष्टितधर्मैर्हेतुभिः, द्वितीयेऽर्थे नन्द्यादिविहितो ल्युप्रत्ययः ॥ १५-१६ ॥ ❀ ❀ भजनमनुवृत्तिः ॥ १७-१८ ॥ ❀ ❀ अयं तु साक्षादित्यतः पूर्वम् १"एष दोग्धा महीं वीरो गां सतीमोजसौषधीः। समां करिष्यते चेमां धनुष्कोट्या समन्ततः" इति पद्यं कचिदधिकं दृश्यते। तच्च पौनरुक्त्यादव्याख्यानाच्च विगीतमिव ज्ञेयम्। ननु निरुक्तगुणमध्ये परस्त्रीसङ्गवर्ज्जनादयः कतिचिद्गुणा देवमनुष्यादिष्वपि दृश्यन्त एव किमिति आश्चर्य्यमिव वर्ण्यन्ते, तत्र साम्यं परिहरन्नाह। अयं तु साक्षादिति ॥ १९-२० ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे दीपिन्याख्यायां दीपिकाटिप्पण्यां षोडशोऽध्यायः ॥ १६ ॥

## श्रीमद्वीरराघवव्याख्या

दुरासदः शत्रोर्मनसा प्राप्तुमशक्यः शत्रुभिः सोढुमशक्यः आसन्नः सन्निहितोऽपि दूरवत्पौरुषेणाभिभवितुमशक्यः, येन एवारणिस्तस्मादुत्थितोऽनलोऽग्निरिव। अनलस्याप्येते गुणा द्रष्टव्याः ॥ ११ ॥ ❀ ❀ चारणैर्गूढपुरुषैः अन्तर्बहिश्च भूतानां कर्माणि पश्यन्नपि स्तुतिनिन्दादावुदासीनो वर्तिष्यते, देहिनामध्यक्षो देहधारणे प्रधानहेतुभूतः सूत्रात्मा सूत्ररूपो वायुरिव, सूत्रात्मेति ह्रस्व आर्षः, 'वायुरात्मेव देहिनामि'ति पाठान्तरं, तत्र आत्मा अन्तः प्रविश्य धारको वायुरित्यर्थः, उदासीन इवास्त इत्यत्र दृष्टान्तः ॥ १२ ॥ ❀ ❀ एष पृथुः आत्मद्विषां शत्रूणामपि सुतमदण्ड्यं न दण्डयति, सुतग्रहणं स्वात्मजसाम्यार्थम्, आत्मजमपि दण्ड्यं दण्डयति, यतोऽसौ धर्मपथे स्थितः यमस्य वृत्तौ स्थितः ॥ १३ ॥ ❀ ❀ अस्य प्रभोश्चक्रमाज्ञारथचक्रम् अप्रतिहतं सन् मानसाचलमभिव्याप्य वर्तते, किं वक्तव्यमामानसाचलादिति, यतोऽसावर्कः सूर्यो यावद्गोगणैः किरणसमूहैस्तपति तावत् वर्तते ॥ १४ ॥ ❀ ❀ राजशब्दप्रवृत्तिनिमित्तं प्रजारञ्जनरूपमस्मिन्नेव पुष्कलमित्याहुः रञ्जयिष्यतीति। अयं पृथुरात्मनः स्वस्य विचेष्टितैर्व्यापारैः यतो लोकं रञ्जयिष्यति अथ ततः मनोरञ्जनहेतुभिरमुं राजानं प्रजाः आहुः ॥ १५ ॥ ❀ ❀ दृढव्रतः अप्रतिहतसङ्कल्पः सङ्कल्पोऽपि तस्य नासमीचीनविषय इत्याह। सत्यसन्धः सत्यं समीचीनं सन्धत्ते सङ्कल्पत इति सत्यसन्धः, ब्रह्मण्यः ब्राह्मणेषु साधुः, वृद्धानां ज्ञानवृद्धानां

सेवकः, सर्वभूतानां शरण्यः रक्षकत्वेन विश्वसनीयः, मानदः संमानकरः, दीनेषु वत्सलः ॥ १६ ॥ ❀ ❀ परस्त्रीषु परदारेषु मातरीव भक्तिर्भजनं यस्य, आत्मनो देहस्यार्द्धे इव पत्न्यां वर्तते । प्रजासु पितृवत् स्निग्धः दोषानवेक्षणेन प्रीतिपूर्वकमनुवर्तनशीलः, ब्रह्मवादिनां ब्रह्मविदां किङ्करो दासः ॥ १७ ॥ ❀ ❀ देहिनामात्मवत् निरतिशयप्रीतिविषयः सुहृदां नन्दिमानन्दं सुखं वर्द्धयतीति तथा, मुक्तसङ्गेषु वीतरागिषु प्रकृष्टः सङ्गो यस्य, असाधुषु दण्डपाणिरिवेत्यपराधाक्षमोच्यते । नादण्ड्यमित्यत्र पक्षपाताभाव इत्यपौनरुक्त्यम् ॥ १८ ॥ ❀ ❀ एष महावीरः पृथुः ओजसा बलेन सतीं गां भूमिमोषधीर्दोग्धा भूमेरोषधीर्धोक्ष्यतीत्यर्थः, 'अकथितं चे'ति दुहेः द्विकर्मकत्वाद्गामिति द्वितीयानिर्देशः, तथा इमां भूमिं स्वधनुःकोट्या परितः समां करिष्यते ॥ १९ ॥ ❀ ❀ किं बहुनायं सद्गुणानामाश्रय इति यतोऽसावनन्तकल्याणगुणनिधिर्भगवानिहावतीर्ण इत्याहुः अयं त्विति । अयं त्वित्यनेन निस्समाभ्यधिकत्वमभिप्रेतं, तत्र हेतुः साक्षाद्भगवान् भगवच्छब्दप्रवृत्तिनिमित्तभूतज्ञानादिषाड्गुण्यपूर्णहेयगुणराहित्यमुच्यते । कूटस्थ इति निर्विकार इत्यर्थः । त्र्यधीशः त्रिलोकेशः त्रिविधचेतनानामीश इति वा, एवंभूतो यः परमात्मा स कलया स्वांशेन जीवेनावतीर्ण इत्यर्थः, शरीरभूतपृथ्वाख्यजीवोपलक्षितोऽवतीर्णः आवेशावतार इत्यर्थः । यद्वा यो भगवान् स आत्मा जीवशरीरकः विशेष्यसंन्निधौ गवादिशब्दानां व्यक्तिपर्यन्तत्ववज्जीववाचिनोऽपि आत्मशब्दस्य शरीरिपरमपुरुषपर्यन्तत्वस्याकृतिनयसिद्धत्वात् । कलया इत्थंभूतलक्षणे तृतीयेयं, स्वापृथक्सिद्धज्ञानादिगुणविशेषेणोपलक्षितोऽवतीर्णः । कोऽसावात्मा यच्छरीरकोऽवतीर्ण इत्यत्राह यस्मिन्निति । यस्मिन् जीवे प्रतीतमपि अविद्यारचितं प्रकृतं परिणामरूपं नानात्वं देवमनुष्यादिभेदं निर्गतमर्थाद्वस्तुतः निरर्थकम् अवास्तविकं पश्यन्ति, तत्त्वदर्शिन इति शेषः । परमार्थत आत्मनि अविद्यमानं देहात्माभिमानिनामात्मनि प्रतीतमपि नानात्वं देहविलक्षणात्मयाथात्म्यदर्शिनः प्रकृतिपरिणामरूपत्वेन तद्गतमेव पश्यन्तीत्यर्थः । यस्मिन् प्रतीतं नानात्वमित्यनेनात्मनि नानात्वस्य प्रतीतिविषयत्वं न तु प्रमितिविषयत्वमित्युक्तम् । अनेन जीवे नानात्वमविद्यासंबन्धकृतं न तु स्वभावतः इत्युक्तं भवति । यद्वा ननु जीवशरीरककलयावतीर्णश्चेत् जीवस्याविद्यासंबन्धादाविद्यका जैवा दोषाः परस्मिन् पुरुषे प्रसज्जेयुस्तत्राहुः यस्मिन्निति । भगवति प्रतीतमपि जीवशरीरकत्वादिना हेतुना प्रतीतमपि अविद्याकृतं नानात्वं निरर्थकं पश्यन्ति अर्थात्प्रयोजनान्निर्गतं निरर्थकमकार्य्यकरं, यद्यपि जीवशरीरकत्वादिना प्रतीयते तथापि जीव इव बालकत्वयुवत्वादिकं देवादिदेहसम्बन्धात्प्रतीयमानमपि न वास्तविकं किन्तु देवादिदेहगतमेवैवं परस्मिन्नपि पुरुषे जीवसम्बन्धात्प्रतीतमपि जीवगतमेव न तु परमपुरुषगतम् । न चैवं जीवस्य शरीरत्वादवास्तविकेनापि नानात्वेनानर्थप्रसक्तिरिति वाच्यं, जीवस्याप्यनर्थप्रसक्तेः सशरीरत्वप्रयुक्तत्वाभावात् प्रकृतिवश्यत्वाद्यायत्तत्वात्, परमात्मनस्तु मायां स्ववशीकुर्वतः प्रकृतिवश्यत्वकर्मवश्यत्वाद्यभावेनानर्थाप्रसक्तेः । एतदेवाभिप्रेत्य निरर्थकं पश्यन्तीत्युक्तम् ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अग्नेः शक्तिसन्निधानस्वभावमाह दुरासद इति ॥ ११ ॥ ❀ ❀ वायुसन्निधानफलमाह अन्तर्बहिरिति । अन्तश्चारणैः श्वाससञ्चारैर्बहिश्चारिगूढपुरुषैः प्रेमलम्बनत्वाद्देहिनामात्मा । वायुस्तु प्राणरूपेणोदासीन उपरि स्थितोऽधो वर्तमानं सर्वमीक्षते यथा तथायमप्यध्यक्षः सर्वस्मादुपरि वर्तमानावक्ष्णौ यस्येति वाध्यक्षः । परितो वर्तमानं जानाति तथेति वा ॥ १२ ॥ ❀ ❀ आत्मद्विषामात्मशत्रूणां सुतमप्यदण्ड्यं न दण्डयति दण्ड्यं तमात्मजमपि दण्डयति । तत्र निमित्तमाह धर्मपथे इति, अनेन धर्मराजसन्निधानफलमुक्तं भवति ॥ १३ ॥ ❀ ❀ परमेष्ठ्यंशसन्निधानफलमाह, अस्येति । आमानसाचलान्मानसपर्वतपर्यन्तं गोगणै रश्मिगणैः ॥ १४ ॥ ❀ ❀ चन्द्रगुणसन्निधानफलमाह । रञ्जयिष्यतीति यद्यस्माद्दस्मात् ॥ १५ ॥ ❀ ❀ 'सन्धोऽवधौ प्रतिज्ञायामि'ति यादवः ॥ १६–१७ ॥ ❀ ❀ आनन्दवर्धनः आनन्दवृद्धिकरः मुक्तसङ्गैः परमहंसैः प्रसङ्गो यस्य स तथा । पूर्वं ध्वनितमर्थं स्पष्टयति दण्डपाणिरिति ॥ १८–१९ ॥ ❀ ❀ उक्तमिदं सर्वं श्रीनारायणसन्निधानफलमित्यभिप्रेत्याह अयं त्विति । तुशब्द एवार्थे, अस्मिन्पृथौ कलयावतीर्णः सन्निहितः साक्षाद्भगवांस्तु ऋष्याद्यन्यतमो न स्यात्किन्तु नारायण एव त्विति हेतुगर्भविशेषणद्वयमाह त्र्यधीश इति । त्रयाणामीशा इन्द्रादयस्तेषामप्यधिकत्वेनेशः "स्यादध्यधिक ईश्वरः" इति यादवः । चेतनाचेतनकूटे तिष्ठतीति कूटस्थः, स्थानदोषत्वेन लेपनमस्य नास्तीत्यत उक्तमात्मेति गुणपूर्णत्वादात्मा । तर्हि स्थानभेदान्नानात्वमायातमत्रोच्यते यस्मिन्निति । यल्लोके निरर्थकं तद्यस्मिन् हरौ प्रतीतमविद्यया हरीच्छया रचितं कल्पितं नानात्वमिव यथा पश्यन्ति । एतदुक्तं भवति यल्लोके खपुष्पादिकमविद्यमानं तन्मत्स्यादिभगवद्रूपेषु प्रतीतं नानात्वं यथा मिथ्याभूतं पश्यन्ति योगिनस्त्वथेति तदुक्तं यल्लोके निरर्थकं तद्भगवद्रूपेषु प्रतीतनानात्वदृष्टान्तेन पश्यन्ति सन्तः, 'मत्स्यरूपादिनानात्वदृष्टवद्यन्निरर्थकमि'ति पाद्मे । 'एवं धर्मान्पृथक् पश्यन्नि'ति च, अनेन तद्धर्माणामपि पृथक्त्वदर्शने नानर्थ इत्युक्तं भवति ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

एष दोग्धेति पद्यं पुनरुक्तमिव परेण । अतः पृथङ्नाङ्गीकृतम् । देवमनुजान्तरेष्वपि ते गुणाः सन्तीति न तत्साम्यमित्याह अयं तु साक्षादिति । यतः स एव कलया शक्त्या सह अवतीर्णोऽस्मिन् प्रविष्टः आत्मा परमात्मा, सर्वातिशयगुणत्वमेवाहुः

यस्मिन् भगवति साक्षात् सति नानात्वं स्वात्मनि देवमनुष्यत्वादिभेदं निरर्थकं पुरुषार्थशून्यं पश्यन्ति । अविद्याकल्पितत्वेनातितुच्छत्वादिति भावः ॥ १९-२१ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

दुरासदः दुष्प्रतमैः शत्रुवर्गैरनिकटः दुर्विषहः शत्रुशार्दूलैः सोढुमशक्यः । वेन एवारणिस्तन्मथनादुत्थितः ॥ ११ ॥ ❀ ❀ चारणैश्चेष्टितैश्चरैश्च पश्यन् उदासीनोऽसक्तः, पृथुपक्षे भृत्यामात्यादिष्वासक्तोऽपि तैरुदासीन इव लक्ष्यमाणः । वायुः सूत्रात्मेव आत्मा अन्तर्यामीव पृथुरध्यक्षः ॥ १२ ॥ ❀ ❀ धर्मपथे यमस्य वृत्तौ ॥ १३ ॥ ❀ ❀ चक्रमाज्ञा सेना वा रथस्य चक्रं वा । मानसोत्तरगिरिमभिव्याप्य वर्त्तते । किंपर्यन्तमित्यत आह अर्को यावत्तपतीति ॥ १४ ॥ ❀ ❀ मनोरञ्जनानि कानि सुखानि येभ्यस्तैरात्मचेष्टितैर्यल्लोकं रञ्जयिष्यतीत्यर्थः । अन्यस्तु राजतीति निरुक्त्या, अयन्तु रञ्जयति राजतीति निरुक्तिद्वयेनैव राजेति भावः ॥ १५ ॥ ❀ ❀ सत्यसन्धः सत्यप्रतिज्ञः । व्रतसन्धयोः शास्त्रीयलौकिकत्वाभ्यां भेदो ज्ञेयः ॥ १६ ॥ ❀ ❀ पत्न्यामात्मनो देहस्यार्द्धे इव प्रीतिमानिति शेषः ॥ १७ ॥ ❀ ❀ नन्दिं सुखं वर्द्धयतीति सः, मुक्तसङ्गेषु विरक्तेष्वेव प्रसङ्गो यस्य सः ॥ १८ ॥ ❀ ❀ यस्मिन् वर्त्तमाना मुनयोऽविद्यया रचितमेकस्यापि जीवस्य स्थूलसूक्ष्मदेहाद्यध्यासात् नानात्वं स्वप्ने च नानात्वं प्रतीतमपि निरर्थकमवस्त्वेव पश्यन्ति ॥ १९-२० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

वेन एवारणिस्तदुत्थितः पृथुरूपोऽनलः । आसन्नः निकटचरोऽपि विदूरवत् अभिभवितुं नैव शक्यः ॥ ११ ॥ ❀ ❀ अन्तर्गूढस्थाने कृतानि जनानां कर्माणि चारणैः गुप्तभृत्यैः पश्यन् वायुरिवोदासीनः रागद्वेषरहितोऽपि आत्मेव परमात्मेवाध्यक्षस्तत्तत्कर्मानुसारेण फलदो भविष्यति ॥ १२ ॥ ❀ ❀ धर्मपथे धर्ममार्गे स्थितः ॥ १३ ॥ ❀ ❀ चक्रमाज्ञा रथचक्रं वा ॥ १४ ॥ ❀ ❀ मनोरञ्जनकैः प्राणिमनोह्लादकैः आत्मचेष्टितैः यस्माल्लोकं रञ्जयिष्यति अथ तस्मादमुं राजानमाहुः ॥ १५-१७ ॥ ❀ ❀ देहिनामात्मवत् प्रेष्ठः अतिप्रियः सुहृदां नन्दिं सुखं वर्द्धयतीति तथा । मुक्तसंगेषु त्यक्तदुःसंगेषु प्रकृष्टः संगो यस्य सः । असाधुषु दण्डपाणिर्धर्मत्राणेऽवहित इत्यर्थः ॥ १८ ॥ ❀ ❀ महीं गां गोरूपां सतीम् ओजसा औषधीर्दुग्धा, इमां महीं समीकरिष्यते ॥ १९ ॥ ❀ ❀ "आत्मा वा अरे द्रष्टव्यः स विजिज्ञासितव्यः" इत्यादिश्रुतिप्रसिद्धो जिज्ञास्यः । साक्षाद्भगवान् त्र्यधीशः त्रिगुणनियन्ता स्वशक्तिविशेषेण विश्वस्रष्टेत्यर्थः । स्वरूपतस्तु कूटस्थो निर्विकारः । एवं स्वरूपतः निर्विकार एव स्वशक्त्या विश्वाकार इत्यौपनिषदानां सिद्धान्तः । अविद्या विद्याहीनाः अनौपनिषदा मूर्खास्तु "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतिप्रतीतं यत्कार्यत्वेन प्रसिद्धमपि 'स्वयमात्मानमकुरुते'त्यादिश्रुतेः यद्विरचितमपि नानात्वं नानाकार्यभावं यस्मिन्नर्थं पश्यन्ति नाङ्गीकुर्वन्तीत्यर्थः, तेषां वेदान्तविद्याहीनानां बुद्धकपिलकणादादीनां तर्कमूलाः पक्षाः श्रीमद्भिर्भगवद्भिर्बादरायणचरणैरविरोधाध्याये निराकृताः, सोऽयं कलया अर्चीरूपधारिण्या श्रिया सह श्रीपृथुरूपधारी अवतीर्णः ॥ २० ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

अग्नितनुत्वमाहुः—दुरासद इति । वेन एवारणिस्तस्मादुत्थित उत्पन्नोऽनलोऽसौ । कुतोऽस्याग्नित्वमित्याकांक्षायां तद्गुणयोगादिति गुणान् दर्शयन्ति । दुरासदः शत्रुभिः प्राप्तुमशक्यः । दुर्विषहः शत्रुभिः सोढुमशक्यः । आसन्नः समीपे वर्त्तमानोपि विदूरवत् । कुत एतत् यतस्तैः पौरुषेणाभिभवितुं नैव शक्य इति ॥ ११ ॥ ❀ ❀ वायुमूर्त्तित्वं दर्शयन्ति—अन्तरिति । देहिनामात्मभूतो वायुः सूत्रात्मेवासौ भूतानां प्राणिनामन्तर्मनसि बहिश्च वर्त्तमानानि कर्माणि चारणैर्भृत्यैः पश्यन्नपि स्वस्तुतिनिन्दादावध्यक्षः साक्षीवोदासीनो वर्त्तिष्यत इत्यन्वयः ॥ १२ ॥ ❀ ❀ यममूर्त्तिधारणमाहुः—नादण्ड्यमिति । एष पृथुरात्मनो द्विषां सुतमप्यदण्ड्यं दण्डानर्हं न दण्डयति दंड्यं दण्डार्हमात्मजं स्वसुतमपि दण्डयति । कुत एवं यतो धर्मस्य यमस्य पथि नीतिमार्गे स्थित इति ॥ १३ ॥ ❀ ❀ भगवानतितेजस्वी अर्कः सूर्यो गोगणैः रश्मिसमूहैर्यावद्देशं तपति प्रकाशयति तावदामानसाचलात् मानसाचलपर्वतमन्तिमद्वीपवर्षमर्यादाभूतं परितो वर्त्तमानमभिव्याप्य देशपर्यन्तमस्य पृथोश्चक्रमाज्ञा सेना वा रथस्य चक्रं वा अप्रतिहतं वर्त्तत इत्यन्वयः । तावत्पर्यन्तमस्याज्ञोल्लङ्घनकर्त्ता कोपि नास्ति तत्पर्यन्तं गमनस्य मध्ये प्रतिबंधोपि नास्तीत्यर्थः ॥ १४ ॥ ❀ ❀ यत् यस्मादयं मनोरञ्जनकैरात्मचेष्टितैः स्वपराक्रमैर्लोकं जनं रञ्जयिष्यति आनन्दयिष्यति, अथ तस्मात् प्रजाः अमुं राजानमाहुः राजा राजेति कथयिष्यन्तीत्यन्वयः ॥ १५ ॥ ❀ ❀ किंच अयं दृढव्रतः अखण्डितव्रतः । सत्यप्रतिज्ञः । ब्रह्मण्यो ब्राह्मणभक्तः वेदे विश्वासवान् । वृद्धानां सेवकः । सर्वभूतानां प्राणिजातस्य शरण्यः आश्रयार्हः । यतस्तेषां मानदः संमानकर्त्ता । दीनेषु वत्सलः अनुग्रहकर्त्ता ॥ १६ ॥ ❀ ❀ परेषां स्त्रीषु मातरीव भक्तिर्दृष्टिर्यस्य सः । स्वपत्न्या-

मात्मनो देहस्यार्द्ध इव प्रीतिमान्। यथा पुत्रेषु पिता स्नेहवान् भवति तथा प्रजासु स्नेहवान्। ब्रह्मवादिनां वेदार्थज्ञानां किङ्करः आज्ञानुसारी ॥ १७ ॥ ❀ ❀ देहिनां प्राणिनामपि आत्मवत्स्वजीववत्प्रेष्ठः प्रीतिविषयः। सुहृदां मित्रादीनां नन्दिं सुखं वर्द्धयतीति तथा। मुक्तसङ्गप्रसङ्गोयं मुक्तः सङ्गो लौकिकः पुत्रदारगृहादिषु यैर्विरक्तैस्तत्त्वज्ञैर्भगवद्भक्तैस्तेषु प्रकृष्टः सङ्गो यस्य सः। असाधुषु परोद्वेजकेषु दुराचारेषु दण्डपाणिर्यमराज इवापराधानुपेक्षकः ॥ १८ ॥ ❀ ❀ अयं तु पृथुर्न प्राकृतो मनुष्यः किंतु यस्मिंस्तत्त्वतो ज्ञाते सति विद्वांसः इदं प्रतीतमबाधितप्रतीतिविषयमपि नानात्वं सर्वमपि विश्वमविद्यारचितं स्वप्नगन्धर्वनगरादिपदार्थमिव निरर्थकं निष्प्रयोजकं पश्यन्ति स एव कलया स्वांशेनावतीर्ण इत्यन्वयः। तत्तच्छब्दाभ्यामुक्तः क एवंभूत इति वीक्षायां तं वर्णयन्ति—साक्षाद्भगवान् समग्रैश्वर्यादिषड्गुणवान्। त्र्यधीशः सत्त्वादिगुणत्रयनियन्ता। अत एव सर्वेषामात्मान्तर्यामी। तथापि कूटस्थः सर्वविकारशून्यः ॥ १९ ॥

## भाषानुवादः

महाराज पृथु वेनरूप अरणिके मन्थनसे प्रकट हुए अग्निके समान हैं। शत्रुओंके लिए ये अत्यन्त दुर्धर्ष और दुःसह होंगे। ये उनके समीप रहनेपर भी, सेनादिसे सुरक्षित रहनेके कारण, बहुत दूर रहनेवालेसे होंगे। शत्रु कभी इन्हें हरा न सकेंगे ॥ ११ ॥ ❀ ❀ जिस प्रकार प्राणियोंके भीतर रहनेवाला प्राणरूप सूत्रात्मा शरीरके भीतर-बाहरके समस्त व्यापारोंको देखते रहनेपर भी उदासीन रहता है, उसी प्रकार ये गुप्तचरोंके द्वारा प्राणियोंके गुप्त और प्रकट सभी प्रकारके व्यापार देखते हुए भी अपनी निन्दा और स्तुति आदिके प्रति उदासीनवत् रहेंगे ॥ १२ ॥ ❀ ❀ ये धर्ममार्गमें स्थित रहकर अपने शत्रुके पुत्रको भी, दण्डनीय न होनेपर, कोई दण्ड न देंगे और दण्डनीय होनेपर तो अपने पुत्रको भी दण्ड देंगे ॥ १३ ॥ ❀ ❀ भगवान् सूर्य मानसोत्तर पर्वततक जितने प्रदेशको अपनी किरणोंसे प्रकाशित करते हैं, उस सम्पूर्ण क्षेत्रमें इनका निष्कण्टक राज्य रहेगा ॥ १४ ॥ ❀ ❀ ये अपने कार्योंसे सब लोकोंको सुख पहुँचावेंगे—उनका रञ्जन करेंगे; इससे उन मनोरञ्जनात्मक व्यापारोंके कारण प्रजा इन्हें 'राजा' कहेगी ॥ १५ ॥ ❀ ❀ ये बड़े दृढ़सङ्कल्प, सत्यप्रतिज्ञ, ब्राह्मणभक्त, वृद्धोंकी सेवा करनेवाले, शरणागतवत्सल, सब प्राणियोंको मान देनेवाले और दीनोंपर दया करनेवाले होंगे ॥ १६ ॥ ❀ ❀ ये परस्त्रीमें माताके समान भक्ति रक्खेंगे, पत्नीको अपने आधे अङ्गके समान मानेंगे प्रजापर पिताके समान प्रेम रक्खेंगे और ब्रह्मवादियोंके सेवक होंगे ॥ १७ ॥ ❀ ❀ दूसरे प्राणी इन्हें उतना ही चाहेंगे जितना अपने शरीरको। ये सुहृदोंके आनन्दको बढ़ायेंगे। ये सर्वदा वैराग्यवान् पुरुषोंसे विशेष प्रेम करेंगे और दुष्टोंको दण्डपाणि यमराजके समान सदा दण्ड देनेके लिये उद्यत रहेंगे ॥ १८ ॥ ❀ ❀ तीनों गुणोंके अधिष्ठाता और निर्विकार साक्षात् श्रीनारायणने ही इनके रूपमें अपने अंशसे अवतार लिया है, जिनमें पण्डितलोग अविद्यावश प्रतीत होनेवाले इस नानात्वको मिथ्या ही समझते हैं ॥ १९ ॥

अयं भुवो मण्डलमोदयाद्रेर्गोप्तैकवीरो नरदेवनाथः।
आस्थाय जैत्रं रथमात्तचापः पर्यस्यते दक्षिणतो यथार्कः ॥ २० ॥
अस्मै नृपालाः किल तत्र तत्र बलिं हरिष्यन्ति सलोकपालाः।
मंस्यन्त एषां स्त्रिय आदिराजं चक्रायुधं तद्यश उद्धरन्त्यः ॥ २१ ॥
अयं महीं गां दुदुहेऽधिराजः प्रजापतिर्वृत्तिकरः प्रजानाम्।
यो लीलयाद्रीन् स्वशरासकोट्या भिन्दन् समां गामकरोद्यथेन्द्रः ॥ २२ ॥
विस्फूर्जयन्नाजगवं धनुः स्वयं यदाचरत्क्ष्मामविषह्यमाजौ।
तदा निलिल्युर्दिशि दिश्यसन्तो लाङ्गूलमुद्यम्य यथा मृगेन्द्रः ॥ २३ ॥
एषोऽश्वमेधाञ् शतमाजहार सरस्वती प्रादुरभावि यत्र।
अहारषीद्यस्य हयं पुरन्दरः शतक्रतुश्चरमे वर्तमाने ॥ २४ ॥
एष स्वसद्मोपवने समेत्य सनत्कुमारं भगवन्तमेकम्।
आराध्य भक्त्या लभतामलं तज्ज्ञानं यतो ब्रह्म परं [1]विदन्ति ॥ २५ ॥

तत्र तत्र गिरस्तास्ता इति विश्रुतविक्रमः। श्रोष्यत्यात्माश्रिता गाथाः पृथुः पृथुपराक्रमः ॥ २६ ॥

---

१. प्रा० पा०—वदन्ति।

दिशो विजित्याप्रतिरुद्धचक्रः स्वतेजसोत्पाटितलोकशल्यः ।
सुरासुरेन्द्रैरु[1]पगीयमानमहानुभावो भविता पतिर्भुवः ॥ २७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे[2] षोडशोऽध्यायः ॥ १६ ॥

अन्वयः—अयम् एकवीरः नरदेवनाथः भुवः मंडलम् आ उदयाद्रेः गोप्ता जैत्रम् रथम् आस्थाय आत्तचापः यथा अर्कः दक्षिणतः पर्यस्यते ॥ २० ॥ ❀ ❀ सलोकपालाः नृपालाः अस्मै तत्र तत्र बलिम् किल हरिष्यन्ति एषाम् स्त्रियः तद्यशः उद्धरन्त्यः आदिराजम् चक्रायुधम् मंस्यन्ते ॥ २१ ॥ ❀ ❀ लीलया स्वशरासकोट्या यथा इंद्रः अद्रीन् भिन्दन् गाम् समाम् अकरोत् अयम् प्रजानाम् वृत्तिकरः प्रजापतिः अधिराजः गाम् महीम् दुदुहे ॥ २२ ॥ ❀ ❀ यथा लाङ्गूलम् उद्यम्य मृगेन्द्रः स्वयम् यदा अविषह्यम् आजगवम् धनुः आजौ विस्फूर्जयन् क्ष्माम् अचरत् तदा असन्तः दिशि दिशि निलिल्युः ॥ २३ ॥ ❀ ❀ यत्र सरस्वती प्रादुरभावि एषः शतम् अश्वमेधान् आजहार शतक्रतुः पुरन्दरः यस्य चरमे वर्तमाने हयम् अहारषीत् ॥ २४ ॥ ❀ ❀ एषः स्वसद्मोपवने भगवन्तम् एकम् सनत्कुमारम् समेत्य भक्त्या आराध्य यतः परम् ब्रह्म विदन्ति तत् अमलम् ज्ञानम् अलभत ॥ २५ ॥ ❀ ❀ तत्र तत्र इति विश्रुतविक्रमः पृथुपराक्रमः पृथुः ताः ताः आत्माश्रिताः गाथाः गिरः श्रोष्यति ॥ २६ ॥ ❀ ❀ अप्रतिरुद्धचक्रः दिशः विजित्य स्वतेजसा उत्पाटित-लोकशल्यः सुरासुरेन्द्रैः उपगीयमानमहानुभावः भुवः पतिः भविता ॥ २७ ॥

इति षोडशोऽध्यायः ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

आ उदयाद्रेस्तत्पर्यंतं गोप्ता गोपायिष्यति तदर्थं पर्यस्यते पर्यटिष्यति प्रदक्षिणीकरिष्यतीत्यर्थः ॥ २० ॥ ❀ ❀ अस्मै तथा प्रदक्षिणं कुर्वते । मंस्यंते ज्ञास्यन्ति । तस्य यश उद्धरंत्य उदाहरंत्यः कीर्तयंत्यः ॥ २१ ॥ ❀ ❀ इंद्र इवाद्रीन्वि-भिंदन् ॥ २२ ॥ ❀ ❀ लांगूलमुन्नमय्य यथा मृगेंद्रश्चरति तथा धनुर्विस्फूर्जयन्यदा क्ष्मामचरत् ॥ २३ ॥ ❀ ❀ सरस्वती यत्र प्रादुरभावि प्रादुरभूत् । कर्मकर्तरि चिण् । तत्राहार्षीत् हरणं करिष्यतीत्यर्थः ॥ २४–२५ ॥ ❀ ❀ विश्रुता विक्रमा यस्य । गाथाः प्रबंधान् आत्माश्रिता विष्वाश्रिताः ॥ २६ ॥ ❀ ❀ उपगीयमानो महाननुभावो यस्य ॥ २७ ॥

इति श्रीमद्भागवते म. चतुर्थस्कन्धे टीकायां षोडशोऽध्यायः ॥ १६ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इत्यर्थ इति । यथा सूर्यः सर्वं प्रकाशयन्पर्यटति तथेति भावः ॥ २० ॥ ❀ ❀ अस्मै पृथवे तथाऽ-र्कवत् ॥ २१ ॥ ❀ ❀ शरासकोट्या शरासनाग्रेण ॥ २२ ॥ ❀ ❀ संग्रामेऽसह्यं धनुः ॥ २३ ॥ ❀ ❀ तत्र सरस्वती-प्रादुर्भावस्थले चरमेंत्येऽश्वमेधे ॥ २४ ॥ ❀ ❀ यतो ज्ञानात् ॥ २५ ॥ ❀ ❀ तत्र तत्र देशे ॥ २६ ॥ ❀ ❀ अप्रतिरुद्धचक्रोऽविहताज्ञः । लोकशल्यः लोकोपद्रवः ॥ २७ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे षोडशोऽध्यायः ॥ १६ ॥

## श्रीमद्वीरराघवव्याख्या

अयं नरदेवनाथः प्रभुः आ उदयाद्रेः उदयाद्रिपर्यन्तं भुवो मण्डलं गोप्ता रक्षिष्यति । रक्षणार्थमेकवीरः स्वसमानभ्यधिक-वीरान्तरशून्यः जैत्रं जयशीलं रथमास्थाय अधिष्ठाय आत्तो धृतः चापो धनुर्येन सः अर्कवत् दक्षिणतः पर्य्यस्यते प्रदक्षिणी-करिष्यतीत्यर्थः ॥ २१ ॥ ❀ ❀ अस्मै तथा प्रदक्षिणीकुर्वते पृथवे लोकपालैरिन्द्रादिभिः सहिता नृपाला राजानः तत्र तत्र बलिमुपायनं हरिष्यन्ति समर्पयिष्यन्ति । तेषां नरलोकपालानां नृणां स्त्रियः तस्य पृथोः यशः उद्धरन्त्यः कथयन्त्य आदिराजं पृथुं चक्रायुधं भगवन्तं मंस्यन्ते ज्ञास्यन्ति ॥ २२ ॥ ❀ ❀ तद्यशःकथनरूपं स्त्रीणां वाक्यमाहुरयमित्यादिभिश्चतुर्भिः—अयमित्यादिकं न सूतादिवाक्यम् । 'एष दोग्धा महावीरो गां सतीमि'त्यनेन पौनरुक्त्यापत्तेः । अत एव दुदुहे अकरोत् निलिल्युरिति भूतनिर्देशोपपत्तिः । अयमधिराजः पृथुः प्रजापतिः प्रजापालनाधिकृतः प्रजानां जीवनोपायकरः जीवनोपायं चिकीर्षुरित्यर्थे

१. प्रा० पा०—न्द्रैरनुगीयमानो म० । २. प्रा० पा०—प्राचीने पाठे इतोऽग्रे 'पृथुचरिते' इत्यधिकः पाठः ।

पर्यवसानं बोध्यम्, गां गोरूपधरां महीं दुदुहे, इन्द्र इव स्वशराग्रकोट्या शरासशब्दो धनुःकोट्येति पूर्वमुक्तत्वात् शराग्र्यस्य धनुःश्रेष्ठस्य कोट्या अग्रेण लीलया अद्रीन् भिन्दन् गां भूमिं समामकरोत् करिष्यतीत्यर्थः ॥ २३ ॥ ❀ ❀ लाङ्गूलं पुच्छमुद्यम्य उन्नमय्य यथा मृगेन्द्रः सिंहः चरति तथा आजगवं धनुः विस्फूर्जयन् शत्रुभिः सोढुमशक्यो विक्रमो यस्य सः यदा क्ष्मामचरत् तदा असन्तो धर्मविरोधिनो दिशि दिशि निलिल्युः लीना बभूवुः ॥ २४ ॥ ❀ ❀ एष पृथुः सरस्वती सरस्वत्याख्या महानदी यत्र यस्मिन् ब्रह्मावर्त्ते प्रादुरभावि प्रादुरभूत्, कर्मकर्तरि चिण्, तत्र देशे शतमश्वमेधानाजहाराकरोत्। यस्य शतक्रतोः क्रतुशतं संकल्प्यानुतिष्ठतः पृथोश्चरमे शततमे क्रतौ वर्तमाने प्रवर्तमाने सति पुरन्दरः इन्द्रोऽयमश्वमहार्षीत् हृतवान् ॥ २५ ॥ ❀ ❀ एषः पृथुः स्वसद्मोपवने स्वगृहस्य उप समीपे यद्वनं तत्समेत्य तत्रैकमसहायं भगवन्तं सनत्कुमारं भक्त्या आराध्य तदमलं ज्ञानमलभत, किं तत् यतो ज्ञानात् परं ब्रह्म विदन्ति ॥ २६ ॥ ❀ ❀ विश्रुताः विक्रमाः यशांसि यस्य पृथुः पराक्रमः प्रभावो यस्य सः पृथुः आत्माश्रयाः स्वविषया गाथाः प्रबन्धरूपास्तास्ता गिरः श्रोष्यति ॥ २७ ॥ ❀ ❀ स्वतेजसा स्वबलेन उत्पाटिताः निर्मूलिताः लोकानां शल्यसदृशाः दुरात्मानो येन सः अत एवाप्रतिरुद्धचक्रः अप्रतिहताज्ञः दिशो विजेष्यति । सुरासुरश्रेष्ठैरुपगीयमानः महाननुभावो यस्य सः भुवः पतिः भविता भविष्यति ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवकृतभागवतचंद्रचंद्रिकाख्यायां टीकायां षोडशोऽध्यायः ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

राज्यावधिमाहुरित्याह अयमिति। ओदयाद्रेरुदयपर्वतपर्य्यन्तं पर्यस्यते पर्यटिष्यति ॥ २१ ॥ ❀ ❀ अन्येषु राजसु सत्सु अस्याधिराज्यं कथमित्याशङ्क्य चक्रवर्तित्वादुच्यत इति उच्यते। तस्मा इति ॥ २२ ॥ ❀ ❀ कीदृशं यश उच्चरन्त्य इत्यत्राह। अयं महीमिति ॥ २३ ॥ ❀ ❀ निलिल्युर्निलीनाः, लाङ्गूलं पुच्छम् ॥ २४ ॥ ❀ ❀ अहार्षीदित्यनेनास्य प्रतिभटः शतमख एव नान्य इति द्योतनाय कथितमिति ज्ञातव्यं, चरमे अन्त्येऽश्वमेधे वर्तमाने सति ॥ २५ ॥ ❀ ❀ यतो ज्ञानात्परं ब्रह्म प्रत्यक्षं भवति योगिनः ॥ २६ ॥ ❀ ❀ तद्धविष्यत्कथातीतत्वेन कथं कथ्यत इत्यत्रोच्यते तत्रेति। आत्माश्रिताः स्वविषया यास्त्रिभिः षड्भिश्चरणैरुपलक्षिता यशोनिबन्धाः ॥ २७ ॥ ❀ ❀ अप्रतिरुद्धचक्रोऽप्रतिहताज्ञो भविता भविष्यतीत्युपसंहरते ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां षोडशोऽध्यायः ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

स्त्रियः इति। स्त्रियोऽपीत्यर्थः। उद्गरन्त्य इत्येव पाठः स्वामिसम्मतः, मध्ये उदाहरन्त्य इति व्याख्यानोपादानात् ॥ २२–२३ ॥ ❀ ❀ स्वमित्यत्र स्वयमिति क्वचित् ॥ २४ ॥ ❀ ❀ प्रादुरभावि प्रादुर्भविता पृथुनैव ॥ २५ ॥ ❀ ❀ विदन्तीत्यत्र कुर्वन्तीति चित्सुखः ॥ २६–२७ ॥ ❀ ❀ 'भविता पतिर्भुव' इत्यत्र 'जयतां पृथुर्भवे'ति चित्सुखः ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य षोडशोऽध्यायः ॥ १६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ओदयाद्रेरुदयाद्रिमभिव्याप्य दक्षिणतः पर्यस्यते प्रादक्षिण्येन पर्य्यटिष्यति ॥ २१ ॥ ❀ ❀ मंस्यन्ते ज्ञास्यन्ति उच्चरन्त्यः कीर्त्तयन्त्यः ॥ २२ ॥ ❀ ❀ तासां किमाकारमेतद्यशःकीर्त्तनमित्याकांक्षायामाहुः। श्लोकचतुष्कं अयमिति शरासकोट्या शरासनाग्रेण इन्द्र इवाद्रीन् भिन्दन् ॥ २३ ॥ ❀ ❀ लाङ्गूलमुन्नमय्य यथा मृगेन्द्रश्चरति तथा धनुर्विस्फूर्जयन् यदा क्ष्मामचरत् ॥ २४–२६ ॥ ❀ ❀ इति तत्र तत्र देशे ताभिरुक्तास्तास्ता लोकप्रसिद्धा गिरः। गाथा आत्माश्रिताः स्वीयकवितया वर्णिताः कथाश्च। अत एव 'दुदुहे' इत्यादिवत् भूतकालप्रयोगस्तदुक्तिकाले तत्तत्कर्मणामतीतत्वात् ॥ २७–२८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। षोडशोऽयं चतुर्थस्य सङ्गतः सङ्गतः सताम् ॥ १६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अयं श्रीपृथुरूपी हरिः आ उदयाद्रेर्भुवो मण्डलं गोप्ता गोपायिष्यति। तदर्थं जैत्रं जयावहं रथमास्थाय पर्य्यस्यते पर्यटिष्यति ॥ २१ ॥ ❀ ❀ एषां स्त्रियः तद्यशः चक्रायुधकीर्तिमुच्चरन्त्यः कीर्तयन्त्यः आदिराजं चक्रायुधं मंस्यन्ते ज्ञास्यन्ति। स्त्रियो मंस्यन्ते यदा तदा ते कुतो न मंस्यन्ते इति प्रभावित्वं श्रीपृथोर्द्योतितम् ॥ २२ ॥ ❀ ❀ वज्रेण यथेन्द्रः अद्रीन् तथा

गां स्वशरासकोट्या शरा अस्यन्ते क्षिप्यन्तेऽनेन तत्तथा तस्य धनुषः कोट्या गां भूमिं भिन्दन् लीलयैव समामकरोत् करिष्यति ॥ २३ ॥ ❀ ❀ यदा क्ष्मां भूमिमचरत् तदा असन्तोऽसाधवो निलिल्युः ॥ २४ ॥ ❀ ❀ यत्र देशे सरस्वती प्रादुरभावि प्रादुरभूत्कर्मकर्तरि चिण्, तत्र शतमश्वमेधान् आजहार आहरिष्यति, चरमे वर्तमाने अनुष्ठीयमाने अश्वमहार्षीत् ॥ २५ ॥ ❀ ❀ यतो ज्ञानात्परं ब्रह्म विदन्ति तदमलं ज्ञानमलभत लप्स्यते ॥ २६ ॥ ❀ ❀ विश्रुता विक्रमा यस्य सः आत्माश्रिताः आत्मविषयाः गिरः गाथाः निबन्धरूपाः ॥ २७ ॥ ❀ ❀ अनुगीयमानोऽनुवर्ण्यमानो महानुभावो महाप्रभावो यस्य सः भुवः पतिर्भविता भविष्यति ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे षोडशाध्यायार्थप्रकाशः ॥ १६ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवंभूतस्यावतारे किं प्रयोजनमिति वीक्षायां भूलोकपालनमेवेत्यभिप्रेत्याहुः—अयमिति । अयं भगवदंशः पृथुः एकवीरः एको निरुपमः वीरः पराक्रमवान् अत एव नरदेवनाथः राजराजः आ उदयाद्रेः उदयाचलपर्यन्तं भुवो मण्डलं गोप्ता गोपायिष्यति । तदर्थं च जैत्रं जयप्रदं रथमास्थाय आरुह्य आत्तचापः धनुर्गृहीत्वा यथार्कः अर्कवत् दक्षिणतः पर्यस्यते प्रदक्षिणीकरिष्यतीत्यन्वयः ॥ २० ॥ ❀ ❀ लोके सर्वपूज्यत्वमाहुः—अस्मा इति । अस्मै प्रदक्षिणीकुर्वते पृथवे सलोकपालाः लोकपालैर्वरुणेन्द्रकुबेरादिभिः सहिता नृपालाः राजानस्तत्र तत्र तस्मिंस्तस्मिन् स्वस्वाधिष्ठते देशे बलिं शुल्कं हरिष्यन्ति समर्पयिष्यंति । भगवदवतारत्वान्निश्चितमेतदिति सूचयन्ति—किलेति । अत एव तस्य महाबलपराक्रमस्य यश उद्धरन्त्यः गायन्त्यः एषां लोकपालादीनां स्त्रिय एनं चक्रायुधं चक्रायुधस्य भगवतोऽवतारत्वाच्चक्रायुधधरमादिराजं राज्ञां प्रथमं मुख्यं वा मंस्यन्ते ज्ञास्यन्तीत्यन्वयः ॥ २१ ॥ ❀ ❀ प्रजापालनप्रकारमाहुः—अयमिति । अयमधिराजश्चक्रवर्त्ती प्रजानामन्नादिनिष्पत्तये महीं भूमिं दुदुहे । ननु पृथिव्या दोहनं कथं संभवति तत्राहुः—गामिति । गोरूपामित्यर्थः । ननु प्रजानामन्नादि अनेन किमिति निष्पादनीयमत आहुः—वृत्तिकरः प्रजानामिति । यतः प्रजानां जीविकासंपादकत्वेन मुनिभिर्ब्रह्मादिभिर्वैश्चाभिषिक्त इत्यर्थः । तत्रापि हेतुमाहुः—प्रजापतिरिति । प्रजाः पातीति प्रजापतिः प्रजापालको विष्णुरतस्तत्संपादनसमर्थत्वात्तैस्तत्राभिषक्त इत्यर्थः । न केवलं पृथिवीदोहनमात्रेण प्रजावृत्तिः संपादिता, किंतु तत्समीकरणेन तत्र पुरग्रामादिनिवासविशेषकल्पनेन चापीत्याहुः—य इति । यथेन्द्रो वज्रेणाद्रीन् बिभेद तथा यः स्वशरासकोट्या स्वधनुषोऽग्रभागेनैव तत्रापि लीलया अनायासेनैवाद्रीन् भिन्दन् गां पृथिवीं समामकरोदतः सोयं ततोपि महाप्रतापवानिति शेषः, यत्तदोर्नित्यसंबन्धात् ॥ २२ ॥ ❀ ❀ इदानीं तस्य युद्धे प्रागल्भ्यातिशयं दर्शयन्ति—विस्फूर्जयन्निति । यथा यदा मृगेन्द्रः सिंहः स्वलाङ्गूलं पुच्छमुद्यम्य वने चरति तदा क्षुद्रा मृगा भयेन सर्वतो दिशं लीना भवन्ति तथा यदाऽयं स्वयमाजगवमजस्य गोश्च शृङ्गाभ्यां निर्मितमत एव शत्रूणामसह्यं धनुर्विस्फूर्जयन् टङ्कारयन् आजौ युद्धे क्ष्मां भूमिमचरत्तदा असन्तो दुष्टाः शत्रवो दिशि दिशि निलिल्युर्निलीना बभूवुरित्यन्वयः ॥ २३ ॥ ❀ ❀ यत्र सरस्वती नदी प्रादुरभावि प्रादुर्भूता तत्रैष शतमश्वमेधान् आजहार कृतवान् । तत्र चरमे अन्तिमे अश्वमेधे प्रवर्त्तमाने सति पुरन्दरः पुरन्दरनामक इन्द्रः अस्मिन्नश्वमेधे समाप्तेऽयं मम स्थानं ग्रहीष्यतीति भयात्तत्र विघ्नार्थं यस्य पृथोर्यज्ञियं हयमहारषीत् हृतवान् । एवं भये हेतुं सूचयन्तो विशिंषन्ति—शतक्रतुरिति । इन्द्रपदप्राप्तेरश्वमेधशतानुष्ठानहेतुकत्वात्स्वयं च तदनुष्ठानेन तत्प्राप्तोऽस्यापि यदि तदनुष्ठानं समाप्तं स्यात्तदायं मम स्थानं बलाद्गह्णीयादिति बिभेति स्मेति भावः ॥ २४ ॥ ❀ ❀ तस्य ज्ञानप्राप्तिप्रकारं दर्शयन्ति—एष इति । एष पृथुः स्वसद्मोपवने स्वगृहसमीपे वर्त्तमाने उपवने वाटिकायां भगवन्तं ज्ञानवैराग्यादियुक्तमेकमनुपमं सनत्कुमारं समेत्य सङ्गत्य भक्त्या तमाराध्य यतः परं ब्रह्म विदन्ति जानन्ति प्रत्यक्षीकुर्वन्ति तदमलं कुत्सितविषयाकारत्वरहितत्वाच्छुद्धं ज्ञानमलभतेत्यन्वयः ॥ २५ ॥ ❀ ❀ यद्यप्यस्य स्वयशःश्रवणेच्छा नास्ति तथापि यशसो बाहुल्येन प्रसृतत्वात्तच्छ्रवणं भविष्यत्येवेत्याहुः–तत्र तत्रेति । एष पृथुः विश्रुतविक्रमः विश्रुताः प्रसिद्धा विक्रमा यस्य सः । विश्रुतत्वे हेतुः यतः पृथुपराक्रमः पृथवो महान्तः पराक्रमा यस्य सः । इत्येवं वर्णितप्रकाराः आत्माश्रिताः स्वसंबन्धिन्यस्तास्ताः सर्वत्र प्रसिद्धाः गाथाः प्रबन्धरूपा वाचस्तत्र तत्र श्रोष्यतीत्यन्वयः ॥ २६ ॥ ❀ ❀ प्रभावातिशयं वर्णयन्त उपसंहरन्ति—दिश इति । अयं भुवः पतिः सुरासुरेन्द्रैरनुगीयमानो महानुभावो यस्य तादृशो भविता भविष्यति । एवं प्रभावगाने हेतुमाहुः—स्वतेजसेति । शल्यशब्देन बाणाग्रवर्त्तिलोहमयः कण्टक उच्यते । स्वतेजसा स्वप्रभावेण उत्पाटिता निष्कासिता दूरीकृता लोकस्य शल्यतुल्यव्यथाकर्त्तारो दुर्जना येन सः । अतस्तेन सुखिनः सन्तस्तद्यशो गास्यन्तीति भावः । शल्यनिःसारणप्रकारमाहुः—दिश इति । सर्वासां दिशां विजितत्वान्न प्रतिरुद्धं चक्रमाज्ञा यस्य सः, अतस्तच्छासनभयाद्दौर्जन्यं हित्वा सन्मार्गे प्रवृत्ता भविष्यंतीति भावः ॥ २७ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना । श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये । श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे कामनिरूपणे । विवृतः षोडशोध्यायः आविष्टगुणगोपकः ॥ ३ ॥

भाषानुवादः

ये अद्वितीय वीर और एकच्छत्र सम्राट् होकर अकेले ही उदयाचलपर्यन्त समस्त भूमण्डलकी रक्षा करेंगे तथा अपने जयशील रथपर चढ़कर धनुष हाथमें लिये सूर्यके समान सर्वत्र प्रदक्षिणा करेंगे ॥ २० ॥ ❀ ❀ उस समय जहाँ-तहाँ सभी लोकपाल और पृथ्वीपाल इन्हें भेंटें समर्पण करेंगे, उनकी स्त्रियाँ इनका गुणगान करेंगी और इन आदिराजको साक्षात् श्रीहरि ही समझेंगी ॥ २१ ॥ ❀ ❀ ये प्रजापालक राजाधिराज होकर प्रजाके जीवननिर्वाहके लिये गोरूपधारिणी पृथ्वीका दोहन करेंगे और इन्द्रके समान अपने धनुषके कोनोंसे बात-की-बातमें पर्वतोंको तोड़-फोड़कर पृथ्वीको समतल कर देंगे ॥ २२ ॥ ❀ ❀ रणभूमिमें कोई भी इनका वेग नहीं सह सकेगा। जिस समय ये जंगलमें पूँछ उठाकर विचरते हुए सिंहके समान अपने 'आजगव' धनुषका टंकार करते हुए भूमण्डलमें विचरेंगे, उस समय सभी दुष्टजन इधर-उधर छिप जायँगे ॥ २३ ॥ ❀ ❀ ये सरस्वतीके उद्गमस्थानपर सो अश्वमेध-यज्ञ करेंगे। तब अन्तिम यज्ञानुष्ठानके समय इन्द्र इनके घोड़ेको हरकर ले जायँगे ॥ २४ ॥ ❀ ❀ अपने महलके बगीचेमें इनकी एक बार भगवान् सनत्कुमारसे भेंट होगी। अकेले उनकी भक्तिपूर्वक सेवा करके ये उस निर्मल ज्ञानको प्राप्त करेंगे, जिससे परब्रह्मकी प्राप्ति होती है ॥ २५ ॥ ❀ ❀ इस प्रकार जब इनके पराक्रम जनताके सामने आ जायँगे, तब ये परम पराक्रमी महाराज जहाँ-तहाँ अपने चरित्रकी ही चर्चा सुनेंगे ॥ २६ ॥ ❀ ❀ इनकी आज्ञाका विरोध कोई भी न कर सकेगा तथा ये सारी दिशाओंको जीतकर और अपने तेजसे प्रजाके क्लेशरूप काँटेको निकालकर सम्पूर्ण भूमण्डलके शासक होंगे। उस समय देवता और असुर भी इनके विपुल प्रभावका वर्णन करेंगे ॥ २७ ॥

इति षोडशोऽध्यायः ॥ १६ ॥



# अथ सप्तदशोऽध्यायः

मैत्रेय उवाच

एवं स भगवान् वैन्यः ख्यापितो गुणकर्मभिः । छन्दयामास तान् कामैः प्रतिपूज्याभिनन्द्य च ॥ १ ॥

ब्राह्मणप्रमुखान् वर्णान् भृत्यामात्यपुरोधसः । [1]पौरान्जानपदान् श्रेणीः प्रकृतीः समपूजयत् ॥ २ ॥

विदुर उवाच

कस्माद्दधार गोरूपं धरित्री बहुरूपिणी । यां दुदोह पृथुस्तत्र को वत्सो दोहनं च किम् ॥ ३ ॥

प्रकृत्या विषमा देवी कृता तेन समा कथम् । तस्य मेध्यं हयं देवः कस्य हेतोरपाहरत् ॥ ४ ॥

सनत्कुमाराद्भगवतो ब्रह्मन् ब्रह्मविदुत्तमात् । लब्ध्वा ज्ञानं सविज्ञानं राजर्षिः कां गतिं गतः ॥ ५ ॥

यच्चान्यदपि कृष्णस्य भवान् भगवतः प्रभोः । श्रवः सुश्रवसः पुण्यं पूर्वदेहकथाश्रयम् ॥ ६ ॥

भक्ताय मेऽनुरक्ताय तव चाधोक्षजस्य च । वक्तुमर्हसि योऽदुह्यद्वैन्यरूपेण गामिमाम् ॥ ७ ॥

सूत उवाच

चोदितो विदुरेणैवं वासुदेवकथां प्रति । प्रशस्य तं प्रीतमना मैत्रेयः प्रत्यभाषत ॥ ८ ॥

अन्वयः—एवम् गुणकर्मभिः ख्यापितः सः भगवान् वैन्यः तान् कामैः प्रतिपूज्य च अभिनन्द्य छन्दयामास ॥ १ ॥ ❀ ❀ सः ब्राह्मणप्रमुखान् वर्णान् भृत्यामात्यपुरोधसः पौरान् जानपदान् श्रेणीः प्रकृतीः समपूजयत् ॥ २ ॥ ❀ ❀ पृथुः याम् दुदोह बहुरूपिणी धरित्री कस्मात् गोरूपम् दधार तत्र वत्सः कः च दोहनम् किम् ॥ ३ ॥ ❀ ❀ तेन प्रकृत्या विषमा देवी समा कथम् कृता देवः तस्य मेध्यम् हयम् कस्य हेतोः अपाहरत् ॥ ४ ॥ ❀ ❀ ब्रह्मन् राजर्षिः भगवतः ब्रह्मविदुत्तमात् सनत्कुमारात् सविज्ञानम् ज्ञानम् लब्ध्वा काम् गतिम् गतः ॥ ५ ॥ ❀ ❀ च यः वैन्यरूपेण इमाम् गाम् अदुह्यत् भगवतः प्रभोः सुश्रवसः कृष्णस्य पूर्वदेहकथाश्रयम् यत् अन्यत् अपि पुण्यम् श्रवः तत् तव च अधोक्षजस्य अनुरक्ताय भक्ताय मे वक्तुम् भवान् अर्हसि ॥ ६–७ ॥ ❀ ❀ विदुरेण वासुदेवकथां प्रति एवम् चोदितः मैत्रेयः प्रीतमनाः तम् प्रशस्य प्रत्यभाषत ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

ततः सप्तदशे लोकक्षुधाः प्रशमयन्पृथुः । ग्रस्तबीजां महीं हंतुं यत्तो भीत्या तया स्तुतः ॥ ( १ ) ॥

छंदयामास तोषितवान् ॥ १ ॥ ❀ ❀ भृत्यानमात्यान्पुरोधसः पुरोहितांश्च श्रेणीस्तैलिकतांबूलिकादीन्पौरविशेषान् प्रकृतीर्नियोगिनः ॥ २ ॥ ❀ ❀ दोहनं पात्रम् ॥ ३ ॥ ❀ ❀ मेध्यं यज्ञार्हम् ॥ ४ ॥ ❀ ❀ सविज्ञानमपरोक्षज्ञान-सहितम् ॥ ५ ॥ ❀ ❀ पूर्वदेहः पृथ्ववतारस्तत्कथाश्रयम् । श्रवो यशः । सुष्ठु श्रवो यस्य ॥ ६ ॥ ❀ ❀ अदुह्यत् दुग्धवान् ॥ ७–८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ततः यशोवर्णश्रुत्यनंतरं, यत्तः सावधानः, तया भूम्या । ( १ ) एवं पूर्वोक्तरीत्या तान्सूतादीन् ॥ १ ॥ ❀ ❀ सम-पूजयत् धन्याः स्थ भो धन्याः स्थ युष्मानहं साधु पालयानीत्येतदेव मत्कर्तृकं युष्मत्परिचरणं भूयादिति मधुरमभाषत । विजयध्वजस्तु राज्ञा समानवयसः श्रेणयस्त्वंगरक्षका इत्याह ॥ २ ॥ ❀ ❀ विदुरः सूतादिभिः सूचितं गोदोहनादिपृथुविक्रमं विस्तरतः श्रोतुं लोकोपकाराय पृच्छति कस्मादिति । तत्र पृथुदोहनावसरे ॥ ३ ॥ ❀ ❀ प्रकृत्या स्वभावतः । तेन पृथुना । देव इंद्रः ॥ ४–५ ॥ ❀ ❀ कृष्णस्यैव पूर्वदेहः पृथुरयम् अत एव श्रीगर्गमुनिना श्रीनन्दराजाय नामकरणसंस्कारावसरे उक्तम्

---

१. प्रा० पा०—पौरजा० ।

"पुरानेन व्रजपते साधवो दस्युपीडिताः । अराजके रक्ष्यमाणा जिग्युर्दस्यून्समेधिताः ।।" इत्युक्तम्, वेने विप्रहते बहवो दस्यवो जाताः पुनर्भगवता तद्देहत आविर्भूय ते मारिता इति ध्येयम् ।। ६-७ ।। ❀ ❀ एवं यथा त्वयाहं चोदितस्तथा विदुरेणेत्यर्थः ।।८-९।।

## अतोऽध्यायादारभ्य आस्कन्धसमाप्ति दीपिनी ना सं०

## श्रीमद्वीरराघवव्याख्या

एवं सूतादिभिः प्रख्यापितोरुगुणगणः पृथुः प्रतिपूजितसूतब्राह्मणभृत्यगणः क्षुत्पीडितजनैः प्राप्तशरण आत्मनिरुद्धबीजां महीं जिघांसुः पुनस्तया प्रसादितो बभूवेत्याह मुनिः ❀ षोडशेन एवमिति । भगवान् वैन्यः पृथुरेवं गुणैः कर्मभिश्चात्मीयैः प्रख्यापितः प्रसिद्धिं प्रापितस्तान् सूतादीन् कामैस्तत्तदिच्छाविषयैर्वस्त्राभरणादिभिः प्रतिपूज्य तेषां स्तुतिमभिनन्द्य च छन्दयामास तोषितवान् ।। १ ।। ❀ ❀ ब्राह्मणादीन् चतुरो वर्णान् भृत्यामात्यान् पुरोधसः पुरोहितान् श्रेणीः तैलिकताम्बूलिकादीन् पौरान् पुरवासिनः जानपदान् देशवासिनो जनान् प्रकृतीः नियोगिनः सम्यगपूजयत् ।। २ ।। ❀ ❀ एवं सूतादिस्तुतिकथनव्याजेन समासतः श्रावितपृथुचरितं मुनिं पुनस्तच्चरितशुश्रूषया क्षत्ता पृच्छतीत्याह विदुर इति । बहुरूपिणी कामरूपिणी धरित्री कस्माद्धेतोर्गोरूपं दधार, यां पृथुर्दुदोह, तत्र वत्सः कः दोहनं दोहनसाधनं पात्रम् ।। ३ ।। ❀ ❀ प्रकृत्या स्वभावेन विषमा पर्वतादिभिर्निम्नोन्नता देवी धरित्री कथं समीकृता । पृथोर्मेध्यं यज्ञार्हं हयमश्वं देव इन्द्रः कस्माद्धेतोः अपाहरत् ।। ४ ।। ❀ ❀ हे भगवन्! मैत्रेय! ब्रह्मविदां मध्ये उत्तमात् सनत्कुमारात् ब्रह्मविषयं सविज्ञानमुपासनात्मकज्ञानसहितं ज्ञानं शरणजन्यं ज्ञानं लब्ध्वा राजर्षिः पृथुः कां गतिं गतः प्राप्तः ।। ५ ।। ❀ ❀ सुश्रवसः शोभनकीर्त्तेः प्रभोर्भगवतः कृष्णस्य यः पूर्वदेहः प्रथमोऽवतारः पृथुस्तस्य या कथा तदाश्रयं तत्प्रतिपाद्यं पुण्यं शृण्वतां पुण्यसंपादकं श्रवो यशः यच्चान्यदपृष्टमपि तत्सर्वम् ।। ६ ।। ❀ ❀ तव अधोक्षजस्य च भक्ताय अनुरक्ताय मे मह्यं वक्तुमर्हसि । कोऽसावधोक्षजो यस्य भक्तायेत्युक्तं तत्राह । योऽधोऽक्षजो वैन्यरूपेण पृथुरूपेणावतीर्णः इमां गां पृथ्वीमदुह्यत् दुग्धवान् ।। ७ ।।

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अस्मिन्नध्याये सूतादिभिः श्रीहरिमहिमोपनिबद्धत्वेन पृथोर्महिम्न उक्तत्वात्तन्माहात्म्यमेवोच्यते । तत्रादौ सूतादितृप्तिकरणप्रकारमाह एवं भगवानित्यादिना । छन्दयामास तोषयामास ।। १ ।। ❀ ❀ "राज्ञा समानवयसः श्रेणयस्त्वङ्गरक्षकाः" इत्यभिधानाच्छ्रेणयोऽङ्गरक्षकाः ।। २ ।। ❀ ❀ विदुरः सूतादिभिः सूचितं गोदोहनादिपृथुविक्रमं विस्तरतः श्रोतुं लोकोपकाराय पृच्छति कस्मादिति । दोहनं पात्रद्रव्यम् ।। ३-५ ।। ❀ ❀ पूर्वदेहाः पुरातनास्तेषां कथाश्रयं सत्कथासम्बन्धं सुश्रवसो हरेः, श्रवो यशः ।। ६ ।। ❀ ❀ योऽदुह्यदिति सर्वप्राणिनां तच्छक्तिनियतत्वात्पुनर्वचनमादौ वक्तव्यार्थम् ।। ७ ।।

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अथेदृशलोकसाहाय्याय भविष्यामीति संजातसुखस्य तस्य वृत्तमाह । एवमिति ।। १-४ ।। ❀ ❀ कां गतिं ब्रह्मरूपां भगवद्रूपाम् ।। ५ ।। ❀ ❀ यच्चान्यदिति द्वयेन श्रीविदुरस्य सर्वत्राप्येतदेव हार्दं व्यक्तं भवेदित्यत्र भवानिति कचित् चित्सुखसम्मतोऽयम् । देहत्वमावेशावतारत्वं पूर्वत्वं प्राक् प्रकाशापेक्षयैव ।। ६-७ ।।

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

पृथुः सप्तदशे लोकैः क्षुधार्त्तैरन्नमर्थितः । धरां ग्रस्तसमस्तान्नां निघ्नन् भीत्या तया स्तुतः ।। ( १ ) ।।

छन्दयामास तोषितवान् ।। १ ।। ❀ ❀ श्रेणीस्तैलिकताम्बूलिकादीन् प्रकृतीर्नियोगवर्तिनः समपूजयत् धन्याः स्थ भो धन्याः स्थ, युष्मानहं साधु पालयानीत्येतदेव मत्कर्तृकं युष्मत्परिचरणं भूयादिति मधुरमभ्यभाषत ।। २-६ ।। ❀ ❀ अदुह्यतेत्यार्षमधोक् ।। ७-८ ।।

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सप्तदशे स्तावकान्सत्कृत्य लोकवृत्तिसिद्धये प्रवृत्तो भगवान् भूमिं हन्तुमुद्युक्तस्तया स्तुत इति वर्णयति एवमिति । ख्यापितः प्रकथितः संस्तुत इत्यर्थः । तान् स्तावकान् कामैर्भोगैः प्रतिपूज्य साधुवादिनो यूयमित्यादिमधुरवाक्यैरभिनन्द्य च छन्दयामास वरार्थनोदनपूर्वकेण वरदानेन तोषितवानित्यर्थः ।। १ ।। ❀ ❀ श्रेणीस्तत्तच्छिल्पवतस्तैलिकताम्बूलिकादीन् प्रकृतीर्नियोगिनः ।। २ ।। ❀ ❀ दोहनं पात्रम् ।। ३ ।। ❀ ❀ देव इन्द्रः मेध्यं यज्ञियम् ।। ४-५ ।। ❀ ❀ सुश्रवसः शोभनयशसः श्रीकृष्णस्य पूर्वदेहः पृथ्ववतारस्तत्कथाश्रयं श्रवो यशः ।। ६ ।। ❀ ❀ यः श्रीकृष्णः अदुह्यत् दुग्धवान् ।। ७ ।।

---

❀. अत्र सप्तदशाध्यायारम्भेऽपि चतुर्दशपञ्चदशयोरेकाध्यायत्वोपपादनादाह षोडशेनेति ।

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

सप्तदशे क्षुधार्त्तानां प्रजानां क्षुत्प्रशान्तये। महीं हन्तुं प्रवृत्तस्य तया स्तोत्रं निरूप्यते ॥ १ ॥

पूर्वाध्याये पृथावाविष्टस्य भगवतो गुणा निरूपिताः, अत्र तु प्राप्ताधिकारस्य पृथोः पृथिवीहननप्रवृत्तिलक्षणा प्रजाक्षुत्प्रतिक्रिया निरूप्यते। तत्र वर्णितगुणः पृथुः सर्वसत्कारं कृतवानित्याह—एवमिति द्वाभ्याम्। स पूर्वोक्तो वेनाङ्गसमुद्भूतो भगवान् भगवदवतारः पृथुर्गुणकर्मभिर्गुणकर्मवर्णनैः सूतादिभिः ख्यापितः स्तुतस्तान् सूतादीन् वचसा प्रतिनन्द्य संश्लाघ्य कामैस्तदभिलषितैर्वस्त्रालङ्कारादिभिः प्रतिपूज्य च छन्दयामास सन्तोषितवानित्यन्वयः ॥ १ ॥ ❀ ❀ तथा ब्राह्मणः प्रमुखः श्रेष्ठो येषां तांश्चतुरो वर्णान् भृत्यान् अमात्यान् पुरोधसः पुरोहितांश्च पौरान् पुरवासिनः जानपदान् बहिर्देशवासिनः श्रेणीः तैलिकताम्बूलिकादीन् पौरविशेषान् प्रकृतीः साधारणान्नियोगिनः तत्तत्कामैः समपूजयत् ॥ २ ॥ ❀ ❀ एवं प्रक्रान्तं पृथुचरित्रमेव वर्णयन्तमपि मैत्रेयं वैष्णवत्वेनाविष्टभगवच्चरित्रस्यैव मुख्यतया श्रवणादरान्मैत्रेयः कदाचित्सामान्यचरित्रमेव वदेदित्याशङ्कया मुख्यं चरित्रविशेषं सूतादिभिः सङ्क्षेपतो वर्णितमपि विस्तरशः श्रोतुकामो विदुरः पृच्छति—कस्मादिति। यां गोरूपं धृतवतीं पृथुर्दुदोह सा धरित्री पृथिवीदेवतात्वाद्बहुरूपिणी। अनेकरूपधारणे समर्थापि गोरूपमेव कस्माद्धेतोर्दधार। तत्र दोहनकार्ये वत्सः को जातः? दोहनं पात्रं च किमभूत्? ताभ्यां विना तदसंभवात् ॥ ३ ॥ ❀ ❀ किंच देवी पृथिवी प्रकृत्या स्वभावतो विषमा कुत्रचिन्निम्ना कुत्रचिदुन्नता तेन पृथुना समा कथं कृता? तस्य पृथोर्मेध्यं यज्ञार्हं हयमश्वं देव इन्द्रः कस्य हेतोः कस्मात् कारणात् अपाहरत् हृतवान् ॥ ४ ॥ ❀ ❀ किंच ब्रह्मविदुत्तमात् ब्रह्मविदां ज्ञानिनां मध्ये श्रेष्ठात् उत्तमत्वे हेतुं सूचयन्नाह—भगवतो भगवदवतारात् सनत्कुमारात् सविज्ञानमपरोक्षज्ञानसहितं साक्षात्कारपर्यन्तं ब्रह्मज्ञानं लब्ध्वा प्राप्य राजर्षिः राज्ञां मध्ये ऋषिवत्सूक्ष्मतत्त्वज्ञः पृथुः कामलौकिकीं गतिं गतः? नन्वहमेतत्कथं जानीयामित्याशङ्क्य सर्वज्ञस्य तव न किञ्चिदविदितमित्यभिप्रायेण संबोधयति—हे ब्रह्मन्निति ॥ ५ ॥ ❀ ❀ किंच यदेतन्मया पृष्टं यच्चान्यदपृष्टमपि कृष्णपूर्वदेहः पृथ्ववतारस्तत्कथाश्रयं श्रवो यशो भवेत्तन्मे मह्यं भवान् वक्तुमर्हतीत्युत्तरेणान्वयः। श्रवणेच्छायां हेतुं सूचयन्नाह—सुश्रवस इति। सुष्ठु मनसः आह्लादकं श्रवो यशो यस्य तस्य। न केवलमाह्लादजनकत्वादेव तच्छ्रवणेच्छा, किंत्वन्तःकरणशोधकत्वादपीत्यभिप्रायेणाह—पुण्यमिति। तद्यशसः कथमेवं प्रभावस्तत्राह—भगवत इति। लोकस्य श्रवणकीर्त्तनादिनान्तःकरणशुद्धिद्वारोद्धारार्थमेव भगवतस्तत्तल्लीलाकरणात्तद्यशसस्तथा प्रभाव इत्याशयः। ननु तर्ह्यन्यावतारचरित्रं विहाय कुत एतदवतारचरितश्रवण एवाग्रह इत्याशङ्क्याप्यलौकिकत्वादित्याशयेनाह—य इति। यो वैन्यरूपेण पृथुरूपेणेमां गां पृथिवीमदुह्यत्तस्य कृष्णस्येति सम्बन्धः। 'श्रद्धावांल्लभते ज्ञानं तत्परः संयतेन्द्रियः।' 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ! तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' इत्यादिप्रमाणोक्तं स्वस्य श्रवणाधिकारित्वं दर्शयति—भक्तायेति। तव गुरोश्चाधोक्षजस्य भगवतश्च भक्ताय श्रवणानुरक्ताय च यतोहं श्रवणाधिकारी ततो मह्यं वक्तुं भवानर्हतीत्यर्थः ॥ ६–७ ॥ ❀ ❀ एवं पूर्वोक्तप्रकारेण विदुरेण चोदितो मैत्रेयस्तं प्रत्यभाषत उक्तवानित्यन्वयः। कथां कथयतस्तन्मध्ये प्रेरणायां दौर्मनस्यं यद्यपि सम्भवति, तथापि तस्य तन्नाभूत्किंतु प्रत्युत प्रीतमना जातः। कुत एवमित्यपेक्षायामाह—यतो वासुदेवकथां प्रति प्रेरित इति। मैत्रेयस्यापि भगवद्भक्तत्वेन तद्यशोवर्णनस्याभिप्रेतत्वात्तत्र प्रेरणायां तस्य प्रसन्नतैव जाता, न दौर्मनस्यमिति भावः। ननु कथं तस्य प्रसन्नता ज्ञायत उत्तरदानं तु तद्विनापि यथाकथञ्चित्संभवतीत्याशङ्क्य तज्ज्ञापकमाह—प्रशस्येति। येन तस्य विदुरस्य मैत्रेयेण प्रशंसा कृता तेन तस्य प्रसन्नता ज्ञायत इति भावः। प्रशंसा तु ग्रन्थाद्बहिर्वेदितव्या ॥ ८ ॥

## भाषानुवादः

### महाराज पृथुका पृथ्वीपर कुपित होना और पृथ्वीके द्वारा उनकी स्तुति करना

श्रीमैत्रेयजी कहते हैं—इस प्रकार जब बन्दीजनने महाराज पृथुके गुण और कर्मोंका बखान करके उनकी प्रशंसा की, तब उन्होंने भी उनकी बड़ाई करके तथा उन्हें मनचाही वस्तुएँ देकर सन्तुष्ट किया ॥ १ ॥ ❀ ❀ उन्होंने ब्राह्मणादि चारों वर्णों, सेवकों, मन्त्रियों, पुरोहितों, पुरवासियों, देशवासियों, भिन्न-भिन्न व्यवसायियों तथा अन्यान्य आज्ञानुवर्तियोंका भी सत्कार किया ॥ २ ॥ ❀ ❀ विदुरजीने पूछा—ब्रह्मन्! पृथ्वी तो अनेक रूप धारण कर सकती है, उसने गौका रूप ही क्यों धारण किया? और जब महाराज पृथुने उसे दुहा तब बछड़ा कौन बना? और दुहनेका पात्र क्या हुआ? ॥ ३ ॥ ❀ ❀ पृथ्वीदेवी तो पहले स्वभावसे ही ऊँची-नीची थी, उसे उन्होंने समतल किस प्रकार किया और इन्द्र उनके यज्ञसम्बन्धी घोड़ेको क्यों हर ले गये? ॥ ४ ॥ ❀ ❀ ब्रह्मज्ञानियोंमें श्रेष्ठ भगवान् सनत्कुमारजीसे ज्ञान और विज्ञान प्राप्त करके वे राजर्षि किस गतिको प्राप्त हुए? ॥ ५ ॥ ❀ ❀ पृथुरूपसे सर्वेश्वर भगवान् श्रीकृष्णने ही अवतार ग्रहण किया था; अतः पुण्यकीर्ति श्रीहरिके उस पृथु-अवतारसे सम्बन्ध रखनेवाले जो और भी पवित्र चरित्र हों, वे सभी आप मुझसे कहिये। मैं आपका और श्रीकृष्णचन्द्रका बड़ा

अनुरक्त भक्त हूँ ॥ ६-७ ॥ ❀ ❀ श्रीसूतजी कहते हैं—जब विदुरजीने भगवान् वासुदेवकी कथा कहनेके लिये इस प्रकार प्रेरणा की, तब श्रीमैत्रेयजी प्रसन्नचित्तसे उनकी प्रशंसा करते हुए कहने लगे ॥ ८ ॥

मैत्रेय[1] उवाच

यदाभिषिक्तः पृथुरङ्ग विप्रैरामन्त्रितो जनतायाश्च पालः ।
प्रजा निरन्ने क्षितिपृष्ठ एत्य क्षुत्क्षामदेहाः पतिमभ्यवोचन् ॥ ९ ॥
वयं राजञ्जाठरेणाभितप्ता यथाग्निना कोटरस्थेन वृक्षाः ।
त्वामद्य याताः शरणं शरण्यं यः साधितो वृत्तिकरः पतिर्नः ॥ १० ॥
तन्नो भवानीहतु रातवेऽन्नं क्षुधार्दितानां नरदेवदेव ।
यावन्न नङ्क्ष्यामह उज्झितोर्जा वार्तापतिस्त्वं किल लोकपालः ॥ ११ ॥

मैत्रेय उवाच

पृथुः प्रजानां करुणं निशम्य परिदेवितम् । दीर्घं दध्यौ कुरुश्रेष्ठ निमित्तं सोऽन्वपद्यत ॥ १२ ॥
इति व्यवसितो बुद्ध्या प्रगृहीतशरासनः । सन्दधे विशिखं भूमेः क्रुद्धस्त्रिपुरहा यथा ॥ १३ ॥
प्रवेपमाना धरणी निशाम्योदायुधं च[2] तम् । गौः सत्यपाद्रवद्भीता मृगीव मृगयुद्रुता ॥ १४ ॥
तां[3]मन्वधावत्तद्वैन्यः कुपितोऽत्यरुणेक्षणः । शरं धनुषि सन्धाय यत्र यत्र पलायते ॥ १५ ॥
सा दिशो विदिशो देवी रोदसी चान्तरं तयोः । धावन्ती तत्र तत्रैनं ददर्शानूद्यतायुधम् ॥ १६ ॥
लोके नाविन्दत त्राणं वैन्यान्मृत्योरिव प्रजाः । त्रस्ता तदा निववृते हृदयेन विदूयता ॥ १७ ॥
उवाच च महाभागं धर्मज्ञापन्नवत्सल । त्राहि मामपि भूतानां पालनेऽवस्थितो भवान् ॥ १८ ॥
स त्वं जिघांससे कस्माद्दीनामकृतकिल्बिषाम् । अहनिष्यत्कथं योषां धर्मज्ञ इति यो मतः ॥ १९ ॥
प्रहरन्ति न वै स्त्रीषु कृतागःस्वपि जन्तवः । किमुत त्वद्विधा राजन् करुणा दीनवत्सलाः ॥ २० ॥

अन्वयः—अङ्ग यदा विप्रैः पृथुः अभिषिक्तः च जनतायाः पालः आमन्त्रितः क्षितिपृष्ठे निरन्ने क्षुत्क्षामदेहाः प्रजाः पतिम् एत्य अभ्यवोचन् ॥ ९ ॥ ❀ ❀ राजन् यथा वृक्षाः कोटरस्थेन अग्निना जाठरेण अभितप्ताः वयम् यः नः वृत्तिकरः पतिः साधितः शरण्यम् त्वाम् अद्य शरणम् याताः ॥ १० ॥ ❀ ❀ नरदेवदेव त्वम् लोकपालः वार्तापतिः किल तत् यावत् उज्झितोर्जाः न नंक्ष्यामहे भवान् क्षुधार्दितानाम् नः अन्नम् रातवे ईहतु ॥ ११ ॥ ❀ ❀ कुरुश्रेष्ठ पृथुः प्रजानाम् करुणम् परिदेवितम् निशम्य दीर्घम् दध्यौ सः निमित्तम् अन्वपद्यत ॥ १२ ॥ ❀ ❀ बुद्ध्या इति व्यवसितः प्रगृहीतशरासनः यथा क्रुद्धः त्रिपुरहा भूमेः विशिखम् संदधे ॥ १३ ॥ ❀ ❀ उदायुधम् तम् निशाम्य प्रवेपमाना धरणी गौः सती मृगयुद्रुता मृगी इव भीता अपाद्रवत् ॥ १४ ॥ ❀ ❀ तत् कुपितः अत्यरुणेक्षणः वैन्यः धनुषि शरम् संधाय यत्र यत्र सा पलायते ताम् अन्वधावत् ॥ १५ ॥ ❀ ❀ दिशः विदिशः रोदसी च तयोः अन्तरम् धावन्ती सा देवी तत्र तत्र अनु उद्यतायुधम् एनम् ददर्श ॥ १६ ॥ ❀ ❀ सा लोके वैन्यात् मृत्योः प्रजाः इव त्राणम् न अविंदत तदा त्रस्ता विदूयता हृदयेन निववृते ॥ १७ ॥ ❀ ❀ च महाभागम् उवाच धर्मज्ञ आपन्नवत्सल भूतानाम् पालने अवस्थितः भवान् माम् अपि त्राहि ॥ १८ ॥ ❀ ❀ त्वम् दीनाम् अकृतकिल्बिषाम् कस्मात् जिघांससे यः धर्मज्ञः इति मतः सः योषाम् कथम् अहनिष्यत् ॥ १९ ॥ ❀ ❀ राजन् जन्तवः कृतागःसु अपि स्त्रीषु वै न प्रहरन्ति उत करुणाः दीनवत्सलाः त्वद्विधाः किम् ॥ २० ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

जनतायास्त्वं पाल इत्यामंत्रितो नियुक्तः तदा निरन्ने क्षितितले सति क्षुधा क्षामाः क्षीणा देहा यासां ताः प्रजा एत्य पतिं पृथुमब्रुवन् ॥ ९ ॥ ❀ ❀ जाठरेणाग्निनाऽभितप्ताः । यः साधितो विप्रैर्मंथनेन संपादितस्तं त्वां शरणं याताः ॥ १० ॥ ❀ ❀

१. प्राचीने पाठे 'मैत्रेय उवाच' नास्ति । २. प्रा० पा०—पृथुम् । ३. प्रा० पा०—तमन्वधावद्वैन्यः ।

तत्तस्मान्नोऽस्माकमन्नं रातवे रातुं दातुमीहतु ईहतां यत्नं करोतु। उज्झितोर्जास्त्यक्तान्नाः सत्यः वार्ताया जीविकायाः पतिः ॥ ११ ॥ ❀ ❀ परिदेवितं विलापम्। निमित्तं हेतुमन्वपद्यत ज्ञातवान् ॥ १२ ॥ ❀ ❀ पृथिव्या ओषधिबीजानि ग्रस्तानीति व्यवसितो निश्चितवान्सन् ॥ १३ ॥ ❀ ❀ मृगयुना द्रुतानुगता मृगीव ॥ १४-१५ ॥ ❀ ❀ रोदसी द्यावापृथिव्यौ तयोरंतरमंतरिक्षं च अनु पृष्ठतः उद्यतमायुधं येन तम् ॥ १६-१८ ॥ ❀ ❀ यो धर्मज्ञ इति मतः स भवान् योषां मां कथमहनिष्यद्धनिष्यति ॥ १९-२० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

कोटरं वृक्षविवरम्। शरण्यं शरणागतपालकम् ॥ १० ॥ ❀ ❀ यतस्त्वं नो वृत्तिकरस्ततो हेतोः। रा-दानेऽतस्तु-प्रत्ययः। चतुर्थी तुमुन्नर्थे छांदसी। वस्तुतस्तादर्थ्ये एव सा। "ऊर्जः कार्तिक उत्साहबलान्नप्राणनेषु च" इति कोशात्। वार्त्ताया वृत्तेः पतिः कर्त्ता "वार्त्ता कृष्याद्युदंतयोः" इति। ननु वृष्टिहेतुककृष्याद्युत्पादकत्वेनेन्द्र एव वार्त्तापतिर्नाहमिति चेदाहुत्वमिति। किलाऽद्धेताश्च ये लोका अर्थात्सात्त्विका देवास्तेषां पालः यज्ञादिना पालको वृष्टिहेतुकयज्ञकर्तृत्वेन तवैवेन्द्रकर्मवृष्टिहेतुत्वमपि। इंद्रस्तु-त्वद्दत्तहविर्द्वारा वृष्टिहेतुत्वान्न मुख्यो वृत्तिकर इत्यर्थः ॥ ११ ॥ ❀ ❀ हेतुं भूग्रस्तबीजत्वलक्षणम् ॥ १२ ॥ ❀ ❀ ममाभिषेके जातेऽपि यदियं बीजानि गोपायति तदस्यां चतुर्थमुपायमेव करवाणीति व्यवसितं निश्चयो यस्येति वा। भूमेरिति द्वितीयार्थे षष्ठी भूमिं प्रति ॥ १३ ॥ ❀ ❀ निशाम्य दृष्ट्वा। तं पृथुम्। स्वीयमार्त्तिकबृहद्देहात्स्वल्पं गोरूपं कृत्वा पृथिव्यधिष्ठात्री देवतैवापाद्रवन्न तु सामस्त्येन मार्त्तिकरूपेण, देवतां प्रत्येव तेन बाणसंधानं कृतं न तु जाड्यावच्छिन्नभूमंडलं प्रतीति ध्येयम्। मृगयुना व्याधेन ॥ १४ ॥ ❀ ❀ तत्तदा स चासौ वैन्यस्तद्वैन्य इति वा ॥ १५ ॥ ❀ ❀ एनं पृथुम् ॥ १६ ॥ ❀ ❀ जीवन्भद्राणि पश्यतीति भावेन निवृत्ता। विदूयता उपतापवता ॥ १७ ॥ ❀ ❀ धर्मज्ञापन्नवत्सलेति संबुद्धिद्वयेन मां स्त्रियं तत्रापि गोरूपां हंतुं नार्हसि धर्मज्ञत्वादापन्नवत्सलत्वाच्चेत्याह—भूतानामिति। श्लेषेणाहमपि पंचभूतांतर्गतत्वेनाभूतमस्मि सर्वभूतधर्माणां मयि विद्यमानत्वेन चाहमेव सर्वभूतान्यप्यस्मीति 'अतो विशेषो भावानां भूमावेवोपलक्ष्यते' इत्युक्तेः ॥ १८-१९ ॥ ❀ ❀ जंतवोऽतीव मूढाः ॥ २० ॥

### श्रीमद्वीरराघवव्याख्या

एवमापृष्टो मुनिर्विस्तरेण पृथुचरितं वक्तुमुपचक्रमे इत्याह। सूतः चोदित इति। अस्य शुकवचनत्वं तु न्याय्यं विदुरेणैवं वासुदेवस्य पृथोः कथां प्रति चोदितो मैत्रेयः प्रीतमनाः सन् तं विदुरं प्रशस्य प्रस्तूय अभाषत ॥ ८ ॥ ❀ ❀ अङ्ग हे विदुर ! विप्रैर्यदा पृथुरभिषिक्तः जनतायाः जनसमूहस्य "ग्रामजनबन्धुसहायेभ्यस्तल्" इति समूहार्थे तल्प्रत्ययः, पाल इत्यामन्त्रितो नियुक्तश्च तदा क्षितिपृष्ठे भूमण्डले निरन्ने अन्नरहिते सति क्षुधा क्षामाः क्षीणा देहा यासां ताः प्रजा एत्य समीपमागत्य पतिं पृथुमब्रुवन् ॥ ९ ॥ ❀ ❀ हे राजन् ! यथा कोटरगतेन वह्निना वृक्षा अभितस्तप्ता भवन्ति तथा जाठरेणाग्निना अभितप्ताः सन्तः यो भवान्नोऽस्माकं वृत्तिकरः पतिः विप्रैः साधितः मथनेन सम्पादितस्तं शरण्यं त्वामधुना शरणं याताः गताः ॥ १० ॥ ❀ ❀ तस्मात् हे नरदेव ! उज्झितोर्जास्त्यक्तान्ना वयं यावन्न नंक्ष्यामहे न नाशं यास्यामस्तावदेव क्षुधार्दितानां नोऽस्माकमन्नं रातवे दातुं भवानीहतु यत्नं करोतु। यतस्त्वं वार्ताया जीविकायाः पतिः रक्षिता लोकानां पालकश्च। प्रजानां करुणं परिदेवितं विलापं निशम्य श्रुत्वा पृथुः दीर्घं चिरं दध्यौ चिन्तितवान् हे कुरुश्रेष्ठ ! सः पृथुः निमित्तं लोकस्य निरन्नत्वे निमित्तं हेतुमन्वपद्यत ज्ञातवान् ॥ ११-१२ ॥ ❀ ❀ इतीति। पृथिव्या ओषधिबीजानि ग्रस्तानीति व्यवसितः निश्चिन्वानः प्रगृहीतं शरासनं धनुर्येन सः यथा त्रिपुरहन्ता रुद्रः तथा भूमेर्हेतोः क्रुद्धः विशिखं बाणं सन्दधे ॥ १३ ॥ ❀ ❀ उदायुधं शरासने संहितशरं पृथुं निशम्य दृष्ट्वा धरणी प्रवेपमाना नितरां भयात्कम्पमाना गौः सती गोरूपं धृतवती मृगयुना व्याधेन क्रुद्धेन द्रुता अनुद्रुता भीता मृगीव हरिणीव अपाद्रवत् पलायितवती ॥ १४ ॥ ❀ ❀ तत्र तत्र तामेव धृतगोरूपां धरिणीमनुसृत्य गतवान् ॥ १५ ॥ ❀ ❀ सा देवी धरित्री दिशो विदिशः रोदसी द्यावापृथिव्यौ तयोरन्तरमन्तरिक्षं च धावन्ती सती तत्र दिग्विदिगादिषु एनं पृथुमनुप्रविष्टमुद्यतमुद्धृतमायुधं येन तं ददर्श ॥ १६ ॥ ❀ ❀ मृत्योर्भीताः प्रजा इव वैन्यात्पृथोस्त्रस्ता सती त्राणं रक्षणोपायं लोके नाविन्दत नालभत, किन्तु तदा विदूयता नितरामुपतप्तेन हृदयेन निववृते न्यवर्तत ॥ १७ ॥ ❀ ❀ उवाचं च उक्तमेवाह। हे महाभाग ! महाबुद्धिमन् परेङ्गितज्ञेत्यर्थः, धर्मज्ञ स्त्रीबधानर्हत्वरूपधर्मज्ञ आपन्नवत्सल आपन्नेषु आपदं प्राप्तेषु वत्सलत्वविशिष्टभूतानां पालने अवस्थितो भवान्, अतो भूतेष्वन्तर्भूतां मामपि त्राहि ॥ १८ ॥ ❀ ❀ स त्वं भूतपालनाधिकृतः त्वम् अकृतकिल्बिषां निरपराधां दीनां मां कथं जिघांससि हन्तुमिच्छसि। अनेन स्वस्यावध्यत्वमुक्तं, हन्तृत्वं तवानुचितमित्याह अहनिष्यदिति। अतो न पौनरुक्त्यं, धर्मज्ञ इति मतः ज्ञातो यो भवान् योषां मां कथमहनिष्यत् हनिष्यति ॥ १९ ॥ ❀ ❀ हे राजन् ! सामान्यजना अपि कृतागःस्वपि कृतापराधास्वपि स्त्रीषु न वै प्रहरन्ति. किमुत दीनवत्सलाः करुणास्त्वादृशा न प्रहरन्तीति ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तत्र शुकोऽपि कथाप्रसङ्गं सन्दधातीत्याह चोदित इति। त्वयाहं यथा चोदित एवं विदुरेणेति ॥ ८ ॥ ❀ ❀ तत्र पूर्वोत्तरकथाविच्छेदपरिहारायादित एव मैत्रेयो वक्तीत्याह यदेति। क्षितिपृष्ठे भूगोलके निरन्ने भोजनपदार्थरहिते सति ॥ ९ ॥ ❀ ❀ निरन्न इत्यनेन दुःखनिमित्तमिति ज्ञातं तत्कीदृशमत्राह वयमिति। जाठरेण जठरसम्बन्धिनाग्निकोटरं वृक्षविवरं युष्माकमीदृशाग्निपरिहाराय अन्यशरणप्राप्तिः किन्न स्यादत्राह यः शाधीति। यस्त्वं नोऽस्माकं वृत्तिकरः पतिर्यस्मात्तस्मान्नोऽस्माञ्छाधि अनुशिक्षस्वेयं बुद्धिरिति ॥ १० ॥ ❀ ❀ वृत्तिकर इत्यनेन ज्ञाताभिप्रायस्यापि राज्ञः स्वाभिप्रायमुद्गलयन्तीत्याह तन्न इति। रातवे मरणाय उज्झितान्नास्त्यक्तान्नाः पूर्वमेवेति शेषः, वार्तापतिः जनानामन्नं दत्त्वा वा रक्षक इत्यर्थः ॥ ११ ॥ ❀ ❀ राज्ञो राजधनमदोत्सिक्तत्वसम्भवेन किमुत्तरं कार्यमभूत्तत्राह पृथुरिति। करुणं दयाजनकं निमित्तमन्नाभावस्य कारणमन्वपद्यत ज्ञातवान् ॥ १२ ॥ ❀ ❀ ज्ञात्वाप्यशक्यमिति मत्वा साधयिष्याम इति गुडजिह्विकावाणीमुक्त्वा किङ्कार्यान्तरे तेनास्थायीति तत्राह इतीति। विशिखं शरं त्रिपुरहा हरः ॥ १३ ॥ ❀ ❀ तत्र भूम्या किमकारीति तत्राह प्रवेपमानेति। वेपृ-कम्पन इति धातुः, गौः सती गोरूपा मृगयोर्व्याधात् ॥ १४ ॥ ❀ ❀ अत्र पृथुना पलायन्त्याः स्त्रियाः किमिति निवृत्तं किन्नेत्याह तामेवेति। अन्वव्रजत् पृष्ठतो गतोऽभूत् सारङ्ग इव कार्यसारग्राहित्वात् पृष्ठतोऽयासीदेव, न बाणं मुक्त्वावधीदित्याशयेनाह। शरमिति ॥ १५–१६ ॥ ❀ ❀ राजरूपिणो हरेः सन्निधानविशेषवित्त्वादुत्तरकार्यस्यापि स्वाभिप्रेतत्वान्नेन्द्राद्यन्यतमोऽपि तामत्रायतेत्याह लोके नेति। वैन्यादन्यस्माज्जीवन् भद्राणि पश्यतीति बुद्ध्यैव हरेः सर्वप्राणिप्रेरकत्वेन तच्छक्तिनियतत्वाच्च भूमेरावृत्तिमाह। त्रस्तेति ॥ १७ ॥ ❀ ❀ अत्र वचनमेवानुसर्तव्यं नान्यदिति भाववती वक्ति। उवाचेति ॥ १८ ॥ ❀ ❀ रक्षायां नियुक्तस्य तवापराधमन्तरेणाभिहननं न युक्तमित्याह स त्वमिति। एवमपि मां हनिष्यसि चेत्तव धर्मज्ञत्वमपहस्तितं स्यादित्याशयेनाह। अहनिष्यदिति। यो भवान् धर्मज्ञ इति मतोऽभविष्यत्तर्हि कथं योषां माहनिष्यदित्यन्वयः ॥ १९ ॥ ❀ ❀ बालिशा अपि जन्तवः स्त्रीवधं न कुर्वन्ति किं पुनर्भवादृशा इत्याह। प्रहरन्तीति ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

निमित्तं वक्ष्यमाणानुसारेण पृथिव्या ग्रस्तबीजत्वम् ॥ १२ ॥ ❀ ❀ इति वक्ष्यमाणतत्कर्त्तव्यव्यवसितो निश्चितवान्। ममाभिषेके संजातेऽपि बीजानि गोपायतीति क्रुद्धः ॥ १३–१४ ॥ ❀ ❀ तदिति तत्र तत्रेत्यर्थः। तामेवान्वद्रवदिति पाठः क्वचित् ॥ १५–१९ ॥ ❀ ❀ जन्तवः साधारणजन्तुतुल्या मूढा अपि मनुष्या इत्यर्थः ॥ २० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

जनतायास्त्वं पाल इत्यामन्त्रितो नियुक्तश्च तदा ॥ ९ ॥ ❀ ❀ यस्त्वं साधितः विप्रैर्मन्थनेन सम्पादितः ॥ १० ॥ ❀ ❀ तत्तस्मान्नोऽस्माकमसम्भ्यमन्नं रातवे रातुं दातुमीहतु ईहतां यत्नं करोतु। अत्र मा विलम्ब्यतामित्याहुः यावदिति। उज्झितोर्जास्त्यक्तान्नाः सत्यः। वार्त्तापतिर्जीविकाकर्त्ता ॥ ११ ॥ ❀ ❀ निमित्तं हेतुं पृथिव्यैव ओषधिबीजानि ग्रस्तानीति अन्वपद्यत ज्ञातवान् ॥ १२ ॥ ❀ ❀ ममाभिषेके जातेऽपि यदीयं बीजानि गोपायति तदस्यां चतुर्थमुपायमेव करवाणीति व्यवसितं निश्चयो यस्य सः। भूमेर्भूमिं प्रति ॥ १३ ॥ ❀ ❀ मृगयुणा द्रुता अनुगता मृगीव ॥ १४ ॥ ❀ ❀ तत्तदा ॥ १५ ॥ ❀ ❀ रोदसी द्यावापृथिव्यौ तयोरन्तरमन्तरीक्षमनु स्वपृष्ठदेशे उद्यतायुधमेनं पृथुं ददर्श ॥ १६ ॥ ❀ ❀ निववृते पृथोरभिमुखी बभूव ॥ १७–१८ ॥ ❀ ❀ अहनिष्यत् हनिष्यति ॥ १९–२० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

प्रशस्याभिनन्द्य ॥ ८ ॥ ❀ ❀ हे अङ्ग ! यदा विप्रैः पृथुरभिषिक्तः जनतायाः जनसमूहस्य त्वं पाल इत्यामन्त्रितो नियुक्तश्च तदा निरन्ने क्षितिपृष्ठे क्षुत्क्षामाः क्षुधा क्षीणाः देहा यासां ताः प्रजा एत्य निकटमागत्य पतिं पृथुम् अभ्यवोचन् अब्रुवन् ॥ ९ ॥ ❀ ❀ जाठरेण औदर्य्येण यः साधितः अस्मत्पालनाय मुनिभिर्मन्थनेन संपादितः अतस्तं त्वां शरणं रक्षितारं याताः प्राप्ताः ॥ १० ॥ ❀ ❀ तत्तस्मात् लोकपालस्त्वं वार्तापतिः जीविकाप्रदः भवान् नोऽस्माकमन्नं रातवे दानाय इह यत्नं करोतु, यावद्वयम् उज्झितोर्जास्त्यक्तान्नाः सत्यो न नङ्क्ष्यामहे ॥ ११ ॥ ❀ ❀ करुणं परिदेवितं विलापं निशम्य श्रुत्वा दीर्घं चिरं परिदध्यौ, तदनन्तरं निमित्तं निरन्नत्वे कारणमन्वपद्यत ज्ञातवान् ॥ १२ ॥ ❀ ❀ ओषधिबीजानि भूम्या ग्रस्तानीति बुद्ध्या व्यवसितो निश्चिन्वानः यथा त्रिपुरस्य हेतोः क्रुद्धस्तद्वत् भूमेर्हेतोः क्रुद्धः विशिखं संदधे ॥ १३ ॥ ❀ ❀ मृगयुद्रुता व्याधानुगता ॥ १४–१५ ॥ ❀ ❀ सा गोरूपिणी रोदसी द्यावापृथिव्यौ अन्तरमन्तरीक्षम् अनु अनुलग्नम्

॥ १६-१७ ॥ ❀ ❀ आपन्नवत्सल ! प्रपन्नपाल ! ॥ १८ ॥ ❀ ❀ अकृतकिल्बिषां तत्रापि दीनां त्वं कथं जिघांससे, किञ्च यो धर्मज्ञ इति मतः स भवान् योषां मां कथमहनिष्यत् हनिष्यति ॥ १९-२० ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

भाषणमाह—यदेति । यथा विदुरेण स्वस्मिंस्तद्वक्तृत्वमुक्तं तथा मैत्रेयोपि तं स्वकीयत्वेनाङ्गीकुर्वन् कथामध्ये प्रश्नकरणेनास्य मनसि संकोचो माभूदित्यभिप्रेत्य संबोधयति—हे अङ्ग इति । भगवद्भक्तत्वेनास्मदङ्गतुल्यस्त्वमतस्त्वत्पृष्टं विस्तरेण कथयामि सावधानतया श्रृण्विति भावः । यदा पृथुर्विप्रैः राज्येऽभिषिक्तस्त्वं जनताया जनसमूहस्य पालः पालक इत्यामन्त्रितो नियुक्तश्च तदा क्षितिपृष्ठे भूतले निरन्ने अन्नरहिते सति क्षुधा क्षामाः क्षीणा देहा यासां ताः प्रजाः पतिं पृथुमेत्य आगत्यावोचन्नब्रुवन् ॥ ९ ॥ ❀ ❀ प्रजावाक्यानि दर्शयति—वयमिति द्वाभ्याम् । हे राजन् ! यथा कोटरस्थेनाग्निना वृक्षास्तप्यन्ते तथा वयं जाठरेणाग्निनाभितप्तास्तच्छामकस्यान्नादेरभावात् । अतो यस्त्वं नोऽस्माकं वृत्तिकरः जीविकाप्रदः पतिः सर्वतश्चोरादिभ्यः पालकश्च मुनिभिः साधितो वेनाङ्गमन्थनेन संपादितस्तं त्वां शरण्यं शरणार्हं शरणं यावा आगताः स्म इत्यन्वयः ॥ १० ॥ ❀ ❀ यस्मादेवं तस्मान्नोऽस्माकं क्षुधार्दितानां पीडितानामन्नं रातवे रातुं दातुं भवानीहतु ईहतां यत्नं विधत्ताम् । तदपि शीघ्रमेवेत्याहुः—यावदिति । उज्झितोर्जाः त्यक्तान्नाः सत्यो वयं यावन्न नङ्क्ष्यामहे ततः पूर्वमेव मरणानन्तरं तत्प्रयोजनाभावात् । क्षुधाकुलत्वेनोक्तमपि हेतुं पुनराहुः—वार्तेति । यतः किल निश्चयेन त्वमेव वार्त्तायाः जीविकायाः पतिः संपादकः लोकपालः सर्वतो रक्षकश्च । एवं निश्चयेपि हेतुं सूचयन्त्यः संबोधयन्ति—हे नरदेवदेव इति । नरदेवा राजानस्तेषामपि त्वं देवः पूज्यः । अतो न त्वत्तः कश्चिदधिकोऽस्ति, योऽस्माकं दुःखं निराकुर्यादिति भावः ॥ ११ ॥ ❀ ❀ पृथुः प्रजानां करुणं दैन्यं निशम्य दृष्ट्वा परिदेवितं विलापं च श्रुत्वा कथमेवं भूतलं निरन्नमभूदिति दीर्घं चिरं दध्यौ चिन्तयामास । हे कुरुश्रेष्ठ इति संबोधयन् प्रजानां दैन्यं निरीक्ष्य राज्ञां चिन्ता भवत्येवेति कुरुकुलोत्पन्नस्य तव विदितमेवेति सूचयति । तदा च स पृथुर्निर्मितं भूतलनिरन्नत्वस्य कारणं पृथिवीकृतसर्वौषधिबीजग्रासलक्षणमन्वपद्यत ज्ञातवान् ॥ १२ ॥ ❀ ❀ ज्ञात्वा च देवत्वेन स्त्रीत्वेन सर्वोपजीव्यत्वेन च भुवो मारणस्यानुचितत्वेपि भयं तु प्रदर्शनीयमेव । भयेन गोरूपधारणे सर्वं कार्यं सेत्स्यतीति बुद्ध्या व्यवसितः कृतनिश्चयः प्रगृहीतं शरासनं धनुर्येन सः क्रुद्धः बहिः प्रकटितक्रोधः सन् भूमिं हतुं धनुषि विशिखं बाणं संदधे योजितवान् । तत्र दृष्टान्तमाह—त्रिपुरहा यथेति । त्रिपुरहा रुद्रो यथा क्रुद्धस्त्रिपुरहननार्थं विशिखसन्धानं कृतवांस्तथेत्यर्थः ॥ १३ ॥ ❀ ❀ तदा च उद्यतमायुधं येन स उदायुधस्तं तथाभूतं राजानं निशाम्य दृष्ट्वा धरणी भीता अत एव प्रवेपमाना कम्पितगात्रा गौः सत्यपाद्रवत् पलायत । तत्र दृष्टान्तः—मृगयुना लुब्धकेन द्रुता अनुगता मृगीवेति । अनेन सर्वकामपूरकभगवदिच्छया प्रेरितोयं धर्मात्मा गोरूपां मां न हनिष्यतीत्यभिप्रायेण बहुरूपिण्यपि गोरूपा जातेति सूचितम् ॥ १४ ॥ ❀ ❀ तत् तदा यत्र यत्र भयेन भूमिः पलायते स्म तत्र तत्र वैन्यः पृथुरपि धनुषि शरं संधाय संयोज्य तामन्वधावदित्यन्वयः । अनुधावने हेतुमाह—यतः कुपित इति । अत एवातिअरुणे ईक्षणे नेत्रे यस्य स तथा ॥ १५ ॥ ❀ ❀ सा च देवी भूमिः पूर्वादिचतस्रो दिशो विदिशः आग्नेय्यादिचतस्रो रोदसी द्यावापृथिव्यौ तयोरन्तरमन्तरिक्षं च धावन्ती तत्र तत्र उद्यतमायुधं बाणयुक्तं धनुर्येन तमेनं पृथुमनुप्रक्षतो लग्नं ददर्शेत्यन्वयः । देवीत्यनेन सर्वत्र गमने सामर्थ्यं वेगातिशयं च सूचयति ॥ १६ ॥ ❀ ❀ एवं पलायमाना भूमिर्यदा वैन्यात् सकाशात् त्राणं रक्षणं लोके कुत्रापि नाविन्दत नालभत तदा विदूयता कम्पमानेन हृदयेनोपलक्षिता कम्पमानहृदया निवृत्ते पलायनान्निवृत्ता जातेत्यन्वयः । रक्षणालाभे दृष्टान्तमाह—मृत्योरिव प्रजा इति । यथा मृत्योः सकाशाद्भीताः पलायमानाः प्रजाः कुत्रापि रक्षणं न लभन्ते तद्वदित्यर्थः ॥ १७ ॥ ❀ ❀ यर्हि पलायनान्निवृत्ता तर्हि कथमुर्वरितेति वीक्षायां तत्प्रार्थनयेत्याह—उवाचेति । महान् भागो भूतानां यस्मात्स महाभागः प्रार्थनार्हः पृथुस्तमुवाच च प्रार्थितवती चेत्यन्वयः । प्रार्थनामेव दर्शयति—धर्मज्ञेत्यादिपादोनचतुर्भिः । हे धर्मज्ञ ! हे आपन्नवत्सल ! यतो भवान् सर्वेषां भूतानां पालनेऽवस्थितोऽतो मामपि त्राहि पालयेत्यन्वयः । आपन्नेषु आपदं गतेषु वत्सा कृपास्यास्तीत्यापन्नवत्सलस्तत्संबोधनेन तत्कृपालुत्वमेव भूतपालने हेतुर्नान्यत्तेभ्यः किञ्चित्प्रयोजनमस्तीति सूचितम् । तत्रैव हेत्वन्तरं हे धर्मज्ञ इति । यतो भूतपालनस्य धर्मत्वं जानातीत्यर्थः ॥ १८ ॥ ❀ ❀ एवंभूतस्य तव मम हननं न युक्तमित्याह—स त्वमिति त्रिभिः । य आपन्नवत्सलः स त्वं मां दीनामकृतकिल्बिषां निरपराधां कस्माद्धेतोर्जिघांससे हन्तुमिच्छसि ? । यो भवान् धर्मज्ञ इति सर्वेषां संमतः स मां योषां स्त्रियं कथमहनिष्यत् हनिष्यति ? ॥ १९ ॥ ❀ ❀ वै इत्यवधारणे । कृतागस्स्वपि कृतापराधास्वपि स्त्रीषु जन्तवः साधारणा अपि प्राणिनो नैव प्रहरन्ति प्रहारं नैव कुर्वन्ति, त्वद्विधाः करुणाः कृपालवो निरपराधासु स्त्रीषु न प्रहरन्तीति किमुत किं वक्तव्यमित्यन्वयः । करुणत्वस्य विवरणं दीनवत्सला इति । त्वां विना ममाप्यन्यो रक्षको नास्त्येवाहमपि त्वया रक्षणीयैवेति सूचयन्ती सम्बोधयति—हे राजन्निति ॥ २० ॥

### भाषानुवादः

श्रीमैत्रेयजीने कहा—विदुरजी ! ब्राह्मणोंने महाराज पृथुका राज्याभिषेक करके उन्हें प्रजाका रक्षक उद्घोषित किया। इन दिनों पृथ्वी अन्नहीन हो गयी थी, इसलिये भूखके कारण प्रजाजनोंके शरीर सूखकर काँटे हो गये थे। उन्होंने अपने स्वामी

पृथुके पास आकर कहा ॥ ९ ॥ ❀ ❀ 'राजन्! जिस प्रकार कोटरमें सुलगती हुई आगसे पेड़ जल जाता है, उसी प्रकार हम पेटकी भीषण ज्वाला से जले जा रहे हैं। आप शरणागतोंकी रक्षा करनेवाले हैं और हमारे अन्नदाता प्रभु बनाये गये हैं; इसलिये हम आपकी शरणमें आये हैं ॥ १० ॥ ❀ ❀ आप समस्त लोकोंकी रक्षा करनेवाले हैं, आप ही हमारी जीविकाके भी स्वामी हैं। अतः राजराजेश्वर! आप हम क्षुधापीड़ितोंको शीघ्र ही अन्न देनेका प्रबन्ध कीजिये; ऐसा न हो कि अन्न मिलनेसे पहले ही हमारा अन्त हो जाय' ॥ ११ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—कुरुवर! प्रजाका करुण-क्रन्दन सुनकर महाराज पृथु बहुत देरतक विचार करते रहे। अन्तमें उन्हें अन्नाभावका कारण मालूम हो गया ॥ १२ ॥ ❀ ❀ 'पृथ्वीने स्वयं ही अन्न एवं औषधादिको अपने भीतर छिपा लिया है' अपनी बुद्धिसे इस बातका निश्चय करके उन्होंने अपना धनुष उठाया और त्रिपुर-विनाशक भगवान् शङ्करके समान अत्यन्त क्रोधित होकर पृथ्वीको लक्ष्य बनाकर बाण चढ़ाया ॥ १३ ॥ ❀ ❀ उन्हें शस्त्र उठाये देख पृथ्वी काँप उठी और जिस प्रकार व्याधके पीछा करनेपर हरिणी भागती है, उसी प्रकार वह डरकर गौका रूप धारण करके भागने लगी ॥ १४ ॥ ❀ ❀ यह देखकर महाराज पृथुकी आँखें क्रोधसे लाल हो गयीं। वे जहाँ-जहाँ पृथ्वी गयी, वहाँ-वहाँ धनुषपर बाण चढ़ाये उसके पीछे लगे रहे ॥ १५ ॥ ❀ ❀ दिशा, विदिशा, स्वर्ग, पृथ्वी और अन्तरिक्षमें जहाँ-जहाँ भी वह दौड़कर जाती, वहीं उसे महाराज पृथु हथियार उठाये उसके पीछे दिखायी देते ॥ १६ ॥ ❀ ❀ जिस प्रकार मनुष्यको मृत्युसे कोई नहीं बचा सकता, उसी प्रकार उसे त्रिलोकीमें वेनपुत्र पृथुसे बचानेवाला कोई भी न मिला। तब वह अत्यन्त भयभीत होकर दुःखित चित्तसे पीछेकी ओर लौटी ॥ १७ ॥ ❀ ❀ और महाभाग पृथुजीसे कहने लगी—'धर्मके तत्त्वको जाननेवाले शरणागतवत्सल राजन्! आप तो सभी प्राणियोंकी रक्षा करनेमें तत्पर हैं, आप मेरी भी रक्षा कीजिये ॥ १८ ॥ ❀ ❀ मैं अत्यन्त दीन और निरपराध हूँ, आप मुझे क्यों मारना चाहते हैं? इसके सिवा तो आप धर्मज्ञ माने जाते हैं; फिर मुझ स्त्रीका वध आप कैसे कर सकेंगे? ॥ १९ ॥ ❀ ❀ स्त्रियाँ कोई अपराध करें, तो साधारण जीव भी उनपर हाथ नहीं उठाते; फिर आप-जैसे करुणामय और दीनवत्सल तो ऐसा कर ही कैसे सकते हैं? ॥ २० ॥

मां विपाट्याजरां नावं यत्र विश्वं प्रतिष्ठितम्। आत्मानं च प्रजाश्चेमाः कथ[1]मम्भसि धास्यसि ॥ २१ ॥

पृथुरुवाच

वसुधे त्वां वधिष्यामि मच्छासनपराङ्मुखीम्। भागं बर्हिषि या वृङ्क्ते न तनोति च नो वसु ॥ २२ ॥
यवसं जग्ध्यनुदिनं नैव दोग्ध्यौधसं पयः। तस्यामेवं हि दुष्टायां दण्डो नात्र न शस्यते ॥ २३ ॥
त्वं खल्वोषधिबीजानि प्राक् सृष्टानि स्वयम्भुवा। न मुञ्चस्यात्मरुद्धानि मामवज्ञाय मन्दधीः ॥ २४ ॥
अमूषां क्षुत्परीतानामार्तानां परिदेवितम्। शमयिष्यामि मद्बाणैर्भिन्नायास्तव मेदसा ॥ २५ ॥
पुमान् योषिदुत क्लीब आत्मसम्भावनोऽधमः। भूतेषु निरनुक्रोशो नृपाणां तद्वधोऽवधः ॥ २६ ॥
त्वां स्तब्धां दुर्मदां नीत्वा मायागां तिलशः शरैः। आत्मयोगबलेनेमा धारयिष्याम्यहं प्रजाः ॥ २७ ॥
एवं मन्युमयीं मूर्तिं कृतान्तमिव बिभ्रतम्। प्रणता प्राञ्जलिः प्राह मही सञ्जातवेपथुः ॥ २८ ॥

[2]धरोवाच

नमः परस्मै पुरुषाय मायया विन्यस्त[3]नानातनवे गुणात्मने।
नमः स्वरूपानुभवेन निर्धुतद्रव्यक्रियाकारकविभ्रमोर्मये ॥ २९ ॥
येनाहमात्मायतनं विनिर्मिता धात्रा यतोऽयं गुणसर्गसङ्ग्रहः।
स एव मां हन्तुमुदायुधः स्वराडुपस्थितोऽन्यं शरणं कमाश्रये ॥ ३० ॥

अन्वयः—यत्र विश्वम् प्रतिष्ठितम् अजराम् नावम् माम् विपाट्य आत्मानम् च इमाः प्रजाः कथम् अम्भसि धास्यसि ॥ २१ ॥ ❀ वसुधे मच्छासनपराङ्मुखीं त्वाम् वधिष्यामि या बर्हिषि भागम् वृङ्क्ते च नः वसु न तनोति ॥ २२ ॥ ❀ ❀ अनुदिनम् यवसम् जग्धि ओधसम् पयः नैव दोग्धि हि तस्याम् एवम् दुष्टायाम् अत्र दण्डः न शस्यते न ॥ २३ ॥ ❀ ❀ मन्दधीः त्वम् स्वयंभुवा प्राक् सृष्टानि ओषधिबीजानि आत्मरुद्धानि माम्

१. प्रा० पा०—कथं संधारयिष्यसि। २. प्राचीने पाठे 'धरोवाच' नास्ति। ३. प्रा० पा०—न्यस्तमायात०।

अवज्ञाय खलु न मुञ्चसि ॥ २४ ॥ ❀ ❀ मद्बाणैः भिन्नायाः तव मेदसा क्षुत्परीतानाम् आर्तानाम् अमूषाम् परिदेवितम् शमयिष्यामि ॥ २५ ॥ ❀ ❀ पुमान् योषित् उत क्लीबः आत्मसंभावनः अधमः भूतेषु निरनुक्रोशः यदि स्यात् तर्हि नृपाणाम् तद्वधः अवधः ॥ २६ ॥ ❀ ❀ अहं स्तब्धाम् दुर्मदाम् मायागाम् त्वाम् शरैः तिलशः नीत्वा इमाः प्रजाः आत्मयोगबलेन धारयिष्यामि ॥ २७ ॥ ❀ ❀ संजातवेपथुः मही एवम् मन्युमयीम् मूर्तिम् बिभ्रतम् कृतान्तम् इव प्रणता प्राञ्जलिः प्राह ॥ २८ ॥ ❀ ❀ परस्मै पुरुषाय मायया विन्यस्तनानातनवे गुणात्मने नमः स्वरूपानुभवेन निर्धुतद्रव्यक्रियाकारकविभ्रमोर्मये नमः ॥ २९ ॥ ❀ ❀ येन धात्रा अहं आत्मा यतनम् विनिर्मिता यतः अयम् गुणसर्गसंग्रहः स एव उदायुधः स्वराट् माम् हन्तुम् उपस्थितः अन्यम् कम् शरणम् आश्रये ॥ ३० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अजरां दृढाम् । विपाट्य हत्वा धास्यसि धारयिष्यसि ॥ २१ ॥ ❀ ❀ बर्हिषि यज्ञे या भवती देवतारूपेण भागं वृंक्ते भजते । वसु धान्यादिकम् ॥ २२ ॥ ❀ ❀ गोरूपेण तु यवसं तृणं जग्धि अत्तीत्यर्थः । औधसमूधःसम्बन्धि पयस्तु नैव दोग्धि दुग्धं न स्रवति । अत्रास्मिन्नपराधे ॥ २३ ॥ ❀ ❀ आत्मनि देहे रुद्धानि ॥ २४ ॥ ❀ ❀ मद्वधे सर्वथा अन्नं न स्यादिति चेदत आह । अमूषां प्रजानाम् । मेदसा मांसेन ॥ २५ ॥ ❀ ❀ यदुक्तं योषां कथं हनिष्यतीति तत्राह । पुमानिति । तस्य वधोऽवध एव ॥ २६ ॥ ❀ ❀ यच्चोक्तं कथमंभसि धास्यसीति तत्राह त्वामिति । तिलशस्तिलप्रमाणानि खंडानि इत्येवंभूतामवस्थां त्वां नीत्वा ॥ २७ ॥ ❀ ❀ मन्युमयीं मूर्तिं बिभ्रतः कृतांततुल्यत्वमुच्यते न तु कृतांतस्य मन्युमयी मूर्तिरिति ॥ २८ ॥ ❀ ❀ "शुद्धसत्त्वतनुं देवमकस्मादपि दारुणम् । वीक्षमाणा पृथुं पृथ्वी तुष्टाव करुणोक्तिभिः" ॥ ( १ ) ॥ मायया विन्यस्ता रचिता नाना घोरादितनवो येन । गुणात्मने गुणमयत्वेन प्रतीयमानाय । वस्तुतस्तु निर्धुता निरस्ता द्रव्यक्रियाकारकेष्वधिभूताध्यात्माधिदैवेषु विभ्रमोऽहंकारस्तान्निमित्ता ऊर्मयो रागद्वेषादयश्च यस्मिंस्तस्मै ॥ २९ ॥ ❀ ❀ अहो सर्वजीवाश्रयत्वेन सृष्टां मां कथं हंतुं प्रवर्तत इत्याह । येन विधात्रात्मनां जीवानामायतनमहं विनिर्मिता । यतो यस्यां मयि गुणसर्गस्य चतुर्विधभूतग्रामस्य संग्रहो धारणम् । स एव स्वराट् स्वतंत्रः ॥ ३० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

विपाट्य विदार्य्य । अजरां सदा नूतनवत्स्थितां, यत्र मयि । अंभसीति । मयि मृतायां गर्भोद एव स्थास्यसीति भावः ॥ २१ ॥ ❀ ❀ वसुधे इति । हेतुगर्भा संबुद्धिः । वसु धान्यादि दधाति स्वस्मिन्निरुणद्धि यतोऽतस्त्वां हनिष्यामीत्यभिप्रायः । तदेवाह—भागमित्यादिना "बर्हिः स्यात्कुशयज्ञयोः" इति कोशः । भागम् ॐ भूःस्वाहेत्यादिमंत्रदत्तं हविर्भागम् ॥ २२ ॥ ❀ ❀ इत्यर्थ इति । अत्तेर्लटि जघादेशविधानादार्षोऽयं प्रयोग इति भावः । अपराधे निरर्थकभागभक्षणरूपे 'नद्वयं प्रकृतार्थं गमयति' इति वामनः ॥ २३ ॥ ❀ ❀ त्वदधिकरणकप्रजाजीवनार्थब्रह्मसृष्टौषध्यदानेन तव चौर्य्यदोषोऽप्यस्तीति त्वद्दंडे न दोष इति भावः । न दास्यामीति दुराग्रह एवात्र ममावज्ञा ॥ २४–२५ ॥ ❀ ❀ अधमो भूत्वा य आत्मानं संभावयति सर्वोत्कृष्टं मन्यते स आत्मसंभावनः यदि शूद्रो गैरिकादिरक्तवस्त्रं धृत्वा किञ्चिदधीत्य चात्मानं ब्राह्मणाधिकं मन्येत तदा तद्वधे नृपस्यादोष एव पाखंडित्वात्तस्य "वध्या हि धर्मध्वजिनस्ते हि पातकिनोऽधिकाः" इति सूतवधोपाख्याने श्रीसंकर्षणोक्तेः । निरनुक्रोशो निर्दयः ॥ २६ ॥ ❀ ❀ स्तब्धामात्मसंभावनावतीम् । ननु मद्वधेन तव गोवधो भावी किञ्च गोमांसं कथं भोजयिष्यसीति चेदाह—मायया गां वस्तुतो नेत्यर्थः, आत्मयोगबलेनौत्पत्तिकस्वरूपया धारणशक्त्या ॥ २७ ॥ ❀ ❀ मन्युमयीं क्रोधप्रचुराम् ॥ २८–२९ ॥ ❀ ❀ स्वयं देवतारूपत्वात्पृथ्वी हरेरन्यस्यैवंविधोक्तिर्न संभवतीति ज्ञाततत्त्वात्तं स्तौति स करुणोक्तिभिर्दीनवचनैः ( १ ) आदिना शांतविमूढयोर्ग्रहः । "शांता अशांता उत मूढयोनयः" इत्युक्तेः । विधात्रा त्वया, अन्यं त्वदितरम् ॥ ३० ॥

## श्रीमद्वीरराघवव्याख्या

किञ्च यत्र मयि विश्वं जगत्प्रतिष्ठितं तामजरां दृढां नावं नावरूपां विपाट्य विभिद्य आत्मानमिमाः प्रजाश्चाम्भसि कथं धास्यसि धारयिष्यसि ॥ २१ ॥ ❀ ❀ एवमुक्तो धरित्र्या पृथुस्तदुक्तीः प्रतिवक्ष्यन्नाह वसुध इति । यत्त्वयोक्तं त्वं जिघांससे कस्मादीनामकृतकिल्बिषामिति तन्नेत्याह त्रिभिः । हे वसुधे ! मच्छासनपराङ्मुखीं मदाज्ञातिवर्तिनीं त्वां वधिष्यामि । राज्ञो ममाज्ञातिलङ्घनमेवाघं भवत्याः प्रथमोऽपराध इति भावः ॥ २२ ॥ ❀ ❀ किञ्च या भवती बर्हिषि यज्ञे भागं वृङ्क्ते देवतारूपेण भागं भजते या च त्वं वसु धान्यादिकं न तनोषि न ददासि उपकारानभिज्ञायास्तवायं द्वितीयोऽपराध इति भावः । ननु सापराधाया अपि गोरूपाया मम वधोऽनुचितस्तत्राह यवसमिति । या गौस्त्वदिनं यवसं तृणमेव जग्धि अत्ति, अथ पयस्तु नैव संदोग्धि

न प्रपूरयति, तस्यां दुष्टायां गवि दण्ड एवोचितः, अन्यत्रादुष्टायां गवि दण्डो न प्रशस्यते इत्ययं धर्मो दृश्यत इति भावः ॥ २३ ॥ ❀ ❀ स्वयंभुवा ब्रह्मणा भूतानां जीवनार्थत्वेन प्राक् कल्पादौ सृष्टानि औषधिबीजानि आत्मनि स्वस्यां रुद्धानि आत्मनि ग्रस्तानीत्यर्थः, मां भूतपालनाधिकृतमवज्ञाय पराभूय अत एव मन्दधीस्त्वं न मुञ्चसि, अतस्त्वद्वध उचित एवेति भावः ॥ २४ ॥ ❀ ❀ तर्हि किं मद्वधसाध्यं प्रत्युत मद्वधेऽन्नं न स्यादित्यत्राह अमूषामिति । क्षुत्परीतानां क्षुधा परितो व्याप्तानामत एवार्तानाममूषां प्रजानां परिदेवितं दुःखं मद्बाणैर्भिन्नायास्तव मेदसा मांसेन शमयिष्यामि ॥ २५ ॥ ❀ ❀ यदप्युक्तमहनिष्यत्कथं योषां धर्मज्ञ इति यो मत इति तत्राह पुमानिति । पुमान् योषिद्वा क्लीबः नपुंसको वा आत्मसंभावितः आत्मनैव संभावितः नतु परैः, अत एवाधमः भूतेषु निरनुक्रोशः निष्कृपः स्यात्तर्हि पुमादिविभागमनादृत्य तद्वध एव नृपाणामुचित इत्यर्थः ॥ २६ ॥ ❀ ❀ यदप्युक्तं मां विपास्येत्यादिना तत्राह त्वामिति । मायागां मायया धृतगोरूपां तथा दुर्मदां मदभावे कथमम्भसि प्रजा धास्यसीत्येवंरूपदुर्मदविशिष्टां त्वां शरैर्मद्बाणैस्तिलशः तिलप्रमाणानि खण्डानीत्येवंभूतामवस्थां नीत्वा प्रापय्य आत्मनो मम योगबलेन योगसामर्थ्येनैवाहं प्रजाः आत्मानं च धारयिष्यामि ॥ २७ ॥ ❀ ❀ एवं मन्युमयीं क्रोधप्रचुरां मूर्तिं विग्रहं बिभ्रतं कृतान्तमिव स्थितं पृथुमित्यर्थः, नतु कृतान्तवन्मन्युमयीं मूर्तिं विभ्रतमिति कृतान्तस्य तदभावात् प्रणता प्रह्वीभूता मही धरित्री संजातकम्पा प्राञ्जलिराह ॥ २७ ॥ पृथुनैवं प्रत्युक्ता पृथ्वी साक्षाद्भगवदवतारभूतोऽयं पृथुः सर्वज्ञः सर्वशक्तिर्न मया वञ्चयितुं शक्य इत्यालोच्य स्वस्योषधिबीजनिर्गमोपायं विवक्षन्ती क्रोधादयं स्वोपदिष्टोपायं माग्रहीदित्याशङ्क्य तावत् क्रोधोपशमनाय आत्मनो दैन्यमाकिञ्चन्यं च निवेदयन्ती चिदचिच्छरीरत्वेन जगत्सृष्ट्यादिकारणत्वेन धर्मपरित्राणनिमित्तावतारविशिष्टत्वेन च स्तौति नमः परस्मा इति । मायया स्वापृथक्सिद्धविशेषणभूतया मायया प्रकृत्या विन्यस्तनानातनवे निष्पादितदेवमनुष्यादिव्यष्टिक्षेत्रज्ञशरीराय, अनेन प्रकृतिपुरुषशरीरकत्वं जगत्कारणत्वं तच्च सद्वारकमिति चोक्तं भवति, सद्वारकत्वमेव व्यनक्ति गुणात्मने प्रकृतेर्गुणविशिष्टत्वात्तद्द्वारा सत्त्वादिगुणस्वभावः यथा काठिन्यवान् यो बिभर्ति तस्मै भूतात्मने नम इति भूमिद्वारा काठिन्यवत्त्वं नतु स्वरूपतो गुणात्मकत्वं निर्गुणश्रुतिविरोधात्, प्रकृतिपुरुषशरीरकत्वेऽपि तद्वैलक्षण्येन स्थितिमाह । परस्मै प्रकृतिपुरुषविलक्षणाय वैलक्षण्ये हेतुमाह । स्वरूपानुभवेन निर्धूतक्रियाकारकविभ्रमोर्मये, स्वरूपानुभवः स्वविषयं यथावस्थितं ज्ञानं स्वरूपशब्देन प्रकृतिपुरुषेश्वरस्वरूपाण्यपि विवक्षितानि, स्वरूपाणां प्रकृतिपुरुषेश्वररूपाणामनुभवेन याथात्म्यज्ञानेन निर्धूता निरस्ता द्रव्यक्रियाकारकविभ्रमाः, द्रव्यक्रियेति द्वन्द्वः विभ्रमशब्दः प्रत्येकं संबध्यते द्वन्द्वान्ते श्रुतत्वात् । तत्र द्रव्यभ्रमो नाम पृथिव्यादिद्रव्यारब्धेषु देहेष्वात्मभ्रमः, 'इच्छामि द्वेष्मी'ति देहगतक्रियाणामात्मनि भ्रमः, क्रियाभ्रमः कारकभ्रमः कर्तृत्वभ्रमः स च "अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ॥ शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः । न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ तत्रैवं सति कर्तारमात्मानं केवलं तु यः । पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः" इत्युक्तरीत्या कर्तृत्वस्याधिष्ठानादिषु पञ्चस्वनुगतत्वेऽप्यात्मगतत्वेनैव प्रतीतिरूपः । एते त्रयो भ्रमाः तत्प्रयुक्ताः ऊर्मयः अशनायापिपासाशोकमोहजरामृत्य्वाख्याः, तस्य सर्वदा युगपत्प्रत्यक्षितसर्ववस्तुविषयप्रमितिरूपसाक्षात्कारनिरस्तदोषमूलभ्रमतत्कार्यत्वाद्वैलक्षण्यसिद्धिः । गुणभेदाभिप्रायेण नमसो द्विरुक्तिः । अत्र जगत्कारणत्वकथनेन तदुपयुक्तसार्वज्ञ्यसर्वशक्तित्वादिमत्त्वस्याप्यभिप्रेतत्वात् सर्वज्ञसर्वशक्तित्वात्तत्कार्यजगदन्तर्भूताहं वञ्चयितुमसमर्थेत्यभिप्रेतम् । अनेन स्वस्या आकिञ्चन्यमप्युक्तम् ॥ २९ ॥ ❀ ❀ तदेव विशदयन्त्याह येनेति । येन धात्रा दधाति विदधाति सृजतीति धाता तेन त्वया आत्मायतनम् आत्मनां व्यष्टिजीवानामायतनं स्थानभूतमहं विनिर्मिता सृष्टा, कथंभूताहं यतः यस्यां मयि गुणसर्गसंग्रहः गुणमयप्रकृतिपरिणामात्मकदेवादिप्रपञ्चो वर्तते स एव धाता भवान् उदायुधः उद्धृतायुधः स्वराट् स्वतन्त्रः, स्वराडित्यनेन न ह्यन्यो निवारकोऽस्तीति अभिप्रेतं मां स्वसृष्टां भूमिं हन्तुमुपस्थितः । ततस्त्वत्तोऽन्यं कं शरणं रक्षणोपायमाश्रये न कमपि किन्तु त्वामेवेत्यभिप्रायः ॥ ३० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

न केवलमदृष्टहानिरपि तु दृष्टहानिरपि स्यादित्याह । मां निहत्येति अजरां नूतनामिव स्थितां धास्यसि धारयिष्यसि ॥ २१ ॥ ❀ ❀ स्वोक्तकारित्वकरणाय पृथुर्भीतिकरं वाक्यं वक्ति वसुध इति । ननु वधयोग्यापराधः क इति तत्राह मच्छासनेति । अनेन तव पत्युर्मम स्त्रीविधो न दोषाय भर्तृशासनातिक्रम एवापराधित्वादिति ध्वनितम् । किं तत्त्वच्छासनातिलङ्घनं येनापराधिनी स्यामत्राह भागमिति । या भवती बर्हिषि यज्ञे 'भूः स्वाहे'ति हुतं हविर्भागं वृङ्क्ते वृणोति सा त्वं वसु धनं योग्यं न तनोषि परिपाकेन न प्रपञ्चयसीत्यन्वयः ॥ २२ ॥ ❀ ❀ एतदेव विशिनष्टि यवसमिति । हविराख्यं यवसं पयःशब्दस्य जलेऽपि वृत्तेरियत औधसमिति गोरूपत्वादेवमुक्तिः । मत्पालिताभ्यः प्रजाभ्यः या पयो न दोग्धि तस्यामेवं दुष्टायामत्र भवत्यां दण्डो न शस्यत इति नहि, शस्यत एवेत्यर्थः ॥ २३ ॥ ❀ ❀ आत्मन्यसत्त्वान्न मुञ्चामीति नेत्याह त्वं खलु इति । त्वदधिकरणत्वेन प्रजाजीवनार्थत्वेन विरिञ्चिसृष्टौषध्यदाने चौर्याख्यदोषोऽपि तव स्यादित्यर्थः । आत्मनि सत्त्वात् न दास्यामीति दुराग्रहबुद्धिरवज्ञेति ॥ २४ ॥ ❀ ❀ मद्वधस्तव कोपनिवारणावसायी न तु शरणागतप्रजारक्षणोपायसिद्धिरिति तत्राह अमूषामिति । अमूषां शरणागतानां मेदसा मांसविशेषेण ॥ २५ ॥ ❀ ❀ तथापि स्त्रीवधो न शस्त इति तत्राह पुमानिति । य एवंविधस्तद्वधः ॥ २६ ॥ ❀ ❀ यदुक्तं मां निहत्यात्मानमिमाः प्रजाश्चाम्भसि कथं धारयिष्यसीति तत्राह त्वां स्वधामिति ।

मायागामित्यनेन गोवधदोषोऽपि नास्तीति सूचितम्। आत्मयोगबलेनौत्पत्तिकस्वरूपधारणया शक्त्या ॥ ❀ ❀ तत्र निरुत्तरया धरया किमकारीति तत्राह। एवमिति ॥ २८ ॥ ❀ ❀ स्वयंदेवतात्वेकत्वेन हरेरन्यस्यैवंविधवाक्यानुदयादित्यादिहेतुना ज्ञातत्वात् धरा प्रच्छन्नन्तर्यामिगं तद्योग्यैर्गुणैरन्यत्रायोग्यैः श्रीनारायणमभिष्टौति नम इति। मायया प्रकृत्या चित्प्रकृत्या वा विन्यस्ता योग्यतया विरचिता नानातनवो ब्रह्मादिजीवदेहा येन स तथोक्तस्तस्मै "ब्रह्मादिजीवदेहास्तु मायादेहाः प्रकीर्तिताः" इति वचनात् मायाशब्देन नेन्द्रजालमत्रोच्यत इति। स्वस्यापि प्राकृतदेहसम्भवेन देवदत्तवत्कर्मणि श्रान्तत्वेन प्रपञ्चरचनानुपपत्तिरित्यत उक्तमगुणात्मन इति। सत्त्वादिगुणरहितस्वरूपाय यदि हरेः स्वरूपं प्राकृतगुणरहितं तर्हि कीदृशं येन देहित्वेन सृष्ट्यादौ प्रवृत्तिः स्यादित्यस्यापीदमेवोत्तरं गुणात्मन इति। ज्ञानानन्दादिगुणदेहाय "आत्मा जीवे धृतौ देहे" इति यादवः। अस्तु ज्ञानादिगुणदेहत्वं तथापि प्रकृत्या प्रवर्त्तमानस्य कर्दममणेरिव कथितदोषानिस्तार इति तत्राह स्वरूपेति। स्वरूपानुभवेन "तद्ब्रह्म वेदाहं ब्रह्मास्मि" इति श्रुतिसिद्धेन स्वरूपापरोक्षेण निर्धूता निरस्ता द्रव्यक्रियाकारकनिमित्तानां विभ्रमाणामूर्मयो येन स तथा। द्रव्यादयस्तामसतैजसवैकारिकाहंकारसंज्ञाः। यद्वा द्रव्यं गुणानामाधारो देहः क्रियाकर्मेन्द्रियं कारकं ज्ञानेन्द्रियं एतन्निमित्तानां विभ्रमाणां संशयाद्यन्तः करणधर्माणामूर्मयः परम्परा दूरोत्सारिता येन, "विभ्रमः संशये भ्रान्तौ शोभायाञ्च" इति यादवः। तत्र किं कारणमित्यत उक्तं स्वरूपेति। द्रव्यक्रियादिनिमित्तविभ्रमोर्मयोऽस्माकमेव न हरेरिति निरणायि ॥ २९ ॥ ❀ ❀ यतः स्वामित्वेन पितृत्वेन गुरुत्वेन स्थितं हरिं शरणं विहाय ममान्यो रक्षकोऽस्तीति भ्रान्ता लब्धान्यनिवृत्त्येत्यतस्तत्स्वामित्वादिकं तवैवेति सयुक्तिकमाह येनेति। येन धात्रा हरिणाहमात्मीयतनुः स्वशरीरत्वेन निर्मिता "यस्य पृथिवी शरीरम्" इति श्रुतेः। यतो यस्मात् सत्त्वादिगुणैः सर्गसंग्रहः स्यात् स एव पितृभूतः स्वराट् स्वामी उदायुधः शिक्षागुरुर्मां हन्तुमुपस्थित इत्यन्वयः। किमत इति तत्राह अन्यमिति। "किं कुर्मः कस्य वा ब्रूमो गरदायां स्वमातरि" इति वाक्यं ध्वनयति कमित्यनेन ॥ ३० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

वसुधेत्यादि वाक्यमपि विभीषिकामात्रम् ॥ २२-२६ ॥ ❀ ❀ मन्युमयीं मन्युप्रचुरां मूर्त्तिं बिभ्रतं तन्मयतया सम्पादयन्तमित्यर्थः ॥ २८ ॥ ❀ ❀ पृथिव्युवाचेत्येव पाठः। पुरुषाय भूयसे विन्यस्तमायेति सम्बन्धोक्तिः ॥ २९-३१ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

विपास्य विदार्य्य अजरां दृढाम्। अम्भसीति मयि मृतायां सत्यां गर्भोद एव स्थास्यतीत्यर्थः ॥ २१ ॥ ❀ ❀ बर्हिषि यज्ञे या भवती देवतारूपिणी भागं वृङ्क्ते भजते वसु धनान्नादिकम् ॥ २२ ॥ ❀ ❀ गोरूपेण यवसं तृणं जग्धि अत्ति पयस्तु न दोग्धि न पूरयति न ददातीति यावत्, 'कामपूरोऽस्म्यहं नृणामि'तिवत् तस्यामेवं दुष्टायां त्वय्यपराधिन्याम् ॥ २३-२४ ॥ ❀ ❀ मेदसा मांसेन ॥ २५ ॥ ❀ ❀ यदुक्तं योषां कथं हनिष्यसीति तत्राह पुमानिति। आत्मसम्भावनो मिथ्याहङ्कारमत्तः निरनुक्रोशो निर्दयः तस्य वधोऽवध एव ॥ २६ ॥ ❀ ❀ ननु गोवधं कथं करिष्यसि गोमांसं वा कथं भोजयिष्यसीति तत्राह। माययैव गां न तु वस्तुतः। यच्चोक्तं कथमम्भसि धास्यसीति तत्राह। तिलशः तिलप्रमाणसहस्रखण्डतामवस्थां नीत्वा ॥ २७-२८ ॥ ❀ ❀ विन्यस्ता निर्मिता नानाभूतास्सदाद्यास्तनवो यस्य तस्मै यतो गुणात्मने गुणमयाय। यदुक्तं महीतलं तज्जघनमित्यादि। ननु तर्हि स्वतनुं त्वां किमहं हन्मीति तत्राह। स्वरूपानुभवेनेति। यावत् स्वरूपशक्तेरनुभवो न स्यात्तावदेव मायाशक्तिमतस्तवास्सदाद्यास्तनवः, स्वरूपानुभवेन तु विनिर्धूतानि निरस्तानि द्रव्यक्रियाकारकाणि अधिभूताध्यात्माधिदैवानि तैर्विभ्रमोर्मिः संसारतरङ्गश्च यस्मात्तस्मै। यदुक्तं "यावन्न जायेत परावरेऽस्मिन् विश्वेश्वरे द्रष्टरि भक्तियोगः। तावत् स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेत" इति "अमुनी भगवद्रूपे मया ते ह्यनुवर्णिते। उभे अपि न गृह्णन्ति मायासृष्टे विपश्चितः" इति च ॥ २९ ॥ ❀ ❀ एवञ्चेत्तर्हि त्वदुक्तिप्रामाण्येनैव त्वयि मम नास्ति ममतेत्यतस्त्वां हन्म्येवेत्यत आह येनेति। न हि स्वहस्तेनारोपिता वल्ली स्वहस्तेनैव छिद्यते इति भावः। तत्राप्युपकारिकास्मीत्याह आत्मनां जीवानां आयतनं यतो यस्यां मयि गुणसर्गस्य चतुर्विधभूतग्रामस्य संग्रहो धारणं स्वराट् स्वतन्त्रः ॥ ३० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अजरां दृढां विपास्य विदार्य धास्यसि धारयिष्यसि ॥ २१ ॥ ❀ ❀ अकृतकल्मषां कथं जिघांससे इत्यत्राह वसुधे इत्यादि। या भवती भागं तु वृङ्क्ते भजते सा त्वं वसु धान्यादिकं न तनोषि अतो वधिष्यामि ॥ २२ ॥ ❀ ❀ या अनुदिनं प्रतिदिनं यवसं तृणं जग्धि अत्ति औधसं पयो न दोग्धि ऊधोगतं दुग्धं न स्रवति तस्यां दुष्टायाम् अत्र लोके दण्डो न शस्यते इति न, अपि तु शस्यते एव ॥ २३ ॥ ❀ ❀ त्वं तु मन्दधीः आत्मनि ग्रस्तानि न मुञ्चसि ॥ २४ ॥ ❀ ❀ क्षुत्परीतानां

क्षुधा व्याप्तानाम् अमूषां प्रजानां परिदेवितं विलापं तव मेदसा मांसेन शमयिष्यामि ॥ २५ ॥ ❀ ❀ योषां कथं मामहनिष्यदित्यत्राह पुमानिति ॥ २६ ॥ ❀ ❀ अम्भसि कथं धारयसीत्यत्राह त्वामिति । मायया दम्भेन कपटेन गोरूपधारिणीं तिलशः तिलप्रमाणानि खण्डानि इत्थंभूतामवस्थां नीत्वा आत्मयोगबलेन स्वकीययोगप्रभावेण प्रजाः धारयिष्यामि ॥ २७-२८ ॥ ❀ ❀ आत्मनो भगवदुत्पादितत्वमग्रिमेण श्लोकेन वक्तुं पूर्वं भगवतः सर्वोत्पादकतां वर्णयन्ती नमस्करोति नम इति । गुणात्मने सर्वकारणत्वसर्वज्ञत्वसर्वेश्वरत्वादिगुणाश्रयाय मायया स्वशक्त्या विन्यस्ता नानामहदादितृणान्ताः तनवो येन तस्मै नमः । अप्राकृतगुणाश्रयत्वेन स्तुत्वाथ प्राकृतगुणरहितत्वेन स्तौति । स्वरूपानुभवेन निर्धुताः स्वभावतोऽपास्ताः द्रव्यक्रियाकारकेषु अधिभूताध्यात्माधिदैवेषु विभ्रमोऽहङ्कारस्तन्निमित्ता ऊर्मयो रागद्वेषादयश्च यस्मात्तस्मै नमः । निर्धुतेति ह्रस्वमार्षम् ॥ २९ ॥ ❀ ❀ येन धात्रा भगवताहंभूरात्मनां जीवानामायतनं विनिर्मिता किं बहुना, यतः सर्वहेतोः गुणसर्गसंग्रहः गुणैः सृज्यन्ते इति गुणसर्गाः महदादयस्तेषां संग्रहो ब्रह्माण्डरूपः सर्वोऽपि प्रपञ्चः स एव स्वराट् उदायुधो मां हन्तुमुपस्थितो यदि तर्हि कमन्यं शरणमाश्रये ॥ ३० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

किंच यत्र मयि विश्वं प्रतिष्ठितं स्थितं तां मामजरां दृढां नावं विपाट्याम्भसि जले इमाः प्रजाः आत्मानं च कथं धास्यसि धारयिष्यसि ? । अवशिष्टेन चकारेणान्नाद्युत्पत्तिस्थानाभावात्प्रजानां क्षुत्प्रशमनं कथं करिष्यसीति ज्ञेयम् ॥ २१ ॥ ❀ ❀ भूमिं भीषयंस्तदुक्तेरुत्तरं ददाति—वसुधे त्वामिति षड्भिः । हे वसुधे त्वामहं वधिष्यामि । कस्माज्जिघांससि इति यदुक्तं तत्राह—मच्छासनपराङ्मुखीमिति । मदाज्ञोल्लङ्घनादित्यर्थः । तदेव दर्शयति—भागमिति । बर्हिषि यज्ञे या भवती देवतारूपेण भागं वृङ्क्ते सम्भजते गृह्णाति नोऽस्माकं वसु अन्नादिकं न तनोषि न विस्तारयसि ॥ २२ ॥ ❀ ❀ ननु गोरूपां मां भवान् धर्मज्ञः कथं हनिष्यति तत्राह—यवसमिति । या गौरन्वहं प्रतिदिनं यवसं तृणं जग्धि अत्ति ऊधसि भवमौधसं पयः दुग्धं नैव दोग्धि नैव मुञ्चति नैव ददाति तस्यामेवमनेन प्रकारेण दुष्टायां गवि अत्रास्मिन्नपराधे दण्डो न शस्यते युक्तो न भवतीति न, किन्तु युक्तो भवत्येव । हिशब्दो हेतौ । यस्मादेवं लोकव्यवहारस्तस्मात्त्वमपि यज्ञे भागं गृह्णासि अन्नादिकं च न मुञ्चसि अतस्तथैव दुष्टा तस्यां त्वय्यपि दण्डो युक्त एव ॥ २३ ॥ ❀ ❀ त्वया तु लोकस्य महानपकारः कृतोऽतो वधयोग्यैव त्वमित्याशयेनाह—त्वमिति । यतो यान्योषधिबीजानि अन्नादीनि प्राक् सृष्ट्यादौ स्वयंभुवा ब्रह्मणा लोकस्य जीवनहेतुत्वेन सृष्टानि तान्यात्मनि त्वयि रुद्धानि त्वं मामीश्वरमवज्ञाय तिरस्कृत्याविगणय्य न विमुञ्चस्यतः खलु निश्चयेन मन्दधीर्वधयोग्यैव त्वमित्यर्थः ॥ २४ ॥ ❀ ❀ ननु मद्वधे सर्वथैवान्नं न स्यात्तदा प्रजानां क्षुच्छान्तिः कथं स्यादित्यत्राह—अमूषामिति । मद्बाणैर्भिन्नाया मृतायास्तव मेदसा मांसेनामूषां प्रजानां क्षुत्परीतानां क्षुधाव्याप्तानामत एवार्त्तानां परिदेवितं विलापं शमयिष्यामीत्यन्वयः । तव मांसेनैव प्रजानां क्षुच्छान्तिं करिष्यामीति भावः ॥ २५ ॥ ❀ ❀ यदुक्तं भवान् धर्मज्ञो मां योषां कथं हनिष्यतीति तत्राह—पुमानिति । पुमान् वा योषिद्वा क्लीबो वा य आत्मसम्भावनः आत्मानं बहु मन्यते भूतेषु प्राणिषु निरनुक्रोशः दयारहितः दुःखोत्पादकः अत एवाधमस्तस्य वधो नृपाणामवध एव न दोषावहः ॥ २६ ॥ ❀ ❀ यच्चोक्तं मामजरां नावं विपाट्याम्भसि प्रजाः कथं धारयिष्यसीति तत्राह—त्वामिति । त्वां मायागां मायया कापट्येन गोरूपां दुर्मदां दुष्टः परपीडाकरो मदो यस्यास्तामत एव स्तब्धामस्मदादिष्वप्र-नत्रां शरैस्तिलप्रमाणानि खण्डानि तथावस्थां नीत्वा आत्मनः स्वस्य मम योगः प्रभाव एव बलं तेनाहं प्रजाः अम्भसि धारयिष्यामि ॥ २७ ॥ ❀ ❀ एवं निष्ठुरं वदन्तं मन्युमयीं क्रोधप्रचुरां मूर्तिं बिभ्रतं धारयन्तमत एव कृतान्तमिव मृत्युमिव भयङ्करमत एव भयेन सञ्जातवेपथुः सम्यगतिशयेन जातो वेपथुः शरीरे कम्पो यस्याः सा तथा अत एव प्रणता प्रथमं कृतदण्डवत्प्रणामा ततश्च प्राञ्जलिः संहताञ्जलिः सती प्राह तुष्टावेत्यन्वयः ॥ २८ ॥ ❀ ❀ पृथ्वीकृतां स्तुतिमेव दर्शयति—नम इत्यष्टभिः । तत्र प्रथमं न प्राकृतः पुरुषस्त्वं येन तमस उद्रेके क्रोधो युक्तः स्यात्, किंतु सच्चिदानन्दात्मको भगवानेवातः तव सापराधेपि क्षमैव युक्तेत्यभिप्रायेण नमस्यति—नम इति । परस्मै पुरुषाय पुरुषोत्तमाय नमः । पुरुषोत्तमत्वमेव प्रतिपादयन्ती क्षमापणार्थं पुनर्न-मस्यति—नम इति । सच्चिदानन्दात्मकस्वरूपस्यानुभवेन प्रकाशेन निर्धूताः द्रव्यादयः प्रकृतिकार्यभूताः जीवोपाधिरूपा यस्मात्तस्मै । तत्र द्रव्यं पञ्चभूतात्मकं शरीरम् । क्रिया इन्द्रियाणि । कारकाः तत्तदिन्द्रियाधिष्ठातारो देवाः । विभ्रमस्तत्सङ्घाते मोहोऽहंप्रत्ययः । ऊर्मयो रागद्वेषकामक्रोधादयः क्षुत्पिपासादयो वा । अत एव अगुणात्मने प्रकृतिकार्यगुणव्यतिरिक्तस्वरूपाय । ननु सर्वसाधारण-देहादिमत्त्वेन प्रतीतेः कथं तद्राहित्यमिति तटस्थशङ्कायामाह—माययेति । न केवलमियमेव तनुरीदृशी, किन्तु मायया स्वेच्छया विन्यस्ता धृता नानामत्स्यकच्छपादितनवो येन तस्मै ॥ २९ ॥ ❀ ❀ इदानीं भवत्कोपे ममान्यो रक्षको नास्त्यतो ममापराधं क्षमस्वेत्याशयेनाह—येनेति । येन धात्रा जगन्नाथेनाहं भूमिरात्मनां सर्वप्राणिनामायतनं स्थानं विनिर्मिता स्थानत्वेन सृष्टा अत एव यतो यस्यां मय्ययं गुणसर्गस्य जरायुजाण्डजस्वेदजोद्भिजभेदेन चतुर्विधशरीरसमूहस्य संग्रहः स्थितिस्तां मां सर्वाधारभूतां स एवोद्यतायुधः सन् हन्तुमुपस्थितस्ततोऽन्यं शरणं रक्षकं कमहमाश्रय इत्यन्वयः । कुतस्ततोऽन्यो रक्षको नास्तीत्यपेक्षाया-

माह—स्वराडिति। यतः स एव स्वतन्त्रस्तत उत्कृष्टस्यान्यस्याभावात्ततस्तत्कोपेऽन्यत्र निर्वाहो नास्तीत्यर्थः। येन निर्मितेत्यनेन स्वेन निर्मितायाः स्वेन वधो न युक्त इति सूचितम्। यतोयं गुणसर्गसङ्ग्रहः इत्यनेन पालकस्य तव सर्वाधारविनाशनमनुचितमिति सूचितम्॥ ३०॥

भाषानुवादः

मैं तो एक सुदृढ़ नौकाके समान हूँ, सारा जगत् मेरे ही आधारपर स्थित है। मुझे तोड़कर आप अपनेको और अपनी प्रजाको जलके ऊपर कैसे रक्खेंगे ?'॥ २१॥ ❀ ❀ महाराज पृथुने कहा—पृथ्वी! तू मेरी आज्ञाका उल्लङ्घन करनेवाली है। तू यज्ञमें देवतारूप से भाग तो लेती है, किन्तु उनके बदलेमें हमें अन्न नहीं देती; इसलिये आज मैं तुझे मार डालूँगा॥ २२॥ ❀ ❀ तू जो प्रतिदिन हरी-हरी घास खा जाती है और अपने थनका दूध नहीं देती—ऐसी दुष्टता करनेपर तुझे दण्ड देना अनुचित नहीं कहा जा सकता॥ २३॥ ❀ ❀ तू नासमझ है, तूने पूर्वकालमें ब्रह्माजीके उत्पन्न किये हुए अन्नादिके बीजोंको अपनेमें लीन कर लिया है और अब मेरी भी परवा न करके उन्हें अपने गर्भसे निकालती नहीं॥ २४॥ ❀ ❀ अब मैं अपने बाणोंसे तुझे छिन्न-भिन्न कर तेरे मेदेसे इन क्षुधातुर और दीन प्रजाजनोंका करुण-क्रन्दन शान्त करूँगा॥ २५॥ ❀ ❀ जो दुष्ट अपना ही पोषण करनेवाला तथा अन्य प्राणियोंके प्रति निर्दय हो—वह पुरुष, स्त्री अथवा नपुंसक कोई भी हो—उसका मारना राजाओंके लिये न मारनेके ही समान है॥ २६॥ ❀ ❀ तू बड़ी गर्वीली और मदोन्मत्ता है; इस समय मायासे ही यह गौका रूप बनाये हुए है। मैं बाणोंसे तेरे टुकड़े-टुकड़े करके अपने योगबलसे प्रजाको धारण करूँगा॥ २७॥ ❀ ❀ इस समय महाराज पृथु कालकी भाँति क्रोधमयी मूर्ति धारण किये हुए थे। उनके ये शब्द सुनकर धरती काँपने लगी और उसने अत्यन्त विनीतभावसे हाथ जोड़कर कहा॥ २८॥ ❀ ❀ पृथ्वीने कहा—आप साक्षात् परमपुरुष हैं तथा अपनी मायासे अनेक प्रकारके शरीर धारणकर गुणमय जान पड़ते हैं; वास्तवमें आत्मानुभवके द्वारा आप अधिभूत, अध्यात्म और अधिदैवसम्बन्धी अभिमान और उससे उत्पन्न हुए रागद्वेषादिसे सर्वथा रहित हैं। मैं आपको बार-बार नमस्कार करती हूँ॥ २९॥ ❀ ❀ आप सम्पूर्ण जगत्के विधाता हैं; आपने ही यह त्रिगुणात्मक सृष्टि रची है और मुझे समस्त जीवोंका आश्रय बनाया है। आप सर्वथा स्वतन्त्र हैं। प्रभो! जब आप ही अस्त्र-शस्त्र लेकर मुझे मारनेको तैयार हो गये, तब मैं और किसकी शरणमें जाऊँ?॥ ३०॥

य एतदादावसृजच्चराचरं स्वमाययाऽऽत्माश्रययावितर्क्यया।
तयैव सोऽयं किल गोप्तुमुद्यतः कथं नु मां धर्मपरो जिघांसति॥ ३१॥
नूनं बतेशस्य समीहितं जनैस्तन्मायया दुर्जययाकृतात्मभिः।
न लक्ष्यते यस्त्वकरोदकारयद् योऽनेक एकः परतश्च ईश्वरः॥ ३२॥
सर्गादि योऽस्यानुरुणद्धि शक्तिभिर्द्रव्यक्रियाकारकचेतनात्मभिः।
तस्मै समुन्नद्धनि[1]रुद्धशक्तये नमः परस्मै पुरुषाय वेधसे॥ ३३॥
स वै भवानात्मविनिर्मितं जगद् भूतेन्द्रियान्तःकरणात्मकं विभो।
संस्थापयिष्यन्नज मां रसातलादभ्युज्जहाराम्भस आदिसूकरः॥ ३४॥
अपामुपस्थे मयि नाव्यवस्थिताः प्रजा भवानद्य रिरक्षिषुः किल।
स वीरमूर्तिः समभूद्धराधरो यो मां पयस्युग्रशरो जिघांससि॥ ३५॥
नूनं जनैरीहितमीश्वराणामस्मद्विधैस्तद्गुणसर्गमायया।
न ज्ञायते मोहितचित्तव[2]र्त्मभिस्तेभ्यो नमो वीरयशस्करेभ्यः॥ ३६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे पृथु[3]विजये धरित्रीनिग्रहो नाम सप्तदशोऽध्यायः॥ १७॥

अन्वयः—यः आदौ आत्माश्रयया अवितर्क्यया स्वमायया एतत् चराचरम् असृजत् सः तया एव किल गोप्तुम् उद्यतः अयं धर्मपरः माम् नु कथम् जिघांसति॥ ३१॥ ❀ ❀ यः तु एकः ईश्वरः अकरोत् च यः परतः अनेकः नूनम् अकारयत् तत् बत दुर्जयया मायया ईशस्य समीहितम् अकृतात्मभिः जनैः न लक्ष्यते॥ ३२॥ ❀ ❀

१. प्रा० पा०—विरुद्ध०। २. प्रा० पा०—चित्तकर्म०। ३. प्रा० पा०—पृथुचरिते धराविग्रहः सप्त०।

यः अस्य सर्गादि द्रव्यक्रियाकारकचेतनात्मभिः आत्मभिः शक्तिभिः अनुरुणद्धि तस्मै समुन्नद्धनिरुद्धशक्तये वेधसे परस्मै पुरुषाय नमः ॥ ३३ ॥ ❀ ❀ विभो अज सः भवान् आत्मविनिर्मितम् भूतेन्द्रियान्तःकरणात्मकम् जगत् संस्थापयिष्यन् आदिसूकरः माम् रसातलात् अम्भसः वै अभ्युज्जहार ॥ ३४ ॥ ❀ ❀ अद्य यः धराधरः अपाम् उपस्थे नावि मयि अवस्थिताः प्रजाः रिरक्षिषुः वीरमूर्तिः समभूत् सः भवान् उग्रशरः एव माम् पयसि किल जिघांससि ॥ ३५ ॥ ❀ ❀ वीर तद्गुणसर्गमायया मोहितचित्तवर्त्मभिः असद्विधैः जनैः ईश्वराणाम् ईहितम् नूनम् न ज्ञायते यशस्करेभ्यः तेभ्यः नमः ॥ ३६ ॥

इति सप्तदशोऽध्यायः ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

सृष्टिसंहारकारकोऽहमेवेति चेत्तथापि प्रजापालने प्रवृत्तस्य मद्वधोऽनुचित एवेत्याह य एतदिति। आत्माश्रयया जीवविषयिण्या ॥ ३१ ॥ ❀ ❀ अतो दुर्ज्ञेयमीश्वरचेष्टितमित्याह नूनमिति। अकृतात्मभिर्विक्षिप्तचित्तैः य ईश्वरः स्वतंत्रः अकरोद् ब्रह्माणम्। परत इति तेन ब्रह्मणा चराचरमकारयत्। यश्च स्वत एकः परतो माययाऽनेकः ॥ ३२ ॥ ❀ ❀ तस्मादचिंत्यशक्तये केवलं नम इत्याह। सर्गादि जन्मस्थितिभंगमस्य जगतोऽनुरुणद्ध्यनुवर्तते करोति द्रव्याणि महाभूतानि क्रिया इंद्रियाणि कारका देवाः चेतना बुद्धिः आत्माऽहंकारः तैः स्वशक्तिरूपैः समुन्नद्धाः समुत्कटा निरुद्धाः शक्तयो यस्य ॥ ३३ ॥ ❀ ❀ प्राणिनां धारणार्थं मां रसातलादुद्धृत्येदानीं प्रजारक्षणे प्रवृत्तस्य मद्वधो न युक्त इति सकरुणमाह द्वाभ्याम्। हे अज यः सृष्टवान्स एव भवान्स्वनिर्मितं चराचरं जगत्सम्यक् स्थापयितुमादिसूकरः सन्मां रसातलादभ्युज्जहार ॥ ३४ ॥ ❀ ❀ स एव धराधरो वराहोऽद्यापामुपस्थे उपरि मयि नावि आधारभूतायामवस्थिताः प्रजा रक्षितुमिच्छुर्वीरमूर्तिः पृथुरूपः समभूत् एवंभूतो यः स त्वं पयसि क्षीरे निमित्ते मां जिघांससि हंतुमिच्छसीति चित्रमित्यर्थः ॥ ३५ ॥ ❀ ❀ तस्मादीश्वरचेष्टितं दुर्ज्ञेयमिति कैमुत्यन्यायेनोपसंहरति। नूनमिति। तस्येश्वरस्य गुणसर्गरूपया मायया मोहितं चित्तमेव वर्त्म येषाम्। मोहितानि चित्तवर्त्मानि येषामिति वा तैर्जनैरीश्वराणां हरिभक्तानामेव तावदीहितं न ज्ञायते किं पुनस्तस्य परमेश्वरस्य। अत एव परमेश्वरवत्तेभ्योऽपि नम एव केवलम्। वीराणां जितेंद्रियाणां यशः कुर्वंति ये तेभ्यः। यथा वीराणां यशो वर्धेत तथा चेष्टतां न तु यथेष्टमिति भावः ॥ ३६ ॥

इति श्रीमद्भागवते चतुर्थे टीकायां सप्तदशोऽध्यायः ॥ १७ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

जीवविषयिण्या जीवावरकया तर्कितुमशक्यया ॥ ३१ ॥ ❀ ❀ बत खेदे ॥ ३२ ॥ ❀ ❀ समुत्कटाः प्रबलाः, निरुद्धाः स्वाधीनाः, शक्तयः सृष्ट्यादिविषयाः ॥ ३३ ॥ ❀ ❀ हे अजेति। त्वं तु नानातनूराविर्भावयस्येव न तु जायस इति भावः। उक्तार्थसमर्थनाय पुनरामंत्रयति–विभो इति। विविधं भातीति विभुरिति निरुक्तेरेकस्यैव तव बहुरूपतया भानमिति भावः। रसातलादंभसो गर्भोदसंज्ञाज्जलात् उद्धार ॥ ३४ ॥ ❀ ❀ पयसि पयउपलक्षितेऽन्नादौ निमित्ते स एव मत्स्वामी धराधर आदिवराहस्त्वम्। अत्राशयमाह—इमास्त्वत्प्रजा मदपत्यान्येव मदुत्संगे स्थितानि नित्यमहं स्तन्यं पयः पाययाम्येव सांप्रतमेतद्दुर्वृत्तमालक्ष्य शीलं शिक्षयंती माताप्यहं क्रुद्धा पयो न पाययामीति त्वं गृहपतिर्मां ताडयसीति भाव इति विश्वनाथः। स्वामिव्याख्याने इत्यर्थ इति। जले निमित्तेऽन्नोत्पादनकारणे सति यन्मत्ताडनं तदद्भुतं न हि केवलाहं बीजोत्पादने हेतुः, किं तु जलमपि धरणिसलिलसंयोगस्यैव बीजांकुरोत्पत्तौ हेतुत्वादिति भावः ॥ ३५ ॥ ❀ ❀ यत उभयनिमित्तककार्येऽन्यतरस्यं ताडनं तस्मादित्यर्थः। चित्तवर्त्मनामनेकत्वात्समासांतरमाह–मोहितानीति। ईश्वराणामीश्वरमपि वशीकर्तुं समर्थानां "वशीकुर्वंति मां भक्त्या सत्स्त्रियः सत्पतिं यथा" इति नवमे श्रीमुखोक्तेः। अत एव भगवन्तं वशीकर्तुं समर्थत्वादेव वीराणां दयावीराणां चेष्टतां प्रार्थनायां लोट्। भवांस्तथा चेष्टताम्। इति भाव इति। त्वं चेन्मयि न दयसे तदा वीरयशो नश्यतीत्याशयः। एतेन पृथिव्याः पृथोरधिकारिपुरुषत्वमारोप्य हरिभक्तत्वमपि ध्वनितम् ॥ ३६ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे सप्तदशोऽध्यायः ॥ १७ ॥

### श्रीमद्वीरराघवव्याख्या

ननु य एव स्रष्टा स एव हन्ति चेत्किं त्वया विवेयं सत्यं स्रष्टुरपि हन्तृरूपधारण एव हनने प्रवृत्तिरुचिता न त्ववितृरूपधारिणस्तवेत्याह य एतदिति। यो भवानेव एतच्चराचरात्मकं जगत् आत्मा आश्रयो यस्यास्तया अवितर्क्यया एवंविधेति चिन्तयितुमशक्यया स्वापृथक्सिद्धविशेषणभूतया प्रकृत्या माया शब्दः संकल्परूपज्ञानपरो वा अवितर्क्येन स्वसंकल्पेनासृजत् स एव भवान् तयैव संकल्पेन गोप्तुं चराचरात्मकं जगद्रक्षितुमुद्यतः उद्युक्तः, नतु कालाग्निरुद्राद्यवतारेणैव हन्तुं प्रवृत्त इत्यर्थः, अतः प्रजा-

पालनरूपधर्मप्रवर्तकस्त्वं प्रजानां भोग्यभोगोपकरणभोगस्थानरूपां मां कथं नु जिघांससि हन्तुमिच्छसि ॥ ३१ ॥ ❀ ❀ विचित्रानन्तशक्तेस्तव प्रभावमजानन्त्या ममेदं त्वदीयं कृत्यमनुचितमिव प्रतीयते, त्वच्चिकीर्षितं न विजानीयुरित्याह नूनमिति। अकृतात्मभिः अवशीकृतचित्तैः त्वामप्रपन्नैरिति यावत् दुर्जयया जेतुमशक्यया स्वमायया स्वात्मीयमायया कारणभूतया ईशस्य तव समीहितं चेष्टितं चिकीर्षितं जनैर्न लक्ष्यते न ज्ञायते इति। यद्वा दुर्जयया स्वमायया हेतुभूतया अकृतात्मभिः मोहितचित्तैर्मादृशैर्जनैरीशस्य तव समीहितं न लक्ष्यत इत्यर्थः। कोऽसावीश्वरः यस्य समीहितं न लक्ष्यते तत्राह। यः स्वत एकोऽपि परतः ब्रह्मरुद्रादिक्षेत्रज्ञरूपशरीरभेदादनेकः सन् अकरोत् महदादिपृथिव्यन्तजगत्सृष्टिमकारयत् व्यष्टिसृष्टिमित्यर्थः। स ईश्वरस्त्वमेवेति भावः ॥ ३२ ॥ ❀ ❀ अतोऽचिन्त्यशक्तये तुभ्यं केवलं नम इत्याह सर्गादीति। यो भवान् अस्य जगतः सर्गादि सृष्ट्यादिकं द्रव्यक्रियाकारकचेतनात्मभिः द्रव्यं प्रधानात्मकमचिद्द्रव्यं क्रिया जीवादृष्टाख्यं कर्म कारकः करोति गुणक्षोभमिति कारकः कालः चेतनो जीवः एतद्रूपाभिः शक्तिभिः अनुरुणद्धि अनुवर्तते करोतीति यावत्, तस्मै समुन्नद्धाः कार्योन्मुखं विरुद्धाः शक्तयो यस्य तस्मै सृष्टिस्थितिसंहाराणां युगपद्विरुद्धत्वात्तद्द्वारा तदुपयुक्तशक्तीनां विरोधः युगपत्सृष्ट्यादीनां मिथो विरोधत्वेऽपि कालभेदादुपपन्नत्वेन सृष्ट्याद्युपयुक्तशक्तिमत्त्वमुपपन्नं, वेधसे कारणभूताय परस्मै प्रकृतिपुरुषविलक्षणाय पुरुषाय तुभ्यं नमः ॥ ३३ ॥ ❀ ❀ तव समुन्नद्धविरुद्धशक्तिमत्त्वं न मानान्तरगम्यमपि त्वपरोक्षं मयैवानुभूतमित्याह। हे विभो! आत्मनि आत्मना स्वयं विनिर्मितं भूतानि पृथिव्यादीनि इन्द्रियाणि श्रोत्रादीनि अन्तःकरणं चैतदात्मकं जगत्संस्थापयिष्यन् हे अज! कर्मायत्तोत्पत्तिशून्य तथापि आदिशूकरः स्वेच्छोपात्ताप्राकृतदिव्यवराहावतारो भूत्वा भवान्मां त्वन्निर्मितजगदाधारभूतां मामम्भसः अम्भसि प्रविश्य 'ल्यब्लोपे कर्मण्यधिकरणे चे' त्यधिकरणे पञ्चमी, रसातलात् अभ्युज्जहार उद्धृतवान् ॥ ३४ ॥ ❀ ❀ स धराधरः आदिवराहः अद्य अपामुपस्थे उपरि नावि नौकावदाधारभूतायां मयि अवस्थिता प्रजा रिरक्षिषुः रक्षितुमिच्छुः भवान् समभूत् भवद्रूपेणावतीर्णः स एव त्वमधुना वीरमूर्तिः पृथुरूप उग्रः तीक्ष्णः शरो यस्य पयसि निमित्ते गां गोरूपां मां जिघांससि हन्तुमिच्छसि किलेत्येतद्विरुद्धशक्तिमत्त्वं मयैवोपलक्षितमित्यर्थः ॥ ३५ ॥ ❀ ❀ एवमचिन्त्यविविधशक्तिमत्त्वेन भगवन्तं स्तुत्वा तदेव पुनरनुसन्दधती सर्वानवतारान्नमस्करोति नूनमिति। येषामीश्वराणामीश्वरावताराणामीहितं चिकीर्षितं तद्गुणसर्गमायया तस्य ईश्वरस्य सम्बन्धिन्या सत्त्वादिगुणकार्यप्रपञ्चमूलया मायया मोहितं यच्चित्तं तस्य वर्त्मनि वृत्तयो येषां तैर्मादृशैर्जनैर्न ज्ञायते नूनं निश्चितं तेभ्यः वीराणामन्येषामपि यशस्करेभ्यो हिरण्याक्षादीनां भगवता युद्धे निहता इत्येवंरूपकीर्तिसम्पादकेभ्योऽवतारेभ्यो नमः ॥ ३६ ॥

इति श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां सप्तदशोऽध्यायः ॥ १७ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तव निर्मातेश्वरोऽन्यस्त्वां जिघांसुः पृथुराजा चापर इति मन्दाशङ्कां परिहरन्निव पूर्वोक्तार्थं विवृणोति य एतदिति। आत्मैवाश्रयो यस्याः सा आत्माश्रया तयात एवावितर्क्यया विविधतर्काविषयया "अजामेकां लोहितशुक्लकृष्णाम्" इत्यादिश्रुतिसिद्धत्वान्निर्वक्तुमशक्ययेत्य[1]तद्द्वैतवादितर्कागोचरयेत्यर्थः। एवंविधया स्वमायया स्वप्रकृत्या सृष्टः पालयितुश्चैकत्वेन तस्य हन्तृत्वं न युक्तमदर्शनादित्यर्थः। "वार्तासंभाव्ययोः किल" इत्यभिधानम्, अतः संभावितं न भवतीति यथा स्वस्य तर्काविषयत्वं तथा मायया अपीति सूचितम् ॥ ३१ ॥ ❀ ❀ हरेस्तर्काविषयत्वं स्पष्टयति नूनं तवेति। विभो! अकृतात्मभिरल्पबुद्धिभिरशिक्षितबुद्धिभिर्वा जनैर्दुर्जयया स्वमायया ईशस्यैश्वर्यादिगुणाकरस्य समीहितं समीचीनं चेष्टितं न लक्ष्यते नूनं तर्कयामीत्यन्वयः। "तर्कनिश्चितयोर्नूनम्" इति यादवः। समीहितं किन्तदित्यत आह यस्त्विति। अकरोत्कार्यं ब्रह्मणा यस्त्वं जगदकारयश्च अनेकः "इन्द्रो मायाभिः पुरुरूप ईयते" इति श्रुतेः तत्त्वत एकः "एकमेवाद्वितीयम्" इति श्रुतेः एवंविधः स परतः परेषामीश्वरो नास्माकमार्तानामिति क्षोण्याक्षेप[2]लक्षणमर्थविशेषं ध्वनयति अर्थान्तरासंभवात् ॥ ३२ ॥ ❀ ❀ कर्तृत्वेन कारयितृत्वेन सर्वस्वातन्त्र्यप्रतीतेः पृथिव्यादीनां कर्तृत्वमीश्वरशक्त्यनुस्यूतत्वादित्याह सर्गादीति। द्रव्याणि पञ्चभूतानि क्रियाः कर्मेन्द्रियाणि कारकाः ज्ञानेन्द्रियाणि चेतनो जीव एतान् व्याप्य तिष्ठन्तीति चेतनात्मानस्ताभिः शक्तिभिर्योऽस्य जगतः सर्गाद्यनुगुणादि तत्तद्योग्यतानुकूल्येन करोति तस्मै नम इत्यन्वयः। एकस्य युगपदनेकवैचित्र्योपेतपदार्थस्रष्टृत्वं कथमुपपद्यत इत्यत उक्तं समुन्नद्धेति तदुक्तं "विरुद्धशक्तयो यस्य नित्या युगपदेव तु। तस्मै नमो भगवते विष्णवे सर्वजिष्णवे" इति कर्तृत्वशक्तिः स्वरूपभूतेत्युक्तं वेधस इति कर्तृत्वशक्तिमते। किन्नामधेयमस्येत्यत उक्तं परस्मा इति। अनेन पुंशक्तिमत्त्वादस्यैवोक्तमुपपन्नमित्यसूचि ॥ ३३ ॥ ❀ ❀ पूर्वं त्वयैव भूतधात्रीत्वेन संकल्पत्वाद्धिरण्याक्षनीतां मामुदाहारितवांस्तत्रात्मयोगबलेनैव धारयिष्यामीत्यङ्गीकारे सङ्कल्पभङ्गः स्यादित्याशयेनाह। स वा इति। सवा इत्यनेन य एतदित्याद्युक्तं परामृश्यते मा माम् ॥ ३४ ॥ ❀ ❀ भूमेरुद्धर्तान्योऽहमन्यस्तस्मात्सङ्कल्पभङ्गः कथमिति मन्दाशङ्कां परिहरति अपामुपस्थे इति। जलस्योपरि स्थितां मां जिघांसति स वीरमूर्तिर्भवानद्य रक्षितुकामो धराधरो भूमेर्भर्ता समभूदित्य-

---

१. एष चासौ अद्वैतवादितर्कश्चेति विग्रहः। २. एतेन परतः परानुग्रहादीश्वरः किमिति किंसशिरस्कत्वेन योज्यमित्युक्तं भवति। दी०।

न्वयः ॥ ३५ ॥ ❀ ❀ स्त्री त्वमस्मद्विचेष्टितं किञ्जानासीत्याशङ्क्य सत्यं तथाप्यस्माकं युष्मत्प्रसादनाय नम इत्येतावत्कर्त्तुमुचितमिति भावेनाह नूनं जनैरिति । त्वद्गुणसर्गमायया तव सृष्ट्यादौ गुणकर्मभूतया सर्गमायया प्रकृत्या ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां सप्तदशोऽध्यायः ॥ १७ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

नूनमिति । तच्छब्दतदुपाधिविशिष्टत्वेन स्वयमेव भगवानेक एवानेकः सन् जगदकरोत् तदसंसर्गित्वेन तु स्वयमेक एव सन् तत्तद्द्वाराकारयत्, न केवलमेतावदेव तदैश्वर्य्यम् परतो जगतः परस्मिन् वैकुण्ठेऽपि ईश्वर इति । अतो युक्तमेवाऽलक्ष्यचेष्टितत्वमित्यर्थः, स्व ईश्वर इति चित्सम्बन्धे स्वं स्वयम् ॥ ३२ ॥ ❀ ❀ कारकाः प्रकृतिप्रवर्त्तका देवाः ॥ ३३–३४ ॥ ❀ ❀ यो मामित्यादौ गोपायसे अग्रसर इति सम्बन्धः ॥ ३५ ॥ ❀ ❀ ईश्वराणामन्येषामपि । वीरयशस्करेभ्य इति तथापि भद्रमेव ते करिष्यन्तीति भावः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे सप्तदशोध्यायः ॥ १७ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ननु मयैव जगत् सृज्यते संह्रियते चेति सत्यं तदपि सम्प्रति पालने प्रवृत्तस्य तव मद्वधोऽनुचित इत्याह य इति ॥ ३१ ॥ ❀ ❀ ननु तर्हि त्वं मामधर्मिणं ब्रूषे तत्र नहि नहि किन्तु दुर्लभमेतदैश्वर्यमित्याह नूनमिति । अकृतात्मभिर्विक्षिप्तचित्तैः । य ईश्वरोऽकरोत् सर्गं अकारयद्विसर्गम् । स्वत एकः परतो मायया अनेकश्च ॥ ३२ ॥ ❀ ❀ तस्मादचिन्त्यशक्तये केवलं नम इत्याह । अनुरुणद्धि भक्तजीवस्यानुरोधेन करोति । द्रव्यक्रियाकारकाणि भूतेन्द्रियदेवताः । चेतना बुद्धिः आत्माहङ्कारस्तैः । समुन्नद्धाः प्रबलाः परस्परविरुद्धाश्च शक्तयो यस्येति पालनसंहारशक्ती उभे अपि प्रबले इत्यतः पालयितुं संहर्तुञ्च त्वं प्रभुर्यथेच्छसि तथा कुरु तुभ्यं नम एवेति भावः ॥ ३३ ॥ ❀ ❀ स्वस्मिन् कारुण्यमुत्पादयन्ती पूर्ववृत्तं स्मारयति स वा इति द्वाभ्याम् ॥ ३४ ॥ ❀ ❀ उपस्थे उपरिस्थायां मयि नावि नौकारूपायां स एव धराधर आदिशूकरो मत्स्वामी त्वं यो मां स्वभार्य्यां पयसि निमित्ते जिघांससि । अयमर्थः इमास्त्वत्प्रजा मदपत्यान्येव मदुत्सङ्गे स्थितानि नित्यमहं स्तन्यं पयः पाययाम्येव साम्प्रतमेतद् दुर्वृत्तमालक्ष्य शीलं शिक्षयन्ती माताप्यहं क्रुद्धा पयो न पाययामीति त्वं गृहपतिर्मां ताडयसीति ॥ ३५ ॥ ❀ ❀ किञ्च त्वं मां हनिष्यसीति विश्वसत्यप्यहं न विश्वसिमि, ईश्वराणां खलु का स्त्री के वा पुत्रभृत्यादय इत्याह नूनमिति । तस्येश्वरस्य गुणसर्गमायया गुणेषु देवमनुष्यतिर्यग्योनिषु सर्गो यतस्तया मायया अविद्यया मोहितं भ्रमितं चित्तवर्त्म त्वच्चरणोन्मुखं येषां तैरस्मद्विधैर्जनैः । वीराणां दयावीराणां यशः कुर्वन्तीति तेभ्य इति त्वं चेन्मां न दयसे तदा दयावीराणां यश एव यास्यतीति भावः ॥ ३६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । सप्तदशश्चतुर्थेऽयं सङ्गतः सङ्गतः सताम् ॥ १७ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

स्वमायया स्वकृपया आत्माश्रयया जीवविषयिण्या एतच्चराचरमादावसृजदधुना तयैव गोप्तुमुद्यतः सोऽयं धर्मपरः सर्वपालनरूपधर्मपरः नु अहो मामेव केवलां कथं जिघांसति ॥ ३१ ॥ ❀ ❀ अतः नूनं निश्चितम् ईशस्य समीहितं दुर्ज्जयया तस्येश्वरस्य मायया गुणमय्या शक्त्या हेतुभूतया अकृतात्मभिः अकृत ईश्वरे न नियोजित आत्मा मनो यैस्तैर्न लक्ष्यते । कः यः आत्मानं विश्वाकारमकरोत् "तदैक्षत बहु स्यां स्वयमात्मानमकुरुत सच्चत्यच्चाभवत्" इति श्रुतिभ्यः । नन्वेवं विकारित्वसंसारित्वादिदोषाः प्रसज्येरन् इत्यत्राह परत इति । सार्वविभक्तिकस्तसिः, पराभ्यो भिन्नस्वरूपाभ्यः प्रधानपुरुषादिरूपाभ्यः शक्तिभ्योऽकारयत्, न तु स्वरूपेण विकारी संसारी वेत्यर्थः । ननु तर्ह्यनेककारणसिद्धिरत्राह । य एक एवानेक इति । स्वयमेकः सजातीयविजातीयभेदद्वयशून्यः स्वगतानां प्रकृतिपुरुषादीनां स्वशक्तीनामपेक्षयानेकः । एवं स्वाभाविकभेदाभेदाश्रय इत्यर्थः । तथा च श्रुतयः "एकः सन्बहुधा विचचार, एको देवो बहुधा सन्निविष्टः, त्वमेकोऽसि बहुधा बहून् प्रविष्टः" इत्याद्याः स्मृतयश्च तत्र भगवान्मनुराह "एकत्वे सति नानात्वं नानात्वे सति चैकता । अचिन्त्यं ब्रह्मणो रूपं कस्तद्वेदितुमर्हति" इति श्रीमुखवचनं च 'एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम्' इति । हरिवंशे घण्टाकर्णवाक्यम् "केचिद्बहुत्वेन वदन्ति देवमेकात्मना केचिदमुं पुरातनम् । वेदान्तसंस्थापितसत्त्वयुक्तं द्रष्टुं तमीशं वयमुद्यतास्म ॥" इति । श्रीमत्पञ्चरात्रेऽपि "अभेदः केवलो भ्रान्तिस्तथा भेदोऽपि केवलः । तस्मादुचितः कर्तव्यो भेदाऽभेदमयो विधिः" इति । तथैवाह भगवान्सूत्रकारः "अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके । उभयव्यपदेशादहिकुण्डलवत्" इत्यादिं । पूर्वा-

चार्य्यवाक्यमपि "सर्वं हि विज्ञानमतो यथार्थकं श्रुतिस्मृतिभ्यो निखिलस्य वस्तुनः। ब्रह्मात्मकत्वादिति वेदविन्मतं त्रिरूतापिश्रुतिसूत्रसाधिता" इति ॥ ३२ ॥ ❀ ❀ भगवच्छक्तीः स्फुटतया वर्णयन्ती नमस्करोति सर्गादीति। योऽस्य विश्वस्य सर्गादिशक्तिभिः अनुरुणद्धि अनुवर्तते करोतीत्यन्वयः। कास्ता इत्याकाङ्क्षायामाह द्रव्यक्रियाकारकचेतनात्मभिरिति। द्रव्यमचेतनं प्रधानं क्रियाकारकचेतनाशब्दार्थः इन्द्रियदेवतान्तःकरणरूपः आत्मा जीवः उपलक्षणतया कालादीनां ग्रहणम् एतद्रूपाभिः कथम्भूताय समुन्नद्धनिरुद्धशक्तये समुन्नद्धा एकैका अतिप्रबला निरुद्धा शक्तिमदधीनस्थितिप्रवृत्तिकाः शक्तयो यस्य तस्मै ॥ ३३ ॥ ❀ ❀ यः सृष्टवान्स एवात्मविनिर्मितं जगत् संस्थापयिष्यन् आदिशूकरः सन् रसातलादम्भसो मामभ्युज्जहार ॥ ३४ ॥ ❀ ❀ यः धराधरः समभूत् स एव अपामुपस्थे उपरि नावि मयि अवस्थिताः प्रजा रिरक्षिषुः वीरमूर्तिः सन् अद्य मां पयसि दुग्धे निमित्ते जिघांससि। एतद्भगवच्चेष्टितमतिगह्वरमिति भावः ॥ ३५ ॥ ❀ ❀ भगवच्चेष्टितस्यातिगह्वरत्वं वदन्ती नमस्करोति नूनमिति। तस्य भवतो गुणाः शक्तिगुणाः सत्त्वादयस्तेषां सर्गः सृज्यत इति सर्गः संसारस्तत्र या मायाऽहंममात्मिका तया मोहितानि चित्तवर्त्मानि चित्तवृत्तयो येषां तैरस्मद्विधैर्जनैरीश्वराणां येषां भवतामीहितं चिकीर्षितं न ज्ञायते तेभ्यो नमः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे सप्तदशोऽध्यायः ॥ १७ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

संहारकाले मम वधो घटेतापि रक्षाकाले तदर्थमवतीर्णस्य तु तव मद्वधोऽनुचित एवेत्याह—य इति। य एव भगवान् स्वमायया प्रकृत्या आत्माश्रयया स्वाधीनया शक्त्यात्मिकया अत एवावितर्क्यया अन्यैर्मनसापि यथावज्ज्ञातुमशक्यया एतच्चराचरात्मकं विश्वमादावसृजत् सृष्टवान्। किल निश्चये। स एव तया निजशक्त्या माययैवायं पृथुस्वरूपः सन् स्वनिर्मितं विश्वं गोप्तुं रक्षितुमुद्यतः उद्युक्तः। अत एव धर्मस्थापनं विना रक्षाया असंभवाद्धर्मपरः सन् मां विश्वाधारभूतां तत्रापि गोरूपां कथं नु जिघांसति हन्तुमिच्छति। नु इत्याश्चर्ये। आश्चर्यमेतदित्यर्थः ॥ ३१ ॥ ❀ ❀ न केवलं पालनलीलायामेवाश्चर्यम्, किन्तु सृष्ट्यादिलीलायामपीति तत्प्रदर्शयति—नूनमिति। नूनं निश्चये। बतेति आश्चर्ये। यश्चेश्वरः सर्वथा कर्तुमकर्तुमन्यथा कर्तुं समर्थः शास्त्रप्रसिद्धः स्वत एकः परतो मायेक्षापरपर्यायेच्छातः 'स ऐक्षत बहुस्याम्' इति श्रुतेः अनेकः बहुरूपो जातः। तदेव दर्शयति—यस्तु प्रथमं ब्रह्माणमकरोत्। ततश्च तद्द्वारा सर्वं विश्वमकारयत्। तस्येशस्य समीहितं चेष्टितं लीला शास्त्रगम्या जनैर्न लक्ष्यते न ज्ञायते। तदज्ञाने कारणं सूचयन्ती जनान् विशिनष्टि—तन्माययेति। तस्य परमेश्वरस्य मायया दुर्जयया तच्छरणागमनं विना तत्स्वीकाराभावादुपायान्तरसहस्रेणापि निवर्त्तयितुमशक्यया अकृतात्मभिर्विषयाविष्टत्वेन विक्षिप्तचित्तैः। अत एव भवद्विमुखाः सन्तः संसारे क्लिश्यन्तीत्यहो आश्चर्यम् ॥ ३२ ॥ ❀ ❀ तत्कृपां विना स्वनिस्तारमपश्यन्ती तस्य विरुद्धधर्माश्रयत्वेनाचिन्त्यमैश्वर्यं प्रदर्शयन्ती नमस्यति—सर्गादिति। द्रव्याणि महाभूतानि क्रिया इन्द्रियाणि कारकाः देवाः चेतना बुद्धिः आत्माहंकारस्तैर्द्रव्यादिभिः स्वशक्तिभिर्योऽस्य विश्वस्य सर्गादिसृष्टिस्थितिभङ्गमनुरुणद्धि करोति तस्मै समुन्नद्धाः समुत्कटा विरुद्धा बन्धमोक्षहेतुभूताः विद्याऽविद्याधर्माऽधर्मादिरूपाः शक्तयो यस्य तस्मै वेधसेऽन्तर्यामिणे परस्मै पुरुषाय पुरुषोत्तमाय नम इत्यन्वयः ॥ ३३ ॥ ❀ ❀ पुनरप्याश्चर्याविष्टचित्ता तं क्षमापयन्ती तद्वृत्तं कथयति—स वा इति। यः पूर्वं सृष्टवान् स एव भगवान् आत्मना स्वेन विनिर्मितं भूतेन्द्रियान्तःकरणात्मकं जगत्संस्थापयिष्यन् सम्यक्स्थापयितुमादिसूकरः आदिवाराहमूर्तिः सन् मां रसातलादम्भसश्चाभ्युज्जहार उन्नीतवानित्यन्वयः। आदिसूकरः स वीरमूर्तिरित्यायुक्त्या प्रतीतं जन्म वारयन्ती संबोधयति—हे अज इति। स्वेच्छया प्रादुर्भाव एव तव न जीववत्कर्माधीनं जन्मेति भावः। तत्र सामर्थ्यं द्योतयन्ती संबोधयति—हे प्रभो इति ॥ ३४ ॥ ❀ ❀ स एव धराधरो वराहमूर्तिर्भवान् अपामुपस्थे जलस्योपरि मयि नावि आधारभूतायामवस्थिताः प्रजा रिरक्षिषुः रक्षितुमिच्छुः सन्नत्र वीरमूर्तिः पृथुरूपः समभूत् प्रादुर्भूतः। यः सर्वरक्षार्थमवतीर्णः सन्नुग्रशरः सन् मां सर्वाधारभूतां स्वस्थापितां पयसि अल्पे निमित्ते जिघांससि, तन्न युक्तमतः कृपया मामपि पालयेति भावः ॥ ३५ ॥ ❀ ❀ एवं युक्तत्वायुक्तत्वकथनेनाश्चर्यप्रदर्शनेन वा तच्छान्तिमपश्यन्ती पुनर्नमस्यति—नूनमिति। ईश्वराणामिति! भगवदवताराणामनन्तत्वात्तदभिप्रायेण बहुवचनम्। अस्मद्विधैर्जनैर्यत ईश्वराणां भगवदवताराणामीहितं लीला नूनं निश्चितं न ज्ञायत एवातस्तेभ्यो वीराणां निर्जितकार्यकरणसंघातानां सर्वतो विरक्तानां स्वभक्तानां यशस्करेभ्यो नम इति सम्बन्धः। लीलाया अज्ञाने उक्तमेव हेतुं पुनराह—तदिति। गुणानां सत्त्वादीनां यः सर्गो देवतेन्द्रियमहाभूतसंघातस्त्रीपुरुषविषयादिरूपस्तद्रूपा या तस्येश्वरस्य माया मोहनीशक्तिस्तया मोहितं विषयभोगे विक्षिप्तं चित्तमेव वर्त्म ज्ञानमार्गो येषां तैः ॥ ३६ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे कामनिरूपणे। सप्तदशो गतो वृत्तिमन्नोद्योगनिरूपकः ॥ ३ ॥

भाषानुवादः

कल्पके आरम्भमें आपने अपने आश्रित रहनेवाली अनिर्वचनीया मायासे ही इस चराचर जगत्की रचना की थी और उस मायाके ही द्वारा आप इसका पालन करनेके लिए तैयार हुए हैं। आप धर्मपरायण हैं; फिर भी मुझ गोरूपधारिणीको किस प्रकार मारना चाहते हैं ?॥ ३१॥ ❀ ❀ आप एक होकर भी मायावश अनेक रूप जान पड़ते हैं तथा आपने स्वयं ब्रह्माको रचकर उनसे विश्वकी रचना करायी है। आप साक्षात् सर्वेश्वर हैं, आपकी लीलाओंको अजितेन्द्रिय लोग कैसे जान सकते हैं ? उनकी बुद्धि तो आपकी दुर्जय मायासे विक्षिप्त हो रही है॥ ३२॥ ❀ ❀ आप ही पञ्चभूत, इन्द्रिय, उनके अधिष्ठातृ देवता, बुद्धि और अहङ्काररूप अपनी शक्तियोंके द्वारा क्रमशः जगत्की उत्पत्ति, स्थिति और संहार करते हैं। भिन्न-भिन्न कार्योंके लिये समय-समयपर आपकी शक्तियोंका आविर्भावतिरोभाव हुआ करता है। आप साक्षात् परमपुरुष और जगद्विधाता हैं, आपको मेरा नमस्कार है॥ ३३॥ ❀ ❀ अजन्मा प्रभो! आप ही अपने रचे हुए भूत, इन्द्रिय और अन्तःकरणरूप जगत्की स्थितिके लिये आदिवराहरूप होकर मुझे रसातलसे जलके बाहर लाये थे॥ ३४॥ ❀ ❀ इस प्रकार एक वार तो मेरा उद्धार करके आपने 'धराधर' नाम पाया था; आज वही आप वीरमूर्तिसे जलके ऊपर नौकाके समान स्थित मेरे ही आश्रय रहनेवाली प्रजाकी रक्षा करनेके अभिप्रायसे पैने-पैने बाण चढ़ाकर दूध न देनेके अपराधमें मुझे मारना चाहते हैं॥ ३५॥ ❀ ❀ इस त्रिगुणात्मक सृष्टिकी रचना करनेवाली आपकी मायासे मेरे-जैसे साधारण जीवोंके चित्त मोहग्रस्त हो रहे हैं। मुझ-जैसे लोग तो आपके भक्तोंकी लीलाओंका भी आशय नहीं समझ सकते, फिर आपकी किसी क्रियाका उद्देश्य न समझें तो इसमें आश्चर्य ही क्या है। अतः जो इन्द्रियसंयमादिके द्वारा वीरोचित यज्ञका विस्तार करते हैं, ऐसे आपके भक्तोंको भी नमस्कार है॥ ३६॥

इति सप्तदशोऽध्यायः॥ १७॥



# अथाष्टादशोऽध्यायः

## मैत्रेय उवाच

इत्थं पृथुमभिष्टूय रुषा प्रस्फुरिताधरम् । पुनराहावनिर्भीता संस्तभ्यात्मानमात्मना ॥ १ ॥
संनियच्छाभिभो मन्युं निबोध श्रावितं च मे । सर्वतः सारमादत्ते यथा मधुकरो बुधः ॥ २ ॥
अस्मिँल्लोकेऽथवामुष्मिन्मुनिभिस्तत्त्वदर्शिभिः । दृष्टा योगाः प्रयुक्ताश्च पुंसां श्रेयःप्रसिद्धये ॥ ३ ॥
तानातिष्ठति यः सम्यगुपायान् पूर्वदर्शितान् । अवरः श्रद्धयोपेत उपेयान् विन्दतेऽञ्जसा ॥ ४ ॥
ताननादृत्य यो विद्वानर्थानारभते स्वयम् । तस्य व्यभिचरन्त्यर्था आरब्धाश्च पुनः पुनः ॥ ५ ॥
पुरा सृष्टा ह्योषधयो ब्रह्मणा या विशाम्पते । भुज्यमाना मया दृष्टा असद्भिरधृतव्रतैः ॥ ६ ॥
अपालितानादृता च भवद्भिर्लोकपालकैः । चोरीभूतेऽथ लोकेऽहं यज्ञार्थेऽग्रसमोषधीः ॥ ७ ॥
नूनं ता वीरुधः क्षीणा मयि कालेन भूयसा । तत्र योगेन दृष्टेन भवानादातुमर्हति ॥ ८ ॥
वत्सं कल्पय मे वीर येनाहं वत्सला तव । धोक्ष्ये क्षीरमयान् कामाननुरूपं च दोहनम् ॥ ९ ॥
दोग्धारं च महाबाहो भूतानां भूतभावन । अन्नमीप्सितमूर्जस्वद्भगवान् वाञ्छते यदि ॥ १० ॥

अन्वयः—भीता अवनिः रुषा प्रस्फुरिताधरम् पृथुम् इत्थम् अभिष्टूय आत्मना आत्मानम् संस्तभ्य पुनः आह ॥ १ ॥ ❀ ❀ भो मन्युम् अभि संनियच्छ च मे श्रावितम् निबोध यथा मधुकरः बुधः सर्वतः सारम् आदत्ते ॥ २ ॥ ❀ ❀ तत्त्वदर्शिभिः मुनिभिः अस्मिन् अथवा अमुष्मिन् लोके पुंसाम् श्रेयःप्रसिद्धये योगाः दृष्टाः च प्रयुक्ताः ॥ ३ ॥ ❀ ❀ श्रद्धया उपेतः अवरः यः तान् पूर्वदर्शितान् उपायान् सम्यक् आतिष्ठति अञ्जसा उपेयान् विन्दते ॥ ४ ॥ ❀ ❀ यः अविद्वान् तान् अनादृत्य स्वयम् अर्थान् आरभते तस्य पुनः पुनः आरब्धाः अर्थाः व्यभिचरन्ति ॥ ५ ॥ ❀ ❀ विशांपते ब्रह्मणा याः ओषधयः पुरा सृष्टाः हि अधृतव्रतैः असद्भिः भुज्यमानाः मया दृष्टाः ॥ ६ ॥ ❀ ❀ लोकपालकैः भवद्भिः अपालिता च अनाहता अहम् लोके चोरीभूते अथ यज्ञार्थे ओषधीः अग्रसम् ॥ ७ ॥ ❀ ❀ ताः वीरुधः मयि भूयसा कालेन नूनम् क्षीणाः तत्र दृष्टेन योगेन आदातुम् भवान् अर्हति ॥ ८ ॥ ❀ ❀ वीर येन वत्सला अहम् तव क्षीरमयान् कामान् धोक्ष्ये मे वत्सम् च अनुरूपम् दोहनम् उपकल्पय ॥ ९ ॥ ❀ ❀ महाबाहो भूतभावन भगवान् भूतानाम् ईप्सितम् ऊर्जस्वत् अन्नम् यदि वाञ्छेत दोग्धारम् च ॥ १० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अष्टादशे महीवाक्याद्वत्सपात्रादिभेदतः । पृथ्वादिभिस्तु सा दुग्धा स्वं स्वं दुग्धमितीर्यते ॥ (१) ॥

हे अभिभो प्रभो यद्वा भो देव अभि अभयं यथा भवत्येवं मन्युं संनियच्छ श्रावितं विज्ञापितम् । न मद्वाक्येऽनादरः कर्तव्य इत्याह । बुधो हि सर्वतः सारमादत्ते ॥ १–२ ॥ ❀ ❀ मयि जीर्णाश्चौषधीरुपायेन गृहाणेति वक्तुमुपायेन सर्वं सिद्धयति नान्यथेत्याह अस्मिन्निति त्रिभिः । पुंसां श्रेयसः पुरुषार्थस्य प्रसिद्धयेऽस्मिँल्लोके कृष्यादयोऽमुष्मिंश्च लोकेऽग्निहोत्रादयो योगा उपायाः दृष्टाः ज्ञाताः प्रयुक्ता अनुष्ठिताश्च ॥ ३ ॥ ❀ ❀ पूर्वैर्दर्शितान् अवरोऽर्वाचीनः ॥ ४ ॥ ❀ ❀ अविद्वान्विद्वानपीति वा व्यभिचरंति न सिद्धयंति ॥ ५ ॥ ❀ ❀ सहेतुकमुपायमाह पुरेति षड्भिः ॥ ६ ॥ ❀ ❀ भवद्भिरिति राजसामान्याभिप्रायेण वेनादिभिरिति वा अपालिता चोराद्यनिवारणात् अनादृता च यज्ञादिप्रवर्तनाभावात् । यज्ञार्थे अग्रसं गिलितवती अन्यथाऽधृतव्रतैर्भुक्ता न प्ररोक्ष्यंते ततश्च यज्ञादयो न सिद्धयेरन्निति भावः ॥ ७ ॥ ❀ ❀ क्षीणा

१. प्रा० पा०—क्रोधं । २. प्रा० पा०—अथवा । ३. प्रा० पा०—प्रारब्धा० । ४. प्रा० पा०—दृष्टेन योगेन ।

जीर्णाः ॥ ८ ॥ ❀ ❀ दोहनं दोहनपात्रम् । दोग्धारं चोपकल्पय । धोक्ष्ये प्रपूरयिष्यामि ॥ ९ ॥ ❀ ❀ भूतानामभीप्सितमन्नम् । ऊर्जस्वद्बलप्रदम् ॥ १० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

आदिना मुन्यादिग्रहः ( १ ) । इत्थं पूर्वोक्तरीत्या आत्मना बुद्ध्यात्मानं मनः संस्तभ्य निरुध्य ॥ १ ॥ ❀ ❀ अभितो भातीत्यभिमुखस्तत्संबुद्धौ तथा अभिभातेः प्रभ्वर्थाप्रसिद्धिमालक्ष्याह—यद्वेति । भो इत्युक्तेर्देवेत्याक्षेपलब्धमेव 'यद्येनानुपपन्नं तत्तेनाक्षिप्यते' इति न्यायात् । मधुकरो भ्रमरः ॥ २ ॥ ❀ ❀ "योगोऽपूर्वार्थसंप्राप्तिसंगतिध्यानयुक्तिषु" "योगोऽग्रांगाभियोगोपायसंयोगाहवेषु च" इति कोशात् । अस्मिन्नित्यादिनिमित्ते सप्तमीद्वयम् । एतल्लोकनिमित्तं परलोकनिमित्तञ्चेत्यर्थः ॥ ३ ॥ ❀ ❀ ततः किमित्यतोन्वयव्यतिरेकं वाह उपेयान् उपायसाध्यफलानि ॥ ४ ॥ ❀ ❀ तान्पूर्वंदर्शितान् ॥ ५ ॥ ❀ ❀ असद्भिरकृतपञ्चयज्ञैः 'यज्ञशिष्टाशिनः सन्तः' इत्युक्तेरयज्ञशेषभोजिन एवासन्त इति लभ्यते । अधृतव्रतैस्त्यक्ततपोभिः ॥ ६ ॥ ❀ ❀ भवद्भिरिति । वेनं मनसि कृत्वा तत्पुत्रे पृथावुपालंभः । वेनमृतौ लोके चौरीभूते चौरप्रचुरे । इति भाव इति । सत्सूत्पन्नेषु यज्ञस्यावश्यंभावित्वनियमेन त्वद्यज्ञप्रवृत्तये मया सर्वाणि बीजानि ग्रस्तानीत्याशयः ॥ ७ ॥ ❀ ❀ जीर्णाः सूक्ष्मरूपेण स्थिताः । तत्र तत्तत्कार्यासाधने । दृष्टेन तत्तच्छास्त्रोपदिष्टेन, ता आदातुं ग्रहीतुम् ॥ ८ ॥ ❀ ❀ वत्सला वत्सप्रिया । क्षीरमयान् क्षीरस्वरूपान् । वीरेति । भीताया मम रक्षणेनैव तव वीरत्वं स्थास्यति नान्यथेति भावः ॥ ९ ॥ ❀ ❀ महाबाहो इति । युद्धवीरस्य तव मयि भुजबलप्रदर्शनं नोचितमिति भावः । हे भूतभावनेति । सर्वभूतपालकस्य तव मत्पालनमप्युचितमेवेत्याशयः । भूतानामूर्जस्वद्बलहेतुभूतमन्नम् । यद्वा—महांतः श्लाघनीया असंगगतित्वाद्वाहा अश्वा यस्य स तथेति भगवद्विशेषणम् । एतेनेंद्रलोकं गत्वेन्द्रं जित्वापि वृष्टिं कारयितुं समर्थोसीत्युक्तम् ॥ १० ॥

### श्रीमद्वीरराघवव्याख्या

एवं सर्वकारणत्वेन विचित्रशक्तिमत्त्वेन च पृथुं प्रस्तूय तदभिमतौषधिबीजनिर्गमोपायं विवक्षन् तत्र तं विश्वासयितुं प्रसादयन्त्याह महीत्याह मुनिः । इत्थं पूर्वोक्तप्रकारेण पृथुमभिष्टूय ततोप्यनिवृत्तरुषा प्रस्फुरितः नितरां चलितः अधरोष्ठो यस्य ते दृष्ट्वेति शेषः, भीता सत्यवनिर्मही आत्मानं मन आत्मना बुद्ध्या संस्तभ्य निर्भयं कृत्वा आह ॥ १ ॥ ❀ ❀ उक्तमेवाह । भो हे पृथो ! अभि अभितः कात्स्न्येन मन्युं क्रोधं सन्नियच्छ उपसंहर मे मया श्रावितं विज्ञापितं निबोध जानीहि । किं तदित्यत्राह । बुधः सारासारविभागज्ञः यथा मधुकरः भृङ्गः तथा सर्वतः सर्वेभ्यो वस्तुभ्यः सारमादत्ते गृह्णाति । वक्ष्यमाणरीत्या मत्तः सारभूतक्षीरादानेनैवेष्टसिद्धौ किं वृथा मह्यं क्रुध्यसीति भावः ॥ २ ॥ ❀ ❀ मया गीर्णा ओषधीरुपायेन गृहाणेति वक्तुमुपायेन सर्वं सिध्यति नान्यथेत्याह अस्मिन्निति त्रिभिः । पुंसां कामिनां श्रेयसः पुरुषार्थस्य प्रसिद्धये निष्पत्तये तत्त्वदर्शिभिः मुनिभिरस्मिँल्लोके ये उपायाः कृषिगोरक्षवाणिज्यादयः जीवनोपाया दृष्टा विज्ञाता निर्णीता इति यावत् ये चामुष्मिन् परस्मिन् लोके स्वर्गसाधनभूता अग्निहोत्रादयः उपायाः प्रयुक्ता अनुष्ठिताः, चशब्दात् दृष्टाश्च ॥ ३-४ ॥ ❀ ❀ तानेव पूर्वैर्मुनिभिर्दर्शितानुपायान् योऽवरोऽर्वाचीनः सम्यक् श्रद्धया कर्तव्येषु त्वरया उपेतः युक्तः सन्नातिष्ठति स एवाञ्जसा सुखेनोपयानुपायसाध्यान् विन्दते लभते । अन्यस्तु न विन्दत इत्याह तानिति । यो विद्वानविद्वान् वा तान् पूर्वदर्शितानुपायाननादृत्य स्वयमर्थान् स्वबुद्ध्या स्वबुद्धिमात्रेण पुरुषार्थसाधनत्वेनावधारणीयार्थान् पुरुषार्थोपायाभासानारभते तस्यार्थास्त उपायाभासाः पुनः पुनः प्रारब्धाश्च अन्तरायविहतौ पुनः पुनरनुष्ठिता अपि व्यभिचरन्ति, न फलजनका भवन्तीत्यर्थः ॥ ५ ॥ ❀ ❀ नन्वस्त्वेवं कोऽसावोषधिबीजनिर्गमोपायः, किमर्थं च तानि स्वमाग्रस इत्यत्राह पुरेति । हे विशाम्पते ! ब्रह्मणा पुरा या ओषधयः सृष्टास्ता इह जीवनार्थत्वेन यज्ञानुष्ठानद्वारा परत्र लोके स्वर्गाद्यर्थत्वेन सृष्टास्ता ओषधयः अधृतव्रतैः लोकपालनयज्ञानुष्ठानव्रतरहितैरत एवासद्भिः भुज्यमाना मया दृष्टा असद्भिर्भुज्यमाना इमा ओषधयः समूला नश्येयुरित्यालोचिता इत्यर्थः ॥ ६ ॥ ❀ ❀ अहं च भवद्भिर्भवादृशैः लोकपालैरपालिता अनादृता च सती लोके सर्वस्मिन् चौरीभूते चौरप्राये सति यज्ञार्थे यज्ञनिमित्ते ओषधीरग्रसं गिलितवती । असद्भिर्भुज्यमाना न रक्ष्यन्ति ततश्च यज्ञादयो न सिध्येयुरित्यालोच्याग्रसमित्यर्थः ॥ ७ ॥ ❀ ❀ ता मया गीर्णा वीरुधः ओषधयः भूयसा महता कालेन मयि क्षीणाः जीर्णाः नूनं निश्चये, जीर्णानां पुनर्निर्गमने दृष्टेन निश्चितेन योगेनोपायेन आदातुं ग्रहीतुमर्हति ॥ ८ ॥ ❀ ❀ कोऽसौ दृष्टो योगस्तत्राह वत्समिति त्रिभिः । हे वीर महाबाहो ! हे भूतभावन ! यदि भवान् भूतानामूर्जस्वद्बलप्रदमन्नं वाञ्छति तर्हि मे गोरूपाया ममानुरूपं वत्सं दोहने दुहन्त्यस्मिन्निति दोहनं पात्रं दोग्धारं चोपकल्पय, येन वत्सादिसामग्रीसंपादनेन अहं तव वत्सला त्वद्विषये वात्सल्यवती क्षीरमयान् क्षीरविकारान् मत्तः क्षीरप्रकृतिकान् कामान् काम्यन्त इति कामा ओषधीश्छन्दःसोमवीर्यौजोबलासवादयस्तान् धोक्ष्ये क्षीररूपेण प्रपूरयिष्यामि ॥ ९-१० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

स्वरूपभूता गुणा हरेरपरोक्षज्ञानाद्व्यज्यन्त इत्येतदर्थसंग्रहार्थं भूमेस्तत्तद्वसुदोहनं निरूप्यतेऽस्मिन्नध्याये। तत्रादौ पृथोः क्रोधशमनाय पुनर्भूमेस्तं प्रतिवचनप्रकारं वक्ति इत्थमिति ॥ १ ॥ ❀ ❀ कथं नियच्छामि क्रोधं येन तच्छान्तिहेतुं श्रुत्वार्द्रान्तःकरणो भवामीति तत्राह निबोधेति। पुंसेह सद्धर्म एव शिक्षणीयो न सङ्किकाधर्म इत्याशयेनाह सर्वत इति ॥ २ ॥ ❀ ❀ कीदृशं श्राव्यते यत्प्रकृतोपयोगि स्यादत्राह अस्मिन्निति। लोके कृष्यादिश्रेयःसिद्धये बीजाद्यर्जनोपायाः, अमुष्मिन् स्वर्गादौ यागादियोगास्तत्त्वदर्शिभिर्मुनिभिर्दृष्टाः प्रयुक्ताश्चेत्यन्वयः ॥ ३ ॥ ❀ ❀ ततः किमित्यतोऽन्वयव्यतिरेकावाह। तानातिष्ठतीति ॥ ४ ॥ ❀ ❀ अविद्वानव्युत्पन्नः, व्यभिचरन्ति नियमेन न सिध्यन्ति ॥ ५ ॥ ❀ ❀ किं बहुकथाकथनेनाधुनौषधीनामनुपलम्भः कस्मात्तन्निमित्तं कथयेति तत्राह पुरेति। याः पुरा विरिञ्चेन सृष्टास्ता ओषधीरहमग्रसमित्यन्वयः ॥ ६ ॥ ❀ ❀ असत्पुरुषैर्भुज्यमानत्वं भवादृशेन क्षत्रियेणारक्षितत्वमगोपितत्वं नृलोकस्य चोरप्रायत्वं चावेक्ष्य सत्सूपन्नेषु श्रीनारायणपूजालक्षणयज्ञप्रयोजनस्यावश्यकत्वादिति ॥ ७ ॥ ❀ ❀ तर्हि ता देहीति तत्राह नूनमिति। क्षीणानामापादनं दुःसाध्यमिति तत्राह तत्रेति। शास्त्रदृष्टेन, ननु स्वरूपतो नष्टा उत लघुतामापन्ना इति संशयो मा भूत्तत्कार्यसाधने तच्छास्त्रदृष्टोपायेन सर्वं साध्यम् ॥ ८ ॥ ❀ ❀ तथापि किं रामानुचराणां वानराणां वा रेणुकाया वा मृतसंजीविन्यादिनेत्यत्र प्राप्तमुपायं वक्ति वत्समिति। वत्सला वत्सप्रिया अनुरूपं तत्तद्योग्यं दोहनं दोहक्रियाविशेषम् ॥ ९ ॥ ❀ ❀ नैतावता पूर्यत इत्युक्तं दोग्धारं चेति। ओजस्वदवष्टम्भकृत्प्राणधारणशक्तिप्रदमित्यर्थः ॥ १० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

नूनमिति। पूर्वपूर्वकल्पेषु पूर्वपूर्वपृथुभिर्दृष्टेन शास्त्रद्वारा ज्ञानेन योगेनोपायेन ॥ १-८ ॥ ❀ ❀ वत्समिति युग्मकम् ॥ ९-१० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अष्टादशेऽवनिं कामधेनुं दुग्ध्वा स्वमीप्सितम्। वत्सपात्रादिभेदेन दुग्धं सर्वेऽपि लेभिरे ॥ ( १ ) ॥

हे अभिभो प्रभो! सर्वत इति यद्यप्यहं निकृष्टा, तदपि ममापि वाचं शृणु। मद्वाचि सारस्तिष्ठति चेत्त्वं गृहाण नान्यथेत्यर्थः ॥ १-२ ॥ ❀ ❀ गवां दुग्धपूर्णादप्यापीनादुपायेन दोहनेनैव दुग्धं लभ्यते नतु गालिताद्विदारिताद्वा। तस्मादित्यतो मयि स्थितान्यन्नानि सर्वाणि त्वमुपायेन गृहाणेति वक्तुमुपायस्य प्रामाण्यं दर्शयति अस्मिन्निति। योगा उपाया अस्मिन् लोके कृष्यादयः, अमुष्मिंश्च लोके अग्निहोत्रादयः दृष्टाः प्रयुक्ता अनुष्ठिताश्च ॥ ३ ॥ ❀ ❀ अवरोऽर्वाचीनः। उपेयान् साध्यवस्तूनि ॥ ४-५ ॥ ❀ ❀ प्रकृतमाह। पुरेति षड्भिः ॥ ६ ॥ ❀ ❀ भवद्भिरिति वेनं मनसि कृत्वा तत्पुत्रे पृथावुपालम्भः, अपालिता यज्ञादिप्रवर्त्तनाभावात् प्रत्युत विधर्मप्रवर्त्तनादनादृता अथ अनन्तरं चौरीभूते इति वेने मृते सतीत्यर्थः। अग्रसमिति यदि नाग्रसिष्यं तदाहमद्य कथं प्राप्स्य इत्यर्थः। यज्ञार्थे त्वत्प्रवर्त्तयिष्यमाणानां यज्ञानां कृते ॥ ७ ॥ ❀ ❀ क्षीणाः सूक्ष्मतया स्थिताः। दृष्टेन योगेन वक्ष्यमाणेनोपायेन ॥ ८ ॥ ❀ ❀ दोहनं दोहपात्रं धोक्ष्ये प्रपूरयिष्यामि। उर्ज्जस्वत् बलप्रदम् ॥ ९-१० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

भूमिवाक्यात्तां पृथ्वाद्या दुदुहुरित्यष्टादशे वर्ण्यते इत्थमिति। आत्मानं मनः संस्तभ्य स्थिरं कृत्वा ॥ १ ॥ ❀ ❀ भोः प्रभो! मन्युं क्रोधमभि निःशेषतः संयच्छ उपसंहर, मे श्रावितं प्रार्थितं निबोध, यतो बुधः यथा मधुकरः पुष्पेभ्यः सारं गृह्णाति तथा सर्वतः सर्वेभ्यः सारमादत्ते, तथोक्तं महाभारते "अपि बालात्प्रवदतो ह्यपि मूर्खात्प्रजल्पतः। सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदः" इति ॥ २ ॥ ❀ ❀ अस्मिन् लोके कृष्यादयः अमुष्मिन् अग्निहोत्रादयः, ते एव पुसां श्रेयःप्रसिद्धये मनोरथलाभाय भवन्ति ॥ ३-४ ॥ ❀ ❀ अर्थाः उद्योगाः व्यभिचरन्ति निष्फला भवन्ति ॥ ५-७ ॥ ❀ ❀ वीरुधः ओषधयः क्षीणाः जीर्णाः। तत्र आदाने दृष्टेन लोकप्रसिद्धेन आदातुं ग्रहीतुम् ॥ ८ ॥ ❀ ❀ लोकप्रसिद्धं योगमेवाह वत्समिति। यदि भूतानामीप्सितमूर्ज्जस्वत् बलप्रदमन्नं वाञ्छते तर्हि येनाहं कामान् धोक्ष्ये तादृशं वत्सं दोहनं पात्रं दोग्धारं च प्रकल्पयेति द्वयोरन्वयः ॥ ९-१० ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

सप्तदशे क्रियायोगो वर्णितः पृथुना कृतः। अष्टादशे फलं तस्य कामपूर्तिर्निरूप्यते ॥ ( १ ) ॥

भूम्यैवं स्तुतोपि प्रजाकामस्यापूर्णत्वान्न संतुष्टो जातस्तदान्नादिभिः प्रजाकामपूर्तिं विना नास्य संतोष इति निश्चित्य भूमिस्तदुपायं विज्ञापितवतीत्याह—इत्थमिति। रुषा क्रोधेन प्रस्फुरितमधरं यस्य तं पृथुमित्थं वर्णितप्रकारेणाभिष्टूय स्तुत्वापि

तस्य क्रोधशान्तिमदृष्ट्वा भीतावनिरात्मानं मनः आत्मना बुद्ध्या संस्तभ्य धैर्ययुक्तं कृत्वा पुनराहेत्यन्वयः ॥ १ ॥ ❁ ❁ पृथिवीविज्ञापनमेव दर्शयति—संनियच्छेति दशभिः। हे अभिभो ! मन्युं क्रोधं संनियच्छ सम्यक् निरवशेषेणोपसंहर, मे मया श्रावितं विज्ञापितं च निबोध अवधारय। क्रोधे सति तदावेशेन त्वया सम्यगवधारयितुं भयेन मया विज्ञापयितुं च न शक्यते। अभितः सर्वतः सर्वस्मिन् देशे काले च भवति प्रभवति प्रादुर्भवतीति वा सोऽभिभुस्तत्संबोधनेन तव कोपसंहारं विना मम कुत्रापि कदापि कथमपि निर्वाहो नास्तीति भये कारणं सूचितम्। त्वं सर्वलोकजीवनहेतुः सर्वौषधिग्रासादतिशयेन दुष्टास्यतस्तव वाक्यं न श्रोतव्यमिति चेत्तत्राह—सर्वत इति। लोके बुधो हि सर्वतः सतोऽसतो वा सारं स्वकार्यानुकूलमादत्ते गृह्णाति न तद्दोषान् पश्यति। तत्र दृष्टान्तमाह—यथेति। मधुकरो भ्रमरो यथा पुष्पेभ्यः सारं मधु गृह्णाति न तद्दोषान् कण्टकादीन् गणयति तद्वदित्यर्थः। तथा च यदि मद्विज्ञापनं भवदीयकार्यानुकूलं तदा ग्राह्यमन्यथोपेक्षणीयमिति भावः ॥ २ ॥ ❁ ❁ किं कथयसि कथयेत्यभिप्रायं ज्ञात्वाह—अस्मिन्निति। अस्मिँल्लोकेऽथवामुष्मिन् परलोके च पुंसां श्रेयसः फलस्य प्रसिद्धये प्राप्तये मुनिभिर्योगा उपायाः दृष्टाः शास्त्रतो निश्चिताः लोके प्रचारार्थं प्रयुक्ता अनुष्ठिताश्च। उपायानां फलाव्यभिचारित्वं सूचयन्ती मुनीनां ज्ञानातिशयं दर्शयति—तत्त्वदर्शिभिरिति। तत्रास्मिन् लोके कृष्यादयः। अमुष्मिन् लोके यज्ञादयः ॥ ३ ॥ ❁ ❁ सत्यमुपाया दृष्टाः प्रयुक्ताश्च तेन किमत आह—तानिति। अवरः इदानींतनोऽपि यः श्रद्धयोपेतः श्रद्धावांस्तान् पूर्वमुनिभिः प्रदर्शितानुपायान् सम्यगातिष्ठति अनुतिष्ठति सोऽञ्जसा अनायासेनोपेयान् फलानि विन्दत इति संबन्धः ॥ ४ ॥ ❁ ❁ विपक्षे दोषमाह—तानिति। यो विद्वान् तानुपायान् जानन्नपिताननादृत्य स्वयं स्वेच्छया कल्पितान् अर्थान् उपायान् आरभते अनुतिष्ठति तस्य तेऽर्थाः पुनः पुनरारब्धा अपि व्यभिचरन्ति फलं न साधयन्ति ॥ ५ ॥ ❁ ❁ सत्यं लोक एवमेव तेन प्रकृते किमागतं तत्राह—पुरेति षड्भिः। लोकयात्रार्थं यज्ञाद्यर्थं च या हि प्रसिद्धमेतत् पुरा सृष्ट्यादौ ओषधयो व्रीहियवादयो ब्रह्मणा सृष्टा उत्पादितास्ता असद्भिर्दुराचारैः अधृतव्रतैः शास्त्राचारापेतैर्भुज्यमाना मया दृष्टाः। अत्राहं यर्हि किञ्चिदनृतं वदेयं तर्हि भवांस्तज्ज्ञातुं शक्तोऽस्त्येवेति सूचयन्ती सम्बोधयति—हे विशां पते इति। विशां वैश्यानां बुद्धिमतां पतित्वादिति भावः ॥ ६ ॥ ❁ ❁ भवद्भिर्लोकपालकैः राजभिश्चोरायनिवारणेन कृष्याद्यप्रवर्तनेन चापालिता यज्ञाद्यप्रवर्तनेनानादृता चाहमथात एव लोके चौरीभूते सति यज्ञार्थे यदि कश्चिद्धर्मात्मा राजाऽभविष्यत्तदा पुनर्यज्ञप्रवृत्तिरभविष्यदित्याशयेनाहमौषधीरग्रसं गिलितवती। अन्यथा असद्भिर्भुक्तानामुपद्रवहेतुत्वात् कृष्याद्युपायाभावेन च पुनः प्रसवाभावाच्च निर्मूलत्वेन यज्ञादिप्रवृत्तिः पुनर्न स्यान्मयि भाराधिक्यं च स्यादिति भावः ॥ ७ ॥ ❁ ❁ तर्हीदानीं यज्ञार्थं कथं न ता मुञ्चसि तत्राह—नूनमिति। ता वीरुधः ओषधयो भूयसा महता कालेन मयि नूनं निश्चितं नात्र संशयः क्षीणाः जीर्णाः। तर्हि मम कथं तत्प्राप्तिस्तत्राह—तत्रेति। तत्र तत्प्राप्तौ दृष्टेन प्रसिद्धेन योगेन उपायेन भवांस्ता मत्त आदातुं स्वीकर्तुमर्हति ॥ ८ ॥ ❁ ❁ तर्हि को वात्रोपायस्तत्राह—वत्समिति द्वाभ्याम्। भूतानि भावयति पालयतीति भूतभावनस्तत्संबोधनं हे भूतभावन ! भूतपालकत्वात्तदर्थं भूतानामीप्सितमूर्जस्वत् बलसम्पादकमन्नं यदि भगवान् वाञ्छते इच्छति तदा मे गोरूपाया वत्सं कल्पय संपादय। तं विना क्षीरमोकस्याशक्यत्वात्। तथा क्षीरानुरूपं दोहनं पात्रं च कल्पय। तथा दोग्धारं च कल्पय। येन वत्सादिकल्पनेन वत्सला वत्सवती सत्यहं क्षीरमयान् क्षीरस्थानापन्नांस्तव कामानन्नादीन् पदार्थान् धोक्ष्ये प्रपूरयिष्यामीति द्वयोरन्वयः। एतत्कल्पनायां तव सामर्थ्यमस्तीति द्योतनाय सम्बोधनद्वयं हे वीर इति हे महाबाहो इति च ॥ ९-१० ॥

## भाषानुवादः

### पृथ्वी-दोहन

श्रीमैत्रेयजी कहते हैं—विदुरजी ! इस समय महाराज पृथुके होठ क्रोधसे काँप रहे थे। उनकी इस प्रकार स्तुति कर पृथ्वीने अपने हृदयको विचारपूर्वक समाहित किया और डरते-डरते उनसे कहा ॥ १ ॥ ❁ ❁ 'प्रभो ! आप अपना क्रोध शान्त कीजिये और मैं जो प्रार्थना करती हूँ, उसे ध्यान देकर सुनिये। बुद्धिमान् पुरुष भ्रमरके समान सभी जगहसे सार ग्रहण कर लेते हैं ॥ २ ॥ ❁ ❁ तत्त्वदर्शी मुनियोंने इस लोक और परलोकमें मनुष्योंका कल्याण करनेके लिए कृषि, अग्निहोत्र आदि बहुत-से उपाय निकाले और काममें लिये हैं ॥ ३ ॥ ❁ ❁ उन प्राचीन ऋषियोंके बताये हुए उपायोंका इस समय भी जो पुरुष श्रद्धापूर्वक भलीभाँति आचरण करता है, वह सुगमतासे अभीष्ट फल प्राप्त कर लेता है ॥ ४ ॥ ❁ ❁ परन्तु जो तर्कशील पुरुष उनका अनादर करके अपने मनःकल्पित उपायोंका आश्रय लेता है, उसके सभी उपाय और प्रयत्न बार-बार निष्फल होते रहते हैं ॥ ५ ॥ ❁ ❁ राजन् ! पूर्वकालमें ब्रह्माजीने जिन धान्य आदिको उत्पन्न किया था, मैंने देखा कि यम-नियमादि व्रतोंका पालन न करनेवाले दुराचारी लोग ही उन्हें खाये जा रहे हैं ॥ ६ ॥ ❁ ❁ लोकरक्षक ! आप राजा लोगोंने मेरा पालन और आदर करना छोड़ दिया; इसलिये सब लोग चोरोंके समान हो गये हैं। इसीसे यज्ञके लिये ओषधियोंको मैंने अपनेमें छिपा लिया ॥ ७ ॥ ❁ ❁ अब अधिक समय हो जानेसे अवश्य ही वे धान्य मेरे उदरमें जीर्ण हो गये हैं; आप उन्हें पूर्वाचार्योंके बतलाये हुए उपायसे निकाल लीजिये ॥ ८ ॥ ❁ ❁ लोकपालक वीर ! यदि आपको समस्त प्राणियोंके अभीष्ट एवं बलकी

वृद्धि करनेवाले अन्नकी आवश्यकता है तो आप मेरे योग्य बछड़ा, दोहनपात्र और दुहनेवालेकी व्यवस्था कीजिये; मैं उस बछड़ेके स्नेहसे पिन्हाकर दूधके रूपमें आपको सभी अभीष्ट वस्तुएँ दे दूँगी ॥ ९-१० ॥

समां च कुरु मां राजन्देववृष्टं यथा पयः । अपर्तावपि भद्रं ते उपावर्तेत मे विभो ॥ ११ ॥
इति प्रियं हितं वाक्यं भुव आदाय भूपतिः । वत्सं कृत्वा मनुं पाणावदुहत्सकलौषधीः ॥ १२ ॥
तथा परे च सर्वत्र सारमाददते बुधाः । ततोऽन्ये च यथाकामं दुदुहुः पृथुभाविताम् ॥ १३ ॥
ऋषयो दुदुहुर्देवीमिन्द्रियेष्वथ सत्तम । वत्सं बृहस्पतिं कृत्वा पयश्छन्दोमयं शुचि ॥ १४ ॥
कृत्वा वत्सं सुरगणा इन्द्रं सोममदूदुहन् । हिरण्मयेन पात्रेण वीर्यमोजो बलं पयः ॥ १५ ॥
दैतेया दानवा वत्सं प्रह्लादमसुरर्षभम् । विधायादूदुहन् क्षीरमयःपात्रे सुरासवम् ॥ १६ ॥
गन्धर्वाप्सरसोऽधुक्षन् पात्रे पद्ममये पयः । वत्सं विश्वावसुं कृत्वा गान्धर्वं मधु सौभगम् ॥ १७ ॥
वत्सेन पितरोऽर्यम्णा कव्यं क्षीरमधुक्षत । आमपात्रे महाभागाः श्रद्धया श्राद्धदेवताः ॥ १८ ॥
प्रकल्प्य वत्सं कपिलं सिद्धाः सङ्कल्पनामयीम् । सिद्धिं नभसि विद्यां च ये च विद्याधरादयः ॥ १९ ॥
अन्ये च मायिनो मायामन्तर्धानाद्भुतात्मनाम् । मयं प्रकल्प्य वत्सं ते दुदुहुर्धारणामयीम् ॥ २० ॥

अन्वयः—विभो राजन् देववृष्टम् पयः अपर्तौ अपि यथा मे उपावर्तेत माम् समाम् कुरु च ते भद्रम् ॥ ११ ॥ ❀ ❀ भुवः इति प्रियम् च हितम् वाक्यम् आदाय भूपतिः मनुम् वत्सम् कृत्वा सकलौषधीः पाणौ अदुहत् ॥ १२ ॥ ❀ ❀ तथा अपरे च बुधाः सर्वत्र सारम् आददते ततः अन्ये च पृथुभाविताम् यथाकामम् दुदुहुः ॥ १३ ॥ ❀ ❀ सत्तम अथ ऋषयः बृहस्पतिम् वत्सम् कृत्वा देवीम् इन्द्रियेषु छन्दोमयम् शुचि पयः दुदुहुः ॥ १४ ॥ ❀ ❀ सुरगणाः इन्द्रम् वत्सम् कृत्वा हिरण्मयेन पात्रेण सोमम् वीर्यम् ओजः बलम् पयः अदूदुहन् ॥ १५ ॥ ❀ ❀ दैतेयाः दानवाः असुरर्षभम् प्रह्लादम् वत्सम् विधाय अयःपात्रे सुरासवम् क्षीरम् अदूदुहन् ॥ १६ ॥ ❀ ❀ गन्धर्वाप्सरसः विश्वावसुम् वत्सम् कृत्वा पद्ममये पात्रे मधुसौभगम् गान्धर्वम् पयः अधुक्षन् ॥ १७ ॥ ❀ ❀ महाभागाः श्राद्धदेवताः पितरः श्रद्धया अर्यम्णा वत्सेन आमपात्रे कव्यम् क्षीरम् अधुक्षत ॥ १८ ॥ ❀ ❀ सिद्धाः च ये विद्याधरादयः कपिलम् वत्सम् प्रकल्प्य नभसि सङ्कल्पनामयीम् सिद्धिम् च विद्याम् ॥ १९ ॥ ❀ ❀ च अन्ये ते मायिनः मयम् वत्सम् प्रकल्प्य अन्तर्धानाद्भुतात्मनाम् धारणामयीम् मायाम् दुदुहुः ॥ २० ॥

### श्रीधरस्वामिविरचित-भावार्थदीपिका

अपगतेऽपि वर्षर्तौ देववृष्टमुदकं यथा मे मयि सर्वतो वर्तेत ॥ ११ ॥ ❀ ❀ मनुं स्वायंभुवम्। ओषधीर्व्रीह्यादीः ॥ १२ ॥ ❀ ❀ प्रसंगादर्थांतरमाह तथेति। भुवो वाक्यं श्रुत्वा यथा पृथुरेवं सर्वत्र वाक्ये परेऽपि सारमाददते। प्रस्तुतमनुवर्तयति। ततोऽन्ये च ऋष्यादयः पंचदश दुदुहुः। पृथुना भावितां वशीकृताम् ॥ १३ ॥ ❀ ❀ देवीं पृथ्वीम्। वाङ्मनःश्रवणैर्वेदग्रहणादिंद्रियाणां पात्रत्वम् ॥ १४ ॥ ❀ ❀ सोममममृतम्। वीर्यं मनःशक्तिम्। ओज इंद्रियशक्तिं बलं देहशक्तिं च तदेव पयः ॥ १५ ॥ ❀ ❀ सुरामासवं च तालादिमद्यम् ॥ १६ ॥ ❀ ❀ मधु वाङ्माधुर्यं सौंदर्यं तत्सहितम् ॥ १७ ॥ ❀ ❀ कव्यं पितॄणामन्नम्। आमपात्रे अपक्वे मृन्मये अधुक्षत दुदुहुः ॥ १८ ॥ ❀ ❀ संकल्पनामयीमणिमादिरूपां सिद्धिम्। ये विद्याधरादयस्ते च तमेव वत्सं प्रकल्प्य नभस्येव पात्रे खेचरत्वादिरूपां विद्यां दुदुहुः ॥ १९ ॥ ❀ ❀ अन्ये च किंपुरुषादयोंतर्धानेनाद्भुतात्मनां आश्चर्यमनसां संबंधिनीं मायाम्। धारणामयीं संकल्पमात्रप्रभवाम् ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

विभो इति। मत्समीकरणेन त्वं विशेषतो भास्यसीति भावः। राजन्निति। राज्ञः पार्श्वे एव स्वदुःखं निवेद्यत इति भावः ॥ ११ ॥ ❀ ❀ सकलौषधीस्तत्तद्बीजमयानि पयांसि यत्सेकमात्रेण सर्वौषधिप्रभवो भवेत्। मनोर्वत्सत्वं तु सर्वभूभृ-

१. प्राचीने पुस्तके 'वत्सं कृत्वा''''' इदमुत्तरार्धं न मूले, किन्तु टिप्पण्याम् अस्ति। २. प्रा॰ पा॰—ततः सर्वे। ३. प्रा॰ पा॰—गन्धं। ४. प्रा॰ पा॰—ससौभगम्।

द्रुणमूलत्वात्तत्संबंधेन तस्य तस्योद्भावनोपपत्तेः। एवमुत्तरत्रापि। पृथुपाणेः पात्रत्वं तत्र तत्पालनशक्तिप्रकाशात् तत्प्रभावात्पयसश्चाक्षयत्वं ज्ञेयम्॥ १२॥ ❀ ❀ यथा पृथुः पृथिव्या वाक्यसारं जग्राह गृहीत्वा च स्वकार्यं साधयामास तथाऽपरे च बुधाः सर्वत्र सर्वेषामेव सर्ववाक्येषु सारं गृह्णंतीति नीतिः। ततः पृथुकर्तृकभूदोहनानंतरं, पञ्चदशसंख्याकाः। वेनराज्येऽराजके च धर्मलोपात्सर्वेषामपि सर्वं हारितं वस्तु सर्वं एव पुनः प्रापुरित्याह—वशीकृतां सर्वमहं सर्वेभ्यो दास्यामि कामधुक्त्वादित्येवं दित्सुताभाववतीं कृतां भाववतीं चकारेति 'तत्करोति—' इति करणार्थकणिचि मतुपो "विन्मतोर्लुक्" णिचीष्ठवदित्यतिदेशात् ततो भावीति जातायां धातुसंज्ञायां लिडंतात् क्तप्रत्यये चिण्वदिटि णेर्लोपे भाविताममिति रूपम्॥ १३॥ ❀ ❀ अथ पृथुदोहनोत्तरम्। सत्तमेति। यथा त्वं सत्तमो भगवद्गुणानुरागवानसि तथर्षयोऽपि 'ब्रह्मावधार्यात्मगुणानुवादम्' इति वाराहोपाख्याने वेदस्य भगवद्गुणानुवादरूपत्वोक्तेस्तदनुरागिणः छंदोमयं वेदरूपमेव पयो दुदुहुरिति भावः। शुचित्वापादकाच्छुचीति। अत्र संदर्भः—यथा पृथ्व्या गोरूपत्वं तथा तदभिलषितपयसोऽपि साक्षाद्दुग्धत्वमेव। तस्य छन्दोमयत्वञ्च तदुपलंभमात्रेण छंदसां सहसा प्रादुर्भावात्। तत्प्रादुर्भावयोग्यानि तु वाङ्मनःश्रवणानींद्रियाणि तेषां पात्रत्वं तत्तद्गोलकसेकेन तत्प्रादुर्भावात्। तत्र 'ब्रह्मिष्ठानां बृहस्पतिः' इति न्यायेन प्रथमाधिकारी बृहस्पतिरिति स एव वत्सः कृत इत्यादिकं सर्वत्रानुसंधेयम्॥ १४-१५॥ ❀ ❀ सुरां त्रिविधां "गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा" इत्युक्तेः। आसवमपि द्वादशविधं ग्राह्यं तच्च मद्यशब्देनापि क्वचिदुच्यते, तच्च पञ्चमस्कंधे व्याख्यास्यामः। प्रह्लादं ब्रह्मजघनोद्भूतं कञ्चिद्दैत्यवर्यं पृथुवंशजदक्षकन्यादितिपौत्रस्य तदानीमभावात्। विजयध्वजस्तु—"प्रतिमन्वंतरं प्रायः प्रह्लादाद्या बभूविरे" इति जगाद। संदर्भस्तु—श्रीमतः प्रह्लादस्य भावित्वेपि पृथिव्युपदेशेन सोऽयं प्रह्लादो दैत्यानां भावनामयो ज्ञेय इति। अयःपात्र इति। दोह्यस्य निकृष्टापेक्षया॥ १६॥ ❀ ❀ गांधर्वं गानं मधुसौभगमित्यत्रार्शआद्यच्। 'गंधं मधु ससौभगम्' इति पाठे गंधं सौरभ्यमयम्। मधुवद्रूपं पयः तच्च ससौभगं सौन्दर्य्यसहितं तत्र ससौभगसौंदर्य्याभ्यां तत्तत्प्रकाशो जातः, अधुना गानमाधुर्यमिति ज्ञेयं, पद्मस्य पात्रत्वं च तत्त्रयास्पदत्वेनोपोद्बलकत्वात्॥ १७॥ ❀ ❀ कव्यं स्वधाशब्देन दीयमानम्। 'अपक्वं मृन्मयं पात्रं पितॄणां वल्लभं सदा। तच्च हस्तेन घटितं ग्राह्यं चक्रोद्भवं न हि॥' इति, "कुलालचक्रनिष्पन्नमासुरं दैविकं न तत्। तदेव हस्तघटितं दैविकं पैतृकं तथा" इति छंदोगपरिशिष्टात्॥ १८॥ ❀ ❀ आदिना चारणादिग्रहः। सिद्धादयो देवयोनिविशेषाः "विद्याधरोप्सरोयक्षरक्षोगंधर्वकिन्नराः। पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः" इत्यमरः॥ १९॥ ❀ ❀ आदिना किंपुरुषादिग्रहः। अद्भुतात्मनामद्भुतस्वभावानाम्॥ २०-२१॥

## श्रीमद्वीरराघवव्याख्या

हे वीर! पर्वतादिभिर्निम्नोन्नतां पृथ्वीं समां कुरु, किं त्वत्समीकरणसाध्यं तत्राह। देववृष्टं वर्षासु देवेन पर्जन्येन वृष्टं पयः जलमपर्तावपि वर्षर्त्वपगमेऽपि मे मम यथा उपावर्तेत सर्वतो वर्तेत। इत्थं समीकरणाभावे क्वापि जलं न तिष्ठेदतः समाहं कर्तव्येत्यर्थः। हे प्रभो! ते तुभ्यं भद्रं दोहनसमीकरणाभ्यां भद्रं भूयादित्यर्थः॥ ११॥ ❀ ❀ एवं धरित्र्याभिहितः पृथुस्तथैवाकरोदित्याह मुनिः। इत्युक्तविधं प्रियं हितं च भूमेर्वाक्यमादाय ओमित्यनुमन्य मनुं स्वायंभुवं वत्सं कृत्वा पाणौ दोहनपात्रे स्वयं दोग्धा भूत्वा सकलौषधीः अदुहत्, सकलौषधिप्रकृतिभूते क्षीरमदुहत्। क्षीरं प्रदुह्य धरित्र्यां तद्विकारान् ओषधीः प्रादुर्भावयामासेत्यर्थः। एवमग्रेऽपि बोध्यम्॥ १२॥ ❀ ❀ यथा पृथुरेवमपरे च बुधाः सारासारविवेककुशलाः सर्वत्र सर्वेषु पदार्थेषु सारमाददते। गोरूपाया धरित्र्याः क्षीरं प्रदुह्य सर्ववस्तुषु सारं निहितवन्त इत्यर्थः, तदेवाह अन्ये ऋषिप्रभृतयः यथाकामं स्वस्वकामानुरूपं पृथुभावितां पृथुवशीकृतां दुदुहुः॥ १३॥ ❀ ❀ के के किं किमदुहंस्तत्राह ऋषय इति। ऋषयो वसिष्ठादयः बृहस्पतिं वत्सं कृत्वा देवीं धरित्रीमिन्द्रियेषु पात्रभूतेषु वाङ्मनःश्रवणैर्वेदग्रहणादिन्द्रियाणां पात्रत्वम्। हे सत्तम! विदुर! शुचि पवित्रं छन्दोमयं छन्दःप्रचुरं छन्दःप्रकृतित्वेन तत्प्राचुर्यमत्र विवक्षितं, पयः क्षीरं दुदुहुः दुग्धवन्तः॥ १४॥ ❀ ❀ तदा सुरगणाः इन्द्रं वत्सं कृत्वा हिरण्मयेन पात्रेण वीर्यं मनःशक्तिः ओजः इन्द्रियशक्तिः बलं देहशक्तिः एतत्त्रयसम्पादकं सोमममृतं तदात्मकं पयः अदूदुहन्॥ १५॥ ❀ ❀ दितेरपत्यानि दानवा दोग्धारः असुरश्रेष्ठं प्रह्लादं वत्सं विधाय कृत्वा अयःपात्रे "गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा" इति त्रिविधां सुरामासवं च तालादिमद्यं पयः दुदुहुः। कार्यकारणयोरभेदोपचारेण सुरासवं पयो दुदुहुरित्यभेदनिर्देशः॥ १६॥ ❀ ❀ एवमग्रेऽपि गन्धर्वाप्सरसश्च दोग्धारः विश्वावसुं वत्सं कृत्वा पद्ममये पद्मात्मके पात्रे गन्धर्वाणां सम्बन्धिसौन्दर्ये च पयः अधुक्षन् दुदुहुः॥ १७॥ ❀ ❀ श्राद्धदेवताः पितरः पित्रादिपितृगणाः दोग्धारः अर्यम्णा वत्सेन अर्यमाणं वत्सं कृत्वेत्यर्थः। आमपात्रे अपक्वे मृन्मये पात्रे श्रद्धया कव्यं पितॄणामन्नं क्षीरमधुक्षत दुदुहुः, आर्षत्वात् व्यत्ययेनादादेशः। कव्यस्य विशेषेण श्रद्धया देयत्वज्ञापनाय श्रद्धया अधुक्षतेत्युक्तं, यद्यपि श्रद्धया देयं श्राद्धं 'तस्य देवता' इत्यवयवार्थादेव कव्यस्य श्रद्धापूर्वकत्वं प्रतीयते, तथापि गच्छतीति गौः 'गमेर्डोः,' गौर्गच्छतीत्यत्र प्रकृत्युपात्तगमनस्येव प्रकृत्युपात्तश्रद्धायां अविवक्षणात् श्रद्धयेत्युक्तम्॥ १८॥ ❀ ❀ सिद्धा दोग्धारः कपिलं मुनिं वत्सं प्रकल्प्य नभसि आकाशे पात्रे सङ्कल्पनामयीं संकल्पप्रचुरामणिमादेः संकल्पानुसारित्वात्संकल्पनामयीमित्युक्तं सिद्धिमणिमादिसिद्धिमधुक्षन्त। तथा ये च विद्याधरादयस्ते दोग्धारः तेऽपि तमेव वत्सं कपिलं प्रकल्प्य नभस्येव पात्रे खेचरत्वादिरूपां विद्यां क्षीरात्मना दुदुहुः॥ १९॥ ❀ ❀ अथान्ये

च मायिनः आश्चर्यरूपधारिणः किंपुरुषादयो दोग्धारः वत्सत्वे वत्सभावे मयं प्रकल्प्य मयं वत्सं कृत्वेत्यर्थः धारणामयीं धारणाप्रचुरां मनोव्यापारविशेषधारणाख्ययोगानुसारित्वाद्धारणामयीमित्युक्तम्, एतच्चैकादशस्कन्धे स्फुटीभविष्यति, अन्तर्धानमद्भुतं रूपं चेत्येतदुभयाकारत्वेन तदात्मिकां मायां विचित्ररूपसर्गकारिणीं शक्तिं दुदुहुः ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ओषध्युत्पत्तौ प्रधानसाधनं जलं तद्विषमायां मयि देववृष्टं पयो न समं प्रसरति, तद्यथापत्तावपि अवृष्टकाले समं स्यात्तत्तथा मां समां कुर्वन्यथौषध्यनुत्पादे त्वत्कोपविषया स्यामित्याह समां चेति ॥ ११ ॥ ❀ ❀ अत्रापि त्वद्ग्रस्तं त्वयैवोद्गीर्य दातव्यमन्यथा वधिष्यामीति पुनरपि पृथुना किं कुपितं न, किन्तु तदुक्तमङ्गीकृतं सारग्राहित्वादित्याह इतीति । प्रियहितं श्रोत्रसुखं प्रियं पथ्यं हृदयंगमं हितं भूपतिः पृथुः ॥ १२-१३ ॥ ❀ ❀ ततोऽपर इत्युक्तं विव्रियते ऋषय इत्यादिना । देवीं सरस्वतीं, इदमेव विशिनष्टि छन्दोमयमिति । वेदमयं पयः कुत्र वागिन्द्रियेषु ॥ १४ ॥ ❀ ❀ न केवलं सोमरसमात्रमदूदुहन् किन्तु तदुद्भवं गुणं चेत्याह वीर्यमिति । पराक्रमं माहात्म्यं वा ओजोऽवष्टम्भशक्तिं बलं निराहारत्वेऽपि चेष्टाशक्तिमत्र बाह्यानेव गुणानदूदुहन्नतु स्वरूपभूतान् । तदुक्तं "गुणाः स्वरूपभूताश्च बाह्याश्चेति द्विधा मताः । स्वरूपभूता व्यज्यन्ते हरेर्बाह्यान्दुदुहुः पयः" इति ॥ १५ ॥ ❀ ❀ अयःपात्रे अयोमये पात्रे सुराख्यमासवं मधु । प्रह्लादस्य प्रतिमन्वन्तरमुत्पन्नप्रायत्वादत्रोक्तं "प्रतिमन्वन्तरं प्रायः प्रह्लादाद्या बभूविरे" इति वचनात् ॥ १६ ॥ ❀ ❀ गान्धर्वं गानं मधु सौभगं सौभाग्यलक्षणं मधु ॥ १७ ॥ ❀ ❀ आमपात्रे नवभाण्डे श्राद्धदेवताः श्राद्धकर्मणाम् ॥ १८ ॥ ❀ ❀ संकल्पनामयीं संकल्पमात्रेणाभीष्टसिद्धिप्रदां सिद्धिं ये विद्याधरादयस्ते च नभसि विद्यां खेचरत्वलक्षणां सिद्धिमधुक्षतेत्यन्वयः ॥ १९ ॥ ❀ ❀ अन्तर्धानगतात्मनादृश्यत्वे प्राप्तमनस्कत्वेन अन्ये मायिनो धारणामयीं चिन्तामात्रसाध्यां मायाम् ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सकलौषधीस्तत्तद्बीजमयानि पयांसि । तत्सेकमात्रेण सर्वौषधिप्रभावात् मनोर्वत्सत्वं सर्वभूभृद्गणमूलत्वात्तत्सम्बन्धेन तत्तत्स्यात्तदुद्भावनभावोत्पत्तेः । एवमुत्तरत्रापि श्रीपृथुपाणेः पात्रत्वं तत्र तत्पालनशक्तिप्रकाशात् तत्प्रभावात् पयसश्चाक्षयत्वं ज्ञेयम् ॥ १२-१३ ॥ ❀ ❀ यथा पृथ्व्या गोरूपत्वं तथा पयसोऽपि साक्षाद् दुग्धत्वमेव । तस्य छन्दोमयत्वञ्च तदुपलम्भमात्रेण छन्दस्यं सहसा प्रादुर्भावात् । तत्प्रादुर्भावयोग्यानि तु वाङ्मनःश्रवणरूपाणीन्द्रियाणि । तेषां पात्रत्वं तत्तद्गोलके सेकेन तत्प्रादुर्भावात् । तत्र 'ब्रह्मिष्ठानां बृहस्पतिरि'ति न्यायेन प्रथमाधिकारी बृहस्पतिरिति स एव वत्सः कृत इत्यादिकं सर्वत्रानुसन्धेयम् ॥ १४ ॥ ❀ ❀ वीर्यादिहेतुं सोमममृतरूपं पयः ॥ १५ ॥ ❀ ❀ श्रीमतः प्रह्लादस्य भावित्वेऽपि पृथिव्युपदेशेन सोऽयं प्रह्लादो दैत्यानां भावनामयो ज्ञेयः । अयःपात्र इति दोह्यस्य निकृष्टत्वापेक्षया । पूर्वस्य दोह्यस्य प्रकृष्टत्वापेक्षया हिरण्मयेत्युक्तम् ॥ १६ ॥ ❀ ❀ गन्धं सौरभ्यमयं मधु तद्रूपं पयः तच्च ससौभगं सौन्दर्यसहितम् । तत्र सौभगसौन्दर्य्याभ्यां तत्तत्प्रकाशो जातः, अधुना गानमाधुर्यमिति ज्ञेयं, पद्मस्य पात्रत्वं च तत्त्रयास्पदत्वेनोपोद्बलकत्वात् ॥ १७ ॥ ❀ ❀ आमपात्रस्य पितृसन्तर्पणस्वभावत्वात्तदुपयोगः ॥ १८-२२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अपत्तौ अपगतेऽपि वर्षर्तौ ॥ ११-१२ ॥ ❀ ❀ प्रसङ्गादर्थान्तरमाह तथेति । यथा पृथुः पृथिव्या वाक्यसारं जग्राह गृहीत्वा च स्वकार्य्यं साधयामास तथा अपरे च बुधाः सर्वत्र सर्वेषामेव सर्ववाक्येषु सारं गृह्णन्तीति नीतिः । वेनराज्येऽराजके च धर्म्मलोपात् सर्वेषामपि सर्वं हारितं वस्तु सर्व एव पुनः प्रापुरित्याह तत इति । अन्ये च ऋष्यादयः पञ्चदश । पृथुना भावितां सर्वमहं दास्यामीति दित्सुताभाववतीं कृतां मतुबन्ताण्णिचो रूपम् ॥ १३ ॥ ❀ ❀ देवीं पृथ्वीं वाङ्मनःश्रवणैर्वेदग्रहणादिन्द्रियाणां पात्रत्वम् ॥ १४ ॥ ❀ ❀ सोमममृतं वीर्यं मनःशक्तिं तेज इन्द्रियशक्तिं बलं शरीरशक्तिं तदेव पयः ॥ १५ ॥ ❀ ❀ सुरैव आसवो मादकः पदार्थस्तम् ॥ १६ ॥ ❀ ❀ मधु माधुर्यं, गान्धर्वमिति पाठे गानम् ॥ १७ ॥ ❀ ❀ कव्यं पितृणामन्नम्, आमपात्रे अपक्वमृन्मये ॥ १८ ॥ ❀ ❀ संकल्पनामयीमणिमादिसिद्धिं नभसि पात्रे विद्याञ्च खेचरत्वादिरूपाम् ॥ १९ ॥ ❀ ❀ अन्ये च किम्पुरुषादयः । अन्तर्द्धानेनाद्भुतात्मनाम् अद्भुतस्वभावानां सम्बन्धिनीं मायां धारणामयीं सङ्कल्पमात्रप्रभवाम् ॥ २० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

हे राजन् ! अपत्तौ अपगतायामपि प्रावृषि यथा पयो मे मयि उपावर्तेत तथा मां कुरु, ततस्ते भद्रमभीष्टसिद्धिर्भविष्यतीति शेषः ॥ ११-१२ ॥ ❀ ❀ यथा क्रोधं विहाय सारं गृहीतवान् तथा सर्वत्र लोके बुधाः सारमाददते । अतो विपश्चिता सारग्राहिणा भवितव्यमिति भावः । प्रासङ्गिकमुक्त्वा प्रस्तुतमाह । ततः पृथोरन्ये च ऋष्यादयः पृथुना भावितां यथाकामं यथेष्टं दुदुहुः,

स्वस्वावसरे दैत्यादीनां तदानीमनुत्पन्नत्वात् ॥ १३ ॥ ❀ ❀ इन्द्रियेषु वेदस्योच्चारणधारणकरणेषु वाङ्मनःश्रोत्रेषु छन्दोमयं वेदात्मकम् ॥ १४ ॥ ❀ ❀ सुरगणा आदित्यादयः सोमं पीयूषं वीर्यौजोबलानि मनइन्द्रियदेहशक्तयः तद्रूपं पयोऽदूदुहन् ॥ १५ ॥ ❀ ❀ सुरां गौडीं माध्वीं त्रिविधां मदिरामासवं तालादिभवं तयोः समाहारद्वन्द्वैक्यम्, अयःपात्रे लोहपात्रे प्रह्लादं वत्सं विधाय दैतेया दानवाः अदूदुहन् ॥ १६ ॥ ❀ ❀ गन्धर्वा वाद्यं गानं नृत्यं च मधु वाद्याद्यनुरूपं करणसौष्ठवम् एतद्रूपं पयः अधुक्षन् दुदुहुः ॥ १७ ॥ ❀ ❀ हे महाभाग ! आमपात्रे अपक्वे मृन्मये कव्यं पितॄणामन्नम् अधुक्षत दुदुहुः ॥ १८ ॥ ❀ ❀ सिद्धाः सङ्कल्पनामयीमणिमादिकां सिद्धिं ये विद्याधरादयस्ते च खेचरत्वादिविद्यां कपिलं वत्सं प्रकल्प्य नभसि पात्रे दुदुहुरित्यन्वयः ॥ १९ ॥ ❀ ❀ अन्ये च ये मायिनः अद्भुतविद्योपजीविनस्ते अन्तर्धानेनाद्भुतात्मनां तत्सम्बन्धिनीं धारणामयीं सङ्कल्पमात्रप्रभवां मायाम् आश्चर्यप्रकाशिकां विद्यां नभस्येव दुदुहुः ॥ २० ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

किं चैवं मुक्तेष्वपि मयान्नादिषु तद्वृद्ध्यर्थमुपायान्तरमपि त्वयानुष्ठेयमस्ति । किं तदित्यपेक्षायां तदाह—समां चेति । वर्षाकाले सर्वत आर्द्रतायामपि तदपगमे नतोन्नतप्रदेशवत्यां मयि क्वचिन्निम्नप्रदेशे जलं वर्त्तते न सर्वत्रातः कृष्यादिव्यापारो न सिद्ध्यति, तस्मात् हे राजन् ! देवेनेन्द्रेण वृष्टं पयो जलमपर्त्तावपि वर्षर्त्तावपगतेपि यथा म उपावर्त्तेत सर्वत्र वर्तेत तथा मां समां च कुर्वित्यन्वयः । चकारः पूर्वोक्तदोहनादिसमुच्चयार्थकः । भद्रं ते इति । एवं प्रजाकामपूर्त्या तव भद्रं भविष्यतीत्यर्थः । एवं करणे तवैवाधिकारोस्तीति द्योतयन्ती संबोधयति—हे राजन्निति । तत्र सामर्थ्यं द्योतयन्ती पुनः संबोधयति—हे प्रभो इति ॥ ११ ॥ ❀ ❀ इत्येवंप्रकारकं प्रियं प्रसन्नताकरं यतो हितं इष्टसाधकं भुवो वाक्यमादाय अङ्गीकृत्य भूपतिः पृथुः स्वगणमुख्यं मनुं वत्सं कृत्वा पाणौ पात्रे सकलौषधीः व्रीहियवादीन्यन्नान्यदुहत् ॥ १२ ॥ ❀ ❀ पृथोर्बुधत्वं द्योतयन् भूम्योक्तं प्रासङ्गिकं सर्वबुधव्यवहारं दार्ष्टान्तिकत्वेनाह—तथेति । यथा सारत्वेन भूमिवाक्यं पृथुना गृहीतं तथा अपरेपि ये बुधास्ते सर्वत्र सारमेव दोषमुपेक्ष्य स्वकार्यानुकूलं गुणमेवाददते स्वीकुर्वन्तीत्यर्थः । एवं प्रासङ्गिकमुक्त्वा प्रस्तुतमाह—तत इति । ततः पृथुदोहनानन्तरं पृथुभावितां पृथुना वशीकृतां भूमिमन्येपि यथाकामं यथेष्टं दुदुहुरित्यन्वयः ॥ १३ ॥ ❀ ❀ अन्यदोहनमेव प्रपञ्चयति—ऋषय इति द्वादशभिः । अथ पृथुदोहनानन्तरं बृहस्पतिं वेदविदां श्रेष्ठं वत्सं कृत्वा श्रोत्रादीन्द्रियैर्वेदग्रहणात्तेष्विन्द्रियेषु पात्रेषु शुचि पवित्रं छन्दोमयं वेदरूपं पयो देवीं भूमिमृषयो दुदुहुरित्यन्वयः । अत्रोत्तमाधमानुसारेण यथायोग्यमेव सर्वेषां फलं जातं न सर्वसाधारणमत ऋषीणामुत्तमत्वेन यथा वेदप्राप्तिलक्षणोत्तमफलभागित्वं तथा तवापि भगवद्भक्तस्योत्तमत्वेन सर्ववेदेतिहाससारश्रीभागवतश्रवणलक्षणोत्तमफलभागित्वमिति सूचयन् संबोधयति—हे सत्तम इति ॥ १४ ॥ ❀ ❀ सुरगणा देवगणाः स्वगणमुख्यमिन्द्रं वत्सं कृत्वा हिरण्मयेन पात्रेण सुवर्णपात्रे वीर्यादिकारणं सोमममृतमदूदुहन् दुदुहुरित्यन्वयः । वीर्यं मनःशक्तिः । ओजः इन्द्रियशक्तिः । बलं देहशक्तिः ॥ १५ ॥ ❀ ❀ दैतेयाः दितिवंश्याः दानवाः दनुवंशजाः असुरर्षभमसुरश्रेष्ठं स्वगणमुख्यं प्रह्लादं वत्सं विधाय कृत्वा अयःपात्रे लोहपात्रे सुरां मदिरामासवं तालादिमद्यं च क्षीरमदूदुहन् दुदुहुरित्यन्वयः ॥ १६ ॥ ❀ ❀ गन्धर्वाः अप्सरसश्च स्वगणमुख्यं विश्वावसुं वत्सं कृत्वा पद्ममये पात्रे गन्धर्वाणां सत्कारकारणं मधु वाद्माधुर्यं तथा सौभगं सौन्दर्यं च पयोऽधुक्षन् दुदुहुरित्यन्वयः ॥ १७ ॥ ❀ ❀ श्राद्धदेवताः पितरोपि स्वगणमुख्येनार्यम्णा वत्सेन आमपात्रे अपक्वे मृन्मये पात्रे श्रद्धया कव्यं पितॄणामन्नलक्षणं क्षीरमधुक्षत दुदुहुरित्यन्वयः । देवतान्तरयजनापेक्षया पितृयजनस्य बाहुल्यदर्शनात्तान् विशिनष्टि—महाभागा इति ॥ १८ ॥ ❀ ❀ सिद्धाः कपिलं वत्सं प्रकल्प्य सङ्कल्पनामयीं सङ्कल्पनामात्रेण प्रभवामणिमादिलक्षणां सिद्धिं नभसि आकाशलक्षणे पात्रे दुदुहुरिति शेषः । तथा ये च विद्याधरादयस्तेपि कपिलमेव वत्सं प्रकल्प्य नभस्येव पात्रे विद्यामन्तर्धानखेचरत्वादिरूपां दुदुहुः ॥ १९ ॥ ❀ ❀ ये चान्ये मायिनः किंपुरुषादयस्तेपि मयं वत्सं प्रकल्प्य नभस्येव पात्रे अन्तर्द्धानेनाद्भुत आत्मा येषां तेषां सम्बन्धिनीं धारणामयीं धारणाप्रभवामन्तर्द्धानशक्तिं मायां दुदुहुः ॥ २० ॥

### भाषानुवादः

राजन् ! एक बात और है; आपको मुझे समतल करना होगा, जिससे कि वर्षाऋतु बीत जानेपर भी मेरे ऊपर इन्द्रका 'बरसाया हुआ जल सर्वत्र बना रहे—मेरे भीतरकी आर्द्रता सूखने न पावे । यह आपके लिये बहुत मङ्गलकारक होगा' ॥११॥ ❀ ❀ पृथ्वीके कहे हुए ये प्रिय और हितकारी वचन स्वीकार कर, महाराज पृथुने स्वायम्भुव मनुको बछड़ा बना अपने हाथमें समस्त धान्योंको दुह लिया ॥ १२ ॥ ❀ ❀ पृथुके समान अन्य विज्ञजन भी सब जगहसे सार ग्रहण कर लेते हैं, अतः उन्होंने भी पृथुजीके द्वारा वशमें की हुई वसुन्धरासे अपनी-अपनी अभीष्ट वस्तुएँ दुह लीं ॥ १३ ॥ ❀ ❀ ऋषियोंने बृहस्पतिजीको बछड़ा बनाकर इन्द्रिय ( वाणी, मन और श्रोत्र ) रूप पात्रमें पृथ्वीदेवीसे वेदरूप पवित्र दूध दुहा ॥ १४ ॥ ❀ ❀ देवताओंने इन्द्रको बछड़ेके रूपमें कल्पना कर सुवर्णमय पात्रमें अमृतवीर्य ( मनोबल ), ओज ( इन्द्रियबल ) और शारीरिक बलरूप दूध दुहा ॥ १५ ॥ ❀ ❀ दैत्य और दानवोंने असुरश्रेष्ठ प्रह्लादजीको वत्स बनाकर लोहेके पात्रमें मदिरा और आसव ( ताड़ी

आदि ) रूप दूध दुहा ॥ १६ ॥ ❋ ❋ गन्धर्व और अप्सराओंने विश्वावसुको बछड़ा बनाकर कमलरूप पात्रमें संगीतमाधुर्य और सौन्दर्यरूप दूध दुहा ॥ १७ ॥ ❋ ❋ श्राद्धके अधिष्ठाता महाभाग पितृगणने अर्यमा नामके पित्रीश्वरको वत्स बनाया तथा मिट्टीके कच्चे पात्रमें श्रद्धापूर्वक कव्य ( पितरोंको अर्पित किया जानेवाला अन्न ) रूप दूध दुहा ॥ १८ ॥ ❋ ❋ फिर कपिलदेवजीको बछड़ा बनाकर आकाशरूप पात्रमें सिद्धोंने अणिमादि अष्टसिद्धि तथा विद्याधरोंने आकाशगमन आदि विद्याओंको दुहा ॥ १९ ॥ ❋ ❋ किम्पुरुषादि अन्य मायावियोंने मयदानवको बछड़ा बनाया तथा अतन्र्धान होना, विचित्र रूप धारण कर लेना आदि सङ्कल्पमयी मायाओंको दुग्धरूपसे दुहा ॥ २० ॥

यक्षरक्षांसि भूतानि पिशाचाः पिशिताशनाः । भूतेशवत्सा दुदुहुः कपाले क्षतजासवम् ॥ २१ ॥
तथाहयो दन्दशूकाः सर्पा नागाश्च तक्षकम् । विधाय वत्सं दुदुहुर्बिलपात्रे विषं पयः ॥ २२ ॥
पशवो यवसं क्षीरं वत्सं कृत्वा च गोवृषम् । अरण्यपात्रे चाधुक्षन्मृगेन्द्रेण च दंष्ट्रिणः ॥ २३ ॥
क्रव्यादाः प्राणिनः क्रव्यं दुदुहुः स्वे[1] कलेवरे । सुपर्णवत्सा विहगाश्चरं चाचरमेव च ॥ २४ ॥
वटवत्सा वनस्पतयः पृथग्रसमयं पयः । गिरयो हिमवद्वत्सा नानाधातून् स्वसानुषु ॥ २५ ॥
सर्वे स्वमुख्यवत्सेन स्वे स्वे पात्रे पृथक् पयः । सर्वकामदुघां पृथ्वीं दुदुहुः पृथुभाविताम् ॥ २६ ॥
एवं पृथ्वादयः पृथ्वीमन्नादाः स्वन्नमात्मनः । दोहवत्सादिभेदेन क्षीरभेदं कुरूद्वह ॥ २७ ॥
ततो महीपतिः प्रीतः सर्वकामदुघां पृथुः । दुहितृत्वे चकारेमां प्रेम्णा दुहितृवत्सलः ॥ २८ ॥
चूर्णयन्[2] स्वधनुष्कोट्या गिरिकूटानि राजराट् । भूमण्डलमिदं वैन्यः प्रायश्चक्रे समं विभुः ॥ २९ ॥
अथास्मिन् भगवान् वैन्यः प्रजानां वृत्तिदः पिता । निवासान्[3] कल्पयाञ्चक्रे तत्र तत्र यथार्हतः ॥ ३० ॥
ग्रामान् पुरः पत्तनानि दुर्गाणि विविधानि च । घोषान् व्रजान् सशिबिरानाकरान् खेटखर्वटान् ॥ ३१ ॥
प्राक्पृथोरिह नैवैषा[4] पुरग्रामादिकल्पना । यथासुखं वसन्ति स्म तत्र तत्राकुतोभयाः ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे पृथुविजयेऽष्टादशोऽध्यायः ॥ १८ ॥

अन्वयः—यक्षरक्षांसि भूतानि पिशाचाः पिशिताशनाः भूतेशवत्साः कपाले क्षतजासवम् दुदुहुः ॥ २१ ॥ ❋ ❋ तथा अहयः दंदशूकाः सर्पाः नागाः च तक्षकम् वत्सम् विधाय विलपात्रे विषम् पयः दुदुहुः ॥ २२ ॥ ❋ ❋ पशवः गोवृषम् वत्सम् कृत्वा अरण्यपात्रे यवसम् क्षीरम् अधुक्षन् च दंष्ट्रिणः क्रव्यादाः प्राणिनः मृगेन्द्रेण स्वे कलेवरे क्रव्यम् दुदुहुः विहगाः सुपर्णवत्साः चरम् अचरम् एव दुदुहुः ॥ २३-२४ ॥ ❋ ❋ वनस्पतयः वटवत्साः पृथक् रसमयम् पयः च गिरयः हिमवद्वत्साः स्वसानुषु नानाधातून् सर्वे पृथुभाविताम् सर्वकामदुघाम् पृथ्वीम् स्वमुख्यवत्सेन स्वे स्वे पात्रे पृथक् पयः दुदुहुः ॥ २५-२६ ॥ ❋ ❋ कुरूद्वह पृथ्वादयः अन्नादाः पृथ्वीम् एवम् दोहवत्सादिभेदेन आत्मनः स्वन्नम् क्षीरभेदम् दुदुहुः ॥ २७ ॥ ❋ ❋ ततः प्रीतः दुहितृवत्सलः महीपतिः पृथुः इमाम् सर्वकामदुघाम् प्रेम्णा दुहितृत्वे चकार ॥ २८ ॥ ❋ ❋ विभुः राजराट् वैन्यः स्वधनुष्कोट्या गिरिकूटानि चूर्णयन् इदम् भूमण्डलं प्रायः समम् चक्रे ॥ २९ ॥ ❋ ❋ अथ प्रजानाम् वृत्तिदः पिता भगवान् वैन्यः अस्मिन् तत्र तत्र यथार्हतः ग्रामान् पुरः पत्तनानि च विविधानि दुर्गाणि घोषान् व्रजान् सशिबिरान् आकरान् खेटखर्वटान् निवासान् कल्पयांचक्रे ॥ ॥ ३०-३१ ॥ ❋ ❋ इह पृथोः प्राक् एषा पुरग्रामादिकल्पना न एव तत्र तत्र अकुतोभयाः प्रजाः यथासुखं वसन्ति स्म ॥ ३२ ॥

इत्यष्टादशोऽध्यायः ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

भूतेशा रुद्रः स एव वत्सो येषाम् । क्षतजं रुधिरं तदेवासवम् ॥ २१ ॥ ❋ ❋ अहयो निष्फणाः दंदशूका वृश्चिकादयः सर्पाः सफणास्त एव कद्रूसंततिजा नागाः बिलपात्रे मुखे ॥ २२ ॥ ❋ ❋ यवसं तृणम् । गोवृषं रुद्रवाहं वृषभम् । मृगेंद्रेणेत्युत्तरेणान्वयः ॥ २३ ॥ ❋ ❋ क्रव्यं मांसम् । चरं कीटादि । अचरं फलादि ॥ २४-२५ ॥ ❋ ❋ अनुक्त-

१. प्रा० पा०—स्वकले० । २. प्रा० पा०—चूर्णयंश्च धनु० । ३. प्रा० पा०—वासं कल्प० । ४. प्रा० पा—नैवेमाः पुरग्रामादिकल्पनाः । ५ प्रा० पा०—चरिते ।

सर्वसंग्रहार्थमाह सर्वे इति । सर्वे स्वजातौ यो मुख्यस्तेन वत्सेन ॥ २६ ॥ ❀ ❀ उपसंहरति । एवमिति । स्वन्नमभीष्टमन्नम् । तमेव क्षीरभेदं दुदुहुः । दोहः पात्रम् ॥ २७ ॥ ❀ ❀ इमां पृथ्वीम् ॥ २८ ॥ ❀ ❀ धनुषोऽग्रेण गिरिशृंगाणि चूर्णयन् राजराट् राज्ञां राजा सर्वेषामाजीविकादानात् ॥ २९-३० ॥ ❀ ❀ ग्रामा हट्टादिशून्याः । पुरो हट्टादिमत्यः । ता एव महत्यः पत्तनानि । दुर्गाणि विविधानि दुर्गमस्थानानि । यथाह बृहस्पतिः "औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथा ।" इति । घोषान् आभीराणां निवासान् । व्रजान् गवां निवासान् । शिविरं सेनानिवासस्थानम् । तत्सहितानाकरान्स्वर्णादिस्थानानि । खेटाः कर्षकग्रामाः । खर्वटाः पर्वतप्रांतग्रामास्तांश्च ॥ ३१-३२ ॥

इति श्रीमद्भागवते चतुर्थे टीकायामष्टादशोऽध्यायः ॥ १८ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यथान्ये दुदुहुस्तथेति ॥ २२-२३ ॥ ❀ ❀ क्रव्यमाममांसमदंतीति क्रव्यादा वृकादयः । दंष्ट्रिणो बृहद्दंष्ट्रावंतः । स्वे कलेवरे स्वस्वभक्ष्यकलेवर इत्यर्थः । स्वपदमत्र स्वीयपरं तच्च स्वीयत्वं भक्ष्यत्वरूपेण ध्येयम् । सुपर्णो गरुडः सोऽपि श्रीप्रह्लादवद्भावनामयो बोध्यः । यद्वा—प्रतिमन्वंतरमधिकारिसुरत्वात्तदुद्भवो ज्ञेयः । सुपर्णादीनामपि पात्रं पूर्वोक्तमेव । आदिना भृंगादिग्रहः, द्वितीयादिना मूलादिग्रहः ॥ २४ ॥ ❀ ❀ रसस्य मधुरादिभेदेन बहुविधत्वात्पृथगित्युक्तं पात्रमत्र स्वकलेवरं बोध्यम् । नानाधातून् हरितालस्वर्णादीन् । स्वसानुषु स्वोर्ध्वविस्तृतदेशेषु ॥ २५ ॥ ❀ ❀ सर्वे उक्ता अनुक्ताश्च ॥ २६ ॥ ❀ ❀ आदिना दोग्धृग्रहः । कुरूद्वहेति । त्वं साक्षाद्यमो हि सूर्यात्मजोऽपि कुरुवंशोद्भूतत्वाद्यथा कुरूद्वहस्तथा दुग्धस्यैकत्वेऽपि दोहादिभेदाद्भेद इति भावः ॥ २७ ॥ ❀ ❀ ततः सर्वदोहनोत्तरम् । इमां पृथ्वीम् । दुहितृत्वे इति । स्वहस्तेनैवान्नमयदुग्धादानात्स्त्रीभावस्यानौचित्यं शरहस्तेन स्वेन दंडकरणान्मातृभावस्याप्यनौचित्यमालक्ष्य पारिशेष्यात्तस्यां वात्सल्योदयाच्च दुहितृत्वमेव रसावहमिति ज्ञेयम् ॥ २८ ॥ ❀ ❀ प्राय इत्युक्तेः कुत्रचिद्वैषम्यमप्यस्ति, पर्वतभूमौ तथात्वानुपलब्धेः । कूटानि शृंगाणि 'कूटोऽस्त्री पुंजमायाद्योश्वद्रिशृंगेषुभेदयोः' इति यादवः ॥ २९ ॥ ❀ ❀ अथ भूसमीकरणानंतरम् । अस्मिन्भूमंडले । पिता पालकः । तत्र तत्र देशे । यथार्हतः यस्मिन्देशे यथा निवासस्सुखदः स्यात्तथा कल्पयांचक्रे इत्यर्थः ॥ ३० ॥ ❀ ❀ औदकं तन्मध्यगं पार्वतं तन्निखनेन कृतं वार्क्षं बहुवृक्षैः परित आवृतं धान्वनं निरुदकदेशगमैरिणमूषरभूदेशगमिति विवेकः ॥ ३१ ॥ ❀ ❀ पुरादिकल्पनाप्रयोजनमाह—यथासुखमिति । एतेन पृथोः पूर्वराज्ञां साधुत्वेऽपि संबाधया प्रजानां निवाससुखं नास्तीति सूचितम् ॥ ३२ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धेऽष्टादशोऽध्यायः ॥ १८ ॥

## श्रीमद्वीरराघवव्याख्या

पिशिताशना मांसभक्षा यक्षादयो दोग्धारः भूतेशो रुद्रो वत्सो येषां भूतेशं वत्सं विधायेत्यर्थः । कपाले पात्रे क्षतजं रुधिरं तदेवासवमासववन्मादकत्वादासवमित्युक्तं दुदुहुः ॥ २१ ॥ ❀ ❀ अहयो निष्फणा दन्दशूकाः दंशनस्वभावाः सर्पाः सफणाः त एव कद्रूसन्ततिजाता नागा दोग्धारः तक्षकं वत्सं विधाय बिलान्येव पात्राणि तेषु विषं पयः दुदुहुः ॥ २२ ॥ ❀ ❀ तदा पशवो दोग्धारः गोवृषं गोषु वृषं श्रेष्ठं रुद्रवाहनं वृषभं वत्सं कृत्वा अरण्यमेव पात्रं तस्मिन् यवसं तृणं क्षीरम् अधुक्षन्, मृगेन्द्रेणेत्युत्तरेणान्वयः ॥ २३ ॥ ❀ ❀ क्रव्यादा मांसाशिनः दंष्ट्रिणो व्याघ्रादयः प्राणिनः दोग्धारः मृगेन्द्रेण सिंहेन वत्सेन स्वकलेवरे पात्रे क्रव्यं मांसं दुदुहुः । विहगाः पक्षिणः सुपर्णो गरुडः वत्सो येषां ते चरं कीटादिकम् अचरं फलादिकं च दुदुहुः ॥ २४ ॥ ❀ ❀ वनस्पतयः वृक्षाः वटो वत्सो येषां तथाभूताः सन्तः पृथक् कट्वम्लमधुरादिभिन्नं रसमयं पयः दुदुहुः । गिरयः पर्वता दोग्धारः हिमवान् वत्सो येषां तथाभूताः सन्तः स्वसानुषु पात्रभूतेषु नानाधातून् गैरिकादीन् दुदुहुः ॥ २५ ॥ ❀ ❀ अनुक्तसंग्रहार्थमाह । सर्वे स्वजातौ यो मुख्यस्तेन वत्सेन स्वे स्वे पात्रे सर्वान् स्वापेक्षितान् कामान् दोग्धीति तां सर्वकामदुघां पृथ्वीं पृथक् पृथक् पयः दुदुहुः ॥ २६ ॥ ❀ ❀ उपसंहरति एवमिति । एवमन्नादाः अन्नकाङ्क्षिणः पृथ्वादयः आत्मनः स्वस्य स्वन्नं समीचीनमन्नं स्वाभीष्टमन्नमित्यर्थः । तदेव क्षीरभेदं दोहपात्रं दोहादिभेदेन दुदुहुः हे कुरूद्वह ! ॥ २७ ॥ ❀ ❀ ततो महीपतिः पृथुः प्रीतः सन् सर्वकामदुघामिमां पृथ्वीं प्रेम्णा दुहितृत्वे चकार दुहितरममन्यतेत्यर्थः, यतोऽयं दुहितृवत्सलः ॥ २८ ॥ ❀ ❀ ततो राजराट् राज्ञां राजो विभुः समर्थः वैन्यः पृथुः स्वधनुष्कोट्या स्वधनुषोऽग्रेण गिरिकूटानि गिरिशृङ्गाणि चूर्णयन् भूमण्डलं प्रायशः समं चक्रे । प्रायोग्रहणात्तेनासमीकृतमपि क्वचित् क्वचित् दृश्यत इत्यभिप्रेतम् ॥ २९ ॥ ❀ ❀ अथ दोहनसमीकरणानन्तरं प्रजानां वृत्तिदः जीविकाप्रदः पिता पितृवद्रक्षकश्च भगवान् वैन्यः पृथुः यथार्हतः यथायोग्यं तत्र तस्मिन् भूमण्डले प्रजानिवासान् कल्पयाञ्चक्रे ॥ ३० ॥ ❀ ❀ के ते निवासास्तत्कल्पिता इत्यत्राह ग्रामानिति । ग्रामा हट्टादिशून्याः । पुरः हट्टादिमत्यः ।

ता एव महत्यः पत्तनानि । दुर्गाणि विविधानि औदकपार्वतवार्क्षादिभेदभिन्नानि घोषान् आभीराणां निवासान् व्रजाः गवां निवासस्थानानि शिविरान् सेनानिवासस्थानानि तत्सहितानाकरान् स्वर्णोत्पत्तिस्थानानि खेटान् कृषीवलग्रामान् खर्वटान् पर्वतप्रान्तग्रामान् कल्पयामासेत्यन्वयः ॥ ३१ ॥ ❀ ❀ किं पृथोः प्राक् ग्रामादयो नाभूवन्नेत्याह । इह भूमण्डले पृथोः प्राक् पूर्वमेषा पुरग्रामादिकल्पना नैव नास्त्येवेत्यर्थः । तत्र पृथुकल्पितग्रामादिषु नास्ति कुतोऽपि भयं यासां ताः प्रजा यथासुखं स्वस्वसुखानुसारेण वसन्ति स्म अवसन्नित्यर्थः ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्यकृतायां श्रीभागवतचंद्रचंद्रिकायाम् अष्टादशोऽध्यायः ॥१८॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

पिशिताशना मांसभक्षाः भूतेशो भैरवाख्यो रुद्रो वत्सो येषां ते तथोक्ताः क्षतजासवं रुधिराख्यं मद्यम् ॥ २१ ॥ ❀ ❀ अह्यादीनां विषधरत्वसाम्येऽप्यवान्तरविशेषत्वात्पृथगुक्तिः ॥ २२ ॥ ❀ ❀ गोवृषं नन्दिकेश्वरं मृगेन्द्रेण सिंहेन दंष्ट्रिणः ॥ २३ ॥ ❀ ❀ क्रव्यादाः प्राणिनो हिंस्राः क्रव्यमपक्वमांसं स्वकलेवरे पात्रे दुदुहुरित्यन्वयः । चरं जङ्गममचरं तरुफलम् ॥ २४ ॥ ❀ ❀ वनस्पतयः तिक्तादिभेदेन बहुत्वाद्रसस्य पृथगित्युक्तं नानाधातून् सुवर्णादीन् ॥ २५ ॥ ❀ ❀ उपसंहरति सर्व इति । स्वजातिषु मुख्यः स्वमुख्यः स एव वत्सस्तेन सर्वान् कामान् दोग्धीति सर्वकामदुघा ताम् ॥ २६ ॥ ❀ ❀ एकस्याः पृथ्व्याः क्षीरभेदः कथमत्राभूदत्राह एवमिति । दोहभेदेन वत्सभेदेनादिशब्दाद्दोग्धृभेदेन च ॥ २७ ॥ ❀ ❀ राज्ञा किं प्रीतं कुपितमुत तूष्णींभूतमिति संशयावसरो नास्तीत्याह तत इति । लोकगोविलक्षणक्षीरभेददातृत्वादत्र प्रीतेरेव सम्भावितत्वात् ॥ २८ ॥ ❀ ❀ इदानीं भूमेः समीकरणप्रकारं वक्ति चूर्णयन्निति । गिरिकूटानि गिरिशृङ्गाणि "कूटोऽस्त्री शृङ्गमायाद्येष्वद्रिकुक्षेपुभेदयोः" इति यादवः । कचित्कचिद्गिरिकूटादीनां सत्त्वात्प्राय इत्युक्तम् ॥ २९ ॥ ❀ ❀ भूमेः समीकरणेन सुखपर्यटनात्परं प्रजानां प्रयोजनं किमकारि राज्ञेति । तत्राहाथेति ॥ ३० ॥ ❀ ❀ उक्तं विशिनष्टि ग्रामानिति । "ग्रामो बहुजनाकीर्णो राजराजाश्रयं पुरम् । समुद्रसङ्गतनद्युपकण्ठे यवनजनाश्रयः पत्तनम्" जलपर्वतादिना गन्तुमशक्यं स्थानं दुर्गं गवां स्थानं घोषः गोपालानां स्थानं व्रजः "गोष्ठं घोष इति प्रोक्तो व्रजस्तत्पालसंस्थितिः" इत्यभिधानाद् 'गोष्ठाध्वनिवहा व्रजाः' इति सामान्यवचनमिति ज्ञातव्यं, सेनानिवेशस्थानं शिबिरं वैश्यानामाश्रयो नगरं मृगयोपजीवनं खेटः । आदित्यादिवारमुद्दिश्य यत्र वणिजां योगस्तत् खर्वटाख्यं स्थानं वस्त्रभारविक्रयस्थानं वा । पाखण्डिनां निवासस्थानं वा ॥ ३१ ॥ ❀ ❀ इदं पुरादिनिर्माणं पृथोर्माहात्म्याविनाभूतमित्याह प्राक्पृथोरिति । किमत इति तत्राह यथेति । अनेनेतः पूर्वं राज्ञां साधुत्वेऽपि सम्बाधया प्रजानां निवाससुखं नास्तीति सूचितम् ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे विजयध्वजकृतपदरत्नावल्याम् अष्टादशोऽध्यायः ॥ १८ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

पश्वादयस्तत्तद्देवताः ॥ २३ ॥ ❀ ❀ स्वकलेवरे स्वस्वभक्ष्यकलेवरे इत्यर्थः । सुपर्णोऽयं न वैनतेयः, किन्तु श्रीप्रह्लादवद्भावनामयः ॥ २४-२५ ॥ ❀ ❀ पृथ्वीं मन्वाद्या इति कचित् ॥ २६-३२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे अष्टादशोऽध्यायः ॥ १८ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

भूतेशो रुद्रः क्षतजं रुधिरं तदेवासवम् ॥ २१ ॥ ❀ ❀ अहयो निष्फणाः दन्दशूका वृश्चिकादयः । सर्पाः सफणाः, त एव कद्रुसन्ततिजा नागाः, बिलपात्रे मुखे ॥ २२ ॥ ❀ ❀ यवसं तृणं गोवृषं रुद्रवाहं वृषभं, मृगेन्द्रेण सिंहेन वत्सीकृतेनेत्युत्तरेणान्वयः ॥ २३ ॥ ❀ ❀ क्रव्यं मांसं सुपर्णो गरुडः । चरं कीटादि अचरं फलादि ॥ २४-२५ ॥ ❀ ❀ अनुक्तसर्वसंग्रहार्थमाह । स्वजातौ यो मुख्यस्तेन वत्सेन ॥ २६ ॥ ❀ ❀ उपसंहरति एवमिति । स्वन्नमभीष्टमन्नं तमेव क्षीरभेदं दुदुहुः । दोहः पात्रम् ॥ २७ ॥ ❀ ❀ इमां पृथ्वीं दुहितृत्वे इति स्वहस्तेनैवान्नमयदुग्धादानात् स्त्रीभावस्यानौचित्यं शरहस्तेन स्वेन दण्डकरणान्मातृभावस्याप्यनौचित्यमालक्ष्य पारिशेष्यात्तस्यां वात्सल्योदयाच्च दुहितृत्वमेव रसावहमिति ज्ञेयम् ॥ २८-३० ॥ ❀ ❀ ग्रामा हट्टादिशून्याः, पुरो हट्टादिसत्यः । ताश्च महत्यः पत्तनानि । दुर्गाणि विविधानि । यथाह बृहस्पतिः "औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथा" इति । घोषान् आभीराणां स्थानानि, व्रजान् गवां, शिबिराणि सेनायाः, आकराः सुवर्णरूप्याद्युद्भवस्य, खेटाः कर्षकाणां, खर्वटाः पर्वतप्रान्तवर्तिनाम् ॥ ३१-३२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । चतुर्थेऽष्टादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पिशिताशनाः मांसभोजनाः क्षतजं रुधिरमेवासवं दुदुहुः ॥ २१ ॥ ❀ ❀ अहिप्रमुखाः भुजङ्गावान्तरभेदाः दन्दशूका इति पदं विषवतां सर्वेषामुपलक्षकम्। बिलपात्रे मुखादिच्छिद्ररूपे पात्रे ॥ २२ ॥ ❀ ❀ यवसं तृणम् गोवृषं नन्दिकेश्वरम् ये दंष्ट्रिणः क्रव्यादास्ते मृगेन्द्रेण वत्सेनेत्युत्तरेणान्वयः ॥ २३ ॥ ❀ ❀ क्रव्यादा मांसभोजिनः चरं कीटादि अचरं फलादि स्वकलेवरे इत्यत्रापि योज्यम् ॥ २४ ॥ ❀ ❀ वनस्पतयोऽपि स्वकलेवरे पृथक् रसमयं पयो दुदुहुः। धातूनिति। रत्नादीनामुपलक्षणम् ॥ २५ ॥ ❀ ❀ सर्वे अन्ये इहानुक्ता अपीत्यर्थः ॥ २६ ॥ ❀ ❀ एकस्यां क्षीरभेदे हेतुं दर्शयन्नुप-संहरति। दोग्धृवत्सादिभेदेन पात्रवत्सदोग्धृभेदेन क्षीरभेदम् आत्मनः स्वस्य स्वस्य शोभनमद्यते इत्यन्नमदनीयमेवमुक्तप्रकारेण दुदुहुरिति शेषः ॥ २७ ॥ ❀ ❀ दुहितृत्वे चकार एकपत्नीव्रतधरत्वे च भूपतिरिति संज्ञामपि न स्वीकृतवानिति भावः ॥ २८ ॥ ❀ ❀ धनुष्कोट्या धनुषोऽग्रेण राजराट् राजराजः प्रायःशब्देन नदीनां गमनार्थं क्वचित् क्वचित् भूम्यां वैषम्यं क्वचित् क्वचित् पाषाणकाष्ठादिसिद्धयर्थं गिरीन् अशेषयदिति द्योत्यते ॥ २९ ॥ ❀ ❀ उक्तप्रकारेण वृत्तिदो जीविकाप्रदः निवासानपि कल्पयांचक्रे ॥ ३० ॥ ❀ ❀ निवासानेवाह ग्रामानिति। ग्रामाः हट्टादिरहिताः पुरो हट्टादिसत्यः ता एव महत्यः पत्तनानि दुर्गाणि शत्रुभिरगम्यानि विविधानि। तद्वैविध्यं राजनीतिग्रन्थे दर्शितम् "जलदुर्गं गिरिदुर्गं वनदुर्गं तथैव च। दुर्गाण्येतान्य-दुर्गाणि नरदुर्गं दुर्गमेव हि" इति। बृहस्पतिरप्याह "औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथे"ति। घोषान् आभीरनिवासान् व्रजान् गोनिवासान् शिबिराणि सेनानिवासस्थानानि तत्सहितान् आकरान् स्वर्णाद्युत्पत्तिस्थानानि खेटान् कर्षकग्रामान् खर्वटान् गिरिग्रामान् ॥ ३१-३२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे टीकायाम् अष्टादशोऽध्यायः ॥ १८ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

भूतेशो रुद्र एव वत्सो येषां ते यक्षादयः मनुष्यकपाले पात्रे क्षतजं रुधिरमेवासवं मादकं दुदुहुः ॥२१॥ ❀ ❀ तथाऽह्याद-योपि तक्षकं स्वगणमुख्यं वत्सं विधाय बिलं मुख्यमेव पात्रं तस्मिन् विषं पयो दुदुहुः। अहयो निष्फणाः। दंदशूकाः वृश्चिकादयः। सर्पाः सफणाः। त एव कद्रूसन्ततिजा नागाः ॥ २२ ॥ ❀ ❀ पशवो गवाश्वादयो गोवृषं नन्दीश्वरं वत्सं कृत्वा अरण्ये पात्रे यवसं तृणं क्षीरमधुक्षन् दुदुहुरित्यन्वयः। दंष्ट्रिणः उन्नतदंष्ट्रावन्तः क्रव्यादाः मांसभक्षिणः प्राणिनो व्याघ्रादयो मृगेन्द्रेण सिंहेन वत्सेन स्वकलेवरे पात्रे क्रव्यं मांसमेव क्षीरमधुक्षन्नित्युत्तरेणान्वयः ॥ २३ ॥ ❀ ❀ विहगाः पक्षिणः सुपर्णवत्साः सुपर्णं गरुडं वत्सं कृत्वा स्वकलेवरे एव पात्रे चरं कीटादि अचरं फलादि च तदेव क्षीरं दुदुहुः ॥ २४ ॥ ❀ ❀ वटो वत्सो येषां वटं वत्सं कृत्वा वनस्पतयः पुष्पमन्तरेण फलशालिनः पिप्पलादयः स्वे कलेवरे पात्रे पृथक् पृथग्रसमयं पयो दुदुहुः। वटवत्सा वनस्पतय इत्यत्राक्षराधिक्यमार्षम्। कचिद्वनस्पत्य इति पाठस्तत्र स्त्रीत्वमार्षम्। गिरयो हिमवद्वत्सा हिमवन्तं वत्सं कृत्वा स्वसानुषु पात्रेषु नानाधातून् स्वर्णमण्यादिलक्षणान् गैरिकादिरूपांश्च दुदुहुः ॥ २५ ॥ ❀ ❀ उक्तावशिष्टसङ्ग्रहार्थमाह–सर्वे इति। अन्येपि सर्वे स्वगणे यो मुख्यस्तेन वत्सेन स्वे स्वे पृथक्पृथक्पात्रे पृथक्पृथक्पयः पृथुना भावितां वशीकृतां पृथ्वीं दुदुहुः। अत्र न केवलं भक्ष्यमात्रं सर्वेषां सिद्धं किंतु यथायोग्यस्वाभीष्टपदार्थमेवेति सूचयन् पृथ्वीं विशिनष्टि–सर्वकामदुघामिति ॥ २६ ॥ ❀ ❀ दोहनप्रसङ्गमुपसंहरति–एवमिति। एवमुक्तप्रकारेणान्नादाः अद्यत इत्यन्नमिति व्युत्पत्त्या मृतमांसादीनामप्यन्नत्वात्तदत्तारः पृथ्वादयः आत्मनः सुष्ठु अभीष्टमन्नमदनक्रियासाधनं छन्दोविद्यादीनामपि तत्साधनत्वादन्नत्वे तदेव क्षीरभेदं दुदुहुरित्यनुषङ्गः। क्षीरभेदे सामग्रीभेदं हेतुमाह–दोग्धृवत्सादिभेदेनेति। आदिपदेन दोग्धुर्ग्रहणम्। अधिकारभेदेनैव पुरुषार्थभेदो भवतीति तु कुरुकुलश्रेष्ठत्वेन त्वया ज्ञायत एवेति सूचयन् सम्बोधयति–हे कुरूद्वह इति ॥ २७ ॥ ❀ ❀ ततस्तस्मात्प्रजाकामपूरणान्महीपतिः पृथुः प्रीतः प्रीतियुक्तः सन् प्रेम्णेमां पृथ्वीं दुहितृत्वे चकारेत्यन्वयः। तत इत्युक्तमेव हेतुं विवृण्वन् पृथिवीं विशिनष्टि–सर्वेति। यतः पृथिवी प्रजानां सर्वकामानां पूरणकर्त्री जाता ततः स्वयं च प्रजापालकस्तस्यां प्रीतो जात इति भावः। दुहितृत्वेनाङ्गीकारे हेतुमाह–दुहितृवत्सल इति। यतो दुहितृभावात्तत्काम इत्यर्थः ॥ २८ ॥ ❀ ❀ पृथिव्या प्रार्थितं तत्समत्वं च कृतवा-नित्याह–चूर्णयन्निति। वैन्यः पृथुः स्वधनुषः कोट्या अग्रेण गिरीणां कूटानि शृङ्गाणि चूर्णयन्निदं भूमण्डलं प्रायः समं चक्र इत्यन्वयः। इदानीमप्युच्चनीचत्वदर्शनात्प्रायग्रहणम्। तं विना को वैवं कुर्यादित्येतत्करणं तस्य युक्तमेवेत्यभिप्रेत्याह–राजराडिति। यतो राज्ञामपि राजा। तत्रापि हेतुमाह–विभुरिति। यतो विष्णववतार इत्यर्थः ॥ २९ ॥ ❀ ❀ अथ समीकरणानन्तरमस्मिन् भूमण्डले यथार्हतः यथायोग्यं तत्र तत्र च प्रजानां निवासान् वासस्थानानि कल्पयांचक्रे रचयामासेत्यन्वयः। तत्र हेतुद्वयमाह–वृत्तिदः पिता चेति। यतस्तासां जीविकासंपादको भयाद्रक्षकश्चेत्यर्थः। तदर्थमेवावतीर्ण इति सूचयन्नाह–भगवा-निति ॥ ३० ॥ ❀ ❀ निवासानेव दर्शयति–ग्रामानिति। ग्रामा हट्टादिशून्याः। पुरो हट्टादिमत्यः। ता एव महत्यः पत्तनानि। दुर्गाणि सर्वतः प्रवेशप्रतिबन्धकानि। विविधानि अनेकप्रकारकाणि। स च प्रकारो दर्शितो बृहस्पतिना–"औदकं पार्वतं

वार्क्षैमैरिणं धान्वनं तथा" इति। घोषान् आभीराणां निवासान्। व्रजान् गवां निवासान्। शिबिरं सेनानिवासस्थानं तत्सहितान् आकरान् स्वर्णादिस्थानादि। खेटाः कर्षकग्रामाः। खर्वटाः पर्वतप्रान्तग्रामास्तांश्च ॥ ३१ ॥ ❀ ❀ 'मंस्यन्त एषां स्त्रिय आदिराजम्। आदिराजेन पूजिता' इति तत्र तत्रोक्ते आदित्वे हेतुं सूचयन्नाह–प्रागिति। पृथोः प्राक् पूर्वमेषां पुरग्रामादीनां कल्पना रचना नैवासीत्। इदानीं तु यथायोग्यस्थानप्राप्त्या स्वाभीष्टान्नादिप्राप्त्या च तत्र तत्र स्थाने पृथुना रक्षिताः प्रजाः अकुतोभया निर्भयाः सत्यो यथासुखं वसन्ति स्मेत्यन्वयः ॥ ३२ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे कामनिरूपणे। अष्टादशो गतो वृत्तिं फलप्राप्तिनिरूपकः ॥ ३ ॥

### भाषानुवादः

इसी प्रकार यक्ष-राक्षस तथा भूत-पिशाचादि मांसाहारियोंने भूतनाथ रुद्रको बछड़ा बनाकर कपालरूप पात्रमें रुधिरासवरूप दूध दुहा ॥ २१ ॥ ❀ ❀ बिना फनवाले साँप, फनवाले साँप, नाग और बिच्छू आदि विषैले जन्तुओंने तक्षकको बछड़ा बनाकर मुखरूप पात्रमें विषरूप दूध दुहा ॥ २२ ॥ ❀ ❀ पशुओंने भगवान् रुद्रके वाहन बैलको वत्स बनाकर वनरूप पात्रमें तृणरूप दूध दुहा। बड़ी-बड़ी दाढ़ोंवाले मांसभक्षी जीवोंने सिंहरूप बछड़ेके द्वारा अपने शरीररूप पात्रमें कच्चा मांसरूप दूध दुहा तथा फलादि अचर पदार्थोंको दुग्धरूपसे दुहा ॥ २३–२४ ॥ ❀ ❀ वृक्षोंने वटको वत्स बनाकर अनेक प्रकारका रसरूप दूध दुहा और पर्वतोंने हिमालयरूप बछड़ेके द्वारा अपने शिखररूप पात्रमें अनेक प्रकारकी धातुओंको दुहा ॥ २५ ॥ ❀ ❀ पृथ्वी तो सभी अभीष्ट वस्तुओंको देनेवाली है और इस समय वह पृथुजीके अधीन थी। अतः उससे सभीने अपनी-अपनी जातिके मुखियाको बछड़ा बनाकर अलग-अलग पात्रोंमें भिन्न-भिन्न प्रकारके पदार्थोंको दूधके रूपमें दुह लिया ॥ २६ ॥ ❀ ❀ कुरुश्रेष्ठ विदुरजी ! इस प्रकार पृथु आदि सभी अन्न-भोजियोंने भिन्न-भिन्न दोहन-पात्र और वत्सोंके द्वारा अपने-अपने विभिन्न अन्नरूप दूध पृथ्वीसे दुहे ॥ २७ ॥ ❀ ❀ इससे महाराज पृथु ऐसे प्रसन्न हुए कि सर्वकामदुहा पृथ्वीके प्रति उनका पुत्रीके समान स्नेह हो गया और उसे उन्होंने अपनी कन्याके रूपमें स्वीकार कर लिया ॥ २८ ॥ ❀ ❀ फिर राजाधिराज पृथुने अपने धनुषकी नोकसे पर्वतोंको फोड़कर इस सारे भूमण्डलको प्रायः समतल कर दिया ॥ २९ ॥ ❀ ❀ वे पिताके समान अपनी प्रजाके पालन-पोषणकी व्यवस्थामें लगे हुए थे। उन्होंने इस समतल भूमिमें प्रजावर्गके लिये जहाँ-तहाँ यथायोग्य निवासस्थानोंका विभाग किया ॥ ३० ॥ ❀ ❀ अनेकों गाँव, कस्बे, नगर, दुर्ग, अहीरोंकी बस्ती, पशुओंके रहनेके स्थान, छावनियाँ, खानें, किसानोंके गाँव और पहाड़ोंकी तलहटीके गाँव बसाये ॥ ३१ ॥ ❀ ❀ महाराज पृथुसे पहले इस पृथ्वीतलपर पुर-ग्रामादिका विभाग नहीं था, सब लोग अपने-अपने सुभीतेके अनुसार बेखटके जहाँ-तहाँ बस जाते थे ॥ ३२ ॥

इत्यष्टादशोऽध्यायः ॥ १८ ॥



# अथैकोनविंशोऽध्यायः

## मैत्रेय उवाच

अथादीक्षत राजा[1] तु हयमेधशतेन सः । ब्रह्मावर्ते मनोः क्षेत्रे यत्र प्राची सरस्वती ॥ १ ॥
तदभिप्रेत्य भगवान् कर्मातिशयमात्मनः । शतक्रतुर्न ममृषे पृथोर्यज्ञमहोत्सवम् ॥ २ ॥
यत्र यज्ञपतिः साक्षाद्भगवान् हरिरीश्वरः । अन्वभूयत सर्वात्मा सर्वलोकगुरुः प्रभुः ॥ ३ ॥
अन्वितो ब्रह्मशर्वाभ्यां लोकपालैः सहानुगैः । उपगीयमानो गन्धर्वैर्मुनिभिश्चाप्सरोगणैः ॥ ४ ॥
सिद्धा विद्याधरा दैत्या दानवा गुह्यकादयः । सुनन्दनन्दप्रमुखाः पार्षदप्रवरा हरेः ॥ ५ ॥
कपिलो नारदो दत्तो योगेशाः[2] सनकादयः । तमन्वीयुर्भागवता ये च तत्सेवनोत्सुकाः ॥ ६ ॥
यत्र धर्मदुघा भूमिः सर्वकामदुघा सती । दोग्धि[3] स्माभीप्सितानर्थान् यजमानस्य भारत ॥ ७ ॥
ऊहुः सर्वरसान्नद्यः क्षीरदध्यन्नगोरसान् । तरवो भूरिवर्ष्माणः प्रासू[4]यन्त मधुच्युतः ॥ ८ ॥
सिन्धवो रत्ननिकरान् गिरयोऽन्नं चतुर्विधम् । उपायनमुपाजह्रुः सर्वे लोकाः सपालकाः ॥ ९ ॥
इति चाधोक्षजेशस्य पृथोस्तु परमोदयम् । असूयन् भगवानिन्द्रः प्रतिघातमचीकरत् ॥ १० ॥

अन्वयः—अथ सः राजा तु यत्र प्राची सरस्वती मनोः ब्रह्मावर्ते क्षेत्रे हयमेधशतेन अदीक्षत ॥ १ ॥ ❀ ❀ भगवान् शतक्रतुः आत्मनः कर्मातिशयम् अभिप्रेत्य तत् पृथोः यज्ञमहोत्सवम् न ममृषे ॥ २ ॥ ❀ ❀ यत्र सर्वात्मा सर्वलोकगुरुः प्रभुः हरिः भगवान् यज्ञपतिः साक्षात् ईश्वरः ब्रह्मशर्वाभ्यां अनुगैः लोकपालैः सह अन्वितः गन्धर्वैः मुनिभिः च अप्सरोगणैः उपगीयमानः अन्वभूयत ॥ ३–४ ॥ ❀ ❀ सिद्धाः विद्याधराः दैत्याः दानवाः गुह्यकादयः हरेः पार्षदप्रवराः सुनन्दनन्दप्रमुखाः नारदः कपिलः दत्तः सनकादयः योगेशाः ये च तत्सेवनोत्सुकाः भागवताः तम् अन्वीयुः ॥ ५–६ ॥ ❀ ❀ भारत यत्र धर्मदुघा भूमिः सर्वकामदुघा सती यजमानस्य अभीप्सितान् अर्थान् दोग्धि स्म ॥ ७ ॥ ❀ ❀ नद्यः सर्वरसान् क्षीरदध्यन्नगोरसान् ऊहुः भूरिवर्ष्माणः तरवः मधुच्युतः प्रासूयन्त ॥ ८ ॥ ❀ ❀ सिन्धवः रत्ननिकरान् गिरयः चतुर्विधम् अन्नम् सपालकाः सर्वे लोकाः उपायनम् उपाजह्रुः ॥ ९ ॥ ❀ ❀ च अधोक्षजेशस्य पृथोः तु इति परमोदयम् असूयन् भगवान् इन्द्रः प्रतिघातं अचीकरत् ॥१०॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

ऊनविंशेऽश्वमेधांगहयापहरणात्पृथोः । इंद्रं हंतुं प्रवृत्तस्य धात्रा वारणमुच्यते ॥ (१) ॥

हयमेधशतेन निमित्तेनादीक्षत दीक्षितोऽभूत् शताश्वमेधसंकल्पमकरोदित्यर्थः । ब्रह्मावर्ते "सरस्वतीदृषद्वत्योर्देवनद्योर्यदंतरम् । तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते" ॥ १ ॥ ❀ ❀ आत्मनः स्वस्य कर्मातिशेत इत्यतिशयमभिप्रेत्य ज्ञात्वा । तदिति तं पृथोर्यज्ञमहोत्सवं न ममृषे न सेहे ॥ २ ॥ ❀ ❀ अतिशयमेव दर्शयति यत्रेति सप्तभिः । साक्षादन्वभूयत प्रत्यक्षेणादृश्यत ॥ ३–४ ॥ ❀ ❀ सिद्धादयश्च तं हरिमन्वीयुरित्युत्तरेणान्वयः ॥ ५–६ ॥ ❀ ❀ धर्मदुघा हविर्दोग्ध्री धेनुः सती ॥ ७ ॥ ❀ ❀ ऊहुर्वहंति स्म । सर्वरसानिक्षुद्राक्षादिरसान् । क्षीरं च दधि च अन्नं च पानकादि गोरसो घृतं तक्रं च तांश्च । भूरीणि विस्तृतानि वर्ष्माणि शरीराणि येषां ते फलादि प्रासूयंत । मधुच्यतो मधुस्राविणः संतः ॥ ८ ॥ ❀ ❀ चतुर्विधं भक्ष्यं भोज्यं चोष्यं लेह्यं च ॥ ९ ॥ ❀ ❀ अधोक्षज ईशो नाथो यस्य । तस्य पृथोः परम उदयोऽभिवृद्धिर्यस्मिंस्तत्कर्मासूयन्नसहमानः प्रतिघातं विघ्नं चकारेत्यर्थः ॥ १० ॥

---

१. प्रा० पा०—राजर्षिर्हं० । २. प्रा० पा०—योगीशाः । ३. प्रा० पा०—दुग्धा साभी० । ४. प्रा० पा०—प्राच्यवन्तः ।

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अश्वमेधस्यांगभूतो यो हयस्तस्यापहरणात् (१)। अथ प्रजावासोचितनिवासादिकल्पनोत्तरम्। स पृथुः इत्यर्थं इति। हयमेधशतीं कर्तुं प्रवृत्तोऽभूदिति भावः। प्राचीमैन्द्रीदिशमुद्दिश्य स्यन्दमाना सरस्वती प्राची सरस्वती॥ १॥ ❀ ❀ आत्मनः स्वस्य सकाशात्। अतिशयमधिकमतिक्रामकम्॥ २॥ ❀ ❀ यत्र यज्ञे॥ ३॥ ❀ ❀ निघंटुवद्यज्ञपतिर्भगवानित्यादिनाम्नां बहुत्वकथनेनैकस्यानेकत्वं न संभवत्यतः किं तेनैकेनागतेन समाजपूर्तिः स्यादत आह—अन्वित इति॥ ४-५॥ ❀ ❀ तत्त्वविदामनुगमनमेव तन्माहात्म्यद्योतकमित्यत आह—कपिल इति। नित्यविरोधिनां दैत्यादीनामनुगमनं कथं संगच्छतेऽत आह—भागवता इति। अनेन दैत्यादीनां भागवताभागवतत्वभेदेन द्वैविध्यमुक्तम्। ये तत्सेवनोत्सुका भागवतास्त एवान्वीयुर्नान्य इति भावः॥ ६॥ ❀ ❀ धर्मदुघेति। धर्मशब्दो धर्मसाधनपरः, अत एव स्वामिचरणैर्हविर्दोग्ध्रीति व्याख्यातम्। भारतेति। तव वंशकुटीभूतभरतस्य राज्ञो यागेऽपीत्थमेव जातस्तस्यापि 'दौष्यंतिरिव यज्वनाम्' इति तस्यापि यज्ञे सर्वकामान्दुदुहतुरित्यादिना तथोक्तेरिति मा विस्मयं कुर्वित्यभिप्रायः॥ ७-८॥ ❀ ❀ भक्ष्यादिलक्षणं द्वितीयस्कंधे वर्णितम्॥ ९॥ ❀ ❀ इत्यर्थं इति। परोत्कर्षासहिष्णुत्वाद्राज्ञामिति भावः। असूयन्नसहमानः। कंड्वादियगंताच्छतृप्रत्ययः॥ १०॥

## श्रीमद्वीरराघवव्याख्या

एवं पृथुर्धरित्र्या गोरूपधरायास्तत्संदर्शितोपायदुग्धौषधिबीजः समीकृतभूमिः कल्पितप्रजानिवासोऽभूदित्युक्तम्। अथ सङ्कल्पितशताश्वमेधः स्वनुष्ठितैकोनशताश्वमेधपशुर्जिघांसितशतक्रतुश्चतुराननिदेशनिवृत्तेन्द्रवधो विरमितचरमक्रतुः कृतशतक्रतुसख्यः कृतावभृथस्नानः प्राप्तदेववरो विप्रगणाशासितो दत्तर्त्विग्दक्षिणः पूजितदेवर्षिगणो बभूवेत्याह मुनिरष्टादशेन अथेति। अथ दोहनसमीकरणप्रजानिवासकरणानन्तरं स राजर्षिः पृथुः हयमेधशतेन निमित्तेनादीक्षत दीक्षितोऽभूत् शताश्वमेधसङ्कल्पमकरोदित्यर्थः। कुत्रेत्यत्राह। मनोः स्वायंभुवस्य क्षेत्रे तदुषितक्षेत्रे "सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्। तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते" इति प्रसिद्धेः, ब्रह्मावर्ताख्ये यत्र क्षेत्रे प्राची सरस्वती नदी प्रवहते इति शेषः॥ १॥ ❀ ❀ भगवान् शतक्रतुरिन्द्रः तदात्मनः स्वस्य कर्मातिशेत इत्यतिशयमभिप्रेत्य ज्ञात्वा आत्मन इति पञ्चमी वा, पृथोर्यज्ञमहोत्सवं न ममृषे न सेहे॥ २॥ ❀ ❀ कर्मातिशयं प्रपञ्चयन् ब्रह्मावर्तं प्रस्तौति यत्रेति सप्तभिः। यत्र महोत्सवदेशे ईश्वरः सर्वान्तरात्मा षाड्गुण्यपूर्णः सर्वलोकहितोपदेष्टा प्रभुर्यज्ञाराध्यः तत्फलप्रदश्च हरिः साक्षादन्वभूयत प्रत्यक्षोऽभूत्तत्राविर्बभूवेति यावत्॥ ३॥ ❀ ❀ कथम्भूतोऽन्वभूयत तत्राह। ब्रह्मरुद्राभ्यां तथा सभृत्यैर्लोकपालैश्च अन्वितो युक्तः गन्धर्वादिभिरुपगीयमानः अन्वभूयत॥ ४॥ ❀ ❀ सिद्धादयः सुनन्दनन्दौ प्रमुखौ मुख्यौ येषां ते हरेर्भगवतः पार्षदप्रवराश्च॥५॥ ❀ ❀ तथा कपिलादयः ये चान्ये भगवतो भक्तास्तेऽपि तत्सेवने भगवत्सेवन उत्सुकाः आसक्ताः सन्तः तं भगवन्तमन्वीयुः अनुसृत्य गतवन्तः॥ ६॥ ❀ ❀ हे भारत! यत्र ब्रह्मावर्त्ते धर्मदुघा घृतादिहविर्दोग्ध्री भूमिः सर्वकामदुघा तत्तदीप्सितानीप्सितांश्च कामान् दुहन्ती यजमानस्य पृथोरभीप्सितानर्थान् दोग्धि दुदुहे॥ ७॥ ❀ ❀ नद्यः सर्वरसान् इक्षुद्राक्षादिरसान् क्षीरं दधि चान्नं पानकादिगोरसं घृतं तक्रं च ऊहुः वहन्ति स्म। तरवः भूरीणि विस्तृतानि वर्ष्माणि शरीराणि येषां तथाभूता मधुश्च्युतः मधुस्राविणः सन्तः प्रासूयन्त पुष्पफलादिकमिति शेषः॥ ८॥ ❀ ❀ सिन्धवः समुद्राः रत्नानां निकरान् समूहान् धृतवन्त इति योग्यक्रियाध्याहारः। यद्वानुषक्तस्य प्रासूयन्त इत्यस्य प्रकृतोपयुक्तार्थपरत्वं, गिरयः चतुर्विधं भक्ष्यभोज्यचूष्यलेह्यभेदेन चतुर्विधमन्नं प्रददुः, सपालकाः सर्वे जना उपायनं सांमानिकमुपाजह्रुः समर्पितवन्तः॥ ९॥ ❀ ❀ अधोक्षजो भगवान् ईशो नाथो यस्य तस्य पृथोर्भगवदवतारभूतस्याप्यावेशावतारत्वाज्जीवाभिप्रायेणाधोक्षजेशस्येत्युक्तम्। इत्युक्तविधः परमः उदयो वृद्धिर्यस्मिन् तत्कर्म असूयन् असहमानः प्रतिघातं विघ्नमचीकरत् अकरोत्। निवृत्तप्रेषणात्क्नो णिच्॥ १०॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ब्रह्मार्पितकर्मणा शुद्धान्तःकरणस्य पुंसो हरेरापरोक्ष्यं स्यादिति वेदयितुं पृथोर्यज्ञकरणव्याजेन हरेर्माहात्म्यं निरूप्यतेऽस्मिन्नध्याये "कर्मणा ज्ञानमातनोति" इति श्रुतेः। तत्र प्रथमतः पृथोर्यज्ञदीक्षाप्रकारमाह अथेति। "घोटके वीथितुरगतुरङ्गाश्वतुरङ्गमाः। वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः" इत्यमरः, नाम्ना ब्रह्मावर्ते "सरस्वतीदृषद्वत्योरन्तरन्देवनिर्मितम्। ब्रह्मावर्तं मानवन्तं विदुर्देशं विचक्षणाः" इत्यभिधानं, प्राचीमैन्द्रीं दिशमुद्दिश्य स्यन्दमाना॥ १॥ ❀ ❀ अत्रेन्द्रेण स्वनामाभिभूष्णौ यज्ञे क्रियमाणे कथं क्षान्तमत्राह तदभिप्रेत्येति॥ २॥ ❀ ❀ शतक्रतोः कर्मणोऽतिशयमाह यत्रेति। सर्वात्मा सर्वव्यापी॥ ३॥ ❀ ❀ निघण्टुवत् यज्ञपतिरित्यादिनाम्नां बहुत्वकथनेन किमेकेनागतेनेत्यत उक्तमन्वित इति। अनेनापि राजैश्वर्यं न द्यौतितमित्यत उक्तमुपगीयमान इति॥ ४॥ ❀ ❀ गायकानां किञ्चिदनुगम्य स्वाभिप्रेतमुपेत्य पश्चादन्यतो गमनसम्भवादित्यतो यावद्गम्यमनुगन्तृनाह। सिद्धेति॥ ५॥ ❀ ❀ तत्त्वविदामनुगमनमेव तन्माहात्म्यद्योतकमित्यत उक्तं कपिल इत्यादिना। नित्यविरोधिनां

दैत्यादीनामनुगमनं कथं संगच्छत इत्यत उक्तं भागवता इति । अनेन दैत्यादयो द्विधा सन्तीति ध्वनितम्, ये च तस्य सेवनोत्सुकास्ते चान्वीयुरिति ॥ ६ ॥ ❀ ❀ धर्मदुघा यज्ञयोग्यपयोदोग्ध्रींति । न केवलमेतावदेव किन्तु सर्वकामदुघा नैतत्स्तुतिमात्रमनुभवसिद्धमित्याह महीति । महित्वान्महनीयत्वाच्च मही ॥ ७ ॥ ❀ ❀ गोपालानां रसानां चतुर्विधान्नजनितत्वेन कथं तत्सम्भव इत्यत्राह ऊहुरिति । अनेन नदीनां मूर्तिमत्त्वं लक्ष्यति । जलानां मूर्तिमधार्यमाणानां वोढुमसम्भवात् 'वर्ष्मदेहप्रमाणयोरि'त्यभिधानात् स्थूलप्रमाणाः ॥ ८ ॥ ❀ ❀ भक्ष्यं भोज्यं लेह्यं पेयञ्चेति चतुर्विधं व्ययार्थं द्रव्यं न कोशादुद्धार्यं किन्तु सर्वैरानीतमेवालं प्रीत्यापि तस्यातिशुद्धत्वादिति भावेनाह उपायनानीति ॥ ९ ॥ ❀ ❀ भूमण्डले कोऽप्यजातशत्रुर्नास्ति यतः श्रीनारायणैकदेवस्य पृथोरपि यज्ञविघ्नं शक्रोऽकरोदित्याह इतीति । इतिशब्दः प्रकारवचनः । उक्तप्रकारयज्ञे महोदय असूयन्नसहमानः, स्वार्थे वा यत् प्रत्ययः ॥ १० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

पृथोस्तद्यज्ञमहोत्सवरूपं कर्म स्वात्मनोऽतिक्रामकं ज्ञात्वा । अत्र टीकायां कर्मातिशयमिति समस्ते पदे वक्तव्ये अतिशयमात्रं यदुक्तं तन्नेदं विग्रहवाक्यं किन्त्वर्थदर्शनमात्रं यथा कर्मपर्यन्तं पृथग्योजितमतिशयमिति च पृथगेव निरुक्तम् । कर्मणोऽतिशयमिति तु स्वयमूह्यम् ॥ १-२ ॥ ❀ ❀ यत्रेति युग्मकम् ॥ ३-६ ॥ ❀ ❀ यत्र धर्मेति । धर्मं घृतक्षीरादीति कर्म ॥ ७-८ ॥ ❀ ❀ टीकायां भक्ष्यं चर्व्यं, भोज्यं चर्वणादिकं विनाभ्यवहारार्थम् ॥ ९-१३ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ऊनविंशेऽश्वमेधस्य हयहारिहरेर्मुहुः । पाषण्डसृष्टिरृत्विग्भिस्तद्वधं को न्यवारयत् ॥ ( १ ) ॥

"सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् । तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते ॥" तत्र हयमेधशतेन निमित्तेन ॥ १ ॥ ❀ ❀ आत्मनः सकाशात् ॥ २ ॥ ❀ ❀ कर्मातिशयमेव दर्शयति यत्रेति सप्तभिः ॥ ३—७ ॥ ❀ ❀ भूरिवर्ष्माणः बहुप्रमाणाः फलादिकं प्रासूयन्त । मधूनां च्युत् क्षरणं येषु ते "वर्ष्म देहप्रमाणयोः" इत्यमरः ॥ ८-९ ॥ ❀ ❀ पृथोस्त्विति पृथोस्तदिति पाठद्वयम् ॥ १० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ऊनविंशे पृथुयज्ञमहोत्सवं वर्णयति अथेति । हयमेधशतेन निमित्तेन अदीक्षत दीक्षितोऽभूत् ॥ १ ॥ ❀ ❀ शतक्रतुरिन्द्रः आत्मनः स्वस्मात् पृथोः अतिशयं कर्म अभिप्रेत्य तस्य पृथोर्यज्ञमहोत्सवं न ममृषे न सेहे ॥ २ ॥ ❀ ❀ कर्मणोऽतिशयत्वमेव दर्शयति यत्रेति सप्तभिः । साक्षादन्वभूयत प्रत्यक्षेणादृश्यत ॥ ३ ॥ ❀ ❀ अत एव ब्रह्मादिभिरन्वितः सन् गन्धर्वादिभिरुपगीयमानोऽभूत् ॥ ४-६ ॥ ❀ ❀ यत्र कर्मणि भूमिः धर्मदुघा हविर्दोग्ध्री धेनुः सती सर्वकामदुघा सर्वान्कामान् दोग्धीति अभीप्सितानर्थान् दोग्धि स्म पूरयति स्म ॥ ७ ॥ ❀ ❀ सर्वरसान् इक्षुद्राक्षादिरसान् ऊहुर्वहन्ति स्म । भूरीणि वर्ष्माणि शरीराणि येषां ते मधुच्युतः मधुस्राविणः सन्तः प्रासूयन्त फलान्यजनयन् ॥ ८ ॥ ❀ ❀ सिन्धवः रत्नसमूहान् उपाजह्रुः । गिरयो भक्ष्यं भोज्यं चूष्यं लेह्यं चेति चतुर्विधमुपाजह्रुः । सर्वे लोकाः पालकैः सहिताः उपायनमुपाजह्रुः ॥ ९ ॥ ❀ ❀ परमः श्रेष्ठ उदयोऽभिवृद्धिर्यस्मिन् तत्कर्मासूयन् असहमानः प्रतिघातं विघ्नम् अचीकरत् ॥ १० ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं च षड्भिरध्यायैः प्रजाकामा निरूपिताः । अतः पञ्चभिरध्यायैः पृथोः कामो निरूप्यते ॥ १ ॥
शुद्धिः कृष्णप्रसादश्च स्वधर्मो ज्ञानमेव च । मोक्षश्चेति विभेदेन स्वकामेध्यायपञ्चकम् ॥ २ ॥
तत्र चैकोनविंशे तु हयमेधशतस्य वै । अनुष्ठानात्प्रकृष्टा हि तस्य शुद्धिर्निरूप्यते ॥ ३ ॥

पूर्वं प्रजानां सर्वकामपूर्तिर्निरूपिता । इदानीं पृथोः कामप्राप्तिर्निरूप्यते । तत्र काम्यानां सर्वेषां पदार्थानां कारणं कर्तुः शुद्धिः शुद्धो हि यत्करोति तत्फलत्यतः प्रथमं शुद्धिः सम्पादनीया । तदर्थं च साधनापेक्षायां "सर्वस्य वा एषा प्रायश्चित्तिः सर्वस्य भेषजम्" इति श्रुतेरश्वमेधशतानुष्ठानान्नाधिका कृतिरपेक्षिताऽतस्तदनुष्ठाने प्रवृत्त इत्याह—अथेति । अथ प्रजानां सर्वकामपूर्त्यनन्तरं तुशब्दोऽप्यर्थः स राजा पृथुरप्यश्वमेधशतेनादीक्षत शताश्वमेधानुष्ठानसंकल्पमकरोदित्यर्थः । कुत्रेत्यपेक्षायां "सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् । तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥" इति वाक्योक्ते पुण्यदेशे ब्रह्मावर्ते, तत्रापि पुण्यस्थलतीर्थविशेष इत्याह—यत्रेति । तत्रैव सर्वशास्त्रविज्ञेन मनुनापि यज्ञादिधर्मानुष्ठानं कृतमिति द्योतयन्नाह—मनोः क्षेत्र इति ॥ १ ॥ ❀ ❀ तदा चात्मनो भगवदवतारस्य पृथोस्तत् अश्वमेधशतात्मकं कर्म प्रवर्त्तितमभिप्रेत्य ज्ञात्वा इन्द्रपदस्याश्वमेधशतानुष्ठानफलत्वात् तत्समाप्तौ मामभिभूयायं मत्पदं ग्रहीष्यतीति शङ्कया शतक्रतुस्तदानींतन इन्द्रो भगवान् भगवदवतारोपि यज्ञस्तस्य यज्ञमहोत्सवं

न मम्षे न सेहे इत्यन्वयः। ननु तस्यापि भगवदवतारत्वात्प्राप्तेन्द्रपदत्वाच्च कथं तेन स्वाभिभवशङ्का संगच्छते तत्राह—अतिशयमिति। अतिशेत इत्यतिशयम्। भगवदवतारत्वेपि राज्यादिदोषेण विस्मृतात्मत्वात् भगवदागमनादिना पृथुकर्मणोऽत्युत्कृष्टत्वदर्शनात्तस्य तथा शङ्का घटत इति भावः। न च भगवदवतारस्य स्वरूपविस्मृतिः कथं संगच्छत इति शङ्कनीयम्, व्यासनारदसनकादिपु भगवदवतारेष्वपि प्रश्नोत्तराभ्यां चेष्टायां च तत्प्रतीतेस्तत्र तत्र प्रसिद्धत्वेन भगवल्लीलाया दुर्ज्ञेयत्वात्॥ २॥ ❀ ❀ तद्यज्ञमहोत्सवस्योत्कृष्टत्वमेव दर्शयति—यत्रेति। यत्र यस्मिन् पृथुयज्ञे यज्ञपतिः यज्ञाधिष्ठाता साक्षादन्वभूयत प्रत्यक्षतोऽदृश्यत। कोऽसौ यज्ञपतिरित्याकांक्षायामाह—भगवानिति। ऐश्वर्यादिषड्गुणसंपन्न इत्यर्थः। ननु यज्ञतदधिष्ठातृप्रत्यक्षे किमाश्चर्यं तत्राह—सर्वलोकगुरुरिति। यतो ब्रह्मादिसर्वलोकस्य पूज्यस्ततस्तस्य प्रत्यक्षतया दर्शनं दुर्लभमेवेत्यर्थः। कथं तस्य सर्वगुरुत्वं तत्राह—प्रभुरिति। यतः सर्वस्वामीत्यर्थः। स्वामित्वेपि हेतुद्वयं वहिस्तत्तद्भोगसंपादकत्वमन्तः सुखदुःखादिहेतुशुभाशुभक्रियासु प्रेरकत्वं च। तत्राद्यमाह—ईश्वरमिति। जगत उत्पत्तिस्थितिप्रलयकर्तेत्यर्थः। द्वितीयमाह—सर्वात्मेति। सर्वेषामात्मान्तर्यामीत्यर्थः। एवंभूतस्य तर्हि तत्र प्रत्यक्षे को हेतुस्तत्राह—हरिरिति। यतो भक्तदुःखहर्ताऽतः पृथोर्निजभक्तत्वात्स्वप्रत्यक्षाभावे तस्य ग्लानिरापतेत्तन्माभूदित्यभिप्रायेण तत्र प्रत्यक्षोभूदित्यर्थः॥ ३॥ ❀ ❀ सर्वलोकपूज्यत्वादेव तदनुयायिनो ब्रह्मादयोपि सर्वे तेन सहागता इत्याह—अन्वित इति त्रिभिः। ब्रह्मशर्वाभ्यामन्वितः सहितः। तथासहानुगैः अनुगच्छन्तीत्यनुगा गन्धर्वादयस्तत्सहितैर्लोकपालैर्वह्नीन्द्रोपेन्द्रवरुणादिभिरन्वितः। गन्धर्वादयो यद्यपीन्द्रादीनां लोकपालानामनुगास्तद्यशोगायकास्तथापि स्वस्वामिनो भगवतोऽग्रे स्वगायनस्यानुचितत्वात्तैः प्रेरिता गन्धर्वादयोपि भगवद्यशोगानमेव चक्रुरित्याह—उपगीयमान इति। गन्धर्वैर्मुनिभिश्चाप्सरसां गणैश्चोपगीयमानो भगवान्यत्र साक्षादन्वभूयतेति पूर्वेण सम्बन्धः॥ ४॥ ❀ ❀ तथा सिद्धाः विद्याधराः दैत्याः दितिकुलोद्भवाः दानवाः दनुकुलप्रसूताः गुह्यकाः यक्षाः, आदिपदेन किंनरकिंपुरुषादीनां ग्रहणं तथा सुनन्दनन्दौ प्रमुखौ प्रमुख्यौ येषां ते हरेः पार्षदप्रवराश्च तं भगवन्तमन्वीयुरनुगता इत्युत्तरेण सम्बन्धः॥ ५॥ ❀ ❀ तथा कपिलादयो ये च तस्य सेवने उत्सुका उत्साहवन्तो भागवता भक्तास्ते सर्वे तमन्वीयुरित्यन्वयः॥ ६॥ ❀ ❀ तथा यत्र यज्ञे भूमिर्धर्मदुघा धर्मसाधनानां पदार्थानां दोग्ध्री सती यजमानस्य पृथोरभीप्सितानर्थान् दोग्धि स्म पूरयामासेत्यन्वयः। तत्र कैमुत्यन्यायं दर्शयति—सर्वकामदुघेति। या प्रजानां सर्वकामपूरणकर्त्री जाता सा राज्ञः कामान् कथं न पूरयेदिति भावः। नान्यसम्भावितमेतत् भगवत्कृपा युधिष्ठिरराजसूयादौ भवद्भिस्तथात्वस्य दृष्टत्वादिति सूचयितुं सम्बोधयति—हे भारतेति॥ ७॥ ❀ ❀ नद्यश्च सर्वरसान्दुहुः वहन्ति स्म। तान् रसानेव दर्शयन्ति—क्षीरं च दधि च अन्नगोरसः अन्नसम्बन्धी गोरसो धृतं क्षीरादेर्गोरसत्वेप्यन्नप्रकारविशेषाणां धृताधीनत्वात्तस्य तत्सम्बन्धित्वं तान्। तथा भूरीणि विस्तृतानि वर्ष्माणि शरीराणि येषां ते भूरिवर्ष्माणस्तरवोपि मधुच्युतः मधुस्राविणः सन्तः प्रासूयन्त फलन्ति स्मेत्यर्थः॥ ८॥ ❀ ❀ सिन्धवो रत्ननिकरान् रत्नसमूहान् प्रकटितवन्त इति शेषः। समभूमावन्नादेः प्रादुर्भावे किमाश्चर्यं यतो गिरयः पाषाणमया उन्नतप्रदेशा अपि भक्ष्यभोज्यचोष्यलेह्यभेदेन चतुर्विधमन्नं प्रासूयन्तेत्यनुषङ्गः। तथा सपालकाः लोकपालैरिन्द्रादिभिः सहिताः सर्वे लोकाः प्राणिनः उपायनं स्वस्वव्यापारवित्तानुसारेण राज्ञे दातुं योग्यं वस्तु उपाजह्रुः राज्ञे निवेदितवन्तः॥ ९॥ ❀ ❀ इति वर्णितप्रकारकं परम उदयोभिवृद्धिर्यस्मिंस्तत् पृथोः कर्म भगवान् यज्ञावतारोपीन्द्रोऽसूयन् असहमानस्तस्य प्रतिघातं विघ्नमचीकरत् चकारेत्यर्थः। चतु-शब्दौ मया सामायन्तो यज्ञसम्पत्तिरुक्ता, विशेषतस्तु सुवर्णपात्रादिसम्पत्तिः स्वयमूह्येति सूचनार्थौ॥ १०॥

### भाषानुवादः

### महाराज पृथुके सौ अश्वमेध यज्ञ

श्रीमैत्रेयजी कहते हैं—विदुरजी! महाराज मनुके ब्रह्मावर्त क्षेत्रमें, जहाँ सरस्वती नदी पूर्वमुखी होकर बहती है, राजा पृथुने सौ अश्वमेध-यज्ञोंकी दीक्षा ली॥ १॥ ❀ ❀ यह देखकर भगवान् इन्द्रको विचार हुआ कि इस प्रकार तो पृथुके कर्म मेरे कर्मोंकी अपेक्षा भी बढ़ जायँगे। इसलिये वे उनके यज्ञमहोत्सवको सहन न कर सके॥ २॥ ❀ ❀ महाराज पृथुके यज्ञमें सबके अन्तरात्मा सर्वलोकपूज्य जगदीश्वर भगवान् हरिने यज्ञेश्वररूपसे साक्षात् दर्शन दिया था॥ ३॥ ❀ ❀ उनके साथ ब्रह्मा, रुद्र तथा अपने-अपने अनुचरोंके सहित लोकपालगण भी पधारे थे। उस समय गन्धर्व, मुनि और अप्सराएँ प्रभुकी कीर्ति गा रहे थे॥ ४॥ ❀ ❀ सिद्ध, विद्याधर, दैत्य, दानव, यक्ष, सुनन्द-नन्दादि भगवान्के प्रमुख पार्षद और जो सर्वदा भगवान्की सेवाके लिये उत्सुक रहते हैं—वे कपिल, नारद, दत्तात्रेय एवं सनकादि योगेश्वर भी उनके साथ आये थे॥ ५–६॥ ❀ ❀ भारत! उस यज्ञमें यज्ञसामग्रियोंको देनेवाली भूमिने कामधेनुरूप होकर यजमानकी सारी कामनाओंको पूर्ण किया था॥ ७॥ ❀ ❀ नदियाँ दाख और ईख आदि सब प्रकारके रसोंको बहा लाती थीं तथा जिनसे मधु चूता रहता था—ऐसे बड़े-बड़े वृक्ष दूध, दही, अन्न और घृत आदि तरह-तरहकी सामग्रियाँ समर्पण करते थे॥ ८॥ ❀ ❀

समुद्र बहुत-सी रत्नराशियाँ, पर्वत भक्ष्य, भोज्य, चोष्य और लेह्य—चार प्रकारके अन्न तथा लोकपालोंके सहित सम्पूर्ण लोक तरह-तरहके उपहार उन्हें समर्पण करते थे ॥ ९ ॥ ❀ ❀ महाराज पृथु तो एकमात्र श्रीहरिको ही अपना प्रभु मानते थे। उनकी कृपासे उस यज्ञानुष्ठानमें उनका बड़ा उत्कर्ष हुआ। किन्तु यह बात देवराज इन्द्रको सहन न हुई और उन्होंने उसमें विघ्न डालनेकी भी चेष्टा की ॥ १० ॥

चरमेणाश्वमेधेन यजमाने यजुष्पतिम्। वैन्ये यज्ञपशुं स्पर्धन्नपोवाह तिरोहितः ॥ ११ ॥
तमत्रिर्भगवानैक्षत्त्वरमाणं विहायसा। आमुक्तमिव पाखण्डं योऽधर्मे धर्मविभ्रमः ॥ १२ ॥
अत्रिणा चोदितो हन्तुं पृथुपुत्रो महारथः। अन्वधावत संक्रुद्धस्तिष्ठ तिष्ठेति चाब्रवीत् ॥ १३ ॥
तं तादृशाकृतिं वीक्ष्य मेने धर्मं शरीरिणम्। जटिलं भस्मनाच्छन्नं तस्मै बाणं न मुञ्चति ॥ १४ ॥
वधान्निवृत्तं तं भूयो हन्तवेऽत्रिरचोदयत्। जहि यज्ञहनं तात महेन्द्रं विबुधाधमम् ॥ १५ ॥
एवं वैन्यसुतः प्रोक्तस्त्वरमाणं विहायसा। अन्वद्रवदभिक्रुद्धो रावणं गृध्रराडिव ॥ १६ ॥
सोऽश्वं रूपं च तद्धित्वा तस्मा अन्तर्हितः स्वराट्। वीरः स्वपशुमादाय पितुर्यज्ञमुपेयिवान् ॥ १७ ॥
तत्तस्य चाद्भुतं कर्म विचक्ष्य परमर्षयः। नामधेयं ददुस्तस्मै विजिताश्व इति प्रभो ॥ १८ ॥
उपसृज्य तमस्तीव्रं जहाराश्वं पुनर्हरिः। चषालयूपतश्छन्नो हिरण्यरशनं विभुः ॥ १९ ॥
अत्रिः सन्दर्शयामास त्वरमाणं विहायसा। कपालखट्वाङ्गधरं वीरो नैनमबाधत ॥ २० ॥

अन्वयः—स्पर्धन् वैन्ये चरमेण अश्वमेधेन यजुष्पतिम् यजमाने तिरोहितः यज्ञपशुम् अपोवाह ॥ ११ ॥ ❀ ❀ भगवान् अत्रिः विहायसा त्वरमाणम् तम् यः अधर्मे धर्मविभ्रमः आमुक्तम् इव पाखण्डम् ऐक्षत ॥ १२ ॥ ❀ ❀ अत्रिणा चोदितः महारथः पृथुपुत्रः हन्तुम् अन्वधावत च संक्रुद्धः तिष्ठ तिष्ठ इति अब्रवीत् ॥ १३ ॥ ❀ ❀ तादृशाकृतिम् जटिलम् भस्मनाच्छन्नम् वीक्ष्य तम् धर्मशरीरिणम् मेने तस्मै बाणम् न मुञ्चति ॥ १४ ॥ ❀ ❀ अत्रिः वधात् निवृत्ते तम् हन्तवे भूयः अचोदयत् तात यज्ञहनम् विबुधाधमम् महेन्द्रम् जहि ॥ १५ ॥ ❀ ❀ एवम् प्रोक्तः अभिक्रुद्धः वैन्यसुतः विहायसा त्वरमाणम् गृध्रराट् रावणम् इव अन्वद्रवत् ॥ १६ ॥ ❀ ❀ सः स्वराट् अश्वम् च तत् रूपम् तस्मै हित्वा अन्तर्हितः वीरः स्वपशुं आदाय पितुः यज्ञम् उपेयिवान् ॥ १७ ॥ ❀ ❀ प्रभो च परमर्षयः तस्य तत् अद्भुतम् कर्म विचक्ष्य तस्मै विजिताश्वः इति नामधेयम् ददुः ॥ १८ ॥ ❀ ❀ विभुः हरिः तीव्रम् तमः उपसृज्य छन्नः चषालयूपतः हिरण्यरशनम् अश्वम् पुनः जहार ॥ १९ ॥ ❀ ❀ अत्रिः विहायसा त्वरमाणम् संदर्शयामास वीरः कपालखट्वाङ्गधरम् एनम् न अबाधत ॥ २० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

वैन्ये यजुष्पतिं विष्णुं यजमाने सति स्पर्धमान इन्द्रस्तिरोहितः सन्नश्वमपहृतवान् ॥ ११ ॥ ❀ ❀ त्वरमाणं धावंतम्। "आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत्। सन्नद्धो वर्मितः सज्जः" इत्यमरसिंहः। पाखंडमामुक्तमिव पाखंडवेषं कवचमिव गृहीतवंतमित्यर्थः। अधर्मे धर्मविभ्रमो धर्मोऽयमिति भ्रांतिकरो यस्तम् ॥ १२-१३ ॥ ❀ ❀ न मुंचति स्म ॥ १४ ॥ ❀ ❀ हंतवे हंतुम्। यज्ञहनं यज्ञं हतवंतम् ॥ १५ ॥ ❀ ❀ गृध्रराट् जटायुः ॥ १६ ॥ ❀ ❀ तस्मै हित्वा तदर्थमुत्सृज्य ॥ १७ ॥ ❀ ❀ विचक्ष्य दृष्ट्वा ॥ १८ ॥ ❀ ❀ उपसृज्य सृष्ट्वा तेन छन्नः सन्। चषालो यूपाग्रे निक्षिप्तः काष्ठकटकस्तद्युक्ताद्यूपात्। हिरण्यनिर्मिता रशना यस्य तम्। रशनाया दृढत्वेन छेदाशक्त्या रशनासहितमेवोद्धृत्य यूपाग्रान्नीतवानित्यर्थः। विभुः समर्थः ॥ १९-२१ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

चरमेण शततमेन 'अथादीक्षत राजा तु हयमेधशतेन' इत्युक्तेः। तिरोहितोन्तर्हितः ॥ ११ ॥ ❀ ❀ तत्किं स केनापि न दृष्ट इत्यत आह—तमिति। भगवान्सर्वज्ञः। इत्यर्थ इति। पाखंडपदं पाखंडवेषपरमिहेति भावः ॥ १२-१३ ॥ ❀ ❀ तादृशाकृतिमिति। श्रीशिवादिषु दर्शनात्कस्यचिद्धर्मस्यायमपि वेशो भवेदिति भावनया, वर्त्तमानसमीपे भूते लट्। मुंचतीति।

१. प्रा० पा०—सूचितं। २. प्रा० पा०—हन्तुमत्रिर०। ३. प्रा० पा०—गृध्रराडिव रावणम्।

अत एव स्वामिचरणैः स्म-पदं प्रयुक्तम् ॥ १४ ॥ ❀ ❀ हंतवे चौर्यप्रवृत्तवधो न दोषायेति ज्ञानवता प्रेर्यमेवात एवात्रिः पुनः प्रेरयामास। न हि प्रियः कुकर्मणि योज्येत इत्यभिप्रेत्याह—तातेति। विबुधाधमं स्पर्द्धालुत्वात् ॥ १५ ॥ ❀ ❀ गृध्रराट् जटायुः। एतच्च भविष्यदपि साक्षान्नारायणावतारत्वेन श्रीव्यासदेवस्य त्रिकालज्ञत्वात्कथनं न विरुद्धम्। सीतां हृत्वा गच्छंतं रावणं जटायुर्यथान्वद्रवत् ॥ १६ ॥ ❀ ❀ स इंद्रः तत्पाखंडं रूपं च तदर्थमुत्सृज्य पृथुपुत्रमंतर्द्धानविद्यां शिक्षयितुमित्यर्थः। "अंतर्द्धानगतिं शक्राल्लेभेऽन्तर्द्धानसंज्ञितः" इति वक्ष्यमाणत्वात् ॥ १७ ॥ ❀ ❀ तस्य पृथुपुत्रस्य तदश्वानयनलक्षणं, प्रभो इति। यथा त्वया कामक्रोधादयोऽश्वा जितास्तथा तेनापीत्याह मैत्रेयो विदुरम् ॥ १८ ॥ ❀ ❀ इत्यर्थ इति। यूपाग्रं यूपोपरिभागं तत्र निक्षिप्तचषालसहितमेव जहारेति भावः ॥ १९ ॥ ❀ ❀ कपालं नृकपालं 'खट्वांगं नरमंजरी' इत्यभिधानात् ॥ २०-२१ ॥

### श्रीमद्वीरराघवव्याख्या

प्रतिघातकरणमेव प्रपञ्चयति चरमेणेत्यादिना। यजुष्पतिं भगवतस्त्रयीपतित्वेऽपि प्रकृतस्याश्वमेधस्य यजुर्वेदविहितत्वात् तदधिपतिरित्यभिप्रायेण यजुष्पतिमित्युक्तं यजुष्पतिं भगवन्तं चरमेण शततमेनाश्वमेधेन वैन्ये पृथौ यजमाने आराधयति स्पर्धन् स्पर्द्धमानः इन्द्रः, चक्षिङो ङित्करणेनानुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वज्ञापनाच्छत्रादेशः, तिरोहितः सन् यज्ञपशुमश्व-मपोवाह अपहृतवानित्यर्थः ॥ ११ ॥ ❀ ❀ तमिन्द्रं विहायसा आकाशे त्वरमाणं धावन्तं भगवानत्रिर्मुनिरैक्षत्। कथम्भूतमधर्मे धर्मविभ्रमः धर्मभ्रान्तिकरजटिलत्वाद्याकारलक्षणो पाखंडस्तम् आमुक्तं प्रविष्टं, यद्वा आमुक्तमिव कवचमिवेत्यर्थः। कोऽसौ पाखण्डः येनामुक्तस्तत्राह य इति। पूर्ववदर्थः ॥ १२ ॥ ❀ ❀ अत्रिणा सूचिते ज्ञापिते पृथोः पुत्रः संक्रुद्धः सन् तं पशुहर्तारमन्व-धावत् तिष्ठ तिष्ठेति च अब्रवीत् ॥ १३ ॥ ❀ ❀ तादृशाकृतिं पाखण्डाकृतिं तमश्वहर्तारं वीक्ष्य जटिलं जटाधारिणं भस्मनाच्छन्नं हेतुगर्भमिदं विशेषणद्वयम्। जटिलत्वात् भस्मनाच्छन्नत्वाच्च शरीरिणं मूर्तं धर्मं मेने बभ्रामेत्यर्थः। अतस्तस्मै अश्वहर्त्रे अश्वहर्तारं हन्तुं बाणं न मुञ्चति नामुञ्चत् जटिलत्वादिरूपेणाधर्मेऽपि धर्मभ्रमकरणे भ्रान्तस्तस्मै बाणं नामुञ्चदित्यर्थः ॥ १४ ॥ ❀ ❀ वधादश्वहर्तुर्वधान्निवृत्तं तं पृथुपुत्रं हन्तुम् अत्रिर्भूयः पुनः अचोदयत् प्रेरयामास। चोदनामेवाह हे तात! यज्ञहनं यज्ञविघ्नकर्तारमत एव विबुधेष्वधमं यज्ञस्य विबुधाराधनरूपस्य हर्तृत्वात् तेष्वधर्ममिति भावः, महेन्द्रं जहि संहर ॥ १५ ॥ ❀ ❀ एवं प्रोक्तो वैन्यसुतः पृथुपुत्रः विहायसा आकाशे त्वरमाणं धावन्तमिन्द्रं वारणं गजं मृगराडिव सिंह इवात्यन्तं क्रुद्धः अन्वद्रवत् अनु पृष्ठतः अद्रवत् आधावितः ॥ १६ ॥ ❀ ❀ स स्वराट् इन्द्रः तत् पाखण्डं रूपम् अश्वं च हित्वा अन्तर्हितस्तिरोहितस्तस्थौ स्थितवान्। स वीरः पृथुपुत्रः पशुमश्वमादाय गृहीत्वा पितुः पृथोः यज्ञमुपेयिवान् प्राप्तवान् ॥ १७ ॥ ❀ ❀ तस्य च पृथुपुत्रस्य तदद्भुतं विस्मयनीयं कर्म इन्द्रगमनेनाश्वाहरणरूपव्यापारं वीक्ष्य दृष्ट्वा परमर्षयोऽन्यादयः सर्वे तस्मै पृथुपुत्राय विजिताश्वः विजयेनाहृत अश्वो येन स विजिताश्व इत्यन्वर्थनामधेयं दधुश्चक्रुः ॥ १८ ॥ ❀ ❀ हे प्रभो! विजितेन्द्रिय विदुर प्रभुर्हरिरिन्द्रः तीव्रं निविडं तम उपसृज्य सृष्ट्वा तेन तमसा छन्नः सन् चषालयूपे चषालाग्रे क्षिप्तः चषालः काष्ठकटकस्तद्युक्तात् यूपादित्यर्थः। हिरण्यनिर्मिता रशना यस्य तमश्वं पुनर्जहार अपहृतवान्, पूर्ववद्विहायसा त्वरमाणमिन्द्रमत्रिर्मुनिः विजिताश्वाय सन्दर्शयामास ॥ १९ ॥ ❀ ❀ सन्दर्शितोऽपि वीरो विजिताश्वः एनमिन्द्रं कपालखट्वाङ्गधरं हेतुगर्भमिदं कपाल-खट्वाङ्गधारित्वात् नावाधत न हतवान् ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

कीदृशं विघ्नमकरोदित्याह चरमेणेति। चरमेणान्त्येन शततमेन यज्ञेन यजुष्पतिं यजुर्मन्त्राधिदैवतं हरिं यजमाने सति स्पृधु-स्पर्धायामिति धातोः शता, प्रयोगेणात्मनः शतक्रतुत्वं तस्य पृथोरेकोनशतक्रतुत्वं तस्य हरेरभिप्रेतमिति ध्वनयन्निन्द्रो हरेरुल्लङ्घनं नाकरोदिति ज्ञायते। हरेरनभिप्रेतत्वे अश्वापहरणं तत्कटाक्षतो न क्षममिति उत्तमश्लोकविग्रहाविति वक्ष्यमाणत्वात् ॥ ११ ॥ ❀ ❀ नन्वेवं तर्हि ऋषीणां त्रिकालदर्शित्वख्यातिरपहस्तितेति तत्राह तमत्रिरिति। विहायसा गन्तुं त्वरमाणं पुनः किमाकारमद्राक्षीदित्यत उक्तमामुक्तमिवेति। पाखण्डरूपमामुक्तं गृहीतमिव स्थितं, पाखण्डं लक्षयति योऽधर्म इति। जनानां ज्ञानदुर्बलानामधर्मे धर्मोऽयमिति विभ्रमो बुद्धिभ्रंशो यस्तत्पाखण्डरूपम् ॥ १२ ॥ ❀ ❀ अत्रिणा दृष्टं चेत्प्रकृते किमागत-मत्राह अत्रिणेति ॥ १३ ॥ ❀ ❀ अनुधावनेन प्रत्यावर्त्य शक्रेण सह युद्धमभूत्किं नेत्याह तमिति। अधर्मशरीरिणं पापदेहिनं मेन इत्यन्वयः। मुञ्चति मुमोच जटापाखण्डिना सह युद्धं न धर्म इति ॥ १४ ॥ ❀ ❀ चोरक्रियामनुवर्तमानस्य पुंसो वधो न दोषायेति मुख्यधर्मविदुषा तत्र प्रेर्यमाणेन भवितव्यमिति जानन् अत्रिः पुनश्च तमचोदयदित्याह पापान्निवृत्तमिति। वै-शब्देन पापशङ्कां निवारयति। 'गुरोर्वचनमौषधमि'ति स्मृतेः। विबुधाधिपत्यं चतुर्मुखस्याप्यस्तीत्यत उक्तं महेन्द्रमिति ॥ १५ ॥ ❀ ❀ गृध्रराट् जटायुः ॥ १६ ॥ ❀ ❀ अत्रेन्द्रोऽसुरजनमोहाय स्वामिशक्तिं दर्शयन्निवाभवदित्याह सोऽश्वमिति। तदुक्तम् "देवाः शक्ताश्च मोहाय दर्शयेयुरशक्तवत्। ऋषीणां चैव राज्ञां च नहि ते देवतासमाः॥ आज्ञया वा हरेः

कापि कार्यतो वा कचित्कचित्'' इति । यत्र कापि तु देवैर्ऋष्यादिषु प्रणिपातादिकं क्रियते सोऽपि तत्स्थहरौ मनसा सङ्कल्प्य क्रियत इति तात्पर्यं ज्ञातव्यं च । तदुक्तम् ''प्रणिपातादिकं देवैर्ऋष्यादिषु जनार्दने । क्रियतेऽतो न तेषां हि तेजोभङ्गः कथञ्चन ॥ अत्युत्तमानामवरे तेजोभङ्गो न विद्यते । यथा नराणां तिर्यक्षु प्रायः साम्ये हि स स्मृतः'' इति ऋष्यादिषु स्थिते जनार्दने क्रियत इत्यर्थः ॥ १७ ॥ ❁ ❁ इन्द्रं जितवता पृथोः पुत्रेण लोकसम्मतं किं जयस्तम्भलक्षणं यशः प्राप्तमत्राह तत्तस्येति ॥ १८ ॥ ❁ ❁ पुंसां स्वकार्यसिद्धिपर्यन्तं प्रयत्नवता भाव्यमिति न्यायमनुसन्दधान इन्द्रः पूर्वस्मादधिकयत्नं विधाय दुर्जनमोहाय वेषान्तरं विधायाश्वमपहार्षीदित्याह उपसृज्येति । हरिरिन्द्रः चषालयूपयोरन्तर्मध्ये छन्नो निलीनः ''चषालो यूपकटकः कम्वासु गहनावृतिः'' इत्यभिधानाद्वक्षनिर्मितयूपे वलयश्चषालः; हिरण्येन रचिता रशना काञ्ची यस्य तम् ॥ १९-२० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तं तादृशाकृतिमिति । श्रीशिवादिषु दर्शनात् कस्यचिद्धर्मस्यायमपि वेशो भवेत् इति भ्रमादिति भावः ॥ १४-२१ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

यजुष्पतिं विष्णुम् अपोवाह अपजहार ॥ ११ ॥ ❁ ❁ अत्रिरैक्षदिति तदीक्षणभीत्या त्वरमाणं पलाय्य धावन्तं पाषण्डं पाषण्डवेशं कवचमिव आमुक्तं गृहीतवन्तम् ''आमुक्तः प्रतिमुक्तश्च पिनद्धश्च'' इत्यमरः । अधर्मेऽपि धर्मविशिष्टो भ्रमो यतः स एव यः ॥ १२-१३ ॥ ❁ ❁ तं तादृशाकृतिमिति श्रीशिवादिषु दर्शनात् कस्यचिद्धर्मस्यायमपि वेशो भवेदिति भावनया ॥ १४ ॥ ❁ ❁ हन्तवे हन्तुम् ॥ १५ ॥ ❁ ❁ त्वरमाणमिन्द्रं गृध्रराट् जटायुः ॥ १६ ॥ ❁ ❁ तस्मै तं पृथुपुत्रमन्तर्द्धानविद्यां शिक्षयितुमित्यग्रिमग्रन्थदृष्ट्या व्याख्येयम् ॥ १७-१८ ॥ ❁ ❁ उपसृज्य तमोऽन्धकारं पाखण्डवेशेन छन्नः सन् चपालो यूपाग्रे निक्षिप्तः काष्ठकटकः । तद्युक्तात् यूपात् हिरण्यरशनामिति रशनाया दृढत्वेन छेदाशक्त्या रशनासहितमेवोद्धृत्य यूपाग्रान्नीतवानित्यर्थः ॥ १९-२१ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

चरमेणान्त्येन यजुष्पतिं विष्णुं यजमाने स्पर्द्धन् इन्द्रस्तिरोहितः सन् यज्ञपशुमश्वमपोवाह अहरत् ॥ ११ ॥ ❁ ❁ तमिन्द्रमत्रिर्विहायसा नभोमार्गेण त्वरमाणं धावन्तं पाषण्डं वेषमामुक्तं कवचमिव स्वीकृतवन्तमैक्षत् । अत एव अधर्मे धर्मविभ्रमः धर्मोऽयमिति भ्रान्तिकरो यः ॥ १२ ॥ ❁ ❁ चोदितः प्रेरितः ॥ १३ ॥ ❁ ❁ तादृशाधर्मवत्प्रतीयमाना आकृतिर्यस्य तं वीक्ष्य बाणं न मुञ्चति स्म ॥ १४ ॥ ❁ ❁ हन्तवे हिंसनाय यज्ञहनम् अश्वहरणेन यज्ञविघ्नकरम् ॥ १५ ॥ ❁ ❁ गृध्रराडिव जटायुरिव ॥ १६ ॥ ❁ ❁ तस्मै वैन्यसुताय अश्वं रूपं च हित्वा ॥ १७ ॥ ❁ ❁ विचक्ष्य दृष्ट्वा विजिताश्व इति नामधेयं संज्ञां दधुः; हे प्रभो ! धर्मावतार ॥ १८ ॥ ❁ ❁ हरिरिन्द्रस्तीव्रं गाढं तमः उपसृज्य सृष्ट्वा तेन तमसा छन्नः चपालयूपतः चपालः यूपाग्रे निक्षिप्तः काष्ठकटकस्तद्युक्ताद्यूपात् हिरण्यमयी रशना यस्य तम् ॥ १९-२१ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

तत्र किं विघ्नं कृतवानित्यपेक्षायां तद्दर्शयति—चरमेणेति । चरमेणान्तिमेनाश्वमेधेन यजुष्पतिं भगवन्तं वैन्ये यजमाने पूजयति सति स्पर्द्धमान इन्द्रस्तिरोहितः सन् यज्ञपशुं यज्ञियमश्वमपोवाह अपहृतवानित्यन्वयः ॥ ११ ॥ ❁ ❁ तमिन्द्रं पाखण्डवेशमामुक्तमिव कवचमिव गृहीतवन्तमपहृत्य विहायसा आकाशमार्गेण त्वरमाणं त्वरया गच्छन्तं भगवान् सूक्ष्मज्ञानवान् अत्रिरैक्षत् अपश्यदित्यन्वयः । पाखण्डं लक्षयति—य इति । अधर्मे वेदविरुद्धे धर्म इति विभ्रमो जनानां यस्मिँस्तम् ॥ १२ ॥ ❁ ❁ तदात्रिणा तं हन्तुं चोदितः पृथुपुत्रः संक्रुद्धः संस्तं धावन्तमन्वधावत । न केवलमन्वधावत किन्तु तं तिष्ठ तिष्ठेति चाब्रवीत् तमाकारितवांश्च । ननु मनुष्येण तेन कथमेवमिन्द्रानुधावनमाकारणं वा सम्भवतीत्याशङ्क्याह—महारथ इति । रथिसहस्रेण सह योद्धुं शक्तो यत इत्यर्थः ॥ १३ ॥ ❁ ❁ तमिन्द्रं तादृशाकृतिं पाखण्डवेषधारिणं वीक्ष्य पृथुपुत्रो धर्मशरीरिणं धर्मात्मानं मेने । अतस्तस्मै तं हन्तुं बाणं न मुञ्चन्ति स्म । पापं वेषमेव दर्शयति—जटिलं मस्तके जटावन्तम् । भस्मना च्छन्नमवगुण्ठितमिति ॥ १४ ॥ ❁ ❁ धर्मात्मत्वबुद्ध्या तद्वधान्निवृत्तं तं पृथुपुत्रं हन्तवे तं हन्तुं भूयः पुनरत्रिरचोदयत् । चोदनावाक्यमेव दर्शयति—जहीति । तव हितमुपदिशामीति विश्वासाय हे तात इति सम्बोधनम् । यज्ञहनमश्वापहारेण यज्ञविघ्नकर्त्तारमेनं जहि । धर्मात्मासौ कथं हन्तव्यस्तत्राह—महेन्द्रमिति । कुतस्तर्हि स एवं वेषान्तरेण कुत्सिते कर्मणि प्रवृत्तस्तत्राह—विबुधाधम इति । अतिकामुकत्वेन विनष्टविवेकत्वाद्देवराजोऽपि तेष्वधम एवेति भावः ॥ १५ ॥ ❁ ❁ एवमत्रिणा प्रोक्तः पुनः प्रेरितो वैन्यस्य पृथोः पुत्रः क्रुद्धः संस्तं विहायसा त्वरमाणमन्वद्रवत् । तत्र दृष्टान्तमाह—रावणं गृध्रराड् जटायुर्यथान्वद्र-

वत्सेति ॥ १६ ॥ ❀ ❀ स इन्द्रस्तद्रूपं पाखण्डवेषं हित्वा तस्मै तदर्थं पृथुपुत्रार्थमश्वं च हित्वा त्यक्त्वा अन्तर्हितः तिरोहितो जातः। तत्र सामर्थ्यं दर्शयति—स्वराडिति। स्वराट् स्वतन्त्रः। वीरः पृथुपुत्रः स्वपशुमादाय अश्वं गृहीत्वा पितुर्यज्ञमुपेयिवान् आगतः ॥ १७ ॥ ❀ ❀ तस्य पृथुपुत्रस्य तत् इन्द्रमभिभूयाश्वानयनरूपमद्भुतं कर्म विचक्ष्य दृष्ट्वा परमर्षयः प्रसन्नाः सन्तस्तस्मै पृथुपुत्राय विजिताश्व इति नामधेयं ददुरित्यन्वयः। सामर्थ्यस्यैवैतन्माहात्म्यं तत्त्वया यमावतारत्वाज्ज्ञायत एवेति सूचयन् सम्बोधयति—हे प्रभो इति ॥ १८ ॥ ❀ ❀ तदा हरिरिन्द्रस्तीव्रं घनं तमः उपसृज्य सृष्ट्वा तेन च्छन्नः सन् हिरण्यरचिता रशना यस्य तं हिरण्यरशनमश्वं चषालो नाम यूपाग्रे निक्षिप्तः काष्ठकटकस्तद्युक्तो यूपश्चषाल्यूपस्तस्मात्पुनर्जहार हृतवानित्यन्वयः। तमः सृष्ट्वैवं हरणे सामर्थ्यं सूचयन् विशिनष्टि—विभुरिति ॥ १९ ॥ ❀ ❀ पुनश्चाश्वं हृत्वा विहायसा आकाशमार्गेण त्वरमाणं त्वरया गच्छन्तमिन्द्रमत्रिः पृथुपुत्राय संदर्शयामास। तदा च कपालखट्वाङ्गधरं दृष्ट्वा धर्मात्मानं मत्वा वीरः पृथुपुत्र एनमिन्द्रं प्रति नाधावत ॥ २० ॥

### भाषानुवादः

जिस समय महाराज पृथु अन्तिम यज्ञद्वारा भगवान् यज्ञपतिकी आराधना कर रहे थे, इन्द्रने ईर्ष्यावश गुप्तरूपसे उनके यज्ञका घोड़ा हर लिया ॥ ११ ॥ ❀ ❀ इन्द्रने अपनी रक्षाके लिये कवचरूपसे पाखण्डवेश धारण कर लिया था, जो अधर्ममें धर्मका भ्रम उत्पन्न करनेवाला है—जिसका आश्रय लेकर पापी पुरुष भी धर्मात्मा-सा जान पड़ता है ॥ १२ ॥ ❀ ❀ इस वेशमें वे घोड़ेको लिये बड़ी शीघ्रतासे आकाशमार्गसे जा रहे थे कि उनपर भगवान् अत्रिकी दृष्टि पड़ गयी। उनके कहनेसे महाराज पृथुका महारथी पुत्र इन्द्रको मारनेके लिये उनके पीछे दौड़ा और बड़े क्रोधसे बोला, 'अरे खड़ा रह! खड़ा रह' ॥ १३ ॥ ❀ ❀ इन्द्र सिरपर जटाजूट और शरीरमें भस्म धारण किये हुए थे। उनका ऐसा वेष देखकर पृथुकुमारने उन्हें मूर्तिमान् धर्म समझा, इसलिये उनपर बाण नहीं छोड़ा ॥ १४ ॥ ❀ ❀ जब वह इन्द्रपर वार किये बिना ही लौट आया, तब महर्षि अत्रिने पुनः उसे इन्द्रको मारनेके लिये आज्ञा दी—'वत्स! इस देवताधम इन्द्रने तुम्हारे यज्ञमें विघ्न डाला है, तुम इसे मार डालो' ॥ १५ ॥ ❀ ❀ अत्रि मुनिके इस प्रकार उत्साहित करनेपर पृथुकुमार क्रोधमें भर गया। इन्द्र बड़ी तेजीसे आकाशमें जा रहे थे। उनके पीछे वह इस प्रकार दौड़ा, जैसे रावणके पीछे जटायु ॥ १६ ॥ ❀ ❀ स्वर्गपति इन्द्र उसे पीछे आते देख, उस वेष और घोड़ेको छोड़कर वहीं अन्तर्धान हो गये और वह वीर अपना यज्ञपशु लेकर पिताकी यज्ञशालामें लौट आया ॥ १७ ॥ ❀ ❀ शक्तिशाली विदुरजी! उसके इस अद्भुत पराक्रमको देखकर महर्षियोंने उसका नाम विजिताश्व रक्खा ॥ १८ ॥ ❀ ❀ यज्ञपशुको चषाल और यूपमें[1] बाँध दिया गया था। शक्तिशाली इन्द्रने घोर अन्धकार फैला दिया और उसीमें छिपकर वे फिर उस घोड़ेको उसकी सोनेकी जंजीर समेत ले गये ॥ १९ ॥ ❀ ❀ अत्रि मुनिने फिर उन्हें आकाशमें तेजीसे जाते दिखा दिया, किन्तु उनके पास कपाल और खट्वाङ्ग देखकर पृथुपुत्रने उनके मार्गमें कोई बाधा न डाली ॥ २० ॥

अत्रिणा चोदितस्तस्मै सन्दधे विशिखं रुषा। सोऽश्वं रूपं च तद्धित्वा तस्थावन्तर्हितः स्वराट् ॥ २१ ॥
वीरश्चाश्वमुपादाय पितृयज्ञमथाव्रजत्। तदवद्यं हरे रूपं जगृहुर्ज्ञानदुर्बलाः ॥ २२ ॥
यानि रूपाणि जगृहे इन्द्रो हयजिहीर्षया। तानि पापस्य खण्डानि लिङ्गं खण्डमिहोच्यते ॥ २३ ॥
एवमिन्द्रे हरत्यश्वं वैन्ययज्ञजिघांसया। तद्गृहीतविसृष्टेषु पाखण्डेषु मतिर्नृणाम् ॥ २४ ॥
धर्म इत्युपधर्मेषु नग्नरक्तपटादिषु। प्रायेण सज्जते भ्रान्त्या पेशलेषु च वाग्मिषु ॥ २५ ॥
तदभिज्ञाय भगवान् पृथुः पृथुपराक्रमः। इन्द्राय कुपितो बाणमादत्तोद्यतकार्मुकः ॥ २६ ॥

तमृत्विजः शक्रवधाभिसन्धितं[2] विचक्ष्य दुष्प्रेक्ष्यमसह्यरंहसम्।
निवारयामासुरहो महामते न युज्यतेऽत्रान्यवधः प्रचोदितात् ॥ २७ ॥
वयं मरुत्वन्तमिहार्थनाशनं ह्वयामहे त्वच्छ्रवसा[3] हतत्विषम्।
अयातयामोपहवैरनन्तरं[4] प्रसह्य राजन् जुहवाम तेऽहितम् ॥ २८ ॥

---

१ यज्ञमण्डपमें यज्ञपशुको बाँधनेके लिये जो खंभा होता है, उसे 'यूप' कहते हैं और यूपके आगे रक्खे हुए वलयाकार काष्ठको 'चषाल' कहते हैं। २. प्रा० पा०—मर्षितं। ३. प्रा० पा०—त्वद्वचसा। ४. प्रा० पा०—हवैस्तु संश्रये प्रस०।

इत्यामन्त्र्य क्रतुपतिं विदुरास्यर्त्विजो रुषा । स्रुग्घस्ताञ्जुह्वतोऽभ्येत्य स्वयम्भूः प्रत्यषेधत ॥ २९ ॥
न वध्यो भवतामिन्द्रो यद्यज्ञो भगवत्तनुः । यं जिघांसथ[1] यज्ञेन यस्येष्टास्तनवः सुराः ॥ ३० ॥

अन्वयः—अत्रिणा चोदितः सः तस्मै रुषा विशिखम् संदधे सः स्वराट् अश्वम् तत् रूपम् च हित्वा अन्तर्हितः तस्थौ ॥ २१ ॥ ❀ ❀ अथ च वीरः अश्वम् उपादाय पितृयज्ञम् अव्रजत् ज्ञानदुर्बलाः हरेः तत् अवद्यम् रूपम् जगृहुः ॥ २२ ॥ ❀ ❀ इन्द्रः हयजिहीर्षया यानि रूपाणि जगृहे तानि पापस्य खण्डानि इह लिङ्गम् खंडम उच्यते ॥ २३ ॥ ❀ ❀ वैन्ययज्ञ-जिघांसया अश्वम् एवम् इंद्रे हरति तद्गृहीतविसृष्टेषु पेशलेषु उपधर्मेषु च नग्नरक्तपटादिषु वाग्मिषु पाखण्डेषु धर्मः इति नृणाम् मतिः भ्रान्त्या प्रायेण सज्जते ॥ २४–२५ ॥ ❀ ❀ पृथुपराक्रमः भगवान् पृथुः तत् अभिज्ञाय कुपितः उद्यतकार्मुकः इन्द्राय बाणम् आदत्त ॥ २६ ॥ ❀ ❀ ऋत्विजः दुष्प्रेक्ष्यम् असह्यरंहसम् तम् शक्रवधाभिसंधितम् विचक्ष्य निवारयामासुः अहो महामते अत्र प्रचोदितात् अन्यवधः न युज्यते ॥ २७ ॥ ❀ ❀ वयम् इह अर्थनाशकम् त्वच्छ्रवसा हतत्विषम् मरुत्वन्तम् अयातयामोपहवैः ह्वयामहे राजन् अनन्तरम् ते अहितम् प्रसह्य जुहवाम ॥ २८ ॥ ❀ ❀ विदुर क्रतुपतिम् इति आमन्त्र्य स्रुग्घस्तान् रुषा जुह्वतः अस्य ऋत्विजः अभ्येत्य स्वयंभूः प्रत्यषेधत ॥ २९ ॥ ❀ ❀ यम् यज्ञेन जिघांसथ यस्य तनवः इष्टाः सुराः इन्द्रः भवतां वध्यः न यत् यज्ञः भगवत्तनुः ॥ ३० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अवद्यं निंदितं हरेरिंद्रस्य रूपं ज्ञानदुर्बला मंदप्रज्ञा जगृहुः ॥ २२ ॥ ❀ ❀ तदेव पाखंडनामनिरुक्त्या दर्शयति यानीति । बहुवचनेन चान्यान्यपि गृहीतानीत्युक्तम् ॥ २३ ॥ ❀ ❀ तत्प्रभृति पाखंडमार्गाः प्रवृत्ता इत्याह एवमिति । तेन गृहीतेषु पुनर्विसृष्टेषु पाखंडेषु ॥ २४ ॥ ❀ ❀ नग्ना जैनाः रक्तपटा बौद्धाः आदिशब्देन कापालिकादयस्तेषूपधर्मेषु धर्मोपमेषु धर्म एवायमिति मतिः सज्जत इति द्वयोरन्वयः । पेशलेषु आपातरम्येषु वाग्मिषु हेतूक्तिचतुरेषु ॥ २५–२६ ॥ ❀ ❀ शक्रवधेऽभिसंधितं कृताभिप्रायम् । प्रचोदितात्पशोर्वधादन्यस्य वधस्तव न युज्यते ॥ २७ ॥ ❀ ❀ तद्वधं तु वयं करिष्याम इत्याहुः । वयमिह यज्ञनाशकं त्वत्कीर्त्यैव हतप्रभमिंद्रमाह्वयामहे । कैः । अयातयामैरगतवीर्यैराह्वानमंत्रैः । अनंतरं च ते तवाहितं जुहवाम होष्यामः ॥ २८ ॥ ❀ ❀ अस्य पृथोः । स्रुक् हस्ते येषां तान् ॥ २९ ॥ ❀ ❀ यमिंद्रं यज्ञेन यजनेन जिघांसथ । यज्ञेनेष्टाः सर्वे सुरा यस्य तनवः स इंद्रो भवतां वधार्हो न भवति । यद्यस्माद्यज्ञो नामाऽयमिंद्रो भगवतस्तनुरवतारः । "ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत । स यामाद्यैः सुरगणैरपात्स्वायंभुवान्तरम्" इत्युक्तत्वात् ॥ ३० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अंतर्हित इत्यनेन गृहीतरूपं विसृज्य रूपांतरेणांतर्द्धानं गम्यते । तत्र पूर्वरूपं किमभूदचेतस्य चेतनसंबंध एव हानादिक्रिया-सामर्थ्यमन्यथोच्छूनीभूय नष्टं स्यान्न तदयुक्तं देवकृतस्यान्यथात्वादर्शनादाह—तदवद्यमिति । ज्ञानदुर्बला मूढाः । अत्र विश्वनाथः—पृथुपुत्रेणावधात्स्वेषामवध्यत्वमभिमन्यमाना ज्ञानदुर्बलाः यज्ञादिदूषकमतप्रवर्त्तकं स्वसंप्रदायं रचयित्वा परधनाकर्षणांतर्द्धानादि-क्षुद्रसिद्धीरेव साध्यत्वेन निरचैषुरित्यर्थः ॥ २२ ॥ ❀ ❀ तदेव निंद्यरूपमेव । पाखंडनामनिरुक्त्या पाखंडशब्दव्युत्पत्त्या । शास्त्रांतरसिद्धपाखंडपदं निर्वक्ति "पालनाच्चैव सर्वेषां पाशब्देन त्रयी मता । तां खंडयति मोहाद्यः स पाखंडः प्रकीर्त्तितः ॥" किञ्च "पाशब्दः पापनिकरे खंडं चिह्नमिहोच्यते । पापस्य चिह्नं पाखंडस्तत्सेवी नारकी ध्रुवम् ॥" इति । केचित्तु मूर्द्धन्याद्यं षंडशब्दं पठंति, तेन पाषंड इत्यपि सिद्धं, तन्मते पां पापनिकरं सनोति ददाति स्वसेविभ्य इति पाषंड इति अनुनासिकांताड्डप्रत्ययः 'षणु-दाने' इत्यस्मान्निपातनात्सस्य षः । यद्वा पापं सनति भजतीति पाषंडः । 'षन-संभक्तौ' ॥ २३ ॥ ❀ ❀ तेनेंद्रेण ॥ २४ ॥ ❀ ❀ "सर्वेषामेव लोकानां त्रयी संवरणं मता । तदुक्तधर्महीना ये नग्नास्ते परिकीर्त्तिताः ॥" इति । तथा ह्युक्तं सर्वदर्शने—"न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः । नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः ॥ अग्निहोत्रं त्रयो वेदास्त्रिदंडं भस्मगुंठनम् । बुद्धिपौरुषहीनानां जीविका धातृनिर्मिता ॥ पशुश्चेन्निहतः स्वर्गं ज्योतिष्टोमे गमिष्यति । स्वपिता यजमानेन तत्र कस्मान्न हन्यते ॥ मृतानामपि जंतूनां श्राद्धं चेत्तृप्तिकारणम् । गच्छतामिह जंतूनां व्यर्थं पाथेयकल्पनम् ॥ स्वर्गस्थिता यदा तृप्तिं गच्छेयुस्तत्र दानतः । प्रासादस्योपरिस्थानामत्र कस्मान्न दीयते ॥ यावज्जीवेत्सुखं जीवेदृणं कृत्वा घृतं पिबेत् । भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥ यदि गच्छेत्परं लोकं देहादेष विनिर्गतः ॥ कस्माद् भूयो न चायाति बंधुस्नेहसमाकुलः ॥ ततश्च जीवनोपायो ब्राह्मणैर्निर्मितस्त्विह । मृतानां प्रेतकार्याणि न त्वन्यद्विद्यते क्वचित् ॥ त्रयो वेदस्य कर्त्तारो भंडधूर्त्तनिशाचराः ।

---

१. प्रा० पा०—सत ।

जर्फरीतुर्फरीत्यादिपंडितानां वचः स्मृतम् ॥ अश्वस्यात्र हि शिश्नं तु पत्नीग्राह्यं प्रकीर्त्तितम् । भंडैस्तद्वत्परं चैव ग्राह्यजातं प्रकीर्त्तितम् ॥ मांसानां खादनं तद्वन्निशाचरसमीरितम् ॥" इत्यलं प्रसक्तानुप्रसंगेन। रक्तो रागोस्ति पटे शून्यादिवादे येषां ते रक्तपटा बौद्धाः। "आच्छादने गतौ वृक्षे शून्यवादादिके पटः" इति निरुक्तिः। ते च बौद्धाश्चतुर्विधया भावनया परमपुरुषार्थं कथयंति। ते च माध्यमिकयोगाचारसौत्रांतिकवैभाषिकसंज्ञाभिः प्रसिद्धा यथाक्रमं सर्वशून्यत्वबाह्यशून्यत्वबाह्यार्थानुमेयत्वबाह्यार्थप्रत्यक्षत्ववादा-नातिष्ठंते। यद्यपि भगवान् बुद्ध एक एव बोधयिता तथापि बोद्धव्यानां बुद्धिभेदाच्चातुर्विध्यं यथा 'गतोऽस्तमर्कः' इत्युक्ते जारचौरानू-चानादयः स्वेष्टानुसारेणाभिसरणपरस्वहरणसदाचरणादिसमयं बुद्ध्यंते एवमत्रापि सर्वं क्षणिकं क्षणिकं दुःखं दुःखं स्वलक्षणं स्वलक्षणं शून्यं शून्यमिति भावनाचतुष्टयमुपदिष्टं बुद्धेन भगवता, तैः स्वभावनानुसारेण पृथक्पृथग्गृहीतम्। अत्र वक्तव्यं बह्वस्ति ग्रंथविस्तर-भियोपरम्यते। प्रायेणेत्युक्त्या "तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे। छंदांꣳसि जज्ञिरे तस्माद्यजुस्तस्मादजायत" इति श्रुतेः। "तस्य महतो भूतस्य निःश्वसितमिदं यदृग्वेदो यजुर्वेदस्सामवेदः" इत्यादिश्रुतेश्चेश्वरादेव वेदाविर्भावमजानंतो मूढा एव भ्रांत्या आपाततोऽविचारतो रम्येषु सुंदरेषु हेतूक्तिचतुरेषु पूर्वोक्त-'पशुश्चेन्निहतः स्वर्गम्' इत्यादिकुतर्कजालोपबृंहितवाग्निपुणेषु। आदिना भैरालकादिग्रहः "नृकपाले च यो भुंक्ते स हि कापालिको मतः" इति निरुक्तिः। 'उपधर्मस्तु पाषंड' इति नारदः ॥ २५ ॥ ❁ ❁ तदिन्द्ररचितपाखंडेनोपसृष्टं यज्ञस्थलमभिज्ञाय ज्ञात्वा। इंद्रायेंद्रं हंतुम् ॥ २६ ॥ ❁ ❁ तत्राविहितहिंसाप्रवृत्ते पृथौ तत्तत्त्व-विदः किं निद्रितास्तत्राह—तमिति। महामतेरित्यस्य त्वं महामतिः सर्वज्ञशिरोमणिर्भगवदंशत्वादस्यतस्त्वां वयं किं बोधयाम इत्यभिप्रायः। अप्रचोदिताद्विहितात्। अत्राश्वमेधयागो न युज्यते न युक्तः ॥ २७ ॥ ❁ ❁ कस्तर्ह्यत्र प्रतीकार इति चेदाह—तद्वधमिति। अत्र तदानीमिन्द्रस्य भगवदवतारत्वेपि विप्राणां चावहिर्मुखत्वेपि तथाभूतोक्त्या कर्ममार्गस्य स्वभाव एव तैर्द्योतितो यत्तत्र प्रवृत्ता विवेकिनोप्यंधा भवंतीति यथा ब्रह्मणा कामस्य श्रीरुद्रेण क्रोधस्य श्रीविष्णुनापि यज्ञावतारे तस्मिन्मात्सर्यकौटिल्या-दिकमीहमानेनेंद्रस्य स्वभावो द्योतित इति ॥ २८ ॥ ❁ ❁ नन्विंद्रे मृते यज्ञ एव कथं स्यान्मंत्राणां तद्विषयत्वात् "मरुत्वंतं सख्याय हवामहे" इत्यादिश्रुतेरतोऽत्र धर्मरहस्यवेदी कोपि नाभूदिति सभादोषं परिहरतो ब्रह्मण उक्तिप्रकारमाह—इतीति। क्रतुपतिं पृथुमिति। वयं मरुत्वन्तमित्यादिरीत्यामंत्र्य पृष्ट्वा रुषा जुह्वतोऽस्य पृथोर्ऋत्विजो ब्रह्माऽभ्येत्य संमुखीभूय। विदुरेति। यथा त्वं विद्वत्त्वाद् दुर्योधनादीन्प्राकृतमार्गप्रवृत्तान्न्यषेध इत्यभिप्रायः ॥ २९ ॥ ❁ ❁ किमाकारः प्रतिषेधस्तत्राह—नेति। संदर्भस्तु—यद्यस्माद्यज्ञो यागो भगवत्तनुः सुराश्चेन्द्राद्या यस्येष्टाः प्रियास्तनवस्तस्मादेकां तनुं हत्वा नान्यां रक्षितुं युक्ताः। किन्तु द्वयमपि रक्षितुं युक्तमिति भाव इत्याह। विश्वनाथस्तु—भगवत्तनुरिति। न हि भगवद्विग्रहो विप्रैर्हंतुमध्यवस्यते भवतां तर्हि विप्रत्वमेव कुतः यं यज्ञेन जिघांसथेति स खलु यज्ञः कथं यज्ञेन वध्यो भवेद्यथा क्षीराब्धिः क्षीरप्रस्थक्षेपेणेति। किञ्च यस्य यज्ञस्येंद्रस्य च तनवः सुरास्ते च यज्ञेन युष्माभिरिष्टा इज्यंते स्मेति कथं स मरिष्यतीत्येतमपि विवेकं न कुरुथेति भाव इत्याह ॥ ३० ॥

## श्रीमद्वीरराघवव्याख्या

अत्रिणा पुनः स एवेन्द्र इति चोदितो विजिताश्वः रुषा तस्मै इन्द्राय विशिखं बाणं संदधे। इन्द्रः अश्वं तद्रूपं कपालखट्वाङ्ग-धरत्वादिरूपं हित्वा अन्तर्हितः सन् तस्थौ ॥ २१ ॥ ❁ ❁ अथानन्तरं वीरो विजिताश्वः स्वाश्वं स्वपितुर्यज्ञाङ्गमश्वमुपादाय गृहीत्वा पितुः पृथोर्यज्ञमव्रजत्। तत्प्रभृतिपाषण्डमार्गः प्रवृत्त इत्याह तदवद्यमिति सार्द्धैस्त्रिभिः। हरेरिन्द्रस्य तदवद्यं निन्दितं रूपं जटिलत्वादिरूपं ज्ञानदुर्बला ज्ञानहीना जगृहुः ॥ २२ ॥ ❁ ❁ एतदेवोपपादयति। हयस्याश्वस्य जिघृक्षया ग्रहीतुमिच्छया यानि यानि रूपाणि जग्राह तानि तानि रूपाणि पापस्य खण्डानि समूहा इति वर्णलोपेन निरुक्तानि रूपाणि लिङ्गं पण्डलिङ्गं पापित्व-ज्ञापकं पण्डसमूह इत्यन्वर्थनाम्ना इहास्मिँल्लोके उच्यत इत्यर्थः ॥ २३ ॥ ❁ ❁ एवं वैन्यस्य पृथोः यज्ञजिघांसया यज्ञविघ्नं कर्तुमिच्छया अश्वमिन्द्रे हरति सति अश्वहरणोपायतया तेन इन्द्रेण गृहीतेषु पुनः पुनः विसृष्टेषु ॥ २४ ॥ ❁ ❁ उपधर्मेषु धर्मा-भासेषु अत एव पेशलेषु मृदुलेषु अनुकूलाभासेष्विति यावत्, वाग्मिषु मितमिव सम्यगिव वादिषु नग्नरक्तपटादिषु भावप्रधानो निर्देशः, नग्नत्वरक्तपटादित्ववत्सु पाषण्डेषु रूपेषु नृणां मतिर्धर्म इति भ्रान्त्या प्रायेण प्रायशः सज्जते आसक्ता भवति ॥ २५ ॥ ❁ ❁ तदिन्द्रकृतं क्रतुविघ्नमभिज्ञाय ज्ञात्वा अपरिमितपराक्रमः पृथुः कुपितः सन् उद्यतं कार्मुकं धनुर्यस्य सः इन्द्राय बाणमादत्त। इन्द्रं हन्तुं बाणं गृहीतवानित्यर्थः ॥ २६ ॥ ❁ ❁ शक्रवधे कृताभिसंधितं कृताभिप्रायमत एव क्रोधेन दुष्प्रेक्ष्यमसह्यं परैः सोढुम-शक्यं रंहो बलं वेगश्च यस्य तं पृथुमृत्विजः अत्र्यादयः निवारयामासुः। निवारणमेवाह अहो महामते! प्रचोदिताद्विहितात्पशोर्वधात् अन्यस्य वधस्तु न युज्यते ॥ २७ ॥ ❁ ❁ तद्वधं तु वयं करिष्याम इत्याहुः वयमिति। इष्टार्थनाशनं यज्ञनाशकं त्वत्कीर्त्यैव हतप्रभं मरुत्वन्तमिन्द्रं वयमाह्वयामहे। कैरयातयामैरगतवीर्यैरुपहवैराह्वानमन्त्रैरनन्तरं च हे राजन्! ते तव अहितं शत्रुं तमिन्द्रं प्रसह्य मन्त्रबलेन अग्नये जुहवाम पशुपुरोडाशमिवाग्नौ होष्यामः ॥ २८ ॥ ❁ ❁ इति तं क्रतुपतिं पृथुमामन्त्र्य विज्ञाप्य हे विदुर! अस्य पृथोः ऋत्विजः स्रुक् हस्ते येषां तान् रुषा क्रोधेन जुह्वतः होमं कुर्वाणान् स्वयंभूश्चतुराननः अभ्येत्य आगत्य प्रत्यषे-धत निवारयामास ॥ २९ ॥ ❁ ❁ प्रतिषेधमेवाह। भवतामार्त्विज्ये कर्मण्यधिकृतानामिन्द्रो वध्यो न भवति, कुतः यत्

यस्मात् यज्ञः भगवतस्तनुः शरीरं तथा सुराश्च यस्य भगवत इष्टाः निरतिशयप्रीतिविषयाः तनवः। तत्कथं यज्ञेन भगवच्छरीरभूत-मिन्द्रं जिघांसथ हन्तुमिच्छथ ॥ ३० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

वि कायाच्छिरसः पृथग्भावं कुर्वती शिखा यस्य स विशिखः "वि निषेधे पृथग्भावे" इति यादवः, एवंविधं शरं दृष्ट्वा किं पराद्रवदिन्द्रो न, किन्तु निलीनोऽभूत् रूपान्तरेण यज्ञान्तरायकरणायेत्याह सोऽश्वमिति ॥ २१ ॥ ❀ ❀ अन्तर्हितं इत्यनेन गृहीतरूपं विसृज्य रूपेणान्तर्द्धानं गम्यते तत्र पूर्वरूपं किमभूदचेतनस्य चेतनसम्बन्ध एव हानादिक्रियासामर्थ्यमन्यथोच्छूनसनीभूय नष्टं स्यात्। न तद्युक्तं देवकृतस्यान्यथात्वादर्शनादत्राह तदवद्यमिति। हरेरिन्द्रस्य ज्ञानदुर्बला अन्यथाज्ञानिन इत्यर्थः॥ २२॥ ❀ ❀ रूपस्यावद्यत्वमाह यानीति। खण्डानि लिङ्गानि खण्डं समुदायः किमित्यत उक्तं लिङ्गमिति। खण्डपदस्य समुदायवाचित्वेऽपि इहास्मिन् प्रकरणे खण्डशब्देन लिङ्गमुच्यते। अभ्यर्हितत्वादुभयोः समुदायवाचित्वात् "लिङ्गं शेफसि वेपे च चिह्ने बुद्ध्यादिसंहतौ" इत्यभिधानात् संहतिः समुदाय इत्यर्थः, पापस्य वेषो वा 'अप्यक्षरसाम्यान्निर्ब्रूयादि'ति निरुक्तिकारवचनादेकेनापि प्रकारेण विवक्षितार्थसिद्धिः स्फुटेति ॥ २३ ॥ ❀ ❀ सांप्रतं ये वर्त्तमानाः पाखण्डा एतन्मूला इत्याह एवमिति। मतिरभिरुचिरभूदिति शेषः॥ २४॥ ❀ ❀ कथं धर्म इति निरूप्य स्वयं किंरूपेपूपधर्मेषु स्वतोऽधर्मत्वेऽपि उपमितधर्मेषु तदुक्तम् "धर्मोपमस्त्वधर्मोऽयमुपधर्मः स उच्यते" इति। चक्षुर्विषयं लक्षणमाह नग्नेति। आदिशब्देन कन्थानरकपालढक्कादिमत्त्वं गृह्यते। तेषामनुत्सादनमाह प्रायेणेति। सङ्गे निमित्तमाह पेशलेष्विति। पेशलेष्वविचाररमणीयेषु। एतदपि कुत इत्यत उक्तम्। वाग्मिष्विति कुतर्कबृंहितशास्त्रवाचालेषु ॥२५॥ ❀ ❀ एवमस्यामवस्थायां पृथुना कृतः पराक्रमो न श्रूयत इति तत्राह तदभिज्ञायेति ॥२६॥ ❀ ❀ विहितहिंसां विनान्यहिंसोद्यमे तत्त्वविदो निद्रिताः किं तत्राह ऋत्विज इति। कुतो न युक्त इत्यत उक्तम्। अप्रचोदित इति अविहितत्वात् ॥ २७ ॥ ❀ ❀ कथं तर्हि तन्निग्रहोपाय इति तत्रोच्यते वयमिति। अयातयामोपहवैरन्यत्राप्रयुक्तत्वेनागतसारैर्मन्त्रैः मरुत्वन्तमिन्द्रम् अर्थनाशनं यज्ञाख्यप्रयोजनद्रुहम् आहूय किङ्कुर्वन्तीति तत्रोच्यते। तमम्रय इति, ते तवाहितम् ॥ २८ ॥ ❀ ❀ नन्विन्द्रे निधनं गते यज्ञ एव न स्यात्, मन्त्राणां तद्विषयत्वात् "मरुत्वन्तं सख्याय हवामहे" इति श्रुतेः, अतोऽत्र धर्मरहस्यवेदी कोऽपि नाभूदिति सभादोषं परिहरतो ब्रह्मण उक्तिप्रकारं वक्ति इतीति। क्रतुपतिं पृथुम्। अस्य पृथोः सम्बन्धिनः स्रुङ्न्यस्तं हविः, मन्त्रशक्त्येति शेषः॥ २९ ॥ ❀ ❀ किमाकारः प्रतिषेध इति तत्राह न वध्य इति। कुतो न वध्य इत्यत उक्तं यद्यज्ञ इति। यद्यस्माद्भगवतो हरेस्तनुर्यज्ञः, अनेनेन्द्रस्यावध्यत्वे किमायातमत्राह यस्येति। सुरा इन्द्राद्या हरेरिष्टास्तनवो विशेषासन्निधानयोग्या यस्मात्तस्मात्तस्येष्टतनुत्वादस्मिन्यज्ञे तमिन्द्रं न जिघांसत। इन्द्रजिघांसया हरेरप्रीत्या यज्ञ एव न स्यादित्यर्थः। यद्वा यज्ञो भगवत इन्द्रस्य तनुर्यत्रेष्टाः सुराश्च यस्येन्द्रस्य तनवस्तस्मादस्मिन्यज्ञे तं न जिघांसतेति ॥ ३० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

ज्ञानदुर्बला जगृहुरिति प्रथमं तादृशवेशेन यज्ञादिदूषकमतेन च परितः स्वसंप्रदायं रचयित्वा पश्चाच्चौर्यप्रवृत्तेः ॥ २२-२३ ॥ ❀ ❀ एवमिति युग्मकम्। उपधर्मेष्विति। नग्नादय उपधर्मास्तेष्विति योज्यम् ॥ २४-२५ ॥ ❀ ❀ तदिति। अश्वमेधादिभागेष्वस्यापीन्द्रस्य वधोद्यमोऽयं श्रीभगवच्छक्तिविशेषस्यैव मूलेन्द्रत्वमननात् ॥ २६-२८ ॥ ❀ ❀ प्रत्यभाषतेति चित्सुखः ॥ २९ ॥ ❀ ❀ यमिन्द्रं यज्ञेन जिघांसथ स इन्द्रो भवतां न वध्यः। कुतः यद् यस्मात् यज्ञो यागो भगवतस्तनुः सुराश्चेन्द्राद्या यस्य इष्टास्तनवः। तस्मादेकां तनुं हत्वा नान्या रक्षितुं युक्ता, किन्तु द्वयमपि रक्षितुं युक्तमिति भावः ॥ ३०-३२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ज्ञानदुर्बला इति। पृथुपुत्रेणावधात् स्वेषामवध्यत्वमभिमन्यमानाः यज्ञादिदूषकमतप्रवर्त्तकं स्वसम्प्रदायं रचयित्वा परधनाकर्षणान्तर्द्धानादिक्षुद्रसिद्धीरेव साध्यत्वेन निरचैषुरित्यर्थः ॥ २२ ॥ ❀ ❀ पाखण्डनाम निर्वक्ति यानीति। बहुवचनेन बहव एव पाखण्डप्रभेदाः प्रवृत्ता इत्युक्तम् ॥ २३ ॥ ❀ ❀ तेनेन्द्रेणादौ गृहीतेषु पश्चाद्विसृष्टेषु नग्ना जैनाः रक्तपटा बौद्धाः, आदिशब्देन कापालिकादयः। उपधर्मेषु धर्मोपमेषु नतु धर्मेषु। पेशलेष्वापाततो रम्येषु वाग्मिषु हेतूक्तिचतुरेषु ॥ २४-२६ ॥ ❀ ❀ शक्रवधेऽभिसन्धिः सञ्जातो यस्य तं विचक्ष्य दृष्ट्वा प्रचोदितात् शास्त्रविहितात् पशोर्वधादन्यस्य वधो न युज्यते ॥ २७ ॥ ❀ ❀ ननु तर्ह्यत्र कः प्रतीकारस्तदाहुः। वयमिति। अयातयामैरगतवीर्यैः उपहवैराह्वानमन्त्रैः। अत्र तदानीं तस्येन्द्रस्य भगवदवतारत्वेऽपि विप्राणाञ्च तेषामवहिर्मुखत्वेऽपि तथाभूतोक्त्या कर्ममार्गस्य स्वभाव एव तैर्द्योतितो यत्तत्र प्रवृत्ता विवेकिनोऽप्यन्धा भवन्तीति यथा ब्रह्मणा कामस्य श्रीरुद्रेण क्रोधस्य श्रीविष्णुनापि यज्ञावतारे तस्मिन् मात्सर्य-कौटिल्यादिकमीहमानेनेन्द्रत्वस्य स्वभावो द्योतित इति ॥ २८ ॥ ❀ ❀ अस्य पृथोः ॥ २९ ॥ ❀ ❀ भगवत्तनुरिति,

नहि भगवद्भिरहो विप्रैर्हन्तुमध्यवस्यते भवतां तर्हि विप्रत्वमेव कुतः यं यज्ञेन जिघांसथेति स खलु यज्ञः कथं यज्ञेन वध्यो भवेत् यथा क्षीराब्धिः क्षीरप्रक्षेपेणेति। किञ्च यस्य यज्ञस्येन्द्रस्य च तनवः सुरास्ते च यज्ञेन युष्माभिरिष्टा इज्यन्ते स्मेति कथं स मरिष्यतीत्येतमपि विवेकं न कुरुथेति भावः ॥ ३० ॥

### श्रीमच्छुकदेवकृतः सिद्धांतप्रदीपः

हरेः रूपम् इन्द्रस्य पाखण्डवेषम् अवद्यं निन्द्यम् ज्ञानदुर्बला ज्ञानेन हीनाः ॥ २२ ॥ ❀ ❀ लिङ्गं खण्डमिहोच्यते, अन्यत्र षण्डशब्दः समूहवाचकः, इह तु चिह्नवाचक इत्यर्थः ॥ २३ ॥ ❀ ❀ तदारभ्य पाखण्डप्रवृत्तिस्तत्र च विचक्षणानां पाखण्डेषु प्रायेण मतिः सज्जते इत्याह एवमिति द्वाभ्याम्। पाखण्डेषु पापस्य खण्डेषु ज्ञापकेषु अत्र पत्येकदेशग्रहणेन पापमुच्यते, उपधर्मेषु वेदानुवादेषु धर्मोऽयमिति मतिः प्रायः सज्जते इति द्वयोरन्वयः ॥ २४ ॥ ❀ ❀ तत्र नग्नाः जैनाः, रक्तपटा बौद्धाः, आदिपदात्कापालिकादयः। पेशलेषु आपाततो रम्येषु वाग्मिषु वाचालेषु ॥ २५ ॥ ❀ ❀ पृथुपराक्रमः विपुलप्रभावः ॥ २६ ॥ ❀ ❀ शक्रवधायाभिसन्धितं कृताभिप्रायं दुष्प्रेक्ष्यं दुःखेनापि प्रेक्षितुमशक्यम् असह्यरंहसं दुःसहवेगम् ऋत्विजो निवारयामासुः। अहो महामते ! प्रचोदितात् विहितात् अन्यस्य वधः दीक्षितस्य तव न युज्यते ॥ २७ ॥ ❀ ❀ वयं मरुत्वन्तमिन्द्रं त्वद्य अर्थनाशनं यज्ञनाशकं त्वच्छ्रवसा ते यशसैव हतत्विषं नष्टकान्तिम् अयातयामैरगतसारैः उपहवैः आह्वानमन्त्रैरिह ह्वयामहे आह्वयामहे। अनन्तरं प्रसह्य ते अहितम् अग्नये जुहुवाम ॥ २८ ॥ ❀ ❀ क्रतुपतिं पृथुम् ॥ २९ ॥ ❀ ❀ यद्यतः यज्ञेनेष्टाः सुराः यस्य तनवः तनुवद्वशवर्तिनः यश्च यज्ञो नामायमिन्द्रो भगवत्तनुरवतारः "ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत। सुयामाद्यैः सुरगणैरपात् स्वायंभुवान्तरम्" इत्युक्तत्वात् अतः यं यूयं जिघांसथ स भवतां वध्यो न भवति ॥ ३० ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

तदा च पुनर्नायं धर्मात्मा, किन्तु तव पितुर्यज्ञे विघ्नकर्त्तेन्द्र एवात एनं जहीति तमत्रिश्चोदितवांस्ततोऽत्रिणा चोदितस्तस्मै तमिन्द्रं हन्तुं रुषा क्रोधेन विशिखं बाणं धनुषि संदधे योजितवान्। स इन्द्रो यतः स्वराट् यथेष्टरूपग्रहणान्तर्धानादौ समर्थस्ततोऽवं तद्रूपं पाखण्डवेषं च हित्वान्तर्हितः संस्तस्थौ स्थित इत्यन्वयः ॥ २१ ॥ ❀ ❀ अथेन्द्रस्याश्वत्यागपूर्वकान्तर्द्धानानन्तरं वीरः पृथुपुत्रोऽश्वमुपादाय गृहीत्वा पितृयज्ञमव्रजत् आगतः। तदवद्यं निन्दितं हरेः इन्द्रस्य गृहीतं विसृष्टं च रूपं ज्ञानदुर्बलाः ज्ञानसाधने असमर्थाः मन्दमतयो जगृहुः ॥ २२ ॥ ❀ ❀ तदेव रूपं पाखण्डनामनिरुक्त्या दर्शयति— यानीति। यानि रूपाणि हयजिहीर्षया हयस्य हरणेच्छया इन्द्रो जगृहे गृहीतवान्। तानि पापस्य खण्डानि ज्ञेयानि। खण्डशब्देन किमुच्यत इत्यपेक्षायामाह—लिङ्गमिति। इह शास्त्रे खण्डं खण्डशब्दितं लिङ्गं चिह्नमुच्यते। तथा च पापस्य खण्डं लिङ्गमिति नामनिरुक्तिर्ज्ञेया। अत्र बहुवचनेन प्रदर्शितरूपादन्यान्यपि रूपाणि गृहीतवानिति ज्ञायते ॥ २३ ॥ ❀ ❀ ततः पाखण्डप्रवृत्तिमाह—एवमिति द्वयेन। वैन्ययज्ञस्य जिघांसया हननेच्छया इन्द्रे एवं वारं वारमश्वं हरति सति तद्गृहीतविसृष्टेषु तेनेन्द्रेण गृहीतेषु पुनर्विसृष्टेषु त्यक्तेषु पाखण्डेषु पाषण्डवेषेषु प्रायेण भ्रान्त्या धर्मोयमिति नृणां मतिः सज्जत इत्युत्तरेणान्वयः। भ्रान्तिप्रयोजकं सादृश्यं दर्शयति—उपधर्मेष्विति। धर्मवत्प्रतीयमानेष्वित्यर्थः। अत एव पेशलेषु अविचाररिरमणीयेषु अत एव नग्नरक्तपटादिषु पाखण्डवेषधारणं दृश्यत इति शेषः। तत्र नग्ना जैनाः। रक्तपटा बौद्धाः। आदिशब्देन कापालिकादिग्रहणम्। नच ते पुनरुपदेष्टुं शक्या दुश्चिकित्स्यत्वादित्याशयेनाह—वाग्मिष्विति। तर्ककुशलेष्वित्यर्थः ॥ २४-२५ ॥ ❀ ❀ तदिन्द्रस्य पाखण्डप्रकटनपूर्वकाश्वापहारात्मकं निन्दितं कर्माभिप्रेत्य ज्ञात्वा कुपितः पृथुरुद्यतकार्मुकः सन्निन्द्राय इन्द्रं हन्तुं बाणमादत्त जगृह इत्यन्वयः। ननु कथं तेन तद्धननं शक्यमित्याशङ्क्याह—पृथुपराक्रम इति। पृथवो महान्तः पराक्रमा यस्य सः। तत्रापि हेतुः— भगवानिति ॥ २६ ॥ ❀ ❀ तं पृथुं शक्रवधाभिसन्धिनमिन्द्रवधकामुकमत एव क्रोधेन दुःप्रेक्ष्यं रक्तनेत्रभुजस्फुरणादिविकारेण द्रष्टुमप्यशक्यमसह्यरंहसं शत्रुभिर्दुःसहवेगं विचक्ष्य दृष्ट्वा ऋत्विजः यज्ञानुष्ठानेधिकृता ब्राह्मणाः शक्रवधान्निवारयामासुरित्यन्वयः। निवारणवाक्यमेव दर्शयति—अहो इति। हे महामते प्रचोदितात्। यज्ञाङ्गत्वेन विहितादश्ववधादन्यस्य वधोऽत्र यज्ञानुष्ठानकाले तव न युज्यते युक्तो न भवति। तद्भवान् जानात्येवेत्यभिप्रेत्य सम्बोधयन्ति—हे महामत इति। आश्चर्यं राज्यैश्वर्यादिमदावेशमाहात्म्यं येन ज्ञात्वापि कुत्सिते कर्मणि प्रवृत्तो भवानिति सूचयन्ति—अहो इति ॥ २७ ॥ ❀ ❀ तथाप्येवमकर्त्तुस्तस्य दण्डः कथं स्यादिति चेद्वयं करिष्याम इत्याहुः—वयमिति। वयमयातयामैरगतवीर्यैरुपहवैराह्वानमन्त्रैस्तं तवाहितं शत्रुं मरुत्वन्तमिह यज्ञशालायामेव ह्वयामहे ततश्च प्रसह्य बलात्कारेण तमग्नये जुहवाम अग्नौ होष्याम इत्यन्वयः। एवं च त्वत्संकल्पितस्तत्प्राणवियोगपर्यन्तो दण्डः स्यादिति भावः, अहितत्वमेव स्फोरयन्ति—अर्थनाशनमिति। यज्ञे विघ्नकर्त्तारमित्यर्थः। नन्वेवं युष्माभिर्दण्डे प्रणीतेऽपि कथं मम यशसः प्रसिद्धिस्तत्राहुः—त्वदिति। त्वच्छ्रवसैव हता त्विट् कान्तिर्यस्य तम्। त्वदग्रेऽतितुच्छत्वात्स्वहस्तेन तद्धननं विनैव त्वत्पराक्रमस्य विततत्वादिति भावः ॥ २८ ॥ ❀ ❀ इत्येवं क्रतुपतिं

यजमानमामन्त्र्य प्रतिबोध्य रुषा क्रोधेन जुह्वतः इन्द्राह्वानार्थं होमं कुर्वतः अत एव स्रुक् हस्ते येषां तान् स्रुग्घस्तान् अस्य पृथोः ऋत्विजोऽभ्येत्य उपगम्य स्वयंभूर्ब्रह्मा प्रत्यषेधत हवनप्रतिषेधं कृतवान्। यथा भवान् स्वभ्रातृपुत्राणां परस्परं कलहं दृष्ट्वा वारयितुमशक्तत्वाद् गृहाद्बहिर्विनिर्गतस्तेषु समत्वात्तव तन्न रोचते तथा ब्रह्मणोपि सर्वसुखत्वेन समत्वात्तन्न रोचत इति वारणे हेतुं सूचयन् संबोधयति—हे विदुर इति॥ २९॥ ॐ ॐ निषेधवाक्यान्येव दर्शयति—नेति सार्द्धाभ्याम्। यज्ञरक्षार्थं यूयं यं जिघांसथ हन्तुमिच्छथ स इन्द्रो भवतां भवद्भिर्वध्यो वधार्हो न भवतीत्यन्वयः। कुत इत्यपेक्षायामाह—यतो यज्ञेनेष्टाः पूजिताः सर्वे सुरा यस्येन्द्रस्य तनवः करचरणाद्यवयवस्थानापन्नास्तदंशा एव। कुत एतदित्यत आह—यदिति। यत् यस्मात् यज्ञो नामायमिन्द्रो भगवतो वासुदेवस्य तनुः अवतार इत्यर्थः। एतेन यज्ञरक्षार्थमस्य हनने प्रत्युत सर्वथैव यज्ञोच्छेदः स्यात्युष्माभिरस्य हननमशक्यं चेति दर्शितम्॥ ३०॥

भाषानुवादः

तब अत्रिने राजकुमारको फिर उकसाया और उसने गुस्सेमें भरकर इन्द्रको लक्ष्य बनाकर अपना बाण चढ़ाया। यह देखते ही देवराज उस वेष और घोड़ेको छोड़कर वहीं अन्तर्धान हो गये॥ २१॥ ॐ ॐ वीर विजिताश्व अपना घोड़ा लेकर पिताकी यज्ञशालामें लौट आया। तबसे इन्द्रके उस निन्दित वेषको मन्दबुद्धि पुरुषोंने ग्रहण कर लिया॥ २२॥ ॐ ॐ इन्द्रने अश्वहरणकी इच्छासे जो-जो रूप धारण किये थे, वे पापके खण्ड होनेके कारण पाखण्ड कहलाये। यहाँ 'खण्ड' शब्द चिह्नका वाचक है॥ २३॥ ॐ ॐ इस प्रकार पृथुके यज्ञका विध्वंस करनेके लिये यज्ञपशुको चुराते समय इन्द्रने जिन्हें कई बार ग्रहण करके त्याग था, उन नग्न रक्ताम्बर तथा कापालिक आदि पाखण्डपूर्ण आचारोंमें मनुष्यकी बुद्धि प्रायः मोहित हो जाती है; क्योंकि ये नास्तिकमत देखनेमें सुन्दर है और बड़ी-बड़ी युक्तियोंसे अपने पक्षका समर्थन करते हैं। वास्तवमें ये उपधर्ममात्र हैं। लोग भ्रमवश धर्म मानकर इनमें आसक्त हो जाते हैं॥ २४–२५॥ ॐ ॐ इन्द्रकी इस कुचालका पता लगनेपर परम पराक्रमी महाराज पृथुको बड़ा क्रोध हुआ। उन्होंने अपना धनुष उठाकर उसपर बाण चढ़ाया॥ २६॥ ॐ ॐ उस समय क्रोधावेशके कारण उनकी ओर देखा नहीं जाता था। जब ऋत्विजोंने देखा कि असह्य पराक्रमी महाराज पृथु इन्द्र का वध करनेको तैयार हैं, तब उन्हें रोकते हुए कहा, राजन्! आप तो बड़े बुद्धिमान् हैं, यज्ञदीक्षा ले लेनेपर शास्त्रविहित यज्ञपशुको छोड़कर और किसीका वध करना उचित नहीं है॥ २७॥ ॐ ॐ इस यज्ञकार्यमें विघ्न डालनेवाला आपका शत्रु इन्द्र तो आपके सुयशसे ही ईर्ष्यावश निस्तेज हो रहा है। हम अमोघ आवाहन-मन्त्रोंद्वारा उसे यहीं बुला लेते हैं और बलात्कारसे अग्निमें हवन किये देते हैं॥ २८॥ ॐ ॐ विदुरजी! यजमानसे इस प्रकार सलाह करके उसके याजकोंने क्रोधपूर्वक इन्द्रका आवाहन किया। वे स्रुवाद्वारा आहुति डालना ही चाहते थे कि ब्रह्माजीने वहाँ आकर उन्हें रोक दिया॥ २९॥ ॐ ॐ वे बोले, 'याजको! तुम्हें इन्द्रका वध नहीं करना चाहिये, यह यज्ञसंज्ञक इन्द्र तो भगवान्‌की ही मूर्ति है। तुम यज्ञद्वारा जिन देवताओंकी आराधना कर रहे हो; वे इन्द्रके ही तो अङ्ग हैं और उसे तुम यज्ञद्वारा मारना चाहते हो॥ ३०॥

तदिदं पश्यत महद्धर्मव्यतिकरं द्विजाः। इन्द्रेणानुष्ठितं राज्ञः कर्मैतद्विजिघांसता॥ ३१॥

पृथुकीर्तेः पृथोर्भूयात्तर्ह्येकोनशतक्रतुः[1]। अलं ते क्रतुभिः स्विष्टैर्यद्भवान्मोक्षधर्मवित्॥ ३२॥

नैवात्मने[2] महेन्द्राय रोषमाहर्तुमर्हसि। उभावपि हि भद्रं ते उत्तमश्लोकविग्रहौ॥ ३३॥

मास्मिन्महाराज[3] कृथाः स्म चिन्तां निशामयास्मद्वच आदृतात्मा।
यद्ध्यायतो दैवहतं नु कर्तुं मनोऽतिरुष्टं विशते तमोऽन्धम्॥ ३४॥

क्रतुर्विरमतामेष देवेषु दुरवग्रहः। धर्मव्यतिकरो यत्र पाखण्डैरिन्द्रनिर्मितैः॥ ३५॥

एभिरिन्द्रोपसंसृष्टैः पाखण्डैर्हारिभिर्जनम्। ह्रियमाणं[4] विचक्ष्वैनं यस्ते यज्ञध्रुगश्वमुट्॥ ३६॥

भवान् परित्रातुमिहावतीर्णो धर्मं जनानां समयानुरूपम्।
वेनापचारादवलुप्तमद्य तद्देहतो विष्णुकलासि वैन्य॥ ३७॥

स त्वं विमृश्यास्य भवं प्रजापते सङ्कल्पनं विश्वसृजां पिपीपृहि।
ऐन्द्रीं च मायामुपधर्ममातरं प्रचण्डपाखण्डपथं प्रभो जहि॥ ३८॥

---

१. प्रा० पा०—तत्रैको०। २. प्रा० पा०—नैवात्मना। ३. प्रा० पा०—भाग। ४. प्रा० पा०—क्रियमाणं।

### मैत्रेय[1] उवाच

इत्थं स लोकगुरुणा समादिष्टो विशाम्पतिः । तथा च कृत्वा[2] वात्सल्यं मघोनापि च सन्दधे ॥ ३९ ॥
कृतावभृथस्नानाय पृथवे भूरिकर्मणे । वरान्ददुस्ते वरदा ये तद्बर्हिषि तर्पिताः ॥ ४० ॥
विप्राः सत्याशिषस्तुष्टाः श्रद्धया लब्धदक्षिणाः । आशिषो युयुजुः क्षत्तरादिराजाय सत्कृताः ॥ ४१ ॥
त्वयाऽऽहूता महाबाहो सर्व एव समागताः । पूजिता दानमानाभ्यां पितृदेवर्षिमानवाः ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे पृथु[3]विजये एकोनविंशोऽध्यायः ॥ १९ ॥

अन्वयः—द्विजाः राज्ञः एतत् कर्म विजिघांसता इंद्रेण अनुष्ठितम् तत् इदम् महत् धर्मव्यतिकरम् पश्यत ॥ ३१ ॥ ❀ ❀ तर्हि पृथुः एकोनशतक्रतुः पृथुकीर्तिः भूयात् यत् भवान् मोक्षधर्मवित् ते स्विष्टैः क्रतुभिः अलम् ॥ ३२ ॥ ❀ ❀ हि उभौ अपि उत्तमश्लोकविग्रहौ आत्मने महेन्द्राय रोषम् आहर्तुम् न एव अर्हसि ते भद्रम् ॥ ३३ ॥ ❀ ❀ महाराज दैवहतम् यत् कर्तुम् ध्यायतः मनः नु अतिरुष्टम् अन्धम् तमः विशते अस्मिन् चिंताम् मा कृथाः स्म आदृतात्मा अस्मद्वचः निशामय ॥ ३४ ॥ ❀ ❀ एषः क्रतुः विरमताम् देवेषु दुरवग्रहः यत्र इन्द्रनिर्मितैः पाखण्डैः धर्मव्यतिकरः ॥ ३५ ॥ ❀ ❀ ते यज्ञध्रुक् अश्वमुट् यः तेन एभिः इन्द्रोपसृष्टैः हारिभिः पाखण्डैः ह्रियमाणम् एनम् जनम् आचक्ष्व ॥ ३६ ॥ ❀ ❀ वैन्य भवान् जनानाम् समयानुरूपम् वेनापचारात् अवलुप्तम् धर्मम् परित्रातुम् तद्देहतः अद्य इह अवतीर्णः विष्णुकला असि ॥ ३७ ॥ ❀ ❀ प्रभो प्रजापतेः सः त्वम् अस्य भवम् विमृश्य विश्वसृजाम् संकल्पनम् पिपीपृहि प्रचण्डपाखण्डपथम् च उपधर्ममातरम् ऐन्द्रीम् मायाम् जहि ॥ ३८ ॥ ❀ ❀ अपि च लोकगुरुणा इत्थम् समादिष्टः सः विशांपतिः तथा वात्सल्यम् कृत्वा च मघोना संदधे ॥ ३९ ॥ ❀ ❀ ये तद्बर्हिषि तर्पिताः ते वरदाः कृतावभृथस्नानाय भूरिकर्मणे पृथवे वरान् ददुः ॥ ४० ॥ ❀ ❀ क्षत्तः सत्याशिषः श्रद्धया लब्धदक्षिणाः सत्कृताः विप्राः तुष्टाः आदिराजाय आशिषः युयुजुः ॥ ४१ ॥ ❀ ❀ महाबाहो त्वया आहूताः समागताः सर्वे एव पितृदेवर्षि-मानवाः दानमानाभ्याम् पूजिताः ॥ ४२ ॥

इत्यूनविंशोऽध्यायः ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अतो बलीयसाऽनेन सख्यमेव कर्तव्यमन्यथा भूयः पाखंडं स्रक्ष्यतीत्याशयेनाह । तदिदमिंद्रेणानुष्ठितं महदन्याय्यं पश्यत । किमित्यपेक्षायामाह । धर्मस्य व्यतिकरं विपर्ययं पाखंडपथम् ॥ ३१ ॥ ❀ ❀ तर्हि किमत्र युक्तमित्यत आह पृथुकीर्तेरिति । एकेनोनं शतं यस्मिंस्तादृशः क्रतुप्रयोगः पृथोर्भूयात् । पृथुकीर्तिः पृथुरिति पाठे एकोनशतं क्रतवो यस्य तादृशोऽपि महेंद्रात्पृथुकीर्तिर्भूयादित्यर्थः । तदेवमृत्विजः प्रत्युक्त्वा पृथुं प्रत्येवाह । अलमिति ॥ ३२ ॥ ❀ ❀ आत्मनैवात्मने महेंद्राय रोषं कर्तुं नार्हसि । तत्र हेतुः । उभावपीति ॥ ३३ ॥ ❀ ❀ तथापि क्रतुसमाप्तिमेव ध्यायंतं प्रत्याह । अस्मिन्यज्ञविघ्ने चिंतां मा स्म कृथाः । यद्यस्माद्दैवहतं कार्यं कर्तुं ध्यायतो मनो नु निश्चितमतिरुष्टं सदंधंतमो मोहं विशति न तु शांतिं लभते ॥ ३४ ॥ ❀ ❀ अत एव तव क्रतुर्विरमतु । नन्विंद्रः किं न निवार्यतेऽत आह । यतो देवेषु दुराग्रहो भवतीति । यत्र क्रतौ ॥ ३५ ॥ ❀ ❀ इंद्रदुराग्रहकृतमनर्थं पश्येत्याह । एभिरिंद्रेणोपसंसृष्टैरधिष्ठितैर्हारिभिश्चित्ताकर्षकैः । य इंद्रस्तेऽश्वं मुष्णातीति तथा यज्ञाय द्रुह्यतीति तथा । तेन सृष्टैः ॥ ३६ ॥ ❀ ❀ ततो मम किमिति चेत्तत्राह–भवानिति द्वाभ्याम् । सांख्ययोगादिनानासिद्धांतानुरूपं धर्मं वेनस्यान्यायाल्लुप्तं परित्रातुं तद्देहाद्विष्णोः कलैव त्वमवतीर्णोऽसि ॥ ३७ ॥ ❀ ❀ हे प्रजापते अस्य विश्वस्य भवमुद्भवं विचार्य यैरुत्पादितोऽसि तेषां विश्वसृजां संकल्पं पिपीपृहि-आर्षः प्रयोगः-पूरयेत्यर्थः । प्रचंडो यः पाखंडमार्गः सैवैंद्री मायोपधर्मजननी तां जहि विनाशय ॥ ३८ ॥ ❀ ❀ तथा च कृत्वा यज्ञाग्रहं हित्वा वात्सल्यं स्नेहं च कृत्वेंद्रेण सह संधानं च कृतवान् ॥ ३९ ॥ ❀ ❀ कृतमवभृथसंबंधि स्नानं येन स तस्मै ॥ ४०–४१ ॥ ❀ ❀ तुष्टानां वाक्यं त्वयेति ॥ ४२ ॥

इति श्रीमद्भागवते चतुर्थे टीकायामेकोनविंशोऽध्यायः ॥ १६ ॥

---

१. प्राचीने पाठे 'मैत्रेय उवाच' नास्ति । २. प्रा० पा०—कृतवान् सख्यं । ३. प्रा० पा०—पृथुचरिते आश्वमेधे ।

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यतस्तद्द्वेषेणाधर्म एव वर्धिष्यते तं चाधर्ममस्य राज्ञो मूर्तमेव प्रवृत्तं पश्यतेत्याह–अतो बलीयसेति। तदिदं प्रत्यक्षसिद्धं द्विजा इत्यदीर्घदर्शित्वमाह ॥ ३१ ॥ ❀ ❀ इत्यर्थ इति। क्रतुभिर्यश एव साध्यं तच्च मदाशीर्वाददेव भविष्यतीति भावः। षष्ठ्यंतपाठे एकत्वं जात्यपेक्षया एकोनशतं क्रतुरिति पाठे संख्या वाक्यापेक्षया, षण्ढत्वमेकत्वं च "विंशत्याद्याः सदैकत्वे तासु चानवतेः स्त्रियः। क्लीबे शताद्याः प्रायः स्युः" इत्यभिधानात्। क्रतुशतस्य संकल्पोऽपूर्णोऽपि मदाशीर्वादात्पूर्णो भवत्वित्यर्थो व्यंजितः। यद्यतो मोक्षधर्मविदिति। न चेंद्रत्वलाभाय तव क्रतुशतकारंभः, किं तु प्रजापालनवदिज्यादेरपि राजधर्मत्वेन निजधर्माचरणस्य 'स्वधर्ममाराधनमच्युतस्य' इत्युक्त्या मोक्षहेतुहर्याराधनार्थत्वमेव। मोक्षहेतुत्वं तु स्वधर्मस्य 'यदीहमानो विजहाति बंधम्' इत्युक्तेः। यज्ञस्य राजधर्मत्वं तु गयोपाख्याने "स्वधर्मेण प्रजापालनपोषणप्रीणनोपलालनानुशासनोपलक्षणेनेज्यादिना च" इत्युक्तेरेवावसीयत इति। अत उक्तमलं पूर्णं तिष्ठतु वा। "अलं तु भूषणे शक्तौ पर्याप्तौ विनिवारणे" इति यादवः। निवृत्तिमार्गप्रियस्य तव प्रवृत्तिमार्गेहा तु लोकसंग्रहार्थमेवेति भावः ॥ ३२ ॥ ❀ ❀ फलितमाह–नैवेति। तत्र रोपाकरणे आत्मन इति हेतुः आत्मने इत्यत्रापि हेतुः उभाविति। द्वयोरपि युवयोर्भगवदवतारत्वादित्यर्थः ॥ ३३ ॥ ❀ ❀ तथापीत्थं बोधितेपि ॥ ३४ ॥ ❀ अत एव मनःशांत्यभावादेव। अत्राक्षिपति नन्विति। तीर्थस्तु–न केवलं क्रतोर्विरामेण पूर्यते किन्तु देवेषु दुरवग्रहो विरमतां, देवेषु कुपितेषु त्वद्राष्ट्रे वृष्टिविघातोऽपि स्यादतस्तद्दुरवग्रहविरामः कर्त्तव्य इत्यर्थः। क्रतोर्विशेषणं वा कुपितदेवविषयो दुष्टोऽवग्रहो यस्मात्स तथा। देवप्रीत्या सुवृष्ट्यर्थं पुरुषैर्यज्ञोनुष्ठीयते "कारीर्या वृष्टिकामो यजेत" इति श्रुतेः। तत्र देवप्रतिहते क्रतौ क्रियमाणे तदप्रीत्यानावृष्ट्या व्रीह्याद्यौषध्यनुत्पत्त्याऽन्नाभावेन प्राणिनां प्राणधारणोपायाभावेन देहवियोगलक्षणो विनाशः स्यादिति "व्याङ्परिभ्यो रमः" इति विहितपरस्मैपदप्रयोगं विहाय स्वार्थहानिसूचनाय विरमतामित्यात्मनेपदप्रयोगः। इतोपि क्रतुर्विरमत्वित्याह–यत्र चरमाश्वमेधे क्रियमाणे सति धर्मव्यतिकरः धर्मेऽधर्मसंबंधेन धर्मस्य नाशो जात इति भावः। "ध्रुवं धर्मः प्रणश्येत तपोयज्ञव्रतादिषु। दर्शनस्पर्शभाषाभिर्म्लेच्छपाषंडिदंभिभिः" इति संहितोक्तेः। "वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ" इत्यमरः ॥ ३५ ॥ ❀ ❀ पाखंडैर्ह्रियमाणं स्वायत्तीकृतं जनं तत्र हेतुर्हारिभिर्मूढजनाकर्षिभिः ॥ ३६ ॥ ❀ ❀ ततः पाखंडहृतजनदर्शनान्मम किं का हानिरित्यत्राह। "समयः शपथाचारसिद्धांतेषु तथा धियि। क्रियाकारे च निर्देशे संकेते कालभाषयोः" इति मेदिनी। हे वैन्येति। वेनदेहोद्भूतत्वात्तन्मतिं मा गृहाणेति भावः। "विरोधे प्रणधित्यक्तेऽपचारोऽन्यायनिंदयोः" इति निरुक्तिः ॥ ३७ ॥ ❀ ❀ हे प्रजापते। प्रजापालनं हि धर्मरक्षयाऽधर्महत्या च भवतीत्यतः पाखंडस्य महाऽधर्मत्वात्तद्धननमेव युक्तमिति भावः। इत्यर्थ इति। 'प्र-पालनपूरणयोः' इत्यस्य लोटो मध्यमपुरुषैकवचने द्वित्वेत्वयोः पिपृहीति, ततः पुनः पीत्यस्य द्वित्वमुत्तरस्य दीर्घश्च च्छांदसत्वात्। यद्वा–'वष्टि भागुरिः' इत्यप्युपसर्गाकारलोपे अभ्यासस्य च्छांदसे दीर्घे पिपीपृहीति रूपमिति भावः। प्रचंडपाखंडपथमित्याविष्टलिंगत्वात्पुंस्त्वम् ॥ ३८ ॥ ❀ ❀ स पृथुर्लोकगुरुणा ब्रह्मणा ॥ ३९ ॥ ❀ ❀ अवभृथो यज्ञांतस्तस्येदमावभृथ्यं तच्च स्नानमावभृथ्यस्नानं कृतमांवभृथ्यस्नानं येन तस्मै। तद्बर्हिषि तस्य यज्ञे ॥ ४० ॥ ❀ ❀ क्षत्तरिति। त्वं जानास्येवैतद् वृत्तं विप्राः पूजिताः सुखायापूजिता दुःखाय। क्षत्तृपदमत्र विद्वत्परमनेन प्राग्भवमांडव्यवृत्तं स्मारितमिति भावः। "क्षत्ता शूद्रात्क्षत्रियजे प्रतीहारे च सारथौ। भुजिष्यातनयेपि स्यान्नियुक्तविदुषोरपि" इति मेदिनी ॥ ४१ ॥ ❀ ❀ महाबाहो इति। इंद्रस्यापि भयंकरौ तव बाहू इति भावः ॥ ४२ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे एकोनविंशोऽध्यायः ॥ १९ ॥

## श्रीमद्वीरराघवव्याख्या

हे द्विजाः! राज्ञः पृथोरेतद्धर्मरूपं कर्म जिघांसता नाशयितुमिच्छता इन्द्रेणानुष्ठितं धर्मस्य व्यतिकरः यस्मिन् तदिदं पाषण्डात्मकं महदन्याय्यं पश्यत ॥ ३१ ॥ ❀ ❀ तर्हि तथा चेत्पृथुकीर्तेः विपुलकीर्तेः पृथोः एकोनशतं यस्मिन् तादृशक्रतुप्रयोगः एकोनशतक्रतुरपि पृथुः महेन्द्रात् पृथुकीर्तिर्भूयादित्यर्थः। पृथुकीर्तिः पृथुरिति पाठे एकोनशतं क्रतवो यस्य तादृशः पृथुर्भूयादित्यर्थः। पृथुं सान्त्वयति ते त्वया स्विष्टैः सम्यगनुष्ठितैः एतावद्भिः क्रतुभिरलं, यत् यस्मात् भवान्मोक्षधर्मवित् मुमुक्षो रागाद्यनपेतमेव कर्मानुष्ठानं युक्तमिति भावः ॥ ३२ ॥ ❀ ❀ आत्मना मनसा दोषं महेन्द्राय आहर्तुं स्वीकर्तुं त्वं नार्हसि, हि यस्मात् त्वं महेन्द्रश्चेत्युभावपि उत्तमश्लोकस्य भगवतो विग्रहौ शरीरभूतौ, अतो नान्योऽन्यं विरोधो युक्त इति भावः। ते तुभ्यं भद्रं भूयात् ॥ ३३ ॥ ❀ ❀ हे महाभाग! अवहितमना मद्वचो निशामय शृणु, अस्मिन् यज्ञविघ्ने चिन्तां मास्म कृथाः, यत् यस्मात् दैवहतं कार्यं कर्तुं ध्यायतः पुरुषस्य मनः नु निश्चितमतिरुष्टमन्धन्तमः मोहं विशति न तु शान्ति लभते ॥ ३४ ॥ ❀ ❀ अत एव तव क्रतुर्विरमताम्, नन्विन्द्रः किं न निवार्यते तत्राह। यतो देवेषु दुरवग्रहो भवति यत्र क्रतौ इन्द्रनिर्मितैः पाषण्डैर्धर्मव्यतिकरोऽभवत् ॥ ३५ ॥ ❀ ❀ इन्द्रदुराग्रहकृतमनर्थं पश्येत्याह। एभिरिन्द्रेणावसृष्टैः कल्पितैः पाषण्डैर्हारिभिश्चित्ताप-

कर्षकैः ह्रियमाणं स्ववशीक्रियमाणं जनं विचक्ष्व पश्य, यस्ते तव यज्ञभुक् यज्ञनाशकः अश्वं मुष्णाति अपहरतीति तथा ॥ ३६ ॥ ❀ ❀ ततो मम किमिति तत्राह भवानिति द्वाभ्याम्। नानासमयानुरूपं विविधसिद्धान्तानुरूपं धर्मं वैन्यस्यापचारादन्याय्यादवप्लुतं परित्रातुम् अद्य अधुना तस्य वेनस्य देहतः इह लोकेऽवतीर्णः वैन्यः वेनपुत्रोऽपि त्वं विष्णुकलासि विष्णोरंशभूतोऽसि ॥ ३७ ॥ ❀ ❀ स विष्णुकलाभूतस्त्वम् अस्य जगतो भवमुत्पत्तिं विमृश्य विचार्य हे प्रजापते ! विश्वसृजां सङ्कल्पनं सङ्कल्पं पिपीपृहि पूरय, येभ्यो विश्वसृड्भ्योऽस्य जगत उत्पत्तिः तेषां संकल्पं पूरयेत्यर्थः, प्रजापालनाधिकृतस्य तवेदं युक्तमित्यभिप्रायेण प्रजापते इति सम्बोधनं कृतं, प्रचण्डो यः पाषण्डमार्गः सैवेन्द्रमाया उपधर्मस्य माता जननी तां जहि प्रभो ! तथा कर्तुं समर्थस्त्वमित्यभिप्रायेण प्रभो इति सम्बोधनम् ॥ ३८ ॥ ❀ ❀ उपसंहरति इत्थमिति पञ्चभिः। इत्थमेवं लोकगुरुणा सम्यगादिष्टो दिशाम्पतिः दिक्पतिः स पृथुः मघोना इन्द्रेण सह तथा च ब्रह्मोक्तरीत्या सख्यं कृतं तेनैव च सन्दधे सन्धिं कृतवान् ॥ ३९ ॥ ❀ ❀ कृतमवभृथसम्बन्धि स्नानं येन तस्मै भूरिकर्मणे विपुलव्यापाराय पृथवे तस्य पृथोर्वर्हिषि यज्ञे ये तर्पितास्ते वरदा देवा वरान् ददुः ॥ ४० ॥ ❀ ❀ सत्याः फलाविनाभूताः आशिषः आशीर्वादाः येषां ते विप्राः श्रद्धयावाप्तदक्षिणाः, अत एव तुष्टाः पुनश्च सत्कृताः हे क्षत्तः ! आदिराजाय पृथवे आशिषः युयुजुः कृतवन्तः ॥ ४१ ॥ ❀ ❀ हे महाबाहो ! विदुर तथान्ये ये तत्र यज्ञे समागतास्ते सर्वे आदृताः प्रीतिविषयीकृताः यथायोग्यं दानमानाभ्यां पूजिताः पित्रादयः ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिकायाम् ऊनविंशोऽध्यायः ॥ १९ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

भीषयन्निव वक्ति तदिदमिति। इन्द्रेण शतक्रतुत्वहानिलक्षणभीत्यैतदनुष्ठितमिति ध्वनयति इन्द्रेणेति। पृथो राज्ञ एतत्कर्मजिघांसया ॥ ३१ ॥ ❀ ❀ इदानीं पृथुमभिवदति पृथुकीर्तिरिति। हे पृथो ! त्वमेकोनशतक्रतुरिति पृथुकीर्तिः प्रख्यातकीर्तिर्भूया इत्यन्वयः। हिशब्देन त्वमेवैवंविधकीर्तिमान्नान्य इति स्फोरयति शक्रः शतक्रतुर्भूयादहन्त्वदाज्ञया एकोत्तरशतक्रतुर्भूयासमित्येवमभिसन्धिः स्यादत्राह अलन्त इति। ते शिष्टैरेकद्वित्रैः क्रतुभिरधिकः स्यामिति बुद्धिरलन्तिष्ठतु "अलन्तु भूषणे शक्तौ पर्याप्तौ विनिवारणे" इति यादवः। तदेतदेव भूषणमिति भावेनाह यद्भवानिति। मोक्षधर्मस्तारतम्यादिलक्षणस्तं वेत्तीति यद्यस्मात्तस्मान्निवृत्तिधर्मज्ञ इति वा। अनेन पृथुजीवादिन्द्रस्यात्युत्तमत्वं सूचितमिति ज्ञायते ॥ ३२ ॥ ❀ ❀ फलितमाह नैवात्मनेति। सत्सन्निहितहरेर्विशेषनिवासहेतुत्वादात्मन इत्युक्तम्, एतदेव विशिनष्टि उभाविति। उत्तमश्लोकस्य हरेर्विशेषस्थितिहेतुर्विग्रहो देहो ययोस्तौ तुभ्यं भद्रमस्तु, हरेः सन्निधानविशेषपात्रत्वात् अन्योऽन्यं जयपराजया न वक्तव्याः ॥ ३३ ॥ ❀ ❀ रोषशमनमेव कर्तुमुचितमन्यथा चिन्तया देहनाशस्तव स्यादित्याह मास्मिन्निति। यद्दैवहतं कार्यं तत्कर्तुमुपायं ध्यायतः पुंसो मनोऽतिकष्टमन्धन्तमो विशते। तुशब्देन लोकद्वयेऽप्यनर्थपरम्परां सूचयति हेत्वर्थो वा। तस्मादस्मिन् कार्ये चिन्तां स्मृत्वा मा कृथा इत्यन्वयः। "स्मृते वृत्ते निषेधे स्म" इति यादवः। अथैतत्कुर्वित्याह निशामयेति। निशामय शृणु ॥३४॥ किं तदत्राह क्रतुरिति। न केवलं क्रतोर्विरामेण पूर्यते किन्तु देवेषु दुरवग्रहो विरमताम्, देवेषु कुपितेषु त्वद्राष्ट्रे वृष्टिविघातोऽपि स्यादतस्तद्दुरवग्रहविरामः कर्तव्य इत्यर्थः। क्रतुविशेषणं वा कुपितदेवविषयो दुष्टोऽवग्रहो यस्मात् स तथा देवप्रीत्या सुवृष्ट्यर्थं पुरुषैर्यज्ञोऽनुष्ठीयते। तत्र देवप्रतिहते क्रतौ क्रियमाणे तदप्रीत्याऽनावृष्ट्यां व्रीह्याद्यौषध्यनुत्पत्त्यान्नाभावेन प्राणिनां प्राणधारणोपायाभावेन देहवियोगलक्षणो विनाशः स्यादिति "व्याङ्परिभ्यो रमः" इत्यनेन विहितपरस्मैपदप्रयोगं विहाय स्वार्थहानिसूचनाय विरमतामित्यात्मनेपदप्रयोगः। इतोपि क्रतुर्विरमत्वित्याह। धर्मव्यतिकर इति। यत्र यस्मिंश्चरमाश्वमेधे क्रियमाणे सति इन्द्रनिर्मितैः पाखण्डैर्धर्मव्यतिकरोऽधर्मे धर्मबुद्धया धर्मनाशः स्यात् ॥ ३५ ॥ ❀ ❀ धर्मव्यतिकरं प्रत्यक्षतोऽपि पश्येत्याह एभिरिति। हारिभिर्वशीकरणसमर्थैर्ह्रियमाणं संगृह्यमाणमेतत्कर्म विचक्ष्य पश्य, कोऽसाविन्द्र इत्यत आह य इति। यज्ञं द्रुह्यतीति यज्ञध्रुक् अश्वं मुष्णातीति अश्वमुट् स इन्द्र इत्यर्थः ॥ ३६ ॥ ❀ ❀ धर्मावनार्थमवतीर्णत्वाच्च तस्य नाशप्रयत्ने महानतिक्रम इत्याशयेनाह भवानिति। चशब्दो धर्मविरोधिपरिहारार्थमपीति ग्राह्यं नानासमयानुरूपं नानाविधशास्त्रानुसृतं वेनापचाराद्वेनाख्यापचारादवलुप्तं नष्टं तस्य वेनस्य देहतः 'अहं कः' इति भ्रान्तिर्मा भूदित्यतस्तत्स्वरूपमुपदिशति विष्णुकलेति। हे वैन्य ! अनेन विष्णोः सत्त्वेन स्थितिहेतुत्वात्तत्कलाविशिष्टत्वात्तद्धर्मविरुद्धाचरणं न युक्तमिति सूचयति ॥ ३७ ॥ ❀ ❀ उक्तोपसंहारमुखेन कर्तव्यं विधत्ते स त्वमिति। यस्माद्धर्मावनार्थमवतीर्णोऽसि तस्मात्स त्वं प्रजापतेरिन्द्रस्याभिभवं त्वच्चिकीर्षितं शतक्रतुत्वं विमृशन्ननुष्ठिते धर्मविरोधः स्यादिति मया तन्न कार्यमिति विचार्य विश्वसृज इन्द्रस्य सङ्कल्पितं पृथुना शतक्रतुत्वं न विधेयमिति निरूपितमतिपीपृहि अत्यन्तं पूरयेत्यन्वयः। इन्द्रस्य विरोधाकरणेऽभितः सर्वतो भवं शुभं भवतीति विमृश्य विश्वसृजः प्रजापतेर्मम तवैकोनशतक्रतुत्वं सङ्कल्पितमतिपीपृहीति वा पृ-पालनपूरणयोरिति धातुः, प्रचण्डस्य पाखण्डस्य पन्थानमैन्द्रीमिन्द्रनिर्मितामुपधर्मस्य मातरं जनयित्रीं मायाञ्च जहि विशिष्टधर्माचरणेन विनाशयेत्यन्वयः ॥ ३८ ॥ ❀ ❀ सात्त्विकप्रधानत्वात्पृथुना चतुर्मुखोक्तं गृहीतमित्याह इत्थमिति। मघोनेन्द्रेण ॥ ३९ ॥

❀ ❀ यज्ञान्तोऽवभृथस्तत्प्रभवमावभृथ्यं कृतमावभृथ्यं स्नानं येन स तथोक्तस्तस्मै ॥ ४० ॥ ❀ ❀ एतदेव विशिनष्टि विप्रा इति। सत्याशिषोऽभीष्टसाधनसमर्थशुभवाक्यप्रबन्धाः आशीर्दानक्षण एव फलाविर्भावप्रदर्शनाय युयुजुरित्युक्तम्। फलनित्यसम्बन्धार्थं वा, ददातेः कालान्तरेऽपि फलप्राप्तिसंशयहेतुत्वसम्भवात् ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् ऊनविंशोऽध्यायः ॥ १९ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

आत्मनेति। सम्बन्धोक्तिः आत्मना मनसेति व्याख्यानात्। स्वामिव्याख्यायां सन्देह एव। पूर्वन्यायेनैवाह उभावपीति ॥ ३३–३४ ॥ ❀ ❀ किञ्च देवेषु दुरवग्रहो विरोधहेतुरयं क्रतुर्विरमतु। ननु तद्विरोधे का क्षतिस्तत्राह। धर्मव्यतिकरो धर्मव्याघातः धर्मो दूषितः स्यादित्यर्थः ॥ ३५ ॥ ❀ ❀ पाखण्डानां बलं दर्शयति। एभिरिति ॥ ३६ ॥ ❀ ❀ तर्हि पाखण्डान्यप्युपेक्षणीयान्येवेत्याह भवानिति द्वाभ्याम् ॥ ३७–४० ॥ ❀ ❀ चित्सुखमते तु अत्रोनविंशोध्यायः। तथा च कृतवान् सर्वमिति चित्सुखः ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे ऊनविंशोऽध्यायः ॥ १९ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

किञ्च तद्द्वेशेनाधर्म एव वर्द्धिष्यते तच्चाधर्मस्य राज्ये मूर्त्तमेव प्रवृत्तं पश्यतेत्याह तदिदमिति। धर्मस्य व्यतिकरत्वं पाखण्डपथम् ॥ ३१ ॥ ❀ ❀ तर्हि किं तवाभिप्रेतमित्यत आह पृथ्विति। एकोनशतक्रतुरपि पृथुरयं शतक्रतोरिन्द्रादपि पृथुकीर्त्तिर्विपुलयशा भूयादिति क्रतुभिर्यश एव साध्यं तच्च मदाशीर्वादादेव भविष्यतीति भावः। पृथुकीर्त्तेः पृथोरिति षष्ठ्यन्तपाठे एकोनशतमेव क्रतुर्भूयादित्येकत्वं जात्यपेक्षया एकोनशतमिति संख्या व्यक्त्यपेक्षया सिद्धं क्रतुशतस्य संकल्पोऽपूर्णोऽपि मदाशीर्वादादेकोनत्वेऽपि पूर्णो भवत्वित्यर्थः। ऋत्विजः प्रत्युक्त्वा पृथुं प्रत्याह अलमिति ॥ ३२ ॥ ❀ ❀ आत्मन इत्यत्र हेतुः उभावपीति। द्वयोरपि युवयोर्भगवदवतारत्वादित्यर्थः ॥ ३३ ॥ ❀ ❀ तदपि क्रत्वसमाप्तिं ध्यायन्तं तं प्रत्याह मास्मिन्निति। यद्दैवहतं कर्म तत् कर्तुं ध्यायतः पुंसः नु निश्चितं मनोऽतिकष्टं सत् अन्धंतमो मोहं विशति, नतु शान्तिं लभते ॥ ३४ ॥ ❀ ❀ अत एव क्रतुर्विरमतां, नन्विन्द्रः किमिति न निवार्यते तत्राह। देवेषु मध्येऽयं दुराग्रहो भवति यत्र क्रतौ ॥ ३५ ॥ ❀ ❀ इन्द्रदुराग्रहकृतमनर्थं दर्शयति एभिरिति। हारिभिश्चित्ताकर्षकैः। य इन्द्रस्ते अश्वं मुञ्चतीति तथा यज्ञाय द्रुह्यतीति तथा तेन सृष्टैः ॥ ३६ ॥ ❀ ❀ त्वत्तः सकाशात् धर्म एव प्रवर्त्तितुमर्हति न त्वधर्म इत्याह। भवानिति ॥ ३७ ॥ ❀ ❀ अस्य विश्वस्य भवं कल्याणं हे प्रजापते! विश्वसृजां यैर्मन्थनाद्रुत्पादितोऽसि तेषां संकल्पनां संकल्पं पिपीपृहि आर्षः प्रयोगः, पूरयेत्यर्थः। उपधर्मस्य मातरं जनयित्रीं कीदृशीं प्रचण्डस्य पाखण्डस्य पन्थानम् आविष्टलिङ्गत्वादयुक्तं पुंस्त्वम् ॥ ३८ ॥ ❀ ❀ च एवार्थे, यथा ब्रह्मण आज्ञा तथैव वात्सल्यं कृत्वेति यज्ञस्य वयोवृद्धत्वेऽपि देवेन्द्रत्वेऽपि च ब्रह्मण एवाज्ञया तत्र पृथोर्वात्सल्यं सा च तयोर्विशुद्धसत्त्वेन तुल्यत्वेऽपि पृथोर्भक्त्युत्कर्षेणाभ्यर्हितत्वमालक्ष्यैव कृतेति ज्ञेयं, सन्दधे सन्धिं चकार ॥ ३९–४१ ॥ ❀ ❀ तुष्टानां वाक्य त्वयेति ॥ ४२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। ऊनविंशश्चतुर्थेऽयं सङ्गतः सङ्गतः सताम् ॥ १९ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

राज्ञः पृथोः एतत् यज्ञलक्षणं कर्म जिघांसतेन्द्रेण धर्मव्यतिकरो नाशो यस्मात् तत्पाषण्डरूपम् अनुष्ठितं प्रवर्त्तितं हे द्विजाः पश्यत, असांवित इन्द्रः पुनः पाषण्डरूपाणि प्रवर्तयिष्यतीति भावः ॥ ३१ ॥ ❀ ❀ पृथुकीर्तेः स्वभावादेव विपुलयशसः पृथोः एकेनोनं शतं यस्मिन् तथाभूतः क्रतुः प्रयोगो भूयात्। पृथुं प्रत्याह अलमिति ॥ ३२–३३ ॥ ❀ ❀ दैवादयं यज्ञविघ्न उपस्थितः, तत्र चिन्ता पुनर्यज्ञसमापनयत्नश्च न युक्त इत्याह मेति। अस्मिन् यज्ञविघ्ने ॥ ३४ ॥ ❀ ❀ यत्र देवेषु इन्द्रादिषु दुरवग्रहः दुष्टो निराकरणार्थमाग्रहः यत्र चेन्द्रनिर्मितैः पाखण्डैर्धर्मव्यतिकरः स एष क्रतुर्विरमताम् ॥ ३५ ॥ ❀ ❀ यज्ञाय द्रुह्यतीति यज्ञध्रुक् अश्वं मुष्णातीति अश्वमुट् एवंभूतो य इन्द्रस्तेन सृष्टैर्निर्मितैः हारिभिर्बुद्धिभ्रंशकैः ह्रियमाणं धर्मात्पराङ्मुखीक्रियमाणं विचक्ष्व ॥ ३६ ॥ ❀ ❀ हे वैन्य! वेनस्यापचारात् अयुक्ताचरणात् लुप्तं समयानुरूपं कालानुगुणं धर्मं परित्रातुं तस्य देहात् विष्णोः कलैवावतीर्णोऽसि ॥ ३७ ॥ ❀ ❀ हे प्रजापते! अस्य विश्वस्य भवं भद्रं प्रति विश्वसृजां स्वजनकानां मुनीनां सङ्कल्पनां भगवानेवावतीर्य विश्वस्य भद्रं करिष्यतीत्येवंभूतं संकल्पं पिपीपृहि पूरय। उपधर्मस्य पाखण्डधर्मस्य मातरं जननीं प्रचण्डमन्यैर्दुर्निवारणं विमृश्य पाखण्डपथं च जहिं ॥ ३८ ॥ ❀ ❀ तथा कृत्वा यज्ञसमाप्त्याग्रहं त्यक्त्वा वात्सल्यं स्नेहं च कृत्वा मघोना

इन्द्रेण सह संदधे मैत्रीमकरोत् ॥ ३९ ॥ ❀ ❀ कृतमवभृथसम्बन्धिस्नानं येन तस्मै ये तद्बर्हिषि तर्पितास्ते वरान् ददुः ॥ ४०-४१ ॥ ❀ ❀ विप्रतुष्टिं तद्वाक्येनाह त्वयेति ॥ ४२ ॥

**इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे ऊनविंशाध्यायार्थप्रकाशः ॥ १९ ॥**

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

अत एव यज्ञस्यैतदनुमतत्वेनानर्थं जातं पश्यतेत्याह-तदिति । हे द्विजाः ! तत्तस्मात्स्वस्याननुमतत्वात् राज्ञ एतत्कर्म जिघांसता तद्विघ्नमिच्छता इन्द्रेणानुष्ठितं प्रवर्तितं महद्धर्मव्यतिकरं महतां वेदवादिनां धर्मस्य नाशकमिदं पापण्डं यूयं पश्यतेत्यन्वयः । द्विजा इति सम्बोधनेन विचारकुशलानां युष्माकं विचारेणैव प्रवृत्तिर्युक्ता नापातत इति सूचयति । तथा च तेन बलवता सह विरोधे पुनरपि पाषण्डान्तरप्रवृत्तिः स्यात्तेन लोकस्य महाननर्थः स्यादिति भावः ॥ ३१ ॥ ❀ ❀ तर्हीन्द्रमुपेक्ष्य पुनर्यज्ञे प्रवृत्तानां स विघ्नमाचरेदेव तथाप्यनर्थो भविष्यत्येवेत्याशङ्क्य नायं यज्ञः प्रवर्तनीय इत्याशयेनाह—पृथुकीर्तेरिति । यर्हि पुनर्यज्ञप्रवर्तनेऽनर्थान्तरोत्पत्तिभयं तर्ह्येकेनोनं शतं क्रतवो यस्य तादृशः प्रयोगः पृथोर्भूयात् । तर्हि शताश्वमेधदीक्षाया अपूर्णत्वेनास्य लोकेऽपकीर्तिः स्यादित्याशङ्क्याह—पृथुकीर्तेरिति । लोके प्रख्यातयशसोऽस्यैकाश्वमेधन्यूनतायामपि क्षत्यभावादिति भावः । अस्त्वेवं यर्ह्यत्र राज्ञोऽनुमतिः स्यादित्यृत्विजामाशयमालक्ष्य राजानं प्रत्याह-अलमिति । ते तव स्विष्टैः सम्यगनुष्ठितैः क्रतुभिरलं न किञ्चित्प्रयोजनमित्यर्थः । तत्र हेतुमाह-यदिति । यत् यस्मात् भवान्मोक्षधर्मवित् । नहि भवान् स्वर्गकामो येनाश्वमेधशतपूर्तेः प्रयोजनमस्ति, किंतु मोक्षकामस्ततो मोक्षधर्मानेवोत्कृष्टत्वेन वेत्तीति तदनुष्ठानमेव युक्तमिति भावः ॥ ३२ ॥ ❀ ❀ किञ्च आत्मने स्वरूपाय महेन्द्राय रोषमाहर्तुं कर्तुं त्वं नैवार्हसि । कुत इन्द्रस्य ममात्मत्वमित्याकाङ्क्षायामाह-उभावपीति । हि यत उभावपि उत्तमश्लोकस्य भगवतो विग्रहौ मूर्ती अवतारावित्यर्थः । रोषोपसंहारे इन्द्रवधस्याभावे पाषण्डान्तराण्युत्पद्येरन्, अन्तिमस्यास्य यज्ञस्यासमाप्तौ शताश्वमेधदीक्षाया हान्या तत्फलशुद्धिर्न स्यात्, प्रत्युत पापं सम्भवति लोकेऽपकीर्तिश्च स्यादित्याशङ्क्य ममाशिषा नैवं स्यादित्याशयेनाह-भद्रं ते भविष्यतीति ॥ ३३ ॥ ❀ ❀ इदानीं युक्त्यापि चिन्तां निवारयति-मेति-पञ्चभिः । बुद्धिमतस्तव चिन्ता न युक्तेति सूचयन् सम्बोधयति-हे महाराज इति । अस्मिन् यज्ञे विघ्ने सत्यपि त्वं चिन्तां मास्म कृथाः । आद्दतात्मा एते महान्तो यत्कथयन्ति तद्युक्तमेवेत्यस्मास्वादरयुक्तचित्तः सन्नस्मद्वचो निशामय शृणु । स्वमहत्त्वसूचनाय बहुवचनप्रयोगः । एवं राजानं समाधानीकृत्य विपक्षे चिन्ताकरणे दोषं कथयति-यदिति । यत् यस्मात् दैवहतं दैवेन प्रारब्धकर्मणा तत्फलदात्रा परमेश्वरेण वा हतं विधिनतं कार्यं कर्तुं ध्यायतस्तु मनोऽनुनिश्चितमतिरुष्टं रोषयुक्तं सत् अन्धमतिगाढं तमो मोहं विशति । तथा च कर्त्तव्याकर्त्तव्यानुसन्धानशून्यः पुरुषः सर्वपुरुषार्थभ्रष्टो भवतीति भावः ॥ ३४ ॥ ❀ ❀ अनेन प्रयोजनाभावादनर्थसम्भवाच्चैष क्रतुर्विरमताम् । ननु ममेन्द्रपदप्राप्तिकामनाभावादकामितं च तन्न स्यादत इन्द्रेण सह विरोधाभावाद् वृथा तेनैवोपद्रवः कृतोऽतः स एव किमिति न प्रतिबोध्यत इत्याशङ्क्याह-देवेष्विति । देवेषु रजस उत्कर्षेण दुरवग्रहः अनिवर्त्यभोगाभिनिवेशो भवत्यतः स न प्रतिबोधितुं शक्य इत्यर्थः । यत्र यस्मिन् दुराग्रहे सतीन्द्रनिर्मितैः पाषण्डैर्धर्मस्य व्यतिकरो विनाशोऽभूदिति ॥ ३५ ॥ ❀ ❀ न केवलं तव यज्ञविनाशायैव तस्यायमुद्यमः, किंतु लोके पाषण्डैर्विमोहितस्य जनस्य कस्यचिदपि यज्ञाद्यनुष्ठानाभावेन स्वर्गे आगमनं मा भवत्वित्यभिप्रायेणेति दर्शयति-एभिरिति । यस्ते तव यज्ञं द्रुह्यतीति यज्ञध्रुक् । द्रोहमेव स्फोरयन् विशिनष्टि-अश्वमुडिति । अश्वं मुष्णातीत्यश्वमुट् तेनेन्द्रेणोपसृष्टैः प्रवर्तितैर्हारिभिः मनोहरैरेभिः पापण्डैरेनं ह्रियमाणमाकृष्यमाणं विचक्ष्व विपश्येत्यन्वयः ॥ ३६ ॥ ❀ ❀ सा च लोके धर्मविरोधिपाषण्डप्रवृत्तिर्धर्मपालकस्य तवानिष्टैव जातेत्यभिप्रेत्याह—भवानिति । समयानुरूपं शास्त्रानुरूपं जनानां धर्मं वेनस्यापचारात् दुराचारात् अवलुप्तं विनष्टं परित्रातुं रक्षितुं तस्य वेनस्य देहतो भवान् अद्येदानीमिह भूतलेऽवतीर्णोऽस्तीत्यन्वयः । अत एव लोके तन्नाम्ना तव प्रसिद्धिरिति सूचयन् सम्बोधयति-हे वैन्य इति । कथमेवं विनष्टस्य धर्मस्य पालनेऽहं शक्तस्तत्राह-यतस्त्वं सर्वपालकस्य विष्णोः कला अंशोऽसीति ॥ ३७ ॥ ❀ ❀ अतः स्वावतारप्रयोजनधर्मरक्षादावेव तव प्रवृत्तिर्युक्ता न रागद्वेषादिना शक्रवधादावित्याशयेनाह-स त्वमिति । स भगवदवतारस्त्वमस्य विश्वस्य भवमुद्भवं विमृश्य विचार्य यैर्वेनाङ्गमन्थनेन त्वमुत्पादितोसि तेषां विश्वसृजां भृग्वादीनां सङ्कल्पनं मनोरथं प्रजापालनादिना पिपीप्रहीति प्रयोग आर्षः, पूरयेत्यर्थः । प्रचण्डो यः पाषण्डमार्गः सैवैन्द्रीं मायामुपधर्मस्य अधर्मस्य मातरं जहि जनेषु प्रवृत्तां निवारय । एतदेव तव युक्तमिति सूचयन्संबोधयति हे प्रजापते इति । तत्र तव सामर्थ्यमस्तीति सूचयन् पुनः संबोधयति-हे प्रभो इति ॥ ३८ ॥ ❀ ❀ पृथुरित्थमुक्तप्रकारेण लोकगुरुणा सर्वजनपूज्येन ब्रह्मणा समादिष्टः सम्यक् प्रतिबोधितो यतो विशां प्रजानां पतिः पालनेऽधिकृतस्ततः प्रजानां क्षेममेवेति विचार्य यथा ब्रह्मणोक्तं तथा यज्ञाग्रहं हित्वा वात्सल्यं स्नेहं च कृत्वा मघोनापि संदधे इन्द्रेण सह सन्धानं च कृतवान् । अपि नाम दौर्मनस्यादिलेशं तु न त्यक्तवानिति ज्ञेयम् । अत एवाग्रे भगवांस्तन्निराकरिष्यति ॥ ३९ ॥ वरान् ददति ते वरदा देवाः ये तस्य बर्हिषि यज्ञे तर्पिताः भागदानेन तोषितास्ते कृतमवभृथसम्बन्धि स्नानं येन तस्मै भूरीणि कर्माणि यस्य तस्मै पृथवे

वरान् ददुरिति सम्बन्धः ॥ ४० ॥ ❀ ❀ तथा सत्या यथार्था आशिषो येषां ते सत्याशिषो विप्रास्तुष्टाः सन्तस्तस्मै आदिराजाय पृथवे आशिषो युयुजुर्ददुरिति सम्बन्धः। सन्तोषे हेतुमाह–यतस्तेन सत्कृता इति। सत्कारमेव दर्शयति–श्रद्धयेति। श्रद्धया लब्धा दक्षिणा यैस्ते सत्कृताः संतुष्टा विप्रा यजमानायाशिषो ददत्येवेति हस्तिनापुराधिष्ठातृत्वात्त्वया बहुशोऽनुभूतमेवेति सूचयन्सम्बोधयति—हे क्षत्तरिति ॥ ४१ ॥ ❀ ❀ अन्येषां तत्रागतानां साधारणानां वाक्यमाह–त्वयेति। हे महाबाहो इति सम्बोधनेन तवैवैवं सामर्थ्यमस्तीति सूचयन्ति–हे महाबाहो पितरो देवा ऋषयो मानवाश्च येऽत्र समागतास्ते सर्व एव त्वयाऽऽदृता दानमानाभ्यां यथायोग्यं पूजिताश्चेत्यन्वयः ॥ ४२ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे कामनिरूपणे। ऊनविंशो गतो वृत्तिं पृथोः शुद्धिनिरूपकः ॥ ३ ॥

## भाषानुवादः

पृथुके इस यज्ञानुष्ठानमे विघ्न डालनेके लिये इन्द्रने जो पाखण्ड फैलाया है, वह धर्मका उच्छेद करनेवाला है। इस बातपर तुम ध्यान दो, अब उससे अधिक विरोध मत करो; नहीं तो वह और भी पाखण्डमार्गोंका प्रचार करेगा ॥ ३१ ॥ ❀ ❀ अच्छा, परमयशस्वी महाराज पृथुके निन्यानवे ही यज्ञ रहने दो।' फिर राजर्षि पृथुसे कहा, राजन्! आप तो मोक्षधर्मके जाननेवाले हैं; अतः अब आपको इन यज्ञानुष्ठानोंकी आवश्यकता नहीं है ॥ ३२ ॥ ❀ ❀ आपका मङ्गल हो। आप और इन्द्र—दोनों ही पवित्रकीर्ति भगवान् श्रीहरिके शरीर हैं; इसलिये अपने ही स्वरूपभूत इन्द्रके प्रति आपको क्रोध नहीं करना चाहिये ॥ ३३ ॥ ❀ ❀ आपका यह यज्ञ निर्विघ्न समाप्त नहीं हुआ—इसके लिये आप चिन्ता न करें। हमारी बात आप आदरपूर्वक स्वीकार कीजिये। देखिये, जो मनुष्य विधाताके बिगाड़े हुए कामको बनानेका विचार करता है, उसका मन अत्यन्त क्रोधमें भरकर भयङ्कर मोहमें फँस जाता है ॥ ३४ ॥ ❀ ❀ बस, इस यज्ञको बंद कीजिये। इसीके कारण इन्द्रके चलाये हुए पाखण्डोंसे धर्मका नाश हो रहा है; क्योंकि देवताओंमें बड़ा दुराग्रह होता है ॥ ३५ ॥ ❀ ❀ जरा देखिये तो, जो इन्द्र घोड़ेको चुराकर आपके यज्ञमें विघ्न डाल रहा था, उसीके रचे हुए इन मनोहर पाखण्डोंकी ओर सारी जनता खिंचती चली जा रही है ॥ ३६ ॥ ❀ ❀ आप साक्षात् विष्णुके अंश हैं। वेनके दुराचारसे धर्म लुप्त हो रहा था, उस समयोचित धर्मकी रक्षाके लिये ही आपने उसके शरीरसे अवतार लिया है ॥ ३७ ॥ ❀ ❀ अतः प्रजापालक पृथुजी! अपने इस अवतारका उद्देश्य विचारकर आप भृगु आदि विश्वरचयिता मुनीश्वरोंका सङ्कल्प पूर्ण कीजिये। यह प्रचण्ड पाखण्ड-पथरूप इन्द्रकी माया अधर्मकी जननी है। आप इसे नष्ट कर डालिये' ॥ ३८ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—लोकगुरु भगवान् ब्रह्माजीके इस प्रकार समझानेपर प्रबल पराक्रमी महाराज पृथुने यज्ञका आग्रह छोड़ दिया और इन्द्रके साथ प्रीतिपूर्वक सन्धि भी कर ली ॥ ३९ ॥ ❀ ❀ इसके पश्चात् जब वे यज्ञान्त-स्नान करके निवृत्त हुए, तब उनके यज्ञोंसे तृप्त हुए देवताओंने उन्हें अभीष्ट वर दिये ॥ ४० ॥ ❀ ❀ आदिराज पृथुने अत्यन्त श्रद्धापूर्वक ब्राह्मणोंको दक्षिणाएँ दीं तथा ब्राह्मणोंने उनके सत्कारसे सन्तुष्ट होकर उन्हें अमोघ आशीर्वाद दिये ॥ ४१ ॥ ❀ ❀ वे कहने लगे, 'महाबाहो! आपके बुलानेसे जो पितर, देवता, ऋषि और मनुष्यादि आये थे, उन सभीका आपने दान-मानसे खूब सत्कार किया' ॥ ४२ ॥

इत्यूनविंशोऽध्यायः ॥ १९ ॥



# अथ विंशोऽध्यायः

### मैत्रेय[1] उवाच

भगवानपि वैकुण्ठः साकं मघवता विभुः। यज्ञैर्यज्ञपतिस्तुष्टो[2] यज्ञभुक् तमभाषत ॥ १ ॥

### श्रीभगवानुवाच[3]

एष तेऽकारषीद्भङ्गं हयमेधशतस्य ह। क्षमापयत आत्मानममुष्य क्षन्तुमर्हसि ॥ २ ॥
सुधियः साधवो लोके नरदेव नरोत्तमाः। नाभिद्रुह्यन्ति भूतेभ्यो यर्हि[4] नात्मा कलेवरम् ॥ ३ ॥
पुरुषा यदि मुह्यन्ति त्वादृशा देवमायया। श्रम एव परं जातो दीर्घया वृद्धसेवया ॥ ४ ॥
अतः कायमिमं[5] विद्वानविद्याकामकर्मभिः। आरब्ध इति नैवास्मिन् प्रतिबुद्धोऽनुषज्जते ॥ ५ ॥
असंसक्तः शरीरेऽस्मिन्नमुनोत्पादिते गृहे। अपत्ये द्रविणे वापि कः कुर्यान्ममतां बुधः ॥ ६ ॥
एकः शुद्धः स्वयंज्योतिर्निर्गुणोऽसौ गुणाश्रयः। सर्वगोऽनावृतः साक्षी निरात्माऽऽत्माऽऽत्मनः परः ॥ ७ ॥
य एवं सन्तमात्मानमात्मस्थं वेद पूरुषः। नाज्यते प्रकृतिस्थोऽपि तद्गुणैः स मयि स्थितः ॥ ८ ॥
यः स्वधर्मेण मां नित्यं निराशीः श्रद्धयान्वितः। भजते शनकैस्तस्य मनो राजन् प्रसीदति ॥ ९ ॥
परित्यक्तगुणः सम्यग्दर्शनो विशदाशयः। शान्तिं मे समवस्थानं ब्रह्म कैवल्यमश्नुते ॥ १० ॥

अन्वयः—भगवान् यज्ञपतिः यज्ञभुक् वैकुण्ठः विभुः अपि मघवता साकम् यज्ञैः तुष्टः तम् पृथुम् अभाषत ॥ १ ॥ ❀ ❀ एषः ते हयधमेशतस्य भंगम् ह अकारषीत् आत्मानम् क्षमापयतः अमुष्य क्षंतुम् अर्हसि ॥ २ ॥ ❀ ❀ नरदेव यर्हि कलेवरम् आत्मा न भवति तत् नरोत्तमाः सुधियः साधवः लोके भूतेभ्यः न अभिद्रुह्यन्ति ॥ ३ ॥ ❀ ❀ यदि त्वादृशाः पुरुषाः देवमायया मुह्यन्ति दीर्घया वृद्धसेवया परम् श्रमः एव जातः ॥ ४ ॥ ❀ ❀ अतः इमम् कायम् अविद्याकामकर्मभिः आरब्धः इति प्रतिबुद्धः विद्वान् अस्मिन् न एव अनुषज्जते ॥ ५ ॥ ❀ ❀ अस्मिन् शरीरे असंसक्तः कः बुद्धः अमुना उत्पादिते गृहे अपत्ये वा द्रविणे अपि ममताम् कुर्यात् ॥ ६ ॥ ❀ ❀ एकः शुद्धः स्वयंज्योतिः निर्गुणः गुणाश्रयः सर्वगः अनावृतः साक्षी निरात्मा असौ आत्मा आत्मनः परः ॥ ७ ॥ ❀ ❀ यः पूरुषः एवम् सन्तम् आत्मानम् आत्मस्थम् वेद सः मयि स्थितः प्रकृतिस्थः अपि तद्गुणैः न अज्यते ॥ ८ ॥ ❀ ❀ राजन् यः श्रद्धया अन्वितः निराशीः स्वधर्मेण माम् नित्यम् भजते तस्य मनः शनकैः प्रसीदति ॥ ९ ॥ ❀ ❀ विशदाशयः परित्यक्तगुणः सम्यग्दर्शनः शान्तिम् च मे समवस्थानम् ब्रह्मकैवल्यम् अश्नुते ॥ १० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

विंशे तु विष्णुना साक्षात्पृथोर्यज्ञेऽनुशासनम्। वरदानप्रसंगेन प्रीतिश्चान्योन्यमीर्यते ॥ (१) ॥

मघवता साकमिंद्रेण सह वर्तमानः ॥ १ ॥ ❀ ❀ आत्मानं त्वां क्षमां कारयताऽमुष्य इंद्रस्य त्वमपि क्षंतुमर्हसि ॥ २ ॥ ❀ ❀ यर्हि यस्मात्कलेवरमात्मा न भवत्यतस्तदभिमानेन भूतानि नाभिद्रुह्यंति ॥ ३–४ ॥ ❀ ❀ अविद्या स्वरूपाज्ञानं ततः कामस्ततः कर्म तैरारब्ध इति विद्वानत एव प्रतिबुद्ध आत्मज्ञोऽस्मिन्नैवानुषज्जते ॥ ५ ॥ ❀ ❀ तथापि पुत्रादि ममत्वेन भूतद्रोहेण च संगो भवेत्तत्राह। असंसक्त इति ॥ ६ ॥ ❀ ❀ प्रतिबोधकमं विवृण्वन्देहेऽनुषं-

---

१. प्रा० पा०—ऋषिरुवाच। २. प्रा० पा०—तिः स्विष्टो। ३. प्राचीनपाठे 'श्रीभगवानुवाच' इति नास्ति। ४. प्रा० पा०—गर्हन्नात्मकलेवरम्। ५. प्रा० पा०—कार्य०।

गाभावमाह एक इति द्वाभ्याम्। असावात्मा आत्मनो देहात्परो भिन्नः तत्र नवधा वैलक्षण्येन भेदं साधयति एक इति नवभिः पदैः। देहो हि बाल्युवादिभेदादनेको मलिनश्च जडश्च सगुणश्च स्वकारणभूतगुणाश्रितश्च परिच्छिन्नश्च गृहादिभिरावृतश्च दृश्यश्च सात्मा च। आत्मा तु नैवमतो भिन्नः॥ ७॥ ❀ ❀ आत्मस्थं स्वस्मिन् स्थितम्। प्रकृतिस्थोऽपि देहस्थोऽपि तद्गुणैस्तद्विकारैर्न लिप्यते। यतः स मयि ब्रह्मणि स्थितः॥ ८॥ ❀ ❀ इयमवस्था कस्योत्पद्यत इत्यपेक्षायामाह यः स्वधर्मेणेति चतुर्भिः। निराशीः निष्कामः॥ ९॥ ❀ ❀ भवतु मनः प्रसन्नं ततः किं तत्राह यर्हि यदा विशदाशयःप्रसन्नमनास्तदा परित्यक्तगुणः सन्सम्यग्दर्शनो भूत्वा शांतिमश्नुते। शांतिमेवाह। मम सम्यगौदासीन्येनावस्थानमेव ब्रह्म तदेव कैवल्यमश्नुते॥ १०॥

## श्रीवंशीधरकृतो भावार्थदीकिाप्रकाशः

अन्योन्यं पृथुविष्णवोः परस्परं प्रीतिः (१)॥ अपिना ब्रह्मणः समुच्चयः। वैकुंठ इति। जगदुत्पत्तौ विश्लिष्टानां भूतानां संयोजकत्वात्। तदुक्तं शान्तिपर्वणि "मया संश्लेषिता भूमिरद्भिर्व्योम च वायुना। वायुश्च तेजसा सार्द्धं वैकुंठत्वं ततो मम॥" इति। विभुरित्यनेन यज्ञस्येंद्रस्य तद्व्याप्यत्वमुक्तं यज्ञानां पतिर्भोक्ता च "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इति श्रीगीतोक्तेः। तं पृथुम्॥ १॥ ❀ ❀ हयमेधशतस्तस्येति हयमेधशतस्तस्य ते मत्वर्थीयोऽच्। भंगमश्वापहरणे नानादरमकार्षीत्। "भंगो मर्दनरीढयोः" इति निरुक्तिः। यद्वा—हयमेधशततमस्येति व्याख्येयं तमप्प्रत्ययलोपस्त्वार्षः। अन्यथा चरमाश्वमेधसिद्ध्या तदेकभंगाभावेन सर्वभंगापत्त्या त्वमेकोनशतक्रतुरित्यनुपपन्नं स्यादिति भावः। किमत्र कार्यं तदाज्ञापयेति तत्राह—अमुष्येन्द्रस्य॥ २॥ ❀ ❀ अक्षमा साधुगुणो न स्यादित्याह—नरदेवेति। तव तु नरपालकस्य सर्वथा द्रोहोऽनुचित इत्यभिप्रायः। भूतेभ्य इति चतुर्थी त्वार्षी, "क्रुधद्रुहोरुपसृष्टयोः कर्म" इत्युपसर्गयोगे कर्मसंज्ञाविधानात्॥ ३॥ ❀ ❀ भगवन्मायामोहनादेव भवेदिति चेत्तत्राह-पुरुषा इति। त्वादृशाः कुतस्त्वमित्यर्थः। वृद्धानां शास्त्रवृद्धानां सेवया॥ ४॥ ❀ ❀ अतो वृद्धसेवयैव मायानावरणात्। ततः स्वरूपाज्ज्ञानात् पुनस्ततः कामात्। अत एव वैदुष्यादेव। अस्मिन्काये। अनुपज्जति आसक्तो भवति॥ ५॥ ❀ ❀ यद्यपि प्रतिबुद्धो न सज्जते तथापि इति। आदिना स्वधादिग्रहः। अमुना शरीरेण॥ ६॥ ❀ ❀ तत्रात्मनि यत आत्मा देहवान्नातो भिन्न इत्यर्थः॥ ७॥ ❀ ❀ यतस्त्वं देहादात्मान्योऽस्यतो हेतोः। इति भाव इति। आसक्तिरेव बंधहेतुर्न ह्यनासक्तिरपीत्याशयः॥ ८॥ ❀ ❀ कस्योत्पद्यते भक्तिमिश्रज्ञानेन यतमानस्येत्याह—य इति॥ ९॥ ❀ ❀ भवतु मनः प्रसन्नं ततः किं तत्राह—यर्हीति॥ १०॥

## श्रीमद्वीरराघवव्याख्या

एवं चतुर्मुखादेशनिवृत्तक्रोधः कृतशतक्रतुसख्य आहृतर्त्विग्देवगण आसीदित्युक्तम्। अथ भगवता निवेदितेन्द्रक्षमापणः प्रतिबोधिततत्त्वत्रययाथात्म्यस्वधर्म्मः परवरणप्रवर्तितः प्रतिनिवृत्तत्रिवर्गलिप्सः प्रपूजितपरमपुरुषः स्वपुरमगादित्याह मुनिरेकोनविंशेन। भगवानपीति। षाड्गुण्यपूर्णो यज्ञरक्षकः सर्वयज्ञाराध्यो वैकुण्ठः परमपुरुषः पृथ्वनुष्ठितैर्यज्ञैः सम्यगाराधितो मघवता सह इन्द्रेण सह तं पृथुमभाषत जगाद॥ १॥ ❀ ❀ उक्तमेवाह एष इति। एष इन्द्रस्ते तव हयमेधशतस्याश्वमेधशतसंकल्पस्य हि यस्मात् भङ्गमकार्षीत् अत आत्मानं त्वां क्षमापयतः क्षमां कारयतः अमुष्य इन्द्रस्य क्षन्तुमर्हसि इन्द्रविषये क्षमां कर्तुमर्हसीत्यर्थः॥ २॥ ❀ ❀ कथं दुःसहोऽपराधः क्षन्तुं शक्यस्तत्राह सुधिय इति। हे नरदेव! लोके नरोत्तमाः सुधियः देहात्मयाथात्म्यविदः साधवः परोपकारपराः भूतेभ्य आगस्कृद्भ्योऽपि भूतेभ्यः नाभिद्रुह्यन्ति, कुतः यर्हि यस्मात्कलेवरमनात्मा आत्मेतरत्। अतस्तदभिमानेन द्रोहं न कुर्वन्तीत्यर्थः। सुधिया सोढुं शक्य एवेति भावः॥ ३॥ ❀ ❀ एवमन्वयमुखेन सुधियां भूतद्रोहाकरणमभिधाय व्यतिरेकमुखेनाह पुरुषा इति। यदि त्वादृशाः सुधियः पुरुषा ईश्वरमायया यदि मुह्यन्ति देहात्ममोहेन देहप्रयुक्तभूतद्रोहादिकं कुर्वन्ति तर्हि त्वादृशैश्चिरकालकृतया महतां सेवया श्रम एव परं केवलं जातः सम्पादितः। ते दुर्धिय एवेति भावः॥ ४॥ ❀ ❀ अतः सुधियां देहात्माभिमानप्रयुक्तभूतद्रोहादेरभावात् अन्यथा दुर्धीत्वप्रसङ्गाच्च इमं कायं देहमविद्याकामकर्मभिः, अविद्या अज्ञानं तच्च देहात्माभिमानस्वतन्त्रात्माभिमानरूपेण द्विविधं, कामः अविद्यामूलकः शब्दादिविषयेष्विच्छाविशेषः, कर्म काममूलकं पुण्यापुण्यरूपम्, एभिरारब्धः उत्पादित इत्येवमिमं कायं देहं विद्वान् जानन् अत एव प्रतिबुद्धः चिदचिदीशयाथात्म्यज्ञः अस्मिन् देहे नैवानुषज्जते। एवकारेण नितरामासक्त्यभावः सूच्यते॥ ५॥ ❀ ❀ देह एवानासक्तः कथं देहानुबन्धिष्वासक्तः स्यादित्याह असंसक्त इति। अस्मिन् शरीरे असंसक्तः-समित्येकीकारे-आत्मना सह देहमेकीकृत्य तस्मिन्नासक्त इत्यर्थः, अमुना शरीरेणोत्पादिते सम्पादिते गृहे अपत्ये पुत्रादौ द्रविणे वित्ते च ममतां को वा बुधः कुर्यात्? न कोऽपि बुधः कुर्यात्। अज्ञस्तु कुर्यादित्यर्थः। अतो बुधः देहार्थं देहानुबन्ध्यर्थं वा भूतद्रोहादिकं न कुर्यादिति भावः॥ ६॥ ❀ ❀ बुध इत्यनेन चिदचिदीशयाथात्म्यज्ञानवत्त्वमुपक्षिप्तं तत्कीदृशमित्यपेक्षायां तत्र एक इति द्वाभ्याम्। चिदचिदीशस्वरूपं विशोध्याथ य एवमित्येकेन आत्मयाथात्म्यज्ञानयोगस्य भगवद्ध्यानाङ्गत्वं तत एकेन कर्मयोगस्य तदङ्गत्वमभिधाय तदुभयानुगृहीतभक्तियोगस्य

भगवत्प्राप्त्युपायतामभिधायेदृशभगवदुपासननिष्ठस्य देहानुबन्धिप्रयुक्तविकारा न स्युरित्याह एक इत्यादिना। प्रकृतिविविक्तात्मस्वरूपशोधनेन प्रकृतिपरिणामरूपदेहस्य तद्विपरीतधर्मवत्त्वस्यार्थादेव सिद्धेः पृथक् तच्छोधनं नापेक्षितमिति तावतात्मस्वरूपं प्रकृतिविविक्तं शोधयति। एकः ज्ञानैकाकारतया सर्वत्र एकस्वरूपः "एको व्रीहिः सुसंपन्नः सुपुष्टं कुरुते प्रजाः" इतिवदयं निर्देशः, नानाकारेषु देवमनुष्यादिशरीरेष्ववस्थितोऽपि सर्वत्र ज्ञानैकाकारतया सर्वत्र एकस्वरूप इत्यर्थः। देहस्तु देवमनुष्यपशुपादपतदवान्तरभेदभिन्नः। शुद्धः निर्मलः देहस्तु मलिनः। स्वयंज्योतिः स्वयंप्रकाशः निर्गुणः रागद्वेषादिरहितः गुणाश्रयः ज्ञानानन्दादिगुणाश्रयः सर्वगः अणुस्वरूपत्वेऽपि धर्मभूतज्ञानेन सर्वव्यापी अनावृतः देह इव गृहादिभिरनावृतः साक्षी देहेन्द्रियादीनामपरोक्षं द्रष्टा, देहस्तु परप्रकाश्यः रागद्वेषादिगुणाश्रयः ज्ञानादिगुणानाश्रयः व्याप्यः आवृतः दृश्यश्चेत्यर्थसिद्धं, परं केवलमात्मा देहादिष्वन्तः प्रविश्य धारकः देहस्तु धार्यः, अत आत्मनः देहात्परः विलक्षणः॥ ७॥ ❀ ❀ अत एव देहादिभिः उपात्ताः स्वीकृताः, आदिशब्दः प्राणेन्द्रियपरः तद्धर्माः तेषां देहादीनां धर्माः बाल्ययौवनाशनायापिपासादयः, तच्छब्देन बाल्यादीनां तदेकान्तत्वं सूच्यते। तद्द्रष्टुस्तस्य देहादेर्द्रष्टुरात्मनो जीवस्य न स्युः। तस्य आत्मनो यत्कैवल्यं देहगतजात्यादिराहित्यमेव तस्य देहाद्वैधर्म्यमुक्तं, देहविलक्षणमात्मस्वरूपं कदा स्फुरतीत्याशङ्कायां सुषुप्त्युत्क्रान्त्योरित्यभिप्रयन् तत्र सुषुप्तेर्जीवदवस्थायामेवाहरहरनुभूयमानत्वेन सुषुप्तिरेव निदर्शनमित्याह। तत् तत्र सुषुप्तं सुषुप्तिः भावे क्तः निदर्शनमुदाहरणमित्यर्थः। सुषुप्तौ हि देहगतब्राह्मणत्वादिबाह्याकारो नानुभूयते, किन्तु देहविलक्षणं स्वस्वरूपं, तथा चोक्तं तृतीये "भूतसूक्ष्मेन्द्रियमनोबुद्ध्यादिष्विह निद्रया। लीनेष्वसति यस्तत्र निर्दिष्टो निरहंक्रियः" इति। निरहंक्रिय इत्यनेन देहतद्धर्माणां चात्मप्रतीत्यविषयत्वमुच्यते। एवं प्रकृतिपुरुषयोः स्वरूपे निरूपिते, यद्वा इदं श्लोकद्वयं प्रधानजीवविलक्षणपरमात्मस्वरूपकथनपरं प्रकृतिपुरुषस्वरूपं त्वर्थाद्विशोधितं भवति, प्रकृतिविविक्तात्मस्वरूपविवेचनपरत्वे हि सुषुप्तं तन्निदर्शनमित्यस्वरसं स्यात्सुषुप्तौ देहादेरप्रतीतावपि उक्तविधत्वेनात्मस्वरूपस्याप्रतीतेः। तस्मादयमर्थः– एकः स्वसमाभ्यधिकद्वितीयवस्त्वन्तररहितः शुद्धः अपापविद्धः अपहतपाप्मेत्यर्थः स्वयंज्योतिः निरुपाधिकः स्वयंप्रकाशः निर्गुणः प्रकृतिपुरुषगताज्ञत्वदुःखित्वादिहेयगुणरहितः गुणाश्रयः अनन्तकल्याणगुणाश्रयः सर्वगः स्वरूपतः स्वभावतश्च विभुः अनावृतः देहादिष्ववस्थितोऽपि तैरपरिच्छिन्नः साक्षी सर्वं युगपत्साक्षात्कर्ता उदासीनो वा। आत्मनः उक्ताकारविपरीताज्जीवात्परः विलक्षणः परमात्मा परो मा यस्मात्स परमः स चासौ आत्मा च स्वसमानाधिकात्मान्तराव्याप्तः स्वव्यतिरिक्तस्य सर्वस्यान्तः प्रविश्य प्रशासनेन धारकः। जीवस्तु नैकः, किन्तु बहवः समानाकाराः "नित्यो नित्यानां चेतनश्चेतनानां, न त्वेवाहं जातु नासम्" इत्यादिकमत्रानुसन्धेयम्। यद्यपि जीवस्वरूपमपि स्वयंज्योतिरेव, तथापि तत्स्वरूपसत्तास्थितिप्रवृत्त्यादेः परमात्मेच्छायत्तत्वस्य "द्रव्यं कर्म च कालश्च स्वभावो जीव एव च। यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया" इति स्मरणात् न निरुपाधिकस्वयंज्योतिष्ट्वं तथा जीवो देहद्वारा रागद्वेषादियुक्तः नातिशुद्धः। यद्यपि प्रजापतिवाक्ये जीवस्याप्यपहतपाप्मत्वं "य एष आत्मापहतपाप्मा" इत्यादिना श्रुतं तथापि तत्कर्मणा संकुचितं मुक्तौ तत्परमात्मप्रसादादाविर्भूतमिति न सर्वदा विशुद्धत्वं, तथा च श्रुतिः "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिसम्पद्यते" इति। सूत्रं च "सम्पद्याविर्भावः स्वेन शब्दात्" इति तथा कल्याणगुणाश्रयो न भवति, किन्तु दुःखित्वादिहेयगुणाश्रयः। अत्र निर्गुणगुणाश्रयशब्दाभ्यां हेयगुणनिषेधकल्याणविधी विवक्षितौ। अत्र 'न हिंस्यात्, पशुमालभेते'तिवदुत्सर्गापवादनयेन दहरविद्यायां य एष आत्मापहतपाप्मेत्यादिना हेयगुणान् प्रतिषिध्य सत्यकाम इत्यादिना कल्याणगुणान् विदधती श्रुतिरेव प्रमाणं, तथापि जीवो न सर्वगः अणुत्वात्। तथा च श्रुतिः "एषोऽणुरात्मा चेतसा वेदितव्यः आराग्रमात्रो ह्यवरोऽपि दृष्टः" इति। अत एव परिच्छिन्नः नापि साक्षी किन्तु कर्मफलादी। तथा च श्रूयते "तयोरन्यः पिप्पलं स्वाद्वत्ति" इति तथा च स्वस्मादधिकेन परमात्मना व्याप्यः धार्यश्च "य आत्मनि तिष्ठन्नि"त्यादिश्रुतेः। एवं जीवस्वरूपमर्थाद्विविक्तं द्रष्टव्यं, पूर्वव्याख्योक्तिरीत्या प्रकृतिस्वरूपमपि यत एव प्रकृतिपुरुषाभ्यां विलक्षणः परमात्मा अत एव हेतोः देहाद्युपात्तादिशब्देन जीवसंग्रहः देहैर्जीवैश्चोपात्ताः परिणामित्वकिंचिज्ज्ञत्वदुःखित्वादयः औपाधिका धर्माः तद्धर्माः प्रकृतिपुरुषैकान्ता जडत्वाणुत्वादयः स्वाभाविकाश्च। तद्द्रष्टुः प्रकृतिपुरुषयोः साक्षात्कर्तुः आत्मनः तयोरन्तर्व्याप्यावस्थितस्य परमपुरुषस्य न स्युः। कैवल्यं प्रकृतिपुरुषगतपराक्त्वाणुत्वादिविपरीतप्रत्यक्त्वापरिच्छिन्नत्वादिधर्मवत्त्वमेव कैवल्यं प्रकृतिपुरुषाभ्यां वैलक्षण्यं नामेत्यर्थः, तत्तत्र जीवात्परमात्मनो वैधर्म्ये सुषुप्तं सुषुप्तिः निदर्शनमुदाहरणमित्यर्थः। सुषुप्तग्रहणमुत्क्रान्तेरप्युपलक्षणं, तथाहि सुषुप्त्युत्क्रान्त्योः प्रत्यगात्मनोऽर्थान्तरत्वेन परमात्मनो व्यपदेशो दृश्यते तावद्वाजसनेयके "कतम आत्मा योऽयं विज्ञानमयः प्राणेषु" इति प्रकृतस्य प्रत्यगात्मनः सुषुप्त्यवस्थायामकिञ्चिज्ज्ञस्य सर्वज्ञेन परमात्मना परिष्वङ्ग आम्नायते "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" इति। तथा उत्क्रान्तावपि प्राज्ञेनात्मनान्वारूढ उत्सर्ज्जन् यातीति। न च स्वपत उत्क्रामतो वास्य किञ्चिज्ज्ञस्य तदानीमेव स्वेनैव सर्वज्ञेन सता परिष्वङ्गान्वारोहौ संभवतः न च क्षेत्रज्ञान्तरेण। तस्यापि सर्वज्ञत्वासम्भवात्, तस्मात्तत्र प्राज्ञेनेति सर्वज्ञः परमात्मा उक्तः, न बाह्यं किञ्चन वेद नान्तरमित्यज्ञो जीव उच्यते, तस्मात्तत्र वैधर्म्यं निदर्शितं तथा च सूत्रं "सुषुप्त्युत्क्रान्त्योर्भेदेन" इति। य इति। यः पुमान् एवं परमात्मनो धार्यतया व्याप्यतया आत्मनि परमात्मनि स्थितमात्मानं प्रत्यगात्मानं

वेद उपास्ते नतु तदुपासनमात्रपरः, किन्तु मयि अन्तर्यामिणि पूर्वोक्तैकत्वादिधर्मिणि स्थितः मदुपासननिष्ठ इति यावत्। तिष्ठतेर्धातोरुपासनपरत्वम् "अभयं प्रतिष्ठां विन्दते, तन्निष्ठस्य मोक्षोपदेशात्" इत्यादिश्रुतिसूत्रादिषु प्रयोगादवगम्यते। ज्ञानयोगानुगृहीतमद्भक्तियोगनिष्ठ इत्यर्थः। प्रकृतिस्थोऽपि उपासनदशायां प्रकृतिविशिष्टो-ऽप्युपासननिवृत्त्यनन्तरं तद्गुणैः प्रकृतिगुणैर्न युज्यते, किन्तु मुक्तो भवेदित्यर्थः ॥ ८ ॥ ❀ ❀ एवं यः पुमान् स्वधर्मेण स्ववर्णाश्रमोचितपञ्चमहायज्ञादिनित्यनैमित्तिकादिधर्मेण निराशीः स्वधर्मसाध्यफलेष्वाशारहितः अनभिसंहितफलकर्तृत्वसङ्ग इत्यर्थः। मां सर्वकर्माराध्यमिन्द्रादिसर्वदेवताशरीरं सर्वकर्मफलप्रदं नित्यं श्रद्धया कर्तव्येषु कर्मसु त्वरया भजते हे राजन्! पृथो! तस्य ज्ञानकर्मयोगाभ्यामनुगृहीतभगवद्भक्तियोगनिष्ठस्य मनः शनकैः प्रसीदति दारादिभिरकलुषितं भवति॥ ९॥ ❀ ❀ एवं परित्यक्तगुणः कार्त्स्न्येन त्यक्तरागादिगुणः अत एव विशदाशयः निर्मलान्तःकरणः अत एव सम्यग्दर्शनः उक्तविधात्मस्वरूपतद्विलक्षणपरमात्मस्वरूपदर्शी शान्तमशनायाद्यूर्मिषट्करहितं मे मत्सम्बन्धि समवस्थानं सम्यगा-वासभूतं मच्छरीरभूतमित्यर्थः। ब्रह्म गुणतो बृहत्त्वाद् ब्रह्मशब्दवाच्यं कैवल्यं केवलप्रकृतिवियुक्तमाविर्भूतापहतपाप्मत्वादिगुणकमात्म-स्वरूपम् अश्नुते प्राप्नोति। ब्रह्मात्मकाविर्भूतगुणाष्टकस्वरूपेण सम्पन्नो भवति मुक्तो भवतीति यावत्॥ १०॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अत्रोत्तमगुरुणा स्वयोग्योपासनाविषयो हरिरुपदेष्टव्य इति द्योतयितुं पृथुजीवाय हरिणा स्वात्मोपदिश्यत इति प्रतिपादयितुमाह भगवानिति। अपिशब्दस्य ब्रह्मभाषणेन पुनः समुच्चयः कारयितृत्वेन स्वामित्वेन भोक्तृत्वेनाप्येक एवोच्यत इति दर्शनाय, वैकुण्ठादिनामग्रहणं च शब्देनाग्रपूजयेष्ट इति समुच्चिनोति, जगदुत्पत्तौ विश्लिष्टानां भूतानां संयोजकत्वाद्वैकुण्ठः। तदुक्तं शान्तिपर्वणि "मया संश्लेषिता भूमिरद्भिर्व्योम च वायुना। वायुश्च तेजसा सार्द्धं वैकुण्ठत्वं ततो मम" इति। "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इति। हयमेधशततमस्येति व्याख्येयम्। अन्यथा चरमाश्वमेधासिद्ध्या तदेकभङ्गाभावेन सर्वभङ्गापत्त्या त्वमेकोन-शतक्रतुरित्यनुपपन्नं स्यादिममर्थं ग्रन्थान्तरे सिद्धं हेत्यनेन सूचयति। किमत्र कार्यं तदाज्ञापयेति तत्राह क्षमापयत इति। आत्मानं त्वां क्षमापयतोऽमुष्येन्द्रस्य क्षन्तुमर्हसीत्यन्वयः। आत्मानं मां क्षमापयत इति वा, त्वयि सन्निहितत्वेन तव विरोधाचरणं ममेति तत्तस्मान्मम क्षमापणं प्रार्थनमित्यर्थः॥ २॥ ❀ ❀ अक्षमा साधुगुणो न स्यादित्याह सुधिय इति। तत्र निमित्तमाह यर्हीति। कलेवरमनात्मा जडमत एवानित्यं यर्हि यस्मात् तस्मात्॥ ३॥ ❀ ❀ इतोऽपि क्षमा कर्तव्येति व्यतिरेकमुखेनाह पुरुषा इति॥ ४॥ ❀ ❀ तत्किं तत्राह अत एवेति॥ ५॥ ❀ ❀ शरीरासङ्गफलमाह असंसक्त इति। अमुना देहेन पुत्रादिगतममताबुद्धित्यागः फलमित्यर्थः॥ ६॥ ❀ ❀ शरीराद्यासक्तिरप्येकत्वादिगुणविशिष्टपरमात्मज्ञानिन एव सुदृढा स्यादित्यतस्तत्स्वरूपं निरूपयति एक इत्यादिना। घटादिष्वेकत्वादिकमौपचारिकं हरौ तु निरुपचरितमिति द्योतनाय वेदान्तसिद्ध-गुणानुपदिशति। तथाहि "एको देव इति, न जायते म्रियते वा विपश्चित्" इति जननादिदोषाभावाच्छुद्धः पूर्णः सत्यः शुद्धबुद्ध-स्वरूपो नित्यचिन्मय इति "अत्रायं पुरुषः स्वयंज्योतिः परं ज्योतिरुपसम्पद्येति केवलो निर्गुणश्चेति विज्ञानमानन्दं ब्रह्मेति अन्तर्बहिश्च तत्सर्वम्" इति अनावृतः स्वस्यान्येषामावृत एव "अन्येषामावृतो विष्णुः स्वस्यानावृत एव च" इति साक्षी चेति निर्गत आत्मा स्वामी यस्य स निरात्मा तस्यात्मान्यो न विद्यत इति अनात्मनो गुणराशिरहिताज्जीवराशेः परः 'उत्तमः पुरुष-स्त्वन्यः' इति॥ ७॥ ❀ ❀ हरेः सर्वगतत्वेन जननादिदेहधर्माः सम्भवन्त्युत कथं देहिपरत्वमत्राह देहादीति। देहप्रभृति-तद्धर्मा देहधर्मा जननादयस्तद्द्रष्टुस्तेषां धर्माणां द्रष्टुः आत्मनः सर्वस्य जगतोऽन्तर्यामिणो हरेर्न स्युरित्यन्वयः। "आत्मा सर्वस्य जगतस्तस्यात्मान्यो न विद्यत" इति कीदृशा अपार्थाः पुरुषार्थाख्यप्रयोजनशून्याः, हरेर्धर्मः क इति तत्राह कैवल्यमिति। "अनन्य-सदृशत्वाच्च केवलोऽसौ हरिः स्मृतः" इति वचनात् कैवल्यं नामान्यसादृश्यराहित्यं धर्म इत्यर्थः; वा इदयेतत्तद्यत्स्वभावः कैवल्यमिति वाक्यं सूचयति, नित्यनिर्दुःखत्वं च तस्य धर्मस्तद्बुद्धावारोहयति सुषुप्तमिति। तस्य धर्मस्य निदर्शनं दृष्टान्तः सुषुप्तं शरीराभिमानाभावेन हर्येकस्थितिः सुषुप्तिर्नाम नहि तदा दुःखलेशोऽस्ति "सता सौम्य तदा सम्पन्नो भवति" इति श्रुतेः सुषुप्तवच्च-निर्दुःखो जाग्रद्वच्च प्रवृत्तिमानिति च आत्मावगम्यत्वं वा तद्धर्मः। अत्रापि सुषुप्तमुदाहरणं हि मानम् तस्यापि जन्यज्ञानाभावेनाहमिति स्वरूपज्ञानवेद्यत्वात् "आत्मनैवावगम्यत्वाद्धरिरेष सुषुप्तवत्। केवलत्वेन विज्ञेयो मुक्तस्तद्वददुःखता॥" इति च। भगवद्धर्म-कथनफलमाह य एवं सन्तमिति। यः पुरुष एवं सन्तमात्मस्थं जीवान्तर्यामिणमात्मानं वेद स प्रकृतिस्थोऽपि तस्य शरीरगुणैः क्षुत्पिपासादिलक्षणैर्नाज्यते न लिप्यते। समवस्थितः सम्यगाहितचित्तत्वादिति हेतुगर्भविशेषणम्॥ ८॥ ❀ ❀ मनः-प्रसादस्य प्रथमसाधनत्वात्तत्सम्भवः केन स्यादिति तत्राह य इति॥ ९॥ ❀ ❀ मनःप्रसादफलमाह परित्यक्तगुण इति। परितस्त्यक्ता गुणा विषयलक्षणा येन स तथा समवस्थानं निर्विकारं यद्ब्रह्म कैवल्यं स्वस्वयोग्यतानुरोधेन पूर्णतालक्षणं केवलाभावं तल्लक्षणं शान्तिं मे प्रसादान्मुक्तिमश्नुत इत्यन्वयः॥ १०॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

एष ते ह्यकरोदिति क्वचित् पाठः ॥ १-२ ॥ ❀ ❀ प्रथमं ज्ञानद्वारा तं सान्त्वयति सुधिय इत्यादिभिः। कलेवरमत्र स्थूलसूक्ष्मात्मकम् ॥ ३-४ ॥ ❀ ❀ तत्रासंसक्त इत्यादिना देहद्वयविलक्षणं शुद्धं जीवात्मानं किञ्चित् प्रतिबोधाय सूचयित्वा सम्यक्प्रतिबोधाय परमात्मानमुपदिशति एक इति । असौ जीवादिशक्त्यगोचर आत्मा परमात्माख्य आत्मा आत्मनः शुद्धात् जीवादपरः, यतोऽसौ एकः । जीवस्तु नाना असौ शुद्धः असम्भाव्यदोषसङ्गः, स तु अज्ञानदोषलिप्तत्वेन दुष्टः, मण्डलस्थानीयत्वादसौ मुख्यत्वेन स्वयंज्योतिः, स तु रश्मिस्थानीयत्वादापेक्षिकतया । असौ गुणेभ्यो निर्गतः सर्वथैव सिद्धः, स तु अज्ञानेन तदभिमानसम्बद्धः । असौ सूर्य इवाभासः, वर्णानां गुणानामाश्रय एव न तु तद्व्याप्यः, असौ विभुः, स त्वणुः, असौ देहादिस्थोऽप्यनावृतः, स त्वावृतः, असौ साक्षाद् द्रष्टृत्वात् साक्षी, स तु तदनुग्रहमयशक्तित्वादेव । असावेवात्मान्तररहितः स तु तदात्मकः ॥ ५-७ ॥ ❀ ❀ आत्मस्थं शुद्धजीवान्तर्यामित्वेन स्थितम् । मयि स्थितो मदाश्रितत्वेनानुसन्धायी ॥ ८-९ ॥ ❀ ❀ मम समवस्थानं शक्त्याद्यविशिष्टतयाविर्भावविशेषः तदेव ब्रह्म कैवल्यमश्नुते अनुभवति ॥ १० ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

विंशे प्रीतिं सहेन्द्रेण विष्णुना बोधितः पृथुः । चकार तुष्टाव च तं स दत्त्वागाद्वरं प्रभुः ॥ ( १ ) ॥

ततश्च भगवानपि प्रादुर्भूय स्वांशमिन्द्रमुपानीय सन्धिं कारयन् पृथुं प्रबोधयामासेत्याह भगवानपीति ॥ १ ॥ ❀ ❀ आत्मानं त्वां क्षमां कारयतोऽमुष्य ॥ २ ॥ ❀ ❀ यर्हि यतः कलेवरमात्मा न भवति अतस्तत्राभिमानानौचित्यात् कुतो भूतद्रोहः सम्भवेदित्यर्थः ॥ ३ ॥ ❀ ❀ भगवन्मायया मोहनादेव भवेदिति चेत्तत्राह पुरुषा इति ॥ ४ ॥ ❀ ❀ अतो वृद्धसेवयैव मायानावरणात् प्रतिबुद्धः, प्रतिबोधमेवाह अविद्ययैव कामः कामादेव कर्माणि तैरारब्धोऽयमिति इमं कायं विद्वान् जानन् ॥ ५-६ ॥ ❀ ❀ अनासक्तेः कारणमात्मज्ञानमतः परमात्मज्ञानमुपदिशति एक इति । आत्मा परमात्मा आत्मनो देहात् जीवाच्च परो भिन्नः एकः । देहो जीवश्चानेकः । एवमशुद्धः प्रकाशहीनः सगुणः गुणजन्यत्वात् गुणाधीनत्वाच्च गुणाश्रितजडत्वादनुरूपत्वाच्चासर्वगः देहेन गृहादिभिश्चावृतः अचेतनत्वात् सलेपद्रष्टृत्वाच्चासाक्षी । स जीवत्वात् सपरमात्मकत्वाच्च सात्मेति देहजीवाभ्यां नवधा वैलक्षण्यं परमात्मन उक्तम् । एतेनैव जीवस्य देहेन सह नवधा वैलक्षण्यं च दर्शितमिति ॥ ७ ॥ ❀ ❀ स प्रकृतिस्थः देहस्थोऽपि देहगुणैर्नाज्यते इति न देहस्थ इत्यर्थः ॥ ८ ॥ ❀ ❀ अयमुक्तलक्षणः प्रबोधो भक्तिमिश्रेण ज्ञानेन यतमानस्य भवतीति तत्साधनमाह-य इति ॥ ९ ॥ ❀ ❀ तत्फलमाह परीति सार्द्धाभ्याम् । शान्तिम् अश्नुते, शान्तिमेवाह मे समवस्थानं मम समं निर्भेदमवस्थानं सामान्यावस्थां, भागुरिमतेऽकारलोपः । तद्ब्रह्म कैवल्यम् ॥ १० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

भगवदुपदेशात्सन्तुष्टमनाः पृथुः देवराजं परिष्वज्य विद्वेषं त्यक्तवान् । भगवानपि पृथवे वरं दत्त्वा स्वलोकं प्रत्यपद्यतेति वर्ण्यते भगवानपीति विंशेनाध्यायेन । आत्मानं त्वां क्षमापयतोऽमुष्य क्षन्तुमर्हसि ॥ १-२ ॥ ❀ ❀ भूतेभ्यः कलेवरप्रतिकूलेभ्योऽपि इत्यर्थादाक्षिप्यते यर्हि कलेवरमात्मा न भवति अतो नाभिद्रुह्यन्ति ॥ ३ ॥ ❀ ❀ देवस्य मम मायया प्रकृत्या ॥ ४ ॥ ❀ ❀ ननु कलेवरद्वारा तत्प्रतिकूलभूतकृतोपद्रव आत्मनि फलति तदा कलेवरस्यानात्मत्वेऽपि कथं भूतेभ्यो न द्रुह्यन्तीत्यत आह अत इति । अतो वृद्धसेवातः अविद्या अनादितः आत्मानात्मपरमात्मस्वरूपाद्यज्ञानं तन्मूलः कामो विषयाभिलाषस्तन्मूलानि कर्माणि तैः शुभाशुभकर्मफलायतनो देह आरब्धः, इत्येवममुं कायं देहं विद्वान् प्रबुद्धः नान्यो द्रोहादिविषयः मम कर्मानुसारेणेश्वरप्रेरितानि सुखदुःखानि भवन्तीति ज्ञानवान् अस्मिन् काये नैव सज्जते इत्यन्वयः । एतानि भूतानि मम कायप्रतिकूलानि, अतो मम द्रोहविषयाणीति न मुह्यतीति भावः ॥ ५-६ ॥ ❀ ❀ नात्मा कलेवरमित्यनेन कलेवरादन्य आत्मेत्युक्तं तस्यात्मनः पुरुषा इत्यनेनानेकत्वमुक्तम् । यत्तु देवशब्देन मायास्वाम्युक्तः स क इत्याकांक्षायाम् "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" इति श्रुतिमुपबृंहयन् जीवात्मनः परः स परमात्मेत्याह-एक इति । निर्गुणः प्राकृतगुणरहितः गुणाश्रयः कल्याणगुणाश्रयः निरात्मा निर्गत आत्माश्रयो यस्य स्वाश्रय इत्यर्थः । आत्मा अन्तर्यामी आत्मनः जीवात्परस्तदुपास्यः ॥ ७ ॥ ❀ ❀ पुरुषा यदि मुह्यन्तीत्यनेन श्लोकेन देवमायामोहितत्वेन बद्धत्वं जीवानामुक्तं, ततः केनोपायेन मुक्तिरित्याकाङ्क्षायां मद्विषयकज्ञानभक्त्यादिसाधनैर्मुक्तिर्भवतीत्याह-य एवमिति त्रिभिः । आत्मस्थमन्तर्यामिणम् ॥ ८-९ ॥ ❀ ❀ परित्यक्तगुणः गुणातीतः सम्यग्दर्शनः सम्यग्ज्ञानवान्, अत एव समवस्थानं मदात्मकत्वेनावस्थानमश्नुते, अत एव मे शान्तिं ध्यानसमाधिनिष्ठामत एव ब्रह्मकैवल्यं ब्रह्मभावापत्तिलक्षणं मोक्षं चाश्नुते ॥ १० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

कर्मभिः शुद्धचित्तस्य प्रसादो हरिणा कृतः । तेन कृता स्तुतिस्तस्य विंशे ह्येतन्निरूप्यते ॥ ( १ ) ॥

न केवलं देवादय एव तस्मै वरान् ददुः, किन्तु वैकुण्ठो वैकुण्ठाधिपतिर्भगवानपि मघवता इन्द्रेण सह प्रसन्नतया वरदानादीच्छया तं राजानमभाषतेत्यन्वयः। तत्प्रसादे हेतुः—यतो यज्ञैः स्विष्टः सम्यक् पूजितः। स्विष्टत्वे हेतुः—यतो यज्ञपतिरिति। तत्र हेतुः—यज्ञभुगिति। ननु यज्ञभागभोक्तृत्वेन तत्तद्देवताः प्रसिद्धाः कथं भगवतस्तत्त्वं तत्राह—विभुरिति। चेतनतया भोक्तृत्वेन तत्र स एव व्यापक इत्यर्थः॥ १॥ ❀ ❀ यद्यपि ब्रह्म-वाक्याद्यज्ञाग्रहं हित्वा स्नेहं च कृत्वेन्द्रेण सह संधानं कृतवानित्युक्तं तथापि बहिर्व्यवहारप्रदर्शनमात्रेण ब्रह्मगौरवात्त-थाकरणमन्तःकरणे द्वेषदौर्मनस्यकर्मासत्तयादिलेशस्य विद्यमानत्वात्तन्निराकरणार्थं भगवानुवाच एष त इत्यादिपञ्चदशभिः। यत एष इन्द्रः ते तव हयमेधशतस्य अश्वमेधानां शतसङ्ख्यापूरकस्यांतिमस्य भङ्गमकार्षीत्। ह स्फुटमेतत् ततो लज्जितः सन्नात्मानमुभ-योर्ममावतारत्वादात्मनः स्वरूपभूतं त्वां क्षमापयतः क्षमां कारयतोऽमुष्य त्वं क्षन्तुमर्हसि॥ २॥ ❀ ❀ लोके ये नरेषूत्तमास्ते तु भूतेभ्यो नाभिद्रुह्यन्ति, प्राणिमात्रस्य कस्यापि द्रोहं नाचरन्तीत्यन्वयः। के ते नरोत्तमा इत्यपेक्षायामाह—साधव इति। तेषामपि किं लक्षणमिति वीक्षायामाह—सुधिय इति। सुष्ठु सर्वत्र समाना शत्रुमित्रादिभेदशून्या धीर्येषां ते। कुत एवं भेदशून्यता घटते तत्राह—यर्हीति। यर्हि यस्मात् आत्मा कलेवरं न भवति, द्रोहस्य भेददर्शनाधीनत्वात्तस्य च देहात्माभिमानजन्यत्वात्तदभिमानरहिता भूतेभ्यो न द्रुह्यन्तीत्यर्थः। तव चैवं विपर्ययो राज्यसम्बन्धादेव जात इति सूचयन्सम्बोधयति—हे नरदेवेति॥ ३॥ ❀ ❀ तव तु स न युक्त इत्याशयेनाह—पुरुषा इति। त्वादृशो विवेकिनोऽपि पुरुषा देवस्य मम मायायाः प्राबल्यात् तया यदि मुह्यन्ति देहादिष्वहंममभावेन शत्रुमित्रादिकल्पनया द्रोहादिषु प्रवर्त्तंते तदा तेषां दीर्घया बहुकालाभ्यस्तयापि वृद्धानां ज्ञानिनां सेवया परं केवलं श्रम एव जातो न कश्चित्पुरुषार्थ इत्यन्वयः॥ ४॥ ❀ ❀ यतो मायामोहितानामेवायं विपर्ययोऽतः प्रतिबुद्धः पुरुषोऽ-स्मिन् देहे नैवानुषज्जते अहमित्यात्मबुद्धिं नैव करोतीत्यन्वयः। प्रतिबुद्धः किंलक्षणो भवतीत्यपेक्षायां तं निरूपयति—कायमिति। अविद्या स्वरूपाज्ञानं ततः कामो भोगाभिलाषस्ततस्तदनुरूपाणि कर्माणि तैरारब्धो रचित इत्येवमिमं कायं विद्वान् जानातीत्य-न्वयः॥ ५॥ ❀ ❀ ननु माभूद्देहेनुषङ्गस्तथापि गृहादौ ममता स्यादेव तथापि भेददर्शनस्य विद्यमानत्वाद्रागद्वेषादिना भूत-द्रोहादि स्यादेवेत्याशङ्क्य ममतायास्तद्विषयस्य च देहाध्यासपूर्वकत्वान्नैवमित्याह—असंसक्त इति। बुधः आत्मज्ञानी अत एवास्मिन् शरीरे असंसक्तश्चेत्तदा अमुना शरीरेणोत्पादिते गृहे अपत्ये द्रविणे धने वापि ममतां कः कुर्यादिति॥ ६॥ ❀ ❀ कोसौ देहाद्भिन्न आत्मा यं जानन् देहे न सज्जत इत्याकांक्षायामात्मानं दर्शयति—एक इति। असावात्माऽऽत्मनो देहात्परो भिन्न इत्य-न्वयः। कुतो देहाद्भेदः वैलक्षण्यादिति मत्वा वैलक्षण्यं दर्शयति—आत्मा एकः, देहस्त्वनेकः। आत्मा शुद्धः, देहस्तु पाञ्चभौतिक-त्वान्मलिनः। आत्मा स्वयंज्योतिः स्वप्रकाशः, देहस्तु जडः। आत्मा निर्गुणो गुणेभ्योऽतिरिक्तः, देहस्तु गुणकार्यः। अत एव गुणा-श्रितः, आत्मा तु तेषामाश्रयः। आत्मा सर्वगो व्यापकः, देहस्तु परिच्छिन्नः। आत्मा व्यापकत्वादेवानावृतः, देहस्तु परिच्छिन्नत्वा-देव वस्त्रादिना आवृतः। आत्मा चेतनत्वात्सर्वसाक्षी द्रष्टा, देहस्तु जडत्वाद् दृश्यः। आत्मा निरात्मा स्वाधिकरणकात्मान्तररहितः, देहस्तु सात्मा आत्मन आयतनम्। एवं जीवेश्वरैक्यज्ञानं मोक्षसाधनमिति दर्शितम्। "आत्मनश्च परस्यापि यः करोत्यन्तरोदरम्। तस्य भिन्नदृशो मृत्युर्विदधे भयमुल्बणम्" इति वाक्येन भेददर्शनस्य भयजनकं संसारहेतुत्वादिति ध्येयम्॥ ७॥ ❀ ❀ एवं ज्ञानवतः कृतार्थतामाह—यत इति। यः पुरुष एवं वर्णितप्रकारकं सन्तं विद्यमानं तत्रापि न दूरं किंत्वात्मस्थं स्वशरीर एव स्थित-मात्मानं वेद जानाति स प्रकृतिकार्ये देहे स्थितोपि तद्गुणैः सुखदुःखपुण्यपापादिभिर्नाज्यते न लिप्यते। यतः स मयि परमेश्वरे भगवति मनसा स्थितः। देहादावहंताममताराहित्येन तत्प्रतिसन्धानाभावादिति भावः॥ ८॥ ❀ ❀ इदं फलं तु मम भक्तस्यैव नान्यस्येत्याह—य इति द्वयेन। यः स्वधर्मेण स्ववर्णाश्रमाचारानुरूपेण धर्मेण मयि समर्पितेन मां भजते तस्य मनः शनकैः प्रसीदति शुद्ध्यतीत्यन्वयः। कदाचिद्भगवत्प्रीतये स्वधर्माचरणे कदाचिद्विषयभोगासक्त्या यथेष्टाचरणे चाशुद्धेरपि सम्भवादाह—नित्यमिति। एवं भजनेऽपि यदि भगवत एव कस्यचित्पदार्थस्याकांक्षा तदा तदेव प्राप्नोति न चित्तविशुद्धिमत आह—निराशीरिति। भगवतोपि फलाशारहित इत्यर्थः। तथापि श्रद्धादिना यद्यत्करोति तदसद्भवत्यतः श्रद्धारहितस्य भजनमपि निरर्थकमेवात आह—श्रद्धयान्वित इति। तव त्वेवं भजनमेव युक्तं मुख्यत्वादिति सूचयन् सम्बोधयति—हे राजन्निति॥ ९॥ ❀ ❀ एवं यदा विशदाशयः विशुद्धचित्तो भवति तदा परित्यक्ता गुणा विषया येन तथाभूतः सर्वतो विरक्तो भवति। तदा च शान्तिमश्नुते विरक्ततां विना शान्ते-र्दुर्लभत्वात् तथापि भूतस्यापि "यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय सदा तद्भावभावितः" इति वाक्यानु-सारेण फलद्वयं पुरुषोत्तमलीलायां प्रवेशः अक्षरब्रह्मप्राप्तिश्च। तत्र यदि सम्यग्दर्शनः पुरुषोत्तमविग्रहध्याननिष्ठस्तदा मे मम समवस्थानं पुरुषोत्तमविग्रहमेवाश्नुते लीलायां प्रविष्टो भवति। तस्य परिच्छिन्नत्वं व्यावर्त्तयति—ब्रह्मेति। विकारित्वं व्यावर्त्तयति—कैवल्य-मिति। सच्चिदानन्दात्मकमित्यर्थः॥ १०॥

भाषानुवादः

### महाराज पृथुकी यज्ञशालामें श्रीविष्णुभगवान्‌का प्रादुर्भाव

श्रीमैत्रेयजी कहते हैं—विदुरजी! महाराज पृथुके निन्यानवे यज्ञोंसे यज्ञभोक्ता यज्ञेश्वर भगवान् विष्णुको भी बड़ा सन्तोष हुआ। उन्होंने इन्द्रके सहित वहाँ उपस्थित होकर उनसे कहा ॥ १ ॥ ❁ ❁ श्रीभगवान्‌ने कहा—राजन्! (इन्द्रने) तुम्हारे सौ अश्वमेध पूरे करनेके सङ्कल्पमें विघ्न डाला है। अब ये तुमसे क्षमा चाहते हैं, तुम इन्हें क्षमा कर दो ॥ २ ॥ ❁ ❁ नरदेव! जो श्रेष्ठ मानव साधु और सद्‌बुद्धिसम्पन्न होते हैं, ये दूसरे जीवोंसे द्रोह नहीं करते; क्योंकि यह शरीर ही आत्मा नहीं है ॥ ३ ॥ ❁ ❁ यदि तुम-जैसे लोग भी मेरी मायासे मोहित हो जायँ, तो समझना चाहिये कि बहुत दिनोंतक की हुई ज्ञानीजनोंकी सेवासे केवल श्रम ही हाथ लगा ॥ ४ ॥ ❁ ❁ ज्ञानवान् पुरुष इस शरीरको अविद्या, वासना और कर्मोंका ही पुतला समझकर इसमें आसक्त नहीं होता ॥ ५ ॥ ❁ ❁ इस प्रकार जो इस शरीरमें ही आसक्त नहीं है, वह, विवेकी पुरुष इससे उत्पन्न हुए घर, पुत्र और धन आदिमें भी किस प्रकार ममता रख सकता है ॥ ६ ॥ ❁ ❁ यह आत्मा एक, शुद्ध, स्वयंप्रकाश, निर्गुण, गुणोंका आश्रयस्थान, सर्वव्यापक, आवरणशून्य, सबका साक्षी एवं अन्य आत्मासे रहित है; अतएव शरीरसे भिन्न है ॥ ७ ॥ ❁ ❁ जो पुरुष इस देहस्थित आत्माको इस प्रकार शरीरसे भिन्न जानता है, वह प्रकृतिसे सम्बन्ध रखते हुए भी उसके गुणोंसे लिप्त नहीं होता; क्योंकि उसकी स्थिति मुझ परमात्मामें रहती है ॥ ८ ॥ ❁ ❁ राजन्! जो पुरुष किसी प्रकारकी कामना न रखकर अपने वर्णाश्रमके धर्मोंद्वारा नित्यप्रति श्रद्धापूर्वक मेरी आराधना करता है, उसका चित्त धीरे-धीरे शुद्ध हो जाता है ॥ ९ ॥ ❁ ❁ चित्त शुद्ध होनेपर उसका विषयोंसे सम्बन्ध नहीं रहता तथा उसे तत्त्वज्ञानकी प्राप्ति हो जाती है। फिर तो वह मेरी समतारूप स्थितिको प्राप्त हो जाता है। यही परम शान्ति ब्रह्म अथवा कैवल्य है ॥ १० ॥

उदासीनमिवाध्यक्षं द्रव्यज्ञानक्रियात्मनाम्। कूटस्थमिममात्मानं यो वेदाप्नोति शोभनम् ॥ ११ ॥

भिन्नस्य लिङ्गस्य गुणप्रवाहो द्रव्यक्रियाकारकचेतनात्मनः।
दृष्टासु सम्पत्सु विपत्सु सूरयो न विक्रियन्ते मयि बद्धसौहृदाः ॥ १२ ॥
समः समानोत्तममध्यमाधमः सुखे च दुःखे च जितेन्द्रियाशयः।
मयोपक्लृप्ताखिललोकसंयुतो विधत्स्व वीराखिललोकरक्षणम् ॥ १३ ॥
श्रेयः प्रजापालनमेव राज्ञो यत्साम्पराये सुकृतात्[1] षष्ठमंशम्।
हर्तान्यथा हृतपुण्यः प्रजानामरक्षिता करहारोऽघमत्ति ॥ १४ ॥
एवं द्विजाग्र्यानुमतानुवृत्तधर्मप्रधानोऽन्यतमोऽविताऽस्याः।
ह्रस्वेन कालेन गृहोपयातान् द्रष्टासि सिद्धाननुरक्तलोकः ॥ १५ ॥
वरं च मत् कञ्चन मानवेन्द्र वृणीष्व तेऽहं गुणशीलयन्त्रितः।
नाहं मखैर्वै सुलभस्तपोभिर्योगेन वा यत्समचित्तवर्ती ॥ १६ ॥

#### मैत्रेय उवाच

स इत्थं लोकगुरुणा विष्वक्सेनेन विश्वजित्। अनुशासित आदेशं शिरसा जगृहे हरेः ॥ १७ ॥
स्पृशन्तं पादयोः प्रेम्णा व्रीडितं स्वेन कर्मणा। शतक्रतुं परिष्वज्य विद्वेषं विससर्ज ह ॥ १८ ॥
भगवानथ विश्वात्मा पृथुनोपहृतार्हणः। समुज्जिहानया भक्त्या गृहीतचरणाम्बुजः ॥ १९ ॥
प्रस्थानाभिमुखोऽप्येनमनुग्रहविलम्बितः। पश्यन् पद्मपलाशाक्षो न प्रतस्थे सुहृत्सताम् ॥ २० ॥

अन्वयः—द्रव्यज्ञानक्रियात्मनाम् अध्यक्षम् इव उदासीनम् कूटस्थम् इमम् आत्मानम् यः वेद शोभनम् आप्नोति ॥ ११ ॥ ❁ ❁ गुणप्रवाहः द्रव्यक्रियाकारकचेतनात्मनः भिन्नस्य लिङ्गस्य मयि बद्धसौहृदाः सूरयः संपत्सु विपत्सु दृष्टासु न विक्रियन्ते ॥ १२ ॥ ❁ ❁ वीर सुखे च दुःखे समः समानोत्तममध्यमाधमः जितेन्द्रियाशयः मया उपक्लृप्ताखिल-

---

१. प्रा० पा०—कृतं षष्ठ०।

लोकसंयुतः अखिललोकरक्षणम् विधत्स्व ॥ १३ ॥ ❀ ❀ यत् सांपराये सुकृतात् षष्ठम् अंशम् हर्ता राज्ञः प्रजापालनम् एव श्रेयः अन्यथा करहारः अरक्षिता चेत् हृतपुण्यः प्रजानाम् अघम् अत्ति ॥ १४ ॥ ❀ ❀ एवम् द्विजाग्र्यानुमतानुवृत्तधर्मप्रधानः अन्यतमः अस्याः अविता अनुरक्तलोकः ह्रस्वेन कालेन गृहोपयातान् सिद्धान् द्रष्टासि ॥ १५ ॥ ❀ ❀ मानवेन्द्र त्वम् मत् कंचन वरम् वृणीष्व अहम् च ते गुणशीलयन्त्रितः अहम् मखैः तपोभिः वा योगेन न सुलभः यत् वै समचित्त-वर्ती ॥ १६ ॥ ❀ ❀ इत्थम् लोकगुरुणा विष्वक्सेनेन अनुशासितः विश्वजित् सः हरेः आदेशम् शिरसा जगृहे ॥ १७ ॥ ❀ ❀ सः प्रेम्णा पादयोः स्पृशन्तम् स्वेन कर्मणा व्रीडितम् शतक्रतुम् परिष्वज्य विद्वेषम् विससर्ज ह ॥ १८ ॥ ❀ ❀ अथ पृथुना उपहृतार्हणः भगवान् विश्वात्मा समुज्जिहानया भक्त्या गृहीतचरणाम्बुजः पद्मपलाशाक्षः सताम् सुहृत् प्रस्थानाभिमुखः अपि एनम् पश्यन् अनुग्रहविलम्बितः न प्रतस्थे ॥ १९–२० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

सम्यग्दर्शनमेवाह उदासीनमेवात्मानं द्रव्यज्ञानक्रियात्मनां देहज्ञानकर्मेंद्रियमनसामध्यक्षमिव स्थितमात्मानं यो वेद ॥ ११ ॥ ❀ ❀ संसारिणः कथं कूटस्थत्वमत आह । भिन्नस्य लिंगस्य देहस्य गुणप्रवाहः संसारः । भिन्नत्वे हेतुः द्रव्याद्यात्मकस्य । तत्र चेतना चिदाभासः । अतो दृष्टासु प्राप्तासु संपदादिषु हर्षशोकादिभिर्न विक्रियन्ते ॥ १२ ॥ ❀ ❀ त्वं च सूरिरतः सुखे दुःखे च समः सन्समाना उत्तममध्यमाधमा यस्य । जितानीन्द्रियाण्याशयश्च येन । स त्वमखिललोकरक्षणं विधत्स्व । कथमेकेन मया रक्षणं कर्तुं शक्यं तत्राह । मयेश्वरेणोपक्लृप्ताः संपादिता येऽखिला लोका अमात्यादयस्तैः संयुतः ॥ १३ ॥ ❀ ❀ ननु रक्षणं दंडादिसापेक्षमतस्तपोऽन्यद्वा पुण्यं करिष्यामीति चेदत आह श्रेय इति । यद्यस्मात्सांपराये परलोके प्रजाभिः कृतात्सुकृतात्षष्ठमंशं हर्ता हरति । अरक्षणे दोषमाह । अन्यथा प्रजाभिर्हृतं पुण्यं यस्य स प्रजानामघमत्ति पापं भुंक्ते । अन्यथेत्यस्य विवरणम् । करहारः सन्नरक्षिता चेत् ॥ १४ ॥ ❀ ❀ एवं च मोक्षोऽप्यनायासेन भविष्यतीत्याह । द्विजाग्र्याणामनुमतश्चासावनुवृत्तश्च परंपराप्राप्तो यो धर्मः स एव प्रधानमर्थकामौ तु प्रासंगिकौ यस्य अन्यतमोऽतिशयेनान्यः । धर्मादिष्वनासक्त इत्यर्थः । ऐकपद्यपाठे धर्मप्रधानावन्यतमावर्थकामौ यस्येत्यर्थः । अस्याः पृथिव्या अविता सन्नल्पेन कालेन गृहागतान्सनकादीन्द्रक्ष्यसि । अनुरक्तो लोको यस्मिन्सः ॥ १५ ॥ ❀ ❀ मत् मत्तः सकाशात्कंचन कंचिद्वरं वृणीष्व । गुणाः क्षमादयः शीलं निर्मत्सरत्वादिस्वभावस्तैरहं यन्त्रितो वशीकृतः । तद्रहितैस्तु मखादिभिर्नाहं सुलभः । यतः समं चित्तं येषां तेष्वेव वर्तितुं शीलं यस्य सोऽहम् ॥ १६–१७ ॥ ❀ ❀ क्षमापयितुं पादयोः स्पृशंतम् । स्वेन कर्मणाऽश्वापहरणेन व्रीडितम् । प्रेम्णा परिष्वज्य ॥ १८ ॥ ❀ ❀ भगवान्प्रस्थानाभिमुखोऽप्यनुग्रहेण विलंबितः सन्न प्रतस्थे प्रयाणं न कृतवानिति द्वयोरन्वयः । कथंभूतः । उपहृतमर्पितमर्हणं यस्मै । समुज्जिहानया समुद्गच्छन्त्या वर्द्धमानया भक्त्या गृहीते चरणांबुजे यस्य ॥ १९ ॥ ❀ ❀ पद्मपलाशवदक्षिणी यस्य तथाभूतः सन् एनं पृथुं पश्यन् ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अत्र विश्वनाथः—अध्यक्षं जीवात्मानमुदासीनमिव तेष्वनासक्तमिव यो वेद स इमं कूटस्थमात्मानं परमात्मानं वेद यः परमात्मानं वेद सोऽभवं मोक्षं प्राप्नोत्यावृत्त्यान्वयः । शोभनमिति पाठेऽपि स एवार्थः । अत्रेवकारेण सम्यगुदासीनत्वाभावेऽपि साधनदशायां ज्ञानसिद्धिं सूचयति ॥ ११ ॥ ❀ ❀ अत्राक्षिपति—संसारिण इत्यादिना । द्रव्याद्यात्मकस्याधिभूताध्यात्माधिदैव-बुद्ध्यात्मकस्य । तत्र द्रव्यादिषु चेतनाबुद्धिश्चिदाभासश्च यतो बुद्ध्याद्यात्मलिंगदेहस्यैव संसारोऽतो हेतोः हर्षशोकादीनामात्मधर्मत्वाभावादित्यर्थः । अयमर्थः—लिंगदेहस्य खल्वभिमानेनैव जीवस्य संसारो न त्वौदासीन्येनेति । तत्राध्यक्षत्वेऽपि न जीवस्य क्षतिर्लिंगस्यापि तदेव लिंगत्वमिति । एवञ्च 'यः स्वधर्मेण' इत्यादिना भक्तिमिश्रेण ज्ञानेन यतमानानां संसाराभावमुक्त्वा केषांचित्केवलयैव भक्त्या 'जरयत्याशु या कोशम्' इत्युक्तन्यायेन संसारनिवृत्तये यतमानानामपि संसाराभावमाह—दृष्टास्विति । आसक्त्यभावात्प्राकृतसम्पद्विपदोर्न विक्रियन्ते । आसक्त्यभावे हेतुः—मयि बद्धेति । सौहृदबद्धत्वं तु केवलयैव भक्त्या भवेदित्यापादितं तृतीयस्कन्धे ॥ १२ ॥ ❀ ❀ सूरिर्मयि बद्धसौहृद इत्यतो मन्निदेश एव वर्त्तस्वेत्याह । अतः सूरित्वात् । कथमित्युपशंकते । तत्राशंकायाम् । ईश्वरदत्तैश्वर्योऽहमीश्वराज्ञापालनरूपं प्रजारक्षणं करोमीति बुद्ध्येत्यर्थः ॥ १३ ॥ ❀ ❀ अत्राक्षिपति नन्विति । आदिना करादिग्रहः । "संपरायः समीपे स्यादापदुत्तरकालयोः । परलोके महैश्वर्ये" इत्यभिधानात् । एवकारेणान्ययोगो व्यवच्छिद्यते ॥ १४ ॥ ❀ ❀ द्विजाग्र्याणां शास्त्राभिज्ञविप्राणामनुमतस्तैरनुज्ञातः । इत्यर्थ इति । तमबत्र प्रकृष्टार्थे न तु डतम इति भ्रमितव्यं तस्यानुपयोगादिति भावः । इत्यर्थ इति । इत्थं बहुव्रीहिं कृत्वा पुनर्द्विजाग्र्यैरनुमतस्स चासौ प्रवृत्तश्चेति धर्मप्रधानान्यतमश्चेति कर्मधारयः कार्य इति भावः ॥ १५ ॥ ❀ ❀ अत्यनुकम्पाविगतधैर्य आह-वरं चेति । मानवेन्द्रेत्युक्त्या देवेन्द्रत्वं तु यज्ञस्यैव तिष्ठत्वतोऽन्यं वरं मत्तः कंचन वृणीष्वेत्यभिप्रायः । समत्वं चात्र "नारायणपराः सर्वे न कुतश्चन बिभ्यति । स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः ॥" इत्युक्तरीत्या भक्त्युत्थमेव ग्राह्यं 'न रोधयति मां योगः' इत्याद्युक्तेर्योगाद्युत्थमिति

सन्दर्भः। विश्वनाथस्तु—समं तुल्यमेव सर्वेषां चित्तवर्त्ती चित्ताधिष्ठाता सर्वत्रोदासीन एव न तु कस्यापि वश इत्याह। समे "निर्दोषं हि समं ब्रह्म" इति श्रीगीतोक्तेर्ब्रह्मणि चित्तं येषां ते समचित्ता ज्ञानिनस्तत्र वर्त्ती "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इति श्रीमुखोक्तेः॥ १६॥ ❀ ❀ विश्वजित्समस्तजेता पृथुः॥ १७-१८॥ ❀ ❀ अथोभयोर्मेलनानन्तरम्॥ १९॥ ❀ ❀ "यात्रा प्रयाणं प्रस्थानं गमनं चलनं गतिः" इत्यभिधानात्॥ २०॥

### श्रीमद्वीरराघवव्याख्या

एवं तत्त्वत्रयविमर्शनपूर्वकं ज्ञानकर्मयोगानुगृहीतभगवद्भक्तियोगस्यामृतत्वप्राप्त्युपायतामभिधायैवंविधस्य पुंसो जीवदवस्थायामवस्थानप्रकारमाह उदासीनमिति। द्रव्यं पृथिव्यादिभूतानि ज्ञानं श्रोत्रादिज्ञानेन्द्रियाणि क्रिया वागादिकर्मेन्द्रियाणि आत्मा मनः एषामध्यक्षमधिपं कूटस्थं स्वरूपतो निर्विकारमत एव द्रव्यमयमात्मानं प्रत्यगात्मानमुदासीनमिव स्थितं यो वेद द्रव्याद्यध्यक्षत्वं प्रकृतिसम्बन्धकृतं परमार्थतस्तु कूटस्थ उदासीन इत्येवमात्मानं यो वेद सः शोभनमाप्नोति जीवनदशायामपि सुखमेवाप्नोतीत्यर्थः॥ ११॥ ❀ ❀ ननु विप्रतिषिद्धमेतदुच्यते द्रव्याद्यध्यक्षत्वं कूटस्थत्वमुदासीनत्वं चेति करणप्रवर्तकत्वमेव हि करणाधिपत्वं तच्च विकारः तदभावः कूटस्थत्वमुदासीनत्वं तत्राह भिन्नस्येति। द्रव्यक्रियाकारकचेतनात्मनः द्रव्यं पृथिव्यादि क्रिया कारकाणि कर्मेन्द्रियाणि चेतना ज्ञानेन्द्रियजातम् एतदात्मकस्येत्यर्थः। क्रिया कर्मेन्द्रियाणि कारकाणि ज्ञानकरणानि श्रोत्रादीनि चेतना चित्तमेतदात्मकस्येति वार्थः, द्रव्याद्यात्मकस्यात एव भिन्नस्य देवमनुष्यादिभावेन भिन्नस्य लिङ्गस्य शरीरस्य गुणप्रवाहः गुणपरिणामो भवतीति। अयं भावः—यद्यपि द्रव्याद्यध्यक्षत्वरूपविकार आत्मन्यस्ति, तथापि स विकारः ज्ञानविकाररूपः, स च धर्मभूतज्ञानगतो न स्वरूपगत इति स्वरूपतः कूटस्थत्वमुदासीनत्वं च। देवादिरूपेण परिणामस्तु द्रव्यादिसंघातस्यैवेति। धर्मतोऽपि सति विकारे न कूटस्थत्वोपपत्तिः, कूटस्थता हि निर्विकारता सा च नित्यता परम्परया धर्मतो वा, नित्यत्वे कथं नित्यतेति चेत् उच्यते धर्मभूतं ज्ञानद्रव्यं नित्यमेव, तस्य च कर्मणा कदाचित् संकोचः कदाचिद्विकास इत्यवस्थाद्वयमङ्गीक्रियते। तत्र संकोचो नाम प्रसराभावः, तदभावो विकासः। प्रसररूपाभावस्य भावरूपत्वात् अतो धर्मभूतं ज्ञानं द्रव्यमपि नित्यमेवेति धर्मतोऽपि कूटस्थतोपपत्तिः। पृथिव्यादीनां तु स्वरूपतः स्वभावतश्च विकार इति न कूटस्थत्वम्। अत आत्मनः सततमेकरूपत्वात् देहस्य प्रतिक्षणपरिणामित्वाद्पुरुषार्थत्वाद्देहप्रयुक्तासु दृष्टासु प्राप्तासु सम्पत्सु विपत्सु च सूरयस्तत्त्वत्रयविवेचनचतुरा न विक्रियन्ते सम्पदापत्प्रयुक्तहर्षशोकाभ्यां न युज्यन्त इत्यर्थः। कथं सति शरीरे तत्प्रयुक्तहर्षशोकासम्बन्धस्तत्राह। मयि निरतिशयप्रीतिविषये बद्धं सौहृदं यैस्ते, सौहृदशब्देन सुहृदो धर्मो निरतिशयप्रेमोच्यते, तेन प्रीतिरूपमुपासनं लक्ष्यते। बद्धशब्देन तस्य विजातीयप्रत्ययान्तराव्यवहितत्वं च, तथाच प्रत्ययान्तराव्यवहितमद्विषयनिरतिशयरूपभक्त्या विस्मृतदेहधर्मा हर्षशोकाभ्यां न युज्यन्त इत्यर्थः। त्वं च सूरिः॥ १२॥ ❀ ❀ अतः सुखदुःखे च देहप्रयुक्ते समः सन्, साम्यं मम कथं संभवेत्तत्राह विजितेन्द्रियाशयः वशीकृतबाह्येन्द्रियान्तःकरणः, जितेन्द्रियस्य तव सुखदुःखयोः साम्यं संभवेदेवेत्यर्थः। अत एव समाना उत्तममध्यमाधमाः यस्य स तिर्यङ्मनुजदेवादिषु देहातिरिक्तसर्वात्मसाम्यानुसन्धानपरस्तेषां च ब्रह्मात्मकत्वेन साम्यधीः त्वमखिललोकरक्षणं विधत्स्व। कथमेकेन मया तत्कर्तुं शक्यं तत्राह। मयेश्वरेण उपलक्षिताः सम्पादिताः अमात्यादयोऽखिललोकास्तैः संयुतः॥ १३॥ ❀ ❀ ननु मम मुमुक्षामनुत्पाद्य किमखिललोकरक्षणं विधत्स्वेत्युच्यते तत्राह श्रेय इति। राज्ञः प्रजापालनमेव श्रेयःसाधनं समीहितपुरुषार्थसाधनमित्यर्थः। कुतः यत् यस्मात् प्रजापालनात् साम्पराये देहवियोगे प्रजाभिर्यत्कृतं सुकृतं यस्य षष्ठमंशं हर्ता हरति। अन्यथा लोकरक्षणाभावे प्रजानामरक्षिता प्रत्युत प्रजापीडनादिना तदत्तं करं स्वामिग्राह्यभागं हरतीति हरः तथाभूतः अत एव प्रजाभिरात्तपुण्यस्तासामघमत्ति॥ १४॥ ❀ ❀ तस्मात् यदि प्रजाः पालयसि धर्मतस्तदा तव मुक्तिरपि सुलभा स्यादित्याह एवमिति। द्विजाग्र्याणामनुमतश्चासावनुवृत्तश्च व्यस्तपाठेऽनुवृत्तश्च धर्मप्रधानः अनभिसंहितफलस्ववर्णाश्रमोचितधर्मप्रधानः अन्यतमः प्रजानां मध्ये अन्यतम इव स्वस्मिन् स्वातन्त्र्यमनारोप्येत्यर्थः अविता रक्षिता यदि स्याः भवेः तदा ह्रस्वेनाल्पेन कालेन गृहान् प्रत्युपगतान् सिद्धान् सनकादीन् अनुरक्ताः स्वस्मिन् अनुरागयुक्ता लोका यस्य स त्वं द्रष्टासि। तैरुपदिष्टतत्त्वोऽमृतत्वं यास्यसीत्यर्थः॥ १५॥ ❀ ❀ किञ्च हे मानवेन्द्र! मत् मत्तः सकाशात् कंचिद्वरं वृणीष्व, ते तव गुणाः शमादयः शीलं निर्मत्सरादिस्वभावस्तैर्यन्त्रितः वशीकृतोऽहं तद्रहितैस्तु मखैर्योगैः तपोभिः कृच्छ्रचान्द्रायणादिभिर्योगेन वा नाहं सुलभः, कुतः यत् यस्मात्समं चित्तं येषां तेष्वेव वर्तितुं शीलमस्य सोऽहम्॥ १६॥ ❀ ❀ स विश्वजित् पृथुरेवं लोकगुरुणा विष्वक्सेनेन भगवता अनुशिष्टः हरेरादेशमाज्ञां शिरसा जगृहे अतीवादृतवानित्यर्थः॥ १७॥ ❀ ❀ ततः पादयोः क्षमापयितुं स्पृशन्तं स्वेन स्वीयेन अश्वहरणादिकर्मणा व्रीडितं लज्जितं शतक्रतुमिन्द्रं प्रेम्णा परिष्वज्यालिङ्ग्य तस्मिन् विद्वेषं विससर्ज अत्याक्षीत्। हेति विस्मये। आर्द्रापराधजनितविद्वेषं तदैव विससर्जेति विस्मयते॥ १८॥ ❀ ❀ ततो विश्वात्मा सर्वात्मा भगवानपि पृथुनोपहृतं समर्पितमर्हणमर्घ्यादिकं यस्य समुज्जिहानया समुद्रिक्तया भक्त्या गृहीतौ चरणौ अम्बुजे इव यस्य प्रस्थानाभिमुखः स्वलोकं प्रति प्रयाणाभिमुखोऽपि अनुग्रहेण विलम्बितः सञ्जातविलम्बः सतां भक्तानां सुहृत् निरतिशयप्रीतिमान् एवं पृथुं पश्यन् पद्मदलवद्विशाले अक्षिणी यस्य सः पद्मपत्रविशालाभ्यामक्षिभ्यां पश्यन्निति भावः, न प्रतस्थे न ययावित्यर्थः॥ १९-२०॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सम्यग्दर्शन इत्युक्तं दर्शनप्रकारं दर्शयति उदासीनमिवेति। द्रव्यज्ञानक्रियात्मनां तामसवैकारिकतैजसरूपाणां पदार्थानामध्यक्षमधिपतिम्। उदासीनमिवाक्लिष्टकारिणमेव कूटस्थं निर्विकारमात्मानं हरिं यो वेद स शोभनं दर्शनमेवाप्नोतीत्यन्वयः। 'हरिरक्लिष्टकारित्वादुदासीन इतीर्यते' इति च ॥ ११॥ ❀ ❀ इदं चावश्यं ज्ञेयमित्याह भिन्नस्येति। द्रव्यक्रियाकारकचेतनानि सन्ततं व्याप्य तिष्ठतीति द्रव्याद्यात्मा तस्य जीवाद्भिन्नस्य। कालादिव्यवधानेन लीनं पदार्थजातं गमयतीति ज्ञापयतीति लिङ्गं तस्य मनसो यः सत्त्वादिगुणानां प्रवाहः प्रवर्तनविशेषस्तं द्रष्टा ज्ञात्वा। प्रत्यक्षासु विपत्सु सम्पत्सु च प्राप्तासु न विक्रियन्ते जातोऽहं मृतोऽहमित्यादिविकारं न प्राप्नुवन्ति, के सूरयः। अत्र हेतुगर्भविशेषणमाह मयीति। मयि बद्धं सौहृदं महत्त्वबुद्धिलक्षणं प्रेम यैस्ते तथा तस्मादिति शेषः "जीवाद्भिन्नस्य मनसो गुणाः सत्त्वादयो मताः। तज्ज्ञात्वा न विकुर्वीत स्वस्वरूपं मनस्तथा" इति वचनात् उक्त एवार्थोऽनान्य इत्यर्थः॥ १२॥ ❀ ❀ इदमपि मुक्तिसाधनमित्याह सम इति। सुखे च दुःखे च समो निर्विकारः समानाः स्वस्वयोग्यतानुसारेण उत्तममध्यमाधमाश्च यस्य स तथोक्तः। समत्वे कारणमाह जितेति। रक्षायां किम्बल इत्यत उक्तं मयेति मया उपलक्षः अखिलः पूर्णः सत्त्वगुणस्तेन संयुतः॥ १३॥ ❀ ❀ अपवर्गानुपयोगिप्रजापालनेन किमित्याशङ्क्येदमेव तव श्रेय इत्याह श्रेय इति। साम्पराये मोक्षे प्रजाकृतसुकृताद्विभज्य षष्ठमंशं सुकृतं लभत इति यस्मात्तस्मादिति। विपक्षे बाधकमाह अत इति। अतोऽन्यथेत्यस्य विवरणमरक्षितेति। "दुःखैनोव्यसनेष्वघम्" इति यादवः॥ १४॥ ❀ ❀ गुरूपदिष्टज्ञानस्यैव मुक्तिहेतुत्वात्किं प्रजारक्षणेनेत्याशङ्क्य तेन ज्ञानोपदेष्टृसिद्धज्ञानिप्राप्तिस्ततः संविच्च प्राप्यत इत्याह एवमिति॥ १५॥ ❀ ❀ साक्षात्कृतो वैकुण्ठोऽपि कञ्चन वरं नाददिति लोकापवादं परिहरति वरञ्चेति। अपवादभीरुर्वरं वृणीष्वेति वक्ति न तु तद्गुणलुब्ध इत्यत उक्तं तेऽहमिति। मखादीनन्तरेण गुणशीलयन्त्रित इति किं विशिष्योच्यत इति तत्राह नाहमिति। योगेनाष्टाङ्गलक्षणेन समं तत्तद्वस्तुयोग्यतानुसृतं वृत्तं वर्तनं येषां ते समवृत्ताः पुरुषास्तेषु वर्तितुं शीलमस्येति समवृत्तवर्ती यद्यस्मात्तस्मान्नाहं तव मखादिना सुलभः स्यां, किन्तु गुर्वादिषु संवृद्धभक्त्यैवेत्यर्थः॥ १६॥ ❀ ❀ पृथुरात्मनि गुणग्राहित्वलक्षणं प्रकटयन् श्रीरमणोक्तमग्रहीदित्याह स इत्थमिति। विश्वजित् समस्तजेता॥ १७॥ ❀ ❀ विष्वक्सेनेन श्रीहरिणोक्तं गृहीतमिति शृङ्गग्राहिक इव दर्शयतीत्याह स्पृशन्तमिति। मनसा पृथुसन्निहितराजरूपिणो हरेः पादयोः स्पृशन् व्रीडितमसुरजनमोहाय लज्जास्वभावं दर्शयन्तम् "आवासदुःखव्रीडादीन्प्रायशः सुखिनोऽपि तु। नियमाद्दर्षिभूपेषु मोहायादर्शयन् सुराः॥" इति वचनाद् व्रीडितत्वं तेनेत्यर्थः॥ १८॥ ❀ ❀ विष्णोः पृथौ प्रसादोद्रेकं दर्शयति भगवानिति। विश्वात्मा पूर्णात्मा जगत्समस्तं "विश्वं च निखिलं पूर्णमुच्यते" इत्यभिधानाद्विश्वपदस्य पूर्णार्थत्वमेवाङ्गीकर्तव्यं न तु प्रपञ्चात्मत्वं तस्य बहुप्रमाणविरुद्धत्वात्। चन्द्रोदये समुद्रवृद्धिवदनुदिनं समुज्जिहानया भक्त्येत्यनेन "अपक्वभक्तियुक्ता ये न तेषां हरिदर्शनम्। प्रायो भवति दुःखस्य स्वभावः प्रायशो भवेत्॥" इति वचनात्साक्षात्कृतमधोक्षजं प्रत्यक्षं पश्यतः पृथोरपक्वभक्तियुक्तेभ्योऽप्युत्तमत्वं दर्शयन् तत्साक्षात्कारे भक्तेरेव प्रयोजकत्वात्तच्छृङ्खलया कीलितत्वान्मद्बन्धने सैव सम्पादनीयेति सूचयति॥ १९॥ ❀ ❀ 'यात्रा प्रयाणं प्रस्थानमि'त्यभिधानम्॥ २०॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

केवलमेव दर्शयति। उदासीनमिति। अध्यक्षमिव स्थितमप्युदासीनं यो वेदेत्यन्वयः, अभवं मोक्षमिति सम्बन्धोक्तिः, सोऽभयमिति चित्सुखः, शोभनमिति गौडीयः पाठः॥ ११॥ ❀ ❀ अथ भक्तिपक्षेणापि तं सान्त्वयति। भिन्नस्येति॥ १२॥ ❀ ❀ अथ कर्त्तव्यमुपदिशति सम इति। लोकेत्यत्र सत्त्वेति चित्सुखः॥ १३-१४॥ ❀ ❀ उत्तरकाले तस्य स्वभक्तिनिष्ठां स्वभक्तेषु विख्यापयितुमिच्छया अन्येषु ज्ञानादिप्रवर्त्तनेच्छया च तस्य कर्त्तव्यं सूचयति। एवमिति॥ १५॥ ❀ ❀ सम्प्रत्यपि पूर्वेच्छयाह वरञ्चेति। गुणशीले अत्र भक्त्युत्थे एव ज्ञेये। तत्र गुणाः गुरूपसत्तिप्राप्ताः पाण्डित्यादयः। शीलन्तु सुस्वभावो विनयादिः, समत्वञ्च 'नारायणपराः सर्व्वे' इत्यादिरीत्या तदुत्थमेव नतु योगाद्युत्थानि तानि। 'न रोधयति मां योगः' इत्यादेः॥ १६॥ ❀ ❀ तदेवं श्रीभगवत आदेशत्रयं जातमिन्द्रेण प्रीतिः सिद्धानुगमनं यात्रास्वीकारश्चेति। तदेव त्रयमपि स्वीचकारेत्याह स इत्थमिति। तत्रान्तिमद्वयं स्वानुकूलेन प्रकारविशेषेण प्रथमन्तु यथावदेव स्वीचकारेत्याह स्पृशन्तमिति प्रेम्णेति। परमप्रेमास्पदत्वेन श्रीभगवता स्वयं मेलितत्वादिति भावः॥ १७-२२॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

सम्यग्दर्शनमेवाह। द्रव्यज्ञानक्रियात्मनामधिभूताधिदैवाध्यात्ममनसाम् अध्यक्षं जीवात्मानमुदासीनमिव तेष्वनासक्तमिव यो वेद स इमं कूटस्थमात्मानं वेद। यः परमात्मानं वेद स अभवं प्राप्नोतीत्यावृत्त्यान्वयः। अत्रेवकारेण सम्यगुदासीनत्वाभावेऽपि साधनदशायां ज्ञानसिद्धिं सूचयति॥ ११॥ ❀ ❀ ननु द्रव्यादीनामध्यक्षत्वेऽपि जीवस्य तेष्वौदासीन्यमात्र एव कथं संसाराभाव इत्यत आह। भिन्नस्य जीवादन्यस्य लिङ्गदेहस्यैव गुणप्रवाहः संसारः भिन्नत्वे हेतुः द्रव्याद्यात्मकस्य अधिभूताध्या-

त्माधिदैवबुद्ध्यादिस्वरूपस्य, अयमर्थः—लिङ्गदेहस्य खल्वभिमानेनैव जीवस्य संसारो नत्वौदासीन्येनेति तत्राध्यक्षत्वेऽपि न जीवस्य क्षतिः, लिङ्गस्यापि तदेवालिङ्गत्वमिति। एवं च यः स्वधर्मेणेत्यादिना भक्तिमिश्रेण ज्ञानेन यतमानानां संसाराभावमुक्त्वा केषांचित् केवलयैव भक्त्या 'जरयत्याशु या कोशं निगीर्णमनलो यथे'ति न्यायेन संसारनिवृत्तये यतमानानामपि संसाराभावमाह दृष्टास्विति। आसक्त्यभावात् प्राकृतसम्पद्विपदोर्न विक्रियन्ते। आसक्त्यभावे हेतुः मयि बद्धेति। सौहृदवद्वस्तु केवलयैव भक्त्या भवेदित्युपपादितं तृतीयस्कन्धे॥ १२॥ ❀ ❀ त्वञ्च मयि बद्धसौहृद इत्यतो मन्निदेश एव वर्तस्वेत्याह मम इति चतुर्भिः। प्राकृतसम्पद्विपदोः समबुद्धिः। समाना सत्त्वादिगुणैरुत्तममध्यमाधमा यस्य सः। मयेश्वरेणोपक्लृप्ताः सम्पादिता येऽखिललोका अमात्यादयस्तैः संयुतः। ईश्वरदत्तैश्वर्योऽहमीश्वराज्ञापालनरूपं प्रजारक्षणं करोमीति बुद्ध्येत्यर्थः॥ १३॥ ❀ ❀ अन्यस्यापि राज्ञः प्रजापालनमेव धर्म इत्याह। सांपराये परलोके प्रजानां सुकृतात् हर्ता ग्रहीता॥ १४॥ ❀ ❀ द्विजाग्र्यैः शास्त्राभिज्ञैर्विप्रैरनुमतोऽथ चानुवृत्तः परम्पराप्राप्तो धर्म्म एव प्रधानं यस्य सः। अन्यतमस्तत्रानासक्तः, ऐकपद्यपाठे कर्म्मधारयः। अस्याः पृथिव्याः॥ १५॥ ❀ ❀ अत्यनुकम्पाविगतगाम्भीर्यं आह वरञ्चेति। गुणशीलाभ्यां यन्त्रितो वशीकृतः प्राकृताभ्यां ताभ्यां वशीकारासम्भवादप्राकृते ते भक्त्युत्थे एव ज्ञेये। गुणो दयाक्षमादिः। शीलं विनयस्नेहादिमयः स्वभावः। नाहमिति 'न रोधयति मां योगः' इत्यादेः यद्यस्मात् समं तुल्यमेव सर्व्वेषां चित्तवर्त्ती चित्ताधिष्ठाता सर्वत्रोदासीन एव न तु कस्यापि वश इत्यर्थः॥ १६-१७॥ ❀ ❀ स्वेनाश्वापहरणेन॥ १८॥ ❀ ❀ समुज्जिहानया सम्यगुदयन्त्या प्रतिक्षणं वर्द्धमानयेत्यर्थः। एनम् पृथुम्॥ १९-२०॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एवं भूतद्रोहादिरहितानां मुमुक्षूणां साधनसम्पत्त्या मुक्तिमुक्त्वा अथ साधनकालेऽपि आत्मानात्मविवेकबलाज्जन्ममरणभयरहितत्वं संपद्विपद्योगे हर्षशोकरहितत्वं चाह उदासीनेति द्वाभ्याम्। द्रव्यज्ञानक्रियात्मनां देहावयवानां पञ्चभूतज्ञानकर्मेन्द्रियमनसामध्यक्षं तेभ्यो विलक्षणमित्यर्थः, उदासीनम् इहामुत्र निर्विण्णम्, भजनानन्दतृप्तत्वादनुदासीनमपीतीवशब्दार्थः, कूटस्थं निर्विकारमिममात्मानं यो वेद स शोभनं जन्ममरणादिभयाभावम् आप्नोति॥ ११॥ ❀ ❀ यतो भिन्नस्य जीवादन्यस्य द्रव्याणि क्रिया कर्मेन्द्रियाणि कारकाणि ज्ञानेन्द्रियाणि चेतना बुद्धिः–एतदात्मकस्य लिङ्गस्य अत्र जीवोऽस्तीति जीवात्मज्ञापकञ्च देहस्य गुणप्रवाहः सत्त्वादिगुणनिर्मितो देहादिजन्ममरणप्रवाहो न तु जीवात्मनः, अतः शोभनं प्राप्नोतीत्यन्वयः। अत एव संपत्सु च दृष्टासूपस्थितासु मयि बद्धसौहृदाः न विक्रियन्ते हर्षशोकाभ्यां न युज्यन्ते॥ १२॥ ❀ ❀ अथ विशेषतः श्रीपृथुं प्रत्याह सम इत्यादि। समानाः उत्तमादयो यस्य सः सुखे दुःखे च समः मयोपक्लृप्तैरुपयोजितैरखिलैर्लोकैरमात्यादिभिः संयुतः अखिललोकानां रक्षणं विधत्स्व॥ १३॥ ❀ ❀ यद्यतो राजा लोकरक्षणात् सांपराये परलोके प्रजाभिः कृतात्सुकृतात् षष्ठमंशं हर्ता हरति अन्यथा विपक्षे करहारः सन् प्रजाभिर्हृतपुण्यः प्रजानामघमत्ति, अतः राज्ञः प्रजापालनमेव श्रेयः॥ १४॥ ❀ ❀ एवमस्याः प्रजायाः अविता द्विजाग्र्यानुमतः विप्रसंमतश्चासावनुवृत्तः सम्प्रदायागतो यो धर्मस्तत्प्रधानावन्यतमावर्थकामौ यस्य अनुरक्ता लोका यस्मिन् सः त्वं गृहोपयातान् सिद्धान् सनत्कुमारादीन् द्रष्टासि॥ १५॥ ❀ ❀ हे मानवेन्द्र मन्मत्तः कञ्चन वरं वृणीष्व, यतोऽहं ते गुणः समचित्तत्वं शीलं विष्णुप्रावण्यं ताभ्यां गुणशीलाभ्यां यन्त्रितः वशीकृतः यतोऽहं मखादिभिर्न सुलभः, किन्तु समचित्तवर्ती समचित्तेषु वर्तनशीलः॥ १६-१७॥ ❀ ❀ पादयोः स्पृशन्तं क्षमापयितुं चरणस्पर्शं कुर्वन्तं कर्मणाश्वापहरणपाषण्डप्रवर्तनात्मकेन, परिष्वज्यालिङ्ग्य विद्वेषं विससर्ज्ज त्यक्तवान्॥ १८॥ ❀ ❀ उपहृतार्हणः समर्पितपूजार्होपायनः समुज्जिहानया समृद्ध्या॥ १९॥ ❀ ❀ अनुग्रहेण विलम्बितः॥ २०॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

द्रव्यं देहः ज्ञानानि ज्ञानेन्द्रियाणि क्रिया कर्मेन्द्रियाणि आत्मा मनः तेषामध्यक्षं द्रष्टारमपि यस्तूदासीनमिव साक्षिमात्रमिममात्मानं वेद स शोभनं शुद्धमक्षरं ब्रह्माप्नोतीत्यन्वयः। द्रष्टुरपि उदासीनतायां हेतुमाह—कूटस्थमिति। निर्विकारमित्यर्थः॥ ११॥ ❀ ❀ परित्यक्तगुण इति सर्वतो विरक्ततोक्ता। तत्र शुद्धचित्तानां विवेकज्ञानं हेतुरिति विवेकपूर्वकं सदाचारं दर्शयति—भिन्नस्येति। द्रव्याणि महाभूतानि, क्रिया इन्द्रियाणि, कारकाः इन्द्रियाधिष्ठातृदेवाः, चेतना चिदाभासयुक्तमन्तःकरणम्, तदात्मनस्तत्संघातात्मकस्य आत्मनः सकाशाद्भिन्नस्य लिङ्गस्य देहस्यैव गुणप्रवाहो जन्ममरणसुखदुःखादिविकारो नात्मन इति पश्यन्तः सूरयो विवेकिनो दृष्टासु प्राप्तासु सम्पत्सु विपत्सु च न विक्रियन्ते हर्षशोकादि न कुर्वन्तीत्यन्वयः। ननु मनसः सर्वदा सावलम्बनत्वदर्शनाद्यदि ते सर्वतो विषयतो विरक्तास्तदा तेषां मनसोवलम्बनं किमित्याशङ्क्याह—मयीति। मयि सच्चिदानन्दस्वरूपे बद्धं सौहृदं प्रेम यैस्ते तथा॥ ११॥ ❀ ❀ यद्यपि विवेकिनामेव व्यवहारस्तथापि त्वं तु सुखे च दुःखे च समः तथा समाना उत्तममध्यमाधमा यस्य स तथाभूतश्च सन्नखिललोकरक्षणं विधत्स्व कुर्वित्यन्वयः। कथमेवं समत्वं संपद्यत इत्याकाङ्क्षाभा-

लक्ष्येन्द्रियादिजयादित्याह—जितेति। जितानीन्द्रियाण्याशयोऽन्तःकरणं च येन स तथा सन्। रक्षायां तव सामर्थ्यमस्तीति सूचयन् सम्बोधयति—हे वीरेति। वीरेणाप्येकेन मया कथं रक्षणं कर्तुं शक्यं तत्राह—मया परमेश्वरेणोपक्लृप्ताः सम्पादिता येऽखिला लोका अमात्यादयस्तैः संयुत इति॥ १३॥ ❀ ❀ ननु विवेकिनो यदि सर्वं त्यक्त्वा त्वामेव भजन्ते तदा दण्डशुल्कादिसाक्षेपे क्रूरे कर्मणि प्रजारक्षणे मां कथं नियोजयसीत्याशङ्क्य तत्रैवाधिकारादित्याह—श्रेय इति। प्रजापालनमेव राज्ञः श्रेयस्करम्। तत्र हेतुमाह—यदिति। यत् यस्मात् सांपराये परलोके प्रजापालकः प्रजाभिः कृतात्सुकृतात् षष्ठमंशं हर्त्ता हरति तत्फलं भुङ्क्ते। विपक्षे दोषमाह—अन्यथेति। अन्यथा प्रजाभिर्हृतं पुण्यं यस्य सः। राजा प्रजानामघमत्ति पापफलं भुंक्त इत्यर्थः। अन्यथेत्येतदेव विवृणोति-करहारः सन्नरक्षिता चेदिति॥ १४॥ ❀ ❀ तर्हि मम मोक्षो न स्यात्, नच राज्याधिकारसमाप्त्यनन्तरं तदपि भविष्यतीति वाच्यम्। त्वदुपदिष्टतत्त्वविस्मृतिसम्भवादित्याशङ्क्याह—एवमिति। एवं सति प्रजापालनस्य तवावश्यकत्वे सति द्विजाग्र्याणां वेदवादिनामनुमतः संमतश्चासावनुवृत्तः परंपराप्राप्तश्च यो धर्मः स प्रधानो मुख्यो याभ्यामन्यतमाभ्यामर्थकामाभ्यां तौ तादृशावर्थकामौ यस्य स तथा। अत एव अनुरक्तो लोको यस्मिन् सः। अस्याः पृथिव्याः अविता रक्षकश्च सन् ह्रस्वेनाल्पेन कालेन स्वगृहोपयातान् स्वगृहे प्राप्तान् सिद्धान् सनत्कुमारादीन् द्रष्टा त्वं द्रक्ष्यसीत्यन्वयः। तथा च मया संक्षेपत उपदिष्टमेव तत्त्वं पुनर्विस्तरशः सनत्कुमारस्त्वामुपदेक्ष्यति तेन ज्ञानदार्ढ्याद्राज्याधिकारसमाप्त्यनन्तरं तव मोक्षोपि भविष्यतीति भावः॥ १५॥ ❀ ❀ अन्तःकरणस्यात्यन्तशुद्धतायां पुरुषस्य विषयाः सदोषत्वादपकृष्टा अतस्त्याज्या भगवान् परमानन्दस्वरूपत्वादुत्कृष्टोऽतो ग्राह्य इति विवेको भवति तदा च विषयान्हित्वा भगवन्तं भजत इति राज्ञः परमशुद्धतां लोके ख्यापनाय सर्वहृदयज्ञत्वेन तन्निष्कामत्वं जानन्नपि तं वरवरणाय चोदयति—वरमिति। हे मानवेन्द्र! मत् मत्तस्त्वं कञ्चन यथेष्टं वरं वृणीष्व गृहाण। मम प्रसादस्य दुर्लभत्वेपि तद्योग्यस्त्वमित्याशयेन संबोधयति—हे मानवेन्द्र इति। दुर्लभत्वमेव दर्शयति—नाहमिति। अजितान्तःकरणानां मखैर्यज्ञादिकर्मभिर्गृहस्थधर्मैस्तथा तपोभिराहारादिनियमैर्ब्रह्मचारिवानप्रस्थयतिधर्मैस्तथा योगेन यमनियमाद्यष्टाङ्गेन वाहं न सुलभः प्रसन्नो न भवामि। यत् यस्मात् समं सुखदुःखादिषु स्वकीयपरकीयादिषु च वैषम्यरहितं चित्तं येषां तेष्वेव वर्तितुं शीलं यस्य स तथाभूतोऽहम्। तर्हि मयि कथं प्रसन्नोसीत्याशङ्क्य गुणशीलादिमत्त्वेन समत्वादित्याह—तेऽहमिति। ते तव ये गुणाः शमदमादयः शीलं निर्वैषम्यादिस्वभावस्तैरहं यन्त्रितो वशीकृतः प्रसन्न इत्यर्थः॥ १६॥ ❀ ❀ भगवदाज्ञानुसरणमेव परमपुरुषार्थहेतुरतस्तामङ्गीकृतवानित्याह—स इति। स विश्वजित् पृथिवीदोहनेन सर्ववृत्तिसंपादकत्वात् सर्ववशी पृथुः लोकगुरुणा ब्रह्मादिसर्वलोकपूज्येन भगवता। सर्वलोकपूज्यत्वे हेतुमाह—विष्वक्सेनेनेति। विष्वक् सर्वेषु लोकेषु सेना आज्ञा यस्य तेनेत्थं वर्णितेन प्रकारेणानुशासितः अनुशिक्षितः संस्तस्य हरेरादेशमाज्ञां शिरसा जगृहे बहुमानेनाङ्गीचकारेत्यन्वयः॥ १७॥ ❀ ❀ क्षमापयितुं पादयोः स्पृशन्तं यतः स्वेन कर्मणा अश्वापहरणलक्षणेन व्रीडितं लज्जितं शतक्रतुमिन्द्रं प्रेम्णा परिष्वज्य ह निरवशेषं विद्वेषं विससर्ज त्यक्तवानित्यन्वयः॥ १८॥ ❀ ❀ एवं स्वाज्ञानुसरणादिना भगवतोपि तस्मिन्ननुग्रहातिशयो जात इत्याह-भगवानपीति द्वयेन। अपिशब्दद्वयप्रयोगोऽनुग्रहस्याश्चर्यत्वप्रदर्शनार्थः। भगवान् अलौकिकैश्वर्यादिषड्गुणसंपन्नोपि प्रस्थानाभिमुखो गमनायोद्यतोप्यनुग्रहेण विलम्बितः कृतविलम्ब एनं पृथुं पश्यन्न प्रतस्थे प्रयाणं न कृतवानिति द्वयोरन्वयः। न च तस्य लौकिकोपि पदार्थः कश्चिद् दुर्लभ इति सूचयन् विशिनष्टि—विश्वात्मेति। विश्वं सर्वमपि जगदात्मा यस्य स तथा। ननु तर्ह्येवं सर्वतः परिपूर्णस्यैवमनुग्रहे को हेतुस्तत्राह—सुहृत्सतामिति। सतां सज्जनानां सुहृत् मित्रमित्यर्थः। पृथोः सज्जनत्वादेवमनुग्रह इति भावः। तस्य सज्जनत्वं प्रदर्शयति—पृथुनेत्यादिविशेषणद्वयेन। समुज्जिहानया प्रतिक्षणं वर्द्धमानया भक्त्या पृथुनोपहृतं समर्पितमर्हणं पूजासाधनमर्घपाद्यादि यस्मै सः। तथाभूतया भक्त्यैव तेन गृहीते चरणाम्बुजे यस्य सः। भगवतोनुग्रहदृष्ट्या तस्य सर्वसंतापनिवृत्तिर्जातेति सूचयन् पुनर्विशिनष्टि—पद्मपलाशाक्ष इति। पद्मपलाशवच्छोभने संतापहारके अक्षिणी यस्य सः॥ १९-२०॥

## भाषानुवादः

जो पुरुष यह जानता है कि शरीर, ज्ञान, क्रिया और मनका साक्षी होनेपर भी कूटस्थ आत्मा उनसे निर्लिप्त ही रहता है, वह कल्याणमय मोक्षपद प्राप्त कर लेता है॥ ११॥ ❀ ❀ राजन्! गुणप्रवाहरूप आवागमन तो भूत, इन्द्रिय, इन्द्रियाभिमानी देवता और चिदाभास—इन सबकी समष्टिरूप परिच्छिन्न लिङ्गशरीरका ही हुआ करता है; इसका सर्वसाक्षी आत्मा से कोई संबंध नहीं है। मुझमें दृढ़ अनुराग रखनेवाले बुद्धिमान् पुरुष सम्पत्ति और विपत्ति प्राप्त होनेपर कभी हर्ष-शोकादि विकारोंके वशीभूत नहीं होते॥ १२॥ ❀ ❀ इसलिये वीरवर! तुम उत्तम, मध्यम और अधम पुरुषोंमें समानभाव रखकर सुख-दुःखको भी एक-सा समझो तथा मन और इन्द्रियोंको जीतकर मेरे ही द्वारा जुटाये हुए मन्त्री आदि समस्त राजकीय पुरुषोंकी सहायतासे सम्पूर्ण लोकोंकी रक्षा करो॥ १३॥ ❀ ❀ राजाका कल्याण प्रजापालनमें ही है। इससे उसे परलोकमें प्रजाके पुण्यका छठा भाग मिलता है। इसके विपरीत जो राजा प्रजाकी रक्षा तो नहीं करता; किन्तु उससे कर वसूल करता जाता है, उसका सारा पुण्य तो प्रजा छीन लेती है और बदलेमें उसे प्रजाके पापका भागी होना पड़ता है॥ १४॥ ❀ ❀ ऐसा विचारकर यदि तुम श्रेष्ठ ब्राह्मणोंकी

सम्मति और पूर्व-परम्परासे प्राप्त हुए धर्मको ही मुख्यतः अपना लो और कहीं भी आसक्त न होकर इस पृथ्वीका न्यायपूर्वक पालन करते रहो तो सब लोग तुमसे प्रेम करेंगे और कुछ ही दिनोंमें तुम्हें घर बैठे ही सनकादि सिद्धोंके दर्शन होंगे ॥ १५ ॥ ❁ ❁ राजन्! तुम्हारे गुणोंने और स्वभावने मुझको वशमें कर लिया है। अतः तुम्हें जो इच्छा हो, मुझसे वर माँग लो। उन क्षमा आदि गुणोंसे रहित यज्ञ, तप अथवा योगके द्वारा मुझको पाना सरल नहीं है; मैं तो उन्हींके हृदयमें रहता हूँ जिनके चित्तमें समता रहती है ॥ १६ ॥ ❁ ❁ श्रीमैत्रेयजी कहते हैं—विदुरजी! सर्वलोकगुरु श्रीहरिके इस प्रकार कहनेपर जगद्विजयी महाराज पृथुने उनकी आज्ञा शिरोधार्य की ॥ १७ ॥ ❁ ❁ देवराज इन्द्र अपने कर्मसे लज्जित होकर उनके चरणोंपर गिरना ही चाहते थे कि राजाने उन्हें प्रेमपूर्वक हृदयसे लगा लिया और मनोमालिन्य निकाल दिया ॥ १८ ॥ ❁ ❁ फिर महाराज पृथुने विश्वात्मा भक्तवत्सल भगवान्‌का पूजन किया और क्षण-क्षणमें उमड़ते हुए भक्तिभावमें निमग्न होकर प्रभुके चरणकमल पकड़ लिये ॥ १९ ॥ ❁ ❁ श्रीहरि वहाँसे जाना चाहते थे; किन्तु पृथुके प्रति जो उनका वात्सल्यभाव था, उसने उन्हें रोक लिया। वे अपने कमलदलके समान नेत्रोंसे उनकी ओर देखते ही रह गये, वहाँसे जा न सके ॥ २० ॥

स आदिराजो रचिताञ्जलिर्हरिं विलोकितुं नाशकदश्रुलोचनः।
न किञ्चनोवाच स बाष्पविक्लवो हृदोपगुह्यामुमधादवस्थितः ॥ २१ ॥
अथावमृज्याश्रुकला[1] विलोकयन्नतृप्तदृग्गोचरमाह पूरुषम्।
पदा स्पृशन्तं क्षितिमंस उन्नते विन्यस्तहस्ताग्रमुरङ्गविद्विषः ॥ २२ ॥

पृथुरुवाच

वरान् विभो त्वद्वरदेश्वराद् बुधः कथं वृणीते गुणविक्रियात्मनाम्।
ये नारकाणामपि सन्ति देहिनां तानीश कैवल्यपते वृणे न च ॥ २३ ॥
न कामये नाथ तदप्यहं क्वचिन्न यत्र युष्मच्चरणाम्बुजासवः।
महत्तमान्तर्हृदयान्मुखच्युतो[2] विधत्स्व कर्णायुतमेष[3] मे वरः[4] ॥ २४ ॥
स उत्तमश्लोक महन्मुखच्युतो[5] भवत्पदाम्भोजसुधाकणानिलः।
स्मृतिं पुनर्विस्मृततत्त्ववर्त्मनां[6] कुयोगिनां नो वितरत्यलं वरैः ॥ २५ ॥
यशः शिवं सुश्रव आर्यसङ्गमे यदृच्छया चोपशृणोति ते सकृत्।
कथं गुणज्ञो विरमेद्विना[7] पशुं श्रीर्यत्प्रवव्रे गुणसंग्रहेच्छया ॥ २६ ॥
अथाभजे[8] त्वाखिलपूरुषोत्तमं गुणालयं पद्मकरेव लालसः।
अप्यावयोरेकपतिस्पृधोः कलिर्न स्यात्कृतत्वच्चरणैकतानयोः ॥ २७ ॥
जगज्जनन्यां जगदीश वैशसं स्यादेव यत्कर्मणि नः समीहितम्।
करोषि फल्ग्वप्युरु दीनवत्सलः स्व एव धिष्ण्येऽभिरतस्य किं तया ॥ २८ ॥
भजन्त्यथ त्वामत एव साधवो व्युदस्तमायागुणविभ्रमोदयम्।
भवत्पदानुस्मरणादृते सतां निमित्तमन्यद्भगवन्न विद्महे ॥ २९ ॥
मन्ये गिरं ते जगतां विमोहिनीं वरं वृणीष्वेति भजन्तमात्थ यत्।
वाचा नु तन्त्या यदि ते जनोऽसितः कथं पुनः कर्म करोति मोहितः[9] ॥ ३० ॥

---

१. प्रा० पा०—कलां। २. प्रा० पा०—च्युतं विध०। ३. प्रा० पा०—कर्णामृत०। ४. प्रा० पा०—वचः। ५. प्रा० पा०—मुखाच्च्युतो। ६. प्रा० पा०—कर्मणां। ७. प्रा० पा०—विरमेद्दते। ८. प्रा० पा०—यथा। ९. प्रा० पा०—मोचितः।

अन्वयः—सः आदिराजः रचिताञ्जलिः अश्रुलोचनः हरिम् विलोकितुम् न अशकत् किंचन न उवाच सः बाष्पविक्लवः अवस्थितः अमुम् हृदा उपगुह्य अधात् ॥ २१ ॥ ❀ ❀ अथ अश्रुकलाः अवमृज्य गोचरम् पदा क्षितिम् स्पृशन्तम् उरंगविद्विषः उन्नते अंसे विन्यस्तहस्ताग्रम् पूरुषम् विलोकयन् अतृप्तदृक् आह ॥ २२ ॥ ❀ ❀ विभो ईश कैवल्यपते बुधः वरदेश्वरात् त्वत् वरान् कथम् वृणीते ये गुणविक्रियात्मनाम् नारकाणाम् देहिनाम् अपि सन्ति तान् न च वृणे ॥ २३ ॥ ❀ ❀ नाथ यत्र महत्तमान्तर्हृदयात् मुखच्युतः युष्मचरणाम्बुजासवः न अहम् तत् अपि क्वचित् न कामये कर्णायुतम् मे विधत्स्व एषः वरः ॥ २४ ॥ ❀ ❀ उत्तमश्लोक सः महन्मुखच्युतः भवत्पदाम्भोजसुधाकणानिलः विस्मृततत्त्ववर्त्मनाम् कुयोगिनाम् पुनः स्मृतिम् वितरति नः वरैः अलम् ॥ २५ ॥ ❀ ❀ सुश्रवः श्रीः यत् गुणसंग्रहेच्छया प्रवव्रे ते शिवम् यशः आर्यसंगमे यः सकृत् यदृच्छया उपशृणोति च पशुम् विना गुणज्ञः कथम् विरमेत् ॥ २६ ॥ ❀ ❀ अथ पद्मकरा इव लालसः अखिलपूरुषोत्तमम् गुणालयम् त्वा आभजे एकपतिस्पृधोः कृतत्वच्चरणैकतानयोः अपि आवयोः कलिः न स्यात् ॥ २७ ॥ ❀ ❀ जगदीश यत्कर्मणि नः समीहितम् जगज्जनन्याम् वैशसम् स्यात् एव दीनवत्सलः फल्गु अपि उरु करोति स्वे धिष्ण्ये एव अभिरतस्य तया किम् ॥ २८ ॥ ❀ ❀ अथ अत एव साधवः व्युदस्तमायागुणविभ्रमोदयम् त्वाम् भजन्ति भगवन् भवत्पादानुस्मरणात् ऋते अन्यत् सताम् निमित्तम् न विद्महे ॥ २९ ॥ ❀ ❀ यत् भजन्तम् वरम् वृणीष्व इति आत्थ ते गिरम् जगताम् विमोहिनीम् मन्ये जनः ते वाचा तन्त्या यदि असितः पुनः मोहितः कथम् नु कर्म करोति ॥ ३० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

भगवतस्तत्कृपातिरेकमुक्त्वा तस्य भक्त्युद्रेकमाह स इति द्वाभ्याम्। बाष्पविक्लवत्वेन तूष्णीमवस्थितः सन्नमुं हरिं हृदोपगुह्याधाद् धृतवान् ॥ २१ ॥ ❀ ❀ अतृप्तयोर्दृशोर्गोचरं विषयभूतम्। पदा क्षितिं स्पृशन्तमिति अयं भावः—न खलु देवाः पदा भुवं स्पृशन्त्यतः कृपापरवशो नूनं हरिरात्मानं विस्मृतवानिवेति। अत एव स्खलनपरिहारायैव गरुडस्योन्नते स्कन्धे विन्यस्तं हस्ताग्रं येन तम् ॥ २२ ॥ ❀ ❀ वरं वृणीष्वेति यदुक्तं तदसहमान आह। हे विभो वरदानां ब्रह्मादीनामीश्वराद्वरप्रदात्त्वत्तः सकाशाद् बुधः सन्कथं वरान्वृणीते। कीदृशान् गुणैर्विक्रियत इति गुणविक्रियोऽहंकारः स एवात्मा येषां तेषां ब्रह्मादीनां सम्बन्धिनः देहाभिमानिनां भोग्यानिति वा। तथा चेत्स बुध एव न भवतीत्यर्थः। जुगुप्सितत्वादपीत्याह ये इति। बुध एवाहमपि न वृणे इति समुच्चयाय चकारः ॥ २३ ॥ ❀ ❀ कैवल्यपत इति संबोधनात्कैवल्यं वरिष्यतीति मा शंकीरित्याह नेति। महत्तमानामन्तर्हृदयान्मुखद्वारेण निर्गतो भवत्पदांभोजमकरन्दो यशःश्रवणादिसुखं यत्र नास्ति तादृशं चेत्कैवल्यं तर्हि तत्क्वचित्कदाचिदपि न कामये। तर्हि किं कामयसे तदाह यशःश्रवणाय कर्णानामयुतं विधत्स्व। ननु कोऽप्येवं न वृतवान् किमन्यचिन्तयेत्याह—मम तु एष एव वरः ॥ २४ ॥ ❀ ❀ ननु तर्हि कैवल्याभावे रागद्वेषाद्याकुलानां भक्तिसुखमपि न स्यादित्याशंक्याह स इति। भवत्पदांभोजसुधायाः कणो लेशस्तत्सम्बन्धी योऽनिलः स एव दूरादपि किंचिद्यशःश्रवणमात्रमित्यर्थः। विस्मृतं तत्त्ववर्त्म यैः कुयोगिभिस्तेषामपि पुनः स्मृतिमात्मज्ञानं वितरति अतो न खलु भक्तानां रागद्वेषादिसंभवोऽतो नोऽस्माकं सारग्राहिणामन्यैर्वरैरलम्। भक्तावेव मोक्षादिसर्वसुखान्तर्भावादिति भावः ॥ २५ ॥ ❀ ❀ ननु भक्तिर्मुक्तिफलैवातः फलं विहाय साधने भवतः कोऽयमाग्रह इत्याशंक्याह। हे सुश्रवः मंगलकीर्ते ते शिवं यशः सतां संगमे यः सकृदपि यदृच्छयाप्युपश्रृणोति गुणज्ञश्चेत्स पशुं विनाऽन्यः कथं विरमेत। गुणातिशयं सूचयति। श्रीर्यद्यश एव प्रकर्षेण वृतवती गुणानां सर्वपुरुषार्थानां संग्रहः स्वस्मिन्समाहारस्तदिच्छया ॥ २६ ॥ ❀ ❀ अतो लक्ष्मीरिवान्यवरत्यागेन त्वामेवाहं भज इत्याह अथेति। लालस उत्सुकः सन् कर्मणि क्रियमाणे यथेन्द्रेण सह कलिरेवं भक्तावपि किं लक्ष्म्या सह कलिः स्यादिति वितर्कयति। एकस्मिन्पत्यौ स्पर्धमानयोरावयोरपि किं कलिर्न स्यादिति काका वितर्कः। ननु पर्यायेण सेवायां न स्यात्। नैवम्। कृतस्त्वच्चरणयोरेवैकस्तानो मनोविस्तारो याभ्यां तयोः ॥ २७ ॥ ❀ ❀ भवतु वा कलिस्तथापि भजेयमेवेत्याह। जगज्जनन्यां वैशसं विरोधः स्यादेव, तत्र हेतुर्यस्याः कर्मणि चरणसेवालक्षणे नः समीहितमिच्छा भवति तथापीन्द्रविरोधे मत्पक्षपातवदत्रापि मयि तव पक्षपात एव स्यादित्याह। फल्गु तुच्छमप्युरु बहु करोषि यतो दीनेषु वत्सलो दयावान् स्वे स्वरूप एव रतस्य तव तया लक्ष्म्या किं प्रयोजनम्। तां नाद्रियस इत्यर्थः ॥ २८ ॥ ❀ ❀ यतस्त्वं दीनवत्सलोऽत एव साधवो निष्कामा अथ ज्ञानानन्तरमपि त्वां भजन्ति। कथंभूतम्। मायागुणानां विभ्रमो विलासस्तस्योदयः कार्यं स निरस्तो यस्मिंस्तम्। ते मां किमर्थं भजन्ति तत्राह। भवत्पदानुस्मरणाद्भिनान्यत्तेषां निमित्तं फलं न विद्मः ॥ २९ ॥ ❀ ❀ वैरं प्रलोभनं च कृपालोस्तवानुचितमित्याशयेनाह मन्य इति। नु अहो ते वाचातन्त्या यदि जनोऽयमसितोऽबद्धः स्यात्तर्हि पुनः पुनः फलैर्मोहितः सन्कथं कर्म करोति ॥ ३० ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स पृथुः वाक्यभेदात्स इत्यस्य पौनरुक्त्यं न ॥२१॥ ❀ ❀ अतोऽत्र। अत एव विस्मृतात्मत्वादेव। अथ हृदि धारणोत्तरम् ॥२२॥ ❀ ❀ विभो इति। न हि विभो वरं वृणीष्वेति कथनं युक्तं विभुत्वहानिप्रसंगादिति भावः। आत्मात्मत्वेनाभिमतः। कैवल्यपते इति। कैवल्यकामोऽपि यान्न वृणीते तानहं कैवल्यस्याप्यसहिष्णुः कथं वृण इति भावः। ईशेति। स्वाभिमतदाने सामर्थ्यं द्योतयति ॥२३॥ ❀ ❀ कैवल्यमपि येभ्य एव रोचते तेभ्य एव तद् दीयतामित्यभिप्रायेणैव मया तच्छब्देनामन्त्रितोऽसीत्याह-नेति। वरश्च मत्कंचनेति यदुक्तं तत्र सामान्यतो वरानहं नैव कामये विशेषतोऽपि कञ्चन वरं कैवल्यं तदपि न, कुतः यत्र कैवल्ये अन्तर्हृदयेनास्वाद्यानन्दोद्रेकात्कीर्त्यमान इत्यर्थः। "शुकमुखादमृतद्रवसंयुतम्" इतिवन्महदास्वाद्यत्वे सति तस्यापि माधुर्य्यमुदयत इति भावः। मधुरमपि जलं क्षारभूमिप्रतिष्ठं यथा विरसीभवति तथैवावैष्णवमुखनिर्गतो भगवद्गुणोऽपि न रोचको भवतीति व्यतिरेकश्च गम्यः। महतां गुणकथानाश्चानंत्यात्। यत्र यत्र यैर्यैर्या या गुणकथाः कीर्त्यमानास्तासामेकामपि गुणकथां त्यक्तुं न शक्नोमीत्यतिलोभात्कर्णानन्यस्पृहा, तेन कैवल्यकामा येभ्य इंद्रियेभ्यो द्रुह्यन्ति तानेवाहं कामय इति द्योतितम् ॥२४॥ ❀ ❀ अत्राक्षिपति-नन्विति। इत्यर्थ इति। तत्सम्बन्धी तावदनिलोऽपि कुतः कणः कुतस्तरां सा सुधा तद्गुणकथालेशप्रसंगानिति भावः। अतः प्राप्तज्ञानत्वात्। अतो रागाद्यभावात्। इत्यर्थ इति। "या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणेन वा स्यात्। सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्" इत्युक्तेरिति भावः ॥२५॥ ❀ ❀ पुनराक्षिपति-नन्विति। यतो मुक्तिरेव भक्तिफलमतो हेतोः। अत्र विश्वनाथः-ननु मत्कथास्वादादपि विरम्य योगीन्द्रस्पृहणीयं कैवल्यमेव गृहाणेति तत्राह-यश इति। हे सुश्रवः मंगलकीर्त्ते यशःश्रवणेनैव "कैवल्यसंमतपथस्त्वथ भक्तियोगः। को निर्वृतो हरिकथासु रतिं न कुर्यात्" इति न्यायेन न मोक्षार्थं यत्नांतरं कार्यमिति भावः। तव यशः यदृच्छयाऽयत्नतोऽकस्मात्प्राप्तमपि सकृदपि यः शृणोति गुणज्ञश्चेत्स कथं तस्माद्विरमेत् पशुं विनेति यो विरमेत्स मनुष्येषु पशुर्यो न विरमेत्स पशुष्वपि मनुष्य इति ध्वनिः। "तत्रापि चित्तबडिशं शनकैर्वियुंक्ते" इत्याद्युक्तलक्षणलक्षितात्मद्यशःपीयूषाद्विरमते योगिने "त्रैवर्गिकास्ते पुरुषा विमुखा हरिमेधसः। कथायाम्" इत्याद्युक्तस्वभावाय सकर्मणे च पशवे पिण्याकतुषादिकमिव कैवल्यं देहि न तु मह्यं मनुष्यायेत्यनुध्वनिः। ननु मद्यशःस्वादादपि कैवल्यादिकमधिकं भवेदित्यत्र योगी सकर्मा च प्रमाणं कैवल्यादिभ्यो मद्यशःस्वादोऽधिक इति भवन्मते कः प्रमाणमिति तत्राह-श्रीर्महालक्ष्मीर्ब्रह्मादिसर्वजगत्पूज्या सर्वगुणपंडितापि तद्यशो वत्रे गुणानां तदीयरूपरसगंधशब्दस्पर्शलीलालावण्यकारुण्यानां सम्यग्ग्रहणमास्वादनसामर्थ्यं तदिच्छयेति सैवात्र प्रमाणं तदुपलक्षिता अन्येप्यास्वादितचरकैवल्यसुखमपि लघूकरिष्णवो यशस्येव रममाणाः शुकादयोऽपि प्रमाणं घासबुद्ध्यैवेक्षुपल्लवानि चरन्नप्यन्तस्तदीयकाण्डेष्वरुचिर्घासमेवास्वादयन्वृष इव योगी सहकारपल्लवानि त्यक्त्वा कण्टकमेवास्वादयन्नुष्ट्र इव सकर्मा किं प्रमाणं भवेदिति भावः ॥२६॥ ❀ ❀ यतो लक्ष्मीस्त्वां भजतेऽतो हेतोः। अत्र विश्वनाथः—अतः केवलं भजनमेव वृणे न तु वरानित्याह। अथातः आ सम्यक् निष्काम एव केवलामेव भक्तिं कुर्वे न तु ज्ञानकर्मादिसिद्ध्यर्थं ज्ञानिसकर्मगुणीभूतामित्यर्थः। तत्रापि न नारदादिरिव किन्तु पद्मकरा लक्ष्मीरिव मार्जनलेपनपादसंवाहनव्यजनतांबूलार्पणादिभिरभीक्ष्णमेवेत्यर्थः। यतो लालसः लालसावान् "स महांल्लालसा द्वयोः" इत्यभिधानादत्यधिकं स्पृह इत्यर्थः। न चात्र पृथोरुज्ज्वलभाव आशंकनीयः, उत्तरश्लोके जगज्जनन्यामित्युक्तेः जगति च स्वस्यान्तःपाताल्लक्ष्म्यां जननीभावेन स्वस्य दास्यभावव्यक्तेः। अतः पद्मकरेवेत्युपमेयम्। परिचरणांशेनैव भगवच्चरणपरिचर्य्यायां तस्या एवातिप्रसिद्धेः लक्ष्म्यां परमभक्तिमतोऽपि स्वस्य वीरभक्तत्वं वाचैव द्योतयन्नाह-अपीति। अपरं स्वामिचरणोक्तिवत्। समाधये शंकते-नन्विति। परिहरति-नैषामिति ॥२७॥ ❀ ❀ तत्र विरोधे। तथापि लक्ष्म्या विरोधेऽपि। इत्यर्थ इति। तयोपादेयाभावादिति भावः। चक्रवर्ती तु-"कृपां तस्य समाश्रित्य प्रौढं नान्यमपेक्षते। अतुलं यो वहेत्कृष्णे प्रीतिं वीरः स उच्यते" इति वीरभक्तोचितं स्वस्वभावं प्रकटयन्नाह-जगज्जनन्यां जगन्मध्यवर्त्तित्वेन ममापि जनन्यां लक्ष्म्यां वैशसं विरोधः स्यादेव, कुतः यस्याः कर्मणि त्वत्पादसेवारूपे नोऽस्माकमिच्छा जाता सा खलु युष्मद्वक्षस्यासीना विराजतु, अहं पुत्र एव सर्वं युष्मच्चरणपरिचरणं करवाणि, तस्याः कोयमाग्रहो यत्परिचरणं विना न जीवतीति भावः। ननु त्वमर्वाचीनः सातिप्राचीना त्वं निकृष्टः सातिमहतीति तया सह किं विरुध्यसे। सत्यम्। तथापीन्द्रविरोधे मत्पक्षपातवदत्रापि मयि तव पक्षपातः स्यादित्याह-फल्गु तुच्छमपि त्वमुरु करोषि यतो दीनेषु वत्सलः। ननु त्वं तस्याः कोपान्न बिभेषि ? किं तत्र सत्यं न बिभेमीत्याह-स्व एव धिष्ण्ये स्वसामर्थ्यैभिरतस्य मम तया किं किमपीत्यर्थः। तत्कृपोद्रेक एव सामर्थ्यं यदुक्तं वीरभक्तोदाहरणेषु "प्रलम्बरिपुरीश्वरो भवतु का कृतिस्तेन मे कुमारमकरध्वजादपि न किंचिदास्ते फलम्। किमन्यदहमुद्धतः प्रभुकृपाकटाक्षश्रिया प्रियापरिषदग्रिमां न गणयामि तां मामपि" इति "धिष्ण्यं शक्तौ च पादे" इति पुंकांडेऽमरदत्तः। जगदीशेति। पितुस्तव पुरुषविशेषस्य रक्षकत्वे मातुः स्त्रियाः कोपेपि न मे हानिरिति भावः ॥२८॥ ❀ ❀ कार्यं वरस्पृहा त्वद्भजनस्यैवायं स्वभावो यद्वरस्पृहा निवर्त्तत इति। अनुस्मरणस्यैव सर्वसुखचूडामणेस्तदितरसुखतिरस्कारकत्वादिति भावः ॥२९॥ ❀ ❀ ननु तर्हीहं स्वभक्तं प्रति वरं वृणीष्वेति कथं ब्रवीमि तत्राह—मन्य इति। यदि कश्चिदपको भक्तस्त्वत्प्रलोभनाद्वरं वृणुते तदैव तस्य भक्तिरसवंचनात्सर्वनाश

इति भावः। "कर्मणा पितृलोकः, स्वर्गकामो यजेत" इत्यादिवेदलक्षणापि तव जगन्मोहिनीत्याह। नु अहो ते वाचा तया यदि जनोयमसितोऽबद्ध इति समानम्॥ ३०॥

### श्रीमद्वीरराघवव्याख्या

एवं भगवतो भक्ते पृथौ कृपातिरेक उक्तः, पृथोर्भगवति भक्त्युद्रेकमाह स इति द्वाभ्याम्। स आदिराजः पृथुः बद्धाञ्जलिरानन्दाश्रुपूर्णलोचनः अत एव हरिमवलोकितुं नाशकत् न समर्थोऽभूत् बाष्पैर्विक्लवः अधृष्टस्तूष्णीमवस्थितः सन् किञ्चिदपि नोवाच। एवं तु अमुं हरिं हृदा उपगुह्य आवृत्य संश्लिष्य आलिङ्ग्येति यावत्, अधात् धृतवान्॥ २१॥ ❀ ❀ अथानन्तरमश्रुकला अश्रुकणान् हस्तेनापमृज्य अतृप्तयोर्दृशोर्गोचरं विषयभूतं पदा चरणेन क्षितिं भूमिं स्पृशन्तम्। अयं भावः-न खलु देवाः पदा भुवं स्पृशन्ति अतः कृपापारवश्यान्नूनं हरिरात्मानं विस्मृतवानिवेति उरङ्गद्विषो वैनतेयस्य उन्नते अंसे स्कन्धे विन्यस्तं हस्ताग्रं येन तं पुरुषं परमपुरुषमाह उवाच॥ २२॥ ❀ ❀ तत्र यदुक्तं वरं वृणीष्वेति तदसहमान आह हे विभो! वरदानां ब्रह्मादीनामीश्वराद्वरदात्त्वत्तः सकाशात् बुधः अर्थकामादीनां सातिशयत्वं नश्वरत्वं च जानन् वरान् वृणीते। कीदृशान् ये वरा गुणविक्रियात्मनां सत्त्वादिगुणानुसारेण विक्रिया विकाराः यस्मिन्नात्मनि स्वभावे स आत्मा स्वभावो येषां नारकाणां संसारिणामपि देहिनां सन्ति तेषामपि भोग्या इत्यर्थः, तस्मात् हे कैवल्यपते! मुक्त्यधिपते मुक्तिप्रदेत्यर्थः हे ईश! सर्वान्तर तान् क्षुद्रान् न वृणे॥ २३॥ ❀ ❀ तर्हि कैवल्यमेव वरय तत्राह नेति। हे नाथ! महत्तमानां भागवतानामन्तर्हृदयान्मुखद्वारेण निर्गतो भगवत्पदाम्बुजमकरन्दो यशःश्रवणादिसुखं यत्र नास्ति तादृशं चेत् कैवल्यमपि तन्न कामये न वृणे। तर्हि किं कामयसे तत्राह—त्वद्गुणश्रवणाय मे मह्यं कर्णायुतं कर्णानामयुतम्-अयुतशब्द आनन्त्यपरः-गुणानामानन्त्यादनन्तगुणश्रवणार्थमनन्तश्रोत्राणि विधत्स्व देहि। एष एव ममाभिमतो वर इत्यर्थः॥ २४॥ ❀ ❀ किं मद्गुणश्रवणसाध्यं यदर्थं कर्णायुतं प्रार्थयसे तत्राह स इति। हे उत्तमश्लोक! महतां त्वद्भक्तानां मुखाच्च्युतः स भवतः पदाम्भोजयोर्या सुधा तस्या यो लेशः तत्सम्बन्धी योऽनिलो वायुः दूरादपि किञ्चिद्यशःश्रवणमात्रमित्यर्थः। विस्मृतं तत्त्ववर्त्म तत्त्वमार्गः यैः कुयोगिभिस्तेषामपि नः अस्माकं त्वद्विषयां स्मृतिं भक्तिं वितरति ददाति, अतो वरैः पुरुषार्थान्तरसाधनभूतैरलम्॥ २५॥ ❀ ❀ त्वद्विषयभक्तिवर्द्धकत्वात्त्वद्गुणश्रवणस्य यदृच्छयापि त्वद्गुणानेव शृणुयामित्याह यश इति। हे सुश्रवः! शोभनकीर्ते! सतां सङ्गमे सति सकृदपि यदृच्छयापीत्यनेन असकृदत्यादरेण यशसः श्रोतव्यता सूच्यते। तदुपपादयति यः कश्चित् पुमान् गुणज्ञः सारग्राही चेत् पशुं कर्मजडमृते कथं विरमेत्त्वद्गुणानुश्रवणादिति शेषः। अगुणज्ञः पशुश्चेत्त्वद्यशः सकृदाश्रुत्य ततो विरमेदित्यर्थः, गुणज्ञस्याविरामं सदृष्टान्तमुपपादयति यत् यस्मात् श्रीर्लक्ष्मीर्गुणानां भवदीयकल्याणगुणानां संग्रहेच्छया संस्मरणेच्छया प्रवव्रे त्वामिति शेषः। यद्वा गुणानां सर्वपुरुषार्थानां संग्रहः स्वस्मिन्समाहारस्तदिच्छया त्वद्यशः प्रवव्रे नितरां वृतवती॥ २६॥ ❀ ❀ अतो लक्ष्मीरिवान्यपरित्यागेन त्वामेवाहं भजामीत्याह अथेति। हे भगवन्! अखिलपुरुषोत्तममखिलेभ्यो बद्धमुक्तनित्येभ्यः पुरुषेभ्यः उत्तमं "पञ्चमी भयेन" इत्यत्र पञ्चमीति योगविभागात् समासः। अनेन जीवानामभजनीयत्वं विवक्षितमखिलपुरुषोत्तमत्वे हेतुः—गुणालयं त्रिविधेष्वपि चेतनेष्वसम्भावितनित्यनिरुपाधिकानन्याधीनसर्वज्ञत्वसर्वशक्तित्वसर्वकारणत्वसत्यज्ञानानन्तत्वादिकल्याणगुणाश्रयं त्वामेव पद्मकरेव लक्ष्मीरिव लालसः अभजं भजेयमित्यर्थः। ननु द्वयोरपि मां भजमानयोरिन्द्रेण सहेव तव कलहः स्यात्तत्राह—एकपतिस्पृधोः एकस्मिन् पत्यौ स्पर्द्धमानयोः एकभर्तृश्रद्धावतोरिति यावत्, आवयोः लक्ष्म्या मम च कलिः कलहो न स्यात् असंभावितः। असम्भवमेवोपपादयति त्वच्चरणैकतानयोः त्वच्चरणयोरेकतानो मनस ऐकाग्र्येण वृत्तिर्ययोस्तयोः आवयोः तत्कलिरित्येतत् क न भवेदेवेत्यर्थः, विषयस्यापरिच्छिन्नत्वादिति भावः॥ २७॥ ❀ ❀ भवतु नाम कलिस्तथापि भजेयमित्याह। हे जगदीश! जगज्जनन्यां जगन्मातरि लक्ष्म्यां वैशसं विरोधः स्यादेव। तत्र हेतुः यस्याः कर्मणि नः समीहितमिच्छा भवति, तथापीन्द्रविरोधेऽपि मत्पक्षपातवत् अत्रापि नः पक्षपातश्च स्यादित्याह। फल्गु तुच्छमपि उरु बहु करोषि यतो दीनेषु वत्सलः। स्व एव धिष्ण्ये स्वस्वरूप एवाभिरतस्य तव तया जगज्जनन्या किं प्रयोजनं तां नाद्रियस इत्यर्थः। यद्वा नन्वेतावन्तं कालं कर्म फलासङ्गेनानुष्ठितमधुना फलासङ्गाभावेऽप्यवश्यं मां भजतोऽप्यैहिकं फलं दास्यत्येव तत्राह जगज्जनन्यामिति। हे जगदीश! कर्मणि यज्ञादौ जगज्जनन्या प्रकृत्या यन्नः अस्माकं समीहितं फलं तद्वैशसमनर्थरूपं फलं संसाराभिप्रायेण वैशसमित्युक्तं स्यादेव प्राकृतं फलं स्यादेवेत्यर्थः, किन्तु फल्गु अपि प्राकृतफलसाधनत्वेन तुच्छमपि यज्ञादिकर्म उरु करोषि तस्मिन् स्वाराधनैकवेषतामापाद्य स्वविषयभक्त्युत्पादनद्वारानन्तस्थिरमुक्तिफलसाधनतासम्पादनेनोरु करोषीत्यर्थः। यतो भवान् दीनवत्सलः दोषादर्शी, अयम्भावः—यद्यप्यनादिप्रकृतिसम्बन्धात् यज्ञादिकर्मणां त्वदाराधनरूपतामजानन्तः पशुपुत्रवृष्ट्यन्नस्वर्गीयैहिकामुष्मिकफलसाधनतामापाततश्चोदनाभ्यः प्रतिपन्नामवबुध्य कर्मानुतिष्ठामः, तथापि त्वं दीनेषु दासेषु दोषादर्शी फल्गुफलाशां निवर्त्यानन्तस्थिरफलसाधनतामेव निष्पादयसीति। जगज्जगत्यामिति पाठे प्राणिपूर्णभुवन इत्यर्थः। फल्गुत्वमेवोपपादयति स्व एव धिष्ण्ये स्वस्वरूप एवाभिरतस्य स्वात्मारामस्येत्यर्थः, तया जनन्या किं प्रयोजनं स्वात्मारामस्य प्राकृतं फलं किमपि न भवति अविक्षुद्रमित्यर्थः, स्वात्मारामस्य जगज्जगत्यां फल्गु परलोकप्राप्तिरित्यर्थः॥ २८॥ ❀ ❀ एवमैश्वर्यान्तरेभ्य आत्मानुभवस्यातिशय

उक्तः, ततोऽपि भगवदनुभवस्यातिशयत्वं सूचयन् स्वात्मानुभवपूर्वकभक्तियोगस्य कर्तव्यतां सोदाहरणमाह भजन्तीति। अत एव केवलकर्मणां फलगुत्वादेव साधवो निष्कामा अथ प्रत्यगात्मतया याथात्म्यज्ञानानन्तरं त्वां भजन्ति, कथंभूतं व्युदस्तमायागुणविभ्रमोदयं मायाया ये गुणा रजस्तमआदयः तन्मूलको यो भ्रमः देहात्मभ्रमः स्वतन्त्रात्मभ्रमश्च तस्य य उदयः उद्रेकः व्युदस्तः निरस्तः मायागुणविभ्रमोदयो येन तं संश्रितमायागुणभ्रमनिरासकमित्यर्थः। निरतिशयानन्दरूपमात्मानुभवं लब्ध्वापि किमर्थं मां भजन्ते तत्राह। हे भगवन्! सतां भवत्पदानुस्मरणात् ऋते त्वत्पदाम्बुजस्मरणं विना अन्यन्निमित्तं फलं न विद्महे, नित्यनिरतिशयानन्तानन्दरूपे त्वच्चरणस्मरणसमुद्रे विप्रुडिव केवलस्वात्मानुभवोऽप्यतितुच्छ इति भावः॥ २९॥ ❁ ❁ वरैः प्रलोभनं कृपालोस्तवानुचितमित्याशयेनाह मन्य इति। त्वां भजन्तं मां वरं वृणीष्वेति यदात्थ अवोचः तां ते तव गिरं जगतां विमोहिनीं विषमिश्रपयःपानप्रलोभनवाक्यतुल्यां मन्ये। त्वदभजनात्प्राप्तसंसाराणां दैवात्त्वद्भजने सति पुनस्तेषां वरप्रलोभनैः संसारहेतुमेवापादयसि भक्तानुग्रहैकशीलस्य दयालोस्तव तन्निग्रहोऽनुचित इति भावः। नु अहो ते तव तन्त्या दामतुल्यया बन्धकया वाचा "अपाम सोमममृता अभूम, अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्यादिकया 'यामिमां पुष्पितां वाचमि'ति त्वदुक्तविधया वेदगिरा जनो लोकः यदि असितः अबद्धः स्यात् षिञ्-बन्धने आपाततः प्रतिपन्नफलाशानिर्मुक्तो मुमुक्षुः स्यादित्यर्थः, तर्हि कथं पुनः फलैर्मोहितः सन् कर्म प्रवृत्तिधर्मं करोतीत्यर्थः॥ ३०॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

न केवलं पृथोर्भक्त्युद्रेक आन्तरः। अपितु बाह्योऽपि दृश्यत इति भावेनाह स आदिराज इति। चक्षुर्वाङ्मव्यवहारोपरमेण पुनः किमकारीति तत्राह। दृढेति॥ २१॥ ❁ ❁ किमनया तूष्णीं व्यवस्थित्या द्रष्टुस्तन्द्रीहेतुभूतयेति निरूप्य हर्युक्तस्योत्तरं वक्तुमुपक्रमते अथेति। अश्रुकणान्नेत्रजलबिन्दून् अतृप्तयोरलंबुद्धिमप्राप्तयोर्दृशोर्गोचरं विषयमुरगविद्विषः गरुडस्य॥ २२॥ ❁ ❁ भगवदादिष्टं चेत्पृथुना गृहीतमथ तदुक्तेषु कस्योत्तरत्वेन वक्तव्यमस्यास्तीति न पश्याम्यन्यदतः किमाहेति तत्राह वरानिति। जातावेकवचनमिति न्यायेन वरं वृणीष्वेत्युक्तं तत्र देयत्वेनाभिमताः किमैहिका उत पारत्रिकाः, आद्ये स्रक्चन्दनवनितादयो यदि तर्हि तत्रापि वदामीत्याह वरानिति। सुलभत्वाद्वरणीया न भवन्तीत्याह गुणेति। गुणेषु विषयेषु विक्रिया विकारस्तेन युक्त आत्मा मनो येषां ते तथा तेषां नारकाणां नरकस्थानामपिशब्देन नरलोके किं वक्तव्यमिति सूचयति वैश्रवणात् पुलाकादानवत्कैवल्यपतेस्त्वदेतादृशवरादानं जुगुप्सितमित्यर्थः। द्वितीयोऽप्यनेनैव प्रत्युक्तः स्वर्गसारूप्यादिलक्षणमोक्षभेदेन पारत्रिका अपि द्विधा भिद्यन्ते। तत्र कैवल्येऽपि न ममाभिरुचिः किमुत स्वर्गादाविति॥ २३॥ ❁ ❁ एवं तर्हि तव कोऽभिप्राय इत्यत आह न कामय इति। कच्चिदित्यनेन पुरुषार्थमात्रमाक्षिपति, तर्हि मया देयं नास्तीत्यत्राह महत्तमेति। महत्तमानामन्तर्हृदयान्मुखद्वारेण च्युतं निःसृतं कर्णयोरमृतं तच्चरितलक्षणं विधत्स्वेत्यन्वयः। अनेन सर्वदैतत्तुभ्यमस्त्विति तत्र त्वदनुग्रह एव कारणमन्यथा न स्यादिति ध्वनयति। अभीष्टं पूरयति एष इति॥ २४॥ ❁ ❁ हस्तप्राप्तमणित्यागवत्कैवल्यादिपुरुषार्थत्यागेन तव किं फलितमिति तत्राह स इति। हे उत्तमश्लोक! महतां मुखद्वारेण च्युतः॥ २५॥ ❁ ❁ ननु मत्कथा भवता बहुशोऽश्रावि, अतोऽस्मादाग्रहाद्विरस्यान्यं वरं वरयेति चेत्तत्राह यश इति। हे सुश्रवः शोभनकीर्ते आर्याणां त्वत्तत्त्वज्ञानां सङ्गमे यदृच्छया प्रसङ्गतः प्राप्तं तव यशः कथारूपेण ग्रथितं भक्त्या उपश्रृणोति स गुणज्ञः सारज्ञः पुरुषः पशुमज्ञमृते कथमस्माद्विरमेदित्यन्वयः। तत्र हेतुः श्रीरिति। गुणस्त्वावृत्तिस्तत्संग्रहेच्छया यद्यशः प्रवव्रे इति यस्मात्तस्मात् अनेन यशःश्रवणमात्रावृत्त्या क्रियते चेदानन्दाभिवृद्धिः स्यादिति सूच्यते "गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु" इति यादवः॥ २६॥ ❁ ❁ अथ तस्मादहन्त्वामभजं भजामि तथाप्येकमेव पतिं स्पर्धेते इत्येकपतिस्पृधौ तयोस्त्वच्चरणैकतानयोस्त्वत्पदैकनिष्ठयोरावयोः कलिः कलहः कुतो न स्यात् अपि किं न स्यादेव॥ २७॥ ❁ ❁ जन्तुस्वभावमपेक्ष्य कलिः स्यादिति शङ्का न तु भगवद्भक्तस्येत्यभिप्रेत्याह जन्तोरिति। हे जगदीश! अखण्डेश "जगत्समस्तं विश्वं च निखिलं पूर्णमुच्यते" इति च जगत्यां राजप्रधानलोके विद्यमानस्य जन्तुसमूहस्य मिथो वैशसं हिंसालक्षणः कलहः स्यात् कलिस्वभावत्वात्। अत्रास्मद्विषये स न स्यान्निमित्ताभावादित्युक्तं यत्कर्मणीति। नोऽस्माकं कर्मणि त्वत्पूजालक्षणे यत्समीहितं शुभलक्षणं चेष्टितं तत्फल्गु अल्पमपि उरु महत्करोषि। तत्र हेतुगर्भविशेषणमाह दीनवत्सल इति। तत्राप्यल्पस्यापि शुभस्य फलप्रदानेन महत्त्वकरणं न तु परमाणुपरिमितस्य शुभस्य सुखपर्वतीकरणम्। तथा सति वैषम्यापातः स्यात् तस्य निर्दोषस्यासम्भवादिति बोद्धव्यम्। इतोऽपि कलिर्न स्यादित्याह। स्व एवेति, स्वस्वरूपभूते धिष्ण्ये महिम्न्येव "धिष्ण्यं तेजश्च सामर्थ्यं महिमा धाम चोच्यते" इत्यभिधानम्, स्वसुखार्थमन्यापेक्षां विनाभिरतस्य तव वात्सल्यं विना तया श्रियापि किमत्रापि वात्सल्यमेव कारणं येन येन भक्त्यतिशयः क्रियते तत्र तत्राधिकवात्सल्यं स्यादिति तात्पर्यमवबोद्धव्यम्, जगत्यां मूलप्रकृतौ श्रियां जन्तोरज्ञजनस्य वैशसं विषमबुद्धिलक्षणं स्यादेव। न तु पण्डितस्य, कुतः यद्यस्मात् नः कर्मणि श्रौतादिविषये वैशसं यत्संज्ञपनलक्षणं तत्समीचीनमीहितं भक्तिपूर्वकत्वात् अल्पपुण्यस्य तव न मद्भक्तियोग्यत्वमत्राह-करोषीति। "यमेवैष वृणुते तेन लभ्यः" इति श्रुतेः भक्तिवशत्वद्योतनाय फल्गवप्युरु करोषीत्युक्तमनेन हरौ भक्तिरवश्यं कर्तव्येति ज्ञायते, अन्यत्समिति भजनक्रियामपि न शक्नुमः कर्तुं त्वत्प्रसादातिरेकेणेत्याह जगज्जगत्यामिति। जगतामेजज्ञनोपलक्षणमेतन्

स्थावरेणापि युक्तायां जगत्यां लोके। नोऽस्माभिः कर्मणि विषये यत्समीहितं स्यात् तद्वैशसमेव हिंसारूपमेवात एव फल्गु तुच्छफलं ततः स्वतश्च तृप्तये नालमित्यर्थः। अथ भगवानुरु परिपूर्णं करोति, अत्र हेतुगर्भविशेषणं हे दीनवत्सलेति हेत्वन्तरमाह स्व एवेति। परिपूर्णानन्दरूपेऽभिरतस्य तया भजनक्रियया किं भृत्यवात्सल्यादुरु करोतीत्यर्थः। अथवा अप्येकपतिस्पृधोः कलिः स्यादिति सन्देहः कृतः, पूर्वमधुना तव मयि पक्षपातात्कलिरित्याह जगज्जगत्यामिति। जगतो जङ्गमस्थावरलक्षणस्य प्राणिसमूहस्य जगत्याधारभूता मूलप्रकृतिर्लक्ष्मीस्तस्यां वैशसं पीडा स्यादेव हे जगदीश! कुतः यद्यस्मादस्माकं कर्मणि श्रौतादौ फल्गवप्युरु करोति न तथा तयाकृतं हे दीनवत्सल! अथवा किमिदमाश्चर्यमित्याह स्व एवेति। तया श्रिया किं प्रयोजनं कामिनामुपकारिण्येत्यर्थः। जगज्जगत्यामित्येकपदेऽपि लक्ष्म्यामित्यर्थः। अथवा जगती हिंसारूपत्वात्तदन्तः पाती कथमहं त्वां भजामि त्वत्प्रसादं विनेत्याह जगदिति। हे जगदीश! जगत्यां लोके यज्जगत्प्राणिसमूहः तद्वैशसमेव हिंसाप्रकृतिरेव। तथापि तदन्तःपातिभिरस्माभिः कर्मणि यत्समीहितं स्यात्तत्फल्गु हिंसारूपमप्युर्वहिंसारूपकमपि करोति भवान् हे दीनवत्सल! किमर्थमेवं पक्षपातेन करोति न स्वे धिष्ण्येऽभिरतस्य तथा अहिंसया तव किं केवलं मामुद्धर्तुमेवेति भाव इति केचिद्व्याचक्षते, तदसत्, पदानां विवक्षितार्थावाचकत्वेन पाठसम्प्रदायाभावेन प्रमाणविरोधेन प्रेक्षावद्भिरुपेक्षणीयत्वात्पूर्वापरविरोधाच्च लक्ष्म्या हरेर्भक्तेषु पक्षपातकथनस्य स्वानुभवविरुद्धत्वाच्च ॥ २८ ॥ ❀ ❀ अस्मिन्नर्थे साधुसम्मतिमाह भजन्तीति। अथान्यच्चास्मिन्नर्थे प्रमाणमस्तीति किन्तदिति तदुच्यते–अत एव भक्तवात्सल्यादेव साधवः सज्जनास्त्वां भजन्ति कं गुणमुपसंहृत्येति तत्रोक्तं व्युदस्तेति मायागुणानां विभ्रमोदयो विलासोदयो यः स निरस्तो येन स तथा तं संसारोच्छेदोऽपि न स्वत एषामित्यभिप्रेत्याह–भवत्पदेति। अन्यत्कर्मादिकम् ॥ २९ ॥ ❀ ❀ विमुक्तिमुख्यनिमित्तमङ्घ्रिस्मरणादन्यन्नास्तीति यद्यस्मात्तस्माद्भजन्तं प्रतिवरं वृणीष्वेति वाणी जगन्मोहकरीत्याह मन्ये गिरमिति। तदुपपादयति। वाचेति "तस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितम्" इति श्रुतिः, 'षिञ्बन्धने' यद्यसितो बन्धनरहितस्तर्हि पुनः शश्वत्कथं कर्म करोतीत्यन्वयः ॥ ३० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अथ सिद्धोपदेशस्वीकारे प्रकारविशेषो दर्शयिष्यते। वरे तु दर्श्यते। वरान् विभो इति। वरदानां ब्रह्मादीनामपीश्वरात् सर्वातिशयवरदायकादपि त्वत्त इत्यर्थः, यो बुधः कथं वृणीते, चकारादहमबुधोऽपि न वृण इत्यर्थः ॥ २३ ॥ ❀ ❀ न कामय इति। कर्णायुतप्रार्थनमत्यासक्तितत्परम् ॥ २४ ॥ ❀ ❀ यदि च वयं न तादृशप्रार्थनाधिकारिणः गाढासक्त्यभावात् तथापि तच्छ्रवणमेव स्तादित्याह। स इति। तत्त्वमत्र तत्पदाम्भोजमेव मूलं तदनुगतत्वेन शुद्धात्मज्ञानञ्च ॥ २५ ॥ ❀ ❀ यतो यश इति। पशुं विना योऽन्यो गुणज्ञो मनुष्यमात्रः स कथं विरमेत् स मनुष्येष्वपि पशुः, यो न विरमेत् स पशुष्वपि परमगुणज्ञ इत्यर्थः। गुणानां त्वदीयानां संग्रहेच्छया आत्मनि प्रतिसंक्रमितुमिच्छया ॥ २६ ॥ ❀ ❀ अथाभज इत्यादिद्वयं न खल्वस्य तत्कान्तभावाद्वासना जाता किन्तु भक्तिवासनैव। दृष्टान्तस्त्वत्र तस्या भक्त्यंश एव। तया स्पर्द्धा तु तत्परमकृपोन्नद्धत्वेन वीराख्यदास्यतां प्राप्तस्य नायोग्येति। अन्ये त्वेवं मन्यन्ते तत् खलु तदीयदीनविषयककृपासूचकसप्रेमवचनविनोदमात्रं ननु लक्ष्मीस्पर्द्धावहं करोपीत्यनेन स्वस्मिंस्तुच्छत्वमननात्, अथवा अथाभज इति कलहाभाव एव योज्यं तत्र हेतुः त्वच्चरणेति जगज्जनन्यामिति तु कलहे ॥ २७ ॥ ❀ ❀ अत एवेति। दीनवात्सल्यमेव मुख्यमुद्दीपनमित्यर्थः। साधवः प्रोज्झितकैतवाः, तदेवावधारयति भवदिति। ऋते इत्युक्त्वाप्यन्यदित्युक्तिरवधारणार्था ॥ २९–३१ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

भगवतः कृपातिरेकमुक्त्वा तस्य पृथोर्भक्त्यतिशयमाह स इति ॥ २१ ॥ ❀ ❀ अतृप्तयोर्दृशोर्गोचरं विषयभूतं पदा क्षितिं स्पृशन्तमित्यत्र भावः श्रीस्वामिचरणैर्व्याख्यातो यथा न खलु देवाः पदा भुवं स्पृशन्ति, अतः कृपापरवशो हरिर्नूनमात्मानं विस्मृतवानिव। अत एव स्खलनपरिहाराय गरुडस्योन्नते स्कन्धे विन्यस्तं हस्ताग्रं येन तमिति ॥ २२ ॥ ❀ ❀ वरं वृणीष्वेत्यस्योत्तरमाह। वरान् बुधः कथं वृणीते किन्त्वबुध एवेत्यर्थः। तत्रापि गुणैर्विक्रिया विकारो यस्य तथाभूत आत्मा मनो येषां कर्म्मिणां सम्बन्धिनः स्वर्गादीनित्यर्थः, कैवल्यपते इति। कैवल्यकामोऽपि यान् न वृणीते तानहं कैवल्यनामाप्यसहिष्णुः कथं वृणे इति भावः ॥ २३ ॥ ❀ ❀ किंवा कैवल्यपते इति सम्बोधनात् कैवल्यं वरिष्यतीति मा शङ्किष्ठाः, किन्तु कैवल्यमपि येभ्य एव रोचते तेभ्य एव तदीयतामित्यभिप्रायेणैव तु मया तच्छब्देनामन्त्रितोऽसीत्याह नेति। वरञ्च मत् कञ्चन वृणुष्वेति यदुक्तं तत्र सामान्यतो वरानहं नैव कामये। विशेषतोऽपि कञ्चन वरं कैवल्यं तदपि कचित् कदाचिदतिदुःखदशायामपि न कामये। कुतः यत्र कैवल्ये युष्मच्चरणाम्बुजस्य आसवो मकरन्दस्तदीयगुणकथामाधुर्यभावो नास्ति, कीदृशः महत्तमानमन्तर्हृदयात् मुखद्वारा च्युतः अन्तर्हृदयेनास्वाद्यानन्दोद्रेकात् कीर्त्यमान इत्यर्थः। शुकमुखादमृतद्रवसंयुतमितिवन्महदास्वाद्यत्वे सति तस्यातिमाधुर्यमुदयते इति भावः। मधुरमपि जलं क्षारभूमिप्रविष्टं यथा विरसीभवति तथैवावैष्णवमुखनिर्गतो भगवद्गुणोऽपि नातिरोचक इति। महतां गुणानां कथानां चानन्त्यात् यत्र यत्र यैर्यैर्या या गुणकथाः कीर्त्यमानाः स्युस्तासामेकामपि कथामहं त्यक्तुं न शक्नोमीत्यत्यतिलोभात्

कर्णानन्त्यस्पृहा, तेन कैवल्यकामा येभ्यः श्रोत्रादीन्द्रियेभ्यः प्रियेभ्यो द्रुह्यन्ति तान्येवाहं कामये इति द्योतितम्। ननु कोऽप्येवं न वृणीते सत्यं, मम त्वेष एव वरो नान्य इति ॥ २४ ॥ ❀ ❀ ननु महातत्त्वज्ञैरपि दुर्लभं कैवल्यमपि कुतो नेच्छसीति तत्र व्याजस्तुतिमाश्रित्याह स इति। भवत्पदाम्भोजसुधायाः कणो लेशस्तत्सम्बन्धी तावदनिलोऽपि, किमुत तत्कणः, किमुततरां सा सुधा। तद्गुणकथालेशप्रसङ्गोऽपीत्यर्थः, स्मृतिं त्वच्चरणस्मरणं वितरति, अत एव विस्मृततत्त्वमार्गाणामिति तयोपदिष्टं यन्नवधा वैलक्षण्यसालक्षण्याभ्यां परमात्मजीवात्मदेहतत्त्वं तदधुनैव मया विस्मृतमत एव कुयोगिनामिति व्याजस्तुतिः। अस्माकं वरैरलं विस्मृततत्त्ववर्त्मत्वात् कैवल्येन त्वत्कथास्वादैकव्रतत्वाद्वरान्तरैरप्यस्माकं प्रयोजनं नास्ति। वयं कुयोगिनो निकृष्टाः खल्वभ्यस्ततत्त्ववर्त्मनः सुयोगिनो भवितुं न प्रभवाम इति कथं कैवल्याय स्पृहयाम इति, कथं वा कीटविशेषा मधुव्रता इव त्वच्चरणकमलमकरन्दास्वादमात्रेणैव पूर्णा राज्यादिसम्पत्तीः प्राप्तुं शक्नुम इति भङ्गया स्वेषामेवोत्कर्षो ध्वनितः ॥ २५ ॥ ❀ ❀ ननु मत्कथास्वादादपि विरम्य योगीन्द्रस्पृहणीयं कैवल्यमेव गृहाणेति तत्राह यश इति। हे सुश्रवः! मङ्गलकीर्त्ते! तव यशः यदृच्छया अयत्नतोऽकस्मात् प्राप्तमपि सकृदपि यः शृणोति गुणज्ञश्चेत् स कथं तस्मात् विरमेत् पशुं विनेति यो विरमेत् स मनुष्येषु पशुः, यो न विरमेत् स पशुष्वपि मनुष्य इति ध्वनिः। तत्रापि 'चित्तवडिशं शनकैर्वियुङ्क्ते' इत्याद्युक्तलक्षणलक्षितात् युष्मद्यशःपीयूषाद्विरमते योगिने 'त्रैवर्गिकास्ते पुरुषा विमुखा हरिमेधसः। कथायामि'त्याद्युक्तस्वभावाय कर्म्मिणे च पशवे पिण्याकतुषबुसादिकमिव कैवल्यादिकं देहि, न तु मह्यं मनुष्यायेत्यनुध्वनिः। ननु यद्यशःस्वादादपि कैवल्यादिकमधिकं भवेदित्यत्र योगी कर्म्मी च प्रमाणं कैवल्यादिभ्योऽपि यद्यशःस्वादोऽधिक इति भवन्मते कः प्रमाणमिति तत्राह। श्रीर्महालक्ष्मीर्ब्रह्मादिसर्वजगत्पूज्या सर्वगुणमण्डितापि त्वद्यशो वव्रे, गुणानां तदीयरूपरसगन्धशब्दस्पर्शलीलालावण्यकारुण्यानां सम्यग् ग्रहणमास्वादनक्षामर्थ्यं तदिच्छयेति सैवात्र प्रमाणं, तदुपलक्षिता अन्येऽप्यास्वादितचरकैवल्यसुखमपि लघूकरिष्णवो यशस्येव रममाणाः शुकादयोऽपि प्रमाणम्। घासबुद्ध्यैवेक्षुपल्लवानि चरन्नप्यन्ततस्तदीयकाण्डेष्वरुचिर्घासमेवास्वादयन् वृष इव योगी सहकारपल्लवानि त्यक्त्वा कण्टकमेव स्वादयन्नुष्ट्र इव कर्म्मी किं प्रमाणं भवेदिति भावः। भक्तावेव मोक्षादिसर्वसुखान्तर्भावात् गुणानां सर्वपुरुषार्थानां संग्रहः। स्वस्मिन् समाहारस्तदिच्छयेति स्वामिचरणाः ॥ २६ ॥ ❀ ❀ अतः केवलं भजनमेव वृणे न तु वरानित्याह। अथ आसम्यक् निष्काम एव केवलामेव भक्तिं कुर्वे। न तु ज्ञानकर्म्मादिसिद्ध्यर्थं ज्ञानी कर्म्मीव गुणीभूतामित्यर्थः। तत्रापि न नारदादिरिव किन्तु पद्मकरा लक्ष्मीरिव मार्ज्जनलेपनपादसंवाहनव्यजनताम्बूलार्पणादिभिरभीक्ष्णमेवेत्यर्थः। यतो लालसः लालसावान् "स महान् लालसो द्वयोः" इत्यभिधानादत्यधिकं स्पृह इत्यर्थः। न चात्र पृथोरुज्ज्वलभाव आशङ्कनीयः। उत्तरश्लोके जगज्जनन्यामित्युक्तेः, जगति च स्वस्यान्तःपातात्लक्ष्म्यां जननीभावेन स्वस्य दास्यभावव्यक्तेः। अतः पद्मकरेवेत्युपमेयं परिचरणांशेनैव भगवच्चरणपरिचर्य्यायां तस्या एवातिप्रसिद्धेः। लक्ष्म्यां परमभक्तिमतोऽपि स्वस्य वीरभक्तत्वं वाचैव द्योतयन्नाह अपीति। कर्म्मणि क्रियमाणे यथेन्द्रेण सह कलिः भक्तावपि लक्ष्म्या सह कलिः स्यादिति वितर्कयति एकस्मिन् पत्यौ स्पर्द्धमानयोरपि किं कलिर्न स्यादिति काक्वा वितर्कः। ननु पर्य्यायेण सेवायां न स्यात्। मैवम्, कृतस्त्वच्चरणयोरेकस्तानोऽविरामो मनोविस्तारो याभ्यां तयोः ॥ २७ ॥ ❀ ❀ "कृपां तस्य समाश्रित्य प्रौढां नान्यमपेक्षते। अतुलां यो वहन् कृष्णे प्रीतिं वीरः स उच्यते" इति वीरभक्तोचितं स्वस्वभावं प्रकटयन्नाह। जगज्जनन्यां जगन्मध्यवर्त्तित्वेन ममापि जनन्यां लक्ष्म्यां वैशसं विरोधः स्यादेव। कुतः यस्याः कर्म्मणि नः समीहितमिच्छा सा खलु युष्मद्वक्षस्यासीना विराजताम्, अहं पुत्र एव सर्व्वं युष्मच्चरणपरिचरणं करवाणि, तस्याः कोऽयमाग्रहो यत्परिचरणं विना न जीवतीति भावः। ननु त्वमर्वाचीनः सातिप्राचीना त्वं निकृष्टः सातिमहतीति तया सह किं विरुद्धयसे, सत्यं, तथापीन्द्रविरोधे मत्पक्षपातवदत्रापि मयि तव पक्षपात एव स्यादित्याह। फल्गु तुच्छमपि त्वमुरु करोषि यतो दीनेषु वत्सलः। ननु त्वं तस्याः कोपान्न बिभेषि किं तत्र सत्यं न बिभेमीत्याह। स्व एव धिष्ण्ये स्वसामर्थ्येऽभिरतस्य मम तया किं न किमपीत्यर्थः, तत्कोपोद्रेक एव मम सामर्थ्यं यदुक्तं वीरभक्तोदाहरणेषु "प्रलम्बरिपुरीश्वरो भवतु का क्षतिस्तेन मे कुमारमकरध्वजादपि न किञ्चिदास्ते फलम्। किमन्यदहमुद्धतः प्रभुकृपाकटाक्षश्रिया प्रिया परिषदग्रिमां न गणयामि भामामपि" इति। 'धिष्ण्यः शक्तौ च पारदे' इति पुंस्काण्डेऽमरदत्तः ॥ २८ ॥ ❀ ❀ तदेवं न केवलमहमेव किन्तु सर्व एव त्वद्भक्ता वरं वृण्वन्तीत्याह भजन्त्यथेति। यतस्त्वं दीनवत्सलः, अत एव भजन्ति व्युदस्तो निरस्तो भवति मायागुणानां विभ्रमोदयो विविधवरस्पृहा यतस्तं, त्वद्भजनस्यैवायं स्वभावो यद्वरस्पृहा निवर्त्तत इति। ननु तर्हि भजनस्य किं फलं तत्राह भवदिति। निमित्तं फलं अनुस्मरणस्यैव सर्वसुखचूडामणेस्तदितरसुखतिरस्कारकत्वादिति भावः ॥ २९ ॥ ❀ ❀ ननु तर्ह्यहं स्वभक्तं प्रति वरं वृणीष्वेति कथं ब्रवीमि तत्राह मन्य इति। यदि कश्चिदपक्वो भक्तस्त्वत्प्रलोभनात् कमपि वरं वृणुते तदैव तस्य भक्तिरसवञ्चनात् सर्वनाश इति भावः। स्वकर्मणा पितृलोक इति स्वर्गकामोऽश्वमेधेन यजेतेत्यादिवेदलक्षणापि तव वाग् जगन्मोहिनीत्याह। नु अहो ते वाचा तन्त्या यदि जनोऽयमसितोऽबद्धः स्यात्तदा पुनः पुनः फलैर्मोहितः सन् कथं कर्म करोति ॥ ३० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

भगवतो भक्तवश्यत्वमुक्त्वा तस्य भगवत्प्रावण्यमाह स इत्यादिना। स आदिराजोऽश्रुलोचनः प्रेमाश्रुलोचनो यतो हरिं विलोकितुं नाशकत् यतश्च स आदिराजः बाष्पैः प्रेमोद्गमैः मुखनासिकाविकारैः विक्लवः वक्तुमक्षमोऽतो न किञ्चनोवाच अतस्तूष्णी-

मवस्थितः अमुं हरिं हृदोपगुह्य अधात् धृतवानित्यन्वयः ॥ २१ ॥ ❁ ❁ अथानन्तरम् अश्रुकलामवमृज्य अतृप्तदृशोर्गोचरं ग्राह्यं पूरुषं विलोकयन् आह। पदा स्पृशन्तं क्षितिमित्यनेन देवाः पदा क्षितिं न स्पृशन्ति स तु देवदेवः स्वेच्छया भक्तवात्सल्येन सर्वं करोतीति सूच्यते ॥ २२ ॥ ❁ ❁ गुणैर्विविधतया क्रियते इति गुणविक्रियः संसारस्तस्मिन्नात्मा मनो येषामबुधानां भवत्पराङ्मुखानां नारकाणामपि ये सन्ति तान् कैवल्यपतेः केवलस्याक्षरस्य भावः कैवल्यं क्षेत्रज्ञस्वरूपमात्रप्राप्तिस्तत्पतेः वरदानां भुक्तिमात्रदातॄणां ब्रह्मादीनामीश्वरात्स्वभावापत्तिमोक्षप्रदादित्यर्थः तत्त्वतो बुधः कथं वृणीते ? तस्मादहं च न वृणे ॥ २३ ॥ ❁ ❁ तर्हि कैवल्यं मुक्तिं मुक्तिं वा तवेष्टं वरं वृणीष्वेत्याह नेति। महत्तमानां वैष्णवाग्र्याणामन्तर्हृदयान्मुखतश्च्युतो नित्यं स्वाभीष्टतया हृदि निहितस्तदधिकारिजनानन्दाय मुखतः प्रवर्तितः भवत्पदाम्भोजयोः कीर्तिरूपो मकरन्दः यत्र नास्ति त्वत्कीर्तिश्रवणानर्हवस्तु न कामये इत्यर्थः, किन्तु मे वरः एष कस्तव कीर्तिश्रवणाय कर्णायुतं विधत्स्व ॥ २४ ॥ ❁ ❁ हे उत्तमश्लोक ! उत्तमकीर्ते स भवत्पदाम्भोजयोः सुधायाः कीर्तिरूपायाः कणस्य लेशस्यापि योऽनिलः दूरतोऽपि कीर्तिलेशश्रवणमित्यर्थः विस्मृतं तत्त्ववर्त्म यैस्तेषां कुयोगिनां नो स्मृतिं वितरति ॥ २५ ॥ ❁ ❁ भगवद्यशसः गुणज्ञसेव्यत्वं मुक्तिप्रदत्वं किम्बहुना देव्याः सर्वस्वभूतत्वं चाह यश इति। हे सुश्रवः ! शोभनकीर्ते ! शिवं श्रवणकाले सुखदमन्ते मुक्तिदं ते यशः सतां सङ्गमे सकृदपि यः शृणोति स गुणज्ञश्चेत् पशुमृते कथं विरमेत् न कथमपीत्यर्थः। यद्यशः गुणसंग्रहेच्छया श्रीर्मुक्तलोके मुमुक्षुलोके च भगवत्सहचरी देवी वव्रे ॥ २६ ॥ ❁ ❁ अहमपि लालसः समुत्सुको मुमुक्षुलोके लीलां कुर्वन्तं मुक्तलोके च विहरन्तं श्रीवत् आभजे। आवयोः एकस्मिन्पत्यौ सेवार्थं स्पर्द्धमानयोरपि कलिः कलहो न स्यादेव, तत्र हेतुः कृतत्वच्चरणैकतानयोः कृतो नियोजितस्त्वच्चरणयोस्तान आत्मभरन्यासविस्तारो याभ्यां तयोः। तर्हि त्वयि समर्पितात्मनोरावयोर्विरोधो भवति ? ॥ २७ ॥ ❁ हे जगदीश ! यस्याः कर्मणि त्वत्सेवायां नः समीहितम् अस्माकमपीच्छा भवति तस्यां जगज्जनन्यां नो वैशसं विरोधोऽसम्भावितोऽपि यदि स्यादेव तर्हि भवतु, यतो दीनवत्सलस्त्वं फल्गु अत्यल्पमपि भक्तकृतमुरु बहु करोषि स्वे धिष्ण्ये स्वकीये वासस्थाने भक्तहृदि स्वमहिम्नि वा रमतस्तव स्वानन्यभक्तजनं हित्वा तया किम् "न मे भक्तात्प्रियतमो ह्यात्मयोनिर्न शङ्करः। न च संकर्षणो न श्रीर्नैवात्मा च यथा भवान्" इति वक्ष्यमाणाच्च ॥ २८ ॥ ❁ ❁ अथ तव फल्गूरुकारित्वादिगुणगणज्ञानानन्तरम् अतस्तव दीनेषु वत्सलत्वात् निरस्तो मायागुणानां विभ्रमस्य विलासस्योदयः प्रभावो यस्मात् तं त्वाम् भजन्ति, कस्मै प्रयोजनाय इत्यत आह। भवत्पदानुस्मरणादृते अन्यन्निमित्तं प्रयोजनं सतां साधूनां न विद्महे ॥ २९ ॥ ❁ ❁ भजन्तं वरं वृणीष्वेति त्वं यदात्थ तां ते गिरं जगतां विमोहिनीं मन्ये। अन्यथा ते वाचा नु तन्त्या असितः अबद्धः कथं मोहितः कर्म करोति ॥ ३० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं स्वस्मिन् भगवत्कृपातिशयं विलोक्य राज्ञोपि प्रेमातिशयो जातस्तद्दर्शयति—स इति द्वयेन। स आदिराजः पृथुर्हरिं विलोकितुं नाशकत् न शशाक। तत्र हेतुः—अश्रुलोचन इति। यतोश्रूणि लोचनयोर्यस्य सः। न च स तं किंचनोवाच। कुतः सामर्थ्याभावात्, तत्कुतस्तत्राह बाष्पेति। बाष्पेण कण्ठरोधकजलेन विक्लवो व्याकुलो रुद्धः कण्ठो यस्य सः। तर्हि किं कृतवानित्यपेक्षायामाह—हृदेति। रचितोऽञ्जलिर्येन स तथावस्थितः सन्नमुं हरिं हृदोपगुह्य संश्लिष्य तत्राधात् धृतवानित्यन्वयः ॥ २१ ॥ ❁ ❁ अथानन्तरमश्रुकला अश्रुबिंदून् अवमृज्य विशोध्य अतृप्तयोर्दृशोर्गोचरं विषयभूतं यद्यपि देवा अपि भुवं यदा न स्पृशन्ति कुतः पुनर्देवदेवो भगवान् स्पृशेत्तथापि कृपातिरेकेण विस्मृतात्मेव यदा क्षितिं स्पृशन्तमत एव स्खलनभयादिव उरगाणां सर्पाणां विद्विषः गरुडस्योन्नते अंसे स्कन्धे विन्यस्तं हस्ताग्रं येन तं पुरुषं पुरुषोत्तमं विलोकयन्नाहेत्यन्वयः ॥ २२ ॥ ❁ ❁ सर्वज्ञोपि भगवांस्तन्मुखेनैव लोके तद्विशुद्धिहेतुकविवेकविरक्तिभक्त्यादि ख्यापयितुं तं वरार्थं प्रेरितवानतः सोपि तत्प्रदर्शयन् भगवन्तं स्तौति—वरानिति नवभिः। सर्वदानसामर्थ्यं द्योतयन् संबोधयति—हे विभो इति। न केवलं धर्मादित्रिवर्गदाने समर्थस्त्वं किंतु मोक्षदानेपीत्याशयेन पुनः संबोधयति—हे कैवल्यपते इति। हे विभो ! हे कैवल्यपते ! त्वत् त्वत्तः सदा सर्वदातृसमर्थादपि बुधश्चेद्वरान् विषयान् सुतकलत्रादीन् कथं वृणीते ? न वृणीत एवेत्यन्वयः। न च तव सामर्थ्यं गुप्तं किंतु सर्वप्रसिद्धमेवेत्याशयेन विशिनष्टि—वरदेश्वरादिति। वरदा ब्रह्मादयः प्रसिद्धास्तेषामपीश्वराद्वरप्रदादित्यर्थः। कस्माद् बुधस्तान्न वृणीत इत्याशङ्क्यातितुच्छत्वेन सर्वत्र सुलभतया प्रसन्नाद्भगवतस्त्वत्तो वरणायोग्यत्वादित्याह—गुणविक्रियात्मनामिति। गुणैर्गुणकार्यैर्विषयैर्विक्रियते इति गुणविक्रियस्तथाभूत आत्मा चित्तं येषां विषयाविष्टचित्तानां तेषां देहिनां प्राणिनामत एव तद्दोषैर्नारकाणां श्वसूकरादिनारकीं योनिमाप्तानामपि ये विषयाः सन्ति अतोहमपि तान् वरान्न वृणे, चकारोप्यर्थे। न च लोकप्रशंसार्थमेवमुच्यते, किंतु यथार्थमेव तदन्तर्यामितया त्वया ज्ञायत एवेति सूचयन् संबोधयति—हे ईश इति ॥ २३ ॥ ❁ ❁ तर्हि किं मोक्षं कामयस इत्याशङ्क्याह—नेति। हे नाथ ! तद्विदेहकैवल्यमप्यहं कचित्कदाचिदपि न कामय इत्यन्वयः। कुतस्तत्राह—नेति। यतो महत्तमानां युष्मद्भक्तानामन्तर्हृदयान्मुखद्वारा च्युतो निर्गतो युष्मच्चरणाम्बुजासवः परमानन्दजनकयुष्मत्कथारूपो रसो यत्र विदेहकैवल्यं नास्ति तस्मादित्यन्वयः। तर्हि किं कामयस इत्यपेक्षायामाह—विधत्स्वेति। त्वत्कथाश्रवणाय कर्णानामयुतं दशसहस्रं विधत्स्व तावतां कर्णानां सामर्थ्यं मम द्वयोः कर्णयोर्देहीत्यर्थः। नैवं वरः केनापि लोके याचित-

स्त्वमेव कथमेवं वरं याचस इत्याशङ्क्याह—एष मे वर इति। किं लोकव्यपेक्षया मम त्वेष एव वरः समीचीन इति भावः। तत्र हेतुत्वेन स्वस्य सेवकत्वसूचनार्थं संबोधनं हे नाथेति॥ २४॥ ❀ ❀ ननु धर्मार्थकाममोक्षाख्या मनीषिणां चत्वारः पुरुषार्थास्तेषां मध्ये यदि कमपि न वृणीषे तदा कोपि पुरुषार्थो न सिद्ध्येदित्याशङ्क्याह—स इति। हे उत्तमश्लोक! महतां यथार्थविवेकेन सारग्राहिणां भवद्भक्तानां मुखाच्च्युतो बहिर्निःसृतो यो भवत्पदाम्भोजसुधायाः कणो लेशस्तत्संबन्धी योऽनिलः दूरादपि कथमपि किञ्चिदपि भवद्यशःश्रवणमात्रं स एव यस्मात् कुयोगिनां कुत्सिते निन्द्रिते विषयजन्यसुखे योगः प्रयत्नो येषां तेषामत एव विस्मृतं तत्त्वस्य सर्वपुरुषार्थहेतोर्भवद्भजनस्य वर्त्म मार्गो यैस्तेषां पुनस्तत्स्मृतिं वितरति संपादयति—तस्मान्नोऽस्माकमपि यथेष्टं कथाश्रवणं भवतु, तेन सर्वपुरुषार्थसिद्धेरन्यैर्वरैरलं न किञ्चित्प्रयोजनमित्यर्थः। उद्गच्छति तमोऽज्ञानं यस्मात्स उत्तमस्तादृशः श्लोको यशो यस्य स उमत्तश्लोकस्तथा संबोधनेन कथाश्रवणस्यावरकाज्ञाननिवर्त्तकत्वादेव स्मृतिप्राप्तौ हेतुरिति सूचितम्। अत एव सर्वतो विरक्ता अपि महान्तः प्रयत्नेन हृदि भगवद्यशो धारयन्तीति ज्ञेयम्॥ २५॥ ननु मम यशःश्रवणस्य परम्परया चतुर्विधधर्मादिफलहेतुत्वेपि तानि फलानि विहाय साधने यशःश्रवणे कोयं भवतोऽत्याग्रह इत्याशङ्क्याह—यश इति। हे सुश्रवः! यः कश्चिदपि यदृच्छया केनापि भाग्योदयेन आर्याणां महतां विवेकिनां भगवद्भक्तानां संगमे सति ते तव यशः सकृत् एकवारमपि उपशृणोति कार्यान्तरार्थं गतः प्रसङ्गादपि शृणोति स पशुं विना नराकारपशुस्वभावादितरः अत एव गुणज्ञः सारग्राही चेत्तदा यशःश्रवणात्कथं विरक्तो भवेदित्यन्वयः। विरक्त्यभावे यशस आह्लादकत्वं हेतुं सूचयन् विशिनष्टि—शिवमिति। सुष्ठु सर्वपुरुषार्थहेतुः श्रवो यशो यस्य तत्संबोधनं सुश्रव इति। तथा च शिवमिति विशेषणेन संबोधनेन च वरग्रहणे यद्वृतं तदेव फलं स्यान्न सर्वं विशेषतो निरवशेषेण भजनानन्दश्च न स्यादेव, श्रवणादिना भजने त्वत्कामितमपि सर्वमेव फलं भजनानन्दश्चेति सूचितम्। अत एव गुणज्ञा श्रीर्लक्ष्मीरपि गुणानां सर्वपुरुषार्थानां संग्रहः स्वस्मिन् समाहारस्तदिच्छया यत् यशःश्रवणमेव प्रकर्षेण सर्वोत्तमत्वेन वव्रे वृतवती त्वत्त इति शेषः। यद्वाङ्गीकृतवतीत्यर्थः॥ २६॥ ❀ ❀ यस्माद्भवद्भजनमेव परमपुरुषार्थहेतुरथ तस्मादहमपि पद्मकरा लक्ष्मीरिव लालसः भजने उत्सुकः संस्त्वा त्वामेव आसमंतात्सर्वात्मना भजे इत्यन्वयः। कथं भगवद्भजनं परमपुरुषार्थहेतुरित्याशङ्क्य यतोऽखिलपुरुषोत्तम इत्यभिप्रेत्य विशिनष्टि-अखिलपुरुषोत्तममिति। पुरुषोत्तमास्त्वन्योन्यापेक्षया बहवः सन्ति तद्व्यावृत्त्यर्थमाह-अखिलेति। सर्वोत्तमत्वे हेतुं सूचयन् विशिनष्टि-गुणालयमिति। पूर्णगुणकमित्यर्थः। परं त्वेवं भजन एतत्सामर्थ्यमस्ति किं तत् अत आह-आवयोः मम लक्ष्म्याश्च कलिः कलहो न स्यान्मा भवत्विति। कथं कलिशङ्का तत्राह-एकस्मिन् पत्यौ स्वामिनि त्वयि स्पृधोः स्पर्द्धमानयोरिति। तदा पर्यायेण भजने स न स्यादित्याशङ्क्याह-कृतेति। कृतस्त्वच्चरणयोरेकोऽव्यवच्छिन्नस्तानो मनोविस्तारो याभ्यां तयोरिति। मध्ये भजनविच्छेदासहिष्णुत्वात्पर्यायेण भजनं न संभवतीति भावः॥ २७॥ ❀ ❀ अतो यत् यस्याः लक्ष्म्याः कर्मणि भवत्सेवायां नोस्माकं मम समानुयायिनां च समीहितमिच्छा तस्यां जगज्जनन्यां वैशसं विरोधः स्यादेव संभवत्येव तन्मा भवतु। ननु यद्येवं तद्विरोधाद्बिभेषि तदा किं बलमाश्रित्यैवं समीहस इत्याशङ्क्य भक्तेषु तव पक्षपातमालक्ष्यैवेत्याह- करोषीति। यतो भक्तैः कृतं फल्गु तुच्छमपि सेवादिकमुरु बहु करोषि मन्यसेऽतो भजनमिच्छामीत्यर्थः। एवं बहुमाने हेतुमाह-दीनवत्सल इति। यतो दीनेषु कृपावानित्यर्थः। तत्रापि हेतुं सूचयन् संबोधयति-हे जगदीश इति। यद्यपि लक्ष्म्या अपि जगज्जननीत्वेन दीनेषु कृपास्त्येव, तथापि तत्कर्मणि प्रवृत्तत्वेन विरोधसंभवेपि तव तु जगदीश्वरत्वेन दीनेषु कृपैवास्त्यन्यथा ते निरवलम्बाः स्युरिति भावः। ननु तथापि पत्नीत्वात्तत्पक्षपात एव युक्तो लोके तथा दर्शनादत आह-स्व एवेति। स्वे एव धिष्ण्ये परमानन्दस्वरूपेऽभिरतस्य परिपूर्णानन्दस्य तया पत्न्या किं न किमपि प्रयोजनं येन तत्पक्षपातित्वं स्यादिति भावः॥ २८॥ ❀ ❀ यतः आत्मारामः परमानन्दस्वरूपस्त्वमत एव साधवो विवेकिनोऽथ ज्ञानवैराग्यादिसंपत्त्यनन्तरमपि त्वामेव भजन्तीत्यन्वयः। आत्मारामत्वमेव विवृण्वन् विशिनष्टि व्युदस्तेति। व्युदस्तः दूरतः प्रक्षिप्तः मायागुणानां विभ्रमस्याहंताममतात्मकस्योदयो यस्मात् स तथा तमित्यर्थः। ननु साधवो निष्कामाश्चेत्तदा कथं तेषां भजने प्रवृत्तिः संभवति? सर्वासां प्रवृत्तीनां कामप्रयुक्तत्वात्। अत एव यदि ते भजने प्रवृत्ताः कथं तदा तेषां निष्कामत्वमित्याशङ्क्याह-भवदिति। भवत्पदानुस्मरणं विनाऽन्यत्तेषां निमित्तं भजने प्रवर्त्तकं फलं वयं न विद्महे न विद्मः। सर्वविषयेभ्यो विरक्ता अपि भवच्चरणकमलरसाविष्टचित्ता एवातस्ते न विस्मरन्तीति भावः। परिपूर्णैश्वर्यादिगुणस्य चरणकमलं विवेकिनः कथं विस्मरेयुर्विस्मरणे विवेकित्वमेव न स्यादित्याशयेन संबोधयति-हे भगवन्निति॥ २९॥ ❀ ❀ यदुक्तं भगवता मत्तः कंचन वरं वृणीष्वेति तदसहमानः सोपालंभमिवाह-मन्य इति। ते तव गिरं वाचं जगतां सर्वप्राणिनां विमोहिनीं मन्ये, यत् यस्माद्भजन्तं मामपि त्वं वृणीष्वेत्याथ कथयसि। वाचो मोहकत्वमेव स्पष्टयति-वाचेति। ते तव वाचा वेदलक्षणया तन्त्या रज्ज्वा यदि जनः असितः अबद्धस्तदा विमोहितस्तत्तत्फलकामः सन् कथं पुनः पुनर्दुःखालयसंसारपातहेतुं कर्म करोति। अहो तव वाचो विमोहकत्वमित्याश्चर्येणाह-न्विति॥ ३०॥

## भाषानुवादः

आदिराज महाराज पृथु भी नेत्रोंमें जल भर आनेके कारण न तो भगवान्का दर्शन ही कर सके और न तो कण्ठ गद्गद हो जानेसे कुछ बोल ही सके। उन्हें हृदयसे आलिङ्गन कर पकड़े रहे और हाथ जोड़े ज्यों-के-त्यों खड़े रह

गये ॥ २१ ॥ ❀ ❀ प्रभु अपने चरणकमलोंसे पृथ्वीको स्पर्श किये खड़े थे; उनका कराग्रभाग गरुडजीके ऊँचे कंधेपर रक्खा हुआ था। महाराज पृथु नेत्रोंके आँसू पोंछकर अतृप्त दृष्टिसे उनकी ओर देखते हुए इस प्रकार कहने लगे ॥ २२ ॥ ❀ ❀ महाराज पृथु बोले—मोक्षपति प्रभो! आप वर देनेवाले ब्रह्मादि देवताओंको भी वर देनेमें समर्थ हैं। कोई भी बुद्धिमान् पुरुष आपसे देहाभिमानियोंके भोगने योग्य विषयोंको कैसे माँग सकता है? वे तो नारकी जीवोंको भी मिलते ही हैं। अतः मैं इन तुच्छ विषयोंको आपसे नहीं माँगता ॥ २३ ॥ ❀ ❀ मुझे तो उस मोक्षपदकी भी इच्छा नहीं है, जिसमें महापुरुषोंके हृदयसे उनके मुखद्वारा निकला हुआ आपके चरणकमलोंका मकरन्द नहीं है—जहाँ आपकी कीर्ति-कथा सुननेका सुख नहीं मिलता। इसलिये मेरी तो यही प्रार्थना है कि आप मुझे दस हजार कान दे दीजिये, जिनसे मैं आपके लीलागुणोंको सुनता ही रहूँ ॥ २४ ॥ ॥ ❀ ❀ पुण्यकीर्ति प्रभो! आपके चरणकमल-मकरन्दरूपी अमृत-कणोंको लेकर महापुरुषोंके मुखसे जो वायु निकलती है, उसीमें इतनी शक्ति होती है कि वह तत्त्वको भूले हुए हम कुयोगियोंको पुनः तत्त्वज्ञान करा देती है, अत एव हमें दूसरे वरोंकी कोई आवश्यकता नहीं है ॥ २५ ॥ ❀ ❀ उत्तम कीर्तिवाले प्रभो! सत्सङ्गमें आपके मङ्गलमय सुयशको दैववश एक बार भी सुन लेनेपर कोई पशुबुद्धि पुरुष भले ही तृप्त हो जाय; गुणग्राही उसे कैसे छोड़ सकता है? सब प्रकारके पुरुषार्थोंकी सिद्धिके लिये स्वयं लक्ष्मीजी भी आपके सुयशको सुनना चाहती हैं ॥ २६ ॥ ❀ ❀ अब लक्ष्मीजीके समान मैं भी अत्यन्त उत्सुकतासे आप सर्वगुणधाम पुरुषोत्तमकी सेवा ही करना चाहता हूँ। किन्तु ऐसा न हो कि एक ही पतिकी सेवा प्राप्त करनेकी होड़ होनेके कारण आपके चरणोंमें ही मनको एकाग्र करनेवाले हम दोनोंमें कलह छिड़ जाय ॥ २७ ॥ ❀ ❀ जगदीश्वर! जगज्जननी लक्ष्मीजीके हृदयमें मेरे प्रति विरोधभाव होनेकी संभावना तो है ही; क्योंकि जिस आपके सेवाकर्ममें उनका अनुराग है उसीके लिये मैं भी लालायित हूँ। किन्तु आप दीनोंपर दया करते हैं, उनके तुच्छ कर्मोंको भी बहुत करके मानते हैं। इसलिये मुझे आशा है कि हमारे झगड़ेमें भी आप मेरा ही पक्ष लेंगे। आप तो अपने स्वरूपमें ही रमण करते हैं; आपको भला, लक्ष्मीजीसे भी क्या लेना है ॥ २८ ॥ ❀ ❀ इसीसे निष्काम महात्मा ज्ञान हो जानेके बाद भी आपका भजन करते हैं। आपमें मायाके कार्य अहङ्कारादिका सर्वथा अभाव है। भगवन्! मुझे तो, आपके चरणकमलोंका निरन्तर चिन्तन करनेके सिवा सत्पुरुषोंका कोई और प्रयोजन ही नहीं जान पड़ता ॥ २९ ॥ ❀ ❀ मैं भी बिना किसी इच्छाके आपका भजन करता हूँ, आपने जो मुझसे कहा कि 'वर माँग' सो आपकी इस वाणीको तो मैं संसारको मोहमें डालनेवाली ही मानता हूँ। यही क्या, आपकी वेदरूपा वाणीने भी तो जगत्को बाँध रक्खा है। यदि उस वेदवाणीरूप रस्सीसे लोग बँधे न होते, तो वे मोहवश सकाम कर्म क्यों करते? ॥ ३० ॥

त्वन्माययाद्धा जन ईश खण्डितो यदन्यदाशास्त ऋतात्मनोऽबुधः।
यथा चरेद्बालहितं पिता स्वयं तथा त्वमेवार्हसि नः समीहितुम् ॥ ३१ ॥

मैत्रेय[1] उवाच

इत्यादिराजेन नुतः स विश्वदृक् तमाह राजन् मयि भक्तिरस्तु ते।
दिष्ट्येदृशी धीर्मयि ते कृता यया मायां मदीयां तरति स्म दुस्त्यजाम् ॥ ३२ ॥
तत्त्वं कुरु मयाऽऽदिष्टमप्रमत्तः प्रजापते। मदादेशकरो लोकः सर्वत्राप्नोति शोभनम् ॥ ३३ ॥

मैत्रेय उवाच

इति वैन्यस्य राजर्षेः[2]प्रतिनन्द्यार्थवद्वचः। पूजितोऽनुगृहीत्वैनं गन्तुं चक्रेऽच्युतो मतिम् ॥ ३४ ॥
देवर्षिपितृगन्धर्वसिद्धचारणपन्नगाः। किन्नराप्सरसो मर्त्याः खगा[3] भूतान्यनेकशः ॥ ३५ ॥
यज्ञेश्वरधिया राज्ञा वाग्वित्ताञ्जलिभक्तितः। सभाजिता ययुः सर्वे वैकुण्ठानुगतास्ततः ॥ ३६ ॥
भगवानपि राजर्षेः सोपाध्यायस्य चाच्युतः। हरन्निव मनोऽमुष्य स्वधाम[4]प्रत्यपद्यत ॥ ३७ ॥
अदृष्टाय नमस्कृत्य नृपः सन्दर्शितात्मने। [5]अव्यक्ताय च देवानां देवाय स्वपुरं ययौ ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे[6]विंशोऽध्यायः ॥ २० ॥

---

१. प्राचीने पाठे 'मैत्रेय उवाच' इत्यारभ्य त्रयस्त्रिंशत्तमश्लोके 'सर्वत्राप्नोति शोभनम्' इत्यन्तोऽंशो नास्ति। २. प्रा० पा०—राजर्षेरभिनन्द्या०। ३. प्रा० पा०—खान्यनीकान्यनेकशः। ४. प्रा० पा०—प्रत्यगात्पुनः। ५. प्रा० पा०—वासुदेवाय देवानां। ६. प्रा० पा०—पृथुचरिते विंशतितमोऽध्यायः।

अन्वयः—ईश अबुधः जनः त्वन्मायया अद्धा ऋतात्मनः खण्डितः यत् अन्यत् आशास्ते यथा पिता स्वयम् बालहितम् आचरेत् तथा त्वम् एव नः समीहितुम् अर्हसि ॥ ३१ ॥ ❀ ❀ आदिराजेन इति नुतः सः विश्वदृक् तम् आह राजन् मयि ते भक्तिः अस्तु दिष्ट्या ते मयि ईदृशी धीः कृता यया दुस्त्यजाम् मदीयाम् मायाम् तरति स्म ॥ ३२ ॥ ❀ ❀ प्रजापते तत् त्वम् अप्रमत्तः मया आदिष्टम् कुरु मदादेशकरः लोकः सर्वत्र शोभनम् आप्नोति ॥ ३३ ॥ ❀ ❀ अच्युतः वैन्यस्य राजर्षेः अर्थवत् वचः इति प्रतिनन्द्य पूजितः एनम् अनुगृहीत्वा गन्तुम् मतिम् चक्रे ॥ ३४ ॥ ❀ ❀ देवर्षिपितृगन्धर्वसिद्धचारणपन्नगाः किन्नराप्सरसः मर्त्याः खगाः अनेकशः भूतानि च सर्वे वैकुण्ठानुगताः राज्ञा यज्ञेश्वरधिया वाग्वित्ताञ्जलिभक्तितः सभाजिताः ततः ययुः ॥ ३५-३६ ॥ ❀ ❀ भगवान् अच्युतः अपि सोपाध्यायस्य अमुष्य राजर्षेः मनः हरन् इव स्वधाम प्रत्यपद्यत ॥ ३७ ॥ ❀ ❀ नृपः संदर्शितात्मने अदृष्टाय अव्यक्ताय च देवानाम् देवाय नमस्कृत्य स्वपुरम् ययौ ॥ ३८ ॥

इति विंशोऽध्यायः ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

त्वन्मायया खंडितस्य त्वया पुनः खण्डनं न कर्तव्यं किं तु हितं चेष्टितव्यमित्याह । त्वन्मायया ऋतादात्मनस्त्वत्तः खण्डितः पृथक्कृतो यद्यतोऽन्यत्पुत्रादिकमाशास्ते अतः स्वयमविज्ञापित एव नः समीहितुं हितं चेष्टितुमर्हसि ॥ ३१-३५ ॥ ❀ ❀ वाग्वित्तांजलिभिर्भक्तितः पूजिताः सन्तः । वैकुण्ठानुगताः पार्षदाश्च ॥ ३६ ॥ ❀ ❀ अमुष्य राज्ञः । हरन्निवेति लोकोक्तिः । वस्तुतस्तस्य मनः सर्वदैव तदधीनमस्त्येव । स्वधाम राज्ञो हृदयम् ॥ ३७ ॥ ❀ ❀ अदृष्टाय लोचनपथमतिक्रांताय । संदर्शितोऽनुभावित आत्मा येन यस्मै । वासुदेवाय शुद्धचेतसि प्रतीयमानाय । वस्तुतोऽव्यक्ताय ॥ ३८ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे टीकायां विंशोऽध्यायः ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ईशेति । नियन्तुस्तव मम नियोज्यस्य का संमतिग्रहणचिंतेति भावः ॥ ३१ ॥ ❀ ❀ राजन्निति । राज्ञां दुर्लभापि मद्भक्तिर्मत्कृपयास्त्विति भावः ॥ ३२ ॥ ❀ ❀ प्रजापते इति । राज्ञः प्रजापालनमेव सर्वेष्टदमतस्तदेव कार्यमिति भावः । सर्वत्रेह परत्र च शोभनं सुखम् ॥ ३३ ॥ ❀ ❀ वचो 'वरान्विभो त्वद्वरदेश्वरात्' इत्यादिवाक्यजातम् एनं पृथुम् ॥ ३४-३५ ॥ ❀ ❀ ततो यज्ञप्रदेशात् ॥ ३६ ॥ ❀ ❀ स्वधाम वैकुंठम् ॥ ३७ ॥ ❀ ❀ अदृष्टायान्यैः । पृथुस्तु वैकुंठगमनपर्यन्तं तं ददर्शैवेत्यर्थः ॥ ३८ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे विंशोऽध्यायः ॥ २० ॥

### श्रीमद्वीरराघवव्याख्या

त्वन्मायया मोहितस्य त्वया पुनर्मोहनं नोचितं किन्तु हितमेव चेष्टितव्यमित्याह त्वन्माययेति । हे ईश ! त्वन्मायया अबुधः स्वात्मपरमात्मयाथात्म्यज्ञानविधुरः जनः लोकः दैवात्त्वां भजन् ऋतात्मनः सत्यात्मनस्त्वत्तः यदि अन्यत् अर्थकामादिकमाशास्ते तर्हि खण्डितः पृथक्कृतः दूरीकृत एव स्यादित्यर्थः । ईशेति हेतुगर्भम्, आत्मना ईशेन त्वया आत्मीयमैश्वर्यं दूरीकृतं स्यादितीशत्वमेव विप्लुतं स्यादिति भावः । अतः स्वयमविज्ञापित एव बालहितमज्ञपुत्रहितं पिता यथा चरेत् कुर्यात्तथा नः समीहितं कर्तुमर्हसि ॥ ३१ ॥ ❀ ❀ एवमुक्तो भगवान् तदुक्तमनुजग्राहेत्याह मुनिः । हे राजन् ! ते त्वया साधु वर्णितं यत् यस्मात् आशिषः ऐहिकपुरुषार्थान्नाशास्से नेच्छसि, अतो भवान् मत्परः स्वर्गापवर्गनरकान् समं यथा तथा पश्यति । अपवर्गोऽत्र कैवल्यं नरकग्रहणं दृष्टान्तार्थं नरकवत्स्वर्गापवर्गौ हेयौ द्रक्ष्यसीत्यर्थः । हे महाराज ! ते तुभ्यमहं प्रीतः यस्मात्त्वं मदादेशं श्रद्धानः विश्वसन् दुस्त्यजमपि रोषमत्यजः । तन्मदादेशविश्वसनमेव मह्यं परमुत्कृष्टमर्हणमाराधनम् ॥ ( ३२ क ) ॥ ❀ ❀ इति पूर्वोक्तरीत्या आदिराजेन पृथुना नुतः स्तुतः स विश्वभुग्भगवान् तमादिराजं प्रत्याह । उक्तमेवाह हे राजन् ! मयि ते तव भक्तिरस्तु वर्द्धतां, दिष्ट्या दैववशेन ते त्वया मयीदृशी धीर्भक्तिः कृता, कथंभूता यया धिया दुस्त्यजामपि मदीयां मायां तरति स्म ॥ ३२-३३ ॥ ❀ ❀ उपसंहरति इतीति । वैन्यस्य राजर्षेः प्रभोः अर्थवत् शृण्वतामपि पुरुषार्थसाधनं वचः अभिनन्द्य तेन पूजितः एनं वैन्यं अनुगृह्याच्युतो भगवान् गन्तुं मतिं चक्रे ॥ ३४ ॥ ❀ ❀ तदादाय सर्वे राज्ञा यज्ञेश्वरधिया भगवदात्मकत्वधिया यथायोग्यं वागादिभिः सभाजिताः पूजिताः ततः यज्ञभूमेः वैकुण्ठं भगवन्तमनुसृत्य गताः ययुः ॥ ३५-३६ ॥ ❀ ❀ सोपाध्यायस्य राज्ञः पश्यतः सतः अमुष्य राज्ञो मनो हरन्निव भगवान् स्वधाम प्रत्यगात् ॥ ३७ ॥ ❀ ❀ अदृष्टाय चक्षुर्विषयतामप्राप्ताय सन्दर्शित आत्मा येन

तस्मै देवानां ब्रह्मादीनामपि देवाय वासुदेवाय "वसन्ति यत्र भूतानि भूतात्मनि" इति निरुक्तवासुदेवपदवाच्याय नमस्कृत्य स्वपुरं ययौ ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्य्यकृतायां श्रीभागवतचंद्रचंद्रिकायाम् विंशोऽध्यायः ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

इतोऽपि मोहित इत्याह त्वन्माययेति। अबुधो यो जनः ऋतात्मनः सत्यात्मनो हरेः सकाशादन्यत्स्वर्गादिकमाशास्त इति यत्तस्मादेष त्वन्मायया खण्डितस्त्वदुपास्तेर्वियोजित इत्यर्थः। अस्यामवस्थायां बहुप्रजल्पेन किमिदमेव प्रार्थय इत्याह यथेति ॥ ३१ ॥ ❀ ❀ पृथूक्तं श्रीपतिमनसि संविष्टमिति भावेन हरेस्तदुक्तिप्रशंसाप्रकारमाह साध्विति। साधूचितं इदमात्यन्तिकभक्तलक्षणमिति भावेनाह स्वर्गेति। नरकान्नरकान्तरप्राप्तिसमये किञ्चिन्निवृत्तिः समत्वम्। मद्भक्तस्य रोषत्याग एव मत्प्रीतिसाधनमित्याह। प्रीत इति। प्रतिवचनं चेत्समाप्तं परं किमकारि हरिणेति तत्राह। इतीति ॥ ३२-३४ ॥ ❀ ❀ हरिमनुगता देवादयः किमकुरत्राह देवेति ॥ ३५ ॥ ❀ ❀ सर्वप्राणिषु यज्ञेश्वरो हरिरवस्थितः। तदुक्तं "भूतेषु हरिरित्येव हर्यर्पणधिया तथा। सर्वभूतेषु च हरेः पूजा कार्यात्मवेदिभिः" इति वचनात् इदं सर्वं तदर्पणमस्त्विति धीर्यज्ञेश्वरधीस्तया सभाजिताः संभाविताः ॥ ३६ ॥ ❀ ❀ गन्तुं मन एव कृतं न तु गतमिति शङ्का माभूदित्याह भगवानपीति ॥ ३७ ॥ ❀ ❀ राज्ञो यज्ञशालातः स्वपुरप्रस्थानप्रकारमाह अदृष्टायेति। अदृष्टाय चक्षुषोरविषयाय स्वस्य संदर्शितात्मने साक्षात्कारितस्वरूपाय ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां विंशोऽध्यायः ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

त्वन्मायया खण्डितस्य त्वया पुनः खण्डनं न कर्त्तव्यं, किन्तु हितं चेष्टितव्यमित्याह। त्वन्मायया ऋतादात्मनस्त्वत्तः खण्डितः पृथक् कृतः यद्यतोऽन्यत् पुत्रादिकमाशास्ते अतः स्वयमविज्ञापित एव हितं चेष्टितुमर्हसि ॥ ३१ ॥ ❀ ❀ मैत्रेय उवाच इति क्वचिन्नास्ति च, यथा पृथोः श्रीमद्भगवद्भक्त्येकनिष्ठा तथैव तेनान्यथानुपदेशे विश्वासश्च। तथा श्रीभगवतोऽपि तदेकदिक्त्वैव, तथाप्यन्यत्र प्रवर्त्तनन्तु तन्निष्ठाप्रकटनार्थो, अधिकारिविशेषे तद्द्वारैव ज्ञानादिप्रचारणार्थश्चेति स्फुटमेव दर्शयति इत्यादीति। अन्यथा ज्ञानमस्तु ते इत्येवोच्येतेति भावः। ततरुः सुदुस्तरामिति क्वचित् पाठः ॥ ३२-३४ ॥ ❀ ❀ देवर्षीति युग्मकम् ॥ ३५ ॥ ❀ ❀ वैकुण्ठस्यानुगताः सेवायमानाः पार्षदास्तु तेनैव सह गमिष्यन्तीति योग्यत्वात् ॥ ३६-३८ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे विंशोऽध्यायः ॥ २० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तस्मात्त्वं वृणीष्वेति प्रलोभनेन स्वभक्तपरीक्षामपि न कुर्या इत्याह त्वदिति। जनः सर्व एव यद्यस्मात् ऋतात्मनः सत्यस्वरूपात् भजनात् वस्तुनः सकाशादन्यदेवाशास्ते नोऽस्माकन्तु त्वन्मते यद्भद्रं भवति तदेव समीहितुं चेष्टितुमर्हसि। यथेति बालस्य हिताहितं पितैव जानाति, बालस्त्वध्ययनखेलनादिकं स्वहिताहितं विपर्ययेण जानातीत्येवं मह्यं वरस्य प्रदानं वा हितं विमृश्य स्वसम्मतमेव भद्रं क्रियतां न पुनर्मम सम्मतिरेव प्रमाणीकर्त्तव्येति भगवत्येव पृथुना विश्रम्भो व्यञ्जितः ॥ ३१ ॥ ❀ ❀ भगवानपि तथैवाह। मयि भक्तिरित्यतो जीवानां सर्वथा किं हितमिति प्रश्ने सर्वज्ञैरपि वेदवादिभिः प्रत्युक्तं ज्ञानयोगादिकं न विश्वसनीयम्। भगवन्तमपेक्ष्य तेषामप्यज्ञत्वादिति भक्तेरेव हितत्वं नान्यस्येति सिद्धान्तो निर्द्धारितः ॥ ३२-३७ ॥ ❀ ❀ अन्यैरदृष्टाय सन्दर्शित आत्मा आश्रयो येन तस्मै इति वैकुण्ठगमनपर्यन्तं पृथुस्तु तं ददर्शैवेत्यर्थः ॥ ३८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। विंशोऽध्यायश्चतुर्थस्य सङ्गतः सङ्गतः सताम् ॥ २० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

हे ईश ! ऋतः सत्यः आत्मा आश्रयोऽशी सर्वदा स्थित्यादिप्रदस्त्वमेव "ऐतदात्म्यमिदं सर्वम्" इत्यादिश्रुतेः, तस्मात्त्वत्तः जनस्त्वन्मायया खण्डितः अब्रह्मात्मकत्वभ्रान्तिं नीतोऽतोऽबुधः, अत एव यस्मात्त्वत्तोऽन्यत् ऐहिकामुष्मिकं सुखमाशास्ते। अतो यथा पिता बालस्य हितं चरेत् तथा अद्धा साक्षात्पिता स्वयं त्वमेव नो हितं समीहितुमर्हसि ॥ ३१ ॥ ❀ ❀ मायां तरति

स जन इति शेषः ॥ ३२-३५ ॥ ❀ ❀ वैकुण्ठानुगता विष्णुपार्षदाः ततः स्थानात् ॥ ३६-३७ ॥ ❀ ❀ पूर्वं सन्दर्शितः आत्मा विग्रहो येन तस्मै पुनरदृष्टाय परोक्षताङ्गतायापि नमस्कृत्य स्वपुरं ययौ ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे विंशोऽध्यायः ॥ २० ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

नन्वस्त्वेवं वाचो मोहकत्वं तथापि चेतनत्वात्स्वयं विचार्यैव कुतो कर्मादौ प्रवर्त्तेत इत्याशङ्क्य ततोऽप्यतिप्रबला या सर्वप्राण्यन्तःप्रविष्टा मोहिनी माया नाम तव शक्तिरस्ति तया विमोहिता न विचारे समर्था इत्याह—त्वन्माययेति। हे ईश इति संबोधनं मायाप्राबल्यप्रदर्शनार्थम्। अद्धेत्यवधारणार्थम्। हे ईश! अयमबुधः अज्ञो जनस्त्वन्मायया ऋतात्मनः परमार्थसत्यस्वरूपात्त्वत्तः खण्डितः पृथक्कृतः पराङ्मुखीकृत एवेत्यन्वयः। कथमेवं ज्ञायते तत्राह—यदिति। यत् यस्मात्त्वत्तोऽन्यत् पुत्रवित्तादिकमाशास्ते। अतो मायया वञ्चितानां पुनर्वरैः प्रलोभनेन त्वयापि वञ्चनं न कार्यं किंतु यथा पिता बालानामप्रार्थितमपि हितं स्वयमेवाचरेत्तथा त्वमपि नोऽस्माकमज्ञानां हितमेवाप्रार्थितमपि स्वयं समीहितुं कर्तुमर्हसीत्यन्वयः ॥ ३१ ॥ ❀ ❀ इत्येवमादिराजेन पृथुना नुतः स सर्वशास्त्रोद्दोपितो विश्वदृक् सर्वसाक्षित्वेन तदन्तःकरणे भक्तावेवाग्रहं जानंस्तमाहेत्यन्वयः। भगवद्वचनमेव दर्शयति—राजन्नित्याद्यक्षरनवाधिकसार्द्धेन। हे राजन्! मयि पुरुषोत्तमे तव भक्तिरस्तु। ईदृशी अलौकिकी प्रेमवती धीस्ते त्वया मयि कृतेत्येतद्दिष्ट्या भद्रं जातम्। कुतो यतो यया धिया दुस्त्यजां दुस्तरामपि मदीयां मायां जनस्तरति स्म। संबोधनेन प्रजापालनमपि तवोचितमेवेति सूचितम् ॥ ३२ ॥ ❀ ❀ कुतः प्रजापालनमुचितमित्याशङ्क्य यतस्तत्रैव तवाधिकार इति द्योतयन् संबोधयति—हे त्वमप्रमत्तः इति। यस्मात् अधिकारित्वेन प्रजापालनमप्युचितमेवान्यथाहृतपुण्यः करहारोऽयमत्तीति दोषप्रसक्तिरवतारवैयर्थ्यापत्तिश्च तत्तस्मात् त्वमप्रमत्तः विषयेष्वनासक्तः सन्मया यत्समः समानोत्तममध्यमाधम इत्यादिना प्रजापालनाद्यादिष्टं तत्कुरु। तथा करणेनैव तव सर्वपुरुषार्थसिद्धिर्भविष्यति। यस्मात् साक्षाद्वेदद्वारा वा मदादेशकरो मदाज्ञापालको लोकः प्राणी सर्वं इहामुत्रिश्च शोभनं सुखं प्राप्नोति ॥ ३३ ॥ ❀ ❀ पृथोर्यज्ञमहोत्सवनिरूपणमुपसंहरति—इतीति पञ्चभिः। इत्येवं पूर्ववर्णितप्रकारेण पृथुना पूजितोऽच्युतः स्वरूपतो गुणतो वा च्युतिरहितो भगवान् वैन्यस्य पृथोरर्थवत् स्वस्यान्यस्य वा तदनुसृतस्य जनस्य पुरुषार्थहेतुत्वात्सप्रयोजनवद्वचः प्रतिनन्द्य वचसो धीहेतुकत्वात् दिष्ट्येदृशी धीरिति तद्धेतुधीप्रतिनन्दनद्वारैव वचसः प्रतिनन्दनं कृत्वा एनं पृथुमनुगृहीत्वा तदभिलषितां भक्तिं दत्त्वा गन्तुं मतिं चक्र इत्यन्वयः। तद्वचसोऽर्थवत्त्वे तत्सूक्ष्मबुद्धिमत्त्वस्य हेतुत्वं सूचयन् राजानं विशिनष्टि—राजर्षेरिति ॥ ३४ ॥ ❀ ❀ तदा देवादयोऽपि यज्ञेश्वरधिया यज्ञेश्वरो भगवान्विष्णुस्तद्विभूतिरूपत्वात्तद्‌बुद्ध्या वाचा स्तुत्यादिना वित्तेन वस्त्रभूषणान्नदक्षिणादिप्रदानेन प्रांजलिभिर्नमस्कारैश्च भक्तिपूर्वकं राज्ञा सभाजिताः संपूजिताः सन्तस्ततः स्थानात्सर्वे ययुरिति द्वयोरन्वयः। वैकुण्ठानुगताः भगवतः पार्षदा भक्ताश्च ॥ ३५-३६ ॥ ❀ ❀ सोपाध्यायस्य उपाध्यायैः ऋत्विग्भिश्च सहितस्यामुष्य राजर्षेः पृथोर्मनो हरन्निव भगवानपि स्वधाम वैकुण्ठं प्रत्यगादित्यन्वयः। स्वलावण्यादिगुणेन मनस आकर्षणमात्रमेव हरणं विवक्षितं न स्वस्थानाद्देहाद्विभाग इति ज्ञापनायेवशब्दप्रयोगः। एवमाकर्षणे हेतुः—प्रभुरिति। यतो ब्रह्मादीनामपि स्वामीत्यर्थः। तत्रापि हेतुः—अच्युत इति। यतः स्वरूपतो गुणतो वा न च्युतोऽतः प्रभुरित्यर्थः। चकारः पादपूरणार्थः ॥ ३७ ॥ ❀ ❀ नृपः पृथुश्च तस्मै अदृष्टाय दृष्टिपथमतिक्रान्ताय नमस्कृत्य स्वपुरं ययावित्यन्वयः। भगवद्दर्शनस्य दुर्लभत्वं सूचयन् विशिनष्टि—संदर्शितात्मन इति। कृपयैव संदर्शित आत्मा निजरूपं येन तस्मै। दर्शनस्य दुर्लभत्वे हेतुं सूचयन् पुनर्विशिनष्टि—देवानां देवायेति। देवा ब्रह्मादयस्तेषामपि देवाय पूज्यायेत्यर्थः। देवदेवत्वेपि हेतुं सूचयन्पुनर्विशिनष्टि—वासुदेवायेति। वसन्त्यस्मिन् सर्वं इति वासुः दीव्यति क्रीडति सर्वत्र स देवः वासुश्चासौ देवश्चेति वासुदेवः सर्वाधारभूतः क्रीडाशाली च यत एवंभूतोऽतो ब्रह्मादिपूज्यस्तस्मा इत्यर्थः ॥ ३८ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे कामनिरूपणे। विंशोऽपि विवृतोऽध्यायः प्रसादविनिरूपकः ॥ ३ ॥

### भाषानुवादः

प्रभो! आपकी मायासे ही मनुष्य अपने वास्तविक स्वरूप आपसे विमुख होकर अज्ञानवश अन्य स्त्री-पुत्रादिकी इच्छा करता है। फिर भी जिस प्रकार पिता पुत्रकी प्रार्थनाकी अपेक्षा न रखकर अपने-आप ही पुत्रका कल्याण करता है, उसी प्रकार आप भी हमारी इच्छाकी अपेक्षा न करके हमारे हितके लिये स्वयं ही प्रयत्न करें ॥ ३१ ॥ ❀ ❀

श्री मैत्रेयजी कहते हैं—आदिराज पृथुके इस प्रकार स्तुति करनेपर सर्वसाक्षी श्रीहरिने उनसे कहा, 'राजन्! तुम्हारी मुझमें भक्ति हो। बड़े सौभाग्यकी बात है कि तुम्हारा चित्त इस प्रकार मुझमें लगा हुआ है। ऐसा होनेपर तो पुरुष सहजमें ही मेरी उस मायाको पार कर लेता है, जिसको छोड़ना या जिसके बन्धनसे छूटना अत्यन्त कठिन है। अब तुम सावधानीसे मेरी आज्ञाका पालन करते रहो। प्रजापालक नरेश! जो पुरुष मेरी आज्ञाका पालन करता है, उसका सर्वत्र मङ्गल होता है' ॥ ३२–३३ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—विदुरजी! इस प्रकार भगवान्ने राजर्षि पृथुके सारगर्भित वचनोंका आदर किया। फिर पृथुने उनकी पूजा की और प्रभु उनपर सब प्रकार कृपाकर वहाँसे चलनेको तैयार हुए ॥ ३४ ॥ ❀ ❀ महाराज पृथुने वहाँ जो देवता, ऋषि, पितर, गन्धर्व, सिद्ध, चारण, नाग, किन्नर, अप्सरा, मनुष्य और पक्षी आदि अनेक प्रकारके प्राणी एवं भगवान्के पार्षद आये थे, उन सभीका भगवद्बुद्धिसे भक्तिपूर्वक वाणी और धनके द्वारा हाथ जोड़कर पूजन किया। इसके बाद वे सब अपने-अपने स्थानोंको चले गये ॥ ३५–३६ ॥ ❀ ❀ भगवान् अच्युत भी राजा पृथु एवं उनके पुरोहितोंका चित्त चुराते हुए अपने धामको सिधारे ॥ ३७ ॥ ❀ ❀ तदनन्तर अपना स्वरूप दिखाकर अन्तर्धान हुए अव्यक्तस्वरूप देवाधिदेव भगवान् को नमस्कार करके राजा पृथु भी अपनी राजधानीमें चले आये ॥ ३८ ॥

इति विंशोऽध्यायः ॥ २० ॥



# अथैकविंशोऽध्यायः

मैत्रेय उवाच

मौक्तिकैः कुसुमस्रग्भिर्दुकूलैः स्वर्णतोरणैः। महासुरभिभिर्धूपैर्मण्डितं तत्र तत्र वै ॥ १ ॥
चन्दनागुरुतोयार्द्ररथ्याचत्वरमार्गवत्। पुष्पाक्षतफलैस्तोक्मैर्लाजैरर्चिर्भिरर्चितम् ॥ २ ॥
सवृन्दैः कदलीस्तम्भैः पूगपोतैः परिष्कृतम्। तरुपल्लवमालाभिः सर्वतः समलंकृतम् ॥ ३ ॥
प्रजास्तं दीपबलिभिः सम्भृताशेषमङ्गलैः। अभीयुर्मृष्टकन्याश्च मृष्टकुण्डलमण्डिताः ॥ ४ ॥
शङ्खदुन्दुभिघोषेण ब्रह्मघोषेण चर्त्विजाम्। विवेश भवनं वीरः स्तूयमानो गतस्मयः ॥ ५ ॥
पूजितः पूजयामास तत्र तत्र महायशाः। पौराञ्जानपदांस्तांस्तान् प्रीतः प्रियवरप्रदः ॥ ६ ॥
स एवमादीन्यनवद्यचेष्टितः कर्माणि भूयांसि महान्महत्तमः।
कुर्वन् शशासावनिमण्डलं यशः स्फीतं निधायारुरुहे परं पदम् ॥ ७ ॥

सू[1]त उवाच

तदादि[2]राजस्य यशो विजृम्भितं गुणैरशेषैर्गुणवत्सभाजितम्।
क्षत्ता महाभागवतः सदस्पते कौषारविं प्राह गृणन्तमर्चयन् ॥ ८ ॥

विदुर उवाच

सोऽभिषिक्तः पृथुर्विप्रैर्लब्धाशेषसुरार्हणः। बिभ्रत् स वैष्णवं तेजो बाह्वोर्याभ्यां दुदोह गाम् ॥ ९ ॥
को न्वस्य कीर्तिं न शृणोत्यभिज्ञो यद्विक्रमोच्छिष्टमशेषभूपाः।
लोकाः सपाला उपजीव[3]न्ति काममद्यापि तन्मे वद कर्म शुद्धम् ॥ १० ॥

अन्वयः—मौक्तिकैः कुसुमस्रग्भिः दूकुलैः स्वर्णतोरणैः महासुरभिभिः धूपैः तत्र तत्र वै मंडितम् चन्दनागुरुतोयार्द्र-रथ्याचत्वरमार्गवत् पुष्पाक्षतफलैः तोक्मैः लाजैः अर्चिर्भिः अर्चितम् सवृन्दैः कदलीस्तम्भैः पूगपोतैः परिष्कृतम् तरुपल्लव-मालाभिः सर्वतः समलंकृतम् ॥ १–३ ॥ ❀ ❀ प्रजाः मृष्टकुण्डलमण्डिताः मृष्टकन्याः च दीपबलिभिः संभृताशेषमंगलैः तम् अभीयुः ॥ ४ ॥ ❀ ❀ गतस्मयः स्तूयमानः सः वीरः शङ्खदुंदुभिघोषेण ऋत्विजाम् ब्रह्मघोषेण च भवनम् विवेश महायशाः पूजितः प्रीतः प्रियवरप्रदः तत्र तत्र तान् तान् पौरान् जानपदान् पूजयामास ॥ ५–६ ॥ ❀ ❀ अनवद्यचेष्टितः महत्तमः महान् सः एवमादीनि भूयांसि कर्माणि कुर्वन् अवनिमण्डलम् शशास स्फीतम् यशः निधाय परम् पदम् आरुरुहे ॥ ७ ॥ ❀ ❀ सदस्पते महाभागवतः क्षत्ता अशेषैः गुणैः विजृम्भितम् तत् आदिराजस्य यशः गृणन्तम् गुणवत्स-भाजितम् कौषारविम् अर्चयन् प्राह ॥ ८ ॥ ❀ ❀ याभ्याम् गाम् दुदोह बाह्वोः वैष्णवम् तेजः बिभ्रत सः लब्धाशेषसुरार्हणः सः पृथुः विप्रैः अभिषिक्तः ॥ ९ ॥ ❀ ❀ अशेषभूपाः सपालाः लोकाः च यद्विक्रमोच्छिष्टम् कामम् अद्यापि उपजीवन्ति अस्य कीर्तिम् कः नु अभिज्ञः न शृणोति तत् शुद्धम् कर्म मे वद ॥ १० ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

एकविंशे तु पृथुना प्रजानामनुशासनम्। महासत्रे सुरादीनां महासदसि वर्ण्यते ॥ (१) ॥

स्वपुरं ययावित्युक्तं तत्पुरमनुवर्णयति मौक्तिकैरिति त्रिभिः ॥ १ ॥ ❀ ❀ चंदनागुरुयुक्तैस्तोयैरार्द्रा रथ्यादयस्तद्युक्तम्। तोक्मैर्हरितयवैरंकुरैरिति वा, अर्चिर्भिर्दीपैः ॥ २ ॥ ❀ ❀ सवृंदैः पुष्पफलयुक्तैः कदलीस्तंभैः पूगैर्वृक्षैस्तथाविधैः सर्वतः

---

१. प्राचीनपाठे 'सूत उवाच' इति नास्ति। २. प्रा० पा०—तदाधिरा०। ३. प्रा० पा०—उपयन्ति।

समलंकृतं शोभितम् ॥ ३ ॥ ❀ ❀ संभृतानि संपादितान्यशेषाणि मंगलानि दध्यादीनि तैः सहाभिजग्मुः मृष्टा उज्ज्वलाः कन्याश्च ॥ ४ ॥ ❀ ❀ गतस्मयो निरहंकारः ॥ ५ ॥ ❀ ❀ प्रियान्वरान्प्रददातीति तथा ॥ ६ ॥ ❀ ❀ गुणैर्महानत एव महत्तमः पूज्यतमः ॥ ७ ॥ ❀ ❀ गुणैर्विजृम्भितमूर्जितं गुणवद्भिः सभाजितं सत्कृतं यशो गृणंतं मैत्रेयमर्चयन्प्राह । हे सदसस्पते शौनक ॥ ८ ॥ ❀ ❀ लब्धान्यशेषसुराणामर्हणानि येन सः । किमकरोदिति शेषः ॥ ९ ॥ ❀ ❀ श्रवणौत्सुक्यमाविष्कुर्वन्प्रार्थयते को न्विति । यस्य विक्रमः पृथ्वीदोहनं तस्योच्छिष्टतुल्यं कामं विषयम् । तत्तस्य कर्म वद ॥ १० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

महासत्रे दीर्घयज्ञे ( १ ) । तं पृथुम् ॥ १-४ ॥ ❀ ❀ निरहंकारस्तादृशमसाधारणमैश्वर्यं स्वस्य वीक्ष्यापि गतगर्वः ॥ ५ ॥ ❀ ❀ पूजितः स्वर्णमुद्रानर्घ्यनववस्त्राद्युपायनप्रदानेनेत्यर्थः । पूजयामास स उष्णीषकंचुकनेपालकंबलादिप्रतिदानेनेत्यर्थः ॥ ६ ॥ ❀ ❀ अत एव गुणैर्महत्त्वादेव ॥ ७ ॥ ❀ ❀ सदसः सभायाः पते सभापतित्वेन पूज्यत्वात्त्वामहमिदं वर्णये । किञ्चेदमेव सदस्पतेः शोभनमिति भावः ॥ ८ ॥ ❀ ❀ वैष्णवं तेजः सुदर्शनं "त्वं तेजः पौरुषं परम्" इत्यंबरीषोक्तेः । "विष्णुः सुदर्शनं चक्रं तत्पत्न्यव्याहतां श्रियम्" इत्यभिषेकोक्तरमुपायनाख्यानोक्तेः । कदाचिद्वामकरेपि तद्धारणाद्बाह्वोरिति द्विवचनम् । अन्यथा बाहावित्येवं कथं नावादीति मनीषिभिरेतेन कल्पनान्तरनिवृत्तिरप्यसूचि ॥ ९ ॥ ❀ ❀ सर्वकामानां पृथ्वीदुग्धत्वात्पृथ्वीदोहनस्य तद्विक्रमकृतत्वादित्यर्थः ॥ १० ॥

## श्रीमद्वीरराघवव्याख्या

पुरं ययावित्युक्तं तत्पुरमनुवर्णयति मौक्तिकैरिति । मौक्तिकैर्मुक्तादामभिः चन्दनागरुयुक्तैस्तोयैरार्द्रा रथ्यादयः अस्मिन् सन्तीति तथा तोक्मैर्यवाङ्कुरैरर्चिर्भिर्दीपैश्च ॥ १-२ ॥ ❀ ❀ पूगपोतैर्बालपूगैः परिष्कृतमलंकृतं संभृतान्यशेषाणि मङ्गलद्रव्याणि दध्यादीनि तैः सहाभिजग्मुः राज्ञोऽभिमुखं ययुः । मृष्टानि निघर्षितानि कुण्डलानि यासां ताः मृष्टा उज्ज्वलाः कन्याश्च अभीयुः ॥ ३-४ ॥ ❀ ❀ ततः शङ्खादिघोषेण ऋत्विजां वेदघोषेण च सह वन्दिभिः स्तूयमानो विगतस्मयः निरहङ्कारः वीरः पृथुः भवनं विवेश ॥ ५ ॥ ❀ ❀ तत्र तत्र रथ्यादिषु पौरादिभिः पूजितः महायशाः विपुलकीर्तिः पौरान् पुरवासिनः जानपदान् देशवासिनश्च तदीयप्रजादिभिः प्रीतः तेभ्यः समीहितवरप्रदो भूत्वा यथायोग्यं पूजयामास ॥ ६ ॥ ❀ ❀ तथा गुणैर्महान् अत एव महत्तमः पूज्यतमः अतः एवानवद्यचेष्टितः निर्दुष्टोत्तरव्यापारः एवमादीनि दोहनादीनि भूयांसि कर्माणि कुर्वन् भूमण्डलं शशास अनुशिष्टवान् । ततः स्फीतं विपुलं यशः इह लोके निधाय परं पदं वैकुण्ठमारुरोह अधिरूढवान् ॥ ७ ॥ ❀ ❀ एवं श्रुतपृथुचरित्रः क्षत्ता एवमादीन्यादिशब्दोपक्षिप्तान्यतदुदारचेष्टितंशुश्रूषया पुनः प्राहेत्याह सूतः श्रुत्वेति । अशेषैर्गुणैर्विजृभिमूर्जितं गुणवद्भिः सभाजितं सत्कृतमधिराजस्य पृथोर्यशः श्रुत्वा महाभागवतः क्षत्ता हे सदसपते ! शौनकः गृणन्तं कथयन्तं कौषारविं मैत्रेयमर्चयन् साधु साध्विति सम्मानयन्प्राह ॥ ८ ॥ ❀ ❀ उक्तमेवाह स इति द्वाभ्याम् । विप्रैर्ब्रह्मर्षिभिः राज्येऽभिषिक्तः लब्धमशेषाणामखिलानामिन्द्रादीनामर्हणं येन सः वैष्णवं विष्णोः सम्बन्धि तेजः वीर्यं बाह्वोः बिभ्रत् बिभ्राणः याभ्यां वैष्णवतेजःशालिभ्यां गां दुदोह, एवंभूतः किमकरोदिति शेषः ॥ ९ ॥ ❀ ❀ श्रवणौत्सुक्यमाविष्कुर्वन् प्रार्थयते को न्विति । अस्य पृथोः कीर्तिमभिज्ञश्श्लोको नु न शृणोति, कथम्भूतस्य यस्य विक्रमः पृथ्वीदोहनादिरूपः तस्य यदुच्छिष्टं तुच्छं कामभद्यापि अशेषभूपाः लोकपालैः सहिता लोकाश्च उपजीवन्ति तत्कर्म तदीयं शुद्धं निरवद्यं चेष्टितं मे मह्यं वद ॥ १० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

देवादीन्विना हरेर्ब्राह्मणाः सन्निधानपात्रमित्येतत्प्रतिपाद्यतेऽस्मिन्नध्याये । तत्रानन्तरातीताध्याये पृथुः पुरं ययावित्युक्तं तत्पुरं वर्णयति मौक्तिकैरित्यादिना ॥ १ ॥ ❀ ❀ पिष्टचन्दनागुरुमिश्रितोयैरार्द्रा रथ्याचत्वरमार्गा यस्मिंस्तत्तथोक्तं गोमयतोयैरर्चिर्भिर्दीपज्वालाभिः ॥ २ ॥ ❀ ❀ पूगपोतैः क्रमुकपुष्पैः परिष्कृतमलंकृतम् ॥ ३ ॥ ❀ ❀ सम्भृतानि सम्पादितानि अशेषाणि मङ्गलानि दध्यादीनि तैश्च युक्ताः, मृज् संशुद्धाविति धातुः ॥ ४ ॥ ❀ ❀ भूयः पुरप्रवेशानन्तरं गतस्मयो गर्वरहितः ॥ ५ ॥ ❀ ❀ प्रियानभीष्टान्वरान् प्रददातीति प्रियवरप्रदः ॥ ६ ॥ ❀ ❀ प्रश्नमङ्कुरयन्नुपसंहरति स एवमिति । भूयांसि महान्ति । स्फीतं पुष्टं लोकेनिधाय ॥ ७ ॥ ❀ ❀ गुणवद्भिः पुरुषैः सभाजितं पूजितम् ॥ ८ ॥ ❀ ❀ किमाहेति तत्राह सोऽभिषिक्त इति । स पृथुर्यत्कर्माकरोत्तन्मे वदेत्यन्वयः । लब्धान्यशेषैः सुरैः कृतान्यर्हणानि येन स तथोक्तः ॥ ९ ॥ ❀ ❀ वक्तव्यत्वे गुणमाह को न्वस्येति । "देवेभ्य ऋषयो भूपाश्चोच्यन्ते शक्तिमत्तया । कचित्कचित्तु मोहार्थं कादाचित्कात्तु हेतुतः" इति वचनाद्युक्तं सपाला इति ॥ १० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

मौक्तिकैरिति त्रिकम्। तोक्मैरित्यत्र स्तोमैरिति चित्सुखः ॥ १-८ ॥ ❀ ❀ बिभ्रद् वैष्णवमिति। गौणपाठः स इत्यत्र तु पौनरुक्त्यं लक्ष्यते ॥ ९ ॥ ❀ ❀ यद्विक्रमेति। येन विक्रम्य उपात्तं तद् उच्छिष्टमेवेत्यर्थः ॥ १०-१३ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

एकविंशे महासत्रे सर्वसौन्दर्यमण्डितः। प्रश्रयाब्धिः पृथुर्भक्तिं स्वप्रजाः समशिक्षयत् ॥ ( १ ) ॥

पुरं ययावित्युक्तं तत् पुरमनुवर्णयति मौक्तिकैरिति त्रिभिः। मौक्तिकादिभिर्यत् यत् पुरं मण्डितं तत्र तत्र ययाविति पूर्वेण वान्वयः ॥ १ ॥ ❀ ❀ तोक्मैर्हरितयवैः अर्चिर्भिर्दीपैः ॥ २ ॥ ❀ ❀ सवृन्तैः फलपुष्पवृन्तसहितैः पूगपोतैर्नूतनगुवाक-वृक्षैः ॥ ३ ॥ ❀ ❀ निर्मञ्जनार्थं दीपावलिभिः सम्पूर्णाशेषमङ्गलैर्दध्यादिभिः सहिता मृष्टकन्याः मार्ज्जितगात्र्यः कुमारिकाः, मृष्टकुण्डलेति तदुपलक्षितोज्ज्वलवस्त्रालंकारयुक्ताः ॥ ४ ॥ ❀ ❀ गतस्मयः स्वस्य तादृशमसाधारणमैश्वर्यं वीक्ष्यापि विगतगर्व इत्यर्थः ॥ ५ ॥ ❀ ❀ पूजितः पौरादिभिः स्वर्णमुद्रानर्घ्यनव्यवस्त्राद्युपायनार्पणेनेत्यर्थः, पूजयामास स उत्तीर्णकञ्चुकोष्णीषा-दिप्रतिदानेनेत्यर्थः ॥ ६ ॥ ❀ ❀ महान्महत्तम इति उत्तममध्यमकनिष्ठतया त्रिविधेषु महत्तमेषु मध्ये उत्तमः महत्तम इत्यर्थः ॥ ७ ॥ ❀ ❀ गुणवद्भिः सभाजितं सत्कृतं यशो गृणन्तं हे सदस्पते शौनक ॥ ८ ॥ ❀ ❀ वाह्योर्विभ्रद्-भूत् ॥ ९ ॥ ❀ ❀ यस्य विक्रमेण उच्छिष्टमिति सर्वेषां कामानां पृथ्वीदोहनस्य यद्विक्रमकृतत्वादित्यर्थः। आरब्धानेवेति मत्वेति शेषः ॥ १० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

श्रीपृथुः स्वप्रजामन्वशासदिति वर्णयत्येकविंशे। तत्रादौ पुरं ययाविति यदुक्तं तत्पुरं वर्णयति मौक्तिकैरि-त्यादिना ॥ १ ॥ ❀ ❀ चन्दनागुरुसंयुक्तैः तोयैरार्द्रा रथ्यादयो विद्यन्ते यस्य तत् पुष्पादिभिः तोक्मैरङ्कुरैः अर्चिर्भिर्दीपा-वलिभिरर्चितमलंकृतम् ॥ २ ॥ ❀ ❀ सवृन्दैः पत्रफलसहितैः परिष्कृतम् वेष्टितम् ॥ ३ ॥ ❀ ❀ मृष्टैः प्रज्वलितैः कुण्डलैरलंकृताः ध्वजाः मृष्टाः उज्ज्वलाः कन्याश्च संभृतैः सम्पादितैः अशेषैर्दध्यादिमङ्गलैः सह अभीयुः अभिमुखं जग्मुः ॥ ४ ॥ ❀ ❀ स्तूयमानोऽपि गतस्मयो निर्गर्वः ॥ ५ ॥ ❀ ❀ प्रियान्वाञ्छितान्वरान् प्रकर्षेण प्रियोक्तिभिः सह ददातीति तथा ॥ ६ ॥ ❀ ❀ महान् श्रेष्ठः यतो महत्तमो विष्ण्ववतारः स्फीतं शुद्धं यशो विताय परं पदं विष्णुलोक-मारुरुहे ॥ ७ ॥ ❀ ❀ हे सदस्पते शौनक ! क्षत्ता विदुरः अशेषगुणैर्विजृम्भितमूर्जितं गुणवद्भिः सभाजितं स्तुतं तदादि-राजस्य यशो गृणन्तं कौषारविमर्चयन्नाह ॥ ८ ॥ ❀ ❀ स पृथुः विप्रैरभिषिक्तः स च लब्धान्यशेषसुराणामर्हणानि येन तथा-भूतः वाह्वोर्वैष्णवं तेजो बिभ्रत् आसीत् ॥ ९ ॥ ❀ ❀ यद्यस्य विक्रमोच्छिष्टं भूपादयः कामम् उपजीवन्ति तस्य विशुद्धं कर्म मे मह्यं वद ॥ १० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

पृथुना स्वस्य धर्मस्य प्रजानां च तथैव च। निर्धारणं कृतं यत्तदेकविंशे निरूप्यते ॥ ( १ ) ॥

स्वपुरं ययावित्युक्तं तत्र तत्पुरं कथंभूतमित्याकाङ्क्षायां पुरं वर्णयति-मौक्तिकैरिति त्रिभिः। मौक्तिकादिभिस्तत्र तत्र सर्वत्र मण्डितमित्यन्वयः। वै पादपूरणार्थः ॥ १ ॥ ❀ ❀ चन्दनागुरुयुक्तैस्तोयैरार्द्ररथ्यादिमत्। रथ्या राजमार्गः। चत्वरं चतुष्पथः। मार्गः साधारणः। पुष्पादिभिस्तोक्मैरङ्कुरैः लाजैर्भृष्टधान्यैः अर्चिर्भिर्दीपैश्चार्चितम् ॥ २ ॥ ❀ ❀ संवृतैः फलपुष्पादिसहितैः कदलीस्तम्भैः तथा पूगानां पोतैर्बालवृक्षैः परिष्कृतं शृङ्गारितम्। तथाम्रादितरूणां पल्लवाः कोमलपत्राणि तै रचिताभिर्मालाभिस्तोरणविशेषैः सर्वतः सम्यगलंकृतम् ॥ ३ ॥ ❀ ❀ एवं पुरमनुवर्ण्य तदागमने प्रजानामुत्साहं दर्शयति-प्रजा इति। दीपानां बलिभिस्तथा संभृतानि संपादितानि यान्यशेषाणि सर्वाणि मङ्गलानि दध्यक्षतफलकुङ्कुमस्रष्टाम्रादीनि तैश्च सह प्रजास्तथा मृष्टाभ्यामुज्ज्वलाभ्यां कुण्डलाभ्यां मण्डिताः स्वरूपतोपि मृष्टाः स्नानादिना शुद्धा कन्याश्च तं पृथुमभीयुः संमुखं जग्मुरित्यन्वयः ॥ ४ ॥ ❀ ❀ शङ्खादिघोषेण तथा ऋत्विजां ब्राह्मणानां ब्रह्मघोषेण वेदपाठेन च सह भूतादिभिश्च स्तूयमानो वीरो महाप्रतापी तथापि गतस्मयः गर्वरहितः पृथुः भवनं स्वगृहं विवेशेत्यन्वयः ॥ ५ ॥ ❀ ❀ गृहप्रवेशात्प्रागेव तत्र तत्र स्थाने पौरादिभिः पूजितः अत एव तेषु प्रीतः सन् प्रियान्मनोभीष्टान् वरान् प्रकर्षेणासङ्कोचेन ददातीति तथाभूतस्तांस्तान् पौरादींस्त-त्तदभीष्टप्रदानेन पूजयामासेत्यन्वयः। यतो महायशाः। अन्यथा तन्न स्यादिति भावः ॥ ६ ॥ ❀ ❀ विदुरस्य शुश्रूषोद्रेकार्थ-मुक्तं पृथुचरितमुपसंहरति-स इति। स पृथुः अनवद्यचेष्टितः वेदविरुद्धपाषण्डदोषास्पृष्टं चेष्टितं यस्य सः। तत्र हेतुमाह-महानिति। यतः सद्गुणयुक्त इत्यर्थः। तत्रापि हेतुमाह-महत्तम इति। यतो महान्तो ब्रह्मादयस्तेषामपि पूज्यः भगवदवतार इत्यर्थः। एव-

मादीनि यज्ञादीनि भूयांसि बहूनि कर्माणीन्द्रप्रवर्त्तितपाखण्डनिवृत्तिपूर्वकलोकप्रवृत्त्यर्थं स्वयं कुर्वन्नवनिमण्डलं शशास पालयामासेत्यन्वयः। एवं धर्मे प्रवर्त्तनपूर्वकसर्वजनानां यथासुखं पालनेन स्फीतमत्युज्ज्वलं स्वयशो भूमौ निधाय संस्थाप्य परं पदं व्यापि वैकुण्ठाख्यमारुरुहे ॥ ७ ॥ ❁ ❁ एवं संक्षेपत उपसंहृतं पृथुचरितं श्रुत्वा तदेव पुनर्विस्तरशः शुश्रूषया विदुरः पप्रच्छेत्याह- तदिति। तदत्यपूर्वपृथिवीदोहनादिलक्षणमादिराजस्य पृथोर्यशो गृणन्तं वर्णयन्तं कौषारविं मैत्रेयमर्चयन् सत्कुर्वन् क्षत्ता विदुरः प्राह पप्रच्छेत्यन्वयः। सत्कारश्च ग्रन्थाद्बहिर्बोध्यः। श्रद्धया प्रश्नपूर्वकं पुनः श्रवणे प्रवृत्तौ हेतुं सूचयन् विदुरं विशिनष्टि-महाभागवत इति। हे सदस्पते शौनक इति संबोधयन् यथा भवान् महाभागवतत्वात्परमोत्साहेन भगवद्यशःश्रवणेच्छया वारं वारं पृच्छति-तद्वदिति सूचयति। परमवैष्णवयोः सर्वतो विरक्तयोर्विदुरमैत्रेययोः श्रवणवर्णनयोग्यत्वज्ञापनाय यशो विशिनष्टि-विजृम्भितमिति। भगवदवतारत्वादशेषैः सर्वैर्गुणैर्ज्ञानवैराग्यैश्वर्यादिभिर्विजृम्भितमुपबृंहितमित्यर्थः। अत एवान्यैरपि गुणवद्भिः सभाजितं सत्कृतमित्यर्थः ॥ ८ ॥ ❁ ❁ प्रश्नमेव दर्शयति-सोभिषिक्त इति द्वाभ्याम्। स पृथुर्विप्रैरभिषिक्तस्ततश्च लब्धान्यशेषेभ्यः सुरेभ्यो ब्रह्मादिभ्योऽर्हणानि च्छत्रासनचामरव्यजनभूषणादीनि येन सः। बाह्वोर्वैष्णवं तेजो बिभ्रत्। ततोऽग्रे किमकरोदिति शेषं कृत्वा तत्तस्य शुद्धं कामरागादिदोषरहितं कर्म आचरणं मे मह्यं वदेत्युत्तरेणान्वयः। तद्बाह्वोर्वैष्णवं तेजो भृतमित्यत्र किं प्रमाणमित्याकाङ्क्षायामाह-याभ्यामिति। स पृथुर्याभ्यां बाहुभ्यां गां पृथिवीं दुदोहेत्यन्वयेन क्रियाभेदात्तच्छब्दापौनरुक्त्यम्। पृथ्वीदोहनान्यथानुपपत्त्या तद्बाह्वोर्वैष्णवं तेजो भृतमिति कल्प्यत इति भावः ॥ ९ ॥ ❁ ❁ ननु तस्य चरितश्रवणे कथमेवमुत्साहो जात इत्याशङ्क्याह-को न्विति। यस्य पृथोर्विक्रमस्य पृथ्वीदोहनसमीकरणलक्षणस्योच्छिष्टं शेषं कामं भोग्यमद्याप्यशेषाः सर्वे भूपाः राजानस्तथा लोकपालैरिन्द्रादिभिः सहिता लोकाः सर्वे प्राणिनश्चोपजीवन्ति भुञ्जते तस्यास्य कीर्तिं को नु को वाऽभिज्ञो गुणग्राही न शृणोतीत्यन्वयः। अतो ममापि श्रवणेच्छेति भावः ॥ १० ॥

## भाषानुवादः

### महाराज पृथुका अपनी प्रजाको उपदेश

श्रीमैत्रेयजी कहते हैं—विदुरजी ! उस समय महाराज पृथुका नगर सर्वत्र मोतियोंकी लड़ियों, फूलोंकी मालाओं, रंग-बिरंगे वस्त्रों, सोनेके दरवाजों और अत्यन्त सुगन्धित धूपोंसे सुशोभित था ॥ १ ॥ ❁ ❁ उसकी गलियाँ चौक और सड़कें चन्दन और अरगजेके जलसे सींच दी गयी थीं तथा उसे पुष्प, अक्षत, फल यवाङ्कुर, खील और दीपक आदि माङ्गलिक द्रव्योंसे सजाया गया था ॥ २ ॥ ❁ ❁ वह ठौर-ठौरपर रक्खे हुए फल-फूलके गुच्छोंसे युक्त केलेके खंभों और सुपारीके पौधोंसे बड़ा ही मनोहर जान पड़ता था तथा सब ओर आम आदि वृक्षोंके नवीन पत्तोंकी बंदनवारोंसे विभूषित था ॥ ३ ॥ ❁ ❁ जब महाराजने नगरमें प्रवेश किया, तब दीपक, उपहार और अनेक प्रकारकी माङ्गलिक सामग्री लिये हुए प्रजाजनोंने तथा मनोहर कुण्डलोंसे सुशोभित सुन्दरी कन्याओंने उनकी अगवानी की ॥ ४ ॥ ❁ ❁ शङ्ख और दुन्दुभि आदि बाजे बजने लगे, ऋत्विग्गण वेदध्वनि करने लगे, बन्दीजनोंने स्तुतिगान आरम्भ कर दिया। यह सब देख और सुनकर भी उन्हें किसी प्रकारका अहङ्कार नहीं हुआ। इस प्रकार वीरवर पृथुने राजमहलमें प्रवेश किया ॥ ५ ॥ ❁ ❁ मार्गमें जहाँ-तहाँ पुरवासी और देशवासियोंने उनका अभिनन्दन किया। परम यशस्वी महाराजने भी उन्हें प्रसन्नतापूर्वक अभीष्ट वर देकर सन्तुष्ट किया ॥ ६ ॥ ❁ ❁ महाराज पृथु महापुरुष और सभीके पूजनीय थे। उन्होंने इसी प्रकारके अनेकों उदार कर्म करते हुए पृथ्वीका शासन किया और अन्तमें अपने विपुल यशका विस्तार कर भगवान्‌का परमपद प्राप्त किया ॥ ७ ॥ ❁ ❁ सूतजी कहते हैं—मुनिवर शौनकजी ! इस प्रकार भगवान् मैत्रेयके मुखसे आदिराज पृथुका अनेक प्रकारके गुणोंसे सम्पन्न और गुणवानोंद्वारा प्रशंसित विस्तृत सुयश सुनकर परम भागवत विदुरजीने उनका अभिनन्दन करते हुए कहा ॥ ८ ॥ ❁ ❁ विदुरजी बोले—ब्रह्मन् ! ब्राह्मणोंने पृथुका अभिषेक किया। समस्त देवताओंने उन्हें उपहार दिये। उन्होंने अपनी भुजाओंमें वैष्णव तेजको धारण किया और उससे पृथ्वीका दोहन किया ॥ ९ ॥ ❁ ❁ उनके उस पराक्रमके उच्छिष्टरूप विषयभोगोंसे ही आज भी सम्पूर्ण राजा तथा लोकपालोंके सहित समस्त लोक इच्छानुसार जीवननिर्वाह करते हैं। भला, ऐसा कौन समझदार होगा जो उनकी पवित्र कीर्ति सुनना न चाहेगा। अतः अभी आप मुझे उनके कुछ और भी पवित्र चरित्र सुनाइये ॥ १० ॥

## मैत्रेय उवाच

गङ्गायमुनयोर्नद्योरन्तरा क्षेत्रमावसन्। आरब्धानेव बुभुजे भोगान् पुण्यजिहासया ॥ ११ ॥
सर्वत्रास्खलितादेशः सप्तद्वीपैकदण्डधृक्। अन्यत्र ब्राह्मणकुलादन्यत्राच्युतगोत्रतः ॥ १२ ॥
एकदाऽऽसीन्महासत्त्रदीक्षा तत्र दिवौकसाम्। समाजो ब्रह्मर्षीणां च राजर्षीणां च सत्तम ॥ १३ ॥

---

१. प्रा० पा०—सर्वं०। २. प्रा० पा०—सा हि।

तस्मिन्नर्हत्सु सर्वेषु स्वर्चितेषु यथार्हतः । उत्थितः सदसो मध्ये ताराणामुडुराडिव ॥ १४ ॥
प्रांशुः पीनायतभुजो गौरः कञ्जारुणेक्षणः । सुनासः सुमुखः सौम्यः पीनांसः सुद्विजस्मितः ॥ १५ ॥

अन्वयः—सः गङ्गायमुनयोः नद्योः अन्तरा क्षेत्रं आवसन् पुण्यजिहासया आरब्धान् भोगान् एव बुभुजे ॥ ११ ॥ ❀ ❀ ब्राह्मणकुलात् अन्यत्र अच्युतगोत्रतः अन्यत्र सर्वत्र अस्खलितादेशः सप्तद्वीपैकदण्डधृक् ॥१२॥ ❀ ❀ सत्तम एकदा महासत्त्रदीक्षा आसीत् तत्र दिवौकसां ब्रह्मर्षीणां राजर्षीणां च समाजः ॥ १३ ॥ ❀ ❀ तस्मिन् अर्हत्सु सर्वेषु यथार्हतः स्वर्चितेषु ताराणां उडुराट् इव सदसः मध्ये उत्थितः ॥ १४ ॥ ❀ ❀ प्रांशुः पीनायतभुजः गौरः कंजारुणेक्षणः सुनासः सुमुखः सौम्यः पीनांसः सुद्विजस्मितः ॥ १५ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

प्राचीनकर्मभिः प्रारब्धानेव भोगान्बुभुजे न तु भोगांतरार्थं कर्माणि करोति तदपि भोगेन पुण्यक्षपणेच्छया न तु सुखासक्त्येत्यर्थः ॥ ११ ॥ ❀ ❀ अस्खलितोऽप्रतिहत आदेश आज्ञा यस्य सप्तसु द्वीपेष्वेक एव दंडं धारयतीति तथा । किं सर्वत्र नेत्याह । ब्राह्मणकुलव्यतिरेकेण अच्युतो गोत्रप्रवर्तकतुल्यो येषां वैष्णवानां तद्व्यतिरेकेण च ॥ १२ ॥ ❀ ❀ एकदा तस्य महासत्रदीक्षा आसीत्तत्र सत्रे देवादीनां समाज आसीदित्यर्थः ॥ १३ ॥ ❀ ❀ तस्मिन्सत्रे पूज्येषु स्वर्चितेषु सत्सु सदसो मध्ये उत्थितः स पृथुः समंततः समैक्षतेति षष्ठश्लोकेनान्वयः ॥ १४ ॥ ❀ ❀ प्रांशुरुन्नतः पीनावायतौ भुजौ यस्य कंजवदरुणे ईक्षणे यस्य शोभना द्विजा दंताः स्मितं च यस्य ॥ १५ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इत्यर्थ इति । वस्तुतस्तु प्रारब्धभोगादिकं लोकदृष्ट्यैव, तस्य भगवतारत्वान्न प्रारब्धभोगादीति भावः । अंतरा क्षेत्रं मध्यवर्त्तिदेशम् ॥ ११ ॥ ❀ ❀ वैष्णवानां वर्णाश्रमाभावो ध्वनित इति चक्रवर्त्ती । ग्रंथांतरे तु "स्त्रीणां स्यात्पतिगोत्रत्वं पाणिग्रहणतो यथा । नृणामच्युत गोत्रत्वमच्युताश्रयणात्तथा ॥ संत्यज्य विधिवत्सर्वं पुत्रदारगृहादिकम् । आत्मानं यद्व्रजेद्विष्णुमच्युताश्रयणं हि तत्" इति वैष्णवात् । विधिवदित्युक्तेस्संन्यासो लक्ष्यते । यद्वा-विधिवच्छास्त्रविहिताचार्ययथाधिकारमंत्रग्रहणविधिनेत्यर्थः । न तु जात्यादिव्युत्क्रमणेन मंत्रग्रहणादि कार्यमिति भावः । अस्खलिताज्ञः । यत्तु चक्रवर्त्तिना वैष्णवानां वर्णाश्रमाभावो ध्वनितस्तन्नारदसनकादिषु विप्रद्विजोत्तमादिशब्दप्रयोगस्य "स्वागतं भो द्विजश्रेष्ठाः, यस्य विप्राः प्रसीदंति" इत्यादिपृथूक्तेः । किञ्चार्जुनादिमहाभागवतेषु क्षत्रियबाहुजादिप्रयोगदर्शनाच्च तथा "नैष्ठिकाः सनकादयः, तथा वत्रे, बृहद्व्रतं मां तु" इति नारदोक्तेः । 'कर्मभिर्गृहमेधीयैः' इत्यादियुधिष्ठिराद्युक्तेश्च वर्णाश्रमाभिमानश्रवणाद्वैष्णवत्वप्रसक्तेश्चिंत्यम् ॥ १२ ॥ ❀ ❀ सत्तमेति । यथा त्वं सत्समाजमीहसे तथा पृथुरप्यासीदिति भावः । "यज्ञे वेषे सदादाने सत्रमाच्छादने नवे" इति ॥ १३ ॥ ❀ ❀ तस्मिन्सत्रे, अर्हत्सु पूज्येषु "अर्हंतौ जिनसंमान्यौ" इति यादवः । उडुराट् चंद्रः ॥ १४ ॥ ❀ ❀ सामुद्रिकोक्तमहाराजलक्षणवत्त्वेन पृथुं वर्णयति—प्रांशुरिति । पीनौ पीवरौ । आयतौ लंबौ । द्विजा दन्ताः ॥ १५ ॥

## श्रीमद्वीरराघवव्याख्या

एवमुक्तो मुनिराह गङ्गायमुनयोरित्यादिना । यद्यप्यत्र मुनिराहेत्याहेत्येवंरूपं सूतवाक्यमपेक्षितं तथाप्यर्थसिद्धत्वात्तन्नेत्यधिगन्तव्यमेवं प्रश्नेऽपि शुकवाक्यमर्थसिद्धं ज्ञेयम् । गङ्गायमुनयोर्महानद्योरन्तरा मध्ये स्थितं ब्रह्मावर्ताख्यं क्षेत्रं क्षेत्रे आवसन् "उपान्वध्याङ्वसः" इत्याधारस्य कर्मसंज्ञायां द्वितीया, आरब्धानेव प्राचीनकर्मायत्तानेव भोगान्न त्वपूर्वसाधनानुष्ठानारब्धान्, तत्र हेतुः पुण्यजिहासया पुण्यक्षपणेच्छया, मुमुक्षोः पापवत्पुण्यस्यापि स्वफलजननद्वारा मोक्षविरोधित्वेन पुण्यस्यापि जिहासितव्यत्वबुद्धिरतः मोक्षविरोधिभोगे साधनत्वेन कर्मानुष्ठानासम्भवादिति भावः, बुभुजे अनुभूतवान् ॥ ११ ॥ ❀ ❀ सर्वत्रास्खलितः अप्रतिहतः आदेश आज्ञा यस्य, सप्तद्वीपेषु एक एव दण्डं धारयति तथा स्वसमानराजान्तररहित इत्यर्थः, दण्डधारणं किं सर्वत्र न ब्राह्मणकुलादन्यत्रापि किं सर्वत्र न किन्तु अच्युतगोत्रतः अच्युतगोत्रात् अन्यत्र जात्यन्तरेष्वपि भागवतकुलादन्यत्रेत्यर्थः ॥ १२ ॥ ❀ ❀ एकदा महासत्रदीक्षा आसीत् महासत्रसङ्कल्पं कृत्वा तत्र दीक्षितोऽभूदित्यर्थः, तत्र महासत्रे दिवौकसां देवानां ब्रह्मर्षीणां देवर्षीणां समाजः सभा आसीदित्यर्थः । हे सत्तम ॥ १३ ॥ ❀ ❀ तस्मिन् समाजे महत्सु पूज्येषु यथायोग्यं पूजितेषु सत्सु देवेनेति शेषः, सदसः मध्ये उत्थितः सन् समन्ततः समैक्षतेति षष्ठेनान्वयः । तं विशिनष्टि- ताराणां मध्ये उडुराडिव चन्द्र इव स्थितः ॥ १४ ॥ ❀ ❀ प्रांशुरुन्नतः पीनावायतौ दीर्घौ भुजौ यस्य पद्मवदरुणे ईक्षणे यस्य शोभना नासिका यस्य सुंदरं मुखं यस्य सौम्यः प्रसन्नः पीनावंसौ स्कन्धौ यस्य शोभना द्विजा दन्ता यस्मिन् तत् स्मितं यस्येति बहुव्रीहिगर्भो बहुव्रीहिः ॥ १५ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

श्रद्धावतः श्रोतुं यस्मिञ्छ्रद्धा विदुषा तदेव वक्तव्यमिति भावयन्मैत्रेयस्तत्रोत्तरत्वेन तत्कथामाह गङ्गेति। यावद्भिर्भोगैर्देहस्थितिः स्यात्तानेव नाधिकानित्येवकारार्थः, तानपि पुण्यजिहासया पुण्यक्षयाभिप्रायेण न सुखार्थम्॥ ११॥ ❀ ❀ सर्वत्रेत्युक्तं सङ्कोचयति अन्यत्रेति। अच्युतगोत्रतो वैष्णवकुलात् "गोत्रं नाम्नि कुले खलम्" इति यादवः॥ १२॥ ❀ ❀ ज्ञानिनः प्रारब्धकर्मभोगस्य नियतत्वेन सिद्धत्वान्नैतद्वर्णनमत्रापेक्षितमन्यत्किञ्चिच्छ्राव्यमस्ति चेद्वक्तव्यमिति तत्राह–एकदेति। "यज्ञभेदे सदादाने सत्रमाच्छादने वने" इत्यभिधानात् दीक्षेति विशेषणाद्दीक्षायज्ञ इत्यर्थः। समाजः सम्मेलनम्॥ १३॥ ❀ ❀ दानार्थं भोजनार्थं वा मिथो निरीक्षणार्थं चेतस्ततः सङ्गच्छन्ते जनाः किमत्र चोद्यमिति तत्राह तस्मिन्निति। तस्मिन्समाजेऽर्हत्सु सम्मान्येषु "अर्हन्तौ जिनसम्मान्यौ" इति यादवः, उडुराट् चन्द्रः स राजा समन्ततश्चतुर्दशमुपविष्टानैक्षतेति षष्ठश्लोकेनान्वयो वेदितव्यः॥ १४॥ ❀ ❀ कथम्भूत इति तल्लक्षणं वक्ति प्रांशुरित्यादिना। गौरो निर्मलः यद्वा "गौरोऽरुणे सिते पीते" इति वचनात् गौरशब्दाक्षिप्तवर्णविशेषविशिष्टत्वं वक्ति कञ्जारुणेक्षण इत्यादिना। सौम्यः सुन्दरः विप्रप्रियो वा सोमयोग्यो वा, द्विजा दन्ताः॥ १५॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तस्मिन्निति सार्द्धषट्कम्॥ १४-१५॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

प्रारब्धानेवेति मत्वेति शेषः। यद्यपि भगवदवतारत्वेन भक्तत्वेन च न तस्य प्रारब्धं कर्म, तदपि भक्तिभूम्नातिदैन्येन प्राकृतजीव एवाऽहं सुखदुःखाभ्यां पुण्यपापे जिहासामीति तदभिमानो ज्ञेयः॥ ११॥ ❀ ❀ अच्युत एव गोत्रं प्रवर्त्तकतुल्यो येषां तेभ्यश्चेति वैष्णवानां वर्णाश्रमाभावो व्यञ्जितः। अन्यत्रेति ब्राह्मणानां शास्तृत्वे तत्तद्वेदाचार्यमेव वैष्णवानां तु तत्तन्मन्त्रगुरुमेव शास्तृत्वे व्यवस्थाप्येत्यर्थः। "पुत्रांश्च शिष्यांश्च नृपो गुरुर्वा मल्लोककामो मदनुग्रहार्थः। इत्थं विमन्युरनुशिष्यात्" इति ऋषभोक्तेः॥ १२॥ ❀ ❀ एकदा तस्य महासत्रदीक्षा आसीत्। तत्र सत्रे देवानाञ्च समाज आसीत्॥ १३॥ ❀ ❀ अर्हत्सु पूज्येषु ऋष्यादिषु किञ्चिद्विज्ञापनार्थमुत्थितः सन् समैक्षतेति षष्ठेनान्वयः॥ १४॥ ❀ ❀ प्रांशुरुन्नतः॥ १५॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

गङ्गायमुनयोरन्तरा मध्ये यत् क्षेत्रं तदावसन् पूर्वकर्मभिः प्रारब्धानेव बुभुजे, न तु भोगार्थं करोति लोकसंग्रहार्थं तु पुण्यानि करोत्येव। पूर्वकर्मफलभोगोऽपि पुण्यजिहासया पुण्यकर्मक्षपणेच्छया न त्विन्द्रियप्रीतये। प्रारब्धानेव बुभुजे भोगान् पुण्यजिहासयेत्युक्तिर्मुमुक्षुरिति द्योतनाय। भगवदवतारस्य कर्मफलभोगाद्यसंभवात्। यत्र क्षेत्रज्ञे भगवद्गुणाद्यावेशस्तस्यापि बद्धत्वासंभवेन कर्मफलभोक्तृत्वासंभवाच्चेत्यलं विस्तरेण। एवमृषभपरशुरामादिष्वपि बोध्यम्॥ १२॥ ❀ ❀ सर्वत्र सर्वदेशवर्तिषु जनेषु अस्खलितः आदेशो यस्य सः। सप्तद्वीपेषु एक एव दण्डं धृष्णोति प्रगल्भते इति दण्डधृक्। अन्यत्रेत्यनेन तयोः पूज्यत्वेन प्रायः शासनानर्हत्वात्॥ १२॥ ❀ ❀ एकदा एकस्मिन्काले महासत्रदीक्षा आसीत् पृथोरिति शेषः। तत्र तस्मिन्काले देवादीनां समाजः आसीदित्यर्थः॥ १३॥ ❀ ❀ तस्मिन्समाजे अर्हत्सु पूज्येषु यथार्हतः स्वर्चितेषु सत्सु ताराणामुडुराट् चन्द्र इव सदसो मध्ये उत्थितः सन् समन्ततः समैक्षतेति षष्ठेन सम्बन्धः॥ १४-१५॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

भगवद्भक्तत्वेन भोगेऽनासक्तस्यापि तत्कृपयारब्धभोगातिशयमाह–गङ्गेति। गङ्गायमुनयोर्नद्योरन्तरा मध्ये क्षेत्रं पुण्यदेशमावसन् प्राचीनकर्मभिरारब्धानेव भोगान् बुभुजे न भोगान्तरार्थे प्रयत्नं चकार। तदपि पूर्वकृतपुण्यस्यापि बन्धनत्वात्तज्जिहासया क्षपणेच्छया न सुखापेक्षयेत्यर्थः। अत्र पृथुदेहे ह्यस्त्यंशद्वयं भगवदंशो जीवश्च; तत्र जीवमेवोद्दिश्य कर्मविशुद्धिभक्तिज्ञानाद्युपदेशप्रारब्धभोगमोक्षादिवर्णनं न भगवन्तमुद्दिश्य तस्य तदसम्भवादिति बोध्यम्॥ ११॥ ❀ ❀ भगवत्कृपया तस्य प्रभावातिशयमाह–सर्वत्रेति। सर्वत्र अस्खलितः अप्रतिहत आदेश आज्ञा यस्य सः। कुत एवं यतः सप्तद्वीपेष्वेकः स एव दण्डधृक्। ननु सर्वत्र दण्डधारणे ब्राह्मणादिष्वपि तत्प्रसक्तेः कथं धर्मिष्ठत्वं भक्तत्वं वेत्याशङ्क्याह–अन्यत्रेति। ब्राह्मणकुलादन्यत्र तद्व्यतिरेकेण तथा अच्युतो भगवानेव गोत्रप्रवर्त्तको येषां भक्तानां ततोन्यत्र तद्व्यतिरेकेण च दण्डधृगित्यन्वयः। ब्राह्मणव्यतिरेकेण दण्डधारणाद्धर्मिष्ठत्वं भक्तव्यतिरेकेण तद्धारणाद्भक्तत्वं च दर्शितम्॥ १२॥ ❀ ❀ राज्ञो हि धर्मस्त्रेधा यज्ञाद्यनुष्ठानं प्रजारक्षणं प्रजोपदेशश्च तत्र सर्वत्रास्खलितादेश इत्यादौ रक्षा निरूपिता। यज्ञानुष्ठानं पूर्वनिरूपितमपि मध्यदण्डप्रवर्तितपाषण्डैः प्रतिबद्धं भविष्यतीति शङ्कां निराकुर्वन् पुनर्दर्शयति–एकदेति द्वाभ्याम्। एकदा तस्य महासत्रदीक्षा आसीत्। तत्र सत्रे दिवौकसां

देवगन्धर्वकिंनरसिद्धचारणवस्वादीनां स्वर्गवासिनां तथा ब्रह्मर्षीणां वसिष्ठादीनां च तथा राज्ञां मध्ये ये ऋषितुल्या विवेकिनस्ते राजर्षयस्तेषां च समाजो मेलनमासीदित्यन्वयः। तत्रापि भगवद्भक्तत्वाद्राजर्षिमध्यपातित्वमिति प्ररोचनार्थं विदुरं संबोधयति–हे सत्तम इति ॥ १३ ॥ ❀ ❀ तस्मिन् सत्रे अर्हत्सु पूज्येषु सर्वेषु यथार्हतः यथायोग्यं सुष्ठु सत्कारपूर्वकमर्चितेषु सत्सु सदसः सभाया मध्ये उत्थितः सन् पृथुः समन्ततः सर्वतः समैक्षतेति षष्ठेनान्वयः। तस्य शोभातिशये दृष्टान्तमाह–ताराणां मध्ये उडुराट् चन्द्र इवेति ॥ १४ ॥ ❀ ❀ प्रजानामुपदेशार्थं सभायामुत्थितं राजानमनुवर्णयति–प्रांशुरिति सार्द्धचतुर्भिः। प्रांशुरुन्नतः। पीनावायतौ भुजौ यस्य स पीनायतभुजः। गौरः गौरवर्णः। कञ्जवदरुणे ईक्षणे यस्य स कञ्जारुणेक्षणः। शोभना नासा यस्य स सुनासः। शोभनं मुखं यस्य स सुमुखः। सौम्यः प्रियदर्शनः। पीनौ अंसौ स्कन्धौ यस्य स पीनांसः। शोभना द्विजाः दन्ताः स्मितं च यस्य स सुद्विजस्मितः ॥ १५ ॥

### भाषानुवादः

श्रीमैत्रेयजीने कहा—साधुश्रेष्ठ विदुरजी ! महाराज पृथु गङ्गा और यमुनाके मध्यवर्ती देशमें निवास कर अपने पुण्यकर्मोंके क्षयकी इच्छासे प्रारब्धवश प्राप्त हुए भोगोंको ही भोगते थे ॥ ११ ॥ ❀ ❀ ब्राह्मणवंश और भगवान्‌के सम्बन्धी विष्णुभक्तों-को छोड़कर उनका सातों द्वीपोंके सभी पुरुषोंपर अखण्ड एवं अबाध शासन था ॥ १२ ॥ ❀ ❀ एक बार उन्होंने एक महासत्रकी दीक्षा ली; उस समय वहाँ देवताओं, ब्रह्मर्षियों और राजर्षियोंका बहुत बड़ा समाज एकत्र हुआ ॥ १३ ॥ ❀ ❀ उस समाजमें महाराज पृथुने उन पूजनीय अतिथियोंका यथायोग्य सत्कार किया और फिर उस सभामें, नक्षत्रमण्डलमें चन्द्रमाके समान खड़े हो गये ॥ १४ ॥ ❀ ❀ उनका शरीर ऊँचा, भुजाएँ भरी और विशाल, रंग गोरा, नेत्र कमलके समान सुन्दर और अरुणवर्ण, नासिका सुघड़, मुख मनोहर, स्वरूप सौम्य, कंधे ऊँचे और मुसकानसे युक्त दन्तपंक्ति सुन्दर थी ॥ १५ ॥

व्यूढवक्षा बृहच्छ्रोणिर्वलिवल्गुदलोदरः। आवर्तनाभिरोजस्वी काञ्चनोरुरुदग्रपात् ॥ १६ ॥
सूक्ष्मवक्रासितस्निग्धमूर्धजः कम्बुकन्धरः। महाधने दुकूलाग्र्ये परिधायोपवीय च ॥ १७ ॥
व्यञ्जिताशेषगात्रश्रीर्नियमे न्यस्तभूषणः। कृष्णाजिनधरः श्रीमान् कुशपाणिः कृतोचितः ॥ १८ ॥
शिशिरस्निग्धताराक्षः समैक्षत समन्ततः। ऊचिवानिदमुर्वीशः सदः संहर्षयन्निव ॥ १९ ॥
चारु चित्रपदं श्लक्ष्णं मृष्टं गूढमविक्लवम्। सर्वेषामुपकारार्थं तदा अनुवदन्निव[1] ॥ २० ॥

### राजोवाच

सभ्याः शृणुत भद्रं वः साधवो य इहागताः। सत्सु जिज्ञासुभिर्धर्ममावेद्यं स्वमनीषितम् ॥ २१ ॥
अहं दण्डधरो राजा[2] प्रजानामिह योजितः। रक्षिता वृत्तिदः स्वेषु सेतुषु स्थापिता पृथक् ॥ २२ ॥
तस्य मे तदनुष्ठानाद्यानाहुर्ब्रह्मवादिनः[3]। लोकाः स्युः कामसन्दोहा यस्य तुष्यति दिष्टदृक् ॥ २३ ॥
य उद्धरेत्करं राजा प्रजा धर्मेष्वशिक्षयन्[4]। प्रजानां शमलं भुङ्क्ते भगं[5] च स्वं जहाति सः ॥ २४ ॥
तत् प्रजा भर्तृपिण्डार्थं स्वार्थमेवानसूयवः। कुरुताधोक्षजधियस्तर्हि मेऽनुग्रहः कृतः ॥ २५ ॥

अन्वयः—व्यूढवक्षाः बृहच्छ्रोणिः वलिवल्गुदलोदरः आवर्तनाभिः ओजस्वी काञ्चनोरुः उदग्रपात् ॥ १६ ॥ ❀ ❀ सूक्ष्मवक्रासितस्निग्धमूर्धजः कम्बुकन्धरः महाधने दुकूलाग्र्ये परिधाय च उपवीय ॥ १७ ॥ ❀ ❀ व्यञ्जिताशेषगात्रश्रीः नियमे न्यस्तभूषणः कृष्णाजिनधरः श्रीमान् कुशपाणिः कृतोचितः ॥ १८ ॥ ❀ ❀ शिशिरस्निग्धताराक्षः उर्वीशः समन्ततः समैक्षत सदः संहर्षयन् इव सर्वेषाम् उपकारार्थं तदा चारु चित्रपदम् श्लक्ष्णम् मृष्टम् गूढम् अविक्लवम् इदम् अनुवदन् इव ऊचिवान् ॥ १९-२० ॥ ❀ ❀ सभ्याः शृणुत ये साधवः इह आगताः वः भद्रम् धर्मम् जिज्ञासुभिः सत्सु स्वमनीषितम् आवेद्यम् ॥ २१ ॥ ❀ ❀ अहम् प्रजानाम् दंडधरः रक्षिता वृत्तिदः पृथक् स्वेषु सेतुषु स्थापितः राजा इह योजितः ॥ २२ ॥ ❀ ❀ यस्य दिष्टदृक् तुष्यति तस्य ब्रह्मवादिनः यान् आहुः कामसंदोहाः लोकाः तदनुष्ठानात् मे स्युः ॥ २३ ॥ ❀ ❀ यः राजा प्रजाः धर्मेषु अशिक्षयन् करम् उद्धरेत् सः प्रजानाम् शमलम् भुङ्क्ते च स्वम् भगम् जहाति ॥ २४ ॥ ❀ ❀ प्रजाः तत् अधोक्षजधियः अनसूयवः भर्तृपिण्डार्थम् स्वार्थम् एव कुरुत तर्हि मे अनुग्रहः कृतः ॥२५॥

---

१. प्राचीन पाठे 'सर्वेषामुपकारार्थं तदा अनुवदन्निव' इति नास्ति। २. प्रा० पा०—धात्रा। ३. प्रा० पा०—यदाहु०। ४. प्रा० पा० धर्ममशिक्षयन्। ५. प्रा० पा०—भगवन्तं जहा०।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

व्यूढं विस्तीर्णं वक्षो यस्य वलिभिस्त्रिसृभिर्वल्गु सुन्दरं दलवदधोऽग्रमश्वत्थपत्रमिव उपरि विस्तृतमधस्तात्संकुचितमुदरं यस्य आवर्तवदम्भसां भ्रम इव निम्ना नाभिर्यस्य कांचनवदुज्ज्वलावूरू यस्य उदग्रावुन्नताग्रौ पादौ यस्य ॥ १६ ॥ ❀ ❀ सूक्ष्माश्च ते वक्राश्चासिताश्च स्निग्धाश्च मूर्धजा यस्य कंबुवत्त्रिरेखांकिता कंधरा यस्य परिधाय वसित्वा उपवीयोत्तरीयं कृत्वा ॥ १७ ॥ ❀ ❀ नियमे निमित्ते न्यस्तानि त्यक्तानि भूषणानि येन सः अत एव तैरनावृतत्वाद्व्यंजिताशेषगात्रेषु श्रीः स्वाभाविकी शोभा येन कृतान्युचितानि विहितानि कर्माणि येन ॥ १८ ॥ ❀ ❀ शिशिरे संतापहरे स्निग्धे च तारे ययोस्ते अक्षिणी यस्य इदं वक्ष्यमाणं वाक्यमुक्तवांश्च ॥ १९ ॥ ❀ ❀ चारु श्रोत्रप्रियम्। चित्राणि पदानि यस्मिन् श्लक्ष्णं प्रशस्तम्। मृष्टं शुद्धम्। गूढं गंभीरार्थम्। अविक्लवमव्याकुलम्। उत्प्रेक्षते। स्वयमनुभूतमनुवदन्निव ॥ २० ॥ ❀ ❀ भाषणे हेतुः। धर्मं जिज्ञासुभिः पुंभिः सत्सु स्वमनीषितमावेद्यं वक्तव्यम्। अतः प्रजानुशासनमिषेण जिज्ञासैव क्रियते न युष्मान्प्रति धर्मप्रवचनमिति भावः ॥ २१ ॥ ❀ ❀ इदानीं प्रजाः शिक्षयिष्यन्प्रजाशिक्षणादिकं ममावश्यकमित्याह अहमिति त्रिभिः। पृथक् सेतुषु स्वस्वहितवर्त्मसु स्थापिता स्थापयिता ॥ २२ ॥ ❀ ❀ दिष्टदृक् प्राक्कर्मसाक्षीश्वरो यस्य तुष्यति तस्य वेदवादिनो याँल्लोकानाहुः प्रजारक्षणाद्यनुष्ठानात्ते लोका मे स्युः। कथंभूताः—कामानां सम्यक् दोहः प्रपूर्णं येषु ॥ २३ ॥ ❀ ❀ अन्यथा त्वनिष्टं स्यादित्याह। य इति। शमलं पापम्। भगमैश्वर्यम् ॥ २४ ॥ ❀ ❀ तत्तस्माद्धे प्रजाः भर्तुर्मम पिण्डार्थं पिण्डदानवत्परलोकहितार्थं स्वार्थं स्वकार्यमेव कुरुत स्वधर्ममेवानुतिष्ठत। अधोक्षजे धीर्येषां तादृशाः सन्तः वासुदेवार्पणदृष्ट्येत्यर्थः। अनुग्रहः कृतो भवेदिति शेषः ॥ २५ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

बृहन्तौ श्रोणीनितम्बौ यस्य स बृहच्छ्रोणिः। अधोग्रमधस्तात्कृताग्रभागं पिप्पलपत्रं यथा तथोदरं यस्य ॥ १६ ॥ ❀ ❀ मूर्द्धजाः केशाः। कंबु शंखः ॥ १७ ॥ ❀ ❀ अत एव न्यस्ताभरणत्वादेव। तैर्भूषणैः। उचितान्यावश्यकानि सन्ध्यावन्दनादीनि ॥ १८ ॥ ❀ ❀ तारे कनीनिके ॥ १९ ॥ ❀ ❀ चित्राणि सालंकाराणि, प्रशस्तं मधुराक्षरम्। अव्याकुलं झटित्यर्थबोधकम् ॥ २० ॥ ❀ ❀ साधवो य इति। अन्यैस्त्वागतैरपि मे प्रयोजनं नास्तीति भावः। न च नृपत्वादहं युष्मान् किमप्यादिशामि शास्मि वा, किं तु किमपि जिज्ञासुरहं युष्माभिरेव शासनीय आदेष्टव्यश्चेत्याह—सत्सु साधुषु भाग्यतः प्राप्तेषु सत्सु धर्मं जिज्ञासुभिः स्वमनीषितं स्वविचारितमावेद्यं ज्ञापयितुमर्हमेव स्वेषु प्रामाण्याभावादिति भावः। स्वामिव्याख्याने अतः स्वमनीषितस्यावेद्यत्वात्। इति भाव इति। मया जिज्ञासयैवोच्यते न तूपदिश्यत इति तात्पर्यम् ॥ २१ ॥ ❀ ❀ न च त्वं राजाऽस्माकमाराधनीय इति वाच्यं प्रत्युत युष्माकमेव वृत्त्यादिसाधनलक्षणे आराधने परमेश्वरेणाहं प्रवर्त्तित इत्याह—धात्रा परमेश्वरेण नियोजितः। कुत्र कुत्र कर्मणीति तत्राह—दंडधर इति। विकर्मरोगोपशमनौषधरूपे दंडधर इत्यर्थः। रक्षितेति। दस्युचौरादिभ्यो रक्षणे। वृत्तिद इति। जीविकाप्रदाने स्वेषु सेतुषु पृथक् पृथक् स्थापयितेति। प्रतिस्ववर्णाश्रमादिधर्म्मर्मर्य्यादायाः स्थापने इति। युष्माकं बहुविधपरिचरणभावो मन्मूर्ध्नि न्यस्तो वर्तत इति भावः ॥ २२ ॥ ❀ ❀ तस्याहं प्रतिमासिकं प्रतिवार्षिकं वेतनमपि प्राप्नोमीत्याह—तस्य मम तत्तत्स्वकर्मानुष्ठानात् यान् लोकान् प्राप्यान्ब्रह्मवादिन आहुस्ते स्युरित्यन्वयः। लोकाः पारत्रिका मदिच्छानुरूपाः। मदभिलषितानां सम्यग्दोहः प्रपूरणं यत्र। यस्य ममेति दिष्टदृक् सर्वधर्मसाक्षी मत्प्रभुः। यदुक्तं तेनैव 'श्रेयः प्रजापालनमेव राज्ञः' इत्यादि ॥ २३ ॥ ❀ ❀ किं च मम सर्वकृत्येषु धर्मप्रवर्त्तनमेव मुख्यं नित्यं चेत्याह। अन्यथा तु—धर्मप्रवर्तनाद्यभावे ॥ २४ ॥ ❀ ❀ स्वेषामेवार्थं कार्यं कर्त्तव्यत्वेन विहितं कुरुत युष्माभिः स्वकृत्य एव कृते सति मम कृतार्थता भविष्यतीति नात्र मदर्थे पृथक् कोपि भावो भवतामिति भावः। स्वार्थमेव वदन्विशिनष्टि—हे अधोक्षजधिय इति "मय्येव मन आधत्स्व मयि बुद्धिं निवेशय" इति श्रीगीतोक्तेर्भगवन्तं भजतेत्यर्थः। स्वामिचरणैस्तु संबुद्धिर्नाङ्गीकृता तत्रेत्यर्थ इति। 'धर्मोर्पितः कर्हिचिद्म्रियते न यत्र' इति ब्रह्मोक्तेर्भवत्कृतधर्मस्य वासुदेवेर्पणात्तद्वृद्ध्या ममाप्यधिकलाभो भवेदिति भावः ॥ २५ ॥

## श्रीमद्वीरराघवव्याख्या

व्यूढं विस्तीर्णं वक्षः यस्य बृहन्तौ पीनौ श्रोणी नितन्वौ यस्य वलिभिस्त्रिसृभिः मञ्जु सुन्दरं दलवदश्वत्थपर्णवत् उपरि विस्तृतमधस्तात्संकुचितमुदरं यस्य आवर्तवन्निम्ना नाभिर्यस्य ओजस्वी इन्द्रियशक्तिमान् काञ्चनवदुज्ज्वलावूरू यस्य उदग्रौ उन्नतौ पादौ यस्य ॥ १६ ॥ ❀ ❀ सूक्ष्माश्च वक्राश्च सिताश्च स्निग्धाश्च मूर्द्धजा यस्य कम्बुवत्त्रिरेखाङ्किता कन्धरा कण्ठः यस्य, महाधने अनर्घ्ये दुकूलश्रेष्ठे परिवीय वसित्वा उपवीय उत्तरीयं कृत्वा ॥ १७ ॥ ❀ ❀ नियमे निमित्ते न्यस्तानि त्यक्तानि अशेषभूषणानि येन अत एव तैरनावृतत्वात् व्यञ्जिताशेषेष्ववयवेषु श्रीः स्वाभाविकी शोभा येन श्रीमान् समुदायकान्तिमान् कुशपाणिः पवित्रपाणिः कृतानि उचितानि कर्माणि येन ॥ १८ ॥ ❀ ❀ शिशिरे सन्तापहरे स्निग्धे च तारे ययोस्ते

अक्षिणी यस्य एवंभूत उर्वीशः सदस्यान् सन्तोषयन्निव इदं वक्ष्यमाणं वाक्यम् उक्तवान् । वाक्यं-विशिनष्टि । चारुचित्रपदं चारूणि चित्राणि पदानि यस्मिन् श्लक्ष्णं प्रसन्नं मृष्टं शुद्धमनपशब्दितं गूढं गम्भीरागाधार्थमविक्लवमव्याकुलम् ॥ १९-२० ॥ ❀ ❀ अयमस्मान्प्रति सर्वज्ञ इव धर्मानुपदेष्टुमुत्सहत इति बुद्धया सभ्या मा क्रुद्धयेयुरिति मनीषया स्ववाक्यश्रवणाय सभ्यान् प्रार्थयते सभ्या इति । हे सभ्याः ! सभायामुपविष्टाः ! अनुपविष्टान् संबोधयति इह सत्रभूमौ य आगता मूर्खाश्चेत् मामसूयेरन्नित्यभिप्रायेण विशिनष्टि साधव इति । नाहं ज्ञः किन्तु जिज्ञासुः जिज्ञासितव्यं विज्ञापयामीत्यभिप्रायेणाह । धर्मं जिज्ञासुभिः स्वमनीषितं ज्ञेयं सत्सु सतां समीपे आवेद्यं विज्ञापनीयम्, प्रजानुशासनव्याजेन जिज्ञासैव क्रियते न तु युष्मान्प्रति धर्म उपदिश्यत इति भावः ॥२१॥ ❀ ❀ इदानीं प्रजारक्षणादिकं ममावश्यकमित्याह अहमिति त्रिभिः । धात्रा भगवता प्रजानां दण्डधरत्वेनाहं योजितो नियुक्तः न केवलं दण्डधर एव किन्तु रक्षितृत्वेन आजीविकाप्रदत्वेन स्वेषु स्वस्ववर्णाश्रमोचितेषु सेतुषु धर्ममर्यादासु पृथगसङ्करेण स्थापयितृत्वेन च योजित इत्यर्थः ॥ २२ ॥ ❀ ❀ किं प्रजारक्षादिसाध्यं फलं तत्राह तस्येति । ब्रह्मवादिनः वेदार्थतत्त्वस्य स्वानुष्ठानेनोपदेष्टारः प्रजारक्षणादिना राज्ञः यान् पुण्यलोकान् प्राप्यत्वेनाहुः ते लोकाः तस्य प्रजारक्षणादिनिष्ठस्य मे तदनुष्ठानात् प्रजारक्षणाद्यनुष्ठानात् कामसन्दोहा मत्समीहितकामपूरणा भवेयुः स्युरिति सम्भावनायां लिङ् । स्वस्य मुमुक्षुत्वेन प्राकृतलोकस्य प्राप्यत्वाभावात् अतो हार्दमाह यस्येति । यस्य प्रजारक्षणादिनिष्ठस्य दिष्टदृक् प्रजारक्षणादिकर्मसाक्षी ईश्वरः तुष्यति तस्मिन् तुष्टे मुक्तिरपि सुलभेति भावः ॥ २३ ॥ ❀ ❀ अन्यथा त्वनिष्टं स्यादित्याह य इति । यो राजा धर्मेषु प्रजा अशिक्षयन् करं स्वामिग्राह्यभागमुद्धरेत् करमात्रं गृह्णीयादित्यर्थः, तर्हि प्रजानां सम्बन्धि शमलं पापमेव भुङ्क्ते सः स्वीयं भगं ज्ञानशक्तिबलैश्वर्यादिकं च जहातीत्यर्थः ॥२४॥ ❀ ❀ तत्तस्मात् हे प्रजाः ! भर्तुर्मम पिण्डार्थं पिण्डदानवत्परलोकहितार्थं स्वार्थं स्वार्थप्रयोजनमेव स्वस्ववर्णाश्रमोचितधर्ममेवासूयारहिताः कुरुत अनुतिष्ठत अधोक्षजधियः भगवद्विषयकबुद्धयः । तदर्पणदृष्टयेति यावत् "तत्कुरुष्व मदर्पणम्" इति स्मृतेः ॥ २५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

व्यूढवक्षा उन्नतवक्षाः वलिभी रेखाभिः अतिशयेन वल्गु सुन्दरमुदरं यस्य स तथा उदग्रवागुन्नतवाक् ॥ १६ ॥ ❀ ❀ सूक्ष्माश्च वक्राश्चासिता नीलाश्च स्निग्धाश्च मूर्द्धजाः केशा यस्य स तथा कम्बुवत्त्रिरेखाङ्कितवृत्तशङ्खवत्कन्धरा यस्य स तथा उपधायोत्तरीकृत्य ॥ १७ ॥ ❀ ❀ नियमे यज्ञनियमविषये ॥ १८ ॥ ❀ ❀ किमर्थं निरीक्षणमिति अविदुषां चित्तव्याकुलतां परिहरति ऊचिवानिति । चित्राणि पदानि यस्मिंस्तत्तथा श्लक्ष्णं मधुरं हृद्यं हृदयप्रियं गूढमर्थतो गम्भीरमविक्लवमकातरमस्खलितमिति यावत् वचनमिति शेषः ॥ १९-२० ॥ ❀ ❀ किमनेन चित्तव्याकुलता परिहृतेति तत्राह सभ्या इति । वो भद्रमस्त्वित्युक्तं प्रथमं चित्तव्याकुलतापरिहारायेति ज्ञातव्यं, धर्मं जिज्ञासुभिर्ज्ञातुकामैः पुरुषैः स्वमनीषितं सत्सु योग्येष्वावेद्यम् ॥२१॥ ❀ ❀ किं तत्स्वमनीषितमित्यत उक्तम् अहमिति । "दण्डोऽस्त्री शासने राज्ञां हिंसायां लकुटे गुडे" इत्यभिधानात् तत्तद्योग्येषु तं तं दण्डं धारयतीति दण्डधरः धात्रा हरिणा, धातृशब्दार्थं लक्षयति लक्षितेत्यादिना । स्थापिता स्थापयिता ॥ २२ ॥ ❀ ❀ तस्य मे कामान् सन्दुहन्तीति कामसन्दोहाः कर्मण्यण्प्रत्ययः, कामानां सन्दोहा येष्विति वा लोकाः स्युरिति ब्रह्मवादिनः आहुरिति यद्यस्मात्तस्मादेतत्फलमन्वीक्ष्याहं धात्रेह प्रजापालनादौ योजित इत्यन्वयः । तदनुध्यानात्तस्य प्रजापालनस्यानुष्ठानादित्यनुवादः श्रीनारायणप्रसादेन भाविनो लोकाः कथं प्रजापालनेन स्युरिति तत्राह । यस्येति ॥ २३ ॥ ❀ ❀ व्यतिरेकमाह य उद्धरेदिति । भागं षष्ठांशं पुण्यम् ॥ २४ ॥ ❀ ❀ इदानीं प्रजाः प्रत्याह तत्प्रजेति । यस्मात्प्रजानामरक्षणे प्रत्यवायो भवति तत्तस्मात् हे प्रजाः ! यद्यनसूयवो यूयमधोक्षजे हरौ धियं कुरुत तर्हि नोऽनुग्रहः कृतो भवेदित्यन्वयः । तवानेन किं तत्राह भर्तृपिण्डार्थमिति । भर्तुर्मम षष्ठांशलक्षणसुकृताख्यप्रयोजनाय न केवलं मम युष्माकमप्यस्ति प्रयोजनमित्याह । स्वार्थमिति ॥ २५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

काञ्चनोरुरिति काञ्चनस्तम्भोरुरित्यर्थः । उदग्रवागिति चित्सुखः ॥ १६ ॥ ❀ ❀ परिवीयोपवीय चेति सम्बन्धोक्तिः ॥ १७-१९ ॥ ❀ ❀ चारुचित्रेति । स्वरवर्णोच्चारविशेषेण चारु श्रोत्रप्रियम् । अनुप्रासादिना चित्रपदम् । अश्लीलनिरासेन सविनयेनैव सर्वहिताभिरुचिरार्थोपदेशेन श्लक्ष्णं प्रशस्तं व्याकरणानुगमेन मृष्टं शुद्धम् । सुविचारलभ्यतात्पर्यत्वेन गूढं गम्भीरार्थम् । अतित्वराद्यभावेन पूर्वपराविरोधेन च अविक्लवमव्याकुलम् ॥ २०-२२ ॥ ❀ ❀ तस्येति । कामिनृपाणामपि तादृशभगवदादेशप्रवर्त्तनार्थमेवोक्तं न तु स्वार्थं, वास्तवार्थे तु लोका भक्तजनाः दिष्टदिगिति सम्बन्धः, दिष्टं दिशतीति ॥२३-२५॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

व्यूढं विस्तीर्णं वक्षो यस्य सः । वलिभिस्तिसृभिर्वल्गु- सुन्दरं दलवत् अधोऽग्रमश्वत्थपत्रमिवोपरि विस्तृतमधस्तात् संकुचितमुदरं यस्य दक्षिणावर्त्तवन्निम्ना नाभिर्यस्य सः काञ्चनस्तम्भाविवोरू यस्य उन्नताग्रौ पादौ यस्य सः ॥ १६ ॥ ❀ ❀ उपवीय उत्तरीयं कृत्वा ॥ १७-१९ ॥ ❀ ❀ चारु मनोहरत्वात् सरसं चित्रपदं सालङ्कारं श्लक्ष्णं मधुराक्षरं मृष्टं निर्दोषम् । गूढं

सव्यङ्ग्यम् अविक्लवं झटित्यर्थबोधम् ॥ २० ॥ ❀ ❀ साधवो य इत्यन्यैरत्रागतैरपि मम न प्रयोजनमिति भावः। न च नृपत्वादहं युष्मान् किंमप्यादिशामि शास्मि वा। किन्तु किमपि जिज्ञासुरहं युष्माभिरेव शासनीय आदेष्टव्यश्चेत्याह। सत्सु साधुषु भाग्यतः प्राप्तेषु सत्सु धर्मं जिज्ञासुभिः पुंभिः स्वमनीषितं स्वविचारितमावेद्यं ज्ञापयितुमर्हमेव स्वेषु प्रामाण्याभावादिति भावः ॥ २१ ॥ ❀ ❀ न च त्वं राजा अस्माकमाराधनीय इति वाच्यं प्रत्युत युष्माकमेव वृत्त्यादिसाधनलक्षणे आराधने परमेश्वरेणाहं प्रवर्तित इत्याह अहमिति। धात्रा परमेश्वरेण नियोजितः कुत्र कुत्र कर्म्मणीत्यत आह दण्डधर इति। विकर्म्मरोगोपशमनौषधरूपे दण्डधर इत्यर्थः। रक्षितेति दस्युचौरादिभ्यो रक्षणे वृत्तिद इति जीविकाप्रदाने। स्वेषु सेतुषु पृथक् पृथक् स्थापयितेति प्रतिस्ववर्णाश्रमादिधर्ममर्य्यादायाः स्थापने इति युष्माकं बहुविधपरिचरणभारो मन्मूर्ध्नि न्यस्तो वर्तत इति भावः ॥२२॥ ❀❀ तस्याहं प्रतिमासिकं प्रतिवार्षिकं वेतनमपि प्राप्नोमीत्याह। तस्य मम तत्तत्स्वकर्मानुष्ठानात् यान् लोकान् प्राप्यान् ब्रह्मवादिन आहुस्ते स्युरित्यन्वयः। लोकाः पारत्रिकाः मदिच्छानुरूपाः कामानां तदभिलषितानां सम्यग्दोहः प्रपूरणं यत्र यस्य ममेति दिष्टदृक् सर्वधर्मसाक्षी मत्प्रभुः। यदुक्तं तेनैव श्रेयः प्रजापालनमेवेत्यादि ॥ २३ ॥ ❀ ❀ किञ्च मम कृत्येषु मध्ये धर्मप्रवर्तनमेव मुख्यं नित्यञ्च यदभावे ममाप्यनिष्टं स्यादित्याह य इति। भगमैश्वर्यम् ॥ २४ ॥ ❀ ❀ तत्तस्मात् हे प्रजाः ! भर्त्तुर्भरणकर्तुर्मम पिण्डार्थं पिण्डदानवत् परलोकहितार्थं स्वेषामेवार्थं कार्य्यं कुरुत। युष्माभिः स्वकृत्य एव कृते सति मम कृतार्थता भविष्यतीति नात्र मदर्थे पृथक् कोऽपि भारो भवतामिति भावः। स्वार्थमेव वदन् विशिनष्टि। हे अधोक्षजधिय इति "मय्येव मन आधत्स्व मयि बुद्धिं निवेशय" इति भगवद्गीताप्रामाण्याद्भगवन्तं भजतेत्यर्थः ॥ २५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

व्यूढं विशालं वक्षो यस्य वलिभिस्त्रिसृभिर्वल्गु सुन्दरं दलवदधोऽश्वत्थपत्रवदुदरं यस्य सः। आवर्तवन्नाभिर्यस्य, उदग्रौ उत्तानाग्रौ पादौ यस्य स तथा ॥ १६ ॥ ❀ ❀ सूक्ष्माः वक्राः असिताः कृष्णाः स्निग्धाः मूर्द्धजाः केशा यस्य। कम्बुवत्कन्धरा ग्रीवा यस्य वासः परिधाय उत्तरीयमुपवीयोपवीतमिव धृत्वा ॥ १७ ॥ ❀ ❀ व्यञ्जिता प्रकटिता अशेषगात्रश्रीः शोभा यस्य नियमे निमित्ते न्यस्तानि भूषणानि येन ॥ १८ ॥ ❀ ❀ शिशिरे सन्तापघ्ने स्निग्धे च तारे यस्य ते अक्षिणी यस्य च तथा इदं वक्ष्यमाणं वाक्यमूचिवान् ॥ १९ ॥ ❀ ❀ चारूणि मनोहराणि चित्राणि पदानि यस्मिन् तत् गूढं गम्भीराभिप्रायम् अविक्लवं वैक्लव्यरहितम् किं बहुना मृष्टं सर्वगुणयुक्तत्वात् श्लक्ष्णं प्रशस्तं सर्वदोषवर्जितत्वात् ॥ २० ॥ ❀ ❀ धर्मं जिज्ञासुभिः ज्ञातुमिच्छद्भिरस्मद्विधैः पुरुषार्थसिद्धये स्वमनीषितं सत्सु शिष्टेषु आवेद्यं युक्तमयुक्तं वेति परीक्षार्थं विज्ञापनीयं शृणुत ॥२१॥ ❀ ❀ सत्सु स्वमनीषितविज्ञापनमिषेण प्रजाशिक्षणादौ प्रवृत्तप्रजाशिक्षणाद्यधिकारं स्वस्य दर्शयति अहमिति। धात्रा परमात्मना पृथक् वर्णाश्रमोचितेषु मर्यादासु प्रजानां स्थापिता योजितः कृतः। तत्र मर्यादावतां रक्षिता वृत्तिदश्च योजितः। निर्मर्यादानां दण्डधरो योजित इत्यन्वयः ॥ २२ ॥ प्रजारक्षणादिफलमाह तस्येति। दिष्टदृक् दैवज्ञो हरिर्यस्य तुष्यति तस्य ब्रह्मवादिनो यान् लोकानाहुः ते कामसन्दोहाः कामपूरकाः लोकाः तस्य धातृनियोगकर्तुर्मे तदनुष्ठातुः प्रजारक्षणाद्यनुष्ठानात्स्युः ॥ २३ ॥ ❀ ❀ प्रजारक्षणाद्यभावे दोषमाह य इति। शमलं पापम्, भगमैश्वर्यम् ॥ २४ ॥ ❀ ❀ तत्तस्मात् हे प्रजाः! अनसूयवः असूया दोषारोपस्तद्रहिता भर्तृपिण्डार्थं मम तुष्ट्यर्थं स्वकल्याणार्थं च कुरुत पृथक् स्वेषु सेतुषु निष्ठामिति शेषः, कथम्भूताः अधोक्षजधियः स्वधर्मेणायमेवाराधनीय इत्येवं वासुदेवविषयकबुद्धयः, तर्हि वो मेऽनुग्रहः कृतः स्यात् ॥ २५ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

व्यूढं विस्तीर्णं वक्षो यस्य स व्यूढवक्षाः। बृहत्यौ श्रोणी यस्य स बृहच्छ्रोणिः। वलिभिर्वल्गु सुन्दरं दलवत् अश्वत्थपत्रवदुपरिविस्तृतमधस्तात् सङ्कुचितं चिक्कणं चोदरं यस्य स बलिवल्गुदलोदरः। आवर्त्तवन्निम्ना नाभिर्यस्य स आवर्त्तनाभिः। ओजस्वी शक्तः। काञ्चनवदुज्ज्वलावूरू यस्य स काञ्चनोरुः। उदग्रो उन्नताग्रौ पादौ यस्य स उदग्रपात् ॥ १६ ॥ ❀ ❀ सूक्ष्माश्च ते वक्राश्चासिताः कृष्णाश्च स्निग्धाश्चिक्कणाश्च मूर्द्धजाः केशा यस्य स सूक्ष्मवक्रासितस्निग्धमूर्द्धजः। कम्बुवत् त्रिरेखाङ्कता कन्धरा यस्य स कम्बुकन्धरः। महद्धनं ययोस्ते महाधने ये दुकूलाग्र्ये वस्त्रश्रेष्ठे तयोरेकं परिधाय वसित्वा एकमुपवीय उत्तरीयं च कृत्वा ॥ १७ ॥ ❀ ❀ नियमे निमित्ते सति न्यस्तानि त्यक्तानि भूषणानि येन स नियमे न्यस्तभूषणः अत एव तैरनावृतत्वाद् व्यञ्जिता प्रकटिता अशेषगात्रेषु श्रीः स्वाभाविकी शोभा येन स व्यञ्जिताशेषगात्रश्रीः। कृष्णाजिनधरः मृगचर्मधरः। श्रीमान् कान्तिमान्। कुशपाणिः। कृतानि उचितानि कर्माणि येन स कृतोचितः। शिशिरे संतापहरे स्निग्धे च तारे ययोस्ते अक्षिणी यस्य स शिशिरस्निग्धताराक्षः ॥ १८ ॥ ❀ ❀ सर्वतो दृष्ट्वा च सदः सभां संहर्षयन्निव इवशब्दोऽवधारणार्थकः संहर्षयन्निदं वक्ष्यमाणं वाक्यमुर्वीशः भूपतिः पृथुरूचिवान् उक्तवानित्यन्वयः। हर्षहेतुत्वेन वाक्यं विशिनष्टि–चारु श्रोत्रप्रियम् चित्राणि चित्ते चमत्कारजनकानि पदानि यस्मिंस्तच्चित्रपदम्। श्लक्ष्णं प्रशस्तम्। मृष्टं शुद्धं रागद्वेषादिना पक्षपातशून्यम्। गूढं गम्भीरार्थम्। अविक्लवं व्याकुलतारहितम् ॥ १९ ॥ ❀ ❀ साधारणा लोका ऋषिवाक्यं प्रमाणत्वेनाङ्गीकुर्वन्तीति स्ववाक्ये ऋष्यादीनां संमत्यर्थं प्रथमं तान्प्र-

त्याह–सभ्या इति ! इह सत्रे ये साधवः सदाचारा वेदविदः आगताः सभ्याः सभास्थास्ते यूयं मद्वाक्यं शृणुतेत्यन्वयः। एतच्छ्रवणेन धर्मनिर्णयाद्वो युष्माकमपि भद्रं भविष्यति। यतो जिज्ञासुभिः स्वमनीषितं विचारितं धर्मं युक्तायुक्तपरीक्षार्थं सत्स्वावेद्यं वक्तव्यमेव। अतो युक्तायुक्तनिर्णयार्थं मया स्वविचारितं युष्मासु निवेद्यते न युष्मदुपदेशार्थम्॥ २०॥ ❀ ❀ तत्र प्रथमं स्वधर्मानाह–अहमिति। यतोऽहमिह अस्मिन्नवसरे प्रजानां राजा योजितः मुनिभिर्वेनांगमन्थनेन सम्पाद्य स्थापितः, अतस्तासां रागलोभादिना कुमार्गे प्रवृत्तानां दण्डधरः शास्ता स्वधर्मस्थानां दुर्जनाद्युपद्रवतो रक्षिता वृत्तिदः जीविकासम्पादकश्च मुग्धानां स्वेषु तेषु स्वधर्ममर्यादासु पृथक् स्थापिता स्थापयिता च॥ २१॥ ❀ ❀ एवं धर्मानुष्ठानस्य फलमाह—तस्येति। यस्य स्वधर्मानुष्ठानात् राज्ञो दिष्टदृक् कर्मसाक्षी भगवांस्तुष्यति तस्य यत् यान् लोकान् फलत्वेन ब्रह्मवादिनो वेदार्थविद आहुस्ते कामसंदोहाः कामानां संदोहः पूरणं येषु ते लोकास्तदनुष्ठानात्तस्य प्रजारक्षणादिस्वधर्मस्यानुष्ठानान्मे ममापि स्युरित्यन्वयः॥ २२॥ ❀ ❀ अन्यथा दोषमाह–य इति। यो राजा सन् धर्मेषु प्रजा अशिक्षयन् अप्रवर्त्तयन् ताभ्यः करमुद्धरेत् गृह्णीयात् सः प्रजानां शमलं पापफलं दुःखं भुङ्क्ते स्वभगं ज्ञानैश्वर्यादिकं जहाति च ततश्च भ्रष्टो भवतीत्यर्थः॥ २३॥ ❀ ❀ एवं प्रजाशिक्षणं स्वधर्म इति निश्चित्य प्रजाः शिक्षयति–तदिति। यस्मात् प्रजानां स्वधर्मानुष्ठाने मम परलोके गुणस्तदभावे यथेष्टप्रवृत्तौ दोषश्च तत्तस्मात् हे प्रजाः अनसूयवः स्वप्रयोजनायास्मान् दुःखे कर्मानुष्ठाने प्रवर्त्तयतीति मयि दोषारोपमकुर्वन्तः अधोक्षजे भगवति धीर्येषां तादृशाश्च सन्तो भगवदर्पणेन भर्त्तुर्मम पिण्डार्थं पिण्डवत्परलोकहितार्थं स्वधर्ममेव कुरुतानुतिष्ठतेत्यन्वयः। तर्ह्यस्माकं फलं न स्यादित्याशङ्क्याह–स्वार्थमेवेति। तदेकमेवानुष्ठानं युष्माकं मम च फलाय भविष्यतीत्यर्थः। हे प्रजा इति सम्बोधनेन य एवमकर्त्ता स मे दण्डभागिति सूचयति। यैस्त्वेवं कृतं यर्हि तर्हि तैर्मेऽनुग्रहः कृतो भवेदिति॥ २४॥ ❀ ❀ एवं प्रजाः प्रत्युक्त्वा सभ्यान् प्रत्याह–यूयमिति। हे पितृदेवर्षयो यदि मया साधूक्तं तदनुमोदध्वं साधूक्तमिति वदतेत्यन्वयः। युष्मदनुमोदनेनैवान्येषां विश्वासः स्यादिति भावेन विशिनष्टि–अमला इति। यतः शुद्धांतःकरणत्वेन विवेकिन इत्यर्थः। अनुमोदने युष्माकमपि तत्फलं स्यादित्याह–कर्तुरिति। यत् यस्मात् कर्तुः शास्तुः शिक्षयितुः अनुज्ञातुरनुमोदितुश्च प्रेत्य परलोकं गत्वा तत्तस्य धर्माधर्मानुष्ठानस्य फलं तुल्यमिति॥ २५॥

भाषानुवादः

उनकी छाती चौड़ी, कमरका पिछला भाग स्थूल और उदर पीपलके पत्तेके समान सुडौल तथा बल पड़े हुए होनेसे और भी सुन्दर जान पड़ता था। नाभि भँवरके समान गम्भीर थी, शरीर तेजस्वी था, जङ्घाएँ सुवर्णके समान देदीप्यमान थीं तथा पैरोंके पंजे उभरे हुए थे॥ १६॥ ❀ ❀ उसके बाल बारीक, घुँघराले, काले और चिकने थे; गरदन शङ्खके समान उतार-चढ़ाववाली तथा रेखाओंसे युक्त थी और वे उत्तम बहुमूल्य धोती पहने और वैसी ही चादर ओढ़े थे॥ १७॥ ❀ ❀ दीक्षाके नियमानुसार उन्होंने समस्त आभूषण उतार दिये थे; इसीसे उनके शरीरके अङ्ग-प्रत्यङ्गकी शोभा अपने स्वाभाविक रूपमें स्पष्ट झलक रही थी। वे शरीर पर कृष्णमृगका चर्म और हाथोंमें कुशा धारण किये हुए थे। इससे उनके शरीरकी कान्ति और भी बढ़ गयी थी। वे अपने सारे नित्यकृत्य यथाविधि सम्पन्न कर चुके थे॥ १८॥ ❀ ❀ राजा पृथुने मानो सारी सभाको हर्षसे सराबोर करते हुए अपने शीतल एवं स्नेहपूर्ण नेत्रोंसे चारों ओर देखा और फिर अपना भाषण प्रारम्भ किया॥ १९॥ ❀ ❀ उनका भाषण अत्यन्त सुन्दर, विचित्र पदोंसे युक्त, स्पष्ट मधुर, गम्भीर एवं निश्शंक था। मानो उस समय वे सबका उपकार करनेके लिये अपने अनुभवका ही अनुवाद कर रहे हों॥ २०॥ ❀ ❀ राजा पृथुने कहा—सज्जनों! आपका कल्याण हो! आप महानुभाव, जो यहाँ पधारे हैं, मेरी प्रार्थना सुनें—जिज्ञासु पुरुषोंको चाहिये कि संत-समाजमें अपने निश्चयका निवेदन करें॥ २१॥ ❀ ❀ इस लोकमें मुझे प्रजाजनोंका शासन, उनकी रक्षा उनकी आजीविकाका प्रबन्ध तथा उन्हें अलग-अलग अपनी मर्यादामें रखनेके लिये राजा बनाया गया है॥ २२॥ ❀ ❀ अतः इनका यथावत् पालन करनेसे मुझे उन्हीं मनोरथपूर्ण करनेवाले लोकोंकी प्राप्ति होनी चाहिये, जो वेदवादी मुनियोंके मतानुसार सम्पूर्ण कर्मोंके साक्षी श्रीहरिके प्रसन्न होनेपर मिलते हैं॥ २३॥ ❀ ❀ जो राजा प्रजाको धर्ममार्गकी शिक्षा न देकर केवल उससे कर वसूल करनेमें लगा रहता है, वह केवल प्रजाके पापका ही भागी होता है और अपने ऐश्वर्यसे हाथ धो बैठता है॥ २४॥ ❀ ❀ अतः प्रिय प्रजाजन! अपने इस राजाका परलोकमें हित करनेके लिये आपलोग परस्पर दोषदृष्टि छोड़कर हृदयसे भगवान्‌को याद रखते हुए अपने-अपने कर्तव्यका पालन करते रहिये; क्योंकि आपका स्वार्थ भी इसीमें है और इस प्रकार मुझपर भी आपका बड़ा अनुग्रह होगा॥ २५॥

यूयं तदनुमोदध्वं पितृदेवर्षयोऽमलाः। कर्तुः शास्तुरनुज्ञातुस्तुल्यं यत्प्रेत्य तत्फलम्॥ २६॥
अस्ति यज्ञपतिर्नाम केषाञ्चिदर्हसत्तमाः[1]। इहामुत्र च लक्ष्यन्ते[2] ज्योत्स्नावत्यः क्वचिद्भुवः॥ २७॥

१. प्रा० पा०—सत्तमः। २. प्रा० पा०—दृश्यन्ते।

मनोरुत्तानपादस्य ध्रुवस्यापि महीपतेः । प्रियव्रतस्य राजर्षेरङ्गस्यास्मत्पितुः पितुः ॥ २८ ॥
ईदृशानामथान्येषामजस्य च भवस्य च । प्रह्लादस्य बलेश्चापि कृत्यमस्ति गदाभृता ॥ २९ ॥
दौहित्रादीनृते मृत्योः शोच्यान् धर्मविमोहितान् । वर्गस्वर्गापवर्गाणां प्रायेणैकात्म्यहेतुना¹ ॥ ३० ॥

यत्पादसेवाभिरुचिस्तपस्विनामशेषजन्मोपचितं मलं धियः ।
सद्यः क्षिणोत्यन्वहमेधती सती यथा पदाङ्गुष्ठविनिःसृता सरित् ॥ ३१ ॥
विनिर्धुताशेषमनोमलः पुमानसङ्गविज्ञानविशेषवीर्यवान् ।
यदङ्घ्रिमूले कृतकेतनः पुनः न संसृतिं क्लेशवहां प्रपद्यते ॥ ३२ ॥

अन्वयः—पितृदेवर्षयः अमलाः यूयम् तत् अनुमोदध्वम् प्रेत्य यत् फलम् तत् कर्तुः शास्तुः अनुज्ञातुः तुल्यम् ॥ २६ ॥ ❀ ❀ अर्हसत्तमाः केषांचित् यज्ञपतिः नाम अस्ति इह च अमुत्र ज्योत्स्नावत्यः भुवः क्वचित् लक्ष्यन्ते ॥ २७ ॥ ❀ ❀ मनोः उत्तानपादस्य ध्रुवस्य महीपतेः अपि राजर्षेः प्रियव्रतस्य अस्मत्पितुः पितुः अङ्गस्य अथ ईदृशानाम् अन्येषाम् अजस्य च भवस्य च प्रह्लादस्य च बलेः अपि गदाभृता कृत्यम् अस्ति ॥ २८–२९ ॥ ❀ ❀ धर्मविमोहितान् शोच्यान् मृत्योः दौहित्रादीन् ऋते प्रायेण वर्गस्वर्गापवर्गाणाम् ऐकात्म्यहेतुना ॥ ३० ॥ ❀ ❀ यथा पदाङ्गुष्ठविनिःसृता सरित् यत्पादसेवाभिरुचिः अन्वहं एधती सती तपस्विनां अशेषजन्मोपचितं धियः मलम् सद्यः क्षिणोति ॥ ३१ ॥ ❀ ❀ विनिर्धुताशेषमनोमलः पुमान् असंगविज्ञानविशेषवीर्यवान् यदङ्घ्रिमूले कृतकेतनः पुनः क्लेशवहाम् संसृतिम् न प्रपद्यते ॥ ३२ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

शास्तुः शिक्षयितुरनुज्ञातुरनुमोदितुश्च प्रेत्य परलोके यत्फलं तत्तुल्यम् ॥ २६ ॥ ❀ ❀ कर्म कर्तव्यमित्यनुमोदामहे न तु वासुदेवेऽर्पणीयमिति वेनादिभिस्तदनंगीकारादित्येवंवादिनः शनैः संबोधयन्नाह । हे अर्हसत्तमाः मीमांसकश्रेष्ठाः यज्ञपतिर्नाम परमेश्वरः केषांचिन्मते तावदस्ति तथापि विप्रतिपत्तेर्न तत्सिद्धिरित्याशंक्य जगद्वैचित्र्यान्यथानुपपत्तिं प्रमाणयति । इहामुत्र च ज्योत्स्नावत्यः कान्तिमत्यो भुवो भोगभूमयः शरीराणि च ॥ २७ ॥ ❀ ❀ नन्विदं कर्मवैचित्र्यादेव सेत्स्यति तथापि विद्वदनुभवेनेश्वरसिद्धिरित्याह मनोरिति त्रिभिः । अस्मत्पितामहस्यांगस्य ॥ २८ ॥ ❀ ❀ कृत्यमस्ति अवश्यं कर्मफलदात्रा भाव्यमिति तेषां मतमित्यर्थः ॥ २९ ॥ ❀ ❀ मृत्योर्दौहित्रादीन्वेनादीन्विना धर्मे विमोहितान् अतः शोच्यान् । ननु कर्मैव फलं दास्यति विध्युद्देशगता वा देवताः, किं परमेश्वरेण तत्राह । वर्गेति । वर्गोऽत्र त्रिवर्गः स्वर्गो धर्मस्य फलमपवर्गो मोक्षस्तेषामैकात्म्येनैकरूप्येण सर्वानुगतेन हेतुना । तत्रापि प्रायेण हेतुना सर्वानुगतत्वं महत्त्वं चेश्वरस्यैव दृष्टम् । अयं भावः—न तावज्जडस्य कर्मणः फलदातृत्वं घटते न चार्वाग्देवतानां स्वातन्त्र्यम् । अन्तर्यामिश्रुतेः । न च तदा कर्मसाम्ये फलतारतम्यं क्वचित्तदसिद्धिश्च संभवति । अतः स्वातन्त्र्येण कर्तुमकर्तुमन्यथाकर्तुं समर्थेन परमेश्वरेण भाव्यमिति ॥ ३० ॥ ❀ ❀ किं च जीवानां मोक्षदः परमेश्वर एव नार्वाग्देवतास्तासामपि जीवत्वाविशेषादित्याशयेनाह त्रिभिः । यस्य पादयोः सेवायामभिरुचिस्तपस्विनां संसारतप्तानामशेषैर्जन्मभिः समृद्धं धियो मलं सद्यः क्षपयति तमेव भजतेति तृतीयेनान्वयः । कथंभूताऽभिरुचिः । अहन्यहनि वर्धमाना सती सात्त्विकी तत्पादसम्बन्धस्यैवैष महिमेति दृष्टान्तेनाह । यथेति ॥ ३१ ॥ ❀ ❀ न विनिर्धुता अशेषा मनोमला यस्य असंगो वैराग्यं तेन विज्ञानस्य विशेषः साक्षात्कारस्तदेव वीर्यं यस्य । यस्यांघ्रिमूले कृताश्रयः सन् ॥ ३२ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

कार्यं खलु सर्वानुमोदनेन सिध्यतीत्यत आह—यूयमिति ॥ २६ ॥ ❀ ❀ तदनंगीकाराद्वासुदेवानंगीकारात् । हे अर्हसत्तमा इति । विपरीतलक्षणया यद्वाऽर्हान्सादयन्ति पूज्यान्भगवदनंगीकारेण दुःसहोक्त्या पीडयन्तीत्यर्हसदोऽतिशयेन तेऽर्हसत्तमा इति । केषांचित् श्रुत्यर्थतत्त्वविदास्तिकानां तार्किकादीनां, तथापि सत्यपीश्वरे, विप्रतिपत्तेर्विवादात्, तत्सिद्धिरीश्वरसिद्धिः । विप्रतिपत्तिश्चेश्वरसत्त्वे मानं नास्तीत्येवंरूपा जगद्वैचित्र्यान्यथानुपपत्तिरीश्वरानंगीकारे एतज्जगति मनुष्याणां द्विपदत्वादि पशूनां चतुष्पदत्वादि पक्षिणां हंसशुकमयूरादीनां श्वेतहरितचित्रितगरुत्त्वादि वृक्षाणामनेकविधफलपुष्पपत्रादि पर्वतसागरादि किञ्च नृपु मौढ्यपाण्डित्यसुखित्वदुःखित्वधनिकत्वदरिद्रत्वसुरूपकुरूपादि च न केनापि सुमेधसापीश्वरं विना कर्तुं शक्यतेऽत एतद्वैचित्र्यसंपादक ईश्वरोऽवश्यमंगीकर्त्तव्य एवेत्याह—इह प्रत्यक्षेण अमुत्र शास्त्रेण च ॥ २७ ॥ ❀ ❀ अत्राक्षिपति—नन्विति । यद्यपीदं

---

१. प्राचीने पाठे ३० श्लोके उत्तरार्द्धं पूर्वं पूर्वार्द्धश्च पश्चाद् वर्तते ।

जगद्वैचित्र्यं तथापि कर्मवैचित्र्येण जगद्वैचित्र्ये सिद्धेऽपि विदुषां सर्वज्ञानामाप्तानां मन्वादीनामनुभवेनेत्यर्थः ॥ २८ ॥ ❀ ❀ ईदृशानामथाग्रे भविष्यतामम्बरीषादीनां प्रह्लादबली तु शास्त्राज्ज्ञात्वेव गणितौ गदाभृता गदाधारणान्मधुरमनोहररूपवतेत्यर्थः। कृत्यञ्च तेषां निरन्तरं साक्षाच्चरणपरिचरणमेव ज्ञेयम्। इत्यर्थ इति। अन्यथा तेषां तद्भजनादौ प्रवृत्तिर्न संगच्छत इति भावः ॥ २९ ॥ ❀ ❀ तदन्यांस्तु निद्यत्वेनाह—धर्मे वेदविहिते नित्यनैमित्तिकादौ विमोहितान्विचित्तान्। मृत्योरित्यनेन तेऽद्य यद्यत्र मन्मते विप्रतिपत्स्यन्ते तर्हि मृत्योस्तन्मातामहस्य पुरीमेव प्रस्थापयिष्यामीति द्योतितम्। आदिनेन्द्रगृहीतविसृष्टपाखंडानुगतग्रहः। अत्राक्षिप्य समाधत्ते—नन्विति। विधौ स्वर्गकाम इन्द्रं यजेदित्येवंरूपे वाक्ये उद्दिष्टा देवता चेन्द्रोऽस्तीत्यतः स एव फलं दास्यतीत्यभिप्रेत्याह–विध्युद्देशेति। यद्वा–एकोऽसहायश्चासावात्मा स्वरूपं चेत्येकात्मा-स्वार्थे ष्यञ्-ऐकात्म्यं तेन वर्गादीनामैकात्म्येनान्यनिरपेक्षेण स्वस्वरूपेणैव हेतुनेत्यर्थः। तथा च वर्गस्वर्गापवर्गकामैरपि गदाभृदर्चनीय इति तेषां सकामानां निष्कामानां च गदाभृता कृत्यमस्तीत्यायातम्। अत्र प्रमाणम् "अकामः सर्वकामो वा मोक्षकाम उदारधीः। तीव्रेण भक्तियोगेन यजेत पुरुषं परम्" इति "यत्कर्मभिर्यत्तपसा" इत्यादौ "सर्वं मद्भक्तियोगेन मद्भक्तो लभतेंजसा" इत्यादिकञ्च। अत्र प्रायेणेत्यनेन क्वचित्कर्मज्ञानादिसापेक्षस्वस्वरूपेणेति। कर्मज्ञानादिमिश्रयापि भक्त्या भक्तिमिश्रैरपि कर्मज्ञानादिभिर्वर्गादिसिद्धिर्न तु भक्त्या विनेति निर्गलितार्थः। स्वामिचरणैरपि प्रायेणेत्यस्य मुख्येन हेतुनेत्यर्थोभिप्रेतः। अत्राशयमाह-अयं भाव इति। अर्वाग्देवतानामीश्वरेतरदेवानाम्। अन्तर्यामिश्रुतेः–"यः पृथिवीमंतरा यमयति पृथिवीयं न वेद" इत्यादिश्रुतेरित्यर्थः। तदेश्वरस्वीकृतौ तु कर्मानुरूपमेव फलं कर्तुंभविष्यति तथा क्वचिदपि कर्मणि फलाभावश्च न भविष्यति, अन्यथा तदुभयं स्यादेव फलदातुरभावादित्यर्थः। यत इत्थमतो हेतोः ॥ ३० ॥ ❀ ❀ उक्तमेवार्थं क्रमेण विवृण्वन्भगवतः केवलयैव भक्त्या यथा कृतार्थीभवति न तु तथा तपोज्ञानादिभिः किमुत कर्मभिरित्याशयेनाह–किञ्चेति। यद्वा–तपस्विनां तपोभिरपि बुद्धेर्मालिन्यमपाकर्तुमशक्नुवतामित्यर्थः। सद्य इति। यदैव महत्सेवया पादसेवाभिरुचिर्भवेत्तदैवेत्यर्थः। अपरं समानम् ॥ ३१ ॥ ❀ ❀ विनिर्धुता निरस्ताः ॥ ३२ ॥

### श्रीमद्वीरराघवव्याख्या

यूयं तन्मदनुशासनमनुमोदध्वं किमनुमोदनमात्रसाध्यं तत्राह कर्तुरिति। यत् यस्मात्कर्तुः प्रयोज्यस्य शास्तुः प्रयोजकस्य अनुज्ञातुः अनुमन्तुः तत्राप्रवृत्तस्य प्रवर्तकत्वं प्रवृत्तस्य प्रवर्तकत्वमनुमन्तृत्वमिति विवेकः, प्रेत्येति कृदन्तयोगात्कर्तरि षष्ठी, कर्त्रादिभिः प्रेत्य परलोकं प्राप्य तुल्यं फलमनुभूयत इत्यर्थः ॥ २६ ॥ ❀ ❀ अत्र 'यस्य तुष्यति दिष्टदृक्' कुरुताधोक्षजधियः, इति कर्मणां भगवदाराधनरूपत्वमाराधितात्कर्मभिर्भगवतश्च फलप्राप्तिरवगम्यते। तत्र निरीश्वरवादिनां केषाञ्चिन्मत इदमुक्तमनुपपन्नमित्युद्घाव्येश्वरसिषाधयिषया तत्सद्भावं तावत्प्रतिजानीते अस्तीति। ते हि निरीश्वरवादिन एवमाहुः–प्रकृतिपुरुषातिरेकेणेश्वराख्यः कश्चित्पदार्थो न विद्यते, प्रमाणाभावात्। न तावत्प्रत्यक्षं तदविषयत्वात् तस्य नाप्यनुमानं प्रत्यक्षोपलब्धसाध्यधर्माव्यभिचारिसाधनधर्मविषयत्वेनानुमानस्य प्रत्यक्षाविषये तदप्रवृत्तेः। नापि शब्दः, न तावल्लौकिकः भ्रमप्रमादादिदोषसंस्पर्शसम्भावनया तस्य प्रामाण्यनिश्चयायोगात्, नापि "सत्यं ज्ञानमनन्तं निष्क्रियं निष्कलम्" इत्यादिर्वैदिकशब्दः। लोके वृद्धव्यवहारादन्यत्र शब्दस्य बोधकत्वशक्त्यवधारणासम्भवात् व्यवहारस्य च कार्यबुद्धिपूर्वकत्वेन कार्यरूपार्थ एव शब्दस्य प्रामाण्यमिति लौकिकव्युत्पत्त्यनुसारेण वैदिकशब्दानामपि कार्यवस्तुपरत्वेनैव व्युत्पत्तिनिश्चयात्सिद्धरूपे ईश्वरे तेषां प्रामाण्यासम्भवात्। अत एवास्मात्फलप्राप्तिश्चासम्भाविनी। न च 'इष्टापूर्तं बहुधाजातं' 'ब्रह्मविदाप्नोति परमि'त्यादिकमामुष्मिकं ब्रह्मोपासनात्तत्प्राप्तिरूपं च फलं श्रुतमिति वाच्यं, तस्य कर्मसु कर्तृभूतस्य प्रत्यगात्मनो याथात्म्यवेदनप्रतिपादनपरत्वात्, अतः कर्तुः संस्कारद्वारेण विद्यायाः क्रतुशेषत्वात्तत्र फलश्रुतिरर्थवादमात्रं, न च विचित्रसृष्ट्यन्यथानुपपत्त्या ईश्वरसिद्धिस्ततः फलसिद्धिश्चेति वक्तुं युक्तम्, पुण्यापुण्यरूपानुष्ठितकर्मसंस्कृतायाः प्रकृतेरेव पुरुषार्थानुरूपं विचित्रपरिणामसम्भवात्, यथा विषादिदूषितानामन्नपानादीनामौषधविशेषाप्यायितानां च सुखदुःखहेतुभूतपरिणामविशेषस्य देशकालादिव्यवस्थया दर्शनं तद्वदिति संग्रहः। हे सत्तमाः! केषाञ्चिदास्तिकानां मते यज्ञपतिर्नाम यज्ञाराध्यस्तत्फलप्रदश्चेश्वराख्यः कश्चिदस्ति। तत्र तावद्विचित्रसृष्ट्यन्यथानुपपत्तिं प्रमाणयति इहामुत्र चेति। इह लोके चामुष्मिंश्च लोके ज्योत्स्नावन्तः प्रकाशबहुलाः भुवः विचित्रा भोगभूमयः तद्भोक्तारो विचित्रशरीराश्च दृश्यन्ते। एतच्च दर्शनमीश्वरमन्तरेणानुपपन्नं, यदुक्तम् प्रकृतेरेव जीवकर्मानुगुणं विचित्रपरिणामसम्भव इति, नैतदुपपद्यते सर्वज्ञेश्वरानधिष्ठितायाः तस्या विचित्रपरिणामासम्भवात्। यद्यनधिष्ठिताया अपि तस्याः परिणामः सम्भाव्येत तर्हि प्रलयदशायां तस्याः विचित्रपरिणामार्थमीश्वरानपेक्षणात् सततपरिणामस्वभावत्वेनापरिणामित्वेनावस्थानं न स्यात्। ईश्वराधिष्ठितत्वे तु तस्य सत्यसंकल्पत्वेन विचित्रसृष्टितदभावावुपपन्नौ। न च क्षेत्रज्ञाधिष्ठितत्वेन तावुपपन्नाविति वक्तुं शक्यं, तेषामनुन्मत्तानां स्वेच्छयैव स्वानर्थावहापुण्यानुष्ठानपूर्वकपशुपादपत्वादिशरीरापादनस्यासम्भवात्। ईश्वराभ्युपगमे तु "इष्टापूर्तं बहुधा जातं जायमानम्" "यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥" "तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु॥" इत्युक्तरीत्या भगवान्पुरुषोत्तमोऽवाप्तसमस्तकामः सर्वज्ञः सत्यसङ्कल्पः स्वमाहात्म्यानुगुणलीलाप्रवृत्तः एतानि कर्म्माणि समीचीनान्येतान्यसमीचीनानीति कर्मद्वैविध्यं संविधाय तदुपादानोचितदेहेन्द्रियादिकं तन्नियमनशक्तिं च सर्वेषां क्षेत्रज्ञानां सामान्येन प्रदिश्य स्वशासनावबोधिवेदाख्यशास्त्रं च प्रदर्श्य तदुपसंहारार्थं

चान्तरात्मतयानुप्रविश्यानुमन्तृतया च नियच्छन् तत्र पुण्यरूपकर्मकारिणं स्वशासनानुवर्तिनं ज्ञात्वा धर्मार्थकाममोक्षैर्वर्द्धयति शासनातिवर्तिनं च तद्विपर्ययैर्योजयतीति सर्वमेतदुपपन्नं वैचित्र्यमिति भावः। न च 'सत्यं ज्ञानमि'त्यादिभिः कर्माङ्गभूत-प्रत्यगात्मयाथात्म्यं विविच्यते इति वक्तुं शक्यं, कर्तुः प्रत्यगात्मनः शुद्धस्याशुद्धस्य च खद्योतकल्पस्याविद्यादिहेयसम्बन्धयोगस्या-सम्भावनीयस्वरूपस्वभावयोः निरस्तनिखिलहेयगन्धानन्तकल्याणगुणाकरस्वसङ्कल्पकृतजगदुदयविभवलयलीलसर्वशक्तित्वज्ञाना-नन्दादिस्वरूपस्वभावैकान्तयोः श्रवणात्। तथाहि "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः, तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत, यः सर्वज्ञः सर्ववित्, यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति, न चैषां वाक्यानां सिद्धवस्तुपरत्वासम्भवः, यादृच्छिकव्युत्पत्तेरपि शारीरकमीमांसायां सिद्धान्तितत्वेन कार्यार्थ एव व्युत्पत्तिरिति निर्बन्धस्य निर्निबन्धनत्वात् फलश्रुतिरर्थवादरूपेत्यपि न युक्तिमत्, अर्थवादादेः प्रतीयमानार्थे तात्पर्याभावेऽपि रात्रिसत्रप्रतिष्ठाप-गोरणशतयातनासाध्यसाधनभावे शर्कराञ्जनद्रव्यपशुविशेषादेरर्थवादोक्तस्यापि विवक्षितत्वादिति संक्षेपः॥ २७॥ ❀ ❀ केषांचिदित्युक्तानास्तिकान् प्रदर्शयन् तेषामीश्वराभ्युपगमोऽस्तीत्याह मनोरिति अस्मत्पितुः। पितुः अस्मत्पितामह-स्याङ्गस्य॥ २८॥ ❀ ❀ अजस्य चतुर्मुखस्य भवस्य रुद्रस्य मन्वादीनां गदाभृता भगवता कृत्यं कर्म कर्तव्यं कर्म फलदानरूपं प्रयोजनमस्ति, मन्वादीनां मते अवश्यं कर्मफलदात्रा भवितव्यमित्यभ्युपगतमित्यर्थः॥ २९॥ ❀ ❀ नन्वचेतनस्य क्षणभाविनः कर्मणः फलप्रदत्वासम्भवेऽप्यपूर्वाख्यशक्तिकल्पनाद्वारेण फलसाधनत्वं स्यात्। विध्युद्देशश्रुतदेवताया वा किमीश्वरेणेति चेत्याशङ्कां परिहरन् दर्शयति। वर्गस्त्रिवर्गो धर्मादिः स्वर्गो धर्मफलं अपवर्गो मोक्षः–एषां प्रायशः ऐकात्म्यहेतुना एकमात्मा स्वरूपं येषां तेषां भाव ऐकात्म्यम्। एकेनैव प्रदेयत्वरूपैकात्म्यं तद्रूपेण हेतुना वर्गादीनामेकेनैव प्रदेयत्वश्रवणस्मरणरूपहेतुना ईश्वरोऽभ्युपगतो मन्वादिभिरित्यर्थः। तथा च श्रूयते "इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः। तदेवाग्निः तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः" इत्यादि, स्मर्यते च "यो यो यां यां तनुं भक्तः, धर्मार्थकाममोक्षाख्यं य इच्छेत्" इत्यादि। अयं भावः यज-देवपूजायामिति देवताराधनभूतयागाद्याराध्यभूताग्निवाय्वादिदेवतानामेव तत्तत्फलहेतुतया तस्मिन् तस्मिन्नपि वाक्ये व्यपदेशस्तावद् दृश्यते "वायव्यं श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोप-धावति स एवैनं भूतिं गमयति" इत्यादिषु। तत्र हि कामिनः सिषाधयिषितफलसाधनत्वप्रकारोपदेशो विध्यपेक्षित एवेति नातत्परत्वशङ्का युक्ता। एवमपेक्षितेऽपि फलसाधनत्वप्रकारे शब्दादेवावगते सति तत्परित्यागेनाश्रुतापूर्वाख्यशक्तिकल्पन-मनुपपन्नम् यद्वाय्वादीनां फलसाधनत्वं 'स एवैनं भूतिं गमयती'त्यादिना प्रतीतं तद्वाय्वाद्यात्मनाराध्यतया फलदायित्वेना-वस्थितस्य परमपुरुषस्यैवेति श्रूयते। 'इष्टापूर्तमि'त्यादिका 'तदेवाग्निस्तद्वायुरि'त्यादिका चेति। अतोऽपूर्वस्य देवताया वा न फलसाधनत्वमिति मन्वाद्युपादानं प्रदर्शनमात्रं न तु परिगणनमित्याशयेनाह दौहित्रादीनिति। धर्मे विमोहितान् धर्मस्वरूपतदनु-ष्ठानतत्साधनतत्फलसाधनादिकमजानानान् अत एव शोच्यान् मृत्योर्दौहित्रादीन्–आदिशब्दः प्रकारे–तत्सदृशानित्यर्थः, वेनादीन् ऋते विना सर्वेषां मते ईश्वरोऽस्तीत्यर्थः॥ ३०॥ ❀ ❀ एवं केवलकर्मणां तन्मूलकापूर्वस्य स्वातन्त्र्येण देवतायाश्च फलसाधनत्वाभावः परमपुरुषस्यैव साधनभावश्चोपपादितः। इदानीं तद्वृद्धिम्ने तस्य भगवत्पदारविन्दभजनस्यैवानर्थनिरास-कत्वपूर्वकपुरुषार्थोपादकत्वमाह यत्पादेति। तपः सन्ताप आध्यात्मिकादिः 'तप–सन्तापे' इति धात्वर्थानुरोधात् तद्वतां तापत्रया-तुराणामित्यर्थः, यस्य भगवतः पादयोर्या सेवा भक्तिस्तस्यामभिरुचिरहरहः प्रवर्द्धमाना सती अनेकजन्मभिः अनन्तजन्मभि-रुपचितं संवर्द्धितं धियो मनसः मलं सद्यः क्षिणोति क्षपयति तमेव भजतेति तृतीयेनान्वयः। तत्पादसम्बन्धस्यैष महिमेति दृष्टान्तेनाह यथेति–यथा तत्पादाङ्गुष्ठविनिःसृता सरित् गङ्गा मलं क्षिणोति तथेत्यर्थः॥ ३१॥ ❀ ❀ किं मलक्षपणसाध्यं तत्राह। विनिर्धुतं निरस्तमशेषं मनोमलं यस्य असङ्गो वैराग्यम्, इदं साधनसप्तकोपलक्षणं विज्ञानं प्रकृतिविविक्तात्मयाथात्म्यवेदनं ताभ्यां विशिष्यते इति विशेषः अङ्गभूतज्ञानकर्मकृतोपकार इत्यर्थः, तदेव वीर्यं बलं यस्य भक्तियोगस्य सोऽस्यास्तीति तथा यस्य भगवतोऽङ्घ्रिमूले कृतकेतनः कृतस्थानः तदेकनिरतः, अनेन भक्तियोगस्य विजातीयप्रत्ययान्तराव्यवहितत्वं विवक्षितम्, ईदृशः पुमान् क्लेशवहां गर्भजन्मजरामरणादिक्लेशकारिणीं संसृतिं पुनर्न प्रतिपद्यते॥ ३२॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सभ्यानुद्दिश्याह यूयमिति। तेन किमस्माकं फलमित्यत उक्तम् अनुज्ञातुरिति। अनुज्ञात्रादीनां शास्त्रेषु यत्फलमुक्तं तत्तदनुज्ञानुसारिफलं स्यादित्यभिप्रायेण तुल्यमित्युक्तं, न तु कर्त्रनुज्ञात्रोस्तुल्यफलत्वं स्यादन्यथा कृतहान्यादिदोषापत्ति-रिति॥ २६॥ ❀ ❀ ननु यद्यधोक्षजसद्भावे प्रमाणं स्यात्तर्हि तद्धियं कुरुतेति विधातुं युक्तं, तदेव कुत इति तत्राह अस्तीति। यद् दृष्टं तदेव सत् यददृष्टं तदेवासदिति वादिनोऽपेक्ष्य केषांचिदित्युक्तं केषांचिद्व्यासादीनां महात्मनां पक्षे यज्ञपतिर्नाम विष्णु-रस्तीत्यन्वयः। "यज्ञो यज्ञपतिर्यज्वा" इत्यादि स्मृतेः, श्रीनारायणस्य प्रसादेन प्राप्या लोकास्तेन नियता देवताश्च सन्तीत्येतदेको-क्त्याह इहेति। इह मनुष्यलोके तच्छरीरे च। अमुत्र स्वर्गादौ ज्योत्स्नावत्यः प्रकाशभूयिष्ठा भुवः स्थानविशेषाः इन्द्रियादिप्रेरकत्वेन भवनाद् भुवो देवताश्च दृश्यन्ते। प्रमाणत इति शेषः, "प्रकाशवद्भुवो देवा मानुषाश्चापि केचन" इति वचनात्। दुर्लभ-त्वात्कचिदित्युक्तमिहेत्यनेन बिलस्वर्गं लक्षयति सुखहेतुत्वेन चन्द्रिकया तुल्यरत्नप्रकाशेन प्रकाशितत्वात् ज्योत्स्नावत्य

इति ॥ २७ ॥ ❀ ❀ केषांचिदिति सूचितांस्तान्नामतो निर्दिशति मनोरिति। अस्मत्पितुर्वेनस्य पितुः ॥ २८ ॥ ❀ ❀ अजस्य ब्रह्मणः गदाभृतो हरेः। कृत्यं पूजालक्षणं कार्यमस्ति ॥ २९ ॥ ❀ ❀ स्वर्गादेरन्याधीनतया तत्प्राप्त्यर्थं तदुपादानस्यैव कर्तव्यत्वेन तत्र किं गदाभृतः कृत्येनेति तत्राह राज्येति। राज्यादेः प्रायेणान्याधीनत्वमन्तरेणैवैकात्मनः समस्ताप्रधानस्य हरेर्हेतुता कारणत्वम्। "एकात्मा हरिरुद्दिष्टः प्रधानत्वात्समस्ततः" इति वचनात् "ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गः इति श्रुतेः, स्वर्गादिप्राप्त्यर्थमपि श्रीनारायणस्य पूजा ज्ञानजनयित्री कार्येत्याशयः। ननु प्रायःशब्दस्य प्राचुर्यार्थावधारणार्थत्वे निषिध्यावशिष्टाल्पनिषेधः कथं क्रियते इति चेन्न, तस्यावधारणाक्षेपे प्रयोगदर्शनात् तदुक्तम् "प्रायःपदं स्यात्प्राचुर्ये चाक्षेपात्मावधारणे। अर्थतोऽवधृतिः क्षेपो मुखाक्षेपोऽवधारणाम्" इति। एकश्चेतनो जीव एव राज्यादेः कारणमधिकृतत्वादिति चेन्न, विपक्षाविरोधात् अनाम्नायत्वाच्च "एकात्मा हरिरुद्दिष्टः प्रधानत्वात्समस्ततः" इति। एतत्समाख्यानस्मृतिविरोधाच्च केषांचिदित्येनेन केषांचिन्नास्तीत्युक्तं नास्तिकानाह दौहित्रादीनिति। मृत्योर्दौहित्रो दुहितुः पुत्रो वेनः ॥ ३० ॥ ❀ ❀ यज्ञपतिरस्तु राज्यादेर्हेतुर्येन विधिना फलसिद्धिः स्यात्तं प्रकारमुपदिशेत्यत आह यत्पादेति। अत्र गङ्गादृष्टान्तो बुद्ध्यवतारार्थं न तु गङ्गाकृष्णपादसेवयोः फलसाम्याभिप्रायेण कृष्णपादसेवा साक्षाज्ज्ञानसाध्यप्रसादसाधनं, गङ्गासेवा तु शुद्धान्तःकरणस्य भगवत्सेवामुत्पाद्य तत्साधनमिति परम्परयोपसङ्गच्छते ॥ ३१ ॥ ❀ ❀ नष्टमनोमलस्य किमात्यन्तिकफलमत्राह विनिर्धुतेति। निरस्तमनोदोषस्य पुंसो विषयासङ्गलक्षणवैराग्याज्जाताया भक्तेर्विज्ञानं भवति, तदेव विशेषवीर्यमस्यास्तीति असङ्गविज्ञानविशेषवीर्यवान् यस्याङ्घ्रिमूले कृताश्रयः विज्ञानात्पूर्वं यथा संसारमाप्नोति तथा नाप्नोतीत्यस्मिन्नर्थे पुनरिति संसारक्लेशप्रतिपत्तिमपि नाप्नोति किं पुनस्तत्प्राप्तिरित्यतः प्रपद्यत इति ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

यूयमिति। तत् पूर्वोक्तं भगवद्धर्मम् अनुमोदने हेतुः कर्तुस्तत्कर्मानुष्ठातुः परलोके यत् फलं तच्छिक्षयितुरनुमोदितुश्च। भवतीति ॥ २६ ॥ ❀ ❀ इन्द्रपाखण्डभ्रंशितमतीन् प्रति प्रथममाह अस्तीति। हे अर्हसत्तमाः! यज्ञपतिर्नाम सर्वकर्मफलदातृत्वेन श्रुतिप्रतिपादितः परमेश्वरः केषाञ्चित् श्रुत्यर्थतत्त्वज्ञानां मते तावदस्ति। तथापि विप्रतिपत्तेर्न तत्सिद्धिरित्याशङ्क्य तत्र जगद्वैचित्र्यान्यथानुपपत्तिप्रमाणमभ्युपोद्बलकमित्याह। इह प्रत्यक्षेणामुत्र शास्त्रेण तद्वदित्यनुमानेन ज्योत्स्नावत्यः कान्तिमत्यो भुवो भोगभूमयो देहाश्च क्वचित् क्वचिदेवोपलभ्यन्ते, न च कर्मसाम्ये फलतारतम्यम्। क्वचित् क्वचिच्च तदसिद्धिश्च भवति। अतः स्वातन्त्र्येण परमेश्वरेण भाव्यम्। केषाञ्चिदिह सत्तमा इति पाठस्तु स्वाम्यधृतः ॥ २७ ॥ ❀ ❀ अत्र विद्वदनुभवो हि प्रमाणमित्याह मनोरिति त्रिकेण। अस्मत्पितामहस्याङ्गस्य। प्रह्लादबली तदानीं शास्त्रादेव ज्ञातौ गणितौ ॥ २८ ॥ ❀ ❀ गदाभृता परमेश्वरेण कृत्यमस्ति हृदये बहिरप्याविर्भूय तेषां मुहुः कृत्यसम्पादनात् तेन यत् कृत्यं करणीयं तत्तेषामस्तीत्यर्थः। तेषामेव तेन कृत्यमस्ति नान्येषामित्यर्थो वा। तदन्यांस्तु निन्दितत्वेनाह। मृत्योर्दौहित्रादीन् वेनप्रभृतीन् धर्म्मे विमोहितान्। गदाभृच्छब्देन तन्नाम्ना प्रसिद्धात् ॥ २९ ॥ ❀ ❀ श्रीविष्णोरन्यत्र परमेश्वरत्वं वारयति। श्रुतियुक्तिविद्वदनुभवेषु तं गदाभृतं विशिनष्टि। वर्गेति, वर्गोऽत्र त्रिवर्गः धर्मस्य लक्षणतः अपवर्गो मोक्षः तेषामैकात्म्येन रूपेण सर्वानुगतेन हेतुना। तदुक्तं स्कान्दे "बन्धको भवपाशेन भवपाशाच्च मोचकः। कैवल्यदः परं ब्रह्म विष्णुरेव सनातनः॥" इति दौहित्रेत्यादिकद्वयोः पद्ययोर्गौडीये विपर्ययेण पाठश्चित्सुखपुण्यारण्ययोर्मतः। मूलन्तु स्वाम्यसम्मतं ऐकात्म्येत्यत्र एकार्थेति चित्सुखः ॥ ३० ॥ ❀ ❀ तत्र शुद्धभक्तास्तु विशिष्टा इत्याह। यदिति द्वाभ्याम् ॥ ३१ ॥ ❀ ❀ विज्ञानस्य विशेषणत्वं भगवत्पर्यन्तानुभवात् ॥ ३२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

कार्य्यं खलु सर्व्वानुमोदनेन सिद्ध्यतीत्यत आह यूयमिति। शास्तुः शिक्षयितुः अनुज्ञातुरनुमोदयितुः प्रेत्य परलोके यत् फलं तत्तुल्यम् ॥ २६ ॥ ❀ ❀ ननु 'कुरुताधोक्षजधियः' इत्यधोक्षजाराधनं प्रवर्तयितुमीहसे तत् कथं सम्भवेत् त्वत्पित्रा वेन तदुपदेशकैरन्यैरप्यनङ्गीकृतत्वादित्यत आह—अस्तीति। हे अर्हसत्तमाः! इति विपरीतलक्षणया, यज्ञपतिर्नाम परमेश्वरः केषाञ्चिन्मते तावदस्ति तथापि विप्रतिपत्तेर्न तत्सिद्धिरित्याशङ्क्य जगद्वैचित्र्यान्यथानुपपत्तिं प्रमाणयति। इह प्रत्यक्षेणामुत्र शास्त्रेण च ज्योत्स्नावत्यः कान्तिवैचित्र्यवत्यः क्वचिदित्यज्योत्स्नावत्यश्च, अतिशयोक्त्या दृष्टादृष्टशुभकर्मणां फलतारतम्यवत्यः फलाभाववत्यश्च भुवः भोगभूमयो देहाश्च लक्ष्यन्ते। अयमर्थः न तावत् कर्मणः फलदातृत्वं घटते, जडत्वात्। न चार्वाग्देवतानां स्वातन्त्र्यमन्तर्यामिश्रुतेः। न च तत्कर्मसाम्ये फलतारतम्यं क्वचित्तदभावश्च सम्भवति। अतः कर्तुमकर्तुमन्यथा कर्तुं समर्थेन परमेश्वरेण भाव्यं, यस्यैवादरतारतम्ये सति फलतारतम्यमादराभावे फलाभाव इति ॥ २७ ॥ ❀ ❀ विद्वदनुभवेनापीश्वरसिद्धिमाह। मनोः स्वायम्भुवस्यास्मत्पितुः पितुः पितामहस्येत्यर्थः। प्रह्लादबली तदानीं शास्त्रादेव ज्ञात्वा गणितौ ॥ २८ ॥ ❀ ❀ गदाभृता कृत्यमस्ति गदाधारणान्मधुरमनोहररूपवत्तेत्यर्थः। कृत्यञ्च तेषां निरन्तरसाक्षात्तच्चरणपरिचरणमेव ज्ञेयम्। तदन्यांस्तु निन्द्यत्वेनाह। मृत्योर्दौहित्रादीन् वेनादीन् विना धर्मविमोहितान् अत एव शोच्यान् मृत्योरित्यनेन ते अद्य यद्यत्र मन्मते विप्रतिपत्स्यन्ते तर्हि तन्मृत्योस्तन्मातामहस्यैव पुरीं प्रस्थापयिष्याम्येवेति

चोद्यते ॥२९॥ ❀ ❀ तं गदाभृतं विशिनष्टि वर्गेति । वर्गोऽत्र त्रिवर्गः स्वर्गो धर्मस्य फलम् अपवर्गो मोक्षस्तेषाम् ऐकात्म्यहेतुना एकोऽसहायश्चासावात्मा स्वरूपञ्चेत्येकात्मा, स्वार्थे ष्यञ्, ऐकात्म्यं तेन वर्गादीनामैकात्म्येन अन्यनिरपेक्षस्वस्वरूपेणैव हेतुनेत्यर्थः। तेन वर्गस्वर्गापवर्गकामैरपि गदाभृदर्च्चनीय इति तेषां निष्कामाणां सकामानाञ्च गदाभृता कृत्यमस्तीत्यायातम्। अत्र प्रमाणम् "अकामः सर्वकामो वा मोक्षकाम उदारधीः। तीव्रेण भक्तियोगेन यजेत पुरुषं परम्" इति। 'यत् कर्मभिर्यत्तपसे' त्यादौ 'सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा' इत्यादिकञ्च। अत्र प्रायेणेत्यनेन क्वचित् कर्मज्ञानादिसापेक्षस्वरूपेणेति कर्मज्ञानादिमिश्रयापि भक्त्या भक्तिमिश्रैरपि कर्मज्ञानादिभिर्वर्गादिसिद्धिर्न तु भक्त्या विनेति निर्गलितार्थः। भक्तेस्तु तत्स्वरूपत्वन्तु प्रसिद्धम् ॥ ३० ॥ ❀ ❀ उक्तमेवार्थं क्रमेण विवृण्वन् भगवतः केवलयैव भक्त्या यथा जनः कृतार्थीभवति न तु तथा तपोज्ञानादिभिः, किमुत कर्मभिरित्याह यदिति द्वाभ्याम्। तपस्विनामिति तपोभिरपि बुद्धेर्मालिन्यं दूरीकर्तुमशक्नुवतामित्यर्थः। सद्य इति यदैव महत्कृपया पादसेवाभिरुचिर्भवेत्तदैवेत्यर्थः। ततश्चान्वहं प्रतिदिनं वर्द्धमानैव स्यात् सती शुद्धसत्त्वस्वरूपा नित्येत्यर्थः। तत्पादसम्बन्धस्यैवैष महिमेति दृष्टान्तेनाह यथेति। तं भजतेति तृतीयेनान्वयः ॥ ३१ ॥ ❀ ❀ ततश्चासङ्गो वैराग्यं विज्ञानविशेषः श्रीमूर्त्तिसौन्दर्याद्यनुभवः ताभ्यामेव यद्वीर्यं प्रभावस्तद्वान्। केतनमाश्रयः इति भक्तेः कैवल्यं दर्शितम् ॥ ३२ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अनुज्ञातुः अनुमोदितुः ॥ २६ ॥ ❀ ❀ अधोक्षजधिय इत्यनेनोक्तपरमात्मनि वेनादिभिर्विमोहितानां केषाञ्चिद-संभावनामालक्ष्य तान् प्रति शनैः परमात्मतत्त्वं वर्णयति अस्तीति। केषांचित् वेनादिव्यतिरिक्तानां मते यज्ञपतिरस्ति, यतो यज्ञादिफलेन, इह अर्हसत्तमाः पूज्यतमाः नरोत्तमाः! अमुत्र सूर्यादयो यज्ञपतिकृताः लक्ष्यन्ते क्वचित् इह श्वपचादयः, अमुत्र राह्वादयः अज्योत्स्नावत्यः भुवः शरीररूपाः पापफलभोगभूमयः यज्ञादिकर्मवर्जिताः यज्ञपतिकृता एव लक्ष्यन्ते। स्वतः उत्तमभावस्य प्राप्तेः अधमभावान्निवृत्तेश्चासम्भवात् ॥ २७ ॥ ❀ ❀ जीवानां मुमुक्षुबुभुक्षूणां भुक्तिमुक्तिप्रदेन परमेश्वरेणावश्यं भाव्यमित्याह मनोरिति त्रिभिः ॥ २८ ॥ ❀ ❀ कृत्यं प्रयोजनमस्ति मुक्तिरूपं प्रयोजनं गदाभृतैव हेतुभूतेन साधितमित्यर्थः ॥ २९ ॥ ❀ ❀ धर्मविमोहितान्। उचिते धर्मे मोक्षमार्गभूते विमोहितान् अत एव शोच्यान् गर्ह्यान् मृत्योर्दौहित्रादीन् सुनीथात्मजादीन् प्रायेण ऋते। तेषामपि जन्मादिप्रदात्रा गदाभृतैव कृत्यमस्त्यतः प्रायग्रहणम्, कीदृशेन वर्गस्वर्गापवर्गाणामैकात्म्य-हेतुना वर्गस्त्रिवर्गस्तत्फलभूतः स्वर्गश्च अपवर्गो मोक्षश्च तेषामैकात्म्येनाद्वितीयेन हेतुना ॥ ३० ॥ ❀ ❀ अथ यत्पादसेवारुचिर्बहु-जन्मोपचितं तपस्विनां बुद्धिमलं हरति यच्चरणं शरणं गतो जनो विधूतमनोमलः संसृतिं न प्रपद्यते, तं यूयमपि भजतेत्याह। यदिति त्रिभिः ॥ ३१ ॥ ❀ ❀ असंगो वैराग्यं विज्ञानमात्मपरमात्मविषयकं ज्ञानं ताभ्यां विशेषतो वीर्यवान् हरिभक्तिबलवान् ॥ ३२ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

ननु को वाधोक्षजो यज्ञादिफलदाता यदर्पणेन कर्मानुष्ठानं कर्त्तव्यं मीमांसकादिभिस्तदनङ्गीकारादित्याशङ्क्याह—अस्तीति। कैश्चिदाग्रहेणानङ्गीकारेपि केषांचिन्महतां मते यज्ञपतिर्नाम प्रमाणसिद्धो भगवानस्तीत्यन्वयः। भवतामपि श्रेष्ठत्वात्प्रमाणसिद्धः पक्ष एव ग्राह्यो नाग्रहसिद्धः पक्ष इत्याशयेन सम्बोधयति—हे अर्हसत्तमा इति। किं तत्र प्रमाणमित्यपेक्षायां जगद्वैचित्र्यान्यथानुपपत्ति-रित्याह—इहेति। इहास्मिन् लोके अमुत्र परलोके च क्वचिज्ज्योत्स्नावत्यः कांतिमत्यः सुखजनन्यः भुवो भोगभूमयो लक्ष्यन्ते दृश्यन्ते। भुव इत्युपलक्षणं पदार्थमात्र इत्यर्थः। क्वचिन्नरकादौ नियमेन दुःखजनकत्वं क्वचित्सुखजनकस्यापि कालांतरे दुःखजनकत्वम्। एकैकस्यैव पदार्थस्य कस्मिन् पुरुषे सुखजनकत्वं कस्मिंश्चित्पुरुषे च दुःखजनकत्वमिति जगद्वैचित्र्यम् ॥ २६ ॥ ❀ ❀ के ते महान्तो येषां परमेश्वरः संमत इत्यपेक्षायां तान्दर्शयति—मनोरिति द्वाभ्याम्। मनोरित्यादिषष्ठ्यन्तानां गदाभृता भगवता कृत्यं भोगवैचित्र्यजननलक्षणं प्रयोजनमस्तीत्युत्तरेणान्वयः। मनूत्तानपादयोरपि महीपतेरिति विशेषणं ज्ञेयम्। तेन भगवदनुग्रहेणैव तेषां महीपालने सामर्थ्यं नान्यथेति सूचितम्। अस्माकं पितुः पितुः पितामहस्याप्यङ्गस्य राजर्षेः सूक्ष्मदर्शिन इत्यन्वयः ॥ २७ ॥ ❀ ❀ अन्येषामथ अपि ईदृशानां धर्मिष्ठत्वेन प्रसिद्धानां विवेकिनाम्। अजस्य च ब्रह्मणः सर्वलोकस्रष्टुः। भवस्य महादेवस्य चेश्वरत्वेन पूज्यस्य प्रतिपक्षीभूतदैत्यकुलोद्भवस्यापि प्रह्लादस्य बलेश्चापि ॥ २८ ॥ ❀ ❀ नन्वस्ति चेत्परमेश्वरस्तदा वेनादीनां कुतो न संमत इत्याशङ्क्याह—दौहित्रादीनिति भगवद्विमुखानां कथमेषां भद्रं स्यादिति सद्भिः शोच्यान् शोकार्हान् वेनादीन् ऋते विना सर्वेषां महतां गदाभृता कृत्यमस्तीत्यनुषङ्गः। तर्हि तेषां कुतस्तत्कृत्यं नास्ति तत्राह—धर्मेति। धर्मे भगवद्भजने विमोहितान् अधर्मे इति भ्रान्तान्। कुत एवं तेषां भ्रान्तिरित्याशङ्क्याधर्मवंशोत्पन्नमातामहदोषादित्यभिप्रेत्य प्रसिद्धं वेन इति नाम विहाय तन्नामग्रहणेन निर्दिशति—मृत्योर्दौहित्रादीनिति। आदिपदेनान्येपि सर्वेऽनीश्वरपक्षपातिनो ग्राह्याः। तेषामपि तथाभ्रमे जन्मजन्मान्तर-सञ्चिताधर्मसमूह एव हेतुरिति ज्ञेयम्। नन्वेतद्वैचित्र्यं नेश्वरकल्पने शक्तं कर्मवैचित्र्यादेवोपपन्नत्वादित्याशङ्क्याह—वर्ग इति। वर्गः धर्मार्थकामाख्यस्त्रिवर्गः स्वर्गो धर्मफलं पापफलं नरकदुःखादिकमपि ज्ञेयम्, अपवर्गो मोक्षः तेषां प्रायेणैकात्म्येन ऐकरूप्येण सर्वानु-

गतेनेश्वरेण हेतुना भाव्यम्। कर्माणि तु जडानि तदधीनानि तेनैव वैषम्यादिस्वदोषपरिहाराय प्रवर्तितानीति भावः ॥ २९ ॥ ❀ ❀ ननु तदर्पितकर्मानुष्ठानादिना तद्भजने किं फलं भवतीत्यपेक्षायामाह–यदिति। एवं कर्मानुष्ठानेन विशुद्धान्तःकरणानां विवेकिनां जाता यस्य पादसेवाभिरुचिरन्वहं प्रतिदिनमेधती वर्द्धमाना सती तपस्विनामाध्यात्मिकाधिदैविकाधिभौतिकभेदेन त्रिविधतापतप्तानां संसारिणां तापकारणमशेषैर्जन्मभिरुपचितं वृद्धं धियो मलं कामादिवासनालक्षणं सद्यः क्षिणोति क्षपयति। तत्पादसम्बन्धस्यैवेदं माहात्म्यमित्यभिप्रेत्य दृष्टान्तमाह–यथेति। यथा तत्पादाङ्गुष्ठविनिःसृता सरित् गङ्गा अन्वहं सेव्यमाना तपस्विनामशेषजन्मोपचितं धियो मलं क्षिणोति तथेत्यर्थः॥ ३० ॥ ❀ ❀ क्षीणमलस्य किं फलं भवतीत्यपेक्षायां तदाह–विनिर्धुतेति। विनिर्धुता निर्धूता अशेषा मनोमला यस्य स पुमान् असङ्गो वैराग्यं तेन विज्ञानस्य विशेषो भगवत्साक्षात्कारस्तदेव वीर्यं बलं यस्य स तथाभूतः सन् यस्य भगवतोंऽघ्रिमूले कृतकेतनः कृतनिवासो भवति। पुनः क्लेशवहां क्लेशांस्त्रिविधतापान् वहति प्रापयतीति तथा तां संसृतिं न प्रपद्यते न प्राप्नोति मुक्तो भवतीत्यर्थः॥ ३१ ॥ ❀ ❀ एवं भगवद्भजनफलं निरूप्य तत्र प्रजा नियोजयति–तमेवेति। तमेव भगवन्तममायिनो लोके सत्कारमानपूजाद्यर्थदंभादिकपटरहिताः सन्तो यूयमात्मवृत्तिभिः स्वस्ववर्णाश्रमानुसारेण विहितजीविकोपार्जितैः स्ववृत्त्योपार्जितमेव वित्तं शुद्धं भवति तेनैव भगवदाराधनविधानात्। "अयं स्वस्त्ययनः पन्था द्विजातेर्गृहमेधिनः। यच्छ्रद्धयाप्तवित्तेन शुक्लेनेज्येत पूरुषः" इत्यादौ मनोवचःकायगुणैर्ध्यानस्तुतिपरिचर्यादिभिः स्वकर्मभिः यज्ञाद्यनुष्ठानैर्भजतेत्यन्वयः। ननु भगवद्भजनस्य मोक्षहेतुत्वं चेत्तदा सकामानां कामपूर्तिर्न स्यादित्याशङ्क्याह–कामादुघाङ्घ्रिपङ्कजं यस्य तम्। अतो न तद्भजने कामाद्यनुपपत्तिरिति भावः। न च कामसंपत्त्या भजनस्य चरितार्थत्वान्मोक्षो न स्यादिति शङ्कनीयं देवतान्तरभजनस्य तथात्वेपि "न मय्यावेशितधियां कामः कामाय कल्पते। भर्जिताः क्वथिता धानाः प्रायो बीजाय नेष्यते" इति वाक्याद्भगवद्भजनस्य मध्ये कामसम्पादनेपि मोक्षपर्यवसायित्वात्। ननु तथापि ब्रह्मादिभिराराध्यस्य कथमस्मदाराधने प्रसन्नता स्याद्येन फलं स्यादित्याशङ्क्याह–यथेति। यथाधिकारमेवाराधनेनावसिताः शास्त्रेण निश्चिताः अर्थानां फलानां सिद्धयो भवन्ति, न सर्वेषां समानमाराधनमपेक्षितं येनाराधनस्य निष्फलत्वं स्यादिति भावः॥ ३२ ॥

### भाषानुवादः

विशुद्धचित्त देवता, पितर और महर्षिगण! आप भी मेरी इस प्रार्थनाका अनुमोदन कीजिये; क्योंकि कोई भी कर्म हो, मरनेके अनन्तर उसके कर्ता, उपदेष्टा और समर्थकको उसका समान फल मिलता है॥ २६ ॥ ❀ ❀ माननीय सज्जनो! किन्हीं श्रेष्ठ महानुभावोंके मतमें तो कर्मोंका फल देनेवाले भगवान् यज्ञपति ही हैं; क्योंकि इहलोक और परलोक दोनों ही जगह कोई-कोई शरीर बड़े तेजोमय देखे जाते हैं॥ २७ ॥ ❀ ❀ मनु, उत्तानपाद, महीपति ध्रुव, राजर्षि प्रियव्रत, हमारे दादा अङ्ग तथा ब्रह्मा, शिव, प्रह्लाद, बलि और इसी कोटिके अन्यान्य महानुभावोंके मतमें तो धर्म-अर्थ-काम-मोक्षरूप चतुर्वर्ग तथा स्वर्ग और अपवर्गके स्वाधीन नियामक, कर्मफलदातारूपसे भगवान् गदाधरकी आवश्यकता है ही। इस विषयमें तो केवल मृत्युके दौहित्र वेन आदि कुछ शोचनीय और धर्मविमूढ लोगोंका ही मतभेद है। अतः उसका कोई विशेष महत्त्व नहीं हो सकता॥ २८–३० ॥ ❀ ❀ जिनके चरणकमलोंकी सेवाके लिये निरन्तर बढ़नेवाली अभिलाषा उन्हींके चरणनखसे निकली हुई गङ्गाजीके समान, संसारतापसे संतप्त जीवोंके समस्त जन्मोंके संचित मनोमलको तत्काल नष्ट कर देती है, जिनके चरणतलका आश्रय लेनेवाला पुरुष सब प्रकारके मानसिक दोषोंको धो डालता तथा वैराग्य और तत्त्वसाक्षात्काररूप बल पाकर फिर इस दुःखमय संसारचक्रमें नहीं पड़ता और जिनके चरणकमल सब प्रकारकी कामनाओंको पूर्ण करनेवाले हैं—उन प्रभुको आपलोग अपनी-अपनी आजीविकाके उपयोगी वर्णाश्रमोचित अध्यापनादि कर्मों तथा ध्यान-स्तुति-पूजादि मानसिक, वाचिक एवं शारीरिक क्रियाओंके द्वारा भजें। हृदयमें किसी प्रकारका कपट न रक्खें तथा यह निश्चय रक्खें कि हमें अपने-अपने अधिकारानुसार इसका फल अवश्य प्राप्त होगा॥ ३१–३३ ॥

**तमेव यूयं भजतात्मवृत्तिभिर्मनोवचःकायगुणैः स्वकर्मभिः।**
**अमायिनः कामदुघाङ्घ्रिपङ्कजं यथाधिकारावसितार्थसिद्धयः॥ ३३ ॥**

**असाविहानेकगुणोऽगुणोऽध्वरः पृथग्विधद्रव्यगुणक्रियोक्तिभिः।**
**सम्पद्यतेऽर्थाशयलिङ्गनामभिर्विशुद्धविज्ञानघनः स्वरूपतः॥ ३४ ॥**

**प्रधानकालाशयधर्मसंग्रहे शरीर एष प्रतिपद्य चेतनाम्।**
**क्रियाफलत्वेन विभुर्विभाव्यते यथानलो दारुषु तद्गुणात्मकः॥ ३५ ॥**

अहो ममामी वितरन्त्यनुग्रहं हरिं गुरुं [1]यज्ञभुजामधीश्वरम् ।
स्वधर्मयोगेन यजन्ति मामका निरन्तरं क्षोणितले दृढव्रताः ॥ ३६ ॥
मा जातु तेजः प्रभवेन्महर्द्धिभिस्तितिक्षया तपसा विद्यया च ।
देदीप्यमानेऽजितदेवतानां कुले स्वयं राजकुलाद् [2]द्विजानाम् ॥ ३७ ॥
ब्रह्मण्यदेवः पुरुषः पुरातनो नित्यं हरिर्यच्चरणाभिवन्दनात् ।
अवाप लक्ष्मीमनपायिनीं यशो जगत्पवित्रं च महत्तमाग्रणीः ॥ ३८ ॥
यत्सेवयाशेषगुहाशयः स्वराड् विप्रप्रियस्तुष्यति काममीश्वरः ।
तदेव तद्धर्मपरैर्विनीतैः[3] सर्वात्मना ब्रह्मकुलं निषेव्यताम् ॥ ३९ ॥
पुमाँल्लभेतानतिवेलमात्मनः प्रसीदतोऽत्यन्तशमं[4] स्वतः स्वयम् ।
यन्नित्यसम्बन्धनिषेवया ततः परं किमत्रास्ति मुखं [5]हविर्भुजाम् ॥ ४० ॥

अन्वयः—यथाधिकारावसितार्थसिद्धयः यूयम् अमायिनः आत्मवृत्तिभिः मनोवचःकायगुणैः स्वकर्मभिः कामदुघाङ्घ्रिपङ्कजम् तम् एव भजत ॥ ३३ ॥ ❀ ❀ असौ स्वरूपतः विशुद्धविज्ञानघनः अगुणः इह पृथग्विधद्रव्यगुणक्रियोक्तिभिः अर्थाशयलिङ्गनामभिः अनेकगुणः अध्वरः संपद्यते ॥ ३४ ॥ ❀ ❀ एषः विभुः प्रधानकालाशयधर्मसंग्रहे शरीरे चेतनाम् प्रतिपद्य यथा अनलः दारुषु तद्गुणात्मकः क्रियाफलत्वेन विभाव्यते ॥ ३५ ॥ ❀ ❀ अहो मामकाः दृढव्रताः गुरुम् यज्ञभुजाम् अधीश्वरम् हरिम् क्षोणितले स्वधर्मयोगेन निरन्तरम् यजन्ति अमी मम अनुग्रहं वितरन्ति ॥ ३६ ॥ ❀ ❀ महर्द्धिभिः राजकुलात् तेजः अजितदेवतानां द्विजानां तितिक्षया तपसा च विद्यया स्वयम् देदीप्यमाने कुले मा जातु प्रभवेत् ॥ ३७ ॥ ❀ ❀ महत्तमाग्रणीः ब्रह्मण्यदेवः पुरातनः पुरुषः हरिः नित्यं यच्चरणाभिवन्दनात् अनपायिनीम् लक्ष्मीम् च जगत्पवित्रम् यशः अवाप ॥ ३८ ॥ ❀ ❀ अशेषगुहाशयः स्वराट् विप्रप्रियः ईश्वरः यत्सेवया कामम् तुष्यति तत् एव ब्रह्मकुलम् तद्धर्मपरैः विनीतैः सर्वात्मना निषेव्यताम् ॥ ३९ ॥ ❀ ❀ पुमान् यन्नित्यसंबन्धनिषेवया स्वयम् अत्यन्तशमम् लभेत स्वतः अनतिवेलम् प्रसीदतः आत्मनः ततः परम् अत्र हविर्भुजाम् किम् मुखम् अस्ति ॥ ४० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

आत्मवृत्तिभिरध्यापनादिभिः मनोवचःकायानां गुणैर्ध्यानस्तुतिसपर्याभिः अमायिनो निष्कपटाः सन्तः । ननु ब्रह्मादिभिः सेव्ये किमस्मद्भक्त्या भविष्यति तत्राह । यथाधिकारमेवावसिता निश्चिता समाप्ता वार्थसिद्धिर्येषाम् ॥ ३३ ॥ ❀ ❀ स्वकर्मभिर्यागादिभिर्भजतेत्युक्तं तत्र 'ब्रह्मार्पणं ब्रह्महविः' इति न्यायेन सर्वेषु यागतदंगतत्फलेषु भगवद्दृष्ट्या कर्म कर्तव्यं न भिन्नदृष्ट्येति वक्तुं तेषां भगवद्रूपतामाह द्वाभ्याम् । असौ भगवानेव स्वरूपतो विशुद्धविज्ञानघनोऽप्यगुणो निर्विशेषणोऽपि सन्निह कर्ममार्गेऽनेकगुणो नानाविशेषगवान् अध्वरो यज्ञः संपद्यते । "यज्ञो वै विष्णुः" इति श्रुतेः । अनेकगुणत्वमेवाह । पृथग्विधानि यानि द्रव्यादीनि तैः । तत्र द्रव्याणि व्रीह्यादीनि गुणाः शुक्लादयः क्रिया अवघातादयः उक्तयो मन्त्राः अर्थोंगसाध्य उपकारः आशयः संकल्पः लिंगं पदार्थानां शक्तिः नाम ज्योतिष्टोमादि तैश्चाध्वरः संपद्यते ॥ ३४ ॥ ❀ ❀ यागतदंगानां भगवद्रूपत्वमुक्त्वा यागफलस्यापि भगवद्रूपतामाह प्रधानेति । एष विभुः परमानन्दोऽपि शरीरे चेतनां विषयाकारां बुद्धिं प्रतिपद्य तदभिव्यंग्यानंदरूपः सत्क्रियाफलत्वेन प्रतीयते । "एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः । यथानलो दारुषु स्थितस्तद्गुणात्मको दारुधर्मैर्दैर्घ्यवक्रत्वादिमांस्तद्वत् । कथंभूते शरीरे । प्रधानमव्यक्तम् । कालस्तत्क्षोभकः आशयो वासना धर्मोऽदृष्टं तैः संगृह्यते जन्यत इति तथा तस्मिन् ॥ ३५ ॥ ❀ ❀ तदेवमप्रवृत्तान्भगवद्भजने प्रवर्त्य स्वतः प्रवृत्तानां प्रवृत्तिमभिनन्दनेन द्रढयति अहो इति । वितरन्ति कुर्वन्ति गुरुं गुरुत्वेन स्वहितकर्मफलदातृत्वेन च पूज्यं हरिरूपमिष्टदैवतं स्वधर्मयोगेन यजन्ति पूजयन्ति ॥ ३६ ॥ ❀ ❀ इदानीं हरिभक्तिदार्ढ्याय ब्राह्मणभक्तिं विधत्ते मा जात्वित्यष्टभिः । महत्यश्च ता ऋद्धयश्च ताभिर्यद्राजकुलस्य तेजस्तत्तस्मात्तत्सकाशाद् द्विजानां कुलेऽजितो विष्णुः देवता येषां वैष्णवानां तेषां च कुले मा जातु प्रभवेत्कदाचिदपि प्रभावं न करोतु । कथंभूते । समृद्धिभिर्विनापि स्वयमेव तितिक्षाभिर्देदीप्यमाने ॥ ३७ ॥ ❀ ❀ ब्राह्मणानस्तुवन्नाह । यच्चरणाभिवन्दनाद्धरिर्लक्ष्मीं यशश्चावाप यत्सेवया चेश्वरस्तुष्यति तदेव ब्रह्मकुलं निषेव्यतामिति द्वयोरन्वयः ॥ ३८ ॥ ❀ ❀ तस्य हरेर्लोकसंग्रहरूपो यो धर्मस्तत्परैः ॥ ३९ ॥ ❀ ❀ ननु ब्रह्मकुल एव नित्यं सेव्यमाने सर्वदेवतामुखभूतेऽग्नौ

१. प्रा० पा०—भुजां महेश्वरम् । २. प्रा० पा—कुलं द्विजानाम् । ३. प्रा० पा०—परैर्हि नः सदा । ४. प्रा० पा०—ऽत्यन्तमनन्तमव्ययम् । ५. प्रा० पा०—हविर्भुजः ।

यज्ञाद्यनुष्ठानं न स्यान्न च तेन विना चित्तशुद्धिर्न च तया विना मोक्षः स्यादित्याशंक्याह पुमानिति द्वाभ्याम्। यस्य ब्रह्मकुलस्य नित्यं सम्बन्धेन निषेवया पुमान्स्वयमेव ज्ञानाभ्यासादिकं विनाप्यत्युत्तमं शमं मोक्षं लभेत कुतः। यत्सेवया स्वत एवानतिवेलं शीघ्रं प्रसीदतः शुद्ध्यत आत्मनश्चित्तात् ततः परं श्रेष्ठं हविर्भुजां देवानां किं मुखमस्ति ब्राह्मणसेवयैव यज्ञादिफलं ज्ञानफलं च तत्सर्वं भवतीत्यर्थः॥ ४०॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

ननु गार्हस्थ्यकर्मनिमग्ना वयं कथं केवलया भक्त्या भजामस्तत्र कर्ममिश्रां भक्तिमुपदिशन्नाह–तमिति। अध्यापनादिभिरादिना रक्षणकृष्यादिसेवादीनां ग्रहः। अत्राक्षिपति–नन्विति। यथाधिकारं ब्राह्मणादिवर्णधर्ममनतिक्रम्यैव। यद्वा येषां येष येषु येषु शिल्पेष्वधिकारस्तैरेव भगवदर्थकृतैस्ते ते तैलिकतांबूलिकपर्यन्ता अपि कृतार्था भवन्तीत्यर्थः। यद्वात्मनः स्वस्यैव वृत्तिः सत्ता येषु तैः स्वकर्मभिर्वर्णाश्रमधर्मैरपि सहिताः सन्तो भजतेति भक्तेः प्राधान्यमभिहितम्॥ ३३॥ ॐ ॐ कर्म स्वरूपतोऽशुद्धं जडं राजसमपि भगवदर्पितं सत् तद्रूपगुणीभूतभक्त्यंशेन विशुद्धं सत्त्वं चैतन्यमेव भवति फलत इति भक्तिमिश्रं कर्मोपदिशति द्वाभ्याम्–असाविति। तर्जन्या प्रस्तुतमध्वरं दर्शयति, असावध्वरोऽनेकगुणो नानाविशेषवान्। राजसोपि भगवदर्पणरूपभक्तिमाहात्म्यात्तत्फलदशायामगुणो गुणातीतो भवन् स्वरूपतो विशुद्धविज्ञानघनः ब्रह्मानन्दस्वरूपत्वेन संपद्यते, कर्मणोऽस्य मोक्षफलकत्वादिति भावः। तेन साक्षात्तदीयश्रवणकीर्त्तनादिस्तु प्रथमत एव विशुद्धविज्ञानघनः स तु सर्वतोपि श्रेष्ठ इति द्योतितमिति चक्रवर्त्ती। तत्र द्रव्यादिष्वष्टसु पदार्थानां मत्सरादिपदार्थानां यथा 'गोभिः श्रिणीत मत्सरम्' इत्यत्र गोपदस्य क्षीरे शक्तिः मत्सरपदस्य सोमे शक्तिस्तज्ज्ञानं विना कथं दुग्धेन सोममिश्रणं कुर्यादित्यर्थलाभो भवेदतः पदार्थशक्तिरपि यज्ञहेतुरिति। तीर्थस्तु–"आत्मा वा इदमेक एवाग्र आसीत्" इत्यादिश्रुतिप्रसिद्धो योसौ नारायण एकः स एवानेकगुणोऽध्वरः संपद्यते। द्रव्यं पुरोडाशादिकल्पोक्तगुणविशिष्टं 'द्रव्यं गुणानामाधारः' इति यादवः। गुणो विशिष्टमातापितृजन्यत्वादिः। क्रिया ऋत्विगादिव्यापारा इन्द्रायाग्नय इत्याद्या उक्तयस्ताभिः अर्थेषु यजमानेष्वाशयोन्तःकरणं येषां, लिंगानि वज्रधरत्वादीनि नामानीन्द्रादीनि तैः यद्वाऽर्थाशयत्वं मुक्ताश्रयत्वं लिंगं चक्रधरत्वादि नाम नारायणादि तैः संपद्यते प्राप्यते 'विशुद्धविज्ञानघनः स्वरूपतः' इत्येवं ज्ञानेन प्राप्यते इत्यर्थः। अनेन कर्मणा शुद्धांतःकरणानां जातं ज्ञानं संसारनिवर्तकमित्युक्तं "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इत्युक्तेः॥ ३४॥ ॐ ॐ अत्र विश्वनाथः—भगवदर्पितस्य कर्मणस्तन्मिश्रभक्तेश्च फलं भगवत्प्राप्तिरेवेत्याह—चेतनां स्वार्पितकर्मरूपेण बुद्धिं प्रतिपद्य अन्तर्भावितणत्यर्थत्वान्निष्पाद्येत्यर्थः। कृपया कर्मफलत्वेन विभुस्स्वयमेव भगवान् विभाव्यते प्रकाशते कर्मकर्त्तरि प्रयोगः। "यदत्र क्रियते कर्म भगवत्परितोषणम्। ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम्" इति वचनात्तदर्पितकर्म्मा भक्तिमिश्रज्ञानद्वारा तमेव प्राप्नोतीत्यर्थः। किञ्च—कर्मार्पणश्रद्धाभक्तितारतम्येन ज्ञानतारतम्येन च भक्तिप्राप्तितारतम्यं भवेदित्याह यथा चंदनागुरुधवखदिरादिस्थितोग्निस्तत्तद्गुणानुरूपो भवेत्तथैव भगवानप्युपरासकस्योपासनातारतम्येन फलप्रदो भवेत्। भक्तिमिश्रकर्मवते निष्कामाय मोक्षं कर्ममिश्रभक्तिमते शान्तरतिं च एवं भक्तितारतम्यवते सालोक्यादिकं च ददातीति भक्तेर्गुणभावप्राधान्यादिकं दर्शितम्॥ ३५॥ ॐ ॐ अहो इति। सभ्यानुन्मुखी करोति। मम मह्यम्। अमी मामका मदीया अनुग्रहम्। अमी के ये हरिं स्वस्य जीवस्य धर्मो भक्तिरेव स्वधर्मः "एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः। यद्भक्त्या पुंडरीकाक्षं स्तवैरर्चेन्नरः सदा" इत्युक्तेः। तेन भक्तियोगेन यजंति त इत्यर्थः। यद्वा–ये यजन्ति ते मामकाः। यद्वा–हे मामका इति संबुद्धिः। यद्वामी इति ब्राह्मणपरामर्शनायोक्तमनुग्रहे विप्राणामेव समर्थत्वात्। "तस्यैवानुग्रहेणान्ये भुंजते क्षत्रियादयः" इति वक्ष्यमाणसंगतिलाभाय तत्समर्थकं धृतव्रता इति। सत्रादिदीक्षितानामन्यव्यापारराहित्यबोधनाय च॥ ३६॥ ॐ ॐ ऋद्धयः सेनासंपदादिलक्षणाः। अत्र टीकावतरणिकायां केवलब्राह्मणपदोपादानात् अजितः श्रीनारायणो देवता येषां तेषां द्विजानां विप्राणां कुले "विप्राणां देवदेवानां भगवानात्मदैवतम्" इत्युक्तेश्चकारस्य पुनरर्थकस्यानुपादानाच्चेदं व्याख्यानं शोभनं प्रतिभाति। यद्वाऽजितस्य भक्तगुणेतरापराजितस्य श्रीविष्णोर्देवता ब्राह्मणास्तेषां कुले 'सत्त्वं यस्य प्रिया मूर्तिर्ब्राह्मणास्त्विष्टदेवताः" इति भार्गवीयत्रिदेवीपरीक्षाध्याये श्रीदशमोत्तरार्द्धोक्तेस्तथा 'ब्रह्म दैवं परं हि मे' इति वैकुण्ठोपाख्याने तृतीये स्वयं सनकादीन्प्रति श्रीमुखोक्तेश्च तीर्थेनापीत्थमेव व्याख्यातम्। कचित्पुस्तकान्तरे स्वामिचरणैर्यत्कुल इत्युभयत्र योजितं दृश्यते। तदन्यत्र ब्राह्मणकुलादन्यत्राच्युतगोत्रत इत्युक्ताभिप्रायेण ध्येयम्॥ ३७॥ ॐ ॐ न केवलं ब्रह्मकुलं नाभिभवनीयं किं तु तत्र भक्तिरपि कार्येत्याह–ब्रह्मण्यदेवः ब्राह्मणप्रियो देवः येषां विप्राणां चरणाभिवन्दनात्। तीर्थेन त्वत्र हरिरिन्द्रो यस्य श्रीनारायणस्य चरणाभिवन्दनात् लक्ष्मीं त्रैलोक्यश्रियं "यया गुप्तः सहस्राक्षस्त्रैलोक्या बुभुजे श्रियम्" इत्युक्तेः। जगति पवित्रं शोभनं यशश्चावाप स पुरातनः पुरुषोपि ब्रह्मण्यदेवो ब्राह्मणभक्तिनिष्ठो देव इत्थं व्याख्यातम्॥ ३८-३९॥ ॐ ॐ अत्राक्षिपति–नन्विति। तेन यज्ञाद्यनुष्ठानेन। तया चित्तशुद्ध्या। इत्यर्थ इति। 'सर्वे पदा हस्तिपदे निमग्नाः' इति न्यायेन। "यज्ञो दानं तपश्चैव तीर्थानि नियमा यमाः। एतत्सर्वं कृतं तेन विप्रो येनात्र सेवितः॥" इति स्कान्दोक्तेर्विप्रसेवनेन सर्वं सुकृतं कृतं स्यादिति भावः। असौ हरिरेवंभूतः सर्वदेवमयश्चैतन्यमूर्तिरनंतः। कुत इति। इत्यर्थ इति। "एष वै सर्वे देवाः, सत्यं ज्ञानमनन्तं ब्रह्म विज्ञानघनः" इत्यादिभिः श्रुतिवचनैरुक्त इति भावः। पूर्वस्मिन्समासे वेदे प्रसक्तिवारणायाह। यद्वेति। इत्यर्थ इति। "ज्ञानमनन्तं

ब्रह्म, यतो वाचो निवर्त्तंते" इत्यादिश्रुतेः "यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति। तस्याहं सुलभः पार्थ" इति स्मृतेश्चेति भावः ॥ ४०-४१ ॥

## श्रीमद्वीरराघवव्याख्या

तस्मात्स्वकर्मभिः वर्णाश्रमोचितैः पञ्चमहायज्ञादिभिः आत्मवृत्तिभिः "शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च" इत्यादिस्थानोक्तशमादिभिः मनोवचःकायगुणैर्ध्यानस्तुतिपरिचर्यादिभिः अमायिनो निष्कपटाः सन्तः कथंभूतं कामं समीहितं दोग्धि प्रपूरयतीति कामधुक् तदङ्घ्रिपङ्कजं यस्य यथाधिकारावसितार्थसिद्धयः अधिकर्मण्यधिकृत्य क्रियते साध्यते इति व्युत्पत्तेः यथाधिकारं स्वसमीहितं फलमनतिक्रम्यावसिता निश्चिता अर्थसिद्धिः फलसिद्धिर्येषां ते स्वसमीहितार्थानुसारेण फलसिद्धिर्भाविनीत्येवं निश्चितबुद्धय इत्यर्थः। निश्चयस्याप्यनुष्ठानोपयोगित्वात्संशयस्यानर्थावहत्वात्। तथा च स्मर्यते "नायं लोकोऽस्ति न परो न सुखं संशयात्मनः, अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति" इति ॥ ३३ ॥ ❀ ❀ ननु प्रतिकर्मणां द्रव्यदेवतादिभेदादेव भेदाः, अन्यथा कर्मैक्यमेव स्यात्। ततश्च प्रतिनियतसाधनोपसंहारप्रयासो व्यर्थः स्यात्। एवं च कथमेकदेवतोद्देशेन सर्वकर्मानुष्ठानं कुरुतेत्युच्यते तत्राह असाविति। अत्र गुणाध्वर इति पाठः, गुणोऽध्वर इति च। तत्र व्यस्तपाठे गुण इति छेदः, भगवद्विशेषणं हेयगुणरहित इत्यर्थः। अनेकगुण इति शुभगुणविधानात्समस्तपाठे त्वध्वरविशेषणं सत्त्वादिगुणान्वित इत्यर्थः। कर्तृद्वारा तदन्वयो बोध्यः, तत्र स्वरूपतः स्वरूपेण विज्ञानघनः विज्ञानशब्देन अनुकूलात्मकज्ञानं विवक्षितं, घनशब्देन तस्यैव सान्द्रत्वमभिप्रेतं विज्ञानैकस्वरूप इत्यर्थः। अगुणः निरस्तहेयगुणः। अनेकगुणः अनन्तकल्याणगुणः योऽसौ परमात्मा स एव पृथुग्विधानेकद्रव्याणि व्रीह्याज्यपश्वादीनि गुणाः "शुक्लामालभेत, कृष्णामालभेते"त्यादिविध्युद्देशश्रुतशुक्लादयः, क्रियाः अवहननावेक्षणालम्बनादयः, उक्तयो मन्त्राः, पृथग्विधत्वं त्रिष्वप्यन्वेतव्यं, पृथग्विधद्रव्यादिभिः अध्वरः सन् अध्वरस्य द्रव्यादिसङ्घातरूपत्वाद् द्रव्यादीनां भगवच्छरीरत्वात् अध्वररूपो भूत्वेत्यर्थः, अर्थाशयलिङ्गनामभिः सम्पद्यते अर्थः अध्वरप्रयोजनं स्वर्गादिरूपं फलं तस्य आशयः आश्रयाणि जलाशयकमलाशय इति प्रयोगात् लिङ्गान्यीन्द्रादिरूपशरीराणि नामानि वाचकाग्नीन्द्रादिशब्दाः, तैः संपद्यते अग्नीन्द्रादिलिङ्गस्य फलाश्रयत्वं फलदानक्रियाया अग्नीन्द्राद्याश्रितत्वाद्बोध्यम्, अध्वराराध्यत्वेन तत्फलदत्वेनावगतेन्द्रादिनामरूपात्मको भवतीत्यर्थः। तथा च श्रुतिः "यज्ञो वै विष्णुः, तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः" इत्यग्नीन्द्रादिद्वारभेदेन द्रव्यादिभेदेन च कर्मणां भेदः अग्न्याद्यन्तरात्मतयावसितस्य परमपुरुषस्यैकस्यैवाराध्यत्वफलप्रदत्वाद्युपपत्तिस्वारस्यतः एकदेवताराधनत्वमप्युपपन्नमिति भावः ॥ ३४ ॥ ❀ ❀ एवं कर्मतदाराध्यदेवतारूपत्वमुक्तम्, अथ कर्मभोक्तृजीवरूपत्वं तत्फलरूपत्वं चाह प्रधानेति। एष भगवान् प्रधानं प्रकृतिः कालस्तद्गुणक्षोभकः आशयो वासना धर्मः अदृष्टमेभिः सङ्गृह्यते उत्पाद्यत इति तथा तस्मिन् शरीरे चेतनां शब्दाद्यनुभवरूपं ज्ञानं प्रतिपद्य जीवद्वारा प्रतिपद्येत्यर्थः, तत्र जीवादिभिः सामानाधिकरण्ये च हेतुः "विभुः य आत्मनि तिष्ठन्" इत्युक्तरीत्या जीवान्तरात्मतयावस्थानात् सर्वजगदुपादानत्वादुपादानत्वस्य च भाव्यवस्थाविशेषवतः प्रागवस्थायोगित्वरूपत्वाज्जीवं प्रत्युपादानत्वेन च जीवधर्मभूतज्ञानसङ्कोचविकासरूपविकाराश्रयत्वस्यापि जीवद्वारकत्वेन विभोः परस्य सत्त्वात् शब्दाद्यनुभवरूपचेतनां प्रतिपद्येत्युक्तं क्रियाफलत्वेन स्वर्गादिरूपतया विभाव्यते निश्चीयते, एवं कर्मतदाराध्यतत्फलभोक्तृतत्फलरूपत्वमुक्तं तत्र कर्मादिगतदोषसंस्पर्शमाशङ्क्य तन्नेत्यभिप्रायेण दृष्टान्तमाह यथेति। दारुषु अनलोऽग्निर्यथा तद्गुणात्मकः दारुगतदैर्घ्यवक्रत्वादिमान्प्रतीयते तद्वत् वस्तुत एकरूपोऽप्यनलोऽधिष्ठानवैचित्र्याद्विचित्र इव प्रतीयते तथेत्यर्थः, सामानाधिकरण्येन व्यपदिश्यत इति ॥ ३५ ॥ ❀ ❀ तदेवमप्रवृत्तान् भगवद्भजने प्रवर्त्य स्वतः प्रवृत्तानां प्रवृत्त्यभिनन्दनेन प्रथयति अहो इति। ये भूतले मामकाः मद्विषयवासिनो जनाः दृढव्रताः दृढसंकल्पाः स्ववर्णाश्रमधर्मयोगेन यज्ञभुजामिन्द्रादीनामपीश्वरम् अन्तरात्मानं गुरुं हितोपदेष्टारं हरिं स्वाश्रितदुरितहरं नित्यं भजन्ति तेऽमी जनाः मम अनुग्रहं वितरन्ति कुर्वन्ति। अहो इति हर्षे ॥ ३६ ॥ ❀ ❀ इदानीं भगवद्भक्तिदार्ढ्याय ब्राह्मणभक्तिं विधत्ते मा जात्वित्यष्टभिः। तत्र तावत् ब्राह्मणकुलस्य राजकुलनिग्रहाविषयत्वं प्रार्थयते। महद्भिः महत्यश्च ता ऋद्धयस्ताभिर्यद्राजकुलस्य तेजस्तस्मात्सकाशात् द्विजानां कथंभूतानामजितो भगवान् देवता येषां तेषां कुले जातु कदाचिदपि मा प्रभवेत् प्रभावं न करोतु। कथंभूते समृद्धिभिर्विनापि स्वयमेव तितिक्षादिभिः देदीप्यमाने। यद्वा राजकुलस्य ब्राह्मणकुलनिग्रहविषयत्वं प्रार्थयते अजितदेवतानां द्विजानां कुले तितिक्षया द्वन्द्वसहनेन तपसा कृच्छ्रादिना ब्रह्मोपासनया वा आतिथ्यया अतिथ्याराधनया चकाराच्छमदमादिसंग्रहः, एभिर्देदीप्यमाने सति तेषां तेजः महद्भिः राजकुलाद्धेतोः कदाचिन्मा प्रभवेत् महद्धिप्रयुक्तगर्वसहिताद्राजकुलाद् ब्राह्मणकुलं कुपितं माभूदित्यर्थः। कुलद्वयमन्योऽन्यं यथायोग्यमनुगृह्णात्विति भावः ॥ ३७ ॥ ❀ ❀ यच्चरणाभिवन्दनात् येषां चरणाभिवन्दनात् हरिर्लक्ष्मीं जगत्पवित्रं यशश्चावाप यत्सेवया चेश्वरस्तुष्यति तदेव ब्रह्मकुलं निषेव्यतामिति द्वयोरन्वयः। हरिं विशिनष्टि। ब्रह्मण्यदेवः ब्राह्मणसेवापरायणानां मन्वादीनामपि देवः पुराणः पुरुष इति। न चैवमीश्वरस्य लक्ष्मीयशसः सम्बन्धस्य सोपाधिकत्वप्रसङ्गः, भगवदितरेषां यशआदिसम्बन्धस्य ब्राह्मणसेवायत्तत्वैककथनमात्रतात्पर्यकत्वादस्य श्लोकस्यार्थवादवाक्यस्य स्वार्थे तात्पर्याभावात्, विधेः स्तावकत्वात्। न चार्थवादस्य स्वार्थे तात्पर्याभावे सतीतरेषामपि यशआदिसम्बन्धेऽपि तात्पर्यं नास्तीति वक्तुं शक्यं, ब्राह्मणसेवाविध्यपेक्षितफलसमर्थकत्वेन तत्र तात्पर्यनिश्चयात्। न ह्यसता गुणेन प्ररोचना संभवति, न च 'पयः पिब, शिखा ते वर्द्धते' इति बालाद्युपच्छन्दन-

वाक्ये असतापि गुणेन प्ररोचना दृश्यते इति वाच्यं, तत्रापि यद्यसद्यशोनिश्चयस्तर्ह्य प्रवृत्तेः प्रवृत्त्यर्थप्ररोचनाया एवानुपपत्तेः। तस्मात्तत्रासतामजानतां बालानां पयःपानादिप्रवृत्त्यर्थं शिखावर्द्धनादिकमसदपि फलत्वेन कीर्त्यते, तत्रासत्त्वं प्रत्यक्षतोऽवगतमिह तु मन्वादिषु ब्राह्मणसेवकेषु यशःसम्बन्धस्यैव प्रत्यक्षतुल्यशास्त्रेणावगमादसता निश्चायकस्य प्रमाणान्तरस्याभावात्। न च तेषां तत्सम्बन्धे ब्राह्मणसेवातिरिक्तमदृष्टान्तरमेव कारणमिति वक्तुं युक्तम्, अदृष्टान्तरस्यापि स्वस्ववर्णाश्रमैकान्तनित्यनैमित्तिकपूर्वक-यागजन्यत्वात् स्ववर्णाश्रमधर्मेषु ब्राह्मणसेवाया अप्यनुप्रविष्टत्वात्। स्वराट् स्वतन्त्रः अकर्मवश्यः तथापि विप्रप्रियः विप्राधीनः, बहुव्रीहिषष्ठीतत्पुरुषसमासद्वयेनान्योऽन्यं भृशं प्रीतिविषयत्वलाभाद्विषयवैलक्षण्याधीनत्वात्पारतन्त्र्यस्य स्वतन्त्रस्यापि स्वेच्छया पारतन्त्र्योपपत्तेः ईश्वरस्तुष्यति। ईश्वरस्याकर्मवश्यत्वं नाम देवमनुष्यादिसजातीयचेष्टां कुर्वतोऽपि तच्चेष्टायत्तसुखदुःखाद्य-स्पर्शित्वम्। न चैतद्विप्रतिषिद्धं यच्चेष्टनं तत्प्रयुक्तसुखाद्यस्पर्शनं चेति विप्रतिषिद्धमिति शङ्क्यं, स्वार्गनारकव्यापारेषु तथादर्शनात्, एवं चेश्वरस्य ब्राह्मणसेवातदभावजन्यसुखाद्यस्पर्शिनोऽपि। तत्सेवापरायणत्वकथनेन द्विजसेवाया आवश्य-कत्वद्योतनाय स्वराडिति विशेषणम्। नन्वन्यसेवयान्यः कथं तुष्येत्तत्राह अशेषगुहाशयः सेवकसेव्ययोरुभयोरपि हृदय-गुहायां तदन्तरात्मतया निविष्टत्वेन सेवाजन्यद्विजादिनिष्ठप्रीतिरपि द्विजादिद्वाराश्रयः सेवकनिष्ठसेवाश्रद्धादिकमवेक्ष्य तुष्यतीत्यर्थः। कामं तुष्यतीत्यनेन द्विजसेवातोऽधिकस्तोषहेतुर्नास्तीति द्योत्यते। तस्मात् द्विजसेवाया यशआदि-हेतुत्वाच्च तद्धर्मपरैः द्विजसेवैकशीलैः तदुपयुक्तं गुणमाह विनीतैः एकविशेषणोपादानेन द्विजप्रसादेनेति नियमान्तरेणान्यो हेतुरनुपेक्षित इति सूचितं, सर्वात्मना करणत्रयैक्येन ब्रह्मकुलं निषेव्यताम्॥ ३८–३९॥ ❀ ❀ किञ्च "प्रसादे सर्वदुःखानां हानिरस्योपजायते। प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते" इत्युक्तरीत्या सर्वदुःखहानिहेतुभूतमनःप्रसादनिर्वर्तकत्वादपि द्विजसेवैव कार्येत्याह पुमानिति। येषां ब्राह्मणानां नित्यसम्बन्धरूपसेवया पुमान् अतिवेलं शीघ्रं स्वयमेव प्रयत्नान्तरेणैव प्रसीदतः आत्मनः मनसः शमं शान्तिं लभेत। ततः शान्तमनसः किमस्ति असाध्यमिति शेषः। शान्तमनसा असाध्यं किञ्चिदपि नास्तीत्यर्थः। किञ्च हविर्भुजामिन्द्रादीनां मुखं ब्राह्मणसेवयैव तन्मुखानां हविर्भुजां यज्ञाराध्यदेवानामपि सेवा कृता स्यात् "ब्राह्मणकुलं ब्राह्मणोऽस्य मुखमासीत्" इति ब्राह्मणकुलस्य भगवदावेशावतारस्य ब्रह्मणो मुखत्वात्तदाराधनेनैव हविर्भुगन्तरात्मतयावस्थितः परमात्मा तुष्यतीति ब्राह्मणा एवान्नादिभिराराध्या इति भावः॥ ४०॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एवं तत्सेवाफलमुक्त्वा तदुपास्तिं विधत्ते तमेवेति। फलस्यानुभवसिद्धत्वादन्ययोगव्यवच्छेदार्थ एवशब्दः, भजतैवेत्य-योगव्यवच्छेदो वा, आत्मनि हरावेव वृत्तिर्वर्तनं येषां ते तथा तैः अयमेव मनआदीनां गुणः यद्विष्णुविषयत्वेन चरणम्। स्वकर्मभिः स्वस्य विहिताश्रमादिकर्मभिः। उक्तमेतत्सर्वमप्रयोजकं व्याजिन इत्यत उक्तममायिन इति। फलपूर्वविधाने क्षिप्रप्रवृत्ति-र्भवतीति भावेनोक्तं कामदुघेति वेदानुकूलमिति द्योतनाय दुघेति। इदमेव दर्शयन्नित्थं भावमाह यथेति। "अथात आनन्दस्य मीमांसा भवति" इत्यादिश्रुतौ मनुष्योत्तममारभ्य ब्रह्मपर्यन्तं योग्यमधिकारो योग्यतालक्षणस्तस्मिन्नवसिता निर्णीता अर्थसिद्धि-रानन्दप्राप्तिर्या तदर्थमित्यर्थः। अर्थः मोक्षः, "अर्थः स्याद्विविषये मोक्षे शब्दवाच्ये प्रयोजने" इति यादवः॥ ३३॥ ❀ ❀ स्वकर्मभिरित्युक्तकर्मकरणप्रकारमाह असाविति। "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादिश्रुतिसिद्धो योऽसौ श्रीनारायण इह जीवराशौ सता पुंसानुष्ठितैरनेकगुणाध्वरैः सम्पद्यते प्राप्यत इत्यन्वयः। ते चाधिकारभेदात् बहव इत्याशयेनाह पृथगिति। षोडशादिभेदभिन्नैरनेकगुणत्वं व्यनक्ति द्रव्येति। द्रव्यं पुरोडाशादिकल्पोक्तगुणविशिष्टं "द्रव्यं गुणानामाधार" इति यादवः, गुणो विशिष्टमातापितृजन्यत्वादि क्रिया ऋत्विग्व्यापारः 'इन्द्रायाग्नये' इत्याद्युक्तयो येषु ते तथा तैः अर्थेषु यजमानेषु आशयोऽ-न्तःकरणं येषां ते देवा अर्थाशयास्तेषां लिङ्गानि वज्रधरत्वादीनीन्द्रादिनामानि च येषु ते तथा तैः, यद्वार्थाशयत्वं मुक्ताश्रयत्वं चक्रधरादिलिङ्गं नारायणादिनाम च येषु ते तथा तैः कथं प्राप्यते। विशुद्धविज्ञानघनस्वरूपतः एवं ज्ञानेन प्राप्य इत्यर्थः, अनेन कर्मणा शुद्धान्तःकरणाज्जातं ज्ञानं संसारनिवर्तकमित्युक्त्या "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इत्यादेर्गतिरुक्तेति ज्ञायते॥ ३४॥ ❀ ❀ कर्मसाधनज्ञानेन ज्ञायत इत्युक्तं तत्र विशिष्टतया ज्ञानं मुक्तिसाधनं स्यादिति तं प्रकारं ब्रूते प्रधानेति। प्रधानं प्रकृतिः कालः फलपाचकः आशयोऽन्तःकरणं कर्मजीवादृष्टमेतानि सङ्गृह्णातीति प्रधानकालाशयकर्मसंग्रहः त्यक्तेषु सर्वेषु शरीरमेव शिष्यते यस्य स शरीरशेषो जीवस्तं प्रतिपद्य प्राप्य चेतनो ज्ञानशक्तिमान्नित्याविलुप्तज्ञान इत्यर्थः, विभुः श्रीनारायणोऽयं क्रियाफलत्वेन कर्मफलदातृत्वेन पुण्यकर्मभिः पुरुषैर्विभाव्यते ज्ञायते इत्यन्वयः। 'फलमत उपपत्तेः' इति सूत्राद्धरेः कर्मफलदातृत्वं सिद्धमत्र दृष्टान्तमाह यथेति। यथानलोऽग्निस्तत्तद्दारुणो गुणं स्थौल्यादिकमादत्ते दारुस्थौल्याद्यनुसारेण स्वयं च स्थौल्यादिमान् भवतीति तद्गुणात्मको विध्युक्तगुणवत्सु दारुषु अग्निमथनादिनाभिव्यक्तो ज्ञायते तथा प्रधानादि-शब्दाभिधेयलक्ष्म्यादिभिः परिवृतो जीवान्तर्गतो जीवपरिमाणगुणानुकारी तदनुष्ठितकर्मफलदातृत्वेन गुरुशिष्यव्याख्यानश्रवण-लक्षणमथनेनाभिव्यक्तो हरिर्ज्ञायत इति भावः। प्रधानादीनां हर्यधीनत्वं तद्भिन्नत्वं च दर्शयितुं तद्ग्रहणं देहस्थत्वेऽपि तद्गुण-सम्पृक्ताभावदर्शनाय दार्वनलनिदर्शनं, किञ्चानेन देहदोषदारणसामर्थ्यं जगद्भक्षणेऽप्यलं बुद्धिराहित्यं सूचयितुं दावनलपदमुपात्तमिति

ज्ञापयति ।। ३५ ।। ❀ ❀ गुरुशिष्यव्याख्यानादिमथनेन हरिरभिव्यक्तो भवतीत्युक्तं, तत्र गुरवः शिष्याश्च श्रीनारायण-मुखोत्पन्नत्वात् व्याख्यानादेर्मुखव्यापारत्वेनात एव मुखत्वेन सात्त्विकत्वेन च स्वत एव व्याख्यानादौ प्रवृत्तिसम्भवाजलस्यन्दन-वद् ब्राह्मणा एवेत्यभिप्रेत्याधुना तानभिष्टौति अहो बतेति । अमी इत्यनेन हरेर्मुखजातत्वं परामृशति, बतेति चित्तं द्रवीकरोति, अहो इति सभ्यानुन्मुखीकरोति । इष्टदेवतात्वेन गुरुत्वेन स्वविहितकर्मफलदातृत्वेन श्रीनारायण एव पूज्य इत्यतो विशेषणत्रयम् "एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः । यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा" इति वचनात् स्वधर्मयोगो भक्तियोगस्तेन यजन्ति पूजयन्ति भगवद्भक्तत्वेन स्वचेतःप्रीतिजनकत्वान्मामका इत्युक्तं कृष्याद्यन्यव्यापाराराहित्यप्रकटनाय निरन्तरमिति एतत्सूचनाय धृतव्रता इति । सत्रादिकर्मसु दीक्षितानामन्यव्यापाराभावस्तथात्रापीति कर्मणां फलाधिक्यद्योतनाय क्षोणितले पतनदुःखक्षयहेतुत्वात् प्रतिष्ठाहेतुत्वाच्च क्षोणितल इति । क्षिणु-क्षये तल-प्रतिष्ठायामिति धातुः ।। ३६ ।। ❀ ❀ स्ववंश्यानां राज्ञां शिक्षामाह मा जात्विति । राजकुले विद्यमानाभिर्महद्भिः समुत्थितं तेजः प्रभावलक्षणमजितः श्रीनारायणो देवता येषां ते तथा तेषां तितिक्षादिना देदीप्यमाने द्विजानां कुले जातु कदाचिदपि मा प्रभवेत् कुलक्षये समर्थं न भवेत् ।। ३७ ।। ❀ ❀ न केवलं ब्रह्मकुलं नाभिभवनीयं किन्तु तत्र भक्तिरपि कर्तव्येत्यत्र कैमुत्यन्यायमाह ब्रह्मण्यदेव इति । "अर्कमर्कटमण्डूकविष्णु-वासववायवः । तुरङ्गसिंहशीतांशुयमाश्च हरयो दश" इति निगदाद्धरिरिन्द्रो यस्य श्रीनारायणस्य चरणाभिवन्दनादनपायिनीं लक्ष्मीमवाप जगत्पवित्रं यशश्चावाप सोऽपि पुरातनः पुरुषो ब्रह्मण्यदेवो ब्राह्मणप्रियश्च देवः क्रीडादियुक्तश्चेत्यन्वयः । ब्राह्मण-प्रियत्वं क्रीडामात्रमिति दर्शयितुं देव इति पदम्, अत एव महत्तमाग्रणीरित्युक्तं महतामिन्द्रादीनां सकाशादुत्तमा ब्रह्माद-यस्तेषामप्यग्रणीः श्रेष्ठस्तस्मात् क्रीडामात्रमिदम् । अत एवानुपपत्त्या हरिशब्देनेन्द्र एव गृहीतः "यत्प्रसादेन देवेन्द्रो वेदोदित-यशा अभूत् । सोऽपि विष्णुरमेयात्मा सदा ब्राह्मणवत्सलः" इति स्मृतेश्च प्रतीतार्थपरित्यागो युक्तः, अजितदेवतानामित्युक्ति-विरोधाच्च ।। ३८ ।। ❀ ❀ अस्तु विष्णुर्द्विजप्रियस्ततः प्रकृते किमित्याशङ्क्य विष्णुभक्तिमवमृश्य ब्राह्मणसेवा कार्येत्याह यत्सेवयेति । अपवर्गावाप्तौ श्रीलक्ष्मीकान्तप्रसाद एवापेक्षणीयोऽतः क्षितिदेवप्रीत्या किमित्यतो वा यत्सेवयेति भगवत्प्रसादोत्पत्तौ विप्रसेवा द्वारमित्यर्थः । स्वराट् स्वतन्त्रः यतो विष्णुप्रसादो भवति तस्माद् ब्राह्मणकुलं निषेव्यतामित्युपसंहरति तदेवेति । तद्धर्मपरैर्विष्णुधर्मपरैः ।। ३९ ।। ❀ ❀ ब्राह्मणसेवाप्रसन्नश्रीनारायणप्रसादान्मौक्तिकपरमानन्दोऽपि भवतीत्याह पुमानिति । यस्य हरेर्नित्यसम्बन्धो येषां ते यन्नित्यसम्बन्धाद् द्विजास्तेषां निषेवया सेवालक्षणसङ्गतः पुमानतिवेलं क्षिप्रं तस्यात्मनो हरेः प्रसादतोऽत्यन्तशमं भगवन्निष्ठाजन्यमुक्तिसुखं लभेत । ततस्तस्मान्मोक्षसुखात्परमन्यत्सुखं हविर्भुजामप्यत्र संसारेऽस्ति किन्नास्त्येव, हविर्भुजो देवताः । किंविशिष्टं स्वयं स्वरूपभूतम् । अस्वरूपमपि स्वरूपवन्नोपचरितमित्याह स्वत इति । 'महत्सेवां द्वारमाहु-र्विमुक्तेरि'ति महत्सेवाया अपि मुक्तिसाधनत्वं सिद्धं यद्वा यन्नित्यसम्बन्धानां सतां निषेवया पुमानात्मनो मनसः प्रसादतोऽत्यन्त-शममतिशयितभगवन्निष्ठं लभेत ततः श्रीनारायणनिष्ठायाः स्वतोऽकृत्रिमं स्वयं स्वरूपसुखं लभेत तत इत्युत्तरत्रापि सम्बध्यते शेषं पूर्ववत् ।। ४० ।।

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

यूयन्तु यथाधिकारं भजतेत्याह तमेवेति । स्वकर्मभिश्च ।। ३३ ।। ❀ ❀ अगुणः प्राकृतगुण-रहितोऽपि ।। ३४ ।। ❀ ❀ चेतनां जीवस्य बुद्धिं प्रतिपद्य नियन्तृरूपेण प्रकाशकत्वेन चाविश्य तत्तादात्म्यापन्नस्वशक्त्या स्वयमेव बहिरपि स्वानन्दांशरूपक्रियाफलत्वेन विभाव्यते प्रकाशते । कर्मकर्त्तरि प्रयोगः ।। ३५-३६ ।। ❀ ❀ मा जात्वित्यस्य टीकावतारिकायां ब्राह्मणभक्तिमिति वैष्णवमात्रस्यापि ब्राह्मणान्तःपातोऽङ्गीकृतः, पद्यार्थे द्वयोरपि व्याख्यास्यमानत्वात् ।। ३७ ।। ❀ ❀ ब्रह्मण्येति स्तुतिमात्रमिदमिति टीकाभिप्रायः । तथाप्यस्य ज्ञातभगवन्महिमत्वात्तादृश्युक्तिरनुचितेति । तत्राविष्टो हरिरेव स्वयं लोकसंग्रहायास्तौदित्येवं समाधेयम् । यद्वा यच्चरणाभिवन्दनलक्षणाद्विनयगुणपदनपायिनीं लक्ष्मीं सर्वाश्रयणीयतालक्षणां सम्पत्ति-मवाप सर्वेषां लोकानामश्रयणीयो बभूवेति तात्पर्यं भृगुपरीक्षादावित्यर्थः । अतो यशश्चेति ।। ३८ ।। ❀ ❀ विर्नीतैरित्यत्र हितं सदेति क्वचित् ।। ३९ ।। ❀ ❀ ततः परमिति तु परेण योजनीयम् ।। ४० ।।

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ननु गार्हस्थ्यकर्मनिमग्ना वयं कथं केवलया भक्त्या भजामस्तत्र कर्ममिश्रां भक्तिमुपदिशन्नाह तमेवेति । स्वकर्मभि-र्याजनादिरक्षणादिकृष्यादिसेवादिभिरेव या आत्मवृत्तयस्ताभिः सहिता अपि मनआदीनां गुणैः स्मरणकीर्त्तनप्रणत्यादिभिर्भजत । यद्वा मन आदीनां गुणैर्विद्यादिगानादिभारवहनादिभिः स्वकर्मभिर्या आत्मवृत्तयो जीविकास्ताभिरेव भजत । स्वजीविका अपि ता भगवदर्थे वा किञ्चिन्मात्र्योऽपि नित्यं यदि विनियुक्ताः स्युस्तर्हि हरिभक्तिरेव भगवतीत्यर्थः । यथाधिकारं ब्राह्मणादि-वर्णधर्ममनतिक्रम्यैवावसिता निश्चिता अर्थसिद्धिर्यैस्ते । यद्वा यथेति येषां येषां येषु शिल्पेष्वधिकार औत्पत्तिकस्तैरेव भगवदर्थे कृतैस्ते ते तैलिकताम्बूलिकपर्य्यन्ता अपि कृतार्था भवन्तीत्यर्थः । आत्मनः स्वस्यैव वृत्तिः सत्ता येषु तैः स्वकर्मभिर्वर्णाश्रमधर्मैरपि सहिताः सन्तो भजतेति भक्तेः प्राधान्यमभिहितम् ।। ३३ ।। ❀ ❀ कर्म स्वरूपतोऽशुद्धं जडं राजसमपि भगवदर्पितं

सत् तद्रूपगुणीभूतभक्त्यंशेन विशुद्धसत्त्वं चैतन्यमेव फलतो भवतीति भक्तिमिश्रं कर्म्मोपदिशति द्वाभ्याम् असाविति । तज्जन्या प्रस्तुतमध्वरं दर्शयति असावध्वरोऽनेकगुणो नानाविशेषणवान् राजसोऽपि भगवदर्पणरूपभक्तिमाहात्म्यात्तत्फलदशायामगुणो गुणातीतो भवन् स्वरूपतो विशुद्धविज्ञानघनः ब्रह्मानन्दरूपत्वेन सम्पद्यते, कर्म्मणोऽस्य मोक्षफलकत्वादिति भावः। तेन साक्षात्त्वदीयश्रवणकीर्त्तनादिस्तु प्रथमत एव विशुद्धविज्ञानघनः स तु सर्व्वतोऽपि श्रेष्ठ इति द्योतितम्। यद्वा असौ भगवानेव स्वरूपतो विशुद्धविज्ञानघनोऽपि अगुणोऽपि अस्मिन् कर्ममार्गेऽनेकगुणोऽध्वरो यज्ञः सम्पद्यते। अनेकगुणत्वमाह। पृथग्विधानि यानि द्रव्यादीनि तैः तत्र द्रव्याणि व्रीह्यादीनि, गुणाः शुक्लादयः, क्रिया अवघातादयः, उक्तयो मन्त्राः। अर्थोऽङ्गसाध्य उपकार आशयः सङ्कल्पः लिङ्गं पदार्थानां शक्तिः नाम ज्योतिष्टोमादि तैश्च ॥ ३४ ॥ ❀ ❀ भगवदर्पितस्य कर्म्मणस्तन्मिश्रभक्तेश्च फलं भगवत्प्राप्तिरेवेत्याह। प्रधानमव्यक्तं कालः क्षोभकः आशयो वासना धर्म्मोऽदृष्टं तैः संगृह्यते जन्यत इति तथा तस्मिन् शरीरे चेतनां स्वार्पितकर्म्मकरणे बुद्धिं प्रतिपद्य अन्तर्भावितण्यर्थत्वात् निष्पाद्येत्यर्थः, कृपया कर्म्मफलत्वेन विभुः स्वयमेव भगवान् विभाव्यते प्रकाशते कर्म्मकर्त्तरि प्रयोगः। "यदत्र क्रियते कर्म्म भगवत्परितोषणम्। ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम्" इति वचनात्तदर्पितकर्म्मा भक्तिमिश्रज्ञानद्वारा तमेव प्राप्नोतीत्यर्थः। किञ्च कर्म्मार्पणश्रद्धाभक्तितारतम्येन ज्ञानतारतम्येन च भगवत्प्राप्तितारतम्यं भवेदित्याह। यथा चन्दनागुरुधवखदिरादिस्थितोऽग्निस्तत्तद्गुणानुरूपो भवेत्तथैव भगवानप्युपासकस्योपासनातारतम्येन फलप्रदो भवेत्। भक्तिमिश्रकर्मिणे निष्कामाय मोक्षं कर्ममिश्रभक्तिमते शान्तरतिञ्चैव भक्तितारतम्यवते सालोक्यादिकञ्च ददातीति भक्तेर्गुणभावप्राधान्यादिकं दर्शितम् ॥ ३५ ॥ ❀ ❀ भो महाराजाधिराज प्रभो! भक्त्युपदेशेन वयं कृतार्थीकृताः, तद्वयं नित्यं भगवन्तं भजाम इत्यानन्दजल्पिनो जनान् लक्ष्यीकृत्याह अहो इति ॥ ३६ ॥ ❀ ❀ इदानीं भक्तेः सुस्थिरत्वार्थं वैष्णवब्राह्मणावज्ञां निषिद्धयति मा जात्विति। महर्द्धिभिर्महासम्पत्तिभिर्हेतुभिर्यद्राजकुलात् राजकुलस्य तेजस्तत् जातु कदाचिदपि मा प्रभवेत् प्रभावं मा करोतु, कुत्र अजितदेवतानां वैष्णवानां कुले द्विजानां कुले च कीदृशे महर्द्धिभिर्विनापि तितिक्षादिभिः स्वयमेव देदीप्यमाने ॥ ३७ ॥ ❀ ❀ भक्तिदार्ढ्याय ब्राह्मणभक्तिं विधत्ते सप्तभिः। यच्चरणेत्यादिकं लोकसंग्रहार्थकभगवद्वचनानुवादमात्रं ज्ञेयम् ॥ ३८ ॥ ❀ ❀ तदेव तस्मादेव हेतोः ॥ ३९ ॥ ❀ ❀ ननु ब्रह्मकुल एव नित्यं सेव्यमाने सर्वदेवतामुखभूतेऽग्नौ यज्ञाद्यनुष्ठानं न स्यात्, न च तेन विना चित्तशुद्धिर्न च तया विना मोक्षः स्यादित्याशङ्क्याह पुमानिति द्वाभ्याम्। यस्य ब्राह्मणकुलस्य नित्यसम्बन्धेन निषेवया आत्मनो मनसः प्रसीदतः क्रमेण प्रसन्नीभवतः अत्यन्तशमं मोक्षं स्वयं लभेत अनतिवेलं शीघ्रमेव, अत एव ततः परं किं हविर्भुजां देवानां मुखमस्ति ब्राह्मणसेवयैव यज्ञादिफलं ज्ञानफलं च सर्वमेव सिद्ध्यतीत्यर्थः ॥ ४० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अतः यथाधिकारमवसिताः निश्चिताः अर्थानां चतुर्विधपुरुषार्थानां सिद्धिर्यैस्ते हरिभजनेन सर्वपुरुषार्थसिद्धिरिति कृतविश्वासा इत्यर्थः। अमायिनो निष्कपटाः यूयं स्वकर्मभिः स्वोचितैर्यज्ञादिकर्मभिः मनोवचःकायगुणैः ध्यानगुणगानपरिचर्याभिः आत्मैव वृत्तिर्निर्वाहहेतुर्येषां तैः सर्वैर्जनैरपि तमेव भजतेत्यन्वयः ॥ ३३ ॥ ❀ ❀ कर्मभिर्भजतेत्युक्तं तत्र "ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्। ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना" इति श्रीमुखोक्तानुसारेण सांगे यज्ञे तत्फलभोक्तरि तत्फलेन भगवद्दृष्टिः कर्तव्येत्याह असाविति द्वाभ्याम्। असौ हरिरेवाध्वरः सांगस्य यज्ञस्य तदायत्तस्थितिप्रवृत्त्यादिमत्त्वेन तदभिन्नत्वात् 'यज्ञो वै विष्णुस्तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः इत्यादिश्रुतेः कथंभूतोऽध्वरः पृथग्विधैर्द्रव्यादिभिः अर्थाशयलिङ्गनामभिश्च इह कर्मकाण्डे संपद्यते सम्यक् ज्ञायते गत्यर्थानां ज्ञानार्थत्वात् तत्र द्रव्याणि बीह्यादीनि गुणाः शुक्लादयः क्रिया अवहननादयः उक्तयो मन्त्राः अर्थोऽङ्गसाध्य उपकारः आशयः संकल्पः लिङ्गं पदार्थशक्तिः नाम ज्योतिष्टोमादि, कथंभूतः असौ विशुद्धविज्ञानघनः स्वरूपतः व्रीह्यादिवत् जडत्वपरिच्छिन्नत्वादिधर्मको न भवति, यतोऽगुणो हेयगुणरहितः अनेकगुणः अनेकमङ्गलगुणगणार्णवः ॥३४॥ ❀ ❀ एषः विभुर्विष्णुः प्रधानं प्रकृतिः कालः क्षोभकः आशयो वासना धर्मः कर्मतः संगृह्यते जन्यते इति तथा तस्मिन् चेतनां प्रतिपद्य 'तत्त्वमसि, क्षेत्रज्ञं चापि मां विद्धी'ति श्रुतिस्मृतिभ्याम् अंशांशिनोरभेदविवक्षया स्वात्मजीवरूपेण "अन्तः प्रविष्टः शास्ता जनानाम्" इत्यन्तर्यामिरूपेण च बाह्याभ्यन्तरेन्द्रियजन्यं बोधं क्रियाफलत्वेन स्वर्गादिरूपेण विभाव्यते निश्चीयते भोग्यरूपत्वेऽपि तदसाधारणेन रूपेण सर्वदोषास्पृष्टत्वं भगवतो दृष्टान्तेनाह। दारुषु अनलो यथा तद्गुणात्मकः दाहकत्वादीनामनलगुणानामेवात्माश्रयः। तद्गुणात्मैव तद्गुणात्मकः। न तु दाह्यत्वादीनां दारुगुणानामाश्रयस्तद्वदित्यर्थः ॥ ३५ ॥ ❀ ❀ भगवदाराधने वेनादिसंगदोषतोऽप्रवृत्तान् प्रवर्त्याथ स्वतः प्रवृत्तानभिनन्दति अहो इति। क्षोणितले ये हरिं क्लेशहरं गुरुं हितोपदेष्टारं यजन्ति ते अहो मम अनुग्रहं वितरन्ति कुर्वन्ति, अत एव ते मामकाः ममातिप्रियाः ॥ ३६ ॥ ❀ ❀ विप्राणां गवां जनार्दनस्य तद्भृत्यानां च भक्तिमुपदिशति। मा जात्वित्यष्टभिः। महर्द्धिभिः राजकुलादुत्थितं तेजः जातु कदाचिदपि अजितदेवतानां विष्णुभक्तानां द्विजानां च कुले मा प्रभवेन्, कथंभूते राजमहर्द्धिनैरपेक्ष्येणैव तितिक्षादिभिर्देदीप्यमाने ॥ ३७ ॥ ❀ ❀ लोकसंग्रहार्थं

भगवानपि विप्रान् सत्करोतीत्याह ब्रह्मण्यदेव इति ॥ ३८ ॥ ❀ ❀ ब्रह्मकुलसेवया भगवान् तुष्यतीत्याह । तद्धर्मपरैस्तस्येश्वरस्य यत्सेवयेति लोकसंग्रहरूपो यो धर्मस्तत्परैः ॥ ३९ ॥ ❀ ❀ ब्रह्मकुलसेवया शीघ्रमन्तःकरणशुद्धिर्जायते, ब्रह्मकुलादन्यत् श्रेष्ठं हविर्भुजां मुखं नास्तीत्याह पुमानिति । यस्य ब्रह्मकुलस्य नित्यसम्बन्धेन निषेवया पुमान् जनः अनतिवेलं शीघ्रं स्वतः प्रसीदतः आत्मनोऽन्तःकरणस्यात्यन्तशमं स्वयमेव लभते ततः परं श्रेष्ठं हविर्भुजां देवानां मुखम् अत्र कर्मभूमौ किमस्ति नास्तीत्यर्थः, तद् ब्रह्मकुलं निषेव्यतामिति पूर्वेणान्वयः ॥ ४० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

स्वकर्मभिस्तं भजतेत्युक्तं तत्र "ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना" इतिन्यायेन यागतदङ्गे तत्फलेषु भगवद्दृष्टिः कर्त्तव्या न भिन्नदृष्टिरित्यभिप्रेत्य तेषां भगवद्रूपतामाह-असाविति द्वाभ्याम् । असौ भगवानेव स्वरूपतो विशुद्धविज्ञानघनः अत एव अगुणः प्राकृतगुणरहितो निर्विशेषोपि सन्निह कर्ममार्गे पृथग्विधानि यानि द्रव्यादीनि तैरनेकगुणः नानाविशेषवानध्वरो यज्ञात्मकः संपद्यते । "यज्ञो वै विष्णुः" इति श्रुतेः । तत्र द्रव्याणि व्रीह्यादीनि । गुणाः शुक्लादयः । क्रियाः अवघातादयः । उक्तयो मन्त्राः । अर्थोऽङ्गसाध्य उपकारः । आशयः संकल्पः । लिङ्गं पदार्थानां शक्तिः । नाम ज्योतिष्टोमादि तैः ॥ ३३ ॥ ❀ ❀ एवं यागतदङ्गयोर्भगवद्रूपतामुक्त्वा तत्फलस्यापि तदाह-प्रधानेति । एष सच्चिदानन्दरूपो भगवान् विभुः सर्वत्र व्यापकोपि प्रधानादिसंग्रहे शरीरे चेतनां तत्तद्विषयसंपर्कोद्भवां तत्तत्सुखाकारां बुद्धिवृत्तिं प्रतिपद्य तदभिव्यङ्ग्यानन्दस्वरूपः सन् क्रियाफलत्वेन यागादिधर्मानुष्ठानस्य फलतया विभाव्यते प्रतीयत इत्यन्वयः । "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः । तत्र प्रधानं प्रकृतिः । कालस्तद्गुणक्षोभकः । आशयः अंतःकरणम् । धर्म इत्युपलक्षणमधर्मस्यापि पुण्यपापात्मकमदृष्टान्तैः संगृह्यते जन्यत इति प्रधानकालाशयधर्मसंग्रहस्तस्मिन् शरीरे । एकस्यैव शुद्धस्य भगवत उपाधिवशात्तत्तद्भावप्राप्तौ दृष्टान्तमाह-यथेति । यथैक एव शुद्धोऽनलो दारुषु स्थितस्तेषां ये गुणा दैर्घ्यवक्रत्वादयस्तदात्मकस्तद्वान् भवति तथेत्यर्थः ॥ ३४ ॥ ❀ ❀ एवं भगवद्भजने प्रवृत्तांस्तत्र प्रवर्त्य स्वतस्तत्र प्रवृत्तानां प्रवृत्तिमभिनन्दनेन दृढयति-अहो इति । क्षोणितले भूतले ये दृढव्रताः दृढसङ्कल्पाः सन्तः स्वधर्मयोगेन यज्ञादिस्वधर्मसमर्पणेन हरिं यजन्ति तेऽस्मी ममाहो अत्यनुग्रहं वितरन्ति कुर्वन्तीत्यन्वयः । ननु भगवद्भजनं कथं फलवत्तत्राह-गुरुमिति । सर्वलोकपूज्यमित्यर्थः । कुतः सर्वपूज्यत्वं तत्राह-यज्ञभुजामिति । यज्ञभागभुज इन्द्रादयो देवास्तेषामप्यधीश्वरमित्यर्थः । तर्हि तेषां भजतामेव तत्फलं स्यात्तेन तवानुग्रहः कथमित्याशङ्क्याह-मामका इति । मम राजत्वेन प्रजाकृतस्य षष्ठांशप्राप्तेर्भगवतैवोक्तत्वादिति भावः ॥ ३५ ॥ ❀ ❀ एवं भगवद्भक्तिं दृढीकृत्य तस्याः ब्राह्मणकृपासाध्यत्वात्तदपमानमसभ्यं माभूदिति प्रार्थयते मा जात्विति । राजकुलात्सकाशादजितो भगवान्देवता सेवनीयो येषां भक्तानां तेऽजितदेवतास्तेषां तथा द्विजानां ब्राह्मणानां च कुले तेजो मा जातु प्रभवेत् प्रभावं कदाचिदपि मा करोतु । ननु राज्ञस्तेजसः कथमुत्कटतापेनैवं द्विजादिकुलपरिभवशङ्केत्यत आह-महद्भिरिति महत्यश्च ता ऋद्धयश्च ताभिरुत्कटं राजकुलस्य तेज इत्यर्थः । ननु द्विजादौ प्रभावकरणे को दोष इत्याशङ्क्य तत्पराभवे प्रवृत्तस्य सकुलस्य नाश एवेत्यभिप्रेत्याह-देदीप्यमान इति । ननु तेषां समृद्ध्याद्यभावात्कथं देदीप्यमानता तत्राह-स्वयमिति । स्वयं समृद्ध्याद्यभावेपीत्यर्थः । ननु देदीप्यमानत्वस्य निष्कारणत्वे सर्वत्रैव तत्प्रसङ्गः स्यादित्याशङ्क्याह-तितिक्षयेति । तितिक्षया परापराधादिसहनेन । तपसा ब्रह्मचर्यव्रतोपवासादिना । विद्यया मन्त्रजपस्तोत्रपाठभगवद्ध्यानादिना च देदीप्यमान इत्यर्थः ॥ ३६ ॥ ❀ ❀ एवं स्वयं भीतवद् ब्राह्मणाद्यपराधो मे माभूदिति लोकान् विश्राव्येदानीं भगवतोपि लोकसङ्ग्रहार्थं ब्राह्मणसेवनं दृष्ट्वा तस्यापि सर्वे गुणा ब्राह्मणभजनादेवेति लोकान् श्रावयंस्तांस्तत्र प्रवर्त्तयति ब्रह्मण्यदेव इति द्वाभ्याम् । पुरातनः पुरुषो जगत्स्रष्टापि यतो ब्रह्मण्यदेवः ब्राह्मणभक्तिमांस्ततो नित्यं निरन्तरं यस्य ब्राह्मणकुलस्य चरणाभिवन्दनात् हरिः सर्वेषां दुःखहरणे समर्थो जातः । तथा अनपायिनीं प्रायो वियोगरहितां लक्ष्मीमवाप । यत्कृपयातिचञ्चलापि लक्ष्मीस्तं कदापि न जहाति निरन्तरं चरणसेवां च करोतीत्यर्थः । सर्वजगत्पवित्रं सर्वप्राणिपापनिवारकं यशश्चावाप । अत एव महत्तमानां ब्रह्मादीनामप्यग्रणीः पूज्यतमश्च जातः ॥ ३७ ॥ ❀ ❀ अत एव विप्राः प्रिया यस्य स विप्रप्रियः । अत एव यत्सेवया यस्य ब्रह्मकुलस्य सेवया तुष्टो भवति । ननु तत्संतोषे किं फलं स्यादित्यत आह-काममिति । कामं यथेष्टं तुष्यति संतुष्टः सन् यथेष्टं फलं ददातीत्यर्थः । कथं यथेष्टदाने समर्थ इत्याशङ्क्याह-ईश्वर इति । जगदुत्पत्तिपालनप्रलयानां कर्तृत्वात्सर्वं दातुं समर्थ इत्यर्थः । तत्रापि हेतुमाह-स्वराडिति । स्वेनैव राजत इति स्वराट् अन्यनिरपेक्ष इत्यर्थः । तथापि कथं मनोगतमिष्टं जानाति येन ददातीत्याशङ्क्याह-अशेषेति, अशेषाणां सर्वेषां प्राणिनां गुहा अन्तःकरणं तस्मिन् शेत इत्यशेषगुहाशयः । सर्वबुद्धिवृत्तिसाक्षित्वात्सर्वं मनोगतं जानातीति भावः । अतस्तद्धर्मपरैः तेन भगवतोनुष्ठितो ब्राह्मणसेवालक्षणो धर्मस्तद्धर्मः यद्वा तस्य भगवतः प्रसादार्थो धर्मस्तद्धर्मः स एव परः उत्कृष्टो येषां तथाभूतैर्विनीतैर्भवद्भिस्तद्भगवता सेवितं ब्रह्मकुलमेव निरन्तरं सेव्यतामिति द्वयोरन्वयः ॥३८॥ ❀ ❀ ननु तमेव यूयं स्वकर्मभिर्भजतेत्यादिना सर्वदेवतामुखेऽग्नौ यज्ञाद्यनुष्ठानं विधाय कथं पुनरत्र ब्रह्मकुलसेवा विधीयते निरन्तरं ब्रह्मकुल एव सेव्यमाने यज्ञादिना भगवद्भजनं न स्यात्तेन विना कथं भगवत्प्रसादः कथं वा तद्विना परमपुरुषार्थसिद्धिरित्याशङ्क्यायमप्येको भगवद्भजनप्रकारो यज्ञाद्यनुष्ठानलक्षणाच्च श्रेष्ठश्चेत्याशयेनाह-पुमानिति । यस्य ब्राह्मणकुलस्य नित्यसम्बन्धेन

निषेवया निष्कपटत्वेन सम्यक्सेवया स्वत एव यज्ञाद्यनुष्ठानं विनैव प्रसीदतः आत्मनः परमात्मनो भगवतः सकाशात् अनतिवेलं शीघ्रमेवात्यन्तशमं त्रिविधतापनिवर्तकं भगवत्पादपद्मं परमपुरुषार्थं स्वयमनायासेनैव पुमान् लभेत ततस्तस्माद्ब्रह्मकुलात्परं श्रेष्ठमत्र लोके हविर्भुजां देवानां मुखं किमस्ति न किमपीत्यन्वयः। अग्नौ हविःप्रक्षेपाद्यपेक्ष्यापि भोजनसत्कारादिना ब्राह्मणाराधने भगवतो देवानां च प्रसन्नताधिक्यमिति भावः॥ ३९॥ ❀ ❀ एतदेव सदाचारप्रदर्शनपूर्वकं स्फुटयति-अश्नातीति। तत्त्वकोविदैरग्नेः सकाशाद् ब्राह्मणमुखं श्रेष्ठमिति तत्त्वं जानद्भिरिज्यानां देवानां नामभिर्यस्य ब्रह्मकुलस्य मुखे श्रद्धया हुतं मृष्टान्नादिकमनन्तो देशकालवस्तुपरिच्छेदरहितो भगवान् खल्विति निश्चितमेतद्यथाऽश्नाति प्रसन्नो भुङ्क्ते तथा हुताशने अग्नौ हुतं नाश्नाति। तत्र हेतुमाह–चेतनया बहिष्कृते रहिते अग्नेरचेतनत्वादित्यर्थः। अन्यदेवनामभिर्हुतं भगवान् कथमश्नातीति शङ्कानिरासायोक्तमनन्त इति। तदेव स्पष्टयति–पारमहंस्यपर्यगुरिति। नीरक्षीरविवेचका हंसास्ततोऽप्यतिश्रेष्ठा आत्मानात्मविवेकिनो भगवद्भक्ताः परमहंसास्तेषां गम्यः पारमहंस्यः, परितो न गच्छन्ति गावो वेदलक्षणा वाचः इन्द्रियाणि च यस्मात्स पर्यगुः स चासौ स च पारमहंस्यपर्यगुः ज्ञानिभक्तैकगम्यः सर्ववेदप्रतिपाद्यः सर्वान्तर्यामीत्यर्थः॥ ४०॥

## भाषानुवादः

भगवान् स्वरूपतः विशुद्ध विज्ञानघन और समस्त विशेषणोंसे रहित हैं; किन्तु इस कर्ममार्गमें जौ-चावल आदि विविध द्रव्य, शुक्लादि गुण, अवघात ( कूटना ) आदि क्रिया एवं मन्त्रोंके द्वारा और अर्थ, आशय ( संकल्प ), लिङ्ग ( पदार्थ-शक्ति ) तथा ज्योतिष्टोम आदि नामों से सम्पन्न होनेवाले अनेक विशेषणयुक्त यज्ञके रूपमें प्रकाशित होते हैं॥ ३४॥ ❀ ❀ जिस प्रकार एक ही अग्नि भिन्न-भिन्न कालोंमें उन्हींके आकारादिके अनुरूप भासती है, उसी प्रकार वे सर्व-व्यापक प्रभु परमानन्दस्वरूप होते हुए भी प्रकृति, काल, वासना और अदृष्टसे उत्पन्न हुए शरीरमें विषयाकार बनी हुई बुद्धिमें स्थित होकर उन यज्ञयागादि क्रियाओंके फल-रूपसे अनेक प्रकारके जान पड़ते हैं॥ ३५॥ ❀ ❀ अहो! इस पृथ्वीतलपर मेरे जो प्रजाजन यज्ञभोक्ताओंके अधीश्वर सर्वगुरु श्रीहरिका एकनिष्ठभावसे अपने-अपने धर्मोंके द्वारा निरन्तर पूजन करते हैं, वे मुझपर बड़ी कृपा करते हैं॥ ३६॥ ❀ ❀ सहनशीलता, तपस्या और ज्ञान—इन विशिष्ट विभूतियोंके कारण वैष्णव और ब्राह्मणोंके वंश स्वभावतः ही उज्ज्वल होते हैं। उनपर राजकुलका तेज धन ऐश्वर्य आदि समृद्धियोंके कारण अपना प्रभाव न डाल सकें॥ ३७॥ ❀ ❀ ब्रह्मादि समस्त महापुरुषोंमें अग्रगण्य, ब्राह्मणभक्त पुराणपुरुष श्रीहरिने भी निरन्तर इन्हींके चरणोंकी वन्दना करके अविचल लक्ष्मी और संसारको पवित्र करनेवाली कीर्ति प्राप्त की है॥ ३८॥ ❀ ❀ आपलोग भगवान्‌के लोकसंग्रहरूप धर्मका पालन करनेवाले हैं तथा सर्वान्तर्यामी स्वयंप्रकाश ब्राह्मणप्रिय श्रीहरि विप्रवंशकी सेवा करनेसे ही परम संतुष्ट होते हैं, अतः आप सभी को सब प्रकारसे विनयपूर्वक ब्राह्मणकुलकी सेवा करनी चाहिये॥ ३९॥ ❀ ❀ इनकी नित्य सेवा करनेसे शीघ्र ही शुद्ध चित्त हो जानेके कारण मनुष्य स्वयं ही ( ज्ञान और अभ्यास आदिके बिना ही ) परम शान्ति-रूप मोक्ष प्राप्त कर लेता है। अतः लोकमें इन ब्राह्मणोंसे बढ़कर दूसरा कौन है जो हविष्यभोजी देवताओंका मुख हो सके?॥ ४०॥

अश्नात्यनन्तः खलु तत्त्वकोविदैः श्रद्धाहुतं यन्मुख इज्यनामभिः।
न वै तथा चेतनया बहिष्कृते हुताशने पारमहंस्यपर्यगुः॥ ४१॥
यद्ब्रह्म नित्यं विरजं सनातनं श्रद्धातपोमङ्गलमौनसंयमैः।
समाधिना बिभ्रति हार्थदृष्टये यत्रेदमादर्श इवावभासते॥ ४२॥
तेषामहं पादसरोजरेणुमार्या[1] वहेयाधिकिरीटमायुः।
यं नित्यदा बिभ्रत आशु पापं नश्यत्यमुं सर्वगुणा भजन्ति॥ ४३॥
गुणायनं शीलधनं कृतज्ञं वृद्धाश्रयं संवृणते नु सम्पदः।
प्रसीदतां ब्रह्मकुलं गवां च जनार्दनः सानुचरश्च मह्यम्॥ ४४॥

### मैत्रेय उवाच

इति ब्रुवाणं नृपतिं पितृदेवद्विजातयः। तुष्टुवुर्हृष्टमनसः साधुवादेन साधवः॥ ४५॥
पुत्रेण जयते लोकानिति सत्यवती श्रुतिः। ब्रह्मदण्डहतः पापो यद्वेनोऽत्यतरत्तमः॥ ४६॥
हिरण्यकशिपुश्चापि भगवन्निन्दया तमः। विविक्षुरत्यगात्सूनोः प्रह्लादस्यानुभावतः॥ ४७॥
वीरवर्य पितः[2] पृथ्व्याः समाः सञ्जीव शाश्वतीः। यस्येदृश्यच्युते भक्तिः सर्वलोकैकभर्तरि॥ ४८॥

---

१. प्रा० पा०—णुना पर्यावहे०। २. प्रा० पा०—पितुः श्रेष्ठ।

अन्वयः—पारमहंस्यपर्यगुः अनन्तः तत्त्वकोविदैः इज्यनामभिः यन्मुखे श्रद्धाहुतम् खलु अश्नाति तथा चेतनया बहिष्कृते हुताशने वै न अश्नाति ॥ ४१ ॥ ❀ ❀ यत्र इदं आदर्श इव अवभासते विरजम् सनातम् ब्रह्म ये श्रद्धातपोमंगलमौनसंयमैः समाधिना अर्थदृष्टये नित्यम् यत् ह बिभ्रति ॥ ४२ ॥ ❀ ❀ आर्याः अहम् तेषाम् पादसरोजरेणुम् आयुः अधिकिरीटम् वहेय यम् नित्यदा बिभ्रतः पापम् आशु नश्यति सर्वगुणाः अमुम् भजन्ति ॥ ४३ ॥ ❀ ❀ गुणायनम् शीलधनम् कृतज्ञम् वृद्धाश्रयम् अनु संपदः संवृणुते ब्रह्मकुलम् च गवाम् च सानुचरः जनार्दनः मह्यम् प्रसीदताम् ॥ ४४ ॥ ❀ ❀ साधवः पितृदेवद्विजातयः हृष्टमनसः इति ब्रुवाणम् नृपतिम् साधुवादेन तुष्टुवुः ॥ ४५ ॥ ❀ ❀ पुत्रेण लोकान् जयते इति श्रुतिः सत्यवती यत् ब्रह्मदण्डहतः पापः वेनः तमः अत्यतरत् ॥ ४६ ॥ ❀ ❀ च भगवन्निन्दया तमः विविक्षुः हिरण्यकशिपुः अपि सूनोः प्रह्लादस्य अनुभावतः ॥ ४७ ॥ ❀ ❀ वीरवर्य पृथ्व्याः पितः यस्य सर्वलोकैकभर्तरि अच्युते ईदृशी भक्तिः शाश्वतीः समाः संजीव ॥ ४८ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

हरेरपि तदेव परं मुखमित्याह । अश्नातीति । इज्यानां पूज्यानामिन्द्रादीनां नामभिर्यस्य ब्रह्मकुलस्य मुखे श्रद्धया हुतं हविरनन्तो यथाऽश्नाति तथा चेतनया रहिते हुताशने हुतं नाश्नाति । कैर्हुतमश्नाति । तत्त्वकोविदैः सर्वदेवमयश्चैतन्यमूर्तिरनन्त इति तत्त्वं विद्वद्भिः । कुत एवंभूतोऽसौ तत्राह । पारमहंस्यं ज्ञानं तत्परानर्हन्त्यधिकुर्वन्तीति पारमहंस्यपर्यास्ता गावो वाचो यस्मिन् उपनिषद्भिर्ज्ञानघनत्वेनोक्त इत्यर्थः । यद्वा परमहंसानां ज्ञाननिष्ठानां गम्यः पारमहंस्यः परितो न गच्छन्ति गावो वाचो यस्मात्स पर्यगुरिन्द्रियनियन्ता स चासौ स च पारमहंस्यपर्यगुर्ज्ञानरूपः सर्वान्तर्यामीत्यर्थः ॥ ४१ ॥ ❀ ❀ न केवलं चेतनत्वेन हुताशनाद्विशेषः किं तु वेनज्ञानादपीत्याह । यदित्यव्ययम् । ये ब्रह्म वेदं नित्यं बिभ्रति तेषामित्युत्तरेणान्वयः । मंगलं नाम । "प्रशस्ताचरणं नित्यमप्रशस्तस्य वर्जनम् । एतद्धि मंगलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥" मौनमध्ययनविरोधिवार्तात्यागः संयमो दमः तैः समाधिना चित्तस्थैर्येण च किमर्थम् । अर्थदृष्टये अध्ययनस्यार्थज्ञानपर्यवसायित्वात् वेदार्थमपि विचारयन्तीत्यर्थः । यत्र वेदे इदं विश्वमवभासते । यथा आदर्शे मुखम् । ह स्फुटम् ॥ ४२ ॥ ❀ ❀ हे आर्या आ आयुर्यावज्जीवमधिकिरीटं मुकुटस्योपरि वहेयेति प्रार्थनायां लिङ् । यं रेणुम् ॥ ४३ ॥ ❀ ❀ गुणभजनस्य फलमाह । गुणायनमन्वनु संपदः संवृणते सम्यग्भजन्ति तस्मात्प्रसीदतां प्रसीदतु गवां च कुलम् ॥ ४४-४५ ॥ ❀ ❀ साधुवादमाह पुत्रेणेति पड्भिः । यद्यतो वेनोऽपि तमो नरकमत्यतरदतितताार ॥ ४६-४८ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

श्रद्धा आस्तिक्यं, तपः 'स्वधर्माचरणं तपः' इत्युक्तेर्नित्यनैमित्तिककर्मनिष्ठत्वं, संयम इन्द्रियनिग्रहः । इत्यर्थ इति । पूर्वोक्तसाधनैश्चित्तस्थैर्यं तेन वेदार्थविचार इति खिन्ने चित्ते कुतो बोध इत्याशयः । अत्र मंगललक्षणवाक्येनाचार उक्तः "आचारहीनं न पुनन्ति वेदाः" इत्युक्तेः । अत्र ब्रह्मपदेन वेदः परमात्मा चोक्तः । "यावद्ब्रह्मविष्ठितं तावती वाक्" इति श्रुतेर्द्वयोर्लक्षणसाम्यात् । यद्वा—यत्र ब्रह्मकुले इदमुक्तं ब्रह्मद्वयं दर्पणे मुखमिवाभाति "दर्पणे मुकुरादर्शौ" इति कोशात् ॥ ४२ ॥ ❀ ❀ एवं ब्रह्मकुलमभिष्टूयात्मक्रियोपदेशतस्तत्सेवा यावदायुः कर्त्तव्येति विधत्ते हे आर्या इत्यनेन ब्राह्मणसेवयैवार्यत्वमन्यथा तन्नश्यति म्लेच्छादिदेशे तदभावादेवानार्यत्वमत एवैतद्देशस्यार्यावर्त्तमिति संज्ञापीति भावः । मुकुटस्योपरीत्यस्य शिरस्युष्णीषं तदुपरि मुकुटं तदुपरि विप्रपादरजस्तदुपरि न किञ्चित्कर्तव्यं तस्य सर्वोत्कृष्टत्वात् । "विपद्गणध्वान्तसहस्रभानवः समीहितार्थार्पणकामधेनवः । अपारसंसारसमुद्रसेतवः पुनन्तु मां ब्राह्मणपादरेणवः" इति पुराणान्तरे तदुक्तेः । आशु झटिति पापं नश्यति 'विप्रपादरजो राजन्हन्ति दारुणदुष्कृतम्' इति भीष्मोक्तेः । अमुं विप्रपादरजोधारिणं सर्वसौभगत्वसम्पत्तिमत्त्वादयो भजन्ति सेवन्ते ॥ ४३ ॥ ❀ ❀ शीलधनं सुचरितं वृद्धान्धर्मज्ञान् "न ते वृद्धा ये न वदन्ति धर्मान्" इत्युक्तेः । यद्वा कृतं विहितं जानातीति कृतज्ञस्तं विमृश्यकारिणमित्यर्थः । "कृतं युगेऽलमर्थे स्याद्विहिते हिंसिते त्रिषु" इति मेदिनी । तदुक्तं भारविणा "सहसा विदधीत न क्रियामविवेकः परमापदां पदम् । वृणते हि विमृश्य कारिणं गुणलुब्धाः स्वयमेव संपदः ॥" इति किरातार्जुनीये । ब्रह्मकुलसेवा गोकुलसेवा ब्रह्मादिपरिवृतजनार्दनसेवा च मुमुक्षूणां यथाशास्त्रमवश्यं कर्त्तव्येत्याह—प्रसीदतामिति । "ब्रह्मा रुद्रो महेन्द्राद्या देवाः सर्वे जनार्दनम् । अनुगच्छन्ति वै यस्मात्तस्मात्तस्यानुगा हि ते" इत्यादिपुराणात् । यद्वाऽनुचरा भक्ताः ॥ ४४ ॥ ❀ ❀ साधुवादेन निर्दोषवाक्येन ॥ ४५ ॥ ❀ ❀ पुत्रेण सत्पुत्रेण "सोऽयं मनुष्यलोकः पुत्रेण जय्यः" इति श्रुतेरत्र मनुष्यलोक इत्युपलक्षणं स्वर्गादेरपि अत एव श्रीवेदव्यासाचार्येण लोकानित्युक्तं मूले । तमः श्रीपृथुजन्मनः पूर्वं कतिचिद्दिनानि प्राप्तं नरकम् । यद्वा—ब्रह्मदण्डहतत्वादवश्यं भावि नरकम् । 'मा क्रुद्राद् ब्राह्मणात्प्रभो' इति स्वपुत्रमृत्युमुद्दिश्य कश्यपं प्रति दित्युक्तेः । "शश्वत्पुत्रेण पितरोत्यायन्बहुलं तमः" इति श्रुतेः । शश्वत्पुत्रेण मंगलपुत्रेण "शश्वत्स्यादात्मप्रश्ने च मंगले पुराकल्पे सदार्थे च" इति मेदिन्युक्तेः । मंगलं शुभं तेन सत्पुत्रेणेत्यायातं न तु पुत्रमात्रेण 'कुपुत्रो नाशयेत्कुलम्' इत्युक्तिविरोधात् ॥ ४६ ॥ ❀ ❀ अत्र प्रमाणान्तरमाह

अनुभावतः श्रीनृसिंहादिप्रादुर्भावकारणाद्भक्तिलक्षणात्प्रभावादित्यर्थः ॥ ४७ ॥ ❀ ❀ विशेषेणेरयति कम्पयति पाखण्डिजनान् शत्रुसैन्यं वेति वीर आस्तिकः शूरश्च तेषु वर्य श्रेष्ठेति सन्मार्गोपदेष्टत्वाद्दस्युनाशकत्वाच्चास्माकमैहिकपारत्रिकसुखकर्त्ता त्वं चिरं जीवेति भावः। 'वीरभोग्या वसुन्धरा' इत्यभिजनोक्तेः। पृथिवीपतित्वमागतं वीरवर्येत्यामन्त्रणेन। ततश्च 'दुहितृत्वे चकारेमाम्' इति पूर्वोक्तिव्याकोपवारणाय पुनरामन्त्रयन्ति हे पृथ्व्याः पितरिति पातृत्वात्पितैव पृथ्वीपदमप्यत्र पृथिवीस्थपरं 'तात्स्थ्यात्ताच्छब्द्यम्' इति न्यायेन यस्य तव सर्वलोकानामेकभर्त्तरि मुख्यपालके "एके मुख्यान्यकेवलाः" इत्यमरः। ईदृशी अलौकिकी ॥ ४८ ॥

### श्रीमद्वीरराघवव्याख्या

ननु "अग्निमुखा वै देवाः" इति देवानामग्निमुखत्वश्रवणात् अग्नौ हुतमेव हविर्भुगन्तरात्मभूतपरमात्मप्रीतये भविष्यति तत्राह अश्नातीति। सत्यमग्निरपि तन्मुखमिति, तथापि तत्त्वकोविदैर्ब्राह्मणानां भगवत्प्रियतमशरीरत्वं जानद्भिः "न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम्" इति भगवद्वचनात् इज्यनामभिः आराध्येन्द्रादिनामभिः यस्य ब्राह्मणस्य मुखे श्रद्धया हुतं हविरनन्तो भगवान् यथा अश्नाति तथा चेतनया रहिते हुताशने अग्नौ हुतं नाश्नाति, कुत एवंभूतोऽसौ तत्राह। पारमहंस्यपर्यगुः परमहंसा भगवदुपासकाः तेषां भावः कर्म वा पारमहंस्यं ज्ञाननिष्ठेति यावत्, यद्वा चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् परमहंसा एव पारमहंस्याः तान् परित्यज्य न गच्छति तैः परितो गीयत इति वा अगुः गाङ्गतावित्यस्मान्नञ्पूर्वात् गै-शब्द इत्यस्मात् वा 'कुभ्रश्चे'त्यौणादिकसूत्रे प्राक्प्रत्ययनिर्देशात् धात्वन्तरादपि कुप्रत्ययस्याभ्युपगमात्कुप्रत्यये "आतो लोप इटि च" इत्यालोपः, न च तत्रापि सनवद्भावस्यापि विधानाद् द्वित्वोत्पत्तिः, बहुलग्रहणात्तदभावात्। यद्वा मृगय्वादेराकृतिगणत्वात्कुप्रत्ययः "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः। ज्ञानी त्वात्मैव मे मतम्" इति भगवद्गीतोक्तरीत्या निरतिशयप्रीतिविषयान् परमहंसान् अत्यादरेणावेक्षमाणस्तत्रैव नित्यम् सन्निहित इति तत् साक्षात् स्वमुखे न्यस्तमिव भुङ्क्ते इति भावः॥ ४१ ॥ ❀ ❀ न केवलं चेतनत्वेन हुताशनाद्विशेषः, किन्तु वेदतदर्थज्ञानानुष्ठानादिनापीत्याह यदिति। यद्ब्रह्मकुलं विरजं रागाद्यपेतं भ्रमप्रमादादिपुरुषदोषविनिर्मुक्तं च सनातनमनादिब्रह्मपरं ब्रह्म तत्स्वरूपप्रकाशकं वेदं च श्रद्धा उपासनायामध्ययनाध्यापनजपपारायणादिषु त्वरा उपासनोपयुक्तज्ञानकर्मयोगेऽध्ययनाद्युपयुक्तकाण्डव्रतादिश्च कर्मयोगस्य कृच्छ्रादिरूपानशनादिगर्भत्वात्तपःशब्देनाभिधानं युक्तं मङ्गलं विशुद्धाचारः मौनं वाङ्नियमः आरम्भणसंशीलनं च संयमः ध्यानोपयुक्तशमदमादिः अध्ययनाद्युपयुक्तकरणनियमश्च सत्त्वाधिना ध्यानेन धारणया च अर्थदृष्टये अर्थः पुरुषार्थरूपं ब्रह्म अभिधेययज्ञोपासनाश्च, तद्दृष्टये तत्साक्षात्काराय तदाराधनाय च इहास्मिँल्लोके बिभ्रद्बिभ्राणं यत् ब्राह्मणकुलं पुनर्ब्रह्म विशिनष्टि-यत्र ब्रह्मणि परस्मिन् वेदे च इदं विश्वं परमात्मस्वरूपादिकं च आदर्श इवावभासते प्रकाशते॥ ४२ ॥ ❀ ❀ तेषां ब्राह्मणानां पादसरोजरेणुं हे आर्याः! आयुः आ आयुः इत्याङ्प्रश्लेषोऽत्र बोध्यः, यावज्जीवमित्यर्थः। अधिकिरीटं मुकुटोपरि वहेयेति प्रार्थनायां लिङ्, किन्तद्वहनसाध्यं तत्राह यं ब्राह्मणपादसरोजरेणुं नित्यदा बिभ्रतः वहतः पुरुषस्य पापमाशु नंक्ष्यति अमुं वहन्तं सर्वगुणा कल्याणगुणाः भजन्ति आश्रयन्ते॥ ४३ ॥ ❀ ❀ तं च गुणालयं शुभगुणाश्रयं शीलमेव धनं यस्य तं कृतमुपकारं जानातीति कृतज्ञं वृद्धान् ज्ञानाधिकान् आश्रयते इति तं सर्वाः सम्पदः वृणुते वृणीते लट् 'आत्मनेपदेष्वनतः' इति झस्यादादेशः, 'श्नाभ्यस्तयोरातः' इत्यालोपः, सम्यक् भजन्ते उपसंहरन्ति ब्रह्मकुलं द्विजकुलं गवां च कुलं सानुचरः सभक्तः भगवांश्च मह्यं प्रसीदताम्॥ ४४ ॥ ❀ ❀ एवं वदन्तं नृपतिं पृथुं पित्रादयः साधवः गुणज्ञास्तुष्टमनसः साधुवादेन साधु साध्विति वादेन तुष्टुवुः स्तुतवन्तः॥ ४५ ॥ ❀ ❀ स्तुतिमेवाह। पुत्रेण लोकान् पुण्यलोकान् पिता जयति साधयतीति श्रुतिः जनश्रुतिः सत्यवती-अबाधिता, पुत्रेणेति पुत्रशब्दावयवार्थविषयभूतेनेत्यर्थः। पुंसंज्ञकान्नरकात् त्रायते इति हि पुत्रशब्दं निदर्शयन्ति यत् यस्माद्वेनोऽपि तमः नरकमतरत्॥ ४६ ॥ ❀ ❀ तथा हिरण्यकशिपुरपि भगवन्निन्दया तमो विविक्षुः प्रवेशमाशङ्कितः "आशंसायां सन् वक्तव्यः" इति सन्नन्तात् 'सनाशंसभिक्ष उः' इत्युः, सूनोः प्रह्लादस्यानुभावतः प्रभावात् तमः नरकं अत्यगात् अतिक्रम्य भगवन्तमगादित्यर्थः॥ ४७ ॥ ❀ ❀ तस्माद्धे वीरश्रेष्ठ! पृथ्व्याः पतिस्त्वं शाश्वतीः समाः संवत्सरान् सञ्जीव 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया, यस्य तव सर्वलोकानामेकस्मिन्नद्वितीये भर्तर्य्यच्युते ईदृशी भक्तिरस्ति॥ ४८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

इतोऽपि ब्रह्मकुलसेवा कर्तव्येत्याह अश्नातीति। भगवत्तत्त्वकोविदैः पुरुषैरीड्यस्य हरेर्नामभिर्यन्मुखे श्रद्धया हुतमनन्तो यथाश्नाति तथा चेतनया बहिष्कृते जडे हुताशने हुतं नाश्नातीत्यन्वयः। अनन्त इत्यनेन न केवलमात्रं फलं किन्तु अनन्तमेवेति ध्वनयति, अनुनयार्थः खलुशब्दः, वा इत्यनेन नाहं तथावीति प्रसिद्धिं स्मारयति। ब्राह्मणेष्वपि यतिमुखाशनेन हरेर्विशेषतस्तृप्तिरित्यभिप्रेत्याह पारमहंस्येति। पारमहंस्यैः परमहंसाश्रमस्थैर्वर्या वरणीया गावो यस्य स पारमहंस्यवर्यगुः। त एव तद्वचनाभिप्रायं विदित्वा श्रद्धयाऽनुष्ठातार इत्यर्थः। यद्वा परमहंसविषया वर्या मनोहरा गावो यस्य तथा यतीनधिकं स्तौतीति तेषामेव तत्त्वज्ञानाधिक्यादित्यर्थः। चित्रगुशब्दवदयं शब्दः॥ ४१ ॥ ❀ ❀ नन्वग्नित आधिक्ये चेतनावत्त्वं प्रयोजकं चेदवैदिकानामाराधन-

पात्रत्वं स्यादित्याशङ्क्य ब्रह्मकुलस्य वैशिष्ट्यमाह यद्ब्रह्मेति। अत्र 'यावद्ब्रह्माधिष्ठितं तावती वागि'ति श्रुतिर्वेदस्य परब्रह्मणश्च लक्षणसाम्यात् द्वयमप्येकोक्त्या वक्ति। यद्ब्राह्मणकुलं नित्यत्वादिगुणविशिष्टब्रह्म वेदं हरेस्तत्त्वं च बिभ्रत् बिभर्ति तद्धारणे सामर्थ्यं वक्ति। श्रद्धेति "आचारहीनं न पुनन्ति वेदाः" इति वचनं मङ्गलं पुण्यं संयमो दमः समाधिरेकाग्रता। किमर्थमित्यत उक्तमर्थ-सिद्धय इति। पुरुषार्थोपयोगीतरज्ञानप्रयासोऽपि न कार्य इत्याह यत्रेति। यत्र ब्रह्मणि श्रीनारायणे इदं जगदादर्शे दर्पण इवावभासते वेदे चेदं पुरुषार्थचतुष्टयं ज्ञायते। यद्वा यत्र ब्रह्मकुले इदमुक्तं ब्रह्मद्वयं दर्पण इवावभाति॥४२॥ ❀ ❀ एवं ब्रह्मकुलमभिष्टूयात्म-क्रियोपदेशतस्तत्सेवा यावदायुः कर्तव्येति विधत्ते तेषामिति। हे आर्याः! तत्त्वज्ञानोत्पत्तौ प्रथमसाधनं पापप्रणाशः सोऽप्यनेन स्यादित्याशयेनाह यं नित्यदेति। उत्तरफलमाहामुमिति अमुं पुरुषम्॥ ४३॥ ❀ ❀ एतदेव विशिनष्टि गुणालयमिति। सम्पदो गुणालयत्वादिविशिष्टं पुरुषमनुसम्भृणत इत्यन्वयः। सम्भृणुत इति पाठे सम्वृण्वत इति व्याख्येयं, यं नित्यसम्बन्धनिषेधनिषेवये-त्यादौ प्रस्तुतो जनार्दनः पारमहंस्यवर्यगुरित्यनेन ध्वनिता गावश्च ब्रह्मकुलं च प्रसीदत्वित्युपसंहरति। प्रसीदतामिति। ब्रह्मकुलसेवा-वद्गोकुलसेवा ब्रह्मादिपरिवृतश्रीजनार्दनसेवा च यथाशास्त्रविहितं मुमुक्षुणा कर्तव्येत्यतो वाह। प्रसीदतामिति॥ ४४॥ ❀ ❀ इदानीं मैत्रेयः पृथूक्तावविप्रतिपत्तिः सर्वेस्याभूदिति वक्ति इतीति। साधुवादेन निर्दोषवाक्येन॥ ४५॥ ❀ ❀ सूचितं स्पष्ट-यति पुत्रेणेति। सोऽयं मनुष्यलोकः पुत्रेण जय्य इत्यादिकं श्रौतमपि दृष्टचरितमित्याहुरित्याह ब्रह्मदण्डेति। 'शश्वत्पुत्रेण पितरोऽत्याय-न्बहुलं तमः' इति श्रुतिरत्र प्रमाणम्। पापस्य वेनस्य तमस्तरणं सत्यश्चेत्सर्वेऽपि मुक्तिप्राप्तियोग्या इत्यायातं न तु नारकी कोऽपीति चेन्न, वेनशब्दस्य तामसराजससात्त्विकभेदेनाभिधेयत्रित्वस्य प्रामाणिकत्वात् "वेनस्थो राजसो जीवः पृथुना स्वर्गतिं गतः। स्वयं तु तम एवाप सात्त्विकः पृथुतामगात्" इति स्मृतेः। तथाच वाक्ययोजना ब्रह्मदण्डहतो विप्रशापहतः पापो दैत्यो नाम्ना वेनस्तमोऽ-तरदिति यत्तदिति प्रशंसामात्रं न तु सत्यं, सत्यन्तु सर्वस्मादत्यधिकं दुःखोदर्कं तमोऽत्यतरदगाच्छत्, तॄ-प्लवनतरणयोरिति धातोः प्लु-गताविति च। "अति स्यादधिकार्थोक्तौ प्रशंसायामतिक्रमे" इत्यभिधानात् यत्तामसो वेनः सर्वदुःखकरो दैत्यः सोऽत्यतरत्सुख-भोगलोकमतिक्रम्यागाच्छदन्धन्तम इति शेषः, ब्राह्मणानां विप्राणां दण्डो राजयोग्यशिक्षा तया हतो गतः 'दण्डोऽस्त्री शासने राज्ञा-मि'ति यादवः। हन-हिंसागत्योरिति धातोः। रजोगुणपानं पातीति वा पापो राजसो वेनस्तमोऽत्यतरत् तमोऽतिक्रम्य स्वर्गतिं गतः पृथुगुणेनेति शेषः। यदतरत् तर्तुमशक्यं तमोगुण इति शेषः। तदतिक्रम्य वर्तमानं सत्त्वं वेत्तीति ज्ञानांशो वेनोऽत्यधिकार्थं भक्त्यादि-गुणविस्ताराभिधेयं पृथुत्वमतरदाप्नोदिति। पापान् पाति रक्षतीति वा पिबति संहरतीति वा पापः ब्रह्म वेदस्तदुक्तो दण्डो हिंसा यस्य पशोः सब्रह्मदण्डः तं पशुं हन्तीति नान्यमविहितमिति ब्रह्मदण्डहतः 'दण्डो हिंसायां लकुडे गुडे इति च'॥ ४६॥ ❀ ❀ हिरण्यकशिपुरपि स नकादिशप्तो जयः श्रीहरिपार्षदस्तस्य तमोऽतिगमनं युक्तमन्यस्य तदाविष्टस्यासुरस्य तमोऽतिगमनमौपचारिकमर्थ-वादवत्॥ ४७॥ ❀ ❀ एवं तृप्ताः सर्वे स्वमनोगतं विज्ञापयन्ति वीरवर्येति। हे पृथ्व्याः पितः! पातृत्वात्पितृत्वम्। ननु त्वयैव नाथेनेत्युत्तरश्लोके पृथावपि भक्तेः कर्तव्यत्वम् प्रतीयते, अथ कथं भगवत्येव भक्तिः कर्तव्येति चेदुच्यते, तत्र पृथुस्थपरमेश्वर-मपेक्ष्यैवकारेणान्ययोगव्यवच्छेदः क्रियते, 'यो ब्रह्मक्षत्रमाविश्ये'त्युत्तरत्र पृथुस्थत्वप्रतीतेः॥ ४८॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

मुख्यत्वसिद्धिः पर्य्यगुरिति। गाव इन्द्रियाणि। यस्मात् यं परित्यज्य हेतोर्वा पूर्वत्र न गच्छन्ति स्वातन्त्र्येण न तिष्ठन्ती-त्यर्थः। उत्तरत्र यमेवालम्ब्य वर्तन्त इत्यर्थः॥ ४१॥ ❀ ❀ यद्ब्रह्मेति युग्मकम्। यदिति जसो लुक् छान्दसः, योऽधिकिरीट-मायुरिति चित्सुखः। यो रेणुः॥ ४२-४३॥ ❀ ❀ वृद्धाश्रयमिति। तादृशं ब्राह्मणमेकमप्याश्रितवन्तमित्यर्थः। गुणायनमित्यादि-कर्माधिकारिणो वृद्धाश्रयस्य विशेषणम्। गुणाश्चात्र शान्त्यादयः सम्पदो विद्यादयश्च त एव गुणशब्देन पूर्वत्रोक्ताः। अत्र ब्राह्मणा-नामेव सर्वोपदेष्टृत्वात् प्रसाद्यत्वेन श्रैष्ठ्यमभिप्रेतमिति। प्रसीदतां ब्रह्मकुलमित्यन्तमुक्त्वैव गवामित्युक्तिः॥ ४४-४५॥ ❀ ❀ पुत्रेणेति। सत्पुत्रेणेत्यर्थः। तमः श्रीपृथुजन्मनः पूर्वं कतिचिद्दिनानि प्राप्तं नरकम्। अनुभावतः श्रीनृसिंहादिप्रादुर्भावकारणाद् भक्ति-लक्षणात्प्रभावादित्यर्थः। श्रीवाराहाद्यवतारे कारणान्तरमप्यस्ति। अत्र तु स एव कारणमिति भावः॥ ४६-४८॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

हरेरपि तदेव परं मुखमित्याह अश्नातीति। श्रद्धया हुतं दत्तम् इज्यानां नामभिरिति यथा 'इन्द्राय स्वाहा, आदित्याय स्वाहे'ति इज्यानामिन्द्रादीनां नाम्ना वह्नावाहुतिर्दीयते तथैव तेषां नाम्ना यदि ब्राह्मणमुखे पक्वान्नानि समर्पयति तदा अनन्त एवा-श्नाति। तस्मिंश्च भुक्तवति तेषां शाश्वती तृप्तिः प्रीतिश्च स्यादित्यर्थः। चेतनया बहिष्कृते रहिते पारमहंस्यपरान् ज्ञानिनो भक्तांश्चा-र्हन्तीति पारमहंस्यपर्य्या गावो वेदवाचोऽङ्गकिरणाश्च यस्य सः॥ ४१॥ ❀ ❀ चेतनत्वेनैव हुताशनाद्विप्राणां श्रैष्ठ्यं न, किन्तु वेदज्ञानादेवेत्याह। यद्यस्माद् ब्रह्म वेदं श्रद्धादिभिर्बिभर्ति मङ्गलं नाम "प्रशस्ताचरणं नित्यमप्रशस्तस्य वर्जनम्। एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः॥' मौनमध्ययनविरोधिवार्तात्यागः, समाधिना चित्तस्थैर्य्येण किमर्थमर्थानां वस्तुमात्राणां

दृष्टये ज्ञानाय। कथमेवमत आह। यत्र वेदे इदं जगत् सर्वमेव अवभासते ज्ञानविषयीभवति आदर्शे दर्पणे इव ॥ ४२ ॥ ❀ ❀ हे आर्य्याः! आ आयुर्यावज्जीवं अधिकिरीटं वहेय, प्रार्थनायां लिङ्, यं रेणुम् अमुं बिभ्रतं पुमांसम् ॥ ४३ ॥ ❀ ❀ गुणभजनस्य फलमाह गुणायनमिति। सम्यक् स्वयमेव वृणुते पतिंवरा इवेत्यर्थः। तस्मात् प्रसीदतां प्रसीदतु ॥ ४४-४५ ॥ ❀ ❀ तमो नरकम्। हे पृथ्व्याः पितः! ॥ ४६-४८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

भगवानपि ब्रह्मकुलमुखे यथा अश्नाति तथा हुताशने नाश्नातीत्याह। अश्नातीति। अनन्तः अपरिमितस्वरूपगुणः पारमहंस्यपर्यगुः पारमहंस्यं ज्ञानं तत्परानधिकुर्वन्तीति पारमहंस्यपर्य्याः गावो वेदान्तवाचो यस्मिन्निति वेदान्तैकवेद्यो भगवान् तत्त्वकोविदैः श्रद्धया यन्मुखे हुतं यथा हुताशने इज्यनामभिर्हुतं नाश्नाति तद्ब्रह्मकुलं निषेव्यतामिति पूर्वेणान्वयः ॥ ४१ ॥ ❀ ❀ यदित्यव्ययं, ये ब्राह्मणाः नित्यमनादिसिद्धं ब्रह्म वेदं विरजं शुद्धं सनातनं परं ब्रह्म च बिभ्रति तेषामित्युत्तरेणान्वयः। यत्र शब्दब्रह्मणि विषयतया परब्रह्मणि कार्यतया इदं विश्वमादर्शतले इवावभासते यथावद् दृश्यते। कस्मै प्रयोजनाय बिभ्रति अर्थदृष्टये शब्दब्रह्म तदर्थज्ञानाय परं ब्रह्म तत्कार्यज्ञानाय "यद्विज्ञाने सर्वं विज्ञातं भवति" इति श्रुतेः। यद्वार्थस्य याजनस्य दृष्टये ज्ञानाय पुरुषार्थचतुष्टयलाभायेति फलितार्थः। कैरुपायैः श्रद्धादिभिः तत्र मङ्गलं गुरुचरणप्रणामादि मौनमयुक्तभाषणत्यागः समाधिश्चित्तैकाग्र्यम् ॥ ४२ ॥ ❀ ❀ हे आर्य्याः! तेषामुभयब्रह्मविदां पादसरोजरेणुम् अधिकिरीटं किरीटोपरि आ आयुर्यावज्जीवं वहेयेति प्रार्थनायां लिङ्, पादपद्मरेणुं बिभ्रतः पापमाशु नश्यति अमुं बिभ्रतम् सर्वदा सर्वगुणाः भजन्ति आश्रयन्ति ॥ ४३ ॥ ❀ ❀ तेषां गुणानामेकदेशं गुणभजनस्य फलं च दर्शयति। शीलधनमित्येको गुणः कृतज्ञमिति द्वितीयः श्रद्धाश्रयमिति ज्ञानभक्त्यादि गुणगणमूलभूतः श्रद्धाश्रयत्वलक्षणो महागुणो दर्शितः, एवमादिगुणायनम् अनु अनुसम्पदः संवृणुते सम्यगाश्रयन्ते तस्माद् ब्रह्मकुलङ्गवां कुलं च सानुचरः अनुचरैर्वैष्णवैः सहितः जनार्दनश्च मह्यं प्रसीदतां प्रसीदतु ॥ ४४ ॥ ❀ ❀ साधुवादेन पृथुकृतेन हृष्टमनसः तुष्टुवुः स्तुतवन्तः ॥ ४५ ॥ ❀ ❀ स्तुतिमाह पुत्रेणेति षड्भिः। पुत्रेण लोकान् जयति साधयति पितेति शेषः, इति श्रुतिः सत्यवती यथार्था, यतो वेनोऽपि तमः अतरत् अतितताार। भवता पुत्रीभूतेनेति शेषः ॥ ४६ ॥ ❀ ❀ दृष्टान्ततया प्रह्लादेन हिरण्यकशिपुस्तमोऽत्यगादित्याह। हिरण्यकशिपुरिति। अत्यगादिति क्रियापदेन शास्त्रप्रसिद्धः पूर्वकल्पीयो हिरण्यकशिपुः सूच्यते ॥ ४७ ॥ ❀ ❀ शाश्वतीः समाः बहुसंवत्सरान् ॥ ४८ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

इदानीं वेदधारकत्वेन यज्ञादिप्रवृत्तेर्ब्राह्मणाधीनत्वादपि तेषां श्रेष्ठत्वेन भजनीयत्वं दर्शयन् स्वयमपि तद्भजनं प्रार्थयते-यदिति सार्द्धेन। यत्रेदं कर्म ज्ञानोपासनादिश्रेयस्साधनमादर्शे दर्पणे मुखमिवावभासते तद् ब्रह्म वेदं विरजं शुद्धं प्रमादविप्रलिप्सादिदोषवत् पुरुषाकर्तृत्वं यतः सनातनमनादिमर्थदृष्टये तदर्थज्ञानाय यत् ये ब्राह्मणाः श्रद्धादिभिर्नित्यं बिभ्रति तेषां पादसरोजरेणुं हे आर्याः पूज्या देवर्षिपित्रादयो भगवतामाशीर्वदेनाह-आयुर्यावज्जीवमधिकिरीटं किरीटस्योपरि वहेयेत्युत्तरेणान्वयः। श्रद्धा वेदवाक्ये विश्वासः। तपो ब्रह्मचर्यादि। मङ्गलमप्रशस्तवर्जनपूर्वकं प्रशस्ताचरणम्। मौनमध्ययनविरोधि वागनुच्चारणम्। संयमः इन्द्रियाणां विषयेभ्यः। समाधिश्चित्तैकाग्रता। हेति श्रद्धादीनामावश्यकत्वं सूचयति। अन्यथा 'दमेन हीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः' इति वाक्याद्वेदाध्ययनादेरशोधकत्वमशुद्धानां पादरजोवहनस्य चाप्रयोजकत्वं स्यादिति भावः। एवम्भूतानां पादरजोधारणे किं फलमित्याकाङ्क्षायामाह-यमिति, यं पादरेणुं नित्यदा शिरसि बिभ्रतः पुंसः पापमाशु नश्यति। तथाऽमुं पुरुषं श्रद्धा मैत्री दया तितिक्षादयः सर्वे गुणा भजन्ति ॥ ४१-४२ ॥ ❀ ❀ गुणवतस्तर्हि किं फलं भवतीत्यपेक्षायामाह-गुणायनमिति। शीलं सुस्वभाव एव धनवद्रक्षणीयं यस्य तम्। कृतज्ञं परकृतोपकारं जानन्तम्। वृद्धा ज्ञानवृद्धाः गुर्वादयो वयोवृद्धाः पित्रादयश्चाश्रया यस्य तम्। अनु आनुपूर्व्येण यथाधिकारं सम्पदो धर्मार्थकाममोक्षाख्याः संवृणुते सम्यग्यजति यस्मादेवं तस्मात् ब्रह्मकुलं गवां च कुलमनुचरैः स्वभक्तैः सहितो जनार्दनश्च मह्यं प्रसीदतां प्रसीदतु ॥ ४३ ॥ ❀ ❀ एवं पृथोः स्वधर्मप्रजोपदेशपूर्वकं भगवद्भक्त्यादिप्रार्थनावचनं श्रुत्वा देवादयः सभ्यास्तत्र स्वसम्मतिं द्योतयन्तस्तदनुमोदनं चक्रुरित्याह-इतीति। इत्येवं ब्रुवाणं नृपतिं पृथुं पित्रादयस्तुष्टुवुरित्यन्वयः। तत्र हेतुः-हृष्टेति। यतस्तस्य साधुवादेन समीचीनवचनेन हृष्टमनसः हर्षेऽपि हेतुमाह-साधव इति। यतः सदाचारनिष्ठत्वेन शुद्धान्तःकरणा इत्यर्थः। एवम्भूतानामेव यथार्थवचनं श्रुत्वा हर्षो भवति, न मलिनान्तःकरणानां विवेकासमर्थानां विषयपरायणानामिति भावः ॥ ४४ ॥ ❀ ❀ स्तुतिमेव दर्शयति-पुत्रेणेति षड्भिः। सुकृतिना पुत्रेण पिता उत्तमान् लोकान् जयते प्राप्नोतीति वादिनी श्रुतिः सत्यवती यथार्था। कथमेवं ज्ञायते इत्याकाङ्क्षायामाहुः-यदिति। यत् यस्माद्वेनोऽपि तमो नरकमत्यतरत् न योग्योऽपि तदतिक्रम्य प्रत्युत पृथोर्भगवद्भक्त्यादिना संसारान्मुक्तो जात इत्यर्थः। कथं वेनस्य नरकापातयोग्यता तत्राहुः-ब्रह्मेति 'न ब्रह्मदण्डदग्धस्य न भूतभयदस्य च। नारकाश्चानुगृह्णन्ति' इति वाक्यात्। ब्राह्मणशापेऽपि हेतुमाहुः-पाप इति, अतिपापीयान् यतः ॥ ४५ ॥ ❀ ❀ भगवद्भक्तः स्वकुलस्योद्धारक इति प्रसिद्धमेवेत्यभिप्रेत्याहुः-हिरण्यकशिपुरिति। हिरण्यकशिपुश्चापि भगवन्निन्दया तमो विविक्षुः स्वसूनोः प्रह्लादस्य भगवद्भजनप्रभावतस्तमोऽत्यत-

रदिति पूर्वेणैवान्वयः ॥ ४६ ॥ ❀ ❀ एवं पितृद्धारकत्वेन नृपतिं संश्लाघ्य तस्मिन्नाशिषः प्रार्थयन्ते वीरवर्य इति। हे वीरवर्य हे पृथ्व्याः पितस्त्वं शाश्वतीः समाः अनन्तान् संवत्सरान् सञ्जीव सम्यक् सुखपूर्वकं जीव। यतः पृथिव्याः वशीकरणादिनेह लोकेऽस्मद्धितं त्वया कृतमिति सूचयन्तः सम्बोधयन्ति-हे पृथिव्याः पित इति। बलवत्तरेन्द्रियग्रामविनिर्जयपूर्वकभक्तिमार्गप्रवर्तनेन अस्मत्परलोकहितं च कृतवानित्यभिप्रेत्य पुनः सम्बोधयन्ति-हे वीरवर्य इति। एतदेव स्पष्टयन्ति-'यस्येति यस्य तव सर्वलोकैकभर्तरि सर्वलोकानां मुख्यपालके अच्युते तथापि स्वरूपतो गुणतश्च च्युतिरहिते भगवति ईदृश्यपूर्वा भक्तिरस्तीति ॥ ४७ ॥ ❀ ❀ त्वया वयं कृतार्था जाता इत्याहुः-अहो इति त्रिभिः। हे पवित्रकीर्ते त्वयैव नाथेन स्वामिनाऽद्य वयं मुकुन्दनाथाः मुक्तिदाता मुकुन्दो नाथो येषां ते तथा भगवद्भक्ता जाताः। आश्चर्यमिदं यदन्यनाथत्वमेव अन्यनाथत्वे पर्यवसितमित्यभिप्रायेणाहुः-अहो इति। नान्यदस्माकं भगवद्भक्तेस्तादृशं साधनमस्तीत्यभिप्रायेण एवकारप्रयोगः। हि यस्माद्यो भवानुत्तमश्लोकाः पुण्ययशसो ब्रह्मरुद्रादयस्तेषु श्रेष्ठस्य विष्णोः कथां व्यनक्ति। स्वस्याप्तसमस्तकामस्यापि अन्येषां श्रेयस्साधने ब्राह्मणादिभजने प्रवृत्त्यर्थं तत्कर्तृत्वमेव उत्तमश्लोकतमत्वे हेतुरिति सूचयन्तो भगवन्तं विशिंषन्ति-ब्रह्मण्यदेवस्येति। एवं परमवैष्णवत्वादेव पवित्राऽन्येषां पापनिवर्त्तिका कीर्तिर्यस्य तादृशस्त्वमिति सम्बोधनाभिप्रायः ॥ ४८ ॥

## भाषानुवादः

उपनिषदोंके ज्ञानपरक वचन एकमात्र जिनमें ही गतार्थ होते हैं, वे भगवान् अनन्त इन्द्रादि यज्ञीय देवताओंके नामसे तत्त्वज्ञानियोंद्वारा ब्राह्मणोंके मुखमें श्रद्धापूर्वक हवन किये हुए पदार्थको जैसे चावसे ग्रहण करते हैं वैसे चेतनाशून्य अग्निमें होमे हुए द्रव्यको नहीं ग्रहण करते ॥ ४१ ॥ ❀ ❀ सभ्यगण! जिस प्रकार स्वच्छ दर्पणमें प्रतिबिम्बका भान होता है—उसी प्रकार जिससे इस सम्पूर्ण प्रपञ्चका ठीक-ठीक ज्ञान होता है, उस नित्य, शुद्ध और सनातन ब्रह्म ( वेद ) को जो परमार्थतत्त्वकी उपलब्धिके लिये श्रद्धा, तप, मङ्गलमय आचरण, स्वाध्यायविरोधी वार्तालापके त्याग तथा संयम और समाधिके अभ्यासद्वारा धारण करते हैं, उन ब्राह्मणोंके चरणकमलोंकी धूलिको मैं आयुपर्यन्त अपने मुकुटपर धारण करूँ; क्योंकि उसे सर्वदा सिरपर चढ़ाते रहनेसे मनुष्यके सारे पाप तत्काल नष्ट हो जाते हैं और सम्पूर्ण गुण उसकी सेवा करने लगते हैं ॥ ४२-४३ ॥ ❀ ❀ उस गुणवान्, शीलसम्पन्न, कृतज्ञ और गुरुजनोंकी सेवा करनेवाले पुरुषके पास सारी सम्पदाएँ अपने-आप आ जाती हैं। अतः मेरी तो यही अभिलाषा है कि ब्राह्मणकुल, गोवंश और भक्तोंके सहित श्रीभगवान् मुझपर सदा प्रसन्न रहें ॥ ४४ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—महाराज पृथुका यह भाषण सुनकर देवता, पितर और ब्राह्मण आदि सभी साधुजन बड़े प्रसन्न हुए और 'साधु! साधु!' यों कहकर उसकी प्रशंसा करने लगे ॥ ४५ ॥ उन्होंने कहा, 'पुत्रके द्वारा पिता पुण्यलोकोंको प्राप्त कर लेता है' यह श्रुति यथार्थ है; पापी वेन ब्राह्मणोंके शापसे मारा गया था; फिर भी उनके पुण्यबलसे उसका नरकसे निस्तार हो गया ॥ ४६ ॥ ❀ ❀ उसी प्रकार हिरण्यकशिपु भी भगवान्की निन्दा करनेके कारण नरकोंमें गिरनेवाला ही था कि अपने पुत्र प्रह्लादके प्रभावसे उन्हें पार कर गया ॥ ४७ ॥ ❀ ❀ वीरवर पृथुजी! आप तो पृथ्वीके पिता ही हैं और सब लोगोंके एकमात्र स्वामी श्रीहरिमें भी आपकी ऐसी अविचल भक्ति है; इसलिये आप अनन्त वर्षोंतक जीवित रहें ॥ ४८ ॥

अहो वयं ह्यद्य पवित्रकीर्ते त्वयैव नाथेन मुकुन्दनाथाः।
य उत्तमश्लोकतमस्य विष्णोर्ब्रह्मण्यदेवस्य कथां व्यनक्ति ॥ ४९ ॥
नात्यद्भुतमिदं नाथ तवाजीव्यानुशासनम्। प्रजानुरागो महतां प्रकृतिः करुणात्मनाम् ॥ ५० ॥
अद्य नस्तमसः पारस्त्वयोपासादितः प्रभो। भ्राम्यतां नष्टदृष्टीनां कर्मभिर्दैवसंज्ञितैः ॥ ५१ ॥
नमो विवृद्धसत्त्वाय पुरुषाय महीयसे। यो ब्रह्म क्षत्रमाविश्य बिभर्तीदं स्वतेजसा ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे एकविंशोऽध्यायः ॥ २१ ॥

अन्वयः—पवित्रकीर्ते यः उत्तमश्लोकतमस्य ब्रह्मण्यदेवस्य विष्णोः कथाम् व्यनक्ति नाथेन त्वया एव वयम् अद्य हि मुकुन्दनाथाः ॥ ४९ ॥ ❀ ❀ नाथ प्रजानुरागः करुणात्मनां महताम् प्रकृतिः तव इदम् आजीव्यानुशासनम् अत्यद्भुतम् न ॥ ५० ॥ ❀ ❀ प्रभो त्वया दैवसंज्ञितैः कर्मभिः भ्राम्यताम् नष्टदृष्टीनाम् नः अद्य तमसः पारः उपासादितः ॥ ५१ ॥ ❀ ❀ यः ब्रह्म क्षत्रम् आविश्य स्वतेजसा इदं बिभर्ति विवृद्धसत्त्वाय महीयसे पुरुषाय नमः ॥ ५२ ॥

इत्येकविंशोऽध्यायः ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

मुकुन्दनाथाः स्म त्वन्नाथत्वमेव मुकुन्दनाथत्वे पर्यवसितमित्यर्थः। तत्र हेतुर्य इति ॥ ४९ ॥ ❀ ❀ आजीविनाम् सेवकानाम् आ सम्यगनुशासनम्। प्रजास्वनुरागः प्रकृतिः स्वभावः ॥ ५० ॥ ❀ ❀ उपासादितः प्रापितः कर्मभिर्भ्राम्यताम्

॥ ५१ ॥ ❀ ❀ ईश्वरदृष्ट्या विप्रादयोऽपि प्रणमन्ति । नम इति । ब्रह्माविश्य ब्राह्मणजातिमधिष्ठाय क्षत्रं क्षत्रियं बिभर्ति क्षत्रं चाविश्य ब्रह्म बिभर्ति तदुभयं चाविश्येदं विश्वं बिभर्ति ॥ ५२ ॥

इति श्रीभा० म० चतुर्थस्कन्धे टीकायामेकविंशोऽध्यायः ॥ २१ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

हे पवित्रकीर्त्ते भगवद्भक्तमुख्यत्वाल्लोकपावनकीर्तिमांस्त्वमसीत्यभिप्रायः । "मद्भक्तियुक्तो भुवनं पुनाति" इत्येकादशे वक्ष्यमाणत्वात् । अहो भाग्यम् । इत्यर्थं इति । तत्रापि मुकुन्दावतारत्वेन सागरतरंगन्यायेन मुकुन्दाभिन्नत्वान्मुकुन्दत्वमेव मुकुन्दभक्तिविधायकत्वाद्वा तथा त्वमिति भावः । 'हरिभक्त्युपदेष्टॄणां हरिणा साम्यमिष्यते' इत्युक्तं भक्तितरंगिण्यादौ । यद्वा 'पवित्राणां पवित्रं यः' इत्युक्तेः पवित्रस्य हरेः कीर्त्तनं कीर्त्तिर्यस्य तत्सम्बुद्धौ । तथा हरिभक्तस्य तव संगाद्वयमपि हरिभक्ता जाता इति भावः ॥ ४९ ॥ ❀ ❀ नाथेति । स्वामिनामयमेव मुख्यो धर्म इत्याह महत्तां लक्षणमाह–करुणात्मनि येषां तेषाम् ॥ ५० ॥ ❀ ❀ 'तमोऽज्ञानमिहोच्यते' इत्युक्तेस्तमसोऽज्ञानस्य तत्कार्यीभूतसंसारस्य पारः 'परमात्मा तमसः परस्तात्' इति श्रुतेः । नष्टदृष्टीनां नष्टज्ञानानाम् । प्रभो इति । प्रभुत्वादेव त्वया संसारो दर्शितस्त्वेतरस्यात्र सामर्थ्यं नास्तीति भावः ॥ ५१ ॥ ❀ ❀ यो ब्रह्म ब्राह्मणजातिं क्षत्रं क्षत्रियजातिमाविश्य धृत्वेदं विश्वं पाति तस्मा इति योजना । अत्र ब्रह्मक्षत्रशब्दौ भावनिर्देशपरौ तेन ब्राह्मणत्वं क्षत्रियत्वं च प्राप्य तत्कुलेऽवतीर्येत्यर्थः । एवं चेत्कथं नन्दगृहे भगवदवतारस्तस्य 'वैश्यवृत्तिश्चतुर्थ्येयम्' 'वयं गोवृत्तयोऽनिशम्' इति श्रीनन्दराजं श्रीकृष्णचन्द्रोक्तेर्वैश्यत्वात् इत्युक्तावुद्धारमाह न हि नन्दगृहे भगवदवतारो जातः, किं तु वसुदेवगृहेऽवतीर्य तद्द्वारा कंसच्छलनाय भगवानागत इति श्रीदशमे स्फुटतरं वक्ष्यति । एवं चेत्तर्हि कथं परमाप्तशिरोमणिना योगीन्द्रेण "नन्दस्त्वात्मज उत्पन्ने जातानन्दो महामनाः" इति मृषोक्तं न हि परमाप्तत्वोपि योगी मृषा वदति कुतो योगीन्द्रस्तत्रापि श्रीबादरायणिः । यदि श्रीनन्दगृहे भगवदवतारो नाभूत्तदा 'नन्दस्त्वात्मज आयात' इत्थमेव किं नावादीद्यतो नोक्तमतो नन्दगृहे साक्षादेव भगवानवतीर्णः कन्यया साकमिति अत एव 'अदृश्यतानुजा विष्णोः सायुधाष्टमहाभुजा' इत्युक्तम् । वस्तुतस्तु श्रीनन्दराजोपि यादवत्वात् क्षत्रिय एव "यादवानां हितार्थाय धृतोद्विप्रवरो मया" इति हरिवंशोक्तेः । एतच्चक्रवर्त्तिविश्वनाथादिभिर्बहुधोक्तं श्रीदशमेऽत उपरम्यते । यद्वा–ब्रह्मक्षत्रेतिपदं द्विजातिपरं तेन न श्रीनन्दनन्दनावतारे कोपि शंकावसर इति । यद्वा–वैश्येन सहितं क्षत्रं वैश्यक्षत्रं ब्रह्मणा सहितं वैश्यक्षत्रं ब्रह्मक्षत्रमत्र मध्यमपदलोपी समासः शाकपार्थिवादयो न केवलं कर्मधारीयाः किन्तु तत्रादिशब्दस्य व्यवस्थार्थत्वमाश्रित्य सर्वसमासजाते मध्यमपदलोपी समासो भवतीति ध्येयमिह तु तत्पुरुषस्समस्तुतः कर्मधारयविशेष एव, इत्थं प्राक्तनशाब्दिकैर्व्यवस्थापितम् । विवृद्धसत्त्वाय रजस्तमोनभिभूतशुद्धसत्त्वस्वरूपाय । यद्वा–यः पृथुरूपो भवान् क्षत्रं वेनाङ्गजातदेहमाविश्येदं ब्रह्मकुलं स्वतेजसा बिभर्ति पालयति तस्मै ॥ ५२ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे एकविंशोऽध्यायः ॥ २१ ॥

## श्रीमद्वीरराघवव्याख्या

हे पवित्रकीर्ते ! वयं त्वयैव नाथेन मुकुन्दनाथाः त्वन्नाथत्वमेवास्माकं मुकुन्दनाथत्वे पर्यवसितमित्यर्थः । कुतः यो भवान् ब्रह्मण्यदेवस्य उत्तमश्लोकस्य विष्णोः कथां व्यनक्ति प्रकाशयति ॥ ४९ ॥ ❀ ❀ नाथ ! तव आजीव्यानुशासनं राजानमाजीवन्त्युपजीव्याः तेषामस्माकम् अनुशासनमिति यदिदं नाद्भुतं, कुतः महात्मनां करुणात्मनां कृपास्वभावानां प्रजास्वनुरागः प्रकृतिः स्वभावः ॥ ५० ॥ ❀ ❀ हे प्रभो ! दैवसंज्ञितैः दैवापरपर्यायैः कर्मभिः भ्रमतां संसरताम् अत एव नष्टदृष्टीनां नोऽस्माकं अधुना त्वया तमसः नरकस्य पारस्तीरमुपासादितः प्रापितः ॥ ५१ ॥ ❀ ❀ ईश्वरदृष्ट्या प्रणमन्ति नम इति । ब्राह्मणजातिमधिष्ठाय क्षत्रं बिभर्ति क्षत्रमाविश्य ब्रह्मकुलं बिभर्ति तदुभयमाविश्य इदं विश्वं बिभर्ति तस्मै भरणोपयुक्त गुणमाह्विवृद्धसत्त्वाय रजस्तमोभ्यामनभिभूतसत्त्वप्रचुराय अत एव महीयसे परमपुरुषविभूतिभूताय तुभ्यं नमः ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवकृतभागवतचंद्रचंद्रिकाख्यायां टीकायाम् एकविंशोऽध्यायः ॥२१॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

मुकुन्दो नाथो येषां ते तथा अनेनाप्युक्तशङ्का पर्यहारि व्यनक्षि अस्माभिरपृष्टामपि कथां व्यक्तां करोषि ॥ ४९ ॥ ❀ ❀ तव भृत्यानामस्माकमनुशासनं नैकान्तनियतमित्याहुरित्याह । नात्यन्तिकमिति ॥ ५० ॥ ❀ ❀ उपासादितः प्रापितः भ्राम्यतामेकत्रावस्थानमलभमानानाम् ॥ ५१ ॥ ❀ ❀ अहो वयमित्यत्रान्तर्याम्यपेक्षयेत्युक्तं तत्तत्त्वज्ञानमेषां सिद्धमिति भावेन तत्सिद्धान्तं प्रकटयति नम इति । यो विष्णुः क्षत्रं राजकुलोत्पन्नं पृथुमाविश्येदं ब्रह्म ब्राह्मणकुलं बिभर्तीत्यन्वयः ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् एकविंशोऽध्यायः ॥ २१ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

व्यनक्षीति क्वचित्। व्यनक्षीरिति चित्सुखः ॥ ४९-५२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे एकविंशोऽध्यायः ॥ २१ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

मुकुन्दनाथा अभूम तवैव मुकुन्दत्वात् मुकुन्दभक्तिविधायकत्वाद्वेति भावः, यो भवान् ॥ ४९ ॥ ❁ ❁ आजीविनां सेवकानाम् आ सम्यगनुशासनं प्रजाद्यनुरागः प्रकृतिः स्वभावः ॥ ५०–५१ ॥ ❁ ❁ ईश्वरदृष्ट्या विप्रादयोऽपि प्रणमन्ति नम इति। ब्रह्माविश्य ब्राह्मणजातिमधिष्ठाय क्षत्रं क्षत्रियं बिभर्ति। क्षत्रमाविश्य ब्रह्म बिभर्ति। तदुभयमाविश्य इदं विश्वं बिभर्ति ॥ ५२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। चतुर्थे एकविंशोऽयं सङ्गतः सङ्गतः सताम् ॥ २१ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

हे पवित्रकीर्ते! त्वया नाथेन वयं मुकुन्दनाथाः स्म यतो यो भवान् विष्णोः कथां व्यनक्ति प्रकटयति ॥ ४९ ॥ ❁ ❁ हे नाथ! आजीविनां भवदाश्रितजीविकानाम् अनुशासनमिदं तव नात्यद्भुतम्, यतो महतां प्रजानुरागः प्रकृतिः स्वभाव एव ॥ ५० ॥ ❁ ❁ दैवसंज्ञितैः प्राकृतैः फलोन्मुखैः कर्मभिर्भ्राम्यतां तमसः संसारस्य पारस्त्वयोपासादितो दर्शितः ॥ ५१ ॥ ❁ ❁ हृष्टाः नमः कुर्वन्ति। यो हरिः ब्रह्म ब्राह्मणजातिं प्रविश्यात्रेयादिरूपेण क्षत्रं क्षत्रियजातिं प्रविश्य पृथ्व्यादिरूपेणेदं बिभर्ति तस्मै विवृद्धसत्त्वाय महीयसे पुरुषाय नः ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे एकविंशाध्यायार्थप्रकाशः ॥ २१ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

हे नाथ स्वस्मिन्निदमाजीविनां सेवकानां आसमन्तादनुशासनं शिक्षणं तवात्यद्भुतमत्याश्चर्यं न भवति। यतः अज्ञानाम-सन्मार्गान्निवर्त्य शिक्षया सन्मार्गे प्रवर्त्तनं तेष्वनुरागेण भवति स तु प्रजास्वनुरागो महतां प्रकृतिः स्वतःसिद्धः स्वभावः। ननु केचिन्महान्तोऽपि राजानो नैवं शिक्षयन्तीत्याशङ्क्य महत्त्वेन स्वाभिप्रेतानां लक्षणमाहुः—करुणात्मनामिति। करुणः कृपायुक्तः आत्माऽन्तःकरणं येषां तेषाम् ॥ ४९ ॥ ❁ ❁ नष्टदृष्टीनामज्ञानेनावृतविवेकज्ञानानामत एव दैवसञ्ज्ञितैः प्रारब्धनामकैः कर्मभिः संसारे देवतिर्यगादियोनिषु भ्राम्यतां नोऽस्माकमद्य त्वया तमसः अज्ञानस्य पारः उपासादितः प्रापितः भगवत्तत्त्वो-पदेशेन अज्ञानं निवर्त्तितमित्यर्थः। हे प्रभो इति सम्बोधनेनालौकिकं तवेदं सामर्थ्यं न वयं त्वां स्तोतुं शक्ता इति सूच-यन्ति ॥ ५० ॥ ❁ ❁ ज्ञाततत्त्वं भगवन्तं यथाज्ञानं प्रणमति—नम इति। यो ब्रह्म ब्राह्मणं क्षत्रियं चाविश्य स्वतेजसा यथाक्रमेण वेदस्मृत्याद्याचारप्रवर्त्तनेन जीविकासम्पादनापद्रक्षणादिना चोभयलोकहिताचरणेनेदं विश्वं बिभर्त्ति पालयति तस्मै महीयसे पुरुषाय पुरुषोत्तमाय नम इत्यन्वयः। पुरुषोत्तमत्वे हेतुः—विवृद्धसत्वायेति ॥ ५१ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे कामनिरूपणे। एकविंशो गतो वृत्तिं राजधर्मादिरूपकः ॥ ३ ॥

### भाषानुवादः

आपका सुयश बड़ा पवित्र है; आप उदारकीर्ति ब्रह्मण्यदेव श्रीहरिकी कथाओंका प्रचार करते हैं। हमारा बड़ा सौभाग्य है; आज आपको अपने स्वामीके रूपमें पाकर हम अपनेको भगवान्के ही राज्यमें समझते हैं ॥ ४९ ॥ ❁ ❁ स्वामिन्! अपने आश्रितोंको इस प्रकारका श्रेष्ठ उपदेश देना आपके लिये कोई आश्चर्यकी बात नहीं है; क्योंकि अपनी प्रजाके ऊपर प्रेम रखना तो करुणामय महापुरुषोंका स्वभाव ही होता है ॥ ५० ॥ ❁ ❁ हमलोग प्रारब्धवश विवेकहीन होकर संसारारण्यमें भटक रहे थे; सो प्रभो! आज आपने हमें उस अज्ञानान्धकारके पार पहुँचा दिया ॥ ५१ ॥ ❁ ❁ आप शुद्ध सत्त्वमय परमपुरुष हैं, जो ब्राह्मणजातिमें प्रविष्ट होकर क्षत्रियोंकी और क्षत्रियजातिमें प्रविष्ट होकर ब्राह्मणोंकी तथा दोनों जातियोंमें प्रतिष्ठित होकर सारे जगत्की रक्षा करते हैं हमारा आपको नमस्कार है ॥ ५२ ॥

इत्येकविंशोऽध्यायः ॥ २१ ॥



# अथ द्वाविंशोऽध्यायः

## मैत्रेय उवाच

जनेषु प्रगृणत्स्वेवं पृथुं पृथुलविक्रमम् । तत्रोपजग्मुर्मुनयश्चत्वारः सूर्यवर्चसः ॥ १ ॥
तांस्तु सिद्धेश्वरान् राजा व्योम्नोऽवतरतोऽर्चिषा । लोकानपापान् कुर्वत्या सानुगोऽचष्ट लक्षितान् ॥२॥
तद्दर्शनोद्गतान् प्राणान् प्रत्यादित्सुरिवोत्थितः । ससदस्यानुगो वैन्य इन्द्रियेशो गुणानिव ॥ ३ ॥
गौरवाद्यन्त्रितः सभ्यः प्रश्रयानतकन्धरः । विधिवत्पूजयाञ्चक्रे गृहीताध्यर्हणासनान् ॥ ४ ॥
तत्पादशौचसलिलैर्मार्जितालकबन्धनः । तत्र शीलवतां वृत्तमाचरन्मानयन्निव ॥ ५ ॥
हाटकासन आसीनान् स्वधिष्ण्येष्विव पावकान् । श्रद्धासंयमसंयुक्तः प्रीतः प्राह भवाग्रजान् ॥६॥

## पृथुरुवाच

अहो आचरितं किं मे मङ्गलं मङ्गलायनाः । यस्य वो दर्शनं ह्यासीद् दुर्दर्शानां च योगिभिः ॥७॥
किं तस्य दुर्लभतरमिह लोके परत्र च । यस्य विप्राः प्रसीदन्ति शिवो विष्णुश्च सानुगः ॥ ८ ॥

अन्वयः—एवम् पृथुलविक्रमम् पृथुम् प्रगृणत्सु जनेषु तत्र चत्वारः सूर्यवर्चसः मुनयः उपजग्मुः ॥ १ ॥ ❀ ❀ सानुगः राजा व्योम्नः अवतरतः लोकान् अपापान् कुर्वत्या अर्चिषा लक्षितान् तान् सिद्धेश्वरान् तु अचष्ट ॥ २ ॥ ❀ ❀ ससदस्यानुगः वैन्यः तद्दर्शनोद्गतान् प्राणान् प्रत्यादित्सुः इव इन्द्रियेशः गुणान् इव उत्थितः ॥ ३ ॥ ❀ ❀ गौरवात् यन्त्रितः प्रश्रयानतकन्धरः सभ्यः गृहीताध्यर्हणासनान् विधिवत् पूजयाञ्चक्रे ॥ ४ ॥ ❀ ❀ तत्पादशौचसलिलैः मार्जितालकबन्धनः तत्र शीलवताम् वृत्तम् मानयन् इव आचरत् ॥ ५ ॥ ❀ ❀ श्रद्धासंयमसंयुक्तः प्रीतः स्वधिष्ण्येषु पावकान् इव हाटकासने आसीनान् भवाग्रजान् प्राह ॥ ६ ॥ ❀ ❀ अहो मङ्गलायना यस्य योगिभिः दुर्दर्शानाम् वः दर्शनम् आसीत् मे हि किम् मंगलम् आचरितम् ॥ ७ ॥ ❀ ❀ यस्य शिवः सानुगः विष्णुः विप्राः च प्रसीदन्ति तस्य इह लोके परत्र च दुर्लभतरम् किम् ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

द्वाविंशे तु परं ज्ञानं पृथवे हरिशासनात् । सनत्कुमारो भगवानुपादिशदितीर्यते ॥ (१) ॥

मुनयः सनकादयः ॥ १ ॥ ❀ ❀ अर्चिषा लक्षिताः सनकादय इति ज्ञापितान् । अचष्टापश्यत् ॥ २ ॥ ❀ ❀ तेषां दर्शनेनोद्गतान्प्राप्तुमिच्छुरिव । अयं भावः "ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति । प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते" इति स्मृतेः । प्राणास्तावत्तत्तेजसाक्षिप्तास्तान्प्रत्युद्गच्छन्त्यतः स्वयमनुद्गच्छतः प्राणहानिः स्यादिति भयादिव ससंभ्रमं प्रत्युद्गमं चकारेति सह सदस्यैरनुगैश्च वर्तमान इन्द्रियेशो जीवो गुणान्गन्धादीन्प्रति यथोद्गच्छतीत्यौत्सुक्ये दृष्टान्तः ॥ ३ ॥ ❀ ❀ यन्त्रितो वशीकृतः गृहीतमध्यर्हणमर्घ्यमासनं च यैस्तान् ॥ ४ ॥ ❀ ❀ मार्जितं क्षालितमलकबंधनं यस्य मानयन्निव स्वयमाचचार ॥ ५ ॥ ❀ ❀ भवस्याप्यग्रजत्वेन मान्यान् । संयमः प्रश्रयः ॥ ६ ॥ ❀ ❀ प्रीतः प्राहेत्युक्तं तदेव प्रीतिपूर्वकं वचनमाह अहो इति दशभिः । हे मंगलायनाः ! मंगलमयनं येषां ते । मया किं मंगलं पुण्यमाचरितम् । यस्य मे योगिभिरपि दुर्दर्शानां वो दर्शनमासीत् ॥ ७–८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

परं परत्वापादकम् (१) । पृथुलोधिकं विक्रमो यस्य तम् । तत्र समाजे समाजो हि स च स्वगृहे एव जातो ज्ञेयः । "एष स्वसद्मोपवने समेत्य सनत्कुमारं भगवन्तमेकम्" इत्युक्तेः ॥ १ ॥ ❀ ❀ सिद्धेश्वरान् मुनीश्वरान् "सिद्धो ना व्यासादौ

भेदे योगस्य देवयोनेश्च" इति मेदिनी ॥ २ ॥ ❀ ❀ अत्राशयमनुसंमत्याह—अयं भाव इति। आयति आगते स्थविरे वृद्धे यूनस्तरुणस्य उपलक्षणमतो युवस्थविरशब्दावल्पमहतोः, यतः प्राणहानिस्स्यादनुत्तिष्ठतोऽतो हेतोः। अत्रेदं तत्त्वं वृद्धानादरणादायुः क्षीयते तद्भयात्तदादरो विधेय इति ॥ ३-४ ॥ ❀ ❀ तेषां सनकादीनां पादावनेजनांबुभिः तत्र तदा शीलवद्भिरेवं वर्त्तितव्यमिति स्वयमाचरन्मानयन्निवात्रैवार्थे ज्ञेयः ॥ ५ ॥ ❀ ❀ हाटकासने काञ्चनपीठे "सुवर्णं हाटकं वाहं कलधौतं च कांचनम्" इति कोशात्। स्वधिष्ण्येषु कुंडेषु पावकान् सावसथ्यग्रगार्हपत्यादिवह्नित्रयान् ॥ ६ ॥ ❀ ❀ 'मंगलं भगवान्विष्णुः' इत्युक्तेर्विष्णुरेवायनं स्थानं येषां ते "हरिः शरणमेवात्र नित्यं येषां मुखे वचः" इति पाद्मोक्तेः, मंगलरूपाणां दर्शनान्ममापि मंगलं भविष्यतीति भावः। पूर्वमपि मया मंगलमवश्यमाचरितमहो तदहं न जाने संप्रत्यपि पापहानिरूपं मंगलं जातं महतां दर्शनं त्रिकालसुखदमस्तीति, एतदभिप्रेत्यैव शिशुपालवधे "हरत्यघं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः। शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेपि योग्यताम्" इति नारदं प्रति श्रीकृष्णेनोक्तम् ॥ ७ ॥ ❀ ❀ स्वस्य सर्वलब्धव्ययोग्यतां सूचयति किमिति ॥ ८ ॥

## श्रीमद्वीरराघवव्याख्या

यदुक्तं भगवता स्वेन कालेन गृहोपयातान् द्रष्टासि सिद्धानिति। कुमारागमनं तैश्च तत्त्वोपदेश इति तद्विस्तरेण वर्णयितुं कुमारागमनमाह मुनिः जनेष्विति। विपुलपराक्रमं पृथुं प्रत्येवं जनेषु प्रगृणत्सु वदत्सु सत्सु सूर्यस्येव वर्चो येषां ते चत्वारो मुनयः तत्रोपजग्मुरित्यर्थः ॥ १ ॥ ❀ ❀ लोकानपापान् कुर्वन्त्या अर्चिषा लक्षितान् सनकादय इति लक्षितान् व्योम्नः आकाशादवरोहतः तान् सिद्धेश्वरान् सानुगः सभृत्यो राजा अचष्ट अद्राक्षीत् ॥ २ ॥ ❀ ❀ तेषां दर्शनेनोद्गतान् प्राणान् पुनः प्राप्तुमिच्छुरिव। "ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आगते। प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते॥" इत्ययमर्थः सूचितः। प्राणास्तावत्तत्तेजसा क्षिप्राः प्रत्युद्गच्छन्ति स्वयमननुगच्छतः प्राणहानिः स्यादिति भयादिव ससम्भ्रमं सदस्यैरनुगैश्च यथा इन्द्रियेशः क्षेत्रज्ञः गुणान् शब्दादीनुद्गच्छतीत्यौत्सुक्ये दृष्टान्तः उत्थितः ॥ ३ ॥ ❀ ❀ गौरवात् यन्त्रितः वशीकृतः सद्यः प्रश्रयेण विनयेन नता कन्धरा यस्य सः गृहीतमभ्यर्हणम् अर्घ्यमासनं च यैस्तान् यथाविधि पूजयाञ्चक्रे ॥ ४ ॥ ❀ ❀ तत्पादानां शौचैः सलिलैर्मार्जितं क्षालितम् अलकबन्धनं केशबन्धनं यस्य शीलवतां वृत्तं मानयन्निव स्वयमाचरन् ॥ ५ ॥ ❀ ❀ हाटकासने स्वधिष्ण्ये वेदिकायां पावकानिवासीनानुपविष्टान् श्रद्धासंयमाभ्यां तद्वाक्यश्रवणत्वरातदुपयुक्तकरणनियमनाभ्यां संयुक्तः भवाग्रजान् रुद्रात्पूर्वजान्सनकादीन् प्राह ॥ ६ ॥ ❀ ❀ उक्तमेवाह अहो इति दशभिः। हे मङ्गलायनाः! मङ्गलं किं मे मया किं पुण्यम् अहो आचरितं कृतं, यतः यस्य मे योगिभिरपि दुर्दर्शानां दुःखेनापि द्रष्टुमशक्यानां वो युष्माकं दर्शनमासीत्। सुकृतमन्तरेण मादृशानां भवद्दर्शनं न संभाव्यते इत्यर्थः ॥ ७ ॥ ❀ ❀ किमस्मद्दर्शनसाध्यं तत्राह। यस्य पुंसः विप्रा भवादृशाः शिवो रुद्रो मङ्गलरूपो वा विष्णुश्च प्रसीदति तस्य इह परत्र वा लोके किं दुर्लभतरमस्ति सर्वं सुलभमेवेत्यर्थः ॥ ८ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

पृथुसनत्कुमारसंवादोपदेशेन सर्वस्माद्भिन्नमनुग्रहमन्तरेण दुर्ज्ञेयं भगवत्तत्त्वं निरूप्यतेऽस्मिन्नध्याये। तत्रादौ सनत्कुमारादिमुनीनामागतिं वक्ति जनेष्विति ॥ १ ॥ ❀ ❀ अर्चिषा लक्षितान् लक्षणतो ज्ञातानचष्ट अद्राक्षीत् ॥ २ ॥ ❀ ❀ तेषां दर्शनेनोद्गतान् प्राणान् प्रादातुमिच्छुरिव, अयं भावः "ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आगते। प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते॥" इति स्मृतेः, प्राणास्तावत् तेजसा क्षिप्रास्तान् प्रत्यागच्छन्ति, अतः स्वयमनभिगच्छतः प्राणहानिः स्यादिति भयादिव ससम्भ्रमः प्रत्युद्गमनं चकारेति, इन्द्रियेशो जीवो गुणानिन्द्रियाणीव ॥ ३-५ ॥ ❀ ❀ हाटकासने सुवर्णपीठे स्वधिष्ण्येषु स्वस्थानेषु स्थितान्, संयमः प्रश्रयः, भवाग्रजान् शिवज्येष्ठान् तृतीयस्कन्धे हरात्पूर्वजातत्वोक्तेः संसाराग्रजातत्वं तद्विरुद्धत्वादुपेक्षणीयम् ॥ ६ ॥ ❀ ❀ संसारिणां सतां संदर्शनस्य दुर्लभत्वात् अतः पूर्वाचरितं मङ्गलं ममास्तीति ध्वनयन्विस्मीकरोति। अहो इति। कृष्णे कृष्णविषये ॥ ७ ॥ ❀ ❀ नैतच्चित्रमित्याह किन्तस्येति। अनुगतेन प्राणेन सह वर्तत इति सानुगः 'कस्मिन्वहमि'ति श्रुतिः ॥ ८ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अर्चिषा कथम्भूतया लोकानपापान् कुर्वत्येति चित्सुखः। कुर्वाणानिति कश्चित् ॥ १-२ ॥ ❀ ❀ प्रत्यादित्सुरिति चित्सुखः। प्रत्यापित्सुरिति कश्चित् ॥ ३-७ ॥ ❀ ❀ किञ्च। त्वादृशाश्च विप्राः साधारणा न भवन्तीत्यर्थान्तरन्यासेन व्यनक्ति। किन्तस्येति ॥ ८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

द्वाविंशे परमं ज्ञानं ज्ञापयित्वा ततः परम् । सनत्कुमारः पृथवे शुद्धां भक्तिमुपादिशत् ॥ (१)॥

प्रगृणत्सु स्तुवत्सु । पृथौ स्वसद्मोपवनं गते चेति शेषः । तथैव भगवदुक्तेः ॥ १ ॥ ❁ ❁ अर्चिषा लक्षितान् सनकादय इति ज्ञापितान् । अचष्ट अपश्यत् ॥ २ ॥ ❁ ❁ अभ्युत्थानमुत्प्रेक्षते तेषां दर्शनेन दर्शनतेजसा उद्गतान् प्राणान् प्रतिप्राप्तुमिच्छुरिव । "ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति । प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥" इति स्मृतेरभ्यर्हितानभ्युत्थानत आयुःक्षयोक्तेः, इन्द्रियेशो जीवो गुणान् गन्धादीन् प्रतीत्यौत्सुक्ये दृष्टान्तः ॥ ३ ॥ ❁ ❁ यन्त्रितः सङ्कुचितकायिकवाचिकवृत्तिः ॥ ४ ॥ ❁ ❁ शीलवतां वृत्तमिति शीलवद्भिरेवं वर्तितव्यमिति स्वयमाचरन् मानयन्निव मनज्ञाने ॥ ५ ॥ ❁ ❁ भवस्याप्यग्रजत्वेन मान्यान् ॥ ६–८ ॥

### श्रीमच्छुकदेवकृतः सिद्धांतप्रदीपः

द्वाविंशे श्रीकुमारा भगवत्परस्य भगवत्प्राप्तिं तद्विमुखस्य संसारमुक्तवन्त इत्याह । जनेष्विति । प्रगृणत्सु स्तुवत्सु ॥ १ ॥ ❁ ❁ लोकान् अपापान् कुर्वत्या अर्चिषा दीप्त्या लक्षितान् सनकादय इति ज्ञापितान् सानुगः राजा पृथुः अचष्ट अपश्यत् ॥ २ ॥ ❁ ❁ "ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आगते । प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥" इति स्मृतेः श्रेष्ठे आगते इतरस्य प्रत्युत्थानाभिवादाभावे आयुर्हानिर्भवेत्तद्रक्षार्थं प्रत्युत्थानादिकं कृतवानित्याह तदिति । तेषां दर्शनेनोद्गतान् प्राणान् प्रत्यादित्सुः प्राप्तुमिच्छुरिवोत्थितः इन्द्रियेशो जितेन्द्रियगुणान् तपोव्रतहरिगाथाश्रवणादीन् प्रति जीवो गन्धादीन् प्रति वा यथोत्थाय गच्छतीत्यौत्सुक्ये दृष्टान्तः । उत्थित इत्यादिनात्र "चक्षुर्दद्यान्मनो दद्याद्वाचं दद्यात्सुसूनृताम् । उत्थाय चासनं दद्यात्स यज्ञः पञ्चदक्षिणः" इति पञ्चदक्षिणो यज्ञोऽपि दर्शितः ॥ ३ ॥ ❁ ❁ यन्त्रितस्तदधीनताङ्गतः प्रश्रयेण विनयेनानता कन्धरा यस्य सः गृहीतमभ्यर्हणमर्घ्यमासनं च यैस्तान् विधिवत्पूजयाञ्चक्रे ॥ ४ ॥ ❁ ❁ तेषां चरणक्षालनजलैः मार्जितमार्द्रीकृतमलकबन्धनं यस्य सः शीलवतां वृत्तं विनयप्रार्थनादिरूपं मानयन् इव अङ्गीकुर्वन्निव स्वयमाचरत् ॥ ५ ॥ ❁ ❁ हाटकासने सुवर्णासने आसीनान् भवाग्रजान् शिवपूर्वजान् शिवादीनामपि पूज्यानित्यर्थः ॥ ६ ॥ ❁ ❁ मङ्गलं परं ब्रह्म अयनमाश्रयो येषां मङ्गलमयनं स्थानं वा येषां तत्सम्बोधने हे मङ्गलायनाः ! मे मया किं मङ्गलं शुभमाचरितम् ॥ ७–८ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

भगवद्भक्तियुक्तस्य द्वाविंशे हरिनोदितात् । पृथोः सनत्कुमाराच्च ज्ञानप्राप्तिर्निरूप्यते ॥ (१)॥

पूर्वं भगवता सङ्क्षेपत उपदिष्टमपि तत्त्वज्ञानं तदाज्ञया राज्यप्रवृत्तौ तदिच्छयैव प्रतिबद्धमासीत् । अन्यथा तदानीमेव विरक्ततया मोक्षसाधने प्रवृत्तौ प्रजापालनाद्यभावेऽवतारवैयर्थ्यं स्यादिदानीं तु कार्यस्य सम्पादितत्वात्तस्य मोक्षसाधने प्रवृत्त्यर्थं ज्ञानदार्ढ्याय भगवत्प्रेरिताः सनत्कुमारादय आजग्मुरित्याह—जनेष्विति । जनेष्वेवं पृथुं प्रगृणत्सु स्तुवत्सु सत्सु सूर्यवत् वर्चो दीप्तिर्येषां ते चत्वारो मुनयः सनत्कुमारादयः तत्रोपजग्मुरित्यन्वयः । स्तुतिहेतुत्वेन विशिनष्टि—पृथुलविक्रममिति ॥ १ ॥ ❁ ❁ तांस्त्वर्चिषा स्वप्रकाशेन लक्षितान् सनत्कुमारादय इति ज्ञापितान् व्योम्नः आकाशादवतरतः सानुगो राजा अचष्ट अपश्यदित्यन्वयः । तेषां ज्ञानप्रदाने सामर्थ्यं द्योतयन् विशिनष्टि—सिद्धेश्वरानिति । ननु तथापि ज्ञानप्रतिबन्धकपापसत्त्वे कथं तदुदयः स्यादित्याशङ्क्य तत्सान्निध्यादेव तन्निवृत्तेरित्याशयेनाह—लोकानपापान् कुर्वत्याऽर्चिषेति ॥ २ ॥ ❁ ❁ तद्दर्शनानन्तरं राज्ञा कृतं सत्कारं दर्शयति—तद्दर्शनेति चतुर्भिः । तेषां सनत्कुमारादीनां दर्शनेनोद्गतान् निर्गतान् प्राणान् प्रत्यादित्सुरिव प्रत्यादातुमिच्छुरिव ससदस्यानुगः सदस्यैः अनुगैश्च अमात्यादिभिः सह वैन्यः पृथुरुत्थित इत्यन्वयः । 'ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविरः आगते । प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते' इति स्मृतेर्महतामागमने तत्तेजसाऽऽक्षिप्ताः प्राणास्तावत्तान् प्रत्युद्गच्छन्त्यतः प्राणहानिः स्यादिति तान् प्रत्यादातुं विद्वांसः प्रत्युत्थानाभिवादादि कुर्वन्तीति पृथुरपि तथा चकारेति भावः । अत्यौत्सुक्येन प्रत्युत्थाने दृष्टान्तमाह—इन्द्रियेश इति । इन्द्रियाणामीशो मनो यथा गुणान् प्रत्युद्गच्छति तथेत्यर्थः ॥ ३ ॥ ❁ ❁ तेषां गौरवात् यन्त्रितो वशीभूतः । तत्र हेतुः—सभ्य इति, उत्तममध्यमाधमत्वादिविवेकवत्त्वेन सदाचाराभिज्ञत्वेन च यतः सभार्हं इत्यर्थः । अत एव प्रश्रयेण नम्रीभावेन आनता कन्धरा यस्य यथाभूतः सन् राजा गृहीतमर्घ्यर्हणमर्घ्यमासनं च यैस्तान् सनत्कुमारादीन् विधिवत् यथाविधि पूजयाञ्चक्र इत्यन्वयः ॥ ४ ॥ ❁ ❁ तेषां सनत्कुमारादीनां पादशौचसलिलैश्चरणक्षालनजलैर्मार्जितं क्षालितमलकबन्धनं केशबन्धनं यस्य तथाभूतः सन् तत्र सभायां शीलवतां सुस्वभावानां सदाचाराणां वृत्तमाचारमेव बहुमानयन् स्वयं तत् आ समन्तात् आचरदित्यन्वयः । इवशब्द एवार्थः । यद्वा तथाभूतः संस्तत्र तान् बहुमानयन् शीलवतां वृत्तमेव स्वयमाचरदित्-

न्वयः ॥ ५ ॥ ❁ ❁ श्रद्धा तेषु महत्त्वेन विश्वासः, संयमोऽन्तःकरणस्य बहिरिन्द्रियाणां च नियमनं ताभ्यां संयुक्तः। यतस्तदागमनदर्शनादिना प्रीतस्तान् हाटकस्य सुवर्णस्य आसने आसीनान् प्राहेत्यन्वयः। तदागमनेन प्रीतौ तेषामतितेजस्वित्वं हेतुं दृष्टान्तेनाह—स्वेति। स्वधिष्ण्येषु वेदीषु पावकानिवासने आसीनान्। एवं तेषां अतितेजस्वित्वं कुत इत्यपेक्षायां भगवदवतारत्वात् पूर्वजत्वाच्चेत्यभिप्रेत्याह—भवाग्रजानिति। भवादप्यग्रे जातानित्यर्थः॥ ६ ॥ ❁ ❁ तदेव प्रीतिपूर्वकं वचनं दर्शयति—अहो इति दशभिः। मङ्गलं सर्वाशुभनिवृत्तिपूर्वकशुभजनकं अयनमागतं येषां तेषां सम्बोधनं हे मङ्गलायनाः ! मे मया मङ्गलं शुभं भगवदाराधनं किमाचरितं कृतम्! कथमेवं ज्ञायत इत्याकाङ्क्षायामाह—यस्येति। हि यस्मात् यस्य मम योगिभिरपि दुर्दर्शानां वो युष्माकं दर्शनं चकारात् पूजानमस्कारपादस्पर्शादिकं च आसीदित्यन्वयः। अद्य ममालभ्यलाभो जात इत्याश्चर्यमित्याह—अहो इति॥ ८ ॥ ❁ ❁ अत इदानीमहं कृतार्थो जात इति द्योतयन्नाह—किमिति। यस्य पुरुषस्य विप्राः भवत्सदृशा महत्तमाः प्रसीदन्ति तथा सानुगः अनुगैः स्वपार्षदैः स्वभक्तैश्च सहितः शिवो विष्णुर्वा प्रसीदति तस्येहास्मिन् भूलोके परत्र स्वर्गादौ च किं दुर्लभतरमत्यलभ्यमित्यन्वयः॥ ८ ॥

## भाषानुवादः

### महाराज पृथुको सनकादिका उपदेश

श्रीमैत्रेयजी कहते हैं—जिस समय प्रजाजन परमपराक्रमी पृथ्वीपाल पृथुकी इस प्रकार प्रार्थना कर रहे थे, उसी समय वहाँ सूर्यके समान तेजस्वी चार मुनीश्वर आये॥ १ ॥ ❁ ❁ राजा और उनके अनुचरोंने देखा तथा पहिचान लिया कि वे सिद्धेश्वर अपनी दिव्य कान्तिसे सम्पूर्ण लोकोंको पापनिर्मुक्त करते हुए आकाशसे उतरकर आ रहे हैं॥ २ ॥ ❁ ❁ राजाके प्राण सनकादिकोंका दर्शन करते ही, जैसे विषयी जीव विषयोंकी ओर दौड़ता है, उनकी ओर चल पड़े-मानो उन्हें रोकनेके लिये ही वे अपने सदस्यों और अनुयायियोंके साथ एकाएक उठकर खड़े हो गये॥ ३ ॥ ❁ ❁ जब वे मुनिगण अर्घ्य स्वीकारकर आसनपर विराज गये, तब शिष्टाग्रणी पृथुने उनके गौरवसे प्रभावित हो विनयवश गरदन झुकाये हुए उनकी विधिवत् पूजा की॥ ४ ॥ ❁ ❁ फिर उनके चरणोदकको अपने सिरके बालोंपर छिड़का। इस प्रकार शिष्टजनोचित आचारका आदर तथा पालन करके उन्होंने यही दिखाया कि सभी सत्पुरुषोंको ऐसा व्यवहार करना चाहिये॥ ५ ॥ ❁ ❁ सनकादि मुनीश्वर भगवान् शङ्करके भी अग्रज हैं। सोनेके सिंहासनपर वे ऐसे सुशोभित हुए, जैसे अपने-अपने स्थानोंपर अग्निदेवता। महाराज पृथुने बड़ी श्रद्धा और संयम के साथ प्रेमपूर्वक उनसे कहा॥ ६ ॥ ❁ ❁ पृथुजीने कहा—मङ्गलमूर्ति मुनीश्वरो ! आपके दर्शन तो योगियोंको भी दुर्लभ हैं; मुझसे ऐसा क्या पुण्य बना जिससे स्वतः आपका दर्शन प्राप्त हुआ॥ ७ ॥ ❁ ❁ जिसपर ब्राह्मण अथवा अनुचरोंके सहित श्रीशङ्कर या विष्णुभगवान् प्रसन्न हों, उसके लिये इहलोक और परलोकमें कौन-सी वस्तु दुर्लभ है॥ ८ ॥

नैव लक्ष्यते लोको लोकान् पर्यटतोऽपि यान्। यथा सर्वदृशं सर्व आत्मानं येऽस्य हेतवः॥ ९ ॥
अधना[1] अपि ते धन्याः साधवो गृहमेधिनः। यद्गृहा ह्यर्हवर्याम्बुतृणभूमीश्वरावराः[2]॥ १० ॥
व्यालालयद्रुमा वै[3] तेऽप्यरिक्ताखिलसम्पदः। यद्गृहास्तीर्थपादीयपादतीर्थविवर्जिताः॥ ११ ॥
स्वागतं वो द्विजश्रेष्ठा यद्व्रतानि मुमुक्षवः। चरन्ति श्रद्धया धीरा बाला एव बृहन्ति च[4]॥ १२ ॥
कच्चिन्नः कुशलं नाथ इन्द्रियार्थार्थवेदिनाम्। व्यसनावाप एतस्मिन् पतितानां स्वकर्मभिः॥ १३ ॥
भवत्सु कुशलप्रश्न आत्मारामेषु नेष्यते। कुशलाकुशला यत्र न सन्ति मतिवृत्तयः॥ १४ ॥
तदहं कृतविश्रम्भः सुहृदो वस्तपस्विनाम्। संपृच्छे भव एतस्मिन् क्षेमः केनाञ्जसा भवेत्॥ १५ ॥
व्यक्तमात्मवतामात्मा भगवानात्मभावनः। स्वानामनुग्रहायेमां सिद्धरूपी चरत्यजः॥ १६ ॥

अन्वयः—लोकः यान् लोकान् पर्यटतः अपि यथा ये अस्य हेतवः सर्वे सर्वदृशम् आत्मानम् न एव लक्ष्यते॥ ९ ॥ ❁ ❁ यद्गृहाः अर्हवर्याम्बुतृणभूमीश्वरावराः ते गृहमेधिनः साधवः अधनाः अपि हि धन्याः॥ १० ॥ ❁ ❁ यद्गृहाः तीर्थपादीयपादतीर्थविवर्जिताः ते अरिक्ताखिलसम्पदः अपि वै व्यालालयद्रुमाः॥ ११ ॥ ❁ ❁ द्विजश्रेष्ठाः वः स्वागतम् यत् च मुमुक्षवः धीराः बालाः एव श्रद्धया बृहन्ति व्रतानि चरन्ति॥ १२ ॥ ❁ ❁ नाथाः इन्द्रियार्थार्थवेदिनाम् व्यसना-

---

१. प्रा० पा०—अधन्या। २. प्रा० पा०—श्वराश्वराः। ३. प्रा० पा०—द्रुमाश्चैते। ४. प्रा० पा०—वै।

वापे एतस्मिन् स्वकर्मभिः पतितानाम् नः कुशलं कच्चित् ॥ १३ ॥ ❀ ❀ यत्र कुशलाकुशलाः मतिवृत्तयः न सन्ति आत्मारामेषु भवत्सु कुशलप्रश्नः न इष्यते ॥ १४ ॥ ❀ ❀ तपस्विनाम् सुहृदः तत् अहम् कृतविश्रम्भः वः एतस्मिन् भवे अंजसा केन क्षेमः भवेत् सम्पृच्छे ॥ १५ ॥ ❀ ❀ आत्मवताम् आत्मा आत्मभावनः अजः भगवान् स्वानाम् अनुग्रहाय सिद्धरूपी इमाम् चरति व्यक्तम् ॥ १६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

दुर्दर्शत्वमेवाह नैवेति । सर्वदृशमात्मानं यथा सर्वे दृश्या न लक्षयन्ते येऽस्य विश्वस्य हेतवो महदादयो मन्वादयो वा । यद्वा कथंभूतान् । येऽस्य सर्वदृगात्मदर्शनस्य हेतवस्तान् ॥ ९ ॥ ❀ ❀ येषां साधूनां गृहा अर्हाणां पूज्यानां वर्या वरणीयाः स्वीकारार्हा अंब्वादयो येषु तादृशाः अंबु च तृणं च भूमिश्च ईश्वरो गृहस्वामी चावरा भृत्यादयश्च ॥ १० ॥ ❀ ❀ व्यालानां दुष्टसर्पाणामालया द्रुमा एव ते अरिक्ताः पूर्णा अखिलाः संपदो येषु तादृशा अपि यद्गृहा ये गृहास्तीर्थपादीया वैष्णवास्तेषां पादतीर्थेन विवर्जिताः ॥ ११ ॥ ❀ ❀ स्वागतं भद्रमागमनं जातम् । यद्यस्माद्बाला एव भवन्तो बृहन्ति व्रतानि चरन्ति । यद्वा येषां वो व्रतान्यन्ये बालाश्चरन्ति ॥ १२ ॥ ❀ ❀ इन्द्रियार्था विषयास्तानेवार्थं पुरुषार्थं ये विदन्ति तेषां नः कुशलं कच्चित् । व्यसनान्यवाप्यन्ते यस्मिंस्तस्मिन्संसारे ॥ १३ ॥ ❀ ❀ नन्वभ्यागतानां कुशलं पृच्छ्यते लोके न त्वात्मनस्तत्राह । भवत्स्विति ॥ १४ ॥ ❀ ❀ तत्तस्मात्कृतविश्वासः संस्तपस्विनां संतप्तानां सुहृदो वो युष्मान्पृच्छामि ॥ १५ ॥ ❀ ❀ न खल्वन्ययोगितुल्या यूयं किं तु साक्षाद्भगवानेवेत्याह । व्यक्तं निश्चितमात्मवतां धीराणामात्मा तेष्वात्मत्वेन प्रकाशमानः आत्मानं भावयति प्रकाशयतीति तथा अजः श्रीनारायण इमां पृथ्वीं चरति ॥ १६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

महदादीनां जगद्धेतुत्वस्य विज्ञेयत्वेप्यल्पज्ञबुद्ध्यारोहो न भवति तदर्थमाह—मन्वादयो वेति । अत्राप्रकृतं महन्मन्वादिग्रहणं यानिति पदापेक्षितसनकादिग्रहणस्यैवौचित्यादत आह—यद्वेति । अस्येति पदादीनामव्यवहितपरामर्शित्वेनात्मग्रहणायेति आत्मपदस्याप्यत्र तात्पर्यानुपपत्त्यात्मदर्शने लक्षणा कार्या "आत्मैवेदमग्र आसीत्" इति श्रुतेरात्मन एव सर्वहेतुत्वमवसीयते तथा "अहं सर्वस्य प्रभवः" इति श्रीगीतोक्तेश्च ॥ ९ ॥ ❀ ❀ अत्रेदं तत्त्वं भक्ष्यद्रव्याभावे पानार्थेम्बु च तदभावे शय्यार्थं तृणानि च तदभावे आसनार्थं परिष्कृतभूमिश्च तदभावे प्रीतिवागञ्जल्याद्यर्थं गृहस्वामी च तस्याप्यभावे अवराः साश्रुप्रणिपाताद्यर्थं तत्पुत्रकलत्रादयश्च येष्वर्हाणां वरणीयास्त इत्यर्थः । साधवः सदाचारनिष्ठाः ॥१०॥ ❀ ❀ तदेवं ब्राह्मणत्वेन स्तुत्वा वैष्णवत्वेन स्तौति । तत्रैव मुख्यवैष्णवपदस्य स्थितेस्तदुक्तमादिपुराणे "ब्राह्मणा वैष्णवा मुख्या यतो विष्णुमुखोद्भवाः । अंगेषु देवताः सर्वा मुखे वेदा व्यवस्थिताः ॥ विष्णुना समतां नीतास्ते ज्ञेया वैष्णवोत्तमाः । विप्रैः कृतास्त्रयो वर्णा वैष्णवाः संभवन्ति हि" इति विप्रैः कृता इत्युक्तेर्ब्राह्मणस्यैवान्यवर्णानां यथाधिकारं वैष्णवमन्त्रदीक्षाकरणेधिकारः । त्रयो वर्णा विप्रेतरा ये तेषां वैष्णवत्वेऽधिकारो न तु दीक्षादान इत्यन्यत्र विस्तरः । व्यालानां व्यालवत्कटुवाग्विषवर्षिणां पुत्रकलत्रादीनामालयो येषु तथाभूता द्रुमा एव ते गृहस्था येषां छायापि कैरपि भीत्या न स्पृश्यत इति भावः । वैपदमेवार्थे पादतीर्थेन पादक्षालनोदकेन ॥ ११ ॥ ❀ ❀ द्विजश्रेष्ठा इत्युक्तेर्वैष्णवे जातिबुद्धिर्न कर्त्तव्येत्युक्तवन्तः परास्ताः । ननु तेषां बालवत्प्रतीयमानत्वेऽपि न बालशब्दप्रयोग उचितः "पञ्चषड्ढायनार्भाभाः पूर्वेषामपि पूर्वजाः" इत्युक्तेरत आह—यद्वेति । अन्ये बाला अज्ञा मुमुक्षवो मुक्तिकामा यद्व्रतानीति । धीरा धैर्य्यवन्तः सन्तः बृहन्ति यावदायुर्नैष्ठिकत्वान्महान्ति ॥ १२ ॥ ❀ ❀ तेषां सर्वदानन्दमग्नत्वमालक्ष्य कुशलप्रश्नानौचित्यात्स्वकुशलमेव पृच्छति व्यसनानि विपद उप्यन्ते बीजवन्निक्षिप्यन्तेऽस्मिन्निति "व्यसनं तु शुभे सक्तौ पानस्त्रीमृगयादिषु । दैवानिष्टफलेऽपाये विपत्तौ निष्फलोद्यमे" इति मेदिनी ॥ १३ ॥ ❀ ❀ अत्राक्षिपति—नन्विति । अभ्यागतेषु कुशलप्रश्नस्योचितत्वेपि भवत्सु स नोचितस्तत्र हेतुः—आत्मारामेष्विति । आत्मना भगवता सह रमणं क्रीडा येषां तेषु । यद्वा सप्तम्यन्तेन समासः । यत्र येषु 'बुद्धेरात्मा महान्परः' इति श्रुतेरात्मारामेषु बुद्धेः परत्रात्मनि रममाणेषु बुद्धिवृत्तिरूपकुशलानि धर्माणां सम्बन्धो न सम्भवतीति भावः ॥ १४ ॥ ❀ ❀ किञ्च युष्मदागमनमस्मदुद्धारप्रयोजनकमेव बुद्ध्यते तस्मादात्मकुशलप्रश्न एव मम सम्प्रति युज्यते इत्यत आह—तदहमिति । यतो यूयं तपस्विनामत्र संसारे सुहृदस्तत्तस्माद्धेतोः केन साधनेनांजसा 'झटित्यञ्जसाह्नाय' इत्यमरः ॥ १५ ॥ ❀ ❀ तेषां प्रकर्षमाह—न खल्विति । निश्चितं स्पष्टं 'व्यक्तं स्पष्टे बुधे तु ना' इत्यभिधानात् । यद्वात्मा स्वयमेवात्मत्वेन वर्त्तते येषां ते आत्मवन्त आत्मज्ञानिनः तेषामात्मेव प्रीतिविषयीभूत इत्यर्थः । स्वानां स्वेषां सर्वकार्याभावो गणकार्यस्यानित्यत्वादित्यर्थः ॥ १६–१७ ॥

### श्रीमद्वीरराघवव्याख्या

दुर्दर्शत्वमेवाह नैवेति । लोकान् पर्यटतोऽपि यान् युष्मान् लोको नैव लक्षयते न पश्यति यथा सर्वदृशं सर्वज्ञमात्मानम् अस्य विश्वस्य हेतुभूताः ब्रह्मादयः सर्वेऽपि न लक्षयन्ते तथेत्यर्थः । अस्य हेतव इति पाठे तु—हेतवः ब्रह्मादयः सर्वे यस्य यत्संबन्धिनः

यस्य शेषभूताः तं सर्वज्ञमात्मानं यथा न लक्षयन्ति तथेत्यर्थः ॥ ९ ॥ ❀ ❀ तद्दर्शनेन स्वस्य धन्यतामाविष्करोति अधना इति। गृहमेधिनः अधन्या अपि यदि साधवः तर्हि ते धन्या एव हि यतः येषां गृहमेधिनां साधूनां गृहाः अर्हाः पूज्या भवादृशैस्तैर्वर्या वरणीयाः स्वीकार्याः अम्बु जलं तृणं भूमिः ईश्वरो गृहस्वामी अपरे गृहवासिनो भृत्यादयश्च येषु तथाभूता भवन्ति ॥ १० ॥ ❀ ❀ एवमन्वयमुखेन धन्यतामाविष्कृत्य व्यतिरेकमुखेनाप्याविष्करोति व्यालेति। अरिक्ताखिलसम्पदः अरिक्ताः पूर्णा अखिलाः सम्पदः येषु तादृशा अपि यद्गृहा गृहमेधिनां गृहाः यदि तीर्थपाद्भगवान् तत्संबन्धिनस्तीर्थपादीया भागवतास्तेषां पादतीर्थेन विवर्जितास्तर्हि एते गृहाः व्यालालयद्रुमाः सर्पावासचन्दनद्रुमप्रख्याः ॥ ११ ॥ ❀ ❀ एवमन्वयव्यतिरेकाभ्यां तदागमनेन स्वस्य धन्यतामभिधाय तेषां स्वागतप्रश्नपूर्वकं स्वाभाविकीं धन्यतामाह स्वागतमिति। हे द्विजश्रेष्ठाः! वः युष्माभिः स्वागतं कुशलमागतं किं भवतामकुशलमस्तीत्यभिप्रायः, यत् यस्मात् बाला एव भवन्तः मुमुक्षवः, अत एव धीरा जितेन्द्रियाः सन्तः हन्ति व्रतानि चरन्ति। यद्वा येषां वो व्रतानि युष्माभिर्दर्शितान्येवान्यमुमुक्षवः बृहन्ति दीर्घकालनिर्वृत्त्या निवृत्तिधर्मरूपव्रतानि चरन्ति ॥ १२ ॥ ❀ ❀ काकाभिप्रेतकुशलाभावमेव व्यङ्क्तुं स्वस्य तावत्कुशलाभावं व्यनक्ति कच्चिदिति। किमस्माकं कुशलमस्तीत्यर्थः, कथंभूतानां हे नाथाः! इन्द्रियार्थान् शब्दादीनेवार्थान् पुरुषार्थरूपान् विन्दन्तीति तथा तेषामत एव यस्मिन्नुप्यन्ते बीजानि स आवापः क्षेत्रं व्यसनानामावापः संसारः तस्मिन् स्वकर्मभिः पतितानाम् ॥ १३ ॥ ❀ ❀ नन्वभ्यागततानां नः कुशलं किं न पृच्छसि तत्राह। भवत्सु कुशलप्रश्नः नेष्यते, तत्र हेतुः आत्मारामेषु ब्रह्मात्मकस्वात्मानुभवैकपरेषु, ननु आत्मारामाणां कदाचिदकुशलसंभावनया कुशलप्रश्न इष्यतां तत्राह। यत्र आत्मारामेषु कुशलाकुशलरूपा मतिवृत्तय एव न सन्ति कुशलाकुशलविषयचिन्तनरूपमतिवृत्तयो हि सङ्गकामक्रोधसंमोहादिजननद्वारा सुखदुःखादिहेतवः, अतस्तासामेवाभावात्कुतो भवत्स्वकुशलसम्भावनेत्यर्थः। मतिवृत्तीनां च सङ्गादिद्वारा कुशलनिमित्तत्वं भगवता गीतम् "ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते। सङ्गात्संजायते कामः कामात् क्रोधोऽभिजायते॥ क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः। स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति" ॥ १४ ॥ ❀ ❀ तत्तस्मात् अहं कृतविश्वासः सन् तपस्विनां तापत्रयातुराणामस्माकं सुहृदो युष्मान् एतस्मिन्संसारे वर्तमानस्य केन हेतुना क्षेमः सुखं मोक्ष इति यावत् अञ्जसा सुखेन भवेदिति पृच्छामि ॥ १५ ॥ ❀ ❀ स्वभक्ताननुग्रहीतुं भगवानेव भवादृशरूपश्चरतीत्याह व्यक्तमिति। आत्मवतां 'प्रशंसायां मतुप्' प्रशस्तचित्तानां ज्ञानिनामात्मा निरतिशयप्रीतिविषयः प्रीतिमांश्च, तथाहि गीतम् "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इति। आत्मशब्देनात्मत्वप्रयुक्तम् तदुभयं विवक्षितम्। आत्मा हि निरतिशयप्रीतिविषयः स्वशरीरे प्रीतिमांश्च आत्मभावनः आत्मतः जीवान् भावयति स्वविषयज्ञानप्रदानादिना सत्तावतः करोतीत्यात्मभावनः स्वपरयाथात्म्यज्ञानविधुरा हि जीवाः स्थावरपर्यन्तजन्मभिरसत्प्रायास्तानात्मवतः करोतीत्यर्थः। सिद्धाः ज्ञानिनः तद्रूपः, तथाच गीतं भगवता "ज्ञानी त्वात्मैव मे मतम्" इति, अजो भगवान्स्वानां भक्तानामनुग्रहाय स्वाननुग्रहीतुमिमां पृथिवीं चरति व्यक्तं निश्चितम् ॥ १६ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

दुर्दर्शत्वमधिकदृष्टान्तत्वेनोपपादयति नैवेति। लक्ष्यते लक्षणवत्तयापि भवद्विषयं ज्ञानं नाप्नोति असम्भवपरिहाराय पर्यटत इति, सर्वो जनः सर्वदृशं साक्षित्वेन पश्यन्तमात्मानं परमात्मानं यथा न जानाति ब्रह्मादीनां तद्विषयज्ञानसम्भवात् कथं सर्व इति सर्वं कवलीक्रियते इत्यत उक्तं य इति। ये च ब्रह्मादयोऽस्य जगतो हेतवः कारणभूतास्तेऽपि न विदन्तीति। अत्रेदं तात्पर्यं यथात्मानं स्वं हरिर्वेत्ति तथा न जानन्तीति तदुक्तं "सर्वज्ञाश्च विरिञ्चाद्या न जानीयुर्हरिं परम्। हेतवो जगतोऽप्यस्य यथासौ वेद केशवः" इति। अनेन वेदाहमेतमित्यादेर्गतिरप्युक्ता भवति, दुष्टजनव्यामोहनाय वा तद्विषयज्ञानस्य दुःसाध्यत्वज्ञापनाय वाधिकदृष्टान्तप्रयोजनं, किञ्च जगत्कारणतामाददानोऽयं हेतुशब्दो विरिञ्चादीनां सार्वज्ञ्यमप्याक्षिपन्न सर्वात्मना ज्ञानाभावो युक्त इति श्रीनारायणवत्तद्विषयज्ञानाभाव एव उच्यत इति व्यनक्तीति ॥ ९ ॥ ❀ ❀ भवतां पुरुषेष्वग्राहकत्वे भगवद्भक्तिसामग्रीमत्त्वमेव प्रयोजकं न तु धनिकत्वादिकमित्याशयेनाह अधना अपीति। अर्हवर्याः पूज्यश्रेष्ठास्तेभ्यो दत्तमम्बु च तृणं च भूमिश्च सुवाचश्चार्हवर्याम्बुतृणभूमिसुवाचस्ता धारयन्ति बिभ्रतीति तथोक्ताः ॥ १० ॥ ❀ ❀ तीर्थपादो विष्णुस्तस्य भक्तास्तीर्थपादीयास्तेषां पादतीर्थवर्जिताः सम्पर्करहिताः, हिशब्दो यथाशब्दार्थे, यथा व्यालालया दुष्टसर्पाश्रया वृक्षा वर्ज्यास्तथा तादृग्गृहाः सम्पद्युक्तत्वेऽपि वर्ज्या इत्यर्थः ॥ ११ ॥ ❀ ❀ किं बहुजल्पेनेति भावेन तदागमनं लालयति स्वागतमिति। वो युष्माकं स्वागमनं सुष्ठु अस्माकं सुखहेतुत्वादिति शेषः, कथमस्मदागमनं सुखहेतुरत्राह यद्व्रतानीति। मुमुक्षवो धीराः श्रद्धया यद्व्रतानि चरन्ति ते यूयं वयोदर्शनेन बाला अपि बृहन्ति ज्ञानेन वर्धन्ते ज्ञानवृद्धत्वादागमनं भद्रमित्यर्थः ॥ १२ ॥ ❀ ❀ राजा स्वस्वागतवचनानन्तरं पृथुं प्रति तुभ्यं च स्वस्ति किमिति मुनिवचनात्पूर्वं स्वकुशलमाक्षिपति कच्चिदिति। व्यसनबीजान्युप्यन्तेऽस्मिन्निति व्यसनावापः तस्मिन्नेतस्मिन्संसारे स्वकृतकर्मभिः पतितानां नः कुशलं कच्चित्किं न किमपीत्यन्वयः। आत्मनो वानेन कुशलं पृच्छति अस्माकं कुशलं भविष्यति कच्चिदिति ॥ १३ ॥ ❀ ❀ नन्वभ्यागतास्मत्कुशलप्रशंसामन्तरेणात्मकुशलप्रश्नः कथं सङ्गघटीतीति तत्राह भवत्स्विति। इदं कुशलमकुशलमिति मतिवृत्तयो यत्र येषु भवत्सु न सन्ति अतो भवत्सुखप्रश्नो नेष्यते, कुतः आत्मना सह आरामो रमणं क्रीडा येषां

ते तथा तेषु अतो भवत्सु कुशलप्रश्नाशाभावादौत्सुक्यादात्मकुशलप्रश्न इति भावः ॥ १४ ॥ ❀ ❀ अस्तु तर्हि तव कुशलं भविष्यतीत्यभिमतं चेद्यतो वयमकुशलाब्धिमग्नास्तस्मादेतादृशानां केन प्रकारेण कुशलं स्यादिति तं प्रकारं पृच्छामीत्याह तदहमिति। तपस्विनां सुहृदोऽत्र पूज्यान् भवे संसारे क्षेमं संसारोच्छेदलक्षणं मङ्गलमञ्जसा क्षिप्रं 'स्रागञ्झटित्यञ्जसाह्नाये'त्यमरः ॥ १५ ॥ ❀ ❀ ननु मोक्षविषयप्रश्नपरिहारो दुरवबोधोऽतोन्यं पृच्छ 'नाचिकेतो मरणं मानुप्राक्षीरि'ति श्रुतेरित्याशङ्क्य भवन्तो भगवद्विशेषसन्निधानपात्रत्वात्पृष्टार्थव्याख्यानसमर्था इत्यभिप्रेत्याह व्यक्तमिति। 'व्यक्तं स्पष्टे बुधे तुने'त्यभिधानात् अत्र स्पष्टं व्यक्तमित्यर्थः, आत्मवतां ब्रह्मादियोगिनामात्माभीष्टवर्षी हि आत्मभावनो मनःप्रेरकश्चेतनानां सत्ताप्रदो जन्मादिरहितो भगवान् स्वभक्तानामनुग्रहायेमां भूमिं सिद्धरूपी भवादृशाः सिद्धास्त एव रूपं प्रतिमास्यास्तीति चरतीत्यन्वयः। "हरेस्तु प्रतिमाः प्राज्ञास्तत्रस्थः केशवः स्वयम्। ददाति ज्ञानमीशेशः परमात्मा स्वयं प्रभुः" इत्यतो ज्ञानिनां प्रतिमात्वं सिद्धमतोऽप्यत्रात्मवतां व्यक्तं स्पष्टमिति पुनरावृत्त्या योज्यम् ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

व इति पूर्वोक्तान् विशिनष्टि नैवेति। आत्मानं परमात्मानं एवमस्य साकारत्वं दर्शितम् ॥ ९ ॥ ❀ ❀ तृणभूमिसुवाग्धारा इति चित्सुखः। "फलमूलैस्तृणैर्वापि वाग्भिरद्भिर्विलोचनैः। पूज्यन्ते तीर्थिनः सद्भिर्विलुप्तविभवैरपि ॥" अत्रेदं पद्यं क्वचित् वर्त्तते। तत्र वाक्यस्य टीकामते दश पद्यत्वाविशेषबोधश्च। किन्तस्येत्यादिपद्याभावात्। किन्त्वेतन्मते टीकासंवादिता स्यात्। किन्तस्येत्यादिकमयोजयित्वैव दुर्दर्शत्वमाहेति। सहसा योजनात् शलाकाप्राप्तं तूभयमेव ॥ १० ॥ ❀ ❀ तदेवं ब्राह्मणत्वेन स्तुत्वा वैष्णवत्वेन स्तौति व्यालेति। 'द्रुमा ह्येते इति क्वचित्' ॥ ११ ॥ ❀ ❀ अथ तान् वैष्णवत्वेऽपि ज्ञानप्रधानान् ज्ञात्वा तदंशेन स्तौति स्वागतमिति त्रिभिः। बाला एव बाल्यावस्थामारभ्यैवेत्यर्थः। बृहन्ति सर्व्वतो महान्ति व्रतानि परिव्राडुचितानि ॥ १२-१४ ॥ ❀ ❀ पूर्वं न कामये नाथ तदप्यहं क्वचिदित्यादौ शुद्धभक्त्येकनिष्ठत्वेन व्यक्तोऽपि स उत्तमः श्लोकेत्यादौ भगवल्लीलाश्रवणमात्रेण सम्मतानुषङ्गिकज्ञानप्राप्तिरपि स इत्थं लोकगुरुणेति पूर्वोक्तं श्रीभगवन्निर्देशगौरवेण। तत्र शीलवतां वृत्तमाचरन्नित्यत्रोक्तमहदादरस्वभावेन च तद्विवक्षितम्। ज्ञानमपि श्रोतुमनुमोदते। तदहमिति ॥ १५ ॥ ❀ ❀ भगवत्तद्भेदनिर्देशेन तमुभयमपि हेतुं स्वयमेव दर्शयति व्यक्तमिति ॥ १६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

दुर्दर्शत्वमाह। नैव लक्ष्यते न पश्यति यथा सर्व्वदृशं सर्व्वदर्शिनमात्मानं सर्व्वोऽपि लोको न पश्यति। लोकस्य का वार्ता येऽस्य जगतो हेतवो ब्रह्ममरीचिप्रभृतयः तेऽपि न पश्यन्ति ॥ ८ ॥ ❀ ❀ येषां साधूनां गृहाः अर्हाः अर्हाणां पूज्यजनानां वर्य्या वरणीयाः स्वीकारार्हा अम्ब्वादयो येषु भक्ष्यद्रव्याभावे पानार्थमम्बु च तदभावे शय्यार्थं तृणानि च तदभावे आसनार्थं परिष्क्रियमाणा भूमिश्च तदभावे प्रीतिवागञ्जल्याद्यर्थमीश्वरो गृहस्वामी च तस्याप्यभावे अवराश्च साष्टप्रणिपाताद्यर्थं तत्पुत्रकलत्रादयश्च येषु ते ॥ १० ॥ ❀ ❀ व्यालतुल्यानां कटुवाग्वर्षिणां पुत्रकलत्रादीनामालयाः येषु तथाभूता द्रुमा एव तद्गृहस्था येषां छायापि कैरपि भीत्या न स्पृश्यत इति भावः, अरिक्ताः पूर्णा अखिलसम्पदो येषां तथाभूताः अपि येषां गृहास्तीर्थपादीयानां वैष्णवानां पादतीर्थेन पादक्षालनोदकेन रहिताः ॥ ११ ॥ ❀ ❀ यद्यस्मात् बृहन्ति व्रतानि ब्रह्मचर्य्याणि। मुमुक्षवः श्रद्धया चरन्ति भवन्तस्तु बाला एव मुक्ता एवेति ब्रह्मचर्य्यं कष्टं मुमुक्षाकष्टञ्च न जानन्तीति भावः ॥ १२ ॥ ❀ ❀ इन्द्रियार्थविषयसुखमेव पुरुषार्थं जानतामस्माकं व्यसनान्युत्पद्यन्ते यस्मिन् तस्मिन् संसारे ॥ १३ ॥ ❀ ❀ नन्वभ्यागतान् प्रति कुशलप्रश्नस्तेषामेव क्रियते न त्वात्मन इत्यत आह भवत्स्विति। तेनाभ्यागतेषु कुशलप्रश्नस्यावश्यकत्वात् युष्मत्सम्बन्धिकुशलप्रश्नस्यानौचित्यात् स्वसम्बन्ध्येव कुशलं पृष्टमिति भावः ॥ १४ ॥ ❀ ❀ किञ्च। युष्मदागमनमस्मदुद्धारप्रयोजनकमेव बुद्ध्यते। तस्मादात्मकुशलप्रश्न एव मम सम्प्रति युज्यते इत्याह। तदहमिति क्षेमः क्षेमम् ॥ १५ ॥ ❀ ❀ भवन्तं खलु मदिष्टदेवो भगवान्नारायण एवेत्यहं जानामीत्याह व्यक्तमिति। आत्मा स्वयमेव सेव्यत्वेन वर्त्तते येषां ते आत्मवन्तो भक्तास्तेषामात्मा आत्मेव प्रीतिविषयीभूत इत्यर्थः। स्वानां स्वेषां भक्तानामात्मानं भावयति प्रकाशयतीति सः इमां पृथ्वीम् ॥ १६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सर्वदृशं सर्वद्रष्टारमात्मानं परमेश्वरम् अस्य विश्वस्य हेतवः प्रकृतिमहदादयः ॥ ९ ॥ ❀ ❀ अर्हाणां पूज्यानां वर्य्या स्वीकारार्हाः अम्बुतृणादयो येषां तादृशा येषां गृहाः ते अधना अपि गृहमेधिनो धन्याः, यतस्ते साधवः तत्रेश्वरो गृहस्वामी अवराः पुत्रादयः ॥ १० ॥ ❀ ❀ अरिक्ता अनपगताः अखिलाः सम्पदो येषु तथाभूता यत् ये गृहाः तीर्थं पादयोर्यस्य स तीर्थपात् विष्णुस्तदीयानां पादतीर्थेन यदि विवर्जिताः स्युस्तर्हि एते व्यालालयद्रुमा इव वाशब्द इवार्थे, 'व्यालो दुष्टगजे सर्पे' इति मेदिनीकारकोशः ॥ ११ ॥ ❀ ❀ भो द्विजश्रेष्ठाः! वो युष्माकं स्वागतं शोभनमागमनं जातम्। येषां वो बृहन्ति व्रतानि नैष्ठिक-

ब्रह्मचर्यपूर्वकाणि भगवदाराधनरूपाणि धीरा जितेन्द्रियाः बालाः निरहङ्कारा मुमुक्षवः एव चरन्तीति योजना ॥ १२ ॥ ❀ ❀ हे नाथाः ! इन्द्रियार्थेषु शब्दादिषु अस्थिरेषु अर्थवेदिनां स्थिरत्वमतीनां व्यसनानि दुःखान्येवोप्यन्ते यस्मिन् तस्मिन् संसारे पतितानां नः कच्चित्कुशलमस्ति ॥ १३ ॥ ❀ ❀ नन्वसत्कुशलप्रश्नः कुतो न कृत इत्यत आह। भवत्स्विति यत्र येषु ॥ १४ ॥ ❀ ❀ यस्माद्यूयमात्मारामाः तस्मात् कृतविश्वासः अत्र तपस्विनां मुमुक्षूणां सुहृदो युष्मान् अञ्जसा साक्षाद्भगवत्प्राप्तिलक्षणः क्षेमः केन भवेदिति संपृच्छे पृच्छामि ॥ १५ ॥ ❀ ❀ व्यक्तं निश्चितम् आत्मा परमेश्वरः जिज्ञास्यतया विद्यते येषां तेषामात्माश्रयः स्वानामनुग्रहाय आत्मभावनः आत्मानं भावयतीति । अयमस्मीति प्रकटयतीति तथा सिद्धरूपी योगेश्वररूपी चरति ॥ १६ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

दुर्दर्शत्वमेव स्फुटयति—नैवेति । सर्वेषां पुरुषार्थसिद्धयेऽर्कवल्लोकान् पर्यटतोऽपि यान् युष्मान् लोकः जनसमूहो नैव लक्षयते एत एवम्प्रभावा इति नैव जानाति । तत्र दृष्टान्तमाह—यथेति । सर्वदृशं सर्वं जगत्साक्षात् पश्यन्तमपि आत्मानं परमात्मानं ये अस्य जगतो हेतवो ब्रह्मादयो महान्तस्तेऽपि सर्वे यथा न पश्यन्ति तथेत्यर्थः ॥ ९ ॥ ❀ ❀ तदागमनदर्शनादिना सूचितमात्मनः कृतार्थत्वमेव स्फोरयन् भगवत्कृपया निर्द्धना अपि कृतार्था भवन्तीत्याह—अधना इति । येषां गृहाः अर्हाणां पूज्यानां भवादृशां वर्या वरणयोग्याः अम्ब्वादयो येषु तादृशास्ते गृहमेधिनः गृहस्थाः गृहसम्बन्धेन पञ्चविधहिंसापराः अपि अधनाः दारिद्र्याक्रान्तत्वेन पञ्चयज्ञादिना हिंसापरिहारे असमर्था अपि धन्याः कृतार्था एवेत्यन्वयः । नन्वेवं दारिद्र्याक्रान्तसम्बन्धिनाम् अम्ब्वादीनां महद्वरणीयत्वे को हेतुरित्याशङ्क्य तेषां दीनत्वेन गर्वराहित्यनम्रत्वादिकमेवेत्यभिप्रेत्य विशिनष्टि—साधव इति । अम्बु जलं च तृणमासनं च भूमिश्च ईश्वरो गृहस्वामी च अवरा भृत्यादयश्च ते ॥ १० ॥ ❀ ❀ धनादिमदपूर्णानां तु विद्यमानमपि गृहादि सर्वं भवदनङ्गीकाराद्व्यर्थमेवेत्याह—व्यालालयेति । तीर्थानि पादयोर्यस्य भगवतः स तीर्थपात् तदीया भगवद्भक्तास्तेषां पादतीर्थेन चरणोदकेन विवर्जिता येषु कदापि भगवदीयानां पादप्रक्षालनमात्रमपि सत्कारो न जात एवम्भूताः ये धनादिमदाविष्टानां गृहास्ते अरिक्ताः परिपूर्णा अखिलाः सम्पदो येषु तादृशा अपि व्यालानामालया येषु द्रुमेषु तादृशा एवेत्यन्वयः । स्वाम्यादीनां क्रौर्येण हिंसाद्युपद्रवबाहुल्येन पिशाचाद्यावेशेन च सज्जनानां भयङ्करा एवेत्यर्थः ॥ ११ ॥ ❀ ❀ स्वकृतार्थत्वमाह—स्वागतमिति । हे द्विजश्रेष्ठा वो युष्माकं स्वागतमागमनं सुष्ठु जातम् । कुत एवमित्याशङ्क्य भवतां महत्त्वादित्यभिप्रेत्य तेषां महत्त्वं दर्शयति—यदिति । यत् यस्मात् बाला एव बाल्यावस्थात एव भवन्तो धीराः वशीकृतकार्यकरणसङ्घाताः मुमुक्षवश्च सन्तो नैष्ठिकब्रह्मचर्यादीन्येव व्रतानि चरन्तीत्यन्वयः । सम्बोधनमादरार्थम् ॥ १२ ॥ ❀ ❀ स्वकुशलं पृच्छति—कच्चिदिति । तत्तदिन्द्रियाणामर्थाः विषया रूपरसस्पर्शादय एवार्थाः पुरुषार्था इति ये विदन्ति ते तथा तेषामत एव व्यसनानि दुःखान्येव उप्यन्ते उद्भवन्ति यस्मिंस्तस्मिन्नेतस्मिन् संसारे स्वकर्मभिः पापाद्यदृष्टैः पतितानां नोऽस्माकं हे नाथाः स्वामिनः कच्चित्कुशलमस्तीति शेषेणान्वयः ॥ १३ ॥ ❀ ❀ ननु लोकेऽभ्यागतानां कुशलं जनाः पृच्छन्ति, न त्वात्मनः, त्वं कथमात्मनस्तत् पृच्छसि तत्राह—भवत्स्विति । भवत्सु कुशलप्रश्नो नेष्यते न युज्यते । कुत इत्यपेक्षायामाह—यत्रेति । येषु भवत्सु कुशलाकुशलाकारा मतिवृत्तयो न सन्ति । तत्र हेतुत्वेन विशिनष्टि—आत्मारामेष्विति । देहाद्यभिमानवतामेव तथा वृत्तयो भवन्ति भवतामात्मारामत्वेन देहादावात्माभिमानाभावात्कुशलाकुशलवृत्तयो न सन्तीत्यर्थः ॥ १४ ॥ ❀ ❀ एवं स्तुत्वा यद्यपि पूर्वं 'न कामये नाथ तदप्यहं क्वचित्' इति स्वयमेव भगवन्तं प्रति मोक्षकामनाभावो दर्शितस्तथापि भगवदिच्छाया बलिष्ठत्वात्तद्दशादिदानीं सैवोत्पन्नेति मोक्षसाधनं पृच्छति—तदिति । तत् तस्मादात्मारामत्वेन पक्षपातरहितत्वात् यथार्थभाषणेऽहं कृतविश्रम्भः कृतविश्वासः, संस्तपस्विनामाधिदैविकादित्रिविधतापतप्तानां सुहृदो हितचिन्तकान् वो युष्मान् तेषां क्षेमः कल्याणं मोक्षः एतस्मिन् भवे संसारे अञ्जसा अनायासेन केन साधनेन भवेदिति सम्पृच्छे इत्यन्वयः ॥ १५ ॥ ❀ ❀ तपस्विसुहृत्त्वं कुत इत्याशङ्क्य भगवदवतारत्वादित्यभिप्रेत्याह—व्यक्तमिति । व्यक्तं निश्चितं भगवानेव सिद्धरूपी सन् भवत्स्वरूपधरः सन् स्वानां स्वकीयानां भक्तानामनुग्रहायेमां पृथ्वीं चरतीत्यन्वयः । ननु तेष्वनुग्रहे को हेतुरित्याशङ्क्याह—आत्मवतामात्मेति । आत्मा स्वयं सेव्यत्वेन विद्यते येषां ते आत्मवन्तस्तेषामात्मा आत्मवत्प्रेष्ठ इत्यर्थः । अत एव तान् प्रति आत्मानं भावयति प्रकाशयतीत्यात्मभावनः तर्हि किमन्यजीववज्जनिं प्राप्य प्रकाशयतीत्याशङ्क्याह—अज इति ॥ १६ ॥

## भाषानुवादः

इस दृश्य-प्रपञ्चके कारण महत्तत्त्वादि यद्यपि सर्वगत हैं, तो भी वे सर्वसाक्षी आत्माको नहीं देख सकते; इसी प्रकार यद्यपि आप समस्त लोकोंमें विचरते हैं, तो भी अनधिकारीलोग आपको देख नहीं पाते ॥ ९ ॥ ❀ ❀ जिनके घरोंमें आप-जैसे पूज्य पुरुष उनके जल, तृण, पृथ्वी, गृहस्वामी अथवा सेवकादि किसी अन्य पदार्थको स्वीकार कर लेते हैं, वे गृहस्थ धनहीन होनेपर भी धन्य हैं ॥ १० ॥ ❀ ❀ जिन घरोंमें कभी भगवद्भक्तोंके परमपवित्र चरणोदकके छींटे नहीं पड़े,

वे सब प्रकारकी ऋद्धि-सिद्धियोंसे भरे होनेपर भी ऐसे वृक्षोंके समान हैं कि जिनपर साँप रहते हैं ॥ ११ ॥ ❀ ❀ मुनीश्वरो ! आपका स्वागत है। आपलोग तो बाल्यावस्थासे ही मुमुक्षुओंके मार्गका अनुसरण करते हुए एकाग्र चित्तसे ब्रह्मचर्यादि महान् व्रतोंका बड़ी श्रद्धापूर्वक आचरण कर रहे हैं ॥ १२ ॥ ❀ ❀ स्वामियो ! हमलोग अपने कर्मोंके वशीभूत होकर विपत्तियोंके क्षेत्ररूप इस संसारमें पड़े हुए केवल इन्द्रियसम्बन्धी भोगोंको ही परम पुरुषार्थ मान रहे हैं; सो क्या हमारे निस्तारका भी कोई उपाय है ? ॥ १३ ॥ ❀ ❀ आपलोगोंसे कुशल-प्रश्न करना उचित नहीं है, क्योंकि आप निरन्तर आत्मामें ही रमण करते हैं। आपमें यह कुशल है और यह अकुशल है—इस प्रकारकी वृत्तियाँ कभी होती ही नहीं ॥ १४ ॥ ❀ ❀ आप संसारानलसे सन्तप्त जीवोंके परम सुहृद् हैं; इसलिये आपमें विश्वास करके मैं यह पूछना चाहता हूँ कि इस संसारमें मनुष्यका किस प्रकार सुगमतासे कल्याण हो ? ॥ १५ ॥ ❀ ❀ यह निश्चय है कि जो आत्मवान् ( धीर ) पुरुषोंमें 'आत्मा' रूपसे प्रकाशित होते हैं और उपासकोंके हृदयमें अपने स्वरूपको प्रकट करनेवाले हैं, वे अजन्मा भगवान् नारायण ही अपने भक्तोंपर कृपा करनेके लिये आप-जैसे सिद्ध पुरुषोंके रूपमें इस पृथ्वीपर विचरा करते हैं ॥ १६ ॥

## मैत्रेय उवाच

[1]पृथोस्तत्सूक्तमाकर्ण्य सारं सुष्ठु मितं म[2]धु । स्मयमान इव प्रीत्या कुमारः प्रत्युवाच ह ॥ १७ ॥

## [3]सनत्कुमार उवाच

साधु पृष्टं महाराज सर्वभूतहितात्मना । भवता विदुषा चापि साधूनां मतिरीदृशी ॥ १८ ॥

सङ्गमः खलु साधूनामुभयेषां च सम्मतः । यत्सम्भाषणसम्प्रश्नः सर्वेषां वितनोति शम् ॥ १९ ॥

अस्त्येव राजन् भवतो मधुद्विषः पादारविन्दस्य गुणानुवादने ।
रतिर्दुरापा विधुनोति नैष्ठिकी कामं कषायं मलमन्तरात्मनः ॥ २० ॥
शास्त्रेष्वियानेव सुनिश्चितो नृणां क्षेमस्य सध्र्यग्विमृशेषु हेतुः ।
असङ्ग आत्मव्यतिरिक्त आत्मनि दृढा [4]रतिर्ब्रह्मणि निर्गुणे च या ॥ २१ ॥
सा श्रद्धया भगवद्धर्मचर्यया जिज्ञासयाऽऽध्यात्मिकयोगनिष्ठया ।
योगेश्वरोपासनया च नित्यं पुण्यश्रवःकथया पुण्यया च ॥ २२ ॥
अर्थेन्द्रियारामसगोष्ठ्यतृष्णया तत्सम्मतानामपरिग्रहेण च ।
विविक्तरुच्या परितोष आत्मन् विना हरेर्गुणपीयूषपानात् ॥ २३ ॥
अहिंसया पारमहंस्यचर्यया स्मृत्या मुकुन्दाचरिताग्र्यसीधुना ।
यमैरकामैर्नियमैश्चाप्यनिन्दया निरीहया द्वन्द्वतितिक्षया च ॥ २४ ॥

अन्वयः—कुमारः पृथुः तत् सारम् सुष्ठु मितम् मधु सूक्तम् आकर्ण्य स्मयमानः इव प्रीत्या प्रत्युवाच ह ॥ १७ ॥ ❀ ❀ महाराज सर्वभूतहितात्मना च विदुषा अपि भवता साधु पृष्टम् साधूनाम् मतिः ईदृशी ॥ १८ ॥ ❀ ❀ च यत्संभाषणसंप्रश्नः सर्वेषाम् शम् वितनोति साधूनाम् संगमः उभयेषाम् खलु संमतः ॥ १९ ॥ ❀ ❀ राजन् भवतः मधुद्विषः पादारविन्दस्य गुणानुवादने रतिः अस्ति एव दुरापा नैष्ठिकी कषायम् आत्मनः अन्तः कामम् मलम् विधुनोति ॥ २० ॥ ❀ ❀ आत्मव्यतिरिक्ते असंगः निर्गुणे ब्रह्मणि च आत्मनि या दृढा रतिः इयान् एव सध्र्यग्विमृशेषु शास्त्रेषु नृणाम् क्षेमस्य हेतुः सुनिश्चितः ॥ २१ ॥ ❀ ❀ सा श्रद्धया भगवद्धर्मचर्यया जिज्ञासया च अध्यात्मिकयोगनिष्ठया योगेश्वरोपासनया च नित्यम् पुण्यया पुण्यश्रवःकथया स्यात् ॥ २२ ॥ ❀ ❀ अर्थेन्द्रियारामसगोष्ठ्यतृष्णया च तत्संगतानाम् अपरिग्रहेण हरेः गुणपीयूषपानात् विना विविक्तरुच्या आत्मन् परितोषे ॥ २३ ॥ ❀ ❀ अहिंसया पारमहंसचर्यया स्मृत्या मुकुन्दाचरिताग्र्यसीधुना अकामैः यमैः च नियमैः अनिन्दया निरीहया च द्वन्द्वतितिक्षया अपि ॥२४॥

---

१. प्रा० पा०—पृथोस्तु सूक्त० । २. प्रा० पा०—प्रभुः । ३. प्राचीने पाठे 'सनत्कुमार उवाच' अयमंशो न । ४. प्रा० पा०—मति ।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

सूक्तं शोभनं वचनम्। सारं न्याय्यम्। सुष्ठु गंभीरार्थम्। मितमल्पाक्षरम्। मधु श्रोत्रप्रियम्। मुखप्रसक्त्या स्मयमान इव प्रतीयमानः ॥ १७ ॥ ❀ ❀ विदुषा जानतापि ईदृशी परार्थैकपरा ॥ १८ ॥ ❀ ❀ स्वयमपि पृथोः संगममभिनन्दति। संगम इति। उभयेषां वक्तॄणां श्रोतॄणां च येषां संभाषणं संहितः संप्रश्नः सर्वेषां शं सुखं विस्तारयति ॥ १९ ॥ ❀ ❀ तदेवं संगमं प्रश्नं चाभिनंद्यानुवादमुखेनैव मोक्षसाधनमुपदिशति अस्त्येवेति। गुणानामनुवादने प्रश्नद्वारेणानुवादप्रवर्तने गुणश्रवण इत्यर्थः। आत्मनो मनसोन्तरस्थं कामात्मकं मलं विधुनोति कषायं धातुरागवदनिवर्त्यम् ॥ २० ॥ ❀ ❀ चित्तशुद्धयैव बहिर्वैराग्यमात्मनि रतिश्च भवति न च ततोऽधिकं साधनमस्ति शास्त्रेषु तयोरेव मोक्षहेतुत्वनिश्चयादित्याह। शास्त्रेष्विति। सध्र्यग्विमृशेषु सम्यग्विचारवत्सु शास्त्रेषु क्षेमस्य हेतुरेतावानेव सुनिश्चितः; कोऽसौ आत्मव्यतिरिक्ते देहादावसंगो वैराग्यमात्मनि च दृढा रतिः प्रीतिः आत्मनो विशेषणं निर्गुणे ब्रह्मणीति ॥२१॥ ❀ ❀ नन्वेतदेवातिदुर्लभमित्याशंक्योत्तमाधिकारिणः श्रवणमात्रेण भवत्यन्यस्य तु चित्तशुद्ध्यनुसारेण साधनतारतम्यतो वर्धमानया भक्त्येत्यभिप्रेत्याह सेति चतुर्भिः। सा ब्रह्मणि रतिरसंगश्च श्रद्धादिभिः स्यादिति चतुर्थेनान्वयः। जिज्ञासया तत्तद्विशेषबुभुत्सया पुण्यं श्रवो यशो यस्य तस्य हरेः पुण्यया कथया च ॥ २२ ॥ ❀ ❀ अर्थारामा अर्थो द्रव्यं तन्निष्ठास्तामसा इन्द्रियारामाः कामनिष्ठा राजसास्तैः सह या गोष्ठी तस्यामतृष्णया तेषां च ये संमता अर्थाः कामाश्च तेषामपरिग्रहेणानासक्त्या विविक्ते विजने या रुचिस्तया सा चात्मन्येव परितोषे सति स्यात्किं तु हरेर्गुणपीयूषपानाद्विना तस्मिन्सति विविक्ते रुचिर्न कार्या चात्मनि परितोषः कार्य इत्यर्थः ॥ २३ ॥ ❀ ❀ पारमहंस्यचर्यया उपशमादिप्रधानया वृत्त्या स्मृत्यात्महितानुसन्धानेन मुकुंदाचरितमेवाग्र्यं सीधु श्रेष्ठममृतं तच्चरितस्मृतिसुखेनेत्यर्थः। मार्गान्तर स्यानिन्दया निरीहया योगक्षेमार्थक्रियाराहित्येन शीतोष्णादिद्वंद्वसहनेन ॥ २४ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

महाराजेति। अल्पराजानोपि लोकहिताचरणं कुर्वन्ति धर्मपालनोपदेशादिना किं पुनस्त्वं महाराजेति भावः ॥१८॥ ❀ ❀ सुखं भक्तिनिष्ठात्मकम् ॥ १९ ॥ ❀ ❀ यद्यपि तव शिक्षणीयांशो नास्ति तथापि लोकहितार्थं तव प्रश्नः। क्षेमः केनांजसेति तत् संश्लाघ्य क्षेमसाधनमनुवदति—इत्यर्थं इति। अनुवादयति कथने प्रवर्त्तयतीत्यनुवादनं तच्च श्रवणार्थमेव भवतीति भावः। कषेण सार्वणादिनिकषणेन न यातीति कषायः 'कष—निकषणे' इति कषणं कषः भावाद्यर्थको मदाद्यच् ॥ २० ॥ ❀ ❀एतावानेवेति। वस्तुप्रत्ययैवकाराभ्यामेतयोरेव सारत्वं सुनिश्चितं न पुनरेतदर्थं शास्त्राणि द्रष्टव्या नीति सूचितम्। क्षेमशब्देन सायुज्यशान्तरतिप्रेमाणोऽधिकारिभेदेन द्रष्टव्याः ॥ २१ ॥ ❀ ❀ अत्राक्षिपति—नन्विति। एतदेवात्मेतरासंगब्रह्मरतिरूपं द्वयमेव अन्यस्य मध्यमाद्य धिकारिणः तत्तद्विशेषाणां भक्तिज्ञानादिभेदानां ब्रह्मरतित्रैतासङ्गसाधनभेदानां वा बुभुत्सया ज्ञातुमिच्छयाऽध्यात्मयोगो वेदान्तविचारस्तत्र स्थित्या 'यत्र योगेश्वरः कृष्णः' इत्युक्तेः श्रीकृष्णोपासनया योगेश्वराणां भक्तानां ज्ञानिनां वोपासनया नित्यमविच्छेदेन नित्यमिति सर्वत्र संबध्यते पुण्यश्रवस्त्वादेव कथायाः पुण्यत्वं लब्धं पुनः पुण्ययेति विशेषणात्सर्वधर्मेभ्यो हरिकथाया उत्कर्षद्योतनाय "नैतादृशः परो धर्मो यत्कथाश्रवणं हरेः" इति पाद्मोक्तेः। "पुराणश्रवणं नित्यं सर्वधर्मात्परं मतम्" इति स्कान्दीयकेदारखंडोक्तेः। "आयासः सर्वधर्मेषु वर्जयित्वा हरेः कथाम्। अतः कलौ हरिकथाश्रुतिस्संसृतिनाशिनी" इति तत्रैवोक्तेः ॥ २२ ॥ ❀ ❀ अर्थनिष्ठा धनसंग्रहतत्पराः। कामनिष्ठा भोगसक्ताः यद्वाऽर्थस्य देहस्येन्द्रियाणाञ्चारामेषु क्रीडावनेषु विषयेष्वतृष्णात्यागेन तत्संमतानामर्थेन्द्रियारामाणां ये संमताः पुरुषा हेमरजतादिस्रक्चन्दनादयश्च वा तेषामपरिग्रहेणास्वीकारेण। इत्यर्थ इति। हरेः पीयूषपानं चेल्लभ्यते तदा विविक्तरुचिस्ततः परितोषौ विहाय जनसंसद्यपि परस्मादपि गायकादेः सकाशादपि कृष्णलीलास्वादार्थमागच्छेदेवेति भावः ॥ २३ ॥ ❀ ❀ अहिंसया सर्वभूताक्लेशदानेन तदुक्तं "कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा। अक्लेशजननं प्रोक्तमहिंसा त्विह योगिभिः" इति। मुकुन्दाचरितेति पूर्वत्र कथयेत्युक्तेः। 'कथ—वाक्यप्रबन्धे' इति धातोः। भगवद्गुणसंदृब्धशास्त्रेणेत्यर्थः। इह तु तत्कृतकंसवधादिपराक्रमलक्षणकर्मामृतपानेन। इत्यर्थ इति। श्रीकृष्णलीलामृतपानजतत्स्मृतिसुखेन। मुकुन्देत्यादिशीध्वन्तपदे तृतीया हेतौ ज्ञेयेति भावः। "शीधु मद्येमृतेपि च" इति स्वामी। मार्गान्तरस्य शास्त्रविहितस्य "अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम्। क्षमा धृतिर्मिताहारः शौचं चैते यमा दश ॥ तपः सन्तोषमास्तिक्यं दानमीश्वरपूजनम्। सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च तथा व्रतम् ॥ एते तु नियमाः प्रोक्ता" इति याज्ञवल्क्यः ॥ २४ ॥

## श्रीमद्वीरराघवव्याख्या

एवं पृथोः सूक्तं शोभनं वचनं सारं न्याय्यं सुष्ठु गम्भीरार्थं मितमल्पं मधु श्रोत्रप्रियं श्रुत्वा प्रीत्या स्मयमान इव कुमारः प्रत्वाचयु ॥ १७ ॥ ❀ ❀ तत्र सत्सङ्गत्यादिप्रणाड्योत्तरोत्तरमहरहरभ्यासाधेयातिशयसाधनसप्तकानुगृहीताप्रयाणानुवृत्त-

प्रीतिरूपापन्नाविच्छिन्नप्रत्यक्षतापन्नपरभक्त्यपरपर्यायभगवद्भक्तियोग एव क्षेमहेतुरिति विवक्षुस्तावत्प्रश्नमभिनन्दति साध्विति। हे महाराज ! भवता साधु सम्यक् पृष्टं कथंभूतेन विदुषापि तत्त्वहितपुरुषार्थज्ञानवतापि सर्वभूतहितात्मना सर्वभूतहितकरणप्रवृत्ति-बुद्धिमता भूतहितार्थमेव त्वया पृच्छ्यते न तु स्वयं वेत्तुम्। स्वत एव ज्ञत्वादित्यर्थः। भूतहिताचरणमेव साधूनां स्वभाव इत्याह। साधूनां साधयन्ति परकार्यमिति साधवः तेषां गतिः प्रवृत्तिः ॥ १८ ॥ ❀ ❀ ईदृशभूतहिताचरणरूपा सत्सङ्गतिस्तावन्मूल-कारणमित्याह सङ्गम इति। उभयेषां बुभुक्षूणां मुमुक्षूणां च स्वसमीहितभोगमोक्षादेः प्रथमं साधूनां सङ्गम एवेति सम्मतः। सत्सङ्गमस्य भोगमोक्षसाधनत्वमुपपादयति। येषां साधूनां सम्भाषणसहितः संप्रश्नः सम्भाषणसंप्रश्नः शाकपार्थिवादित्वादुत्तरपद-लोपिसमासः। यद्वा संभाषणावसरे संप्रश्नः सम्यक् प्रणिपातसेवापूर्वकः स्वर्गापवर्गसाधनप्रश्नः सर्वेषामुभयेषां स्वर्गापवर्गसुखं वितनोति। सति संप्रश्ने साधुभिर्भोगमोक्षसाधने उपदिश्येते इति साधून् प्रति संप्रश्नः शमपेक्षितं वितनोतीत्यर्थः ॥ १९ ॥ ❀ ❀ एवं सत्संगस्य भोगमोक्षप्रथमकारणत्वमुक्तं तत्र भोगसाधनत्वमेव प्रथमं सत्सङ्गः ततः सम्भाषणं ततः प्रश्नः ततस्तत्साधनयोगा-द्युपदेशस्ततः साधनोपसंहारेण यागाद्यनुष्ठानं ततो भोग इति इयं च प्रणाडी मुमुक्षाधिकृतस्य कर्मणामल्पास्थिरफलत्वनिर्णयपूर्व-कानन्तास्थिरफलापातप्रतीतिः पुरुषस्य न वक्तव्येति तामनादृत्य सत्सङ्गतेर्मोक्षसाधनत्वप्रणाड्योपपिपादयिषुस्तावत्सङ्गतिस्ततः सम्भाषणं ततः प्रश्नः ततो भगवद्गुणानुश्रवणं ततस्तत्रानुराग इत्येतत्पञ्चकं तावत्त्वयि सिद्धमेवेत्याह अस्त्येवेति। हे राजन्मधुद्विषः पादारविन्दयोः ये गुणाः तेषामनुवादने अनुश्रवणे सदा रतिर्भवतोऽस्त्येव। रतिरस्त्येवेत्यनेन तत्पूर्वभाविसङ्गत्यादिचतुष्टयमप्य-स्तीत्यर्थादुक्तं भवति, तेन विना रत्यसम्भवात् अस्तीति सिद्धवन्निर्देशेन रत्यन्तं पञ्चकमवश्यं मुमुक्षूणां प्रथमं सम्पादनीयमित्युक्तं भवति। यतः रतिः सिद्धा ततो भक्त्यन्तरमुत्तरोत्तरसाध्यं सिद्धप्रायमेवेत्यभिप्रायेणाह येति। या नैष्ठिकी अव्यभिचरिता भगवद्गुणानुवादनरतिः अन्तरात्मनो मनसः मलरूपं कषायं धातुरागवदनिवर्त्यं पुण्यरूपं कर्म कामं भृशं विधुनोति क्षपयति ॥ २० ॥ ❀ ❀ रत्यन्तरभाविसाधनजातं विवक्षुः साक्षान्मोक्षसाधनभूता उक्तविधा भक्तिरेवेत्याह शास्त्रेष्विति। नृणां मोक्षस्य क्षेमस्य समीचीनसाधनविमर्शो येषु तेषु शास्त्रेषु साक्षान्निरपेक्षो हेतुः साधनम् इयानेव सुनिश्चितः, एवकारेण "तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते, तमेव विदित्वातिमृत्युमेति" इत्युक्ताऽनन्तरोपायत्वं विवक्षितम्। इयानित्युक्तः कोऽसौ तत्राह। निर्गुणे सत्त्वादिगुणरहिते आत्मनि किञ्जीवे नेत्याह ब्रह्मणि स्वरूपेण गुणैश्च बृहति ब्रह्मणीत्यनेनैव गुणत्रयराहित्य-परत्वं निर्गुणशब्दस्य निश्चितं या दृढा रतिर्यश्च आत्मव्यतिरिक्तेष्वसङ्गः सङ्गाभावश्चेतीयानेवेत्यर्थः। अत्र रतिशब्देनोक्तविधपर-भक्तिजन्यभगवत्स्वरूपसाक्षात्कारलक्षणपरज्ञानजन्यभगवत्प्रीत्यतिशयरूपा परमभक्तिर्विवक्षिता। तस्यां च दार्ढ्यं नाम चाञ्चल्यराहित्यं चाञ्चल्यं च मध्ये मध्ये विषयान्तरानुचिन्तनरूपं तच्च विषयान्तरासक्तिजननद्वारा भक्तिविरोधि चाञ्चल्यकार्यमपि निषिध्यते। असङ्ग आत्मव्यतिरिक्त इति, अत एवात्मव्यतिरिक्तासङ्गस्यापि पृथग्वा रत्या सह वा उपायत्वभ्रमो न कार्यः ॥ २१ ॥ ❀ ❀ एवं विजातीयप्रत्ययान्तराव्यवहितप्रीत्यतिशयरूपा परमभक्तिः साक्षात् क्षेमहेतुरित्युक्तम्। एवंभूता परमभक्तिः कथं निष्पद्यत इति जिज्ञासायां तत्साधनान्युपदिशति सेति। निर्गुणे ब्रह्मणि या रतिः सदसत्यनात्मनि असङ्गश्च श्रद्धादिभिः स्यात् इति चतुर्थेना-न्वयः। अत्र निर्गुण इत्यस्य पूर्ववदर्थ अनात्मनि आत्मव्यतिरिक्ते शब्दादिविषये, तस्य सदसत्त्वं नाम संनिहितासन्निहितत्वं यद्यप्यत्र श्रद्धादीनामवश्यसम्पादनीयत्वाभिप्रायेण सम्भावितक्रमाणाममपि क्रममनादृत्य ते कथिताः, तथापि क्रममाश्रित्यैव व्याख्यायते। तत्र प्रथमं नित्यं योगेश्वरोपासनया योगेश्वरा योगश्रेष्ठाः "योगिनामपि सर्वेषां मद्गतेनान्तरात्मना। श्रद्धावान् भजते यो मां स मे युक्ततमो मतः" इत्युक्तविधया युक्ततमाः भागवतास्तेषामुपासना सेवा तदानुकूल्येन वृत्तिः तया ततः पुण्यश्रवःकथया पुण्यश्रवसः भगवतः कथया भगवत्पुण्यश्रवणेनेत्यर्थः, आश्रयतः स्वतश्च पुण्यरूपत्वख्यापनाय पुण्यश्रवःकथया पुण्ययेत्युक्तं ततः ॥ २२ ॥ ❀ ❀ अर्थेन्द्रियारामगोष्ठ्यतृष्णया अर्थारामाः अर्थपरायणाः तैः सह गोष्ठी तस्या या अतृष्णा अनासक्तिस्तया तेषामर्थेन्द्रियारामाणां सम्मता अर्थाः कामाश्च तेषामपरिग्रहेण भगवद्गुणानुश्रवणेन च भगवत एव पुरुषार्थरूपत्वमर्थकामयोस्तद्विपर्ययरूपत्वं ज्ञात्वा तयोर्विरक्तः स्यादिति गुणानुश्रवणतृष्णयोः पौर्वापर्यं युक्तम्, ततः जिज्ञासया तत्त्वहितपुरुषार्थविवित्सया ततः आचार्यवत्तयेत्यर्थसिद्धं पुमानाचार्यवानिति वक्ष्यमाणत्वात् "आचार्यवान् पुरुषो वेद आचार्याद्धयेव हि विदिता विद्या साधिष्ठं प्रापत्" इति श्रुतेराचार्य-वत्ताया अपि साधनत्वनिश्चयात्। अनेन "परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवा-भिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इत्यन्तश्रुत्यर्थोऽनुसंहितः। तत आध्यात्मिकयोगनिष्ठया आचार्योपदिष्टो भगवदुपासनाय आध्यात्मिको योगः तस्मिन् या निष्ठा मननात्मिका तया ततः श्रद्धया आध्यात्मिकयोगानुष्ठानविषयया त्वरया, एवं पूर्वकालसाधन-जातमुक्तम्। अथ समस्तकालसाधनजातमुच्यते, अत्र न पौर्वापर्यं सम्भूय सर्वेषामनुष्ठानविधानात्, ततः भगवद्धर्मचर्यया भगवद्धर्मा भगवदाराधनैकवेषाः पञ्चमहायज्ञादयो नित्यनैमित्तिकाः तेषां चर्या आध्यात्मिकयोगाङ्गत्वेनानुष्ठानं तया पारमहंस्या परमहंसानां सम्बन्धिनी या चर्या ब्रह्मात्मकस्वात्मयाथात्म्यानुभवरूपा तया आध्यात्मिकयोगस्य ज्ञानकर्मयोगाभ्यां निर्वर्त्यत्वात् विविक्तरुच्या जात्याश्रयनिमित्तादुष्टान्नादिषु रुच्या आत्मन् आत्मनि च यः परितोषस्तेन आत्मानुभवजनितसन्तोषमात्रेणैव न तु तद्व्यतिरिक्त-सन्तोषेणेत्यर्थः, तर्हि किम्भगवद्गुणानुभवजनितसन्तोषोऽपि निषिध्यते, नेत्याह हरेर्भगवतो गुणानुश्रवणस्मरणरूपं पीयूषममृतं

तस्य पानात् विना तदन्यविषयानुभवजातसन्तोषाभावेनेत्यर्थः ॥ २३ ॥ ❀ ❀ अहिंसया भूतसुहृत्त्वेन स्मृत्या भोजनाद्ययुक्तदशास्वपि शुभाश्रयसंशीलनरूपस्मृत्या तथा भोजनोत्तरादिदशासु मुकुन्दस्याचरितानि चेष्टितानि तान्येवाग्र्यं श्रेष्ठं शीधु अमृतं तच्चरितश्रवणश्रावणस्मरणरूपामृतसुखेनेत्यर्थः यमैर्बाह्येन्द्रियनिग्रहैः अकामैरन्तरिन्द्रियनिग्रहैः शमैरित्यर्थः। नियमैः शौचाचारादिभिः अनिन्दया इतरसाध्यसाधनादीनामनिन्दया, तन्निन्दायां चित्तस्य तत्प्रावण्यप्रयुक्तचाञ्चल्यं स्यादिति भावः, निरीहया देहधारणाद्यनुपयुक्तचेष्टाराहित्येन द्वन्द्वानां शीतोष्णाधिव्याध्यादीनां तितिक्षा सहिष्णुता तया ॥ २४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

पृथोः कण्ठशोषणपर्यन्तं तदुक्तं श्रुत्वा निरपेक्षत्वादन्यतो गतं तैरिति शङ्का मा भूत्सूक्तत्वात्सारत्वात् कर्णसुखत्वात्प्रत्युत्तरयितुं शक्तत्वाच्चेति तत्र सनत्कुमारस्तं प्रत्याहेत्याह। मैत्रेय इति मधु नाम सुखं विन्ध्यादित्यादेः ॥ १७ ॥ ❀ ❀ किमाह साध्विति। तथाहि साधूनां गतिः स्थितिरीदृशी स्वयं विद्वानपि लोकोपकाराय प्रवर्तत इति ॥ १८ ॥ ❀ ❀ न केवलं तवैवास्मद्दर्शनेन शमस्साकमपीति भावेनाह सङ्गम इति। शं भगवन्निष्ठालक्षणं सुखम् ॥ १९ ॥ ❀ ❀ अत्र शिक्षणीयांशोऽस्माकं नास्तीति भावेनाह अस्त्येवेति। भवतोऽस्य मधुद्विषः पादारविन्दे गुणानुवादलक्षणा रतिरस्त्येव। या रतिः कषायं मनः कलुषीकुर्वाणं कामं विषयतृष्णालक्षणं कषेण कर्षणेन गच्छतीति कषायं पापम् एवमुभयविधमन्तरात्मनो मलं किट्टं विधुनोतीत्यन्वयः। अनेन हरौ रतिरितरत्र हरिद्विष्यरतिर्विरक्तिरिति द्वयं पुरुषार्थस्य मुख्यसाधनमुक्तमिति ज्ञेयम्। तदुक्तं "रतिः परात्मनि हरावन्यत्रारतिरेव च। पुमर्थसाधनं ज्ञेयं नातोऽन्यन्मुख्यमिष्यते" इति ॥ २० ॥ ❀ ❀ एतदेव विशिनष्टि शास्त्रेष्विति। सम्यग्विमृशेपु समीचीनविचारवत्सु कोऽसावित्यत आह असङ्ग इति। आत्मनो व्यतिरिक्ते परमात्मनो भिन्ने ब्रह्मादितृणान्तवस्तुनि असङ्गो हेयलक्षणा बुद्धिर्ब्रह्मणि परिपूर्णे निर्गुणे सत्त्वादिगुणरहिते निर्णीतानन्दादिगुणे वा 'निर्निर्णयनिषेधयोरि'त्यभिधानात् हरौ या रतिः एतत् द्वयं मुख्यसाधनमित्यर्थः ॥ २१ ॥ ❀ ❀ एतादृशं साधनं कथं स्यादिति तत्साधनान्याह तच्छ्रद्धयेति। तस्मिन् हरौ श्रद्धया भगवद्धर्माणां वर्णाश्रमादिविहितानां चर्यया चरणेन जिज्ञासया ब्रह्मविचारेण आध्यात्मिकयोगोऽष्टाङ्गयोगस्तन्निष्ठया पुण्यश्रवा हरिस्तस्य कथया ॥ २२ ॥ ❀ ❀ अर्थस्य देहस्य इन्द्रियाणां वारामेषु क्रीडावनेषु गुणेषु विषयेष्ववतृष्णया हेयबुद्ध्या तेषां विषयाणां संमतानां स्रक्चन्दनवनितादीनामपरिग्रहेणास्वीकारेण आत्मन् देहभोगविषये परितोषोऽलंबुद्धिः ॥ २३ ॥ ❀ ❀ स्मृत्या जन्मजरादिचिन्तया सीधुसुधा पूर्वत्र कथ—वाक्यप्रबंध इति धातोः भगवद्गुणसंदृब्धशास्त्रेण उत्तरत्र तत्कृतकंसवधादिपराक्रमलक्षणकर्मामृतपानेन। "अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम्। क्षमा धृतिर्मिताहारः शौचं चैते यमा दश॥ कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा। अक्लेशजननं प्रोक्तमहिंसा त्विह योगिभिः॥ तपः सन्तोष आस्तिक्यं दानमीश्वरपूजनम्। सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो व्रतम्॥ एते तु नियमाः प्रोक्ता" इति याज्ञवल्क्ययोगशास्त्रे अभिधानात् अभिध्यया अखण्डस्मरणेन निरीहया अनिषिद्धचेष्टया ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सूक्तमुत्तमप्रतिपाद्यवचनं श्रीसनत्कुमारोऽपि तस्य तथैव सिद्धज्ञानत्वं व्यञ्जयति, तथापि तस्य तत्पृच्छायां पूर्वोक्तं हेतुद्वयमुक्त्वा गौरवविशेषाय वक्ष्यमाणभगवदभिप्रेतान्यहितरूपहेत्वन्तरमेव योजयति च साध्विति। अतः प्रकटो ज्ञानमयोऽर्थोऽन्यान् प्रति प्रतिपाद्यः अप्रकटो भक्तिमयस्तु भवद्विधान् प्रति इति भावः। तत्र प्रथमः टीकायां स्पष्टः चरमस्त्वत्रावगन्तव्यः ॥ १७–१८ ॥ ❀ ❀ किं वक्तव्यं भवादृशां साधूनां सङ्गमः सङ्गः नृणामेव सम्मतः परमसुखप्रद इति। परन्तु तद्वक्तृश्रोतृणामपि तादृश इत्यर्थः। तत्र हेतुः यदिति ॥ १९ ॥ ❀ ❀ यतोऽस्माभिर्युष्मदुपदेष्टव्यं ज्ञानं ततोऽप्युत्कृष्टा या श्रीभगवति रतिः सैव त्वय्यस्ति। ततस्तत्साधनाय कामादिनाशोपदेशस्तु सुतरां पुनरुक्त एवेत्याह। अस्त्येवेति ॥ २० ॥ ❀ ❀ तथैव योजयति शास्त्रेष्विति। किमुताप्राकृतानन्तपरमकल्याणगुणाकृष्टात्मारामगणे भगवतीत्यर्थः ॥ २१ ॥ ❀ ❀ सेति चतुष्कम् ॥ २२ ॥ ❀ ❀ तथैवाह विना हरेरिति ॥ २३ ॥ ❀ ❀ अनिन्दया शास्त्रीयमार्गान्तरस्याकुत्सनया। अनिन्दयेति चिन्मुखः, ईश्वरध्यानेनेति च तद्व्याख्या ॥ २४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

सारं न्याय्यं सुष्ठु गम्भीरार्थं मितमल्पाक्षरं मधु मधुरं स्मयमान इव प्रसन्नमुख इत्यर्थः ॥ १७–१८ ॥ ❀ ❀ भो राजन्! यथैवास्मत्सङ्गो भवदभिवाञ्छितस्तथैव भवत्सङ्गोऽप्यस्मदभिवाञ्छित इत्याह सङ्गम इति। उभयेषां सङ्गः नृणां सङ्गम्यमानानाञ्च सम्मतः अभिलषितः। सर्वेषां श्रोतृवक्तृसन्निहिततत्सन्निहितानामपि ॥ १९ ॥ ❀ ❀ किञ्च त्वमात्मनः क्षेमं पृच्छसि तव तु क्षेमं भगवति नैष्ठिकी रतिर्विराजमानैव दृश्यत इत्याह अस्त्येवेति। कषायं धातुरागवदनिवर्त्यमपि कामं यथेष्टं

निर्मूलमेव या विधुनोति सा रतिस्तव सदेति कषायासम्भव उक्तः ॥ २० ॥ ❀ ❀ तदपि त्वत्प्रश्नस्योत्तरमवश्यं देयमिति क्षेमस्य हेतुं शृण्वित्याह शास्त्रेष्विति। बहुवचनेन न कस्याप्यत्र विप्रतिपत्तिः सध्र्यग्विमृशेषु सम्यग्विचारवत्स्विति अविचारितशास्त्रा-विप्रतिपद्यन्तां नाम, किन्तैरिति इयानेवेति वतुप्रत्ययैवकाराभ्यामेतयोरेव सारत्वं सुनिश्चितमिति न पुनरेतदर्थं शास्त्राणि पुनर्द्रष्टव्यानीति द्योतितम्। असङ्गोऽनासक्तिः दृढा रतिरत्यासक्तिः क्षेमशब्देन सायुज्यशान्तरतिप्रेमाणोऽधिकारिभेदेन द्रष्टव्याः ॥ २१ ॥ ❀ ❀ तत्र प्रथमं भक्तेः प्राधान्यमाह सेति चतुर्भिः। सा रतिः श्रद्धादिभिः स्यादिति चतुर्थेनान्वयः। पुण्यं श्रवो यशो यस्य तस्य हरेः पुण्यया कथया ॥ २२ ॥ ❀ ❀ अर्थारामा धनसंग्रहेच्छवः। इन्द्रियारामा भोगासक्तास्तैः सह या गोष्ठी तस्यामतृष्णया विनेति हरेर्गुणपीयूषपानं चेत् लभ्यते तदा विविक्तरुचिस्ततः आत्मपरितोषौ विहाय जनसंसद्यपि परस्मादपि गायकादेः सकाशादपि कृष्णलीलास्वादार्थमागच्छेदित्यर्थः ॥ २३ ॥ ❀ ❀ पारमहंस्यचर्य्यया उपशमप्रधानवृत्त्या। स्मृत्या श्रीगुरूपदिष्टसदाचारधारणेन मुकुन्दस्याचरितं चरित्रं तदेव अग्र्यं शीधु मधु तेन स्वाद्यमानेनेत्यर्थः ॥ २४ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सूक्तं शुद्धं वाक्यं तत्पूर्वोक्तम् ॥ १७ ॥ ❀ ❀ विदुषापि भवता सर्वभूतहितात्मना साधु पृष्टम्। यतः साधूनां मतिः ईदृशी सर्वभूतहितकारिणी ॥ १८ ॥ ❀ ❀ उभयेषां श्रोतॄणां श्रावयितॄणां च सम्मतः। एतेषां संभाषणसहितः सम्प्रश्नः सर्वेषां शङ्कल्याणं वितनोति ॥ १९ ॥ ❀ ❀ क्षेमः केन भवेदिति प्रश्नः यास्माभिः क्षेमसाधनभूता वक्तुं योग्या सा मधुद्विषः पादारविन्दस्य गुणानुवादने रतिः भवतोऽस्त्येव, सैवान्तरात्मनः कषायं दुर्निवर्त्यं कामं संसारासक्तिलक्षणं सङ्कल्पं विधुनोति ॥ २० ॥ ❀ ❀ नृणां क्षेमस्य भगवत्प्राप्तिलक्षणस्य मोक्षस्य शास्त्रेषु सुनिश्चितोऽर्थोऽस्ति तमाह। निर्गुणे हेयगुण-रहिते आत्मनि दृढा रतिः आत्मव्यतिरिक्ते परमात्मव्यतिरिक्ते असङ्गश्चेति ॥ २१ ॥ ❀ ❀ तस्याः साधनान्याह सेति चतुर्भिः। सा श्रद्धादिभिः स्यादिति चतुर्थेन संबन्धः। पुण्यश्रवसो भगवतः पुण्यया कथया च ॥ २२ ॥ ❀ ❀ अर्थारा-मैरिन्द्रियारामैश्च सह या गोष्ठी तस्यामतृष्णया तत्सम्मतानां तत्सङ्गिनामपरिग्रहेणासङ्गेन च विविक्तरुच्या एकान्तवासेनेति यावत् हरेर्गुणपीयूषपानाद्विना आत्मन् आत्मनि परमेश्वरे यः परितोषः ध्यानेनावस्थितिस्तेन ॥ २३ ॥ ❀ ❀ स्मृत्या आत्मानात्म-परमात्मस्वरूपादिस्मरणेन च मुकुन्दाचरितमेवाग्र्यं मुख्यं सीधु इतरविस्मारकममृतं तेन हृदि भावितेन ॥ २४ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं राज्ञः प्रश्नं श्रुत्वा तदुत्तरं दत्तवानित्याह—पृथोरिति। पृथोस्तत् पूर्वोक्तप्रकारकं सूक्तं शोभनं वचनमाकर्ण्य श्रुत्वा स्मयमान इव प्रतीयमानः सनत्कुमारः प्रीत्या तं प्रत्युवाचेत्यन्वयः। आत्मारामस्य तस्य स्मयायोगान्मुखप्रत्यासत्त्या तथा लक्ष्यते इति ज्ञापनाय इवेति प्रयोगः। हेति पादपूरणार्थः। वचनस्य शोभनत्वहेतुत्वेन विशेषणानि—सारं न्याय्यम्, सुष्ठु गम्भीरार्थम्, मितमल्पाक्षरम्, मधु श्रोत्रप्रियम् ॥ १७ ॥ ❀ ❀ उत्तरवचनान्येव दर्शयति त्रयोविंशतिभिः। तत्रादौ तत्प्रश्नमभिनन्दति—साध्विति। हे महाराज भवता साधु पृष्टमित्यन्वयः। न च तवैतदविज्ञातमस्तीत्याह—विदुषा चापीति। कथं वाऽस्य प्रश्नस्य साधुत्वं ज्ञात्वा वा कथं प्रश्ने प्रवृत्तिरित्याकाङ्क्षायामाह—सर्वभूतहितात्मनेति। सर्वेषां भूतानां प्राणिनां हिते हिताचरणे आत्मा मनो यस्य तेने-त्यर्थः। सर्वभूते हितैषित्वात् सर्वेषां श्रेयस्साधने निश्चयो भवत्वित्यभिप्रेत्य ज्ञात्वापि तव प्रश्ने प्रवृत्तिः, सर्वभूतहितकारित्वात् प्रश्नस्य च साधुत्वमिति भावः। तवैतदेव युक्तमिति सम्बोधनाभिप्रायः। न चैतदाश्चर्यम्, अन्येषामपि साधूनां भवादृशां मतिरीदृशी सर्वभूत-हिताचरणविषयैव भवति ॥ १८ ॥ ❀ ❀ यथा त्वमस्मत्सङ्गममभिनन्दसि तथा तवापि साधुत्वात् सङ्गमोऽस्मत्सम्मत इत्याशये-नाह—सङ्गम इति। साधूनां सदाचाराणां सङ्गमः उभयेषां पृच्छकानां तदुत्तरदातॄणां च सम्मत एव। कुत एवं तत्राह—यदिति। येषां सम्भाषणपूर्वकसम्प्रश्नः सर्वेषां तत्रस्थानां परम्परया वा श्रोतॄणां च साधनानुष्ठानद्वारा शं सुखं श्रेयस्तनो-तीत्यर्थः ॥ १९ ॥ ❀ ❀ एवं तत्प्रश्नं सङ्गमं चाभिनन्द्य क्षेमसाधनप्रश्ने तस्य भगवद्गुणानुश्रवणे रुचिमभिलक्ष्य तामभि-नन्दन्ति—अस्तीति। हे राजन् मधुद्विषः भगवतः पादारविन्दस्य ये गुणाः पराक्रमास्तेषामनुवादने प्रश्नद्वारेणानुवादप्रवर्त्तने श्रवणे भवतो नैष्ठिकी निश्चला रतिरस्त्येवेत्यन्वयः। सा च भगवत्कृपया तव सुलभाऽपि भगवद्विमुखानां तु दुर्लभेत्याह—दुरापेति। तत्कथं तामन्येभ्यो न ददातीत्याशङ्क्य तस्या मोक्षसाधनेऽन्तरङ्गत्वात् सर्वेभ्यः साधारणतस्तद्दाने संसारमोक्षप्रसङ्गात् सृष्ट्यादि-लीलाभङ्गः स्यादित्याशयेन तां विशिनष्टि—विधुनोतीति। या रतिर्जायमाना पुरुषस्यान्तरात्मनः अन्तःकरणस्य नानाविधकामात्मकं मलं सर्वसंसारहेतुभूतं कषायं गैरिकरागवदुपायान्तरैरनिवर्त्त्यं विधुनोति नाशयति ॥ २० ॥ ❀ ❀ इदानीं यत्पृष्टं क्षेमस्य साधनं तच्छास्त्रतो विनिश्चितं दर्शयति—शास्त्रेष्विति। सध्र्यग्विमृशेषु सम्यग्विचारितेषु शास्त्रेषु नृणां क्षेमस्य मोक्षस्य हेतुः साधनमियानेव एतावानेव सुनिश्चितो निःसन्दिग्धोऽस्तीति शेषेण सम्बन्धः। कोऽसावित्यपेक्षायामाह—असङ्ग इति। आत्मव्यतिरिक्ते सर्वप्रपञ्चमात्रे असङ्गो वैराग्यं तथा आत्मनि दृढा रतिश्चेत्येतद्द्वयमेव न ततोऽधिकं किञ्चिदस्तीति। ननु स्वात्मनि

सर्वेषां स्वाभाविकी दृढा रतिरस्त्येवातः कुतो नान्यत्र वैराग्यं कुतो वा न मोक्ष इति शङ्कानिरासार्थमात्मविशेषणद्वयं ब्रह्मणि व्यापके निर्गुणे प्राकृतगुणरहिते च या रतिः सा मोक्षहेतुरित्यर्थः ॥ २१ ॥ ❀ ❀ नन्वेतद् द्वयं कथं सम्पद्यते इत्याशङ्क्य तत्साधनानि दर्शयति—सेति चतुर्भिः। तृतीयान्तानां सा ब्रह्मणि रतिरसङ्गश्च स्यादित्यनेन चतुर्थेनान्वयः। नित्यमित्यस्यापि सर्वत्र तृतीयान्तेन सम्बन्धः। श्रद्धया शास्त्राचार्यादि वचनविश्वासेन। भगवद्धर्मचर्यया भगवत्समर्पितस्ववर्णाश्रमधर्माचरणेन। जिज्ञासया श्रेयस्साधनभजनादितत्तत्प्रकारविशेषबुभुत्सया। आध्यात्मिकयोगनिष्ठया यमनियमादिपूर्वकभगवद्ध्यानपरत्वेन योगेश्वराणां कपिलादीनामुपासनया सेवया। पुण्यमन्तःकरणदोषनिवृत्तिपूर्वकगुणाधारकं श्रवो यशो यस्य भगवतस्तस्य पुण्यया उक्तलक्षणया कथया च तच्छ्रवणेनेत्यर्थः ॥ २२ ॥ ❀ ❀ अर्थेषु धनादिष्वारमन्तीत्यर्थारामास्तामसाः इन्द्रियेष्वारमन्ति तत्तदिन्द्रियाधीनतया तत्तद्विषयभोगेषु प्रवर्तन्ते त इन्द्रियारामाः कामिनः राजसास्तैरर्थेन्द्रियारामैः सह या गोष्ठी तस्यामतृष्णया। तत्सम्मतानां तेषामर्थेन्द्रियारामाणां सम्मता अभिप्रेताः ये अर्थाः कामाश्च तेषामपरिग्रहेण च। विविक्त एकान्ते या स्थातुं रुचिस्तया। आत्मन् आत्मनि मनसि सन्तोषे च सति सा स्यादिति तृतीयेनैवान्वयः। ननु कथमेवं विरुद्धमुच्यते ? सर्वथा विविक्तरुचावात्मनि परितोषे च पूर्वोक्तं भगवत्कथाश्रवणादिकर्मापि नैव सिद्ध्यदित्याशङ्क्याह—विनेति। हरेर्गुणा लीला एव पीयूषममृतं तस्य पानाद्विनाऽन्यत्रैतद्द्वयं कार्यं तत्सम्भवे तु तत्र तन्न कार्यमित्यर्थः। एतद्भगवद्धर्मचर्यायोगेश्वरोपासनादीनामप्युपलक्षणं तत्सम्भवेप्येतद्द्वयं न कार्यमिति भावः ॥ २३ ॥ ❀ ❀ अहिंसया सर्वेषु प्राणिषु पीडापरिवर्जनेन दयया हिताचरणेन पारमहंस्यचर्यया यदृच्छालब्धासङ्कीर्णान्नादिना देहादेर्निर्वाहेण। स्मृत्या हिताहितानुसन्धानेन। मुकुन्दस्याचरितमेवाग्र्यं सीधु श्रेष्ठममृतं तेन, तत्स्मरणेनेत्यर्थः। यमैरनृतचौर्यादिवर्जनैः, अकामैस्तत्तदिन्द्रियाणां तत्तद्विषयेभ्यः प्रत्याहारैः। नियमैः स्नानसन्ध्योपासनजपभगवत्परिचर्यादिभिः। मार्गान्तरस्य देवतान्तरस्य चानिन्दया निन्दापरिवर्जनेन। निरीहया भगवान् मत्प्रारब्धं भोग्यं दास्यतीति दृढविश्वासेन स्वयोगक्षेमार्थमपि क्रियापरिवर्जनेन। द्वन्द्वतितिक्षया च शीतोष्णक्षुत्पिपासादिद्वन्द्वसहनेन च ॥ २४ ॥

भाषानुवादः

श्रीमैत्रेयजी कहते हैं—राजा पृथुके ये युक्तियुक्त, गम्भीर, परिमित और मधुर वचन सुनकर श्रीसनत्कुमारजी बड़े प्रसन्न हुए और कुछ मुसकराते हुए कहने लगे ॥ १७ ॥ ❀ ❀ श्रीसनत्कुमारजीने कहा—महाराज ! आपने सब कुछ जानते हुए भी समस्त प्राणियोंके कल्याणकी दृष्टिसे बड़ी अच्छी बात पूछी है। सच है, साधुपुरुषोंकी बुद्धि ऐसी ही हुआ करती है ॥ १८ ॥ ❀ ❀ सत्पुरुषोंका समागम श्रोता और वक्ता दोनोंको ही अभिमत होता है, क्योंकि उनके प्रश्नोत्तर सभीका कल्याण करते हैं ॥ १९ ॥ ❀ ❀ राजन् ! श्रीमधुसूदन भगवान्के चरणकमलोंके गुणानुवादमें अवश्य ही आपकी अविचल प्रीति है। हर किसीको इसका प्राप्त होना बहुत कठिन है और प्राप्त हो जानेपर यह हृदयके भीतर रहनेवाले उस वासनारूप मलको सर्वथा नष्ट कर देती है, जो और किसी उपायसे जल्दी नहीं छूटता ॥ २० ॥ ❀ ❀ शास्त्र जीवोंके कल्याणके लिये भलीभाँति विचार करनेवाले हैं; उनमें आत्मासे भिन्न देहादिके प्रति वैराग्य तथा अपने आत्मस्वरूप निर्गुण ब्रह्ममें सुदृढ़ अनुराग होना—यही कल्याणका साधन निश्चित किया गया है ॥ २१ ॥ ❀ ❀ शास्त्रोंका यह भी कहना है कि गुरु और शास्त्रके वचनोंमें विश्वास रखनेसे, भागवतधर्मोंका आचरण करनेसे, तत्त्वजिज्ञासासे, ज्ञानयोगकी निष्ठासे, योगेश्वर श्रीहरिकी उपासनासे, नित्यप्रति पुण्यकीर्ति श्रीभगवान्की पावन कथाओंको सुननेसे, जो लोग धन और इन्द्रियोंके भोगोंमें ही रत हैं उनकी गोष्ठीमें प्रेम न रखनेसे, उन्हें प्रिय लगनेवाले पदार्थोंका आसक्तिपूर्वक संग्रह न करनेसे, भगवद्गुणामृतका पान करनेके सिवा अन्य समय आत्मामें ही सन्तुष्ट रहते हुए एकान्त सेवनमें प्रेम रखनेसे, किसी भी जीवको कष्ट न देनेसे, निवृत्तिनिष्ठासे, आत्महितका अनुसन्धान करते रहनेसे, श्रीहरिके पवित्र चरित्ररूप श्रेष्ठ अमृतका आस्वादन करनेसे, निष्कामभावसे यम-नियमोंका पालन करनेसे, कभी किसीकी निन्दा न करनेसे, योगक्षेमके लिये प्रयत्न न करनेसे, शीतोष्णादि द्वन्द्वोंको सहन करनेसे, भक्तजनोंके कानोंको सुख देनेवाले श्रीहरिके गुणोंका बार-बार वर्णन करनेसे और बढ़ते हुए भक्तिभावसे मनुष्यका कार्य-कारणरूप सम्पूर्ण जड-प्रपञ्चसे वैराग्य हो जाता है और आत्मस्वरूप निर्गुण परब्रह्ममें अनायास ही उसकी प्रीति हो जाती है ॥ २२–२५ ॥

हरेर्मुहुस्तत्परकर्णपूरगुणाभिधानेन विजृम्भमाणया।
भक्त्या ह्यसङ्गः सदसत्यनात्मनि स्यान्निर्गुणे ब्रह्मणि चाञ्जसा रतिः ॥ २५ ॥
यदा रतिर्ब्रह्मणि नैष्ठिकी पुमानाचार्यवान् ज्ञानविरागरंहसा।
दहत्यवीर्यं हृदयं जीवकोशं[1] पञ्चात्मकं योनिमिवोत्थितोऽग्निः ॥ २६ ॥

---

१. प्रा० पा०—पाञ्चकोशं।

दग्धाशयो मुक्तसमस्ततद्गुणो नैवात्मनो बहिरन्तर्विचष्टे ।
परात्मनोर्यद् व्यवधानं पुरस्तात् स्वप्ने यथा पुरुषस्तद्विनाशे ॥ २७ ॥
आत्मानमिन्द्रियार्थं च परं यदुभयोरपि । सत्याशय उपाधौ वै पुमान् पश्यति नान्यदा ॥ २८ ॥

अन्वयः—मुहुः तत्परकर्णपूरगुणाभिध्यानेन विजृम्भमाणया हरेः भक्त्या सदसति अनात्मनि असङ्गः च निर्गुणे ब्रह्मणि हि रतिः अंजसा स्यात् ॥ २५ ॥ ❀ ❀ यदा ब्रह्मणि नैष्ठिकी रतिः पुमान् आचार्यवान् ज्ञानविरागरंहसा अवीर्यम् जीवकोशं पञ्चात्मकम् हृदयम् उत्थितः अग्निः योनिम् इव दहति ॥ २६ ॥ ❀ ❀ परात्मनोः यत् व्यवधानम् पुरस्तात् तद्विनाशे पुरुषः दग्धाशयः मुक्तसमस्ततद्गुणः यथा स्वप्ने आत्मनः अन्तः वहिः न एव विचष्टे ॥ २७ ॥ ❀ ❀ पुमान् आत्मानम् इन्द्रियार्थम् च यत् उभयोः अपि परम् आशये उपाधौ सति पश्यति अन्यदा वै न ॥ २८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

कथयेत्यत्रोक्तमपि कथनं भक्तावन्तरंगत्वेन पुनरुच्यते। तत्परा हरिभक्तास्तेषां कर्णपूराः कर्णालंकारभूता ये हरेर्गुणास्तेषामभिधानेन कीर्तनेन सदसति कार्यकारणरूपे ॥ २५ ॥ ❀ ❀ भवत्वन्यत्रासंग आत्मनि रतिश्च ततः किमत आह। यदा निष्ठां प्राप्ता रतिर्भवति तदाचार्यवान्सन् ज्ञानवैराग्ययोर्वेगेनावीर्यं निर्वासनं सज्जीवस्य कोशमावरकं हृदयं पुमान्दहति। कथंभूतम्। पंचमहाभूतप्रधानम्। यद्वा अविद्यास्मितारागद्वेषाभिनिवेशाः पंच तदात्मकम्। उत्थितः प्रज्वलितोऽग्निर्योनिमरणिमिव। यद्वा यदा रतिराचार्यानुग्रहश्च तदा ज्ञानविरागयोर्वेगेनोत्थितः साक्षात्कारो वीर्यं पुनः प्ररोहक्षमं यथा न भवत्येवं हृदयं दहति। शेषं समानम् ॥ २६ ॥ ❀ ❀ ततः किमत आह। दग्ध आशयो हृदयमुपाधिर्यस्य अत एव मुक्ताः समस्तास्तद्गुणाः कर्तृत्वादयो येन आत्मनः सकाशाद्बहिर्घटाद्यंतः सुखदुःखादि नैव विचष्टे न पश्यत्येव। कुत इत्यपेक्षायां द्रष्टृदृश्यप्रतीतेरन्तःकरणहेतुत्वादित्याह। परो दृश्य आत्मा द्रष्टा तयोर्यद्व्यवधानं भेदकं पूर्वमासीत्तस्य विनाशे सति यथा स्वप्ने राजाऽहमित्यारोपितं सैन्यादि द्रष्टारं दृश्यं सैन्यं च स्वप्नावस्थानाशे न पश्यति तद्वत् ॥ २७ ॥ ❀ ❀ द्रष्टृदृश्यभेदप्रतीतेरन्तःकरणहेतुत्वमन्वयव्यतिरेकाभ्यामुपपादयति आत्मानमिति। आत्मानं द्रष्टारमिन्द्रियार्थं दृश्यमुभयोस्तयोः परं सम्बन्धहेतुमहंकारं चाशयेऽन्तःकरणे सत्येव जाग्रत्स्वप्नयोः पश्यत्यन्यदा सुषुप्तौ न। तदुक्तम् "दृश्यानुरंजितं द्रष्टृ दृश्यं द्रष्टृरंजितम्। अहंकृत्योभयं रक्तं तन्नाशेऽद्वैततात्मनः ॥" इति ॥ २८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अत्र सन्दर्भः—ननु हरेर्गुणश्चेदीदृशस्तर्हि स एव पुरुषार्थः स्यात् कथं ब्रह्मज्ञानं साधनत्वेन निर्दिश्यते। उच्यते मुमुक्षूणामेव न तु तदेकपुरुषार्थिनामित्याह–हरेरिति। तत्पराणां तदेकभूषणत्वे कर्णपूररूपाः श्लेषेण कर्णौ पूरयतीत्यपेक्षान्तरनाशकाश्च ये गुणास्तेषामेवान्यकर्तृकेनान्यविषयेण वाभिधानेन विजृंभमाणा या भक्तिर्मुमुक्षामयी तयैव केवलया सदसतीति कार्योपाधिरयं जीवः कारणोपाधिरीश्वर इति श्रुत्या कार्यकारणात्मकजीवेशोपाधावनात्मन्यसंगो यदा तदा तद्बाधेन तद्विविक्ते प्रत्यग्रूपे निर्गुणे ब्रह्मणि अञ्जसा स्वाभाविकी रतिः स्यादित्यर्थः ॥ २५ ॥ ❀ ❀ अत्राक्षिप्य समाधत्ते–भवत्विति। ततोऽन्यत्रासंगात्मरतेः। आचार्यवान् गुरुभक्तिमान्। हृदयं लिंगशरीरमहंकारात्मकं लिंगशरीरं जीवस्य गृहस्थानीयं तद्दाहे जीवोऽपि दग्धः स्यादिति चेदाह–पंचेति। पञ्चमहाभूतात्मकत्वं स्थूलदेहस्याप्यस्तीत्यत आह–यद्वेति। अविद्याद्यात्मकत्वं त्वहंकारस्यैव न तु स्थूलदेहस्येत्यर्थः। यथाऽरणाववस्थितोऽग्निररणिमेव दहति एवं प्राकृतबुद्धीन्द्रियादावुत्थिता रतिस्तमेव दहति वह्निना काष्ठं दहतीत्यादौ वह्निरेव काष्ठं दहतीतिवद्दार्ष्टांतिकसंगतिः। पूर्वव्याख्याने पूर्वं रतिः पश्चादाचार्यवानित्युक्तेर्वैपरीत्यप्रतीतेर्न त्वाचार्यानुग्रहं विना पूर्वमेव रतिरुदयते रतिश्च ज्ञात एव वस्तुनि भवति ज्ञानञ्च "आचार्यवान्पुरुषो वेद" इति श्रुतेराचार्यानुग्रहात्पश्चादेव स्यादत आह–यद्वेति ॥ २६ ॥ ❀ ❀ ततो लिंगदेहनाशात्। अत एव दग्धाशयत्वादेव। तद्गुणा आशयधर्माः। आदिना भोक्तृत्वादिग्रहः। आदिना पटादिग्रहः। पुनरादिना शोकमोहादिग्रहः। अत्र हेतुमाशंकते–कुत इति। भेदकमहंकाराख्यांतःकरणं यदासीत्तस्यांतःकरणस्य ॥ २७ ॥ ❀ ❀ अत्र विश्वनाथः–लिंगदेह एव जीवस्योपाधिस्स एव व्यवधानशब्दवाच्यस्तत्सत्त्वे तमेव पश्यति तदभावे परमात्मानमेव पश्यतीत्याह–आत्मानं भोक्तारमुपाधिग्रस्तजीवमिन्द्रियार्थं भोग्यञ्च परं भोगोत्थं सुखदुःखं चाशये लिंगदेहे उपाधौ सत्येव पुमान्पश्यति न त्वन्यदा। लिंगदेहाभावे तदा तु परमात्मानमेव पश्यतीति भावः ॥ २८ ॥

### श्रीमद्वीरराघवव्याख्या

हरेर्भगवतः तत्परा भागवतास्तेषां कर्णपूराः कर्णालङ्कारभूताः कर्णेषु प्रवाहरूपा वा ये गुणाः गुणशब्दस्य सापेक्षत्वेऽपि सम्बन्धिशब्दत्वात् समासः, तेषामभिधानेन विजृम्भमाणया भक्त्या परभक्त्या भगवद्गुणश्रवणस्मरणादेरर्थकामवैतृष्ण्यात् तत्त्वहितपुरुषार्थविवित्साजननद्वाराचार्योपसत्तिहेतुत्वाभिप्रायेण पुण्यश्रवःकथया पुण्यया चेत्युक्तम्। उपासनदशायामप्यानन्दकरत्वाभिप्रायेण मुकुन्दाचरिताग्र्यशीधुनेत्युक्तम्। अत्र तु आप्रयाणानुवर्तमानाहरहरभ्यासाधेयातिशयदर्शनसमानाकारं ध्यानोपासनादिशब्दवाच्यपरभक्तेस्तज्जनितभगवत्स्वरूपसाक्षात्कारलक्षणपरज्ञानजन्यभगवत्प्रीत्यतिशयरूपसमाधिपरमभक्त्याद्यपरपर्यायरति - निष्पादकत्वेऽनुग्राहकत्वाभिप्रायेण हरेर्मुहुस्तत्परकर्णपूरगुणाभिधानेनेत्युक्तमिति न पौनरुक्त्यम् ॥ २५ ॥ ❀ ❀ एवं श्रद्धादिसहकृतपरभक्तिजन्यपरज्ञानजन्यसमाध्यपरपर्यायरतेः क्षेमसाधनत्वमुपपाद्य केन प्रकारेण रतेः साधनत्वमिति विवित्सायामाह यदेति। यदा च ब्रह्मणि नैष्ठिकी दृढा रतिः तदा आचार्यवान् आचार्यानुग्रहविषयः पुरुषः ज्ञानविरागसहकृतरत्यात्मकज्ञानवेगेन उद्रिक्तरत्येत्यर्थः। हृदयं हृत्स्थानं प्राप्नुवन् जीवात्मा 'हृदि ह्ययमात्मे'ति श्रुतेः पञ्चात्मकं पञ्चभूतात्मकं जीवकोशं शरीरम् अबीजं बीजरहितं भिन्नाज्ञानरूपमूलं यथा तथा, यद्वा छिन्नपुण्यपापमूलं यथा दहति सन्तापयति अज्ञानकृतपुण्यपापमूलो हि देहसम्बन्धः देहसम्बन्धनिमित्ताज्ञानमूलकपुण्यपापात्मकं कर्म्म निःशेषं दहति रतिः क्षेमसाधनमित्यर्थः। देहमाश्रित्य तिष्ठतो जीवस्य ज्ञानार्चिषः स्वाश्रयदेहदाहे दृष्टान्तमाह योनिमिवेति। उत्थितः ज्वलितोऽग्निः योनिमरणिमिवेत्यर्थः। दहत्यवीर्यमिति पाठेऽप्ययमेवार्थः, देहस्य वीर्यं मलं हि पुण्यपापात्मकं कर्मैव ॥ २६ ॥ ❀ ❀ एवं देहसम्बन्धनिमित्तं पुण्यपापरूपं कर्म निःशेषं दहन्त्या रत्या मुक्तस्य न पुनः पञ्चात्मकजीवकोशसम्बन्ध इत्याह दग्धाशय इति। एवं दग्धाशयः दग्धशरीरः मुक्ताः समस्ता गुणा हेयगुणा रागादयो येन सः आत्मनः बहिर्भूतं शरीरमन्तः अन्तर्भूतं रागादिदोषजातं च न विचष्टे न पश्यति न पुनर्देहादिसम्बन्धं प्राप्नोतीत्यर्थः। बहिरन्तश्च विशिनष्टि। तद्विनाशे देहविनाशे पुरस्तात्संसृतिदशायां परात्मनोर्जीवपरयोर्यद्व्यवधानं व्यवधायकं सम्बन्धज्ञानच्यावकं भवति तच्छरीरं तज्जन्यरागद्वेषादिकं च न पश्यति परात्मनोर्यद्व्यवधानं पुरस्तादित्यनेन मुक्तजीवपरयोः सम्बन्धज्ञानप्रच्यावो नेत्युक्तं भवति। स्वप्ने यथा देहं रागादिकं च पश्यति तथेत्यर्थः। देहाद्यस्थिरत्वेश्वरसृष्टत्वज्ञापनाय स्वप्नदृष्टान्तः ॥ २७ ॥ ❀ ❀ कुतो न पश्यति तत्राह आत्मानमिति। आत्मानं देहमिन्द्रियार्थं शब्दादिकमुभयोर्देहेन्द्रियार्थयोर्यत्परमन्यत् भोगोपकरणभोगस्थानादिकं तत्सर्वमाशये वासनाख्ये उपाधौ सति पुमान् पश्यति नान्यथेत्यर्थः। वासना करणस्थानभोगोपकरणादिषु प्रावण्यम् ॥ २८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तत्परा हरिपरास्तेषां कर्णं पूरयतीति कर्णपूरणं कर्णाभरणं वा यद्धरेर्मुहुर्गुणाभिधानं तेन लिङ्गव्यत्ययश्छांदसः यद्वा हरेर्गुणाभिधानेन विजृम्भमाणया भक्त्या कीदृश्या तत्परकर्णपूरया एतैरुक्तैः साधनैः सदसत्कार्यकारणात्मकप्रपञ्चविषयेऽसङ्गः स्यात् प्रथमा सप्तम्यर्थे परात्मनि मुक्तप्रपञ्चस्वामिनि निर्गुणे ब्रह्मणि च रतिः स्यादित्यन्वयः। यद्वा सदसतो जगतः परश्चात्मा चेति सदसत्परात्मा तस्मिन् ॥ २५ ॥ ❀ ❀ अस्तु ब्रह्मण्यसङ्गनिशिता रतिस्ततः किं तत्राह यदेति। यदा ब्रह्मणि नैष्ठिकी सर्वोत्कृष्टा रतिरपरोक्षज्ञानलक्षणा भवति तदाचार्यवांस्तदुपदिष्टार्थसाफल्यात्तद्भक्तिमान् पुमान् ज्ञानवैराग्ययो रंहसोद्रेकेणाबीजं हृदयं स्वरूपोपाधिं विना बाह्योपाधिं दहतीत्यन्वयः। किमनेन जीवस्येत्यत उक्तं जीवकोशमिति जीवस्य गृहस्थानीयं तर्हि तदाहे जीवोऽपि दग्धः स्यादित्यत उक्तं पञ्चात्मकमिति। पञ्चभूतस्वरूपमत एव बाह्यमित्युच्यते "जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्यमेव च। बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः। सर्वोपाधिविनाशे हि प्रतिबिम्बः कथं भवेत्। कथं चात्मविनाशाय प्रयत्नः सेत्स्यते क्वचित्॥ अपुमर्थता च मुक्तेः स्यादभावात्पुंस एव तु। ज्ञानज्ञेयाद्यभावाच्च सर्वथा नोपपद्यते॥ तस्मादेतन्मतं येषां तमोनिष्ठा हि ते मताः।" इति वचनात् न स्वरूपबीजहृदयदाहोऽत्रार्थः किंत्वस्वरूपोपाधेरित्यभिप्रायः। तत्र दृष्टान्तमाह योनिमिति। अरणेरुत्थितोऽग्निरिवेति ॥ २६ ॥ ❀ ❀ बीजाशयनाशे तद्गुणानां ज्ञानादीनामपि नाशादात्मनो बहिरन्तरिति भेदं न विचष्टे न विपश्यति। अन्यदर्शनाभावेपि स्वात्मानं पश्यतीत्यत एवेति अन्धवद्द्रष्टव्याभावात् न किञ्चिदपि पश्यतीत्यर्थः। कथं तर्हि संसारावस्थायामत्राह परात्मनोरिति। परस्येश्वरस्यात्मनो जीवस्य च यद्यदा पुरस्तात्संसारावस्थायां व्यवधानजवनिकास्थानीयावस्था तदा यथा स्वप्ने संदिग्धज्ञानमेतावद्दानं भवतीति तत्र तद्विनाशे बीजहृदयनाशे त्वपुरुष एवात्मनाश एवातः स्वरूपज्ञाननाशात्संसारावस्थैवोत्तमा स्यात्किंचिद् ज्ञानस्यापि संभवादित्यर्थः। उक्तादन्यथा स्वीकारे भिदा यदि न दृश्येत जीवात्मपरमात्मनोः मुक्तौ तदा विमोक्षाय को यत्नं कर्तुमर्हति। "मग्नस्य हि परे ज्ञाने किं न दुःखतरं भवेत्। प्रवृत्तिधर्ममेवाहं मन्ये भरतसत्तम!" इति प्रमाणविरोध आपद्येत इति ॥ २७ ॥ ❀ ❀ अतः फलितमाह आत्मानमिति। आत्मानं जीवमिन्द्रियार्थं शब्दादिविषयं च यद्प्युभयोरात्मेन्द्रियार्थयोः परमुत्तममीश्वरतत्त्वं बीजाशयलक्षण उपाधौ सत्येव पुमान् पश्यति अन्यदा तदभावे न पश्यतीत्यन्वयः ॥ २८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

ननु हरेर्गुणश्रवेदीदृशस्तर्हि स एव पुरुषार्थः स्यात् कथं ब्रह्मज्ञानं साधनत्वेन निर्दिश्यते। उच्यते मुमुक्षूणामेव न तु तदेक-पुरुषार्थिनामित्याह हरेरिति। तत्पराणां तदेकभूषणत्वे कर्णपूररूपाः श्लेषेण कर्णौ पूरयन्तीत्यपेक्षान्तरनाशकाश्च ये गुणास्तेषा-मेवान्यकर्तृकेनान्यविषयेण वाभिधानेन विजृम्भमाणा या भक्तिर्मुमुक्षामयी तयैव केवलया हि निश्चितमसङ्गो वैराग्यं निर्गुणे ब्रह्मणि च रतिः स्यादिति योज्यम् ॥ २५-३० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

कथयेत्यत्रोक्तमपि कथनं भक्तावन्तरङ्गत्वेन पुनरुच्यते तत्परा हरिभक्तास्तेषां कर्णपूराः कर्णालङ्कारभूता ये हरेर्गुणास्ते-षामभिधानेन। अनात्मनि आत्मव्यतिरिक्ते सदसति भद्राभद्रे जगति असङ्गोऽनासक्तिः ॥ २५ ॥ ❀ ❀ ततः किं स्यादित्यत आह यदेति। आचार्य्यवान् गुरुभक्तिमान् रत्युत्थयोर्ज्ञानवैराग्ययोर्वेगेन अवीर्यं निष्प्रभावं जीवस्य कोषमावरकं हृदयमहङ्कारात्मकं लिङ्गदेहं पुमान् दहति। कथम्भूतं पञ्चात्मकं अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशास्तदात्मकं यथा अरणावुत्थितोऽग्निः स्वयोनिमरणिमेव दहति तथैव प्राकृतबुद्धीन्द्रियादौ लिङ्गदेह एव उत्थिता रतिस्तमेव दहति वह्निना काष्ठं दहतीत्युक्तौ वह्निरेव काष्ठं दहतीतिवद्दार्ष्टान्तिकसङ्गतिः ॥ २६ ॥ ❀ ❀ ततः किमत आह। दग्धाशयो दग्धलिङ्गदेहः। अत एव मुक्तास्त्यक्ताः समस्तास्तद्गुणाः कर्तृत्वादयो येन सः। आत्मनः स्वस्य बहिर्बाह्यं शब्दस्पर्शादिकं भोग्यमर्थमन्तः शोकमोहादिकञ्च नैव विचष्टे। परात्मनोः परमात्मजीवात्मनोर्यदेव मध्ये पुरस्तात् पूर्वं व्यवधानमासीत्तन्न पश्यतीत्यव्यवहितं परमात्मानमेव पश्यतीत्यर्थः। यथा स्वप्ने दृष्टं स्वप्नविनाशे सति न पश्यति ॥ २७ ॥ ❀ ❀ लिङ्गदेह एव जीवस्योपाधिः स एव व्यवधानशब्दवाच्य-स्तन्सत्त्वे तमेव पश्यति तदभावे परमात्मानमेव पश्यतीत्याह। आत्मानं भोक्तारमुपाधिधर्म्मग्रस्तं जीवमिन्द्रियार्थं भोग्यञ्च परं भोगोत्थं सुखदुःखञ्च आशये लिङ्गदेहे उपाधौ सत्येव पुमान् पश्यति न त्वन्यदा लिङ्गदेहाभावे। तदा तु परमात्मानमेव पश्य-तीति भावः ॥ २८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

मुहुः पुनः पुनः तत्पराणां कर्णपूराः श्रोत्रभूषणा ये हरेर्गुणास्तेषामभिधानेन विजृम्भमाणया भक्त्या च सदसति स्थूलसूक्ष्मरूपे अनात्मनि आत्मव्यतिरिक्ते संसारे असङ्गः ब्रह्मणि परमात्मनि रतिस्तया ध्रुवानुस्मृत्यपरपर्यायया भगवद्भावप्राप्ति-लक्षणः क्षेमश्च स्यात् ॥ २५ ॥ ❀ ❀ एवं श्रद्धादिसंयुक्तया भक्त्या भगवति रतिस्तया मोक्षलक्षणः क्षेम इत्युक्तमथ संक्षेपतो मुक्तिक्रममाह यदेति। यदा मुक्त्यर्हे जन्मनि पुमानाचार्यवान् भवति "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् आचार्यवान्पुरुषो वेद" इत्यादिश्रुतेः। ज्ञानप्रदं गुरुं प्राप्नोतीत्यर्थः। तदा तत्प्रसादलब्धज्ञानविरागयो रंहसा वेगेन ब्रह्मणि नैष्ठिकी ध्रुवानुस्मृतिलक्षणा रतिर्भवति। स ज्ञानवैराग्यरतिसम्पन्नः पुमान् अवीर्यं दुर्बलं हृदयं मनोयुक्तं जीवकोशमात्मावरकं पञ्चात्मकं पञ्चतन्मात्रात्मकं लिङ्गदेहं योनिं काष्ठमग्निरिव दहति मुक्तो भवतीत्यन्वयः ॥ २६ ॥ ❀ ❀ तदा दग्धाशयः दग्ध आशयो नानावासनामयोऽहङ्कारो यस्य सः अत एव मुक्ताः समस्ताः तद्गुणाः अहङ्कारगुणा येन सः आत्मनः सकाशात् बहिः मित्रशत्र्वादितत्कृतमन्तर्मानापमानादि नैव विचष्टे नैव पश्यति यथा स्वप्ने मित्रशत्र्वादि बहिः तत्कृतं मानापमानादि च अन्तर्दृष्टं तद्विनाशे तु नैव विचष्टे तद्वत्। परः परमात्मा आत्मा जीवस्तयोः पुरस्तात् यद् व्यव-धानम् 'अन्योऽसावन्योऽहमस्मि न स वेद यथा पशुरि'त्यादिश्रुत्या दर्शितमत्यन्तभेदं च नैव विचष्टे ॥ २७ ॥ ❀ ❀ आत्मानं पाञ्चभौतिकं देहमिन्द्रियाणि श्रोत्रादीनि अर्थात् शब्दादीन् समाहारद्वन्द्वैक्यम् यदुभयोरिन्द्रियार्थयोः परं विश्वं तच्च आशये नानावासनामये अहंकारे उपाधौ सति पश्यति अन्यदा तल्लयस्थाने सुषुप्त्यादौ न पश्यति। मुक्तौ समूलाहंकारनाशे आत्मनो बहिरन्तर्न विचष्टे इति किमुत वक्तव्यम् ॥ २८ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

कथया पुण्यया चेत्यत्र कथाश्रवणमुक्तम्, मुकुन्दाचरिताग्र्यसीधुनेति भगवल्लीलास्मरणमुक्तम्, अत्र तु भगवद्गुणानां कीर्तनमुच्यते इत्यपौनरुक्त्यं बोध्यम्। सच्छब्देन भगवानेव परः सर्वत उत्कृष्टतया भजनीयो येषां भक्तानां ते तत्परास्तेषां कर्णपूराः कर्णालङ्कारभूताः कर्णयोः पूरणं यैस्ते तथा इति वा एवम्भूता गुणा भगवतो यशांसि तेषामभिधानेन। तदपि नैकदा किन्तु मुहुरहर्निशं विजृम्भमाणया प्रतिक्षणं वर्द्धमानया हरेर्भक्त्या च। हिरवधारणे, एवमनेकविधसाधनैरेव सदसति स्थूल-सूक्ष्मात्मनि आत्मव्यतिरिक्ते प्रपञ्चे असङ्गो वैराग्यं निर्गुणे गुणातीते ब्रह्मणि रतिश्चाञ्जसा साक्षात् दृढा स्यादित्यन्वयः ॥ २५ ॥ ❀ ❀ ततश्च किं भवतीत्यपेक्षायामाह—यदेति। यदा नैष्ठिकी निश्चला ब्रह्मणि रतिर्भवति तदा पुमानाचार्यवान् विद्यानिधिं

ब्रह्मनिष्ठं गुरुं प्राप्य ज्ञानविरागरंहसा ज्ञानवैराग्ययोर्वेगेन जीवस्य कोशमावरकं हृदयमन्तःकरणमवीर्यं पुनः प्ररोहायोग्यं यथा भवत्येवं दहतीत्यन्वयः। एतद्दाहं विना न संसारनिवृत्तिरतस्तत्पर्यन्तः प्रयत्नो विधेय इत्याशयेन विशिनष्टि—जीवकोशमिति। तद्दाहसम्भावनार्थं विशिनष्टि—पञ्चात्मकमिति। पञ्चमहाभूतात्मकमित्यर्थः। यद्वा तस्य दाहो महता प्रयत्नेन भवतीति सावधानतार्थं तस्य दाढर्यं द्योतयन् विशिनष्टि—पञ्चात्मकमिति। अविद्यास्मितारागद्वेषाभिनिवेशा इति सूत्रोक्ताविद्यादिपञ्चक्लेशात्मकम्। ननु हृदयादुत्पन्नेन ज्ञानेन हृदयस्यैव कथं दाहः सम्भवत्युपजीव्यविरोधादित्याशङ्क्य दृष्टान्तेन सम्भावयति—योनिमिवेति। यथा तृणादित उत्थितः प्रज्वलितोऽग्निः स्वयोनिं तृणादिकं दहति तथेत्यर्थः॥ २६॥ ❀ ❀ ततश्च कृतार्थो भवतीत्याह दग्धाशय इति। दग्धः आशयो हृदयं यस्य सः। अत एव मुक्ताः समस्तास्तद्गुणाः अहन्ताममताकामक्रोधलोभादयो येन सः। आत्मनो देहात्सकाशाद्बहिर्गृहापत्यादि अन्तः सुखदुःखादि नैव विचष्टे नैव पश्यति। कुत इत्यपेक्षायां तथादर्शनकरणस्य विनष्टत्वादित्याह—परेति। परः आत्मव्यतिरिक्तो दृश्यः आत्मा चेतनो द्रष्टा तयोर्यत् व्यवधानं व्यवधायकमन्तःकरणं पुरस्तात् पूर्वंव्यवहारदशायामासीत् तस्येदानीं विनाशे सति। तत्र दृष्टान्तमाह—स्वप्न इति, यथा स्वप्नावस्थायां तदनुकूले अन्तःकरणे सति द्रष्टारमात्मानं दृश्यं च तत्रत्यवस्तु पश्यति तद्विनाशे न पश्यति तद्वदित्यर्थः॥ २७॥ ❀ ❀ पूर्वोक्तमेवान्तःकरणस्य द्रष्टृदृश्यभेदप्रतीतिहेतुत्वमन्वयव्यतिरेकाभ्यामुपपादयति—आत्मानमिति। उपाधिभूत आशयेऽन्तःकरणे सत्येव जाग्रत्स्वप्नयोरात्मानं द्रष्टारमिन्द्रियाणामर्थविषयं दृश्यमुभयोस्तयोः परं यद्दर्शनहेतुं अहङ्कारं चापि पुमान् पश्यति। अन्यदा सुषुप्तिसमाध्याद्यवस्थायामन्तःकरणस्य लीनत्वान्न तथा पश्यतीत्यन्वयः॥ २८॥

### भाषानुवादः

परब्रह्ममें सुदृढ़ प्रीति हो जानेपर पुरुष सद्गुरुकी शरण लेता है; फिर ज्ञान और वैराग्यके प्रबल वेगके कारण वासनाशून्य हुए अपने अविद्यादि पाँच प्रकारके क्लेशोंसे युक्त अहङ्कारात्मक अपने लिङ्गशरीरको वह उसी प्रकार भस्म कर देता है, जैसे अग्नि लकड़ीसे प्रकट होकर फिर उसीको जला डालती है॥ २६॥ ❀ ❀ इस प्रकार लिङ्गदेहका नाश होनेपर वह उसके कर्तृत्वादि सभी गुणोंसे मुक्त हो जाता है। फिर तो जैसे स्वप्नावस्थामें तरह-तरहके पदार्थ देखनेपर भी उससे जग पड़नेपर उनमेंसे कोई चीज दिखायी नहीं देती, उसी प्रकार वह पुरुष शरीरके बाहर दिखायी देनेवाले घट-पटादि और भीतर अनुभव होनेवाले सुख-दुःखादिको भी नहीं देखता। इस स्थितिके प्राप्त होनेसे पहले ये पदार्थ ही जीवात्मा और परमात्माके बीचमें रहकर उनका भेद कर रहे थे॥ २७॥ ❀ ❀ जबतक अन्तःकरणरूप उपाधि रहती है, तभीतक पुरुषको जीवात्मा, इन्द्रियोंके विषय और इन दोनोंका सम्बन्ध करानेवाले अहङ्कारका अनुभव होता है; इसके बाद नहीं॥ २८॥

**निमित्ते सति सर्वत्र जलादावपि पूरुषः। आत्मनश्च परस्यापि भिदां पश्यति नान्यदा॥ २९॥**
**इन्द्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतां मनः। चेतनां हरते बुद्धेः स्तम्बस्तोयमिव ह्रदात्॥ ३०॥**
**भ्रश्यत्यनु स्मृतिश्चित्तं ज्ञानभ्रंशः स्मृतिक्षये। तद्रोधं कवयः प्राहुरात्मापह्नवमात्मनः॥ ३१॥**
**नातः परतरो लोके पुंसः स्वार्थव्यतिक्रमः। यदध्यन्यस्य प्रेयस्त्वमात्मनः स्वव्यतिक्रमात्॥ ३२॥**

अन्वयः—पूरुषः सर्वत्र जलादौ अपि निमित्ते सति आत्मनः च परस्य अपि भिदाम् पश्यति अन्यदा न॥ २९॥ ❀ ❀ ध्यायताम् विषयाकृष्टैः इन्द्रियैः आक्षिप्तम् मनः बुद्धेः चेतनाम् स्तम्बः ह्रदात् तोयम् इव हरते॥ ३०॥ ❀ ❀ चित्तम् अनु स्मृतिः भ्रश्यति स्मृतिक्षये ज्ञानभ्रंशः कवयः तद्रोधम् आत्मनः आत्मापह्नवम् प्राहुः॥३१॥ ❀ ❀ यत् अधि अन्यस्य प्रेयस्त्वम् आत्मनः अतः स्वव्यतिक्रमात् परतरः स्वार्थव्यतिक्रमः लोके पुंसः न॥३२॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

एकस्मिन्नात्मनि दृश्यादिभेदप्रतीतिरौपाधिकीति दृष्टान्तेन स्पष्टयति निमित्त इति। लोकेऽपि च सर्वत्र जलदर्पणादौ भेदनिमित्ते सत्येवात्मनो बिम्बभूतस्य परस्य प्रतिबिम्बस्य च भेदं पश्यति न तु जलाद्यभावे॥ २९॥ ❀ ❀ तदेवं चतुर्भिरसंगात्मरत्योर्मोक्षहेतुत्वमुक्तमिदानीमनात्मरतेः संसारहेतुत्वमाह इन्द्रियैरिति चतुर्भिः। ध्यायतां गुणारोपेण स्मरतां पुंसामिन्द्रियाणि स्मृतैर्विषयैराकृष्यन्ते तैश्च मन आकृष्यते विषयासक्तिं प्राप्यते। तच्च बुद्धेः सकाशात्तद्धर्मं चेतनां विचारसामर्थ्यं हरति। एतच्चाविवेकिना न लक्ष्यत इति दृष्टान्तेनाह। तीरजः कुशादिस्तम्बो यथा मूलैस्तोयं ह्रदादपहरति तद्वत्॥ ३०॥ ❀ ❀ चित्तं चेतनामनु तस्यामपहृतायां स्मृतिः पूर्वापरानुसन्धानं भ्रश्यति। एवं तद्रोधं ज्ञानभ्रंशमात्मन एव हेतोरात्मनोऽपह्नवं नाशं प्राहुः॥ ३१॥ ❀ ❀ एवंभूतो नाशो भवतु ततश्च किमित्यत आह। यदधि यमधिकृत्यान्यस्य विषयस्य प्रियतमत्वम्। "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति श्रुतेः। तस्यात्मनः स्वेनैव यो व्यतिक्रमोऽपह्नवस्तत्साध्यः स्वार्थनाशोऽतः परतरः स्वार्थनाशो नास्ति॥ ३२॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

किञ्च उपाधिसत्त्वे एवौपाधिकधर्माध्यासः स चोपाधिः कर्मवशान्मानुषदेवतिर्यगादिर्भवति। न तु तदभाव इत्यत्र दृष्टान्तमाह–निमित्त इति। जलतैलचक्षुरादौ निमित्ते विद्यमान एव पुरुष आत्मनः स्वस्य परस्यान्यस्य च भिदामुपाधेर्मध्यमोत्तमाधमभेदं पश्यति। तत्र जले चांचल्यं दर्पणे नैर्मल्यं चक्षुषि मालिन्यं च यथा पश्यति तथैव मानुषदेवतिर्यक्शरीरेषु भद्राभद्रं केवलं भद्रं केवलाभद्रञ्च पश्यति नान्यदेति ज्ञानेनोपाधिनाशे तु न तथा पश्यति। किन्तु परमात्मानमेव पश्यति। भक्त्योपाध्यपगमे तु शुद्धो जीवो रतिमहिम्नैव लब्धचिद्घनानन्दविग्रहः परमात्मन एव तस्य नारायणरामकृष्णादिचिद्घनानन्दाकारस्य षडैश्वर्यमाधुर्यवतः सौन्दर्यादिकं स्वीयनयनादिभिरास्वादयेदिति मुख्यं फलं द्रष्टव्यं "तस्मिन्नयौ परमहंसमहामुनीनामन्वेषणीयचरणौ चलयन्सहश्रीः" इत्याद्युक्तेः ॥ २९ ॥ ॐ ॐ ध्यायतां ध्यातुमनिच्छतामप्यभ्यासपारवश्येन ध्यायतामरण्येपि तिष्ठतां पुंसामिन्द्रियाणि पुत्रकलत्रादीनां शब्दस्पर्शादिभिः स्मृत्यारूढैः प्रथममाकृष्यन्ते, ततो विषयाकृष्टैरिन्द्रियैराक्षिप्तमिति विश्वनाथः ॥ ३० ॥ ॐ ॐ तस्यां चेतनायाम् ॥ ३१ ॥ ॐ ॐ तत आत्मनाशात्किमनिष्टम्। यद्वा कीदृशं प्रेयस्त्वं न धीः परामर्शो यत्रातदधि यद्यत आत्मनोन्यस्य विषयस्य स्त्रीपुत्रादेः ॥ ३२ ॥

### श्रीमद्वीरराघवव्याख्या

एवं मुक्तावुपाध्यभावादौपाधिकदेहाद्यसम्बन्धः स्वाभाविकजीवसम्बन्धज्ञानसद्भावश्चोक्तः। संसृतावुपाधिसद्भावाज्जीवसम्बन्धज्ञानाभावमाह निमित्त इति। जडं शरीरं सर्वस्मिन् जडादौ निमित्ते शरीराद्युपाधौ सति आत्मनः स्वस्य परस्य परमात्मनश्च भिदां सम्बन्धविरहं पश्यति। अन्यथा उपाध्यभावे मुक्ताविरर्थः न पश्यति। यद्वा भिदां वैषम्यं पश्यति नान्यदा शरीराद्युपाधिविगमे परमसाम्याविर्भावान्न वैषम्यं पश्यतीत्यर्थः ॥२९॥ ॐ ॐ अत्र दृढा रतिर्नैष्ठिकी रतिरिति अन्तरा विषयान्तरानुचिन्तनं रतिविरोधीत्यवगम्यते तस्य च विरोधित्वं सङ्गादिजननद्वारेति सङ्गः प्रतिषिद्धः। असङ्ग आत्मव्यतिरिक्ते असङ्गः सदसत्यनात्मनि ज्ञानविरागरंहसेति तद्विषयचिन्तनायाः सङ्गादिद्वारा रतिविरोधित्वमुपपादयति इन्द्रियैरित्यादिना। ध्यायतां विषयचिन्तनं कुर्वतां विषयैः शब्दादिभिः आकृष्टानि यानीन्द्रियाणि तैर्मन आकृष्टं आक्षिप्तं सत् बुद्धेः पुरुषार्थतत्साधनव्यवसायात्मिकाया बुद्धेः चेतनां तत्स्वसबन्धि ज्ञानं पुरुषार्थतत्साधनविषयां व्यवसायरूपां बुद्धिं वृत्तिं हरति। तत्र दृष्टान्तः स्तम्बः तीरस्थकुशादिस्तम्बः केनचिदाकृष्टो यथा तीरशैथिल्यहेतुतया ह्रदात्तोयमपि च्यावयति तद्वदिति। यद्वा स्तम्बो यथा मूले तोयं ह्रदादुपहरति। चिन्तनाविषयशब्दादिविषयाक्षिप्तबाह्येन्द्रियाक्षिप्तमनसि शब्दादिविषयेषु अन्यपरे सति मोक्षतदुपायानवसातुं बुद्धिर्न शक्नोतीत्युक्तं भवति ॥ ३० ॥ ॐ ॐ एवं व्यवसाये भग्ने सति अनुस्मृतिरुपासनं योगकालानुसन्धानं भ्रश्यति तदनुग्राहकं कालान्तरेपूपास्यसंशीलनरूपं चित्तं चिन्तनं च भ्रश्यति। एवं स्मृतिक्षये उपासनाक्षये सति ज्ञानभ्रंशः स्वपरयाथात्म्यज्ञानभ्रंशो भवति। तद्रोधकं ज्ञानभ्रंशं कवयः सूरयः आत्मनः एव हेतोरात्मापह्नवम् आत्मनस्तिरोधानं प्राहुः। उपासनविच्छेदादात्मरूपस्य भगवच्छेषतया न विशदावभास इत्यर्थः। तथा चोक्तम् "योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चौरेणात्मापहारिणे"ति ॥ ३१ ॥ ॐ ॐ एतदेवाह नात इति। आत्मनः हेतोः स्वस्य व्यतिक्रमात् स्वस्वरूपातिलङ्घनात्स्वस्वरूपं विहायात्मनोऽन्यस्य प्रेयस्त्वं शब्दादिविषयप्रेयस्त्वं यदस्ति अतः परतरः पुंसः स्वार्थव्यतिक्रमः स्वपुरुषार्थविरहः लोके नास्ति ॥ ३२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तत्र दृष्टान्तमाह निमित्त इति। जीवात्मपरमात्मनोर्भेदस्यान्वयव्यतिरेकसिद्धत्वेन प्रामाणिकत्वात्तदपलापे महासुरत्वमेव स्यादिति भावः ॥ २९ ॥ ॐ ॐ जीवपरयोः सत्यभेदाप्रतीतौ किं कारणमित्याशङ्क्याज्ञानमेव तत्र कारणं तदपि विषयातिसक्त्या स्यादित्याह इन्द्रियैरिति। पुंसो मनो बुद्धेश्चेतनां बहुस्मरणशक्तिं हरत इत्यन्वयः "बहुस्मरणशक्तिस्तु चेतनेत्युच्यते बुधैः" इति वचनात्। मनसो हरणे कारणानीन्द्रियाणीत्याह इन्द्रियैरिति। हरिकथाश्रवणादियोग्यैः श्रोत्रादीन्द्रियैराक्षेपे चायं हेतुरित्याह विषयाकृष्टैरिति। दृष्टान्तेन बुद्ध्यारूढं करोति स्तम्ब इति, स्तम्बो जलनिर्गमद्वारम् ॥ ३० ॥ ॐ ॐ बुद्धेर्बहुस्मरणशक्तिभ्रंशे सर्वानर्था आपद्यन्त इत्याह भ्रश्यतीति। भ्रष्टं चित्तमनु बहुस्मरणशक्तिभ्रंशानन्तरं स्मृतिरनेकशास्त्रयथार्थस्मरणसामर्थ्यं भ्रश्यति। स्मृतिक्षयेऽनेकशास्त्रयथार्थस्मरणशक्तिनाशे सर्वोत्तमः स्वतन्त्रः पञ्चविधभेदस्वामी मदादिसर्वं तदधीनमेनं भावं मरणेऽपि न मुञ्चामीति भगवत्पक्षपातलक्षणं ज्ञानं भ्रश्यति। तदस्तु ततः किं तत्राह तद्रोधमिति। कवय आत्मनो ज्ञानस्वरूपस्य तस्य तादृशस्य ज्ञानस्य रोधं नाशमात्मनः स्वरूपस्यापह्नवं नाशं प्राहुरित्यन्वयः ॥ ३१ ॥ ॐ ॐ अतश्च किमनिष्टमापन्नमत्राह नात इति। पुंसः स्वार्थव्यतिक्रमः स्वप्रयोजनस्य व्यतिक्रमो नाशोऽतः स्वरूपभूतज्ञाननाशात्परतरोऽन्यतमो नाशो लोके नास्तीत्यन्वयः। आत्मनो निरवयवत्वात्तन्नाशोऽनवशेषो घटादीनां सावयवत्वेन तन्नाशः सावशेषो दृष्ट इति विशेषद्योतनाय लोक इत्युक्तम्। ननु देहपुत्रादेरपि प्रेयस्त्वात्तन्नाशस्यापि महानाशत्वेन दुःखहेतुत्वात् किं ज्ञाननाशो विशिष्योच्यत इति तत्राह यदस्तीति। आत्मनोऽन्यस्य देह-

पुत्रादेर्यद्यपि प्रेयस्त्वमस्ति तथापि पुत्रादेरात्मशेषत्वेन प्रियत्वात्तन्नाशस्य स्वव्यतिक्रमात्स्वरूपज्ञाननाशादाधिक्यं नास्तीति पूर्वं नञध्याहारेणान्वेतव्यमत एव नातः परतर इत्युक्तम्। केचिन्न ह्यस्तीति पठन्ति। तत्पक्षेऽध्याहारं विनान्वयः कर्तव्यः ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

आत्मनः सोपाधेः आत्मापह्नवं निरुपाधेरात्मनोऽस्फूर्तिमित्यर्थः ॥ ३१-३२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

उपाधिसत्त्व एवोपाधिधर्म्माध्यासः। स चोपाधिः कर्म्मवशान्मानुषदेवतिर्य्यगादिर्भवति न तु तदभाव इत्यत्र दृष्टान्तमाह निमित्त इति। जलतैलदर्पणचक्षुरादौ निमित्ते विद्यमान एव पुरुष आत्मनः स्वस्य परस्यान्यस्य च भिदामुपाधेर्मध्यमोत्तमाधमभेदं पश्यति। तत्र जले चाञ्चल्यं दर्पणे नैर्मल्यञ्चक्षुषि मालिन्यञ्च यथा पश्यति तथैव मानुषदेवतिर्य्यक्शरीरेषु भद्राभद्रं केवलभद्रं केवलाभद्रञ्च पश्यति नान्यदेति। ज्ञानेनोपाधिनाशे तु न तथा पश्यति किन्तु परमात्मानमेव पश्यति। भक्त्या उपाध्यपगमे तु एकस्मिन्नात्मनि दृश्यादि-भेदे प्रतीतिरौपाधिकीति दृष्टान्तेन स्पष्टयति निमित्त इति। लोकेऽपि सर्वत्र जलदर्पणादौ भेदनिमित्ते सत्येव आत्मनो विम्बभूतस्य परस्य प्रतिविम्बस्य च भेदं पश्यति न तु जलाद्यभावेन शुद्धो जीवो रतिमहिम्नैव लब्धचिद्घनानन्दविग्रहः परमात्मन एव तस्य नारायणरामकृष्णादिचिद्घनानन्दाकारस्य षडैश्वर्य्यमाधुर्य्यवतः सौन्दर्यादिकं स्वीयनयनादिभिरास्वादयेदिति मुख्यञ्च फलं द्रष्टव्यम्। 'तस्मिन् ययौ परमहंसमहामुनीनामन्वेषणीयचरणौ चलयन्नि'त्यादिपूर्वोक्तेः ॥ २९ ॥ ❀ ❀ इदानीमात्मव्यतिरिक्तवस्त्वासक्तेः संसारहेतुत्वमाह इन्द्रियैरिति चतुर्भिः। ध्यातुमनिच्छतामप्यभ्यासपारवश्येनैव ध्यायतामरण्येऽपि तिष्ठतां पुंसामिन्द्रियाणि विषयैः पुत्रकलत्रादीनां शब्दस्पर्शादिभिः स्मृत्यारूढैः प्रथममाकृष्यन्ते। ततो विषयाकृष्टैरिन्द्रियैर्मन आक्षिप्तं भवति। तच्च बुद्धेश्चेतनां विचारसामर्थ्यं हरते। अलक्षितहरणे दृष्टान्तः स्तम्बः कुशादिगुच्छस्तीरजः स्वमूलैस्तोयं ह्रदादपहरति तद्वत् ॥ ३० ॥ ❀ ❀ ततश्च चित्तं चेतनामनु तस्यामपहृतायां सत्यां स्मृतिः पूर्वापरानुसन्धानं भ्रश्यति। एवं तद्रोधं ज्ञानभ्रंशमात्मन एव हेतोरात्मनोऽपह्नवं नाशं प्राहुः ॥ ३१ ॥ ❀ ❀ यद्यस्मात् आत्मनः सकाशात् अन्यस्य देहादेः प्रेयस्त्वं कीदृशमधि अधिकम्। यद्वा न विद्यते धीः परामर्शो यत्र तत्तच्च स्वेनैव स्वत एव यो व्यतिक्रमस्तस्मात् न त्वन्यदत्र कारणमस्तीत्यर्थः। जीवस्य तस्याविद्यासंसर्गोऽनादिर्यादृच्छिक एवेति प्राक् प्रतिपादितम्। तस्माज्जीवाश्रयकः परमात्मविषयकः प्रीत्यतिशयो युज्यते। तदर्थं भक्तिरेव कर्तुमुचितेति भावः ॥ ३२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ननु मुक्तौ आत्मपरमात्मनोरत्यन्तं भेदं मा पश्यतु, इह कुतः पश्यतीत्यत्राज्ञानान्निमित्तात्पश्यतीत्याह निमित्ते इति। जलादौ निमित्ते सति जले चरणाग्रे भूमौ निहिते दर्पणे च ऊर्ध्वमस्तकतयावस्थितस्यात्मनः परस्य देवदत्तादेश्चापि भिदां भेदं वैपरीत्यमधोमस्तकत्वमित्यर्थः। पश्यति नान्यदा जलादिनिमित्ताभावे न पश्यति। एवं यावदज्ञानं तावदात्मनोऽत्यन्ततो ब्रह्मभिन्नत्वं पश्यति जाते ज्ञाने तु आत्मनो ब्रह्मात्मकत्वं पश्यतीत्यर्थः ॥ २९ ॥ ❀ ❀ एवं भगवत्परस्य मुक्तिमुक्त्वाथ तद्विमुखस्य संसारमाह इन्द्रियैरित्यादिना। ध्यायतां विषयस्मरणपराणां मनः विषयाकृष्टैरिन्द्रियैराक्षिप्तमभिभूतं सत् बुद्धेश्चेतनां स्तम्बो ह्रदात्तोयमिव हरते ॥ ३० ॥ ❀ ❀ चित्तमनु चेतनापहारानन्तरम् स्मृतिः पूर्वापरानुसंधानं भ्रश्यति। स्मृतिक्षये ज्ञानभ्रंशः ज्ञानरोधः तद्रोधं ज्ञानरोधन्तु कवयः क्रान्तदर्शिनः आत्मनोऽपह्नवं नाशं प्राहुः। नाशशब्दार्थोऽत्र विस्मृतिः ॥ ३१ ॥ ❀ ❀ आत्मविस्मृतिरेव महती हानिरित्याह नात इति। लोके पुंसः स्वार्थव्यतिक्रमः स्वार्थस्य हानिः अतः परतरः श्रेष्ठः नास्ति। अतः कुतः यत् यं आत्मानम् अधि अधिकृत्य अन्यस्य विषयस्य प्रेयस्त्वं प्रियतमत्वं तस्यात्मनः स्वेनैव यो व्यतिक्रमः विस्मृतिस्तस्मात् आत्मार्थेऽन्यस्य प्रियत्वे श्रुतिर्मानम् "न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति" इति। स्मृतिश्च "आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि। आत्मानं सततं रक्षेद्दारैरपि धनैरपि" इति ॥ ३२ ॥

### गोस्वामिश्रीगिरिधरलालविहिता वालप्रबोधिनी

सुषुप्त्यादौ अन्तःकरणलयस्याप्रत्यक्षत्वाल्लौकिकदृष्टान्तेन तत्साधयति—निमित्त इति। लोके सर्वत्र भेदनिमित्ते जलदर्पणादौ सत्येवात्मनो विम्बभूतस्य परस्य प्रतिविम्बस्य चापि भिदां पुरुषः पश्यति, नान्यदा जलाद्यभावावस्थायामपीति यथा तथेत्यर्थः ॥ २९ ॥ ❀ ❀ एवमात्मानुरक्तेर्मोक्षहेतुत्वमुक्त्वा इदानीं विषयासक्तेर्बन्धहेतुत्वमाह—इन्द्रियैरिति त्रिभिः। श्रुताननुभूतान् वा विषयान् ध्यायतां चिन्तयतां पुंसामिन्द्रियाणि ध्यातैर्विषयैराकृष्यन्ते तैश्च विषयाकृष्टैरिन्द्रियैर्मन आक्षिप्तमाकृष्टं

सद्बुद्धेः सकाशाच्चेतनां युक्तायुक्तविवेकसामर्थ्यं हरति। तत्र दृष्टान्तः—स्तम्ब इति। यथा ह्रदतीरस्थः कुशमुञ्जादिस्तम्बो मूलैर्ह्रदात्तोयं हरति कैरप्यविवेकिभिर्न ज्ञायते तथा मनोऽपि बुद्धेश्चेतनां हरत्येतदविवेकिभिर्न ज्ञायते इत्यर्थः॥ ३०॥ ❀ ❀ चित्तं चेतनामनु तस्यामपहृतायां स्मृतिः पूर्वापरानुसन्धानलक्षणा भ्रश्यति, स्मृतिक्षये सति स्वरूपज्ञानस्य भ्रंशो भवति, तत्तस्य स्वरूपज्ञानस्य रोधं भ्रंशमात्मनः स्वस्मादेवात्मनः स्वस्य अपह्नवं नाशं कवयो विवेकिनः प्राहुरित्यन्वयः॥ ३१॥ ❀ ❀ अन्यस्वार्थनाशापेक्षयाऽस्य नाशस्योत्कृष्टत्वमाह—नात इति। यदधि यमधिकृत्यान्यस्य स्त्रीपुत्रगृहादेः सर्वविषयजातस्य प्रेयस्त्वं प्रियतमत्वं "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति श्रुतेः, तस्यात्मनः स्वेनैव यो व्यतिक्रमः अपलापस्तस्मात्तः स्वार्थस्य व्यतिक्रमो विनाशोऽतः परतरः उत्कृष्टोऽन्यः स्वार्थनाशो नास्तीत्यन्वयः॥ ३२॥

### भाषानुवादः

बाह्य जगत्‌में भी देखा जाता है कि जल, दर्पण आदि निमित्तोंके रहनेपर ही अपने बिम्ब और प्रतिबिम्बका भेद दिखायी देता है, अन्य समय नहीं॥ २९॥ ❀ ❀ जो लोग विषयचिन्तनमें लगे रहते हैं, उनकी इन्द्रियाँ विषयोंमें फँस जाती हैं तथा मनको भी उन्हीं की ओर खींच ले जाती हैं। फिर तो जैसे जलाशयके तीरपर उगे हुए कुशादि अपनी जड़ोंसे उसका जल खींचते रहते हैं, उसी प्रकार वह इन्द्रियासक्त मन बुद्धिकी विचारशक्तिको क्रमशः हर लेता है॥ ३०॥ ❀ ❀ विचारशक्तिके नष्ट होनेपर पूर्वापरकी स्मृति जाती रहती है और स्मृतिका नाश हो जानेपर ज्ञान नहीं रहता। इस ज्ञानके नाशको ही पण्डितजन 'अपने-आप अपना नाश करना' कहते हैं॥ ३१॥ ❀ ❀ जिसके उद्देश्यसे अन्य सब पदार्थोंमें प्रियताका बोध होता है—उस आत्माका अपनेद्वारा ही नाश होनेसे जो स्वार्थहानि होती है, उससे बढ़कर लोकमें जीवकी और कोई हानि नहीं है॥ ३२॥

अर्थेन्द्रियार्थाभिध्यानं सर्वार्थापह्नवो नृणाम्। भ्रंशितो ज्ञानविज्ञानाद्येनाविशति मुख्यताम्॥ ३३॥
न कुर्यात्कर्हिचित्सङ्गं तमस्तीव्रं तितीरिषुः। धर्मार्थकाममोक्षाणां यदत्यन्तविघातकम्॥ ३४॥
तत्रापि मोक्ष एवार्थ आत्यन्तिकतयेष्यते। त्रैवर्ग्योऽर्थो यतो नित्यं कृतान्तभयसंयुतः॥ ३५॥
परेऽवरे[1] च ये भावा गुणव्यतिकरादनु[2]। न तेषां विद्यते क्षेममीशविध्वंसिताशिषाम्॥ ३६॥

अन्वयः—अर्थेन्द्रियार्थाभिध्यानम् नृणाम् सर्वार्थापह्नवः येन ज्ञानविज्ञानात् भ्रंशितः मुख्यताम् आविशति॥ ३३॥ ❀ ❀ तीव्रम् तमः तितीरिषुः कर्हिचित् संगम् न कुर्यात् यत् धर्मार्थकाममोक्षाणाम् अत्यन्तविघातकम्॥ ३४॥ ❀ ❀ तत्र अपि यत् त्रैवर्ग्यः अर्थः नित्यम् कृतान्तभयसंयुतः मोक्षः एव अर्थः आत्यन्तिकतया इष्यते॥ ३५॥ ❀ ❀ परे च अवरे ये भावाः गुणव्यतिकरात् अनु तेषां ईशविध्वंसिताशिषाम् क्षेमम् न विद्यते॥ ३६॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

कुत इत्यत आह। अर्थस्याभिध्यानमिन्द्रियस्यार्थः कामस्तस्याभिध्यानं सर्वार्थनाशः ज्ञानं विज्ञानं च परोक्षापरोक्षम् तस्मात्। येन ध्यानेन मुख्यतां स्थावरताम्॥ ३३॥ ❀ ❀ अनात्मरतेरनर्थहेतुत्वमुक्तं संगस्याप्याह नेति। यद्वस्तु धर्मादीनां विघातकं तस्मिन्संगम्। तमः संसारम्॥ ३४॥ ❀ ❀ तुल्यवन्निर्देशात्पुरुषार्थसाम्यभ्रान्तिं वारयति तत्रापीति। कृतान्तः कालः॥ ३५॥ ❀ ❀ भयसंयुतत्वमेवाह। परे ब्रह्मादयोऽवरेऽस्मदादयो गुणक्षोभादनु पश्चाद्भवन्ति ईशः कालस्तेन विध्वंसिता आशिषो येषाम्॥ ३६॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अत्र हेतुमाशंकते अर्थस्य धनादेः कामो विषयः अभिध्यानं सातत्येन चिन्तनं 'सप्तमो मुख्यसर्गस्तु' इत्यत्र मुख्यशब्दस्य स्थावरे प्रयुक्तत्वादत्रापि स एवार्थः॥ ३३॥ ❀ ❀ संगमत्र धर्मशास्त्रनिषिद्धेतरमेव न तु विषयासक्तिमात्रं, निषिद्धेतर-विषयासक्तिमतामेव त्रिवर्गाधिकारित्वादिति केचिदाहुः। परन्तु संगं विषयासक्तिमात्रमेव धर्मादयोऽपि मोक्षानुकूला एव ग्राह्याः 'धर्मस्य ह्यापवर्ग्यस्य' इति न्यायेनेत्यन्ये। दुष्टसंसर्गस्यैव विषयाभिध्यानमूलकारणत्वात्तमेव न कुर्यादिति भावः॥ ३४॥ ❀ ❀ धर्मार्थकाममोक्षाणामिति तुल्यवन्निर्देशान्मोक्षस्यापि त्रिवर्गसाम्यभ्रान्तिं वारयति। तत्रापि तेषु मोक्षादिष्वपि मध्ये आत्यन्तिकतयांता-

---

१. प्रा० पा०—परावरे। २. प्रा० पा०—करादतः।

भाववत्तया अर्थः सत्यः "अर्थः स्याद्वाच्यसत्ययोः" इति निरुक्तिः। त्रैवर्ग्यस्त्रिवर्गसम्बन्धी योऽर्थः पुरुषार्थः। कृतान्तस्य कालात्मनो हरेर्भ्रूविभ्रमजनितनाशलक्षणभयसंयुतो यतोऽतो मोक्ष एवेति योज्यम्। भविष्यन्नाशमवलोक्य नित्यमिति ॥ ३५ ॥ ❀ ❀ गुणक्षोभात्सर्गादिकालीनगुणव्यतिकरात्। आशिषश्चिन्त्यमानार्थाः। अनेन ब्रह्मलोकादिप्राप्तिलक्षणोपि पुरुषार्थो न नित्य इत्युक्तम् ॥ ३६ ॥

## श्रीमद्वीरराघवव्याख्या

विषयध्यानतत्संयोगयोरनर्थकारित्वमुपसंहरति अर्थेन्द्रियेति द्वाभ्याम्। अर्थेन्द्रियाणि शब्दाद्यर्थविषयाणि श्रोत्रादीनि तेषामर्थस्य शब्दादेरभिध्यानं नृणां सर्वार्थापह्नवः सर्वपुरुषार्थविरोधीत्यर्थः। स्वर्गादिसाधनभूतयागादेरपि तदेकमनस्केन कार्यत्वात्सर्वपुरुषार्थविरोधीत्युक्तं, येन शब्दाद्यभिध्यानेन ज्ञानविज्ञानाद् भ्रंशितः ज्ञानं शास्त्रजन्यं विज्ञानमुपासनात्मकं तयोः समाहारद्वन्द्वः तस्माद् भ्रंशितः मुख्यतां स्थावरतामाविशति प्राप्नोति ॥ ३३ ॥ ❀ ❀ तीव्रमनर्थकृत्तमः अज्ञानं तितीर्षुः तरितुमिच्छुः कर्हिचित् सङ्गं न कुर्यात्, यद्विषयासञ्जनं धर्मादीनामत्यन्तविघातकम् ॥ ३४ ॥ ❀ ❀ धर्मादिभिः साकं मोक्षस्य तुल्यवन्निर्देशात्तस्येतरपुरुषार्थसाम्यं वारयति तत्रापीति। तत्रापि चतुर्णां मध्ये मोक्षरूप एव पुरुषार्थः आत्यन्तिकतया अन्त्यतमतीत्य वर्तमानतया नित्यतयेत्यर्थः, इष्यते इच्छाविषयो भवति। त्रैवर्ग्यरूपार्थः कृतान्तः कालः तद्भयसंयुतः ॥ ३५ ॥ ❀ ❀ अनित्यतामेवाह परावरे। उत्कृष्टापकृष्टरूपा ये भावाः पदार्थाः आब्रह्मस्तम्बपर्यन्ता गुणव्यतिकरात् गुणवैषम्यरूपसृष्टेः अनु पश्चाद्भवन्ति ननु प्रलये। अत एव ईशेन कालरूपेण परमात्मना विध्वंसिता आशिषो येषां क्षेमो रक्षणं स्थिरत्वमित्यर्थः न विद्यते इत्यर्थः ॥ ३६ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अथ तस्मान्नृणामिन्द्रियार्थानां विषयाणामभिध्यानं निरन्तरं सञ्चिन्तनं सर्वार्थानां सर्वपुरुषार्थानामपह्नवो विनाशहेतुः, येनेन्द्रियेणेन्द्रियार्थाभिध्यानेन ज्ञानविज्ञानात्सामान्यविशेषलक्षणज्ञानात्स्रंसितो भ्रंशितो मुग्धतां विवेकराहित्यमाविशति प्राप्नोतीत्यर्थः ॥ ३३ ॥ ❀ ❀ विषयाभिध्यानस्यापि दुष्टसंसर्गो मूलकारणं स विपश्चिता न कार्य इत्याह न कुर्यादिति। धर्मादीनामत्यन्तविघातकमिति यदतो विपश्चित्तीव्रतमस्तितीर्षुणा मनसा कदापि दुष्टसङ्गं न कुर्यादित्यन्वयः। न कार्यः कर्हिचित्सङ्ग इति वा पाठः। तदा विपश्चितेति योज्यम् ॥ ३४ ॥ ❀ ❀ धर्मादिभिः सह पाठात् मोक्षस्यापि तत्तुल्यता स्यादिति शङ्कां परिहरति तत्रापीति। "स्वपक्षपातस्त्वभ्यासाद्भोगार्थं व्यापृतस्य तु। भवेत्ततोऽनेकशास्त्रयथार्थस्मरणेशिता ॥ नश्यत्यतः स्मृतेर्नाशाद्भगवत्पक्षपातिता। विनश्येत्तेन चैवास्य भवेज्ज्ञानविपर्ययः ॥ न च ज्ञानविपर्यासादन्यन्नाशकरं कचित्। सर्वस्यैतस्य मूलं हि दुष्टसंसर्ग एव तु ॥ दुष्टसङ्गो विरक्तस्याप्यन्यथा ज्ञानकारणम्। दुष्टसङ्गाद्धि विष्णोश्च स्वात्मत्वं मन्यतेऽबुधः ॥ अभावं स्वात्मनोऽन्यस्य मुक्तिं चापि निरात्मताम्।" इति समाख्यास्मृतिसिद्धत्वादयमेवार्थो न शुकतीर्थायुक्तार्थो ग्राह्यः तमोहेतुत्वात्। मोक्षस्यात्यन्तिकत्वं कस्माद्धिशिष्योच्यते धर्मादेरपि पुरुषार्थत्वादित्यत्राह त्रैवर्ग्य इति। त्रिवर्गसम्बन्धिपुरुषार्थः कृतान्तस्य कालात्मनो हरेर्भ्रूविभ्रमजनितनाशलक्षणभयसंयुतो यतस्तस्मादिति शेषः, भविष्यन्नाशमवलोक्य नित्यमिति ॥ ३५ ॥ ❀ ❀ त्रैवर्ग्यार्थो ब्रह्मलोकादिसम्बन्धी नानित्य इति तत्राह परावरे चेति। गुणव्यतिकरान्मूलप्रकृतेरनु अनन्तरं ये भावाः पदार्थाः परावरे एष्यदतीतकाले ये वर्तमाना उत्कृष्टनिकृष्टलक्षणा वा ईशस्य कालनाम्नो हरेर्भ्रूविभ्रमणविध्वंसिताशिषां विनाशितशुभानां तेषां क्षेमी नित्यानन्दी नास्तीत्यन्वयः। अनेन ब्रह्मलोकादिप्राप्तिलक्षणः पुरुषार्थोऽपि न नित्य इत्युक्तं भवति ॥ ३६ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अथेति चित्सुखः ॥ ३३ ॥ ❀ ❀ धर्मादयस्त्रयोऽप्यत्र मोक्षस्यानुकूला ज्ञेयाः। धर्मस्य ह्यापवर्ग्यस्येत्यादिन्यायेन तितीरिषुरित्यत्र तितीर्षुरिति कचित् विघातनमिति गौडाः, नैष चित्सुखसंमतः ॥ ३४–३५ ॥ ❀ ❀ तत्र हेतुः पर इति सम्बन्धोक्तिः। परावर इति चित्सुखः ॥ ३६ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

यत्तु अर्थस्य जनस्य इन्द्रियार्थानां विषयाणाञ्च ध्यानं तदेव सर्वार्थनाशः येनाभिध्यानेन ज्ञानात् विनाशाच्च भ्रंशितो मुख्यतां स्थावरताम् ॥ ३३ ॥ ❀ ❀ सङ्गं धर्मशास्त्रनिषिद्धमेव न तु विषयासक्तिमात्रं निषिद्धेतरविषयासक्तिमतामेव त्रिवर्गेऽधिकारादिति केचिदाहुः। सङ्गं विषयासक्तिमतामेव, धर्मादयोऽप्यत्र मोक्षस्यानुकूला एव ग्राह्याः धर्मस्य ह्यापवर्ग्यस्येति न्यायेन इत्यन्ये। यत् यः ॥ ३४ ॥ ❀ ❀ तत्रापि तेष्वपि मध्ये त्रैवर्ग्यः त्रिवर्गभवः ॥ ३५ ॥ ❀ ❀ भयसंयुतत्वमेवाह। परे ब्रह्मादयः अवरे इन्द्रादयश्च ये गुणक्षोभादनु पश्चाद्भवन्ति। ईदृशः कालः ॥ ३६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

विषयध्यानस्येन्द्रियैराक्षिप्तं मनो बुद्धेश्चेतनां हरतीत्यादिना आत्माऽपह्नवहेतुत्वमुक्तमथ विषयध्यानस्य सर्वापह्नवहेतुत्वमाह अर्थेति। अर्थेन्द्रियार्थाभिध्यानम् अर्थानां विषयाणामिन्द्रियार्थायेन्द्रियप्रीतये यदभिध्यानं तदेव सर्वेषामर्थानां पुरुषार्थानामपह्नवो नाशः, येन अर्थेन्द्रियार्थाभिध्यानेन ज्ञानाद्भ्रंशितो मुख्यतां स्थावरतां विशति ॥ ३३ ॥ ❀ ❀ अतः तमोघर्मादिसाधनदुःखं तितीरिषुः यद्वस्तु धर्मादीनामत्यन्तं विघातकं तत्र सङ्गं कर्हिचिदपि न कुर्यात् ॥ ३४ ॥ ❀ ❀ तेषु मोक्षो मुख्यः पुरुषार्थरूदर्थी तद्विघातके विशेषतः सङ्गं न कुर्यादित्याशयेनाह तत्रापीति। कृतान्तात्कालाद्भयं तत्संयुतः ॥ ३५ ॥ ❀ ❀ त्रैवर्ग्यस्यार्थस्य कालभयसंयुतत्वमेवाह परे इति। परे आमुष्मिकाः अवरे ऐहिकाः, किं बहुना गुणव्यतिकरात् गुणक्षोभादनु पाश्चात्याः ये प्राकृता भावास्तेषां क्षेमः स्वास्थ्यं न भवति, यतः ईशेन कालशक्तिना विध्वंसिता आशिषो येषाम् ॥ ३६ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

अतो विषयाभिनिवेश एवैवम्भूतविनाशहेतुरिति पूर्वमुक्तमपि प्रयत्नेन तत्परिवर्जनार्थं पुनरनुवदति—अर्थेन्द्रियार्थेति। अर्थस्य धनादेः इन्द्रियार्थस्य रूपरसादेः कामस्य चाभिध्यानमेव नृणां सर्वार्थापह्नवः सर्वे अर्थाः पदार्थाः यस्मै स सर्वार्थः आत्मा तस्यापह्नवः अपलापहेतुः। एतदेव विशदयति—भ्रंशित इति। येनार्थकामादिध्यानेन ज्ञानं शास्त्रोत्थं विज्ञानं चात्मसाक्षात्कारः तदुभयाद् भ्रंशितः सन् पुमान् मुख्यतां स्थावरतामाविशति वृक्षादियोनिषु जायते ॥ ३३ ॥ ❀ ❀ अतस्तीव्रं तमः संसारमूलमज्ञानं तितीरिषुः तर्तुमिच्छुः पुरुषो यद्वस्तु धर्मार्थकाममोक्षाणां अत्यन्तविघातकं तस्मिन् कर्हिचिदपि सङ्गमासक्तिं न कुर्यादित्यन्वयः ॥ ३४ ॥ ❀ ❀ धर्मादीनां चतुर्णां सामान्यत उक्ता साम्यप्रतीतिस्तत्र विशेषमाह—तत्रापीति। तत्र धर्मादिचतुर्ष्वप्यात्यन्तिकतया सर्वोत्कृष्टतया मोक्ष एव पुरुषार्थ इष्यते इष्टो भवति। कुत इत्यपेक्षायामाह—त्रैवर्ग्य इति, धर्मार्थकामलक्षणस्त्रैवर्ग्योऽर्थो यतो नित्यं सर्वदा कृतान्तभयसंयुतः कालभयव्याप्त एवेत्यर्थः। मोक्षस्तु न तथेति भावः ॥ ३५ ॥ ❀ ❀ कालभयमेव प्रदर्शयति—पर इति। परे ब्रह्मादयः अवरे अस्मदादयश्च ये भावाः प्राणिनः गुणव्यतिकरात् प्रकृतिगुणानां सत्त्वादीनां सव्यतिकरात् गुणप्रधानभावेन परिणामादनु पश्चाज्जातास्तेषां क्षेमो यथासुखस्थितिर्न विद्यते। कुत इत्यपेक्षायां हेतुगर्भविशेषणमाह—ईशेति, ईशेन सर्वथा समर्थेन कालेन विध्वंसिता नाशिता आशिषो धर्मादयः पुरुषार्था येषां तेषामित्यर्थः ॥ ३६ ॥

### भाषानुवादः

धन और इन्द्रियोंके विषयोंका चिन्तन करना मनुष्यके सभी पुरुषार्थोंका नाश करनेवाला है; क्योंकि इनकी चिन्तासे वह ज्ञान और विज्ञानसे भ्रष्ट होकर वृक्षादि स्थावर योनियोंमें जन्म पाता है ॥ ३३ ॥ ❀ ❀ इसलिए जिसे अज्ञानान्धकारसे पार होनेकी इच्छा हो, उस पुरुषको विषयोंमें आसक्ति कभी नहीं करनी चाहिए; क्योंकि यह धर्म, अर्थ, काम और मोक्षकी प्राप्तिमें बड़ी बाधक है ॥ ३४ ॥ ❀ ❀ इन चार पुरुषार्थोंमें भी सबसे श्रेष्ठ मोक्ष ही माना जाता है; क्योंकि अन्य तीन पुरुषार्थोंमें सर्वदा कालका भय रहता है ॥ ३५ ॥ ❀ ❀ प्रकृतिमें गुणक्षोभ होनेके बाद जितने भी उत्तम और अधम भाव—पदार्थ प्रकट हुए हैं, उनमें कुशलसे रह सके ऐसा कोई भी नहीं है। कालभगवान् उन सभीके कुशलोंको कुचलते रहते हैं ॥ ३६ ॥

[1]तत्त्वं नरेन्द्र जगतामथ तस्थुषां च देहेन्द्रियासुधिषणात्मभिरावृतानाम्।
यः क्षेत्रवित्तपतया हृदि विष्वगाविः प्रत्यक् चकास्ति भगवांस्तमवेहि सोऽस्मि[2] ॥ ३७ ॥
यस्मिन्निदं सदसदात्मतया विभाति[3] माया विवेकविधुति स्रजि वाहिबुद्धिः।
तं नित्यमुक्तपरिशुद्धविबुद्धतत्त्वं प्रत्यूढकर्मकलिलप्रकृतिं प्रपद्ये ॥ ३८ ॥
यत्पादपङ्कजपलाशविलासभक्त्या कर्माशयं ग्रथितमुद्ग्रथयन्ति सन्तः।
तद्वन्न रिक्तमतयो यतयोऽपि रुद्धस्रोतोगणास्तमरणं भज वासुदेवम् ॥ ३९ ॥
कृच्छ्रो महानिह भवार्णवमप्लवेशां[4] षड्वर्गनक्रमसुखेन तितीरिषन्ति।
[5]तत्त्वं हरेर्भगवतो भजनीयमङ्घ्रिं कृत्वोडुपं व्यसनमुत्तर दुस्तरार्णम् ॥ ४० ॥

---

१. प्रा० पा—स त्वं। २. प्रा० पा०—सोऽस्ति। ३. प्रा० पा—वभाति। ४. प्रा० पा०—मप्लवेन। ५. प्रा० पा०—स त्वं।

अन्वयः—नरेन्द्र तत् त्वम् देहेन्द्रियासुधिषणात्मभिः आवृतानाम् जगताम् अथ च तस्थुषाम् हृदि यः भगवान् क्षेत्रवित्तपतया विष्वक् आविः प्रत्यक् चकास्ति तम् अवेहि सः अस्मि ॥ ३७ ॥ ❁ ❁ वा स्रजि अहिबुद्धिः यस्मिन् विवेकविधुति इदम् सदसदात्मतया माया विभाति तम् नित्यमुक्तपरिशुद्धविबुद्धतत्त्वम् प्रत्यूढकर्मकलिलप्रकृतिम् प्रपद्ये ॥ ३८ ॥ ❁ ❁ सन्तः यत्पादपङ्कजपलाशविलासभक्त्या ग्रथितम् कर्माशयम् उद्ग्रथयन्ति तद्वत् रिक्तमतयः रुद्धस्रोतोगणाः यतयः अपि न तम् अरणम् वासुदेवम् भज ॥ ३९ ॥ ❁ ❁ षड्वर्गनक्रम् भवार्णवम् असुखेन तितीरिषन्ति अप्लवेशाम् इह महान् कृच्छ्रः तत् त्वम् भगवतः हरेः भजनीयम् अङ्घ्रिम् उडुपम् कृत्वा व्यसनम् दुस्तरार्णम् उत्तर ॥ ४० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

यस्मादनात्मरतिरनर्थहेतुस्तत्तस्माज्जगतां जंगमानां तस्थुषां स्थावराणां च देहादिभिरात्मनाऽहंकारेण चावृतानां हृदि यश्चकास्ति प्रकाशते तमवेहि। कथं सोऽस्मीति। सोऽस्तीति पाठे स एवैकोऽस्ति ततोऽन्यदसदित्यर्थः। ननु जीवो हृदि चकास्ति नान्यस्तत्राह। क्षेत्रविदं जीवं तपति नियमयतीति क्षेत्रवित्तपस्तस्य भावस्तत्ता तयान्तर्यामिरूपेण। यद्वा क्षेत्रवित्ते अहंममतास्पदे पातीति क्षेत्रवित्तपस्तेन रूपेण जीवस्तु पारतन्त्र्यान्न पाति। ननु कर्म जीवं नियच्छति न आविः प्रत्यक्षः कर्म तु न तथा तर्हि बुद्धिः न प्रत्यक्प्रतिलोमं चकास्ति बुद्धिस्तु पराग्विषयाकारेण तर्ह्यहंकारः न विष्वग्व्याप्तत्वेन स तु परिच्छिन्नः एवंभूतो यो भगवांस्तमवेहीति ॥ ३७ ॥ ❁ ❁ स्थावरजंगमादीनां हृदि चकास्तीत्युक्ते तेषां सत्त्वं यत्सम्बन्धादीश्वरस्य मालिन्यं च प्रसक्तं निराकुर्वन्नुद्रिक्तभक्त्या तं प्रणमति। यस्मिन्निदं विश्वं सदसदात्मतयोत्कृष्टनिकृष्टभावेन कार्यकारणभावेन वा मायैव विभाति तं प्रपद्ये। मायात्वे हेतुः विवेकेन विधूतिर्निराकृतिर्यस्य तत् स्रजि वेति वा-शब्दो दृष्टान्ते। नित्यमुक्तम्। यतः परिशुद्धम्। तत्कुतः। विबुद्धं तत्त्वं सत्यमत एव प्रत्यूढाभिभूता निरस्ता कर्मभिः कलिला मलिना प्रकृतिर्येन तम् ॥ ३८ ॥ ❁ ❁ तमवेहीति ज्ञानमुपदिष्टं तस्य दुष्करत्वेन भक्तिमुपदिशति द्वाभ्याम्। यस्य पादपंकजयोः पलाशानि दलानि अंगुलयस्तेषां विलासः कान्तिस्तस्य भक्त्या स्मृत्या कर्माशयमहंकाररूपं हृदयग्रन्थिम्। कर्मभिरेव ग्रथितम्। रिक्ता निर्विषया मतिर्येषाम्। रुद्धः प्रत्याहृतः स्रोतोगणः इन्द्रियवर्गो यैः तेनोद्ग्रथयन्ति। अरणं शरणम् ॥ ३९ ॥ ❁ ❁ ननु "ब्रह्मविदाप्नोति परम्" इति श्रुतेः कथं यतयो नोद्ग्रथयन्तीत्युच्यते तत्राह। कृच्छ्र इति। अप्लवेशां न प्लवस्तरणहेतुरीट् ईशो येषां तेषां महानिह तरणे कृच्छ्रः क्लेशः, ते ह्यसुखेन योगादि-षड्वर्गनक्रमिन्द्रियषड्वर्गग्राहं भवार्णवं तितीर्षंति तत्तस्मात्। उडुपं प्लवं कृत्वा दुस्तरार्णवमित्यर्थः। अर्णशब्दे वकाराभाव आर्षः। यद्वा दुस्तरोदकरूपं व्यसनमित्यर्थः ॥ ४० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अथ चार्थे "हृदि ह्येष आत्मा" इति श्रुतेः। अत्राक्षिपति–नन्विति। यद्यपि धातूनामनेकार्थत्वमादायायमप्यर्थश्श्रेयांस्तथापि तस्यागतिकगतित्वादृजुमार्गेण सिध्यतोऽर्थस्य वक्रेणादर्शनायोगादाह–यद्वेति। अहन्तास्पदं देहं ममतास्पदं स्त्रीपुत्रधनादि। जीवनियमने शंकते–नन्विति। नियच्छति नियमनं करोति नेति निषेधे। स्वबुद्धेः प्रत्यक्षत्वेऽपि परबुद्धेरप्रत्यक्षत्वात्। यद्वा–प्रतिलोमं बाह्यविषयापेक्षयान्तः प्रकाशमानत्वात्, पुनराक्षिपति तर्हीति, नेति। एवंभूत उक्तविशेषणविशिष्टः ॥ ३७ ॥ ❁ ❁ सत्त्वं पृथक्सत्त्वं विवेकश्चायं विश्वस्य मायिकत्वान्मायात्वेन मायायाश्च परमात्मनो बहिरंगशक्तित्वात्। जीवस्य च तत्तटस्थ-शक्तित्वाच्छक्तिशक्तिमतोर्भेदाभावमनन्तान्निर्भेदात्मज्ञानमेवेति। तत्परिशुद्धं विबुद्धं ज्ञानरूपम्। अत एव परिशुद्धविबुद्धतत्त्व-स्वरूपत्वादेव ॥ ३८ ॥ ❁ ❁ अत्र विश्वनाथः–तदेवं 'सा श्रद्धया' इत्यादिना भक्तेः प्राधान्ये ज्ञानमिश्रया भक्त्या साध्यां मुक्तिसहितां शान्तरतिमुक्त्वा 'तत्त्वं नरेन्द्र' इति श्लोकद्वयेन भक्तिमिश्रज्ञानसाध्यां सायुज्यमुक्तिं च दर्शयित्वा तमवेहि सोऽस्मीति-पदैस्तस्य शुद्धदास्यभक्त्यैकस्पृहस्य तत्रारुचिमभिप्रेत्य भक्तेः कैवल्ये शुद्धभक्त्या तदभीष्टया साध्यं प्रेमाणमानुषंगिकमुक्तिकं वदंस्तामेव भक्तिं सर्वथोत्कर्षयति यत्पादेति द्वाभ्याम्। यस्य हरेः पादकमलयोः पलाशान्यंगुलयस्तेषां विशेषेण लासः प्रतिक्षणं वर्द्धमाना कान्तिर्यस्यास्तया साधनरूपया भक्त्या साध्यरूपया च। यद्वा विलासयुक्तया भक्त्या विविधाद्भुतशिल्पयाऽभ्यंजनो-द्वर्त्तनस्नपनसचाकचिक्यप्रसाधनादिसपर्यया। यद्वांगुलीनां विलासः कान्तिस्तस्य भक्त्या स्मृत्यापीत्यर्थः। कर्माशयं कर्मवासनामयमहं-कारं ग्रथितं येनैव स्वकर्मणा तद्विपरीतेन भगवत्कर्मणोद्ग्रथयन्ति सन्तो भक्तास्तद्वद्यतयः संन्यासिनो न। कुतः निर्विषयाऽविद्यमाना मतिर्येषां ते रिक्तधना इव निर्बुद्धयोऽसन्तश्चेत्यर्थः। सन्तश्च भगवद्विषयमतयः सुबुद्धय एवेति भावः। निरुद्धो नद्यादेः स्रोतसामिवेन्द्रियाणां गणो यैः। न हि स्रोतांसि निरोद्धुं शक्यानि भवन्तीति निर्बुद्धित्वचिह्नमेतदेवेति भावः। सन्तश्च भगवत्सौन्दर्य्यामृतादिषु प्रसारितचक्षुरादीन्द्रियगणाः सुधियः सुखिनश्चेति भावः। अरणं शरणं वसुदेवनन्दनं नन्दवाचकोऽपि वसुदेवशब्दः पूर्वमुक्त एव। तेन नन्दनन्दनं भजेत्यप्यर्थः। "असंग्रामे च शरणे कंसादावरणध्वनिः" इति निरुक्तिः। श्लेषेण अरणं निस्संग्राममेवान्यथा तवेन्द्रियैः सह संग्रामो भविष्यति तत्र च त्वमेव बहुभिस्तैः पराभूतो भविष्यसीति

भावः ॥ ३९ ॥ ❀ ❀ इहाक्षिपति–नन्विति । ईट् समर्थ ईशो वा यतोऽसुखेन तर्तुमिच्छन्ति न तु तरन्तीत्यर्थः । यदि कामादितरंगैर्न हन्यमानः षडिन्द्रियनक्रैर्न चर्व्यमाणः स्वयं च बलिष्ठः श्रान्तोऽप्यनलसः स्यात्तदा ज्ञानवैराग्याभ्यां दोर्भ्यां चिरेणैव कथंचिदेव तेषां मध्ये कोपि कष्टेनैव तरतीति भावः । इह "श्रेयसामिह सर्वेषां ज्ञानं निःश्रेयसं परम् । सुखं तरति दुष्पारं ज्ञाननौर्व्यसनार्णवम् ॥" इति रुद्रगीते वक्ष्यमाणेन सह विरोधस्य कः परिहार इति चेत्तत्रेदमवधेयम् । तत्र ज्ञानशब्देन प्रस्तुतभगवद्गुणैश्वर्य्यज्ञानमेव विवक्षितं, न तु कैवल्योपयोगीति "क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्" इति श्रीमुखोक्तिविरोधात् । तस्मात्त्वं हरेरंघ्रिमुडुपं कृत्वा व्यसनं संसारदुस्तरार्णवमुत्तर, अत्रोडुपं कृत्वेति "समाश्रिता ये पदपल्लवप्लवम्" इति "त्वत्पादपोतेन महत्कृतेन" इत्याद्युक्तेर्हरिपदपल्लवाश्रयणमात्रेणैव भवार्णवस्य गोवत्सपदप्रमाणत्वे जाते तत्तरणे खलु कः प्रयास इति प्लवारोहणं नाशंकनीयम् । इत्यर्थ इति । दुस्तराण्यर्णांसि तोयानि यस्मिन्स तथा तम् । अत्र समासान्ते टेर्लोपे चेदं रूपमिति भावः । उडुपेनार्णवतरणस्यासंभवमालक्ष्याह–यद्वेति । इत्यर्थ इति । दुस्तरं च तदर्णश्चेति दुस्तरार्णमिति समासांतविधेरनित्यत्वमालक्ष्य स्वामिचरणैरपि इत्युक्तम् । किञ्च योगवासिष्ठे 'अर्णपूरादिवार्णवः' इत्यकारान्तोऽप्यंबुवाच्यर्णशब्दोस्तीति ॥ ४० ॥

### श्रीमद्वीरराघवव्याख्या

एवमचिद्विकाराणामनित्यत्वमुक्तम् अथ पारमहंस्यचर्ययेत्युपक्षिप्तं प्रकृतिविलक्षणस्य नित्यस्यात्मस्वरूपस्य भगवदात्मकत्वेनानुसंधानमाह तदिति । तत्तस्मात् हे नरेन्द्र ! असवः प्राणाः धिषणात्मशब्देन ज्ञानद्वारभूतं मन उच्यते, देहेन्द्रियप्राणमनोभिरावृतानां देहाद्यात्मकानामित्यर्थः । तस्थुषां स्थावराणां जगतां जङ्गमानां च क्षेत्रविदः क्षेत्रज्ञाः स्थावरजङ्गमान्तस्था जीवाः तपति अन्तरात्मतया नियच्छतीति तपः तस्य भावस्तत्ता तया जीवान्तरात्मतया यः हृदि स्थितः प्रत्यक् स्वस्मै भासमानः अनेन पराचोऽचेतनाद्वैलक्षण्यं विष्वगाविः विष्वक्सर्वतः आविः प्रकाशमानः स्वरूपेण गुणैश्च व्यापक इत्यर्थः, अनेन जीववैलक्षण्यमुक्तं भगवान् पूर्णषाड्गुण्यः अनेनोभयवैलक्षण्यमुक्तं चकास्ति स भगवानहमस्मीत्यवेहि भगवदात्मकोऽहमस्मीति बुद्ध्यस्वेत्यर्थः । यद्वा देहेन्द्रियप्राणमनोभिरावृतानां स्थावरजङ्गमदेहस्थचेतनानां यः क्षेत्रवित्ते अहङ्कारममकारास्पदे शरीरवित्ते ते पातीति क्षेत्रवित्तपः तस्य भावस्तत्ता तया जीवरूपतया परागर्थविलक्षणः प्रत्यग्भूतो हृदि चकास्ति तं जीवात्मानं स भगवानस्मीत्यवेहि भगवदात्मकोऽहमिति बुद्ध्यस्वेत्यर्थः "तत्त्वमसि, अयमात्मा ब्रह्मे"त्यादिवदयं सामानाधिकरण्येनानुसन्धाननिर्देशः शरीरविषयबुद्धिशब्दादीनां शरीरिपर्यन्तत्वमाकृतिनयेन खण्डो गौरित्यादिवद्बोध्यम् ॥ ३७ ॥ ❀ ❀ ननु भगवतः क्षेत्रज्ञशरीरत्वेन तद्रूपतयावस्थितौ क्षेत्रज्ञगतदोषप्रसक्तिमैवमित्याह यस्मिन्निति । क्षेत्रज्ञरूपे मायाविवेकविधुतिः मायायाः सकाशाज्जीवपरयोः विवेकस्तस्य विधूननहेतुः विवेकज्ञानविरोधिसदसदात्मतया कार्यकारणरूपेण इदं देवमनुष्यादि नानाविधरूपजातं स्रजि सर्पबुद्धिरिव विभाति जीवतादात्म्येन प्रतिभातीत्यर्थः । तं नित्यमुक्तपरिशुद्धविशुद्धतत्त्वं स्वतः प्रकृतिसम्बन्धकर्मरहितस्वप्रकाशस्वरूपं तथापि प्रत्यूढकर्मकलिलप्रकृतिं प्रत्यूढा अनादितया रूढमूलं यत्कर्म तेन कलिला मिश्रा प्रकृतिर्यस्य तं स्वसंसृष्टकर्ममिश्रवासनमित्यर्थः, प्रपद्ये अनुसन्दधे । यथा नृसिंहो भगवान् श्वेत इति नृसिंहमूर्तेर्भगवतः श्वेतत्वं विग्रहद्वारकं न त्वव्यवधानेन एवं क्षेत्रज्ञरूपस्य भगवतः क्षेत्रज्ञद्वारैव कर्मसम्बन्धाज्ञानादिकं न त्वव्यवधानेनेत्यर्थः ॥ ३८ ॥ ❀ ❀ एवं क्षेत्रज्ञशरीरत्वेनावस्थानं निर्दोषत्वं चोक्तम्, अथ स्वेन रूपेणावस्थितिमाह यत्पादेति । यद्वा तुभ्यमुपदिष्टभगवद्भक्तियोगं सर्वेऽपि मुमुक्षवोऽनुतिष्ठन्ति अतस्त्वमपि तमेवानुतिष्ठेत्याह यत्पादेति । रिक्तेषु भगवद्व्यतिरिक्तेषु मतिः रिक्तमतिः अभगवदात्मकत्वबुद्धिर्वा न विद्यते रिक्तमतिर्येषां ते नरिक्तमतयः तमेव मन्वाना इत्यर्थः । निरुद्धस्रोतोगणाः निरुद्धः प्रत्याहृतः स्रोतोगणः इन्द्रियवर्गो यैस्ते सन्तः साधवः यस्य भगवतः पादपङ्कजयोः पलाशा इवाङ्गुल्यस्तेषां विलासः कान्तिस्तस्याः भक्त्या कर्म च आशयश्च कर्माशयम् वासनाग्रथितं स्वसम्बद्धमुद्ग्रथयन्ति नाशयन्ति । तस्मात्त्वमपि तमेव अरणम्–ऋ-गतौ करणे ल्युट्–स्वप्रापकमित्यर्थः । वासुदेवं भजस्व भगवद्भक्तिमन्तरेण संसारार्णवो दुस्तरः ॥ ३९ ॥ ❀ ❀ अतस्तमेव भजस्वेत्युपसंहरति कृच्छ्र इति । अप्लवेशा ईश्वराख्यप्लवरहिताः षड्वर्गनक्रं षडिन्द्रियवर्गग्राहं भवार्णवमिह दुःखेन ये तितीर्षयन्ति तर्तुमिच्छन्ति तेषां महान्कृच्छ्रः क्लेशः तत्तस्मात्त्वं हरेर्भगवतः भजनीयं सुखाराध्यमङ्घ्रिमुडुपं प्लवं कृत्वा व्यसनं दुःखात्मकं दुस्तरार्णं तर्तुमशक्यं भवार्णवमुत्तर पारं गच्छ ॥ ४० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

( जगतो हरिणा बुद्धिपूर्वं सृष्टत्वात्तत्प्रसादेन तस्य बन्धनिवृत्तिरन्यथोक्तानर्थ एवेत्याह मनोमात्रमिति । इदं प्रत्यक्षप्रमाणसिद्धं विश्वं ब्रह्मादिस्तम्बपर्यन्तं हरेर्मनसा मितं निर्मितं त्रातं रक्षितं मीयते संह्रियते, मी-हिंसायामिति धातोः । अमात्रे अपरिच्छिन्ने मनसि स्थितत्वाद्वा मनोमात्रं तदुक्तम् 'मनोमात्रं हरेर्यस्मान्मनसा मीयते जगदि'ति अत्र दृष्टान्तमाह यथेति । केयं क्रिया नामेति तत्राह । क्रिया चेति स्वप्ने हरेरिच्छया जाग्रद्दृष्टकरितुरगादिवासनया निर्मिता मात्रन्ति प्रवर्तन्त इति वासनामात्रम् । "व्याप्ते मनसि विष्णोश्च स्थितत्वाद्वासनामयमि"ति वस्त आच्छादत इति धातोः ईश्वरेच्छयाच्छाद्यमानत्वाद्वासनामयं

वस-आच्छादनेत्यस्माद्धातोर्वा वासनामयमिति च। यत एवं हरेरिच्छाधीनं जगदतो हरेरनीहायां सृष्टिव्यापारराहित्यावस्थायां सत्त्वादिगुणसाम्यलक्षणायां लीयते स्वस्वकारणानुप्रवेशपूर्वकमव्यक्ततामाप्नोति न तु शून्यतां तदेतदाह–अनीहायामिति। यतो हरेरिच्छाधीना जगतः स्थितिः अतो विष्णोरनीहायां लीयते सकलं जगदिति च ॥ ० ॥ ननु मुक्तैः कीदृशो विष्णुः प्राप्यत इति तत्राह आत्मेति। स्वयंज्योतिर्नित्याविलुप्तप्रकाशः साक्षात्तुर्य आत्मा जाग्रदाद्यवस्थानुभविनो जीवात्मनो भिन्नो विष्णुरनीहया अवस्थितस्तु जाग्रद्व्यापारशून्य एव व्याप्तरूपी प्रसिध्यति प्राप्यते मुमुक्षुभिरिति शेषः 'अनीहावस्थ एवासौ मुमुक्षुभिरवाप्यते' इति च। फलमाह एवमिति। जीवपरयोरेवमुक्तविधस्वस्वामिभावं जानन्मुनिः भिदापरपर्यायामात्ममायां बन्धशक्तिं व्युदस्योपरमेत्, हरिमुपगम्य सुखलक्षणां रतिं प्राप्य निर्मूलितसंसारो भवेदित्यर्थः। एवं विद्वान्बन्धशक्तिं व्युदस्य हरिमाप्नुते 'प्रकृतिर्भिदा च माया च भ्रमश्चेत्यभिधीयते। बन्धशक्तिर्यया लोको बम्भ्रमीत्यनिशं भुवी'ति च ॥ ० ॥ अनीहावस्थ एव मुमुक्षुभिः प्राप्य इत्युक्तं तत्स्पष्टमाचष्टे न यत्रेति। निद्रा सुषुप्तिर्मूर्च्छा मोहः अर्थदृग्जाग्रत् अनुवृत्तिर्जीवन्मुक्तिः 'अनुवृत्तिरिति प्राज्ञैर्जीवन्मुक्तिरुदीर्यते' इति च। एताः निद्राद्यवस्थाः यत्र न सन्ति स्वशक्तिव्यञ्जिता न भवन्ति तद्विजितात्मनो मनोजयवतो मुमुक्षोः प्राप्यं ब्रह्मेत्यन्वयः ॥ ० ॥[1] ) ननु जीवात्मा तदुपजीव्यः परमात्मा च कथं ज्ञातव्य इत्याशङ्क्य तत्त्वं विविच्योपदिशन्नाह तत्त्वमिति। हे नरेन्द्र यस्त्वमनयोः स्थावरजङ्गमयोर्मध्ये विष्वगाधिर्नानादुःखः सन्नेको जीवोऽसि 'स दुःखी'ति श्रुतिः तत्त्वं हृदि स्थितमवेहि 'हृदि ह्येष आत्मे'ति श्रुतिः। अनेन जीवात्मनो देहे कुत्रावस्थानमिति शङ्का परिहृतेति ज्ञायते त्वं क इति तत्राह। सोऽस्मीति। योऽहं तव सदृशो जीवोऽस्मि तं मां ज्ञानान्महान्भवामीत्यवेहि। अनेन तारतम्यज्ञानमावश्यकमित्युक्तं भवति। अथ जीवस्वरूपज्ञानानन्तरमीश्वरज्ञानं प्रददामीत्याह अथेति। यः क्षेत्रवित्क्षेत्रज्ञः सर्वान्तर्यामी सर्वस्य प्रत्यक् चकास्ति आभिमुख्येन प्रकाशते दुर्भगशरीरस्थोऽपि तन्मलाद्यलिप्ततया जीवव्यतिरिक्तो जीवस्यात्यन्तोपकारित्वेन साक्षित्वेनावभासते स भगवांस्तुभ्यं सुखादिप्रदः श्रीनारायण इत्यवेहि। तं विशिनष्टि जगतामिति। देहश्चेन्द्रियाणि चासवः प्राणाश्च धिषणा बुद्धिश्चात्माहंकारश्चेत्येतैरावृतानां जगतां जङ्गमानां तस्थुषां स्थावराणां च तत्त्वं सर्वसत्ताप्रदत्वात्, तदुक्तम् "सर्वसत्ताप्रदत्वात्तु सर्वतत्त्वं हरिः स्मृतः। सर्वत्र विततत्वाद्वा सोऽहं त्वमिति चोच्यते॥ सर्वान्तर्यात्मकत्वात्तु न जीवात्मतया हरिरि"ति च। 'अभिमानस्त्वहंकार आत्मा चेत्यभिधीयते' इति वचनात्तत्रात्माहंकारः 'व्यवधानेनान्वयोऽपि योग्यतापेक्षया भवेदि'ति वचनात् सात्त्विकानां जीवपरभेदज्ञाने विशिष्टमुक्तिसाधने योग्यतामपेक्ष्य व्यवधानेनान्वयो युक्तः। अनेनेतरेषामभेदज्ञाने तमःसाधने योग्यतेति यथास्थितान्वय इति दर्शितम्। किञ्च तत्त्वज्ञानस्य गोपनीयत्वेन परोक्षत्वस्य देवप्रीतिहेतुत्वात् "परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः" इति श्रुतेः। अतो यथापाठमेवार्थं वदन्तोऽसुरप्रकृतित्वान्न मोक्षशास्त्राधिकारिण इति बुद्ध्वा सद्भिस्तत्सङ्गः परिहर्तव्यश्चण्डालसङ्गवदिति तात्पर्यम् ॥ ३७ ॥ ❀ ❀ ननु मायाकल्पितपञ्चभूतात्मदेहे ब्रह्मैव सुखदुःखे अनुभवति ब्रह्मैव संसरति ब्रह्मैव मुच्यत इत्याचार्योक्तेः। "विमुक्तश्च विमुच्यते" इति श्रुतेश्चातो न स्वामिभृत्यभावेनात्र द्वयाङ्गीकारो युक्त इति तत्राह यस्मिन्निति। इदं सत्पृथिव्यादिकमसद्गगनादिकं जगद्यस्मिन्भगवति आत्मतया निजस्वरूपतया विभातीति योऽयमयोगिराद्धान्तः स मायाविवेकविधुतिः माययोर्ज्ञानप्रकृत्यभिधेययोर्विवेकात् विजिर् पृथग्भाव इति धातोः ज्ञानदेहो हरिः पञ्चभूतदेहो जीव इति पृथङ्निश्चितज्ञानाद्विधुतिर्विध्वंसो यस्यायोगिराद्धान्तस्य स तथोक्तः। एतदेव दृष्टान्तेन स्पष्टयति स्रजीति। स्रजि मालाकृतौ रज्जावहिबुद्धिर्वा। अयं भावः–यथा रज्जुतत्त्वाज्ञानाद्रज्जौ सर्पज्ञानमुत्पन्नं गुरूपदेशात्सर्पणदर्वीशिरोलक्षणफणाद्यभावज्ञानाद्वा स्पर्शकार्कश्यज्ञानाद्वा विधूयते तथा प्रमाणबाहुल्यदर्शनात्तत्त्वज्ञानोपदेष्ट्राचार्यवाक्याद्वा ब्रह्मणो जगदात्मत्वं विधूयते नित्यमुक्तत्वादिलक्षणानामनन्यसाधारणानां सत्त्वान्न ब्रह्मणः संसारो युक्त इति स्पष्टयन् यच्छब्देनोक्तं तच्छब्देन परामृश्य प्रपद्य इति क्रियापदेनान्वेति तमिति। जीवव्यावृत्त्यर्थं नित्यशब्दः प्रत्येकमभिसम्बध्यते–नित्यमुक्तं नित्यपरिशुद्धं च नित्यविबुद्धं च यत्तत्त्वमनारोपितं रूपं तद्यस्य स च अत एव प्रत्यूढे निरस्ते कर्मपुण्यपापलक्षणमदृष्टं सत्त्वादिगुणकलिला प्रकृतिश्च येन स तथा तं यत्स्वरूपतया भातमज्ञानां गगनादिकं विवेकज्ञानिना रज्जौ सर्पमावद्विधूयते तं नित्यमुक्तभावेन निरस्तप्रकृतिं भजेत् "न भ्रान्तिर्जगतो दृष्टिर्न भ्रान्तिर्हरिदर्शनम्। अन्योऽन्यात्मतया दृष्टिर्भ्रान्तिरित्यवधार्यताम् ॥ मायेति ज्ञाननाम स्यान्मायेति प्रकृतिस्तथा। ज्ञानस्वरूपं विष्णोस्तु प्रकृतिर्न हरेस्तनुः ॥ एवं विवेकिनो विश्वं ब्रह्मरूपेण नेष्यते। पञ्चभूतात्मकं देहं विष्णोः पश्यन्त्ययोगिनः ॥ तथा न योगिराद्धान्तो ज्ञानदेहो यतो हरेः" इति प्रमाणबाहुल्यान्मायादिशब्दानामुक्त एवार्थो न दुर्वादिकल्पित इति निरवद्यं, सर्पमावत् सर्पज्ञानवत् ॥३८॥ ❀ ❀ एवंविधसंसारोच्छेदे कारणं हरेः सर्वोत्तमत्वज्ञानं भक्त्यविनाभूतमतो भक्तिरेव प्रधानमित्याह यत्पादेति। यस्य पादपङ्कजयोः पत्त्रायमाणास्वङ्गुलीषु तत्तत्त्वं नोद्ग्रथयन्ति कुत इति हेतुगर्भविशेषणमाह विरुद्धेति। विरुद्धमार्गाः स्रोतोगुणाः संसारगुणा येषां ते तथोक्ताः संसारगुणानां विरुद्धत्वेन हेयत्वेन प्रतीयमानत्वादित्यर्थः, संसारगुणानां विरुद्धत्वेन प्रतीतौ किं कारणमिति चेन्न, नैजः सर्वगुणोत्कर्षस्वभावो दुस्त्यजः। तदुक्तम् 'नैजः सर्वगुणोत्कर्षः सर्वेभ्यो महदुच्यते' इति च। अनेन तत्त्वज्ञानिषु तत्तद्गुणोत्कर्षो महत्त्वकारणमित्युक्तं भवति, द्विमतौ च ज्ञानदौर्बल्यं कारणम्। "अनाद्यन्तं परं ब्रह्म न देवा ऋषयो

---

( १ ) अत्रेमे श्लोकाः सटीकाः श्रीविजयध्वजतीर्थमते।

विदुः । एकस्त्वेद भगवान् प्रभुर्नारायणो विराट् ॥" इति अनेन श्रीनारायणादृते सर्वेषामिति द्वामत्यं सम्भाव्यत इति सूचितम् । अतस्त्वं तं वासुदेवमरणं शरणं व्रजेत्यन्वयः ॥ ३९ ॥ ❁ ❁ संसारोत्तारहेतुत्वाद्भक्तेरेव सर्वगुणोत्कृष्टत्वमित्यभिप्रेत्याह कृच्छ्र इति । अप्लवेशा भक्तिलक्षणतरीरहिताः षड्वर्ग एव नक्रो यस्मिन् स तथा तं भवार्णवं ये तितीर्षन्ति तर्तुमिच्छन्ति तेषामिह महान् कृच्छ्र इति यस्मात्तस्मात्त्वं हरेर्भजनीयमङ्घ्रिमुडुपं नावं कृत्वा व्यसनं विविधापद्युक्तं दुस्तरार्णवं ज्ञाननावं विना तर्तुमशक्यं संसारसमुद्रमुत्तरेत्यन्वयः ॥ ४० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तत्त्वमिति । अनावृतानामिति चित्सुखः । वित्तपतेति सम्बन्धोक्तिः सोऽस्मीति तदंशत्वं नित्यतदधिष्ठानत्वं वा । तस्मिन् परमप्रेमास्पदत्वव्यञ्जनार्थमेवोक्तम् । सोऽस्तीति पाठेऽपि क्षेत्रवित्त, पतयेति विशेषणेन तदर्थमेव ज्ञेयम्, न तु विवर्त्तवादिनामिव स्थाणुपुरुषवत् कल्पनामयमित्यभिप्रायात् ॥ ३७ ॥ ❁ ❁ यस्मिन् श्रीभगवति तं प्रपद्य इत्यनेन सोऽस्तीत्येव पाठः स्थापितः ॥ ३८ ॥ ❁ ❁ त्वदभीष्टा श्रीहरिभक्तिस्तु सर्वत्र परमश्रेयोरूपेत्याह, यत्पादेति द्वाभ्याम् । तद्भक्तत्त्विमतय इति चित्सुखः ॥ ३९–४० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

स च केवलमोक्षो भक्तेर्गुणाभावेऽपि निर्भेदब्रह्मज्ञानसिद्धया स्यादित्याह । तत्तस्माज्जगतां जङ्गमानां तस्थुषां स्थावराणाञ्च देहेन्द्रियप्राणबुद्ध्यहङ्कारैरावृतानां हृदि यश्चकास्ति प्रकाशते तं परमात्मानमवेहि जानीहि । ज्ञानप्रकारमाह सोऽस्मीति । भानुकिरणस्यापि भानुत्वमिव शुद्धपरमात्मकिरणोऽहं परमात्मैव न तु मायेति । सोऽस्तीति पाठे स एकोऽस्ति नान्य इत्यर्थः । ननु जीवो हृदि चकास्ति तत्राह । विष्वक् सर्व्वतो भावेन आविः प्रकटमेव क्षेत्रविदं जीवं तपति नियमयतीति क्षेत्रवित्तपस्तस्य भावस्तत्ता तया अन्तर्य्यामिरूपेणेत्यर्थः । कीदृशं चकास्ति प्रत्यक् प्रतिलोमम् ॥ ३७ ॥ ❁ ❁ स्थावरजङ्गमादीनां हृदि चकास्तीत्युक्तेस्तेषां पृथक् सत्त्वं तत्सम्बन्धादीश्वरस्यापि मालिन्यं प्रसक्तं निराकुर्वन् प्रणमति । यस्मिन्निदं विश्वं सदसदात्मतया उत्कृष्टनिकृष्टभावेन कार्य्यकारणभावेन वा स्थितं माया विभाति, मायात्वे हेतुः विवेकेनैव विधुतिर्निराकृतिर्यस्य तत् । विवेकश्चायं विश्वस्य मायिकत्वान्मायात्वेन मायायाश्च परमात्मनो बहिरङ्गशक्तित्वात् जीवस्य च तत्तटस्थशक्तित्वात् शक्तिशक्तिमतोर्भेदाभावामननात् निर्भेदात्मज्ञानमेवेति । स्रजि अहिबुद्धिर्वेति वाशब्देन विवर्त्तवादिनां विवर्त्तवादेन वा निर्भेदात्मज्ञानसिद्धिरिति परमतञ्च दर्शितम् । तं नित्यमुक्तम् । यतः परिशुद्धं तत् कुतः यतो विशुद्धं तत्त्वं सत्यं प्रत्यूढा अभिभूता भवति कर्म्मभिः कलिला मलिना प्रकृतिर्यस्मात् तं प्रपद्य इति प्रपत्तिरूपया भक्त्या विना मोक्षो न भवेदिति भक्तेरङ्गत्वमभिव्यज्य गुणभावो दर्शितः ॥ ३८ ॥ ❁ ❁ तदेवं सा श्रद्धयेत्यादिना भक्तेः प्राधान्ये ज्ञानमिश्रया भक्त्या साध्यां मुक्तिसहितां शान्तरतिमुक्त्वा तत्त्वं नरेन्द्रेति श्लोकद्वयेन भक्तिमिश्रज्ञानसाध्यां सायुज्यमुक्तिञ्च दर्शयित्वा तमवेहि सोऽस्मीति पदैस्तस्य शुद्धदास्यभक्तयैकस्पृहस्य तत्रारुचिमभिप्रेत्य भक्तेः कैवल्ये शुद्धभक्त्या तदभीष्टया साध्यं प्रेमाणमानुपङ्गिकमुक्तिकं वदंस्तामेव भक्तिं सर्व्वथोत्कर्षयति यत्पादेति द्वाभ्याम् । यस्य पादपङ्कजयोः पलाशान्यङ्गुलयस्तेषां विलासभक्त्या विशेषेण लासः प्रतिक्षणवर्द्धमाना कान्तिर्येस्यां तया साधनरूपया भक्त्या साध्यरूपया च । यद्वा विलासयुक्तया भक्त्या विविधाद्भुतशिल्पया अभ्यञ्जनोद्वर्त्तनस्नपनसचाकचिक्यप्रसाधनादिसपर्य्यया । यद्वा अङ्गुलीनां विलासः कान्तिस्तस्य भक्त्या स्मृत्यापीत्यर्थः । कर्माशयं कर्म्मवासनामयमहङ्कारं ग्रथितं येनैव स्वकर्मणा तद्विपरीतेन भगवत्कर्म्मणा उद्ग्रथयन्ति सन्तो वैष्णवाः तद्वत् यतयः संन्यासिनो न । कुतः रिक्ता निर्विषया अविद्यमाना मतिर्येषां ते रिक्तधना इव निर्बुद्धयोऽसन्तश्चेत्यर्थः । सन्तस्तु भगवद्विषयमतयः सुबुद्धय एवेति भावः । निरुद्धो नद्यादेः स्रोतसामिवेन्द्रियाणां गणो यैः । न हि स्रोतांसि निरोद्धुं शक्यानि भवन्तीति निर्बुद्धित्वचिह्नमेतदेवेति भावः । सन्तस्तु भगवत्सौन्दर्य्यामृतादिषु प्रसारितचक्षुरादीन्द्रियगणाः सुधियः सुखिनश्चेति भावः । तमरणं शरणं वसुदेवनन्दनं भज श्लेषेण अरणं निःसंग्राममेव । अन्यथा तव इन्द्रियैः सह संग्रामो भविष्यति तत्र च त्वमेव पराभूतो भविष्यसीति भावः ॥ ३९ ॥ ❁ ❁ तैर्यैतिभिः संसारतरणं न सुकरमित्याह कृच्छ्र इति । अप्लवेशां न प्लवस्तरणहेतुः ईट् समर्थः ईशो हरिर्वा येषां तेषां महान् इह कृच्छ्रः क्लेशः । यत इन्द्रियषड्वर्गनक्रं भवार्णवमसुखेन तर्तुमिच्छन्ति न तु तरन्तीत्यर्थः । यदि कामादितरङ्गैर्न हन्यमानः षडिन्द्रियनक्रैश्च न चर्व्यमाणः स्वयञ्च बलिष्ठः श्रान्तोऽप्यनलसः स्यात् तदा ज्ञानवैराग्याभ्यां दोर्भ्यां चिरेणैव कथञ्चिदेव तेषां मध्ये कोऽपि कष्टेनैव तरतीति भावः । तस्मात्त्वं हरेरङ्घ्रिमुडुपं प्लवं कृत्वा व्यसनं संसारदुस्तरार्णवमुत्तर । अत्रोडुपं कृत्वेति 'समाश्रिता ये पदपल्लवमि'ति 'त्वत्पादपोतेन महत्कृतेने'त्याद्युक्तेर्हरिपदप्लवाश्रयणमात्रेणैव भवार्णवस्य गोवत्सपदप्रमाणत्वे जाते तत्तरणे खलु कः प्रयास इति प्लवारोहणं नाशङ्कनीयम् ॥ ४० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अथ जीवब्रह्मणोः "तत्त्वमसि, क्षेत्रज्ञं चापि मां विद्धि, आत्मत्वेनावगच्छन्ति ग्राहयन्ति च" इत्यादिश्रुतिसूत्रसाधितभेदसहिष्णवभेदलक्षणसामानाधिकरण्यभावनया भगवद्भजनेन संसारमुत्तरेत्याह तदिति चतुर्भिः । 'यस्मान्मोक्ष एवार्थ आत्यन्तिकतयेष्यते ।

त्रैवर्गिकोऽर्थो यो नित्यं कृतान्तभयसंयुतः' तस्मात् हे नरेन्द्र ! त्वं मोक्षसिद्धये जगतां जङ्गमानां तस्थुषां स्थावराणां च देहादिभिः आत्मनाहङ्कारेण चावृतानां व्याप्तानां हृदि प्रत्यक् यश्चकास्ति प्रकाशते तं सोऽस्मीत्यवेहि तदात्मकोऽस्मीति भावय। ननु 'हृदि ह्ययमात्मे'ति श्रुत्या किं क्षेत्रज्ञः स इत्यत्राह। क्षेत्रविदो जीवान् तपति नियमयतीति क्षेत्रवित्तपस्तस्य भावस्तत्ता तया विष्वक् सर्वतः आविः प्रकटः ॥ ३७ ॥ ❀ ❀ मुमुक्षुजनशिक्षायै श्रीपृथुं प्रत्युपदिष्टा ब्रह्मात्मकत्वभावनाथ स्वयमपि तयैव भावनया हरिं शरणं व्रजति भगवान् सनत्कुमारः यस्मिन्निति। तं भगवन्तम् आत्मतयोक्तश्रुतिस्मृतिसूत्रोक्तेनात्मत्वेन भेदसहिष्णवभेदेन प्रपद्ये शरणं गच्छामि। स्वरूपेण भिन्नस्यैव चिदचिदात्मकस्य जगतः 'सर्वं खल्विदं ब्रह्म तज्जलानिती'ति श्रुत्या ब्रह्माभिन्नत्वकथनात् भगवन्तमात्मत्वेन पृथुं प्रति ग्राहयित्वा स्वयं गृहीत्वा भगवतः स्वरूपेण जीवेभ्यो वैलक्षण्यमाह। इदं प्रसिद्धं स्रजि अहिबुद्धिरिव इवार्थे वाशब्दः देवत्वमनुष्यत्वादिबुद्धिरूपं विवेकविधुति ज्ञाननिवर्त्यमज्ञानं यस्मिन् अविभाति न विभाति नास्तीत्यर्थः। तत्र हेतुगर्भं विशेषणं प्रत्यूढकर्मकलिलप्रकृतिमिति। प्रत्यूढा सर्वदा दूरीभूता कर्मभिः कलिला मलिना प्रकृतिः स्वभावो यस्मात्तम् कर्मभिरनावृतं सर्वज्ञमित्यर्थः। यस्मिन् सत् मुक्तत्वमसत् बद्धत्वं च मायादम्भाद् मालिन्यं च अविभाति तं प्रपद्ये। तत्र हेतुगर्भं विशेषणं नित्यमुक्तपरिशुद्धविशुद्धतत्त्वमिति ॥ ३८ ॥ ❀ ❀ अहं तं प्रपद्ये शरणं गतोऽस्मीत्युक्तमिदानीं त्वमपि तमेव भजेत्याह यदिति। तमरणं शरणं भक्तरक्षितारं भज। ननु ज्ञानमात्रेण मुक्तिः स्यादेव किं भक्त्या-इत्यत आह। यस्य पादपङ्कजयोः पलाशानि अंगुलयस्तेषां विलासो विहारो यत्र तस्य तदङ्गुलिसंस्पृष्टस्य रेणोरपि भक्त्या सन्तः साधवः ग्रथितमनादितः सम्बद्धं कर्माशयं कर्मकोशरूपं हृदयग्रन्थिमुद्ग्रथयन्ति रिक्तमतयो भक्तिरहितबुद्धयो रुद्धस्रोतोगणाः वशीकृतेन्द्रियवर्गा अपि यतयः ज्ञानादिबहुसाधनपरा अपि तद्वत् न उद्ग्रथयन्ति तमात्मतयाहं प्रपद्ये त्वमपि तमेव तथैव भजेति भावः ॥ ३९ ॥ ❀ ❀ हरिभक्तिरहिताः यतयः कर्माशयं नोद्ग्रथयन्ति अतस्तेपामप्लवेशां नास्ति प्लव ईष्टे इतीट् ईश्वरो येषां हरिविमुखानामिह भवार्णवतरणे महान् कृच्छ्र एव हरिभक्तिहीनज्ञानवैराग्येन्द्रियदमनादिरूपः क्लेश एव। यतोऽसुखेन हरिभक्तिहीनेन ज्ञानादिप्रयासेन ते षड्वर्गनक्रम् इन्द्रियषड्वर्गग्राहं भवार्णवं तितीर्षयन्ति तस्मात्त्वं हरेः अङ्घ्रिमुडुपं नावं कृत्वा व्यसनं दुःखरूपं दुस्तरार्णवमुपायान्तरैर्दुःखेनापि तर्तुमशक्यं भवार्णवमुत्तर ॥ ४० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

यस्माद्विषयासक्तिर्दुःखमूलं तत् तस्मात् हे नरेन्द्र जङ्गमानां तस्थुषां स्थावराणां कथम्भूतानां देहः शरीरं च इन्द्रियाणि असुः प्राणश्च धिषणा बुद्धिश्च आत्मा अहङ्कारश्च तैरावृतानां जीवानां हृदि यो भगवांश्चकास्ति प्रकाशते तं त्वमहमस्मीत्यवेहि जानीहीत्यन्वयः। तर्हि किं जीवो वेदितव्यत्वेनेष्टः ? तथा चेत्तदा स च सर्वेषां स्वभावत एव तथा वेदनविषयः किमुपदेशेनेत्याशङ्क्याह—क्षेत्रवित्तपतयेति। क्षेत्रं देहेन्द्रियप्राणादिजडवर्गं वेत्ति चेतनतया जानातीति तथा जीवस्तं तपति प्रेरयतीति तथा तस्य भावस्तत्ता तया अन्तर्यामिरूपेणेत्यर्थः। ननु नानाविधधर्माधर्मवासितान्तःकरणवृत्तिविशेषबुद्धिप्रेरितो जीव इतस्ततः कार्याकार्येषु प्रवर्त्तते तथा च किं बुद्धिरेव वेदितव्यत्वेन विवक्षितेत्याशङ्क्याह—प्रत्यगिति। बुद्धेरप्यन्तर्वर्तीत्यर्थः। तर्हि किं परिच्छिन्न इत्याशङ्क्याह—विष्वगिति, सर्वतो व्याप्त इत्यर्थः। एवम्भूते किं प्रमाणं तत्राह—आविरिति, स्वयंप्रकाशः, 'यस्य भासा सर्वमिदं विभाती'त्यर्थः। सम्बोधनं तवैतदेव युक्तमिति सूचनार्थम् ॥ ३७ ॥ ❀ ❀ तमवेहि सोऽस्मीति ज्ञानमुपदिश्य तस्य दुष्करत्वेन भक्तिमुपदिशति—यस्मिन्निति त्रिभिः। तत्र पूर्वं 'जगतामथ तस्थुषां च हृदि चकास्ति' इत्युक्तेः स्थावरजङ्गमात्मकस्य प्रपञ्चस्य सत्यत्वप्रतीतेः कथं तत्रासक्तस्य वैराग्यं स्यादित्याशङ्क्य प्रथमं ततो वैराग्यार्थं तस्य मिथ्यात्वमाह—यस्मिन् भगवतीदं विश्वं सदसदात्मतया उत्कृष्टनिकृष्टभावेन स्थूलसूक्ष्मभावेन कार्यकारणभावेन मायया मिथ्यैव कल्पितं विभाति तमहं प्रपद्ये शरणं व्रजे। इत्येवं तं वासुदेवमरणं शरणं भजेति द्वितीयेनान्वयः। मिथ्यात्वे दृष्टान्तमाह—स्रजि वाऽहिबुद्धिरिति। वाशब्दो दृष्टान्ते, यथा स्रजि अहिबुद्धिर्भ्रमस्तद्विषयस्य चाहेर्मिथ्यात्वं तथा भगवति प्रपञ्चबुद्धिर्भ्रमस्तद्विषयस्य च मिथ्यात्वमित्यर्थः। न हि दृष्टान्तमात्रेण वस्तुसिद्धिर्भवति युक्तिमन्तरेणेत्याशङ्क्य तत्र युक्तिमाह—विवेकविधुतीति। विवेके सति अधिष्ठानभूतभगवज्ज्ञाने सति विधुतिर्निरासो यस्य तत् तथेत्यर्थः। यत एवमतो मिथ्येति भावः। प्रतीतस्य कल्पितत्वादेव तदधिष्ठानस्य सत्यत्वमर्थसिद्धमेव। शुद्धत्वं च व्युत्पादयति—परिशुद्धेति। तत्र हेतुमाह—नित्यमुक्तेति, यतो नित्यं सर्वदा प्राकृतधर्माद्विनिर्मुक्तमतः परिशुद्धमित्यर्थः। नित्यमुक्तत्वमेव विशदयति—प्रत्यूढेति। प्रत्यूढा सर्वतो दूरनिरस्ता कर्मभिः कलिला मलिना प्रकृतिर्यस्मात्तमित्यर्थः। न हि तत्र मायाकार्यसम्बन्धः सम्भवति चैतन्यघनत्वादित्याशयेनाह—विबुद्धतत्त्वमिति। यद्वा यस्मिन्निदमित्यनेन न जगतो मिथ्यात्वं प्रतिपाद्यते, किन्तु भगवन्मूर्त्तौ प्रतीयमानस्य करचरणादेर्द्व्यसद्दृष्टान्तेन प्राकृतत्वशङ्का स्यात्तदा तस्य भजनीयत्वं न स्यादिति तत्र प्राकृतत्वस्य मिथ्यात्वमुच्यते। यस्मिन् भगवति सदसदात्मतया उत्कृष्टनिकृष्टभावेन प्रतीयमानमिदं प्राकृतत्वं माया मिथ्यैव दुर्बुद्धिभिरारोपितमेव विभाति, वस्तुतस्तु नास्त्येव, तमहं प्रपद्ये इत्याद्यन्यत्सर्वं पूर्वमुक्तमेव ज्ञेयम् ॥ ३८ ॥ ❀ ❀ ननु ज्ञानमुपदिश्य किं पुनर्भक्तिरुपदिश्यते इत्याशङ्क्य ज्ञानस्य दुष्करत्वेन भक्तेः सुकरत्वादित्याशयेनाह—यदिति। यस्य भगवतो वासुदेवस्य पादपङ्कजयोः पलाशानि अङ्गुलयस्तेषां विलासः कान्तिस्तस्य भक्त्या स्मरणेन सन्तो भक्ता यथा सुखेनाऽ-

नायासेन कर्मभिर्ग्रथितं कर्माशयमन्तःकरणमुद्ग्रथयन्ति कर्मवासनाभिर्विनिर्मुक्तं शुद्धं कुर्वन्ति तद्वत्तथा सुखेन यतयो यतनशीला ज्ञानमार्गीया अत एव रुद्धः स्रोतसामिन्द्रियाणां गणो वर्गो यैस्ते तथाभूता अपि न कर्माशयमुद्ग्रथयन्तीत्यन्वयः। कुत एवमिति हेत्वपेक्षायामाह—रिक्तेति, रिक्ता भगवदवलम्बरहिता मतिर्येषां ते तथा। भगवद्विमुखत्वेन तत्प्रसादाभावादिति भावः॥ ३९॥ ❀ ❀ ननु पूर्वं ज्ञानविज्ञानरंहसा हृदये दहतीत्युक्तमिदानीं कथं तद्विरुद्धं तद्वन्न रिक्तमतय इत्युच्यते इत्याशङ्क्य न हि ज्ञानस्य सर्वथा मोक्षासाधकत्वमुच्यते येन पूर्वापरवचनविरोधः स्यात्, किन्तु भक्तिमार्गापेक्षया कष्टाधिक्यमात्रमिति न विरोध इत्याशयेनाह—कृच्छ्र इति। नास्ति सुखं यस्मिंस्तदसुखं यमनियमासनप्राणायामप्रत्याहारादिसाधनं तेन ये भवार्णवं संसारसागरं तितीर्षयन्ति तर्तुमिच्छन्ति तेषामिह साधनदशायां महान् कृच्छ्र इत्यन्वयः। तत्र हेतुद्वयं संसारस्य दुस्तरत्वं तेषां च रक्षकराहित्यं च। संसारं दुस्तरत्वेन विशिनष्टि—षड्वर्गनक्रमिति। इन्द्रियनामा षड्वर्गो ग्राहो यस्मिंस्तम्। रक्षकहीनत्वेन तान् विशिनष्टि—अप्लवेशामिति। न प्लवस्तरणे रक्षकत्वेन अङ्गीकृतः ईट् ईशो येषां तेषामित्यर्थः। तस्मादेवं तत्तस्मात्त्वं हरेः संसारदुःखहर्तुर्भगवत उद्धर्तुं समर्थस्य भजनीयमुद्धारार्थमवश्यं भजनयोग्यमङ्घ्रिमुडुपं प्लवं कृत्वा आश्रित्य ध्यानेन चित्तीकृतव्यसनं संसारदुःखरूपं दुस्तरार्णवमुत्तर॥ ४०॥

**भाषानुवादः**

अतः राजन्! जो श्रीभगवान् देह, इन्द्रिय, प्राण, बुद्धि और अहङ्कारसे आवृत सभी स्थावर-जङ्गम प्राणियोंके हृदयोंमें जीवके नियामक अन्तर्यामी आत्मारूपसे सर्वत्र साक्षात् प्रकाशित हो रहे हैं—उन्हें तुम 'वह मैं ही हूँ' ऐसा जानो॥ ३७॥ ❀ ❀ जिस प्रकार मालाका ज्ञान हो जानेपर उसमें सर्पबुद्धि नहीं रहती, उसी प्रकार विवेक होने पर जिसका कहीं पता नहीं लगता, ऐसा यह मायामय प्रपञ्च जिसमें कार्यकारणरूपसे प्रतीत हो रहा है और जो स्वयं कर्ममल-कलुषित प्रकृतिसे परे है, उस नित्यमुक्त, निर्मल और ज्ञानस्वरूप परमात्माको मैं प्राप्त हो रहा हूँ॥ ३८॥ ❀ ❀ संत-महात्मा जिनके चरणकमलोंके अंगुलिदलकी छिटकती हुई छटाका स्मरण करके अहङ्काररूप हृदयग्रन्थिको, जो कर्मोंसे गठित है, इस प्रकार छिन्न-भिन्न कर डालते हैं कि समस्त इन्द्रियों का प्रत्याहार करके अपने अन्तःकरणको निर्विषय करनेवाले संन्यासी भी वैसा नहीं कर पाते। तुम उन सर्वाश्रय भगवान् वासुदेवका भजन करो॥ ३९॥ ❀ ❀ जो लोग मन और इन्द्रियरूप मगरोंसे भरे हुए इस संसारसागरको योगादि दुष्कर साधनोंसे पार करना चाहते हैं, उनका उस पार पहुँचना कठिन ही है, क्योंकि उन्हें कर्णधाररूप श्रीहरिका आश्रय नहीं है। अतः तुम तो भगवान्के आराधनीय चरणकमलोंको नौका बनाकर अनायास ही इस दुस्तर समुद्रको पार कर लो॥ ४०॥

**मैत्रेय उवाच**

स एवं ब्रह्मपुत्रेण कुमारेणात्ममेधसा। दर्शितात्मगतिः सम्यक्प्रशस्योवाच तं नृपः॥ ४१॥

**राजोवाच**

कृतो मेऽनुग्रहः पूर्वं हरिणाऽऽर्तानुकम्पिना। तमापादयितुं ब्रह्मन् भगवन् यूयमागताः॥ ४२॥
निष्पादितश्च कार्त्स्न्येन भगवद्भिर्घृणालुभिः। साधूच्छिष्टं हि मे[1] सर्वमात्मना सह किं ददे॥ ४३॥
प्राणा दाराः सुता ब्रह्मन् गृहाश्च सपरिच्छदाः। राज्यं [2]बलं मही कोश इति सर्वं निवेदितम्॥ ४४॥

अन्वयः—ब्रह्मपुत्रेण आत्ममेधसा कुमारेण एवम् दर्शितात्मगतिः सः नृपः तम् सम्यक् प्रशस्य उवाच॥४१॥ ❀ ❀ ब्रह्मन् भगवन् आर्तानुकम्पिना हरिणा पूर्वम् मे अनुग्रहः कृतः यूयम् तम् आपादयितुम् आगताः॥ ४२॥ ❀ ❀ च च घृणालुभिः भगवद्भिः कार्त्स्न्येन हि निष्पादितः मे आत्मना सह सर्वम् साधूच्छिष्टम् किम् ददे॥ ४३॥ ❀ ❀ ब्रह्मन् प्राणाः दाराः सुताः च सपरिच्छदाः गृहाः राज्यम् बलम् मही कोशः इति सर्वम् निवेदितम्॥ ४४॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

आत्ममेधसा ब्रह्मविदा दर्शिता आत्मनो गतिस्तत्त्वं यस्मै सः॥ ४१॥ ❀ ❀ ब्रह्मन्निति संबोधनं प्राधान्यादेकस्य, यूयमित्युक्तिः सर्वान्प्रति॥ ४२॥ ❀ ❀ आत्मना देहेन सह सर्वं राज्यादिकं मदीयं साधूच्छिष्टं साधुभिः स्वीयं सन्महं

१. प्रा० पा०—सर्वे मे ह्यात्मना। २. प्रा० पा०—मही बलं।

प्रसादरूपेण दत्तमतस्तत्र मम स्वत्वाभावाद् गुरुदक्षिणार्थं किं ददे। न हि पित्रा दत्तं मोदकादि तस्मै दानरूपेण प्रत्यर्प्यते ॥ ४३ ॥ ❀ ❀ निवेदनं तु तदीयस्यैव तस्मै समर्पणं यथा भृत्यो राज्ञे सेवादिरूपेण तांबूलादिकमर्पयति तथा मयापि सर्वं निवेदितम् स्वीकुरुतेत्याह प्राणा इति ॥ ४४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स पृथुः ॥ ४१ ॥ ❀ ❀ एकस्य सनत्कुमारस्योपदेष्टृत्वेन प्राधान्यात् सर्वांश्चतुःसंख्याकान् ॥ ४२ ॥ ❀ ❀ ननु साधूनां राज्यादौ कथं स्वत्वं जातं तत्राह—वक्ष्यमाणश्लोकेन प्राणा इत्यादिना अश्वमेधयागान्ते प्राणादिकं सर्वं मया ब्राह्मणेभ्यः पूर्वमेव दत्तं पुनश्च तैर्निजोच्छिष्टं मह्यमेव समर्पितमिति भावः। अत उक्तं साधूच्छिष्टं हीति। निष्पादित इत्यस्यानुग्रह इति शेषः। अतस्साधुदत्तत्वादेव। तत्र राज्यादौ ॥ ४३ ॥ ❀ ❀ तदीयस्य द्रव्यस्वामिनः। आदिना वस्त्रालंकारादिग्रहः ॥ ४४ ॥

### श्रीमद्वीरराघवव्याख्या

आत्ममेधसा ब्रह्मविदा ब्रह्मपुत्रेण सनत्कुमारेण दर्शिता आत्मनो गतिस्तत्त्वं यस्य स नृपः पृथुः सम्यक् प्रशंसां कृत्वा तं कुमारमुवाच ॥ ४१ ॥ ❀ ❀ आर्तानां तापत्रयातुराणाम् अनुकम्पिना हरिणा पूर्वं मे मह्यमनुग्रहः कृतः। हे ब्रह्मन्! भगवन्! तमनुग्रहमापादयितुं निष्पादयितुं यूयमत्रागताः ॥ ४२ ॥ ❀ ❀ दयालुभिर्भवद्भिर्यैत्समीहितं कात्स्न्र्येन निष्पादितं ब्रह्मोपदेष्ट्रे तुभ्यं मदीयं किं देयमस्तीत्याह साधूच्छिष्टमिति। आत्मना देहेन सह सर्वं मे मदीयं साधूनामुच्छिष्टं साधूनामनुग्रहलब्धमित्यर्थः। अतो भवदनुग्रहाल्लब्धं भवद्भ्यः किं ददे गुरुदक्षिणार्थं किं ददे? न ह्यनुग्रहात् पित्रा दत्तं पुनस्तस्मै दीयत इत्यर्थः ॥ ४३ ॥ ❀ ❀ यद्यप्येवं तथापि राज्ञे भृत्येनेव मया निवेदितं स्वीकुरुतेत्याह प्राणा इति। प्राणाः असवः रायः धनानि सपरिच्छदाः सोपकरणा गृहा राज्यं बलं मही कोशः स ह्यात्मकोशः पद्माकारत्वात्कोश इत्युक्तम्। यद्वा कोशः रत्नभाण्डादिरूपः, रैशब्द-स्तद्व्यतिरिक्तधनपरः, इतिशब्दः प्रकारे एवंविधमन्यत्सर्वमपि निवेदितं तुभ्यं मयेति शेषः ॥ ४४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

इतः परमुपदेष्टव्यांशो नास्त्यतः परं राज्ञा किमुक्तमत्राह स एवमिति। आत्मनो हरेर्मेधा ज्ञानं यस्य स तथा तेन मनो-योगवता वा ॥ ४१ ॥ ❀ ❀ किमवोचत्तत्राह कृत इति ॥ ४२ ॥ ❀ ❀ तदपूरणे भगवदागमनेनापि किं प्रयोजनमिति शङ्कांशो नास्तीत्याशयेनाह निष्पादितमिति। घृणालुभिर्दयाशीलैः एवमुपकर्तृभ्यो युष्मभ्यं कापि गुरुदक्षिणा मया दातव्या तद्गुरुदक्षिणालक्षणं किं धनमात्मना देहेन सह ददे ददामि? न मम किञ्चित्स्वाधीनमस्तीत्यर्थः। राज्यादिकमस्ति चेत्सर्वं तत्साधुभ्यो दत्तं तदधीनमहं कथं दास्यामि परकीयदानाच्चौर्यमापद्यत इति भावेनोक्तं साधुदत्तमिति ॥ ४३ ॥ ❀ ❀ ननु तथापि साधुभि-रात्मसात्कृतं राज्यादिकं तद्दातव्यमिति चेत्सत्यं तद्दातुं योग्यं चेद्दास्यामीत्याह। प्राणा इति। रायो वित्तानि ॥ ४४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

आत्ममेधसापि दर्शिता आत्मनः स्वस्य गतिः भगवद्रूपा यस्मै सः ॥ ४१ ॥ ❀ ❀ अत एवान्तःस्वभक्तिस्थापक-तत्तदभिप्रायकश्रीभगवदावेशमयतदुपदेशलाभेनानुमोदते। कृत इति ॥ ४२ ॥ ❀ ❀ निष्पादितमिति चित्सुखः। घृणालु-भिरिति चित्सुखस्यापि मतः। न तु घृणात्मभिरिति। साधुभिर्भगवद्वृन्दैर्भृग्वादिभिरुच्छिष्टं यज्ञान्ते मया दत्तं सत् निजोच्छिष्टव-न्मय्येव समर्पितं तादृशमनादरणीयं किं ददे ॥ ४३ ॥ ❀ ❀ साधुभ्यो दत्तमेव विवृणोति। निवेदितं निवेदनरूपेणैव दत्तं पूर्वं तैरेव प्राणादीनां मह्यं समर्पितत्वात् ॥ ४४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

आत्ममेधसा आत्मविदा ॥ ४१ ॥ ❀ ❀ ब्रह्मन्निति सनत्कुमारस्यैकस्य प्राधान्यात्, यूयमिति सर्व्वान् प्रत्युक्तिः ॥ ४२ ॥ ❀ ❀ गुरुदक्षिणार्थं दातुं किमपि न पश्यामीत्याह साधूच्छिष्टमिति। साधुभिर्युष्माभिरेव भृग्वादिभिः स्वीयं राज्यादिकं प्रसादीकृत्य मह्यं दत्तं कथं पुनर्दास्यामि? पित्रा दत्तस्य ताम्बूलचर्वितस्य तस्मै प्रतिदानानौचित्यात् ॥ ४३ ॥ ❀ ❀ ननु साधूनां राज्यादिषु कथं स्वत्वं जातं तत्राह प्राणा इति। अश्वमेधयागान्ते प्राणादिकं सर्व्वं मया पूर्व्वमेव दत्तं पुनश्च तैर्निजोच्छिष्टं मह्यमेव समर्पितमिति भावः ॥ ४४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

आत्मनि परमात्मनि श्रीकृष्णे मेधा यस्य तेन दर्शितात्मनः परमात्मनो गतिस्तत्त्वं यस्मै सः ॥ ४१ ॥ ❀ ❀ ब्रह्मन् इति भगवन्निति च सम्बोधनं सर्वेषां तुल्यस्वभावत्वात् यूयमिति बहुवचनं तद्बहुत्वविषयम्। तमनुग्रहमापादयितुं साधयितुम् ॥ ४२ ॥ ❀ ❀ स चानुग्रहो घृणालुभिः कृपालुभिः निष्पादितः। आत्मना सह देहेन सह सर्वं राज्यादिकं साधूनामुच्छिष्टवदनपेक्ष्यमतः किं ददे ॥ ४३ ॥ ❀ ❀ यद्यप्यनपेक्षं तथापि गुरुनिष्कृत्यर्थं यदस्ति तद्देयमेवेत्याह प्राणा इति। तत्रापि अन्यत्र दानं सम्भवति गुरुरूपिणो हरेस्तु सर्वं स्वत एवास्ति अतो भवदीयमेव प्राणादिकं सर्वं निवेदितं सर्वं निवेदितमर्पितं स्वीकुरुत ॥ ४४-४६ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

आत्मनि मेधा बुद्धिर्यस्य स आत्ममेधास्तेन ब्रह्मपुत्रेण एवं कुमारेण एवं वर्णितप्रकारेण सम्यक् दर्शिता आत्मनो गतिस्तत्त्वं यस्मै स नृपः पृथुस्तं सनत्कुमारं प्रशस्य संश्लाघ्य उवाचेत्यन्वयः ॥ ४१ ॥ ❀ ❀ प्रशंसापूर्वकानि तद्वचांस्येव दर्शयति—कृत इति षड्भिः। हे ब्रह्मन् हे भगवन् 'ह्रस्वेन कालेन गृहोपयातान् द्रष्टासि सिद्धाननुरक्तलोकः' इति वदता हरिणा युष्मदुपदेशात् पूर्वमेव मे ममोपर्यनुग्रहः कृतः। युष्मद्द्वारा ज्ञानप्राप्त्या मोक्षो वरदानविधया दत्तस्तं भगवत्कृतमनुग्रहमापादयितुं सम्पादयितुं यूयमागता इत्यन्वयः। अनुग्रहे कृपालुत्वं हेतुं सूचयंस्तं विशिनष्टि—आर्त्तानुकम्पिनेति, आर्त्तेषु पीडितेषु शरणागतेषु अनुकम्पास्याऽस्तीति तथा तेनेत्यर्थः। एकस्य सनत्कुमारस्य प्राधान्यात्तदभिप्रायेण सम्बोधनयोरेकवचनम्। ताभ्यां च ज्ञानादिसम्पादनसामर्थ्यं सूचितम्। सर्वाभिप्रायेण यूयमिति बहुवचनम् ॥ ४२ ॥ ❀ ❀ अतो भगवत्कृतोऽनुग्रहः कार्त्स्न्येन साकल्येन भगवद्भिर्निष्पादितश्च। ननु भगवत्कृतमनुग्रहमन्ये कथं सम्पादयितुं समर्था इत्याशङ्क्य भगवदवतारत्वान्न युष्माकं ततोऽन्यत्वमित्यभिप्रेत्याह—भगवद्भिरिति। अत एव तत्स्वभावा इत्याह—घृणालुभिरिति। अतो यद्यपि भवद्भ्यो गुरुदक्षिणारूपेण सन्तोषार्थं किञ्चिद्देयं तथापि हि यस्मात् मे ममात्मनो देहेन सह सर्वं राज्यादिकं साधूच्छिष्टं साधूनां भवतां प्रसादरूपेण मया प्राप्तमतो मम तत्र स्वत्वाभावेन दाने असमर्थत्वाद्भवद्भ्योऽहं किं ददे ? ॥ ४३ ॥ ❀ ❀ अतो यथा स्वत्वाभावेऽपि राज्ञः परितोषार्थं तदीयमेव स्रक्चन्दनताम्बूलादि वस्तु तस्मै निवेद्यते तथा प्राणादि सर्वं भवदीयमेव मया भवद्भ्यो निवेदितं तदेव स्वामित्वं सम्बोधनेन सूचयति—हे ब्रह्मन्निति ॥ ४४ ॥

### भाषानुवादः

श्रीमैत्रेयजी कहते हैं—विदुरजी ! ब्रह्माजीके पुत्र आत्मज्ञानी सनत्कुमारजीसे इस प्रकार आत्मतत्त्वका उपदेश पाकर महाराज पृथुने उनकी बहुत प्रशंसा करते हुए कहा ॥ ४१ ॥ ❀ ❀ राजा पृथुने कहा—भगवन् ! दीनदयालु श्रीहरिने मुझपर पहले कृपा की थी, उसीको पूर्ण करनेके लिये आपलोग पधारे हैं ॥ ४२ ॥ ❀ ❀ आपलोग बड़े ही दयालु हैं। जिस कार्यके लिये आपलोग पधारे थे, उसे आपलोगोंने अच्छी तरह सम्पन्न कर दिया। अब, इसके बदलेमें मैं आपलोगोंको क्या दूँ ? मेरे पास तो शरीर और इसके साथ जो कुछ है, वह सब महापुरुषोंका ही प्रसाद है ॥ ४३ ॥ ❀ ❀ ब्रह्मन् ! प्राण, स्त्री, पुत्र सब प्रकारकी सामग्रियोंसे भरा हुआ भवन, राज्य, सेना, पृथ्वी और कोश—यह सब कुछ आप ही लोगोंका है, अतः आपके ही श्रीचरणोंमें अर्पित है ॥ ४४ ॥

सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च। सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥ ४५ ॥
स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च। तस्यैवानुग्रहेणान्नं भुञ्जते क्षत्रियादयः ॥ ४६ ॥
यैरीदृशी भगवतो गतिरात्मवादे एकान्ततो निगमिभिः प्रतिपादिता नः।
तुष्यन्त्वदभ्रकरुणाः स्वकृतेन नित्यं को नाम तत्प्रतिकरोति विनोदपात्रम् ॥ ४७ ॥

### मैत्रेय[१] उवाच

त आत्मयोगपतय आदिराजेन पूजिताः। शीलं तदीयं शंसन्तः खेऽभूवन्मिषतां नृणाम् ॥ ४८ ॥

अन्वयः—वेदशास्त्रवित् सैनापत्यं च राज्यम् च दण्डनेतृत्वम् सर्वलोकाधिपत्यम् एव च अर्हति ॥ ४५ ॥ ❀ ❀ ब्राह्मणः स्वम् एव भुङ्क्ते स्वम् वस्ते च स्वम् ददाति च क्षत्रियादयः तस्य एव अनुग्रहेण अन्नम् भुञ्जते ॥ ४६ ॥ ❀ ❀ यैः

१. प्राचीने पाठे 'मैत्रेय उवाच' अयमंशो न।

निगमिभिः आत्मवादे एकान्ततः ईदृशी भगवतः गतिः नः प्रतिपादिता अदभ्रकरुणाः नित्यम् स्वकृतेन तुष्यन्तु कः नाम तत् उदपात्रम् विना प्रतिकरोति ॥ ४७ ॥ ❀ ❀ आदिराजेन पूजिताः ते आत्मयोगपतयः तदीयम् शीलम् शंसन्तः नृणाम् मिषताम् खे अभूवन् ॥ ४८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

आत्मनः स्वत्वाभावं प्रपंचयति सैनापत्यं चेति द्वाभ्याम् । दण्डो दमः तन्नेतृत्वम् ॥ ४५ ॥ ❀ ❀ वस्ते परिधत्ते अन्नमात्रं केवलं भुंजते न तु दाने स्वतन्त्राः ॥ ४६ ॥ ❀ ❀ सत्यपि स्वत्वे सर्वस्वेनापि न गुरोः प्रत्युपकर्तुं शक्यमित्याह यैरिति । आत्मवादेऽध्यात्मविचारे एकान्ततोपि निश्चयेन निगमिभिर्वेदविद्भिः ते नित्यमनल्पकरुणाः स्वकृतेनैव दीनोद्धरणकर्मणा तुष्यन्तु को नाम तत्कृतमुपकारं प्रति स्वयमुपकरोत्युदपात्रमंजलिं विना । मयांजलिरेव तेभ्यो बद्ध इत्यर्थः । यद्वा विनोदपात्रमुपहासास्पदम् । प्रत्युपकारे प्रवृत्तो जनानामुपहासास्पदं भवेदित्यर्थः ॥ ४७ ॥ ❀ ❀ खेऽभूवन्नाकाशमार्गेणोद्गताः ॥ ४८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ननु सैनापत्यादिभिः किं फलं ब्राह्मणस्य मास्तु फलमेतैस्तस्य तदपि तस्यैव दानपात्रत्वात्स एव कृपया ग्रहीतुमर्हतीति भावः । सैनापत्यं सेनाधिपत्वं वेदैस्सहितानि शास्त्राणि धर्मशास्त्रादीनि वेत्तीति वेदशास्त्रविद् ब्राह्मण एवार्हति योग्यो भवति, मूर्खस्य सर्वत्रायोग्यत्वादिति भावः ॥ ४५ ॥ ❀ ❀ साधुपदं पूर्वत्राह्मणपरमेवेत्यभिप्रेत्याह—स्वमिति । दाने स्वतन्त्रता नेति । ब्राह्मणाज्ञयैव सर्वं दातव्यमन्यथा दोषाय तत्स्यादिति भावः । अत एव गोदानादौ वरणं कृत्वा गां ते ददानीति दात्रोक्ते ददस्वेति ब्राह्मणाज्ञा भवति पश्चात्सा दीयत इति संप्रदायः "गृहीत्वा ब्राह्मणस्याज्ञां दानं तस्मै निवेदयेत् । तेन दातुर्दानफलमन्यथा दोषभाग्भवेत्" इति संहितोक्तेः ॥ ४६ ॥ ❀ ❀ उदकं पीयते पात्राभावेऽनेनेत्युदपात्रमिति निरुक्तेः । इत्यर्थ इति । द्रव्यमात्रस्य ब्राह्मणस्वामिकत्वेन मत्स्वत्वविशिष्टस्य वस्तुनोऽभावादंजलिरेवोचित इति भावः । यद्यप्येवं तथापि "विद्यां श्रुत्वा ये गुरुं नाद्रियन्ते प्रत्यासन्नं मनसा कर्मणा वा । तेषां पापं भ्रूणहत्याविशिष्टं तेभ्यो नान्यः पापकर्त्तास्ति लोके" इति महाभारतोक्तेर्हि गुरुदक्षिणाया आवश्यकत्वमिति चेत्तत्राह—यद्वेति । इत्यर्थ इति । न ह्यमूल्यवस्तुनो मूल्यं दातुं शक्यते, तथात्वेऽमूल्यत्वहानेः काकणिकया गजक्रयणे प्रवृत्तवत्तस्योपहास एव जायत इति भावः ॥ ४७ ॥ ❀ ❀ ते मुनयः आत्मयोगस्याध्यात्मिकयोगस्योपदेष्टृत्वेन पतयः पातारः तदीयं पृथुसम्बन्धि सुचरितम् ॥ ४८ ॥

### श्रीमद्वीरराघवव्याख्या

ननु मद्योग्यमेव मह्यं समर्पणीयं तत्राह । सैनापत्यं सेनानायकत्वं दण्डनेतृत्वं दण्डनायकत्वं तथा सर्वलोकाधिपत्यं वेदशास्त्रविदर्हति ॥ ४५ ॥ ❀ ❀ एतदेवोपपादयति । ब्राह्मणः स्वमेव स्वीयमेवान्नं भुङ्क्ते स्वीयमेव वस्त्रादिकं वस्ते परिधत्ते ददाति च क्षत्रियादिभ्यः तस्यैव ब्राह्मणस्यैवानुग्रहेण लब्धमन्नं क्षत्रियादयो भुञ्जते ॥ ४६ ॥ ❀ ❀ सत्यपि स्वत्वे सर्वस्वेनापि न गुरोः प्रत्युपकर्तुं शक्यमित्याह यैरिति । आत्मवादे अध्यात्मविचारे एकान्ततो निश्चयेन निगमिभिः निगमानुसारिभिः यैर्युष्माभिः ईदृशी दुस्तरमहाव्यसनात्मकसंसारार्णवनिस्तरणोपायभूता नः अस्मभ्यं प्रतिपादिता ते नित्यमनल्पकरुणाः भवन्तः स्वकृतेन आर्तोद्धरणकर्मणा तुष्यन्तु को नाम त्वत्कृतमुपकारं प्रति स्वयमुपकरोति उदपात्रं तोयाञ्जलिं विना उदकप्रदानपूर्वकमञ्जलिबन्धनमेव तस्य प्रत्युपकार इत्यर्थः ॥ ४७ ॥ ❀ ❀ आत्मयोगं पान्ति अनुष्ठानानुष्ठापनाभ्यामित्यात्मयोगपतयस्ते सनकादयः आदिराजेन पृथुना पूजिताः सन्तः तदीयं पृथोः सम्बन्धि शीलं प्रशंसन्तः नृणां मिषतां पश्यतां सतां खे अभूवन् खमाकाशमारूढा इत्यर्थः ॥ ४८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

युष्मभ्यं सर्वं निवेदितमिति मोहादुक्तं तत्क्षन्तव्यं सर्वस्य युष्मदीयत्वान्न मया दातव्यमित्याह सैनापत्यमित्यादिना ॥ ४५-४६ ॥ ❀ ❀ किं बहुनानुलपेनेदमेव भवदर्हणमित्याह यैरीदृशीति । निगमिभिर्वैदिकैरात्मवादे वेदान्ते एकान्ततो मुख्यत्वेन निर्णीतत्वात् यैर्भवद्भिरीदृशी हरेर्गतिरस्माकं प्रतिपादिता ते यूयं स्वकृतेन तुष्यध्वमित्यन्वयः । किं न रसमधुरवचनेनेत्युक्तं तुष्यन्त्विति ॥ ४७ ॥ ❀ ❀ तत्प्रियवचनान्ते तैः किमकारीत्यत्राह त आत्मेति । आत्मयोगस्याध्यात्मयोगस्योपदेष्टृत्वेन पतयः मिषतां पश्यतां खे आकाशे ॥ ४८ ॥

**श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः**

तत्र हेतुमाह । सैनापत्यमिति ॥ ४५ ॥ ❀ ❀ स्वमिति । ब्राह्मणस्यैवाज्ञया सर्व्वं दातव्यं तदन्यथा तु दोषाय स्यादिति तात्पर्यम् ॥ ४६ ॥ ❀ ❀ स्वकृतेन दीनोद्धरणकृतिरूपस्वभावेनेत्यर्थः । टीकायां द्वितीयार्थे प्रत्युत विनोदपात्रं भवतीति योज्यम् ॥ ४७ ॥ ❀ ❀ अत्र मैत्रेय उवाचेति क्वचित् । योगगतय इति चित्सुखस्य सम्मतः ॥ ४८ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

ननु सैनापत्यादिभिः किं फलं ब्राह्मणस्येति तत्राह सैनेति । मास्तु फलमेतैस्तस्य तदपि तस्यैव दानपात्रत्वात् स एव कृपया ग्रहीतुमर्हतीति भावः ॥ ४५ ॥ ❀ ❀ यस्मादेवं तस्मात् स्वयमेवेत्याह । वस्ते परिधत्ते ॥ ४६ ॥ ❀ ❀ सत्यपि स्वत्वे सर्व्वस्वेनापि नैव गुरोः प्रत्युपकर्तुं शक्यमित्याह यैरिति । आत्मवादे अध्यात्मविचारे निगमिभिर्वेदविद्भिः स्वकृतेनैव दीनोद्धारकर्म्मणा स्वाभाविकेन तत् प्रत्युपकरोति को नाम न कोऽपि उदपात्रमञ्जलिं विनेति मयाञ्जलिरेव बद्ध इति भावः । यद्वा विनोदपात्रमुपहासास्पदं प्रत्युपकारे प्रवृत्तो जनो जनानामुपहासास्पदं भवेदित्यर्थः ॥ ४७ ॥ ❀ ❀ खेऽभूवन्नाकाशमार्गेण सत्यलोकं गताः ॥ ४८ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

यैर्निगमिभिर्वेदान्तविद्भिः आत्मवादे परमात्मस्वरूपविचारे भगवतः परमात्मनः गतिस्तत्त्वमेकान्ततो मुख्यनिर्णयेन सिद्धान्तनिश्चयेनेत्यर्थः, नः प्रतिपादिता ते नित्यमदभ्रकरुणाः तेनैव अनल्पकरुणत्वगुणेन स्वकृतेन स्वकीये शिष्ये मयि कृतेन सदुपदेशद्वारा प्रकाशितेन तुष्यन्तु उदपात्रमञ्जलिमात्रं विना न तत्प्रतिकरोति ॥४७॥ ❀ ❀ खेऽभूवन् आकाशे अगमन् ॥४८॥

**गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी**

सर्वत्र ब्राह्मणस्वत्वं तदनुग्रहेणान्येषां भोगं च निरूपयति—सैनापत्यमिति द्वाभ्याम् । सैनापत्यादिकं सर्वं वेदशास्त्रविद् ब्राह्मणोऽर्हति ॥ ४५ ॥ ❀ ❀ अतो ब्राह्मणः स्वमेवान्नादिकं भुङ्क्ते स्वमेव वस्त्रादिकं वस्ते परिधत्ते । स्वमेव धनादिकं ददाति च । क्षत्रियादयस्तु तस्य ब्राह्मणस्यानुग्रहेणैवान्नं भुञ्जते, न तु तेषां कुत्रापि स्वत्वं येन दाने स्वातन्त्र्यं स्यादिति भावः ॥ ४६ ॥ ❀ ❀ ननु सर्वत्रोपेक्षावतामस्माकमेवं निवेदने पापयोगाभावात् कथं सन्तोषो भवेदित्याशङ्क्याह—यैरिति । यैर्भवद्भिरात्मवादे अध्यात्मविचारे एकान्ततो निश्चयेन ईदृशी अत्यपूर्वा भगवतो वासुदेवस्य सर्वात्मकस्य गतिस्तत्त्वं नोऽस्मान् प्रति प्रतिपादिता निरूपिता ते भवन्तः स्वकृतेनास्मदुपकारेणैव तुष्यन्त्वित्यन्वयः । तदपि प्रतिपादनं न स्वोत्प्रेक्षामात्रेण किन्तु शास्त्रेष्वियानेव सुनिश्चितार्थ इत्युक्तत्वाच्छास्त्रसिद्धान्तेनेति सूचयंस्तान् विशिनष्टि—निगमिभिरिति, वेदविद्भिरित्यर्थः । ननु परोपकारमात्रेण सन्तोषो लोके न दृश्यते इत्याशङ्क्याह—अदभ्रेति । नित्यं सर्वदा अदभ्रा करुणा येषां ते तथा व्यवहारिणां किञ्चित् प्राप्तिं विना सन्तोषाभावेपि पूर्णकृपावतां तद्विनाऽपि तथा सन्तोषसम्भवादिति भावः । कुत एवं प्रार्थ्यते इत्याशङ्क्य भवादृशां प्रत्युपकाराय कस्यापि सामर्थ्याभावादित्याह—को नामेति, उदपात्रमञ्जलिं हस्तसंयोजनं विना अन्यत् को नाम तत्प्रतिकरोति तत्कृतमुपकारं प्रति स्वयमुपकारं करोति कः कर्तुं शक्नोति ? न कोपीत्यर्थः ॥ ४७ ॥ ❀ ❀ ते सनत्कुमारादयः आत्मयोगपतयः आत्मज्ञानदानसमर्था गुरवः आदिराजेन पृथुना पूजितास्तदीयं शीलं सुस्वभावं शंसन्तः स्तुवन्तः सन्तो नृणां तत्रत्यानां सर्वेषां मिषतां पश्यतां सतां खेऽभूवन् आकाशमार्गेण गता इत्यन्वयः ॥ ४८ ॥

**भाषानुवादः**

वास्तवमें तो सेनापतित्व, राज्य, दण्डविधान और सम्पूर्ण लोकोंके शासनका अधिकार वेद-शास्त्रोंके ज्ञाता ब्राह्मणको ही है ॥ ४५ ॥ ❀ ❀ ब्राह्मण अपना ही खाता है, अपना ही पहनता है और अपनी ही वस्तु दान देता है । दूसरे—क्षत्रिय आदि तो उसकी कृपासे अन्न खानेको पाते हैं ॥ ४६ ॥ ❀ ❀ आपलोग वेदके पारगामी हैं, आपने अध्यात्मतत्त्वका विचार करके हमें निश्चितरूपसे समझा दिया है कि भगवान्के प्रति इस प्रकारकी अभेद-भक्ति ही उनकी उपलब्धिका प्रधान साधन है । आपलोग परम कृपालु हैं, अतः अपने इस दीनोद्धाररूप कर्मसे ही सर्वदा सन्तुष्ट रहें । आपके इस उपकारका बदला कोई क्या दे सकता है ? उसके लिये प्रयत्न करना भी अपनी हँसी कराना ही है ॥ ४७ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—विदुरजी ! फिर आदिराज पृथुने आत्मज्ञानियोंमें श्रेष्ठ सनकादिकी पूजा की और वे उनके शीलकी प्रशंसा करते हुए सब लोगोंके सामने ही आकाशमार्गसे चले गये ॥ ४८ ॥

वैन्यस्तु धुर्यो महतां संस्थित्याध्यात्मशिक्षया । आप्तकाममिवात्मानं मेन आत्मन्यवस्थितः ॥ ४९ ॥
कर्माणि च यथाकालं यथादेशं यथाबलम् । यथोचितं यथावित्तमकरोद् ब्रह्मसात्कृतम् ॥ ५० ॥
फलं ब्रह्मणि विन्यस्य निर्विषङ्गः समाहितः । कर्माध्यक्षं च मन्वान आत्मानं प्रकृतेः परम् ॥ ५१ ॥
गृहेषु वर्तमानोऽपि स साम्राज्यश्रियान्वितः । नासज्जतेन्द्रियार्थेषु निरहंमतिरर्कवत् ॥ ५२ ॥
एवमध्यात्मयोगेन कर्माण्यनुसमाचरन् । पुत्रानुत्पादयामास पञ्चार्चिष्यात्मसम्मतान् ॥ ५३ ॥
विजिताश्वं धूम्रकेशं हर्यक्षं द्रविणं वृकम् । सर्वेषां लोकपालानां दधारैकः पृथुर्गुणान् ॥ ५४ ॥
गोपीथाय जगत्सृष्टेः काले स्वे स्वेऽच्युतात्मकः । मनोवाग्वृत्तिभिः सौम्यैर्गुणैः संरञ्जयन् प्रजाः ॥ ५५ ॥
राजेत्यधान्नामधेयं सोमराज इवापरः । सूर्यवद्विसृजन् गृह्णन् प्रतपंश्च भुवो वसु ॥ ५६ ॥

अन्वयः—महतां धुर्यः वैन्यः तु अध्यात्मशिक्षया संस्थित्या आत्मनि अवस्थितः आत्मानम् आप्तकामम् इव मेने ॥ ४९ ॥ ❀ ❀ कर्माणि च यथाकालम् यथादेशम् यथाबलम् यथोचितम् यथावित्तम् ब्रह्मसात्कृतम् अकरोत् ॥ ५० ॥ ❀ ❀ फलम् ब्रह्मणि विन्यस्य निर्विषङ्गः समाहितः च कर्माध्यक्षम् आत्मानम् प्रकृतेः परम् मन्वानः ॥ ५१ ॥ ❀ ❀ स साम्राज्यश्रिया अन्वितः गृहेषु वर्तमानः अपि अर्कवत् निरहंमतिः इंद्रियार्थेषु न असज्जत ॥ ५२ ॥ ❀ ❀ एवं अध्यात्मयोगेन कर्माणि अनुसमाचरन् अर्चिषि आत्मसंमतान् पञ्च पुत्रान् उत्पादयामास ॥ ५३ ॥ ❀ ❀ विजिताश्वं धूम्रकेशम् हर्यक्षम् द्रविणम् वृकम् एकः पृथुः सर्वेषाम् लोकपालानाम् गुणान् दधार ॥ ५४ ॥ ❀ ❀ जगत्सृष्टेः गोपीथाय स्वे स्वे काले अच्युतात्मकः मनोवाग्वृत्तिभिः सौम्यैः गुणैः प्रजाः संरञ्जयन् ॥ ५५ ॥ ❀ ❀ अपरः सोमराजः इव राजा इति नामधेयम् अधात् सूर्यवत् भुवः वसु गृह्णन् विसृजन् प्रतपन् च ॥ ५६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

धुर्यो मुख्यः अध्यात्मशिक्षया या संस्थितिरेकाग्रता तयात्मनि स्वस्वरूपेवस्थितः सन्मेने ॥ ४९ ॥ ❀ ❀ ब्रह्मसात्कृतं ब्रह्मण्यर्पितं यथा भवति तथा ॥ ५० ॥ ❀ ❀ निर्विषंगः कर्मस्वनासक्तः कर्माध्यक्षं कर्मसाक्षिणमुदासीनं मन्वानोऽकरोदिति पूर्वेणैवान्वयः । नासज्जतेत्युत्तरेण वा ॥ ५१-५२ ॥ ❀ ❀ अर्चिषि भार्यायाम् ॥ ५३-५४ ॥ ❀ ❀ सोमश्चासौ राजा च स इव भुवो वसु धनं गृह्णन्विसृजंश्चासौ सूर्यवत् राज्ञः प्रतपनमाज्ञाकरणम् ॥ ५६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

शुद्धभक्तत्वाद्भगवद्भक्तिं विनान्यत्र नैव सम्यगाप्तकामत्वमितीवशब्देन द्योतितम् । आप्तकाममिव न त्वाप्तकामं शुद्धभक्तत्वेन भक्त्यैवाप्तनिर्वृतित्वात् । वेदविदां शास्त्रांतरेष्विवाध्यात्मादिष्वपि पूर्वं तस्य जिज्ञासैवासीत्सा पूर्णेत्येतावन्मात्रमिवकारेणासूचीति । आत्मनि स्वभाव एवावस्थितः आध्यात्मशिक्षयापि शुद्धभक्तिस्वभावस्तस्य नापगत इति भावः ॥ ४९ ॥ ❀ ❀ कर्माणि चेति युग्मकम् । चकारेण शुद्धभक्तानां कर्मानधिकृतत्वेपि गृहस्थानां लोकसंग्रहार्थं वा वर्णाश्रममर्यादालोपाभावार्थं वा भक्तिमार्गाकुत्सनार्थं वा रहस्यायाः शुद्धभक्तेर्गोपनार्थं वा स्वयं वा प्रतिमूर्त्त्या वा पूर्वाचारतोऽनासक्त्या किञ्चित्कर्मकरणं न दूषणावहमित्यपि सांप्रदायिका आहुः । किञ्च—तेषां कर्मणि श्रद्धाराहित्यादश्रद्धया कृतमकृतमेवालमिति शुद्धभक्तेर्न क्षतिः । यथाकालयथादेशयथाबलशब्दैः कालदेशपात्रानुसारेणैव करणान्न सामस्त्येन कर्मकरणं तत्रापि यथोचितमित्यनेन शुद्धभक्तानां कर्मानौचित्यालोकप्रदर्शनायैव कर्मकरणाद्वस्तुतः कर्माकरणमेवायातम् । ब्रह्मसात्कृतं ब्राह्मणसाद्व्यापारं यथा स्यात्तथाकरोदिति तस्य कर्मव्यापारान्ब्राह्मणा एव चक्रुरिति तस्य कर्मविक्षेपाभाव उक्तः "पाणिग्रहणवर्जं हि सर्वं विप्रेण कारयेत् । विप्रैस्संपादितं कर्म भवेत्कारयितुर्ध्रुवम्" इति स्मृतेः । संदर्भस्तु—चकारादत्रापीवशब्दः संबध्यते । ब्रह्मसात्कृतं यथा स्यात्तथाऽकरोदिवेत्यर्थः । ब्रह्मसात्कृतं भगवत्यर्पितं यथा भवेत्तथेति ॥ ५० ॥ ❀ ❀ कर्मणामध्यक्षं साक्षिणम् ॥ ५१ ॥ ❀ ❀ गृहेष्विति सार्द्धमेकं वाक्यं नासजतेत्यनेनैव संबंधात् । एवमित्यर्द्धस्यांतरेण संबंधो न युज्यते विजिताश्वस्य प्राक्तनत्वात् । यद्यपि पूर्वं "स्वस्योत्तमश्लोकमहन्मुखच्युतः" इत्यादौ तल्लीलाश्रवणानुषंगेणैव सर्वज्ञानसंपत्तिर्दर्शिता, यद्यपि च 'यथाचरेद्बालहितं पिता' इत्यादौ तद्दत्तभारेण भगवतापि 'इत्यादिराजेन' इत्यादौ तदेव दृढीकृतं तथा यद्यपि च 'यत्पादपङ्कजपलाशविलासभक्त्या' इत्यादौ कुमारैरपि तदेवानुमतं तथाप्याध्यात्मयोगविधानमिदमुपाधिमात्रपरित्यागार्थं प्रयुज्य भक्तिश्च यथापूर्वं निष्कामैव रक्षितेत्यग्रेपि ज्ञेयम् । फलेन तत्कारणानुमानात् । अंते हि

वैकुंठगमनमेव लक्ष्यते तच्च भक्तस्यैव स्यात् "यद्वै व्रजंत्यनिमिषामृषभानुवृत्त्या" इत्यादेः । तदेवं श्रीभगवदभिमतिः श्रीगुर्वाज्ञया स्वाभिमतिश्च रक्षितेति संदर्भः ॥ ५२ ॥ ❀ ❀ अध्यात्मयोगेन विनैवासक्त्या कर्माणि कुर्वन् । यद्वाऽध्यात्मेति सप्तम्यर्थेऽव्ययीभावः । आत्मनि स्वतः सिद्धो यो योग आसक्तिविनाभूतविषययोगलक्षणः सिद्धिविशेषस्तेनैव पुत्रानुत्पादयामास न तु पुत्रोत्पादनहेतुकः स्त्रीविषयकः कोपि तस्य कामविकारोस्तीत्यर्थः । यथा पूर्वं बंदिभिरेष संस्तुतस्तथैव सर्वदाभूदिति दर्शयन्नाह–सर्वेषामिति । सर्वेषामिंद्रादीनां गुणान्वर्षणादीन् ॥ ५३–५४ ॥ ❀ ❀ 'गोपीथोऽवनदुर्गयोः' इति कोषः ॥ ५५ ॥ ❀ ❀ "वसु रत्नं जलं रश्मिर्वसुर्देवो विभावसुः" इति कोशः ॥ ५६ ॥

## श्रीमद्वीरराघवव्याख्या

धुर्यः श्रेष्ठो वैन्यस्तु महतां सनत्कुमारादीनामध्यात्मशिक्षया हेतुभूतया या संस्थितिर्निष्ठा तया आत्मन्येवावस्थितः परमात्मोपासननिष्ठः आत्मानमाप्तकाममवाप्तसमस्तकाममिव मेने ॥ ४९ ॥ ❀ ❀ तथा परमात्मोपासनाङ्गत्वेन देशकालादिकमनतिक्रम्य कर्माणि वर्णाश्रमोचितानि ब्रह्मण्यर्पितं भवति यथा तथाकरोत् ॥ ५० ॥ ❀ ❀ एवमुपासनाङ्गत्वेन कर्मयोगमकरोदित्युक्तं तच्च कर्मयोगं फलसङ्गकर्तृत्वत्यागात्मयाथात्म्यानुभवपूर्वकमकरोदित्याह फलमिति । ब्रह्मणि फलं संन्यस्य फलस्य ब्रह्मायत्ततामनुसंधाय न तु स्वानुष्ठीयमानकर्मायत्ततामित्यर्थः । तथा निर्विषङ्गः ममेदम् कर्मेति मतिरहितः । अनेन सङ्गत्याग उक्तः कर्माध्यक्षं कर्मसु कर्तृत्वाभिमानिनमात्मानं प्रत्यगात्मानं प्रकृतेः परं मन्वानः कर्तृत्वाभिमानः प्रकृतिसंसर्गकृतो नतु स्वभावत इत्येवं मन्वान इत्यर्थः । अकरोदिति पूर्वेणान्वयः ॥ ५१ ॥ ❀ ❀ स पृथुः गृहेषु भोगस्थानेषु वर्त्तमानोऽपि साम्राज्यश्रियान्वितोऽपि सन्निहितभोगोपकरणोऽपि निरहंमतिः देहात्मभ्रमरहितः अत एव इन्द्रियार्थेषु व्याप्नुवन्नपि नासज्जत नासक्तोऽभूत् यथा सूर्यः स्वप्रभया पङ्कादिषु व्याप्नुवन्नपि तैर्न लिप्तस्तथेत्यर्थः ॥ ५२ ॥ ❀ ❀ एवमध्यात्मयोगेन भगवद्भक्तियोगेन अध्ययनेन वसतीतिवद्धेत्वर्थे तृतीया अध्यात्मयोगार्थमित्यर्थः । यद्वा प्रकृतिविविक्तात्मयाथात्म्यज्ञानयोगपूर्वकं कर्माणि अनुदेशकालानुसारेण समाचरन् अर्चिषि अर्चिर्नाम्न्यां भार्यायामात्मसम्मितानात्मतुल्यान्सम्मतानिति पाठे आत्मानुकूलानित्यर्थः । पुत्रानुत्पादयामास ॥ ५३ ॥ ❀ ❀ पुत्रान्प्रतिनिर्दिशति विजिताश्वमित्यर्धेन । विजिताश्वादीन् पुत्रानित्यन्वयः । सर्वेषामिन्द्रादीनां पृथक् प्रत्येकं यो:योऽसाधारणो गुणस्तान्सर्वानेक एव अच्युतात्मनः अच्युतस्य परमात्मनो या जगत्सृष्टिस्तस्या गोपीथाय रक्षणाय स्वे स्वे काले उचितकाले दधौ दधार ॥ ५४ ॥ ❀ ❀ मनोवाक्कायैः सौम्यैर्गुणैश्च प्रजाः संरञ्जयन् राजेति नामधेयमधात् दधार । अपरः सोमराज इव सोमश्चासौ राजा च सोमराजः स इव लोकरञ्जनात्सोमश्चन्द्रो राजेति नाम यथाधात् तथेत्यर्थः ॥ ५५ ॥ ❀ ❀ लोकपालासाधारणगुणानुचितकालेष्वेक एवाधादित्युक्तम् । तदेवोपपादयति सूर्यवदित्यादिना यावदध्यायसमाप्ति । भुवः वसु धनं गृह्णन् विसृजन्नसौ सूर्य इव प्रातः प्रतपन् आज्ञां कुर्वन् तेजसा अग्निरिव दुर्द्धर्षः परैरभिभवितुमशक्यः महेन्द्र इव दुःखेनापि जेतुमशक्यः ॥ ५६ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

पृथुना तेभ्यः समग्रानुग्रहः प्राप्त इत्यस्य लक्षणमाह वैन्य इति । महतां धुर्यः धूर्वोढा संस्थित्या सम्पूर्णयाध्यात्मशिक्षया परमात्मतत्त्वज्ञानादानलक्षणया इवशब्द एवार्थे ॥ ४९ ॥ ❀ ❀ तस्य कर्मकरणप्रकारमाह कर्माणीति ॥ ५० ॥ ❀ ❀ निर्विषङ्गः कर्मफलेष्वनासक्तः प्रकृतेः परमात्मानं श्रीहरिं कर्मणामध्यक्षं साक्षिणं मन्वानः ॥ ५१–५२ ॥ ❀ ❀ विषयासक्त्या वर्तमानस्य पुत्रानुत्पादनेन स्वपुरराज्यरक्षणपुण्यप्राप्तिः कथमत्राह एवमिति । अर्चिषि भार्यायाम् ॥ ५३ ॥ ❀ ❀ एवं संन्यस्तसर्वकर्मापि राजा भगवदनुग्रहाविरोधेन तत्तत्कर्मणेन्द्रादितत्तद्गुणान् दधारेत्याह सर्वेषामिति ॥ ५४ ॥ ❀ ❀ जगत्सृष्टेर्गोपीथाय रक्षणाय अच्युते आत्मा मनो यस्य सोऽच्युतात्मकः । राजशब्दं निर्वक्ति मनोवागिति ॥ ५५ ॥ ❀ ❀ रञ्जनाद्राजेति इन्द्रादिगुणधारणप्रकारं विविच्य वक्ति । सोमराज इत्यादिना । वसु जलं "वसु रत्नं जलं रश्मिर्वसुर्देवो विभावसुः" इत्यभिधानम् ॥ ५६–५७ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

वैन्यस्त्विति । शुद्धभक्तत्वात् भगवद्भक्तिं विना नैवान्यत्र सम्यगाप्तकामत्वमितीवशब्देन द्योतितम् ॥ ४९ ॥ ❀ ❀ कर्म्माणि चेति युग्मकम् । चकारादत्रापीवशब्दः सम्बध्यते ब्रह्मसात्कृतं यथा स्यात्तथाकरोदिवेत्यर्थः । अध्यात्मशिक्षया । गुर्व्वाज्ञयानादरेण कर्म्मणश्च लोकसङ्ग्रहापेक्षया कृतत्वात् । यद्वा तथापि ब्रह्मसात्कृतं भगवत्यर्पितं यथा स्यात्तथाऽकरोत् ॥ ५०–५१ ॥ ❀ ❀ गृहेष्विति । सार्द्धमेकं वाक्यं नासज्जतेत्यनेनैव सम्बन्धात् । एवमित्यर्द्धस्योत्तरेण सम्बन्धो न युज्यते विजिताश्वस्य प्राक्तनत्वात् । यद्यपि पूर्व्वं स्वस्योत्तमः श्लोकमहन्मुखच्युत इत्यादौ तल्लीलाश्रवणानुषङ्गेनैव सर्वज्ञानसम्पत्तिर्दर्शिता । यद्यपि च यथा चरेद्बालहित-

मित्यादौ तदुत्तभारेण श्रीभगवताऽपि इत्यादिराजेनेत्यादौ तदेव दृढीकृतं तथा। यद्यपि च यत्पादपङ्कजपलाशविलासभक्त्येत्यादौ कुमारैरपि तदेवानुमतं तथाप्यध्यात्मयोगविधानमिदमुपाधिमात्रपरित्यागार्थं प्रयुज्य भक्तिस्तु यथापूर्वं निष्कामैव विवक्षितेत्यग्रेऽपि ज्ञेयम्। फलेन तत्कारणानुमानात् अन्ते हि वैकुण्ठगमनमेव वक्ष्यते। तच्च भक्तस्यैव स्यात् 'यद्वै व्रजन्त्यनिमिषामृषभानुवृत्त्ये'-त्यादेस्तदेवं श्रीभगवदभिमतिः श्रीगुर्वाज्ञया स्वाभिमतिश्च रक्षितेति ॥ ५२ ॥ ❀ ❀ पुत्रानुत्पादयामासेति प्राक्तनी कथा ॥ ५३ ॥ ❀ ❀ विजिताश्वस्य प्राक्तनत्वात्। यथा पूर्वं बन्दिभिः स्तुतस्तथैवासौ सर्व्वदाभूदिति दर्शयन्नाह। सर्व्वेषामित्यादि ॥ ५४-६२ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अध्यात्मशिक्षाया या सम्यक् स्थितिर्मर्य्यादा तया आप्तकाममिव न त्वाप्तकामं तस्य शुद्धभक्तत्वात् केवलया भक्त्यैवाप्तनिर्वृतित्वात् वेदविदां शास्त्रान्तरेष्विव अध्यात्मादिष्वपि तस्य पूर्वं जिज्ञासैवासीत् सा पूर्णेत्येतावन्मात्रमिवकारेण द्योतितम्। आत्मनि स्वभाव एवावस्थितः। अध्यात्मशिक्षयापि शुद्धभक्तिस्वभावस्तस्य नापगत इति भावः ॥ ४९ ॥ ❀ ❀ कर्म्माणि चेति चकारेण शुद्धभक्तानां कर्म्मानधिकृतत्वेऽपि गृहस्थानां लोकसङ्ग्रहार्थं वा वर्णाश्रममर्य्यादालोपाभावार्थं वा भक्तिमार्गाकुत्सनार्थं वा रहस्यायाः शुद्धाया भक्तेर्गोपनार्थं वा स्वयं वा प्रतिमूर्त्या वा पूर्व्वाचारतोऽनासक्त्या किञ्चित् कर्म्मकरणं न दूषणावहमित्याद्यपि साम्प्रदायिका आहुः। किञ्च तेषां कर्मणि श्रद्धाराहित्यादश्रद्धया कृतमकृतमेवालमिति शुद्धभक्तेर्न क्षतिः। यथाकालयथादेशयथावलशब्दैः कालदेशपात्रानुसारेणैव करणान्न सामस्त्येन कर्म्मकरणम्। तत्रापि तथोचितमित्यनेन शुद्धभक्तानां कर्म्मानौचित्याल्लोकप्रदर्शनायैव कर्म्मकरणाद्वस्तुतः कर्म्माकरणमेवायातम्। ब्रह्मसात्कृतं ब्राह्मणसाद्व्यापारं यथा स्यात्तथाकरोदिति तस्य कर्म्मव्यापारान् ब्राह्मणा एव चक्रुरिति तस्य कर्म्मविक्षेपाभाव उक्तः। निर्व्विषङ्गोऽनासक्तः। आत्मानमन्तर्यामिणम् ॥५०-५२ ॥ ❀ ❀ अध्यात्मयोगेन विनैवासक्त्या कर्म्माणि कुर्वन्। यद्वा अध्यात्मेति सप्तम्यर्थेऽव्ययीभावः। आत्मनि स्वतः सिद्धो यो योग आसक्तिविनाभूतविषयभोगलक्षणः सिद्धिविशेषस्तेनैव पुत्रानुत्पादयामास। न तु पुत्रोत्पादनहेतुकस्तस्य स्त्रीविषयकः कोऽपि कामविकारोऽस्तीत्यर्थः ॥ ५३-५४ ॥ ❀ ❀ यथा पूर्वं बन्दिभिः संस्तुतस्तथैवासौ सर्व्वदाभूदिति दर्शयन्नाह सर्व्वेषामिति। गोपीथाय पालनाय ॥ ५५ ॥ ❀ ❀ सोमश्चासौ राजा चेति स इव ॥ ५६ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

महतां धुर्य्यः श्रेष्ठः अध्यात्मशिक्षया संस्थितिः भगवदात्मकतया समवस्थानं तया आत्मनि भगवति अवस्थितः सन् आप्तकाममिवात्मानं मेने ॥ ४९ ॥ ❀ ❀ 'ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्। ब्रह्मैव तेन गन्तव्यम् ब्रह्मकर्मसमाधिना" इत्युक्तविधिना ब्रह्मसात्कृतं ब्रह्मण्यर्पितं यथा स्यात्तथा कर्माण्यकरोत् ॥ ५० ॥ ❀ ❀ निर्विषङ्गः कर्मस्वनासक्तः प्रकृतेः परमात्मानं परमेश्वरं कर्माध्यक्षं कर्माराध्यं मन्वानः तस्मिन्ब्रह्मणि परमेश्वरे फलं विन्यस्य कर्माण्यकरोदिति पूर्वेणान्वयः ॥ ५१-५२ ॥ ❀ ❀ अर्चिषि पङ्क्त्यामात्मसंमितान् स्वतुल्यान् ॥ ५३ ॥ ❀ ❀ जगत्स्रष्टुः गोपीथाय रक्षणाय एकः स्वे स्वे काले सर्वेषां लोकपालानां गुणान् पृथक् दधार ॥ ५४ ॥ ❀ ❀ मनआदिवृत्तिभिः सौम्यैर्गुणैश्च प्रजाः रञ्जयन् सोमश्चासौ राजा च तथा अपरः सोमराजश्चन्द्र इव राजेति नामधेयमधात्, भुवो वसु धनं गृह्णन् विसृजन् प्रतपन् प्रकाशयन् सूर्यवत् ॥ ५५-५६ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

वैन्यः पृथुस्तु महतां श्रेष्ठानां सदाचारवतां धुर्यो मुख्यः सनत्कुमारकृतया अध्यात्मशिक्षया आत्मतत्त्वोपदेशेन या संस्थितिर्मनसो निश्चलता तया आत्मन्यवस्थितः ब्रह्मात्मैक्यानुसन्धानपरः सन्नात्मानं आप्तकामं पूर्णकामं कृतार्थमेव मेने इत्यन्वयः। इवशब्दोऽवधारणार्थकः। यद्वा परमपुरुषार्थरूपायाः परमप्रेमलक्षणाया भक्तेरप्राप्तत्वात् अकृतार्थत्वेऽप्यात्मानं कृतार्थमिव मेने इत्यन्वयः। अत एव तस्य लोकसङ्ग्रहार्थं कर्माचरणमिति भावः ॥ ४९ ॥ ❀ ❀ वैन्यस्तु धुर्य इति तस्य सर्वश्रेष्ठत्वोक्तेः 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः। स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते' इति न्यायात् सर्वलोकस्य श्रेयस्साधने प्रवृत्त्यर्थं कृतार्थत्वाभिमानवतोऽपि कर्माचरणं दर्शयति—कर्माणीति त्रिभिः। यथाकालं यस्मिन् काले यत्कर्म विहितं, यथादेशं यस्मिन् देशे यद्विहितं, यथाबलं स्वदेहसामर्थ्यानुसारेण, यथोचितं स्वज्ञानभक्त्याद्यविरोधेन गौणत्वेन, यथावित्तं वित्तशाठ्यादिवर्जनपूर्वकं कर्माणि चाकरोदित्यन्वयः। कृतार्थस्य पुनः कर्माचरणं लोकसङ्ग्रहणार्थमिति सूचनार्थश्चकारः। ननु तर्हि कर्मणां स्वभावतो बन्धहेतुत्वात् तदर्थस्यापि तदाचरणस्य बन्धहेतुत्वं स्यादित्याशङ्क्याह—ब्रह्मसात्कृतमिति। भगवत्यर्पितं यथा भवति तथाऽकरोदित्यर्थः। तद्व्यतिरिक्तस्यैव कर्मणो बन्धहेतुत्वादिति भावः ॥ ५० ॥ ❀ ❀ भगवति समर्पणप्रकारमेव दर्शयति—फलमिति द्वाभ्याम्। फलं ब्रह्मणि भगवति विन्यस्य अनेन कर्मणा तत्प्रवर्तको भगवानेव मम प्रसन्नोऽस्तु तद्व्यतिरिक्तं फलं मम नापेक्षितमिति

सङ्कल्प्य स पृथुरिन्द्रियार्थेषु विषयेषु नासज्जतेत्युत्तरेणान्वयः। तत्रापि कर्मसु निर्विषङ्गः अहं करोमीत्यासक्तिरहितः। तत्र हेतुः—समाहित इति। सर्वोऽपि भगवत्प्रेरणयैव शुभाशुभेषु प्रवर्त्तते न स्वयमित्यनुसन्धानेन सावधान इत्यर्थः। किञ्च आत्मानं च प्रकृतेः प्रकृतिकार्यदेहान्तःकरणादिसङ्घातात् परं भिन्नं कर्माध्यक्षं कर्मसाक्षिणं मन्वानः मन्यमानः॥ ५१॥ ❀ ❀ अत एव तत्र निरहम्मतिः अहमित्यभिमानरहितः अत एव गृहेषु वर्त्तमानोऽपि साम्राज्यश्रिया चक्रवर्तिसम्पदा अन्वितो युक्तोऽपि विषयेषु नासज्जत। तत्र दृष्टान्तः—अर्कवदिति, सूर्यो यथा सर्वत्र पर्यटन्नपि कुत्राप्यासक्तो न भवति तद्वदित्यर्थः॥ ५२॥ ❀ ❀ पूर्वोक्तमेवानुवदन् पुत्रोत्पत्तिं दर्शयति—एवमिति सार्द्धेन। एवं पूर्वोक्तप्रकारेण अध्यात्मयोगेन आत्मज्ञानपूर्वकं भगवति समर्पणेन कर्माण्यनु निरन्तरं सम्यक् देशकालाद्यनुसारेण आचरन् कुर्वन् अर्चिषि स्वभार्यायामात्मसम्मतान् गुणपराक्रमादिना स्वयोग्यान् पञ्च पुत्रानुत्पादयामासेत्यन्वयः। तान् पुत्रान् दर्शयति—विजिताश्वमित्यादिना॥ ५३॥ ❀ ❀ जगत्सृष्टेर्गोपीथाय रक्षणाय स्वे स्वे काले तत्तद्वर्षादियोग्ये समये ये सर्वेषां लोकपालानां पृथक् पृथक् वर्षादयो गुणास्तान् सर्वानेक एव स्वयं पृथुर्दधारेत्यन्वयः। नन्वेवमहङ्कारेण पुनः प्रपञ्चासक्तिः स्यादित्याशङ्क्याह—अच्युतात्मक इति। अच्युते भगवत्येव आत्मा मनो यस्य स तथा॥ ५४॥ ❀ ❀ लोकपालगुणधारणमेव प्रपञ्चयति—मन इति नवभिः। मनोवृत्तयो हितचिन्तनानि वाग्वृत्तयो हितमितसत्यप्रियभाषणानि ताभिः सौम्यैर्मनोहरैर्गुणैः सुस्वभावादिभिश्च प्रजाः संरञ्जयन् राजेति स्वस्य नामधेयमधात् दधार। अतोऽपरः द्वितीयः सोमराजश्चन्द्र इव जात इत्यर्थः॥ ५५॥ ❀ ❀ सूर्यो यथा पक्षपातराहित्येन समं सर्वत्र प्रतपन् भुवो वसु जलमष्टौ मासान् गृह्णाति विसृजति च वर्षाकाले तथा सर्वत्र समं आज्ञाप्रवर्त्तनेन प्रतपन् करादिकाले धनादि गृह्णन् दुर्भिक्षादिकाले च विसृजन्नसौ सूर्यवदित्यन्वयः। तेजसाऽग्निरिव दुर्द्धर्षः धर्षयितुमभिभवितुं अशक्यः। महेन्द्र इव दुर्जयः॥ ५६॥

**भाषानुवादः**

महात्माओंमें अग्रगण्य महाराज पृथु उनसे आत्मोपदेश पाकर चित्तकी एकाग्रतासे आत्मामें ही स्थित रहनेके कारण अपनेको कृतकृत्य-सा अनुभव करने लगे॥ ४९॥ ❀ ❀ वे ब्रह्मार्पण-बुद्धिके समय, स्थान, शक्ति, न्याय और धनके अनुसार सभी कर्म करते थे॥ ५०॥ इस प्रकार एकाग्र चित्तसे समस्त कर्मोंका फल परमात्माको अर्पण करके आत्माको कर्मोंका साक्षी एवं प्रकृतिसे अतीत देखनेके कारण वे सर्वथा निर्लिप्त रहे॥ ५१॥ ❀ ❀ जिस प्रकार सूर्यदेव सर्वत्र प्रकाश करनेपर भी वस्तुओंके गुणदोषसे निर्लेप रहते हैं, उसी प्रकार सार्वभौम साम्राज्य-लक्ष्मीसे सम्पन्न और गृहस्थाश्रममें रहते हुए भी अहङ्कारशून्य होनेके कारण वे इन्द्रियोंके विषयोंमें आसक्त नहीं हुए॥ ५२॥ ❀ ❀ इस प्रकार आत्मनिष्ठामें स्थित होकर सभी कर्तव्यकर्मोंका यथोचित रीतिसे अनुष्ठान करते हुए उन्होंने अपनी भार्या अर्चिके गर्भसे अपने अनुरूप पाँच पुत्र उत्पन्न किये॥ ५३॥ ❀ ❀ उनके नाम विजिताश्व, धूम्रकेश, हर्यक्ष, द्रविण और वृक थे। महाराज पृथु भगवान्‌के अंश थे। वे समय-समयपर, जब-जब आवश्यक होता था, जगत्‌के प्राणियोंकी रक्षाके लिए अकेले ही समस्त लोकपालोंके गुण धारण कर लिया करते थे। अपने उदार मन, प्रिय और हितकर वचन, मनोहर मूर्ति और सौम्य गुणोंके द्वारा प्रजाका रंजन करते रहनेसे दूसरे चन्द्रमाके समान उनका 'राजा' यह नाम सार्थक हुआ। सूर्य जिस प्रकार गरमीमें पृथ्वीका जल खींचकर वर्षाकालमें उसे पुनः पृथ्वीपर बरसा देता है तथा अपनी किरणोंसे सबको ताप पहुँचाता है, उसी प्रकार वे कररूपसे प्रजाका धन लेकर उसे दुष्कालादिके समय मुक्तहस्तसे प्रजाके हितमें लगा देते थे तथा सबपर अपना प्रभाव जमाये रखते थे॥ ५४-५६॥

दुर्धर्षस्तेजसेवाग्निर्महेन्द्र इव दुर्जयः। तितिक्षया धरित्रीव द्यौरिवाभीष्टदो नृणाम्॥ ५७॥
वर्षति स्म यथाकामं पर्जन्य इव तर्पयन्। समुद्र इव दुर्बोधः सत्त्वेनाचलराडिव॥ ५८॥
धर्मराडिव शिक्षायामाश्चर्ये हिमवानिव। कुबेर इव कोशाढ्यो गुप्तार्थो वरुणो यथा॥ ५९॥
मातरिश्वेव सर्वात्मा बलेन [१]सहसौजसा। अविषह्यतया देवो भगवान् भूतराडिव॥ ६०॥
कन्दर्प इव सौन्दर्ये मनस्वी मृगराडिव। वात्सल्ये मनुवन्नृणां प्रभुत्वे भगवानजः॥ ६१॥
बृहस्पतिर्ब्रह्मवादे आत्मवत्त्वे स्वयं हरिः।
भक्त्या गोगुरुविप्रेषु विष्वक्सेनानुवर्तिषु। ह्रिया प्रश्रयशीलाभ्यामात्मतुल्यः परोद्यमे॥ ६२॥
कीर्त्योर्ध्वगीतया पुम्भिस्त्रैलोक्ये तत्र तत्र ह[२]। प्रविष्टः कर्णरन्ध्रेषु स्त्रीणां रामः सतामिव॥ ६३॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे [३]पृथुचरिते द्वाविंशोऽध्यायः॥ २२॥

---

१. प्रा० पा०—च महौजसा। २. प्रा० पा०—हि। ३. प्राचीने पाठे 'पृथुचरिते' अयमंशो न।

अन्वयः—तेजसा अग्निः इव दुर्धर्षः महेन्द्रः इव दुर्जयः तितिक्षया धरित्री इव द्यौः इव नृणाम् अभीष्टदः ॥५७॥ ❀ ❀ पर्जन्यः इव तर्पयन् यथाकामम् वर्षति स्म समुद्रः इव दुर्बोधः सत्त्वेन अचलराट् इव ॥ ५८ ॥ ❀ ❀ शिक्षायाम् धर्मराट् इव आश्चर्ये हिमवान् इव कुबेरः इव कोशाढ्यः यथा वरुणः गुप्तार्थः ॥ ५९ ॥ ❀ ❀ बलेन सहसा ओजसा सर्वात्मा मातरिश्वा इव अविषह्यतया देवः भूतराट् भगवान् इव ॥ ६० ॥ ❀ ❀ सौंदर्ये कंदर्प इव मृगराट् इव मनस्वी वात्सल्ये मनुवत् नृणाम् प्रभुत्वे भगवान् अजः इव ॥ ६१ ॥ ❀ ❀ ब्रह्मवादे बृहस्पतिः आत्मवत्त्वे स्वयं हरिः गोगुरुविप्रेषु विश्वक्सेनानुवर्तिषु भक्त्या ह्रिया प्रश्रयशीलाभ्यां परोद्यमे आत्मतुल्यः ॥ ६२ ॥ ❀ ❀ रामः सताम् इव पुंभिः ऊर्ध्वगीतया कीर्त्या त्रैलोक्ये तत्र तत्र स्त्रीणाम् कर्णरन्ध्रेषु ह प्रविष्टः ॥ ६३ ॥

इति द्वाविंशोऽध्यायः ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अग्निरिव तेजसा दुर्धर्षः द्यौः स्वर्ग इव ॥ ५७ ॥ ❀ ❀ समुद्रो यथा गांभीर्येणैतावानिति न बुद्ध्यते तथासावभिप्रायतो दुर्बोधः। अचलराण्मेरुरिव ॥ ५८-५९ ॥ ❀ ❀ सर्वात्मा सर्वत्र संचारशक्तिः बलादिभिर्मातरिश्वेव। भूतराट् श्रीरुद्रः ॥ ६० ॥ ❀ ❀ अजो ब्रह्मेव ॥ ६१ ॥ ❀ ❀ आत्मवत्त्वे जितेंद्रियत्वे भक्त्यादिभिः परार्थोद्यमे चात्मना स्वेनैव तुल्यो निरुपमः ॥ ६२ ॥ ❀ ❀ पुंभिः सत्पुरुषैः रामः सीतापतिर्यथा सतां कर्णरंध्रेषु प्रविष्टः ॥ ६३ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थे टीकायां द्वाविंशतितमोऽध्यायः ॥ २२ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

दुर्द्धर्षोऽभिभवितुमशक्यः। स्वर्गो यथाऽभीष्टं ददाति तथेत्यर्थः ॥ ५७ ॥ ❀ ❀ पर्जन्य इव मेघवत्कामैस्तर्पयन्यथा वर्षति सस्यं पूरयति। यद्वा—यथाश्च ते कामाश्चेति तथा तैः शब्दनिर्देशपक्षे यथाशब्दो विभक्त्यंतोपि स्यादिति ॥ ५८ ॥ ❀ ❀ आश्चर्येऽद्भुतेऽलौकिकवस्तुदर्शने इति यावत्, कोशाढ्यो धनौघपतिः। गुप्तोऽर्थो यस्य स तथा। जलांतर्गतस्य दर्शनायोगात् ॥ ५९ ॥ बलादिशब्दा देहेंद्रियमनोबलवाचकाः क्रमात्। अविषह्यतया युद्धादौ सोढुमशक्यतया ॥ ६० ॥ ❀ ❀ कं न स्वावेशेन दर्पयति हर्षयतीति कंदर्पः कामः 'दृप् हर्षगर्वयोः'। मनस्वी स्वाधिकप्रहर्त्ता "मनस्वी स्थिरचित्ते नोदारे स्वाधिकहर्त्तरि" इति निरुक्तिः। वात्सल्ये प्रीतिकरणे "वात्सल्यं गोसमूहेपि स्नेहे च धेनुदुग्धयोः" इति च। मनुः स्वायंभुवः मंत्रो वा, मंत्रोपि यथा जपतां नृणां वात्सल्यं करोतीत्यर्थः। प्रभुत्वे आज्ञादाने ब्रह्मण आज्ञां यथा सर्वे गृह्णंति तथा तस्यापीति। अजशब्देन वेदोऽपि ग्राह्यस्तस्यापि "वेदो नारायणः साक्षात्स्वयंभूरिति शुश्रुम" इत्युक्तेः। स्वयंभूत्वेनाजत्वमस्तीति ॥ ६१ ॥ ❀ ❀ ब्रह्मवादे वेदोच्चारणे वेदविचारे वा स्वयं हरिः श्रीकृष्णः जितेंद्रियत्वं श्रीकृष्णस्य जैमिनीये नागहृतार्जुनशिरआनयने तापनीये च गोपीयमुनोल्लंघने प्रतिपादितमस्ति ॥ ६२ ॥ ❀ ❀ स्त्रीणां सत्स्त्रीभिश्चानसूयादिभिरुद्ध्र्वं गीतया सर्वोर्ध्वत्वेन गीतयेत्यर्थः ॥ ६३ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे द्वाविंशोऽध्यायः ॥ २२ ॥

## श्रीमद्वीरराघवव्याख्या

तितिक्षया सहनेन धरित्रीव अपराधतितिक्षासमये धरित्रीतुल्यः नृणामभीष्टदानावसरे द्यौः स्वर्ग इव पर्जन्य इव तर्पयन् नृणां कामान् वर्षति स्म ॥ ५७ ॥ ❀ ❀ समुद्र इव दुर्बोधः अपरिच्छेद्यः सत्त्वेन अचलराडिव मेरुरिव शिक्षायां धर्मराडिव यम इव ऐश्वर्ये हिमवानिव हिमवान् हि रत्नाकरः। मघवानिवेति पाठे इन्द्र इव, वरुण इव गुप्तार्थः गुप्तमन्त्रः, मातरिश्वा वायुरिव सर्वात्मा सर्वगः बलेन ओजसा च ॥ ५८-५९ ॥ ❀ ❀ अविषह्यतया भगवान् भूतराट् रुद्र इव बलं शरीरबलं ओज इन्द्रियबलं महः देहकान्तिः सौन्दर्येण कन्दर्प इव मृगराट् सिंह इव मनस्वी स्वैरी ॥ ६० ॥ ❀ ❀ मनुः स्वायम्भुवः अजश्चतुर्मुखः प्रभुत्वे ब्रह्मवादे वेदवादे बृहस्पतिरिव आत्मवत्त्वे यदधीनं धनं स हि धनवान् यदधीन आत्मा स आत्मवान्स्वाधीनत्वे इत्यर्थः ॥ ६१ ॥ ❀ ❀ गोषु गुरुषु विप्रेषु च विष्वक्सेनानुवर्तिषु च भक्तः ह्रियादिभिः परार्थोद्यमे आत्मतुल्यः निरुपमः ॥ ६२ ॥ ❀ ❀ त्रैलोक्ये तत्र तत्र पुरग्रामादिवासिभिः पुम्भिः ऊर्ध्वमुच्चैर्गीतया कीर्त्या स्त्रीणां कर्णरन्ध्रेषु प्रविष्टः सतां कर्णरन्ध्रेषु रामः सीतापतिरिव ॥ ६३ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्य्यकृतायां श्रीभागवतचंद्रचंद्रिकायां द्वाविंशोऽध्यायः ॥२२॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अचलराट् मेरुः ॥ ५८ ॥ ❋ ❋ कोशाढ्यः धनौघपतिः ॥ ५९ ॥ ❋ ❋ सर्वात्मा सर्वान्तरस्थः भूतराट् सदाशिवः ॥ ६० ॥ ❋ ❋ मृगराट् सिंहः अजो ब्रह्मा ॥ ६१ ॥ ❋ ❋ आत्मतत्त्वे परमात्मतत्त्वज्ञाने अधिकदृष्टान्तोऽयम् अथापि तमेवाह भक्त्येत्यादिना । गवादिषु भक्त्या लज्जादिगुणेन ॥ ६२ ॥ ❋ ❋ पुंभिरूर्ध्ववीतयोच्चैः कीर्तितया कीर्त्या स्त्रीणां कर्णरन्ध्रेषु प्रविष्टः सतां कर्णरन्ध्रेषु प्रविष्टः परोद्यमे चात्मतुल्यः स्वकार्यसमो राम इवेत्यन्वयः। "गुरुविप्रेषु भक्त्या च परेषां हितकृत्तया । प्रश्रयेण च कीर्त्या च पृथू राममनुव्रतः" इति वचनात् नेदं स्तुतिमात्रं सत्यमित्यर्थः। "न गुरुर्न च धर्मोऽस्ति रामदेवस्य कुत्रचित् । तथाऽपि धर्मरक्षार्थं गुरुभक्तिमदर्शयत् ॥" इत्यतो रामस्य लोकसंग्रहार्थं न त्वनवाप्तफलप्राप्त्यर्थं गुरुभक्त्यादिकमिति संतोष्टव्यम् ॥ ६३ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां द्वाविंशोऽध्यायः ॥ २२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

स्त्रीणां सत्स्त्रीभिश्चोद्ध्वं गीतया सर्व्वोद्ध्वत्वेन नीतयेत्यर्थः ॥ ६३ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे द्वाविंशोऽध्यायः ॥ २२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

वसु धनं रसश्च द्यौः स्वर्ग इव ॥ ५७ ॥ ❋ ❋ सत्त्वेन स्थैर्य्येण अचलराट् सुमेरुः ॥ ५८-५९ ॥ ❋ ❋ सर्व्वात्मा सर्व्वत्र सञ्चारयुक्तः ॥ ६० ॥ ❋ ❋ अजो ब्रह्मा आत्मवत्त्वे जितेन्द्रियत्वे ॥ ६१ ॥ ❋ ❋ भक्त्यादिभिः परार्थोद्यमेन च आत्मनैव तुल्यो निरुपमः ॥ ६२-६३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । द्वाविंशोऽपि चतुर्थस्य सङ्गतः सङ्गतः सताम् ॥ २२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

द्यौः स्वर्ग इव ॥ ५७ ॥ ❋ ❋ यथाकामैर्यथेष्टैर्भोगैः पर्जन्य इव वर्षति स्म सत्त्वेन धैर्येण अचलराट् मेरुरिव ॥ ५८-५९ ॥ ❋ ❋ सर्वात्मा सर्वगः बलादिभिश्च मातरिश्वेव ॥ ६० ॥ ❋ ❋ प्रभुत्वे प्रजापतित्वे ॥६१॥ ❋ ❋ आत्मवत्त्वे स्वाधीनत्वे ॥ ६२-६३ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे द्वाविंशाध्यायार्थप्रकाशः ॥ २२ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

तितिक्षया परापराधसहनेन धरित्रीव पृथिवीवत् । नृणामभीष्टदो मनोरथपूरको द्यौः स्वर्ग इव । पर्जन्यः सूर्यो यथा प्रजास्तर्पयन् वर्षासु जलं वर्षति तथा कदाचिद् वृष्ट्यभावे प्रजास्तर्पयन् यथाकामं यथापेक्षितं जलमप्यसौ वर्षति स्म अतो द्वितीयः पर्जन्य इव जात इत्यन्वयः ॥ ५७ ॥ ❋ ❋ समुद्रो यथा गाम्भीर्येणैतावानिति न बुध्यते तथाऽसावप्यभिप्रायतो दुर्बोध इत्यर्थः । सत्त्वेन स्थैर्येण अचलराट् सुमेरुरिव । शिक्षायां दण्डने पक्षपातराहित्येन अनुल्लङ्घितशासनत्वेन च धर्मराड्यमराज इव आश्चर्ये हिमवान् हिमाचल इव ॥ ५८ ॥ ❋ ❋ कुबेर इव कोशाढ्यो धनादिकोशयुक्तः गुप्तोऽज्ञातः सुरक्षितश्च धनादिपदार्थो यस्य स तथा । एवम्भूतो जलचरत्वेन वरुणस्तथाऽसौ पृथुरपीत्यर्थः । मातरिश्वा पवनः, स यथा बलेन शरीरसामर्थ्यप्रदानेन सर्वत्र सञ्चारेण च सहसा मनस्सामर्थ्यप्रदानेन ओजसा इन्द्रियसामर्थ्यप्रदानेन च सर्वेषां प्राणिनामात्मा नियन्ता तथाऽसावपि चारैः सर्वत्र सञ्चारेण सर्ववृत्तान्तबोधेन वृत्त्यादिप्रदानेन देहेन्द्रियादिनिर्वाहकत्वेन च सर्वेषां नियन्तेत्यर्थः ॥ ५९ ॥ ❋ ❋ अविषह्यतया युद्धे शत्रुभिः सोढुमशक्यत्वेन भूतराट् श्रीरुद्र इव । भूतश्रेष्ठोऽपि कश्चिद्भूतराडिति व्यवह्रियते तद्व्यावृत्त्यर्थं देव इति । इन्द्रादिदेवसामान्यव्यावृत्त्यर्थं भगवानिति विशेषणम् । सौन्दर्ये काम इव । मृगराट् सिंह इव मनस्वी धीरः निर्भयः ॥ ६० ॥ ❋ ❋ वात्सल्ये प्रीतौ मनुवत् । नृणां प्रभुत्वे स्वामित्वे महत्त्वे भगवानजो ब्रह्मेव । ब्रह्मवादे ब्रह्मविचारे देवगुरुर्बृहस्पतिरिव । आत्मवत्त्वे देहेन्द्रियादिसङ्घातवशित्वे स्वयं हरिरिव ॥ ६१ ॥ ❋ ❋ गोगुरुविप्रेषु तथा विष्वक्सेनानुवर्तिषु भगवद्भक्तेषु भक्त्या ह्रिया लज्जया च प्रश्रयेण नम्रीभावेन च शीलेन सुस्वभावेन च परार्थोद्यमेन आत्मतुल्यो निरुपम

एव ॥ ६२ ॥ ❀ ❀ त्रैलोक्ये तत्र तत्र पुम्भिः पुरुषैरूर्ध्वगीतया कीर्त्या द्वारभूतया स्त्रीणां कर्णरन्ध्रेषु प्रविष्टः यथा श्रीरामो दाशरथिः स्वकीर्तिद्वारा सतां सत्पुरुषाणां कर्णरन्ध्रेषु प्रविष्टस्तद्वदित्यर्थः । हेति पादपूरणार्थः, प्रसिद्धिद्योतनार्थो वा हकारः ॥ ६३ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना । श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये । श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे कामनिरूपणे । द्वाविंशोऽपि गतो वृत्तिं ज्ञानप्राप्तिनिरूपकः ॥ ३ ॥

भाषानुवादः

वे तेजमें अग्निके समान दुर्धर्ष, इन्द्रके समान अजेय, पृथ्वीके समान क्षमाशील और स्वर्गके समान मनुष्योंकी समस्त कामनाएँ पूर्ण करनेवाले थे ॥ ५७ ॥ ❀ ❀ समय-समयपर प्रजाजनोंको तृप्त करनेके लिये वे मेघके समान उसके अभीष्ट अर्थोंको खुले हाथसे लुटाते रहते थे । वे समुद्रके समान गम्भीर और पर्वतराज सुमेरुके समान धैर्यवान् भी थे ॥ ५८ ॥ ❀ ❀ महाराज पृथु दुष्टोंके दमन करनेमें यमराजके समान, आश्चर्यपूर्ण वस्तुओंके संग्रहमें हिमालयके समान, कोशकी समृद्धिमें कुबेरके समान और धनको छिपानेमें वरुणके समान थे ॥ ५९ ॥ ❀ ❀ शारीरिक बल, इन्द्रियोंकी पटुता तथा पराक्रममें सर्वत्र गतिशील वायुके समान और तेजकी असह्यतामें भगवान् शङ्करके समान थे ॥ ६० ॥ ❀ ❀ सौन्दर्यमें कामदेवके समान, उत्साहमें सिंहके समान, वात्सल्यमें मनुके समान और मनुष्योंके आधिपत्यमें सर्वसमर्थ ब्रह्माजीके समान थे ॥ ६१ ॥ ❀ ❀ ब्रह्मविचारमें बृहस्पति, इन्द्रियजयमें साक्षात् श्रीहरि तथा गौ, ब्राह्मण, गुरुजन एवं भगवद्भक्तोंकी भक्ति, लज्जा, विनय, शील एवं परोपकार आदि गुणोंमें अपने ही समान ( अनुपम ) थे ॥ ६२ ॥ ❀ ❀ लोग त्रिलोकीमें सर्वत्र उच्च स्वरसे उनकी कीर्तिका गान करते थे, इससे वे स्त्रियोंतकके कानोंमें वैसे ही प्रवेश पाये हुए थे जैसे सत्पुरुषोंके हृदयमें श्रीराम ॥ ६३ ॥

इति द्वाविंशोऽध्यायः ॥ २२ ॥



# अथ त्रयोविंशोऽध्यायः

### मैत्रेय उवाच

दृष्ट्वाऽऽत्मानं प्रवयसमेकदा वैन्य आत्मवान्। आत्मना वर्धिताशेषस्वानुसर्गः प्रजापतिः ॥ १ ॥
जगतस्तस्थुषश्चापि वृत्तिदो धर्मभृत्सताम्। निष्पादितेश्वरादेशो यदर्थमिह जज्ञिवान् ॥ २ ॥
आत्मजेष्वात्मजां न्यस्य विरहाद्रुदतीमिव। प्रजासु विमनःस्वेकः सदारोऽगात्तपोवनम् ॥ ३ ॥
तत्राप्यदाभ्यनियमो वैखानससुसम्मते। आरब्ध उग्रतपसि यथा स्वविजये पुरा ॥ ४ ॥
कन्दमूलफलाहारः शुष्कपर्णाशनः क्वचित्। अब्भक्षः क¹तिचित्पक्षान् वायुभक्षस्ततः परम् ॥ ५ ॥
ग्रीष्मे पञ्चतपा वीरो वर्षास्वासारषा²ण्मुनिः। आकण्ठमग्नः शिशिरे उदके स्थण्डिलेशयः ॥ ६ ॥
तितिक्षुर्यतवाग्दान्त ऊर्ध्वरेता जितानिलः। आरिराधयिषुः कृष्णमचरत्तप उत्तमम् ॥ ७ ॥
तेन क्रमानुसिद्धेन ध्वस्तकर्ममलाशयः। प्राणायामैः संनिरुद्धषड्वर्गश्छिन्नबन्धनः ॥ ८ ॥

अन्वयः—एकदा आत्मवान् आत्मना वर्धिताशेषस्वानुसर्गः प्रजापतिः वैन्यः आत्मानम् प्रवयसम् दृष्ट्वा ॥ १ ॥ ❀ ❀ जगतः च तस्थुषः अपि वृत्तिदः सताम् धर्मभृत् यदर्थम् इह जज्ञिवान् निष्पादितेश्वरादेशः ॥ २ ॥ ❀ ❀ विरहात् रुदतीम् इव आत्मजाम् आत्मजेषु न्यस्य प्रजासु विमनःसु एकः सदारः तपोवनम् अगात् ॥ ३ ॥ ❀ ❀ अदाभ्यनियमः तत्र अपि वैखानससुसंमते उग्रतपसि यथा पुरा स्वदिग्विजये आरब्धः ॥ ४ ॥ ❀ ❀ कन्दमूलफलाहारः क्वचित् शुष्कपर्णाशनः कतिचित् पक्षान् अब्भक्षः ततः परं वायुभक्षः ॥ ५ ॥ ❀ ❀ वीरः मुनिः ग्रीष्मे पञ्चतपाः वर्षासु आसारषाट् शिशिरे उदके आकण्ठमग्नः स्थंडिलेशयः ॥ ६ ॥ ❀ ❀ तितिक्षुः यतवाक् दान्तः ऊर्ध्वरेताः जितानिलः कृष्णम् आरिराधयिषुः उत्तमम् तपः अचरत् ॥ ७ ॥ ❀ ❀ क्रमानुसिद्धेन तेन ध्वस्तकर्म अमलाशयः प्राणायामैः सन्निरुद्धषड्वर्गः छिन्नबन्धनः ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

त्रयोविंशे सभार्यस्य वने नित्यसमाधितः। विमानमधिरुह्याथ वैकुण्ठगतिरीर्यते ॥ ( १ ) ॥

प्रवयसं वृद्धं दृष्ट्वा तपोवनमगादिति तृतीयेनान्वयः। स्वकृतोऽनुसर्गोऽन्नादिसर्गः पुरग्रामादिसर्गश्च वर्धितोऽशेषः स्वानुसर्गो येन ॥ १ ॥ ❀ ❀ निष्पादित ईश्वरादेशः प्रजापालनादिर्येन। जज्ञिवान् जातः ॥ २ ॥ ❀ ❀ आत्मजां पृथ्वीम्। विमनःसु चिन्तातुरासु सदारः सभार्यः ॥ ३ ॥ ❀ ❀ अदाभ्या विघ्नैर्नाशयितुमशक्या नियमा यस्य वानप्रस्थानां सुसंमते उग्रे तपस्यारब्धः प्रवृत्तः, कर्तरि क्तः। यथा स्वस्य धरामंडलस्य विजये पूर्वं महता यत्नेन प्रवृत्तस्तथेति ॥ ४ ॥ ❀ ❀ उग्रं तपो दर्शयति कंदमूलेति त्रिभिः। क्वचित्कदाचित् ॥ ५ ॥ ❀ ❀ चतुर्दिक्षु चत्वारोऽग्नय उपरि सूर्य इति पंचानां तपः संतापो यस्य स पंचतपाः, आसारं सहत इत्यासारषाट्, शिशिरऋतौ स्थण्डिलेशयो भूमिशयनः सर्वदा ॥ ६–७ ॥ ❀ ❀ तेन तपसा क्रमानुसिद्धेन शनैः प्राप्तेन ध्वस्तानि कर्माणि यस्यातोऽमल आशयोऽन्तःकरणं यस्य। छिन्नानि बन्धनानि वासना यस्य ॥ ८–१० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अथ नित्यसमाधिकात्स्न्र्येन ( १ )। आत्मवान् जितमनाः ॥ १ ॥ ❀ ❀ ईश्वरादेशः लोकशिक्षणार्थं धर्मज्ञानाद्यनुकरणमेव। यद्वेश्वरेण मुनिप्रेरितबन्दिजनान्तर्यामिणा य आदिश्यते एष धर्मभृतां श्रेष्ठ इत्यादिना स ईश्वरादेशः ॥ २ ॥ ❀ ❀ अत्र विश्वनाथस्तु—आत्मानं देहं गतायुषं दृष्ट्वाऽहो अद्यापि भगवान्मां साक्षात्सेवार्थं न नयतीत्यतोऽनुमीयते मम तावत्प्रमाणकं

---

१. प्राचीने पाठे पञ्चमश्लोकस्योत्तरार्द्धस्य 'अब्भक्षः' परानुवर्त्यंशः खण्डितः। २. प्रा० पा०—सारवान्मुनिः।

भजनं नाभून्निष्कषायता च न वर्त्तत इत्यतो वानप्रस्थाश्रममिषेण वनं गत्वा कीर्त्तनश्रवणाभ्यामग्र्यावेव यामान्नयन्नस्मत्पूर्वपुरुषो ध्रुव इव शीघ्रं भगवत्प्राप्त्यर्थमेव तपः कुर्वन् लोके वानप्रस्थधर्मं स्थापयामीति मनसि निश्चित्य तपोवनमगादिति तृतीयेनान्वयः ॥ ३ ॥ ❀ ❀ तत्रापि यथा गार्हस्थ्ये कर्मकरणं सकर्मजनप्रदर्शनाय तथैव तृतीयाश्रमेपि वानप्रस्थजनप्रदर्शनायास्य तपश्चरणमित्याह–वैखानसेति। अदाभ्येति 'दभ–नोदने' धातो रूपम् ॥ ४ ॥ ❀ ❀ कन्दो विनैव वपनं, वनजो मूलावान्तरभेदः। मूलं तु वपनेनोद्भूतं मूलकादि। यद्वोभयं ग्रामारण्यसाधारणं वपनजमेव ग्राह्यम्। "मूलं बीजसमुद्भूतं कन्दः स्वग्रन्थिसंभवः। मूलकादि भवेन्मूलं कन्दश्च सूरणादिकः" इति कौशिकः। ततो भक्षोत्तरम् ॥ ५ ॥ ❀ ❀ आसारषाट् निराश्रयतयोग्रवृष्टिसेवी "धारासंपात आसारः' इत्यमरः। शिशिरे माघ-फाल्गुनमासयोः ॥ ६ ॥ ❀ ❀ ननु लोकप्रदर्शनकेपि तस्मिंस्तपसि तस्य कीदृङ् मन आसीदित्यत आह–आरिराधेति। वैकुंठे साक्षात्कृष्णाराधनकामोहं तपश्चरामीति तस्य संकल्प आसीदित्यर्थः। दृश्यते च रागात्मकभक्तिमतां सिद्धानां श्रीविशाखादिगोपीजनानां बृहद्वामनदृष्टानां श्रुतीनां च कृष्णप्राप्त्यर्थं तपश्चरणमिति ॥ ७ ॥ ❀ ❀ अनुसिद्धेन परिपक्वेनामलाशयः प्रफुल्लमनाः ध्वस्तकर्मा तु स प्रागेव प्राणायामैर्भगवन्मन्त्रावृत्तिभिरेव भक्तिमार्गविहितैः ॥ ८ ॥

## श्रीमद्वीरराघवव्याख्या

एवं सर्वगुणसम्पन्नः सम्पालितलोकः आसीदित्युक्तम्। अथात्मजेष्वारोपितराज्यभरः सभार्यः प्रविष्टतपोवनः कुमारोपदिष्टाध्यात्मयोगनिष्ठः प्राप्तपरमपुरुष आसीत्। तत्पत्नी तल्लोकमागादिति वदन् पृथुवृत्तान्तमुपसंहरति मुनिः दृष्ट्वेति। वैन्यः पृथुः आत्मवान् स्वर्गस्वाराज्यादीनामल्पास्थिरत्वज्ञानवान् आत्मानं प्रवयसं वृद्धं दृष्ट्वा तपोवनमगादित्युत्तरेणान्वयः। आत्मना स्वेन वर्द्धितः अशेषः स्वानुसर्गः स्वविषयवर्त्त्यनुसर्गः व्यष्टिसर्गः यस्य ॥ १ ॥ ❀ ❀ जगतः जङ्गमस्य तस्थुषः स्थावरस्य चापि वृत्तिदः जीविकाप्रदः सतां धर्मभृत् निष्पादितः ईश्वरादेशः प्रजापालनादिरूपो येन यदर्थं यल्लोकपालनार्थं जज्ञिवान् जातः तत्सर्वं कृत्वेत्यर्थः ॥ २ ॥ ❀ ❀ आत्मजेषु आत्मजां पुत्रीकृतां भूमिं कथंभूतां विरहात्पृथोर्विश्लेषाद्रुदतीमिव स्थितां विन्यस्य प्रजासु विमनःसु चिन्तातुरासु सतीषु सदारः सभार्यः एकः असहायः ॥ ३ ॥ ❀ ❀ तत्र तपोवने उपात्ताः स्वीकृताः आत्मनो नियमाः शमदमादयो येन 'अक्षोभ्यनियम' इति पाठे विघ्नैर्नाशयितुमशक्या नियमा यस्य वैखानसानां वानप्रस्थानां सुसम्मते उग्रे तपसि आरब्धः प्रवृत्तः-कर्त्तरि क्तः-स्वस्य धरामण्डलस्य विजये पूर्वं यथा महता यत्नेन प्रवृत्तः ॥ ४ ॥ ❀ ❀ उग्रं तपो वर्णयति कन्दमूलेति त्रिभिः। कन्दाद्यलाभे कदाचित्तृणाशनः यद्वा कांश्चित्पक्षान् कन्दाद्याहारः कांश्चित् तृणाद्यशनः कांश्चिदब्भक्षः ततः वायुभक्ष एव ॥ ५ ॥ ❀ ❀ ग्रीष्मे ऋतौ चतुर्दिक्षु चत्वारोऽग्नयः उपरि सूर्यस्तेषां तपस्तापो यस्य वर्षासु ऋतौ आसारं धारासम्पातं सहते इत्यासारषाट् मुनिः तदा शुभाश्रयसंशीलनपरः शिशिरे ऋतौ उदके आकण्ठमग्नः स्थण्डिलेशयः। दर्भादिभिः परिस्तृतभूमिशयः ॥ ६ ॥ ❀ ❀ तितिक्षुः शीतोष्णादिसहः यतवाक् मौनव्रतः दान्तः दमयुक्तः ऊर्ध्वरेताः शान्तः जितानिलः जितप्राणः एवंभूतः कृष्णं भगवन्तमारिराधयिषुः एवंविधमुत्तमं तप आचरत् ॥ ७ ॥ ❀ ❀ क्रमानुरुद्धेन शनैः शनैः प्राप्तेन तेन तपसा ध्वस्तानि कर्माणि यस्य प्राणायामैः अमल आशयोऽन्तःकरणं यस्य सन्निरुद्धः प्रत्याहृतः षडिन्द्रियवर्गो येन छिन्नानि बन्धनानि व्यसनानि यस्य ॥ ८ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

योगेन देहत्यागप्रकारः पृथ्व्यादितत्त्वानां तदभिमानिदेवतानां च स्वस्वकारणप्रवेशलक्षणो लयश्च देहत्यागकाले चिन्तनीय इति निरूप्यतेऽस्मिन्नध्याये। तत्रादौ पृथोस्तपसि प्रारम्भप्रकारं वक्ति दृष्ट्वेत्यादिना। प्रवयसं गतवयसं स्थविरमात्मवान् जितमनाः सहितोऽनुसर्गः पुत्रपौत्रादिलक्षणो येन जनेन स सानुसर्गः वर्धिताशेषः सानुसर्गः स्वराज्यकालीनजनो येन स तथा ॥ १ ॥ ❀ ❀ आरामकरणेन स्थावरस्य वृत्तिदानम् ॥ २ ॥ ❀ ❀ आत्मजां पृथिवीं राज्ञ एष्यद्वियोगाद्रुदतीमिव स्थिताम् ॥ ३ ॥ ❀ ❀ आत्मनियमः कन्दमूलाद्याहारः शरीरयात्रार्थमापाद्यो येन स आपाद्यात्मनियमः पुरा स्वविषये स्वराष्ट्रे उग्राणां दुष्टानां तपसि संतापे दण्डे यथा प्रारब्धस्तथोग्रतपसि कायक्लेशादिलक्षणे प्रारब्ध इत्यर्थः ॥ ४ ॥ ❀ ❀ आत्मनियमानाह कन्देति ॥ ५ ॥ ❀ ❀ चण्डतप आह ग्रीष्म इति। पञ्च तपांस्यग्नयो यस्य स पञ्चतपाः, अत्रैकोऽग्निरर्कः आसारषाट् निराश्रयतयोग्रवृष्टिसेवी शिशिरे हिमर्तौ स्थण्डिलेशयो निशीति शेषः ॥ ६ ॥ ❀ ❀ आरिराधयिषुः आराधयितुकामस्तदर्थमुग्रं तप आचरदित्यन्वयः ॥ ७–८ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

दृष्ट्वेति त्रिकम् ॥ १ ॥ ❀ ❀ निष्पादितेति। तस्य नित्यं भगवत्पार्षदत्वं लीलामात्राङ्गीकृतेन नराकारोपाधित्वं तदादेशसम्पादनार्थमेव धर्मज्ञानाद्यनुकरणम्। तदादेशश्च साधारणलोकशिक्षार्थमेवेति व्यक्तं तदेवमपि शुद्धभक्तत्वमेव स्थापितम् ॥ २ ॥ ❀❀ रोदने लिङ्गं प्रजासु विमनःस्विति ॥ ३ ॥ ❀ ❀ अदाभ्येति दभ-नोदन इति कल्पद्रुमात्। एतद्-

बुद्ध्यैव अदाभ्येति गौडाः। अध्यात्मेति सम्बन्धोक्तिः। आत्मनियमानिति चित्सुखः॥ ४॥ ❀ ❀ कन्देति त्रिकम्॥ ५॥ ❀ ❀ वीरेत्यत्र धीरेति क्वचित्। जितेत्यत्र यतेरिति क्वचित्। आरिराधयिषुः कृष्णमिति। तत्तत्प्रचारार्थं तेनावतारितत्वात्तदाज्ञाप्रतिपालनरूपमाराधनं कर्तुमिच्छुरित्यर्थः॥ ६–७॥ ❀ ❀ तेनेति युग्मकम्। सिद्धेनेत्यत्राविरुद्धेनेति क्वचित्। ध्वस्तकर्मेत्यादिकमनुकरणमात्रम्॥ ८॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

त्रयोविंशे वनं गत्वा तपः कृत्वा हरिं यजन्। त्यक्त्वा नृलोकं सस्त्रीको वैकुण्ठमगमत् पृथुः॥ (१)॥

आत्मानं देहं प्रवयसं वृद्धं दृष्ट्वा अद्यापि भगवान् मां साक्षात् सेवार्थं स्वपार्श्वं न नयतीत्यतोऽनुमीयते मम तावत्प्रमाणकं भजनं नाभून्निष्कषायता च न वर्त्तत इत्यतो वानप्रस्थाश्रममिषेण वनं गत्वा कीर्त्तनस्मरणाभ्यामष्टावेव यामानन्यन्नस्मत्पूर्व्वपुरुषो ध्रुव इव शीघ्रं भगवत्प्राप्त्यर्थमेव तपः कुर्व्वन् लोके वानप्रस्थधर्मं ख्यापयामीति मनसि निश्चित्य तपोवनमगादिति तृतीयेनान्वयः। आत्मना स्वेनैव वर्द्धितोऽशेषः स्वीयो अनुसर्गः अन्नादिपुरग्रामादिसर्गो येन सः आत्मजां पृथ्वीम्॥ १–३॥ ❀ ❀ तत्रापीति यथा गार्हस्थ्ये कर्म्मकरणं कर्मिजनप्रदर्शनाय तथैव तृतीयाश्रमेऽपि वानप्रस्थजनप्रदर्शनायास्य तपश्चरणमित्याह। वैखानसानां सुसम्मते उग्रतपसि आरब्धः प्रवृत्तः। अदाभ्यनियमोऽखण्डव्रतः। दभ-नोदने इति धातोः रूपं, स्वस्य स्वीयस्य धरामण्डलस्य जये यथा पूर्व्वं यत्नेऽतिप्रवृत्तः॥ ४–५॥ ❀ ❀ चतुर्दिक्षु चत्वारोऽग्नय उपरि सूर्य्य इति पञ्चतपाः। आसारषाट् धारासम्पातसहः। स्थण्डिलेशयः भूमिशायी॥ ६॥ ❀ ❀ ननु लोकप्रदर्शनार्थकेऽपि तस्मिंस्तावति तपसि तस्य कीदृशं मन आसीत्तत्राह आरिराधयिषुरिति। वैकुण्ठे साक्षात् कृष्णाराधनकामोऽहं तपश्चरामीति तस्य सङ्कल्प आसीदित्यर्थः। दृश्यते च रागात्मकभक्तिमतां सिद्धानां श्रीविशाखादिगोपीजनानां बृहद्वामनदृष्टानां श्रुतीनाञ्च कृष्णप्राप्त्यर्थं तपश्चरणमिति॥ ७॥ ❀ ❀ तेन तपसा क्रमेणैवानुसिद्धेन परिपाकं प्राप्तेन अमलाशयः प्रफुल्लमनाः ध्वस्तकर्मा तु स प्रागेव प्राणायामैर्भगवन्मन्त्रावृत्तिभिरेव भक्तिमार्गविहितैः। आत्मनि स्वस्मिन्नधिकृतं विनयादित्वात् स्वार्थे ठक्, आध्यात्मिकं परमन्तिमं यत्पादपङ्कजपलाशेत्यादिपद्यद्वयेनोक्तं शुद्धं भक्तियोगं व्याख्यान्तरे आध्यात्मिकस्य ज्ञानयोगस्य परत्वानुक्तेः श्रेष्ठत्वानुक्तेश्च तेन च पुरुषभजनासम्भवादुत्तरश्लोके चानुपपत्तेश्चासङ्गतिरेव तादृशशब्देनोक्तिस्तु भक्तियोगस्य रहस्यत्वव्यञ्जिकैव ज्ञेया॥ ८–१०॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

त्रयोविंशे श्रीपृथुः पुरुषोत्तमसाम्यं प्राप्त इति वर्ण्यते। आत्मानं प्रवयसं वृद्धं दृष्ट्वा तपोवनमगादिति तृतीयेनान्वयः। आत्मना स्वप्रभावेण वर्द्धितः अशेषः सकलः स्वानुसर्गः स्वकृतः अनुसर्गो येन सः॥ १॥ ❀ ❀ निष्पादितः अन्नोत्पादनादिना ईश्वरस्य आदेशो येन सः। किं बहुना यदर्थमिह जज्ञिवान् तत्सर्वं विधायेत्यर्थः॥ २॥ ❀ ❀ आत्मजां भुवम्॥ ३॥ ❀ ❀ तत्रापि तपोवनेऽपि यथा पुरा स्वदिग्विजये स्वभूमण्डलविजये आरब्धः तथा अदाभ्या विघ्नैरनभिभूताः नियमा यस्य सः वैखानसानां वानप्रस्थविशेषाणां सम्मते उग्रे तपसि आरब्धः सम्यक् प्रवृत्तः॥ ४–५॥ ❀ ❀ ग्रीष्मे चतुर्दिक्षु चतुर्णामग्नीनां सूर्यपञ्चमानां तपः संतापो यस्य स पञ्चतपाः वर्षासु प्रावृषि प्रवृत्तासु वृष्टिषु आसारं धारासम्पातं सहत इत्यासारषाट्, शिशिरे ऋतौ उदके आकण्ठमग्नः, मुहूर्तादिनियमानुसारेणेति बोध्यम्। स्थण्डिलेशयः दर्भादिपरिवृतभूमिशयनः सर्वदेति शेषः। मुनिर्भगवत्स्वरूपगुणादिमननशीलः॥ ६॥ ❀ ❀ आराधयिषुः तुमिच्छुः॥ ७॥ ❀ ❀ क्रमानुसिद्धेन तपसा ध्वस्तानि कर्माणि यस्य सः अतोऽमलः आशयोऽन्तःकरणं यस्य सः प्राणायामैः सन्निरुद्धषड्वर्गः प्रत्याहृतषडिन्द्रियगणः अत एव छिन्नानि बन्धनानि रागद्वेषादयो यस्य सः॥ ८॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

विरक्तस्य सभार्यस्य पृथोर्भक्त्या वने हरिम्। सेवमानस्य मोक्षस्तु त्रयोविंशे निरूप्यते॥ (१)॥

एवं मोक्षहेतुं ज्ञानप्राप्तिं निरूप्येदानीं तत्फलं मोक्षं निरूपयति। नच कामप्रकरणे मोक्षनिरूपणं कथं सङ्गच्छते इति शङ्क्यम्, नारदसनत्कुमारादीनां भगवदवतारत्वेऽपि मुमुक्षुत्ववत् नरनारायणस्य तपश्चर्यावच्च लोकसङ्ग्रहार्थमस्यापि मुमुक्षुत्वादेः सङ्गतत्वाद्भगवल्लीलाया दुर्ज्ञेयत्वात्, भगवदाविष्टजीवाभिप्रायेण वा मुमुक्षुत्वादि सङ्गच्छते। न च पूर्वं 'न कामये नाथ तदप्यहं क्वचित्' इति मोक्षकामनाभावस्योक्तत्वात् इदानीं कथं तस्य सा जातेति शङ्क्यं, भगवदिच्छायाः प्रबलत्वात्, अत एव तस्य साधनभक्तेर्ज्ञानवैराग्याद्युत्पादनद्वारेण व्यापिवैकुण्ठप्राप्तिहेतुत्वं जातं न परमप्रेमलक्षणपरमपुरुषार्थहेतुत्वम्, अत एव ज्ञानवैराग्यदार्ढ्यार्थं गृहं त्यक्त्वा वनं गतस्तन्निरूपयति–दृष्ट्वेति त्रिभिः। एकदा कदाचिद्वैन्य आत्मानं प्रवयसं वृद्धं दृष्ट्वैक एव सदारः भार्यासहितः तपोवनमगादिति तृतीयेनान्वयः। ननु कथमत्यूर्जितं राज्यैश्वर्यादि त्यक्तुं शक्त इत्याशङ्क्याह–आत्मवानिति। यतो

वशीकृतदेहेन्द्रियान्तःकरणादिसङ्घात इत्यर्थः। ननु 'श्रेयः प्रजापालनमेव राज्ञः' इत्यादिना भगवदाज्ञा प्रजापालन एवावतारश्चैत-दर्थमेव तत्कथं त्यागेनैतद्द्वयं विरुद्धं कृतवानित्याशङ्क्य तत्सम्पादितत्वान्न विरोध इत्याह–आत्मनेति सार्द्धेन। आत्मना स्वेन वर्द्धितः अशेषः स्वानुसर्गः स्वकृतोऽन्नादिसर्गः पुरग्रामादिसर्गश्च येन सः॥ १॥ ❀ ❀ सर्गवृद्धिकरणे हेतुमाह–जगत इति। यतो जगतो जङ्गमस्य तस्थुषः स्थावरस्य च अपिशब्देन देवादीनामपि वृत्तिदो जीविकासम्पादक इत्यर्थः। तत्रापि हेतुमाह–प्रजापतिरिति, यतः प्रजापालक इत्यर्थः। किञ्च सतां धर्मभृत् धर्मरक्षक इत्यर्थः। तथा च यथा लोकसङ्ग्रहार्थं कर्मादि कृतवांस्तथा विरक्तशिक्षार्थं वनं गत इति सूचितम्। एवं यदर्थमपीह भूतले जज्ञिवान् अवतीर्णः स सर्वोऽपि निष्पादित ईश्वरस्यादेशः प्रजापाल-नादिरूपो येन सः। अतो न कश्चिद्विरोध इति भावः॥ २॥ ❀ ❀ तर्ह्येवं सर्वोपकारिणस्तस्य गमने दुहितृत्वेन अङ्गीकृतायाः पृथ्व्यास्तत्प्रजानां च काऽवस्था जातेत्याकाङ्क्षायामाह–आत्मजेष्विति। आत्मजां दुहितृत्वेन स्वीकृतां पृथ्वीं स्वविरहाद्रुदतीमिव उदासीनामात्मजेषु स्वपुत्रेषु न्यस्य संस्थाप्य प्रजासु विमनस्सु चिन्तातुरासु सतीषु एको भृत्यादिरहितः सदारस्तपोवनमगादित्यन्वयः॥ ३॥ ❀ ❀ तत्र गतस्य साधनपूर्वकं मोक्षप्रकारं दर्शयति–तत्रेत्यादिसार्द्धपञ्चदशभिः। तत्रापि तपोवनेऽपि अदाभ्या विघ्नैरखण्डिता नियमा यस्य सः पृथुर्वैखानसानां वानप्रस्थविशेषाणां सुसम्मते न तु स्वोत्प्रेक्षिते उग्रे देहेन्द्रियादिशोषकरे तपसि आरब्धः प्रवृत्त इत्यन्वयः। विघ्नानभिभवे प्रयत्नाधिक्यं हेतुं सूचयन् दृष्टान्तमाह–यथेति। पुरा गृहस्थत्वावस्थायां स्वविजये यथा महता प्रयत्नेन प्रवृत्तस्तथा तपस्यपि प्रवृत्त इत्यर्थः॥ ४॥ ❀ ❀ उग्रतपोनियमानेव दर्शयति–कन्दमूलेति त्रिभिः। कचित् कदाचित् कन्दमूलफलानि आहारो यस्य स तथा जात इति। कदाचित् हिंसापरिहारार्थं शुष्काणां पर्णानामशनं यस्य स तथाभूतो जातः। अपो भक्षयतीत्यब्भक्षः कतिचित्पक्षांस्तथाभूतो जातः। ततः परमनन्तरं जलाद्याहरणप्रयत्नपरिहारार्थं स्वस्थाने एव स्थितो वायुभक्षो जातः॥ ५॥ ❀ ❀ ग्रीष्मे ऋतौ चतुर्दिक्षु चत्वारोऽग्नयः उपरि सूर्य इति पञ्चातपः सन्तापो यस्य स पञ्चतपा जातः। वर्षासु आसारं धारासम्पातं सहते इत्यासारषाड् जातः। शिशिरे ऋतौ आकण्ठमुदके जले निमग्नो जातः। मुनिः विचारतत्परः। स्थण्डिलेशयः भूमिशयनश्च सर्वदा जातः॥ ६॥ ❀ ❀ तितिक्षुः क्षुत्पिपासादिजनितदुःखादिसहिष्णुः। यतवाक् मौनी। दान्तः निर्जितसर्वेन्द्रियः, अत एव ऊर्ध्वरेताः पत्नीसाहित्येऽपि मैथुनवर्जितः। जितानिलः वशीकृतप्राणः। किमभिप्रायवानेवं तपः कृतवानित्यपेक्षायामाह–कृष्णमारिराधयिषुरेवैवमुत्तमं तप अचरत् कृतवानित्यर्थः॥ ७॥ ❀ ❀ क्रमानुसिद्धेन शनैः परिपाकं प्राप्तेन तेन तपसा ध्वस्तानि नष्टानि कर्माणि अनारब्धफलानि यस्य स तथा। अत एव छिन्नबन्धनः छिन्नानि अन्यजन्महेतुभूतानि मनोवासनालक्षणानि यस्य सः। ननु तर्हि पुनः कदाचि-द्वासनोत्पत्तिः स्यादित्याशङ्क्याह–प्राणायामैरिति। कुम्भकरेचकपूरकभेदभिन्नैस्त्रिप्रकारकैः प्राणायामैः सम्यक् यथा पुनः स्वच्छन्द-प्रवृत्तिर्न स्यात्तथा निरन्तरं रुद्धः षड्वर्गः पञ्चज्ञानेन्द्रियाणि मनश्च येन सः। तथा च न कदापि कामादिवासनोत्पत्तिर्भविष्यतीति भावः। अत एवामलाशयः निर्मलान्तःकरण इत्यर्थः॥ ८॥

### भाषानुवादः

## राजा पृथुकी तपस्या और परलोकगमन

श्रीमैत्रेयजी कहते हैं—इस प्रकार महामनस्वी प्रजापति पृथुने स्वयमेव अन्नादि तथा पुर-ग्रामादि सर्गकी व्यवस्था करके स्थावर-जङ्गम सभीकी आजीविकाका प्रबन्ध कर दिया तथा साधुजनोचित धर्मोंका भी खूब पालन किया। 'मेरी अवस्था कुछ ढल गयी है और जिसके लिये मैंने इस लोकमें जन्म लिया था, उस प्रजारक्षणरूप ईश्वराज्ञाका पालन भी हो चुका है; अतः अब मुझे अन्तिम पुरुषार्थ—मोक्षके लिये प्रयत्न करना चाहिये' यह सोचकर उन्होंने अपने विरहमें रोती हुई अपनी पुत्रीरूपा पृथ्वीका भार पुत्रोंको सौंप दिया और सारी प्रजाको बिलखती छोड़कर वे अपनी पत्नीसहित अकेले ही तपोवनको चल दिये॥ १–३॥ ❀ ❀ वहाँ भी वे वानप्रस्थ आश्रमके नियमानुसार उसी प्रकार कठोर तपस्यामें लग गये, जैसे पहले गृहस्था-श्रममें अखण्ड व्रतपूर्वक पृथ्वीको विजय करनेमें लगे थे॥ ४॥ ❀ ❀ कुछ दिन तो उन्होंने कन्द-मूल-फल खाकर बिताये, कुछ काल सूखे पत्ते खाकर रहे, फिर कुछ पखवाड़ोंतक जलपर ही रहे और इसके बाद केवल वायुसे ही निर्वाह करने लगे॥ ५॥ ❀ ❀ वीरवर पृथु मुनिवृत्तिसे रहते थे। गर्मियोंमें उन्होंने पञ्चाग्नियोंका सेवन किया, वर्षाऋतुमें खुले मैदानमें रहकर अपने शरीरपर जलकी धाराएँ सहीं और जाड़ेमें गलेतक जलमें खड़े रहे। वे प्रतिदिन मिट्टीकी वेदीपर ही शयन करते थे॥ ६॥ ❀ ❀ उन्होंने शीतोष्णादि सब प्रकारके द्वन्द्वोंको सहा तथा वाणी और मनका संयम करके ब्रह्मचर्यका पालन करते हुए प्राणोंको अपने अधीन किया। इस प्रकार श्रीकृष्णकी आराधना करनेके लिये उन्होंने उत्तम तप किया॥ ७॥ ❀ ❀ इस क्रमसे उनकी तपस्या बहुत पुष्ट हो गयी और उसके प्रभावसे कर्मफल नष्ट हो जानेके कारण उनका चित्त सर्वथा शुद्ध हो गया। प्राणायामोंके द्वारा मन और इन्द्रियोंके निरुद्ध हो जानेसे उनका वासनाजनित बन्धन भी कट गया॥ ८॥

सनत्कुमारो भगवान् यदाहाध्यात्मिकं परम्। योगं तेनैव पुरुषमभजत्पुरुषर्षभः॥ ९॥
भगवद्धर्मिणः साधोः श्रद्धया यततः सदा। भक्तिर्भगवति ब्रह्मण्यनन्यविषयाभवत्॥ १०॥
तस्यानया भगवतः परिकर्मशुद्धसत्त्वात्मनस्तदनु संस्मरणानुपूर्त्या।
ज्ञानं विरक्तिमदभून्निशितेन येन चिच्छेद संशयपदं निजजीवकोशम्॥ ११॥
छिन्नान्यधीरधिगतात्मगतिर्निरीहस्तत्तत्यजेऽच्छिनदिदं वयुनेन येन।
तावन्न योगगतिभिर्यतिरप्रमत्तो यावद्गदाग्रजकथासु रतिं न कुर्यात्॥ १२॥
एवं स वीरप्रवरः संयोज्यात्मानमात्मनि। ब्रह्मभूतो दृढं काले तत्याज स्वं कलेवरम्॥ १३॥
सम्पीड्य पायुं पार्ष्णिभ्यां वायुमुत्सारयञ्छनैः। नाभ्यां कोष्ठेष्ववस्थाप्य हृदुरःकण्ठशीर्षणि॥ १४॥
उत्सर्पयंस्तु तं मूर्ध्नि क्रमेणावेश्य निःस्पृहः। वायुं वायौ क्षितौ कायं तेजस्तेजस्ययूयुजत्॥ १५॥
खान्याकाशे द्रवं तोये यथास्थानं विभागशः। क्षितिमम्भसि तत्तेजस्यदो वायौ नभस्यमुम्॥ १६॥

अन्वयः—भगवान् सनत्कुमारः यत् परम् आध्यात्मिकम् योगम् आह तेन एव पुरुषश्रेष्ठः पुरुषम् अभजत्॥ ९॥ ❀ ❀ भगवद्धर्मिणः सदा श्रद्धया यततः साधोः भगवति ब्रह्मणि अनन्यविषया भक्तिः अभवत्॥ १०॥ ❀ ❀ तदनुसंस्मरणानुपूर्त्या अनया भगवतः परिकर्मशुद्धसत्त्वात्मनः तस्य ज्ञानम् विरक्तिमत् अभूत् निशितेन येन संशयपदम् निजजीवकोशम् चिच्छेद॥ ११॥ ❀ ❀ छिन्नान्यधीः अधिगतात्मगतिः निरीहः येन वयुनेन इदम् अच्छिनत् तत् तत्यजे यतिः यावत् गदाग्रजकथासु रतिं न कुर्यात् तावत् योगगतिभिः अप्रमत्तः न॥ १२॥ ❀ ❀ सः वीरप्रवरः एवम् आत्मानम् आत्मनि संयोज्य दृढम् ब्रह्मभूतः काले स्वम् कलेवरम् तत्याज॥ १३॥ ❀ ❀ पायुम् पार्ष्णिभ्याम् संपीड्य शनैः वायुम् उत्सारयन् नाभ्याम् कोष्ठेषु च हृदुरःकण्ठशीर्षणि अवस्थाप्य॥ १४॥ ❀ ❀ निस्पृहः तम् तु उत्सर्पयन् क्रमेण मूर्ध्नि आवेश्य वायुम् वायौ कायम् क्षितौ तेजः तेजसि अयूयुजत्॥ १५॥ ❀ ❀ यथास्थानम् विभागशः खानि आकाशे द्रवम् तोये क्षितिम् अंभसि तत् तेजसि अदः वायौ अमुम् नभसि॥ १६॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

परिकर्मणा परिचर्य्यया शुद्धसत्त्व आत्मा मनो यस्य तस्य ज्ञानमभूत्। कीदृशं येन निजमुपाधिं जीवकोशं हृदयग्रन्थिं संशयानामसंभावनादीनां पदमाश्रयं चिच्छेद। कीदृशेन अनया भक्त्या निशितेन तीक्ष्णेन। कथंभूतया तस्य भगवतोऽनुसंस्मरणेनानुपूर्तिः संपूर्तिर्यस्यास्तया निशितेन॥ ११॥ ❀ ❀ किंच छिन्ना अनन्यधीर्देहात्मबुद्धिर्यस्य यतोऽधिगतात्मगतिरत एव निरीहः प्राप्तासु सिद्धिषु निःस्पृहः येन वयुनेन ज्ञानेनेदं संशयपदं चिच्छेद तत्तत्यजे त्यक्तवान्। तत्प्रयत्नादप्युपररामेत्यर्थः। तस्य योगसिद्धिष्वपि निःस्पृहत्वं युक्तमेवेत्याह। तावन्नाप्रमत्तः किं तु प्रमत्तो भवति तस्य श्रीकृष्णकथारतत्वान्न तासु लोभो जात इत्यर्थः॥ १२-१३॥ ❀ ❀ देहत्यागप्रकारमाह संपीड्येति पंचभिः। पायुं गुदं संपीड्येति मुक्तासनं सूचितम् "संपीड्य सीवनीं सूक्ष्मां गुल्फेनैव तु मध्यतः। सव्ये दक्षिणगुल्फेन मुक्तासनमितीरितम्॥" इत्युक्तेः। मूलाधाराद्वायुमुत्सारयन्नूर्ध्वं नयन्नाभ्यामवस्थाप्य ततः कोष्ठेष्ववस्थाप्यायूयुजदित्युत्तरेणान्वयः। कोष्ठान्येवाह हृदादीनां द्वंद्वैक्यम्। शीर्षं भ्रूमध्यं तस्मिन्॥ १४॥ ❀ ❀ तं वायुम्। पाठान्तरे एवमसून्प्राणानुत्सर्पयन् क्रमेण मूर्ध्नि ब्रह्मरन्ध्रे आवेश्य ततो देहारम्भकपंचभूतानि समष्टिभूतेषु विलापितवांस्तदाह। वायुं वायावयूयुजदेकीकृतवान्। कायं देहगतं कठिनांशं क्षितौ॥ १५॥ ❀ ❀ खानींद्रियच्छिद्राणि। द्रवांशं तोये। तदेवं देहं प्रविलाप्याद्वितीयात्मप्रतिपत्त्यर्थं महाभूतानामपि लयमाह। क्षितिमंभस्येकीकृतवान्। तदंभस्तेजसि अदस्तेजो वायौ। अमुं वायुं नभसि॥ १६॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

आत्मनि स्वस्मिन्नधिकृतं विनयादित्वाट्ठक् स्वार्थे-आध्यात्मिकं "परमन्तिकं, यत्पादपंकजपलाश—" इत्यादिपद्यद्वयोक्तं शुद्धभक्तियोगम्। व्याख्यान्तरे आध्यात्मिकस्य ज्ञानयोगस्य परत्वानुक्तेः श्रेष्ठत्वानुक्तेश्च तेन च पुरुषभजनासंभवादुत्तरश्लोके

---

१. प्राचीने पाठे 'छिन्नान्यधीरधिगतात्मगतिर्निरीहः' अयमंशः खण्डितः। २. प्रा॰ पा॰—वायुमुत्सर्पय॰। ३. प्रा॰ पा॰—वायौ वायुं।

चानुपपत्तेश्चासंगतिरेव तादृशशब्देनोक्तिश्च भक्तियोगस्य रहस्यत्वव्यंजिकैव ज्ञेया ॥ ९-१० ॥ ❀ ❀ ततश्च "हरिभक्तिमहादेव्याः सर्वा मुक्त्यादिसिद्धयः । भुक्तयश्चाद्भुतास्तस्याश्चेटिकावदनुव्रताः" इति नारदपंचरात्रोक्तेस्तस्यानन्यभक्तिमतोऽनाकांक्षतोपि स्वत एव स्वयं ब्रह्मविद्या तथाऽणिमाद्यष्टादशसिद्धयश्च मूर्त्तिमत्य एवागत्य वयं भगवता प्रेषितास्तदर्थमेवास्मानंगीकुर्विति वदन्त्यस्तस्याभिमुखे प्रादुरभवन्नित्याह-तस्येति द्वाभ्याम् । तस्य पृथोर्ज्ञानं ब्रह्मविद्याख्यमभूत्स्वत एव प्रादुरभूत् । यद्यपि शुद्धभक्ताश्चातका इव भक्तेरेव माधुर्यास्वादिनः स्वयं प्राप्तामपि ब्रह्मविद्यां नाङ्गीकुर्वन्ति तत्कार्यभूतो लिंगदेहध्वंसो भक्त्यैव विनानुसन्धानेनापि भवेत् । तदुक्तं "जरयत्याशु या कोशं निगीर्णमनलो यथा ।" इति । तदपि यथा कश्चिज्जाठरानलेन जरयिष्यमाणस्यापि निगीर्णान्नस्य शीघ्रपाकार्थं किमप्यौषधं पिबति तथैव पृथुर्भगवद्धाम्नि साक्षात्सेवाप्राप्त्यर्थमत्युत्कण्ठः कालविलम्बासहिष्णुः सोपाधिध्वंसनार्थं ब्रह्मज्ञानमङ्गीचकारेत्याह-निशितेनातितीक्ष्णेन येन ज्ञानेन निजजीवकोशं सोपाधिं चिच्छेद कीदृशं संशयपदं भक्त्याद्दृष्टसाक्षाद्भगवच्चरणस्य मे जीवकोशो नास्त्यस्ति वेति तदीयसंदेहास्पदं, वस्तुतस्तस्य जीवकोशो नास्त्येव कृष्णस्य पूर्वदेहकथाश्रयमिति "उभावपि च भद्रं ते उत्तमश्लोकविग्रहौ" इत्युक्तेः पृथुदेहस्य भगवद्विग्रहत्वात् । तदपि पृथोस्तस्य योगेन देहत्यागचिकीर्षा तु भक्तिमहिम्ना स्वस्मिन्प्राकृतत्वमननात् देहपातश्रवणं च बहिर्मुखमतोत्थानाभावार्थं भगवदवताराणामिवान्येषां भगवद्भक्तानामिव च माययैव प्रत्यायितं, भगवत्सु श्रीरामस्य भक्तेषु श्रीध्रुवस्य देहपाताभाव एव, तेषां देहपाताभावोपलक्षणार्थो ज्ञेय इति तु भक्तान्प्रति सिद्धान्तो दर्शितो ज्ञेयः ॥ ११ ॥ ❀ ❀ अन्यदाह-किंचेति । अत एवाधिगतात्मगतित्वादेव । इत्यर्थ इति । स्वराडिव निपानखनित्रमिन्द्र इति न्यायेन धान्यपलालन्यायेन वेति भावः । प्रमत्तो यथा प्राप्तं वस्तु सुन्दरमपि त्यजति तद्वत्स्यात् । इत्यर्थ इति । 'आत्यन्तिकं न गणयंत्यपि ते प्रसादम्' इत्याद्युक्तेः । कथाया रसज्ञैर्मोक्षमोऽपि नाद्रियते कुतः सिद्धय इति भावः । अत्रायमाशयः-शुद्धाया भक्तेः फलं द्विविधम् अनतुसंहितमननुसंहितञ्च । तत्रानुसंहितं प्रेमभक्तिरेव अननुसंहितं ज्ञानसिद्ध्यादि । तत्र च कस्यचिद्भक्तस्य स्वतः प्राप्त एव तत्र तत्र यद्यादित्सा स्यात्तदा शुद्धाया भक्तेः संकोचः स्यात् । तदुक्तमेकादशे-'अन्तरायान्वदन्त्येतान्' इति । किञ्च-तत्तत्त्यागसामर्थ्यं च शुद्धभक्त्यभ्यासबलेनैव स्यादित्याह-तावदिति चक्रवर्ती ॥ १२ ॥ ❀ ❀ किञ्च तासु सिद्धिषु मध्ये स्वच्छन्दमृत्युनाम्नीं सिद्धिं स्वयमुपस्थितामालक्ष्य शीघ्रमेव भगवत्पार्श्वं जिगमिषोस्तस्य पृथोर्विद्याया इव तस्या अपि र्गोऽजनिष्ट तदैव तया महाकर्मठपुरोधसेव देहत्यागप्रकारं शिक्ष्यन्त्या पृथुः स्वेच्छया सुखेन देहं त्यक्तुमारेभे इत्याह-एवमिति । वीरप्रवर इति । देहमेवमधुनैव त्यक्त्वा शुद्धचिन्मयाकारः सन्सम्प्रत्येव वैकुण्ठं गत्वा भगवच्चरणौ परिचराणीति जातमहोत्साह इत्यर्थः । आत्मानं मन आत्मनि पार्षदरूपे देहे अत एव ब्रह्मभूतः शुद्धचिद्रूपः सन् ॥ १३ ॥ ❀ ❀ मूलाधारचक्रात् ऊर्ध्वं स्वाधिष्ठानं नयन् ताभ्यां मणिपूरकचक्रे हृत् अनाहतचक्रम् । उरः कण्ठाधो विशुद्धिचक्रं, कण्ठं तस्यैव चक्रस्याग्रदेशः, शीर्षं भ्रूमध्यमाज्ञाचक्रं तस्मिन् ॥ १४ ॥ ❀ ❀ पाठान्तरे उत्सर्पयन्नसून्मूर्ध्नीति पाठे वायुं देहारंभकं वायौ समष्टिवायौ । एवमन्यान्यपि देहारंभकभूतचतुष्टयानि समष्टिभूतेषु विलापितवान् । कायं कायस्थिता पृथ्वी । यद्यपि कायं पांचभौतिकमेव तथापि पार्थिवांशाधिक्यात्कायशब्दः पृथ्वीपर एव वैशेष्यात्तद्वाद इति न्यायात् ॥ १५ ॥ ❀ ❀ यथास्थानं यस्य यत उत्पत्तिस्तस्य तत्र स्थान एव लयं संभावयेदित्यर्थः ॥ १६ ॥

### श्रीमद्वीरराघवव्याख्या

सनत्कुमारो यमुत्कृष्टमाध्यात्मिकं योगमाह तेनैव योगेन पुरुषर्षभः पृथुः पुरुषं परमपुरुषमभजत् ॥ ९ ॥ ❀ ❀ भगवद्धर्मिणः निवृत्तधर्मेण श्रद्धया यततः यत्नं कुर्वतः साधोः पृथोः भगवति पूर्णषाड्गुण्ये ब्रह्मणि अनन्यविषया अव्यभिचारिणी भक्तिरभवत् ॥ १० ॥ ❀ ❀ भगवत्कर्मणा परिचर्यया शुद्धसत्त्वात्मनः शुद्धसत्त्वमनसः तस्य भगवतः संस्मरणं पूर्वोत्तमभक्तिः तस्यानुपूर्तिः परिपूर्णता तया जातं यत् परज्ञानं विरक्तिश्चोदभूत्, कीदृशं ज्ञानं येन निशितेन ज्ञानेन संशयपदं संशयस्थानं निश्चेतुमशक्यस्वरूपं जीवकोशं प्रकृतितत्त्वं चिच्छेद स्वस्मिन्नसम्बद्धमकरोत्तादृशं ज्ञानमभूदित्यर्थः ॥ ११ ॥ ❀ ❀ छिन्नान्यधीः छिन्नप्रकृतिधीः देहात्मबुद्धिरहितः अधिगता आत्मगतिरात्मस्वरूपमध्यात्मं येन अत एव निरीहः निर्व्यापारः येन वयुनेन ज्ञानेन इदं प्रकृतिसम्बन्धमच्छिनत्तदपि ज्ञानं तत्यजे तत्याज । अनित्यं जडं शरीरमनुसन्धाय तदन्योऽस्मीति हि विवेकज्ञानमुदेति । तत्र शरीरमपि प्रतिसम्बन्धितया बुद्धिस्थं स्यात् योगकाष्ठायां ब्रह्मात्मनि साक्षात्कृते देहप्रतिसम्बन्धितया ज्ञानाभावात्तत्यज इत्युक्तम् न हि केवलं घट इत्यनुभवे घटान्य इति प्रतिसम्बन्धितया ज्ञानमनुवर्त्तते तद्वदित्यर्थः । एवमेकाग्रतायां हेतुमाह तावदिति । भगवत्कथासु रतिं यावन्न करोति तावद्योगगतिभिरप्रमत्तो न भवति अश्रुतभगवत्कथानां प्रमादः स्यादेव, अस्य भगवत्कथारतित्वान्न प्रमाद इत्यर्थः ॥ १२ ॥ ❀ ❀ स वीरश्रेष्ठः पृथुः आत्मानमात्मनि परमात्मनि संयोज्य समर्प्य स्वतः सिद्धमपृथक्सिद्धसंबन्धमनुसंधायेत्यर्थः । आविर्भूतगुणाष्टकतया ब्रह्मप्रकारं प्राप्तः अभ्युपगतप्रारब्धावसानकाले स्वशरीरं तत्याज । ब्रह्मभावप्राप्तेः कलेवरानन्तर्भाविंत्वेऽपि सिद्धवदभिप्रायकृतः पूर्वकालनिर्देशः ॥ १३ ॥ ❀ ❀ कलेवरत्यागपूर्वकब्रह्मभावप्राप्तिप्रकारमेवोपपादयति सम्पीड्येति । गुल्फाभ्यां पायुं गुदं सम्पीड्य सन्निरुध्य मूलाधाराद्वायुं शनैरुत्सारयन् ऊर्ध्वं नयन् नाभ्यामवस्थाप्य ततः हृदयादिषु कोष्ठेषु स्थानेषु अवस्थाप्य-हृदयादीनां

द्वन्द्वैक्यं प्राण्यङ्गत्वात्–तत्र शीर्षं भ्रूमध्यं 'भ्रुवोर्मध्ये प्राणमावेश्य सम्यगि'ति श्रुतेः ॥ १४ ॥ ❀ ❀ तं च ततः मूर्ध्नि ब्रह्मरन्ध्रे उत्सर्पयन् ऊर्ध्वं नयन् क्रमेण ब्रह्मरन्ध्रे चावेश्य निरस्पृहः अणिमाद्यैश्वर्यकैवल्यादिषु स्पृहारहितः, यद्यपेक्षा स्यात् योगिनस्तदैश्वर्यादिकमपि स्यात् इति स्पृहा निषिध्यते, वायुं स्वदेहस्थं वायौ महाभूते कायं देहरूपपृथिवीं क्षितौ महाभूते एवमग्रेऽपि अयूयुजत् लीनमनुसंहितवान् ॥ १५ ॥ ❀ ❀ खानि इन्द्रियाधिष्ठानानि देहविवराणि द्रवं देहस्थं जलं तोये महाभूते यथास्थानं यथाकारणं विभागशः असङ्करेण, एवं देहस्थभूतांशानां महाभूतसमष्टितयानुसन्धानमुक्तम्। अथ पृथिव्यादितत्त्वानामुत्पत्तिक्रमेण लयानुसन्धानमुच्यते–क्षितिं भूतमम्भसि महाभूते अयूयुजदित्यनुषङ्गः। तत् अम्भः महातेजसि अदस्तेजः वायौ अमुं नभस्याकाशे ॥ १६ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

योगमुपासनोपायम् ॥ ९ ॥ ❀ ❀ भक्तिः प्रेमपूर्वं भजनं अनन्यविषया भगवदेकविषया ॥ १० ॥ ❀ ❀ भक्तेः फलमाह–तस्येति। येन ज्ञानेन संशयविपर्ययज्ञानस्थानं निजत्वेनाभिमतं जीवकोशं बाह्यान्तःकरणं लिङ्गशरीरं वा चिच्छेद छिनत्ति तादृशं भगवतो ज्ञानं तस्य पृथोरभूदित्यन्वयः। तस्य हरेरनुस्मरणं निरन्तरध्यानं तत्पूर्वयानया भक्त्या परिशुद्धकर्मा सत्त्वगुणयुक्त आत्मा मनो यस्य स तथा तस्य अभूदित्यनेन भू सत्तायामिति धातोः सत एव ज्ञानस्याविर्भाव उच्यते। न तु प्रागसतः तस्य ज्ञानित्वात् ज्ञानिनो ज्ञानस्याविर्भावः। न हिं पुरोवर्ती घटः पटो वा आविरभवदिति व्यवहारो दृष्टचर इति चेन्न, बलवत्प्रतिबन्धकेन तिरोभावसंभवात्तदुक्तम्–"आविर्भावतिरोभावौ ज्ञानस्य ज्ञानिनोऽपि तु। अपेक्ष्याज्ञस्तथा ज्ञानमुत्पन्नमिति चोच्यते ॥" ज्ञानिनोऽपि ज्ञानस्याविर्भावतिरोभावावपेक्ष्यासावज्ञस्तथा तस्य ज्ञानं समुत्पन्नमिति व्यवहारो युज्यत इत्यर्थः ॥ ११ ॥ ❀ ❀ उत्पन्नज्ञानस्य स्थितिमाह छिन्नेति। येन वयुनेनेदमच्छिनत्तज्ज्ञानं तत्यज इत्यन्वयः। अन्यथा ज्ञानसम्भव इदमुक्तं कथं युक्तं स्यादित्यत उक्तं छिन्नान्यधीरिति। निरस्तान्यथाज्ञानः स्वरूपज्ञानाभावे कथमिदमित्यत उक्तम् अधिगतात्मगतिरिति। आत्मशब्देन स्वस्वरूपं परमात्मा चोच्यते अधिगतेऽपरोक्षीकृते परमात्मा स्वस्वरूपं च येन स तथा अत एव तत्साधर्म्यमाह निरीह इति। ज्ञानोत्तरकालीनप्रवृत्तिमान्न तु पूर्ववद्विधिवद्ध इत्यर्थः। अत्र ज्ञानत्यागो नाम निर्लेपेन स्वरूपज्ञानेन करतलामलकवत्प्रत्यक्षत्वेन वृत्तिज्ञानस्य बाह्यान्तःकरणजन्यस्य भेदनिरीक्षणं मद्भिन्नमिदं नश्वरमिति दर्शनं न त्वन्यः। तदुक्तम्–"अपरोक्षतया वृत्तिज्ञानभेदनिरीक्षणम्। स्वरूपज्ञानसंस्थित्या ज्ञानत्याग उदीर्यते ॥" इति। अयं विशेषोऽपि तत्यज इति व्यत्यासेन सूचित इति कथमस्य स्वरूपज्ञानमस्तीति ज्ञायत इति तल्लक्षयति तावदिति। यावद्गदाग्रजस्य श्रीनारायणस्य कथासु रतिं न कुर्यात्तावद्यतिर्निर्जितेन्द्रियग्रामोऽपि पुरुषो योगगतिभिः प्राणायामादिलक्षणैर्योगसाधनैरप्रयत्नोऽनाविर्भूतस्वरूपज्ञानो भवति। अनेन भगवत्कथारतिः स्वरूपज्ञानेनेति लक्ष्यते। तदप्युक्तम्–'स्वरूपज्ञानतः सम्यग्रतिर्विष्णुकथासु चे'ति। यद्वा योगादुत्पन्नैर्गतिशब्दवाच्यैर्ज्ञानैः स्वरूपविषयैर्भगवत्तत्त्वं ब्रह्मादितारतम्यं पञ्चविधभेदं जीवस्वरूपमित्यादिविषयबाहुल्यात् स्वरूपज्ञानस्य बाहुल्यं प्रयत्नो न भवति ॥ १२ ॥ ❀ ❀ उपसंहरत्येवमिति। ब्रह्मभूतः ब्रह्मणि भूतः ब्रह्माधारतया स्थित इत्यन्वयः। काले प्रारब्धकर्मक्षयसमये तत्याजेत्यनेन स्वकलेवरमेवात्याक्षीन्न तु स्वरूपज्ञानमित्यवगन्तव्यम् ॥ १३ ॥ ❀ ❀ स्वच्छन्दमृत्यूनां योगिनां देहत्यागप्रकारं दर्शयितुमस्योत्क्रान्तिप्रकारमाह संपीड्येति। वज्रासनस्थितो वायुमुत्सर्पयन्नूर्ध्वं नयन्मूलाधारान्नाभ्यां हृद्युरसि कण्ठे च शीर्षणि भ्रूमध्ये चेत्येषु कोष्ठेषु स्थानविशेषेषु शनैरवस्थाप्य ॥ १४ ॥ ❀ ❀ अनेन क्रमेणासून् पञ्च वृत्त्या बहुवचनं मूर्ध्नि शिरोमध्यप्रदेशे आवेश्य निस्पृहः स्थिरचित्तस्तिष्ठेदित्यन्वयः। देहे स्थितानां पञ्चभूतानां स्वस्वकारणेषु लयोऽनेनोच्यते। देहे वायुभागं तत्कारणेऽधिदैववायावयूयुजत्। अध्यात्मवायोरधिदैववायुः कारणम्। तत्रैव लय इत्यचिन्तयदित्यन्वयः। तदुक्तम् 'अस्येदं कारणमिति ज्ञानमेव विलापनम्। समाधिकाले विज्ञेयं देहादेर्दर्शनात्पुनरि'ति। एवमेवोत्तरत्रापि ज्ञातव्यम् ॥ १५ ॥ ❀ ❀ छिद्रबहुत्वापेक्षया खानीति बहुवचनं, ग्रन्थान्तरोक्तेर्यत्तदपेक्षया विभागश इति इदानीं पञ्चभूतानां स्वकारणेषु लयध्यानमाह क्षितिमिति ॥ १६ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

कर्मवद् ज्ञानमपि भगवदाराधनायैवानुकृतमित्याह सनदिति ॥ ९ ॥ ❀ ❀ अत एव तत्फलं तथैव जातमित्याह–भगवदिति। सदेत्यत्र तदेति कचित् ॥ १० ॥ ❀ ❀ ततस्तादृशभक्त्यङ्गे ज्ञानवैराग्ये व्यञ्ज्योपाधिपरित्यागश्च दर्शित इत्याह तस्यानयेति। पूर्ण्येत्यत्र पूर्वेति चित्सुखः ॥ ११ ॥ ❀ ❀ ततश्च छिन्ना अन्यत्र उपाधिरूपे धीर्दृष्टिर्यस्य अधिगता प्रकटिता आत्मनः पार्षदरूपस्यागतिर्ज्ञानं येन तथाभूतः सन् अत एव निरीहः प्राप्स्यन्तरेच्छाशून्यः सन् येन वयुनेनेदं संशयपदमच्छिनत् तत् तत्यजे। न चानुष्ठितो ज्ञानयोगः स्वगतिदानेन तस्य भक्तिगतिं विहन्तुं शक्नोति, यतः यावदिति। अत्र तु स्वाभाविक्येव च तत्कथारतिरित्यपि नासौ प्रभवेदिति भावः। अत्र वैकुण्ठगतिस्तु न सिद्ध्यन्तरवदिति टीकाभिप्रायश्च ॥ १२–१३ ॥ ❀ ❀ एवं भावनागतं त्यागमुक्त्वा साक्षादप्याह–एवमिति। धीरेति कचित्। आत्मानं मन आत्मनि पार्षदरूपे अत एव ब्रह्मभूतः शुद्धचिद्रूपः सन् काले भगवतस्तादृशेच्छावसरे दृढमपुनरावृत्तिर्यथा स्यात्तथा स्वं स्वीकृतं कलेवरमुपाधिं तत्याज संपीड्येति द्विकम्। उत्सर्पन्निति चित्सुखः ॥ १४–१६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ततश्च "हरिभक्तिमहादेव्याः सर्व्वा मुक्त्यादिसिद्धयः। भुक्तयश्चाद्भुतास्तस्याश्चेटिकावदनुव्रताः" इति नारदपञ्चरात्रोक्तेस्तस्यानन्यभक्तिमतोऽनाकाङ्क्षतोऽपि स्वत एव स्वयं ब्रह्मविद्या तथा अणिमाद्यष्टादशसिद्धयश्च मूर्त्तिमत्य एवागत्य वयं भगवता प्रेषितास्त्वदर्थमेव अस्मानङ्गीकुर्विति वदन्त्यस्तस्याभिमुखे प्रादुरभवन्नित्याह तस्येति द्वाभ्याम्। परिकर्म्मणा परिचर्य्यया शुद्धसत्त्व एवात्मा मनो यस्य तस्य पृथोरनया भक्त्या ज्ञानं ब्रह्मविद्याख्यं विरक्तियुक्तमभूत् स्वत एव प्रादुर्बभूव। भक्त्या कीदृश्या भगवदनुक्षणस्मरणेनानुपूर्तिर्यस्यास्तया। यद्यपि शुद्धभक्ताश्चातका इव भक्तेरेव माधुर्यास्वादिनः, स्वयं प्राप्तामपि ब्रह्मविद्यां नाङ्गीकुर्वन्ति, तत्कार्य्यभूतो लिङ्गदेहध्वंसो भक्त्यैव विनानुसन्धानेनापि भवेत्। यदुक्तम् 'जरयत्याशु या कोषं निगीर्णमनलो यथे'ति। तदपि यथा कश्चित् जाठरानलेन जरयिष्यमाणस्यापि निगीर्णान्नस्य शीघ्रपाकार्थं किमप्यौषधं पिबति तथैव पृथुर्भगवद्धाम्नि साक्षात्सेवाप्राप्त्यर्थमत्युत्कण्ठः कालविलम्बासहिष्णुः सोपाधिध्वंसनार्थं ब्रह्मज्ञानमङ्गीचकारेत्याह। निशितेनातितीक्ष्णेन येन ज्ञानेन निजजीवकोषं सोपाधिं चिच्छेद। कीदृशं संशयपदं भक्त्यादृष्टसाक्षाद्भगवच्चरणस्य मे जीवकोषो नास्त्यस्ति वेति तदीयसन्देहास्पदम्। वस्तुतस्तु जीवकोषो नास्त्येव, कृष्णस्य पूर्व्वदेहकथाश्रयमिति 'उभावपि च भद्रन्त उत्तमः श्लोकविग्रहावि'त्याद्युक्तेः। पृथुदेहस्य भगवद्विग्रहत्वात्। तदपि पृथोस्तस्य योगेन स्वदेहत्यागचिकीर्षा तु भक्तिमहिम्ना स्वस्मिन् प्राकृतत्वमननात् देहपातश्रवणन्तु बहिर्मुखमतोत्खाताभावार्थं भगवदवताराणामिव अन्येषां भगवद्भक्तानामिव च माययैव प्रत्यायितं भगवत्सु श्रीरामस्य भक्तेषु श्रीध्रुवस्य देहपाताभाव एव। तेषां देहपाताभावोपलक्षणार्थो ज्ञेय इति तु भक्तान् प्रति सिद्धान्तो दर्शितो ज्ञेयः॥ ११॥ ❀ ❀ ततश्च छिन्ना अन्यधीर्देहात्मबुद्धिर्यस्य सः। अधिगतात्मगतिः अनुभूतपरमात्मस्वरूपः। निरीहः प्राप्तासु सिद्धिषु निस्पृहः। ननु कथं निस्पृहत्वं विद्याङ्गीकारादित्यत आह। येन वयुनेन ज्ञानेन इदं लिङ्गशरीरमच्छिनच्चिच्छेद तत्तत्याज तत्यजे। तावत्प्रयोजनार्थमेव तदङ्गीकारादनन्तरञ्च तज्ज्ञानं तत्याजैवेति वस्तुतो निस्पृहत्वमेवेत्यर्थः। अयमत्राशयः—शुद्धाया भक्तेः फलं द्विविधमनुसंहितमननुसंहितञ्च। तत्रानुसंहितं प्रेमभक्तिरेव, अननुसंहितं ज्ञानसिद्ध्यादि। तत्र च कस्यचिद्भक्तस्य स्वतः प्राप्त एव तत्र तत्र यद्यादित्सा स्यात्तदा शुद्धाया भक्तेः सङ्कोचः स्यात्। यदुक्तमेकादशे 'अन्तरायान् वदन्त्येतानि'ति। किञ्च तत्तत्त्यागसामर्थ्यञ्च शुद्धभक्त्यभ्यास्यादित्याह तावदिति। तस्य श्रीकृष्णकथारतत्वान्न तासु लोभो जात इति श्रीस्वामिचरणाः॥ १२॥ ❀ ❀ किञ्च तासु सिद्धिषु मध्ये स्वच्छन्दमृत्युनाम्नीं सिद्धिं स्वयमुपस्थितामालक्ष्य शीघ्रमेव भगवत्पार्श्वं जिगमिषोस्तस्य पृथोर्विद्याया इव तस्या अपि यदैवाङ्गीचिकीर्षा अजनिष्ट तदैव तया महाकर्मठपुरोधसेव देहत्यागप्रकारं शिक्षयन्त्या पृथुः स्वेच्छयैव सुखेन देहं त्यक्तुमारेभे इत्याह एवमिति षड्भिः। वीरप्रवर इति, देहमेवाधुनैव त्यक्त्वा शुद्धचिन्मयाकारः सन् संप्रत्येव वैकुण्ठं गत्वा भगवच्चरणौ परिचराणीति जातमहोत्साह इत्यर्थः। आत्मानं मनः आत्मनि पार्षदरूपे देहे, अत एव ब्रह्मभूतः शुद्धचिद्रूपः सन्॥ १३॥ ❀ ❀ देहत्यागे व्यापारान् स्वयं स्फुरितानाह सम्पीड्येति मुक्तासनं सूचितम्—"सम्पीड्य सीवनीं सूक्ष्मां गुल्फेनैव तु मध्यतः। सव्ये दक्षिणगुल्फेन मुक्तासनमितीरितमि"ति। मूलाधारचक्राद्वायुमुत्सारयन् ऊर्ध्वं स्वाधिष्ठानचक्रं नयन् नाभ्यां मणिपूरकचक्रे अवस्थाप्य ततः कोष्ठेष्ववस्थाप्य अयूयुजत् इत्युत्तरेणान्वयः। कोष्ठान्येवाह हृत् अनाहतचक्रम्। उरः कण्ठाधो विशुद्धिचक्रम्। कण्ठस्तस्यैव चक्रस्याग्रदेशः शीर्षं भ्रूमध्याज्ञाचक्रं तस्मिन्॥ १४॥ ❀ ❀ तं वायुमुत्सर्पयन्। असूनिति पाठे प्राणान्। मूर्ध्नि ब्रह्मरन्ध्रे आवेश्य वायुं देहारम्भकं तं समष्टिवायौ अयूयुजत् एकीकृतवान्। एवमन्यान्यपि देहारम्भकभूतचतुष्टयानि समष्टिभूतेषु विलापितवानित्याह—कायं कायस्थिता क्षितिः क्षितौ एवं कायस्थिततेजः खानि कायस्थितच्छिद्राणि द्रवं कायस्थितं जलम्, तदेवं देहं प्रविलाप्य अद्वितीयात्मप्रतिपत्त्यर्थं महाभूतानामपि लयं भावयामासेत्याह क्षितिमम्भसीत्यादि। तत् अम्भः अदः तेजः अमुं वायुं मनसो देवतानां चेन्द्रियेषु लयस्तु तानि विना मनआदयः स्वरूपं न प्राप्नुवन्ति, तत्तद्ग्राह्यरूपापि मात्रालम्भनत्वादिति भावनामयो ज्ञेयः। अमूनि तन्मात्राणि॥ १५-१६॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

आध्यात्मिकयोगं जीवस्य भगवदात्मकत्वभावनायोगम्॥ ९॥ ❀ ❀ भगवद्धर्मिणः भगवत्प्रीणनार्थतपआदिधर्मवता अनन्यविषया भगवदितरविषयशून्या॥ १०॥ ❀ ❀ तस्य पृथोर्भगवतः परिकर्मणा परिचर्य्यया शुद्धसत्त्वः पवित्रान्तःकरणः आत्मा यस्य तथाभूतस्य विरक्तिमत् ऐहिकामुष्मिकपदार्थेभ्यो यद्वैराग्यं तद्युक्तं भगवत्स्वरूपगुणादिविषयकं ज्ञानमभूत्, कीदृशं तस्य भगवतोऽनुस्मरणेन अनुपूर्त्या अनुसमृद्धया तया भागवद्भक्त्या शितेन येन निजं जीवकोशं जीवावरकमहङ्कारं देहादौ अहम्ममाभिमानरूपं चिच्छेद। तत् कथम्भूतं निजजीवकोशम्, संशयानामुपास्योपासककृपाफलभक्तिरसविरोधिपदार्थविषयकाणां पदमाश्रयम्॥ ११॥ ❀ ❀ अहङ्कारनाशानन्तरं तस्य कर्मजन्यलोकस्पृहाशून्यत्वमाह छिन्नान्यधीरिति। अधिगता आत्मनो जीवपरयोर्गतिर्याथात्म्यं येन सः, अत एव छिन्नान्यधीः देहे अहमिति गेहादौ ममेति च धीरहङ्कारो येन स निरीहोऽभवत्। कर्मजन्येषु लोकेषु निःस्पृहो भवति। ननु येन ज्ञानेनाहङ्कारं जनश्छिनत्ति ततोऽहं ज्ञानवानित्यहङ्कारः पुनर्भवेदत्राह। येन वयुनेनेदं निजजीवकोशम् अच्छिनत् तत् तत्यजे गुरुमूर्तिनान्तर्यामिमूर्तिना च श्रीकृष्णेनैवेदं ज्ञानं "ददामि

बुद्धियोगं तं येन मामुपयान्ति ते" इति श्रीमुखोक्तेः, अतः श्रीकृष्णवानित्यर्थः। ननु केचित् यतयोऽपि कर्मजन्येषु लोकेषु भ्रमन्ति तत्र किं कारणमत्राह। यावत् गदाग्रजकथासु रतिं न कुर्यात् श्रीकृष्णभक्तो न भवेदित्यर्थः। तावन् यतिरपि योगगतिभिः कर्मयोगगतिभिः केवलक्षेत्रज्ञध्यानलक्षणयोगोत्पन्नाभिः सिद्धिभिर्वा अप्रमत्तो न भवति, किन्तु ताभिः प्रमत्तः कर्मजन्येषु लोकेषु भ्रमतीत्यर्थः॥ १२॥ ❀ ❀ तदनन्तरं पृथुः किं चकारेत्याकांक्षायामाह एवमिति। आत्मनि ब्रह्मणि श्रीकृष्णे आत्मानं दृढं संयोज्य स्वं कलेवरं तत्याज, तदनन्तरं ब्रह्मभूतो ब्रह्मसाधर्म्यं प्राप्त इत्यन्वयः॥ १३॥ ❀ ❀ कलेवरत्यागप्रकार-वर्णनपूर्वकं ब्रह्मसाम्यापन्नत्वं श्रीपृथोर्वर्णयति सम्पीड्येति सार्द्धैः पञ्चभिः। वायुं गुदं गुल्फाभ्यां सम्पीड्य निरुध्य वायुं मूलाधाराच्छनैरुत्सारयन् उन्नयन् नाभ्यामवस्थाप्य तदनन्तरं हृदि उरसि कण्ठे शीर्षे भ्रूमध्यं तस्मिन्-हृदादीनां प्राण्यङ्गत्वात् द्वन्द्वैक्यम्-एवं क्रमेण हृदादिषु कोष्ठेष्ववस्थाप्य अयूयुजदित्यग्रिमेण सम्बन्धः॥ १४॥ ❀ ❀ इत्थमसून् प्राणान् उत्सर्पयन् क्रमेण मूर्ध्नि ब्रह्मरन्ध्रे आवेश्य देहावयवान् वाय्वादीन् महाभूतेषु वाय्वादिषु यथास्थानं विभागशोऽयूयुजत्। तत्र कायं कायावयवं कठिनांशम्॥ १५॥ ❀ ❀ खानि देहगतानि छिद्राणि॥ १६॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

अत एव पुरुषर्षभः पुरुषश्रेष्ठः पृथुः सनत्कुमारो यदाध्यात्मिकं आत्मन्यधिकृतं योगं परमात्मज्ञानापेक्षया श्रेष्ठं यस्मिन्निदमित्यादिनाह-तेनैव प्रकारेण पुरुषं पुरुषोत्तमं भगवन्तमभजदित्यन्वयः। महतां सिद्धानामुपदेशः सफलो भवत्येवेति ज्ञापयितुं तं विशिनष्टि-भगवानिति॥ ९॥ ❀ ❀ भगवद्धर्मिणः भगवति सर्वक्रियासमर्पणेन तदाराधनपरस्य साधोः विशुद्धान्तःकरणत्वेन निष्कपटस्य श्रद्धया विश्वासेन सदा यततः प्रयत्नेन भगवन्तं सेवमानस्य तस्मिन् भगवति निरतिशयैश्वर्यादि-गुणवति ब्रह्मणि व्यापके अनन्यविषया अव्यभिचारिणी भक्तिरभवदित्यन्वयः॥ १०॥ ❀ ❀ सर्वपुरुषार्थहेतुत्वेन भगवद्भक्तेः कल्पतरुस्वभावत्वात्तथा तस्य ज्ञानवैराग्यादिकमेवोत्पन्नमित्याह-तस्येति। तस्य पृथोर्विरक्तिमत् वैराग्यसहितं ज्ञानमभूदित्यन्वयः। तस्य ज्ञानस्य माहात्म्यं दर्शयति-येनेति। येन ज्ञानेन स निजजीवकोशं निजस्य स्वरूपभूतस्य जीवस्य कोशमावरकं हृदयग्रन्थिं संशयानामसम्भावनाविपरीतभावनादीनां पदमाश्रयं तद्द्वारा संसारकारणं चिच्छेद। नन्वस्य ज्ञानस्य संसारबीजहृदयग्रन्थ्युच्छेदे कथं सामर्थ्यमित्याशङ्क्य भगवद्भक्तिजन्यत्वादित्याशयेनाह-तदनुसंस्मरणेति। तस्य भगवतोऽनु निरन्तरं सम्यक् माहात्म्यज्ञान-पूर्वकं स्मरणेनानुपूर्तिः निरन्तरं वृद्धिर्यस्यास्तया अनया भक्त्या निशितेन तीक्ष्णेन योगेनेति सम्बन्धः। नन्वेवमतिदुर्लभं ज्ञानं तस्य कथमभूदित्याशङ्क्य भगवत्सेवातः तदनुग्रहादित्यभिप्रेत्य तं विशिनष्टि-भगवत इति। भगवतः परिकर्म सेवा तेन शुद्धसत्त्वे आत्माऽन्तःकरणं यस्य तस्येत्यर्थः॥ ११॥ ❀ ❀ ज्ञानित्वमेवानुवदंस्तत्त्यागेन तस्य कृतार्थतामाह-छिन्नेति, छिन्ना निवृत्ता अन्यधीर्भेदबुद्धिर्देहात्मबुद्धिर्वा यस्य स तथा। तत्र हेतुमाह-अधीति, अधिगता ज्ञाता आत्मनो गतिस्तत्त्वं येन स तथा। भेदास्फुरणादेव निरीहः शरीरयात्रार्थं निश्चेष्टो निस्स्पृहो वा। प्राप्तासु अप्यणिमादियोगसिद्धिषु निस्स्पृह इति वा। एवम्भूतः सन् येन वयुनेन ज्ञानेनेदं स्वावरकं हृदयमच्छिनत्तदपि तत्यजे तत्प्रयत्नमपि त्यक्तवानित्यर्थः। युक्तं चैतदित्याह-तावदिति। गदस्य रोहिणीपुत्रस्य अग्रजः श्रीकृष्णस्तस्य कथासु यावत् रतिं न कुर्यात् कथाश्रवणाभ्यासेन बन्धमोक्षहेतुविवेकादिपूर्वकं तस्मिन् भक्तिं न सम्पादयेत्तावद्यतिर्योगगतिभिरणिमादिसिद्धिभिरप्रमत्तोऽनासक्तो न भवति किन्तु आसक्तो भवत्येव। अतस्तावत्पर्यन्तं प्रयत्नो विधेयस्तन्मध्ये प्रयत्नशैथिल्ये विषयासक्त्या संसारे पातः स्यादतो राज्ञा युक्तमनुष्ठितमित्यर्थः॥ १२॥ ❀ ❀ एवं स पृथुर्ब्रह्मभूतो ब्रह्मात्मैक्यानुसन्धानपरो दृढं यथा भवति तथाऽन्यानुसन्धानरहितः काले देहत्यागावसरे प्राप्ते आत्मानं मनः आत्मनि भगवति वासुदेवे संयोज्य स्थिरीकृत्य स्वं कलेवरं देहं तत्याजेत्यन्वयः। यथा देहात्मबुद्धीनां देहत्यागावसरे मोहो भवति तथा तस्य नाभूत्किन्तु प्रत्युतोत्साह एवेति सूचयन् विशिनष्टि-वीरप्रवर इति॥ १३॥ ❀ ❀ देहत्यागप्रकारमेव दर्शयति-सम्पीड्येति सार्द्धपञ्चभिः। पार्ष्णिभ्यां पायुं गुदं सम्पीड्य तद्द्वारा वायुर्मा निस्सरत्विति तस्य मुद्रणं कृत्वा वायुं प्राणं मूलाधारा-च्छनैरुत्सारयन् ऊर्ध्वं नयन् कोष्ठेषु प्राणस्थानेष्ववस्थाप्य निस्स्पृहः संसारविषयभोगेच्छारहितस्तं वायुं प्राणं वायौ महाभूत-समष्ट्यात्मके अयूयुजत् तयोरभेदं भावयामासेति द्वयोरन्वयः। सम्पीड्येत्यनेन मुक्तासनं सूचितम्। तदुक्तं 'सम्पीड्य सीवनीं सूक्ष्मां गुल्फेनैव तु मध्यतः। सव्ये दक्षिणगुल्फेन मुक्तासनमितीरितम्' इति। कोष्ठान्येव दर्शयति-नाभ्यामित्यादिना। हृदादीनां द्वन्द्वैक्यम्। नाभ्यां मणिपूरके चक्रेऽवस्थाप्य ततो हृदि अनाहतचक्रे तत उरसि कण्ठस्याधोदेशे विशुद्धचक्रे ततः कण्ठे तस्यैव चक्रस्याग्रदेशे ततश्च शीर्षणि भ्रुवोर्मध्ये आज्ञाचक्रेऽवस्थाप्येति सर्वत्रानुषङ्गः॥ १४॥ ❀ ❀ तं प्राणमसूनिति पाठे प्राणानेवमुत्सर्पन्नूर्ध्वं नयन् क्रमेण मूर्ध्नि ब्रह्मरन्ध्रे आवेश्य ततो देहारम्भकपञ्चमहाभूतानि समष्टिभूतेषु अयूयुजत्, व्यष्टीनां समष्टीनां चाभेदं भावयामासेत्यर्थः। वायुं शरीरगतं वायौ। कायं पार्थिवं भागं क्षितौ पृथिव्याम्। शरीरगतं तेजस्तेजसि॥ १५॥ ❀ ❀ खानीन्द्रियच्छिद्रावच्छिन्नाकाशप्रदेशान् आकाशे। द्रवं शरीरगतं जलांशं तोये। एवं यथास्थानं यथायोग्यं विभागशः पृथक् पृथक् अयूयुजदिति पूर्वस्यैवानुषङ्गः। एवं देहविलयं विभाव्य अद्वितीयात्मप्रतिपत्त्यर्थं महाभूतानामपि विलयं विभावितवानित्याह-क्षितिमिति। क्षितिमम्भस्ययूयुजदित्यस्यैव सर्वत्रानुषङ्गः। तत् अम्भः तेजसि। अदस्तेजो वायौ। अमुं वायुं नभसि॥ १६॥

भाषानुवादः

तब, भगवान् सनत्कुमारने उन्हें जिस परमोत्कृष्ट अध्यात्मयोगकी शिक्षा दी थी, उसीके अनुसार राजा पृथु पुरुषोत्तम श्रीहरिकी आराधना करने लगे ॥ ९ ॥ ❀ ❀ इस तरह भगवत्परायण होकर श्रद्धापूर्वक सदाचारका पालन करते हुए निरन्तर साधन करनेसे परब्रह्म परमात्मामें उनकी अनन्य भक्ति हो गयी ॥ १० ॥ ❀ ❀ इस प्रकार भगवदुपासनासे अन्तः-करण शुद्ध—सात्त्विक हो जानेपर निरन्तर भगवच्चिन्तनके प्रभावसे प्राप्त हुई इस अनन्य भक्तिसे उन्हें वैराग्यसहित ज्ञानकी प्राप्ति हुई और फिर उस तीव्र ज्ञानके द्वारा उन्होंने जीवके उपाधिभूत अहङ्कारको नष्ट कर दिया, जो सब प्रकारके संशयविपर्ययका आश्रय है ॥ ११ ॥ ❀ ❀ इसके पश्चात् देहात्मबुद्धिकी निवृत्ति और परमात्मस्वरूप श्रीकृष्णकी अनुभूति होनेपर अन्य सब प्रकारकी सिद्धि आदिसे भी उदासीन हो जानेके कारण उन्होंने उस तत्त्वज्ञानके लिये भी प्रयत्न करना छोड़ दिया, जिसकी सहायतासे पहले जीवकोशका नाश किया था; क्योंकि जबतक साधकको योगमार्गके द्वारा श्रीकृष्णकथामृतमें अनुराग नहीं होता, तबतक केवल योगसाधनासे उसका मोहजनित प्रमाद दूर नहीं होता—भ्रम नहीं मिटता ॥ १२ ॥ ❀ ❀ फिर जब अन्तकाल उपस्थित हुआ तो वीरवर पृथुने अपने चित्तको दृढ़तापूर्वक परमात्मामें स्थिर कर ब्रह्मभावमें स्थित हो अपना शरीर त्याग दिया ॥ १३ ॥ ❀ ❀ उन्होंने एड़ीसे गुदाके द्वारको रोककर प्राणवायुको धीरे-धीरे मूलाधारसे ऊपरकी ओर उठाते हुए उसे क्रमशः नाभि, हृदय, वक्षःस्थल, कण्ठ और मस्तकमें स्थित किया ॥ १४ ॥ ❀ ❀ फिर उसे और ऊपरकी ओर ले जाते हुए क्रमशः ब्रह्मरन्ध्रमें स्थिर किया। अब उन्हें किसी प्रकारके सांसारिक भोगोंकी लालसा नहीं रही। फिर यथास्थान विभाग करके प्राणवायुको समष्टि वायुमें, पार्थिव शरीरको पृथ्वीमें और शरीरके तेजको समष्टि तेजमें लीन कर दिया ॥ १५ ॥ ❀ ❀ हृदयाकाशादि देहावच्छिन्न आकाशको महाकाशमें और शरीरगत रुधिरादि जलीय अंशको समष्टि जलमें लीन किया। इसी प्रकार फिर पृथ्वीको जलमें, जलको तेजमें, तेजको वायुमें और वायुको आकाशमें लीन किया ॥ १६ ॥

इन्द्रियेषु मनस्तानि तन्मात्रेषु यथोद्भवम्। भूतादिनामून्युत्कृष्य महत्यात्मनि सन्दधे ॥ १७ ॥
तं सर्वगुणविन्यासं जीवे मायामये न्यधात्[1]। तं चानुशयमात्मस्थमसावनुशयी पुमान्।
ज्ञानवैराग्यवीर्येण स्वरूपस्थोऽजहात्प्रभुः ॥ १८ ॥
अर्चिर्नाम महाराज्ञी तत्पत्न्यनुगता वनम्। सुकुमार्यतदर्हा च यत्पद्भ्यां स्पर्शनं भुवः ॥ १९ ॥
अतीव भर्तुर्व्रतधर्मनिष्ठया शुश्रूषया चार्षदेहयात्रया[2]।
नाविन्दतार्तिं परिकर्शितापि सा प्रेयस्करस्पर्शनमाननिर्वृतिः ॥ २० ॥
देहं विपन्नाखिलचेतनादिकं पत्युः पृथिव्या दयितस्य चात्मनः।
आलक्ष्य किञ्चिच्च विलप्य सा सती चितामथारोपयदद्रिसानुनि ॥ २१ ॥
विधाय कृत्यं ह्रदिनीजलाप्लुता[3] दत्त्वोदकं[4] भर्तुरुदारकर्मणः।
नत्वा दिविस्थांस्त्रिदशांस्त्रिः परीत्य विवेश वह्निं ध्यायती भर्तृपादौ[5] ॥ २२ ॥
विलोक्यानुगतां साध्वीं पृथुं वीरवरं पतिम्। तुष्टुवुर्वरदा देवैर्देवपत्न्यः सहस्रशः ॥ २३ ॥
कुर्वत्यः कुसुमासारं तस्मिन्मन्दरसानुनि। नदत्स्वमरतूर्येषु गृणन्ति स्म परस्परम् ॥ २४ ॥

अन्वयः—यथोद्भवम् मनः इन्द्रियेषु तानि तन्मात्रेषु अमूनि भूतादिना उत्क्षिप्य महति आत्मनि संदधे ॥ १७ ॥ ❀ ❀ सर्वगुणविन्यासम् तम् मायामये जीवे न्यधात् च तम् आत्मस्थम् अनुशयम् अनुशयी पुमान् असौ प्रभुः ज्ञानवैराग्यवीर्येण स्वरूपस्थः अजहात् ॥ १८ ॥ ❀ ❀ पद्भ्याम् यत् भुवः स्पर्शनम् अतदर्हा सुकुमारी तत्पत्नी अर्चिः नाम महाराज्ञी वनम् अनुगता ॥ १९ ॥ ❀ ❀ प्रेयस्करस्पर्शनमाननिर्वृतिः सा भर्तुः अतीव व्रतधर्म-निष्ठया शुश्रूषया च आर्षदेहयात्रया परिकर्शिता अपि आर्तिं न अविन्दत ॥ २० ॥ ❀ ❀ सा सती आत्मनः पत्युः पृथिव्याः दयितस्य च देहम् विपन्नाखिलचेतनादिकम् आलक्ष्य च किंचित् विलप्य अथ अद्रिसानुनि चिताम् आरोपयत् ॥ २१ ॥ ❀ ❀ ह्रदिनीजलाप्लुता कृत्यम् विधाय उदारकर्मणः भर्तुः उदकम् दत्त्वा दिविस्थान् त्रिदशान्

---

१. प्रा० पा०—स्थो न्यधात्। २. प्रा० पा०—कर्षितदेह०। ३. प्रा० पा०—जलप्लुता। ४. प्रा० पा०—कृत्वोदकं। ५. प्रा० पा०—पादम्।

नत्वा वह्निम् त्रिः परीत्य भर्तृपादौ ध्यायती विवेश ॥ २२ ॥ ❀ ❀ देवैः वरदाः सहस्रशः देवपत्न्यः वीरवरम् पृथुम् पतिम् अनुगताम् साध्वीम् विलोक्य तुष्टुवुः ॥ २३ ॥ ❀ ❀ तस्मिन् मन्दरसानुनि कुसुमासारम् कुर्वत्यः ताः अमरतुर्येषु नदत्सु परस्परम् गृणन्ति स्म ॥ २४ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

तदेवं तामसाहंकारकार्यस्याकाशपर्यन्तस्य लयमुक्त्वा सात्त्विकराजसाहंकारकार्याणां लयमाह इन्द्रियेष्विति । इन्द्रियेषु मन इति देवानामप्युपलक्षणम् । सविकल्पकज्ञाने मनस इन्द्रियैराकर्षणात्तेषु लयाभिधानं न तु कार्यत्वात् । तदुक्तं गीतासु "इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।" इति । अत्र च इन्द्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतां मन इति च । इन्द्रियेषु नभ इति पाठेऽप्ययमर्थः । भट्टादीनां मते नभश्चाक्षुषं केषांचिन्मानसम् । आनुमानिकत्वमतेऽपीन्द्रियव्यापारोऽस्त्येव । नभोगुणश्च शब्दः श्रोत्रग्राह्योऽत इन्द्रियग्राह्यत्वादिन्द्रियेषु नभो विलापितमिति तानीन्द्रियाणि यथोद्भवमुद्भवो वृत्तिलाभः स च विषयाधीन इति श्रोत्रादीनां विषयेषु शब्दादिषु लयः । यद्वा तन्मात्रकार्याण्येवेन्द्रियाणि मनोऽप्यपंचीकृततन्मात्रकार्यम् । आहंकारिकत्वाभिधानं तदधीनत्वविवक्षयेत्यविरोधः, भूतादिनाहंकारेण प्रागवशिष्टनभःसहितानीन्द्रियाण्युत्कृष्य परतो नीत्वा भूतादौ क्षिप्त्वा तेन सह महत्तत्त्वे संदध इत्यर्थः ॥ १७ ॥ ❀ ❀ सर्वेषां गुणानां कार्याणां विन्यासः स्थितिर्यस्मिंस्तं महान्तं मायामये मायोपाधिप्रधाने जीवे तं चानुशयमुपाधिं यः पूर्वमनुशयी पुमान् जीवोऽसौ पृथुर्ब्रह्मणि स्थितः सन्नजहादित्यर्थः ॥ १८ ॥ ❀ ❀ वनप्रवेशमारभ्य राज्ञीकथामाह अर्चिर्नमेति चतुर्भिः । अनुगतानुजगाम । अतदर्हा तदपि नार्हति या । तत् किम् ? पद्भ्यां भुवः स्पर्शनमिति यत् ॥ १९ ॥ ❀ ❀ भर्तुर्व्रतं यद्भूमिशयनादि तस्मिन् धर्मे या निष्ठा यया ऋषीणामियमार्षी देहयात्रा कंदमूलादिवृत्तिस्तया चार्ति दुःखं न प्राप । तत्र हेतुः । प्रेयसः करेण स्पर्शनं मानश्च ताभ्यां निर्वृतिरानंदो यस्याः ॥ २० ॥ ❀ ❀ पृथिव्याः पत्युः दुहितृत्वं तु तस्या देवतारूपेण । विपन्नं नष्टमखिलं चेतनादिकं यस्मिंस्तथाभूतं देहमालक्ष्य तं देहं चितामरोपयत् ॥ २१ ॥ ❀ ❀ कृत्यं तत्कालोचितं विधाय ह्रदिन्या जले आप्लुता स्नाता सती भर्तुरुदकं दत्त्वा दिव्यंतरिक्षे स्थितान्देवान्नत्वा वह्निं त्रिः प्रदक्षिणीकृत्य ॥ २२ ॥ ❀ ❀ देवैः सहिताः ॥ २३ ॥ ❀ ❀ गृणंति स्माभाषंत ॥ २४ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

सविकल्पकज्ञाने विशेषणवैशिष्ट्यावगाहिज्ञाने घटोऽयमित्यादिरूपे । तेष्विन्द्रियेषु । मनस इन्द्रियाधीनत्त्वे प्रमाणमाह—तदुक्तमिति । चरतां स्वं स्वं विषयं गच्छतां यदिन्द्रियं मनोऽनुविधीयतेऽनुसरति । किञ्च—आकृष्टमाकर्षितं भवतीति भट्टा मीमांसकाः । आदिना तदेकदेशिनश्च । आनुमानिकस्तार्किकादिः । शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रितः अष्टद्रव्यानाश्रितत्वे सति समवायिकारणकत्वात् । यन्नैवं तन्नैवं यथा रूपमिति परिशेषानुमानेन तादृशद्रव्यविधयाकाशः सिध्यतीति रूपादिवारणाय सत्यन्तम्, रूपत्वादिवारणाय विशेष्यं, परिशेषश्च प्रसक्तस्य प्रतिषेधेऽन्यत्राप्रसंगात्परिशिष्यमाणे संप्रत्ययः । न च विशेष्यासिद्धिः, शब्दः समवायिकारणकः जन्यगुणत्वात् पृथिवीरूपवदित्यनुमानेन तत्सिद्धेः । न च विशेषणासिद्धिरपि शब्दोऽष्टद्रव्यानाश्रितः श्रोत्रग्राह्यत्वात् शब्दत्ववदित्यनुमानेन तस्यापि सिद्धेरित्यलं प्रसक्तानुप्रसक्त्या । इन्द्रियव्यापारश्चक्षुरिन्द्रियव्यापारो नभसि स्वगुणद्वारास्त्येवेत्याह—नभोगुणश्चेति । अतोऽस्य नभसः । नन्वेवं राजभृत्यादिष्वतिप्रसंगो यथास्थानमित्युक्तिविरोधः प्रसिद्धार्थपरित्यागश्चेति दोषत्रयं स्यादत आह—यद्वेति । "शब्दमात्रमभूत्तस्मान्नभः श्रोत्रञ्च शब्दगम्" इत्यादिना तन्मात्रेभ्य इन्द्रियाणामुत्पत्तिश्रवणात्तन्मात्रकार्याण्येवेन्द्रियाणीति । इत्यर्थ इति । आत्मनीति महत आत्मशक्तित्वेन शक्तिशक्तिमतोरभेदात्तत्रात्मशब्दप्रयोगो नासंगत इति भावः ॥ १७ ॥ ❀ ❀ इत्यर्थ इति । यत्कृतं जीवत्वं तं मायालक्षणमुपाधिं त्यक्त्वा ब्रह्मभावं प्राप्त इति भावः । विश्वनाथस्तु—स्वस्य रूपे भगवद्भक्तिलब्धे पार्षददेहे स्थितः सन्नजहात्प्रभुः त्यागे परमसमर्थः पूर्वं "चिच्छेद संशयपदं निजजीवकोशम्" इति यत्कोशच्छेदनमुक्तं तदेतत्प्रकारकमेव । पुनः स्थूलदेहत्यागावसरे पिष्टपेषणन्यायेन तथा चक्रे ततश्च भगवत्प्रेषितविमानमारुह्य वैकुण्ठं जगामेत्यग्रिमवाक्ये व्यक्तं भावि ॥ १८–१९ ॥ ❀ ❀ तत्र दुःखप्राप्तौ ॥ २० ॥ ❀ ❀ आत्मनः स्वस्य पत्युः पृथोः दया संजाताऽस्येति दयितस्तस्य पृथिव्यां दुहितृभावात्तस्यां तस्य दयैवोचितेत्यर्थः ॥ २१ ॥ ❀ ❀ तत्कालोचितं मुन्यन्नेन पिंडदानादि कृत्वा ह्रदिन्या नद्याः । अंतरिक्षे स्थितान्स्वर्गादागत्य पृथुं दिदृक्षूंस्तस्या दृग्गोचर एवाकाशे स्थितान् । भर्तृपादाविति पाठ एव श्रेयान्भाति । एकवचनान्तपाठे तु सामान्यापेक्षं ध्येयम् ॥ २२–२४ ॥

## श्रीमद्वीरराघवव्याख्या

तदेवं तामसाहङ्कारकार्याणामाकाशपर्यन्तं लयमुक्त्वा सात्त्विकाहङ्कारकार्याणां लयानुसन्धानमाह इन्द्रियेषु मन इति । सविकल्पकज्ञाने मनस इन्द्रियैराकर्षणात् तेषु लयानुसन्धानमुक्तं न तु तत्कार्यत्वात् वैकारिकत्वान्मनसः । यदुक्तं गीतासु

"इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते" इति। अत्रापि इन्द्रियैर्विषयाकृष्टैराकृष्टं ध्यायतां मन इति तानीन्द्रियाणि तन्मात्रेषु। अत्रापीन्द्रियाणां वैकारिकत्वेऽपि तेषां शब्दादितन्मात्रैराकर्षणात् तन्मात्रेष्वित्युक्तम्। अयमर्थः—तामसाहङ्कारकार्याणां पृथिव्यादीनामाकाशपर्यन्तं लयमभिधाय तद्धर्माणां गन्धादितन्मात्राणामिन्द्रियाकर्षकत्वेन इन्द्रियाणां च मनस आकर्षकत्वेन च मन इन्द्रियार्थानामुत्तरोत्तरानुवर्त्तित्वेन कार्यकारणयोरिव प्रदर्शयितुं लयानुसन्धानकीर्तनमिति परमार्थत इन्द्रियाणां वैकारिकेऽहङ्कारे आकाशस्य सशब्दस्य भूतादौ लय इति विवेकः। तैजसस्य तु अहङ्कारस्य वैकारिकभूताद्योरनुग्राहकत्वमात्रमेव न तु कार्यान्तरमस्ति इति न तत्कार्यलय उक्तः। यथोद्भवं यथाप्रवृत्ति मनआदीनामुत्तरोत्तराधीनप्रवृत्तिकत्वात्। इन्द्रियेषु नभ इत्यपि पाठो दृश्यते, नभः आकाशं शब्दादितन्मात्रेषु इन्द्रियविषयेषु विषये तद्वच्छब्द उपचारात्प्रयुक्तः। भूतानां तन्मात्रेषु यथोद्भवं लय इत्यर्थः। तानि तन्मात्राणि यथोद्भवमुद्भवमनतिक्रम्य उद्भवत्यस्मादिति उद्भवः कारणे भूतादावित्यर्थः। भूतादिशब्दो वैकारिकतैजसयोरपि प्रदर्शनार्थः। अत एव बहुवचनं तदयमर्थः—भूतादिवैकारिकतैजसनामानि उपसंहृतकार्याणि उत्कृष्य आत्मनि आत्मा चित्तं तदनुग्राहके महत्तत्वे सन्दधे अनुसंहितवान्। भूतादिना समुत्कृष्येति पाठे तानि तन्मात्राणि भूतादिना तामसाहङ्कारेण कारणभूतेन सह समुत्कृष्य तस्मिन् विलाप्य इत्यर्थः। लयस्य कारणवस्तुना सह संश्लेषरूपत्वात्साहित्यविवक्षया तृतीया, तं भूतादिं महतीत्यन्वयः॥ १७॥ ❀ ❀ तं महान्तं सर्वगुणविन्यासबीजे गुणवैषम्यहेतुभूते मायामये प्रधाने न्यधात्, स्वार्थे मयट्। तं सर्वगुणविन्यासं जीवे मायामय इति पाठे तु तं महान्तं सर्वेषां गुणानां कार्याणां विन्यासः स्थितिर्यस्मिन् तत्प्रधानमव्यक्तं प्रतिन्यधात् प्रधाने न्यधादित्यर्थः। तच्चाव्यक्तं मायामये अचित्समष्टिसंसृष्टे जीवे न्यधादित्यर्थः "महानव्यक्ते लीयते अव्यक्तमक्षरे लीयते" इति श्रुत्यनुरोधात् अनुशयो भुक्तशिष्टं कर्म तद्वाननुशयी पूर्वं संसृतिदशायामनुशयी क्षीणप्रायदोष इत्यर्थः। पुमान् जीवः असौ पृथुः तमचित्समष्टिसंसृष्टमात्मस्थं स्वस्वरूपस्थं नितरां प्रकृतिसम्बन्धवियुक्तमनुसंहितवानित्यर्थः। ततो ज्ञानवैराग्यबलेन अनुशयं भुक्तावशिष्टं पूर्वोत्तरभेदेन सञ्चितानभ्युपगतबुद्धिपूर्वकभेदेन च भिन्नं पुण्यपापात्मकं कर्म अजहात् अत्याक्षीत्। ततः प्रभुरकर्मवश्यो भूत्वा स्वरूपस्थः परमात्मात्मकाविर्भूतगुणाष्टकः स्वस्वरूपेणावस्थितोऽभून्मुक्तोऽभूदित्यर्थः॥ १८॥ ❀ ❀ अथार्चिर्नाम्नी पृथोः पत्नी महाराजस्य स्त्री सुकुमारी अतदर्हा वनगमनादिक्लेशमनर्हन्त्यपि पतिमनुसृत्य वनं गता प्रविष्टा। अतदर्हत्वमेवाह। यस्या अर्चिषः पद्भ्यां भुवः स्पर्शनं पद्भ्यां भुवमप्यस्पृशन्ती महाभोगशालिनी साक्षात् पद्भ्यां वनं प्रविष्टवतीत्यतदर्हत्वमुक्तम्॥ १९॥ ❀ ❀ अतीव यद्भर्तुः व्रतं स्थण्डिलशयनादिरूपं तस्मिन् व्रते या निष्ठा तया भर्तुः शुश्रूषया ऋषीणामियमार्षी देहयात्रा कन्दमूलाद्याहाररूपा तया च कृशीभूतापि आर्तिं दुःखं नाविन्दत। यतः प्रेयसः प्रियतमस्य पृथोः करस्पर्शनादिरूपः यः सम्मानः तेन निर्वृता॥ २०॥ ❀ ❀ आत्मनः स्वस्याः पृथिव्याश्च पत्युः पृथोः देहं विपन्नानि विगतानि अखिलानि चेतनादीनि बुद्धीन्द्रियप्राणादीनि यस्मिन् तथाभूतमालक्ष्य दृष्ट्वा किञ्चिद्विलप्य च सा सती अर्चिः तं देहं अद्रिसानुनि चितामारोपयत्॥ २१॥ ❀ ❀ ततस्तत्कालोचितं कृत्यं च विधाय ह्रदिन्याः सरस्या जलेष्वाप्लुता सती उदारकर्मणो भर्तुः उदकं दत्त्वा दिविस्थान् त्रिदशान् नत्वा भर्तुः पादं ध्यायती चितां त्रिः परीत्य प्रदक्षिणीकृत्य वह्निं विवेश॥ २२॥ ❀ ❀ वीरश्रेष्ठं पतिं पृथुमनुसृत्य गतां साध्वीं विलोक्य वरदा देववध्वः देवैः सह सहस्रशः तुष्टुवुः॥ २३॥ ❀ ❀ तथा तस्मिन् मन्दरसानुनि कुसुमवर्षं कुर्वन्त्यः अमरतूर्येषु देवदुन्दुभ्यादिषु नदत्सु सत्सु परस्परं गृणन्ति स्म अभाषन्त॥ २४॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

इन्द्रियलयप्रकारध्यानमाह इन्द्रियाणीति। समस्तानीन्द्रियाणि यथोद्भवं यथोत्पत्ति स्वस्वकारणेषु लीयन्त इति तन्मात्राणि शब्दादीनि च यथोद्भवं लीयन्त इति व्यचिन्तयदित्यन्वयः। अत्रायं विभागः—इन्द्रियाणि तैजसाहंकारे तदभिमानिदेवा वैकारिकाहङ्काराभिमानिषु तेषां देहा वैकारिकाहङ्कारे पृथिव्यादयो गन्धादिभिः सह भूतादौ तामसाहङ्कारे लीयन्त इति। भूतादिरित्युपलक्षणम्, एवं विविधाहङ्कारस्तानीन्द्रियादीन्समुत्क्षिप्य संभृत्य महत्यात्मनि महत्तत्त्वे तदभिमानिनि चतुर्मुखे चाहङ्काराभिमानी रुद्रो लीयत इति मनः संदध इत्यन्वयः॥ १७॥ ❀ ❀ सर्वेषां गुणानां भक्तिज्ञानादीनां विशेषेण न्यासो निधानं यस्मिन्स्तथा तं सत्त्वादिगुणैर्विविधा प्रपञ्चरचना येन स तथा तं वा तं महान्तं चतुर्मुखं तत्त्वलक्षणं जडं च मायामये मायाशब्दवाच्ये जीवे प्राणधारणशक्तिमति लक्ष्मीतत्त्वे न्यस्यति प्रविशतीति ध्यायेत्। अन्यत्तु जडप्रकृतौ जीवत इति जीवशब्दवाच्यत्वं च चेतनशरीराकारतया परिणामादुपचारः प्रलये केशवमनुशेत इत्यनुशयशब्दवाच्यत्वं पुंशक्तियुक्तत्वात्पुल्लिङ्गशब्दवाच्यां प्रकृतिं च जगदादानादात्मशब्दाभिधेयस्य हरेराधारतया तिष्ठतीत्यात्मस्थमचिन्तयत्। अनुशयी चित्प्रकृत्यधीनत्वात्तद्द्वारागतत्वाद्वानुशयिशब्दवाच्योऽसौ पुमानित्युपलक्षणं चेतनराशिः अप्राकृतशरीरत्वात्स्वरूपशब्दवाच्ये ब्रह्मणि चतुर्मुखेन सह तिष्ठतीति ध्यानं व्यधात्। प्रभुरित्यनेन मनोऽनुसंधानमस्तीति ध्वनयति। केनैतत्सामर्थ्यमभूदित्यत उक्तं ज्ञानेनेति। यद्वा एवंविधोपासनाजनितसामर्थ्येनानुशयी पृथुः स्वस्वरूपे ब्रह्मणि सायुज्यलक्षणं मोक्षमाप्तुं व्यधादित्यन्वय इति "मायेति प्रकृतिश्चेति माया जीवश्च कथ्यते। शेतेऽनुकेशवं यस्मात्तस्मादनुशयोऽपि च॥ एतैस्तु नामभिर्वाच्या श्रीविष्णोरनपायिनी। तथैवा-

नुशयी जीवस्तया बद्धो यतः सदा ॥ पुरुषः शयनात्पूर्षु तथाऽहानादहं स्मृतः । अप्राकृततनुत्वात्तु स्वरूपं हरिरुच्यते । नित्यचिद्दर्शनान्नित्यं ब्रह्मपूर्णत्वतः सदा" इति समाख्यासिद्धत्वादुक्त एवार्थो नाद्वैतवादिकल्पित इति सिद्धम् ॥ १८ ॥ ❁ ❁ पत्या चैवं गते तत्र वनेऽर्चिषा भार्यया किमकारीति तत्राह अर्चिर्नामेति । पद्भ्यां भुवः स्पर्शनं यत्तदनर्हा ॥ १९ ॥ ❁ ❁ भर्तुर्व्रतं ग्राम्यवर्जनादि तदेव स्वस्या अपि धर्मः तत्र निष्ठया आर्षदेहयात्रया कन्दमूलफलाद्यशनलक्षणया एवंविधानुष्ठानेन परिकर्शितापि प्रेयसः पत्युः करस्पर्शलक्षणमानेन निर्वृतानन्दप्लुता आर्त्तिं व्रतानुष्ठाननिमित्तक्लेशं नाविन्दतेत्यन्वयः ॥ २० ॥ ❁ ❁ एवं तस्याः पृथोः पत्नीत्वयोग्यतामनुवर्ण्योत्तरक्रियां वक्ति देहमित्यादिना । पृथिव्या आत्मनः स्वस्याश्च दयितस्य पत्युर्देहं विपन्नाखिलचेतनादिकं चैतन्यप्राणादिवृत्तिलक्षणरहितमालक्ष्य चितां शवदहनसाधनकाष्ठम् ॥ २१ ॥ ❁ ❁ ह्रदिनी नदी । त्रिः परीत्य प्रदक्षिणीकृत्य ॥ २२ ॥ ❁ ❁ सत्याः वनेऽपि राजस्त्रीभोगलक्ष्मीसामग्री समभूदित्याह विलोक्येति ॥ २३ ॥ ❁ ❁ कुसुमासारं पुष्पवृष्टिम् ॥ २४ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तमित्यर्द्धकम् । ज्ञानवैराग्ययोर्वीर्यं यस्मात्तेन भक्तियोगेनेत्यर्थः । स्वस्वरूपे पार्षदलक्षणे स्थितः सन् प्रभुस्त्वत्र महासमर्थः । जहादित्यत्राप्यधादिति कचित् । अप्यधात् तिरोहितवान् अजहादित्यर्थः । इति स्वामितात्पर्य्यादेष एव पाठ इति तज्ज्ञाः । अजहादित्येव पाठः, किन्तु यः पूर्वमित्यध्याहारसम्पादनायैव हेत्युक्तमित्यन्ये ॥ १८-१९ ॥ ❁ ❁ प्रेयसः कर्म्मभूतस्य यत् सेवायां करेण स्पर्शनं मानः पूजनञ्च ताभ्यां निर्वृतिर्यस्याः । निर्वृतेति चित्सुखः ॥ २० ॥ ❁ ❁ किञ्चिद्विलप्येति । स्नेहेन विलप्य विचारेण तु तत् परित्यज्येत्यर्थः ॥ २१-२५ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तदेवं तामसाहङ्कारकार्य्यस्याकाशपर्यंतं लयमुक्त्वा सात्त्विकराजसाहङ्कारकार्य्याणां लयमाह इन्द्रियेष्विति । मन इति देवानामप्युपलक्षणं मनः देवतांश्च इन्द्रियेषु सन्दधे विलापयामास । तानीन्द्रियाणि तन्मात्रेषु शब्दादिष्विति मनस इन्द्रियाधीनत्वात् इन्द्रियेषु लयः । इन्द्रियाणाञ्च विषयाधीत्वाद् विषयेषु लयः सङ्गत एव । यदुक्तम् 'इन्द्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतां मनः' इति । यथोद्भवमिति परत्रैवान्वेति, न तु पूर्वत्र । ततश्च यथोद्भवं यथा स्यात्तथा अमूनि तन्मात्राणि भूतादिना अहङ्कारेण उत्क्षिप्य तत्रैव भूतादावेव उत्कर्षेण क्षिप्त्वा प्रविलाप्येत्यर्थः, तं भूतादिञ्च महत्यात्मनि महत्तत्त्वे इन्द्रियेषु नभ इति पाठे यथास्थानमित्यस्यानुवृत्तेः सर्व्वत्राधाराधेयभावेनैव लयो ज्ञेयः । तथाहि क्षितिमम्भसि तिष्ठति अम्भस्तेजसि तिष्ठतीत्येव पूर्व्वेषामाधेयानां परपरत्राधारे लयः नभश्च इन्द्रियेषु तिष्ठतीति तस्य तेषु लयः । मनसोऽपीन्द्रियत्वादिन्द्रियाणि सर्व्वाणि विषयोन्मुखानि येषु तिष्ठन्तीति इन्द्रियाणां तन्मात्रेषु लयः, ततश्च तन्मात्राणां यथोद्भवमित्यनेन पूर्व्वानुवृत्तेन यथास्थानमित्यनेनाप्यन्वयः सम्भवति ॥ १७ ॥ ❁ ❁ सर्वेषां गुणानां विन्यासः स्थितिर्यत्र तं मायामये जीवे जीवोपाधौ मायायामित्यर्थः । 'स जीवो यत् पुनर्भवः' इत्यादिषु जीवोपाधावपि जीवशब्दप्रयोगदर्शनात् तञ्चानुशयमुपाधिं यः पूर्व्वमनुशयी पुमान् जीवः असौ पृथुर्ज्ञानवैराग्यरूपाया विद्याशक्तेर्वीर्य्येण प्रभावेन स्वस्वरूपे भगवद्भक्तिलब्धे पार्षददेहे स्थितः सन्नजहात् प्रभुः त्यागे परमसमर्थः । पूर्वं चिच्छेद संशयपदं निजजीवकोषमिति यत् कोषच्छेदनमुक्तं तदेतत्प्रकारकमेव । पुनः स्थूलदेहत्यागसमये पिष्टपेषन्यायेन तथा चक्र इति ततश्च भगवत्प्रेषितं विमानमारुह्य वैकुण्ठं जगामेत्यग्रिमवाक्ये व्यक्तं भावि । वनप्रवेशमारभ्य राज्ञ्याः कथामाह अर्चिर्नामेति चतुर्भिः ॥ १९ ॥ ❁ ❁ व्रतं भूमिशयनादिधर्मः श्रवणकीर्तनादिः । आर्षदेहयात्रा कन्दमूलादिवृत्तिः तथा प्रेयसः कर्मभूतस्य यत् सेवायां करेण स्पर्शनं मानः पूजनञ्च ताभ्यामेव निर्वृतिर्यस्याः सा ॥ २० ॥ ❁ ❁ आत्मनः स्वस्य पत्युः पृथोः दया संजाता अस्येति दयितस्तस्य पृथिव्यां दुहितृभावात् तस्यां तस्य दयैवेत्यर्थः । किञ्चिच्च विलप्येति तत्कालोचितक्रियाव्यग्रत्वात् ॥ २१ ॥ ❁ ❁ दिविस्थितान् स्वर्गादागत्य पृथुं दिदृक्षूंस्तस्याद्दृग्गोचरम् एवान्तरिक्षे स्थितान् , वह्निं त्रिः प्रदक्षिणीकृत्य ॥ २२-२३ ॥ ❁ ❁ गृणन्ति स्म ऊचुः ॥ २४-२५ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

भूतादिना अहङ्कारेण मेलयित्वा सिंहावलोकनन्यायेन क्षित्यादीनां गन्धादौ लयमाह । यथोद्भवमुद्भवमुत्पत्तिमनतिक्रम्य तन्मात्रेषु तानि अमूनि क्षित्यादीनि उत्क्षिप्य तत्कारणेन भूतादिना तामसाहंकारेण सह आत्मनि तत्कारणे महति सन्दधे इत्यन्वयः । अनुक्तसंग्रहार्थमाह इन्द्रियेषु मन इति । इन्द्रियाणि इषवः विषयग्रहणसाधनानि यस्य तथाभूतं मनश्च भूतादिना तत्कारणेन सह महति संदधे इत्यर्थः ॥ १७ ॥ ❁ ❁ तं महान्तं सर्वगुणविन्यासं सर्वगुणाश्रयं प्रधानं प्रतिन्यधात् तच्च प्रधानं जीवयति स्वशक्तिभूतं प्रधानं सृष्ट्युन्मुखं करोतीति जीवः सर्वहेतुः परमेश्वरस्तस्मिन् न्यधात् । नितरां शक्तिमति शक्तिभूतं प्रधानमनुसंहितवान् । ननु तस्य स्वतः सर्वदा परिपूर्णकामस्य विश्वसृष्ट्यर्थं प्रधानप्रवर्तने किं प्रयोजनमत्राह । मायामये लीलामये "लोकवत्तु

लीलाकैवल्यम्'' इति न्यायात् । यद्वा मायामये जीवानुग्रहार्थं प्रधानादिप्रेरके इत्यर्थः । ''बुद्धीन्द्रियमनःप्राणान् जनानामसृजत्प्रभुः । मात्रार्थं च भवार्थं च आत्मने कल्पनाय चे''ति वक्ष्यमाणात् तस्य कारणं नास्तीत्याह । तं मायामयमात्मस्थं स्वाश्रयमचिन्तयदिति शेषः । असौ पृथुः अनुशयी अनुशयो मुक्तेतरत् कर्म तद्वान् ज्ञानवैराग्यवीर्येण अजहात् । तदनन्तरं स्वरूपस्थः मुक्तप्राप्यभगवत्स्वरूपाश्रितः आविर्भूतापहतपाप्मत्वादिगुणत्वेन प्रभुरभूत् भगवत्साधर्म्यलक्षणं मोक्षं लब्धवानित्यर्थः । तादृशानां भगवदवताराणां सर्वदैव मुक्तत्वात् मुमुक्षूणां हिताय मुक्तिमार्गस्तद्द्वारा दर्शित इति बोध्यम् ।। १८ ।। ❀ ❀ अर्चिर्वृत्तान्तमाह । अर्चिरिति चतुर्भिः । अर्चिः सुकुमारी अतः पद्भ्यां भुवो यत्स्पर्शनं तदनर्हापि चशब्दोऽप्यर्थे तथापि पतिमनुवनं गता इति तस्या भर्तरि भक्त्यतिशयो दर्शितः ।। १९ ।। ❀ ❀ भर्तुर्यद् व्रतं स्थण्डिलशयनादि तस्मिन् धर्मतः या निष्ठा तया ऋषीणामियमार्षी कन्दमूलादिसेवनरूपा यात्रा देहधारणवृत्तिस्तया च सा अतीव कर्षितापि आर्तिं दुःखं नाविन्दत । यतः प्रेयसः करस्पर्शेन यन्मानं तेन निर्वृतिः सुखसम्पत्तिर्यस्याः सा ।। २० ।। ❀ ❀ पृथिव्या दयितस्य प्रियस्य पितुरित्यर्थः । आत्मनः पत्युः विपन्नाखिलचेतनादिकं विनष्टचेष्टादिकं देहम् आलक्ष्य किञ्चिद्विलप्य तदनन्तरमद्रिसानुनि चितां तद्देहमारोपयत् ।। २१ ।। ❀ ❀ ह्रदिन्या जले आप्लुता स्नाता कृत्यं तत्कालोचितं विधाय भर्तुर्जलं दत्त्वा दिवि अन्तरिक्षे स्थितान् त्रिदशान्देवान्नत्वा भर्तृदेहदाहार्थं नियोजितं वह्निं त्रिः परीत्य भर्तुः पादं ध्यायती तमेव वह्निं विवेश ।। २२ ।। ❀ ❀ देवैः सह वरदाः देवपत्न्यः तुष्टुवुः ।। २३ ।। ❀ ❀ कुसुमासारं पुष्पवर्षं कुर्वन्त्यः गृणन्ति स्म अभाषन्त ।। २४ ।।

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं तामसाहङ्कारकार्यस्य आकाशपर्यन्तं लयभावनमुक्त्वा सात्त्विकराजसाहङ्कारकार्याणामपि विलयभावनं दर्शयति—इन्द्रियेष्विति । मन इन्द्रियेषु अयुयूजत् । तानीन्द्रियाणि तन्मात्रेषु शब्दादिविषयेष्वयूयुजत् । सविकल्पकज्ञाने मनस इन्द्रियैराकर्षणादिविषयाणां विषयैराकर्षणात्तेषु विलयभावनं न तु कार्यत्वात् । आकर्षणं तूक्तम्—'इन्द्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतां मनः' इति । अमून्यवशिष्टानि नभआदीनि यथोद्भवं उद्भवमनतिक्रम्य भूतादिना अहङ्कारेणोत्क्षिप्य संयोज्य तं चाहङ्कारं महत्यात्मनि महत्तत्त्वे सन्दधे योजितवानित्यन्वयः । तत्रावशिष्टं नभोमात्राणि च तामसाहङ्कारे मन इन्द्रियदेवताश्च सात्त्विकाहङ्कारे इन्द्रियाणि च राजसाहङ्कार इत्येवं यथोद्भवं लयविभावना ज्ञेया ।। १७ ।। सर्वेषां गुणानां गुणकार्याणां विन्यासः स्थितिर्यस्मिन् वृक्षस्य बीज इव तं सर्वसंसारबीजभूतं महान्तं मायामये प्रकृतिकार्ये जीवे जीवोपाधौ लिङ्गशरीरे न्यधात् । सर्वं दुःखसुखादिकार्यजातं लिङ्गशरीर एव पर्यवस्यति, नात्मनीति चिन्तयामासेत्यर्थः । 'सजीवो यत्पुनर्भवः' इत्यादिलिङ्गशरीरेऽपि जीवशब्दप्रयोगदर्शनात्मा योसावनुशयी पूर्वलिङ्गशरीराभिमानी पुमान् पृथुः स इदानीं ज्ञानवैराग्ययोर्वीर्येण प्रभावेण स्वरूपस्थः संस्तं चात्मस्थं स्वसम्बन्धितया स्थितमनुशयं लिङ्गशरीरमजहात् । यतः प्रभुः त्यक्तुं समर्थ इत्यन्वयः ।। १८ ।। ❀ ❀ वनप्रवेशमारभ्य देहत्यागपर्यन्तां राज्ञ्याः कथामाह—अर्चिरित्यादिचतुर्भिः । चकारोऽप्यर्थे । नामेति प्रसिद्धौ । तदपि नार्हतीत्यतदर्हा । प्रसिद्धमेतत् अतदर्हाप्यर्चिः पृथुना सह वनमनुगता अनुजगामेत्यन्वयः । अतदर्हेत्यत्र तच्छब्दस्य कोऽर्थ इत्याकाङ्क्षायामाह—यदिति, यत्पद्भ्यां भुवः स्पर्शनं तत्तच्छब्दार्थ इत्यर्थः । कुतोऽतदर्हत्वमित्यपेक्षायामाह—सुकुमारीति । तत्रापि हेतुमाह—महाराज्ञीति । तर्हि किमर्थमनुगतेत्यत आह—तत्पत्नीति, तस्य पृथोः पत्नी । पतिव्रतायास्तस्याः तत्सहगमनमेवोचितं अतोऽनुगतेति भावः ।। १९ ।। ❀ ❀ भर्तुर्व्रतं भूमिशयनादि धर्मो भगवत्परिचर्यादिस्तत्र या निष्ठा स्थितिस्तया भर्तुः शुश्रूषया सेवया च ऋषीणामियमार्षी देहयात्रा कन्दमूलादिभिर्देहनिर्वाहस्तया च साऽर्चिरतीव परिकर्शिता कृशीकृताप्यार्तिं पीडां नाविन्दत न प्रापेत्यन्वयः । तत्र हेतुमाह—प्रेय इति । प्रेयसः पत्युः करेण यत्स्पर्शनं मानश्च सत्कारस्ताभ्यां निर्वृतिः परमानन्दो यस्याः सा तथेत्यर्थः ।। २० ।। ❀ ❀ एवं पतिसहचारकालिकं तद्वृत्तमुक्त्वा पतिदेहत्यागानन्तर्यं वृत्तमाह—देहमिति द्वाभ्याम् । विपन्नं विनष्टमखिलं चेतनादिकं यस्मिंस्तथाभूतं पृथिव्याः पत्युः पालकस्य आत्मनः स्वस्य च दयितस्य प्रियस्य देहमालक्ष्य दृष्ट्वा तद्वियोगाधिना किञ्चिद्विलप्य रोदनं च कृत्वा यतः सती पतिव्रता अथ तस्मात्तदनुगमनार्थं अद्रिसानुनि पर्वतप्रदेशविशेषे काष्ठैश्चितां विधाय तस्यां तद्देहमारोपयदित्यन्वयः ।। २१ ।। ❀ ❀ अन्यच्च तत्कालोचितं कृत्यं विधाय कृत्वा ह्रदिन्या जले आप्लुता स्नाता सती उदारं सर्वोपकारकं पृथिवीदोहनादि भगवदाराधनादिकर्म यस्य तस्य स्वभर्तुरुदकं दत्त्वा दिवि अन्तरिक्षे स्थितांस्त्रिदशान् देवांश्च नत्वा स्वभर्तृपादौ ध्यायती चितां त्रिः परीत्य प्रदक्षिणीकृत्य तस्यां वह्निं विसृज्य स्वयं च विवेशेत्यन्वयः ।। २२ ।। ❀ ❀ वीरवरं परमपुरुषार्थिनं पृथुं स्वपतिमनुगतां साध्वीं पतिव्रतां विलोक्य देवैः स्वपतिभिः सह वर्त्तमाना वरदा वरदानसमर्थाः सहस्रशो देवपत्न्यस्तुष्टुवुरित्यन्वयः ।। २३ ।। ❀ ❀ यतोर्दम्पत्योर्वैकुण्ठगमनसमये मङ्गलार्थं अमरतूर्येषु नदत्सु सत्सु तस्मिन् मन्दरसानुनि कुसुमासारं पुष्पवृष्टिं कुर्वन्त्यः परस्परं गृणन्ति स्म अभाषन्त ।। २४ ।।

## भाषानुवादः

तदनन्तर मनको [ सविकल्प ज्ञानमें जिनके अधीन वह रहता है, उन ] इन्द्रियोंमें, इन्द्रियोंको उनके कारणरूप तन्मात्राओंमें और सूक्ष्मभूतों ( तन्मात्राओं ) के कारण अहङ्कारके द्वारा आकाश, इन्द्रिय और तन्मात्राओंको उसी अहङ्कारमें लीन

कर अहङ्कारको महत्तत्त्वमें लीन किया ॥ १७ ॥ ❀ ❀ फिर सम्पूर्ण गुणोंकी अभिव्यक्ति करनेवाले उस महत्तत्त्वको मायोपाधिक जीवमें स्थित किया। तदनन्तर उस मायारूप जीवकी उपाधिको भी उन्होंने ज्ञान और वैराग्यके प्रभावसे अपने शुद्ध ब्रह्मस्वरूपमें स्थित होकर त्याग दिया ॥ १८ ॥ ❀ ❀ महाराज पृथुकी पत्नी महारानी अर्चि भी उनके साथ वनको गयी थीं। वे बड़ी सुकुमारी थीं, पैरोंसे भूमिका स्पर्श करनेके योग्य भी नहीं थीं ॥ १९ ॥ ❀ ❀ फिर भी उन्होंने अपने स्वामीके व्रत और नियमादिका पालन करते हुए उनकी खूब सेवा की और मुनिवृत्तिके अनुसार कन्दमूल आदिसे निर्वाह किया। इससे यद्यपि वे बहुत दुर्बल हो गयी थीं, तो भी प्रियतमके करस्पर्शसे सम्मानित होकर उसमें आनन्द माननेके कारण उन्हें किसी प्रकार कष्ट नहीं होता था ॥ २० ॥ ❀ ❀ अब पृथ्वीके स्वामी और अपने प्रियतम महाराज पृथुकी देहको जीवनके चेतना आदि सभी धर्मोंसे रहित देख उस सतीने कुछ देर विलाप किया। फिर पर्वतके ऊपर चिता बनाकर उस चितापर रख दिया ॥ २१ ॥ ❀ ❀ इसके बाद उस समयके सारे कृत्य कर नदीके जलमें स्नान किया। अपने परम पराक्रमी पतिको जलाञ्जलि दे आकाशस्थित देवताओंकी वन्दना की तथा तीन बार चिताकी परिक्रमा कर पतिदेवके चरणोंका ध्यान करती हुई अग्निमें प्रवेश कर गयी ॥ २२ ॥ ❀ ❀ परमसाध्वी अर्चिको इस प्रकार अपने पति वीरवर पृथुका अनुगमन करते देख सहस्रों वरदायिनी देवियोंने अपने-अपने पतियोंके साथ उनकी स्तुति की ॥ २३ ॥ ❀ ❀ वहाँ देवताओंके बाजे बजने लगे। समय उस मन्दराचलके शिखरपर वे देवाङ्गनाएँ पुष्पोंकी वर्षा करती हुई आपसमें इस प्रकार कहने लगीं ॥ २४ ॥

### देव्य ऊचुः

अहो इयं वधूर्धन्या या चैवं भूभुजां पतिम्। सर्वात्मना पतिं भेजे यज्ञेशं श्रीर्वधूरिव ॥ २५ ॥
सैषा नूनं व्रजत्यूर्ध्वमनु वैन्यं पतिं सती। पश्यतास्मानतीत्यार्चिर्दुर्विभाव्येन कर्मणा ॥ २६ ॥
तेषां दुरापं किं त्वन्यन्मर्त्यानां भगवत्पदम्। भुवि लोलायुषो ये वै नैष्कर्म्यं साधयन्त्युत ॥ २७ ॥
स वञ्चितो बतात्मध्रुक् कृच्छ्रेण महता भुवि। लब्ध्वापवर्ग्यं मानुष्यं विषयेषु विषज्जते ॥ २८ ॥

### मैत्रेय उवाच

स्तुवतीष्वमरस्त्रीषु पतिलोकं गता वधूः। यं[१] वा आत्मविदां धुर्यो वैन्यः प्रापाच्युताश्[२]यः ॥ २९ ॥
इत्थंभूतानुभावोऽसौ पृथुः स[३] भगवत्तमः। कीर्तितं तस्य चरितमु[४]द्दामचरितस्य ते ॥ ३० ॥
य इदं सुमहत्पुण्यं श्रद्धयावहितः पठेत्। श्रावयेच्छृणुयाद्वापि स पृथोः पदवीमियात् ॥ ३१ ॥
ब्राह्मणो ब्रह्मवर्चस्वी राजन्यो जगतीपतिः। वैश्यः पठन् विट्पतिः स्याच्छूद्रः स[५]त्तमतामियात् ॥ ३२ ॥

अन्वयः—अहो श्रीः वधूः यज्ञेशम् इव च एवम् या भूभुजाम् पतिम् पतिम् सर्वात्मना भेजे इयम् वधूः धन्या ॥ २५ ॥ ❀ ❀ सा एषा सती अर्चिः दुर्विभाव्येन कर्मणा अस्मान् अतीत्य वैन्यम् पतिम् अनु नूनम् व्रजति पश्यत ॥ २६ ॥ ❀ ❀ ये लोलायुषः भुवि भगवत्पदम् नैष्कर्म्यम् साधयन्ति तेषाम् मर्त्यानाम् अन्यत् दुरापम् किम् वै ॥ २७ ॥ ❀ ❀ यः भुवि महताम् कृच्छ्रेण आपवर्ग्यम् मानुष्यम् लब्ध्वा विषयेषु विषज्जते सः आत्मध्रुक् वञ्चितः बत ॥ २८ ॥ ❀ ❀ अमरस्त्रीषु स्तुवतीषु वधूः आत्मविदाम् धुर्यः अच्युताशयः वैन्यः यम् वा प्राप तम् पतिलोकम् गता ॥ २९ ॥ ❀ ❀ सः भगवत्तमः असौ पृथुः इत्थंभूतानुभावः तस्य उद्दामचरितस्य चरितम् ते कीर्तितम् ॥ ३० ॥ ❀ ❀ यः इदम् सुमहत्पुण्यम् श्रद्धया अवहितः पठेत् श्रावयेत् वा अपि शृणुयात् सः पृथोः पदवीम् इयात् ॥ ३१ ॥ ❀ ❀ पठन् ब्राह्मणः ब्रह्मवर्चस्वी राजन्यः जगतीपतिः वैश्यः विट्पतिः स्यात् शूद्रः सत्तमताम् इयात् ॥ ३२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

असतीनां दुर्विभाव्येन कर्तुमशक्येन कर्मणा ॥ २६ ॥ ❀ ❀ भगवान्पद्यते गम्यतेऽनेनेति तथा तन्नैष्कर्म्यं ज्ञानं ये चंचलायुषोऽपि साधयन्ति तेषामन्यद्देवादिपदं किमु दुर्लभं न किंचिदित्यर्थः ॥ २७ ॥ ❀ ❀ अभक्तं शोचन्ति। स वंचित इति। यत आत्मने द्रुह्यति योऽपवर्गसाधनं मानुष्यं लब्ध्वापि विषयेष्वासक्तिं याति ॥ २८ ॥ ❀ ❀ अच्युते एवाशयो

१. प्रा० पा०—यो वा। २. प्रा० पा०—ताश्रयः। ३. प्रा० पा०—सोऽभवदुत्तमः। ४. प्राचीने पाठे 'मुद्दामचरित' अयमंशः खण्डितः। ५. प्रा० पा०—च्छूद्र उत्तमता।

मनो यस्य ॥ २९-३१ ॥ ❀ ❀ विशां पश्वादीनां वैश्यादीनां वा पतिः स्यात्। शूद्रः शृण्वन्निति शेषः। तस्य पाठानधिकारात् ॥ ३२-३६ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

धन्या सर्वगुणैः पूर्णा "अनपेक्षो गुणैः पूर्णो धन्य इत्यभिधीयते" इत्यभिधानात् ॥ २५ ॥ ❀ ❀ एषेत्यंगुल्या निर्दिशत्यूर्ध्वं, किमधश्रितागिंन पश्यथेत्याशयः। नूनमिति वितर्के। येयं विमानस्था काचिद्विद्योतिनी दृश्यते सैषाऽर्चिरेव भवेदित्यर्थः। अनुवैन्यमिति अग्रे विमानस्थं वैन्यं तत्पश्चादर्चिषमपि विमाने पश्यतेत्यर्थः। अस्मानतीत्येति वयं देवता भूत्वाप्यस्याः पादतलवर्त्तिन्य एवाभूमेति भावः। दुर्विभाव्येन चिन्तयितुमप्यशक्येन ॥ २६ ॥ ❀ ❀ हन्त हन्तेदृशा मनुष्या वयमपि भूयास्म यदि भाग्यं स्यादित्याह–तेषामिति। नैष्कर्म्यमिति भक्तियोगांगत्वमुक्तम्। यद्वा–भगवत्पदं वैकुण्ठं नैष्कर्म्यं कर्मभिरप्राप्यमित्यर्थः। ये पृथ्वर्चिःप्रभृतय एते तेषामित्यर्थः। इत्यर्थं इति। हस्तिपदन्यायेन तत्रैव सर्वलोकानन्दस्यान्तर्भूतत्वादिति भावः ॥ २७ ॥ ❀ ❀ बत खेदे। वञ्चितः प्रलब्धः ॥ २८ ॥ ❀ ❀ ननु सहमरणपुण्यलभ्यं पतिलोकं नहि नहि यं लोकं वै निश्चितं वैन्यः प्राप आत्मविदां धुर्य इति न तस्याः प्राकृतः पतिलोकः प्राप्यई इति भावः। अच्युताश्रय इति। नापि सायुज्यं लभ्यं 'न कामये नाथ' इत्यादितदीयप्रार्थनाविरोधात्। अत एव स्वामिचरणैरेतदध्यायार्थावतरणिकाश्लोके उक्तं "त्रयोविंशे सभार्यस्य वने नित्यसमाधितः। विमानमधिरुह्याथ वैकुण्ठगतिरीर्य्यते ॥" इति। भक्तभिन्नेष्वेव पतिलोकबलीयस्त्वं ज्ञेयम् ॥ २९ ॥ ❀ ❀ भगवत्तमः अतिशयितैश्वर्यवान्। "भगो योन्यां भगो यत्ने यशोवीर्यार्कभूतिषु। कान्तीच्छाज्ञानवैराग्यधर्मैश्वर्यतपःसु च ॥" इति हलधरोक्तेः। प्रयत्नादिगुणवतामतिशयेन प्रधानत्वाद्भगवत्तमः। उद्दामचरितस्य वरुणसदृशस्य 'गुप्तार्थो वरुणो यथा' इत्युक्तेः। "उद्दामो बन्धरहिते स्वतन्त्रे च प्रचेतसि" इति मेदिन्युक्तेः। वरुण इत्युपलक्षणमिन्द्रादेरपि "दधार लोकपालानामेक एव पृथग्गुणान्" इत्युक्तेश्च ॥ ३० ॥ ❀ ❀ पृथोः पदवीं शुद्धभक्तियोगं वैकुण्ठं वा ॥ ३१ ॥ ❀ ❀ "प्रजावैश्यपशुस्वान्नपुत्रीषु त्रिडिती-रितः" इत्यभिधानचिन्तामणिः। शूद्र इति। "अध्येतव्यं ब्राह्मणेन वैश्येन क्षत्रियेण च। श्रोतव्यमेव शूद्राणां नाध्येतव्यं कदाचन ॥ श्रौतं स्मार्त्तं च वै धर्मं प्रोक्तमस्मिन्नृपोत्तम। तस्माच्छूद्रैर्विना विप्रं न श्रोतव्यं कदाचन" इति भविष्ये पुराणाधिकारिप्रस्तावे, सत्तमतां श्रेष्ठतां पावित्र्यमिति यावत् ॥ ३२ ॥

**श्रीमद्वीरराघवव्याख्या**

भाषणमेवाह अहो इति। इयं वधूः अर्चिर्धन्या कृतार्था अहो इत्याश्चर्ये हर्षे वा, या वधूः भूभुजां राज्ञां पतिं पतिं स्वभर्त्तारं सर्वात्मना सर्वप्रकारेण भेजे प्राप्ता यज्ञेशं भगवन्तं श्रीरूपिणी वधूरिव ॥ २५ ॥ ❀ ❀ तस्मात्सैषा सती अर्चिः पश्यतो नभस्थानतीत्य दुर्विभाव्येन चिन्तयितुमप्यशक्येन कर्मणा पतिपाराध्यादिना पतिं स्वभर्तारं वैन्यं पृथुमनुसृत्योर्ध्वं व्रजति नूनम् ॥ २६ ॥ ❀ ❀ भगवान् पद्यते गम्यतेऽनेनेति भगवत्पदं भगवत्प्राप्तिसाधनं नैष्कर्म्यं निवृत्तिधर्म्मं ये विद्युद्वदतीव चञ्चलायुषोऽपि साधयन्ति तेषां भगवद्भक्तानामन्यदेवादिपदं किमु दुर्लभं न किंचिदित्यर्थः ॥ २७ ॥ ❀ ❀ अभक्तं शोचन्ति स इति। यः पुमानापवर्ग्यमपवर्गसाधनं मानुष्यं मनुष्यजन्म कृच्छ्रेण दुस्साध्येन महता कर्मपरिपाकेन भुवि लब्ध्वापि विषयेषु विषज्जते स वञ्चितो दैवेन। बतेति खेदे ॥ २८ ॥ ❀ ❀ एवं सुरस्त्रीषु स्तुवन्तीषु सतीषु वधूरर्चिः पतिलोकं गता प्राप्ता। कोऽसौ पतिलोकः आत्मवतां ज्ञानिनां धुर्यः श्रेष्ठः वैन्यः पृथुः अच्युताश्रयो भगवतो निवासभूतं वैकुण्ठाख्यं यं लोकं प्राप तं लोकं गतेत्यर्थः ॥ २९ ॥ ❀ ❀ उपसंहरति इत्थमिति। भगवत्तमः भगवताम्—"उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्। वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति ॥" इत्युक्तविधभगवतां मध्ये श्रेष्ठः असौ पृथुरित्थंभूतानुभावः उक्तविधप्रभावसम्पन्नः। उदारचरितस्य पृथोश्चरितं ते तुभ्यं मया कीर्तितम् ॥ ३० ॥ ❀ ❀ एतच्चरितकीर्तनश्रवणश्रावणफलमाह। यः पुमान्सुमहत्पुण्यसाधनमिदं चरितमवहितमनाः समाहितचित्तः श्रद्धया पठेत् शृणुयात् श्रावयेद्वा स पृथोः पदवीं गतिमियात् प्राप्नुयात् ॥ ३१ ॥ ❀ ❀ आनुषङ्गिकफलमाह ब्राह्मणः ब्रह्मवर्चस्वी भवेत् राजन्यः क्षत्रियः पठनादिकं कुर्वन् जगतीपतिर्भवेत् वैश्यः विट्पतिः शूद्र उत्तमतां सजातीयेषु प्राप्नुयात् ॥ ३२ ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

धन्या सर्वगुणैः पूर्णा "अनपेक्षो गुणैः पूर्णो धन्य इत्युच्यते बुधैः" इत्यभिधानम् ॥ २५-२६ ॥ ❀ ❀ ये मर्त्या नैष्कर्म्यं मोक्षलक्षणं भगवत्पदं साधयन्त्युत विद्युल्लोलानि चलान्यायूंषि येषां ते तथा तेषामन्यद्दुरापं किं न किमपीत्यर्थः ॥ २७ ॥ ❀ ❀ आपवर्ग्यं मुक्तिसाधनकारणम् ॥ २८ ॥ ❀ ❀ पतिलोकं नाथवन्तं लोकमिति शङ्कानिवृत्त्यर्थं वैन्यो यं लोकं प्राप तं पतिलोकं गताभूदिति स्पष्टीकृतम् ॥२९॥ ❀ ❀ उपसंहरति इत्थमिति। योऽसौ पृथुरित्थंभूतानुभावः प्रभावः "अनुभावः प्रभावे स्यान्निश्चये भावसूचके" इति यादवः। "भगो योन्यां भगो यत्ने यशोवीर्यार्कभूतिषु। कान्तीच्छाज्ञानवैराग्यधर्मैश्वर्यतपःसु च ॥"

च ॥" इति वचनात् सत्प्रयत्नादिगुणवतामतिशयेन प्रधानत्वात् भगवत्तमः ॥ ३० ॥ ❀ ❀ फलमाह य इति । पदवीं भक्तिज्ञानादिलक्षणाम् ॥ ३१ ॥ ❀ ❀ वर्णभेदेन फलं विविनक्ति । ब्राह्मण इति ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

एषा इत्यङ्गुल्या दर्शयन्ति । ऊर्द्ध्वं श्रीवैकुण्ठलोकं अनुवैन्यमित्यग्रपश्चाद्भावेन दर्शनात् ॥ २६ ॥ ❀ ❀ टीकायां भगवत्प्रापकं ज्ञानमिति भक्तियोगाङ्गत्वमुक्तम् । यद्वा भगवत्पदं श्रीवैकुण्ठे नैष्कर्म्यं कर्म्मणा न साध्यमित्यर्थः । विद्युल्लोलायुष इति चित्सुखसंमतः ॥ २७ ॥ ❀ ❀ आपवर्ग्यं सालोक्यादिसिद्धिदं भक्तियोगसिद्धिदं वा ॥ २८ ॥ ❀ ❀ पत्युः श्रीपृथोः सम्बन्धिनं लोकम् । तत्प्राप्तलोकमित्यर्थः । तस्य प्रापकत्विकत्वं निषेधयति । यं वा इति । आत्मविदां धुर्यः । अच्युताश्रय इति ज्ञानप्रचारकत्वेनात्मविदामाश्रयः । स्वतस्त्वच्युतमात्रशरण इत्यर्थः ॥ २९-३१ ॥ ❀ ❀ ब्राह्मण इति सार्द्धयुग्मकम् ॥ ३२-३८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

एषेत्यङ्गुल्या दर्शयन्ति । ऊर्ध्वमित्यधः किं चिताग्निं पश्यथेति भावः । नूनमिति वितर्के । येयं विमानस्था काचित् विद्योतिनी दृश्यते सैषा अर्चिरेव भवेदित्यर्थः । अनुवैन्यमित्यग्रे विमानस्थं वैन्यं तत्पश्चादर्चिषमपि विमाने पश्यतेत्यर्थः । अस्मानतीत्येति वयं देवता भूत्वाप्यस्याः पादतलवर्तिन्योऽभूमेति भावः ॥ २६ ॥ ❀ ❀ हन्त हन्त ईदृश्य एव मानुष्यो वयमपि भूयास्म यदि भाग्ये स्यादित्याहुस्तेषामिति । किमन्यत् पारमेष्ठ्यादिकं तु ये वै निश्चितमेते पृथ्वर्चिःप्रभृतयः भगवतः पदं धाम वैकुण्ठं नैष्कर्म्यरूपम् ॥ २७ ॥ ❀ ❀ अभक्तं शोचन्ति स इति ॥ २८ ॥ ❀ ❀ ननु किं सहमरणपुण्यलभ्यं पतिलोकं नहि नहि यं लोकं वै निश्चितं वैन्यः प्राप आत्मविदां धुर्य्य इति न तस्य प्राकृतः पतिलोकः प्राप्यई इति भावः । अच्युताश्रय इति नापि सायुज्यं लभ्यम् । 'न कामये नाथे'त्यादितदीयप्रार्थनाविरोधात् । अतः श्रीस्वामिचरणैरेतदध्यायार्थ उक्तः । "त्रयोविंशे सभार्य्यस्य वने नित्यसमाधितः । विमानमधिरुह्याथ वैकुण्ठगतिरीर्य्यते" इति भक्तभिन्नेष्वेव पतिलोकस्य बलीयस्त्वं ज्ञेयम् ॥ २९-३१ ॥ ❀ ❀ विशां पश्वादीनां वैश्यानां वा पतिः स्यात् ॥ ३२-३६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सर्वात्मना संपूर्णचेतसा पतिं भेजे अभजत् ॥२५॥ ❀ ❀ नूनं निश्चितमस्मानतीत्य अतिक्रम्य ऊर्ध्वं व्रजति ॥२६॥ ❀ ❀ निर्गतानि बन्धनभूतान्युपासकानां कर्माणि यस्मात्तन्नैष्कर्म्यं स्वाश्रितकर्मबन्धविमोचकं परं ब्रह्म ये भुवि साधयन्ति आराधयन्ति तेषां भगवत्पदम् अन्यत् पुरुषार्थजातं च किं दुरापमपि तु सुलभमेवेत्यर्थः ॥ २७ ॥ ❀ ❀ बतेति खेदे, य आपवर्ग्यं मुक्तिसाधनं मानुष्यं महत्कृच्छ्रेण लब्ध्वा विषयेषु इन्द्रियार्थेषु विषज्जते स मायया वञ्चितः । अत एव आत्मने द्रुह्यतीत्यात्मध्रुग् भवति ॥ २८ ॥ वैन्यः यं वैष्णवं लोकं प्राप तं पत्युर्वैन्यस्य लोकं गता ॥ २९ ॥ ❀ ❀ भगवत्तमः-"उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" एवंविधः, अतिशयेन भगवान् इति भगवत्तमः । उद्दामचरितस्य उत्तमपराक्रमस्य ॥ ३१ ॥ ❀ ❀ अवहितः सावधानः ॥ ३१ ॥ ❀ ❀ विट्पतिः वैश्यानां पतिः सत्तमतां स्वज्ञातिप्रधानम् ॥३२॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

तद्भाषणमेव दर्शयति-अहो इति चतुर्भिः । इयं वधूरर्चिरहो अतिशयेन धन्या कृतार्था । तत्र हेतुः-या चैवं सर्वभावेन पतिं भेजे । तत्र दृष्टान्तमाह-यज्ञेशं श्रीविष्णुं श्रीर्लक्ष्मीर्वधूरिवेति । तस्य भजनं फलिष्यत्येव भगवदनुग्रहेण महत्त्वादित्यभिप्रेत्य तं विशिनष्टि-भूभुजां राज्ञां पतिं पालकमिति ॥ २५ ॥ ❀ ❀ सैषा सती पतिव्रताऽर्चिर्दुर्विभाव्येन मनसाऽपि सङ्कल्पयितुमशक्येन राज्यत्यागपतिसेवापूर्वकतपश्चर्यालक्षणेन स्वकर्मणा वैन्यं पतिमनु तेन सहास्मान् देवानपि अतीत्योर्ध्वं न्यापि वैकुण्ठं नूनं निश्चयेन व्रजति तत्पश्यतेत्यन्वयः ॥ २६ ॥ ❀ ❀ भुवि ये मनुष्या लोलायुषो लोलं चञ्चलमसदपेक्षयाऽतितुच्छमायुर्येषां ते तथाभूता अपि नैष्कर्म्यं यज्ञादिभिर्महद्भिः कर्मभिरप्यलभ्यं भगवत्पदं भगवदाराधनेन साधयन्ति तेषां मर्त्यानां यद्देवादिपदं किन्तु दुरापं दुर्लभं नैव किञ्चिद्दुर्लभमित्यर्थः । तुशब्दोऽवधारणे । वा इति प्रसिद्धौ, प्रसिद्धमेतच्छास्त्रेष्वित्यर्थः । उतेत्याश्चर्ये । आश्चर्यमेतद्यन्महदायुषां देवानां दुर्लभं तदल्पायुषो मनुष्याः साधयन्तीति भावः ॥ २७ ॥ ❀ ❀ एवं भक्तान् स्तुत्वा विषयासक्त्या भगवद्विमुखं शोचन्ति-स इति । यो जन्मान्तरे महता कृच्छ्रेण तपश्चर्यादिकष्टेन अस्मिञ्जन्मनि आपवर्ग्यं संसारविमुक्तिसाधनं भुवि साधनयोग्यभूमौ मानुष्यं लब्ध्वाऽपि श्वसूकरादिसाधारणेषु विषयेषु विषज्जते स वञ्चितो भगवन्मायया विमोहित एवेत्यन्वयः । बतेत्यवधारणे । न चायं विमोहः साधारणः किन्तु नरकपातादिदुःखहेतुत्वेन आत्मद्रोहपर्यवसायीत्याह-आत्मध्रुगिति ॥ २८ ॥ ❀ ❀ अमरस्त्रीष्वेवं स्तुवतीषु सतीषु यं वैकुण्ठलोकं आत्मविदां ज्ञानिनां धुर्यो मुख्यो वैन्यः प्राप तमेव स्वपतिलोकं वधूरर्चिरपि गतेत्यन्वयः । वा इत्यवधारणे । वैकुण्ठप्राप्तौ हेतुं सूचयंस्तं विशिनष्टि-अच्युताश्रय इति, यतो भगवद-

नन्यशरण इत्यर्थः ॥ २९ ॥ ❀ ❀ प्रकरणमुपसंहरति–इत्थमिति । इत्थम्भूतोऽत्यलौकिकोऽनुभावो यस्य तथाभूतोऽसौ पृथुः। एवम्प्रभावे हेतुमाह–स इति । यतः स भगवत्तमः भागवतमुख्यः । तस्य चरितं ते तव कीर्त्तितम् । चरितस्य सर्वपुरुपार्थहेतुत्वात् तच्छ्रवणकीर्त्तनयोग्यत्वं सूचयन् विशिनष्टि–उद्दामचरितस्येति । उद्गतं दाम श्रोत्रादीनां फलदाने बन्धनं प्रतिबन्धो यस्मात्तथाभूतं चरितं यस्य तस्येत्यर्थः ॥ ३० ॥ ❀ ❀ अत एवैतच्छ्रवणकीर्त्तनादिफलं दर्शयति–य इदमित्यादिना यावदध्यायसमाप्ति। यः प्राणी अवहितः सावधानः सन् इदं पृथ्वाख्यानं श्रद्धया पठेदन्यान् श्रावयेत् स्वयं वा शृणुयात् सोऽपि पृथोः पदवीं न्यापिं वैकुण्ठाख्यं स्थानमियात् प्राप्नुयादित्यन्वयः । तत्र हेतुगर्भविशेषणमाह–सुमहत्पुण्यमिति, यतः श्रोत्रादीनां सर्वापराधनिवृत्तिपूर्वकं भगवत्प्रसादानुकूलपुण्यजनकमित्यर्थः ॥ ३१ ॥ ❀ ❀ परलोकफलमुक्त्वाऽस्मिँल्लोके फलमाह–ब्राह्मण इति सार्द्धपञ्चभिः। ब्राह्मण एतत्पठन् ब्रह्मवर्चस्वी तेजस्वी स्यात् । राजन्यः क्षत्रिय एतत्पठन् जगतीपतिः राजा स्यात् । वैश्यः पठन् विशां वैश्यानां पतिः मुख्यः स्यात् । शूद्रः पठन् सत्तमतां श्रेष्ठतां सूतवत्पूज्यतामियात् प्राप्नुयात् ॥ ३२ ॥

### भाषानुवाद

देवियोंने कहा—अहो ! यह स्त्री धन्य है ! इसने अपने पति राजराजेश्वर पृथुकी मन-वाणी-शरीरसे ठीक उसी प्रकार सेवा की है, जैसे श्रीलक्ष्मीजी यज्ञेश्वर भगवान् विष्णुकी सेवा करती हैं ॥ २५ ॥ ❀ ❀ अवश्य ही अपने अचिन्त्य कर्मके प्रभावसे यह सती हमें भी लाँघकर अपने पतिके साथ उच्चतर लोगोंको जा रही है ॥ २६ ॥ ❀ ❀ इस लोकमें कुछ ही दिनोंका जीवन होनेपर भी जो लोग भगवान्के परमपदकी प्राप्ति करनेवाला आत्मज्ञान प्राप्त कर लेते हैं, उनके लिये संसारमें कौन पदार्थ दुर्लभ है ॥ २७ ॥ ❀ ❀ अतः जो पुरुष बड़ी कठिनतासे भूलोकमें मोक्षका साधनस्वरूप मनुष्य-शरीर पाकर भी विषयोंमें आसक्त रहता है, वह निश्चय ही आत्मघाती है; हाय ! हाय ! वह ठगा गया ! ॥ २८ ॥ ❀ ❀ श्रीमैत्रेय जी कहते हैं—विदुरजी ! जिस समय देवाङ्गनाएँ इस प्रकार स्तुति कर रही थीं, भगवान्के जिस परमधामको आत्मज्ञानियोंमें श्रेष्ठ भगवत्प्राण महाराज पृथु गये, महारानी अर्चि भी उसी पतिलोकको गयीं ॥ २९ ॥ ❀ ❀ परमभागवत पृथुजी ऐसे ही प्रभावशाली थे । उनके चरित बड़े उदार हैं, मैंने तुम्हारे सामने उनका वर्णन किया ॥ ३० ॥ ❀ ❀ जो पुरुष इस परम पवित्र चरित्रको श्रद्धापूर्वक ( निष्कामभावसे ) एकाग्रचित्तसे पढ़ता, सुनता अथवा सुनाता है—वह भी महाराज पृथुके पद—भगवान्के परमधामको प्राप्त होता है ॥ ३१ ॥ ❀ ❀ इसका सकामभावसे पाठ करनेसे ब्राह्मण ब्रह्मतेज प्राप्त करता है, क्षत्रिय पृथ्वीपति हो जाता है, वैश्य व्यापारियोंमें प्रधान हो जाता है और शूद्रमें साधुता आ जाती है ॥ ३२ ॥

त्रिःकृत्व इदमाकर्ण्य नरो नार्यथवाऽऽदृता । अप्रजः सुप्रजतमो निर्धनो धनवत्तमः ॥ ३३ ॥
अस्पष्टकीर्तिः सुयशा मूर्खो भवति पण्डितः । इदं स्वस्त्ययनं पुंसाममङ्गल्यनिवारणम् ॥ ३४ ॥
धन्यं यशस्यमायुष्यं स्वर्ग्यं कलिमलापहम् । धर्मार्थकाममोक्षाणां सम्यक्सिद्धिमभीप्सुभिः ।
श्रद्धयैतदनुश्राव्यं चतुर्णां कारणं परम् ॥ ३५ ॥
विजयाभिमुखो राजा श्रुत्वैतदभियाति यान् । बलिं तस्मै हरन्त्यग्रे राजानः पृथवे यथा ॥ ३६ ॥
मुक्तान्यसङ्गो भगवत्यमलां भक्तिमुद्वहन् । वैन्यस्य चरितं पुण्यं शृणुयाच्छ्रावयेत्पठेत् ॥ ३७ ॥
वैचित्रवीर्याभिहितं महन्माहात्म्यसूचकम् । अस्मिन् कृतमतिर्मर्त्यः पार्थवीं गतिमाप्नुयात् ॥ ३८ ॥

अनुदिनमिदमादरेण शृण्वन् पृथुचरितं प्रथयन् विमुक्तसङ्गः ।
भगवति भवसिन्धुपोतपादे स च निपुणां लभते रतिं मनुष्यः ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे त्रयोविंशोऽध्यायः ॥ २३ ॥

अन्वयः—अप्रजः नरः अथवा नारी आदृता त्रिःकृत्वः इदम् आकर्ण्य सुप्रजतमः निर्धनः धनवत्तमः ॥ ३३ ॥ ❀ ❀ अस्पष्टकीर्तिः सुयशाः मूर्खः पण्डितः भवति इदम् पुंसाम् स्वस्त्ययनम् अमङ्गल्यनिवारणम् ॥ ३४ ॥ ❀ ❀ धन्यम् यशस्यम् आयुष्यम् कलिमलापहम् चतुर्णाम् धर्मार्थकाममोक्षाणाम् सम्यक् सिद्धिम् अभीप्सुभिः श्रद्धया अनुश्राव्यम् एतत् कारणम् ॥ ३५ ॥ ❀ ❀ विजयाभिमुखः राजा एतत् श्रुत्वा यान् अभियाति राजानः अग्रे तस्मै पृथवे यथा बलिम् हरन्ति ॥ ३६ ॥ ❀ ❀ भगवति अमलाम् भक्तिम् उद्वहन् मुक्तान्यसंगः वैन्यस्य पुण्यम् चरितम् शृणुयात्

श्रावयेत् पठेत् ॥ ३७ ॥ ❀ ❀ वैचित्रवीर्य महन्माहात्म्यसूचकम् अभिहितम् अस्मिन् कृतमतिः मर्त्यः पार्थिवीम् गतिम् आप्नुयात् ॥ ३८ ॥ ❀ ❀ विमुक्तसङ्गः इदम् पृथुचरितम् आदरेण अनुदिनम् शृण्वन् प्रथयन् सः मनुष्यः च भवसिन्धुपोतपादे भगवति निपुणाम् रतिम् लभते ॥ ३९ ॥

इति त्रयोविंशोऽध्यायः ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

यद्यपि बहूनि फलानि भवन्ति तथापि मुक्तान्यसंग एव श्रवणादि कुर्यात् ॥ ३७ ॥ ❀ ❀ महतो भगवतो माहात्म्यस्य सूचकम् । पार्थवीं पृथुसम्बन्धिनीम् । पार्थिवीमिति वा पाठः ॥ ३८ ॥ ❀ ❀ प्रथयन्कीर्तयन् भवसिन्धौ पोतो नौका पादो यस्य ॥ ३९ ॥

इति श्रीभा० म० चतुर्थे टीकायां त्रयोविंशोऽध्यायः ॥ २३ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अप्रज इति । समासान्तविधेरनित्यत्वान्नासिच् ॥ ३३ ॥ ❀ ❀ एतदनुसारचलनात्सुयशाः । मूर्खोऽज्ञः पंडितो निपुणः ऐहिकपारत्रिककर्त्तव्यज्ञानवान्भवति । अमंगल्यं रोगादि ॥ ३४ ॥ ❀ ❀ चतुर्णां धर्मादीनां परमुत्कृष्टम् । एतत्पृथुचरितम् ॥ ३५ ॥ ❀ ❀ यान् राज्ञस्ते राजानः, तस्मै एतच्छ्रोत्रे, बलिं करम् । "भागधेयः करो बलिः" इत्यमरः ॥ ३६ ॥ ❀ ❀ मुक्तान्यसंगः । फलेच्छारहितः ॥ ३७ ॥ ❀ ❀ वैचित्रवीर्येति । स्वस्यानधिकारं मा शंकीर्मनुष्यमात्रस्याधिकारात्त्वं तु विचित्रवीर्यात्मजत्वान्महाकुलप्रसूतोसीत्यभिप्रायः । यद्वा विचित्रमत्यद्भुतं वीर्यं प्रभावो वेदविभागकर्तृत्वलक्षणो यस्य व्यासस्य तस्यापत्यमसि तत एव तुभ्यं मयेदमुक्तमिति भावः । पृथुसम्बन्धिनीं पृथौ विद्यमानां भक्तिज्ञानादिलक्षणामिति यावत् । ननु पृथुकृतपर्वतोद्भेदादिरूपा गतिरन्यैः प्राप्तुमशक्येत्यत आह—पार्थिवीमिति । वेति । पार्थिवीं पार्थिवानां राज्ञामुचितामत्रौचित्येऽण् । मतिमिति पाठस्तु सुबोध एव ॥ ३८ ॥ ❀ ❀ प्रथयन्व्याख्यां कुर्वन्वा । निपुणां श्रीहरिप्रसादजननसमर्थाम् ॥ ३९ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे त्रयोविंशोऽध्यायः ॥ २३ ॥

### श्रीमद्वीरराघवव्याख्या

नरो नारी वाद्रता आदरेण युक्तः त्रिःकृत्वः त्रिवारमिदमाकर्ण्य अप्रजाः सुप्रजाः विद्यारूपद्रविणबलादियुक्तपुत्रवान् भवेत् निर्धनः धनवतां मध्ये श्रेष्ठः अनभिव्यक्तकीर्तिः विपुलकीर्तिः मूर्खः ज्ञानविधुरः पण्डितो भवेत् ॥ ३३ ॥ ❀ ❀ स्वस्ति मङ्गलं ईयतेऽनेनेति तथा अमङ्गलं निवारयतीति तथा धन्यं धनसम्पादकं यशस्करम् आयुष्करं स्वर्गसाधनं कलिदोषहरम् ॥ ३४ ॥ ❀ ❀ धर्मादीनां सिद्धिं सम्यगभीप्सुभिः चतुर्णां धर्मादीनां परं कारणं साधनमेतत् चरित्रं श्रद्धयानुश्राव्यम् ॥ ३५ ॥ ❀ ❀ एतच्चरितं श्रुत्वा राजा संग्रामाभिमुखो यान् याति तस्मै अभियात्रे बलिं हरन्ति यथा राजानः पृथवे ॥ ३६ ॥ ❀ ❀ यद्यप्येवंविधानि बहूनि फलानि तथापि त्यक्तान्यफलसङ्गः भगवति भक्तिमुद्वहन्कुर्वन् ॥ ३७ ॥ ❀ ❀ वैचित्रवीर्याणां विचित्रवीर्यशालिनामभिमतं महतो भगवतो माहात्म्यस्य सूचकं वैन्यस्य चरितं शृणुयात् पठेच्च एवं चेदस्मिन् भगवति कृतमतिर्मर्त्यः पार्थिवीं पृथुना लब्धां गतिमाप्नुयात् ॥ ३८ ॥ ❀ ❀ यं इदं पृथुचरितमत्यादरेण अनुदिनं शृण्वन्प्रथयन्कीर्तयन् विमुक्तान्यफलासङ्गः स मर्त्यः भवसिन्धौ पोतौ प्लवरूपौ पादौ यस्य तस्मिन् भगवति निपुणां मतिं लभेत ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिकायां त्रयोविंशोऽध्यायः ॥ २३ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

श्रवणाद्यावृत्त्यासाधारणफलमाह । त्रिःकृत्व इति ॥ ३३ ॥ ❀ ❀ प्रतिपन्थिनिवारकं चेदभीष्टसिद्धिः स्यादनेन तत्कथं स्यादित्यतस्तद्विशिनष्टि इदमिति ॥ ३४ ॥ ❀ ❀ व्याख्यातुर्विशेषफलमाह धर्मार्थेति । चरितस्य तादृक्सामर्थ्याभावे तदिच्छया किमित्यत उक्तं चतुर्णामिति । एतत्सामान्यस्वभावे किमनेनेत्यत उक्तं परमिति परमुत्कृष्टम् ॥ ३५ ॥ ❀ ❀ असकृदावृत्त्या क्षिप्रं दिग्विजयफलमपि स्यादित्याह । संग्रामाभिमुख इति ॥ ३६ ॥ ❀ ❀ भगवद्भक्त्यविनाभावेन श्रवणादि कुर्वत उक्तं फलं स्यान्नान्यथा इत्याह मुक्तेति ॥ ३७ ॥ ❀ ❀ पुनस्तात्पर्यादस्मिन्भक्तिं प्रथयति वैचित्रवीर्येति । हे विदुर ! पार्थवीं

प्रथोर्विद्यमानाम् ॥ ३८ ॥ ❀ ❀ तस्य चरितस्य शब्दविषयपरत्वे कथं भागवतानामुपकारार्थत इति तत्राह अनुदिनमिति। प्रथयन् व्याख्यां कुर्वन् भवसिन्धोः संसारसमुद्रस्य पारभूते तीरान्तरीभूते निपुणां श्रीहरिप्रसादजननसमर्थाम् ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां त्रयोविंशोऽध्यायः ॥ २३ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

मनुष्य इति। मनुष्यमात्रस्याधिकारिता दर्शिता ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे त्रयोविंशोऽध्यायः ॥ २३ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अमलां शुद्धां भक्तिमुद्वहन् उद्वोढुं मुक्तान्यसङ्गः त्यक्तान्यफल एव शृणुयात् ॥ ३७ ॥ ❀ ❀ हे विचित्रवीर्यस्य पुत्र! महतां माहात्म्यस्य सूचकं पृथूपाख्यानमिदमभिहितम्। पार्थवीं पृथुसम्बन्धिनीम् ॥ ३८-३९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। त्रयोविंशश्चतुर्थस्य सङ्गतः सङ्गतः सताम् ॥ २३ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

त्रिःकृत्वः त्रिवारमाकर्ण्य सुप्रजा भवेत् धनवत्तमः धनवत्सु श्रेष्ठो भवेत् ॥ ३३ ॥ ❀ ❀ अमाङ्गल्यस्याहितस्य निवारणम् ॥ ३४ ॥ ❀ ❀ सम्यक्सिद्धिमभीप्सुभिः श्रद्धयैतदनुश्राव्यमिति सार्द्धश्लोकान्वयः ॥ ३५-३६ ॥ ❀ ❀ उत्तमाधिकारिणः प्रत्याह। मुक्तान्यसंग इति ॥ ३७ ॥ ❀ ❀ हे वैचित्रवीर्य! विदुर! महतो भगवतो माहात्म्यसूचकं वैन्यस्य चरितमभिहितं कथितमस्मिन् चरिते पार्थवीं पृथुसंबन्धिनीं गम्यते इति गतिस्तां भगवद्भावापत्तिम् ॥ ३८ ॥ ❀ ❀ प्रथयन् कीर्तयन् भवसिंधोः पोतस्तारकः पादो यस्य तस्मिन्। गम्यते अनया इति गतिर्भक्तिस्ताम् ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे त्रयोविंशोऽध्यायः ॥ २३ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

नरो वाऽथ नारी वा नात्र वेदाध्ययनादिवद्वर्णाश्रमादिस्त्रीपुरुषाद्यधिकारविचारोऽस्ति, परन्तु श्रद्धाया अन्तरङ्गत्वमत आदृतः श्रद्धावान् सन्नादरपूर्वकमिदमाख्यानं त्रिःकृत्वः त्रीन् वारान् आकर्ण्य श्रुत्वा अप्रजः पुत्रादिरहितः सुप्रजतमो भगवद्भक्तबहुपुत्रवान् भवति। निर्धनो धनवत्तमो बहुधनवान् भवति। अस्पष्टकीर्त्तिः न स्पष्टा न प्रसृता कीर्तिर्यशो यस्य स सुयशाः प्रख्यातयशा भवति। मूर्खो विद्याहीनः पण्डितो विद्यावान् भवति ॥ ३३ ॥ ❀ ❀ इदमाख्यानं पुंसां श्रवणादितत्पराणां प्राणिनां स्वस्त्ययनं सर्वथा कल्याणकरम्। अमङ्गल्यनिवारणममङ्गल्यस्य दुःखादिजनकस्य दोषस्य निवारकम्। श्रवणादिपराणां धनार्थिनां धन्यं धनप्रापकम्। यशोर्थिनां यशस्यं यशःप्रापकम्। न च निर्धनो धनवत्तमो स्पष्टकीर्तिः सुयशाश्च भवतीत्युक्तत्वात् पुनर्धन्यं यशस्यमिति किमर्थमुच्यते पुनरुक्तत्वापत्तेरिति शङ्क्यं, यतो धन्यमत आकर्ण्य धनवत्तमो भवति यतो यशस्यमत आकर्ण्य सुयशा भवतीति हेतुहेतुमद्भावेनोक्तत्वान्न पुनरुक्तत्वापत्तिरिति बोध्यम्। आयुर्वृद्धिकामानामायुष्यं आयुषो वृद्धिकारणम्। स्वर्गार्थिनां स्वर्ग्यं स्वर्गप्रापकम्। कलियुगे तु देशकालपात्रादीनां दुर्लभत्वान्न दानादि दोषनिवर्त्तकं किन्तु भगवद्यशःश्रवणादिकमेव तथेत्यभिप्रेत्याह—कलिमलापहमिति, कलिमलान्यपहन्तीति तथा ॥ ३४ ॥ ❀ ❀ उक्तमेव निगमयति—धर्मेति। तस्माद्धर्मादीनां सम्यक् अनायासेन सिद्धिं प्राप्तिं अभीप्सुभिरिच्छद्भिः एतदाख्यानं श्रद्धया श्राव्यमित्युपलक्षणं श्रोतव्यं पठितव्यं च, यतो धर्मादीनां चतुर्णां परमव्यभिचारि कारणमेतदित्यन्वयः ॥ ३५ ॥ ❀ ❀ विजयाभिमुखो राजा एतदाख्यानं श्रुत्वा यान् देशाननुयाति तद्देशीया राजानस्तस्मै बलिं हरन्ति निवेदयन्ति, यथाऽग्रे पृथवे बलिं निवेदितवन्तस्तथेत्यन्वयः ॥ ३६ ॥ ❀ ❀ यद्यप्येतच्छ्रवणादितो बहूनि फलानि सकामानां भवन्ति तथापि फलानां तुच्छत्वात् मुक्तान्यसङ्गस्त्यक्तफलाभिसन्धिः सन् भगवत्यमलां निष्प्रयोजनां भक्तिमुद्वहन् निर्वहन् वैन्यस्य पुण्यं चरितं वक्तृलाभे शृणुयात् श्रोतृलाभे श्रावयेत् उभयालाभे स्वयं पठेदित्यन्वयः ॥ ३७ ॥ ❀ ❀ हे वैचित्रवीर्य विचित्रवीर्यस्य पुत्र विदुर इति पितृनिर्देशपूर्वकं सम्बोधनं महत्कुलोत्पन्नस्यैव शुद्धान्तःकरणस्य भवत्सदृशस्य शास्त्रगुरूपदिष्टेऽर्थे विश्वासो भवति नान्यस्येति सूचनार्थम्। महन्माहात्म्यसूचकं महतो भगवतो माहात्म्यस्य सूचकम्। यद्वा महतामन्येषामपि भगवद्भक्तानामन्येऽपि भगवद्भक्ता एवम्प्रभावा इति माहात्म्यस्य सूचकमिदं पृथुचरितं मया अभिहितं वर्णितम्। अभिधानस्य प्रयोजनमाह—अस्मिन्निति। येन फलाभिसन्धिरहितोऽस्मिन् कृतमतिः श्रवणादिनैतच्चिन्तयन् मर्त्यः प्राणी पार्थवीं पृथुसम्बन्धिनीं वैकुण्ठप्राप्तिलक्षणां गतिमाप्नुयादिति ॥ ३८ ॥ ❀ ❀ न च वैकुण्ठादिप्राप्तिमात्रं फलं प्राप्नोति किन्तु भगवति भक्तिमपि। परन्तु तस्या अतिदुर्लभत्वान्नैरन्तर्यादादरासङ्गत्वादयो गुणा अपि सहकारित्वेन अपेक्ष्यन्ते

इत्याह—अनुदिनमिति । यो मनुष्यो विमुक्तसङ्गः फलाभिसन्धिरहितः सन्ननुदिनं निरन्तरं बहुकालं आदरेणेदं पृथुचरितं शृण्वन् प्रथयन् श्रावणेन विस्तारयंश्च भवति स भगवति निपुणां संसारनिवर्त्तने दक्षां रतिं प्रीतिं लभते इत्यन्वयः । ननु भगवद्भक्तेः कथं संसारनिवर्त्तकत्वमित्याशङ्क्य भगवत्प्रभावादित्यभिप्रेत्य भगवन्तं विशिनष्टि—भवसिन्ध्विति । भवसिन्धौ संसारसागरोत्तरणार्थं पोतो नौः पादो यस्य तस्मिन्नित्यर्थः । पूर्वोक्तसर्वफलसमुच्चयार्थश्चकारः ॥ ३९ ॥

इति　श्रीवल्लभाचार्यवंश्यगोपालसूनुना । श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन　भजनानन्दसिद्धये । श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे कामनिरूपणे । त्रयोविंशो गतो वृत्तिं पृथुमोक्षनिरूपकः ॥ ३ ॥

### भाषानुवादः

स्त्री हो अथवा पुरुष—जो कोई इसे आदरपूर्वक तीन बार सुनता है, वह संतानहीन हो तो पुत्रवान्, धनहीन हो तो महाधनी, कीर्तिहीन हो तो यशस्वी और मूर्ख हो तो पण्डित हो जाता है, यह चरित मनुष्यमात्रका कल्याण करनेवाला और अमङ्गलको दूर करनेवाला है ॥ ३३-३४ ॥ ❀ ❀ यह धन, यश और आयुकी वृद्धि करनेवाला, स्वर्गकी प्राप्ति करानेवाला और कलियुगके दोषोंका नाश करनेवाला है । यह धर्मादि चतुर्वर्गकी प्राप्तिमें भी बड़ा सहायक है; इसलिये जो लोग धर्म, अर्थ काम और मोक्षको भलीभाँति सिद्ध करना चाहते हों, उन्हें इसका श्रद्धापूर्वक श्रवण करना चाहिये ॥ ३५ ॥ ❀ ❀ जो राजा विजयके लिये प्रस्थान करते समय इसे सुनकर जाता है, उसके आगे आ-आकर राजालोग उसी प्रकार भेंटें रखते हैं जैसे पृथुके सामने रखते थे ॥ ३६ ॥ ❀ ❀ मनुष्यको चाहिये कि अन्य सब प्रकारकी आसक्ति छोड़कर भगवान्में विशुद्ध निष्काम भक्ति-भाव रखते हुए महाराज पृथुके इस निर्मल चरितको सुने, सुनावे और पढ़े ॥ ३७ ॥ ❀ ❀ विदुरजी ! मैंने भगवान् के माहात्म्यको प्रकट करनेवाला यह पवित्र चरित्र तुम्हें सुना दिया । इसमें प्रेम करनेवाला पुरुष महाराज पृथुकीसी गति पाता है ॥ ३८ ॥ ❀ ❀ जो पुरुष इस पृथु-चरितका प्रतिदिन आदरपूर्वक निष्कामभावसे श्रवण और कीर्तन करता है उसका, जिनके चरण संसारसागरको पार करनेके लिये नौकाके समान हैं उन, श्रीहरिमें सुदृढ़ अनुराग हो जाता है ॥ ३९ ॥

### इति त्रयोविंशोऽध्यायः ॥ २३ ॥



# अथ चतुर्विंशोऽध्यायः

## मैत्रेय उवाच

विजिताश्वोऽधिराजाऽऽसीत्पृथुपुत्रः पृथुश्रवाः। यवीयोभ्योऽददात्काष्ठा भ्रातृभ्यो भ्रातृवत्सलः ॥ १ ॥
हर्यक्षायादिशत्प्राचीं धूम्रकेशाय दक्षिणाम्। प्रतीचीं वृकसंज्ञाय तुर्यां द्रविणसे विभुः ॥ २ ॥
अन्तर्धानगतिं शक्राल्लब्ध्वान्तर्धानसंज्ञितः। अपत्यत्रयमाधत्त शिखण्डिन्यां सुसम्मतम् ॥ ३ ॥
पावकः पवमानश्च शुचिरित्यग्नयः पुरा। वसिष्ठशापादुत्पन्नाः पुनर्योगगतिं गताः ॥ ४ ॥
अन्तर्धानो नभस्वत्यां हविर्धानमविन्दत। य इन्द्रमश्वहर्तारं विद्वानपि न जघ्निवान् ॥ ५ ॥
राज्ञां वृत्तिं करादानदण्डशुल्कादिदारुणाम्। मन्यमानो दीर्घसत्रव्याजेन विससर्ज ह ॥ ६ ॥
तत्रापि हंसं पुरुषं परमात्मानमात्मदृक्। यजंस्तल्लोकतामाप कुशलेन समाधिना ॥ ७ ॥
हविर्धानाद्धविर्धानी विदुरासूत षट् सुतान्। बर्हिषदं गयं शुक्लं कृष्णं सत्यं जितव्रतम् ॥ ८ ॥
बर्हिषत् सुमहाभागो हाविर्धानिः प्रजापतिः। क्रियाकाण्डेषु निष्णातो योगेषु च कुरूद्वह ॥ ९ ॥
यस्येदं देवयजनमनु यज्ञं वितन्वतः। प्राचीनाग्रैः कुशैरासीदास्तृतं वसुधातलम् ॥ १० ॥

अन्वयः—पृथुश्रवाः पृथुपुत्रः विजिताश्वः अधिराजा आसीत् भ्रातृवत्सलः यवीयोभ्यः भ्रातृभ्यः काष्ठाः अददात् ॥ १ ॥ ❀ ❀ विभुः हर्यक्षाय प्राचीम् धूम्रकेशाय दक्षिणाम् वृकसंज्ञाय प्रतीचीम् द्रविणसे तुर्याम् अदिशत् ॥ २ ॥ ❀ ❀ शक्रात् अन्तर्धानगतिम् लब्ध्वा अन्तर्धानसंज्ञितः शिखण्डिन्याम् सुसंमतम् अपत्यत्रयम् आधत्त ॥ ३ ॥ ❀ ❀ पावकः पवमानः शुचिः च इति अग्नयः पुरा वसिष्ठशापात् उत्पन्नाः पुनः योगगतिम् गताः ॥ ४ ॥ ❀ ❀ यः अश्वहर्तारम् इंद्रम् विद्वान् अपि न जघ्निवान् अन्तर्धानः नभस्वत्याम् हविर्धानम् अविन्दत ॥ ५ ॥ ❀ ❀ राज्ञाम् वृत्तिम् करादानदण्डशुल्कादिदारुणाम् मन्यमानः दीर्घसत्रव्याजेन विससर्ज ह ॥ ६ ॥ ❀ ❀ तत्र अपि हंसम् परमात्मानम् पुरुषम् यजन् कुशलेन समाधिना आत्मदृक् तल्लोकताम् आप ॥ ७ ॥ ❀ ❀ विदुर हविर्धानात् हविर्धानी बर्हिषदम् गयम् शुक्लम् कृष्णम् सत्यम् जितव्रतम् षट् सुतान् असूत ॥ ८ ॥ ❀ ❀ कुरूद्वह सुमहाभागः प्रजापतिः हाविर्धानिः बर्हिषद् क्रियाकाण्डेषु निष्णातः आसीत् ॥ ९ ॥ ❀ ❀ यस्य देवयजनं वितन्वतः इदम् वसुधातलम् अनुयज्ञम् प्राचीनाग्रैः कुशैः आस्तृतम् आसीत् ॥ १० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

एकादशभिरध्यायैः पृथोश्चरितमीरितम्। प्रचेतसामथाष्टाभिस्तन्मध्ये पंचभिः पितुः ॥ (१) ॥
चतुर्विंशे प्रपौत्रात्तु पृथोः प्राचीनबर्हिषः। प्रचेतसां जनिस्तेभ्यो रुद्रगीतं च वर्ण्यते ॥ (२) ॥

अधिराज आसीदित्यर्थः। यवीयोभ्यः कनिष्ठेभ्यः। काष्ठा दिशः ॥ १ ॥ ❀ ❀ तुर्यां चतुर्थीमुत्तरां दिशम् ॥ २ ॥ ❀ ❀ शक्राल्लब्ध्वा पृथोरश्वमेधेऽश्वविजयावसरे ॥ ३ ॥ ❀ ❀ अपत्यत्रयमेवाह पावक इति। पुरा यः शापस्तस्मान्मनुष्येषूत्पन्नाः सन्तो योगगतिमग्नित्वं प्राप्ताः ॥ ४ ॥ ❀ ❀ नभस्वत्यामन्यस्यां भार्यायाम्। अन्तर्धानस्य विशेषणं य इति। एतेन शक्रादन्तर्धानगतिलाभे कारणमुक्तम् ॥ ५ ॥ ❀ ❀ स चान्तर्धानो राज्ञां वृत्तिं करादानादिभिर्दारुणां परपीडात्मिकां मन्यमानो विससर्ज ह ॥ ६ ॥ ❀ ❀ हन्ति स्वानां क्लेशमिति हंसस्तं पुरुषं पूर्णम्। कुशलं पुण्यं तद्रूपेण समाधिना ॥ ७–८ ॥ ❀ ❀ हाविर्धानिर्हविर्धानस्य पुत्रः योगेषु च प्राणायामादिषु ॥ ९ ॥ ❀ ❀ क्रियाकांडनिष्णातत्वमाह यस्येति। इदं वसुधातलं देवयजनं यज्ञवाटं वितन्वतः यत्रैको यज्ञः कृतस्तत्समीप एव यज्ञान्तरं कुर्वंतः सतः अत एव प्राचीनबर्हिरित्युच्यते ॥ १० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तन्मध्येऽष्टसु मध्ये। पितुः प्राचीनबर्हिषः ( १ ) जनिरुत्पत्तिः। तेभ्यः प्रचेताभ्यः ( २ )। "ज्ञानं महेश्वरादिच्छेन्मोक्षमिच्छेज्जनार्दनात्" इत्यतो मोक्षसिद्धये रुद्राज्ज्ञानोपदेशप्रकारो ब्रह्मपदयोग्यानामृजूनां देवानामुत्तमाधिकारित्वं चात्राध्याये वर्ण्यते। तत्रादावेतस्योपोद्घातमाह–अधिराजो महाराजः। इत्यर्थं इति। सन्धिरत्रार्ष इति भावः। "दिशस्तु ककुभः काष्ठाः" इत्यमरः। 'कनिष्ठेऽनुजो यवीयांश्चे'ति च ॥ १ ॥ ❀ ❀ विभुः समर्थः ॥ २ ॥ ❀ ❀ विजिताश्व एवान्तर्द्धानसंज्ञितो जात इत्यर्थः ॥ ३ ॥ ❀ ❀ पुरा पूर्वजन्मनि। कस्मिंश्चित्कारणान्तरे यो वशिष्ठशापस्तस्मात्। योगयुक्ता गतिर्योगगतिर्दैववत्त्वं देवानां नैसर्गिकयोगित्वात्। "योगोन्येषां प्रयत्नेन स देवानां निसर्गतः" इत्युक्तेः। पुराणान्तरगम्यं शापवृत्तम्। यद्वा–अग्निर्हि सप्तर्षिभार्यारूपमोहितस्ताश्चकमे रन्तुं, तदा स्वाहा तत्तद्रूपिणी भूत्वाऽग्निं सिषेवे। सा महाप्रयत्नेनापि वशिष्ठभार्यारुन्धतीरूपामात्मानं कर्तुं न प्रबभूव। सोऽग्निस्तदा तां तादृशीमदृष्ट्वा पुनस्तामेव चकमे। वशिष्ठो योगबलेन तज्ज्ञात्वाग्निमाहूय त्वं यतो मत्पत्न्याः पातिव्रत्यभंगमिच्छस्यतस्त्रिविधेनैव रूपेण मनुष्यो भविष्यसीति प्रतीयते श्रीमहाभारतोक्तरीत्येति वा ज्ञेयम् ॥ ४ ॥ ❀ ❀ एतेन शक्राहननवचनेन। अहो मामयं यज्ञहनं ज्ञात्वापि यतो न जघानातोऽस्मै विद्यामन्तर्द्धानाख्यां दास्यामीति प्रसन्नः संस्तां तस्मै ददाविति ॥ ५ ॥ ❀ ❀ "शुल्को घट्टादिदेये स्याद्वरादर्थग्रहेऽस्त्रियाम्" इति मेदिन्युक्तेश्शुल्कं क्रेतृविक्रेतृनद्याद्यवतारकेभ्यो ग्राह्यं किञ्चिद् द्रव्यम्। आदिना युद्धादिग्रहः। साक्षात्त्यागे राजमर्यादालंघनं स्यादिति भावः ॥ ६ ॥ ❀ ❀ तत्रापि दीर्घसत्रेऽपि। कर्म कुर्वन्नपि। समाधिना चित्तैकाग्र्येण। तल्लोकतां तत्साक्षात्कारं प्राप "हंसः शुचिषत्" इत्यादिश्रुतेः ॥ ७ ॥ ❀ ❀ विदुरेति। त्वद्वज्ज्ञानिनोऽप्यनासक्त्या सन्तत्युत्पादनं न दोषायेति भावः ॥ ८ ॥ ❀ ❀ कुरूद्वहेति। कुरुनृपोपि बहुयज्ञकृद्यथा तथाऽयमपीति त्वं जानास्येवेति भावः ॥ ९ ॥ ❀ ❀ अत एव सर्वत्र कुशैराच्छादनादेव। पृथिव्यां तादृशं स्थलं नासीद्यत्र तेन यज्ञो न कृत इति इति भावः। यद्वाऽनुयज्ञं प्रतियज्ञं देवानां सर्वेषां यजनमर्चनं वितन्वतः विस्तार्य मुख्यकल्पेनैव कुर्वतः ॥ १० ॥

### श्रीमद्वीरराघवव्याख्या

एवं कात्स्न्येन पृथुचरितमभिधाय तत्सन्ततिं तच्चरित्रं चाभिधातुमुपक्रमते मुनिः विजिताश्व इति। विजिताश्वः पृथोः पुत्रः विपुलकीर्तिः अधिराज आसीत्। भ्रातृवत्सलो विजिताश्वः यवीयोभ्यः कनिष्ठेभ्यः भ्रातृभ्यः काष्ठा दिशः प्रादात् ॥ १ ॥ ❀ ❀ कां काष्ठां कस्मै अदादित्यत्राह। हर्यक्षाय प्राचीं दिशं धूम्रकेशाय दक्षिणां दिशं वृकसंज्ञाय प्रतीचीं दिशं तुरीयाय चतुर्थीमुदीचीं दिशं द्रविणसे विभुर्विजिताश्वः अदिशददात् ॥ २ ॥ ❀ ❀ पृथोरश्वविजयावसरे शक्रादन्तर्धानगतिं तिरोधानगतिं लब्ध्वा अन्तर्धानसंज्ञितः अन्तर्धानाख्योऽभूत् विजिताश्वस्यैव अन्तर्धान इति नामान्तरमित्यर्थः। अन्तर्धानसंज्ञितो विजिताश्वः शिखण्डिन्यां सुसम्मतमपत्यत्रयमाधत्त उत्पादयामास ॥ ३ ॥ ❀ ❀ अपत्यत्रयमेवाह पावक इति। पुरा यो वसिष्ठस्य शापः तस्मात् त्रयोऽग्नयः गार्हपत्याहवनीयदक्षिणाग्नयः पावकादिरूपेण मनुष्यैपूत्पन्नास्ते पुनर्योगगतिमग्नित्वं प्राप्ताः आहवनीयत्वादेः संस्काररूपत्वात्तेषां मनुष्यरूपेणोत्पत्त्यनर्हत्वात्तदभिमानिदेवतानामुत्पत्तिरत्र विवक्षिता ॥ ४ ॥ ❀ ❀ नभस्वत्यामन्यस्यां भार्यायामन्तर्द्धानो विजिताश्वः हविर्धानं पुत्रं लेभे। अन्तर्धानं विशिनष्टि। यः अन्तर्धानोऽश्वहर्तारं विद्वान् जानन्नपि न जघ्निवान्। एतेन शक्रादन्तर्धानगतिलाभे कारणमुक्तम् ॥ ५ ॥ ❀ ❀ राज्ञां वृत्तिं करादानदण्डशुल्कादिभिरतिदारुणां परपीडात्मिकां मन्यमानः दीर्घसत्रानुष्ठानव्याजेन विससर्ज हेत्याश्चर्ये ॥ ६ ॥ ❀ ❀ तत्रापि दीर्घसत्रेऽपि हंसं स्वानां क्लेशं हन्तीति हंसं शुद्धं वा परमात्मानं पुरुषं परमपुरुषमात्मदृक् प्रकृतिविलक्षणब्रह्मात्मकस्वात्मयाथात्म्यज्ञानी सन् यजन् कुशलेन विघ्नानुपहतेन समाधिना भगवल्लोकमवाप ॥ ७ ॥ ❀ ❀ हे विदुर ! हविर्धानादन्तर्धानिपुत्रात् हविर्धानी तद्भार्या बर्हिषदादीन् षट् सुतान् असूत ॥ ८ ॥ ❀ ❀ हे महाबाहो ! हाविर्धानिः हविर्धानस्यापत्यं बर्हिषत् प्रजापालनपरः क्रियाकाण्डेषु योगेषु च निष्णातः निष्ठितोऽभूत् हे कुरूद्वह ॥ ९ ॥ ❀ ❀ क्रियाकाण्डेषु निष्णातत्वमेवाह यस्येति। इदं वसुधातलं देवयजनं यज्ञवाटं वितन्वतः यत्र देशे एको यज्ञः कृतस्तत्समीप एव देशे पुनर्यज्ञान्तरं कुर्वतः प्राचीनाग्रैः कुशैः कृत्स्नं वसुधातलमास्तृतमासीत् अत एव प्राचीनबर्हिरित्युच्यते ॥ १० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

'ईश्वराज्ज्ञानमन्विच्छेन्मोक्षमिच्छेज्जनार्दनादि'त्यतो मोक्षसिद्धये रुद्राज्ज्ञानोपदेशप्रकारो ब्रह्मपदयोग्यानामृजूनां देवानामुत्तमाधिकारित्वं चेति द्वयमस्मिन्नध्याये निरूप्यते। तत्रादावेतस्योपोद्घातमाह विजिताश्व इति। काष्ठा दिशः ॥ १ ॥ ❀ ❀ तुर्यां चतुर्थीमुत्तराम् ॥ २ ॥ ❀ ❀ अन्तर्धानगतिमदृश्यविद्याम्। नाम्ना शिखण्डिन्यां भार्यायाम् ॥ ३ ॥ ❀ ❀ पुरा पूर्वजन्मनि। अग्नीनां मनुष्ययोनावुत्पत्तौ निमित्तमाह वसिष्ठेति। तत्कृत्यमाह पुनरिति ॥ ४ ॥ ❀ ❀ अन्तर्धानो

विजिताश्व एव। तं विशिनष्टि। य इन्द्रमिति ॥ ५ ॥ ❀ ❀ कर्माधिकारे स्थितस्य तस्य संन्यासप्रकारं वक्ति। राज्ञामिति ॥ ६ ॥ ❀ ❀ भगवदर्पणक्रियया क्रियमाणस्य कर्मण उत्पन्नज्ञानफलमाह। तत्रापीति। हंसं निर्मलम् ॥ ७-८ ॥ ❀ ❀ हविर्धानपुत्रो बर्हिषत्कर्मकाण्डेषु प्रवर्तमानो निवृत्तिमार्गाविरोधेनोभयत्र निष्णातोऽभूदित्याह बर्हिषदिति ॥ ९ ॥ ❀ ❀ तत्र क्रियाकाण्डनैष्णात्यं विशदयति यस्येति। अनेन प्राचीनबर्हिरिति नाम ध्वनयति। देवयजनं यज्ञक्षेत्रम् ॥ १० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

राज्ञामिति। साक्षात्त्यागे राजमर्य्यादालङ्घनं स्यादिति भावः ॥ १-१० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

पृथोः प्रपौत्रात् प्राचीनबर्हिषो ये प्रचेतसः। चतुर्विंशे रुद्रगीतं त आपुरिति कीर्त्यते ॥ ( १ ) ॥

अधिराजा अधिराजः यवीयोभ्यः स्वकनिष्ठेभ्यः ॥ १-२ ॥ ❀ ❀ लब्ध्वा पितुरश्वमेधीयाश्वविजयावसरे इत्यर्थः। अन्तर्द्धाननामा ॥ ३ ॥ ❀ ❀ योगगतिमग्मित्वम् ॥ ४ ॥ ❀ ❀ नभस्वत्यामन्यस्यां भार्य्यायां योऽन्तर्द्धानः। विद्वानपि न जघ्निवानिति। शक्रादन्तर्द्धानगतिलाभे कारणम् ॥ ५ ॥ ❀ ❀ योऽन्तर्द्धानो राज्ञां वृत्तिं विससर्ज्ज। कुतः करादानादिभिर्दारुणां मन्यमानः ॥ ६ ॥ ❀ ❀ अत्रापि दीर्घसत्रेऽपि कर्म्म कुर्वन्नपि हंसावतारं यजन् तस्य लोक एव लोको वासस्थानं यस्य मृगेक्षणीतिवत् समासः, तस्य भावस्तत्ता ताम् हन्ति स्वानां क्लेशमिति हंसस्तं पुरुषं पूर्णम् ॥ ७-९ ॥ ❀ ❀ यस्येदं वसुधातलं कुशैरास्तृतमाच्छादितमासीदिति। पृथिव्यां तादृशं स्थलं नासीद्यत्र तेन यज्ञः कृतो नासीदित्यत एव स प्राचीनबर्हिरित्युच्यत इति भावः। तत्राप्यनुयज्ञं प्रतियज्ञमेवं देवानां सर्वेषामेव यजनं वितन्वतः विस्तार्य्य मुख्यकल्पेनैव कुर्वतः ॥ १० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एवमेकादशभिरध्यायैः पृथुचरितमुक्त्वाऽथाष्टाभिस्तत्पुत्रपौत्रादिचरितमाह। तत्र चतुर्विंशे विजिताश्वादिगुणवर्णनपूर्वकं रुद्रगीतं वर्ण्यते। विजिताश्वः पृथुश्रवाः महायशाः अधिराजासीत् ह्यधिराजः आसीत्, यवीयोभ्यः कनिष्ठेभ्यः काष्ठा दिशः ॥ १-२ ॥ ❀ ❀ पृथोरश्वमेधविजयावसरे विजिताश्व एव शक्रादन्तर्द्धानगतिं लब्ध्वा अन्तर्धानसंज्ञितोऽभूत् ॥ ३ ॥ ❀ ❀ योगगतिमग्मित्वं गतः ॥ ४-५ ॥ ❀ ❀ अन्तर्द्धानस्यापि परमेश्वरभक्त्या मुक्तिमाह राज्ञामिति द्वाभ्याम्। राज्ञां वृत्तिं करादानादिभिर्दारुणां हिंस्रां मन्यमानो विससर्ज ह ॥ ६ ॥ ❀ ❀ तत्र व्याजमात्रेण क्रियमाणे दीर्घसत्रे हन्ति भक्तक्लेशमिति हंसमात्मदृक् उपास्योपासकस्वरूपवित् कुशलेन निर्विघ्नेन सम्यक् समाधिना यजन् पूजयन् तल्लोकतां भगवत्पार्षदत्वमाप ॥ ७-८ ॥ ❀ ❀ योगेषु ज्ञानवैराग्यभक्तिषु ॥ ९ ॥ ❀ ❀ तस्य क्रियाकाण्डेषु निष्णातत्वमाह यस्येति। अनुयज्ञं यत्रैको यज्ञः कृतस्तदनु तत्समीपे यज्ञान्तरं कुर्वतः प्राचीनाग्रैः कुशैरास्तृतं वसुधातलं देवयजनं देवपूजनस्थानमासीत् अत एव प्राचीनबर्हिरिति तस्य नाम ॥ १० ॥

### गोस्वामिश्रीगिरधरलालविहिता बालप्रबोधिनी

एकादशभिरध्यायैः कामप्राप्तिर्निरूपिता। अधुनाऽष्टभिरध्यायैर्मोक्षप्राप्तिर्निरूप्यते ॥ ( १ ) ॥
हरिभक्तप्रचेतोभ्यः साधनं विनिरूपितम्। रुद्रेणानुग्रहेणेति चतुर्विंशे निरूप्यते ॥ ( २ ) ॥

एवमेकादशभिरध्यायैः कामप्रकरणं निरूप्य अथेदानीमष्टभिरध्यायैर्मोक्षप्रकरणं निरूप्यते, तत्र मोक्षो द्विविधो ब्रह्मणि लयात्मको भगवति सायुज्यात्मकश्च, तत्र लयात्मकस्य मोक्षस्य अन्तःकरणाध्यासप्राणाध्यासेन्द्रियाध्यासदेहाध्यासस्वरूपविस्मरणभेदभिन्नपञ्चपर्वाविद्यानिवृत्तिप्रयोज्यत्वात्तन्निवृत्तेश्च, 'वैराग्यं साङ्ख्ययोगौ च तपो भक्तिश्च केशवे' इति पञ्चविधसाधनोत्थपञ्चपर्वविद्याहेतुकत्वात् तत्रायासबहुलत्वाच्च पञ्चभिरध्यायैः प्राचीनबर्हिषो ब्रह्मणि लयो निरूप्यते, भगवत्सायुज्यस्य भक्तिप्राबल्यप्रयोज्यत्वात् तत्रायासस्याल्पत्वाच्च त्रिभिरेवाध्यायैः प्रचेतसां भगवत्सायुज्यं निरूप्यते, तत्रास्मिन्नध्याये सायुज्यसाधनं प्रचेतोभ्यः श्रीरुद्रेणोपदिष्टं निरूप्यते। तत्रादौ 'के ते प्रचेतसो नाम कस्यापत्यानि सुव्रत' इति प्रश्नस्योत्तरत्वेन ध्रुववंशकथनस्योपक्रान्तत्वात् मध्ये पृथुचरितवर्णनं समाप्य पुनस्तद्वंशवर्णनमुपक्रामत्ति—विजिताश्व इति। पृथुपुत्रो विजिताश्वोऽधिराज आसीदित्यन्वयः। तस्य तद्योग्यतां सूचयन् विशिनष्टि—पृथुश्रवा इति, महायशा इत्यर्थः। तदा स यवीयोभ्यः कनिष्ठेभ्यो भ्रातृभ्यः काष्ठा दिशोऽददादित्यन्वयः। तद्दाने हेतुं सूचयंस्तं विशिनष्टि—भ्रातृवत्सल इति, तेषु प्रीतियुक्त इत्यर्थः ॥ १ ॥ ❀ ❀ दानविभागमेव

दर्शयति—हर्यक्षायेति । हर्यक्षाय प्राचीं पूर्वां दिशमादिशत् ददावित्यस्य सर्वत्रान्वयः । धूम्रकेशाय दक्षिणां दिशं ददौ । वृकसञ्ज्ञाय प्रतीचीं पश्चिमां दिशं ददौ द्रविणसे तुर्यां चतुर्थीमुत्तरां दिशं ददौ । एवं दाने सामर्थ्यं हेतुं सूचयंस्तं विशिनष्टि—विभुरिति ॥ २ ॥ ❀ ❀ विजिताश्वस्यैव सहेतुकं नामान्तरमाह—अन्तर्द्धानेति । शक्राद्विजितोऽश्वो येन स विजिताश्व एव अश्वविजयसमये भीतस्य शक्रस्य वधाकरणात् प्रसन्नात्तस्मादन्तर्धानगतिं तिरोधानसामर्थ्यं वरत्वेन लब्ध्वाऽन्तर्द्धानसञ्ज्ञितो जात इत्यर्थः । तस्यापत्योत्पत्तिं दर्शयति—अपत्येति । तस्य शिखण्डिनी नभस्वती चेति भार्याद्वयम् । तत्र शिखण्डिन्यां सुसम्मतं सौशील्यादिगुणपराक्रमादिभिः स्वयोग्यत्वेन सर्वसम्मतमपत्यत्रयं स आधत्त उत्पादयामासेत्यन्वयः ॥ ३ ॥ ❀ ❀ अपत्यत्रयमेव दर्शयति—पावक इति । अग्नीनां कथं मनुष्येषु जन्मेत्याकाङ्क्षायामाह—पुरेति, पुरा यो वसिष्ठस्यर्षेः शापस्तस्मान्मनुष्येषूत्पन्नाः सन्तः पुनर्योगगतिं गताः, योगमार्गेण विमुक्ता इत्यर्थः ॥ ४ ॥ ❀ ❀ अन्यस्यां भार्यायां विजिताश्वस्यापत्योत्पत्तिं दर्शयति—अन्तर्द्धान इति । तस्य शक्रादन्तर्द्धानगतिलाभे हेतुमेव स्पष्टयति—य इति ॥ ५ ॥ ❀ ❀ तस्यापि सर्वत्यागेन मुक्तिप्रकारमाह—राज्ञामिति । राज्ञां वृत्तिं जीविकां करादिभिर्दारुणां प्राणिपीडाकरां मन्यमानो दीर्घसत्रव्याजेन तां विससर्जेत्यन्वयः । हेति वृत्तेर्दारुणत्वं स्पष्टमेवेति सूचनाय ॥ ६ ॥ ❀ ❀ तत्रापि सत्रेपि आत्मदृक् द्रव्यदेशकालक्रियादेवतादिषु परमात्मदृष्टिं कुर्वन् हंसं शुद्धं भक्तदुःखहन्तारं पुरुषं पूर्णं परमात्मानं भगवन्तं यजन् सत्रेण पूजयन् कुशलेन निपुणेन तीव्रेण समाधिना चित्तैकाग्र्येण तस्य भगवतो लोकतां लोकं वैकुण्ठमाप प्राप्तवानित्यन्वयः ॥ ७ ॥ ❀ ❀ स्नेहेन सम्बोधयति—हे विदुर हविर्द्धानात् स्वपत्युर्हविर्द्धानी तत्पत्नी गर्भधारणं कृत्वा षट् सुतान् असूत । सुतानेव दर्शयति—बर्हिषदमित्यादिना ॥ ८ ॥ ❀ ❀ के ते प्रचेतस इति प्रश्ने सति शुद्धे वंशे भगवद्भक्तानां जन्म भवतीति सूचयन् प्रायेणास्मिन् वंशे मुक्तिप्रदर्शनेन वंशस्य शुद्धत्वमुक्तमिदानीं साक्षात्तत्पितुरेव योगेन कर्मणा च शुद्धत्वं दर्शयति—बर्हिषदिति द्वाभ्याम् । हाविर्द्धानिर्हविर्द्धानस्य पुत्रो बर्हिषत् सुमहाभागो महापुण्यशाली जातः । तत्र हेतूनाह—प्रजापतिरिति, प्रजापालनरूपस्वासाधारणधर्मेणेत्यर्थः । क्रियाकाण्डेषु निष्णात इति, यज्ञाद्यनुष्ठानलक्षणेन धर्मेण चेत्यर्थः । योगेषु च निष्णात इति, प्राणायामादियोगाभ्यासेन चेत्यर्थः । कुरून् उद्वहतीति तथा सम्बोधनेन यथा त्वं सर्वप्राणिनिर्वाहको भगवद्भजनादिस्वधर्मनिर्वाहकश्च तथा सोऽपीति सूचयति ॥ ९ ॥ ❀ ❀ तस्य क्रियानैपुण्यमेव दर्शयति—यस्येति । यस्य बर्हिषदोऽनुयज्ञं वितन्वतः यत्रैको यज्ञः कृतस्तदनन्तरं तत्समीप एव यज्ञान्तरं विस्तारयतः प्राचीनाग्रैः पूर्वमुखैः कुशैरास्तृतमाच्छादितमिदं सर्वमपि वसुधातलं देवयजनं यज्ञवाटमासीदित्यन्वयः ॥ १० ॥

भाषानुवादः

### पृथुकी वंशपरम्परा और प्रचेताओंको भगवान् रुद्रका उपदेश

श्रीमैत्रेयजी कहते हैं—विदुरजी ! महाराज पृथुके बाद उनके पुत्र परम यशस्वी विजिताश्व राजा हुए। उनका अपने छोटे भाइयोंपर बड़ा स्नेह था, इसलिये उन्होंने चारोंको एक-एक दिशाका अधिकार सौंप दिया ॥ १ ॥ ❀ ❀ राजा विजिताश्वने हर्यक्षको पूर्व, धूम्रकेशको दक्षिण, वृकको पश्चिम और द्रविणको उत्तर दिशाका राज्य दिया ॥ २ ॥ ❀ ❀ उन्होंने इन्द्रसे अन्तर्धान होनेकी शक्ति प्राप्त की थी, इसलिये उन्हें 'अन्तर्धान' भी कहते थे। उनकी पत्नीका नाम शिखण्डिनी था। उससे उनके तीन सुपुत्र हुए ॥ ३ ॥ ❀ ❀ उनके नाम पावक पवमान और शुचि थे। पूर्वकालमें वसिष्ठजीका शाप होनेसे उपर्युक्त नामके अग्नियोंने ही उनके रूपमें जन्म लिया था। आगे चलकर योगमार्गसे ये फिर अग्निरूप हो गये ॥ ४ ॥ ❀ ❀ अन्तर्धानके नभस्वती नामकी पत्नीसे एक और पुत्ररत्न हविर्धान प्राप्त हुआ। महाराज अन्तर्धान बड़े उदार पुरुष थे। जिस समय इन्द्र उनके पिताके अश्वमेध यज्ञका घोड़ा हरकर ले गये थे, उन्होंने पता लग जानेपर भी उनका वध नहीं किया था ॥ ५ ॥ ❀ ❀ राजा अन्तर्धानने कर लेना, दण्ड देना, जुरमाना वसूल करना आदि कर्तव्योंको बहुत कठोर एवं दूसरोंके लिये कष्टदायक समझकर एक दीर्घकालीन यज्ञमें दीक्षित होनेके बहाने अपना राज-काज छोड़ दिया ॥ ६ ॥ ❀ ❀ यज्ञकार्यमें लगे रहनेपर भी उन आत्मज्ञानी राजाने भक्तभयभञ्जन पूर्णतम परमात्माकी आराधना करके सुदृढ़ समाधिके द्वारा भगवान्‌के दिव्य लोकको प्राप्त किया ॥ ७ ॥ ❀ ❀ विदुरजी ! हविर्धानकी पत्नी हविर्धानीने बर्हिषद्, गय, शुक्ल, कृष्ण, सत्य और जितव्रत नामके छः पुत्र पैदा किये ॥ ८ ॥ ❀ ❀ कुरुश्रेष्ठ विदुरजी ! इनमें हविर्धानके पुत्र महाभाग बर्हिषद् यज्ञादि कर्मकाण्ड और योगाभ्यासमें कुशल थे। उन्होंने प्रजापतिका पद प्राप्त किया ॥ ९ ॥ ❀ ❀ उन्होंने एक स्थानके बाद दूसरे स्थानमें लगातार इतने यज्ञ किये कि यह सारी भूमि पूर्वकी ओर अग्रभाग करके फैलाये हुए कुशोंसे पट गयी थी। ( इससे आगे चलकर वे 'प्राचीनबर्हि' नामसे विख्यात हुए ) ॥ १० ॥

**सामुद्रीं देवदेवोक्तामुपयेमे शतद्रुतिम् । यां वीक्ष्य चारुसर्वाङ्गीं किशोरीं सुष्ठ्वलङ्कृताम् ।**
**परिक्रमन्तीमुद्वाहे चकमेऽग्निः शुकीमिव ॥ ११ ॥**

विबुधासुरगन्धर्वमुनिसिद्धनरोरगाः । विजिताः सूर्यया दिक्षु क्वणयन्त्यैव नूपुरैः ॥ १२ ॥
प्राचीनबर्हिषः पुत्राः शतद्रुत्यां दशाभवन् । तुल्यनामव्रताः सर्वे धर्मस्नाताः प्रचेतसः ॥ १३ ॥
पित्राऽऽदिष्टा प्रजासर्गे तपसेऽर्णवमाविशन् । दश वर्षसहस्राणि तपसाऽऽर्चंस्तपस्पतिम् ॥ १४ ॥
यदुक्तं पथि दृष्टेन गिरिशेन प्रसीदता । तद्ध्यायन्तो जपन्तश्च पूजयन्तश्च संयताः ॥ १५ ॥

## विदुर उवाच

प्रचेतसां गिरित्रेण यथाऽऽसीत्पथि सङ्गमः । यदुताह हरः प्रीतस्तन्नो ब्रह्मन् वदार्थवत् ॥ १६ ॥
सङ्गमः खलु विप्रर्षे शिवेनेह शरीरिणाम् । दुर्लभो मुनयो दध्युरसङ्गाद्यमभीप्सितम् ॥ १७ ॥
आत्मारामोऽपि यस्त्वस्य लोककल्पस्य राधसे । शक्त्या युक्तो विचरति घोरया भगवान् भवः ॥ १८ ॥

## मैत्रेय उवाच

प्रचेतसः पितुर्वाक्यं शिरसाऽऽदाय साधवः । दिशं प्रतीचीं प्रययुस्तपस्यादृतचेतसः ॥ १९ ॥
समुद्रमुप विस्तीर्णमपश्यन् सुमहत्सरः । महन्मन इव स्वच्छं प्रसन्नसलिलाशयम् ॥ २० ॥

अन्वयः—देवदेवोकाम् सामुद्रीम् शतद्रुतिम् उपयेमे अग्निः याम् चारुसर्वांगीम् किशोरीम् सुष्ठु अलंकृताम् उद्वाहे परिक्रमन्तीम् वीक्ष्य शुकीम् इव चकमे ॥ ११ ॥ ❀ ❀ सूर्यया नूपुरैः क्वणयन्त्या एव दिक्षु विबुधासुरगंधर्वमुनिसिद्धनरोरगाः विजिताः ॥ १२ ॥ ❀ ❀ प्राचीनबर्हिषः शतद्रुत्याम् सर्वे तुल्यनामव्रताः धर्मस्नाताः प्रचेतसः दश पुत्राः अभवन् ॥ १३ ॥ ❀ ❀ पित्रा प्रजासर्गे आदिष्टाः तपसे अर्णवम् आविशन् दशवर्षसहस्राणि तपसा तपस्पतिम् आर्चन् ॥ १४ ॥ ❀ ❀ संयताः पथि दृष्टेन प्रसीदता गिरिशेन यत् उक्तम् तत् ध्यायन्तः च जपन्तः च पूजयन्तः ॥ १५ ॥ ❀ ❀ ब्रह्मन् प्रचेतसाम् गिरित्रेण पथि यथा संगमः आसीत् उत हरः प्रीतः यत् आह तत् अर्थवत् नः वद ॥ १६ ॥ ❀ ❀ विप्रर्षे मुनयः असङ्गात् अभीप्सितम् यम् दध्युः शिवेन इह शरीरिणाम् संगमः खलु दुर्लभः ॥ १७ ॥ ❀ ❀ तु आत्मारामः अपि यः भगवान् भवः अस्य लोककल्पस्य राधसे घोरया शक्त्या युक्तः विचरति ॥ १८ ॥ ❀ ❀ साधवः प्रचेतसः पितुः वाक्यं शिरसा आदाय तपसि आदृतचेतसः प्रतीचीम् दिशम् प्रययुः समुद्रम् उप विस्तीर्णम् महन्मनः इव स्वच्छम् प्रसन्नसलिलाशयम् सुमहत् सरः अपश्यन् ॥ २० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

समुद्रस्य कन्यां देवदेवेन ब्रह्मणोपदिष्टां शतद्रुतिं नाम किशोरीं बालां परिक्रमन्तीं प्रदक्षिणं गच्छन्तीम् । सुष्ठु प्रशस्तं यथा तथा अलंकृतां शुकीमिवेति । एवं ह्याख्यायते । सप्तर्षीणां सत्रे तद्भार्यादर्शनेनाग्निः कामसंतप्तोऽभूत् । तं च तद्भार्या स्वाहा नाम सप्तर्षिभार्यारूपधारिणी सती रमयामास । रमयित्वा च तद्रेतः शुकीरूपेण शरस्तम्बे निधायागच्छत् । तां यथा सप्तर्षिभार्याभ्रान्त्याऽग्निः कामितवांस्तद्वदिति । स्तुकीमिवेति पाठे स्तोकघृतधारामिवेत्यर्थः ॥ ११ ॥ ❀ ❀ सूर्यया नवोढयैव विबुधादयो विजिता अभिभूतास्तत्र नूपुरैः पादौ क्वणयन्त्यैव तद्ध्वनिमात्रेणेत्यर्थः ॥ १२ ॥ ❀ ❀ तुल्यं नाम व्रतमाचारश्च येषाम् । धर्मस्नाता धर्मपारगाः ॥ १३ ॥ ❀ ❀ तपसा तपसां पतिं हरिमार्चन्नर्चयामासुः ॥ १४–१६ ॥ ❀ ❀ मुनयोऽपि संगत्यागेनाप्तुमिष्टं यं दध्युरेव केवलं न तु प्रापुः तेन शिवेन ॥ १७ ॥ ❀ ❀ ननु मुनीनां किं तद्ध्यानेन घोरत्वादित्याशंक्याह । आत्मारामोऽपि लोकरचनायाः पालनाय ॥ १८ ॥ ❀ ❀ गुर्वाज्ञाकारिणां शिवदर्शनं स्वत इव भवतीत्याशयेनाह । प्रचेतस इति ॥ १९ ॥ ❀ ❀ समुद्रमुप समुद्रात्किंचिन्न्यूनम् । "उपोऽधिके च" इति कर्मप्रवचनीयः । प्रसन्नाः सलिलाशया मत्स्यादयो यस्मिन् ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

सार्द्धेन आख्यायते महाभारते । इत्यर्थ इति । 'स्तुक अल्पीभावे' अत इगुपधत्वात्कप्रत्यये ङीपि च स्तुकीति रूपं प्रकरणाद् घृतधारेति लब्धमिति भावः ॥ ११ ॥ ❀ ❀ इत्यर्थ इति । किं पुनर्दर्शनादिनेति भावः । "सूर्या स्याद्रविभार्याया-

---

१. प्रा० पा०—वृद्धस्नेहाः । २. प्रा० पा०—प्राचीने पाठे 'दशवर्षसहस्र....' त आरभ्य १७ श्लोकसमाप्तिपर्यन्तोंऽशो मूले नास्ति।

मोषधिभिन्नवोढयोः" इति स्वामी। 'सूर्यां वहतुना सह' इति श्रुतिरपि नवोढामेवाह–सूर्य्यापदेन ॥ १२॥ ❀ ❀ प्रकृष्टे श्रीकृष्णे चेतो येषां ते प्रचेतसः "अथ भागवता यूयं प्रियाः स्थ भगवान्यथा।" इति रुद्रोक्तेर्ज्ञायते तेषां कृष्णचेतस्त्वम् ॥ १३॥ ❀ ❀ प्रजासर्गे इति निमित्ते सप्तमी। तपसे तपः कर्तुम् ॥ १४–१५॥ ❀ ❀ अर्थवत् प्रयोजनयुक्तम् ॥ १६॥ ❀ ❀ असंगात्संगं परित्यज्य ॥ १७॥ ❀ ❀ अत्राक्षिपति–नन्विति। राधसे सिद्धये। घोरया भयानकया 'घोरं भीमं भयानकम्' इत्यमरः। दुष्टानां भयजननाय तत्कृतोपद्रवं वारयितुं घोरां शक्तिं गृह्णातीति भावः॥ १८–१९॥ ❀ ❀ सलिल आसमन्ताच्छेरते इति सलिलाशयाः महतां समचित्तत्वादिविशिष्टानां हरिभक्तानां इवानाविलं "महान्तस्ते समचित्ताः प्रशान्ता विमन्यवः सुहृदः साधवो ये" इत्युक्तेः। "महच्छब्दस्तत्त्वभेदे पुंसि कण्वर्षिकृष्णयोः। वीणाभेदे स्त्रियां राज्ये क्लीवे वृद्धे तु वाच्यवत्" इति कोशोक्तेर्महतः कण्वर्षेर्मन इव स्वच्छं कण्वमनसः स्वच्छत्वं शकुन्तलायाः पुत्रीत्वेन रक्षणात् ॥ २०॥

## श्रीमद्वीरराघवव्याख्या

स प्राचीनबर्हिः समुद्रस्य पुत्रीं देवदेवेन ब्रह्मणा उपदिष्टां शतद्रुतिमित्याख्यामुपयेमे। तां विशिनष्टि–किशोरीं बालां चारूणि सुन्दराणि सर्वाण्यङ्गानि यस्यास्तां सुष्ठु अलङ्कृतां उद्वाहे विवाहे परिक्रमन्तीमग्निं यां शतद्रुतिमग्निश्चकमे शुकीमिव। अयमर्थः सप्तर्षीणां सत्रे तद्भार्यादर्शनेनाग्निः कामदष्टोऽभूत्। तं च तद्भार्या स्वाहानाम सप्तर्षिभार्यारूपधारिणी सती रमयामास। रमयित्वा च तत्रेतः शुकीरूपेण शरस्तम्बे निधायागच्छत्। तां च यथा सप्तर्षिभार्याभ्रान्त्याग्निः कामितवान् तद्वदिति। स्तुकीमिति पाठे स्तोकघृतधारामिवेत्यर्थः॥ ११॥ ❀ ❀ सूर्यया नवोढयैव नूपुरैः क्वणयन्त्या शतद्रुत्या विबुधादयः सर्वे विजिताः वशीकृता मोहिता इति यावत् ॥ १२॥ ❀ ❀ प्राचीनबर्हिषः सकाशात् शतद्रुत्यां दशपुत्रा अभवन्नुदभवन्। पुत्रान् विशिनष्टि। तुल्यं नाम व्रताचारो येषां धर्मस्नाताः धर्मनिष्णाताः धर्मपारगा इति यावत्। निष्णातशब्दो हि सर्वत्र विवक्षिता-नुष्ठानानन्तरभाव्यवभृथस्नानस्थनियमान्तगमनमाह। प्रचेतसः प्रचेतोनामानः॥ १३॥ ❀ ❀ प्रजासर्गे पित्रा उपदिष्टाः प्रथमं तपश्चर्तुं वनमरण्यमाविशन् दशसंख्याकवर्षाणां वत्सराणां सहस्राणि तपसां पतिं भगवन्तं तपसा आर्चन्नर्चे-यामासुः॥ १४॥ ❀ ❀ पथि मार्गे दृष्टेन प्रसीदता गिरिशेन रुद्रेण यदुक्तमुपदिष्टं तद्ध्यायन्तस्तदर्थं ध्यायन्तस्तज्जपन्तश्च समाहितचित्ताः पूजयन्तश्च आर्चन्निति पूर्वेणान्वयः॥ १५॥ ❀ ❀ गिरिशेनोक्तं ध्यायन्त इत्याद्युक्तं तत्र किमुक्तं गिरिशेनेति पृच्छति विदुरः। यदा यस्मिन् काले पथि गिरित्रेण सह प्रचेतसां सङ्गम आसीत् हे ब्रह्मन्! प्रीतो हरो रुद्रः अर्थवत् पुरुषार्थ-साधनं यदाह तन्नो अस्मभ्यं वद॥ १६॥ ❀ ❀ शिवसङ्गमस्य दौर्लभ्यमाह। हे विप्रर्षे! शरीरिणां नृणां संसारे शिवेन साकं सङ्गमो दुर्लभः दुःखेनापि लब्धुमशक्यः। मुनयः अभीप्सितं प्राप्तुमिष्टं यं शिवमसङ्गात् विषयान्तरसङ्गत्यागात् दध्युरेव केवलं न तु प्रापुस्तेन शिवेन॥ १७॥ ❀ ❀ ननु मुनीनां किं तद्ध्यानेन घोरत्वादित्याशङ्क्याह। योऽयं भगवान् उत्पत्त्यादि-ज्ञानवान् हरः आत्मारामोऽपि आत्मारामत्वेन लोकसंस्कारप्रयोजनरहितोऽपीत्यर्थः। दीनलोकस्य राधसे सिद्धये दीनाननुग्रहीतुमिति यावत् शक्त्या स्त्रिया सह युक्तः घोरया मूर्त्या उपलक्षितो विचरति॥ १८॥ ❀ ❀ एवमापृष्टो मुनिस्तत् यथावद्वक्तुमुप-क्रमते प्रचेतस इति। साधवः प्रचेतसः पितुः प्राचीनबर्हिषः वाक्यं प्रजाः सृजतेति वाक्यं शिरस्याधाय अतिगौरवेण शिरसानुमोद्य सृष्ट्यर्थं तपसादृतचेतसः प्रतीचीं दिशं प्रति ययुः॥ १९॥ ❀ ❀ समुद्रमुपसमुद्रात् किञ्चिन्न्यूनम्। "उपोऽधिके च" इति कर्मप्रवचनीयत्वे तद्योगात् द्वितीया, समुद्रसमीपे वा विस्तीर्णं सुशोभनं महत् श्रेष्ठं सर अपश्यन्। महत्त्वमेव स्पष्टयति महतां ज्ञानिनां मन इव स्वच्छं निर्मलं प्रसन्नाः सलिलाशया ये मत्स्यादयः यस्मिन्॥ २०॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अपत्नीकस्यास्य यज्ञकरणं कथमिति शङ्कां निवारयितुमाह सामुद्रीमिति। समुद्रपुत्रीति वचनादयं विशेषो ज्ञातव्यः। देवदेवेन ब्रह्मणोक्तां तां विशिनष्टि यामिति। शुकीमिव यथा नाम्ना शुकीं राजपुत्रीमग्निः प्रदक्षिणीकुर्वाणां कामित्वादादायान्तर-धात्तथा यामेनामप्यादातुं शक्त्यभावेऽप्यग्निश्चकमे इत्यन्वयः। "राजपुत्रीं शुकीमग्निरावर्तन्तीं प्रदक्षिणम्। आदायान्तरधाद्दानसमये मन्मथातुरः" इति वचनादयं विशेषो ज्ञातव्यः॥ ११॥ ❀ ❀ अग्निश्चकम इति यन्नैतच्चित्रमिति भावेनाह विबुधेति। अग्नेरपि विबुधेष्वेकत्वात् सूर्या नवोढा 'सूर्यं विहर्तुं नासहे'ति श्रुतेः॥ १२॥ ❀ ❀ तुल्यं नाम व्रतं च येषां ते। तथा किं तत्तुल्यं नामेत्यत्राह प्रचेतस इति॥ १३॥ ❀ ❀ तत्कर्माह पित्रादिष्टा इति॥ १४॥ ❀ ❀ एषां को गुरुः किं जप्यं किं ध्येयमत्राह यदुक्तमिति॥ १५॥ ❀ ❀ संक्षेपेणोक्तं विस्तरतः श्रोतुं विदुरः पृच्छति प्रचेतसामिति। यद्वा किं वा अर्थवत्प्रयोजनवत्॥ १६॥ ❀ ❀ पथिकानां पुरुषाणां तत्र सङ्गमः सुलभः स्यादतः किञ्चोद्यमत्राह सङ्गम इति। असङ्गा मुनयः सतामभीप्सितमदधुस्तेन शिवेन सह सङ्गमः॥ १७॥ ❀ ❀ जगतो नीरोगत्वाय विचरतोऽपि शिवस्यात्मा-रामत्वेन निरपृहस्य सङ्गमेऽपि सम्भाषणं न सम्भाव्यत इत्याशयेनाह आत्मारामोपीऽति। यस्त्वस्य लोककल्पस्य जनस्य

रोगान्मुक्तत्वस्य राधसे सिद्धये तीव्रया शक्त्येत्यनेन सम्भाषणानुपपत्तिं सूचयति ॥ १८ ॥ ❀ ❀ सम्भाषणस्य योग्यावस्थां वक्ष्यन्मैत्रेयः प्रचेतसां कथामादित आवर्तयति। प्रचेतस इति ॥ १९ ॥ ❀ ❀ समुद्रमुपसमुद्रस्य समीपे विस्तीर्णं दक्षिणोत्तरायतं महतः कण्वस्य मुनेर्मन इव स्वच्छम्। यद्वा महतां श्रीनारायणस्य चरणारविन्दपरायणानां मनो यथा निर्मलं तथा ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सामुद्रीमित्यर्द्धकम् ॥ ११-१२ ॥ ❀ ❀ धर्म्मस्नाता इत्यत्र धनुःस्नाता इति चित्सुखः, धनुर्वेदपारगाः ॥ १३-१५ ❀ ❀ घोरया दुष्टं प्रतिं ॥ १६-१९ ॥ ❀ ❀ समुद्रमिति त्रिकम्। समुद्रमुप उपसमुद्रं तत्समीपमित्यर्थः। स्वच्छत्वं स्थलस्य प्रसन्नत्वं सलिलस्य, किं कुर्व्वत् सरः दिक्षु पद्मकोशरजो विक्षिपत्। कीदृशं तद्रजः पवनेन उत्सवः उद्रेको तस्य तत् ॥ २० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

समुद्रस्य कन्यां देवदेवेन ब्रह्मणापदिष्टाम् शुकीमिवेत्येवं व्याख्यायते। महर्षीणां सत्रे तद्भार्य्यादर्शनेनाग्निः कामार्त्तोऽभूत्। तत्र तद्भार्य्या स्वाहा नाम सप्तर्षिभार्यारूपधारिणी सती रमयामास। रमयित्वा च तद्रेतः शुकीरूपेण शरस्तंबे निधायागच्छत्। तां यथा सप्तर्षिभार्य्याभ्रान्त्या अग्निः कामितवान् तद्वत्। स्तुकीमिवेति पाठे स्तोकधृतधारामिवेत्यर्थः ॥ ११ ॥ ❀ ❀ सूर्य्यया नवोढयैव विजिताः। तत्र नूपुरैः पादौ कणयन्त्यैव ध्वनिमात्रेणैव न तु तां केऽपि द्रष्टुं शेकुरिति भावः ॥ १२-१३ ॥ ❀ ❀ तपसां पतिं हरिमार्चन्नर्चयामासुः। कीदृशाः यदुक्तं गिरिशेन तदेव ध्यायन्तः यत् रहो रहस्यं प्रीतः सन् वाचा अभिधयैव आह ॥ १४-१६ ॥ ❀ ❀ असङ्गात् सङ्गं परित्यज्य अभि सर्व्वतो भावेन ईप्सितं प्राप्तुमिष्टं यं मुनयोऽपि दध्युरेव ॥ १७ ॥ ❀ ❀ मुनीनां ध्यानगम्योऽपि कृपया सकामानामपि कामं दातुं दृश्योऽपि भवतीत्याह। आत्मेति। लोककल्पस्य राधसे लोकमनोरथकल्पस्य सिद्धये ॥ १८-१९ ॥ ❀ ❀ समुद्रमुपसमुद्रात् किञ्चिन्न्यूनं 'उपोऽधिके हीने चे'ति कर्म्मप्रवचनीयः ॥ २० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सामुद्रीं समुद्रपुत्रीम् देवदेवेन ब्रह्मणोक्ताम्। यामग्निश्चकमे इत्युत्तरेणान्वयः। उद्वाहे विवाहकाले परिक्रमन्तीं प्रदक्षिणं गच्छन्तीम् अग्निश्चकमे अकामयत शुकीमिव। सप्तर्षीणां सत्रे सप्तर्षिभार्यादर्शनेन कामसंतप्तमग्निं तद्भार्य्या स्वाहाख्या सप्तर्षिभार्यारूपेण रमयित्वा तद्रेतः शुकीरूपेण शरस्तंबे निधायागच्छत्। तां यथाग्निः सप्तर्षिभार्याभ्रान्त्या चकमे तद्वत् ॥ ११ ॥ ❀ ❀ यथा सूर्य्या नवोढयैव विबुधादयो विजिता मोहिताः तदपि नूपुरैः पादौ कणयन्त्यैव नूपुरध्वनिमात्रेणैवेत्यर्थः ॥ १२ ॥ ❀ ❀ सर्वे दशापि तुल्यं नाम व्रतं च येषां ते धर्मस्नाताः कृतधर्मानुष्ठाना इत्यर्थः ॥ १३ ॥ ❀ ❀ अर्णवं तत्तीरगं सरः आविशन्। तपस्पतिं हरिम् आर्चन्-अर्चितवन्तः ॥ १४ ॥ ❀ ❀ संयताः जितेन्द्रियाः ॥ १५-१६ ॥ ❀ ❀ यमभीप्सितं सङ्गमसङ्गात् सङ्गत्यागेन दध्युरेव स्म सङ्गमो दुर्लभः। यद्वा यं शिवं दध्युस्तेनेति योजना ॥ १७ ॥ ❀ ❀ घोरया संहारशक्त्या युतोऽपि लोके यः कल्पः स्वधर्मे निपुणस्तज्जनस्य राधसे पालनाय विचरति ॥ १८-१९ ॥ ❀ ❀ समुद्रमुप तत्समीपगम्। प्रसन्नाः सलिलाशयाः जलचराः यस्मिन् तत् ॥ २० ॥

### गोस्वामिश्रीगिरधरलालविहिता बालप्रबोधिनी

इदानीं सत्कुलजातत्वेन सौन्दर्यातिशयेन च ब्रह्मवाक्यात् परिग्रहेण व्यभिचारादिदोषराहित्येन च मातुः शुद्धत्वं दर्शयन् विवाहं कथयति—सामुद्रीमिति सार्द्धाभ्याम्। समुद्रस्य कन्यां देवदेवेन ब्रह्मणोपदिष्टां शतद्रुतीं नामोपयेमे विवाहितवानित्यन्वयः। तस्याः सौन्दर्यातिशयमाह—यामिति द्वाभ्याम्। यामुद्वाहे विवाहसमये वीक्ष्य सर्वोऽपि जनश्चकमे कामितवानित्यन्वयः। तत्र हेतूनाह—चारूणि मनोहराणि सर्वाण्यङ्गानि यस्यास्तां तत्रापि किशोरीं बालां तत्रापि सुष्ठ्वलङ्कृतां तत्रापि परिक्रमन्तीमग्निं प्रदक्षिणं कुर्वन्तीम्। तत्र दृष्टान्तमाह—अग्निः शुकीमिवेति। तत्रैवं व्याख्यायते—सप्तर्षीणां सत्रे तद्भार्यादर्शनेनाग्निः कामसन्तप्तो जातस्तं चाग्निभार्या स्वाहा नाम सप्तर्षिभार्यारूपेण रमयामास। रमयित्वा च तद्रेतः शुकीरूपेण शरस्तम्बे निधायागच्छत्, तां यथा सप्तर्षिभार्याभ्रान्त्याऽग्निः कामितवांस्तथेति। स्तुकीमिवेति पाठे स्तोकधृतधारामिवेत्यर्थः ॥ ११ ॥ ❀ ❀ सूर्यया नवोढया नूपुरैः पादौ कणयन्त्यैव ध्वनिमात्रेणैव सर्वदिक्षु तया विबुधादयो विजिता इत्यन्वयः ॥ १२ ॥ ❀ ❀ एवं विशुद्धाभ्यां मातापितृभ्यां परमभागवतानां जन्माह—प्राचीनबर्हिष इति। प्राचीनाग्रैर्बर्हिर्भिः कुशैर्वसुधातलाच्छादनात् प्राचीनबर्हिरित्यपि एव नाम। तस्य शतद्रुत्यां भार्यायां तुल्यं नाम व्रतमाचारश्च येषां तथाभूता दश पुत्रा अभवन्नित्यन्वयः। तुल्यव्रतत्वमाह—सर्वे इति, सर्वे धर्मज्ञाता भगवदाराधनलक्षणेषु धर्मेषु पारङ्गता इत्यर्थः। नाम्नस्तुल्यत्वमाह—सर्वे प्रचेतस

इति ॥ १३ ॥ ❀ ❀ एवं विशुद्धाः परमवैष्णवा अपि पितुराज्ञावशात् प्रजोत्पत्तौ प्रवृत्तास्तत्रापि भगवन्तमेव आराधितवन्त इत्याह—पित्रेति। यदा प्रजासर्गार्थं पित्रादिष्टास्तदा भगवत्प्रसादं विना कामासक्त्या प्रजाऽपि दुष्टोत्पद्येत ततोऽपि न भद्रमतस्त-त्प्रसादार्थं तपस्तप्तुं लोकसङ्घर्षे तपसि विघ्नो मा भूदिति कृत्वैकान्तमर्णवं समुद्रमाविशन्। समुद्रं प्रविश्य किं कृतवन्त इत्यपेक्षा-यामाह—दशवर्षेति सार्द्धेन। पथि मार्गे दृष्टेन गिरिशेन श्रीमहादेवेन प्रसीदता प्रसादं कुर्वता यत् यथा ध्यानपूजामन्त्रजपतप-आदिसाधनजातमुक्तं तथैव संयता वशीकृता देहान्तःकरणेन्द्रियादिसङ्घाताः सन्तस्तं तपस्पतिं तपसां पतिं फलदातारं भगवन्तं पुरुषोत्तमं ध्यायन्तो जपन्तश्च दशवर्षसहस्राणि तावत्कालपर्यन्तं तपसा सर्वभोगत्यागपूर्वकजलस्थित्यादिक्लेशसहनेन आर्चन् आराधयामासुरिति द्वयोरन्वयः ॥ १४–१५ ॥ ❀ ❀ श्रीमहादेवदर्शनसङ्गत्युपदेशादिकं दुर्लभं मत्वा विदुरः पृच्छति—प्रचेतसामिति त्रिभिः। प्रचेतसां गिरित्रेण सह पथि यथा सङ्गमः आसीत् यद्वापि प्रीतः प्रसन्नः सन् हरस्तेभ्यः आह—तन्नोऽस्माकं वदेत्यन्वयः। सदस्याभिप्रायेण बहुवचनम्। न चाहं न जानामीति वक्तुं युक्तं सर्वज्ञत्वादित्यभिप्रेत्य सम्बोधयति—हे ब्रह्मन्निति। कथं तवैतच्छ्रोतुं एवमुत्साहस्तत्राह—अर्थवदिति। तद्वचसो भगवत्प्रसादसाधनानुरूपत्वात् ममापि भगवद्भक्तत्वेन तद्वचः प्रयोजन-वदित्यर्थः ॥ १६ ॥ ❀ ❀ ननु लोकेऽनेकैः सह अनेकेषां सङ्गमो भवत्येव किं तत्राश्चर्यं येन प्रचेतसां गिरित्रेण सङ्गमः कथमासीदित्याश्चर्यवत् पृच्छसि तत्राह—सङ्गम इति। शिवेन सह सङ्गमः शरीरिणां प्राणिनां जीवानां दुर्लभः खलु दुर्लभ एव नात्र सन्देहः। दुर्लभत्वमेव प्रकटयति—मुनय इति। मुनयो मननशीला अपि असङ्गात् सर्वसंसारसङ्गत्यागेन एकान्ते स्थिताः यमभीप्सित-माप्तुमिष्टं केवलं दध्युरेव न तु झटिति प्रापुरित्यर्थः। एतच्च विप्रत्वाद्दपित्वाच्च तव विदितमेवेति सूचयन् सम्बोधयति—हे विप्रर्षे इति ॥ १७ ॥ ❀ ❀ ननु कथं तत्सङ्गमस्यैवं दुर्लभत्वं तत्राह—आत्मेति। कामिनां हि जीवानां कार्यवशात् परस्परसङ्गमः सुलभः, भवस्य त्वात्मारामत्वेन अन्येन प्रयोजनाभावात्तत्सङ्गमस्य दुर्लभत्वमिति भावः। ननु सात्त्विका एव विवेकिनः आत्मारामा भवन्ति। भवस्य तु संहारकर्तृत्वेन तामसत्वप्रसिद्धेः कथं तस्यात्मारामत्वमित्याशङ्क्याह—शक्त्येति। घोरया भयङ्करया प्रलयहेतु-भूतया तमआत्मिकया शक्त्या युक्तोऽपि भवो वस्तुतो भगवान् ऐश्वर्यादिगुणपूर्ण एव, न हि परमेश्वरेण स्वेच्छयाङ्गीकृतो गुणस्तस्मिन् स्वकार्यं मोहादिकमुत्पादयितुं जीवेष्विव शक्नोति, अतस्तस्यात्मारामत्वं युक्तमेवेत्यर्थः। ननु भगवत्त्वेन आत्मारामश्चेत्किमर्थं तर्हि लोके विचरतीत्याशङ्क्याह—यस्त्विति। यस्त्वात्मारामोऽपि आत्मारामत्वेन स्वप्रयोजनशून्योऽप्यस्य लोककल्पस्य भक्तजन-मनोरथस्य राधसे सिद्धये लोके विचरतीत्यन्वयः ॥ १८ ॥ ❀ ❀ प्रचेतसां साधुत्वाद्भगवद्भक्तत्वात् ईश्वरत्वेन सर्वज्ञो रुद्रस्तज्ज्ञात्वाऽनुग्रहेण दर्शनं दत्त्वोपदेशं कृतवानित्यग्रे रुद्रवाक्येन स्फुटीभविष्यतीति हृदि निधाय तेषां साधुत्वं भक्तत्वं च दर्शयति—प्रचेतस इति सप्तभिः। प्रचेतसः प्रकृष्टं शुद्धसत्त्वात्मकं चेतो येषां ते तथाभूता अपि प्रजाविसर्गविषयं पितुर्वाक्यं शिरसाऽऽदाय बहुमानपूर्वकमङ्गीकृत्य तपस्यादृतचेतसः भगवदाराधनलक्षणतपआचरणेन प्रजासर्गे प्रवृत्तानामप्यस्माकं संसारबन्धो न भविष्यतीत्यभिप्रायवन्तः तपः कर्तुं प्रतीचीं पश्चिमां दिशं प्रकर्षेण जनसङ्घर्षत्यागपूर्वकं निश्चयेन ययुरित्यन्वयः। ननु शुद्धान्तः-करणानां भगवद्भक्तानां कथं पितृवाक्यादपि प्रजोत्पादने प्रवृत्तिः सम्भवतीत्याशङ्क्याह—साधव इति, यतः सदाचारनिष्ठा अतः पितृवाक्योल्लङ्घनं सनकादिवन्न कृतवन्त इत्यर्थः ॥ १९ ॥ ❀ ❀ तत्र सुमहत्सरोऽपश्यन्नित्यन्वयः। तत्सर एव वर्णयति—त्रिभिः। सुमहत्त्वमेव विशदयति—समुद्रमुपविस्तीर्णमिति, समुद्रमुपसमुद्रात् किञ्चिन्न्यूनम्। 'उपोऽधिके च' इति कर्मप्रवचनीयः। तथाभूतं विस्तीर्णं विस्तृतमित्यर्थः। महतां भगवदेकनिष्ठानां मन इव स्वच्छं निर्मलजलमित्यर्थः। प्रसन्नाः सलिलाशयाः मत्स्यादयो यस्मिंस्तत् ॥ २० ॥

## भाषानुवाद

राजा प्राचीनबर्हिने ब्रह्माजीके कहनेसे समुद्रकी कन्या शतद्रुतिसे विवाह किया था। सर्वाङ्गसुन्दरी किशोरी शतद्रुति सुन्दर वस्त्राभूषणोंसे सज-धजकर विवाह-मण्डपमें जब भाँवर देनेके लिये घूमने लगी, तब स्वयं अग्निदेव भी मोहित होकर उसे वैसे ही चाहने लगे जैसे शुकीको चाहा था ॥ ११ ॥ ❀ ❀ नवविवाहिता शतद्रुतिने अपने नूपुरोंकी झनकारसे ही दिशा-विदिशाओंके देवता, असुर, गन्धर्व, मुनि, सिद्ध, मनुष्य और नाग—सभीको वशमें कर लिया था ॥ १२ ॥ ❀ ❀ शत-द्रुतिके गर्भसे प्राचीनबर्हिके प्रचेता नामके दस पुत्र हुए। वे सब बड़े ही धर्मज्ञ तथा एक-से नाम और आचरणवाले थे ॥ १३ ॥ ❀ ❀ जब पिताने उन्हें सन्तान उत्पन्न करनेका आदेश दिया, तब उन सबने तपस्या करनेके लिये समुद्रमें प्रवेश किया। वहाँ दस हजार वर्षतक तपस्या करते हुए उन्होंने तपका फल देनेवाले श्रीहरिकी आराधना की ॥ १४ ॥ ❀ ❀ घरसे तपस्या करनेके लिये जाते समय मार्गमें श्रीमहादेवजीने उन्हें दर्शन देकर कृपापूर्वक जिस तत्त्वका उपदेश दिया था, उसीका वे एकाग्रता-पूर्वक ध्यान, जप और पूजन करते रहे ॥ १५ ॥ ❀ ❀ विदुरजीने पूछा—ब्रह्मन्! मार्गमें प्रचेताओंका श्रीमहादेवजीके साथ किस प्रकार समागम हुआ और उनपर प्रसन्न होकर भगवान् शङ्करने उन्हें क्या उपदेश किया, वह सारयुक्त बात आप कृपा करके मुझसे कहिये ॥ १६ ॥ ❀ ❀ ब्रह्मर्षे! शिवजीके साथ समागम होना तो देहधारियोंके लिये बहुत कठिन है। औरोंकी तो बात ही क्या है—मुनिजन भी सब प्रकारकी आसक्ति छोड़कर उन्हें पानेके लिये उनका निरन्तर ध्यान ही किया करते हैं,

किन्तु सहजमें पाते नहीं ॥ १७ ॥ ❀ ❀ यद्यपि भगवान् शङ्कर आत्माराम हैं, उन्हें अपने लिये न कुछ करना है, न पाना, तो भी इस लोकसृष्टिकी रक्षाके लिये वे अपनी घोररूपा शक्ति ( शिवा ) के साथ सर्वत्र विचरते रहते हैं ॥ १८ ॥ ❀ ❀ श्रीमैत्रेयजीने कहा—विदुरजी ! साधुस्वभाव प्रचेतागण पिताकी आज्ञा शिरोधार्य कर तपस्यामें चित्त लगा पश्चिमकी ओर चल दिये ॥ १९ ॥ ❀ ❀ चलते-चलते उन्होंने समुद्रके समान विशाल एक सरोवर देखा। वह महापुरुषोंके चित्तके समान बड़ा ही स्वच्छ था तथा उसमें रहनेवाले मत्स्यादि जलजीव भी प्रसन्न जान पड़ते थे ॥ २० ॥

नीलरक्तोत्पलाम्भोजकह्लारेन्दीवराकरम् । हंससारसचक्राह्वकारण्डवनिकूजितम् ॥ २१ ॥
मत्तभ्रमरसौस्वर्यहृष्टरोमलताङ्घ्रिपम् । पद्मकोशरजो दिक्षु विक्षिपत्पवनोत्सवम् ॥ २२ ॥
तत्र गान्धर्वमाकर्ण्य दिव्यमार्गमनोहरम् । विसिस्म्यू राजपुत्रास्ते मृदङ्गपणवाद्यनु ॥ २३ ॥
तर्ह्येव सरसस्तस्मान्निष्क्रामन्तं सहानुगम् । उपगीयमानममरप्रवरं विबुधानुगैः ॥ २४ ॥
तप्तहेमनिकायाभं शितिकण्ठं त्रिलोचनम् । प्रसादसुमुखं वीक्ष्य प्रणेमुर्जातकौतुकाः ॥ २५ ॥
स तान् प्रपन्नार्तिहरो भगवान्धर्मवत्सलः । धर्मज्ञान् शीलसम्पन्नान् प्रीतः प्रीतानुवाच ह ॥ २६ ॥

श्रीरुद्र उवाच

यूयं वेदिषदः पुत्रा विदितं वश्चिकीर्षितम् । अनुग्रहाय भद्रं व एवं मे दर्शनं कृतम् ॥ २७ ॥
यः परं रंहसः साक्षात्त्रिगुणाज्जीवसंज्ञितात् । भगवन्तं वासुदेवं प्रपन्नः स प्रियो हि मे ॥ २८ ॥
स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरिञ्चितामेति ततः परं हि माम् ।
अव्याकृतं भागवतोऽथ वैष्णवं पदं यथाहं विबुधाः कलात्यये ॥ २९ ॥
अथ भागवता यूयं प्रियाः स्थ भगवान् यथा । न मद्भागवतानां च प्रेयानन्योऽस्ति कर्हिचित् ॥ ३० ॥

अन्वयः—नीलरक्तोत्पलाम्भोजकह्लारेन्दीवराकरम् हंससारसचक्राह्वकारंडवनिकूजितम् ॥ २१ ॥ ❀ ❀ मत्तभ्रमरसौस्वर्यहृष्टरोमलताङ्घ्रिपम् पद्मकोशरजः दिक्षु विक्षिपत्पवनोत्सवम् ॥ २२ ॥ ❀ ❀ ते राजपुत्राः तत्र मृदङ्गपणवादि अनु दिव्यमार्गमनोहरं गान्धर्वम् आकर्ण्य विसिस्म्युः ॥ २३ ॥ ❀ ❀ ते तर्हि एव तस्मात् सरसः निष्क्रामन्तम् सहानुगम् विबुधानुगैः उपगीयमानम् अमरवरम् तप्तहेमनिकायाभम् शितिकण्ठम् त्रिलोचनम् प्रसादसुमुखम् वीक्ष्य जातकौतुकाः प्रणेमुः ॥ २४–२५ ॥ ❀ ❀ सः प्रपन्नार्तिहरः धर्मवत्सलः भगवान् प्रीतः धर्मज्ञान् शीलसंपन्नान् प्रीतान् तान् उवाच ह ॥ २६ ॥ ❀ ❀ यूयम् वेदिषदः पुत्राः वः चिकीर्षितम् विदितम् वः भद्रम् एवं अनुग्रहाय मे दर्शनम् कृतम् ॥ २७ ॥ ❀ ❀ हि यः रंहसः त्रिगुणात् जीवसंज्ञितात् परम् साक्षात् भगवन्तम् वासुदेवं प्रपन्नः स मे प्रियः ॥ २८ ॥ ❀ ❀ स्वधर्मनिष्ठः पुमान् शतजन्मभिः विरिञ्चिताम् एति ततः परं हि माम् अथ यथा अहम् च विबुधाः कलात्यये तथा भागवतः अव्याकृतम् वैष्णवम् पदम् ॥ २९ ॥ ❀ ❀ अथ भागवताः यूयम् यथा भगवान् प्रियाः स्थ भागवतानां मत् अन्यः कर्हिचित् प्रेयान् न च ॥ ३० ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

नीलोत्पलादीनामाकरं जन्मस्थानम् उत्पलांभोजकह्लाराणि रात्रिदिनसन्ध्याविकासीनि । इन्दीवरं नीलोत्पलम् । तस्य पुनरुक्तिः प्राचुर्यज्ञापनार्थम् । हंसादिभिर्निकूजितम् ॥ २१ ॥ ❀ ❀ मत्तानां भ्रमराणां सौस्वर्येण हृष्टरोमाणो लतांघ्रिपा यस्मिन् । पद्मकोशरजो दिक्षु विक्षिपता पवनेनोत्सवो यस्मिन् ॥ २२ ॥ ❀ ❀ तत्र मृदंगपणवादिवाद्यमनु पश्चाद्दिव्यैर्मार्गैः स्वरभेदैर्मनोहरं गान्धर्वं गानमाकर्ण्य विस्मयं प्राप्ताः । पाठान्तरे मृदंगपणवादि अवत् रक्षत् तेषां ध्वनिमतिरस्कुर्वदित्यर्थः ॥ २३ ॥ ❀ ❀ ते च त्रिलोचनं वीक्ष्य जाताश्चर्याः प्रणेमुरित्युत्तरेणान्वयः ॥ २४ ॥ ❀ ❀ तप्तहेमराशिसदृशकांतिम् । शितिर्नीलः कण्ठो यस्य तम् ॥ २५–२६ ॥ ❀ ❀ वेदिषदो बर्हिषदः । चिकीर्षितं भगवदाराधनं मया विदितम् ॥ २७ ॥ ❀ ❀ अनुग्रहकारणमाह । यः साक्षाद्वासुदेवं प्रपन्नः स हि मे प्रियः । कथंभूतम् । रंहसः सूक्ष्मात्त्रिगुणात्प्रधानाज्जीवसंज्ञितात्पुरुषाच्च परम् । प्रकृतिपुरुषयोर्नियन्तारमित्यर्थः ॥ २८ ॥ ❀ ❀ तत्किं तस्य महत्तमत्वादित्याह । स्वधर्मनिष्ठः पुमान्बहुभिर्जन्म-

---

१. प्रा० पा०—क्राक्षका० । २. प्रा० पा०—बर्हिषदः । ३. प्रा० पा०—अव्याहतं । ४. प्रा० पा०—वतं सवैष्णवं ।

भिर्विरिंचतां प्राप्नोति ततोऽपि पुण्यातिशयेन मामेति भागवतस्त्वथ देहान्तेऽव्याकृतं प्रपंचातीतं वैष्णवं पदमेति। यथाहं रुद्रो भूत्वाऽधिकारिकवद्वर्तमानो विबुधा देवाश्चाधिकारिकाः कालात्ययेऽधिकारान्ते लिंगभंगे सत्येष्यन्ति ॥ २९ ॥ ❀ ❀ अथ भागवतत्वाद्यूयं मे प्रियाः स्थ। भवद्भिरपि मयि प्रीतिः कार्येत्याशयेनाह। मन्मत्तोऽन्यो भागवतानां च प्रेयान्नास्ति ॥ ३० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

नीलं च तद्रक्तं च नीलरक्तं तथाभूतं यदुत्पलं नीलरक्तोत्पलम्। एवञ्चेन्दीवरपदेन न पुनरुक्तिः। अंभोजकह्लारेंदीवरशब्दाः क्रमेण श्वेतरक्तनीलपद्मवाचकाः। 'कारंडवः प्लवो मद्गुः' इत्यभिधानात् ॥ २१ ॥ ❀ ❀ सौस्वर्येण शोभनस्वरपरंपरया ॥ २२ ॥ ❀ ❀ तत्र सरोवरे। दिव्यैरलौकिकैर्मार्गभेदैर्गानप्रकारैः। यद्वा-दिव्यमार्गा देवास्तेषां मनोहरम्। पाठांतरे पणवाद्यर्वादिति पाठे। इत्यर्थ इति। एतादृशगानमस्ति येन मृदंगादिध्वनिर्नाच्छाद्यत इति भावः ॥ २३ ॥ ❀ ❀ तर्ह्येव गांधर्वश्रवणोत्तरमेव। अमरप्रवरं सर्वदेवश्रेष्ठम् ॥ २४-२५ ॥ ❀ ❀ स शिवः। तान् प्रचेतसः ॥ २६ ॥ ❀ ❀ "वेदिर्विज्ञे बर्हिपुंजे वेदी स्यात्संस्कृतावनौ। अंगुल्या भूषणे चाथ वेदो वृत्ते श्रुतौ धने" इति कोशात्। वो युष्माकमनुग्रहाय एवंविधं भद्रं कल्याणरूपं मे मया कृतं दत्तं धातूनामनेकार्थत्वात्। यद्वा-वोऽनुग्रहाय युष्माननुग्रहीतुं युष्माकं दर्शनं मया कृतमित्यर्थः ॥ २७ ॥ ❀ ❀ इत्यर्थ इति। "त्वमीशिषे जगतस्तस्थुषश्च" इति श्रवणादिति भावः। जगत्तस्थिवच्छब्दौ पुरुषप्रकृतिलक्षकौ तौ त्वमीशिषे प्रेरयसीत्यर्थः। यद्वा-त्रिगुणान्मायाशक्तेर्जीवसंज्ञिताज्जीवशक्तेश्च रहः सर्वदुर्लक्ष्यं यन्निर्गुणं ब्रह्म तस्मादपि परं "ब्रह्मणो हि प्रतिष्ठाहम्" इति श्रीगीतोक्तेः। यः साक्षात्प्रपन्नः। न तु कर्मार्पणद्वारा नापि देवतांतरभक्तिज्ञानादिव्यवधानेनेत्यर्थः। स हि स ह्येव प्रिय इति तेन मद्भक्तोऽपि मे तथा न प्रिय इति भावः। तमस इति पाठं चित्सुखादयः पेठुः। तत्र तमसः प्रकृतेरित्यर्थः ॥ २८ ॥ ❀ ❀ तत्प्रियत्वं किं कुतः तस्य भगवद्भक्तस्य। अत्र विश्वनाथः-ब्रह्मविष्णुरुद्राणामस्माकं सुकृतेस्तारतम्यं सम्मुखादेव शृणुतेति वदन्विष्णोः सर्वतः श्रैष्ठ्यमाह-विरिञ्चितां विरिञ्चिपदं तत्राप्यनिश्चितत्वे शतजन्मभिरपि न प्राप्नोतीत्यर्थः। ततो विरिञ्चितोपि परं श्रेष्ठं मां ततोपि पुण्यातिशयैरेव। भागवतस्तु-अथ देहान्त एवाव्याकृतं वैकुंठं यथाहमेमि प्रतिक्षणमेव वैकुंठे वसन्नेकेन प्रकाशेन भगवंतं भजामीत्यर्थः। कलालिंगं तस्यांते भक्तपदेन प्रेमभक्तो ग्राह्यः "देहांते देवस्तारकं व्याचष्ट" इत्यादिश्रुतिः प्रेमभक्तपरैवेति। अत्र तीर्थस्तु-स्वधर्मो वैराग्यभक्तिज्ञानादयस्तेषु निष्ठा नितरां स्थितिर्यस्य स तथा ब्रह्मपदमेति। ततः परं ब्रह्मपदादनुभवानंतरं मां श्रियमेति। अथ श्रियं प्रविश्य भागवतो भगवद्भिर्युक्तो वैष्णवं पदमपरिच्छिन्नं भगवत्स्वरूपमेतीति। कलात्यये षोडशकलोपलक्षितशरीरलये सति यथाहं हरिप्रसादेन शैवं पदं प्राप्तोऽस्मीत्याह। तच्चासार्वत्रिकत्वादचारुवद्भाति ॥ २९ ॥ ❀ ❀ अथ हेत्वर्थे तदेवाह भागवतत्वादिति। यथा च यूयं मे प्रियास्तथा भागवतानां सम्मतिः ॥ ३० ॥

### श्रीमद्वीरराघवव्याख्या

नीलोत्पलादीनामाकरं जन्मस्थानमुत्पलानि रात्रिविकासीनि अम्भोजानि दिनविकासीनि कह्लाराणि सन्ध्याविकासीनि इन्दीवरं नीलोत्पलं तस्य पुनरुक्तिः प्राचुर्यज्ञापनार्था। हंसादिभिः विकूजितं चक्राह्वाः चक्रवाकाः ॥ २१ ॥ ❀ ❀ मत्ता ये भ्रमरास्तेषां सौस्वर्येण मधुरस्वरेण हृष्टरोमाणो लताङ्घ्रिपा यस्मिन् उपश्लिष्टलताग्रैः हृष्टरोमाण इव अङ्घ्रिपा यस्मिन् तदित्यर्थः। पद्मकोशेषु यद्रजः तत् कर्म दिक्षु विक्षिपता पवनेन उत्सवो यस्मिन् ॥ २२ ॥ ❀ ❀ तत्र मृदङ्गादिभिरन्वितं दिव्यैर्मार्गभेदैः प्रकारभेदैः मनोहरं गान्धर्वं गानमाकर्ण्य ते राजपुत्राः विसिस्म्युः विस्मयं प्राप्ताः ॥ २३ ॥ ❀ ❀ तदैव तस्मात्सरसो विनिर्गच्छन्तं विबुधानुगैः गन्धर्वकिन्नरादिभिः उपगीयमानममरश्रेष्ठं सप्रमथगणम् ॥ २४ ॥ ❀ ❀ तप्तहेमराशिसदृशकान्तिं नीलः कण्ठो यस्य तं प्रसादाभिमुखं त्रिलोचनं रुद्रं वीक्ष्य संजातहर्षाः प्रचेतसः प्रणेमुः नमस्कृतवन्तः ॥ २५ ॥ ❀ ❀ स भक्तवत्सलो भगवान् गिरिशः प्रपन्नान् नमस्कुर्वाणान् धर्मज्ञान् विनयादिशीलसंपन्नान्प्रचेतसः स्वदर्शनप्रीतान्स्वयमपि प्रीत उवाच ॥२६॥ ❀ ❀ उक्तिमेवाह यूयमिति यावदध्यायसमाप्ति। यूयं वेदिषदः प्राचीनबर्हिषः पुत्राः वः युष्माकं चिकीर्षितं भगवदाराधनं च विदितं वः अनुग्रहाय युष्माननुग्रहीतुं मे मम दर्शनं कृतं कारितं मयेत्यर्थः ॥ २७ ॥ ❀ ❀ अनुग्रहकारणमाह य इति। त्रिगुणात्मकात्तमसः प्रधानात् क्षेत्रज्ञाच्च साक्षात्परं विलक्षणं सूक्ष्मादिति पाठे त्रिगुणात्मकार्यावस्थात् सूक्ष्मात्कारणावस्थाच्च तमसः प्रधानात् क्षेत्रज्ञाच्च परमित्यर्थः। भगवन्तं प्रकृतिपुरुषवैलक्षण्यापादकपूर्णज्ञानादिषाड्गुण्यं वासुदेवं यः प्रपन्नः स मे प्रियः भगवद्भक्तस्य सर्वोत्कृष्टत्वादिति भावः ॥ २८ ॥ ❀ ❀ सर्वोत्कृष्टतामेवाह स्वधर्मनिष्ठ इति। पुमान् शतजन्मभिः केवलस्ववर्णाश्रमधर्मनिष्ठः विरिञ्चितां विरिञ्चिसालोक्यं तत्साम्यं वा एति मामित्यत्राप्येवं ततः परं ततः परस्तान्मामेति। अथानन्तरं भागवतः निवृत्तिधर्मानुष्ठानपरः अव्याकृतं चक्षुराद्यनवगम्यं वक्तुमयोग्यं वा वैष्णवं विष्णोः सम्बन्धिपदं स्थानमेति। अहं विबुधाः ब्रह्मेन्द्रादयश्च कलात्यये स्वस्वाधिकारान्ते यथा प्राप्नुवन्ति तथेत्यर्थः ॥ २९ ॥ ❀ ❀ अथ ननु यूयं भागवताः स्थ भवथ अतो मम भगवान् यथा प्रियः एवं यूयमपि प्रिया भवथ। भागवतानां भागवतेभ्यः मे अन्यः प्रियः कश्चिन्नास्ति ॥ ३० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

कतिपयैः श्लोकैः सरसः सेवनीयत्वं वक्ति नीलेत्यादिना। नीलोत्पलानां रक्तोत्पलानामब्जानामम्भोजानामिन्दीवराणां पद्मविशेषाणां सौगन्धिकानामाकरमुत्पत्तिस्थानं "मद्गुः कारण्डवः प्लवः" इत्यभिधानम् ॥ २१ ॥ ❀ ❀ मत्तभ्रमराणां सौस्वर्येण शोभनस्वरपरंपरया हृष्टरोमलतायुक्ता अङ्घ्रिपाः वृक्षा यत्र तत्तथा तद्रोमलोमत्वमित्यर्थः। दिक्षु पद्मकोषरजो विक्षिपतः प्रसारयतः पवनस्योत्सवः शैत्यमान्द्यसौरभ्यलक्षणो यस्मिंस्तथा तत् "कोशोऽस्त्री मुकुले दिव्ये शास्त्रे" इति यादवः ॥ २२ ॥ ❀ ❀ दिव्यो मार्गो येषां ते दिव्यमार्गा देवास्तेषां मनोहरं दिव्यमार्गमिति पाठे दिव्याः क्रीडादिके हेतवो मार्गाः सप्तस्वरभेदाः यस्मिंस्तत्तथा तादृशं गान्धर्वं गानं मृदङ्गादीनामनुकूलम् ॥ २३-२४ ॥ ❀ ❀ तप्तहेमनिकर्षस्तप्तसुवर्णकर्षणपाषाणस्तद्वन्निर्मलं नैर्मल्ये दृष्टान्तोऽयं न तु धावल्ये तप्तहेमनिकर्षाभ इत्यतोऽन्यः कश्चिदित्यतः शितिकण्ठमिति। सोऽपि मयूरः किं न स्यादित्यतस्त्रिलोचनमिति ॥ २५ ॥ ❀ ❀ प्रणतिफलमाह स तानिति ॥ २६ ॥ ❀ ❀ वो युष्माकमनुग्रहार्थैवंविधं भद्रं कल्याणं दर्शनं कृतमित्यन्वयः। अनेन तीव्रया शक्त्या विचरतीत्यस्य परिहार उक्तो भवति सम्भाषणयोग्यरूपदर्शनादिति ॥ २७ ॥ ❀ ❀ विष्णुभक्तानस्मान्कथं भवाननुगृह्णातीति चेत्तत्राह यः पर इति। यो जीवसंज्ञितात् त्रिगुणात्तमसो लक्ष्मीतत्त्वात् साक्षात्परस्तं भगवन्तं वासुदेवं शरणं प्रपन्नः। स मे प्रियो हि यस्मात्तस्माद्भवन्तो मदनुग्रहयोग्या इत्यर्थः। 'स जीवमायां प्रकृतिं सिसृक्षतीं, तम आसीत्तमसा गूढमग्रे प्रकेतमि'ति वचनद्वयेन लक्ष्मीतत्त्वस्य जीवशब्दवाच्यत्वं तमःशब्दवाच्यत्वं च सिद्धम् ॥ २८ ॥ ❀ ❀ इतोऽप्यनुगृह्णामीति वक्तुमृजूनामपि बहुजन्मसाध्यो भगवत्प्रसादः किमुतान्येषामिति ध्वनयन् विरिञ्चपदप्राप्तिसाधनसामग्रीमाह स्वधर्मेति। वैराग्यभक्तिज्ञानादयः स्वधर्मास्तेषु निष्ठा नितरां स्थितिर्यस्य स तथा स ऋजुस्वेकः पुमान्वक्ष्यतजन्मभिरेकोनशतजन्मभ्यः पूर्वकालमारभ्य सञ्चीर्णहर्युपासनाजनितभगवत्प्रसादेन विरिञ्चतामेति ब्रह्मपदं प्राप्नोतीत्यन्वयः। ततः परं ब्रह्मपदानुभवानन्तरं मां श्रियमेति। हिशब्देन श्रीद्वारमात्रं ब्रह्मण इति सूचयति अव्याकृतं विशति यर्हि गुणत्रयात्मा कालं परं स्वमनुभूयेत्युक्तेरव्याकृतं निर्विकारं लक्ष्मीतत्त्वमित्यर्थः। "ऋजवो नाम ये देवा योग्या ब्रह्मपदस्य तु। त एव शतजन्मानि विशेषोपासका हरेः ॥ प्राप्य ब्रह्मपदं पश्चाच्छ्रियं प्राप्यानुमोदिताः। तया ततो हरिं यान्ति वसन्ति हरिसन्निधौ ॥ अनादिकालभक्ताश्च ज्ञानिनस्ते न संशयः। विशिष्टा ज्ञानभक्त्यादौ सर्वजीवनिकायतः ॥ सर्वदापि विशेषेण शतजन्मप्रयत्नतः। स्वपदप्राप्तिरुद्दिष्टा ततो मुक्तिरवाप्यते ॥" इति निर्णायकवचनादुक्त एवार्थो नापरः। उक्तलयं विशिनष्टि भागवत इति। अथ श्रियं प्रविश्य भागवतो भगवद्भिर्भाग्यवद्भिर्युक्तो ब्रह्मा यथार्हं यथायोग्यं विविधैः कार्यकारणसंघातैः सह कलात्यये षोडशकलात्मकशरीरलयोपलक्षितजगत्प्रलये वैष्णवं पदमपरिच्छिन्नं भगवत्स्वरूपमेतीत्यन्वयः। अस्मदादयोऽप्यनेनैव व्याख्यातास्तथा हि यथा ऋजुस्वेकः पुमान् बहुलजन्मसञ्चीर्णपुण्यसञ्चयेन ब्रह्मपदं प्राप्यानुभूय श्रीद्वारा सायुज्यलक्षणां मुक्तिमाप्नुत इति तथाहं चत्वारिंशज्जन्मभिरार्जितैः सुकृतैः शैवं पदं समवाप्यानुभूय तथेन्द्रोऽपि विंशद्भिर्जन्मभिरापादितैः पुण्यैरैन्द्रपदं समेत्यानुभूय तथेन्द्रादन्ये दशभिर्जन्मभिरुत्पादितैः शुभैः स्वस्वयोग्यं पदं प्राप्य तत्तत्पदभोग्ययोग्यसुकृतं भुक्त्वा ब्रह्मणा सह विमुक्तिमाप्नुम इति। तदुक्तं "तथैव चत्वारिंशद्भिः पदं शैवं च जन्मभिः। विंशद्भिरैन्द्रं दशभिरन्येषामप्युदीरितम्" इति। यथाहमिति पाठे यथाहं श्रीहरिप्रसादेन शैवं पदमाप्तोऽस्मि तथा ऋजुस्वेकः पुमान् शतजन्मभिर्विरिञ्चतामेतीति योज्यं 'विदेहि रुद्रो रुद्रियं महित्वमि'ति श्रुतिश्च ॥ २९ ॥ ❀ ❀ ततः प्रकृते किं फलितमत्राह अथेति। अथैवमुक्तप्रकारेणानादिकालमारभ्य भगवद्भक्तोऽहं यस्मात्तस्माद्भागवता भगवद्भक्तत्वाद्यूयं मे प्रियाः स्थ यथा भगवानित्यधिकदृष्टान्तः। न केवलं यूयमेव मत्प्रिया अन्येऽपि भगवद्भक्ता इत्याह न म इति। भागवतानां सकाशात् चशब्दात् प्रेम्णो निरुपमचरितत्वमाह अनेनासुरेभ्यो वरदानेन तत्प्रीतिरौपचारिकीति दर्शितम्। यद्वा युष्माकमपि भागवत एव प्रियो नापरोऽन्यथा भागवतत्वहानिरित्याशयेनाह न म इति। मम भागवतानां युष्माकं च भागवतादन्यः प्रेयान्नास्तीत्यन्वयः। अनेन युष्माकं चाहमपि प्रिय इति ध्वनितम् ॥ ३० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तत्र गान्धर्वमिति। पणवाद्यवदिति पाठे मतुप् ज्ञेयः ॥ २३ ॥ ❀ ❀ तर्हीति। हेमनिकायार्णमिति चित्सुखः, सुवर्णराशिसदृशवर्णम् ॥ २४-२५ ॥ ❀ ❀ त्रपन्नान् गिरिश इति क्वचित् ॥ २६ ॥ ❀ ❀ दर्शनमिति हेतुमण्यन्ताद्भावे युच् दर्शनमित्यर्थः ॥ २७ ॥ ❀ ❀ 'ब्रह्मणो हि प्रतिष्ठाहमि'ति न्यायात् रहस इति ब्रह्मणोऽपि। यद्वा रहसः चतुश्लोकीप्रोक्तस्य रहस्याख्यस्य प्रेम्णः परं परमाश्रयम्। रंहस इति लेखकभ्रमः सूक्ष्मादिति स्वटीकायामस्वारस्यात्। तमस इति चित्सुखः ॥ २८ ॥ ❀ ❀ स्वधर्म्मेत्यस्य टीकायां तत् किमिति तत्र हेतुः क इत्यर्थः। विबुधा इत्यत्र विबुधैरिति चित्सुखः, विबुधैः कार्य्यैः सह ॥ २९-३२ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

नीलश्च तद्रक्तश्चेति तथाभूतं यदुत्पलमत एव इन्दीवरं नीलोत्पलमिति न पुनरुक्तिः ॥ २१ ॥ ❀ ❀ मत्तभ्रमराणां सौस्वर्य्येण हृष्टरोमाण इव मुकुलयुक्ता लताङ्घ्रिपाश्च यत्र तत्। पद्मकोशरजो दिक्षु विक्षिपता पवनेन उत्सवो यत्र तत् ॥२२॥ ❀ ❀

तत् ॥ २२ ॥ ❀ ❀ गान्धर्व्वं गानं मार्गा गानसम्बन्धिनः कदा मृदङ्गपणवादिवाद्यमनु पश्चात्। पणवाद्यवदिति पाठे मतुप् ज्ञेयः, यद्वा मृदङ्गपणवादि कीदृशमवत् रक्षत्। स तु मूलध्वनिभिरपि गानमतिरस्कुर्व्वदित्यर्थः ॥ २३-२६ ॥ ❀ ❀ चिकीर्षितं भगवदाराधनमेव अत एव वो युष्माकमनुग्रहाय एवं दर्शनं कृतं दत्तम्। यद्वा वोऽनुग्रहाय युष्मत्कर्तृकानुग्रहप्राप्तये मयैवं दर्शनं कृतम्। यद्वा वोऽनुग्रहाय युष्माननुग्रहीतुं युष्माकं दर्शनं मया कृतमित्यर्थः ॥ २७ ॥ ❀ ❀ अनुग्रहे कारणमाह। यः साक्षाद्भगवन्तं वासुदेवं प्रपन्नः स हि मे प्रियः। कथम्भूतं रहसः सूक्ष्मात् त्रिगुणात् प्रधानात् जीवसंज्ञितात् पुरुषाच्च परं प्रकृतिपुरुषयोर्नियन्तारमित्यर्थं इति स्वामिचरणाः। यद्वा त्रिगुणान्मायाशक्तेः जीवसंज्ञितात् जीवशक्तेश्च रहः सर्व्वैर्दुर्लक्ष्यं यत् निर्गुणं ब्रह्म तस्मादपि परं 'ब्रह्मणो हि प्रतिष्ठाहमि'ति गीताभ्यः। यः साक्षात् प्रपन्नः न तु कर्म्मार्पणद्वारा नापि देवतान्तरभक्ति-ज्ञानादिव्यवधानेनेत्यर्थः। स हि स ह्येव प्रिय इति तेन मद्भक्तोऽपि न मे तथा प्रिय इति भावः ॥ २८ ॥ ❀ ❀ ब्रह्मरुद्र-विष्णूनामस्माकं सुकृतैः प्राप्तितारतम्यं मन्मुखादेव यूयं शृणुतेति वदन् विष्णोः सर्व्वतः श्रैष्ठ्यमाह। स्वधर्मनिष्ठः पुमान् शतजन्मभिर्विरिञ्चितां विरिञ्चिपदमेति तत्राप्यनिष्ठितत्वे शतजन्मभिरपि न प्राप्नोतीत्यर्थः। ततो विरञ्चितोऽपि परं श्रेष्ठं मां ततोऽपि पुण्यातिशयैरेवेति। भागवतस्तु अथ देहान्त एव अव्याकृतं प्रपञ्चातीतं वैष्णवं पदं वैकुण्ठमेति। यथाहमेमि प्रतिक्षणमेव वैकुण्ठे वसन्नेकेन प्रकाशेन भगवन्तं भजामीत्यर्थः। विबुधाश्चाधिकारिकभक्ताः कला लिङ्गं तस्यात्यये स्वस्वाधिकारान्तेऽपि लिङ्गभङ्गे एवैष्यन्तीति भक्तेः साधनसाध्यसमयानां सुखलभ्यत्वेनापि सर्व्वोत्कर्षो दर्शितः ॥ २९ ॥ ❀ ❀ अथ अत एव भागवतानाञ्चेति चकारेण यथेत्यस्यान्वयात् भागवतानां यथा भगवतोऽन्यः प्रेयान्नास्ति तथा मत् मत्तोऽपीत्यर्थः ॥ ३०-३१ ॥

### श्रीमच्छुकदेवकृतः सिद्धांतप्रदीपः

उत्पलादिपद्मजातिभेदानामाकरम् हंसादिभिः कूजितम् ॥ २१ ॥ ❀ ❀ मत्तभ्रमराणां सौस्वर्येण स्वरसौष्ठवेन हृष्टरोमाणो लताङ्घ्रिपा यत्र तत् पद्मकोशेषु यद्रजस्तद्दिक्षु विक्षिपता पवनेनोत्सवो यत्र तत् ॥ २२ ॥ ❀ ❀ तत्र सरसि मृदङ्गपणवादिवाद्यमनु पश्चाद्दिव्यैः स्वरालापमार्गैर्मनोहरम् गान्धर्वं गानम् आकर्ण्य ते राजपुत्रा विसिस्म्युः विस्मयं प्रापुः ॥ २३ ॥ ❀ ❀ तर्ह्येव तस्मात् सरसो विनिष्क्रामन्तं त्रिलोचनं वीक्ष्य जातकौतुकाः प्रणेमुरित्युत्तरेणान्वयः। विबुधानुगैरुपगीयमानम् ॥ २४ ॥ ❀ ❀ तप्तहेमनिकायः प्रज्वलितसुवर्णराशिस्तद्वदाभा यस्य तम् शितिकण्ठं नीलकण्ठम् ॥ २५-२६ ॥ वेदिषदः बर्हिषदः यूयं पुत्राः वो युष्माकं भद्रं भवतु वश्चिकीर्षितं भगवदाराधनं विदितं ज्ञातमतो वोऽनुग्रहाय दर्शनमस्मद्दर्शनं मे मया कृतं कारितम् ॥ २७ ॥ ❀ ❀ रंहसः कालवेगात् त्रिगुणात् जीवसंज्ञितात् पुरुषात् परं तेषां नियन्तारं वासुदेवं यः अन्यो व्यवहारानुसारेण प्रिय इति भावः ॥ २८ ॥ ❀ ❀ यो वासुदेवं प्रपन्नः स मे साक्षात्प्रिय इति स्वप्रियत्वकथनेन वासुदेवं प्रपन्नस्य श्रैष्ठ्यमुक्तमथ शीघ्रं मुक्त्यर्हत्वेन तच्छ्रैष्ठ्यमाह। स्वधर्मनिष्ठः स्वधर्मनिष्ठ इति विरञ्चिधर्मनिष्ठः विरञ्चितां चतुराननताम् ततः परं ततोऽपि बहुजन्मानन्तरं मामेति। मद्धर्मनिष्ठः भागवतस्तु अथ प्रारब्धक्षयानन्तरमेव अव्याकृतं संसारविलक्षणं नित्यं वैष्णवं पदं स्थानमेवैति, यथाहं रुद्रः विबुधा ब्रह्मादयः कलात्यये अधिका-रान्ते लिङ्गभङ्गे सत्येष्यन्ति ॥ २९ ॥ ❀ ❀ अथ अतो यथा भगवान् मम प्रियस्तथा यूयं भागवताः प्रियाः स्थ भवथ भागवतानां भागवतेभ्यः भगवतश्च अन्यः मत् मे प्रेयान्न भवति ॥ ३० ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

नीलोत्पलादीनामाकरं जन्मस्थानम्। उत्पलाम्भोजकह्लाराणि रात्रिदिनसन्ध्याविकासीनि। तत्रेन्दीवरमपि नीलोत्पलमेव तस्य पुनर्ग्रहणं प्राचुर्यज्ञापनार्थम्। यद्वा नीलं च तद्रक्तं चेत्येवम्भूतं यदुत्पलमिति समासः। तथा चेन्दीवरस्य शुद्धनीलोत्पलत्वान्न तदुक्ता पुनरुक्तिः। हंसादिभिः पक्षिभिर्नितरां कूजितं नानास्वरशब्दैः शब्दितम् ॥ २१ ॥ ❀ ❀ मत्तानां भ्रमराणां सौस्वर्येण हृष्टरोमाण इव मुकुलयुक्ता लताङ्घ्रिपा यस्मिंस्तत्। पद्मकोशरजो दिक्षु विक्षिपता पवनेनोत्सवो यस्मिंस्तत् ॥ २२ ॥ ❀ ❀ तत्र स्थाने मृदङ्गपणवादिवाद्यं अनु पश्चाद्दिव्यैर्मार्गभेदैर्मनोहरं गान्धर्वं गन्धर्वाणां कर्म गानविशेषमाकर्ण्य श्रुत्वा ते राजपुत्राः प्रचेतसो विसिस्म्युः विस्मयं जग्मुरित्यन्वयः। मृदङ्गपणवाद्यवदिति पाठान्तरे तु मृदङ्गपणवाद्यवद्गान्धर्वमिति मतुबन्तं गानविशे-षणत्वेन योज्यम्। यद्वा मृदङ्गपणवादि अवदिति च्छेदः। मृदङ्गादीनां ध्वनिमवत् रक्षत् अतिरस्कुर्वद्गान्धर्वमाकर्ण्येति योज्यम् ॥ २३ ॥ ❀ ❀ तर्ह्येव तस्मात् सरसः सकाशान्निष्क्रामन्तं सहानुगं अनुगच्छन्तीत्यनुगाः भृत्याः नन्दीश्वरादयस्तैः सहितं विबुधानुगैर्गन्धर्वादिभिः उपगीयमानमुपगीयमानयशसम्। यतोऽमरप्रवरं देवेषु श्रेष्ठम् ॥ २४ ॥ ❀ ❀ तप्तहेम-निकायाभं तप्तसुवर्णराशिसदृशकान्तिमन्तं अतितेजस्विनम्। शितिकण्ठं सर्वप्राणिकृपया हालाहलपानाच्छितिर्नीलः कण्ठो यस्य तम्। त्रिलोचनं त्रीणि लोचनानि यस्य तम्। एवम्भूतमपि प्रसादसुमुखं स्वेषु प्रसादं कर्तुमुद्युक्तम्। एवम्भूतं श्रीमहादेवं वीक्ष्य-जातकौतुका उत्पन्नोत्साहयुक्ताः प्रचेतसः प्रणेमुरिति द्वयोरन्वयः ॥ २५ ॥ ❀ ❀ यत्र गुरोर्गुरुत्वप्रयोजकधर्मवत्त्वं शिष्यस्य च शिष्यत्वप्रयोजकधर्मवत्त्वं भवति तत्रैवोपदेशस्य सफलत्वं नान्यथा बलात्कारेणेति सूचयन्नुभयोस्तद्धर्मवत्त्वं दर्शयति—स

इति। यतः स शिवः प्रपन्नार्तिहरः प्रपन्नानां स्वशरणगतानां भगवद्भजनोपदेशेन आध्यात्मिकादित्रिविधतापनिवर्त्तकः प्रचेतसश्च शरणागतास्ततः तानुवाचेत्यन्वयः। एवमार्तिहरणे सामर्थ्यमाह—भगवानिति, यतो ज्ञानवैराग्यैश्वर्यादियुक्त इत्यर्थः। यतो धर्मवत्सलो भगवदाराधनलक्षणे धर्मे प्रीतिमांस्ते च धर्मज्ञाः। 'इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम्। अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्' इति स्मृतेः यज्ञादिधर्मापेक्षया भगवदाराधनलक्षणे धर्मे श्रेष्ठत्वज्ञानवन्तः ततस्तानुवाच। न केवलं तथा ज्ञानवन्तः किन्तु शीलसम्पन्नाः। तत्र प्रवृत्तिस्वभावयुक्ता अपीत्याह—शीलेति। यत एवं तथाभूतान् ज्ञात्वा प्रीतस्तेषु प्रीतियुक्तः तेऽपि स्वापेक्षितसाधनोपदेशकं तं लब्ध्वा प्रीताः ततस्तानुवाचेत्यन्वयः। प्रसिद्धोऽयं गुरुशिष्यप्रकारः शास्त्रेष्विति द्योतयन्नाह—हेति॥ २६॥ ❁ ❁ शिववचनान्येव दर्शयति—यूयमिति पञ्चभिः। यूयं वेदिषदः वर्हिषदः पुत्रा इति मम विदितम्, वो युष्माकं चिकीर्षितं कर्तुमिष्टं यद्भगवदाराधनं तदपि मम विदितं ज्ञातमेव, अतो वो युष्माकं भद्रं भवत्विति कृत्वा अनुग्रहाय अनुग्रहेण भगवदाराधनप्रकारप्रदर्शनाय मे मयैवं दर्शनं कृतं स्वदर्शनं दत्तमित्यन्वयः॥ २७॥ ❁ ❁ एवमनुग्रहे भगवदेकशरणत्वेन स्वप्रियत्वं हेतुमाह—य इति। हि यस्मात् यः प्राणी रंहसः वेगवत्तरादतिसूक्ष्मात् कूटस्थादक्षरात् त्रिगुणात् प्रधानात् जीवसञ्ज्ञितात् पुरुषाच्च परं वासुदेवं 'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' इति वाक्यात् सर्वातीतं शुद्धसच्चिदानन्दात्मकं पुरुषोत्तमं भगवन्तं ज्ञानवैराग्यैश्वर्यादिभगशब्दवाच्यषड्गुणयुक्तं साक्षात् फलाभिसन्धिलक्षणव्यवधानमन्तरेण प्रपन्नः शरणमागतः स मे मम प्रिय इत्यन्वयः॥ २८॥ ❁ ❁ तत्र ब्रह्मरुद्रयोरपि परमेश्वरत्वेन प्रसिद्धत्वात् साम्यशङ्कां वारयितुं तत्तत्पदप्राप्तिसाधनतारतम्यप्रदर्शने भगवतस्तद्भक्तस्य च श्रेष्ठत्वमाह—स्वधर्मेति। स्वाधिकारप्राप्तवर्णाश्रमधर्मनिष्ठः पुमान् शतजन्मभिर्विरिञ्च्यतां ब्रह्मलोकमेति प्राप्नोति। तत्र धर्मवैगुण्ये तावत्कालेनापि तन्नाप्नोतीत्यर्थाज्ज्ञेयम्। ततोऽपि पुण्यातिशये सति मामेति। तत्र हेतुमाह—तत इति। ततो विरिञ्च्यात् परं श्रेष्ठमीश्वरत्वात् भागवतो भगवद्भक्तस्तु अथ देहपातानन्तरमेव वैष्णवं पदं वैकुण्ठमेति। तस्य श्रेष्ठत्वं दर्शयति—अव्याकृतमिति, कार्यातीतं सनातनमित्यर्थः। तत्र दृष्टान्तमाह—यथेति, यथाहं विबुधाः देवाश्चाधिकारिकाः कलात्यये अधिकारसमाप्तौ लिङ्गभङ्गे सत्येष्यन्ति, तद्वदित्यर्थः॥ २९॥ ❁ ❁ यस्माद्भगवद्भक्तो मम प्रियः अथ तस्माद्भागवतत्वाद्यूयमपि मे प्रियाः स्थ। तत्रातिशयप्रियत्वे दृष्टान्तमाह—यथा भगवान् प्रियोऽस्ति, तथेत्यर्थः। भवद्भिरपि मयि प्रीतिः कार्येत्याशयेनाह—नेति। भागवतानामपि मत्तोऽन्यः कर्हिचित् कदाचिदपि प्रेयानतिप्रियो न भवति। चकारः पूर्वोक्तदृष्टान्तानुषङ्गार्थः। यथा भगवतोऽन्यः प्रेयान्नास्ति तथेत्यर्थः॥ ३०॥

## भाषानुवादः

उसमें नील कमल, लाल कमल, रातमें, दिनमें और सायङ्कालमें खिलनेवाले कमल तथा इन्दीवर आदि अन्य कई प्रकारके कमल सुशोभित थे। उसके तटोंपर हंस, सारस, चकवा और कारण्डव आदि जलपक्षी चहक रहे थे॥ २१॥ ❁ ❁ उसके चारों ओर तरह-तरहके वृक्ष और लताएँ थीं उनपर मतवाले भौंरे गूँज रहे थे। इनकी मधुर ध्वनिसे हर्षित होकर मानो उन्हें रोमाञ्च हो रहा था। कमलकोशके परागपुञ्ज वायुके झकोरोंसे चारों ओर उड़ रहे थे मानो वहाँ कोई उत्सव हो रहा है॥ २२॥ ❁ ❁ वहाँ मृदङ्ग, पणव आदि बाजोंके साथ अनेकों दिव्य राग-रागिनियोंके क्रमसे गायनकी मधुर ध्वनि सुनकर उन राजकुमारोंको बड़ा आश्चर्य हुआ॥ २३॥ ❁ ❁ इतनेमें ही उन्होंने देखा कि देवाधिदेव भगवान् शङ्कर अपने अनुचरोंके सहित उस सरोवरसे बाहर आ रहे हैं। उनका शरीर तपी हुई सुवर्णराशिके समान कान्तिमान् है, कण्ठ नीलवर्ण है तथा तीन विशाल नेत्र हैं। वे अपने भक्तोंपर अनुग्रह करनेके लिये उद्यत हैं। अनेकों गन्धर्व उनका सुयश गा रहे हैं। उनका सहसा दर्शन पाकर प्रचेताओंको बड़ा कुतूहल हुआ और उन्होंने शङ्करजीके चरणोंमें प्रणाम किया॥ २४-२५॥ ❁ ❁ तब शरणागतभयहारी धर्मवत्सल भगवान् शङ्करने अपने दर्शनसे प्रसन्न हुए उन धर्मज्ञ और शीलसम्पन्न राजकुमारोंसे प्रसन्न होकर कहा॥ २६॥ ❁ ❁ श्रीमहादेवजी बोले—तुमलोग राजा प्राचीनबर्हिके पुत्र हो, तुम्हारा कल्याण हो। तुम जो कुछ करना चाहते हो, वह भी मुझे मालूम है। इस समय तुमलोगोंपर कृपा करनेके लिये ही मैंने तुम्हें इस प्रकार दर्शन दिया है॥ २७॥ ❁ ❁ जो व्यक्ति अव्यक्त प्रकृति तथा जीवसंज्ञक पुरुष—इन दोनोंके नियामक भगवान् वासुदेवकी साक्षात् शरण लेता है, वह मुझे परम प्रिय है॥२८॥ ❁ ❁ अपने वर्णाश्रमधर्मका भलीभाँति पालन करने वाला पुरुष सौ जन्मके बाद ब्रह्माके पदको प्राप्त होता है। और इससे भी अधिक पुण्य होनेपर वह मुझे प्राप्त होता है। परन्तु जो भगवान्‌का अनन्य भक्त है, वह तो मृत्युके बाद ही सीधे भगवान् विष्णुके उस सर्वप्रपञ्चातीत परमपदको प्राप्त हो जाता है, जिसे रुद्ररूपमें स्थित मैं तथा अन्य आधिकारिक देवता अपने-अपने अधिकारकी समाप्तिके बाद प्राप्त करेंगे॥ २९॥ ❁ ❁ तुमलोग भगवद्भक्त होनेके नाते मुझे भगवान्‌के समान ही प्यारे हो। इसी प्रकार भगवान्‌के भक्तोंको भी मुझसे बढ़कर और कोई कभी प्रिय नहीं होता॥ ३०॥

इदं विविक्तं जप्तव्यं पवित्रं मङ्गलं परम् । निःश्रेसकरं चापि श्रूयतां तद्वदामि वः ॥ ३१ ॥

मैत्रेय[1] उवाच

इत्यनुक्रोशहृदयो भगवानाह तान् शिवः । बद्धाञ्जलीन् राजपुत्रान्नारायणपरो वचः ॥ ३२ ॥

श्रीरुद्र उवाच

जितं त आत्मविद्धुर्यस्वस्तये स्वस्तिरस्तु मे । भवता राधसा राद्धं सर्वस्मा आत्मने नमः ॥ ३३ ॥

नमः पङ्कजनाभाय भूतसूक्ष्मेन्द्रियात्मने । वासुदेवाय शान्ताय कूटस्थाय स्वरोचिषे ॥ ३४ ॥

सङ्कर्षणाय सूक्ष्माय दुरन्तायान्तकाय च । नमो विश्वप्रबोधाय प्रद्युम्नायान्तरात्मने ॥ ३५ ॥

नमो नमोऽनिरुद्धाय हृषीकेशेन्द्रियात्मने । नमः परमहंसाय पूर्णाय निभृतात्मने ॥ ३६ ॥

स्वर्गापवर्गद्वाराय नित्यं शुचिषदे नमः । नमो हिरण्यवीर्याय चातुर्होत्राय तन्तवे ॥ ३७ ॥

नम ऊर्ज इषे त्रय्याः पतये यज्ञरेतसे । तृप्तिदाय च जीवानां नमः सर्वरसात्मने ॥ ३८ ॥

सर्वसत्त्वात्मदेहाय विशेषाय स्थवीयसे । नमस्त्रैलोक्यपालाय सहओजोबलाय च ॥ ३९ ॥

अर्थलिङ्गाय नभसे नमोऽन्तर्बहिरात्मने । नमः पुण्याय लोकाय अमुष्मै भूरिवर्चसे ॥ ४० ॥

अन्वयः—च अपि विविक्तम् पवित्रम् मंगलम् परम् निःश्रेयसकरम् इदम् जप्तव्यम् श्रूयताम् तत् वः वदामि ॥३१॥ ❀ ❀ अनुक्रोशहृदयः नारायणपरः भगवान् शिवः बद्धाञ्जलीन् तान् राजपुत्रान् इति वचः आह ॥ ३२ ॥ ❀ ❀ आत्मविद्धुर्यस्वस्तये ते जितम् मे स्वस्तिः अस्तु भवता राधसा राद्धम् सर्वस्मै आत्मने नमः ॥ ३३ ॥ ❀ ❀ पङ्कजनाभाय भूतसूक्ष्मेन्द्रियात्मने शान्ताय कूटस्थाय स्वरोचिषे वासुदेवाय नमः ॥ ३४ ॥ ❀ ❀ सूक्ष्माय दुरन्ताय अन्तकाय संकर्षणाय च विश्वप्रबोधाय अन्तरात्मने प्रद्युम्नाय नमः ॥ ३५ ॥ ❀ ❀ हृषीकेशेन्द्रियात्मने अनिरुद्धाय नमो नमः निभृतात्मने पूर्णाय परमहंसाय नमः ॥ ३६ ॥ ❀ ❀ स्वर्गापवर्गद्वाराय नित्यम् शुचिषदे नमः हिरण्यवीर्याय चातुर्होत्राय तन्तवे नमः ॥ ३७ ॥ ❀ ❀ ऊर्जे इषे त्रय्याः पतये यज्ञरेतसे नमः च जीवानाम् तृप्तिदाय सर्वरसात्मने नमः ॥ ३८ ॥ ❀ ❀ सर्वसत्त्वात्मदेहाय विशेषाय स्थवीयसे त्रैलोक्यपालाय च सहओजोबलाय नमः ॥ ३९ ॥ ❀ ❀ अर्थलिङ्गाय नभसे नमोऽन्तर्बहिरात्मने पुण्याय लोकाय भूरिवर्चसे अमुष्मै नमः ॥ ४० ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

अत इदं जप्तव्यम् । श्रूयतामिति । विविक्तमसंकीर्णं यथा भवति ॥ ३१ ॥ ❀ ❀ सृष्ट्यादौ ब्रह्मणा सृष्ट्वा पुत्रेभ्यः प्रोक्तमिष्टदम् । स्तोत्रं प्राह प्रचेतोभ्यः कृपया भगवाञ्छिवः ॥ (१) ॥ ३२ ॥ ❀ ❀ ते जितं तवोत्कर्षः आत्मविद्धुर्याणां ज्ञानिश्रेष्ठानां स्वस्तये शोभनसत्तायै स्वानन्दलाभायेत्यर्थः । अतो मे स्वस्ति स्वानन्दसत्तास्तु । ननु ममोत्कर्षो मदर्थ एव किं न स्यात्तत्राह । भवता राधसा स्वानन्दरूपेण राद्धं सिद्धम् । त्वं परमानन्दरूपेणैव नित्यं स्थित इत्यर्थः । अत एवंभूतायात्मने तुभ्यं नमः सर्वस्मै सर्वरूपाय च ॥ ३३ ॥ ❀ ❀ सर्वरूपत्वं प्रपंचयन्प्रणमति सार्धैर्दशभिः । पंकजं लोकात्मकं नाभौ यस्य तस्मै कारणात्मने नमः । कारणत्वादेव सृज्यानां प्राणिनां ये उपाधयो भूतानि सूक्ष्माणि तन्मात्राणींद्रियाणि च तेषामात्मने नियन्त्रे अन्तःकरणचतुष्टयाधिष्ठातृत्वेन प्रणमति चतुर्भिः श्लोकार्धैः । वासुदेवाय चित्ताधिष्ठात्रे कूटस्थाय निर्विकाराय चित्तस्यैकरूपत्वात् ॥ ३४ ॥ ❀ ❀ संकर्षणायाहंकाराधिष्ठात्रे सूक्ष्मायाव्यक्ताय दुरंतायानन्ताय अन्तकाय मुखाग्निना लोकदाहकाय विश्वस्य प्रकृष्टो बोधो यस्मात् । अन्तरात्मने बुद्ध्यधिष्ठात्रे ॥ ३५ ॥ ❀ ❀ हृषीकाणां चक्षुरादीनामीशं यदिन्द्रियं मनस्तदात्मने । सूर्यरूपेण प्रणमति । परमहंसाय सूर्याय पूर्णाय तेजसा विश्वव्यापिने निभृतात्मने क्षयवृद्धिशून्याय ॥ ३५ ॥ ❀ ❀ स्वर्गापवर्गयोर्द्वाराय कर्मज्ञानफलभूतस्वर्गमोक्षयोर्द्वारभूताय त्रयीमयत्वादित्यर्थः । शुचिन्यन्तःकरणे निषीदतीति शुचिषत्तस्मै । "हंसः शुचिषत्" इति श्रुतेः । हिरण्यं वीर्यं यस्य तस्मै अग्निरूपाय । चातुर्होत्रं कर्म तस्मै तत्साधनायेत्यर्थः । कुतस्तन्तवे तद्विस्तारकाय ॥ ३७ ॥ ❀ ❀ सोमत्वमाह ऊर्जे पितॄणामन्नाय इषे देवानामन्नाय यज्ञरेतसे सोमाय । स हि पितॄणां देवानां चान्नम् । एवंरूपाय त्रय्याः पतये हरये नमः । सूर्याग्निसोमत्वेनैव तेजस्त्वमुक्तम् । जलत्वमाह सर्वरसात्मने जलरूपाय ॥ ३८ ॥ ❀ ❀ विशेषाय पृथ्वीरूपाय सर्वेषां सत्त्वानां प्राणिनां ये आत्मानस्तेषां देहाय स्थवीयसे विराड्देहाय च त्रैलोक्यपालाय वायवे सह

१. प्रा० पा०—यद्व० । २. प्राचीने पाठे 'मैत्रेय उवाच' इत्यारभ्य 'श्रीरुद्र उवाच' इत्यन्तः पूर्णोऽशो मूले नास्ति ।

आदिरूपाय स हि प्राणरूपेण त्रैलोक्यं पालयति अतस्तस्मै तद्रूपत्वम्। सह आदिंधर्माय च ॥ ३९ ॥ ❀ ❀ नभसे आकाशायार्थानां लिंगाय ज्ञापकाय शब्दगुणत्वात्। अन्तर्बहिरात्मनेन्तर्बहिर्व्यवहारालंबनाय एवं महाभूतरूपत्वमुक्तम्। अमुष्मै स्वर्गाय भूरिवर्चसे। "एष वै ज्योतिष्मन्तं पुण्यं लोकं याति" इति श्रुतेः ॥ ४० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अतो भगवद्भक्तत्वात्। इदं वक्ष्यमाणं यत् ॥ ३१ ॥ ❀ ❀ अनुक्रोशो दया हृदये यस्य स तथा "कृपा दयानुकंपा स्यादनुक्रोशोपि" इत्यमरः ॥ ३२ ॥ ❀ ❀ पुत्रेभ्यो भृग्वादिभ्य इत्यर्थः। भगवन्तं स्तुवानो भक्तः प्रथमं जयजयेति वदेदित्याह। जितं त इति। आत्मविद्धुर्य्याणामात्मारामाणाम्। इत्यर्थं इति। "इक्श्तिपौ धातुनिर्देशे" इति श्तिप्। अस्धातुश्च सत्तामेव वदतीति भावः। शोभनसत्ता च भगवद्गुणमाधुर्यांकृष्टतया सायुज्यरप्रहाराहित्येन शुकादीनामिव भक्तत्वेन सनातनी स्थितिः। यदुक्तं "तथा परमहंसानां मुनीनाममलात्मनाम्। भक्तियोगविधानार्थम्" इति "कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः" इति च। यत आत्मविद्धुर्याणां शोभनसत्तायै तवोत्कर्ष आविष्कृतोऽतो हेतोर्मे मम स्वास्तित्यर्थः। अत्राक्षिपति—नन्विति। इत्यर्थं इति। परमानन्दस्वरूपस्य तेऽन्यार्थापेक्षा नास्त्येवेति भावः। अतः सर्वोत्कृष्टत्वात्। चक्रवर्त्ती तु-भवता प्रयोजकेन यत् आराध आराधनं तेन राद्धं तस्य सिद्धिरस्तु। ननु श्रीगुरुणा मद्भक्तेनान्येन वा मदाराधनं भवति न तु मयेति तत्राह-सर्वस्मै सर्वस्वरूपायात्मने, त्वमेव गुरुवैष्णवादिरूपः स्वभजनं कारयसीति भावः ॥ ३३ ॥ ❀ ❀ किञ्च त्वद्विषयकस्सर्वेन्द्रियव्यापार एव त्वद्भक्तिः। सर्वेन्द्रियाणि च त्वदधीनान्यतः कृपया मदिन्द्रियाणि स्वव्यापारवन्ति संपादयेति प्रणमति-नम इति, पंकजनाभायेति। हे पंकजनाभ तव नाभिपंकजोद्भवाद् ब्रह्मत एव मदीयस्यास्य मर्त्यदेहस्योद्भूतत्वादिमं स्वभक्त्युन्मुखं कुरु। तुभ्यं नम इति भावनाभिप्रेता। एवं भक्त्युपयोगार्थं देहेन्द्रियाणि समासेन संशोध्य पुनः प्रत्येकमपि शोधयितुं प्रथमं चित्ताधिष्ठातारं वासुदेवं प्रणमति-वासुदेवायेति। भो वासुदेव मच्चित्तं शान्तं निर्विकारं कृत्वा स्वरोचिषा प्रकाश्य भक्तावेव चेतय तुभ्यं नम इति ॥ ३४ ॥ ❀ ❀ भोः संकर्षणदेव ममाहन्ताममतयोर्वृत्तीनां देहगेहादिनिबद्धानामनन्तानां यद्बन्धनं सन्दह्य तास्ततो विच्युतीकृत्य भक्त्याश्रययोर्निवधान। तुभ्यं नमः। भोः प्रद्युम्न मद्बुद्धिं तथा प्ररोचय यथा सा भक्तावेव मां दधाति तुभ्यं नमः ॥ ३५ ॥ ❀ ❀ हे अनिरुद्धदेव मन्मनो भक्तावेवानुरंजय तुभ्यं नमः इति। अन्तःकरणचतुष्टयं तदुपास्यवासुदेवादिप्रणतिभिः संशोध्य बहिः करणानि तथा देहारंभकाणि पंच भूतानि च शोधयितुमधिष्ठातृरूपत्वेन भूतरूपत्वेन च प्रणमति-नमः परमहंसेति चतुर्भिः। नितरां भृतो वृष्ट्यादिभिः पालिता आत्मानो जीवा येन तस्मै "आदित्याज्जायते वृष्टिः" इति स्मृतेः "भानुर्हंसः सहस्रांशुः" इत्यमरः। भोः सूर्यात्मक देव मच्चक्षुः श्रीमूर्त्तिसौन्दर्यदर्शने एव प्रवर्त्तय देहगतं सूर्यात्मकं तेजश्च शुद्ध्यतु तुभ्यं नम इति ॥ ३६ ॥ ❀ ❀ भो वह्न्यात्मक देव यथान्येषां कर्मं प्रवर्त्तयसि तथैव मम वाचं कीर्त्तनभक्तौ प्रवर्त्तय वह्न्यात्मकं तेजश्च शुध्यतु तुभ्यं नमः ॥ ३७ ॥ ❀ ❀ भोः सोमात्मक देव मम देवर्ष्यादिऋणं संशोध्य मन्मनो भक्तावेव मज्जय सोमात्मकं तेजश्च शुध्यतु तुभ्यं नमः। पूर्वमुपास्यदैवतप्रणत्या संशोध्यापि मनसो दुर्दमत्वादधिष्ठातृदैवतप्रणत्यापि पुनः संशोधनमिदं ज्ञेयम्। एवं सूर्याग्निसोमरूपं तेजश्च तद्रूपेण प्रणत्य संशोध्य रसनेन्द्रियं रसं च संशोधयितुं रसरूपेण प्रणमति-तृप्तिदायेति। भो रसात्मक देव हरे मम रसनां भवदीयवस्तुमाधुर्य्ये एव स्वादं प्राशय दैहिका आपश्च शुध्यन्तु तुभ्यं नमः ॥ ३८ ॥ ❀ ❀ हे पृथिव्यात्मक हरे मम घ्राणेन्द्रियं भवदीयसौरभ्य एव प्रवर्त्तयन्देहं च स्वीयपरिचर्य्यादिषु प्रवर्त्तयेति सहओजोबलायेति मनइन्द्रियदेहेषु सहओजोबलरूपेण प्रविश्य तत्तत्पाटवं कर्त्तव्यमिति। हे वायुस्वरूप हरे मम त्वगिन्द्रियं त्वदीयसौकुमार्यादावेवोल्लासयन् देहेन्द्रियमनांस्यपि भंजनसामर्थ्यवन्ति कुरु तुभ्यं नमः। भो नभस्वरूप हरे मम श्रोत्रं भवत्सौस्वर्य्ये एव प्रवर्त्तय स्वीयनाममन्त्रभक्तिशास्त्रार्थं स्फोरय मम नभस्तत्त्वं च शुद्धयतु तुभ्यं नम इति ॥ ३९ ॥ ❀ ❀ एवं स्वीयभूतेन्द्रियमनांसि भगवदुपासनोन्मुखीकृत्योपासनाप्राप्यवैकुण्ठलोकस्वरूपत्वेन प्रणमति-पुण्याय सर्वोत्तमाय "पुण्यं स्यात् सुकृते शुद्धे सुन्दरे च परात्मनि। उत्कर्षे वाच्यवत्" इत्यभिधानात्। भूरिवर्चस इति। लोकान्तरव्यावृत्तिः, अत्र वैकुण्ठलोके प्रमाणमाह-एष इति। एष भगवद्भक्तः ज्योतिस्वतः सिद्धप्रकाशस्तद्विद्यते यत्र स तथा तं "यद्भ्राजमानं स्वरुचैव सर्वतः" इत्युक्तेः। पुण्यमतीव शुद्धं भगवद्वासत्वात् "यच्च व्रजन्त्यनिमिषामृषभानुवृत्त्या" इति "यात्यञ्जसाच्युतपदमच्युतप्रियबांधवाः" इत्याद्युक्तेर्भक्तेनैव तत्प्राप्यते नान्येनेति श्रुत्यर्थः ॥ ४० ॥

## श्रीमद्वीरराघवव्याख्या

तत इदं वक्ष्यमाणं जप्तव्यं श्रूयतामित्यन्वयः। जप्तव्यं विशिनष्टि। विविक्तमसङ्कीर्णं यद्वा विविक्तं कर्तरि क्तः, विवेचकं प्रकृतिपुरुषविलक्षणत्वेन परमात्मविवेचकमित्यर्थः, अत एव पवित्रमत एव मङ्गलं धर्मादिपुरुषार्थसाधनानां निःश्रेयसकरं मुक्तिसाधनमत एव परं वः युष्मभ्यं वदामि ॥ ३१ ॥ ❀ ❀ इत्येवं वदामीति प्रतिज्ञापूर्वकमनुक्रोशहृदयः भगवान्नारायण एव परः प्राप्यः प्रापकश्च यस्य सः शिवः बद्धानि अञ्जलिपुटानि यैस्तान् राजपुत्रान् प्रति वचः वाक्यमाह ॥ ३२ ॥ ❀ ❀

स्वरूपरूपस्वभावैस्तत्सर्वोत्कृष्टत्वं भक्तानुग्रहार्थमेव न स्वार्थमिति वदन् सर्वान्तरात्मत्वगुणविशिष्टं नमस्करोति जितमिति। हे आत्मविद्धुर्य ! आत्मवतां ज्ञानिनां धुर्य रक्षक ते तव जितमुत्कर्षः स्वरूपेण गुणैश्च निरतिशयोत्कर्षः जितमिति भावे क्तः स्वस्तये आत्मविदामिति शेषः, यद्वा आत्मविद्धुर्या योगीश्वरास्तेषां स्वस्तये सुखाय त्वामुपासीनानां निरतिशयानन्दावहस्वरूपरूपगुणा भक्तानुग्रहैकप्रयोजना इत्यर्थः, अतो मे त्वामुपासीनस्य मम स्वस्ति त्वदनुभूतिसम्भूतं सुखमस्तु। न त्वसत्तां प्राप्नुयादित्यर्थः, मे स्थायित्वेनावतिष्ठत्वित्यर्थः। ननु विषयानन्दवदनुभूतिसम्भूतानन्दोऽपि क्षणिक एव स्यात्तत्राह। राधसा सिद्धरूपेण भवता सिद्धं संसिद्धं साध्यत्वेन विषयाणामस्थिरत्वादनुभवसम्भूतानन्दोऽप्यस्थिरः तव तु सिद्धरूपत्वात्त्वां नित्यमनुभवतो मम त्वदनुभवसम्भूतानन्दः स्थायीति भावः। अत्र परमात्मानन्दसाधनभूततद्विषयभक्तेः स्थैर्यं प्रार्थ्यते। ननु मम कथं सर्वोत्कृष्टता ममापि देवादीनां मध्येऽन्यतमत्वादित्यत्राह सर्वस्मा आत्मने नम इति। सर्वस्मै प्रपञ्चरूपाय तत्र हेतुः आत्मन इति, यथा देवमनुष्यादिशरीरेष्वात्मतयानुप्रविष्टो जीवः देवोऽयमिति देवादिसामानाधिकरण्येन व्यपदिश्यते तद्वत्परमात्मा "यः पृथिव्यां तिष्ठन् य आत्मनि तिष्ठन्" इति चिदचिदन्तरात्मतयावस्थितस्तद्व्यपदेशेन व्यपदिश्यते तत्तदन्तरात्मत्वमेव तत्तद्व्यपदेशव्यपदेश्यत्वनिमित्तमिति युक्तमात्मत्वस्य सर्वत्वव्यपदेशहेतुत्वम्। यद्वा 'आत्मनः आकाशः सम्भूतः' इत्यत्रेवात्मशब्दः कारणात्मपरः, तथा चायमर्थः कारणं हि मृद्द्रव्यम् कार्यात्मना परिणतं मृदयं घट इति कार्याभेदेन व्यपदिश्यते, तथा सूक्ष्मचिदचिद्विशिष्टः कारणभूतः परमात्मा स्थूलचिदचिद्विशिष्टब्रह्मरूपप्रपञ्चव्यपदेशव्यपदेश्य इति युक्तं कारणात्मत्वस्य सर्वस्य व्यपदेशहेतुत्वम्। एवं चेदृशं सर्वात्मत्वसर्वकारणत्वप्रयुक्तसर्वात्मकत्वं त्वय्यैवैकान्तमिति त्वमेव सर्वोत्कृष्ट इति ॥ ३३ ॥ ❀ ❀ अन्यदप्युत्कर्षोपादकं गुणजातं वदन् तद्विशिष्टं नमस्करोति नम इति। पङ्कजनाभाय लोकात्मकं पङ्कजं नाभौ यस्य तस्मै एवं कार्यावस्थप्रपञ्चरूपमुक्तं कारणावस्थप्रपञ्चरूपतामाह। भूतसूक्ष्माणामिन्द्रियाणां चात्मने आश्रयाय उभयनिर्वाहकमन्तरात्मत्वं तत्प्रयुक्तदोषास्पृष्टत्वं चाह। वासुदेवाय वासुश्चासौ देवश्च तस्मै "सर्वत्रासौ समस्तं च वसत्यत्रैव वै यतः" इत्युक्तकर्त्रधिकरणव्युत्पत्तिनिरुक्तवासुशब्दवाच्यसर्वान्तरात्मत्वगुणविशिष्टाय तथापि देवाय तद्गताप्यगतदोषास्पर्शनेन देदीप्यमानाय अत एव शान्ताय अशनायापिपासाशोकमोहजरामृत्युभिरूर्मिभिर्विरहिताय अत एव कूटस्थाय निर्विकाराय अत एव स्वरोचिषे नित्यासंकुचितापरिच्छिन्नस्वप्रकाशाय ॥ ३४ ॥ ❀ ❀ कारणावस्थप्रपञ्चात्मकत्वस्य प्रपञ्चसंहारपूर्वकत्वाज्जगत्संहर्तृत्वगुणविशिष्टतामाह सङ्कर्षणाय। समित्येकीकारे अविभक्तनामरूपत्वेन कर्षणाय कर्षयत्याकर्षयति स्वस्मिन् जगदुपसंहरति तथा तस्मै केनाकारेण संहर्तृत्वं तत्राह अन्तकाय। मुखाग्निना लोकदाहकाय अत एव सूक्ष्माय नामरूपविभागानर्हसूक्ष्मचिदचिद्विशिष्टाय एवं भूतायापि दुरन्ताय अन्तर्हिताय अनुपसंहार्यायेत्यर्थः। उपसंहारो हि कार्यस्य कारणेन सह संश्लेषः, तस्य कारणान्तराभावेनानुपसंहार्यत्वात्कारणानां काष्ठाभूतायेत्यर्थः फलितः। एवं कार्यावस्थकारणावस्थप्रपञ्चरूपत्वतदनुगुणगुणयुक्तं नमस्कृत्य जगद्रक्षकत्वतदुपयुक्तगुणविशिष्टं नमस्करोति नम इति। विश्वप्रबोधाय विश्वं प्रबोधयति धर्मादिपुरुषार्थतत्साधनप्रकाशकवेदाख्यशास्त्रोपदेशेन वेदयतीति विश्वप्रबोधस्तस्मै विश्वोज्जीवयित्र इत्यर्थः। न केवलमुपदेशमात्रेणापि तु व्यूहविभवान्तर्यामित्वादिरूपेण विभवमूलत्वसाध्वसाधुनिग्रहानिग्रहदेहेन्द्रियादिसञ्जीवयितृत्वादिभिश्चेत्याह प्रद्युम्नाय। दुष्कृन्निग्रहसाध्वनुग्रहैकप्रयोजनरामकृष्णादिमूलप्रद्युम्नव्यूहाय अन्तरात्मने सर्वदेशकालावस्थासु युगपत्सर्वजगदन्तः प्रवेशपूर्वकं प्रशासनेन भर्त्रे ॥ ३५ ॥ ❀ ❀ नमसो द्विरुक्तिः तत्तद्गुणविशेषविशिष्टत्वाभिप्रायेण। अनिरुद्धाय अनिरुद्धव्यूहाय हृषीकाणामिन्द्रियाणां यदीशं मन इन्द्रियाणि च तदात्मने तद्रूपाय सर्वात्मकत्वे विशिष्य हृषीकेन्द्रियग्रहणमनिरुद्धोपासनस्थानकृतं तथा चोक्तं तृतीये "यद्विदुर्ह्यनिरुद्धाख्यं हृषीकाणामधीश्वरम्। शारदेन्दीवरश्यामं संराध्यमृषिभिः शनैः ॥" इत्युक्तस्य जगद्रूपत्वादेर्जीवस्येव देवादिरूपत्वात् कर्मायत्तत्वशङ्कायामाह परमहंसाय। हिनस्ति कर्माख्यं पुण्यापुण्यरूपमलमाश्रितेषु स्वस्मिंश्चेति हंसस्ततः कर्मधारयाच्चतुर्थी, अपहतपाप्मने इत्यर्थः। पूर्णाय अन्तर्बहिश्च व्याप्य स्थिताय नित्यनिरुपाधिकान्तर्बहिर्व्याप्तिकृतं जगद्रूपत्वं न भगवत औपाधिकं जीवस्य तु देवादिशरीरेष्वभिव्याप्तिः "पिप्पलं स्वाद्वत्ति" इति श्रुतेः कर्मकृतेति। तस्य देवादिरूपमौपाधिकमिति ततः परमात्मनो वैलक्षण्यसिद्धिः। यद्वा परमहंसाय अपहतपाप्मने अत एव निर्वृतात्मने शोकरहिताय, निभृतात्मने इति पाठे क्षयवृद्धिशून्याय अत एव पूर्णाय सर्वदान्तर्बहिश्च व्याप्य स्थिताय। यद्वा पूर्णाय व्यापकाय निभृतात्मने अवाप्तसमस्तकामाय अयमपि जगद्रक्षणोपयुक्त एव गुणः। अवाप्तसमस्तकामो हि स्वाश्रितान् समीहितकामप्रदानेन सम्यक् पालयति न तु दरिद्रः ॥ ३६ ॥ ❀ ❀ अन्यदपि जगद्रक्षणोपयुक्तं गुणजातमाह। स्वर्गापवर्गयोः द्वाराय साधनभूताय। "इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः अमृतस्यैष सेतुः" इत्यादि श्रुतेः सेतुरिव सेतुर्लम्भकः प्रापकः सेतुर्हि तीरान्तरप्रापकः। स्वर्गापवर्गद्वारत्वमेवोपपादयन्नमस्करोति नित्यं सदा शुचिषु योगिचित्तेषु सीदति रमत इति शुचिषत् योगिभिर्नित्यमुपास्यत्वेन तत्समीहितापवर्गप्रदात्र इत्यर्थः। हिरण्यं वीर्यं यस्य सोऽग्निस्तस्मै अग्निरूपाय चतुर्णां होतॄणामयं चातुर्होत्रः चतुर्भिः होतृभिः साध्यः तस्मै तन्तवे यज्ञाय तद्रूपायेत्यर्थः। यज्ञस्वरूपत्वयज्ञाराध्यत्वतत्फलदत्वादिभिः स्वर्गद्वारायेत्यर्थः ॥ ३७ ॥ ❀ ❀ ऊर्क् पितॄणामन्नम् इष् देवानामन्नं तद्रूपाय ऊर्गिडादिरूपेण पित्रादीनां तृप्तिमापादयन् तदन्तर्यामिरूपेण यः फऊदस्तस्मै इत्यर्थः। त्रय्याः वेदस्य पतये रक्षकाय प्रतिपाद्याय च यज्ञस्य रेतः फलं तद्रूपाय। अत्र हिरण्यरूपायेत्याहवनीयाद्यग्निरूपत्वमुक्तम्। चातुर्होत्राय तन्तव इति। द्रव्यक्रिया-

मन्त्राद्यात्मकयज्ञरूपत्वम् ऊर्जे इष इति यज्ञाराध्यदेवतारूपत्वं त्रय्याः पतये इति स्वर्गापवर्गतत्साधनप्रकाशकवेदकारणत्वमेवं स्वर्गापवर्गद्वारत्वं स्वर्गद्वारशब्देन ऐहलौकिकसुखसाधनत्वमभिप्रेतं तदुपपादयन्नमस्करोति जीवानां वृत्तिदाय शब्दस्पर्शादिविषयातुभवजसुखप्रदायेत्यर्थः। एतदुपपादकं सर्वरसात्मन इति। सर्वे रसाः कट्वम्ललवणमाधुर्यादयः तदात्मने तद्रूपायेत्यर्थः। कट्वादिरसानां च गुणपरिणामरूपत्वात्। 'रसोऽहमप्सु कौन्तेय' इति रसस्य तद्विभूतित्वगानात् सर्वरसात्मन इत्युक्तं, इदं शब्दस्पर्शरूपात्मकत्वस्याप्युपलक्षणम्॥ ३८॥ ❀ ❀ स्थवीयसे स्थूलाय विशेषाय पृथिव्यात्मने गन्धरूपायेत्यर्थः। 'पुण्यो गन्धः पृथिव्यां चे'ति गीतावचनात् एवं गन्धरसादिभोग्यरूपेण वृत्तिदत्वमुक्तम्। अथ भोग्यभोगोपकरणभोगस्थानादिरूपेण वृत्तिदत्वमाह। सर्वसर्वात्मदेहाय सर्वमचेतनजातं भोगोपकरणभोगस्थानरूपं सर्वे आत्मानो भोक्तारो जीवाश्च देहः शरीरं यस्य तस्मै। प्रकारान्तरेणापि वृत्तिदत्वमाह सहः प्रवृत्तिसामर्थ्यमिन्द्रियशक्तिः ओजः तेजः बलं धारणसामर्थ्यं देहशक्तिस्तद्रूपाय सहआदिरूपेण वृत्तिदायेत्यर्थः। एवमाकारेण जगद्रक्षकत्वमित्याह त्रैलोक्यपालाय उक्तविधया त्रैलोक्यान्तर्गतकृत्स्नजगत्पालायेत्यर्थः॥ ३९॥ ❀ ❀ एवं जगदुपादानत्वतत्तदन्तरात्मत्वतदनन्यत्वतत्संहर्तृत्वादिभिस्तदेकासाधारणैर्धर्मैः सर्वोत्कृष्टं नमस्कृत्य अथ चिदचिदात्मकं सर्वमपि वस्तु तच्छरीरमेवातस्ततो नोत्कृष्टमस्तीत्यभिप्रायेण सर्वात्मकत्वेन नमस्करोति शब्दलिङ्गायेति। शब्द आकाशगुणः सलिङ्गं शरीरं यस्य तस्मै नभसे आकाशरूपाय च इदं वाय्वादितद्गुणशरीरकत्वस्याप्युपलक्षणं शब्दादिषु नियमनपूर्वकम् व्याप्यतच्छरीरकत्वेन स्थितायेत्यर्थः। व्याप्तिश्च वेश्मामग्निरिव न बहिरेव तिलेषु तैलमिव नान्तरेव किं त्वन्तर्बहिश्चेत्याह अन्तर्बहिरात्मने इति। अतति संततमविच्छेदेन व्याप्नोतीत्यात्मा अन्तर्बहिश्च व्याप्य स्थितायेत्यर्थः। तथा च श्रूयते 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः।' इति पुण्याय यज्ञादिपुण्यशरीराय अमुष्मै तत्साध्यस्वर्गादिलोकरूपाय लोकाय तल्लोकरूपाय भूरिवर्चसे ज्ञानप्रचुरजीवरूपाय॥ ४०॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सुप्रसन्नेन भवता यत्किंचिदुपदिश्यते चेद्भगवत्प्रियत्वमानुभाविकं स्यादित्यस्य वाक्यस्यावसरमाददान आह इदमिति। अनेन बहुपुरश्चरणमन्तरेण क्षिप्रं सत्यं फलतीत्युक्तं भवति॥ ३१॥ ❀ ❀ न केवलं प्रतिज्ञामात्रं किन्तूपदिष्टं चेत्याह इतीति। अनुक्रोशेत्यादिविशेषणेनानुग्रहातिशयं द्योतयति। किञ्चोपदेशकाले शिष्याणामित्थं भावं च सूचयति॥ ३२॥ ❀ ❀ स्वोपदेशः फलितो युष्माकमिति भावेनाह जितमिति। हे आत्मविद्धुर्याः परमात्मज्ञानिषु श्रेष्ठाः वो जितं सर्वमिति शेषः, कुतः स्वस्तये भगवदुपासनाख्यसत्कर्मणे मयोपदिष्टमिति यत्तस्मादिति शेषः "प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते" इति स्मृतिः। किञ्च भगवति भवतां भक्तिरनुदिनमेधतामिति भावेनाह स्वस्तिरिति। युष्माकं हरौ स्वस्तिः समीचीनसद्भावः सती भक्तिरस्तु, ततश्च तया भक्त्या भवतां राधसे सिद्ध्ये भगवत्तत्त्वं राध्यं पूज्यं कथं सर्वस्मै सर्वान्तर्यामिणे आत्मने स्वामिने नम इत्येतावदेवास्माकं नातोऽन्यदिति सङ्कल्प्येत्यर्थः "सर्वान्तर्यामिकत्वात्तु सर्वनामा जनार्दनः। न तु सर्वस्वरूपत्वात्सर्वेशेशो हरिर्यतः" इति वचनात्सर्वनामा न जगदात्मत्वमनेनोच्यत इत्यर्थः॥३३॥ ❀ ❀ इदानीं ध्येयस्वरूपं दिशति नमःपङ्कजनाभायेत्यादिना। भूतानि पञ्चभूतानि पञ्चभूतसूक्ष्माणि शब्दादीनि इन्द्रियाणि श्रोत्रादीनि पतित्वात्सततं व्याप्य तिष्ठतीति अत-सातत्यगमन इति धातुः, तस्मै॥३४॥ ❀ ❀ दुरन्तायान्तत्रयवर्जिताय विश्वप्रबोधाय पूर्णज्ञानाय विश्वस्य प्रबोधो यस्मादिति वा स तथा तस्मै॥ ३५॥ ❀ ❀ 'हृषीकमिन्द्रियं प्रोक्तमि'त्यतो हृषीकेशो जीवस्तस्येन्द्रियस्वामिने किञ्च इन्द्रियमिन्द्रस्य विद्यमानं यत्र किञ्च तस्यात्मा स्वामी हृषीकेशश्चायमिन्द्रियात्मा चेति विग्रहस्तस्मै निभृतात्मने स्तिमितरूपाय॥ ३६॥ ❀ ❀ शुचावग्नौ सीदति तिष्ठतीति शुचिषत् तस्मै 'योऽग्नौ तिष्ठन्नि'ति श्रुतेः हिनोति दुःखं रतिं यापयतीति हिरण्यं तादृशं वीर्यं यस्य स तथा तस्मै स्वर्णवर्णरेतस इति वा, चतुर्षु होतृषु स्थित्वा तैः क्रियमाणं यत्कर्म तत्कर्तृत्वाच्चातुर्होत्रस्तस्मै तन्तवे व्याप्ताय संततिप्रवर्तकाय वा॥ ३७॥ ❀ ❀ ऊर्जे पित्रन्नदात्रे इषे देवादात्रे इच्छारूपाय वा यज्ञे रेतो रतिर्यस्य स तथा तस्मै सर्वरसात्मने सर्वरसानां दात्रे॥ ३८॥ ❀ ❀ सर्वसत्त्वानां सर्वप्राणिनामात्मदा ईहा चेष्टा यस्य स तथा तस्मै आत्मानं ददातीत्यात्मदा 'य आत्मदेति' श्रुतेः सर्वप्राणिष्वात्मदेहस्तत्तदङ्गुष्ठमात्रस्वरूपं यस्य स तथा तस्मै इति वा विशेषाय विशिष्टाय पृथिव्यां स्थित्वा तस्याः सर्वस्माद्विशेषं करोतीति वा गुणगुणिनोरभेदाभिप्रायेण सह इत्याद्युक्तं सहस्तितिक्षाशक्तिः ओजोऽवष्टम्भशक्तिः बलं बाह्याद्यवयवशक्तिः॥ ३९॥ ❀ ❀ अर्थः शास्त्रं वेदाख्यं लिङ्गं ज्ञापकं प्रमाणं यस्य स तथा तस्मै अर्थस्य पुरुषार्थस्य लिङ्गं हेतुस्तस्मा इति वा नभसे आकाशवदसङ्गाय न भस्यते प्रकाश्यते न ज्ञायत इति वा। भस-भक्षणदीप्त्योरिति धातुः, पुण्याय पुनानाय लोकाय प्रकाशाय अमुष्मै अधिदैववासिने पुण्याय लोकाय स्वर्गादिलोकदात्रे वा॥ ४०॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

'इक् श्तिपौ धातुनिर्देशे' असश्चातुश्चात्र सत्तामेव वदतीत्यात्मविच्छ्रेष्ठानां स्वस्तये शोभनस्थित्यै सद्भक्तलक्षणायै ते तव जितमुत्कर्षो गुणादिप्रकाश इत्यर्थः। मुक्तानामपि सिद्धानामित्यादेः यस्मादेव स एव पुरुषार्थः। तस्मान्ममापि स एव स्वस्तिरस्तु

प्रार्थनायां लोट् । तत्र किं तव साधनमित्याशङ्क्य विभक्तिपरिणामेनाह । ते तुभ्यं नम इति । तत्र च मम न स्वातन्त्र्यं किन्तु तवैवेति । तदेव नमो विशिनष्टि भवतेति । राधसा सर्व्वसाधकेन राद्धं सिद्धं सर्व्वसाधकत्वे हेतुः आत्मने अन्तर्यामिणे सर्व्वस्मै सर्व्वरूपाय चेति । यद्वा स च स्वस्तिर्दीनमनसो रूप एव योग्य इति तदेव करोति ते नम इति । अन्यत् समानं वासुदेवादय एते पद्मनाभस्यैवांशाः । न तु महावासुदेवादयः निर्विकारायेति व्याख्यायां विकारस्तदाभास इति सङ्कर्षणादीनां तदाभासत्वं दर्शितम् । धुर्य्येत्यत्र वर्य्येति कचित् ।। ३३-३९ ।। ❀ ❀ अर्थेत्यर्द्धकम् । नम इत्यर्धकम् ।। ४० ।।

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अनुक्रोशः कृपा हृदये यस्य सः ।। ३२ ।। ❀ ❀ भगवन्तं स्तुवानो भक्तः प्रथमं जय जयेति वदेदित्याह । आत्मविद्धर्य्याणामात्मारामाणां स्वस्तये शोभनसत्तायै त्वया जितस्वोदकर्ष आविष्कृतः । 'इक् श्तिपौ धातुनिर्देशे' इति श्तिप् शोभनसत्ता च भगवद्गुणमाधुर्य्योत्कृष्टतया सायुज्यस्पृहाराहित्येन शुकादीनामिव तद्भक्तत्वेन सनातनी स्थितिः । यदुक्तम् "तथा परमहंसानां मुनीनाममलात्मनाम् । भक्तियोगविधानार्थमि'ति, कुर्व्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः" इति च । अतो मे मम स्वस्तिः शोभनसत्ता अस्तु । भवता प्रयोजकेन यत् आराधः आराधनं तेन राद्धं तस्य सिद्धिरस्तु । ननु श्रीगुरुणा मद्भक्तेनान्येन वा मदाराधनं भवति न तु मयेति तत्राह । सर्व्वस्मै सर्व्वस्वरूपाय आत्मने त्वमेव गुरुवैष्णवादिरूपः स्वभजनं कारयसीति भावः ।। ३३ ।। ❀ ❀ किञ्च त्वद्विषयकः सर्वेन्द्रियव्यापार एव त्वद्भक्तिः सर्व्वेन्द्रियाणि च त्वदधीनान्यतः कृपया मदिन्द्रियाणि स्वविषयव्यापारवन्ति सम्पादयेति प्रणमति नम इति । भूतसूक्ष्माणि शब्दादितन्मात्राणि इन्द्रियाणि च तेषामात्मने नियन्त्रे पङ्कजनाभायेति हे पङ्कजनाभ तव नाभिपङ्कजोद्भवाद् ब्रह्मत एव मदीयस्यास्य मर्त्त्यदेहस्योद्भूतत्वादिमं स्वभक्त्युन्मुखं कुरु तुभ्यं नम इति भावनाभिप्रेता । एवं भक्त्युपयोगार्थं देहेन्द्रियाणि समासेन संशोध्य पुनः प्रत्येकमपि शोधयितुं प्रथमं चित्ताधिष्ठातारं वासुदेवं प्रणमति । वासुदेवायेति भो वासुदेव ! मच्चित्तं शान्तं निर्विकारं कृत्वा स्वरोचिषा प्रकाश्य भक्तावेव चेतय तुभ्यं नम इति ।। ३४ ।। ❀ ❀ सूक्ष्माय अव्यक्ताय दुरन्ताय अन्तकाय मुखाग्निना लोकदाहकाय । भोः सङ्कर्षणदेव ! ममाहन्ताममतयोर्वृत्तीनां देहगेहादिनिबन्धानामनन्तानां तद्बन्धनं सन्दह्य तास्ततो विच्युतीकृत्य भक्त्याश्रयविषययोर्निबधान तुभ्यं नम इति ।। ३५ ।। ❀ ❀ हृषीकाणां यदीशमिन्द्रियं मनस्तदात्मने तन्नियन्त्रे । हे अनिरुद्ध ! देव मन्मनो भक्तावेवानुरञ्जय तुभ्यं नम इति । एवमन्तःकरणचतुष्टयं तदुपास्यदैवतवासुवादिप्रणतिभिः संशोध्य बहिःकरणानि तथा देहारम्भकाणि पञ्चभूतानि च शोधयितुमधिष्ठातृरूपत्वेन भूतरूपत्वेन च प्रणमति नमः परमेति चतुर्भिः । परमहंसाय सूर्य्याय निभृतात्मने नितरां भृता वृष्ट्यादिभिः पालिता आत्मानो जीवा येन तस्मै शुचिनि अन्तःकरणे सीदतीति शुचिषत् "हंसः शुचिषत्" इति श्रुतेः । भो सूर्य्यात्मकदेव ! मच्चक्षुः श्रीमूर्त्तिसौन्दर्य्ये एव प्रवर्तय देहगतं सूर्य्यात्मकं तेजश्च शुद्धयतु तुभ्यं नम इति ।। ३६ ।। ❀ ❀ हिरण्यवीर्य्याय अग्निरूपाय चातुर्होत्रकर्म्मसाधनाय कुतः तन्तवे तद्विस्तारकाय । भो वह्न्यात्मकदेव ! यथान्येषां कर्म्म प्रवर्त्तयसि तथैव मम वाचं कीर्तनभक्तौ प्रवर्त्तय वह्न्यात्मकं तेजश्च शुद्धयतु तुभ्यं नम इति ।। ३७ ।। ❀ ❀ ऊर्ज्जे पितॄणामन्नाय इषे देवानामन्नाय यज्ञरेतसे सोमाय भो सोमात्मकदेव ! मम देवर्ष्यादि ऋणं परिशोध्य मन्मनो भक्तावेवासञ्जय सोमात्मकं तेजश्च शुद्धयतु, तुभ्यं नम इति पूर्व्वमुपास्यदैवतप्रणत्या संशोध्यापि मनसो दुर्दमत्वादधिष्ठातृदैवतप्रणत्यापि पुनः संशोधनमिदं ज्ञेयम् । एवं सूर्य्याग्निसोमरूपं तेजश्च तद्रूपेण प्रणत्या संशोध्य रसनेन्द्रियं रसञ्च संशोधयितुं रसरूपेण प्रणमति तृप्तिदायेति । हे रसात्मकदेव ! हरे मम रसनां भवदीयवस्तुमाधुर्य्ये एव स्वादं प्रापय दैहिका आपश्च शुध्यन्तु तुभ्यं नमः ।। ३८ ।। ❀ ❀ सर्व्वेषां सत्त्वानां प्राणिनां ये आत्मानस्तेषां देहाय स्थवीयसे विराड्देहाय चेति । हे पृथिव्यात्मक हरे ! मम घ्राणेन्द्रियं भवदीयसौरभ्य एव प्रवर्त्तयन् देहञ्च स्वीयपरिचर्य्यादिषु प्रवर्त्तयेति त्रैलोक्यपालाय प्राणवायुस्वरूपाय सहओजोबलाय मनइन्द्रियदेहेषु सह ओजोबलरूपेण प्रविश्य तत्तत्पाटवं कर्त्तव्यम् इत्यर्थः । हे वायुस्वरूप हरे ! मम त्वगिन्द्रियं त्वदीयसौकुमार्य्यादावेवोल्लासयन् देहेन्द्रियमनांस्यपि भजनसामर्थ्यवन्ति कुरु तुभ्यं नम इति ।। ३९ ।। ❀ ❀ अर्थानां लिङ्गाय ज्ञापकाय शब्दगुणत्वात् । अन्तर्बहिरात्मने अन्तर्बहिर्व्यवहारालम्बनाय भो नभःस्वरूप हरे ! मम श्रोत्रं भवत्सौन्दर्य्ये एव प्रवर्त्तयन् स्वीयनाममन्त्रभक्तिशास्त्रार्थं स्फोरय । मम नभस्तत्त्वं च शुद्धयतु तुभ्यं नम इति । एवं स्वीयभूतेन्द्रियमनांसि भगवदुपासनोन्मुखीकृत्य उपासनां प्राप्य वैकुण्ठलोकस्वरूपत्वेन प्रणमति नम इति । पुण्याय सर्व्वोत्तमाय 'पुण्यन्तु चार्वपी'त्यमरः । भूरिवर्चस इति लोकान्तरव्यावृत्तिः ।। ४० ।।

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

इदं जप्तव्यं स्तोत्रं वो युष्मभ्यं यद्वदामि तत् विविक्तमसङ्कीर्णं यथा स्यात्तथा श्रूयतामित्यन्वयः ।। ३१ ।। ❀ ❀ अनुक्रोशः कृपा हृदये यस्य सः नारायणः परः पूज्यो यस्य सः इति वचः इति वक्ष्यमाणं वाक्यमाह ।। ३२ ।। ❀ ❀ हे आत्मविद्धुर्य्य ! ते तव जितमुत्कर्षः स्वस्तये सर्वप्राणिकल्याणाय अतो मे स्तोतुरपि स्वस्तिरस्तु । ननु ममोत्कर्षो ममैव स्वस्तये भवत्वित्यत आह । भवता राधसा नित्यापरिमितस्वस्तिरूपेण राद्धं सिद्धम् , त्वं नित्यापरिमितनिरतिशयस्वस्तिरूपेणैव सर्वदा वर्तमानोऽसीत्यर्थः,

सर्वस्मै सर्वरूपाय सर्वमूलत्वात् आत्मने सर्वात्मने सर्वाश्रयत्वात् नमः ॥ ३३ ॥ ❀ ❀ सर्वमूलत्वं सर्वाश्रयत्वं च प्रपञ्चयन्नमस्करोति नम इत्यादिना । पङ्कजं विश्वात्मकं नाभौ यस्य तस्मै सर्वमूलाय भूतसूक्ष्मादिनामात्मने आश्रयाय स्थितिप्रवृत्त्यादिहेतवे चित्ताद्याश्रयत्वेन नमस्करोति वासुदेवाय चित्तनियन्त्रे कूटस्थाय निर्विकारस्वरूपाय ॥ ३४ ॥ ❀ ❀ सङ्कर्षणाय अहंकारनियन्त्रे प्रद्युम्नाय अन्तरात्मने बुद्धिनियन्त्रे विश्वस्य प्रबोधो यस्मात्तस्मै ॥ ३५ ॥ ❀ ❀ हृषीकाणि श्रोत्रादीनि बाह्येन्द्रियाणि तदीशभूतमिन्द्रियं मनस्तस्यात्मने नियन्त्रे परमो विष्णुरेव स्वाश्रितानां सनकादीनां ज्ञानोपदेशेन संशयं हन्तीति हंसस्तस्मै । नमः पूर्णाय नृसिंहरामादिपूर्णावताररूपिणे भूतात्मने निभृता लब्धकामाः आत्मानो जीवास्तत्कालगताः भक्ता यस्मात्तस्मै नानावताररूपायेत्यर्थः ॥ ३६ ॥ ❀ ❀ स्वर्गापवर्गद्वाराय कर्मप्रवर्तकत्वेन स्वर्गद्वाराय अर्चिरादिमार्गावयवत्वेनापवर्गद्वाराय सूर्यरूपाय नमः । शुचिनि त्रिगुणदोषाऽस्पृष्टे परमे व्योम्नि सूर्यादिक्षेत्रज्ञस्वरूपे वा नित्यं सीदतीति शुचिषत् तस्मै च नमः । हिरण्यवीर्याय अग्निरूपाय नमः । चतुर्णां होतॄणामिदं चातुर्होत्रं कर्म तस्मै तन्तवे होतृतत्कर्मतत्फले चानुस्यूताय च नमः ॥३७॥ ❀ ❀ ऊर्ज्जे पितॄणामन्नाय इषे देवानामन्नाय यज्ञरेतसे सोमाय नमः । त्रय्याः पतये वेदत्रयीप्रोक्तकर्मतत्फलादिस्वामिने नमः । जीवानां वृत्तिदाय पर्जन्यादिरूपिणे सर्वरसात्मने जलरूपाय च नमः ॥ ३८ ॥ ❀ ❀ सर्वसत्त्वानां ये आत्मानस्तेषां देहाय विशेषाय पृथिवीरूपाय स्थवीयसे विराड्रूपाय च नमः । त्रैलोक्यपालाय च नमः ॥ ३९ ॥ ❀ ❀ अर्थलिङ्गाय अर्थज्ञापकाय शब्दरूपाय इदं स्पर्शादीनामप्युपलक्षणम् , नभसे आकाशाय च नमः, अन्तर्बहिरात्मने नमः "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति श्रुतेः "यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति" इति स्मृतेश्च सर्वस्यान्तर्बहिश्च आत्मा स्वरूपं यस्य तस्मै नमः । पुण्याय यत्र तपोव्रतदानादिरूपाय अमुष्मै लोकाय पुण्यसाध्याय च नमः । भूरिवर्चसे विपुलज्ञानाय जीवरूपाय च "यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः । क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥" इति स्मृतेः ॥ ४० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं तेषां स्वप्रियत्वं निरूप्य प्रियाणां हिताचरणस्य अवश्यं कर्तव्यत्वात् भगवत्सन्तोषसाधनमुपदेष्टुमादौ तान् सावधानान् करोति—इदमिति । इदं वक्ष्यमाणं जप्तव्यत्वे जपयोग्यमहं वदामि तद्वो युष्माभिः श्रूयतामित्यन्वयः । श्रुत्वा चेदं विविक्तमसङ्कीर्णं यथा भवति तथा युष्माभिर्जप्तव्यमित्यन्वयः । जप्तव्यत्वे हेतून् दर्शयति—पवित्रमिति । रागादिदोषनिवृत्तिपूर्वकं जपतामन्तःकरणे भगवत्स्फूर्तियोग्यतापादकम् , अत एव परं मङ्गलं साधनदशायामेव भगवद्दर्शनादिना परमानन्दजनकं सुकरं च, अन्ते चापि निःश्रेयसकरं परमपुरुषार्थभगवत्सायुज्यप्रापकमिति । यद्वा विविक्तं यथा भवति तथा जप्तव्यं यदिदमहं वदामि तद्वः श्रूयतामित्यन्वयः । अन्यत्समानम् ॥ ३१ ॥ ❀ ❀ ननु लोके गुरुणा मन्त्राद्युपदेशे कृतेऽप्युपदेशस्य क्वचिन्नोक्तफलवत्त्वं दृश्यते तत्कथं तेषां तद्भविष्यतीत्याशङ्क्य एवम्भूतेन गुरुणा कृत उपदेश एवम्भूतानां शिष्याणामेव फलवान् भवति नान्यथेति पूर्वं दर्शितमति निश्चयार्थं पुनः सूचयंस्तान् विशिनष्टि—इतीति । इत्येवं तान् राजपुत्रान् प्रत्युक्त्वा वचः भगवत्प्रसादकारणोपदेशलक्षणं वचनं शिव आहेत्यन्वयः । अनुक्रोशः कृपा हृदये यस्य सः । भगवान् ज्ञानवैराग्यैश्वर्यादिमत्त्वेन शिष्याणां हृद्युपदिष्टमर्थं स्थिरीकर्तुं समर्थः । तत्र हेतुमाह—नारायणपर इति, निरन्तरं भगवद्ध्यानपर इत्यर्थः । बद्धाञ्जलीन् अतिनम्रीभूतान् ॥ ३२ ॥ ❀ ❀ तत्र प्रथमं भगवदुत्कर्षवर्णनपूर्वकं भक्तेन स्वार्थं ततः परम् आनन्दः प्रार्थनीय इत्याह—जितं त इति । आत्मविदां मध्ये ये धुर्याः श्रेष्ठा भगवद्भक्तास्तेषां स्वस्तये शोभनसत्तायै परमानन्दलाभाय एव ते त्वया जितं स्वोत्कर्षं आविष्कृत इत्यर्थः । ननु लोके स्वसत्कारपूजादिना स्वसुखार्थमेव उत्कर्षाविष्करणं दृष्टं तत्कथं परार्थं ममोत्कर्षाविष्करणमित्युच्यते इति शङ्कायां वक्तव्यं भवतु तिरोहितानन्दत्वाल्लोके तथात्वं भवतस्तु राधसा स्वतस्सिद्धाविर्भूतपरमानन्दस्वरूपेणैव राद्धमानन्दादिकं सर्वं सिद्धम् अतस्तव स्वोत्कर्षाविष्करणं केवलं स्वभक्तार्थमेव न स्वार्थमिति । यस्मादेवं तस्माद्भवता करुणानिधिना परमोदारेण दात्रा मे ममापि स्वस्तिः भगवद्दर्शनादिना परमानन्दलाभोऽस्त्विति । नन्वेवं परमानन्दलाभो देहकारणभूतमात्रेन्द्रियान्तःकरणादीनां अधिष्ठातृतत्तद्देवताराधनेन तत्प्रसादाद्भूतादिविशुद्धया स्यात् , कथं च तद्विना मत्प्रार्थनामात्रेण सः स्यादित्याशङ्कायां वक्तव्यं त्वमेव भूतादिसर्वात्मा सर्वनियन्ता चातः सर्वस्मै भूतादिसर्वस्वरूपाय आत्मने तेषां नियन्त्रे च तुभ्यं नम इति ॥ ३३ ॥ ❀ ❀ एवं सामान्यतः सर्वात्मानं भगवन्तं नमस्कृत्य पुनर्विशेषतस्तत्तद्रूपेण तं प्रणमेदित्याह—नम इति सार्द्धैस्त्रिभिः । पङ्कजं लोकात्मकं नाभौ यस्य तस्मै श्रीनारायणाय सर्वकारणकारणात्मने नमः । अत एव जीवानां य उपाधयो देहारम्भकाणि भूतानि पृथ्व्यप्तेजोवाय्वाकाशरूपाणि सूक्ष्माणि रूपरसगन्धस्पर्शशब्दात्मकानि मात्रापदवाच्यानि इन्द्रियाणि श्रोत्रत्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्राङ्घ्रिपाय्वाकाख्यानि च तेषामात्मने नियन्त्रे नमः । चित्ते भगवत्स्फूर्तियोग्यतासिद्ध्यर्थं तत्रोपास्यं प्रणमेदित्याह वासुदेवायेति । वासुदेवाय चतुर्व्यूहोपासनायां चित्त उपास्याय । कूटस्थाय चित्तस्योपाधेर्निर्विकारत्वात् निर्विकाराय । अत एव शान्ताय सर्वविक्षेपशून्याय । एवम्भूतश्चित्तेऽस्तीत्यत्र किं प्रमाणमित्यपेक्षायां स्वरोचिषे इति, स्वयम्प्रकाशत्वेन सर्वप्रकाशत्वेन च सिद्धाय नमः ॥ ३४ ॥ ❀ ❀ अहन्ताममतानिरासार्थं अहङ्कार उपास्यं सङ्कर्षणं प्रणमेदित्याह—सङ्कर्षणाय नम इत्यनुषज्जते । तत्कृपां विनाऽहन्ताममतानिरासाभावेन जन्ममरणादिसंसारस्फूर्तेर्दुर्निवारत्वात् आनन्दानुभवो न स्यादिति सोऽवश्यमाराधनीयः । तत्रापि तस्य सूक्ष्मत्वात्

प्रयत्नाधिक्यं विधेयमिति सूचयं स्तं विशिनष्टि—सूक्ष्मायेति। अहङ्कारस्थत्वेऽपि। तद्भिन्नतया दुर्लक्ष्यायेत्यर्थः। स्वयं दुरन्ताय दुरशब्दो निषेधे, अन्तो विनाशः, अविनाशिन इत्यर्थः। अन्तकाय चेति मुखाग्निना दाहकत्वेन विश्वसंहारकाय चेत्यर्थः। चकारो नम इत्यनुषङ्गार्थः। बुद्धेर्निश्चयेन भगवति पर्यवसानार्थं बुद्धावुपास्यं प्रद्युम्नं प्रणमेदित्याह—नमः प्रद्युम्नायेत्यन्वयः। तत्कृपां विना बुद्धिर्भगवति नैव पर्यवस्येदिति सूचयन् विशिनष्टि—विश्वप्रबोधायेति, विश्वस्य प्राणिजातस्य प्रकृष्टो बोधो यस्मात्तस्मा इत्यर्थः। तत्र हेतुमाह—अन्तरात्मने इति, बुद्ध्यधिष्ठात्रे इत्यर्थः॥ ३५॥ ❀ ❀ मनसश्चाञ्चल्येन बुद्धेर्भगवति पर्यवसानस्याशक्यत्वात् तच्चाञ्चल्यनिवृत्त्यर्थं मनस्युपास्यमनिरुद्धं प्रणमेदित्याह—नमो नमोऽनिरुद्धायेति। न तत्प्रसादं विना मनसः स्थैर्यं न च तद्विना कस्यापि पुरुषार्थस्य सिद्धिरिति। तदाराधने प्रयत्नाधिक्यं विधेयमिति द्योतयितुं नमश्शब्दावृत्तिर्बोध्या। कुत एवमित्याशङ्क्य मनसः सर्वेन्द्रियेशत्वात् तन्निरोधेनैव सर्वेन्द्रियनिरोधो नान्यथेत्यभिप्रेत्य तं विशिनष्टि—हृषीकेति। हृषीकाणीन्द्रियाणि तेषामीशे यदिन्द्रियं मनस्तस्यात्मने नियन्त्रे इत्यर्थः। एवमन्तःकरणचतुष्टयशुद्ध्यर्थं तत्रोपास्यदेवान् वासुदेवादीन् प्रणम्येन्द्रियादिशुद्ध्यर्थं तत्तदधिष्ठातृत्वेन आदित्यादिदेवता इन्द्रियात्मने नम इत्यनेन प्रणता अपि लौकिकालौकिकसर्वव्यवहारहेतुत्वेन पुनः प्रणमेदित्याह—नम इति चतुर्भिः। प्रयोजनं तु भगवद्दर्शनादियोग्यतासम्पत्तिरूपं उभयत्रैकमेव। अत्र चक्षुषस्तद्दर्शनयोग्यतासिद्ध्यर्थं सूर्यं प्रणमेदित्याह—नम इति परहंसाय सूर्याय नमः। नित्यं निरन्तरं शुचिन्यन्तःकरणे सीदतीति तथा तस्मै, तथाच श्रुतिः—"हंसः शुचिषम्" इति। पूर्णाय तेजसा विश्वव्यापिने। निभृतात्मने क्षयवृद्धिशून्याय, यद्वा नितरां भृता वृष्ट्यादिना पालिताः आत्मानो जीवा येन तस्मै स्वर्गापवर्गद्वारा येति, तं विना स्वर्गापवर्गयोरपि साधनानुष्ठानानुपपत्तेरिति भावः॥३६॥ ❀ ❀ वाचो निरन्तरं भगवद्गुणानुवादयोग्यतासिद्ध्यर्थम्। इदानीमग्निप्रणतिं विधत्ते—नम इति। हिरण्यं वीर्यं शुक्रं यस्य तस्मै अग्निरूपाय नमः। चातुर्होत्रं कर्म तस्मै, तत्साधनायेत्यर्थः। तन्तवे वाग्विस्तारकाय। मनसो निरन्तरं भगवत्स्मरणयोग्यतासिद्ध्यर्थं चन्द्रप्रणामं विधत्ते—नम इति, त्रय्याः पतये सोमाय नम इत्यन्वयः। स एव हि ऋग्यजुस्सामाख्यां वेदत्रयीं तत्तत्पदार्थोत्पादनेन पाति अमृतमयस्वरश्मिद्वारा वृक्षलतौषध्यादीनां पोषकत्वात्। अन्यथा त्रयीप्रतिपादितकर्मानुष्ठानं प्राणिजीवनं च न प्रसिद्ध्येत्। एतदेव विवृण्वन् विशिनष्टि—ऊर्जे पितॄणामन्नाय, इषे देवानामन्नाय, यज्ञरेतसे स्वरेतसा वीर्येण अमृतलेशेन यज्ञसामग्रीसम्पादनात् यज्ञो रेतो यस्य तस्मै॥३७॥ एवं सूर्याग्निसोमत्वेन तेजसः प्रणतिं विधायेदानीं रसनाया भगवत्प्रसादमाधुर्यास्वादनयोग्यतासिद्ध्यर्थं जलप्रणतिं विधत्ते—तृप्तिदायेति। चकारस्तुभ्यं भगवते इत्यध्याहारार्थः। तथाच सर्वजीवानां तृप्तिदाय सर्वरसात्मने सर्वेषां माधुर्यादिषट्प्रकाराणां रसानामात्मने आधारभूताय जलस्वरूपाय तुभ्यं भगवते नम इत्यन्वयः। घ्राणेन्द्रियस्य भगवन्निर्माल्यादिसुगन्धग्रहणयोग्यतासिद्ध्यर्थं देहस्य तत्परिचर्यायोग्यत्वसिद्ध्यर्थं च पृथ्व्यात्मकतया नमस्कारं विधत्ते—सर्वसत्त्वेति। विशेषाय पृथ्वीरूपा ते नम इत्यध्याहारः। तं समष्टिव्यष्टिद्विविधदेहात्मत्वेन विभजते—सर्वेषां सत्त्वानां प्राणिनां ये आत्मानः स्वरूपाणि तेषां देहाय, इति व्यष्टिदेहत्वमुक्तम्। स्थवीयसेऽतिस्थूलाय विराड्देहाय, इति समष्टिदेहत्वमुक्तम्॥ ३८॥ ❀ ❀ देहेन्द्रियमनसां भगवद्भजनसामर्थ्यसिद्ध्यर्थं वाय्वात्मकस्य प्रणतिं विधत्ते—नम इति। प्राणरूपेण त्रैलोक्यं प्राणिजातं पालयतीति त्रैलोक्यपालस्तस्मै वाय्वात्मने नमः। पालनमेव विशदयति—सहओजोबलाय चेति, चकारो नमःपदानुकर्षणार्थः, सहः मनसः सामर्थ्यम्, ओज इन्द्रियसामर्थ्यम्, बलं देहसामर्थ्यं, सहआदिहेतुभूताय नम इत्यर्थः। श्रोत्रेन्द्रियस्य भगवद्गुणानुवादश्रवणपरायणतासिद्ध्यर्थं आकाशस्य अन्तर्बहिर्व्यवहारहेतुत्वेन स्वगुणशब्दद्वारा लौकिकालौकिकसर्वव्यवहारहेतुत्वेन च देहेन्द्रियाद्यवकाशदानादिना सर्वजीवननिमित्ततादिलक्षणपरमोपकारस्मरणपूर्वकं प्रणतिं विधत्ते—अर्थेति। नभसे आकाशरूपाय भगवते नमः। अर्थलिङ्गाय स्वगुणशब्दद्वारा लौकिकसर्वपदार्थज्ञापकाय। अन्तर्बहिरात्मने इति, अवकाशदातृत्वेन अन्तर्बहिर्व्यवहारकारणाय॥ ३९॥ ❀ ❀ स्वर्गवैकुण्ठादिलोकस्यापि भगवदानन्दाद्यंशनिर्मितत्वात् तत्रत्यानन्दाद्यनुभवसिद्धये लोकरूपस्य प्रणतिं विधत्ते—नम इति। अमुष्मै स्वर्गवैकुण्ठादिरूपाय लोकाय नमः। पुण्यायेति, पुण्येन प्राप्यायेत्यर्थः। भूरिवर्चसे इति, प्रकाशबहुलायेत्यर्थः। तत्तल्लोकस्य पुण्यप्राप्यत्वात् पुण्यजनककर्मात्मनः प्रणतिं विधत्ते—प्रवृत्तायेति, प्रवृत्ताय देवपितृलोकादिप्राप्तिसाधनभूताय कर्मणे नमः। निवृत्ताय वैकुण्ठादिप्राप्तिसाधनरूपाय कर्मणे नमः। प्रवृत्तकर्मणा पितृदेवलोकप्राप्तावपि तत्रत्यसुखानुभवस्य तदधिष्ठातृपितृदेवाधीनत्वात् तदर्थं तथा वैकुण्ठादिलोकगमने पितृदेवादेः प्रतिबन्धकर्तृत्वात्तन्निवृत्त्यर्थं च तदात्मकस्य प्रणतिं विधत्ते—पितृदेवाय नम इति॥ ४०॥

## भाषानुवादः

अब मैं तुम्हें एक बड़ा ही पवित्र, मङ्गलमय और कल्याणकारी स्तोत्र सुनाता हूँ। इसका तुमलोग शुद्धभावसे जप करना॥ ३१॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—तब नारायणपरायण करुणार्द्रहृदय भगवान् शिवने अपने सामने हाथ जोड़े खड़े हुए उन राजपुत्रोंको यह स्तोत्र सुनाया॥ ३२॥ ❀ ❀ भगवान् रुद्र स्तुति करने लगे—भगवन्! आपका उत्कर्ष उच्चकोटिके आत्मज्ञानियोंके कल्याणके लिये—निजानन्द लाभके लिये है, उससे मेरा भी कल्याण हो। आप सर्वदा अपने निरतिशय परमानन्दस्वरूपमें ही स्थित रहते हैं, ऐसे सर्वात्मस्वरूप आपको नमस्कार है॥ ३३॥ ❀ ❀ आप पद्मनाभ (समस्त

लोकोंके आदिकारण ) हैं; भूतसूक्ष्म (तन्मात्र) और इन्द्रियोंके नियन्ता शान्त एकरस और स्वयंप्रकाश वासुदेव ( चित्तके अधिष्ठाता ) भी आप ही हैं; आपको नमस्कार है ॥ ३४ ॥ ❀ ❀ आप ही सूक्ष्म ( अव्यक्त ), अनन्त और मुखाग्निके द्वारा सम्पूर्ण लोकोंका संहार करनेवाले अहङ्कारके अधिष्ठाता सङ्कर्षण तथा जगत्के प्रकृष्ट ज्ञानके उद्गमस्थान बुद्धिके अधिष्ठाता प्रद्युम्न हैं; आपको नमस्कार है ॥ ३५ ॥ ❀ ❀ आप ही इन्द्रियोंके स्वामी, मनस्तत्त्वके अधिष्ठाता भगवान् अनिरुद्ध हैं; आपको बार-बार नमस्कार है । आप अपने तेजसे जगत्को व्याप्त करनेवाले सूर्यदेव हैं, पूर्ण होनेके कारण आपमें वृद्धि और क्षय नहीं होता; आपको नमस्कार है ॥ ३६ ॥ ❀ ❀ आप स्वर्ग और मोक्षके द्वार तथा निरन्तर पवित्र हृदयमें रहनेवाले हैं, आपको नमस्कार है । आप ही सुवर्णरूप वीर्यसे युक्त और चातुर्होत्र कर्मके साधन तथा विस्तार करनेवाले अग्निदेव हैं; आपको नमस्कार है ॥ ३७ ॥ ❀ ❀ आप पितर और देवताओंके पोषक सोम हैं तथा तीनों वेदोंके अधिष्ठाता हैं; हम आपको नमस्कार करते हैं, आप ही समस्त प्राणियोंको तृप्त करनेवाले सर्वरस ( जल ) रूप हैं; आपको नमस्कार है ॥ ३८ ॥ ❀ ❀ आप समस्त प्राणियोंके देह, पृथ्वी और विराट्स्वरूप हैं तथा त्रिलोकीकी रक्षा करनेवाले मानसिक, ऐन्द्रियिक और शारीरिक शक्तिस्वरूप वायु ( प्राण ) हैं; आपको नमस्कार है ॥ ३९ ॥ ❀ ❀ आप ही अपने गुण शब्दके द्वारा—समस्त पदार्थोंका ज्ञान करनेवाले तथा बाहर भीतरका भेदकरनेवाले आकाश हैं तथा आप ही महान् पुण्योंसे प्राप्त होनेवाले परम तेजोमय स्वर्गवैकुण्ठादि लोक हैं, आपको पुनः नमस्कार है ॥ ४० ॥

प्रवृत्ताय निवृत्ताय पितृदेवाय कर्मणे । नमोऽधर्मविपाकाय[1] मृत्यवे दुःखदाय च ॥ ४१ ॥
नमस्त आशिषामीश मनवे कारणात्मने । नमो धर्माय बृहते कृष्णायाकुण्ठमेधसे ।
पुरुषाय पुराणाय सांख्ययोगेश्वराय च ॥ ४२ ॥
शक्तित्रयसमेताय मीढुषेऽहंकृतात्मने । चेतआकूतिरूपाय नमो वाचोविभूतये ॥ ४३ ॥
दर्शनं नो दिदृक्षूणां देहि भागवतार्चितम् । रूपं प्रियतमं[2] स्वानां सर्वेन्द्रियगुणाञ्जनम् ॥ ४४ ॥
स्निग्धप्रावृड्घनश्यामं सर्वसौन्दर्यसंग्रहम् । चार्वायतचतुर्बाहुं सुजातरुचिराननम् ॥ ४५ ॥
पद्मकोशपलाशाक्षं सुन्दरभ्रु सुनासिकम् । सुद्विजं सुकपोलास्यं समकर्णविभूषणम् ॥ ४६ ॥
प्रीतिप्रहसितापाङ्गमलकैरुपशोभितम् । लसत्पङ्कजकिञ्जल्कदुकूलं मृष्टकुण्डलम् ॥ ४७ ॥
स्फुरत्किरीटवलयहारनूपुरमेखलम् । शङ्ख[3]चक्रगदापद्ममालामण्युत्तमर्द्धिमत् ॥ ४८ ॥
सिंहस्कन्धत्विषो बिभ्रत्सौभगग्रीवकौस्तुभम् । श्रियानपायिन्या क्षिप्तनिकषाश्मोरसोल्लसत् ॥ ४९ ॥
पूररेचकसंविग्नवलिवल्गुदलोदरम् । प्रतिसंक्रामयद्विश्वं नाभ्याऽऽवर्तगभीरया ॥ ५० ॥

अन्वयः—प्रवृत्ताय निवृत्ताय पितृदेवाय कर्मणे अधर्मविपाकाय च मृत्यवे दुःखदाय नमः ॥ ४१ ॥ ❀ ❀ ईश आशिषाम् कारणात्मने मनवे ते नमः बृहते धर्माय अकुण्ठमेधसे कृष्णाय नमः च सांख्ययोगेश्वराय पुराणाय पुरुषाय ॥ ४२ ॥ मीढुषे अहङ्कृतात्मने शक्तित्रयसमेताय चेतआकूतिरूपाय वाचः विभूतये नमः ॥ ४३ ॥ ❀ ❀ दिदृक्षूणाम् नः भागवतार्चितम् दर्शनम् देहि स्वानाम् प्रियतमम् सर्वेन्द्रियगुणाञ्जनम् रूपम् ॥ ४४ ॥ ❀ ❀ स्निग्धप्रावृड्घनश्यामम् सर्वसौन्दर्यसङ्ग्रहम् चार्वायतचतुर्बाहुम् सुजातरुचिराननम् ॥ ४५ ॥ ❀ ❀ पद्मकोशपलाशाक्षम् सुन्दरभ्रु सुनासिकम् सुद्विजम् सुकपोलास्यम् समकर्णविभूषणम् ॥ ४६ ॥ ❀ ❀ प्रीतिप्रहसितापाङ्गम् अलकैः उपशोभितम् लसत्पङ्कजकिञ्जल्कदुकूलम् मृष्टकुण्डलम् ॥ ४७ ॥ स्फुरत्किरीटवलयहारनूपुरमेखलम् शङ्खचक्रगदापद्ममालामण्युत्तमर्द्धिमत ॥ ४८ ॥ ❀ ❀ सिंहस्कन्धत्विषः बिभ्रत्सौभगग्रीवकौस्तुभम् अनपायिन्या श्रियाक्षिप्तनिकषाश्मोरसा उल्लसत् ॥ ४९ ॥ ❀ ❀ पूररेचकसंविग्नवलिवल्गुदलोदरम् आवर्तगभीरया नाभ्या विश्वम् प्रतिसङ्क्रामयत् ॥ ५० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

प्रवृत्ताय च निवृत्ताय च कर्मणे पितृदेवाय यथाक्रमं पितृदेवप्राप्तिफलाय अधर्मफलरूपाय च मृत्यवे ॥ ४१ ॥ ❀ ❀ हे ईश आशिषां कामनानां कारणात्मने सर्वकर्मफलदात्रे मनवे सर्वज्ञाय मन्त्रात्मकायेति वा । विष्णुत्वेन प्रणमति । बृहते धर्माय

१. प्रा० पा०—धर्माधर्मविवेकाय । २. प्रा० पा०—प्रियतरं । ३. प्राचीने पाठे 'शङ्खचक्रगदापद्म····' न आरम्य ५१ श्लोकपूर्वार्धस्य ( दुकूलस्वर्णमेखलम् ) इति पूर्णोऽशो मुले न टिप्पण्यां वर्तते ।

परमधर्मात्मने कृष्णाय ॥ ४२ ॥ ❀ ❀ रुद्ररूपेण प्रणमति । मीढुषे रुद्राय अहंकृतमहंकारस्तदात्मने । स च कर्तृकरणकर्म-शक्तित्रयसमेतस्तस्मै ब्रह्मत्वेन प्रणमति । चेतो ज्ञानमाकूतिः क्रिया तद्रूपाया वाचो विविधा भूतिः सृष्टिर्यस्मात्तस्मै ॥ ४३ ॥ एवं नमस्कृत्य दर्शनं प्रार्थयते दर्शनमिति नवभिः । भागवतैः सत्कृतं दर्शनं देहीत्यस्य विवरणं रूपमित्यादि प्रदर्शयेत्यंतम् । स्वानां भक्तानां प्रियतमं रूपं प्रदर्शयेति नवमेनान्वयः । सर्वेषामिन्द्रियाणां ये गुणा विषयास्तेषामञ्जनं व्यञ्जकम् । सर्वेन्द्रियविषयविषयि-रूपमित्यर्थः । सर्वेन्द्रियाणि स्वगुणैरनक्ति रञ्जयतीति वा ॥ ४४ ॥ ❀ ❀ स्निग्धः प्रावृषि यो घनस्तद्वच्छ्यामम् । सर्वेषां सौन्दर्याणां संग्रहो यस्मिन् । चारव आयताश्चत्वारो बाहवो यस्मिन् । सुजातं यथोचितं सर्वावयवरुचिरमाननं यस्मिन् ॥ ४५ ॥ ❀ ❀ पद्मस्य कोशे मध्ये यानि पलाशानि दलानि तद्वदक्षिणी यस्मिन् । सुकपोलमास्यं यस्मिन् समौ कर्णौ विभूषणं यस्य कुण्डलयोरग्रे वक्ष्यमाणत्वात् ॥ ४६ ॥ ❀ ❀ प्रीत्या प्रहसितावपांगौ यस्मिन् ॥ ४७ ॥ ❀ ❀ स्फुरन्ति किरीटादीनि यस्मिन् शंखादिमत् उत्तमर्द्धिर्लक्ष्मीः । यद्वा एतैरुत्तमा ऋद्धिरुत्कर्षो यस्यास्ति तत् ॥ ४८ ॥ ❀ ❀ सौभगयुक्ता ग्रीवा येन सिंहस्य स्कन्धे परितः प्रसरन्तः केसरा एव त्विषस्तादृशीः सर्वतस्त्विषो बिभ्रच्चासौ सौभगग्रीवश्च कौस्तुभो यस्मिन् । यद्वा सिंहस्येव स्कन्धौ तनोस्त्विषः कुण्डलहारादिदीप्तीर्बिभ्रदिति पृथग्विशेषणम् । सौभगयुक्ता ग्रीवा येन स कौस्तुभो यस्मिन् । श्रिया हेतुभूतया क्षिप्तस्तिरस्कृतो निकषाश्मा स्वर्णरेखांकितो निकषणपाषाणो येन तादृशेनोरसा उल्लसच्छोभमानम् ॥ ४९ ॥ ❀ ❀ श्वासोच्छ्वासाभ्यां संविग्नाश्चंचला वलयस्ताभिर्वल्गु सुन्दरं दलवदश्वत्थपत्रसदृशसुन्दरं यस्मिन् । आवर्त-गभीरया दक्षिणावर्तेन निम्नया प्रतिसंक्रामयद्यतो निर्गतं तेनैव द्वारेण पुनः प्रवेशयदिव ॥ ५० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

धर्मान्तरस्यापि प्रयोजकत्वेन प्रणमति-प्रवृत्तायेति । अधर्मफलदातृत्वेन प्रणमति-अधर्मस्य विपाकः फलं यस्मात्तस्मै ॥ ४१ ॥ ❀ ❀ विहितकर्मफलदातृत्वेन प्रणमति-हे आशिषामीश स्वर्गादिफलदायिन् । अथ त्रिदेवीरूपत्वेन स्तुत्येषु विष्णुरूपत्वे पद्मनाभाभेदेनैव स्तौति-नमो धर्मायेति । तत्र पुरुषाय पुराणायेति पद्मनाभरूपेण निःश्वासप्रवर्तितवेदद्वारा धर्माय बृहते नमः । स्वयं भगवद्धर्मस्वरूपेण तदनुगतसर्वधर्मप्रवर्त्तनद्वारा सांख्ययोगेश्वरायेति कपिलदत्तात्रेयादिरूपेण तत्तद्धर्मप्रवर्त्तन-द्वारा कृष्णायाकुण्ठमेधस इति । परब्रह्मरूपेण ज्ञानप्रवर्त्तनद्वारा विश्वपालकायेत्यर्थः । व्यतिक्रमनिर्देशश्च तदिच्छाया अनैयत्यात् ॥ ४२ ॥ ❀ ❀ अहंकारस्याधिदैवादिभेदत्रयसहितस्य पुनरपि तदधिष्ठातृदेवतास्वरूपप्रणत्या संशोधनमाह-शक्तीति । भो रुद्ररूप हरे ममाहन्ताममतयोर्वृत्तयः शुद्धा सन्तु भक्तिमय्यो भवन्तु तुभ्यं नमः । ज्ञानेन्द्रियकर्मेन्द्रियाणां शुद्धिमाह-वाचो वेद-लक्षणायाः वाच इति तदुपलक्षितानां कर्मेन्द्रियाणां शुद्धिर्व्यञ्जिता ज्ञानेन्द्रियाणामपि शुद्धिः पूर्वमुक्तापि पुनरनया प्रणत्यापि ज्ञेया । हे ब्रह्मस्वरूप हरे मम बुद्धिप्राणवृत्तीर्भक्त्युन्मुखीकुरु तुभ्यं नम इति ॥ ४३ ॥ ❀ ❀ एवं स्मरन् प्रणतिभिरेव स्वस्य देहेन्द्रियमनसां शुद्ध्या योग्यतामापाद्य निजाभीष्टं दर्शनं प्रार्थयते । ननु कीदृशं दर्शनं त्वदभिमतं ददानि तत्राह-भागवतैर्भग-वदनुरागिभिरर्चितं न तु बौद्धाद्यैरित्यर्थः । इन्द्रियगुणा रूपादयः । विषयेपि गुणपदं प्रयुज्यते इति । इत्यर्थ इति । दर्शनादि-योग्यमिति भावः । सर्वेषामेव रूपं सर्वेन्द्रियविषयमस्ति तत्र को विशेष इति चेत्तत्राह-सर्वेन्द्रियाणीति । स्वगुणैरसाधारणसौन्दर्य्य-माधुर्य्यादिभिरित्यर्थः ॥ ४४ ॥ ❀ ❀ किञ्च स्निग्धेति स्नेहवत्त्वस्नेहजनकत्वचिक्कणत्वान्युक्तानि प्रावृड्घनेति । रसवर्षित्व-सर्वतापोपशमकत्वमनश्चातकहर्षकत्वानि श्लेषेण । प्रकर्षेण आ सम्यगेव वर्षति भक्तमनोरथमिति प्रावृड्घनश्याममतिनिविडश्यामं सर्वेषामेव प्राकृताप्राकृतवस्तुनिष्ठानां सौन्दर्य्याणां संग्रहो यत्र तत् । यद्वा-सौन्दर्यकर्तृकं सम्यग्ग्रहणमाकर्षणं यत्र तदित्यत एवान्यत्र तादृशसौन्दर्यं नास्तीत्यर्थः । यद्वा-सर्वसौन्दर्य्येण कर्त्रा सम्यगासक्त्यैव ग्रहणं यस्येति सर्वसौन्दर्यमपि स्वं सफलयितुं यदेव गृह्णातीति भावः । यद्वा-सुन्दरीणां समूहः सौन्दर्यं सर्वं च तत्सौन्दर्यं त्रिलोकीगतस्त्रीसमूहं सर्वसौन्दर्यं तेन सम्यग्गृह्यते यत्तत्तथा "दिवि भुवि च रसायां काः स्त्रियस्तद्दुरापाः" इति 'का स्त्र्यङ्ग ते कलपदामृतवेणुगीतसम्मोहितार्यचरितान्न चलेत्त्रिलोक्याम्' इत्याद्युक्तेः । चतसृषु दिक्षु भुजा यस्येति पद्मनाभोपासकाः चत्वारो भुजा यस्येति वैकुण्ठोपासकाः । प्रेयसीसाहित्यादेव चतुर्भुजा इति श्रीकृष्णोपासकाः । "सुजातं कोमलं विदुः" इत्यभिधानात् ॥ ४५ ॥ ❀ ❀ तद्वत्कोमले विस्तृते चाक्षिणी यस्य तत् ॥ ४६ ॥ ❀ ❀ 'अलकाश्चूर्ण-कुंतलाः' ॥ ४७ ॥ ❀ ❀ श्रियानपायिन्येत्यनेन पुनरुक्तिमाशंक्याह यद्वेति । उत्तमा उत्कृष्टा, ऋद्धिश्शोभा । "ऋद्धिश्शोभा रमौषधी" इति निघण्टुः ॥ ४८ ॥ ❀ ❀ सिंहस्कन्धत्विष इव त्विषः सिंहस्कन्धत्विष इत्युपमानोत्तरपदलोपो बाहुलकात् । पुनस्ता बिभर्त्तीति सिंहस्कन्धेत्विषो बिभ्रत् अलुक्समासः पुनः सौभगेत्यादिना कर्मधारय इति ऋजुमार्गेण सिध्यतोर्थस्य वक्रेण दर्शनायोगादिति न्यायेन तत्र गौरवमालोक्याह-यद्वेति ॥ ४९ ॥ ❀ ❀ वल्गन्ति चलन्ति दलानि पात्राणि यस्य स वल्गद्दलोऽश्वत्थः "बोधिद्रुमश्चलदलो अश्वत्थः कुंजराशनः" इत्यमरः । लेखकप्रमादादेव वल्गुशब्द उकारान्तोऽत्र प्रतिभाति । स्वामिचरणैरप्यत्र न हि दलशब्देनाश्वत्थो गृहीतः, किन्तु वल्गद्दलशब्देनैव चलदलपदसमानार्थकत्वादेकदेशन्यायस्त्वगतिकगतिक एवेति । आधुनिकैः वल्गुसुन्दरमिति व्याख्यातं च तदचारु प्रतीयत इति । आवर्त्तेन दक्षिणावर्त्तेन गभीरया निम्नया नाभ्या विश्वं प्रतिसंक्रामयदित्यन्वयः । तयैवोद्भूतः पुनस्तयैव स्वस्मिन्प्रवेशयदिव स्वसौन्दर्य्येणाकर्षदिवेत्यर्थः ॥ ५० ॥

## श्रीमद्वीरराघवव्याख्या

प्रवृत्ताय निवृत्ताय च कर्मणे प्रवृत्तिनिवृत्त्यात्मककर्मरूपाय पितृदेवाय प्रवृत्तिकर्माराध्यतत्फलप्रदपितृदेवादिशरीराय धर्मविपाकाय धर्मोऽत्रानभिसंहितफलभगवदाराधनरूपः तस्य विपाकः फलं तस्मै निवृत्तिधर्मफलरूपायेत्यर्थः, तथा मृत्यवे दुःखदाय दुःखप्रदमृत्युरूपाय ॥ ४१ ॥ ❀ ❀ हे आशिषामीष ! यद्वा हे इश ! आशिषां धर्मादीनां कारणात्मने फलप्रकाशकाय मनवे सर्वज्ञाय स्वायंभुवादिमनुरूपाय वा मन्वन्तराधिदैवताय वा मन्त्ररूपाय वा एवं सर्वात्मकत्वेन नमस्कृत्य साक्षान्नमस्करोति बृहते स्वरूपेण गुणैश्च निरतिशयबृहत्त्वाय धर्माय कृष्णाय सिद्धरूपधर्माय सिद्धरूपेऽपि धर्मशब्दः प्रयुज्यते । तथा च श्रीमहाभारते "ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः । ते वदन्ति महात्मानं कृष्णं धर्मं सनातनमि"ति अकुण्ठमेधसे अप्रतिहतज्ञानाय ॥ ४२ ॥ ❀ ❀ पुरुषायेति । पुराणपुरुषाय कपिलाद्यंशावताररूपेण नमस्करोति । सांख्येश्वरः कपिलः योगेश्वरो हिरण्यगर्भः तद्रूपाय शक्तित्रयं सर्गादिसामर्थ्यं तद्युक्ताय नवब्रह्मेन्द्ररुद्रकालरूपायेत्यर्थः, मीढुषे मिह-सेचने सूर्यात्मकपर्ज्जन्याय "तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च" इति पर्जन्यस्यापि भगवद्विभूतित्वगानात् अहंकृतमहंकारत्वं तस्यात्मने चेतआकृतिरूपाय चेतसः आकृतिः स्वरूपं तदेव यस्य रूपं स तथोक्तस्तस्मै "यस्याहंकारः शरीरं यस्य मनः शरीरम्" इति श्रुतेः, वाचो विभूतये वाक्प्रपञ्चाय । यद्वा केतश्चाकृतिः शरीरं च यस्य रूपं स तथोक्तस्तस्मै मनोवाक्कायरूपत्रयात्मने मनआदिविषयरूपायेत्यर्थः । इदमनुक्तरूपत्वसंग्राहकं किंचिद्वस्तु क्षीरशर्करादिगतमाधुर्यादिवदेवंविधमिति वाचा वक्तुमशक्यमपि मनसा चिन्तयितुं शक्यं किंचिद् वस्तु दूरस्थमेर्वादि चक्षुरादिभिरनुभवितुमशक्यमप्येवंविधमिति वाचा वक्तुं शक्यं, किंचिद्धि कायेनानुभवितुं शक्यं यथा सन्निकृष्टघटपटादिकमेवंविधवस्तुशरीरायेत्यर्थः ॥ ४३ ॥ ❀ ❀ एवं पारमैश्वर्यापादकगुणगणविशिष्टं भगवन्तं नमस्कृत्य तदीयदिव्यमङ्गलविग्रहदर्शनं प्रार्थयमानो विग्रहं च वर्णयति दर्शनमिति नवभिः । भागवतैरर्चितं ते रूपं दिदृक्षूणां द्रष्टुमिच्छूनां नोऽस्माकं दर्शनं देहीत्यन्वयः । रूपं विशिनष्टि स्वानां स्वभक्तानां प्रियतमं सर्वेषामिन्द्रियाणां ये ये गुणाः असाधारणधर्माः श्रवणस्पर्शनदर्शनघ्राणनादयः । तैरञ्जनमभिव्यक्तिर्यस्मिन् , यद्वा देहादिक्रियाविशेषणं, यद्वा सर्वेषामिन्द्रियाणामप्राकृतानां तत्गुणानां शब्दादीनां च अञ्जनमभिव्यक्तिर्यस्मिन् तदिति "सर्वकामः सर्वगन्धः सर्वरसः" इति श्रुतेः ॥ ४४ ॥ स्निग्धः प्रावृषि वर्षितो यो घनस्तद्वत् श्यामः सर्वेषां सौन्दर्याणां संग्रहो यस्मिन् चारवः सुन्दरा आयता आजानुलम्बिनश्चत्वारो बाहवो यस्मिन् सुजातं सुकुमारं सुन्दरमाननं यस्मिन् ॥ ४५ ॥ ❀ ❀ पद्मस्य कोशे मध्ये यानि पलाशानि तद्वदक्षिणी यस्मिन् सुन्दरे भ्रुवौ यस्मिन् शोभना नासिका यस्मिन् शोभना द्विजा दन्ता यस्मिन् सुकपोलमास्यं यस्मिन्निति बहुव्रीहिः, समौ कर्णाविव विभूषणं यस्मिन् कुण्डलयोरग्रे वक्ष्यमाणत्वात् ॥ ४६ ॥ ❀ ❀ प्रीत्या प्रहसिताविवापाङ्गौ यस्मिन् अलकैः कुन्तलैरुपशोभितं नूतनपङ्कजकिञ्जल्कवत्पिशङ्गं दुकूलं यस्मिन् मृष्टे निर्मले कुण्डले यस्य ॥ ४७ ॥ ❀ ❀ स्फुरन्ति किरीटादीनि यस्मिन् शङ्खादिभिरुत्तमा ऋद्धिर्लक्ष्मीरस्मिन्नस्तीति तथा ॥ ४८ ॥ ❀ ❀ सिंहस्कन्धत्विष इति द्वितीयाबहुवचनं, सिंहस्य स्कन्धे परितः प्रसरन्तः केसरा इव सर्वतस्त्विषो बिभ्रती या सौभगा ग्रीवा तस्यां कौस्तुभो यस्मिन् , यद्वा सिंहस्येव यौ स्कन्धौ तयोस्त्विषः कुण्डलहारादिदीप्तीर्बिभ्रदिति पृथग्विशेषणं, सौभगयुक्तग्रीवायां कौस्तुभो यस्मिन् सौभगाग्रीवा यस्य स कौस्तुभो यस्मिन्निति बहुव्रीहिगर्भो वा बहुव्रीहिः । श्रिया हेतुभूतया आक्षिप्तस्तिरस्कृतो निकषाश्मा सुवर्णरेखान्तो निकषपाषाणो येन तादृशेन उरसा उल्लसत् शोभमानं यद्वा श्रिया उपलक्षितेन निकषोपर्युपरक्तसुवर्णरेखासदृशा श्रिया उपलक्षितेनेत्युरोविशेषणम् , आक्षिप्तः शङ्कितः निकषाश्मा येन तेन उरसा उल्लसत् शोभमानं लक्ष्मीसहितं श्यामं वक्षः कनकनिकषरेखान्वितमश्मानं शङ्कयतीत्यर्थः पूरकरेचकाभ्यां श्वासोच्छ्वासाभ्यां संविग्नाश्चपलाः वलयस्ताभिः वल्गु सुन्दरं दलमश्वत्थपत्रसदृशमुदरं यस्मिन् । यद्वा सृष्ट्या पूर्यते पाल्यते इति वा जगत्पूरं तत् रेचकं संपूरणसमर्थं यस्मिन् संविग्नाः समर्दा वलयो यस्मिन् दलवदुदरं पूरकरेचकसंविग्नवलिवल्गुदलोदरं यस्मिन्निति त्रिपदो बहुव्रीहिः । पूर्वयोः कर्मधारयोः द्विपदो वा बहुव्रीहिर्यतो नाभिद्वारा निर्गतं विश्वमावर्तवद्गभीरया नाभ्या प्रतिसंक्रामयत् पुनः प्रवेशयदिव स्थितं गम्भीरनाभिद्वारेण बहिष्ठं विश्वमन्तर्निवेशयदिव स्थितमित्यर्थः ॥ ४९-५० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

प्रवृत्तिनिवृत्तिमार्गप्रवर्तकत्वात्तस्मै पितृदेवेषु च स्थित्वा तत्तद्योग्यकारणवत्त्वात्तत्तच्छब्दवाच्याय कर्मणे विषयाय क्रियारूपाय वा धर्मविपाकाय पुण्यफलप्रदाय मृतेरुद्गतो मृत्युस्तस्मै मृत्यौ स्थित्वा तत्कारणाद्वा मृत्युस्तस्मै दुःखदाय असुरेभ्य इति शेषः । दुःखदायिन इति पाठे 'दुरशोभनदुःखयोरि' ति यादवः । 'स्वसुखमि'ति श्रुतिः । दुःखं दायति शोषयतीति तस्मा इति वा । दैशोषण इति धातुः ॥४१॥ ❀ ❀ मनवे मननशीलाय मन्त्रवाच्याय वा ॥ ४२ ॥ ❀ ❀ सांख्यं यथार्थज्ञानं योग उपायोऽष्टाङ्गविशिष्टो वा तयोरीश्वराय शक्तित्रयसमेताय ज्ञानक्रियेच्छाशक्तियुक्ताय मीढुषे वीर्यवते अभीष्टदात्रे वा असं रुद्रे आत्मा यस्य स तथा तस्मै ॥ ४३ ॥ ❀ ❀ चेतस आकूतिरभिप्रायस्तं रूपयति समर्थयति इति चेतआकूतिरूपस्तस्मै वाचो विविधा भूतिः सृष्टिर्येन तस्मै किमभिप्रेत्य स्तुतमिति तत्राह दर्शनमिति । कीदृशं साकारविषयं निराकारविषयं वा द्वितीये गगनवत् व्याप्तमुत

घटाकाशवत्परिमितं पक्षद्वयमप्यनभीष्टमनधिकारात्तस्मात्प्रथम एव पक्षः तत्रापि रूपाणामानन्त्यादीदृशं रूपं प्रकाशयेत्याहुः। भागवतार्चितमिति। यदेतदीदृशं रूपं प्रदर्शयेत्यन्वयः॥ ४४॥ ❀ ❀ सर्वसौन्दर्याणां संग्रहं पात्रम्॥ ४५॥ ❀ ❀ 'सुजातं कोमलं विद्रुर'त्यभिधानं शोभना द्विजा दन्ता यस्य तत्सुद्विजम्॥ ४६-४७॥ ❀ ❀ कर्णाभरणानां बहुत्वद्योतनाय मृष्टकुण्डलमिति पुनर्वचनम्॥ ४८॥ ❀ ❀ शङ्खादयो यस्मिन्निहिताच्छङ्खचक्रगदापद्ममालामणिना उत्तमा ऋद्धयोऽस्य सन्तीत्युत्तमर्द्धिमत् सौभगेत्युभयत्र सम्बध्यते सौभाग्ययुक्तौ ग्रीवाकौस्तुभौ यस्मिंस्तत् उरो बिभ्रद्विस्तीर्णमिति शेषः॥ ४९॥ ❀ ❀ संक्षिप्तमुरो विशिनष्टि अनपायिन्येति। नित्यया श्रिया आक्षिप्तं सन्निहितं च निकषाश्मा स्वर्णघर्षणपाषाणस्तद्वद्वर्त्तमानमुरः आक्षिप्तनिकषाश्मोरस्तेनोल्लसत् श्वासानां पूरकरेचकाभ्यां संविग्नाः संचलिता वलयो रेखा अस्य सन्तीति पूरकरेचकसंविग्नवलिमत् तच्च पल्लवेनाङ्कुरदलेन सदृशं तत्तथा॥ ५०॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

नमो धर्म्मेत्यर्द्धकम्. नमस्त इत्यर्द्धकम्॥ ४१॥ ❀ ❀ अथ त्रिदेवीरूपत्वेन स्तुतेषु विष्णुरूपत्वे पद्मनाभभेदेनैव स्तौति नमो धर्म्मायेति। तत्र पुरुषाय पुराणायेति पद्मनाभरूपेण निःश्वासप्रवर्त्तिवेदद्वारा धर्माय बृहते नमः। स्वयं भगवद्धर्म्मरूपेण तदनुगतसर्व्वधर्म्मप्रवर्त्तनद्वारा सांख्ययोगेश्वरायेति कपिलदत्तात्रेयादिरूपेण तत्तत्प्रवर्त्तनद्वारा कृष्णायाकुण्ठमेधस इति परब्रह्मरूपेण ज्ञानप्रवर्त्तनद्वारा विश्वपालकायेत्यर्थः। व्यतिक्रमनिर्देशस्तु तदिच्छाया अनैयत्यात्॥ ४२॥ ❀ ❀ शिवब्रह्मरूपत्वे तु परिच्छिन्नैश्वर्य्यतया स्तौति। शक्तीत्यर्द्धकाभ्याम्॥ ४३॥ ❀ ❀ तदेवं सर्व्वरूपत्वमुक्त्वा तदेतावज्जपेनैव जातभक्तिविशेषो विशेषाभिलाषं कुर्व्वन्नात्माभीष्टं रूपं वर्णयति दर्शनमित्यर्द्धकेन। ननु सर्व्वात्मकत्वे सति नित्यं मम दर्शनं प्राप्नोष्येवेत्याशङ्क्याह। भागवतैः सात्त्वतैरर्चितं सर्व्वसारस्वरूपत्वेन सेव्यमानमिति। रूपमिति सार्द्धाष्टकम्। सतामित्यस्यान्ते स्वानां ज्ञातिरूपाणां स्वपरिकराणां प्रियतमं सर्वेन्द्रियगुणाञ्जनञ्च॥ ४४-४५॥ ❀ ❀ समकर्णत्वं यथाशोभि प्रमाणत्वम्॥४६-४८॥ त्विष इत्यत्र तुलामिति सम्बन्धोक्तिपाठान्तरम्। प्रतिसंक्रामयत् प्रवेशयत् सौन्दर्य्येणाकर्षदिव। यद्वा सृष्टिप्रलययोर्निर्गमयन् प्रवेशयंश्चेति प्रभावगाम्भीर्य्यं दर्शितं। प्रदर्शयदिति चित्सुखः॥ ४९-५२॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

धर्मान्तरस्यापि प्रयोजकत्वेन प्रणमति प्रवृत्तायेत्यादि पितृदेवाय पितृदेवप्रापकाय॥ ४१॥ ❀ ❀ निषिद्धकर्म्मफलदायित्वेन प्रणमति नमोऽधर्म्मेति। अधर्म्मस्य विपाकः फलं यस्मात्तस्मै विहितकर्म्मफलादायित्वेन प्रणमति नमस्त इति। हे! आशिषामीश! स्वर्गादिफलदायिन्! मनवे सर्व्वमन्त्ररूपाय कारणात्मने कर्म्मकारकस्वरूपाय भक्तिरूपत्वेन तद्विषयत्वेन प्रणमति नमो धर्म्मायेति। अधिकारिभेदेषु कपिलदत्तात्रेयाद्यवतारभेदेन सांख्ययोगयोरपि प्रवर्त्तकाय॥ ४२॥ ❀ ❀ अहङ्कारस्याधिदैवादिभेदत्रयसहितस्य पुनरपि तदधिष्ठातृदैवतस्वरूपप्रणत्या संशोधनमाह शक्तीति। कर्तृकर्म्मकरणशक्तित्रयसमेताय। मीढुषे रुद्रस्वरूपाय अहङ्कृतमहङ्कारस्तदात्मने भो! रुद्रस्वरूप! हरे! ममाहन्ताममतयोर्वृत्तयः शुद्ध्यन्तु भक्तिमय्यो भवन्तु तुभ्यं नम इति। ज्ञानेन्द्रियकर्म्मेन्द्रियाणां शुद्धिमाह। चेतो ज्ञानं आकूतिः क्रिया तद्रूपाय ब्रह्मरूपाय वाचो वेदलक्षणा या विविधा भूतिः सृष्टिर्य[illegible]त्तस्मै तथा वाचः इति तदुपलक्षितानां कर्म्मेन्द्रियाणां शुद्धिर्व्यञ्जिता। ज्ञानेन्द्रियाणामपि शुद्धिः पूर्व्वमुक्तापि पुनरनया प्रणत्यापि ज्ञेया। हे रुद्रस्वरूप हरे! मम बुद्धिप्राणवृत्तीर्भक्त्युन्मुखीकुरु तुभ्यं नम इति॥ ४३॥ ❀ ❀ एवं स्मरन् प्रणतिभिरेव स्वस्य देहेन्द्रियमनसां शुद्ध्या योग्यतामापाद्य दर्शनं प्रार्थयते नवभिः। दर्शनं देहीति। ननु कीदृशं दर्शनं भवदभिमतं ददामि तत्राह। भागवतैरर्चितं न तु बौद्धाद्यैरित्यर्थः। रूपं रूपवत् स्वानां प्रियतममिति वैराजदर्शनं व्यावृत्तम्। सर्व्वेन्द्रियगुणै रूपादिभिः अञ्जनं ईक्षणमत्यासक्तिर्यत्र तदिति ब्रह्मदर्शनमपि व्यावृत्तम्। यद्वा सर्व्वेन्द्रियाणां गुणाञ्जनं गुणयुक्तं हितकरणमञ्जनं मनआदिसर्व्वेन्द्रियाणि यत्र दुर्विषयग्रहणरूपमान्ध्यं परित्यज्य स्वस्वचक्षुः प्राप्नुवन्तीत्यर्थः। 'चक्षुषश्चक्षुरि' त्यादिश्रुतेः॥ ४४॥ किञ्च तत्रापि स्निग्धेति। स्नेहवत्त्वस्नेहजनकत्वचिक्कणत्वान्युक्तानि प्रावृण्मेघेति रसवर्षित्वसर्वतापोपशमकत्वमनश्चातकहर्षकत्वानि श्लेषेण आसम्यगेव वर्षति भक्तमनोरथमिति प्रावृड्घनश्याममतिनिबिडश्यामम्। सर्वेषामेव प्राकृताप्राकृतवस्तुनिष्ठानां सौन्दर्य्याणां संग्रहो यत्र तत्। यद्वा सौन्दर्य्यकर्तृकं सम्यक् ग्रहणमाकर्षणं यत्र तदित्यत एवान्यत्र तादृशसौन्दर्यं नास्तीत्यर्थः। यद्वा सर्वसौन्दर्य्येण कर्त्रा सम्यगासक्त्यैव ग्रहणं यस्येति सर्व्वसौन्दर्य्यमपि स्वं सफलयितुं यदेव गृह्णातीति भावः। चतसृषु दिक्षु भुजा यस्येति पद्मनाभोपासकाः चत्वारो भुजा यस्येति वैकुण्ठनाथोपासकाः प्रेयसीसाहित्यादेव चतुर्भुजत्वमिति श्रीकृष्णोपासकाः सुजातकमलमिव रुचिरमाननं यस्य तम्॥ ४५॥ ❀ ❀ पद्मकोशस्थे कोमले पलाशे इवाक्षिणी यत्र तत्॥ ४६॥ ❀ ❀ प्रीतिव्यञ्जकं प्रहसितमप्यङ्गे वामनेत्रान्ते यस्येति प्रेयसीसाहित्यं सूचयति॥ ४७॥ ❀ ❀ शङ्खचक्रगदापद्मानि करचतुष्टये करतलद्वये वा रेखारूपाणि ज्ञेयानि। मालाश्च आभरणस्था मणयश्च उत्तमर्द्धिः शोभासम्पच्च तद्वत्॥ ४८॥ ❀ ❀ सिंहस्येव यौ स्कन्धौ

तयोस्त्विषो हारकुण्डलादिदीप्तीर्बिभ्रत्। सौभगयुक्ता ग्रीवा येन तथाभूतः कौस्तुभो यत्र तत्। अनपायिन्या श्रिया लक्ष्मीरेखाहेतु-भूतया आक्षिप्तस्तिरस्कृतो निकषाश्मा स्वर्णरेखाङ्कितो निकषपाषाणो तेन तादृशेन उरसा उल्लसच्छोभमानम्॥ ४९॥ ❀ ❀ पूरकरेचकाभ्यां श्वासोच्छ्वासाभ्यां संविग्नाश्चञ्चला या वलयस्ताभिर्वल्गुदलवदश्वत्थपत्रसदृशमुदरं यत्र तत्। आवर्तवद्गम्भीरया नाभ्या विश्वं प्रतिसंक्रामयत्। तयैवोद्भूतं पुनस्तयैव स्वस्मिन् प्रवेशयदिव स्वसौन्दर्येणाकर्षदिव इत्यर्थः॥ ५०॥

## श्रीमच्छुकदेवकृतः सिद्धांतप्रदीपः

प्रवृत्ताय पितृलोककामाय निवृत्ताय मुक्तिकामाय। अधिकारिणे नमः पितृदेवाय पितृसहिताय देवाय परमात्मने नमः। कर्मणे भोगमोक्षसाधनाय नमः। अधर्मस्य विपाकाय फलाय कुत्सितलोकरूपाय मृत्यवे मारकाय दुःखदाय अधर्म-फलदाय कामादिरूपाय। नवधर्मादेरप्यभेदो वासुदेवे कथं भवतीत्यत्रोच्यते। सर्वस्य चेतनाचेतनस्य वस्तुजातस्य श्रीवासु-देवस्वरूपात् सर्वज्ञत्वपरज्ञानत्वसर्वनियन्तृत्वसर्वशक्तित्वसर्वात्मत्वादिधर्मवतः जडत्वाल्पज्ञत्वनियम्यत्वादिना भिन्नत्वेऽपि पुरुषात्केशलोमभिरिव भूमितः ओषध्यादेरिव गुणिनो गुणस्येव नियन्तुः सकाशान्नियम्यस्येव पृथक्-स्थितिप्रवृत्त्याद्यभावात्। अभिन्नत्वमतो न वासुदेवस्वरूपे धर्माधर्माल्पज्ञत्वजडत्वादियोग इति दिक्॥ ४१॥ ❀ ❀ हे ईश आशिषां कारणात्मने मनवे मन्त्ररूपाय च ते नमः धर्माय च नमः बृहते बृहत्स्वरूपगुणशक्त्याश्रयाय अकुण्ठमेधसे निरावरणज्ञानाय कृष्णाय स्वयं भगवते नमः॥ ४२॥ ❀ ❀ पुरुषाय पुरुषावताराय पुराणाय पुरापि नवाय। सांख्यं षष्टिसंहितादिरूपं कापिलं तन्त्रं योगो योगश्चित्तवृत्तिनिरोध इत्यादिरूपं पातञ्जलं तयोरीश्वराय कपिलपतञ्जलिनामकमुनिरूपाय प्रवर्तकाय। यद्वा सांख्ययोगो विष्ण्ववतारभूतकपिलप्रोक्तं सांख्याशास्त्रं तृतीये स्कन्धे स्थितं तदीश्वराय शक्तित्रयं विश्वसृष्ट्यादि-सामर्थ्यं तत्समेताय विश्वसृष्ट्यादिहेतवे नमः। मीढुषे रुद्राय अहंकृतात्मने अहंकाराधिष्ठात्रे नमः। चेतआकूतिरूपाय ज्ञानकर्म-प्रवर्तकाय वाचो विविधा भूतिः सृष्टिर्यतस्तस्मै चतुर्मुखाय नमः॥ ४३॥ ❀ ❀ एवं भगवदसाधारणगुणगणकथनेन सर्वेश्वरं सर्वात्मानं भगवन्तं श्रीवासुदेवं नमस्कृत्येदानीं तत्साधारणं श्रीविग्रहदर्शनं प्रार्थ्यते दर्शनमित्यादिनवभिः। तत्र भागवतार्चितं दर्शनं निजविग्रहदर्शनं नो देहीति श्लोकार्धान्वयः। अस्यै श्लोकार्द्धस्य विवरणं रूपमित्यादिरूपं श्रीमन्मङ्गलविग्रहं नवमेन संबन्धः। स्वानां स्वानन्यशरणानां प्रियतमम्। सर्वो विष्णुः स्वयं भगवान् तदिन्द्रियाणि स्वगुणैः कान्त्यादिभिः रञ्जयतीति तत् यत्र भगवदिन्द्रियाण्यपि वशीभूतानि भवन्ति कोऽन्यस्तद्वर्णनदर्शनादौ योग्यस्तथापि तत्प्रदर्शयेति भावः॥ ४४॥ ❀ ❀ स्निग्धः प्रावृषि यो घनस्तद्वच्छ्यामं सर्वाणि सौन्दर्याणि सम्यग् गृह्यन्तेऽस्मिंस्तत् चारवः रमणीयाः आयताश्च चत्वारो बाहवो यस्मिंस्तत् सुजातं शोभनतयानादिसिद्धं रुचिरमाननं यस्मिंस्तत्॥ ४५॥ ❀ ❀ पद्मस्य कोशो मध्यं तत्रत्यपलाशा इव अक्षिणी यस्मिंस्तत् समौ कर्णौ तद्विभूषणे च यत्र मृष्टकुण्डलमित्यनेन तु कुण्डलयोर्मृष्टत्वं वर्ण्यते, अतो न पुनरुक्तिः॥ ४६॥ ❀ ❀ प्रीत्या प्रहसितौ अपाङ्गौ यस्मिंस्तत्॥ ४७॥ ❀ ❀ स्फुरन्ति दीप्तियुक्तानि किरीटादीनि यस्य तत् शङ्खादिभिरुत्तमा ऋद्धिः श्रीर्यत्र॥ ४८॥ ❀ ❀ सिंहस्कन्धयोः सिंहशब्द उत्कृष्टवाचकः उत्कृष्टस्कन्धयो त्विषः कान्तीः बिभ्रत् सौभगयुक्ता ग्रीवा येन स कौस्तुभो यस्मिंस्तत अनपायिन्या श्रिया आक्षिप्तः अभिभूतः निकषाश्मा स्वर्णरेखायुक्तो निकषपाषाणो येन तेनोरसोल्लसत् शोभितम्॥ ४९॥ ❀ ❀ पूरकरेचकाभ्यां प्राणस्य प्रवेशनिर्गमनाभ्यां संविग्नाश्चालिता या वलयस्ताभिर्वलिभिः सुन्दरं दलवदश्वत्थपत्रसदृशमुदरं यस्मिंस्तत विश्वं नाभितः पद्मरूपेण निर्गतम्। तया आवर्तगभीरया नाभ्या प्रतिसंक्रामयत्। लयं कुर्वदिव॥ ५०॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

कस्यचिदधर्मस्य सत्त्वे तत्फलदुःखस्यापि अवश्यम्भावित्वात्तन्माभूदिति तत्तदातृरूपयोः प्रणतिं विधत्ते—नम इति, अध-र्मस्य विपाकाय फलरूपाय दुःखदाय नमः, दुःखदाय मृत्यवे च नमः। इदानीं सर्वफलदातुरन्तर्यामिणः प्र णतिं विधत्ते—नमस्ते इति। आशिषमभीष्टफलानां कारणात्मने दात्रे देवाद्यन्तर्यामिणे ते तुभ्यं भगवते नमः। अत तस्य सर्वज्ञत्वं विधत्ते—मनवे इति। दाने सामर्थ्यं द्योतयन् सम्बोधनं—हे ईश इति॥ ४१॥ ❀ ❀ तत्तदुत्तमलोकस्य पुण्यप्राप्यत्वात् पुण्याधिष्ठातृरूपस्य प्रणतिं विधत्ते—नमो धर्मायेति। न च भगवद्भक्तस्य तल्लोकसुखाकाङ्क्षाभावात् कथं तदर्थं लोकादिप्रणतिविधानमिति शङ्कनीयं, यदयदिच्छतीत्यग्रे फलकथनेन स्तोत्रस्य सकामनिष्कामोभयार्थत्वात्। न च तर्हि निष्कामेण नमः पुण्यायेत्यादिभागो न पठनीय इति वाच्यम्, तथा सति मन्त्रस्य खण्डितत्त्वापत्तेः, न च तर्हि निष्कामस्यापि स्वर्गादिफलप्राप्त्या परमपुरुषार्थे प्रतिबन्धः स्यादिति शङ्कनीयं, यथा 'स्वर्गकामो यजेते'ति सकामानां यज्ञादेः स्वर्गादिफलहेतुत्वेऽपि "तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति, यज्ञेन दानेन तपसा नाशकेन" इति श्रुतेर्निष्कामाणां ज्ञानहेतुत्वम्। न सकामानां ज्ञानहेतुत्वं न वा निष्कामाणां स्वर्गादिफलप्राप्त्या ज्ञान-प्रतिबन्धकत्वमेवं संयोगपृथक्त्वन्यायेन अस्यापि यथाधिकारमेव फलहेतुत्वेन न निष्कामस्य स्वर्गादिफलप्राप्त्या परमपुरुषार्थ-

प्रतिबन्ध इति ध्येयम्। इदानीं सर्वावतारमुख्यस्य सर्वभक्तजनानां परमानन्ददायकस्य परमकृपालोर्दर्शनीयतमस्य सर्वभावेन भजनीयस्य श्रीयशोदानन्दनस्य प्रणतिं विधत्ते—कृष्णाय नम इति। 'कृषिर्भूवाचकः शब्दो नश्च निर्वृतिवाचकः। तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' इति स्मृत्युक्तं तस्य सत्त्वमानन्दत्वं च दर्शयति—बृहते इति। तस्य सर्वज्ञत्वेन चेतनत्वं दर्शयति—अकुण्ठमेधसे इति, न कदाचित् क्वचिदपि कुण्ठा लुप्ता मेधा ज्ञानशक्तिर्यस्य तस्मै नम इत्यर्थः। इदानीं कपिलदेवदत्तादिरूपेण साङ्ख्ययोगमार्गप्रवर्त्तकस्य प्रणतिं विधत्ते—साङ्ख्ययोगेश्वराय च नम इति। चकारो नमश्शब्दाकर्षणार्थः। तत्तन्मार्गप्रवर्तकत्वे हेतुं सूचयन् विशिनष्टि—पुरुषाय पुराणायेति। यदि सर्वकारणभूतः पुराणपुरुषो मार्गान्न वर्त्तयेत्तर्हि को वाऽन्यः प्रवर्त्तयेदिति भावः॥ ४२॥ ❀ ❀ अहन्ताममतानिरासार्थम् अहङ्कार उपास्यस्य सङ्कर्षणस्य प्रणतिविधानपूर्वं कृत्वाऽपि तन्निरासस्य दुर्घटत्वात् पुनरपि तदर्थमेव अहङ्काररूपस्य तदधिष्ठातृरुद्ररूपस्य च भगवतः प्रणतिं विधत्ते—शक्तित्रयेति। अहङ्कृतमहङ्कारस्तदात्मने तत्स्वरूपाय भगवते नम इत्यनुषङ्गः। तन्निवृत्तौ प्रयत्नाधिक्यार्थं तस्यैव सर्वसंसारमूलत्वं द्योतयन् विशिनष्टि—शक्तित्रयसमेतायेति, 'वैकारिकस्तैजसश्च तामसश्च यतो भवः' इत्युक्तेः सत्त्वरजस्तमआत्मकशक्तित्रययुक्तायेत्यर्थः। मीढुषे इति, अहङ्काराधिष्ठात्रे रुद्राय नम इत्यर्थः। ज्ञानक्रियात्मकानामिन्द्रियवृत्तीनां भगवद्विषयकत्वपर्यवसानार्थं तदात्मकस्य प्रणतिं विधत्ते—चेत इति, चेतश्चक्षुरादीन्द्रियपञ्चकजन्यं ज्ञानम्, आकूतिर्वागादीन्द्रियपञ्चकजन्या क्रिया, तद्रूपाय भगवते नमः। ज्ञानादिवृत्तीनामिन्द्रियपञ्चकजन्या क्रिया तद्रूपाय भगवते नमः। ज्ञानादिवृत्तीनामिन्द्रियजन्यत्वादिन्द्रियाणां भगवत्परतासिद्ध्यर्थम् इन्द्रियरूपस्य प्रणामं विधत्ते—वाच इति, वाचश्शब्दस्य विविधा भूतिरुत्पत्तिर्यस्मात् वागिन्द्रियात्तस्मै नमः। वागिन्द्रियप्रणतिविधानं सर्वेन्द्रियोपलक्षणार्थमिति ज्ञेयम्॥ ४३॥ ❀ ❀ एवं तद्रूपभगवत्प्रणिपातेन स्वदेहेन्द्रियान्तःकरणशुद्ध्या भगवद्दर्शनादिजन्यपरमानन्दानुभवयोग्यतां सम्पाद्य तद्दर्शनं प्रार्थयेदित्याह—दर्शनमिति नवभिः। नोऽस्माकं दिदृक्षूणां त्वद्दर्शनेच्छूनां दर्शनं देहीत्यन्वयः। कीदृशं दर्शनमित्यपेक्षायां वक्तव्यं भागवतैस्त्वद्भक्तैरर्चितं बहुमानेन अङ्गीकृतमित्यर्थः। दर्शनं देहीत्यस्यैव विवरणं रूपमित्यादि प्रदर्शयेत्यन्तम्। स्वानां भक्तानां प्रियतमं रूपं प्रदर्शयेति नवमेनान्वयः। रूपमेव विशिनष्टि—सर्वेषामिन्द्रियाणां ये गुणा विषया रूपादयस्तेषामञ्जकं सर्वेन्द्रियालौकिकविषययुक्तमित्यर्थः। यद्वा सर्वेन्द्रियाणि स्वगुणैरूपादिभिरनक्ति रञ्जयतीति तथा तत् सर्वेन्द्रियाह्लादकगुणयुक्तमित्यर्थः॥ ४४॥ ❀ ❀ कीदृशस्य रूपस्य भक्तजनानन्दजनकत्वमित्यपेक्षायां रूपविशेषणानि—स्निग्धेति। स्निग्धः सजलश्चिक्कणः प्रावृषि वर्षाकाले यो घनो मेघस्तद्वच्छ्यामम्, अनेन परमानन्दरसवर्षित्वं सर्वतापोपशमत्वं भक्तजनमनश्चातकहर्षजनकत्वं च सूचितम्। सर्वेषां सौन्दर्याणां सङ्ग्रहो यस्मिंस्तत्। चारवो मनोहरा आयता दीर्घाश्चत्वारो बाहवो यस्मिंस्तत्। सुजातं यथोचितसर्वावयवयुक्तं रुचिरमाननं यस्मिंस्तत्॥ ४५॥ ❀ ❀ पद्मस्य कोशे मध्ये यानि पलाशानि पत्राणि तद्वद्रक्तरेखायुक्ते अक्षिणी यस्मिंस्तत्। सुन्दर्यौ भ्रुवौ यस्मिंस्तत्। शोभना नासिका यस्मिंस्तत्। शोभना द्विजा दन्ता यस्मिंस्तत्। सुकपोलमास्यं यस्मिंस्तत्। समावन्यूनाधिकौ कर्णौ विभूषणं यस्य तत्, कुण्डलयोरग्रे वक्ष्यमाणत्वात्॥ ४६॥ ❀ ❀ प्रीतिव्यञ्जकं प्रहसितमपाङ्गे नेत्रप्रांते यस्य तत्। अलकैः केशैः कुञ्चितैर्भ्रमराकारैः उपशोभितम्। लसन्तः शोभमाना ये पङ्कजस्य किञ्जल्काः केशरास्तत्सदृशे पीते दुकूले वस्त्रे यस्मिंस्तत्। मृष्टे उज्ज्वले कुण्डले यस्मिंस्तत्॥ ४७॥ ❀ ❀ स्फुरन्ति देदीप्यमानानि किरीटादीनि यस्मिंस्तत्। तत्र किरीटं शिरोभूषणम्, वलये हस्तयोर्भूषणे, हारः कण्ठभूषणम्, नूपुरे चरणयोर्भूषणे, मेखला कटिसूत्रम्। तथा शङ्खादिमत्। तत्र शङ्खादीनि चत्वारि चतुर्भुजेष्वायुधानि माला पुष्पाणां वनमाला मणयश्च तत्तदाभरणस्थाः एतैरुत्तमा ऋद्धिः शोभा सम्पत्तिः॥ ४८॥ ❀ ❀ सिंहस्कन्धसदृशौ स्थूलावप्रकटास्थिकौ यौ स्कन्धौ तयोस्त्विषः कुण्डलहारादिदीप्तीर्बिभ्रत्। सौभगयुक्ता ग्रीवा येन स कौस्तुभो यस्मिंस्तत्। अनपायिन्या श्रिया लक्ष्मीरेखया हेतुभूतया क्षिप्तः तिरस्कृतो निकषाश्मा स्वर्णरेखाङ्कितो निकषपाषाणो येन तादृशेनोरसा उल्लसत् शोभमानम्॥ ४९॥ ❀ ❀ पूरकरेचकाभ्यां श्वासोल्लासाभ्यां संविग्नाश्चञ्चला वलयो रेखास्ताभिर्वल्गु मनोहरं दलवत् अश्वत्थपत्रसदृशमुदरं यस्मिंस्तत्। आवर्त्तयुक्तया गम्भीरया नाभ्या द्वारभूतया बहिर्निर्गतं विश्वं तथैव पुनः प्रतिसङ्क्रामयत् प्रवेशयदिव स्थितम्॥ ५०॥

## भाषानुवादः

आप पितृलोककी प्राप्ति करनेवाले प्रवृत्तिकर्मरूप और देवलोककी प्राप्तिके साधन निवृत्तिकर्मरूप हैं तथा आप ही अधर्मके फलरूप दुःखदायक मृत्यु हैं; आपको नमस्कार है॥ ४१॥ ❀ ❀ नाथ! आप ही पुराणपुरुष तथा सांख्य और योगके अधीश्वर भगवान् श्रीकृष्ण हैं; आप सब प्रकारकी कामनाओंकी पूर्तिके कारण, साक्षात् मन्त्रमूर्ति और महान् धर्मस्वरूप हैं; आपकी ज्ञानशक्ति किसी भी प्रकार कुण्ठित होनेवाली नहीं है; आपको नमस्कार है, नमस्कार है॥ ४२॥ ❀ ❀ आप ही कर्ता, करण और कर्म—तीनों शक्तियोंके एकमात्र आश्रय हैं; आप ही अहङ्कारके अधिष्ठाता रुद्र हैं, आप ही ज्ञान और क्रियास्वरूप हैं तथा आपसे ही परा, पश्यन्ती, मध्यमा और वैखरी—चार प्रकारकी वाणीकी अभिव्यक्ति होती है; आपको नमस्कार

है ॥ ४३ ॥ ❀ ❀ प्रभो ! हमें आपके दर्शनोंकी अभिलाषा है; अतः आपके भक्तजन जिसका पूजन करते हैं और जो आपके निजजनोंको अत्यन्त प्रिय है, अपने उस अनूप रूपको आप हमें झाँकी कराइये । आपका वह रूप अपने गुणोंसे समस्त इन्द्रियोंको तृप्त करनेवाला है ॥ ४४ ॥ ❀ ❀ वह वर्षाकालीन मेघके समान स्निग्ध श्याम और सम्पूर्ण सौन्दर्योंका सार-सर्वस्व है । सुन्दर चार विशाल भुजाएँ, महामनोहर मुखारविन्द, कमलदलके समान नेत्र, सुन्दर भौंहें, सुघड़ नासिका, मन-मोहिनी दन्तपंक्ति, अमोल-कपोलयुक्त मनोहर मुखमण्डल और शोभाशाली समान कर्णयुगल है ॥ ४५-४६ ॥ ❀ ❀ प्रीतिपूर्ण उन्मुक्त हास्य तिरछी चितवन, काली-काली घुँघराली अलकें, कमलकुसुमकी केसरके समान फहराता हुआ पीताम्बर, झिल-मिलाते हुए कुण्डल, चमचमाते हुए मुकुट, कङ्कण, हार, नूपुर और मेखला आदि विचित्र आभूषण तथा शङ्ख, चक्र, गदा, पद्म, वनमाला और कौस्तुभमणिके कारण उसकी अपूर्व शोभा है ॥ ४७-४८ ॥ ❀ ❀ उसके सिंहके समान स्थूल कंधे हैं—जिनपर हार, केयूर एवं कुण्डलादिकी कान्ति झिलमिलाती रहती है—तथा कौस्तुभमणिकी कान्तिसे सुशोभित मनोहर ग्रीवा है । उसका श्यामल वक्षः स्थल श्रीवत्सचिह्नके रूपमें लक्ष्मीजीका नित्य निवास होनेके कारण कसौटीकी शोभाको भी मात करता है ॥ ४९ ॥ ❀ ❀ उसका त्रिवलीसे सुशोभित पीपलके पत्तेके समान सुडौल उदर श्वासके आने-जानेसे हिलता हुआ बड़ा ही मनोहर जान पड़ता है । उसमें जो भँवरके समान चक्करदार नाभि है, वह इतनी गहरी है कि उससे उत्पन्न हुआ यह विश्व मानो फिर उसीमें लीन होना चाहता है ॥ ५० ॥

श्यामश्रोण्यधिरोचिष्णुदुकूलस्वर्णमेखलम् । समाचार्वङ्घ्रिजङ्घोरुनिम्नजानुसुदर्शनम् ॥ ५१ ॥
पदा शरत्पद्मपलाशरोचिषा नखद्युभिर्नोऽन्तरघं विधुन्वता ।
प्रदर्शय स्वीयमपास्तसाध्वसं पदं गुरो मार्गगुरुस्तमोजुषाम् ॥ ५२ ॥
एतद्रूपमनुध्येयमात्मशुद्धिमभीप्सताम् । यद्भक्तियोगोऽभयदः स्वधर्ममनुतिष्ठताम् ॥ ५३ ॥
भवान् भक्तिमता लभ्यो दुर्लभः सर्वदेहिनाम् । स्वाराज्यस्याप्यभिमत एकान्तेनात्मविद्गतिः ॥ ५४ ॥
तं दुराराध्यमाराध्य सतामपि दुरापया । एकान्तभक्त्या को वाञ्छेत्पादमूलं विना बहिः ॥ ५५ ॥
यत्र निर्विष्टमरणं कृतान्तो नाभिमन्यते । विश्वं विध्वंसयन् वीर्यशौर्यविस्फूर्जितभ्रुवा ॥ ५६ ॥
क्षणार्धेनापि तुलये न स्वर्गं नापुनर्भवम् । भगवत्सङ्गिसङ्गस्य मर्त्यानां[1] किमुताशिषः ॥ ५७ ॥
अथानघाङ्घ्रेस्तव कीर्तितीर्थयोरन्तर्बहिःस्नानविधूतपाप्मनाम् ।
भूतेष्वनुक्रोशसुसत्त्वशीलिनां स्यात्सङ्गमोऽनुग्रह एष नस्तव ॥ ५८ ॥
न यस्य चित्तं बहिरर्थविभ्रमं तमोगुहायां च विशुद्धमाविशत् ।
यद्भक्तियोगानुगृहीतमञ्जसा मुनिर्विचष्टे ननु तत्र ते गतिम् ॥ ५९ ॥
यत्रेदं व्यज्यते विश्वं विश्वस्मिन्नवभाति यत् । तत् त्वं ब्रह्म परं ज्योतिराकाशमिव[2] विस्तृतम्[3] ॥ ६० ॥

अन्वयः—श्यामश्रोण्यधिरोचिष्णुदुकूलस्वर्णमेखलम् समचार्वङ्घ्रिजङ्घोरु निम्नजानु सुदर्शनम् ॥ ५१ ॥ ❀ ❀ शरत्पद्मपलाशरोचिषा नखद्युभिः नः अन्तः अघम् विधुन्वता पदा स्वीयम् अपास्तसाध्वसम् पदम् प्रदर्शय गुरो त्वम् तमोजुषाम् मार्गगुरुः ॥ ५२ ॥ ❀ ❀ यद्भक्तियोगः स्वधर्मम् अनुतिष्ठताम् अभयदः एतत् रूपम् आत्मशुद्धिम् अभीप्सताम् अनुध्येयम् ॥५३॥ सर्वदेहिनाम् दुर्लभः स्वाराज्यस्य अपि अभिमतः एकान्तेन आत्मविद्गतिः भवान् भक्तिमता लभ्यः ॥ ५४ ॥ ❀ ❀ दुराराध्यम् तम् सताम् अपि दुरापया एकान्तभक्त्या आराध्य पादमूलम् बहिः कः वाञ्छेत् ॥ ५५ ॥ ❀ ❀ वीर्यशौर्यविस्फूर्जितभ्रुवा विश्वम् विध्वंसयन् कृतान्तः यत्र अरणम् निर्विष्टम् न अभिमन्यते ॥ ५६ ॥ ❀ ❀ भगवत्सङ्गिसङ्गस्य क्षणार्धेन अपि स्वर्गम् न तुलये अपुनर्भवम् न मर्त्यानाम् आशिषः किम् उत ॥ ५७ ॥ ❀ ❀ अथ अनघाङ्घ्रेः तव कीर्तितीर्थयोः अन्तः बहिः स्नानविधूतपाप्मनाम् भूतेषु अनुक्रोशसुसत्त्वशीलिनाम् संगमः स्यात् एषः नः तव अनुग्रहः ॥ ५८ ॥ ❀ ❀ यद्भक्तियोगानुगृहीतम् विशुद्धम् यस्य चित्तम् बहिः अर्थविभ्रमम् च तमोगुहायाम् न आविशत् तत्र मुनिः ते गतिम् ननु अञ्जसा विचष्टे ॥ ५९ ॥ ❀ ❀ यत्र इदम् विश्वम् व्यज्यते यत् विश्वस्मिन् अवभाति तत् ज्योतिः आकाशम् इव विस्तृतम् परम् ब्रह्म त्वम् ॥ ६० ॥

१. प्रा० पा०—सङ्गानां । २. प्रा० पा०—राकाश इव । ३. प्रा० पा०—विस्तृतः ।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

श्यामश्रोण्याधिकं रोचिष्णु यत्पीतं दुकूलं तत्र स्वर्णमयी मेखला यस्मिन् अंघ्री च जंघे च ऊरू च निम्ने अनुन्नते जानुनी च समैश्चारुभिरेतैः शोभनं दर्शनं यस्य समाश्चारवोंघ्र्यादयो यस्मिन् निम्ने जानुनी यस्मिन् शोभनं दर्शनं यस्येति पदत्रयं वा ॥ ५१ ॥ ❀ ❀ पदा दीपस्थानीयेन यद्वा एवंभूतेन पदोपलक्षितं रूपं पदं शरणं प्रदर्शयेत्यर्थः। शरदि यत्पद्मं तस्य पलाशं तद्वद्रोचिर्यस्य तेन नखदीप्तिभिरंतर्भवमघमज्ञानं विधुन्वता स्वीयं पदं शरणं प्रदर्शय। अपास्तं प्रह्लादादीनां साध्वसं येन तत् हे गुरो यतस्त्वमेव तमोजुषामज्ञानामस्माकं मार्गप्रदर्शको गुरुः ॥ ५२ ॥ ❀ ❀ अतिदुर्लभमिदं मया प्रार्थितमिति स्तौतैवाह। एतद्रूपमनुध्येयं ध्यानार्हमेव न तु प्रत्यक्षतः प्राप्यमित्यर्थः ॥ ५३ ॥ ❀ ❀ तर्हि किं केनापि न प्राप्यते तत्राह। भवानिति। दुर्लभत्वमेवाह। स्वर्गे राज्यं यस्य तस्याप्यभिमतः स्पृहणीयः। किं च एकांतेन य आत्मवित्तस्यापि गतिर्गम्यः ॥ ५४ ॥ ❀ ❀ अतस्त्वद्व्यतिरेकेण न किंचिद्वांछामीत्याह। तं त्वामेकांतभक्त्याराध्य बहिः स्वर्गादिसुखम् ॥ ५५ ॥ ❀ ❀ तत्र हेतुः। यत्र पादमूले शरणं प्रविष्टे कृतांतः कालो ममायं वश्य इति नाभिमानं करोति। किं कुर्वन्। वीर्यं प्रभावः शौर्यमुत्साहस्ताभ्यां विस्फूर्जितया क्षुभितया भ्रुवा विश्वं विध्वंसयन्नपि ॥ ५६ ॥ ❀ ❀ त्वत्पादमूले प्रविष्टस्य कृतांतभयाभावः कियानयं लाभो यतस्त्वद्भक्तसंग एव सकलपुरुषार्थश्रेणिशिरसि नरीनर्तीत्याह। क्षणार्धेनेति। भगवतस्तव संगिनां संगस्य क्षणार्धेनापि स्वर्गं न तुलये समं न गणयामि न चापुनर्भवं मोक्षं मर्त्यानामाशिषो राज्याद्याः किमुत ॥ ५७ ॥ ❀ ❀ अथ अतो हेतोरनघावघहरावंघ्री यस्य तस्य तव कीर्तितीर्थस्तीर्थं गंगा तयोः क्रमेणांतर्बहिःस्नानाभ्यां विधूतः पाप्मा येषाम्। अत एव भूतेष्वनुक्रोशः कृपा सुसत्त्वं च रागादिरहितं चित्तं शीलं चार्जवादि विद्यते येषां तेषां संगमोऽस्माकं स्यात् एष एव नस्तवानुग्रहः ॥ ५८ ॥ ❀ ❀ तत्त्वज्ञानं च त्वद्भक्तसंगादेव भवतीत्याह न यस्येति। येषां सतां भक्तियोगेनानुगृहीतं शुद्धं सद्यस्य चित्तं बाह्यार्थविक्षिप्तं न भवति तमोरूपायां गुहायां च नाविशत्तथं न प्राप तत्र तदा मुनिस्तव गतिं तत्त्वं पश्यति ॥ ५९ ॥ ❀ ❀ कीदृशं तत्त्वं तदाह। यत्रेति ॥ ६० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

संभवत्वात्पदत्रयत्वेन व्याख्येयं बहुपदसमासस्य दुरूहत्वात् ॥ ५१ ॥ ❀ ❀ स्वेन स्वस्य दर्शनस्य हास्योत्पादकत्वादाह यद्वेति। इत्यर्थ इति "पदं व्यवसितत्राण—"इत्यादिकोशादिति भावः। यद्वा हे प्रभो तव सर्वांगलावण्यं प्राप्तं किं तु चरणतलमाधुर्यं नोपलब्धं तत्र यद्यपि महायोगपीठे तिष्ठतस्तव द्वयोः पदयोः सामस्त्येन दर्शनासंभवस्तथाप्येकेन पदा भुवमवष्टभ्यापरं पदं किञ्चिदुन्नमय्य दर्शयेत्याह—पदैव पदं दर्शय वामपदा भुवमवष्टभ्य दक्षिणं पदं किञ्चित्तिरश्चीनीकृतमुन्नमय्य प्रदर्शय यथा चक्रध्वजवज्रांकुशादिदर्शनेन संसारभयं निवर्त्तयेत्याह—अपास्तेति। ननु कथमीदृशी मतिस्तवाजनीति तत्र श्रीगुरुप्रसादादित्याह—हे गुरो तमोजुषामज्ञानतिमिरान्धचक्षुषामस्माकं मार्गगुरुर्भक्तिमार्गोपदेष्टा त्वमेव गुरुरूपधारीत्यर्थं इति विश्वनाथः ॥ ५२ ॥ ❀ ❀ इदं श्रीमद्दर्शनं, स्तोता रुद्रः। इत्यर्थ इति। ध्यानार्हस्य प्रत्यक्षत्वप्रार्थनं दुर्लभमेवेति भावः। विश्वनाथः—यावद्दर्शनं न लभ्यते साधकभक्तेन तावदेतद्रूपमेव पुनःपुनर्ध्येयमात्मनो जीवस्य शुद्धिमविद्यामालिन्यक्षालनमिच्छतेति। न तु प्रकारांतरेण त्वंपदार्थशुद्धिर्भक्तानामुचितेति भावः। यथा वासुदेवादिप्रणतिभिर्देहद्वयशुद्धिरुक्ता तथा स्निग्धप्रावृडित्यादिध्यानपौनःपुन्येन जीवस्य शुद्धिरियमुक्ता ततो दर्शनं ततः पार्षदत्वप्राप्तिरिति शुद्धभक्तमतं दर्शितम्। किमत्र माहात्म्यं वाच्यं यतः स्वस्वधर्ममनुतिष्ठतामाश्रमिणामपि यस्य भक्तियोग एवाभयदो न तु कर्मज्ञानादिरित्यर्थः। सन्दर्भस्तु—यद्यस्माद्भक्तियोगः प्रेमा भवति तच्च ध्यानं गाढश्रद्धावत्त्वाभावेन स्वधर्मसापेक्षाणां भक्तियोगाभासं जनयति स च संसारभयत्राणमात्रं करोतीत्याह—अभयद इति ॥ ५३ ॥ ❀ ❀ ध्यानकैवल्यं कुर्वता प्रशस्तभक्तियोगयुजा तु भवानपि लभ्यते इत्याह—भवानिति। भवांश्च जीवन्मुक्तपर्यंतानां दुर्लभः स्वाराज्यस्याप्यभिमतः लब्धे सालोक्यादिकेऽपि वांछितः एकांतेन सालोक्यादिसुखनिरपेक्षेण भक्तियोगेन तु आत्मविदां भवदेकज्ञानिनां गतिः परमफलरूपः। स्वामिचरणाः—यदि सर्वथा दुर्लभस्तर्हि किं शंकायां, स्वर्गपदमुपलक्षणं ब्रह्मपदादेरपि। तेन ब्रह्मणापि वांछनीय एव न तु प्राप्य इत्यर्थः। न केवलमिंद्रादेरेव किं तु ज्ञानिनामपीत्याह—किं चेति। एकांतेन निश्चयेन गम्यो गन्तुमर्ह एव न त्ववगत इति भावः ॥ ५४ ॥ ❀ ❀ यतः स एव ब्रह्मादिस्पृहणीयोऽतो हेतोः तद्व्यतिरेकेण तं विहाय सतां सन्मार्गप्रविष्टानामपि किं पुनरन्येषां न कोपीत्यर्थायातम् ॥ ५५ ॥ ❀ ❀ तत्र पादमूलांगीकारे ॥ ५६ ॥ ❀ ❀ क्षणार्द्धेनेति। किमुत द्वित्रादिक्षणेन किमुततरां तत्फलभूतया भक्त्या किमुततमां भक्तिफलेन प्रेम्णेति कैमुत्यातिशयो द्योतितः। स्वर्गं कर्मफलमपुनर्भवं ज्ञानफलं मोक्षमपि न तुलये किमुततरां कर्म किमुततमां राज्याद्या दृष्टा आशिषः अहं न तुलये, गौरवलाघवयोरतिस्पष्टत्वादिति भावः ॥ ५७ ॥ ❀ ❀ विधूतोऽपास्तोऽन्येषामपि पाप्मा यैरिति वा। अत एव विधूतपाप्मत्वादेव त्वदनुग्रह इत्यनेनैव वयं कृतार्था इत्यर्थः ॥ ५८ ॥ ❀ ❀ चक्रवर्त्ती तु—त्वदीयसाधुसंगादेव चित्तं विशेषतः शुद्ध्येत् विशुद्धे च चित्ते त्वद्रूपलीलालावण्यानुभवः स्यादिति विशुद्धमेव चित्तं लक्षयति। यस्य चित्तं बहिरर्थविभ्रमं न त्वदीयश्रवणादिसमये बाह्यार्थैः स्त्रीपुत्रधनादिचिंतनैर्विक्षिप्तं न भवति तमोगुहायां सुप्तगह्वरे च न प्रविष्टं त्वदीयस्मरणश्रवणादिसमये यच्चित्तं लयविक्षेपयुक्तं न भवतीत्यर्थः। तत्र

हेतुः यत्खलु भक्तियोगेनानुगृहीतं तत् शुद्धं भवति। अयं भावः—दश नामापराधा भक्त्यपराधा एव लयविक्षेपकारकास्तेषामपगमे एव भक्तिदेवी प्रसीदति, प्रसीदंत्या एव तस्या अनुग्रहः स्यात्स च भक्तिसमयगतलयविक्षेपाभावगम्य इत्यतस्तत्र शुद्धे चित्ते मुनिर्मननशीलः संस्तव गतिं चेष्टां लीलालावण्यादिकं विचष्टे पश्यति ॥ ५९ ॥ ❀ ❀ यत्राधिष्ठाने तदज्ञानेनेदं विश्वं व्यज्यते। विश्वस्मिन्ननुगतसच्चिद्रूपेण यद्भाति त्वंपदलक्ष्यं प्रत्यक् चैतन्यं त्वमेव तत् "नान्योतोऽस्ति द्रष्टा, तत्त्वमसि" इति श्रुतेः। संदर्भः—त्वदीयभक्तियोगानुग्रहं विना ब्रह्मत्वभगवत्त्वान्तर्यामित्वकालत्वभेदेनांतरंगबहिरंगाविर्भावेषु तवातिदुर्बोधत्वदुराराध्यत्वदुर्वहत्वदुस्सहत्वान्येवेत्याशयेनाह—यत्रेति सप्तभिः। अत्र ब्रह्मत्वमाहात्म्येन तद्ब्रह्मत्वमिति योज्यं ततश्च स्वभक्तियोगं विना तदेतदपि दुर्बोधं स्यादिति भावः। विश्वनाथः—यत्तु कश्चिन्मुनिस्तव ब्रह्मस्वरूपं विचष्टे तदपि त्वमेव परममहतस्तन्महिमव्यापकं तेज इत्याह—यत्रेति ॥ ६० ॥

## श्रीमद्वीरराघवव्याख्या

श्यामयोः श्रोण्योः नितम्बयोरधिकं रोचिष्णु यत्पीतं दुकूलं तत्र स्वर्णमयी मेखला यस्मिन् अङ्घ्री च जङ्घे च ऊरू च निम्ने अनुन्नते जानुनी च समैश्चारुभिः जान्वादिभिः शोभनं दर्शनं यस्य ॥ ५१ ॥ ❀ ❀ एवं विग्रहमनुवर्ण्य तद्दर्शनं प्रार्थयते यदेति। शरदि यत्पद्मं तस्य यानि पलाशानि तद्वद्रोचिर्यस्य तेन पदा चरणेन नोऽस्माकमन्तरघमन्तःस्थितं पापहेतुमज्ञानं नखकान्तिभिर्विधुन्वतापनयता शरत्पद्मस्थानीयचरणस्थपलाशस्थानीयाङ्गुलिस्थनखरोचिभिरघं विधुन्वता पदापास्तं निरस्तं साध्वसं भक्तानां भयं यस्मिंस्तत्स्वीयं पदं रूपम्। यद्वा उक्तविधेन पदोपलक्षितस्त्वमपास्तसाध्वसं स्वीयं पदं पद्यतेऽवगम्यत इति पदं रूपं प्रदर्शय यतस्त्वमेव तमोजुषामज्ञानिनां गुरो मार्गगुरुः गुरुर्मार्गप्रदर्शको भवसि ॥ ५२ ॥ ❀ ❀ ननु "न मांसचक्षुरभिवीक्ष्यते तं न चक्षुषा पश्यति कश्चनैनं हृदा मनीषा मनसाभिक्लृप्तः" इति प्राकृतचक्षुरादिभिरग्राह्यं योगपरिशुद्धमनोग्राह्यमप्राकृतं मदीयरूपमपरिशुद्धमनसस्तव कथं प्रदर्शयेति प्रार्थयसे इत्याशङ्कायामाह एतदिति। एतदुक्तविधं तव रूपमात्मशुद्धिमन्तःकरणनैर्मल्यमभीप्सतामस्माकं केवलमनुध्येयमेव। एतद्रूपस्य ध्यानविषयत्वमेव प्रदर्शयेति प्रार्थ्यते, न तु साक्षात्कार इति भावः। किं ध्यानविषयत्वमात्रसाध्यं तत्राह। यतः ध्यानविषयात् त्वद्रूपात् ध्यानं योगाङ्गत्वेन स्ववर्णाश्रमोचितधर्ममनुतिष्ठतां पुंसामभयदः साक्षान्मोक्षसाधनभूतो भक्तियोगः परमभक्तियोगो भवति। ध्यानयोगोऽपि परज्ञानप्रणाड्या परमभक्तियोगरूपे परिणमतीत्यर्थः ॥ ५३ ॥ ❀ ❀ परमभक्तिमता तु भवान् लभ्य इत्याह भवानिति। सर्वदेहिनां दुर्लभोऽपि भवान् भक्तिमता प्रशंसायां मतुप्, परमभक्तिमता लभ्य एव दुर्लभत्वमेवाह स्वाराज्येति। आत्मविदामुक्तभक्तियोगनिष्ठानां गतिः प्राप्यस्त्वं स्वाराज्यस्याप्यभिमतः, स्वाराज्यस्य स्वेन राजते इति स्वराट् तस्य भावः स्वाराज्यं कैवल्यमपादानस्य सम्बन्धमात्रविवक्षया षष्ठी, स्वाराज्यादप्यभिमतः स्पृहणीयः। स्वाराज्यं हि सर्वस्मादभिमतं ततोऽप्यभिमतस्त्वमित्यर्थः ॥ ५४ ॥ ❀ ❀ अतोऽतीव स्पृहणीयत्वात्त्वतोऽन्यन्न किंचिद्वाञ्छामीत्याह तमिति। तं दुराराध्यमुपायान्तरैराराधयितुमशक्यं भवन्तं सतामपि दुरापया दुःसाध्यया एकान्तभक्त्याव्यभिचारिण्या भक्त्या आराध्य त्वत्पादमूलं विना बहिरन्यत् स्वर्गादिसुखं को वा वाञ्छेत्, न कोऽपीत्यर्थः ॥ ५५ ॥ ❀ ❀ तत्र हेतुः यत्र पादमूलेऽरणं शरणं प्रविष्टं पादमूले शरणं गतमित्यर्थः कृतान्तः कालो मया वशीकृत इति नाभिमानं करोति, किं कुर्वन् वीर्यं प्रभावः शौर्यमुत्साहः ताभ्यां विस्फूर्जितया क्षुभितया भ्रुवा विश्वं विध्वंसयन् नाशयन् ॥५६॥ ❀ ❀ त्वत्पादमूलं प्रपन्नस्य कृतान्तभयाभावः कियानयं लाभः यावता त्वद्भक्तसङ्गलेश एव सकलपुरुषार्थश्रेणीशिरसि उपरि वरिवर्तीत्याह क्षणार्धेनेति। भगवतस्तव सङ्गिनां त्वद्भक्तानामित्यर्थः, तेषां सङ्गस्य क्षणार्धेनापि न स्वर्गं तुल्ये समानं न गणयामि न वापुनर्भवं मोक्षं भागवतसङ्गस्य स्वर्गमोक्षौ न सदृशौ। किं पुनर्मरणशीलानामाशिषः आशीर्विषयपुत्रपश्वन्नादय इत्यर्थः ॥ ५७ ॥ ❀ ❀ एवं निरतिशयगुणवत्तरत्वाद्भागवतसङ्गस्य अथ अतो हेतोरनघावघहरावङ्घ्री यस्य तस्य तव कीर्तिर्यशः तीर्थं गङ्गा तयोः क्रमेणान्तर्बहिः स्नानाभ्यां विधूतः पाप्मा येषामत एव भूतेष्वनुक्रोशः कृपा सुसत्त्वं सत्त्वोत्तरं चित्तं शीलमार्जवादिकं च येषां सन्ति तेषां सङ्गः नोऽस्माकं स्यादत एव नोऽस्माकं त्वदनुग्रहः ॥ ५८ ॥ ❀ ❀ त्वज्ज्ञानमपि भागवतसङ्गादेव भवतीत्याह नेति। येषां भागवतानां भक्तियोगेनानुगृहीते विशुद्धं सत्त्वप्रवणं सत् यस्य पुंसः चित्तं बहिरर्थाः शब्दादिबाह्यविषयाः तेषु विभ्रमं न भवति प्राप्यताभ्रान्तिमन्न भवति, तमोरूपायां गुहायां च नाविशन्न लीनं स्यात्तदा स मुनिः ते गतिं स्वरूपमञ्जसा सुखेन विचष्टे जानाति ॥ ५९ ॥ ❀ ❀ गतिं विशिंषन् प्रपद्यते यत्रेति द्वाभ्याम्। इदं कृत्स्नं चिदचिदात्मकं विश्वं यत्राधारभूते त्वत्स्वरूपे व्यज्यते व्यक्तं यच्च त्वत्स्वरूपं विश्वस्मिन् कृत्स्नप्रपञ्चेऽवभाति प्रकाशते व्याप्नोति तदेव ब्रह्माख्यं तव तत्त्वमित्यर्थः। यत्रेदमित्यनेनाधारत्वमुक्तं कथममूर्तस्याधारत्वमिति शङ्कायामभिव्यापकत्वरूपमाधारत्वमित्याशयेन विश्वस्मिन्नवभाति यदित्युक्तम्। आधारो हि त्रिविधः औपश्लेषिको वैषयिकोऽभिव्यापकश्चेति सर्वं व्याप्यावस्थितस्यापि व्याप्यवस्तुगतदोषास्पर्शे दृष्टान्तमाह ज्योतिराकाश इव विस्तृतमिति। विस्तृतमाकाश इव ज्योतिः सूर्याचिंरिवेति दृष्टान्तद्वयमभिप्रेतं, तथा ह्युभयं दृष्टान्तीकृतमभियुक्तैः "आकाशमेकं हि यथा घटादिषु पृथग्भवेत्। तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान्" इति। अयमभिप्रायः घटादिषु वृद्धिह्रासभाक्षु पृथक् पृथक् संयुज्यमानमप्याकाशं दोषहेत्वभावाद् वृद्धिह्रासादिदोषैर्न स्पृश्यते यथा जलाधारेषु विषयेषु वस्तुतोऽनवस्थितस्तत्र दृश्यमानोऽप्यंशुमान् दोषहेत्वभावात्तद्गतवृद्धिह्रासादिभिर्न स्पृश्यते तद्वदिति ॥ ६० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

दक्षिणावर्तेन गभीरया निम्नया नाभ्या विश्वं प्रतिसंक्रामयत् प्रसदिव स्थितं समानानि चारूणि अङ्घ्र्यादीनि यस्मिन् तत्तथोक्तं सुदर्शनं सुचक्षुः ॥ ५१ ॥ ❈ ❈ नखद्युभिर्नखानां तेजोभिः नोतुः स्तोतुरघं पापं विधुन्वता नाशयता पदोपलक्षितः पुरो मार्गगुरुरुत्क्रान्तस्यार्चिरादिमार्गोपदेष्टा त्वं कीदृशानां नस्तमोजुषामज्ञानिनां पुर इत्यस्मत्पदान्वयो वा। अस्माकं पुनः दर्शयेति ॥ ५२ ॥ ❈ ❈ विनियोगमाह एतदिति। आत्मनः स्वस्य शुद्धिः संसारमुक्तिलक्षणा तामिच्छतामितोऽन्यथास्मच्छुद्धिर्न स्यादित्यतो ध्येयमिति वर्णाश्रमादिविहितस्वधर्म एव मुक्तिसाधनमिति भ्रान्तिं निवारयति यद्भक्तियोग इति। वर्णाश्रमादिविहित-स्वधर्मं कुर्वतां पुंसां भगवद्भक्तियोगो नित्याभयप्रद इति यत् ॥ ५३ ॥ ❈ ❈ तस्मादभक्तिमतां दुर्लभो भवान् सर्वदेहिनां भक्तिमतां लभ्य इति न केवलं मुक्त्यर्थमस्मदादेर्ध्येयं किन्त्विन्द्रादेर्वापीत्यभिप्रेत्याह स्वाराज्यस्येति। स्वः स्वर्गे राज्यं यस्येन्द्रादेरात्म-विदात्मज्ञः परमात्मा 'तदात्मानमेवावेदहं ब्रह्मास्मी'ति श्रुतेः। तस्य गतिर्मुक्तिलक्षणा एकान्तेन नियमेनाभिमत अविप्रतिपन्ना मुक्त्यर्थमेव भक्तिर्न स्वर्गाद्यर्थमित्यतो वाह स्वाराज्यस्येति। इन्द्रादेरित्यध्याहार्यम्, इन्द्रादेः स्वाराज्यस्यावाप्तावपि आत्म-वित्परमात्मा गम्यतेऽनयेति आत्मविद्गतिर्भक्तिर्या त्वेकान्तेनाभिमतेत्यन्वयः। यद्वा आत्मविदां गतिरूपा या भक्तिर्यादृशी तादृशीति 'भक्त्या त्वनन्यया शक्यः' इति स्मृतेः ॥ ५४ ॥ ❈ ❈ भगवदिच्छाविनाभूतत्वादिन्द्रादीनां स्वर्गादिकं तद्भक्त्या कामितं न स्वतोऽतो बुद्धिमान् न स्वातन्त्र्येणान्यत् ज्ञायत इति भावेनाह त्वां दुराराध्यमिति। सतामपि दुरापया बहिरैहिकम् ॥ ५५ ॥ ❈ ❈ पादमूलं विशिनष्टि यत्रेति। अरणं शरणं वीर्यशौर्याभ्यां विस्फूर्जितया भ्रुवा विश्वं विष्टम्भयन् वशे कुर्वन् ॥ ५६ ॥ ❈ ❈ भक्त्या यत्फलं स्वर्गादिकं न तु लय इत्यन्वयः। भागवतसङ्गलब्धया भक्त्या मुक्तावानन्दोद्रेकलाभाभिप्रायेणेति तात्पर्यं, तदुक्तम् "सङ्गो भागवतैर्भूयानपुनर्भवमात्रतः। यतो विशिष्टमानन्दं मुक्तौ जनयति स्फुटम् ॥" इति। ननु सत्सङ्ग एवंफलोऽस्तु, ततो युष्माकं किमपेक्षितमत्राह अथेति। यस्मात्त्वद्भक्तानां सङ्ग एवंविधफलोऽथास्मात्त्वाङ्घ्र्योर्जातयोः कीर्तितीर्थयोर्भागवतादिशास्त्र-श्रवणलक्षणा कीर्तिस्तीर्थं विष्णुपद्यादि तयोरन्तर्बहिःस्नानाभ्यां विधूतपाप्मनामत एव भूतेषु अनुक्रोशसुवत्त्वशीलिनां सात्त्विक-स्वभावानां सतां सङ्गमो नोऽस्माकं स्यात्, अतोऽनेन वयं कृतार्था इत्यत उत्तममनुग्रह इति ॥ ५८ ॥ ❈ ❈ सत्सङ्गयाच्ञायाः कोऽभिप्राय इत्यत आह न यस्येति। यद्यदा सत्सङ्गमस्तत्र तदा सत्सङ्गमे भक्तियोगेनानुगृहीतं यस्य पुंसश्चित्तं स्मृतिकारणमन्तः-करणं बहिरर्थेषु शब्दादिषु विभ्रमं विविधभ्रमणं नाविशेत् न गच्छति, यस्य मनश्च गुहायां हृदये निविष्टमात्मानमाविशति स मुनिस्ते तव पदं स्वरूपमञ्जसा विचष्टे पश्यति नन्वित्यन्वयः। सत्सङ्गत्या समुत्पन्नभगवद्भक्त्या वैराग्यदृढया प्रबलीकृतया भगवदु-पासनया परोक्षज्ञानं भवतीत्यभिप्रायः। भक्त्या त्वनन्ययेत्यादेः ॥ ५९ ॥ ❈ ❈ सत्सङ्गतिः सर्वथा सम्पाद्येति प्रतिपाद्याधुना भक्तिविषयतत्त्वं निर्दिशति यत्रेति। केचिज्जगद् ब्रह्माज्ञानकल्पितमिति सङ्गिरन्ते, अन्ये शून्यमेव संवृत्या सदिवाभातीति, अपरे तत्परिणतमिति, इतरे प्रागसतः सत्ता समवायि येन जातमित्यदृष्टत्वान्नेश्वरोऽप्येक इति तान्सर्वानपि निरस्यतीत्यतो वाह यत्रेति। यत्र यदाधारतया व्यज्यते इत्यनेनैते पक्षाः प्रतिक्षिप्ताः। पूर्वं सत एव व्यक्तिसंभवात्तदनुगतपञ्चविधभेदानां सत्यत्वसिद्धेः विश्वस्मिन् स्थितमप्यज्ञानां न भातीत्युक्त्या सुतरामीश्वरसद्भावो दर्शितः। ब्रह्मतत्त्वमित्यनेन सुतरां परं ज्योतिरित्यनेनाज्ञानसम्पर्काभावः स्पष्टः। आकाश इवेति निराकारपक्षोऽपि निरासीति ज्ञायते अपरिच्छिन्नत्व एवाकाशदृष्टान्तो न शून्यत्वे इति ग्रन्थप्रपञ्चतया उपरम्यत इति ॥ ६० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

पूर्वोक्तध्यानस्य फलमाह एतदिति। यत् यस्मात् भक्तियोगः प्रेमा भवति तच्च ध्यानं गाढश्रद्धावत्त्वाभावेन स्वधर्मसापेक्षाणां भक्तियोगाभासं जनयति, स च संसारभयत्राणमात्रं करोतीत्याह अभयद इति। ध्यानकैवल्यं कुर्वता प्रशस्तभक्तियोगयुजा तु भवानपि लभ्यत इत्याह भवानिति। भवांस्तु जीवन्मुक्तपर्यन्तानां सर्वदेहिनां दुर्लभः, किञ्च स्वाराज्यस्याप्यभिमतः लब्धे सालोक्यादिकेऽपि वाञ्छितः। एकान्तेन सालोक्यादिसुखनिरपेक्षेण भक्तियोगेन तु आत्मविदां भवदेकज्ञानिनां गतिः परमफलरूपः ॥ ५३–५४ ॥ ❈ ❈ तच्च युक्तमित्याह तमिति। सतां ज्ञानिनामपि। इत्थं सतामितिवत्। बहिः स्वर्गादिसुखम् ॥ ५५ ॥ ❈ ❈ न च तत्र स्वर्गादाविव भयमस्तीति वाच्यमित्यभिप्रेत्याह। यत्रेति कृतान्तोऽपि 'मर्त्यो मृत्युरि'त्यादेः, अत्र टीकायां विषयीकरोतीति तु वाच्यं विस्फूर्जितेति क्वचित् ॥ ५६ ॥ ❈ ❈ अहन्तु न तुलये गौरवलाघ-वयोरतिस्पष्टत्वादिति भावः ॥ ५७ ॥ ❈ ❈ विधूतो जगतोऽपि पाप्मा यैः। 'मद्भक्तियुक्तो भुवनं पुनाती'तिवत् ॥५८॥ ❈ ❈ गतिं गुणलीलादिमयीं स्वरूपावस्थितिम् ॥ ५९ ॥ ❈ ❈ तदीयभक्तियोगानुग्रहं विना तु ब्रह्मत्वभगवत्त्वान्तर्यामित्वकालत्व-भेदेनान्तरङ्गबहिरङ्गाविर्भावेषु तवातिदुर्बोधत्वदुराराध्यत्वदुर्वशत्वदुःसहत्वान्येवेत्याशयेनाह यत्रेदमिति सप्तभिः। तत्र ब्रह्मत्वमाह। आद्येन तद्ब्रह्मत्वमिति योज्यम्। ततश्च स्वभक्तियोगं विना तदेतदपि दुर्बोधं स्यादिति भावः ॥ ६० ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

श्यामश्रोण्या अधिकं रोचिष्णु तत्कान्त्युच्चलनयुक्तं यत् पीतदुकूलं तत्र स्वर्णमयी मेखला यस्मिंस्तत्। समं तुल्यप्रमाणञ्च चारु सुन्दरञ्च अङ्घ्रिजङ्घोरु यत्र तत् समाश्चारवोऽङ्घ्र्यादयो यस्मिन्निति जानुनी यस्मिन् शोभनं दर्शनं यस्येति पदत्रयं वा ॥ ५१॥ ❀ ❀ नखद्युभिर्नखानां कान्तिभिरेव अघमन्धकारं दूरीकुर्वता पदा दिव्यदीपकेनेव स्वीयं पदं स्वरूपं स्थानं वा। यद्वा हे प्रभो! तव सर्वाङ्गलावण्यदर्शनं प्राप्तं किन्तु चरणतलमाधुर्यं नोपलब्धं तत्र यद्यपि महायोगपीठे तिष्ठतस्तव द्वयोः पदयोः सामस्त्येन दर्शनासम्भवस्तदपि एकेन पदा भुवमवष्टभ्यापरं पदं किंचिदुन्नमय्य दर्शयेत्याह। पदा एव पदं दर्शय वामपदा भुवमवष्टभ्य दक्षिणं पदं किंचित्तिरश्चीनीकृतमुन्नमय्य प्रदर्शय, यथा चक्रध्वजवज्राङ्कुशादिदर्शनेन संसारभयं निवर्त्तेत इत्याह अपास्तेति। ननु कथमीदृशी मतिस्तवाजनीति तत्र श्रीगुरुप्रसादादित्याह। हे गुरो! तमोजुषामज्ञानतिमिरान्धचक्षुषामस्माकं मार्गगुरुर्भक्तिमार्गोपदेष्टा त्वमेव गुरुरूपधारीत्यर्थः ॥ ५२॥ ❀ ❀ श्रीरुद्र एव विशेषं ज्ञापयितुमेतदिति पद्यमाह। यावत् दर्शनं न लभ्यते साधकभक्तेन तावदेव तद्रूपमेव पुनः पुनर्ध्येयम् आत्मनो जीवस्य शुद्धिमविद्यामालिन्यक्षालनमिच्छतेति न तु प्रकारान्तरेण त्वंपदार्थशुद्धिर्भक्तानामुचितेति भावः। यथा वासुदेवादिप्रणतिभिर्देहद्वयशुद्धिरुक्ता तथा स्निग्धप्रावृडित्यादिध्यानपौनःपुन्येन जीवस्य च शुद्धिरियमुक्ता। ततो दर्शनं ततः पार्षदत्वप्राप्तिरिति शुद्धभक्तमतं दर्शितम्। अत्र किं माहात्म्यं वाच्यं यतः स्वस्वधर्ममनुतिष्ठतामाश्रमिणामपि यस्य भक्तियोग एवाभयदो न तु कर्मज्ञानादिरित्यर्थः ॥ ५३॥ ❀ ❀ पुनरप्येवं स्तुवीतेत्याह भवानिति। स्वर्गेषु राज्यं राजत्वं यस्य तस्य ब्रह्मणोऽप्यभिमतः स्पृहणीयः। आत्मविदां सनकादीनामपि गतिरूपः ॥ ५४॥ ❀ ❀ पुनरपि श्रीरुद्र एव श्लोकत्रयमाह तमिति। बहिः स्वर्गादिसुखम् ॥ ५५॥ ❀ ❀ संसारभयन्तु तस्य नास्त्येवेति किं तत्प्रार्थनेनेत्याह यत्र पादमूले अरणं शरणं प्रविष्टं जनं कृतान्तः कालो ममायमिति नाभिमन्यते। वीर्यं प्रभावः शौर्यमुत्साहः ताभ्यां विस्फूर्जितया क्षुभितया भ्रुवा विश्वं ध्वंसयन्नपि ॥ ५६॥ ❀ ❀ सत्सङ्गं तु वाञ्छेदेवेत्याह क्षणार्द्धेनेति। भगवत्सङ्गिनां सङ्गस्य क्षणार्धेन किमुत द्वित्रादिक्षणेन किमुततरां तत्फलभूतया भक्त्या किमुततमां भक्तिफलेन प्रेम्णेति कैमुत्यातिशयो द्योतितः। स्वर्गं कर्मफलमपुनर्भवं मोक्षं ज्ञानफलमपि न तुलये किमुत ज्ञानं किमुततरां कर्म किमुततमां राज्याद्या इष्टा आशिषः ॥ ५७॥ ❀ ❀ तस्मादेवं प्रार्थनया स्तुवीतेत्याह अथेति। अनघाङ्घ्रेः पापहरणचरणकमलस्य तव कीर्त्तिर्यशस्तीर्थं गङ्गा तयोः क्रमेणान्तर्बहिः स्नानाभ्यां विधूतः पाप्मा येषामत एव भूतेष्वनुक्रोशः कृपा सुसत्त्वं च शुद्धमन्तःकरणं शीलं चार्जवादि विद्यते येषां तेषां सङ्गमो नोऽस्माकं स्यादेष एव नस्त्वदनुग्रहः ॥ ५८॥ ❀ ❀ त्वदीयसाधुसङ्गादेव चित्तं विशेषतः शुध्येत् विशुद्धे च चित्ते त्वद्रूपलीलालावण्यानुभवः स्यादिति विशुद्धमेव चित्तं लक्षयति। यस्य चित्तं बहिरर्थविभ्रमं न त्वदीयस्मरणश्रवणादिसमये बाह्यार्थविक्षिप्तं न भवति तमो गुहायां च नाविशत् सुप्तिगह्वरेऽप्यप्रविष्टं त्वदीयश्रवणस्मरणादिसमये यच्चित्तं लयविशेषयुक्तं न भवतीत्यर्थः। तत्र हेतुः यत् खलु भक्तियोगेनानुगृहीतं तत् शुद्धं भवति। अयमाशयः दश नामापराधा भक्त्यपराधा एव लयविक्षेपकारकाः, तेषामपगमे एव भक्तिदेवी प्रसीदति। प्रसीदन्त्या एव तस्या अनुग्रहः स्यात्, स च भक्तिसमयगतलयविक्षेपाभावगम्य इत्यतस्तत्र शुद्धे चित्ते मुनिर्मननशीलः सन् तव गतिं चेष्टां लीलालावण्यादिकं विचष्टे पश्यति ॥ ५९॥ ❀ ❀ यत्तु कश्चिन्मुनिस्तव ब्रह्मस्वरूपं विचष्टे तदपि त्वमेव तदैव परममहतस्तन्महिमा व्यापकं तेज इत्याह यत्रेति ॥ ६०॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

श्यामश्रोण्याधि अधिकं रोचिष्णु यद्दुकूलं पीतः पटः तत्र स्वर्णमेखला यस्मिंस्तत् समाभ्यां चारुभ्यां अङ्घ्र्यादियुग्माभ्यां निम्नाभ्यामनुन्नताभ्यां जानुभ्यां च शोभनं दर्शनं यस्य तम् ॥ ५१॥ ❀ ❀ हे गुरो! ज्ञानप्रद! शरत्पद्मपलाशवद्रोचिर्यस्य तेन ध्यातॄणामन्तरघमज्ञानं नखद्युभिर्विधुन्वता अपनयता पदा उपलक्षितं स्वीयं पदं रूपमपास्तसाध्वसं यथा भवति तथा प्रदर्शय। यतस्तमोजुषां तमो देहगेहादिरूपं संसारमनादितः सेवमानानां नस्त्वं मार्गप्रदर्शको गुरुरसि ॥ ५२॥ ❀ ❀ स्वीयं रूपं प्रदर्शयेत्युक्तं तत्र तद्रूपस्य ध्यानरूपो भक्तियोगो भवति, अतो मुमुक्षुभिर्ध्याने एवं द्रष्टव्यं प्रत्यक्षतस्तु तद्दर्शनमतिदुर्लभमित्याशयेनाह एतदिति। आत्मशुद्धिमभीप्सतामेतद्रूपं ध्येयं ध्याने तद्दर्शनं तावत्कर्तव्यमतो ध्याने प्रदर्शयेति भावः। एतावतैव मुमुक्षुः कृतार्थः स्यादित्याह यदिति। यद्यस्य रूपस्य भक्तियोगः ध्यानादिभजनयोगः स्वधर्ममनुतिष्ठतां भक्तिसाधनभूतस्वधर्मकारिणाम् अभयदो मुक्तिदः ॥ ५३॥ ❀ ❀ स्वर्गे राज्यं यस्य बुभुक्षोस्तस्याभिमतस्तदिष्टसाधकत्वात् एकान्तेनाव्यभिचारिभजनेनात्मविदः स्वपरस्वरूपविदो मुमुक्षोर्गम्यत इति गतिः प्राप्यः ॥ ५४॥ ❀ ❀ बहिः स्वर्गराज्यादिकम् ॥ ५५॥ ❀ ❀ कृतान्तः कालः वीर्य्यशौर्य्याभ्यां विस्फूर्जितया प्रज्वलितया भ्रुवा विश्वं विध्वंसयन्नपि यत्र पादमूले निविष्टस्य मरणं नाभिमन्यते। हरिपादपद्मं भजतो जन्ममरणप्रवाहलक्षणः संसारो नास्तीति मन्यते इत्यर्थः ॥ ५६॥ ❀ ❀ कृतान्तभये विश्वस्मिन् विरक्तिस्त्वत्पादपद्मेऽनुरक्तिश्च महत्सङ्गाद्भवत्यतो महत्सङ्गमाहात्म्यकथनपूर्वकं महत्सङ्गं देहीति

प्रार्थयते क्षणार्द्धेनेति द्वाभ्याम्। भगवत्सङ्गिनां भागवतानां सङ्गस्य क्षणार्द्धेन स्वर्गं न तुलये तुल्यं न गणयामि। "उवाह कृष्णो भगवान् श्रीदामानं पराजितः। बिभर्ति क्वचिदाज्ञप्तः पीठकोन्मानपादुकम्॥" इति, गोपगोपीनां भागवतसङ्गवतां मोक्षादप्यधिकलाभः स्फुटीभविष्यत्यतः अपुनर्भवं मोक्षं च न तुलये। क्षेत्रज्ञस्वरूपमात्रप्राप्तिर्वात्र मोक्षशब्दार्थः, मर्त्यानामाशिषो राज्याद्याः सम्पदो न तुलये इति किमुत॥ ५७॥ ❀ ❀ अथ अतः अनघौ ध्यातृपापघ्नौ अङ्घ्री यस्य तस्य तव कीर्तिर्यशः तीर्थं जलप्रधानं रजःप्रधानं च तत्र जलप्रधानम् "यत्पादनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभूत्।" 'स्नात्वानुसवनं नित्यं कालिन्द्याः सलिले शुभे।' इत्यादिनात्रैव वर्णितं श्रीगङ्गायमुनादिरूपम्। महाभारते च। "गङ्गां च यमुनां चैव प्लक्षजातां सरस्वतीम्। रथस्थां चैव सरयूं गण्डकीं गोमतीं तथा॥ अपर्जुपितया यास्ते नदीः सप्त पिबन्ति ये।" इति रजःप्रधानं श्रीवृन्दावनादि। "धन्या अहो अमी आल्यो गोविन्दाङ्घ्र्यब्जरेणवः। यान् ब्रह्मेशो रमादेवी दध्युर्मूर्ध्न्यघनुत्तये॥" इत्याद्यत्रैव वर्णितम्। तयोः क्रमादन्तःस्मरणेन बहिः स्नानादिना विधूतः पाप्मा येषाम् अत एव भूतेषु प्राणिषु अनुक्रोशो दया शोभनं वैषम्यादिरहितं च शीलमार्ज्जवादि च विद्यते येषां तेषां नोऽस्माकं सङ्गमः स्यात् एष एव नस्तवानुग्रहः॥ ५८॥ ❀ ❀ तेषां सङ्गमात्रं न कर्त्तव्यं, किन्तु भक्तिः कर्तव्येति सूचयन् तत्प्रसादेन तत्त्वज्ञानं भवतीत्याह यस्येति। ननु अहो अतिचपलमपि यद्भक्तियोगानुगृहीतं येषामुक्तगुणानां भागवतानां भक्तियोगानुगृहीतमत एव शुद्धं सत् यस्य जनस्य चित्तं बहिरर्थेषु विषयेषु विभ्रमः नित्यत्वादिभ्रान्तिर्यस्य तथाविधं न भवति। तमोरूपायां गुहायामात्मानात्मपरमात्मविवेकरहितायामन्तःकरणवृत्तौ च नाविशत् लीनं न स्यात्, तत्र तदा स मुनिः अञ्जसा अनायासेन ते तव गतिं स्वरूपं विचष्टे साक्षात्पश्यति॥ ५९॥ ❀ ❀ तत्त्वमेव नानागुणयुक्ततया यत्रेत्यादिना वर्णयति। यत्र कारणे व्यज्यते उत्पद्यते विश्वस्मिन् कार्ये अवभाति तथापि आकाशवत् असङ्गतया विस्तृतम्॥ ६०॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

दुकूलमेखले पूर्वमुक्ते अपि तयोः स्थानविशेषाप्रदर्शनात् तत्स्थानविशेषप्रदर्शनपूर्वकं पुनराह—श्यामेति। श्यामश्रोण्या श्यामनितम्बेन अधिकं रोचिष्णु यद् दुकूलं पीताम्बरं तस्मिन् स्वर्णमयी मेखला यस्मिंस्तत्। समा अन्यूनाधिकाः चारवोऽङ्घ्रयादयो यस्मिंस्तत्। निम्ने जानुनी यस्मिंस्तत्। शोभनं दर्शनं यस्य तत्॥ ५१॥ ❀ ❀ पदा स्वचरणारविन्देन दीपस्थानीयेन स्वीयं पदं सर्वलावण्यैकस्थानं शरणागतभक्तजनाधारभूतं स्वरूपं दर्शयेत्यन्वयः। लौकिकदीपवद्धूमतापादिदोषरहितत्वपूर्वकं चरणारविन्दस्य दीपत्वसम्पादनार्थं तद्विशेषणं—नखेति। चन्द्रकिरणवदाह्लादजनिकाभिः नखद्युभिर्नखदीप्तिभिः नोऽस्माकमुपासकानां अन्तरचं शार्वरतमोवत् स्वरूपावरकमन्तःस्थितमज्ञानं विधुन्वता दूरीकुर्वता। चरणस्यैव सौन्दर्यातिशयार्थं विशेषणान्तरम्, शरदि यत्पद्मं तस्य यत्पलाशं तद्वद्रोचिः शोभा यस्य तेन। नन्वेवं स्वरूपदर्शनस्य किं फलमित्याशङ्क्य संसारदुःखनिवृत्तिपूर्वकपरमानन्दप्राप्तिरेवेत्यभिप्रेत्य तद्विशिनष्टि—अपास्तेति। अपास्तं दूरीकृतं भक्तानां साध्वसं संसारदुःखं येन तत्। नन्वेवं अज्ञानदूरीकरणपूर्वकस्वरूपदर्शनार्थं तन्मार्गप्रदर्शको गुरुः प्रष्टव्य इत्याशङ्क्य सम्बोधनं—हे गुरो इति। गुरुत्वस्यैव उपपादनम्। यतस्तमोजुषामज्ञानां भक्तिमार्गप्रदर्शको गुरुस्त्वमेवेति। यद्यप्यन्येऽपि रुद्रादयो गुरवः सन्ति तथापि त्वदनुग्रहं विना नैव तत्र निश्चयेन प्रवृत्तिः फलं वेति भवानेव प्रार्थ्यते मयेति भावः॥ ५२॥ ❀ ❀ मयैतदतिदुर्लभं प्रार्थितमित्यभिप्रायेण उपासकेनैवैवं वक्तव्यमित्याह—एतदिति। यथा देहेन्द्रियान्तःकरणादिविशुद्ध्यर्थं पूर्वप्रदर्शितप्रकारेण तत्तद्रूपस्य प्रणतिः कर्त्तव्या, तथाऽऽत्मना जीवस्य शुद्धिमभीप्सतामिच्छतां एतत्पूर्वप्रदर्शितविशेषणविशिष्टं रूपमभिध्येयमेवेत्यन्वयः। तस्य साक्षाद्दर्शनं तु दुर्लभमेवेति भावः। दुर्लभत्वे हेतुः—यदिति। यस्मात् यस्य तवैतत्स्वरूपस्य भक्तियोगे ध्यानसेवास्तुतिनमस्कारश्रवणकीर्त्तनस्मरणादिलक्षण एव तावत्स्वधर्ममनुतिष्ठतां भागवतधर्मध्यानसेवादि कुर्वतां भगवद्भक्तानामभयदो जन्ममरणादिलक्षणसंसारभयनिवर्त्तक इत्यर्थः॥ ५३॥ ❀ ❀ तर्हि किमित्येवं दुर्लभं त्वया प्रार्थितमित्याशङ्कायां वक्तव्यं—भवानिति। यतो भवद्विमुखानां विषयाविष्टचित्तानां सर्वदेहिनां भवान् दुर्लभोऽपि भक्तिमतां लभ्यो लब्धुं योग्यस्ततो मयैवं प्रार्थितमित्यर्थः। दुर्लभत्वप्रदर्शनार्थमेव विशेषणद्वयम्। यतो भवान् स्वर्गे राज्यं यस्य स स्वाराज्यः तस्याप्यभिमतः सेव्यतया प्राप्यत्वेन सम्मतः। एकान्तेन स्वर्गादितोऽपि विरक्तत्वेन यः केवलमात्मवित्तस्यापि गतिर्गम्यः। तस्यापि त्वत्तः पुरुषोत्तमादुत्कृष्टमन्यत् किञ्चित्प्राप्यं नास्तीत्यर्थः॥ ५४॥ ❀ ❀ अतस्तं पुरुषोत्तममत एव दुराराध्यमतिदुःखेन सर्वविषयाभिलाषत्यागपूर्वकं तदेकप्रवणचित्तत्वेन आराधितुं योग्यं सतां सदाचारपराणां अतिदुरापया दुर्लभया एकान्तया निरन्तरया भक्त्या आराध्य प्रसाद्य तत्पादमूलं विना ततोऽन्यद्बहिर्विषयसुखं कः पण्डितो वाञ्छेत्? अतो मया युक्तमेव प्रार्थितमन्यथा मूर्खत्वापत्तेरिति भावः॥ ५५॥ ❀ ❀ ननु तर्हि स्वर्गादिविषयजन्यं सुखं न स्यादित्याशङ्कायां मा भवतु तत्, तस्य कालग्रस्तत्वाद्भजनानन्दस्य नित्यत्वादित्यभिप्रेत्य वक्तव्यं—यत्रेति। वीर्यं प्रभावः शौर्यमुत्साहः ताभ्यां विस्फूर्जितया क्षुभितया भ्रुवैव सर्वं विश्वं ब्रह्मादिस्थावरान्तं विध्वंसयन्नाशयन्नपि कृतान्तः कालो यत्र भगवत्पादमूले निर्विष्टं शरणं प्रविष्टं जनं नाभिमन्यते अयं मम वश्य इत्यभिमानं न करोतीत्यर्थः॥ ५६॥ ❀ ❀ भवत्पादमूले प्रविष्टस्य कृतान्तभयनि-

वृत्तिरिति न चित्रं भगवद्भक्तसङ्गस्यैव तावत्तद्वयनिरासपूर्वकपरमपुरुषार्थहेतुत्वादित्यभिप्रायेण वक्तव्यं—क्षणार्द्धेनेति। भगवतो ये सङ्गिनो भक्तास्तेषां सङ्गस्य क्षणार्द्धेनापि स्वर्गमपुनर्भवं कैवल्यं मोक्षं च न तुलयेऽहं तुल्यं न गणयामि। तर्हि मर्त्यानां मनुष्याणामाशिषो राज्याद्यास्तत्तुल्यं च गणयामीति किमुत ? भगवद्भक्तस्य क्षणार्द्धे काले सङ्गोऽपि यो भजनानन्दो भवति तत्संस्कारेण निरन्तरवृद्धप्रेम्णा भजतो भगवदनुभावाद्यानन्दो भवति स स्वर्गब्रह्मलोकादि प्राप्यापि नैव भवत्यतः कथं तस्य तत्तुल्यता स्यादिति भावः ॥ ५७ ॥ ❀ ❀ यस्मादेवं अथ तस्मात् अनघौ संसारतापहेतुभूतसर्वाघनिवारकौ अङ्घ्री यस्य तस्य तव कीर्तियशः तीर्थं गङ्गा तयोर्यथाक्रमेण अन्तर्बहिःस्नानाभ्यां विधूतो निरस्तः पाप्मा येषां भगवद्भक्तानां तेषाम्, अतः सर्वदोषरहितत्वादेव भूतेषु सर्वप्राणिषु अनुक्रोशः कृपा सुसत्त्वं कामक्रोधादिरहितं चित्तं शीलं चार्जवादि विद्यते येषां तेषां सङ्गमो नोऽस्माकं स्यादेष एव तवानुग्रह इत्यन्वयः ॥ ५८ ॥ ❀ ❀ तव तत्त्वज्ञानं च त्वद्भक्तानुग्रहात् सञ्जातया भक्त्यैवेत्याशयेन वक्तव्यं—न यस्येति। यद्यदा त्वद्भक्तसङ्गजातेन त्वद्भक्तियोगेन अनुगृहीतं सत् यस्य चित्तं विशुद्धं भवति ननु निश्चितमेतत् तत्र तदैवाञ्जसा अनायासेनैव स मुनिर्मननशीलः संस्ते तव गतिं तत्त्वं विचष्टे पश्यति नान्यथेत्यन्वयः। चित्तस्य शुद्धत्वज्ञापकं दर्शयति—बहिरर्थविभ्रमं नेति। रजसा व्याप्तं सद्यदा बाह्येषु विषयेष्वासक्तं न भवतीत्यर्थः। तमोगुहायां चाविशन्नेति, तमोरूपायां गुहायां दृष्टादृष्टसर्वव्यवहारलोपे हेतुभूतायामाविशत् लयं प्राप्तं च यदा न भवतीत्यर्थः ॥ ५९ ॥ ❀ ❀ कथम्भूतं मम तत्त्वं पश्यतीत्यपेक्षायां जगदुपादानकारणत्वमित्यभिप्रेत्य वक्तव्यं—यत्रेति। यत्रेदं विश्वं व्यज्यते प्रकाशते तन्तुषु पट इव विश्वस्मिंश्च यत् सच्चिदानन्दरूपेणावभाति कारणतया पटे तन्तुवत् तद् ब्रह्मत्वमिति विचष्टे इत्यनुषङ्गः। प्रतीमहीत्युत्तरेणान्वयो वा। केनावभातीति तदवभासकापेक्षायां प्रकाशत्वं वक्तव्यमित्याह—परं ज्योतिरिति। किञ्च आकाशमिव विस्तृतमिति संसारदोषप्रसक्तिः परिच्छिन्नत्वं च व्यावर्त्यते ॥ ६० ॥

### भाषानुवादः

श्यामवर्ण कटिभागमें पीताम्बर और सुवर्णकी मेखला शोभायमान है। समान और सुन्दर चरण, पिंडली, जाँघ और घुटनोंके कारण आपका दिव्य विग्रह बड़ा ही सुघड़ जान पड़ता है ॥ ५१ ॥ ❀ ❀ आपके चरणकमलोंकी शोभा शरद् ऋतुके कमल-दलकी कान्तिका भी तिरस्कार करती है। उनके नखोंसे जो प्रकाश निकलता है, वह जीवोंके हृदयान्धकारको तत्काल नष्ट कर देता है। हमें आप कृपा करके भक्तोंके भयहारी एवं आश्रयस्वरूप उसी रूपका दर्शन कराइये। जगद्गुरो! हम अज्ञानावृत प्राणियोंको अपनी प्राप्तिका मार्ग बतलानेवाले आप ही हमारे गुरु हैं ॥ ५२ ॥ ❀ ❀ प्रभो! चित्तशुद्धिकी अभिलाषा रखनेवाले पुरुषको आपके इस रूपका निरन्तर ध्यान करना चाहिये; इसकी भक्ति ही स्वधर्मका पालन करनेवाले पुरुषको अभय करनेवाली है ॥ ५३ ॥ ❀ ❀ स्वर्गका शासन करनेवाला इन्द्र भी आपको ही पाना चाहता है। तथा विशुद्ध आत्मज्ञानियोंकी गति भी आप ही हैं, इस प्रकार आप सभी देहधारियोंके लिये अत्यन्त दुर्लभ हैं; केवल भक्तिमान् पुरुष ही आपको पा सकते हैं ॥ ५४ ॥ ❀ ❀ सत्पुरुषों के लिये भी दुर्लभ अनन्य भक्तिसे भगवान्को प्रसन्न करके, जिनकी प्रसन्नता किसी अन्य साधनोंसे दुःसाध्य है, ऐसा कौन होगा जो उनके चरणतलके अतिरिक्त और कुछ चाहेगा ॥ ५५ ॥ ❀ ❀ जो काल अपने अदम्य उत्साह और पराक्रमसे भड़कती हुई भौंहके इशारेसे सारे संसारका संहार कर डालता है, वह भी आपके चरणोंकी शरणमें गये हुए प्राणीपर अपना अधिकार नहीं मानता ॥ ५६ ॥ ❀ ❀ ऐसे भगवान्के प्रेमी भक्तोंका यदि आधे क्षणके लिये भी समागम हो जाय तो उसके सामने मैं स्वर्ग और मोक्षको कुछ नहीं समझता; फिर मर्त्यलोकके तुच्छ भोगोंकी तो बात ही क्या है ॥ ५७ ॥ ❀ ❀ प्रभो! आपके चरण सम्पूर्ण पापराशिको हर लेनेवाले हैं। हम तो केवल यही चाहते हैं कि जिन लोगोंने आपकी कीर्ति और तीर्थ ( गङ्गाजी ) में आन्तरिक और बाह्य स्नान करके मानसिक और शारीरिक दोनों प्रकारके पापोंको धो डाला है तथा जो जीवोंके प्रति दया, राग-द्वेषरहित चित्त तथा सरलता आदि गुणोंसे युक्त हैं, उन आपके भक्तजनोंका सङ्ग हमें सदा प्राप्त होता रहे। यही हमपर आपकी बड़ी कृपा होगी ॥ ५८ ॥ ❀ ❀ जिस साधकका चित्त भक्तियोगसे अनुगृहीत एवं विशुद्ध होकर न तो बाह्य विषयोंमें भटकता है और न अज्ञानगुहारूप प्रकृतिमें ही लीन होता है, वह अनायास ही आपके स्वरूपका दर्शन पा जाता है ॥ ५९ ॥ ❀ ❀ जिसमें यह सारा जगत् दिखायी देता है और जो स्वयं सम्पूर्ण जगत्में भास रहा है, वह आकाशके समान विस्तृत और परम प्रकाशमय ब्रह्मतत्त्व आप ही हैं ॥ ६० ॥

**यो माययेदं पुरुरूपयासृजद् बिभर्ति भूयः क्षपयत्यविक्रियः।**
**यद्भेदबुद्धिः सदिवात्मदुःस्थया तमात्मतन्त्रं भगवन् प्रतीमहि ॥ ६१ ॥**
**क्रियाकलापैरिदमेव योगिनः श्रद्धान्विताः साधु यजन्ति सिद्धये।**

भूतेन्द्रियान्तःकरणोपलक्षितं[1] वेदे च तन्त्रे च त एव कोविदाः ॥ ६२ ॥
त्वमेक आद्यः पुरुषः सुप्तशक्तिस्तया रजः सत्त्वतमो विभिद्यते ।
महानहं खं मरुदग्निवार्धराः सुरर्षयो भूतगणा इदं यतः ॥ ६३ ॥
सृष्टं स्वशक्त्येदमनुप्रविष्टश्चतुर्विधं पुरमात्मांशकेन ।
अथो विदुस्तं पुरुषं सन्तमन्तर्भुङ्क्ते हृषीकैर्मधु सारघं[2] यः ॥ ६४ ॥
स एष लोकानतिचण्डवेगो विकर्षसि त्वं खलु काल[3]यानः ।
भूतानि भूतैरनुमेयतत्त्वो घनावलीर्वायुरिवाविषह्यः ॥ ६५ ॥
प्रमत्तमुच्चैरितिकृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम् ।
त्वमप्रमत्तः सहसाभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमन्तकः ॥ ६६ ॥
कस्त्वत्पदाब्जं विजहाति पण्डितो यस्तेऽवमानव्ययमानकेतनः ।
विशङ्कयास्मद्गुरुरर्चति स्म यद् विनोपपत्तिं मनवश्चतुर्दश ॥ ६७ ॥
अथ त्वमसि नो ब्रह्मन् परमात्मन् विपश्चिताम् । विश्वं रुद्रभयध्वस्तमकुतश्चिद्भया गतिः ॥ ६८ ॥
इदं जपत भद्रं वो विशुद्धा नृपनन्दनाः । स्वधर्ममनुतिष्ठन्तो भगवत्यर्पिताशयाः ॥ ६९ ॥
तमेवात्मानमात्मस्थं सर्वभूतेष्वव[4]स्थितम् । पूजयध्वं गृणन्तश्च ध्यायन्तश्चासकृद्धरिम् ॥ ७० ॥

अन्वयः—भगवन् यत् भेदबुद्धिः पुरुरूपया आत्मदुःस्थया मायया यः इदम् सत् इव असृजत् च बिभर्ति भूयः अविक्रियः क्षपयति तम् आत्मतन्त्रम् प्रतीमहि ॥ ६१ ॥ ❀ ❀ श्रद्धान्विताः योगिनः क्रियाकलापैः भूतेन्द्रियान्तःकरणोपलक्षितम् इदम् एव सिद्धये साधु यजन्ति ते एव वेदे तंत्रे च कोविदाः ॥ ६२ ॥ ❀ ❀ त्वम् आद्यः पुरुषः सुप्तशक्तिः एकः तया यतः महान् अहम् खम् मरुदग्निवार्धराः सुरर्षयः भूतगणाः इदम् रजःसत्त्वतमः विभिद्यते ॥ ६३ ॥ ❀ ❀ स्वशक्त्या सृष्टम् चतुर्विधम् इदम् पुरम् आत्मांशकेन अनुप्रविष्टः अथो अन्तः सन्तम् तम् पुरुषम् विदुः यः सारघम् मधु हृषीकैः भुङ्क्ते ॥ ६४ ॥ ❀ ❀ सः एषः अतिचण्डवेगः अनुमेयतत्त्वः त्वम् खलु अविषह्यः वायुः घनावलीः इव भूतैः भूतानि कालयानः लोकान् विकर्षसि ॥ ६५ ॥ ❀ ❀ अप्रमत्तः अन्तकः त्वम् इतिकृत्यचिन्तया उच्चैः प्रमत्तम् प्रवृद्धलोभम् विषयेषु लालसम् क्षुल्लेलिहानः अहिः आखुम् इव सहसा अभिपद्यसे ॥ ६६ ॥ ❀ ❀ यः ते अवमानव्ययमानकेतनः कः पण्डितः त्वत्पदाब्जम् विजहाति अस्मद्गुरुः यत् अर्चति स्म चतुर्दश मनवः विशंकया उपपत्तिम् विना ॥ ६७ ॥ ❀ ❀ अथ ब्रह्मन् परमात्मन् विश्वम् रुद्रभयध्वस्तम् त्वम् विपश्चिताम् नः अकुतश्चिद्भया गतिः असि ॥ ६८ ॥ ❀ ❀ नृपनन्दनाः वः भद्रम् विशुद्धाः स्वधर्मम् अनुतिष्ठन्तः भगवति अर्पिताशयाः इदम् जपत ॥ ६९ ॥ ❀ ❀ तम् एव आत्मानम् आत्मस्थम् सर्वभूतेषु अवस्थितम् हरिम् असकृत् गृणन्तः ध्यायन्तः च पूजयध्वम् ॥ ७० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

जगत उपादानत्वेन तत्त्वं लक्षितम् । निमित्तत्वेनापि तदेव लक्षयन्नाह । य इदं विश्वं सदिव परमार्थमिव माययाऽसृजत् । कथंभूतया । यया भेदबुद्धिरन्येषां भवति तया आत्मनि त्वयि दुःस्थया स्वकार्यं कर्तुमसमर्थया । तं त्वां निरस्तभेदं प्रतीमहि जानीमः ॥ ६१ ॥ ❀ ❀ यद्यपि त्वमेव निर्भेदं ब्रह्म तथापि प्रागुक्तं साकारमिदं तव रूपं ये यजंति त एव वेदागमतत्त्वज्ञा इत्याह । क्रियाकलापैर्ये कर्मयोगिनः पूजयंति त एव कोविदाः न त्वेतदनादृत्य केवलज्ञाने प्रवृत्ताः । तंत्रे आगमे । कथंभूतमिदम् । भूतेंद्रियांतःकरणैरस्वतंत्रैर्यदुपलक्ष्यते नियंतृरूपं तत् ॥ ६२ ॥ ❀ ❀ नन्वभिन्ने मयि भेदं कुर्वंतः संतः कथं ते कोविदाः, न हि तैर्भेदः क्रियते त्वयैव क्रीडार्थं चेतनाचेतनात्मको भेदः कृत इत्याह । त्वमिति आद्यस्त्वमेक एव । सुप्ता मायाख्या शक्तिर्यस्य पश्चात्तया शक्त्या रजःसत्त्वतमसां द्वंद्वैक्यं यतो रजआदेः महानहंकारः खं च मरुदग्निर्वार्धराश्च सुराश्चर्षयश्च भूतगणाश्चैवमिदं जगद्यतो भवति तद्विभिद्यत इत्यन्वयः ॥ ६३ ॥ ❀ ❀ एतदुपपादयति सृष्टमिति । जरायुजांडजस्वेदजोद्भिज्जरूपेण चतुर्विधं स्वांशेन प्रविष्टः । अथो इति हेतोः पुरस्यांतः संतमंशं चिदाभासं पुरि शयनात्पुरुषं विदुः । तर्हि किमीश्वरमेव संसारिणं विदुर्नेत्याह । सरघा मधुमक्षि-

---

१. प्रा० पा०—पलक्षणं । २. प्रा० पा०—सारघं पयः । ३. प्रा० पा०—कामयानः । ४. प्रा० पा०—ष्वपि स्थितम् ।

कास्ताभिः सृष्टं मध्विव क्षुल्लकं विषयसुखमविद्यावृतः सन्यो भुंक्ते तं जीवं विदुः। तथा च श्रुतिः "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इति। निर्णीतं च "गुहां प्रविष्टावात्मनौ हि तद्दर्शनात्" इत्यत्र ॥ ६४ ॥ ❀ ❀ तव तु सर्वनियंतुः कुतः संसार इत्याह। यः स्वशक्त्येदं सृष्टवान्स एष त्वं खलु भूतैरेव भूतानि मेघपंक्तीर्वायुरिव अनवहितम्। कालयन्विचालयँल्लोकान् विकर्षसि संहरसि अनुमेयतत्त्वो लक्ष्यस्वरूपः ॥ ६५ ॥ ❀ ❀ विकर्षणप्रकारमाह प्रमत्तमिति। इतिकृत्यमेवमेवमिदं कर्तव्यमिति चिंतयोच्चैः प्रमत्तमनवहितम्। तत्र हेतुः। विषयेषु लालसमतिकामुकम्। प्राप्तेऽपि विषये प्रवृद्धलोभम्। अंतकस्त्व-मभिपद्यसे आक्रमसि। क्षुधा लेलिहानो जिह्वयौष्ठप्रांतौ स्पृशन्सर्पो मूषकमिव ॥ ६६ ॥ ❀ ❀ अतः कस्तव पादाब्जं त्यजेत्पंडि-तश्चेत्। कथंभूतः। यस्त्वावमानोऽनादरस्तेन व्ययमानम्। अय-गतौ। व्ययं प्राप्नुवत् केतनं शरीरं यस्य सः। यदस्माकं गुरुर्ब्रह्मार्चेति स्मेति सर्वेषां स्तोतॄणां वाक्यम्। विशंकया नाशशंकया। विनोपपत्तिमिति। अस्मादेतत्फलं भवतीत्युपपत्त्यपेक्षां विनापि स्वभावत एव दृढविश्वासेन मनवश्चतुर्दशार्चंति स्म ॥ ६७ ॥ ❀ ❀ उपसंहरति। अथेति। विश्वं रुद्रभयेन ध्वस्तम्। अथ अतो न कुतश्चिद्भयं यस्यां तादृशी गतिरसि ॥ ६८-७० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स्वकार्यं व्यामोहादिकं कर्तुमसमर्थया विलज्जमानया। यस्येयाद्युक्तेर्यथा ह्यप्रतिबुद्धस्येत्याद्युक्तेश्च। निरस्तभेद-मित्यात्मतंत्रमित्यतः फलितम्। संदर्भः—भगवत्त्वमाह य इति। यदित्यस्यान्ते यया भेदबुद्धिः परमेश्वरा-त्वत्तोऽन्ये स्वतंत्रसत्ताका इति बुद्धिर्भवति आत्मदुःस्थया त्वयि स्वरूपभूतमहाभगवत्त्वदर्शनेनात्मनि दुःस्थया स्वं दौस्थ्यं दर्शयंत्या। विश्वनाथः—वयं तु त्वां भगवत्स्वरूपमेवानुभवाम इत्याह—यो भवान् इदं पुरुषरूपेणासृजत् विष्णुरूपेण बिभर्त्ति पालयति संकर्षणरूपेण क्षपयति। मायया कीदृश्यात्मनि त्वयि दुःस्थया यया माया भेदे भेदप्रभेदरूपे जगत्येव बुद्धिर्ज्ञानं लोकानां स्यात् तच्च ज्ञानं सदिव प्रशस्तमिव न तु प्रशस्तमित्यर्थः। क्लीवत्वमार्षम्। हे भगवन् श्रीकृष्ण तं त्वात्मतंत्रं प्रतीमहि साक्षादनुभवेमेति प्रार्थनेयम् ॥ ६१ ॥ ❀ ❀ संदर्भः—अंतर्यामित्वमाह क्रियेति। इदमेवेति त्रयाणामभेदं दर्शयति कर्ममार्गे ये सर्वांतर्यामिदृष्टितत्परास्त एव भगवत्तत्वकोविदाः, नान्ये। ततः किं पुनर्भक्तिमार्गे साक्षात्तदुपासका इत्यर्थः। यद्वा—सिद्धये बोधदार्ढ्याय इदमेव ध्याने उक्तमेव उप समीपे साक्षितया लक्षणया लक्षितं "योन्यां न्योसावन्योहं न स वेद यथा पशुः" इति श्रुतेः ॥ ६२ ॥ ❀ ❀ अत्राक्षिपति—नन्विति। तैः सद्भिः। तया शक्त्या। उद्बुद्धया मायाशक्त्या। तत् रजआदि त्वत्तो विभिद्यते पृथक् क्रियते इति वा संदर्भः। अंतर्यामित्वमेव ज्ञापयति त्वमेक इति द्वाभ्यां, तत्र प्रथमेनांशानुवादो द्वितीयेनांशप्रतिपादनम् ॥ ६३ ॥ ❀ ❀ एतद्विभेदनमेव। श्रुतिस्तु बहुत्र व्याख्याता। इत्यत्र सूत्रे जीवपरात्मानावंतस्थौ द्वावेवेति निर्णीतम्। जीवपरात्मानावेव गुहां हृदयाकाशं प्रविष्टौ न तु बुद्धिजीवौ। ऋतं पिबंताविंत्यत्र कर्मफलभोगश्रवणे एकस्तावदात्मेति द्वितीयोप्यात्मैव न्याय्यः, कुतस्तद्दर्शनात् संख्याश्रवणे हि संख्यावतोरेकरूपत्वस्य लोके दर्शनात्। तथाहि—अस्य गोर्द्वितीयोन्वेष्टव्य इत्युक्ते गौरेव द्वितीयोन्वेष्टव्यो नाश्वो न मनुष्य इति। एवं चेतनत्वसामान्याज्जीव-परमात्मानावेवेति सूत्रार्थः। किञ्च—सारघदष्टांतेन तन्मक्षिकादंशतप्तत्वेपि तद्भोजनात्यागादासक्तिर्द्योतिता। ततश्चातिशयोक्त्यलं-कारेणाभक्त्या सदुःखं विषयसुखं तुच्छमविद्यावृतो यो भुंक्ते इत्यर्थः ॥ ६४ ॥ ❀ ❀ संदर्भः कालत्वमाह द्वाभ्यां—सर्वदुःख-हंतरि सर्वसुखदातरि स्वस्मिन्नुन्मुखं विधातुं दययैव तथा विभीषयस इति भावः। चक्रवर्ती—तमेव भक्तिहीनं जीवं सपरिच्छेदमेव कालस्वरूपस्त्वमाकर्षयसीत्याह स एव इति द्वाभ्याम्। चंडवेगोऽसह्यवेगः। भूतानि भूतैरिति। "जीवो जीवस्य जीवनम्" इति न्यायेनेत्यर्थः ॥ ६५ ॥ ❀ ❀ तत्र प्रमत्तत्वे। अत्र कोशगभ्रमरदृष्टान्तोप्यनुसंधेयः, स च "रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति पंकजश्रीः। इत्थं विचिन्तयति कोशगते द्विरेफे हा हंत हंत नलिनीं गज उज्जहार" इति ॥ ६६ ॥ ❀ ❀ एवंभूतं त्वां निर्बुद्धिरेव भजेदित्याह—क इति। अतः कालरूपत्वात्तव दुष्टजनकृतोनादरोऽवमानस्तेन व्ययमानं नाशं प्राप्तमिव भयात्कंपमानमिवेति नाशशंकया भवबन्धशंकया उपपत्तिं युक्तिं विना स्वभावत एव विश्वासदार्ढ्येन। यद्वा—कामनां विना ॥ ६७ ॥ ❀ ❀ यतो विश्वं रुद्रभयध्वस्तं विश्ववर्त्तिनो जीवाः कालभयध्वस्ता एव। अथातः हे विपश्चितां परमात्मन् स्वभावतः श्रेष्ठ त्वमेव कालाद्रक्षक इति भावः। "मर्त्यो मृत्युर्व्यालभीतः पलायन्" इत्यारभ्य "मृत्युरस्मादपैति" इत्युक्तेः ॥ ६८ ॥ ❀ ❀ नृपनंदना इति। नरपालकत्वेन लोके भवतामप्यनेन सुखं भविष्यतीति भावः। स्वधर्ममनुतिष्ठंत इति "स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः" इति श्रीगीतोक्तेः ॥ ६९ ॥ ❀ ❀ कर्ममिश्रां भक्तिमुक्त्वा शुद्धामाह-तमेवेति ॥ ७०-७१ ॥

## श्रीमद्वीरराघवव्याख्या

एवं विश्वाधारत्वमुक्तमथ विश्वस्य निमित्तमुपादानं च कारणं त्वमेवेत्याह य इति। यो भवानिदं विश्वं स्वात्मकं बहुरूपया बहुधा परिणामशीलया मायया सृजन् बिभर्ति पुनः क्षपयति संहरति तथाप्यविक्रियः निर्विकारः, कथंभूतया मायया

आत्मदुःस्थयात्मसु जीवेषु दुःस्थया दुष्टा यथा भवति तथा स्थितया संसाररूपानर्थकारित्वेन स्थितयेत्यर्थः। ययात्मदुःस्थया मायया यद्यस्मादीश्वराद्भेदबुद्धिः स्वनिष्ठबुद्धिः सदिव सदर्थविषयज्ञानमिव भवति तं त्वामात्मतन्त्रं प्रतीमहि प्रपद्येमहीत्यर्थः। तत्रात्मदुःस्थयेति जीवेषु दुःस्थत्वकथनेन परमात्मनि अनर्थकारित्वमुक्तं यद्भेदबुद्धिः सदिवेति स्वतन्त्रात्मभ्रमहेतुत्व-मुक्तमिदं देहात्मभ्रमहेतुत्वस्याप्युपलक्षणम्, अविक्रिय इत्यनेन उपादानत्वमुक्तं, निषेधो हि प्रसक्तिपूर्वकः, प्रसक्तिश्चोपादानत्वेन निमित्तस्य विकारप्रसक्त्यभावाद्धाव्यवस्थाविशेषवतः प्रागवस्थायोगो ह्युपादानत्वं ततश्चावस्थायोगित्वप्रयुक्तविकारप्रसक्तौ तन्निषेधो युक्तः, विकारस्य स्वापृथक्सिद्धविशेषणीभूतचेतनाचेतनगतत्वाद्विशेष्ये विकाराभावादविक्रिय इत्युक्तम्। ननु निमित्तकारणस्यापि कुलालादेः खेदश्रमादिविकारदर्शनात्तद्वत्परस्मिन्नपि निमित्तत्वप्रयुक्तविकारो निषिध्यत इति चेन्न "तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत" इति श्रुत्या संकल्पमात्रेण जगत्सृजतो विकारप्रसक्त्याभावात्सृजन्निति निमित्तत्वमुक्तं कर्तृत्वमेव हि निमित्तत्वं, तत्र विशिष्टत्वाकारेणोपादानत्वं निष्कृष्टविशेष्याकारेण निमित्तत्वमिति विवेकः, बिभर्ति क्षपयतीति रक्षितृत्वं संहर्तृत्वं च तस्येत्युक्तं भवति। आत्मतन्त्रमित्यनेनाकर्मवश्यत्वमुक्तमनेन श्लोकद्वयेन "ब्रह्मवनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा विब्रवीमि वो यदध्यतिष्ठद् भुवनानि धारयन्" इति श्रुत्यर्थ उक्तः। अत्र किंस्विद्वनमित्यादिना वृक्षशब्दोपलक्षितमुपादानं वनशब्दोपलक्षितमाधारः यदध्यतिष्ठदिति निमित्तं च किमिति प्रश्नपूर्वकं ब्रह्मण एवोपादानत्वनिमित्तत्वाधारत्वादीनि नान्यस्येति प्रतिज्ञापूर्वकोत्तरत्वमस्य वाक्यस्यावगम्यते। यतो वृक्षशब्दोप-लक्षितोपादानाद् ब्रह्मणो द्यावापृथिव्युपलक्षितं कृत्स्नं जगन्निष्टतक्षुः निष्टतक्ष ससर्जेत्यर्थः॥ ६१॥ ❀ ❀ ईदृशभगवत्स्वरूप-विषयकं भक्त्यात्मकं ज्ञानं भागवतसङ्गादेव लभ्यत इत्युक्तमिदानीं भागवतसंगवत्स्ववर्णाश्रमोचितानभिसंहितधर्मानुष्ठानमात्म-याथात्म्यज्ञानयोगश्च भक्त्यङ्गमित्याह क्रियाकलापैरिति। ये योगिनः प्रकृतिविविक्तात्मयाथात्म्यज्ञानयोग एषामस्तीति योगिनः श्रद्धायुक्ताः सन्तः क्रियाकलापैः स्ववर्णाश्रमोचितकर्मभिः अनभिसंहितफलैरिदमेवोक्तविधमेव भगवत्स्वरूपं सिद्धये मुक्तये साधु सम्यग्यजन्ति आराधयन्ति, इदं कथंभूतं भूतादिभिरप्राकृतैः शुद्धसत्त्वमयैरुपलक्ष्यते इत्युपलक्षणम् अप्राकृतोक्तविधदिव्यमङ्गल-विग्रहविशिष्टमित्यर्थः, त एव योगिनः वेदे कर्मयोगप्रकाशके तन्त्रे आत्मयाथात्म्यज्ञानयोगप्रकाशके सांख्ये तन्त्रे च कोविदाः कुशला भवन्ति॥ ६२॥ ❀ ❀ अविक्रिय इत्यनेन उपादानकारणत्वमुपक्षिप्तं बिभर्तीति भर्तृत्वं क्षपयतीति संहर्तृत्वं चेति तदेवोपपादयति चतुर्भिः। तंत्रत्वमित्युपादानमुपपादयति। त्वमुक्तविधस्वरूपगुणविभूतिस्त्वं पुरुष आद्य आदौ सृष्टेः पूर्वं भवः आद्यः सृष्टेः पूर्वं प्रलयदशायामासीरित्यर्थः। कथंभूत आसमित्यत्राह। सुप्तशक्तिः सुप्ताः स्वस्मिन् लीनाः शक्तयः चिदचिदादि-शक्तयो यस्य अत एव एकः असहायः वक्ष्यमाणनामरूपविभागनिबन्धनबहुत्वप्रतिसम्बन्धिनामरूपविभागानर्हसूक्ष्मचिदचिद्वि-शिष्टत्वेनासहाय एवावस्थित इत्यर्थः, ततस्तया स्वापृथक्सिद्धविशेषणभूतया शक्त्या रजःसत्त्वतम इति द्वन्द्वैक्यं तदपेक्षया विभिद्यते इत्येकवचनं रजःसत्त्वतमांसि विभिन्नानि विभक्तान्यभूवन्। यतो रजआदेर्महान्महतोऽहङ्कारस्त्रिविधः ततो भूतादिभ्यः क्रमेण खमाकाशस्ततो मरुद्वायुस्ततोऽग्निस्ततो वा आपः ततो धरा पृथिवी तेभ्यः खादिभ्यः पञ्चीकृतेभ्योऽण्डोत्पत्तिद्वारा सुरा ब्रह्मादयः ऋषयो मरीच्यादयः अन्ये मनुजतिर्यगादयः अभूवन् सृष्टेः पूर्वं स्वस्मिन्नुपसंहृतचिदचिच्छक्तिनामरूपविभागानर्हसूक्ष्मचिच्छरी-रकस्त्वमेक एव कारणतयावस्थितोऽपेक्षितकर्तृकरणाद्युपकरणजातः सर्वज्ञः सर्वशक्तिः स्वलीलैकप्रयोजनः स्वात्मिकां मायां जीवद्वारानुप्रविश्य मायाशरीरकं स्वात्मानमेव संकल्पमात्रेण महदादिपृथिव्यन्तसमष्टिरूपेण देवादिचतुर्विधव्यष्टिभूतरूपेण च परिणमय्य स्वपर्यन्ततत्तन्नामरूपभागासीरित्यर्थः॥ ६३॥ ❀ ❀ त्वं पुरुष इत्युक्तं तत्र पुरुषशब्दप्रवृत्तिनिमित्तं दर्शयन्पुरुषशब्द-वाच्यतामाह सृष्टमिति। यतः यो भगवान्स्वशक्त्या प्रकृतिरूपया सृष्टमिदं चतुर्विधं देवमनुष्यतिर्यक्स्थावरभेदेन पुरं शरीर-मात्मनोंऽशकेनांशभूतेन जीवेन जीवान्तरात्मतया पुरमनुप्रविष्टः, अथोऽतः तं भगवन्तमन्तःपुरस्यान्तः जीवान्तरात्मतया सन्तं पुरुषं विदुः पुरुषशब्दवाच्यं विदुः। तथा चोक्तम् "पुंसंज्ञे वै शरीरेऽस्मिन् शयनात्पुरुषो हरिः।" शकारस्य षकारोऽयं व्यत्ययेनेति। कोऽसावात्मनोंऽशः यदन्तरात्मतया पुरमनुप्रविष्टस्तत्राह। यः जीवः हृषीकैरिन्द्रियैः सारघं सरघा 'मधुमक्षिका' सारं पुष्पा-दिगतं घ्नन्ति गच्छन्ति प्राप्नुवन्तीति व्युत्पत्तेः। अत्र सारघशब्दस्तदुपार्जितमधुनि लाक्षणिकमधुकरोपार्जितमध्विव मधुकरस्था-नीयेन्द्रियोपार्जितशब्दादिभोग्यजातं भुङ्क्तेऽनुभवति स इत्यर्थः। अत्र जीवान्तरात्मतयानुप्रवेशकथनं नियतदेशकालकर्माद्या-नुगुण्येन जगद्रक्षणार्थानुप्रवेशाभिप्रायकम्॥ ६४॥ ❀ ❀ अथ संहर्तृत्वमुपपादयति स इति। य एष कालशरीरकस्त्वमलु-प्रवेगः कालवेगमनुसन्दधतामायुःक्षयनिमित्तभयोत्पादनलक्ष्यमाणरूपः अविषह्यवेगो वायुर्मेघपङ्क्तीरिव भूतैरेव भूतानि कालयानः पीडयन् विकर्षसि संहरसि॥ ६५॥ ❀ ❀ विकर्षणप्रकारमेवाह प्रमत्तमिति। इतिकृत्यमेवं कर्तव्यमिति चिन्तयोच्चैः भृशं प्रमत्तं विषयेषु शब्दादिषु लालसमतिकामुकं प्राप्तेऽपि विषये प्रवृद्धलोभं जनमप्रमत्तः कालरूपस्त्वं सहसा बालदन्तकोऽभिपद्यसे प्राप्नोषि यथा क्षुधा लेलिहानः जिह्वयोष्ठप्रान्तौ स्पृशन् सर्पो मूषकमिवेत्यर्थः॥ ६६॥ ❀ ❀ एवं सर्वोत्कृष्टत्वात्पण्डितो बुद्धिमान् भवेत्तर्हि को वा त्वत्पदाब्जं विजहाति न कोऽपीत्यर्थः। कथम्भूतः यस्तवावमानोऽनादरस्तेन व्ययमानं केतनं शरीरं यस्य त्वत्परिचर्यां विना वृथैव शरीरं मन्वान इति भावः, अत एवास्मद्गुरुर्निःशङ्कया त्वत्पदाब्जमेवार्चयति आराधयति स।

कोऽसौ तव गुरुर्यो मामर्चयति स्म तमाह यदिति । यस्य दिनोपपत्तिः दिननिष्पत्तिर्नाम चतुर्दशमनवो यस्य दिवसनिष्पत्तिरूपाः सन्ति स ब्रह्मैवाऽस्मद्गुरुः पितेत्यर्थः ॥ ६७ ॥ ❁ ❁ अतस्त्वमेव प्राप्य इति वदन्नुपसंहरति अथेति । हे ब्रह्मन् ! परमात्मन् कृत्स्नं विश्वं रुद्रभयात्त्वदात्मकस्य रुद्रस्य भयात् ध्वस्तं नाशं प्राप्तं, त्वन्तु विपश्चिनां नोऽकुतश्चिद्भया नासि कुतोऽपि भयं यस्याः सा कुतश्चिद्भया गतिरसीति कृत्स्नं विश्वं रुद्रभयादिति परोक्षनिर्देशो रुद्रान्तरसामान्याभिप्रायकः ॥ ६८ ॥ ❁ ❁ एवं स्वस्मै ब्रह्मोपदिष्टस्तोत्रेण भगवन्तं प्रस्तूय तेभ्यः प्रचेतोभ्यः उपदिश्य तस्मिन्स्तोत्रे तदर्थे तान् रोचयन्नाह रुद्र इदमिति । हे नृपनन्दनाः ! विस्रब्धा विश्वासयुक्ताः कर्तरि क्तः, इदं भगवत्स्तवनं जपतः अर्थतः शब्दतश्चानुसंधद्ध्वम्, अनेन जपेन वः युष्माकं भद्रं मङ्गलं भविता तथा स्वधर्मं स्ववर्णाश्रमोचित्तं धर्ममनुतिष्ठन्तः भगवत्यर्पितान्तःकरणाः सन्त इत्यर्थः ॥ ६९ ॥ ❁ ❁ असकृत् पौनःपुन्येन हरिं ध्यायन्तो गृणन्तः स्तुवन्तः तमेव सर्वभूतेष्ववस्थितमात्मस्थं पूजकान्तरात्मतयावस्थितं भगवन्तं पूजयध्वम् । सर्वभूतेष्ववस्थितमित्यनेन 'ऐतदात्म्यमिदं सर्वमि'ति श्रुत्यर्थोऽनुसन्धीयते, आत्मानमित्यनेन तदात्मेति श्रुत्यर्थः, आत्मस्थमित्यनेन तत्त्वमसीति श्रुत्यर्थोऽसंहितः । अत एव तत्स्थत्वादनुपश्यन्ति यत एव हि साधव इति श्रुत्यर्थः उक्तः ॥ ७० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

यत्रेत्यधिकरणनिर्देशाच्छुक्तिकायां रजतव्यक्तिवद्यस्मिन् कल्पितत्वान्मिथ्याभूतं जगदिति भ्रान्तिं निराचष्टे यो माययेति । यो हरिः पुरुरूपया शुक्ललोहितकृष्णभेदेन बहुरूपया मायया प्रकृत्येदं जगदसृजत् बिभर्ति पुनः संहरति । अत्र प्रकृतेरेव महदाद्यात्मना विकारो न तु परमात्मन इत्याशयेनोक्तम् अविक्रिय इति । अनेन शुक्त्यज्ञानविकारो रजतमित्यपास्तमेवमपि परमात्मा जीवादिभ्यो भिन्नतया सम्यक्किमिति न प्रतीयत इत्याशङ्क्य सा प्रतीतिः सम्यग्ज्ञानविषयेत्याह यद्भेदेति । यस्य हरेर्जीवादिभ्यो भेदबुद्धिः सदिवानिर्दोषज्ञानविषयैवेत्यर्थः, दिनवाचिना कथं दिवाशब्देन ज्ञानार्थतोच्यते प्रसिद्ध्यभावादिति न वाच्यम् "रात्रिरज्ञानमुद्दिष्टं सम्यग् ज्ञानं दिवा स्मृतम्" इति वचनात् । शुक्तिरजतज्ञानवन्नेदं पुरुषार्थोपयोगीति चेन्न । "जीवेभ्यो जडतश्चैव भेदज्ञानं हरेः सदा । वास्तवं ज्ञानमुद्दिष्टं तेन मुक्तिरवाप्यते ।" इति वचनात् तत्र युष्मत्प्रतीतिः कीदृशीति तत्राह आत्मसंस्थयेति । यया स्वाधीनतया प्रकृत्या निर्विकारः सृष्ट्यादि करोति तयात्मसंस्थया परमात्मव्यवस्थया स्थितं स्वां प्रतीमहि विजानीमहे । स्वाधीनामपि प्रकृतिं विहाय सृष्ट्यादि कर्तुं समर्थ इति द्योतनायात्मतन्त्रमिति । अत एव भगवन्निति सम्बोधयाम्बभूवुरिति ॥६१॥ ❁ ❁ अस्तु सृष्ट्यादिकर्तृ ब्रह्म 'स्वर्गकामो यजेते'त्यादिवाक्यप्रमाणेनेज्यमिन्द्रादिकं स्यात्तादृक् प्रमाणसम्भवादिति तत्राह क्रियाकलापैरिति । इदं प्रेत्यापि न मुह्यामीति श्रद्धयान्विता ये कर्मयोगिनः क्रियासमूहैर्ज्ञानसिद्धये इदं जगत्कर्तृ ब्रह्मैव साधु यजन्ते नेन्द्रादिकं त एव स्वर्गकामो यजेतेत्यादिवेदे "शुद्धस्फटिकसंकाशं वासुदेवं निरञ्जनमि"त्यादितन्त्रे च कोविदास्तद्धृदयज्ञा इत्यर्थः । न केवलं श्रुतिस्मृतिभ्यां ज्ञात्वा यजन्ति किन्त्वनुमानेनापीति भावेनाह भूतेति । भूतेन्द्रियान्तःकरणैरुपलक्ष्यते ज्ञायत इति भूतेन्द्रियान्तःकरणोपलक्षणम् भूतादीनामचेतनत्वेन स्वतः प्रवृत्त्यसम्भवात्तत्प्रेरकोऽन्यश्चेतनोऽस्ति । स चेश्वर एवान्यस्यान्वयव्यतिरेकाभ्यां शक्त्यदृष्टेरिति । यद्वा वेदे तन्त्रे च श्रद्धान्विता ये योगिन इदं यजन्ति त एव कोविदाः कर्मकाण्डस्वारस्यज्ञानपटव इति । अनेनेन्द्रादिकं यजन्तो वेदादितात्पर्यार्थं न जानन्तीति ज्ञापितम् ॥६०॥ ❁ ❁ ननु जीवादिदं जगत्कैश्चित्सङ्गिरन्ते । इदं निपुणप्रणीतं विशिष्टकार्यत्वाच्चित्रादिकार्यवदित्यनुमानं 'जीवाद्भवन्ति भूतानी'ति कानिचिद् वाक्यानि चोदाहरन्त्यत इदं लक्षणमतिव्याप्तमिति शंकानिरासायाह त्वमेक इति । आद्यः प्रपञ्चोत्पत्तेः पूर्वभवः पुरुषस्त्वमेक एवाभूदित्यन्वयः । ब्रह्मैवेदमग्र आसीदि'त्यादेः पुरुष इत्यनेन 'कर्त्तारमीशं पुरुषं ब्रह्मयोनिमि'ति वाक्यं सूचितम् । अनेन जीवश्च व्यावृत्तोऽस्य ब्रह्मयोनित्वोक्तेः । लक्ष्मीतत्त्वस्य द्वितीयस्य विद्यमानत्वात्कथमेक इति विशेष्टुं शक्यस इति तत्राह सुप्तेति । अत्र सुप्तेत्यनेन प्राप्तिरुपलक्ष्यते "यदायं पुरुषः स्वपिति नाम सता सौम्य तदा सम्पन्नो भवति" इति श्रुतेः स्वात्मन्येवाप्तशक्तिः मुख्यार्थाङ्गीकारेऽङ्गत्वापत्तेरन्यैरदृष्टत्वाङ्गीकर्तव्यम् । 'प्रकृतेः स्वाप उद्दिष्टहर्यन्यत्रत्वदर्शनमि'ति वचनात् । एवं प्रलयावस्थां संक्षिप्य सृष्ट्यवस्थामाह तयेति । या प्रलये हरावेव रता सृष्टिकाले प्राप्ते हरेः कटाक्षेण सिसृक्षुत्वविशेषमाप्तया तया शक्तिशब्दशब्दितया प्रकृत्या साम्यावस्थामाप्तया विभिद्यते विषमावस्थामापद्यते । सृष्टिक्रममपेक्ष्य रजःसत्त्वतम इति व्यत्ययस्योक्तं स्थित्यादेः सृष्ट्यनन्तरत्वात्, रजः सृष्टौ सत्त्वं स्थितौ तमः संहृतौ चेति भिद्यते रजः सत्त्वतमोभ्यां विभिद्यते सत्त्वं रजस्तमोभ्यां तमश्च सत्त्वरजोभ्यामित्ययं भेदः प्रमाणान्तरत्वात्तत्कार्यस्वभावदर्शनादवगन्तव्यः । उक्तं भेदं विशिनष्टि महानहमिति । ततो गुणवैषम्यात् सत्त्वप्रधानं महत्तत्त्वं तदभिमानी ब्रह्मा चाभूदिति बोद्धव्यं, तत्राहंकारं त्रिविधाभिन्नम् । तामसाहङ्कारात् खादि, वैकारिकाहङ्कारादिन्द्रियाभिमानिनो देवाः, तैजसाहङ्कारात् ज्ञानहेतुत्वाद्दृषिशब्दवाच्यानीन्द्रियाणि, खादिभ्यः सुरनरतिर्यगादिभूतगणा अभूवन् । किं बहुनोक्तेनेदं चराचरं जगद्यतो यस्मादुत्पन्नं तदेवं विभिन्नमिति ज्ञातव्यम् 'आत्मन आकाशः सम्भूतः' इत्यादिश्रुत्यनुगृहीतं मानमस्मिन्नर्थे ॥ ६३ ॥ ❁ ❁ अचेतनस्य स्वतः प्रवृत्त्यनुपपत्तेश्चेतनप्रकृतावस्वातन्त्र्यप्रतीतेर्विचित्रप्रपञ्चरचनान्यथानुपपत्त्या विशिष्टचेतनसिद्धिः ।

स चेश्वर एवार्थापत्तेरन्यथासिद्धिपरिहारायाह सृष्टमिति । अनुप्रविश्येत्यनेनार्थापत्तेरन्यथासिद्धिः परिहृतेति । प्रपञ्चस्तु ग्रन्थाधिक्यात्प्राज्ञानां सुबोधत्वाच्चोपरम्यते । आत्मांशकेन स्वरूपांशेन 'तत्सृष्ट्वे'त्यादिश्रुतेः जरायुजादिभेदेन चतुर्विधं पुरं प्रविश्य हृषीकैर्जीवेन्द्रियैः सारघं सारमात्रं मधु सुखं भुङ्क्ते यस्मादथो यस्मात् अत्र पुरे सन्तं त्वां पुरुषं विदुरित्यन्वयः । तदस्यास्त्यस्मिन्नर्थे उपच्प्रत्ययः, सन्तमित्यनेन निर्दोषत्वं सूचयति "अवधारणे घशब्दः स्यात्" इति वचनात् पुनः 'मधु नाम सुखं विन्द्यात्' केवलं सारमेव भुङ्क्ते न त्वसारमित्याशयेन सारवत्सारमात्रं तु सारघमित्यतोऽपि कथित एवार्थः ॥ ६४ ॥ ❁ ❁ संहर्तृलक्षणस्य कालाधीनतया प्रतीयमानत्वात्तत्रातिव्याप्तमिति तत्राह स एष इति । योऽग्रतः स्रष्टा स एव लोकान् कालयानः कल-द्रावण इति धातुः, कालरूपी भूत्वा त्वं भूतैः करणैर्यमादिभिर्भूतानि विचकर्षसि संहरिष्यसीत्यन्वयः । अविपक्ष्योऽपरिहार्यः, अत्र हेतुं ध्वनयति अतिचण्डेति । अत्रानुमानं मानमित्याह । अनुमेयेति उदाहरणमाह घनावलिरिति । चलन्तीर्घनावलीर्दृष्ट्वा चलनं वायुकर्तृकमिति यथा कल्प्यते तथाऽत्रापीति ॥ ६५ ॥ ❁ ❁ अवान्तरसंहारस्त्वदन्येन किं न स्यादत्राह प्रमत्तमिति । क्षुधा लेलिहानः पुनः पुनर्जिह्वया सृक्किणीं लिहन् ॥ ६६ ॥ ❁ ❁ एवं भगवतः स्वरूपं निरूप्य तदुपासनात्याग्यसुर एव न विद्वानिति भावेनाह क इति । पण्डित एवं ज्ञातेश्वरतत्त्वः पुमान् कस्त्वत्पदाब्जं त्यजति । 'यद्यदाचरि श्रेष्ठः' इत्येतावदेतत् ध्वनयति त्यजति चेत्सुरेतरः । इतोऽपि मोक्तुं निमित्तं नास्तीत्याह यत्त इति । अयमब्जकेतनः पुमानपि विगतशङ्कया ते तव यत्पदाब्जमर्चेति स्मरते इत्यन्वयः । 'स्मृतौ वृत्तौ निषेधे स्मे'ति यादवः । कोऽयमब्जकेतन इत्यतोऽस्मद्गुरुरिति जनकत्वाज्ज्ञानोपदेष्टृत्वाच्च गुरुरिति । अनेन ततः परं हि मामित्यत्र श्रीरेवोच्यते न रुद्र इति निरणायीत्यतो मायावादिनां व्याख्यानं पूर्वापरविरुद्धत्वादुपेक्षणीयमित्यस्माभिस्तन्मतनिरासाय प्रयासो न क्रियत इति । इतोऽपि तत्पादसेवा न हातव्येत्याह-यद्दिनेति । चतुर्दशमनवोऽस्मादेतत्फलं भवतीत्युपपत्त्यपेक्षां विनापि यच्चरणारविन्दमर्चन्ति ॥ ६७ ॥ ❁ ❁ अनुदिनं सुप्तिदशायां श्रीनारायणस्पर्शेन परमानन्दोऽनुभूयते, किमुत कैवल्य इति वेदयंस्तस्य दौर्लभ्यमाह यत्स्पृष्ट इति । येनाङ्घ्रिणा स्पृष्टोऽहरहर्मुक्तक्लेशो जनोऽमृताम्भोधौ परमानन्दसमुद्रे शेते यावत्तावत्तदानीं वेद सुखं वेत्त्यथोत्थानानन्तरं तेऽङ्घ्री वेद नु किमित्याक्षेपः । तत्सुखं स्मरते च यद्यपि सुखमहमस्वाप्समिति परामृषति तथापि तवाङ्घ्रिं न वेत्ति न स्मरतीति भावः । अनेन तादृशः पुरुषो दुर्लभ इति सूचितम् । विचित्रे जगति कश्चिद्वीरोऽस्मदभयदः किं न स्यादिति शङ्कां विहायैवं प्रार्थनीय इति वक्ति अथेति । विश्वं रुद्रभयध्वस्तमिति यस्मात् अथ तस्मादेवं विपश्चितां नस्त्वमकुतश्चिद्भया गतिरसीत्यन्वयः । ब्रह्मन् ! परमात्मन्निति पदद्वयेन बहिरन्तश्च त्वां विनान्योऽभयदो नास्तीति सूच्यते ॥ ६७ ॥ ❁ ❁ ध्येयस्वस्वरूपं निरूप्याधुना पूर्वोक्तं जप्यं विधायोपसंहरति इदं जपतेति । सर्वस्मा आत्मने नम इत्यारभ्य वाचो विभूतय इत्यन्तं यदुक्तं तदिदं जपतेत्यन्वयः ॥ ६९ ॥ ❁ ❁ आत्मस्थमित्युपदिश्य सर्वभूतेष्ववस्थितमिति वचनं परिच्छिन्नत्वपरिहारायोक्तमिति ज्ञायते ॥ ७०–७१ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसंदर्भः

भगवत्त्वमाह य इति । यदित्यस्यान्ते यत् यया भेदबुद्धिः परमेश्वरात् त्वत्तोऽन्ये स्वतंत्रसत्ताका इति बुद्धिर्भवति । आत्मदुःस्थया त्वयि स्वरूपभूतमहाभगवत्त्वदर्शनेनात्मनि दुःस्थया स्वं दौस्थ्यं दर्शयन्त्या ॥ ६१ ॥ ❁ ❁ अन्तर्यामित्वमाह क्रियेति । इदमेवेति त्रयाणामभेदं दर्शयति कर्ममार्गे ये सर्वान्तर्यामिदृष्टितत्पराः त एव भगवत्तत्त्वकोविदाः, नान्ये ततः किं पुनर्भक्तिमार्गे साक्षात्तदुपासका इत्यर्थः ॥ ६२ ॥ ❁ ❁ अन्तर्यामित्वमेव स्थापयति त्वमेक इति द्वाभ्याम् । तत्र प्रथमेनांशयनुवादः द्वितीयेनांशप्रतिपादनम् । अत्र अन्तः सन्तमंशमिति टीकासम्मतम् ॥ ६३–६४ ॥ ❁ ❁ कालत्वमाह स एष इति द्वाभ्याम् । सर्वदुःखहन्तरि सर्वसुखदातरि स्वस्मिन्नुन्मुखं विधातुं दययैव तथा विभीषयस इति भावः ॥ ६५–६६ ॥ ❁ ❁ अतस्तद्भक्तिरेव पुरुषार्थ इत्युपसंहरति क इति द्वाभ्याम् । विशङ्कयापि हेतुना को विजहाति अस्मद्गुर्वादयस्त उपपत्तिं युक्तिं विना स्वभावत एवेत्यर्थः, तथा मनव इति मन्वन्तरस्य भक्तानामुपलक्षणं चेतन इति चित्सम्बन्धयोः पाठान्तरम् ॥ ६७ ॥ ❁ ❁ हे विपश्चितां परमात्मन् ! स्वभावतः प्रेष्ठत्वमेवास्माकमकुतश्चिद्भया गतिः, त्वां विना तु विश्वं सर्वमेव रुद्रात् भयं तेन ध्वस्तमिति । तत्र प्रथमं कर्ममिश्रां भक्तिमाह इदमिति । ततः शुद्धामाह ममैवेति ॥ ६८–७२ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

वयं तु त्वां भगवत्स्वरूपमेवानुबुभूषाम इत्याह । यो भवान् इदं विश्वं पुरुषरूपेणाऽसृजत् विष्णुरूपेण बिभर्त्ति सङ्कर्षणरूपेण क्षपयति मायया कीदृश्या आत्मनि त्वयि दुःस्थया स्वकार्यं कर्तुमसमर्थया यदस्या मायाया भेदे भेदप्रभेदरूपे जगत्येव बुद्धिर्ज्ञानं लोकानां स्यात्, तच्च ज्ञानं सदिव प्रशस्तमिव न तु प्रशस्तमित्यर्थः । क्लीबत्वमार्षम् । हे भगवन् ! श्रीकृष्ण ! तं त्वमात्मतन्त्रं प्रतीमहि साक्षादनुभवेमेति प्रार्थनेयम् ॥ ६१ ॥ ❁ ❁ केचित् कर्मयोगिनोऽष्टाङ्गयोगिनश्च सर्वभूतान्तर्यामि-

प्रथमं पुरुषं त्वां यजन्तीति तन्त्रेणैवाह क्रियेति । इदमेव किं तत्राह । भूतेन्द्रियान्तःकरणैरस्वतन्त्रैर्यदुपलक्ष्यते ज्ञाप्यते तन्नियन्तृरूपम् । त एव कर्मिणां योगिनां च मध्ये कोविदाः, नान्ये ॥ ६२ ॥ ❀ ❀ कैश्चित्तु त्वं प्रकृत्यन्तर्यामी प्रथमपुरुषोऽनुभूयसे इत्याह त्वमिति । सुप्ता मायाख्या शक्तिर्यस्य पश्चात्तयैव शक्त्या प्रवुद्धया त्वत्त एव रजआदिकं विभिद्यते यतो रजआदेर्महानहमित्यादि ॥ ६३ ॥ ❀ ❀ यस्त्वन्तर्यामी सङ्गी पुरुषो जीवः स तु नोपास्य इत्याह सृष्टमिति । इदं चतुर्विधं जरायुजाण्डजस्वेदजोद्भिज्जरूपमात्मा अन्तर्यामी अंशकेन येन निकृष्टांशेन सह प्रविष्टस्तमपि अन्तः सन्तं अन्तरेव न तु बहिः सन्तं जीवं पुरुषं विदुः । यः सारघं सरघाभिर्मधुमक्षिकाभिः सृष्टं मधु हृषीकैर्भुङ्क्ते । सारघदृष्टान्तेन तन्मक्षिकादंशसन्तप्तत्वेऽपि तद्भोजनात्यागादासक्तिर्द्योतिता । ततश्चातिशयोक्त्यलङ्कारेणाभक्त्या स दुःखं विषयसुखं तुच्छमविद्यावृतो यो भुङ्क्ते इत्यर्थः । तथा च श्रुतिः 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीही'ति ॥ ६४ ॥ ❀ ❀ तमेव भक्तिहीनं जीवं सपरिच्छदमेव कालरूपस्त्वमाकर्षसीत्याह स एष इति द्वाभ्याम् । कालयानश्चालयन् लोकान् भोगस्थानान्यपि भूतानि भूतैरिति 'जीवो जीवस्य जीवनमि'ति न्यायेनेत्यर्थः । अनुमेयतत्त्वः अलक्ष्यस्वरूपः ॥ ६५ ॥ ❀ ❀ विकर्षणप्रकारमाह प्रमत्तमिति । इतिकृत्यम् एवमेवमिदं कर्तव्यमिति तच्चिन्तया प्रमत्तम् अभिपद्यसे आक्रम्यसि क्षुधा लेलिहानः जिह्वया ओष्ठप्रान्तौ अतिशयेन स्पृशन् सर्पः आखुं मूषकमिव ॥ ६६ ॥ ❀ ❀ एवम्भूतं त्वां निर्बुद्धिरेव न भजेदित्याह क इति । अवमानो दुष्टजनकृतोऽनादरस्तेन व्यथमानं केतनं नाशं प्राप्तमिव शरीरं यस्य सः । यदस्मद्गुरुर्ब्रह्मा अर्च्चेति स्मेति सर्वेषां स्तोतॄणां वाक्यम् । विशङ्कया भवबन्धशङ्कया उपपत्तिं युक्तिं विना स्वभावत एव विश्वासदार्ढ्येन । यद्वा कामनां विना ॥ ६७ ॥ ❀ ❀ उपसंहरति अथेति । विपश्चितां गतिरसि न त्वविपश्चितां यतो विश्वं रुद्रभयध्वस्तं विश्ववर्त्तिनोऽज्ञा जीवाः कालभयध्वस्ता एवेत्यर्थः ॥ ६८ ॥ ❀ ❀ स्वधर्ममनुतिष्ठन्त इति प्रचेतसां कर्ममिश्रभक्तिमत्त्वमालक्ष्योक्तिः ॥ ६९-७० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

नतु यत्र विश्वं यदि व्यज्यते तर्हि विकारित्वं तस्य स्यात्तत्राह य इति । मायया स्वशक्तिभूतया वहुरूपया महदादिविकाररूपेण नानावस्थारूपया य इदं विश्वमसृजत् स्वरूपतस्त्वविक्रियः । ननु तर्हि प्रकृतिरेव जगत्कर्त्री किं ब्रह्मकारणवादेनेत्यत्राह आत्मदुःस्थया स्वतःस्थातुमशक्तया त्वच्छक्तितया त्वदन्तर्गतयेत्यर्थः, हे भगवन् तं त्वां प्रतीमहि जानीमः । सैवानर्थकारिणीत्याह । यत् यथा भेदबुद्धिः स्थूलोऽहं कृशोऽहं देवोऽहं मनुष्योऽहमित्यादिभेदबुद्धिः सदिवास्ति सत्येवास्ति ॥ ६१ ॥ सिद्ध्ये मुक्त्ये क्रियाकलापैः त्वद्यजनात्मककर्मसमूहैः पूतादिभिस्तामसराजसवैकारिककार्यैर्व्यष्टिसमष्टिरूपैरुपलक्षितमुत्पाद- ।।दिरूपमिदमेव तव रूपं ये योगिनः साधु यजन्ति ते वेदे मन्त्रे तदर्थप्रकाशके आगमे च एते एव कोविदाः ॥ ६२ ॥ ❀ ❀ अथ यजनीयस्य भगवतः विश्वहेतुत्वनिःसमानातिशयत्वसर्वकर्मसाक्षित्वादिगुणान् जीवस्य कर्मासक्तत्वबद्धत्वादीन् गुणांश्च जानन् त्वां को न भजेदित्याह त्वमिति पञ्चभिः । सुप्ता महाप्रलये लीना प्रत्याख्या शक्तिर्यस्य सः पुनः सृष्टिवेलायां तयैव रजआदिर्विभिद्यते रजआदीनां द्वन्द्वैक्यम्, ततः महान् अहम् अहङ्कारश्च स्वं च विभिद्यते ततः महदादयो विभिद्यन्ते । एवं क्रमेण यतः इदं विश्वं भवति स त्वमेक एव आद्यो विश्वहेतुरसि नास्ति त्वत्समोऽधिकस्य तु का वार्तेति भावः ॥ ६३ ॥ ❀ ❀ भगवतो विश्वहेतुत्वादिगुणानुक्त्वाथ तस्य कर्मफलदातृत्वं जीवस्य तद्भोक्तृत्वं वर्णयति सृष्टमिति । "प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः । क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ ॥" इति स्मृतेः स्वशक्त्या प्रकृत्या आत्मांशकेन जीवेन च इदं चेतनाचेतनात्मकं विश्वं सृष्ट्वा जरायुजाण्डजस्वेदजोद्भिज्जरूपेण चतुर्विधं पुरमन्तर्यामिरूपेण प्रविष्टोऽसि । अथो अतो हेतोः पुरस्यान्तः सन्तं त्वां पुरुषं बन्धनिवर्तकतया विदुः यश्च हृषीकैरिन्द्रियैः सारघं सरघाभिर्मधुमक्षिकाभिः संचितं मध्विव क्षुल्लकं कर्मफलं भुङ्क्ते तं जीवं बद्धतया विदुः ॥ ६४ ॥ ❀ ❀ लोकान् कालयानश्चालयन् विकर्षसि संहरसि ॥ ६५ ॥ ❀ ❀ इति लोकप्रसिद्धया इदं कृतमिदं करिष्ये इत्येवंभूतया कृत्यचिन्तया ॥ ६६ ॥ ❀ ❀ तेऽवमानेन त्वत्पराङ्मुखत्वेन व्ययमानकेतनं शरीरं यस्य सः त्वद्भजनं विना वृथायुर्नाशं मन्यमानः कः पण्डितस्त्वत्पदाब्जं विजहाति । यदस्मद्गुरुर्ब्रह्मेति सर्वेषां स्तोतॄणामस्मच्छब्देन ग्रहणं विनोपपत्तिम् उपपत्तिः फलाभिसन्धिस्तां विना यद्वोपपत्तिरर्चनीयत्वयोग्यतान्वेषणं तां विना तस्याः सर्ववेदप्रसिद्धत्वात् अर्चति मनवश्चार्चन्ति विगता शङ्का यस्यां सा विशङ्का भगवत्प्राप्तिस्तया 'अध्ययनेन वसती'तिवत्तृतीया, भगवत्प्राप्त्यर्थमित्यर्थः ॥ ६७ ॥ ❀ ❀ हे ब्रह्मन् ! परमात्मन् ! रोदयतीति रुद्रो मृत्युस्तद्भयाद् भ्रस्तमथ अतस्त्वं गम्यते इति गतिः शरणमसि ॥ ६८-७० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं जगदुपादानत्वमुक्त्वा निमित्तकारणत्वमपि वदेदित्याह—य इति । यो भगवानात्ममायया रजआदिगुणात्मिकया प्रकृत्यपरपर्यायया शक्त्या पुरुरूपप्रकाशनयोग्ययेदं विश्वं ब्रह्मादिरूपेण असृजत्, विष्ण्वादिरूपेण बिभर्ति पालयति, रुद्रादिरूपेण

क्षपयति संहरते च, तं भगवन्तमात्मतन्त्रं स्वतन्त्रं वयं प्रतीमहि जानीम इत्यन्वयः। भूय इति सृष्ट्यादिपरम्पराया अनादित्वं दर्शितम्। मायायाः प्राबल्यं दर्शयति—यदिति। यया मोहितानां प्राणिनां विश्वस्मिंस्त्वत्तो भेदबुद्धिर्भवति, विश्वं च त्वत्तो भिन्नतया सदिवावभातीत्यर्थः। न हि कार्यस्य स्वोपादानाद्भिन्नत्वं भिन्नसत्ताकत्वं वा सम्भवतीति भावः। तर्हि मायायाः प्रबलत्वात् कथं मम स्वतन्त्रतेति शङ्कानिरासार्थम् आत्मदुःस्थयेति, आत्मनि त्वयि मोहादिकर्तुमसमर्थया। अत एव सृष्ट्यादिकर्तृत्वेऽप्यविक्रियः तत्रासक्त्यादिविकाररहित एव भवानित्यर्थः। मायया भगवति स्वकार्यकरणे सामर्थ्याभावे हेतुसूचनाय सम्बोधनं—हे भगवन्निति॥ ६१॥ ❀ ❀ एवं तत्त्वज्ञानस्यापि सत्सङ्गद्वारा भक्त्यधीनत्वात् ये योगिनः युज्यते प्राप्यते परमश्रेयोऽनेनेति योगो भक्तिलक्षणः स विद्यते येषां ते भगवद्भक्ताः श्रद्धान्विताः विश्वासयुक्ताः सन्तः सिद्धये भगवल्लीलाप्रवेशेन परमानन्दप्राप्तये क्रियाकलापैर्ध्यानसेवास्तुतिनमस्कारादिभिः सपरिकरैः क्रियासमूहैरिदं यथावर्णितं पुरुषोत्तमरूपमेव साधु यथा भवति तथा प्रीतिपूर्वकं यजन्ति पूजयन्ति सत्कुर्वन्ति त एव वेदे च तन्त्रे आगमे च कोविदास्तदर्थज्ञा इत्यन्वयः। प्रकारान्तरेण मार्गान्तरे प्रवृत्तास्तु मूर्खा एवेत्येवकारद्वयेन सूचितम्। पुरुषोत्तममनादृत्य केवलं मनोरथेन प्रवृत्तानां परमपुरुषार्थज्ञानमोक्षानन्दानुभवादिकारणभगवद्भक्त्यभावान्नैव तत्फलप्राप्तिः स्यादिति भावः। नन्वेवंरूपस्य भगवतो वैकुण्ठाद्युत्तमलोके रममाणत्वादत्र तद्यजनं कथं सिद्ध्यतीत्याशङ्कायां अन्तर्यामिरूपेण तस्य सर्वत्र विद्यमानत्वं दर्शयन् विशिनष्टि—भूतेति। भूतानि पृथ्व्यादीनि पञ्चदेहारम्भकाणि इन्द्रियाणि च अन्तःकरणं च तैर्जडैः स्वस्वव्यापारे प्रवर्त्तमानैर्लक्ष्यते तत्प्रवर्त्तकचेतनत्वेन ज्ञायते इति तथा तमित्यर्थः॥ ६२॥ ❀ ❀ तर्हि किं तथाभूतो जीव इत्याशङ्क्य सृष्टिप्रकारप्रदर्शनपूर्वकं शरीर एव जीवान्तर्यामिणोर्विभागं दर्शयति—त्वमिति द्वाभ्याम्। आद्यस्त्वमेक एव पुरुषः, कुत एवं यतो बहुभवनहेतुभूता सुप्ता मायाख्या शक्तिर्यस्य सः। पश्चादुत्थितया तया मूलशक्त्या रजस्सत्त्वतमोरूपं शक्तित्रयं विभिद्यते पृथग्भवति, यतो रजआदेर्महान् महत्तत्त्वमहमहङ्कारः खमाकाशः मरुत् पवनः अग्निः वाः जलं धरा पृथ्वी सुरा देवानां देहा ऋषयः ऋषीणां देहाः भूतगणाः अन्येषां सर्वप्राणिनां देहाश्च भवन्ति। एवमिदं सर्वं जगत्त्वं सृजसीत्यर्थः॥ ६३॥ ❀ ❀ एवं स्वशक्त्या माययेदं जरायुजाण्डजस्वेदजोद्भिज्जभेदेन चतुर्विधं सृष्टं पुरं आत्मांशकेन जीवान्तर्यामिभेदेन द्विविधरूपेण भवान् प्रविष्टः। तथाच सूत्रम्—'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति। अथो तस्मात् पुरि शयनाद्देहान्तः सन्तं तं द्विविधमपि पुरुषं विदुः तत्त्वज्ञा जानन्ति। यत्र यः सरघाभिर्मधुमक्षिकाभिः सृष्टं सारघं मधु तद्वत्तुच्छं विषयसुखं हृषीकैरिन्द्रियैरविद्यया वृतः सन् भुङ्क्ते स जीवः। यस्तु तत्राभोक्ता सर्वज्ञो जीवनियन्ता स भगवानिति विवेकः। एतद्दर्शितमेकादशस्कन्धे—'सुपर्णावेतौ सदृशौ सखायौ यदृच्छया कृतनीडौ च वृक्षे। एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान्। आत्मानमन्यं च स वेद विद्वानपिप्पलादो न तु पिप्पलादः। योऽविद्यया युक् स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्तः' इति॥ ६४॥ ❀ ❀ भगवत एव कालरूपेण उपसंहर्तृत्वमपि वक्तव्यमित्याह—स एष इति द्वाभ्याम्। खलु निश्चयार्थः। यस्तु एवं विश्वं सृष्ट्वा तदन्तःप्रविष्टः स एष त्वमेव लोकांश्चतुर्दशभुवनात्मकान् कालयानः इतस्ततश्चालयमानो विनाशं प्रापयमाणो भूतैरेव भूतानि तत्रत्यानि स्थावरजङ्गमात्मकानि विकर्षसि उपसंहरसीत्यन्वयः। एवं करणे सामर्थ्यमाह—अतिचण्डवेग इति। तथापि तव विक्रममज्ञा न जानन्ति यतस्त्वमनुमेयतत्त्वः। एवं सर्वोपसंहारहेतुत्वेन विकर्षसि उपसंहारहेतुरसीत्यन्वयः। विद्वद्भिरनुमेयमेव तत्त्वं स्वरूपं पराक्रमो वा यस्य न प्रत्यक्षतो दृष्टमित्यर्थः। एतदुपपादनार्थं भूतैरित्युक्तम्। यतो भूतैर्जलाग्निवायुव्याघ्रचोरशस्त्रपित्तश्लेष्मादिभिर्द्वारभूतैरेव विकर्षसि, न प्रत्यक्षत इति भावः। चण्डवेगत्वमेव दृष्टान्तेन स्पष्टयति—घनेति। यथा अविषह्यः घनैः सोढुमशक्योऽतिप्रचण्डवेगवान् वायुर्घनानामावलीः इतस्ततः कालयानो विनाशयति तद्वदित्यर्थः॥ ६५॥ ❀ ❀ त्वद्भजनविमुखानां विषयाविष्टचित्तानां मनोरथानपि त्वमेव विनाशयसीत्यपि वक्तव्यमित्याह—प्रमत्तमिति। इतिकृत्यमेवमिदं कर्त्तव्यमेवमिदं कर्त्तव्यमिति चिन्तया उच्चैरतिशयेन प्रमत्तमसावधानं कालादिनिवर्त्तकं त्वत्पुरुषोत्तमस्वरूपस्मरणशून्यं जनमप्रमत्तः सावधानः तत्तत्प्राणिकर्मानुसन्दधानस्त्वम् अन्तकः कालरूपः सहसा अकस्मादेव अभिपद्यसे आक्रमसीत्यन्वयः। इतिकृत्यचिन्तया हेतुगर्भविशेषणं विषयेषु लालसमिति, विषयेषु लालसाऽतिकामना यस्य तमित्यर्थः। तत्तद्विषयप्राप्त्या कामनानिवृत्तावितिकृत्यचिन्ताभावात् सावधानता स्यादिति शङ्कानिरासार्थं विशेषणान्तरं प्रवृद्धलोभमिति, तत्तद्विषयप्राप्तौ सत्यामपि प्रवृद्धो लोभो यस्य तम्। 'लोभस्यान्तं न ययुर्जित्वा भुक्त्वा चैव दिशो दश' इति वचनाल्लोभस्यान्ताभावान्न सावधानता सम्भवतीति भावः। इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम्। इदमस्तीदमपि मे भविष्यति पुनर्धनम्॥ असौ मया हतः शत्रुर्हनिष्ये चापरानपि' इत्यादिमनोरथव्याकुलचित्तस्य कालाभिभवे दृष्टान्तः—क्षुल्लेलिहान इति। यथाऽन्नराशिं दृष्ट्वा मनोरथानुकूलं तत आकृष्य स्वबिलेऽन्नसञ्चयं कुर्वन्तम् अन्नमुखमाखुं मूषकं मध्य एव क्षुधा लेलिहानो द्विजिह्वयौष्ठप्रान्तौ स्पृशन्नहिः सर्पोऽभिपद्यते गिलति तथेत्यर्थः॥ ६६॥ ❀ ❀ अतो यस्ते तव पुरुषोत्तमस्य योऽवमानः अनादरस्तेन व्ययमानं भयात् कम्पमानं केतनं शरीरं यस्य स पण्डितः सर्वं भगवद्विमुखं जगत् कालोपसृष्टं ततो रक्षकं भगवच्चरणारविन्दमेवेति ज्ञानवान् कस्त्वत्पदाब्जं विजह्याति त्यजति? न कोऽपीत्यर्थः। एतेन ये

तत्त्यजन्ति ते मूर्खा आसुरीं योनिमापन्ना दुःखभागिन इति सूचितम् । अत एव कालाद्विनाशशङ्कयाऽस्माकं सर्वेषां रुद्रादीनां गुरुः पितामहत्वेन पूज्यो ब्रह्मापि यच्चरणारविन्दमर्चति स्म तथोपपत्तिं युक्त्या दृढनिश्चयं विनाऽपि पितामहवचनाचारविश्वासेनैव चतुर्दशमनवोऽपि यदर्चन्ति स्मेत्यन्वयः ॥ ६७ ॥ ❀ ❀ स्तोत्रोपसंहारः—अथेति । रुद्रपदं कालकर्मस्वभावाद्युपलक्षणार्थकम् । यस्मात् विश्वं कालरुद्रादिभयेन ध्वस्तं ग्रस्तमथ यस्मान्नोऽस्माकं विपश्चितां कालादिभयनिवर्त्तकं त्वच्चरणागमनमिति जानताम्-अकुतश्चिद्भया न कुतश्चित् कालादितो भयं यस्यामेवम्भूता गतिः शरणं त्वमसीत्यन्वयः । अकुतश्चिद्भयत्वप्रदर्शनार्थं सम्बोधनं हे परमात्मन् कालादिनियन्तः इति । तथात्वेऽपि परिच्छिन्नत्वे सर्वत्र तेन रक्षा न सिद्ध्येदिति शङ्कानिरासार्थं परिपूर्णत्वेन सम्बोधनान्तरं हे ब्रह्मन्निति ॥ ६८ ॥ ❀ ❀ एवं कृपापरवशान्तःकरणो भगवान् रुद्रः प्रचेतसो भगवत्स्तोत्रमुपदिश्य सेतिकर्त्तव्यताके तदभ्यासे तान्नियोजयति-इदमिति त्रिभिः । हे नृपनन्दनाः विशुद्धाः रागादिदोषरहितत्वेन सावधानान्तःकरणाः स्वधर्मम् आहारस्नानहिंसावर्जनादियमनियमपूर्वकभगवत्पूजादि अनुतिष्ठन्तः कुर्वन्तो भगवत्यर्पिताशयाः सन्तः इदं मयोपदिष्टं स्तोत्रं जपतेत्यन्वयः । एवं सति वो युष्माकं भद्रं कल्याणं परमपुरुषार्थसायुज्यं भविष्यतीत्यर्थः । सम्बोधनेन ततः पूर्वं राज्यप्राप्तिप्रजोत्पत्त्यादिकं च भविष्यतीति सूचितम् ॥ ६९ ॥ ❀ ❀ एतदेव विवृणोति-तमिति द्वाभ्याम् । तत्र भगवत्यर्पिताशयत्वविवरणम् । तमेव पूर्वोक्तमात्मानं सर्वान्तर्यामिणं हरिं स्वशरणागतभक्तदुःखहर्त्तारमात्मस्थं स्वस्मिन् स्थितं तथा सर्वभूतेषु स्थावरजङ्गमात्मकेषु चावस्थितम् असकृन्निरन्तरं ध्यायन्त इत्यन्वयः । स्वधर्ममनुतिष्ठन्त इत्येतद्विवृणोति-तमेव भगवन्तं गृणन्तः स्तुवन्तः पूजयध्वमिति ॥ ७० ॥

## भाषानुवाद:

भगवन् ! आपकी माया अनेक प्रकारके रूप धारण करती है । इसीके द्वारा आप इस प्रकार जगत्‌की रचना, पालन और संहार करते हैं जैसे यह कोई सद्वस्तु हो । किन्तु इससे आपमें किसी प्रकारका विकार नहीं आता । मायाके कारण दूसरे लोगोंमें ही भेदबुद्धि उत्पन्न होती है, आप परमात्मापर वह अपना प्रभाव डालनेमें असमर्थ होती है । आपको तो हम परम स्वतन्त्र ही समझते हैं ॥ ६१ ॥ ❀ ❀ आपका स्वरूप पञ्चभूत, इन्द्रिय और अन्तःकरणके प्रेरकरूपसे उपलक्षित होता है । जो कर्मयोगी पुरुष सिद्धि प्राप्त करनेके लिये तरह-तरहके कर्मोंद्वारा आपके इस सगुण साकार स्वरूपका श्रद्धापूर्वक पूजन करते हैं, वे ही वेद और शास्त्रोंके सच्चे मर्मज्ञ हैं ॥ ६२ ॥ ❀ ❀ प्रभो ! आप ही अद्वितीय आदिपुरुष हैं । सृष्टिके पूर्व आपकी मायाशक्ति सोयी रहती है । फिर उसीके द्वारा सत्त्व, रज और तमरूप गुणोंका भेद होता है और इसके बाद उन्हीं गुणोंसे महत्तत्त्व, अहङ्कार, आकाश, वायु, अग्नि, जल पृथ्वी, देवता ऋषि और समस्त प्राणियोंसे युक्त इस जगत्‌की उत्पत्ति होती है ॥ ६३ ॥ ❀ ❀ फिर आप अपनी ही मायाशक्तिसे रचे हुए इन जरायुज, अण्डज, स्वेदज और उद्भिज्जभेदसे चार प्रकारके शरीरमें अंशरूपमें प्रवेश कर जाते हैं और जिस प्रकार मधुमक्खियाँ अपने ही उत्पन्न किये हुए मधुका आस्वादन करती हैं, उसी प्रकार वह आपका अंश उन शरीरोंमें रहकर इन्द्रियोंके द्वारा इन तुच्छ विषयोंको भोगता है । आपके उस अंशको ही पुरुष या जीव कहते हैं ॥ ६४ ॥ ❀ ❀ प्रभो ! आपका तत्त्वज्ञान प्रत्यक्षसे नहीं अनुमानसे होता है प्रलयकाल उपस्थित होनेपर कालस्वरूप आप ही अपने प्रचण्ड एवं असह्य वेगसे पृथ्वी आदि भूतोंको अन्य भूतोंसे विचलित कराकर समस्त लोकोंका संहार कर देते हैं-जैसे वायु अपने असहनीय एवं प्रचण्ड झोंकोंसे मेघोंके द्वारा ही मेघोंको तितर-बितर करके नष्ट कर डालती है ॥ ६५ ॥ ❀ ❀ भगवन् ! यह मोहग्रस्त जीव प्रमादवश हर समय इसी चिन्तामें रहता है कि 'अमुक कार्य करना है' इसका लोभ बढ़ गया है और इसे विषयोंकी ही लालसा बनी रहती है । किन्तु आप सदा ही सजग रहते हैं; भूखसे जीभ लपलपाता हुआ सर्प जैसे चूहेको चट कर जाता है, उसी प्रकार आप अपने कालस्वरूपसे उसे सहसा लील जाते हैं ॥ ६६ ॥ ❀ ❀ आपकी अवहेलना करनेके कारण अपनी आयुको व्यर्थ माननेवाला ऐसा कौन विद्वान् होगा, जो आपके चरणकमलोंको बिसारेगा ? इनकी पूजा तो कालकी आशङ्कासे ही हमारे पिता ब्रह्माजी और स्वायम्भुव आदि चौदह मनुओंने भी बिना कोई विचार किये केवल श्रद्धासे ही की थी ॥ ६७ ॥ ❀ ❀ ब्रह्मन् ! इस प्रकार सारा जगत् रुद्ररूप कालके भयसे व्याकुल है । अतः परमात्मन् ! इस तत्त्वको जाननेवाले हमलोगोंके तो इस समय आप ही सर्वथा भयशून्य आश्रय हैं ॥ ६८ ॥ ❀ ❀ राजकुमारो ! तुमलोग विशुद्ध भावसे स्वधर्मका आचरण करते हुए भगवान्‌में चित्त लगाकर मेरे कहे हुए इस स्तोत्रका जप करते रहो; भगवान् तुम्हारा मङ्गल करेंगे ॥ ६९ ॥ ❀ ❀ तुमलोग अपने अन्तःकरणमें स्थित उन सर्वभूतान्तर्यामी परमात्मा श्रीहरिका ही बार-बार स्तवन और चिन्तन करते हुए पूजन करो ॥ ७० ॥

**योगादेशमुपासाद्य धारयन्तो मुनिव्रताः । समाहितधियः सर्व एतदभ्यसतादृताः ॥ ७१ ॥**

**इदमाह पुरास्माकं भगवान् विश्वसृक्पतिः । भृग्वादीनामात्मजानां सिसृक्षुः संसिसृक्षताम् ॥ ७२ ॥**

ते वयं नोदिताः सर्वे प्रजासर्गे प्रजेश्वराः । अनेन ध्वस्ततमसः सिसृक्ष्मो विविधाः प्रजाः ॥ ७३ ॥
अथेदं नित्यदा युक्तो जपन्नवहितः पुमान् । अचिराच्छ्रेय आप्नोति वासुदेवपरायणः ॥ ७४ ॥
श्रेयसामिह सर्वेषां ज्ञानं निःश्रेयसं परम् । सुखं तरति दुष्पारं ज्ञाननौर्व्यसनार्णवम् ॥ ७५ ॥
य इमं श्रद्धया युक्तो मद्गीतं भगवत्स्तवम् । अधीयानो दुराराध्यं हरिमाराधयत्यसौ ॥ ७६ ॥
विन्दते पुरुषोऽमुष्माद्यद्यदिच्छत्यसत्वरन् । मद्गीतगीतात्सुप्रीताच्छ्रेयसामेकवल्लभात् ॥ ७७ ॥
इदं यः कल्य उत्थाय प्राञ्जलिः श्रद्धयान्वितः । शृणुयाच्छ्रावयेन्मर्त्यो मुच्यते कर्मबन्धनैः ॥ ७८ ॥
गीतं म[1]येदं नरदेवनन्दनाः परस्य पुंसः परमात्मनः स्तवम् ।
जपन्त एकाग्रधियस्तपो महत् चरध्वमन्ते तत आप्स्यथेप्सित[2]म् ॥ ७९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे रुद्रगीतं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

अन्वयः—मुनिव्रताः समाहितधियः आदृताः सर्वे योगादेशम् एतत् उपासाद्य धारयन्तः अभ्यसत ॥ ७१ ॥ ❀ ❀ सिसृक्षुः भगवान् विश्वसृक्पतिः संसिसृक्षताम् आत्मजानाम् भृग्वादीनाम् अस्माकम् पुरा इदम् आह ॥ ७२ ॥ ❀ ❀ ते सर्वे प्रजासर्गे नोदिताः प्रजेश्वराः वयम् अनेन ध्वस्ततमसः विविधाः प्रजाः सिसृक्ष्मः ॥ ७३ ॥ ❀ ❀ अथ अवहितः युक्तः इदम् नित्यदा जपन् पुमान् वासुदेवपरायणः अचिरात् श्रेयः आप्नोति ॥ ७४ ॥ ❀ ❀ इह ज्ञानम् सर्वेषाम् श्रेयसाम् परम् निःश्रेयसम् ज्ञाननौः दुष्पारम् व्यसनार्णवम् सुखम् तरति ॥ ७५ ॥ ❀ ❀ यः श्रद्धया युक्तः मद्गीतम् इमम् भगवत्स्तवम् अधीयानः असौ दुराराध्यम् हरिम् आराधयति ॥ ७६ ॥ ❀ ❀ असत्वरन् पुरुषः मद्गीतगीतात् सुप्रीतात् एकवल्लभात् अमुष्मात् श्रेयसाम् यत् यत् इच्छति विन्दते ॥ ७७ ॥ ❀ ❀ यः मर्त्यः कल्ये उत्थाय प्राञ्जलिः श्रद्धया अन्वितः इदम् शृणुयात् श्रावयेत् कर्मबन्धनैः मुच्यते ॥ ७८ ॥ ❀ ❀ नरदेवनन्दनाः इदम् मया गीतम् परस्य पुंसः परमात्मनः स्तवम् एकाग्रधियः जपन्तः महत् तपः चरध्वम् ततः अन्ते ईप्सितम् आप्स्यथ ॥ ७९ ॥

इति चतुर्विंशोऽध्यायः ॥ २४ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

योगादेशं नामैतत्स्तोत्रमुपासाद्य पाठतः प्राप्य मनसा धारयंतोऽभ्यासेन जपंतः अभ्यसत ॥ ७१ ॥ ❀ ❀ विश्वसृजां पतिर्ब्रह्मा ॥ ७२ ॥ ❀ ❀ सिसृक्ष्मः सृष्टवंतः ॥ ७३ ॥ ❀ ❀ युक्त एकाग्रचित्तः ॥ ७४ ॥ ❀ ❀ ज्ञानमेव नौर्यस्य ॥ ७५ ॥ ❀ ❀ योऽधीयानो भवत्यसौ हरिमाराधयति ॥ ७६ ॥ ❀ ❀ अमुष्माद्धरेः असत्वरन् स्थिरः सन् मद्गीतं स्तोत्रं तेन गीतात्स्तुतात यद्यदिच्छति तत्तद्विंदते । एक एव वल्लभः प्रिय आश्रयस्तस्मात् ॥ ७७ ॥ ❀ ❀ कल्ये उषसि ॥ ७८ ॥ ❀ ❀ तपश्चरत तपसोंते ईप्सितं प्राप्स्यथ ॥ ७९ ॥

इति श्रीभा० म० चतुर्थस्कन्धे टीकायां चतुर्विंशोऽध्यायः ॥ २४ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इदं स्तोत्रम् ॥ ७२–७३ ॥ ❀ ❀ अथातः वासुदेवैकनिष्ठः ॥ ७४ ॥ ❀ ❀ ज्ञानं प्रस्तुतत्वाद्भागवतमेव ज्ञानपदाभ्यां ग्राह्यम् । प्रतिपादितं चैतत् 'कृच्छ्रो महानिह' इत्यत्र । व्यसनार्णवं संसारम् ॥ ७५ ॥ ❀ ❀ अत एव भक्तिमेवाह य इति । आराधयति वशीकरोति ॥ ७६–७७ ॥ ❀ ❀ त्वरया सह वर्तत इति सत्वरस्तमिवाचरतीति सत्वरति सत्वरतीति सत्वरन् न सत्वरन्नसत्वरन् । आचारक्विबन्ताच्छतृप्रत्यये नञा समासे चेदं रूपं सिध्यतीति ॥ ७८–७९ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥

## श्रीमद्वीरराघवव्याख्या

योगादेशं नामैतत्स्तोत्रमासाद्य पाठतः प्राप्य मनसा धारयन्तः समाहितचित्ताः मौनव्रतनिष्ठाः आदृता आदरयुक्ताः सर्वे यूयमभ्यसत ॥७१॥ ❀ ❀ स्तोत्रस्य सांप्रदायिकत्वमाह–इदमिति । विश्वसृजां मरीच्यादीनां पतिर्विश्वसृड् ब्रह्मा आत्मजानां स्रष्टुमिच्छतां भृग्वादीनामस्माकं पुरा आह उपदिष्टवान् ॥ ७२ ॥ ❀ ❀ ते उपदिष्टस्तोत्रा वयं प्रजासर्गे निमित्ते प्रचोदिताः अनेन स्तोत्रेण निरस्ताज्ञाना विविधाः प्रजाः सिसृक्ष्मः विसृष्टवन्तः ॥ ७३ ॥ ❀ ❀ पुमान्समाहितचित्तो वासुदेवः परमयनं

१. प्रा० पा०—मयैतन्नर० । २. प्रा० पा०—प्सितान् ।

प्राप्यं प्रापकमाधारश्च यस्य तथाभूतः इदं नित्यदा जपन्नाशु स्वसमीहितं श्रेयः प्राप्नोति ।।७४।। ❀ ❀ श्रेयसामपि मध्ये ज्ञानस्यैव निरतिशयपुरुषार्थरूपमोक्षसाधनत्वेन निरतिशयश्रेयस्त्वं वदन् तत्साधनतामस्य स्तोत्रस्याह श्रेयसामिति द्वाभ्याम् । सर्वेषामपि श्रेयसां मध्ये ज्ञानं भगवद्भक्त्यात्मकं ज्ञानमेव निःश्रेयसं नितरां श्रेयः स्मृतं, कुतः ज्ञानिनो भगवद्भक्तियाथात्म्यज्ञानवन्तः उपायान्तरैर्दुस्तरमपि व्यसनार्णवं दुःखसागरात्मकं संसारं तरन्ति ।। ७५ ।। ❀ ❀ यः पुमान् मया गीतमिदं स्तोत्रं श्रद्धया युक्तः अधीयान अध्ययनं कुर्वाणः उपायान्तरैर्दुस्तराराध्यमपि हरिमाराधयति हरिविषयां भक्तिं लभते इत्यर्थः ।। ७६ ।। ❀ ❀ ततो मया यद्गीतं तस्य गीतात्-भावे क्तः-गानाद्धेतोः सुप्रीताच्छ्रेयसां सर्वपुरुषार्थानां वल्लभात्प्रभोरमुष्माद्भक्ताराधितात्परमपुरुषायच्छ्रेयः इच्छति असत्वरन्स्थिरः सन् तत्सर्वं विन्दते लभते ।। ७७ ।। ❀ ❀ यः पुमानिदं कल्य उपसि उत्थाय प्रांजलिः शृणुयादन्यान् श्रावयेद्वा स मर्त्यः सर्वैः कर्मरूपैः बंधनैर्मुच्यते मुक्तो भवति ।। ७८ ।। ❀ ❀ हे नरदेवनंदनाः ! मया गीतमिदं परमपुरुषस्य स्तवं जपन्तः समाहितचित्ताः तपश्चरध्वं कुरुध्वम् , अन्ते तपसोऽन्ते तत्तस्मादीप्सितमवाप्स्यथ ।। ७९ ।।

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्यकृतायां श्रीभागवतचंद्रचंद्रिकायां चतुर्विंशोऽध्यायः ।। २४ ।।

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

श्रद्धां जनयति । इदमाहेति । विश्वसृक्पतिर्ब्रह्मा ।। ७२ ।। ❀ ❀ नेदं श्रवणमात्रं किन्त्वनुभवसिद्धमित्याह ते वयमिति ।। ७३ ।। ❀ ❀ न केवलमिदं युष्माकमेवान्येषामपि श्रेयस्करमित्याह । अथेति ।। ७४ ।। ❀ ❀ तत्किं श्रेय इति तदाह श्रेयसामिति । श्रेयसामस्यैव प्रधानश्रेयस्त्वमित्याह । सुखं तरतीति ।। ७५ ।। ❀ ❀ न केवलमनेनापवर्गिकं फलं किन्त्वपेक्षितं चेदैहिकमपि स्यादित्याह य इदमिति ।। ७६ ।। ❀ ❀ मद्गीतमित्यनेन गान्धर्वं स्तवमिति अस्मत्सेविनो मूढा इति द्योतनाय श्रेयसामित्युक्तम् ।। ७७ ।। ❀ ❀ फलविशेषार्थं कालविशेषमाह कल्य इति । कल्ये उषसि ।। ७८ ।। ❀ ❀ श्रद्धातिशयजननार्थं पुनरुक्तं करोति गीतं मयेति । एकाग्रधियः ध्येयादनन्यविषया धीर्येषान्ते तथोक्ताः अग्रे जगदादावेक एव यः स एकाग्रस्तद्धरावेव धीर्येषां ते तथेति वा अन्ते देहान्ते युष्मद्धितायेदमुक्तमिति प्रकाशनाय चरध्वमित्यात्मनेपदप्रयोगः ।। ७९ ।।

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां चतुर्विंशोऽध्यायः ।। २४ ।।

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सिसृक्षम इति सविसर्गः पाठः । सिसृक्ष्मेति क्वचित् ।। ७३-७४ ।। ❀ ❀ तत्र श्रेयो ज्ञानमेवेत्यभिप्रेत्य ज्ञानं स्तौति श्रेयसामिति । ज्ञानमत्र भागवतमेव ।। ७५-७६ ।। ❀ ❀ असत्वरन्निति क्रियाचारार्थः ।। ७७-७८ ।। ❀ ❀ तपश्चात्र भगवदाराधनलक्षणमेव ।। ७९ ।।

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे चतुर्विंशोऽध्यायः ।। २४ ।।

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

योगादेशं नामैतत् स्तोत्रमुपासाद्य पाठतः प्राप्य अभ्यासेन जपन्तः ।। ७१ ।। ❀ ❀ अस्माकमस्मान् ।। ७२-७३ ।। अथ अतः ।। ७४ ।। ❀ ❀ ज्ञानं प्रस्तुतत्वात् भगवद्रूपगुणैश्वर्यज्ञानमेव सुखं तरतीति ज्ञाननौरित्याभ्यां कैवल्योपयोगिज्ञानस्य तु 'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसामि'ति 'कृच्छ्रो महानिह भवार्णवमप्लवेशां, षड्वर्गनक्रमसुखेन तितीर्षन्ती'त्याभ्यां दुःखबहुलत्वस्याप्लववत्वस्य च श्रवणात् ।। ७५ ।। ❀ ❀ अत एव भक्तिमेवाह य इममिति । योऽधीयानो भवेदसौ असत्वरन्नित्याचारकिंवन्तं, स्थिर इत्यर्थः ।। ७६ ।। ❀ ❀ मद्गीतगीतात् मया गीतोऽयं स्तवो यदि गीतः स्यात्तदा अमुष्मात् शोभनं प्रीणातीति सुप्रीतस्तस्मात् स्तव एवायं तं प्रति प्रीतो भवतीत्यर्थः ।। ७७-७८ ।। ❀ ❀ ईप्सितमाप्स्यथेति तेषां सकामत्वं व्यञ्जितम् ।। ७९ ।।

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । चतुर्विंशश्चतुर्थस्य सङ्गतः सङ्गतः सताम् ।। २४ ।।

## श्रीमच्छुकदेवकृतः सिद्धांतप्रदीपः

यूयं सर्वे योगादेशं योगादेशनामकमेतत्स्तोत्रमुपासाद्य पाठतः प्राप्य बुद्ध्या धारयन्तः मुनिव्रताः मननशीलाः समाहितधियः सन्तः अभ्यसत ।। ७१ ।। ❀ ❀ सिसृक्षुः प्रजाः स्रष्टुमिच्छुः विश्वसृजां पतिर्ब्रह्मा संसिसृक्षतां भृग्वादीनामात्मजानामस्माकं पुरा इदं स्तोत्रमाह ।। ७२ ।। ❀ ❀ अनेन स्तोत्रेण ध्वस्तं तमोऽज्ञानं येषां ते सिसृक्षमः सृष्टवन्तः ।। ७३-७४ ।। ❀ ❀ सर्वेषां दानव्रततपोयज्ञादीनां मध्ये ज्ञानं भगवत्स्वरूपगुणादिबोधः श्रेष्ठं निःश्रेयसम् । अतः ज्ञानं नौर्यस्य सः व्यसनार्णवं संसारं दुष्पारमपि सुखं तरति ।।७५-७६।। ❀ ❀ असत्वरन् स्थिरीभूतः सन् पुरुषः यद्यदिच्छति तत्तत् अमुष्मान् भगवतो विन्दति । कथम्भूतात् मद्गीतस्य गीतात् गानात् सुप्रीतात् श्रेयसां पुरुषार्थानामेको मुख्यो वल्लभस्तस्मात् ।। ७७ ।। ❀ ❀ कल्ये प्रातः ।।७८।। इदं परमात्मनः स्तवं जपन्तो महत्तपश्चरध्वम् , अन्ते तपसोऽन्ते ईप्सितमाप्स्यथ ।। ७९ ।।

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे चतुर्विंशाऽध्यायार्थप्रकाशः ।। २४ ।।

**गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी**

इदं जपतेत्येतद्विवृणोति–योगादेशमिति। योगादेशं नामेदं स्तोत्रमुपासाद्य पठतो मत्तः प्राप्य मनसा धारयन्तो मुनिव्रताः मुनीनां व्रतान्याहारनियमादीनि येषां ते तथा समाहितधियः सावधानान्तःकरणा आदृताः सादराश्च सन्तो भवन्तः सर्वे एतदभ्यसत अभ्यासेन जपतेत्यन्वयः। तत्र स्वर्मानुष्ठानस्यैव विवरणं समाहितधिय इति ज्ञेयम्॥ ७१॥ ❀ ❀ इदं स्तोत्रं न मया स्वकल्पनया कल्पितं किन्तु ब्रह्मवचनादवगतमिति तेषां विश्वासार्थमाह–इदमिति। इदं स्तोत्रं पुरा सृष्ट्यादावस्माकं भृग्वादीनां आत्मजानां विश्वसृजां पतिः मुख्यो ब्रह्माऽऽहेत्यन्वयः। कथने हेतुमाह–सिसृक्षुः संसिसृक्षतामिति। यतोऽस्मद्द्वारा प्रजाविसर्जनेच्छुः अस्य च प्रजाविसर्गहेतुत्वमतः कथितवानित्यर्थः। ननु ब्रह्मण एतज्ज्ञानं कुत इत्यत आह–भगवानिति, भगवत्कृपयोपदेशं विनैव सर्ववेदमन्त्रविषयकज्ञानवानित्यर्थः॥ ७२॥ ❀ ❀ एतदभ्यासस्य फलमप्यस्माकं जातमित्याह–ते इति। ते सर्वे प्रजेश्वरा वयं ब्रह्मणा प्रजासर्गे नोदिताः अनेन स्तोत्राभ्यासेन ध्वस्ततमसो निरस्तसर्वदोषप्रतिबन्धाः सन्तो विविधा नानाप्रकाराः प्रजाः सिसृक्ष्मः सृष्टवन्त इत्यन्वयः॥ ७३॥ ❀ ❀ अथ तस्मादिदानीमपि यः पुमान् युक्तः प्रयत्नवान् अवहितः सावधानो निर्जितकार्यकरणसन्धानत्वेन विषयानासक्तो वासुदेव एव परं केवलं अयनमाश्रयो यस्य तथाभूतः सन्नित्यदा निरन्तरमिदं स्तोत्रं जपन् भवति सोऽचिरादल्पेनैव कालेन श्रेयः धर्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थेषु यद्वाञ्छितं तत्फलमाप्नोतीत्यन्वयः॥ ७४॥ ❀ ❀ श्रेय आप्नोतीति सामान्योक्त्या धर्मादीनामागततुल्यत्वशङ्कानिवृत्त्यर्थं मोक्षस्योत्कृष्टत्वं सूचयंस्तत्रापि 'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत। दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः' इति भगवदुक्तभगवद्भक्तत्वलक्षणमोक्षस्यैव श्रैष्ठ्यं दर्शयति–श्रेयसामिति। इह भागवते श्रेयसां धर्मार्थकाममोक्षाख्यानां सर्वेषां अवान्तरानेकभेदभिन्नानां मध्ये ज्ञानं भगवल्लीलायां प्रवेशेन तत्सेवायां स्थित्वा तत्परमानन्दानुभवस्तल्लक्षणमेव परं सर्वोत्तमं निःश्रेयसं फलमित्यन्वयः। कुतोऽस्य सर्वोत्तमत्वमित्यपेक्षायां मोक्षान्तरस्य संसारदुःखनिवर्त्तकत्वेऽप्येवं परमानन्दाजनकत्वात्, अस्य तूभयहेतुत्वादित्यभिप्रेत्याह–सुखमिति। ज्ञानं पूर्वोक्तलक्षणं नौर्यस्य स दुष्पारमपि प्रकारान्तरेण दुःखेन तर्तुं योग्यमपि सुखं यथा भवति तथा परमानन्दानुभवपूर्वकं व्यसनार्णवं दुःखसागरं संसारं तरतीत्यन्वयः। न च यथावर्णितस्य ज्ञानस्य नियमेन देहपातानन्तरभावित्वमिति शङ्कनीयं 'नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः। येऽन्योन्यतो भागवताः प्रसज्य सभाजयन्ते मम पौरुषाणि॥ पश्यन्ति ते मे रुचिराण्यम्ब सन्तः प्रसन्नवक्त्रारुणलोचनानि। रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदन्ति' इतीहापि तत्प्राप्तेर्भगवतैव दर्शितत्वात्॥ ७५॥ ❀ ❀ नन्वथेदमिति द्वाभ्यामेतज्जपस्य फलमुक्तं तद्भगवत्प्रसादं विना कथं स्यादित्याशङ्क्य एतज्जपस्य भगवत्प्रसादहेतुत्वात्, प्रसन्नात्तत एव फलप्राप्तिरिति दर्शयति–य इति द्वाभ्याम्। यः पुमान् श्रद्धया युक्तो मद्गीतमिमं स्तवमधीयानो भवत्यसौ प्रकारान्तरेण दुराराध्यं दुःखेनैव प्रसादयितुं शक्यमपि हरिं सुखेनैवाराधयति प्रसादयतीत्यन्वयः॥ ७६॥ ❀ ❀ तथाच मद्गीतगीतात् मया योऽयं भवद्भ्यो गीत उपदिष्टः स्तवस्तेन गीतात् स्तुतात् अत एव सुप्रीतादमुष्मात् हरेः सकाशात् असौ स्तोता पुरुषो यद्यत्फलमिष्टमिच्छति तत्तद्विन्दते प्राप्नोतीत्यन्वयः। हरेः सर्वदाने योग्यतां दर्शयंस्तं विशिनष्टि– श्रेयसामिति, श्रेयसां धर्मादीनामेक एव वल्लभः प्रियः आश्रयो यस्तस्मादित्यर्थः। यद्यप्यचिराच्छ्रेयः प्राप्नोतीत्युक्तत्वात् स्तोत्रस्य शीघ्रमेव फलहेतुत्वं तथापि कदाचिद्भक्तस्य धैर्यविश्वासादिपरीक्षार्थं भगवानेव फलदाने विलम्बं कुर्यात्तदा चित्ते उद्वेगो न कार्य इत्यभिप्रेत्याह–असत्त्वरन्निति। अत एव प्रचेतसां फले विलम्बो जात इति ज्ञेयम्॥ ७७॥ ❀ ❀ एवमेतज्जपाभ्यासस्य फलमुक्त्वा साधारणतः श्रवणकीर्त्तनयोः फलं दर्शयति–य इति। यो मर्त्यो मनुष्यः कल्ये उषसि उत्थाय श्रद्धयाऽन्वितः प्राञ्जलिः संयोजिताञ्जलिः सन्निदं स्तोत्रं शृणुयाच्छ्रावयेद्वा सोऽपि कर्मलक्षणैर्बन्धनैः संसारहेतुभिर्विमुच्यते इत्यन्वयः॥ ७८॥ ❀ ❀ यस्मादिदं भगवत्प्रसादद्वारा सर्वफलसाधकमतो हे नरदेवनन्दनाः यदिदं मया परस्य पुंसः पुरुषोत्तमस्य स्तवं गीतं भवद्भ्यः उपदिष्टं तत् एकाग्रधियः एकस्मिन् भगवत्येवाग्रा समर्पिता धीर्यैस्तथाभूताः सन्तो यूयं जपन्तो महत्तपश्चरध्वं चरत। अन्ते तपसः परिपाकदशायां ततो भगवत ईप्सितं मनोवाञ्छितं फलमाप्स्यथेत्यर्थः। न च शङ्कनीयं सोऽस्मत्तपश्चर्यादि कथं ज्ञास्यति येन फलं दास्यतीति, अन्तर्यामित्वादित्यभिप्रेत्य विशिनष्टि–परमात्मन इति॥ ७९॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे मोक्षनिरूपणे। चतुर्विंशो गतो वृत्तिसाधनस्य निरूपकः॥ ३॥

**भाषानुवादः**

मैंने तुम्हें यह योगादेश नामका स्तोत्र सुनाया है। तुमलोग इसे मनसे धारणकर मुनिव्रतका आचरण करते हुए इसका एकाग्रतासे आदरपूर्वक अभ्यास करो॥ ७१॥ ❀ ❀ यह स्तोत्र पूर्वकालमें जगद्विस्तारके इच्छुक प्रजापतियोंके पति भगवान् ब्रह्माजीने प्रजा उत्पन्न करनेकी इच्छावाले हम भृगु आदि अपने पुत्रोंको सुनाया था॥ ७२॥ ❀ ❀ जब हम प्रजापतियोंको

प्रजाका विस्तार करनेकी आज्ञा हुई, तब इसीके द्वारा हमने अपना अज्ञान निवृत्त करके अनेक प्रकारकी प्रजा उत्पन्न की थी ॥ ७३ ॥ ❀ ❀ अब भी जो भगवत्परायण पुरुष इसका एकाग्र चित्तसे नित्यप्रति जप करेगा, उसका शीघ्र ही कल्याण हो जायगा ॥ ७४ ॥ ❀ ❀ इस लोकमें सब प्रकारके कल्याणसाधनोंमें मोक्षदायक ज्ञान ही सबसे श्रेष्ठ है। ज्ञान-नौकापर चढ़ा हुआ पुरुष अनायास ही इस दुस्तर संसारसागरको पार कर लेता है ॥ ७५ ॥ ❀ ❀ यद्यपि भगवान्‌की आराधना बहुत कठिन है—किन्तु मेरे कहे हुए इस स्तोत्रका जो श्रद्धापूर्वक पाठ करेगा, वह सुगमतासे ही उनकी प्रसन्नता प्राप्त कर लेगा ॥ ७६ ॥ ❀ ❀ भगवान् ही सम्पूर्ण कल्याणसाधनोंके एकमात्र प्यारे—प्राप्तव्य हैं। अतः मेरे गाये हुए इस स्तोत्रके गानसे उन्हें प्रसन्न करके वह उनसे जो कुछ चाहेगा, तत्काल प्राप्त कर लेगा ॥ ७७ ॥ ❀ ❀ जो पुरुष उषःकालमें उठकर इसे श्रद्धापूर्वक हाथ जोड़कर सुनता या सुनाता है, वह सब प्रकारके कर्मबन्धनोंसे मुक्त हो जाता है ॥ ७८ ॥ ❀ ❀ राजकुमारो! मैंने तुम्हें जो यह परमपुरुष परमात्माका स्तोत्र सुनाया है, इसे एकाग्रचित्तसे जपते हुए तुम महान् तपस्या करो। तपस्या पूर्ण होनेपर इसीसे तुम्हें अभीष्ट फल प्राप्त हो जायगा ॥ ७९ ॥

इति चतुर्विंशोऽध्यायः ॥ २४ ॥



# अथ पञ्चविंशोऽध्यायः

**मैत्रेय उवाच**

इति सन्दिश्य भगवान् बार्हिषदैरभिपूजितः । पश्यतां राजपुत्राणां तत्रैवान्तर्दधे हरः ॥ १ ॥
रुद्रगीतं भगवतः स्तोत्रं सर्वे प्रचेतसः । जपन्तस्ते तपस्तेपुर्वर्षाणामयुतं जले ॥ २ ॥
प्राचीनबर्हिषं क्षत्तः कर्मस्वासक्त[1]मानसम् । नारदोऽध्यात्मतत्त्वज्ञः कृपालुः प्रत्यबोधयत् ॥ ३ ॥
श्रेयस्त्वं कतमद्राजन् कर्मणाऽऽत्मन ईहसे । दुःखहानिः सुखावाप्तिः श्रेयस्तन्नेह [2]चेष्यते ॥ ४ ॥

**राजोवाच**

न जानामि महाभाग परं कर्मापविद्धधीः । ब्रूहि मे विमलं ज्ञानं येन मुच्येय कर्मभिः ॥ ५ ॥
गृहेषु कूटधर्मेषु पुत्रदारधनार्थधीः । न परं विन्दते मूढो भ्राम्यन् संसारवर्त्मसु ॥ ६ ॥

**नारद उवाच**

भो भोः प्रजापते राजन् पशून् पश्य त्वयाध्वरे । संज्ञापिताञ्जीवसङ्घान्निर्घृणेन सहस्रशः ॥ ७ ॥
एते त्वां सम्प्रतीक्षन्ते स्मरन्तो वैशसं तव । सम्परेतमयःकूटैश्छिन्दन्त्युत्थितमन्यवः ॥ ८ ॥
अत्र ते कथयिष्येऽमुमितिहासं पुरातनम् । पुरञ्जनस्य चरितं निबोध गदतो मम ॥ ९ ॥
आसीत्पुरञ्जनो नाम राजा राजन् बृहच्छ्रवाः । तस्याविज्ञातनामाऽऽसीत्सखाविज्ञातचेष्टितः ॥ १० ॥

अन्वयः—इति संदिश्य बार्हिषदैः अभिपूजितः भगवान् हरः राजपुत्राणाम् पश्यताम् तत्र एव अंतर्दधे ॥ १ ॥ ❀ ❀ ते सर्वे प्रचेतसः जले रुद्रगीतम् भगवतः स्तोत्रम् जपन्तः वर्षाणाम् अयुतम् तपः तेपुः ॥ २ ॥ ❀ ❀ क्षत्तः अध्यात्मतत्त्वज्ञः कृपालुः नारदः कर्मसु आसक्तमानसम् प्राचीनबर्हिषम् प्रत्यबोधयत् ॥ ३ ॥ ❀ ❀ राजन् त्वम् कर्मणा आत्मनः कतमत् श्रेयः ईहसे दुःखहानिः सुखावाप्तिः श्रेयः तत् इह न इष्यते च ॥ ४ ॥ ❀ ❀ महाभाग कर्मापविद्धधीः परम् न जानामि मे विमलम् ज्ञानम् ब्रूहि येन कर्मभिः मुच्येय ॥ ५ ॥ ❀ ❀ कूटधर्मेषु गृहेषु पुत्रदारधनार्थधीः संसारवर्त्मसु भ्राम्यन् मूढः परम् न विन्दते ॥ ६ ॥ ❀ ❀ भो भोः प्रजापते राजन् निर्घृणेन त्वया अध्वरे संज्ञापितान् सहस्रशः जीवसंघान् पशून् पश्य ॥ ६ ॥ ❀ ❀ तव वैशसम् स्मरंतः एते त्वाम् संपरेतम् संप्रतीक्षंते उत्थितमन्यवः अयःकूटैः छिंदंति ॥ ८ ॥ ❀ ❀ अत्र ते अमुम् पुरातनम् इतिहासम् कथयिष्ये मम गदतः पुरञ्जनस्य चरितम् निबोध ॥ ६ ॥ ❀ ❀ राजन् बृहच्छ्रवाः पुरञ्जनो नाम राजा आसीत् तस्य अविज्ञातचेष्टितः अविज्ञातनामा सखा आसीत् ॥ १० ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

प्रचेतस्सु तपस्यत्सु तत्पित्रे नारदो घृणी । प्राचीनबर्हिषेऽध्यात्मं पारोक्ष्येणाह पंचभिः ॥ (१) ॥
पुरंजनकथाव्याजात्पंचविंशे तु नारदः । आत्मनो बुद्धिसंगेन विविधामाह संसृतिम् ॥ (२) ॥
प्रचेतस्सु तपस्तीव्रं तप्यमानेषु नारदः । पुरं जनकथाकूटं प्राह प्राचीनबर्हिषे ॥ (३) ॥

प्रचेतस्सु तपश्चरत्सु नारदः प्राचीनबर्हिषं पुरंजनकथाकूटेन बोधितवान् । अतः प्रचेतसां कथामसमाप्यैव तत्पितुर्वृत्तमाह प्राचीनबर्हिषमिति ॥ ३ ॥ ❀ ❀ हे क्षत्तः श्रेयः फलमीहसे इच्छसि इह कर्मणि तदुभयं नेष्यते विचारकैः ॥ ४ ॥ ❀ ❀

---

१. प्रा० पा०—चेतसम् । २. प्रा० पा०—इष्यते ।

परं श्रेयो मोक्षम्। कर्मभिरपविद्धा विक्षिप्ता धीर्यस्य ॥ ५ ॥ ❁ ❁ किं च गृहेषु स्थितः पुत्रादिष्वेव पुरुषार्थधीर्यस्य ॥ ६ ॥ ❁ ❁ कर्मफलेषु वैराग्यमुत्पाद्य ब्रह्मविद्यामुपदेष्टुं योगानुभावेन यज्ञपशून्प्रत्यक्षं प्रदर्शयाह। भो भो इति। पशुरूपाञ्जीवसंज्ञान् संज्ञापितान्मारितान् ॥ ७ ॥ ❁ ❁ एते त्वां संपरेतं मृतं संप्रतीक्षंते वैशसं त्वत्कृतां पीडां स्मरंतः ततश्चायःकूटैर्लोहयंत्रमयैः शृंगैश्छिंदंति छेत्स्यंति ॥ ८ ॥ ❁ ❁ अत्रास्मिन्संकटे निस्तारकममुमितिहासं कथयिष्यामि ॥ ९ ॥ ❁ ❁ तत्र जीवस्य विषयासक्त्या संसारः स चेश्वरानुग्रहेण निवर्तत इति वक्तुं विपर्ययगृहीतस्य मोक्षाद्बोधयितुमशक्ते राजवृत्तांतमिवाह। आसीदिति। पुरंजनादीन्स्वयमेवेतः पंचमेऽध्याये व्याख्यास्यति। तथापि तावत् सुखग्रहणाय यथोपयोगं किंचिद्व्याख्यास्यामः। तत्र स्वकर्मभिः पुरं शरीरं जनयतीति पुरंजनो जीवः न विज्ञातं नाम यस्य न च विज्ञातं चेष्टितं यस्य स ईश्वरस्तस्य सखा यद्वा विज्ञातं चेष्टितं जीवप्रेरणादिलक्षणं यस्य जीवपारतंत्र्यस्यानुभवसिद्धत्वात् ॥ १० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

घृणी दयालुः। पारोक्ष्येण गोप्येन (१-२) पुरंजनकथैव कूटं दुर्लक्ष्यार्थं वाक्यम् (३)। इतीत्थं यत्र संदृष्टस्तत्रैव ॥ १ ॥ ❁ ❁ तपोत्र स्तोत्रजपरूपमेव ग्राह्यम् ॥ २ ॥ ❁ ❁ यदैव रुद्रः स्वगीतं प्रचेतोभ्य उपदिदेश तदैव तत्पितरं प्राचीनबर्हिषं नारदोपि पुरंजनोपाख्यानेन ज्ञानवैराग्यभक्तीरुपदिदेशेति। अतः प्रचेतसां तपोनिष्ठत्वादेव। हंतहंत मत्प्रियशिष्यध्रुवस्य वंशोऽयं कर्मणि मज्जति तदिममुद्धरामीति कृपालुः। क्षत्तरिति। यथा मत्प्रियश्रीव्यासोद्भूतत्वात्त्वां क्षत्तारमहमित्यभिप्रायः ॥ ३ ॥ ❁ ❁ राजन्निति। ज्ञानवैराग्यभक्तिभिरेव दीप्तिर्भवति न केवलयज्ञैरित्यभिप्रायः। नेष्यते न लक्ष्यते। कर्मसंपाद्यसुखस्यापि दुःखसंभिन्नत्वान्नश्वरत्वाच्च न श्रेयस्त्वमिति भावः। अत्र तीर्थः—पुरुषार्थिना पुरुषेण प्रार्थ्यानि श्रेयांसि बहूनि तेषां कतमच्छ्रेयो दुःखहानिमुत सुखावाप्तिमथ वोभयमथान्यत्सदपत्यादीहसे। इह कर्मणि किमपि न नियतं कर्मणां दुःसंपाद्यत्वात् 'गहना कर्मणो गतिः' इत्युक्तेः ॥ ४ ॥ ❁ ❁ अत्र राजा सर्वश्रेयोवाप्तौ मुख्यसाधनं ज्ञानमेवेति नारदद्वारा विद्वांस्तदेव भवतोपदेष्टव्यमिति प्रार्थयते "वैराग्यवंतः खलु भाग्यवंतः" इत्यभियुक्तोक्तेस्त्वन्तु भक्तिज्ञानाभ्यामधिकाभ्यां तेभ्योप्यधिकोसीत्यभिप्रायेणाह—महाभागेति। यद्वा—यस्य भाग्येनान्येपि भाग्यवंतो भवेयुस्स महाभागः। एतेन यद्यहं त्वदुपदेशेन त्वद्वन्निर्बंधो भवेयं तदैव ते महाभागत्वं सेत्स्यतीत्यभिप्रायः। यद्वा—मह्यते पूज्यतेऽखिलैरिति महो विष्णुः भजनं भागः महस्यासमंताद्भागो यस्य स तथा तत्संबुद्धौ। तथा "अनुग्रहायेह चरंति नूनं भव्यानि भूतानि जनार्दनस्य" इत्युक्तेस्सर्वभक्तशिरोमणेस्तव मय्यनुग्रहो न्याय्य एवेति भावः। विमलम्-अविद्यामलनिवर्त्तकम् ॥ ५ ॥ ❁ ❁ कूटधर्मेषु व्यर्थकृत्येषु। 'कूटो मिथ्याद्रिशृङ्गयोः' इति। यद्यपि गृहस्थकर्मणोपि ज्ञानसाधनत्वात्कार्यत्वमस्ति तथाप्यासंगस्य तथात्वाभावादुक्तं कूटधर्मेष्विति। तदुक्तं तीर्थेन "यथा बुद्धिकृतं कर्म ज्ञानसाहाय्यकारकम्। अथ वा तत्कृतं कर्म नरकायैव जायते" इति ॥ ६ ॥ ❁ ❁ प्रजापत इति राजन्निति संबुद्धिद्वयेन न हि प्रजापालनेऽधिकृतस्य राज्ञः प्रजांतर्गतपश्वादीनां मारणमुचितमिति भावः ॥ ७ ॥ ❁ ❁ संप्रतीक्षंते कदायं मरिष्यतीति वांछंति। "कूटोऽस्त्री पुंजमायाद्येष्वद्रिशृङ्गेषुभेदयोः" इति यादवोक्तेः। कूटो वाणविशेषः शृङ्गाकारो भवतीति स्वामी च ॥ ८ ॥ ❁ ❁ वैषयिककथाप्रियमिमं वैषयिककथयैव प्रबोधयामीति मनसि विचार्य तस्यैव प्राचीनबर्हिषः कथामेव कथांतरकल्पनयाऽप्रस्तुतप्रशंसालंकारेण तत्प्रबोधे कारणीकुर्वन्नाह—अत्रेति। वस्तुतस्तु—तवैव चरितं कीदृशस्य पुरमेतच्छरीरं स्वकर्मणा जनयतीति तस्य पुरंजनस्य पुरातनं मातृगर्भप्रवेशात्पूर्वमप्यारभ्येत्यर्थः। पुरं शरीरमतति सततं विषयीकृत्य वर्तत इति पुरातनमध्यात्मविषयमित्यर्थः। अन्यथा 'इतिहासः पुरावृत्तम्' इति कोशात्पुनरुक्तिः स्यात्। "अत—सातत्यगमने" अतो युच्। "अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुतानुगा" इति। यत्राप्रस्तुतप्रशंसाऽप्रस्तुतकथा प्रस्तुतानुगा प्रस्तुते पर्यवस्यति तत्राप्रस्तुतप्रशंसालंकारो भवतीत्यर्थः। यथात्रैवाप्रस्तुतकथा राजकथा प्रस्तुतेऽध्यात्मोपाख्याने पर्यवस्यतीति ॥ ९ ॥ ❁ ❁ तत्र प्रकृते अध्यात्मादिभी राजमानत्वाद्राजा, पुरं स्वयोग्यानंदपूर्त्तिं जनयिष्यति व्यक्तीकरिष्यतीति पुरंजन इति वा। सखेति। "द्वासुपर्णा सयुजा सखायौ" इत्यादिश्रुतेः। पक्षे विज्ञातचेष्टितो नीतिशास्त्रप्रसिद्धव्यापारः। नामरूपादिहीनस्य सखित्वं न संजाघटीति तत्राह—यद्वेति। पृथु पुरु श्रवो यशः दृष्टादृष्टसुखसाधनकर्मादिशुश्रूषुत्वाच्छ्रवः श्रवणं वा "श्रवः कीर्त्तिश्रवणयोः" इति निरुक्तिः ॥ १० ॥

## श्रीमद्वीरराघवव्याख्या

एवं रुद्रोपदिष्टभगवत्स्तोत्रतदाराधनप्रकारेषु प्रचेतस्सु तपश्चरत्सु प्राचीनबर्हिर्नारदोपदिष्टाध्यात्मपारोक्ष्यः पुत्रेष्वारोपितमहाभारो भगवन्तमुपास्य तल्लोकमगादित्याह मुनिः पञ्चभिरध्यायैः। इत्युक्तप्रकारं संदिश्य उपदिश्य भगवान् रुद्रः बार्हिषदैः सम्यक् पूजितः राजपुत्राणां प्रचेतसां पश्यतां सतां तत्रैवान्तर्हितवान् ॥ १ ॥ ❁ ❁ तत इदं रुद्रेण गीतं भगवत्स्तोत्रं जपन्तः प्रचेतसो वर्षाणामयुतं दशसाहस्रवर्षपर्यन्तं जले तपस्तेपुः 'पाकं पचती'तिवन्निर्देशः तपश्चक्रुरित्यर्थः ॥ २ ॥ ❁ ❁ प्राचीनबर्हिषमिति। हे क्षत्तर्विदुर! तत आत्मविन्नारदो भगवान् आगत्य केवलं कर्मस्वेवासक्तचित्तं प्राचीनबर्हिषं बोधितवान् ॥ ३ ॥ ❁ ❁ बोधनप्रकारमेवाह श्रेय इति। अत्र प्रचेतसां कथामसमाप्यैवान्तरा प्राचीनबर्हिषः कथावशिष्टा

प्रस्तूयते इत्यवगन्तव्यम् । हे राजन्नात्मने स्वस्मै कर्मणानुष्ठीयमानेन यज्ञादिकर्मणा कतमत् श्रेयः किंवा श्रेयः साध्यमीहसे इच्छसि दुःखनिवृत्तिः सुखावाप्तिश्चेदिष्यते तर्हि इह कर्मणि तदुभयं नेष्यते केवलकर्मणा तदुभयं न साध्यत इत्यर्थः ॥ ४ ॥ ❁ ❁ एवं केवलकर्मणामपुरुषार्थसाधनतां प्रतिबोधितः उद्विग्नमना राजाह नेति । हे महाभाग ! कर्मभिराक्षिप्ता धीर्यस्य सोऽहं परं श्रेयो न जानाम्यतस्त्वं विमलमन्तःकरणनैर्मल्यापादकं ज्ञानं मे मह्यं ब्रूहि उपदिश, येन ज्ञानेनाहं कर्मरूपाद्बन्धनाद्बन्धनाशान्मुच्येय मुक्तो भवेयम् ॥ ५ ॥ ❁ ❁ कूटधर्मेषु अतिबाल्यधर्मेष्ववर्जनीयप्रवृत्तिधर्मेष्विति यावत्, अत एव संसारद्वारेषु भ्राम्यन्ममतां कुर्वन्पुत्रादिष्वर्थधीः पुरुषार्थबुद्धिरत एव मूढो मादृशः परं श्रेयो न विन्दते ॥ ६ ॥ ❁ ❁ कर्मफलेषु वैराग्यमुत्पाद्य ब्रह्मविद्यामुपदेष्टुं योगानुभावेन यज्ञपशून्प्रत्यक्षं प्रदर्श्याह भो भो इति । हे प्रजापते राजन् ! अध्यात्मतत्त्वश्रोतृलाभप्रयुक्तादरात्संभ्रमाद्वा भो भो इति द्विरुक्तिः । यद्वा हे प्रजापते हे राजन्निति विशेषणद्वयाभिप्रायेण द्विरुक्तिः । निष्करुणेन त्वयाध्वरे संज्ञापितान्मारितान् जीवसङ्घरूपान् पशून् सहस्रशः पश्य ॥ ७ ॥ ❁ ❁ एते पशवः तव वैशसं त्वत्कृतां पीडां स्मरन्तः त्वां सम्परेतं मृतं प्रतीक्षन्ते कदायं मरिष्यतीति प्रतीक्षन्त इत्यर्थः । यदा च त्वं मरिष्यसि तदैते पशव उत्थितमन्यवः सञ्जातक्रोधा अयःकूटैर्लोहवद्विशीर्णैः शृङ्गैः त्वां छिन्दन्ति छेत्स्यन्ति ॥ ८ ॥ ❁ ❁ ननु "नवाउवोतन्म्रियसे न रिष्यसि देवान् इदेषि पथिभिः सुगेभिः । यत्र यन्ति सुकृतो नापि दुष्कृतः तत्र त्वा देवः सविता दधातु" इति यागीयसंज्ञपनस्य हिंसात्वाभावश्रवणात्तादात्विकदुःखजनकत्वेऽपि निहीनपशुजन्मनिवर्तनद्वारा स्वर्गोपभोगयोग्यसुन्दरतरजन्मसम्पादकत्वेन तादात्विकदुःखादिजनकौषधपानकर्णच्छेदनक्षौरादिकर्मकारयितृचिकित्सकपित्रादिवद्धितकारिणि संज्ञपितरि पशूनां क्रोधासम्भवाच्च कथमेवमुच्यते इति चेन्न, कर्मफलेषु वैराग्यजननार्थत्वेनान्यपरत्वात्तदुक्तेः । अत एव वैराग्योदयायान्यापदेशमुखेनाध्यात्मोपदेशात्मकेतिहासं प्रस्तोतुं प्रतिजानीते अत्रेति । अत्र निरतिशयपुरुषार्थतत्साधनाद्यज्ञानरूपे सङ्कटे तत्त्वहितपुरुषार्थनिश्चायकं पुरातनं पुरञ्जनाख्यराजचरित्रात्मकमितिहासं ते तुभ्यं कथयिष्ये । गदतः इतिहासं सम्यक् कथयतः मम मत्तः सकाशान्निबोध अवहितमनाः शृणु ॥ ९ ॥ ❁ ❁ एवं प्रतिज्ञायेतिहासं प्रस्तौति आसीदिति । अत्रान्यापदेशमुखेनाध्यात्मोपदेशः क्रियते । ननु साक्षादेवाध्यात्मोपदेशः किन्न क्रियते साक्षात्तदुपदेशेऽपि वैराग्योदयसम्भवात्, उच्यते, देहात्माभिमानस्वतन्त्रात्माभिमानग्रस्तस्य तत्त्वहितपुरुषार्थाद्यनभिज्ञस्य वैषयिकमेव सुखं परमं पुरुषार्थमभिमन्यमानस्य हठात्तत्त्वोपदेशः क्रियमाणोऽपि न सुप्रतिष्ठितः स्यादित्यालोच्य चिरमनभ्यस्तस्त्रीपुन्नपुंसकगर्भजन्मजरामरणजाग्रत्स्वप्नसुषुप्त्याद्यात्मसंसारमनुवर्ण्य तत्र दोषानुद्घाट्य हेयताबुद्ध्युत्पादनद्वारा क्रियमाणस्तत्त्वोपदेशः सुप्रतिष्ठितः स्यादिति । तत्र जीवो राजत्वेन शरीरं पुरत्वेन परमात्मा सखित्वेन बुद्धिर्भार्यात्वेन च निरूप्यते । तत्र पुरञ्जनादीन्स्वयमेवैतः पञ्चमाध्याये व्याख्यास्यति, तथापि सुखग्रहणाय किञ्चिद्व्याख्यास्यामः । तत्र हे राजन् ! पुरं शरीरं व्यनक्ति जनयति निर्मापयतीति पुरञ्जनः कश्चिद्राजा स्वकर्मभिः पुरःस्थानीयशरीरोत्पादकजीवस्थानीयो विवक्षितः, आसीदित्यनेन निरूपणीये जीवेऽनादिसत्ता विवक्षिता । तं विशिनष्टि बृहद्दिस्तृतं श्रवः कीर्तिर्यस्य "निर्वाणमयसेवायमात्मा" प्रजापतिवाक्ये "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः ।" "अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च । नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥" इत्यादिश्रुतिस्मृतिप्रसिद्धकल्याणगुणगणविशिष्ट इत्यर्थः । तस्य पुरञ्जनस्य अविज्ञातं नामधेयं यस्य स तथाभूतः कश्चिद्विज्ञानचेष्टितः सखा आसीत् । अत्र परमात्मस्थानीयं मित्रं विवक्षितं परमात्मा हि जीवस्य मित्रं श्रूयते "माता पिता भ्राता निवासः शरणं सुहृद्गतिश्च नारायणः" इति एवं हिताचरणशीलं सखायं परमात्मानं तदाज्ञामतिलङ्घ्यायं संसारी जीवः नामतोऽपि न जानाति, किमुत स्वरूपरूपगुणविभूतिभिरिति ख्यापनायाविज्ञातनामेत्युक्तं, यद्वा सखेत्यनेनाभिप्रेतं यद्दोषानवेक्षणेन हिताचरणशीलत्वं तत् स्थापयितुमविज्ञातनामेत्युक्तम् । अविज्ञात इति "गतिबुद्धिशब्दार्थेभ्यश्चे"ति कर्तरि क्तः, अविज्ञात इत्यर्थः 'अविज्ञाता सहस्रांशुरि'त्यविज्ञातृशब्दो हि नामसहस्रे भगवन्नामतया विनियुक्तः । तत्र स्वाश्रितान् स्वसमत्वेनानुसन्धाय तद्धितैषणपरोऽपारकारुण्यपरवश आश्रितदोषान्न जानातीत्यविज्ञातेत्यभियुक्तैर्व्याख्यातम् । एवं च विपुलापराधवत्त्वेऽपि संश्रयणमात्ररूपकिञ्चिदानुकूल्येन रिरक्षिषुरित्यर्थः । इह विज्ञातशब्दः कर्तृसाधनः क्तान्त इति विशेषः । अविज्ञातचेष्टित इति च्छेदे जीवेनाविज्ञातं चेष्टितमन्तः प्रविश्य नियमनादिरूपं यस्य स इत्यर्थः । कथापक्षे तु अन्यैरविज्ञातचेष्टित इत्यर्थः । विज्ञातचेष्टित इति च्छेदे तु प्रसिद्धं जगद्व्यापाररूपं चेष्टितं यस्य सः । यद्वा विज्ञातं चेष्टितं जीवप्रेरणादिलक्षणं यस्य सः जीवपारतन्त्र्यस्यानुभवसिद्धत्वादिति भावः । कथापक्षे तु राजवत्सखापि विपुलकीर्त्यादियुक्त इत्यर्थः ॥ १० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अध्यात्मगर्भपुरञ्जनोपाख्यानप्रकथनेन संसारसागरे दुराग्रहग्राहदुरवरोहे निमज्जतां दूरीकृतसत्सङ्गानां हरिचरणारविन्दमकरन्दसेवानभिज्ञानां गमागमादिनानाव्यसनभराक्रान्तशिरोधराणां शिशुकलभाषणाहतश्रवणानां कुटुम्बभरणातिवाहितदिनकरगमागमानां पुरुषाणां वैराग्यरसानुभावितनिपुणबलभक्तिप्रदीपानुगृहीतापवर्गलक्षणपुरुषार्थसाधनभगवदपरोक्षज्ञानललना-

कटाक्षप्रसन्नमुरमथनप्रसादपरशुमन्तरेण संसारतरुच्छेदो न स्यादिति तादृशी साधनसामग्री निरूप्यते पञ्चस्वध्यायेषु। तत्रोपोद्घातं रचयति इतीति ॥ १ ॥ ❀ ❀ रुद्रान्तर्धानानन्तरं प्रचेतोभिः किमकारीति तत्राह। रुद्रगीतमिति ॥ २ ॥ ❀ ❀ एतदन्तरे श्रोतुं योग्यां कथां वद तत्कथाशेषं तदनन्तरं श्रोष्याम इति क्षत्तुरान्तरीं शङ्कां मैत्रेयः परिहरतीत्याह प्राचीनबर्हिषमिति। 'स्यात्कृपालुः कारुणिकः' इति वचनात्साधुरयं शब्दः ॥ ३ ॥ ❀ ❀ ईहया कर्मणा श्रेयसामवाप्तिरिष्यते, त्वं तत्र श्रेयसां कतमच्छ्रेय आत्मन ईहसे कर्मणेच्छसि, एतदेव विशिनष्टि दुःखहानिरिति। अत्रायं भावः—पुरुषार्थिना पुरुषेण प्रार्थ्यानि श्रेयांसि बहूनि सन्ति। तेषां कतमच्छ्रेयो दुःखहानिलक्षणमुत सुखावाप्तिमथवोभयमथान्यत्सदपत्यादिलक्षणमिति। इह कर्मणि तदुभयं न ॥ ४ ॥ ❀ ❀ अत्र राजा सर्वश्रेयोऽवाप्तौ मुख्यसाधनं ज्ञानमेवेति नारदस्य हार्दं विद्वांस्तदेव भवतोपदेष्टव्यमिति प्रार्थयते न जानामीति। नारदेन सहोत्तरप्रत्युत्तरायासान्न जानामीति वाक्यं सुखमिति मन्वानेन तत्तथोक्तम् ॥ ५ ॥ ❀ ❀ काम्यधर्ममयेषु गृहाश्रमेषु पुत्रादिरेवार्थ इति धीर्यस्य स तथा ॥ ६ ॥ ❀ ❀ यद्यपि कर्म ज्ञानोत्पत्तौ सहकारि तथापि कर्तुमसुशकमिति मत्वा निन्दति भो भो इति। "यथावत्कर्मकर्तुस्तु ज्ञानं साहाय्यकारकम्। अन्यथा कुर्वतः कर्म निरयाय भविष्यति ॥ तथापि कर्म निन्दन्ति तपतः कर्तुमञ्जसा। शक्यं ज्ञानफलस्यापि बहुत्वान्मोहनाय च ॥" इति वचनान्निन्दनं युक्तम्। तस्मात्कर्मविधानं च न व्यर्थमिति तात्पर्यार्थं इति निरणायि। संज्ञापितान् हिंसितान् ॥ ७ ॥ ❀ ❀ सम्प्रति तेभ्य उपद्रवाभावेऽपि परत्रास्तीत्याह एते त्वामिति। वैशसं शस्त्रेण छेदनं संपरेतं मृतम् अयोनिर्मिता आयुधविशेषाः कूटाः। 'कूटोऽस्त्री मुञ्जमायायेष्वद्रिशृङ्गेषुभेदयोरि'ति यादवः ॥ ८ ॥ ❀ ❀ अत्रेममर्थमितिहासेन बोधयिष्यामीत्याह अत्रेति। पुरे शरीरे अतति सततं विषयीकृत्य वर्तत इति पुरातनमध्यात्मविषयमित्यर्थः। अत सातत्यगमन इति धातुः। अन्यथा 'इतिहासः पुरावृत्तमि'ति वाक्यात् पुनरुक्तं स्यात्, कमधिकृत्य वर्तत इत्यत उक्तं पुरञ्जनस्येति ॥ ९ ॥ ❀ ❀ पुरञ्जननामकः यमाश्रित्येयं कथा वर्तते बृहच्छ्रवा इत्यनेन विशिष्टो जीवो भवतीत्युच्यते। अभिमानेन सर्वेषां जीवानां मुख्याभिमानी चतुर्मुखो ब्रह्मा देवानां विशेषतः। अत्र पुरञ्जनस्तु जात्या क्षत्रियो मुक्तियोग्योऽसुरान्विना मनुष्यजीवाभिमानी असुराणां कलिः। तत्र जीवसंसारज्ञप्त्यै श्रोतॄणां पापपरिहाराय पुण्यवृद्ध्ये च नारदेन पुरञ्जनस्य कथाप्रसङ्गोऽकारीति। तदुक्तं "देवजीवाभिमानी तु ब्रह्मैव तु चतुर्मुखः। मनुष्याणां तु जीवानामभिमानी पुरञ्जनः ॥ स तु राजा हरेः पुत्रश्चासुराणां कलिः स्वयम्। जीवसंसृतिवक्तस्मात्पुरञ्जनकथापि तु ॥ तस्माज्जीवसृतिज्ञप्त्यै पुरञ्जनकथां मुनिः। नारदोऽश्रावयत्तस्मान्नृपं प्राचीनबर्हिषम् ॥ प्रायस्तु तत्कथा जीवे स्थिता प्रत्येकशोऽपि तु। प्रत्येकं यत्तु युज्येत तदुन्नेयं यथा तथा ॥ उक्तं भागवतेऽप्येतत्पुराणे यावदिष्यते। प्रत्येकशस्तु जीवानां तदन्यत्तस्य केवलम् ॥" इति। अतोऽत्र यथासम्भवं तत्तत्पदानि तत्तदर्थपरतया योज्यानीति तात्पर्यं ज्ञायते। पुरं स्वयोग्यानन्दपूर्त्तिं जनयिष्यति व्यक्तीकरिष्यतीति पुरञ्जनः। पॄ-पालनपूरणयोः। अन्यस्तु कर्मभिः पुराणि शरीराणि चतुर्विधानि जनयतीति निर्वक्तव्यम्। आचतुर्दशमाद्वर्षादित्यादेः क्षत्रजातिज्ञापनाय राजेति। इतिहासत्वद्योतनायासीदिति। तस्य पुरञ्जनस्य शरीरिणोऽपि नामरूपादिभिः स्वरूपं न ज्ञायत इत्यविज्ञातं नाम यस्येति। सोऽविज्ञातनामा परमात्मा सखासीदित्यन्वयः। द्वासुपर्णेत्यादि श्रुतेः। अन्यस्तु प्रसिद्धः तर्हि शून्य इत्यतो विज्ञातेति। विज्ञातं चेष्टितं जगत्सृष्ट्यादिलक्षणं यस्य स तथा अन्यो नीतिशास्त्रप्रसिद्धव्यापारः ॥ १० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

जपरूपमेव तपश्चक्रुरित्यर्थः ॥ १-३ ॥ ❀ ❀ दुःखहानिः सुखावाप्तिरेव श्रेयः पुरुषस्यार्थः। तत्तु इह कर्मणि नेष्यते। कर्मसम्पाद्यस्य सुखस्यापि दुःखसम्भिन्नत्वात् सान्तत्वाच्च। नेह येष्यात इति चित्सुखः ॥ ४ ॥ ❀ ❀ कर्मापविद्धधीः सन् परं श्रेयः साधनं श्रेयश्च न जानामि। तस्मात् विमलं ज्ञानं साधनसाध्यान्तरगतं ब्रूहि ॥ ५-८ ॥ ❀ ❀ तत्र तस्य शुद्धभक्त्यधिकारित्वममन्वानो मुक्तिसाधनज्ञानमिश्रामेव भक्तिमुपदेष्टुं तादृशीमेव कथामवतारयति अत्रेति। इतिहासं पुरातनमिति मुनेर्न मिथ्यावचनम्। पूर्ववृत्तमिदमध्यात्मवादसंवाद्यपि प्रायः स्यादिति। एवमेव हि तत्तत्कथादिसङ्गतिश्च स्यात्। तथैव वक्ष्यति प्राकारैत्यादि ॥ ९ ॥ ❀ ❀ अविज्ञात इति नाम यस्य दुर्ज्ञेयत्वादिति भावः ॥ १०-१२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

प्राचीनबर्हिषं कर्ममग्नं राजकथामिषात्। नारदः पञ्चविंशाद्यैः पञ्चभिः प्रत्यबोधयत् ॥ ( १ ) ॥
पञ्चविंशे पुरञ्जन्याः सङ्गं प्राप्य पुरञ्जनः। नवद्वारे पुरे तस्या रेम इत्यनुवर्ण्यते ॥ ( २ ) ॥

यदैव रुद्रः स्वगीतं स्तोत्रं प्रचेतस उपदिदेश तदैव तत्पितरं प्राचीनबर्हिषं नारदोऽपि पुरञ्जनोपाख्यानेन ज्ञानवैराग्यभक्तीरुपदिदेशेति प्रचेतसां कथामसमाप्यैव तत्पितुः कथामाह प्राचीनेति। हन्त! हन्त! मत्प्रियशिष्यस्य ध्रुवस्य वंशोऽयं कर्मणि निमज्जति तदिममुद्धरामीति कृपालुः ॥ १-३ ॥ ❀ ❀ श्रेयो नेष्यते इह कर्मणि न लक्ष्यते कर्मसम्पाद्यस्य सुखस्यापि

दुःखमिश्रत्वात् नश्वरत्वाच्च ॥ ४ ॥ ❀ ❀ कर्मभिरपविद्धधीर्विक्षिप्तबुद्धिः ॥ ५ ॥ ❀ ❀ गृहस्थः सर्व एव मादृश इत्याह गृहेष्विति ॥ ६ ॥ ❀ ❀ कर्मफलेषु वैराग्यमुत्पादयितुं योगबलेन यज्ञपशून् प्रत्यक्षं प्रदर्श्याह भो ! भो ! इति । संज्ञपितान् मारितान् ॥ ७ ॥ ❀ ❀ कदायं मरिष्यतीति त्वां प्रतीक्षन्ते वैशसं त्वत्कृतं स्वशरीरच्छेदम् । अतः सम्परेतं त्वामयःकूटैर्लोहयन्त्रमयैः शृङ्गैश्छिन्दन्ति वर्त्तमानदिर्देशेनाविलम्बत एव छेत्स्यन्ति ॥ ८ ॥ ❀ ❀ वैषयिककथाप्रियमिमं वैषयिककथयैव प्रबोधयामीति मनसि विचार्य्य तस्यैव प्राचीनबर्हिषः कथामेव कथान्तरकल्पनया अप्रस्तुतप्रशंसालङ्कारेण तत्प्रबोधे कारणीकुर्वन्नाह अत्रेति । स्पष्टं वस्तुतस्तु ते तवैव चरितं कीदृशस्य पुरमेतत् शरीरं स्वकर्मणा जनयतीति तस्य पुरञ्जनस्य पुरातनं मातृगर्भप्रवेशात् पूर्वमप्यारभ्येत्यर्थः ॥ ९ ॥ ❀ ❀ आसीदिति । पुरञ्जनादीन् स्वयमेव इतः पञ्चमेऽध्याये व्याख्यास्यते, तदपि सुखग्रहणाय यथोपस्थिति व्याख्यास्यामः । पुरञ्जनो जीवः आध्यात्मादिभिर्विराजमानत्वाद्राजा । श्रवो यशः दृष्टादृष्टसुखसाधनकर्मादिशुश्रूषुत्वात् श्रवः श्रवणञ्च । अविज्ञातं नाम यस्य न विज्ञातं चेष्टितं यस्य स ईश्वरस्तस्य सखा । यद्वा विज्ञातं चेष्टितं जीवप्रेरणादिकं यस्य जीवपारतन्त्र्यस्यानुभवसिद्धत्वात् ॥ १० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अथ रुद्रोपदेशतो हरिं ध्यायत्सु प्राचीनबर्हिष्पुत्रेषु प्राचीनबर्हिषः आत्मानात्मपरमात्मविवेकं भगवज्ज्ञानभक्त्युत्पत्तये आह पञ्चभिरध्यायैः । तत्र जीवस्य बुद्धिसङ्गेन विचित्रां संसृतिं पञ्चविंशेनाध्यायेन इति पूर्वोक्तं हरिभजनप्रकारं संदिश्योपदिश्य बार्हिषदैः प्रचेतोभिः ॥ १–२ ॥ ❀ ❀ प्रत्यबोधयत् मुमुक्षुं कृतवान् ॥ ३ ॥ ❀ ❀ कर्मणा आत्मनः कतमत् श्रेयः ईहसे इच्छसि श्रेयस्तु दुःखहानिः सुखावाप्तिश्च प्राकृतमण्डलमतिव्रज्य भगवद्भावापत्तिः श्रेयः इष्यते । 'निरञ्जनः परमं साम्यमुपैती'त्यादिश्रुतिभिः । इह कर्मणि च नास्त्यकृतं कृतेनेत्यादिश्रुत्या तन्नेष्यते इत्यन्वयः ॥ ४ ॥ ❀ ❀ हे महाभाग ! कर्मभिरपविद्धा विमोहिता धीर्यस्य सोऽहं परं श्रेयः दुःखहानिपूर्वकसुखावाप्तिलक्षणं मोक्षं न जानामि ॥ ५ ॥ ❀ ❀ कूटाः कपटरूपाः धर्माः येषु अत एव संसारवर्त्मसु नरकप्रापकेषु धीः पुरुषार्थबुद्धिर्यस्य सः भ्राम्यन् परं त्वदुक्तं श्रेयो न विन्दते ॥ ६ ॥ ❀ ❀ "मुमुक्षुर्भूत्वात्मन्यात्मानं पश्येदि"ति श्रुतेस्तस्य मुमुक्षामुत्पाद्य आत्मानात्मविवेकपूर्वकं परमात्मज्ञानमुपदेष्टुं योगबलेन यज्ञपशून् प्रत्यक्षं प्रदर्श्याह भगवान्नारदः भो भो ! इत्यादि । त्वया संज्ञापितान् मारितान् ॥ ७ ॥ ❀ ❀ वैशसं त्वत्कृतं हिंसनम् अयःकूटैः लोहमयशृङ्गैः छिन्दन्ति छेत्स्यन्ति ॥ ८ ॥ ❀ ❀ अत्र काम्यकर्मासक्तित्यागपूर्वकनिःश्रेयससाधनग्रहणे ते तुभ्यमितिहासं कथयिष्ये तदाह । पुरञ्जनस्य चरितं निबोधेति ॥ ९ ॥ ❀ ❀ अनादिमायामोहितो जीवः सर्वज्ञं परमानन्दं श्रीवासुदेवमन्तर्यामिरूपेण सदा सहचरमपि स्वस्वामिनं विस्मृत्य मायाकार्येषु देवमनुष्यादिदेहेषु बुद्ध्यनुवाततया भ्रमति स यदा ब्रह्मविद्गुरूपदेशेनात्मानात्मपरमात्मविवेकं प्राप्य परमात्मज्ञानभक्तिमान् भवेत्तदा मुक्तः स्यात् । तदर्थं श्रीनारदः साक्षादप्यात्मानात्मविवेकादिकमुपदेष्टुं शक्तस्तथापि राजस्वभावानुसारेण राजरूपकेणोपदेशं करोति आसीदित्यादिना । तत्रैकोनत्रिंशाध्यायगतदेवर्षिव्याख्यानुसारेण पुरञ्जनादिपदानि सुखबोधाय व्याख्यायन्ते । कर्मणा तत्फलं भोक्तुं पुरं जनयतीति पुरञ्जनो नाम राजा मायायां राजमानो जीव आसीत्तस्य राज्ञः आसमन्तात् विज्ञातानि नामानि यस्य आसमन्तात् विज्ञातं चेष्टितं कर्म यस्य आसमन्तात् विज्ञातं सर्वेषां चेष्टितं येन वा सः सर्वलोकवेदप्रसिद्धः सर्वज्ञः सखा आसीदित्यन्वयः । "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ॥ सर्वनामा सर्वकर्मा यः सर्वज्ञः" इत्याद्याः श्रुतय अत्रानुसन्धेयाः ॥ १० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

हरिभक्तप्रचेतोभ्यः स्तोत्रं हरिप्रतोषकम् । रुद्रेण दर्शितं तत्तु पूर्वाध्याये निरूपितम् ॥ ( १ ) ॥
कर्मस्वासक्तचित्ताय प्राचीनबर्हिषे घृणी । पारोक्ष्येणात्मविद्यां तु नारदोऽथाह पञ्चभिः ॥ ( २ ) ॥
आत्मनो बुद्धियोगेन विषया सङ्गतः सृतिः । तत्र जाग्रदवस्था च पञ्चविंशे निरूप्यते ॥ ( ३ ) ॥

तत्र यद्यपि रुद्रान्तर्धानप्रचेतस्तपोनिरूपणं पूर्वाध्याय एव सङ्गतं तथापि नानाकामो यथा भवानिति वक्ष्यमाणेन प्राचीनबर्हिषो यज्ञादिकर्मणां सकामत्वात्तैस्तस्य शुद्ध्यसम्भवेऽपि 'यूयं तदनुमोदध्वं पितृदेवर्षयोऽमलाः । कर्तुः शास्तुरनुज्ञातुस्तुल्यं यत्प्रेत्य तत्फलम्' इत्युक्तन्यायेन प्रचेतसां तपसि प्रवृत्त्यनुमोदनेन तेषां तपःप्रभावादेवास्य विशुद्धिर्जातेति सम्बन्धसूचनाय पूर्वाध्यायं समाप्य तदत्र निरूपयति–इतीति द्वाभ्याम् । इत्येवमुक्तप्रकारेण प्रचेतोभ्यो भगवत्स्तोत्रं सम्यक् तेषां बुद्धौ सञ्चारो यथा भवति तथोपदिश्य तैर्बार्हिषदैर्बर्हिषदः पुत्रैरभितः सत्कारपूर्वकं प्रेम्णा पूजितस्तेषां राजपुत्राणां पश्यतामेव सतां तत्रैव हरोऽन्तर्दधे इत्यन्वयः । एवमुपदेशार्थं कृपया प्रादुर्भावं पुनस्तत्रैवान्तर्धानसामर्थ्यं द्योतयन् विशिनष्टि–भगवानिति ॥ १ ॥ ❀ ❀ रुद्रेण गीतमुपदिष्टं भगवतः स्तोत्रं जपन्तस्ते सर्वे प्रचेतसो जले स्थिताः वर्षाणामयुतं दशसहस्रवर्षपर्यन्तं तपस्तेपुः, कृतवन्त इत्यर्थः ॥ २ ॥

❀ ❀ एवं पूर्वप्रकरणावशिष्टमर्थं निरूप्यैतत्प्रकरणं वर्णयति–प्राचीनबर्हिषमिति । हे क्षत्त इति सम्बोधनं प्रकरणान्तरश्रवणे सावधानतार्थम् । प्राचीनबर्हिषं कर्मस्वासक्तमानसमपि अध्यात्मतत्त्वज्ञो नारदः प्रत्यबोधयत् अध्यात्मतत्त्वमुपदिदेशेत्यन्वयः । अनापृष्टस्य तस्य तं कर्मासक्तं प्रत्युपदेशे को हेतुरित्यपेक्षायां तत्कृपैवेत्यभिप्रेत्य तं विशिनष्टि–कृपालुरिति ॥ ३ ॥ ❀ ❀ तत्र मलिनान्तःकरणं प्रति तत्त्वोपदेशो वृथेति प्रथमं तदन्तःकरणविशुद्धिपरीक्षार्थं पृच्छति–श्रेय इति । हे राजन्निति सम्बोधयन् तस्य सर्वश्रेष्ठस्य सावधानतया विचारपूर्वकैव प्रवृत्तिर्युक्ता न प्रमादेनेति सूचयति । कर्मणा काम्यकर्मानुष्ठानेन त्वमात्मने स्वार्थं कतमच्छ्रेय ईहसे किं फलमिच्छसीत्यन्वयः । ननु लोके प्रसिद्धमेव तावत् कर्मानुष्ठातुः केनचित्कर्मणा प्राप्तस्य दुःखहानिः सुखावाप्तिर्वा श्रेयः फलं प्रसिद्धं तथापि तदुभयविधं फलमित्याह–काम्यकर्मानुष्ठानलक्षणे प्रवृत्तिमार्गे विद्वद्भिर्नेष्यते । यत्कृतं तन्नश्वरमिति व्याप्तेः कर्मसम्पादितोभयविधफलस्य नश्वरत्वात् वर्त्तमानकालेऽपि विनाशचिन्तया भयहेतुत्वात् दुःखान्तरमिश्रितत्वेन यथाभिलाषाननुरूपत्वाच्च । अन्ते च संस्कारद्वारा पुनः स्मरणेन नरकादिपातेन च दुःखहेतुत्वात् अतो ज्ञानमेव कर्मादिजनितदुःखहेतुपापादिदोषनिवृत्तिपूर्वकनित्यसुखलक्षणमोक्षसाधकत्वाच्छ्रेष्ठमिति भावः ॥ ४ ॥ ❀ ❀ एवं पृष्टो राजाऽपि प्रचेतसां तपःप्रभावेण शुद्धान्तःकरणत्वात् स्वाभिप्रायं यथावन्निवेदितवानित्याह–नेति । ज्ञानित्वेन तस्य भाग्यमभिनन्दन् सम्बोधयति–हे महाभाग इति । अहं परं श्रेयो मोक्षाख्यं न जानामीति । तत्र हेतुमाह– कर्मेति, यतस्तत्तत्फलश्रवणेन तत्तत्कर्मसु प्रवृत्तत्वेन तैः कर्मभिरपविद्धा विक्षिप्ता धीर्यस्य तथाभूत इत्यर्थः । अतो येनाहं कर्मभिः कर्मजनितपुण्यपापादिभिर्मुच्येय तद्विमलम् अहन्ताममतात्मकमलनिवर्त्तकं मोक्षसाधकं ज्ञानं मे ब्रूहीत्यन्वयः ॥ ५ ॥ ❀ ❀ न केवलं ममैवैवं भ्रमः किन्त्वन्यस्यापि गृहस्थस्य प्रायेणेयमेव व्यवस्थाऽतस्त्वं मम भाग्येनैव आगतोऽसि, मयि कृपां कृत्वा ज्ञानमुपदिश येनाहं संसाराद्विमुक्तः स्यामित्याशयेनाह–गृहेष्विति । गृहेषु स्थितो जनः संसारवर्त्मसु जन्ममरणादिसंसारहेतुभूतेषु कटधर्मेषु काम्यकर्माद्यनुष्ठानेषु तत्तत्फललोभेन भ्राम्यन् परं मोक्षं न विन्दते इत्यन्वयः । ननु "तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन" इति प्रामाण्येन यज्ञादीनां ज्ञानहेतुत्वात्तदर्थं निष्कामकर्मानुष्ठानमेव कुतो न करोतीत्याशङ्क्याह–पुत्रेति । पुत्रादिष्वेवार्थः परमपुरुषार्थ इति धीर्यस्य सः । अतः पुत्रादिष्वासक्त्या तदर्थमेव लौकिकालौकिकं कर्म करोति न ज्ञानार्थमिति भावः । ननु कुत एवं पुत्राद्यासक्तिर्यया स्वस्य संसारे भ्रमणं स्यादित्याशङ्क्याह–मूढ इति, अज्ञानमोहित इत्यर्थः ॥ ६ ॥ ❀ ❀ एवं शुद्धभावेन वैराग्यपूर्विकां ज्ञानोपदेशप्रार्थनां तस्य श्रुत्वाऽयमधिकार्यस्मै ब्रह्मविद्योपदेष्टव्येति मनसि निधाय यद्ययं श्रवणमध्येऽन्यत्र संलग्नमनाः स्यात्तदा सम्यगवधारणं न स्यादतो वैराग्यदार्ढ्यार्थं भयमुत्पादयितुं यद्यपि वेदानुमतकर्मसु हिंसितानां पशूनां सद्गतिश्रवणं तथापि अनेन कामवशाद्वेदाननुमतकर्मसु बहवो जीवा हतास्तान् योगप्रभावेण प्रदर्श्याह–भो भो राजन्निति वीप्सापूर्वकं सम्बोधनं भयोत्पादनार्थम् । हे प्रजापते इति पुनः सम्बोधनेन प्रजापालकस्य तवैवं प्राणिहिंसायुक्तैवेति सूचयति । निर्घृणेन निर्दयेन त्वयाऽध्वरे यज्ञे ये सञ्ज्ञापिता मारितास्तान् पशून् गवाश्वादीन् अन्यांश्च जीवसङ्घान् पक्ष्यादिप्राणिसमूहान् सहस्रशः असङ्ख्यातांस्त्वं पश्येत्यन्वयः ॥ ७ ॥ ❀ ❀ एते पश्वादयस्तव वैशसं त्वत्कृतां पीडां स्मरन्तोऽत एव उत्थितमन्यवः प्रज्वलितक्रोधास्त्वां सम्परेतं मृतं कदायं मृतः सन्नस्मद्वशवर्त्ती स्यादिति प्रतीक्षन्ते इत्यन्वयः । ततश्च किं करिष्यन्तीत्यपेक्षायामाह–अय इति । अयःकूटैः लोहयन्त्रमयैः शृङ्गैस्त्वां च्छिन्दन्ति, अविलम्बेन च्छेत्स्यन्तीत्यर्थः । अविलम्बसूचनाय वर्त्तमाननिर्देशः ॥ ८ ॥ ❀ ❀ एवं भयप्रदर्शनेन वैराग्ये दृढीकृतेऽप्यध्यात्मशास्त्रसंस्काराभावात् साक्षादात्मविद्यानिरूपणेऽस्य मनसि सम्यक् तत्सञ्चारो न स्यात्तदोपेक्षिता स्याद्विचारितं प्रयोजनं मोक्षप्राप्तिलक्षणं च न स्यात्ततो गृहासक्तत्वेन वैषयिककथासंस्कारवतः प्रथमतो वैषयिककथामिषेण पारोक्ष्येणैव तत्त्वं दर्शनीयं, पश्चात्किञ्चिन्मनस्यागते स्पष्टतया वक्तव्यमिति मनसि निधायाह–अत्रेति । अत्रैवं संसारदुःखनिस्तारके ज्ञाने त्वया पृष्टे सति तदुत्तरत्वेन पुरञ्जनस्य चरितलक्षणमितिहासं कथां ते तुभ्यमहं कथयिष्ये, तममुं मम गदतः सतस्त्वं निबोध सम्यगवधारयेत्यन्वयः । न च मत्कल्पितोऽयमिदानीन्तनो येनाश्रद्धेयः स्यात्किन्तु चिरन्तन इति सम्यक् श्रद्धयाऽवधारणे हेतुमाह–पुरातनमिति ॥ ९ ॥ ❀ ❀ तत्र 'चेतः खल्वस्य बन्धाय मुक्तये चात्मनो मतम् । गुणेषु सक्तं बन्धाय रतं वा पुंसि मुक्तये' इत्युक्तरीत्या जीवस्य राजसी तामसी बुद्धिसम्बन्धाद्विषयासक्तिः संसारमार्गः, सात्त्विक्या बुद्ध्या भगवद्भजनं मोक्षमार्गः, तत्र पूर्वं संसारमार्गं दर्शयति–आसीदिति । हे राजन्निति सम्बोधनं दृष्टान्तार्थम् । यथा त्वं तथा बृहच्छ्रवाः महायशाः पुरञ्जनो नाम राजा आसीत् , न विज्ञातं चेष्टितं यस्य स तथाभूतः अविज्ञातनामा तस्य पुरञ्जनस्य सखा आसीदित्यन्वयः । अत्र पुरञ्जनप्रकरणे ह्यस्ति पक्षद्वयं लौकिककथापक्षोऽध्यात्मविद्यापक्षश्च, तत्राध्यात्मपक्षो यद्यपि स्वयमेव अतः पञ्चमेऽध्याये नारदेन व्याख्यास्यते, तथापि तत्र किञ्चित्किञ्चिदुपेक्ष्य यथोपयोगस्यैव व्याख्यातत्वाद्ग्रहन्तरितत्वाच्च सुखप्रतिपत्तये सोऽपि यथामति व्याख्यायते । तत्र स्वकर्मभिः पुरं शरीरं जनयतीति पुरञ्जनो जीवः । देहेन्द्रियादिसङ्घातेन विराजमानत्वाद्राजा । अमात्यादिकृतकर्मणां राजनि पर्यवसानवद्देहादिसङ्घातकृतकर्मणां जीवे पर्यवसानात्तस्य बृहच्छ्रवस्त्वम् । न विज्ञातं शास्त्रसंस्कारशून्यैर्जनैर्नाम यस्य सः । तथा न विज्ञातं चेष्टितं जीवप्रेरणादिलक्षणं तथाविधैर्जनैर्यस्य सः । ईश्वरोऽन्तर्यामी तस्य जीवस्य सखा आसीदित्युभयत्र भूतनिर्देशेन तयोस्तत्साहित्यस्य च चिरन्तनत्वं सूचयति । नच तर्हि जीवान्तर्यामिणोः शरीरे सह प्रवेशाज्जीवस्य अन्तर्यामिप्रेरणं विना कर्मादौ प्रवृत्त्यसम्भवादन्तर्यामिणोऽपि पुण्यपापादिभागित्वेन जन्ममरणादिलक्षणसंसारापत्तिरिति शङ्कनीयं, तस्य

मायामोहरहितत्वेन सर्वतो विरक्तस्य स्वतन्त्रस्य भोगरहितस्य साक्षितया सर्वं पश्यतः कुत्राप्यासक्त्यभावेन संसारित्वाभावात्। तदुक्तमेकादशस्कन्धे—"सुपर्णावेतौ सदृशौ सखायौ यदृच्छया कृतनीडौ च वृक्षे। एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान्॥ आत्मानमन्यं च स वेद विद्वानपिप्पलादो न तु पिप्पलादः॥ योऽविद्यया युक् स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्तः" इति। जीवप्रेरणे तु कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धा वैयर्थ्यादिभ्य इति सूत्रेण जीवादृष्टसापेक्षत्वात् नान्तर्यामिणो दोषसंस्पर्श इति॥ १०॥

## भाषानुवादः

### पुरञ्जनोपाख्यानका प्रारम्भ

श्रीमैत्रेयजी कहते हैं—विदुरजी! इस प्रकार भगवान् शङ्करने प्रचेताओंको उपदेश दिया। फिर प्रचेताओंने शङ्करजीकी बड़े भक्तिभावसे पूजा की। इसके पश्चात् वे उन राजकुमारोंके सामने ही अन्तर्धान हो गये॥ १॥ ❀ ❀ सब-के-सब प्रचेता जलमें खड़े रहकर भगवान् रुद्रके बताये स्तोत्रका जप करते हुए दस हजार वर्षतक तपस्या करते रहे॥ २॥ ❀ ❀ इन दिनों राजा प्राचीनबर्हिका चित्त कर्मकाण्डमें बहुत रम गया था। उन्हें अध्यात्मविद्या-विशारद परम कृपालु नारदजीने उपदेश दिया॥ ३॥ ❀ ❀ उन्होंने कहा कि 'राजन्! इन कर्मोंके द्वारा तुम अपना कौन-सा कल्याण करना चाहते हो? दुःखके आत्यन्तिक नाश और परमानन्दकी प्राप्तिका नाम कल्याण है; वह तो कर्मोंसे नहीं मिलता'॥ ४॥ ❀ ❀ श्रीराजाने कहा—महाभाग नारदजी! मेरी बुद्धि कर्ममें फँसी हुई है, इसलिये मुझे परम कल्याणका कोई पता नहीं है। आप मुझे विशुद्ध ज्ञानका उपदेश दीजिये जिससे मैं इस कर्मबन्धनसे छूट जाऊँ॥ ५॥ ❀ ❀ जो पुरुष कपटधर्ममय गृहस्थाश्रममें ही रहता हुआ पुत्र, स्त्री और धनको ही परम पुरुषार्थ मानता है, वह अज्ञानवश संसारारण्यमें ही भटकता रहनेके कारण उस परम कल्याणको प्राप्त नहीं कर सकता॥ ६॥ ❀ ❀ श्रीनारदजीने कहा—देखो, देखो राजन्! तुमने यज्ञमें निर्दयतापूर्वक जिन हजारों पशुओंकी बलि दी है—उन्हें आकाश में देखो॥ ७॥ ❀ ❀ ये सब तुम्हारे द्वारा प्राप्त हुई पीड़ाओंको याद करते हुए बदला लेनेके लिये तुम्हारी बाट देख रहे हैं। जब तुम मरकर परलोक में जाओगे, तब ये अत्यन्त क्रोधमें भरकर तुम्हें अपने लोहेके-से सींगोंसे छेदेंगे॥ ८॥ ❀ ❀ अच्छा, इस विषयमें मैं तुम्हें एक प्राचीन उपाख्यान सुनाता हूँ। वह राजा पुरञ्जनका चरित्र है, उसे तुम मुझसे सावधान होकर सुनो॥ ९॥ ❀ ❀ राजन् पूर्वकालमें पुरञ्जन नाम का एक बड़ा यशस्वी राजा था। उसका अविज्ञातनामा नामक एक मित्र था। कोई भी उसकी चेष्टाओंको समझ नहीं सकता था॥ १०॥

सोऽन्वेषमाणः शरणं बभ्राम पृथिवीं प्रभुः। नानुरूपं यदाविन्ददभूत्स विमना इव॥ ११॥
न साधु मेने ताः सर्वा भूतले यावतीः पुरः। कामान् कामयमानोऽसौ तस्य तस्योपपत्तये॥ १२॥
स एकदा हिमवतो दक्षिणेष्वथ सानुषु। ददर्श नवभिर्द्वार्भिः[1] पुरं लक्षितलक्षणाम्॥ १३॥
प्राकारोपवनाट्टालपरिखैरक्षतोरणैः। स्वर्णरौप्यायसैः शृङ्गैः संकुलां सर्वतो गृहैः॥ १४॥
नीलस्फटिकवैदूर्यमुक्तामरकतारुणैः। क्लृप्तहर्म्यस्थलीं दीप्तां श्रिया भोगवतीमिव॥ १५॥
सभाचत्वररथ्याभिराक्रीडायतनापणैः। चैत्यध्वजपताकाभिर्युक्तां विद्रुमवेदिभिः॥ १६॥
पुर्यास्तु[2] बाह्योपवने दिव्यद्रुमलताकुले। नदद्विहङ्गा[3]लिकुलकोलाहलजलाशये॥ १७॥
हिमनिर्झरविप्रुष्मत्कुसुमाकरवायुना। चलत्प्रवालविटपनलिनीतटसम्पदि॥ १८॥
नानारण्यमृग[4]व्रातैरनाबाधे[5] मुनिव्रतैः। आहूतं मन्यते पान्थो यत्र कोकिलकूजितैः॥ १९॥
यदृच्छयाऽऽगतां तत्र ददर्श प्रमदोत्तमाम्। भृत्यैर्दशभिरायान्तीमेकैकशतनायकैः॥ २०॥

अन्वयः—सः शरणम् अन्वेषमाणः प्रभुः पृथिवीं बभ्राम यदा अनुरूपं न अविदत् सः विमनाः इव अभूत्॥ ११॥ ❀ ❀ कामान् कामयमानः असौ भूतले यावतीः पुरः ताः सर्वाः तस्य तस्य उपपत्तये साधु न मेने॥ १२॥ ❀ ❀ अथ एकदा सः हिमवतः दक्षिणेषु सानुषु नवभिः द्वार्भिः लक्षितलक्षणाम् प्राकारोपवनाट्टालपरिखैः अक्षतोरणैः स्वर्णरौप्यायसैः शृंगैः सर्वतः गृहैः संकुलाम् नीलस्फटिकवैदूर्यमुक्तामरकतारुणैः क्लृप्तहर्म्यस्थलीं श्रिया भोगवतीम्

१. प्रा॰ पा॰—द्वारैः। २. प्राचीने पाठे 'स्तु' इत्यंशो न। ३. प्रा॰ पा॰—विहङ्गमालि॰। ४. प्रा॰ पा॰—मृगव्यालै॰। ५. प्रा॰ पा॰—रनाबाधैर्मुनि॰।

इव दीप्ताम् सभाचत्वररथ्याभिः आक्रीडायतनापणैः चैत्यध्वजपताकाभिः विद्रुमवेदिभिः युक्ताम् पुरम् ददर्श ॥ १३–१६ ॥ ❀ ❀ दिव्यद्रुमलताकुले नदद्विहंगालिकुलकोलाहलजलाशये हिमनिर्झरविप्रुष्मत्कुसुमाकरवायुना चलत्प्रवालविटपनलिनी-तटसंपदि मुनिव्रतैः नानारण्यमृगव्रातैः अनाबाधे यत्र कोकिलकूजितैः पांथः आत्मानम् आहूतम् मन्यते तत्र पुर्याः बाह्योपवने तु यदृच्छया आगताम् एकैकशतनायकैः दशभिः भृत्यैः आयांतीम् प्रमदोत्तमाम् ददर्श ॥ २० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

शरणं भोगायतनं देहं पृथिवीं तदुपलक्षितं ब्रह्मांडम् ॥ ११ ॥ अ ❀ यावत्यः पुरस्तास्तस्य तस्य कामस्योपपत्तये प्राप्त्यै असौ साधु न मेने । गवादिदेहानामैहिकपारलौकिकभोगभोग्यत्वाभावात् । तथा च श्रुतिः "ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलम्" इति "ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलम्" इति ॥ १२ ॥ ❀ ❀ हिमवतो दक्षिणेषु सानुषु कर्मक्षेत्रे भारतवर्षे पुरं मनुष्यशरीरम् । लक्षितानि दृष्टानि सर्वाणि लक्षणानि यस्याम् । अंधपंगुत्वादिदोषरहितामित्यर्थः ॥ १३ ॥ ❀ ❀ तामनुवर्णयति त्रिभिः । अत्र किंचित्किंचित्सादृश्यमवलंब्य कथासौंदर्याय प्राकारादीनि वर्ण्यंते । परिखैरिति पुंस्त्वमार्षम् । अक्षाणीं-द्रियाणि गवाक्षाः त्वगादयः शरीरावयवाः प्राकारादिपुरावयवत्वेन निरूप्यंते । स्वर्णादिशृङ्गैः शिखरैर्युक्ता ये गृहास्तैः संकुलामिति आधारादिचक्राणि गृहाः शृङ्गाणि च राजसादिस्वभावा विवक्षिताः ॥ १४ ॥ ❀ ❀ नीलादिभिः क्लृप्ता हर्म्यस्थली यस्याम् । अरुणं माणिक्यम् । स्थली हृदयम् । नाड्यो नीलादिभावेन निरूप्यंते तत्तद्विषयवासना वा । भोगवतीं नागानां पुरीमिव भोग-साधनभूतामिति वा ॥१५॥ ❀ ❀ सभा समाजस्थानम् । चत्वरं चतुष्पथः रथ्या राजमार्गः आक्रीडायतनं द्यूतादिस्थानम् । आपणो हट्टस्तैः चैत्यं जनानां विश्रामस्थानम् । ध्वजेषु पताकास्ताभिश्च युक्ताम् ॥१६॥ ❀ ❀ अत्र च विषयनिम्नबुद्धियोगेन जीवस्य देहसंबंध इति विवक्षया विषयवर्गं बाह्योपवनत्वेन निरूपयति । तद्विशेषान् स्रक्चंदनादीन् दिव्यद्रुमलतादिभावेन । शेषः कथालंकारः । बाह्योपवने प्रमदां ददर्शेति चतुर्थेनान्वयः । नदतां विहंगालिकुलानां कोलाहलो येषु ते जलाशया यस्मिन् ॥ १७ ॥ ❀ ❀ विप्रुषो बिंदवस्तद्वता कुसुमाकरसंबंधिना वायुना चलंतः प्रवाला विटपाः शाखाश्च येषां तैर्वृक्षैर्नलिनीनां सरसीनां तटेषु संपत्समृद्धिर्यस्मिन् ॥ १८ ॥ ❀ ❀ अनाबाधे आबाधा महती पीडा तत्कृतोपद्रवरहिते मुनिव्रतैरहिंस्रैः । आत्मानमाहूतं मन्यते यत्र ॥ १९ ॥ ❀ ❀ तत्र प्रमदोत्तमां विषयविवेकवतीं बुद्धिं ददर्श । यदृच्छयागतामिति तयोः संबंधस्य दुर्निरूप्यत्वं दर्शयति । तामनुवर्णयति सार्धैश्चतुर्भिः । दशभिर्ज्ञानकर्मेन्द्रियैः एकैकं प्रत्येकं शतमनंता वृत्तयस्तासां नायकैः पतिभिः सह । पाठांतरे नायिकाः स्त्रियो येषां तैः ॥ २० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

शरणं वासस्थलं वा । पृथिवीं कर्मभूमिं बभ्रामेति नानाजन्मवत्त्वात् । नानुरूपमिति । क्वापि जन्मनि स्वाभीप्सितसमस्त-सुखप्राप्त्यदर्शनात् इवेति । शूकरादिजन्मन्यपि विषयानंदप्राप्त्या वस्तुतो विमनस्त्वाभावात् । प्रभुः प्रभवंत्यस्मात्कर्माणीति । पक्षांतरे परपापमर्दनसमर्थः । यद्वाऽनुरूपं दुःखभोगमंतरेण सुखभोगयोग्यमन्यत्र दुर्गादिलक्षणम् ॥ ११ ॥ ❀ ❀ श्रुत्यर्थः-ताभ्यो देवताभ्यः गवादिदेहानामसाधुमननञ्च गर्भदशायामेव 'मृतश्चाहं पुनर्जातः' इत्यादिश्रुतेस्तत्रैव ज्ञानोत्पत्तेः । पक्षे शत्रु-साध्यत्वात् ॥ १२ ॥ ❀ ❀ अत्र हिमवज्जाड्यरूपं पापं दक्षिणे जाड्यमांद्यत्वं भवति तेन समपापपुण्येन मानुषं भवतीति भावः । इत्यर्थ इति । अंगहीनस्यासमर्थत्वेन कर्मयोग्यत्वं म्लेच्छादिदेहस्यापि तथात्वमिति भावः ॥ १३ ॥ ❀ ❀ प्राकारो दुर्गभित्तिः । उपवनमारामः 'आरामः स्यादुपवनम्' इति कोशात् । अट्टालो भित्त्यंतर्भूप्रदेशः । परिखा दुर्गबहिः परितः खाता नदी । पक्षे प्राकारास्त्वचः । उपवनानि बहिर्विषया रोमाणि । अट्टालो मुखमुखशिरोनासादिमत्त्वात् । परिखा विरागविवेकादिप्रवेशरोधकजल-दुर्गादिरूपा रागादयः गुणा वा । गवाक्षा रोमरन्ध्राणि । तोरणानि पक्ष्माणि । नेत्रादीनि द्वाराणि वा स्वर्णाद्यैः शृङ्गैः पित्तकफवाते-र्धातुभी राजससात्त्विकतामसस्वभावैर्वा । आधारादीत्यत्रादिना स्वाधिष्ठानमणिपूरकानाहतविशुद्धिब्रह्मरंध्राणां ग्रहः ॥ १४ ॥ ❀ ❀ विषयवासनानामपि सत्त्वादिगुणवर्णस्वभाववत्त्वादनेकविधित्वमालक्ष्योक्तं तत्तदिति । पक्षे भोगवतीमिवेति वस्तुतस्तत्र भोगा अपि न संतीत्यर्थः ॥ १५ ॥ ❀ ❀ सभा राजोपवेशस्थानं सा चात्र हृदयं तत्रैव राज्ञः पुरंजनस्य जीवस्य स्थितेः । चत्वरं चतुष्पथं तात्वधःस्थलं तत्रैव मुखनासानयनकर्णमार्गाश्चत्वारः । यथा राजमार्गः इडापिंगलासुषुम्णाः । आयतनानीन्द्रियगोलकाः । आपणो मनोगोलकः । चैत्यं चित्तमध्यम् । ध्वजे भगवद्वैमुख्यरूपे संयुक्ताः पताकाः पञ्च क्लेशाः । विद्रुमवेदय आधारादिचक्रमध्यस्थलभेदाः । अधरा इति केचित् ॥ १६ ॥ ❀ ❀ अत्र च संसारे प्रकृते वा बाह्योपवने प्रमदोत्तमामविद्यावृत्तिं यदृच्छया पुरंजनो राजा ददर्शेति तयोः प्राथमिकसंबंधस्य निर्हेतुत्वमुक्तम् । तेन कथापक्षे हे राजन् युष्मद्विधैरुपवने प्रमदोत्तमा कदापि नानेतव्या कथंचित् स्वत एव प्राप्ता दृष्टा वा स्वाबेदात्मधिकारः कर्तव्यः । अध्यात्मपक्षे–शब्दस्पर्शादिभोग्यवस्तुषु बुद्धिर्न देया । दैवादत्ता चेदनुतप-नीयमिति विधिर्व्यंजितः ॥ १७–१८ ॥ ❀ ❀ अहिंस्रैरिति । पक्षे–पुरंजनस्य पुण्यवत्त्वात्पापाभावाच्च भोगा निष्कंटका एव ।

आहूतमातिथ्यदानार्थम्। अध्यात्मपक्षेपि तान्निष्कंटकान्भोगान्स्वीयकुटुंबबंधुब्राह्मणातिथ्यादिभ्यो विभज्यैव यत्र भुंक्ते इत्यर्थः ॥ १९ ॥ ❀ ❀ तत्रोपवने। पाठांतरे नायिकैरिति पाठे नायिकाश्च केचन वृत्तिविशेषाः ॥ २० ॥

**श्रीमद्वीरराघवव्याख्या**

स पुरञ्जनः प्रभुः करणादिमत्त्वाच्छरणं भोगायतनं शरीरम् एकदा कथापक्षे वासस्थानमन्वेषमाणः पृथिवीं कर्मफलोदयतद्भोगायतनप्रकृतिपरिणामरूपं ब्रह्माण्डं बभ्राम देवादिस्थावरान्तशरीरेष्वनुप्रविष्टः प्रकृतिमण्डले संसरतीत्यर्थः। कथापक्षे भूमण्डलस्थपुराण्यनुप्रविश्य तत्र कञ्चित्कालं निवसन् कृत्स्नां पृथिवीं चचारेत्यर्थः। यदा च स्वस्यानुरूपं शरणं देवमनुष्यादिशरीरं नाविन्दत् नालभत किन्तु तिर्यक्पादपादिशरीरमविन्दत् तदा विमना इव बभूव। पादपादिशरीरेषु चैतन्यानभिव्यक्तेर्विमना इवेत्युक्तं निश्चैतन्य इवाभूदित्यर्थः। न तु दुःखितमना इति देहात्माभिमानिनो जीवस्य निहीनशरीरस्यापि प्रीतिविषयत्वात्। कथापक्षे तु दुःखितमना इवेत्यर्थः ॥ ११ ॥ ❀ ❀ कामान् भोग्यान् शब्दादीन् सर्वानपि कामयमानोऽसौ पुरञ्जनः तस्य तस्य शब्दादेर्विषयस्योपपत्तये लब्धये भूतले यावत्यः पुरस्ताः सर्वाः पुरः साधु न मेने शब्दादिसर्वविषयोपभोगोपयुक्तशरीराणि कामयमानः केषुचिच्छरीरेषु केषांचिदिन्द्रियाणामनभिव्यक्तत्वादनभिव्यक्तकतिपयेन्द्रियशरीराण्यनुप्रविशन् तत्र सर्वविषयालाभात्तानि न साधु मेन इत्यर्थः। कथापक्षे तु तत्र पुरि केषांचिद्भोग्यवस्तूनां सत्त्वेऽपि सर्वेषामभावान्न साधु मेन इत्यर्थः ॥ १२ ॥ ❀ ❀ एकदा सुकृतविशेषपरिपाकदशायां हिमवतो दक्षिणेषु सानुषु कर्मतत्फलोत्पत्तियोग्येषु कर्मक्षेत्रेषु भारतवर्षेषु इत्यर्थः, पुरं मनुष्यशरीरं लक्षितानि दृष्टानि सर्वाणि लक्षणानि यस्यां तामन्धपंग्वादिदोषरहितामित्यर्थः, कथापक्षे वक्ष्यमाणप्राकारादिसर्वचिह्नोपयुक्तनवभिर्द्वार्भिः नवभी रन्ध्रैश्चक्षुर्द्वयश्रोत्रद्वयनासिकाद्वयमुखपायूपस्थरूपैर्लक्षितां पक्षान्तरे स्पष्टं ददर्श। अभिव्यक्तसर्वेन्द्रियसर्वविषयभोगोपयुक्तं मनुष्यादिशरीरमुपलब्धवानित्यर्थः ॥ १३ ॥ ❀ ❀ कानि लक्षणानीति विवित्सायां तानि वदंस्तां पुरीमनुवर्णयति त्रिभिः प्राकारैत्यादि। यद्यप्यत्र प्राकारादिसाधर्म्येण रूपणीयाः पदार्थाः शरीरे न सन्ति तथापि किंचित्सादृश्यमवलम्ब्य कथासौन्दर्याय प्राकारादीन्यनुवर्ण्यन्ते। परिखैरिति पुंस्त्वमार्षम्। अन्यथा परवल्लिङ्गतायां परिखाभिरिति स्यात्। अक्षा गवाक्षाः, अत्र त्वगादयः प्राकारत्वेन रूप्यन्ते रोमपङ्क्तिरुपवनं स्कन्धोपरिभागोऽट्टालः रुधिरौघः परिखा नव रन्ध्राण्यक्षा अक्षिपक्ष्मतोरणं स्वर्णादिशृङ्गैः शिखरैर्युक्ता ये प्रहास्तैः संकुलां व्याप्तामत्र मूलाधारादीनि षट्चक्राणि गृहत्वेन रूप्यन्ते, राजसत्वादिस्वभावाः शृङ्गत्वेन विवक्षिताः ॥ १४ ॥ ❀ ❀ नीलादिभिः क्लृप्ता हर्म्यस्थली यस्यां हर्म्यस्थलीति हृदयं विवक्षितं हृदयगताः शतैकनाड्यः केसरा वा नीलादिभावेन रूप्यन्ते। अतो नानाकारनाडीभिर्व्याप्तत्वाद्भोगवतीं पुरीम् इव श्रिया दीप्ताम् ॥ १५ ॥ ❀ ❀ सभा समाजस्थानं चत्वरं चतुष्पथः रथ्या राजमार्गः आक्रीडायतनं द्यूतादिस्थानमापणो हट्टः चैत्यं जनानां विश्रामस्थानं ध्वजेषु पताकास्ताभिर्विद्रुमवेदिकाभिश्च युक्ताम्। अत्र हर्म्यस्थलीत्वेन रूपितं हृदयमेव सभाचत्वरक्रीडायतनगुणयोगात्सभादिभावेन रूप्यते। हृदि ह्ययमात्मा प्रतिष्ठित इति जीवस्य हृदयस्थानत्वश्रवणाज्जीवाश्रितत्वाच्चेन्द्रियप्राणानां सर्वेन्द्रियकन्दरूपत्वाद्धृदयस्य सभारूपत्वात्तत एव चत्वररूपत्वमपि परमात्मनः क्रीडास्थानत्वात्क्रीडायतनं च चक्षुरादीन्द्रियस्थानानि हट्टः। तेभ्यो हि शब्दादीन्याकृष्यानुभवति पुरञ्जनः। सुषुम्णा रथ्या राजवद्गच्छतो जीवस्य मुक्तिमार्गत्वात्सुषुम्णायाः पुरीतत् चैत्यं जीवस्य सुषुप्तौ विश्रामस्थानत्वादाधारादिचक्रस्थाः कर्णिकाः विद्रुमवेदिका ध्वजपताकाः करतलपादतलानि ॥ १६ ॥ ❀ ❀ एवं देहं पुरभावेन रूपयित्वा विषयवर्गं देहानुबन्धिकलत्रापत्यादिवर्गं बाह्योपवनत्वेन रूपयति पुर्या इति। बाह्योपवने प्रमदां ददर्शेति चतुर्थेनान्वयः। दिव्यद्रुमाश्लिष्टलताभिराकुलेन नदतां विहङ्गकुलानामलिकुलानां च कोलाहलो येषु ते जलाशया यस्मिन् तस्मिन् ॥ १७ ॥ ❀ ❀ हिमनिर्झराणां विप्रुषः बिन्दवस्ताः कुसुमाकरसंबन्धिना वायुना चलन्तः प्रवालविटपाः शाखा येषां तैः द्रुमैः नलिनीतटेषु सम्पत्समृद्धिर्यस्मिन् ॥ १८ ॥ ❀ ❀ नानाविधैर्वन्यमृगसमूहैरनाबाधे तत्कृतबाधारहिते तत्र हेतुः मुनिव्रतैरहिंस्रैर्यत्रोपवने कोकिलकूजितैः पान्थः स्वात्मानमाहूतमिव मन्यते। एवं विषयवर्गो बाह्योपवनत्वेन रूपितः, तस्य शरीराद्बहिष्ठत्वात् कोलाहलशब्देन शब्दस्य कुसुमाकरवायुशब्दाभ्यां गन्धस्पर्शयोः चलत्प्रवालेति सौन्दर्यकथनेन रूपस्य जलाशयहिमनिर्झरनलिनीशब्दै रसस्य च प्रत्यभिज्ञानाच्च तद्विशेषाः स्रक्चन्दनादयो दिव्यलतादिभावेन रूप्यन्ते। यद्वा देहानुबन्धिवर्गोऽत्र बाह्योपवनत्वेन रूप्यते, तत्र संसारी पुमान् द्रुमः द्रुमवत्तद्भावविकारात्मकदेहसंस्पृष्टत्वात्तमाश्रिताः स्त्रियो लताः द्रुमस्य लता इति षष्ठीसमासः, तदाश्रितान्यपत्यानि विहङ्गकुलं योषित्सङ्गिनोऽलिकुलमपत्यादीनां मधुरालापः कोलाहलः वापीकुल्यातटाकादीन्याजीविकादिरूपाणि जलाशयहिमनिर्झरनलिन्यादिरूपेण रूप्यन्ते, कुसुमाकरशब्देन पुष्पवाटिकादीनि विवक्षितानि। चलत्प्रवालविटपेत्याम्रपनसादिफलजातिवृक्षाः, विवक्षिता आरण्यकमृगव्याघ्रैरित्यनेन श्यालश्वशुरादयो वा विवक्षिताः। ते ह्यारण्यकमृगवत्प्राणतुल्यधनापहारिणः, धनापहारित्वमपि तेषां न हिंसया, किन्तु सान्त्वेनेति द्योतयितुं मुनिव्रतैरिति विशेषणं यत्र यस्मिन्नेवं भूते बाह्योपवने कोकिलकूजिततुल्यकलत्रापत्यादिमधुरोक्तिभिः पान्थः निवृत्तिमार्गनिष्ठोऽपि स्वात्मानमाहूतमिव देहानुबन्धिवर्गे आसक्तिं प्रापितमिव मन्यते ॥ १९ ॥ ❀ ❀ तत्रोपवने आसक्तां बुद्धिं यदृच्छयोपगतां ददर्श यद्यप्यत्र जीवस्य बुद्ध्या सह सम्बन्धदशायां बुद्धेर्बाह्योपवनरूपदेहानुबन्धिवर्गसम्बन्धाभावेन बुद्धेस्तदासक्तिर्नास्तीति तथापि भविष्यद्देहानुबन्धिवर्गासक्त्यभिप्रायेण कथासौन्दर्यायैवं वर्णितमित्यवगन्तव्यं, यदृच्छयागतामित्यनेन

जीवबुद्ध्योः संबन्धो न स्वसङ्कल्पकृतः किन्तु दैवकृत इति सूच्यते। या प्राकारादियुक्ता पुरी यस्याः पुर्य्याः बाह्योपवने कोकिलकूजितः पान्थः आत्मानमाहूतं मन्यते तां यदृच्छयागतां पुरीं तत्रोपवने प्रमदां च ददर्शेति वान्वयप्रकारः। अस्मिन्पक्षे मानुषदेहस्य दुर्लभत्वं सूचितं कथापक्षे तु स्पष्टोऽर्थः। प्रमदोत्तमां विशिनष्टि दशभिः ज्ञानकर्मेन्द्रियैरेकैकं शतमनन्ता वृत्तयः तासां नायकैः पतिभिर्भृत्यैः सहायान्तीमभिगच्छन्तीम्॥ २०॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

स स्वर्गादिस्थानादर्वाग्गतः कर्मणा शरणं सुखदुःखभोगयोग्यं शरीरमन्वेषमाणः पृथिवीं कर्मभूमिं बभ्राम, अन्यत्र पुरं, प्रभवन्त्यस्मात्कर्माणीति प्रभुः अन्यत्र परपापमर्दनसमर्थः अनुरूपं दुःखभोगमन्तरेण सुखभोगयोग्यम् अन्यत्र दुर्गादिलक्षणम्॥ ११॥ ❀ ❀ यावतीस्तिर्यगादिलक्षणाः पुरः शरीराणि। अभिपत्तये प्राप्त्यै 'ताभ्यो गामानयत्ता अब्रुवन्नवै नोऽयमल'-मित्यादि श्रुतिः। अन्यत्र शत्रुसाध्यत्वात्॥ १२॥ ❀ ❀ एकदाभीप्सितशुभकर्मफलोदयसमये हिमवतो दक्षिणेषु सानुषु कर्मफलसंभजनपटुषु। वनषण-संभक्ताविति धातुः। भारतभूप्रदेशेषु प्रत्येकं यत्तु युज्येत तदुज्ञेयं यथा तथेत्युक्तत्वात् यथासंभवमुन्नीयते श्रोत्रादिनवद्वारैर्लक्षितलक्षणामन्धपङ्गुबधिरत्वादिदुर्लक्षणशून्यां पुरीं पूरुषशरीरं ददर्श दृष्ट्वा प्राविशदित्यध्याहार्यम्, 'ताभ्यः पुरुषमानयत् ता अब्रुवन् सुकृतं बते'ति श्रुतिः। अन्यत्र स्पष्टम्॥ १३॥ ❀ ❀ पुरीमित्युपक्रान्तत्वात्तदनुसारेण तद्वर्णनं क्रियते प्राकारेत्यादिना। अध्यात्मान्तैः शब्दाद्यैरश्विनाद्याद्यो यथानुकूलं लक्षणीयाः। प्राकारो दुर्गभित्तिः अट्टालो भित्त्यन्तर्भूप्रदेशः परिखा दुर्गवहिः परितः खातनदी स्वर्णादिभी रचितैः शृङ्गैः शिखरैः अन्यत्र सात्त्विकराजसतामसैः सङ्कुलाम्॥ १४॥ ❀ ❀ नीलादिभिरिन्द्रनीलरत्नादिभिः क्लृप्ता विरचिता हर्म्यस्थल्यो यस्यां सा तथा तां भोगवतीं नागपुरीम्॥ १५॥ ❀ ❀ आक्रीडा क्रीडाभूमिः आपणः क्रयस्थानं चैत्यं वन्दनशाला। 'वेदिः परिष्कृता भूमिरि'त्यमरः॥ १६॥ ❀ ❀ स राजा विषयलक्षणाबाह्योद्याने स्थितः तत्र यदृच्छयागतां प्रमदोत्तमां ददर्शेति चतुर्थश्लोकेनान्वयः॥ १७॥ ❀ ❀ हिमनिर्झराणां शीतलतुङ्गस्थलपतज्जलधाराणां विप्रुष्मता तोयबिन्दुमता कुसुमाकरसौरभवता वायुना चलन्तः प्रवाला येषु ते तथा ते च विटपिनश्चलत्प्रवालकानां नलिनीतटानां पद्माकरतीराणां संपदो यस्मिंस्तत्तथा तस्मिन्॥ १८॥ ❀ ❀ 'आबाधा महती पीडे'त्यभिधानमनाबाधे उपद्रवरहिते कोकिलकूजितानां मात्राविशेषैरेहि आविशेत्याहूतमात्मानं निरूपयति। अन्यत्र प्राकारो देहचर्म उपवनं रोमादि अट्टालं तन्मध्ये मेदोवसादि परिखा मांसवहिस्त्वक् तोरणस्थानीयो बाहुः अङ्गुलयः पताकाः पार्श्वद्वयस्योर्ध्वमुखवंशस्यास्थि वा तोरणं शृङ्गं शृङ्गस्थानीयं कर्णादिगुहाः उदरादिप्रदेशाः नीलवैदूर्यादैस्तोरणविशेषैः समलंकृतं हर्म्यस्थलीस्थानीयं चर्मादि भोगसाधनत्वाद्भोगवती सभा हृदयं सर्वदेवानां निवासस्थानीयत्वात् चत्वरं नाडीसन्धिः रथ्या ब्रह्मनाडी आक्रीडा हस्तः आयतनानीन्द्रियगोलकानि आपणो वाक् चैत्यं मस्तकं ध्वजः केशपाशः विद्रुमवेदी रत्नाद्यलंकृतकटिप्रदेशः। बाह्योपवनं देहबाह्यविषयोद्यानं, तस्य रमणीयतां वर्णयति दिव्येत्यादिना। वक्त्राद्यध्यात्मार्थो वर्णनीयः बाह्येत्युक्तत्वात् प्रकर्षेण मदयन्तीति प्रमदाः वैषयिक्यो बुद्धयस्तासां मध्ये उत्कृष्टं तमःस्थानं पुरुषाणां यस्याः सा प्रमदोत्तमा प्रधानेत्युक्ते आत्मानात्मविवेकविचक्षणा बुद्धिरित्यर्थः स्यात् स चानुपपन्नः तां बुद्धिं विहाय वैषयिकीं बुद्धिं प्राप्य मुग्धोऽभूदित्यर्थः अन्यथाप्रतीत एव कीदृशी दशभिर्भृत्यैर्ज्ञानकर्मेन्द्रियसंज्ञैः सहागच्छन्तीति च कीदृशाः। एकैकस्य शतमित्यनन्ता अनन्ता या वृत्तयस्तासां नायकाश्च केचन वृत्तिविशेषास्तैर्युक्तैः॥ १९-२०॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

स एकदेति चित्सुखः॥ १३-१६॥ ❀ ❀ पुर्यास्त्विति सार्द्धत्रिकम्। यद्यपि बुद्ध्यादिमयलिङ्गशरीरेण सहैव जीवस्य सर्व्वदा स्थितिः। तथापि मनुष्यशरीरे प्राप्ते ते बुद्ध्यादयो विलक्षणा भवन्तीति अपूर्ववत्तत्प्राप्तिनिर्देश इति ज्ञेयम्॥ १७-१९॥ ❀ ❀ यदृच्छया दैवतः। भृत्यैरिति सार्द्धषट्कम्॥ २०-२४॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

शरणं वासस्थलं सुखभोगायतनं देहञ्च। बभ्रामेति नानाजन्मवत्त्वात् नानुरूपमिति क्वापि जन्मनि स्वाभीप्सितसमस्तसुखप्राप्त्यदर्शनात् इवेति सूकरादिजन्मन्यपि विषयानन्दप्राप्त्या वस्तुतो विमनस्त्वाभावात्॥ ११॥ ❀ ❀ यावतीर्यावत्यः सर्व्वत्र विषयानन्दप्राप्तावपि तस्य तस्य कामस्य उपपत्तये प्राप्त्यै साधु न मेने। गवादिदेहानां भोगसाधनयोग्यत्वाभावात्। तथा च श्रुतिः 'ताभ्यो गामानयत् ता अब्रुवन् न वै नोऽयमलमि'ति। 'ताभ्योऽश्वमानयत् ता अब्रुवन् न वै नोऽयमलमि'तीति। तत्तद्देहानामसाधुमननं च गर्भदशायामेव 'मृतश्चाहं पुनर्जातः' इत्यादिश्रुतेस्तत्रैव विवेकोत्पत्तेः॥ १२॥ ❀ ❀ हिमवतो हिमालयस्य दक्षिणेषु भारतभूमौ कर्म्मक्षेत्रे तत्रत्यमनुष्यदेहस्यैव फलसाधनत्वात् पुरं मनुष्यदेहं लक्षितानि दृष्टानि लक्षणानि यस्यामिति पङ्ग्वन्धादिदेहस्य म्लेच्छान्त्यजादिदेहस्य च व्यावृत्तिः॥ १३॥ ❀ ❀ प्राकारास्त्वचः उपवनानि बहिर्विषयाः

अट्टालो मुखं परिखा गुणाः । परिखैरित्यार्षम् । अक्षा गवाक्षा रोमरन्ध्राणि तोरणानि नेत्रादीनि द्वाराणि स्वर्णाद्यैः शृङ्गैः पित्तकफवातैर्धातुभिः राजससात्त्विकतामसैः स्वभावैर्वा गृहैराधारचक्राद्यैः सङ्कुलां व्याप्ताम् ॥ १४ ॥ ❀ ❀ इन्द्रनीलादिभिः रत्नैः क्लृप्ता हर्म्यस्थल्यो यस्यां समासान्तविधेरनित्यत्वान्न कप् । अरुणं माणिक्यं स्थल्यो हृदयकण्ठभ्रूमध्यस्थानानि नीलादयस्तद्वर्णा नाड्यो ज्ञेयाः । भोगवतीं नागानां पुरीं पक्षे भोगवतीमिवेति वस्तुविचारतो भोगा अपि तत्र न सन्तीत्यर्थः ॥ १५ ॥ ❀ ❀ सभा राजोपवेशस्थानं सा चात्र हृदयं तत्रैव राज्ञः पुरञ्जनस्य जीवस्य स्थितेः । चत्वरं चतुष्पथं तच्चात्र तात्वधः स्थलं तत्रैव मुखनासानयनकर्णमार्गाश्चत्वारः रथ्या राजमार्गः इडापिङ्गलासुषुम्णाः । आक्रीडायतनानि द्यूतादिस्थानानि इन्द्रियगोलकाः । आपणो हट्टो मनोगोलकः चैत्यं विश्रामस्थानं चित्तमध्यं ध्वजे भगवद्वैमुख्यरूपे संयुक्ताः पताकाः पञ्च क्लेशाः । विद्रुमवेदय आधारादिचक्रमध्यस्थलभेदाः ॥ १६ ॥ ❀ ❀ अत्र विषयनिष्ठबुद्धियोगेन जीवस्य देहसम्बन्ध इति विवक्षया बाह्योपवनभूतं विषयवर्गं विशिष्य वर्णयति पुर्य्या इति त्रिभिः । बाह्योपवने प्रमदोत्तमामविद्यावृत्तिं बुद्धिं यदृच्छयैवागतां यदृच्छयैव पुरञ्जनो राजा ददर्शेति तयोः प्राथमिकसम्बन्धस्य निर्हेतुत्वमुक्तम् । तेन कथापक्षे हे राजन् ! युष्मद्विधैरुपवने प्रमदोत्तमा कदापि नानेतव्या कथञ्चित् स्वत एव प्राप्त्या दृष्ट्वा स्पृष्ट्वा वा स्याच्चेत्तदात्मधिक्कारः कर्तव्यः । अध्यात्मपक्षे शब्दस्पर्शादिभोग्यवस्तुषु बुद्धिर्न देया । दैवाद्गता चेदनुतपनीयमिति विधिर्व्यञ्जितः । कीदृशे दिव्यद्रुमेति रूपवैचित्र्यं नदद्विहङ्गेति शब्दवैचित्र्यम् ॥ १७ ॥ ❀ ❀ हिमनिर्झराणां विप्रुषो विन्दवस्तद्वता कुसुमाकरवायुना चलन्तः प्रवाला विटपाः शाखाश्च येषां तैः वृक्षैर्नलिनीनां सरसीनां तटेषु सम्पत् समृद्धिर्यस्मिन् । अत्र हिमनिर्झरेति रसः कुसुमाकरेति गन्धः वायुनेति स्पर्शः चलत्प्रवालेपि व्यञ्जितस्य पक्षिपुष्पफलादिसद्भावस्यावश्यकत्वात् शब्दादिविषयपञ्चकवैचित्र्यमेव ज्ञेयम् ॥ १८ ॥ ❀ ❀ अनावाधे तत्कृतबाधारहिते मुनिव्रतैरहिंस्रैः । पक्षे पुरञ्जनस्य पुण्यवत्त्वात् पापाभावाच्च भोगाः निष्कण्टका एव । कोकिलकूजितैः पान्थः आत्मानमातिथ्यादानार्थमाहूतं मन्यते । अध्यात्मपक्षेऽपि तान्निष्कण्टकान् भोगान् स्वीयकुटुम्बबन्धुब्राह्मणातिथ्यादिभ्यः विभज्यैव यत्र भुंक्ते इत्यर्थः । कूजितैः यशोभिः ॥ १९ ॥ ❀ ❀ कीदृशैः दशभिर्ज्ञानकर्म्मेन्द्रियैः । एकैकं प्रत्येकं शतमनन्ता वृत्तयस्तासां नायकैः, नायिकैरिति पाठे नायिकाः स्त्रियो येषां तैः ॥ २० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

स राजा शरणं देहमित्यर्थः, अनुरूपं भोगयोग्यम् ॥ ११ ॥ ❀ ❀ कामान् विषयान् कामयमानः तस्य तस्य कामस्योपपत्तये यावतीः पुरः गवादिशरीराणि न साधु मेने । तथा च श्रुतिः 'ताभ्यो गामानयत्ता अब्रुवन्नवै नोऽयमलमि'ति । 'ताभ्योऽश्वमानयत्ता अब्रुवन्नवै नोऽयमलमि'ति ॥ १२ ॥ ❀ ❀ एकदा मनुष्यदेहप्राप्तिकाले हिमवतो दक्षिणेषु सानुषु भारतवर्षगतकर्मक्षेत्रेषु नवभिर्मुखादिरूपैश्छिद्रैरुपलक्षितानि दृष्टानि लक्षणानि यस्यामन्धपङ्ग्वादिदोषरहितां पुरं मनुष्यदेहरूपां ददर्श ॥ १३ ॥ ❀ ❀ तामनुवर्णयति प्रकारेति त्रिभिः । किञ्चित्सादृश्यमादाय त्वगादयो देहावयवाः कथासौष्ठवार्थं प्राकारादिपुरावयवतया रूप्यन्ते । प्राकारेण त्वचा उपवनैः रोमैः अट्टालैः शिरोनासादिभिः परिखैरिति पुंस्त्वमार्षत्वात् परिखाभिः अनिष्टपदार्थनिवारणार्थाभिश्चेष्टाभिः अक्षेषु चक्षुरादिषु तोरणैः पक्ष्यादिरूपैः स्वर्णरौप्यायसैः शृङ्गैः शिखरैः रजःसत्त्वतमःस्वभावैः सर्वतोगृहैराधारादिचक्रैः संकुलाम् ॥ १४ ॥ ❀ ❀ नीलाद्यरुणान्तसदृशैर्नेत्रगतकृष्णबिन्दुप्रभृतिनखान्तैरङ्गैः क्लृप्ताः हर्म्यस्थल्योऽक्षिगोलकादिरूपा यस्याः ताम् । तत्रारुणं माणिक्यम् ॥ १५ ॥ ❀ ❀ सभा समाजस्थानं हृद्रूपा 'हृदि ह्ययमात्मे'ति श्रुतेः चत्वरं चतुष्पथः सर्वतो नाडीप्रचारः रथ्या राजमार्गः सुषुम्णारूपः मुक्तिमार्गत्वात् ताभिः आक्रीडं यथेष्टरमणस्थानं तत्तुल्या स्वप्नावस्था आयतनं सुखस्थानं तत्तुल्या सुषुप्त्यवस्था आपणं व्यवहारस्थानं तत्तुल्या जागरावस्था तैश्च चैत्यं स्थितिस्थानं तत्तुल्यमज्ञानम् ध्वजाः पताकाः केशास्ताभिश्च विद्रुमवेदिनिभैरधरादिभिश्च युताम् ॥ १६ ॥ ❀ ❀ यथा पुर्या बाह्योपवनं तथा देहाद्बाह्यो विषयसमुदायः सोऽपि दिव्यद्रुमादिरूपोऽतो नात्र विशेषकल्पना इत्याशयेनाह पुर्या इति । पुर्य्याः तत्तुल्यस्य देहस्य बाह्योपवने प्रमदातुल्यायाः बुद्धेः दिव्यद्रुमयुतादिविषयकवृत्तिरूपेण संचारस्थाने विषयवर्गे प्रमदां ददर्शेति चतुर्थेनान्वयः । विषयानेवाह दिव्यद्रुमेत्यादिना । दिव्यद्रुमादिभिराकुले व्याप्ते नदतां विहङ्गालिकुलानां कोलाहलो येषु ते जलाशया यस्मिन् ॥ १७ ॥ ❀ ❀ हिमनिर्झराणां विप्रुष्मता बिन्दुयुक्तेन शीतलेन कुसुमाकरसम्बन्धिना सुगन्धेन वायुना चलन्तः प्रवाला नवपत्राणि विटपाः शाखाश्च येषां तरुविटपिभिर्नलिनीनां सरसीनां तटेषु संपत्समृद्धिर्यत्र तस्मिन् ॥ १८ ॥ ❀ ❀ नानाविधैः अरण्यमृगाणां वनपशूनां व्रातैः समूहैः मुनिव्रतैः मुनीनामिव व्रतं येषां तैः अनाबाधे बाधारहिते यत्र उपवने पान्थः कोकिलकूजितैः आत्मानमाहूतं मन्यते ॥ १९ ॥ ❀ ❀ तत्रोपवने यदृच्छया स्वभावत एवागतां प्रमदोत्तमां प्रमदोत्तमावत् जीवविमोहिनीं बुद्धिं ददर्श । तामनुवर्णयति भृत्यैरिति सार्धैश्चतुर्भिः । दशभिरिन्द्रियैः एकैकशतनायकमेकं प्रतिशतं वृत्तयस्तन्नाथैः सहायान्तीम् ॥ २० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

स पुरञ्जनः शरणं वासस्थानमन्वेषमाणः सर्वां पृथिवीं बभ्राम । स प्रभुः समर्थोऽपि यदाऽनुरूपं स्वाभिलाषानुरूपं शरणं नाविन्दत्तदा विमना इवाभूदित्यन्वयः । अध्यात्मपक्षे तु स जीवः शरणं भोगायतनं शरीरमन्वेषमाणः तत्साधनधर्माधर्मादि कुर्वन्

पृथिवीं त्रिलोकीं बभ्राम सर्वत्र जन्म प्राप। प्रभुः सर्वोपायसमर्थोऽपि यदाऽनुरूपं स्वाभिलषितभोगयोग्यं शरीरं नाविन्दत्तदा विमना इवाभूत् विषण्णचित्तो जात इत्यर्थः। तथापि श्वसूकरादियोनिष्वपि विषयानन्दस्य विद्यमानत्वात् मोक्षोपयोगिपूर्णं वैराग्यं कुत्रापि न जातमितीवशब्देन सूचयति॥ ११॥ ❀ ❀ कामान् विषयभोगान् कामयमानोऽसौ पुरञ्जनस्तस्य कामभोगस्योपपत्तये सिद्धये भूतले यावतीः यावत्यः पुरः स्थानानि ताः सर्वाः साधु योग्या न मेने इत्यन्वयः। अध्यात्मपक्षे तु "ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमि"ति श्रुत्याद्यनुरोधेन गवादिदेहानां यथाभिलषितभोगभोग्यत्वाभावात् देवादिदेहेष्वपि भोगतारतम्यदर्शनेन मनस्सन्तोषाभावात् पारलौकिकसाधनाभावेन तच्चिन्ताग्रस्तत्वाच्चासौ जीवो भूतले त्रिलोक्यां यावत्यः पुरः शरीराणि ताः प्राप्तोऽपि कामान् कामयमानः ताः सर्वास्तस्य तस्य कामभोगस्योपपत्तये प्राप्त्यै साधु न मेने, सर्वयोनिषु भ्राम्यन्नपि कुत्रापि भोगेन सन्तोषं न प्राप इत्यर्थः। तत्र हेतुः—कामान् कामयमान इति। कामस्य सर्वथा दुःपूरत्वात्। न च तर्हि मनुष्यदेहेऽपि सर्वथा कामपूर्त्यदर्शनादसम्भवाच्च पुरीं प्रविश्य मुमुदाते इति वक्ष्यमाणं कथं सङ्गच्छते इति शङ्कनीयं, मोहात् सर्वत्र हर्षविषादादिसम्भवात्। अतोऽग्रे विनश्यद्दशायां विषादस्यापि वक्ष्यमाणत्वात्। 'ये हि संस्पर्शजा भोगा दुःखयोनय एव ते' इति वाक्यात् यावत्कामित्वं तावद्दुःखित्वानपायादिति दुःखनिरासपूर्वकसुखार्थिभिः सर्वकामवासनैव प्रयत्नेन निरसनीयेत्येव तत्त्वम्॥ १२॥ ❀ ❀ अथ तत्तत्पुरीदर्शनानन्तरं एकदा कदाचिद्धिमवतः हिमाचलस्य दक्षिणेषु सानुषु नवभिर्द्वार्भिर्युक्तां अत एव लक्षितलक्षणां लक्षितानि दृष्टानि लक्षणानि तत्तद्विषयभोगोपयोगिचिह्नानि यस्यां तथाभूतां पुरं ददर्शेत्यन्वयः। अध्यात्मपक्षे तु अथ तत्तच्छरीरे कामपूर्त्यभावदर्शनानन्तरं हिमालयस्य दक्षिणदेशेषु कर्मक्षेत्रेषु भारतवर्षेषु नवभिर्द्वार्भिर्युक्तां चक्षुरादिसप्तच्छिद्राणि मुखे द्वे चाधोदेशे इत्येवं नवद्वारयुक्तां अन्धपङ्गुत्वादिदोषरहितां लक्षितलक्षणां लक्षितानि दृष्टानि शास्त्रप्रतिपादितानि लक्षणानि इहामुत्रभोगसाधनानि यस्यां तां पुरं ब्राह्मणादिशरीरं ददर्श साधुतया मेने इत्यर्थः॥ १३॥ ❀ ❀ पुरीमेवानुवर्णयति—प्राकारेति त्रिभिः। प्राकारादिभिरक्षतोरणैश्च स्वर्णादिमयानि शृङ्गाणि शिखराणि येषु तैर्गृहैश्च सर्वतः सङ्कुलां व्याप्तां ददर्शेत्यन्वयः। पक्षान्तरे तु शरीरावयवा एव प्राकारादिपुरावयवत्वेन निरूप्यन्ते। तत्राहङ्कारादिममतान्तास्त्वगादयः शरीरावरकत्वात् प्राकारा ज्ञेयाः, उपवनानि विषयसमूहाः, अट्टालो मुखम्, परिखा पतनहेतुत्वादत्र प्रवेशप्रतिबन्धकत्वाच्च निषिद्धमार्गः। परिखैरिति पुंस्त्वमार्षम्। अक्षाणि गवाक्षाः, रोमरन्ध्राणि तोरणानि दन्ताद्यवयवविशेषः, स्वर्णादिशृङ्गाणि स्वर्णादिवर्णवद्रक्तशुक्लादिवर्णवद्धातुविरचितावयवविशेषास्तद्युक्ता गृहाः आधारकुक्ष्यादिस्थानविशेषाः॥ १४॥ ❀ ❀ अरुणं माणिक्यम्। इन्द्रनीलादिभिर्मणिभिः क्लृप्ता हर्म्यस्थल्यो यस्यां ताम्। अत एव दीप्तां प्रकाशमानाम्। श्रिया शोभया भोगवतीं नागानां पुरीमिव ददर्शेत्यन्वयः। पक्षान्तरे तु नीलादिमणिवर्णा नाड्यो ज्ञेयास्ते क्लृप्ता हर्म्यस्थल्यो हृदयकण्ठभ्रूमध्यस्थानानि यस्यां ताम्। दीप्तां देहान्तरापेक्षयोत्कृष्टत्वेन प्रकाशमानाम्। तत्र हेतुः—श्रिया शोभया भोगवतीमिति। वस्तुतस्त्वभिलाषानुरूपा भोगास्तत्रापि न सन्तीति सूचयति—इवेति॥ १५॥ ❀ ❀ सभादिभिर्युक्तां पुरं ददर्शेत्यन्वयः। कथापक्षः स्पष्टार्थः। पक्षान्तरे तु सभा राजोपवेशस्थानं तच्चात्रान्तःकरणम्। चत्वरं चतुष्पथं तच्चात्र तात्वधःस्थलम्। तत्रैव मुखनासिकानयनकर्णानां चतुर्णां चत्वारो मार्गाः रथ्या राजमार्गाः तत्रेडापिङ्गलासुषुम्नाख्याः। आक्रीडायतनानि द्यूतादिस्थानानि। तान्यत्रेन्द्रियगोलकाः। आपणो हट्टः सोऽत्र मनोगोलकः। चैत्यं विश्रामस्थानं तदत्र चित्तमध्यम्। ध्वजोऽत्र भगवद्वैमुख्यरूपस्तत्र पताकाः अविद्यास्मितारागद्वेषाभिनिवेशात्मकाः पञ्च क्लेशाः। विद्रुमवेद्योऽत्र आधारादिचक्रमध्यवर्तिस्थानविशेषाः। एवं सभादिभिर्युक्ताम्॥ १६॥ ❀ ❀ पुर्यास्तु बाह्योपवने यदृच्छया तत्रागतां प्रमदोत्तमां ददर्शेति चतुर्थेनान्वयः। दिव्यैर्मनोहरैः द्रुमैर्लताभिश्चाकुले व्याप्ते नदतां विहङ्गालिकुलानां कोलाहलो येषु ते जलाशया यस्मिंस्तस्मिन्। अध्यात्मपक्षे तु 'ममाहमिति यत्कृतम्' इति वक्ष्यमाणत्वात् मायाकार्यभूता या विषयोन्मुखा बुद्धिस्तत्सम्बन्धेन मोहितस्य जीवस्य अन्तःकरणाध्यासप्राणाध्यासेन्द्रियाध्यासदेहाध्यासपूर्वकं स्वरूपविस्मरणे संसार इति निरूपयन् पूर्वं बुद्धिविशेषणभूतान् विषयानेव बाह्योपवनत्वेन वर्णयति—पुर्या इति त्रिभिः। तत्र रूपरसगन्धस्पर्शशब्दाश्रयत्वेन स्रक्चन्दनवनितादीनां द्रुमलताजलाशयादिभावः। रसादिभोक्तृत्वेन शब्दकर्तृत्वेन च वनितापुत्रादीनामेव विहङ्गालिकुलत्वं च कोलाहलश्च तेषां विहारादिकमेवेति ज्ञेयम्॥ १७॥ ❀ ❀ हिमनिर्झराणां विप्रुषो विन्दवस्तद्वता कुसुमाकरसम्बन्धिवायुना चलन्तः प्रवाला विटपाः शाखाश्च येषां तैर्विटपैर्वृक्षैः नलिनीनां सरसीनां तटेषु सम्पत् समृद्धिर्यस्मिंस्तस्मिन्। अध्यात्मपक्षे तु हिमनिर्झरविप्रुष्मदिति रससम्पत्तिः, कुसुमाकरेति सुगन्धसम्पत्तिः, वायुना चलत्प्रवालविटपेति स्पर्शसम्पत्तिः, नलिनीतटसम्पदीति रूपसम्पत्तिश्च प्रदर्शिता ज्ञेया॥ १८॥ ❀ ❀ मुनिव्रतैरहिंस्रैर्नानारण्यमृगव्रातैरनाबाधे तत्कृतबाधारहिते यत्रोपवने कोकिलकूजितैः पान्थो मार्गगामी पुरुष आत्मानमाहूतं मन्यते तत्रेत्युत्तरेणान्वयः। पक्षान्तरे तु नानाप्रकारवनमृगतुल्या भृत्यादयः तेषां स्वाम्यधीनत्वेन तैर्विषयभोगे बाधासम्भवान्मुनिव्रतत्वम्। कोकिलशब्देन दारापत्यादयस्तेषां कूजितैः प्रियवचनैः पान्थोऽन्योपि संसारमार्गे वर्त्तमानो विषयी जीव आत्मानमाहूतं मन्यते तद्गृहे भोक्तुमायातीत्यर्थः। कूजितपदेन मनोहरशब्दसम्पत्तिर्दर्शिता॥ १९॥ ❀ ❀ तत्रागतां स्त्रियमेव वर्णयति—यदृच्छयेति पञ्चभिः। एकैकशतनायकैः प्रत्येकं शतानामनन्तानां नायकैः स्वामिभिर्दशभिर्भृत्यैः सह आयान्तीं यदृच्छया तत्रोपवने आगतां प्रमदोत्तमां ददर्शेत्यन्वयः। अध्यात्मपक्षे तु यदृच्छयेत्यनेन जीवबुद्धिसम्बन्धस्याकस्मिकत्वेन दुर्निरूप्यत्वं दर्शयति। मायावृत्तिरूपत्वात्तस्याः स्त्रीत्वम्। रजोव्याप्तत्वात् प्रकृष्टो मदो यस्या इति

प्रमदात्वम्। पश्चादिवुद्ध्यपेक्ष्योत्कृष्टत्वादुत्तमत्वम्। दशेत्युपलक्षणमेकादशमहाभटा इति वक्ष्यमाणत्वात्। योग्यविषयप्रापकत्वात् एकादशेन्द्रियाणां बुद्धिभृत्यत्वम्। तत्तद्विषयकानन्तवृत्तीनामिन्द्रियाधीनत्वात् तेषां प्रत्येकमनन्तवृत्तिनायकत्वम्॥ २०॥

भाषानुवादः

राजा पुरञ्जन अपने रहने योग्य स्थानकी खोजमें सारी पृथ्वीमें घूमा; फिर भी जब उसे कोई अनुरूप स्थान न मिला, तब वह कुछ उदास-सा हो गया॥ ११॥ ❁ ❁ उसे तरह-तरहके भोगोंकी लालसा थी; उन्हें भोगनेके लिये उसने संसारमें जितने नगर देखे, उनमेंसे कोई भी उसे ठीक न जँचा॥ १२॥ ❁ ❁ एक दिन उसने हिमालयके दक्षिण तटवर्ती शिखरोंपर कर्मभूमि भारतखण्डमें एक नौ द्वारोंका नगर देखा, वह सब प्रकारके सुलक्षणोंसे सम्पन्न था॥ १३॥ ❁ ❁ सब ओरसे परकोटों, बगीचों, अटारियों, खाइयों, झरोखों और राजद्वारोंसे सुशोभित था और सोने, चाँदी तथा लोहेके शिखरोंवाले विशाल भवनोंसे खचाखच भरा था॥ १४॥ ❁ ❁ उसके महलोंकी फर्शें नीलम, स्फटिक, वैदूर्य, मोती, पन्ने और लालोंकी बनी हुई थीं। अपनी कान्तिके कारण वह नागोंकी राजधानी भोगवतीपुरीके समान जान पड़ता था॥ १५॥ ❁ ❁ उसमें जहाँ-तहाँ अनेकों सभा-भवन, चौराहे, सड़कें, क्रीडाभवन, बाजार, विश्राम-स्थान, ध्वजा-पताकाएँ और मूँगेके चबूतरे सुशोभित थे॥ १६॥ ❁ ❁ उस नगरके बाहर दिव्य वृक्ष और लताओंसे पूर्ण एक सुन्दर बाग था; उसके बीचमें एक सरोवर सुशोभित था। उसके आस-पास अनेकों पक्षी भाँति-भाँतिकी बोली बोल रहे थे तथा भौंरे गुंजार कर रहे थे॥ १७॥ ❁ ❁ सरोवरके तटपर जो वृक्ष थे, उनकी डालियाँ और पत्ते शीतल झरनोंके जलकणोंसे मिली हुई वासन्ती वायुके झकोरोंसे हिल रहे थे और इस प्रकार वे तटवर्ती भूमिकी शोभा बढ़ा रहे थे॥ १८॥ ❁ ❁ वहाँके वन्य पशु भी मुनिजनोचित अहिंसादि व्रतोंका पालन करनेवाले थे, इसलिये उनसे किसीको कोई कष्ट नहीं पहुँचता था। वहाँ बार-बार जो कोकिलकी कुहू-ध्वनि होती थी, उससे मार्गमें चलनेवाले बटोहियोंको ऐसा भ्रम होता था मानो वह बगीचा विश्राम करनेके लिये उन्हें बुला रहा है॥ १९॥ ❁ ❁ राजा पुरञ्जनने उस अद्भुत वनमें घूमते-घूमते एक सुन्दरीको आते देखा, जो अकस्मात् उधर चली आयी थी। उसके साथ दस सेवक थे, जिनमेंसे प्रत्येक सौ-सौ नायिकाओं का पति था॥ २०॥

पञ्चशीर्षाहिना गुप्तां प्रतीहारेण सर्वतः। अन्वेषमाणामृषभमप्रौढां कामरूपिणीम्॥ २१॥
सुनासां सुदतीं बालां सुकपोलां[1] वराननाम्। समविन्यस्तकर्णाभ्यां बिभ्रतीं कुण्डलश्रियम्॥ २२॥
पिशङ्गनीवीं सुश्रोणीं श्यामां कनकमेखलाम्। पद्भ्यां क्वणद्भ्यां चलन्तीं नूपुरैर्देवतामिव॥ २३॥
स्तनौ व्यञ्जितकैशोरौ समवृत्तौ निरन्तरौ। वस्त्रान्तेन निगूहन्तीं व्रीडया गजगामिनीम्॥ २४॥
तामाह ललितं वीरः सव्रीडस्मितशोभनाम्। स्निग्धेनापाङ्गपुङ्खेन स्पृष्टः प्रेमोद्भ्रमद्भ्रुवा॥ २५॥
का त्वं कञ्जपलाशाक्षि कस्यासीह कुतः सति। इमामुपपुरीं भीरु किं चिकीर्षसि शंस मे॥ २६॥
क एतेऽनुपथा[2] ये त एकादश महाभटाः। एता वा[3] ललनाः सुभ्रु कोऽयं तेऽहिः पुरःसरः॥ २७॥

त्वं ह्रीर्भवान्यस्यथ[4] वाग्रमा पतिं[5] विचिन्वती किं मुनिवद्रहो वने।
त्वदङ्घ्रिकामाप्तसमस्तकामं[6] क्व पद्मकोशः पतितः कराग्रात्॥ २८॥
नासां वरोर्वन्यतमा भुविस्पृक् पुरीमिमां वीरवरेण साकम्।
अर्हस्यलङ्कर्तुमदभ्रकर्मणा लोकं परं श्रीरिव यज्ञपुंसा॥ २९॥
यदेष मापाङ्गविखण्डितेन्द्रियं सव्रीडभावस्मितविभ्रमद्भ्रुवा।
त्वयोपसृष्टो भगवान्मनोभवः प्रबाधतेऽथा[7]नुगृहाण शोभने॥ ३०॥

अन्वयः—प्रतीहारेण पञ्चशीर्षाहिना सर्वतः गुप्ताम् ऋषभम् अन्वेषमाणाम् अप्रौढाम् कामरूपिणीम् सुनासाम् सुदतीम् बालाम् सुकपोलाम् वराननाम् समविन्यस्तकर्णाभ्याम् कुण्डलश्रियं बिभ्रतीम् पिशंगनीवीम् श्यामाम् कनकमेखलाम् नूपुरैः क्वणद्भ्याम् पद्भ्याम् चलन्तीम् देवताम् इव व्यंजितकैशोरौ समवृत्तौ निरंतरौ स्तनौ व्रीडया वस्त्रांतेन निगूहंतीम्

१. प्रा० पा०—सुकपोलवरान०। २. प्रा० पा०—एते ते पुरोगा ये। ३. प्रा० पा०—एताश्च। ४. प्रा० पा०—श्रीर्भवान्य०। ५. प्रा० पा०—वा उमा पतिं। ६. प्राचीने पाठे 'समस्त'—अयमंशः खण्डितः। ७. प्रा० पा०—ते मानुगृहाण।

गजगामिनीम् ॥ २१-२४ ॥ ❀ ❀ ताम् सव्रीडस्मितशोभनाम् प्रेमोद्भ्रमद्भ्रुवा स्निग्धेन अपांगपुंखेन स्पृष्टः वीरः ललितम् आह ॥ २५ ॥ ❀ ❀ कंजपलाशाक्षि सति त्वम् का कस्य असि इह कुतः भीरु इमाम् उपपुरीम् किम् चिकीर्षसि मे शंस ॥ २६ ॥ ❀ ❀ एते ये ते अनुपथाः एकादश महाभटाः के सुभ्रुः वा एताः ललनाः काः अयं ते पुरःसरः अहिः कः ॥ २७ ॥ ❀ ❀ त्वम् ह्रीः भवानी वाक् अथ रमा मुनिवत् रहः वने त्वदंघ्रिकामाप्तसमस्तकामम् पतिम् विचिन्वती असि किम् कराग्रात् पद्मकोशः क्व पतितः ॥ २८ ॥ ❀ ❀ वरोरु भुविस्पृक् अन्यतमा न श्रीः यज्ञपुंसा परम् लोकम् इव अदभ्रकर्मणा वीरवरेण साकम् इमाम् पुरीम् अलंकर्तुम् अर्हसि ॥ २९ ॥ ❀ ❀ यत् शोभने सव्रीडभावस्मितविभ्रमभ्रुवा त्वया उपसृष्टः एषः भगवान् मनोभवः अपांगविखंडितेंद्रियम् मा प्रबाधते अथ अनुग्रहाण ॥ ३० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

पंच शीर्षाणि वृत्तयो यस्य तेनाहिना प्राणेन प्रतीहारेण पालकेन गुप्तां रक्षिताम्। ऋषभं भर्तारम्। अप्रौढां षोडशवार्षिकीम् ॥ २१ ॥ ❀ ❀ गंधज्ञानादिभिर्बुद्ध्यवयवैः सुनासत्वादि निरूप्यते। समं विन्यस्तौ रचितौ कर्णौ ताभ्यां कुंडलश्रियं कुंडलशोभां दधतीम् ॥ २२ ॥ ❀ ❀ "अन्नमयं हि सौम्य मन इति यत्कृष्णं तदन्नस्य" इत्यादिश्रुत्यनुसारेण श्यामामित्युक्तम्। नूपुरैः क्वणद्भ्याम्। नूपुरेण पादांगुलीयकानामप्युपलक्षणाद्बहुवचनम् ॥ २३ ॥ ❀ ❀ व्यंजितं कैशोरं यौवनोपक्रमो याभ्यां तौ। समौ च वृत्तौ च ॥ २४ ॥ ❀ ❀ तामाहेति तयोः संवादोक्तिः संबंधदार्ढ्याय। अपांग एव पुंखो मूलप्रांतो यस्य कटाक्षरूपस्य बाणस्य तेन स्पृष्टो विद्धः प्रेम्णा उच्चैर्भ्रमंतौ भ्रुवौ धनुःस्थानीया यस्मिंस्तेन ॥ २५ ॥ ❀ ❀ कुतः स्थानादिहागताऽसि। हे सति पुर्याः समीपस्था उपपुरी भूस्तामालक्ष्य किं कर्तुमिच्छसीत्यर्थः ॥ २६ ॥ ❀ ❀ ते तव येऽनुपथा अनुवर्तिन एते के एकादशो महान्भटो बृहद्बलत्वेन वक्ष्यमाणो येषु दशसु ते। बुद्धेर्मनसः पृथगुपादानं बुद्धिपरिचारकेंद्रियसहायतया तत्परिचारकत्वविवक्षया ॥ २७ ॥ ❀ ❀ त्वं ह्रीः किं पतिं धर्मं विचिन्वती। अथ वा भवानी पतिं शिवं विचिन्वती। अथ वा किं वाक् सरस्वती पतिं ब्रह्माणम्। रमा लक्ष्मीः पतिं विष्णुम्। मुनिरिव संयता सती। कथंभूतं पतिम्। त्वदंघ्रिकामेनैव त्वत्कृतया त्वदंघ्रिकामनयैव प्राप्ताः समस्ताः कामा येन तम् ॥ २८ ॥ ❀ ❀ हे वरोरु आसां ह्रीप्रभृतीनां मध्ये त्वमन्यतमाऽपि न संभवसि। यतो भुविस्पृक्। न हि देवता भुवं स्पृशंति। वीरवरेण मया। ननु त्वमकर्मा कथं त्वया सहालंकरोमीति चेत्तत्राह। अदभ्रमनल्पं कर्म त्वत्संगाद्यस्य मम तेन स्वतोऽकर्मत्वेन त्वत्संगात्सकर्मा भवामीत्यर्थः। परं वैकुंठम् ॥ २९ ॥ ❀ ❀ यद्यस्मात्त्वपांगेन विखंडितमिंद्रियं मनो यस्य तं मां मनोभवो बाधते अथ तस्मादनुगृहाण सव्रीडं यद्भावेन प्रेम्णा स्मितं तेन विभ्रमंती याभूस्त्वयोपसृष्टः प्रेरितः ॥ ३० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

भर्त्तारं स्वस्योपभोक्तारं पतिं जीवम्। अप्रौढामपरिगृहीतपाणिमिव स्थिताम्। यद्वा-यथाऽप्रौढैव कांता पतिं मोहयति तथैवाविद्यावृत्तिबुद्धिर्जीवमित्यर्थः। कामरूपिणीं नित्यविविधशृङ्गारधारिणीम्। पक्षे विविधवासनावतीम् ॥ २१ ॥ ❀ ❀ गंधज्ञानादिभिर्बुद्धिवृत्तिभिरेवावयवैः सुनासत्वादि निरूप्यते। रसास्वादचर्वणासक्तयो दंताः। सुकपोलत्वं बुद्धेः स्वच्छता। आननं बुद्धेरग्रभागः। समं यथा स्यात्तथा कौशलेन विन्यस्ताविव यौ कर्णौ कुंडलशोभां प्रवृत्तिनिवृत्तिशास्त्रार्थमवधारयंतीम् ॥ २२ ॥ ❀ ❀ पिशंगनीवीं पीतांबरां रजोगुणमयसमस्तकर्मावृताम्। सुश्रोणीं शोभनविषयोपरक्ताम्। श्यामां तमोगुणप्रचुरत्वात्तच्च तस्या जीवान्प्रति सूर्यस्थानीयेश्वरावरकमेघस्थानीयत्वात्। स्वामिचरणैस्तु-बुद्धिमनसोरैक्यविवक्षयैव श्रुत्यवष्टंभेन व्याख्यातमिति ज्ञेयम्। क्वणद्भ्यामिति चलतीमित्याभ्यां बुद्धेरस्थैर्यमेव शास्त्रेषु शब्दितमिति द्योतितम् ॥ २३ ॥ ❀ ❀ स्तनौ रागद्वेषौ यदुक्तम् "इंद्रियस्येंद्रियस्यार्थे रागद्वेषौ व्यवस्थितौ। तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ" इति। व्यंजितकैशोरावित्यत एव वृद्धस्यापि रागद्वेषौ नित्यतरुणावेव लोके दृश्येते समौ तुल्यौ वृत्तौ वर्तुलौ च। पक्षे समं तुल्यमेव वृत्तं पुंमात्रमोहनं चरित्रं ययोस्तौ निरन्तरावतिपीनत्वान्मूलदेशेऽवकाशशून्यौ। पक्षे वस्तुतस्तयोरैक्येन निर्भेदौ। यदुक्तं-"काम एष क्रोध एष रजोगुणसमुद्भवः" इति निगूहंतीमिति। रागद्वेषावपि शिष्टजनैर्ह्रीविनयाभ्यां निह्नूयेते एव ॥ २४ ॥ ❀ ❀ अविद्यावृत्त्या जीवः स्वमिच्छयैव बध्नाति न तु तमीश्वरो बलात्कारेण तया बध्नातीति वक्तुं तयोः संबंधस्य प्रकारमाह-तामाहेति। स्निग्धेन स्निग्धत्वादलब्धभंगेनापांगरूपेण पुंखेन तत्पर्यंतेनापि कटाक्षशरेण विद्ध इत्यर्थः। यतो वीरः वीरत्वादेव तदप्युक्तांत इत्यर्थः। पक्षे भोगोत्साहवत्त्वाद्वीरः। अयमर्थः-अविद्या खलु भोग्यपदार्थभूतं स्वं दर्शयति जीवस्तत्र सुरसबुद्ध्या भोक्तृत्वमंगीकुर्वन्ननुरज्यति ईश्वरस्तु तत्र विरसबुद्ध्या ततो विरज्यतीति ॥ २५ ॥ ❀ ❀ यद्यपि बुद्ध्यादिभिः सहैव जीवस्य सर्वदा स्थितिस्तथापि मनुष्यशरीरसंबंधिनो बुद्ध्यादयो विलक्षणा भवन्तीत्यनुरागेण च तां बुद्धिमपरिचिन्वन्निव पृच्छति-केति। इत्यर्थ इति ते वासादिरुचिस्तर्ह्यहमपि वासकाम एवैकाकित्वादत्र न विशामीति भावः। कंजपलाशाक्षि सतीति संबुद्धिद्वयेन यौवनं मुधा न नेयं सत्यास्ते स्वानुरूपः पतिर्ग्राह्य एवेति ध्वनितम्। भीरु इत्येनेन पुर्यामेकाकिनी कथं तिष्ठेयमिति मा भैर्द्वितीयोऽहमागतोस्मीति ध्वन्यते ॥२६॥ ❀ ❀ अनुपथा इत्यनेनैते पतय इति। सुभ्रू इति। ललनास्सविलासा

अप्येतास्तदपि त्वमेव सुभ्रूत्वेन स्वामिनी प्रतीयसे। यस्ते पुरस्सरः सोऽहिः हिनोति सततं गच्छतीति हिः न हिर्यस्मात्सोऽहिरस्थिरोऽतो नायमपि पतित्वेन वरणीय इत्यसूचि॥ २७॥ ❀ ❀ लोके ह्यविवेकात्स्वबुद्ध्युत्कर्षाभिमानोऽखिलस्यास्तीति पुरंजनवाक्येनाभिव्यंजयति–त्वं ह्रीरिति। तस्या मुखनेत्राद्यावरणव्यंजितां ह्रियमालक्ष्याह–न त्वं ह्रीमती किं तु साक्षात्स्वयं ह्रीरेव मां मोहयंती सती किं पतिं धर्मं विचिन्वती अत्र वने रहो वर्त्तसे इति। स्वबुद्धिवृत्तिमाधुर्य्यैः स्वमोहनप्रपंचैः। भवानीति सौंदर्यमालक्ष्योक्तिः। वागिति तस्या महाबुद्धिमत्त्वमालक्ष्य। लक्ष्मीरिति महासंपत्तिमालक्ष्य। त्वदंघ्रीति लोकेऽपि स्वबुद्धिवलाधीनमेव सर्वमैश्वर्य्यं सर्वस्येति प्रसिद्धेः। केति। पद्मकोशो लीलाकमलं स च जीवस्य विवेक एव तया तदलक्षितमेव स्वहस्तवशीकृत्य दूरतः क्षिप्त इति ज्ञेयम्॥ २८॥ ❀ ❀ त्वदनुरूपोऽहमेवेति वक्तुं स्वकृतं संदेहं स्वयमेव निरस्यति–तासामिति। हे वरोरु इति पत्नीभावेनोक्तम्। पक्षे किञ्चिद्विवेकप्राप्त्या स्वबुद्धिं न सर्वोत्कृष्टां मन्यते लोकः, किं तु स्वानुरूपामेवेति भावः। तदुक्तम्—"यदा किंचिज्ज्ञोहं द्विप इव मदांधः समभवं तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः। यदा किञ्चित्किञ्चिद् बुधजनसकाशादवगतं तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः॥" इति भर्तृहरिणा। स्वामिव्याख्याने नन्वित्याशंक्येत्यर्थ इति समाहितम्। तत्रायं भावः–यथा दाहशक्तिरहितमपि लोहमग्निसंगेन दाहकं भवति तथा ममाकर्मणोपि "विज्ञानं यज्ञं तनुते" इत्यादिश्रुतेः क्रियाशक्तिमत्यास्तव संगात्क्रियावत्त्वं नाद्भुतमिति ज्ञेयम्॥ २९॥ ❀ ❀ इंद्रियं चक्षुः। पक्षे विखंडितज्ञानचक्षुर्षं मनोभवो वैषयिकीवासनोपसृष्टः तयैवाधिक्येन निर्मितो मां बाधतेऽनुगृहाण त्वदीयान् शब्दस्पर्शानुपभोक्तुं लभेयेत्यर्थः। वस्तुतो न गृहाण स्वभगिनीं विद्यां दर्शयेति दैवघटितोर्थः। यदेष तेपांगेति अर्थोपसृष्ट इति प्रबाधतेऽथो अनुगृहाणेति प्रथमतृतीयचतुर्थचरणेषु पाठो दृश्यते तत्र त्वयेति चित्सुखसंमतः। किन्तु यदेष तेऽपांगेति अथोपसृष्ट इति प्रबाधते मानुगृहाणेत्येव पाठः स्वामिसम्मतो लक्ष्यते। शोभने इति। मदनुग्रहेणैव तव शोभनत्वं सेत्स्यत्यन्यथा नेति भावः। भगवानिति मनोभवस्य दुर्जयत्वं वक्ति॥ ३०॥

### श्रीमद्वीरराघवव्याख्या

पञ्च शीर्षाणि पञ्च वृत्तयो यस्य तेनाहिना प्राणेन प्रतिहारेण पालकेन अहेर्वायुभक्षत्वेन तत्प्रचुरत्वादहिनेत्युक्तं, सर्वतो गुप्तां रक्षितां सर्वेषामिन्द्रियाणां प्राणाधीनवृत्तित्वादहिना गुप्तामित्युक्तम् ऋषभं पतिमन्वेषमाणाम्, अनेन चेतनैकधार्यत्वं तत्प्रवर्त्यत्वञ्च विवक्षितम्। अप्रौढामिति बुद्धेश्चेतनेन सह संवन्धदशायामप्रौढप्रमदेव कार्याक्षमत्वेऽपि तद्योग्यतास्तीति सूचयति। कामरूपिणीमित्यनेन गन्धरसादिज्ञानभेदभिन्नतां सूचयति॥ २१॥ ❀ ❀ तदेव प्रपञ्चयति सुनासामिति। बुद्धिवृत्तयो हि गन्धरसादिज्ञानभेदेन तदवान्तरभेदेन च बहुविधाः, ताभिर्बुद्धिवृत्तिभिस्तस्याः सुनासत्वादि रूप्यते। सुनासां शोभना नासा गन्धात्मिका घ्राणेन्द्रियवृत्तिर्यस्यास्ताम्। एवमग्रेऽपि दन्तकपोलाननश्रोणिपादस्तनादिव्यापारजन्यहर्षादीनामपि बुद्धिवृत्तित्वात्ताभिः सुदन्तत्वादिरूपणं क्रियते। नासिकादन्तकपोलाननकरश्रोणिपादस्तनादिविशेषणभूतानां शोभनत्वसमविन्यस्तत्वादीनामपि स्वविशेष्यभूतनासिकादेर्गन्धादिवृत्तिद्वारा बुद्धिविशेषणत्वं द्रष्टव्यम्। समविन्यस्तौ रचितौ कर्णौ ताभ्यां कुण्डलशोभां दधतीम् "अन्नमयं हि सौम्य ! मनः" इति "यत् कृष्णं तदन्नस्य" त्यादिश्रुत्यनुसारेण श्यामामित्युक्तं कुण्डलश्रीसम्वन्धः कुण्डलालंकृतकर्णाधिकरणश्रोत्रेन्द्रियश्रवणवृत्तिद्वारा॥ २२॥ ❀ ❀ एवं पिशङ्गनीवीकनकमेखलासंबन्धोऽपि स्तननाभिनितम्बव्यापारजन्यहर्षादिवृत्तिद्वारेति द्रष्टव्यं, नूपुरैः क्वणद्भ्यां पद्भ्यां चलन्तीं नूपुरगमनसंवन्धोऽपि पादेन्द्रियवृत्तिद्वारा। कथापक्षे स्पष्टं नूपुरैरिति बहुवचनं पादाङ्गुलीयकानामुपलक्षणमन्यथा नूपुराभ्यामिति श्रूयेत॥ २३॥ ❀ ❀ व्यञ्जितं कैशोरं यौवनोपक्रमो याभ्यां समौ च तौ वृत्तौ च निर्गतावन्तरात् संश्लिष्टावित्यर्थः, स्तनौ व्रीडया लज्जया वस्त्रान्तेन निगूहन्तीं छादयन्तीं गज इव गच्छतीति तां गजगामिनीम्॥ २४॥ ❀ ❀ व्रीडया सहितं यत्स्मितं तेन शोभनां सुन्दरां प्रति वीरः पुरञ्जनः प्रेम्णोच्चैर्भ्रमन्त्यौ भ्रुवौ यस्मिंस्तेन स्निग्धेनापाङ्ग एव पुङ्खो मूलप्रान्तो यस्य कटाक्षबाणस्य तेन स्पृष्टो विद्धः सललितं यथा तथाह। तयोः संवादोक्तिः संबन्धदार्ढ्यायेति ज्ञातव्यम्॥ २५॥ ❀ ❀ हे पद्मदललोचने ! का त्वं किंजातीयकेति प्रश्नः कस्य संबन्धिनी पुत्री असि कुतः स्थानादिहागतासि हे सति ! इमामुपपुरीमस्याः पुर्य्याः समीपे किं कर्तुमिच्छसि॥ २६॥ ❀ ❀ एतेऽनुपथा अनुवर्तिनः क एते एकादश महाभटाः बुद्धिमनसोर्वृत्तिकृतभेदमाश्रित्य मनसा सहेन्द्रियाणामेकादशत्वादेकादशो महाभटो मनोरूपो येषां ते क एते इत्युक्तं, हे सुभ्रु ! एता ललनाः का इति वृत्त्यभिप्रायेण प्रश्नः, तासामानन्त्यादेता इति निःसङ्ख्याको निर्देशः। पुरःसरति गच्छतीति पुरःसरोऽहिः सर्पः कः, प्राणे व्याप्रियमाणे तदनु सर्वेन्द्रियव्यापारात् पुरःसर इत्युक्तं बुद्धिस्वरूपतत्कारणतत्संबन्धकारणतत्कार्यवित्सु प्राचीनबर्हिरादिलोकाभिप्रायकं का त्वमिति प्रश्नकथनं ज्ञानकर्मोभयेन्द्रियाणां प्रवृत्तिः बुद्धिधायत्ता उत इति संशयनिराचिकीर्षाभिप्रायकं, क एतेऽनुपथा इति प्रश्नकथनं बुद्धिरपि प्राणायत्तप्रवृत्तिरिति ख्यापनाय कोऽयं तेऽहिः पुरःसर इति प्रश्नोक्तिः॥ २७॥ ❀ ❀ त्वं ह्रीरिति। यस्यास्तवाङ्घ्रिकामनयैवाप्ताः कामा यस्य तं पतिं मुनिवद्वने रहः एकान्ते विचिन्वती त्वं वराहं विचिन्वती ह्रीः भूमिः उत शङ्करं विचिन्वती भवानी आहोस्विद् ब्रह्माणं विचिन्वती वाक् सरस्वती अथवा विष्णुं विचिन्वती रमा लक्ष्मीरसि। यदि रमा तर्हि पद्मकोश

करात्पतन् पतितः कराग्रे पद्मकोशाभावान्न रमेत्यर्थः। एवं रमादिरूपेणोत्प्रेक्षोक्तिः रमादीनां विष्ण्वादिभिरिवानादिदृढतरसंबन्धख्यापनाय कथासौन्दर्याय वा। एवमग्रेऽप्यनुपयुक्तं कथासौन्दर्यायेति द्रष्टव्यम्॥ २८॥ ❀ ❀ एवं ह्रयाद्यन्यतमत्वेन संभाव्यासां मध्ये कापि त्वं न भवसीत्याह नासामिति। हे वरोरु! आसां ह्रीभवानीवाग्रमाणां मध्येऽन्यतमा नासि न भवसि। तत्र हेतुः यतस्त्वं भुवः स्पृक् भुवं स्पृशतीति भूस्पृक्। न हि रमादीनामन्यतमा देवता भुवं स्पृशतीति भावः। अतो मत्प्रार्थितं कुर्वित्याह अर्हसीति। अदभ्रकर्मणानल्पकर्मणा वीरवरेण वीरश्रेष्ठेन मया साकं सह इमां पुरीं नवमुखीमलङ्कर्तुं शोभयितुमर्हसि। परं लोकं वैकुण्ठं यज्ञपुंसा विष्णुना सह श्रीर्लक्ष्मीरिव मया सह पुरीं प्रविश्य सुखमनुभवेत्यर्थः॥ २९॥ ❀ ❀ यद्यस्मात्तवापाङ्गेन विखण्डितमिन्द्रियं मनो यस्य तं मां सव्रीडं यद्भावेन प्रेम्णा स्मितं तेन सविभ्रमाया या भ्रूस्तयोपसृष्टः एष मनोभवः कामः प्रबाधते अथ अनुगृहाण हे शोभने॥ ३०॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अत्र पुरंजनस्य ये भृत्या याश्च भार्याद्यास्ते सर्वेऽपि मानुषेन्द्रियाभिमानिनः। गायत्र्याद्या देहेन्द्रियतद्वृत्तीनामभिमानिन्य इति। तदुक्तम् "ये पुरंजनभृत्याद्या भार्याद्याः सर्व एव च। तेऽपि मानुषबुद्ध्यादेर्विज्ञेया अभिमानिनः॥ गायत्र्याद्यास्तु देवानां तेऽपि चैतेषु संस्थिताः। अलक्ष्मीद्वापराद्यास्तु आसुरास्तेऽपि मानुषाः॥" इति। तेषां सर्वेषां परिवृढो मनोनामा जीवो वा तत्तद्विषयवैचित्र्यमपेक्ष्य मनसो बहुरूपत्वं जीवस्य तु योनीनां वैचित्र्यात्॥ २१॥ पञ्चशीर्षाहिना प्राणादिपञ्चवृत्त्याख्यशिरसा मुख्यप्राणाख्यसर्पेण प्रतीहारेण द्वारपालकवद्वर्तमानेन ऋषभं पतिं स्वकृत्यनुकूलवृत्तिलक्षणं पुरुषमित्यर्थः, अत एवाप्रौढामनूढामपरिगृहीतपाणिमिव स्थितामित्यर्थः, कामरूपिणीं विषयवैचित्र्यात्तत्तदाकारानुमिताकाराम्॥ २१॥ ❀ ❀ उन्नताभिमानलक्षणनासिकां सुदतीं विषयवृत्तिलक्षणदन्ताम् बालां सुकुमारवृत्तिं बाह्याभ्यन्तरवृत्तिलक्षणाभ्यां शोभनाभ्यां वरं वरणीयमाननं चेष्टा यस्याः सा तथा ताम्, मन-चेष्टायामिति धातुः, समं यथा तथा विन्यस्ताभ्यां कल्पिताभ्यां बाह्यान्तःकरणविशेषाभ्यां संकल्पविकल्पभेदेन द्वाभ्यां मनोरूपाभ्यां कुण्डलश्रियं विषयेषु परिवर्तनश्रियं बिभ्रतीं वर्तयन्तीम्॥ २२॥ ❀ ❀ पिशङ्गा विषयोपरक्ता नीवी आच्छादनवृत्तिर्यस्याः सा तथा तां सुश्रोणीं सुष्ठ्वाश्रयवृत्तिमतीं श्यामां तमोगुणप्रचुरां कनकमेखलां रजोगुणलक्षणसुवर्णकाञ्चीं पद्भ्यां रजस्तमोविकृतवृत्तिविशेषाभ्यां नुपूरैः शिशुकलभाषणलक्षणैः कणद्भ्यामित्यादिप्रयोगा लक्षणावृत्त्या ऊहनीयाः, न वाच्यवृत्त्या। कचिच्चानयेति क्वचित्सद्वृत्तिविषयत्वाद् देवतामिवेति॥ २३॥ ❀ ❀ व्यञ्जितकैशोरौ अभिव्यञ्जितमध्यमावस्थौ मध्यमां बुद्धिसंस्थामित्युक्तेः ध्वन-स्तन-शब्द इति धातोः स्तनौ शब्दौ समवृत्तौ वर्णवृत्तलक्षणोपेतौ निरन्तरमेकस्मिन्नेव वृत्ते विद्यमानौ गुरुलघुभेदरहिताविव्यर्थः। व्रीडया वृत्तिविशेषेण वस्त्रान्तेन वस-आच्छादन इति धातोराच्छादनशीलवृत्तिभागेन निगूहन्तीमनभिव्यक्तिं कुर्वाणां गजगामिनीं गजवदूर्ध्वमूलाधारादायान्तीं बुद्धिम्॥ २४॥ ❀ ❀ आहेति। स्वकार्यविषये प्रवर्त्तयितुमभिमुखीचकार वीरो विशिष्टप्राणबलोपेतः सव्रीडस्मितशोभिनीं स्वकार्याभिमुखीम् अपाङ्गप्रेमेत्यादिनापि तत्तद्योगवृत्तिविशेषं लक्षयति। प्रेम्णा भ्रमन्ती भ्रूः प्रेमभ्रमद्भ्रूस्तया॥ २५॥ ❀ ❀ का त्वमित्यादिलोकानुकारवचनं भ्रान्त्या प्रलापो वा, उपपुरीमित्यनेन ज्ञायते अन्यथोपपुरीति ह्रस्वत्वेन प्रयोगः स्यात्। देहसमीपे वर्त्तमानाम्॥ २६॥ ❀ ❀ अनुपथाः स्वमार्गमनुवर्त्तमाना ये इमे मनसा सह एकादशभटा एते लल-विलास इति धातोः ललना विलासोपेता वृत्तिविशेषाः हि-गताविति धातोः अहिरगतः सहव्रजः पुरःसरो नासिकारन्ध्रचरः श्वासः॥ २७॥ ❀ ❀ त्वं ह्रीरित्यादिकमनुकरणं लज्जावृत्तिविशिष्टत्वात् ह्रीः संकल्पवृत्त्या भवानीति वचनवृत्त्या वाक् रमणवृत्त्या रमा पतिं देहस्वामिनं वने देहलक्षणे वासनावने मुनिवन्मनोवत् त्वदङ्घ्रिसाम्येनाप्ताः समस्ताः कामा येन स तथा अघिरघिलघि-गत्यर्था इति धातोः यथा अङ्घ्र्योर्गतिसाधनत्वं तथा मनसोऽपि मनसा संकल्प्य पुरुषस्य विषयोपगमनात्। पद्मकोशः कन्दुकलक्षणम् मनः कराग्राद् वृत्तिविशेषात्पतितो गतः क कां वृत्तिमुपगत इति बाह्यार्थः स्पष्टः॥ २८॥ ❀ ❀ हे वरोरु! यदि त्वमासां ह्रीमुखानां वृत्तिविशेषाणामन्यतमा वृत्तिविशिष्टा नासि किन्तु स्थिरवृत्तिविशिष्टासि भुवि सत्कर्मणि स्पृक् आशावती तर्ह्यदभ्रकर्मणा महापराक्रमवता वीरवरेण मया साकमिमां पुरीं देहलक्षणामलंकर्तुमर्हसि, कथमिव यज्ञपुंसा श्रीनारायणेन सह श्रीः परं लोकं वैकुण्ठाख्यमिवेत्यन्वयः। अदभ्रकर्मणेति कर्मानन्त्यं लक्षयति॥ २९॥ ❀ ❀ हे शोभने! व्रीडया सहितो हासः व्रीडाहासस्तेन युक्तेन मुखेन विभ्रमन्त्यौ भ्रुवौ यस्याः सा तथा तस्यास्तव सकाशादुपसृष्टः प्राप्त एष मनोभवो मनसो जातो रागलक्षणो वृत्तिविशेषो भगवांस्ताभिः भूयो मा मां प्रबाधते स्वानुकूलकर्मणा यः सन्नद्धं करोति यद्यस्मादथ तस्मादनुगृहाणेत्यन्वयः। कथम्भूतं मामपाङ्गेन शरीररहितेन वृत्तिविशेषेण विखण्डितानीन्द्रियाणि यस्य स तथा तम्॥ ३०॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

स्निग्धेन स्निग्धत्वादलब्धभङ्गेनापाङ्गरूपेण बाणस्य पुङ्खेन तत्पर्यन्तभागेनापि स्पृष्टो विद्ध इत्यर्थः॥ २५-२९॥ ❀ ❀ यदेष तेऽपाङ्गेति। अथोपरपृष्ट इति प्रबाधतेऽथानुगृहाणेति प्रथमतृतीयचतुर्थचरणेषु पाठा दृश्यन्ते। तत्र त्वयेति चित्सुखसंमतश्च। किन्तु यदेष तेऽपाङ्गेति अथोपसृष्टा इति प्रबाधते मानुगृहाणेत्येव पाठाः स्वामिसंमता लक्ष्यन्ते॥ ३०-३२॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

पञ्चशीर्षा अहिः पञ्चवृत्तिः प्राणः तेन प्रतीहारेण द्वारपालेन गुप्तां रक्षिताम् । ऋषभं स्वस्या उपभोक्तारं पतिं जीवमप्रौढामित्यप्रौढैव कान्ता यथा पतिं मोहयति तथैवाविद्यावृत्तिर्बुद्धिर्जीवमित्यर्थः । कामरूपिणीं नित्यविविधशृङ्गारधारिणीं पक्षे विविधवासनावतीम् ॥ २१ ॥ ❀ ❀ गन्धज्ञानादिभिर्बुद्धेर्वृत्तिभिरेवावयवैः सुनासत्वादि रूप्यते रसास्वादचर्वणासक्त्यो दन्ताः सुकपोलत्वं बुद्धेः स्वच्छता आननं बुद्धेरग्रभागः समं यथा स्यात्तथा धात्रैव कौशलेन विन्यस्ताविव यौ कर्णौ ताभ्यां कुण्डलशोभां प्रवृत्तिनिवृत्तिशास्त्रार्थमवधारयन्तीम् ॥ २२ ॥ ❀ ❀ पिशङ्गनीवीं पीताम्बरां रजोगुणमयसमस्तकर्मावृतां श्यामामिति बुद्धेः श्यामत्वात् तच्च तस्या जीवान् प्रति सूर्यस्थानीयेश्वरावरकमेघस्थानीयत्वात् । कणद्धयामिति । चलन्तीमित्याभ्यां बुद्धेरस्थैर्यमेव शास्त्रेषु शब्दितमिति द्योतितं, नूपुरैरिति बहुवचनेन पादाङ्गुलीयादीन्यप्युपलक्षितानि ॥ २३ ॥ ❀ ❀ स्तनौ रागद्वेषौ । यदुक्तं "इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ । न तयोर्वशमागच्छेत्तौ ह्यस्य परिपन्थिनावि"ति । व्यञ्जितकैशोराविव्यत एव वृद्धस्यापि रागद्वेषौ नित्यतरुणावेव लोके दृश्येते । समौ च वृत्तौ वर्तुलौ च पक्षे समं तुल्यमेव वृत्तं पुंमात्रमोहनं चरित्रं ययोस्तौ । निरन्तरावतिपीनत्वान्मूलदेशेऽवकाशशून्यौ । पक्षे वस्तुतस्तयोरैक्येन निर्भेदौ । यदुक्तं "काम एष क्रोध एष रजोगुणसमुद्भवः" इति निगूहन्तीमिति रागद्वेषावपि शिष्टजनैर्ह्रीविनयाभ्यां निह्नूयेते एव ॥ २४ ॥ ❀ ❀ अविद्यावृत्त्या जीवः स्वमिच्छयैव बध्नाति । न तु तमीश्वरस्तया बलात्कारेण बध्नातीति वक्तुं तयोः सम्बन्धस्य प्रकारमाह तामाहेति । स्निग्धेन स्निग्धत्वादलब्धभङ्गेन अपाङ्गरूपेण पुङ्खेन तत्पर्यन्तेनापि कटाक्षशरेण विद्ध इत्यर्थः । यतो वीरः वीरत्वादेव तदप्यक्रान्त इत्यर्थः । पक्षे भोगोत्साहवत्त्वाद्वीरः । अयमर्थः—अविद्या खलु भोग्यपदार्थभूतं स्वं दर्शयति । जीवस्तत्र सुरसबुद्ध्या भोक्तृत्वमङ्गीकुर्वन् अनुरज्यति, ईश्वरस्तु तत्र विरसबुद्ध्या ततो विरज्यतीति ॥ २५ ॥ ❀ ❀ यद्यपि बुद्ध्यादिभिः सहैव जीवस्य सर्वदा स्थितिस्तथापि मनुष्यशरीरसम्बन्धिनस्ते बुद्ध्यादयो विलक्षणा भवन्तीत्यनुरागेण च तां बुद्धिमपरिचिन्वन्निव पृच्छति । का त्वमिति । कुतः स्थानादिहागतासि । हे सति ! पुर्याः समीपस्था उपपुरी उपवनभूमिस्तामवलम्ब्य किं कर्तुमिच्छसि ॥२६॥ ❀ ❀ अनुपथा अनुवर्तिनः एकादशो महाभटो येष्विति बृहद्बलत्वेन वक्ष्यमाणं मन आलक्ष्य ललनाश्रेष्ठ्य इतीन्द्रियवृत्तीरालक्ष्य अहिः क्रीडोपकरणीभूत इति प्राणमालक्ष्य प्रश्नः ॥ २७ ॥ ❀ ❀ लोके ह्यविवेकात् स्वस्य बुद्धिरुत्कृष्टेति सर्वस्याभिमतिरिति पुरञ्जनवाक्येनाभिव्यञ्जयति त्वं ह्रीरिति । तस्या मुखनेत्राद्यावरणव्यञ्जितां ह्रियमालक्ष्य न त्वं ह्रीमती किन्तु साक्षात् स्वयं ह्रीरेव मां मोहयन्ती सती किं पतिं धर्मं विचिन्वती अत्र वने रहो वर्तसे इति स्वबुद्धिवृत्तिमाधुर्यैः स्वमोहनप्रपञ्चः । अथवा भवानीति सौन्दर्यमालक्ष्योक्तिः पतिं शिवं विचिन्वती किं वाक् सरस्वतीति, तस्या महाबुद्धिमत्तामालक्ष्य पतिं ब्रह्माणं रमा लक्ष्मीरिति महासम्पत्तिमभिलक्ष्य पतिं विष्णुं मुनिरिव संयता सती कथम्भूतं पतिं त्वदङ्घ्रिकामनयैव प्राप्ताः समस्ताः कामा येन तम् । लोकेऽपि स्वबुद्धिबलाधीनमेव सर्वैमैश्वर्यं सर्वस्येति ब्रुवते । क्वेति पद्मकोशो लीलाकमलं स च जीवस्य विवेक एव । तया तदलक्षितमेव स्वहस्तवशीकृत्य दूरतः क्षिप्त इति ज्ञेयम् ॥२८॥ ❀ ❀ त्वदनुरूपोऽहमेवेति वक्तुं स्वकृतं सन्देहं स्वयमेव निरस्यति नासामिति । हे वरोरु ! यतस्त्वं भुवि स्पृक् न हि देवता भुवं स्पृशन्ति वीरवरेण मया परं वैकुण्ठं पक्षे किञ्चिद्विवेकप्राप्त्या स्वबुद्धिं न सर्वोत्कृष्टां मन्यते लोकः, किन्तु स्वानुरूपामेवेति भावः ॥ २९ ॥ ❀ ❀ यद्यस्मात्तवापाङ्गेन विखण्डितमिन्द्रियं चक्षुर्यस्य तं मां मनोभवो मदनस्त्वया उपसृष्टः प्रेरितः सन् बाधते । पक्षे विखण्डितज्ञानचक्षुषं मनोभवो वैषयिकी वासना उपसृष्टस्त्वयैवाधिक्येन निर्मितो मां बाधते अतोऽनुगृहाण । त्वदीयान् शब्दस्पर्शादीनुपभोक्तुं लभेयेत्यर्थः । वस्तुतस्त्वनुगृहाण स्वभगिनीं विद्यां सन्दर्शयेति दैवघटितोऽर्थः ॥ ३० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पञ्च शीर्षाणि प्राणापानादिमुख्यभागा यस्य तेनाहिना देहबिलचरेणान्तर्वायुनेत्यर्थः । प्रतीहारेण पालकेन गुप्तां रक्षिताम् । चेतनं विना अचेतनरूपायाः पतिहीनायाः प्रमदाया इव दीनत्वात् ऋषभं चेतनमन्वेषमाणां मृगयन्तीमप्रौढां बालां भगवदनुग्रहं विना मुक्तिमार्गेऽसावधानां कामरूपिणीं संसारमार्गे नानारूपधारिणीम् ॥ २१ ॥ ❀ ❀ गन्धादिविषयिकाभिर्नानावृत्तिभिः सुनासत्वादि रूप्यते । समविन्यस्तौ रचितौ यौ कर्णौ ताभ्यां कुण्डलश्रियं बिभ्रती लोकप्रसिद्धकुण्डलादिविषयकाभिर्वृत्तिभिः कुण्डलादिकं रूप्यते ॥ २२ ॥ ❀ ❀ श्यामामित्यनेन तस्यास्तृष्णावृत्तिरूपेण नित्यं तारुण्यं विवक्षितं यथोक्तं महाभारते "जीर्य्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्य्यतः । अहो बलीयसी तृष्णा या नित्यं तरुणायते" इति । नूपुराभ्यामिति वक्तव्ये बहुवचनमेकैकशो नुपुरादिविषयिका वृत्तयोऽनेकरूपा इति द्योतयति । देवतामिवेत्यनेनान्तर्दुष्टा बहिः शुद्धैवेति द्योत्यते ॥ २३–२४ ॥ ❀ ❀ कथासौन्दर्याय संबन्धदार्ढ्याय च तयोः संवादमाह तामाहेति । वीरः पुरञ्जनः व्रीडया सहितं यस्मितं मन्दं हसितं तेन शोभनां तां पुरञ्जनीं ललितं यथा तथाह कथंभूतः प्रेम्णा उच्चैर्भ्रमन्ती भ्रूर्धनुःस्थानीया यत्र तेन अपाङ्ग एव पुङ्खो मूलप्रान्तो यस्य तेन कटाक्षरूपेण बाणेन स्पृष्टो विद्धः ॥ २५ ॥ ❀ ❀ तद्वाक्यमाह का त्वमिति षड्भिः । इमां पुरीमुपसमीपे किं चिकीर्षसि मे मह्यं शंस कथय ॥ २६ ॥ ❀ ❀ ते तव ये अनुपथाः अनुचरास्ते एते के मनसा सहेन्द्रियाण्यालक्ष्याहैकादशमहाभटा इति । एकादशो महाभटो येषु दशसु ते तद्वृत्तीरालक्ष्याह एता वेति । प्राणमालक्ष्याह क इति । पुरः सरति गच्छतीति अग्रगः अयमहि-

नागः ॥ २७ ॥ ❀ ❀ त्वं ह्रीः असि त्वदङ्घ्रिरेव काम्यते इति काम ईप्सितोऽर्थस्तेनाप्ताः समस्ताः कामा येन तं त्वत्प्राप्त्यैव लब्धसर्वार्थमित्यर्थः। पतिं धर्मं वने रहः एकान्ते मुनिवद्विचिन्वती किम् अथवा भवानी असि पतिं भवमथवा त्वं वाक् सरस्वती असि पतिं ब्रह्माणमथवा त्वं रमासि पतिं विष्णुं विचिन्वती यदा रमा त्वमसि तर्हि पद्मकोशः कराग्रात् क्व पतितः ॥ २८ ॥ ❀ ❀ आसामन्यतमा त्वं नासि यतो भुविस्पृक् इयमुक्तिः सामान्यतो ज्ञेया। रमा रुक्मिण्यादिरूपेण भुवं स्पृशत्येव अतो वीरवरेण मया साकमिमां पुरीमलंकर्तुमर्हसि परं वैकुण्ठं यज्ञपुंसा विष्णुना ॥ २९ ॥ ❀ ❀ यद्यतः तवापाङ्गेन कटाक्षेण विखण्डितमिन्द्रियं मनो यस्य तं मां सव्रीडं यद्भावेन प्रेम्णा स्मितं तेन विभ्रमन्ती या भ्रूस्तयोपसृष्टः प्रवर्तितः एष मनोभवः कामः प्रबाधते अथातो हेतोरनुगृहाण ॥ ३० ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

पञ्चशीर्षाहिना प्रतिहारेण पालकेन सर्वतो गुप्तां रक्षितामृषभं श्रेष्ठं पतिमन्वेषमाणां ददर्शेति पूर्वेणैव सम्बन्धः। अन्वेषणे हेतुः—अप्रौढामिति। अप्रौढैव कान्ता पुरुषमन्विच्छति मोहयति चेति प्रसिद्धम्। मोहनार्थमेव कामरूपिणीं नानाशृङ्गारधारिणीम्। पक्षान्तरे तु पञ्च शीर्षाणि वृत्तयो यस्य तेनाहिना प्राणेन प्रतिहारेण गुप्तां ऋषभं जीवं चेतनं भोक्तारमन्वेषमाणाम्। अप्रौढां विचाररहितत्वेनाविरक्ताम्। अत एव कामरूपिणीं नानाविधकामभोगवासनावतीम् ॥ २१ ॥ ❀ ❀ सुनासामित्यादिद्वितीयान्तानां ददर्शेति सम्बन्धः। समविन्यस्तौ रचितौ कर्णौ ताभ्यां कुण्डलश्रियं बिभ्रतीं दधतीम्। अध्यात्मपक्षे तु बुद्ध्यवयवा एव कथालङ्कारार्थं सुनासत्वादिना निरूप्यन्ते इति ज्ञेयम्, यद्वा बुद्ध्यभिमानिदेवतायां नासिकाद्यवयवाः सन्तीति तदभिप्रायेण सुनासत्वादिनिरूपणमिति ज्ञेयम् ॥ २२ ॥ ❀ ❀ पिशङ्गनीवीं पीताम्बराम्। सुश्रोणीं शोभननितम्बवतीम्। श्यामां किशोरावस्थापन्नाम्। कनकस्य मेखला कटिभूषणं यस्यास्ताम्। नूपुरैः क्वणद्भ्यां चलतीं देवतामिव शोभायुक्तां ददर्शेत्यन्वयः। नूपुरशब्दः पदाङ्गुलीयकानामपि उपलक्षणार्थः, ततस्तयोर्द्वित्वेऽपि नूपुरैरिति बहुवचनम्। अध्यात्मपक्षे तु पिशङ्गनीवीं रजोगुणप्रयुक्तकर्मानुष्ठानवासनावृताम्। श्यामामिति "अन्नमयं हि सौम्य मनः" इति "यत्कृष्णं तदन्नस्य" इत्यादिश्रुत्यनुसारेण बुद्धेरन्नमयत्वात् श्यामात्वमुक्तम्। तत्र सत्त्वांशस्यापि विद्यमानत्वात् कनकमेखलात्वम्। श्रोण्यादिभावेन बुद्ध्यवयवविशेषा ज्ञेयाः। बुद्धेश्चञ्चलत्वं प्रसिद्धमेवेति चलतीमित्युक्तम्। देवतामिवेत्यनेन तस्या जीवमोहने सामर्थ्यं दर्शितम् ॥ २३ ॥ ❀ ❀ मोहनप्रकारमेव स्पष्टयति—स्तनाविति। व्यंजितं कैशोरं यौवनोपक्रमो याभ्यां तौ। समौ तुल्यौ न्यूनाधिक्यवर्जितौ वृत्तौ वर्तुलौ, निरन्तरौ मध्यव्यवधानरहितौ, एवम्भूतौ स्तनौ व्रीडया लज्जया वस्त्रान्तेन निगूहन्तीमाच्छादयन्तीं गजगामिनीं गजवन्मन्थरं गमनमस्या अस्तीति तथा तां ददर्शेत्यन्वयः। तस्य विरक्तत्वशङ्कया लज्जया स्तनगूहनम्। रागादिमत्त्वशङ्कया च गजगामित्वमपाङ्गस्पर्शादि च। अन्यथाऽन्यतरनिश्चये पलायेत वा शीघ्रमागत्याश्लिष्येद्वेति। पक्षान्तरे तु 'इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ। न तयोर्वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ' इत्युक्तौ रागद्वेषौ बुद्धिस्तनत्वेन ज्ञेयौ, कैशोरावस्थायामेव तयोः प्राबल्यात्तद्व्यञ्जकत्वम्, उभयोः श्रेयोमार्गे परिपन्थित्वात् समत्वम्, सहचारित्वान्निरन्तरत्वम्, श्रेष्ठस्यैव लज्जा भवतीति पश्वादिबुद्ध्यपेक्षया श्रेष्ठत्वान्मनुष्यबुद्धेर्लज्जावत्त्वम्, जीवस्य भगवदीयत्वादिना विरक्तत्वे बुद्धेः स्तनस्थानीययोः रागद्वेषयोर्निगूहनम्, किञ्चिद्रागादिमत्त्वे च गजगामित्वापाङ्गस्पर्शादिना मोहश्च, अन्यथाऽन्यतरनिश्चये विषये विपर्यिणी बुद्धिर्निवर्त्तेत वा तं मोहयेद्वा लज्जा मोहश्चोभयं न स्यादिति ॥ २४ ॥ ❀ ❀ एवं तत्रागतां प्रमदां दृष्ट्वा तत्र यदि यत्स्वस्येष्टं तदेव तस्या अपि स्यात् तदा तु पुर्यां तया सह भोगे स्वस्य स्वाच्छन्द्यं भवेत् नो चेद्वैमत्येन यथेष्टभोगोऽपि न सिद्ध्येदिति तां पृच्छति स्मेत्याह—तामिति। प्रेम्णा उच्चैर्भ्रमन्ती भ्रूर्धनुस्स्थानीया यस्मिंस्तेन तस्य अपाङ्ग एव पुङ्खो मूलप्रान्तो यस्य कटाक्षलक्षणस्य बाणस्य तेन स्निग्धेन स्नेहयुक्तेन स्पृष्टो विद्धो वीरः पुरञ्जनः सव्रीडेन स्मितेन शोभनां तां प्रमदां ललितं मनोहरं यथा भवति तथा आह पृच्छति स्मेत्यन्वयः। अध्यात्मपक्षे तु वीर इति जीवस्य शास्त्रमुल्लङ्घ्य स्वातन्त्र्येण वर्त्तनमेव पुँल्लिङ्गत्वं विवक्षितं, शास्त्राधीनप्रवृत्तिकत्वेन पुनस्तस्यैव स्त्रीत्वेन वक्ष्यमाणत्वात्। कटाक्षेण विद्धत्वं तस्य तया मायाकार्यभूतया मोहमात्रमेव 'यया सम्मोहितो जीवः' इति प्रथमोक्तेः। तयोः परस्परसंवादस्तु परस्पराध्यासदार्ढ्याय। न चाध्यासात्पूर्वं तयोस्तालुवागिन्द्रियाद्यभावात् कथमेवं वागादिव्यवहारः सम्भवतीति शङ्कनीयम्, आधिदैविकरूपे कारणरूपाणां ताल्वादीनां सत्त्वात्। अत एव श्रुतौ 'चक्षुरगायते'त्यादिवाग्व्यवहारः, तृतीयस्कन्धे तत्त्वादीनां स्तुतिश्च सङ्गच्छते इति ध्येयम्। वस्तुतस्तु सर्वदैव बुद्ध्यादयो जीवे सन्त्येव 'अन्यथा न साधु मेने ताः सर्वाः' इति पश्वादिशरीरप्राप्त्युक्तिर्न सङ्गच्छेत। तथापि मनुष्यशरीरे बुद्ध्यादयस्ततो विलक्षणा इत्यभिप्रायेण नूतनतया सम्बन्धप्रदर्शनमिति ज्ञेयम् ॥ २५ ॥ ❀ ❀ प्रश्नादिकमेव दर्शयति—का त्वमिति सप्तभिः। हे कञ्जपलाशाक्षि हे सति हे भीरु इति सम्बोधनानि चातुर्येण तद्वशीकरणार्थम्। त्वं का कस्य कन्या पत्नी वा त्वमसि ? इह स्थाने कुतः स्थानादागतासि ? पुर्याः समीपस्था उपपुरी भूस्तामिमामालक्ष्य किं चिकीर्षसि कर्तुमिच्छसि ? एतत्सर्वं मे मह्यं पृच्छते शंस कथयेति सम्बन्धः। पक्षान्तरे तु कथालङ्कारमात्रम् ॥ २६ ॥ ❀ ❀ एकादशो महाभटो येषु दशसु ते तथाभूता ये ते तवानुपथाः अनुवर्तिनस्ते एते के इत्यन्वयः। हे

सुभ्रु इति सम्बोधनमनुनयार्थम्। एता ललनाः स्त्रियो वा काः? ते तव पुरस्सरः अग्रचरः अहिरयं कः? अध्यात्मपक्षे तु एकादशो महाभटो बृहद्बलत्वेन वक्ष्यमाणो मनो येषु दशस्विन्द्रियेषु ते तथा एकादशेन्द्रियाणि। ललनाः इन्द्रियवृत्तयः। अहिः पञ्चवृत्तिकः प्राणः २७॥ ❁ ❁ देवतामिवेत्युक्तत्वादिदानीं तत्प्रसन्नतार्थं स्वस्य मनुष्यत्वेन तद्भोक्तृत्वायोग्यत्वं सूचयंस्तामुत्कृष्टत्वेन विकल्पयति—त्वमिति। त्वं मुनिवद्वशीकृतकार्यकरणसङ्घाता रहः एकान्ते वने स्वपतिं धर्मं विचिन्वती किं ह्रीरसि? अथवा स्वपतिं शिवं विचिन्वती भवान्यसि? किंवा स्वपतिं ब्रह्माणं विचिन्वती वाक्सरस्वत्यसि? अथवा स्वपतिं विष्णुं विचिन्वती रमा लक्ष्मीरसि? यदि रमाऽसि तर्हि तव कराग्रात् पद्मकोशो लीलाकमलमसाधारणं चिह्नं क पतितः? एवं मुनयोऽपि रहसि वने स्थिताः स्वेष्टं ध्यायन्तोऽन्विच्छन्तीत्यस्य दृष्टान्तस्य सर्वविकल्पेष्वन्वयो बोध्यः। तत्प्रीत्यर्थमेव तदुत्कृष्टत्वं स्फोरयन् पतिं विशिनष्टि—त्वदङ्घ्रिकामेति। त्वदङ्घ्रिकामेनैव त्वच्चरणभजनादेव प्राप्ताः समस्ताः कामा येन तम्। अध्यात्मपक्षे तु बुद्ध्यादिविशिष्ट-लिङ्गदेहाध्यास एव तात्पर्यं, संवादस्तु कथालङ्कारमात्रं, तेन च स्वतिरस्कारं स्वनरकपातादिसाधनं भगवन्निन्दादिकं च स्वयमेव करोति। मोहित इति सूचितं त्वदङ्घ्रीत्यादिना, एवमग्रेऽपि त्रिषु श्लोकेषु॥ २८॥ ❁ ❁ एवं चातुर्येण स्ववशीकरणार्थं तदुत्कृष्टत्वमारोप्येदानीं तन्निरासेन स्वस्य तद्भोगयोग्यत्वमाह—नासामिति। आसां ह्र्यादीनां मध्ये त्वमन्यतमाऽपि न भवसि। यतो भुविस्पृक् न हि देवता भुवं स्पृशन्ति। अतो मम मनुष्यस्य भोगयोग्या त्वमिति सूचयन् सम्बोधयति—हे वरोरु इति। अतो वीरवरेण महाबलपराक्रमवता अदभ्रकर्मणा इहामुष्मिकभोगसाधनदक्षेण मया सहेमां पुरीं त्वमलङ्कर्तुं शोभयितुमर्हसीत्यन्वयः। तत्र दृष्टान्तः—लोकमिति, यज्ञपुंसा विष्णुना सह श्रीः लक्ष्मीर्यथा परं लोकं वैकुण्ठमलङ्करोति तथेत्यर्थः॥ २९॥ ❁ ❁ हेतूक्तिपूर्वकं तदनुग्रहं प्रार्थयते—यदिति। यत् यस्मात्तवापाङ्गेनापाङ्गवीक्षितेन कटाक्षेण खण्डितं मोहितमिन्द्रियं मनो यस्य तं मा मां सव्रीडं यद्भावेन प्रेम्णा स्मितं तेन विभ्रमन्ती या भ्रूस्तया करणभूतया त्वया कर्तृभूतयोपसृष्टः प्रेरितः एष मनोभवः कामः प्रबाधते प्रपीडयति। अथ तस्मात् त्वमनुगृहाण मय्यनुग्रहं कृत्वा तद्बाधानिवृत्तये मया सह पुरीं प्रविश्य रमस्वेत्यर्थः। तस्य बाधा मम दुःसहेति द्योतयन् कामं विशिनष्टि—भगवानिति, भगवद्दत्तदुस्सहपराक्रमवानित्यर्थः। एवम्भूतबाधानिवारणे तवैव सामर्थ्य-मस्तीत्यभिप्रायेण सम्बोधयति—हे शोभने इति। अध्यात्मपक्षे तु राजसीबुद्धिसन्निधाने पुरुषः क्षणमपि स्वस्थः स्थातुं न शक्नोतीति दर्शितम्॥ ३०॥

### भाषानुवाद:

एक पाँच फनवाला साँप उसका द्वारपाल था, वही उसकी सब ओरसे रक्षा करता था। वह सुन्दरी भोली-भाली किशोरी थी और विवाहके लिये श्रेष्ठ पुरुषकी खोजमें थी॥ २१॥ ❁ ❁ उसकी नासिका दन्तपंक्ति, कपोल और मुख बहुत सुन्दर थे। उनके समान कानोंमें कुण्डल झिलमिला रहे थे॥ २२॥ ❁ ❁ उसका रंग साँवला था। कटिप्रदेश सुन्दर था। वह पीले रंगकी साड़ी और सोने की करधनी पहने हुए थी तथा चलते समय चरणोंसे नूपुरोंकी झनकार करती जाती थी। अधिक क्या, वह साक्षात् कोई देवी-सी जान पड़ती थी॥ २३॥ ❁ ❁ वह गजगामिनी बाला किशोरावस्थाकी सूचना देनेवाले अपने गोल-गोल समान और परस्पर सटे हुए स्तनोंको लज्जावश बार-बार अञ्चलसे ढकती जाती थी॥ २४॥ ❁ ❁ उसकी प्रेमसे मटकती भौंह और प्रेमपूर्ण तिरछी चितवनके बाणसे घायल होकर वीर पुरञ्जनने लज्जायुक्त मुसकानसे और भी सुन्दर लगनेवाली उस देवीसे मधुरवाणीमें कहा॥ २५॥ ❁ ❁ 'कमलदललोचने! मुझे बताओ तुम कौन हो, किसकी कन्या हो? साध्वि! इस समय आ कहाँसे रही हो, भीरु! इस पुरीके समीप तुम क्या करना चाहती हो?॥ २६॥ ❁ ❁ सुभ्रु! तुम्हारे साथ इस ग्यारहवें महान् शूरवीरसे सञ्चालित ये दस सेवक कौन हैं और ये सहेलियाँ तथा तुम्हारे आगे-आगे चलनेवाला यह सर्प कौन है?॥ २७॥ ❁ ❁ सुन्दरि! तुम साक्षात् लज्जा देवी हो अथवा उमा, रमा और ब्रह्माणीमेंसे कोई हो? यहाँ वनमें मुनियोंकी तरह एकान्तवास करके क्या अपने पतिदेवको खोज रही हो? तुम्हारे प्राणनाथ तो तुम उनके चरणोंकी कामना करती हो, इतनेसे ही पूर्णकाम हो जायँगे। अच्छा, यदि तुम साक्षात् कमला देवी हो, तो तुम्हारे हाथका क्रीडाकमल कहाँ गिर गया?॥ २८॥ ❁ ❁ सुभगे! तुम इनमेंसे तो कोई हो नहीं; क्योंकि तुम्हारे चरण पृथ्वीका स्पर्श कर रहे हैं। अच्छा, यदि तुम कोई मानवी ही हो, तो लक्ष्मीजी जिस प्रकार भगवान् विष्णुके साथ वैकुण्ठकी शोभा बढ़ाती हैं, उसी प्रकार तुम मेरे साथ इस श्रेष्ठपुरीको अलंकृत करो। देखो, मैं बड़ा ही वीर और पराक्रमी हूँ॥ २९॥ ❁ ❁ परन्तु आज तुम्हारे कटाक्षोंने मेरे मनको बेकाबू कर दिया है। तुम्हारी लजीली और रति-भावसे भरी मुस्कानके साथ भौंहोंके संकेत पाकर यह शक्तिशाली कामदेव मुझे पीड़ित कर रहा है। इसलिये सुन्दरि! अब तुम्हें मुझपर कृपा करनी चाहिये॥ ३०॥

**त्वदाननं सुभ्रु [1]सुतारलोचनं व्यालम्बिनीलालकवृन्दसंवृतम्।**
**उन्नीय मे दर्शय वल्गुवाचकं यद्व्रीडया नाभिमुखं शुचिस्मिते॥ ३१॥**

---

१. प्रा० पा०—सुनास०। २. प्रा० पा०—संकुलम्।

नारद[1] उवाच

इत्थं पुरञ्जनं नारी याचमानमधीरवत् । अभ्यनन्दत तं वीरं हसन्ती वीर मोहिता ॥ ३२ ॥
न[2] विदाम वयं सम्यक्कर्तारं पुरुषर्षभ । आत्मनश्च परस्यापि गोत्रं नाम च यत्कृतम् ॥ ३३ ॥
इहाद्य सन्तमात्मानं विदाम न ततः परम् । येनेयं निर्मिता वीर पुरी शरणमात्मनः ॥ ३४ ॥
एते सखायः सख्यो मे नरा नार्यश्च मानद । सुप्तायां मयि जागर्ति नागोऽयं पालयन् पुरीम् ॥ ३५ ॥
दिष्ट्याऽऽगतोऽसि भद्रं ते ग्राम्यान् कामानभीप्ससे । उद्वहिष्यामि तांस्तेऽहं स्वबन्धुभिररिन्दम ॥ ३६ ॥
इमां त्वमधितिष्ठस्व पुरीं नवमुखीं विभो । मयोपनीतान् गृह्णानः कामभोगान् शतं समाः ॥ ३७ ॥
कं नु त्वदन्यं रमये ह्यरतिज्ञमकोविदम् । असम्परायाभिमुखमश्वस्तनविदं[3] पशुम् ॥ ३८ ॥
धर्मो ह्यत्रार्थकामौ च प्रजानन्दोऽमृतं यशः । लोका विशोका विरजा यान् न केवलिनो विदुः ॥ ३९ ॥
पितृदेवर्षिमर्त्यानां भूतानामात्मनश्च ह । क्षेम्यं[4] वदन्ति शरणं भवेऽस्मिन् यद् गृहाश्रमः ॥ ४० ॥

अन्वयः—शुचिस्मिते यत् व्रीडया अभिमुखम् न तत् सुभ्रु सुतारलोचनम् व्यालंबिनीलालकवृन्दसंवृतम् वल्गुवाचकम् आननम् मे उन्नीय दर्शय ॥ ३१ ॥ ❀ ❀ वीर इत्थम् अधीरवत् याचमानम् तम् वीरम् पुरंजनम् नारी मोहिता हसंती अभ्यनंदत ॥ ३२ ॥ ❀ ❀ पुरुषर्षभ वयम् आत्मनः च परस्य अपि कर्तारम् सम्यक् न विदाम गोत्रम् नाम च यत्कृतम् ॥ ३३ ॥ ❀ ❀ वीर अद्य इह संतम् आत्मानम् विदाम न ततः परम् येन आत्मनः शरणम् च इयम् पुरी निर्मिता ॥ ३४ ॥ ❀ ❀ मानद एते नराः नार्यः च मे सखायः सख्यः संति मयि सुप्तायाम् अयम् नागः पुरीं पालयन् जागर्ति ॥ ३५ ॥ ❀ ❀ अरिंदम दिष्ट्या आगतः असि ते भद्रम् ग्राम्यान् कामान् अभीप्ससे तान् ते अहम् स्वबंधुभिः उद्वहिष्यामि ॥ ३६ ॥ ❀ ❀ विभो मया उपनीतान् कामभोगान् गृह्णानः त्वम् इमाम् नवमुखीम् पुरीम् शतम् समाः अधितिष्ठस्व ॥ ३७ ॥ ❀ ❀ हि ननु अहम् त्वदन्यम् कम् अरतिज्ञम् अकोविदम् असंपरायाभिमुखम् अश्वस्तनविदम् पशुम् रमये ॥ ३८ ॥ ❀ ❀ हि अत्र अर्थकामौ धर्मः च प्रजानंदः अमृतम् विरजाः विशोकाः लोकाः यशः यान् केवलिनः न विदुः ॥ ३९ ॥ ❀ ❀ अस्मिन् भवे यत् गृहाश्रमः पितृदेवर्षिमर्त्यानाम् भूतानाम् आत्मनः च ह क्षेम्यम् शरणम् वदंति ॥ ४० ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

यद्व्री‌डया संमुखं न भवति तदाननमुन्नीय मे दर्शय । शोभने भ्रुवौ यस्मिन् सुतारे शोभनकनीनिके लोचने यस्मिन् व्यालम्बिनो दीर्घा ये नीला अलकास्तेषां वृन्देन संवृतम् । वल्गूनि वाचकानि वाक्यानि यस्मिन् ॥ ३१ ॥ ❀ ❀ हे वीर हे राजन् सापि तं दृष्ट्वा मोहिता सती तमाह ॥ ३२ ॥ ❀ ❀ यत्पृष्टं कस्यासीत्यनेन कस्य पुत्री किं गोत्रजेति का त्वमिति च किंनामासीति तत्राह । आत्मनो मम परस्य तवापि कर्तारं सम्यक् न विद्मः गोत्रं नाम च यत्कृतं भवति तं च न विदाम न विद्मः ॥ ३३ ॥ ❀ ❀ हे वीर आत्मनो मम शरणमियं पुरी येन निर्मिता तं च न विद्मः ॥ ३४ ॥ ❀ ❀ यत्पृष्टं क एते अनुपथा इति तत्राह । एत इति ॥ ३५ ॥ ❀ ❀ आस्तां नामगोत्रादि यदत्रागतोऽसि एतद्दिष्ट्या भद्रं तावत् । ग्राम्यानिन्द्रियग्रामार्हान् उद्वहिष्यामि संपादयिष्यामि स्वबन्धुभिः सखिभिः सखीभिश्च सह ॥ ३६ ॥ ❀ ❀ समाः संवत्सरान् मनुष्यदेहप्रवेशाच्छतमित्युक्तम् ॥ ३७ ॥ ❀ ❀ प्रवृत्तिस्वभावत्वान्निवृत्तिनिन्दापूर्वकं तत्संगमभिनन्दति कमिति पंचभिः । त्वत्तोऽन्यं कं नु रमये अरतिज्ञं नैष्ठिकम् । अकोविदमनिषिद्धसुखत्यागिनम् । सम्परायो मृत्युस्तदनभिमुखं परलोकचिन्ताशून्यम् । अश्वस्तनविदं श्व इदं कर्तव्यमितीहलोकचिन्ताशून्यम् । अत एव पशुतुल्यम् ॥ ३८ ॥ ❀ ❀ अत्र गार्हस्थ्ये प्रजानन्दः पुत्रसुखम् । अमृतं मोक्षः केवलिनो यतयः ॥ ३९ ॥ ❀ ❀ गृहाश्रम इति यदेतत्क्षेमार्हं शरणमाश्रयं वदन्ति ॥ ४०-४१ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स्मृतिभ्रष्टस्य कामिनो जीवस्य वैयग्र्यं दर्शयति—तदिति । वल्गु मनोहरं यथा स्यात्तथा वक्तीति । तत् यदाननं तवेदं ममाभिमुखं नेति भगवत्यविद्य देवि मदीयचिन्मयज्ञानानन्दभोगादहं त्वया वंचित एव किं तु स्वीयां रूपादिविषयसंपत्ति

१. प्राचीने पाठे 'नारद उवाच' अयमंशो न । २. प्रा० पा०—विदाम न । ३. प्रा० पा०—पदं । ४. प्रा० पा०—क्षेमं ।

संप्रति मद्भोग्यत्वेन प्रकल्पय अलमेतावता वाक्येन । तवाननमित्यादिना रूपरसगन्धस्पर्शानां वाचकमितिशब्दस्य च भोगप्रार्थनाभिव्यंजिता । शुचिस्मिते इति । शृङ्गारजनकस्मितायास्तव दर्शनेन मम धैर्यं मनोभवेनापन्नं तमिति भावः । पक्षे शुचिषु हरिपरायणेषु स्मितमहो एते मत्तो बिभ्यत एव भक्तिरता इत्येवंरूपमीषद्धसनं यस्यास्सा तथा । यद्वा—शुचीनां स्मितमहो किं कुर्वतीयं लोकं मोहयतीत्येवं यस्यां सा शुचिस्मिता तत्सम्बुद्धौ तथा ॥ ३१ ॥ ❀ ❀ अधीरवदिति चिद्रूपत्वात् । वस्तुतो धीर एवायमित्यर्थः । हे वीरेति । हास्याभिप्रायं नायं वीरधर्मोस्ति यद्यज्ञे निरपराधान्पशून् हिनस्सीति भावः । यद्वा—विदुरं प्रति मैत्रेयामन्त्रणं कामकथाश्रवणे साकांक्षो मा भूस्त्वं जितेन्द्रियवर्य्योसीति भावः । यद्वा वीरेण विशिष्टमीरं ज्ञानं यस्य तेन मोहितेत्यर्थः । यथा विषयमाधुर्यैस्त्वया जीवोऽनुरंजितस्तथा चिन्माधुर्यैर्जीवेनापि साऽनुरंजितेत्यर्थः ॥ ३२ ॥ ❀ ❀ यत्पृष्टं कस्यासीति तत्र नेति । कथापक्षे कस्यचिन्मुनेर्मोहनार्थमायातायाः कस्याश्चिदप्सरस इयं कन्येति राजा जानीते स्म । अध्यात्मपक्षे या जीवज्ञानमावृणीते सा कथमहमीश्वरं जानामीति व्याहर्त्तुमर्हतु । गोत्रमिति । किंगोत्राजाहं, किंनामेति किन्नाम्नी चाहमिति न विद्मः । पुरुषर्षभेति । त्वं हि पुरुषश्रेष्ठत्वाज्जानीहीति स्त्रीणां मन्दबुद्धित्वस्य 'योषाऽहं मन्दधीर्हरे' इति 'कथं पश्येमहि स्त्रियः' इत्यादौ प्रसिद्धेरिति भावः ॥ ३३ ॥ ❀ ❀ . तर्हि किं जानासीत्यत आह—इहेति । कथापक्षे तेनैव केनचिन्मुनिना कर्दमेनेव विषयभोगार्थं पुरीयं योगबलेन निर्मितेति राजा जानीते स्म । अयमाशयः—कालः कर्म स्वभावः प्रकृतिर्गुणा ईश्वरो वा कर्त्तेत्यहं न जानामि, किं त्वज्ञानेनात्मनि कल्पितमिति । इह पुरि सन्तं विद्यमानमात्मानमेव वयं विदाम । ततो मत्तः परमन्यं न विदामेत्यन्वयः ॥ ३४ ॥ ❀ ❀ मानदेति । मम मानं त्वया कार्यमेवेति भावः । सखायः इन्द्रियाणि । सख्यस्तद्वृत्तयः । नागः प्राणः । मयि सपरिकरायां सुप्तायां सत्यां जागर्ति स्वप्ने इन्द्रियाणां लये सुषुप्तौ मनोबुद्ध्योरपि लये प्राणो विराजत एव ॥ ३५ ॥ ❀ ❀ दिष्ट्या भाग्येनैवागतं मनुष्यशरीरं प्राप्नोतीति । अरिं शत्रुं दाम्यतीति तथा । मामपि कामोरिः पीडयति तस्य दमनं कुर्विति भावः ॥ ३६ ॥ ❀ ❀ मनुष्यदेहप्रवेशाच्छतमित्युक्तम् । विभो इति । व्यापकत्वात्त्वं जानीष एव । यद्वा—विशेषेण भातीति व्युत्पत्तेर्न हि नारीं विना नरो भातीत्यतोऽहं ते स्वीकार्यैवेति भावः ॥ ३७ ॥ ❀ ❀ कथापक्षे—सम्प्रति पतिंवरैवाहमकस्मात्प्राप्तं स्वसदृशं त्वां पश्यन्ती नान्यमन्वेषयामीत्याह—कमिति । अध्यात्मपक्षे—बुद्धिरियं राजसी किञ्चित्सत्त्वमिश्रत्वाद्धार्मिकैवेति तामस्या सात्त्विक्या च बुद्ध्या वृतं पुमांसं निन्दति कमिति पञ्चभिः । स्थावरयोनिगतत्वादरतिज्ञं पश्वादियोनिगतत्वेन रतिज्ञत्वेप्यकोविदं विप्रवणिगादिजातित्वेन कोविदत्वेऽपि सम्परायो मृत्युस्तदनभिमुखं शरीरमित्यर्थः । क्षत्रियत्वेन वीरत्वेप्यश्वस्तनविदं श्वः परश्वो वा मरणानन्तरं मे किं भविष्यतीति ज्ञानशून्यत्वादधार्मिकमित्यर्थः । पशुतुल्यत्वात्पशुम् ॥ ३८ ॥ ❀ ❀ त्रिवर्गसाधकं गार्हस्थ्यमभिनन्दति—धर्म इति । प्रजार्थकात्युत्थ आनन्दः पुत्रपौत्रादिलालनरूप आनन्दो वा अमृतमदनीयं यज्ञशिष्टा हि "अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते" इति मेदिनी । लोका यागादिप्राप्याः केवलिन उदरम्भरिणो वा । यान्न विदुरित्यतिदुःखप्राप्यस्य चतुर्थपुरुषार्थस्यानभिनन्दनात् सात्त्विकी बुद्धिरपि निन्दिता । अध्यात्मपक्षे—त्रिवर्गस्योपपादनमविद्ययैवेत्युक्तम् ॥ ३९ ॥ ❀ ❀ सर्वाश्रमोपजीव्यत्वात् गृहाश्रम एव श्रेयानित्याह—पित्रिति । अस्मिन्भवे मनुष्यजन्मनि यत्क्षेमं शरणं वदन्ति स गृहाश्रमः यश्च यज्ञकर्तृत्वेन सर्वसुखदो गृहस्थ इत्युक्तमनेन ॥ ४० ॥

### श्रीमद्वीरराघवव्याख्या

यन्मुखं व्रीडयाभिमुखं न भवति तत् स्वमाननमुन्नीय मह्यं दर्शय । आननं विशिनष्टि-शोभने भ्रुवौ यस्मिन् सुतारे कनीनिके लोचने यस्मिन् व्यालम्बिनो दीर्घा ये नीलालकास्तेषां वृन्देन संवृतं वल्गूनि वाचकानि वाक्यानि यस्मिन् शुचि स्मितं यस्मिन् । शुचिस्मिते इति पाठे सम्बोधनम् ॥ ३१ ॥ ❀ ❀ एवमधीरवदविजितेन्द्रियवद्याचमानं पुरञ्जनं नारी प्रमदा वीरं दृष्ट्वा मोहिता सती वीरं तं मोहयन्ती अभ्यनन्दतानेनान्योऽन्यपारतन्त्र्यं सूच्यते ॥ ३२ ॥ ❀ ❀ यत्पृष्टं कस्यासीति अनेन कस्य पुत्री जातेति का त्वमिति किंस्वरूपा किन्नामासीति तत्राह । नेति । आत्मनो मम परस्य तवापि कर्त्तारं स्रष्टारं सम्यक् न विद्मः-कर्तारं विशिनष्टि गोत्रं नाम च यत्कृतं येन कर्त्रा कृतं भवति ॥ ३३ ॥ ❀ ❀ इहास्यां पुर्यामधुना सन्तं वसन्तमात्मानं पुरीमन्तः प्रविश्य नियन्तारं त्वां जानीमः ततः आत्मनः त्वत्तः मत्तश्च परं विलक्षणं पुरुषं न विदामः । कोऽसौ परः यं न विद्म इति वदसि तत्राह । हे वीर ! आत्मनस्तव मम च शरणमियं पुरी येन निर्मिता तमित्यर्थः । इहाद्य सन्तमात्मानं विदाम इत्यनेन केवलसंसारिणो जीवस्य बुद्धिः तत्स्वरूपमविशदावभासं गृह्णाति न तु याथात्म्येनेत्युक्तं न विदाम वयं वीर ! कर्तारं न विदाम ततः परं येनेयं निर्मिता वीर ! पुरीत्यनेन जीवस्य करणकलेवरादिसम्पादनचतुरं कृत्स्नजगदुदयविभवलयलीलं प्रकृतिपुरुषविलक्षणं परमपुरुषमापाततस्तत्त्वतश्च न विषयीकरोतीत्युक्तम् ॥ ३४ ॥ ❀ ❀ यत्पृष्टं क एतेऽनुपथा इति तत्राह एत इति । एकादश महाभटाः ता ललनाश्च मे मम सखायः सख्यश्चानुवर्तिनो भृत्या इत्यर्थः । अनेनेन्द्रियाणां तद्वृत्तीनां च बुद्ध्यैकायत्तत्त्वमुक्तं, यत्पृष्टं कोऽयं तेऽहिः पुरःसर इति तत्राह । मयि सुप्तायां सत्यामयं नागः पुरीं पालयन् जागर्त्ति । अनेन बुद्धीन्द्रियमनआदिषु सर्वेषु सुप्तौ निर्व्यापारेषु सत्स्वपि प्राणव्यापारोऽस्तीति सर्वापेक्षया प्राणस्य प्राधान्यमुक्तम् ॥ ३५ ॥ ❀ ❀ आस्तां नाम गोत्रादि दिष्ट्या पुर्यामागतोस्यनेन मनुष्यदेहसंबन्धो दैवकृतो दुर्लभ इत्युक्तम् । अतस्ते भद्रं तावद्ग्राम्यानिन्द्रियग्रामार्हशब्दादीनवाप्स्यसि हे अरिन्दम ! अहं स्वबन्धुभिः सखिभि-

रिन्द्रियैः सहेत्यर्थः, तान् ग्राम्यान् भोगाँस्ते तुभ्यं उद्वहिष्यामि सम्पादयिष्यामि ॥ ३६ ॥ ❀ ❀ हे विभो ! नवद्वारामिमां पुरीं शतं समाः संवत्सरान् मया उपनीतान्प्रापितान्कामान् गृह्णानः अधितिष्ठस्व । मनुष्यदेहप्रवेशाभिप्रायेण शतमित्युक्तम् ॥ ३७ ॥ ❀ ❀ संसारिणो जीवस्य प्रवृत्तिस्वभावत्वान्निवृत्तिनिन्दापूर्वकं तत्सङ्गमभिनन्दति पञ्चभिः कं न्विति । त्वत्तोऽन्यं कं रमये क्रीडयाम्यनेन निवृत्तिमार्गनिष्ठो न बुद्ध्यधीन इत्युक्तं तत्र हेतुररतिज्ञं नैष्ठिकं विरक्तमित्यर्थः । अत एवाकोविदमनिपुणमनिषिद्धस्यापि सुखस्य त्यागिनमसम्परायाभिमुखं सम्परायो मृत्युस्तदनभिमुखं मरणाभीरुमिति वा "कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिमि"त्युक्तेः, अश्वस्तनविदं श्वोभवं स्वस्तनं कालान्तरानुभाव्यं स्वर्गादिभोग्यत्वेन न वेत्तीत्यश्वस्तनवित्तत् "एते वै निरयास्तात ! स्थानस्य परमात्मनः" इति । "वासुदेवे मनो यस्य जपहोमार्चनादिषु । तस्यान्तरायो मैत्रेय ! देवेन्द्रत्वादिकं फलमि"ति स्वर्गादिसुखस्य मुमुक्षोर्हेयत्वादित्यर्थः । पशुं पशुतुल्यमिति निन्दति ॥ ३८ ॥ ❀ ❀ एवं निवृत्तिधर्मस्थं निन्दित्वा प्रवृत्तिस्वभावं स्तौति धर्म इति । अत्र प्रवृत्तिमार्गे धर्मः स्वर्गादिसाधनो यागादिरूपो धर्मः तथार्थकामौ प्रजानन्दः पुत्रसुखममृतं मोक्षः यशः कीर्तिः विशोकाः निर्दुःखाः विरजाश्च निर्मला लोकाः पुण्यलोकाश्च सिध्यन्तीति शेषः । लोकान् विशिनष्टि यान् लोकान् केवलिनो निवृत्तिधर्मस्था न विदुः ॥ ३९ ॥ ❀ ❀ किञ्चास्मिन्भवे गृहाश्रम इति यदेतत्पित्रादीनां क्षेमार्हं शरणमाश्रयं वदन्ति । पित्रादीनां गृहाश्रमिणामाराधकमाश्रित्यावस्थानात् ॥४०॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

हे शुचिस्मिते ! निर्मलविलासे त्वदाननं चेष्टाविशेषं मे दर्शयेत्यन्वयः । सुभ्रु शोभना भ्रूर्भ्रमणशीलं विषयेषु यस्य तत्तथा सुतरां शोभनं लोचनमालोचनं यौक्तिकं ज्ञानं यस्य तत्तथा ततस्तर्हि किमिति न प्रकाशत इत्यत उक्तं व्यालम्बीति । व्यालम्बिनामविस्रंसिनां चञ्चलानां नीलालकोपमवर्णानां तामसानां वृत्तिविशेषाणां वृन्देन संवृतं गूढं तस्मान्न प्रकाशत इत्यर्थः । तर्हि कथं दर्शनमिति तत्राह । उन्नीयेति । तामसवृत्तिविशेषान् पृथक्कृत्य पुनरपि कीदृशं वल्गु सुंदरं वाचकं वक्त्रम् वाक्यं यस्य तत्तथा यदाननं व्रीडया वृत्तिविशेषेण ममानभिमुखं न संमुखं तदिति शेषः ॥ ३१ ॥ ❀ ❀ नरः पुरुषस्तत्संबन्धिनी नारी वैषयिकी बुद्धिः हसन्ती उज्ज्वसन्ती विशिष्ट ईरो ज्ञानं यस्य स वीरस्तमपि मोहयितुं शीलमस्या अस्तीति वीरमोहिनीति ॥ ३२ ॥ ❀ ❀ यदुक्तं कस्यासीति तत्राह नेति । हे पुरुषश्रेष्ठ ! कर्तारमुत्पादकं भर्तारं पोषकं वा सम्यग् लक्षणवत्तया न विदाम न जानीम हे गुणवदाश्रय ! कश्चिदस्तीति सामान्यमेव न तु विशिष्टमित्यतः सम्यगिति । किञ्चात्मनो मम परस्योत्पादकस्यापि यथा नाम कृतं यच्च गोत्रं तदपि न जानीमह इत्यन्वयः । 'अनामगोत्रमि'ति श्रुतेः ॥ ३३ ॥ ❀ ❀ तर्हि किमपि न वेत्सि चेद् बुद्धित्वहानिरिति तत्राह इहेति । इह सन्तमात्मानं मामहमित्यद्येदानीं जानीमहे उत्तरकाले सन्देहः कर्मवशात् ततः परं ततोऽन्यत्किमपि न विदाम इत्यन्वयः । यस्मात्परमीश्वरं न विदाम येनेश्वरेण मम शरणं निवासयोग्येयं पुरी विरचितेति वा ॥ ३४ ॥ ❀ ❀ के तेऽनुपथा इति तत्राह एत इति ॥ ३५ ॥ ❀ ❀ स्वबन्धुभिरिन्द्रियैः ॥ ३६ ॥ ❀ ❀ हस्तपादयोरेकत्वेन नवत्वं मुखानि द्वाराणि शतं समा इत्यनेन 'शतायुर्वै पुरुषः' इति श्रुतेः । मनुष्याणां शतायुष्ट्वनिर्देशान्मनुष्यशरीरमिहाभिप्रेतम् ॥ ३७ ॥ ❀ ❀ तत्र हि ज्ञानोत्पत्तिः कुत इति तत्राह कान्विति । का बुद्धिस्त्वदन्यं मनुष्यशरीरप्रविष्टं चेतनं विहायान्यं पश्वादिशरीरगतं रमयेत्सुखिनं कुर्यादित्यन्वयः । कुत इत्यत उक्तम् अरतिज्ञमिति । 'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः' इति स्मृतेः । परमात्मरतिज्ञानरहितं शब्दादिविषयरतिज्ञानहीनं वा तदपि कुत इत्यत उक्तम् अकोविदमिति । अपण्डितत्वादित्यर्थः । पाण्डित्याभावः कथमित्यत्राह असांपरायेति । सांपरायो मोक्षस्तत्राभिमुखो न भवतीत्यसांपरायाभिमुखस्तं युद्धाभिमुखकामो न ज्ञानाभिमुखत्वं कथमित्यत उक्तमश्वस्तनविदमिति श्वस्तनं भविष्यन्न वेत्तीत्यश्वस्तनवित्तं न विदुः 'श्वस्तनं न लोकालोकावि'ति श्रुतिः, श्वस्तनं तमपीदृशमिति न वेत्तीत्यश्वस्तनवित्तं वा कोऽसावेवंविध इत्युक्तं पशुमिति तत्त्वज्ञानरहितमत्र सद्बुद्ध्यसद्बुद्धी द्वे यथासंभवं विशेषणैस्तत्तदर्थतया ज्ञातव्ये । असद्बुद्धिविवक्षायां पाशुपतागमज्ञानशून्यम् अन्यत्रोक्तार्थः असद्बुद्धिपक्षेऽपि स्वमतानुसारेण मोक्षादिकं स्वस्यैवार्थत इदं समस्तमुपपन्नमिति ॥ ३८ ॥ ❀ ❀ इतोऽपि श्वस्तनेऽपि नास्त्येवेत्याह धर्म इति । अत्र भवति धर्मादयः सन्तीति हि यस्मात्तस्मात्प्रजानन्दः । पुत्रसुखममृतं मोक्षमन्योन्यमविरोधेन धर्माद्यनुष्ठानं न सुशकमिति भावेनाह यानिति । केवलिनो निष्किंचना उदरम्भरिजना वा ॥ ३९ ॥ ❀ ❀ सर्वाश्रमाणामुपजीव्यत्वात् गृहाश्रम एव ज्यायानित्याह पितृदेवेति । आत्मनोऽस्य देहस्य क्षेम्यं मोक्षयोग्यं शरण्यं वदन्तीति यत्तस्मादिति शेषः ॥ ४० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

इतिहासपक्षे पुरञ्जनभोगार्थं परोक्षेण काचिदेवं निर्मितेति न विदामेत्युक्तम् ॥ ३३–३५ ॥ ❀ ❀ तांस्तेऽहमित्यत्र स्नेहानिति क्वचित् ॥ ३६–५३ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

स्मृतिभ्रष्टस्य कामिनो जीवस्य वैयग्र्यं दर्शयति त्वमिति । वल्गु मनोहरं यथा स्यात्तथा वक्तीति तत् । यदाननं तवेदं न ममाभिमुखमिति भगवत्यविद्ये देवि मदीयचिन्मयज्ञानानन्दभोगादहं त्वया वञ्चित एव, किन्तु स्वीयां रूपादिविषयसम्पत्तिं सम्प्रति

मद्भोग्यत्वेनोपकल्पय अलमेतावता वाक्येन। तत्राननमित्यादिना रूपरसगन्धस्पर्शानां वाचकमितिशब्दस्य च भोगप्रार्थनाभिव्यञ्जिता ॥ ३१ ॥ ❀ ❀ अधीरवत् वस्तुतस्तु चिद्रूपत्वाद्धीरुमेव। हे वीरेति! तवैव कथेयं कथ्यत इति ध्वनिः। मोहितेति। यथा विषयमाधुर्यैस्तया जीवोऽनुरञ्जितस्तथा चिन्माधुर्यैर्जीवेनापि सानुरञ्जितेत्यर्थः ॥ ३२ ॥ ❀ ❀ यत् पृष्टं कस्यासि कासीति तत्राह। न विदामेति। कथापक्षे कस्यचिन्मुनेर्मोहनार्थमायातायाः कस्याश्चिदप्सरस इयं कन्येति वा जानीते स्म। अध्यात्मपक्षे या जीवज्ञानमावृणीते सा कथमीश्वरमहं जानामीति व्याहर्तुमर्हतु, गोत्रमिति। किंगोत्रजाहं नामेति किंनाम्नी चाहमिति न विदाम ॥३३॥ ❀ ❀ तर्हि किं जानासीत्यत आह इहाद्येति। येनात्मनः स्वस्य मम वा शरणमास्पदं पुरी निर्मिता तं न विदामेति कथापक्षे तेनैव केनचिन्मुनिना कर्दमेनेव विषयभोगार्थं पुरीयं योगबलेन निर्मितेति राजा जानीते स्म ॥ ३४ ॥ ❀ ❀ यत्पृष्टं क एतेऽनुपथा इति तत्राह एत इति। सखाय इन्द्रियाणि सख्यस्तद्वृत्तयः। नागः प्राणः मयि सपरिकरायां सुप्तायां सत्यां जागर्त्ति। स्वप्ने इन्द्रियाणां लये सुषुप्तौ मनोबुद्ध्योरपि लये प्राणो विराजत एव ॥ ३५ ॥ ❀ ❀ दिष्ट्या भाग्येनैव आगतः मनुष्यशरीरं प्राप्तोऽसीति। उद्वहिष्यामि संपादयिष्यामि स्वबन्धुभिः सखिभिः सखीभिश्च समाः संवत्सरान् मनुष्यदेहप्रवेशाच्छतमित्युक्तम् ॥ ३६-३७ ॥ ❀ ❀ कथापक्षे सम्प्रति पतिंवरैवाहमकस्मात् प्राप्तं स्वसदृशं त्वां पश्यन्ती नान्यमन्वेषयामीत्याह कमिति। अध्यात्मपक्षे तु बुद्धिरियं राजसी किञ्चित् सत्त्वमिश्रत्वाद्धार्मिकैवेति तामस्या सात्त्विक्या च बुद्ध्या आवृतं पुमांसं निन्दति कमिति पञ्चभिः। स्थावरयोनिगतत्वादरतिज्ञं पश्वादियोनिगतत्वेन रतिज्ञत्वेऽप्यकोविदम्। विप्रवणिगादिजातित्वेन कोविदत्वेऽपि सम्परायो युद्धं तदनभिमुखमवीरमित्यर्थः। क्षत्रियजातित्वेन वीरत्वेऽपि अश्वस्तनविदं श्वः परश्वो वा मरणानन्तरं मे किं भविष्यतीति ज्ञानशून्यत्वादधार्मिकमित्यर्थः। पशुतुल्यत्वात्पशुम् ॥ ३८ ॥ ❀ ❀ त्रिवर्गसाधकं गार्हस्थ्यमभिनन्दति। धर्म इति। प्रजार्थकरत्युत्थ आनन्दः पुत्रपौत्रादिलालनरूप आनन्दो वा अमृतमदनीयं यज्ञशिष्टादि। 'अमृतं यज्ञशेषे स्यात्पीयूषे सलिले धृते' इति मेदिनी। लोका यागादिप्राप्याः। केवलिनो यतयो यान्न विदुरित्यतिदुःखप्राप्यस्य चतुर्थपुरुषार्थस्यानभिनन्दनात् सात्त्विकी बुद्धिरपि निन्दिता। अध्यात्मपक्षे त्रिवर्गस्योपपादनमविद्ययैवेत्युक्तम् ॥ ३९॥ ❀ ❀ गृहाश्रमस्तु सर्वेषां सुखद इत्याह। पित्रिति। अस्मिन् भवे मनुष्यजन्मनि यत् क्षेमं शरणं वदन्ति स गृहाश्रमः ॥ ४०-४१ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

हे शुचिस्मिते! यत् व्रीडया अनभिमुखं तदाननमुन्नीय मे मह्यं त्वं दर्शय। शोभने भ्रुवौ यस्मिन् सुतारे लोचने यस्मिन् व्यालम्बिनो दीर्घा ये नीलाः अलकास्तद्वृन्देन संवृतम् वल्गूनि मधुराणि वाचकानि पदानि यस्मिन् तत् ॥ ३१ ॥ ❀ ❀ वीरेण पुरञ्जनेन मोहिता ॥ ३२ ॥ ❀ ❀ आत्मनः परस्य तव च कर्त्तारं यत्कृतं गोत्रं नाम च तमपि न विदाम न विद्मः ॥ ३३ ॥ ❀ ❀ शनैः आत्मानं पुरीं च पुरञ्जनायार्पयन्त्याह इहेति। आत्मानं स्वात्मानमिह मम समीपे अद्य सन्तं परं त्वां च न विदाम येन आत्मनः प्रियस्य तव इयं मदभिन्ना भार्या शरणं गृहरूपा पुरी च निर्मिता तं च न विदाम न विद्मः ॥ ३४-३५ ॥ ❀ ❀ दिष्ट्या आगतोऽसि अतस्ते भद्रं भवतु, यान् कामान् त्वमभीप्ससे तांस्ते स्वबन्धुभिः सह अहं उद्वहिष्यामि सम्पादयिष्यामि ॥ ३६ ॥ ❀ ❀ समाः संवत्सरान् ॥ ३७ ॥ ❀ ❀ निवृत्तिनिन्दां विना प्रवृत्तौ रुचिर्न स्यादतो निवृत्तिनिन्दापूर्वकं तत्सङ्गमभिनन्दति कमिति पञ्चभिः। त्वदन्यम् अरतिज्ञं नैष्ठिकम् अत एवाकोविदम् असम्परायाभिमुखं सम्परायो मृत्युः पुत्रोत्पादनादिना देहं हित्वा स्वर्गं यास्यामीति सम्परायाभिमुखः तद्विपरीतं पुत्रोत्पत्त्याद्यपेक्षकमित्यर्थः अश्वस्तनविदम् इदं भार्यापुत्रादि सुखाय श्वः कर्तव्यमिति भार्यापुत्रादिरक्षाचिन्तादिशून्यमत एव पशुमैहिकामुष्मिकसुखानर्हम् कं रमये न कमपीत्यर्थः ॥ ३८ ॥ ❀ ❀ अत्र गार्हस्थ्ये केवलिनो विरक्ताः ॥ ३९ ॥ ❀ ❀ भवे संसारे ॥ ४०-४१ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

तत्रैवं कामव्याकुलचित्तस्य समाश्वासनार्थं प्रथमं स्वमुखं प्रदर्शयेत्याह—त्वमिति। यद् व्रीडया लज्जया अभिमुखं मम सम्मुखं न भवति तत्स्वाननमुन्नीय मे प्रदर्शयेत्यन्वयः। तन्मुखदर्शने स्वात्युत्साहं प्रदर्शयन् तद्विशिनष्टि—शोभने भ्रुवौ यस्मिंस्तत्, सुतारे शोभनकनीनिके लोचने यस्मिंस्तत्, व्यालम्बिनो दीर्घा ये नीला अलकास्तेषां वृन्देन संवृतम्, वल्गूनि वाचकानि वाक्यानि यस्मिंस्तत्। त्वत्प्रेरितकामाग्निदाहस्य त्वत्स्मितसुधयैव शान्तिर्नान्यथेति सूचयन् सम्बोधयति—हे शुचिस्मिते इति। शुचि कामसन्तप्तानां शान्तिकरं स्मितं यस्यास्तत्सम्बोधनम्। अध्यात्मपक्षे तु मनसश्चलत्वादिन्द्रियाणां च विषयोन्मुखत्वादेकान्तस्थितयोः स्त्रीपुरुषयोर्विकारस्यावश्यम्भावित्वात् श्रेयोर्थिभिरेवमेकान्ते न स्थेयमिति सूचितम् ॥ ३१ ॥ ❀ ❀ राजत्वाद्धीरत्वेऽपि कामवशात् इत्थमधीरवद्याचमानं प्रार्थयमानं पुरञ्जनं सा नारी अभ्यनन्दत भर्तृत्वेनाङ्गीचकारेत्यन्वयः। अङ्गीकारे हेतुमाह—तेन मोहितेति। मोहे हेतुमाह—वीरमिति, स्वाभिलषितभोगसम्पादनसमर्थं दृष्ट्वेत्यर्थः। मोहचिह्नमाह—हसन्तीति। प्राचीनबर्हिषः सावधानतार्थं त्वमपि तादृश एवेति सूचयन् सम्बोधयति—हे वीरेति। अध्यात्मपक्षे तु यथा चेतनस्य जीवस्य बुद्ध्यादिसङ्घातं विना भोगानुपपत्तिस्तथा जडाया बुद्धेरपि तं चेतनं विना भोगानुपपत्तिरिति परस्पराध्यासो दर्शितः। त्वमेव पुरञ्जन इति सूचयन् तत्समानपदेन सम्बोधयति—हे वीरेति ॥ ३२ ॥ ❀ ❀ एवं तमङ्गीकृत्य तत्प्रश्नस्योत्तरमाह—नेति। हे पुरुषर्षभ यत्त्वया

पृष्टं कस्य गोत्रे कस्य कन्या किं नाम त्वमसि तत्रात्मनो मम परस्य तवापि कर्त्तारं सम्यग्वयं न विदाम न विद्मः। तथा गोत्रं नाम चोभयोर्येत्कृतं येन भवति तमपि न विद्मः। वयमिति बहुवचनं ममानुवर्त्तिनोऽपि न जानन्तीत्यभिप्रायेण। सम्यगित्यनेनापाततो यथाकथञ्चिज्ज्ञातं तत्र निश्चयाभावात्तन्न वक्तव्यमिति सूचयति। नामगोत्रादिज्ञानमस्तु मा वा त्वं तु पुरुषश्रेष्ठत्वान्मयाङ्गीकृत एव नात्र सन्देह इति सूचनाय सम्बोधनं हे पुरुषर्षभेति। अध्यात्मपक्षे तु बुद्धेरविद्यापरिणामरूपत्वात् तस्या यदि सर्वकारणपरं आत्मनः सम्यक् साक्षात्कारलक्षणं ज्ञानं स्यात् तदा स्वरूपविलय एव स्यात्तस्याविद्यानिवर्त्तकत्वात् यथाकथञ्चिज्ज्ञानं तु न तन्निवर्त्तकमिति न सम्यग्विदामेत्युक्तम्॥ ३३॥ ❀ ❀ येनात्मनो मम शरणं स्थानमियं पुरी निर्मिता तं च न विदामेत्यन्वयः। तर्हि किं वेत्सि तत्राह—इहेति, इह अस्यां पुर्यां सन्तं विद्यमानम्। अतोऽन्यस्य कस्यचित् स्वामित्वस्याभावात् अत्रावयोः रतिर्निष्प्रत्यूहेति रुचयन्ती सम्बोधयति—हे वीरेति। पक्षान्तरे अहमस्मीति ज्ञानं शरीरे निष्प्रत्यूहरमणाभिमानं च प्रसिद्धमेव॥ ३४॥ ❀ ❀ यत्पृष्टं 'क एतेऽनुपथाः' इति तत्राह—एते इति। एते नरा मे सखायः एता नार्यश्च मे सख्यः मम भोगसम्पादने निरतत्वात्। अयं च नागो मयि सुप्तायां ममेमां पुरीं पालयन् जागर्ति। हे मानद इति सम्बोधनेन अहमेतेषां स्वामिनी यदि तव वशवर्तिनी जाता तर्ह्येतेषामपि सम्मानकर्त्ता स्वामी त्वमेव। अतो नैतैर्भोगे कश्चित्प्रतिबन्ध आशङ्कनीयः, प्रत्युत तत्साधकत्वमेवैतेषामिति सूचयति। पक्षान्तरे तु सखायः इन्द्रियाणि सख्यः इन्द्रियवृत्तयः तेषां भोगसाधकत्वं प्रसिद्धमेव विषयिजीवस्यापि इन्द्रिय-सम्मानकर्तृत्वं प्रसिद्धम्। सुषुप्तौ बुद्धौ लीनायामपि पञ्चवृत्तिकस्य प्राणस्य जाग्रदवस्थावच्छरीरपालकत्वमपि सुप्रसिद्ध-मिति॥ ३५॥ ❀ ❀ यत्पृष्टं किञ्चिकीर्षसीति तत्राह—दिष्ट्येति सप्तभिः। दिष्ट्या मम भाग्येनैव भवानत्रागतोऽस्तीत्यनेन त्वं ह्रीरित्यादिना यदुक्तं तत्सत्यमेव पत्यन्वेषणार्थमेव अहमत्रास्मीति सूचितम्। मया सह त्वं पुरीमलङ्कर्तुमर्हसीत्युक्त्या विदितं मया त्वमपि ग्राम्यान् कामान् विषयभोगानभीप्ससे इच्छसि तान् भोगान् ते तुभ्यमहं स्वबन्धुभिः सखीभिः सखिभिश्च सहोद्वहिष्यामि प्रापयिष्यामि। एवं तवापि भद्रं भविष्यति। त्वमपि शत्रुजये समर्थोऽसीत्यभिप्रायेण सम्बोधयति हे अरिन्दम इति। अध्यात्मपक्षे तु राजसीबुद्धिसन्निधाने जीवस्य विषयभोगाभिलाषित्वं बुद्धीन्द्रियादेर्भोगसम्पादकत्वं जीवस्य रोगादिशत्रुनिवारणे प्रयत्नवत्त्वं च प्रसिद्धमेव॥ ३६॥ ❀ ❀ अतो मयोपनीतान् प्रापितान् कामभोगान् विषयान् गृह्णानः उपभुञ्जानः संस्त्वं शतं समाः संवत्सरशतपर्यन्तं कालमिमां नवमुखीं पुरीमधितिष्ठस्वेत्यन्वयः। अध्यात्मपक्षे तु यद्यपि संवत्सरशतमध्येऽपि विरक्त्या मरणेन वा शरीरत्यागो भोगत्यागो वा सम्भवति तथापि तन्मध्ये मरणानुसन्धानाभावाद्विरक्त्यभावाच्च शतायुष्ट्वस्य प्रसिद्धत्वाच्छतं समा इत्युक्तम्। अन्यत्स्पष्टमेव॥ ३७॥ ❀ ❀ यदुक्तमनुगृहाण शोभने इति तत्राह—कं न्विति। त्वत्त्वत्तोऽन्यमकोविदं मूर्खमहं कं नु रमये इत्यन्वयः। मूर्खत्वमेव विशेषणैः स्पष्टयति—अरतिज्ञं स्त्र्यादिविषयभोगसुखानभिज्ञम्। असम्परायाभिमुखमिति परलोकसुखसाधनानुष्ठानरहितमित्यर्थः। अश्वस्तनविदमिति, श्वः किं भविष्यतीति देहनिर्वाहार्थचिन्ताशून्यमित्यर्थः। अत एव पशुं सर्वथा पशुतुल्यमित्यर्थः। हि यस्मात्त्वत्तोऽन्यो मूर्खस्तस्मात्त्वामेव विषयसुखाभिज्ञमिहामुत्र भोगसाधनदक्षं विवेकिनं रमयिष्ये नान्यमिति भावः। अध्यात्मपक्षे तु इयं हि राजसी बुद्धिरतस्तामसं सात्त्विकं च जनं निन्दति—कं नु त्वदन्यं रमये इति। तत्र तामसयोनिषु स्थावरत्वादिप्राप्तस्य स्त्र्यादिविषयसुखानभिज्ञत्वपरलोकसाधनशून्यत्वस्वदेहनिर्वाहचिन्तारहितत्वजडत्वादि सुप्रसिद्धमेव। पशुपक्ष्यादित्वे च स्त्र्यादिभोगसुखाभिज्ञत्वेऽपि तत्सम्पादनसामर्थ्यहीनत्वपरलोकसाधनशून्यत्वं श्वः किं कर्तव्यमिति ज्ञानरहितत्वं पशुत्वमूर्खत्वादिकमपि प्रसिद्धम्। तथा सात्त्विके विरक्ते ऋष्यादौ स्त्र्यादिविषयभोगत्यागेन अरतिज्ञत्वं ज्ञानभक्तिनिष्ठत्वेन काम्यकर्मानुष्ठानरहितत्वेन असम्परायाभिमुखत्वम्, देहनिर्वाहचिन्ताशून्यत्वेन अश्वस्तनवित्त्वम्, अनिषिद्धविषयत्यागेन पशुत्वम-कोविदत्वं चोक्तम्॥ ३८॥ ❀ ❀ एवं तामसं सात्त्विकं च निन्दित्वा राजसस्य स्तुत्यर्थं गार्हस्थ्यं स्तौति—धर्म इति द्वाभ्याम्। अत्र गार्हस्थ्ये यज्ञाद्यनुष्ठानाद्धर्मः सिद्ध्यति। अतोऽन्तःकरणशुद्धिविवेकज्ञानभक्त्यादिना अमृतं मोक्षः सिद्ध्यति। लौकिकप्रयत्नेन अर्थकामौ च सिद्ध्यतः। प्रजानन्दः प्रजोत्पत्त्यर्थरत्युत्थानन्दः पुत्रपौत्रादिलालनादिजनितानन्दो वा सिद्ध्यति। यशश्च परोपका-रादिना सिद्ध्यति। काम्यकर्मानुष्ठानेन विरजाः शुद्धाः सुखजनकाः विशोकाः लोकाः स्वर्गादयः सिद्ध्यन्ति। यान् धर्मादीन् केवलिनः गार्हस्थ्यत्यागिनो नैष्ठिकादयो न विदुर्न जानन्ति। यदि गार्हस्थ्ये एते भवन्ति नान्यत्रेति विदुस्तदा कथं मोक्षार्थिनोऽपि तत्त्यजेयुरिति भावः॥ ३९॥ ❀ ❀ न केवलं स्वस्यैवात्र धर्मादयः सिद्ध्यन्ति किन्तु गृहाश्रम इति यत्तदेव अस्मिन् भवे संसारे पित्रादीनां सर्वेषामपि क्षेमं निर्वाहकं शरणमाश्रयं वेदवादिनो वदन्तीत्यन्वयः। हकार एवकारार्थकः। अध्यात्मपक्षे तु यथा भगवदनुगृहीतानां ज्ञानिनां भगवदेकनिष्ठानां लौकिकालौकिकव्यवहारानुसन्धानं नास्ति तथा विषयाविष्टचित्तानां भगवदनुसन्धानं नास्ति। 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी। यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः' इति भगवदुक्तोऽर्थो दर्शितः 'यान्न केवलिनो विदुः' इत्यादिना॥ ४०॥

## भाषानुवादः

शुचिस्मिते! सुन्दर भौंहें और सुघड़ नेत्रोंसे सुशोभित तुम्हारा मुखारविन्द इन लंबी-लंबी काली अलकावलियोंसे घिरा हुआ है; तुम्हारे मुखसे निकले हुए वाक्य बड़े ही मीठे और मन हरनेवाले हैं; परन्तु वह मुख तो लाजके मारे मेरी ओर होता

ही नहीं। जरा ऊँचा करके अपने उस सुन्दर मुखड़ेका मुझे दर्शन तो कराओ'॥ ३१॥ ❀ ❀ श्रीनारदजीने कहा—वीरवर! जब राजा पुरञ्जनने अधीर-से होकर इस प्रकार याचना की, तब उस बालाने भी हँसते हुए उसका अनुमोदन किया। वह भी राजाको देखकर मोहित हो चुकी थी॥ ३२॥ ❀ ❀ वह कहने लगी 'नरश्रेष्ठ! हमें अपने उत्पन्न करनेवालेका ठीक-ठीक पता नहीं है और न हम अपने या किसी दूसरेके नाम या गोत्रको ही जानती हैं॥ ३३॥ ❀ ❀ वीरवर! आज हम सब इस पुरीमें हैं—इसके सिवा मैं और कुछ नहीं जानती; मुझे इसका भी पता नहीं है कि हमारे रहनेके लिये यह पुरी किसने बनायी है॥ ३४॥ प्रियवर! ये पुरुष मेरे सखा और स्त्रियाँ मेरी सहेलियाँ हैं तथा जिस समय मैं सो जाती हूँ, यह सर्प जागता हुआ इस पुरीकी रक्षा करता रहता है॥ ३५॥ ❀ ❀ शत्रुदमन! आप यहाँ पधारे, यह मेरे लिये सौभाग्यकी बात है। आपका मङ्गल हो। आपको विषय-भोगोंकी इच्छा है, उसकी पूर्तिके लिये मैं अपने साथियोंसहित सभी प्रकारके भोग प्रस्तुत करती रहूँगी॥ ३६॥ ❀ ❀ प्रभो! इस नौ द्वारोंवाली पुरीमें मेरे प्रस्तुत किये हुए इच्छित भोगोंको भोगते हुए आप सैकड़ों वर्षोंतक निवास कीजिये॥ ३७॥ ❀ ❀ भला, आपको छोड़कर मैं और किसके साथ रमण करूँगी? दूसरे लोग तो न रति-सुखको जानते हैं, न विहित भोगोंको ही भोगते हैं न परलोकका ही विचार करते हैं और न कल क्या होगा—इसका ही ध्यान रखते हैं, अतएव पशुतुल्य हैं॥ ३८॥ ❀ ❀ अहो! इस लोकमें गृहस्थाश्रममें ही धर्म, अर्थ, काम, सन्तान-सुख, मोक्ष, सुयश और स्वर्गादि दिव्य लोकोंकी प्राप्ति हो सकती है। संसारत्यागी यतिजन तो इन सबकी कल्पना भी नहीं कर सकते॥ ३९॥ ❀ ❀ महापुरुषोंका कथन है कि इस लोकमें पितर, देव, ऋषि, मनुष्य तथा सम्पूर्ण प्राणियोंके और अपने भी कल्याणका आश्रय एकमात्र गृहस्थाश्रम ही है॥ ४०॥

का नाम वीर विख्यातं वदान्यं प्रियदर्शनम्। न वृणीत[1] प्रियं प्राप्तं मादृशी त्वादृशं[2] पतिम्॥ ४१॥
कस्या मनस्ते भुवि भोगिभोगयोः स्त्रिया न सज्जेद्भुजयोर्महाभुज।
योऽनाथवर्गाधिमलं घृणोद्धतस्मितावलोकेन चरत्यपोहितुम्॥ ४२॥

**नारद[3] उवाच**

इति तौ दम्पती तत्र समुद्य समयं मिथः। तां प्रविश्य पुरीं राजन्मुमुदाते शतं समाः॥ ४३॥
उपगीयमानो ललितं तत्र तत्र च गायकैः। क्रीडन् परिवृतः स्त्रीभिर्ह्रदिनीमाविशच्छुचौ॥ ४४॥
सप्तोपरि कृता द्वारः पुरस्तस्यास्तु द्वे अधः। पृथग्विषयगत्यर्थं तस्यां यः कश्चनेश्वरः॥ ४५॥
पञ्च द्वारस्तु पौरस्त्या दक्षिणैका तथोत्तरा। पश्चिमे द्वे अमूषां ते नामानि नृप वर्णये॥ ४६॥
खद्योताऽऽविर्मुखी च प्राग्द्वारावेकत्र निर्मिते। विभ्राजितं जनपदं याति ताभ्यां द्युमत्सखः॥ ४७॥
नलिनी नालिनी च प्राग्द्वारावेकत्र निर्मिते। अवधूतसखस्ताभ्यां विषयं याति सौरभम्॥ ४८॥
मुख्या नाम पुरस्ताद् द्वास्तयाऽऽपणबहूदनौ। विषयौ याति पुरराड्रसज्ञविपणान्वितः॥ ४९॥
पितृहूर्नृप पुर्या द्वार्दक्षिणेन पुरञ्जनः। राष्ट्रं दक्षिणपञ्चालं याति श्रुतधरान्वितः[4]॥ ५०॥

अन्वयः—वीर मादृशी का नाम त्वादृशम् विख्यातम् वदान्यम् प्रियदर्शनम् प्राप्तम् प्रियम् पतिम् न वृणीत॥४१॥ ❀ ❀ महाभुज भुवि कस्याः स्त्रियाः मनः ते भोगिभोगयोः भुजयोः न सज्जेत् यः अनाथवर्गाधिम् घृणोद्धतस्मितावलोकेन अलम् अपोहितुम् चरति॥ ४२॥ ❀ ❀ राजन् इति तौ दंपती तत्र मिथः समयम् समुद्य ताम् पुरीम् प्रविश्य शतम् समाः मुमुदाते॥ ४३॥ ❀ ❀ तत्र तत्र गायकैः ललितम् उपगीयमानः स्त्रीभिः परिवृतः च सः शुचौ क्रीडन् ह्रदिनीम् आविशत्॥ ४४॥ ❀ ❀ तस्याः पुरः तु पृथग्विषयगत्यर्थम् उपरि सप्त द्वारः कृताः अधः द्वे तस्याम् यः कश्चन ईश्वरः॥ ४५॥ ❀ ❀ पंच द्वारः पौरस्त्याः एका दक्षिणा तथा उत्तरा पश्चिमे द्वे अमूषाम् नामानि नृप ते वर्णये॥ ४६॥ ❀ ❀ प्राक् खद्योता आविर्मुखी च द्वारौ एकत्र निर्मिते ताभ्याम् द्युमत्सखः विभ्राजितम् जनपदम् याति॥ ४७॥ ❀ ❀ प्राक् नलिनी नालिनी च द्वारौ एकत्र निर्मिते ताभ्याम् अवधूतसखः सौरभम् विषयं याति॥ ४८॥ ❀ ❀ पुरस्तात् मुख्या नाम द्वाः तया रसज्ञविपणान्वितः पुरराड् आपणबहूदनौ विषयौ याति॥ ४९॥ ❀ ❀ नृप पुर्याः दक्षिणेन पितृहूः द्वाः तया श्रुतधरान्वितः पुरंजनः दक्षिणपंचालम् राष्ट्रम् याति॥ ५०॥

१. प्रा० पा०—पतिं। २. प्रा० पा०—स्वयम्। ३. प्राचीने पाठे 'नारद उवाच' अयमंशो न। ४. प्रा० पा०—श्रुति०।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

भोगिभोगयोः सर्पदेहाकारयोस्तव भुजयोर्यन्न सज्जेदेवंभूतं कस्याः स्त्रिया मनः स्यान्न कस्या अपि। यो भवाननाथवर्गा दीनस्तोमास्तेषामाधिं मनोदुःखमलमत्यर्थमपोहितुं सर्वत्र चरति। केनापोहितुम् घृणयोद्धतोऽतिशयितो यः स्मितपूर्वकोऽवलोकस्तेन ॥ ४२ ॥ ❀ ❀ समुद्य समुदीर्य समाः संवत्सरान् ॥ ४३ ॥ ❀ ❀ तत्र जाग्रदवस्थां संक्षेपेणाह। उपगीयमान इति। सुषुप्तावस्थामाह। ह्रदिनी हृदयाकाशं स्वापस्थानम्। शुचौ निदाघे ॥ ४४ ॥ ❀ ❀ इदानीं नवद्वारप्रदर्शनपूर्वकं जाग्रदवस्थां प्रपंचयति सप्तेति यावदध्यायसमाप्तिः। तस्याः पुर उपरि कृता द्वारः सप्त वृता इति पाठे संवृताः। नेत्रे नासिके श्रोत्रे मुखं चेति सप्त अधो द्वे द्वारौ गुदलिंगे। यः कश्चनेति। आत्मनः सम्यगविज्ञानादनियतत्वाच्च ॥ ४५ ॥ ❀ ❀ तासु सप्तसु पंच द्वारः पौरस्त्याः पूर्वदिग्भवाः ॥ ४६ ॥ ❀ ❀ खद्योतवदल्पप्रकाशा वामनेत्ररूपा आविः प्रकटं मुखं यस्याः सा बहुप्रकाशा दक्षिणनेत्रलक्षणा। "तस्माद्दक्षिणोऽर्थ आत्मनो वीर्यवत्तरः" इति श्रुतेः। स्वानुभवाच्च तत्र प्रकाशाधिक्यम्। एकत्र संलग्ने विभ्राजितं रूपम्। द्युमत्सखश्चक्षुरिन्द्रियसहितः ॥ ४७ ॥ ❀ ❀ नलनालशब्दौ छिद्रवचनौ तद्वती नलिनी नालिनी च वामदक्षिणनासिके। अत्रापि संज्ञाभेदादेव कार्ये न्यूनाधिक्यं पूर्ववज्ज्ञेयम्। अवधूतो वाय्वधिष्ठितो प्राणः सौरभं गन्धम् ॥ ४८ ॥ ❀ ❀ मुख्या प्रधाना अस्याम्। आपणो भाषणम्। बहूदनश्चित्रमन्नम्। बह्वोदन इत्यनुक्तिः परोक्षवादत्वाय। रसज्ञं रसनेन्द्रियं विपणो वागिन्द्रियं ताभ्यामन्वितः। पण व्यवहारे ॥ ४९ ॥ ❀ ❀ दक्षिणेनेति न तृतीया किं तु दक्षिणस्यां दिशीत्यस्मिन्नर्थे तद्धितोयमेनप् प्रत्ययोऽव्ययसंज्ञः एवमुत्तरेणेति। अयमर्थः–पंचानां विषयाणामन्यतोऽनवगतानां प्रकाशायालमिति पंचालं शास्त्रं श्रवणकाले च बलाधिक्याद्दक्षिणकर्णः प्रथमः प्रवर्तते शास्त्रे च प्रथमं श्रोतव्यं कर्मकाण्डमित्येतावता साम्येन प्रवृत्तसंज्ञस्य कर्मकाण्डस्य दक्षिणकर्णेन श्रवणमिष्यते। अतस्तदर्थमनुष्ठाय पितृभिराहूतः पितृलोकप्रापकं पितृयानं प्रपद्यते। तदनेन प्रकारेण पितॄणामाह्वानमनेन भवतीति पितृहूर्दक्षिणकर्णः एवं तद्वैपरीत्येनोत्तरः कर्णो देवहूः। तथा च व्याख्यास्यति "पितृहूर्दक्षिणः कर्णं उत्तरो देवहूः स्मृतः। प्रवृत्तं च निवृत्तं च शास्त्रं पंचालसंज्ञितम् ॥ पितृयानं देवयानं श्रोत्राच्छ्रुतधराद् व्रजेत् ॥" इति ॥ ५०–५१ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

वदान्यं पुत्रकलत्राद्यभीष्टदानशीलं "गुणवान्दानशीलश्च वदान्यः पुरुषो मतः" इत्युक्तेः। तत्रापि प्रियदर्शनं सुन्दरं स्त्रीप्रियरतिसुखसाक्षात्कारकं वा प्राप्तं काकतालीयेनावाप्तं स्वयं का वीरेति युवावस्थत्वेन कामरिपुदलनसमर्थं त्वामहं त्वां वृणोमीति भावः ॥ ४१ ॥ ❀ ❀ दीनस्तोमा अस्मदादयः आधिमन्तः। पीडामपोहितुं दूरीकर्तुं केन स्मितावलोकेन। हे घृणोद्धत कृपयोज्जृम्भितेति वा। महाभुजेति स्वस्यालिंगनसुखमाह। यद्वा—मत्संगेन महं कामोत्सवमा सर्वतो भोक्ष्यतीति तयासूचि ॥ ४२ ॥ ❀ ❀ समयं संकेतम् "समयः शपथाचारसिद्धान्तेषु तथा धियि। क्रियाकारे च निर्देशे संकेते कालभाषयोः" इति मेदिनी। शतं समा इति। "शतं वर्षाण्यभ्यार्छत्" इतिं श्रुतेः। मुमुदाते इति। 'मुद-हर्षे' हर्षस्य शोकानुयायित्वात्तौ बुद्धिजीवावुभयं क्रमेण प्राप्तवन्ताविति भावः। "सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्। ते द्वयेन्योन्यसंलग्ने दृश्येते जलपंकवत्" इत्युक्तेः ॥ ४३ ॥ ❀ ❀ तत्र मुमुदाते शतं समाः इत्यत्र जाग्रदवस्थायां मोदप्रकारमाह—जाग्रदवस्थायां तत्र तत्र प्रतीन्द्रियविषयं गायकैस्तल्लक्षितैः शब्दादिभिर्विषयैरुपगीयमानस्सेव्यमानः स्वप्नावस्थायां स्त्रीभिः केवलं मनोवृत्तिलक्षणाभिः "परिवृतः स्त्रीभिर्वा यानैर्वा" इति श्रुतेः। स्वप्ने इन्द्रियाणामवसन्नत्वात्तत्संस्कारेण तद्वृत्तीनामेव तत्तत्कार्य्यकारित्वात्स्त्रीभिरित्युक्तं सुषुप्त्यवस्थायां शुचौ तन्निमित्ते शोके प्राप्ते शीतलागाधतोयधारामिव सुषुप्तिकाले सच्छब्दवाच्यां ब्रह्मस्थितिमाविशदित्यन्वयः। ललितं यथा तथा अन्यत्र शुचौ ऋतुविशेषे "सता सौम्य तदा सम्पन्नो भवति" इति श्रुतेः। पुरुषस्त्रीशब्दवाच्यैस्सत्संगभक्त्यादिभिः परिवृतः क्रीडन्कालं यापयन् ह्रदिनीं ह्रदिन्यां ब्रह्मनाड्यां हृदयस्थानेऽष्टदलपद्मे स्थितं श्रीनारायणमाविशदध्यायदिति वार्थः ॥ ४४ ॥ ❀ ❀ देहाख्यं पुरं प्रसिद्धपदसाम्येन वर्णयितुमाह—इदानीमिति। वृता द्वार इति पाठे संवृताः सम्यग्विभक्ता इत्यर्थः। 'वृङ्-संभक्तौ' न त्वाच्छादिता इत्यर्थः। कथापक्षे विषया वेशाः पृथग्विषयाः शब्दादयस्तज्ज्ञप्त्यै तस्यां पुरि ॥ ४५ ॥ ❀ ❀ अमूषां द्वारा नृपत्वात्त्वं पुरद्वाररचनां जानास्येवेति भावः ॥ ४६ ॥ ❀ ❀ तस्मात्पूर्वोक्ताद्धेतोः। आत्मनो देहस्य दक्षिणो भागोऽतिशयेन बलवानिति श्रुतिपदार्थः। द्युमान् आदित्यस्तस्य वासस्थानत्वाच्चक्षुषोपि तन्नाम। "आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत्" इति श्रुतेः। "आदित्यो ह वै चक्षुस्तेनानुगृहीतं रूपं गृह्णाति" इति च ॥ ४७ ॥ ❀ ❀ अर्वागुपरि तिर्यक् च धूनोति कम्पतीत्यवधूतो वायुर्घ्राणेन्द्रियाभिमानी तेन प्रेर्यमाणं घ्राणेन्द्रियमपि तच्छब्दवाच्यमिति। ताभ्यां द्वाभ्याम् ॥ ४८ ॥ ❀ ❀ सर्वद्वारमुख्यत्वात्सर्वसंजीवकत्वाच्च मुख्या, तयैकयैव द्वौ देशौ याति अन्यत्र द्वाभ्यां द्वाभ्यामेकदेशं यातीत्यपि मुख्यत्वे हेतुः। बह्वोदन इत्युक्तौ स्फुटार्थप्रत्यायकत्वात्परोक्षार्थता भज्येतेति भावः ॥ ४९ ॥ ❀ ❀ नृपेति। यथा त्वं लोकरक्षणार्थं श्रुतिधरैस्सह यासि तथायमपीति भावः।

अत्राभिप्रायमाह—अयमर्थ इति। अन्यतोऽन्येन्द्रियेणानवगतानामज्ञातानां पञ्चानामपि विषयाणां श्रोत्रेणैव प्रथममवगमात्पञ्चालमिति संज्ञेति विश्वनाथः। शास्त्रं विना भूतभविष्यद्व्यवहितादिविषयाणां नान्यत्प्रकाशकमिति स्वाम्यभिप्रायः। एतावता साम्येन प्राथम्यतौल्येन। ततः कर्मकाण्डश्रवणात्। तदर्थं कर्मकाण्डार्थम्। अनुष्ठाय कृत्वा। एवं दक्षिणकर्णवत्। तद्वैपरीत्येन। पितृयानवैपरीत्येन। निवृत्तिशास्त्रश्रवणजविचारेण देवैराहूतो देवयानं प्रपद्यतेऽर्चिरादिमार्गप्रापक उत्तरो वामः देवहूरुच्यत इत्यर्थः॥ ५०–५१॥

## श्रीमद्वीरराघवव्याख्या

हे वीर! विख्यातं कामित्वेन प्रसिद्धं वदान्यं त्यागिनं कामार्हं विहितमत्यजन्तमित्यर्थः। अत एव प्रियेषु शब्दादिविषयेषु दर्शनं दृष्टिर्यस्य। तं कथापक्षे विख्यातं यशस्विनं वदान्यं दानशीलं प्रियदर्शनं सुन्दरमित्यर्थः। ईदृशं त्वादृशं निःसमं पतिं दैवात्प्राप्तं मादृशी निःसमाना का वा स्वयं न वृणीत वृणुयादेवेत्यर्थः॥ ४१॥ ❀ ❀ हे महाभुज! भुजगेन्द्रभोगयोः सर्पाकारयोः तव भुजयोः कस्याः स्त्रियो मनः न सज्जेन्नासक्तं भवेद्यां भवाननाथवर्गाः दीनानां स्तोमाः तेषामाधिमलमर्थमपोहितुं सर्वत्र चरति। केन हेतुनापोहितुं घृणयोद्धतः अतिशयितो यः स्मितपूर्वकोवलोकस्तेन॥ ४२॥ ❀ ❀ एवं संबन्धदार्ढ्यख्यापनाय तयोः संवादमभिधायोपसंहरन् तयोर्व्यापारमाह नारदः। तौ दम्पती पुरञ्जनपुरञ्जन्यौ मिथोऽन्योऽन्यं समयं संकेतं समुह्य समुदीर्य दैवादन्योऽन्यं दृढतरं संबध्येत्यर्थः। हे राजन्! प्राचीनबर्हिः! तां पुरीं प्रविश्य शतं समाः संवत्सरान् मुमुदाते॥ ४३॥ ❀ ❀ एवं जीवबुद्ध्योर्जीवकर्मानुरूपदैवाख्यपरमपुरुषसंकल्पायत्तदृढतरसंबन्धं तत्प्रयुक्तदेहसंबन्धं च पारोक्ष्यरूपेणाभिधाय शुश्रूषोः प्राचीनबर्हिषः प्राप्यपरब्रह्मव्यतिरिक्तवैतृष्ण्यजननार्थं प्राप्य तृष्णाजननार्थं संसरतो जीवस्य जाग्रत्स्वप्नसुषुप्तिमरणावस्थासु दोषानुद्घाटयितुं जाग्रदाद्यवस्थाः प्रतिपिपादयिषुः कथाव्याजेन तावत्समासतः सुषुप्त्यवस्थामाह उपगीयमान इति। ललितं यथा भवति तथा गायकैरुपगीयमानः पुरञ्जनः स्त्रीभिः परिवृतस्तत्र तत्र क्रीडन् शुचौ आषाढे क्रीडानिमित्तश्रमापनोदनाय ह्रदिनीं सरसीमाविशदिति कथापक्षे अर्थः। पक्षान्तरे तु जाग्रदवस्थायां स्त्रीभिरिन्द्रियवृत्तिभिस्तत्र तत्र क्रीडन् शब्दादिविषयाननुभवन् व्यापृतकरणत्वात्तत्प्रयुक्तश्रमनिर्हरणाय शुचौ ह्रदिनीमाविशदित्यर्थः। ह्रदिनीशब्देन पुरी तदाख्या नाडी विवक्षिता। शुचिशब्देन ब्रह्म। शुचौ ब्रह्मण्याविश्य तद्द्वारा ह्रदिनीमाविशदित्यर्थः। प्रासादखट्वापर्यङ्कवत्समुच्चयेन नाडी पुरीतद् ब्रह्मणि हि जीवस्य सुषुप्तिस्थानं न तु विकल्पेन, "अथ यत्रैतत्सुषुप्तः समस्तसंप्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सुप्तो भवति। अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्युपसृप्य पुरीतति शेत इति तथा यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवती"ति त्रयाणामपि सुषुप्तिस्थानत्वश्रवणात्कार्यभेदेन समुच्चये संभवति पाक्षिकबाधगर्भविकल्पस्यान्याय्यत्वात् संभवति च प्रासादखट्वापर्यङ्कवन्नाड्यादीनां कार्यभेदः। तत्र नाडीपुरीततौ प्रासादखट्वास्थानीयौ ब्रह्म च पर्यङ्कस्थानीयं ततो ब्रह्मैव साक्षात्सुषुप्तिस्थानम्॥ ४४॥ ❀ ❀ इदानीं जाग्रदवस्थां प्रतिपादयति सप्तेत्यादि यावदध्यायसमाप्ति। तत्र नवभिर्द्वार्भिः पुरीं लक्षितलक्षणामिति द्वारत्वेन रूपितानां चक्षुरादीन्द्रियस्थानानामिन्द्रियाणां च गौणनामानि तत्कार्याणि तद्विषयांश्च कथयन्नाह सप्तेति। तस्याः पुरः पुर्याः सप्त द्वारः उपरि कृताः चक्षुर्द्वयश्रोत्रद्वयनासिकाद्वयं मुखञ्चेति। द्वे द्वारावधः कृते कल्पिते गुदं लिङ्गं चेति किमर्थमेवं कल्पिता इत्यत्राह। तस्याः पुर्या यः कश्चन ईश्वरः पृथगसङ्करेण विषयान् शब्दादीन्प्रति गत्यर्थं विषयानवगन्तुमित्यर्थः। संसारिणो जीवस्य स्वपरयाथात्म्यज्ञानाभावान्मनुष्यशरीरस्यानियतत्वाच्च यः कश्चनेत्युक्तं, कथापक्षे विषयशब्दो देशपरः देशान्प्रति गत्यर्थमित्यर्थः॥ ४५॥ ❀ ❀ पञ्चेति। तत्र तासु सप्तसु द्वार्षु पञ्चद्वारः पौरस्त्याः पूर्वदिग्भवा एका दक्षिणा तथा एकोत्तरा द्वे पश्चिमे पश्चिमदिग्भवे हे नृपते! तुभ्यममूषां द्वारां नामानि गुणनामानि वर्णये॥ ४६॥ ❀ ❀ खद्योता खद्योतवदल्पप्रकाशा वामनेत्ररूपा आविः प्रकटं मुखं यस्याः सा बहुप्रकाशा दक्षिणनेत्ररूपा स्वानुभवाच्च तत्र प्रकाशाधिक्यमवगन्तव्यम्। एते द्वारावेकत्र निर्मिते लग्ने ताभ्यां खद्योताविर्मुखीभ्यां द्वाभ्यां द्युमत्सखः द्युमान्सूर्यस्तदधिष्ठेयं चक्षुरिन्द्रियमपि द्युमत्तदेव सखा यस्य सः। यद्वा द्युमतः सखा द्युमत्सखः "राजाहःसखिभ्यः" इति टच्, चक्षुषा सहित इत्यर्थः। विभ्राजितमालोकादिना प्रकाशरूपं जनपदं विषयं यात्यवगच्छति। कथापक्षे तु खद्योतादिशब्दा अश्वकर्णादिशब्दवत्केवलसंज्ञाशब्दा इत्यवगन्तव्यं जनपदं देशं याति गच्छतीत्यर्थः॥ ४७॥ ❀ ❀ नलनालशब्दौ छिद्रवचनौ नलमस्या अस्तीति नलिनी एवं नालिनी वामदक्षिणनासिके अत्रापि संज्ञाभेदादेव कार्यन्यूनाधिक्यं पूर्ववद् ज्ञेयं अवधूनयति कम्पयतीत्यवधूतो वायुस्तत्सखो वाय्वधिष्ठितो घ्राणः ताभ्यां द्वाभ्यां सौरभं गन्धं विषयं याति॥ ४८॥ ❀ ❀ मुख्येति। मुख्या प्रधाना आस्यरूपा द्वाः पूर्वदिग्भवा तया मुख्यया द्वारा पणः पणनं व्यवहारः भाषणं बहूदनश्चित्रमन्नं, 'बह्वोदनः' इत्यनुक्तिः परोक्षवादत्वाय, पणबहूदनौ विषयौ पुरराट् पुरञ्जनः रसनेन्द्रियं विपणो वागिन्द्रियं ताभ्यामन्वितो याति॥ ४९॥ ❀ ❀ पुर्या दक्षिणेन दक्षिणस्यां दिशि एनबन्ताव्ययं पितृहूर्नाम द्वाः पितॄन् जिहीते गच्छत्यनयेति पितृहूः 'ओहाङ्-गतौ' इत्यस्मात् 'सृतिशृद्धयोः कूरि'ति कूप्रत्ययो बाहुलकात् पितृलोकप्राप्तिसाधनभूता यागादिक्रिया तदवबोधिनी त्रयी पूर्वभक्तिश्च पितृहूशब्दार्थः। तत्र दक्षिणकर्णस्य बलाधिक्याच्छ्रोतॄणां प्रथमं त्रिवर्गप्रावण्याच्च प्रवृत्तिशास्त्रश्रवणे प्रवर्तत इति। प्रथमं श्रोतव्यं पितृलोकप्राप्तिसाधनकर्मप्रकाशकप्रवृत्ति-

शास्त्रश्रवणसाधनत्वाद्दक्षिणकर्णः पितृहूः, अनन्तरं श्रोतव्यब्रह्मप्राप्तिफलनिवृत्तिधर्मप्रकाशकोत्तरशास्त्रश्रवणसाधनत्वाद्वामकर्णो देवहूः । ननूत्तरभागतदर्थश्रवणादावपि बलाधिक्याद्दक्षिणकर्ण एव प्रथमं प्रवर्तत इति कथमेतदुच्यते इति चेत्, एवं तर्ह्येत एवं गुणनामधेयबलात्पूर्वभागतदर्थानां शास्त्रप्राधान्येन दक्षिणकर्णश्रवणविधानमुत्तरभागतदर्थानां तु वामकर्णप्राधान्येन श्रवणविधानं चानुमीयते, यथा 'दक्षिणं दीक्षितः पूर्वमांक्ते सव्यं हि मनुष्या अञ्जत' इत्यत्र दृष्टार्थत्वान्मनुष्याः सव्यनयनाञ्जनं पूर्वं कुर्युरित्येवं प्रमाणान्तरेणाप्राप्तस्य सव्यनयनाञ्जनस्य सिद्धवन्निर्देशानुपपत्तौ सव्यनयनस्य प्रथममञ्जनेन दृष्टविशेषालाभात्प्रसिद्धवन्निर्देशानुपपत्त्या मानुषीभिरवश्यं प्रथमं सव्यनयनाञ्जनं कर्तव्यमिति विधिरनुमीयते तद्वत् यथा वा तस्मादपि वध्यं प्रपन्नं न प्रति प्रयच्छन्तीति शरणागतस्य प्रत्यर्पणं प्रमाणान्तरेणाप्राप्तमपि तस्मादिति प्रसिद्धवन्निर्देशानुपपत्त्या शरणागतो न प्रत्यर्पणीय इति विधिरनुमीयते तद्वत्पूर्वोत्तरभागयोर्यथाक्रमं दक्षिणोत्तरकर्णप्राधान्येन श्रवणमन्यतोऽप्राप्तमप्यनेनैव सिद्धवन्निर्देशगुणनामधेयबलेन विधीयत इति । निरवद्यं पुरञ्जनः पितृहूद्वारा श्रुतिधरः श्रोत्रेन्द्रियं श्रवणविषयं शब्दं धरत्यवगच्छतीत्यनेनेति व्युत्पत्तेः तेनान्वितो युक्तः दक्षिणपाञ्चालं दक्षिणद्वारगम्यं पाञ्चालं पञ्चते व्यक्तीकरोतीति पाञ्चालं पच्यते व्यक्तीक्रियत इति वा पाञ्चालं पचि-व्यक्तीकरणे इत्यस्मात् "तमिविशिविडिमृणिकुलिकिपिपलिपञ्चिभ्यः कालच्" इत्यौणादिककालच्प्रत्ययान्तः पञ्चालशब्दः, ततः प्रज्ञादित्वात्स्वार्थेऽण्, प्रवृत्ति-धर्मप्रकाशकशास्त्रात्मकं राष्ट्रं याति ॥ ५० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

किं बहुनोक्तेन फलितं वक्तीत्याह का नामेति । वदान्यं पुत्रकलत्राद्यभीष्टदानशीलं स्वयं प्राप्तत्वात् ॥ ४१ ॥ ❀ ❀ त्वाद्दशमित्युक्तं किंचिद्विशिनष्टि कस्या मन इति । अनाथवर्गस्यास्मदादेराधिं मनोदुःखं मलमपोहितुं चरसि घृणया दययोद्भत-मुज्जृम्भितं यस्मितं तत्पूर्वको योऽवलोकस्तेन दर्शनेन कस्याः स्त्रियाः ॥ ४२ ॥ ❀ ❀ परमफलितमाह इतीति । समयं प्रमाणपूर्वकं समुद्य संवादं कृत्वा देहप्राप्तेः पूर्वं तदनन्तरं वा बाह्यार्थविवक्षयैतद्वचः पुरीं देहं शतं समा इति 'शतं वर्षाण्यभ्याच्छे-दि'ति श्रुतेरर्थमनुकरोति मुद-हर्षे इति धातोः हर्षशोकयोः सुखदुःखवद् बंधुत्वादुभयं पर्यायेण बुद्धिपुरुषौ प्राप्तवन्तावि-त्यर्थः ॥ ४३ ॥ ❀ ❀ तत्र प्रथमं मोदप्रकारमाह उपगीयमान इति । जाग्रदाद्यवस्थायां तत्र तत्र प्रतीन्द्रियविषयं गायकलक्षणैः शब्दादिभिर्विषयैरुपगीयमानः सेव्यमानः स्वप्नावस्थायां स्त्रीभिः केवलं मनोवृत्तिलक्षणाभिः परिवृतः "स्त्रीभिर्वा यानैर्वा" इति श्रुतेः शुचौ तन्निमित्ते शोके प्राप्ते शीतलामगाधतोयधारामिव सुषुप्तिकाले सच्छब्दवाच्यां ब्रह्मस्वरूपस्थितिमाविशन् सुप्तावस्थायाम-भूदित्यर्थः । ललितं यथा तथा अन्यत्र शुचौ ऋतुविशेषे "सता सोम्य ! तदा सम्पन्नो भवती"ति श्रुतेः । सत्पुरुषः स्त्रीशब्दवाच्यै-र्भक्त्यादिभिः परिवृतः क्रीडन् विहरन् कालं यापयन् ह्रदिनीं ह्रदिन्यां ब्रह्मनाड्यां हृदयस्थानेऽष्टदलपद्मे स्थितं श्रीनारायणमाविश-दध्यायदित्यर्थः ॥ ४४ ॥ ❀ ❀ देहाख्यं पुरं प्रसिद्धपुरसाम्येन वर्णयति सप्तेति । तस्याः पुर उपरि सप्त द्वारः कृताः द्वे नेत्रे द्वे नासिके कर्णौ वदनं चेति अधो द्वे पायूपस्थे इति, कृत्यमाह विषयगत्यर्थमिति । रूपादिविषयज्ञानार्थं निर्मिता इत्यर्थः । तस्यां पुर्यां कश्चनेश्वरः अनामरूपो लोकविलक्षणः श्रीनारायणोऽस्तीत्यन्वयः । जीवो वा जगत्सामर्थ्योपेतत्वादीश्वर इत्युच्यते देहस्वामित्वाद्वा अल्पशक्त्यादिमत्त्वात्तुच्छत्वेन यः कश्चनेति ॥ ४५ ॥ ❀ ❀ तत्रापि विभागमाह पञ्चेति । तासामुपरि द्वारां मध्ये पौरस्त्याः पुरस्ताद्भवाः पञ्चद्वारो नेत्रादय इत्यर्थः पश्चाद् द्वे एका दक्षिणकर्णलक्षणा दक्षिणा तथोत्तरा वामकर्णलक्षणा पश्चिमा द्वे अधोभागे द्वे पायूपस्थे अमूषां नव द्वारम् ॥ ४६ ॥ ❀ ❀ खे आकाशे सति द्योतते रूपं गृह्णातीति खद्योता खद्योतवत् द्योतत इति वा दक्षिणचक्षुर्लक्षणा आविः प्रकाशे सति मुखयत्यभिमुखी भवतीति साविर्मुखी प्रकाशमुखी न तमोमुखी तमसि रूपग्रहणाभावादिति वामचक्षुर्लक्षणा ताभ्यां विभ्राजितं प्रकाशितं जनस्य द्रष्टुः पदमालम्बनं रूपाख्यं याति विषयीकरोति गृह्णातीत्यर्थः । कथंभूतः द्युमानादित्यश्चक्षुर्लक्षणः सखा यस्य स तथा चक्षुरिन्द्रियसहित इत्यर्थः । द्युमानादित्यस्तस्या वासहेतुत्वाच्चक्षुषोऽपि तन्नाम "आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशदि"ति श्रुतेः 'आदित्यो ह वै चक्षुस्तेनानुगृहीतं रूपं गृह्णाती'ति च ॥ ४७ ॥ ❀ ❀ नलो नाम श्वासः सोऽस्या अस्तीति नलिनी नालोदन्नाभिधेयोऽस्या विद्यत इति नालिनी, नलनालौ श्वासोच्छ्वासौ, तयोः सञ्चारे हेतुत्वान्नलिनी नालिनीति द्वे गोलके नासिकारन्ध्रे अर्वागुपरि तिर्यक् धुनोतीत्यवधूतो वायुः घ्राणेन्द्रियाभिमानी तेन प्रेर्यमाणं घ्राणेन्द्रियमपि तच्छब्दवाच्यं तदेव सखा यस्य स तथा घ्राणेन्द्रियसहित इत्यर्थः सौरभं विषयं गन्धलक्षणं गृह्णाति ॥ ४८ ॥ ❀ ❀ पुरस्ताद् मुख्या नाम द्वाः आस्यच्छिद्रलक्षणास्ति पुरराट् पुरञ्जनस्तया द्वारा आपणबहूदनौ पण-व्यवहार इति धातोः आपणो वदनव्यापारः बहूदनो नानाविधभोज्यजातं तौ याति व्यवहरति अभ्यवहरति च रसज्ञो जिह्वेन्द्रियं विपणो वागिन्द्रियं ताभ्यामन्वितः ॥ ४९ ॥ ❀ ❀ नाम्ना पितृभूः पातृत्वात्पितरो देवाः प्रिया भवन्त्यस्य यजमानस्य दक्षिणकर्णलक्षणशरीरलक्षणायाः पुर्या द्वारस्थितेन दक्षिण-कर्णलक्षणेन द्वारेण उत्क्रान्तः पुरञ्जनो यजमानो दक्षिणपाञ्चालं दक्षिणानां देवानां लोकलक्षणं राष्ट्रं याति प्राप्नोति पञ्चेन्द्रियाण्यलं याति भूषयति । अल-भूषण इति धातोः पञ्चेन्द्रियाणामलं बुद्धिहेतुत्वादिति वामपुरं ब्रह्मलक्षणं जनयति प्रादुर्भावयति प्रकाशयतीति पुरञ्जनः तत्त्वज्ञानी दक्षिणपाञ्चालं निवृत्तशास्त्रं यात्यवगन्तुमिति वा दक्षिणस्तत्त्वज्ञापनसमर्थः इतिहासादिना सह पञ्चसंख्योपेतो

वेदः स एवालं तत्त्वज्ञानाय नान्यापेक्षेति कृत्वा मध्यमपुरञ्जनो दक्षिणपाञ्चालं पञ्चविषयसंज्ञं राष्ट्रं याति रन्तुमिवायं पञ्चानां शब्दानां समूहः पाञ्चः स एवालं भोक्तुमिति बुद्धिहेतुत्वादिति कृत्वा सर्वत्राप्ययमेव सखेत्याह श्रुतधरेति। श्रुतं लोकं शास्त्रं वा विषयं वा धारयतीति श्रुतधरः श्रोत्रेन्द्रियं तेन सख्या सहितः ॥ ५० ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

भोगिभोगयोः सर्पशरीराकारयोस्तव भुजयोः कस्याः स्त्रिया मनो न स्यात् भवच्च सत् कस्या न सज्जेदित्यावृत्त्या अन्वयः। यो भवान् अनाथवर्गाणामस्मदादीनामाधिमन्तःपीडामपोहितुं दूरीकर्त्तुं चरति केन स्मितावलोकेन हे धृणोद्धत! कृपया उद्धत। अध्यात्मपक्षे चैतन्येनैव बुद्ध्यादयः सनाथा भवन्तीत्युक्तम् ॥ ४२ ॥ ❀ ❀ समयं संकेतं समुद्य समुदीर्य ॥ ४३ ॥ ❀ ❀ तत्र मुमुदाते शतं समा इत्यादिना जाग्रदवस्थां संक्षेपेणोक्त्वा स्वप्नावस्थामाह। क्रीडन्निति स्त्रीभिर्वृत इति। स्वप्ने इन्द्रियाणामवसन्नत्वात् तत्संस्कारेण तद्वृत्तीनामेव तत्तत्कार्य्यैककारित्वात् सुषुप्त्यवस्थामाह। ह्रदिनीं नदीं हृदयाकाशं स्वापस्थानञ्च शुचौ निदाघे सुषुप्तौ च ॥ ४४ ॥ ❀ ❀ इदानीं नवद्वारप्रदर्शनपूर्वकं जाग्रदवस्थां विस्तरेणाह सप्तेति। तस्याः पुरः पुर्याः उपरि ऊर्ध्वप्रदेशे अधो द्वे श्रोत्रे नेत्रे नासिके मुखञ्चेति सप्त द्वारः अधो गुदलिङ्गे इति द्वे द्वारौ य ईश्वरः पुरञ्जनः तस्य ॥ ४५ ॥ ❀ ❀ तासु सप्तसु मध्ये पञ्च द्वारः पौरस्त्याः पूर्वाभिमुख्यः, दक्षिणा एका दक्षिणाभिमुखी दक्षिणकर्णरूपा उत्तराभिमुखी वामकर्णरूपा ॥ ४६ ॥ ❀ ❀ खद्योतवदल्पप्रकाशा वामनेत्ररूपा आविर्मुखी बहुप्रकाशा दक्षिणनेत्ररूपा "तस्माद्दक्षिणाङ्गमात्मनो वीर्यवत्तरम्" इति श्रुतेः, एकत्र संलग्ने विभ्राजितं रूपं द्युमत्सखः चक्षुःसहितः ॥ ४७ ॥ ❀ ❀ नलनालशब्दौ छिद्रवचनौ तद्वत्यौ वामदक्षिणनासिके प्राङ्मुखो अवधूतो वाय्वधिष्ठितो घ्राणः, कथापक्षे विषयं देशं बहुसुरभिमत्त्वात् सौरभं पक्षे गन्धम् ॥ ४८ ॥ ❀ ❀ सर्वद्वारमुख्यत्वात् सर्वसञ्जीवकत्वाच्च मुख्या तया एकयैव आपणबहूदनौ द्वौ देशौ अन्यत्र द्वाभ्यां द्वाभ्यामेकदेशं यातीत्यपि मुख्यत्वे हेतुः। पक्षे मुख्या आस्यमापणो भाषणं बहूदनश्चित्रमन्नं बह्वोदन इत्यनुक्तिः परोक्षवादत्वात्। रसज्ञं रसनेन्द्रियं विपणो वागिन्द्रियं ताभ्यां युक्तः ॥ ४९ ॥ ❀ ❀ हे नृप! दक्षिणेन दक्षिणस्यां दिशि दक्षिणमुखीत्यर्थः ॥ ५० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

भुजगेन्द्रभोगयोर्नागराजदेहतुल्ययोः अनाथवर्गस्य अशरणसमूहस्य आधिमलं मनोव्यथारूपं मलं धृणया कृपयोद्धतेनातिशयितेन स्मितावलोकेनापोहितं निराकर्तुं चरति ॥ ४२ ॥ ❀ ❀ इत्येवं समयं सम्बन्धनिबन्धं मिथः परस्परं समुदीर्थ समाः संवत्सरान् ॥ ४३ ॥ ❀ ❀ उपगीयमान इत्यनेन जाग्रदवस्था ह्रदिनीं हृदयाकाशमित्यनेन सुषुप्त्यवस्था च सूच्यते। शुचौ कथापक्षे ग्रीष्मे अध्यात्मपक्षे श्रमकाले ॥ ४४ ॥ ❀ ❀ अधुना नवद्वारानुवादपूर्वकं जाग्रदवस्थां प्रपञ्चयति सप्तेति अध्यायसमाप्तेः। तस्याः पुरः यः कश्चनेश्वरो जीवस्तस्य पृथग्विषयगत्यर्थं सप्त द्वारस्तस्यामुपरि कृता द्वे अधः ॥ ४५ ॥ ❀ ❀ पौरस्त्याः पूर्वाभिमुखाः ॥ ४६ ॥ ❀ ❀ खद्योताल्पप्रकाशा वामनेत्ररूपा आविर्मुखी विपुलप्रकाशा दक्षिणनेत्ररूपा ताभ्यां द्युमत्सखः चक्षुरिन्द्रियसहायो जीवः विभ्राजितं जनपदं रूपं विषयं याति ॥ ४७ ॥ ❀ ❀ नलं छिद्रमस्याः अस्तीति नलिनी मन्दवामनासापुटरूपा नालमपि छिद्रमेवास्या अस्तीति नालिनी प्रबलच्छिद्रदक्षिणनासापुटरूपा संज्ञाभेदसामर्थ्यात् ताभ्यामवधूतसखः प्राणेन्द्रियसहायः ॥ ४८ ॥ ❀ ❀ पुरस्तात् पूर्वा द्वार्मुख्या प्रधाना आस्यरूपा तया रसज्ञविपणाभ्यां रसनावाग्भ्यामिन्द्रियाभ्यामन्वितः पुरराट् देही आपणबहूदनौ भाषणचित्रान्नरूपौ विषयौ याति, छन्दोभङ्गभयादापणबह्वोदनाविति नोक्तम् ॥ ४९ ॥ ❀ ❀ दक्षिणेनेति। एनप्प्रत्ययान्तमव्ययम्, दक्षिणस्यां दिशि पितृलोकप्रापकप्रवृत्तिशास्त्रश्रवणद्वारा पितृणामाह्वानं भवत्यनेनेति पितृहूर्दक्षिणः कर्णस्तद्रूपा पुर्या द्वाः तया द्वारा दक्षिणपाञ्चालं कथापक्षे दक्षिणपाञ्चालदेशविशेषमध्यात्मपक्षे दक्षिणं प्रथमतः श्रोतव्यं पञ्चानां विषयाणां प्रकाशनायालं पाञ्चालं प्रवृत्तिपरं शास्त्रम्। तस्य पूर्वं श्रोतव्यत्वाद्दक्षिणकर्णस्य च स्वविषये पूर्वपातित्वाच्चैवमुक्तम्, श्रुतधरान्वितः श्रोत्रेन्द्रियान्वितः याति प्राप्नोति ॥ ५० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

कं तु त्वदन्यं रमये यदर्थात्त्वामेव रमयिष्ये इत्युक्तं तत्र विशेषणान्तरप्रदर्शनेन स्वरमणयोग्यतां दर्शयति—का नामेति। वीरेति लोके विख्यातं प्रसिद्धं वदान्यं उदारचित्तं प्रियदर्शनमतिसुन्दरं पूर्वोक्तरतिज्ञत्वादिविशिष्टं च त्वादृशं गुणालयं पतिं स्वयं प्राप्तं मां वृणीष्वेति प्रार्थयमानं मादृशी गुणज्ञा या न वृणीत सा का नाम प्रसिद्धा लोके? न काऽपीत्यन्वयः। पक्षान्तरे तु

कामिनी कामिनमेव बहुमन्यते, न विरक्तमिति दर्शितम् ॥ ४१ ॥ ❀ ❀ ममापि मनस्त्वयि सँल्लग्नमिति सूचयन्त्याह—कस्या इति । हे महाभुज महापराक्रमयुक्त भोगी सर्पस्तस्य भोगो देहः तत्सदृशयोस्ते तव भुजयोर्भुवि पृथिव्यां कस्याः स्त्रिया मनो न सज्जेत् ? अपि तु सर्वस्या एव । यो भवान् घृणया कृपयोद्धतः प्रवृत्तो यः स्मितपूर्वकोऽवलोकस्तेन अनाथवर्गाणां रक्षकरहितानां अस्माकमाधिं मनःपीडां अलमत्यर्थं निर्मूलमपोहितुं निवर्त्तयितुं विचरतीत्यन्वयः । पक्षान्तरे तु राजस्या बुद्धेः स्त्रिया वा भोगपरत्वाद्भोगस्य च क्रियासम्पाद्यत्वात् ज्ञानेन्द्रियं विहाय क्रियाश्रययोर्भुजयोर्मनस आसक्तिर्दर्शिता, बुद्ध्यादिवर्गस्य चैतन्येन जीवेनैव सनाथत्वं च दर्शितम् ॥ ४२ ॥ ❀ ❀ एवं परस्परमनुमोदनं कृत्वा यत्कृतवन्तौ तदाह—इति ताविति । इत्येवं तौ दम्पती स्त्रीपुरुषौ तत्रोपवने समयं सङ्केतं मिथः परस्परं समुद्य समुदीर्य तां नवमुखीं पुरीं प्रविश्य शतं समाः संवत्सरान् मुमुदाते इत्यन्वयः । हे राजन्निति सम्बोधनेन त्वद्वत्सोऽपि राजाऽभिमानीति सूचयति । पक्षान्तरे त्वेवंजीवस्य बुद्ध्यादिलिङ्गशरीरस्य परस्पराध्यासे जातेऽपि सूक्ष्मत्वेन स्थूलशरीराध्यासं विना भोगस्यासम्भवात्तदर्थं स्थूलदेहप्रवेशपूर्वकं मनुष्यायुः संवत्सरशतपर्यन्तं तस्य भोगः सङ्क्षेपतो निरूपितः ॥ ४३ ॥ ❀ ❀ पुरीप्रवेशसमये एव लोकस्य महानुत्सवो जात इत्याह—उपगीयमान इति । प्रविशन्नेव तत्र तत्र स्थाने गायकैः सूतमागधादिभिर्ललितं मनोहरं यथा भवति तथोपगीयमानः स्त्रीभिश्च परिवृतः क्रीडन् बभूव, ततश्च शुचौ निदाघकाले तापापनोदार्थं ह्रदिनीं सरसीमाविशदित्यन्वयः । पक्षान्तरे तु गर्भे शरीरप्रवेशमारभ्यैव सर्वे स्त्रीजना गायन्ति जातमात्रो हि स्त्रीभिः परिवृतो यदा रोदिति तदाऽपि ताः गायन्ति परिवृतः क्रीडति चेति बाल्यस्य सङ्क्षेपतो जाग्रदवस्थां निरूप्य सुषुप्त्यवस्थां दर्शयति—ह्रदिनीमिति । शुचौ क्रीडया श्रमदूरीकरणार्थं ह्रदिनीवद्यत्र प्रवेशे बहिर्ज्ञानविलोपः स्यात्तत् हृदयाकाशं स्वापस्थानमविशदित्यर्थः ॥ ४४ ॥ ❀ ❀ नवभिर्द्वार्भिर्युक्तां पुरीं ददर्शेत्युक्तं तत्र ता द्वारः कुत्रेत्यपेक्षायां तत्स्थानं दर्शयति—सप्तेति द्वाभ्याम् । सप्त द्वारः पुर उपरिकृताः द्वे द्वारौ तस्याः पुरोऽधः कृते । तत्प्रयोजनमाह—पृथगिति, तस्यां पुर्यामन्तः कश्चनेश्वरः स्वामी तस्य पृथक् विषये देशे गत्यर्थमिति । पक्षान्तरे देहस्योपरि द्वे नेत्रे नासिके श्रोत्रे मुखं चेति सप्त, अधोऽधो गुदलिङ्गे द्वे, तत्र यः कश्चनेश्वरो जीवस्तस्य पृथग्रूपरसादिविषयभोगार्थमित्यर्थः ॥ ४५ ॥ ❀ ❀ तासां दिग्विभागं दर्शयति—पञ्चेति । तासु सप्तसु पञ्च द्वारस्तु पौरस्त्याः पूर्वदिग्भवाः, एका दक्षिणा दक्षिणस्यां दिशि वर्तमाना, तथैकोत्तरा उत्तरदिग्भवा, ये द्वे अधस्ते तु पश्चिमे पश्चिमदिग्भवे, अमूषां द्वारां नामानि ते तुभ्यमहं वर्णये त्वं सावधानतया शृण्विति शेषः । हे नृप इति सम्बोधनेन यथा पुरञ्जनपुर्यां तत्तद्द्वारैव तत्तद्देशगमनमिति नियमोऽस्ति तथा तव पुर्यां स नास्तीति सूचयति । पक्षान्तरे तु नेत्रे नासिके मुखं च शरीरस्य पुरोभवाः पौरस्त्याः पञ्च, देहस्य दक्षिणभाग एका दक्षिणकर्णरूपा, तथोत्तरा वामकर्णरूपा, तथा द्वे गुदलिङ्गे पश्चिमे पश्चाद्भागे, तत्र लिङ्गस्य पुरोभागभवत्वेऽपि गुदसहचारतया कथालङ्कारार्थं पृष्ठभवत्वनिर्देशः ॥ ४६ ॥ ❀ ❀ तासां नामवर्णनपूर्वकं सहकारिविशेषणगम्यदेशविशेषान् दर्शयति—खद्योतेत्यष्टभिः । खद्योता आविर्मुखी च द्वे द्वारावेकत्र सँल्लग्ने प्राक् पूर्वस्यां दिशि निर्मिते । ताभ्यां द्युमत्सखः द्युमान् सखा सहकारी देशाभिज्ञो यस्य स पुरञ्जनो विभ्राजितं नाम जनपदं देशविशेषं यातीत्यन्वयः । पक्षान्तरे तु खद्योतवदल्पप्रकाशत्वात् खद्योता वामनेत्रम् , आविर्मुखी प्रकाशबहुलत्वाद्दक्षिणनेत्रम् , तत्र प्रकाशाधिक्यं च 'दक्षिणोर्द्धम् आत्मनो वीर्यवत्तरम्' इति श्रुतेः स्वानुभवाच्च सिद्धम् । द्युमांश्चक्षुरिन्द्रियं तेन जीवस्ताभ्यां विभ्राजितं रूपं याति पश्यति ॥ ४७ ॥ ❀ ❀ नलिनी नालिनी च द्वे द्वारौ प्राक् पूर्वदिशि निर्मिते. ताभ्यामवधूतसञ्ज्ञेन सख्या सह पुरञ्जनो सौरभं विषयं देशं यातीत्यन्वयः । पक्षान्तरे तु नलिनी नालिनी च वामदक्षिणनासिके तयोरपि सञ्ज्ञाभेदात् कार्ये न्यूनाधिक्यं ज्ञेयम् । अवधूतो घ्राणेन्द्रियं तेन जीवस्ताभ्यां सौरभं गन्धं विषयं याति ॥ ४८ ॥ ❀ ❀ पुर्याः पुरस्तात् पूर्वत एका मुख्या नाम द्वास्तया पुरराट् पुरञ्जनो राजा रसज्ञविपणान्वितः सन् आपणः बहूदनौ विषयौ देशौ यातीत्यन्वयः । तत्र यदा रसज्ञेन समन्वितस्तदा तया बहूदनसञ्ज्ञकं देशं याति, यदा तु विपणेन समन्वितो भवति तदा आपणसञ्ज्ञकं देशं तयैव यातीति विभागः । अन्याभ्यां द्वाभ्यामेकं देशं याति, अनया त्वेकयैव द्वौ देशौ यातीत्यस्या मुख्यत्वं सूचितम् । पक्षान्तरे तु मुख्याऽऽस्यं तस्यैव सम्भाषणभोजनद्वारा सर्वशरीरनिर्वाहकत्वात् मुख्यत्वम् । तेनैव जीवो रसज्ञेन रसनेन्द्रियेण युक्तो बहूदनं चित्रमन्नं विषयं याति, आस्वाद्यं भक्षयति । बह्वोदन इति वक्तव्ये बहूदन इत्युक्तिः परोक्षवादत्वाय । एवमन्यत्राप्यूह्यम् । तथा विपणो वागिन्द्रियं तेन युक्तः आपणं भाषणं विषयं याति करोतीत्यर्थः ॥ ४९ ॥ ❀ ❀ दक्षिणेनेति न तृतीयान्तं किन्तु दक्षिणस्यां दिशीत्यस्मिन्नर्थे तद्धितोऽयमेनप्प्रत्ययोऽव्ययसञ्ज्ञकः । तथा च हे नृप पुर्या दक्षिणेन दक्षिणस्यां दिशि या पितृहूर्नाम द्वास्तया पुरञ्जनः श्रुतधरसञ्ज्ञकेन देशाभिज्ञेन सहितो दक्षिणपाञ्चालं राष्ट्रं देशं यातीत्यन्वयः । नृपेतिसम्बोधनेन नृपाणां राजसप्रकृतीनां बहिर्भूमिचमत्कारदर्शनौत्सुक्यं नृपत्वात्त्वया ज्ञायते एवेति सूचयति । पक्षान्तरे तु पञ्चानां विषयाणां प्रमाणान्तरेणानवगतानां बोधनायलमिति पाञ्चालं शास्त्रं श्रवणकाले च बलाधिक्यात् प्रथमं दक्षिणकर्णे एव प्रवर्त्तते, शास्त्रे च प्रथमं श्रोतव्यं कर्मकाण्डमित्येतावता साम्येन प्रवृत्तसञ्ज्ञस्य कर्मकाण्डस्य दक्षिणेन कर्णेन श्रवणमिष्यते, अतः कर्मकाण्डशास्त्रं दक्षिणपाञ्चालशब्दितं ज्ञेयम् । तदुक्तं 'कर्मानुष्ठाय पितृभिराहूतः पितृलोकप्रापकं पितृयानं प्रपद्यते' । तथा च पितॄणामाह्वानमनेनेति पितृहूर्दक्षिणः कर्णः, श्रुतधरः श्रोत्रेन्द्रियं, तथा च श्रोत्रेन्द्रियेण जीवो दक्षिणकर्णेन कर्मकाण्डं शृणोतीत्यर्थः ॥ ५० ॥

### भाषानुवादः

वीरशिरोमणे ! लोकमें मेरी-जैसी कौन स्त्री होगी, जो स्वयं प्राप्त हुए आप-जैसे सुप्रसिद्ध, उदारचित्त और सुन्दर पतिको वरण न करेगी ॥ ४१ ॥ ❀ ❀ महाबाहो ! इस पृथ्वीपर आपकी साँप-जैसी गोलाकार सुकोमल भुजाओंमें स्थान पानेके लिये किस कामिनीका चित्त न ललचावेगा ? आप तो अपनी मधुर मुसकानमयी करुणापूर्ण दृष्टिसे हम-जैसी अनाथाओंके मानसिक सन्तापको शान्त करनेके लिये ही पृथ्वीमें विचर रहे हैं ॥ ४२ ॥ ❀ ❀ श्रीनारदजी कहते हैं—राजन् ! उन स्त्री-पुरुषोंने इस प्रकार एक दूसरेकी बातका समर्थन कर फिर सौ वर्षोंतक उस पुरीमें रहकर आनन्द भोगा ॥ ४३ ॥ ❀ ❀ गायक लोग सुमधुर स्वरमें जहाँ-तहाँ राजा पुरञ्जनकी कीर्ति गाया करते थे । जब ग्रीष्मऋतु आती, तब वह अनेकों स्त्रियोंके साथ सरोवरमें घुसकर जलक्रीड़ा करता ॥ ४४ ॥ ❀ ❀ उस नगरमें जो नौ द्वार थे, उनमेंसे सात नगरीके ऊपर और दो नीचे थे । उस नगरका जो कोई राजा होता, उसके पृथक्-पृथक् देशोंमें जानेके लिये ये द्वार बनाये गये थे ॥ ४५ ॥ ❀ ❀ राजन् ! इनमेंसे पाँच पूर्व, एक दक्षिण, एक उत्तर और दो पश्चिमकी ओर थे । उनके नामोंका वर्णन करता हूँ ॥ ४६ ॥ ❀ ❀ पूर्वकी ओर खद्योता और आविर्मुखी नामके दो द्वार एक ही जगह बनाये गये थे । उनमें होकर राजा पुरञ्जन अपने मित्र द्युमान्के साथ विभ्राजित नामक देशको जाया करता था ॥ ४७ ॥ ❀ ❀ इसी प्रकार उस ओर नलिनी और नालिनी नामके दो द्वार और भी एक ही जगह बनाये गये थे । उनसे होकर वह अवधूतके साथ सौरभ नामक देशको जाता था ॥ ४८ ॥ ❀ ❀ पूर्वदिशाकी ओर मुख्या नामका जो पाँचवाँ द्वार था, उसमे होकर वह रसज्ञ और विपणके साथ क्रमशः बहूदन और आपण नामके देशोंको जाता था ॥ ४९ ॥ ❀ ❀ पुरीके दक्षिणकी ओर जो पितृहू नामका द्वार था, उसमें होकर राजा पुरञ्जन श्रुतधरके साथ दक्षिणपाञ्चाल देशको जाता था ॥ ५० ॥

देवहूर्नाम पुर्या द्वा उत्तरेण पुरञ्जनः । राष्ट्रमुत्तरपञ्चालं याति श्रुतधरान्वितः ॥ ५१ ॥
आसुरी नाम पश्चाद् द्वास्तया याति पुरञ्जनः । ग्रामकं नाम विषयं दुर्मदेन समन्वितः ॥ ५२ ॥
निर्ऋतिर्नाम पश्चाद् द्वास्तया याति पुरञ्जनः । वैशसं नाम विषयं लुब्धकेन समन्वितः ॥ ५३ ॥
[1]अन्धावमीषां पौराणां निर्वाक्पेशस्कृतावुभौ । अक्षण्वतामधिपतिस्ताभ्यां याति करोति च ॥ ५४ ॥
स[2] यर्ह्यन्तःपुरगतो विषूचीनसमन्वितः । मोहं प्रसादं हर्षं वा याति जायात्मजोद्भवम् ॥ ५५ ॥
एवं कर्मसु संसक्तः कामात्मा वञ्चितोऽबुधः । महिषी यद्यदीहेत तत्तदेवान्ववर्तत ॥ ५६ ॥
क्वचित्पिबन्त्यां पिबति मदिरां मदविह्वलः । अश्नन्त्यां क्वचिदश्नाति जक्षत्यां सह जक्षति ॥ ५७ ॥
क्वचिद्गायति गायन्त्यां रुदत्यां रुदति क्वचित् । क्वचिद्धसन्त्यां हसति जल्पन्त्यामनु जल्पति ॥ ५८ ॥

अन्वयः—पुर्याः उत्तरेण देवहूः नाम द्वाः श्रुतधरान्वितः पुरञ्जनः उत्तरपंचालम् राष्ट्रम् याति ॥ ५१ ॥ ❀ ❀ पश्चात् आसुरी नाम द्वाः तया पुरञ्जनः दुर्मदेन समन्वितः ग्रामकं नाम विषयम् याति ॥ ५२ ॥ ❀ ❀ पश्चात् निर्ऋतिः नाम द्वाः तया पुरञ्जनः लुब्धकेन समन्वितः वैशसम् नाम विषयम् याति ॥ ५३ ॥ ❀ ❀ अमीषाम् पौराणाम् निर्वाक्पेशस्कृतौ उभौ अंधौ ताभ्याम् अक्षण्वताम् अधिपतिः याति करोति च ॥ ५४ ॥ ❀ ❀ यर्हि विषूचीनसमन्वितः सः अंतःपुरगतः जायात्मजोद्भवम् मोहम् प्रसादम् वा हर्षम् याति ॥ ५५ ॥ ❀ ❀ एवम् कर्मसु संसक्तः कामात्मा वञ्चितः अबुधः यत् यत् महिषी ईहेत तत् तत् एव अन्ववर्तत ॥ ५६ ॥ ❀ ❀ क्वचित् मदिराम् पिबंत्याम् मदविह्वलः मदिराम् पिबति क्वचित् अश्नन्त्याम् अश्नाति जक्षत्यां सह जक्षति ॥ ५७ ॥ ❀ ❀ क्वचित् गायत्याम् गायति क्वचित् रुदत्याम् रुदति क्वचित् हसन्त्याम् हसति जल्पंत्याम् अनुजल्पति ॥ ५८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

असुरा इंन्द्रियारामास्तेषामियमासुरी शिश्नद्वाः ग्रामकं ग्रामस्थजनानां कं सुखं व्यवायं दुर्मदेन गुह्येंद्रियेण ॥ ५२ ॥ ❀ ❀ निर्ऋतिर्नाम गुदो मृत्युद्वारत्वात् । वैशसं मलविसर्गलक्षणं विषयम् । लुब्धकेन पायुना तेनोत्क्रांतस्य दुःखप्राप्तेर्लुब्धकसाम्यम् ॥ ५३ ॥ ❀ ❀ अमीषां मध्ये निर्वाक्पादः पेशस्कृद्धस्तस्तावुभावंधौ छिद्राभावात् स्वतो ज्ञानक्रियाशक्त्यभावाच्च । अक्षण्वतामिंद्रियवतां देहानामधिपतिः पुरंजनः, त्वगिंद्रियस्यानुक्तिः सर्वेष्वंतर्भावात् ॥ ५४ ॥ ❀ ❀ अंतःपुरं हृदयं गतः

---

१ प्राचीने पाठे 'अन्धावमीषां' इत्यारभ्य 'करोति च' पर्यन्तं ( ५४ श्लोकः ) नास्ति । २ प्राचीने पाठे ५५ श्लोकस्य पूर्वार्द्धो नास्ति ।

विषूचीनं सर्वतोमुखं मनः माहप्रसादहर्षास्तमःसत्त्वरजःकार्याणि जाया बुद्धिरात्मजा इंद्रियपरिणामास्तदुद्भवम् ॥ ५५-५६ ॥ ❀ ❀ जक्षत्यां भक्षयंत्याम् ॥ ५७-५८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

असुभ्य इंद्रियेभ्यो रांति विषयभोगं ददतीत्यसुरा इंद्रियारामाः। रातेर्डः, तेषामियमासुरी द्वाः ग्राम्याणां गृहस्थानां कं सुखं येन स ग्राम्यको व्यवायस्तम् ॥ ५२ ॥ ❀ ❀ निर्ऋच्छति निर्याति पुरीषमस्मादिति निर्ऋतिः 'ऋ-गतौ' अतः क्तिन्नपादाने बाहुलकात्। गुदच्छिद्रं हिंसालक्षणं नरकं वा वैशसं तेन गुदेनोत्क्रांतस्य त्यक्तदेहस्य नरकप्राप्तेः "ऊर्ध्वच्छिद्रगतप्राणास्स्वर्गं यान्ति नरोत्तमाः। अधश्छिद्रगतप्राणा नरकं भृशदारुणम् ॥" इति गरुडोक्त्या श्रूयमाणत्वादिति ॥ ५३ ॥ ❀ ❀ निर्गता वाक् यस्मात्स निर्वाक् पेशः कोशाकारगृहं करोतीति पेशस्कृन् पेश इत्युपलक्षणं करकार्य्यवस्तुमात्रस्य। यद्यपि निर्वाक्त्वं रसनेतराणां सर्वेषामस्ति तथाप्यत्र वाग्वेदलक्षणा ग्राह्या सा च शब्दोपलक्षितस्य पादजस्य शूद्रस्य नेति व्यंजितं "न केनचिच्छूद्रम्" इति श्रुतेस्तस्याः श्रुतिजत्वात् ॥ ५४ विषु सर्वतोऽञ्चतीति विषूचीनम्। इंद्रियपरिणामा दर्शनादयः ॥ ५५ ॥ ❀ ❀ काम्यंत इति कामा विषयास्तेष्वात्मा मनो यस्य स कामात्माऽबुधः। अन्वववर्तत अन्वसरत् ॥ ५६ ॥ ❀ ❀ "ध्यायतीव लेलायतीव" इत्यादिश्रुतिमनुसृत्याह क्वचिदिति। भक्षयंत्यां चर्वंत्याम्। स पुरंजनः। ह स्फुटम् ॥ ५७-६१ ॥

### श्रीमद्वीरराघवव्याख्या

एवं पुर्या उत्तरस्यां दिशि देवहूर्नाम द्वाः तया पुरञ्जनः श्रुतधरान्वितः उत्तरपाञ्चालं याति। यद्यपि प्रवृत्तिनिवृत्त्यनवबोधिनः शब्दाः सन्ति संसारिणो जीवस्य श्रोतव्यास्तथापि श्रोतव्यानां मध्ये प्रवृत्त्यवबोधिशास्त्रात्मकशब्दस्यैव श्रोतव्यत्वाभिप्रायेण दक्षिण-पाञ्चालमुत्तरपाञ्चालमित्युक्तम्। एवं पूर्वत्रापि याति सौरभमित्यादिषु द्रष्टव्यम् ॥ ५१ ॥ ❀ ❀ पुर्य्याः पश्चादासुरी नाम द्वाः अस्यते क्षिप्यतेऽनेनेन्द्रियमित्यसुरं मेढ्रं ततः स्वार्थेऽणि 'टिड्ढाणञि'त्यादिना ङीप् तया पुरञ्जनः दुर्मदेन दुरुद्धरः मदो यस्य तेन उपस्थेन्द्रियेण समन्वितं ग्रामकं ग्राम्यजनानां कर्म मैथुनादिकं याति ॥ ५२ ॥ ❀ ❀ पुर्याः पश्चात् निर्ऋतिर्नाम द्वाः निर्ऋतिर्नाशः मृत्युद्वारत्वाद् गुदं निर्ऋतिः तया पुरञ्जनः लुब्धकेन पाय्विन्द्रियेण तेनोत्क्रान्तस्य दुःखप्राप्तेर्लुब्धकसाम्यं तेन समन्वितः वैशसं नारकं दुःखं याति ॥ ५३ ॥ ❀ ❀ अमीषां पौराणां पुर्य्याः सम्बन्धिनां द्वाराणां मध्ये उभौ द्वौ पादपाणी अन्धावन्धौ निर्वाक्पेशस्कृतौ वाक्शब्देनात्र वागिन्द्रियाधिष्ठानं मुखरूपं छिद्रं लक्ष्यते। छिद्रपेशस्कृतसाम्यान्निर्वाक्पेशस्कृतावित्युच्येते। पेशस्कृन्नाम हि कीटविशेषः स्वापानान्निसृतैस्तन्तुभिः स्वनिवास-भूतं कण्डं निर्माय स्वनिर्गमनद्वारं तन्मुखमप्यज्ञानेन पिधाय तत्रैव विनश्यति तद्वत्पाणिपादयोर्निश्छिद्रत्वाज्ज्ञानाभावाच्च तौ निर्वाक्पेशस्कृतावित्युच्येते। ताभ्यां द्वाभ्याम् अक्षण्वतामिन्द्रियवतां देहानामधिपतिः पुरञ्जनः याति गच्छत्यागच्छति करोति कर्म करोति च ॥ ५४ ॥ ❀ ❀ अन्तःपुरं हृदयं गतः प्रविष्टः "हृदि ह्ययमात्मा प्रतिष्ठितः" इति श्रुतेः स पुरञ्जनः यदा विषूचीनेन मनसा विष्वगञ्चति सर्वतो व्याप्रियत इति विषूचीन इति व्युत्पत्तेः समन्वितो भवति तदा जाया बुद्धिरात्मजा इन्द्रियवृत्तयः ताभ्यामुद्भवं मोहादीनामन्यतमं याति। मोहप्रसादहर्षाः तमःसत्त्वरजःकार्याणि मनोगुणाः। अत्र त्वगिन्द्रियस्यानुक्तिः सर्वेष्वन्तर्भावात् ॥ ५५ ॥ ❀ ❀ एवमिन्द्रियस्थानविषयाणां गौणनामानि कार्याणि चाभिधाय मनःपर्य्यन्तसर्वेन्द्रिययुक्तस्य बुद्धिपारवश्यमाह एवमिति। अज्ञः अत एव कामप्रवण आत्मा मनो यस्य कर्मसु कामसाधनेषु कर्मस्वासक्तः अत एव दैवेन वञ्चितः, महिषी बुद्धिर्यद्यदीहेत व्याप्रियेत यद्यच्छब्दादिविषयं प्रतीन्द्रियाणि प्रवर्तयतीत्यर्थः, तत्तदेवान्ववर्ततानुवृत्तवान् ॥ ५६ ॥ ❀ ❀ अनुवर्तन-मेवोपपादयति चतुर्भिः क्वचिदिति। पिबन्त्यां पाने व्याप्रियन्त्यां बुद्धौ पिपासामुत्पादयन्त्यां सत्यामित्यर्थः। मदविह्वलः मदपरवशः सन् मदिरां पिबति, एवमुत्तरत्रापि द्रष्टव्यम्। अश्नन्त्यां भुञ्जन्त्यां जक्षत्यां चर्वन्त्याम् ॥ ५७-५८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

पुर्या वामकर्णलक्षणा देवभूर्नाम द्वाः स्थिता, प्रजादिरूपेण क्रीडादिगुणोपेतत्वाद्देवः पितृगणः प्रियो भवत्यस्य श्राद्धादिकर्तु-रिति तेनोत्तरेण वामकर्णलक्षणद्वारेणोत्क्रान्तः पुरञ्जनः उत्तरपाञ्चालमूर्ध्वलोकप्राप्तिहेतुत्वादुत्तराः उत्तरन्ति वितरन्ति ददतीत्युत्तराः पितरस्तेषां लोकलक्षणं राष्ट्रं याति। अत्रापि पूर्वोक्तेन संख्योपेतः पुत्रलक्षणं पुरं जनयतीति पुरुषप्रजननकर्मा लोको जीवः उत्तरमुत्कृष्टं पाञ्चालं प्रवृत्तिशास्त्रमिति वा, अन्यत्तु पूर्वोक्त एव। किमेतत्प्रतीतार्थं परित्यज्य व्यत्यस्य कथने कारणमिति चेदुच्यते "दक्षिणश्रोत्र-मार्गेण देवलोकं व्रजत्यसौ। वामश्रोत्रेण पितृणामिति वेदविदो विदुरि"ति प्रमाणम् ॥ ५१ ॥ ❀ ❀ असुरजनहितत्वादासुरी नाम पश्चाद्द्वाः शिश्नलक्षणास्ति तया द्वारा ग्राम्यकं नाम मैथुनकं सुखं विषयं यात्यनुभवति दुष्टो मदो यस्य स तथा तेनोपस्थेन्द्रियेण सहितः असूनामिन्द्रियाणां रतिहेतुत्वादासुरीति वा सुखहेतुत्वाद्वा सतामपि ग्राह्यम् ॥ ५२ ॥ ❀ ❀ निर्गच्छत्यस्मात्पुरीष-

लक्षणमलमिति निर्ऋतिर्नामाधो द्वाः गुदलक्षणं छिद्रं वैशसं पुरीषोत्सर्गलक्षणं विषयं पापं हिंसालक्षणनरकं वा। लुब्धकेनावागिन्द्रियेण कृच्छ्रेण मलमोचनादेषा संज्ञा ॥ ५३ ॥ ❀ ❀ अमीषां द्वाराणां मध्ये उभौ निर्वाक्योपस्करौ पादौ हस्तश्चान्धौ ज्ञानशून्यौ भवतः। निर्गतं वाक्यं यस्मात् स निर्वाक्यः पादः कर्तुः पुरुषस्योपकरणभूतत्वादुपस्करो हस्तः हस-आदान इति धातोरादात्वात् अक्षाणीन्द्रियाणि विद्यन्ते येषां तेऽक्षण्वन्तो जीवास्तेषां पतिः पुरञ्जनस्ताभ्यां याति करोति चेत्यन्वयः ॥ ५४ ॥ ❀ ❀ कचिद्-हृदयाख्यान्तःपुरङ्गतो विष्वक् सर्वतोऽञ्चतीति विपूचि मनस्तेन सहितः स्वयं पुरञ्जनो जायात्मजेभ्य उद्भवो जन्म यस्य स तथा तमोमोहाद्यन्यतमं यातीत्यन्वयः। जाया भक्तिरात्मजो ज्ञानं भक्तिज्ञाने तज्ज्ञानादुत्पन्नं प्रसीदत्यनेनेति प्रसादः परमानन्दः मुह्यत्यनेनेति मोहो निरयः हृष्यत्यनेनेति हर्षः स्वर्गस्तान् ॥ ५५ ॥ ❀ ❀ इदानीमसद्बुद्धेः प्रकारं दर्शयति एवमिति। ग्राम्यकर्मसु काम्यन्त इति कामा विषयास्तेष्वात्मा मनो यस्य स तथा वञ्चितो दैवेनेति शेषः। अबुधो विवेकशून्यः महिषी बुद्धिलक्षणा मतं हिनस्तीति महिषी अन्यत्र मतं ददातीति महिषी यद्यत्कर्म कारयितुमीहेत तत्तत्कर्मान्ववर्तत अन्वकरोदेव ॥ ५६ ॥ ❀ ❀ तत्किं तदाह कचिदिति। पिबन्त्यां पातुमिच्छन्त्यामित्याद्यूह्यम्। अनेन सद्बुद्धिरपि ध्वनितेति ज्ञातव्यम् ॥ ५७-६१ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अन्धाविति ज्ञानहीनत्वात् ॥ ५४-६१ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

उत्तरेण उत्तरस्यां दिशि श्रुतधरः श्रोत्रेन्द्रियं दक्षिणकर्णेन बलाधिक्यात् प्राथम्याच्च कर्मकाण्डश्रवणं वामकर्णेन ज्ञानकाण्ड-श्रवणमिति द्वारदेशयोर्नामभेदः कृतः। पञ्चानामपि विषयाणां श्रोत्रेणैव प्रथममवगमात् पाञ्चालमिति संज्ञा ज्ञेया ॥ ५१ ॥ ❀ ❀ असुरा इन्द्रियारामास्तेषामियमासुरी शिश्नद्वाः ग्रामकं ग्रामस्थजनानां कं सुखं व्यवायं दुर्मदेन उपस्थेन्द्रियेण ॥ ५२ ॥ ❀ ❀ निर्ऋतिर्गुदं मृत्युद्वारत्वात्। वैशसं मलविसर्गं लुब्धकेन पायुना तेनोत्क्रान्तस्य दुःखप्राप्तेर्लुब्धकसाम्यम् ॥ ५३ ॥ ❀ ❀ अमीषां मध्ये निर्वाक् पादः पेशस्कृत् हस्तस्तावुभावप्यन्धौ छिद्राभावात्। अक्षण्वतामिन्द्रियवतां द्वाराणामधिपतिः ॥ ५४ ॥ ❀ ❀ अन्तःपुरं हृदयं विषु सर्वतोऽञ्चतीति विपूचीनं मनस्तद्युक्तः। मोहप्रसादहर्षास्तमःसत्त्वरजःकार्याणि जाया बुद्धिः आत्मजाः सामान्य-विशेषनिश्चयज्ञानादयस्तदुत्थम् ॥ ५५-५६ ॥ ❀ ❀ जीवस्योपाधिधर्माध्यासं प्रपञ्चयति कचिदित्यादि। यदुक्तं 'प्रकृतेः क्रियमाणानि गुणैरात्मनि मन्यते' इति जक्षत्यां चर्वन्त्याम् ॥ ५७-५८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ब्रह्मप्रापकशास्त्रश्रवणद्वारा देवस्य ब्रह्मणः आह्वानमनेन भवत्यतो देवहूर्वामकर्णस्तद्रूपा पुर्या द्वाः उत्तरेणोत्तरस्यां दिशि तयोत्तरपाञ्चालम्। कथापक्षे देशविशेषमध्यात्मपक्षे उत्तरं कर्मकाण्डविचारानन्तरश्रोतव्यम्। पञ्चानामुपासककृपाफलभक्तिरसतद्विरो-धिपदार्थानां प्रकाशनायालं निवृत्तिशास्त्रम् ॥ ५१ ॥ ❀ ❀ असुराः औपस्थ्यसुखलुब्धास्तत्सम्बन्धिनी उपस्थस्थानरूपा तया दुर्मदेनोपस्थेन्द्रियेण समन्वितः ग्रामकं ग्रामे यत्कं सुखं मैथुनं तद्याति ॥ ५२ ॥ ❀ ❀ निर्ऋतिः गुदरूपा द्वाः तया लुब्धकेन पायुना समन्वितः वैशसं मलविसर्गविषयं याति ॥ ५३ ॥ ❀ ❀ अमीषां पौराणां पुरगतानां द्वाराणां मध्ये उभौ अन्धौ निश्छिद्रौ निर्वाक् पादः पेशस्कृत् हस्तः ताभ्याम् अक्षण्वतामिन्द्रियगोलकानामधिपतिर्याति करोति च। त्वगनुक्तिः सर्वेष्वन्तर्भावा-भिप्रायेण ॥ ५४ ॥ ❀ ❀ स यर्हि विष्वगञ्चतीति विपूचीनम् मनस्तेन समन्वितोऽन्तःपुरं हृदयं गतो भवति तदा जायात्मजा इन्द्रियद्वारा तमःसत्त्वरजोवृत्तयस्तदुद्भवं मोहं तमोवृत्तिकार्यं प्रसादं सत्त्ववृत्तिकार्यं हर्षं रजोवृत्तिकार्यं च याति ॥ ५५ ॥ ❀ ❀ एवं कर्मसु संसक्तः यतः कामेषु कर्मफलेषु आत्मा बुद्धिर्यस्य सः यतोऽबुधः हेयोपादेयविवेकहीनः यतो वञ्चितो बुद्ध्येति शेषः। अत एव महिषी बुद्धिर्यद्यदीहेत तत्तदेव अन्ववर्तत अनुवर्तितवान् ॥ ५६ ॥ ❀ ❀ 'ध्यायतीव लेलायतीवे'त्यादिश्रुतिमुपबृंहयति कचिदित्यादिना। जक्षत्यां भक्षयन्त्याम् ॥ ५७-५८ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

उत्तरेणेतीदमपि पूर्ववत्तद्धितान्तं पदम्। पुर्या उत्तरस्यां दिशि देवहूर्नाम द्वास्तया पुरञ्जनः श्रुतधरेणैव देशाभिज्ञेनान्वित उत्तरपाञ्चालं राष्ट्रं देशं यातीत्यन्वयः। अध्यात्मपक्षे तु निवृत्तं शास्त्रं उपासनाकाण्डलक्षणं उत्तरपाञ्चालसंज्ञकं ज्ञेयम्, तस्य श्रवणमपि पूर्वकर्मकाण्डश्रवणानन्तरं दक्षिणकर्णप्रवृत्त्यनन्तरं प्रवृत्तेन वामकर्णेनेति ज्ञेयम्। ततश्च तत्तद्देवोपासनमनुष्ठाय देवैराहूतो देवलोक-प्रापकं देवयानं प्रपद्यते। तथाच देवानामाह्वानमनेनेति देवहूर्वामकर्णः श्रुतधरश्च श्रोत्रेन्द्रियमेव तथाच श्रोत्रेन्द्रियेण, संयुक्तो जीवो वामकर्णेन उपासनाकाण्डं शृणोतीत्यर्थः। अत्र कर्णभेदेन श्रवणे शास्त्रभेदकथनं च कर्णशास्त्रयोः पूर्वपश्चाद्भावेन प्रवृत्तिसमत्वमात्रेणैव,

न नियमेन तथात्वम् ॥ ५१ ॥ ❁ ❁ आसुरी नाम पश्चात् पश्चिमदिग्भवा द्वास्तया दुर्मदेन देशाभिज्ञेन समन्वितः पुरञ्जनो ग्रामकं नाम विषयं देशं यातीत्यन्वयः। पक्षान्तरे तु असुराणामिन्द्रियारामाणामियमासुरी द्वाः शिश्नम्। पश्चात् पृष्ठतः उक्ताभिप्राय-मेतत् ग्रामस्थानां गृहस्थानां कं सुखं यस्मात्तद् ग्रामकं व्यवायम्। दुर्मदो गुह्येन्द्रियम्। तथाच गुह्येन्द्रियेण युक्तो जीवः शिश्नेन स्त्रीसम्भोगं करोतीत्यर्थः ॥ ५२ ॥ ❁ ❁ निर्ऋतिर्नाम पश्चात् पश्चिमदिग्भवा द्वास्तया लुब्धकेन मार्गाभिज्ञेन समन्वितः पुरञ्जनो वैशसं नाम विषयं देशं यातीत्यन्वयः। अध्यात्मपक्षे तु निर्ऋतिर्गुदः, मृत्युद्वारत्वात्तस्य राक्षसनाम्ना निर्देशः, वैशसं मलविसर्गं पीडाहेतुत्वान्नरकं चाग्रे तथा व्याख्यानात्। लुब्धकः पायुरिन्द्रियं तेनाक्रान्तस्य नरकादिदुःखप्राप्तेस्तस्य लुब्धकत्वम्। तथा च पाय्विन्द्रियेण समन्वितो जीवो गुदेन मलत्यागं करोति, मरणसमये कदाचित्तेन मार्गेण निस्सृतश्चेत्तदा नरकं यातीत्यर्थः ॥ ५३ ॥ अमीषां पौराणां पुरद्वाराणां मध्ये निर्वाक्पेशस्कृतावुभौ द्वारावन्धौ बहिर्निर्गमच्छिद्ररहितौ ;ताभ्यामक्षण्वतां द्वारपाणामधिपतिः पुरञ्जनो याति करोति च। तत्र निर्वाक्सञ्ज्ञकेन याति गच्छति, पेशस्कृत्सञ्ज्ञकेन करोतीति विभागः। पक्षान्तरे निर्वाक् पादः, पेशस्कृत् हस्तः, तयोश्छिद्राभावादन्धत्वम्। अक्षण्वतां छिद्रवतामिन्द्रियाणामधिपतिर्जीवः पादेन गच्छति, हस्तेन करोतीत्यर्थः ॥ ५४ ॥ ❁ ❁ एवं द्वार्निरूपणं कृत्वा पुरीं प्रविष्टस्यान्तःपुरे भोगं निरूपयति—स इत्यादिना यावत्समाप्ति। स पुरञ्जनो विषूचीनेन सर्वाभिज्ञेन सर्वनायकेन स्त्रिया अन्तरङ्गेण नपुंसकेन समन्वितो यर्ह्यन्तःपुरं गतस्तदा तत्र जायात्मजोद्भवं जायादिनिमित्तं मोहं प्रसादं हर्षं वा याति स्मेत्यन्वयः। अध्यात्मपक्षे तु अन्तःपुरं हृदयं, विषूचीनं सर्वतोमुखमुभयेन्द्रियनायकं मनः, जाया बुद्धिः, आत्मजा इन्द्रियपरिणामाः बुद्धिपरिणामाः संशयनिश्चयभ्रमाद्यात्मका वा, तदुद्भवं तेभ्य उद्भूतम्। तत्र तमस उद्रेके मोहं सत्त्वोद्रेके प्रसादं रजस उद्रेके हर्षं मनःसंयुक्तो जीवो बुद्ध्यादिगुणैः प्राप्नोतीत्यर्थः ॥ ५५ ॥ ❁ ❁ एवं जाया-यर्थं कर्मसु संसक्तस्तत्तद्भोगसाधनेषु अत्याग्रहेण प्रवृत्तः पुरञ्जनो महिषी यद्यदीहेत करोति स्म तत्तदेव स्वयमपि अन्ववर्त्तत अनु-करोति स्मेत्यन्वयः। एवमनुकरणे हेतुमाह—वञ्चित इति, यतस्तया मोहित इत्यर्थः। तत्र हेतुमाह—कामात्मेति। कामिन एव स्त्रिया मोहो भवतीति भावः। कामात्मत्वे हेतुमाह—अबुध इति, यतोऽज्ञः। अज्ञस्यैव कामवश्यत्वमिति भावः। अध्यात्मपक्षे तु आत्माज्ञानाद् बुद्ध्याद्यध्यासाधीनमेवं जीवस्य सर्वलौकिकालौकिकसाधनप्रवृत्तिर्विषयभोगश्चेति दर्शितम् ॥ ५६ ॥ ❁ ❁ स्त्रीवशवर्तित्वमेव प्रपञ्चयति—क्वचिदिति षड्भिः। क्वचित्तस्यां मदिरां पिबन्त्यां स्वयमपि पुरञ्जनो मदिरां पिबति, ततश्च मदेन मदिरापानजनितेन विह्वलः सर्वानुसन्धानशून्यो भवति, क्वचिदश्नन्त्यां ओदनादिभोजनं कुर्वत्यां स्वयमपि तदश्नाति क्वचित्तस्यां जक्षन्त्यां चणकादि भक्षयन्त्यां स्वयमपि तज्जक्षति। अध्यात्मपक्षे तु जीवस्य भोजनपानादि सर्वं बुद्ध्यधीनं तत्सहैव न स्वतन्त्रेणेति दर्शितम् ॥ ५७-५८ ॥

## भाषानुवादः

उत्तरकी ओर जो देवहू नामका द्वार था, उससे श्रुतधरके साथ उत्तरपाञ्चाल देशको जाता था ॥ ५१ ॥ ❁ ❁ पश्चिम दिशामें आसुरी नामका दरवाजा था, उसमें होकर वह दुर्मदके साथ ग्रामक देशको जाता था ॥ ५२ ॥ ❁ ❁ तथा निर्ऋति नामका जो दूसरा पश्चिम द्वार था, उससे लुब्धकके साथ वह वैशस नामके देशको जाता था ॥ ५३ ॥ ❁ ❁ इस नगरके निवासियोंमें निर्वाक् और पेशस्कृत्—ये दो नागरिक अंधे थे। राजा पुरञ्जन आँखवाले नागरिकोंका अधिपति होनेपर भी इन्हींकी सहायतासे जहाँ-तहाँ जाता और सब प्रकारके कार्य करता था ॥ ५४ ॥ ❁ ❁ जब कभी अपने प्रधान सेवक विषूचीनके साथ अन्तःपुरमें जाता, तब उसे स्त्री और पुत्रोंके कारण होनेवाले मोह, प्रसन्नता एवं हर्ष आदि विकारोंका अनुभव होता था ॥ ५५ ॥ ❁ ❁ उसका चित्त तरह-तरहके कर्मोंमें फँसा रहता था और काम-परवश होनेके कारण वह मूढ रमणी के द्वारा ठगा गया था। उसकी रानी जो-जो काम करती थी, वही वह भी करने लगता था ॥ ५६ ॥ ❁ ❁ वह जब मद्यपान करती, तब वह भी मदिरा पीता और मदसे उन्मत्त हो जाता था; जब वह भोजन करती, तब आप भी भोजन करने लगता और जब कुछ चबाती, तब आप भी वही वस्तु चबाने लगता था ॥ ५७ ॥ ❁ ❁ इसी प्रकार उसके गानेपर गाने लगता, रोनेपर रोने लगता, हँसनेपर हँसने लगता और बोलनेपर बोलने लगता ॥ ५८ ॥

**क्वचिद्धावति धावन्त्यां तिष्ठन्त्यामनुतिष्ठति। अनु शेते शयानायामन्वास्ते क्वचिदासतीम् ॥ ५९॥**
**क्वचिच्छृणोति शृण्वन्त्यां पश्यन्त्यामनुपश्यति। क्वचिज्जिघ्रति जिघ्रन्त्यां स्पृशन्त्यां स्पृशति क्वचित् ॥६०॥**
**क्वचिच्च शोचतीं जायामनुशोचति दीनवत्। अनु हृष्यति हृष्यन्त्यां मुदितामनु मोदते ॥ ६१ ॥**
**विप्रलब्धो महिष्यैवं सर्वप्रकृतिवञ्चितः। नेच्छन्ननुकरोत्यज्ञः क्लैब्यात्क्रीडामृगो यथा ॥ ६२ ॥**

**इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे पुरञ्जनोपाख्याने पञ्चविंशोऽध्यायः ॥ २५ ॥**

अन्वयः—क्वचित् धावंत्याम् धावति तिष्ठंत्याम् अनुतिष्ठति क्वचित् शयानायाम् अनुशेते क्वचित् आसतीम् अन्वास्ते ॥ ५९ ॥ ❀ ❀ क्वचित् शृण्वन्त्याम् शृणोति पश्यंत्याम् अनुपश्यति क्वचित् जिघ्रंत्याम् जिघ्रति क्वचित् स्पृशंत्याम् स्पृशति ॥ ६० ॥ ❀ ❀ क्वचित् च जायाम् शोचतीम् दीनवत् अनुशोचति हृष्यंत्याम् अनुहृष्यति मुदिताम् अनुमोदते ॥ ६१ ॥ ❀ ❀ एवम् महिष्या विप्रलब्धः सर्वप्रकृतिवञ्चितः अज्ञः यथा क्रीडामृगः क्लैव्यात् न इच्छन् अनुकरोति ॥ ६२ ॥

इति पञ्चविंशोऽध्यायः ॥ २५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

आसतीमासीनाम् ॥ ५९-६१ ॥ ❀ ❀ सर्वासंगत्वादिलक्षणा प्रकृतिः स्वभावो वंचितो यस्य सर्वथा प्रकृत्या वंचित इति वा, नेच्छन्ननिच्छन् क्लैव्यात्पारवश्यात् क्रीडामृगो गृहमर्कटः ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थे टीकायां पञ्चविंशोऽध्यायः ॥ २५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

त्रिपदबहुव्रीहेरसार्वत्रिकत्वात्कर्मधारयगर्भं तत्पुरुषमाह—सर्वथेत्यादिविशेषेण। प्रकर्षेण लब्धः प्राप्तः। महिष्यैवमनेन प्रकारेण विप्रलब्धः नेच्छन्नेकेन स्वभावेन। वस्तुतस्तु तदनिच्छन्नपि पारवश्यप्रापकादपरस्मात्स्वभावादनुकरोति तद्धर्ममात्मन्यध्यस्यति तदुक्तं—"प्रकृतेः क्रियमाणानि गुणैरात्मनि मन्यते" इत्यादिना सद्बुद्धिसंयोगे तु महोऽस्यास्तीति मही तस्मिन्नित्योत्सवसमुद्रे हरौ सीदति विषयीकृत्य वर्त्तत इति महिषी सद्बुद्धिस्तया विशेषेण प्रलब्धः प्राप्ताभीष्टकार्यलाभः सर्वस्य स्त्रीजनस्य प्रकृतिः स्वभावस्सर्वप्रकृतिः सर्वप्रकृतिर्वञ्चिता येन स तथा वञ्चितसर्वस्त्रीजनस्वभावः। अं विष्णुं जानातीत्यज्ञो हरिभक्तः सद्बुद्ध्यधीनत्वात्। क्रीडामृग इव नेच्छन्नपि सांसारिकं कर्मानुकरोति "जोषयेत्सर्वकर्माणि" इत्यादिश्रीगीतोक्तेर्लोकसंग्रहार्थं करोतीति भावः ॥ ६२ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे पञ्चविंशोऽध्यायः ॥ २५ ॥

### श्रीमद्वीरराघवव्याख्या

आसतीमासीनामासिषां जनयन्तीमनुसृत्यास्ते ॥ ५९ ॥ ❀ ❀ एवं शोचतीमनुशोचतीत्यादेरर्थः ॥ ६०-६१ ॥ ❀ ❀ एवं महिष्या बुद्ध्या विप्रलब्धः विशेषेण विमोहितः अत एव सर्वा प्रकृतिरक्रोधाद्यात्मस्वभावः वञ्चिता यस्य सः त्यक्तस्वभाव इत्यर्थः, नेच्छन्ननिच्छिन्नपि क्लैव्यात्पारवश्यादनुकरोति यथा क्रीडार्थो मृगः ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवकृतभागवतचंद्रचंद्रिकाख्यायां टीकायां पञ्चविंशोऽध्यायः ॥२५॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तथा हि महोऽस्यास्तीति महि ब्रह्म तस्मिन्नित्योत्सवसमुद्रे हरौ सीदति विषयीकृत्य वर्तत इति महिषी सद्बुद्धिस्तया विशेषेण प्रलब्धः प्राप्ताभीष्टकार्यलाभः सर्वप्रकृतिवञ्चितसर्वस्त्रीजनस्वभावः अं विष्णुं जानातीत्यज्ञः सद्बुद्ध्यधीनत्वात्क्रीडामृगत्वमपि युक्तम् ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां पञ्चविंशोऽध्यायः ॥ २५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

विप्रलब्धः। अत्र जीवस्य शक्तिमत्तायां "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" इत्येतत् सूत्रमप्यनुसन्धेयम् ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे पञ्चविंशोऽध्यायः ॥ २५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

आसतीमासीनाम् ॥ ५९-६१ ॥ ❀ ❀ विशेषेण प्रकर्षेण एवमनेन प्रकारेण लब्धः प्राप्तः सर्वया प्रकृत्या स्वभावेन ज्ञानानन्दादिरूपया वञ्चितस्त्याजितः नेच्छन् एकेन स्वस्वभावेन वस्तुतस्तदनिच्छन्नपि क्लैब्यात् पारवश्यप्रापकादपरस्मात् स्वभावात् अनुकरोति तद्धर्ममात्मन्यध्यस्यति ॥ ६२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। चतुर्थे पञ्चविंशोऽयं सङ्गतः सङ्गतः सताम् ॥ २५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

आसतीमासीनाम् ॥ ५९-६० ॥ ❀ ❀ हृष्यन्त्यां बहिरिष्टपदार्थदर्शनादिना मुदितामिष्टपदार्थस्मरणेन ॥ ६१ ॥ ❀ ❀ महिष्या बुद्धया विप्रलब्धो मोहितः। तत्र हेतुः सर्वो विष्णुस्तस्य शक्तिभूतया प्रकृत्या वञ्चितः अत एवाज्ञः आत्मानात्मपरमात्मज्ञानहीनः नेच्छन् अनिच्छन् अपि क्लैब्यात्पारतन्त्र्यात् क्रीडार्थो मृगः यथा अनुकरोति ॥ ६२ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे पञ्चविंशाध्यायार्थप्रकाशः ॥ २५ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

क्वचिदासतीं आसीनामन्वास्ते ॥ ५९-६१ ॥ ❀ ❀ एवं मर्मस्वित्येतच्छ्लोकं प्रपञ्चयन् महिषीतिश्लोकार्द्धं प्रपञ्च्य इदानीमुक्तानुवादपूर्वकं श्लोकशेषं विवृण्वन् बाल्यावस्थावर्णनमुपसंहरति-विप्रलब्ध इति। एवं महिष्या विप्रलब्धो जडीकृतः, अत एव सर्वप्रकृतिवञ्चितः विचारपूर्वप्रवृत्तिस्वभावभ्रष्टः क्लैब्यात् कामपारवश्यादनिच्छन्नपि स्त्रियमनुकरोति-यतोऽज्ञ इति। तत्र दृष्टान्तः क्रीडामृगो वानरो यथेति। पक्षान्तरे सर्वा प्रकृतिरसङ्गत्वात्मारामत्वादिस्वभावा वञ्चिता यस्य सः। अन्यदुक्ततात्पर्यमेवेति ॥ ६२ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे मोक्षनिरूपणे। पञ्चविंशो गतो वृत्तिं जाग्रदादिनिरूपकः ॥ ३ ॥

### भाषानुवादः

वह दौड़ती तो आप भी दौड़ने लगता, खड़ी होती तो आप भी खड़ा हो जाता, सोती तो आप भी उसीके साथ सो जाता और बैठती तो आप भी बैठ जाता ॥ ५९ ॥ ❀ ❀ कभी वह सुनने लगती तो आप भी सुनने लगता, देखती तो देखने लगता, सूँघती तो सूँघने लगता और किसी चीजको छूती तो आप भी छूने लगता ॥ ६० ॥ ❀ ❀ कभी उसकी प्रिया शोकाकुल होती तो आप भी अत्यन्त दीनके समान व्याकुल हो जाता; जब वह प्रसन्न होती, आप भी प्रसन्न हो जाता। और उसके आनन्दित होनेपर आप भी आनन्दित हो जाता ॥ ६१ ॥ ❀ ❀ (इस प्रकार) राजा पुरञ्जन अपनी सुन्दरी रानीके द्वारा ठगा गया। सारा प्रकृतिवर्ग—परिकर ही उसको धोखा देने लगा। वह मूर्ख विवश होकर इच्छा न होनेपर भी खेलके लिये घरपर पाले हुए बन्दरके समान अनुकरण करता रहता ॥ ६२ ॥

इति पञ्चविंशोऽध्यायः ॥ २५ ॥



# अथ षड्विंशोऽध्यायः

नारद उवाच[1]

स एकदा महेष्वासो रथं पञ्चाश्वमाशुगम् । द्वीपं द्विचक्रमेकाक्षं त्रिवेणुं पञ्चबन्धुरम् ॥ १ ॥
एकरश्म्येकदमनमेकनीडं द्विकूबरम् । पञ्चप्रहरणं सप्तवरूथं पञ्चविक्रमम् ॥ २ ॥
हैमोपस्करमारुह्य स्वर्णवर्माक्षयेषुधिः । एकादशचमूनाथः पञ्चप्रस्थमगाद्वनम् ॥ ३ ॥
चचार मृगयां तत्र दृप्त आत्तेषुकार्मुकः । विहाय जायामतदर्हां मृगव्यसनलालसः ॥ ४ ॥
आसुरीं वृत्तिमाश्रित्य घोरात्मा निरनुग्रहः । न्यहनन्निशितैर्बाणैर्वनेषु वनगोचरान् ॥ ५ ॥
तीर्थेषु प्रतिदृष्टेषु राजा मेध्यान्[2] पशून् वने । यावदर्थमलं लुब्धो हन्यादिति नियम्यते ॥ ६ ॥
य एवं कर्म नियतं विद्वान् कुर्वीत मानवः । कर्मणा तेन राजेन्द्र ज्ञानेन न स लिप्यते ॥ ७ ॥
अन्यथा कर्म कुर्वाणो मानारूढो निबध्यते । गुणप्रवाहपतितो नष्टप्रज्ञो व्रजत्यधः ॥ ८ ॥
तत्र निर्भिन्नगात्राणां चित्रवाजैः शिलीमुखैः । विप्लवोऽभूद्दुःखितानां दुःसहः करुणात्मनाम् ॥ ९ ॥
शशान् वराहान् महिषान् गवयान् रुरुशल्यकान् । मेध्यानन्यांश्च[3] विविधान् विनिघ्नन् श्रममध्यगात् ॥१०॥

अन्वयः—एकदा स्वर्णवर्मा अक्षयेषुधिः एकादशचमूनाथः महेष्वासः सः पंचाश्वम् आशुगम् द्वीपम् द्विचक्रम् एकाक्षम् त्रिवेणुम् पंचबंधुरम् एकरश्म्येकदमनम् एकनीडम् द्विकूबरम् पंचप्रहरणम् सप्तवरूथम् पंचविक्रमम् हैमोपस्करम् रथम् आरुह्य पंचप्रस्थम् वनम् अगात् ॥ १–३ ॥ ❀ ❀ तत्र दृप्तः आत्तेषुकार्मुकः मृगव्यसनलालसः अतदर्हाम् जायाम् विहाय मृगयाम् चचार ॥ ४ ॥ ❀ ❀ घोरात्मा निरनुग्रहः वनेषु आसुरीम् वृत्तिम् आश्रित्य वनगोचरान् निशितैः बाणैः न्यहनत् ॥ ५ ॥ ❀ ❀ राजा अलम् लुब्धः तीर्थेषु प्रतिदृष्टेषु वने यावदर्थम् मेध्यान् पशून् हन्यात् इति नियम्यते ॥ ६ ॥ ❀ ❀ राजेंद्र यः विद्वान् मानवः एवम् नियतम् कर्म कुर्वीत सः ज्ञानेन तेन कर्मणा न लिप्यते ॥ ७ ॥ ❀ ❀ अन्यथा कर्म कुर्वाणः मानारूढः निबद्धयते गुणप्रवाहपतितः नष्टप्रज्ञः अधः व्रजति ॥ ८ ॥ ❀ ❀ तत्र चित्रवाजैः शिलीमुखैः निर्भिन्नगात्राणाम् करुणात्मनाम् दुःखितानाम् दुःसहः विप्लवः अभूत् ॥ ९ ॥ ❀ ❀ शशान् वराहान् महिषान् गवयान् रुरुशल्यकान् च अन्यान् विविधान् मेध्यान् विनिघ्नन् श्रमम् अध्यगात् ॥ १० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

षड्विंशे मृगयाव्याजात्स्वप्नजागरणोक्तितः । सद्बुद्धित्यागयोगाभ्यां संसृतिः सा प्रपंच्यते ॥ ( १ ) ॥

तदेवमात्मन उपाधिकृतां सुषुप्तावस्थां जाग्रदवस्थां चोक्त्वेदानीं स्वप्नावस्थामाह स एकदेति दशभिः। महानिष्वासो धनुः कर्तृत्वभोक्तृत्वाद्यभिनिवेशो यस्य स रथमारुह्य पंचप्रस्थं वनमगादिति तृतीयेनान्वयः। रथं तदानीमेव विधृतं स्वप्नदेहम्। जाग्रद्देहस्य शतसंवत्सरोपभोग्यपुरत्वेनोक्तत्वात्। पंच ज्ञानेन्द्रियाण्यश्वा यस्य आशुगं शीघ्रगतिम्। द्वे अहन्ताममते ईषे दण्डिके यस्य द्वे पुण्यपापे चक्रे यस्य एकं प्रधानमक्षो यस्य त्रयो गुणा वेणवो ध्वजा यस्य पंच प्राणा बन्धुराणि बन्धनानि यस्य ॥ १ ॥ ❀ ❀ एकं मनो रश्मिः प्रग्रहो यस्य एका बुद्धिर्दमनः सूतो यस्य तं च तं च एकं हृदयं नीडं रथिन उपवेशस्थानं यस्मिन् द्वौ शोकमोहौ कूबरौ युगवन्धनस्थानं यस्य पंच शब्दादयो विषयाः प्रह्रियन्ते प्रक्षिप्यन्ते यस्मिन्। अस्य व्याख्यानं भविष्यति 'पंचेन्द्रियार्थप्रक्षेप' इति। सप्त धातवो वरूथा रक्षार्थं चर्माद्यावरणानि यस्य पंच कर्मेन्द्रियाणि विक्रमा गतिप्रकारा यस्य ॥ २ ॥ ❀ ❀ हैमोपस्करं सौवर्णाभरणम्। स्वर्णवर्मा वर्म कवचम्। रजोगुणावृतः। अक्षयेषुधिः इषुधिर्निषंगः। अनन्तवासनायुक्ताहंकारोपाधिः एकादशो मनोरूपश्चमूनाथः सेनापतिर्यस्य वासनामयस्य मनसः प्रग्रहत्वं संकल्पविकल्पात्मकस्य

१. प्राचीने पाठे 'नारद उवाच' अयमंशो न। २. प्रा० पा०—मेध्यपशून्वने। ३. प्रा० पा०—नन्यानमेध्यांश्च विनि०।

बृहद्बलत्वेन वक्ष्यमाणस्य चमूनाथत्वमिति विभागः। पंच शब्दादयो विषयाः प्रस्थाः सानवो यस्मिंस्तद्वनं भजनीयं देशमगात् ॥ ३ ॥ ❀ ❀ आत्ता गृहीता इषवो रागादिरूपाः कार्मुकं च भोगाद्यभिनिवेशरूपं येन जायां विवेकवतीं बुद्धिं विहाय अतदर्हां त्यागानर्हाम्। त्यागे हेतुः। मृग्यन्त इति मृगा विषयास्तेषु व्यसनं भोगासक्तिस्तेन लालसाऽतिस्पृहा यस्य ॥ ४ ॥ ❀ ❀ बाणै रागादिभिः वनेषु भजनीयदेशेषु वनगोचरान्भजनीयविषयान् न्यहनदात्मसात्कृतवान्। आसुरीम् राजसीम्। कथापक्षे तु स्पष्टमेव ॥ ५ ॥ ❀ ❀ नन्वासुरीं वृत्तिमाश्रित्येति किमिति मृगया निन्द्यते। कथापक्षे तावद्राज्ञो विहितैव सा, अध्यात्मपक्षेऽपि जीवस्य विषयभोगो विहित एवान्यथा शरीरनिर्वाहोऽपि न स्यादित्याशंक्याह तीर्थेष्विति त्रिभिः। अयं भावः—नहि मृगया विधीयते रागप्राप्तत्वात्किं तु नियम्यते प्रवृत्तिः संकोच्यते। नियममेव षड्विधं दर्शयति। यद्यलमत्यर्थं लुब्धो रागी सन् हन्यात्तर्हि तीर्थेषु श्राद्धादिष्वेव तत्रापि प्रतिदृष्टेषु प्रख्यातेष्वेव न तु नित्यश्राद्धादिषु तत्रापि राजैव मेध्यानेव वन एव यावदुपयोगमेवेति एवं जीवस्य विषयसेवापि यावदुपयोगं न यथेष्टमिति नियम एवेत्यर्थः ॥ ६ ॥ ❀ ❀ अतो नावश्यकत्वमित्याह। य इति। एवं नियतं कर्म विद्वान् तेनेत्युपलक्षणम्। तेनान्येन वा कर्मणैवमनुष्ठितेन यज्ज्ञानं भवति तेन ज्ञानेन हेतुना सोऽनुष्ठाता न लिप्यते ॥ ७ ॥ ❀ ❀ अन्यथा नियमोल्लंघनेनांतःकरणशुद्ध्यभावात् कर्तृत्वाभिमानमारूढः कर्मभिरनुबद्ध्यते ततश्च गुणप्रवाहे पतितोऽधो व्रजति ॥ ८ ॥ ❀ ❀ प्रासंगिकं परिसमाप्य पुनर्मृगयामेवानुवर्णयति तत्रेति। चित्रा वाजाः पक्षा येषां तैः विप्लवो नाशः करुणात्मनां कृपालूनां दुःसहः ॥ ९-१० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

सा प्रसिद्धा (१)। धार्मिकस्य विवेकिनोपि जीवस्य कदाचिद् दैववशात्तामसभावोद्गमेनाविवेकतो निषिद्धविषयासक्तिः स्यादिति दर्शयन्विषयलौल्यातिरेकार्थमेव देहं रथरूपेण वर्णयति स इति ॥ १ ॥ ❀ ❀ कथापक्षे पञ्चविक्रमं विस्तृतविक्रमं 'पचि-विस्तारे' ॥ २ ॥ ❀ ❀ अध्यात्मपक्षे हैमा हिमसम्बन्धिन उपस्करा अतिजाड्यादस्फूर्त्तय एव परिच्छदा यस्य तम् ॥ ३ ॥ ❀ ❀ तत्र पञ्चप्रस्थवने मृगयां परदारगमनादिपापम् ॥ ४ ॥ ❀ ❀ घोरात्मा भयंकरमूर्त्तिः। निरनुग्रहो निर्दयः ॥ ५ ॥ ❀ ❀ अत्राक्षिपति—नन्विति। अत्राशयं प्रकाशयति—अयं भाव इति। आदिना यागादिग्रहः। तत्रापि श्राद्धादिष्वपि। तत्रापि प्रख्यातेषु महालयादिष्वपि। इत्यर्थ इति। नियमं द्वारीकृत्य परिसंख्यैवेयमिति भातीति भावः। "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते" इति श्रुतेः। मृगया हि केवलं दुष्टनाशजन्यप्रजारक्षार्थं शस्त्राभ्यासदार्ढ्यायैव विहिता, तत्रापि विहितयागाद्यवशिष्टमांसाशनमतिरागिणोऽभ्यनुज्ञामात्रेण तन्निवृत्तावेव तात्पर्यं, तादृशयागस्य श्रीनारदेन घोरत्वेनोक्तत्वात् "क्रतुभिर्घोरैः पशुमारकैः" इति ॥ ६ ॥ ❀ ❀ अतः परिसंख्याविधित्वात्। तेन मृगयादिनाऽन्येन ऋतुकालस्त्रीसंगादिरूपादिना ज्ञानेन हेतुना तत्कर्मजन्येन ज्ञानेन हेतुनेत्यर्थः। तथा चाध्यात्मपक्षेपि निषिद्धेतरविषयभोग एव जीवस्य विहित इत्यर्थः ॥ ७-८ ॥ ❀ ❀ तत्र तदा। शिलीमुखैर्बाणैः "अलिबाणौ शिलीमुखौ" इति कोशात्। पक्षे विविधदोषयुक्तैरिन्द्रियैः विप्लवो विविधहिंसादिपापम्। करुणात्मनामस्मादृशाम्। अत एव त्वमेव प्रबोध्यस इति भावः ॥ ९ ॥ ❀ ❀ शशान् विच्छिद्य विच्छिद्य प्राप्तान् 'शश-प्लुतगतौ'। वराहान् श्रेष्ठनरैस्सर्वतस्त्यक्तान् 'ओहाक्-त्यागे' आङ्पूर्वः। महिषान् प्रतिष्ठाप्रदान् महीं सन्वन्तीति व्युत्पत्तेः 'षणु-दाने' तानादिकः। गवयान् गतवयसो जरसं गतान् गतस्य गादेशे वयसो डप्रत्यये टिलोपे च रूपसिद्धेः। रुरून् रोदनहेतून् "प्रियं त्वां रोत्स्यति" इति श्रुतेः। शल्यकान् वियोगे शल्यवद् दुःखहेतून्। मेध्यान् संप्राप्तान् 'मेधृ-संगमे च' विनिघ्नन्प्राप्नुवन्भुंजान इत्यर्थः। श्रममध्यगादिति। धार्मिकजीवो हि कथंचिद् दैववशात्कंचित्कालमधर्मं कृत्वाऽनुतापं प्राप्तः स्यादित्यर्थः ॥ १० ॥

## श्रीमद्वीरराघवव्याख्या

एवं सुषुप्त्यवस्थां जाग्रदवस्थां चाभिधायेदानीं स्वप्नावस्थामाह दशभिः स इति। स पुरञ्जन एकदा सुषुप्त्यनन्तरं महानिष्वासो धनुः कर्तृत्वभोक्तृत्वाद्यभिनिवेशो यस्य सः रथमारुह्य पञ्चप्रस्थं वनमगादिति तृतीयेनान्वयः। रथशब्देनात्र शरीरं विवक्षितम्। "आत्मानं रथिनं विद्धि शरीरं रथमेव च। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥ इन्द्रियाणि हयानाहुः"इत्यादिश्रुत्या उपासननिर्वृत्तौ शरीरादीनां रथादिभावेनान्यत्र निरूपितत्वात् तच्च शरीरमत्रौचित्यात्स्वाप्नं विवक्षितम्। तद्धि तदानीमेव स्वप्नद्रष्टृपुण्यपापानुरोधेनेश्वरसृष्टं भवति जाग्रद्देहस्य तु शतसंवत्सरोपभोग्यत्वेनोक्तत्वात्। रथं विशिनष्टि। पञ्चाश्वं पञ्च ज्ञानेन्द्रियाणि चक्षुरादीन्यश्वा यस्य तमाशुगं शीघ्रगम्, अनेनापि स्वप्नमेव शरीरमत्र विवक्षितमित्यवगम्यते जाग्रद्देहस्याशुगत्वासम्भवादिति भावः। द्वावहङ्कारममकारौ ईषिके दण्डिके यस्य तं द्वे पुण्यपापे चक्रे यस्य तं तथैकं प्रधानमक्षो यस्य त्रयो गुणाः सत्त्वादयो वेणवो ध्वजा यस्य तं पञ्च प्राणा बन्धुराणि बन्धनानि यस्य तथाभूतम् ॥ १ ॥ ❀ ❀ पुनः कीदृशम्, एकं मनो रश्मिः प्रग्रहरज्जुर्यस्य तम् एका बुद्धिर्दमनः सारथिर्यस्य एकं हृदयं नीडं रथिन उपवेशस्थानं यस्य द्वौ शोकमोहौ कूबरं युगबन्धनस्थानं यस्य पञ्च शब्दादयो विषयाः प्रगृह्यन्ते प्रक्षिप्यन्ते आपात्यन्ते यस्मिन् तं सप्त

धातवो वरूथाः चर्माद्यावरणानि यस्य तं पञ्च कर्मेन्द्रियाणि विक्रमा गतिप्रकारा यस्य तथाभूतम् ॥ २ ॥ ❀ ❀ हैमोपस्करं सुवर्णाभरणं स्वर्णाभरणविशिष्टस्वाप्नदेहसृष्टिसम्भवाभिप्रायेण हैमोपस्करमित्युक्तं कथासौन्दर्य्यं वा एवमनुपयुक्तं कथासौन्दर्यायेति द्रष्टव्यं, स्वर्णमयं वर्म कवचं रजोगुणवृत्तिर्यस्य अक्षयेषुधिः इषवो वागा धीयन्तेऽस्मिन्नितीपुधिर्निषङ्गः अक्षय इपुधिरनन्तवासनाश्रयोऽहङ्कारो यस्य स तत्र बुद्धिपूर्वकप्रवृत्तिहेतुः संस्कारविशेषो वासना । सा चाज्ञानवासनाकर्मवासनाप्रकृतिसम्बन्धवासना चेति त्रिप्रकारा । अविद्या नाम ज्ञानानुदयान्यथाज्ञानविपरीतज्ञानरूपेण त्रिविधमज्ञानं प्रकृतिसम्बन्धः स्थूलसूक्ष्मरूपाचित्सम्बन्धः । स च देवमनुष्यादिदेहभेदेन बहुविधः सजातीयकर्मारम्भे रुचिः सा च विषयभेदाद्बहुप्रकारा । पुण्यापुण्यरूपेण द्विविधं कर्मेति ज्ञेयम् । एकादशेन्द्रियवृत्त्यात्मकसेनापतिः पञ्च शब्दादयो विषयाः प्रस्थाः सानवो यस्मिंस्तद्वनं भोगस्थानमगात् ॥ ३ ॥ ❀ ❀ तत्र वने दृप्तः गर्वितः स्वाप्नदेहपरवश इत्यर्थः, आत्ताः स्वीकृता इषवः वासनारूपाः कार्मुकं कर्तृत्वाद्यभिनिवेशो यस्य अतदर्हां त्यागानर्हां जायां विवेकात्मिकां सात्त्विकीं बुद्धिं विहाय त्यागे हेतुः मृग्यन्त इति मृगाः शब्दादिविषयास्तेषु यद्व्यसनमलाभनिमित्तं दुःखं तेन लालसः अन्वेषणासक्तः ॥ ४ ॥ ❀ ❀ आसुरीं तामसीं वृत्तिं बुद्धिमाश्रित्य घोरात्मा घोर आत्मा चित्तं यस्य सः रजोगुणकार्यक्रोधाविष्टः कामविरोधिषु क्रुद्धचित्त इत्यर्थः । अत एव निरनुग्रहः विरोधिष्वनुग्रहरहितः निशितैः कार्यक्षमैः विषयसान्निध्यापादकैरिति यावत् बाणैः कर्मवासनारूपैः शरैः वनेषु भोगस्थानेषु वनगोचरान् वनगोचरमृगतुल्यान् दैवोपसादितानित्यर्थः । न्यहनदात्मसात्कृतवान् । कथापक्षे स्पष्टमेव ॥ ५ ॥ ❀ ❀ नन्वासुरीं वृत्तिमाश्रित्य इति मृगयानिन्दा न युक्ता कथापक्षे राज्ञस्तस्य विदितत्वात् अध्यात्मपक्षेऽपि दैवोपसादितविषयभोगो विहित एवेत्यत्राह तीर्थेष्विति त्रिभिः । मृगयायाः रागप्राप्तत्वान्न सा विधीयते, किन्तु नियम्यते मृगयाप्रवृत्तिः सङ्कोच्यते इत्यर्थः । नियममेव षड्विधमुपदर्शयति लुब्धो रागी सन् यदि निहन्यात्तर्हि तीर्थेषु श्राद्धादिषु तन्निमित्तेषु तत्रापि प्रतिदृष्टेषु विहितमांसकेषु एवेति । तत्रापि राजैव मेध्यानेव वन एव यावदुपयोगमेवेति । अध्यात्मपक्षेऽपि जीवस्य यावदुपभोगमेव विषयभोगो नियम्यते इति भावः ॥ ६ ॥ ❀ ❀ य एवं विद्वान् हिंसाया विषयभोगस्य च रागप्राप्ततां तन्नियमं च विद्वान् कुर्वीत हिंसां विषयभोगं च कुर्यान्न वा न कुर्याद्वा रागप्राप्तत्वेनावश्यकत्वाभावादिति भावः । रागप्राप्तस्य हि पक्षे प्रत्यवायाभावमात्रं क्रियते नादृष्टम्, अतः सुतरां रागप्राप्तस्य त्यागे न प्रत्यवाय इति नवेत्युक्तं, तेनैवं नियतेन कर्मणा ज्ञानेन एवं कृतेन कर्मणा यज्ज्ञानं भवति तेन हेतुना सः कर्ता न लिप्यते पापैरिति शेषः । यद्वा स विद्वान् ज्ञानेन रागप्राप्तानां त्याज्योपादेयविवेकज्ञानरूपेण हेतुना कर्मणानादिपापरूपकर्मणा न लिप्यते ॥ ७ ॥ ❀ ❀ अन्यथा नियतं कर्म कुर्वाणः अहंममाभिमानारूढः कर्मभिरनादिपुण्यापुण्यकर्मभिरनुबध्यते वशीक्रियते ततः कर्मपारवश्याद् गुणप्रवाहे संसारे पतितः नष्टदेहात्मविवेकः अधो नरकं व्रजति ॥ ८ ॥ ❀ ❀ एवं प्रासङ्गिकं परिसमाप्य प्रकृतां मृगयामनुवर्णयति तत्रेति । विचित्रवाजा नानाविधवासनारूपा विचित्रपक्षाः येषां ते वासनाभिरुपोद्बलितैरित्यर्थः । शिलीमुखैः पुण्यापुण्यकर्मभिर्हेतुभूतैः निर्भिन्नान्यनुभवेन जीर्णानि गात्राण्यवयवा येषां तेषां मृगाणां विषयाणां विप्लवो नाशः करुणात्मनां कृपालूनां दुःसहोऽभूत् । कामिभिरनुजीर्णावयवान् विनष्टान् शब्दादिविषयाननुसन्दधतां सर्वभूतसुहृदां ज्ञानिनां विषयविप्लवो मनसापि स्मर्तुमसह्योऽभूदित्यर्थः । कथापक्षे स्पष्टोऽर्थः ॥ ९ ॥ ❀ ❀ शशान् वराहानित्यादिकथनं शब्दादिभेदेन च विषयवैचित्र्यज्ञापनाय कथापक्षे तु तत्सौन्दर्याय मेध्यान् विहितानन्यानविहितांश्च विषयान् निघ्नन्नात्मसात्कुर्वन् व्यापृतकरणत्वाच्च श्रममध्यगात् प्राप्तवान् ॥ १० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अधुना जाग्रदवस्थाप्रकारकथनेन संसारप्राप्तिं कथयन् जाग्रदवस्थाप्रवेशं तावदाह स एकदेति । स पुरञ्जनः एकदा स्वप्नविषयभोगप्रापककर्मक्षये जाग्रद्भोगप्रापककर्मागमने सति पञ्चेन्द्रियद्वारेण सूनार्थमात्मा प्रतिष्ठते यस्मिन्निति पञ्चप्रस्थं वनं जाग्रद्विषयलक्षणकान्तारमगादनुबभूवेत्यग्रेणान्वयः । किं कृत्वा कथंभूत इति तदाह महेष्वास इति । महत इति महः प्रणवः स एवेष्वासो धनुर्यस्य स तथा यथार्थकथनमेतत् अन्यत्र महांश्चासौ इष्वासो यस्येति स्वर्णवर्णलक्षणं रजोगुणाख्यं वर्म यस्य स तथा अक्षये प्रवृत्तिनिवृत्तिलक्षणे इपुधी यस्य स तथा एकादशेन्द्रियलक्षणायाश्चमूवा नाथः पञ्चेन्द्रियाण्येवाश्वा यस्य स तथा तम् आशु गच्छन्त्यस्ति जायत इत्यादिविकारं परिणामलक्षणमित्याशुगस्तं द्वे पुण्यपापलक्षणे कर्मणी एव चक्रे यस्य स तथा तम् एकः सूत्रात्मा वायुरक्षो यस्य स तथा तं त्रयः सत्त्वादिगुणा एव वेणवो ध्वजा यस्य स तथा तं पञ्चप्राणा एव विनतोन्नतप्रदेशा बन्धुराख्या यस्य स तथा तम् । अनेन प्राणसञ्चारहेतवो नाडीविशेषाः कथ्यन्ते आधारो वा ॥ १ ॥ ❀ ❀ एको मनआख्यो रश्मिः प्रग्रहो यस्य स च एको बुद्ध्याख्यो दमनः सारथिर्यस्य स चैकरश्म्येकदमनस्तम् । "बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । प्राणा बन्धुरमुद्दिष्टा गुणाः सत्त्वादयो ध्वजाः ॥ मूलवायुरक्षसंज्ञश्चक्रे द्वे पुण्यदुष्कृते । इन्द्रियाण्यश्वसंज्ञानि हृदयं नीडमुच्यते ॥ शीतोष्णलक्षणौ द्वौ तु कूबरौ शब्दपूर्वकम् । पञ्चप्रहरणं सप्तत्वगाद्या गुप्तयः स्मृताः ॥ पृथिव्याद्या विक्रमाख्या देहाख्यो रथ उच्यते ।" इत्यध्यात्मयोगे एकं हृदयलक्षणं नीडं यस्य स तथा तं द्वौ शीतोष्णलक्षणौ कूबरौ युगंधरौ यस्य स तथा तं पञ्चानामिन्द्रियाणां पञ्चशब्दादिविषयाणां च सन्निकर्षलक्षणानि प्रहरणानि यस्मिन्स तथा तं पञ्चसूनासाधनानि प्रहरणानि यस्मिन्निति वा सप्तत्वगाद्या धातवो वरूथो गुप्तिर्यस्य स तथा तं पञ्चानां भूतानां विक्रमः प्रभावो यस्मिन्स तथा तम् ॥ २ ॥ ❀ ❀ हैमोपस्करं मुकुटकुण्डलाभरणैः स्वर्णविकारैर्भूषितं

रथं रथ-गताविति धातोः ज्ञानलक्षणगमनसाधनं देहमारुह्याधिष्ठायेति अक्षयेषुधिरनन्तवृत्त्या लभ्यमानान्तःकरणोपाधिरिति वा इषून् रागादीनस्यति निरस्यति ग्लापयतीति इष्वासो ज्ञानलक्षणः स च महान् यस्य स इति वा ॥ ३ ॥ ❀ ❀ इषवश्च कार्मुकं चात्तं गृहीतं येन स तथा रागाद्या इषवः । कार्मुकं विवेककार्यं स्वकृत्यं मुञ्चत्यनेनेति निरुक्त्या । तत्र जाग्रद्विषयकानने मृगयां शब्दादिभोगलक्षणां चचार बुभुज इत्यन्वयः । अतदर्हां त्यागायोग्यां सद्बुद्धिलक्षणां विहायासद्बुद्धिलक्षणां चादायेति शेष इति विवेकः । मृग्यन्त इति मृगा विषयास्तेषां व्यसने भोगलक्षणे लालस उत्सुकः अन्यत्र हरिणानां हिंसनायोत्कटव्यापारवान् ॥ ४ ॥ ❀ ❀ आसुरीं हिंसालक्षणां वृत्तिं घोरात्मा विषयप्रसङ्गनिमित्तसंसारभयरहितः निर्गतोऽनुग्रहो दयालक्षणो यस्मात्स तथा न्यहनत् । हन-हिंसागत्योरिति नितरामगच्छदसेवतेत्यर्थः । निशितैर्बाणैः कपटमनोवृत्तिभिः वनेषु जाग्रद्विषयप्रदेशेषु वनगोचरांस्तत्रत्यशब्दादिविषय-लक्षणान्मृगान् ॥ ५ ॥ ❀ ❀ ननु राज्ञो हि मृगयासंजातपशुहिंसया न दोषः । 'राजा मृगार्थी मृगयां चरन् दोषैर्न लिप्यते' इति 'अग्नीषोमीयं पशुमालभेते'त्यादौ विहितत्वात्कथमासुरीं वृत्तिमाश्रित्येति निन्द्यत इति तत्राह तीर्थेष्विति । श्रुतिदृष्टेषु श्रुतिस्मृति-विहितेषु तत्तत्स्थानेषु राजा स्वविहिताचारनिष्ठया शोभमानो मेध्यान् पशूनजमृगप्रभृतीन् यावदर्थं यावत् प्रयोजनं लुब्धः फलार्थी हन्यादित्यलं नियम्यते विधिवाक्यैरिति शेषः, अध्यात्मेतिप्रमाणकेषु तीर्थेषु शास्त्रेषु विहितान्मेध्यान्मेधयोग्यान् ज्ञानयोग्यान् पशून् गोसधर्मान् रमणीयान् विषयान् वने विषयव्यवहारे वर्तमानो लुब्धो गृध्नुर्यावता देहावस्थितिस्तावन्मात्रमलमत्यर्थं हन्याद्गच्छेत् सेवार्थमिति शेष इति नियम्यते शिक्षाविषयीक्रियत इति । अलमिति विशेषणादलुब्धो लोकोपकारार्थं पशून् घ्नन् आत्मार्थादधिकमपि हननमपि कुर्वन्न दुष्यतीति तात्पर्यं ज्ञायते । तदुक्तम् "उपकारः सतां येन तत्कृत्वा नैव दुष्यति । अतीव निन्दितमपि बहुहिंसायुगेव वा ॥" अथ वा ज्ञानिनः कर्म न दुष्टमपि लिप्यत इति ॥ ६ ॥ ❀ ❀ ननु नियतकर्माकरणे ज्ञानिनोऽपि दुष्कर्मलेपः स्यादिति तत्राह य एवमिति । यो नियतमनियतं वा विद्वान् जानन्नेवं विविधं पुण्यं पापं वा कर्म कुर्वीत न वा कुर्वीत स ज्ञाता तेनोभय-विधेन कर्मणा न लिप्यते केन निमित्तेनेत्यत उक्तं ज्ञानेनेति कर्मलेपाभावे ज्ञानं कारणमित्यर्थः । "तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते । एवमेवंविदि पापं कर्म न श्लिष्यते" इति श्रुतेः । 'अथवा ज्ञानिनः कर्म न दुष्टमपि लिप्यते' इति स्मृतेश्च ॥ ७ ॥ ❀ ❀ अन्यपक्षे बाधकमाह अन्यथेति । अन्यथा ज्ञानाभावे । अनर्थोऽपि भवतीत्याह गुणप्रवाह इति ॥ ८ ॥ ❀ ❀ एवं प्रासङ्गिकीं कथां समाप्य प्रकृतमनुसरति तत्रेति । विषयलक्षणे वने चित्रवाजैरनेकाङ्कुरमुखाख्यपक्षोपेतैः शिलीमुखैः शिलावत् दृढमुखैर्लम्पटे-न्द्रियमनोवृत्तिविशेषैर्निर्भिन्नगात्राणां मृदितनानावयवानां करुणात्मनां पापनिमित्तेन मुक्तानामस्माकं परलोकेऽपि न गतिरस्तीति रुदितानामिव स्थितानां यथाशास्त्रमुक्तानां विषयाणां विप्लवो विनाशः समाप्तिलक्षणोऽभूदित्यन्वयः । अन्यच्च व्यक्तम् ॥ ९ ॥ ❀ ❀ शशान् वराहानिति । मेध्यान्महिषानित्यादिना त्वमेध्यान् शशानतिशयितानन्दलक्षणान्वरणीयत्वेनाहेयान्महिषान्महितं ददातीति निरुक्त्या सन-दान इति धातुस्तस्य डप्रत्ययः सकारस्य मूर्धन्यादेशः, गवयान् गतवयसः जरसं गतानिति शेषः, रुरून् रोदनहेतून् शं सुखं विलापयतीति शल्यकानित्येवमादिविषयान् निघ्नन् गच्छन्भुञ्जान इत्यर्थः ॥ १० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

स एकदेति त्रिकम् । टीकायामेका बुद्धिरविवेकवती । पञ्चविषया हतमृगस्थानीयाः । पूर्वत्र शब्दादयो वासनामयविषयाः । अत्र तु तद्वासना इति भेदः ॥ १–१३ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

धार्मिकस्यापि जीवस्य दैवात्तामसभावतः । षड्विंशे सद्विषयत्यागः पुनः प्राप्तिश्च वर्ण्यते ॥ ( १ ) ॥

धार्मिकस्य विवेकिनोऽपि जीवस्य कदाचिद्दैववशात्तामसभावोद्गमेनाविवेकतो निषिद्धविषयासक्तिः स्यादिति दर्शयन् विषयलौल्यातिरेकार्थमेव देहं रथरूपत्वेन वर्णयति । स एवैकस्मिन् समये रथमारुह्य पञ्चप्रस्थं वनमगादिति तृतीयेनान्वयः । महा-निष्वासो धनुः कर्तृत्वभोक्तृत्वाभिनिवेशो यस्य सः । पञ्चज्ञानेन्द्रियाण्यश्वा यस्य आशुगं शीघ्रगतिम् । द्वे अहन्ताममते ईषे दण्डिके यस्य द्वे पुण्यपापे चक्रे यस्य एकं प्रधानमक्षो यस्य त्रयो गुणा वेणवो ध्वजा यस्य पञ्च प्राणा बन्धुराणि निबन्धनानि यस्य एकं मनोरश्मिः प्रग्रहो यस्य सः एका बुद्धिर्दमनः सूतो यस्य तच्च तच्च । एकं हृदयं नीडं रथिन उपवेशस्थानं यत्र द्वौ शोकमोहौ कूबरौ युगबन्धनस्थानं यस्य पञ्चेन्द्रियव्यापाराः श्रवणादयः प्रहरणान्यस्त्राणि यस्य सप्त धातवो वरूथा रथरक्षार्थं चर्माद्यावरणानि यस्य पञ्चविक्रमं कथापक्षे विस्तृतविक्रमं पचि-विस्तारे अध्यात्मपक्षे पञ्चकर्मेन्द्रियाणि विक्रमा गमनानि यस्य हैमोपस्करं स्वर्णमयपरि-च्छदम् । अध्यात्मपक्षे हैमा हिमसम्बन्धिन उपस्करा अतिजाड्यादस्फूर्तय एव परिच्छदा यस्य स्वर्णवर्मा रजोगुणकवचः अक्षयेषुधिः अनन्तवासनः । एकादश चमूनाथाः सेनान्यो यस्य सः । पक्षे एकादशो मनोरूपश्चमूपतिर्यस्य सः । वासनाहेतोर्मनसः प्रग्रहत्वं सङ्कल्पविकल्पात्मकस्य मनसो बृहद्बलत्वेन वक्ष्यमाणस्य चमूनाथत्वमिति विभागः । पञ्चप्रस्थं पञ्चप्रस्थसंज्ञम् । पक्षे पञ्चशब्दादि-

महद्वस्तूनि प्रस्थाः सानवो यत्र तत् ॥ १-३ ॥ ❀ ❀ मृगयां परदारगमनादिपापम् । इषवो रागद्वेषादयः, कार्मुकं भोगाभिनिवेशरूपं, धर्म्मशीलां बुद्धिम् ॥ ४ ॥ ❀ ❀ न्यहनन्निति बाणादिकरणकहिंसादिपापं कृतवानित्यर्थः ॥ ५ ॥ ❀ ❀ ननु कथापक्षे राज्ञो मृगया विहितैव अध्यात्मपक्षेऽपि जीवस्य भोक्तृत्वाद्विषयभोग उचित एवेति किमिति निन्द्यत इत्यत आह तीर्थेष्विति त्रिभिः । अयं भावः—नहि मृगया विधीयते रागप्राप्तत्वात् किन्तु नियम्यते प्रवृत्तिः सङ्कोच्यते । नियममेव षड्विधं दर्शयति यदालमत्यर्थं लुब्धो रागी सन् हन्यात् तर्हि तीर्थेषु श्राद्धादिष्वेव । तत्रापि श्रुतिदृष्टेषु प्रख्यातेष्वेव न नित्यश्राद्धादिषु तत्रापि राजैव मेध्यानेव वन एव यावदुपयोगमेवेति एवं जीवस्य विषयसेवापि यावदुपयोगमेव न यथेष्टमित्यभ्यनुज्ञारूपो नियम एवेत्यर्थः ॥ ६ ॥ ❀ ❀ स तेन कर्मणा न लिप्यते । ज्ञानेनेति तत्कर्मजन्येन ज्ञानेन हेतुनेत्यर्थः ॥ ७ ॥ ❀ ❀ अन्यथा नियमोल्लङ्घनेन अन्तःकरणशुद्ध्यभावात् कर्तृत्वाभिमानमारूढः कर्मभिरनुबध्यते ततश्च गुणप्रवाहपतितोऽधो व्रजति । तेनाध्यात्मपक्षेऽपि निषिद्धेतरविषयभोग एव जीवस्योक्त इत्यर्थः ॥ ८ ॥ ❀ ❀ प्रासङ्गिकं परिसमाप्य प्रकृतमाह तत्रेति । विचित्रपक्षैः शरैर्विप्लवो नाशः । पक्षे विविधदोषयुक्तैरिन्द्रियैर्विविधहिंसादिपापं करुणात्मनां कृपालूनामस्मादृशां दुःसहः । अत एव त्वमेव प्रबोध्यस इति भावः ॥ ९ ॥ ❀ ❀ श्रममध्यगादिति धार्मिकजीवो हि कथञ्चिद्दैववशात् कश्चित् कालमधर्मं कृत्वा अनुतापं प्राप्तः स्यादित्यर्थः ॥ १० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तदेव सुषुप्त्यवस्थां जाग्रदवस्थां चोक्त्वाथ षड्विंशे मृगयाव्याजेन स्वप्नावस्थां पुनर्जाग्रदवस्थां च प्रपञ्चयति स इति । स पुरञ्जनः एकदा स्वप्नवेलायाम् अध्यात्मपक्षे महान् कर्तृत्वभोक्तृत्वाद्यभिनिवेशो धनुर्यस्य सः रथं जीवस्य स्वप्नशरीरादिनिर्मातृत्वे अनिष्टपाकादिनिर्मातृत्ववत् अनिष्टशरीरादिनिर्मातृत्वासंभवात् परमेश्वरनिर्मितं स्वप्नशरीरं जाग्रद्देहस्य तु शतसंवत्सरोपभोग्यपुरत्वेनोक्तत्वात् आरुह्य पञ्चप्रस्थं वनमगादिति तृतीयेनान्वयः । कीदृशं रथं पञ्चाश्वम् पञ्च ज्ञानेन्द्रियाण्यश्वा यस्य तमाशुगं शीघ्रगं द्वे अहंकारममकाररूपे ईषे दण्डिके यस्य तम् , द्वे पुण्यपापरूपे चक्रे यस्य तम् , एकं प्रधानमक्षो यस्य तम् , त्रयो गुणाः वेणवो ध्वजा यस्य, पञ्च प्राणाः बन्धुराणि बन्धनानि यस्य तम् ॥ १ ॥ ❀ ❀ एकं मनो रश्मिर्यस्य तम् , एका बुद्धिर्दमनः सूतो यस्य तम् , अनेकरूपत्वाद् बुद्धेः कलत्रत्वं युक्तमेव एकं हृदयं नीडं यस्य तम् , द्वौ शोकमोहौ कूबरं बन्धनस्थानं यस्य तम् , पञ्च चेन्द्रियार्थाः शब्दादयः प्रह्रियन्ते आपात्यन्ते यस्मिन्निति पञ्चप्रहरणस्तम् , सप्त धातवो वरूथाः चर्माद्यावरणानि यस्य तम् , पञ्च कर्मेन्द्रियाणि विक्रमाः गतिप्रकारा यस्य तम् ॥ २ ॥ ❀ ❀ हैमोपस्करं स्वप्नदृष्टपुण्यानुसारेण स्वर्णालंकारयुक्तम् स्वर्णमयं वर्म कवचं यस्य सः रजोगुणवृत्तिरित्यर्थः, अक्षयो बहुबाणयुक्तः इषुधिर्निषङ्गो यस्य सः नानावासनाश्रयाहंकारधर इत्यर्थः, एकादशो मनोरूपश्चमूनाथो यस्य सः, मनसः अनेकरूपत्वात् रश्मित्वं चमूनाथत्वं युक्तमेव, पञ्चेन्द्रियार्थाः प्रकर्षेण तिष्ठन्तीति प्रस्थाः मृगाः यस्मिन् तद्वनमगात् ॥ ४ ॥ ❀ ❀ आत्ताः गृहीताः वासनारूपाः इषवः कर्तृत्वभोक्तृत्वाद्यभिनिवेशरूपः कार्मुकश्च येन सः । अतदर्हाम् त्यागानर्हाम् जायां जाग्रद्व्यवहारयोग्यां बुद्धिं विहाय मृग्यन्ते इति मृगाः इन्द्रियार्थास्तद्व्यसने भोगे लालसा यस्य सः । मृगयां कथापक्षे वध्यपश्वन्वेषणरूपामध्यात्मपक्षे इन्द्रियार्थान्वेषणरूपां चचार ॥ ४ ॥ ❀ ❀ घोरात्मा दुष्टचित्तः बाणैः वासनारूपैः वनेषु भोगस्थानेषु वनगोचरान् शब्दादिरूपान् मृगान् न्यहनत् हन-हिंसागत्योरित्यस्मात् अग्रहीत् ॥ ५ ॥ ❀ ❀ 'आसुरीं वृत्तिमास्थाय घोरात्मा निरनुग्रहः' इत्यर्द्धेन कथापक्षे मृगयाध्यात्मपक्षे विषयसेवा चानिष्टेति द्योतितं तदेवोपपादयति । तीर्थेष्विति त्रिभिः । यद्यलमत्यर्थं लुब्धो भवति तथापि तीर्थेषु श्राद्धादिष्वेव तत्रापि प्रतिदृष्टेषु प्रख्यातेष्वेव न तु नित्यश्राद्धादिषु तत्रापि राजैव मेध्यानेव वने यावदुपयोगमेव पशून् हन्यादिति षड्भिः प्रकारैर्नियम्यते पशुहिंसा संकोच्यते, न तु 'अग्नीषोमीयं पशुमालभेते'-त्यादिवाक्यैर्विधीयते रागप्राप्तत्वात् । एवं जीवस्य विषयसेवापि 'ऋतौ भार्यामुपेयादि'त्यादिवाक्यैः संकोच्यते इत्यर्थः ॥ ६ ॥ ❀ ❀ यो मानवः कर्म हिंसात्मकं विषयसेवनात्मकं च एवं नियतं षड्भिः प्रकारैः संकोचितमपि यो विद्वान् तत्त्ववित् स तेन ज्ञानेन तत्त्वबोधेन न कुर्वीत अत एव कर्मणा न लिप्यते इति नकारस्योभयत्र सम्बन्धः ॥ ७ ॥ ❀ ❀ विद्वान् हिंस्रं कर्म न करोति मन्दाधिकारी तूक्तरीत्या नियमेन कुर्यात् अन्यथा तु तादृशकर्म कुर्वाणः यतो मानारूढो यतो गुणप्रवाहपतितोऽत एव नष्टप्रज्ञो निबध्यते कर्मणेति शेषः । अत एवाधो व्रजति ॥ ८ ॥ ❀ ❀ प्रासंगिकमुक्त्वा प्रकृतमाह तत्रेति । विप्लवो विनाशः ॥ ९-१० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

पञ्चविंशे तु बालस्य जाग्रत्सुप्तिनिरूपणम् । किञ्चित्प्रौढस्य षड्विंशे स्वप्नावस्था निरूप्यते ॥ ( १ ) ॥

एवं पूर्वाध्याये बालस्यापूर्वसंस्कारवशात् यद्यपि स्वप्नदर्शनमपि सम्भवति तथापि तस्य तदानीं बुद्धीन्द्रियादेरपौष्कल्यात् तत्स्मरणं नास्तीति जाग्रत्सुषुप्त्यवस्थाद्वयनिरूपणं कृतं, इदानीं किञ्चित्प्रौढस्य स्वप्नदृष्टपदार्थस्मरणसम्भवात् स्वप्नावस्थां निरूपयति, तत्र जाग्रद्देहस्य शतसंवत्सरोपभोग्यपुरत्वेनोक्तत्वात् स्वप्नदेहस्य तत्कालीनस्य सपरिकरस्य रथत्वमाह—स इति त्रिभिः । एकदा स

राजा पुरञ्जनो महेष्वासो महानिष्वासो धनुर्यस्य स रथमारुह्य पञ्चप्रस्थसञ्ज्ञकं वनमगादिति तृतीयेनान्वयः। रथमेव विशिनष्टि पञ्चाश्वमिति। पञ्चाश्वा यस्य तम्, आशु गच्छतीत्याशुगं शीघ्रगामिनम्, द्वे ईषे दण्डिके यस्य तम्, द्वे चक्रे यस्य तम्, एकः अक्षो यस्य तम्, त्रयो वेणवो ध्वजा यस्य तम्, पञ्च बन्धुराणि बन्धनानि यस्य तम्। पक्षान्तरे तु स्वप्नदेहो रथः, कर्तृत्वाद्यभिनिवेशो धनुः पञ्चेन्द्रियाणि पञ्चाश्वाः, संवत्सरवेगो गतिः, द्वे अहन्ताममते ईषे, द्वे पुण्यपापे चक्रे, एकं प्रधानमक्षः, त्रयः सत्त्वादयो गुणा ध्वजाः। पञ्चप्राणा बन्धनानि॥ १॥ ❀ ❀ एको रश्मिः प्रग्रहो यस्य एको दमनः सूतो यस्य तं च तं च, एकं नीडं रथिन उपवेशस्थानं यस्मिंस्तम्, द्वौ कूबरौ युगबन्धनस्थाने यस्य तम्, पञ्चानां वस्तूनां प्रहरणं प्रक्षेपो यस्मिंस्तम्, यद्वा पञ्च प्रहरणानि आयुधानि यस्मिंस्तम्, सप्त वरूथा रक्षार्थमावरणानि यस्य तम्, पञ्च विक्रमा गतिप्रकारा यस्य तम्। अध्यात्मपक्षे तु एकं सवासनं मनो रश्मिः, एका बुद्धिः सूतः, एकं हृदयं नीडं, द्वौ शोकमोहौ कूबरौ, पञ्च शब्दादीनि प्रहरणं यत्र, यद्वा पञ्चेन्द्रियव्यापाराः श्रवणादय आयुधानि, सप्त धातवस्त्वगादयो वरूथाः, पञ्च कर्मेन्द्रियव्यापाराः गमनादयो विक्रमाः॥ २॥ ❀ ❀ हैमाः उपस्करा आभरणानि यस्य तं हैमोपस्करं रथम्। स्वर्णमयं वर्म कवचं यस्य स स्वर्णवर्मा। इषुधिः निषङ्गः अक्षयः सदा बाणपूर्णः इषुधिर्यस्य सः। एकादशश्चमूनाथो यस्य सः। पञ्चप्रस्थसञ्ज्ञकं वनमगात्। पक्षान्तरे तु हेमशब्देन तत्सदृशवर्णस्य रजोगुणस्य ग्रहणं, स्वप्नप्रपञ्चस्य राजसत्वात्, अतो रजस एव शरीराभरणत्वं च ज्ञेयम्। अनन्ता भोगवासना बाणास्तद्वानहङ्कारः इषुधिः। एकादशः सङ्कल्पविकल्पात्मको मन एव ज्ञानकर्मभेदेन दशेन्द्रियलक्षणा या चमूस्तस्या नाथः नायकः, पञ्च पृथिव्यादयः प्रस्थाः सानवो तत्र तद्वनं स्वप्नप्रदर्शनस्थानं नाडीविशेषमगादित्यर्थः॥ ३॥ ❀ ❀ अतदर्हां तस्य त्यागस्यायोग्यां जायां विहायैवं वनं गतः, आत्ता गृहीता इषवो बाणाः कार्मुकं धनुश्च येन स तत्र वने मृगयां चचार हननार्थं पशूनन्वेषितवानित्यन्वयः। एवं भार्यां विहाय गमने हेतुमाह—मृगेति, यतो मृगे मृगमांसभक्षणे व्यसनं स्वभावस्तेन लालसा अतिस्पृहा यस्य स तथाभूतः। ननु कथमेवं हिंसायां तस्य प्रवृत्तिरित्याशङ्क्याह—दृप्त इति, यतो गर्वित इत्यर्थः। पक्षान्तरे तु एवं स्वप्नदेहं निरूप्य स्वप्नदर्शनं निरूपयति—चचारेति। इषवो रागादयो दोषाः, अहं कर्ता भोक्ता चेत्यभिनिवेशः कार्मुकम्। मृगाः शब्दादयो विषयाः, तत्र व्यसनं तद्भोक्तुं स्वभावस्तेन लालसाऽतिस्पृहा यस्य सः। जाया विवेकवती जाग्रद्बुद्धिः, सा च त्यागानर्हैव। मृगयाचरणं च विषयान्वेषणमेव। एते दोषाः स्वप्नदर्शनं च गर्वेणैव भवन्ति न निरभिमानेनेति दृप्त इत्युक्तम्॥ ४॥ ❀ ❀ यतो निरनुग्रहः कृपारहितः अतः आसुरीं क्रूरां वृत्तिमाश्रित्य घोरात्मा भयङ्करस्वरूपः सन् वनेषु वनगोचरान् मृगान् निशितैस्तीक्ष्णैर्बाणैर्न्यहनदित्यन्वयः। पक्षान्तरे तु जाग्रद्दशायां यतो निरनुग्रहः ततस्तत्संस्कारेण स्वप्नेऽप्यासुरीं वृत्तिमाश्रित्य घोरात्मा सन् वनेषु स्वप्नस्थानेषु वनगोचरान् तत्र कल्पितान् शब्दादिविषयान् बाणैः रागादिकल्पिततत्तदिन्द्रियवृत्तिभिर्न्यहनत्, भुक्तवानित्यर्थः॥ ५॥ ❀ ❀ ननु मृगयाऽपि राज्ञो विहितैव किमिति चकार मृगयामित्यादिना सा निन्द्यते इत्याशङ्क्य तत्र निर्णयमाह—तीर्थेष्विति त्रिभिः। न हि मृगया शास्त्रेण विधीयते तस्या रागप्राप्तत्वेन विधेयत्वायोगात्, किन्तु नियम्यते नियमकरणेन यथेष्टप्रवृत्तिः सङ्कोच्यते। नियममेव षड्विधं दर्शयति यद्यलमत्यर्थं लुब्धो मांसासक्तः सन् पशून् हन्यात्तदा तीर्थेषु श्राद्धादिष्वेव हन्यात्। तत्रापि प्रतिदिष्टेषु शास्त्रेणोपदिष्टेषु येषु हननं शास्त्रेण विहितं तेष्वेव, न नित्यश्राद्धादिष्वित्यर्थः। तत्रापि राजैव, नान्यः। तत्रापि मेध्यान् विहितानेव, नान्यान्। तत्रापि वने एव, नान्यत्र। तत्रापि यावदर्थं यावदुपयोगमेव, नाधिकमिति। पक्षान्तरे तु ननु विषयभोगोऽपि जीवस्य विहित एव, किमित्येवं विनिन्द्यते इत्याशङ्क्याह—तीर्थेष्विति त्रिभिः। यद्यलमत्यर्थं लुब्धो विषयासक्तः पशून् हन्यात् विषयान् भुञ्जीत तर्हि तीर्थेषु भगवत्सेवाश्राद्धयज्ञादिनिमित्तेषु सत्स्वेव। भगवत्प्रसादत्वेनैव भुञ्ज्यात्, न तन्निवेदनं विना। 'यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः। भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्' इति गुणदोषश्रवणात्। तत्रापि शास्त्रेण प्रतिदिष्टेषु, न स्वयं कल्पितेषु। तत्रापि मेध्यान् योग्यत्वेन हितानेव, न स्वाभिलषितान् निषिद्धानपि। तत्रापि वने विहिते देशकाले एव, न निषिद्धेऽपि तत्रापि यावदर्थं स्वदेहनिर्वाहार्थमेव, न सुखाद्यर्थमिति नियम्यते यथेष्टभोगप्रवृत्तिः शास्त्रेण सङ्कोच्यते एव, न विषयभोगो जीवस्य विधीयते रागप्राप्तत्वादनर्थहेतुत्वाच्चेत्यर्थः॥ ६॥ ❀ ❀ अतो यो मानव एवं विद्वान् प्राणिनां यथेष्टं विषयभोगे विधिर्नास्ति किन्तु भगवन्निवेदितान्नादिना देहादिनिर्वाहार्थं नियममात्रमिति ज्ञानवान् नियतं शास्त्रे नियमितमेव परलोकार्थं लोकनिर्वाहार्थं च कर्म कुर्वीत स तेन नियमेनानुष्ठितेन कर्मणा जातेन ज्ञानेन हेतुना संसारबन्धनैर्धर्माधर्मलक्षणैर्न लिप्यते न निबध्यते, 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते' इति वचनात्। उभयत्रैक एवार्थः। एवमग्रेऽपि॥ ७॥ ❀ ❀ अन्यथा शास्त्रनियमोल्लङ्घनेन यो मानो रूढोऽभिमानस्तेन कर्म कुर्वाणो भवति स तु तैः कर्मभिर्निबध्यते, ततश्च गुणप्रवाहे संसारे पतितः पुनरपि पूर्वसंस्कारे अन्ननिषिद्धानुष्ठानात् नष्टप्रज्ञस्ततोऽप्यधो नरकं व्रजतीत्यन्वयः॥ ८॥ ❀ ❀ एवं प्रासङ्गिकमुक्त्वा प्रकृतमनुसरति—तत्रेति। तत्र वने पुरञ्जनस्य चित्राः वाजाः पक्षा येषां तैः शिलीमुखैर्बाणैर्भिन्नानि गात्राणि येषां तेषां दुःखितानां मृगाणां विप्लवो नाशोऽभूत्। कथम्भूतः करुणात्मनां कृपालूनां दुस्सहः। पक्षान्तरे तु 'पुरा सृष्टा ह्यौषधयो ब्रह्मणा या विशाम्पते। भुज्यमाना मया दृष्टा असद्भिरधृतव्रतैः॥ चौरीभूतेऽथ लोकेऽहं यज्ञार्थेऽग्रसमौषधीः' इति पृथिवीवाक्येन असद्भिर्भुज्यमानानां अन्नादिविषयाणां पुनः प्रसवाभावेन विनाश एव। 'भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्' इति भगवद्वाक्येन भोक्तॄणां दोषश्रवणाच्च कृपालूनां कृपया कथमेवं औषध्यादिविनाशेऽग्रे प्राणिनां निर्वाहः

कथं वा यज्ञादिधर्मप्रवृत्तिः कथं वैवं विनाशकर्तॄणां भद्रमिति विचारपराणां सतामयं विनाशो दुस्सहो भवत्येवेति भावः ॥ ९ ॥ ❀ ❀ तत्र शशादीन् विविधान् जन्तून् विनिघ्नन् श्रममध्यगादित्यन्वयः। पक्षान्तरे स्वप्ने नानाविधविषयान् सम्पादयन् श्रान्तो जात इत्यर्थः ॥ १० ॥

### भाषानुवादः

### राजा पुरञ्जनका शिकार खेलने वनमें जाना और रानीका कुपित होना

श्रीनारदजी कहते हैं—राजन् ! एक दिन राजा पुरञ्जन अपना विशाल धनुष, सोनेका कवच और अक्षय तरकस धारणकर अपने ग्यारहवें सेनापतिके साथ पाँच घोड़ोंके शीघ्रगामी रथमें बैठकर पञ्चप्रस्थ नामके वनमें गया। उस रथमें दो ईषादण्ड ( बंब ), दो पहिये, एक धुरी, तीन ध्वजदण्ड, पाँच डोरियाँ, एक लगाम, एक सारथि, एक बैठनेका स्थान, दो जुए, पाँच आयुध और सात आवरण थे। वह पाँच प्रकारकी चालोंसे चलता था तथा उसका साज-बाज सब सुनहरा था ॥ १–३ ॥ ❀ ❀ यद्यपि राजाके लिये अपनी प्रियाको क्षणभर भी छोड़ना कठिन था, किन्तु उस दिन उसे शिकारका ऐसा शौक लगा कि उसकी भी परवा न कर वह बड़े गर्वसे धनुष-बाण चढ़ाकर आखेट करने लगा ॥ ४ ॥ ❀ ❀ इस समय आसुरीवृत्ति बढ़ जानेसे उसका चित्त बड़ा कठोर और दयाशून्य हो गया था, इससे उसने अपने तीखे बाणोंसे बहुत-से निर्दोष जंगली जानवरोंका वध कर डाला ॥ ५ ॥ ❀ ❀ जिसकी मांसमें अत्यन्त आसक्ति हो, वह राजा केवल शास्त्रप्रदर्शित कार्योंके लिये वनमें जाकर आवश्यकतानुसार अनिषिद्ध पशुओंका वध करे; व्यर्थं पशुहिंसा न करे। शास्त्र इस प्रकार उच्छृङ्खल प्रवृत्तिको नियन्त्रित करता है ॥ ६ ॥ ❀ ❀ राजन् ! जो विद्वान् इस प्रकार शास्त्रनियत कर्मोंका आचरण करता है, वह उस कर्मानुष्ठानसे प्राप्त हुए ज्ञानके कारणभूत कर्मोंसे लिप्त नहीं होता ॥ ७ ॥ ❀ ❀ नहीं तो, मनमाना कर्म करनेसे मनुष्य अभिमानके वशीभूत होकर कर्मोंमें बँध जाता है तथा गुण-प्रवाहरूप संसारचक्रमें पड़कर विवेकबुद्धिके नष्ट हो जानेसे अधम योनियोंमें जन्म लेता है ॥ ८ ॥ ❀ ❀ पुरञ्जनके तरह-तरहके पंखोंवाले बाणोंसे छिन्न-भिन्न होकर अनेकों जीव बड़े कष्टके साथ प्राण त्यागने लगे। उसका वह निर्दयतापूर्ण जीव-संहार देखकर सभी दयालु पुरुष बहुत दुःखी हुए। वे इसे सह नहीं सके ॥ ९ ॥ ❀ ❀ इस प्रकार वहाँ खरगोश, सूअर, भैंसे, नीलगाय, कृष्णमृग, साही तथा और भी बहुत-से मेध्य पशुओंका वध करते-करते राजा पुरञ्जन बहुत थक गया ॥ १० ॥

ततः क्षुत्तृट्परिश्रान्तो निवृत्तो गृहमेयिवान्। कृतस्नानोचिताहारः संविवेश गतक्लमः ॥ ११ ॥
आत्मानमर्हयाञ्चक्रे धूपालेपस्रगादिभिः। साध्वलङ्कृतसर्वाङ्गो महिष्यामादधे मनः ॥ १२ ॥
तृप्तो हृष्टः सुदृप्तश्च कन्दर्पाकृष्टमानसः। न व्यचष्ट वरारोहां गृहिणीं गृहमेधिनीम् ॥ १३ ॥
अन्तःपुरस्त्रियोऽपृच्छद्विमना इव वेदिषत्। अपि वः कुशलं रामाः सेश्वरीणां यथा पुरा ॥ १४ ॥
न तथैतर्हि रोचन्ते गृहेषु गृहसम्पदः। यदि न स्याद् गृहे माता पत्नी वा पतिदेवता।
व्यङ्गे रथ इव प्राज्ञः को नामासीत दीनवत् ॥ १५ ॥
क्व वर्तते सा ललना मज्जन्तं व्यसनार्णवे। या मामुद्धरते प्रज्ञां दीपयन्ती पदे पदे ॥१६॥

### रामा ऊचुः

नरनाथ न जानीमस्त्वत्प्रिया यद्व्यवस्यति। भूतले निरवस्तारे शयानां पश्य शत्रुहन् ॥१७॥

### [१]नारद उवाच

पुरञ्जनः स्वमहिषीं निरीक्ष्यावधुतां भुवि। तत्सङ्गोन्मथितज्ञानो वैक्लव्यं परमं ययौ ॥१८॥
सान्त्वयन् श्लक्ष्णया वाचा हृदयेन विदूयता। प्रेयस्याः स्नेहसंरम्भलिङ्गमात्मनि नाभ्यगात् ॥१९॥
अनुनिन्येऽथ शनकैर्वीरोऽनुनयकोविदः। पस्पर्श पादयुगलमाह चोत्सङ्गलालिताम् ॥२०॥

---

१. प्राचीने पाठे 'नारद उवाच' अयमंशो न।

अन्वयः—ततः क्षुत्तृट्परिश्रान्तः निवृत्तः गृहम् एयिवान् कृतस्नानोचिताहारः गतक्लमः संविवेश ॥ ११ ॥ ❀ ❀ धूपालेपस्रगादिभिः आत्मानम् अर्हयांचक्रे साध्वलङ्कृतसर्वांगः महिष्याम् मनः आदधे ॥ १२ ॥ ❀ ❀ सुदृप्तः तृप्तः हृष्टः च कंदर्पाकृष्टमानसः वरारोहाम् गृहमेधिनीम् गृहिणीम् न व्यचष्ट ॥ १३ ॥ ❀ ❀ वेदिषत् विमनाः इव अंतःपुरस्त्रियः अपृच्छत् रामाः यथा पुरा तथा सेश्वरीणाम् वः अपि कुशलम् ॥ १४ ॥ ❀ ❀ एतर्हि यदि माता वा पतिदेवता पत्नी न स्यात् गृहेषु गृहसंपदः तथा न रोचन्ते व्यंगे रथे इव गृहे दीनवत् को नाम प्राज्ञः आसीत ॥ १५ ॥ ❀ ❀ या पदे पदे प्रज्ञाम् दीपयन्ती व्यसनार्णवे मज्जंतम् माम् उद्धरते सा ललना क्व वर्तते ॥ १६ ॥ ❀ ❀ शत्रुहन् नरनाथ त्वत्प्रिया यत् व्यवस्यति न जानीमः निरवस्तारे भूतले शयानाम् पश्य ॥ १७ ॥ ❀ ❀ तत्संगोन्मथितज्ञानः पुरंजनः भुवि अवधुताम् स्वमहिषीम् निरीक्ष्य परमम् वैक्लव्यं ययौ ॥ १८ ॥ ❀ ❀ विदूयता हृदयेन श्लक्ष्णया वाचा सांत्वयन् आत्मनि प्रेयस्याः स्नेहसंरंभलिंगम् न अभ्यगात् ॥ १९ ॥ ❀ ❀ अथ अनुनयकोविदः वीरः शनकैः अनुनिन्ये पादयुगलम् पस्पर्श च उत्सङ्गलालिताम् आह ॥ २० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

तदेवं स्वप्नावस्था दर्शिता। इदानीं पुनरपि विवेकवत्या बुद्ध्या रममाणस्य पुत्रादिसन्ततिं प्रपंचयिष्यन्कथासौन्दर्याय तस्याः प्रणयकुपिताया अनुनयं प्रस्तावसहितमाह तत इत्यारभ्य यावदध्यायसमाप्ति। एयिवानागतः कृतं स्नानमुचित आहारश्च येन। संविवेश शय्यामाश्रितः ॥ ११-१२ ॥ ❀ ❀ गृहमेधिनीं विवेकवतीं सात्त्विकीं बुद्धिं राजस्यां बुद्ध्यां वर्तमानो नापश्यत् ॥ १३ ॥ ❀ ❀ हे वेदिषत् हे प्राचीनबर्हिः! अन्तःपुरस्त्रियस्तत्सखीः। सेश्वरीणां स्वामिनीसहितानाम्। यथा पुरेत्यादि पृथग्वाक्यम् ॥ १४ ॥ ❀ ❀ व्यंगे चक्राद्यंगहीने ॥ १५-१६ ॥ ❀ ❀ निरवस्तारे आस्तरणरहिते ॥ १७ ॥ ❀ ❀ अवधुतां त्यक्तदेहादराम्। तत्संगेनोन्मथितं व्याकुलं ज्ञानं यस्य ॥ १८ ॥ ❀ ❀ स्नेहसंरंभः प्रणयकोपस्तस्य लिंगं कुटिलदृष्ट्यादि स्वस्मिन्न लब्धवान् ॥ १९ ॥ ❀ ❀ उत्संगमारोप्य लालिताम् ॥ २० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ततो मृगयाश्रमोत्तरम्। क्षुत्तृट्परिश्रान्त इति। कृतानां दुष्कृतानां श्रवणेन व्याकुल इत्यर्थः। निवृत्तः पापेभ्यो विरतः गृहमेयिवानित्यधर्ममर्य्यादां विहाय पुनर्धर्ममर्य्यादायां स्थातुमियेषेत्यर्थः। कृतस्नान इति। ब्राह्मणानामन्त्र्य पापप्रायश्चित्तं कृतवानित्यर्थः। उचिताहारः मांसमद्याद्यशुचिभक्षणं तत्त्याजेत्यर्थः। संविवेश किंचित्स्थिरीवभूवेत्यर्थः। गतक्लमस्त्यक्तविषयपरिश्रमः ॥ ११ ॥ ❀ ❀ आत्मानमर्हयांचक्रे इति। साधूनमुनीन्विद्विषश्च संमान्यानीय तैः स्वान्तःकरणं शोधयामासेत्यर्थः। कैर्धूपादिभिरिति ज्ञानवैराग्यादिनानोपाख्यानोपदेशैः 'साध्वलंकृतसर्वाङ्गः' इति शास्त्रानुसरणीकृतसर्वचित्तवृत्तिक इत्यर्थः। महिष्यां पूर्वावस्थाप्राप्तायां धर्मशीलायां स्वबुद्धावित्यर्थः ॥ १२ ॥ ❀ ❀ तृप्त इत्यादिनाऽधर्मसंस्कारापगम उक्तः। कन्दर्पाकृष्टमानस इति। पूर्वदशावर्त्तिनीं धर्मनिष्ठावतीं बुद्धिं युवतिमिव प्राप्तुमत्युत्सुक इत्यर्थः। न व्यचष्टेति। कथापक्षे मृगयाव्याजेन वनं गत्वा कामपि कामिनीं रमयामासेति पुरंजनी मानिनी बभूवेति हेतोरिति भावः। अध्यात्मपक्षे—आगंतुकपापकृतमालिन्यस्य निःशेषानपगमात् प्राक्तनी धर्मप्रयोजिका बुद्धिरीप्सितापि न शीघ्रमाविर्भवेदित्येव विवक्षितम् ॥ १३ ॥ ❀ ❀ पक्षेन्तःपुरस्त्रीरन्तःकरणवृत्तीः पूर्वदशावस्था धर्मप्रवर्त्तिनीर्मनाक् प्रादुर्भूता वीक्ष्य परामर्श। हंतैतादृश्य एव मम बुद्धिवृत्तयो यदि साम्प्रतिकपापसंस्कारेणोच्छिद्यमानाः स्थिरास्स्युस्तदैव ममोद्धार इति कुशलप्रश्नस्यार्थः। ननु विषयभोगेन सुखी भव किन्ते धर्म्मेणेत्यत आह—एतर्हि इदानीं निषिद्धविषया न रोचन्ते ॥ १४ ॥ ❀ ❀ माता विष्णुभक्तिः। पत्नी धर्मपत्नी ॥ १५ ॥ ❀ ❀ क्व वर्त्तत इति। बुद्धिवृत्तय एव काश्चन काश्चनानुभूयन्ते न तु वस्तुतः सा बुद्धिरिति मनसि खिद्यते स्म पदे पदेऽनुक्षणं मम प्रज्ञामुदीपयन्ती भगवद्विषयज्ञानमुद्बोधयन्ती या मामुद्धरति संसारादिति शेषः। सा ललना शोभना बुद्धिः क्व वर्त्तत इत्यन्वयः। उद्धरत इति वर्त्तमानसमीपे भविष्यति लट् ॥ १६ ॥ ❀ ❀ पक्षे तस्य हृदयमेव तस्याः पुष्पपर्यंकस्तस्माद्विच्युतिरेव तस्याः सद्बुद्धेर्निरवस्तारे भूतले शयनं, नरैः कामादिविक्षिप्तैस्त्वमेव तन्नाशार्थं नाध्यसेऽतस्तव तस्याः कामादिजिहीर्षावत्या बुद्धेस्त्यागो नोचित इति भावः। अत्र हेतुर्द्वितीयामन्त्रणं हे शत्रुहन् त्यक्तपापोसीति भावः ॥ १७ ॥ ❀ ❀ पक्षेऽवधुतां वृक्षे स्वेनैव स्वहृदयाच्च्यावितत्वात्खण्डितां निरीक्ष्य हन्त ममैवायं महापराध इति विचार्य तत्संगेन तस्याः पुनरादित्सयोन्मथितज्ञानस्तिरस्कृतस्वबुद्धिक इत्यर्थः। वैक्लव्यं दैन्यम् ॥ १८ ॥ ❀ ❀ सान्त्वयन्निति। मद्भाग्यादियं मे प्राक्तनी बुद्धिः पुनरप्याविर्भवति यां विनैव मम दुर्गतिरिति मनोनुलापः प्रेमसंरम्भस्तु चित्तं नाभ्यगादिति। ममाप्येवं पापाचरणं केन कारणेनाभूदिति क्षणं परामर्श ॥ १९ ॥ ❀ ❀ अनुनिन्य इति। पुनरद्यारभ्य दुर्विषयभोगो नैव कार्य इति पस्पर्श पादयुगलमिति। अहंकारत्यागसाधुजनसम्मानावेव तस्याः पादौ पस्पर्श प्राप। उत्संगलालितां स्वहृदयनिकटमानीताम् ॥ २० ॥

## श्रीमद्वीरराघवव्याख्या

एवं राजस्या बुद्धेः कार्यभूतां जाग्रदवस्थां तामस्याः बुद्धेः कार्यभूतां स्वप्नावस्थां चाभिधायेदानीं विद्वान् कुर्वीतेति सूचितविवेकः कथमुदेतीति विवित्सायां प्रणयकलहनिमित्तक्रोधाविष्टप्रियानुनयकथनव्याजेन संसारिणो जीवस्य विवेकात्मसात्त्विक-बुद्धेर्दौर्लभ्यं द्योतयन् "प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये। बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी" इत्युक्तसात्त्विक-बुद्ध्यलाभदशायां दैवात्तदलाभनिमित्तपरितापोदयं तत्तल्लिप्सां तत्तदुचितसाधनैस्तल्लब्धिं च द्योतयन् कथापक्षे तत्सौन्दर्याय तां बुद्धिं महिषीत्वेनेन्द्रियवृत्तीरन्तःपुरस्त्रीत्वेन परिकल्प्य तदनुनयप्रकारमाह तत इत्यादिना। क्षुत्तृड्भ्यामशनायापिपासाभ्यां परिश्रान्तः स्वाप्नशरीरेऽपि क्षुत्तृषोरनुवृत्तेरेवमुक्तम्। ततः स्वाप्नविषयानुभवरूपमृगयाया निवृत्तः गृहं पुरत्वेन रूपितजाग्रद्देहगतहृदयस्थानमेयि-वान्प्राप्तः। ततः कृतं स्नानमुचित आहारश्च येन सः अत एव गतश्रमः सम्यगुपविष्टवान्॥ ११॥ ❀ ❀ ततो धूपादिभिरात्मान-मर्हयांचक्रे ततः साधु सम्यगलंकृतानि सर्वाण्यङ्गानि येन सः महिष्यां मन आदधे। कृतस्नानोचिताहार इत्यनेन सुखजनकविवेकात्म-सात्त्विकबुद्ध्युत्पत्तिप्रारम्भावस्थायाः सुखकरत्वं सूच्यते। स्नानाहारधूपालेपनस्रग्भूषणाद्यलङ्कारैर्जातानन्द इव महिष्यां विवेकात्मिकायां बुद्धौ मन आदधे निहितवानित्यर्थः कथापक्षे तु स्पष्टोऽर्थः॥ १२॥ ❀ ❀ उचिताहारेण तृप्तः धूपालेपस्रगादिभिर्हृष्टः सुदृप्तः तृप्तिहृष्टिभ्यां सुतरां दृप्तः अत एव च कन्दर्पेणाकृष्टं वशीकृतं मानसं यस्य सः गृहमेधिनः स्वस्य संबन्धिनीं गृहिणीं गृहमस्या अस्तीति तां स्वाश्रय एव स्थितां वरारोहां वरस्त्रियं न व्यचष्ट न ददर्श यथा कामपरवशः स्वगृहे एव क्वचिदन्तर्हितां प्रियां नापश्यत्तथायं जीवो विवेकात्मकबुद्धिलिप्सापरवशस्तां स्वाश्रयस्थितां न लब्धवानित्यर्थः॥ १३॥ ❀ ❀ हे वेदिषत्! प्राचीनबर्हिः! विमना इव दुःखितमना इवान्तःपुरस्त्रियः तत्सखीरप्रच्छत्पुरञ्जनः तदलाभनिमित्तवैमनस्यः बुद्धिमूलकेन्द्रियवृत्तीः पप्रच्छ कयेन्द्रियवृत्त्या बुद्धिः सात्त्विकी स्यादिति परिशोधितवानित्यर्थः॥ १४॥ ❀ ❀ प्रश्नमेवाह अपीति त्रिभिः। हे रामाः! स्त्रियः सेश्वरीणां स्वामिनी-सहितानां वः युष्माकमपि कुशलमपिशब्दः प्रश्ने, कुशलप्रश्ने हेतुः हि यस्माद् गृहेषु पुरा महिष्या व्यापारदशायां गृहसंपदः यथैव रोचन्ते न तथेदानीं रोचन्ते विवेकाभावेन न कोऽपि पुरुषस्य गुणः प्रकाशतेऽतो विवेकः किमुदेष्यतीति चिन्तितवा-नित्यर्थः॥ १५॥ ❀ ❀ गृहेषु माता वा पतिर्देवता यस्याः सा पत्नी वा यदि न स्यात्तर्हि व्यङ्गे चक्राश्वादिरहिते रथ इव प्राज्ञः बुद्धिमान् को नाम पुरुषो दीनवदासीत वसेदित्यर्थः। विवेकाभावे देहत्यागो वर इति भावः। सा ललना क्व वर्तते कथंभूता ललना व्यसनार्णवे दुःखार्णवे मज्जन्तं मां पदे पदे क्षणे क्षणे स्वयं प्रज्ञा दीपयन्ती बोधयन्ती सती उद्धरणे व्यसनार्णवात् यथा विरहशोकातुरं पुमांसं प्रौढा प्रिया तदनुकूलाचरणहितोपदेशादिना शोकमपनुद्य सुखयति तद्वद्विवेकात्मिका बुद्धिरपि पदे पदे हिताहितं प्रकाशयन्ती पुमांसमुद्धरति ईदृशी बुद्धिः क्व वर्तत इति व्यज्यते॥ १६॥ ❀ ❀ हे नरनाथ! त्वत्प्रिया यद्व्यवस्यति निश्चिनोति तन्न जानीमः यदर्थं वैमनस्यमापन्ना तद्वैमनस्यहेतुं न जानीमः त्वत्प्रियां तु जानीम इत्याहुः। हे शत्रुहन्निरवस्तारे आस्तरणरहिते भूतलेऽवधुतां शयानां पश्येति कथापक्षेऽर्थः। अध्यात्मपक्षे त्वबाधितेन्द्रियवृत्तीनां सर्वासां निश्चयात्मिकबुद्धिमूलकत्वात्कयापीन्द्रियवृत्त्या सा नोदेतीत्यालोच्य यदनादरवशात्प्रियानादृता सतीव मद्विमुखी अभूदित्यनुसंहितवानित्यर्थः। आदरो बुद्धेः शिक्षणम्॥ १७॥ ❀ ❀ पुरञ्जनो भुवि पतितां महिषीं निरीक्ष्य तत्सङ्गेनोन्मथितं व्याकुलं ज्ञानं यस्य सः परमं भृशं वैक्लव्यं शोकपारवश्यं ययौ। अहो मदीयेयं बुद्धिरेतावन्तं कालमेवं विपरीताभूदिति वैक्लव्यं ययावित्यर्थः॥ १८॥ ❀ ❀ ततः श्लक्ष्णया मृद्व्या वाचा विदूयता परितप्तेन हृदयेन मनसा सान्त्व-यन्ननुनयन् प्रेयस्याः प्रियायाः प्रेमसंरम्भः प्रणये खस्मिन् यः कोपः तस्य लिङ्गं कारणमात्मनि मनसि नाध्यगान्न निश्चितवान्। विवेको-दयसाधनभूतस्वादरणमन्विच्छन् तावदेतावत्कालं तदनु हृदये कारणमन्वेषयन्नपि तन्नाध्यगादित्यर्थः, तस्य दैवायत्तत्वादिति भावः॥ १९॥ ❀ ❀ वीरः पुरञ्जनः अनुनये सान्त्वने कोविदः कुशलः अनुनयकोविदैरिति तृतीयान्तपाठे तु वाक्यैरिति विशेष्यमध्याहार्य्यं शनकैर्महिषीमनुनिन्ये सान्त्वयामास। अनुनयप्रकारमेवाह पादयुगलं पस्पर्श प्रियायाः पादौ गृहीतवान् तत उत्सङ्गारोपादिना लालितामाह। अध्यात्मपक्षे त्वनुनये स्ववशीकारे कोविदैर्निपुणैरुपायैः स्ववशामनुनिन्ये पस्पर्श पादयुगलमित्यने-नाद्यप्रभृतिविवेकात्मिकां बुद्धिमनुसृत्यैव वर्तेयमिति प्रतिज्ञातवानित्युक्तम् भवति। उत्सङ्गलालितामाहेत्यनेन स्ववशीकृतया विवेका-त्मिकया बुद्ध्या एवमनुसंहितवानित्युक्तम्॥ २०॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

जाग्रद्विषयाननुभूय सुषुप्तिप्रकारमाह तत इति। ततो जागरणान्निवृत्तः क्षुत्तृड्लक्षणमनोवृत्तिभ्यां व्याप्तः श्रान्तः हृल्लक्षण-नाडीविशेषं प्राप्तः कृतं जाग्रद्विषयभोगरजोमार्जनलक्षणस्नानं येन सः उचित आहारः स्वरूपसुखावाप्तिलक्षणो यस्य स तथा संविवेश सुप्तोऽभूदित्यन्वयः॥ ११॥ ❀ ❀ स्वापात्पूर्वव्यापारमाह आत्मानमिति। महिष्यां बुद्धौ अथवा धूपादिलक्षणवृत्तिभिरात्मान-मन्तर्यामिलक्षणं ब्रह्मस्वरूपमर्हयांचक्रे संपत्तिलक्षणमलंकारमकरोत्। 'सता सोम्य! तदा संपन्नो भवती'ति श्रुतेः। संपत्तिलक्षणालङ्कार-युक्तसर्वावयवः हृष्ट इत्यादिना सुप्तावस्थाविशिष्ट उच्यते। अनेन स्वप्नप्राप्तिरपि निरूप्यत इति ज्ञातव्यं तदा वृत्त्याद्यवस्थानुभवः

स्पष्ट एव। स्वप्नप्रापककर्मोद्रेके सति महिष्यां बुद्धौ मन आदध इत्युपपद्यते। कं स्वरूपसुखं दर्शयति प्रकटयतीति कन्दर्पः स्वापस्तेनोत्कृष्टं मानसं यस्य स तथा स्वप्नावस्थायामपि स्वापस्य सत्त्वात् ॥ १२ ॥ ❀ ❀ बुद्ध्याहितमनाः किमकृतेति तत्राह न व्यचष्टेति। गृहमेधिनीमुपात्तज्ञानवर्तीं गृहिणीं नानावासनाकारमनोवृत्तिमतीं वरस्य हरेरारोहो विषयतया यस्याः सा वरारोहा तां शास्त्रीयां बुद्धिं न व्यचष्ट दर्शनं नाम निश्चयज्ञानं नोपैतीति ज्ञातव्यं स्वप्नस्य वासनात्मकत्वात् निर्णयज्ञानवान्नाभूदित्यर्थः। हे वेदिषत्! प्राचीनबर्हिः! अन्तःपुरस्त्रियः इन्द्रियवृत्तीर्मनोवृत्तीर्वा अपृच्छत् स्वप्नव्यापारमकरोत् ॥ १३ ॥ ❀ ❀ हे रामाः! इति वृत्तयः सम्बोध्यन्ते ईश्वरी बुद्धिः गृहसम्पदः शरीरेन्द्रियादिशोभाः बुद्धौ विद्यमानायां रोचन्ते नान्यदेति ॥ १४ ॥ ❀ ❀ व्यङ्गे चक्राश्वादिरहिते रथे प्राज्ञो बुद्धिमान् रथी अन्नलक्षणेन प्राणेन हीने देहे प्राज्ञः सुषुप्तिप्रवर्तकः परमात्मा ॥ १५ ॥ ❀ ❀ पदे पदेऽनुक्षणं मम प्रज्ञां दीपयन्ती भगवद्विषयज्ञानमुद्बोधयन्ती या मामुद्धरति संसारादिति शेषः सा ललना शोभना बुद्धिः क्व वर्तत इत्यन्वयः ॥ १६ ॥ ❀ ❀ वाह्यकथामनुसृत्योत्तरकथाप्रत्युत्तरमाह नरनाथेति। यद्व्यवस्यति यन्निश्चित्य तिष्ठति तन्न जानीम इत्यन्वयः। निरवस्तारे आस्तरणरहिते भूतले पूर्णे भगवत्पादमूले शयानां विषयीकुर्वाणां यथार्थवर्णनमेतत् ॥ १७ ॥ ❀ ❀ इदानीमसद्बुद्धिनिमित्तप्रवृत्तिप्रकारमाह पुरञ्जन इति। प्राचीनकर्मवैचित्र्यात् प्रतिक्षणं वृत्तिभेदोऽपि प्रामाणिक एवेत्यत एतद्वचनमुपपद्यत इति अवधुतां सद्वृत्तिभिरिति शेषः। तस्या वैषयिक्या बुद्धेः सङ्गेन स्वीकारेण तादृशकर्मणा प्राप्तेनोन्मथितं नष्टं ज्ञानं यथार्थलक्षणं यस्य स तथा ॥ १८ ॥ ❀ ❀ प्रेयस्या बुद्धेः प्रेम्णा संरम्भो हिंसालक्षणो नाशो यस्तस्य लिङ्गं कारणमात्मनि स्वस्मिन्नाध्यगात् न ज्ञातवान् रजसाकुलितान्तरत्वात् रम्भ-हिंसायाम् ॥ १९ ॥ ❀ ❀ अनुनिन्य इत्यादिकथालङ्कारः। अनुनयनं नाम विषयबुद्धिवश्यत्वप्रकटनं बुद्धेर्मनआदिचत्वारः पादास्तेष्वंशद्वयं पस्पर्श स्वीकृतवान् मनोलक्षण उत्सङ्गे सम्मानितामिदमेव स्वीकरणम् ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अन्तरिति सार्द्धकम् ॥ १४–१८ ॥ ❀ ❀ नाभ्यगात् गभीरकोपत्वात् ॥ १९–२३ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

क्षुत्तृट्परिश्रान्त इति कृतानां दुष्कृतानां स्मरणव्याकुल इत्यर्थः। निवृत्त इति पापेभ्यो विरत इत्यर्थः। गृहमेधिवानित्यधर्ममर्यादां विहाय पुनर्धर्ममर्यादायां स्थातुमियेषेत्यर्थः। कृतस्नान इति ब्राह्मणानामन्त्र्य पापप्रायश्चित्तं कृतवानित्यर्थः। उचिताहारः मांसमदिराद्यशुचिभक्षणं तत्याजेत्यर्थः। संविवेश किञ्चित् स्थिरीबभूवेत्यर्थः। महिष्यामिति पूर्वावस्थाप्राप्तायां धर्मशीलायां स्वबुद्धाविल्यर्थः ॥ ११ ॥ ❀ ❀ आत्मानमर्हयाञ्चक्र इति साधून् मुनीन् विदुषश्च सम्मान्यानीय तैः स्वान्तःकरणं शोधयामासेत्यर्थः। कैः धूपादिभिरिति धर्मज्ञानवैराग्यादिनानोपख्यानोपदेशैः। साध्वलङ्कृतसर्वाङ्ग इति शास्त्रानुसरणीकृतसर्वचित्तवृत्तिक इत्यर्थः। महिष्यामिति पूर्वावस्थाप्राप्तायां धर्मशीलायां स्वबुद्धावित्यर्थः ॥ १२ ॥ ❀ ❀ दृप्त इत्यादिना अधर्मसंस्कारोपगम उक्तः। कन्दर्पाकृष्टमानस इति पूर्वदशावर्त्तिनीं धर्मनिष्ठावतीं बुद्धिं युवतिमिव प्राप्तुमत्युत्सुक इत्यर्थः। न व्यचष्टेति कथापक्षे मृगयाव्याजेन वनं गत्वा कामपि कामिनीं रमयामासेति पुरञ्जनी मानिनी बभूवेति हेतोरिति भावः। अध्यात्मपक्षे आगन्तुकपापकृतमनोमालिन्यस्य निःशेषानपगमात् प्राक्तनी धर्मप्रयोजिका बुद्धिरीप्सितापि न शीघ्रमाविर्भवेदित्येव विवक्षितम् ॥ १३ ॥ ❀ ❀ वेदिषत् हे प्राचीनबर्हिः! सेश्वरीणां स्वामिनीसहितानामेतर्हि इदानीं तां विनेत्यर्थः। पक्षे अन्तःपुरस्त्रीः अन्तःकरणवृत्तीः पूर्वदशावस्था धर्म्मप्रवर्त्तिनीर्मनाक् प्रादुर्भूता वीक्ष्य परामर्श। हन्तैतादृश्य एव मम बुद्धिवृत्तयो यदि सांप्रतिकपापसंस्कारानुच्छिद्यमानाः स्थिराः स्युस्तदैव ममोद्धार इति कुशलप्रश्नस्यार्थः। ननु विषयभोगेन सुखी भव किं ते धर्म्मेणेत्यत आह। एतर्हि इदानीं निषिद्धविषया न रोचन्ते ॥ १४ ॥ ❀ ❀ माता विष्णुभक्तिः पत्नी धर्म्मशीला बुद्धिः। व्यङ्गे चक्रादिहीने ॥ १५ ॥ ❀ ❀ क्व वर्त्तत इति सद्बुद्धिवृत्तय एव काश्चन नानुभूयन्ते न तु वस्तुतः सद्बुद्धिरिति मनसि खिद्यति स्म ॥ १६ ॥ ❀ ❀ निरवस्तारे आस्तरणरहिते। पक्षे तव हृदयमेव तस्याः पुष्पपर्यङ्कस्तस्माद्विच्युतिरेव तस्याः सद्बुद्धेर्निरवस्तारे भूतले शयनं शत्रुहन्! हे वीरपक्षे त्यक्तपाप ॥ १७ ॥ ❀ ❀ अवधुतां त्यक्तदेहादरां पक्षे स्वेनैव स्वहृदयात् च्यावितत्वात् खण्डितां निरीक्ष्य हन्त ममैवायं महापराध इति विचार्य्य तत्सङ्गेन तस्याः पुनरादित्सया उन्मथितज्ञानः तिरस्कृतस्वदुर्बुद्धिक इत्यर्थः। वैक्लव्यं दैन्यम् ॥ १८ ॥ ❀ ❀ सान्त्वयन्निति मद्भाग्यादियं मे प्राक्तनी बुद्धिः पुनरप्याविर्भवति यां विनैव मम दुर्गतिरिति मनोऽनुलापः। प्रेमसंरम्भचिह्नं नाभ्यगादिति ममाप्येवं पापाचरणं केन कारणेनाभूदिति क्षणं परामर्श ॥ १९ ॥ ❀ ❀ अनुनिन्य इति पुनरद्यारभ्य दुर्विषयभोगे बुद्धिर्मया नैव कार्येति पस्पर्श पादयुगलमिति, अहङ्कारत्यागसाधुजनसंमानावेव तस्याः पादौ तौ पस्पर्श प्राप उत्सङ्गलालितां स्वहृदयनिकटमेवानीताम् ॥ २० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पुनर्जाग्रति बुद्धिसङ्गत्या संसारप्रावण्यं जीवस्य वर्णयति तत इत्यादिना। एयिवान् प्राप्तः कृतं स्नानमुचित आहारश्च येन स तथा कृतस्नान इत्यादिवाक्यानि कथासौन्दर्याणि ॥ ११ ॥ ❀ ❀ महिष्यां विवेकवत्यां बुद्धौ ॥ १२–१३ ॥ ❀ ❀

हे वेदिषत् ! सेश्वरीणां वः कुशलमित्यपृच्छत् ॥ १४ ॥ ❀ ❀ यथा मात्रादिदर्शने तथा एतर्हि तददर्शने न रोचन्ते व्यङ्गे चक्रादिहीने ॥ १५ ॥ ❀ ❀ पदे पदे प्रतिक्षणं प्रज्ञां चेतनाम् ॥ १६ ॥ ❀ ❀ यद्व्यवस्यति निश्चिनोति तन्न जानीमः । निरवस्तारे निरास्तरणे ॥ १७ ॥ ❀ ❀ अवधुतामवधूताम् । तत्सङ्गेन तदासक्त्या उन्मथितं ज्ञानं धैर्यं यस्य सः । अध्यात्मपक्षे पुरञ्जन इत्यादिना जीवस्य बुद्ध्यधीनत्वमात्रं वर्ण्यते ॥ १८ ॥ ❀ ❀ प्रेयस्याः प्रियायाः संरम्भः स्वस्मिन्कोपस्तस्य लिङ्गं बीजमात्मनि चित्ते नाभ्यगात् न ज्ञातवान् ॥ १९ ॥ ❀ ❀ अनुनये सान्त्वने कोविदश्चतुरः । अनुनिन्ये सान्त्वयामास अनुनयकोविदत्वं दर्शयति पस्पर्शेत्यादिना । उत्सङ्गमङ्कमारोप्य लालितामाह ॥ २० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

ततश्च वनान्निवृत्तो गृहमेयिवान् आगत इत्यन्वयः । तत्र हेतुः-क्षुत्तृड्भ्यां परिश्रान्त इति, ततश्च कृतं स्नानमुचित आहारश्च येन सः, संविवेश स्वासने उपविष्टो जातस्ततो गतक्लमः श्रमरहितो जातः । पक्षान्तरे तु एवं स्वप्नावस्थां प्रदर्श्य पुनर्जाग्रदवस्थां प्रदर्शयति-तत इति । एवं स्वप्नपदार्थाननुभवंस्तत्र क्षुत्तृट्परिश्रान्तः ततः स्वप्नस्थानतो गृहं जाग्रदवस्थास्थानं हृदयं पुनरागतः । स्वप्नदर्शनहेतुर्निद्रादोषदूरीकरणमेव स्नानं स्वप्नदर्शनक्षुत्तृड्निवर्त्तको जाग्रदवस्थादर्शनजन्यसन्तोष एवाहारः । तत्परिश्रमनिवृत्तिरेव गतक्लमत्वम् । हृदये स्थितिः संवेशनम् ॥ ११ ॥ ❀ ❀ धूपादिभिरात्मानमर्हयाञ्चक्रे अलङ्कृतवान् । आलेपश्चन्दनम् । यदा साधु सम्यगलङ्कृतसर्वाङ्गो जातस्तदा महिष्यां मनो दधे । पक्षान्तरे तु स्वप्नसंस्कारनिवृत्तिपूर्वं जाग्रत्तत्तद्वस्त्वनुसन्धानविचारादिभिरात्मनः सावधानतापादनमेव अलङ्करणम् । ततश्च महिष्यां विवेकवत्यां बुद्धौ मनो दधे तामन्वेषितवान् ॥ १२ ॥ ❀ ❀ तदन्वेषणे कारणानि दर्शयन् तददर्शनमाह-तृप्त इति । भोजनेन तृप्तः अत एव हृष्टो दृप्तो गर्वितः कन्दर्पेण कामेनाकृष्टं मानसं यस्य सः अन्वेषमाणोऽपि गृहिणीं भार्यां गृहमेधिनीं गृहनिर्वाहिकां न व्यचष्ट नापश्यत् । पक्षान्तरे तु-जागरणं प्राप्तोऽप्यहङ्कारी तत्तद्विषयाकृष्टमनाः स्वप्नसंस्कारवशात् भ्रमचित्तत्वेन सर्वव्यवहारनिर्वाहहेतुभूतां स्वस्मिन्नापश्यदित्यर्थः । यदा भार्यां नापश्यत्तदा विमना इव अन्तःपुरस्त्रियोऽपृच्छदित्यन्वयः । हे वेदिषत् प्राचीनबर्हिरिति सम्बोधनेन कामिनां युष्माकमीदृश्येव चेष्टेति सूचयति । पक्षान्तरे अन्तःपुरस्त्रियो बुद्धिपरिचारिण्यः इन्द्रियवृत्तयः । प्रश्नश्च तदालोचनमात्रम् ॥ १३ ॥ ❀ ❀ प्रश्नमेव दर्शयति-अपि व इति त्रिभिः । हे रामा वो युष्माकं सेश्वरीणां स्वामिनीसहितानां अपि किं कुशलमस्तीति शेषः । कथमियं शङ्का तत्राह-यथा पुरा मृगयार्थगमनात् पूर्वं गृहसम्पदोऽरोचन्त तथैतर्हि गृहेषु गृहसम्पदो न रोचन्ते न शोभन्ते, अतः शङ्का जायते कुशलमस्ति न वेति भावः । पक्षान्तरेऽपि-स्वप्नादुत्थितस्य भ्रमचित्तस्य अलसस्य यावद्बुद्धेः स्वस्थता न भवति तावद्देहादिसम्पत् न रोचते इति ॥ १४ ॥ ❀ ❀ एवं गृहसम्पदामरोचकत्वं मम पत्न्यदर्शनप्रयुक्तमेवेत्याशयेनाह-यदीति । यदि माता पतिदेवता पतिव्रता पत्नी वा गृहे न स्यात्तदा को नाम प्राज्ञस्तत्र दीनवदासीतेत्यन्वयः । तत्र दृष्टान्तमाह-व्यङ्गे रथ इवेति व्यङ्गे गमनहेतुचक्राद्यङ्गरहिते रथे स्थितो यथा दैन्यं भवति तेन गन्तुमशक्यत्वात् । अतो बुद्धिमांस्तत्र नास्ते तथा गार्हस्थ्यनिर्वाहकमात्राद्यभावेऽपि तत्र दैन्यं भवति ततस्तत्र क आसीतेत्यर्थः । पक्षान्तरे तु यदि मातृवत्सर्वतो रक्षणकर्त्री सात्त्विकी बुद्धिर्भगवद्भक्तिर्वा प्रतिव्रतावत् स्वभोगसम्पादिका राजसी बुद्धिर्वा न स्यात्तदा तामस्या बुद्ध्या पशुत्वस्थावरत्वापत्तेः किं शरीरावस्थानेनेत्यर्थः ॥ १५ ॥ ❀ ❀ अतो व्यसनार्णवे दुःखसागरे मज्जन्तं मम प्रज्ञां दीपयन्ती उद्धारोपायं प्रतिबोधयन्ती या मां पदे पदे क्षणे क्षणे उद्धरते सा ललना क वर्त्तते इत्यन्वयः । पक्षान्तरे-राजस्या व्यावहारिक्या बुद्धेस्तत्तद्व्यावहारिकसङ्कटादुद्धारः प्रसिद्ध एवेति ज्ञेयम् ॥ १६ ॥ ❀ ❀ एवं पृष्टानामुत्तरमाह-नरनाथेति । हे नरनाथ राजन् त्वत्प्रिया यद् व्यवस्यति निश्चिनोति तद्वयं न जानीम इत्यन्वयः । क्वास्तीत्यपेक्षायामाहुः-भूतले इति हे शत्रुहन् निरवस्तारे आस्तरणरहिते भूतले शयानां तां पश्येत्यन्वयः । महत्त्वबोधनार्थं सम्बोधनद्वयम् । पक्षान्तरे तु-स्वप्नादुत्थितस्य बुद्धेरस्वास्थ्यमौदासीन्यं चेन्द्रियवृत्तिशैथिल्येन ज्ञापितं भवतीति प्रसिद्धमेव ॥ १७ ॥ ❀ ❀ तदा स्वमहिषीं भुवि अवधुतां पतितां त्यक्तदेहादरां निरीक्ष्य तत्सङ्गेनोन्मथितं शिथिलीकृतं ज्ञानं यस्य स पुरञ्जनः परमवैक्लव्यं व्याकुलत्वं मोहं ययावित्यन्वयः । पक्षान्तरे तु-राजसीबुद्धिसङ्गत एव जीवस्य ज्ञानं सर्वज्ञत्वाद्युन्मथितमस्ति तस्या अप्यौदासीन्येन सर्वव्यवहाररहितो जात इत्यर्थः ॥ १८ ॥ ❀ ❀ तदा च हृदयेन विदूयता कम्पमानेनोपलक्षितः श्लक्ष्णया मधुरया वाचा तां सान्त्वयन् प्रेयस्यास्तस्याः स्नेहसंरम्भस्य प्रणयकोपस्य लिङ्गं कारणमात्मनि स्वस्मिन्नाभ्यगात् न ज्ञातवानित्यन्वयः । अध्यात्मपक्षे तु-व्यावहारिकीबुद्धिशैथिल्येन स्वयमपि शिथिलक्रियस्तां स्वस्थां कुर्वन् तस्या औदासीन्यस्य कारणं न ज्ञातवानित्यर्थः ॥ १९ ॥ ❀ ❀ अथानन्तरमनुनयकोविदो वशीकरणे चतुरो वीरः पुरञ्जनस्तां शनकैरनुनिन्ये वशीचकारेत्यन्वयः । केन प्रकारेण वशीचकारेत्यपेक्षायां तत्प्रकारं दर्शयति-पस्पर्शेत्यादिना यावदध्यायसमाप्ति । प्रथमं तस्याः पादयुगलं पस्पर्श शिरसा नमश्चकार ततश्चोत्सङ्गमारोप्य लालितामाहेत्यन्वयः । अध्यात्मपक्षे तु-बुद्धिं स्वस्थां कृतवानित्याह-यावत्समाप्ति । शेषं तु कथालङ्कारमात्रमेव कामिनां दैन्यप्रदर्शनार्थमिति ज्ञेयम् ॥ २० ॥

भाषानुवाद:

तब वह भूख-प्याससे अत्यन्त शिथिल हो वनसे लौटकर राजमहलमें आया। वहाँ उसने यथायोग्य रीतिसे स्नान और भोजनसे निवृत्त हो, कुछ विश्राम करके थकान दूर की॥ ११॥ ❀ ❀ फिर गन्ध, चन्दन और माला आदिसे सुसज्जित हो सब अङ्गोंमें सुन्दर-सुन्दर आभूषण पहने। तब उसे अपनी प्रियाकी याद आयी॥ १२॥ ❀ ❀ वह भोजनादिसे तृप्त, हृदयमें आनन्दित, मदसे उन्मत्त ओर कामसे व्यथित होकर अपनी सुन्दरी भार्याको ढूँढ़ने लगा; किन्तु उसे वह कहीं भी दिखायी न दी॥ १३॥ ❀ ❀ प्राचीनबर्हि! तब उसने चित्तमें कुछ उदास होकर अन्तःपुरकी स्त्रियोंसे पूछा, 'सुन्दरियो! अपनी स्वामिनीके सहित तुम सब पहलेकी तरह कुशलसे हो न?॥ १४॥ ❀ ❀ क्या कारण है आज इस घरकी सम्पत्ति पहले-जैसी सुहावनी नहीं जान पड़ती? घरमें माता अथवा पतिपरायण भार्या न हो, तो वह घर विना पहियेके रथके समान हो जाता है; फिर उसमें कौन बुद्धिमान् दीन पुरुषोंके समान रहना पसंद करेगा॥ १५॥ ❀ ❀ अतः बताओ वह सुन्दरी कहाँ है, जो दुःख-समुद्रमें डूबनेपर मेरी विवेक-बुद्धिको पद-पदपर जाग्रत् करके मुझे उस सङ्कटसे उबार लेती है?'॥ १६॥ ❀ ❀ स्त्रियोंने कहा—नरनाथ! मालूम नहीं आज आपकी प्रियाने क्या ठानी है। शत्रुदमन! देखिये, वे बिना बिछौनेके पृथ्वीपर ही पड़ी हुई है॥ १७॥ ❀ ❀ श्रीनारदजी कहते हैं—राजन्! उस स्त्रीके सङ्गसे राजा पुरञ्जनका विवेक नष्ट हो चुका था; इसलिये अपनी रानीको पृथ्वीपर अस्त-व्यस्त अवस्था में पड़ी देखकर वह अत्यन्त व्याकुल हो गया॥ १८॥ ❀ ❀ उसने दुःखित हृदयसे उसे मधुर वचनोंद्वारा बहुत कुछ समझाया, किन्तु उसे अपनी प्रेयसीके अंदर अपने प्रति प्रणय-कोपका कोई चिह्न नहीं दिखायी दिया॥ १९॥ ❀ ❀ वह मनानेमें भी बहुत कुशल था, इसलिये अब पुरञ्जनने उसे धीरे-धीरे मनाना आरम्भ किया। उसने पहले उसके चरण छूए और फिर गोदमें बिठाकर बड़े प्यारसे कहने लगा॥ २०॥

## पुरञ्जन उवाच[1]

नूनं त्वकृतपुण्यास्ते भृत्या येष्वीश्वराः शुभे। कृतागःस्वात्मसात्कृत्वा शिक्षादण्डं न युञ्जते॥२१॥

परमोऽनुग्रहो दण्डो भृत्येषु प्रभुणार्पितः। बालो न वेद तत्तन्वि बन्धुकृत्यममर्षणः॥२२॥

सा त्वं मुखं सुदति सुभ्र्वनुरागभारव्रीडाविलम्बविलसद्धसितावलोकम्।
नीलालकालिभिरुपस्कृतमुन्नसं नः स्वानां प्रदर्शय मनस्विनि वल्गुवाक्यम्॥२३॥

तस्मिन्दधे दममहं तव वीरपत्नि योऽन्यत्र भूसुरकुलात्कृतकिल्बिषस्तम्।
पश्ये न वीतभयमुन्मुदितं त्रिलोक्यामन्यत्र वै मुररिपोरितरत्र दासात्॥२४॥

वक्त्रं न ते वितिलकं मलिनं विहर्षं संरम्भभीममविमृष्टमपेतरागम्।
पश्ये स्तनावपि शुचोपहतौ सुजातौ बिम्बाधरं विगतकुंकुमपङ्करागम्॥२५॥

तन्मे प्रसीद सुहृदः कृतकिल्बिषस्य स्वैरं गतस्य मृगयां व्यसनातुरस्य।
का देवरं वशगतं कुसुमास्त्रवेगविस्रस्तपौंस्नमुशती[2] न भजेत कृत्ये॥२६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे पुरञ्जनोपाख्याने षड्विंशोऽध्यायः॥ २६॥

अन्वयः—शुभे ईश्वराः येषु कृतागःसु आत्मसात्कृत्वा शिक्षादंडम् न युञ्जते ते भृत्याः तु नूनम् अकृतपुण्याः॥ २१॥ ❀ ❀ तन्वि प्रभुणा भृत्येषु अर्पितः दण्डः परमः अनुग्रहः अमर्षणः बालः तत् बंधुकृत्यम् न वेद॥ २२॥ ❀ ❀ सुदति सुभ्रु मनस्विनि सा त्वम् अनुरागभारव्रीडाविलंबविलसद्धसितावलोकम् नीलालकालिभिः उपस्कृतम् उन्नसम् वल्गुवाक्यम् मुखम् स्वानाम् नः प्रदर्शय॥ २३॥ ❀ ❀ वीरपत्नि अहम् भूसुरकुलात् मुररिपोः दासात् इतरत्र यः तव कृतकिल्बिषः तस्मिन् दमम् दधे वै त्रिलोक्याम् अन्यत्र वीतभयम् उन्मुदितम् तम् न पश्ये॥ २४॥ ❀ ❀ ते वक्त्रम् वितिलकम् मलिनम् विहर्षम् संरंभभीमम् अविमृष्टम् अपेतरागम् न पश्ये सुजातौ स्तनावपि शुचोपहतौ बिंबाधरम् विगतकुंकुमपंकरागम्॥ २५॥ ❀ ❀ तत् व्यसनातुरस्य स्वैरम् मृगयाम् गतस्य कृतकिल्बिषस्य सुहृदः मे प्रसीद का उशती कुसुमास्त्रवेगविस्रस्तपौंस्नम् वशागतम् देवरम् कृत्ये न भजेत॥ २६॥

इति षड्विंशोऽध्यायः॥ २६॥

---

१. प्राचीने पाठे 'पुरञ्जन उवाच' अयमंशो न। २. प्रा० पा०—विस्रम्भपौष्य०।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

कृतागोऽपराधो यैस्तेषु आत्मसात्कृत्वा अस्मदधीनोऽयमिति मत्वा शिक्षार्थं दण्डं न कुर्वन्ति ते भृत्या मन्दभाग्याः ॥ २१ ॥ ❀ ❀ यतः परमोऽनुग्रहो दण्डः। यस्तु दण्डतो विषीदति सोऽज्ञ इत्याह बाल इति। बन्धुकृत्यं शिक्षाकरम्। अमर्षणः क्रोधी ॥ २२ ॥ ❀ ❀ हे सुदति हे सुभ्रूः हे मनस्विनि सा त्वमस्माकं स्वामिन्यतः स्वानां मुखं प्रदर्शय। कीदृशम् अनुरागभारेण व्रीडया च यो विलम्बो मन्थरता तेन विलसन्हसितावलोको यस्मिन्। नीला अलका एवालयस्तैरुपस्कृतं भूषितम्। उन्नतनासिकम्। वल्गु वाक्यं यस्मिंस्तत् ॥ २३ ॥ ❀ ❀ हे वीरपत्नि वीरस्य मम भार्ये यस्ते कृतापराधस्तस्मिन्नहं ब्राह्मणकुला-दन्यत्रान्यस्मिन्प्राणिनि मुररिपुदासादितरत्र च दमं दधे दण्डं करोमि। किं तु तं विगतभयमुच्चैर्मुदितम्। त्रिलोक्यामन्यत्र वै लोकत्रयाद्बहिरपि न पश्यामि यस्तेऽपराधी स यत्र कुत्रापि गतो मद्भयादेवासौ मरिष्यतीत्यर्थः ॥ २४ ॥ ❀ ❀ ते वक्त्रमितः पूर्वं कदाचिदपि वितिलकं न पश्यामि। संरम्भेण कोपावेशेन भीमं भयंकरम् अविमृष्टमनुज्ज्वलम्। अपेतरागं स्नेहशून्यं तथा ते सुजातौ शोभनौ स्तनावपि शोकाश्रुभिरुपहतौ न पश्यामि तथा बिंबफलाकारमधरं च विगतः कुंकुमपंकतुल्यस्ताम्बूलरागो यस्मा-त्तादृशं न पश्यामि। इदानीं कुत एवं जातमिति शेषः। पाठान्तरे एवंभूतं मुखं स्तनौ च पश्यन् शं न विंदामीत्यन्वयः। विगतः कुंकुमपंकरागो याभ्यामिति स्तनयोर्विशेषणम् ॥ २५ ॥ ❀ ❀ तत्तस्मात्कृतं किल्बिषमपराधो येन तस्य। किल्बिषमेवाह। स्वैरं स्वातन्त्र्येण त्वामपृष्ट्वा मृगयां गतस्य देवो देवनं क्रीडा तां राति ददातीति देवरः कान्तस्तम्। कामवेगेन विस्रस्तं पौरुषं पौरुषं धैर्यं यस्य तम्। उशती कामयमाना कृत्ये कर्तुं योग्येऽर्थे का न भजेत ॥ २६ ॥

इति श्रीभागवते महापुराणे चतुर्थस्कन्धे टीकायां षड्विंशोऽध्यायः ॥ २६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

शुभे इति। मम दण्डेन त्वं मे शुभदैवेति भावः। कथापक्षे प्रिये मह्यं यत्कोपरूपं दण्डं करोषि तत्कृपया सापराधमपि निजदासमबुधं शिक्षयस्यतस्त्वामेतज्जन्मनि कदापि न त्यक्ष्यामीत्यर्थान्तरन्यासेनाह—नूनमिति द्वाभ्याम्। आत्मसात्कृत्वाऽस्मदधीनोऽ-यमिति मत्वा शिक्षार्थं दण्डं येषु न कुर्वन्ति ते भृत्या मन्दभाग्यास्तेन येषु दण्डं कुर्वन्ति ते भूरिभाग्या इत्यहं ते दण्डपात्रीभवन्ना-त्मानं भूरिभाग्यमेव मन्य इति भावः। अध्यात्मपक्षे हन्त हन्त प्रतिष्ठितस्यापि मम कादाचित्कपापाचरणेन सम्प्रति यल्लोके निन्दाचित्ता-प्रसादौ दुस्सहावभूतां तत्परमेश्वरेणैव मह्यं शिक्षादण्डो दत्तस्तदहमेतज्जन्मनि पुनः कदापि सद्बुद्धिं न त्यक्ष्यामीति तां सद्बुद्धिमेव मनसा सम्बोध्याह—नूनमिति द्वाभ्याम् ॥ २१ ॥ ❀ ❀ यस्तु दण्डितो विषीदति सोऽज्ञ इत्याह—बाल इति। अमर्षणः क्रोधी पक्षे सद्बुद्धिं प्रति स्वगतमाह त्वां सद्बुद्धिं त्यक्तवतो मम यः साम्प्रतिकोनुताप एष एव त्वद्दत्तो दण्डः परमो महानुग्रह एव, यतः पुनरपि पापासक्तिर्न सम्भाविनीति भावः। तन्वीति। तन्व्यास्ते क्रोधेपि तनुत्वमेवोचितमिति भावः ॥ २२ ॥ ❀ ❀ अतः स्वामिनीत्वात् दण्डस्तु दत्त एव सम्प्रति प्रसीदेत्याह—सा त्वमिति। प्रसिद्धा त्वमस्माकं स्वामिनी। अध्यात्मपक्षे—सर्वेणैव प्रकारेण सैवेयं मे प्राक्तनी बुद्धिरनुकूलीभूय स्थिरा भवत्विति मुहुः प्रार्थना ॥ २३ ॥ ❀ ❀ वीरपत्नीति। भगवद्भक्तात्सर्वपापानि बिभ्यतीति भावः। कथापक्षेपीत्यर्थं इति स्वामिभिरुक्तं, वीरात्सर्वे कातरा बिभ्यति विना वीरानिति भावः। ब्राह्मणकुलस्य वैष्णवकुलस्य च वीरकुलत्वं भगवत्कलावीरकुलं कदर्थीकृत्य स्वैरं विचरतामिति भरतोपाख्याने पञ्चमस्कन्धे वक्ष्यतीति। अध्यात्मपक्षे—यदि प्राचीनदैहिकाद्वा पापाचरणात्तव प्रातिकूल्यं तदा हे सद्बुद्धे दमं तदुपशमकं दानपुण्यव्रतादिकं करोमि, यदि तु ब्राह्मणकोपाद्वैष्णवापराधाद्वा तदा तु तौ दुरुपशमावेवेत्याह—भूसुरकुलादन्यत्रेत्यादि। तद्द्वयापराधस्य तद्द्वयप्रसादादेवोपशान्ति-र्नान्यथेति भावः। वीतभयमित्याद्यधर्मनिर्मूलने साटोपोक्तिः ॥ २४ ॥ ❀ ❀ कदापि न पश्यामीदानीं मद्दौर्भाग्यादेव पश्यामीति भावः। पाठान्तरे "पश्यन्स्तनावपि शुचोपहतौ सुजातौ विन्दामि शं विगतकुंकुमपंकरागौ" इति पाठे। पक्षे वितिलक-त्वादिभिरुपलब्धाया अपि सद्बुद्धेः पूर्ववत्प्रसादाभावो द्योतितः ॥ २५ ॥ ❀ ❀ यतोऽहं त्वदनुवर्त्त्येवास्मि तत्तस्माद्धेतोः "पौरुषं स्वातन्त्र्यधैर्ययोः" इति निरुक्तिः। कृत्ये कान्तविषयकस्नेहोचितकर्मणि। पक्षे सद्बुद्धिमेव साक्षात्कृत्याह—प्रसीद प्रसन्ना भवन्ती मम हृदि विराजस्व। मम कीदृशस्य स्वैरं निरंकुशमेव कृतकिल्बिषस्य मृगयां गतस्य व्याधस्येव पापिन इत्यर्थः। "व्याधो मृगवधाजीवो मृगयुर्लुब्धको हि सः" इत्यभिधानात्। सद्बुद्धेः स्वस्मिन्नवस्थितिमर्थान्तरन्यासेनाह—केति। स्त्री यथा कान्तं सापराधमपि न जहाति तथैव हे सद्बुद्धे मां त्वं न जहीहीत्यर्थः ॥ २६ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे षड्विंशोऽध्यायः ॥ २६ ॥

### श्रीमद्वीरराघवव्याख्या

हे शुभे! ईश्वराः स्वामिनः येषु कृतापराधेषु भृत्येष्वात्मसात्कृत्वा मदधीना एतेऽतो नैते दण्डनीया इति मत्वा शिक्षार्थं दण्डं न कुर्वन्ति ते भृत्या मन्दभाग्या इत्यर्थः ॥ २१ ॥ ❀ ❀ कुतो यतः प्रभुणा भृत्येष्वर्पितो दण्डः परमोऽनुग्रहः भृत्यानां

हितायैव भवतीत्यर्थः । यस्तु दण्डितो विषीदति सोऽज्ञ इत्याह बाल इति । अमर्षणः दण्डं न मर्षतीत्यमर्षणः हे तन्वि ! तद्बन्धोः स्वामिनः कृत्यं शिक्षाकरणमनुग्रह इति न वेद स बालो मूर्खः अज्ञ इत्यर्थः । अतो मम शिक्षार्थमेव स्वामिनी त्वं विमुख्यभूरित्यर्थः । अध्यात्मपक्षे तु स्वामिनीवन्मद्रक्षणैकान्ताया बुद्ध्या विवेकात्मिकाया इतः पूर्वमनुदयोऽस्मदनुग्रहार्थ एव यतोऽहमिदानीं विवेकालाभनिमित्तपरितापयुक्तः तामेवातीवाद्दतवानित्यनुसंदध इत्यर्थः ॥ २२ ॥ ❀ ❀ हे सुदति ! हे सुभ्रु—हे मनस्विनि ! सा त्वमस्माकं स्वामिन्यतः स्वानां नो मुखं प्रदर्शय कीदृशमनुरागभारेण व्रीडया च यो विडम्बो मन्थरस्तेन विलसद्धसितावलोको यस्मिन् नीलालका एवालयस्तैरुपस्कृतं भूषितमुच्चनासिकं वल्गुवाक्यं यस्मिन् निरतिशयसौन्दर्ययुक्तायाः प्रियाया उक्तविधमुखावलोकनसंजातमानन्दमनुभवन् इवाहं स्थिरे निरतिशयसुखापादकविवेकोदये सुखीत्यनुसंहितवानित्यर्थः ॥ २३ ॥ ❀ ❀ हे वीरपत्नि ! वीरस्य मम भार्ये यस्ते तुभ्यं कृतकिल्बिषः कृतापराधः तस्मिन्नहं ब्राह्मणकुलादन्यत्र कुलेऽपि मुररिपुदासादन्यत्र दमं दण्डं दधे करोमि मे त्वत्सहायस्य मम क्रुद्धस्य सतः त्रैलोक्याद्बहिरपीति शेषः । त्रैलोक्याद्बहिश्चान्तश्चोच्चैर्मुदितं विगतभयं च पुरुषं न पश्यामि । यदीयं व्यवसायात्मिका बुद्धिर्मम संप्रतिष्ठिता स्यात्तदा तत्सहायोऽहं तद्विरोधिनो निरस्यामि विवेकिना मयासाध्यं किमपि त्रिलोक्या अन्तर्बहिश्च न विद्यते । मुररिपुदासादयस्तु विवेकिनो ममानुकूला एवेत्यनुसन्दधे ॥ २४ ॥ ❀ ❀ ते तव वक्त्रमितः पूर्वं कदाचिदपि वितिलकं तिलकरहितं न पश्यामि, इदानीं तु मलिनं विगतहर्षं संरम्भेण क्रोधावेशेन भीमं भयङ्करमविमृष्टमनुज्ज्वलमपेतरागं स्नेहशून्यं तथा ते सुजातौ स्तनौ अपि शोकाश्रुभिरुपहतौ च तथा बिम्बफलाकारमधरं च विगतः कुङ्कुमपङ्कतुल्यः ताम्बूलरागो यस्मिन् तादृशं पश्यामि कुत एवं जातमिति शेषः । व्यवसायात्मकबुद्धेरभिव्यक्तेः प्रारम्भदशायामविशदत्वात्तादृशावस्थां तां प्रियानादरनिमित्तक्रोधेनात्मानमनलं कुर्वन्तीं शोचन्तीं स्त्रियमिवोत्प्रेक्षते इत्यर्थः ॥ २५ ॥ ❀ ❀ तस्मात्कृतं किल्बिषमपराधो येन तस्य किल्बिषमेवाह । स्वैरं स्वातन्त्र्येण त्वामपृष्ट्वा मृगयाङ्गतस्य मे प्रसीद प्रसन्ना भव, देवं देवनं क्रीडां राति ददातीति देवरः कान्तस्तं कामवेगेन विस्रस्तं गतं पौरुषं धैर्यं यस्य तमत एव वशंगतं का स्त्री कामयमाना कृत्ये कर्तुं योग्यार्थे न भजेत भजेतैवेत्यर्थः । विवेकाभावादप्रसन्नस्य मम स्वप्नावस्थाभूदतो विवेकात्मकबुद्धियुक्तोऽहं प्रसन्नो वर्तेयम् , एवमहंममाभिमानौ विहाय वशङ्गतं कार्यापादकं मां व्यवसायात्मिका बुद्धिरपीहानुवर्तिष्यतीत्यनुसंहितवानित्यर्थः ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां षड्विंशोऽध्यायः ॥ २६ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ये येषु कृतापराधेषु शिक्षालक्षणं दण्डं न कुर्वते नूनं तेऽकृतपुण्या इत्यन्वयः ॥ २१ ॥ ❀ ❀ दण्डस्य निग्रहलक्षणत्वात् कथं प्रार्थ्येत इत्यत आह परम इति । तर्हि लोकः कथं दुःखं मन्यत इति तत्राह बाल इति । दण्डस्य पापप्रायश्चित्तरूपत्वान्न जानातीत्यर्थः । अनुतापादिवृत्तिविशेष इति ज्ञातव्यम् ॥ २२ ॥ ❀ ❀ उपस्कृतं मण्डितम् ॥ २३ ॥ ❀ ❀ भूसुरकुलात् ब्रह्मकुलात् क्रुद्धस्य मे सकाशाद्वीतभयं नष्टभयं तं न पश्ये ॥ २४ ॥ ❀ ❀ इतः पूर्वं वक्त्रादिकं विगततिलकादिकं न पश्यामीत्यन्वयः । शुचा शोकाश्रुणोपहतौ सुजातौ कोमलौ ॥ २५ ॥ ❀ ❀ कुसुमास्त्रस्य कामस्य वेगेन विस्रस्तं श्लथितं पौंस्नं पौरुषं यस्य स तथा तं देवं रतिक्रीडादिकं राति ददातीति देवरः पतिस्तं कृत्ये प्रयोजननिमित्ते प्राप्तमुशती कामयमाना का स्त्री न भजेत ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे विजयध्वजकृतपदरत्नावल्यां षड्विंशोऽध्यायः ॥ २६ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अन्यत्र भूसुरकुलादिकं धर्मनिष्ठजीवमधिकृत्य पुरञ्जनाख्यानात् ॥ २४-२६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे षड्विंशोऽध्यायः ॥ २६ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

कथापक्षे प्रिये मह्यं यत् कोपरूपं दण्डं करोषि तत्कृपया सापराधमपि निजदासमबुधं शिक्षयस्यतस्त्वामेतज्जन्मनि कदापि न त्यक्ष्यामीत्यर्थान्तरन्यासेनाह नूनमिति द्वाभ्याम् । आत्मसात् कृत्वा अस्मदधीनोऽयमिति मत्वा शिक्षार्थं दण्डं येषु न कुर्वन्ति ते भृत्या मन्दभाग्यास्तेन येषु दण्डं कुर्वन्ति ते भूरिभाग्या इत्यहं ते दण्डपात्रीभवन्नात्मानं भूरिभाग्यमेव मन्य इति भावः । अध्यात्मपक्षे हन्त हन्त प्रतिष्ठितस्यापि मम कादाचित्कपापाचरणेन संप्रति यल्लोकनिन्दाचित्ताप्रसादौ परमदुःसहावभूतां तत् परमेश्वरेणैव मह्यं शिक्षादण्डो दत्तस्तदहमेतज्जन्मनि पुनः कदापि सद्बुद्धिं न त्यक्ष्यामीति तां सद्बुद्धिमेव मनसा सम्बोध्याह नूनमिति द्वाभ्याम् ॥ २१ ॥ ❀ ❀ यस्तु दण्डितो विषीदति सोऽज्ञ इत्याह बाल इति । अमर्षणः क्रोधी पक्षे सद्बुद्धिं प्रति

स्वगतमाह। त्वां सद्बुद्धिं त्यक्तवतो मम यः साम्प्रतिकोऽनुतापः एष एव त्वद्दत्तो दण्डः परमो ममानुग्रह एव। यतः पुनरपि पापासक्तिर्न मे भाविनीति भावः ॥ २२ ॥ ❀ ❀ दण्डस्तु दत्त एव सम्प्रति प्रसीदेत्याह सा त्वमिति। सा प्रसिद्धा त्वमस्माकं स्वामिनी अनुरागभारेण व्रीडया यो विलम्बः मन्थरता तेन विलसन् हसितावलोको यस्मिन् वल्गूनि वाक्यानि यस्मिन् तत्। अध्यात्मपक्षे सर्व्वेणैव प्रकारेण सैवेयं मे प्राक्तनी बुद्धिरनुकूलीभूय स्थिरा भवत्विति मुहुः प्रार्थना ॥ २३ ॥ ❀ ❀ हे वीरपत्नि! वीरस्य मम भार्य्ये यदन्यः कश्चिन्मदीयस्तव प्रातिकूल्यमकरोत् तस्मिन् दण्डं दधे करोमि। यतस्तवाहं त्वदधीनत्वात्त्वदीय इत्यर्थः, किन्तु ब्राह्मणकुलादन्यत्र मुररिपोर्दासादितरत्र तद्द्वये मम नास्ति प्रभुतेति पुरञ्जनस्यास्य प्राचीनवर्हिष्ट्वात् प्राचीनवर्हिषश्च पितृपैतामहधर्म्ममर्य्यादानुल्लङ्घनात् सा मर्य्यादा चान्यत्र ब्राह्मणकुलादन्यत्राच्युतगोत्रत इति पृथुचरितोक्तेर्ब्राह्मणवैष्णवयोः करदण्डाग्रहणरूपैवेति विवेचनीयम्। अतो ब्राह्मणवैष्णवाभ्यामन्यत्र त्रिलोक्यां त्रिलोकीमध्ये अन्यत्र त्रिलोक्या बहिर्वा वीतभयं मत्तो विगतभयमुन्उच्चैर्मुदितं न पश्यामि। मद्भयादेवासौ मरिष्यतीति भावः। अध्यात्मपक्षे यदि प्राचीनदैहिकाद्वा पापाचरणात्तव प्रातिकूल्यं तदा हे सद्बुद्धे! दमं तदुपशमकं दानपुण्यव्रतादिकं करोमि। यदि तु ब्राह्मणकोपात् वैष्णवापराधाद्वा तदा तु तौ दुरुपशमावेवेत्याह। भूसुरकुलादन्यत्रेत्यादि तद्द्वयापराधस्य तद्द्वयप्रसादादेवोपशान्तिर्नान्यथेति भावः। वीतभयमित्याद्यधर्मनिर्मूलने साटोपोक्तिः ॥ २४ ॥ ❀ ❀ वक्त्रं वितिलकं कदापि न पश्यामि संप्रति मद्दौर्भाग्यादेव पश्यामीति भावः। विगतः कुङ्कुमपङ्कस्येव ताम्बूलस्य रागो यत्र तं बिम्बाधरं 'विन्दामि शमि'ति पाठे विगतकुङ्कुमपङ्करागाविति स्तनयोर्विशेषणं पक्षे वितिलकत्वादिभिरुपलब्धाया अपि सद्बुद्धेः पूर्ववत् प्रसादाभावो द्योतितः ॥ २५ ॥ ❀ ❀ प्रेयस्याः प्रसादं प्रार्थयते तन्म इति किल्बिषमेवाह स्वैरमित्यादि। देवो देवनं क्रीडा तं राति ददातीति देवरः कान्तस्तं स्मरशरवेगेनैव विस्रस्तपौंस्नं पुरुषार्हं स्वातन्त्र्यं यस्य तम्। उशती कमनीया कृत्ये कान्तविषयकस्नेहोचिते कर्मणि का न भजेत पक्षे सद्बुद्धिमेव साक्षात्कृत्याह प्रसीद प्रसन्ना भवन्ती मम हृदि विराजस्व। मम कीदृशस्य स्वैरं निरङ्कुशमेव कृतकिल्विषस्य मृगयां गतस्य व्याधस्येव पापिन इत्यर्थः। 'व्याधो मृगवधाजीवो मृगयुर्लुब्धको हि सः।' इत्यभिधानात् सद्बुद्धेः स्वस्मिन्नवस्थितिमर्थान्तरन्यासेनाह केति। स्त्री यथा कान्तं सापराधमपि न जहाति तथैव हे सद्बुद्धे! मां त्वं न जहीहीत्यर्थः ॥ २६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। षड्विंशोऽयं चतुर्थस्य सङ्गतः सङ्गतः सताम् ॥ २६ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यदि मया तवापराधः कृतस्तत्र शिक्षार्थं मयि दण्डं न करोषि तर्हि मम मन्दभाग्यता स्यादतोऽवलोकनमात्रेणैवमपि दण्डं नियोजयेत्याशयेनाह नूनमित्यादि ॥ २१-२२ ॥ ❀ ❀ हे सुदति! हे मनस्विनि! या मया कोपिता सा नः स्वानां मुखं प्रदर्शय। आभिमुख्येनावलोकयेत्यर्थः। स्वकीयेषु कृतापराधेषु भावविशेषगर्भेणावलोकनमात्रेणैव दण्डो भवतीति भावः। कीदृशम् अनुरागभारश्च व्रीडाविलम्बो व्रीडानाविष्करणं ताभ्यां विलसत् हसितमवलोकश्च यस्मिन् तत्। नीलालकरूपैरलिभिरुपस्कृतमलङ्कृतम् वल्गूनि वाक्यानि यस्मिन् तत् ॥ २३ ॥ ❀ ❀ यद्यन्येन तेऽपकृतं तर्हि ब्राह्मणं हरिदासं च वर्ज्जयित्वा तस्मिन्नपि दण्डं करोमीत्याह तस्मिन्निति। हे वीरपत्नि! त्रिलोक्यामन्यत्र त्रैलोक्याः बहिश्च वीतभयं मम दण्डाविषयं भूसुरकुलात् अन्यत्र मुररिपोर्दासाच्च इतरत्र न पश्ये। अतः ते यस्त्वत्सम्बन्धी यो जनस्तस्य तव च कृतकिल्बिषो यस्तस्मिन्नहं दमं दण्डं दधे करोमि तं सूचयेति शेषः ॥ २४ ॥ ❀ ❀ स्वैरगमनरूपं स्वस्मिन्दोषं सम्भाव्य तन्निमित्तक्रोधजं वक्त्रादेर्वितिलकत्वादिकमित्यवधार्य तद्वर्णनपूर्वकं सान्त्वनं करोति वक्त्रमिति द्वाभ्याम्। ते वक्त्रं मुखं वितिलकं शृङ्गाररहीनं संरम्भेण भीमं भयदम् अविमृष्टमकृतोद्वर्तनम् अपेतरागं गतस्नेहं सुजातौ स्तनौ च शुचोपहतौ शोकाश्रुसंसिक्तौ बिम्बाधरं च विगतं कुङ्कुमपङ्कसदृशं ताम्बूलरागं यस्मात्तथाभूतं पूर्वं कदापि न पश्ये। इदानीं तु पश्यामीति भावः ॥ २५ ॥ ❀ ❀ तत्र मम स्वैरगमनमेव कारणमिति वदन् क्षमापयति तस्मादिति। व्यसनातुरस्य स्वैरं स्वातन्त्र्येण त्वामपृष्ट्वैव मृगयां गतस्य तत्तस्मादेव कृतकिल्बिषस्य मे प्रसीद प्रसन्ना भव। तत्र हेतुं दर्शयति देवं देवनं कीडां राति ददातीति देवः क्रीडाप्रदस्तेन कुसुमास्त्रस्य कामस्य वेगेन विस्रस्तं पौंस्नं धैर्यं यस्य ते तथापि वशंगतमुशती कामयमाना कृत्ये कर्तुं योग्ये का न भजेत ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे षड्विंशाध्यायार्थप्रकाशः ॥ २६ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

अनुनयवचनान्येव दर्शयति—नूनमिति सप्तभिः। ते तु भृत्याः सेवकाः नूनं निश्चितमकृतपुण्याः सुकृतरहिता इत्यन्वयः। ते के इत्यपेक्षायामाह—येष्विति, हे शुभे हे स्वामिनि कृतागस्सु कृतापराधेष्वपि येषु भृत्येषु ईश्वराः स्वामिनः आत्मसात्कृतव

असदीयोऽयमिति मत्वा शिक्षार्थं दण्डं न युञ्जते न कुर्वन्ति ते ॥ २१ ॥ ❀ ❀ कुत एवं तत्राह—परम इति। हे तन्वि भृत्येषु कृतागस्सु यः प्रभुणा स्वामिनाऽर्पितः कृतो दण्डः स तु पुनरपराधान्तरप्रतिबन्धकत्वात् परमोऽनुग्रह एव। तत्र यस्तु दण्डितः सन्नमर्षणः असहमानो भवति स तु बालः अज्ञ एव, यतो बन्धुकृत्यं स्वामिहिताचरणं न वेद न जानातीत्यन्वयः। तव सौन्दर्येणैवाहं ते भृत्यो जातो न धनादिलोभेनेति सम्बोधनेन सूचितम्। एवं सति मम कश्चिदपराधश्चेत्तदा साक्षात्तन्निदर्शनपूर्वकं दण्डनीयोऽहं येन पुनस्तथा न कुर्यां न त्वेवं कोपेन सन्तापनीय इति भावः ॥ २२ ॥ ❀ ❀ त्वत्कोपेऽस्माकं कुत्रापि शरणं नास्ति स्वामिनीत्वादित्याशयेन बहुधा सम्बोधयन् प्रार्थयते—सेति। से सुदति हे सुभ्रु इति सम्बोधनद्वयेन तन्निमित्तां कामकृतां पीडां द्योतयति। हे मनस्विनीत्यनेन तवैवं नैष्ठुर्ये धीरत्वं न युक्तं मम पीडाकरत्वादिति सूचयति। अतः सा त्वमस्माकं स्वामिनी स्वानां स्वकीयानां नोऽस्माकं स्वमुखं प्रदर्शयेत्यन्वयः। मुखस्य स्वमोहकत्वं सूचयन् मुखं विशिनष्टि—अनुरागभारेण व्रीडया च यो विलम्बो मन्थरता तेन विलसन् हसितावलोको यस्मिंस्तत्, नीला अलका एवालयो भ्रमरास्तैरुपस्कृतं भूषितम्, उन्नसमुन्नतनासिकम्, वल्गु वाक्यं यस्मिंस्तत् ॥ २३ ॥ ❀ ❀ हे वीरपत्नि वीरस्य मम भार्ये इति सम्बोधनेन मयि वीरे विद्यमाने तवैवं विषादो नोचित इति सूचयति। अतो यस्ते तव कृतकिल्बिषः अपराधकर्ता तमादिशेति शेषः। किं तत्प्रकथनेन तत्राह—तस्मिन्नहं दमं दण्डं दधे करोमि। न च शङ्कनीयं दण्डकरणेऽसमर्थोऽयमिति, यतो ममापराधकर्तारं वीतभयं निर्भयमुन्मुदितं महामोदयुक्तं त्रिलोक्यामन्यत्र वै लोकत्रयाद्बहिरपि न पश्ये पश्यामि। ननु ब्राह्मणकुले भगवद्भक्ते च कथं तव दण्डकरणे सामर्थ्यमित्याशङ्क्याह—भूसुरकुलादन्यत्र अन्यस्मिन् मुररिपोर्दासादितरत्र चेति। एवं सामर्थ्येऽपि त्वं यदि दण्डं मया निवेदितेप्यपराधिनि न कुर्यास्तदा किं निवेदनेनेत्याशङ्क्याह—अहं तवेति, त्वदीयोऽहं तवाज्ञामवश्यं करिष्यामीति भावः। अध्यात्मपक्षे तु व्यावहारिकीबुद्धिविकलानां मूर्खाणामपि त्रिलोक्यां मम सदृशः पौरुषवान्नास्तीत्यभिमानित्वम्। ब्राह्मणकुलस्य भगवद्भक्तस्य वा कोपाद्दोषान्तरेण बुद्धिभ्रंशे तच्छुद्ध्युपायोऽस्ति तदुभयकोपाद्बुद्धिभ्रंशे तु तच्छुद्ध्युपायो नास्तीति च सूचितम् ॥ २४ ॥ ❀ ❀ तवैवमौदासीन्येन महान् खेदो वर्तते इत्याशयेनाह—वक्त्रमिति। इतः पूर्वं कदापि ते तव वक्त्रं वितिलकं मलिनं विहर्षं संरम्भेण कोपावेशेन भीमं भयङ्करं अविमृष्टमनुज्ज्वलं अपेतरागं स्नेहशून्यं न पश्ये न पश्यामीत्यन्वयः। तथा सुजातौ शोभनौ ते स्तनावपि शुचा शोकाश्रुणा उपहतावभिषिक्तावितः पूर्वं न पश्यामीत्यन्वयः। तथा बिम्बफलसदृशमतिरक्तं तवाधरमपि इतः पूर्वं विगतः कुङ्कुमपङ्कतुल्यस्ताम्बूलरागो रक्तता यस्मात्तादृशं न पश्यामीदानीं कथमेवं सर्ववैपरीत्यं जातं तत्र कारणं वदेति शेषः ॥ २५ ॥ ❀ ❀ मम मृगयार्थं वनगमनेनैवेयं कुपितेति तत्कोपकारणं स्वयमेव विचार्य तन्निवेदयन् प्रार्थयते—तदिति। यस्मात्त्वद्रोषेणातिदुःखितोऽहं तत् तस्मान्मे मम कृतकिल्बिषस्य कृतापराधस्यापि त्वं प्रसीद अपराधक्षमां कृत्वा प्रसादं कुर्वित्यन्वयः। अपराधमेव दर्शयति—स्वैरमिति। स्वैरं स्वातन्त्र्येण स्वामिनीं त्वामपृष्ट्वैव मृगयां गतस्येत्यन्वयः। एवं गमने हेतुमाह—व्यसनेति, मृगयायां यद्व्यसनं स्वतः स्वभावस्तेनातुरस्य विवशस्येत्यर्थः। अतो मम अन्तः कापट्यं नास्तीत्याह—सुहृद इति, सुष्ठु त्वयि स्नेहवत् हृत् हृदयं यस्य तस्येत्यर्थः। अतोऽहं तव कृपापात्रं त्वं च मयि तत्कर्तुं योग्येत्यभिप्रायेणाह—केति, देवो देवनं क्रीडा रतिस्तां राति ददातीति देवरः कान्तस्तम्, कुसुमास्त्रस्य वेगेन विस्रस्तमपगतं पौंस्नं पौरुषं धैर्यं यस्य तम्, अत एव स्ववशगतमुशती कमनीया त्वादृशी चतुरशिरोमणिः कृत्ये भजनं कर्तुं योग्ये देशे काले च न भजेत नाङ्गीकुर्यात् अङ्गीकृत्य भोगं न प्रदद्यादेवम्भूता का? न काऽपीत्यर्थः। एवम्भूतं कान्तं या नाङ्गीकरोत्यभिमानेन साऽपि मूर्खैवेति भावः। अध्यात्मपक्षे तु बुद्धिसमाधानप्रसङ्गेन स्त्र्यादिभोगतो वैराग्येण भगवद्भजने प्रवृत्त्यर्थं कामिनां धनादिमत्तां लोके सर्वविजयित्वेन प्रख्यातानामपि स्त्रीपारतन्त्र्येण दुश्चेष्टादैन्यं च विस्तरेण प्रदर्शितमिति स्फुटमेव ॥ २६ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे मोक्षनिरूपणे। षड्विंशोऽपि गतो वृत्तिं स्वप्नावस्थानिरूपकः ॥ ३ ॥

## भाषानुवादः

पुरञ्जन बोला—सुन्दरी! वे सेवक तो निश्चय ही बड़े अभागे हैं, जिनके अपराध करनेपर स्वामी उन्हें अपना समझकर शिक्षाके लिये उचित दण्ड नहीं देते ॥ २१ ॥ ❀ ❀ सेवकको दिया हुआ स्वामीका दण्ड तो उसपर बड़ा अनुग्रह ही होता है। जो मूर्ख हैं, उन्हींको क्रोधके कारण अपने हितकारी स्वामीके किये हुए उस उपकारका पता नहीं चलता ॥ २२ ॥ ❀ ❀ सुन्दर दन्तावली और मनोहर भौंहोंसे शोभा पानेवाली मनस्विनि! अब यह क्रोध दूर करो और एक बार मुझे अपना समझकर प्रणय-भार तथा लज्जासे झुका हुआ एवं मधुर मुसकानमयी चितवनसे सुशोभित अपना मनोहर मुखड़ा दिखाओ। अहो! भ्रमरपंक्तिके समान नीली अलकावली, उन्नत नासिका और सुमधुर वाणीके कारण तुम्हारा वह मुखारविन्द कैसा मनोमोहक

जान पड़ता है ॥ २३ ॥ ❀ ❀ वीरपत्नि ! यदि किसी दूसरेने तुम्हारा कोई अपराध किया हो तो उसे बताओ; यदि वह अपराधी ब्राह्मणकुलका नहीं है, तो मैं उसे अभी दण्ड देता हूँ । मुझे तो भगवान्के भक्तोंको छोड़कर त्रिलोकीमें अथवा उससे बाहर ऐसा कोई नहीं दिखायी देता जो तुम्हारा अपराध करके निर्भय और आनन्दपूर्वक रह सके ॥ २४ ॥ ❀ ❀ प्रिये ! मैंने आजतक तुम्हारा मुख कभी तिलकहीन, उदास, मुरझाया हुआ, क्रोधके कारण डरावना, कान्तिहीन और स्नेहशून्य नहीं देखा; और न कभी तुम्हारे सुन्दर स्तनोंको ही शोकाश्रुओंसे भीगा तथा बिम्बफलसदृश अधरोंको स्निग्ध केसरकी लालीसे रहित देखा है ॥ २५ ॥ ❀ ❀ मैं व्यसनवश तुमसे बिना पूछे शिकार खेलने चला गया, इसलिये अवश्य अपराधी हूँ; फिर भी अपना समझकर तुम मुझपर प्रसन्न हो जाओ; कामदेवके विषम बाणोंसे अधीर होकर जो सर्वदा अपने अधीन रहता है, उस अपने प्रिय पतिको उचित कार्यके लिये भला कौन कामिनी स्वीकार नहीं करती ॥ २६ ॥

इति षड्विंशोऽध्यायः ॥ २६ ॥



# अथ सप्तविंशोऽध्यायः

## नारद उवाच

इत्थं पुरञ्जनं सध्र्यग्वशमानीय विभ्रमैः। पुरञ्जनी महाराज रेमे रमयती पतिम् ॥ १ ॥
स राजा महिषीं राजन् सुस्नातां रुचिरान[1]नाम्। कृतस्वस्त्ययनां तृप्तामभ्यनन्ददुपागताम् ॥ २ ॥
तयोपगूढः परिरब्धकन्धरो रहोऽनुमन्त्रैरपकृष्टचेतनः।
न कालरंहो बुबुधे[2] दुरत्ययं दिवा निशेति प्रमदापरिग्रहः ॥ ३ ॥
शयान उन्नद्धमदो महामना महार्हतल्पे महिषीभुजोपधिः।
तामेव वीरो मनुते परं यतस्तमोऽभिभूतो न निजं परं च यत् ॥ ४ ॥
तयैवं रममाणस्य कामकश्मलचेतसः। क्षणार्धमिव राजेन्द्र व्यतिक्रान्तं नवं वयः ॥ ५ ॥
तस्यामज[3]नयत्पुत्रान् पुरञ्जन्यां पुरञ्जनः। शतान्येकादश विराडायुषोऽर्धमथात्यगात् ॥ ६ ॥
दुहितॄर्दशोत्तरशतं पितृमातृयशस्करीः। शीलौदार्यगुणोपेताः पौरञ्जन्यः प्रजापते ॥ ७ ॥
स [4]पञ्चालपतिः पुत्रान् पितृवंशविवर्धनान्। दारैः संयोजयामास दुहितॄः सदृशैर्वरैः ॥ ८ ॥
पुत्राणां चाभवन् पुत्रा एकैकस्य शतं शतम्। यैर्वै पौरञ्जनो वंशः पञ्चालेषु समेधितः ॥ ९ ॥
तेषु तद्रिक्थहारेषु गृहकोशानुजीविषु। निरूढेन ममत्वेन विष[5]येष्वन्वबध्यत ॥ १० ॥

अन्वयः—महाराज इत्थम् रमयती पुरंजनी पतिम् पुरंजनम् विभ्रमैः सध्र्यक् वशम् आनीय रेमे ॥ १ ॥ ❃ ❃ राजन् सः राजा सुस्नाताम् रुचिराननाम् कृतस्वस्त्ययनाम् तृप्ताम् उपागताम् महिषीम् अभ्यनंदत् ॥ २ ॥ ❃ ❃ तया परिरब्धकंधरः उपगूढः रहः अनुमंत्रैः अपकृष्टचेतनः इति दिवा निशा प्रमदापरिग्रहः दुरत्ययम् कालरंहः न बुबुधे ॥ ३ ॥ ❃ ❃ महामनाः वीरः उन्नद्धमदः महार्हतल्पे शयानः महिषीभुजोपधिः ताम् एव परम् मनुते च यत् निजम् परम् न यतः तमोभिभूतः ॥ ४ ॥ ❃ ❃ राजेंद्र एवम् तया रममाणस्य कामकश्मलचेतसः नवम् वयः क्षणार्धमिव व्यतिक्रान्तम् ॥ ५ ॥ ❃ ❃ प्रजापते विराट् पुरंजनः तस्याम् पुरंजन्याम् एकादशशतानि पुत्रान् पौरंजन्यः पितृमातृयशस्करीः शीलौदार्यगुणोपेताः दशोत्तरशतम् दुहितॄः अजनयत् अथ तस्य आयुषः अर्धम् अत्यगात् ॥ ६–७ ॥ ❃ ❃ सः पंचालपतिः पितृवंशविवर्धनान् पुत्रान् दारैः दुहितॄः सदृशैः वरैः संयोजयामास ॥ ८ ॥ ❃ ❃ पुत्राणाम् च पुत्राः एकैकस्य शतम् शतम् इति अभवन् यैः वै पंचालेषु पौरंजनः वंशः समेधितः ॥ ९ ॥ ❃ ❃ तद्रिक्थहारेषु तेषु गृहकोशानुजीविषु विषयेषु निरूढेन ममत्वेन अन्वबध्यत ॥ १० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

सप्तविंशे प्रियापुत्राद्यासक्त्या विस्मृतात्मनः। कालकन्याद्युपाख्यानैर्जरारोगाद्युदीर्यते ॥ (१) ॥

तदेवं जीवस्यानुनयादिकथासौंदर्येणात्यंतमुपाधिवश्यत्वमुक्त्वा तन्निमित्तां संसारपरंपरां निरूपयितुमाह इत्थमिति। अत्र च प्रतिपदं कथंचिदध्यात्मपक्षेपि योजयितुं शक्यमेव श्रीनारदेन तु जीवस्य स्त्रीपुरुषवासनादार्ढ्येन विचित्रा संसृतिर्भवतीत्येतावदेव कथातात्पर्यं दर्शितम्। "क्वचित्पुमान्क्वचिच्च स्त्री क्वचिन्नोभयमंधधीः। देवो मनुष्यस्तिर्यग्वा यथाकर्मगुणं भवः ॥" इति वदता तत्रादौ पुंस्त्वेन संसृतिरध्यायत्रयेणोक्ता ततश्चैकेनाध्यायेन स्त्रीत्वेन संसृतिं प्रदर्श्येश्वरप्रसादलब्धज्ञानेन मोक्ष इत्युक्तम्। ततस्तदेव यथोपयोगं व्याख्यातमिति पंचाध्याय्यारंभः प्रतीयते। प्रतिपदमध्यात्मयोजना तु दुर्घटा प्रायशो निष्प्रयोजना चेति स्वप्रौढिख्यापन-

---

१. प्रा० पा०—रुचिराम्बराम्। २. प्रा० पा०—बुधो। ३. प्रा० पा०—मजीजनत्। ४. प्रा० पा०—पाञ्चाल०। ५. प्रा० पा०—विषयानन्व०।

मनादृत्य यथोपयोगमेव व्याख्यास्यामः। सभ्यक् सम्यक् विभ्रमैर्विलासैः॥ १॥ ❀ ❀ कृतं स्वस्त्ययनं मंगलं कुंकुमसिंदूरादिभिर्यस्यास्ताम्॥ २॥ ❀ ❀ उपगूढः परिरब्धः। परिरब्धा कंधरा तस्या येन। रह एकांते अनुमंत्रैरनुकूलैर्गुह्यभाषणैः अपकृष्टा चेतना विवेको यस्य। कालरंह आयुर्व्ययम्। दिवा निशा अहर्निशं, प्रमदैव परिग्रहो न ज्ञानसाधनं यस्य॥ ३॥ ❀ ❀ महार्हतल्पे उत्कृष्टशय्यायां शयानः महिष्या भुज उपधिरुपधानमुच्छीर्षकं यस्य अविसर्गपाठे शयनक्रियाविशेषणम्। तां महिषीमेव परं पुरुषार्थममन्यत न तु यन्निजं रूपं ब्रह्म तत् तमसाऽज्ञानेनाभिभूतो यतः॥ ४-५॥ ❀ ❀ पुत्रानिंद्रियपरिणामान् दुहितॄस्तदनंतरं बुद्धिवृत्तीः। इयं पुत्रसंख्या च बाहुल्यमात्रविवक्षया। दुहितृसंख्या तु पुत्रेभ्यो न्यूनत्वेन गार्हस्थ्यसौन्दर्यार्थमेव। विराट् सम्राट् आयुषोऽर्धमित्याद्यपि कथासौंदर्यार्थमेव॥ ६॥ ❀ ❀ पुरंजनकन्यात्वात्पौरंजन्यः। हे प्रजापते॥ ७॥ ❀ ❀ दारैः परिणामानंतरं हिताहितचिंताभिः वरैरुचितविषयभोगैः॥ ८॥ ❀ ❀ पुत्राणां पुत्राः कर्माणि पंचालेषु शब्दादिविषयेषु॥ ९॥ ❀ ❀ तेषु पुत्रादिषु तेषामपि ये रिक्थहाराः पुत्रास्तेषु च॥ १०॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

आदिना पौत्रस्नुषादिग्रहः। द्वितीयादिना गन्धर्वोपाख्यानादिग्रहः। तृतीयादिना मरणादिग्रहः (१)। तदेवं तदित्थम्। अनुनयः कुपितप्रसादनम्। आदिना स्वानुकूल्यप्रदर्शनग्रहः। अत्र च पुरंजनोपाख्याने कथंचित्प्रतिभाधिक्यादिना। तत्र श्रीनारदोपदेशकथायां ततो नारदोक्त्यनुरोधादेव। स्वप्रौढिप्रख्यापनं निजपाण्डित्याधिक्यद्योतनम्। अत्र विश्वनाथः—तदेवं धार्मिकस्यापि जीवस्य कदाचिदंतराये प्राप्ते विविधदुष्कृतदूषितांतःकरणस्यापि पुनर्लब्धविवेकस्य दानव्रततपःप्रायश्चित्तादिकं कृतवतोपि मनोमालिन्यानपगमादनुपदमनुतापसहस्रविदीर्णस्य भाग्यवशादेव पुनरपि सद्बुद्धिप्राप्तिः प्रपञ्चिता। इदानीं पूर्ववदेव धर्मबुद्धिमतः सदाचारस्य तस्य गार्हस्थ्यमाह—इत्थमिति। पक्षे धर्मे मतिं त्यक्त्वा पूर्ववत्कर्मबुद्धावेवासक्तो बभूवेत्यर्थः॥ १॥ ❀ ❀ सुस्नातेत्यादिना स्वीयसद्बुद्धेः प्रसन्नतामालक्ष्य विगतमनोमालिन्यः कृतार्थो बभूवेत्युक्तम्॥ २॥ ❀ ❀ पक्षे धर्मकर्मनिर्वाहमंत्रणाभिरपकृष्टा विलुप्तीकृता चेतना संसारतरणलक्षणा बुद्धिर्यस्य सः। कालस्य रंहो वेगं वैराग्याभावान्न बुबुधे। कीदृशमिदं दिवा गतमियं निशा गतेत्येतत्प्रकारकमित्यर्थः॥ ३॥ ❀ ❀ तामेव व्यवायतो हेतोर्मनुते स्त्रीसंगसुखमेव पुरुषार्थममन्यत। अमनुतेति स्वामिसंमतः पाठः प्रतिभातीति। न तु निजं स्वीयं परञ्च किमपि अमनुतागणयदित्यर्थः। यद्वा निजमात्मानं ततः परञ्च परमात्मानमित्यर्थः। अध्यात्मपक्षे व्यवायतो धर्मपत्नीसंगतो धर्मासक्त्या धर्ममेव पुरुषार्थममन्यत न तु मोक्षं यतो न निजं जीवस्वरूपं नापि परं परमेश्वरस्वरूपं, धार्मिक इत्युन्नद्धमदः। महामना दानशीलः। महार्हतल्पे पुण्यकर्मणि शयानो मग्नः। महिषीभुजोपधिरविद्योपाधिः॥ ४॥ ❀ ❀ राजेन्द्रेति। त्वं तु यज्ञानुष्ठानरतत्वादव्यर्थमायुर्नयन्नपि वस्तुविचारशून्ययज्ञकार्यनिरतत्त्वाल्क्षपयस्येवेति भावः। नवं वयः परिशुद्धं ज्ञानमानंदस्वरूपं व्यतिक्रांतं गतप्रायमिति केचित्॥ ५॥ ❀ ❀ पुत्रान्विवेकनिर्णयसंशयादीन्। दुहितॄर्लज्जोत्कंठाचिन्ताद्याः। आयुषोऽर्द्धमिति पञ्चाशद्वर्षपर्यंतं विषयभोगलांपट्यमिति विवक्षया॥ ६॥ ❀ ❀ पितृमातृयशस्करीरिति। तासां शीलौदार्यगुणोपेतत्वेन पुण्यक्रियाहेतुत्वात् प्रजापते इति। तमेव निर्दिशयोक्तं त्वमेव तासां प्रजानां पतिरिति भावः॥ ७॥ ❀ ❀ हिताहितचिंताभिः यथा सौगंध्यसौरूप्यादौ हितचिन्ता दौर्गंध्यकौरूप्यादौ चाहितचिंतेति। विश्वनाथस्तु—दारैर्मतिधृत्यादिभिर्वरैर्नयप्रणयादिभिरित्याह॥ ८॥ ❀ ❀ कर्माणि पुण्याचरणादीनि॥ ९॥ ❀ ❀ तेषु विवेकादिषु। तस्य पुरंजनस्य। रिक्थहारेषु अभिमानादिधनहर्तृषु। गृहानुजीविषु प्राणेषु कोशानुजीविषु सहओजआदिषु इति चक्रवर्त्ती॥ १०॥

## श्रीमद्वीरराघवव्याख्या

एवं जाग्रत्स्वप्नसुषुप्त्यादिभिरवस्थाभिः संसरतो जीवस्य दुर्लभोऽपि कदाचिद्दैवात्सञ्जातपरितापस्य विवेकात्मकबुद्ध्युदयः। इदानीमेव सञ्जातविवेकमपि अनन्तवासनारुचिप्रकृतिसम्बन्धादियुक्तं पुमांसम् "यया धर्ममधर्मं च कार्यं चाकार्यमेव च। अयथावत्प्रजानाति बुद्धिः सा पार्थ! राजसी॥ अधर्मं धर्ममिति या मन्यते तमसा वृता। सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ! तामसी॥" इत्युक्तविधरजस्तमःप्रचुरा सती बुद्धिः. पुनः प्रसह्य स्ववशीकृत्य संसारयामासेत्याह इत्थमिति। हे महाराज! इत्थं दैवात्कदाचित् सञ्जातविवेकमपि पुरञ्जनं विभ्रमैः धर्माधर्मकार्याकार्यादिविषयकैर्विभ्रमैर्भ्रमजननद्वारेत्यर्थः सभ्यक् सम्यक् शनैः स्ववशमानीय पुरञ्जनी रजःप्रचुरा बुद्धिः पतिं रमयती स्वकार्यप्रवणं कुर्वती स्वयं रेमे व्यापृतवती। कथापक्षे तु सम्यग्विभ्रमैर्विलासैरन्यत् स्पष्टम्। केचिदत्र "प्रतिपदं कथञ्चिदध्यात्मपक्षे योजयितुं शक्यमेव श्रीनारदेन तु जीवस्य स्त्रीपुरुषवासनादार्ढ्येन विचित्रा संसृतिर्भवतीत्येतावदेव कथातात्पर्यं दर्शितम्। "कचित्पुमान् कचिच्च स्त्री कचिन्नोभयमन्धधीः। देवो मनुष्यस्तिर्यग् वा यथाकर्मगुणं भवः" इति वदता तत्रादौ पुंस्त्वेन संसृतिरध्यायत्रयेणोक्ता ततश्चैकेनाध्यायेन स्त्रीत्वेन संसृतिं प्रदर्श्येश्वरप्रसादाल्लब्धज्ञानेन मोक्ष इत्युक्तं, ततस्तदेव यथोपयोगं व्याख्यातमिति पञ्चाध्याय्यर्थः प्रतीयते प्रतिपदमध्यात्मयोजना तु दुर्घटा निष्प्रयोजना चेति स्वप्रौढिख्यापनमनादृत्य यथोपयोगमेव व्याख्यास्यामः" इत्याहुः। तत्र प्रतिपदमध्यात्मयोजनमनुपयुक्तं चेत् किमर्थं तत्कथनमिति द्रष्टव्यं, न च कथासौन्दर्या-

येति वक्तुं शक्यमध्यात्मोपयुक्तांशकथनेनैव तत्सौन्दर्यलाभादन्यथा कथासौन्दर्यार्थमप्यनुपयुक्तांशानां बहूनां सत्त्वेन तेषामपि कथनापत्तेः। यदपि कश्चित्पुमानित्यादि तन्न कश्चित्पुमानित्यादिग्रन्थस्य निगमनपरत्वेन प्रधानप्रतिपाद्यस्यैव निगमनीयत्वेन तस्य प्रतिपदमध्यात्मयोजनाभावे प्रमाणत्वाभावात्, नहि यावन्तोऽर्थाः कथितास्ते सर्वे निगमनीया इत्यस्ति नियमः। यदपि यथोपदेशं व्याख्यातमित्यादि तदपि न, अप्रसिद्धपदव्युत्पत्तिकथनेन तदनुकूलतया प्रसिद्धव्युत्पत्तीनां पदानां व्याख्यातुं शक्यत्वेन तावन्मात्रव्युत्पत्तिप्रदर्शनात्। यदपि चोक्तं प्रतिपदमध्यात्मयोजना दुर्घटा निष्प्रयोजना चेति तत्र निष्प्रयोजनत्वं यथोपदेशं व्याख्यातेषु पुरञ्जनादिष्वप्यविशिष्टं, जीवस्य स्त्रीपुरुषवासनादार्ढ्येन विचित्रा संसृतिर्भवति ईश्वरप्रसादलब्धज्ञानेन मोक्ष इत्युक्त्यैव चारितार्थ्येन पञ्चाध्याय्या वैयर्थ्यस्य स्पष्टत्वात्। दुर्घटा चेति परमवशिष्यते तत्रान्तदुर्घटं यत्पदमध्यात्मपक्षे तद्विहायान्यानि पदानि सर्वाणि तत्पक्षे व्याख्येयान्येव। अनुपयुक्तं पदमगत्या कथासौन्दर्यायेति वक्तुं युक्तं, यत्र श्लोकस्थानां सर्वेषामपि पदानां दौर्घट्यं 'सा त्वं मुखं सुदति सुभ्रनुरागभारे'त्यादौ तत्र संघातात्मकवाक्यार्थद्योत्यस्वस्य कस्यचिदुपयुक्तार्थस्य योजना कर्तव्या॥ १॥ ❀ ❀ तथा हि हे राजन्! स राजा पुरञ्जनः सुस्नातां कृतमङ्गलस्नानां रुचिरमुज्ज्वलमम्बरं यस्याः, कृतं स्वस्त्ययनं मङ्गलं कुङ्कुमसिंदूरादिभिर्यस्यास्तां तृप्तां स्वाद्वन्नपानादिभिरुपागतां समीपमागतां महिषीमभ्यनन्दत्। सुस्नातां रुचिराम्बरादिभिः सुन्दरतरां महिषीमभिनन्दयन् स्त्रियमिव राजसीं बुद्धिमनुकूलाममंन्यतेत्यर्थः॥ २॥ ❀ ❀ तया महिष्या उपगूढः आश्लिष्टः परिरब्धः आश्लिष्टा महिष्याः कन्धरा येन सः। अनेन जीवबुद्ध्योरन्योऽन्यं दृढतरसंबन्धः सूचितः एकत्वेनानुसंधानं च व्यज्यते। रह एकान्ते अनुकूलैर्गुप्तभाषणैः शब्दादिविषयचिन्तनैरपकृष्टा चेतना विवेको यस्य प्रमदेव प्रमदालस्यकारिणी बुद्धिरेव परिग्रहो न विवेको यस्य सः॥ ३॥ ❀ ❀ महार्हतल्पे उत्कृष्टशय्यायां हृदये शयानः अधितिष्ठन् कालरंहः कालवेगमायुष्यं दुरत्ययं संसारिणो वर्जनीयं दिवा निशेत्येवंरूपेण न बुबुधे नानुसंहितवानित्यर्थः। कथापक्षे तु स्पष्टोऽर्थः—महार्हतल्पे उत्कृष्टशय्यायां हृदये महिष्या भुज एव उपधिः उपधीयतेऽस्मिन् शिर इत्युपधिरुपधानमुच्छीर्षकं यस्य सः शयानः। अनेन बुद्धिपारवश्यं सूचितं व्यवायतः विषयभोगात्तमोऽभिभूतः अज्ञानतिरोहितः तामेव महिषीमेवं बुद्धिसङ्गकृतं वैषयिकसुखमेव पुरुषार्थममनुत न तु निजं स्वरूपं तत्परं परमात्मस्वरूपं च नान्वसन्यत इत्यर्थः॥४॥ ❀ ❀ तया महिष्या एवं तत्पारवश्येन रममाणस्य संसरतः अत एव कामैः शब्दादिभिरनुभूयमानैः कश्मलं मलिनं चेतो यस्य हे राजेन्द्र नवं नूतनं वयः क्षणार्द्धमिव व्यतिक्रान्तं देहविशिष्टस्यैव भोक्तृत्वाद्देहाभिप्रायेण नवं वयो व्यतिक्रान्तमित्युक्तं, पक्षान्तरेऽप्ययमेवार्थः॥ ५॥ ❀ ❀ तस्यां महिष्यां पुरञ्जनः पुत्रानिन्द्रियपरिणामरूपानेकादशशतानि अजीजनदुत्पादयामास। आयुषः हे विराट् इति संबोधनं पुरुषायुषः शतसंवत्सरात्मकस्यार्धपञ्चाशद्वर्षात्मकमतिक्रान्तमभूत्। इदमपि देहाभिप्रायेणोक्तम्॥६॥ ❀ ❀ दुहितॄरिन्द्रियपरिणामानन्तरभाविनीर्बुद्धिवृत्तिरूपाः दशाधिकशतं पित्रोर्जीवबुद्ध्योः भ्रातॄणामिन्द्रियपरिणामानां च यशस्करीरनुकुलाः, अनुकूलो हि यशस्करो न तु प्रतिकूलः, शीलं राजसतामसस्वभावः अनन्तसुखाभिव्यक्तिजनकत्वरूपमौदार्यरूपञ्च यो गुणः तेनोपेताः युक्ता अजीजनदित्यनुषङ्गः। सर्वा अपि दुहितरो दशाधिकशतं पौरञ्जन्यः पुरञ्जनस्यापत्यत्वात्पौरञ्जन्य इत्युच्यन्ते। हे प्रजापते! अत्र पुत्रसंख्या बाहुल्यमात्राभिप्राया दुहितृसंख्या च पुत्रेभ्यो न्यूनत्वेन गार्हस्थ्यसौन्दर्यार्था॥ ७॥ ❀ ❀ स पाञ्चालपतिः पञ्चन्ति विषयान्व्यक्तीकुर्वन्त्यनुभावयन्तीति पञ्चालाः इन्द्रियाणि त एव पाञ्चालाः प्रज्ञादित्वात् स्वार्थेऽण्, तेषां पतिः करणाधिपो जीव इत्यर्थः। पित्रोर्वंशं विशेषेण वर्द्धयन्तीति तान् इन्द्रियपरिणामरूपान् दारैर्हिताहितचिन्तारूपाभिर्भार्याभिः संयोजयामास तथा दुहितॄः वरैरुचितैर्विषयभोगरूपैः पतिभिः संयोजयामास॥ ८॥ ❀ ❀ पुत्राणां पुत्राः पुण्यापुण्यरूपकर्मरूपा एकैकस्य शतं शतं शतशब्दो बाहुल्याभिप्रायकः अभवन्। पौत्रान्विशिनष्टि—यैः पौत्रैः पौरञ्जनो वंशः संसारः तेषु पाञ्चालेषु शब्दादिविषयेषु निमित्तेषु निमित्तमिह फलं शब्दादिविषयभोगार्थमित्यर्थः, समेधितः संवर्द्धितः। यद्वा वंश इन्द्रियपरिणामतदनन्तरबुद्धिवृत्तिरूपपुत्रपुत्र्यादिरूपो वंशः शब्दादिविषयेषु कर्मभिरेव समेधित इत्यर्थः॥ ९॥ ❀ ❀ तेषु तस्य पुरञ्जनस्य रिक्थहारेषु पुत्रेषु गृहं शरीरं कोशः अहंममाभिमानाश्रयोऽहंकारः अनुजीविन इन्द्रियप्राणादयः तेषु निरूढेन रूढमूलेन ममत्वेन ममकारेणासक्तः न प्राबुध्यत स्वस्वरूपपरमात्मस्वरूपे इति शेषः॥ १०॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

पुरञ्जननाम्नो जीवस्य जाग्रत्स्वप्नयोरन्यस्यामवस्थायां विषयप्रसरणमाह इत्थमिति। विभ्रमैर्वृत्तिविशेषै रेमे विषयेषु। व्यावृत्तवत्यां जयलक्षणवृत्त्यां सुषुप्तजनवत्स्थितम्॥ १॥ ❀ ❀ रुचिरेण कमनीयेनाम्बरेण नानावसनेन संवृतां कृतं स्वस्त्ययनं स्वस्त्याशीर्वचनस्थायनं वृत्तिविशेषो यस्याः सा तथा तां तामसानां तामससङ्गमोऽसुखकारण इति द्योतनायैवमुक्तिः॥२॥ ❀ ❀ कयाचिद् वृत्त्या परिरब्धः वृत्त्यन्तराख्यकन्धरः "कण्ठो ग्रीवा कन्धरा च" इत्यभिधानं रहोऽनुमन्त्रैर्भणितादिलक्षणवृत्तिभिरपकृष्टं चेतनं स्वरूपज्ञानं यस्य स तथा इदं दिवाज्ञानमिदं निशाज्ञानमिति कालरंहो ज्ञानाज्ञानविशेषावस्थां प्रमदावैषयिकबुद्धिरेव परिग्रहो यस्य स तथा॥ ३॥ ❀ ❀ शयानस्तत्त्वमजानन्महार्हतल्पे ज्ञाननाशिनि वृत्तिविशेषे महिषीभुजोपधे बुद्धेरहङ्कारलक्षणवृत्तिशिरोऽधिष्ठाने तामेवामनुत कर्त्ता भोक्ता सुखी दुःखीति तद्धर्मानात्मन्यमन्यत। तत्र कारणमाह व्यवायत इति। मैथुनलक्षणाज्ञानवृत्तिविशेषात् इदमेवाह तम इति। निजमात्मानं तत्परं ब्रह्मलक्षणं तत्त्वं नामन्यत निजमात्मीयमित्यभिधानम्॥ ४॥ ❀ ❀

वयः शुद्धज्ञानानन्दरूपलक्षणं व्यतिक्रान्तं गतप्रायमासीत् ॥ ५ ॥ ❀ ❀ अभिभूतनिजज्ञानस्य तस्य विषयबुद्धेर्नानावृत्त्युत्पत्तिप्रकारमाह तस्यामिति । चक्षुरादीनि मनोऽन्तानीन्द्रियाण्येकादशसंज्ञानि विषयीकृत्य शतमनन्ताः परिणामा वृत्तयो भवन्ति ताः शतान्येकादशपुत्रा उच्यन्ते बाल्यावस्थायां बुद्धिविस्ताराभावाद्यौवनावस्थायां तत्संभावनमपेक्ष्यायुषोऽर्धमगादित्युच्यते । विषयमेव राजयतीति विराट् ॥ ६ ॥ ❀ ❀ परिणामानन्तरं बुद्धिवृत्तयो दुहितर इत्युच्यन्ते पितृशब्दवाच्यानामिन्द्रियाणां परिणामानां भ्रातृशब्दवाच्यानां ज्ञानानन्दलक्षणयशसो नाशिनीः "कृ विक्षेपे" इति धातुः स्वजातिप्रसिद्धशीलौदार्यगुणयुक्ताः बाह्यविवक्षया संख्याकथनमन्तस्त्वनेक त्वेत्वसंख्यैव पौरञ्जन्योऽनेकदेहजननहेतवः । हे प्रजापते ! ॥ ७ ॥ ❀ ❀ पुत्रान् बुद्धिपरिणामान् दारैः परिणामानन्तरचेष्टाभिः संयोजनं दुहितृर्बुद्धिवृत्तीः सदृशैर्वरैर्वृत्तियोग्यविषयैः ॥ ८ ॥ ❀ ❀ पुत्राणां पुत्रा अभवन्निति परिणतवृत्तिभ्यो वृत्त्यन्तराणीति । पाञ्चालेषु विषयेषु ॥ ९ ॥ ❀ ❀ तस्य रिक्थं विषयधनं हरन्तीति तद्रिक्थहारास्तेषु नाना वासना गृह्णातीति गृहं तच्च कोशो मनस्तदुपजीव्य वर्तन्त इति गृहकोशानुजीविनस्तेषु निगूढेन प्रविष्टेन ममैते परिणामादय इति कल्पितेन ममत्वेन विशेषेण सक्तो नात्मानं परञ्च जानातीत्यन्वयः ॥१०॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

मनुते इत्यत्र अमनुतेति स्वामिसम्मतः पाठः । किञ्च सर्व्वत्राद्दष्टः ॥ १-५ ॥ ❀ ❀ तस्यामिति सार्द्धकम् । मातृ इत्यत्र भ्रातृ इति क्वचित् । मूलपाठस्तु न चित्सुखसम्मतः ॥ ६ ॥ ❀ ❀ शीलेत्यर्द्धकम् ॥ ७ ॥ ❀ ❀ सपत्नेति टीकायां हिताहितचिन्तापि यथा सौगन्ध्यसौरूप्यादौ हितचिन्ता दौर्गन्ध्यकौरूप्यादावहितचिन्तेति ॥ ८-९ ॥ ❀ ❀ अन्ववध्यतेत्यत्र अन्वरुद्धथतेति क्वचित्, किन्तु मूलपाठ एव चित्सुखसम्मतः ॥ १० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

सद्बुद्धया सहितस्यास्य सुकृतान्यपि कुर्व्वतः । सप्तविंशे जरारोगाद्युपाख्यानेन कथ्यते ॥ ( १ ) ॥

तदेवं धार्मिकस्यापि जीवस्य कदाचिदन्तराये प्राप्ते विविधदुष्कृतदूषितान्तःकरणस्यापि पुनर्लब्धविवेकस्य दानव्रततपःप्रायश्चित्तादिकं कृतवतोऽपि मनोमालिन्यानपगमादनुपदमनुतापसहस्रविदीर्णस्य भाग्यवशादेव पुनरपि सद्बुद्धिप्राप्तिः प्रपञ्चिता । इदानीं पूर्व्ववदेव धर्म्मबुद्धिमतः सदाचारस्य तस्य गार्हस्थ्यमाह इत्थमिति । सध्र्यक् सम्यक् विभ्रमैर्विलासैः । पक्षेऽधर्म्मे मतिं परित्यज्य पूर्व्ववद्धर्म्मबुद्धावेवासक्तो बभूवेत्यर्थः ॥ १ ॥ ❀ ❀ सुस्नातेत्यादिना स्वीयसद्बुद्धेः प्रसन्नतामालक्ष्य विगतमनोमालिन्यः कृतार्थो बभूवेत्युक्तम् ॥ २ ॥ ❀ ❀ अनुमन्त्रैरनुकूलगुह्यभाषणैः पक्षे धर्म्मकर्म्मनिर्वाहमन्त्रणाभिः । अपकृष्टा विलुप्तीकृता चेतना संसारतरणलक्षणा बुद्धिर्यस्य सः । कालस्य रंहो वेगं वैराग्याभावान्न बुबुधे कीदृशमिदं दिवा गतमियं निशा आगतेति एतत्प्रकारकमित्यर्थः ॥ ३ ॥ ❀ ❀ महिष्या भुज एव उपधिरुपधानं यस्य सः । अविसर्गपाठे शयनक्रियाविशेषणम् । तामेव व्यवायतो हेतोर्मनुते । स्त्रीसङ्गसुखमेव पुरुषार्थममन्यत अमनुतेति च पाठः, न तु निजं स्वीयं परञ्च किमपि अमनुत अगणयदित्यर्थः । तमसा अज्ञानेन यतोऽभिभूतः । अध्यात्मपक्षे व्यवायतो धर्म्मपत्नीसङ्गतो धर्म्मासक्त्या धर्म्ममेव पुरुषार्थममन्यत नतु मोक्षं यतो न निजं जीवस्वरूपं नापि परं परमेश्वरस्वरूपं धार्म्मिक इत्युन्नद्धमदः । महामना दानशीलः महार्हतल्पे पुण्यकर्म्मणि शयानो मग्नः । महिषीभुजोपधिरविद्योपाधिः ॥ ४-५ ॥ ❀ ❀ पुत्रान् विवेकनिर्णयसंशयादीन् । दुहितृर्लज्जोत्कण्ठाचिन्ताद्याः पुत्रसंख्या बाहुल्यमात्रविवक्षया दुहितृसंख्या तु पुत्रेभ्यो न्यूनत्वेन गार्हस्थ्यसौन्दर्य्यार्थं विराट् सम्राट् जीवश्च आयुषोऽर्धमत्यगादिति पञ्चाशद्वर्षपर्य्यन्तं विषयभोगलाम्पट्यमधिकमिति विवक्षया पितृमातृयशस्करीरिति तासां पुण्यक्रियाहेतुरूपत्वात् ॥ ६ ॥ ❀ ❀ पुरञ्जनकन्यात्वात् ताः पौरञ्जन्य उच्यन्ते इति शेषः ॥ ७ ॥ ❀ ❀ दारैर्मतिधृत्यादिभिः वरैर्विनयप्रणयादिभिः ॥ ८ ॥ ❀ ❀ पुत्राणां पुत्राः पुण्याचरणादयः पाञ्चालेषु शब्दादिषु ॥ ९ ॥ ❀ ❀ तेषु विवेकादिषु पुत्रेषु तस्य पुरञ्जनस्य रिक्थहारेषु अभिमानादिधनहर्तृषु गृहानुजीविषु प्राणेषु कोशानुजीविषु सहओजआदिषु ॥ १० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सप्तविंशे जीवस्य नानाबुद्धिवृत्तिविमोहितस्य जरारोगादिनानादुःखप्राप्तिर्भवतीति वर्ण्यते इत्थमिति । पुरञ्जनी जीवाधिष्ठिता बुद्धिः जीवमित्थं सध्र्यक् सम्यक् वशमानीय विभ्रमैर्विलासैः आत्मपरमात्मस्वरूपादिज्ञानं विना बुद्धावात्मभ्रान्त्या जीवस्य स्त्रीपुन्नपुंसकभावनानादेहतन्निबन्धनजरामयादिदुःखावाप्तिरित्यध्यायार्थः । अन्यत्कथासौन्दर्यार्थम् ॥ १ ॥ ❀ ❀ कृतं स्वस्त्ययनं मङ्गलं वस्त्राभरणकुङ्कुमसिन्दूरादिभिर्यस्यास्तां तृप्तां भोजनपानादिभिः प्रसन्नाम् ॥ २ ॥ ❀ ❀ उपगूढ आलिङ्गितः परिरब्धा भार्याकन्धरा येन सः रहोनुमन्त्रैः एकान्ते अनुकूलैर्भाषणैः अपकृष्टा अपनीता चेतना विवेको यस्य सः

कालस्य रंहो वेगं दिवानिशेति न वेद यतः प्रमदया परितः ग्रहो ग्रहणं यस्य सः ॥ ३ ॥ ॐ ॐ महिषी भुजैवोपधिरुपबर्हणं यस्य सः तामेव परं पुरुषार्थं मनुते न तु निजं स्वस्वरूपं यत्परं सर्वात्मभूतं वासुदेवस्वरूपं च यतस्तमोऽभिभूतः अज्ञानावृतः ॥ ४ ॥ ॐ ॐ नवं वयः श्रेयःसाधनयोग्यं यौवनम् ॥ ५ ॥ ॐ ॐ विराट् विकलः पुत्रान् अध्यात्मपक्षे इन्द्रियपरिणामान् ॥ ६ ॥ ॐ ॐ हे प्रजापते ! दुहितॄः इन्द्रियपरिणामानन्तरबुद्धिवृत्तीः तस्यामजनयदिति पूर्वेणान्वयः ॥ ७ ॥ ॐ ॐ दारैरिष्टानिष्टचिन्तारूपाभिर्भार्याभिः वरैरुचितैर्विषयभोगरूपैः ॥ ८ ॥ ॐ ॐ पुत्राणां पुत्राः कर्माणि पञ्चालेषु शब्दादिविषयेषु ॥ ९ ॥ तेषु पुत्रादिषु तद्रिक्थहारेषु तेषां गृहादिषु च नितरां रूढेन ममत्वेनान्वबध्यत ॥ १० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

पुत्रपौत्रादिसक्तस्य विषयाविष्टचेतसः । विनश्यत्ता हि तस्यात्र सप्तविंशे निरूप्यते ॥ १ ॥

एवं स्वप्नावस्थां निरूप्येदानीं जराज्वरकालादिसम्बन्धकथनेन विनाशसामग्रीसांनिध्यलक्षणां विनश्यदवस्थां निरूपयति, सा च देहादिविषयदृढासक्त्यनन्तरभाविभिः देहात्मबुद्धिकृतैरिन्द्रियपरिणामबुद्धिकृतैः इन्द्रियपरिणामबुद्धिवृत्तिविषयभोगैश्च सम्पाद्यते, अन्यथा देहाद्यासक्तिरहितस्य योगनिष्ठस्य जरादिसम्बन्ध एव न स्यादतः पूर्वं देहसक्त्यादिकमेव प्रदर्शयति—इत्थमित्येकादशभिः। हे महाराजेति सम्बोधनं सावधानतार्थम्। इत्थं स्वविभ्रमैर्विलासैः पुरञ्जनी पुरञ्जनं सम्यक् सम्यक् स्ववशमानीय तं पतिं रमयती स्वयं रेमे इत्यन्वयः। अध्यात्मपक्षे तु भोगे जीवस्य बुद्धिपारतन्त्र्यं तस्याश्च स्वातन्त्र्येण प्रधानत्वं प्रदर्शितम् ॥ १ ॥ ॐ ॐ स राजा पुरञ्जनोपि सुस्नातां रुचिराननां मनोहरमुखीं कृतस्वस्त्ययनां कृतं स्वस्त्ययनं मङ्गलं कुङ्कुमसिन्दूरादिभिरलंकारो यया तां अन्नादिभोजनेन तृप्तां उपागतां स्वसमीपं आगतां स्वमहिषीं दृष्ट्वा अभ्यनन्दत् हर्षेण भोगार्थमङ्गीकृतवान्। हे राजन्निति सम्बोधनेन स्वातन्त्र्याभिमानिनां दिग्विजयिनामपि राज्ञां स्त्रीसम्भोगसुखे तत्पारतन्त्र्यमेवेति सूचयति। पक्षान्तरे तु—प्रौढस्य विषयभोगोन्मुखत्वात् तस्य च रजोगुणप्रयुक्तत्वमतः देहात्मबुद्धेरज्ञाननिमित्तत्वेन तमःकार्यत्वेऽपि भोगे जीवानुकूलत्वेन राजसीत्वमेवेति ज्ञेयम्। अत एव तस्या महिषीत्वादिकं दर्शितम्। स्त्रिया बुद्धेर्वा स्वानुकूलतायामेव सुखी भवतीत्यपि सुप्रसिद्धमेवेति ॥ २ ॥ ॐ ॐ तया स्त्रिया उपगूढः परिरब्धः परिरब्धा गृहीता तस्याः कंधरा येन सः, रह एकान्ते तस्या अनुसन्त्रैरनुकूलैर्गुह्यभाषणैरपकृष्टा चेतना विवेको यस्य सः, अतः सा प्रमदैव परिग्रहो ज्ञानभक्त्यादिसाधनं यस्य सः दुरत्ययमत्येतुं प्रतिबद्धुमशक्यं दिवानिशेत्येवंलक्षणं कालस्य रंहो वेगं न बुबुधे न ज्ञातवानित्यन्वयः। पक्षान्तरेऽपि—राजस्या बुद्ध्याऽपगतविवेकस्य विषयाविष्टचित्तस्य वृथैव ममायुर्गच्छतीति कालवेगोऽज्ञात एव, अन्यथा वैराग्येण विषयभोगातिनिवेशं हित्वा मोक्षार्थमेव प्रयत्नं कुर्यादिति दर्शितम् ॥ ३ ॥ ॐ ॐ अतः कालवेगानवबोधेन मरणादिभयाभावात् उन्नद्धोऽतिवृद्धो मदो यस्य सः, अत एव महामनाः नानाप्रकारसङ्कल्पविकल्पवान्, महार्हतल्पे अत्युत्कृष्टशय्यायां शयानः महिष्या भुज एव उपधिः उपधानमुच्छीर्षकं यस्य स तथा तां स्त्रियमेव परं पुरुषार्थं मनुतेऽमन्यत, न तु निजं स्वरूपं न च परमेश्वरं पुरुषार्थममन्यत। यतस्तमसा अज्ञानकार्येण परमार्थदर्शनप्रतिबन्धकेन रजोगुणेनाभिभूतोऽन्धीकृतः तत्रापि हेतुः—वीर इति, यतः प्रौढ इत्यर्थः। पक्षान्तरे तु—अन्तःकरणमेव शय्या तत्र बुद्ध्यध्यासं प्राप्नोति गर्वितो बुद्धिमेव बहु मन्यते स्वरूपं भगवन्तं च विस्मरति। तत्र हेतुरज्ञानमेवेति दर्शितम् ॥ ४ ॥ ॐ ॐ कामकश्मलचेतसः काममोहितचित्तस्य तया स्त्रिया सहैवं रममाणस्य नवं वयः युवावस्थोपलक्षितकालः क्षणार्द्धमिव व्यतिक्रान्तमज्ञात एवोपगतः। तत्प्रतिबन्धे महतामपि युष्माकं राज्ञां सामर्थ्यं नास्तीति हे राजेन्द्रेति। पक्षान्तरे तु—राजसीबुद्धियुक्तस्य काममोहितस्य क्षणार्द्धमिव अज्ञात एव पुरुषार्थहेतुः यौवनोपलक्षितः कालो गच्छति ततो न कोऽपि पुरुषार्थः सिद्ध्यतीति दर्शितम् ॥ ५ ॥ ॐ ॐ तस्यां पुरञ्जन्यां भार्यायां पुरञ्जनः एकदशशतानि पुत्रान् अजनयत्। अथ तावता च आयुषोऽर्द्धं संवत्सरपञ्चाशदब्दात्मकं कालं स विराट् राजा अत्यगात् अतिक्रान्तवान्। पक्षान्तरे तु—पुत्राः इन्द्रियपरिणामाः बुद्धिपरिणामाः संशयविपर्ययनिश्चयात्मका वा, विषयभोगलम्पटत्वस्य पञ्चाशद्वर्षपर्यन्तं इन्द्रियपुष्कलत्वेनाधिक्यात् तत्परिणामानामपि तावदेवाधिक्येनोत्पत्तिरित्यायुषोऽर्द्धमत्यगादित्युक्तम् ॥ ६ ॥ ॐ ॐ पितृमातृयशस्करीर्दशोत्तरशतं दुहितॄः कन्यास्तस्यां सोऽजनयदित्यनुषङ्गेण सम्बन्धः। यशस्करत्वे हेतुमाह—शीलेति, शीलं सुस्वभावः औदार्यं मुक्तहस्तता, शीलादयो ये गुणास्तैरुपेता युक्ता यत इत्यर्थः। अतस्ताः पुरञ्जनकन्यात्वात् पौरञ्जन्य इति ज्ञेयाः। हे प्रजापते इति सम्बोधनेन त्वत्तोऽपि तस्य प्रजाबाहुल्यं जातमिति सूचितम्। पक्षान्तरे तु—दुहितॄः लज्जादिबुद्धिवृत्तीः, तासां लज्जादयादीनां परोपकारहेतुत्वे जीवबुद्ध्योर्यशस्करत्वं तासां शीलादिगुणसहचारात्तदुपेतत्वम् ॥ ७ ॥ ॐ ॐ स पञ्चालपतिः पुरञ्जनः स्ववंशविवर्द्धनान् पुत्रान् दारैः संयोजयामास तान् विवाहितवान्। तथा दुहितॄः कन्याश्च सदृशैः शीलादिगुणयुक्तैर्वरैः संयोजयामास। अध्यात्मपक्षे तु—पुत्रान् इन्द्रियपरिणामादीन् दारैः परिणामानन्तरं हिताहितचिन्ताभिः संयोजयामास, दुहितॄः बुद्धिवृत्तीः सदृशैर्वरैस्तत्तदुचितविनयप्रणयादिभिश्च संयोजयामास। इन्द्रियपरिणामादीनां सङ्कल्पवर्द्धकत्वमेव जीववंशविवर्द्धकत्वम्। ननु सर्वेषां तावन्त इन्द्रियपरिणामा एतावत्यो बुद्धिवृत्त्यादयश्च

भवन्त्येवेति नियमो नास्ति, केषाञ्चिच्छान्तत्वेन मध्य एव मरणाद्वा तदसम्भवात्। न च शतवर्षजीविनः कामिन एवेदमुच्यते इति वाच्यं, साधारण्यव्याघातादिति कथमेवं सङ्ख्योक्तिः सङ्गच्छते इति चेत्, सत्यम्, यस्य पुरुषस्य यावान् संसारो बहिरस्ति तावदन्तःकरणेऽप्यस्ति, बाह्यसंसारस्य अन्तःकरणपूर्वकत्वादित्यत्रैव तात्पर्यं सङ्ख्यानिर्देशस्तत्र न्यूनाधिक्यनिर्देशश्च कथासौन्दर्यार्थं एव ॥ ८ ॥ ❁ ❁ पुत्राणां च एकैकस्य प्रत्येकं शतं शतं पुत्रा अभवन्, यैर्यैरेव पुत्रपौत्रादिभिः पौरञ्जनो वंशः पञ्चालेषु पञ्चालसञ्ज्ञकदेशेषु समेधितः वर्धितो जातः। पक्षान्तरे तु—पुत्राणामिन्द्रियपरिणामानामपि पुत्राः पुण्यपापाचरणलक्षणा एकैकस्य चक्षुरादिपरिणामस्य शतशो दर्शनादिरूपा अभवन्, यैश्चक्षुरादिपरिणामैर्दर्शनादिभिश्च जीवस्य वंशः सङ्कल्पलक्षणः पञ्चालेषु रूपरसादिपञ्चविषयेषु संवर्द्धितः ॥ ९ ॥ ❁ ❁ तेषु पुत्रेषु तथा तद्रिक्थहारेषु तेषां पुत्रेषु च तथा गृहेषु कोशेषु अनुजीविषु भृत्यादिषु च निरूढेनातिदृढेन ममत्वेन हेतुना तेषां स्वस्य च भोगसम्पादनार्थं विषयेषु शब्दादिषु अन्वबध्यत नितरामत्यासक्तो जातः। पक्षान्तरे तु—पुत्रा इन्द्रियपरिणामादयः तत्पुत्राः शुभाशुभकर्माणि, गृहा आधारादिचक्राणि, कोशाः उदरकुक्ष्यादयः, अनुजीविनः इन्द्रियप्राणादयस्तेषु निरूढममत्वेन तत्तद्भोगसम्पादनार्थं विषयेष्वत्यासक्तो जात इत्यर्थः ॥ १० ॥

### भाषानुवाद:

### पुरञ्जनपुरीपर चण्डवेगकी चढ़ाई तथा कालकन्याका चरित्र

श्रीनारदजी कहते हैं—महाराज! इस प्रकार वह सुन्दरी अनेकों नखरोंसे पुरञ्जनको पूरी तरह वशमें कर उसे आनन्दित करती हुई विहार करने लगी ॥ १ ॥ ❁ ❁ उसने अच्छी तरह स्नान कर अनेक प्रकारके माङ्गलिक शृङ्गार किये तथा भोजनादिसे तृप्त होकर वह राजाके पास आयी। राजाने उस मनोहर मुखवाली राजमहिषीका सादर अभिनन्दन किया ॥ २ ॥ ❁ ❁ पुरञ्जनीने राजाका आलिङ्गन किया और राजाने उसे गले लगाया। फिर एकान्तमें मनके अनुकूल रहस्यकी बातें करते हुए वह ऐसा मोहित हो गया कि उस कामिनीमें ही चित्त लगा रहनेके कारण उसे दिन-रातके भेदसे निरन्तर बीतते हुए कालकी दुस्तर गतिका भी कुछ पता न चला ॥ ३ ॥ ❁ ❁ मदसे छका हुआ मनस्वी पुरञ्जन अपनी प्रियाकी भुजापर सिर रक्खे महामूल्य शय्यापर पड़ा रहता। उसे तो वह रमणी ही जीवनका परम फल जान पड़ती थी। अज्ञानसे आवृत हो जानेके कारण उसे आत्मा अथवा परमात्माका कोई ज्ञान न रहा ॥ ४ ॥ ❁ ❁ राजन्! इस प्रकार कामातुर चित्तसे उसके साथ विहार करते-करते राजा पुरञ्जनकी जवानी आधे क्षणके समान बीत गयी ॥ ५ ॥ ❁ ❁ प्रजापते! उस पुरञ्जनीसे राजा पुरञ्जनके ग्यारह सौ पुत्र और एक सौ दस कन्याएँ हुईं, जो सभी माता-पिताका सुयश बढ़ानेवाली और सुशीलता, उदारता आदि गुणोंसे सम्पन्न थीं। ये पौरञ्जनी नामसे विख्यात हुईं। इतनेमें ही उस सम्राट्की लंबी आयुका आधा भाग निकल गया ॥ ६-७ ॥ ❁ ❁ फिर पाञ्चालराज पुरञ्जनने पितृवंशकी वृद्धि करनेवाले पुत्रोंका वधुओंके साथ और कन्याओंका उनके योग्य वरोंके साथ विवाह कर दिया ॥ ८ ॥ ❁ ❁ पुत्रोंमेंसे प्रत्येकके सौ-सौ पुत्र हुए। उनसे वृद्धि प्राप्त होकर पुरञ्जनका वंश सारे पाञ्चाल देशमें फैल गया ॥ ९ ॥ ❁ ❁ इन पुत्र, पौत्र, गृह, कोश, सेवक और मन्त्री आदिमें दृढ ममता हो जानेसे वह इन विषयोंमें ही बँध गया ॥ १० ॥

ईजे[1] च क्रतुभिर्घोरैर्दीक्षितः पशुमारकैः। देवान् पितॄन् भूतपतीन्नानाकामो यथा भवान् ॥ ११ ॥
युक्तेष्वेवं प्रमत्तस्य कुटुम्बासक्तचेतसः। आससाद[2] स वै कालो योऽप्रियः प्रिययोषिताम् ॥ १२ ॥
चण्डवेग इति ख्यातो गन्धर्वाधिपतिर्नृप। गन्धर्वास्तस्य बलिनः षष्ट्युत्तरशतत्रयम् ॥ १३ ॥
गन्धर्व्यस्तादृशीरस्य मैथुन्यश्च सितासिताः। परिवृत्त्या विलुम्पन्ति सर्वकामविनिर्मिताम् ॥ १४ ॥
ते चण्डवेगानुचराः पुरञ्जनपुरं[3] यदा। हर्तुमारेभिरे तत्र प्रत्यषेधत्प्रजागरः ॥ १५ ॥
स सप्तभिः शतैरेको विंशत्या च शतं समाः। पुरञ्जनपुराध्यक्षो गन्धर्वैर्युयुधे बली ॥ १६ ॥
क्षीयमाणे स्वसम्बन्धे एकस्मिन् बहुभिर्युधा। चिन्तां परां जगामार्तः सराष्ट्रपुरबान्धवः ॥ १७ ॥
स एव पुर्यां मधुभुक्पञ्चालेषु स्वपार्षदैः। [4]उपनीतं बलिं गृह्णन् स्त्रीजितो नाविदद्भयम् ॥ १८ ॥
कालस्य दुहिता काचित्त्रिलोकीं वरमिच्छती। पर्यटन्ती न बर्हिष्मन् प्रत्यनन्दत कश्चन ॥ १९ ॥
दौर्भाग्येनात्मनो[5] लोके विश्रुता दुर्भगेति सा। या[6] तुष्टा राजर्षये तु[7] वृतादात्पूरवे वरम् ॥ २० ॥

---

१. प्राचीने पाठे एकादशश्लोको न। २. प्रा० पा०—आससादाथ वै। ३. प्रा० पा०—पुरीं। ४. प्रा० पा०—उपानीतं। ५. प्रा० पा०—दौर्भगेन। ६. प्रा० पा०—या संतुष्टा। ७. प्राचीने पाठे 'तु' अयमंशो न।

अन्वयः—यथा भवान् नानाकामः दीक्षितः पशुमारकैः घोरैः क्रतुभिः देवान् पितॄन् च भूतपतीन् ईजे ॥ ११ ॥ ❀ ❀ एवम् युक्तेषु प्रमत्तस्य कुटुंबासक्तचेतसः वै यः प्रियोषिताम् अप्रियः सः कालः आससाद ॥ १२ ॥ ❀ ❀ नृप चण्डवेगः इति ख्यातः गन्धर्वाधिपतिः बलिनः तस्य षष्ट्युत्तरशतत्रयम् गन्धर्वाः ॥ १३ ॥ ❀ ❀ तादृशीः सितासिताः मैथुन्यः गंधर्व्यः च परिवृत्त्या अस्य सर्वकामविनिर्मिताम् विलुंपंति ॥ १४ ॥ ❀ ❀ यदा ते चण्डवेगानुचराः पुरंजनपुरम् हर्तुम् आरेभिरे तत्र प्रजागरः प्रत्यषेधत् ॥ १५ ॥ ❀ ❀ बली एकः सः पुरंजनपुराध्यक्षः विंशत्या च सप्तभिः शतैः गंधर्वैः शतम् समाः युयुधे ॥ १६ ॥ ❀ ❀ एकस्मिन् बहुभिः युधा स्वसंबंधे क्षीयमाणे सराष्ट्रपुरबांधवः आर्तः पराम् चिंताम् जगाम ॥ १७ ॥ ❀ ❀ पुर्याम् पंचालेषु स्वपार्षदैः बलिम् गृह्णन् स्त्रीजितः मधुभुक् सः भयं न एव अविंदत् ॥ १८ ॥ ❀ ❀ बर्हिष्मन् त्रिलोकीम् पर्यटंती वरम् इच्छती काचित् कालस्य दुहिता कश्चन न प्रत्यनंदत ॥ १९ ॥ ❀ ❀ या वृता तुष्टा राजर्षये पूरवे तु वरम् अदात् सा आत्मनः दौर्भाग्येन दुर्भगा इति लोके विश्रुता ॥ २० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

भूतपतीन् भैरवादीन् ॥ ११ ॥ ❀ ❀ युक्तेष्वात्महितेषु कर्मस्वनवहितस्य स वै कालो जरासमयः ॥ १२ ॥ ❀ ❀ चंडवेगः संवत्सरेणावर्तमानेनोपलक्षितः गंधर्वा दिवसाः ॥ १३ ॥ ❀ ❀ गंधर्व्यो रात्रयः तादृशीस्तादृश्यः मैथुन्यो दिवसैर्मिथुनीभूय स्थिताः सिताश्चासिताश्च शुक्लकृष्णपक्षीयाः परिभ्रमणेन सर्वैः कामैः सह विनिर्मितां पुरीमपहरंति ॥ १४ ॥ ❀ ❀ प्रजागरः प्राणः ॥ १५ ॥ ❀ ❀ विंशत्या च सह ॥ १६ ॥ ❀ ❀ स्वसंबंधे स्वसंबंधिनि प्राणे ॥ १७ ॥ ❀ ❀ स एव मधुभुक् क्षुद्रसुखभोक्ता स्वपार्षदैरिंद्रियैः नाविदन्नालोचितवान् ॥ १८ ॥ ❀ ❀ कालस्य दुहिता जराऽस्ति तां न प्रत्यनंदत् नैच्छत् बर्हिष्मन् हे प्राचीनबर्हिः ॥ १९ ॥ ❀ ❀ पूरवे ययातिपुत्राय तेन वृता सती वरमदात्। ययातिः शुक्रशापाज्जरां प्राप्य पुत्रानुवाच इमां गृह्णीतेति तां ज्येष्ठाश्चत्वारो न जगृहुः। पूरुस्तु जगृहे ततो ययातिस्तस्मै राज्यं ददाविति जरैवादादित्युक्तम् ॥ २० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ईज इति। पक्षद्वये साम्यं यथा भवानिति। तवैव कथेयं कथ्यते तव दृष्टांतत्वं तु संगोपनार्थमेवेति भावः। संदर्भस्तु—यथा भवानिति विभक्तिविपरिणामेन सर्वत्र योज्यमित्याह ॥ ११ ॥ ❀ ❀ युक्तेषु भक्तिवैराग्यादिषु। प्रियोषितां कांताजनानामप्रियः संभोगप्रातिकूल्यात् ॥ १२ ॥ ❀ ❀ नृपेति । नृपालनेनात्महितं झटिति कुरु समागतो दुस्समय इति भावः ॥१३॥ ❀ ❀ तादृश्यो बलवत्यः। अपहरंति जन्मारभ्य प्रतिदिनमायुरपहार एव पुर्य्या अपहार इत्युपचरितः ॥१४॥ ❀ ❀ यदा पंचाशद्वर्षानंतरं पुरं देहमपि हर्तुमारेभिरे तदा प्रजागरः प्राण एव प्रत्यषेधत मा पुरमेव मयि तिष्ठति लुप्यतेति साटोपमाहेति। पंचाशद्वर्षानंतरमपि द्वित्रिवर्षपर्यन्तं बलं नापयातीति भावः "प्राणाग्नय एवैतस्मिन्पुरे जाग्रति" इति श्रुतेः प्राणबलादेव व्यवहारे प्रवर्त्तत इत्यर्थः ॥ १५ ॥ ❀ ❀ युद्धं तु प्रजागरस्य तैः सार्द्धं जन्मारभ्यैवाभूदित्याह सप्तभिः शतैर्विंशके। न चेति वर्षगतानां दिनानां रात्रीणां च तावत्येव संख्या दर्शिता। शतं समा इति। यावत्परमायुरित्यर्थः। "शतायुर्वै पुरुषः" इति श्रुतेः ॥ १६ ॥ ❀ ❀ त्रिपंचाशद्वर्षपर्यंतं प्रजागरस्य प्रायः प्रजागरो नाभूदिति तदनंतरं तूत्तरोत्तरं पराजय एवेत्याह—क्षीयमाण इति। बहुभिः कालावयवैः ॥ १७–१८ ॥ ❀ ❀ जराप्रवेशमुपाख्यानेनाह—कालाज्जरा जायत इति कालस्य दुहितेति। नामविशेषाश्रवणात्काचिदिति। बर्हिष्मन्निति। यज्ञादिकर्मकर्तुस्त्वयापि सा समीपमागता न तु सा कमप्ययं याज्ययं योगी सत्कर्मकर्त्तायं मया परिहार्य्य एवेति मनुते इति भावः ॥ १९ ॥ ❀ ❀ आत्मनः शरीरस्य दौर्भाग्येण सौंदर्यनाशकत्वेन दुर्गतो भगो यया सा दुर्भगेति प्रसिद्धा ॥ २० ॥

## श्रीमद्वीरराघवव्याख्या

नानाकामः नानाभूतान् शब्दादिविषयान् कामयमानः पशुमारकैः हिंसागर्भैरत एव घोरैः क्रतुभिः कर्मेन्द्रियव्यापाररूपैः दीक्षितः कृतसङ्कल्पः कर्मेन्द्रियव्यापाररूपान् क्रतूनारभ्येत्यर्थः। तेषां प्रायशः पञ्चसूनादिहिंसागर्भत्वात्पशुमारकैरित्युक्तम्, देवादीनीजे इष्टवान्। देवशब्दो देवाधिष्ठितेन्द्रियपरः इन्द्रियाण्यतार्प्सीदित्यर्थः। पितॄन् भूतपतीनिति दृष्टान्ताभिप्रायकं यथा भवान् देवपितृभूतपतीनीजे तथायं देवानीजे इत्यर्थः ॥ ११ ॥ ❀ ❀ युक्तेषु दृढतराभिसन्धियुक्तेषु कर्मसु प्रमत्तस्य नितरामासक्तस्य कुटुम्बे बुद्धितद्वृत्त्यादावासक्तचित्तस्य स वै कालः जरासमयः आससाद प्राप्तः। देहदृष्टयेदमुक्तं कालं विशिनष्टि। यः कालः प्रियोषितां

परस्परमप्रियकरः ॥ १२ ॥ ❀ ❀ चण्डवेग आशुवेगः संवत्सररूपः कालः ख्यातः प्रसिद्धः स हि गन्धर्वाणां गन्धर्वाश्च गन्धर्व्यश्च "पुमान् स्त्रिया" इत्येकशेषः तेषामधिपतिः तस्य बलिनः प्रसह्यायुर्हरतः चण्डवेगस्य भृत्याः षष्ट्यधिकशतत्रय-दिवसात्मकाः गन्धर्वाः परोक्षमायारूपधनापहारित्वाद्गन्धर्वरूपत्वेन रूप्यन्ते ॥ १३ ॥ ❀ ❀ तथा तादृशीरस्य चण्डवेगस्य सम्बन्धिन्यः तादृश्यः आर्षत्वाद्व्यत्ययेन द्वितीया षष्ट्युत्तरशतत्रयसङ्ख्याका गन्धर्व्यः रात्र्यात्मिकाः मैथुन्यः दिवसैरेवं मिथुनीभूय स्थिताः सिताश्चासिताश्च शुक्लकृष्णपक्षीयाः परिवृत्त्या परिभ्रमणेन सर्वैः शब्दादिभिः तत्करणैश्च विनिर्मितां पुरीं शरीरं विलुम्पन्ति अपहरन्ति अपहर्तुमारेभिरे इत्यर्थः। जराप्राप्त्यनन्तरप्राप्ता इत्यर्थः, एतत्सर्वं देहदृष्ट्योक्तमिति द्रष्टव्यम् ॥ १४ ॥ ❀ ❀ चण्ड-वेगस्यानुचरास्ते गन्धर्वाः पुरञ्जनस्य पुरीं यदा हर्तुमारेभिरे आरब्धवन्तः अत्र पुर्यां यः प्रजागरः प्राणः सुषुप्त्यवस्थायामपि प्राणव्यापारात्प्रजागर इत्युक्तं प्रत्यषेधयत् न्यवारयत्। यावत् प्राणव्यापारस्तावच्छरीरस्यावैकल्येनावस्थानात्प्रत्यषेधदित्युक्तम् ॥ १५ ॥ ❀ ❀ स एकः प्रजागरः सप्तभिर्विंशत्या सप्तविंशतिसंख्याकैर्भूतपञ्चकतन्मात्रपञ्चकज्ञानेन्द्रियपञ्चककर्मेन्द्रियपञ्चका-पानादिप्राणचतुष्टयमनोबुद्ध्यहङ्कारात्मकैः शरैः शतं समा इति प्रारब्धोपलक्षणं यावत् प्रारब्धावसानं पुरञ्जनपुरस्याध्यक्षः पालः बली गन्धर्वैः सह युयुधे युद्धं चकार शरीरं न विस्मापयामासेत्यर्थः ॥ १६ ॥ ❀ ❀ बहुभिः साकं युधि एकस्मिन् स्वसामर्थ्ये क्षीयमाणे सति शतवत्सरावसान इत्यर्थः। शब्दादिभिः सहितः प्रजागरः परां चिन्तामवाप शरीरं प्राणयामीति चिन्तामवापेत्यर्थः ॥ १७ ॥ ❀ ❀ स पुरञ्जनः मधुभुक् स्वपार्षदैरिन्द्रियैः पाञ्चालेषु शब्दादिविषयेषु मध्ये उपानीतं प्रापितं बलिं शब्दाद्यन्यतमं विषयं गृह्णन् अनुभवन् स्त्रिया बुद्ध्या जितो वशीकृतः भयं मृत्युभयं नाविन्दन्नालोचितवान् ॥ १८ ॥ ❀ ❀ कालस्य दुहिता जरारूपा काचिदस्ति। सा त्रिलोक्यां वरं पतिमिच्छती पर्यटत्। हे बर्हिष्मन् तां कालकन्यां कोऽपि पुमान्न प्रत्यनन्दत नावृणोत् ॥ १९ ॥ ❀ ❀ अनभिनन्दने हेतुं वदन् तन्निमित्तं गुणनामधेयमाह। दौर्भगेन दुष्टं भगं सौन्दर्यं यस्माद्भवति स दुर्भगः स एव दौर्भगस्तेनात्मना स्वरूपेण लोके दुर्भगेति विश्रुता प्रख्याता तां विशिनष्टि। या कालकन्या ययाति-पुत्रेण पूरुणा वृता सती तुष्टा तस्मै राजर्षये पूरवे वरं राजासनरूपमदात् ययातिर्देवयानीगमनानुक्रुद्धशुक्रशापाज्जरां प्राप्य पुत्रानुवाचेमां जरां गृह्णीतेति तां च ज्येष्ठाश्च न जगृहुः पूरुस्तु जगृहे ततो ययातिस्तस्मै राज्यं ददाविति जरैवादा-दित्युक्तम् ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

देवान् काम्यफलदान् भूतपतीन् भैरवादीन् ॥ ११ ॥ ❀ ❀ एवंविधया क्रियया युक्तेषु काम्येषु सक्तस्येति शेषः। हरौ मनो योगवत्सु ज्ञानेषु एवमुक्तप्रकारेण प्रमत्तस्य तद्वार्तारहितस्येति वा प्रिया हृद्या योषितो येषान्ते तथा तेषां विषयिणामपि योऽप्रियोऽनपेक्षितः ॥ १२ ॥ ❀ ❀ गन्धर्वाणां कलाकाष्ठादीनां स्वावयवानामधिपतिश्चण्डो वेगो यस्य स तथेति ख्यातः स काल आससादेत्यन्वयः। गन्धर्वा दिवसाः ॥ १३ ॥ ❀ ❀ गन्धर्व्यो रात्रयस्तावतीस्तावत्यः मिथुनीभूय वर्तमाना मैथुन्यः सिता दिवसा असिता रात्रय इति सितासितपरिवृत्त्या परिभ्रमणेन पुनः पुनरावर्तनेन कामान् विलुम्पन्ति क्षपयन्तीत्यन्वयः ॥ १४ ॥ ❀ ❀ हर्तुं जीर्णबलाकर्तुं प्रजागरः प्राणः 'प्राणाग्नय एवैतस्मिन्पुरे जाग्रती'ति श्रुतेः प्राणबलाद्व्यापाराय प्रवर्तत इत्यर्थः ॥ १५ ॥ ❀ ❀ स सप्तभिः शतैर्विंशद्भिश्चाहोरात्रैः शतं समाः शतवर्षपर्यन्तं युयुधे तेषां पराक्रमं निरुध्य स्वयं प्राणबलाद् देहमपालयदित्यर्थः ॥ १६ ॥ ❀ ❀ राष्ट्रेण विषयेण पुरेण देहेन बान्धवैरिन्द्रियैः सह वर्तमानः ॥ १७ ॥ ❀ ❀ स्त्रीजितो बुद्ध्या विवेकं प्राप्तः विषयेषु स्वपार्षदैरिन्द्रियैरुपनीतं बलिं रूपादिविषयं गृह्णन् मधुभुक् कर्मफलभुक् कालनिमित्तं भयं नाज्ञासीदित्यन्वयः ॥ १८ ॥ ❀ ❀ अस्ति जायते परिणमते वर्धत इति चतुरूर्मिप्रकारप्राप्तिं निरूप्य प्रक्षीयते विनश्यतीत्ये-तदुक्तुं जराप्राप्तिमाह कालस्येति। कालात् जरा जायत इति कालस्य दुहितेति। विशेषनामाश्रवणात्काचिदिति ॥ १९ ॥ ❀ ❀ या सात्मनः शरीरस्य दौर्भाग्यत्वेन सौन्दर्याभावेन लोके दुष्टो भगो यस्याः सा तथेति विश्रुता यां जरां तुष्टः पिता ययातिः राजश्रेष्ठाय पूरवे वरमदात् तां कश्चन न प्रत्यनन्दतेत्यन्वयः ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

यथा भवानिति। विभक्तिपरिणामेनापि सर्वत्र योज्यम् ॥ ११ ॥ ❀ ❀ युक्तेष्विति सार्द्धकम्। योऽप्रिय इत्यत्र यो वर इति क्वचित्। प्रिययोषितामिति चित्सुखः ॥ १२–१३ ॥ ❀ ❀ गन्धर्वा इति सार्द्धकम्। तादृशीत्येव पाठः ॥ १४–१५ ॥ ❀ ❀ विंशकेनेत्यत्र विंशत्या चेति टीका, विंशद्भिरिति चित्सुखः ॥ १६–२३ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

ईज इति पक्षद्वये साम्यं यथा भवानिति तवैव कथेयं कथ्यते तव दृष्टान्तत्वं तु सङ्गोपनार्थमेवेति भावः ॥ ११ ॥ ❀ ❀ एवं युक्तेषु भक्तिवैराग्यादिष्वात्महितेषु प्रमत्तस्यानवहितस्य। स कालः जरासमयः। प्रिययोषितां कान्तजनानामप्रियः सम्भोग-

प्रातिकूल्यात् ॥ १२ ॥ ❀ ❀ किञ्च चण्डवेगः संवत्सर इति ख्यातो यो गन्धर्वाधिपतिस्तस्य। गन्धर्व्यो दिवसाः पुरीं विलुम्पन्तीत्यन्वयः। गन्धर्व्यो रात्रयः तावतीस्तावत्यः मैथुन्यः दिवसैर्मिथुनीभूय स्थिताः ॥ १३ ॥ ❀ ❀ सिताश्चासिताश्च शुक्लकृष्णपक्षीयाः परिवृत्त्या परिभ्रमणेन पुरीमपहरन्तीति जन्मारभ्य प्रतिदिनमायुरपहार एव पुर्य्या अपहार उपचरितः ॥ १४ ॥ ❀ ❀ यदा पञ्चाशद्वर्षानन्तरं पुरं देहमपि हर्तुमारेभिरे तदा प्रजागरः प्राण एव प्रत्यषेधत्। मा पुरमरे मयि तिष्ठति लुम्पतेति साटोपमाह इति पञ्चाशद्वर्षानन्तरमपि द्वित्रिवर्षपर्य्यन्तं बलं नापयातीत्युक्तम् ॥ १५ ॥ ❀ ❀ युद्धन्तु प्रजागरस्य तैः सार्द्धं जन्मारभ्यैवाभूदित्याह सप्तभिः शतैर्विंशकेन चेति वर्षगतानां दिनानां रात्रीणाञ्च तावत्येव सङ्ख्या दर्शिता। शतं समा यावत् परमायुरित्यर्थः ॥ १६ ॥ ❀ ❀ त्रिपञ्चाशद्वर्षपर्य्यन्तं प्रजागरस्य प्रायः पराजयो नाभूत् तदनन्तरं तु तस्योत्तरोत्तरं पराजय एवेत्याह। क्षीयमाणे स्वसम्बन्धे स्वसम्बन्धिनि प्राणे आर्त्तः पुरञ्जनः ॥ १७ ॥ ❀ ❀ मधुभुक् क्षुद्रसुखभोक्ता स्वपार्षदैरिन्द्रियैः ॥ १८ ॥ ❀ ❀ प्रकटमेव जराप्रवेशमुपाख्यानेनाह कालस्येति। हे बर्हिष्मन् कोऽपि न प्रत्यनन्दत नैच्छत् ॥ १९ ॥ ❀ ❀ पूरवे ययातिपुत्राय तेन वृता सती वरमदादिति ययातिस्तस्मै स्वीयजराग्राहिणे तुष्टो राज्य-मदादिति जरैवादादित्युक्तम् ॥ २० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

नाना ऐहिकामुष्मिकभोगविषयाः कामाः संकल्पा यस्य सः यथा भवान् तथा ईजे ॥ ११ ॥ ❀ ❀ युक्तेषु योग्यतया गृहीतेषु क्रतुषु। एवं यथा त्वं प्रमत्तोऽसि तथा प्रमत्तस्य। स कालः जरापादकः संवत्सरः ॥ १२ ॥ ❀ ❀ चण्डवेगो दुर्निवारवेगः। गन्धर्वाणां दिवसानां पतिः ॥ १३ ॥ ❀ ❀ तादृशीः उक्तसंख्याकाः सिताः शुक्लाः असिताः कृष्णाः याः सन्ति ताः निशाः अस्य चण्डवेगस्य गन्धर्व्यः मैथुन्यः। दिवसरूपैर्गन्धर्वैर्मिथुनीभूय स्थिताः। परिवृत्त्या पुनः पुनरावृत्त्या सर्वैः कामैः सह विनिर्मितां पुरीं विलुम्पयन्ति ॥ १४-१५ ॥ ❀ ❀ स प्रजागरः एक एव सप्तभिः शतैर्विंशत्या च सह शतं समाः। संवत्सरान् युयुधे ॥ १६ ॥ ❀ ❀ एकस्मिन् स्वसम्बन्धिनि प्राणे बहुभिर्युधि क्षीयमाणे राष्ट्रपुरबान्धवैः विषयं देहबुद्ध्यादिभिः सह चिन्तां जगाम पुरञ्जन इति शेषः ॥ १७ ॥ ❀ ❀ पुर्य्यां देहे पञ्चालेषु विषयेषु मधुभुक् रसास्वादी स्वपार्षदैरिन्द्रियैरुपनीतं बलिं विषयसुखं गृह्णन् भयं कालभयं नाविन्दत्। यतः स्त्रीजितः बुद्धिजितः ॥ १८ ॥ ❀ ❀ वरमिच्छती तदर्थं त्रिलोकीं पर्यटन्ती काचिद्दुर्लक्ष्यगतिः कालस्य दुहिता जरास्ति हे बर्हिष्मन्! तां कश्चन अपि न प्रत्यनन्दत नैच्छत् ॥ १९ ॥ ❀ ❀ ययातिना दत्ता पूरुणा वृता अतो या तुष्टा राजर्षये पूरवे त्वं राजा भवेति वरमदात्। ययातिना तुष्टेन वरो दत्तः वरदाने सैव निमित्तमतो या तुष्टा वरमदादित्युक्तम्। पूर्वकल्पीयं ययातिचरितं संस्मृत्य भविष्यं वा भूतवत् कथासङ्गत्यर्थं सर्वज्ञेन श्रीनारदेनोक्तम् ॥ २० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

दीक्षितः कृतसङ्कल्पः सन् घोरैः शास्त्राननुमतैः पशुमारकैः पशुहिंसाप्रधानैः क्रतुभिर्देवादीन् ईजे च पूजयामासेत्यन्वयः। एवं शास्त्राननुमतैर्देवादियजने हेतुमाह—नानाकाम इति, नानाविषयकः कामः सङ्कल्पो यस्य सः। नैतदसम्भवि दृष्टान्तस्य तवैव विद्यमानत्वादित्यभिप्रेत्याह—यथेति। प्राचीनबर्हिषोऽपि नानाकामवशात् शास्त्राननुमतेषु हिंसाप्रधानेषु कर्मस्वेव प्रवृत्तिः। अत एव नारदेन 'भो भो प्रजापते पश्य' इति तन्मारितपशुप्रदर्शनं सङ्गच्छते, अन्यथा शास्त्रीययज्ञेषु मारितानां पशूनां सद्गतिश्रवणं विरुध्येत। पक्षान्तरे—भोगासक्तो नानाविधान् देवाद्याराधनसङ्कल्पान् कृतवानित्यर्थः ॥ ११ ॥ ❀ ❀ एवं कुटुम्बेषु आसक्तं चेतो यस्य अत एव युक्तेषु कर्तुं योग्येषु भगवदाराधनेषु प्रमत्तस्य अनवहितस्य पुरञ्जनस्य स वै स एव कालः आससाद आगत इत्यन्वयः। स क इत्यपेक्षायामाह—य इति। प्रिया योषितो येषां ते प्रिययोषितस्तेषां यः अप्रियः अनभिप्रेतः, जरासमयलक्षण इत्यर्थः। पक्षान्तरे तु—इन्द्रियादिविषयासक्तस्य भगवद्भजनविमुखस्य जरासमय आगत इत्यर्थः ॥ १२ ॥ ❀ ❀ यदाप्रभृति पुरञ्जनः पुर्यां प्रविष्टस्तदाप्रभृति तस्य भयं सँल्लग्नं परन्तु तद्विषयाविष्टत्वेन स न ज्ञातवानित्याह—चण्डवेग इति। हे नृपेति सम्बोधनं विषयाविष्टानां नृपाणां शत्रुभयं भवति तत्त्वया ज्ञायते एवेति सम्मत्यर्थम्। गन्धर्वाणामधिपतिः राजा चण्डवेग इति नाम्ना विख्यातः कश्चिदस्ति तस्य बलिनः महाबलवन्तः षष्ट्युत्तरशतत्रयसङ्ख्याकाः गन्धर्वाः सन्तीत्यन्वयः। पक्षान्तरे तु—चण्डः उपायशतैरपि प्रतिरोद्धुमशक्यो वेगो यस्य संवत्सरोपलक्षितस्य तस्य षष्ट्युत्तरशतत्रयं गन्धर्वाः दिवसा ज्ञेयाः, तेषामपि प्रतिरोध-स्याशक्यत्वेन बलवत्त्वं सिद्धमेव ॥ १३ ॥ ❀ ❀ तथाऽस्य चण्डवेगस्य गन्धर्व्यस्तादृशीः तादृश्यः बलवत्यः षष्ट्यधिकशत-त्रयसङ्ख्यान्विताश्च सितासिताः श्वेतकृष्णवर्णवत्यस्ताश्च मैथुन्यो गन्धर्वैः सह मिलिताः सत्यः सर्वैः कामैर्भोगविषयैः सह विनि-र्मितां पुरञ्जनपुरीं परिवृत्त्या परिभ्रमणेन पर्यायेण वा विलुम्पन्तीत्यन्वयः। पक्षान्तरे—गन्धर्व्यः रात्रयः तासां शुक्लपक्षे चन्द्रप्रकाश-युक्तानां श्वेतत्वं कृष्णपक्षे चन्द्रप्रकाशसम्बन्धाभावात् कृष्णत्वम्, ताश्च दिवसैर्मिलिताः पर्यायेण सर्वभोगयोग्यं शरीरं विलुम्पन्ति आयुर्नाशं कुर्वन्ति। जन्मप्रभृति त एव सर्वदेति वर्त्तमानप्रयोगः ॥ १४ ॥ ❀ ❀ ते पूर्वोक्ताश्चण्डवेगस्यानुचरा योद्धारो गन्धर्वा

गन्धर्व्यश्च यदाप्रभृतितः पुरञ्जनपुरं हर्तुमारेभिरे तत्र तदाप्रभृतित एव तान् प्रजागरः पुरपालकत्वेन स्थितः पञ्चशिरा नागः प्रत्यषेधत् पुरविनाशनान्निवारितवान्। अध्यात्मपक्षे तु—यद्यप्यहोरात्राणां कालावयवानां नित्यनैमित्तिकादिप्रलयहेतूनां प्रबलत्वं तथापि मरणं प्राणेन निवार्यते शरीरस्थितेः प्राणस्थित्यधीनत्वस्य प्रसिद्धत्वात्॥ १५॥ ❀ ❀ तस्य रक्षकस्य प्रबलत्वमाह—स इति। स पुरञ्जनपुरस्याध्यक्षः पालकः एक एव सप्तभिः शतैर्विंशत्या च गन्धर्वैः सह शतं समाः संवत्सरशतपर्यन्तं युयुधे यतो बली बलवान्। पक्षान्तरे तु—जन्मत आरभ्य परमायुः संवत्सरशतपर्यन्तं, यावत्प्राणस्य शरीरे स्थितिस्तावच्छरीरस्यापि स्थितिः, तन्मध्ये तु संवत्सरावयवरूपाणि विंशत्यधिकसप्तशतसङ्ख्याकानि अहोरात्राणि आयान्त्यपयान्ति चेति दर्शितम्॥ १६॥ ❀ ❀ बहुभिर्विंशत्यधिकसप्तशतैः सह युधा युद्धेन बहुकालपर्यन्तेन एकस्मिंस्तस्मिन् स्वसम्बन्धिनि पुररक्षके क्षीयमाणे सति स पुरञ्जनः आर्त्तः सन् परां महतीं चिन्तां जगामेत्यन्वयः। आर्त्तत्वेन चिन्तायां हेतुं सूचयन् विशिनष्टि—सराष्ट्रपुरेति, यतः स एव राष्ट्रस्य बहिर्देशस्य पुरस्य च बान्धवो हितकृत्स्वामीत्यर्थः। पक्षान्तरे तु—देहेन्द्रियादिसामर्थ्यस्य प्राणसामर्थ्याधीनत्वात् देहाद्यसामर्थ्येन प्राणसामर्थ्यह्रासमनुमाय स जीवः आर्त्तः दुःखितः सन् परां चिन्तां जगाम, तत्र हेतुः—राष्ट्रेति, राष्ट्रशब्देन विषयाः पुरं शरीरं बान्धवाः इन्द्रियादयः यस्य स तथा। अतो देहाद्यध्यासेन तत्तद्भोगाभिनिवेशात् तत्र सामर्थ्याभावमालक्ष्य चिन्तां जगामेति भावः॥ १७॥ ❀ ❀ ननु यदि यदाऽयं पुरीं प्रविष्टस्तदाप्रभृतित एवैवं युद्धादिभयं प्रवृत्तं तदा पुरञ्जनः कुतो न ज्ञातवानित्याशङ्क्य तदज्ञाने हेतुमाह—स एवेति। यतः स पुरञ्जन एव तस्यां पुर्यां तथा पञ्चालेषु बहिर्देशेषु मधुभुक् मधुवद्विषयसुखभोक्ता अतः स्वपार्षदैरुपनीतं प्रापितं बलिं विषयं गृह्णन् भुञ्जानस्तथा स्त्रीजितः स्त्रिया च जडीकृतः सर्वदा प्राप्तमपि भयं नाविदत् न ज्ञातवानित्यर्थः। पक्षान्तरे तु—विषयाविष्टबुद्ध्या विमोहितो वृथायुः क्षीयते इति न ज्ञातवानित्यर्थः॥ १८॥ ❀ ❀ एवमेकस्य भयस्य सर्वदा विद्यमानत्वेऽपि ततोऽपि महद्भयान्तरं तस्योपस्थितं तत्प्रपञ्चयति—कालस्येति यावत्समाप्ति। हे बर्हिष्मन् प्राचीनबर्हिरिति सम्बोधनं भयान्तरश्रवणे सावधानतार्थम्। काचित् कालस्य दुहिता कन्याऽस्ति तां वरमिच्छतीमत एव तदन्वेषणार्थं त्रिलोकीं पर्यटन्तीमपि कश्चन कोऽपि न प्रत्यनन्दत असाध्वीं मत्वा नाङ्गीकृतवानित्यन्वयः। पक्षान्तरे तु—कालस्य कन्या जरा तां सर्वपुरुषार्थविरोधिनीं त्रिलोक्यां कोऽपि मामियमायात्विति कोऽपि नाङ्गीकरोतीति स्पष्टमेव॥ १९॥ ❀ ❀ तदनङ्गीकारे हेतुं सूचयन्नाम निर्वक्ति—दौर्भाग्येनेति। आत्मनः स्वस्य दौर्भाग्येन पापिष्ठत्वेन यतो लोके सर्वत्र दुर्भगेति नाम्ना विश्रुता प्रसिद्धा अतस्तां न प्रत्यनन्दतेति पूर्वेणैवान्वयः। या पूर्वं पूरुणा वृताङ्गीकृताऽतस्तुष्टा सती तस्मै वरं राज्यमदादित्यन्वयः। अत्र तृतीये पादे एकाक्षरन्यूनतास्ति। पक्षान्तरे तु—जरया ग्रस्तस्य स्नानशौचाद्यनुष्ठाने सामर्थ्याभावान्निषिद्धानुष्ठानेन दुरदृष्टस्य सम्भवाच्च तस्या दुर्भगत्वम्। शुक्रशापात् प्राप्ताया ययातिना स्वपुत्रेभ्यो दीयमानाया यद्वादिभिरनङ्गीकारेऽपि पूरुणाङ्गीकृतत्वात् स्वभोगावसाने हृष्टो ययातिस्तस्मै राज्यं ददाविति राज्यप्राप्तेर्जराग्रहणनिमित्तत्वात् जरैवाददादित्युक्तम्॥ २०॥

### भाषानुवादः

फिर तुम्हारी तरह उसने भी अनेक प्रकारके भोगोंकी कामनासे यज्ञकी दीक्षा ले तरह-तरहके पशुहिंसामय घोर यज्ञोंसे देवता, पितर और भूतपतियोंकी आराधना की॥ ११॥ ❀ ❀ इस प्रकार वह जीवनभर आत्माका कल्याण करनेवाले कर्मोंकी ओरसे असावधान और कुटुम्बपालनमें व्यस्त रहा। अन्तमें वृद्धावस्थाका वह समय आ पहुँचा, जो स्त्रीलंपट पुरुषोंको बड़ा अप्रिय होता है॥ १२॥ ❀ ❀ राजन्! चण्डवेग नामका एक गन्धर्वराज है। उसके अधीन तीन सौ साठ महाबलवान् गन्धर्व रहते हैं॥ १३॥ ❀ ❀ इनके साथ मिथुन भावसे स्थित कृष्ण और शुक्ल वर्णकी उतनी ही गन्धर्वियाँ भी हैं। ये बारी-बारीसे चक्कर लगाकर भोग-विलासकी सामग्रियोंसे भरी-पूरी नगरीको लूटती रहती हैं॥ १४॥ ❀ ❀ गन्धर्वराज चण्डवेगके उन अनुचरोंने जब राजा पुरञ्जनका नगर लूटना आरम्भ किया, तब उन्हें पाँच फनके सर्प प्रजागरने रोका॥ १५॥ ❀ ❀ यह पुरञ्जनपुरीकी चौकसी करनेवाला महाबलवान् सर्प सौ वर्षतक अकेला ही उन सात सौ बीस गन्धर्व-गन्धर्वियोंसे युद्ध करता रहा॥ १६॥ ❀ ❀ बहुत-से वीरोंके साथ अकेले ही युद्ध करनेके कारण अपने एकमात्र सम्बन्धी प्रजागरको बलहीन हुआ देख राजा पुरञ्जनको अपने राष्ट्र और नगरमें रहनेवाले अन्य बान्धवोंके सहित बड़ी चिन्ता हुई॥ १७॥ ❀ ❀ वह इतने दिनोंतक पाञ्चाल देशके उस नगरमें अपने दूतोंद्वारा लाये हुए करोंको लेकर विषयभोगोंमें मस्त रहता था। स्त्रीके वशीभूत रहनेके कारण इस अवश्यम्भावी भयका उसे पता ही न चला॥ १८॥ ❀ ❀ बर्हिष्मन्! इन्हीं दिनों कालकी एक कन्या वरकी खोजमें त्रिलोकीमें भटकती रही, फिर भी उसे किसीने स्वीकार न किया॥ १९॥ ❀ ❀ वह कालकन्या (जरा) बड़ी भाग्यहीना थी, इसलिये लोग उसे 'दुर्भगा' कहते थे। एक बार राजर्षि पूरुने पिताको अपना यौवन देनेके लिये अपनी इच्छासे उसे वर लिया था, इससे प्रसन्न होकर उसने उन्हें राज्यप्राप्तिका वर दिया था॥ २०॥

**कदाचिदटमाना सा ब्रह्मलोकान्महीं गतम्। वव्रे बृहद्व्रतं मां तु जानती काममोहिता॥ २१॥**
**मयि संरभ्य विपुलमदाच्छापं सुदुःसहम्। स्थातुमर्हसि नैकत्र मद्याच्ञाविमुखो मुने॥ २२॥**

ततो विहतसङ्कल्पा[1] कन्यका यवनेश्वरम् । मयोपदिष्टमासाद्य वव्रे नाम्ना भयं पतिम् ॥ २३ ॥
ऋषभं यवनानां त्वां वृणे वीरेप्सितं पतिम् । सङ्कल्पस्त्वयि भूतानां कृतः किल न रिष्यति ॥ २४ ॥
द्वाविमावनुशोचन्ति बालावसदवग्रहौ । यल्लोकशास्त्रोपनतं न राति न तदिच्छति ॥ २५ ॥
अथो भजस्व मां भद्र भजन्तीं मे दयां कुरु । एतावान् पौरुषो धर्मो यदार्तानुकम्पते ॥ २६ ॥

अन्वयः—सा तु कदाचित् अटमाना ब्रह्मलोकात् महीम् गतम् बृहद्व्रतम् माम् काममोहिता जानती वव्रे ॥ २१ ॥ ❀ ❀ मयि संरभ्य विपुलम् सुदुःसहम् शापम् अदात् मुने मद्याञ्चाविमुखः एकत्र स्थातुम् न अर्हसि ॥ २२ ॥ ❀ ❀ ततः विहतसंकल्पा कन्यका मया उपदिष्टम् आसाद्य नाम्ना भयम् पतिम् वव्रे ॥ २३ ॥ ❀ ❀ वीर यवनानाम् ऋषभम् ईप्सितम् पतिम् त्वाम् वृणे त्वयि कृतः भूतानाम् संकल्पः किल न रिष्यति ॥ २४ ॥ ❀ ❀ यत् लोकशास्त्रोपनतम् न राति तत् न इच्छति इमौ द्वौ असदवग्रहौ बालौ अनुशोचंति ॥ २५ ॥ ❀ ❀ अथो भद्र भजन्तीम् माम् भजस्व मे दयाम् कुरु यत् आर्तान् अनुकंपते एतावान् पौरुषः धर्मः ॥ २६ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

सा जरा बृहद्व्रतं नैष्ठिकम् ॥ २१ ॥ ❀ ❀ प्रत्याख्यातवति मयि संरभ्य क्रोधं कृत्वा नैकत्र स्थातुमर्हसीति शापमदात् ॥ २२ ॥ ❀ ❀ आधयो व्याधयश्च यवनास्तेषामीश्वरं भयनामानं मृत्युरूपं पतिं वव्रे ॥२३॥ ❀ ❀ हे वीर त्वामीप्सितं पतिं वृणे । न रिष्यति ॥ २४ ॥ ❀ ❀ लोकतो वेदतश्च यद्देयत्वेन ग्राह्यत्वेन चोपनतं प्राप्तं तद्याच्यमानं यो न ददाति यश्च दीयमानं नेच्छति न गृह्णाति इमौ द्वौ कर्मभूतावनुशोचंति संतः ॥ २५ ॥ ❀ ❀ पुरुषेण कर्तव्यो धर्मः पौरुषः ॥ २६ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

महीं गतं प्राकृतमनुष्यभ्रांत्येत्यर्थः । बृहद्व्रतं नैष्ठिकब्रह्मचारिणं संन्यासिनं वा महाप्रभाववंतं वा सा कमपि न त्यजतीत्यर्थः ॥ २१ ॥ ❀ ❀ पक्षे मद्देहस्य कर्मारब्धत्वाभावात् षडूर्मिराहित्येन तस्याः प्रवेशासामर्थ्यमेव मत्प्रत्याख्यानत्वेन कृपालुत्वेन सर्वत्र मम गमनमेव तस्याः शापफलत्वेनोत्प्रेक्षितमिति ज्ञेयम् । मुने इति । स्त्रीणां कामार्त्तिं जानतापि मुनित्वेन परतापहरणसमर्थेन त्वया नाहं त्यक्तुमुचितेति भावः ॥ २२ ॥ ❀ ❀ ततो मत्प्रत्याख्यानानंतरम् । मयोपदिष्टमिति । लोकानां भयमेव जरया जीर्णं भवत्विति स्वस्य दयालुत्वं सूचितम् ॥ २३ ॥ ❀ ❀ पक्षे भूतानां भगवद्भक्तानां संकल्पो न रिष्यति । लोकानां भयं जीर्णं भवत्विति नारदेन यः संकल्पः कृतः सोऽन्यथा भवितुं नार्हतीति त्वं मे पतिर्भव यथा त्वामहं भुंक्षे । भूतशब्देन भगवद्भक्तोऽप्युच्यते । यदुक्तं—"भूतानि भव्यानि जनार्दनस्य" इति । संदर्भस्तु—यतो भूतानामन्यैरपि भूतैस्त्वयि कृतः संकल्पो मनोरथो न रिष्यति नष्टुं नार्हति मम तु त्वदेकशरणायाः सुतरां नार्हतीत्यर्थमाह । भयस्य 'यद्बिभेति भयं स्वयम्' इत्यादौ कालवाचकत्वोक्तेस्त्वयि काले कृतः भूतानां संकल्पो न नश्यति किं तु फलत्येव अकाले कृतो नश्यति 'सर्वं कालेन फलति' इति शिष्टोक्तेस्त्वमेव सर्वफलदोसीत्यतस्त्वामेवाहं वृण इति भावः । हे वीरेति । विशिष्टानपि त्वमरीयसि कंपयसीति सर्वोत्कृष्टत्वेनापि त्वमेव योग्यो वर इति भावः । यद्वा वीरायाः सर्वदलनसमर्थाया ममेप्सितं पतिमित्यर्थः ॥ २४ ॥ ❀ ❀ बालावज्ञौ असन्नवग्रहो हठो ययोस्तावसदवग्रहौ "पदविभागे वृष्ट्यभावे हठेऽवग्रहो ग्रहः" इति धरणिः । नन्वनेन लोकविद्विष्टं चेत्तर्हि शास्त्रीयमपि न कर्त्तव्यमित्यायातं समत्वेन सहोक्तेः तथा च "तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥" इति श्रीगीतोक्तिर्विस्रस्तेति चेद् ग्रंथांतरसंमत्या समादधाति । "अलौकिकं च शास्त्रीयं कर्त्तव्यं लौकिकं कुतः । लोकार्थे शास्त्रहा याति निरयं त्वितरः सुरान्" इति । तस्माच्छास्त्रानुसारि लौकिकं कर्त्तव्यं नेतरदिति तात्पर्यम् । इतरः शास्त्रानुकूललौकिकं कुर्वाणः । सुरान्याति स्वर्गादिपुरुषार्थमाप्नोतीति तीर्थः । तथा च कन्याहं स्वयंवराऽकस्मात्त्वद्गृहमागता गृहस्थेन त्वया ग्राह्यैवेति भावः । अन्यथा 'य उद्यन्तमनादृत्य' इत्यादिदोषश्रुतेस्तव शोभनं न भावीति । पक्षे लोकेषु कृपालुना नारदेन यदभिलषितं भयं जीर्णं भवत्विति तल्लोकशास्त्रोचितमेवातस्त्वं मा गृहाणेत्यर्थः ॥ २५ ॥ ❀ ❀ यस्मादिदं मद्ग्रहणं लोकशास्त्रसिद्धमथो अतः संक्षिप्य स्वकार्यस्य कर्त्तव्यतामाह—एतावानिति । पक्षे स्वबलं प्रकाश्यापि त्वया जरां न गृह्णामीति वक्तुमशक्यं नारदोक्तिबलादहं त्वां गिलन्ती संहरिष्याम्येवेति स्वगतं वदंती बहिर्वक्रोक्त्या सोत्प्रासमाह—अथो इति । भद्रेति संबुद्धिरभद्रस्यापि न विरुद्धा स्वसमं सर्वो हि भद्रं मनुते इति भावः ॥ २६ ॥

## श्रीमद्वीरराघवव्याख्या

कदाचित्सा कालकन्या भूर्लोके पर्यटन्ती ब्रह्मलोकात्सत्यलोकान्महीं भूमिं गता प्राप्तं मां बृहद्व्रतं नैष्ठिकं जानत्यपि काममोहिता सती वव्रे ॥ २१ ॥ ❀ ❀ प्रत्याख्याता मया सा तु कालकन्या विशाम्पते ! यतो मया प्रत्याख्याता मयि संरभ्य

१. प्रा० पा०—विगतसं० ।

क्रोधं कृत्वा विपुलं महान्तं दुस्सहं दुरतिक्रमणीयं शापमदात्। शापमेवाह हे मुने! त्वं यतो मद्याच्ञाविमुखस्तत एकत्र चिरेण स्थातुं नार्हसीति ॥ २२ ॥ ❀ ❀ ततो विहतसंकल्पा भ्रष्टमनोरथा कालकन्यका आधयो व्याधयश्च यवनाः तद्वत्पीडाकारित्वात्तेषामीश्वरं मया उपदिष्टं नाम्ना भयं भयनामानं पतिमासाद्य वव्रे ॥ २३ ॥ ❀ ❀ वरणप्रकारमेवाह ऋषभमिति। हे वीर! यवनानामृषभमीश्वरं त्वामीप्सितं वृणे त्वयि कृतो भूतानां संकल्पः न रिष्यति न नश्यति ॥ २४ ॥ ❀ ❀ त्वयाहं न प्रत्याख्येया इत्याह द्वाविति। लोकतो वेदतश्च यद्देयत्वेन ग्राह्यत्वेन स्वेनोपनतं प्राप्तं तद्याचमानाय यो न ददाति यश्च दीयमानं यो नेच्छति न गृह्णातीमौ द्वौ असदवग्रहावसदर्थः अवग्रहोऽभिमानः आग्रहो वा ययोस्तावत एव बालावज्ञौ कर्मभूतावनुशोचन्ति इमौ प्रत्यनुशोचन्ति सन्त इत्यर्थः ॥ २५ ॥ ❀ ❀ हे भद्र! भजन्तीं मां भजस्व मयि दयां कुरु पौरुषः पुरुषेण कर्तव्यो धर्मः एतावानेव किं तद्यदार्तानुकम्पते ॥ २६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तुशब्दोऽप्यर्थे या मां बृहद्व्रतं ब्रह्मचारिणं जानन्त्यपि ब्रह्मलोकात् महीमागतं वव्र इत्यन्वयः। तत्र हेतुः काममोहितेति ॥ २१ ॥ ❀ ❀ ततः किमभूदिति तत्राह। मयीति ॥ २२ ॥ ❀ ❀ सा कन्या यवनेश्वरं नानाव्याधीनां स्वामिनं नाम्ना भयं मृत्युं पतिं वव्र इत्यन्वयः ॥ २३ ॥ ❀ ❀ न रिष्यति न दह्यति ॥ २४ ॥ ❀ ❀ असन्नवग्रह आग्रहो ययोस्तौ तथा बालौ स्वकार्याज्ञौ। अनुशोचन्ति सर्व इति शेषः। कौ तौ यौ लोकशास्त्रयोरविरोधतयोपनतं प्राप्तमर्थिभ्यो न राति न ददाति दायं स्वीयं नेच्छति ताविति शेषः। नन्वनेन लोकविद्विष्टं चेच्छास्त्रीयमपि न कर्तव्यमित्यायातं समत्वेन सहोक्तेन "तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ" इत्यादिविधानं व्यर्थमितीयं शङ्का "अलौकिकं च शास्त्रीयं कर्तव्यं लौकिकं कुतः। लोकार्थं शास्त्रहा याति निरयं त्वितरः सुरान्॥" इत्यनेन परिहर्तव्या तस्माच्छास्त्रानुसारि लौकिकं कर्तव्यं नेतरदिति तात्पर्यमितरः शास्त्रानुकूललौकिकं कुर्वाणः सुरान् याति स्वर्गादिपुरुषार्थमाप्नोतीत्यर्थः ॥ २५ ॥ ❀ ❀ उपसंहरति। अथो इति। यस्मादिदं शास्त्रीयमयो तस्मात् संक्षिप्य स्वकार्यस्य कर्तव्यतामाह एतावानिति। पौरुषः पुरुषनिष्ठः ॥ २६ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

यतो भूतानामन्यैरपि भूतैस्त्वयि कृतः सङ्कल्पो मनोरथो न रिष्यति नष्टुं नार्हति। मम तु त्वदेकपरायणायाः सुतरां नार्हतीत्यर्थः ॥ २४-२८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

महीं गतमिति प्राकृतमनुष्यभ्रान्त्येत्यर्थः। बृहद्व्रतं नैष्ठिकं ब्रह्मचारिणं संन्यासिनं वा महाप्रभाववन्तं वा सा न त्यजतीत्यर्थः ॥ २१ ॥ ❀ ❀ मयि प्रत्याख्यातवति संरभ्य क्रोधं कृत्वा पक्षे मद्देहस्य कर्मारब्धत्वाभावात् षडूर्मिराहित्येन तस्याः प्रवेशासामर्थ्यमेव मत्प्रत्याख्यानत्वेन कृपालुत्वेन सर्वत्र मम गमनमेव तस्याः शापफलत्वेनोत्प्रेक्षितमिदं ज्ञेयम् ॥ २२ ॥ ❀ ❀ मयोपदिष्टमिति लोकानां भयमेव जरया जीर्णं भवत्विति स्वस्य दयालुत्वं सूचितम् ॥ २३ ॥ ❀ ❀ यवनानामाधिव्याधीनां न रिष्यति न नश्यति पक्षे भूतानां भगवद्भक्तानां सङ्कल्पो न रिष्यति लोकानां भयं जीर्णं भवत्विति नारदेन यः सङ्कल्पः कृतः सोऽन्यथा भवितुं नार्हतीति त्वं मे पतिर्भव यथा त्वामहं भुञ्जे। भूतशब्देन भगवद्भक्तोऽप्युच्यते यदुक्तं 'भूतानि भव्यानि जनार्दनस्ये'ति ॥ २४ ॥ ❀ ❀ बालावज्ञौ सन्तोऽनुशोचन्ति लोकशास्त्रयोरुपनतमुचितं वस्तु देयं न ददाति। ग्राह्यं न गृह्णातीति तेन कन्याहं स्वयंवरा अकस्मात्त्वद्गृहमागता गृहस्थेन त्वया ग्राह्यैवेति भावः। पक्षे लोकेषु कृपालुना नारदेन यदभिलषितं भयं जीर्णं भवत्विति तल्लोकशास्त्रोचितमेवातस्त्वं मां गृहाणेत्यर्थः ॥ २५ ॥ ❀ ❀ पौरुषः पुरुषेण निर्वृत्तः। पक्षे स्वबलं प्रकाश्यापि त्वया जरां न गृह्णामीति वक्तुमशक्यं नारदोक्तिबलात्त्वामहं गिलन्तीं संहरिष्याम्येवेति स्वगतं वदन्ती बहिर्वक्रोक्त्या सोत्प्रासमाह। अथो इति ॥ २६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

संरभ्य संकुप्य नैकत्र स्थातुमर्हसीति शापमदात् ॥ २१-२२ ॥ ❀ ❀ यवनानामाधीनां व्याधीनां चेश्वरं भयनामानं मृत्युं पतिम् वव्रे ॥ २३ ॥ ❀ ❀ भूतानां भूतैरस्मद्विधैः त्वयि कृतः सङ्कल्पः न रिष्यति व्यर्थो न भवति ॥ २४ ॥ ❀ ❀ लोकशास्त्राभ्यामुपनतं देयतया ग्राह्यतया प्राप्तम् तत्पात्रेण याच्यमानं यो न राति न ददाति यश्च तत् दीयमानं नेच्छति न स्वीकरोति इमौ द्वौ असदवग्रहौ दुष्टाग्रहौ शोचन्ति दानादानतस्त्वज्ञा इति शेषः ॥ २५ ॥ ❀ ❀ अथो अतः हे भद्र! मां भजस्व मे मयि दयां कुरु पुरुषेण कृतः पौरुषो धर्मः एतावानेव तमेवाह। यदार्तानुकम्पते इति ॥ २६ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

सैवं वरान्वेषणाय सर्वत्राटमाना कदाचिद्ब्रह्मलोकात् महीं गतं प्राप्तं मां बृहद्व्रतं नैष्ठिकब्रह्मचारिणं जानत्यपि वव्रे त्वं मम भर्त्ता भव मामङ्गीकुर्वित्युक्तवतीत्यन्वयः। नैष्ठिकत्वज्ञानवत्याऽप्येवं वरणे हेतुं वदंस्तां विशिनष्टि—काममोहितेति। पक्षान्तरे तु—गृहस्थं वा ब्रह्मचारिणं वानप्रस्थं वा संन्यासिनं वा कमपि सा न जहातीति तात्पर्यम्। अन्यत् कथालङ्कारमात्रम्॥ २१॥ ❀ ❀ तदा च बृहद्व्रतत्वात् प्रत्याख्यातवति मयि संरभ्य क्रोधं कृत्वा हे मुने यतस्त्वं मद्याच्ञाविमुखो मां नाङ्गीकरोषि अत एकत्र स्थाने स्थातुं नार्हसीति विपुलं महान्तमन्यैः सुदुस्सहं शापमदादित्यन्वयः। पक्षान्तरे तु—'प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुम्' इत्युक्तेर्नारददेहस्य प्राकृतत्वकर्मारब्धत्वाभावेन तत्र तस्याः प्रवेशासामर्थ्यमेव। प्रत्याख्यातत्वेन नारदस्य कृपालुत्वेन लोकोपकाराय सर्वत्र सदा पर्यटनमेव तस्याः शापफलत्वेन उत्प्रेक्षितमिति ज्ञेयम्॥ २२॥ ❀ ❀ ततो मत्प्रत्याख्यानानन्तरं विहतो मद्विषयकः सङ्कल्पो यस्याः सा कालकन्या मयोपदिष्टं ज्ञापितं नाम्ना भयं भयनामानं यवनानामीश्वरमासाद्य गत्वा पतिं वव्रे इत्यन्वयः। पक्षान्तरे तु—यवना आधयो व्याधयश्च तेषामीश्वरो मृत्युस्तस्य सर्वभयङ्करत्वात् स एव भयनामा तस्य जराज्वरादिद्वारैव मरणहेतुतेत्यत्रैव तात्पर्यम्। मयोपदिष्टं वव्रे इत्यादि तु कथालङ्कारार्थमुक्तम्। जरामृत्युज्वरादीनां मरणहेतुत्वस्य सार्वत्रिकत्वादिति ज्ञेयम्॥ २३॥ ❀ ❀ वरणप्रकारमेव पारोक्ष्यकथासौन्दर्यार्थं लोकरीत्या दर्शयति—ऋषभमिति त्रिभिः। त्वामहं पतिं वृणे हेतुः—ईप्सितमिच्छाविषयं प्रियम्। तत्र हेतुः—वीर इति, समर्थत्वेन योग्यत्वादित्यर्थः। तदेव स्फुटयति—यवनानामृषभं ईश्वरमिति। किलेत्यवधारणे। त्वयि कृतो भूतानां सङ्कल्पो यतो नैव रिष्यति नैव विफलो भवत्यतो ममापि सङ्कल्पं पूरयेति शेषः। पक्षान्तरे तु—विषयभक्षणादिना सङ्कल्पितस्य मृत्योरवश्यम्भावित्वात्त्वयि सङ्कल्पो न रिष्यतीत्युक्तमिति ज्ञेयम्॥ २४॥ ❀ ❀ मत्प्रार्थनानङ्गीकारे लोके तव निन्दा भविष्यतीति सूचयन्ती सामान्यतो लोकव्यवहारं दर्शयति—द्वाविति। इमौ द्वौ पुरुषौ लोके सज्जना अनुशोचन्ति निन्दन्ति। कौ तावित्यपेक्षायामाह—यदिति, लोकव्यवहारतः शास्त्रतो वा उपादेयत्वेन ग्राह्यत्वेन वोपनतं प्राप्तं तद्याच्यमानं देयं यो न राति न ददाति यश्च तद्दीयमानं ग्राह्यं नेच्छति न गृह्णाति तावित्यर्थः। एवं तयोर्दानग्रहणप्रतिबन्धको दुराग्रह एवेत्याशयेन विशिनष्टि—असदवग्रहाविति, असन्नवग्रहः आग्रहः हठो ययोस्तौ। आग्रहेऽपि हेतुमज्ञानमाह बालाविति, अज्ञावित्यर्थः॥ २५॥ ❀ ❀ यस्मादेवं लोके सज्जनव्यवहारः अथो तस्मात् हे भद्र उभयलोकसम्पादनतत्परां भजन्तीं दीनां काममोहितां त्वामनुवर्त्तमानां त्वं भजस्व भार्यात्वेनाङ्गीकुरु। न स्वभोगसिद्धये त्वयि लोकनिन्दाभयमुत्पादयामि किन्तु प्रार्थये इत्यभिप्रायेणाह—मे इति, ममोपरि दयां कुर्विति। एवमपि दयां कुर्वतस्तेऽस्मिँल्लोके यशः परलोकार्थं धर्मश्च सेत्स्यतीत्यभिप्रायेणाह—एतावानिति। यदार्त्तान् दुःखितान् अनुकम्पते तानुद्दिश्य कृपां करोति, पौरुषः पुरुषेणानुष्ठेयः परो धर्म एतावानेवेत्यर्थः॥ २६॥

### भाषानुवादः

एक दिन मैं ब्रह्मलोकसे पृथ्वीपर आया, तो वह घूमती-घूमती मुझे भी मिल गयी। तब मुझे नैष्ठिक ब्रह्मचारी जानकर भी कामातुरा होनेके कारण उसने वरना चाहा॥ २१॥ ❀ ❀ मैंने उसकी प्रार्थना स्वीकार नहीं की। उसपर उसने अत्यन्त कुपित होकर मुझे यह दुःसह शाप दिया कि 'तुमने मेरी प्रार्थना स्वीकार नहीं की, अतः तुम एक स्थानपर अधिक देर न ठहर सकोगे'॥ २२॥ ❀ ❀ तब मेरी ओरसे निराश होकर उस कन्याने मेरी सम्मतिसे यवनराज भयके पास जाकर उसका पतिरूपसे वरण किया॥ २३॥ ❀ ❀ और कहा, 'वीरवर! आप यवनोंमें श्रेष्ठ हैं, मैं आपसे प्रेम करती हूँ और पति बनाना चाहती हूँ। आपके प्रति किया हुआ जीवोंका सङ्कल्प कभी विफल नहीं होता॥ २४॥ ❀ ❀ जो मनुष्य लोक अथवा शास्त्रकी दृष्टिसे देनेयोग्य वस्तुका माँगनेपर भी दान नहीं करता और जो शास्त्रदृष्टिसे अधिकारी होकर भी ऐसा दान नहीं लेता, वे दोनों ही दुराग्रही और मूढ हैं, अत एव शोचनीय हैं॥ २५॥ ❀ ❀ भद्र! इस समय मैं आपकी सेवामें उपस्थित हुई हूँ, आप मुझे स्वीकार करके अनुगृहीत कीजिये। पुरुषका सबसे बड़ा धर्म दीनोंपर दया करना ही है'॥ २६॥

कालकन्योदितवचो निशम्य यवनेश्वरः। 'चिकीर्षुर्दैवगुह्यं स सस्मितं तामभाषत॥ २७॥
मया निरूपितस्तुभ्यं पतिरात्मसमाधिना। नाभिनन्दति लोकोऽयं त्वामभद्रामसम्मताम्॥ २८॥
त्वमव्यक्तगतिर्भुङ्क्ष्व लोकं कर्मविनिर्मितम्। याहि मे पृतनायुक्ता प्रजा नाशं प्रणेष्यसि॥ २९॥
प्रज्वारोऽयं मम भ्राता त्वं च मे भगिनी भव। चराम्युभाभ्यां लोकेऽस्मिन्नव्यक्तो भीमसैनिकः॥ ३०॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे पुरञ्जनोपाख्याने सप्तविंशोऽध्यायः॥ २७॥

---

१: प्रा० पा०—चिकीर्षितं दैवगुह्यं सस्मितां ता०।

अन्वयः—यवनेश्वरः कालकन्योदितवचः निशाम्य देवगुह्यम् चिकीर्षुः सः ताम् सस्मितम् अभाषत ॥ २७ ॥ ❀ ❀ मया आत्मसमाधिना तुभ्यम् पतिः निरूपितः अयम् लोकः असंमताम् अभद्राम् त्वाम् नाभिनंदति ॥ २८ ॥ ❀ ❀ त्वम् अव्यक्तगतिः कर्मविनिर्मितम् लोकम् भुंक्ष्व मे पृतनायुक्ता याहि प्रजाः नाशम् प्रणेष्यसि ॥ २९ ॥ ❀ ❀ अयं प्रज्वारः मम भ्राता च त्वम् मे भगिनी भव भीमसैनिकः अव्यक्तः उभाभ्याम् अस्मिन् लोके चरामि ॥ ३० ॥

इति सप्तविंशोऽध्यायः ॥ २७ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

देवगुह्यं मरणम् । तद्धि प्राणिनां वैराग्यानुदयाय देवैर्गोप्यते ॥ २७ ॥ ❀ ❀ तुभ्यं तव आत्मसमाधिना ज्ञानदृष्ट्या याच्यमानोऽयं लोकस्त्वां नेच्छति ॥ २८ ॥ ❀ ❀ अतोऽव्यक्तगतिः कुतः प्राप्तेत्यलक्षितगतिः सती लोकमाक्रम्य भुंक्ष्व एवं सर्वोऽपि लोकस्तव पतिः स्यादित्यर्थः । न चैव त्वया शंकनीयं प्रतिकूलां मां लोको हनिष्यतीति यस्मात्त्वमेव प्रजानाशं करिष्यसीत्याह याहीति । या मदीया यवनपृतना तया युक्ता ॥ २९ ॥ ❀ ❀ किं च प्रज्वार इति । प्रज्वारो मारको वैष्णवो ज्वरः, माहेश्वरस्य व्याध्यंतःपातित्वात् भीमा घोराः सैनिका यस्य ॥ ३० ॥

इति श्रीमद्भागवते चतुर्थे टीकायां सप्तविंशोऽध्यायः ॥ २७ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तां कालकन्यां देवस्य परमेश्वरस्य गुह्यं रहस्यं संसारचक्रप्रवर्त्तनं चिकीर्षुः । सस्मितमिति । त्वद्वचनमिदमप्रत्याख्येयमिति स्मितेन ज्ञापयन्नित्यर्थः ॥ २७ ॥ ❀ ❀ यद्वा तुभ्यं त्वां भोजयितुमित्यर्थः । अभद्रामभद्राकाराम् "गात्रं संकुचितं गतिर्विगलिता भ्रष्टा च दंतावलिर्दृष्टिर्नश्यति वर्द्धते बधिरता वक्त्रं च लालायते । वाक्यं नो त्रुवते च बांधवजना भार्या न शुश्रूषते हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोप्यमित्रायते" इति भर्तृहर्युक्तेः । अत एवासंमतामननुमताम् । इत्यर्थ इति । स्त्रीणां बहुपतित्वमभीप्सितमेवेति भावः ॥ २८ ॥ ❀ ❀ प्रजानाशं प्रजानां त्वया भुक्तानां नाशं प्रणेष्यसि त्वं करिष्यसि, कः पुनस्त्वां हंतुं प्रभवेदिति भावः ॥ २९ ॥ ❀ ❀ अथ युक्त्यंतरेण तदभिलषितमेवाह-किं चेति भगिनीति । मम भगिनी कापि नास्तीति त्वमेव भगिनी भव । ननु नारदोक्तं "वव्रे नाम्ना भयं पतिम्" इत्येवंरूपमन्यथा भवितुं नार्हतीति त्वं मे पतिरेव भवेति । सत्यम् । अधर्मवंशोद्भवानामस्माकं भगिन्यपि भार्या स्यादतस्तव भ्राताप्यहं पतिस्तस्मान्नारदोक्तमपि प्रमाणीकरणीयं भगवद्भक्तानां निकटमहं न यामीति मामपि निर्भरं भुक्त्वा संहर नारदं यथा पतिं नाकृथास्तथान्यमपि भगवद्भक्तं त्वमपि पतिं न कुरुष्व । अत एव मयोक्तं "त्वमव्यक्तगतिर्भुङ्क्ष्व लोकं कर्मविनिर्मितम्" इति भक्तानां कर्मविनिर्मितत्वाभावात्ते तव पतयो न भवंतीति तेषु तेष्वहमेव पतिरिति नारदोक्तमपि सुसंगतमभूदिति ॥ ३० ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे सप्तविंशोऽध्यायः ॥ २७ ॥

## श्रीमद्वीरराघवव्याख्या

कालकन्ययोदितं वचः श्रुत्वा स यवनेश्वरो भयनामा देवगुह्यं मरणं तद्धि प्राणिनां वैराग्यानुदयाय देवैर्गोप्यते कर्तुमिच्छुः स्मितेन सहितं यथा तथा समभाषत ॥ २७ ॥ ❀ ❀ तुभ्यं मया आत्मसमाधिना चित्तैकाग्र्येण बहुधा विचार्येत्यर्थः । लोकरूपः पतिर्निरूपितो निश्चितः कोऽसौ इत्यत्राह । याच्यमानो लोकस्त्वामभद्रामसक्तमां नेच्छति ॥ २८ ॥ ❀ ❀ अतोऽव्यक्तगतिः कुतः प्राप्तेत्यलक्षितगतिः सती कर्मनिर्मितं लोकमाक्रम्य भुङ्क्ष्व । एवं सर्वोऽपि हि लोकः तव पतिः स्यादित्यर्थः । न चैवं त्वया शङ्कनीयं मां प्रतिकूलां लोको हनिष्यतीति यस्मात्त्वमेव लोकस्य नाशं करिष्यसीत्याह । याहीति । या मदीया पृतना यवनानां सेना तया युक्ता याहि ॥ २९ ॥ ❀ ❀ प्रज्वारो वैष्णवज्वरः त्वां प्रणेष्यतीति लोकं प्रति प्रापयिष्यति । अत्र प्रज्वार इति मारको वैष्णवज्वरो विवक्षितः न माहेश्वरस्तस्य व्याध्यन्तःपातित्वेन मारकत्वाभावात् । प्रज्वारो मम भ्राता त्वं च मे भगिनी स्वसा भव । उभाभ्यां प्रज्वारकालकन्याभ्यां युवाभ्यां सहाहं भीमसैनिकः यवनसेनानायकः अव्यक्तगतिः सन् लोके चरामि । अत्र कालस्य दुहिता काचिदित्यादिश्लोकद्वयेन जराया लोकविद्वेषविषयत्वमुक्तं कदाचिदटमानेत्यादिना श्लोकत्रयेण नारदस्य जराक्रान्तत्वमुक्तम् । एतच्च नैष्ठिकसनकादीनामप्युपलक्षणं स्वस्य शापग्रस्तत्वकथनं तस्यावर्जनीयत्वाभिप्रायकं ततो विहतसङ्कल्पेत्यादिना जराधिव्याधिप्रज्वारभयानां पूर्वस्योत्तरोत्तरहेतुत्वमन्योऽन्यसाहित्येन मरणहेतुत्वं चोक्तं, जरादीनां परस्परभाषणादिकथनं तेषां मूर्तिमत्त्वाभिप्रायेण तदधिष्ठातृदेवताभिप्रायेण वा उपपन्नम् ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां सप्तविंशोऽध्यायः ॥ २७ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तस्माद् दुर्भगत्वमनपेक्ष्य तद्वचनस्यादरप्रकारमाह कालकन्येति। देवस्य विधातुर्गुह्यं रहस्यं वक्ष्यमाणमर्थं सस्मितमभाषतेत्यन्वयः ॥ २७ ॥ ❀ ❀ तत्र भोगोपायमुपदिशति नाभिनन्दतीति। अयं लोकोऽसम्मतां त्वां नाभिनन्दतीति यस्मात् ॥ २८ ॥ ❀ ❀ तस्मात्त्वमज्ञातगतिर्लोकं भुंक्ष्व ॥ २९ ॥ ❀ ❀ योऽयं मम भ्राता प्रज्वारः शैववैष्णवोभयलक्षणः सोऽप्रजोऽनपत्यस्त्वां प्रणेष्यति ग्रहीष्यतीत्यन्वयः। भीमा भयङ्कराः सैनिकाः सेनापतयो यस्य स तथा सः ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां सप्तविंशोऽध्यायः ॥ २७ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

त्वमित्यर्द्धकम्। याहीत्यर्द्धकम्। प्रजानाशमित्यत्र प्रज्वारस्त्वामिति चित्सुखः ॥ २९ ॥ ❀ ❀ प्रज्वारोऽयमित्यत्र अप्रजोऽयमिति चित्सुखः ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे सप्तविंशोऽध्यायः ॥ २७ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

देवस्य परमेश्वरस्य गुह्यं रहस्यं संसारचक्रप्रवर्त्तनं चिकीर्षुः। सस्मितमिति त्वद्वचनमिदमप्रत्याख्येयमिति स्मितेन ज्ञापयन्नित्यर्थः ॥ २७ ॥ ❀ ❀ तुभ्यं त्वां भोजयितुमित्यर्थः। आत्मसमाधिना मनसो भावनया अयं भूर्लोकस्थो लोकः त्वां नेच्छति ॥ २८ ॥ ❀ ❀ अतस्त्वमव्यक्तगतिः कुतः प्राप्तेत्यलक्षितगतिः सती लोकमाक्रम्य बलात्कारेण सर्व्व एव लोकस्तव पतिः स्यादित्यर्थः। प्रतिकूलां मां लोको हनिष्यतीति बिभेषि चेत् मत्पृतना यवनसेना तया युक्ता सती याहीति प्रजानां त्वया भुक्तानां नाशं त्वं प्रणेष्यसि करिष्यसि। त्वां हन्तुं पुनः कः प्रभवेदिति भावः ॥ २९ ॥ ❀ ❀ प्रज्वार इति मारको वैष्णवज्वरः। माहेश्वरस्य तु व्याध्यन्तःपातित्वात् मम भगिनी कापि नास्तीति त्वमेव भगिनी भव। ननु नारदोक्तमन्यथा भवितुं नार्हतीति त्वं मे पतिरेव भवेति सत्यम्। अधर्म्मवंशोद्भवानामस्माकं भगिन्यपि भार्य्या स्यादतस्तव भ्राताप्यहं पतिस्तस्मान्नारदोक्तमपि प्रमाणीकरणीयं भगवद्भक्तानां निकटमहं यामि चेन्मामपि निर्भरं भुक्त्वा संहर। नारदं यथा पतिं नाकृथास्तथान्यमपि भगवद्भक्तं त्वमपि पतिं न कुरुष्व। अत एव मयोक्तं त्वमव्यक्तगतिर्भुङ्क्ष्व लोकं कर्म्मविनिर्मितमिति भक्तानां कर्म्मविनिर्म्मितत्वाभावात्ते तव पतयो न भवन्तीति तेषु तेष्वहमेव ते पतिरिति नारदोक्तमपि सुसङ्गतमभूदिति ॥ ३० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। चतुर्थे सप्तविंशोऽयं सङ्गतः सङ्गतः सताम् ॥ २७ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

दीव्यति व्यवहरति पित्रादिरूपेणेति देवो जीवः स गुह्यः तादृशव्यवहारानर्हो भवति यस्मात्तन्मरणम्। चिकीर्षुः अनयैव प्राणिनां मरणं भवतु इतीच्छावान् ॥ २७ ॥ ❀ ❀ तुभ्यं तव अयं लोकस्त्वां नाभिनन्दति नेच्छति ॥ २८ ॥ ❀ ❀ अतः अव्यक्ता दुर्लक्ष्या गतिर्यस्याः सा त्वं लोकं भुंक्ष्व। सर्वोऽपि कर्मनिर्मितो लोकस्त्वया भुज्यमानस्तव पतिरित्यर्थः ॥ २९ ॥ ❀ ❀ प्रज्वारो मारको ज्वरः ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे सप्तविंशाध्यायार्थप्रकाशः ॥ २७ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

यवनेश्वरः भयनामा कालकन्ययोदितं वचो निशम्य श्रुत्वा देवानां गुह्यं गुप्तं किञ्चित्कार्यं चिकीर्षुः सस्मितं तामभाषतेत्यन्वयः। पक्षान्तरे तु—देवगुह्यं कार्यं प्राणिनां मरणं तस्मिन् ज्ञाते हि प्राणिनो विरक्ताः सन्तो भगवद्भजनं कृत्वा मुच्यन्ते तद्धि देवानां न रोचते। "पशुरेव स देवानाम्" इति श्रुतेरविरक्तानां अज्ञानां कर्मिणां देवाराधकानां पशुवद्देवभोगसाधकत्वात्तेषां विरक्त्या मुक्तत्वे स्वभोगविघातादत एतन्मा भूदिति देवैर्मरणं गोप्यते तच्चिकीर्षुः ॥ २७ ॥ ❀ ❀ तद्भाषणमेव दर्शयति—मयेति त्रिभिः। तुभ्यं तव पतिर्मया आत्मसमाधिना चित्तैकाग्र्येण निरूपितो विचारितः। कथं विचारित इति चेच्छृणु, अयं लोकः प्राणिसमूहो याच्यमानस्त्वां नाभिनन्दति नाङ्गीकरोति। तत्र हेतुः—असम्मतामिति। तत्रापि हेतुमाह—अभद्रामिति, अनिष्टकरीमित्यर्थः ॥ २८ ॥ ❀ ❀ अतः कुतः कथमागतेत्यव्यक्ता गतिर्यस्यास्तथाभूता सती त्वं कर्मभिर्विनिर्मितं लोकं प्राणिशरीरं बलात्कारेण भुङ्क्ष्व। एवं सति सर्वोऽपि लोकस्तव पतिः स्यादिति भावः। न च शङ्कनीयमेवं भोगे मम सामर्थ्यं नास्तीति। मे मम यवनपृतनया युक्ता त्वं याहि, तथा सति भोगे कः सन्देहः ? भुक्त्वा च प्रजानां नाशमेव प्रणेष्यसि करिष्यसि।

पक्षान्तरे तु—कर्मविनिर्मितमित्यनेन प्रारब्धकर्मविनिर्मित एव जराप्रवेशः, न भगवत्पार्षदशरीरे योगिशरीरे वेति दर्शितम्। मृत्यु-पृतना रोगादिसमूहस्तद्युक्तया जरया देहनाशस्य प्रसिद्धत्वात् ॥ २९ ॥ ❀ ❀ ममापि प्रजानाश इष्ट एव तत्र त्वमपि सहायभूता मिलिताऽतः स सुतरामेव भविष्यतीत्यावयोर्द्वयोः कार्यसिद्धिरित्यभिप्रायेणाह–प्रज्वार इति। अयं प्रज्वारसञ्ज्ञको मम भ्राताऽस्ति, त्वं च मम भगिनी भव, इत्थमुभाभ्यां युवाभ्यां द्वारभूताभ्यां भीमाः सैनिकाः यवना यस्य सः, तैश्चास्मिन् लोके प्रजानाशं कुर्वन्न-व्यक्तः अलक्षित एव चरामीति मे मनीषेति शेषः। पक्षान्तरे तु—प्रज्वारो वैष्णवोऽन्तको ज्वरः, माहेश्वरस्य व्याध्यन्तःपातित्वात्, सैनिकाः व्याध्यादयः, जराज्वरादिद्वारैव मृत्योर्मारकत्वस्य प्रसिद्धत्वादिति ज्ञेयम् ॥ ३० ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे मोक्षनिरूपणे। सप्तविंशो गतो वृत्तिं विनश्यत्तानिरूपकः ॥ ३ ॥

भाषानुवादः

कालकन्याकी बात सुनकर यवनराजने विधाताका एक गुप्त कार्य करानेकी इच्छासे मुसकराते हुए उससे कहा ॥ २७ ॥ ❀ ❀ 'मैंने योगदृष्टिसे देखकर तेरे लिये एक पति निश्चय किया है। तू सबका अनिष्ट करनेवाली है, इसलिये किसीको भी अच्छी नहीं लगती और इसीसे लोग तुझे स्वीकार नहीं करते। अतः इस कर्मजनित लोकको तू अलक्षित होकर बलात्कारसे भोग। तू मेरी सेना लेकर जा; इसकी सहायतासे तू सारी प्रजाका नाश करनेमें समर्थ होगी, कोई भी तेरा सामना न कर सकेगा ॥ २८–२९ ॥ ❀ ❀ यह प्रज्वार नामका मेरा भाई और तू मेरी बहिन बन जा। तुम दोनोंके साथ मैं अव्यक्तगतिसे भयङ्कर सेना लेकर सारे लोकोंमें विचरूँगा ॥ ३० ॥

इति सप्तविंशोध्यायः ॥ २७ ॥



# अथाष्टाविंशोऽध्यायः

## नारद उवाच

सैनिका भयनाम्नो ये बर्हिष्मन् दिष्टकारिणः । प्रज्वारकालकन्याभ्यां विचेरुरवनीमिमाम् ॥ १ ॥
त एकदा तु रभसा पुरञ्जनपुरीं नृप । रुरुधुर्भौमभोगाढ्यां जरत्पन्नगपालिताम् ॥ २ ॥
कालकन्यापि बुभुजे पुरञ्जनपुरं बलात् । ययाभिभूतः पुरुषः सद्यो निःसारतामियात् ॥ ३ ॥
तयोपभुज्यमानां वै यवनाः सर्वतोदिशम् । द्वार्भिः प्रविश्य सुभृशं प्रार्दयन् सकलां पुरीम् ॥ ४ ॥
तस्यां प्रपीड्यमानायामभिमानी पुरञ्जनः । अ[1]वापोरुविधांस्तापान् कुटुम्बी ममताकुलः ॥ ५ ॥
कन्योपगूढो नष्टश्रीः कृपणो विषयात्मकः । नष्टप्रज्ञो हृतैश्वर्यो गन्धर्वयवनैर्बलात् ॥ ६ ॥
विशीर्णां स्वपुरीं वीक्ष्य प्रतिकूलाननादृतान् । पुत्रान् पौत्रानुगामात्याञ्जायां च गतसौहृदाम् ॥ ७ ॥
आत्मानं कन्यया ग्रस्तं पञ्चालानरिदूषितान् । दुरन्तचिन्तामापन्नो न लेभे तत्प्रतिक्रियाम् ॥ ८ ॥
कामानभिलषन्दीनो यातयामांश्च कन्यया । विगतात्मगतिस्नेहः पुत्रदारांश्च लालयन् ॥ ९ ॥
गन्धर्वयवनाक्रान्तां कालकन्योपमर्दिताम् । हातुं प्रचक्रमे राजा[2] तां पुरीमनिकामतः ॥ १० ॥

अन्वयः—बर्हिष्मन् ये भयनाम्नः दिष्टकारिणः सैनिकाः प्रज्वारकालकन्याभ्याम् इमाम् अवनीम् विचेरुः ॥१॥ ❀ ❀ नृप एकदा तु ते रभसा भौमभोगाढ्याम् जरत्पन्नगपालिताम् पुरंजनपुरीम् रुरुधुः ॥ २ ॥ ❀ ❀ कालकन्या अपि बलात् पुरंजनपुरम् बुभुजे यया अभिभूतः पुरुषः सद्यः निःसारताम् इयात् ॥ ३ ॥ ❀ ❀ यवनाः सर्वतोदिशम् द्वार्भिः प्रविश्य तया उपभुज्यमानाम् सकलाम् पुरीम् सुभृशम् प्रार्दयन् वै ॥ ४ ॥ ❀ ❀ तस्याम् प्रपीड्यमानायाम् अभिमानी कुटुंबी ममताकुलः कन्योपगूढः नष्टश्रीः कृपणः विषयात्मकः गंधर्वयवनैः बलात् हृतैश्वर्यः नष्टप्रज्ञः पुरंजनः उरुविधान् तापान् अवाप ॥ ५–६ ॥ ❀ ❀ सः स्वपुरीम् विशीर्णाम् पुत्रान् पौत्रानुगामात्यान् प्रतिकूलान् अनादृतान् जायाम् गतसौहृदाम् आत्मानम् कन्यया ग्रस्तम् पंचालान् अरिदूषितान् च वीक्ष्य दुरन्तचिंताम् आपन्नः तत्प्रतिक्रियाम् न लेभे ॥ ७–८ ॥ ❀ ❀ कन्यया यातयामान् कामान् अभिलषन् दीनः च विगतात्मगतिस्नेहः पुत्रदारान् लालयन् च ॥ ९ ॥ ❀ ❀ राजा गंधर्वयवनाक्रान्ताम् कालकन्योपमर्दिताम् ताम् पुरीम् अनिकामतः हातुम् प्रचक्रमे ॥ १० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अष्टाविंशे तु वैदर्भ्याख्यानेन स्त्रीविचिंतया । स्त्रीत्वं प्राप्तस्य दैवेन कदाचिन्मुक्तिरुच्यते ॥ ( १ ) ॥

इदानीं तु पुरंजनस्य पुंदेहत्यागप्रकारपूर्वकं स्त्रीत्वप्रकारमाह सैनिका इत्यादि राजसिंहस्य वेश्मनीत्यन्तेन । दिष्टं दैवं कुर्वन्त्यधिकुर्वन्तीति तथा मृत्योरादेशकारिण इति वा ॥ १ ॥ ❀ ❀ जरत्पन्नगेन जीर्णप्राणेन पालिताम् ॥ २–३ ॥ ❀ ❀ द्वार्भिश्चक्षुरादिभिः रोगरूपेण प्रविश्य ॥ ४–५ ॥ ❀ ❀ कन्यया जरयोपगूढः संस्तत्प्रतिक्रियां न लेभे इति तृतीयेनान्वयः । हृतैश्वर्य उत्थानादिष्ववशक्तः ॥ ६ ॥ ❀ ❀ प्रतिकूलाननपेक्षितविषयप्रापणान् अनादृतानादरमकुर्वाणान् स्वाधीनत्वाभावात् । अनुगा इन्द्रियाणि अमात्याः इन्द्रियदेवाः, गतसौहृदामध्यवसायाभावात् ॥ ७ ॥ ❀ ❀ कन्यया जरया ग्रस्तम् । पंचालान्विषयान् अरिभिर्व्याध्यादिभिर्दूषितान् ॥ ८ ॥ ❀ ❀ कालकन्यया हेतुभूतया यातयामान्निःसारानपि कामानभिलषन् विगता आत्मनो गतिः पारलौकिकी ऐहिकः पुत्रादिस्नेहश्च यस्य सः विगतात्मगतिः । स्नेहादिति वा पाठः । तदा विगता आत्मगतिर्यस्येत्येव विसर्गान्तपदपाठे विग्रहः । स राजा पुरंजनो हातुं त्यक्तुं प्रचक्रमे उपक्रान्तवानिति द्वयोरन्वयः अनिकामतोऽनिच्छयाऽपि ॥ ९–१० ॥

---

१. प्रा० प्रा—आवापो० । २. प्रा० पा०—राजन् तां पुरीमभिनिकामतः ।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

दैवं दुरदृष्टफलं दिष्टशब्देन दुर्दैवग्रहणे सुदैवत्यागे च कारणाभावमाशङ्क्याह—मृत्योरित्यादि चेति। सैनिका व्याधयः ॥ १ ॥ ❀ ❀ एकदा प्रारब्धकर्मक्षये भौमभोगा अशनपानवसनलक्षणास्तैराढ्यां जरत्पन्नगेन शतवर्षस्थायिना ॥ २ ॥ ❀ ❀ निस्सारतां नैर्बल्यम्। यया कालकन्यया ॥ ३ ॥ ❀ ❀ यवना व्याधयः। प्रार्दयन्निति जराग्रस्तस्याक्षिमांद्यादयो दृश्यन्त एव ॥ ४ ॥ ❀ ❀ अभिमानीति। ममेयमित्यभिमानवान् ॥ ५ ॥ ❀ ❀ कन्येति त्रिकम् ॥ ६ ॥ ❀ ❀ विशीर्णां विशीर्यमाणाम्। प्रतिकूलान् शोकादीन् आदरमकुर्वतः सर्वथा निगिलितुमुपक्रान्तानित्यर्थः। पुत्रान्विवेकादीन्। पौत्रान् धैर्य्यगांभीर्य्यादीन्। चकाराद्गतसौहृदान्स्वस्वकृत्यं सम्यगकुर्वाणान् ॥ ७ ॥ ❀ ❀ तत्प्रतिक्रियां तेषां तेषां प्रतिक्रियां मन्त्रौषधादिकृत्यैरपि न लेभे ॥ ८ ॥ ❀ ❀ कामान् मिष्टभोजनादीन्। यातयामान् क्षुन्मांद्यादिहेतोरित्यर्थः। स्नेहादिति भिन्नपदपाठः शोभनः प्रतिभाति। स्नेहांतसमासस्य सापेक्षत्वात् ॥ ९-१० ॥

### श्रीमद्वीरराघवव्याख्या

एवं जरादीनामुत्तरोत्तरहेतुत्वं संभूय मृतिहेतुत्वं चाभिधायेदानीमेते सर्वे पुरञ्जनपुरीमाविश्य पीडयन्तो विद्रावयामासुरिति वदन् "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय! सदा तद्भावभावितः" इत्युक्तरीत्या कथापक्षे पुरञ्जनस्य राज्ञः स्त्रीचिन्तया जन्मप्राप्तिकथनव्याजेनाध्यात्मपक्षेऽपि जीवस्य कर्मवशात् स्त्रीप्राप्तिं तत्र पुनरदृष्टविशेषाद्भागवतसङ्गतिमीश्वरप्रसादं चाह सप्तविंशेन नारदः। हे बर्हिष्मन्! भयनाम्नो ये सैनिकाः सेनायां भवाः सैनिकाः दिष्टकारिणः आदेशकारिणः ईश्वरस्येति शेषः प्रज्वारकालकन्याभ्यां सहेमां भूमिं विचेरुः पर्यटुः ॥ १ ॥ ❀ ❀ ते सैनिकाः कदाचिद्देहारम्भकप्रारब्धावसाने जरत्पन्नगेन जीर्णप्राणेन पालितां भौमैर्भूम्यां भवैर्भोगैः शब्दादिविषयभोगैराढ्यां पुरञ्जनपुरीं रुरुधुः ॥ २ ॥ ❀ ❀ कालकन्या जरापि पुरञ्जनपुरीं बलाद् बुभुजे पुरञ्जनपुरं जराव्याध्यादिग्रस्तमभूदित्यर्थः। कालकन्यां विशिनष्टि। यया कालकन्ययाऽभिभूतः पुरुषः निस्सारतां प्राप्नुयात् ॥ ३ ॥ ❀ ❀ तया कालकन्ययोपभुज्यमानां सकलां पुरञ्जनपुरीं यवनाः सर्वतो दिशं द्वार्भिः प्रविश्य चक्षुरादिषु रोगरूपेण प्रविश्य भृशमधिकं प्रार्दयन् पीडितवन्तः ॥ ४ ॥ ❀ ❀ तस्यां पुर्यां यवनादिभिः प्रपीड्यमानायां ममेयं पुरीत्यभिमानी पुरञ्जनः कुटुम्बे बुद्धीन्द्रियमनआदिरूपेण या ममता तया आकुलः आक्षिप्तचित्तः बहुविधान् तापान् क्लेशान् प्राप ॥ ५ ॥ ❀ ❀ कन्यया बुद्ध्योपगूढः दृढतरं संश्लिष्टः विषयेष्वेवात्मा चित्तं यस्य अतः कृपणः अत एव नष्टप्रज्ञः नष्टविवेकः नष्टश्रीर्ज्ञानात्मिका यस्य यवनैर्बलात् हृतमैश्वर्य्यमुत्थानादिशक्तिरूपं यस्य सः तत्प्रतिक्रियां न लेभे इति तृतीयेनान्वयः ॥ ६ ॥ ❀ ❀ विशीर्णं शिथिलं स्वपुरं तथा प्रतिकूलाननपेक्षितविषयप्राणाननाद्दृतानादरमकुर्वाणान् स्वाधीनत्वाभावात्पुत्रानिन्द्रियपरिणामरूपान् पुत्रपौत्रान् पुण्यापुण्यकर्मरूपान् तदनुगानीन्द्रियाण्यमात्यानिन्द्रियदेवताः गतं सौहृदं स्नेहो यस्यास्तां जायां तस्या अपि स्वाधीनत्वाभावात् ॥ ७ ॥ ❀ ❀ कन्यया जरया ग्रस्तमात्मानं शरीरमरिभिर्विघ्नादिभिर्दूषितान् पाञ्चालान् विषयांश्च वीक्ष्य दृष्ट्वा अपारचिन्तामापन्नः तस्य पुरादिविशीर्णत्वादेः प्रतिक्रियां प्रतिकारं परिहारोपायं न लेभे ॥ ८ ॥ ❀ ❀ कालकन्यया हेतुभूतया यातयामान्निःसारानपि कामानभिलषन् दीनः कृपणः विगता आत्मनो गतिः पारलौकिकी ऐहिकः पुत्रादिस्नेहश्च यस्य पुत्रदारान् इन्द्रियपरिणामबुद्धीर्लालयन्नुपच्छन्दयन् ॥ ९ ॥ ❀ ❀ गन्धर्वैरहोरात्ररूपैर्यवनैराध्यादिभिश्चाक्रान्तां कालकन्ययाऽवमर्दितां पीडितां पुरीमकामतः अनिच्छयापि राजा पुरञ्जनो हातुं त्यक्तुं प्रचक्रमे उपक्रान्तवान् ॥ १० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ईश्वरेच्छोपनतकर्मवशाच्छरीरमनुविश्य स्थितस्य जीवस्य जाग्रदाद्यवस्थाभेदं प्रतिपाद्याधुना शरीरवियोगलक्षणामवस्थां वक्तुमुपक्रमते सैनिका इत्यादिना। वातादिव्याधिसमूहा इमामवनिं विचेरुरित्यनेन जरादिव्याधयोऽस्मिन् प्रपञ्च एव नान्यत्रेति ज्ञायते ॥ १ ॥ ❀ ❀ भौमभोगा अशनपानवसनलक्षणा रुरुधुः शरीरं विविशुः। जरत्पन्नग इति प्राणबलाच्चेष्टाल्पत्वं लक्ष्यते न तु प्राणस्य, तस्य निस्सीमबलत्वात् ॥ २ ॥ ❀ ❀ कन्यापि बुभुज इति यौवनानन्तरं विवेश ॥ ३ ॥ ❀ ❀ प्रार्दयन्निति जराग्रस्तस्य पलितस्याक्षिमान्द्यं बधिरत्वं दन्तभङ्गं क्षामाकुलत्वमग्निदौर्बल्यं कण्ठे घुरुघुरुत्वमित्यादिनानाव्याधयो दृश्यन्ते इति ॥ ४-६ ॥ ❀ ❀ पुत्रान् गोलकलक्षणान् पौत्रानिन्द्रियाणि अमात्यानमा सह वर्तनीया अमात्या इन्द्रियाभिमानिनो देवास्तांश्च। अत-सातत्यगमन इति धातोः। बुद्धेरपि पूर्ववदतिशयो नास्तीति गतसौहृदाम् ॥ ७ ॥ ❀ ❀ कन्यया रजसा पाञ्चालान्विषयानरिदूषितान् विघ्नप्रतिहतान् ॥ ८ ॥ ❀ ❀ यातयामान् गतयामान् गतात्मसंविन्नष्टपरमात्मज्ञानः अत एव निःस्नेहः परमात्मनि भक्तिरहितो विरुद्धस्नेहो वा ॥ ९ ॥ ❀ ❀ अनिकामतोऽनिच्छातः ॥ १० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

कन्येति त्रिकम् ॥ १-८ ॥ ❀ ❀ कामानिति युग्मकम् । गतीत्यत्र सुखीति चित्सुखः । अनिकामत इत्यस्य अनिच्छयापीति चित्सुखव्याख्या च ॥ ९-१५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

त्यक्त्वा शीर्णां पुरीं स्त्रीत्वं प्राप्तः सत्सङ्गतो हरौ । भक्त्या पुरञ्जनः प्राप्तः तमष्टाविंशके स्फुटम् ॥ १ ॥

इदानीं जीवस्य स्थूलशरीरपरित्यागप्रकारमाह सैनिका इत्यादिना पुरीं विहायापगत इत्यन्तेन । सैनिका व्याधयः दिष्टकारिणः दुरदृष्टफलोत्पादकाः ॥१॥ ❀ ❀ जरत्पन्नगेन जीर्णप्राणेन पालिताम् ॥ २ ॥ ❀ ❀ द्वार्भिश्चक्षुरादिभिः । अभिमानीति पुर्यामभिमानवशादेव ॥ ३-४ ॥ ❀ ❀ विशीर्णां विशीर्य्यमाणां प्रतिकूलान् शोकादीन् अनादृतान् आदरमकुर्व्वाणान् सर्व्वथा निगिलितुमुपक्रान्तानित्यर्थः । पुत्रान् विवेकादीन् पौत्रान् धैर्य्यगाम्भीर्य्यादीन् अनुगानिन्द्रियाणि अमात्यान् मनआद्यधिष्ठातृदेवांश्चन्द्रादीन् चकारात् गतसौहृदान् स्वस्वकृत्यादि सम्यगकुर्व्वाणान् जायां बुद्धिञ्च गतसौहृदामध्यवसायादिरहिताम् । कन्यया जरया पञ्चालान् शब्दादीन् अरिभिः रोगादिभिः तेषां तेषां प्रतिक्रियां मन्त्रौषधादिभिरपि कृतैर्न लेभे ॥ ५-८ ॥ ❀ ❀ कामानभीष्टभोजनादीन् यातयामानपि क्षुन्मान्द्यादिहेतोरित्यर्थः, विगता आत्मनो गतिः पारलौकिकी ऐहिकः पुत्रादिस्नेहश्च यस्य सः । स्नेहादिति च पाठः । अनिकामतः अनिच्छयापि ॥ ९-१० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

बुद्धिविमोहितस्य जीवस्य अन्तकाले जरादिनिमित्तकदेहत्यागपूर्वकं "यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय ! सदा तद्भावभावितः" इति श्रीमुखोक्तप्रकारेण स्मरणरूपदेहान्तरलाभं गुर्वनुग्रहलब्धभगवज्ज्ञानभक्त्यादिसाधनसंपत्त्या मुक्तिं च वर्णयति सैनिकेत्यष्टाविंशेनाध्यायेन । भयनाम्नः सैनिका आधयो व्याधयः दिष्टकारिणः प्राक्कर्मफलसाधकाः परमेश्वराज्ञाकारिणः प्रज्वारकालकन्याभ्यां सहेमामवनिं विचेरुः ॥ १ ॥ ❀ ❀ जरत्पन्नगो जीर्णप्राणस्तेन ॥ २-३ ॥ ❀ ❀ द्वार्भिरिन्द्रियच्छिद्रैः ॥ ४-५ ॥ ❀ ❀ कन्योपगूढो जराभिभूतः गन्धर्वैरहोरात्रैः यवनैराधिभिश्च हृतैश्वर्यो रुद्धचेष्टस्तत्प्रतिक्रियां न लेभे इति तृतीयेन सम्बन्धः ॥ ६ ॥ ❀ ❀ अनुगा इन्द्रियाणि अमात्यास्तदधिष्ठातृदेवाः तान् गतसौहृदामध्यवसायशून्याम् ॥ ७ ॥ ❀ ❀ पाञ्चालान् विषयान् अरिभिः अहोरात्राधिव्याधिरूपैः ॥ ८ ॥ ❀ ❀ कन्यया जरया यातयामान् गतसारानपि अभिलषन् पुरीमनिकामतः अनिच्छन्नपि हातुं प्रचक्रमे इति द्वयोरन्वयः । ननु जीवात्मनः अनात्मभूतदेहेन्द्रियबुद्ध्यादिसङ्गमात्रेणैवंभूतदुःखावाप्तौ किं कारणमित्यत्राह विगतात्मगतिस्नेह इति । विगत आत्मगतिस्नेहः आत्मनो जीवस्य गतिर्भगवत्पादपद्मं तद्विषयकोऽनुरागः यस्मात्सः ॥ ९-१० ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

अष्टाविंशे प्रसक्तस्य विनाशो नरकस्तथा । सत्सङ्गेन विरक्तस्य भक्तिर्मुक्तिर्निरूप्यते ॥ १ ॥

एवं भयसम्भाषणानन्तरं किं जातमित्यपेक्षायामाह—सैनिका इति । हे बर्हिष्मन्निति सम्बोधनेन राजाज्ञाया अनुल्लङ्घ्यत्वं तु त्वया ज्ञायत एवेति सूचयति । ये भयनाम्नो दिष्टकारिणः आज्ञाकारिणः सैनिका योद्धारस्ते प्रज्वारकालकन्याभ्यां सह लोकविनाशार्थमिमामवनीं विचेरुः सर्वत्र पर्यटन्ति स्मेत्यन्वयः । पक्षान्तरेऽपि—जराज्वरव्याध्यादीनां सर्वत्र प्रचारः प्रसिद्ध एव ॥ १ ॥ ❀ ❀ एकदा तु ते भौमभोगेन आढ्यां सम्पूर्णां पुरञ्जनपुरं तरसा वेगेन बलात् रुरुधुरावृतवन्त इत्यन्वयः । ननु तस्यामपि कश्चित्प्रबलो रक्षकः स्यादेव राजधानीत्वात्तर्हि कथमेवं तैः प्रतिरोधः सम्भवतीत्याशङ्क्याह—जरत्पन्नगपालितामिति, जरत्पन्नगेन क्षीणबलेन सर्पेण पालितामित्यर्थः । बहुभिर्गन्धर्वैः सहैकस्य तस्य पन्नगस्य रक्षकस्य युद्धेन क्षीणबलत्वेन तन्निवारणे सामर्थ्याभावात्ते रुरुधुरिति भावः । पक्षान्तरे तु एकदा आससाद वै काल इत्युक्तेर्जरासमये प्राणस्य दुर्बलत्वात्ते जरारोगादयः सार्वभौमभोगयोग्यमपि शरीरं ग्रस्तवन्त इत्यर्थः ॥ २ ॥ ❀ ❀ कालकन्याऽपि बलात् पुरञ्जनपुरं बुभुजे स्वाधीनीकृतवतीत्यन्वयः । ययाऽभिभूतः पुरप्रवेशभोगादिना तिरस्कृतः पुरुषः सर्वो यः कोऽपि सद्यो निस्सारतां असमर्थतामियात् गच्छेत्सा बुभुजे इत्यन्वयः । पक्षान्तरे तु 'कालकन्यापि बुभुजे' इत्यनेन यर्हि मे पृतनायुक्तेत्यनेन तस्मिन् समये जराया एव प्राधान्यं अन्येषां रोगादीनां तु तदनुसारित्वं दर्शितम्, तयाऽभिभूतः पुरुष इति सामान्यत उक्त्या नैकस्य जीवस्यैयमवस्था किन्तु अन्यस्यापि सर्वस्येति दर्शितम् ॥ ३ ॥ ❀ ❀ तया कालकन्ययोपभुज्यमानां सकलां पुरीं सर्वतोदिशं द्वार्भिर्यवनाः प्रविश्य सुभृशं प्रार्दयन् बभञ्जुरित्यन्वयः । पक्षान्तरे तु—जरया ग्रस्ते देहे चक्षुरादिभिर्द्वार्भिः रोगादयः प्रविश्यान्धत्वादि सम्पादितवन्त

इत्यर्थः ॥ ४ ॥ ❀ ❀ तस्यां पुर्यां प्रपीड्यमानायां तदभिमानी पुरञ्जनो यतः कुटुम्बी पुत्रादिमान् तेषु ममतया आकुलो विवशश्च अत उरुविधान् बहुप्रकारान् तापानवापेत्यन्वयः। पक्षान्तरे तु—यतो जीवोऽभिमानी देहादिष्वहङ्कारी कुटुम्बी नानाविधेन्द्रियपरिणामादिमान् विषयादिषु ममतया व्याकुलोऽतो जरादिभिर्देहे प्रपीड्यमाने बहुविधानि दुःखानि प्राप्तवान्। यदि तु विरक्तत्वेन देहादिष्वहन्ता ममता च न स्यात्तदा जरावस्थायामप्येवं दुःखानुभवो न स्यादिति भावः ॥ ५ ॥ ❀ ❀ कन्योपगूढः कन्यापरिरब्धस्तत्प्रतिक्रियां न लेभे इति तृतीयेनान्वयः। यतः कालकन्योपगूढः अत एव नष्टा श्रीः शोभा यस्य सः तथा, यतश्च गन्धर्वादिभिर्बलाद्धृतमैश्वर्यं यस्य, अत एव नष्टा प्रज्ञा बुद्धिर्यस्य स तथा। नष्टप्रज्ञत्वे हेतुमाह—विषयात्मक इति। विरक्तस्यैश्वर्ये नष्टेऽपि मोहाभावाद् बुद्धिर्नष्टा न भवति। तस्य विषयाविष्टचित्तत्वात् तत्साधने ऐश्वर्ये हृते मोहेन सा नष्टेति भावः। विषयात्मकत्वे हेतुमाह—कृपण इति, 'कृपणः स तु विज्ञेयो ह्यनालोचितयाचकः' इति वचनात् विवेकशून्य इत्यर्थः। पक्षान्तरे तु—कन्योपगूढः जरया ग्रस्तः गन्धर्वैर्दिवसैर्यवनै रोगादिभिश्च हृतमैश्वर्यं सामर्थ्यं यस्य सः। अन्यत् कथापक्षोक्तमेव ॥ ६ ॥ ❀ ❀ प्रतिकूलान् अपेक्षितविषयाप्रापकान्। अनादृतान् आदरमकुर्वाणान् अस्वाधीनान्। गतसौहृदां स्नेहरहिताम्। पक्षान्तरे—पुरी शरीरं तस्य विशीर्णत्वं शिथिलावयवत्वम्, पुत्रा इन्द्रियपरिणामादयः, पौत्राः कर्माणि, अनुगाः इन्द्रियाणि, अमात्या इन्द्रियदेवताः, जाया बुद्धिः। तस्या गतसौहृदत्वमध्यवसायराहित्येन अभिलषितभोगासम्पादकत्वम् ॥ ७ ॥ ❀ ❀ आत्मानं कालकन्यया ग्रस्तं स्वाधीनीकृतं तथा पञ्चालान् देशान् अरिभिर्गन्धर्वादिभिर्दूषितांश्च वीक्ष्य दुरन्तां चिन्तमापन्नस्तत् तस्य कालकन्यादिनिराकरणपूर्वकयथापूर्वसुस्थतासम्पादनस्य प्रतिक्रियामुपायं न लेभे इत्यन्वयः। पक्षान्तरे—पञ्चालशब्देन विषयास्तेषां दूषितत्वं पूर्ववत् सुखाजनकत्वम्। अन्यत् समानम् ॥ ८ ॥ ❀ ❀ कालकन्यया हेतुभूतया यातयामान् यातो गतो यामो यस्य पक्वान्नस्य तद्यथा गतरसं भवति तथाऽन्यदपि गतरसं वस्तु यातयामशब्देन गौण्या वृत्त्योच्यते, इति गतसारानपि कामान् विषयानभिलषन् तथा विगता असिद्धा साधनानुष्ठानाभावात् आत्मनो गतिः पारलौकिकी तथैहिकः पुत्रादिस्नेहश्च यस्य स तथाभूतोऽपि पुत्रदारांश्च लालयन् राजा पुरञ्जनस्तां गन्धर्वयवनादिभिराक्रान्तां वशीकृतां कालकन्यया चोपमर्दितां भग्नामपि पुरीमनिकामतोऽनिच्छन्नपि हातुं त्यक्तुं प्रचक्रमे उपक्रान्तवानिति द्वयोरन्वयः। कामानां गतसाराणां सुखाजनकानामपि अभिलाषाणां तथा परलोकसाधनराहित्ये तथा स्वस्मिन् स्नेहरहितानामपि पुत्रदाराणां लालने तथा गन्धर्वादिभिर्भग्नाया अपि पुर्यास्त्यागेऽनिच्छायां च तस्याज्ञानमेव हेतुः, अन्यथा कथमेवं मोहेन कुर्यादित्यभिप्रेत्य तं विशिनष्टि—दीन इति, यस्मादज्ञानेन विषयासक्त इत्यर्थः। पक्षान्तरे तु—यथा युवावस्थायां विषयाणां सुखजनकत्वं तथा वार्द्धके नेति तेषां यातयामत्वं तस्य जरानिमित्तक्षुन्मान्द्यादिहेतुकत्वात् कन्येत्युक्तम्। विषयाणां सुखाजनकत्वेऽपि अभिलाषविषयत्वमस्त्येव, तदा वृद्धयादीनां विकलत्वमेव कार्याक्षमत्वहेतुत्वात् स्नेहराहित्यम्, तथापि तत्समाधानीकरणमेव लालनम्। जरारोगादिभिर्जीर्णस्यापि शरीरस्य त्याग इच्छाभावः तस्यागोपक्रमश्च प्रसिद्ध एव ॥ ९-१० ॥

## भावानुवादः

### पुरञ्जनको स्त्रीयोनिकी प्राप्ति और अविज्ञातके उपदेशसे उसका मुक्त होना

श्रीनारदजी कहते हैं—राजन्! फिर भय नामक यवनराजके आज्ञाकारी सैनिक प्रज्वार और कालकन्याके साथ इस पृथ्वीतलपर सर्वत्र विचरने लगे ॥ १ ॥ ❀ ❀ एक बार उन्होंने बड़े वेगसे बूढ़े साँपसे सुरक्षित और संसारकी सब प्रकारकी सुख-सामग्रीसे सम्पन्न पुरीको घेर लिया ॥ २ ॥ ❀ ❀ तब, जिसके चंगुलमें फँसकर पुरुष शीघ्र ही निःसार हो जाता है, वह कालकन्या बलात्कारसे उस पुरीकी प्रजाको भोगने लगी ॥ ३ ॥ ❀ ❀ उस समय वे यवन भी कालकन्याके द्वारा भोगी जाती हुई उस पुरीमें चारों ओरसे भिन्न-भिन्न द्वारोंसे घुसकर उसका विध्वंस करने लगे ॥ ४ ॥ ❀ ❀ पुरीके इस प्रकार पीड़ित किये जानेपर उसके स्वामित्वका अभिमान रखनेवाले तथा ममताग्रस्त, बहुकुटुम्बी राजा पुरञ्जनको भी नाना प्रकारके क्लेश सताने लगे ॥ ५ ॥ ❀ ❀ कालकन्याके आलिङ्गन करनेसे उसकी सारी श्री नष्ट हो गयी तथा अत्यन्त विषयासक्त होनेके कारण वह बहुत दीन हो गया, उसकी विवेकशक्ति नष्ट हो गयी। गन्धर्व और यवनोंने बलात्कारसे उसका सारा ऐश्वर्य लूट लिया ॥ ६ ॥ ❀ ❀ उसने देखा कि सारा नगर नष्ट-भ्रष्ट हो गया है; पुत्र, पौत्र, भृत्य और अमात्यवर्ग प्रतिकूल होकर अनादर करने लगे हैं; स्त्री स्नेहशून्य हो गयी है, मेरी देहको कालकन्याने वशमें कर रक्खा है और पाञ्चालदेश शत्रुओंके हाथमें पड़कर भ्रष्ट हो गया है। यह सब देखकर राजा पुरञ्जन अपार चिन्तामें डूब गया और उसे उस विपत्तिसे छुटकारा पानेका कोई उपाय न दिखायी दिया ॥ ७-८ ॥ ❀ ❀ कालकन्याने जिन्हें निःसार कर दिया था, उन्हीं भोगोंकी लालसासे वह दीन था। अपनी पारलौकिकी गति और बन्धुजनोंके स्नेहसे वञ्चित रहकर उसका चित्त केवल स्त्री और पुत्रके लालन-पालनमें ही लगा हुआ था ॥ ९ ॥ ❀ ❀ ऐसी अवस्थामें उनसे बिछुड़नेकी इच्छा न होनेपर भी उसे उस पुरीको छोड़नेके लिये बाध्य होना पड़ा; क्योंकि उसे गन्धर्व और यवनोंने घेर रक्खा था तथा कालकन्याने कुचल दिया था ॥ १० ॥

भयनाम्नोऽग्रजो भ्राता प्रज्वारः प्रत्युपस्थितः । ददाह तां पुरीं कृत्स्नां भ्रातुः प्रियचिकीर्षया ॥ ११ ॥
तस्यां सन्दह्यमानायां सपौरः सपरिच्छदः । कौटुम्बिकः कुटुम्बिन्या उपातप्यत सान्वयः ॥ १२ ॥
यवनोपरुद्धायतनो ग्रस्तायां कालकन्यया । पुर्यां प्रज्वारसंसृष्टः पुरपालोऽन्वतप्यत ॥ १३ ॥
न शेके सोऽवितुं तत्र पुरुकृच्छ्रोरुवेपथुः । गन्तुमैच्छत्ततो वृक्षकोटरादिव सानलात् ॥ १४ ॥
शिथिलावयवो यर्हि गन्धर्वैर्हृतपौरुषः । यवनैरिरिभी राजन्नुपरुद्धो रुरोद ह ॥ १५ ॥
दुहितॄः पुत्रपौत्रांश्च जामिजामातृपार्षदान्[1] । स्वत्वावशिष्टं यत्किञ्चिद् गृहकोशपरिच्छदम् ॥ १६ ॥
अहं ममेति स्वीकृत्य गृहेषु कुमतिर्गृही । दध्यौ प्रमदया दीनो विप्रयोग उपस्थिते ॥ १७ ॥
लोकान्तरं गतवति मय्यनाथा कुटुम्बिनी । वर्तिष्यते कथं त्वेषा[2] बालकाननुशोचती ॥ १८ ॥
न मय्यनाशिते भुंक्ते नास्नाते स्नाति मत्परा । मयि रुष्टे सुसंत्रस्ता[3] भर्त्सिते यतवाग्भयात् ॥ १९ ॥
प्रबोधयति माविज्ञं व्युषिते शोककर्शिता । वर्त्मैतद् गृहमेधीयं वीरसूरपि[4] नेष्यति ॥ २० ॥

अन्वयः—भयानाम्नः अग्रजः भ्राता प्रज्वारः प्रत्युपस्थितः भ्रातुः प्रियचिकीर्षया ताम् कृत्स्नाम् पुरीम् ददाह ॥ ११ ॥ ❀ ❀ तस्याम् संदह्यमानायाम् सपौरः सपरिच्छदः सान्वयः कौटुंबिकः कुटुंबिन्या उपातप्यत ॥ १२ ॥ ❀ ❀ कालकन्यया ग्रस्तायाम् पुर्याम् यवनोपरुद्धायतनः प्रज्वारसंसृष्टः पुरपालः अन्वतप्यत पुरुकृच्छ्रोरुवेपथुः सः तत्र अवितुम् न शेके सानलात् वृक्षकोटराद् इव ततः गन्तुम् ऐच्छत् ॥ १३-१४ ॥ ❀ ❀ राजन् यर्हि शिथिलावयवः गंधर्वैः हृतपौरुषः अरिभिः यवनैः उपरुद्धः ह रुरोद ॥ १५ ॥ ❀ ❀ गृहेषु कुमतिः गृही प्रमदया विप्रयोगे उपस्थिते दीनः दुहितॄः पुत्रपौत्रान् च जामिजामातृपार्षदान् यत्किंचित् गृहकोशपरिच्छदम् स्वत्वावशिष्टम् अहंममेति स्वीकृत्य दध्यौ ॥ १६-१७ ॥ ❀ ❀ लोकांतरम् मयि गतवति एषा तु बालकान् अनुशोचती अनाथा कुटुंबिनी कथम् वर्तिष्यते ॥ १८ ॥ ❀ ❀ मयि अनाशिते न भुङ्क्ते अस्नाते मत्परा न स्नाति मयि रुष्टे सुसंत्रस्ता भर्त्सिते भयात् यतवाक् ॥ १९ ॥ ❀ ❀ अविज्ञम् मा प्रबोधयति व्युषिते शोककर्शिता एतत् गृहमेधीयम् वर्त्म वीरसूः अपि न इष्यति ॥ २० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

सपरिच्छदो भृत्यवर्गसहितः । कुटुम्बेन दीव्यतीति कौटुम्बिकः कुटुम्बिन्या सह । सन्धिर्नात्र विवक्षितः । सान्वयः पुत्रादिसहितः ॥ १२ ॥ ❀ ❀ यवनैर्व्याधिभिरुपरुद्धान्यायतनानि नाडीप्रभृतीनि यस्य स पुरपालः ॥ १३ ॥ ❀ ❀ पुरु बहु कृच्छ्रं क्लेशस्तेन उरुर्वेपथुर्यस्य वृक्षकोटरादिव सर्पः ॥ १४ ॥ ❀ ❀ कण्ठे उपरुद्धो रुरोद घुरघुरध्वनिं चकार ॥ १५ ॥ ❀ ❀ दुहित्रादीन्दध्यावित्युत्तरेणान्वयः । जामयोऽत्र स्नुषाः स्वत्वमात्रेणावशिष्टम् । भोगस्तु प्रागेव क्षीणः ॥ १६-१७ ॥ ❀ ❀ ध्यानमेवाह लोकान्तरमिति चतुर्भिः ॥ १८ ॥ ❀ ❀ अनाशितेऽभोजिते भर्त्सिते भर्त्सने कृते यतवाग्भवति ॥ १९ ॥ ❀ ❀ अविज्ञमविवेकिनं माम् । व्युषिते देशान्तरं गते गृहमेधीयं वर्त्म गृहधर्ममपि किं नेष्यत्यनुवर्तयिष्यति । नीञ् प्रापणे । युक्तमेतत् यतो वीरसूः पुत्रवती । किं वा मद्विरहमसहमाना मरिष्यत्येवेत्यर्थः ॥ २० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

प्रज्वारो विष्णुज्वरः । भ्रातुर्भयनाम्नः ॥ ११ ॥ ❀ ❀ स पौरः । सप्तधातुसहितः सपरिच्छदः सर्वेन्द्रियभृत्यवर्गसहितः । नात्र विवक्षितो विवक्षितः सन्धिर्भवतीति नियमात् । आर्षो वा सन्ध्यभावः । कुटुम्बिन्या बुद्ध्या ॥ १२ ॥ ❀ ❀ यवनैर्व्याधिभिः । रुद्धमायतनं नाडीसंचारनिरोधात् । अनुतापो जीवक्लेशदर्शनात् ॥ १३ ॥ ❀ ❀ स पुरपालः । अवितुं रक्षितुम् । सानलाद्वह्निव्याप्तात् । कोटरं छिद्रम् ॥ १४-१६ ॥ ❀ ❀ प्रमदया स्त्रिया सहेति । जीवस्य स्थूलशरीरभंगे बुद्ध्या विच्छेदाभावात् । प्रमदेयं च पुरंजनी किन्तु संसारिणो जीवस्य सर्वेन्द्रियैर्भोग्या ममतास्पदीकृता व्यावहारिक्येव भार्या व्याख्येया । दुहित्रादयोप्यत्र तत्सम्बन्धिन्यो न त्वध्यात्मपक्षीया व्याख्येयाः । मरणकाले जीवस्य स्त्रीपुत्रादीनामेव स्मरणं सम्भवति न तु बुद्धिविवेकादीनामिति केचिदाहुः । अन्ये तु—धर्मवती बुद्धिरेव पुरंजनीत्वेन पूर्वं प्रस्तुतेत्यतो मृत्युसमये धर्मबुद्ध्या विच्छेदो बुध्यन्तरेण संयोगः 'न मय्यनाशिते भुंक्ते' इत्यादिकन्तु सद्बुद्धिविच्छेदात्पूर्वमेव यदुक्तं तदेवाग्रे वक्ष्यते । तत्र ममाधुनापि धर्माचरणे तृप्तिर्न जाता किं करोमि मरणमुपस्थितमित्येतस्यैवार्थस्योत्प्रेक्षया विवरणं

१. प्रा० पा०—जामातृमित्रपार्षदान् । २. प्रा० पा०—त्वेका । ३. प्रा० पा०—तु संत्र० । ४. प्रा० पा०—रभिनेष्यति ।

ज्ञेयमित्याचक्षते ॥ १७-१८ ॥ ❀ ❀ मत्परा मदेकनिष्ठा । रुष्टे कुपिते । सुसंत्रस्ताऽत्युद्विग्नचित्ता भवति ॥ १९ ॥ ❀ ❀ इत्यर्थ इति । अत्यन्तस्नेहाधिकरणवियोगस्य दुःसहत्वादिति भावः ॥ २० ॥

## श्रीमद्वीरराघवव्याख्या

भयनाम्नो योऽग्रजो भ्राता प्रज्वारः स उपस्थितः पुरञ्जनपुरीमधिष्ठितः भ्रातुर्भयनाम्नः प्रियं कर्तुमिच्छया कृत्स्नां तां पुरीं ददाह । प्रज्वाराख्यो वैष्णवज्वरः शरीरं प्रविश्य भृशं तेप इत्यर्थः ॥ ११ ॥ ❀ ❀ तस्यां पुर्यां नितरां प्रज्वारेण तप्यमानायां भार्यासहितः भृत्यवर्गसहितश्च कुटुम्बेन सह दीव्यतीति कौटुम्बिकः कुटुम्बिन्या सह महिष्या सह सान्वयः पुत्रादिसहितः उपातप्यत ॥ १२ ॥ ❀ ❀ कालकन्यया पुर्यां ग्रस्तायां सत्यां यवनैरुपरुद्धान्यायतनानि यस्य सः पुरपालः प्रजागरः प्रज्वारेण संस्पृष्टः अन्वतप्यत । स पुरपालः प्राणः ॥ १३ ॥ ❀ ❀ पुरु बहु कृच्छ्रं दुःखं तेन उरुर्वेपथुर्यस्य पुरि इति पाठे पुर्या-मुषितुमवस्थातुं न शशाक नाशक्नोत् किन्तु ततः पुर्यामग्निसहिताद् वृक्षकोटरात्सर्प इव गन्तुमैच्छत् ॥ १४ ॥ ❀ ❀ यदा गन्धर्वैः शिथिलाः अवयवा यस्य हृतं पौरुषं सामर्थ्यं यस्य तदायं हे राजन् ! यवनैरुपरुद्धः रुरोद व्याध्यादिभिर्निरुद्धमार्गः घर्घरध्वनिं चकारेत्यर्थः ॥ १५ ॥ ❀ ❀ दुहित्रादीन् दध्यौ ध्यातवानित्युत्तरेणान्वयः । दुहितॄरिति देहानुबन्धिचिन्ताभिप्रायकं जामयोऽत्र स्नुषाः ताश्च जामातरः दुहितॄणां पतयः पार्षदा भृत्याश्चेति द्वन्द्वः तान् स्वत्वमात्रेणावशिष्टं भोगस्तु प्रागेव क्षीणः यत्किंचिद् गृहादिरूपं वस्तु ॥ १६ ॥ ❀ ❀ तत्राहंममाभिमानविषयं कृत्वा गृहेषु दारेषु कुमतिः कुत्सिता मतिर्यस्य असक्तबुद्धिर्गृही पुरञ्जनः प्रमदया सह विप्रयोगे विश्लेषे उपस्थिते प्रतीते सति दध्यौ बुद्ध्यात्मिकां प्रमदां विहाय गमिष्यामि उत सहैवेति चिन्तामकरोदित्यर्थः ॥ १७ ॥ ❀ ❀ ध्यानमेवाह । मयि लोकान्तरं प्रति गतवति सति इयमनाथा कुटुम्बिनी बालकान् प्रत्यनुशोचन्ती कथं वर्तिष्यते मय्यनाशिते अभोजिते न भुङ्क्ते एवमुत्तरत्रापि भर्त्सिते भर्त्सने कृते भयाद्यतवाक् नियता वागस्याः सा मौनं बिभर्त्तीत्यर्थः ॥ १८ ॥ ❀ ❀ अविज्ञमविवेकिनं मां प्रबोधयति विवेचयति व्युषिते देशान्तरङ्गते शोकेन कर्शिता गृहमेधीयं वर्त्म तत् गृहस्थधर्मं किं नेष्यत्यनुवर्तिष्यते युक्तमेतद्यतो वीरसूः पुत्रवती । किं वा मद्विरहमसहमाना मरिष्यति ॥ १९ ॥ ❀ ❀ दारकाः पुत्राः दारिका दुहितरश्च अपरायणाः न विद्यते परमयनमाश्रयो येषां ते अपरायणाः मयि गते सति कथं नु वर्त्तिष्यन्ते भिन्ना नौर्येषां ते पुरुषाः उदधौ समुद्रे इवेति । अत्र लोकान्तरं गतवतीत्यनेन सर्वेन्द्रियपरिणाम-हेतुभूता जीवैकायत्ता बुद्धिर्लोकान्तरं गच्छता जीवेन सह गच्छति उत नेत्याशङ्कोत्थापिता वर्त्मैतद्गृहमेधीयमित्यर्द्धेन सहैव गच्छतीत्युक्तं तथा कथं दारका इत्यनेन परिणामपरिणामितदनन्तबुद्धिवृत्तिकारणानीन्द्रियाण्यपि किं सहैव गच्छन्तीति उत नेति संशय्य सहैव गच्छन्तीत्युक्तं भवति । एतदेव कथासौन्दर्याय परोक्षमभिधीयते । तथाच गीतं भगवता "मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति । शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ॥ गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयादि"ति । बुद्धेर्मनोवृत्ति-विशेषमात्रत्वेन मनसः सह गमनकथनेन बुद्धेरपि गमनं गीतं भवति इति गम्यते ॥ २०-२१ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

प्रज्वारः पुरीं ददाहेति शरीरे च ज्वरः प्रवृत्त इत्यर्थः । भ्रातुर्मृत्युनाम्नो हितकरणेच्छया ॥ ११-१२ ॥ ❀ ❀ यवनैर्व्याधिभिरुपरुद्धमायतनं पत्तनं शरीरनाडीलक्षणं यस्य स तथा पुरपालः प्राणः अनुतापो जीवक्लेशं प्रेक्ष्य ॥ १३ ॥ ❀ ❀ सानलादग्निवृतात् गृहबिलादिव ॥ १४-१५ ॥ ❀ ❀ अधुना कामिनां मरणव्यवस्थां दर्शयति दुहितॄरिति । अत्र प्रवृत्तिमन्तरेण बाह्यदुहित्रादयोऽपि ग्रहीतुं शक्यन्ते ॥ १६ ॥ ❀ ❀ विप्रयोगे मरणलक्षणे प्रमदया बुद्ध्या अन्यया च ॥ १७ ॥ ❀ ❀ लोकान्तरं गतवतीत्यादि कथालङ्कारः ॥ १८ ॥ ❀ ❀ अनाशिते अभुक्ते भर्त्सिते भर्त्सने कृते यतवाक् तूष्णीं भावमाश्रिता ॥ १९ ॥ ❀ ❀ व्युषितेऽन्यत्र स्थिते नेष्यत्यनुवर्तयिष्यति किम् ॥ २० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

दुहितॄरिति युग्मकम् । अहं ममेति स्वीकृत्येति कचित् ॥ १६-१९ ॥ ❀ ❀ माविज्ञमित्यत्र मां विज्ञमिति चित्सुखः ॥ २०-२६ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

प्रज्वारो विष्णुज्वरः ॥ ११ ॥ ❀ ❀ स पौरैः सप्तधातुसहितः सपरिच्छदः सर्व्वेन्द्रियभृत्यवर्गसहितः कुटुम्बेन दीव्यतीति कौटुम्बिकः कुटुम्बिन्या बुद्ध्या सह सन्ध्यभाव आर्षः, सान्वयः पुत्रपौत्रादियुक्तः ॥ १२ ॥ ❀ ❀ पुरपालः प्रजागरः प्राणः ॥ १३ ॥ ❀ ❀ स पुरपालः अवितुं रक्षितुं वृक्षकोटरादिव सर्पः ॥ १४ ॥ ❀ ❀ रुरोद आसन्नमृत्यु-

घुंरघुरध्वनिं चकार ॥ १५ ॥ ❀ ❀ जामयोऽत्र स्नुषाः। प्रमदया स्त्रिया सह विप्रयोगे उपस्थित इति जीवस्य स्थूलशरीरभङ्गे बुद्ध्या विच्छेदाभावात् प्रमदेयं न पुरञ्जनी किन्तु संसारिणो जीवस्य सर्व्वेन्द्रियैर्भोग्या ममतास्पदीभूता व्यावहारिक्येव भार्य्या व्याख्येया, दुहित्रादयोऽप्यत्र तत्सम्बिन्धिन्यो न त्वध्यात्मपक्षीया व्याख्येयाः। मरणकाले च जीवस्य स्त्रीपुत्रादीनामेव स्मरणं सम्भवति न तु बुद्धिविवेकादीनामिति केचिदाहुः। अन्ये तु धर्म्मवती बुद्धिरेव पुरञ्जनीत्वेन पूर्व्वं प्रस्तुतेत्यतो मृत्युसमये धर्म्मबुद्ध्या विच्छेदो बुद्ध्यन्तरेण संयोगः न मय्यनाशिते भुङ्क्ते इत्यादिकं तु सद्बुद्धिविच्छेदात् पूर्व्वमेव यदुक्तं तदेवाग्रे वक्ष्यते तच्च ममाधुनापि धर्म्माचरणे तृप्तिर्न जाता किं करोमि मरणमुपस्थितमित्येतस्यैवार्थस्योत्प्रेक्षया विवरणं ज्ञेयमित्याचक्षते ॥ १६–१८ ॥ ❀ ❀ अनाशिते अभोजिते भर्त्सिते भर्त्सनं कृतवति ॥ १९ ॥ ❀ ❀ मामविज्ञं व्युषिते प्रवासं गते सति। अपि किं नेष्यति अनुवर्त्तयिष्यति ? युक्तमेतत् यतो वीरसूः पुत्रवती किं वा मद्विरहमसहमाना मरिष्यत्येवेत्यर्थः ॥ २० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ददाहातपत् ॥ ११ ॥ ❀ ❀ कुटुम्बिनी बुद्धिस्तया सह ॥ १२–१३ ॥ ❀ ❀ वृक्षकोटरात् पक्षीव ॥ १४–१५ ॥ ❀ ❀ दुहित्रादीन् दध्यावित्यग्रिमेणान्वयः। जामयः जामभार्याः स्वत्वमात्रेणावशिष्टं यद्यत् भोगस्तु प्रागेव क्षीणं ममत्वमात्रविषयमित्यर्थः ॥ १६ ॥ ❀ ❀ गृहेषु गृहादिषु अहंममेति स्वीकृत्य दध्यौ ॥ १७ ॥ ❀ ❀ ध्यानमेवाह लोकान्तरं गतवतीत्यादिना। अनेन कथापक्षेऽपि न केवलं पुर्याः भार्यायाश्च वियोगः किन्तु देहवियोगोऽपीति द्योत्यते ॥ १८ ॥ ❀ ❀ अनाशिते अभोजिते भर्त्सिते भर्त्सने कृते ॥ १९ ॥ ❀ ❀ मा मामविज्ञं प्रबोधयति मयि व्युषिते देशान्तरं गते गृहमेधीयमेतद्वर्त्म मार्गं नेष्यति किमनुवर्तयिष्यति ॥ २० ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

भयनाम्नोऽग्रजो ज्येष्ठो भ्राता प्रज्वारसञ्ज्ञकः प्रत्युपस्थितः पुरीं प्रत्यागतः सन् कृत्स्नां सकलां तां पुरीं ददाहेत्यन्वयः। दाहे हेतुमाह—भ्रातुरिति, भ्रातुर्भयनाम्न एव प्रियचिकीर्षया प्रियं कार्यं पुरीविनाशं कर्तुमिच्छयेत्यर्थः। पक्षान्तरे तु—मृत्युकार्यं देहविनाशं कर्तुमिच्छया प्रज्वारसंज्ञकोऽन्तको ज्वर आगतः सर्वशरीरे दाहमुत्पादितवानित्यर्थः ॥ ११ ॥ ❀ ❀ तस्यां पुर्यां सन्दह्यमानायां स पौरः पुरप्राकारादिसहितः, सपरिच्छदः भृत्यवर्गसहितः, कुटुम्बेन दीव्यतीति कौटुम्बिकः, कुटुम्बिन्या भार्यया च सहितः। अत्र सन्ध्यभावश्छान्दसः—सान्वयः पुत्रादिसहितश्च पुरञ्जनः उपातप्यतेत्यन्वयः। पक्षान्तरे—पौराः त्वगादयः, भृत्या इन्द्रियाणि, भार्या बुद्धिः, अन्वयः पुत्रपौत्रादिः तैः सर्वैः स जीवोऽतप्यत। तापे तेष्वध्यास एव हेतुरिति ज्ञापनायोक्तं कौटुम्बिक इति ॥ १२ ॥ ❀ ❀ कालकन्यया पुर्यां ग्रस्तायां यवनैरुपरुद्धं बलाद् गृहीतमायतनं वासस्थानं यस्य सः प्रज्वारेण संसृष्टः पीडितः पुरपालः पञ्चशिरा नागोऽपि अनुक्षणमतप्यतेत्यन्वयः। पक्षान्तरे तु—जराग्रस्तदेहस्यान्तसमये रोगादिनाधारादिस्थाने प्रसिद्धे सति शीतज्वरेण सम्पीडितः प्राणोऽनुक्षणमतप्यतेत्यर्थः ॥ १३ ॥ ❀ ❀ अत एव पुरुकृच्छ्रेण बहुकष्टेन उरुर्वेपथुः कम्पो यस्य सः। अत एव तत्र स्थितोऽपि तामवितुं रक्षितुं स पुरपालो न शेके समर्थो न जातः। किं ततः ? बहिर्गन्तुमैच्छत्। तत्र दृष्टान्तमाह—वृक्षेति। यथा सानलात् अग्निना दह्यमानाद् वृक्षकोटरात् सर्पो निर्गन्तुमिच्छति तद्वदित्यर्थः। पक्षान्तरे तु—जरारोगादिभिरुपद्रुतः प्राणो निर्गन्तुमुद्युक्तो बभूवेत्यर्थः ॥ १४ ॥ ❀ ❀ शिथिला अवयवाः करचरणादयो यस्य सः। तत्र हेतुः—गन्धर्वैर्हृतं पौरुषं सामर्थ्यं यस्य सः यवनैररिभिः शत्रुभिरुपरुद्धश्च अतो झटिति बहिरपि निर्गन्तुमशक्तः संस्तदा पुरपालको नागो रुरोदैव न तत्र किञ्चित्पराक्रमं कर्तुं शशाक। हकारोऽवधारणे। हे राजन्निति सम्बोधनं राजकार्ये कार्यकारिण एव एवं रुद्धाः सङ्कटमनुभवन्तीति तु त्वया ज्ञायत एवेति सम्मत्यर्थम्। पक्षान्तरे तु—जन्मत आरभ्य जरावस्थापर्यन्तं दिवसादिकालावयवैर्व्यतीतैर्जीर्णत्वेन मन्दक्रियो मरणसमये च रोगादिभिर्ग्रस्ताधारादिस्थानः प्रारब्धप्रतिबन्धेनावरुद्धो बहिर्निर्गन्तुमप्यशक्तः प्राणः कण्ठे घुरघुरध्वनिं चकारेत्यर्थः ॥ १५ ॥ ❀ ❀ तदा सर्वैर्विप्रयोगे उपस्थिते पुरञ्जनोऽपि गृहेषु गृहादिष्वहम्ममेति स्वीकृत्य दुहित्रादीन् दध्याविति द्वितीयेनान्वयः। जामयोऽत्र स्नुषाः, जामातरो दुहितृभर्त्तारः, अन्यच्च यत्किञ्चित्स्वत्वेन अविलुम्पनादवशिष्टं भोगस्य तु प्रागेव प्रक्षीणः प्रतिरुद्धत्वात्। कोशा धनसञ्चयाः। परिच्छदाः गृहोपकरणानि ॥ १६ ॥ ❀ ❀ प्रमदयेति सर्वोपलक्षणम्। यदि प्रेयस्या भार्ययाऽपि वियोग उपस्थितस्तर्ह्यन्यैस्तु सुतरामेवेति भावः। वियोगे प्राप्तेऽप्येवञ्चिन्तायां को हेतुस्तत्राह—दीन इति। दैन्ये हेतुः—गृहीति। गृहस्थो विरक्तश्चेन्न चिन्तयेदित्याशङ्क्याह—अहम्ममेति स्वीकृत्येति। देहेन्द्रियादावहमिति गृहपुत्रादौ ममेति स्वीकारात्तद्वियोगे प्राप्ते चिन्ता जातेत्यर्थः। एवं स्वीकारे हेतुमाह—कुमतिरिति, रजस्वलमतिर्यत इत्यर्थः। पक्षान्तरे तु—मरणसमये बुद्धीन्द्रियपरिणामानां दुहितृत्वादिना कल्पितानां चिन्ताया असम्भवेऽपि बहिष्ठगृहपुत्रभार्यादिसहितस्यैव देहस्य पुरत्वेन अङ्गीकारान्मरणसमये तेषां चिन्तायाः प्रसिद्धत्वात्तेषां वासनारूपेण अन्तःस्थितत्वाच्च तच्चिन्तानिरूपणं

सङ्गच्छते इति ज्ञेयम् ॥ १७ ॥ ❀ ❀ चिन्तामेव दर्शयति—लोकान्तरमिति चतुर्भिः । मयि स्वामिनि लोकान्तरं गतवत्येषा मम भार्या अनाथा मया नाथेन विरहिता कुटुम्बिनी पुत्रादिकुटुम्बवती बालकाननुशोचती सती कथं तु वर्तिष्यते इत्यन्वयः । तुशब्देन तद्वर्तनस्यासम्भवित्वं सूचयति ॥ १८ ॥ ❀ ❀ एतदेवं विवृणोति—नेति द्वाभ्याम् । मयि अनाशिते अभोजिते स्वयं न भुङ्क्ते । तथा मयि अस्नाते स्वयं न स्नाति । मयि रुष्टे सति स्वयं सुसन्त्रस्ता भवति । मया भर्त्सिते भर्त्सने कृते सति भयात् यतवाक् गृहीतमौना भवति । तत्रैवं भावे हेतुः—मत्परेति, अहमेव परः आश्रयो यस्याः सा तथा ॥ १९ ॥ ❀ ❀ मा मामविज्ञं कदाचिद्विस्मृतव्यवहारं प्रबोधयति । मयि व्युषिते देशान्तरगते सति मद्वियोगेन शोकेन कर्शिता भवति । सैवम्भूता मत्परायणा एतद्गृहमेधीयं वर्त्म गृहस्थमार्गं वीरसूः पुत्रवत्यपि किं नेष्यति अनुवर्तयिष्यति ? किं वा मद्वियोगेन मरिष्यत्येव ? अपीति सम्भावनायाम्, उभयमपि सम्भवतीति भावः । पक्षान्तरे तु—देहनाशे तत्रात्ममतेरपि नाशो भविष्यत्येवेति ज्ञेयम् ॥२०॥

### भाषानुवादः

इतनेमें ही यवनराज भयके बड़े भाई प्रज्वारने अपने भाईका प्रिय करनेके लिए उस सारी पुरीमें आग लगा दी ॥ ११ ॥ ❀ ❀ जब सारी नगरी जलने लगी, तब पुरवासी, सेवकवृन्द, सन्तानवर्ग और कुटुम्बकी स्वामिनीके सहित कुटुम्बवत्सल पुरञ्जनको बड़ा दुःख हुआ ॥ १२ ॥ ❀ ❀ नगर को कालकन्याके हाथमें पड़ा देख उसकी रक्षा करनेवाले सर्पको भी बड़ी पीड़ा हुई, क्योंकि उसके निवासस्थानपर भी यवनोंने अधिकार कर लिया था और प्रज्वार उसपर भी आक्रमण कर रहा था ॥ १३ ॥ ❀ ❀ जब उस नगरकी रक्षा करनेमें वह सर्वथा असमर्थ हो गया, तब जिस प्रकार जलते हुए वृक्षके कोटरमें रहनेवाला सर्प उससे निकल जाना चाहता है, उसी प्रकार उसने भी महान् कष्ट से काँपते हुए वहाँसे भागनेकी इच्छा की ॥ १४ ॥ ❀ ❀ उसके अङ्ग-प्रत्यङ्ग ढीले पड़ गये थे तथा गन्धर्वोंने उसकी सारी शक्ति नष्ट कर दी थी; अतः जब यवन शत्रुओंने उसे जाते देखकर रोक दिया, तब वह दुःखी होकर रोने लगा ॥ १५ ॥ ❀ ❀ गृहासक्त पुरञ्जन देह-गेहादिमें मैं-मेरेपनका भाव रखनेसे अत्यन्त बुद्धिहीन हो गया था । स्त्रीके प्रेमपाशमें फँसकर वह बहुत दीन हो गया था । अब जब इनसे बिछुड़नेका समय उपस्थित हुआ, तब वह अपने पुत्री, पुत्र, पौत्र, पुत्रवधू, दामाद, नौकर और घर, खजाना तथा अन्यान्य जिन पदार्थोंमें उसकी ममताभर शेष थी ( उनका भोग तो कभीका छूट गया था ), उन सबके लिये इस प्रकार चिन्ता करने लगा ॥ १६–१७ ॥ 'हाय ! मेरी भार्या तो बहुत घर-गृहस्थीवाली है; जब मैं परलोकको चला जाऊँगा, तब यह असहाय होकर किस प्रकार अपना निर्वाह करेगी ? इसे इन बाल-बच्चोंकी चिन्ता ही खा जायगी ॥ १८ ॥ यह मेरे भोजन किये बिना भोजन नहीं करती थी और स्नान किये बिना स्नान नहीं करती थी, सदा मेरी सेवामें तत्पर रहती थी । मैं कभी रूठ जाता था तो बड़ी भयभीत हो जाती और झिड़कने लगता तो डरके मारे चुप रह जाती थी ॥ १९ ॥ ❀ ❀ मुझसे कोई भूल हो जाती तो यह मुझे सचेत कर देती थी । मुझमें इसका इतना अधिक स्नेह है कि यदि मैं कभी परदेश चला जाता था तो यह विरहव्यथासे सूखकर काँटा हो जाती थी । यों तो यह वीरमाता है, तो भी मेरे पीछे क्या यह गृहस्थाश्रमका व्यवहार चला सकेगी ? ॥ २० ॥

कथं नु दारका दीना दारकीर्वा परायणाः । वर्तिष्यन्ते मयि गते[1] भिन्ननाव इवोदधौ ॥ २१ ॥
एवं कृपणया बुद्ध्या शोचन्तमतदर्हणम् । ग्रहीतुं कृतधीरेनं भयनामाभ्यपद्यत ॥ २२ ॥
पशुवद्यवनैरेष नीयमानः स्वकं क्षयम् । अन्वद्रवन्ननुपथाः शोचन्तो भृशमातुराः ॥ २३ ॥
पुरीं विहायोपगत उपरुद्धो भुजङ्गमः । यदा तमेवानु पुरी विशीर्णा प्रकृतिं गता ॥ २४ ॥
विकृष्यमाणः प्रसभं यवनेन बलीयसा । नाविन्दत्तमसाऽऽविष्टः सखायं सुहृदं पुरः ॥ २५ ॥
तं यज्ञपशवोऽनेन संज्ञप्ता येऽदयालुना । कुठारैश्चिच्छिदुः क्रुद्धाः स्मरन्तोऽमीवमस्य तत्[2] ॥ २६ ॥
अनन्तपारे तमसि मग्नो नष्टस्मृतिः समाः । शाश्वतीरनुभूयार्तिं प्रमदासङ्गदूषितः ॥ २७ ॥
तामेव मनसा गृह्णन् बभूव प्रमदोत्तमा । अनन्तरं[3] विदर्भस्य राजसिंहस्य वेश्मनि ॥ २८ ॥
उपयेमे वीर्यपणां वैदर्भीं मलयध्वजः । युधि निर्जित्य राजन्यान् पाण्ड्यः परपुरञ्जयः ॥ २९ ॥
तस्यां स जनयाञ्चक्र आत्मजामसितेक्षणाम् । यवीयसः सप्त सुतान् सप्त[4] द्रविडभूभृतः ॥ ३० ॥

---

१. प्रा० पा०—मृते । २. प्रा० पा०—यत् । ३. प्राचीने पाठे 'अनन्तरं' इत्यादि २८ श्लोकस्योत्तरार्द्धो न । ४. प्रा० पा०—सप्तद्रमिल० ।

अन्वयः—मयि गते दीनाः दारकाः वा परायणाः दारकीः उदधौ भिन्ननावः इव नु कथम् वर्तिष्यंते ॥ २१ ॥ एवम् कृपणया बुद्ध्या शोचंतम् अतदर्हणम् एनम् ग्रहीतुम् कृतधीः भयनामा अभ्यपद्यत ॥ २२ ॥ ❀ ❀ यवनैः पशुवत् एषः स्वकम् क्षयम् नीयमानः शोचंतः भृशम् आतुराः अनुपथाः अन्वद्रवन् ॥ २३ ॥ ❀ ❀ यदा उपरुद्धः भुजंगमः पुरीम् विहाय उपगतः तम् एव अनु विशीर्णा पुरी प्रकृतिम् गता ॥ २४ ॥ ❀ ❀ बलीयसा यवनेन प्रसभम् विकृष्यमाणः तमसा आविष्टः पुरः सखायम् सुहृदम् न अविंदत् ॥ २५ ॥ ❀ ❀ अदयालुना अनेन ये यज्ञपशवः संज्ञप्ताः अस्य तत् अमीवम् स्मरंतः क्रुद्धाः तम् कुठारैः चिच्छिदुः ॥ २६ ॥ ❀ ❀ अनंतपारे तमसि मग्नः नष्टस्मृतिः प्रमदासंगदूषितः शाश्वतीः समाः आर्तिम् अनुभूय ॥ २७ ॥ ❀ ❀ अनंतरम् ताम् एव मनसा गृह्णन् राजसिंहस्य विदर्भस्य वेश्मनि प्रमदोत्तमा बभूव ॥ २८ ॥ ❀ ❀ पांड्यः परपुरंजयः मलयध्वजः राजन्यान् युधि निर्जित्य वीर्यपणाम् वैदर्भीम् उपयेमे ॥ २९ ॥ ❀ ❀ सः तस्याम् असितेक्षणाम् आत्मजाम् द्रविडभूभृतः यवीयसः सप्त सुतान् जनयांचक्रे ॥ ३० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

न विद्यते परमयनमाश्रयो येषां तेऽपरायणाः पुत्राः कन्याश्च । यद्वा पराश्रयाः कन्याः भिन्ना नौर्येषाम् ॥ २१ ॥ ❀ ❀ अतदर्हणं वस्तुतस्तस्य ब्रह्मत्वात् ॥ २२ ॥ ❀ ❀ एष यदा क्षयं स्थानं नीयमानस्तदानुपथाः प्राणा इन्द्रियाणि च । तथा च श्रुतिः "तमुत्क्रामन्तं प्राणोनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति ॥ २३ ॥ ❀ ❀ प्रकृतिं महाभूतात्मताम् ॥ २४ ॥ ❀ ❀ नाविंदन्न सस्मार पुरः पूर्वं सखायं सन्तमीश्वरम् ॥ २५ ॥ ❀ ❀ अदयालुना काम्यकर्मसु ये संज्ञप्ता हताः । अमीवं पापं क्रौर्यं वा ॥ २६ ॥ ❀ ❀ शाश्वतीः समा आर्तिमनुभूय ॥ २७ ॥ ❀ ❀ अन्तकाले तां भार्यामेव मनसा गृह्णन्स्मरन्ननन्तरं विदर्भस्य वेश्मनि प्रमदोत्तमा बभूव । अतः परमस्मिन्प्रकरणे एतावदेव प्रकृतोपयोगि विवक्षितम् । स्त्रीध्यानेन स्त्रीत्वप्राप्तावपि पतिव्रताध्यानेन पूर्वादृष्टेन च धार्मिकाद्धिकर्माज्जन्माभूत् । धार्मिकसंगेन च विशुद्धस्य भागवतेन मलयध्वजेन संगोऽभूत् । ततो विष्णुभक्तिस्ततो वैराग्यं ततस्तमेव भर्तृरूपं गुरुं पातिव्रत्यधर्मेण भजतो भगवत्प्रसादलब्धज्ञानेन मोक्ष इति । अन्यत्तु कथालंकारमात्रं तथापि किंचिद्वृत्तिसामान्येनेह योजयिष्यामः । विदर्भस्य विशिष्टदर्भोपलक्षितस्य कर्मठस्य राजसिंहस्य धर्मेण हि प्रजापालनेन यज्ञादिना च क्षत्रिया राजन्ते तेषु श्रेष्ठस्यवेश्मनि ॥ २८ ॥ ❀ ❀ मलयोपलक्षिते दक्षिणदेशे ध्वज इव दर्शनीयः स हि श्रीविष्णुभक्तप्रधानो देशः तत्र मुख्यो महाभागवत इत्यर्थः । पंडा निश्चयबुद्धिस्तामर्हतीति पांड्यः स उपयेमे । पुरंजनो भागवतसंगं प्राप्त इत्यर्थः ॥ २९ ॥ ❀ ❀ आत्मजां श्रीकृष्णसेवारुचिम् । तत्संगेन भगवद्धर्मे रुचिरभवदित्यर्थः । असितस्य श्रीकृष्णस्येक्षणं यया ताम् । यवीयसः सप्त सुतान् "श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यम्" इति भक्तिप्रकारान् । सख्यात्मनिवेदनयोस्त्वंपदार्थज्ञानोत्तरकालत्वात्तस्य च भगवतैवोत्तरत्रोपदेक्ष्यमाणत्वादिदानीमनुत्पत्तेः सप्तेत्युक्तम् । भगवद्धर्मरुच्या तच्छ्रवणकीर्तनादिकं जातमित्यर्थः । द्रविडभूमिपालकानां द्रविडभूमिर्हि श्रवणादिभक्तिभिरेव सुरक्षिताऽस्तीति प्रसिद्धम् ॥ ३० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

दारकीर्दारक्यः परायणाः वृद्धस्य ममातिस्नेहेन प्रतिक्षणमेवैकनिष्ठाः कथं वर्त्तिष्यन्ते रुदित्वा रुदित्वैव मरिष्यन्तीत्यर्थः । स्वामिचरणोक्तयद्वेतिपक्षस्याप्ययमेवार्थः । अन्याश्रयत्वे तासां शोकानधिकरणत्वात् ॥ २१ ॥ ❀ ❀ कृपणया बुद्ध्येति । "अनीशया शोचति मुह्यमानः" इति श्रुतेः । तस्य जीवस्य । अतदर्हणं शोकानर्हम् । यद्वा—अतदर्हणं धार्मिकत्वेन भयकर्तृकग्रहणायोग्यमित्यर्थः ॥ २२ ॥ ❀ ❀ एष जीवः । यवनैर्यवनवन्निर्दयैः स्वकर्मभिर्यमदूतैर्वा स्वकं स्थानं देहान्तरं यमपुरं वा । अत्र प्रमाणमाह—तथा चेति । तं जीवमनुक्रामन्तं देहं त्यजन्तमनु पश्चात्प्राणोपि देहं त्यजति तमनु सर्वाणींद्रियाणि देहं त्यजन्तीति श्रुतिपदार्थः ॥ २३ ॥ ❀ ❀ महाभूतात्मतां कार्यनाशेन कारणस्यैवावशेषादित्यर्थः ॥ २४ ॥ ❀ ❀ तमसाऽज्ञानेन व्याप्तः ॥ २५ ॥ ❀ ❀ तत्पूर्वंकृतम् । 'अमीवं क्रौर्य्यपापयोः' इति निरुक्तिः ॥ २६ ॥ ❀ ❀ अनन्तपारेऽन्तपारशून्ये । तमसि दुःखे 'ईजे च बहुभिर्यज्ञैः' इत्युक्तत्वाद्बहुकालं स्वर्गसुखमप्यनुभूयेत्यपि ज्ञेयं, तस्येहानुक्तिस्तु प्राचीनबर्हिषो वैराग्यार्थ स्त्रीस्मरणात्स्त्री बभूव । अध्यात्मपक्षे दुःखातिशय प्रयुक्तमूर्च्छावशादेव मृत्युकाले सद्बुद्धित्यागः क्षणिक एवोक्तः । वस्तुतस्तु—स्वर्गभोगान्ते पुण्यक्षयेण तादृशधर्मबुद्धिविशिष्ट एव धार्मिकगृहे जन्म लेभ इत्येतावदेव विवक्षितं, स्त्रीत्वपुंस्त्वादिकं त्वविवक्षितमेव । तद्वक्ष्यते "क्वचित्पुमान्क्वचिच्च स्त्री क्वचिन्नोभयमन्धधीः" इत्यादिना ॥ २७ ॥ ❀ ❀ वृत्तिसामान्येन प्रकृतिप्रत्ययादिकल्पनासामान्येन "कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पंच वृत्तयः" इति वैयाकरणाः । तां सद्बुद्धिलक्षणां पुरंजनीं मनसा गृह्णन्स्मरन् । "यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् । तन्तमेवैति कौंतेय सदा तद्भावभावितः" इति श्रीगीतोक्तेः ॥ २८ ॥ ❀ ❀ विश्वनाथस्तु—

अथैवं जीवस्य यावद्भक्तिर्न भवेत्तावन्नैव संसारोद्धारः। सा च भक्तिर्यादृच्छिकी यादृच्छिकसाधुसंगाद्यादृच्छिक्यैव साधुकृपया भवतीति दर्शयंस्तज्जन्मनि तस्य साधुसंगो बभूवेत्याह—उपयेम इति। आदरणीयत्वेन मलयतुल्येषु साधुषु ध्वज इव श्रेष्ठ इति विश्वनाथः। इत्यर्थ इति। सर्वभागवतश्रेष्ठ इति भावः। इत्यर्थ इति। पूर्वसत्संस्कारवशादिहापि सत्संगमेव लब्धवानिति भावः। चक्रवर्त्ती—उपयेमे शिष्यत्वेन कृपया स्वीचकार। वीर्यपणामिति। कृपालक्षणः स्वप्रभाव एवात्र हेतुर्न त्वन्यः कश्चिदिति 'मद्भक्तिं वा यदृच्छया' इत्युक्तेः "भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युतसत्समागमः" इति न्यायेन कस्मिंश्चिज्जन्मनि जीवस्याकस्मादेव साधुसंगमो भवेदिति विवक्षितम्। राजन्यान्विजित्य तदीयपापापराधकामकर्मादीन्निर्मूलीकृत्य पाण्ड्यः पण्डदेशोद्भवः। पक्षान्तरस्तु—स्वामिभिर्व्याख्यात एव। पक्षे परपुरंजयो मतान्तरोत्थसन्देहच्छेदी ॥ २९ ॥ ❀ ❀ इत्यर्थ इति। "सतां प्रसंगान्मम वीर्यसंविदः" इत्यारभ्य "श्रद्धा रतिर्भक्तिरनुक्रमिष्यति" इत्युक्तन्यायेनेति भावः। यवीयसस्तदुत्तरकालभवान्। इत्यर्थ इति। भगवद्धर्मरुच्यैव तच्छ्रवणादौ प्रवृत्तिर्भवति नान्यथेति भावः। यद्वाऽसितो नित्यमुक्तो हरिस्तस्येक्षणं ययेति ॥ ३० ॥

## श्रीमद्वीरराघवव्याख्या

एवं कृपणया बुद्ध्या शोचन्तमतदर्हणं शोकानर्हं वस्तुत अपहतपाप्मत्वादिगुणाष्टकविशिष्टत्वात् एवं पुरञ्जनं ग्रहीतुं पुराद्विश्लेषयितुं कृतधीर्निश्चितबुद्धिर्भयनामा मृत्युः प्राप्तः ॥ २२ ॥ ❀ ❀ यथा स्वकं स्वकीयकर्मानुगुणं स्थानं प्रति यवनैः पशुवन्नीयमानः तदानुपथाः प्राण इन्द्रियाणि च शोचन्तः यवनैः पीडिता अत एवातुराः शोचन्तोऽन्वद्रवन्ननुसृत्य गतवन्तः। तथा च श्रुतिः "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीति।" प्राणो ज्येष्ठः प्राणः सर्वे प्राणा इन्द्रियाणीत्यर्थः ॥ २३ ॥ ❀ ❀ यवनैरुपरुद्धः पुरीं स्थूलशरीरं तु विहायैव गतः भुजङ्गवद्दह्यमानं वृक्षकोटरं विहाय यथा भुजङ्गमो गच्छति तद्वदित्यर्थः। यदा गतस्तदा तमेव तद्गमनानन्तरमेव पुरी विशीर्णा शिथिला सती प्रकृतिं महाभूतात्मतां गता प्राप्तवती। कथापक्षे तु दारापत्यादयः सर्वे पुरञ्जनविश्लेषमसहमानास्तेनैव सह विनिष्टा अभूवन्पुरी च विनष्टाभूदित्यर्थः ॥ २४ ॥ ❀ ❀ बलीयसा यवनेन प्रसभं पुरः पुर्या विकृष्यमाणः तमोज्ञानमाविष्टः सखायं स्वेन सह वर्तमानं सहवृत्तिर्हि सख्युर्धर्मः सुहृदं विपुलापराधत्वेऽपि किंचिदानुकूल्येन रिरक्षिषया बुद्धिमन्तं परमात्मानं नाविन्दन्न सस्मार ॥ २५ ॥ ❀ ❀ अदयालुना दयारहितेनानेन पुरञ्जनेन यज्ञे कर्मेन्द्रियव्यापाररूपे यज्ञे ये पशवः संज्ञप्ता हिंसिताः ते पशवः आत्मवैशसं स्वविषये कृतद्रोहं स्मरन्तः अत एव क्रुद्धाः कुठारसदृशैः शृङ्गैरेनं चिच्छिदुः ॥ २६ ॥ ❀ ❀ अनन्तपारेऽपारे तमसि नरके मग्नः अत एव गतविवेकः शाश्वतीः समाः संवत्सरान्, 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया। आर्तिं दुःखमनुभूय प्रमदासङ्गदूषितः प्रमदासङ्गेन दूषितचित्त इत्यर्थः, प्रमदात्र देहानुबन्धिनी भार्या विवक्षिता न तु बुद्धिरूपा, बुद्धिसङ्गस्यासंसारमनुवर्तमानत्वेन सर्वेषां सर्वदा स्त्रीजन्मापत्तेः ॥ २७ ॥ ❀ ❀ तां भार्यामेव मनसा गृह्णन्नन्तकाले स्मरन्ननन्तरं राजसिंहस्य विदर्भस्य वेश्मनि प्रमदोत्तमा बभूवेत्यन्वयः। एवं तिर्यगादिरूपेण संसरतो जीवस्यादृष्टविशेषपरिपाकवशान्मनुष्यजन्म प्राप्तस्य तत्रापि जाग्रत्स्वप्नसुषुप्त्यवस्थासु दोषाननुकीर्त्य पुनर्दैवात्कदाचित्सञ्जातविवेकस्यापि प्रबलकर्मरूपप्रतिबन्धवशाद्रजस्तमःप्रचुरबुद्धिपारवश्येन देहदेहानुबन्धिविषयाहंममाभिमानग्रस्तस्य जरामरणाद्यवस्थासु दोषानभिधायेदानीं देहावसाने देहानुसम्बन्धिप्रमदास्मरणनिमित्तस्त्रीजन्मप्राप्तिं तत्रापि प्राक्तनकादाचित्कयादृच्छिकपुण्यवशात्सत्कुलप्रसूतिं ततो महाभागवतभर्तृसम्बन्धं तत्सेवाप्रकारं ततस्तेन दुष्टस्य भगवतः प्रसादाज्ज्ञानोदयञ्चाह। तत्र कथापक्षेऽपि विदर्भादिपदानां श्रौत एवार्थः, अध्यात्मपक्षे तु विदर्भस्य विशिष्टं दर्भोपलक्षितं कर्म यस्य तस्य राजन्ते सत्कर्मानुष्ठानेनेति ते राजानः सत्कर्मानुष्ठानपराः तेषां मध्ये सिंहस्य श्रेष्ठस्य वेश्मनि गृहे प्रमदा बभूव। पुरञ्जनः कर्मविशेषेण विशिष्टकुले स्त्रीत्वं प्राप्त इत्यर्थः ॥ २८ ॥ ❀ तां वैदर्भी विदर्भस्य दुहितरं वीर्यं भगवद्भक्तियोगानुष्ठानसामर्थ्यमेव पणः शुल्कबन्धनं यस्यास्तां भागवतमेव वृणवानीत्येवं सङ्कल्पवतीं मलयध्वजः मलयपर्वतोपलक्षितदक्षिणदेशः तत्र ध्वज इव दर्शनीयः, स हि विष्णुभक्तिप्रधानो देशः तत्र मुख्यो भागवत इत्यर्थः, तथा पण्डा बुद्धिर्निश्चयात्मिका तामर्हतीति पाण्ड्यः परस्य परमात्मनः पुरं पुरवद्वासस्थानं शरीरम् अथ "यदिदमस्मिन्ब्रह्मपुरम्" इति श्रुतेः तज्जयतीति पुरञ्जयः देहगुणाञ्जित इत्यर्थः युधि इन्द्रियजयरूपे युद्धे राजन्यान् जितेन्द्रियान्निर्जित्य जितेन्द्रियश्रेष्ठोऽभूदित्यर्थः। उपयेमे, यद्यप्यत्र "राज्ञो जातावेवेति वाच्यम्" इति जातौ नियमितोऽयं यत्प्रत्ययः तदन्तो राजन्यशब्दः क्षत्रियजातीयवचनस्तथाप्यत्र गौण्या वृत्त्या जितेन्द्रियपरः। क्षत्रियजातीयो हि जयेन राजत इति जयगुणयोगाज्जितेन्द्रिये तस्य वृत्तेः सम्भवात् ॥ २९ ॥ ❀ ❀ स मलयध्वजस्तस्यां वैदर्भ्यामसिते श्रीकृष्णे ईक्षणं दृष्टिर्यया तां श्रीकृष्णसेवारुचिरूपामात्मजां सञ्जनयांचक्रे वैदर्भ्यां भागवतसङ्गेन भगवत्सेवारुचिरभूदित्यर्थः। तथा यवीयसः आत्मजाया अनु जातान् सप्तसुतान् 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्। अर्चनं वन्दनं दास्यमि'त्येवंरूपान्, सख्यात्मनिवेदनयोस्तु भगवदनपायित्वतच्छेषतैकानुसन्धानरूपयोर्भगवतैव उत्तरत्रैव वक्ष्यमाणयोरिदानीमनुत्पत्तेः सप्तैवेत्युक्तं, भगवद्धर्मरुच्या तच्छ्रवणकीर्तनादिकं जातमित्यर्थः। द्रविडभूमिपालकान् द्रविडभूमिर्हि श्रवणादिभिरेव सुरक्षितास्तीति प्रसिद्धम् ॥ ३० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

भिन्ना नौर्येषां ते भिन्ननावः ॥ २१ ॥ ❀ ❀ अतदर्हणं शोकायोग्यं मरणायोग्यमिति वा ॥ २२ ॥ ❀ ❀ स्वकं क्षयं कर्मणा शरीरान्तरमनुपथाः प्राणेन्द्रियादयः ॥ २३ ॥ ❀ ❀ यदा विहङ्गमो भुजङ्गमः पुरीं विहायोपगतस्तदा तमनुशरीरं च विशीर्णं प्रकृतिं पञ्चभूतात्मतां गतं पञ्चभूतेभ्य उत्पन्नं पुनस्तदवशेषमापेत्यर्थः ॥ २४ ॥ ❀ ❀ तम आविष्टः अज्ञाननिमित्तमोहं प्राप्तः सखायं परं रूदा सह वर्तमानं परमात्मानं सुहृदमनिमित्तबन्धुं नाविदन्नास्मरदित्यन्वयः ॥ २५ ॥ ❀ ❀ अदयालुना क्रूरेण हिंसाकर्मरतेनेत्यर्थः, तुशब्देन ब्रह्मार्पणबुद्ध्याऽननुष्ठानं सूचयति ॥ २६ ॥ ❀ ❀ अनन्तपारेऽवसानरहिते तमसि निरये प्रमदासङ्गेन विषयबुद्धिस्वीकारेण दूषितोऽशुद्धः ॥ २७ ॥ ❀ ❀ तां विषयबुद्धिमेव उत्तमा उद्गततमा प्रगतमदा मदरहिता बुद्धिरभूत्। अत्र मरणजनने कथालङ्कारार्थे, अध्यात्मार्थस्य मण्डूकप्लुतिन्यायेन पदाक्षिप्तस्यापि सम्भवात् वाच्यमपच्युतेति वचनात् ॥ २८ ॥ ❀ ❀ उपयमनं नाम स्वाधीनताकरणं वीर्यपणां ब्रह्मचर्यादिसाधनसाध्यां वैदर्भीं निशितां क उपयेमे मलं यापयतीति मलयः शान्तमनःसंस्कारः स एव ध्वजो यस्य स तथा हरिसेवादिना संस्कृतमना इत्यर्थः। रूपकमात्रस्य लिङ्गव्यत्ययो न दोषाय। "मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति" इति श्रुतेः मनसोऽपि बुद्ध्यधीनकरणशक्तिरुपपत्तिमतीति बोद्धव्यं, किं कृत्वा युधि यमनियमादिलक्षणे युद्धे राजन्यान् राज् दीप्ताविति धातोर्दीपकानीन्द्रियाणि वशीकृत्य चञ्चलस्य मनसो बुद्ध्यधीनकरणशक्तिः कथमिति तत्राह पाण्ड्य इति। पण्डोधर्मस्तज्जातं विवेकज्ञानं तेन सम्पन्नः तत्कुत इति तत्राह परेति। परेषामिन्द्रियाणां विषयलक्षणं पुरं जयतीति आत्मानभिमतमार्गगन्तृत्वादिन्द्रियाणां परत्वं तदभावे सुहृत्त्वमेव 'मननान्मन उद्दिष्टमि'ति मनश्चेतनो वा बाह्यार्थस्त्वेवं पुरञ्जनपुरञ्जनीसंगेन तद्वासनादूषितो नाम्ना वैदर्भी प्रमदोत्तमाभूत् पुरञ्जनी तत्पुरञ्जनसङ्गातिशयेन वासनावशान्नाम्ना मलयध्वजः पुमानभूत्। विषयसङ्गातिरेकलक्षणकारणात्पुंसः स्त्रीत्वं स्त्रियाः पुंस्त्वं च, ततः स्त्रीत्वमेवावशिष्यते विषयसङ्गातिरेको न कर्तव्य इति शिक्षणार्थं चेदमुक्तमिति तात्पर्यं ज्ञातव्यम् ॥ २९ ॥ ❀ ❀ तस्यां बुद्धौ असितो नित्यमुक्तो हरिस्तस्येक्षणं यया भवत्यसितेक्षणात्मजा विष्णुभक्तिः विरागविनयदानधैर्यस्पर्धनविवेकदमाः सप्त संख्याताः बुद्धेर्जातत्वात् सुता इत्युच्यन्ते, विष्णुभक्त्यनन्तरकाले स्पष्टत्वाद्यवीयस इति सप्तयाजय वपावन्धो लक्ष्यते सम्बन्धो द्रविलः प्राप्तगर्भलक्षणगतिस्तस्य जीवस्य भूः स्थानं मुक्तिलक्षणं विभ्रति उत्पाद्य ददतीति सप्तद्रविडभूभृतः डलयोरभेदः मूलाजरित्र इति दर्शनात् सप्तेन्द्रियाणि वानेनोच्यन्ते, रागादिभ्यो मुक्ताः प्रकाशितरूपाः सुता इति उच्यन्ते ॥ ३० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अनन्तेति युग्मकम् ॥ २७ ॥ ❀ ❀ तामेवेति अध्यात्मपक्षे तादृशधर्ममयबुद्धितादात्म्यातिशयं प्राप्त इत्यर्थः। धार्मिकगृहे जन्म तथैवेति भावः ॥ २८ ॥ ❀ ❀ युधि वादे राजन्यान् कर्म्मकाण्डानुगतन्यायान् ॥ २९ ॥ ❀ ❀ आत्मनां श्रवणादिरुचिं सप्तेति सख्यात्मनिवेदनयोः पराकाष्ठाप्राप्त्यनन्तरमेवाधिकारात् ॥ ३०-३१ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

दारकीदारक्यः कन्याः परायणाः वृद्धस्य ममातिस्नेहेन प्रतिक्षणसेवैकनिष्ठाः कथं वर्त्तिष्यन्ते रुदित्वा रुदित्वैव मरिष्यन्तीत्यर्थः, भिन्ना विदीर्णा नौर्येषां त इव ॥ २१ ॥ ❀ ❀ अतदर्हणं तस्य चैतन्यरूपत्वेन शोकानौचित्यात्। यद्वा धार्मिकत्वेन भयकर्तृकग्रहणानर्हमित्यर्थः ॥ २२ ॥ ❀ ❀ ततश्चैष पशुवन्नीयमानोऽभूत् यवनैर्यमदूतैः तमनुप्राणाद्या अद्रवन् अनुपथा अनुवर्त्तिनः। तथाच श्रुतिः "तमनुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनुत्क्रामन्तं सर्व्वे प्राणा अनूत्क्रामन्ते" इति ॥ २३ ॥ ❀ ❀ यवनैरुपरुद्धः प्रकृतिं महाभूतात्मताम् ॥ २४ ॥ ❀ ❀ तमसा अज्ञानेन नाविन्दत् सखायं पुरः सन्तमपीश्वरम् ॥ २५ ॥ ❀ ❀ ये संज्ञप्ताः काम्यकर्म्मसु खड्गैश्छिन्नास्ते तं कुठारैः अमीवमपराधम् ॥ २६ ॥ ❀ ❀ अनन्तपारे अन्तपारशून्ये तमसि दुःखे 'ईजे च बहुभिर्यज्ञैरि'त्युक्तत्वात् बहुकालं स्वर्गसुखमप्यनुभूयेति ज्ञेयं तस्यानुक्तिः प्राचीनबर्हिषो वैराग्यार्थां स्त्रीस्मरणात् स्त्री बभूव। अध्यात्मपक्षे दुःखातिशयप्रयुक्तमूर्च्छावशादेव मृत्युकाले सद्बुद्धित्यागः क्षणिक एवोक्तः। वस्तुतस्तु स्वर्गभोगान्ते पुण्यशेषेण तादृशधर्म्मबुद्धिविशिष्ट एव धार्मिकगृहे जन्म लेभे इत्येतावदेव विवक्षितं स्त्रीत्वपुंस्त्वादिकं त्वविवक्षितमेव। यद्वक्ष्यते "क्वचित् पुमान् क्वचिच्च स्त्री क्वचिन्नोभयमन्धधीः। देवो मनुष्यस्तिर्य्यग्वा यथा कर्म्मगुणो भवः" इति ॥ २७-२८ ॥ ❀ ❀ अथैवं जीवस्य यावद्भक्तिर्न भवेत्तावन्नैव संसारादुद्धारः, सा च भक्तिर्यादृच्छिकी यादृच्छिकसाधुसङ्गात् यादृच्छिकयैव साधुकृपया भवतीति दर्शयन् तज्जन्मनि तस्य साधुसङ्गो बभूवेत्याह उपयेमे इति। आदरणीयत्वेन मलयतुल्येषु साधुषु ध्वज इव श्रेष्ठः। उपयेमे कृपया शिष्यत्वेनाङ्गीचकार। वीर्य्यपणामिति कृपालक्षणः स्वस्वभाव एवात्र हेतुर्न त्वन्यः कश्चिदिति। यदुक्तं 'मद्भक्तिश्च यदृच्छये'ति 'भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युतसत्समागमः' इति न्यायेन कस्मिंश्चिज्जन्मनि जीवस्याकस्मादेव साधुसङ्गो भवेदिति विवक्षितम्। राजन्यान् विजित्य तदीयपापापराध-

कालकर्म्मादीन् निर्मूलीकृत्य पाण्ड्यः पण्डदेशोद्भवः। पक्षे सदसद्विवेचना पण्डा तामर्हतीति पण्ड्यः पण्ड्य एव पाण्ड्यः परपुरञ्जयः शत्रुपुरजेता। पक्षे मतान्तरोत्थसन्देहच्छेदी॥ २९॥ ❁ ❁ असितेक्षणानाम्नीं कन्यां पक्षे असितस्य श्रीकृष्णस्य ईक्षणं यया तां श्रीकृष्णसेवारुचिमित्यर्थः। श्रीमद्गुरुकृपया जीवस्य तस्य श्रीकृष्णसेवारुचिरभूदित्यर्थः। यवीयसस्तदुत्तरकालभवान् सप्त श्रवणस्मरणकीर्त्तनपादसेवार्चनवन्दनदास्यरूपान्। सख्यात्मनिवेदनयोः प्रथमं दुष्करत्वादुत्तरत्र स्वत एव जनिष्यमाणत्वाच्च नोल्लेखः, कीदृशान् द्रविडभूमिपालान् पक्षे द्रविडदेशे ज्ञानकर्म्मादिसर्व्वविजेतृत्वाद्भूभृतो नृपानिव विराजमानान् द्रविडदेशस्य श्रवणकीर्त्तनादिभक्तिप्रधानत्वात्॥ ३०॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

भिन्ना नौर्येषां ते भिन्ननावः उदधाविव दारकाः पुत्रादयः दारिकाः दुहित्राद्याः कथं नु वर्तिष्यन्ते॥ २१॥ ❁ ❁ अतदर्हणं शोकानर्हमपि तस्य भगवदंशस्य शोकनिमित्तभूतदेहगेहविलक्षणत्वात् तथापि कृपणया बुद्ध्या शोचन्तं भयनामा मृत्युः। यत्तु अतदर्हणं वस्तुतस्तस्य ब्रह्मत्वादिति तदयुक्तम्, सर्वशास्त्रप्रसिद्धजीवत्वाज्ञत्वमायामोहितत्वादिधर्मवतो नित्यमुक्तवस्वानन्यवन्ध-विमोचकत्वसर्वज्ञत्वमायाधिपत्वसर्वात्मत्वसर्वेश्वरत्वादिस्वाभाविकधर्मवता सह स्वरूपेणैक्यासम्भवात् तत्त्वमसीत्यादिवाक्यैस्तु जीवपरयोरंशांशिनोः स्वरूपभेदसहिष्णुरभेदः प्रतिपादितः। अन्यथा 'सर्वं खल्विदं ब्रह्मे'त्यत्रापि जडात्मकस्य सर्वस्य स्वरूपतो ब्रह्मा-भिन्नत्वं स्यात्। रज्जौ सर्पवत् ब्रह्मणि सर्वमध्यस्तमित्यङ्गीकारे तु बन्धमोक्षादिप्रतिपादकस्य सर्वस्य शास्त्रस्य वन्ध्यापुत्रोऽस्तीति वाक्य-वत् अप्रामाणिकत्वं स्यादित्यलं विस्तरेण॥ २२॥ ❁ ❁ यवनैः आध्यादिभिः अनुपथा इन्द्रियादयः अन्वद्रवन् "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति श्रुतेः॥ २३॥ ❁ ❁ उपरुद्धो भुजङ्गमः प्राणः यदा पुरीं विहायोपगतस्तदा तमेवानु पुरी विशीर्णा प्रकृतिं पञ्चभूतभावं गता प्राप्ता॥ २४॥ ❁ ❁ पुरः पुरोवर्तिनं सदा निकटस्थमपि सखायं सुहृदं सर्वहितकारिणं परमात्मानं नाविन्दत्॥ २५॥ ❁ ❁ अदयालुना ये संज्ञप्ताः हतास्ते अस्य तदेवामीवं पापं स्मर-न्तस्तं चिच्छिदुः॥ २६॥ ❁ ❁ अनन्तपारे तमसि विपुले नरके शाश्वतीः समाः बहूनि वर्षाणि मग्नः तत्र हेतुः प्रमदासङ्ग-दूषित इति कथापक्षे पुरीं भार्यां देहं च हित्वा नरके मग्नः। अध्यात्मपक्षे तु प्रमदा बुद्धिस्तस्याः मरणकाले त्यागस्यासम्भवात् प्रसिद्ध-भार्याध्यानात् स्त्रीत्वप्राप्तेः वक्ष्यमाणत्वाच्च प्रसिद्धभार्याध्यानरूपबुद्धिवृत्तिं हित्वा नरके मग्नः यतस्तत्सङ्गदूषित इत्यर्थः। आर्तिमनु-भूय प्रमदोत्तमा बभूवेत्यग्रिमेण सम्बन्धः॥ २७॥ तामेवोभयपक्षेऽपि लोकप्रसिद्धां भार्यां मनसा गृह्णन् "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय! सदा तद्भावभावितः" इति श्रीमुखवचनाच्च प्रमदोत्तमा बभूव। पूर्वदेहे बुद्धिसहायः यं यं भावं मरणकालेऽपि न विस्मरति तं तमेव जन्मान्तरेऽपि पुण्यापुण्यकर्मानुरूपं प्राप्नोतीति फलितोऽर्थः। स्त्रीभावस्य पुन्नपुंसकदेवमनुष्यादिभावोपलक्षणत्वात् कथापक्षे विदर्भादिशब्दाः स्पष्टार्थाः। अध्यात्मपक्षे विवक्षितेष्वर्थेषु कचित्क-चिन्नीयन्ते विशिष्टानि दर्भाणि दर्भोपलक्षितानि कर्माणि यस्य स तथा तस्य धार्मिकस्य गृहे इत्यर्थः॥ २८॥ ❁ ❁ मलयो-पलक्षिते सर्वभूमण्डलसारभूते भारते वर्षे ध्वज इव प्रसिद्धः हरिभक्तः पाण्ड्यः हेयोपादेयविवेकिनी बुद्धिः पण्डा, तद्युक्तः परपुरञ्जयः परस्य विष्णोः पुरं वैकुण्ठं तद्भक्त्या जयतीति तथाभूतो यो गुरुः। वीर्यपणां पुण्यलभ्यां राजन्यान् निर्जित्य उपयेमे बुद्धिमोहितो जीवो देहाद्देहान्तरं गच्छन् स्त्र्यादिरूपं मुक्तिसाधनप्रदं गुरुं कदाचित्प्राप्नोतीति फलितोऽर्थः॥ २९॥ ❁ ❁ असितस्य श्रीकृष्णस्य ईक्षणं यया तां श्रीकृष्णसेवारुचिं यवीयसः कनिष्ठान् श्रीकृष्णश्रवणकीर्तनस्मरणपादसेवनार्चनवन्दनदास्याख्यान् सप्त सुतान् जनयाञ्चक्रे ते च सप्त द्रविडभूभृतः। सप्तद्रविडोपलक्षितभारतवर्षरूपभूमिपालाः भारते वर्षे श्रीकृष्णश्रवणादीनां प्रसिद्धेः भगवत्प्रसादविशेषलभ्यस्य सख्यस्य आत्मनिवेदनस्य च श्रवणाद्युत्तरभावित्वात् सप्तसुतानित्युक्तम्। यद्वा श्रवणकीर्तनयोः रुचिसाधनत्वे तस्यामन्तर्भावात् स्मरणाद्यात्मनिवेदनांतान् सप्त जनयाञ्चक्रे इत्यर्थः। अन्यथा गुरुरूपस्य भर्तुः सख्यात्मनिवेदनानुत्पादनेन अपूर्ण-साधनोपदेष्टृत्वप्रसङ्गः स्यात्॥ ३०॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

दारकाः पुत्राः दारकीः दारक्यः कन्याः मयि गते सति परायणाः पराश्रयाः अत एव दीनाः कथं नु वर्त्तिष्यन्ते? तेषां वर्त्तनं तु न सम्भवतीति दृष्टान्तेनाह—भिन्नेति, उदधौ समुद्रे भिन्ना नौर्येषां तेषां स्थितिर्यथा न सम्भवति तथैतेषामपीति भावः॥ २१॥ ❁ ❁ एवं कृपणया मोहितया बुद्ध्या शोचन्तमतदर्हणं राजत्वाच्छोकानर्हमेनं पुरञ्जनं ग्रहीतुं कृता धीर्येन स भयनामा अभ्यपद्यत आजगाम। पक्षान्तरे तु—भगवदंशत्वेन सच्चिदानन्दरूपत्वात् वस्तुतः शोकानर्हत्वं, राजसीबुद्ध्याद्य-ध्यासेन शोचन्तं ग्रहीतुं मृत्युराजगाम॥ २२॥ ❁ ❁ यदा यवनैः पशुवत् पाशैर्बध्वा एष पुरञ्जनः स्वकं क्षयं स्थानं प्रति नीयमानो जातस्तदा येऽस्यानुपथा अनुसारिणोऽनुजीविनो भृत्या नागादयस्तेऽपि भृशमातुराः अत्यन्तव्याकुलाः रुन्तः शोचन्तस्त-मन्वद्रवन् अन्वगच्छन्नित्यन्वयः। पक्षान्तरे तु—पापकारित्वाद्यदैष जीवो यवनैर्यमदूतैर्यातनार्थं स्वस्थानं प्रति नीयमानो

जातस्तदाऽस्यानुवर्त्तिनः प्राणेन्द्रियादयोऽपि तं विना शरीरे स्थातुमशक्तास्तेन सहैव अन्वगच्छन्नित्यर्थः ॥२३॥ ❀ ❀ प्रथमं यवनैरुपरुद्धो भुजङ्गमः पुरीपालको यदैव पुरीं विहायोपगतो बहिर्निर्गतस्तदा तमेवानु तत्पश्चादेव सा पुरी विशीर्णा विशकलिता सती प्रकृतिं गता स्वकारणे भूमौ लीना जातेत्यर्थः। पक्षान्तरे तु—प्राणादिनिःसरणानन्तरं विशीर्णो देहो महाभूतात्मतां गत इत्यर्थः ॥ २४ ॥ ❀ ❀ बलीयसा प्रबलेन प्रसभं बलात्कारेण विकृष्यमाणोऽपि पुरञ्जनः पुरः पूर्वं सुहृदं हितकर्त्तारं सखायमलक्षिततया सह वर्त्तमानमपि नाविन्दत् न सस्मार। यदि तदाऽपि स स्मृतः स्यात्तदाऽऽविर्भूय ततस्तं विमोचयेदेवेति भावः। अस्मरणे हेतुमाह—तमसेति, तमसाज्ञानेन आविष्टः व्याप्त इत्यर्थः। पक्षान्तरे—सखा ईश्वरः सदा स्मृतः स्यात्तदाऽपि विमोचयेदेवेति ॥ २५ ॥ ❀ ❀ अनेन अदयालुना दयारहितेन ये यज्ञे पशवः सञ्ज्ञप्ताः वेदाननुमतत्वेऽपि स्वकामनावशान्मारिताः तेऽस्य तदमीवमनेनोत्पादितां स्वपीडां स्मरन्तः क्रुद्धा नानाभयङ्करवेषधारिणः सन्तो लोहमयैः कुठारैस्तं मार्गे चिच्छिदुरित्यन्वयः। उभयपक्षेऽप्येक एवार्थः ॥ २६ ॥ ❀ ❀ यवनैर्विक्षिप्तः अनन्तपारे अतिमहति तमसि निमग्नः शाश्वतीः समाः अनन्तान् वर्षान् आर्त्तिं पीडामनुभूय तदनन्तरं विदर्भदेशाधिपतेः राजसिंहस्य वेश्मनि गृहे प्रमदोत्तमा बभूवेति द्वयोरन्वयः। दुःखानुभवदशायामपि यदि पूर्वसखायं स्मरेत्तदा सद्य एव ततो विमुच्येत। तदापि तन्न कृतवानित्याह—नष्टस्मृतिरिति, नष्टा सखिविषया स्मृतिर्यस्य सः। एवं परमोपकारिसखिस्मृतिविनाशे प्रमदासम्बन्धेन विषयासक्तिलक्षणदोष एव हेतुरित्याह—प्रमदासङ्गदूषित इति। पुरुषस्यापि प्रमदाभावे हेतुमाह—तामिति, यतस्तामेव प्रमदां सर्वदा परमपुरुषार्थत्वेन मनसा गृह्णन् बभूवेत्यर्थः। अध्यात्मपक्षे तु—राजसीबुद्ध्याद्यध्यासेन पापाचारत्वात् यमदूतैर्यमस्थानं नीतो जीवो महति तमसि वैतरण्यादिनरके प्रक्षिप्तस्तत्रापि भगवत्स्मरणरहितोऽनन्तान् संवत्सरान्नरकदुःखमनुभूय तदनन्तरं ततो विमुक्तः पुण्येन स्वर्गादिसुखमप्यनुभूय तदनुक्तिरत्र प्राचीनबर्हिषो वैराग्यार्था। तदनन्तरं विदर्भस्य विशिष्टदर्भोपलक्षितस्य भगवत्समर्पितकर्मानुष्ठानपरस्य, अत एव राजसिंहस्य धर्मिष्ठत्वेन अतितेजस्वितया सिंहवद्राजमानस्य गृहे तस्या जन्म बभूव। तस्य स्त्रीत्वकथनं तु 'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय सदा तद्भावभावितः' इति वाक्याद्देहान्तसमये स्त्रीस्मरणे स्त्री भवतीति ज्ञापनार्थम्। प्राचीनकर्मसंस्कारवशात् भगवत्कृपावशाद्वा गुरुशास्त्राधीनप्रवृत्तिकत्वज्ञापनार्थं च स्वच्छन्दप्रवृत्तिकत्वस्य पूर्वं पुरुषत्वोक्तेः, अत एवेदानीं तस्य मोक्षोक्तिः। वस्तुतस्तु देहात्ममतित्वेन पुनः पुनर्जन्म जातमित्यत्रैव तात्पर्यम्। गर्भप्रवेशदेहसम्बन्धादिकथाप्रकारस्तु पूर्वपुरञ्जनकथोक्तप्रकारेणैव ज्ञेय इति नात्र पुनरुच्यते इति ज्ञेयम् ॥ २७-२८ ॥ ❀ ❀ तां वैदर्भीं विदर्भदेशजां वीर्यपणां वीर्यं प्रभाव एव पणो वैवाहिकं देयं यस्यास्तां पाण्ड्यः पण्डदेशाधिपतिः परपुरञ्जयः परस्य शत्रोः पुरं जयतीति तथा महापराक्रमी मलयध्वजो युधि युद्धे राजन्यान् निर्जित्योपयेमे विवाहितवानित्यर्थः। पक्षान्तरे तु—एवं राजसीबुद्धिसम्बन्धेन विषयासक्तिं संसारमार्गे प्रदर्श्येदानीं भगवद्भक्तसम्बन्धेन सात्त्विकीबुद्ध्या भगवदेकनिष्ठत्वलक्षणं मोक्षमार्गं निरूपयति। तत्र पूर्वं त्वन्तःस्थानामेव बुद्धीन्द्रियतत्परिणामानां परोक्षतार्थं बहिष्ठस्त्रीपुत्रादिभावेन निरूपणं कृतम्। इदानीं तु बाह्यानामेव गुरुशिष्यतत्सम्बन्धादीनां बाह्यत्वेन पतिपत्न्यादिभावेन निरूपणं क्रियते। तत्र यद्यप्यर्थस्य बाह्यत्वाद्ग्राह्यत्वेन निरूपणप्रयुक्तापरोक्षता नास्ति, तथाप्युपयेमे मलयध्वज इत्यादिशब्दैः कर्मव्यवहारतत्परबुद्धेः प्राचीनबर्हिषो यथार्थाप्रतीतेः शब्दविशेषप्रयुक्तैव परोक्षतेति ज्ञेयम्। वीर्यं भक्त्याद्युपदेशसामर्थ्यं तेनैव भक्त्यधिकारी वशीकृतो भवति। मलयोपलक्षिते भगवद्भक्तिप्रधाने दक्षिणदेशे परमभागवतत्वेन ध्वज इव प्रसिद्धो मलयध्वजः। पण्डा भगवद्भजनादेव पुरुषार्थसिद्धिरिति शास्त्रार्थनिर्णयेन निश्चयात्मिका बुद्धिस्तामर्हतीति पाण्ड्यः अत एव परपुरञ्जयः अन्यमतखण्डनदक्षः। अत एव राजन्यान् अन्यमतपरान् वादिनो युधि शास्त्रार्थसभायां निर्जित्य उपयेमे तं शिष्यत्वेनाङ्गीकृतवान् ॥ २९ ॥ ❀ ❀ तस्यां वैदर्भ्यां स मलयध्वजः असितेक्षणां नीलकटाक्षीमात्मजां कन्यां जनयाञ्चक्रे। तथा ततो यवीयसः कनिष्ठान् सप्त सुतान् जनयाञ्चक्रे इति सम्बन्धः। ते च सप्त द्राविडदेशे भूभृतो राजानो जाता इत्यर्थः। पक्षान्तरे तु—तस्मिन् शिष्ये स गुरुः असितस्य श्रीकृष्णस्येक्षणं यया तां भगवत्कथाश्रवणसेवादिरुचिम्। तदनन्तरभाविनः श्रवणकीर्त्तनस्मरणपादसेवनार्चनवन्दनदास्यलक्षणसप्तभक्तिप्रकारांश्चोत्पादयामास। सख्यात्मनिवेदनयोस्तु जानासि किं सखायं मामित्यादिना भगवतैवात्र उपदेक्ष्यमाणत्वादिदानीमनुत्पन्नत्वेन सप्तेत्युक्तं द्रविडदेशस्य श्रवणादिसप्तभक्तिप्रधानत्वात् तत्पालकत्वं ज्ञेयम् ॥ ३० ॥

भाषानुवादः

मेरे चले जानेपर एकमात्र मेरे ही सहारे रहनेवाले ये पुत्र और पुत्री भी कैसे जीवन धारण करेंगे ? ये तो बीच समुद्रमें नाव टूट जानेसे व्याकुल हुए यात्रियोंके समान बिलबिलाने लगेंगे' ॥ २१ ॥ ❀ ❀ यद्यपि ज्ञानदृष्टिसे उसे शोक करना उचित न था, फिर भी अज्ञानवश राजा पुरञ्जन इस प्रकार दीनबुद्धिसे अपने स्त्री-पुत्रादिके लिये शोकाकुल हो रहा था इसी समय उसे पकड़नेके लिये वहाँ भयानक यवनराज आ धमका ॥ २२ ॥ ❀ ❀ जब यवनलोग उसे पशुके समान बाँधकर अपने स्थानको ले चले, तब उसके अनुचरगण अत्यन्त आतुर और शोकाकुल होकर उसके साथ हो लिये ॥ २३ ॥ ❀ ❀ यवनोंद्वारा रोका हुआ सर्प भी उस पुरीको छोड़कर इन सबके साथ ही चल दिया। उसके जाते ही सारा नगर छिन्न-भिन्न होकर अपने कारणमें लीन हो गया ॥ २४ ॥ ❀ ❀ इस प्रकार महा-

बली यवनराजके बलपूर्वक खींचनेपर भी राजा पुरञ्जनने अज्ञानवश अपने हितैषी एवं पुराने मित्र अविज्ञातका स्मरण नहीं किया ॥ २५ ॥ ❀ ❀ उस निर्दय राजाने जिन यज्ञपशुओंकी बलि दी थी, वे उसकी दी हुई पीड़ाको याद करके उसे क्रोधपूर्वक कुठारोंसे काटने लगे ॥ २६ ॥ ❀ ❀ वह वर्षोंतक विवेकहीन-अवस्थामें अपार अन्धकारमें पड़ा निरन्तर कष्ट भोगता रहा। स्त्रीकी आसक्तिसे उसकी यह दुर्गत हुई थी ॥ २७ ॥ ❀ ❀ अन्त समयमें भी पुरञ्जनको उसका चिन्तन बना हुआ था। इसलिये दूसरे जन्ममें वह नृपश्रेष्ठ विदर्भराजके यहाँ सुन्दरी कन्या होकर उत्पन्न हुआ ॥ २८ ॥ ❀ ❀ जब यह विदर्भनन्दिनी विवाहयोग्य हुई, तब विदर्भराजने घोषित कर दिया कि इसे सर्वश्रेष्ठ पराक्रमी वीर ही ब्याह सकेगा। तब शत्रुओंके नगरोंको जीतनेवाले पाण्ड्यनरेश महाराज मलयध्वजने समरभूमिमें समस्त राजाओंको जीतकर उसके साथ विवाह किया ॥ २९ ॥ ❀ ❀ उससे महाराज मलयध्वजने एक श्यामलोचना कन्या और उससे छोटे सात पुत्र उत्पन्न किये, जो आगे चलकर द्रविडदेशके सात राजा हुए ॥ ३० ॥

एकैकस्याभवत्तेषां राजन्नर्बुदमर्बुदम्। भोक्ष्यते यद्वंशधरैर्मही मन्वन्तरं परम् ॥ ३१ ॥
अगस्त्यः प्राग्दुहितरमुपयेमे धृतव्रताम्। यस्यां दृढच्युतो जात इध्मवाहात्मजो मुनिः ॥ ३२ ॥
विभज्य तनयेभ्यः क्ष्मां राजर्षिर्मलयध्वजः। आरिराधयिषुः कृष्णं स जगाम कुलाचलम् ॥ ३३ ॥
हित्वा गृहान् सुतान् भोगान् वैदर्भी मदिरेक्षणा। अन्वधावत पाण्ड्येशं ज्योत्स्नेव रजनीकरम् ॥ ३४ ॥
तत्र चन्द्रवसा[1] नाम ताम्रपर्णी व[2]टोदका। तत्पुण्यसलिलैर्नित्यमुभयत्रात्मनो मृजन् ॥ ३५ ॥
कन्दाष्टि[3]भिर्मूलफलैः पुष्पपर्णैस्तृणोदकैः। वर्तमानः शनैर्गात्रकर्शनं तप आस्थितः ॥ ३६ ॥
शीतोष्णवातवर्षाणि क्षुत्पिपासे प्रियाप्रिये। सुखदुःखे इति द्वन्द्वान्यजयत्समदर्शनः ॥ ३७ ॥
तपसा विद्यया पक्वकषायो नियमैर्यमैः। युयुजे ब्रह्मण्यात्मानं विजिताक्षानिलाशयः ॥ ३८ ॥
आस्ते स्थाणुरिवैकत्र दिव्यं वर्षशतं स्थिरः। वासुदेवे भगवति नान्यद्वेदोद्वहन् रतिम् ॥ ३९ ॥
स व्यापकतयाऽऽत्मानं व्यतिरिक्ततयाऽऽत्मनि। विद्वान् स्वप्न इवामर्शसाक्षिणं विरराम ह ॥ ४० ॥

अन्वयः—राजन् तेषाम् एकैकस्य अर्बुदम् अर्बुदम् अभवत् यद्वंशधरैः मही मन्वंतरम् परम् भोक्ष्यते ॥ ३१ ॥ ❀ ❀ अगस्त्यः मुनिः धृतव्रताम् प्राग्दुहितरम् उपयेमे यस्याम् इध्मवाहात्मजः दृढच्युतः जातः ॥ ३२ ॥ ❀ ❀ कृष्णम् आरिराधयिषुः सः राजर्षिः मलयध्वजः तनयेभ्यः क्ष्माम् विभज्य कुलाचलम् जगाम ॥ ३३ ॥ ❀ ❀ मदिरेक्षणा वैदर्भी गृहान् सुतान् भोगान् हित्वा ज्योत्स्ना रजनीकरम् इव पांड्येशम् अन्वधावत ॥ ३४ ॥ ❀ ❀ तत्र चंद्रवसा ताम्रपर्णी वटोदका नाम नित्यम् तत्पुण्यसलिलैः आत्मनः उभयत्र मृजन् ॥ ३५ ॥ ❀ ❀ कन्दाष्टिभिः मूलफलैः पुष्पपर्णैः तृणोदकैः वर्तमानः शनैः गात्रकर्शनम् तपः आस्थितः ॥ ३६ ॥ ❀ ❀ समदर्शनः शीतोष्णवातवर्षाणि क्षुत्पिपासे प्रियाप्रिये सुखदुःखे इति द्वंद्वानि अजयत् ॥ ३७ ॥ ❀ ❀ तपसा विद्यया यमैः नियमैः पक्वकषायः विजिताक्षानिलाशयः आत्मानम् ब्रह्मणि युयुजे ॥ ३८ ॥ ❀ ❀ एकत्र स्थिरः दिव्यम् वर्षशतम् स्थाणुः इव आस्ते भगवति वासुदेवे रतिम् उद्वहन् अन्यत् न वेद ॥ ३९ ॥ ❀ ❀ सः स्वप्नः इव व्यापकतया आत्मनि व्यतिरिक्ततया अमर्शसाक्षिणम् आत्मानम् विद्वान् विरराम ह ॥ ४० ॥ ( अस्य श्लोकस्य ४१ श्लोकेन सम्बन्धः-सं० )।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अर्बुदमिति। श्रवणादीनां प्रत्येकमनेके प्रकारा अभवन्नित्यर्थः। तदुक्तम् "भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते" इति। येषां वंशधरैर्यैतः प्रवृत्तैः सम्प्रदायभेदैः कृत्स्ना मही मन्वन्तरं ततः परं च भोक्ष्यतेऽविद्याकामकर्मभ्योऽपि रक्षिष्यते ॥ ३१ ॥ ❀ ❀ अगस्त्यः अगानि निष्क्रियाणि गात्राणि स्त्यायति संघातयतीत्यगस्त्यो मनः। स प्राक्प्रथमजातां दुहितरं कृष्णसेवारुचिमुपयेमे तस्य मनः कृष्णे दृढां रतिं बबन्धेत्यर्थः। धृतानि शमदमादीनि व्रतानि यया तां रतिम्। दृढेभ्यः सत्यलोकादिभोगेभ्योऽपि च्युतस्तद्रहितः कृष्णरताविहामुत्र भोगविरागो जात इत्यर्थः। स एवोपशमात्मकत्वान्मुनिः। कथंभूतः इध्मवाह आत्मजो यस्य सः। "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इत्यादिश्रुतिप्रसिद्धा समिद्वहनोपलक्षिता गुरूपसत्तिर्वैराग्यादभूदित्यर्थः। न ह्यविरक्तस्य गुरूपसत्तिः सम्भवति। कथापक्षे यथाश्रुतमेव ॥ ३२ ॥ ❀ ❀ क्ष्मां विभज्य

१. प्रा० पा०—चान्द्रमसी। २. प्रा० पा०—बहूदका। ३. प्रा० पा०—कन्दादिभि०।

तत्र श्रवणादिभक्तिभेदं व्यवस्थाप्य ॥ ३३ ॥ ❀ ❀ इदानीं पुरंजनस्य स्त्रीभावं प्राप्तस्य सर्वतो विरक्तस्य "पतिरेव गुरुः स्त्रीणाम्" इति वचनात्पतिसेवया गुरुशुश्रूषाप्रकारं दर्शयितुमाह हित्वेत्यादिना मनो दध इत्यन्तेन ग्रन्थेन। मदयतीति मदिरमीक्षणं यस्याः ॥ ३४ ॥ ❀ ❀ तत्र चन्द्रवसाद्या नद्यस्तासां पुण्यैः सलिलैरुभयत्रान्तर्बहिश्चात्मनो मृजन्मनोमलं क्षालयंस्तप आस्थित इत्युत्तरेणान्वयः ॥ ३५ ॥ ❀ ❀ अस्यते भूमौ क्षिप्यत इत्यष्टिर्बीजम् ॥ ३६-३७ ॥ ❀ ❀ विद्ययोपासनया पक्वकषायो दग्धकामादिवासनः। युयुजे आत्मनो ब्रह्मतां भावयामास। अक्षाणींद्रियाणि अनिलः प्राणः आशयश्चित्तम्। विजिता अक्षादयो येन ॥ ३८ ॥ ❀ ❀ आस्ते स्म। वर्षशतमिति ज्ञानस्य दुःसाधनतां दर्शयति। अत एव हरौ भक्तिं कृतवानित्याह। वासुदेवे रतिमुद्वहन्सन्नन्यद् देहादिकं न वेद ॥ ३९ ॥ ❀ ❀ स एवं वर्तमान आत्मन्यात्मानं विद्वानन्यस्मादुपरराम। कथं विद्वान् व्यतिरिक्ततया देहादिव्यतिरिक्तत्वेन। कुतः व्यापकतया देहादिप्रकाशकत्वेन। ननु देहाद्याकारो विमर्श एव तत्प्रकाशयति न तु निराकार आत्मा अत आह। आमर्शस्यापि साक्षिगम्। अयं भावः—आमर्शो नामान्तःकरणवृत्तिः सा च जडत्वादात्मप्रकाश्यैवेति। यथा स्वप्ने ममेदं शिरश्छिन्नमित्यादिप्रतीतौ तद्व्यतिरिक्तमात्मानं छिन्नशिरस्कस्य प्रकाशकं वेत्ति तद्वत् ॥ ४० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इत्यर्थ इति। श्रवणादीनां प्रत्येकं नामलीलादिभेदैर्नामादीनां च प्रत्येकमवतारभेदैस्तेषामपि दास्यसख्याद्यभिरुचितत्त्वभेदैरित्येवमसंख्या एव प्रकारा इति भावः ॥ ३१ ॥ ❀ ❀ इत्यर्थ इति। महत्कृपया जीवस्य मनः कृष्णसेवासक्तं बभूवेति भावः। इत्यर्थ इति। वैराग्यं पदार्थानित्यदृष्ट्या जायते तच्च हरिभक्तानां हरिरतिं विना सर्वत्र स्वभावत एवास्ति "तावद्भयं द्रविणदेहसुहृन्निमित्तं शोकः स्पृहा परिभवो विपुलश्च लोभः। यावन्न तेऽङ्घ्रिमभयं प्रवृणीत लोकः" इत्याद्युक्तेरिति भावः। तस्यात्मनो विज्ञानार्थं स विरक्तः सन्। श्रोत्रियपदार्थमेकादशे निर्णेष्यामः "परं ब्रह्म कृष्ण इत्यभिधीयते" इति श्रुतेः। श्रीकृष्णानुरागिणमित्यर्थः। इत्यर्थ इति। विरक्तेनैव संसारस्यासारबोधदार्ढ्याय गुरूपसदनं क्रियत इति भावः। यद्वा—दृढेभ्यो ज्ञानादिभ्यस्तत्साध्येभ्यो मोक्षादिभ्यश्च च्युतः मनसः कृष्णसेवारुच्येकतानत्वादन्यसाधनसाध्यस्पृहाराहित्यं जातमित्यर्थः। कथापक्षेऽगस्त्यस्य पुत्रो दृढच्युतस्तस्येध्मवाह इति मलयध्वजस्य कन्यावंशः ॥ ३२ ॥ ❀ ❀ कुलेन लोकसमूहेनाप्यचलं चालयितुमशक्यमेकान्तस्थलं वेंकटादिपर्वतं वा ॥ ३३ ॥ ❀ ❀ सुतान् हित्वेति पतिव्रता पत्युरिव गुरोः सेवायां प्रहृष्टः शिष्यः श्रवणकीर्त्तनादीन्यपि भोगान् तदुत्थान्प्रेमानन्दानपि गृहान् तदुचितविविक्तस्थलमपि नैवापेक्षते श्रीगुरुसेवयैव सुखेन सर्वसाध्यसिध्यर्थमित्युद्देशो व्यंजितः। माद्यति यदुक्ताचरणेन सर्वत्र हृष्यतीति मत् इरा वाणी हृष्यन्त्यां वाण्यां वेदलक्षणायामेवेक्षणं यस्याः गुरुसेवाया वेदेन सर्वाधिक्येनोक्तत्वादित्यर्थः। "नाहमिज्याप्रजातिभ्यां तपसोपशमेन च। तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथा ॥" इति साक्षान्नारायणरूपवेदोक्तेः, यद्वास्य पुराणस्योक्तिरपीयं वेदोक्तिरेव 'निगमकल्पतरोर्गलितं फलम्' इत्युक्तेरस्य वेदफलरूपत्वाद्यथाम्रवृक्षफलमाम्रं तथा वेदवृक्षफलमपि वेद एव "पुराणं ब्रह्मसंमितम्" इत्युक्तेर्वा तथेत्यर्थः। मदयतीति मदिरं भगवद्रूपं तत्रेक्षणं यस्या इति सन्दर्भः ॥ ३४ ॥ ❀ ❀ तत्र कुलाचलसमीपे। अध्यात्मपक्षे—तत्रैकान्तस्थले चन्द्रवंशा चन्द्राय ब्रह्मप्रकाशायोष्यते वाञ्छ्यत इति तथा वेदान्तस्मृतिः। 'वश-कान्तौ' ताम्रं रक्तवर्णत्वेन समं "रजो रक्तं तमः श्यामं सत्त्वं शुक्लमिहोच्यते" इत्युक्तेः। रजोगुणं पर्णयत्याच्छादयतीति ताम्रपर्णी सात्त्विकी स्थितिः। 'पर्ण-आच्छादने'। उत्तमकं दुःखं येन तदुदकं सुखं वटयति वेष्टयति वटं तदुदकं यस्यां सा वटोदका सत्संगतिः। सर्वसुखाच्छादकभगवज्जनसंग इति यावत्। 'तुलयाम लवेनापि न स्वर्गम्' इत्याद्युक्तेः। 'वट-वेष्टने' चौरादिकः। तासां पुण्यानां पुण्यकर्त्रीणां सलिलैः प्राप्तिभिः 'सल-गतौ' अत औणादिक इलच्। आत्मनस्स्वस्य अन्तर्मार्जनं कपटादित्यागः बहिर्मार्जनं परापवादादित्यागः ॥ ३५ ॥ ❀ ❀ मूलं जगदाधारं ब्रह्म फलंति निष्पादयन्तीति मूलफलानि तैः। कं सुखं ददातीति कन्दं मिताशनं तदादि येषां मितस्वापादीनां तानि कंदानि योगसाधनानि "नात्यश्नतस्तु योगोस्ति न चैकान्तमनश्नतः" इति श्रीगीतोक्तेः। पुष्पवन्मृदुलैः पर्णैराच्छादनैः स्तीर्यंत इति स्तृणान्यासनानि तानि चोदकानि सुसुखानि तैः स्थिरसुखासनैरित्यर्थः। वर्तमानः शरीरयात्रां कुर्वाणः। गं ज्ञानं न त्रातीति गात्रमज्ञानं तत्कर्शयत्यल्पीकरोतीति गात्रकर्शनं तपः। आलोचनं मननमनुतिष्ठन् शीतोष्णादीन्यजयत्। उपलक्षणत्वाच्छीतादेः कामादीनप्यजयदिति ज्ञेयम्, उभयेषां शरीराधिकरणत्वात् ॥ ३६-३७ ॥ ❀ ❀ ब्रह्मणि उत्तरश्लोकस्पष्टीभूतार्थे वासुदेवे आत्मानं मनः ॥ ३८ ॥ ❀ ❀ तादृशस्मरणभक्त्या भगवति रतिरव्यवच्छिन्ना जातेत्याह—आस्त इति। अत एव ज्ञानस्य दुःसाध्यत्वादेव ॥ ३९ ॥ ❀ ❀ अत्राक्षिपति—नन्विति। अत्राशयमाह—अयं भाव इति। अत्र विश्वनाथः—तादृशस्य च सर्वत्र भगवत्स्फूर्तिरभूदित्याह—स इति। व्यापकतया जातरतित्वेन सर्वास्वेव दिक्षु स्फुरद्रूपतया विद्वान् जानन् तदप्यात्मनि स्वस्मिन्व्यतिरिक्ततया वियुक्तत्वेनैव जानन् प्रेमोत्कंठातापेन विरराम मूर्छां प्रापेत्यर्थः। विरहोत्थस्फूर्तिजनितभगवद्दर्शनेन विरहो न शाम्यतीत्यत्र दृष्टांतः—स्वप्न इव जानन् न हि स्वप्ने भुक्तेनौदनादिना स्वप्नोत्थितस्य जनस्य क्षुधा शाम्यतीत्यर्थः। ननु स्फूर्त्तौ किं

प्रमाणमित्यतो विशिनष्टि—आमर्शो नामांतःकरणवृत्तिस्स एव साक्षी न तु लोचनं यत्र तम्। अन्तःकरणवृत्तीनां विरहसंतापानपगमात् लोचनाभ्यां तद्दर्शनमपि तत्स्फूर्त्तिजनितमेवमेवेत्यनुभवादिति भावः ॥ ४० ॥

**श्रीमद्वीरराघवव्याख्या**

हे राजन्! तेषां पुत्राणामेकैकस्यार्बुदमर्बुदं पुत्रा अभवन् श्रवणकीर्तनादीनां प्रत्येकमनेकप्रकारा अभवन्नित्यर्थः। येषां वंशधरैर्यैतः प्रसूतैः सम्प्रदायभेदैर्मन्वन्तरमतः परं च मही भोक्ष्यते अनुभूयते श्रवणकीर्तनादिसम्प्रदायभेदैर्मही व्याप्तेत्यर्थः ॥ ३१ ॥ ❀ ❀ अगस्त्योपलक्षितो मुमुक्षुर्दृढव्रतामव्यभिचारिणीं दुहितरं भगवत्सेवारुच्यात्मिकामुपयेमे स्वीकृतवान्। दुहितरं विशिनष्टि यस्यां दुहितरि इध्मवाहात्मजः इध्मवाहः समित्प्रापणं तेन तत्पूर्वकगुरूपसत्तिर्लक्ष्यते 'गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति श्रुतिप्रसिद्धसमिद्वाहपूर्वकगुरुप्रसादाज्जातो ब्रह्मोपदेशात्मको मुनिः उपदिष्टस्यार्थस्य मनन-प्रचुरत्वान्मुनिः दृढं व्रतं श्रवणोपयुक्तशमदमात्मकं व्रतं यस्य सः "प्रशान्तचित्ताय शमान्विताय" इति श्रुतेः उपासनोपयुक्तशमादीनां श्रवणकालेऽभावाच्च जातः बभूव ॥ ३२ ॥ ❀ ❀ तनयेभ्यः श्रवणकीर्तनादिभ्यः पुत्रेभ्यः क्ष्मां स्वोपजीव्यां भगवद्भक्त्यात्मिकां पृथ्वीं विभज्य श्रवणकीर्तनादिसाध्यामनुसन्धाय स मलयध्वजः कृष्णमाराधयितुमिच्छुः कुलाचलं मलयपर्वतं प्रति जगाम गतः ॥ ३३ ॥ ❀ ❀ गुरूपसत्तिपूर्वकशमादियुक्तश्रवणमननादिपूर्विकां श्रवणकीर्तनादिसाध्यां भगवत्सेवारुचिं वैदर्भी-मुत्पाद्य तया सह भगवन्तमाराधयितुं विविक्तं पुण्यदेशं ययावित्युक्तमथ मलयध्वजस्य महाभागवतस्याष्टाङ्गयुक्तभगवद्भक्ति-योगानुष्ठानप्रकारं वैदर्भ्याः पत्युः परिचर्याप्रकारं चाह हित्वेत्यादिना मनो दध इत्यन्तेन ग्रन्थेन। मदिरं भगवत्सेवाहपैरूपमीक्षणं ज्ञानं यस्याः सा वैदर्भी सुखान् सुखप्रदान् गृहान् सुखशब्दस्तत्साधनेपूपचारात्प्रयुक्तः, अत एव पुंस्त्वं, पाण्ड्येशं मलयध्वज-मन्वधावतानुसृत्य गतवती यथा रजनीकरं चन्द्रं ज्योत्स्ना चन्द्रिका ॥ ३४ ॥ ❀ ❀ तत्र कुलाचले चन्द्रवसा ताम्रपर्णी प्रसिद्धा नदी, तस्याः पुण्यैः सलिलैरात्मनः स्वस्योभयत्रान्तर्बहिश्च मलं मृजन् स्नानपानादिभिः शोधयन् तप आस्थित इत्युत्तरे-णान्वयः ॥ ३५ ॥ ❀ ❀ कन्दाष्टयः कन्दबीजानि कन्दाष्टयादिभिः पूर्वपूर्वालाभे उत्तरोत्तरैर्वर्तमानः देहधारणं कुर्वाणः पश्चाच्छनैः गात्रकर्शनं शरीरशोषणं तप अनशनतप आस्थित इत्यर्थः ॥ ३६ ॥ ❀ ❀ ततः समदर्शनः शीतोष्णादिनिमित्त-चित्तविकाररहितः शीतोष्णादिद्वन्द्वान्यजयत् ॥ ३७ ॥ ❀ ❀ तपसा कर्मयोगेन विद्यया ज्ञानयोगेन च पक्वः निरस्तः कषायः धातुरागवदनिवर्त्यं पुण्यापुण्यात्मकं पापं यस्य स यमैर्नियमैश्च विजितान्यक्षाणीन्द्रियाण्यनिलः प्राणः आशयोऽन्तः-करणं च येन स ब्रह्मणा परमात्मनात्मानं प्रत्यगात्मानं युयुजे। अधिकरणस्यैव करणत्वविवक्षया तृतीया ब्रह्मण्यात्मानं युयुजे ब्रह्मात्मकं स्वात्मानमनुसंहितवानित्यर्थः ॥ ३८ ॥ ❀ ❀ स्थाणुरिवैकत्र देशे दिव्यं वर्षशतं निश्चल आस्ते उपविष्टवान्। भगवति वासुदेवे रतिमनुरागात्मिकां भक्तिमुद्वहन् कुर्वन्नन्यच्छरीरादिकं न वेद न सस्मार ॥ ३९ ॥ ❀ ❀ स मलयध्वजः साक्षाद् द्रष्टारमात्मानं परमात्मानमात्मनि जीवात्मानं व्यापकतया विलक्षणतया व्यापकत्वरूपवैलक्षण्येनेत्यर्थः विद्वान्स्वप्न इवामृश्य स्वप्न इवानित्यं देहवृत्तान्तमामृश्य तस्माद्विरराम केवलपरमात्मानुसन्धानपरोऽभूदित्यर्थः ॥ ४० ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

अर्बुदमर्बुदमित्यनेन सत्यो वृत्तयो गृह्यन्ते, मही शास्त्रविरुद्धविषयलक्षणमन्वन्तरं मनुष्यजीवनावधिपरं शतवर्षं प्रारब्धपुण्यवशात् बुद्ध्यावरणादिभिः प्राणैरिन्द्रियैरेव विषयान् भुङ्क्त इत्यर्थः ॥ ३१ ॥ ❀ ❀ "स्त्यै ष्ट्यै शब्दसङ्घाते" इति धातोः, अगं भगवन्तं स्त्यायति शब्दसमूहेन स्तुतिं करोतीत्यगस्त्यो भक्तः। प्राक्त्रं पुरातनं श्रीनारायणं दोग्धीति दुहिता भक्तिस्ता-मुपयेमे संसारनिवर्त्तने शक्तिमत्तयाचलामकरोदित्यर्थः। कीदृशीं ब्रह्मचर्यादिव्रतसाध्यां दृढं च्युतः पुत्रादिस्नेहो यस्मात्स दृढच्युतः पूर्वस्माद्विरागो दृढतरोऽभूदित्यर्थः। इध्मवासो गुरुकुलवास एवात्मजो यस्य स तथा वैराग्यादेव गुरुकुलवासो भवति "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इति श्रुतेः 'सौम्येमाः समिध आह-रे'ति च ॥ ३२ ॥ ❀ ❀ वैराग्यादिसम्पत्त्या राजत इति राजा विवेकित्वादृषिः राजा चासावृषिश्चेति राजर्षिः वैराग्यविवेकज्ञान-सम्पन्नः शुद्धवासनाङ्कितः पुरुषस्तनयस्थानीयेभ्यो विरागादिभ्य इन्द्रियेभ्यो वा क्ष्मां शास्त्रलक्षणां भोग्यलक्षणां वा विभज्येदं श्रोतव्यं नेदमिति विविच्यायं विषयः सेवनीयो नायमिति कुलाचलं निश्चलं वासार्थं गुरुकुलं जगाम। वैराग्यादिगुणसंपन्नः शरीरयात्रानि-र्वाहकविषयभोगी गुरुकुलसन्निधिमवात्सीदित्यर्थः। कृष्णं पूर्णानन्दमाराध्यापरोक्षीकर्तुकाम इत्यर्थः ॥ ३३ ॥ ❀ ❀ मदिरेक्षिस्तां रातीति मदिरं तादृशमीक्षणं ज्ञानं यस्यां सा तथा शुद्धज्ञाना विषयानुषङ्गं विहाय तदनुसारिणी बभूवेति पाण्ड्येशमन्वपद्यतेत्य-भिप्रायः। अत्र सुतशब्देन रागादयो लक्ष्यन्ते तान् विहायेत्यर्थः। मुक्तावपि बुद्ध्यात्मनो राहित्यम् नास्तीति दर्शयितुं ज्योत्स्नेवेति ॥ ३४ ॥ ❀ ❀ तत्र गुरुकुलवासे चन्द्रवदाह्लादकं निर्मलं च वदति-ज्ञापयतीति वेदान्तशास्त्रं ययौ। चन्द्रमदेति पाठे शसाविति-सूत्राद्धकारस्य मकारः, चन्द्रबिम्बं विषयीकरोतीति वा नाम लोकप्रसिद्धं "पर्ण आच्छादन" इति धातोः ताम्रं

रजस्तमश्च पर्णयत्याच्छादयति परिभवतीति ताम्रपर्णी वेदान्तव्याख्या तश्चामरश्चेति ताम्रं ब्रह्म पृणातीति प्रकाशलक्षणं दानं करोतीति वा "पृण-दान" इति धातोः नदीवत्पदवर्णस्वरूपलक्षणप्रवाहात् श्रोतॄणामुदकवदाह्लादजननाद्वा वरोदका तस्या व्याख्यायाः प्रकाशितैः पुण्यैः शोधकैः सलिलैर्युक्तिलक्षणैरात्मनोऽन्तःकरणस्य उभयत्र प्रतिवादिनिमित्तवाह्यं दुर्युक्तिमलं संशयाद्यान्तरमलं मृजन् शोधयन् ॥ ३५ ॥ ❀ ❀ "मूल प्रतिष्ठायाम्" इति धातोः मूलं जगदाधारं ब्रह्म फलन्ति निष्पादयन्तीति मूलफलानि तैः कं सुखं ददातीति कन्दं मिताशनं तदादिर्येषां मितस्वापादीनां तानि कन्दादीनि योगसाधनानि तैः। 'नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः।' इति स्मृतेः पुष्पवन्मृदुलैः पर्णैराच्छादनैरुद्गतमकं दुःखं येभ्यस्तान्युदकानि तृणानि आस्तरणानि तैरेतैश्च वर्तमानः शरीरयात्राङ्कुर्वाणः गं ज्ञानङ्गमयतीति गात्रमज्ञानं कर्शयत्यल्पीकरोतीति गात्रकर्शनं "तप आलोचन" इति धातोरालोचनं मननमनुतिष्ठन् ॥ ३६ ॥ ❀ ❀ शीतोष्णादीनि द्वन्द्वान्यजयत् सहमानो वर्तत इत्यन्वयः। शीतोष्णादिशब्दैः कामादयो लक्ष्यन्ते इति ज्ञातव्यमुभयेषां शरीराधिकरणत्वात् ॥ ३७ ॥ ❀ ❀ तपसा मननलक्षणेन जातया विद्यया ज्ञानेन नियमादिभिश्च पक्वकषायः शिथिलीकृतपाप आत्मानमन्तःकरणं ब्रह्मणा युयुजे विषयेभ्य आनीय श्रीनारायणेन सह वर्तमानमकरोत् तदेकनिष्ठमकुरुतेत्यर्थः। यद्वात्मानमन्तर्यामिरूपं ब्रह्मणा व्याप्तिरूपेण युयुजे एकत्वेन दध्यावित्यर्थः। विजिताक्षानिलाशयो वशीकृतेन्द्रियप्राणान्तःकरणः आशयोऽभिलाषो वा ॥ ३८ ॥ ❀ ❀ स्थाणुरिव स्थित एकत्र गुरुकुले श्रुतमतः शास्त्रे बुद्धिप्रसादजनके विविक्तस्थाने वा दिव्यं वर्षशतं बहुकालमुपासीन आस्त इत्यन्वयः। मुक्तिसाधनं भक्तिरेव नान्यदिति तस्या अतिशयः। फलमाह वासुदेव इति। उपासको वासुदेवे भगवति वेदान्तविचारनिर्णीतगुणरत्नाकरे हराबुपासनालक्षणां रतिमुद्वहन् कुर्वन्नन्यत्स्वतन्त्रं वस्तु न वेद किन्तु सर्वं तदधीनमेव ज्ञातवानित्यर्थः ॥ ३९ ॥ ❀ ❀ ननु ब्रह्मव्यतिरिक्तस्य वस्तुनोऽभावादेकमेवाद्वितीयमिति श्रुतेरेतदेव नान्यद्वेदेति प्रतीत एवार्थः किं न स्यादिति तत्राह स व्यापकतयेति। स आमृश्य विचार्यात्मनि जीवे स्थितं साक्षिणं "स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति" इति श्रुतेः। साक्षात् द्रष्टृत्वेन वर्त्तमानं स्वप्ने यथा परतन्त्रतया जीवं पश्यति तथा अन्यदपीति विद्वांस्तथात्मानं परमात्मानम् व्यापकतया सर्वव्यापित्वेन चेतनात्मकजगद्व्यतिरिक्ततया च विद्वान् विरराम संसाराद्विरक्तो जीवन्मुक्त्यवस्थामापेत्यन्वयः। यद्वात्मानं व्यापकतयात्मनि जीवे व्यतिरिक्ततया च विद्वान् स्वप्न इव स्वतन्त्रं साक्षिणं जीवं परतन्त्रमामृश्य निश्चित्य विररामेति हेत्यनेन जीवस्यास्वातन्त्र्ये हरेस्तदन्यत्वे "यतः स्वप्नो न स्वतन्त्रस्ततस्तद्दर्शकः परः। जीवादन्यस्तु विज्ञेयः स विष्णुरवधार्यताम् ॥" इति प्रसिद्धिः सूच्यते ॥ ४० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अगस्त्योऽपि तत्रस्थोऽपि महाभागवतस्तत्तुल्योऽन्यो वा कश्चित् प्राक् प्रथमजां दुहितरं कृष्णसेवारतिमुपयेमे स्वीकृतवान्। स्वसम्मतत्वेनानुमोदितवानित्यर्थः। धृतानि शमदमादीनि व्रतानि यया तां रतिं यस्यां तत्स्वीकृतायां दृढो विघ्नसम्भावनारहितोऽसौ च्योततीति च्युतः सर्वेन्द्रियासेचकश्च यः स भक्तियोगो जातः, दृढत्वे हेतुः मुनिर्मननसिद्ध इत्यर्थः। ततश्च इध्मवाहः शिष्यीभूता वैष्णवा एव बहवः आत्मजाः सहाया यत्र तादृशोऽभूत् ॥ ३२ ॥ ❀ ❀ आरिराधयिषुः कृष्णमित्युपरिष्टादस्य तपो ज्ञानाभ्यासनमपि श्रीपृथुवदेव व्याख्येयं, कुलाचलं मलयम् ॥ ३३ ॥ ❀ ❀ मदयतीति मदिरे श्रीभगवद्रूपे ईक्षणं यस्याः पाण्ड्येशरूपं गुरावीश्वरभावेनेत्यर्थः ॥ ३४ ॥ ❀ ❀ तत्रेति युग्मकम्। चन्द्रवटं नामेति चित्सुखः, कन्दादिभिरिति चित्सुखपुण्यारण्यौ ॥ ३५-३७ ॥ ❀ ❀ आत्मानं शुद्धजीवं ब्रह्मणि सर्वाश्रये भगवति युयुजे तदेकाश्रयत्वेन सस्मार। सूर्यैकाश्रयत्वे रश्मिपरमाणुमिव ॥ ३८ ॥ ❀ ❀ तथा स्मरणेन च तस्मिन् रतिरव्यवच्छिन्ना जातेत्याह। आस्त इति ॥ ३९ ॥ ❀ ❀ ततश्च सर्व्ववैलक्षण्येन भगवद्विज्ञानं जातमित्याह स इति। आत्मनि शुद्धजीवेऽधिष्ठाने आत्मानं तदधिष्ठातारं परमात्मानं सर्वव्यापकव्यतिरिक्तस्वरूपतया च विद्वान् जानन् तदर्वाक्ज्ञेयाद्विरराम। व्यापकत्वेन व्यतिरिक्तत्वेन दृष्टान्तः। स्वप्ने तत्रत्यसर्वप्रपञ्चतद्द्रष्टारमिवेति आमर्शेऽत्र आमृश्येति सम्बन्धोक्तिः ॥ ४० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तेषामेकैकस्यार्बुदमर्बुदमिति पुत्रपौत्रादिभेदान् पक्षे श्रवणादीनां प्रत्येकं नामलीलादिभेदैर्नामादीनाञ्च प्रत्येकमवतारभेदैस्तेषामपि दास्यसख्याद्यभिरुचितत्त्वभेदैरित्येवमसंख्या एव प्रकारा इत्यर्थः। यदुक्तं "भक्तियोगो बहुविधो मार्गैर्भामिनि! भाव्यते" इति। येषां वंशधरैर्यैतः प्रवृत्तैः सम्प्रदायभेदैः कृत्स्ना मही मन्वन्तरं ततः परं च भोक्ष्यते अविद्याकामकर्मभ्योऽपि रक्षिष्यते ॥ ३१ ॥ ❀ ❀ प्राग्दुहितरं प्रथमजातां दुहितरमगस्त्य उपयेमे। पक्षे अगानि स्वतो गत्यसमर्थानीन्द्रियाणि स्त्यायति सङ्घातयति स्वेन मिलितीकरोतीत्यगस्त्यो मनः स कृष्णसेवारुचिं स्वीचकार दृढानि दयाक्षमादीनि व्रतानि यस्यां यतो वा महत्कृपया जीवस्य मनः कृष्णसेवासक्तं बभूवेत्यर्थः। यस्यामसितेक्षणायां दृढेभ्यः सत्यलोकादिभ्योऽपि च्युतस्तद्रहितः इहामुत्रभोगे विरागो जात इत्यर्थः। यद्वा दृढेभ्यो ज्ञानादिभ्यस्तत्साध्येभ्यो मोक्षादिभ्यश्च

च्युतः मनसः कृष्णसेवारुच्येकतानत्वादन्यसाधनसाध्यस्पृहाराहित्यं जातमित्यर्थः। कथंभूतः इध्मवाह आत्मजो यस्य सः "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इत्यादिश्रुतिप्रसिद्धा समिद्वहनोपलक्षिता गुरूपसत्तिरभूदित्यर्थः। कथापक्षे अगस्त्यस्य पुत्रो दृढच्युतः तस्य पुत्र इध्मवाह इति मलयध्वजस्य कन्यावंश उक्तः॥ ३२॥ ❀ ❀ क्ष्मां विभज्य तत्र तत्र श्रवणादिभक्तिभेदं प्रवर्त्त्यैत्यर्थः। कुलाचलमेकान्तस्थलं भक्तिप्रदं वेङ्कटादिपर्व्वतं वा॥ ३३॥ ❀ ❀ सुतान् हित्वेति पतिव्रता पत्युरिव गुरोः सेवायां प्रवृत्तः शिष्यः श्रवणकीर्त्तनादीन्यपि भोगान् तदुत्थान् प्रेमानन्दानपि गृहान् तदुचितविविक्तस्थलमपि नैवापेक्षेत श्रीगुरुसेवयैव सुखेन सर्व्वसाध्यसिद्ध्यर्थमित्युपदेशो व्यञ्जितः। माद्यति हृष्यतीति मत् इरा वाणी हृष्यन्त्यां वाण्यां वेदलक्षणायामेव ईक्षणं यस्याः। गुरुसेवाया एव वेदेन सर्व्वाधिक्यस्योक्तत्वादित्यर्थः। मदयतीति मदिरं श्रीभगवद्रूपं तत्रेक्षणं यस्या इति सन्दर्भः। कथापक्षे तु मदिरा ईक्षणयोर्यस्याः सा परमतरुण्यपीत्यर्थः॥३४-३५॥ ❀ ❀ उभयत्र अन्तर्बहिश्चात्मनो मलं क्षालयंस्तप आस्थितः। तस्य तपश्चरणं पृथुवदत्युत्कण्ठामूलकमेव व्याख्येयम्॥ ३६-३७॥ ❀ ❀ ब्रह्मणि उत्तरश्लोकस्पष्टीभूतार्थे वासुदेवे आत्मानं मनः॥ ३८॥ ❀ ❀ तादृशस्मरणभक्त्या भगवति रतिरव्यवच्छिन्ना जातेत्याह। आस्त इति॥ ३९॥ ❀ ❀ तादृशरत्या च सर्वत्र भगवत्स्फूर्त्तिरभूदित्याह स इति। व्यापकतया जातरतित्वेन सर्वास्वेव दिक्षु स्फुरद्ब्रह्मरूपतया विद्वान् जानन् तदप्यात्मनि स्वस्मिन् व्यतिरिक्ततया वियुक्तत्वेनैव जानन् प्रेमोत्कण्ठातापेन विरराम मूर्च्छां प्रापेत्यर्थः। विरहोत्थस्फूर्त्तिजनितभगवद्दर्शनेन विरहो न शाम्यतीत्यत्र दृष्टान्तः स्वप्न इव जानन्। नहि स्वप्ने भुक्तेनौदनादिना स्वप्नोत्थितस्य जनस्य क्षुधा शाम्यतीत्यर्थः। ननु स्फूर्त्तौ किं प्रमाणमित्यतो विशिनष्टि आमर्शो नामान्तःकरणवृत्तिः स एव साक्षी न तु लोचनं यत्र तम्। अन्तःकरणवृत्तीनां विरहसन्तापानपगमात् लोचनाभ्यां तद्दर्शनमपि तत्स्फूर्त्तिजनितमेवेत्यनुभवादिति भावः॥ ४०॥

### श्रीमच्छुकदेवकृतः सिद्धांतप्रदीपः

तेषां श्रवणादीनामेकैकस्य अर्बुदमर्बुदमभवन् बहवो भेदा अभवन्नित्यर्थः। यद्येषां वंशधरैः पुत्रपौत्रैर्मन्वन्तरम्। ततोऽपि परं सर्वदेत्यर्थः। मही भोक्ष्यते अधर्मतो रक्षिष्यते॥ ३१॥ ❀ ❀ प्राग्दुहितरं श्रीकृष्णसेवारुचिं धृतव्रतां धृतं कृष्णप्रावण्यरूपं व्रतं यया ताम् अङ्गानि स्त्यायति चालयतीत्यगस्त्यो जीवान्तःकरणं कथंभूतः मुनिर्यन्ता सारार्थावगन्ता उपयेमे स्वीकृतवान् यस्याम् "स गुरुमेवाभिगच्छेत् समित्पाणिः" इति श्रुतेरिध्मवाहो मुमुक्षुस्तस्य आत्मजः आत्मजवत् हित इत्यर्थः। यतो दृढच्युतः दृढा अतिरोहितामुष्मिकभोगवासना च्युता यतः स विरागो जातः॥ ३२॥ ❀ ❀ मलयध्वजो वैदर्भ्या गुरुरूपः पतिः क्ष्मां तनयेभ्यो विभज्य जगत्यां श्रीकृष्णश्रवणादीन्यवस्थाप्य कुलाचलं कुलं श्रीकृष्णभजनोपकरणसमूहोऽचलं सुदृढं यत्र तदेकान्तं श्रीकृष्णाराधनस्थानं जगाम॥ ३२॥ ❀ ❀ अथ पुरञ्जनस्य स्त्रीध्यानात्स्त्रीत्वं प्राप्तस्य विषयेभ्यो विरक्तस्य पतिरूपगुरुभक्तिं प्रपञ्चयति हित्वेत्यादिना। मदयतीति मदिरमितरराविस्मारणमीक्षणं यस्याः सा॥ ३४॥ ❀ ❀ तत्र मलयध्वज इति शेषः श्रीकृष्णाराधनस्थाने चन्द्रमसाद्युपलक्षिताः भरतखण्डस्था या नद्यस्तासां पुण्यैः सलिलैरुभयत्रान्तर्बहिश्च आत्मनो मलं मृजन् तप आस्थित इत्युत्तरेणान्वयः। चन्द्रमसादि नदीविशेषोक्तिः॥ ३५-३७॥ ❀ ❀ पक्का भर्जिताः कषायाः कामादिवासना यस्य सः, विजितान्यक्षाणीन्द्रियाणि अनिलः प्राणः आशयो मनश्च येन सः॥ ३८॥ ❀ ❀ स्थाणुरिव स्थिरो निश्चलः एकत्र दिव्यं वर्षशतमास्ते उपविष्टवान् वासुदेवे रतिमुद्वहन् अन्यत् न वेद। दिव्यं वर्षशतमित्यनेन गार्हस्थ्यं परित्यज्य श्रीकृष्णाराधने स्वजीवनकालं योजितवानित्यर्थः। अन्यन्न वेदेत्यनेन समाधिदार्ढ्यमुक्तम्॥ ३९॥ ❀ ❀ आत्मानात्मपरमात्मपदार्थानां मध्ये परमात्मानं रतिविषयत्वेन वेदेत्युक्तमथात्मानं ज्ञातृत्वेन अनात्मानं देहादिकमनित्यत्वेन जानन् अनात्मतो विरक्तोऽभूदित्याह व्यापकतयेति। स्वप्ने अमर्षः अन्तःकरणवृत्तिविशेषस्तत्साक्षिणं यथा अमर्षव्यतिरिक्ततया जानाति तथा आत्मनि देहे व्यतिरिक्ततया देहभिन्नतया आत्मानं तत्साक्षिणं व्यापकतया काञ्चनादिगतसुखदुःखज्ञातृत्वेन धर्मेण पूर्णतया विद्वान् विरराम देहाद्यनात्मदर्शनादिति शेषः॥ ४०॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

तेषां पुत्राणामेकैकस्य पुत्रस्य पुत्राणामर्बुदं अभवत्। यद्वंशधरैः येषां पुत्राणां वंशप्रभवैस्ततः परं तदनन्तरं मन्वन्तरपर्यन्तं मही भोक्ष्यते इत्यन्वयः। हे राजन्निति सम्बोधनेन तस्यापि वंशपरम्परा राज्यसमृद्धिश्च महत्यासीदित्यहमेव महाराज इति गर्वं त्यजेति दर्शयति। पक्षान्तरे तु—निरन्तरमभ्यस्यमानानां श्रवणादीनां प्रत्येकमनन्तप्रकारा जाताः। येषां वंशधरैः प्रकारभेदैः मही भोक्ष्यते महीवर्त्तिनः प्राणिनोऽविद्याकामकर्मभ्यो रक्षिष्यन्ते इत्यर्थः॥ ३१॥ ❀ ❀ मलयध्वजस्य प्राक् प्रथमां तां दुहितरं धृतव्रतां अगस्त्य उपयेमे विवाहितवानित्यन्वयः। यस्यां दृढच्युतो मुनिर्जातः। इध्मवाहः आत्मजः पुत्रो यस्य सः, तस्येध्मवाहनामकः पुत्रो जात इत्यर्थः। पक्षान्तरे तु—प्राग्दुहितरं प्रथमजातां श्रवणसेवादिरुचिम्, धृतानि व्रतानि दृढतया

शमदमादिपूर्वकाणि श्रवणसेवादिनियमादीनि यया ताम्, अगस्त्यः अगानि स्वतो गतिरहितानि देहेन्द्रियादीनि स्त्यायति सङ्घातयति मिलितीकरोतीत्यगस्त्यो मनः स उपयेमे, जीवस्य मनो भगवच्छ्रवणसेवारुचिं अत्याग्रहेणाङ्गीकृतवानित्यर्थः। यस्यां श्रवणादिरुच्यां सत्यां मनसो दृढेभ्योऽपि ब्रह्मलोकादिभोगसुखेभ्यश्च्युतिर्जाता, इह पुत्रविषयभोगेभ्यो वैराग्यं जातमित्यर्थः। तदेवोपशमात्मकत्वान्मुनिः। तत इध्मवाहो जातः। "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इत्यादिश्रुतिप्रसिद्धा समिद्वहनोपलक्षिता गुरुसेवासक्तिर्वैराग्याज्जाता, वैराग्यरहितस्य तदसम्भवादित्यर्थः। तथा च सत्सङ्गतो निरन्तरं भगवत्सेवाश्रवणादि कुर्वतः सर्वतो विरक्तस्य सद्गुरुमुपासमानस्य देहेन्द्रियादीनां भगवत्परत्वेन तत्रात्यन्तात्माध्यासाभावात् माहात्म्यज्ञानपूर्वकसुदृढसर्वतोऽधिकस्नेहेन भगवद्भजनं निरूपितम्॥ ३२॥ ❀ ❀ ततश्च कृष्णमारिराधयिषुः सन् राजर्षिर्मलयध्वजस्तनयेभ्यः स्वपुत्रेभ्यः क्ष्मां पृथ्वीं विभज्य विभागेन दत्त्वा स्वयं कुलाचलं पर्वतं जगामेत्यन्वयः। पक्षान्तरे तु—यद्यप्यन्यदेहाद्यध्यासो नास्ति तथापि अहं शास्त्रानुसारिसाधनैर्भगवन्तं आराध्य कृतार्थो भविष्यामीत्यहङ्कारमात्रमवशिष्यते, तत्राहङ्कारनिवृत्तिपूर्वकभगवदधीनतया स्थितिप्रकारं दर्शयति—विभज्येत्यादिना वासुदेवे भगवतीत्यन्तेन। तनयेभ्यः क्ष्मां विभज्य पृथ्व्यां श्रवणादिभक्तिभेदानवस्थाप्य मलयध्वजो गुरुगृहेषु सर्वथाऽहंकारस्त्यागस्याशक्यत्वं ज्ञात्वा तद्विना भगवत्प्रसन्नताया असंभवात् तत्त्यागेन भगवदाराधनार्थं कुलाचलं पुण्यक्षेत्रमेकान्तदेशं महद्भिः सेवितं जगामेत्यर्थः॥३३॥ ❀ ❀ वैदर्भी मदिरेक्षणा मदयतीति मदिरमीक्षणं यस्याः सा तथा युवावस्थापन्नापि गृहादीन् हित्वा त्यक्त्वा पाण्ड्येशं मलयध्वजं स्वपतिमन्वधावत तत्सेवार्थं स्वयमपि तेन सहैव कुलाचलं जगामेत्यर्थः। तस्याः पतिव्रतात्वेन तद्वियोगासहमानायास्तत्साहित्ये दृष्टान्तमाह—ज्योत्स्नेवेति, यथा चन्द्रं ज्योत्स्ना तत्सहैव कुलाचलं गच्छति तथेत्यर्थः। पक्षान्तरे तु—हित्वा सुतानिति बहिर्निर्गतस्य न पूर्ववच्छ्रवणादिकमिति ज्ञेयम्, यद्वा लोकप्रसिद्धानेव गृहादीन् हित्वेति ज्ञेयम्। सर्वतो विरक्तत्वात् वैदर्भी पूर्वं पुरञ्जनत्वेनोक्त इदानीं विदर्भगृहे जातः शिष्यतां प्राप्तो जीवः मदयतीति मदिरं भगवद्रूपं तत्रेक्षणं यस्य सः पाण्ड्येशं गुरुमन्वधावत। पतिं पतिव्रतावद् गुरुसेवार्थं तेन सहैव जगामेत्यर्थः॥ ३४॥ ❀ ❀ तत्र मलयध्वजस्य साधनपूर्वकमुक्तिप्रकारं दर्शयति—तत्रेति नवभिः। तत्र देशे चन्द्रवसाद्या नद्यस्तासां पुण्यैः सलिलैर्नित्यमुभयत्र अन्तर्बहिश्चात्मनो मलं क्षालयंस्तप आस्थित इत्युत्तरेणान्वयः। पक्षान्तरे—गुरुस्तपसि स्थित इत्यर्थः॥ ३५॥ ❀ ❀ कन्दैः अस्थिभिः बीजैः मूलैः पुष्पैः पर्णैः तृणैः उदकैश्च वर्तमानो देहादिस्थितिं सम्पादयन् शनैर्गात्रकर्शनं शरीरशोषकं तपः कृतवानित्यर्थः॥ ३६॥ ❀ ❀ शीतोष्णादीनि द्वन्द्वसञ्ज्ञानि अजयत् सेहे, प्राप्तानि तानि न गणितवानित्यर्थः। तत्र हेतुमाह—समदर्शन इति। समे भगवति वासुदेवे दर्शनं दृष्टिर्यस्य सः। अतो देहाद्यनुसन्धानाभावान्न शीताद्यनुसन्धानमिति भावः॥ ३७॥ ❀ ❀ समदर्शनत्वमेव विशदयति—तपसेति द्वाभ्याम्। तपसा कन्दमूलाद्याहारादिना, विद्यया नानाविधवैदिकोपासनया जपादिनियमैः, हिंसानृतपरिहारादियमैश्च पक्वा निर्दग्धाः कषायाः गैरिकादिकषायरूपवद् दुर्निवाराः कामक्रोधादयो मलानि यस्य सः, अत एव विजिता अक्षादयो येन सः। अक्षाणीन्द्रियाणि, अनिलः प्राणः, आशयः अन्तःकरणम्। ब्रह्मण्यात्मानं युयुजे ब्रह्मात्मनोरैक्यं भावयामासेत्यर्थः॥ ३८॥ ❀ ❀ एवमैक्यं भावयन् स्थिरः अनुद्विग्नचित्तः सन् दिव्यवर्षशतपर्यन्तं स्थाणुरिवैकत्र स्थान आस्ते स्मेत्यन्वयः। एवं शुद्धान्तःकरणस्य निर्जितकार्यकारणसङ्घातस्य ब्रह्मात्मैक्यं भावयमानस्यापि अहं प्रयत्नेन साक्षात्कारं सम्पादयिष्ये इत्यहङ्कारदोषाद्यदि ब्रह्मात्मैक्यसाक्षात्कारो न जातस्तदा भगवदधीनमेतदिति निश्चयेन भगवत्परतया स्थितो जात इत्याह—वासुदेव इति, वासुदेवे सर्वनियन्तरि भगवति ऐश्वर्यादिषड्गुणपूर्णे रतिं प्रीतिप्रवाहमुद्वहन् अन्यद्देहादिप्रपञ्चजातं न वेद न ज्ञातवानित्यर्थः॥ ३९॥ ❀ ❀ तदा तस्य ज्ञानं जातं तेन विमुक्तो जात इत्याह—स इति। स एवं भगवत्परतया वर्त्तमानो मलयध्वजः आत्मनि कार्यकारणसङ्घात एव वर्त्तमानमात्मानं व्यापकतया ब्रह्मतया विद्वान् जानन् विरराम ह देहाद्यध्यासं त्यक्त्वा देहादिसङ्घातं त्यक्तवान् विमुक्तो जात इत्यन्वयः। हेत्याश्चर्ये। अहो भगवद्भक्तेराश्चर्यमिति भावः। ननु कथं देहाद्यावृतस्य व्यापकता सम्भवति तत्राह—व्यतिरिक्ततयेति, देहाद्युपाधितो व्यतिरिक्ततयेत्यर्थः। देहाद्युपाध्यनुसन्धानाभावादिति भावः। ननु ब्रह्मःवज्ञानस्यापि ब्रह्माकारान्तःकरणवृत्त्यवच्छिन्नचैतन्यात्मकत्वात् कथं तदवच्छिन्नस्य व्यापकतेत्यत आह—आमर्शसाक्षिणमिति; आमर्शो नामान्तःकरणवृत्तिः तत्साक्षिणं, तस्या जडायाः प्रकाशकमित्यर्थः। वृत्त्यवच्छिन्नत्वं नाम वृत्त्यध्यस्तत्वमेव, इदानीमध्यासस्य निवृत्तत्वान्न तत्परिच्छेद इति भावः। तदेव दृष्टान्तेनोपपादयति—स्वप्न इवेति, यथा स्वप्नद्रष्टुः पुरुषस्य स्वप्नादुत्थितस्य जागरे स्वप्नदृष्टान्तःकरणाध्यासेनाध्यस्तान् पदार्थान् स्मरतोऽप्यध्यासस्य निवृत्तत्वात्तैः परिच्छेदो न भवति तथेत्यर्थः॥ ४०॥

## भाषानुवादः

राजन्! फिर उनमेंसे प्रत्येक पुत्रके बहुत-बहुत पुत्र उत्पन्न हुए, जिनके वंशधर इस पृथ्वीको मन्वन्तरके अन्ततक तथा उसके बाद भी भोगेंगे॥ ३१॥ ❀ ❀ राजा मलयध्वजकी पहली पुत्री बड़ी व्रतशीला थी। उसके साथ अगस्त्य ऋषिका विवाह हुआ। उससे उनके दृढच्युत नामका पुत्र हुआ और दृढच्युतके इध्मवाह हुआ॥ ३२॥ ❀ ❀ अन्तमें राजर्षि मलयध्वज पृथ्वीको पुत्रोंमें बाँटकर भगवान् श्रीकृष्णकी आराधना करनेकी इच्छासे मलयपर्वतपर चले गये॥ ३३॥

❀ ❀ उस समय—चन्द्रिका जिस प्रकार चन्द्रदेवका अनुसरण करती है—उसी प्रकार मत्तलोचना वैदर्भीने अपने घर, पुत्र और समस्त भोगोंको तिलाञ्जलि दे पाण्ड्यनरेशका अनुगमन किया ॥ ३४ ॥ ❀ ❀ वहाँ चन्द्रवसा, ताम्रपर्णी और वटोदका नामकी तीन नदियाँ थीं। उनके पवित्र जलमें स्नान करके वे प्रतिदिन अपने शरीर और अन्तःकरणको निर्मल करते थे ॥ ३५ ॥ ❀ ❀ वहाँ रहकर उन्होंने कन्द, बीज, मूल, फल, पुष्प, पत्ते, तृण और जलसे ही निर्वाह करते हुए बड़ा कठोर तप किया। इससे धीरे-धीरे उनका शरीर बहुत सूख गया ॥ ३६ ॥ ❀ ❀ महाराज मलयध्वजने सर्वत्र समदृष्टि रखकर शीत-उष्ण, वर्षा-वायु, भूख-प्यास, प्रिय-अप्रिय और सुख-दुःखादि सभी द्वन्द्वोंको जीत लिया ॥ ३७ ॥ ❀ ❀ तप और उपासनासे वासनाओंको निर्मूल कर तथा यम-नियमादि के द्वारा इन्द्रिय, प्राण और मनको वशमें करके वे आत्मामें ब्रह्मभावना करने लगे ॥ ३८ ॥ ❀ ❀ इस प्रकार सौ दिव्य वर्षोंतक स्थाणुके समान निश्चलभावसे एक ही स्थानपर बैठे रहे। भगवान् वासुदेवमें सुदृढ़ प्रेम हो जानेके कारण इतने समयतक उन्हें शरीरादिका भी भान न हुआ ॥ ३९ ॥ ❀ ❀ राजन्! गुरुस्वरूप साक्षात् श्रीहरिके उपदेश किये हुए तथा अपने अन्तःकरणमें सब ओर स्फुरित होनेवाले विशुद्ध विज्ञानदीपकसे उन्होंने देखा कि अन्तःकरणकी वृत्तिका प्रकाशक आत्मा स्वप्नावस्थाकी भाँति देहादि समस्त उपाधियोंमें व्याप्त तथा उनसे पृथक् भी है। ऐसा अनुभव करके वे सब ओरसे उदासीन हो गये ॥ ४०-४१ ॥

साक्षाद्भगवतोक्तेन गुरुणा हरिणा नृप। विशुद्धज्ञानदीपेन स्फुरता विश्वतोमुखम् ॥ ४१ ॥
परे ब्रह्मणि चात्मानं परं ब्रह्म तथाऽऽत्मनि। वीक्षमाणो[1] विहाये[2]क्षामस्मादुपरराम ह ॥ ४२ ॥
पतिं परमधर्मज्ञं वैदर्भी मलयध्वजम्। प्रेम्णा पर्यचरद्धित्वा भोगान् सा पतिदेवता ॥ ४३ ॥
चीरवासा व्रतक्षामा वेणीभूतशिरोरुहा। बभावुपपतिं शान्ता शिखा शान्तमिवानलम् ॥ ४४ ॥
अजानती प्रियतमं यदोपरतमङ्गना। सुस्थिरासनमासाद्य यथापूर्वमुपाचरत् ॥ ४५ ॥
यदा नोपलभेताङ्घ्रावूष्माणं पत्युरर्चती। आसीत्संविग्नहृदया यूथभ्रष्टा मृगी यथा ॥ ४६ ॥
आत्मानं शोचती दीनमबन्धुं विक्लवाश्रुभिः। स्तनावासिच्य विपिने सुस्वरं प्ररुरोद सा ॥ ४७ ॥
उत्तिष्ठोत्तिष्ठ राजर्षे इमामुदधिमेखलाम्। दस्युभ्यः क्षत्रबन्धुभ्यो बिभ्यतीं पातुमर्हसि ॥ ४८ ॥
एवं विलपती बाला विपिनेऽनुगता पतिम्। पतिता पादयोर्भर्तू रुदत्यश्रूण्यवर्तयत् ॥ ४९ ॥
चि[3]तिं दारुमयीं चित्वा तस्यां पत्युः कलेवरम्। आदीप्य चानुमरणे विलपन्ती मनो दधे ॥ ५० ॥

अन्वयः—नृप साक्षात् भगवता हरिणा गुरुणा उक्तेन विश्वतोमुखम् स्फुरता विशुद्धज्ञानदीपेन ( अस्य श्लोकस्य ४० श्लोकेन सम्बन्धः-सं० ) आत्मानम् परे ब्रह्मणि तथा परम् ब्रह्म आत्मनि च वीक्षमाणः ईक्षाम् विहाय अस्मात् उपरराम ह ॥ ४२ ॥ ❀ ❀ पतिदेवता सा वैदर्भी भोगान् हित्वा परमधर्मज्ञम् पतिम् मलयध्वजम् प्रेम्णा पर्यचरत् ॥ ४३ ॥ ❀ ❀ चीरवासाः व्रतक्षामा वेणीभूतशिरोरुहा शान्ता शिखा शांतम् अनलम् इव उप पतिम् बभौ ॥४४॥ ❀ ❀ यदा अंगना—सुस्थिरासनम् उपरतम् प्रियतमम् पतिम् अजानती आसाद्य यथापूर्वम् उपाचरत् ॥ ४५ ॥ ❀ ❀ अर्चती यदा पत्युः अंघ्रौ ऊष्माणम् न उपालभेत यथा यूथभ्रष्टा मृगी संविग्नहृदया आसीत् ॥ ४६ ॥ ❀ ❀ अबंधुम् दीनम् आत्मानम् शोचती विक्लवा सा अश्रुभिः स्तनौ आसिच्य विपिने सुस्वरम् प्ररुरोद ॥ ४७ ॥ ❀ ❀ राजर्षे उत्तिष्ठ उत्तिष्ठ दस्युभ्यः क्षत्रबंधुभ्यः बिभ्यतीम् इमाम् उदधिमेखलाम् पातुम् अर्हसि ॥ ४८ ॥ ❀ ❀ एवं विलपती विपिने पतिम् अनुगता भर्तुः पादयोः पतिता बाला रुदती अश्रूणि अवर्तयत् ॥ ४९ ॥ ❀ ❀ विलपन्ती दारुमयीं चितिं चित्वा तस्याम् पत्युः कलेवरम् आदीप्य च अनुमरणे मनः दधे ॥ ५० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

केन विद्वांस्तत्राह। साक्षाद्भगवान्हरिरेव यो गुरुस्तेनोक्तेन सर्वतोमुखं यथा तथा स्फुरताऽनवच्छिन्नेन विशुद्धेन ज्ञानदीपेन ॥ ४१ ॥ ❀ ❀ तदेवाह पर इति। ब्रह्मैवाहं न संसारीति ब्रह्मण्यात्मन ईक्षणे शोकादिनिवृत्तिः अहमेव ब्रह्मेत्यात्मनि ब्रह्मण ईक्षणे ब्रह्मपारोक्ष्यनिवृत्तिः। अतो व्यतिहारेणेक्षमाणोऽस्मात्संसारादुपरराम। नन्वेवमपि जीवस्य कुतो ब्रह्मत्वापत्तिः ईक्षणस्यैव व्यवधायकत्वादित्याशंक्याह। ईक्षां विहाय दग्धेन्धनानलवत्तस्याः स्वयमेवोपशान्तेरिति भावः ॥ ४२-४३ ॥ ❀ ❀ उपपतिं पत्युः समीपे। यद्वा पत्युः किंचिन्मात्रं न्यूना तत्समाना सती बभावित्यर्थः। "उपोधिके च"

---

१. प्रा० पा०—ईक्षमाणो। २. प्रा० पा०—विहायेमामस्मा०। ३. प्रा० पा०—चितां।

इति कर्मप्रवचनीयत्वयोगे च द्वितीया । शान्तमंगारावस्थं ज्वालाया अधः स्थितमनलमुपशान्ता शुद्धा निर्धूमा ज्वाला यथा भवति तद्वत् ॥ ४४ ॥ ❀ ❀ तदानीमपि सुस्थिरमासनं यस्य अत एवाजानती यदा तदा यथापूर्वमसेवत ॥ ४५ ॥ ❀ ❀ पत्युरंघ्रिमर्चयन्ती सेवमाना यदा तस्मिन्नंघ्रावूष्माणं नापश्यत् ॥ ४६ ॥ ❀ ❀ अबन्धुं पतिरहितम् । अश्रुभिरासिच्य ॥ ४७ ॥ ❀ ❀ क्षत्रबन्धुभ्योऽधार्मिकक्षत्रियेभ्योऽपि ॥ ४८ ॥ ❀ ❀ अवर्तयत्प्रवर्तयामास ॥ ४९ ॥ ❀ ❀ तस्यां निधायाग्निदानेनादीप्य च ॥ ५० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ततश्च तस्योत्पन्नप्रेम्णो भगवतः साक्षाद्दर्शनमभूदित्याह—साक्षादेव भगवता हरिणा सन्तापहारिणा विश्वतोमुखं स्फुरता समन्तादेव प्रस्फुरत्तेजसा गुरुणा सता उक्त उपदिष्टो ज्ञानदीपः स्वमाधुर्यानुभवप्रकारस्तेन तस्मिन्नेव परे ब्रह्मणि आत्मानमीक्षमाणः वासुदेवे भगवति 'नान्यद्वेदोद्वहन्नतिम्' इति पूर्वोक्तेः । भगवति स्वरतिमुद्वहन्तमनुरागिणं पश्यन्नित्यर्थः । तथैव "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इति भगवदुक्तेः । आत्मनि स्वस्मिंश्च परब्रह्म सानुरागमीक्षमाणः तत्क्षण एव प्रचलितानन्दमूर्च्छावशाद्दीक्षां विहायास्मात्स्थूलसूक्ष्मोपाधिद्वयात् स्पष्टमेव विरराम । ऐश्वर्यपक्षीयास्तु—श्लोकत्रयमिदमेवं व्याचक्षते—स मलयध्वज आत्मानं परमेश्वरं सर्वव्यापकतया सर्वस्माच्च व्याप्याज्जगतो व्यतिरिक्ततया चात्मनि स्वस्मिन्नधिष्ठातारं विद्वाञ्ज्ञानन्विरराम संसारादिति शेषः । व्यापकत्वे व्यतिरिक्तत्वे च दृष्टान्तः—आमर्शसाक्षिणं मनआदिद्रष्टारं जीवमध्यात्मादिव्यापकम् । अथ च स्वप्ने सुषुप्तावध्यात्मादिव्यतिरिक्तमिव 'सुखमहमस्वाप्सम्' इत्यत्र तत्तद्व्यतिरिक्तस्य केवलस्यात्मन एवानुभवादिति । नन्वेतज्ज्ञानं कुतोसाववापेति तत्राह—साक्षादिति "ददामि बुद्धियोगं तं येन मामुपयान्ति ते" इति भगवदुक्तेः । तेनैव ज्ञानदीपेन परे ब्रह्मणि भगवत्याश्रयतत्त्वे आत्मानं शुद्धजीवमाश्रितं प्रेक्षमाणस्तथात्मनि शुद्धजीवे च तमेव परं ब्रह्म भगवन्तमधिष्ठातारमीक्षमाणः विहायेक्षामिति जातप्रेमत्वादन्ते तं परामर्शमपि विहायेत्यर्थः ॥ ४१ ॥ ❀ ❀ स्वामिचरणाः—तदेव अव्यवच्छिन्नज्ञानमेव । ब्रह्मणि शोकाद्यभावात्तत्रात्मनोपि तदभेददृष्ट्या शोकाद्यभाव आयातीति । आदिना मोहादिग्रहः । अतः पारोक्ष्याभावात् । अन्योन्ययोरेकीकरणं व्यतिहारः । पुनराशंकते—नन्विति । इति भाव इति । न हि काष्ठे सर्वथा दग्धे पुनरग्निस्तत्र तिष्ठतीत्याशयः । सन्दर्भस्तु—अस्माद् देहद्वयादेवोपरराम न तु तस्मात्तदीक्षाहेतुचिच्छक्त्याविर्भावादपीत्यर्थः । अनलादीनां कालवाय्वादिवत्तस्य नाशकाभावादाश्रयस्य विद्यमानत्वाच्चेत्याह ॥ ४२ ॥ ❀ ❀ तदेवं श्रीगुरुदेवस्य सिद्धिदशापर्यन्तं शिष्यास्तं परिचरन्त एव वर्त्तन्त इति दर्शयति—पतिमिति चतुर्भिः । परिचरणं हितप्रेरकत्वं, भोगानिन्द्रियद्वारेण त्यक्त्वा ॥ ४३ ॥ ❀ ❀ चीरवासाः चीरवत्स्वमहिम्ना सर्वमाच्छादयति 'कायमात्मा नभश्छदिः' इत्युक्तेः 'अत्यतिष्ठद्दशांगुलम्' इति श्रुतेश्च । य आत्मा तत्र वासो विचारद्वारा यस्यास्सा चीरवासाः । क्षमैव क्षामा स्वार्थिकोऽण्, टाबार्षः । व्रते तपश्चर्यादिलक्षणे समर्था । वेणीभूतानि संयतानि शिरोरुहाणि वृत्तिसमूहा यस्याः सा तथा । अनेन सात्त्विकयैव बुद्ध्या हरिः प्राप्यते 'दृश्यते त्वग्र्या बुद्ध्या' इति श्रुतेः । शान्तमित्यनेन धूमराहित्यमुक्तं न तु निर्वाणत्वं न हि नष्टस्याग्नेः शिखास्तीति । सामीप्यार्थे तु कुम्भस्य समीप उपकुम्भमित्यादौ षष्ठीदर्शनादत्रार्षत्वाश्रयणेन द्वितीयकणतः सुलभं पन्थानमाह—यद्वेति । इत्यर्थ इति । 'उपोधिके च' इति सूत्रबलादयमर्थ इति भावः ॥ ४४ ॥ ❀ ❀ अंगना अंगानि शिक्षादीनि विद्यन्ते यस्याः सांगना । प्रियतममत्यन्तप्रियम् । उपरतं जीवन्मुक्त्यवस्थां प्राप्तम् । अंगाभ्यासनिष्ठत्वादजानती । सुस्थिरे ब्रह्मण्यासनं स्थितिर्यस्य तं यथापूर्वं साधनावस्थायामिवोपाचरत्तत्रैवातिष्ठदित्यर्थः । कथापक्षे—तदानीमपि देहत्यागावसरेऽपि । अत एव सुस्थिरासनत्वादेव । यथापूर्वं श्रीभगवत्प्रतिमामिवाचेष्टमानमपि पाद्यादिनोपाचरदानर्चेति ॥ ४५ ॥ ❀ ❀ ऊष्माणमौष्ण्यम् । पक्षे—पत्युः शुद्धजीवस्यांघ्रौ शास्त्रविचारतीर्थगमनादौ सात्त्विकेऽपि कर्मण्यूष्माणमुत्साहं न लेभे तदा अहो सात्त्विकीमपि मामयं त्यक्तुमुद्यत इत्यतः संविग्नहृदयासीत् ॥ ४६ ॥ ❀ ❀ गुरोः साधकशरीरापगमे सति पत्युर्विच्छेदे पतिव्रतेव शिष्यस्तद्विच्छेदसन्तप्तो विलापमग्नो भवतीत्याह—आत्मानं शोचती । अतः परं मां कश्चास्यतीति शोकाकुला । अबन्धुं जीवन्मुक्तिदशायां वृत्त्यन्तरानुत्पत्तेः । स्तनौ धर्माधर्मौ । विक्लवाश्रुभिः कर्ममार्गरतैः सह विपिने संसारवने । आसिच्य सुस्वरं प्ररुरोद 'अहं ब्रह्मास्मि' इत्येवं रुरोद परिणतवतीत्यर्थः ॥ ४७ ॥ ❀ ❀ पक्षे—हे श्रीगुरो इमां पृथ्वीं त्वत्प्रवर्त्तितश्रवणादिभक्तिमतीं दस्युभ्यो भक्तिविरोधिमतेभ्यो बिभ्यतीम् । तीर्थस्तु—उदधिः कर्म तदेव मेखलास्थानीयं यस्याः सा । तथा दस्युभ्योऽहंकारादिभ्यः क्षत्रं संसाराद्रक्षकं ज्ञानं बध्नन्ति प्रतिबध्नन्तीति क्षत्रबन्धवो मिथ्याज्ञानादयस्तेभ्योपि बिभ्यतीमिमां गां रक्षितुमर्हसि । त्वदनुगृहीतया बुद्ध्याऽज्ञानादयो निवर्त्तन्त इत्यर्थः ॥ ४८ ॥ ❀ ❀ विपिने वासनावने विलपन्ती रुदती स्वामिनं विहाय स्थिताऽश्रूण्यवर्त्तयन्मुखेवाभवत् ॥ ४९ ॥ ❀ ❀ पक्षे—श्रीगुरोर्देहसंस्कारं कृत्वा श्रीमद्गुरुचरणवियुक्तोऽहं तदीयगुणानुस्मरणमयशोकदवाग्निदग्धदेहः प्राणं धर्त्तुमशक्नुवंस्तदुपदिष्टश्रवणकीर्त्तनादिभक्तौ नैव शक्तिं धास्यामि तस्मादद्यैव मरिष्यामीति शिष्यो मनसि निश्चिनोतीति दर्शयामास । तीर्थस्तु—दारुमयीं भेदविषयां चितिं संविदं कृत्वा प्रकाश्य तस्यां संविदि पत्युः कलेवरं संसारकारणमादीप्य दग्ध्वाऽनुमरणेऽनुस्यूतदोषनाशे मनो दधे तादृशीं वृत्तिं प्रकाशयन्त्याह ॥ ५० ॥

## श्रीमद्वीरराघवव्याख्या

साक्षाद् भगवान् हरिरेव गुरुः तेनोक्तेन सर्वतोमुखं स्फुरताऽकुण्ठितेन विशुद्धज्ञानदीपेन स्वपरयाथात्म्यज्ञानदीपेन ॥ ४१ ॥ ❀ ❀ आत्मानं प्रत्यगात्मानं परे ब्रह्मणि परं ब्रह्म प्रत्यगात्मनीक्षमाणः उपासने साक्षात्कुर्वन्नित्यर्थः। परे ब्रह्मणीति धारकत्वमुक्तं परं ब्रह्मेति व्यापकत्वमुक्तं तत ईक्षां विहाय उपरराम उपासनात्मकं ज्ञानं हित्वोपरराम यावदुपरममामरणमुपासितवानित्यर्थः ॥ ४२ ॥ ❀ ❀ वैदर्भी भोगान् हित्वा पतिरेव देवता यस्याः सा भगवदाराधनरूपसर्वोत्कृष्टधर्मनिष्ठं मलयध्वजं पतिं प्रेम्णा पर्यचरत्परिचर्यां चक्रे ॥ ४३ ॥ ❀ ❀ चीरं वासो वस्त्रं यस्याः सा व्रतेनानशनादिना क्षामा कृशीभूता वेणीभूता जटीभूताः शिरोरुहाः केशा यस्याः सा उपपतिं पत्युः समीपे यद्वा पत्युः किञ्चिन्मात्रं न्यूना तत्समाना सतीत्यर्थः "उपाधिके च" इति कर्मप्रवचनीयत्वेन तद्योगे द्वितीया, शान्तमङ्गारावस्थमनलं शान्ता निर्धूमा शिखा ज्वाला यथा भाति तद्वद्बभौ ॥ ४४ ॥ ❀ ❀ यदा पतिरुपरराम तदानीमपि सुस्थिरासनमासाद्यावध्यात एवोपरतं मृतं प्रियतमं पतिमजानती अङ्गना वैदर्भी यथापूर्वं पत्युरङ्घ्री उपाचरत्पर्यचरत् ॥ ४५ ॥ ❀ ❀ यदा चार्चती पत्युरङ्घ्रौ ऊष्माणं नोपलभेत नोपलब्धवती तदा संविग्नहृदया दुःखितचित्तासीदभूत् यथा स्वसमूहाद् भ्रष्टा वियुक्ता मृगी हरिणी तद्वत् ॥ ४६ ॥ ❀ ❀ अबन्धुं पतिरहितमत एव दीनमात्मानं शोचन्तीति विक्लवाश्रुभिः शोकोद्गतनेत्रजलैः स्तनावासिच्य एकान्ते सुस्वरं प्ररुरोद। हेति खेदे ॥ ४७ ॥ ❀ ❀ तदेवाह हे राजर्षे! जितेन्द्रियश्रेष्ठोत्तिष्ठोत्तिष्ठ क्षत्रबन्धुभ्योऽधार्मिकक्षत्रियेभ्यः अत एव दस्युरूपेभ्यः केवलत्रिवर्गनिष्ठेभ्यः इत्यर्थः, बिभ्यतीं भयं प्राप्नवतीं निवृत्तिमार्गलोपेन बिभ्यतीत्यर्थः इमामुदधिमेखलां समुद्रवेष्टितां भूमिं पातुं सम्यङ्निवृत्तधर्मप्रवर्तनेन रक्षितुमर्हसि ॥ ४८ ॥ ❀ ❀ पतिमनुसृत्य विजनेऽरण्ये गता बाला वैदर्भी एवं विलपन्ती भर्तुः पादयोः पतिता रुदत्यश्रूण्यवर्तयन्निवर्तयामास ॥ ४९ ॥ ❀ ❀ दारुमयीं चितिं कृत्वा विरचय्य तस्यां चितां पत्युः कलेवरं शरीरं प्रदीप्य प्रज्वाल्य विलपन्ती पत्युः पादयोरनुमरणे सह गमने मनो दधे धृतवती ॥ ५० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तर्ह्यभेदश्रुतेः कोऽभिप्राय इत्याशङ्क्य जीवान्तर्यामिणो हरेः 'ब्रह्मविदाप्नोति परमि'ति श्रुतिप्रतिपाद्यस्य व्याप्तस्यापि न कश्चिद् भेदोऽस्तीत्यर्थं इत्यभिप्रेत्याह। साक्षादिति ॥४१॥ ❀ ❀ आत्मानं जीवान्तर्यामिणमीक्षां तयोर्भेददर्शनमस्माच्छरीरात् हेत्वनेनेन अस्य प्रामाणिकत्वं द्योतयति ॥ ४२ ॥ ❀ ❀ पतिं स्वाश्रयमिन्द्रियद्वारेण भोगान्विहाय परिचरणं नाम तस्य हितप्रेरकत्वम् ॥ ४३ ॥ ❀ ❀ चीरवासाः सत्त्वगुणलक्षणवेणीचक्षुषि शिरोरुहलक्षणा वृत्तयो यस्याः सा तथा उपपतिं पत्युः स्वमनसः समीपे शान्तमित्यनेन धूमराहित्यं न तु निर्वाणत्वं, न हि नष्टस्याग्नेः शिखा। कथापक्षे यथास्थित एवार्थः अभूत् दृष्टान्तस्य सम्भवात् तस्मिन्निर्धूमता ज्वलतोऽग्नेः शिखेव निर्मलतया श्रेयसोऽन्तरङ्गमित्यर्थः ॥ ४४ ॥ ❀ ❀ इदानीं बुद्धेर्वृत्तिविशेषान् लक्षयति अजानतीति। अङ्गना भगवज्ज्ञानसाधना उपरतं जीवन्मुक्त्यवस्थाप्राप्तं प्रियतमं स्वस्या आत्यन्तिकं प्रियं तमजानती बाह्यवृत्तिविशिष्टं सुस्थिरासनं तदेकवृत्तिनिष्ठालक्षणं पीठमाप्य पूर्वसंस्कारवशात् यथापूर्वमुपाचरत् शुभकर्मणि प्रेरयामास ॥ ४५ ॥ ❀ ❀ यदैवं प्रेरयति च यदा पत्युरङ्घ्र्यवयवैकदेशे ऊष्माणमौष्ण्यं नोपलभेत शुष्कजलनारिकेलफलवत् देहाभिमानं विहाय स्थितत्वादौष्ण्यानुपलम्भस्तस्या इति ततोऽपि वृत्त्यन्तरवैशिष्ट्यमाह आसीदिति। तदा संविग्नहृदया वृत्त्यन्तरविशिष्टासीत् मिश्रबुद्धिमपहाय स्वरूपबुद्ध्याऽवतिष्ठते तदेवमवस्थाविशेष इति तात्पर्यं ज्ञातव्यम् ॥ ४६ ॥ ❀ ❀ बन्धुः स्वामी, तदनुमानराहित्यादबन्धुः शोचन्ती प्रकाशयन्ती विक्लवेत्यादिना प्रतिक्षणमनन्तबुद्धिवृत्तयो लक्ष्यन्ते विपिने देहलक्षणे स्थिता सुस्वरं प्ररुरोदेतीदं बुद्धेर्लक्षणमस्यामुक्तिकाले नाशात् चिदचिद्बुद्ध्या व्यापारविशेषाल्लक्षणवैलक्षण्यं प्रतिक्षणं ज्ञातव्यम् ॥ ४७ ॥ ❀ ❀ उदधिः कर्म तदेव मेखलास्थानीयं यस्याः सा तथा तां दस्युभ्योऽहङ्कारादिभ्यः क्षत्रबन्धुभ्यो मिथ्याज्ञानादिभ्यो बिभ्यतीं मां रक्षितुमर्हसि त्वदनुगृहीतया बुद्ध्याज्ञानादयो निवर्तन्त इत्यर्थः ॥ ४८ ॥ ❀ ❀ विपिने वासनावने विलपतीव, धावतीव दर्शयती भर्तुः पादयोः पतिता स्वामिनं विहाय स्थिता अश्रूण्यवर्तयन्मुग्धेवाभवत् ॥ ४९ ॥ ❀ ❀ दारुमयीं भेदविषयां चितिं संविदं कृत्वा प्रकाश्य तस्यां संविदि पत्युः कलेवरं संसारकारणमादीप्य दग्ध्वा अनुमरणे अनुस्यूतदोषनाशे मनो दधे तादृशीं वृत्तिं प्राकाशयत् ॥ ५० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसंन्दर्भः

तदेवं येन विज्ञानेन जीवन्मुक्तिदशामाप तेनात्यन्तिकमुक्तिमप्यापेत्याह साक्षादिति युग्मकेन ॥ ४१ ॥ ❀ ❀ परे ब्रह्मणि भगवति तदाश्रयत्वेनेत्यर्थः। आत्मनि शुद्धे तदधिष्ठातृत्वेनेत्यर्थः। ईक्षां सिद्धेक्षत्वात् तत्प्रयत्नं विहायेत्यर्थः। अस्मादेहद्वयलक्षणोपाधेरुपरराम न तु तस्मात्तदीक्षाहेतुचिच्छक्त्याविर्भावादपीत्यर्थः, अनलादीनां कालवाय्वादिवत्तस्या नाशकाभावात् आश्रयस्य विद्यमानत्वाच्च ॥ ४२ ॥ ❀ ❀ वैदर्भ्याख्यः पुरञ्जनस्तु तत्सेवयैव प्राप्यं प्रापेत्याह। पतिमित्यादिना ॥ ४३-४४ ॥ ❀ ❀

यथापूर्वं श्रीभगवत्प्रतिमामिवाचेष्टमानमपि पाद्यादिनोपाचरत् आनर्च ॥ ४५-४९ ॥ ❀ ❀ चितिमिति। अस्मिन्नध्यात्मपक्षे स्त्रीत्वादिकमौपचारिकमेव ॥ ५० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ततश्च तस्योत्पन्नप्रेम्णो भगवतः साक्षाद्दर्शनमप्यभूदित्याह। साक्षादेव भगवता हरिणा सन्तापहारिणा विश्वतोमुखं स्फुरता समन्तादेव प्रस्फुरत्तेजसा गुरुणा सता उक्त उपदिष्टो यो ज्ञानदीपः स्वमाधुर्य्यानुभवप्रकारस्तेन तस्मिन्नेव परे ब्रह्मणि आत्मानमीक्षमाणः वासुदेवे भगवति नान्यद्वेदोद्वहन् रतिमिति पूर्वोक्तेः भगवति स्वरतिमुद्वहन्तमनुरागिणं पश्यन्नित्यर्थः। तथैव "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इति भगवदुक्तेः। आत्मनि स्वस्मिंश्च परब्रह्म सानुरागमीक्षमाणः तत्क्षण एव प्रबलितानन्दमूर्च्छावशादीक्षां विहाय अस्मात् स्थूलसूक्ष्मोपाधिद्वयात् स्पष्टमेव विरराम। ऐश्वर्य्यपक्षीयास्तु श्लोकत्रयमिदमेवं व्याचक्षते–स मलयध्वज आत्मानं परमेश्वरं सर्व्वव्यापकतया सर्व्वस्माच्च व्याप्याज्जगतो व्यतिरिक्ततया च आत्मनि स्वस्मिन्नधिष्ठातारं विद्वान् जानन् विरराम संसारादित्यर्थः। व्यापकत्वे व्यतिरिक्तत्वे च दृष्टान्तः–आमर्शसाक्षिणं मनआदिद्रष्टारं जीवमध्यात्मादिव्यापकमथ च स्वप्ने सुषुप्तावध्यात्मादिव्यतिरिक्तमिव सुखमहमस्वाप्समित्यत्र तत्तद्व्यतिरिक्तस्य केवलस्यात्मन एवानुभवादिति, नन्वेतद् ज्ञानं कुतोऽसाववापेति तत्राह साक्षादिति। 'ददामि बुद्धियोगन्तं येन मामुपयान्ति ते' इति भगवदुक्तेः तेनैव ज्ञानदीपेन परे ब्रह्मणि भगवत्याश्रयतत्त्वे आत्मानं शुद्धजीवमाश्रितमीक्षमाणः तथा आत्मनि शुद्धजीवे च तमेव परं ब्रह्म भगवन्तमधिष्ठातारमीक्षमाणः। विहायेक्षामिति जातप्रेमत्वादन्ते तं परामर्शमपि विहायेत्यर्थः। श्रीभागवतस्य मोहिनीत्वादितोऽप्यन्यथा केचिद्व्याचक्षते, तत्तु त एव गृह्णन्ति न सन्तः॥ ४१-४२॥ ❀ ❀ तदेवं श्रीगुरुदेवस्य सिद्धिदशापर्य्यन्तं शिष्यस्तं परिचरन्नेव वर्त्ततेति दर्शयति। पतिमिति चतुर्भिः॥ ४३॥ ❀ ❀ पतिमुप "उपोऽधिके च" हीने इति कर्मप्रवचनीयस्तद्योगे द्वितीया, पत्युः सकाशात् किञ्चिन्मात्रन्यूनेत्यर्थः। शान्तमङ्गारावस्थं निर्धूममनलमुपशान्ता शुद्धा ज्वाला यथा भाति तद्वत्॥ ४४-४५॥ ❀ ❀ अर्चति अर्चन्ती नोपलभेत नोपालभत॥ ४६ ॥ ❀ ❀ गुरोः साधकशरीरापगमे सति। पत्युर्विच्छेदे पतिव्रतेव शिष्यस्तद्विच्छेदसन्तप्तो विलापमग्नो भवतीत्याह। आत्मानं शोचति मामितः परं कस्त्रास्यत इति शोकाकुला॥ ४७॥ ❀ ❀ उत्तिष्ठेति पक्षे हे गुरो! इमां पृथ्वीं त्वत्प्रवर्त्तितश्रवणादिभक्तिगतिं दस्युभ्यः भक्तिविरोधिमतेभ्यो बिभ्यतीम्॥ ४८॥ ❀ ❀ अवर्त्तयत् प्रवर्त्तयामास॥ ४९॥ ❀ ❀ तस्यां निधाय अग्निदानेनादीप्य च पक्षे श्रीगुरोर्देहसंस्कारं कृत्वा श्रीमद्गुरुचरणवियुक्तोऽहं तदीयगुणानुस्मरणमयशोकदावाग्निदग्धदेहं प्राणं धर्तुमशक्नुवंस्तदुपदिष्टश्रवणकीर्त्तनादिभक्तौ नैव शक्तिं धास्यामि। तस्मादद्यैव मरिष्यामीति शिष्यो मनसि निश्चिनोतीति दर्शयामास॥ ५०॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

मलयध्वजस्य मोक्षमाह साक्षादिति द्वाभ्याम्। "ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्। यः प्रयाति त्यजन् देहं स याति परमां गतिम्" इति साक्षाद्भगवतोक्तेन अन्तकाले भगवत्स्मरणात्मकेन सर्वतोमुखं स्फुरताऽकुण्ठेन ज्ञानमेव दीपस्तेन॥ ४१॥ ❀ ❀ परे ब्रह्मणि अंशिनि आत्मानमंशभूतम् आत्मनि अंशे परं ब्रह्म अंशिस्वरूपमीक्षमाणः ईक्षां संसारेक्षां विहाय अस्मात् संसारात् उपरराम मुक्तोऽभूदित्यर्थः॥ ४२॥ ❀ ❀ वैदर्भीवृत्तमाह पतिमित्यादिना॥ ४३-४४॥ ❀ ❀ सुस्थिरमासनं यस्य तं प्रियतममुपारतं मृतमजानती यदाऽऽसाद्य पूर्ववदुपाचरत्॥ ४५॥ ❀ ❀ अङ्घ्रिमर्चती तत्रोष्माणं नोपलभेत नापश्यत्॥ ४६-४८॥ ❀ ❀ विपिने पतिमनुगता तस्य पादयोः पतिता अश्रूणि अवर्तयत् अमुञ्चत्॥ ४९॥ ❀ ❀ आदीप्य अनुमरणे मनो दधे॥ ५०॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

नन्वेवं ज्ञानं तस्य कथं जातमित्याकाङ्क्षायां 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्, मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते, ददामि बुद्धियोगं तं येन मामुपयान्ति ते' इत्यादिवाक्येभ्यस्तद्भावनानुसारेण भगवत्प्रसादादेवेति प्रदर्शयन् पूर्वोक्तं तन्मुक्तिप्रकारमेव विशदयति—साक्षादिति द्वाभ्याम्। हे नृप साक्षाद्गुरुणा हरिणा भगवतोक्तेन अन्तःकरणे प्रकाशितेन अत एव विश्वतः सर्वतोमुखं यथा भवति तथा स्फुरता प्रकाशमानेन विशुद्धज्ञानप्रदीपेनेक्षमाण इत्युत्तरेणान्वयः। एवमन्तःकरणे ज्ञानप्रकाशने ऐश्वर्यादिमत्त्वेन सामर्थ्यं तस्यैवेत्यभिप्रेत्याह—भगवतेति। अत एव तस्य साक्षाद् गुरुत्वं तत्सम्पादितज्ञानस्य सर्वविषयकत्वं च। अतस्त्वमपि तदेकशरणो भवेति सूचनार्थं सम्बोधनम्॥ ४१॥ ❀ ❀ परे ब्रह्मण्यात्मानमीक्षमाणः तथाऽऽत्मनि परं ब्रह्म चेक्षमाणस्तामीक्षामपि विहाय अस्माद्देहादिसङ्घातबन्धनादुपरराम विनिर्गत इत्यन्वयः। तत्र ब्रह्मैवाहं न संसारीति ब्रह्मण्यात्मन ईक्षणे संसारधर्माणां शोकादीनां निवृत्तिः। अहमेव ब्रह्म न मत्तः पृथगित्यात्मनि ब्रह्मण ईक्षणे ब्रह्मपारोक्ष्यनिवृत्तिः। अतः परस्परव्यतिहारेणेक्षणमुक्तम्। तथाप्येवमीक्षणस्यैव ब्रह्मात्मनोर्भेदबोधकत्वात् कथमैक्येन मुक्तिरित्याशङ्कानिवृत्त्यर्थमीक्षां विहायेत्युक्तम्।

कार्यकारणाध्यासस्य अवलम्बनस्य निवृत्तत्वादीक्षाऽपि दग्धेन्धनानलवत् स्वयमेवोपशान्तेति भावः। एवमात्मज्ञानेन मुक्तेरपि भगवद्भक्त्याधीनत्वादहो भक्तेर्माहात्म्यमित्याश्चर्येणाह—हेति॥ ४२॥ ❀ ❀ एवं मलयध्वजस्य मुक्तिप्रकारमुक्त्वा तत्पत्न्या अपि मुक्तिप्रकारमाह—पतिमित्यादिद्वाविंशद्भिः। भोगान् हित्वा पत्या सहागता सा पूर्वोक्ता वैदर्भी मलयध्वजं धर्मज्ञं स्वपतिं प्रेम्णा पर्यचरत् सेवितवतीत्यन्वयः। एवं भोगत्यागेन सेवायां हेतुमाह—पतिदेवतेति। पक्षान्तरे तु—एवं गुरोर्मोक्षप्रकारं प्रदर्श्य तत्सहागतस्य शिष्यस्यापि मोक्षप्रकारं दर्शयति—तमिति द्वाविंशद्भिः। भोगान् हित्वा गुरुणा सहागतः शिष्यः पतिव्रतास्त्रीवत् प्रेम्णा गुरुं सेवितवानित्यर्थः॥ ४३॥ ❀ ❀ तस्या अपि पत्या सह तपःप्रकारं दर्शयति—चीरेति। चीरं जीर्णं वासो यस्याः सा व्रतेन कन्दाद्याहारेण द्वन्द्वसहनेन च क्षामा दुर्बला वेणीभूताः प्रसाधनाभावादेकीभूताः शिरोरुहाः केशाः यस्याः सा उपपतिं पत्युः समीपे पत्युः किञ्चिन्मात्रं न्यूना वा शान्ता बभौ। तत्र दृष्टान्तमाह—शिखेति, शान्तमङ्गारावस्थमनलं उपशान्ता शुद्धा धूमरहिता शिखा ज्वाला यथा भाति तद्वदित्यर्थः। पक्षान्तरे तु—गुरुणा सह शिष्योऽपि तद्व्रतनिष्ठः सन् भगवदाराधनं कुर्वंस्तद्वत्तेजस्वी जात इत्यर्थः॥ ४४॥ ❀ ❀ तस्मिन् देहं त्यक्त्वा गतेऽपि यदा साङ्गना वैदर्भी तं प्रियतमं पतिमुपरतं देहं त्यक्तवन्तमजानती तदा आसाद्य समीपं गत्वा यथापूर्वमुपाचरत् असेवतेत्यन्वयः। एवमज्ञाने हेतुमाह—सुस्थिरासनमिति, यतस्तदानीमस्थिरमासनं यस्य तथाभूतमित्यर्थः। पक्षान्तरेऽप्ययमेवार्थः॥ ४५॥ ❀ ❀ पत्युरङ्घ्रिमर्चती सती यदा तस्मिन्नङ्घ्रावूष्माणं नोपालभेत नापश्यत्तदा यूथभ्रष्टमृगीवत् संविग्नहृदया व्याकुलचित्ताऽऽसीदित्यन्वयः। पक्षान्तरे—शिष्यो गुरोः शरीरत्यागं दृष्ट्वा व्याकुलो जात इत्यर्थः॥ ४६॥ ❀ ❀ तदा सा विपिने अबन्धुं पत्यादिरहितमत एव दीनमात्मानं शोचती विक्लवाश्रुभिः स्वस्तनावासिच्य सुस्वरं प्ररुरोदेत्यन्वयः। पक्षान्तरे—गुरुवियोगेन शिष्यो रुरोदेत्यर्थः॥ ४७॥ ❀ ❀ तद्विलापप्रकारमाह—उत्तिष्ठेति, हे राजर्षे त्वमुत्तिष्ठोत्तिष्ठ। किमर्थं तत्राह—दस्युभ्यश्चोरेभ्यस्तथा क्षत्रबन्धुभ्यः अधार्मिकेभ्यः क्षत्रियेभ्यश्च बिभ्यतीं उदधिपर्यन्तामिमां पृथ्वीं पातुं रक्षितुमर्हसीति। पक्षान्तरे तु—हे गुरो क्षत्रबन्धुभ्यस्त्वत्प्रवर्तितश्रवणादिभक्तिमार्गाद्विरुद्धमताङ्गीकर्तृभ्योऽत एव दस्युतुल्येभ्यो भाराशङ्कया बिभ्यतीं पृथिवीं पातुमर्हसीत्यर्थः॥ ४८॥ ❀ ❀ पतिमनुगता बाला विपिने वने एवं विलपती भर्तुः पादयोः पतिता रुदन्ती च सती अश्रूण्यवर्त्तयत् मुमोचेत्यर्थः। पक्षान्तरे तु—गुरुवियोगेन शिष्यो विलपन् मूर्छितः सन्नश्रूणि मुमोचेत्यर्थः॥ ४९॥ ❀ ❀ तदा दारुमयीं चितिं कृत्वा तस्यां पत्युः कलेवरं निधाय अग्निना तामादीप्य च विलपन्ती स्वयमप्यनुमरणे चितिप्रवेशेन मरणे मनो दधे इत्यन्वयः। पक्षान्तरे तु—गुरोर्देहक्रियां कृत्वा शिष्यो विलपन् स्वयमपि जीविताशां त्यक्तवान्॥ ५०॥

### भाषानुवादः

फिर अपनी आत्माको परब्रह्ममें और परब्रह्मको आत्मामें अभिन्नरूपसे देखा और अन्तमें इस अभेद चिन्तनको भी त्याग कर सर्वथा शान्त हो गये॥ ४२॥ ❀ ❀ राजन्! इस समय पतिपरायणा वैदर्भी सब प्रकारके भोगोंको त्याग कर अपने परमधर्मज्ञ पति मलयध्वजकी सेवा बड़े प्रेमसे करती थी॥ ४३॥ ❀ ❀ वह चीर-वस्त्र धारण किये रहती, व्रत-उपवासादिके कारण उसका शरीर अत्यन्त कृश हो गया था और सिरके बाल आपसमें उलझ जानेके कारण उनमें लटें पड़ गयी थीं। उस समय अपने पतिदेवके पास वह अङ्गारभावको प्राप्त धूमरहित अग्निके समीप अग्निकी शान्त शिखाके समान सुशोभित हो रही थी॥ ४४॥ ❀ ❀ उसके पति परलोकवासी हो चुके थे, परन्तु पूर्ववत् स्थिर आसनसे विराजमान थे। इस रहस्यको न जाननेके कारण वह उनके पास जाकर उनकी पूर्ववत् सेवा करने लगी॥ ४५॥ ❀ ❀ चरणसेवा करते समय जब उसे अपने पतिके चरणोंमें गरमी बिल्कुल नहीं मालूम हुई, तब तो वह झुंडसे बिछुड़ी हुई मृगीके समान चित्तमें अत्यन्त व्याकुल हो गयी॥ ४६॥ ❀ ❀ उस बीहड़ वनमें अपनेको अकेली और दीन अवस्थामें देखकर वह बड़ी शोकाकुल हुई और आँसुओंकी धारासे स्तनोंको भिगोती हुई बड़े जोर-जोरसे रोने लगी॥ ४७॥ ❀ ❀ वह बोली, 'राजर्षे! उठिये, उठिये; समुद्रसे घिरी हुई यह वसुन्धरा लुटेरों और अधार्मिक राजाओंसे भयभीत हो रही है, आप उसकी रक्षा कीजिये'॥ ४८॥ ❀ ❀ पतिके साथ वनमें गयी हुई वह अबला इस प्रकार विलाप करती पतिके चरणोंमें गिर गयी और रो-रोकर आँसू बहाने लगी॥ ४९॥ ❀ ❀ लकड़ियोंकी चिता बनाकर उसने उसपर पतिका शव रक्खा और अग्नि लगाकर विलाप करते-करते स्वयं सती होनेका निश्चय किया॥ ५०॥

**तत्र पूर्वंतरः कश्चित्सखा ब्राह्मण आत्मवान्। सान्त्वयन् वल्गुना साम्ना तामाह रुदतीं प्रभो॥ ५१॥**

**[1]ब्राह्मण उवाच**

**का त्वं कस्यासि को वायं शयानो यस्य शोचसि। [2]जानासि किं सखायं मां येनाग्रे [3]विचेरथ ह॥ ५२॥**

---

१. प्राचीने पाठे 'ब्राह्मण उवाच' अयमंशो न। २. प्रा० पा०—किं जानासि। ३. प्रा० पा०—विचरेम हि।

अपि स्मरसि चात्मानमविज्ञातसखं सखे । हित्वा मां पदमन्विच्छन् भौमभोगरतो गतः ॥ ५३ ॥
हंसावहं च त्वं चार्य सखायौ मानसायनौ । अभूतामन्तरा वौकः सहस्रपरिवत्सरान् ॥ ५४ ॥
स त्वं विहाय मां बन्धो गतो ग्राम्यमतिर्महीम् । विचरन् पदमद्राक्षीः कयाचिन्निर्मितं स्त्रिया ॥ ५५ ॥
पञ्चारामं नवद्वारमेकपालं त्रिकोष्ठकम् । षट्कुलं पञ्चविपणं पञ्चप्रकृति स्त्रीधवम् ॥ ५६ ॥
पञ्चेन्द्रियार्था आरामा द्वारः प्राणा नव प्रभो । तेजोऽबन्नानि कोष्ठानि कुलमिन्द्रियसंग्रहः ॥ ५७ ॥
विपणस्तु क्रियाशक्तिर्भूतप्रकृतिरव्यया । शक्त्यधीशः[1] पुमांस्त्वत्र प्रविष्टो नावबुध्यते ॥ ५८ ॥
तस्मिंस्त्वं रामया स्पृष्टो रममाणोऽश्रुतस्मृतिः । तत्सङ्गादीदृशीं प्राप्तो दशां पापीयसीं प्रभो ॥ ५९ ॥
न त्वं विदर्भदुहिता नायं वीरः सुहृत्तव । न पतिस्त्वं पुरञ्जन्या रुद्धो नवमुखे यया ॥ ६० ॥

अन्वयः—प्रभो तत्र पूर्वतरः कश्चित् आत्मवान् सखा ब्राह्मणः रुदतीम् ताम् वल्गुना साम्ना सांत्वयन् आह ॥ ५१ ॥ ❀ ❀ त्वम् का कस्य वा असि यस्य शोचसि अयम् शयानः कः येन अग्रे विचचर्थ ह सखायम् माम् जानासि किम् ॥ ५२ ॥ ❀ ❀ सखे आत्मानम् अविज्ञातसखम् च स्मरसि अपि भौमभोगरतः माम् हित्वा पदम् अन्विच्छन् गतः ॥ ५३ ॥ ❀ ❀ आर्य त्वम् च अहम् च मानसायनौ सखायौ हंसौ सहस्रपरिवत्सरान् ओकः अंतरा वा ॥ ५४ ॥ ❀ ❀ बन्धो ग्राम्यमतिः सः त्वम् माम् विहाय महीम् गतः विचरन् कयाचित् स्त्रिया निर्मितम् पंचारामम् नवद्वारम् एकपालम् त्रिकोष्ठकम् षट्कुलम् पंचविपणम् पंचप्रकृति स्त्रीधवम् पदम् अद्राक्षीः ॥ ५५-५६ ॥ ❀ ❀ प्रभो पंच इंद्रियार्थाः आरामाः नव द्वारः प्राणाः कोष्ठानि तेजोऽबन्नानि कुलम् इंद्रियसंग्रहः ॥ ५७ ॥ ❀ ❀ विपणः तु क्रियाशक्तिः अव्यया भूतप्रकृतिः अत्र तु प्रविष्टः पुमान् शक्त्यधीशः नावबुद्ध्यते ॥ ५८ ॥ ❀ ❀ प्रभो तस्मिन् रामया स्पृष्टः रममाणः अश्रुतस्मृतिः त्वम् तत्संगात् पापीयसीम् ईदृशीम् दशाम् प्राप्तः ॥ ५९ ॥ ❀ ❀ त्वम् विदर्भदुहिता न अयम् वीरः तव सुहृत् न त्वम् यया नवमुखे रुद्धः पुरंजन्याः पतिः न ॥ ६० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

पूर्वतरोऽनादिरीश्वरः सखा "द्वा सुपर्णा" इति श्रुतेः । साम्ना प्रियवाक्येन संबोधयन् ॥ ५१ ॥ ❀ ❀ यस्य यं शोचसि अग्रे सृष्टेः पूर्वं येन विचचर्थ ह मयि स्थितत्वेन सख्यसुखमनुभूतवानसि ॥ ५२ ॥ ❀ ❀ ननु नाहमावयोः सख्यं सहचरत्वं च जानामीति चेत्तत्राह । यद्यपि मां न जानासि तथाप्यात्मानं त्वामविज्ञातसखमविज्ञातः कश्चिन्मे सखा आसीदित्येवं किं स्मरसि । सख इति पुंस्त्वनिर्देशः प्राक्तनपुंस्त्वस्मरणाय । सख्यं स्मारयन्स्ववियोगकृतमनर्थमाह हित्वेति सार्धैः षड्भिः । पदं स्थानम् ॥ ५३ ॥ ❀ ❀ हंसौ शुद्धौ मानसं हृदयमयनं ययोः । कथापक्षे मानससरसि स्थितौ पक्षिणावभूतां जातौ । ओको गृहम् । अंतरा विनैव । वाशब्द एवार्थे । सहस्रपरिवत्सरान्महाप्रलयो यावत् ॥ ५४ ॥ ❀ ❀ हे बंधो ग्राम्ये विषयसुखे मतिर्यस्य । स्त्रिया मयया ॥ ५५ ॥ ❀ ❀ पंच शब्दादय आरामा उपवनानि यस्मिन् नव द्वाराणि प्राणच्छिद्राणि यस्मिन् एकः प्राणः पालो यस्मिन् । त्रीणि पृथिव्यप्तेजांसि कोष्ठानि प्राकारा यस्मिन् षट् ज्ञानेंद्रियमनांसि कुलान्यभीष्टविषयसमर्पका वणिजो यस्मिन् पंच विपणा हट्टाः कर्मेंद्रियाणि यस्मिन् पंच भूतानि प्रकृतिरुपादानकारणं यस्य स्त्री बुद्धिरेव धवः पतिः स्वामिनी यस्मिन् ॥ ५६ ॥ ❀ ❀ स्वयमेवेमं श्लोकं व्याचष्टे । पंचेंद्रियार्था इति । षटकुलमिति षट्त्वमेकपालमिति च स्पष्टत्वान्न व्याख्यातम् ॥ ५७ ॥ ❀ ❀ भूतान्येवाव्यया प्रकृतिरुपादानं यस्य स्त्रीधवमित्यस्य व्याख्यानं शक्तिर्बुद्धिरधीशा यस्य तद्वशः सन्नित्यर्थः ॥ ५८ ॥ ❀ ❀ स्पृष्टोऽभिभूतः अतो न विद्यते श्रुते ब्रह्मत्वे स्मृतिर्यस्य ॥ ५९ ॥ ❀ ❀ तत्त्वमुपदिशति न त्वमिति चतुर्भिः । सुहृत्पतिः नवद्वारे पुरे यया रुद्धोऽसि तस्याः ॥ ६० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स्वगुरुविरहव्याकुलीभावदशायामिव शिष्यस्य भगवद्दर्शनं स्यादिति द्योतयति । तत्र तस्यामवस्थायाम् । ब्राह्मणः ब्राह्मणरूपधारी साक्षात्स्वीयस्वरूपदर्शनं प्रेम्णा विना न संभवतीति ज्ञापयति । यद्वा—"ब्रह्म ब्राह्मण आत्मना" इति श्रुत्यर्थद्योतनाय तथोपदेशे ब्राह्मणस्यैवाधिकार इति द्योतनाय च ब्राह्मणरूपधारणमिति ज्ञेयम् । अत एवात्मा स्वरूपं विद्यते यस्य स आत्मवान्स्व-स्वरूपयुक्त इत्यर्थः । वल्गुना प्रीतिद्योतकतया सुंदरेण सामवाक्येन सांत्वयन्समादधानः ॥ ५१ ॥ ❀ ❀ यस्येति द्वितीयार्थे

१. प्रा० पा०—पुमानत्र ।

षष्ठी। का किंजातिविशिष्टासि न कापि किञ्च कस्यासि कं पुरुषमाश्रित्य तिष्ठसि न कमपि सर्वस्य चेतनानुस्यूतत्वान्न विशिष्टं शक्यते वक्तुं यस्य शोचसि यदीयाहमिति प्रकाश्य वर्त्तसेऽयं शयानः शरीरलक्षणः पदार्थः कः पांचभौतिकत्वात्तव चानेन न कोऽपि संबंधः। त्वं का नामतो गोत्रतो लिंगतश्च तवैतत्त्रयमेव नास्ति कस्यासि पुत्री भार्या वा न कस्यापीति को वायं शयानस्तव निरूपितो यस्य मरणं शोचसि न कोऽपीति वार्थः॥ ५२॥ ❀ ❀ नन्वहं किमपि न जानामीति तत्राह—अपीति। बहुव्रीहावपि टजार्षः। त्वमेव स्मारयेति चेदाह—हित्वेति। सृष्ट्यारंभे प्राचीनकर्मवशादेवेत्यर्थः॥ ५३॥ ❀ ❀ आर्येति। शुद्धकुलोद्भूतत्वेन ज्ञानाधिकारित्वमाह॥ ५४॥ ❀ ❀ बंधो इति। प्रीतिविषयतां द्योतयंस्तद्धितकर्तृत्वं स्वस्याह॥ ५५-५७॥ ❀ ❀ अत्र पदे प्रविष्टः पुमान्मुह्यति इत्यर्थ इति। तत्पदं स्त्रीस्वामिकमिति किं वाच्यम्। तत्र प्रविष्टः पुमानपि स्त्रीस्वामिको भवेदिति भावः॥ ५८॥ ❀ ❀ तस्मिन्पदे रामया विषयबुद्ध्या। अतो रामास्पृष्टत्वात्। श्रुते सर्ववेदेतिहासपुराणादिवर्णिते जीवस्य ब्रह्मभावे। विश्वनाथस्तु—न श्रुता श्रवणविषयीकृता स्मृतिर्गीतादिज्ञानसाधनशास्त्रं येन स तथेत्याह। तत्संगाद्रामासंगात्। ईदृशीं स्त्रीदेहप्राप्तिलक्षणाम्। स्त्रीशरीरस्य बहुदुःखाधिकरणत्वात्पापीयसीम् "नारीशरीरं बहु दुःखभाजनम्" इति गरुडोक्तेः। प्रभो इति। त्वं तु साक्षात्प्रभुरपि संगदोषादेवात्मानमप्रभुं जानासीति भावः॥ ५९॥ ❀ ❀ तत्त्वं याथार्थ्यम्। पुरंजन्या इति पूर्वजन्माभिप्रायेणोक्तम्। अत्र विश्वनाथः—ननु यद्यहमश्रुतस्मृतिरस्मि तर्हि मत्स्मृतित्वमेव श्रावयेति चेदाह—नेति। त्वं विदर्भस्य प्राकृतजीवस्य कस्यापि न दुहिता नापत्यं किं तु मच्छक्तिरूपो जीवोसीति भावः। अयं वीरोऽपि न ते सुहृद्धितकारी, किं त्वहमेव एतद्रूपेण त्वद्गुरुर्भूत्वा स्वभक्तिमुपदिश्य सख्यनुरूपं कृत्यमकरवमिति पक्षद्वयं पृथक्पृथक्। यया नवमुखे पुरे त्वं रुद्धस्तस्याः पुरंजन्यास्त्वं न पतिः किं त्वविद्योपहितं चैतन्यमपि। कथापक्षः स्पष्ट एव॥ ६०॥

### श्रीमद्वीरराघवव्याख्या

तत्र तस्मिन्नवसरे पूर्वतरः पुरातनः ईश्वररूपः कश्चित् सखात्मवान् ब्राह्मणः आगत्य वल्गुना मधुरेण साम्ना सामवाक्येन सान्त्वयन्नुपलालयन् रुदन्तीं प्रत्याह। हे प्रभो! निरुपाधिकसख! यादृच्छिकसुकृतमात्रसन्तुष्टो भगवान् ब्राह्मणरूपेणागत्य वैदर्भीं सान्त्वयन्नाह भागवतसम्बन्धमात्रतुष्टो भगवान्वैदर्भीमनुजग्राहेति यावत्॥ ५१॥ ❀ ❀ उक्तिमेवाह का त्वमित्यादिना। तथैवान्तरमावयोरित्यन्तेन का त्वमिति कथंजातीयकेति प्रश्नः कस्यासि कस्य संबन्धिन्यसि को वायमित्यपि तथा यस्य शोचसि यदर्थं शोचसि शयानस्य स्वस्य च स्वरूपमुभयोः संबन्धं देहप्रयुक्तमविदित्वा किं वृथा शोचसीत्यभिप्रायः। सखायं मां जानासि किं स्वस्वरूपमेवाजानती त्वं कथं मत्स्वरूपं जानासीत्यर्थः। तत्र हेतुर्येन मया हेतुनाग्रे सृष्ट्यादौ विचकर्थ विकृतवानसि अनादित्वत्कर्मानुगुणमत्संकल्पेन स्वपरस्वरूपं विस्मृत्य देवमनुष्यादिविकारं प्राप्तोऽसीत्यर्थः॥ ५२॥ ❀ ❀ यद्यपि मां न जानासि तथाप्यात्मानं त्वामविज्ञातसखमविज्ञातः कश्चिन्मे सखा आसीदिति किं स्मरसि। हे सखे! इति पुंस्त्वनिर्देशः प्रकृतिविलक्षणपुरुषस्वरूपस्मरणाय सख्यं स्मारयन्स्ववियोगकृतमनर्थमाह हित्वेति सार्द्धैः षड्भिः। मामन्तरात्मभूतं हित्वा ग्राम्यभोगः शब्दादिविषयानुभवः तस्मिन्नासक्तः पदं भोगस्थानं देवमनुष्यादिशरीरमन्विच्छन् गतः मद्वियोगं प्राप्तः स्वपरयाथात्म्यज्ञानविधुरो जात इत्यर्थः॥ ५३॥ ❀ ❀ हे आर्ये! त्वं चाहं सहस्रपरिवत्सराननन्तकालमन्तरा वोकः शरीररूपगृहमध्य एवान्तरेति मध्येऽव्ययं वाशब्द एवार्थः ओको गृहं मानसायनौ हृत्पद्मगृहगतौ सखायौ हंसावभूताम्। सखिशब्दार्थसामानाधिकरण्याच्छेषे प्रथम इति प्रथमपुरुषः। अत्र हंसत्वविधानाय युष्मदस्मदोः सखित्वमुद्दिश्यते उद्देश्यानुगुणा च सर्वत्र तिङ्विभक्तिः प्रयुज्यते तद्यथा 'त्वं वाहमस्मि भगवो देवते, तत्त्वमसीति भगवो देवते तत्त्वमसी'ति। अत्र सखित्वं न विधेयं युष्मदस्मदर्थोद्देशेनात्र पूर्वतरः कश्चित्सखा अविज्ञातसखं सखे इत्यनेनैव प्राप्तत्वाद्धंसत्वं त्वप्राप्तं हंसत्वं शुद्धत्वं हिनस्ति निरस्यति विकारानिति हंसः। ततश्चायमर्थः अपास्तमरणौ स्वतो निरस्तविषयसुखाविति औपाधिको हि जीवस्य विषयभोगः। कथापक्षे मानससरसि स्थितौ पक्षिणावभूताम्॥ ५४॥ ❀ ❀ स त्वं हंसस्त्वं बन्धुं सखायं मां विहाय विस्मृत्य ग्रामेषु शब्दादिषु मतिर्यस्य सः महीं प्रकृतिमण्डलं प्राप्तः तत्रापि पदं निवासस्थानं विचिन्वन् यद्वा मह्यां विचरन्कदाचित्पदमद्राक्षीरित्यन्वयः। पदं विशिनष्टि स्त्रिया प्रकृत्या निर्मितम्॥ ५५॥ ❀ ❀ पञ्चारामम्। पञ्चारामा उपवनानि यस्मिन्नव द्वाराणि छिद्राणि यस्मिन्नेकः पालः पालको यस्मिन् त्रीणि कोष्ठानि प्राकारा यस्मिन् षट् कुलानि अभीष्टविषयसमर्पकाणि यस्मिन् पञ्च विपणाः हट्टा यस्मिन् पञ्चप्रकृतिरुपादानकारणं यस्य स्त्री भार्या एव धवा स्वामिनी यस्मिन् तत्॥ ५६॥ ❀ ❀ स्वयमेव श्लोकं व्याचष्टे पंचेति। पञ्चेन्द्रियार्थाः शब्दादयः आरामाः प्राणायनाः प्राणाधीना इन्द्रियाणि चक्षुरादीनि तेषां प्राणायत्तप्रवृत्तित्वात्तदाश्रयत्वाच्च नेत्रद्वयश्रोत्रद्वयादिरूपच्छिद्राणि नव द्वारः प्राणायना इन्द्रियस्थानानि गोलकानि छिद्राणि इति यावत् नवद्वार एकः प्राणः पालो यस्मिन्निति स्पष्टत्वान्न व्याख्यातं तेजोऽबन्नानि तेजश्चापश्चान्नं पृथिवी च एतानि कोष्ठानीत्यर्थः। इन्द्रियसंग्रहः मनसा सह ज्ञानेन्द्रियषट्कसमुदायः प्रत्येकं कुलवदभीष्टप्रापकत्वात् कुलमित्यर्थः॥ ५७॥ ❀ ❀ क्रियाशक्तिः कर्मेन्द्रियाणि पञ्च विपणाः पञ्च प्रकृतीत्यस्य व्याख्यानं भूतप्रकृतिरिति भूतानि पञ्च पृथिव्यादीन्येव अव्यया नित्या प्रकृतिरुपादानकारणमत्र भूतान्तर्गतानां तेजोऽबन्नानां त्रयाणां देहारम्भकत्वात्प्रकृतित्वं कोष्ठस्थानीयास्थिरुधिरमांसरूपेण परिणामात्तेजोऽबन्नानि कोष्ठानीत्युक्तम्। तथा च श्रूयते "अन्नमशितं त्रेधा

विधीयते तस्य यः स्थविष्ठो भागः तत्पुरीषं यो मध्यमस्तन्मांसमापः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो भागः तन्मूत्रं यो मध्यमस्तल्लोहितं तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो भागस्तदस्थी"ति यद्यपि कोष्ठस्थानीयत्वेन परिणतेषु तेजोऽबन्नेषु पञ्चीकरणप्रक्रियया वाय्वाकाशावपि प्रविष्टौ तथापि भूतत्रयांशानां बाहुल्यात् त्रिकोष्ठमित्युक्तं भूतात्मकोपादानस्य प्रतिक्षणपरिणामशीलत्वेऽप्यवस्थावद्द्रव्यस्य प्रधानाख्यस्य नित्यत्वादव्ययेत्युक्तम्। तथा च श्रुतिः "गौरनाद्यन्तवती अजामेकामिति" च स्मर्यते च 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपी'ति। स्त्रीधवमित्यस्य व्याख्या शक्त्यधीश इति शक्तिर्बुद्धिरधीशा यस्य तद्वशः सन्नित्यर्थः। पुमान् भवान् तत्र पदे प्रविष्टः नावबुध्यते स्वात्मानं मां च न जानाति ॥ ५८ ॥ ❀ ❀ तस्मिन् पदे त्वं रामया स्त्रिया बुद्ध्या स्पृष्टोऽभिभूतः रममाणः विषयाननुभवन्नत एव गता स्मृतिः स्वपरयाथात्म्यज्ञानरूपा यस्य सः तत्सङ्गाद् बुद्धिनिमित्तदेहानुबन्धिस्त्रीसङ्गात् पापीयसीमीदृशीं स्त्रीयोनिरूपां दशां प्राप्तः। हे विभो! धर्मतो व्यापकस्वभाव! ॥ ५९ ॥ ❀ ❀ एवं स्ववियोगनिमित्तप्रकृतिपरिणामरूपबुद्धिपारवश्यनिमित्तेयं संसृतिरूपानर्थपरम्परेत्यभिधाय सर्वं प्रकृतिपरिणामरूपवैचित्र्यं नात्मनो धर्मः, किन्तु बुद्धिसङ्गनिमित्त औपाधिक आत्मनि प्रतीयत इति वदन् प्रकृतिविलक्षणब्रह्मात्मकप्रत्यगात्मयाथात्म्यमुपदिशति नेति। त्वं विदर्भस्य दुहिता न भवसि, अयं वीरो मलयध्वजस्तव पतिरपि न भवति, नव द्वारे पुरे यस्या बुद्ध्या बद्धोऽसि तस्याः पुरञ्जन्यास्त्वं पतिरपि न भवसि। विदर्भदुहितृत्वादीनां देहाकारत्वेनात्माकारत्वाभावादिति भावः ॥ ६० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तत्र तस्यामवस्थायां कश्चिद्वेदान्तवाक्यार्थो हितोपदेष्टृत्वेन सखिधर्मे वर्तमानो ब्राह्मणो ब्रह्मसम्बन्धी निर्दोषशब्दलक्षणागमसम्बन्धी वात्सवान् परमात्मगुणप्रतिपादनपरः साम्ना अखिलार्थप्रकाशनेन सान्त्वयन् प्रतिपदं दर्शितान्वयः। बुद्धिमान् अबोधयदिति कथापक्षे प्रतीत एवार्थः ॥ ५१ ॥ ❀ ❀ तदनुकरणतया बोध्यत इत्याह केति। का किंजातिविशिष्टा न कापि किञ्च कस्यासि कं पुरुषमाश्रित्य तिष्ठसि न कमपि सर्वचेतनानुस्यूतत्वान्न विशेष्टुं शक्यते यस्य शोचसि यदहमिति प्रकाश्य वर्तसे अयं शयानः शरीरलक्षणः पदार्थः कः पाञ्चभौतिकत्वात्तव चास्य न कोऽपि सम्बन्धः, किन्तु चेतनस्यैवेत्यर्थः। त्वं का नामतो गोत्रतो लिङ्गतश्च न तव त्रयमप्यस्ति कस्यासि पुत्री भार्या वा न कस्यापीत्यर्थः। को वाऽयं शयानस्तव निरूपिते सत्यनेन सम्बन्धः यस्य मरणं शोचसि स इति वा। अग्रे पूर्वकाले येन मया विचचर्थ विचरितवानसि तं सखायं त्वया सह वर्तमानं मां जानासि किं, सखित्वात् ज्ञातुं प्राप्तिरस्तीत्येतद्वशब्देनाह ॥ ५२ ॥ ❀ ❀ किंच हे सखे! अविज्ञातः परमात्मा सखा यस्य स तथा तमात्मानं त्वं स्मरस्यपि न स्मरसि चेत्तं स्मरेति चार्थः। चिद्बुद्ध्यात्मनोरभेदादिदमुभयविषयमिदानीं ज्ञानात्मानं चेतनमविभज्येवाह हित्वेति। विषयभोगरतस्तदर्थं भोगस्थानमन्विच्छन् मृगयन्मां हित्वा गतः पृथक्कृत इव। अग्रत इति पाठे पदमन्विच्छन्नभूदित्यन्वयः ॥ ५३ ॥ ❀ ❀ वाक्यार्थाभिमानी कश्चिच्चेतनः स्वात्मनो रूपं च तत्त्वत उपदिशति हंसाविति। आर्ये! प्राज्ञ अहं च त्वं च हंसौ स्वतो निर्लेपौ मानसं ज्ञानमयनं ययोस्तौ तथा सहस्रपरिवत्सरान् बहुकालं रममाणौ अवात्स्व। अन्यत्र मानससरोवराश्रयौ हंसौ प्रसिद्धौ प्राक् चीर्णपुण्यनिचयादवाप्तजातिस्मृतिः ॥ ५४ ॥ ❀ ❀ पुनः प्रारब्धकर्मवशात् ग्राम्यमतिर्मां विहाय कर्मभूमिं गतो विचरन् पर्यटन् किञ्चित्पदं भोगस्थानमद्राक्षीः स्त्रिया विषयबुद्ध्या रचितम् ॥ ५५ ॥ ❀ ❀ एकः पालः प्राणो यस्मिंस्तत्तथा तत् स्त्री धवः पतिः स्वामी यस्मिन् तत्स्त्रीधवम् ॥ ५६ ॥ ❀ ❀ पञ्चारामार्थमाह पञ्चेति। इन्द्रियार्थाः शब्दादयः नवद्वारमित्यस्यार्थमाह द्वार इति। घ्राणादयो द्वार इत्युच्यन्ते त्रिकोष्ठमाह तेज इति। षट्कुलमाह गोलकेति। गोलकेष्विन्द्रियाणि गृह्यन्त इति गोलकेन्द्रियसङ्ग्रहः ॥ ५७ ॥ ❀ ❀ विपणो व्यवहारः क्रियाशक्तिः कर्मेन्द्रियशक्तिः पञ्चप्रकृतीत्येतदाह भूतेति। पञ्चभूतानां या प्रकृतिर्मूलकारणं सा पञ्चप्रकृतिरित्युच्यते अव्यया नित्या स्त्रीधवमाह शक्तीति। शक्तिर्बुद्धिः सैवाधीशा पुरोपभोगे कारणं यस्य स शक्त्यधीशः, अन्यत्र कोष्ठानि भाण्डागारस्थानानि कुलानि बहिष्ठपदार्थदर्शनाय निर्मितस्थानानि ॥ ५८ ॥ ❀ ❀ रामया विषयबुद्ध्या स्पृष्टो वशीकृतः हतस्मृतिः शास्त्रज्ञानरहितः विषयबुद्धिसङ्गफलं नरकादि भवतीत्यर्थः ॥ ५९ ॥ ❀ ❀ न त्वमित्यादि विषयवैराग्यमुच्यते ॥ ६० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

ब्राह्मणरूपो भूत्वा ॥ ५१–५२ ॥ ❀ ❀ कथापक्षे सखे इति जीवत्वमात्रस्मरणाय ॥ ५३ ॥ ❀ ❀ यद्यपि परमात्मसन्दर्भे ज्ञानेच्छुरयमधिकारीत्यभेदोपदेशपर्य्यवसानत्वं व्याख्यातम्। तथाप्यपरितोषादत्र भक्तिपर्य्यवसानत्वमेव व्याख्यायते यथा सख्यमेव स्थापयति सृष्टौ मानसायनौ महाप्रलयसमये तु ओकस्तद्रूपमुपाधिमन्तरैवाभूतामभूवेत्यर्थः। सहस्रपरिवत्सरान् व्याप्येति महाप्रलयोपलक्षणम् ॥ ५४ ॥ ❀ ❀ स्वविस्मृतौ हेतुमाह स त्वमिति सार्द्धैः षड्भिर्मन्यसे इत्यधिकैः। तत्र स त्वमिति युग्मकम्। स्थितिसमये तु स तथाविधस्तं मां विहायाहन्ताममताभ्यां व्यवधाय महीं स्वप्नसहितजाग्रद्दशां गतः सन्

विचरन् पर्य्यालोचयन्नित्यर्थः ॥ ५५–५६ ॥ ❀ ❀ पञ्चेन्द्रिया इति युग्मकम् ॥ ५७ ॥ ❀ ❀ विभो ! हे सर्व्वसाधन-समर्थ तथापीत्यर्थः ॥ ५८–६० ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

स्वगुरुविरहव्याकुलीभावदशायामिव शिष्यस्य भगवद्दर्शनं स्यादिति द्योतयति तत्रेति । पूर्व्वतरः अनादिरीश्वरः सखा द्वासुपर्णावित्यादिश्रुतेः ब्राह्मणः ब्राह्मणवेशधारीति साक्षात् स्वीयस्वरूपदर्शनं प्रेम्णा विना न भवतीति ज्ञापयति स्मेति भावः । आत्मवान् अन्तराच्छन्नीकृतस्वस्वरूपयुक्तः ॥ ५१ ॥ ❀ ❀ कोऽयं शयान इति प्रश्ने मम श्रीगुरुरयमिति कथापक्षे मम पतिरयमिति चेत् मां किं जानासीति ननु त्वमेव विप्रो मम क इत्यत आह सखायमिति । कथं त्वया सह मम सख्यमित्यत आह । येन मया सह अग्रे सृष्टेः पूर्व्वं विचचर्थ । मय्येव मिलित्वा मत्सङ्गेन सुखमनुभूतवान् त्वमेवासीरित्यर्थः ॥ ५२ ॥ ❀ ❀ नन्वहं किमपि न जानामीति तत्राह अपीति । यद्यपि मां न जानासि तदप्यात्मानं स्वमविज्ञातसखमविज्ञातः कश्चिन्मे सखास्तीत्येवं किं स्मरसि, बहुव्रीहावपि टच् आर्षः, अविज्ञातस्य सखायमिति वा । सखीत्यप्रयुज्य सखे इति पुंस्त्वनिर्देशः प्राक्तनपुंस्त्वं स्मारयितुम् । एवमग्रेऽपि त्वमेव स्मारय चेदत आह हित्वेति । सृष्ट्यारम्भे प्राचीनकर्म्मवशादेवेत्यर्थः । पदं स्थानम् ॥ ५३ ॥ ❀ ❀ हंसौ शुद्धावात्मानौ मानसं हृदयमयनं ययोस्तौ कथापक्षे मानससरसि स्थितौ पक्षिणावभूतां जातौ ओको गृहमन्तरा विनैव वाशब्द एवार्थे सहस्रं परिवत्सरान् महाप्रलयो यावदित्यर्थः ॥ ५४ ॥ ❀ ❀ स्त्रिया मायया ॥ ५५ ॥ ❀ ❀ पञ्चविषया आरामा उपवनानि यत्र नव द्वाराणि प्राणच्छिद्राणि यत्र एकः प्राण एव पालो यत्र त्रीणि पृथिव्यप्तेजांसि कोष्ठानि यत्र षट् ज्ञानेन्द्रियमनांसि कुलानि वणिजो यत्र तत् पञ्च कर्मेन्द्रियाणि विपणा हट्टा यत्र तत् पञ्च महाभूतानि प्रकृतिरुपादानकारणं यस्य तत् स्त्री बुद्धिरेव धवः पतिः स्वामिनी यस्मिन् तत् ॥ ५६ ॥ ❀ ❀ श्लोकमिमं स्वयमेव व्याचष्टे पञ्चेति । प्राणाः प्राणच्छिद्राणि नव कुलमिति वणिजामेवार्थतः प्राप्तं भूतानि पञ्चैव प्रकृतिः कारणमत्र पदे प्रविष्टः पुमान् मुह्यति । कीदृशः शक्तिर्बुद्धिरेव अधीशा यस्य स इति स्त्रीधवमित्यस्य व्याख्यानं, तत्पदं स्त्रीस्वामिकमिति किं वाच्यं तत्र प्रविष्टः पुमानपि स्त्रीस्वामिक एव भवेदित्यर्थस्य द्योतनार्थं पुंविशेषणत्वेनोपन्यस्तम् ॥ ५७–५८ ॥ ❀ ❀ न श्रुता न श्रवणविषयीकृता स्मृतिः स्वज्ञानं येन सः ॥ ५९ ॥ ❀ ❀ नन्वेवं यद्यहमश्रुतस्मृतिरेवास्मि तर्हि मत्स्मृतिं त्वमेव श्रावयेत्यत आह नेति । त्वं विदर्भस्य प्राकृतजीवस्य कस्यापि न दुहिता नापत्यं किन्तु मच्छक्तिरूपो जीवोऽसीति भावः । अयं वीरोऽपि न ते सुहृत् हितकारी किन्त्वहमेव एतद्रूपेण त्वद्गुरुर्भूत्वा स्वभक्तिमुपदिश्य सख्यनुरूपं कृत्यमकरवम् । इति पक्षद्वयं पृथक् पृथक् व्याख्यातं यथा नवमुखे पुरे त्वं रुद्धस्तस्याः पुरञ्जन्यास्त्वं न पतिः किन्तु अविद्योपहितं चैतन्यमसि । कथापक्षे स्पष्टमेव ॥ ६० ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

पूर्वतरः अनादिः परमेश्वरः ब्राह्मणः ब्राह्मणरूपः साम्नानुकूलवाक्येन ॥ ५१ ॥ ❀ ❀ यस्य यम् येन मया कर्मफलमभुञ्जता साक्षिमात्रेण हेतुना अग्रे सृष्टः पूर्वं विचचर्थ ह नानायोनिषु सुखादिकमनुभूतवानसि तं मां "द्वा सुपर्णा सयुजा सखाया समानं वृक्षम्" इति सुप्रसिद्धं जानासि किम् ॥ ५२ ॥ ❀ ❀ अविज्ञातः सखा यस्य तमात्मानं नवद्वारपुर्यन्वेषणकालिकं स्मरसि अपि किम् सख्यं स्मारयन् स्ववियोगकृतमनर्थमाह हित्वेति षड्भिः । भौमभोगेषु शब्दादिविषयेषु रतः तदर्थं पदं स्थानमन्विच्छन् मां हित्वा तदेव गतः नवद्वारस्थानसक्तोऽभूरित्यर्थः । पुंस्त्वनिर्देशः प्राक्तनपुंस्त्वस्मरणाय ॥ ५३ ॥ ❀ ❀ तदेव प्रपञ्चयति हंसावित्यादिना । हे आर्ये ! ओकः अन्तरा स्थूलं शरीरं विनैव वाशब्दोऽवधारणे सहस्रपरिवत्सरान् अहं त्वं च सखायौ अभूतां, कथंभूतौ मानसं सूक्ष्मशरीरगतं हृदयमयनं ययोस्तौ इत्यन्वयः ॥ ५४ ॥ ❀ ❀ ग्राम्ये सुखे मतिर्यस्य सः अत एव मां विहाय अत्यन्ततो विस्मृत्य ॥ ५५ ॥ ❀ ❀ पञ्चविषया आरामा उपवनानि यस्मिंस्तत् नव द्वाराणि प्राणच्छिद्राणि यस्मिंस्तत् एकः प्राणः पालो यस्मिंस्तत् पृथिव्यप्तेजोरूपत्रिकोष्ठकम् षट्कुलानि कुत्सितविषयग्राहकाणि मनःसहितानि ज्ञानेन्द्रियाणि यस्मिंस्तत् पञ्चकर्मेन्द्रियाणि विपणो हट्टो यस्मिंस्तत् पञ्चभूतानि प्रकृतिरुपादानं यस्य तत् स्त्री बुद्धिर्धवा स्वामिनी यस्य तत् ॥ ५६ ॥ ❀ ❀ पूर्वश्लोकं स्वयं व्याचष्टे पञ्चेति । प्राणाः प्राणच्छिद्राणीन्द्रियगोलकानि नवद्वारः एकपालमिति स्पष्टत्वान्न व्याख्यातम् ॥ ५७ ॥ ❀ ❀ क्रियाशक्तिः कर्मेन्द्रियगणः भूतानि अव्यया नित्या प्रकृतिरुपादानम् । शक्तिर्बुद्धिरधीशा धवा यस्य सः बुद्धिवशः पुमान् भवान् स्वात्मानं मच्छक्तिभूतं मां च नावबुध्यते ॥ ५८ ॥ ❀ ❀ रामया बुद्ध्या स्पृष्टोऽभिभूतः अतो न विद्यते श्रुते तत्त्वज्ञमुखात् श्रुते अंशांशितत्त्वे स्मृतिर्यस्य सः ॥ ५९ ॥ ❀ ❀ सुहृत्पतिर्नास्ति अध्यात्मपक्षे गुरुत्वनिषेधो नास्ति यद् यया हेतुभूतया पूर्वत्र पुमांसमिदानीं सतीं श्रेष्ठां स्त्रियं मन्यसे सैषा मया सृष्टा महदादिरूपैर्नानावस्थां नीता विश्वमोहिनी माया, यतः उभयं पुंस्त्वस्त्रीत्वयुग्मं जीवे नास्ति, अतः अहं पुमान् अहं स्त्री इत्याग्रहं हित्वा यत् यौ हंसौ तयोरावयोर्गतिं स्वरूपं पश्य ॥ ६०–६१ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

तत्र तस्मिन् देशे तस्मिन् काले च कश्चित्पूर्वतरः सखा ब्राह्मणस्वरूपधरः तां रुदन्तीं वल्गुना मनोहरेण साम्ना प्रियवाक्येन सान्त्वयन् सम्बोधयन्नाहेत्यन्वयः। एवं प्रबोधने सामर्थ्यमाह—आत्मवानिति, आत्मज्ञानवानित्यर्थः। प्रभो इति सम्बोधनं श्रवण उत्साहार्थम्, स्तुतो हि श्रोता तत्रोत्साहितो भवतीति। पक्षान्तरे—पूर्वतरः अनादिः, सखा अन्तर्यामी, आत्मवान् स्वतन्त्रः सर्वज्ञश्च। अन्यत्समानम्॥ ५१॥ ❀ ❀ तद्वचनान्येव दर्शयति—का त्वमिति द्वादशभिः। त्वं काऽसि किंनामासि? कस्य कन्याऽसि? यस्य यं शोचसि सोऽयं शयानस्तव को वा? येन सहाग्रे पूर्वं विचचर्थ तं सखायं किं जानासि? इत्यन्वयः। अज्ञानादेव तव सर्वं वैपरीत्यं जातमिति खेदं द्योतयति—हेति। पक्षान्तरे तु—केति स्त्रीत्वनिर्देशः पारोक्ष्यार्थः। गुरुभक्तं संसाराद्विरक्तं विशुद्धान्तःकरणमन्तर्यामी भगवान् कृपयाऽऽविर्भूय प्रतिबोधयतीति ज्ञेयम्॥ ५२॥ ❀ ❀ हे सखे इति सम्बोधनं विश्वासार्थम्। तव हितमुपदिशामीति भावः। यद्यपि मां न जानासि तथाप्यात्मानं त्वसख्यविज्ञातसखमविज्ञातनामा कश्चिन्मे सखा आसीदित्येवं किं स्मरसि? सख इति पुंस्त्वं जीवाभिप्रायेण। यतस्त्वं भौमभोगे रतः आसक्तः पदं भोगस्थानमन्विच्छन् अन्वेषयन् मां हित्वा गतस्तस्मादेवायं तवानर्थो जात इति शेषः। पक्षान्तरे तु—आत्माज्ञानेन विषयासक्त्या भगवद्वैमुख्येन च संसारानर्थ इत्यर्थः॥ ५३॥ ❀ ❀ तर्हि त्वमेव सर्वं वृत्तं कथयेत्यभिप्रायमालक्ष्य स्वयमेव कथयति—हंसाविति। हे आर्य हे श्रेष्ठ अहं च त्वं च द्वावपि हंसौ पक्षिणौ सखायौ मानसायनौ मानससरसि कृतनिवासौ यतस्ततः पूर्वं सहस्रपरिवत्सरान् तावत्कालपर्यन्तं ओको गृहमन्तरा विनैवाभूतामित्यन्वयः। वाशब्द एवार्थे। पक्षान्तरे—हंसौ शुद्धौ सखायौ मानसं हृदयमयनं ययोस्तौ, पूर्वं यावन्महाप्रलयस्तावत्सहस्रपरिवत्सरान् ओको विनैवाभूताम्, देहादिसङ्घातस्य स्थानस्य तदानीं ब्रह्मणि विलयत्वादित्यर्थः॥ ५४॥ ❀ ❀ स हंस एव त्वं ग्राम्ये विषयसुखे मतिर्यस्य स तथाभूतः सन् मां परहितकारिणं विहाय महीं गतस्तत्र विचरन् कयाचित् स्त्रिया निर्मितं पदं पुरमद्राक्षीः दृष्टवानित्यन्वयः। सत्यं ब्रवीमि नात्र प्रतारणा काचिदिति द्योतयन् सम्बोधयति—हे बन्धो इति। पक्षान्तरे तु ग्राम्यमतिर्विषयसुखमभिलषन् मां विहाय विस्मृत्य महीं त्रिलोकीं गतो देवतिर्यगादियोनिषु विचरन् कयाचित् स्त्रिया अनिर्वाच्यया मायया निर्मितं पुरं मनुष्यशरीरं त्वमद्राक्षीरित्यर्थः॥ ५५॥ ❀ ❀ तत्पुरमेव वर्णयति—पञ्चाराममिति। पञ्च आरामा उपवनानि यस्मिंस्तत् नव द्वाराणि यस्मिंस्तत् एकः पालो यस्मिंस्तत् त्रीणि कोष्ठानि प्राकारा यस्मिंस्तत् षट् कुलानि अभीष्टविषयप्रापका वणिजो यस्मिन् पञ्च विपणा हट्टा यस्मिंस्तत् पञ्च प्रकृतिः उपादानकारणं यस्मिंस्तत् स्त्री धवः पतिः स्वामिनी यस्मिंस्तत्। एवं प्राचीनबर्हिंषस्तस्यापि बहिर्मुखत्वात् साक्षादध्यात्मज्ञानं दुर्घटमालक्ष्य नारदवद्भगवताऽपि पारोक्ष्येणैव पुरवर्णनं कृतमिति ज्ञेयम्॥ ५६॥ ❀ ❀ एवं पारोक्ष्येणोक्तसामर्थ्यं तस्य मनस्यानारूढमालक्ष्य स्वयमेव तद् व्याचष्टे—पञ्चेन्द्रियार्था इति। पञ्चेन्द्रियाणामर्था विषयाः रूपरसादयः आरामा ज्ञेयाः। नव प्राणा इन्द्रियच्छिद्राणि द्वारो ज्ञेयाः। एकः प्राणः पाल इति ज्ञेयम्। एतत् स्पष्टत्वान्न व्याख्यातम्। तेजोऽबन्नानि पृथिव्यप्तेजांसि कोष्ठानि ज्ञेयानि। इन्द्रियाणां सङ्ग्रहः पञ्चज्ञानेन्द्रियाण्येकं मन इति षट्कुलं ज्ञेयम्॥ ५७॥ ❀ ❀ क्रियासु शक्तिर्यस्य स कर्मेन्द्रियवर्गो विपणो ज्ञेयः। पञ्चमहाभूतान्येव प्रकृतिरुपादानकारणं ज्ञेयम्। तस्य शरीरनाशेऽप्याप्रलयं नाशाभावादव्ययत्वम्। शक्तिः मायाकार्यभूता बुद्धिरेवाधीशा यस्य स पुमानत्र शरीरलक्षणे पुरे प्रविष्टो बुद्धीन्द्रियादावहन्ताममताध्यासेन आत्मानं नावबुद्ध्यते न जानातीत्यर्थः॥ ५८॥ ❀ ❀ तस्मिन् शरीरलक्षणे पुरे त्वं प्रविष्टः रामया बुद्धिलक्षणया स्त्रिया स्पृष्टो मोहितस्तया रममाणस्तस्यां कृतात्माध्यासः अत एव न विद्यते श्रुतः स्वरूपस्य ममेश्वरस्य वा स्मृतिर्यस्य सः तत्सङ्गात् राजसीबुद्धिसङ्गादीदृशीं तवायोग्यां पापीयसीं दुःखबहुलां दशां प्राप्तोऽसीत्यन्वयः। इदानीमपि त्वं चेतनत्वाद्विवेकेन तां त्यक्त्वा सुखीभवितुं समर्थोऽसीति सूचयन् सम्बोधयति—हे प्रभो इति॥ ५९॥ ❀ ❀ सत्यं मम कापि स्मृतिर्नास्त्यतस्त्वां शरणमागतोऽस्मि त्वं कृपया तत्त्वमुपदिश येनाहं दुःखसागरात् संसाराद्विमुक्तो भवेयमिति तदभिप्रायमालक्ष्य तत्त्वमुपदिशति—नेति चतुर्भिः। अयं वीरः मलयध्वजस्तव सुहृत् पतिर्न, यया नवद्वारे पुरे त्वं रुद्धस्तस्याः पुरञ्जन्याः पतिरपि त्वं न भवसीत्यन्वयः॥ ६०॥

### भाषानुवादः

राजन्! इसी समय उसका कोई पुराना मित्र एक आत्मज्ञानी ब्राह्मण वहाँ आया। उसने उस रोती हुई अबलाको मधुर वाणीसे समझाते हुए कहा॥ ५१॥ ❀ ❀ ब्राह्मणने कहा—तू कौन है? किसकी पुत्री है? और जिसके लिये तू शोक कर रही है, वह यह सोया हुआ पुरुष कौन है? क्या तू मुझे नहीं जानती? मैं वही तेरा मित्र हूँ, जिसके साथ तू पहले विचरा करती थी॥ ५२॥ ❀ ❀ सखे! क्या तुम्हें अपनी याद आती है, किसी समय मैं तुम्हारा अविज्ञात नामक सखा था? तुम पृथ्वीके भोग भोगनेके लिये निवासस्थानकी खोजमें मुझे छोड़कर चले गये थे॥ ५३॥ ❀ ❀ आर्य! पहले मैं और तुम एक दूसरेके मित्र एवं मानसनिवासी हंस थे। हम दोनों सहस्रों वर्षोंतक बिना किसी निवासस्थानके ही रहे थे॥ ५४॥ ❀ ❀ किन्तु मित्र! तुम विषयभोगोंकी इच्छासे मुझे छोड़कर यहाँ पृथ्वीपर चले आये! यहाँ घूमते-घूमते तुमने एक स्त्रीका

रचा हुआ स्थान देखा ॥ ५५ ॥ ❀ ❀ उसमें पाँच बगीचे, नौ दरवाजे, एक द्वारपाल, तीन परकोटे, छः वैश्यकुल और पाँच बाजार थे। वहाँ उपादान-कारणोंसे बना हुआ था और उसकी स्वामिनी एक स्त्री थी ॥ ५६ ॥ ❀ ❀ महाराज! इन्द्रियोंके पाँच विषय उसके बगीचे थे, नौ इन्द्रिय-छिद्र द्वार थे; तेज, जल और अन्न-तीन परकोटे थे; मन और पाँच ज्ञानेन्द्रियाँ—छः वैश्यकुल थे, क्रियाशक्तिरूप कर्मेन्द्रियाँ ही बाजार थीं, पाँच भूत ही उसके कभी क्षीण न होनेवाले उपादान-कारण थे और बुद्धिशक्ति ही उसकी स्वामिनी थी। यह ऐसा नगर था, जिसमें प्रवेश करनेपर पुरुष ज्ञानशून्य हो जाता है—अपने स्वरूपको भूल जाता है ॥ ५७-५८ ॥ भाई! उस नगरमें उसकी स्वामिनीके फंदेमें पड़कर उसके साथ विहार करते-करते तुम भी अपने स्वरूपको भूल गये और उसीके सङ्गसे तुम्हारी यह दुर्दशा हुई है ॥ ५९ ॥ ❀ ❀ देखो, तुम न तो विदर्भराजकी पुत्री ही हो और न यह वीर मलयध्वज तुम्हारा पति ही। जिसने तुम्हें नौ द्वारोंके नगरमें बंद किया था, उस पुरञ्जनीके पति भी तुम नहीं हो ॥ ६० ॥

माया ह्येषा मया सृष्टा यत्पुमांसं स्त्रियं सतीम्। मन्यसे नोभयं यद्वै हंसौ पश्यावयोर्गतिम् ॥ ६१ ॥
अहं भवान्न चान्यस्त्वं त्वमेवाहं विचक्ष्व भोः। न नौ पश्यन्ति कवयश्छिद्रं जातु मनागपि ॥ ६२ ॥
यथा पुरुष आत्मानमेकमादर्शचक्षुषोः। द्विधाभूतमवेक्षेत तथैवान्तरमावयोः ॥ ६३ ॥
एवं स मानसो हंसो हंसेन प्रतिबोधितः। स्वस्थस्तद्व्यभिचारेण नष्टामाप पुनः स्मृतिम् ॥ ६४ ॥
बर्हिष्मन्नेतदध्यात्मं पारोक्ष्येण प्रदर्शितम्। यत्परोक्षप्रियो देवो भगवान् विश्वभावनः ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे पुरंजनोपाख्यानेऽष्टाविंशोऽध्यायः ॥ २८ ॥

अन्वयः—हि यत् पुमांसम् सतीम् स्त्रियम् मन्यसे एषा मया सृष्टा माया वै उभयम् न हंसौ आवयोः गतिम् पश्य ॥ ६१ ॥ ❀ ❀ भो अहम् भवान् त्वम् च अन्यः न त्वमेव अहम् विचक्ष्व कवयः नौ मनाक् अपि छिद्रम् जातु न पश्यंति ॥ ६२ ॥ ❀ ❀ यथा पुरुषः एकम् आत्मानम् आदर्शचक्षुषोः द्विधाभूतम् अवेक्षेत तथा एव आवयोः अंतरम् ॥ ६३ ॥ ❀ ❀ एवम् हंसेन प्रतिबोधितः सः मानसः हंसः स्वस्थः तद्व्यभिचारेण नष्टाम् स्मृतिम् पुनः आप ॥ ६४ ॥ ❀ ❀ बर्हिष्मन् एतत् अध्यात्मम् पारोक्ष्येण प्रदर्शितम् यत् भगवान् विश्वभावनः देवः परोक्षप्रियः ॥ ६५ ॥

इत्यष्टाविंशोऽध्यायः ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

पुमांसं पूर्वजन्मनि यदमन्यथाः इदानीं च सतीं श्रेष्ठां स्त्रियं यन्मन्यसे एषा माया यत उभयत्वमपि वस्तुतो नास्ति यस्मादावां हंसौ शुद्धौ। नौ आवयोर्वक्ष्यमाणां गतिं स्वरूपं पश्य ॥ ६१ ॥ ❀ ❀ तत्त्वंपदार्थयोश्चिदंशेनैक्यमाह। अहमेव भवान्। उपचारं वारयति। न चान्य इति। व्यतिहारोपदेश उक्ताभिप्राय एव। छिद्रमंतरम् ॥ ६२ ॥ ❀ ❀ तर्हि कथमावयो-रज्ञत्वसर्वज्ञत्वादिधर्मभेदस्तत्राह यथेति। आत्मानं देहमादर्शे निर्मलं महांतं स्थिरं चावेक्षेत परस्य चक्षुषि च तद्विपरीतम्। विद्याविद्योपाधिकृतो धर्मभेदो न तु वास्तव इत्यर्थः ॥ ६३ ॥ ❀ ❀ एवममुना प्रकारेण स मानसो हंसः क्षेत्रज्ञो हंसेन परमात्मना बोधितः सन् स्वस्थ आत्मनि स्थितः संश्चिरं ध्यात्वा तद्व्यभिचारेणेश्वरवियोगेन विषयाभिलाषबुद्ध्या नष्टां स्मृतिमहं ब्रह्मास्मीति ज्ञानं प्राप्तवान् ॥ ६४ ॥ ❀ ❀ कथामात्रमेतदिति बुद्धिं वारयति बर्हिष्मन्निति। पारोक्ष्येण राजकथामिषेण। तत्र हेतुः। यद्यस्मात् हे बर्हिष्मन् प्राचीनबर्हिः एतद्राजकथामिषेणात्मकथा प्रदर्शिता। यस्मादेवः श्रीनारायणः परोक्षप्रियः। तथा च श्रुतिः "परोक्षप्रिया इव हि देवाः" इति। साक्षादात्मज्ञानकथनेन तव चेतसि कथा नायातीति भावः ॥ ६५ ॥

इति श्रीमद्भागवते चतुर्थे टीकायामष्टाविंशोऽध्यायः ॥ २८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ननु यद्येवं तर्हि कथं मे तथा तथा प्रतीतिस्तत्राह—मायेति। कदाचिन्नोभयं नपुंसकमिति उपलक्षणमेतत्कदाचिन्मनु-ष्यदेवतिर्यगादिकं चेति। यद्यस्माद्वै निश्चितमावां हंसाविति ॥ ६१ ॥ ❀ ❀ चिदंशेन चिद्रूपत्वेन। उक्ताभिप्रायः 'परे ब्रह्मणि चात्मानम्' इत्यत्रोक्तेऽभिप्रायो यस्य स तथा। अत्र विश्वनाथः—अहं परमात्मैव भवान् जीवः न चान्यः मत्तश्चैतन्यस्वरूपान्न

१. प्रा० पा० ततः।

भिन्न इत्यर्थः। ननु किमेतन्मदसह्यं ब्रूषे तत्राह—भो मच्छुद्धभक्त ! अहम्-अकोपं यथा स्यात्तथा त्वमेव विचक्ष्व सविमर्शं पश्य "हं तु कोपे समाख्यातः शिवे च कुक्कुरेऽपि च" इति मेदिनी। ननु त्वद्दासस्य मम तथा मत्प्रभोस्तवापि नातः परोऽन्यकलंको यदावयोरभेद इति तत्राह—नेति। नावावयोश्छिद्रमीदृशं कलंकं जातु कदाचिदपि मनागीषदपि कवयो विज्ञा न पश्यंति। किं त्वविज्ञा एव भेदं पश्यंतीत्यर्थः॥ ६२॥ ❀ ❀ इत्यर्थं इति। विद्योपाधिप्रधानत्वात्तत्र सर्वज्ञत्वादिकमविद्योपाधिप्रधानत्वान्ममाज्ञत्वादिकं च न तु स्वाभाविकमतो न चावयोर्भेद इति भावः। अत्र विश्वनाथः—नन्वहं भवानिति त्वदुक्तिरेवासह्या तत्र मा कुप्यावधेहीत्याह—यथेति। पुरुषो जीव आत्मानं स्वमेकमपि मोक्षदशायां बंधदशायां च क्रमेणादर्शचक्षुषोर्द्विधाभूतम् आदर्शे मणिमयदर्पणे यथोचितप्रमाणं सुवर्णतेजस्कं महांतमचंचलमीक्षेत चक्षुषि त्वत्यल्पप्रमाणमल्पतेजस्कमतिक्षुद्रं चंचलं चेक्षेत यथेति। एकस्यापि द्विधाभूतत्वमुपाधिधर्मैलिप्तत्वालिप्तत्वाभ्यां भेदमीक्षेत, तथैवावयोः परमात्मजीवात्मनोः सदैव द्विधाभूतयोरंतरं सदैव भेदमीक्षेत। "अंतरमवकाशावधिपरिधानांतर्द्धिभेदतादर्थ्ये" इत्यमरः। अहं देहमध्ये परमात्मस्वरूपेण वर्त्ते त्वं च जीवो वर्त्तसे। तत्राहं—स्वतो निरुपाधिरपि स्वैरतया सकललोकदेहगतः सन्नंतर्यामी स्वसमुचितप्रमाणः संपूर्णतेजस्को महान्निश्चलो मुक्तजीव इव सदैव निर्लेप एव। त्वं तु जीवोऽत्यल्पप्रमाण एवात्यल्पतेजस्कोऽतिक्षुद्रः सदैवोपाधिधर्मग्रस्तः कदाचिदेव मुक्तिदशायामलिप्त इति तदैवावयोर्भेदं जानीयादित्यर्थः। यदुक्तम् "अहं भवान्न चान्यस्त्वम्" इति तत् अहं यथा चित्तथा मद्भक्तो भवानपि चिन्न तु जडो माया वेत्यर्थः। एतत्पद्ययोरर्थांतरं तु शास्त्रस्यास्य मोहिनीत्वख्यापकमसुरैरेव ग्राह्यमेकात्मवादस्य भगवदनभिमतत्वात्। यदुक्तं तृतीये भगवतैव "यथोल्मुकाद्विस्फुलिंगाद्धूमाद्वापि स्वसंभवात्। अप्यात्मत्वेनाभिमताद्यथाग्निः पृथगुल्मकात्॥ भूतेंद्रियांतःकरणात्प्रधानाज्जीवसंज्ञितात्। आत्मा तथा पृथग्द्रष्टा भगवान्ब्रह्मसंज्ञितः" इति। श्रुत्या च "यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरंति" इति। स्मृत्या च—"एकदेशे स्थितस्याग्नेर्ज्योत्स्ना विस्फारिणी यथा" इति तथा सच्चिदानंदविग्रहो भगवान्निरुपाधिरेव। तस्य विद्योपाधित्वमप्यसुरमतेनैवोक्तमिति ज्ञेयम्॥ ६३॥ ❀ ❀ मुनिरपि तथैवोपसंहरति एवमिति। स्वस्थः प्राधानिकावेशरहितः। तद्व्यभिचारेण भगवद्वैमुख्येन। नष्टां स्मृतिं पूर्वमेव श्रीगुरुभक्त्या प्राप्तामेव पुनः प्राप। अत्रास्यासायुज्यकथनात्सुपर्णश्रुतेर्बलवत्त्वाच्च प्रेमवत्पार्षदत्वप्राप्तिरेव श्रीनारदेन परमपुरुषार्थोऽभिमतो ज्ञेयः॥ ६४॥ ❀ ❀ बर्हिष्मन्निति। तव कर्मश्रद्धाक्रांतत्वात्साक्षात्कथनग्रहणानधिकारित्वमाह—तत्र पारोक्ष्यकथने। आत्मानं जीवमीश्वरमधिकृत्य वर्त्तत इत्यध्यात्मं जीवेश्वरस्वरूपविवरणं सर्वस्यास्य प्रसंगस्य भगवत्प्रीतिपरत्वमेव स्पष्टयति यदिति। परोक्षत्वेन कथनस्यापीदमेव तात्पर्यमित्याह—परोक्षप्रिय इति। "परोक्षप्रिया इव हि देवाः" इत्यादिश्रुतेः॥ ६५॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धेऽष्टाविंशोऽध्यायः॥ २८॥

### श्रीमद्वीरराघवव्याख्या

यत् यस्माद्धेतोः पूर्वजन्मनि पुमांसमिदानीं सतीं श्रेष्ठां स्त्रियं मन्यसे एषा हेतुभूता मया सृष्टा मायैव, अत उभयमप्यात्मनि न वस्तुतोऽस्ति, हि यस्मादावां हंसौ शुद्धौ नौ आवयोः अद्य अधुना गतिं वक्ष्यमाणं स्वरूपं पश्य विमर्शयेत्यर्थः॥ ६१॥ ❀ ❀ किञ्च वक्ष्यमाणमेवाह। अहं भवान् भवच्छरीरकः त्वमेवाहं त्वद्रूप एवाहं त्वं कदाचिदपि न मच्छरीरत्वरहितः। अहं तव सदा आत्मा त्वं तु मम सदा शरीरभूत इत्यर्थः। न चान्यस्त्वमतो न त्वं मदन्यः न मत्सम्बन्धविधुर इत्यर्थः। विचक्ष्व विमशर्य नौ आवयोः छिद्रं संवन्धवैधुर्यं मनागीषदपि जातु कदाचित् कवयो विद्वांसः न पश्यन्ति। एवं सम्बन्धनियमकथनेनापृथक्सिद्धजातिगुणप्रभादिविशेषणविशिष्टव्यक्तिगुणिमण्यादिवज्जीवेश्वरात्मकं वस्तुविशिष्टरूपेणैकमेवेत्युक्तं भवति। भो इत्यव्ययं सम्बुद्धौ॥ ६२॥ ❀ ❀ एतदेव दृष्टान्तेन दर्शयति यथेति। पुरुषं पुरुषाकारमात्मानं स्वमादर्शे महत्युपाधौ चक्षुषि परस्य चक्षुष्यल्पे उपाधौ द्विधाभूतं वृद्धिभाक्त्वेन ह्रासभाक्त्वेन च द्वेधाभूतं यथाऽवेक्षेत पश्येत् तथा आवयोरप्यन्तरं यथा जातिगुणाद्यपृथक्सिद्धविशेषणविशिष्टं पुरुषाख्यं मांसपिण्डं तत्तद्विशेषणादियुक्तमेकमेव विशिष्टं वस्त्वादर्शचक्षुराद्युपाधिप्रयुक्तवृद्धिह्रासादिगुणविशिष्टमवेक्षेत। एवं शरीरात्मभावेन नियतविशेषणविशेष्यभूतं जीवेश्वरात्मकं विशिष्टमेकमेव वस्तु स्थूलसूक्ष्मशरीरेष्वनुप्रविष्टमुपाधिवशान्नानाभूतमिव पश्यतीत्यर्थः। पुरुषमवेक्षेत इत्यनेनायमर्थोऽवगम्यते—पुरुषो हि जातिगुणाद्यनेकविशेषणविशिष्टः जातिव्यक्त्योरिव गुणगुणिनोरिव प्रभाप्रभावतोरिव शरीरात्मनोरावयोर्भेद इति भावः। बिम्बप्रतिबिम्बयोरिव जीवेशयोरौपाधिको भेदः न स्वाभाविक इति तु नार्थः। आदर्शचक्षुषोरित्युपाधिद्वित्वकथनादादर्शचक्षुर्गतयोः प्रतिबिम्बयोः बिम्बेन साकमभेदेऽपि तयोः परस्परं भेदसद्भावावगमान्न ह्यादर्शप्रतिबिम्बाच्चक्षुःप्रतिबिम्बोऽनन्यः बिम्बप्रतिबिम्बयोरभेदं वदताप्यवश्यं प्रतिबिम्बानां भेदोऽभ्युपगन्तव्यः। अन्यथा बिम्बप्रतिबिम्बयोरिव तेषु वैलक्षण्यं न प्रतीयेत अभेदसाधकसामग्र्यभावाच्च। न ह्येकप्रतिबिम्बत्वं साधकं प्रतिबिम्बानां बिम्बावस्थात्वेन तासां भिन्नत्वादत एव हि पिण्डत्वघटत्वकपालत्वाद्यवस्थानां परस्परभेदा एकमृद्द्रव्यावस्थात्वमात्रेणाभेदाभ्युपगमः प्रतीतिपराहतः। तस्मान्नात्र बिम्बप्रतिबिम्बयोरौपाधिकभेदप्रतिपादनपरोऽयं श्लोकः, किन्तु यथोक्तार्थपर एव। अस्तु वात्र बिम्बप्रतिबिम्बयोरेव दृष्टान्तत्वं तथापि तयोर्यत्साधर्म्यं तदेवात्र दृष्टान्तीकृतं न तु तादात्म्यमप्यविरुद्धोपयुक्तांश-

मात्रेण दृष्टान्तसम्भवाज्जीवब्रह्मणोस्तादात्म्यं त्वेतत्प्रकरणविरुद्धं स्वपरयाथात्म्यज्ञानाभावनिमित्तदेहात्मभ्रमस्वतन्त्रात्मभ्रमवतः तन्निवृत्तये क्रियमाणेऽस्मिंस्तत्त्वोपदेशप्रकरणे जीवपरयोः पारमार्थिकसखित्वप्रतिपादनात्सखित्वं हि पदार्थद्वयनिरूपितम्। न च सखित्वमपि स्त्रीपुंसभावादिवदौपाधिकमेवात्रोपदिश्यत इति वक्तुं शक्यम्। तत्सहोपदिष्टानां हंसत्वादीनामप्यौपाधिकत्वप्रसङ्गात् माया ह्येषा मया सृष्टेतीश्वरस्य संसारयितृत्वावगमाच्च। न हि सर्वज्ञ ईश्वरोऽनुन्मत्तः स्वानर्थरूपं संसारं स्वस्मिन्नारोपयतीति युक्तिमत्। किञ्च येनाग्रे विचकर्थ माया ह्येषा मया सृष्टेति स्रष्टृत्वाक्षिप्तसर्वज्ञत्वादिगुणविशिष्टपरमात्मवाचिनोऽहंशब्दस्य बोधनार्हतोपयोग्यत्वं-संसारित्वविशिष्टजीववाचिनो भवच्छब्दस्य मुख्यार्थपरित्यागेन चैतन्यमात्रैक्यप्रतिपादनपरत्वमस्वरसमिति दिक्। विस्तरस्तु तत्त्वमस्यादिवाक्यस्य जीवब्रह्मतादात्म्यपरत्वे भाष्योक्तदूषणानुसारेणानुसन्धेयः। स्वपक्षे उपपत्तिरपि तदुक्तरीत्या एवानुसन्धेया ॥ ६३ ॥ ❀ ❀ सख्योः संवादमुपसंहरति एवमिति। हंसेन परमात्मनैवं प्रतिबोधितः आवेदितस्वपर-याथात्म्यो मानसः मनसा सह वर्तमानो जीवः तद्व्यभिचारेण पूर्वं स्वपरयाथात्म्यज्ञानाभावेन नष्टां स्मृतिं पुनराप, स्वात्मनो भगवच्छेषतैकरसतामनुसंदधानो मुक्तो बभूवेति भावः ॥ ६४ ॥ ❀ ❀ उपाख्यानमुपसंहरति। हे बर्हिष्मन्नेतद्वृत्तान्त-मध्यात्ममात्मानमधिकृत्य प्रवृत्तं पारोक्ष्येणान्यापदेशमुखेन प्रदर्शितमतो न त्वया केवलं कथामात्रबुद्धिः कर्तव्येति भावः। पारोक्ष्येण किमर्थमुपदिष्टं तत्राह। यद्यस्माद्विश्वस्य कारणभूतो भगवान् परोक्षप्रियः "परोक्षप्रिया इव हि देवाः" इति श्रुत्या देवानां परोक्षप्रियत्वावगमाद्देवतासार्वभौमो भगवान् परोक्षवादेन नितरां तुष्यतीति एवमुक्तमित्यर्थः। इदं श्रोतुरस्मिन् श्रद्धावृद्धिम्न उक्तं परोक्षप्रिया इव हि देवा इत्यर्थस्यार्थवादत्वादन्यथा साक्षात्कृतैः श्रवणकीर्तनादिभिर्भगवतस्तोषाभावप्रसङ्गाच्च तस्मात्पारोक्ष्यकीर्तनं श्रोतुर्बुद्ध्यवधानार्थमेवेति द्रष्टव्यम् ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्यकृतायां श्रीभागवतचंद्रचंद्रिकायामष्टाविंशोऽध्यायः ॥ २८ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

प्रारब्धकर्मणैवंविधफलानुभवार्थं मया मदन्तर्यामिणा हरिणा सृष्टा संक्लृप्तैषा माया बन्धकशक्तिरिच्छा वा सा चाचिन्त्यमहिमेत्याह यदिति। तर्हि किं तत्त्वज्ञानमिति तद्विविच्याह हंसमिति। तत्त्वतो नामगोत्रादिराहित्येन चेतनं हंसं निर्मलं पश्य आत्मनो हरेर्गतिं तत्तत्सत्ताप्रदत्वेन स्थितां पश्य आत्मनो मम गतिं त्वां प्रबोध्य गच्छतो मम यात्रां पश्येति वा। अनेन बोध्यबोधकयोरनुभवसिद्धत्वादबाधितो भेद इति ज्ञातव्यम् ॥ ६१ ॥ ❀ ❀ ननु "कर्माणि विज्ञानमयश्चात्मा परेऽव्यये सर्वे एकीभवन्ति तत्त्वमस्यहं ब्रह्मास्मि" इत्यादिश्रुतिभिरैक्यस्य प्रतिपाद्यत्वात्कथं भेदोऽबाधित इति ज्ञायते? न चेदमौपचारिकं गुरुशिष्योपदेशत्वाद्विप्रलंभानुपपत्तेरित्याशङ्क्य जीवसत्ताप्रदत्वाच्चेतनत्वेन तत्सदृशत्वाच्चाभेदव्यपदेशः "तद्गुण-सारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" इति सूत्रात् "जीवसत्ताप्रदत्वात्तु सदृशत्वाच्च केशवः। कथ्यते तदभेदेन न तु जीवस्वरूपतः॥" इति प्रमाणविरोधबाहुल्यात् "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदि"ति दूषितत्वाच्चाभेदस्येत्यभिप्रेत्याह अहमिति। भवानहं त्वं मत्तोऽन्यो न च त्वन्तु अहमेवेति विचक्ष्व पश्य, अत्र प्रमाणमाह नेति। कवयस्तत्त्वदर्शिनः कचिन्मनागल्पमपि नावयोश्छिद्र-मन्तरं पश्यन्ति "द्रव्यं कर्म च कालश्च" इति वाक्यार्थं पश्यन्तोऽस्मदन्तर्यामिणमन्तरेणावयोः सत्तापि नास्ति, किमुत इष्टानिष्ट-प्राप्तिपरिहारलक्षणप्रवृत्तौ शक्तिरित्यतः शून्यदेशीययोरन्तर्यामिणस्तत्प्रखर्परागन्योरिव भेदं पश्यन्तोऽपि न पश्यन्तीत्यभिप्रायः। भवदन्तर्यामी मदन्तर्यामी चान्यो न भवति किन्तु त्वमेवाहमेक एवेति जानीहि त्वयि स्थितस्त्वमित्यसाविति प्रमाणयतां कवीनां दर्शनादिति वाहं भवान्न, किन्तु त्वमन्यः। अतस्त्वं त्वमेवाहमहमेवेति विचक्ष्व अन्यथा न पश्य, कुतः नौ मनाक् छिद्रं कियानेव विशेष इति न पश्यन्ति किन्तु महान्तं भेदं पश्यन्तीति वा ॥ ६२ ॥ ❀ ❀ जीवसत्ताप्रदत्वाज्जीवेनाभेदः परस्येत्यत्र दृष्टान्तमाह यथेति। आदर्शचक्षुषोः प्रतीयमानस्य प्रतिबिम्बस्य सत्तादेर्बिन्दुर्बिम्बाधीनत्वात्तदेमितिवदावयोरन्तरं मत्सत्ताया अप्यस्मत्स्वाम्यधीनत्वादावां तदभिन्नाविति व्यवहारः यथा दर्पणाद्युपाधिष्वेकमात्मानं बहुधा पश्यन्ति तथावयो-रन्तर्यामिणोरन्तरमिति वा ॥ ६३ ॥ ❀ ❀ उपसंहरति एवमिति। तद्व्यभिचारेण विषयबुद्धिप्रसङ्गातिशयेन नष्टां तिरोहितां स्मृतिं शास्त्रविषयामापेत्यन्वयः ॥ ६४ ॥ ❀ ❀ कथा बाह्याध्यात्मपक्षभेदेन निरूप्यते इत्येतत्कथमवगतमिति तत्राह बर्हिष्मन्निति। परोक्षेणान्यापदेशेन एवं कथने किङ्कारणं तत्राह यत्परोक्षेति। "परोक्षप्रिया इव हि देवाः" इत्यादिश्रुतिः। अनेनाहं भवानित्यादेरप्यस्मदुक्त एवार्थो न प्रातीतिक इत्येतत्सुतरामबोधि ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् अष्टाविंशोऽध्यायः ॥ २८ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

हंसावित्यत्र हंसमिति चित्सुखः मामिति शेषः, पश्याथ नौ इति कचित् ॥ ६१ ॥ ❀ ❀ सख्योपयोगि शुद्धत्वं प्रतिपादयन् द्वयोरैकात्म्यं स्थापयति। नोभयमित्यधिकेनाहमित्येकेन ॥ ६२ ॥ ❀ ❀ ननु द्वयोरन्तरत्वे सति कथं माया

तत्राधिकार्या मम पुनरधिकारिणीति माया ह्येषेत्यत्र दर्शितं कथं वा सख्यं तत्राह यथेति। अत्र विज्ञातृपुरुषाभिमुखेष्वादर्शादिषु स्वच्छेषु चाक्षुषं तेजो लग्नं सत् बलीयसा सौर्य्येण तेजसा प्रतिश्रान्तः प्रवर्त्तितं मुखसंयुक्तं सत् तदेव मुखं ग्राहयन्दोषवशात्तद्देशतामभिमुखतां च मुखस्याग्राहयत्। पूर्वदृष्टाभिमुखादर्शस्य दिग्देशतामाभिमुख्यञ्च मुखमन्वारोपयतीत्येवं ज्ञायते प्रतिबिम्बमिति। केचिन्मन्यन्ते तथा च सति तथैव प्रतीयेत दोषवशादित्यादौ को वा हेतुः सूर्यादिप्रतिबिम्बे च तद्विरोधिकल्पनान्तरं मृग्येत तथा सूर्यप्रतिबिम्बाभासोत्पत्तिर्यत्र दृश्यते तत्र चाभासे यदौष्ण्यादिकमनुभूयते तत्र को वा हेतुः। तस्मादन्यथानुपपत्त्येदमेव लभ्यते सर्वस्य वस्तुन आकारानुकारिणी च्छटा सर्वत्राव्यवहितं देशे सञ्चरत्येव, किन्तु सूक्ष्मत्वान्नोपलभ्यते स्वच्छं वस्त्वन्तरं प्राप्य तु समुद्भवन्ती तत्राक्षरमुद्रावद्विपरीततयोदयं प्राप्नुवती प्रतिबिम्बमुच्यते। यद्वा स्वच्छवस्तुनस्तथैवेश्वरदत्ता शक्तिः यद्बिम्बस्य रूपं स्वस्मिन् भासयतीति तत्प्रतिभासितमेव प्रतिबिम्बत्वं यदेव बिम्बत्वं व्यवहितेऽपि देशे निजाभासमुद्गिरतीति। तस्मादयमर्थः आदर्शे स्वच्छवस्तुन्यात्मनो निजदेहस्यानन्याकारच्छटात्वेन स्वचक्षुषि च बहिर्निःसृततदिन्द्रियमयकेवलं तत्तेजसि साक्षात्तद्रूपात्मत्वेनात्मानमेव यथा द्विधा भूतमेवेक्षते लोकस्तथैवावयोरन्तरं भेदांशः मच्छटांशरूपस्य शुद्धजीवस्यैव प्राकृतोपाधौ प्रतिफलनप्रायत्वादिति भावः। चक्षुषो निकृष्टप्रतिबिम्बोपाधितया व्याख्यानन्तु विचार्य चक्षुःशब्देन सन्निहितं स्वचक्षुः परित्यज्य परचक्षुर्वचनं कष्टं स्वचक्षुर्वचनं तु स्पष्टं सति च स्पष्टे तैलादिदृष्टान्ते तदुपादानं नोपादेयमिति। स एष चाभेदात्मको भेदः सख्यदार्ढ्यायैव निर्दिष्टः, जानासि किं सखायं मामिति हंसावहञ्च त्वं चार्य ! सखायावित्युपक्रमाभ्यासाद्यनुसारात्॥ ६३ ॥ ❀ ❀ मुनिरपि तथैवोपसंहरति एवमिति। स्वस्थः प्राधानिकावेशरहितः सन् तद्व्यभिचारेण पूर्वमीश्वराख्यहंसबहिर्मुखतया नष्टां तिरोहितां स्मृतिं जानासि अपि किं सखायं मामिति अपि स्मरसि चात्मानमविज्ञातसखमित्यत्र पूर्वोक्तं सख्यानुसन्धानं पुनराप इति। अत्र पुनःशब्देन स्मृतिशब्देन तद्विस्मृतेर्नाशादखण्डनं विवक्षितम्। किन्तु अनाद्यावृतस्यापि सख्यस्य स्वाभाविकत्वादनादित्वमित्येव कृतहान्यकृताभ्यागमप्रसङ्गात्॥ ६४ ॥ ❀ ❀ अस्य सर्वस्यापि प्रसङ्गस्य भगवत्प्रीतिपरमेव स्पष्टयति यदिति॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्याष्टाविंशोऽध्यायः॥ २८ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

ननु यद्येवं तर्हि कथं मे तथा तथा प्रतीतिस्तत्राह मायेति। यद्यतः कदाचित् स्वं पुमांसं मन्यसे कदाचित् सतीं स्त्रियं कदाचिन्नोभयं नपुंसकमित्यर्थः। उपलक्षणमेतत् कदाचिन्मनुष्यं कदाचिद्देवतिर्यगादिकं च यद्यस्माद्वै निश्चितमावां हंसौ शुद्धौ आवयोर्गतिं वक्ष्यमाणाम्॥ ६१ ॥ ❀ ❀ अहं परमात्मैव भवान् जीवः न चान्यः मत्तश्चैतन्यस्वरूपान्न भिन्न इत्यर्थः। ननु किमेतन्मदसह्यं ब्रूषे तत्राह भो मच्छुद्धभक्त ! अहमकोपं यथा स्यात्तथा त्वमेव विचक्ष्व सविमर्शं पश्य। "हन्तु कोपे समाख्यातः शिवे च कुक्कुरेऽपि च" इति मेदिनी। ननु त्वद्दासस्य मम तथा मत्प्रभोस्तवापि नातः परोऽन्यः कलङ्को यदावयोरभेद इति तत्राह नेति। नौ आवयोश्छिद्रमीदृशं कलङ्कं जातु कदाचिदपि मनागीषदपि कवयो विज्ञा न पश्यन्ति किन्त्वविज्ञा एव भेदं पश्यन्तीत्यर्थः॥ ६२ ॥ ❀ ❀ नन्वहं भवानिति त्वदुक्तिरेव सोढुमशक्या तत्र मा कुप्यावधेहीत्याह यथेति। पुरुषो जीव आत्मानं स्वं एकमपि मोक्षदशायां बन्धदशायाञ्च क्रमेण आदर्शचक्षुषोर्द्विधाभूतमादर्शे मणिमयदर्पणे यथोचितप्रमाणं सम्पूर्णतेजस्कं महान्तमचञ्चलमीक्षेत चक्षुषि तु अत्यल्पप्रमाणमल्पतेजस्कमतिक्षुद्रं चलं च ईक्षेत यथेति। यथा एकस्यापि द्विधा भूतत्वमुपाधिधर्मालिप्तत्वालिप्तत्वाभ्यां भेदमीक्षेत तथैव आवयोः परमात्मजीवात्मनोः सदैव द्विधाभूतयोरन्तरं सदैव भेदमीक्षेत। "अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये" इत्यमरः। अहं देहमध्ये परमात्मस्वरूपेण वर्त्ते त्वञ्च जीवो वर्त्तसे तत्राह स्वतो निरुपाधिरपि स्वैरतया सकललोकदेहगतः सन्नन्तर्यामी स्वसमुचितप्रमाणः सम्पूर्णतेजस्को महानिश्चलो मुक्तजीव इव सदैव निर्लेप एव। जीवः अत्यल्पप्रमाण एव अत्यल्पतेजस्कोऽतिक्षुद्रः सदैव उपाधिधर्मग्रस्तः कदाचिदेव मुक्तिदशायामलिप्त इति सदैवावयोर्भेदं जानीयादित्यर्थः। यदुक्तमहं भवान्न चान्य इति तत् खलु अहं यथा चित् तथा मद्भक्तो भवानपि चिन्न तु जडो मायेत्यर्थः। एतत्पद्ययोरर्थान्तरन्तु शास्त्रस्यास्य मोहिनीत्वख्यापकमसुरैरेव ग्राह्यम्, एकात्मवादस्य भगवदनभिमतत्वात्। यदुक्तम् तृतीये भगवतैव"यथोल्मुकाद्विस्फुलिङ्गाद्धूमाद्वापि स्वसम्भवात्। अप्यात्मत्वेनाभिमतात् यथाग्निः पृथगुल्मुकात्॥ भूतेन्द्रियान्तःकरणात् प्रधानाज्जीवसञ्ज्ञितात्। आत्मा तथा पृथग्द्रष्टा भगवान् ब्रह्मसंज्ञितः" इति श्रुत्या च "यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति" इति स्मृत्या च "एकदेशे स्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा" इति तथा सच्चिदानन्दविग्रहो भगवान् निरुपाधिरेव। तस्य विद्योपाधित्वमथासुरमतेनैवोक्तमिति ज्ञेयम्॥ ६३ ॥ ❀ ❀ उपसंहरति एवमिति। स्वस्थः प्राधानिकावेशरहितः। तद्व्यभिचारेण भगवद्वैमुख्येन नष्टां स्मृतिं पूर्वमेव श्रीगुरुभक्त्या प्राप्तमेव पुनः प्राप। अत्रास्यासायुज्यकथनात् सुपर्णश्रुतेर्वैलक्षण्याच्च प्रेमवत्पार्षदत्वप्राप्तिरेव श्रीनारदेन परमपुरुषार्थोऽभिमतो ज्ञेयः॥ ६४ ॥ ❀ ❀ कथामात्रमिदमिति बुद्धिं मा कृथा इत्याह। बर्हिष्मन्निति पारोक्ष्येण राजकथामिषेण तत्र हेतुः। यद्यस्मात् तदेव त्रैकालिकीयं कथा कथितेति भावः॥ ६५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। अष्टाविंशश्चतुर्थस्य सङ्गतः सङ्गतः सताम्॥ २८ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

तामेव गतिं वर्णयति अहमिति द्वाभ्याम्। अहं भवानेव नान्यः त्वं चाहमेव नान्यः भो सखे ! इति त्वं विचक्ष्व। ननु परिच्छिन्नत्वबुद्धिवश्यत्वाज्ञत्वादिधर्मिणो मम परिपूर्णत्वादिधर्मिणा भगवता सह अहं भवान् त्वमहमित्यैक्यं कथं घटते इत्यत्राह। कवयः मनाक् ईषदपि जातु कदाचिदपि नौ आवयोः छिद्रं पृथगवस्थानं न पश्यन्ति। न हि अंशांशिनोः गुण गुणिनोः प्रभाप्रभावतोः जातिव्यक्त्योः कार्यकारणयोः पृथगवस्थानं संभवति। ततः स्वरूपतो भिन्नयोरप्यावयोः पृथगवस्थानाभावादभेद इति स्वरूपतो आवयोर्भेदाभेदसम्बन्ध इत्यर्थः। अत्र प्रमाणभूतं शास्त्रं पूर्वमेवोदाहृतम्॥ ६२॥ ❀ ❀ स्वाभाविकभेदसम्बन्धमेव दृष्टान्तेनोपपादयति यथेति। यथा पुमान् आत्मानं स्वभावत एकमेव देहमादर्शे चक्षुषि च स्वाग्रिमपुरुषान्तरनेत्रे च द्विधाभूतं स्वभावत एव चक्षुराद्यवयवगणेन युक्तत्वाद् द्विप्रकारं जातमवेक्षेत तथैव आवयोरपि अभेदे सत्येव चान्तरं भेदमवेक्षेतेति योजना॥ ६३॥ ❀ ❀ तदव्यभिचारेण चात्मपरमात्मस्मृतिपूर्वकबुद्ध्याद्यनात्मासक्तिरूपेण नष्टां स्मृतिमात्मपरमात्मस्मृतिं पुनराप॥ ६४॥ ❀ ❀ इति उपसंहरति बर्हिष्मन्निति। परोक्षेण राजकथामिषेण॥ ६५॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे अष्टाविंशाध्यायार्थप्रकाशः॥ २८॥

**गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी**

ननु कथं तर्हि तथा तथा प्रतीतिरित्याशङ्क्याह—मायेति, यत्पूर्वजन्मनि त्वमात्मानं पुमांसममन्यथास्तथेदानीं सतीं श्रेष्ठां स्त्रियं यन्मन्यसे सैषा माया मया सृष्टा। यत उभयमपि वस्तु नास्ति, स्त्रीपुरुषशरीराध्यासेनैव जीवे तथा व्यवहारात् यत् यस्मात् वै निश्चयेन आवां हंसौ शुद्धौ। अतः आवयोर्वक्ष्यमाणां गतिं स्वरूपं पश्य॥ ६१॥ ❀ ❀ तत्र तत्त्वमस्यादिवाक्योक्तं ब्रह्मात्मैक्यमुपदिशति—अहमिति, अहं ब्रह्मैव भवानिति विचक्ष्व, इति दुःखसुखादिमनोधर्मास्त्वया स्वस्मिन्नारोपितास्ते त्वयि सन्तीति सूचितम्। न च मत्तोऽन्यस्त्वमिति पुत्रादिष्विवौपचारिकमैक्यं नावयोः किन्तु मुख्यमेवेति दर्शितम्। त्वमेवाहमिति विचक्ष्व पश्येति पारोक्ष्यं निराकृतम्। भो सखे इति सम्बोधनं विश्वासार्थम्। एवं दर्शने सदाचारं प्रमाणमाह—नेति। यतो वस्तुतो भेदो नास्त्यतः कवयो विवेकिनो नौ आवयोर्मनाक् ईषदपि छिद्रमन्तरं भेदं जातु कदाचिदपि न पश्यन्तीत्यन्वयः॥ ६२॥ ❀ ❀ ननु कथं तर्ह्यावयोरज्ञत्वसर्वज्ञत्वादिभेदप्रतीतिस्तत्राह—यथेति। यथा पुरुषः प्राणी एकमेवात्मानं स्वदेहं आदर्शे निर्मलं महान्तं स्थिरं तेजस्विनं परस्य चक्षुषि च ततो विपरीतं समलं तुच्छं निस्तेजसमेवं द्विधाभूतं द्विप्रकारकमवेक्षेत पश्यति तथैव आवयोरपि विद्याकृतं सर्वज्ञत्वादि अविद्याकृतं च अज्ञत्वादि अन्तरं भेदः, न स्वरूपेण वस्तुतो भेदोऽस्तीति विज्ञेयम्। तदुक्तमेकादशस्कन्धे 'आत्मानमन्यं च स वेद विद्वानपिप्पलादो न तु पिप्पलादः। योऽविद्यया युक् स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्तः' इति॥ ६३॥ ❀ ❀ इतिहासमुपसंहरति–एवमिति। एवमुक्तप्रकारेण यः पूर्वं पुरञ्जनत्वेनेदानीं वैदर्भीत्वेन चोक्तः स मानसो मानससरोनिवासी हंसो हंसेनाविज्ञातनाम्ना सख्या प्रतिबोधितः अतः स्वस्थः पतिवियोगजनितं शोकं विहाय सावधानचित्तः सन् तदव्यभिचारेण तेन सख्या सह विभागेन नष्टामात्मनः स्मृतिं स्वरूपज्ञानं पुनरपि प्राप्तवानित्यर्थः। पक्षान्तरे तु राजस्यादिबुद्ध्याद्यध्यासेन विमोहितो जीवो विषयाभिनिविष्टत्वेन नाना कर्माणि कुर्वन्ननन्तकोटिसंवत्सरान्नानायोनिषु भ्राम्यन् कदाचित् सत्सङ्गेन सञ्जातविषयविरागो लब्धगुरुभगवद्भक्तिश्च "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥" इति श्रुतेः 'ददामि बुद्धियोगं तं येन मामुपयान्ति ते' इति वाक्याच्च भगवत्प्रसादात्तद्वैमुख्येन नष्टमात्मतत्त्वज्ञानं पुनः प्राप्तवांस्तदा जीवन्मुक्तो बभूवेत्यर्थः॥ ६४॥ ❀ ❀ एवं पारोक्ष्येण अध्यात्मतत्त्वनिरूपणे कृतेऽपि यदि प्राचीनबर्हिषस्तद्बोधार्थं आकाङ्क्षा न स्यात्तदा निरूपणप्रयासो वृथेति मत्वा तदबोधं ज्ञात्वा च बोधाकाङ्क्षोत्पादनार्थमाह–बर्हिष्मन्निति सम्बोधनं सावधानतार्थम्। पारोक्ष्येण राजकथामिषेण अध्यात्मं शरीरादिविवेकेन आत्मतत्त्वं प्रदर्शितमतः कथामात्रं कथितमिति बुद्धिं मा कृथा इति शेषः। तथा प्रदर्शने हेतुमाह–यदिति, यत् यस्मात् भगवान् परोक्षकथनमेव प्रियं यस्य सः। तत्प्रीतये एवं कथितमिति भावः। तत्र हेतुं सूचयन् विशिनष्टि–विश्वं भावयति वर्द्धयतीति विश्वभावनः, दीव्यति विश्वरूपेण क्रीडतीति देवः। तथा च स्पष्टकथनेऽनेकेषां ज्ञानेन मोक्षे विश्वह्रासप्रसङ्गः, स च तस्यानभिप्रेतः, अतः परोक्षमेव तस्य प्रियमिति भावः॥ ६५॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे मोक्षनिरूपणे। अष्टाविंशो गतो वृत्तिं विनाशादिनिरूपकः॥ ३॥

भाषानुवादः

तुम पहले जन्ममें अपनेको पुरुष समझते थे और अब सती स्त्री मानते हो—यह सब मेरी ही फैलायी हुई माया है। वास्तवमें तुम न पुरुष हो न स्त्री। हम दोनों तो हंस हैं; हमारा जो वास्तविक स्वरूप है, उसका अनुभव करो ॥ ६१ ॥ ❁ ❁ मित्र! जो मैं (ईश्वर) हूँ, वही तुम (जीव) हो। तुम मुझसे भिन्न नहीं हो और तुम विचारपूर्वक देखो, मैं भी वही हूँ, जो तुम हो। ज्ञानी पुरुष हम दोनोंमें कभी थोड़ा-सा भी अन्तर नहीं देखते ॥ ६२ ॥ जैसे एक पुरुष अपने शरीरकी परछाईंको शीशेमें और किसी व्यक्तिके नेत्रमें भिन्न-भिन्न रूपसे और अविद्याकी उपाधिके भेदसे अपनेको ईश्वर और जीवके रूपमें दो प्रकारसे देख रहा है ॥ ६३ ॥ ❁ ❁ इस प्रकार जब हंस (ईश्वर) ने उसे सावधान किया, तब वह मानससरोवरका हंस (जीव) अपने स्वरूपमें स्थित हो गया और उसे अपने मित्रके विछोहसे भूला हुआ आत्मज्ञान फिर प्राप्त हो गया ॥ ६४ ॥ ❁ ❁ प्राचीनबर्हि! मैंने तुम्हें परोक्षरूपसे यह आत्मज्ञानका दिग्दर्शन कराया है; क्योंकि जगत्कर्ता जगदीश्वरको परोक्ष वर्णन ही अधिक प्रिय है ॥ ६५ ॥

## इत्यष्टाविंशोऽध्यायः ॥ २८ ॥



# अथैकोनत्रिंशोऽध्यायः

प्राचीनबर्हिरुवाच

भगवंस्ते वचोऽस्माभिर्न सम्यगवगम्यते । कवयस्तद्विजानन्ति न वयं कर्ममोहिताः ॥ १ ॥

नारद उवाच

पुरुषं पुरञ्जनं विद्याद्यद् व्यनक्त्यात्मनः पुरम् । एकद्वित्रिचतुष्पादं बहुपादमपादकम् ॥ २ ॥
योऽविज्ञाताहृतस्तस्य पुरुषस्य सखेश्वरः । यन्न विज्ञायते पुम्भिर्नामभिर्वा क्रियागुणैः ॥ ३ ॥
यदा जिघृक्षन् पुरुषः कार्त्स्न्येन प्रकृतेर्गुणान् । नवद्वारं द्विहस्ताङ्घ्रि तत्रामनुत साध्विति ॥ ४ ॥
बुद्धिं तु प्रमदां विद्यान्ममाहमिति यत्कृतम् । यामधिष्ठाय देहेऽस्मिन् पुमान् भुङ्क्तेऽक्षभिर्गुणान् ॥५॥
सखाय इन्द्रियगणा ज्ञानं कर्म च यत्कृतम् । सख्यस्तद्वृत्तयः प्राणः पञ्चवृत्तिर्यथोरगः ॥ ६ ॥
बृहद्बलं मनो विद्यादुभयेन्द्रियनायकम् । पञ्चालाः पञ्च विषया यन्मध्ये नवखं पुरम् ॥ ७ ॥
अक्षिणी नासिके कर्णौ मुखं शिश्नगुदाविति । द्वे द्वे द्वारौ बहिर्याति यस्तदिन्द्रियसंयुतः ॥ ८ ॥
अक्षिणी नासिके आस्यमिति पञ्च पुरः कृताः । दक्षिणा दक्षिणः कर्ण उत्तरा चोत्तरः स्मृतः ॥ ९ ॥
पश्चिमे इत्यधोद्वारौ गुदं शिश्नमिहोच्यते[3] । खद्योताऽऽविर्मुखी चात्र नेत्रे एकत्र निर्मिते ॥
रूपं विभ्राजितं ताभ्यां विचष्टे चक्षुषेश्वरः ॥ १० ॥

अन्वयः—भगवन् ते वचः अस्माभिः सम्यक् न अवगम्यते कवयः तत् विजानंति कर्ममोहिताः वयम् न ॥ १ ॥ ❀ ❀ पुरुषम् पुरंजनम् विद्यात् यत् एकद्वित्रिचतुष्पादम् बहुपादम् अपादकम् आत्मनः पुरम् व्यनक्ति ॥ २ ॥ ❀ ❀ यः अविज्ञाताहृतः तस्य पुरुषस्य सखा ईश्वरः यत् पुंभिः नामभिः क्रियागुणैः वा न विज्ञायते ॥ ३ ॥ ❀ ❀ यदा पुरुषः कार्त्स्न्येन प्रकृतेः गुणान् जिघृक्षन् तत्र नवद्वारम् द्विहस्तांघ्रि साधु इति अमनुत ॥ ४ ॥ ❀ ❀ मम अहम् इति यत्कृतम् प्रमदाम् तु बुद्धिम् विद्यात् याम् अधिष्ठाय पुमान् अस्मिन् देहे अभिः गुणान् भुंक्ते ॥ ५ ॥ ❀ ❀ ज्ञानम् च कर्म यत्कृतम् सखायः इंद्रियगणाः सख्यः तद्वृत्तयः यथा उरगः प्राणः पंचवृत्तिः प्राणः ॥ ६ ॥ ❀ ❀ उभयेंद्रियनायकम् बृहद्बलम् मनः विद्यात् पंचालाः पंच विषयाः यन्मध्ये नवखम् पुरम् ॥ ७ ॥ ❀ ❀ अक्षिणी नासिके कर्णौ मुखम् शिश्नगुदौ इति द्वे द्वे द्वारौयः तदिंद्रियसंयुतः ताभिः बहिः याति ॥ ८ ॥ ❀ ❀ अक्षिणी नासिके आस्यं इति पंच पुरः कृताः दक्षिणा दक्षिणः कर्णः उत्तरा च उत्तरः स्मृतः ॥ ९ ॥ ❀ ❀ इह पश्चिमे अधोद्वारौ गुदम् शिश्नम् इति उच्यते अत्र खद्योता आविर्मुखी च एकत्र निर्मिते नेत्रे चक्षुषा ईश्वरः ताभ्याम् विभ्राजितम् रूपम् विचष्टे ॥ १० ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

ऊनत्रिंशे परोक्षार्थव्याख्यानेनोपसंहृतम् । स्त्रीसंगतो भवस्त्वीशसंगान्मुक्तिरिति स्फुटम् ॥ ( १ ) ॥

कवयोऽध्यात्मविदः ॥ १ ॥ ❀ ❀ व्यनक्ति लिंपति चेतनीकरोतीत्यर्थः । यद्वा व्यनक्ति प्रकटयति ततश्च स्वकर्मणा पुरं जनयतीति पुरंजनपदं व्याख्यातं भवति । एकद्व्यादयः पादा यस्य ॥ २ ॥ ❀ ❀ अविज्ञातशब्देनाहृतो व्याहृत उक्तो यः स ईश्वरः । अविज्ञातनामनिरुक्तिः यद्यस्मात्पुंभिर्नामादियोगेन न विज्ञायते ॥ ३ ॥ ❀ ❀ तत्र तेषु पुरेषु मध्ये ॥ ४ ॥ ❀ ❀ अक्षभिरिंद्रियैः ॥ ५ ॥ ❀ ❀ पंचवृत्तित्वात्पंचशिराः सर्प इव प्राणः ॥ ६ ॥ ❀ ❀ एकादशमहाभट इत्यनेन एकादशो महाभटो नायक इत्युक्तस्तं दर्शयति । बृहद्बलं यस्य तन्मनः नव खानि द्वाराणि यस्य

---

१. प्रा० पा०—नापुरं । २. प्रा० पा०—मन्यत । ३. प्रा० पा०—मिहोदिते । ४. प्रा० पा०—विचक्षे ।

तत ॥ ७ ॥ ❀ ❀ द्युमत्सख इत्यादेरर्थं संक्षेपेणाह । यस्तदिंद्रियसंयुतः स आत्मा ताभिर्द्वार्भिर्बहिर्यातीति ॥ ८ ॥ ❀ ❀ पुरः पूर्वभागे कृताः ॥ ९ ॥ ❀ ❀ नेत्रे इति रूपमिति चक्षुषेति खद्योतादीनां व्याख्यानम् । शेषोऽनुवादः ईश्वरः पुरंजनः ॥ १० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स्त्रीसंगात्संसारः । यद्वा संगतः स्त्र्यभवत् ( १ ) । भगवन्निति । भगवदभिप्रायस्य दुर्ज्ञेयत्वं कृपालुत्वं च द्योतयतीति । अज्ञाने हेतुः कर्ममोहिता इति ॥ १ ॥ ❀ ❀ इत्यर्थ इति । चेतनीकरणमेवात्र अक्षणपदार्थत्वेनोक्तं लेपनमिति भावः । 'येन चेतयते विश्वम्' इत्याद्युक्तेश्चेतनीकरणमीश्वर एव पर्यवस्यति न तु जीव इति चेदाह-यद्वेति । एकः पादः पिशाचादेः । द्वौ मनुष्यादेः । त्रयो ज्वरादेः । चत्वारः पश्वादेः । बहवः खार्जूर्यादेः । अपादः सर्पादिरिति ॥ २ ॥ ❀ ❀ नामभिरीश्वरादिभिः । क्रियाभिर्जीवप्रेरणादिभिः । गुणैः सर्वज्ञत्वादिभिः ॥ ३ ॥ ❀ ❀ कात्स्न्र्येन सामस्त्येन । प्रकृतेर्गुणान्स्रक्चंदनादिविषयान् । तत्र तदा । अंघ्रिमित्यार्षं पुंस्त्वम् ॥ ४ ॥ ❀ ❀ गुणान् विषयान् ॥ ५-६ ॥ ❀ ❀ बृहद्बलं "मनसा वा अग्रे संकल्पयत्यथ वाचा वदति" इति श्रुतेः । ज्ञानकर्मेंद्रियाणां विषयं प्रति नेतृत्वादुभयेंद्रियनायकमित्युक्तम् "आत्मा मनसा संयुज्यते मन इंद्रियेणेंद्रियं विषयेण ततः प्रत्यक्षम्" इति तांत्रिकोक्तेः । येषां विषयाणां मध्ये । "खं शून्याकाशच्छिद्रेषु" इत्यभिधानात् । विषयैरावृतत्वाद्यन्मध्य इत्युक्तम् ॥ ७ ॥ ❀ ❀ द्वे द्वे इति । मुखातिरिक्तश्रोत्राद्यूर्ध्वद्वारापेक्षयोक्तं द्वाभ्यां द्वाभ्यां द्वार्भ्यामित्यर्थः । तृतीयार्थे द्वितीया । बहिर्यातिं कः यस्तदिंद्रियसंयुतो जीव इत्यर्थः ॥ ७-९ ॥ ❀ ❀ अत्र प्रकृते चक्षुषेति द्युमत्सख इत्यस्य व्याख्यानम् ॥ १० ॥

## श्रीमद्वीरराघवव्याख्या

एतदध्यात्मं पारोक्ष्येण प्रदर्शितमित्युक्तम् । तत्राध्यात्मत्वे कथं पुरञ्जनपदव्युत्पत्तिरिति विवित्सायां राजा पृच्छति भगवन्निति । हे भगवन् ! तेऽध्यात्मविदुत्तमस्य ते तव वचः परोक्षरूपं वाक्यमस्माभिः केवलं देहात्मबुद्धिभिः सम्यक् नावगम्यते नावबुध्यते । अध्यात्मविदस्तु त्वद्वचो जानन्ति, कर्मस्वेव यज्ञादावेव मोहिताः । यद्वा कर्मणा पुण्यापुण्यादिकर्मणा तिरोहितस्वपरयाथात्म्याः वयं कथं जानीमः ॥ १ ॥ ❀ ❀ एवमापृष्टो भगवान्नारदः पुरञ्जनादीनि पदान्यध्यात्मपक्षानुकूलतया व्युत्पादयति पुरुषमित्यादिना । पुरुषं क्षेत्रज्ञं पुरञ्जनं पुरञ्जनशब्दबोध्यं विद्यात् । पुरुषे पुरञ्जनपदप्रवृत्तौ निमित्तमाह । यः पुरुषः आत्मना मनसा सह पुरं शरीरं व्यनक्ति दृढतरं संबध्नातीति पुरञ्जनः पूःशब्दे उपपदे अञ्जेर्ल्युट् । पूःशब्दस्तु शरीरे गौण्या वृत्त्या प्रयुज्यते, न ह्यत्र सर्वाणि पदानि मुख्यार्थान्येवेत्याग्रह इति भावः । पुरं विशिनष्टि । एकद्वित्र्यादयः पादा यस्य बहवः पादा यस्य न विद्यन्ते पादा यस्य तत् ॥ २ ॥ ❀ ❀ योऽविज्ञातशब्देनाहूत उक्तः, तस्य पुरञ्जनाख्यस्य पुरुषस्य सखा स ईश्वरः तस्मिन्नविज्ञातशब्दप्रवृत्तिनिमित्तमाह । यद्यस्मात्पुंभिर्नामादिभिर्न विज्ञायते इत्यविज्ञातः । यद्यपि हरिविष्ण्वादिनामभिः जगद्व्यापारादिक्रियाभिः सत्यज्ञानादिगुणैश्च शास्त्रतो ज्ञायत एव, तथापीयत्तया न ज्ञायते नामक्रियागुणानामानन्त्यादिति भावः । न विज्ञायत इति कर्मणि व्युत्पत्तिः कर्त्तरि व्युत्पत्तेरप्युपलक्षणं सा च दर्शिता पुरस्तात् ॥ ३ ॥ ❀ ❀ यदायं पुरुषः क्षेत्रज्ञः प्रकृतेर्गुणान् ज्ञानकर्मोभयेन्द्रियविषयान्कात्स्न्र्येन अजिघृक्षद् ग्रहीतुमैच्छदनुभवितुमैच्छदित्यर्थः । तदा नव द्वाराणि छिद्राणि यस्य द्वौ हस्तौ पादौ च यस्य तन्मनुष्यशरीरं साधु समीचीनमित्यमनुत । तिर्यगादिशरीरेषु सर्वेन्द्रियाणामनभिव्यक्तेः सर्वविषयानुभवासंभवान्मनुष्यशरीरमेव सर्वविषयानुभवयोग्यं मत्वा दैवात्तदुपलभ्य साध्वित्यमनुतेत्यर्थः । अनेन सोऽन्वेषमाणः शरणमित्यादिना कोकिलकूजितैरित्यन्तं व्याख्यातम् ॥ ४ ॥ ❀ ❀ बुद्धिं प्रमदां विद्यात्तत्र प्रमदाशब्दप्रवृत्तौ निमित्तमाह । यद्यया बुद्ध्या ममाहमिति कृतं मदश्चित्तविकारः अहंममाभिमानरूपमदहेतुत्वाद् बुद्धिः प्रमदेत्युच्यत इत्यर्थः । किंच यां बुद्धिमधिष्ठायाक्षभिरिन्द्रियैः गुणान् शब्दादीन् विषयानस्मिन् देहे भुङ्क्ते गुणानुभवजन्यमदहेतुत्वाच्च प्रमदा बुद्धिरित्यर्थः ॥ ५ ॥ ❀ ❀ भृत्यैर्दशभिरायान्तीमित्यस्यार्थमाह सखाय इति । इन्द्रियगणाः ज्ञानकर्मोभयेन्द्रियगणाः सखायः भृत्याः । तत्र सखिशब्दप्रवृत्तिनिमित्तमाह । तद्वृत्तय इन्द्रियवृत्तयः ज्ञानं शब्दादिविषयकं ज्ञानं व्यवहृत्यादानगत्यादिरूपं कर्म च बुद्धिसाध्यं यत्कृतं येनेन्द्रियगणेन कृतं सह प्रवृत्तिमत्त्वेऽन्योन्यापेक्षत्वरूपं सखित्वमत्र विवक्षितम् । एकैकशतनायकैरित्यस्यार्थमाह सख्य इति । तद्वृत्तयः इन्द्रियवृत्तयः सख्यः भवन्ति । पञ्चशीर्षाहिनेत्यस्यार्थमाह प्राण इति । पञ्चवृत्तित्वात्पञ्चशिराः सर्प इव प्राणः ॥ ६ ॥ ❀ ❀ अन्यत्सुगममित्यभिप्रेत्य एकादशमहाभटा इत्यनेनोक्तमेकादशमहाभटमाह । स्वविषयेषु प्रसह्य प्रवर्त्तकत्वात् बृहद्बलं तदत एव ज्ञानकर्मोभयेन्द्रियाणां नायकं मन एकादशो महाभट इत्यर्थः । अत्र प्रकरणे पाञ्चालशब्दो बहुष्वर्थेषु प्रयुक्तः, दक्षिणपाञ्चालमुत्तरपाञ्चालमित्यत्र शास्त्रे, स पाञ्चालपतिरित्यत्रेन्द्रियेषु, पौरञ्जनो वंशः पाञ्चालेष्विति विषयेषु तत्र मुख्यार्थमाह । पञ्चशब्दादयो विषयाः पञ्चालाः पञ्च्यन्ते व्यक्तीक्रियन्ते इति व्युत्पत्तेः तत्संबन्धिषु लाक्षणिकप्रयोगः अनेकार्थकल्पनायोगादिति भावः । सप्तोपरिकृता द्वार

इत्यादेरर्थमाह। यत्पुरं मध्ये यस्य पुरस्य मध्ये नवानां द्वाराणां समाहारः नवखमक्षिनासिकादिरूपमित्यर्थः। यद्वा पुरं मध्ये यन्नवखं यानि नव द्वाराणि तत्र द्वे अक्षिणी द्वे नासिके द्वौ कर्णौ शिश्नगुदौ द्वौ इत्येवं द्वे द्वे द्वारौ मुखमेकमिति मिलित्वा नवखमित्यन्वयः। द्युमत्सख इत्यादेरर्थं संक्षेपेणाह। यस्तदिन्द्रियसंयुतः अक्ष्यादिच्छिद्रगतेन्द्रिययुक्तः स आत्मा ताभिर्द्वार्भिर्बहिर्याति बहिष्ठान् शब्दादिविषयाननुभवति इत्यर्थः॥ ७-८॥ ❀ ❀ पञ्चद्वारस्तु पौरस्त्या इत्यस्यार्थमाह। अक्षिणी नासिके आस्यं मुखमित्येवं पञ्चद्वारः पूर्वभागे कृताः। अत्र व्याख्यायां क्रमो न विवक्षितः, दक्षिणोत्तरद्वारावाह। दक्षिणः कर्णः, अत्र दक्षिणेति प्रतीकोपादानं दक्षिणः कर्ण इति व्याख्यानमेवमग्रेऽपि॥ ९॥ ❀ ❀ पश्चिमे द्वे इत्युक्ते पश्चिमे द्वारावाह इतीति। तत्र पश्चिमे इति प्रतीकग्रहणं तस्याधो द्वाराविति व्याख्यानं ते चाधो द्वारौ के इत्यत्राह गुदशिश्नाविहोदिताविति। इहास्मिन्प्रकरणे उदितौ कथितौ। खद्योताविर्मुखीत्यादेरर्थमाह खद्योतेति। एकत्र निर्मिते लग्ने ये खद्योताविर्मुखीशब्दविवक्षिते द्वारौ ते अत्र प्रकरणे नेत्रे इत्यर्थः। अत्र नेत्रे इति व्याख्यानं शेषः प्रतीकः॥ १०॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

भक्तिजनितज्ञानमेव हरेः प्रसादजनकं न कर्मादिकं तत्र साधनमित्येतदस्मिन्नध्याये निरूप्यते। तत्रादौ प्राचीनबर्हिः स्वयं विद्वानपि लोकोपकाराय सम्यक् पृच्छति भगवन्निति। नारदस्य हर्षार्थं भगवन्निति सम्बोधनमस्माभिरस्मादृशैः प्रवक्तृबोधकशक्त्य-भावपरिहारार्थं सम्यगिति तत्र किङ्कारणं तत्राह न वयमिति। कवीनां कर्माभावेन विविदिषन्ति यज्ञेन दानेनेत्यादिविधानं व्यर्थ-मितीयं शङ्का कवय इत्यनेन पर्यहारि, कर्मणा शुद्धान्तःकरणस्य हर्युपासनासाध्यप्रकारेणातिक्रान्तदर्शनस्य कवित्वात्॥ १॥ ❀ ❀ व्यनक्तीत्यनेन पुरञ्जनपदं निरुक्तं पुरस्य देहस्याञ्जनं यस्मात् स पुरञ्जन इत्यर्थः "अञ्जू व्यक्तीकरण" इति धातुः पुरञ्जनयति प्रकाश-यतीति वा पुरञ्जनः"जनी प्रादुर्भाव"इति धातुः। पुरमपि नैकविधमित्याह एकेति। एकपादादिजातिजन्तुशरीरापेक्षया पिशाचशरीरमपेक्ष्य वा द्वौ पादौ मनुष्यादेस्त्रयः पादा ज्वरादेः चत्वारः पादाः पश्वादेः बहवः पादाः सहस्रपादादेः अपादकं सर्पादि॥ २॥ ❀ ❀ ननु परमाणोरप्यविज्ञातत्वात्किं विशिष्योच्यत इति तत्राह यन्नेति। अनेन भक्तानुग्रहार्थं नामरूपादिग्रहणं न स्वतोऽस्ति न तथा परमाणोः शुक्लभास्वरमपाकजमित्यादिनिरूपितत्त्वावादित्यादि प्रदर्शितम्॥ ३॥ ❀ ❀ यदा प्रकृतेर्गुणान् जिघृक्षन् स्रक्चन्दनादिविषयानादातुमिच्छति तदा नवद्वारादिलक्षणं साधु तत्साधनमिति न्यरूपयत्॥ ४॥ ❀ ❀ अधिगाय "खमच्छमिन्द्रियं श्रोत्रम्" इत्यभिधानादक्षिभिरिन्द्रियैश्चक्षुषा रूपं दृष्ट्वानन्तरमन्येन्द्रियप्रवृत्तिरिति चक्षुषः प्राधान्यद्योतना-याक्षैरित्युक्तिं विहायाक्षिभिरिति गुणान्विषयान्॥ ५॥ ❀ ❀ यत् येनेन्द्रियगणेन तेषामिन्द्रियाणां विषयेषु वृत्तयो व्यापाराः पुररक्षणे यथोरगो निरूपितस्तथा देहरक्षणे "उरस्तु वक्षसि श्रेष्ठ" इत्यभिधानात् उरः श्रेष्ठश्च गमको ब्रह्मप्रापकश्चेत्युरगो मुख्यप्राणः "श्रेष्ठश्च" स एतान् ब्रह्म गमयतीति सूत्रश्रुत्योरयमर्थः। अन्यत्र उरसा वक्षसा गच्छतीत्युरगः सर्पः पञ्चधा वृत्तिर्यस्य स पञ्चवृत्तिः विस्तृतव्यापारो वा फणोत्क्षेपणं फणाया भूमावाक्षेपणं मण्डलीकरणमाकुञ्चनं मण्डलमोक्षः प्रसारणं दीर्घीभूय गमनमिति पञ्चवृत्तिः नागस्य॥ ६॥ ❀ ❀ "मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति" इति श्रुतेः ज्ञानकर्मेन्द्रियाणां विषयं प्रति नेतृत्वादुभयेन्द्रियनायकमित्युक्तम्। एषां विषयाणां मध्ये नव खानि द्वारलक्षणानि छिद्राणि यस्य तत्तथोक्तं तत्पुरं शरीरम्॥ ७॥ ❀ ❀ तत्तदिन्द्रियसंयुतः अक्षादिद्वारेण बहिर्विषयबुभुक्षौ सति नेत्रादीन्द्रियेण विषयं भुङ्क्त इत्यर्थः॥ ८॥ ❀ ❀ अक्षिणी इत्यादिना द्वे द्वे द्वार इत्युक्तं तद्विवेचयति अक्षिणी इति॥ ९॥ ❀ ❀ पश्चिमे द्वे इत्युक्तम् तत्राह पश्चिम इति। खद्योतेत्याद्युक्तम् विवृणोति खद्योतेति॥ १०॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

न सम्यगिति कथारीतेर्बुद्धत्वान्न त्वध्यात्मरीतेः॥ १-२॥ ❀ ❀ आहृत इत्यत्र आह्वय इति चित्सुखः, पुम्भिर-शास्त्रज्ञैः नामादीनां शास्त्रैकवेद्यत्वात्॥ ३-४॥ ❀ ❀ बुद्धिर्ममाहमिति जाग्रत्तमेव ज्ञेयं स्वप्नगतानां तदनुगतत्वात् ॥ ५-७॥ ❀ ❀ द्वे द्वे इति मुखस्यापि वाग्रसनाभेदेन द्वित्वात्॥ ८॥ ❀ ❀ अक्षिणी नासिके इति सार्द्धकम् ॥ ९॥ ❀ ❀ चक्षुषेति द्युमत्-शब्दस्य व्याख्यानम्॥ १०-१३॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

एकोनत्रिंशकेऽध्यात्मपक्षव्याख्यानमुच्यते। कर्मप्रश्नोत्तरं राज्ञो वैराग्यार्थं कथापरा॥ (१)॥

सम्यगिति किञ्चिदवगतश्चेत्यर्थः॥ १॥ ❀ ❀ पुरुषं जीवम्॥ २॥ ❀ ❀ अविज्ञातशब्देन आहृतो व्याहृतो यः स ईश्वरः॥ ३॥ ❀ ❀ तत्र तेषु पुरेषु तिर्य्यगादिषु मध्ये॥ ४॥ ❀ ❀ बुद्धिमविद्यामक्षि-भिरिन्द्रियैः॥ ५॥ ❀ ❀ पञ्चवृत्तित्वात् पञ्चशिराः सर्प इव॥ ६॥ ❀ ❀ एकादशमहाभटा इत्यनेनैकादशो

महाभटो नायक इत्युक्तं तं व्याचष्टे बृहद्बलं यस्य तन्मनः नव खानि द्वाराणि यस्य ॥ ७ ॥ ❀ ❀ द्वे द्वे द्वारौ मुखादिकमेकैका च द्वास्ताभिर्द्वार्भिर्बहिर्याति कः यस्तत्तदिन्द्रिययुक्तो जीव इत्यर्थः ॥ ८ ॥ ❀ ❀ पुरः प्राङ्मुखस्य पुरञ्जनपुरस्य पूर्वभागे कृताः ॥ ९ ॥ ❀ ❀ खद्योतादीनां व्याख्या नेत्रे इति रूपमिति चक्षुषेति द्युमदित्यस्य व्याख्या ॥ १० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ऊनत्रिंशे परोक्षार्थव्याख्यानं करोति। भगवन्नित्यादिना पृष्टः श्रीनारदः ते वचो गूढार्थं वाक्यं नावगम्यते न विबुध्यते ॥ १ ॥ ❀ ❀ पुरुषं जीवं पुरञ्जनं विद्यात् यद्यत आत्मनः पुरं कर्मणा व्यनक्ति प्रकटयति। द्व्यादयः पादा यस्य तत्तथा बहवः पादा यस्य तत् न विद्यन्ते पादा यस्य तत् ॥ २ ॥ ❀ ❀ यः अविज्ञातसखित्वेन आहूतः उदाहृतः स तस्य जीवस्य सखा ईश्वरः यतः नामभिः श्रेष्ठत्वद्योतकैः अहं ऋग्वेदी अहं यजुर्वेदीत्यादिभिः क्रियाभिर्यज्ञतपोवृत्तादिभिर्गुणैरुदारत्वादिभिश्च वाशब्दोऽनुक्तसमुच्चयार्थः विविधैरुपायैः पुंभिर्न विज्ञायते स्वानुग्रहलब्धभक्तियोगविज्ञेयत्वात् ॥ ३ ॥ ❀ ❀ प्रकृतेर्गुणान् प्रकृतिगुणकार्यभूतान् शब्दादीन् यदा जिघृक्षत् ग्रहीतुमिच्छत् तदा तत्र तेषु पुरेषु नवद्वारं मनुष्यशरीरं साध्विति अमनुत ॥ ४ ॥ ❀ ❀ अक्षिभिरिन्द्रियैः गुणान् विषयान् ॥ ५ ॥ ❀ ❀ यत् येन गणेन ज्ञानं शब्दादिबोधरूपं कर्म च आदानादिरूपं कृतं भवति पञ्चवृत्तित्वात् पञ्चशिराः उरगः यथा प्राणः ॥ ६–८ ॥ ❀ ❀ पुरः पूर्वदिशि कृताः ॥९-८॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

उक्तव्याख्यादिना त्वत्र सर्वसन्देहवारणम्। प्राचीनबर्हिषो मुक्तिरूनत्रिंशे निरूप्यते ॥ ( १ ) ॥

तदेव नारदेनोत्थापिताकाङ्क्षो राजा तं परोक्षेणोक्तार्थव्याख्यानं प्रार्थयते–भगवन्निति। हे भगवंस्ते वचोऽस्माभिर्न सम्यगवगम्यते, त्वदुक्तार्थस्य सम्यग्ज्ञानं अस्माकं न जातमित्यर्थः। सम्यगित्यनेन कश्चित्कश्चिज्ज्ञात इति सूचितम्। तदज्ञाने तस्य गम्भीरार्थत्वं हेतुं सूचयन्नाह–कवय इति। विवेकिनस्तद्विजानन्ति न वयं, अस्माकं तज्ज्ञानेऽधिकारो नास्ति, यतो वयं कर्ममोहिताः कर्मनिष्ठत्वेनात्मविद्यायामकृताभ्यासाः। अतस्त्वमेव तद्व्याख्याहीति शेषः। त्वमेवैतद्व्याख्यानादिना सर्वसन्देहनिवारणेन प्रबोधने समर्थोऽसीति सूचनार्थं सम्बोधनं हे भगवन्निति ॥ १ ॥ ❀ ❀ एवं प्रार्थितो नारदः परोक्षेणोक्तस्यार्थस्य यावदुपयोगे व्याख्यानं करोति–पुरुषमिति, पुरुषं जीवं पुरञ्जनं विद्यात् जानीयात्। पुरञ्जननामनिरुक्तिमाह–यदिति, यत् यस्मात् स आत्मनः स्वस्य पुरं शरीरं व्यनक्ति स्वकर्मणा प्रकटयति जनयतीति पुरञ्जन इत्यर्थः। शरीरमेव विशिनष्टि–एकद्व्यादयः पादा यस्य तत् ॥ २ ॥ ❀ ❀ यश्चाविज्ञातशब्देन आहूतः कथितस्तस्य पुरञ्जनस्य सखा स ईश्वर इति विद्यात्। अविज्ञातनामनिरुक्तिमाह–यदिति, यत् यस्मात् सर्वस्य शरीरे एवान्तर्यामित्वेन स्थितोऽपि स पुम्भिर्ज्ञातृभिः नामभिरन्तर्यामीश्वरादिभिः क्रियाभिः शुभाशुभकर्मसु जीवप्रेरणादिभिः गुणैः सर्वज्ञत्वासङ्गत्वप्रेरकत्वादिभिर्वा न ज्ञायते, तस्मादविज्ञात इत्याहृत इत्यर्थः ॥ ३ ॥ ❀ ❀ यदा पुरुषो जीवः कार्त्स्न्येन साकल्येन प्रकृतेर्गुणान् जिघृक्षन् ग्रहीतुमिच्छन् जातस्तदा तत्र तेषु एकद्विपादादिषु शरीरेषु मध्ये नवेन्द्रियच्छिद्राणि द्वाराणि यस्मिंस्तत्। द्वौ हस्तौ अङ्घ्री च यस्मिंस्तत् मनुष्यशरीरं साधु सर्वविषयभोगौपयिकमित्यमनुतेत्यन्वयः ॥ ४ ॥ ❀ ❀ प्रमदां तु बुद्धिं विद्यात् जानीयात्। देहेन्द्रियादिषु यत्कृतं यया बुद्ध्या कृतं ममाहमिति भवति, यां बुद्धिमधिष्ठाय आश्रित्य पुरस्कृत्यास्मिन् देहे पुमान् जीवोऽक्षभिरिन्द्रियैर्गुणान् रूपरसादीन् विषयान् भुङ्क्ते इत्यन्वयः ॥ ५ ॥ ❀ ❀ इन्द्रियगणो दशसखायो ज्ञेयाः। यत्कृतं यैरिन्द्रियैर्जनितज्ञानं कर्म च भवति तत्र श्रोत्रत्वग्घ्राणदृग्जिह्वाख्यैः पञ्चज्ञानेन्द्रियैः श्रवणादिपञ्चविधं ज्ञानं भवति वाग्दोर्मेढ्राङ्घ्रिपाय्वाख्यैः पञ्चकर्मेन्द्रियैर्भाषणादिपञ्चविधं कर्म भवति। सख्यस्तद्वृत्तयः तेषामुभयविधेन्द्रियाणां वृत्तयो ज्ञेयाः। प्राणापानसमानव्यानोदानभेदेन पञ्च वृत्तयो यस्य स प्राणः पञ्चशिरा उरग इव भवतीति स एव पुरपालकः पञ्चशिरा नागो ज्ञेयः ॥ ६ ॥ ❀ ❀ एकादश महाभटा इत्यनेनैकादशो महाभटो येष्विन्द्रियत्रोभयेन्द्रियनायकत्वेन बृहद्बलं महाबलं मनो विद्यात्। पञ्चालशब्देन कथिता देशविशेषाः रूपरसादयः पञ्च ज्ञानेन्द्रियविषया ज्ञेयाः। विषयाणां देशत्वमेवोपपादयति–यदिति, यत् येषामिन्द्रियाणां मध्ये नव खानि द्वारत्वेनोक्तानि इन्द्रियच्छिद्राणि यस्मिन् तथाविधं पुरं शरीरं भवतीत्यर्थः ॥ ७ ॥ ❀ ❀ नवद्वाराणि दर्शयति–अक्षिणी नासिके कर्णाविति द्वे द्वे द्वारावेकत्र निर्मिते, मुखं शिश्नं गुदश्च पृथगिति, तत्र यस्तत्तदिन्द्रियसंयुतो जीवः स तैरक्ष्यादिच्छिद्रैर्बहिर्विषये देशे याति ॥ ८ ॥ ❀ ❀ एवं सङ्क्षेपत उक्तमेव पुनर्दिग्विभागपूर्वकं प्रपञ्चयति—अक्षिणी इति, पञ्च पुरः कृताः शरीरस्याग्रभागे कृता इत्यर्थः। दक्षिणः कर्णो दक्षिणा द्वाः स्मृता कथिता, तथा उत्तरः कर्णः उत्तरा द्वाः स्मृता ॥ ९ ॥ ❀ ❀ ये द्वे द्वारौ पश्चिमे इत्युक्ते ते इहाधो गुदं शिश्नं चोच्यते इत्यन्वयः। ये च खद्योताऽऽविर्मुखी प्रागेकत्र निर्मिते द्वारावुक्ते ते अत्र शरीरे नेत्रे ज्ञेये। यत्तु विभ्राजितं जनपदमुक्तं तद्रूपं ज्ञेयम्। यो द्युमान् सखोक्तस्तच्चक्षुरिन्द्रियम्, तत्सखा पुरञ्जनस्तदीश्वरः जीवो ज्ञेयः। ताभ्यां विभ्राजितं यातीत्युक्तम्, तत्ताभ्यां नेत्राभ्यां रूपं विचष्टे पश्यतीत्यर्थः ॥ १० ॥

## भाषानुवादः

### पुरञ्जनोपाख्यानका तात्पर्य

राजा प्राचीनबर्हिने कहा—भगवन् ! मेरी समझमें आपके वचनोंका अभिप्राय पूरा-पूरा नहीं आ रहा है। विवेकी पुरुष ही इनका तात्पर्य समझ सकते हैं, हम कर्ममोहित जीव नहीं ॥ १ ॥ ❀ ❀ श्रीनारदजीने कहा—राजन् ! पुरञ्जन ( नगरका निर्माता ) जीव है—जो अपने लिये एक, दो, तीन, चार अथवा बहुत पैरोंवाला या बिना पैरोंका शरीररूप पुर तैयार कर लेता है ॥ २ ॥ ❀ ❀ उस जीवका सखा जो अविज्ञात नामसे कहा गया है, वह ईश्वर है; क्योंकि किसी भी प्रकारके नाम, गुण अथवा कर्मोंसे जीवोंको उसका पता नहीं चलता ॥ ३ ॥ ❀ ❀ जीवने जब सुखदुःखरूप सभी प्राकृत विषयोंको भोगनेकी इच्छा की तब उसने दूसरे शरीरोंकी अपेक्षा नौ द्वार, दो हाथ और दो पैरोंवाला मानव-देह ही पसंद किया ॥ ४ ॥ ❀ ❀ बुद्धि अथवा अविद्याको ही तुम पुरञ्जनी नामकी स्त्री जानो; इसीके कारण देह और इन्द्रिय आदिमें मैं-मेरेपनका भाव उत्पन्न होता है और पुरुष इसीका आश्रय लेकर शरीरमें इन्द्रियोंद्वारा विषयोंको भोगता है ॥ ५ ॥ ❀ ❀ दस इन्द्रियाँ ही उसके मित्र हैं, जिनसे कि सब प्रकारके ज्ञान और कर्म होते हैं। इन्द्रियोंकी वृत्तियाँ ही उसकी सखियाँ और प्राण-अपान-व्यान-उदान समानरूप पाँच वृत्तियोंवाला प्राणवायु ही नगरकी रक्षा करनेवाला पाँच फनका सर्प है ॥ ६ ॥ ❀ ❀ दोनों प्रकारकी इन्द्रियोंके नायक मनको ही ग्यारहवाँ महाबली योद्धा जानना चाहिये। शब्दादि पाँच विषय ही पाञ्चालदेश हैं, जिसके बीचमें वह नौ द्वारोंवाला नगर बसा हुआ है ॥ ७ ॥ ❀ ❀ उस नगरमें जो एक-एक स्थानपर दो-दो द्वार बताये गये थे—वे दो नेत्रगोलक, दो नासाछिद्र और दो कर्णछिद्र हैं। इनके साथ मुख, लिङ्ग और गुदा—ये तीन और मिलाकर कुल नौ द्वार हैं; इन्हींमें होकर वह जीव इन्द्रियोंके साथ बाह्य विषयोंमें जाता है ॥ ८ ॥ ❀ ❀ इसमें दो नेत्रगोलक, दो नासाछिद्र और एक मुख—ये पाँच पूर्वके द्वार हैं; दाहिने कानको दक्षिणका और बायें कानको उत्तरका द्वार समझना चाहिये ॥ ९ ॥ ❀ ❀ गुदा और लिङ्ग—ये नीचेके दो छिद्र पश्चिमके द्वार हैं। खद्योता और आविर्मुखी नामके जो दो द्वार एक स्थानपर बतलाये थे, वे नेत्रगोलक हैं तथा रूप विभ्राजित नामका देश है, जिसका इन द्वारोंसे जीव चक्षु-इन्द्रियकी सहायतासे अनुभव करता है। ( चक्षु-इन्द्रियोंको ही पहले द्युमान् नामका सखा कहा गया है ) ॥ १० ॥

नलिनी नालिनी नासे गन्धः सौरभ उच्यते । घ्राणोऽवधूतो मुख्यास्यं विपणो वाग्रसविद्रसः ॥ ११ ॥
आपणो व्यवहारोऽत्र चित्रमन्धो बहूदनम् । पितृहूर्दक्षिणः कर्ण उत्तरो देवहूः स्मृतः ॥ १२ ॥
प्रवृत्तं च निवृत्तं च शास्त्रं पञ्चालसंज्ञितम् । पितृयानं देवयानं श्रोत्राच्छ्रुतधराद् व्रजेत् ॥ १३ ॥
आसुरी मेढ्रमर्वाग्द्वार्व्यवायो ग्रामिणां रतिः । उपस्थो दुर्मदः प्रोक्तो निर्ऋतिर्गुद उच्यते ॥ १४ ॥
वैशसं नरकं पायुर्लुब्धकोऽन्धौ तु मे शृणु । हस्तपादौ पुमांस्ताभ्यां युक्तो याति करोति च ॥ १५ ॥
अन्तःपुरं च हृदयं विषूचिर्मन उच्यते । तत्र मोहं प्रसादं वा हर्षं प्राप्नोति तद्गुणैः ॥ १६ ॥
यथा यथा विक्रियते गुणाक्तो विकरोति वा । तथा तथोपद्रष्टाऽऽत्मा तद्वृत्तीरनुकार्यते ॥ १७ ॥
देहो रथस्त्विन्द्रियाश्वः संवत्सररयोऽगतिः । द्विकर्मचक्रस्त्रिगुणध्वजः पञ्चासुबन्धुरः ॥ १८ ॥
मनोरश्मिर्बुद्धिसूतो हृन्नीडो द्वन्द्वकूबरः । पञ्चेन्द्रियार्थप्रक्षेपः सप्तधातुवरूथकः ॥ १९ ॥
आकूतिर्विक्रमो बाह्यो मृगतृष्णां प्रधावति । एकादशेन्द्रियचमूः पञ्चसूनाविनोदकृत् ॥
संवत्सरश्चण्डवेगः कालो येनोपलक्षितः ॥ २० ॥

अन्वयः—नलिनी नालिनी नासे सौरभः गंधः उच्यते अवधूतः घ्राणः मुख्या आस्यं विपणः वाक् रसवित् रसः ॥ ११ ॥ ❀ ❀ अत्र आपणः व्यवहारः बहूदनम् चित्रम् अंधः पितृहूः दक्षिणः कर्णः देवहूः उत्तरः स्मृतः ॥ १२ ॥ ❀ ❀ पितृयानम् प्रवृत्तम् च देवयानम् निवृत्तम् च शास्त्रम् पंचालसंज्ञितम् श्रोत्राद् श्रुतधराद् व्रजेत् ॥ १३ ॥ ❀ ❀ आसुरी अर्वाक् द्वाः मेढ्रम् व्यवायः ग्रामिणाम् रतिः दुर्मदः उपस्थः प्रोक्तः निर्ऋतिः गुदः उच्यते ॥ १४ ॥ ❀ ❀ वैशसम् नरकम् लुब्धकः पायुः अन्धौ तु मे शृणु हस्तपादौ पुमान् ताभ्याम् युक्तः याति करोति च ॥ १५ ॥ ❀ ❀ च अंतःपुरम् हृदयम् विषूचिः मनः उच्यते तत्र तद्गुणैः मोहम् प्रसादम् हर्षम् वा प्राप्नोति ॥ १६ ॥ ❀ ❀ यथा यथा

---

१. प्राचीने पाठे "प्रवृत्तं च" इत्यादित्रयोदशश्लोकत आरभ्य विंशतिश्लोकस्य पूर्वार्द्धपर्यन्तो भागोऽत्र न, त्रयोविंशतिश्लोकादूर्ध्वे लिखितः ।

विक्रियते वा विकरोति तथा तथा गुणाक्तः उपद्रष्टा आत्मा तद्वृत्तीः अनुकार्यते ॥ १७ ॥ ❋ ❋ देहः इंद्रियाश्वः अगतिः संवत्सररयः द्विकर्मचक्रः त्रिगुणध्वजः पंचासुबंधुरः रथः ॥ १८ ॥ ❋ ❋ मनोरश्मिः बुद्धिसूतः हृन्नीडः द्वंद्वकूबरः पंचेंद्रियार्थप्रक्षेपः सप्तधातुवरूथकः ॥ १९ ॥ ❋ ❋ बाह्यः विक्रमः आकूतिः एकादशेंद्रियचमूः पंचसूनाविनोदकृत् मृगतृष्णाम् प्रधावति चंडवेगः संवत्सरः येन कालः उपलक्षितः ॥ २० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

नासे इति व्याख्या अवधुनोतीति अवधूतो वायुस्तदात्मकेनोच्छ्वासेन सहैकस्थानत्वात् प्राणोऽवधूतः। आस्यमिति व्याख्या रसज्ञविपणान्वित इति। अत्र रसज्ञशब्दनिर्दिष्टस्य रसविदित्यनुवादः। रस इति व्याख्या रसनेन्द्रियमित्यर्थः। विपणो वाग्रसविद्रस इत्येव पाठः। आर्षत्वान्न दोषः ॥ ११ ॥ ❋ ❋ अन्धोऽन्नम् ॥ १२-१३ ॥ ❋ ❋ ग्रामकमित्यस्यानुवादो ग्रामिणां रतिरिति तस्य व्याख्या व्यवाय इति ॥ १४-१५ ॥ ❋ ❋ विषूचीनपदार्थानुवादो विषूचिरिति। तद्गुणैर्मनोगुणैस्तमः-सत्त्वरजोभिः ॥ १६ ॥ ❋ ❋ 'महिषी यद्यदीहेत' इत्यादेरर्थं संगृह्याह यथा यथा बुद्धिः स्वप्ने विक्रियते जाग्रति विकरोति वा इन्द्रियाणि परिणमयति तस्या गुणै रक्तो लिप्त आत्मा तथा तथा तस्या वृत्तीर्दर्शनस्पर्शनाद्याः केवलमुपद्रष्टैव सन्वलादनुकार्यते ॥ १७ ॥ ❋ ❋ आशुगमित्येतद्व्याचष्टे। संवत्सरस्यैवाप्रतिहतो रयो वेगः प्रतीतितो यस्य स संवत्सररयः वस्तुतस्त्वगतिः स्वप्नशरीरादेर्बुद्धाविव विवृतत्वेन देशान्तरगत्यभावात्। पाठान्तरे संवत्सरश्च तत्कृतं वयश्च ताभ्यां गतिर्यस्येति। द्वीषमित्यस्य व्याख्या नारदेन कृता। द्विचक्रमित्यस्य व्याख्या द्विकर्मचक्रः त्रिगुणध्वज इति त्रिवेणुपदव्याख्या ॥ १८ ॥ ❋ ❋ पंचप्रहरण-मित्येतद्व्याचष्टे। पंचेन्द्रियार्थप्रक्षेप इति ॥ १९ ॥ ❋ ❋ पंचेन्द्रियैः सूनाविनोदमिव हिंसाविनोदमिवान्यायेन विषयसेवां करोतीति पंचसूनाविनोदकृत्। अनेन चचार मृगयां तत्रेत्यादि व्याख्यातम् ॥ २० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

आर्षत्वान्नवाक्षरपादोऽपि न दोषाय, व्याख्या तु रसनेन्द्रियमिति। यद्वा रसोऽस्ति विषयत्वेनास्येति रस इति पुंस्त्वमिन्द्रियवाचकत्वेऽप्यार्षत्वान्न दुष्टमित्यर्थः ॥ ११ ॥ ❋ ❋ व्यवहारो वाक्यप्रयोगलक्षणः। चित्रं चतुर्विधं भक्ष्यादि ॥ १२ ॥ ❋ ❋ श्रोत्रादिति ल्यब्लोपे पञ्चमी। श्रोत्रमालम्ब्येत्यर्थः "इह वामुत्र वा काम्यं प्रवृत्तमभिधीयते। वैराग्यज्ञानपूर्वं तु निवृत्तमभिधीयते" इति स्मृतेः। काम्यकर्मबोधकं प्रवृत्तं शास्त्रं, वैराग्यज्ञानपूर्वकमोक्षबोधकं निवृत्तमित्यर्थः ॥१३-१५॥ ❋ ❋ तत्र हृदये ॥ १६ ॥ ❋ ❋ स्वप्ने यथा करितुरगादिदृष्टश्रुतवस्तुवासनावासिता बुद्धिर्विक्रियते। दैवेनेति शेषः। तस्या बुद्ध्याः। अनुकार्यते बुद्धिसंगादकर्तर्यप्यात्मनि कर्तृत्वं प्रतीयत इति भावः ॥ १७ ॥ ❋ ❋ विवृतत्वेनातात्त्विकप्रतीतत्वे। पाठान्तरे 'संवत्सरवयोगतिः' इति पाठे। द्वे कर्मणी सुखदुःखरूपे चक्रे यस्य स तथा। त्रयो गुणाः सत्त्वादयो ध्वजा यस्य स तथा। पंचासवः प्राणाद्या बन्धुरा यस्य 'साम्ये बन्धे च बन्धुरः' इत्यभिधानात् ॥ १८ ॥ ❋ ❋ रश्मिः प्रग्रहः। नीडमुपवेशस्थानम्। पंचानामिन्द्रियाणामर्थेषु शब्दादिषु स्वस्वव्यापाराणां प्रक्षेपः। शब्दादीनि पंचप्रहरणानीत्यर्थः। सप्त धातवस्त्वगाद्या वरूथा यस्य स तथा। 'रथगुप्तिर्वरूथो ना' इत्यमरः ॥ १९ ॥ ❋ ❋ मृगतृष्णा प्रातीतिकसुखम्। तदुक्तं "सुखवद्दूरतो दृश्यं तत्काले दुःखमेव यत्। मृगतृष्णेत्यतः प्राहुर्भोगं वैषयिकं बुधाः ॥" इति ॥ २० ॥

## श्रीमद्वीरराघवव्याख्या

❋ एवं विभ्राजितमित्यस्य व्याख्यानं रूपमिति शेषः। प्रतीकं ईश्वरः पुरञ्जनः खद्योतादिशब्दास्तु गौणाः, अतोऽत्र न प्रवृत्तिनिमित्तमुक्तं नासे गन्ध इति च व्याख्यानं शेषः प्रतीकः ॥ ११ ॥ ❋ ❋ घ्राण इति व्याख्यानमवधूत इति प्रतीकः मुख्येति प्रतीकस्तस्य व्याख्यानमास्यमिति। रसज्ञविपणौ व्याचष्टे। विपणो वागिति विपण इति प्रतीकः वागिन्द्रियमिति व्याख्या रसविदित्य-र्थतः प्रतीकः रसज्ञविपणान्वित इति मूलाद्रसः रसनेन्द्रियमिति व्याख्यानं, आपणबहूदनौ व्याचष्टे। आपण इति प्रतीकः व्यवहारः वाग्व्यवहार इति व्याख्या, बहूदनमिति प्रतीकः चित्रमन्धमन्नमिति व्याख्या ॥ १२ ॥ ❋ ❋ पितृहूरित्यनुवादः दक्षिणकर्णा-विति व्याख्यानम्। दक्षिणा दक्षिणः कर्ण इत्यनेन दक्षिणैका तथोत्तरेति व्याख्यातं पितृहूर्दक्षिणः कर्ण इत्यनेन तु पितृहूर्नाम पुर्या द्वा देवहूर्नाम पुर्या द्वारित्युक्तगुणनामविषयौ दक्षिणोत्तरकर्णाविवेत्युच्यत इति भेदः। क्रममनादृत्य तृतीयाध्यायोक्तचण्डवेगादिपदार्था-नाह सार्द्धैस्त्रिभिः। चण्डवेग इति प्रतीकः संवत्सर इति विवरणं तत्र तत्प्रवृत्तौ निमित्तमाह। कालः पुरुषायुषरूपः कालः येन संवत्सरेण चक्रवत्तूर्णं भ्रमतोपलक्षितः ज्ञापितः परिच्छिन्नः चक्रवत्तूर्णं वेगेन पुरुषायुषस्य परिच्छेदकत्वाच्चण्डवेग इत्युच्यत

---

❋ अत्र श्रीवीरराघवमते त्रिंशच्छ्लोकपर्यन्तं श्लोकानां पौर्वापर्यं वर्तते एवं क्वचिच्छ्रीमद्विजयध्वजीयेऽपि। तत्र व्याख्यानं दृष्ट्वा मूलक्रमः कल्पनीयः पाठकैः।

इत्यर्थः ॥ १३ ॥ ❀ ❀ तस्य चण्डवेगस्य संबन्धिनो गन्धर्वा गन्धर्व्यश्च यथाक्रममहानि रात्रयश्च स्मृता इत्यर्थः। तत्र गन्धर्वप्रवृत्तौ निमित्तमाह। यतः षष्ट्युत्तरशतत्रयमहानि रात्रयश्च परिक्रान्त्या परिवर्तनेन गन्धर्ववत्परोक्षेणायुः पुरुषायुषं हरन्ति, अतो गन्धर्वगुणयोगात्तत्पदवोध्या इत्यर्थः ॥ १४॥ ❀ ❀ कालकन्येत्यस्य व्याख्या जरेति। कालस्य पुरुषायुषं हरतः दुहितृवज्जरायाः प्रीत्यावहत्वात्सा कालदुहितेत्युच्यते। त्रिलोक्यां वरमिच्छन्तीत्यादि, प्रज्वारस्त्वां प्रणेष्यतीत्यस्य संग्रहेणार्थमाह। लोकस्तां नाभिनन्दतीति प्रज्वारोऽयं ममेत्यस्यार्थः। स्वसारमिति सार्द्धेन क्षयाय लोकस्येति शेषः ॥ १५॥ ❀ ❀ भीमाः सैनिका यस्येति बहुव्रीह्यर्थं प्रत्युपसर्जनीभूतभीमसैनिकानाह। आधयः मनःपीडा व्याधयो देहपीडास्तस्य भयनाम्नः सैनिकाः एते भूतानामुपसर्गाश्च खला दुष्टाः यवनाः दुर्भवनवर्द्धिस्त्वाद्यवनाः अतीव दुःखावहत्वादरयः उपसर्गाः सुखदुःखरागद्वेषभयाभिमानप्रमादोन्मादशोकमोहलोभमात्सर्येर्ष्याविमानक्षुत्पिपासाधिव्याधिजन्मजरामरणादयः। तत्राधिव्याधीनां भीमसैनिकरूपाणान्मृत्योस्तस्येति प्राधान्येन निर्देशात्तद्व्यतिरिक्तपर उपसर्गशब्दः। प्रज्वारपदार्थमाह विविधो ज्वर इति ॥ १६॥ ❀ ❀ एवं क्रममनादृत्य तृतीयाध्यायस्थपदानि व्याख्याय सिंहावलोकनन्यायेन पुनरेतदध्यायस्थपदान्येवावशिष्टानि व्याख्येयानि व्याचष्टे। प्रवृत्तं चेति। दक्षिणपाञ्चालमुत्तरपाञ्चालमित्युक्तपाञ्चालशब्दार्थमाह। प्रवृत्तं प्रवर्त्तकं कर्तरि क्तः त्रिवर्गतत्साधकस्वरूपाववोधनेन प्रवर्तकं शास्त्रं प्रवृत्तमित्युच्यते। निवृत्तं निवर्तकं त्रिवर्गतत्साधनेभ्यस्तन्निवृत्तं त्रिवर्गस्यास्थिरफलत्वोपदेशपूर्वकं ततो निवृत्त्यानन्तस्थिरफलब्रह्मोपासनतत्स्वरूपरूपगुणादिप्रकाशकं शास्त्रं निवृत्तमित्युच्यते। तदेवं शास्त्रद्वयं पाञ्चालसंज्ञकमित्यर्थः। पञ्चते व्यक्तीकरोति त्रिवर्गं तत्साधनं तन्निवृत्तीरिति व्युत्पत्तेः। एवं पाञ्चालशब्दस्य प्रवृत्तिनिवृत्त्यात्मकशास्त्रद्वयपरत्वं सामान्येनाभिधाय तस्य दक्षिणोत्तराभ्यां विशेषितस्य प्रवृत्ते निवृत्ते च क्रमेण प्रवृत्तौ निमित्तमाह पितृयानमिति। पितरो हि दाक्षिणात्याः तान् यान्त्यनेनेति पितृयानं प्रवृत्तशास्त्रोदितकर्मणा दाक्षिणात्यान् पितॄनाराध्य तान् प्राप्नुवन्तीति दाक्षिणात्यपितृप्राप्तिसाधनप्रकाशकत्वात् पितृयानं शास्त्रं दक्षिणपाञ्चालमित्युच्यते। एवं देवयानमुत्तरपाञ्चालमिति, श्रुतधरान्वित इत्युक्तश्रुतधरपदार्थमाह। श्रोत्रादीति। श्रोत्रेन्द्रियात् श्रुतधरादिति प्रतीकः श्रोत्रादिति व्याख्यानं तत्रान्वित इत्युक्तोऽन्वयः। किंरूप इति विवित्सायां हेतुत्वेनेति द्योतनाय हेतुपञ्चमी प्रयुक्ता, किं प्रति हेतुत्वमिति विवित्साशान्तये व्रजेदित्युक्तं क्षेत्रज्ञ इति शेषः। व्रज-गतौ सर्वे गत्यर्था ज्ञानार्था इति न्यायेन पितृयानदेवयानापरपर्याये दक्षिणोत्तरपाञ्चाले शास्त्रे श्रोत्रेन्द्रियेण साधनरूपेण हेतुनावगच्छति क्षेत्रज्ञ इत्यर्थः ॥ १७॥ ❀ ❀ आसुरी नाम पश्चाद्द्वारित्यस्यार्थमाह आसुरी मेढ्रमिति। आसुरीति प्रतीकः मेढ्रमिति व्याख्या, पश्चादित्यस्य व्याख्या अर्वागिति आसुरपदप्रवृत्तिनिमित्तं तूक्तं पुरस्तादत्रानुक्तिस्तु स्पष्टत्वात्। ग्राम्यकमित्यर्थतोऽनुवदति ग्रामिणां रतिः तस्य व्याख्या व्यवाय इति मैथुनमित्यर्थः। दुर्मदशब्दानुवादेन तदर्थमाह उपस्थ इति। निर्ऋतिर्नामेत्यस्यार्थमाह। निर्ऋतिरिति प्रतीकः गुद इति व्याख्या ॥ १८॥ ❀ ❀ वैशसशब्दानुवादेन तदर्थमाह वैशसं नारकमिति। नरके भवं नारकं दुःखमित्यर्थः। लुब्धक इति प्रतीकः पायुरिति व्याख्या। अन्धावमीषामित्यस्यार्थमाह अन्धौ त्विति। मे मत्तः अन्धशब्दार्थौ शृणु पाणिपादावन्धौ इति प्रतीकः पाणिपादौ व्याख्या जातिपरोऽयं निर्देशः पाणी पादौ चेति विवक्षितार्थः। अन्धपदप्रवृत्तिनिमित्तं निर्वाक्पेशस्करत्वं पूर्वमेवोक्तं शेषोऽनुवादः ॥ १९॥ ❀ ❀ स यर्हि इत्यस्यार्थमाह अन्तःपुरमिति। अन्तःपुरमित्यनुवादः हृदयमिति व्याख्या विषूचीनमित्यस्यार्थोऽनूद्यते विषूचीरिति मन इति तदर्थः, शेषोऽनुवादः तद्गुणैः सङ्कल्पविकल्पादिभिः ॥ २०॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

नलिन्याद्याह नलिनीति ॥ ११ ॥ ❀ ❀ अवधूतमाह घ्राण इति। मुख्या नाम पुरस्ताद् द्वा इत्यस्यार्थमाह मुख्येति। या मुख्या नाम द्वाः आस्यं रसज्ञविपणान्वित इत्येतदाह विपण इति। विपणो वागिन्द्रियं रसवित् रसज्ञः रसो रसनेन्द्रियम्, आपणं व्याचष्टे आपण इति। चित्रमन्ध इत्यादौ बहूदनमित्यस्य विविधौदनः ॥ १२॥ ❀ ❀ पाञ्चालशब्दस्यार्थान्तरमाह। प्रवृत्तमिति ॥ १३ ॥ ❀ ❀ श्रुतधरेत्यस्य श्रोत्रमिति तेनोत्क्रान्तः पितृयानादिमार्गं व्रजति। आसुर्याः कृत्यमाह मेहनार्थमिति। मेहनं पुरीषोत्सर्जनं ग्रामिणां रतिर्मैथुनम् ॥ १४-१६ ॥ ❀ ❀ तद्गुणैर्मनोगुणैर्बुद्धिगुणैर्वा एतदेव प्रतिपादयति यथेति। स्वप्नकाले करितुरगादिदृष्टश्रुतवस्तुवासनावासितं मनो बुद्धिर्वा विक्रियते दैवेनेति शेषः। बहुसंस्काराधिवासितत्वादन्यत्र प्रवाहमन्तरेणैव स्वयं वा विकरोतीत्याह गुणेति ॥ १७॥ ❀ ❀ यथा यथा विषयविकारेण परिणमते तथा तथा स्वप्नादेरुपद्रष्टात्मा जीवस्तद्वृत्तिर्बुद्धिर्मनोवृत्तेरनुकूलवृत्तिरिति कीर्त्यते यथा यथा मनो विक्रियते गुणान्कामात्मना गुणरूपिता बुद्धिस्तथा विकरोति तथात्मापीति वा उभयेन्द्रियनायक इत्युक्तेर्मनोविकारानुकारि बुद्ध्यनुकारिप्रवृत्तिमत्त्वमात्मनो युज्यते। इन्द्रियाण्येवाश्वा यस्य स तथा संवत्सरेत्युपलक्षणं दिनरात्रिपक्षमाससंवत्सरलक्षणैर्वयोभिर्गतिर्यस्य स तथा ॥ १८॥ ❀ ❀ द्विकर्मेत्यादिषु बहुव्रीहिः। पञ्चासुबन्धुरः पञ्चासवः प्राणा एव बन्धुरो यस्य स तथा एकरश्म्येकदमनमित्यस्यार्थमाह मन इति ॥ १९॥ ❀ ❀ पञ्चप्रहरणमित्यस्यार्थमाह पञ्चेति। प्रतीतितः सुखानुभवे यद् दुःखं सा मृगतृष्णिका, तां तदुक्तम् "सुखवद् दूरतो दृश्यं तत्काले दुःखमेव यत्। मृगतृष्णेत्यतः प्राहुर्भोगं वैषयिकं बुधाः" इति ॥ २०॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

दुर्मद इति चित्सुखः ॥ १४ ॥ ❀ ❀ यथा यथा विक्रियते गुणाक्त इत्येव पाठः ॥ १५-१७ ॥ ❀ ❀ आकूतिः कर्म्मेन्द्रियपञ्चकं संवत्सर इत्यर्द्धकम् ॥ १८-२० ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अवधुनोत्यवधूतो वायुस्तदात्मकेनोच्छ्वासेन सहैकस्थानत्वाद् घ्राणोऽप्यवधूत उच्यते । मुख्या इत्यस्य व्याख्या आस्यमिति रसनविपणान्वित इत्यस्य व्याख्या तु रसो रसनेन्द्रियं नवाक्षरैकपादोऽयमनुष्टुब्भेदः ॥ ११ ॥ ❀ ❀ चित्रमन्धश्चतुर्विधमन्नम् । याति श्रुतधरान्वितः श्रुतधरपदव्याख्या श्रोत्रादिति ॥ १२-१३ ॥ ❀ ❀ ग्रामकं नाम विषयमित्यत्र ग्रामकमित्यस्य ग्रामिणां रतिरित्यनुवादः व्याख्या तु व्यवाय इति ॥ १४-१५ ॥ ❀ ❀ विषूचीन इत्यनुवादो विषूचिरिति व्याख्या तु मन इति । तद्गुणैर्मनोगुणैस्तमःसत्त्वरजोभिः ॥ १६ ॥ ❀ ❀ महिषी यद्यदीहेतेत्यादेर्व्याख्यानमाह । यथा बुद्धिः स्वप्ने विक्रियते जागरे विकरोति इन्द्रियाणि विपरिणमयति तथा तथा गुणाक्तस्तस्या गुणैर्लिप्त आत्मा तस्या वृत्तीर्दर्शनस्पर्शनाद्याः केवलमुपद्रष्टै-वापि सन् बलादनुकार्य्यते बुद्धयैव हेतुकर्त्र्येत्यर्थः ॥ १७ ॥ ❀ ❀ संवत्सरस्य रयो वेग एव गतिरित्याशुगपदव्याख्या । पाठा-न्तरे संवत्सरश्च तत्कृतं रयश्च ते एव गतिर्यस्य त्रिगुणध्वज इति त्रिवेणुपदव्याख्या त्रयो गुणाः सत्त्वादयः ध्वजो यस्य ॥१७॥ ❀ ❀ पञ्चप्रहरण इत्यस्य व्याख्या पञ्चानामिन्द्रियाणामर्थेषु शब्दादिषु स्वस्वव्यापाराणां प्रक्षेपः । श्रवणादीनि पञ्चप्रहरणानीत्यर्थः ॥ १८ ॥ ❀ ❀ आकूतिः कर्म्मेन्द्रियपञ्चकं विक्रममिति पञ्चविक्रमित्यस्य व्याख्या, पञ्चेन्द्रियैः सूनाविनोदमिवान्यायेन विषयसेवां करोति इति पञ्चसूनाविनोदकृत् । अनेन चचार मृगयां तत्रेति व्याख्यातम् ॥ २० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ईश्वरः पुरञ्जनः रसज्ञविपणान्वित इत्येतद्वयाचष्टे । विपणो वाग्रसविद्रस इति । विपणः वाक् वागिन्द्रियम् । रसवित् रसज्ञः रसः रसनेन्द्रियम् ॥ ११ ॥ ❀ ❀ व्यवहारः आदानादिः अन्धोऽन्नम् ॥ १२ ॥ ❀ ❀ प्रवृत्तं शास्त्रं पाञ्चाल-संज्ञितं पितृयानं पितृलोकप्रापकं निवृत्तं शास्त्रं पाञ्चालसंज्ञितं देवयानं परमेश्वरप्रापकं श्रोत्रात् श्रुतधरात् श्रोत्रेन्द्रियात् व्रजेत् ॥ १३ ॥ ❀ ❀ मेढ्रमुपस्थेन्द्रियस्थानम् । ग्रामकमित्यस्यानुवादः ग्रामिणां रतिरिति तद्व्याख्या व्यवाय इति ॥ १४-१५ ॥ ❀ ❀ तद्गुणैर्मनोगुणैस्तमःसत्त्वरजोभिः ॥ १६ ॥ ❀ ❀ महिषी च यद्यदीहेतेत्यादिकं व्याचष्टे । बुद्धिर्यथा स्वप्ने विक्रियते जाग्रति विकरोति इन्द्रियाणि परिभ्रामयति तथा तस्याः गुणैः आक्तो लिप्त उपद्रष्टा जीवः तस्याः वृत्तीः अनुकार्यते बला-दनुवर्त्यते ॥ १७ ॥ ❀ ❀ एवं पञ्चविंशाध्यायगतानि पदानि संक्षेपतो व्याख्यायाथ षड्विंशाध्यायगतानि पदानि व्याचष्टे देहो रथ इत्यादित्रिभिः । संवत्सररय इव गतिर्यस्य सः यस्तु "संवत्सरस्येवाप्रतिहतो रयो वेगः प्रतीतितो यस्य स संवत्सररयो वस्तुतोऽगतिः स्वप्नशरीरादेर्बुद्बुदावेव विवर्तत्वेन देशान्तरगत्यभावादि"ति तदसत्, "न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते" इत्यादिश्रुतेः स्वप्नसृष्टेः परमेश्वरकृतायाः विवर्तत्वाभावात् स्वप्नदृशो जीवस्य तूपकरणाद्य-भावात्तत्कर्तृत्वासम्भवाच्च । द्वे पापपुण्ये कर्मणी चक्रे यस्य सः त्रिगुणा ध्वजा यस्य पञ्चासवो बन्धुराः बन्धनानि यस्य स च स च सः ॥ १८-१९ ॥ ❀ ❀ आकूतिः कर्मेन्द्रियगणः वाह्यो विक्रमः पञ्चसु विषयेषु सूनेव दुःखोदर्को यो विनोदस्तत्कृत् मृगतृष्णां मृगतृष्णावत् निःसारां मृगयां प्रति धावति । अनेन 'चचार मृगयां तत्रे'त्यादि व्याख्यातम् ॥ २० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

ये नलिनी नालिनी द्वे द्वारावेकत्रोक्ते ते नासे नासिकाछिद्रे ज्ञेये । सौरभदेश उक्तः सगन्ध उच्यते । अवधूतः सखोक्तः स घ्राणः इन्द्रियं ज्ञेयम् । मुख्या द्वाः आस्यं मुखं ज्ञेयम् । रसज्ञविपणान्वित इत्यत्र विपणो वागिन्द्रियमिति ज्ञेयम् । रसविच्छब्देन रसः रसनेन्द्रियं ज्ञेयम् ॥ ११ ॥ ❀ ❀ आपणो देशोऽत्र व्यवहारो भाषणं ज्ञेयम् । बहूदनदेशोऽत्र चित्रं नानाविधमन्धः अन्नं ज्ञेयम् । पितृहूर्नाम दक्षिणस्यां द्वाः इति दक्षिणः कर्णो ज्ञेयः । उत्तरादेशि देवहूर्द्वा इत्यनेनोत्तरः कर्णः स्मृतः कथितः ॥ १२ ॥ ❀ ❀ दक्षिणपञ्चालं यातीत्यत्र पञ्चालसञ्ज्ञितं प्रवृत्तं शास्त्रं कर्मकाण्डात्मकं ज्ञेयम् । उत्तरपञ्चालं यातीत्यत्रापि च पञ्चालसञ्ज्ञितं निवृत्तं शास्त्रमुत्तरकाण्डात्मकं ज्ञेयम् । याति श्रुतधरान्वित इत्यत्र श्रुतधरशब्दितं श्रोत्रेन्द्रियं ज्ञेयम् । यतः प्रवृत्तं शास्त्रं श्रुत्वा तदुक्तं कर्मानुष्ठाय पितृभिराहूतः पितृयानं निवृत्तं च शास्त्रं श्रुत्वा तदुक्तोपासनाद्यनुष्ठाय देवैराहूतो देवयानं च परम्परया श्रोत्रादेव निर्मितात्तान् पुमान् व्रजेत् व्रजतीत्यर्थः ॥ १३ ॥ ❀ ❀ अर्वागासुरी द्वाः इति मेढ्रं ज्ञेयम् । ग्रामकं नाम विषयं यातीत्यत्र ग्रामिणां रतिर्व्यवायः स्त्रीसङ्गो ज्ञेयः । दुर्मदेन समन्वित इति तान् दुर्मदशब्देन उपस्थः प्रोक्तः । निर्ऋतिशब्देन गुद उच्यते ॥ १४ ॥ ❀ ❀ वैशसं यातीति नरकं यातीति ज्ञेयम् । लुब्धकेन समन्वित इति लुब्धकः पायुर्ज्ञेयः । अन्धौ द्वारावुक्तौ तौ शृणु, हस्तपादावन्धौ

ज्ञेयौ। तत्र पादेन युक्तः पुमान् याति चलति, हस्तेन युक्तश्च कर्म करोति ॥ १५ ॥ ❀ ❀ स यर्ह्यन्तःपुरगत इत्यत्र अन्तःपुरं च हृदयं ज्ञेयम्। विपूचीनसमन्वित इति विपूचीनपदस्यानुवादो विपूचिरिति। तदर्थः मन उच्यते इति। मनसा समन्वयस्य कार्यं दर्शयति–तत्रेति, तत्रैवं मनस्समन्वितत्वे सति तद्गुणैर्मनोगुणैस्तमआदिभिः मोहादिकं प्राप्नोति। तत्र तमसा मोहं सत्त्वेन प्रसादं रजसा हर्षमिति विभागः ॥ १६ ॥ ❀ ❀ महिषी यद्यदीहेतेत्यादेरध्यायसमाप्तिपर्यन्तस्यार्थं सङ्गृह्याह–यथा यथेति। यथा यथा बुद्धिः स्वप्ने विक्रियते जाग्रति विकरोति वा इन्द्रियाणि परिणामयति तदा तस्य गुणैराक्तो लिप्तः आत्मा तथा तथा वृत्तीर्दर्शनस्पर्शनाद्याः केवलमुपद्रष्टैव सन् बलात्तया बुद्ध्यैवानुकार्यते। न हि बुद्ध्यादिव्यतिरेकेण केवल आत्मनि तस्मिन् कश्चित् विकारोऽस्तीत्यर्थः ॥ १७ ॥ ❀ ❀ उत्तराध्यायार्थमाह–देह इति त्रिभिः। रथं पञ्चाश्वमित्यत्र रथ इति स्वप्नदेहो ज्ञेयः, पञ्च ज्ञानेन्द्रियाण्यश्वा यस्मिन् सः। आशुगमित्येतद् व्याचष्टे–संवत्सरस्येव अप्रतिहतो रयो वेगः प्रतीतितो यस्य स तथा, वस्तुतस्त्वगतिः, स्वप्नशरीरादेर्बुद्धावेव विवर्त्तत्वेन देशान्तरगत्यभावात्। द्वीपमित्यस्य व्याख्या नारदेन न कृता। द्वे पुण्यपापात्मके कर्मणी चक्रे यस्य सः। त्रयो गुणा एव ध्वजा यस्य सः। पञ्चप्राणा वन्धुराणि बन्धनानि यस्य सः ॥ १८ ॥ ❀ ❀ मनो रश्मिः प्रग्रहो यस्य सः। बुद्धिरेव सूतो यस्य सः। हृत् हृदयमेव नीडं रथिन उपवेशस्थानं यस्मिन् सः। द्वन्द्वौ शोकमोहौ कूबरौ युगबन्धनस्थानं यस्य सः। पञ्चेन्द्रियार्थाः विषयाः शब्दादयः प्रक्षिप्यन्तेऽस्मिन्निति तथा सः। सप्त धातवस्त्वगादयो वरूथा रक्षार्थमावरणानि यस्य स तथा ॥ १९ ॥ ❀ ❀ पञ्चविक्रममिति व्याचष्टे–आकृतिरिति। आकृतिः कर्मेन्द्रियपञ्चकं बाह्यो विक्रमो ज्ञेयः। चचार मृगयामिति व्याचष्टे–मृगतृष्णामिति। मृगतृष्णावत् स्वप्ने मिथ्याभूतानेव विषयान् प्रधावतीत्यर्थः। अर्थाज्जीवः, तमेव विशिनष्टि–एकादशेन्द्रियाण्येव चमूर्यस्य सः। पञ्चभिरिन्द्रियैः सूनाविनोदमिवान्यायेन विषयभोगं करोतीति पञ्चसूनाविनोदकृदिति ॥ २० ॥

### भाषानुवादः

दोनों नासाछिद्र ही नलिनी और नालिनी नामके द्वार हैं और नासिकाका विषय गन्ध ही सौरभ देश है तथा घ्राणेन्द्रिय अवधूत नामका मित्र है। मुख मुख्य नामका द्वार है उसमें रहनेवाला वागिन्द्रिय विपण है और रसनेन्द्रिय रसविद् ( रसज्ञ ) नामका मित्र है ॥ ११ ॥ ❀ ❀ वाणीका व्यापार आपण है और तरह-तरहका अन्न बहूदन है तथा दाहिना कान पितृहू और बाँया कान देवहू कहा गया है ॥ १२ ॥ ❀ ❀ कर्मकाण्डरूप प्रवृत्तिमार्गका शास्त्र और उपासनाकाण्डरूप निवृत्तिशास्त्र ही क्रमशः दक्षिण और उत्तर पाञ्चालदेश हैं। इन्हें श्रवणेन्द्रियरूप श्रुतधरकी सहायतासे सुनकर जीव क्रमशः पितृयान और देवयान मार्गोंमें जाता है ॥ १३ ॥ ❀ ❀ लिङ्ग ही आसुरी नामका पश्चिमी द्वार है, स्त्रीप्रसङ्ग ग्रामक नामका देश है और लिङ्गमें रहनेवाला उपस्थेन्द्रिय दुर्मद नामका मित्र है। गुदा निर्ऋति नामका पश्चिमी द्वार है ॥ १४ ॥ ❀ ❀ नरक वैशस नामका देश है और गुदामें स्थित पायु-इन्द्रिय लुब्धक नामका मित्र है। इनके सिवा दो पुरुष अंधे बताये गये थे, उनका रहस्य भी सुनो। वे हाथ और पाँव हैं; इन्हींकी सहायतासे जीव क्रमशः सब काम करता और जहाँ-तहाँ जाता है ॥ १५ ॥ ❀ ❀ हृदय अन्तःपुर है, उसमें रहनेवाला मन ही विपूचि ( विपूचीन ) नामका प्रधान सेवक है। जीव उस मनके सत्त्वादि गुणोंके कारण ही प्रसन्नता, हर्षरूप विकार अथवा मोहको प्राप्त होता है ॥ १६ ॥ ❀ ❀ बुद्धि ( राजमहिषी पुरञ्जनी ) जिस-जिस प्रकार स्वप्नावस्थामें विकारको प्राप्त होती है और जाग्रत्अवस्थामें इन्द्रियादिको विकृत करती है, उसके गुणोंसे लिप्त होकर आत्मा ( जीव ) भी उसी-उसी रूपमें उसकी वृत्तियोंका अनुकरण करनेको बाध्य होता है—यद्यपि वस्तुतः वह उनका निर्विकार साक्षीमात्र ही है ॥ १७ ॥ ❀ ❀ शरीर ही रथ है। उसमें ज्ञानेन्द्रियरूप पाँच घोड़े जुते हुए हैं। देखनेमें संवत्सररूप कालके समान ही उसका अप्रतिहत वेग है, वास्तवमें वह गतिहीन है। पुण्य और पाप—ये दो प्रकारके कर्म ही उसके पहिये हैं, तीन गुण ध्वजा हैं, पाँच प्राण डोरियाँ हैं ॥ १८ ॥ ❀ ❀ मन बागडोर है, बुद्धि सारथि है, हृदय बैठनेका स्थान है, सुख-दुःखादि द्वन्द्व जुते हैं, इन्द्रियोंके पाँच विषय उसमें रक्खे हुए आयुध हैं और त्वचा आदि सात धातुएँ उसके आवरण हैं ॥ १९ ॥ ❀ ❀ पाँच कर्मेन्द्रियाँ उसकी पाँच प्रकारकी गति हैं। इस रथपर चढ़कर रथीरूप यह जीव मृगतृष्णाके समान मिथ्या विषयों की ओर दौड़ता है। ग्यारह इन्द्रियाँ उसकी सेना हैं तथा पाँच ज्ञानेन्द्रियोंके द्वारा उन-उन इन्द्रियोंके विषयोंको अन्यायपूर्वक ग्रहण करना ही उसका शिकार खेलना है ॥ २० ॥

**तस्याहानीह गन्धर्वा गन्धर्व्यो रात्रयः स्मृताः। हरन्त्यायुः परिक्रान्त्या षष्ट्युत्तरशतत्रयम् ॥ २१ ॥**
**कालकन्या जरा साक्षाल्लोकस्तां नाभिनन्दति। स्वसारं जगृहे मृत्युः क्षयाय यवनेश्वरः ॥ २२ ॥**
**आधयो व्याधयस्तस्य सैनिका यवनाश्चराः। भूतोपसर्गाशुरयः प्रज्वारो द्विविधो ज्वरः ॥ २३ ॥**
**एवं बहुविधैर्दुःखैर्दैवभूतात्मसम्भवैः। क्लिश्यमानः शतं वर्षं देहे देही तमोवृतः ॥ २४ ॥**

प्राणेन्द्रियमनोधर्मानात्मन्यध्यस्य निर्गुणः। शेते कामलवान्ध्यायन्ममाहमिति कर्मकृत् ॥ २५ ॥
यदाऽऽत्मानमविज्ञाय भगवन्तं परं गुरुम्। पुरुषस्तु विषज्जेत गुणेषु प्रकृतेः स्वदृक् ॥ २६ ॥
गुणाभिमानी स तदा कर्माणि कुरुतेऽवशः। शुक्लं कृष्णं लोहितं वा[१] यथा कर्माभिजायते ॥ २७ ॥
शुक्लात्प्रकाशभूयिष्ठाँल्लोकाना[२]प्नोति कर्हिचित्। दुःखोदर्कान् क्रियायासाँस्तमःशोकोत्कटान् क्वचित् ॥२८॥
क्वचित्पुमान् क्वचिच्च स्त्री क्वचिन्नोभयमन्धधीः। देवो मनुष्यस्तिर्यग्वा यथा[३]कर्मगुणं भवः ॥ २९ ॥
क्षुत्परीतो यथा दीनः सारमेयो गृहं गृहम्। चरन् विन्दति यद्दिष्टं दण्डमोदनमेव वा ॥ ३० ॥

अन्वयः—इह तस्य गंधर्वाः अहानि गंधर्व्यः रात्रयः स्मृताः षष्ट्युत्तरशतत्रयम् परिक्रान्त्या आयुः हरंति ॥ २१ ॥ ❀ ❀ कालकन्या साक्षात् जरा लोकः ताम् नाभिनंदति यवनेश्वरः मृत्युः क्षयाय स्वसारम् जगृहे ॥ २२ ॥ ❀ ❀ तस्य सैनिकाः चराः यवनाः आधयः व्याधयः च प्रज्वारः भूतोपसर्गाशुरयः द्विविधः ज्वरः ॥ २३ ॥ ❀ ❀ एवम् तमोवृतः दैवभूतात्मसंभवैः बहुविधैः दुःखैः शतम् वर्षम् क्लिश्यमानः निर्गुणः आत्मनि प्राणेंद्रियमनोधर्मान् अध्यस्य कामलवान् ध्यायन् देही देहे अहम् मम इति कर्मकृत् शेते ॥ २४-२५ ॥ ❀ ❀ स्वदृक् पुरुषः तु भगवन्तम् परम् गुरुम् आत्मानम् अविज्ञाय यदा प्रकृतेः गुणेषु विषज्जेत तदा गुणाभिमानी सः अवशः कर्माणि कुरुते यथा शुक्लम् कृष्णम् वा लोहितम् कर्म अभिजायते ॥ २६-२७ ॥ ❀ ❀ कर्हिचित् शुक्लात् प्रकाशभूयिष्ठान् लोकान् आप्नोति क्वचित् दुःखोदर्कान् क्रियायासान् तमःशोकोत्कटान् आप्नोति ॥ २८ ॥ ❀ ❀ अंधधीः क्वचित् पुमान् क्वचित् च स्त्री क्वचित् उभयम् न देवः मनुष्यः वा तिर्यक् यथाकर्मगुणम् भवः ॥ २९ ॥ ❀ ❀ यथा क्षुत्परीतः दीनः सारमेयः गृहम् गृहम् चरन् यद्दिष्टम् दंडम् वा ओदनम् एव विंदति ॥ ३० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

परिक्रान्त्या परिभ्रमणेन ॥ २१ ॥ ❀ ❀ भगिनीत्वेन जगृहे लोकानां क्षयाय ॥ २२ ॥ ❀ ❀ चराः संचारिणः भूतानामुपसर्गे पीडायामाशु शीघ्रो मृत्युहेतू रयो वेगो यस्य प्रज्वारस्येति प्रशब्दव्याख्या अरय इति। पाठान्तरे भूतकृता अरयः अनेन चारिभिरुपरुद्ध इत्यरिपदं व्याख्यातम्। द्विविधः शीतोष्णरूपेण प्रवेशनिर्गमभेदात् ॥ २३ ॥ ❀ ❀ एवं परोक्षत्वेनोक्तमर्थं व्याख्याय सर्वकथातात्पर्यमाह। एवमित्यादिविरमक्रमेणेत्यन्तेन आधिदैविकादिभिर्दुःखैः क्लिश्यमानो ममाहमिति देहे शतं वर्षाणि शेते वर्त्तत इति द्वयोरन्वयः ॥ २४ ॥ ❀ ❀ अशनायापिपासादीन्प्राणधर्मानन्धत्वादीनिन्द्रियधर्मान्कामादीन्मनोधर्मांश्च निर्गुणोऽप्यात्मन्यध्यस्य कामलवान्विषयसुखलेशान्ध्यायन्कर्मकृत् ॥ २५ ॥ ❀ ❀ ततः किमत आह यदेति द्वाभ्याम्। स्वदृक् स्वप्रकाशस्वभावोऽपि ॥ २६ ॥ ❀ ❀ शुक्लं सात्त्विकम्। कृष्णं तामसम्। लोहितं राजसम्। यथा कर्म तथा जायते ॥ २७ ॥ ❀ ❀ तदेवाह शुक्लादिति द्वाभ्याम्। प्रकाशो भूयिष्ठो येषु दुःखमुदर्क उत्तरफलं येषु क्रियया आयासो येषु तान् लोहितात् तमःशोकावुत्कटौ येषु तान् कृष्णादिति ज्ञेयम् ॥ २८ ॥ ❀ ❀ नोभयं नपुंसकम्। यथाकर्मगुणं कर्मगुणावनतिक्रम्य ॥ २९ ॥ ❀ ❀ तेषु दैववशेन सुखदुःखे प्राप्नोतीति सदृष्टान्तमाह द्वाभ्याम्। क्षुधा परीतो व्याप्तः सारमेयः श्वा दण्डं दण्डेन ताडनम् ओदनमन्नं वा ॥ ३० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तस्य चण्डवेगस्य ॥ २१ ॥ ❀ ❀ पक्षे स्वस्य क्षयाय स्वसारमपि तां जगृहे अधर्मवंशोद्भवत्त्वात्स्वसुरपि तस्याः स्वयमेव पतिरभूदिति। कालकन्या वैष्णवजनेष्वतिकृपालोर्नारदस्याज्ञया मृत्युमेव जरयतीति ॥ २२ ॥ ❀ ❀ पाठान्तरे 'भूतोपसर्गा ह्यरयः' इति पाठे भूतै राजचौरकृमिजलादिकृता उपसर्गा अरय इत्यर्थः। यद्वा भूतसम्बन्ध्युपसर्गाः पवनजलहिमाग्निसूर्यातपकुपथ्यादिकृताः श्वासतन्द्राप्रलापादयः आशुरयाः शीघ्रवेगा यस्य स तथा ॥ २३ ॥ ❀ ❀ दैवेति। आधिदैवाधिभूताध्यात्मिकैः। तमोवृतोऽज्ञानाग्रतस्तत्परिहारोपायमजानन्नित्यर्थः। शतमित्युक्तिस्तु न्यूनातिरेकसंभवेऽपि "शतायुर्वै पुरुषः" इति श्रुत्यनुरोधतो ज्ञेया ॥ २४ ॥ ❀ ❀ अध्यस्य बुभुक्षितोहमन्धोऽहं मुग्धोहमित्यात्मन्यारोप्य ॥ २५ ॥ ❀ ❀ सज्जेत आसक्तो भवेत् ॥ २६ ॥ ❀ ❀ अवशः पूर्वसंस्काराधीनः वासुदेवाधीनो वा ॥ २७ ॥ ❀ ❀ तदेव कर्मानुगुणजन्मैव। शुक्लात्सात्त्विकात्कर्मणः। प्रकाशभूयिष्ठांस्तेजोमयान्देवादिलोकान्। लोहिताद्राजसात्। क्रियया सर्वदा

---

१. प्रा० पा०—च यथा समभिजायते। २. प्रा० पा०—लोकान् प्राप्नोति। ३. प्रा० पा०—कर्तृगुणं।

व्यापारासक्त्या मनुष्यादीन्। कृष्णात्तामसात्। तमःशोकोत्कटान् तिर्यगादीन्॥ २८॥ ❀ ❀ पुरंजनः परस्मिञ्जन्मनि स्त्री कथं बभूवेत्यत आह—कचिदिति। कर्माणि च गुणाश्च कर्मगुणास्ताननतिक्रम्य वर्तत इति यथाकर्मगुणम्। पदार्थानतिवृत्तिरूप-यथार्थेऽव्ययीभावः। भव उत्पत्तिर्दैवादिरूपास्तीत्यर्थः॥ २९॥ ❀ ❀ दीन इति। राजकीयसारमेयव्यावृत्त्यर्थम्। 'श्वा सार-मेयः' इति कोशात्॥ ३०–३१॥

### श्रीमद्वीरराघवव्याख्या

एवं कर्मस्वित्यादेः संग्रहेणार्थमाह यदेति। यदा स्वप्ने विक्रियते कर्मणि लकारः बुद्धिरिति शेषः। यदा च जाग्रति-विकरोतीन्द्रियाणि परिणमयति तदा तदा स्वप्नजाग्रदवस्थयोस्तस्या गुणै रक्तो लिप्तः आत्मा स्वभावतः उपद्रष्टापि तस्याः वृत्तीर्दर्शन-श्रवणाद्याः प्रत्यनुकार्यते बलादनुवर्त्यते॥ २१॥ ❀ ❀ एवं प्रथमाध्यायस्थपदानि व्याख्यातान्यथ द्वितीयाध्यायस्थपदानि व्याचष्टे देह इति त्रिभिः। यो रथ उक्तः स देहः ये चाश्वा उक्तास्ते इन्द्रियरूपा एवाश्वा आशुगमित्यत्र विवक्षिता गतिः संवत्सररयः संवत्सरवेगतुल्या तूर्णप्रतिपत्तिः स्वाप्नदेहप्रतिपत्तिर्हि तत्कालमात्रावसायित्वेनातितूर्णाद् द्वे पुण्या-पुण्यरूपे कर्मणी चक्रे यस्य सः पुण्यापुण्यकर्मणी एव द्विचक्रमिति चक्रशब्देन विवक्षिते इत्यर्थः। त्रिवेणुमित्यत्र विवक्षिता वेणवो ध्वजाः सत्त्वरजस्तमोगुणा इत्यर्थः, पञ्च अनाः प्राणाः 'एतदनमनग्नं कुरुत' इति श्रुतेः बन्धुरा बन्धनानि यस्य बन्धुरत्वेन विवक्षिताः पञ्च प्राणा इत्यर्थः। पञ्चासुबन्धुर इत्यपपाठः व्याख्यायां विशेषानवगमात्॥ २२॥ ❀ ❀ रश्मिः प्रग्रहत्वेन यो विवक्षितः स मनः यः सूत उक्तः स बुद्धिः यन्नीडं रथिन उपवेशनस्थानं तद्धृत् हृदयस्थानं द्वन्द्वं शोकमोहौ कूवरं युगबन्धनस्थानं यस्य द्विकूवरमित्युक्तौ द्वौ पदार्थौ द्वन्द्वात्मकशोकमोहावित्यर्थः। पञ्चप्रहरणमित्युक्ताः पञ्चप्रहरणानि अनुभाव्याः पदार्थाः पञ्चेन्द्रियार्थाः शब्दादय इत्यर्थः, पञ्चेन्द्रियार्थाः प्रक्षेपा यस्येति बहुव्रीहिः। सप्तधातवः वरूथाः स्वर्णाद्यावरणानि यस्य सप्तवरूथ-मित्यत्र वरूथत्वेन रूपिताः सप्त पदार्थाः सप्त धातव इत्यर्थः॥ २३॥ ❀ ❀ पञ्चविक्रममित्यत्र विक्रमत्वेन गतिप्रकारत्वेन विवक्षिता आकृतिः पञ्च कर्मेन्द्रियाणीत्यर्थः। बाह्यवहिष्विविषयासक्तः एकादशेन्द्रियाण्येव चमूः सेना यस्य स पञ्चसूना हिंसा एव विनो-दस्तं करोतीति तथा मृगतृष्णां मृगमरीचिकावत्सुखाभासरूपविषयानुभूतिं करोतीत्यर्थः। अत्र स एकदा महेष्वासो रथं पञ्चाश्वमाशुग-मित्यादीनां दशानां श्लोकानां स्वप्नावस्थापरत्वेन पूर्वैर्व्याख्यातत्वादस्माभिरपि स्वप्नावस्थापरत्वेनैव व्याख्याताः। तद्व्याख्यारूपमिदं देहो रथस्त्विन्द्रियाश्वा इति श्लोकत्रयं च तदनुरोधेन व्याख्यातम्। वस्तुतस्तु दशश्लोका जाग्रद्देहतद्व्यापारपरत्वेनैव व्याख्येयाः, व्याख्यानस्वारस्यात् व्याख्याने हि संवत्सररयो गतिरित्युक्तं नहि स्वाप्नदेहस्य संवत्सरवेगात्मकगतिः संभवति, तस्यास्तत्कालमात्रावसा-यित्वात्तस्य तनुसद्दशप्रतीतिमात्रपरत्वे स्वारस्यमेकादशेन्द्रियचमूपतिरित्युक्तत्वाच्च। नहि स्वाप्ने एकादशेन्द्रियाणां व्यापृतिः संभवति तत्सम्बन्धमात्रविवक्षायामस्वारस्यं पञ्चसूनाविनोदकृदित्युक्तत्वान्न हि पञ्चसूनानां स्वाप्नदेहनिष्पाद्यत्वं युक्तं तस्मादिदं जाग्रद्देहतद्-व्यापारपरमेव व्याख्येयम्। तथा हि भोगायतनत्वख्यापनाय पूर्वं पुरत्वरूपितं जाग्रदवस्थमनुष्यशरीरमेवेदानीं रथत्वेन रूप्यते, देहो रथित्वेन इन्द्रियादयोऽश्वादित्वेन। किमर्थमेवं रूपणमिति चेदुच्यते रथो हि स्वाभिमतदेशान्तरप्रापणसमर्थः तद्वन्मनुष्यशरीरमपि वैष्णवपदप्राप्तिसाधनानुष्ठानोपयोगीति ज्ञापनाय रथभावेन रूप्यते। तथाहि कठवल्लीष्वाम्नायते—"आत्मानं रथिनं विद्धि शरीरं रथमेव च। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च। इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्। आत्मेन्द्रियमनोयुक्तं भोक्तेत्या-हुर्मनीषिणः। यस्त्वविज्ञानवान् भवत्यमनस्कः सदा शुचिः। न स तत्पदमाप्नोति तस्माद् भूयो न जायते। विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्।" इति। एतच्छ्रुत्यर्थ एवात्रोपबृंह्यत इति श्रुत्या रथादिभावेन रूपि-तानामेव देहादीनामत्रापि तद्भावरूपणरूपसंवादात्। तर्हि श्रुतौ मृगया नोक्ता अत्र सूच्यते इति चेत् विवक्षिता मृगया श्रुतावप्युक्तैव 'यस्त्वविज्ञानवान् भवत्यमनस्क' इत्यत्र परब्रह्मप्राप्तिसाधनोपसंहारोपयुक्तशरीरं दैवाल्लब्धवतः क्षेत्रज्ञस्य ब्रह्मस्वरूपतदुपासनादिप्रकाशक-वेदशास्त्रोल्लङ्घनेन पुनरनादिदुरितनिमित्ताविवेकादिना निषिद्धकामचारो ह्यत्र मृगया विवक्षिता। सा च मुक्तिमार्गविरोधिनीति विवेकलब्धिप्रार्थनयावगम्यते एतदेव यस्त्वविज्ञानवानित्यादिनावगम्यते। अविज्ञानवान् विविच्य ज्ञानं विवेकः सोऽस्यास्तीति विज्ञान-वान् स न भवतीत्यविज्ञानवान् विवेकात्मकसात्त्विकबुद्ध्या विरहित इत्यर्थः, न विद्यते शुचिः कामाचारादिना यस्य सोऽशुचि-रित्यर्थावगमात् श्लोकार्थस्तु पूर्वोक्त एव। न चैवं पृथक् स्वप्नावस्था न कथिता स्यात्ततश्च तत्तद्दोषानुकीर्तनेन श्रोतुर्वैराग्योदयो न स्यादिति वाच्यं, जाग्रदवस्थाप्रपञ्चेनैव स्वप्नावस्थाप्येवंविधेति ज्ञातुं शक्यत्वेन तस्याः पृथगवक्तव्यत्वात्। अत एव हि मूर्च्छावस्था पृथक् नोक्तेति संग्रहः॥ २४॥ ❀ ❀ एवं परोक्षेणोक्तमर्थं व्याख्याय कृत्स्नकथातात्पर्यमाह एवमित्यादिना। त्रिभिस्तापैस्त-दवान्तरभेदेन बहुविधैर्दुःखैरेवं शतवर्षं यावच्छरीरं क्लिश्यमानः देही क्षेत्रज्ञः तमोवृतस्तमसाज्ञानेनावृतोऽभिभूतः॥ २५॥ ❀ ❀ प्राणादेर्धर्मानात्मन्यध्यस्य पिपासुरहं बुभुक्षुरहं काणोऽहं बधिरोऽहं दुःख्यहं सुख्यहमित्येवं प्राणादेर्धर्मानात्मन्यारोप्य सुखलेशान् वा चिन्तयन्नहंममाभिमानाभ्यां पुनर्देहान्तरप्राप्तिहेतुभूतकर्माणि कुर्वन् शरीरे वसति॥ २६॥ ❀ ❀ कुतोऽयं संसार इति विवित्सायां स्वपरयाथात्म्यरूपोपासनापन्नज्ञानाभावादेवेत्याह यदेति। स्वात्मानं हितोपदेष्टारं प्रकृतिपुरुषविलक्षणं षाड्गुण्यपूर्णं परमात्मानं चाज्ञात्वा क्षेत्रज्ञः स्वभावतः स्वदृक् स्वानुभवपरोऽपि प्रकृतेर्गुणेषु शब्दादिषु यदा विषज्जेत नितरां सक्तो

भवेत् ॥ २७ ॥ ❀ ❀ गुणेष्वेव शब्दादिष्वभिमानी भोग्यताबुद्धिमानत एव विषयपरवशः विषयलाभसाधनतया शुक्लं सात्त्विकं कृष्णं तामसं लोहितं राजसमित्येवं रूपेण त्रिविधानि कर्म्माणि कुरुते तदा यथा शुक्लादिस्वस्वकर्मानुसारेणाभिजायते पुनर्जन्मान्तरं प्रतिपद्यते ॥ २८ ॥ ❀ ❀ तदेवाह । शुक्लात्सात्त्विकात्कर्मणो हेतोः प्रकाशभूयिष्ठान्प्रकाशः भूयिष्ठः प्रचुरो येषु तान् लोकान् देहान्कर्हिचित्प्राप्नोति । कर्हिचिदित्यनेन सात्त्विकं कर्म तत्प्रयुक्तः सात्त्विको देहश्च दुर्लभ इत्युक्तं, क्रियायाः राजसात्कर्मणः दुःखोदर्कान् दुःखमुत्तरं येषां तान् दुःखपरंपरासम्पादकानित्यर्थः । तान् लोकान् तमस्तामसात्कर्मणः विभक्तिलुगार्षः, यद्वा तमःशोकावज्ञानशोकावुत्कटौ येषु तान् तामसात् कर्मण इति वा शेषः । क्वचिद्रजस्तमःप्रचुरम्लेच्छादिदेशेषु सात्त्विकादिकर्मकर्तृस्वरूपं तत् स्पष्टं गीतं भगवता "नियतं सङ्गरहितमरागद्वेषतः कृतम् । अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः । क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् । मोहादारभ्यते कर्म तत्तामसमुदाहृतम्" इत्यादिना ॥ २९ ॥ ❀ ❀ गुणकर्मानुसारेण जन्मापि न पुंस्त्वादिरूपेण नियतं प्राप्नोति किं त्वनियतमेवेत्याह क्वचिदिति । अन्धधीरज्ञः नोभयं नपुंसकं भवतीत्यर्थः । तत्रापि यथाकर्मगुणं कर्मगुणावनतिक्रम्य-देहादिरूपेण भवः जन्म भवतीति शेषः ॥ ३० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

पञ्चेन्द्रियद्वारेण विषयसेवालक्षणहिंसाकलाविनोदं करोतीति पञ्चसूनाविनोदकृत् येन संवत्सरेण द्विपरार्धायुर्लक्षणः कालः ॥ २१ ॥ ❀ ❀ परिक्रान्त्या परिवृत्त्या पुनः पुनरावर्तनेनेत्यर्थः ॥ २२ ॥ ❀ ❀ क्षयाय जगत इति शेषः । भूतोपसर्गा ग्रहोपद्रवाः ॥ २३ ॥ ❀ ❀ अधुना लक्षणया वृत्त्या उक्तमर्थं विवृत्त्यर्थं प्रत्यक्षमाह एवमिति । देवभूतात्मसम्भवैराधिभूताध्यात्मविषयतया जातैरेवं बहुविधैर्दुःखैः क्लिश्यमानस्तमोवृतस्तत्परिहारोपायमजानन् देही शेते इति श्लोकद्वयेनान्वयः । कियन्तं कालं शतवर्षं कल्पत्वात् "शतायुर्वै पुरुषः" इति न्यूनातिरेकसम्भवेऽप्येवमुक्तम् । दुःखोत्पत्तौ कारणमाह कामेति । प्राणधर्मानशनपिपासादीनिन्द्रियधर्मानन्धत्वादीन् मनोधर्मान् शोकमोहादीनात्मनि स्वस्मिन्नध्यस्यारोप्य बुभुक्षितः पिपासितोऽहमन्धः काणोऽहं शुष्कोऽहं मुग्धोऽहमिति निर्गुणश्चेतनत्वेन स्वतो गुणरहितः । ननु शरीरकारणक्षये मोक्षसम्भवात् क्लेशानुभवोऽप्युपकाराय स्याद्देहिन इत्यत्राह कर्मकृदिति । "आचतुर्दशमाद्वर्षात्कर्माणि नियमेन तु । दशावराणां देहानां करोत्ययमि"त्यादेर्न कर्मक्षयान्मुक्तिः । नन्वस्तु कर्मकर्तृत्वं हर्यर्पणेन क्रियमाणानां न दुःखदातृत्वमित्यत्राह ममेति ॥ २४-२५ ॥ ❀ ❀ कर्मकृदित्यत्र कीदृशं कर्म करोतीति तत्राह यदेति । यदा अदृगज्ञानी पुरुषः संसारे इष्टानिष्टफलदमात्मानं स्वान्तर्यामिणमविज्ञाय प्राकृतेषु गुणेषु विषज्जते तदा स गुणाभिमानी देही शुक्लादीनि सात्त्विकादीनि कर्माणि यथा कुरुते तथा सात्त्विकादिशरीरतया जायते अवशः विष्णुवशः । स इत्यनेन कर्मणः स्वातन्त्र्यं निराह-आत्मशब्दस्य साधारणत्वेन कथं निर्णय इत्यतो भगवन्तमित्यादिविशेषणत्रयम् ॥ २६-२७ ॥ ❀ ❀ त्रिविधानां कर्मणां फलमाह शुक्लानिति । प्रकाशभूयिष्ठाँस्तेजोमयान् देवादीन् क्रियायासान् क्लेशकर्मसाध्यान् राजसान् दुःखप्रचुरान् मनुष्यादीन् तमःशोकोत्कटान् तामसान् स्वकर्मणः शोकभूयिष्ठान् तिर्यगादीनाप्नोतीत्यन्वयः ॥ २८ ॥ ❀ ❀ क्वचित्क्वचिदिति बहुजन्मापेक्षया, नोभयं नपुंसकत्वमेतदेव विशिनष्टि देव इति । यथाकर्मगुणं यथा यथा कर्मणां गुणानामानुगुण्यं तथा भव उत्पत्तिर्देवादिविषया ॥ २९ ॥ ❀ ❀ तत्र दृष्टान्तमाह क्षुदिति । दण्डं प्रहारं दिष्टं दैवतः प्राप्तम् ॥ ३० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

परिसृत्येत्यत्र परिक्रान्त्येति क्वचित् ॥ २१-२३ ॥ ❀ ❀ एवमिति युग्मकम् ॥ २४-२५ ॥ ❀ ❀ यदेति युग्मकम् ॥ २६-२९ ॥ ❀ ❀ क्षुदिति युग्मकम् ॥ ३० ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

परिसृत्या परिभ्रमणेन ॥ २१ ॥ ❀ ❀ लोकानां क्षयाय स्वसारं स्वसृत्वेन जगृहे पक्षे स्वस्य क्षयाय स्वसारमपि तां जगृहे । अधर्मवंशोद्भवत्वात् स्वसुरपि तस्याः स्वयमेव पतिरभूदिति कालकन्या वैष्णवजनेष्वतिकृपालोर्नारदस्याज्ञया मृत्युमेव जरयतीति ॥ २२ ॥ ❀ ❀ चराः सञ्चारिणः भूतसम्बन्ध्युपसर्गाः पवनजलहिमाग्निसूर्यातपकुपथ्यादिकृताः श्वासतन्द्राप्रलापादयः आशुरयाः शीघ्रवेगा यस्य सः । द्विविधो ज्वरः शीतोष्णभेदात् भूतोपसर्गास्त्वरय इति पाठे भूतकृताः राजचौरकृमिजलादिकृता उपसर्गाः पीडास्तु अरयः अनेन अरिभिरुपरुद्ध इत्यरिपदव्याख्या ॥ २३ ॥ ❀ ❀ कथेयं वैराग्यार्थेत्याह एवमिति । दैवत्याधिदैविकाधिभौतिकाध्यात्मिकैः प्राणधर्म्मान् क्षुत्पिपासादीन् इन्द्रियधर्म्मान् अन्धत्वादीन् मनोधर्म्मान् कामादीन् निर्गुणेऽप्यात्मन्यध्यस्य ॥ २४-२५ ॥ ❀ ❀ आत्मानं परमात्मानम् ॥ २६-२७ ॥ ❀ ❀ शुक्लं सात्त्विकं कृष्णं तामसं लोहितं राजसं दुःखमुदर्कं उत्तरफलं येषु सुखपदार्थेषु तान् क्रियया आयासश्च येषु तान् लोहितानाप्नोति तमःशोकावेव उत्कटौ येषु तान् कृष्णानिति ज्ञेयम् ॥ २८ ॥ ❀ ❀ पुरञ्जनः परस्मिन् जन्मनि स्त्री कथं बभूवेत्यत आह क्वचिदिति । नोभयं नपुंसकं कर्म्मगुणा-

वनतिक्रम्य यथाकर्म्मगुणम् ॥ २९ ॥ ❀ ❀ तेषु जन्मसु दैववशादेव सुःखदुःखे प्राप्नोति । सदृष्टान्तमाह द्वाभ्याम् । दीन इति राजकीयसारमेयव्यावृत्त्यर्थं सारमेयः श्वा ॥ ३०-३१ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अथ सप्तविंशाध्यायगतानि पदानि व्याचष्टे संवत्सर इत्यादिसार्द्धैस्त्रिभिः । येन संवत्सरेण परिक्रान्त्या निरन्तरया आवृत्त्या ॥ २१ ॥ ❀ ❀ क्षयाय लोकानां मरणाय स्वसारं भगिनीतया जगृहे ॥ २२ ॥ ❀ ❀ चराः अस्थिराः । भूतानामुपसर्गे क्लेशे आशु रयो मारको वेगो यस्य सः द्विविधः शीतोष्णरूपेण प्रवेशनिर्गमभेदात् ॥ २३ ॥ ❀ ❀ अथाष्टाविंशाध्यायार्थं क्वचित्पुमानित्यादिकचित्स्त्रीतिवाक्यैः सूचयन् कृत्स्नप्रकरणतात्पर्यमाह एवमित्यादिना । तमोवृतोऽनादिमायावृतः ॥ २४ ॥ ❀ ❀ निर्गुणोऽपि अशनादिधर्मरहितोऽपि अशनापिपासादीन् प्राणधर्मान् बधिरत्वादीन् इन्द्रियधर्मान् राजसत्वादीन् मनोधर्मान् आत्मन्यध्यस्यारोप्य कामलवान् सुखलेशान् ध्यायन् अहं मम इति हेतोः कर्मकृत् शेते देहे वसति ॥ २५ ॥ ❀ ❀ प्रकृतेर्गुणेषु देहादिषु गुणकार्येषु स्वदृक् स्वदेहेन्द्रियादिषु आत्मबुद्धिः भार्यादिदेहेन्द्रियादिषु स्वीयबुद्धिः सन् विषज्जते, अयं देवदत्तादिनामको गौरवादिगुणकोऽहमिमे भार्यापुत्रादयो ममैवेत्यासक्तिं करोतीत्यर्थः ॥ २६ ॥ ❀ ❀ गुणाभिमानी गुणकार्येषु स्वपरदेहेपूक्तरीत्याहंममेत्यभिमानवान् शुक्लं सात्त्विकं कृष्णं तामसं लोहितं राजसं यथा कर्म तथैवाभिजायते देहं लभते ॥ २७ ॥ ❀ ❀ शुक्लात्कर्मणः प्रकाशबहुलान् लोक्यन्ते कर्मफलानि भुज्यन्ते यैरिति लोकान् देहान् क्रियाभिरायासो येषु तान् लोहितात् तमःशोकावुत्कटौ येषु तान् कृष्णान् ॥ २८ ॥ ❀ ❀ क्वचित्पुमान् क्वचित्स्त्री च भवति क्वचिन्नोभयं भवति नपुंसकत्वात् यतः कर्मगुणावनतिक्रम्येति यथाकर्मगुणं भवो जन्म ॥ २९ ॥ ❀ ❀ सारमेयः श्वा ॥ ३० ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं षड्विंशाध्यायगतमर्थं सङ्क्षेपतो व्याख्यायेदानीं सप्तविंशाध्यायगतमर्थं किञ्चिद् व्याचष्टे—संवत्सर इति त्रिभिः । येन काल उपलक्षितो भवति स संवत्सरश्चण्डवेग इत्युक्तो ज्ञेयः । तस्य संवत्सरस्याहानि इह कथापक्षे गन्धर्वा इति, रात्रयश्च गन्धर्व्य इति स्मृताः कथिताः । ते च सर्वे समुदिताः षष्ट्युत्तरशतत्रयं परिक्रान्त्या परिभ्रमणेन पुरुषस्यायुर्हरन्तीत्यर्थः ॥ २१ ॥ ❀ ❀ कालकन्या योक्ता सा जरा ज्ञेया । लोकः प्राणी तां साक्षान्नाभिनन्दति नाङ्गीकरोत्यतस्तां स्वसारं स्वसृत्वेन यो यवनेश्वर इत्युक्तः स मृत्युर्लोकस्य क्षयाय नाशाय जगृहे इत्यन्वयः । अतो जरोपलक्षितगतिरेव बलात् प्राणिषु प्रविशतीति भावः ॥ २२ ॥ ❀ ❀ ये च तस्य यवनेश्वरस्य चराः सञ्चारिणः आज्ञाकारिणः सैनिकाः यवनाः प्रोक्तास्ते आधयो मनोव्यथाहेतवो व्याधयो देहव्यथाहेतवश्च ज्ञेयाः । भूतानामुपसर्गे पीडायामाशु शीघ्रो मृत्युहेतुः रयो वेगो यस्य स शीतोष्णरूपभेदेन द्विविधो ज्वरः प्रज्वार इत्युक्तो ज्ञेयः ॥ २३ ॥ ❀ ❀ एवं परोक्षत्वेनोक्तमर्थमर्थोपयोगं सङ्क्षेपतो व्याख्याय तावता किञ्चिद्बोधे जातेऽपि कर्मजडत्वेन मोक्षपर्यवसायिबोधस्य अजातत्वात्तदर्थमिदानीं स्पष्टमेव बोधयति—एवमिति । एवं कृपणया बुद्ध्येत्यन्तेनोक्तप्रकारेण बहुविधैरनन्तप्रकारैः देवभूतात्मसम्भवैः आधिदैविकाधिभौतिकाध्यात्मिकभेदभिन्नैर्दुःखैः क्लिश्यमानो देही जीवो देहे देहादौ अहम्ममेति कृत्वा शेते तिष्ठतीत्युत्तरेणान्वयः । तत्र हेतुः—यतस्तमसाऽज्ञानेन आवृत इति ॥ २४ ॥ ❀ ❀ आत्माज्ञानकृतान् अध्यासलक्षणान् दोषान् दर्शयति—प्राणेति । प्राणधर्मान् अशनायापिपासादीन् इन्द्रियधर्मान् अन्धत्वादीन् मनोधर्मान् स्वयं निर्गुणोऽप्यात्मनि अध्यस्यारोप्य देहादौ ममाहमिति कृत्वा कामलवान् विषयसुखलेशान् ध्यायन् मम स्युरिति चिन्तयन् तद्धेतुकर्मकृत् तदर्थं कर्माणि कुर्वन् देहे शतं वर्षं शेते इत्यन्वयः ॥ २५ ॥ ❀ ❀ 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इति सर्वमोहहेतुरज्ञानं यदुक्तं तमोवृत इति तदेव विशदयति—यदेति द्वाभ्याम् । पुरुषो जीवो वस्तुतः स्वदृक् स्वप्रकाशस्वभावोऽपि यदा त्वात्मानमविज्ञाय तथा परमुत्कृष्टं पूजाद्यपेक्षान्तररहितं स्वानन्दपूर्णं गुरुं हृद्यन्तर्ज्ञानप्रकाशकं भगवन्तं चाविज्ञाय प्रकृतेर्गुणेषु गुणकार्यभूतेषु विषयेषु विषज्जेत आसक्तो भवति ॥ २६ ॥ ❀ ❀ तदा स एव गुणाभिमानी गुणकार्यदेहेन्द्रियादिषु अहम्ममाभिमानवान् अत एवावशः देहादिपरतन्त्रः सन् शुक्लं सात्त्विकं पुण्यजनकं कृष्णं तामसं पापजनकं लोहितं राजसं मिश्रमुभयजनकं एवं त्रिविधानि कर्माणि कुरुते इति द्वयोरन्वयः । ततश्च यथा कर्माभिजायते तत्तत्कर्मानुसारेण तत्र जन्म प्राप्नोति ॥ २७ ॥ ❀ ❀ एतदेव विभागेन दर्शयति—शुक्लादिति । शुक्लात् कर्मणः प्रकाशो भूयिष्ठो येषु तान् देवादिलोकान् कर्हिचिदाप्नोति । तथा लोहितात् कर्मणः दुःखमुदर्कमुत्तरफलं येषु तान् क्रियया आयासो येषु तान् मनुष्यादिलोकान् कर्हिचिदाप्नोति । तथा कृष्णात् कर्मणः तमोऽज्ञानं शोकश्चोत्कटो येषु तान् तिर्यगादिलोकान् कर्हिचिदाप्नोतीत्यन्वयः ॥ २८ ॥ ❀ ❀ स्त्रीत्वपुंस्त्वादिकमपि तत्तत्सुखदुःखाद्यनुगुणकर्माधीनदेहगतमेव जीव उपचर्यते, न तु स्वतो जीवे तदस्तीत्याह—क्वचिदिति । यथाकर्मगुणं कर्मगुणावनतिक्रम्यैव भवो जन्म भवति । तत्र एक एव जीवः क्वचित् पुमान् भवति, क्वचिच्च स्त्री भवति, क्वचिन्नोभयं नपुंसको भवति, क्वचिद्देवो भवति, क्वचिन्मनुष्यो भवति, क्वचिद्वा तिर्यग्भवति । एवं दुःखात्मके संसारे भ्रमणे हेतुमाह—अन्धधीरिति, अन्धा अज्ञानावृता संसारदुःखोत्तर-

णोपायदर्शनाक्षमा धीर्बुद्धिर्यस्येत्यर्थः ॥ २९ ॥ ❁ ❁ तत्र मुक्तिपर्यन्तं दुःखसन्ततिं सूचयन् श्वदृष्टान्तेन हीनत्वं दीनत्वं च दर्शयति—क्षुत्परीत इति द्वाभ्याम्। क्षुत्परीतः क्षुधा व्याप्तः अत एव दीनः सारमेयः श्वा यथा गृहं गृहं चरन् दण्डं दण्डेन ताडनमोदनं वा यद्दिष्टं स्वप्रारब्धानुसारेणेश्वरेण निर्मितं तदेव विन्दति लभते, न तु स्वाभिलषितम् ॥ ३० ॥

### भाषानुवादः

जिसके द्वारा कालका ज्ञान होता है, वह संवत्सर ही चण्डवेग नामक गन्धर्वराज है। उसके अधीन जो तीन सौ साठ गन्धर्व बताये गये थे, वे दिन हैं और तीन सौ साठ गन्धर्वियाँ रात्रि हैं। ये बारी-बारीसे चक्कर लगाते हुए मनुष्यकी आयुको हरते रहते हैं ॥ २१ ॥ ❁ ❁ वृद्धावस्था ही साक्षात् कालकन्या है, उसे कोई भी पुरुष पसंद नहीं करता। तब मृत्युरूप यवनराजने लोकका संहार करनेके लिये उसे बहिन मानकर स्वीकार कर लिया ॥ २२ ॥ ❁ ❁ आधि ( मानसिक क्लेश ) और व्याधि ( रोगादि शारीरिक कष्ट ) ही उस यवनराजके पैदल चलनेवाले सैनिक हैं तथा प्राणियोंको पीड़ा पहुँचाकर शीघ्र ही मृत्युके मुखमें ले जानेवाला शीत और उष्ण दो प्रकारका ज्वर ही प्रज्वार नामका उसका भाई है ॥ २३ ॥ ❁ ❁ इस प्रकार यह देहाभिमानी जीव अज्ञानसे आच्छादित होकर अनेक प्रकारके आधिभौतिक, आध्यात्मिक और आधिदैविक कष्ट भोगता हुआ सौ वर्षतक मनुष्य-शरीरमें पड़ा रहता है ॥ २४ ॥ ❁ ❁ वस्तुतः तो वह निर्गुण है; किन्तु प्राण, इन्द्रिय और मनके धर्मोंको अपनेमें आरोपित कर मैं-मेरेपनके अभिमानसे बँधकर क्षुद्र विषयोंका चिन्तन करता हुआ तरह-तरहके कर्म करता रहता है ॥ २५ ॥ ❁ ❁ यह यद्यपि स्वयंप्रकाश है, तथापि जबतक सबके परमगुरु आत्मस्वरूप श्रीभगवान्के स्वरूपको नहीं जानता, तबतक प्रकृतिके गुणोंमें ही बँधा रहता है ॥ २६ ॥ ❁ ❁ उन गुणोंका अभिमानी होनेसे वह विवश होकर सात्त्विक, राजस और तामस कर्म करता है तथा उन कर्मोंके अनुसार भिन्न-भिन्न योनियोंमें जन्म लेता है ॥ २७ ॥ ❁ ❁ वह कभी तो सात्त्विक कर्मोंके द्वारा प्रकाशबहुल स्वर्गादि लोक प्राप्त करता है, कभी राजसी कर्मोंके द्वारा दुःखमय रजोगुणी लोकोंमें जाता है जहाँ उसे तरह-तरहके कर्मोंका क्लेश उठाना पड़ता है—और कभी तमोगुणी कर्मोंके द्वारा शोकबहुल तमोमयी योनियोंमें जन्म लेता है ॥ २८ ॥ ❁ ❁ इस प्रकार अपने कर्म और गुणोंके अनुसार देवयोनि, मनुष्ययोनि अथवा पशु-पक्षियोनिमें जन्म लेकर वह अज्ञानान्ध जीव कभी पुरुष कभी स्त्री और कभी नपुंसक होता है ॥ २९ ॥ ❁ ❁ जिस प्रकार बेचारा भूखसे व्याकुल कुत्ता दर-दर भटकता हुआ अपने प्रारब्धानुसार कहीं डंडा खाता है और कहीं भात खाता है; उसी प्रकार यह जीव चित्तने नाना प्रकार की वासनाओंको लेकर ऊँचे-नीचे मार्गसे ऊपर, नीचे अथवा मध्यके लोकोंमें भटकता हुआ अपने कर्मानुसार सुख-दुःख भोगता रहता है ॥ ३०–३१ ॥

तथा कामाशयो जीव उच्चावचपथा भ्रमन्। उपर्यधो वा मध्ये वा याति दिष्टं[1] प्रियाप्रियम् ॥ ३१ ॥
दुःखेष्वेकतरेणापि दैवभूतात्महेतुषु। जीवस्य न व्यवच्छेदः स्याच्चेत्तत्तत्प्रतिक्रिया ॥ ३२ ॥
यथा हि पुरुषो भारं शिरसा गुरुमुद्वहन्। तं स्कन्धेन स आधत्ते तथा सर्वाः प्रतिक्रियाः ॥ ३३ ॥
नैकान्ततः प्रतीकारः कर्मणां कर्म केवलम्। द्वयं ह्यविद्योपसृतं स्वप्ने स्वप्न इवानघ ॥ ३४ ॥
अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते। मनसा लिङ्गरूपेण स्वप्ने विचरतो यथा ॥ ३५ ॥
अथात्मनोऽर्थभूतस्य यतोऽनर्थपरम्परा। संसृतिस्तद्व्यवच्छेदो भक्त्या परमया गुरौ ॥ ३६ ॥
वासुदेवे भगवति भक्तियोगः समाहितः। सध्रीचीनेन वैराग्यं ज्ञानं च जनयिष्यति ॥ ३७ ॥
सोऽचिरादेव राजर्षे स्यादच्युतकथाश्रयः। शृण्वतः श्रद्दधानस्य नित्यदा स्यादधीयतः ॥ ३८ ॥
यत्र भागवता राजन् साधवो विशदाशयाः। भगवद्गुणानुकथनश्रवणव्यग्रचेतसः ॥ ३९ ॥
तस्मिन्महन्मुखरिता मधुभिच्चरित्रपीयूषशेषसरितः[2] परितः स्रवन्ति।
ता ये पिबन्त्यवितृषो नृप गाढकर्णैस्तान्न स्पृशन्त्यशनतृड्भयशोकमोहाः ॥ ४० ॥

अन्वयः—तथा कामाशयः जीवः उच्चावचपथा भ्रमन् उपरि अधः वा मध्ये वा प्रियाप्रियम् दिष्टम् याति ॥ ३१ ॥ ❁ ❁ तत्तत्प्रतिक्रिया स्यात् चेत् देवभूतात्महेतुषु दुःखेषु एकतरेण अपि जीवस्य व्यवच्छेदः न ॥ ३२ ॥ ❁ ❁ हि यथा शिरसा गुरुम् भारम् उद्वहन् पुरुषः तम् सः स्कंधेन आधत्ते तथा सर्वाः प्रतिक्रियाः ॥ ३३ ॥ ❁ ❁ अनघ

१. प्रा० पा०—यावदिष्टं। २. तोयसरितः।

स्वप्ने स्वप्नः इव केवलम् कर्म कर्मणाम् एकान्ततः प्रतीकारः न हि द्वयम् अविद्योपसृतम् ॥ ३४ ॥ ❀ ❀ हि यथा लिंगरूपेण मनसा स्वप्ने विचरतः संसृतिः न निवर्तते अर्थे अविद्यमाने अपि संसृतिः न निवर्तते ॥ ३५ ॥ ❀ ❀ अथ अर्थभूतस्य आत्मनः यतः अनर्थपरंपरा संसृतिः तद्व्यवच्छेदः गुरौ परमया भक्त्या ॥ ३६ ॥ ❀ ❀ भगवति वासुदेवे समाहितः भक्तियोगः सध्रीचीनेन वैराग्यम् ज्ञानम् च जनयिष्यति ॥ ३७ ॥ ❀ ❀ राजर्षे सः अच्युतकथाश्रयः अचिरात् एव स्यात् शृण्वतः श्रद्दधानस्य नित्यदा अधीयतः स्यात् ॥ ३८ ॥ ❀ ❀ राजन् यत्र विशदाशयाः साधवः भगवद्गुणानुकथनश्रवणव्यग्रचेतसः भागवताः ॥ ३९ ॥ ❀ ❀ तस्मिन् महन्मुखरिताः मधुभिच्चरित्रपीयूषशेषसरितः परितः स्रवंति नृप ताः ये अवितृपः गाढकर्णैः पिबंति तान् अशनतृड्भयशोकमोहाः न स्पृशंति ॥ ४० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

कामव्याप्त आशयो यस्य ॥ ३१ ॥ ❀ ❀ ननु तर्हि सुखस्य सम्भवाद् दुःखस्य च प्रतीकारसंभवान्नैकान्ततो हेयत्वं तत्राह दुःखेष्विति। दुःखस्य प्रतीकारस्तावन्नास्ति स्याच्चेत्तस्य तस्य प्रतिक्रिया तथापि त्रिविधेषु दुःखेषु मध्ये एकतरेणापि दुःखेन व्यवच्छेदो वियोगो नास्ति ॥ ३२ ॥ ❀ ❀ प्रतिक्रियाणामपि दुःखरूपत्वादिति सदृष्टान्तमाह। यथा हीति ॥ ३३ ॥ ❀ ❀ दुःखस्य मूलभूतानि कर्माणि तु प्रतिक्रियादिकर्मभिरविरोधितया नैव निवर्तन्त इत्याह। नैकान्ततो नियमेनात्यन्तं सवासनं केवलं ज्ञानरहितमविद्ययोपसृतं प्राप्तम् अतोऽविरोधान्न निवर्त्यनिवर्तकत्वं तस्येति भावः। अत्र दृष्टान्तः। स्वप्ने दृष्टः स्वप्नः प्रबोधं विना यथा तं स्वप्नमत्यन्तं न प्रतिकरोतीत्यर्थः ॥ ३४ ॥ ❀ ❀ ननु तर्ह्यज्ञानविलसितत्वेन संसृतिहेतोर्देहादेरप्यसत्त्वात्किं तन्निवर्तनप्रयासेन तत्राह अर्थे हीति। लिंगरूपेणोपाधिभूतेन ॥ ३५ ॥ ❀ ❀ तदेवं संसृतिप्रकारमुक्त्वा तन्निवृत्तिप्रकारमाह। अथ तस्मात्पुरुषार्थभूतस्यैवात्मनो यतोऽज्ञानान्मनसो वाऽनर्थपरम्परारूपा संसृतिर्भवति तस्य व्यवच्छेदो निवृत्तिः गुरुरूपे वासुदेवे भक्त्यैव ॥ ३६ ॥ ❀ ❀ ननु संसृतिनिवृत्तिर्वैराग्यपूर्वकाज्ज्ञानादेव न तु भक्त्या "तरति शोकमात्मवित्" इत्यादिश्रुतेस्तत्राह वासुदेव इति। सध्रीचीनेन समीचीनेन प्रकारेण ॥ ३७ ॥ ❀ ❀ नन्वसौ महाफलो भक्तियोगः कथं स्यादत आह। स त्वच्युतस्य कथामाश्रित्य वर्तमानोऽचिरात्स्यात्। कस्य स्यात्तदाह शृण्वतोऽधीयानस्य च ॥ ३८ ॥ ❀ ❀ कुत्र स्यात्तदाह यत्रेति। भगवतो गुणानुकथने श्रवणे च व्यग्रं सत्वरं चेतो येषां ते ॥ ३९ ॥ ❀ ❀ ननु साधुसंगं विना स्वयमेव हरिकथाचिन्तनादिना भक्तिर्भवेदेवेत्याशंक्याह द्वाभ्याम्। तस्मिन्स्थाने महद्भिर्मुखरिताः कीर्तिताः मधुभिदश्चरित्रमेव पीयूषं तदेव शिष्यत इति शेषो यासु असारांशरहितशुद्धामृतवाहिन्य इत्यर्थः। अवितृपोऽलम्बुद्धिशून्याः सन्तो गाढैः सावधानैः कर्णैर्ये ताः सरितः पिबन्ति सेवन्ते अशनशब्देन क्षुल्लक्ष्यते। अशनादयस्तान्न स्पृशन्ति भक्तिरसिकान्न बाधन्त इत्यर्थः ॥ ४० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अत्र निर्बुद्धिः श्वा दण्डप्रहारं प्राप्नोति बुद्धिमांस्तु दुःखस्य कारणमेव न करोति दैवात्प्राप्तरोगादिदुःखस्य प्रतीकारं च करोतीत्याशंकते—नन्विति। एकान्ततो नियमेन कर्मणो हेयत्वं न। तथापि प्रतिक्रियासत्त्वेपि। वियोगो नास्तीति दुःखस्य चादृष्टाधीनत्वात्तस्य च दुःखप्राप्तेः प्रागशक्यज्ञानत्वात्तत्प्रतीकारकरणासंभवात्प्राप्तदुःखप्रतीकारकरणस्यापि भिषक्सेवामन्त्रानुष्ठानादिरूपत्वेन दुःखात्मकत्वाद् दुःखवियोगस्यासंभव एवेति भावः ॥ ३२ ॥ ❀ ❀ गुरुं दुर्भरम् "गुरुस्तु गीष्पतौ श्रेष्ठे गुरुः पितरि दुर्भरे" इत्युज्ज्वलः ॥ ३३ ॥ ❀ ❀ यतो द्वयमेवाविद्योपसृतमतो हेतोरविरोधात्। इति भाव इति। निवर्त्यनिवर्त्तकत्वं हि तेजस्तिमिरयोरिव विरोधिनोरेव भवतीति तात्पर्यम्। अत्र अविद्याया अविद्यानिवर्त्तकत्वाभावे। इत्यर्थं इति। स्वप्नगतजागरस्य स्वप्नरूपत्वान्न तस्य मुख्यं स्वप्ननिवर्त्तकत्वमिति भावः। अत्र विश्वनाथः—ननु यस्माद् दुःखस्य कारणं दुष्कृतमेव तस्मात्सर्वदुष्कृतक्षयकामनया कस्मिंश्चिद् बृहति यागकर्मणि कृते सर्वदुःखनाशः स्यादेवेति तत्राह—नेति। द्वयं दुष्कृतं कर्म दुष्कृतनिवर्तकं च कर्मेति द्वितयमविद्यामुपाश्रितमाश्रितं तद्द्वयस्य तमोरजोगुणजनकत्वादिति भावः। तद्यथा रजसि सत्त्वांशेन तमसो निवर्त्तकेपि तमोंशस्तिष्ठति तथा सर्वदुष्कृतनिवर्तकेपि यागकर्मणि पशुहिंसालक्षणं दुष्कृतं तिष्ठत्येवेत्यत्र दृष्टान्तः—स्वप्ने पुत्रो मृत इति दुःखप्राप्तिस्तत्स्वप्नमध्य एव पुनः स्वप्ने पुत्रो जीवतीति तद्दुःखोपशमः। किञ्च—तदैव तं पुत्रं सर्पो दशतीति पुनर्दुःखप्राप्तिरिति प्रबोधं विना यथा स्वाप्निकं दुःखं न निवर्तते तथा सांसारिकदुःखं न निवर्त्तत इत्युक्तम् ॥ ३४ ॥ ❀ ❀ किञ्च सुखदुःखादेर्देहधर्मत्वादवस्तुतत्त्वसंगस्य जीवात्मनो दुःखादिकं नैव विद्यतेऽतोऽविद्यमानस्य दुःखस्य किं निवर्त्तनोद्यमैरित्याशंकते—नन्विति। अर्थे दुःखादौ जीवात्मनोऽवस्तुभूतेपि तन्निवर्तनं विना संसृतिर्न निवर्तते। यथा स्वप्ने लिंगरूपेणोपाधिभूतेन मनसा सह विचरतो जीवस्यासत्यमपि सर्पात्मकं वस्तु दुःखदमेव प्रबोधं विनेति ॥ ३५ ॥ ❀ ❀ यत आत्मा सत्यः संसृतिरसत्या। अथ तस्माद्धेतोः। अथाव्ययं हेतावत्र। चक्रवर्त्ती तु—'गुरौ भक्त्येति 'गुरुर्न स स्यात्' इत्यादिना हरिभक्त्युपदेष्टुरेव गुरुत्वविधानाद् गुरौ हरौ च भक्त्येत्यायातं, ततश्च पुरंजनस्यापरस्मिन् जन्मनि गुरौ हरौ च भक्त्यैव निस्तारो व्याख्यात इत्याह ॥ ३६ ॥ ❀ ❀

अत्राक्षिपति--नन्विति। चक्रवर्ती-साधनभक्त्या प्रेमपर्यन्ता भक्तिर्भवतीत्याह--भक्तियोगः प्रेमा भगवत्येव सम्यगाहित इति भजनस्य तत्सुखे तात्पर्यं न तु स्वसुखे। सध्रीचीनेनेत्युक्त्या सायुज्यप्रयोजकयोर्ज्ञानवैराग्ययोर्व्यावृत्तिः। तदुक्तं "वासुदेवे भगवति भक्तियोगः प्रयोजितः। जनयत्याशु वैराग्यं ज्ञानं च यदहैतुकम्॥" इति। इहाहैतुकपदोपन्यासेन अत एव ज्ञानवैराग्ययोर्भक्त्युत्थत्वात्तदर्थं भक्तेः पृथग्न प्रयतितव्यमिति द्योतितम्॥ ३७॥ ❀ ❀ अत्र पृच्छति-नन्विति। श्रवणादित्रयं कुर्वता भक्तियोगः प्राप्य इत्युक्तम्॥ ३८॥ ❀ ❀ तथैव गृहासक्ता गृहकर्मव्यग्रास्तथैव हन्तायमनुकथनस्य समयः हा हा श्रवणस्य समयो व्यतीतः, संप्रति कीर्त्तनस्य समयोऽभ्येति हा हन्त मन्दभाग्योऽहं निद्रालस्यदुर्दैहिककृत्यगमितसमयः शीघ्रगतिरेव भक्तसमाजं केन प्रकारेण गच्छामीत्येवं व्यग्रं विवशं लग्नं वा चेतो येषां ते। तथा "व्यग्रं वैवश्यसंलग्नाग्रहीनसत्वरेषु च" इति धरणिः॥ ३९॥ ❀ ❀ यत्र भागवतास्तत्रैव हरिकथेति कोऽयं नियम इत्याशंकते--नन्विति। इत्यर्थ इति--'पिबत भागवतं रसमालयम्' इत्यत्र व्याख्यातरीत्या सारांशो विषयवैचित्र्यवर्णनादिस्तद्धीनाः केवलशुद्धभगवद्भक्तिविषया इति भावः। इत्यर्थं इति। भक्त्यावेशाच्छरीराद्यननुसन्धानादिति भावः। अत्र विश्वनाथः-तस्मिन्महत्सदसि। मुखं रान्ति गृह्णन्तीति मुखराः महद्भिर्मुखराः कृताः मुखरिताः स्वयमेव मुखप्राप्तीकृता या महतां मुखे सदा तिष्ठन्तीत्यर्थः। ता एव कास्तत्राह--मध्विति। मधुभिच्चरित्रपीयूषाणां ये शेषा महद्भिरास्वाद्यास्वाद्य महाप्रसादीकृतास्त एव सरितो महानद्यः परितश्चतुर्दिक्षु प्रतिभक्ताग्र एव स्रवन्ति, ता ये पिबन्तीति तासां स्वादाधिक्यात्तेषां च तृष्णाधिक्यं सूचितम्। ता इति तासामेकमपि कणं परित्यक्तुं न शक्नुवन्तीत्यनुरागो व्यञ्जितः। 'ते न स्मरन्त्यतितराम्' इत्याद्युक्त्या विस्मृतममतास्पदत्वेनैव शोकमोहाद्यभावात्॥ ४०॥

### श्रीमद्वीरराघवव्याख्या

एवंविधेषु जन्मसुखलाभो दुर्लभ इति सदृष्टान्तमाह यथेति द्वाभ्याम्। यथा क्षुधा परिवृतः अत एव दीनः सारमेयः श्वा प्रतिगृहमटन्यद्दिष्टं यत् स्वकर्मायत्तं दण्डेन ताडनं वौदनं वा विन्दति प्राप्नोति॥ ३१॥ ❀ ❀ एवं जीवोऽपि कामव्याप्तः आशयो यस्य उच्चावचपथा उत्कृष्टापकृष्टमार्गेण उपर्यूर्ध्वं लोकेषु अधः मध्ये अधो लोकेषु भ्रमन् नरकेषु मध्ये इहलोकेषु "ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः। जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः" इत्युक्तरीत्या भ्रमन् दिष्टं दैवायत्तं प्रियमप्रियं वा याति प्राप्नोति॥ ३२॥ ❀ ❀ ननु तर्हि सुखस्य सम्भवात् दुःखस्य प्रतीकाररूपकर्मान्तरसम्भवान्नैकान्ततो हेयत्वं तत्राह दुःखेष्विति। दैवभूतात्महेतुष्वाधिदैविकाधिभौतिकाध्यात्मिकतापरूपेण त्रिविधेषु दुःखेष्वन्यतरस्य यदि प्रतिक्रिया स्याच्चेत्तथाप्यंन्यतरेण न व्यवच्छेदः नासम्बन्धः। भगवदुपासनमन्तरेण न तापत्रयविनाशनसमर्था प्रतिक्रियास्तीति भावः॥ ३३॥ ❀ ❀ प्रतिक्रियापि दुःखरूपेति दृष्टान्तमाह यथा हीति। यथा पुमान् गुरुं भारं शिरसा उद्वहन् शिरसो विश्रान्तये तद्भारं स्कन्धेनाधत्ते उद्वहति तथा सर्वाः प्रतिक्रिया दुःखप्रतीकारास्तादात्विकालपविश्रान्तिकरास्ता अपि दुःखरूपा इत्यर्थः। किञ्च प्रतिकारोऽपि कर्मात्मक एव दुःखहेतुरपि कर्मैव तत्रोभयोरप्यज्ञानमूलत्वेन दुःखहेतौ कर्मणि कर्मान्तरेण प्रतिकृतेऽपि न मूलं निवर्तते। ततश्च पुनरपि दुःखनिमित्तकर्मोदयान्नैकान्ततः कर्मणां प्रतीकारः सम्भवतीत्याह। केवलं ज्ञानविधुरं कर्म कर्मणां दुःखहेतूनामेकान्ततः निःशेषतः प्रतीकारो न भवति। द्वयं निवर्त्यं निवर्तकं चेत्युभयविधं कर्म हि यस्मादविद्योपसृतं देहतादात्म्यभ्रान्तिरूपाहंकारममकारात्मकाज्ञानेन उपसृष्टं गर्भितं तन्मूलमित्यर्थः। तत्र दृष्टान्तः स्वप्ने स्वप्न इवेति, स्वशिरश्छेदादिविषये स्वप्ने जागरणेन निवृत्तेऽप्यज्ञानस्य मूलस्यानिवृत्तेः पुनः स्वप्नो भवति तद्वत्स्वप्ननिवर्त्तकं स्वप्नान्तरमिवेति वा ज्ञानहीनस्य कर्मणि प्रतिकृतेऽपि नाविद्यानिवृत्तिरित्यर्थः॥ ३४॥ ❀ ❀ नन्वहंममाभिमानरूपाज्ञानमेव कर्मद्वारा दुःखहेतुरित्युक्तं तर्ह्यज्ञानमेव प्रतिक्रियतां तत्राह अर्थे इति। अर्थे आत्मन्यविद्यमानेऽपि देवत्वमनुष्यत्वाद्याकाराभावेऽपि देहात्मभ्रान्तिमूला दुःखरूपा संसृतिर्न निवर्तते कुत इत्यत्राह मनसेति। लिङ्गरूपेण हन्तुर्देहात्माभिमानहेतुभूतमनःसद्भावादित्यर्थः, मनसो भ्रान्तिजननद्वारा दुःखादिहेतुत्वे दृष्टान्तमाह स्वप्न इति। यथा स्वप्ने विचरतः संकल्पादिकं कुर्वतो मनसो हेतोर्देशान्तरगमनराज्याभिषेकस्वशिरश्छेदादिनिमित्तसुखदुःखादिकं भवति तथेत्यर्थः॥ ३५॥ ❀ ❀ अतः पुरुषार्थभूतस्यात्मनो देहात्मभ्रान्त्यहङ्कारममकारतन्मूलोच्चावचकर्मद्वारानर्थरूपसंसारहेतुत्वान्मनसस्तदेव वशीकर्तव्यं वशीकरणोपायश्च भगवद्भक्तिरेवेत्याह अथेति। अथातः पुरुषार्थभूतस्यात्मनः अनर्थपरम्परा दुःखपरम्परारूपा संसृतिर्यतो मनसो भवति तद्व्यवच्छेदः तस्य मनसो व्यवच्छेदः, परमभक्तियोगोऽपि न निर्निमित्तमुदेति दुःखनिमित्तदेहात्मभ्रान्त्याद्यजनकत्वरूपो व्यवच्छेदः मुक्तिरिति यावत् गुरौ भगवति परमया भक्त्या भवति॥ ३६॥ ❀ ❀ कथं तद्व्यवच्छेदहेतुरसम्बन्धस्तत्राह वासुदेव इति। सध्रीचीनेन समीचीनेन प्रकारेण वासुदेवे भगवति समाहितो निहितः कृत इति यावत् भक्तियोगः परमभक्तियोगः वैराग्यं विषयेष्वनासक्तिं ज्ञानं परं ज्ञानं च जनयिष्यति परभक्त्यादिप्रणाड्या सुखदुःखादिनिवर्तकः परमभक्तियोग उदेष्यतीत्यर्थः॥ ३७॥ ❀ ❀ परभक्तियोगोऽपि कुतः स्यात्तत्राह स इति। अच्युतकथाश्रयः अच्युतस्य कथैवाश्रयो यस्य सः परभक्तियोगः अचिरादेव स्यात् हे राजर्षे! भगवत्कथाश्रवणात्परभक्तियोग उदेष्यतीत्यर्थः। अच्युतकथाश्रयः परभक्तियोगः कथंभूतः स्यात्तत्राह। नित्यदा अच्युतकथाः शृण्वतः श्रद्धानस्य कथाश्रवणविषयनिष्ठायुक्तस्य नित्यमधीयतः कथा अधीयानस्य॥ ३८॥ ❀ ❀ कुत्र शृण्वतस्तत्राह यत्रेति। हे राजन्!

साधवः विमलान्तःकरणाः भगवतो गुणानुकथने श्रवणे च व्यग्रं सत्वरं चेतो येषां ते यत्र वसन्ति तत्रेत्यर्थः ॥ ३९ ॥ ❀ ❀ तत्र कथं श्रवणं लभ्यते शृण्वतां च कानि दुःखानि नश्यन्ति तत्राह तस्मिन्निति। तस्मिन् देशे सद्भिर्मुखरिताः मधुभिदो भगवतश्चरित्रमेव पीयूषं तदेव शेषः शिष्यत इति शेषः। असारांशरहितः सारांशो यासु ताः सरितो नदीरूपा अच्युतकथाः परितः स्रवन्ति प्रवर्त्तन्ते भागवतप्रचुरदेशे सुलभमेव भगवत्कथाश्रवणमिति भावः। ताः सरिद्रूपाः भगवत्कथा ये जना अवितृषः अलंबुद्धि-शून्याः सन्तो गाढैः रसावधानैः कर्णैः पिबन्ति शृण्वन्ति तानशनादयः न स्पृशन्ति न बाधन्ते ॥ ४० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

कामे विषये आशयो यस्य स तथा ॥ ३१ ॥ ❀ ❀ एवं भ्रमतः सुखं क्वापि न स्यात्किं तत्राह दुःखेष्विति। दैवादिहेतुषु दुःखेषु मध्ये एकतरेण दुःखेनापि जीवस्य व्यवच्छेदो वियोगो नास्तीत्यन्वयः। प्रतिक्रियया सुखं स्यादत्राह स्याच्चेदिति। तस्य तस्य दुःखस्य प्रतिक्रिया परिहारः सोऽपि दुःखमेव ॥ ३२ ॥ ❀ ❀ स्कन्धस्य यथा भवति तथा सर्वाः प्रतिक्रिया दुःखरूपा इत्यन्वयः ॥ ३३ ॥ ❀ ❀ अग्निष्टोमादिकर्मणान्यकर्मनिवृत्तौ प्रबोधकाभावात्सर्वदुःखव्यवच्छेदो घटत इति चेत्तत्राह नैकान्तत इति। केवलं श्रीनारायणार्पणबुद्धिरहितं कर्म कर्मणामेकान्ततो नियमेन प्रतीकारो न भवति, कुत इति तत्राह द्वयमिति। निवार्यं निवर्तकं चेति कर्मद्वयमविद्योपसृतमीश्वराज्ञानाननुविद्धं हि यस्मात्तस्मादिति शेषः। तत्र दृष्टान्तः स्वप्ने वर्तमानः स्वप्नो यथा तस्य निवर्तको न भवति, किन्तु अतः प्रबोधोऽस्मात् इति तत्र प्रबोधादावीश्वर एव। स्वप्नसंसृत्योः कियानेव विशेष इति ॥ ३४ ॥ ❀ ❀ स्वप्नवद्धरेः संसारो निवर्ततामिति तत्राह अर्थे इति। हरेरपरोक्षज्ञानलक्षणपदार्थे अविद्यमाने संसृतिर्न निवर्तते कथमिव लीलानां वासनानां गमकेनोद्बोधकेन मनसा स्वप्ने विचरतो विषयान् भुञ्जानस्य पुंसः संसारो यथा न निवर्तते निद्राया अनिवृत्तत्वात् तथात्र ननु स्वप्नसंसारयोः कथं साम्यं स्वप्नद्रष्टानां तत्क्षणं नष्टत्वात्संसारदृष्टानां किञ्चित्स्थायित्वदर्शनादित्यस्यापीदमेवोत्तरमित्य-भिप्रायेणोक्तमर्थं इति। अयं भावः यथार्थज्ञानाभावादुभयोः साम्यं न तु स्थायित्वास्थायित्वात्, न हि दृष्टान्तदार्ष्टान्तिकयोः सर्वसाम्यं क्वापि दृष्टं "संसृतेः स्वप्नसाम्यं तु यथार्थज्ञानवर्जनम्" इति वचनात् "जाग्रत्यविद्यमानं तु देहात्मत्वं तु केवलम्। अविद्यमानं स्वप्ने तु जाग्रत्स्वज्ञानमेव च" इति वचनात् उभयत्र यथार्थज्ञानाभावोऽपि ज्ञायते। संसारे लब्धजन्मा यदि भगवज्ज्ञानं नापादये-त्तर्ह्ययं संसारो निष्प्रयोजनः स्यादित्यतो ह्यर्थे ह्यविद्यमानेपीति न तु मिथ्यात्वादिममिमर्थं हीतिशब्देन सूचयति ॥ ३५ ॥ ❀ ❀ एवंविधज्ञानोत्पत्तौ किं मुख्यसाधनमत्राह अथेति। यस्मात्केवलकर्मणो दुःखहेतुः संसारः सति भगवज्ज्ञाने च निवर्तते अथ तस्मात्संसारनिवृत्त्यर्थेऽर्थभूतस्य पुरुषार्थयोग्यस्यात्मनो जीवस्य यतो यस्य हरेरज्ञानादनर्थपरम्पराऽऽश्रयोनेः कृकलासयोनिरित्यादि-लक्षणा संसृतिर्या तद्व्यवच्छेदस्तस्य संसारस्य निवृत्तिर्यया हरिभक्त्या स्यादिति यतस्तस्मात्तस्य हरेः ज्ञानजननीं भक्तिमेव कुर्यादित्यन्वयः ॥ ३६ ॥ ❀ ❀ ज्ञानद्वारा भक्तेः संसारोच्छेदकत्वमिति भावेनाह वासुदेव इति। सध्रीचीनेन प्राणाया-मादिवह्निना निर्दग्धमलेनान्तःकरणेन समाहितः सम्यक् स्थापितः सध्रीचीनेन निष्कामेण पुरुषेणेति वा। यद्यपि भक्तेः पूर्वभावि-वैराग्यं तथापि पश्चात् दृढं कृतवतीत्यतो वैराग्यं जनयिष्यतीति ज्ञानं द्विविधम् ॥ ३७ ॥ ❀ ❀ भक्तियोगस्य साधनमाह सोऽचिरादिति। अच्युतकथा आश्रयो यस्य स तथा, अनेन हरिकथा भक्तियोगस्य साधनमच्युतकथाधिकारप्रकारमाह शृण्वत इति। श्रद्धादिगुणसम्पत्तिरधिकारलक्षणम् ॥ ३८ ॥ ❀ ❀ कुत्रेयं सम्भूयत इति तत्राह यत्रेति। अव्यग्रचेतसस्तदेक-चित्ताः ॥ ३९ ॥ ❀ ❀ तस्मिन् सतां समाजे महद्भिर्मुखरिताः शब्दात्मना निर्गमिता यास्ता सरितस्तान् पुरुषान् ॥ ४० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

भगवद्गुणानामनुकथने अनुश्रवणे च व्यग्रं विवशं चेतो येषां ते। न च तत्कथा तत्र स्वयत्नसापेक्षा न च साधना-नन्तरस्य व्यपेक्षा न च परिच्छिन्नेत्याह तस्मिन्निति। महान्तो मुखरिता याभिरिति आहिताग्न्यादित्वान्निष्ठायाः परनिपातः ॥ ३१-४० ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ननु निर्बुद्धिः श्वा दण्डप्रहारं प्राप्नोति बुद्धिमांस्तु दुःखस्य कारणमेव न करोति। दैवात् प्राप्तौ रोगादिदुःखस्य प्रतिकारञ्च करोतीति तत्राह। दुःखेषु त्रिविधेषु मध्ये एकतरेणापि न व्यवच्छेदो न विरहः। तत्तद्दुःखस्य प्रतिक्रियापि स्याच्चेत्तदपि न, प्रतिक्रियाणामपि दुःखरूपत्वादिति भावः ॥ ३२ ॥ ❀ ❀ तत्र दृष्टान्तः यथा हीति ॥ ३३ ॥ ❀ ❀ ननु यस्माद् दुःखस्य कारणं दुष्कृतकर्मैव तस्मात् सर्व्वदुष्कृतक्षयकामनया कस्मिंश्चिद् बृहति यागकर्म्मणि कृते सर्व्वदुःखनाशः स्यादेवेति तत्राह नैकान्तत इति। द्वयं दुष्कृतं कर्म्म दुष्कृतनिवर्त्तकञ्च कर्म्मेति द्वितयमविद्यामुपसृतमाश्रितं तद्द्वयस्य तमोरजोगुण-जनकत्वादिति भावः। तद्यथा रजसि सत्त्वांशेन तमसो निवर्त्तकेऽपि तमोंऽशस्तिष्ठति तथा सर्व्वदुष्कृतनिवर्त्तकेऽपि यागकर्म्मणि पशुहिंसालक्षणं दुष्कृतं तिष्ठत्येवेत्यत्र दृष्टान्तः—स्वप्ने पुत्रो मृत इति दुःखप्राप्तिस्तत्स्वप्नमध्य एव पुनः स्वप्ने पुत्रो जीवतीति

तद्दुःखोपशमः, किञ्च तदैव तं पुत्रं सर्पो दशतीति पुनर्दुःखप्राप्तिरिति प्रबोधं विना यथा स्वाप्निकं दुःखं न निवर्त्तते तथा संसारनिवृत्तिं विना सांसारिकं दुःखं न निवर्त्तेत इत्युक्तम् ॥ ३४ ॥ ❀ ❀ ननु सुखदुःखादेर्देहधर्म्मत्वाद्वस्तुतस्त्वसङ्गस्य जीवात्मनो दुःखादिकं नैव विद्यत इत्यविद्यमानस्य दुःखस्य किं निवर्त्तनप्रयासेनेत्यत आह। अर्थे दुःखादौ जीवात्मनोऽवस्तुभूतेऽपि तन्निवर्त्तनं विना संसृतिर्न निवर्त्तते यथा स्वप्ने लिङ्गरूपेणोपाधिभूतेन मनसा सह विचरतो जीवस्यासत्यमपि सर्पादिकं वस्तु दुःखदमेव प्रबोधं विना ॥ ३५ ॥ ❀ ❀ तर्हि संसारनिवृत्तिरेव कथं भवेत्तत्राह अथेति। भक्तिप्रकरणारम्भे आत्मनो जीवस्य परमार्थभूतस्य यत एवाविद्यातोऽनर्थपरम्परा संसृतिस्तस्या विच्छेदो गुरौ भक्त्येति 'गुरुर्न स स्यादि'त्यादिना हरिभक्त्युपदेशकस्यैव गुरुत्वविधानाद् गुरौ हरौ च भक्त्येत्यायातं, ततश्च पुरञ्जनस्यापरस्मिन् जन्मनि गुरौ हरौ च भक्त्या निस्तारो विख्यातः ॥ ३६ ॥ ❀ ❀ साधनभक्त्या प्रेमपर्य्यन्ता भक्तिर्भवतीत्याह वासुदेव इति द्वाभ्याम्। भक्तियोगः प्रेमा भगवत्येव सम्यगाहित इति भजनस्य तत्सुखे तात्पर्य्यं न तु स्वसुखे, सध्रीचीनेन समीचीनेन प्रकारेण यज्ज्ञानं वैराग्यञ्च तदिति सायुज्यप्रयोजनकयोर्ज्ञानवैराग्ययोर्व्यावृत्तिः। यदुक्तम् "वासुदेवे भगवति भक्तियोगः प्रयोजितः। जनयत्याशु वैराग्यं ज्ञानञ्च यदहैतुकम् ॥" इति तत्राप्यहैतुकपदोपन्यासेन अत एव ज्ञानवैराग्ययोर्भक्त्युत्थत्वात्तदर्थं भक्तेर्न पृथक् प्रयतनीयत्वमिति द्योतितम् ॥ ३७ ॥ ❀ ❀ अस्य भक्तियोगस्य साधनमपि भक्तियोग एवेत्याह सोऽचिरादिति। अच्युतकथामाश्रयत इति। तज्जन्य इत्यर्थः कस्य स्यात्तदाह शृण्वत इति। अधीयतः भगवद्धर्म्मानधीयानस्य श्रवणादिभक्तित्रयात्मकमात्रं ज्ञेयम् ॥३८॥ ❀ ❀ कुत्र स्यात्तदाह यत्रेति। यथैव गृहासक्ता गृहकर्म्मव्यग्रास्तथैव हन्तायमनुकथनस्य समयः हा हा श्रवणस्य समयो व्यतीतः सम्प्रति कीर्त्तनस्य समयोऽत्येति हा हन्त मन्दभाग्योऽहं निद्रालस्यदुर्दैहिकक्लृप्त्यगमितसमयः शीघ्रगतिरेव भक्तसमाजं केन प्रकारेण गच्छामीत्येवं व्यग्रं चेतो येषां ते ॥ ३९ ॥ ❀ ❀ यत्र भागवतास्तत्रैव भगवत्कथा इति कोऽयं नियम इति चेत्तत्राह। तस्मिन् महत्सदसि मुखं रान्ति गृह्णन्तीति मुखराः महद्भिर्मुखराः कृता इति मुखरिताः स्वयमेव मुखप्राप्तीकृताः या महतां मुखे सदा तिष्ठन्तीत्यर्थः। ता एव कास्तत्राह मधुभिच्चरित्रपीयूषाणां ये शेषाः महद्भिरास्वाद्यास्वाद्य महाप्रसादीकृतास्त एव सरितो महानद्यः परितश्चतुर्दिक्षु प्रतिभक्ताग्र एव स्रवन्ति, ता ये पिबन्तीति तासां स्वादाधिक्यं तेषाञ्च तृष्णाधिक्यं सूचितम्। ता इति। तासामेकमपि कणं परित्यक्तुं न शक्नुवन्तीत्यनुरागो व्यञ्जितः। अवितृपः अलंबुद्धिशून्याः, गाढैरिति दृढत्वेन स्रवसम्भावनाशून्यैः अशनतृट् कुत्राद्य भुञ्जे इति भोजनाकाङ्क्षा भयादयश्च न स्पृशन्तीति भक्तैरेव कृपया परस्परं भोजितत्वात् आकिञ्चन्येनैव भयाभावात् ते न स्मरन्त्यतितरां प्रियमित्यत्युक्त्या विस्मृतममतास्पदत्वेनैव शोकमोहाद्यभावादिति ॥ ४० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

कामा विषयभोगसङ्कल्पा आशये अन्तःकरणे यस्य सः दिष्टं कर्मानुसृतं प्रियाप्रियं सुखं दुःखं वा याति प्राप्नोति ॥३१॥ ❀ ❀ "अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्।" इति श्रुतेर्दुःखस्य स्वकृतकर्मफलस्य प्रतिक्रिया नास्ति। "पुण्येन पापमपनुदति" इति श्रुतेः स्याच्चेन्न तत्प्रतिक्रिया तथापि त्रिविधेषु दुःखेषु मध्ये एकतरेणापि दुःखेन व्यवच्छेदो वियोगो न घटेत प्रतिक्रियाया अपि दुःखरूपत्वात् ॥ ३२ ॥ ❀ ❀ दुःखनिवारणाय पुण्यकर्माचरणरूपा प्रतिक्रियापि दुःखस्वरूपैवेतीत्युक्तं तत्र दृष्टान्तमाह यथा हीति ॥ ३३ ॥ ❀ ❀ अथ पुण्यकर्माचरणात्मिका दुःखरूपापि प्रतिक्रिया यदि निःशेषं दुःखमूलं कर्म हन्यात्तदानुष्ठेया भवेत्सा तु न तथाविधेत्याह नैकान्तत इति। केवलं ज्ञानहीनं कर्म कर्मणां दुःखमूलानाम् एकान्ततो निःशेषतः प्रतिकारो नास्ति। तेषां वासनात्मकं मूलं नोत्पाटयति यतो द्वयं निवर्त्यं निवर्तकं च अविद्योपसृतमनात्मनि देहे आत्मत्वाभिमानरूपेणाज्ञानेन उपसृष्टम्, अतोऽज्ञानमूलत्वेन तयोर्नात्यन्ततो बाध्यबाधकसम्बन्धः। अत्र दृष्टान्तमाह स्वप्ने स्वप्न इव मृगं मां व्याघ्रो हन्तुमायातीत्येवंविधे स्वप्ने निवारणार्हे मृगहननार्हो व्याघ्रोऽहमिति स्वप्नान्तरः निःशेषतो निवर्तको न भवति उभयस्वप्नमूलभूतस्याज्ञानस्यानिवृत्तत्वात् प्रबोधस्योभयस्वप्ननिवर्तकस्याभावात् ॥ ३४ ॥ ❀ ❀ ननु पुरञ्जनोपाख्यानेनानेन देहादिविलक्षणतया वर्णितस्य भगवदात्मकस्य ज्ञानस्वरूपस्य वस्तुतो देहरूपत्वाभावात् पूर्वोक्ता संसृतिः स्वत एव निवृत्ता। भगवद्भजनादिसाधनस्य नास्त्यपेक्षेत्यत्राह अर्थे इत्यादि। अर्थे देहात्माभिमानरूपे अविद्यमानेऽपि उक्तात्मज्ञानेन बाधितेऽपि नानावासनामूलेन मनसा लिङ्गेन संसृतिहेतुना विचरतः पुंसः संसृतिकर्मानुष्ठानपूर्वकपुरञ्जन्यादिजन्ममरणप्रवाहो न निवर्तते इत्यन्वयः ॥ ३५ ॥ ❀ ❀ अथ अतो हेतोर्यतो येन मनसा अर्थभूतस्य भगवदात्मकत्वेन पुरुषार्थस्वरूपस्य अनर्थपरम्परा अनर्थस्य देहात्मभ्रमस्य परम्परा अनुवृत्तिर्यस्यां तथाभूता संसृतिर्वर्तते तस्य मनसः व्यवच्छेदो परमया तपोव्रतकर्मात्मज्ञानेभ्यः श्रेष्ठया गुरौ भगवति भक्त्या भवति ॥ ३६ ॥ सध्रीचीनेन आत्मज्ञानवता समीचीनेन पुरुषेण वासुदेवे समाहितः सम्यगर्पितो भक्तियोगः ज्ञानं भजनीयस्वरूपगुणानन्दादिनिरतिशयत्वविषयकं तदनन्तरं वैराग्यं भजनीयेतरसातिशयपदार्थेभ्यो विरक्तिं जनयति। चकारात्तदनन्तरं प्रेमविशेषलक्षणो भक्तयोगश्च वैराग्यविजृम्भितो भवति ततः कृतार्थो भवतीत्यर्थः ॥ ३७ ॥ ❀ ❀ ननु यतो वासुदेवज्ञानमन्यत्र वैराग्यं च भवति स भक्तियोगः कीदृशस्य पुरुषस्य स्यात्किमात्मकश्चेत्यत्राह। श्रद्दधानस्य जनस्य अत एव नित्यदा शृण्वतः नित्यदा अधीयतः अच्युतकथा

इति शेषः, अचिरादेव स्यात् अत एव अच्युतकथाश्रयः स्यात् अच्युतकथैवाश्रयो यस्य सः अच्युतकथाश्रवणकीर्तनाद्यात्मक इत्यर्थः ॥ ३८ ॥ ❀ नु स कुत्र स्यादित्यत्राह यत्रेति ॥ ३९ ॥ ❀ ❀ भागवतसमाजे हरिकथामृतपानं मतं क्षुत्तृडाद-योऽपि नाभिभवन्तीत्यन्वयव्यतिरेकाभ्यामाह तस्मिन्निति श्लोकद्वयेन। तस्मिन् भागवतसमाजे महद्भिर्मुखरिताः वर्णिताः मधुभिच्च-रित्रमेव पीयूषं तदेव शिष्यते इति शेषः असत्कथारुचिविनाशिनीषु यासु ता अवितृषः अविगततृषः तास्वतिलुब्धाः ॥ ४०-४१ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

तथा कामः आशयेऽन्तःकरणे यस्य स जीवोऽपि उच्चावचपथा विहितप्रतिषेधलक्षणेन उच्चनीचमार्गेण उपरि देवलोके अधो नरकादिलोके मध्ये मनुष्यादिलोके वा भ्रमन् गच्छन् प्रियाप्रियं प्रियं सुखं अप्रियं दुःखं वा यद्दिष्टं तदेव याति प्राप्नोती-त्यन्वयः ॥ ३१ ॥ ❀ ❀ ननु भवत्स्वेवमुपायानभिज्ञानां दुःखं लौकिकालौकिकदुःखप्रतीकारोपायस्य विद्यमानत्वात् कथं तदभिज्ञानां दुःखं स्यादित्याशङ्क्याह—दुःखेष्विति। सत्यमपि चेत् यद्यपि तस्य तस्य दुःखेन जीवस्य प्रतिक्रियानिवारणोपायः स्यात् शास्त्रादौ प्रदर्शितोऽस्ति, तथापि दैवभूतात्महेतुषु आधिदैविकादिषु मध्ये एकतरेण दुःखेन जीवस्य व्यवच्छेदः वियोगो नास्ति। दुःखस्यादृष्टाधीनत्वात्तस्य च दुःखप्राप्तेः पूर्वमशक्यज्ञानत्वात् न तदुपायानुष्ठानं सम्भवति येन दुःखं नागच्छेत्। वर्त्तमानकाले तस्य प्राप्तत्वात्तन्निवृत्त्युपायस्यापि दुःखात्मकत्वाच्चेति भावः ॥ ३२ ॥ ❀ ❀ किञ्च दृष्टोपायस्यौषधकृषिवाणिज्यादिरूपस्य रोगदारिद्र्यादिदुःखनिवर्त्तकत्वेनाभिमतस्य दुःखहेत्वदृष्टानिवर्त्तकत्वादुपायो न। कदाचिदेकस्य दुःखस्य तिरोधानेऽपि तन्मूलादृष्टस्य विद्यमानत्वात्तेनान्यप्रकारकं दुःखमुद्भवत्यतः सर्वस्योपायस्य व्यर्थतेति सदृष्टान्तमाह—यथेति। हि प्रसिद्धमेतत्, यथा पुरुषो गुरुं भारं शिरसा उद्वहन् यदा श्रान्तो भवति शिरःपीडया तदा स तं भारं स्कन्धेन आधत्ते तथापि भारस्यानपगतत्वान्न शाम्यत्येव तथा सर्वाः प्रतिक्रियाः सर्वे दुःखनिवृत्त्युपायाः। यथा स्कन्धेन भारं वहतोऽपि भारजनितक्लेशो न निवर्त्तते तथा दुःखनिवृत्त्युपायं कुर्वतोऽपि सर्वथा दुःखनिवृत्तिर्न भवतीत्यर्थः ॥ ३३ ॥ ❀ ❀ ननु मा भवतु स्वल्पेन तत्तदुपायेन सर्वदुःखनिवृत्तिस्तथापि महता सर्वपापनिवर्त्तकेन कर्मणा सर्वदुःखनिवृत्तिर्भविष्यतीत्याशङ्क्याह—नेति। केवलं भक्तिज्ञानादिरहितं कर्म कर्मणां दुःखहेतु-सर्वदुरितानां एकान्ततः अत्यन्तं सवासनं प्रतीकारो निवर्त्तकं न भवति। तत्र हेतुमाह—द्वयमिति, यतो दुरितलक्षणं तन्निवर्तकं चोभयमपि कर्म अविद्यया देहान्तःकरणाद्यध्यासलक्षणयोपसृतं व्याप्तम्। अतोऽविद्यादशायां मोहेन कर्मणि विघ्नस्य पुनर्दुराचारस्य च सम्भवान्न सर्वथा दुःखनिवृत्तिरिति भावः। तत्र दृष्टान्तः—स्वप्ने इति, स्वप्नावस्थायां स्वप्नः स्वप्नेऽनुष्ठितो दुःखप्रतीकारो जागरणमन्तरेण यथा सर्वथा दुःखनिवर्त्तको न भवति, निद्रादोषस्य विद्यमानत्वात् प्रतीकारेणैकस्मिन् दुःखे निवृत्तेऽपि पुनरत्त-द्वशाद् दुःखान्तरोत्पत्तेर्दर्शनात्तथेत्यर्थः। त्वं तु शुद्धान्तःकरणोऽसि स्वल्पं किञ्चित्प्रतिबन्धकमस्ति तदपि सावधानतया भगवदारा-धकत्वेन अपाकृतार्थो भवेति भावेन सम्बोधयति—हे अनघेति ॥ ३४ ॥ ❀ ❀ तत्र दृष्टान्तमेव स्पष्टयति—अर्थ इति। मनसा लिङ्गरूपेण आत्मत्वेनाध्यस्तेन दुःखहेतुना सह स्वप्ने विचरतः पुरुषस्य यथा तदा दृष्टव्याघ्रसर्पचोरादिपदार्थे अविद्यमानेऽपि जागरणेन निद्रादोषापगममन्तरेणोपायान्तरेण व्याघ्रादिदर्शनजनितदुःखं न निवर्त्तते तथा जागरणेऽपि विश्वस्य भगवत्स्वामिकत्वेन तत्र ममताविषयत्वस्य देहेन्द्रियादेरात्मभिन्नत्वेन तत्राहन्ताविषयत्वस्य चाविद्यया कल्पितत्वात् वस्तुविचारेणैतस्मिन्नर्थे अविद्यमा-नेऽपि यावदात्मज्ञानेन अविद्यालक्षणो दोषो न निवर्त्तते तावदुपायान्तरेण अहन्ताममताजनिता संसृतिर्जन्ममरणादिदुःखानुभव-सन्ततिरपि नैव निवर्त्तते इत्यर्थः। हिशब्दोऽवधारणे ॥ ३५ ॥ ❀ ❀ ननु तर्हि सर्वदुःखनिवृत्तिः कथमिति वीक्षायां भगव-द्भजनेन संसारकारणाज्ञाननिवृत्त्यैवेत्याह—अथेति। यस्मात् प्रकारान्तरेण सर्वदुःखनिवृत्तिर्नास्ति अथ तस्मात् अर्थभूतस्य सर्व-पुरुषार्थस्वरूपस्यापि आत्मनो जीवस्य यतोऽज्ञानादनर्थपरम्परा जन्ममरणादिदुःखसन्ततिलक्षणा संसृतिर्भवति तत्तस्याज्ञानस्य व्यवच्छेदो विनाशो गुरौ भगवति वासुदेवे सर्वनियन्तरि ज्ञानप्रकाशके परमया भक्त्या भवतीत्यन्वयः ॥ ३६ ॥ ❀ ❀ नन्वेव-मज्ञाननिवृत्त्या संसारनिवृत्तिः "तमेव विदित्वाऽतिमृत्युमेति" इत्यादिश्रुतौ वैराग्यपूर्वकज्ञानादेव प्रसिद्धा, कथं भक्त्या तन्निवृत्ति-रुच्यते इत्याशङ्क्य 'क्लेशोऽधिकतरस्तेषां' इत्यादिवाक्यात् भक्तिं विना ज्ञानादेर्दुष्करत्वात्, भक्त्या तु तावप्यनायासेनैव भवत-स्तदर्थं पृथग्यत्नो न विधेय इत्याशयेन भक्त्येत्युक्तमित्यभिप्रेत्याह—वासुदेव इति। वासुदेवे सर्वनियन्तृत्वेन ज्ञानप्रदे भगवति स्वयं च ज्ञानवैराग्यादिपूर्णे समाहितः समर्पितः फलाकाङ्क्षाराहित्येन कृतो भक्तियोगः सध्रीचीनेन प्रकारेणानायासेन वैराग्यं ज्ञानं च जनयिष्यतीत्यन्वयः ॥ ३७ ॥ ❀ ❀ नन्वसौ परमफलो भक्तियोगः कथं स्यात्, को वा तत्राधिकारीत्यपेक्षायामाह—स इति। नित्यदा निरन्तरं श्रद्दधानस्य श्रद्धावतः श्रद्धया भगवत्कथाः शृण्वतः अधीयतः अधीयानस्य जनस्य अच्युतस्य कथाश्रयः कथाश्रवणादितः स भक्तियोगोऽचिरात् शीघ्रमेव स्यादित्यन्वयः। तत्रापि श्रेष्ठत्वाच्छ्रवणादिकमेव युक्तमिति सूचयन् सम्बोधयति—हे राजर्षे इति। स्यादिति पुनरुक्तिः 'श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः' इति वाक्यात् श्रद्धादिसत्त्वेन श्रवणादिपरत्वमेव अधिकारनिरूपकं न वर्णाश्रमादिकं स्त्रीत्वपुंस्त्वादिकं चेति सूचनार्था ज्ञेया ॥ ३८ ॥ ❀ ❀ तर्हि श्रवणादिकमेव कुत्र स्यादि-त्यपेक्षायामाह—यत्रेति। यत्र भागवतास्तिष्ठन्ति तत्र श्रवणादिकं स्यादिति शेषेणान्वयः। हे राजन्निति सम्बोधनेन राजत्वेन सर्वत्र सञ्चारात्ते तत्र न दुर्लभा इति सूचयति। भागवतानां किं लक्षणं तत्राह—भगवतो गुणानामनुकथने श्रवणे च व्यग्रं सँल्लग्नं

चेतो येषां ते। कथमेवं तत्राह—विशदाशया इति, विशुद्धान्तःकरणत्वेन विवेकेन भगवद्गुणश्रवणादेः पुरुषार्थहेतुत्वं जानन्त इत्यर्थः। शुद्धान्तःकरणत्वे हेतुमाह—साधव इति, साध्नुवन्ति स्वकार्यमिति साधवः सदाचारनिष्ठा इत्यर्थः॥ ३९॥ ❁ ❁ ननु भागवतसमाजे प्रविष्टस्यापि क्षुत्पिपासादिभिरर्दितस्य कथमव्यग्रतया श्रवणादि सिद्ध्येत्तत्राह—तस्मिन्निति। तस्मिन् भागवतसमाजे तैर्महद्भिर्मुखरिताः कीर्त्तिताः मधुभिदो भगवतश्चरितमेव पीयूषममृतं तदेव शिष्यते इति शेषो यासु ताः कथालक्षणाः सरितो नद्यः परितः वक्तृबहुत्वात् स्रवन्ति वहन्ति। ताः सरितो ये अवितृषः अलम्बुद्धिरहिताः सन्तो गाढैः सावधानैः कर्णैः श्रोत्रैः पिबन्ति शृण्वन्ति तान् अशनादयो न स्पृशन्ति न बाधन्त इत्यर्थः। अशनशब्देन क्षुत् गृह्यते। नृपेति सम्बोधनं यथा नृपाश्रितानन्ये न बाधन्ते तथेति सूचनार्थम्॥ ४०॥

### भावानुवादः

आधिदैविक, आधिभौतिक और आध्यात्मिक—इन तीन प्रकारके दुःखोंमेंसे किसी भी एकसे जीवका सर्वथा छुटकारा नहीं हो सकता। कभी कभी वैसा जान पड़ता है तो वह केवल तात्कालिक निवृत्ति ही है॥ ३२॥ ❁ ❁ वह ऐसी ही है जैसे कोई सिरपर भारी बोझा ढोकर ले जानेवाला पुरुष उसे कंधेपर रख ले, इसी तरह सभी प्रतिक्रिया ( दुःख-निवृत्ति ) जाननी चाहिये—यदि किसी उपायसे मनुष्य एक प्रकारके दुःखसे छुट्टी पाता है, तो दूसरा दुःख आकर उसके सिरपर सवार हो जाता है॥ ३३॥ ❁ ❁ शुद्धहृदय नरेन्द्र! जिस प्रकार स्वप्नमें होनेवाला स्वप्नान्तर उस स्वप्नसे सर्वथा छूटनेका उपाय नहीं है, उसी प्रकार कर्मफलभोगसे सर्वथा छूटनेका उपाय केवल कर्म नहीं हो सकता; क्योंकि कर्म और कर्मफल भोग दोनों ही अविद्यायुक्त होते हैं॥ ३४॥ ❁ ❁ जिस प्रकार स्वप्नावस्थामें अपने मनोमय लिङ्गशरीरसे विचरनेवाले प्राणीको स्वप्नके पदार्थ न होनेपर भी भासते हैं, उसी प्रकार ये दृश्यपदार्थ वस्तुतः न होनेपर भी, जबतक अज्ञान-निद्रा नहीं टूटती, बने ही रहते हैं और जीवको जन्म-मरणरूप संसारसे मुक्ति नहीं मिलती। ( अतः इनकी आत्यन्तिक निवृत्तिका उपाय एकमात्र आत्मज्ञान ही है )॥ ३५॥ ❁ ❁ राजन्! जिस अविद्या के कारण परमार्थस्वरूप आत्माको यह जन्म-मरणरूप अनर्थपरम्परा प्राप्त हुई है, उसकी निवृत्ति गुरुस्वरूप श्रीहरिमें सुदृढ़ भक्ति होनेपर हो सकती है॥ ३६॥ ❁ ❁ भगवान् वासुदेवमें एकाग्रतापूर्वक सम्यक् प्रकारसे किया हुआ भक्तिभाव ज्ञान और वैराग्यका आविर्भाव कर देता है॥ ३७॥ ❁ ❁ राजर्षे! यह भक्तिभाव भगवान्की कथाओंके आश्रित रहता है। इसलिये जो श्रद्धापूर्वक उन्हें प्रतिदिन सुनता या पढ़ता है, उसे बहुत शीघ्र इसकी प्राप्ति हो जाती है॥ ३८॥ ❁ ❁ राजन्! जहाँ भगवद्गुणोंको कहने और सुननेमें तत्पर विशुद्धचित्त भक्तजन रहते हैं उस साधु-समाजमें सब ओर महापुरुषोंके मुखसे निकले हुए श्रीमधुसूदनभगवान्के चरित्ररूप शुद्ध अमृतकी अनेकों नदियाँ बहती रहती हैं। जो लोग अतृप्तचित्तसे श्रवणमें तत्पर अपने कर्णकुहरोंद्वारा उस अमृतका छककर पान करते हैं, उन्हें भूख-प्यास, भय, शोक और मोह आदि कुछ भी बाधा नहीं पहुँचा सकते॥ ३९-४०॥

एतैरुपद्रुतो नित्यं जीवलोकः स्वभावजैः। न करोति हरेर्नूनं कथामृतनिधौ रतिम्॥ ४१॥
प्रजापतिपतिः साक्षाद्भगवान् गिरिशो मनुः। दक्षादयः प्रजाध्यक्षा नैष्ठिकाः सनकादयः॥ ४२॥
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः। भृगुर्वसिष्ठ इत्येते मदन्ता ब्रह्मवादिनः॥ ४३॥
अद्यापि वाचस्पतयस्तपोविद्यासमाधिभिः। पश्यन्तोऽपि न पश्यन्ति पश्यन्तं परमेश्वरम्॥ ४४॥
शब्दब्रह्मणि दुष्पारे चरन्त उरुविस्तरे। मन्त्रलिङ्गैर्व्यवच्छिन्नं[1] भजन्तो न विदुः परम्॥ ४५॥
यदा यमनुगृह्णाति भगवानात्मभावितः। स जहाति मतिं लोके वेदे च परिनिष्ठिताम्॥ ४६॥
तस्मात्कर्मसु बर्हिष्मन्नज्ञानादर्थकाशिषु। मार्थदृष्टिं कृथाः श्रोत्रस्पर्शिष्वस्पृष्टवस्तुषु॥ ४७॥
स्वं लोकं न विदुस्ते वै यत्र देवो जनार्दनः। आहुर्धूम्रधियो वेदं सकर्मकमतद्विदः॥ ४८॥
आस्तीर्य दर्भैः प्रागग्रैः कार्त्स्न्येन क्षितिमण्डलम्। स्तब्धो बृहद्वधान्मानी कर्म नावैषि यत्परम्॥
तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया॥ ४९॥
हरिर्देहभृतामात्मा स्वयं प्रकृतिरीश्वरः। तत्पादमूलं शरणं यतः क्षेमो नृणामिह॥ ५०॥

---

१. प्रा० पा०—वच्छिन्नैर्भ।

अन्वयः—एतैः स्वभावजैः नित्यम् उपद्रुतः जीवलोकः हरेः कथामृतनिधौ रतिम् नूनम् न करोति ॥ ४१ ॥ ❀ ❀ प्रजापतिपतिः साक्षात् भगवान् गिरिशः मनुः दक्षादयः प्रजाध्यक्षाः नैष्ठिकाः सनकादयः मरीचिः अत्र्यंगिरसौ पुलस्त्यः पुलहः क्रतुः भृगुः वसिष्ठः इति एते मदन्ताः ब्रह्मवादिनः वाचस्पतयः अद्यापि तपोविद्यासमाधिभिः पश्यन्तः अपि पश्यंतम् परमेश्वरम् न पश्यंति ॥ ४२-४४ ॥ ❀ ❀ उरुविस्तरे दुष्पारे शब्दब्रह्मणि चरंतः मंत्रलिंगैः व्यवच्छिन्नम् भजंतः परम् न विदुः ॥ ४५ ॥ ❀ ❀ यदा आत्मभावितः भगवान् यम् अनुगृह्णाति सः लोके वेदे च परिनिष्ठिताम् मतिम् जहाति ॥ ४६ ॥ ❀ ❀ तस्मात् बर्हिष्मन् अज्ञानात् अर्थकाशिषु श्रोत्रस्पर्शिषु अस्पृष्टवस्तुषु कर्मसु अर्थदृष्टिम् मा कृथाः ॥ ४७ ॥ ❀ ❀ यत्र देवः जनार्दनः स्वम् लोकम् ते वै न विदुः अतद्विदः धूम्रधियः वेदम् सकर्मकम् आहुः ॥ ४८ ॥ ❀ ❀ प्रागग्रैः दर्भैः कात्स्न्येन क्षितिमंडलम् आस्तीर्य बृहद्वधात् मानी स्तब्धः यत् परम् कर्म नावैषि यत् हरितोषम् तत् कर्म यया तन्मतिः सा विद्या ॥ ४९ ॥ ❀ ❀ स्वयंप्रकृतिः हरिः देहभृताम् आत्मा ईश्वरः अस्ति तत्पादमूलम् शरणम् यतः इह नृणाम् क्षेमः ॥ ५० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

सत्संगमन्तरेण स्वयमेव कथाचिन्तनादावालस्यादिना रसावेशाभावाच्च क्षुत्पिपासाद्यभिभूतस्य भक्तिर्न संभवतीत्याह। एतैरिति ॥ ४१ ॥ ❀ ❀ भगवदनुग्रहमन्तरेण तु न कस्यापि ज्ञानसंभव इति कैमुत्यन्यायेनाह चतुर्भिः। प्रजापतिपतिर्ब्रह्मा ॥ ४२ ॥ ❀ मदन्ताः अहं नारदोऽन्ते येषाम् ॥ ४३ ॥ ❀ ❀ वाचां पतयोऽपि तपोविद्यासमाधिभिरुपायैः पश्यन्तो विचिन्वन्तोऽपि पश्यन्तं सर्वसाक्षिणं न पश्यन्ति ॥ ४४ ॥ ❀ ❀ कुत इत्यत आह। शब्दब्रह्मणि वेदे उरुर्महान्विस्तरो यस्य अर्थतोऽपि पारशून्ये तस्मिन्वर्तमानाः मन्त्राणां लिंगैर्वज्रहस्तत्वादिगुणयुक्तविविधदेवताभिधानसामर्थ्यैः परिच्छिन्नमेवेन्द्रादिरूपं तत्तत्कर्माग्रहेण भजन्तः परं परमेश्वरं न विदुः ॥ ४५ ॥ ❀ ❀ तर्ह्यन्यः को नाम कर्माद्याग्रहं हित्वा परमेश्वरमेव भजेदित्यत आह। यदा यमनुगृह्णाति। अनुग्रहे हेतुः। आत्मनि भावितः सन् स तदा लोके लोकव्यवहारे वेदे च कर्ममार्गे परिनिष्ठितां मतिं त्यजति ॥ ४६ ॥ ❀ ❀ अर्थकाशिषु परमार्थत्वेन प्रकाशमानेषु अज्ञानाद्विवेकाभावात् पुरुषार्थबुद्धिं मा कृथाः न कुरु। प्ररोचनाय केवलं श्रोत्रप्रियेषु न स्पृष्टं वस्तु यैः ॥ ४७ ॥ ❀ ❀ ननु वेदेन स्वर्गादिसाधनत्वेनोक्तानि कर्माणीति वेदवादिनो वदन्ति कथमस्पृष्टवस्तुष्वित्युच्यते तत्राह। हे धूम्रधियो मलिनबुद्धयः सकर्मकं कर्मपरं वेदमाहुस्ते अतद्विदोऽवेदज्ञाः यतस्ते स्वं स्वरूपभूतं लोकमात्मतत्त्वं वेदतात्पर्यगोचरं न विदुः। यत्र देवोऽस्ति ॥ ४८ ॥ ❀ ❀ त्वं तु महामूर्ख इत्याह आस्तीर्येति। बृहद्वधाद्बहुपशुवधात् मानी महायज्वाऽहमित्यहंकारी अतः स्तब्धोऽविनीतः सन्कर्म नावैषि परं विद्यास्वरूपं तच्च न वेत्सि। नारदः स्वयं कृपया तद् द्वयं निरूपयति। हरिं तोषयतीति हरितोषं यत्तदेव कर्म। यया तस्मिन् हरौ मतिर्भवति सैव विद्या महाफलत्वात् ॥ ४९ ॥ ❀ ❀ कुत इत्यपेक्षायां हरेः परमफलत्वं दर्शयन्नाह द्वाभ्याम्। हरिर्देहभृतामात्मा ईश्वरश्च। तत्र हेतुः। स्वयं स्वातन्त्र्येण प्रकृतिः कारणमतस्तेषां तत्पादमूलमेव शरणमाश्रयः। यतो यस्मिन् ॥ ५० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

एतैरशनादिभिः स्वभावजैः ॥ ४१ ॥ ❀ ❀ ननु "तरति शोकमात्मवित्" इति श्रुतेर्ज्ञानिना किं भक्त्येति तत्र कैमुत्यन्यायेन ज्ञानिनो नैव जानन्तीत्याह—प्रजेति चतुर्भिः। भगवान्सर्वज्ञः ॥ ४२ ॥ ❀ ❀ मदन्ता इति। न केवलं तानेव निन्दाम्यपि त्वात्मानमपि ॥ ४३ ॥ ❀ ❀ एते तपोविद्यासमाधिभिर्न पश्यन्ति भक्त्या तु पश्यन्ति। "भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः" इति श्रीमुखोक्तेः। एतेषां भक्तिमत्त्वस्य प्रसिद्धेः। एते वयं भक्त्या विना के वराका इति भावः। वाचस्पतयोऽन्यान्प्रत्युपदेष्टुं सरस्वतीपतयो भवन्ति स्वयं तु शास्त्रार्थं नैव जानन्ति भक्तिं विना व्याख्यानादिति भावः। अद्यापीति। तपआदीनां परिपाकश्च ज्ञापितः अज्ञानस्य लक्षणं पश्यन्तोपि उरुप्रयासेन विचिन्वन्तोपि यथार्थाज्ञानान्न पश्यन्तीत्यर्थः ॥ ४४ ॥ ❀ ❀ अदर्शने हेतुं पृच्छति—कुत इति। उरुविस्तरे शब्दतोपि दुर्विज्ञेये "वज्रहस्तः पुरन्दरः" इत्यादिमन्त्रोक्तलिंगैः ॥ ४५ ॥ ❀ ❀ अत्राशंकते—तर्हीति। नामेति प्रसिद्धौ। कोऽन्यः पुरुषो यः सर्वं हित्वा परं भजेदित्यत आह—यदेति। विश्वनाथः—ननु यदि ज्ञानिनः सकर्माणश्च न जानन्ति तदा कस्तं जानाति भक्त एवेति चेत्स भक्त एव कथं स्यात्केन वा चिह्नेन ज्ञेय इत्यत आह—यदेति। आत्मनि मनसि भावितोऽर्थाद्भक्तैरेव भगवन्निमं जनं संसारादुद्धरन्नंगीकुर्विति स्वभक्तैर्मनसि निवेदितो भगवान्यदा यस्य यमनुगृह्णाति तदैव स भक्तो लोके लौकिके व्यवहारे वेदे च कर्मकाण्डे परिनिष्ठितां कृतस्थितिमपि मतिं त्यजति ॥ ४६ ॥ ❀ ❀ उपसंहरति यस्माज्ज्ञानेनैव मोक्षस्तस्माद्धेतोः। अज्ञानाद्भगवत्तत्त्वापरिज्ञानात् कर्मस्वग्निष्टोमादिषु। तत्प्रवृत्तौ हेतुः—श्रोत्रेति। 'अपाम सोमम्' इत्यादिश्रवणे श्रोत्रं तत्सुखं स्पृशन्ति ददतीति श्रोत्रस्पर्शानि तेषु। हेयत्वे हेतुमाह—अस्पृष्टेति। परमात्माख्यवस्तुसम्बन्धगन्धरहितेषु ॥ ४७ ॥ ❀ ❀ अत्राक्षिपति—नन्विति। एते मत्पुरोधसः कथं विद्वांसोपि

मां यागादिकमेव कारयन्ति । स्वमिति । यत्र लोके जनार्दनस्तं लोकं वैकुण्ठं स्वं स्वप्राप्यं स्वीयं न विदुः किं तु स्वर्गमेव स्वं विदुः । "इष्ट्वेह देवता यज्ञैः स्वर्गं प्राप्स्यामहे ध्रुवम्" इत्युक्तेः । स्वामिव्याख्याने यत्रात्मतत्त्वज्ञाने देवो द्योतनात्मको जनस्याविद्यादेरर्दनः परमात्मैवास्ति स एव भवतीत्यर्थः ॥ ४८ ॥ ❀ ❀ त्वन्तु तैरनभिज्ञैरध्यापितो महामूर्खोसि, अतोऽहंकारित्वात् प्राचीना-प्रदर्भास्तरणं कृत्वा पशुसंज्ञपनमेव जानासि न तु कर्मस्वरूपमित्यर्थः । 'कुरु कर्मैव तस्मात्त्वम्' इत्यादिना विहितं यत्परं कर्म तन्न जानासीत्युच्यते न तु कर्ममात्रं न वेत्सीति । ननु कल्पोक्तद्रव्यसामग्र्या क्रियमाणस्य कर्मणः कथं परत्वाभावस्तत्राह—तदिति । ब्रह्मार्पणबुद्ध्या क्रियमाणस्यैव कर्मणः तत्तोषकत्वेन परत्वं न द्रव्यसामग्र्या क्रियमाणस्येति भावः । ननु ममापि क्षत्रियत्वाद्वेदविद्याधिकारित्वेन कर्मानुष्ठानं तत्पूर्वकमेवास्तीति तत्राह—सेति । महाफलत्वान्मोक्षहेतुत्वात् ॥ ४९ ॥ ❀ ❀ महाफलत्वे हेतुं पृच्छति—कुत इति । हरिरिति अज्ञानतत्कार्यदुरितादिहरणशीलत्वात् । ईश्वरः स्वामी । तत्र आत्मत्वे स्वामित्वे च । अतः स्वामित्वादात्मत्वाच्च । तेषां देहभृताम् । शरणं रक्षिता 'शरणं गृहरक्षित्रोः' इत्यमरः । देहभृतामात्मेति । तत्तोषं विना कथं स्वस्य तोषो भवेदिति भावः । प्रकृतिरीश्वर इति । सर्वजगन्मातापितरावपि हरिरेवेत्यर्थ इति चक्रवर्ती ॥ ५० ॥

### श्रीमद्वीरराघवव्याख्या

भगवत्कथाश्रवणविरोधिनः अशनादय एवेत्याह एतैरिति । स्वभावजैर्देहस्वभावप्रयुक्तैरेतैरशनादिभिर्नित्यमुपद्रुतो जीवलोकः हरेः कथामृतसमुद्रे रतिं न करोति नूनं निश्चयः । भगवत्कथाश्रवणाभिमुख्यविरोधिनोऽशनादीन् शनैः सात्त्विकदेशस्थभागवतसंगतिलब्धभगवद्गुणश्रवणेन निरस्येदित्यर्थः ॥ ४१ ॥ ❀ ❀ एवं प्रथमं भागवतसङ्गः ततो भगवद्गुणानुश्रवणं ततो भगवदुपासनं ततो विरागस्ततो भगवत्साक्षात्काररूपं परज्ञानं ततो भगवदनुभवजन्यप्रीत्युत्कर्षरूपा परभक्तिः ततो मुक्तिरिति प्रणाडी कथिता । इदानीं प्राप्यस्य परमात्मनो वाङ्मनसापरिच्छेद्यस्वरूपस्वभावस्य प्राप्त्युपयुक्तभक्तियोगानुष्ठानकारणं तदनुग्रहमन्तरेण नान्योऽस्तीत्याह प्रजापपितिरित्यादिना । प्रजापतिपतश्चतुर्मुखः गिरिशो रुद्रः मनुः स्वायंभुवः प्रजाध्यक्षा दक्षादयः आदिशब्देन कश्यपादयो ग्राह्याः, तथा नैष्ठिकब्रह्मचारिणः सनकादयः ॥ ४२ ॥ ❀ ❀ मरीच्यादयो मत्पर्यन्ताः नारदपर्यन्ताः सर्वे ब्रह्मवादिनः ॥ ४३ ॥ ❀ ❀ तथा च वाचस्पतयः बृहस्पतिव्यासादयोऽद्यापि तपोविद्याद्युपायैः पश्यन्तोऽपि उपासीना अपि सर्वज्ञं परमेश्वरं इयत्तया न पश्यन्ति वाङ्मनसापरिच्छेद्यस्वरूपस्वभावत्वादिति भावः ॥ ४४ ॥ ❀ ❀ एत एव न जानन्ति किमु कर्मजडाः मादृशा न जानन्तीत्याह शब्दब्रह्मणीति । उरुविस्तरे "अनन्ता वै वेदा" इति श्रुतिविस्तरे दुष्पारे दुरधिगमतात्पर्ये शब्दब्रह्मणि शब्दात्मके ब्रह्मणि वेदे चरन्तः तत्र श्रुतपशुपुत्रवृष्ट्यन्नस्वर्गाद्यैहिकामुष्मिकफललिप्सवः मन्त्रलिङ्गैः मन्त्रश्रुतवज्रहस्तत्वादिगुणलिङ्गैर्व्यवच्छिन्नं युक्तमिन्द्रादिदेवतावर्गं भजन्तः समीहितसाधनतया यजन्तः परं परमात्मानं न विदुरपरिच्छेद्यस्वरूपस्वभावस्येयत्तया वेद्यत्वमसंभवि । अपरिच्छिन्नत्वेन ज्ञानेऽपि तदुपासनमेव कारणं न केवलं कर्मेति भावः ॥ ४५ ॥ ❀ ❀ यदा भगवानात्मभावित आत्मना स्वेनैव भावितः यदीयानुषङ्गिकप्रासङ्गिकयादृच्छिकान्यतमाज्ञातसुकृतव्याजमात्रसन्तुष्टेन स्वेनैव भावितः रक्षणोन्मुखः यमनुगृह्णाति स पुमांल्लोके देहयापनोपयुक्ते कर्मणि शिश्नोदरादिव्यापारे वेदे च वेदपूर्वभागमात्रोदिते च कर्मणि परिनिष्ठितां मतिं जहाति भगवतानुगृहीत एव मुक्त्युपायोपसंहाराय प्रभवतीत्यर्थः ॥ ४६ ॥ ❀ ❀ तस्माद्भगवदनुग्रहस्यैव कारणत्वाद्धे बर्हिष्मन् ! भगवदनुग्रहानुप्राप्तसत्सङ्गस्त्वमर्थकाशिषु स्वर्गादिफलशोभिषु कर्मस्वज्ञानादर्थदृष्टिं पुरुषार्थसाधनमतिं मा कृथाः । तत्र हेतुः श्रोत्रस्पर्शिषु प्ररोचनया केवलं श्रोत्रप्रियेषु न स्पृष्टं वस्तु निरतिशयपुरुषार्थरूपं यैस्तेषु अनित्याल्पफलेषु बह्वायासेष्वित्यर्थः ॥ ४७ ॥ ❀ ❀ ननु "अपाम सोमममृता अभूम अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्"इत्यादिभिः कर्मसाध्यफलस्यापि नित्यत्वावगमात्कथमस्पृष्टवस्तुष्वित्युक्तं तत्राह धूम्रा धियः रजस्तमःप्रचुरबुद्धयः धूमवदावरकत्वात्तमसो धूम्रधिय इत्युक्तं यत्र पूर्वोत्तरभागात्मके वेदे जनार्दनो भगवान्कर्मभिराराध्यत्वेनोपास्यत्वेन च प्रतिपन्नः तं वेदं सकर्मकं कर्मणा सहितं केवलकर्मतात्पर्यकमाहुस्तेऽतद्विदः वेदतात्पर्यानभिज्ञा न ब्रह्मवेदिन इत्यर्थः, यतस्ते स्वरूपभूतं लोकमात्मतत्त्वमपि न विदुः केवलदेहात्मवादिनः 'अक्षय्यं ह वा' इत्यादिवाक्यानि भगवदाराधनत्वेन कृतार्थानि चातुर्मास्यादिकर्माणि भगवदुपासननिर्वर्तनद्वारा निःश्रेयसरूपामृतत्वप्राप्तिप्रतिपादनपराणीत्येवंविधतात्पर्यमजानन्तः तानि वाक्यानि केवलस्वर्गादिसुखसाधनभूतकर्मपराणीति मन्वानाः केवलमज्ञा इत्यर्थः ॥ ४८ ॥ ❀ ❀ तस्मात्त्वमपि केवलकर्मजडो भूत्वा प्रागग्रैर्दर्भैः कृत्स्नं क्षितिमण्डलमास्तीर्य आस्तरणपूर्वकमिष्ट्वा बृहद्दृहृपशुहिंसया मानी महायज्वाहमित्यभिमान्यतः स्तब्धोऽविनीतः कर्म भगवदाराधनरूपं कर्म नावैषि न जानासि, किं तत्कर्म यत्परं श्रेष्ठं परमपुरुषार्थभूतमोक्षसाधनभूतं निवृत्तिधर्मापरपर्यायम् ॥ ४९ ॥ ❀ ❀ अमुक्तिसाधनं कर्म विद्यां च निन्दति तदिति । हरितोषं भगवत्तोषकारणं यत्तदेव कर्म प्रशस्तमितरत् निन्दितं यया विद्यया ज्ञानेन तन्मतिः हरिभक्तिः भवति सैव विद्या प्रशस्ता इतरा निन्दितेत्यर्थः । तथा चोक्तं"तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये । आयासायापरं कर्म विद्यान्या शिल्पनैपुणम्"इति कासौ विद्या यया हरिमतिरिति विविदिषायां तत्त्वहितपुरुषार्थज्ञानमेवेत्याह हरिरिति । भगवान्निरस्तनिखिलदोषः समस्तकल्याणगुणाकरः ईश्वरः स्वयं प्रकृतिर्जगदुपादानकारणं देहभृतामात्मान्तः प्रविश्य धारकः निरस्तनिखिलदोषत्वसमस्तकल्याणगुणाकरत्वसर्वान्तरात्मत्वविशिष्टत्वरूपं परतत्त्वं भगवच्छरीरत्वतत्सृज्यत्वादिकं स्वस्य तत्त्वमित्यर्थः ॥ ५० ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

अशनादिस्पर्शफलमाह एतैरिति । एतैरशनादिभिः स्वभावजैः सहजैर्हरिकथामृतनिधिरतिविघ्नफलैः ॥ ४१ ॥ ❀ ❀ अधुनाशनाद्युपद्रवविधुरेणापि साकल्येन श्रीहरिज्ञानं दुर्लभमित्याह प्रजापतिरित्यादिना । "प्रजापतिपतिर्ब्रह्मा विरिञ्चश्चेति कथ्यते" इति वचनात् प्रजापतिपतिर्ब्रह्मा ॥ ४२ ॥ ❀ ❀ अहमेवान्तो येषां ते मदन्ताः ॥ ४३ ॥ ❀ ❀ ब्रह्मवादित्वेऽपि वाक्पटुत्वाभावान्न पश्यन्तीत्यतो वाचस्पतय इति "यत्पश्यन्तोऽपि न पश्यन्ति तद्विष्णोः परमं पदम्" इत्यन्वयः ॥ ४४ ॥ ❀ ❀ तत्साधनमानबाहुल्याभावात्तद्विषयज्ञानानुदयान्न पश्यन्ति चेदत्राह शब्देति । निर्दोषः शब्द आगम इति निर्दोषशब्दराशौ दुष्पारेऽनन्ते कुत इत्यत उक्तम् उरुविस्तर इति । चरन्तो जिज्ञासया वर्तमाना अपि मन्त्रलिङ्गैर्वेदोक्तलक्षणैर्व्यवच्छिन्नमुक्तमात्रं न तु सम्यगुक्तमेवंविधं परं परमात्मानं भजन्त उपासमाना अपि तन्न विदुरित्यन्वयः । 'विभ्रद्द्रापिं हिरण्ययं वरुणो वस्तनिर्णिजम्' इत्यादिवेदो वदन्नप्यनुभवानारोहयितृत्वेन वक्ति । अतोऽप्रसिद्धस्वरूपत्वेन सम्यक् न जानन्ति, तस्य सेवापि न व्यर्था तत्प्रसादेनानुभवारोहोऽपि क्रमेण स्यादिति । तदुक्तम् "वेदो वदन्नपि हरिं न सम्यग्वक्ति कुत्रचित् । नारोहयत्यनुभवमप्रसिद्धस्वरूपतः ॥ तथाप्यनुभवारोहः प्रसन्ने केशवे भवेत्" किञ्चिदेव सम्यक् स्वयं चानुभवत्यमुमिति । यद्वा मंत्राख्यैर्लिङ्गैर्हेतुभिर्व्यवच्छन्नं क्रोडीकृतं कृष्णरामादिलक्षणं परमं भजन्तोऽपि तत्प्रसादमन्तरेण परं व्याप्तं साकल्येन न विदुरिति शबलं भजन्तः परं शुद्धं न विदुरित्यर्थोऽनुपपन्नः, परमार्थभेदाभावेनैकस्मिन् ज्ञातेऽन्यज्ज्ञानस्य नान्तरीयकत्वात् "येनाश्रुतं श्रुतं भवति" इति श्रुतेश्च यथा रामस्मरणेन कृष्णस्वरूपज्ञानं जांबवतस्तयोरेकत्वादित्याहुः ॥ ४५ ॥ ❀ ❀ नन्विदानीं मायया क्षिप्तमपि चेतनसमवेतं ज्ञानमदृष्टवशात् कस्मिंश्चित्कालेऽनुसंधानलक्षणं किंचिद्विशेषमापादयेत्, अतोऽनुसंधानाननुसंधाने युक्ते इति तत्राह सर्वेषामिति । इह कर्मभुवि सर्वेषां जन्तूनां सन्ततं देहपोषणे प्रज्ञा बुद्धिः समायत्ता सन्ततास्ति नृणां तया प्रज्ञया को विशेषः स्वरूपानुसंधानलक्षणः समापन्नो न कोऽपीत्यन्वयः । त्वत्पक्षे त्वदृष्टादीनां मिथ्यात्वेनार्थक्रियायामसामर्थ्यादेव न कस्यचिदैक्येन संधानमवश्यं भावीति ॥ ४६ ॥ ❀ ❀ जीवन्मुक्त्यवस्थायामपि जीवात्मत्वाहानेर्हरेर्भेदः सत्य इति भावेन स्वरूपत्वसिद्धये साधनमाह लब्ध्वेति । इह बहुजन्मनामन्ते भगवद्बोधितपूर्वादृष्टविशेषान्मनुष्यत्वं लब्ध्वा ममाहमिति देहाद्यसद्ग्रहं संसारे देही हित्वात्मस्थात्मज्ञानेनेदं कलेवरं विहाय यः संसारी जीवात्मा विशिष्यते न तु ब्रह्मेत्यन्वयः ॥ ४७ ॥ ❀ ❀ हरिप्रसादं विना तज्ज्ञानं न स्यात्तस्मिन् सत्युत्पद्यमानस्य ज्ञानस्य फलमाह यदेति । यत् 'आत्मेति तूपगच्छन्ति ग्राहयन्ति चे'ति सूत्रोक्तप्रकारेणात्मभावितः मम स्वामी हरिर्नित्यमिति भावेनोपासितोपासकस्यानुगृह्णात्यात्मानं प्रकाश्यानुभवमुत्पादयति स पुमाँल्लोके वेदे च परिनिष्ठितां मतिं जहाति बाह्यपदार्थविषयां संविदमपहाय परमात्मानमेव सर्वेन्द्रियैरनुभवन्नास्त इत्यन्वयः । अनेनोपासकस्य मुक्तिकल्पने कथां ध्वनयति । तदुक्तम् "यदा त्वनुभवी भूयाच्छब्दमात्रानुरोधनम् । त्यक्त्वाथ तं विदुः प्राज्ञास्त्यक्तवेद इति स्म ह ॥ यदैव त्यक्तवेदः स्यादथास्मान्मुच्यते भयात् ।" इति निर्दोपशब्दलक्षणवेदप्रहाणे बौद्धराद्धान्तानुप्रवेशः स्यादित्यत उक्तम् "प्रायस्तु वैदिका एव रुद्राद्या अपि वै पुरा" इति आदिशब्देन मुक्तियोग्यमात्रं गृहीतं, पुरेत्यनेन जन्मप्रभृतिवैदिकत्वमस्तीति ज्ञापयति, प्राय इत्यनेन त्यक्तवेदत्वं पश्चादिति तदप्येतत् द्वयं कस्य मुख्यमित्यत "उक्तं वैदिकस्त्यक्तवेदश्च ब्रह्मैवैकः प्रजापतिः" इति रुद्रादीनां कथंकारं पश्चादपि त्यक्तवेदत्वं प्राप्तमित्यत उक्तं "ततस्तु केशवं भक्त्या सम्पूज्य बहुजन्मसु । त्यक्तवेदत्वमापन्नाः प्रसादात्परमेष्ठिनः ॥" इति "केवलं वेदशब्देन जानन् वैदिक उच्यते "वेदं विनाप्यनुभवाज्ज्ञानंस्तु त्यक्तवैदिकः" इत्यनेन मिथो विरुद्धयोर्वैदिकत्यक्तवेदशब्दयोरेकाधिकरणत्वं कथं युज्यत इतीदं चोद्यमपनोदितम् "तत्त्वं वेदानुसारेण चिन्तयन्वैदिको भवेत् । वेद ऊहामनुसरेद्यस्य स त्यक्तवैदिकः" इत्यनेन वेदशब्देन ज्ञातृत्वं तमन्तरेणानुभवितृत्वं च कथं विविच्यत इति चोद्यं परिहृतं, त्यक्तवैदिकस्त्यक्तवेदराशिरित्यर्थः ॥ ० ॥ ❀ ❀ उपसंहरति तस्मादिति । यस्माज्ज्ञानेनैव मोक्षस्तस्मादज्ञानाद्भगवत्तत्त्वापरिज्ञानादर्थकाशिषु प्रयोजनत्वेन प्रकाशमानेष्वग्निष्टोमादिलक्षणेषु कर्मस्वर्थदृष्टिं मा कृथाः न कुरु इत्यन्वयः । तत्प्रवृत्तौ निमित्तमाह श्रोत्रस्पर्शिष्विति । अपाम सोममिति श्रवणे श्रोत्रसुखं स्पृशन्तीति श्रोत्रस्पर्शीनि तेषु हेयत्वे कारणं वक्ति अस्पृष्टवस्तुष्विति । परमात्माख्यवस्तुसम्बन्धगन्धरहितेषु ॥ ० ॥ ❀ ❀ अज्ञानादित्युक्तं विवृणोति स्वं लोकमिति । ये कर्मनिष्ठास्ते यत्र लोके जनार्दनो देवोऽस्ति तं स्वलोकं स्वेन प्राप्यं वैकुण्ठादिस्थानं न विदुरित्यन्वयः । अनेन वैकुण्ठादिस्थानमीदृशमिति न जानन्ति किमुत हरिमित्यर्थाद् ध्वनितमिति ज्ञायते । अन्यथा विदुश्चेत्याह आहुरिति । धूम्रे धूमरते धूमसमार्गे धीर्येषां ते धूम्रधियः, तत्र निमित्तमाह अतद्विद इति । तस्य वेदस्य तत्त्वं ब्रह्मलक्षणं न विदन्तीति कर्मणा सह वर्तत इति सकर्मकस्तम् ॥ ४८ ॥ ❀ ❀ कर्म विनान्यन्न वक्तीति सकर्मकत्वमित्ययमविवेक इत्याह आस्तीर्येति । बृहतां बहूनां वधात् संज्ञपनलक्षणात् यष्टाहमिति मानी त्वं कर्म नावैषि प्राचीनाग्रदर्भास्तरणं कृत्वा पशुसंज्ञपनमेव जानासि, न तु कर्मस्वरूपमित्यर्थः । "कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतमि"त्यादिना विधीयमानं यत्परं कर्म तन्न जानासीत्युच्यते, न तु कर्ममात्रम् ॥ ४९ ॥ ❀ ❀ कल्पोक्तद्रव्यसामग्र्या क्रियमाणस्य कर्मणः कथं परत्वाभाव इति तत्राह तत्कर्मेति । हरेस्तोषोऽनुग्रहलक्षणो यस्मात्तत्कर्म तस्मात् ब्रह्मार्पणबुद्ध्या क्रियमाणस्य कर्मणः परत्वं न द्रव्यसामग्र्या तस्यावरत्वेन दारिद्र्यहेतुत्वात् । ननु ममापि वेदविद्याधिकारित्वेन कर्मानुष्ठानस्य तत्पूर्वकत्वमस्तीति तत्राह सा विद्येति । यया विद्यया तस्य हरेर्मतिर्ज्ञानमुत्पद्यते

सा विद्या वेदार्थज्ञानलक्षणा नान्या, अन्या त्वविद्या कर्मविषया हेयपक्ष इति। कोऽसौ हरिर्येन तज्ज्ञानपूर्वकमनुष्ठितं कर्म सफलं स्यादत्राह हरिरिति। दुरितहरणशीलत्वाद्धरिर्देहभृतां जीवानामात्मा स्वामी स्वयं सर्वव्यावृत्तः प्रकृतिर्मूलकारणमीश्वरोऽणिमाद्यैश्वर्यरूप एषां गुणानामधिकरणभूतो यः स हरिरिति ज्ञातव्यम्॥ ५०॥

**श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः**

एतैरिति। महत्सङ्गप्रभावेनैव सा कथा तद्विघ्ननाशिकां रतिं जनयतीति भावः॥ ४१॥ ❀ ❀ तां विना साधनान्तरैस्त्वस्मद्विधानामपि भगवज्ज्ञानं न स्यात् किमुतान्येषामित्याह चतुर्भिः। तत्र प्रजापतीति त्रिकं तपः कृच्छ्रादि विद्या उपासना समाधिश्चित्तैकाग्र्यं पश्यन्तोऽपीति यथार्थज्ञानात्॥ ४२-४४॥ ❀ ❀ ततः कर्मनिष्ठास्तु सुतरामेव न जानन्तीत्याह। शब्देति॥ ४५॥ ❀ ❀ महत्सु श्रद्धातारतम्यात्तु भगवदनुग्रहः समयभेदमपेक्ष्य प्रवर्त्तमानः सर्व्वनिरपेक्षां भक्तिं ददातीत्याह यदा यस्येति। आत्मनि महद्द्वारा कथाश्रवणेन शुद्धे चित्ते भावितः सन् यदा यस्यानुगृह्णाति तदा स लोके लौकिकव्यवहारे वेदे च कर्म्मकाण्डे परिनिष्ठितामपि मतिं जहाति॥ ४६॥ ❀ ❀ अर्थकाशिषु अर्थत्वेन प्रतीयमानेषु॥ ४७॥ ❀ ❀ आहुः अत्र "क इत्था वेद यत्र सः" इत्यस्याः श्रुतेरर्थमाह स्वमिति। ये धूम्रधियो वेदं सकर्म्मकं कर्म्ममात्रप्रतिपादकमाहुः। ते स्वं जनार्द्दनस्य स्वं स्वरूपं लोकं वैकुण्ठाख्यं न विदुः, किन्तु स्वर्गादिकमेव विदुः। यत्र लोके यत्परं कर्म्म भगवद्धर्म्मलक्षणं तन्न विदुः॥ ४८॥ ❀ ❀ तस्य कर्म्मत्वं परत्वं च दर्शयति तदिति। यद्धरितोषं तद्धेतुकं तदेव कर्म्म तस्यैव कर्त्तव्यत्वादिति भावः। तथा सैव च विद्या शास्त्रोत्थं ज्ञानं यया तन्मतिस्तदनुभवोऽपि भवतीति॥ ४९-५०॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

सत्सङ्गमन्तरेण स्वयमेव हरिकथाचिन्तनादालस्यादिना रसावेशाभावाच्च क्षुत्पिपासाद्यभिभूतस्य भक्तिर्न प्रायो विकसतीति व्यञ्जितमेवार्थमभिधयाप्याह एतैरिति॥ ४१॥ ❀ ❀ ननु "तरति शोकमात्मवित्" इति श्रुतेर्ज्ञानिनां किं भक्त्येति तत्र कैमुत्यन्यायेन ज्ञानिनो नैव जानन्तीत्याह प्रजेति चतुर्भिः। भगवान् सर्व्वज्ञः मदन्ता इति न केवलं तानेव निन्दामि, अपि त्वात्मानमपि एते तपोविद्यासमाधिभिर्न पश्यन्तीति भक्त्या तु पश्यन्तीत्यर्थः। एतेषां भक्तिमत्त्वस्यापि प्रसिद्धेः एते वयं भक्त्या विना के वराका इति भावः। वाचस्पतय इति अन्यान् प्रति शास्त्रार्थमुपदेष्टुं सरस्वतीपतयो भवन्ति, स्वयन्तु शास्त्रार्थं नैव जानन्ति भक्तिं विना व्याख्यानादिति भावः। अद्यापीति तपआदीनां परिपाकश्च ज्ञापितः। अज्ञानस्य लक्षणं पश्यन्तोऽपि विचिन्वन्तोऽपि न पश्यन्तीति॥ ४२-४४॥ ❀ ❀ कर्म्मिणस्तु सुतरामेव न जानन्तीत्याह। शब्दब्रह्मणि वेदे दुष्पारे अर्थतः उरु विस्तर इति शब्दतोऽपि दुष्पारे मन्त्रलिङ्गैर्वज्रहस्तत्वादिचिह्नैर्विशिष्टमिन्द्रादिकं भजन्तः परं परमेश्वरं न विदुः॥ ४५॥ ❀ ❀ ननु यदि ज्ञानिनः कर्म्मिणश्च न जानन्ति तदा कस्तं जानाति भक्त एवेति चेत् स भक्त एव कथं स्यात् केन वा चिह्नेन स ज्ञेय इत्यत आह यदेति। आत्मनि मनसि भावितः अर्थाद्भक्तैरेव हे भगवन्निमं जनं संसारादुद्धरनङ्गीकुर्व्विति स्वभक्तैर्मनसि निवेदितो भगवान् यदा यस्य यमनुगृह्णाति तदैव स भक्तः लोके लौकिकव्यवहारे वेदे च कर्म्मकाण्डे परिनिष्ठितामपि मतिं त्यजति॥ ४६॥ ❀ ❀ अर्था इव प्रकाशन्त इत्यर्थकाशिनस्तेषु अर्थदृष्टिं पुरुषार्थबुद्धिं प्ररोचनाय केवलं श्रोत्रप्रियेषु न स्पृष्टं वस्तु यैस्तेषु॥ ४७॥ ❀ ❀ ननु तर्हि कथमेते मत्पुरोधसो मुनयो विद्वांसो मां यागादिकर्म्मैव कारयन्तीति तत्राह स्वमिति। यत्र जनार्द्दनो देवो वर्त्तते तं लोकं वैकुण्ठं स्वं स्वीयं स्वप्राप्यं न विदुः, किन्तु स्वर्गमेव स्वं विदुरित्यर्थः। यतो धूम्रधियो मलिनबुद्धयो वेदं सकर्म्मकं कर्मपरमेवाहुः। अतद्विदः वेदार्थानभिज्ञाः। यदुक्तं भगवता "कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता। मयादौ ब्रह्मणे प्रोक्ता धर्म्मो यस्यां मदात्मकः" इति॥ ४८॥ ❀ ❀ त्वन्तु तैरनभिज्ञैरध्यापितो महामूर्ख एवेत्याह आस्तीर्य्येति। बृहद्वधात् बृहत्पशुवधात् मानी महायज्वाहमित्यहङ्कारी स्तब्धोऽविनीतः॥ ४९॥ ❀ ❀ ननु तर्हि परमेव कर्म्म किं तदिति कृपया त्वमेव ब्रूहीत्यत आह तदिति। अन्यत्पुनः कर्म्मैव नोच्यत इति भावः। सेति अन्या पुनर्विद्यैव नोच्यत इति भावः॥ ५०॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

वासुदेवस्वरूपगुणादीयत्ताविवित्सुं प्रति तदीयेयत्तां तु ब्रह्मादयोऽपि न जानन्तीत्याह। प्रजापतिरिति त्रिभिः॥ ४१-४३॥ ❀ ❀ तपआदिभिर्यथोपदेशं पश्यन्तोऽपि न पश्यन्ति। एतावत्त्वेन तु न जानन्ति॥ ४४॥ ❀ ❀ कर्मनिष्ठास्त्विन्द्रादिरूपं तदंशं भजन्तो भगवन्तं न जानन्तीत्याह शब्दब्रह्मणीति। अर्थतो दुष्पारे स्वरूपत उरुविस्तरे चरन्तः, अध्ययनादिना प्रविष्टा अपि मन्त्रलिङ्गैर्वज्रहस्तत्वादिगुणयुक्तेन्द्रादिदेवताभिधानसामर्थ्यैः परिच्छिन्नमेतावत्त्वेन मितमिन्द्रादिकं भगवदंशं भजन्तः परं भगवन्तं न विदुः। वेदो भगवत्कृपाहीनान् स्वर्गादिप्रापकेन्द्रादियजनरूपे कर्मणि नियोजयति न तु भगवदाराधने इति भावः॥ ४५॥ ❀ ❀ भगवान् आत्मना जीवेन भावितः प्रार्थितः यदा यं जीवमनुगृह्णाति स लोके स्वर्गादौ

अयं लोकः कर्मणा मम प्राप्य इत्येवं निश्चितां वेदे च अयं देवः कर्मपरः इत्येवं निश्चितां मतिं जहाति, वेदं वासुदेवपरं मत्वा तद्भक्तो भवतीति भावः ॥ ४६ ॥ ❀ ❀ अज्ञानात् वेदस्य कर्मपरत्वभ्रमात् अर्थकाशिषु अक्षयार्थदर्शित्वेन भासमानेषु श्रोत्रस्पर्शिषु कर्णरम्येषु न स्पृष्टं वस्तु परब्रह्मलक्षणं यैस्तेषु त्वमर्थदृष्टिं पुरुषार्थबुद्धिं मा कृथाः ॥ ४७ ॥ ❀ ❀ ये धूम्रधियो धूम्रोपलक्षित-कर्मण्येव धीर्येषां तथाभूतास्ते यत्र वेदे जनार्दनः देवो विषयतया द्योतते तं वेदं सकर्मकं कर्मपरं प्राहुः । ते च अतद्विदः वेदार्थानभिज्ञाः सर्ववेदार्थभूतं जनार्दनं न जानन्ति, किं बहुना स्वं लोकं स्वात्मानमपि न विदुरित्यन्वयः ॥ ४८ ॥ ❀ ❀ त्वं तु बृहद्वधात् आत्मविस्मरणात् स्तब्धः विद्याहीनः दर्भैः क्षितिमण्डलमास्तीर्य मानी चासि, यतः परं श्रेष्ठं कर्म नावैषि कर्महीनश्चेत्यर्थः ॥ ४९ ॥ ❀ ❀ ननु किं कर्म का विद्या कश्चात्मेत्यत्राह तदिति । स्वयं स्वातन्त्र्येण प्रकृतिर्विश्वो-पादानरूपो हेतुः ॥ ५० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

भागवतसङ्गमन्तरेण क्षुत्पिपासाद्यभिभूतस्य रसावेशाभावान्न कथाश्रवणादि सम्भवति न च तद्विना भगवद्भजनं, न च तद्विना भगवत्प्रसादः, न च तद्विना ज्ञानं, न च तद्विनाध्यासनिवृत्तिः, न च तद्विना संसारदुःखनिवृत्तिरतो भागवतसङ्ग एवान्वे-षणीय इत्याशयेनाह—एतैरिति । एतैः क्षुत्तृट्कामक्रोधलोभमोहभयादिभिः स्वभावजैः अनेकजन्मपरम्परासंस्कारवशेनैव स्वतस्सिद्धैर्नित्यं सर्वदोपद्रुतोऽभिभूतो जीवलोकः नूनं निश्चितमेव हरेः कथैव परम्परया मरणादिसंसारदुःखनिवर्त्तकत्वादमृतस्य निधिः समुद्रस्तस्मिन् रतिं प्रीतिं न करोति । भागवतसङ्गमन्तरेणेति शेषेण सम्बन्धः ॥ ४१ ॥ ❀ ❀ भगवदनुग्रहमन्तरेण देहाद्यध्यासनिवर्त्तकं सम्यग्ज्ञानं तु ब्रह्मादीनामपि दुर्लभं अन्येषां तु का वार्त्तेति कैमुत्यन्यायेनाह—प्रजापतिरिति । प्रजापतीनामपि पतिर्ब्रह्मादयः पश्यन्तोऽपि न पश्यन्तीति तृतीयेनान्वयः । साक्षाद्भगवान् ज्ञानादिगुणवानिति भगवद्विग्रहत्वाद् ब्रह्मरुद्रयोर्द्वयोर्विशेषणम् । प्रजाध्यक्षाः प्रजापतयो दक्षादयः । नैष्ठिकाः जन्मारभ्योर्ध्वरेतसः सनकादयः ॥ ४२ ॥ ❀ ❀ मदन्ता अहं नारदोऽन्ते पश्चाद्येषां त एते ब्रह्मवादिनो वेदे कृताभ्यासास्तद्रहस्योपदेष्टारोऽपि स्वस्य भागवतत्वेऽपि गौणत्वोक्तिर्ज्ञानदुर्लभत्वसूचनार्था ॥ ४३ ॥ ❀ ❀ वाचस्पतयः अनेकयुक्तिगर्भितवचनैरन्यप्रबोधने कुशला अपि तपोविद्यासमाधिभिर्दर्शनसाधनैः पश्यन्तो दर्शनार्थं प्रयत्नवन्तोऽपि अद्यापि सृष्टिमारभ्य अद्यपर्यन्तं बहुकाले दर्शनप्रयत्नेन गतेऽपि न पश्यन्ति । न च स कुत्रापि देशे काले नास्ति, सर्वसाक्षित्वा-त्तथापि न पश्यन्तीत्याश्चर्येण विशिनष्टि—पश्यन्तमिति । सर्वसाक्षित्वे हेतुत्वेन पुनर्विशेषणं परमेश्वरमिति ॥ ४४ ॥ ❀ ❀ ज्ञानस्य दुर्लभत्वात्तदर्थं सावधानतया प्रयत्नाधिक्यं विधेयमित्यभिप्रेत्योक्तमपि ज्ञानदुर्लभत्वं पुनर्द्रढयति—शब्देति । दुष्पारे अर्थतः पारशून्ये उरुविस्तरे ग्रन्थतोऽप्यतिवितते शब्दब्रह्मणि वेदाख्ये चरन्तोऽपि श्रमेण तदर्थं विचारयन्तोऽपि मन्त्रलिङ्गैर्मन्त्रप्रतिपादि-तैरिन्द्रादिस्वरूपैः व्यवच्छिन्नं परिच्छिन्नं परं परमेश्वरमेव भजन्तोऽपि तं तत्त्वतो न विदुरित्यन्वयः ॥ ४५ ॥ ❀ ❀ ननु यदि वेदवादिनोऽपि ब्रह्मादयो न जानन्ति तदा को वाऽन्यो वेदेत्यपेक्षायामाह—यदेति । यदा यं पुरुषं भगवाननुगृह्णाति तदा स भगवत्तत्त्वं वेदेति शेषः । एवं भगवदनुग्रहे को हेतुस्तत्राह—आत्मभावित इति, अन्तःकरणे चिन्तित इत्यर्थः । तद्ध्यानमेवानुग्रहे हेतुरिति भावः । भगवदनुगृहीतस्य तत्त्वज्ञस्य तद्भक्तस्य किं लक्षणमित्यपेक्षायामाह—स इति । निरन्तरं भगवदेकनिष्ठत्वेन लोके लोकमर्यादायां वेदे वेदमर्यादायां च नितरां स्थितां मतिं स जहाति, द्विविधामपि मर्यादां नानुसन्धत्ते इत्यर्थः ॥ ४६ ॥ ❀ ❀ यस्माद्भगवच्चिन्तनमेव तत्प्रसादहेतुत्वेन परपुरुषार्थसाधनं तस्मात् अज्ञानार्थकाशिषु परफलहेतुत्वेन प्रकाशमात्रेषु स्वर्गादिसुख-साधनत्वश्रवणेन श्रोत्रप्रियेषु वस्तुतस्तु न स्पृष्टं वस्तु परमतत्त्वं यैस्तेषु कर्मसु हे बर्हिष्मन् त्वमर्थदृष्टिं परमार्थसाधनबुद्धिं मा कृथा इत्यन्वयः । सम्बोधनेन तव तावत्तत्राग्रहो दृश्यतेऽत एवमुच्यते इति सूचयति ॥ ४७ ॥ ❀ ❀ ननु यदि स्वर्गादिफलादन्यदेव परमं तत्त्वं तदा स्वर्गादिसाधनत्वेन वेदेन यज्ञादि कर्मोक्तमिति कथं वेदवादिनो वदन्ति तत्राह—स्वमिति । ये तु वेदं सकर्मकं स्वर्गादिसाधनकर्मबोधकमाहुस्ते अतद्विदः वेदार्थज्ञा न भवन्ति, यतस्ते स्वलोकं स्वरूपभूतमात्मतत्त्वं न विदुः, यत्र यस्मिन्नात्मतत्त्वे विदिते "वेदैश्च सर्वैरहमेव वेद्यः" इति वाक्याद्देवः सर्वरूपेण क्रीडमानो जनार्दनः जनं भक्तानामविद्यामर्दयतीति तथा सोऽपि विदितो भवति । तर्हि कथं ते तथा वदन्तीत्याशङ्क्य अज्ञानादित्याह—धूम्रधिय इति, धूम्रा रागादिमलेनाच्छन्ना धीर्येषां ते ॥ ४८ ॥ ❀ ❀ त्वमप्यज्ञसङ्गादज्ञ एवेत्याह—आस्तीर्येति । प्रागग्रैर्दर्भैः कुशैः कार्त्स्न्येन साकल्येन क्षितिमण्डलमास्तीर्य आच्छाद्य बृह-द्वधात् बहुपशुवधात् मानी महायज्वाऽहमित्यभिमानी अत एव स्तब्धः अविनीतस्त्वं यत् यच्च परं तत्फलं विद्यालक्षणं तदुभयमपि नावैषि न वेत्सीत्यन्वयः । सत्यमहं न जानामि त्वमेव कृपया तद् द्वयं कथयेत्यपेक्षायां द्वयं स्वयमेव कथयति–तदिति । हरिं तोषयतीति हरितोषं यत्तदेव कर्म, यया तत् तस्मिन् हरौ मतिर्भवति सैव विद्या, भगवत्प्राप्तिलक्षणपरमफलहेतुत्वात् । अन्या पुनः सकलशास्त्रा-द्यभ्यासजनिता विद्यात्वेन प्रसिद्धा तु अविद्यैव, नानापदार्थविषयकमत्युत्पादकत्वेन दुःखरूपसंसारहेतुत्वादिति भावः ॥ ४९ ॥ ❀ ❀ कथं भगवतः परमफलत्वमित्यपेक्षायां तद्दर्शयति—हरिरिति । हरिर्देहभृतां प्राणिनामात्मा स्वरूपम् । ईश्वरः नियन्ता शुभाशुभप्रवर्त्तकः । तपस्तत्फलदाता च । भवत्वेवं तथापि तस्यापि किञ्चिदन्यत्कारणं नियन्तृ वा स्यादित्याशङ्क्याह—स्वयं प्रकृति-

रिति, तस्य प्रकृतिः कारणं नियन्तृ वाऽन्यन्नास्तीत्यर्थः। अतस्तस्य पादमूलमेव इह संसारे नृणां शरणमाश्रयः, यतः पादाश्रयणात् क्षेमः कालादिभयनिवृत्तिर्भवतीत्यर्थः ॥ ५० ॥

भाषानुवादः

हाय ! स्वभावतः प्राप्त होनेवाले इन क्षुधा-पिपासादि विघ्नोंसे सदा घिरा हुआ जीव-समुदाय श्रीहरिके कथामृत-सिन्धुसे प्रेम नहीं करता ॥ ४१ ॥ ❀ ❀ साक्षात् प्रजापतियोंके पति ब्रह्माजी, भगवान् शङ्कर, स्वायम्भुव मनु, दक्षादि प्रजापतिगण, सनकादि नैष्ठिक ब्रह्मचारी, मरीचि, अत्रि, अङ्गिरा, पुलस्त्य, पुलह, क्रतु, भृगु, वसिष्ठ और मैं—ये जितने ब्रह्मवादी मुनिगण हैं, समस्त वाङ्मयके अधिपति होनेपर भी तप, उपासना और समाधिके द्वारा ढूँढ़ ढूँढ़कर हार गये, फिर भी उस सर्वसाक्षी परमेश्वरको आजतक न देख सके ॥ ४२-४४ ॥ ❀ ❀ वेद भी अत्यन्त विस्तृत है, उसका पार पाना हँसी-खेल नहीं है। अनेकों महानुभाव उसकी आलोचना करके मन्त्रोंमें बताये हुए वज्रहस्तत्वादि गुणोंसे युक्त इन्द्रादि देवताओंके रूपमें, भिन्न-भिन्न कर्मोंके द्वारा, यद्यपि उस परमात्माका ही यजन करते हैं तथापि उसके स्वरूपको वे भी नहीं जानते ॥ ४५ ॥ ❀ ❀ हृदयमें बार-बार चिन्तन किये जानेपर भगवान् जिस समय जिस जीवपर कृपा करते हैं, उसी समय वह लौकिक व्यवहार एवं वैदिक कर्म-मार्गकी बद्धमूल आस्थासे छुट्टी पा जाता है ॥ ४६ ॥ ❀ ❀ बर्हिष्मन् ! तुम इन कर्मोंमें परमार्थबुद्धि मत करो। ये सुननेमें ही प्रिय जान पड़ते हैं, परमार्थका तो स्पर्श भी नहीं करते। ये जो परमार्थवत् दीख पड़ते हैं, इसमें केवल अज्ञान ही कारण है ॥ ४७ ॥ ❀ ❀ जो मलिनमति कर्मवादी लोग वेदको कर्मपरक बताते हैं, वे वास्तवमें उसका मर्म नहीं जानते। इसका कारण यही है कि वे अपने स्वरूपभूत लोक ( आत्मतत्त्व ) को नहीं जानते, जहाँ साक्षात् श्रीजनार्दन भगवान् विराजमान हैं ॥ ४८ ॥ ❀ ❀ पूर्वकी ओर अग्रभागवाले कुशाओंसे सम्पूर्ण भूमण्डलको आच्छादित करके अनेकों पशुओंका वध करनेसे तुम बड़े कर्माभिमानी और उद्धत हो गये हो, किन्तु वास्तवमें तुम्हें कर्म या उपासना—किसीके भी रहस्यका पता नहीं है। वास्तवमें कर्म तो वही है, जिससे श्रीहरिको प्रसन्न किया जा सके और विद्या भी वही है, जिससे भगवान्में चित्त लगे ॥ ४९ ॥ ❀ ❀ श्रीहरि सम्पूर्ण देहधारियोंके आत्मा, नियामक और स्वतन्त्र कारण हैं; अतः उनके चरणतल ही मनुष्योंके एकमात्र आश्रय हैं और उन्हींसे संसारमें सबका कल्याण हो सकता है ॥ ५० ॥

स वै प्रियतमश्चात्मा यतो न भयमण्वपि। इति वेद स वै विद्वान् यो विद्वान् स गुरुर्हरिः ॥ ५१ ॥

नारद उवाच[1]

प्रश्न एवं हि संछिन्नो भवतः पुरुषर्षभ। अत्र मे वदतो गुह्यं निशामय सुनिश्चितम् ॥ ५२ ॥

क्षुद्रश्चरं सुमनसां शरणे मिथित्वा रक्तं षडङ्घ्रिगणसामसु लुब्धकर्णम्।
अग्रे वृकानसुतृपोऽविगणय्य यान्तं पृष्ठे मृगय लुब्धकबाणभिन्नम् ॥ ५३ ॥

[ अस्यार्थः ]

सुमनःसमधर्मणां स्त्रीणां शरण आश्रमे पुष्पमधुगन्धवत्क्षुद्रतमं काम्यकर्मविपाकजं कामसुखलवं जैह्व्यौपस्थ्यादि विचिन्वन्तं मिथुनीभूय तदभिनिवेशितमनसं षडङ्घ्रिगणसामगीतवदतिमनोहरवनितादिजनालापेष्वतितराम्[2] अतिप्रलोभितकर्णमग्रे वृकयूथवदात्मन आयुर्हरतोऽहोरात्रा[3]न्तान् काललवविशेषानविगणय्य गृहेषु विहरन्तं पृष्ठत[4] एव परोक्षमनुप्रवृत्तो लुब्धकः कृतान्तोऽन्तःशरेण यमिह पराविध्यति तमिममात्मानमहो राजन् भिन्नहृदयं द्रष्टुमर्हसीति ॥ ५४ ॥

स त्वं विचक्ष्य मृगचेष्टितमात्मनोऽन्तश्चित्तं नियच्छ हृदि कर्णधुनीं च चित्ते।
जह्यङ्गनाश्रममसत्तमयूथगाथं प्रीणीहि हंसशरणं विरम क्रमेण ॥ ५५ ॥

राजोवाच

श्रुतमन्वीक्षितं ब्रह्मन् भगवान् यदभाषत। नैतज्जानन्त्युपाध्यायाः किं न ब्रूयुर्विदुर्यदि ॥ ५६ ॥

---

१. प्राचीने पाठे 'नारद उवाच' नास्ति। २. प्रा० पा०—तरां प्रलोभित०। ३. प्रा० पा०—रात्रादीन्कालविशेषानविगणय्य।
४. प्रा० पा०—पृष्ठतः परोक्षमनु।

संशयोऽत्र तु मे विप्र संछिन्नस्तत्कृतो महान्। ऋषयोऽपि हि मुह्यन्ति यत्र नेन्द्रियवृत्तयः ॥ ५७ ॥
कर्माण्यारभते येन पुमानिह विहाय तम्। अमुत्रान्येन देहेन जुष्टानि स यदश्नुते ॥ ५८ ॥
इति वेदविदां वादः श्रूयते तत्र तत्र ह। कर्म यत्क्रियते प्रोक्तं परोक्षं न प्रकाशते ॥ ५९ ॥

नारद उवाच

येनैवारभते कर्म तेनैवामुत्र तत्पुमान्। भुङ्क्ते ह्यव्यवधानेन लिङ्गेन मनसा स्वयम् ॥ ६० ॥

अन्वयः—यतः अणु अपि भयम् न सः वै प्रियतमः आत्मा च इति यः वेद सः वै विद्वान् यः विद्वान् सः गुरुः हरिः ॥ ५१ ॥ ❀ ❀ पुरुषर्षभ हि एवम् भवतः प्रश्नः संछिन्नः अत्र वदतः मे सुनिश्चितम् गुह्यम् निशामय ॥ ५२ ॥ ❀ ❀ क्षुद्रश्चरम् सुमनसाम् शरणम् मिथित्वा रक्तम् षडंघ्रिगणसामसु लुब्धकर्णम् अग्रे असुतृपः वृकान् अविगणय्य यांतम् पृष्ठे लुब्धकबाणभिन्नम् मृगम् मृगय ॥ ५३ ॥ ❀ ❀ सुमनःसमधर्मणाम् स्त्रीणाम् शरणे आश्रमे पुष्पमधुगंधवत् क्षुद्रतमम् काम्यकर्मविपाकजम् जैह्व्यौपस्थ्यादिकामसुखलवम् विचिन्वंतम् मिथुनीभूय तदभिनिवेशितमानसम् षडंघ्रिगणसामगीतवत् अतिमनोहरवनितादिजनालापेषु अतितराम् अतिप्रलोभितकर्णम् अग्रे वृकयूथवत् आत्मनः आयुः हरतः अहोरात्रांतान् काललवविशेषान् अविगणय्य गृहेषु विहरंतम् पृष्ठतः एव परोक्षम् अनुप्रवृत्तः लुब्धकः कृतांतः अंतःशरेण इह यम् विध्यति तम् इमम् भिन्नहृदयम् आत्मानम् अहो राजन् द्रष्टुम् अर्हसि इति ॥ ५४ ॥ ❀ ❀ सः त्वम् आत्मनः मृगचेष्टितम् विचक्ष्व अंतर्हृदि चित्तम् च चित्ते कर्णधुनीम् नियच्छ असत्तम-यूथगाथम् अंगनाश्रमम् जहि हंसशरणम् प्रीणीहि क्रमेण विरम ॥ ५५ ॥ ❀ ❀ ब्रह्मन् भगवान् यत् अभाषत श्रुतम् अन्वीक्षितम् एतत् उपाध्यायाः न जानंति यदि विदुः किं न ब्रूयुः ॥ ५६ ॥ ❀ ❀ विप्र अत्र तु मे तत्कृतः महान् संशयः संछिन्नः यत्र हि इंद्रियवृत्तयः न ऋषयः अपि मुह्यंति ॥ ५७ ॥ ❀ ❀ पुमान् येन कर्माणि आरभते तम् इह विहाय सः अमुत्र अन्येन देहेन जुष्टानि अश्नुते ॥ ५८ ॥ ❀ ❀ इति वेदविदाम् वादः तत्र तत्र ह श्रूयते प्रोक्तम् यत् कर्म क्रियते परोक्षम् न प्रकाशते ॥ ५९ ॥ ❀ ❀ हि पुमान् येन एव कर्म आरभते तेन एव मनसा लिंगेन तत् अमुत्र अव्यवधानेन स्वयम् भुंक्ते ॥ ६० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

न च तद्भजनेऽन्यभजन इव दुःखं भयं चेत्याह स वा इति। इति यो वेद स एव विद्वान्स गुरुः स एव हरिश्च ॥ ५१ ॥ ❀ ❀ उक्तमुपसंहरति प्रश्न इति। एवं भवतः प्रश्नः संछिन्नः परिहृतः तदेवमात्मनो बन्धमोक्षप्रकारे कथारूपेण कथितेऽपि नातिनिर्विण्णचित्तं पुत्रागमनं प्रतीक्षमाणं सन्तं तं तत्क्षणमेव महाभयकम्पितसकलगात्रं गृहान्निर्वासयितुं हरिणरूपकमाह अत्रेति। वदतो मे वचः शृणु ॥ ५२ ॥ ❀ ❀ क्षुद्रमल्पं चरतीति तथा तम्। अलुक्। सुमनसां पुष्पाणां शरणे आश्रमे वाटिकायां मिथित्वा मिथः परस्परं स्त्रिया सह मिलित्वा तत्रैव रक्तमासक्तं षडंघ्रयो भ्रमरास्तेषां गणास्तेषां सामसु गीतेषु लुब्धः कर्णो यस्य तम्। परेषामसुभिर्हृतैः स्वीयानसूंस्तर्पयन्तीत्यसुतृपस्तानविगणय्यागणयित्वा लुब्धकस्य बाणेन भिन्नं मृगं मृगयान्वेषय ॥ ५३ ॥ ❀ ❀ श्लोकं प्रस्तुते योजयन् व्याचष्टे। सुमनोभिः समानो धर्मः परिणामविरसत्वं यासां स्त्रीणाम्। मिथित्वेत्यस्य व्याख्या मिथुनीभूयेति। स्त्रीभिः सहेति शेषः। रक्तमित्यस्य व्याख्या तास्वभिनिवेशितं मनो येन। असुतृप इत्यस्य व्याख्या आयुर्हरत इति। यान्तमित्यस्य व्याख्या विहरन्तमिति। अन्तर्नलिकायां गूढेन शरेण पराविध्यति दूरादेव ताडयति ॥ ५४ ॥ ❀ ❀ उपदेशसारमाह स इति। एवं त्वमात्मनः स्वस्य मृगवच्चेष्टितं विचक्ष्य विचार्य अन्तर्हृदि चित्तं कर्णयोः श्रोत्रेन्द्रियस्य धुनीं नदीमिव बहिर्वृत्तिं चित्ते नियच्छ। एतच्च सर्वेन्द्रियोपलक्षणार्थम्। अंगनाश्रमं गृहाश्रमं च जहि। कीदृशम् असत्तमानामतिकामुकानां यानि यूथानि तेषां गाथा वार्ता यस्मिन्। हंसानां जीवानां शरणमीश्वरं प्रीणीहि, एवं क्रमेण सर्वतो विरम ॥ ५५ ॥ ❀ ❀ अर्थान्तरं प्रष्टुं पूर्वोक्तमर्थमनुवदति श्रुतमन्वीक्षितं विचारितं च। ब्रह्मन् हे नारद एतत्त्व-दुक्तमात्मतत्त्वमुपाध्याया ये मम कर्मोपदेष्टार आचार्यास्ते न जानन्ति। तत्र हेतुः यदि विदुस्तर्हि किं न ब्रूयुरिति ॥ ५६ ॥ ❀ ❀ अतस्तत्कृत उपाध्यायकृतस्तद्वाक्यविरोधेनासम्भावनारूपो महान् संशयः संछिन्नस्त्वया अत्र तु कश्चित्संशयो वर्तते। यत्रेन्द्रिय-वृत्तीनामप्रवृत्तेर्मुह्यन्ति ॥ ५७ ॥ ❀ ❀ संशयमाह द्वाभ्याम्। कर्माणि येन देहेन करोति तमत्रैव विहायामुत्र लोकान्तरे कर्मोपस्थापितेनान्येन देहेन जुष्टान्युपभुक्तानि जीवोऽश्नुते प्राप्नोति ॥ ५८ ॥ ❀ ❀ इति वादः श्रूयते "प्राप्य पुण्यकृतॉं-ल्लोकान्" इति। "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इति त्वया चोक्तं "शाश्वतीरनुभूयार्त्तिम्" इति। एतच्च कर्तृभोक्तृदेहभेदेन कृतनाशाकृताभ्यागमप्रसंगान्न संगच्छत इति भावः। संशयान्तरमाह। प्रोक्तं वेदोक्तं कर्म यत्क्रियते जनैस्तच्चानन्तरक्षण एव परोक्षमदृश्यं सन्न प्रकाशते। अतः कर्मणो नष्टत्वात्तद्भोगोपि दुर्घट इति भावः ॥ ५९ ॥ ❀ ❀

प्रथमस्योत्तरम् येनैवेति। अव्यवधानेन कर्तृभोक्तृदेहविच्छेदं विना। स्थूलदेहनाशेऽपि मनःप्रधानस्य लिंगदेहस्यानाशान्नोक्तदोषप्रसंग इत्यर्थः॥ ६०॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अन्यभजने देवान्तरभजने पुत्रादिभजने वा यथा दुःखं भयं च दुःखं दैहिकादि भयं मरणादेरिति। सन्दर्भस्तु—तस्मादेवंभूतो गुरुरेवाश्रयणीय इत्युपदिशन् पुरंजनोपाख्यानादिविवक्षितमाह—स वा इति सार्द्धेन। वै प्रसिद्धम्। रूपगुणलीलाभिर्मनोरमत्वेन स हरिनामा सर्वेषां प्रियतमः परमप्रीतानां योग्यः। यत एव चात्मा स्वात्मेति पाठे स्वेषां जीवानां रश्मिस्थानीयानां देहभृतां मण्डलस्थानीयः यस्मादेव च यतः सकाशादण्वपि भयं न जायते इति। य एवं विद्वान् स एव गुरुः य एवंभूतो गुरुः स तु हरिरेवेत्यर्थः। विश्वनाथः—स हरिरेव प्रियतम आत्माऽसौ जीवस्तु प्रिय इत्यर्थः। तत्र हेतुः—यतो यद्भजनादस्य जीवात्मनोण्वपि भयं न स्यात् इति यो भेदेनात्मद्वयं वेद य एव त्वया विद्वान् ज्ञेयः स एव विद्वान् स एव त्वया गुरुराश्रयणीयः य एव गुरुः स एव हरिस्त्वयोपासनीय इत्यर्थः। अत्र 'स वै प्रियतमो ह्यस्य' इति पाठस्तीर्थसम्मतः॥ ५१॥ ❀ ❀ पुरुषर्षभेति। पुरुषेणापि स्वहिताय झटिति प्रयत्यते त्वं तु पुरुषर्षभो भूत्वा कथं तत्र विलम्बस इति भावः। अत्र अवसरे। सुनिश्चितं शास्त्रज्ञैरिति शेषः॥ ५२॥ ❀ ❀ तत्रैव पुष्पवाटिकायामेव। अलुक्समास आर्षो वा मुम्—क्षुद्रंचरमिति॥ ५३॥ ❀ ❀ अन्तर्नलिकायां गूढेन नलिकामध्यस्थापितेन दर्शनायोग्येन मरणहेतुभूतेन व्यापारेण राजन्निति। राज्य एवासक्तिं मा कुर्विति भावः॥ ५४॥ ❀ ❀ मद्वाक्ये श्रद्धा चेत्तर्हि हितमुपदिशामीत्याह—यत्त्वं पूर्वं कर्मठः स एव त्वं मृगस्येव विषयानन्विच्छतो जीवस्य चेष्टितम्। शरणं रक्षितारम्। क्रमेण साधनसामग्र्यनुरोधेन विरम संसाराद्विरतो भूया इत्यर्थः॥ ५५॥ ❀ ❀ न जानन्तीत्यत्र हेतुः किन्नेत्यादि॥ ५६॥ ❀ ❀ यतस्तेऽज्ञा अतो हेतोः। अत्र ब्रह्मणि। महानिति। सूक्ष्मत्वेनाज्ञातविषयत्वान्महत्त्वं न तु स्थूलपरिमाणत्वेनेत्यभिप्रायेणाह—ऋषयोपि। त्रिकालज्ञा अपि किं पुनर्मादृशा इत्यर्थः। अत्र तु कर्ममार्गे तु यत्र कर्मवर्त्मनि। इन्द्रियाणां त्वैहिकमपि सर्वं न गोचरीभवति किं पुनः पारलौकिकमत उक्तमिन्द्रियवृत्तीनामप्रवृत्तेरिति। यद्वा—यत्र येषु इन्द्रियवृत्तयोपि न प्रभवन्ति। ये जितेन्द्रिया इत्यर्थः। ते ऋषयः। हि निश्चितम्। ये मुह्यन्ति मोहादेव कर्म कुर्वन्ति मद्विधान्कर्म कारयन्ति च तर्हि मद्विधानां का वार्त्तेति भावः॥ ५७॥ ❀ ❀ किञ्च कर्मवर्त्मन्येकः संशयोस्ति तमपि छिन्धीत्याह—कर्माणीति। उपभुक्तानि स्वर्गनरकादीनि॥ ५८॥ ❀ ❀ वादः श्रूयते स कथं संगच्छेत न ह्यन्येन कृतमन्येन भोक्तुं युज्यते इति भावः। एतच्च अन्यकृतान्यभोगलक्षणम्। इति भाव इति। येन देहेन कृतानि स स्वभुक्त्वैव मृतोऽतस्तत्कृतकर्मणां नाश एव जातोऽन्येन देहान्तरेण तत्फलभोगांगीकारे च तस्य विनैव कर्मकरणं तत्फलावाप्तिरित्यकृताभ्यागम एव जात इत्याशयः। इति भाव इति। यत्तु स्वयमेव नष्टं तत्फलं कथं दातुं समर्थं भवेत्कर्त्रे इति, न हि मृतः पिता पुत्राय कदलीफलमानीय ददातीति युज्यत इत्याशयः। तज्जन्यादृष्टे प्रमाणाभावात्तदपि न प्रकाशते लोकान्तरे कथं तत्फलभोग इति॥ ५९॥ ❀ ❀ इत्यर्थ इति। पापपुण्ययोर्मनःप्रधानैरिन्द्रियैरेव करणात्तत्फलयोः स्वर्गनरकयोरपीन्द्रियैरेव भोगात् व्यवधानं न विद्यते यस्य तेनाव्यवधानेन लिंगेन स्थूलदेहस्य तत्र व्यवधायकत्वाशक्तेः॥ ६०॥

### श्रीमद्वीरराघवव्याख्या

एवं तत्त्वमुक्तं हितमाह। तस्य भगवत आत्मनो निरुपाधिकशेषिणः पादमूलं शरणं समीहितोपायः इह यतः यत्पादमूलशरणवरणान्नृणां क्षेमः सुखं भवेदित्यर्थः, एवं हित उक्तः स ह्युपायः पुरुषार्थमाह। स वै भगवानस्य शरणं गतस्य प्रियतमः निरतिशयप्रीतिविषयः "प्रियो हि ज्ञानिनोऽत्यर्थम्" इति भगवदुक्तेः एवं निरतिशयसुखमेव हि पुरुषार्थः। भगवतो निरतिशयसुखरूपत्वस्य 'आनन्दो ब्रह्मेति व्यजानादि'त्यादिश्रुत्यावगमात् "को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्, एष एवानन्दयति" इत्यानन्दावहत्वश्रवणाद्भगवदनुभव एव पुरुषार्थं इति भावः॥ ५१॥ ❀ ❀ इत्युक्तविधानान् तत्त्वहितपुरुषार्थान् यो वेद स वै स एव विद्वान् यश्च विद्वान् स एव गुरुः यश्च गुरुः स एव हरिः 'आचार्यो ब्रह्मणो मूर्तिरि'त्युक्तेः तत्त्वहितपुरुषार्थज्ञानमेवावश्यमुपादेयमिति भावः। "ब्रूहि मे विपुलं ज्ञानं येन मुच्येय बन्धनात्" इति त्वया कृतस्य ज्ञानविषयप्रश्नस्येदमेव हरिर्देहभृतामित्युक्तं प्रधानमुत्तरमन्यत्सर्वमेतदुपपादकमित्यभिप्रायेण उपसंहरति प्रश्न इति। हे पुरुषर्षभ! भवतः प्रश्न एवं संछिन्नः हेयोपादेयज्ञानविषयप्रश्नः तज्ज्ञानविवेचनादत्रोत्तरो जात इत्यर्थः॥ ५२॥ ❀ ❀ तदेवमात्मनो बन्धमोक्षकारणे कथिते अधुनैवं कथिताभ्यामपि नातिनिर्विण्णचित्तं पुत्रागमं प्रतीक्षमाणं सन्तं तत्क्षणमेव महाभयकम्पितसकलगात्रं गृहान्निर्यापयितुं हरिणरूपकमाह अत्रेति। वदतो वचः सुनिश्चितं गुह्यं निशामय शृणु किन्तदित्यत्राह। क्षुद्रंचरं क्षुद्रमल्पं चरतीति तथा अलुगार्षः, बाहुलकात् खश् प्रत्ययः पूर्वपदस्य मुमागमः क्रियाविशेषणं, सुमनसां पुष्पाणां शरणे आश्रमे वाटिकायां मिथित्वा मिथः परस्परं स्त्रिया सह मिलित्वा तत्रैव रक्तं षडङ्घ्रयो भ्रमरास्तेषां गणास्तेषां सामसु गीतेषु लुब्धौ कर्णौ यस्य तं परेषामसुभिः स्वीयानसून् तर्पयन्तीत्यसुतृपः तानग्रे

स्थितान् वृकानविगणय्यानालोच्य यान्तं चरन्तं पृष्ठे लुब्धकस्य बाणेन भिन्नं मृगं हरिणं मृगयान्वेषय विचारयेति मृगपक्षेऽर्थः। प्रकृतार्थस्तु क्षुद्रं चरं फलभोक्तारं सुमनसां स्त्रीणां शरणे गृहे मिथित्वा मिथुनीभूय षडङ्घ्रिगणसामसु मृगसदृशगायकगीतेषु वृकान् वृकवद्भीषणानहोरात्रादीनसुतृप आयुर्हरानविगणय्य पृष्ठे परोक्षे लुब्धकबाणभिन्नं मृत्युपाशग्रस्तं मृगसदृशमात्मानं मृगय पर्यालोचयेति ॥ ५३ ॥ ❀ ❀ स्वयमेव श्लोकं प्रस्तुतेऽर्थे योजयन् व्याचष्टे सुमनस इति। सुमनोभिः पुष्पैः समानो धर्मो यासां तासां परिणामविकारित्वात् स्त्रीणां शरणे इति प्रतीकः आश्रमे इति व्याख्या गृहस्थाश्रम इत्यर्थः। क्षुद्रंचरमिति व्याचष्टे पुष्पगतमकरन्दलेशवदल्पं काम्यकर्मणां परिणामजकामसुखलवं काम्यन्त इति कामा विषयास्तेषां सुखलेशं जैह्वयं जिह्वयासादितमौपस्थ्यम् उपस्थेनेन्द्रियेणासादितं चादिर्येस्य तद्विचिन्वन्तं मिथित्वेत्यस्य व्याख्यानं मिथुनीभूयेति रक्तमित्यस्य व्याख्या तदभिनिवेशितमनसमिति तासु अभिनिवेशितं मनो येन तं, षडङ्घ्रिगणसामस्विति व्याचष्टे भ्रमरगणानां सामगीतवन्मधुरध्वनिवदतिमनोहरा ये इच्छाविषयस्त्रीजनालापास्तेषु। लुब्धकबाणमिति व्याचष्टे अतितरां प्रलोभितौ कर्णौ यस्य तमग्र इत्यादि व्याचष्टेऽग्रे पुरतः वृकसमूहवदात्मनः स्वस्यायुर्हरानहोरात्रादिकालविशेषानविगणय्य यान्तमिति व्याचष्टे गृहेषु मृगमिव चरन्तं वैषयिकसुखदुःखादिकमनुभवन्तं पृष्ठे इति सप्तम्यन्तं सार्वविभक्तिकस्तसिल्प्रत्ययान्तेनानूद्य व्याचष्टे पृष्ठतः, परोक्षमिति लुब्धकबाणभिन्नमिति व्याचष्टे अनुप्रवृत्त इति सामर्थ्यलब्धं लुब्ध इत्यस्य व्याख्यानम्। कृतान्त इति आत्तः स्वीकृतः शरः मारणरूपो येन इह शरीरिणं देहिनं पराविध्यति दूरादेव ताडयति मृगयेति व्याचष्टे। तमिमं देहिनमात्मानं स्वात्मानं द्रष्टुमालोचयितुमर्हसि तत्र दृष्टान्तः यथेति ॥ ५४ ॥ ❀ ❀ उपदेशसारमाह स इति। स त्वमुक्तविधस्तं मृगचेष्टितं विचक्ष्यालोच्यात्मनः स्वस्यान्तर्हृदि हृद्गुहायां चित्तं मनः नियच्छ नियतं कुरु चित्ते च कर्णधुर्नीं कर्णयोर्धुनीं नदीमिव स्थितां ध्वनिना नदीव श्रूयमाणां कर्मसु रुच्युत्पादिकामर्थवादात्मिकां श्रुतिं नियच्छ कर्मसु रुचिं त्यजेत्यर्थः। कर्णयोर्धुनीवृत्तिमिति वा अस्मिन्नपि पक्षे स एवार्थः, अङ्गनायाः स्त्रियः आश्रमं जहि गृहाश्रमं त्यज कीदृशमसत्तमानामतिकामुकानां यानि यूथानि तेषां गाथा वार्ता यस्मिन्। हंसानां जीवानां शरणमिष्टोपायं रक्षितारं च भगवन्तं वृणीहि वृणु शरणं गच्छ। असत्तमयूथनाथमिति पाठेऽसत्तमयूथनाथः निर्वाहको यस्य तमङ्गनाश्रममित्यर्थः। विरम सांसारिकप्रवृत्तेरिति शेषः ॥ ५५ ॥ ❀ ❀ एवमुपदिष्टचिदचिदीश्वरतत्त्वः कर्मसमुत्पादितवैराग्यो राजा उक्तमभिनन्दन् पुनरन्यानि संशयपदान्याविष्कुर्वन्पृच्छति श्रुतमिति त्रिभिः। हे ब्रह्मन्! भगवान् भवान् यदभाषत तदान्वीक्षिकमात्मान्वीक्षणोपयोगि श्रोतव्यमर्थजातं मया श्रुतमन्वीक्षितमिति पाठे विचारितमित्यर्थः। एतद्भवतोपदिष्टमस्मदुपाध्यायाः कर्मोपदेष्टारस्ते न जानन्ति तत्र लिङ्गमाह। यदि विदुस्तर्हि किमर्थं न ब्रूयुरतोऽकथनान्न जानन्त्येवातिगुह्यं भवतोपदिष्टमिति भावः ॥ ५६ ॥ ❀ ❀ अतस्तत्कृत उपाध्यायकृतः तद्वाक्यविरोधेनात्मतत्त्वेऽसम्भावनारूपो महान् संशयः संछिन्नस्त्वया। अत्र तु कश्चित्संशयोऽनुवर्तते यत्र संशयपदे इन्द्रियवृत्तीनामप्रवृत्तिस्तत्र ऋषयोऽपि मुह्यन्ति ॥ ५७ ॥ ❀ ❀ किमत्र संशयपदं तदाह कर्माणीति। पुमान् येन देहेन कर्माणि पुण्यापुण्यरूपाणि अत्र लोके आरभते करोति तं देहमिहैव विहाय कर्मोपस्थापितेनान्येन देहेन जुष्टानि सेवितानि विषयीकृतानि सुखदुःखान्यसकृत्पुनः पुनर्भुङ्क्ते ॥ ५८ ॥ ❀ ❀ इत्येवंविधा वेदविदां भवादृशानां वाचस्तत्र स्मृतिपुराणादिषु श्रूयन्ते। तथाहि "सूत्रं वर्णाश्चाश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टकुलजातिरूपायुःश्रुतवित्तसुखमेधसो जन्म प्रतिपद्यन्ते विष्वञ्चो विपरीता नश्यन्ति" इति भवताप्युक्तं "गुणाभिमानी स तदा कर्माणि कुरुतेऽवशः। शुक्लं कृष्णम्" इत्यादिना संशयविषयमुद्घाटयति कर्म चेति। प्रोक्तं सुखदुःखहेतुत्वेन ब्रह्मवादिभिः प्रोक्तं पुण्यापुण्यरूपं कर्म क्रियते जनैः तच्चानन्तरक्षण एव परोक्षमदृश्यं सन्न प्रकाशते। न प्रकाशत इति वर्तमाननिर्देशेन प्राक्तनदेहकृतानां यथास्मिन् देहे न प्रकाशस्तथैतद्देहकृतानामुत्तरजन्मन्यप्रकाशस्तथा यथैव पूर्वक्षणगोचराणामुत्तरोत्तरक्षणागोचरत्वं तथेति च दृष्टान्तद्वयमभिप्रेतं चकारेण कर्मणि हेतुभूतं सत्त्वादिगुणयुक्तं मनस्तद्युक्तं शरीरं च न प्रकाशत इति विवक्षितं, नहि पूर्वदेहकृतकर्माणि तन्निमित्तसत्त्वादिगुणयुक्तं मनस्तद्युक्तं च शरीरं चेदानीमुपलभ्यते, अतस्ते कर्मगुणमनोदेहाः पूर्वं नासन् अतस्ते नेदानीं सुखादिहेतवः। एवं तत्तद्देहकृतकर्मगुणमनोदेहाः उत्तरजन्मसुखदुःखादिहेतवो न भविष्यन्ति, किन्तु निर्निमित्तमेव सुखदुःखप्राप्तिरिति मे प्रतिभातीत्यर्थः ॥ ५९ ॥ ❀ ❀ एवमापृष्टो भगवान् नारदस्तत्प्रश्नं परिहरति येनैवेति। तत्र यदुक्तमुत्तरोत्तरजन्मसुखदुःखादिहेतुभूतकर्माश्रयपूर्वदेहानां विनष्टत्वात्तन्निमित्तं सुखदुःखादिकमनुपपन्नं, न ह्याशुविनाशिस्वभावं निराश्रयकर्माल्पकालिकसुखादिहेतुः, नहि विनष्टानां कुलालशरीरदण्डचक्रादिव्यापाराणां कालान्तरभाविघटादिहेतुत्वमिति येनैव मनसा निमित्तभूतेन पुरुषः कर्म आरभते तेनैवाव्यवधानेनाविश्लिष्टेन लिङ्गेन पुण्यापुण्यकर्महेतुभूतेन मनसा स्वस्वकर्मानुगुणं सुखदुःखादिफलममुत्र परलोके भुङ्क्ते। स्थूलशरीरकर्मणो विनाशेऽपि मनसो लिङ्गभूतस्य साध्वसाधुकर्मनिमित्तभगवदनुग्रहनिग्रहरूपपुण्यापुण्यविषयस्य क्षेत्रज्ञस्य च देहान्तरेऽप्यनुवृत्तेः सुखाद्युपपत्तिरिति भावः। पुण्यापुण्ययोर्भगवन्निग्रहानुग्रहरूपत्वं तदधिगमाधिकरणे भाष्यादौ स्पष्टमुक्तम् ॥ ६० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

हरिरेवंविधश्चेत्ततः किमत्राह तत्पादेति। यतो यस्मात् क्षेमो भवेन्नृणां तस्य हरेः पादमूलं शरणं रक्षकं "शरणं गृहरक्षित्रोः" इत्यभिधानं, ननु पित्रादीनां वयसि गते पुत्रादीनामपि शरणत्वदर्शनात्किं विशिष्योच्यत इति तत्राह स वा इति। भगवत्संपर्का-

त्पुत्रादीनां प्रियत्वात् हरेः प्रियतमत्वं कुत इति तत्राह यत इति । श्रीनारायणचरणारविन्दशरणं गतस्यास्य संसारिणोऽण्वपि भयं नास्ति यतोऽथ तस्माद्धरिः पुत्रादेः प्रेष्ठ इति कृत्वा पुंसस्तत्पादमूलं शरणमित्यन्वयः । एवं वेत्तुरेव विद्वत्ता नानेवंविद इत्याह इतीति । इतिशब्दो हेत्वर्थः । यस्माद्धरिचरणशरणस्य मोक्षादिसर्वपुरुषार्थावाप्तिस्तस्माद्य एवं वेद स वा एव विद्वान् नान्यः, कुतः स्वगुरुः स्वापेक्षिताशेषज्ञानोपदेष्टा तत्र हरेः सन्निधानविशेषात्तत्सामर्थ्यमस्येति भावेनाह हरिरिति । अनेन गुर्वादिशब्दप्रयोगेण देवादीनां मुख्यविद्वत्तेत्याह ॥ ५१ ॥ ❀ ❀ अत्रेति निशामय शृणु ॥ ५२–५३ ॥ ❀ ❀ स्वाभीष्टप्रकाशनाय स्वयमेव व्याचष्टे सुमनसामिति । सुमनसां समानधर्माणां पुष्पवत्कोमलशरीराणां शरण आश्रमे अन्यत्र पुष्पाश्रये वने क्षुद्रं पुष्पमधुगन्धवदल्पं किन्तत्काम्यकर्मविपाकजं प्रवृत्तकर्मफलं विषयसुखलेशं जैह्वयोपस्थादिविषयं चरं चरन्तं भुञ्जानमितस्ततो गत्वा विचिन्वन्तमन्विच्छन्तं तदर्थित्वात् मिथुनीभूय तदभिनिविष्टचेतनं षडङ्घ्रिगणसामगानवत् भ्रमरनिकरसुन्दरगानवदतिमनोहरस्त्रीजनसंलापेषु अतितरामत्यन्तं प्रलोभितौ कर्णौ यस्य स तथा तं तदेकमग्नश्रोत्रमित्यर्थः, कुतोऽग्रे वृकान् वृकसधर्मानसुहृत् असुलक्षणमायुर्हरतोऽहोरात्रादिकालविशेषानविगणय्यागणयित्वा यान्तं क्रीडागृहे विहरन्तमित्यर्थः, पृष्ठे परोक्षमवस्थितः उपशये स्थितो लुब्धकसमानः कृतान्तः शरसमेनादृष्टेन यमात्मानं पराविध्यति तमिममात्मानं जीवं भिन्नहृदयं मृगपर्यालोचनयालोच्य च द्रष्टुमर्हसीत्यर्थः । कथमिव मृगयुहतं मृगं हरिणमिवेति ॥ ५४ ॥ ❀ ❀ मद्वाक्ये श्रद्धा चेद्धितमुपदिशामीत्याह स त्वमिति । यः पूर्वं कर्मठः स त्वं मृगवच्चेष्टितं चेष्टा यस्य स तथा तं मृगस्येव विषयानन्विच्छतो जीवस्य चेष्टितमिति वा विचक्ष्व पश्य आत्मनस्तव चित्तं पूर्वकृतस्मरणसमर्थमन्तःकरणविशेषमन्तःस्थिते हृदि सर्वपापहरे हृन्नाम्नि हरौ नियच्छ तत्रैव स्थापय कर्णधुनीं कर्णधारामिव स्थितां चित्तिं बुद्धिं च हरौ स्थापय । कर्णादीन्द्रियप्रवृत्तिहेतुभूतां वा कर्णाख्यधुनीं वा तत्कथाश्रवणे बुद्धिं च तद्गुणनिर्णये वा असक्तमानां विषयिणां यूथस्य गाथा विषयवार्तावदाकारो यस्मिन् तमङ्गनाश्रमं जहि । हंसो निर्दोषः परमात्मा मम शरणमिति कृत्वा प्रीणीहि तृप्तो भव । यद्वा हंसानां संन्यासिनां शरणं प्रीणीहीति क्रमेण साधनसामर्थ्यनुसारेण विरम संसाराद्विरतो भूया इत्यन्वयः ॥ ५५ ॥ ❀ ❀ राजा तावदियन्तं कालं मया भाषितं तदस्य हृद्गतं नाभूत्प्रतिवाक्याश्रवणादिति संशयनिरासायाह श्रुतमिति । श्रुतं श्रुतिप्रसिद्धमन्वीक्षितं विचारितमात्मयोग्यज्ञानं यद्भगवानभाषत नैतन्ममोपाध्याया जानन्ति तत्र हेतुमाह किं नेति । प्रथमं त्वन्मुखाच्छ्रुतं पश्चादन्वीक्षितमाम्रेडितमिति वा ॥ ५६ ॥ ❀ ❀ अथ किं तत्राह संशय इति । अत्रास्मिन्नर्थे मे संशयो न छिन्नः अल्पत्वात् मया न छेदित इति नेत्याह तत्कृत इति तत्कृते तदर्थविषये महान् संशय इत्यर्थः । सूक्ष्मत्वेनाज्ञातविषयत्वात् महत्त्वं न तु स्थूलपरिमाणत्वादिति भावेनाह ऋषय इति । कुत्र मुह्यन्तीत्यत्राह यत्रेति । यत्र संशयार्थे चक्षुरादीन्द्रियव्यापारागोचरत्वादित्यर्थः, अतस्त्वां पृच्छामीति शेषः ॥ ५७ ॥ ❀ ❀ कोऽसौ संशय इत्यत्राह कर्माणीति । इह पुमान् येन देहेन कर्माण्यारभते तस्य प्रारब्धकर्मक्षये तं देहं विहायामुत्र परलोके स पुमान् येन प्रेताख्येन जुष्टानि कर्मफलानि अश्नुत इति यत्कथमन्यः कर्ताऽन्यो भोक्तेत्यकृताभ्यागमादिदोषापत्तेः ॥ ५८ ॥ ❀ ❀ तदप्रमाणिकमिति च वक्तुं न शक्यमित्याह इतीति । श्रूयन्त इत्यनेन श्रुतयः स्मृतयोऽपि गृह्यन्ते तेनाबालवृद्धप्रसिद्धिर्द्योत्यते अतो महान् संशय इत्यर्थः । अनेन देहव्यतिरिक्तात्मसद्भावे कथमिति संशयो युज्यते स एव नास्ति देहभस्मीभावेन तस्यापि भस्मीभूतत्वादिति मतमपि प्रत्युक्तमागमस्याप्रामाण्ये तद्गुरुवाक्यस्यापि समन्यायः स्यादिति, किंच स्वर्गादिकामैर्जनैः कर्म क्रियते तत्परोक्षं पश्चान्न प्रकाशते नष्टत्वादतस्तादृशं कर्मार्थफलं न ददाति, न हि मृतः पिता पुत्रायानीय कदलीफलं रातीति युज्यत इत्ययमन्योऽपि संशयः ॥ ५९ ॥ ❀ ❀ प्रथमप्रश्नं प्रत्याह येनेति । लिङ्गं शरीरं तस्य मनःप्रधानत्वाल्लिङ्गेन मनसेति सामानाधिकरण्यं मनसा प्रेरितेन येन लिङ्गेन देहेन पुमान् कर्मारभते तेनैवामुत्र स्वर्गादावव्यवधानेन प्रत्यक्षेण कालेन स्वकं कर्म भुङ्क्ते तत्फलं सुखदुःखलक्षणमनुभवतीत्यन्वयः । स्थूलशरीरस्य लिङ्गनिमित्तत्वात्तन्नाशेऽपि कर्तुर्लिङ्गस्याविनष्टत्वान्नाकृताभ्यागमादिदोषप्रसक्तिः सूक्ष्मरूपेण सत्त्वात् लिङ्गेन लीनकर्मफलज्ञापकेन मनसा तत्फलानुभवोपपत्तेरिति वा ॥ ६० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तस्मादेवंभूतो गुरुरेवाश्रयणीय इत्युपदिशन् पुरञ्जनोपाख्यानादिविवक्षितमाह स वै इति सार्द्धेन । वै प्रसिद्धे, रूपगुणलीलादिभिर्मनोहरत्वेन स हरिनामा सर्व्वेषां प्रियतमः परमप्रीतानां योग्यः यत एव चात्मा, स्वात्मेति पाठे स्वेषां जीवानां रश्मिस्थानीयानां देहभृतां मण्डलस्थानीयः यस्मादेव च यतः सकाशादण्वपि भयं न जायते इति यो वेद स एव विद्वान् स एव गुरुः य एवम्भूतो गुरुः स तु हरिरेवेत्यर्थः ॥ ५१ ॥ ❀ ❀ प्रश्नेत्यर्द्धकम् । अत्रेत्यर्द्धकम् ॥ ५२–५३ ॥ ❀ ❀ सुमन इत्यादिग्रन्थान्ते द्रष्टुमर्हसीत्यनन्तरं यथा मृगयुहतं मृगमिति क्वचिदधिकं वर्त्तते ॥ ५४–५६ ॥ ❀ ❀ अत्र श्रीभगवद्वर्त्मनि तु संशयः छिन्न एव, किन्तु कर्ममार्गे त्वेकः संशयो वर्तते तच्छेदनं च संप्रत्यनुपादेयमपि केवलं मुहुस्तत्स्मृत्यापातशान्त्यर्थमेव मृग्यत इत्याशयेनाह द्वाभ्याम् । तत्र कर्म्माणीति सार्द्धकं कर्मेत्यर्धकं येन देहेनारभते तेनैव जुष्टानि सेवितानि निगूढानि कर्म्माण्यमुत्रान्येन देहेन समश्नुते इति हि वेदविदां वादस्तत्त्वनिर्णयः । कर्म च तत्क्षणादप्रकटमेव स्यात् ततश्च स्नानभोजनादिवत्संस्काररूपत्वेनाग्नितन्मात्रादिवत् सूक्ष्मरूपत्वेन चान्यत्र सञ्चारणासम्भवात् कथमन्येन देहेन तत्तद्भोगः संभवतीत्यर्थः ॥ ५७–६३ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

स हरिरेव प्रियतम आत्मा असौ जीवस्तु प्रिय एवेत्यर्थः, तत्र हेतुः यतोऽसद्भजनात् अस्य जीवात्मनस्तु स्वर्गादिभोग-प्रदानरूपाद्भजनाद् दुःखमेव भवतीत्यर्थः। इति विभेदेनैवात्मद्वयं यो वेद स एव विद्वांस्त्वया ज्ञेयः, य एवं विद्वान् स एव त्वया गुरुराश्रयणीयः, य एवं गुरुः स एव हरिस्त्वयोपासनीय इत्यर्थः॥ ५१॥ ❀ ❀ उक्तमर्थमुपसंहरति। प्रश्नः संच्छिन्नः परिहृतः। तदेवं पुरञ्जनोपाख्यानेन वैराग्यभक्तिभ्यामात्मन उद्धारप्रकारमवगम्यापि प्रस्थाप्यमानैर्दूतैः पुत्रानानीय राज्येऽभिषिच्य प्रव्रजिष्यामीति मनसि विचारयन्तं राजानमभिमृश्य तं सद्य एव गृहान्निःसारयितुं पुनर्हरिणरूपककथामाह। अत्र वदतो मे गुह्यं वचः शृणु॥ ५२॥ ❀ ❀ क्षुद्रमिति। मृगं हरिणं मृगय स्वविपत्तिमजानन्तं सद्य एव मरिष्यन्तमन्वेषय कीदृशं क्षुद्रं दूर्व्वादियवसं चरतीति तथा तं, मुमागम आर्षः। सुमनसां पुष्पाणां शरण उद्याने मिथित्वा स्त्रिया सह मिथुनीभूय रक्तमासक्तं सामसु सङ्गीतेषु अग्रे तं भक्षयितुमेव निलीनान् वृकान् अज्ञानादेव अविगणय्य यान्तं पृष्ठे तु निलीय वर्त्तमानस्य लुब्धकस्य बाणैर्भिन्नं भिन्नप्राय-मन्वेषय। तेन शीघ्रमिमं पुष्पोद्यानादन्यत्र नय, अन्यथा वृका लुब्धकाश्चैनं हनिष्यन्त्येवेति भावः॥ ५३॥ ❀ ❀ श्लोकमिमं प्रस्तुतं योजयन् व्याचष्टे। तत्र सुमनसां शरणे इत्यस्य व्याख्या सुमनःसमधर्म्मणामिति परिणामविरसत्वात् नवमालिकापुष्पतुल्यानां क्षुद्रं चरन्तमित्यस्य व्याख्या पुष्पमध्वित्यादि मिथित्वेत्यस्य व्याख्या मिथुनीभूय स्त्रीभिः सहेति शेषः। रक्तमित्यस्य व्याख्या तासु स्त्रीष्वेव अभिनिवेशितं चित्तम्, असुतृप इत्यस्य व्याख्या आयुर्हरत इति यान्तमित्यस्य व्याख्या विहरन्तमिति अतितरामित्यस्यैव विशेषणमन्तःशरेण द्रष्टुमर्हसीति दृष्ट्वा च शीघ्रमिममङ्गनाश्रमाद्बहिष्कुरु। तदैवान्तकहस्तादसौ विच्युतो भविष्यतीति भावः॥ ५४॥ ❀ ❀ व्यञ्जितमर्थमभिधयापि स्पष्टमाह स त्वमिति। विचक्ष्येत्यार्षं विचार्य्य अन्तर्हृदि चित्तं मनो नियच्छ कर्णयोर्धुनीं नदीमिव "अपाम सोमममृता अभूम" इत्यादिफलश्रुतिं चित्ते नियच्छ निलीनीकुर्व्विति फलश्रुतेर्विचारासहत्वेन वैयर्थ्यादिति भावः। हंसानां शरणं पर्णशालां भगवन्तं प्रति प्रीणीहि प्रीणयेति वा क्रमेण विषयानन्दा-द्विरम॥ ५५॥ ❀ ❀ यद्भवानभाषत तच् श्रुतमनु पश्चादीक्षितं विचार्य्य साक्षात्कृतं च ये मुनयोऽत्रत्या मां कर्म्माध्यापयन्ति ते एतन्न जानन्ति यदि च जानन्ति तर्हि किं न ब्रूयुरतोऽद्यारभ्य त्वमेव मे गुरुरभूरिति भावः॥ ५६॥ ❀ ❀ अतस्तत्कृत उपाध्यायकृतः तद्वाक्यविरोधेन भक्तिज्ञानवैराग्येष्वसम्भावनारूपो यः संशय आसीत् स त्वया विशेषेण प्रकर्षेण सम्यक्प्रकारेण छिन्नः। यत्र येषु इन्द्रियवृत्तयोऽपि न प्रभवन्ति ये जितेन्द्रिया इत्यर्थः, ते ऋषयोऽपि हि निश्चितं मुह्यन्ति मोहादेव कर्म्म कुर्व्वन्ति मद्विधान् कर्म्म कारयन्ति च तर्हि मद्विधानां का वार्तेति भावः॥ ५७॥ ❀ ❀ किञ्च कर्म्मवर्त्मन्येकः संशयो वर्तते तमपि संछिन्धीत्याह। कर्म्माणि येन देहेन कुरुते पुमान् जीवस्तं देहमिहैव विहाय अमुत्र लोकान्तरे अन्येन देहेन जुष्टानि उपभुक्तानि स्वर्गनरकादीनि अश्नुते प्राप्नोति इति वादः श्रूयते स कथं सङ्गच्छते, न ह्यन्येन क्रियतेऽन्येन भुज्यते इत्युचितमिति भावः॥ ५८॥ ❀ ❀ संशयान्तरमाह। कर्म्म प्रोक्तं वेदोक्तं क्रियते जनैः तच्च समनन्तरक्षण एव परोक्षं स्यात्तज्जन्यमदृष्टं यत्तस्यापि सत्त्वे प्रमाणादर्शनात्तदपि न प्रकाशते। अतो लोकान्तरे कथं तत्फलस्य भोग इति॥ ५९॥ ❀ ❀ प्रथमस्यो-त्तरमाह येनैवेति। लिङ्गेन लिङ्गदेहेन मनसा मनःप्रधानेन पापपुण्ययोर्मनःप्रधानैरिन्द्रियैरेव करणात् तत्फलयोः स्वर्गनरकयोर-पीन्द्रियैरेव भोगात् न विद्यते व्यवधानं यस्य तेनाव्यवधानेन लिङ्गेनेति स्थूलदेहस्य तत्र व्यवधायकत्वाशक्तेः॥ ६०॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

स एव अन्येषामज्ञानहरत्वाद्धरिरत एव गुरुः॥ ५१॥ ❀ ❀ संछिन्नः कृतोत्तरः। निशामय शृणु॥ ५२॥ ❀ ❀ शरणे वाटिकायां मिथित्वा भार्याभिर्मिलित्वा रक्तं सुखासक्तं क्षुद्रंचरम् अल्पं सुखं सेवमानम् मृगय आलोचय॥ ५३॥ ❀ ❀ श्लोकं स्वयं व्याचष्टे सुमन इति। सुमनःसमधर्माणां सुमनोभिः समानो धर्मः सद्यो विरूपत्वादिलक्षणो यासां तासाम् आश्रमे गार्हस्थ्ये मिथुनीभूय ताभिर्मिलित्वा क्षुद्रतमं कामलवसुखं विचिन्वन्तं तस्मिन् सुखेऽभिनिवेशितमानसं कृतान्तः कामः अन्तःशरेण अलक्ष्यवेगेन पराविध्यति तमिममात्मानं द्रष्टुमर्हसि॥ ५४॥ ❀ ❀ स मृगोपमस्त्वमात्मनो मृगचेष्टितं विचक्ष्य विचार्य कर्णध्वनिम्, कर्णध्वन्युपलक्षितां कर्णवृत्तिं तदुपलक्षिताः सर्वेन्द्रियवृत्तीश्चित्तेनावरुध्य चित्तं च हृदन्तस्थे श्रीकृष्णे योजयेत्यर्थः। तच्च गार्हस्थ्यत्यागेन संयच्छ इत्याह जहीति। असत्तमानां यूथस्य गाथा कथा यत्र तज्जहि हंसानां सारग्राहिणां वैष्णवश्रेष्ठानां शरणं श्रीकृष्णं प्रीणीहि एवं क्रमेण विरम संसारादिति शेषः॥ ५५॥ ❀ ❀ हे ब्रह्मन्! भगवान् यदभाषत तन्मया श्रुतम् अन्वीक्षितं विचारितं च॥ ५६॥ ❀ ❀ अत्र अस्मिन् तत्त्वे तत्कृतः उपाध्यायाज्ञानकृतः॥ ५७॥ ❀ ❀ तुशब्देन सूचितं संशयमाह। येनेति द्वाभ्याम्। येन कर्माण्यारभते करोति तं देहं विहाय स कर्ता अमुत्र लोकान्तरे त्यक्तदेहेन यद्यानि जुष्टानि सेवितानि तानि फलत्वेन प्राप्तानि अन्येन देहेनाश्नुते॥ ५८॥ ❀ ❀ 'प्राप्य पुण्यकृतान् लोकानि'ति "शारीरजैः कर्मदोषैर्याति स्थावरतां नरः" इति स्मृतिरूपो वेदविदां वादस्तत्र तत्रास्ति श्रूयते च 'अन्यन्नवतरं कल्याणतरं रूपं कुरुतेपि त्र्यम्बा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वे'ति कर्मकालेऽन्यदेहः फलभोगकालेऽन्य इत्येकः संशयः। संशयान्तरमाह यत्प्रोक्तं कार्यत्वेन वा वर्णितं

जनेन क्रियते तत्परोक्षमदृश्यं सत् क्षणान्तरे न प्रकाशते तर्हि केनामुत्र भोगसिद्धिरिति ॥ ५९ ॥ ❀ ❀ स्वयं स्थूलसूक्ष्मदेहद्वयवान् स्थूले गृहवदायतमानः येनैव कर्म आरभते तेनैव मनसा मनःप्रधानेन लिङ्गदेहेन अव्यवधानेन कर्मकाले तत्फलभोगकाले च व्यवच्छेदशून्येन तत्फलं सुकृतकर्मफलं भुङ्क्ते। अनेन देहद्वयस्योपयोगित्वमात्रं जीवस्य कर्तृत्वभोक्तृत्वादिधर्मवत्त्वमुक्तम् ॥ ६० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं भगवच्छरणात् कालादिभयनिवृत्तावपि कदाचित्तत एव भयं स्यात्तदा तत उत्कृष्टस्य अन्यस्याभावात्तन्निवृत्तिः कथं स्यादित्याशङ्कयाह—यत इति। यतो भगवतः अण्वपि भयं न भवति यतः स वै स एव प्रियतमः। न हि प्रियतमाद्भयं भवतीति भावः। प्रियत्वे हेतुः—आत्मेति। आत्मनः प्रियतमत्वस्य पुत्रदारादेस्तदर्थप्रियत्वस्य वा "आत्मनस्तु कामाय सर्वं प्रियं भवति" इत्यादिश्रुतौ लोके च प्रसिद्धत्वादिति भावः। इति सार्धश्लोकोक्तमर्थं यो वेद स एव विद्वान् स एव गुरुरुपदेशेन परोद्धारे समर्थः स्वयं तु स हरिरेव, तस्य तु हरिभावे मोक्षे न सन्देह इत्यर्थः ॥ ५१ ॥ ❀ ❀ प्रदर्शितं मोक्षसाधनमुपसंहरति—प्रश्न इति। एवमुक्तप्रकारेण हि भवतः प्रश्नः सञ्छिन्नो दत्तोत्तरः। हे पुरुषर्षभ इति सम्बोधनेन पुरुषाणां मध्ये श्रेष्ठत्वात्त्वयापि परमश्रेयो मोक्षमार्ग एव प्रवृत्तिरुचितेति सूचयति। एवं परोक्षेण प्रत्यक्षतश्च मोक्षसाधने प्रदर्शितेऽपि पुत्रागमने तान् राज्येऽभिषिच्य प्रव्रजिष्यामीति निश्चयपरं राजानं सद्य एव भयप्रदर्शनेन गृहान्निस्सारयितुं हरिणकथामाह—अत्रेति। अत्र तदोद्धारार्थं कर्तव्यनिर्धारणे सुनिश्चितं महद्भिर्निर्धारितं गुह्यं देवैर्गोपितमतो लोके अप्रसिद्धमुपायं वदतो मे वचनं निशामय शृण्वित्यन्वयः ॥ ५२ ॥ ❀ ❀ क्षुद्रमलं चरतीति क्षुद्रचरम्, सुमार्थैः, सुमनसां पुष्पाणां शरणे आश्रमे वाटिकायां मिथित्वा मिथः परस्परं स्त्रिया सह मिलित्वा रक्तं तत्रैवासक्तम्, षडङ्घ्रयो भ्रमरास्तेषां गणास्तेषां सामसु गीतेषु लुब्धः कर्णो यस्य तम्, परेषां मांसादिभिः स्वकीयानसूंस्तर्पयन्ति ते असुतृपस्तान् वृकानग्रे गच्छतोऽज्ञानादविगणय्य अगणयित्वा यान्तं विचरन्तं पृष्ठे पृष्ठतो लुब्धकवाणेन भिन्नं भिन्नप्रायं मृगं त्वं मृगय अन्वेषयेत्यन्वयः ॥ ५३ ॥ ❀ ❀ एवं हरिणरूपकेणोक्तोऽर्थो राज्ञा न बुद्ध इति ज्ञात्वा स्वयमेव व्याचष्टे—सुमन इति। सुमनोभिः समानो धर्मः परिणामविरसत्वादिरूपो यासां तासां स्त्रीणां शरणे आश्रमगृहे पुष्पं मधुगन्धवत् क्षुद्रतमं अतितुच्छं काम्यकर्मणां विपाकजं फलरूपं जैह्वयौपस्थ्यादिकामसुखलवं विचिन्वन्तमन्वेषयन्तम्। स्त्रीभिः सह मिथुनीभूय तदभिनिवेशितमनसं तासु स्त्रीष्वेवाभिनिवेशितं मनो येन तम्। षडङ्घ्रिगणसामगीतवत् अतिमनोहरेषु वनितापुत्रादिजनालापेषु अतितरामतिलोभितः कर्णो यस्य तम्। असुतृपश्च दर्शयति—आयुर्हरत इति। यान्तमिति व्याचष्टे—विहरन्तमिति। कृतान्तो मृत्युर्यम् अन्तः अन्तःकरणे हृदये शरेण पराविध्यति दूरादेव वेद्धुमिच्छति तमिममात्मानं स्वमिह मृगकथायां अहो राजन् भिन्नहृदयं मृतप्रायं द्रष्टुमर्हसीति। इतिशब्दो मृगरूपकव्याख्यानसमाप्त्यर्थकः। एवं महता प्रयत्नेन बोधितस्त्वमिदानीमपि सावधानो भवेति सम्बोधनाभिप्रायः ॥ ५४ ॥ ❀ ❀ एवं परोक्षापरोक्षेण सर्वोपदेशस्य सारमाह—स इति। स त्वं मृगचेष्टितं विचक्ष्य कथितमृगवृत्तान्तेनात्मानं मृतप्रायं दृष्ट्वा आत्मनोऽन्तर्हृदि चित्तं नियच्छ बहिर्विषयान्निवृत्तं कृत्वा स्थापय। नन्विन्द्रियाणां विषयाभिमुखत्वात्तैराकृष्टं चित्तं कथं हृदि स्थापयितुं शक्यते तत्राह—कर्णधुनीमिति, कर्णयोर्धुनीं बहिर्वृत्तिं चित्तं नियच्छ। इन्द्रियान्तरस्य विषयसम्बन्धेन सत्येव चित्तक्षोभकत्वम्, श्रोत्रस्य तु दूरविषयश्रवणमात्रादेवेति प्राधान्येन तस्य निरोध उक्तः। स चेन्द्रियान्तरनिरोधस्याप्युपलक्षणम्। असत्तमानां भगवद्विमुखानां विषयाविष्टचित्तानां यानि यूथानि तेषां गाथा वार्त्ता यस्मिंस्तदङ्गनाश्रमं स्त्रीप्रधानं गृहं जहि परित्यज, हंसानां शुद्धानां जीवानां शरणमाश्रयं भगवन्तं प्रीणीहि प्रसादय। एवं क्रमेण संसारदुःखाद्विरम निवृत्तो भवेत्यन्वयः ॥ ५५ ॥ ❀ ❀ एवं नारदोक्तं परमार्थं श्रुत्वा संशयितं किञ्चिदर्थान्तरं प्रष्टुं स्वस्याधिकारित्वसूचनाय तदुक्तमनुवदति—श्रुतमिति द्वाभ्याम्। तवैव सर्वज्ञस्य एवमात्मतत्त्वनिरूपणे मादृशस्य कर्मजडस्य मनसि तत्त्वसञ्चारणे च सामर्थ्यमस्तीति सूचयन् सम्बोधयति—हे ब्रह्मन्निति। भगवान् सर्वज्ञो भवान् यदात्मतत्त्वमभाषत तन्मया श्रुतमन्वीक्षितं विचारितं च। एतत् त्वदुक्तमात्मतत्त्वं उपाध्यायाः ये मम कर्मोपदेष्टारः आचार्यास्ते न जानन्ति, यदि विदुर्जानन्ति तर्हि किं न ब्रूयुरित्यन्वयः ॥ ५६ ॥ ❀ ❀ अत्रात्मतत्त्वे तु तत्कृतः उपाध्यायकृतस्तद्वाक्यविरोधेनासम्भावनादिरूपो महान् संशयो मे ममासीत् स त्वया सञ्छिन्नः निरस्त इत्यन्वयः। संशयस्य महत्त्वं दर्शयति—ऋषय इति, यत्रात्मतत्त्वे ऋषयोऽपि मुह्यन्त्येव। मोहे हेतुमतिसूक्ष्मत्वं सूचयन्नाह—यत्र नेन्द्रियवृत्तय इति ॥ ५७ ॥ ❀ ❀ कर्मवर्त्मन्यन्यदेव संशयद्वयमस्ति तदपि कृपया छिन्धीत्याशयेन संशयद्वयं दर्शयति—कर्माणीति द्वाभ्याम्। येन देहेनेह अस्मिँल्लोके पुमान् कर्माणि आरभते करोति तमत्रैव विहाय अमुत्र स्वर्गनरकादौ लोकान्तरे अन्येन कर्मोपस्थापितेन देहेन जुष्टानि कर्मफलानि सुखदुःखादीनि स जीवोऽश्नुते प्राप्नोतीति यद्वेदविदां वादस्तत्र तत्र शास्त्रे ह प्रसिद्धः श्रूयते स कथं सङ्गच्छतेति इति शेषेणान्वयः। स्थूलदेहव्यतिरेकेण लिङ्गदेहस्य च जीवस्य कर्तृत्वादर्शनात् अतिसूक्ष्मत्वेन तदसम्भवाच्च मुख्यं कर्तृत्वं स्थूलदेहस्यैव, तस्य चात्रैव विनष्टत्वादकर्तुर्जीवस्य कथं लोकान्तरे भोगः सम्भवतीति भावः। प्रोक्तं वेदोक्तं कर्म यज्ञादि यजनैः क्रियते तदनन्तरमेव परोक्षमदृश्यं सन्न प्रकाशते, अतो भोगाधिकरणस्य स्थूलदेहस्य तत्कारणस्य च यज्ञादेर्नष्टत्वात् परलोके तत्फलभोगोऽपि दुर्घट इति भावः ॥ ५८-५९ ॥ ❀ ❀ एवं संशयद्वये

प्रथमस्योत्तरमाह—त्रिभिः, तत्रैकेन लिङ्गदेहस्य करणत्वं तद्विशिष्टस्य जीवस्य कर्तृत्वं न स्थूलदेहस्यातो नोक्तशङ्कावकाश इत्याह—येनेति । हि यस्मात् येनैव मनःप्रधानेन लिङ्गेन लिङ्गदेहेन करणभूतेन विशिष्टः पुमान् जीवः इह कर्म आरभते करोति तेनैव लिङ्गदेहेन अव्यवधानेन विच्छेदशून्येन विशिष्टः स्वयं कर्त्ताऽमुत्र परलोके स्वर्गनरकादौ तत् कर्मफलं सुखदुःखादि भुङ्क्ते ततो न पूर्वोक्तशङ्कावकाश इति शेषेणान्वयः ॥ ६० ॥

### भाषानुवादः

'जिससे किसीको अणुमात्र भी भय नहीं होता, वही उसका प्रियतम आत्मा है' ऐसा जो पुरुष जानता है, वही ज्ञानी है और जो ज्ञानी है, वहीं गुरु एवं साक्षात् श्रीहरि है ॥ ५१ ॥ ❀ ❀ श्रीनारदजी कहते हैं—पुरुषश्रेष्ठ ! यहाँतक जो कुछ कहा गया है, उससे तुम्हारे प्रश्नका उत्तर हो गया । अब मैं एक भली भाँति निश्चित किया हुआ गुप्त साधन बताता हूँ, ध्यान देकर सुनो ॥ ५२ ॥ ❀ ❀ 'पुष्पवाटिकामें अपनी हरिनीके साथ विहार करता हुआ एक हरिन मस्त घूम रहा है, वह दूब आदि छोटे-छोटे अङ्कुरोंको चर रहा है । उसके कान भौंरोंके मधुर गुंजारमें लग रहे हैं । उसके सामने ही दूसरे जीवोंको मारकर अपना पेट पालनेवाले भेड़िये ताक लगाये खड़े हैं और पीछेसे शिकारी व्याधने बींधनेके लिये उसपर बाण छोड़ दिया है । परन्तु हरिन इतना बेसुध है कि उसे इसका कुछ भी पता नहीं है ।' एक बार इस हरिनकी दशापर विचार करो ॥ ५३ ॥ ❀ ❀ राजन् ! इस रूपकका आशय सुनो । यह मृतप्राय हरिन तुम्हीं हो, तुम अपनी दशापर विचार करो । पुष्पोंकी तरह ये स्त्रियाँ केवल देखनेमें सुन्दर हैं, इन स्त्रियोंके रहनेका घर ही पुष्पवाटिका है । इसमें रहकर तुम पुष्पोंके मधु और गन्धके समान क्षुद्र सकाम कर्मोंके फलरूप, जीभ और जननेन्द्रियको प्रिय लगनेवाले भोजन तथा स्त्रीसङ्ग आदि तुच्छ भोगोंको ढूँढ़ रहे हो । स्त्रियोंसे घिरे रहते हो और अपने मनको तुमने उन्हींमें फँसा रक्खा है । स्त्री पुत्रोंका मधुर भाषण ही भौंरोंका मधुर गुंजार है, तुम्हारे कान उसीमें अत्यन्त आसक्त हो रहे हैं । सामने ही भेड़ियोंके झुंडके समान कालके अंश दिन और रात तुम्हारी आयुको हर रहे हैं, परंतु तुम उनकी कुछ भी परवा न कर गृहस्थीके सुखोंमें मस्त हो रहे हो । तुम्हारे पीछे गुप-चुप लगा हुआ शिकारी काल अपने छिपे हुए बाणसे तुम्हारे हृदयको दूरसे ही बींध डालना चाहता है ॥ ५४ ॥ ❀ ❀ इस प्रकार अपनेको मृगकी सी स्थितिमें देखकर तुम अपने चित्तको हृदयके भीतर निरुद्ध करो और नदीकी भाँति प्रवाहित होनेवाली श्रवणेन्द्रियकी बाह्य वृत्तिको चित्तमें स्थापित करो ( अन्तर्मुखी करो ) जहाँ कामी पुरुषोंकी चर्चा होती रहती है, उस गृहस्थाश्रमको छोड़कर परम-हंसोंके आश्रय श्रीहरिको प्रसन्न करो और क्रमशः सभी विषयोंसे विरत हो जाओ ॥ ५५ ॥ ❀ ❀ राजा प्राचीनबर्हिने कहा—भगवन् ! आपने कृपा करके मुझे जो उपदेश दिया, उसे मैंने सुना और उसपर विशेषरूपसे विचार भी किया । मुझे कर्मका उपदेश देनेवाले इन आचार्योंको निश्चय ही इसका ज्ञान नहीं है; यदि ये इस विषयको जानते तो मुझे इसका उपदेश क्यों न करते ॥ ५६ ॥ ❀ ❀ विप्रवर ! मेरे उपाध्यायोंने आत्मतत्त्वके विषयमें मेरे हृदयमें जो महान् संशय खड़ा कर दिया था, उसे आपने पूरी तरहसे काट दिया । इस विषयमें इन्द्रियोंकी गति न होनेके कारण मन्त्रद्रष्टा ऋषियोंको भी मोह हो जाता है ॥ ५७ ॥ ❀ ❀ वेदवादियोंका कथन जगह-जगह सुना जाता है कि 'पुरुष इस लोकमें जिसके द्वारा कर्म करता है, उस स्थूलशरीरको यहीं छोड़कर परलोकमें कर्मोंसे ही बने हुए दूसरी देहसे उनका फल भोगता है । किन्तु यह बात कैसे हो सकती है ?' ( क्योंकि उन कर्मोंका कर्ता स्थूल शरीर तो यहीं नष्ट हो जाता है । ) इसके सिवा जो-जो कर्म यहाँ किये जाते हैं, वे तो दूसरे ही क्षणमें अदृश्य हो जाते हैं; वे परलोकमें फल देनेके लिये किस प्रकार पुनः प्रकट हो सकते हैं ? ॥ ५८-५९ ॥ ❀ ❀ श्री नारदजीने कहा—राजन् ! ( स्थूल शरीर तो लिङ्गशरीरके अधीन है, अतः कर्मोंका उत्तरदायित्व उसीपर है ) जिस मनःप्रधान लिङ्गशरीरकी सहायतासे मनुष्य कर्म करता है, वह तो मरनेके बाद भी उसके साथ रहता ही है; अतः वह परलोकमें अपरोक्षरूपसे स्वयं उसीके द्वारा उनका फल भोगता है ॥ ६० ॥

**शयानमिममुत्सृज्य श्वसन्तं पुरुषो यथा । कर्मात्मन्याहितं भुङ्क्ते तादृशेनेतरेण वा ॥ ६१ ॥**
**ममैते मनसा यद्यदसावहमिति ब्रुवन् । गृह्णीयात्तत्पुमान् राद्धं कर्म येन पुनर्भवः ॥ ६२ ॥**
**यथानुमीयते चित्तमुभयैरिन्द्रियेहितैः । एवं प्राग्देहजं कर्म लक्ष्यते चित्तवृत्तिभिः ॥ ६३ ॥**
**नानुभूतं क्व चानेन देहेनादृष्टमश्रुतम् । कदाचिदुपलभ्येत यद्रूपं यादृगात्मनि ॥ ६४ ॥**
**तेनास्य तादृशं राजँल्लिङ्गिनो देहसम्भवम् । श्रद्धत्स्वाननुभूतोऽर्थो न मनः स्प्रष्टुमर्हति ॥ ६५ ॥**
**मन एव मनुष्यस्य पूर्वरूपाणि शंसति । भविष्यतश्च भद्रं ते तथैव न भविष्यतः ॥ ६६ ॥**

अदृष्टमश्रुतं चात्र क्वचिन्मनसि दृश्यते। यथा तथानुमन्तव्यं देशकाल¹क्रियाश्रयम् ॥ ६७ ॥
सर्वे क्रमानुरोधेन मनसीन्द्रियगोचराः। आयान्ति व²र्गशो यान्ति सर्वे समनसो जनाः ॥ ६८ ॥
सत्त्वैकनिष्ठे मनसि भगवत्पार्श्ववर्तिनि। तमश्चन्द्रमसीवेद³मुपरज्यावभासते ॥ ६९ ॥
नाहं ममेति भावोयं पुरुषे व्यवधीयते। यावद् बुद्धिमनोऽक्षार्थगुणव्यूहो ह्यनादिमान् ॥ ७० ॥

अन्वयः—यथा पुरुषः शयानम् श्वसन्तम् इमम् उत्सृज्य आत्मनि आहितम् कर्म भुंक्ते तथा तादृशेन वा इतरेण ॥ ६१ ॥ ❀ ❀ मम एते सन्ति असौ अहम् इति मनसा ब्रुवन् पुमान् यत् यत् गृह्णीयात् तत् राद्धम् कर्म स्यात् येन पुनः भवः ॥ ६२ ॥ ❀ ❀ यथा उभयैः इंद्रियेहितैः चित्तम् अनुमीयते एवम् प्राग्देहजम् कर्म चित्तवृत्तिभिः लक्ष्यते ॥ ६३ ॥ ❀ ❀ यादृक् यद्रूपम् कदाचित् आत्मनि उपलभ्यते अनेन देहेन क्वच न अनुभूतम् अदृष्टम् अश्रुतम् ॥ ६४ ॥ ❀ ❀ राजन् तेन अस्य लिंगिनः तादृशम् देहसंभवम् श्रद्धत्स्व अननुभूतः अर्थः मनः स्प्रष्टुम् न अर्हति ॥ ६५ ॥ ❀ ❀ ते भद्रम् मनः एव मनुष्यस्य पूर्णरूपाणि तथा एव भविष्यतः न भविष्यतः च शंसति ॥ ६६ ॥ ❀ ❀ अत्र अदृष्टम् च अश्रुतम् क्वचित् मनसि यथा दृश्यते तत् तथा देशकालक्रियाश्रयम् अनुमंतव्यम् ॥ ६७ ॥ ❀ ❀ मनसि सर्वे इंद्रियगोचराः क्रमानुरोधेन वर्गशः आयांति यांति सर्वे जनाः समनसः ॥ ६८ ॥ ❀ ❀ इदम् सत्त्वैकनिष्ठे भगवत्पार्श्ववर्तिनि मनसि तमः चंद्रमसि इव उपरज्य अवभासते ॥ ६९ ॥ ❀ ❀ हि यावत् अनादिमान् बुद्धिमनोऽक्षार्थगुणव्यूहः अहम् मम इति अयम् भावः पुरुषे न व्यवधीयते ॥ ७० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

लिंगदेहविशिष्टस्य भोक्तृत्वं स्वप्नदृष्टांतेन स्पष्टयति। शयानमिमं जाग्रद्देहं श्वसंतं जीवंतमुत्सृज्य तदभिमानं त्यक्त्वात्मनि मनसि संस्काररूपेणाहितं कर्म यथा भुंक्ते तादृशेन शयानदेहसदृशेन कर्मोपस्थापितेन देहेनान्येन वा पश्वादिदेहेन तथा लोकांतरेऽपीति भावः ॥ ६१ ॥ ❀ ❀ ननु भवतु नाम लिंगविशिष्टस्यानेन दृष्टांतेन भोक्तृत्वं कर्तृत्वं तु दानप्रतिग्रहादिषु स्थूलदेहविशिष्टस्यैव दृश्यते तत्राह। ममैते पुत्रादयोऽसावहं ब्राह्मण इति ब्रुवन्मनसा यद्यद्देहं गृह्णीयात्ततो देहाद्राद्धं सिद्धं कर्म पुमान् गृह्णीयात् येन कर्मणा एवमहंकारगृहीतेन पुनर्भवो भवति। अन्यथा जन्मानुपपत्तेः। अतोऽभिमंतुर्मनोविशिष्टस्यैव कर्तृत्वमभिमानविषयस्य तु देहस्य पुत्रादिदेहवद् द्वारमात्रत्वमिति भावः ॥ ६२ ॥ ❀ ❀ यदुक्तं कर्मणो नष्टत्वाच्चामुत्र भोग इति तत्राह यथेति। उभयैर्ज्ञानकर्मरूपैरिंद्रियाणामीहितैः कदाचित्कर्मप्रवृत्तिभिश्चित्तमनुमीयते। सत्यपि सर्वेन्द्रियविषयसंबन्धे युगपज्ज्ञानानुत्पत्तेः। तदुक्तमक्षपादेन "युगपज्ज्ञानानुत्पत्तिर्मनसो लिंगम्" इति। एवं चित्तवृत्तिभिरपि पूर्वदेहजं कर्म लक्ष्यते तासामपि युगपदनुत्पत्तेः ॥ ६३ ॥ ❀ ❀ इतोपि कर्म लक्ष्यत इत्याह नानुभूतमिति द्वाभ्याम्। अनेन वर्तमानेन देहेन क्व च कुत्रचिदपि यन्नानुभूतमननुभूतमनुपभुक्तमदृष्टं चाश्रुतं च यद्रूपं यदात्मकं यादृक् यत्प्रकारं च तत्कदाचित्स्वप्नमनोरथादिष्वात्मनि मनस्युपलभ्येत ॥ ६४ ॥ ❀ ❀ तेन हेतुनास्य लिंगिनो वासनाश्रयस्य जीवस्य तादृशं तदनुभवादियुक्तं पूर्वदेहसंभवं श्रद्धत्स्व निश्चयेन मन्यस्व। न ह्यननुभूतोऽर्थो मनः स्प्रष्टुं मनसि स्फुरितुमर्हति ॥ ६५ ॥ ❀ ❀ किं च मनोवृत्त्यैव पूर्वापराणि शुभाशुभनिमित्तानि शरीराणि ज्ञायंत इत्याह मन एवेति। भद्रं त इति सम्यगवधानार्थमाशिषाभिनन्दति। भविष्यत उद्भवं प्राप्स्यतो न भविष्यतो नीचत्वं प्राप्स्यतोऽपि भावीनि रूपाणि शंसति। मन एवौदार्यकार्पण्यादिवृत्तिभिः पूर्वमप्येवमेवासीत्पश्चादप्येवमेव भविष्यतीति भूतभाविरूपाणि ज्ञापयतीत्यर्थः ॥ ६६ ॥ ❀ ❀ ननु कदाचिद्दर्शनानर्हमपि स्वप्ने प्रतीयते यथा पर्वताग्रे समुद्रो दिवा नक्षत्राणि स्वशिरश्छेद इत्यादि तत्राह अदृष्टमिति। अन्यदेशाश्रयं समुद्रादिकं पर्वताग्रे निशाश्रयं नक्षत्रादिकं दिवा अभ्यंगादिक्रियाश्रयं स्वशिरश्छेदनाश्रयम्। निद्रादिदोषेण हि तथा प्रतीयत इत्यनुमन्तव्यम्। परस्यापि तदनुपपत्तेस्तुल्यत्वादिति भावः ॥ ६७ ॥ ❀ ❀ ननु दरिद्रः कश्चिदात्मानं महाराजं पश्यति राजा च रंकमात्मानं पश्यति तत्कथमसंभावितं संगच्छेत तत्राह सर्व इति। आयांति भोग्यत्वेन प्राप्नुवंति यांति च भोगानंतरम्। यदि च कश्चिदमना भवेत्तर्ह्येवं न स्यान्न त्वेतदस्तीत्याह सर्वे समनस इति। अतः सर्वेषां समनस्कत्वान्मनसि च सर्वार्थानां क्रमेण प्रवेशान्नात्यंतादृष्टचरः कस्यापि कश्चिदर्थोऽस्तीत्यर्थः ॥ ६८ ॥ ❀ ❀ तदेवं सर्वैरपि सर्वेऽर्थाः क्रमेण दृश्यंत इत्युक्तमिदानीं युगपदपि सर्वदर्शनं कदाचिद्भवतीत्याह। सत्त्वैकनिष्ठे सत्त्वे एवैका निष्ठा यस्य भगत्पार्श्ववर्तिनि भगवद्ध्यानपरे मनसीदं विश्वमुपरज्य संयोगमिव प्राप्यावभासते। प्रतीत्यनर्हस्यापि कदाचित्प्रतीतौ दृष्टान्तः। चन्द्रमस्युपरज्य तमो राहुरिव तदिदं शुद्धे मनसि सर्वविषयस्फुरणं योगिप्रत्यक्षमिति प्रसिद्धम् ॥ ६९ ॥ ❀ ❀ तदेवं स्थूलदेहनाशेऽपि लिंगदेहस्यानाशादन्यः कर्ताऽन्यो भोक्तेति दोषो नास्तीत्युक्तम्। तत्रैवं शंकते। ननु लिंगदेहस्य स्थूलदेहद्वारेणैव कर्तृत्व-

---

१. प्रा० पा०—वलाश्रयम्। २. प्रा० पा०—बहुशो। ३. प्रा० पा०—वेह उप०।

भोक्तृत्वे न तु केवलस्य तत्र कदाचित्स्थूलदेहाभावे जीवस्य कर्तृत्वभोक्तृत्वाभावान्मुक्तिः प्रसज्येत तत्राह नेति। अहंममेति भावः स्थूलदेहसंबंधः पुरुषे जीवे न व्यवधीयते न विच्छिन्नो भवति। किंपर्यन्तम्। बुद्धयादीनां व्यूहः परिणामो लिंगं यावदस्ति अनादिमाननादिः सन्॥ ७०॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इति भाव इति। स्थूलदेहस्य शयने स्थितत्वात्स्वप्नभोगनिमित्तकर्मोपार्जितेन देहेन लिंगिन एव यथा भोक्तृत्वं तथात्रापीति तात्पर्यम्॥ ६१॥ ❀ ❀ अत्राक्षिपति-नन्विति। ममैते यागाः स्वर्गफला इति अयमहं कर्म करोमीति ब्रुवन्मनसा यद्यत्स्थूलं देहं गृह्णीयादभिमानविषयीकुर्यात्ततो देहाद्राद्धं सिद्धं कर्मैव सलिंगो जीवो गृह्णीयान्न तु तत्स्थूलदेहं प्रयोजनाभावादिति भावः। ततश्च तेन कर्मणैवाहंकारगृहीतेन पुनर्जन्म भवति। अन्यथा कर्मग्रहणाभावे जन्मैव न स्यात् 'कर्मणा जायते जंतुः' इत्याद्युक्तेः। अतो जन्मानुपपत्तेर्हेतोः। इति भाव इति। यथा पुत्रादिकृतं कर्म पुत्रादिषु निजाभिमानेन स्वकृतमित्युच्यते तथा स्थूलदेहेपि निजाभिमानत्वात्तत्कृतं कर्म स्वकृतं मन्यत इत्याशयः। तस्मात्साक्षात्कर्त्ता भोक्ता च पुरुष एव तत्र मनसोंतरंगत्वादिति भावः॥ ६२॥ ❀ ❀ अक्षपादेन गौतमेन। युगपदेककालावच्छेदेन। मनसो लिंगं ज्ञापकम्। तस्माद्यदा येनेंद्रियेण मनसो योगस्तदा तस्येंद्रियस्यैव विषयज्ञानमिति। एवमेव चित्तस्य सर्वाभिर्वृत्तिभिर्युगपदनुद्भूताभिः पूर्वदेहस्थं कर्म लक्ष्यते। येन येन कर्मणा यदा यदा या या चित्तवृत्तिर्युज्यते सा सैव भद्राऽभद्रा वाप्युद्भवतीत्यर्थः। तेन कर्मणः समनन्तरक्षण एवोपरतत्वेपि तत्संस्कारस्तद्रूपस्तिष्ठेदेवेति सिद्धांतो दर्शितः॥ ६३॥ ❀ ❀ इतोपि वक्ष्यमाणहेतुनापि। अत्र विश्वनाथः-ननु स्थूलदेहनाशेऽपि लिंगदेहो यन्न नश्यतीत्येतत्कथं प्रतीमस्तत्राह-नानुभूतमिति द्वाभ्याम्। बाल्ये दृष्टं श्रुतं यथा वार्द्धके स्फुरति तथैव पूर्वपूर्वस्थूलदेहगतमेतद्देहे मनसि स्फुरति चेत्तदेवेदं मनो नान्यदिति जानीयादिति भावः॥ ६४-६५॥ ❀ ❀ अन्यदाह-किं चेति। उद्भवमुत्कर्षम्। उत्कृष्टस्यैव भवनमभवनमधमस्य च यथेंदोस्तमसश्चैव गण्यते क्रमत उभ इति न्यायमाश्रित्योक्तमुद्भवमित्यादि। मनः कर्तृ उग्रत्वशांतत्वविमूढत्वज्ञानवैराग्यादीनामादिपदेन ग्रह इत्यर्थ इति। अन्यथा सर्वेषां साम्यतैव भवेदिति भावः। विश्वनाथस्तु-न भविष्यतः पुनर्न जनिष्यमाणस्यास्य मुक्तिर्भविष्यतीति मन एव शुद्धज्ञाननिष्ठं ज्ञापयति। अत एकमेव मनोमयं लिंगशरीरं न पुनः पुनर्जातमिति। मनसोनेकत्वे तु पूर्वानुभूतहिताहितादिज्ञापनमनुपपन्नं स्यादिति भावः। "रूपं शब्दे पशौ श्लोके ग्रंथावृत्तौ हितादिषु" इति यादवः॥ ६६॥ ❀ ❀ यदवादि पूर्वानुभूतमेव मनः स्प्रष्टुमर्हति नाननुभूतमिति तदयुक्तमित्याक्षिपति-नन्विति। दर्शनार्हमत्यंतादृष्टचरमपि दृश्यते तत्राह-अदृष्टमिति। इह जन्मन्यदृष्टमश्रुतमपि कचिन्मनसि दृश्यते चेत्तर्हि तद्यथा घटते तथानुमंतव्यं घटनीयं कथमत्राह-देशेत्यादि। अन्यदेशाश्रयं किञ्चिद्देशाश्रयं मैनाकादिदेशाश्रयमित्यर्थः, मैनाकस्य समुद्रांतःस्थत्वात्तदुपरिदेशे समुद्रोऽस्त्येवेत्युक्तं वाल्मीकीये। दिवेति राहुणा रवेः सर्वग्रासे तदपि नासंभवि। तैलमर्दनोत्तरं शयने स्वशिरश्छेदरूपदुःस्वप्नोपि नासंभव इत्युक्तं चिकित्साशास्त्रे। यद्वा-धातुवैषम्यदोषेण शिरश्छेदोपि दृश्यते स्वप्न इत्यपि तत्रैव। निद्रादिनेहादिपदार्थो धातुवैषम्यमेव। इत्थं कुतो मंतव्यमिति चेत्तत्राह-परस्य पूर्वपक्षिणोपि। इति भाव इति। एतदनंगीकारे कस्यचिदपि मते पर्वताग्रादौ समुद्रादिस्थित्यादि न सेत्स्यतीत्याशयः॥ ६७॥ ❀ ❀ पुनराक्षिपति-नन्विति। रंकं दरिद्रम्। तत् उभयोरुभयत्वम्। इत्यर्थ इति। सर्वेषामर्थानां दृष्टानां श्रुतानां च वासनारूपेण स्थितत्वात्समनस्कस्य तन्नाद्भुतमिति भावः। एकेनैव लिंगदेहेन परस्सहस्रान्स्थूलदेहान्प्रविश्य कालभेदेनैक एव यः कोपि जीवः सर्वानेव विषयभोगान्भुंक्ते इत्याह-सर्वे इति। समनसः सलिंगदेहा इति चक्रवर्त्ती॥ ६८॥ ❀ ❀ सत्त्वे शुद्धसत्त्वे। चिद्विभूतावेव निष्ठा स्थितिर्यस्य तथाभूते मनसि यथा भगवान्विश्वं पश्यति तथा तदिच्छावशात्तद्भक्तोपि पश्यति यथा व्रजेश्वरी मृद्भक्षणलीलायामिति॥ ६९॥ ❀ ❀ नन्वयं कदारभ्य प्रवृत्तस्तत्राह अनादिमान् अविज्ञातादिकालः॥ ७०॥

## श्रीमद्वीरराघवव्याख्या

लिङ्गात्मनोरनुवृत्त्या भोगोपपत्तिं दृष्टान्तेन स्पष्टयति शयानमिति। शयानमिमं जाग्रद्देहं श्वसन्तं जीवन्तमुत्सृज्य तदभिमानं त्यक्त्वा आत्मनि मनस्याहितं दैवोपसादितं कर्म स्वप्नद्रष्ट्रेकानुभाव्यं तत्कालमात्रावस्थायि सुखदुःखादिरूपकर्मफलं यथा पुमान् तादृशेन शयानदेहसदृशेन मनुष्यदेहेनान्येन देवादिशरीरेण वा स्वप्ने भुङ्क्ते लिङ्गात्मनोरनुवृत्तेस्तथा लोकान्तरेऽपीति भावः॥ ६१॥ ❀ ❀ यदुक्तं कर्म क्रियमाणमनन्तरक्षण एव विनष्टं सत्कालान्तरानुभाव्यफलहेतुः कथमिति तत्राह। ममेति। पुमानसावहं ब्राह्मणोऽहं क्षत्रियोऽहमिति ब्रुवन् देहात्माभिमानयुक्त इत्यर्थः। ममैतन्मत्फलसाधनत्वान्मदर्थमिदं कर्मेति मनसा यद्यत्कर्म गृह्णीयात्कुर्यादित्यर्थः। तत्तत्कर्मेति राद्धं सिद्धं कर्मणो विनाशेऽपि कर्मणः शक्तिरीश्वरस्य निग्रहानुग्रहरूपा सिद्धैवेत्यर्थः। कर्म विशिनष्टि येन कर्मणा पुनर्भवः पुनर्जन्म भवेत्॥ ६२॥ ❀ ❀ मनसः कर्मणः पूर्वजन्मनश्च सद्भावे प्रमाणमाह यथेति। उभयैर्ज्ञानकर्मरूपैरिन्द्रियेहितैः कादाचित्कवृत्तिभिर्मनोऽनुमीयते सत्यपि सर्वेन्द्रियविषयसम्बन्धे युगपज्ज्ञानानुपपत्तेः। तदुक्तमक्षपादेन "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" इति। एवं चित्तवृत्तिभिरपि पूर्वदेहजं कर्म लक्ष्यते तासामपि युगपदनुपपत्तेरिन्द्रियैर्हितैरित्यपि पाठः

तत्र हितैर्गतैर्निवृत्तव्यापारैरिन्द्रियैरुभयैर्ज्ञानकर्मरूपेण द्विविधैर्मनोऽनुमीयते तेषां क्रमव्यापारदर्शनादित्यर्थः, एवं चित्तवृत्तिभिः पूर्वदेहकृतं कर्मानुमीयते ॥ ६३ ॥ ❀ ❀ तदेव विवृणोति नानुभूतमित्यादिना । यादृगात्मनः मृदात्मको घट इतिवदयं निर्देशः यादृगस्य वस्तुनो यद्रूपमनेन देहेनोपलक्षितेन पुंसा कुत्रचिदपि न दृष्टं न श्रुतमिन्द्रियान्तरेण प्रमाणान्तरेण वाननुभूतं तन्न कदाचित् स्वप्नमनोरथादिषूपलभ्यते न बुद्धिस्थं भवेदिह जन्मन्यनुभूतमपि किञ्चित्कदाचिद्बुद्धिस्थं भवति इच्छाविषयतया मनसि वर्तते इत्यर्थः ॥ ६४ ॥ ❀ ❀ ततः किमित्यत्राह तेनेति । अस्य लिङ्गिनः मनोयुक्तस्य पुंसः तेनानुभूतार्थस्यैव मनोरथविषयत्वेन हेतुना हे राजन् ! तादृशं मनोरथाविषयतदर्थानुभवयोग्यं देहसम्भवं श्रद्धत्स्व निश्चयेन मन्यस्व । अननुभूतार्थो न मनः स्प्रष्टुमर्हति न ह्यननुभूतार्थो मनः मनसि स्प्रष्टुं स्फुरितुमर्हति न पूर्वकालाननुभूतार्थः कालान्तरे मनोरथविषयः स्यादित्यर्थः । अनुभूतार्थ एव मनोरथः इह जन्मन्यनुभूतार्थविषयमनोरथो वासनया सा च पूर्वानुभवादनुभवश्च देहयोगेनेति पूर्वजन्मसिद्धिः । जन्मतारतम्यनिर्हेतुकत्वायोगात्कर्मतारतम्यसिद्धिश्चेत्यर्थः ॥ ६५ ॥ ❀ ❀ मन एवेति । इदानीं सदसद्रुचिविशेषान्वितं "मन एव मनुष्यस्य पूर्वरूपाणि शंसति" प्रकृष्टाप्रकृष्टवासनानिमित्तसत्त्वादिगुणप्रचुरपूर्वदेहयोगाननुमापयति । भविष्यतो देहयोगान्न भविष्यतः वर्तमानसत्त्वादिगुणप्रचुरदेहयोगांश्च शंसति सति सत्त्वैकनिष्ठे इति वक्ष्यमाणत्वात् । यद्वा न भविष्यतः अभविष्यतः वर्तमानमनुष्यरूपाणीत्यर्थः, भद्रं ते इति सम्यगवधारणार्थमाशिषाभिनन्दति ॥ ६६ ॥ ❀ ❀ अननुभूतार्थानां मनोरथविषयत्वं नानुभूतं क्व चानेनेति व्यतिरेकमुखेनाभिधायान्वयमुखेनाप्याह अदृष्टमिति । इह जन्मनि क्वचिदप्यदृष्टमश्रुतं च मनसि दृश्यते मनोरथगोचरो भवतीत्यर्थः, केनाकारेण मनोरथगोचरत्वं पूर्वानुभवश्च तत्राह यथेति । देशकालक्रियाश्रयं देशाश्रयं कालाश्रयं क्रियाश्रयं च रूपं यथा यथा येन येन प्रकारेण बुद्धिस्थं भवति तत्तथानुमन्तव्यं न त्वेवंभूतमपि कार्त्स्न्येन वक्तुं शक्यं बुद्धिस्थानां रूपाणामानन्त्यादित्यर्थः । मम निवासदेश ईदृशः स्यादेवंविधः कालो भवेदहमेवं करवाणीति मनुष्याणामसम्भावितमर्थविशेषं प्रति मनोरथसहस्रं यथारुचि मनसि वर्तते इति यावत् ॥ ६७ ॥ ❀ ❀ ततः किं पूर्वजन्मनः कर्मणश्च सिद्धावित्यत्राह सर्वं इति । इह जन्मनि मनोरथविषयभूताः पदार्थाः पूर्वजन्मनि क्रमेणेन्द्रियगोचरा भूत्वा क्रमेणेति मनःसद्भावोऽपि दर्शितः । मनसोऽभावे सर्वेन्द्रियसम्बन्धायुगपत्सर्वेन्द्रियवृत्तिप्रसङ्गः तत्सद्भावे तु येनेन्द्रियेण मनसः संयोगः तस्यैवेन्द्रियस्य व्यापार इत्युपपत्तिरत्र क्रमेणेन्द्रियगोचरा भूत्वा मनसि वर्तन्ते पूर्वानुभवजनितवासनाविशेषेण हि प्रतिपुरुषं रुचिविशेषः । न हि विना कारणेन कार्यं भवति एवं मनसि वर्तमानमनोरथसहस्रानुगुणं वासनानुमीयते, सा च पूर्वानुभवमनुमापयति, इह जन्मनि तादृगनुभवाभावाद्देहान्तरेण तदनुभव इति पूर्वजन्मसिद्धिः । जन्मतारतम्यस्य निर्हेतुकत्वायोगाद्विविधादृष्टसिद्धिरिति मनसः कर्मणः पूर्वजन्मनश्चोपादानं कृतं भवति । आयान्ति वासनोन्मेषादायान्ति बुद्धिस्था भवन्ति यान्ति वासनाभिभवान्न बुद्धिस्था भवन्ति । यदि कश्चिदमना भवेत्तर्ह्येवं न स्यान्न त्वेतदस्तीत्याह सर्वे इति । अतः सर्वेषां समनस्कत्वान्मनसि च सर्वार्थानां क्रमाद्वासनानुसारेण प्रवेशान्नात्यन्ताननुभूतोऽर्थः कस्यापि कश्चिदस्तीत्यर्थः । नन्विह जन्मनि जन्मान्तरे वानुभूतार्थ एव मनोरथविषय इत्युक्तं यद्येवं तर्हि मुक्तानन्दोऽपि मुमुक्षोः कदाचिन्मनोरथविषयो भवेदिति सोऽपि पूर्वमनुभूत एव स्यादस्त्विति चेन्न, पुनर्जन्मानुपपत्तेः "न स पुनरावर्तते" इति श्रुतेः "अनावृत्तिः शब्दात्" इत्यादिसूत्रस्य च विरोधप्रसङ्गात् । मैवं प्रकृतिपरिणामात्मकदेहानुभाव्यानामेवाननुभूतानां मनोरथविषयत्वासंभवाभिप्रायत्वात्तदुक्तेः, अस्तु वा मुक्तानन्दोऽपि मनोरथविषयस्तथापि मनोरथविषयो भवन्मुक्तानन्दः "सोऽश्नुते सर्वान् कामान्सह ब्रह्मणा" इत्यादिवाक्यावगतनिरतिशयानन्दरूपत्वेन परोक्षमेव मनोरथविषयो भवेदनुभवोऽपि पूर्वं शब्दजन्यप्रमितिविषयत्वेन परोक्षमेव स्यादत एव हि 'यद्रूपं यादृगात्मनः यथा यथानुमन्तव्यं देशकालक्रियाश्रयमि'त्युक्तं यादृग्रूपेण पूर्वमनुभूतं तादृग्रूपेणैव मनोरथविषयो भवतीति हि तदर्थः । ततश्चेदानीं मनोरथविषयस्यापि मुक्तानन्दस्य सोऽश्नुते इत्यादिमुक्तानन्दप्रकरणावगतप्रकारवैशिष्ट्येन परोक्षमेव मनोरथविषयत्वात्तस्य पूर्वानुभवोऽपि तादृश एव कल्प्यत इत्यपरोक्षमनुभूयमान एव मुक्तानन्दः पुनर्भवाभावहेतुरिति न श्रुतिसूत्रादिविरोधः । न च देशकालादयोऽप्यपरोक्षं न मनोरथविषया इति तेषामपि परोक्ष एव पूर्वानुभव इति न कस्यापि साक्षात् पूर्वानुभवोऽनुमीयत इति वाच्यम्, अपरोक्षं प्राकृतदेहानुभवयोग्यानामपि परोक्षानुभवकल्पनायां मानाभावात् कल्पकस्य परोक्षविषयमनोरथस्य परोक्षमपरोक्षं वानुभूतवस्तुविषयकत्वदर्शनादिति ॥ ६८ ॥ ❀ ❀ इदमेवाभिप्रेत्याह सत्त्वैकनिष्ठ इति । सत्त्वैकप्रचुरे मनसि भगवत्पार्श्ववर्त्तिनि भगवद्भजनोपक्रमं कुर्वाणे सति तम अज्ञानं चन्द्रमस्युदिते सति तमस्तिमिरमिव उपरज्यावभासते उपरागवद्भूत्वावभासते ज्ञानशबलमवभासते, चन्द्रोदये हि आदित्योदय इव न निरशेषतमःक्षयः, अपितु ज्योत्स्नामिश्रं तमः, एवं भगवद्भजनोपक्रमदशायां ज्ञानमज्ञानशबलं वर्तते शास्त्रजन्यज्ञानस्य परोक्षरूपत्वाद् ब्रह्मस्वरूपवदानन्दादयः परोक्षमेव विषया भवन्तीत्यर्थः । देहात्मभ्रमस्य देहसम्बन्धाधीनसुखदुःखादेश्चापरोक्षत्वात्ते साक्षादनुभवविषया एवेति भावः ॥ ६९ ॥ ❀ ❀ किं वक्तव्यं संसारदशायां ब्रह्मस्वरूपतदानन्दादिकमपरोक्षं नावभासत इति यतः स्वात्मस्वरूपमेवापरोक्षं नावभासत इति सहेतुकमाह अहमिति । अनादिमान् जीवः अक्षमिन्द्रियमर्थाः शब्दादयः गुणाः सत्त्वादिः एतैर्यावद्वृढः आवृतः व्यूह इति पाठे यावद्बुद्ध्यादयो व्यूहः संगो यस्येत्यर्थः । तावदहंममेति भावो व्यवधीयते व्यवधिवदाचर्यते स्वरूपतिरोधायकोऽहंममाभिमानो न निवर्तते किन्त्वनुवर्तत इत्यर्थः ॥ ७० ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

कथमिव स्वप्नकाले श्वसन्तं प्राणवृत्तिमन्तं पर्यङ्के शयने शयानशरीरसदृशेन इतरेण पतितदेहविलक्षणदेहेन वाऽत्मनि मनस्याहितं सन्निहितं कर्म भुङ्क्ते, एतदुक्तं भवति स्थूलदेहस्य शय्यायां शयनत्वात्स्वप्नभोगनिमित्तकर्मोपार्जितेन देहेन लिङ्गिन एव यथा भोक्तृत्वमत्राप्येवमिति आत्मन्याहितमित्यनेन द्वितीयप्रश्नोऽपि प्रत्युक्त इति ज्ञायते ॥ ६१ ॥ ❀ ❀ ननु साक्षात्कर्तृत्वं भोक्तृत्वं मनसो लिङ्गस्योतोभयोस्तद्वतो वेति संशयनिरासार्थमाह ममेति । यः पुमान् ममेदं सुखसाधनमिति मनसा सङ्कल्प्य कृष्णमित्रस्याहिताग्नेः पुत्रोऽसावहं नारायणमित्रो याज्ञिकः कथं स्यामिति वाचा वदन् यद्यत्कर्म कर्तुं गृह्णीयादुपादत्ते स एव पुमांस्तद्राद्धं सिद्धं कर्म भुङ्क्ते येन भुक्तशेषेण कर्मणा पुनर्भवः पुनरुत्पत्तिर्मर्त्यलोक इति शेषः, तस्मात्साक्षात्कर्ता भोक्ता च पुरुष एव तत्र मनसोऽन्तरङ्गत्वमिति भावः । अनेन जन्मान्तरेऽपि कर्मणः फलदातृत्वप्रतीतेः किं पुनः परलोक इति दर्शितम् ॥ ६२ ॥ ❀ ❀ ननु कर्मणो देहाद्यारम्भकत्वं कथं सञ्जाघटीति आचरणानन्तरक्षण एव नष्टत्वादत एव मनसोऽप्यन्तरङ्गत्वमिति न शक्यं कृष्णचापमुक्तशरवेगसंस्कारवत्कर्मणोऽपि कार्यकारणक्षमत्वोपपत्तिरन्तरङ्गत्वं मनसोऽन्वयव्यतिरेकसिद्धमित्यमित्याह यथेति । उभयेषां ज्ञानकर्मेन्द्रियाणामुभयविधैरीहितैश्चित्तमन्तःकरणापरपर्यायमस्तीत्यनुमीयते तस्मिन् सति ज्ञानं कर्म चोत्पद्यते असति आलोकादिसाधनसामग्र्यां सत्यामपि तस्मात्तन्नियामकमन्तःकरणं किंचिदस्तीति ज्ञायते यथा तथान्तःकरणवृत्तिविषयेषु मनोव्यापारैः प्राग्देहजातं कर्मेदृशं शुक्लरक्तकृष्णान्यतममिति लक्ष्यतेऽनुमीयते देहवत एवेदृशज्ञानसम्भवात्कर्मणो देहाद्यारम्भकत्वं च युक्तमिति बोद्धव्यम् ॥ ६३ ॥ ❀ ❀ किञ्च प्राणिनां प्रवृत्तिवैचित्र्यं दृश्यते तदपि वासनावैचित्र्यं विना न च घटत इति भावेनाह नानुभूतमिति । यद्रूपं यस्य शुक्लादिरूपं तद्यद्रूपं यादृग्यज्जातिलक्षणं यस्य तद्यादृक् तद्वस्तु स्वात्मनि क्वचित् कस्मिंश्चिद्देशे कदाचित्कालेऽनेनेदृग्देहेनादृष्टमश्रुतं वानुभूतमननुभूतं वात्मनि मनस्युपलभ्यते तेनोपलम्भेन पूर्वस्मिन् जन्मनि दृष्टं श्रुतमनुभूतमित्युपलभ्येत बुध्येत न त्वन्यथा । अनेन देहेन जाग्रदवस्थायामदृष्टमश्रुतमननुभूतं नोपलभ्यते स्वप्ने किन्तु स्वप्ने दृष्टादिकमेव यथा तथा पूर्वस्मिन् जन्मनि दृष्टादिकमनेन देहेन पश्यतीति वा ॥ ६४ ॥ ❀ ❀ ननु कर्मणो देहाद्यारम्भकत्वं कथमित्यस्य चोद्यस्य परिहारः कथं स्फुटित इति तत्राह तेनेति । यतः पूर्वकर्मानुसारेण दर्शनादिकं तेन तदनुसारेणास्य लिङ्गिनो देहसम्भवः तादृशः पूर्वानुसृत इति श्रद्धत्स्वापि कुरु । कुत इत्यत उक्तमेवार्थं स्मारयति अननुभूतार्थमिति । यतः पूर्वस्मिन् जन्मन्यननुभूतो योऽर्थस्तं मनः स्प्रष्टुं नार्हति इत्यन्वयः ॥ ६५ ॥ ❀ ❀ ननु देहवन्मनसोऽप्यनेकत्वे कथमेतदुक्तं घटत इत्याशङ्क्यामोक्षं लिङ्गशरीरवद्वाह्यान्तःकरणमेकमेवेत्यभिप्रेत्याह मन इति । मनसोऽनेकत्वे पूर्वानुभूतहिताद्विज्ञापनमनुपपन्नं स्यादित्यर्थः "रूपं शब्दे पशौ श्लोके ग्रन्थावृत्तौ हितादिषु" इति यादवः । स्वानुभवसिद्धः सर्वानुभूतार्थोऽपि कर्मणो देहाद्यारम्भकत्वं युक्तं मनसा संयुक्तत्वादित्यतो वाह मन इति । [१]यथा ते तव मनो भविष्यतस्तथा न भविष्यतः स्ववस्तुनो विषयं भद्रं शंसति ज्ञापयति तथा मनुष्यस्य मनः पूर्वरूपाणि सात्त्विकानि कर्माणि शंसति यथा न भविष्यतो वर्तमानस्य तव मनः पूर्वरूपाणि शंसत्येवं भविष्यतोऽपि तावद्भद्रं ज्ञापयतीति वा ॥ ६६ ॥ ❀ ❀ ननु यदवादि पूर्वानुभूतमेव मनः स्प्रष्टुमर्हति नाननुभूतमिति, तदयुक्तं यतः स्वप्नादौ स्वशिरश्छेदनादिकमत्यन्तादृष्टचरं दृश्यते तत्राह अदृष्टमिति । इह जन्मन्यदृष्टमश्रुतं वा क्वचिन्मनसि दृश्यते तद्यथा घटते तथानुमन्तव्यं घटनीयं कथमत्राह देशेति । देशकालक्रिया आश्रयो यस्य दर्शनस्य तत्तथा देशान्तरे शिरः कालान्तरे छेदनक्रियां दृष्ट्वा स्वप्ने तयोः सामानाधिकरण्यं भ्रान्त्या पश्यतीति अथवा नानुभूतमित्यनेन यदवादि तदनेनानुमीयते अत्र जन्मनि यददृष्टादिकं दृश्यते मनसि तद्यथा पूर्वजन्मनि दृष्टं श्रुतमनुभूतं तथानुमानं कर्तव्यं जाग्रति बाह्लालीप्रदेशे पूर्वाह्णे चरन्तमश्वं दृष्ट्वा स्वप्ने यथा तदवस्थं पश्यति तथा कर्माण्यपि तथार्यावर्ते द्वापरे सम्भूतोऽर्जुनः पञ्चतामुपेत्य केरलदेशे कलिकाले जातो यदत्रादृष्टादिकं पश्यति करोति वा[२] तदार्यावर्ते द्वापरेऽनुष्ठितमिति ज्ञातव्यं दृष्टश्रुतदर्शनादिमात्र एव दृष्टान्त इति न विरोधः ॥ ६७ ॥ ❀ ❀ ननु यदि पूर्वदृष्टादिकमेवेदानीं दृश्यते श्रूयते इति मतं तर्हि जन्मनामनन्तत्वादहमहमिकया युगपद्दर्शनादिकं प्रसज्येत तदयुक्तं विरोधादत्राह सर्व इति । ये सर्वे शब्दादयो विषया बहुजन्मस्विन्द्रियद्वारेण मनसि प्रविष्टा वासनारूपेण स्थितास्ते सर्वेन्द्रियगोचरा विषयाः सुमनसो देवस्य हरेरिच्छया क्रमानुरोधेन क्रममनुसृत्य मनसि जीवे वर्गश आयान्ति जवाद्वेगात् यान्ति च नदीप्रवाहवदित्यन्वयः । इन्द्रियद्वारेण मनसि प्रविष्टा इन्द्रियगोचराः शब्दादयः क्रमशो जीवे वर्गशः आयान्ति पुनः सुष्ठु मनसो वेगाद्यान्ति च सर्वपदार्थानामिह जन्मनि जन्मान्तरे वा मनसीन्द्रियद्वारेण प्रवेशात्संस्काररूपेण स्थिरत्वादिहादृष्टस्य वाश्रुतस्य वानुभवो युज्यते इत्यतो वाह सर्व इति । दवीयसि देशे काले चानुभूतानामधुनानुभवः कथं घटत इत्यतो वाह सर्व इति । अचिन्त्यानन्तेश्वरशक्तिः प्रयोजिकेति संतोष्टव्यम् ॥ ६८ ॥ ❀ ❀ जीवस्य मनआदेः स्वरूपत्वेऽनेकजन्मानुभूतपदार्थसंस्काराणामनेकत्वेन तदनुभवेनैव कालगमनात्कदा-

---

१. यथा मन एव पूर्वरूपाणि शरीराणि शंसति ज्ञापयति तथैव भविष्यतः स्वर्गादिकं गच्छतः न भविष्यतः वर्तमानस्य च ते भद्रं पूर्वोत्तरकालगतं पुण्यरूपमदृष्टं मन एव शंसति अस्तीति ज्ञापयति कथमन्यथा तवेदानीं साम्राज्याधिपत्यमुत्तरत्र स्वर्गप्राप्तिः स्यादित्याशयः ।
२. स्वस्वप्न इति शेषः ।

चिन्मुक्त्यनुदयेन यावज्जीवं संसार एव स्यात् अस्वरूपत्वे लिङ्गशरीरादेः स्थूलदेहनाश एव नाशसम्भवेन पूर्वदृष्टादिपदार्थदर्शनाद्यनुपपत्तिरिति तत्राह सत्त्वैकनिष्ठ इति। सत्त्वो जीवस्तदेकनिष्ठे तद्रूपे भगवत्पार्श्ववर्तिनि भगवद्विषये मनसि इदं लिङ्गशरीरादिकमुपरज्य स्वेच्छया सङ्गमय्यावभासते भिन्नतयेति शेषः। कथमिव चन्द्रमसि तमो राहुरिव मेघान्धकारो वा लिङ्गशरीरादेरस्वरूपत्वेऽपि भगवदपरोक्षज्ञानं विना स्थूलदेहनाश एव नाशाभावाच्चिरायुष्ट्वेन स्थितिसम्भवात्पूर्वकर्मनिमित्तसुखदुःखानुभवो घटत इति भावः। यद्वा सत्त्वगुणस्यैकत्वनिष्ठोत्कर्षो यस्मिंस्तत्सत्त्वैकनिष्ठं तस्मिन्भगवत्पार्श्ववर्तिनीत्यनेन सत्त्वगुणोत्कर्षं लक्ष्यति, अन्यथा तत्र स्यादेवंविधमनसि इदं दुःखादिकमुपरज्यावभासते प्रतीयते, निदर्शनं व्याख्यातार्थम्॥ ६९॥ ❀ ❀ नन्वेवं तर्हि कियन्तं कालमिदं दुःखादिकमवभासते इति तत्राह नाहमिति। यावत्पुरुषेऽनादिमानयमहंममेति भावो न व्यवधीयते तिरोहितो नष्टो न भवति तावद् बुद्धिमनोऽक्षार्थगुणव्यूहः संसारोऽपि न तिरोहितो भवतीत्यर्थः। "अनादिमानिति व्यूहविशेषणं वा, अनेन संसारस्य मिथ्यात्वं निराचष्ट "अक्षमिन्द्रियं स्रोतः" इत्यभिधानम्॥ ७०॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

नानुभूतमिति युग्मकम्॥ ६४–७३॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

लिङ्गदेहेनैव यद्यपि कर्तृत्वभोक्तृत्वे भवतस्तदपि ते स्थूलदेहं विना न सिद्ध्यत इति चेत् सत्यं स तु स्थूलदेहो यः कश्चन कर्म्मणैवोपस्थाप्यते इति सदृष्टान्तमाह। शयानमिमं जाग्रद्देहं श्वसन्तं जीवन्तमुत्सृज्य तदभिमानं त्यक्त्वा आत्मनि मनसि संस्काररूपेणाहितं कर्म्म यथा भुङ्क्ते तादृशेन शयानदेहसदृशेन कर्म्मोपस्थापितेन स्थूलदेहेन अन्येन वा पश्चादिदेहेन तथा लोकान्तरेऽपीति भावः॥ ६१॥ ❀ ❀ स्थूलदेहे केवलमभिमानमात्रं तेन च यत् सहायकं जीवस्य तद्दर्शयति। ममैते यागाः स्वर्गफला इति इदमहं कर्म करोमीति ब्रुवन् मनसा यद्यद्देहं स्थूलं गृह्णीयादभिमानविषयीकुर्य्यात् ततो देहाद्राद्धं सिद्धं कर्म्मैव सलिङ्गो जीवो गृह्णीयात् न तु तं स्थूलं देहं प्रयोजनाभावादेवेति भावः, ततश्च तेन कर्म्मणैवसहङ्कारगृहीतेन पुनर्भवो भवति अन्यथा जन्मानुपपत्तेः॥ ६२॥ ❀ ❀ यत् पृष्टं कर्म्मणस्तत्काल एव नष्टत्वान्नामुत्र भोग इति तत्राह यथेति। उभयैर्ज्ञानकर्म्मरूपैरिन्द्रियाणामीहितैर्युगपदनुदितैश्चित्तमनुमीयते, सत्यपि सर्व्वेन्द्रियविषयसम्बन्धे युगपज्ज्ञानानुत्पत्तेः। तदुक्तमपक्षपादेन "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" इति। तस्माद्यदा येनेन्द्रियेण मनसो योगस्तदा तस्येन्द्रियस्यैव विषयज्ञानमिति एवमेव चित्तस्य सर्व्वाभिर्वृत्तिभिर्युगपदनुद्भूताभिः पूर्व्वदेहजं कर्म्म लक्ष्यते। येन येन कर्म्मणा यदा यदा या या चित्तवृत्तिर्युज्यते सा सैव भद्रा अभद्रा वाप्युद्भवतीत्यर्थः। तेन कर्म्मणः समनन्तरक्षण एवोपरतत्वेऽपि तत्संस्कारस्तद्रूपस्तिष्ठेदेवेति सिद्धान्तो दर्शितः॥ ६३॥ ❀ ❀ ननु स्थूलदेहनाशेऽपि लिङ्गदेहो यन्न नश्यतीत्येतत् कथं प्रतीमस्तत्राह नानुभूतमिति द्वाभ्याम्। अनेन वर्त्तमानेन देहेन कचिच्च कदापि अननुभूतमनुपभुक्तमदृष्टञ्चाश्रुतञ्च पूर्व्वदेहगतं वस्तु स्वप्नमनोरथादौ उपलभ्येत तच्च यद्रूपं यादृक् यत्प्रकारकञ्च आत्मनि मनसि उपलभ्येत तद्रूपं तादृगेव पूर्व्वदेहसम्भवं लिङ्गिनोऽस्य जीवस्य श्रद्धत्स्व निश्चयेन मन्यस्व। हे राजन्! न ह्यननुभूतोऽर्थो मनः स्प्रष्टुं मनसि स्फुरितुमर्हति तस्माद्बाल्ये दृष्टश्रुतं वस्तु यथा वार्द्धके स्फुरति तथैव पूर्वपूर्व्वस्थूलदेहगतमेतद्देहस्थे मनसि स्फुरति चेत्तदेवेदं मनो नान्यदिति जानीयादिति भावः॥ ६४–६५॥ ❀ ❀ किञ्च मनोवृत्त्यैव पूर्वापराण्यशुभानि शुभानि च शरीराणि ज्ञायन्त इत्याह। मन एव कर्तृ उग्रत्वशान्तत्वादिभिः कार्पण्यौदार्यादिभिश्च मनुष्यस्य पूर्वरूपाणि पूर्वपूर्व्वशरीराणि पूर्व्वमप्ययमेवासीदिति शंसति कथयति भविष्यतश्च तस्य भावीनि शरीराणि एवमेवायं भविष्यतीति तथा ज्ञानवैराग्यादिदृष्ट्या पूर्व्वमप्यस्य शमदमाद्यासीत् न भविष्यत इति पुनर्न जनिष्यमाणस्यास्य मुक्तिर्भविष्यतीति मन एव ज्ञापयत्यत एकमेव मनोमयं लिङ्गशरीरं न पुनः पुनर्जातमित्यर्थः। भद्रं त इत्येतत् त्वं बुद्ध्यस्वेति कृपया आशीर्वादः॥ ६६॥ ❀ ❀ ननु कथं कदाचिद्दर्शनानर्हमपि स्वप्ने प्रतीयते यथा पर्वताग्रे समुद्रः दिवा नक्षत्राणि स्वशिरश्छेद इत्यादीन्यत आह। अदृष्टं दर्शनानर्हमश्रुतं श्रवणानर्हं यथा येन प्रकारेण दृश्यते तथा तेनैव प्रकारेण देशकालक्रियाश्रयं तत्तदनुमन्तव्यं तत्र अन्यदेशाश्रयः समुद्रः पर्व्वताग्रे निशाश्रयं नक्षत्रादिकं दिवा अभ्यङ्गादिक्रियाश्रयं शिरः खलु छेदनक्रियायां धातुवैषम्यप्रयुक्तया स्वप्नगतया भ्रान्त्या प्रतीतम्॥ ६७॥ ❀ ❀ एकेनैव लिङ्गदेहेन परस्सहस्रान् स्थूलदेहान् प्रविश्य कालभेदेन एक एव यः कोऽपि जीवः सर्व्वानेव विषयभोगान् भुङ्क्ते इत्याह सर्वे इति। समनसः सलिङ्गदेहाः॥ ६८॥ ❀ ❀ तदेवं सर्वैरपि सर्वेऽर्थाः क्रमेण दृश्यन्त इत्युक्तम्। इदानीं युगपदपि सर्व्वदर्शनं कदाचिद्भवतीत्याह। सत्त्वे शुद्धसत्त्वे चिद्विभूतावेव एका निष्ठा नितरां स्थितिर्यस्य तथाभूते मनसि भगवत्पार्श्ववर्त्तिनि सति इदं विश्वमुपरज्य संयोगमिव प्राप्यावभासते भगवान् यथा विश्वं पश्यति तथा तदिच्छावशात्तद्भक्तोऽपि पश्यति यथा व्रजेश्वरी मृद्भक्षणलीलायामित्यर्थः। प्रतीत्यनर्हस्यापि कदाचित् प्रतीतौ दृष्टान्तः। चन्द्रमसि उपरज्य तमः राहुरिव॥ ६९॥ ❀ ❀ तदेवं स्थूलदेहनाशेऽपि लिङ्गदेहस्यानाशादन्यः कर्त्तान्यो भोक्तेति दोषो नास्तीत्युक्तम्। तत्रैवं शङ्कते ननु लिङ्गदेहस्य स्थूलदेहद्वारेणैव कर्तृत्वभोक्तृत्वे दृश्येते न तु केवलस्य तत्र कदाचित् स्थूलदेहाभावे जीवस्य कर्तृत्वाद्यभावान्मुक्तिः प्रसज्जेतेति तत्राह नाहमिति।

अहं ममेति भावः स्थूलदेहसम्बन्धः पुरुषे जीवे न व्यवधीयते न विच्छिन्नो भवति, किंपर्य्यन्तं बुद्धिमनोऽक्षार्थरूपो गुणव्यूहो गुणपरिणामो लिङ्गं यावदस्ति। नन्वयं कदारभ्य प्रवृत्तस्तत्राह। अनादिमान् अविज्ञातादिकालः ॥ ७० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

उक्तार्थं स्वप्नदृष्टान्तेन स्पष्टयति। शयानमिति। यथेमं स्थूलं देहं शयानं श्वसन्तं सप्राणमेवोत्सृज्य विस्मृत्य आत्मनि मनसि आहितं तात्कालिककर्मफलदेनेश्वरेण प्रकाशितं कर्म कर्मफलं तादृशेन शयानदेहसदृशेनान्येन वा पश्वादिदेहेन तत्कर्मानुसारीश्वरोपस्थापितेन भुङ्क्ते तद्वल्लोकान्तरेऽपीत्यर्थः ॥ ६१ ॥ ❀ ❀ शिष्यबुद्धिवैचित्र्यार्थं देहदेहिपदार्थभेदं दर्शयन् उत्तरोत्तरदेहादिप्राप्तिक्रमं दर्शयति ममेति। अहमिति ब्रुवन् असौ पुरुषो जीवः मनसा लिङ्गेन यद्यत् अहं मम विषयं शरीरादिकं गृह्णीयात् येन शरीरादिना भूयो राद्धं सिद्धं कर्म गृह्णीयात् येन कर्मणा निमित्तेन पुनर्भवो भूयो जन्मेति अनेन देह एवात्मा मन एव कर्ता इत्यादयो भ्रान्तिविलसिता वादा निराकृताः ॥ ६२ ॥ ❀ ❀ यदुक्तं कर्मपरोक्षं सन्न प्रकाशतेऽतोऽमुत्र कथं भोग इति तत्राह यथेति। यत्र चित्तं लग्नं भवति तस्मिन् विषये तस्येन्द्रियस्येहितं चेष्टा भवति एवमिन्द्रियवृत्तिभिश्चित्तमनुमीयते एवमेव आसन्नमपीष्टमपि हित्वा अनासन्नेऽपि अनिष्टेऽपि यदा चित्तवृत्तिः स्यात्तादृशीभिः प्राग्देहजं कर्म लक्ष्यते ॥ ६३ ॥ ❀ ❀ ननु स्थूलदेहे लिङ्गदेहस्तत्र देही कर्तेति कुतो ज्ञायते इति शङ्कां निराकर्तुं स्थूलदेहे गृहवदायतनभूते मनःप्रधानं लिङ्गदेहं तस्मिन्नपि गृहवदायतनभूते क्षेत्रज्ञं चाह नेति द्वाभ्याम्। अनेन देहेन कचिददृष्टमश्रुतम् न च अनुभूतं त्वगादिभिर्ज्ञातम्, एवंभूतमपि वस्तु कदाचित्स्वप्नमनोरथादौ आत्मनि मनसि यद्रूपं पूर्वदेहे अनुभूतं तादृगेवोपलभ्यते ॥ ६४ ॥ ❀ ❀ तेनापूर्वपदार्थोपलम्भेन अस्य लिङ्गिनः लिङ्गं मनःप्रधानं सूक्ष्मं शरीरं गृहवदस्यास्तीति लिङ्गी जीवस्तस्य तादृशं पूर्वपदार्थोपलम्भहेतुभूतं देहसम्भवं देहाः सम्भवन्त्यस्मादिति स्थूलदेहकारणं मनः श्रद्धत्स्व निश्चयेन मन्यस्व। अननुभूतोऽर्थो मनः स्प्रष्टुं नार्हति अनेकस्थूलदेहधारणे कारणभूतं मनस्तत्प्रवर्तको जीवः कर्तेत्यर्थः ॥ ६५ ॥ ❀ ❀ किञ्च मनुष्यस्य मनः सात्त्विकादिवृत्तिभिः सात्त्विकादीनि पूर्वरूपाणि शंसति तथा भविष्यतो न भविष्यतश्च पदार्थस्योत्साहानुत्साहादिरूपाभिर्वृत्तिभिः सिद्धिमसिद्धिं च शंसति ते तव मनस्तु भद्रं कल्याणावहमित्यर्थः ॥ ६६ ॥ ❀ ❀ नन्वग्निशिखोपरि यवाङ्कुरं निशीथे सूर्यमण्डलं भूचरस्य खे गमनं च अदृष्टमश्रुतं च मनसि कचित्स्वप्ने दृश्यतेऽतोऽननुभूतार्थो न मनः स्प्रष्टुमर्हतीति कथं घटेतेत्यत्राह अदृष्टमिति। अदृष्टमश्रुतं च यन्मनसि दृश्यते तद्देशकालक्रियाः आश्रयो निमित्तं यत्तत्तादृशं भवति तथाहि देशान्तरेऽनुभूतं यवाङ्कुरं देशान्तरेऽनुभूताया अग्निशिखाया उपरि मनसि स्वप्नवशात् दृश्यते एवं सूर्यमण्डलमपि दिवानुभूतं निशीथे दृश्यते, एवं खेचराणां खेऽनुभूतं गमनं भूचरस्य दृश्यते, अतो यथा तथानुमन्तव्यम् ॥ ६७ ॥ ❀ ❀ किं बहुना सर्वे इन्द्रियगोचरा अनुभूता एव देवमनुष्यपश्वादयः पदार्था वर्गशः समुदायभावेन क्रमानुरोधेन एकैकशः मनसि आयान्ति संयुज्यन्ते यान्ति वियुज्यन्ते च, यतः सर्वे समनस एव जनाः सर्वे इन्द्रियगोचराः शब्दादयः देवादिषु आयान्ति यान्ति वेति योजना ॥ ६८ ॥ ❀ ❀ भगवद्ध्यानभाविते मनसि तु सर्वं दृश्यते इत्याह। सत्त्वैकनिष्ठे सत्त्वगुणप्रचुरे भगवत्पार्श्ववर्तिनि तद्ध्यानपरे तमः राहुश्चन्द्रमसीव इदं विश्वमुपरज्यावभासते विषयतया प्रतीयते ॥ ६९ ॥ ❀ ❀ भगवद्ध्यानपरे मनसि विश्वं दृश्यते तन्मनो मुक्तिहेतुरित्यर्थादुक्तमथ भगवत्पराङ्मुखस्य मनसः देहगेहादावहंममादिवृत्तिमन्मन एव संसारहेतुरिति च दर्शयन् मनोनिमित्तकं संसारनिवृत्तये हरिं भजेत्याह नाहमिति दशभिः। अहमिति देहे आत्मत्वबुद्धिरूपो भावः, ममेति गृहादौ मदीयत्वबुद्धिरूपो भावः पुरुषे न व्यवधीयते न वियुक्तो भवति यावत्तावत् अनादिमान् अनादितः प्रवृत्तः बुद्ध्यादीनां व्यूहः समूहो यस्मिन् संसारः जन्ममरणप्रवाहोऽप्यस्ति ॥ ७० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

ननु येनैव कर्म करोति तेनैव फलं भुङ्क्ते इति यदुक्तं तन्नोपपद्यते। सर्वत्र स्थूलदेहविशिष्टस्यैव कर्तृत्वभोक्तृत्वदर्शनात् स्थूलदेहरहितस्य कर्तृत्वभोक्तृत्वयोरदृष्टाश्रुतत्वात् सूक्ष्मत्वेनासम्भवाच्च तस्य चेहैव विनष्टत्वात्कथं तेनैव भुङ्क्ते इत्याशङ्क्य स्थूलदेहस्याधारमात्रत्वेन अन्वयव्यतिरेकवत्त्वेऽपि गृहवन्न कर्तृत्वभोक्तृत्वे तत्तु लिङ्गविशिष्टस्यैव, अतः स्थूलदेहभेदेऽपि लिङ्गभेदाभावान्न काऽपि क्षतिरिति स्वप्नदृष्टान्तेन साधयति—शयानमिति। यथा पुरुषः प्राणी इमं शयानं जाग्रद्देहं श्वसन्तं जीवन्तमेव उत्सृज्य तदनुसन्धानं त्यक्त्वा तादृशेन जाग्रद्देहसदृशेन इतरेण अन्यप्रकारकर्मोपस्थापितेन पश्वादिदेहेन आत्मनि मनसि आहितं स्फुरितं कर्मफलं सुखदुःखादिकं भुङ्क्ते तत्र स्वप्ने जाग्रद्देहाभावेऽपि देहान्तरेण भोगेन काऽप्यनुपपत्तिस्तथा लोकान्तरेऽपि भोगेन काऽप्यनुपपत्तिरिति शेषेणान्वयः ॥६१॥ ❀ ❀ उक्तमेव स्पष्टयति—ममेति। ममैते पुत्रदारगृहादयः असावहं अमुकनामा एतज्जातीय इति च ब्रुवन् मनसा यद्यद्देहमात्मत्वेन गृह्णीयात् गृह्णाति तत्ततो देहात् राद्धं सिद्धं कर्मापि पुण्यपापात्मकं पुमान् गृह्णाति मयैतत् कर्म स्वसुखार्थमनुष्ठितमिति स्वीकरोति, येनैवमहङ्कारगृहीतेन कर्मणाऽस्य पुनर्भवो जन्म देहान्तरसम्बन्धो भवतीत्यन्वयः। अतो-

ऽभिमानविषयस्य स्थूलदेहस्य पुत्रादिदेहवत् कर्तृत्वभोक्तृत्वोपयोगित्वेऽपि कर्तृत्वभोक्तृत्वाभावात् अभिमन्तुर्लिङ्गविशिष्टस्यैव जीवस्यैव जीवस्य कर्तृत्वं भोक्तृत्वं च तस्योभयलोके समन्वयात् स्थूलदेहभेदेऽपि न कर्तृत्वभोक्तृत्वयोर्वैयधिकरण्यमिति भावः ॥ ६२ ॥ ❀ ❀ अथ द्वितीयसंशयस्योत्तरमाह—यथेति सप्तभिः। तत्र यदुक्तं वेदोक्तं कर्म यत्क्रियते तदनन्तरमेव परोक्षं सन्न प्रकाशतेऽतः कारणस्य नष्टत्वान्नामुत्र भोगोऽपि सिद्ध्येदिति तत्र प्रत्यक्षायोग्यानां कालात्मादीनां सतामप्रत्यक्षाभावमात्रेण न सन्तीति यथा वक्तुं न शक्यते तथा कर्मजन्यादृष्टस्य पुण्यपापात्मकस्य प्रत्यक्षायोग्यस्य कथं तदभावमात्रेण नष्टत्वमुचितं वक्तुम्। ननु तर्हि यथा कालादीनां प्रत्यक्षाभावेऽपि मानान्तरसद्भावात्तत्सत्त्वमङ्गीक्रियते तथा कर्मसद्भावे किं मानमित्याशङ्क्य विचित्रचित्तवृत्तिकार्यैलिङ्गकानुमानं मानमिति सदृष्टान्तमाह—यथेति। यथोभयैरिन्द्रियैर्हितैः ज्ञानकर्मलक्षणैर्युगपदप्रवृत्तैश्चित्तमनुमीयते, तदुक्तमक्षपादेनापि—'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' इति। ज्ञानकर्मेन्द्रियवृत्तयः कारणान्तरजन्यास्तदितरकारणसद्भावेऽपि युगपदनुत्पद्यमानत्वात् कारणान्तरं विना युगपदनुत्पद्यमानघटादिवदित्यनुमाने यथा कारणान्तररूपेण मनसः सिद्धिः एवं विचित्रचित्तवृत्तिभिः प्राग्देहजं कर्म पुण्यपापात्मकं लक्ष्यते अनुमीयते इत्यर्थः। चित्तवृत्तयो विचित्रकारणजन्या विचित्रकार्यत्वात् चित्रपटवदित्यनुमानेन विचित्रकारणान्तरासम्भवेन तथाभूता प्राग्जन्मकर्मसिद्धिः। न च प्रश्न एतज्जन्मकृतकर्मादर्शनेन फलाभावे शङ्किते पूर्वजन्मकर्मसाधनमुत्तरे कथं सङ्गच्छते इति शङ्क्यम्, अधुना चैतज्जन्मकृतकर्मकार्यस्य कस्यचिदभावेनैतज्जन्मकर्म न साधयितुं शक्यमतोऽधुनाऽनुभूयमानकार्यलिङ्गेन पूर्वकर्मणि साधिते तद्दृष्टान्तेन एतज्जन्मकृतकर्माप्यग्रिमदेहपर्यन्तं वर्त्तते इति ज्ञेयमित्यभिप्रायेण पूर्वजन्मकृतकर्मसाधनस्योत्तरत्वेन सङ्गतत्वादिति ध्येयम् ॥ ६३ ॥ ❀ ❀ नन्वेवं कर्मणः स्थितिस्तदा स्याद्यदि तदाश्रयो लिङ्गदेहो न नश्येत्तस्य स्थितौ किं प्रमाणमित्याशङ्क्य स्वप्नपदार्थदर्शनाद्यर्थापत्तिलक्षणया युक्त्या लिङ्गदेहस्थितिं पूर्वकर्म च साधयति—नानुभूतमिति द्वाभ्याम्। अनेन वर्त्तमानेन देहेन क्व कुत्रचिदपि यन्नानुभूतं अननुभूतमनुपभुक्तमदृष्टं चाश्रुतं च यद्रूपं यदात्मकं यादृक् यत्प्रकारकं च तत्कदाचित् स्वप्नमनोरथादौ आत्मनि मनसि उपलभ्येत स्फुरति ॥ ६४ ॥ ❀ ❀ तेनोपलम्भेन हेतुना अस्य लिङ्गविशिष्टस्य पूर्वसंस्काराश्च यस्य तादृशं स्फुरणजनकमनुभवादिकं पूर्वदेहसम्भवं श्रद्धत्स्व निश्चयेन मन्यस्व, यतः अननुभूतोऽर्थो मनः स्प्रष्टुं मनसि स्फुरितुं नार्हतीति द्वयोरन्वयः। तथा च पूर्वानुभवसंस्कारं विना वस्तुस्फुरणानुपपत्त्या तत्संस्कारसिद्धिस्तस्याश्रयं विनाऽनुपपत्त्या तदाश्रयत्वेन लिङ्गविशिष्टस्यात्मनः सिद्धिः, कारणान्तरसद्भावेऽपि स्फुरणस्य कादाचित्कत्वेन तज्जनितसुखदुःखादिहेतुस्तदुन्नायककर्मसिद्धिरिति भावः ॥ ६५ ॥ ❀ ❀ किञ्च मनोवृत्त्याऽपि पूर्वापराणि शुभाशुभकर्माणि तन्निमित्तानि शरीराणि च ज्ञायन्ते इत्याह—मन इति। मनुष्यस्य मन एव विषयावेशधर्मावेशभगवदावेशादिभिर्लिङ्गैरयं पूर्वमपीदृश आसीदिति पूर्वरूपाणि तथा भविष्यतः पुनरुत्पत्स्यमानस्यापि एवंरूपो भविष्यतीति भावीनि रूपाणि तथा न भविष्यतो मोक्षं प्राप्स्यतो रूपं शंसति ज्ञापयति। तथाच मनस एवं वैचित्र्यं न मनस्त्वेन किन्तु सदसत्कर्मसंस्कारेणैवेति पूर्वापररूपसूचकमनोवैचित्र्येणापि पूर्वजन्मकृतकर्मसत्ता बोधिता भवतीति भावः। एवं निश्चये तव भद्रं भविष्यतीत्याशिषाऽभिनन्दति विश्वासार्थम् ॥ ६६ ॥ ❀ ❀ इदानीमनुभववैलक्षण्येनापि सुखदुःखहेतुः कर्मास्तीति दर्शयति—अदृष्टमिति। अत्र लोके क्वचित् स्वप्नाद्यवस्थाविशेषे अन्यदेशाश्रयसमुद्रादिकमन्यत्र पर्वताग्रे तथाऽन्यकालनिशाश्रयं नक्षत्रादिकमन्यस्मिन् काले दिवसे तथाऽभ्यङ्गादिक्रियाश्रयं स्वशिरश्छेदनादिक्रियाश्रयमित्येवं देशकालक्रियाश्रयं वैपरीत्यदृष्टं दर्शनानर्हंश्रुतं श्रवणानर्हं च मनसि स्फुरितं दृश्यते तदपि सुखदुःखहेतुप्राचीनकर्मणैवेति मन्तव्यम्, अन्यथा निद्रादिदोषस्य सर्वदा सर्वजनसाधारणत्वात् सर्वदैव तत्स्यादिति शेषेणान्वयः। तथा स्वस्यैव दर्शनं तथाऽन्येषामपि सर्वेषां प्राचीनकर्मवशादेवं दर्शनं मन्तव्यमित्याह—यथा तथाऽनुमन्तव्यमिति ॥ ६७ ॥ ❀ ❀ ननु कथमयं नियमस्तत्राह—सर्वे इति। यतः सर्वे जनाः समनसः अनेकजन्मसञ्चितादृष्टसंस्कृतमनोवन्तः, अतः शुभाशुभादृष्टवशात् इन्द्रियगोचराः इन्द्रियविषयाः सुखदुःखप्रदक्रमानुरोधेन पुण्यपापानुसारेण क्रमेण वर्गशो यूथशश्च सर्वे एव मनसि आयान्ति स्फुरन्ति यान्ति विस्मृताश्च भवन्तीत्यर्थः ॥ ६८ ॥ ❀ ❀ किञ्च 'जन्मान्तरसहस्रेषु योगध्यानसमाधिभिः। नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते' इति वाक्यात् अनेकजन्मानुष्ठितैर्भगवत्समर्पितैः यज्ञदानादिभिर्विशुद्धे अत एव सत्त्वैकनिष्ठे अत एव भगवत्पार्श्ववर्तिनि भगवद्ध्यानपरे मनसि इदं विश्वमुपरज्य संयोगमिव प्राप्यावभासते इति योगिजनप्रसिद्धम्, अन्यथा कर्मणो नष्टत्वे मनसः शुद्ध्यभावेन एतन्न स्यादिति भावः। प्रतीत्यनर्हस्यापि कदाचित्प्रतीतौ दृष्टान्तः—तमश्चन्द्रमसीवेति, अन्यथाऽप्रतीतोऽपि तमो राहुर्यथा चन्द्रमस्युपरज्यावभासते तथेत्यर्थः ॥ ६९ ॥ ❀ ❀ तदेवं स्थूलदेहभेदेऽपि लिङ्गदेहस्याभेदान्न कर्तृत्वभोक्तृत्वयोर्वैयधिकरण्यं तदाश्रितस्य कर्मणश्च सत्त्वान्नापि भोगासम्भव इत्युक्तम्, तत्र न देहद्वयसम्बन्धाभावेन लिङ्गदेहस्य करणत्वं न च स्थूलदेहस्याधिकरणत्वं न चात्मनः कर्तृत्वं न च पुण्यपापादिमत्त्वं न च तेन विना सुखदुःखान्यतरसाक्षात्कारलक्षणो भोगः सम्भवति, तथा च प्रवृत्तिमार्गश्च व्यर्थः स्यादत आत्मनो देहद्वयसम्बन्धोऽवश्यं निरूपणीयः। तत्र प्रसिद्धस्य संयोगादेः सम्बन्धस्य चिज्जडयोर्निरूपयितुमशक्यत्वात् आध्यासिक एव सम्बन्ध इति मत्वाऽध्यासं दर्शयति—नाहमिति त्रिभिः। बुद्धिश्च मनश्च अक्षाः इन्द्रियाणि च अर्थाः पञ्च तन्मात्राणि इत्येवम्भूतो गुणव्यूहो गुणकार्यरूपोऽनादिमान् अनादिः लिङ्गदेहो यावद्वर्त्तते तावत् हि निश्चितमेतत् देहेन्द्रियपुत्रकलत्रादिविषयकोऽहम्ममेति भावोऽयमध्यासलक्षणः पुरुषे आत्मनि न व्यवधीयते विच्छिन्नो न भवतीत्यन्वयः ॥ ७० ॥

### भाषानुवादः

स्वप्नावस्थामें मनुष्य इस जीवित शरीरका अभिमान तो छोड़ देता है, किन्तु इसीके समान अथवा इससे भिन्न प्रकारके पशुपक्षी आदि शरीरसे वह मनमें संस्काररूपसे स्थित कर्मोंका फल भोगता रहता है ॥ ६१ ॥ ❀ ❀ इस मनके द्वारा जीव जिन स्त्री-पुत्रादिको ये 'मेरे हैं' और देहादिको 'यह मैं हूँ' ऐसा कहकर मानता है, उनके किये हुए पाप-पुण्यादिरूप कर्मोंको भी यह अपने ऊपर ले लेता है और उसके कारण इसे व्यर्थ ही फिर जन्म लेना पड़ता है ॥ ६२ ॥ ❀ ❀ जिस प्रकार ज्ञानेन्द्रिय और कर्मेन्द्रिय दोनोंकी चेष्टाओंसे उनके प्रेरक चित्तका अनुमान किया जाता है, उसी प्रकार चित्तकी भिन्न-भिन्न प्रकारकी वृत्तियोंसे पूर्वजन्मके कर्मोंका भी अनुमान होता है ( अतः कर्म अदृष्टरूपसे फल देनेके लिये कालान्तरमें मौजूद रहते हैं ) ॥ ६३ ॥ ❀ ❀ कभी-कभी देखा जाता है कि जिस वस्तुका इस शरीरसे कभी अनुभव नहीं किया— जिसे न कभी देखा, न सुना ही—उसका स्वप्नमें, वह जैसी होती है, वैसा ही अनुभव हो जाता है ॥ ६४ ॥ ❀ ❀ राजन् ! तुम निश्चय मानो कि लिङ्गदेहके अभिमानी जीवको उसका अनुभव पूर्वजन्ममें हो चुका है; क्योंकि जो वस्तु पहले अनुभव की हुई नहीं होती, उसकी मनमें वासना भी नहीं हो सकती ॥ ६५ ॥ ❀ ❀ राजन् ! तुम्हारा कल्याण हो, मन ही मनुष्यके पूर्व रूपोंको तथा भावी शरीरादिको भी बता देता है; और जिनका भावी जन्म होनेवाला नहीं होता, उन तत्त्व-वेत्ताओंकी विदेहमुक्तिका पता भी उनके मनसे ही लगाया जाता है ॥ ६६ ॥ ❀ ❀ कभी-कभी स्वप्नमें देश, काल अथवा क्रियासम्बन्धी ऐसी बातें भी देखी जाती हैं जो पहले कभी देखी या सुनी नहीं गयीं ( जैसे पर्वतकी चोटीपर समुद्र, दिनमें तारे अथवा अपना सिर कटा दिखायी देना, इत्यादि ), इनके दीखनेमें निद्रादोषको ही कारण मानना चाहिये ॥ ६७ ॥ ❀ ❀ मनके सामने इन्द्रियोंसे अनुभव होने योग्य पदार्थ ही भोगरूपमें बार-बार आते हैं और भोग समाप्त होनेपर चले जाते हैं, ऐसा कोई पदार्थ नहीं आता, जिसका इन्द्रियोंसे अनुभव ही न हो सके। इसका कारण यही है कि सब जीव मनसहित हैं ॥ ६८ ॥ ❀ ❀ साधारणतया तो सब पदार्थोंका क्रमशः ही भान होता है; किन्तु यदि किसी समय भगवच्चिन्तनमें लगा हुआ मन विशुद्ध सत्त्वमें स्थित हो जाय, तो उसमें भगवान्का संसर्ग होनेसे एक साथ समस्त विश्वका भी भान हो सकता है—जैसे राहु दृष्टिका विषय न होनेपर भी प्रकाशात्मक चन्द्रमाके संसर्गसे दीखने लगता है ॥ ६९ ॥ ❀ ❀ राजन् ! जबतक गुणोंका परिणाम एवं बुद्धि, मन, इन्द्रिय और शब्दादि विषयोंका सङ्घात यह अनादि लिङ्गदेह बना हुआ है, तबतक जीवके अंदर स्थूलदेहके प्रति 'मैं-मेरी' इस भावका अभाव नहीं हो सकता ॥ ७० ॥

सुप्तिमूर्च्छोपतापेषु प्राणायनविघाततः। नेहतेऽहमिति ज्ञानं मृत्युप्रज्वारयोरपि ॥ ७१ ॥
गर्भे बाल्येऽप्यपौष्कल्यादेकादशविधं तदा। लिङ्गं न दृश्यते यूनः कुह्वां चन्द्रमसो यथा ॥ ७२ ॥
अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते। ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ ७३ ॥
एवं पञ्चविधं लिङ्गं त्रिवृत् षोडशविस्तृतम्। एष चेतनया युक्तो जीव इत्यभिधीयते ॥ ७४ ॥
अनेन पुरुषो देहानुपादत्ते विमुञ्चति। हर्षं शोकं भयं दुःखं सुखं चानेन विन्दति ॥ ७५ ॥

अन्वयः—सुप्तिमूर्च्छोपतापेषु मृत्युप्रज्वारयोः अपि प्राणायनविघाततः अहम् इति ज्ञानम् न ईहते ॥ ७१ ॥ ❀ ❀ तदा गर्भे बाल्ये अपि अपौष्कल्यात् यूनः एकादशविधम् लिंगम् यथा कुह्वाम् चंद्रमसः लिङ्गम् न दृश्यते ॥ ७२ ॥ ❀ ❀ हि अर्थे अविद्यमानेऽपि विषय[illegible] ध्यायतः अस्य संसृतिः यथा स्वप्ने अनर्थागमः न निवर्तते ॥ ७३ ॥ ❀ ❀ एवम् पंचविधम् त्रिवृत् षोडश[illegible]तम् लिंगम् एषः चेतनया युक्तः जीवः इति अभिधीयते ॥ ७४ ॥ ❀ ❀ पुरुषः अनेन देहान् उपादत्ते विमुञ्चति [illegible] अनेन हर्षम् शोकम् भयम् दुःखम् सुखम् विंदति ॥ ७५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

स्वापादावहंकाराद्यभावात्तद्विच्छेदमाशंक्याह द्वाभ्याम्। सुप्त्यादिषु उपताप इष्टवियोगादिदुःखम्। तेष्वहमिति ज्ञानमहंकारो नेहते न प्रकाशते प्राणायनानामिंद्रियाणां विघातात्। इंद्रियैरिदंकारास्पदवस्तुग्रहणे ह्यहंकारः स्फुरति नान्यथेत्यर्थः ॥ ७१ ॥ ❀ ❀ अपौष्कल्यादसंपूर्णत्वात्प्राणायनानामिति शेषः। यूनस्तरुणस्य यदेकादशविधमेकादशेंद्रियैः स्फुटं लिंगमहंकरणं तन्न दृश्यते। गर्भादाविति शेषः। सतोऽप्यनभिव्यक्तौ दृष्टांतः—कुह्वाममावस्यायां चंद्रमसो लिंगं

---

१. प्रा० पा०—तथा। २. प्रा० पा०—देहमुपादत्ते।

रूपमिव ॥ ७२ ॥ ❀ ❀ तस्मादहंकारास्पदस्य स्थूलदेहस्याविच्छेदाद्वस्तुभूतार्थाभावेऽपि संसृतिनिवृत्तिर्नास्तीत्याह । अर्थे हीति ॥ ७३ ॥ ❀ ❀ यावल्लिंगं स्थूलदेहाविच्छेदात्संसारानिवृत्तिरित्येतत्प्रपंचयति एवमिति सार्धैस्त्रिभिः । पंचविधं पञ्चतन्मात्रात्मकम् । त्रिवृत्त्रिगणम् । षोडशविकारात्मना विस्तृतम् ॥ ७४–७५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ननु लिंगदेहसद्भाव एव परस्सहस्राणां स्थूलदेहानां नाश उद्भवश्च यथा भवति तथा स्थूलदेहसद्भावेपि प्रतिसुषुप्ति सूक्ष्मदेहनाशं सुषुप्त्यन्ते तदुद्भवं च कथं न ब्रूम इत्यभिप्रेत्याह–स्वापादाविति । इत्यर्थ इति । स्वापादाविंद्रियाणां सन्नत्वान्न तथा स्फुरणं न तु लिंगाभावेनेति भावः । चक्रवर्त्ती–प्राणानामयनं देहेंद्रियेषु संचलनं तस्य विघातात् विघातजन्यादिंद्रियाणां स्वस्वव्यापारासामर्थ्यादहमिति ज्ञानमहममुक इति ज्ञानं तत्र सुषुप्तौ मनआदिसर्वेंद्रियेषु प्राणसंचारणाभावः । स्वप्ने बहिर्ज्ञानेंद्रियेष्वेवेति ज्ञेयम् । मृत्युप्रज्वाराभ्यां जनितकष्टेपि सुषुप्त्यादिषु यथापूर्वं विधाताधिक्यं न तु लिंगाभावः ॥ ७१–७२ ॥ ❀ ❀ इतो लिंगदेहस्य नाशो नास्ति तस्माद्धेतोः । वस्तुभूतार्थाभावेपि सत्यत्वाभावेपि । विश्वनाथः–एवं सुषुप्त्यादिषु लिंगस्य विघात एव न त्वभावः । ये तु सुषुप्तिप्रलययोर्लिंगस्य प्रकृतौ लयादभावमाहुस्तन्मतेपि जीवस्य न मुक्तिः, किन्तु संसार एवेति सदृष्टांतमाह–अर्थे लिंगशरीरे विषयध्यानादनिवृत्तस्य पुंसः स्वप्ने विषयाभावेपि विषयग्रहणरूपस्यानर्थस्य यथागमनं तथैव सुषुप्तौ लिंगलयेप्यविद्यातत्संस्काराणामनपगमात् मुक्तिर्न किन्तु संसार एवेत्यर्थः ॥ ७३ ॥ ❀ ❀ लिंगशरीरमेव किं तत्राह-एवमिति । पंच प्राणा विधा विदधतश्चेष्टां कुर्वंतो यत्र तदिति वा । त्रिगुणं त्रिगुणकार्यं त्रिभिर्वर्त्तत इति त्रिवृत् एकादशेंद्रियपंचतन्मात्रैः षोडशविकारात्मना चेतनया बुद्ध्या चिदाभासेन वा "प्रतिपज्ज्ञप्तिचेतनाः" इत्यमरः । यद्वा–प्राणेंद्रियांतःकरणभेदेन त्रिवृत्त्रिविधं "प्राणेंद्रियांतःकरणभेदेन त्रिविधं मतम् । पञ्च पञ्चैव ते सर्वे प्राणा बुद्धींद्रियाणि वा ॥ कर्मेन्द्रियाणि च तथा तस्मात्पंचविधं स्मृतम् । लिंगं षोडशकं प्राहुर्बुद्ध्या च मनसा सह ॥" इति टीकांतरोक्तेः । जीवः जीवोपाधिः ॥ ७४ ॥ ❀ ❀ अनेन लिंगदेहेन पुरुषो जीवः देहान्स्थूलान् ॥ ७५ ॥

### श्रीमद्वीरराघवव्याख्या

किमुत संसारिणो जीवस्य बुद्ध्यादिभ्यो विलक्षणं स्वस्वरूपमपरोक्षं नावभासत इति यतोऽनहमर्थोऽप्यज्ञानादहंबुद्धिविषयत्वेनावभासमानो देहः सुषुप्त्यादौ नावभासत इत्याह सुप्तीति । उपतापशब्देनातिशयितदुःखसम्भेदो विवक्षितः, मृत्युर्मरणं प्रज्वारो ज्वरः, उपलक्षणमेतत् ज्वरादिमूले मरणे चेति यावत्, एतास्ववस्थासु प्राणाश्रयस्य जीवस्य विघाततः ज्ञानस्यातिसङ्कोचात् स हि ज्ञानसंकोचापरपर्यायस्तदानीं विघातः संभवति तेनाह ज्ञानं नेहते न स्फुरति देहेऽहंबुद्धिर्नास्तीति देहप्रतिपत्त्यभावादित्यर्थः ॥ ७१ ॥ ❀ ❀ ननु सुषुप्त्यादावपि ज्ञानकर्मोभयेन्द्रियगुणस्य मनसश्च सद्भावादहमिति ज्ञानं कुतो नेहते तत्राह गर्भ इति । यूनः तरुणस्य स्फुटं यदेकादशविधं लिङ्गं कर्मेन्द्रियज्ञानेन्द्रियमनआत्मकं लिङ्गं व्यापारहेतुभूतं तद्गर्भे बाल्ये अपिशब्दात् सुषुप्त्यादौ चापौष्कल्यादपुष्कलशक्तित्वान्न दृश्यते नाभिव्यक्तं नष्टप्रायं भवतीत्यर्थः । सतोऽप्यनभिव्यक्तौ दृष्टान्तः कुह्वाममावस्यायां चन्द्रमसो लिङ्गं रूपमिवेति ॥ ७२ ॥ ❀ ❀ ननु यदि गर्भादौ लिङ्गमेकादशविधमनभिव्यक्तं तर्हि तद्व्यापाराभावात्संसृतिर्न स्यादित्यत्राह अर्थेति । अनभिव्यक्तशक्तित्वादिन्द्रियाणां तद्व्यापाराभावादर्थे शब्दादिविषये विद्यमानेऽपि शब्दादिविषयानुभवाभावेऽपि विषयान् ध्यायतः 'वर्तमानसमीपे भूते लट् शत्रादेशः' विषयध्यानप्रयुक्तवासनाविशिष्टस्येत्यर्थः । संसृतिस्तद्रागानुवृत्त्या संसारोऽनुवर्तते यथा स्वाप्नपदार्थानां प्रबोधदशायामविद्यमानत्वेऽपि स्वाप्नार्थः ज्ञानसूचितसुखदुःखाद्यनर्थागमस्तद्वदित्यर्थः । यथा च श्रुतिः "यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिंश्च स्वप्नदर्शने" इति 'अथ स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ती'त्यादिका ॥ ७३ ॥ ❀ ❀ एवं प्रश्नस्योत्तरमभिधाय पुनरपि स्मरणाय देहात्मनोराकारं वदन् देहसम्बन्धस्योत्तरोत्तरदेहसम्बन्धद्वारानर्थहेतुत्वमाह एवमिति । पञ्चविधं पञ्चप्रकारं पञ्चभूतात्मकं षोडशविस्तरमेकादशेन्द्रियं तदाश्रयप्राणादिपञ्चकोपेतं त्रिवृत् त्रिगुणात्मकं लिङ्गशरीरमेवंभूतमिति देहाकार उक्तः । जीवस्वरूपमाह एष इति । चेतनया युक्तः एव जानातीति ज्ञानाश्रयतया स्फुटतरमवभासमानोऽहमर्थो जीव इत्यभिधीयत इत्यर्थः ॥ ७४ ॥ ❀ ❀ अनेन लिङ्गेन युक्तः तदेदानीमवभासमानः स पुरुषः ईदृशान् बहुदेहानुपादत्ते विमुञ्चति तत्कृतहर्षशोकादिकं च विन्दति, आगामिसुखविषयं ज्ञानं हर्षः आगामिदुःखविषयं ज्ञानं भयं तत्र देहानुपादत्ते जीव अनेनोपादीयमानेन रमणीयदेहेन हर्षं सुखं च विन्दत्यनभिमतेन तु शोकं विमुच्यमानेन तु भयं दुःखञ्च विन्दत्युपात्तदेहत्यागस्यानिष्टत्वात् ॥ ७५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ननु यद्यहंममेतिभावतिरोभावः पुरुषार्थस्तर्हि सुप्त्यादौ तत्सद्भावात्तदनुदयः कथमत्राह सुप्तीति । सुप्त्यादौ प्राणानामिन्द्रियाणामयनस्य प्रवृत्तिलक्षणस्य विघाततो निरोधादभावादहमिति ज्ञानं नेहते नाभिव्यज्यते तथापि स्वरूपेन्द्रियेणास्त्येव सुखमहमस्वाप्समित्युत्तरकालीनानुभवदर्शनात्तदा तदभावे परामर्शानुपपत्तेः । उपतापः पुत्रादिवियोगदुःखानलज्वालाप्रवेशनं

मृत्युरत्र देवदूतैर्नीतस्य किमर्थमानीतोऽयं न यतः स्वस्थानमिति वचनात् प्रत्यानयनदर्शनादनुभवात् साक्षाद्देहवियोगलक्षणमरणेऽहमिति ज्ञानं सन्देहेत्। प्रज्वारोऽतिरोगावस्था ॥ ७१ ॥ ❀ ❀ ननु हन्तैवं तर्हि गर्भादेरुत्क्रान्तस्य तत्कालीनसुखदुःखपरामर्शादर्शनादत्राह गर्भ इति । गर्भे वर्तमानस्य बाल्ये वयसि स्थितस्यायूनः बालस्य पुंसोऽपौष्कल्यादनुपचितावयवत्वात् पञ्चपञ्चज्ञानकर्मभेदेन संस्यातानीन्द्रियाणि मनश्चेत्येकादशविधमेकादशभ्यो विधीयते उत्पाद्यतेऽहंममेति ज्ञानाख्यं लिङ्गं लक्षणं न दृश्यते न ज्ञायते उक्तहेतोरित्यन्वयः। यावान् यावाञ्छरीरस्योपचयस्तावदिन्द्रियाणां पौष्कल्यं तस्मिन्नुपचिते तेषामिति नियमात्तन्निमित्तमहंममेति ज्ञानं तदभावे तदभाव इति गर्भादौ तदभाव इत्यर्थः। अत्रास्पष्टमात्रे दृष्टान्तमाह चन्द्रमस इति। यथामावास्यायां चन्द्रमसो लिङ्गं शरीरं न दृश्यते तथेति ॥ ७२ ॥ ❀ ❀ ननु चन्द्रबिम्बावरणनिवृत्तिवदयं गर्भवासादिलक्षणः संसारोऽपि कालेन स्वतो निवर्तत इति तत्राह अर्थे इति। अपि सम्भाविते ज्ञानलक्षणेऽर्थेऽविद्यमाने सत्यस्य जीवस्य संसृतिर्न निवर्तते, हि यस्मात्तस्मान्निवर्तकमपेक्षितमित्यन्वयः। निवर्तकानुदये निमित्तमाह ध्यायत इति। शब्दादिविषयध्यानं प्रतिबन्धकमित्यर्थः। स्वप्ने प्रवर्तमानस्य पुंसः प्रबोधाद्यभावेऽनर्थागमो यथा न निवर्तते तथेति विषयध्यानेन संसारपरम्परा स्यादित्यभिप्रायेणानर्थागम इत्युक्तं चन्द्रबिम्बावरणानां मेघादीनां वाय्वादिसद्भाव एव कारणं प्रत्यक्षसिद्धमिति ज्ञातव्यम् ॥ ७३ ॥ ❀ ❀ देहात्मबुद्धेः संसारस्य तत्त्वेन प्रतीतिः कथमित्याशङ्क्य योन्यङ्ग्योरिव चिदचितोः संयोगलक्षणसम्पर्कादौपचारिकीयं प्रतीतिरित्यभिप्रेत्य तत्स्वरूपं निरूपयति एकमिति। एकं लिङ्गं लिङ्गशरीरं षोडशविस्तरं कथं त्रिवृत् प्राणेन्द्रियान्तःकरणभेदेन त्रिविधमनेन षोडशविस्तरत्वमवगतं कथं पञ्चविधं त्रिधा भिन्नया पञ्चविधया पञ्च प्राणाः पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणीति पञ्चदशविधं मनसा षोडशविधं तदुक्तं "प्राणेन्द्रियान्तःकरणभेदेन त्रिविधं मतम्। पञ्च पञ्चैव ते सर्वे प्राणा बुद्धीन्द्रियाणि च ॥ कर्मेन्द्रियाणि च तथा तस्मात्पञ्चविधं स्मृतम्। लिङ्गं षोडशकं प्राहुर्मनसा सह तत्पुनः" इति। एष षोडशविस्तारो देहश्चेतनया युक्तो जीवः प्राणीत्युच्यते, इतिशब्दोऽत्र समाप्तिवचनः ॥ ७४ ॥ ❀ ❀ अनेन लिङ्गशरीरेण स्थूलदेहानुपादत्ते अनेन स्थूलदेहेन हर्षादिकमाप्नोति ॥ ७५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

चेतनया जीवाख्यचिच्छक्तिविशेषेण जीवो व्यावहारिकः ॥ ७४-७६ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

ननु लिङ्गदेहसद्भावे एव परस्सहस्राणां स्थूलदेहानां नाश उद्भवश्च यथा भवति तथा स्थूलदेहसद्भावेऽपि प्रतिसुषुप्ति सूक्ष्मदेहानां नाशं सुषुप्त्यन्ते चोद्भवञ्च कथं न ब्रूमस्तत्राह सुप्तीति द्वाभ्याम्। उपताप इष्टवियोगादिदुःखं सुप्त्यादिषु प्राणानामयनमिन्द्रियेषु सञ्चलनं तस्य विघातस्तद्विघातजन्यादिन्द्रियाणां स्वस्वव्यापारासामर्थ्यात् अहमिति ज्ञानं अहङ्कारः अहममुक इति ज्ञानं नेहते न प्रकाशते। तत्र सुषुप्तौ मनआदिसर्वेन्द्रियेषु प्राणसञ्चारणाभावः स्वप्ने बहिर्ज्ञानेन्द्रियेष्वेवेति ज्ञेयम्। मृत्युप्रज्वाराभ्यां जनिते कष्टेऽपि सुप्त्यादिषु यथापूर्वं विघाताधिक्यं न तु लिङ्गस्याभावः ॥ ७१ ॥ ❀ ❀ अपौष्कल्यात् असम्पूर्णत्वात् इन्द्रियायतनानामिति शेषः। यूनस्तरुणस्य यदेकादशविधमेकादशेन्द्रियैः स्फुटं लिङ्गदेहमहङ्कारकारणं तन्न दृश्यते। सतोऽप्यनभिव्यक्तौ दृष्टान्तः कुह्वाममावास्यायां चन्द्रमसो लिङ्गं रूपमिव ॥ ७२ ॥ ❀ ❀ एवं सुषुप्त्यादिषु लिङ्गस्य विघात एव न त्वभावः। ये च सुषुप्तिप्रलययोर्लिङ्गस्य प्रकृतौ लयादभावमाहुस्तन्मतेऽपि जीवस्य तदा न मुक्तिः, किन्तु संसार एवेति सदृष्टान्तमाह—अर्थे लिङ्गशरीरे विषयध्यानादनिवृत्तस्य पुंसः स्वप्ने विषयाभावेऽपि विषयग्रहणरूपस्यानर्थस्य यथा आगमनं तथैव सुषुप्तौ लिङ्गलयेऽपि अविद्यातत्संस्काराणामनपगमात् न मुक्तिः किन्तु संसार एवेत्यर्थः ॥ ७३ ॥ ❀ ❀ लिङ्गशरीरमेव किं तत्राह एवमिति। पञ्चविधं पञ्चप्राणा विधा विदधतश्चेष्टां कुर्वन्तो यत्र तत् त्रिवृत् त्रिगुणं षोडशविकारात्मना विस्तृतं जीवो लिङ्गदेहः ॥ ७४-७५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

देहे मनसोऽहंवृत्तेः स्वप्नादिषु सूक्ष्मं रूपमाह सुषुप्तीति द्वाभ्याम्। यथा कुह्वाममावास्यायां चन्द्रमसो लिङ्गं शरीरं गर्भे बाल्ये च यूनो लिङ्गं शूरत्वादि अपौष्कल्यान्न दृश्यते तथा प्राणायनानामिन्द्रियाणां विघातात् लयात् सुषुप्त्यादिषु अहमिति ज्ञानं देहात्माभिमानरूपमनोवृत्तिरेकादशविधम् अहं देहरूप एव मन्ता श्रोतेत्याद्येकादशभेदवत् नेहते प्रकटरूपेण न प्रकाशते इति द्वयोरन्वयः ॥ ७१-७२ ॥ ❀ ❀ एवं प्रतिपादिते देहात्माभिमाने आत्मनो देहरूपत्वाभावादविद्यमानेऽपि तन्निमित्ता संसृतिर्जन्ममरणप्रवाहो न निवर्तते, अस्य मनुष्यत्वेन सतः स्वप्ने विषयान् अनात्मभूतान् मृगादीन् आत्मत्वेन ध्यायतः अनर्थागमः व्याघ्रादिभ्यो वधादिरूपो यथा न निवर्तते तद्वत् ॥ ७३ ॥ ❀ ❀ जन्ममरणरूपां संसृतिं प्रपञ्चयितुं तदुपयोगिभूतं

लिङ्गशरीरं वर्णयति। त्रिवृत् त्रिगुणमयमेकादशेन्द्रियाणि पञ्चप्राणा इत्येवं षोडशविस्तृतं पञ्चविधं पञ्चतन्मात्रात्मकं तदित्थमेकविंशतितत्त्वात्मकम्। प्राणानामेकत्वविवक्षया सप्तदशतत्त्वात्मकं प्राणस्य स्पर्शतन्मात्रेऽन्तर्भावात् षोडशतत्त्वात्मकं लिङ्गं लिङ्गशरीरमित्यभिधीयते चेतनया ज्ञातृत्वलक्षणया युक्तः स्वयमपि ज्ञानस्वरूपः एष जीवः कर्ता भोक्ता अभिधीयते। जीवस्य लिङ्गशरीरे आत्मत्वाभिमानाल्लिङ्गशरीरस्यापि जीवेति क्वचित्संज्ञास्ति ॥ ७४ ॥ ❋ ❋ संसृतिं प्रपञ्चयति–अनेन सूक्ष्मेण लिङ्गदेहेन पुरुषो जीवः देहान् स्थूलान् उपादत्ते विमुञ्चति हर्षादिकं चानेन विन्दति, अनेन जीवस्य कर्तृत्वं भोक्तृत्वं सूक्ष्मदेहस्य कारणत्वं स्थूलदेहस्य हर्षादेश्च कर्मभूतस्यायतनत्वं भोग्यत्वं च यथायथमुक्तम् ॥ ७५ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

ननु तर्हि कथं सुषुप्त्यादावहम्ममेति भावो प्रतीयेत इत्याशङ्क्य तत्र कारणमाह—सुप्तीति द्वाभ्याम्। सुषुप्तौ मूर्च्छायामुपतापे इष्टवियोगादिजनिते अत्यन्तदुःखे मृत्यौ मरणसमये प्रज्वारे अत्यन्तज्वरावेशदशायां च प्राणायतनानामिन्द्रियाणां विघाततः व्याकुलत्वात् अहम्ममेति ज्ञानं नेहते न प्रकाशते न त्वध्यासाभाव एव तदेत्यन्वयः ॥ ७१ ॥ ❋ ❋ तथा यथा यूनस्तरुणस्य तत्तदिन्द्रियाध्यासादहं पश्याम्यहं शृणोमीत्येवमादि यदेकादशविधं लिङ्गमहङ्करणं दृश्यते तत् गर्भे बाल्ये चेन्द्रियाणामपौष्कल्यात् सूक्ष्मत्वादेव तथा न दृश्यते—न प्रकाशते इत्यन्वयः। तदाप्यध्यासोऽस्त्येवेति शेषः। सतोऽप्यप्रकाशे दृष्टान्तमाह—कुह्वामिति। कुह्वाममावस्यायां सतोऽपि चन्द्रमसो लिङ्गं रूपं यथा न दृश्यते तथेत्यर्थः ॥ ७२ ॥ ❋ ❋ ननु यद्येवं देहात्मनोराध्यासिक एव सम्बन्धो न वास्तवस्तदा देहादिजनितधर्माधर्मादिकं तज्जनितं सुखदुःखादिकं चाप्यध्यस्तमेव न वस्तुतोऽस्ति, तर्हि स्वयमेव अध्यासनिवृत्त्या निवर्तिष्यते किं तन्निवृत्तिप्रयासेनेत्याशङ्क्य स्वयं तन्निवृत्त्यभावं स्वप्नदृष्टान्तेन साधयति—अर्थे हीति। यथा स्वप्ने स्वशिरश्छेदादिलक्षणेऽर्थेऽविद्यमानेऽपि स्वशिरश्छेदाद्यनर्थागमो भवति स च तद्धेतुनिद्रादिदोषनिवर्त्तकजागरणं विना न निवर्त्तते तथा रूपरसादिविषयान् ध्यायतोऽस्य पुरुषस्य वस्तुतः सुखदुःखादिलक्षणेऽर्थेऽविद्यमानेऽपि तद्धेत्वन्तःकरणाध्यासनिवर्त्तकभगवद्भक्त्यात्मज्ञानादिसाधनं विना संसृतिर्धर्माधर्मसुखदुःखादिसन्ततिर्न निवर्त्तते इत्यन्वयः। हि यस्मादेवं तस्मान्न तन्निवृत्तिप्रयासस्य वैयर्थ्यमिति भावः ॥ ७३ ॥ ❋ ❋ अतो यावन्निवर्त्तकसाधनं विना देहेन्द्रियाद्यध्यासो न निवर्त्तते तावत्संसारदुःखमपि न निवर्त्तते इत्येवं लिङ्गस्वरूपकथनपूर्वकं प्रपञ्चयति—एवमिति। एवं बुद्धिमनोमोक्षार्थेत्युक्तप्रकारकमित्यर्थः। तत्प्रकारमेव पुनः स्पष्टयति—पञ्चविधमिति। पञ्चतन्मात्रात्मकं एकादशेन्द्रियैः सह षोडशात्मना विस्तृतं त्रिवृत् त्रिगुणकार्यभूतं यल्लिङ्गं लिङ्गदेहः स एष चेतनया युक्तो जीव इत्यभिधीयते ॥ ७४ ॥ ❋ ❋ अनेन लिङ्गदेहेन युक्त एव पुरुषो देही देहान् उच्चावचान् देवतिर्यङ्मनुष्यादिलक्षणान् स्थूलानुपादत्ते गृह्णाति विमुञ्चति च, अनेन युक्त एव हर्षशोकादिकं च विन्दति प्राप्नोति। तत्र इष्टप्राप्तौ हर्षं, तद्भोगात् सुखं, तद्वियोगात् शोकम्, अनिष्टकर्तुर्भयं, अनिष्टप्राप्त्या तद्भोगात् दुःखं प्राप्नोतीत्यर्थः ॥ ७५ ॥

## भाषानुवादः

सुषुप्ति, मूर्च्छा, अत्यन्त दुःख तथा मृत्यु और तीव्र ज्वरादिके समय भी इन्द्रियोंकी व्याकुलताके कारण 'मैं' और 'मेरेपन' की स्पष्ट प्रतीति नहीं होती, किन्तु उस समय भी उनका अभिमान तो बना ही रहता है ॥ ७१ ॥ ❋ ❋ जिस प्रकार अमावस्याकी रात्रिमें चन्द्रमा रहते हुए भी दिखायी नहीं देता, उसी प्रकार युवावस्थामें स्पष्ट प्रतीत होनेवाला यह एकादश इन्द्रियविशिष्ट लिङ्गशरीर गर्भावस्था और बाल्यकालमें रहते हुए भी इन्द्रियोंका पूर्ण विकास न होनेके कारण प्रतीत नहीं होता ॥ ७२ ॥ ❋ ❋ जिस प्रकार स्वप्नमें किसी वस्तुका अस्तित्व न होनेपर भी जागे बिना स्वप्नजनित अनर्थकी निवृत्ति नहीं होती-उसी प्रकार सांसारिक वस्तुएँ यद्यपि असत् हैं, तो भी अविद्यावश जीव उनका चिन्तन करता रहता है; इसलिये उसका जन्म-मरणरूप संसार का छुटकारा नहीं हो पाता ॥ ७३ ॥ ❋ ❋ इस प्रकार पञ्चतन्मात्राओंसे बना हुआ तथा सोलह तत्त्वोंके रूपमें विकसित यह त्रिगुणमय सङ्घात ही लिंगशरीर है, यही चेतनशक्तिसे युक्त होकर जीव कहा जाता है ॥ ७४ ॥ ❋ ❋ इसीके द्वारा पुरुष भिन्न-भिन्न देहोंको ग्रहण करता और त्यागता है तथा इसीसे उसे हर्ष, शोक, भय, दुःख और सुख आदिका अनुभव होता है ॥ ७५ ॥

**यथा तृणजलूकेयं नापयात्यपयाति च। न त्यजेन्म्रियमाणोऽपि प्राग्देहाभिमतिं जनः ॥ ७६ ॥**
**यावदन्यं न विन्देत व्यवधानेन कर्मणाम्। मन एव मनुष्येन्द्र भूतानां भवभावनम् ॥ ७७ ॥**
**यदाक्षैश्चरितान् ध्यायन् कर्माण्याचिनुतेऽसकृत्। सति कर्मण्यविद्यायां बन्धः कर्मण्यनात्मनः ॥ ७८ ॥**

अतस्तदपवादार्थं[1] भज सर्वात्मना हरिम् । पश्यंस्तदात्मकं विश्वं स्थित्युत्पत्त्यप्यया यतः ॥ ७९ ॥

मैत्रेय उवाच

भागवतमुख्यो भगवान्नारदो हंसयोर्गतिम् । प्रदर्श्य ह्य[2]मुमामन्त्र्य सिद्धलोकं ततोऽगमत् ॥ ८० ॥

अन्वयः--यथा इयम् तृणजलूका न अपयाति अपयाति च म्रियमाणः जनः अपि यावत् कर्मणाम् व्यवधानेन अन्यम् न विंदेत प्राग्देहाभिमतिम् न त्यजेत् मनुष्येंद्र मनः एव भूतानाम् भवभावनम् ॥ ७६-७७ ॥ ❀ ❀ यदा अक्षैः चरितान् ध्यायन् कर्माणि असकृत् आचिनुते कर्मणि सति अविद्यायाम् अनात्मनः कर्मणि बंधः ॥ ७८ ॥ ❀ ❀ अतः तदपवादार्थम् तदात्मकम् विश्वम् पश्यन् सर्वात्मना हरिम् भज यतः स्थित्युत्पत्त्यप्ययाः ॥ ७९ ॥ ❀ ❀ भागवतमुख्यः भगवान् नारदः अमुम् हंसयोः गतिम् प्रदर्श्य आमंत्र्य हि ततः सिद्धलोकम् अगमत् ॥ ८० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

नन्वेकं देहं विसृज्य देहांतरप्रवेशात्पूर्वं विदेहता स्यादेवेत्यत आह यथेति । नापयाति पूर्वतृणस्यात्यागात् अपयाति च तृणांतरधारणात् । तथा प्राग्देहाभिमतिं न त्यजेन्म्रियमाणोऽपि ॥ ७६ ॥ ❀ ❀ अन्यं देहम् । कर्मणां प्राग्देहारंभकाणां व्यवधानेन विच्छेदेन समाप्त्या प्रकरणार्थमुपसंहरति । मन एवेति । भवभावनं संसारहेतुः ॥ ७७ ॥ ❀ ❀ कथं सति तदाह यदेति । चरितानुपभुक्तान् यतः कर्मणि सति । नन्वसंगस्य कुतः कर्म तत्राह अविद्यायां सत्यामनात्मनो देहादेः कर्मणि बंधो भवति ॥ ७८ ॥ ❀ ❀ विश्वस्थित्यादयो यतो हरेर्भवंति ॥ ७९ ॥ ❀ ❀ हंसयोर्जीवेश्वरयोः ॥ ८० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अत्राशंकते नन्विति--अदेहता मुक्तिः । तृणजलौका कीटविशेषः । क्वचिज्जलूकेति पाठः । कर्मणामुत्तरदेहारंभकाणां विशेषतो धारणेन यद्वा--कर्मणां प्राचीनानां सत्त्वेन भगवत्प्रसादमंतरेण विनाशानुपपत्तेः सर्वदेहवियोगासंभवे मुक्त्यभाव इति भावः ॥ ७६ ॥ ❀ ❀ मनुष्येंद्रेति । मनुष्यस्यापि देहांतरापेक्षयाधिकज्ञानवत्त्वेनैतद्विचारे सामर्थ्यं भवति तव तु मनुष्येंद्रत्वात्कथं न भवेदिति भावः ॥ ७७ ॥ ❀ ❀ कथं सति केन प्रकारेण मनसि सति कीदृशे मनसि सति संसारो भवतीत्यर्थः । तद्बंधहेतुत्वम् अक्षैरिंद्रियैः । असकृदभीक्ष्णम् । आचिनुते करोति । यतो हेतोः कर्मण्येकस्मिन्नपि बीजरूपे स्थिते सति । अत्राक्षिपति--नन्विति । अविद्यायां विषयेच्छारूपायां कर्मणि बंध आसक्तिर्भवति 'यया संमोहितो जीवः' इत्याद्युक्तेः ॥७८॥ ❀ ❀ यतोऽविद्यासंबंध एव बंधहेतुस्ततो हेतोः । तदपवादार्थमविद्यानिवृत्तये । सर्वात्मना सर्वभावेन "अनर्थोपशमं साक्षाद्यतो भक्तिरधोक्षजे" इत्युक्तेः । तदात्मकं तद्रूपं "भयं द्वितीयाभिनिवेशतः स्यात्" इत्युक्तेः ॥ ७९ ॥ ❀ ❀ गतिं सच्चिदानंदलक्षणाम् । अमुं प्राचीनबर्हिषम् , सिद्धलोकं ब्रह्मलोकम् । तत उपदेशानंतरम् । वर्णाधिक्यमाद्यपादे छांदसम् ॥ ८० ॥

### श्रीमद्वीरराघवव्याख्या

अनिष्टतामेवाह यथेति । यथेयं प्रसिद्धा तृणजलूका । स्वावष्टम्भतृणं हित्वा नोपयाति तृणान्तरं प्रति न गच्छति किन्तु तदेव तृणमुपयाति दृढतरं संश्लिष्यति एवं म्रियमाणोऽपि जनः मरणे प्राग्देहाभिमतिं न त्यजतीत्यर्थः । नापयात्यपयाति चेति पाठे यथैव दैववशादपयाति मनसा त्यक्तुं नेच्छति ॥ ७६ ॥ ❀ ❀ देहाभिमानपरित्यागस्यावधिमाह यावदिति । कर्मणां व्यवधानेन कर्मभिस्तिरोधानेन यावदुदेहादन्यमात्मानं न विन्देत तावन्न त्यजेदित्यर्थः । प्रकरणार्थमुपसंहरति मन इति । हे मनुष्येन्द्र ! भूतानां भवभावनं जन्महेतुर्मन एव ॥ ७७ ॥ ❀ ❀ तदेवोपपादयति । अक्षैरिन्द्रियैश्चरितान् पूर्वमुपभुक्तान् विषयान् यद्येन मनसा ध्यायन् कर्माण्यसकृदाचिनुते करोति सति कर्मण्यविद्याया बन्धः, अविद्याया इति पञ्चमी, कर्मणि सति तत्कृतदेहेनाहङ्कारममरूपाविद्याया आत्मनो बन्धः स्यात्स चाविद्याया बन्धः कर्मकृतः कर्म च विषयानुभवहेतुः अविद्यया कर्म कर्मणा चाविद्येत्यनादिः प्रवाह इत्यर्थः ॥ ७८ ॥ ❀ ❀ तन्मोचनोपायमाह अत इति । तस्य देहविलक्षणस्य ब्रह्मात्मकस्य स्वात्मनः अवबोधार्थं सर्वात्मना करणत्रयेण हरिं भगवन्तं भजस्व आत्मापरोक्षमपि भगवत्प्रसादादेव भवतीति भावः । कथम्भूतो जानीयात्तत्राह--विश्वं चिदचिदात्मकं जगद्भगवदात्मकं पश्यन् विश्वस्य तदात्मकत्वे हेतुं वदन् हरिं विशिनष्टि । यतो हरेर्हेतोः विश्वस्य स्थितिरप्ययो नाशश्चेत्यमी भवन्ति हरेर्विश्वस्य स्थित्यादिकारणत्वाद्धर्यात्मकं विश्वं पश्यतीत्यर्थः । स्थित्यादीनां तदात्मकत्वे हेतुत्वं श्रुतं "सर्वं खल्विदं ब्रह्म तज्जलानिती"ति ॥ ७९ ॥ ❀ ❀ संवादमुपसंरति मुनिः ।

---

१. प्रा० पा०--तदपबाधार्थं । २. प्रा० पा०--नृपमा० ।

भागवतानां मध्ये मुख्यः भगवान्नारदो हंसयोर्जीवपरयोर्गतिं स्वरूपं प्रदर्श्य उपदिश्य नृपं प्राचीनबर्हिषमामन्त्र्यानुज्ञाप्य ततो ब्रह्मलोकमगात् ॥ ८० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ननु यदानेन संसारी स्थूलदेहानुपादत्ते तदा हर्षादिकं विन्दते यदा तन्मुञ्चति तदा निवृत्तहर्षादित्वेन मुक्तिः स्यादित्यत्राह यथेति । तृणजलूका कीटविशेषः यावदन्यत्तृणं न विन्देत तावन्नोपयाति यावद्विन्दते तावदेवापयाति पूर्वं गृहीतं विसृज्य पश्चात्तृणान्तरं यथा याति तथायं जनो म्रियमाणोऽपि पूर्वदेहाभिमतिं न त्यजेद् देहान्तरं प्राप्य पूर्वं त्यजतीत्यर्थः । किमिति झटिति न त्यजतीति तत्राह व्यवधानेनेति । कर्मणां प्राचीनानां व्यवधानेन विलम्बफलदातृत्वेन हेतुना अनेकेषां पूर्वेषां कर्मणां सत्त्वेन भगवत्प्रसादमन्तरेण विनाशानुपपत्तेः सर्वदेहवियोगासम्भवेन मुक्त्यनुदय इति भावः ॥ ७६ ॥ ॐ ॐ अनर्थदर्शनेन जातया विरक्त्या कर्माकरणेन तत्समाप्तेर्देहारम्भककर्माभावेन देहाभावान्निर्वाणोपपत्तिरिति तत्राह मन एवेति । मनःसम्प्रयुक्तैरक्षैश्चरितं कर्म ध्यायंस्तदनुसारेणासक्तन् कर्मण्याचिनुते करोतीति यत्तस्मान्मन एव भूतानां भवं संसारं जन्म वा भावयति उत्पादयतीति भवभावनं मनः । प्रधानत्वद्योतनार्थ एवशब्दः "न हि कश्चिक्षणमपि जातु तिष्ठत्यकर्मकृत्" इति स्मृतेः ॥ ७७ ॥ ॐ ॐ अविद्यायां विषयेच्छायां सत्यां कर्म भवति तस्मिन्सत्यात्मनो जीवस्य बन्धः "कर्मण्यः कर्महेतुकः" इति यदतस्तदपवाधार्थं कर्मनिवृत्त्यर्थं सर्वात्मना पुत्रादिस्नेहत्यागेन हरिं भजेत्यन्वयः । एवं जीवं बन्धयामीतीश्वरेच्छायां वा तस्येच्छाया अपसरणार्थं न बन्धयामीति ॥ ७८ ॥ ॐ ॐ भजनं नाम गुणोपसंहारस्तदर्थं तद्गुणानाह पश्यन्निति । यतो हरेर्विश्वस्य स्थित्यादयः स्युस्तद्विश्वं तदात्मकं तद्व्याप्तं तदधीनसत्ताकं पश्यंश्चिन्तयन्निति पूर्वेणान्वयः । तत्तदधिकार्युपास्तियोग्यानां गुणानां स्थित्यादावन्तर्भावात्तदर्थं स्थित्यादिग्रहणम् ॥ ७९ ॥ ॐ ॐ ( नन्वेवमुपासीनस्य कदा साधनसामग्र्या मुक्तिः स्यादित्यत्राह भक्तिरिति । कृष्णे पूर्णानन्दे हरावपरोक्षज्ञानजननी भक्तिः उपलक्षणमेतत् स्वगुरुमारभ्य ब्रह्मान्तेषु स्वोत्तमेषु तत्तद्योग्यतानुसारेण निष्कपटा भक्तिश्च जीवेषु स्थावरेषु या चित्तस्य द्रवीभावता दया दय-दानगतिशोषणेष्विति धातोः तत्त्वविरोधिषु शोषणे हेतुर्द्वेषश्चात्मनि स्वस्वरूपेऽकुण्ठज्ञानं हरिदर्शनानन्तरं देहादिव्यतिरेकेण ज्ञानानन्दरूपोऽहमित्यव्यवधानेन निरन्तरानुसवलक्षणमितीयं साधनसामग्री यदि यदा स्यात्तदा कालव्यवधानमन्तरेणात्मनस्तव संसारादपवर्गः क्रियासाध्यफलावाप्तिः स्यादित्यन्वयः । "देहादिव्यतिरेकेण चिद्रूपोऽहमिति स्फुटम् । सदैवानुभवो भक्तिर्विष्णौ तद्दर्शनादनु ॥ यस्यासौ मुच्यते क्षिप्रं संसारान्नात्र संशयः ।" इत्यनेन हेतुवाचितुशब्दसूचितेनोक्त एवार्थो नाद्वैतार्थः ॥ ० ॥ ननु प्रथमभाविवैराग्याख्यसाधनमन्तरेण भक्त्यादिना कथं मुक्त्युदय इत्यतः सिंहावलोकनन्यायेन तदाह अदृष्टमिति । अदृष्टं स्वर्गादिफलं सस्यादिदृष्टफलवन्नङ्क्ष्येन्नश्यति भूतमुत्पन्नमिदं सर्वं जगदन्यथाऽनित्यं कथमिव स्वप्नदृष्टपदार्थसमं नश्वरत्वात्स्वप्नसमं न तु बोधनिवर्त्यत्वात् संसारस्थमिदं सर्वमनित्यत्वाद्वृथा यतः 'अतः प्राहुः स्वप्नसमं प्राज्ञा जगदिदं मृषे'ति वचनान्न मिथ्यात्वं प्रपञ्चस्येति । अस्तु, भूतमनित्यत्वात् स्वप्नसमं भविष्यच्च स्वप्नसमं न स्यादित्याशङ्क्य यथा भूतमनित्यत्वात् स्वप्नसमं तथा भविष्यच्च सर्वमनित्यत्वेन स्वप्नसममित्याह भूतमिति । स्वप्नशब्दस्य कथं स्वप्नार्थत्वमपर्यायत्वादितीयमाशङ्का "सुषुप्तिस्वप्नयोश्चैव स्वर्गव्योम्नोस्तथैव च । अन्योऽन्यनामता ज्ञेया मनोबुद्ध्योस्तथैव च" इत्यनेन परिहर्तव्येति सर्वमनित्यं चेन्नित्यं वस्तु किं तदाह । सर्वं रहो रह इति सर्वरहः सर्वशास्त्रप्रतिपाद्येषु रहस्यं गुरुपदेशत्वाद्रह इति स्वभक्तदोषात् स्वयं च निर्दोषतया सदा स्थितं रहो ब्रह्म । तदुक्तम् 'रहो ब्रह्म तथा यज्ञः स्वःसत्यमिति गीयते' इति । नित्यनिर्दोषं ब्रह्मेतरत्सर्वमनित्यमसारं चेति विज्ञानं वैराग्यमिति भावः, विरक्त्या भक्तिस्तया गुणोपसंहारलक्षणमुपासनं तेनापरोक्षज्ञानं तेन श्रीनारायणप्रसादस्तेन स्वयोग्यमुक्तिरिति क्रममुल्लङ्घ्य वैराग्यस्य सर्वत्रानुसन्धानार्थं पश्चादप्युक्तमिति ज्ञातव्यम् ॥०॥) उपसंहरति भागवतमुख्य इति । हंसयोर्जीवपरमात्मनोर्गतिं सच्चिदानन्दलक्षणां हरेर्जगदुत्पत्त्यादिलक्षणां जीवस्य तदधीनत्वादिलक्षणां वा । सिद्धजातिषु नारदस्य प्राधान्यद्योतनाय प्रथमपादस्याक्षराधिक्यम् ॥ ८० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

यथेति सार्द्धकम् ॥ ७७ ॥ ॐ ॐ मन इत्यर्द्धकम् ॥ ७८ ॥ ॐ ॐ अविद्यायां सत्यामिति 'यया सम्मोहितो जीवः' इति न्यायेन सङ्गमनीयम् । अतस्तदपवादार्थमित्यत्र 'भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य' इत्यादिकमुपजीव्यम् ॥ ७९-८१ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

देहत्यागदेहान्तरप्रवेशयोर्मध्यक्षणेऽप्यभिमानाविच्छेदमाह यथेति । नापयाति पूर्वतृणस्यात्यागात् अपयाति च तृणान्तरधारणात् कर्म्मणामुत्तरदेहारम्भकाणां व्यवधानेन विशेषतो धारणेन ॥ ७६ ॥ ॐ ॐ प्रकरणमुपसंहरति मन एवेति । भवभावनं संसारहेतुः ॥ ७७ ॥ ॐ ॐ केन प्रकारेणेत्यत आह यदेति । चरितान् उपभुक्तान् पदार्थान् यतः कर्म्मणि एकस्मिन्नपि बीजरूपे स्थिते सति अविद्यायां सत्यामनात्मनो देहादेः कर्म्मणि बन्धो भवति ॥ ७८-७९ ॥ ॐ ॐ हंसयोर्जीवेश्वरयोः ॥ ८० ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

लि ेचिरकालस्थायिनि अहम्बुद्धौ नास्ति विवादः स्थूलदेहे आत्मत्वबुद्धेरनुवृत्तिमाह यथेति। इयं लोके प्रसिद्धा तृणजलूका यदा तृणान्तरं गच्छति तदा तद्ग्रहणं विना पूर्वतृणान्नोपयाति तद् गृहीत्वा तु अपयाति एवमुत्तरदेहे आत्मबुद्धिं विना म्रियमाणोऽपि प्राग्देहाभिमतिं पूर्वशरीरे आत्मत्वबुद्धिं न त्यजेन्न त्यजति॥ ७६॥ ❀ ❀ देहात्मत्वानुवृत्तेरवधिमाह यावदिति। व्यवधानेन देहात्मत्वबुद्धिवृत्तिविच्छेदात्मकेन कर्म्मणा वेदान्तश्रवणादिनेत्यर्थः। अन्यं देहेन्द्रियादिविलक्षणमात्मतत्त्वं यावन्न वेद तावन्न त्यजति फलितमर्थमाह। देहात्मत्वबुद्ध्यादि नानावृत्तिमन्मन एव भवं जन्ममरणप्रवाहरूपं संसारं भावयतीति तत्॥ ७७॥ ❀ ❀ भवमेवोपपादयति यदेति। अविद्यायाम् "अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते। यथा क्षेत्रज्ञशक्तिः सा वेष्टिता नृप! सर्वगा" इति स्मृतेः। अनादितः प्रवृत्ते अविद्यासंज्ञके कर्मणि सत्यपि चरितान्। पूर्वविषयभोगान् ध्यायन् अक्षैरिन्द्रियैर्बन्धनभूतानि पुनः कर्माण्येवाचिनुते असकृत् जन्मनि जन्मनि न तु अनादिकर्मरूपामविद्यां निराकर्तुं यतते यदा तदा अनात्मबुद्धेः कर्मणि बन्धः पुनः पुनर्जन्ममरणलक्षणः संसार इत्यर्थः॥ ७८॥ ❀ ❀ तदपवादार्थं जन्ममरणप्रवाहरूपबन्धनिराकरणार्थमित्यर्थः॥ ७९॥ ❀ ❀ हंसयोः जीवब्रह्मणोः॥ ८०-८२॥

**गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी**

नन्वेकं देहं परित्यज्य देहान्तरप्रवेशात् पूर्वं स्थूलदेहाभावात् तदा तदध्यासो न स्यादित्याशङ्कयाह—यथेति। यथेयं प्रसिद्धा तृणजलूका कीटविशेषः पूर्वधृततृणस्यात्यागात् नापयाति तृणं त्यक्त्वा न गच्छति तृणान्तरस्य धारणात् अपयाति तृणान्तरं गच्छति चेति प्रसिद्धम्, तथाऽयं जनः जीवोऽपि यावदेव तद्देहप्रारम्भकाणां कर्मणां व्यवधानेन विशेषतो धारणेन भोगेन समाप्त्याऽन्यं देहं सम्यक् न विदन्ते न लभते तावन् म्रियमाणोऽपि मरणावस्थायां लोकान्तरगमनयोग्यदेहान्तरं प्रविशन्नपि प्राग्देहे अभिमतिं अहम्ममेत्यभिमानं न त्यजेत् न त्यजतीति द्वयोरन्वयः। एतावता प्रबन्धेन फलितमर्थमाह—मन इति सार्द्धाभ्याम्। हे मनुष्येन्द्र मन एवम्भूतानां प्राणिनां भवभावनं जन्ममरणादिसंसारदुःखस्य कारणम्। अत्र मया किञ्चिदयुक्तं यद्युक्तं भवान् मन्यते तदा तन्निर्भयं भवतोद्घाटनीयं अन्यथा भवतः सन्देह एव तिष्ठेदिति सूचनार्थं सम्बोधनम्॥ ७६-७७॥ ❀ ❀ मनसः संसारहेतुत्वप्रकारमेव दर्शयति—यदेति। अविद्यायां देहेन्द्रियान्तःकरणाद्यध्यासलक्षणायां सत्यामनात्मनः आत्मानुसन्धानशून्यस्य शुभाशुभं कर्म भवति। तस्मिन् कर्मणि सति तन्नैमित्तिको भोगो भवति ततश्च अक्षैरिन्द्रियैश्चरितान् उपभुक्तान् विषयान् मनसा ध्यायन् यदा पुनर्विषयप्राप्तिहेतुभूतानि कर्माणि आचिनुते करोति तदा तस्मिन् कर्मणि सति असकृत्पुनरस्य संसारबन्धो भवतीत्यन्वयः॥ ७८॥ ❀ ❀ भगवद्भजनपरं मन एव संसारनिवर्त्तकमपीत्याह—अह इति। यतः सर्वानर्थमूलं देहेन्द्रियान्तःकरणाद्यध्यास एव अतस्तस्मात्तदपवादार्थं तस्य सर्वानर्थमूलस्याध्यासस्य निवृत्त्यर्थं सर्वात्मना एकाग्रेण मनसा हरिं श्रवणकीर्त्तनादिना भज। तदपि भजनं न भेददृष्ट्या किन्तु सर्वमपि विश्वं तदात्मकं पश्यन् सर्वजगदुपादानकारणत्वेनेत्यर्थः। न केवलमुपादानमात्रं किन्तु निमित्तकारणमपि स एवेति जानन्नित्याह—स्थितीति। विश्वस्य स्थितिः पालनमुत्पत्तिश्च अप्ययः प्रलयश्च यतो हरेर्भवति तं भजेत्यन्वयः॥ ७९॥ ❀ ❀ एवं नारदो प्राचीनबर्हिषे हंसयोर्जीवेश्वरयोर्गतिं तत्त्वं प्रदर्श्य निरूप्य हीति निश्चये तस्य स्वोक्तेर्थे निश्चयं ज्ञात्वाऽमुं राजानमामन्त्र्य पृष्ट्वा ततः स्थानात् सिद्धलोकमगमदित्यन्वयः। एवं तत्त्वप्रदर्शने योग्यमाह—भगवानिति, सर्वज्ञ इत्यर्थः। तत्र हेतुमाह—भागवतेति, यतो भागवतेषु मुख्यस्ततो भगवत्कृपया सर्वज्ञ इत्यर्थः। अत्र प्रथमे पादेऽक्षराधिक्यं छन्दोभङ्गश्चार्षः॥ ८०॥

**भाषानुवादः**

जिस प्रकार जोंक जबतक दूसरे तृणको नहीं पकड़ लेती, तबतक पहलेको नहीं छोड़ती-उसी प्रकार जीव मरणकाल उपस्थित होनेपर भी जबतक देहारम्भक कर्मोंकी समाप्ति होनेपर दूसरा शरीर प्राप्त नहीं कर लेता तबतक पहले शरीरके अभिमानको नहीं छोड़ता। राजन्! यह मनःप्रधान लिङ्गशरीर ही जीवके जन्मादिका कारण है॥ ७६-७७॥ ❀ ❀ जीव जब इन्द्रियजनित भोगोंका चिन्तन करते हुए बार-बार उन्हींके लिये कर्म करता है, तब उन कर्मोंके होते रहनेसे अविद्यावश वह देहादिके कर्मोंमें बँध जाता है॥ ७८॥ ❀ ❀ अत एव उस कर्मबन्धनसे छुटकारा पानेके लिये सम्पूर्ण विश्वको भगवद्रूप देखते हुए सब प्रकार श्रीहरिका ही भजन करो। उन्हींसे इस विश्वकी उत्पत्ति और स्थिति होती है तथा उन्हींमें लय होता है॥ ७९॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—विदुरजी! भक्तश्रेष्ठ श्रीनारदजीने राजा प्राचीनबर्हिको जीव और ईश्वरके स्वरूपका दिग्दर्शन कराया। फिर वे उनसे विदा लेकर सिद्धलोकको चले गये॥ ८०॥

प्राचीनबर्हीं राजर्षिः प्रजासर्गाभिरक्षणे । आदिश्य पुत्रानगमत्तपसे कपिलाश्रमम् ॥ ८१ ॥
तत्रैकाग्रमना वीरो गोविन्दचरणाम्बुजम् । विमुक्तसङ्गोऽनुभजन् भक्त्या तत्साम्यतामगात् ॥ ८२ ॥
एतदध्यात्मपारोक्ष्यं गीतं देवर्षिणानघ । यः श्रावयेद्यः शृणुयात्स लिङ्गेन विमुच्यते ॥ ८३ ॥
एतन्मुकुन्दयशसा भुवनं पुनानं देवर्षिवर्यमुखनिःसृतमात्मशौचम् ।
यः कीर्त्यमानमधिगच्छति पारमेष्ठ्यं नास्मिन् भवे भ्रमति मुक्तसमस्तबन्धः ॥ ८४ ॥
अध्यात्मपारोक्ष्यमिदं मयाधिगतमद्भुतम् । एवं स्त्रियाऽऽश्रमः पुंसश्छिन्नोऽमुत्र च संशयः ॥ ८५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे विदुरमैत्रेयसंवादे प्राचीन[1]बर्हिर्नारदसंवादो नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

अन्वयः—राजर्षिः प्राचीनबर्हिः प्रजासर्गाभिरक्षणे पुत्रान् आदिश्य तपसे कपिलाश्रमम् अगमत् ॥ ८१ ॥ ❀ ❀ तत्र विमुक्तसंगः वीरः एकाग्रमनाः गोविंदचरणाम्बुजम् भक्त्या अनुभजन् तत्साम्यताम् अगात् ॥ ८२ ॥ ❀ ❀ अनघ एतत् देवर्षिणा गीतम् अध्यात्मपारोक्ष्यम् यः श्रावयेत् यः शृणुयात् सः लिंगेन विमुच्यते ॥ ८३ ॥ ❀ ❀ यः एतत् मुकुंदयशसा भुवनम् पुनानम् देवर्षिवर्यमुखनिःसृतम् आत्मशौचम् पारमेष्ठ्यम् कीर्त्यमानम् अधिगच्छति मुक्तसमस्तबन्धः अस्मिन् भवे न भ्रमति ॥ ८४ ॥ ❀ ❀ इदम् अद्भुतम् अध्यात्मपारोक्ष्यम् मया अधिगतम् एवम् पुंसः स्त्रिया आश्रमः छिन्नः अमुत्र च संशयः ॥ ८५ ॥

इत्यूनत्रिंशोऽध्यायः ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

पुत्रानादिश्येति पुत्राणामादेशं मंत्रिणामग्रे कथयित्वा । कपिलाश्रमं गंगासागरसंगमम् ॥ ८१-८३ ॥ ❀ ❀ आत्मशौचं मनःशोधकं पारमेष्ठ्यं सर्वोत्कृष्टफलदम् ॥ ८४ ॥ ❀ ❀ स्त्रीबुद्धिस्तत्सहितस्याश्रमोऽहंकारश्छिन्नो भवति अमुत्र कर्मफलभोगः कथमिति संशयश्छिन्नः ॥ ८५ ॥

इति श्रीभागवते महापुराणे चतुर्थस्कन्धे टीकायामेकोनत्रिंशोऽध्यायः ॥ २९ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

प्रजासर्गश्च संतत्युत्पादनमभिरक्षणं प्रजापालनं चेति द्वंद्वैक्यम् । यद्वा–प्रजाया ब्राह्मणादिरूपायाः सर्गस्य स्वभावस्य शमदमादेरभिरक्षणे स्थापने तत्परिपंथिनिरासेनेति शेषः ॥८१॥ ❀ ❀ तत्र कपिलाश्रमे । तत्साम्यतां तत्पार्षदत्वम् ॥८२॥ ❀ ❀ एतत् उपाख्यानम् । अध्यात्मस्य जीवस्य । पारोक्ष्यं परोक्षतया वर्णनं पुरंजनराजरूपतया कथनम् । अनघेति तव त्वविद्यालक्षणोऽघो नास्त्यप्यन्येषां तन्निवर्तकस्त्वमित्याह–लिंगेन । लिंगयति प्रकाशयति संसारमिति लिंगमज्ञानं तेन त्यज्यते जीवन्मुक्तो भवतीति भावः ॥ ८३ ॥ ❀ ❀ मुकुंदयशसा कर्मादिभ्यो भक्त्युत्कर्षवर्णनेन 'तस्मिन्महन्मुखरिता मधुभिच्चरित्रम्' इत्यादिना व्यंजितेन वा । पारमेष्ठ्यं परमेष्ठिकर्म परमेष्ठिनाप्येतन्नित्यं कीर्त्यत इत्यर्थः । यद्वा–परमेष्ठिनः सर्वोत्कृष्टलोकवासिनो हरेर्प्राप्तौ साधनं पारमेष्ठ्यमधिगच्छति गुरोस्सकाशाज्जानाति यस्मिञ्जन्मनि जानाति अस्मिन्नित्यर्थः । तथा च संसारभ्रम एवानेन निवार्यते न बंध इति मंदाशंकां वारयति मुक्तेति । अस्मिन्प्रसिद्धे संसारे वा ॥ ८४ ॥ ❀ ❀ एतच्च शिष्टशिरोमणिना मैत्रेयेणाप्यधिगतत्वादन्यैरवश्यमधिगंतव्यमिति भावेनाह मया मैत्रेयेण । गहनादद्भुतमिदं नारदेन प्राचीनबर्हिषे उपदिष्टमध्यात्मपारोक्ष्यमधिकाद् गुरुमुखादधीतमेव तुभ्यमुपदिष्टमतस्त्वयाप्यतिश्रद्धयाधीत्याभ्यसनीयमिति शेषः । किं च अस्य फलमप्यद्भुतमेवेत्याह–एवमिति । एवमुक्तरीत्या पुंसः स्त्रिया बुद्ध्या सह वर्तमानस्य य आसमंताच्छ्रमयति तापयति स्वसंबंधिनमित्याश्रमोहंकारः । "अहंकारो भवेत्पुंसो निखिलानर्थकारणम् । बुद्धिसंगादीशसंगिसंगात्स च निवर्त्तते ॥" इत्यादिपुराणोक्तेः । पक्षे गार्हस्थ्यलक्षणः । किञ्चाधिगंतुः पुंसः पारलौकिकसंशयोप्यनेन निवर्त्तत इति भावः ॥ ८५ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## श्रीमद्वीरराघवव्याख्या

ततः प्राचीनबर्हिः प्रजासृष्टौ तद्रक्षणे च स्वपुत्राननुज्ञाप्य स्वयं तपश्चर्तुं कपिलाश्रममगात् ॥ ८१ ॥ ❀ ❀ तत्र चाश्रमे धीरो वशीकृतेन्द्रियः एकाग्रचित्तः विविक्तो भगवच्चरणाम्बुजं ध्यायंस्तद्भक्त्या तत्साम्यतां तेन साम्यं यस्येति बहुव्रीहिः

१. प्रा० पा० नारदप्राचीन-बर्हिःसंवादेऽध्यात्मपारोक्ष्यं नाम ।

तत्साम्यवत्तामित्यर्थं इयादगात् । तत्सात्मतामिति पाठे तेन भगवता समानात्मतां समानता तत्साधर्म्यमित्यर्थः । श्रवणश्रावणादिफलमाह एतदिति । हे अनघ ! देवर्षिणा गीतमेतदध्यात्मपारोक्ष्यं यः पुरुषः श्रावयेत् शृणुयाद्वा स लिङ्गेन संसृतिहेतुना मनसा दुःखेन हेतुना बन्धेन वा विमुच्यते मुक्तो भवेदित्यर्थः ॥ ८२-८३ ॥ ❀ ❀ एतदध्यात्मपारोक्ष्यं मुकुन्दयशसा युक्तमिति शेषः । अत एव भुवनं पुनानं पवित्रीकुर्वाणं नारदमुखान्निर्गलितमात्मशौचं मनःशोधकं पारमेष्ठ्यं सर्वोत्कृष्टफलदं कीर्त्यमानं कथ्यमानं यः पुमानधिगच्छति स पुमान्निरस्तसमस्तबन्धः अस्मिन्भवे संसारे न भ्रमति ॥ ८४ ॥ ❀ ❀ उक्तमर्थमुपसंहरति । अद्भुतमध्यात्मपारोक्ष्यमध्यात्मतत्त्वस्य पारोक्ष्यं परोक्षवादो यस्मिन्नत एवाद्भुतमाश्चर्यमध्यात्मस्य पारोक्ष्यं दुःशकमित्यद्भुतमित्यर्थः । मया तुभ्यमभिहितं तथा पुंसः क्षेत्रज्ञस्य स्त्रियाश्रमः गृहस्थाश्रमत्वेन रूपितः संसारश्च कथितः, अमुत्र परलोके संशयः फलानुभवविषयो भवदीयः संशयश्च छिन्नः निरस्तः ॥ ८५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

"सर्गः स्वभावनिर्मोकनिश्चयाध्यायसृष्टिषु" इत्यभिधानात् प्रजानां स्वभावविद्याधर्मादिपुरुषार्थरक्षणे तत्परिपन्थिनिरासेनेति शेषः ॥ ८१ ॥ ❀ ❀ विमुक्तसङ्गो निष्कामस्तस्य हरेः साम्यतां निर्दोषत्वलक्षणाम् ॥ ८२ ॥ ❀ ❀ एतस्येतिहासस्याभ्यासेन किं फलमुदेति येनायमवश्यं ज्ञातव्यः स्यादन्यथा नारदेन बाललीलाकथावद्विनोदार्थमुक्तं फलानुक्तेरिति परीक्षितो हार्दं चोद्यं शुकः परिहरतीत्याह एतदिति । अधिकात्मनः परमात्मनोऽधिगतात्मनः प्रत्यक्षसिद्धस्य जीवात्मनो वा स्वरूपं पारोक्ष्यं परोक्षतया शब्दलक्षणतया गीतं शब्दितं न साक्षादुक्तं देवप्रियत्वात् "परोक्षप्रिया इव हि देवाः" इति श्रुतेरित्यर्थः, देवर्षिणेत्यनेन नारदस्य विनोदकथाकथनस्वभावो नास्तीति ध्वनयति । लिङ्गेन शरीरेण मुच्यते रहितो भवतीत्यनेन तृतीयावचनेन पूर्वमपि स्वरूपाद्भिन्नमिति ध्वनयति स्वरूपभूतदेहेन सहसैव गच्छतीति च "सोनानन्दाद्विमुक्त आनन्दी भवति" इति श्रुतेः ॥ ८३ ॥ ❀ ❀ न केवलमिदं प्राचीनबर्हिषः प्रयोजनं किन्तु सर्वेषामपीति भावेन पुनरुक्तं विशिनष्टि एतदिति । मुकुन्दस्य यशसा सहितमेतत्पुरञ्जनोपाख्यानमात्मशौचमात्मनो मनसः शुचिता यस्मात्तत्तथा पारमेष्ठ्यं परमेष्ठिनः सर्वोत्तमस्य हरेः ज्ञप्तौ परमसाधनमधिगच्छति गुरोः सकाशाज्जानाति भवे संसारे यस्मिन् जन्मनि जानाति अस्मिन्निति वा । अनेन संसारभ्रम एव निवार्यते न तु तद्बन्ध इति मन्दाशङ्कां निवारयति मुक्तेति ॥ ८४ ॥ ❀ ❀ शिष्टजनेष्वेकेन मैत्रेयेणाधिगतत्वादेतद्वावश्यमधिगन्तव्यमिति भावेनाह अध्यात्मेति । मया मैत्रेयनाम्ना गहनत्वादद्भुतमिदं नारदेन प्राचीनबर्हिषे उपदिष्टमध्यात्मपारोक्ष्यमधिकात् गुरुमुखादधीतमेव तवोपदिष्टमत एव त्वयाप्यतिश्रद्धयाधीत्याभ्यसनीयमिति शेषः । नन्वेतदधिगमेन यदि वेदविषयोऽपि संशयश्छिन्नः स्यात्तर्ह्यधिगन्तव्यान्तराभावेन धन्यः स्यामतः कथं निर्णयः स्यादत्राह एवमिति । यः पुंसो जिज्ञासोस्त्रय्या आश्रयस्त्रिवेदीविषयः संशयोऽध्यात्मस्वरूपे छिन्न एवामुत्राधिदैवादिस्वरूपे च संशयो मम छिन्नोऽत एव तवापि छिन्नः स्यादिति शेषः । अनेन पुरञ्जनोपाख्यानस्य वेदविषयत्वप्रतीतेस्तदतिश्रद्धया ध्येयमिति सिद्धं, यद्वा एतदध्यात्मपारोक्ष्यमधिगतं यथा एवं त्रयी चाधिगता एकविषयात् ततः किं फलमत्राह । आश्रय इति । पुंस आश्रय इहामुत्र च संशयश्छिन्नो भवतीत्येतत्फलं भवतीत्यर्थः । अतिगहनं जलनिधिवत्क्षुराग्रमिव दुर्गहं निशितं तीक्ष्णं पुरञ्जनोपाख्यानं व्याख्याछलेन मयावातारि तरणिरिव व्योमतलं पवनात्मज इव पयोराशिं क्षुरधारामिवाहयतारिषमध्यात्मपारोक्ष्यम् ॥ ८५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे विजयध्वजकृतपदरत्नावल्याम् एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तत्साम्यताम् तत्सारूप्यम् ॥ ८२-८३ ॥ ❀ ❀ मुकुन्दयशसा । तस्मिन् महन्मुखरिता इत्यादिना लक्षणेन तद्यशोमहिम्ना ॥ ८४ ॥ ❀ ❀ स्त्रियाश्रय इति छान्दस इयङादेशः ॥ ८५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

पुत्रानादिश्येति पुत्राणामादेशं मन्त्रिणामग्रे कथयित्वा पुत्राणां तदा तत्रानागमनात् ॥ ८१ ॥ ❀ ❀ साम्यतां साम्यं सारूप्यम् ॥ ८२ ॥ ❀ ❀ एतदुपाख्यानं मुकुन्दयशसा कर्मादिभ्यो भक्त्युत्कर्षरूपेण तस्मिन्महन्मुखरिता मधुभिच्चरित्रेत्यादिना व्यञ्जितेन वा पारमेष्ठ्यं परमेष्ठिनः कर्म्म परमेष्ठिनाप्येतन्नित्यं कीर्त्यते इत्यर्थः तत्कृतं वा ॥ ८३-८४ ॥ ❀ ❀ स्त्री बुद्धिस्तत्सहितस्याश्रयोऽहङ्कारः पक्षे गार्हस्थ्यलक्षणः अमुत्र कर्म्मफलभोगः कथमिति संशयश्च छिन्नः ॥ ८५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । चतुर्थे एकोनत्रिंशः सङ्गतः सङ्गतः सताम् ॥ २९ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

लिङ्गेन विमुच्यते लिङ्गदेहं हित्वा भगवत्साम्यं प्राप्नोति ॥ ८३ ॥ ❀ ❀ मुकुन्दयशसा युक्तम्। अत एव भुवनं पुनानं विश्वं पवित्रीकुर्वाणमात्मशौचं मनःशोधकम्। परमेष्ठी अत्र परमपदवासी वासुदेवस्तत्प्रापकम्। यः कीर्त्यमानमधिगच्छति स भवे संसारे न भ्रमति किन्तु मुक्तसमस्तबन्धो भवति ॥ ८४ ॥ ❀ ❀ अध्यात्मस्यात्मतत्त्वस्य पारोक्ष्यं गोप्यतया वर्णनं यस्मिन्निदं पुरञ्जनोपाख्यानं मयाधिगतं गुरुमुखात् एवमेव श्रुतं तथा स्त्रिया बुद्ध्या हेतुभूतया पुंसो जीवस्य श्रमः पुनः पुनर्जन्म-मरणलक्षणश्छिन्नः अधिगत इति फलितोऽर्थः श्रुतः यथोपदेशं तव सर्वं वर्णितमिति भावः, अमुत्र कर्मफलभोगः कथमिति संशयश्च छिन्नः ॥ ८५ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे एकोनत्रिंशाध्यायार्थप्रकाशः ॥ २९ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

प्राचीनबर्हिरपि राजर्षिः ज्ञानवैराग्यादिसम्पन्नः प्रजासर्गस्याभिरक्षणे पुत्रानादिश्य पुत्राः प्रचेतसो यदि गृहमागच्छेयुस्तदा युष्माभिस्ते राज्ये स्थापनीयास्तैश्च धर्मेण प्रजाः संरक्षणीया इति मन्त्रिणामग्रे कथयित्वा स्वयं तु तपसे तपःकरणार्थं कपिलाश्रम-मगमदित्यन्वयः ॥ ८१ ॥ ❀ ❀ तत्र कपिलाश्रमे वीरोऽतिप्रयत्नवान् विमुक्तसङ्गः विषयेभ्यः प्रत्याहृतेन्द्रियवर्गः अत एवैकाग्रमना भक्त्या गोविन्दचरणाम्बुजमनुक्षणं भजन् ध्यायन् तत्साम्यतां तस्य भगवच्चरणस्याक्षरब्रह्मणः साम्यतामगात्, तत्र लयं प्रापेत्यर्थः ॥ ८२ ॥ ❀ ❀ एतदाख्यानश्रवणकीर्त्तनयोः फलमाह—एतदिति। लिङ्गेन लिङ्गदेहेन संसारहेतुना विमुच्यते इत्यर्थः। स्पष्टमन्यत् ॥ ८३ ॥ ❀ ❀ देवर्षिवर्यस्य नारदस्य मुखान्निःसृतमेतदाख्यानं मुकुन्दस्य मुक्तिदातुर्भगवतो यशसा "संसृतिस्तद्व्यवच्छेदो भक्त्या परमया गुरौ। वासुदेवे भगवति भक्तियोगः समाहितः। सध्रीचीनेन वैराग्यं ज्ञानं च जनयिष्यति॥ अतस्तदपवादार्थं भज सर्वात्मना हरिम्" इत्यादावुक्तेन संसारोद्धारकत्वेन माहात्म्येन युक्तं अत एव भुवनं पुनानं चतुर्दशभुवनस्थानां एतच्छ्रवणपराणां प्राणिनां येषां केषाञ्चिदपि पवित्रकरं तत्रापि न केवलं पापनिवर्त्तकं अपि तु आत्मशौचमात्मनो देहेन्द्रियान्तः-करणाद्यध्यासनिवर्त्तकतया शोधकं अत एव पारमेष्ठ्यं परमेष्ठी परमेश्वरस्तत्स्वरूपब्रह्मप्रापकं अत एव महद्भिः कीर्त्यमानं यः प्राणी अधिगच्छति नित्यं श्रवणाभ्यासेन हृदि सम्यगवधारयति सोऽपि मुक्तसमस्तबन्धः निवृत्तदेहाद्यध्यासः सन्नस्मिन्नेव संसारे न भ्रमति किन्तु विमुक्तो भवतीत्यर्थः ॥ ८४ ॥ ❀ ❀ मया कथितं त्वयापि प्रेम्णा श्रुतं अत एवावामपि कृतार्थाविवेत्याशयेनाह— अध्यात्मेति। इदमत्यद्भुतमध्यात्मपारोक्ष्यं मयापि गुरोः कृपयाऽधिगतं निस्सन्दिग्धं श्रुतं तत्तुभ्यं कथितमिति शेषः। एवमुक्तप्रकारेण स्त्रिया सह पुंसः श्रमः देहाद्यध्यासेन संसारे भ्रमणक्लेशस्तथाऽमुत्र कर्मफलभोगः कथमिति संशयश्च च्छिन्नो निरस्तः ॥ ८५ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे मोक्षनिरूपणे। ऊनत्रिंशो गतो वृत्तिं सर्वसन्देहवारकः ॥ ३ ॥

### भाषानुवादः

तब राजर्षि प्राचीनबर्हि भी प्रजापालनका भार अपने पुत्रोंको सौंपकर तपस्या करनेके लिये कपिलाश्रमको चले गये ॥ ८१ ॥ ❀ ❀ वहाँ उन वीरवरने समस्त विषयोंकी आसक्ति छोड़ एकाग्र मनसे भक्तिपूर्वक श्रीहरिके चरणकमलोंका चिन्तन करते हुए सारूप्यपद प्राप्त किया ॥ ८२ ॥ ❀ ❀ निष्पाप विदुरजी! देवर्षि नारदके परोक्षरूपसे कहे हुए इस आत्मज्ञानको जो पुरुष सुनेगा या सुनायेगा, वह शीघ्र ही लिङ्गदेहके बन्धनसे छूट जायगा ॥ ८३ ॥ ❀ ❀ देवर्षि नारदके मुखसे निकला हुआ यह आत्मज्ञान भगवान् मुकुन्दके यशसे सम्बद्ध होनेके कारण त्रिलोकीको पवित्र करनेवाला, अन्तःकरणका शोधक तथा परमात्मपदको प्रकाशित करनेवाला है। जो पुरुष इसकी कथा सुनेगा, वह समस्त बन्धनोंसे मुक्त हो जायगा और फिर उसे इस संसार-चक्रमें नहीं भटकना पड़ेगा ॥ ८५ ॥ ❀ ❀ विदुरजी! गृहस्थाश्रमी पुरञ्जनके रूपकसे परोक्षरूपमें कहा हुआ यह अद्भुत आत्मज्ञान मैंने गुरुजीकी कृपासे प्राप्त किया था। इसका तात्पर्य समझ लेनेसे बुद्धियुक्त जीवका देहाभिमान निवृत्त हो जाता है तथा उसका 'परलोकमें जीव किस प्रकार कर्मोंका फल भोगता है' यह संशय भी मिट जाता है ॥ ८५ ॥

इत्यूनत्रिंशोऽध्यायः ॥ २९ ॥

# अथ त्रिंशोऽध्यायः

विदुर उवाच

ये त्वयाभिहिता ब्रह्मन् सुताः प्राचीनबर्हिषः। ते रुद्रगीतेन हरिं सिद्धिमापुः प्रतोष्य काम् ॥ १ ॥

किं बार्हस्पत्येह परत्र वाथ कैवल्यनाथप्रियपार्श्ववर्तिनः।
आसाद्य देवं गिरिशं यदृच्छया प्रापुः परं नूनमथ प्रचेतसः ॥ २ ॥

मैत्रेय उवाच

प्रचेतसोऽन्तरुदधौ पितुरादेशकारिणः। जपयज्ञेन तपसा पुरञ्जनमतोषयन् ॥ ३ ॥
दशवर्षसहस्रान्ते पुरुषस्तु सनातनः। तेषामाविरभूत्कृच्छ्रं शान्तेन शमयन् रुचा ॥ ४ ॥
सुपर्णस्कन्धमारूढो मेरुशृङ्गमिवाम्बुदः। पीतवासा मणिग्रीवः कुर्वन् वितिमिरा दिशः ॥ ५ ॥

[1]काशिष्णुना कनकवर्णविभूषणेन भ्राजत्कपोलवदनो विलसत्किरीटः।
अष्टायुधैरनुचरैर्मुनिभिः सुरेन्द्रैरासेवितो गरुडकिन्नरगीतकीर्तिः ॥ ६ ॥
पीनायताष्टभुजमण्डलमध्यलक्ष्म्या[2] स्पर्धच्छ्रिया परिवृतो वनमालयाऽऽद्यः।
बर्हिष्मतः पुरुष आह सुतान् प्रपन्नान् पर्जन्यनादरुतया सघृणावलोकः ॥ ७ ॥

श्री[3]भगवानुवाच

वरं वृणीध्वं भद्रं वो यूयं मे नृपनन्दनाः। सौहार्देनापृथग्ध[4]र्मास्तुष्टोऽहं सौहृदेन वः ॥ ८ ॥
योऽनुस्मरति सन्ध्यायां युष्माननुदिनं नरः। तस्य भ्रातृष्वात्मसाम्यं तथा भूतेषु सौहृदम् ॥ ९ ॥
ये तु मां रुद्रगीतेन सायं प्रातः समाहिताः। स्तुवन्त्यहं कामवरान्दास्ये प्रज्ञां च शोभनाम् ॥ १० ॥

अन्वयः—ब्रह्मन् त्वया ये प्राचीनबर्हिषः सुताः अभिहिताः ते रुद्रगीतेन हरिम् प्रतोष्य काम् सिद्धिम् आपुः ॥ १ ॥ ❀ ❀ बार्हस्पत्य अथ ते प्रचेतसः देवम् गिरिशम् आसाद्य कैवल्यनाथप्रियपार्श्ववर्तिनः यदृच्छया अथ इह परत्र वा नूनम् परम् प्रापुः किम् ॥ २ ॥ ❀ ❀ पितुः आदेशकारिणः प्रचेतसः अंतः उदधौ जपयज्ञेन तपसा पुरञ्जनम् अतोषयन् ॥ ३ ॥ ❀ ❀ दशवर्षसहस्रान्ते तु सनातनः पुरुषः तेषाम् कृच्छ्रम् रुचा शमयन् शांतेन आविरभूत् ॥४॥ ❀ ❀ अंबुदः मेरुशृंगम् इव सुपर्णस्कन्धम् आरूढः पीतवासाः मणिग्रीवः दिशः वितिमिराः कुर्वन् ॥ ५ ॥ ❀ ❀ काशिष्णुना कनकवर्णविभूषणेन भ्राजत्कपोलवदनः विलसत्किरीटः अष्टायुधैः मुनिभिः सुरेन्द्रैः अनुचरैः आसेवितः गरुडकिन्नरगीतकीर्तिः ॥ ६ ॥ ❀ ❀ पीनायताष्टभुजमंडलमध्यलक्ष्म्या स्पर्धच्छ्रिया वनमालया परिवृतः आद्यः पुरुषः सघृणावलोकः प्रपन्नान् बर्हिष्मतः सुतान् पर्जन्यनादरुतया आह ॥ ७ ॥ ❀ ❀ सौहार्देन अपृथग्धर्माः नृपनंदनाः वः भद्रम् सौहृदेन अहम् तुष्टः यूयम् मे वरम् वृणीध्वम् ॥ ८ ॥ ❀ ❀ यः नरः अनुदिनम् संध्यायाम् युष्मान् अनुस्मरति तस्य भ्रातृषु आत्म- साम्यम् तथा भूतेषु सौहृदम् ॥ ९ ॥ ❀ ❀ ये तु समाहिताः प्रातः सायं रुद्रगीतेन माम् स्तुवंति अहम् कामवरान् शोभनाम् प्रज्ञाम् च दास्ये ॥ १० ॥

---

१. प्रा० पा०—भ्राजिष्णुना। २. प्रा० पा०—लक्ष्मी०। ३. प्राचीने पाठे 'श्रीभगवानुवाच' अयमंशो न। ४. प्रा० पा०—पृथग्भावात्तु।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

प्रसंगात्पंचभिः प्रोक्तं वृत्तं प्राचीनबर्हिषः । वर्ण्यते च पुनर्द्वाभ्यां प्रस्तुतं तत्प्रचेतसाम् ॥ ( १ ) ॥
तत्र त्रिंशे तपस्तुष्टादीशाज्ज्ञब्धवरास्ततः । आगत्य वार्क्षीमुद्वाह्य राज्यं चक्रुरितीर्यते ॥ ( २ ) ॥

हरिं प्रतोष्य कां सिद्धिमापुः ॥ १ ॥ ❀ ❀ हे बार्हस्पत्य कस्यांचिद्विद्यायां बृहस्पतेर्मैत्रेयः शिष्यः इति ज्ञातव्यम् । ते यदृच्छया गिरिशं प्राप्य तस्यैव कैवल्यनाथप्रियस्य गिरिशस्य पार्श्ववर्तिनस्तदनुगृहीताः सन्तो नूनं परं मोक्षं प्रापुरेव ततः पूर्वं त्विहाथ वा परत्र किं प्रापुः ॥ २ ॥ ❀ ❀ रुद्रगीतजपरूपेण यज्ञेन तपसा च पुरंजनं हरिम् ॥ ३ ॥ ❀ ❀ तेषां कृच्छ्रं तपःक्लेशं रुचा कान्त्या शमयन् शान्तेन शुद्धसत्त्वेन वपुषा आविर्भूतः ॥ ४ ॥ ❀ ❀ सुपर्णस्कन्धमारूढ इत्यादीनां बर्हिष्मतः सुतानाहेति तृतीयेनान्वयः ॥ ५ ॥ ❀ ❀ कनकमयेन वर्णवता विभूषणेन भ्राजमानं कपोलं वदनं च यस्य । अष्टभिरायुधैः । गरुड एव किन्नरस्तेन पक्षस्वनैर्गीता कीर्तिर्यस्य ॥ ६ ॥ ❀ ❀ पीनाश्च ते आयता अष्टौ भुजास्तेषां मण्डलं समूहस्तन्मध्ये स्थितया लक्ष्म्या स्पर्धमाना श्रीः शोभा यस्यास्तया वनमालया परिवृत आद्यः पुरुष आह । पर्जन्यस्य नाद इव रुतं नादो यस्यास्तया वाचा । सघृणोऽवलोको यस्य ॥ ७ ॥ ❀ ❀ यूयं मे मत्तो वृणीध्वम् । सौहार्देन हेतुना अपृथगेकविषयो धर्मो येषां तेषां सम्बोधनम् । वः परस्परं सौहृदेन तुष्टोऽहम् ॥ ८ ॥ ❀ ❀ भूतेषु सौहृदं च भविष्यति ॥ ९ ॥ ❀ ❀ तेभ्यो दास्ये । किं पुनर्युष्मभ्यमिति शेषः ॥ १० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

प्रसंगात् प्रचेतःकथाप्रसंगात् । प्रस्तुतं प्रकृतं तद्वृत्तम् । ( १ ) तत्र द्वयोर्मध्ये । ततः तपः स्थलात् । वार्क्षीं वृक्षैः पालितां कंडुतः प्रम्लोचोद्भवाम् । उद्वाह्य परिणीय ( २ ) । रुद्रगीतेन शिवोपदिष्टयोगादेशाख्यस्तवेन ॥१॥ ❀ ❀ कैवल्यनाथो विष्णुः "वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः" । इति "कैवल्यनाथो भगवान्विष्णुरेव न संशयः" इति मुचुकुन्दं सर्वदेवोक्तेः । स प्रियो यस्य शिवस्य 'अहं च भगवत्प्रियः'इति चित्रकेतूपाख्याने सतीं प्रति साक्षाच्छ्रीरुद्रोक्तेः । ततो मोक्षात् । गिरिशं ज्ञानदातृषु मुख्यं गिरिणा ब्रह्मणा शं सुखं यस्य स गिरिशः "तं ब्रह्मगिरिरित्याचक्षते" इति श्रुतेः । यद्वा—गिरिमज्ञानपर्वतं श्यति नाशयतीति गिरिशः । गिरौ कैलासे शेते तिष्ठतीति वा गिरिशः । एतेन ब्रह्मनिष्ठैकान्तवासित्वादिका गुरुधर्मा अप्यत्र दर्शिताः । बार्हस्पत्येति । बृहस्पतिवत्त्वापि त्रैकालिकज्ञानवत्त्वेन सर्वज्ञत्वात्सर्वकथनसामर्थ्यमस्तीति भावः । प्रचेतस इति । प्रकृष्टचेतस्त्वात्ते तु मोक्षाधिकारिण एवेति ॥ २ ॥ ❀ ❀ पुरं सर्वसमूहं जनयतीति पुरंजनः । यद्वा —पिपर्त्तीति पुरः जनयतीति जनः पुरश्चासौ जनश्चेति पुरंजनः । आर्षो मुम् । सर्वोत्पत्तिस्थितिकर्त्तारमीश्वरमित्यर्थः ॥ ३ ॥ ❀ ❀ तेषां प्रचेतसाम् ॥ ४–५ ॥ ❀ ❀ 'काश्र्–दीप्तौ' इति इष्णुप्रत्ययः । वर्णवता शोभनवर्णेन । सन्दर्भस्तु—कनकवर्णेनेत्यलौकिकत्वान्न तु कनकमयत्वेनेत्यर्थः । विभूषणेन कुण्डलादिना । भ्राजदिति शत्रंतत्वमार्षम् । किन्नरो गायको देवयोनिभेदः । वर्णानि रूपभेदास्तानि संन्त्यस्मिन्निति वर्ण मत्वर्थीयोच् बहुवर्णयुतम् । भूमार्थेपि मतुबादयः सन्ति । सुवर्णस्य वर्णानि बहूनि सन्ति तानि च रत्नपरीक्षाग्रन्थतोऽवसेयानि । लोकव्यवहारोऽपि द्वादशवर्णमिदमेकादशवर्णमिदं स्वर्णमिति दृश्यते, तथा च कनकं च तद्वर्णश्चेति कनकवर्णं तस्य विभूषणेनेति वा ज्ञेयम् ॥ ६ ॥ ❀ ❀ स्पर्द्धदिति प्रयोगस्त्वश्ववदाचरतीत्यश्वन्नित्यादिवदौपचारिक एव । न हि हरेर्वक्षसि नित्यस्थितयो-र्लक्ष्मीवनमालयोरौत्सर्गिकी स्पर्धा संजाघटीति ॥ ७ ॥ ❀ ❀ वो युष्माकं सौहृदेन वैशिष्ट्यं प्राप्तेन सुहृत्त्वेन यथा तुष्टो न तथा मदुपासनयापीति भावः ॥ ८ ॥ ❀ ❀ सन्ध्यायां प्रातरादौ आत्मसाम्यमात्मनीव परमस्नेहः सौहृदं प्रीतिः ॥ ९ ॥ ❀ ❀ शोभनामैहिकयशोऽमुत्र सुखदाम् ॥ १० ॥

## श्रीमद्वीरराघवव्याख्या

एवं प्रचेतसां वृत्तमसमाप्यैवावान्तरे प्राचीनबर्हिषो वृत्तान्त उक्तः, इदानीं तद्वृत्तान्तशेषशुश्रूषया पृच्छति विदुरः, य इति । हे ब्रह्मन् ! मैत्रेय ये प्राचीनबर्हिषः पुत्रास्त्वयाभिहिताः ते रुद्रगीतेन स्तोत्रेण हरिं प्रतोष्य तोषयित्वा कां सिद्धिं फलमापुः प्रापुः ॥ १ ॥ ❀ ❀ हे बार्हस्पत्य ! मैत्रेय ! कस्यांचिद्विद्यायां बृहस्पतेर्मैत्रेयः शिष्यः यदृच्छया गिरिशं प्राप्य कैवल्यनाथस्य मोक्षाधिपतेर्भगवतो यः प्रियो रुद्रः तस्य पार्श्ववर्त्तिनः तेनानुगृहीताः प्रचेतसः नूनं परं मोक्षं प्रापुरेव । ततः पूर्वं त्विहात्र लोके परत्र लोके वा किं प्रापुः ॥ २ ॥ ❀ ❀ एवमापृष्टो मुनिः प्रचेतसां कथाशेषमाह । प्रचेतस इति । पितुराज्ञाकारिणः अन्तरुदधौ समुद्रजलमध्ये रुद्रगीतजपयज्ञेन तपसा तप-आलोचने निदिध्यासनेन च निरञ्जनमपहतपाप्मानं परमपुरुष-मतोषयन् ॥ ३ ॥ ❀ ❀ सनातनः परमपुरुषः दशवर्षसहस्रान्ते दशसहस्रसंख्यातवत्सरपर्यन्ततपश्चर्यान्ते तेषां कृच्छ्रं तपः-क्लेशं रुचा कान्त्या शमयन् शान्तेन शुद्धसत्त्वमयेन वपुषा आविरभूत् ॥ ४ ॥ ❀ ❀ पुरुषं विशिनष्टि सुपर्णेति सार्द्धद्वयेन ।

सुपर्णस्य गरुडस्य स्कन्धे आरूढः तमुपलक्षयति मेरोः श‍ृंगमम्बुदो नीलमेघ इवेति पीतं पिशङ्गो वासो वस्त्रं यस्य सः मणिः कौस्तुभः ग्रीवायां यस्य सः दिशः वितिमिरा प्रकाशबहुलाः कुर्वाणः ॥ ५ ॥ ❀ ❀ पुनः कीदृशः काशिष्णुनेति कनकमयशोभनवर्णविभूषणेनात एव काशिष्णुना भ्राजिष्णुना प्रकाशस्वभावेनेत्यर्थः। भ्राजमानं कपोलं वदनं च यस्य सः प्रकाशमानकिरीटयुक्तः अष्टायुधैः शङ्खचक्रगदापद्मशार्ङ्गशरखड्गखेटैः पद्मस्यायुधानन्तर्भूतत्वेऽपि छत्रिन्यायेनायुधशब्दः प्रयुक्तः, परशुपाशाङ्कुशाद्यन्यतमो वात्राष्टमो विवक्षितः अष्टायुधैरित्यनेनाष्टभुजः इत्यपि विवक्षितः, अनुचरैः पार्षदैः मुनिभिः सुरेन्द्रैर्ब्रह्मादिभिश्च सेवितः गरुड एव किन्नरः तस्य वेदात्मकपक्षध्वनिर्गरुडकिन्नरशब्दविवक्षितः तेन गीता कीर्तिर्यस्य सः। यद्वा गरुडा गरुडजातीयाः किन्नराश्च तैः गीता कीर्तिर्यस्य सः ॥ ६ ॥ ❀ ❀ पीनाश्च ते आयताश्चाष्टौ भुजास्तेषां मण्डलं समूहः तन्मध्ये स्थितया लक्ष्म्या स्पर्धमाना श्रीः शोभा यस्यास्तया वनमालया परिवृतः आद्य आदौ भवः जगत्कारणभूतः पूरुषः प्रपन्नान् बर्हिष्मतः सुतान् प्रति पर्जन्यनाद इव रुतं नादो यस्यास्तया वाचा सघृणः कृपायुक्तोऽवलोको यस्य स आह ॥ ७ ॥ ❀ ❀ हे नृपनन्दनाः ! यूयं मे मत्तः वरं वृणीध्वं वः भद्रमस्तु परस्परसौहृदेनापृथग्धर्मास्तुल्यधर्माणो यूयं वः युष्माकं सौहृदेनाहं तुष्टः ॥ ८ ॥ ❀ ❀ यो नरः अनुदिनं सायं प्रातः संध्यायां युष्माननुस्मरति तस्य नरस्य भ्रातृष्वात्मसाम्यमात्मना तुल्यं स्वात्मनीव प्रीतिः तथा भूतेषु सौहृदं च भविष्यति ॥ ९ ॥ ❀ ❀ ये नराः सायं प्रातः समाहितचित्ताः सन्तो रुद्रगीतेन मां स्तुवन्ति तेभ्योऽप्यहं कामवरान् काम्यन्त इति कामाः तान् अभीष्टान् वरान् प्रज्ञां च दास्ये किं पुनः युष्माकम् ॥ १० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अव्यक्तस्वभावो हरिस्तपआदिसाधनसामर्थ्येन प्रसन्नो व्यक्तो भवतीत्येतद्रुद्राद्युत्तमत्वं च निरूप्यतेऽस्मिन्नध्याये। तत्र पूर्वप्रसक्तप्रमेयं विस्तरतः श्रोतुकामो विदुरो मैत्रेयं पृच्छति ये त्वयेति। रुद्रगीतेन सदाशिवोपदिष्टेन स्तोत्रेण हरिं प्रतोष्य कां सिद्धिं पुरुषार्थरूपां प्रापुरित्यन्वयः ॥ १ ॥ ❀ ❀ विष्णुतद्भक्तानां सिद्धिरस्त्येव सा तु कीदृशीति भावेन पृच्छतीत्याह किञ्चेति। "तदेतत्प्रेयः" इति श्रुतेः कैवल्यनाथश्चासौ प्रियश्च कैवल्यनाथप्रियस्तस्य कैवल्यनाथप्रियस्य विष्णोः कैवल्यस्य नाथः कैवल्यनाथस्तस्य कैवल्यनाथस्य प्रियो रुद्रस्तस्य वा पार्श्ववर्तिनः समीपे वर्तमानाः पुरुषा इह लोकेऽथवामुष्मिँल्लोके किं पुरुषार्थलक्षणं सुखं नार्हन्ति सर्वमर्हन्ति। तत्र प्रचेतसो यदृच्छया देवेच्छया गिरिशमासाद्य परमुत्कृष्टं सुखं नूनं किं प्रापुरित्यन्वयः। गिरेर्ब्रह्मणः प्रसादेन शं सुखं यस्य स गिरिशः "तं ब्रह्मगिरिरित्याचक्षते" इति श्रुतेः गिरि वाचि शेत इति वा गिरौ कैलासे शेत इति गिरिशः पूर्वत्रालुक्समासः शीङो डप्रत्ययश्च, "पृ-पालनपूरणयोः" इति धातोः परं जगत्पालनं मुक्तिलक्षणपूर्णानन्दमुतेति। अनेन प्रचेतसो यानि योग्यानि कल्याणान्यर्हन्ति तेषु किम्मुख्यामापुरिति प्रश्नतात्पर्यार्थः ॥ २ ॥ ❀ ❀ जगत्पालनादिसर्वाः सिद्धीरापुरिति परिहारं वक्तुमुपक्रमते इत्याह मैत्रेय इति। जपयज्ञेन रुद्रगीताख्यस्तोत्रयज्ञेन पुराणां शरीराणां जननाज्जन्मना व्यञ्जयितृत्वात्पुरञ्जनो विष्णुः, पुरे अञ्जनात् व्यञ्जनात्पुरञ्जनो जीवः, यतस्तपसा पुरञ्जनं जीवनामानमशोषयंस्तेन पुरञ्जनं विष्णुमतोषयन् प्रसादाभिमुखं चक्रुरित्यर्थद्वयद्योतनाय पुरञ्जनपदं प्रायोजीत्यतः पूर्वोक्तः पुरञ्जनो नात्रोच्यते "पुरेषु त्वञ्जनाज्जीवः पुरञ्जन इतीरितः। पुराणां जननाद्विष्णुर्व्यञ्जकत्वं द्वयोरपि" इति वचनात्सिद्धमिदमर्थद्वयमिति 'ऌतुलसानां दन्ताः, इचुयशानां तालु'रित्यतस्तकारशकारयोः स्थानसामीप्यात् 'उपूपध्मानीयानामोष्ठावि'त्यनुबन्धोकारस्येक्समीपस्थानत्वाच्च वा शोषयन्नतोषयन्निति युज्यते ॥ ३ ॥ ❀ ❀ प्रचेतसां शान्तेन भगवन्निष्ठया जातयानुग्रहलक्षणया रुचा तेषां कृच्छ्रं दुःखं शमयन् ॥ ४ ॥ ❀ ❀ मणिग्रीवः कण्ठामुक्तकौस्तुभः वितिमिरा निरस्तान्धकाराः ॥ ५ ॥ ❀ ❀ काश्-दीप्तौ भ्राजद्भ्यां राजद्भ्यां कपोलाभ्यां युक्तं वदनं यस्य स तथा। भ्राजदित्युक्तयात्मनेपदे परस्मैपदित्वं काल्पनिकमिति ध्वनयति ॥ ६ ॥ ❀ ❀ पीनानामायतानामष्टानां भुजानां मण्डलस्य मध्ये वक्षसि स्थितया लक्ष्म्या सह स्पर्धमानवद्वर्तमाना श्रीर्विकासलक्षणा यस्याः सा तथा अश्ववदाचरतीत्यश्वन्नित्यादौ दर्शनादौपचारिकोऽयं प्रयोगः, न हि हरेरपि वक्षसि स्थितयोर्लक्ष्मीवनमालयोरौत्सर्गिकी स्पर्धा सङ्घटीति, पर्जन्यो मेघस्तन्नादवद्रुतं ध्वनिर्यस्याः सा तया वाचेति शेषः घृणया दयया सह वर्तत इति सघृणस्तादृशोऽवलोको यस्य स तथा ॥ ७ ॥ ❀ ❀ सौहार्देन हेतुनापृथग्धर्मा एकविषयधर्मचारिणः तेन किं तव तत्राह तुष्ट इति। अतो वरं वृणीध्वमित्यर्थः ॥ ८ ॥ ❀ ❀ न केवलं मत्तो युष्माकमेव फलमन्येषां भवदनुस्मर्तॄणामपि फलविशेषो भवतीत्याह य इति। यथा मत्प्रीतिहेतुर्मत्तोषकरं युष्मदपृथग्धर्मत्वस्मरणमितरेषामपि भ्रातृष्वात्मसाम्यफलं स्यात्तथा ॥ ९ ॥ ❀ ❀ रुद्रगीतेन मां स्तुवद्भ्योऽपि कामवरान् दास्यामीत्याह ये तु मामिति ॥ १० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सुपर्णेति त्रिकम्। काशिष्णुना भ्राजमानेन कनकवर्णेनालौकिकत्वान्न तु कनकमयेनेत्यर्थः। तेन विभूषणेन कुण्डलादिना पूर्वं श्रीरुद्रोपदिष्टपरमव्योमाख्यमहावैकुण्ठाधिपचतुर्भुजत्वेन ध्यातस्यापि श्रीभगवतोऽष्टभुजत्वेनाविर्भावस्याभिप्रायोऽयम्–नाधुना भवदत्यन्तमिष्टदानार्थमहमाविर्भूतः किन्तु आपातसान्त्वनाद्यर्थमेवेति ॥ १-७ ॥ ❀ ❀ स्वाभाविकेन सौहार्देन हेतुना वो

युष्माकं मदुपासकानामित्यर्थः । सौहृदेन वैशिष्ट्यं प्राप्तेन तेन तुष्टोऽहं यथा न तथा मदुपासनयापीत्यर्थः ॥ ८ ॥ ❀ ❀ भ्रातृषु समवासनं मद्भक्तेषु आत्मसाम्यं स्वात्मनीव परस्परस्नेहम् ॥ ९-१९ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

त्रिंशे प्रचेतसो लब्धवराः स्तुत्या हरेर्जलात् । गत्वा दग्ध्वा तरून् वार्क्षीं लब्ध्वा राज्यं मुदा व्यधुः ॥ (१) ॥

प्रचेतसां कथामध्ये एव तत्पितुः प्राचीनबर्हिषो नारदोपदेशादुद्धारमाकर्ण्य पुनस्तेषामेवावशिष्टां कथां शुश्रूषते ये इति । हरिं प्रतोष्य कां सिद्धिमापुः ॥ १ ॥ ❀ ❀ हे बार्हस्पत्य ! कस्याश्चिद्विद्यायामुद्धवमैत्रेयौ बृहस्पतेः शिष्याविति प्रसिद्धेः, प्रचेतसः इह लोके परत्र च किं परं श्रेष्ठं वस्तु प्रापुः किं कृत्वा यदृच्छयैव गिरिशं देवमासाद्य कीदृशः कैवल्यनाथस्य प्रियाः पार्श्ववर्त्तिनश्च ॥ २ ॥ ❀ ❀ रुद्रगीतरूपेण जपयज्ञेन पुरञ्जनं हरिम् ॥ ३ ॥ ❀ ❀ शान्तेन शान्तया रुचा ॥ ४-५ ॥ ❀ ❀ कनकमयेन वर्णवता नानारत्नजटितत्वेन नानावर्णवता विभूषणेन कुण्डलादिना भुजमण्डलमध्ये लक्ष्मीः शोभा यस्यास्तया स्पर्द्धमाना श्रीर्लक्ष्मीर्यया तया आद्यः पुरुषः पर्जन्यनाद इव रुतं नादो यस्यास्तया वाचा आह सकृपावलोकः ॥ ६-९ ॥ ❀ ❀ तेभ्यो दास्ये किं पुनर्युष्मभ्य-मिति भावः ॥ १० ॥

### श्रीमच्छुकदेवकृतः सिद्धांतप्रदीपः

त्रिंशे प्राचीनबर्हिषः पुत्रास्तत्तपःप्रसन्नाद्भगवतो वरं लब्ध्वा वार्क्षीमुद्वाह्य यथोचितं राज्यं चक्रुरित्युच्यते । तत्रादौ प्रागुपक्षिप्तं प्रचेतोवृत्तं पृच्छति ये इति ॥ १ ॥ ❀ ❀ सिद्धिमेव त्रिधा विभज्य पृच्छति हे बार्हस्पत्य ! बृहस्पतिशिष्य ! प्रचेतसः यदृच्छया गिरिशमासाद्य कैवल्यनाथो मुक्तिप्रदो हरिस्तस्य प्रियो भक्तः गिरिशस्तस्य पार्श्ववर्तिनः शिष्याः सन्तः नूनं निश्चितं फलं प्रापुस्तदिहैव किं भौमसुखं प्रापुः किं वा परत्र स्वर्गे सुखं प्रापुः अथवा परं मोक्षम् ॥ २ ॥ ❀ ❀ जपयज्ञेन गिरिशोपदिष्ट-स्तोत्रजपेन तपसा च पुरञ्जनं विश्वजनकं सनातनं पुरुषम् ॥ ३ ॥ ❀ ❀ शान्तेन परमानन्दरूपेण आविरभूत् किं कुर्वन् तेषां कृच्छ्रं संसारतापं रुचा कान्त्या शमयन् अपनयन् ॥ ४-५ ॥ ❀ ❀ काशिष्णुना दीप्तिमता कनके आधारभूते वर्णाः स्वकीय-वर्णप्रधानाः मणयो यस्मिन् विभूषणे तेन भ्राजत्कपोलं वदनं यस्य स गरुडेन किन्नरैश्च भक्तविशेषैः गीता कीर्तिर्यस्य सः ॥६॥ ❀ ❀ पीनायताष्टभुजमण्डलमध्यगतया लक्ष्म्या सह स्पर्धती श्रीर्यस्यास्तया वनमालया परिवृतः सघृणावलोकः कृपार्द्रदृष्टिः पर्जन्यनादवत् मेघध्वनिवत् सन् ध्वनिर्यस्यास्तया वाण्या आह ॥ ७ ॥ ❀ ❀ मे मत्तः अपृथग्धर्माः समानधर्माः ॥ ८-११ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं पञ्चभिरध्यायैर्मुक्तिः प्राचीनबर्हिषः । वर्णिता च पुनर्द्वाभ्यां वृत्तमाह प्रचेतसाम् ॥ (१) ॥
तत्र त्रिंशे तु तुष्टस्य प्रादुर्भूतस्य वै हरेः । प्रपन्नेभ्यः प्रचेतोभ्यः प्रसादो विनिरूप्यते ॥ (२) ॥

एवं प्राचीनबर्हिषो ब्रह्मविद्याफलं श्रुत्वा प्रचेतसां फलं पृच्छति—य इति । हे ब्रह्मन् सर्वज्ञ तव न किञ्चिदविदितम-स्त्यतः पृच्छामि ये प्राचीनबर्हिषः सुताः प्रचेतसस्त्वयाऽभिहिताः पूर्वं कथितास्ते रुद्रगीतनामकेन स्तोत्रेण हरिं प्रतोष्य कां सिद्धिं किं फलमापुरित्यन्वयः ॥ १ ॥ ❀ ❀ स्वप्रश्नमेव स्पष्टयति—किमिति । हे बार्हस्पत्य कस्याञ्चिद्विद्यायां बृहस्पतेः शिष्यो मैत्रेय इत्यनेन सम्बोधनेनैव ज्ञेयम् । तेन च बुद्धिमत्त्वं द्योतयन् कथाकथनार्थं प्रोत्साहयति । ते प्रचेतसो यदृच्छया गिरिशं श्रीरुद्रं प्राप्य तदुपदेशेन कैवल्यनाथस्य मुक्तिदातुर्भगवतः अत एव प्रियस्य पार्श्ववर्त्तिनः ध्यानपरा जाताः । अथ तस्मात् नूनं निश्चितं परं तमेव परमेश्वरं प्रापुर्नात्र सन्देहः । परन्तु ततः पूर्वमिह अस्मिन् लोके अथवा परलोकान्तरे किं फलं प्रापुस्तद् ब्रूहीति शेषेणा-न्वयः ॥ २ ॥ ❀ ❀ पितुरादेशकारिणः प्रजासृष्टिकामाः सन्तः प्रचेतसोऽन्तरुदधौ समुद्रमध्ये स्थिता रुद्रगीतस्य जप एव यज्ञस्तेन तपसा आहारादिनियमेन च पुरञ्जनं भगवन्तमतोषयन् ॥ ३ ॥ ❀ ❀ स्वरुचा कान्त्या तेषां कृच्छ्रं तपःक्लेशं शमयन् शान्तेन परमानन्दजनकेन वपुषा सनातनः पुरुषो भगवान् दशवर्षसहस्रान्ते आविरभूदित्यन्वयः । स्तोत्रस्य शीघ्रफलहेतुत्वेऽपि तेषां धैर्यपरीक्षार्थं भगवान् विलम्बं कृतवानिति ज्ञापनाय तुशब्दः ॥ ४ ॥ ❀ ❀ आविर्भूतं भगवन्तमेव वर्णयति—सुपर्णेति त्रिभिः । प्रथमान्तानां बर्हिष्मतः सुतानाहेति तृतीयेनान्वयः । मेरुशृङ्गमारूढोऽम्बुदो मेघ इव सुपर्णस्य गरुडस्य स्कन्धमारूढः । पीते वाससी यस्य सः । मणिः कौस्तुभो ग्रीवायां यस्य सः । स्वप्रकाशेन दिशो वितिमिरा अन्धकाररहिताः कुर्वन् ॥ ५ ॥ ❀ ❀ काशिष्णुना प्रकाशमानेन कनकमयेन वर्णवता नानारत्नजडितत्वेन नानावर्णवता विभूषणेन कुण्डलादिना भ्राजत् कपोलं वदनं च यस्य सः । विलसच्छोभमानं किरीटं यस्य सः । अष्टसु भुजेषु अष्टभिरायुधैर्युक्तः । अनुचरैः पार्षदैः मुनिभिः सुरेन्द्रैः इन्द्रादि-भिर्लोकपालैः सर्वतः सेवितः गरुड एव किन्नरस्तेन स्वपक्षस्वनैर्गीता कीर्तिर्यस्य सः ॥ ६ ॥ ❀ ❀ पीनाश्च ते आयताश्च येऽष्टौ भुजास्तेषां मण्डलं समूहस्तन्मध्ये स्थितया लक्ष्म्या सह स्पर्द्धमाना श्रीः शोभा यस्यास्तया वनमालया परिवृतः । सघृणोऽवलोको

यस्य सः एवम्भूतः आद्यः पुरुषः पर्जन्यस्य मेघस्य नाद इव सन्तापनिवर्त्तकं रुतं नादो यस्यास्तया वाचा बर्हिष्मतः सुतान् प्रचेतसः प्रपन्नान् स्वशरणमागतानाहेत्यन्वयः ॥ ७ ॥ ❀ ❀ भगवद्वाक्यान्येव दर्शयति—वरमिति त्रयोदशभिः। हे नृपनन्दना इति सम्बोधनेनान्येषां राजपुत्राणामेवं परस्परं प्रेम तपश्च दुर्लभमिति द्योतयति। यूयं यतः परस्परं सौहार्देन प्रेम्णा अपृथग्धर्मा मदाराधनलक्षणैकधर्मनिरता अतो वो युष्माकं सौहृदेनाहं तुष्टो युष्मभ्यं वरं ददामि, वो युष्माकं भद्रं भवतु, यूयं मे मत्तो वरं वृणीध्वमित्यन्वयः ॥ ८ ॥ ❀ ❀ युष्मभ्यं दाने मम न कश्चित्सन्देहोऽस्तीति यथेष्टं याचनीयमिति कैमुत्यन्यायेनाह—य इति द्वाभ्याम्। अनुदिनं प्रतिदिनं सन्ध्यायां यो नरो युष्मान् स्मरति स्मरिष्यति तस्य भ्रातृषु तथाभूतेषु सर्वेषु प्राणिषु आत्मसाम्यं भवत्सदृशं सौहृदं मैत्र्यं भविष्यतीति सम्बन्धः ॥ ९ ॥ ❀ ❀ ये तु समाहिताः सावधानाः सन्तः सायं प्रातरनेन रुद्रगीतेन मां स्तुवन्ति स्तोष्यन्ति तेभ्योऽप्यहं तुष्टः सन् कामभोगान् अभिलषितान् भोगान् शोभनामुद्धारोपयोगिनीं प्रज्ञां बुद्धिं च दास्ये। युष्मभ्यं दास्य इत्यत्र कः सन्देह इति शेषः ॥ १० ॥

### भाषानुवादः

### प्रचेताओंको श्रीविष्णु भगवान्का वरदान

विदुरजीने पूछा—ब्रह्मन्! आपने राजा प्राचीनबर्हिके जिन पुत्रोंका वर्णन किया था, उन्होंने रुद्रगीतके द्वारा श्रीहरिकी स्तुति करके क्या सिद्धि प्राप्त की? ॥ १ ॥ ❀ ❀ बार्हस्पत्य! मोक्षाधिपति श्रीनारायणके अत्यन्त प्रिय भगवान् शङ्करका अकस्मात् सान्निध्य प्राप्त करके प्रचेताओंने मुक्ति तो प्राप्त की ही होगी; इससे पहले इस लोकमें अथवा परलोकमें भी उन्होंने क्या पाया? यह बतलानेकी कृपा करें ॥ २ ॥ ❀ ❀ श्रीमैत्रेयजीने कहा—विदुरजी! पिताके आज्ञाकारी प्रचेताओंने समुद्रके अंदर खड़े रहकर रुद्रगीतके जपरूपी यज्ञ और तपस्याके द्वारा समस्त शरीरोंके उत्पादक भगवान् श्रीहरिको प्रसन्न कर लिया ॥ ३ ॥ ❀ ❀ तपस्या करते-करते दस हजार वर्ष बीत जानेपर पुराण पुरुष श्रीनारायण अपनी मनोहर कान्तिद्वारा उनके तपस्या-जनित क्लेशको शान्त करते हुए सौम्य विग्रहसे उनके सामने प्रकट हुए ॥ ४ ॥ ❀ ❀ गरुड़जीके कंधेपर बैठे हुए श्रीभगवान् ऐसे जान पड़ते थे, मानो सुमेरुके शिखरपर कोई श्याम घटा छायी हो। उनके श्रीअङ्गमें मनोहर पीताम्बर और कण्ठमें कौस्तुभमणि सुशोभित थी। अपनी दिव्य प्रभासे वे सब दिशाओंका अन्धकार दूर कर रहे थे ॥ ५ ॥ ❀ ❀ चमकीले सुवर्णमय आभूषणोंसे युक्त उनके कमनीय कपोल और मनोहर मुखमण्डलकी अपूर्व शोभा हो रही थी। उनके मस्तकपर झिल-मिलाता हुआ मुकुट शोभायमान था। प्रभुकी आठ भुजाओंमें आठ आयुध थे; देवता, मुनि और पार्षदगण सेवामें उपस्थित थे तथा गरुड़जी किन्नरोंकी भाँति साममय पंखोंकी ध्वनिसे कीर्तिगान कर रहे थे ॥ ६ ॥ ❀ ❀ उनकी आठ लंबी-लंबी स्थूल भुजाओंके बीचमें लक्ष्मीजीसे स्पर्धा करनेवाली वनमाला विराजमान थी। आदिपुरुष श्रीनारायणने इस प्रकार पधारकर अपने शरणागत प्रचेताओंकी ओर दयादृष्टिसे निहारते हुए मेघके समान गम्भीर वाणीमें कहा ॥ ७ ॥ ❀ ❀ श्रीभगवान्ने कहा—राजपुत्रो! तुम्हारा कल्याण हो। तुम सबमें परस्पर बड़ा प्रेम है और स्नेहवश तुम एक ही धर्मका पालन कर रहे हो। तुम्हारे इस आदर्श सौहार्दसे मैं बड़ा प्रसन्न हूँ। मुझसे वर माँगो ॥ ८ ॥ ❀ ❀ जो पुरुष सायंकालके समय प्रतिदिन तुम्हारा स्मरण करेगा, उसका अपने भाइयोंमें अपने ही समान प्रेम होगा तथा समस्त जीवोंके प्रति मित्रताका भाव हो जायगा ॥ ९ ॥ ❀ ❀ जो लोग सायङ्काल और प्रातःकाल एकाग्र चित्तसे रुद्रगीतद्वारा मेरी स्तुति करेंगे, उनको मैं अभीष्ट वर और शुद्ध बुद्धि प्रदान करूँगा ॥ १० ॥

**यद्यूयं पितुरादेशमग्रहीष्ट मुदान्विताः। अथो व उशती कीर्तिर्लोकाननुभविष्यति ॥ ११ ॥**
**भविता विश्रुतः पुत्रोऽनवमो ब्रह्मणो गुणैः। य एतामात्मवीर्येण त्रिलोकीं पूरयिष्यति ॥ १२ ॥**
**कण्डोः प्रम्लोचया लब्धा कन्या कमललोचना। तां चापविद्धां जगृहुर्भूरुहा नृपनन्दनाः ॥ १३ ॥**
**क्षुत्क्षामाया मुखे राजा सोमः पीयूषवर्षिणीम्। देशिनीं रोदमानाया निदधे स दयान्वितः ॥ १४ ॥**
**प्रजाविसर्ग आदिष्टाः पित्रा मामनुवर्तता। तत्र कन्यां वरारोहां तामुद्वहत मा चिरम् ॥ १५ ॥**
**अपृथग्धर्मशीलानां सर्वेषां वः सुमध्यमा। अपृथग्धर्मशीलेयं भूयात्पत्न्यर्पिताशया ॥ १६ ॥**
**दिव्यवर्षसहस्राणां सहस्रमहतौजसः। भौमान् भोक्ष्यथ भोगान् वै दिव्यांश्चानुग्रहान्मम ॥ १७ ॥**
**अथ मय्यनपायिन्या भक्त्या पक्वगुणाशयाः। उपयास्यथ मद्धाम निर्विद्य निरयादतः ॥ १८ ॥**

---

१. प्रा० पा०—वः शाश्वती। २. प्रा० पा०—ः संदधे।

गृहेष्वाविशतां चापि पुंसां कुशलकर्मणाम् । मद्वार्तायातयामानां न[2] बन्धाय गृहा मताः ॥ १९ ॥
नव्यवद्धृदये यज्ज्ञो ब्रह्मैतत् ब्रह्मवादिभिः । न मुह्यन्ति न शोचन्ति न हृष्यन्ति यतो गताः ॥ २० ॥

अन्वयः—यत् यूयम् मुदा अन्विताः पितुः आदेशम् अग्रहीष्ट अथो वः उशती कीर्तिः लोकान् अनुभविष्यति ॥ ११ ॥ ❀ ❀ गुणैः ब्रह्मणः अनवमः विश्रुतः पुत्रः भविता यः आत्मवीर्येण एताम् त्रिलोकीं पूरयिष्यति ॥ १२ ॥ ❀ ❀ नृपनंदनाः प्रम्लोचया कंडोः कमललोचना कन्या लब्धा अपविद्धाम् ताम् च भूरुहाः जगृहुः ॥ १३ ॥ ❀ ❀ सः दयान्वितः सोमः राजा क्षुत्क्षामायाः रोदमानायाः मुखे पीयूषवर्षिणीम् देशिनीम् निदधे ॥ १४ ॥ ❀ ❀ माम् अनुवर्तता पित्रा प्रजाविसर्गे आदिष्टाः तत्र ताम् वरारोहाम् कन्याम् उद्वहत मा चिरम् ॥ १५ ॥ ❀ ❀ अपृथग्धर्मशीलानाम् वः सर्वेषाम् अपृथग्धर्मशीला अर्पिताशया इयम् सुमध्यमा पत्नी भूयात् ॥ १६ ॥ ❀ ❀ यूयम् च अहतौजसः मम अनुग्रहात् दिव्यवर्षसहस्राणां सहस्रम् दिव्यान् भौमान् भोगान् वै भोक्ष्यथ ॥ १७ ॥ ❀ ❀ अथ मयि अनपायिन्या भक्त्या पक्वगुणाशयाः अतः निरयात् निर्विद्य मद्धाम उपयास्यथ ॥ १८ ॥ ❀ ❀ मद्वार्तायातयामानाम् गृहेषु आविशताम् च अपि कुशलकर्मणाम् पुंसाम् गृहाः बंधाय न मताः ॥ १९ ॥ ❀ ❀ यत् ज्ञः ब्रह्मवादिभिः हृद् नव्यवत् अये एतत् ब्रह्म यतः गताः न मुह्यन्ति न शोचंति न हृष्यंति ॥ २० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अग्रहीष्ट गृहीतवन्तः । अथो इति हेतोः लोकाननु लोकेषु भविष्यति यद्वा लोकाननुभविष्यति द्रक्ष्यति व्याप्स्यतीत्यर्थः ॥ ११ ॥ ❀ ❀ आत्मनो वीर्येण सन्तानेन ॥ १२ ॥ ❀ ❀ पुत्रार्थमादौ भार्यां सम्पादयति भगवान् कण्डोरिति त्रिभिः । तपोनाशार्थमिन्द्रप्रेषितया प्रम्लोचया कण्डुर्नाम ऋषिर्बहुकालं रेमे । सा च ततः स्वर्गं गच्छन्ती कण्डोर्जातं गर्भं वृक्षेषु त्यक्त्वा जगाम । तदेतदुक्तम्—अपविद्धां त्यक्ताम् ॥ १३ ॥ ❀ ❀ स प्रसिद्धो वनस्पतीनां राजा सोमोऽमृतस्राविणीं देशिनीं तर्जनीं रुदत्यास्तस्या मुखे निदधे । अनेनाप्सरोगर्भसम्भवेनामृताहारेण च तस्या लावण्यं श्रमस्वेददौर्गन्ध्यादिराहित्यं चोक्तम् ॥ १४ ॥ ❀ ❀ मामनुवर्तमानेन पित्रा नियुक्ताः सन्तस्तत्र प्रजाविसर्गे निमित्ते तामुद्वहत ॥ १५ ॥ ❀ ❀ ननु बहूनां कथमेका भार्या स्यात्तत्राह । अपृथग्धर्मः शीलं च येषां तेषां वः पत्नी भूयात् । अर्पितो भवत्सु आशयो यया धर्मशीलयोरैक्यान्मद्वाक्याच्च न दृष्टादृष्टविरोध इति भावः ॥ १६ ॥ ❀ ❀ अहतौजसोऽप्रतिहतबलाः सन्तः ॥ १७ ॥ ❀ ❀ पक्वगुणो दग्धकामादिमल आशयो येषां पक्वो गुणानामाशयो येषामिति वा । अतो लोकद्वयभोगान्निरयप्रायान्निर्विद्य मत्स्थानं प्राप्स्यथ ॥ १८ ॥ ❀ ❀ ननु गृहेषु प्रविष्टानामस्माकं तदासक्त्या बन्ध एव स्यात्कुतस्त्वद्भक्तिर्निर्वेदो वा तत्राह गृहेष्विति । कुशलं मय्यर्पितं कर्म येषाम् । मद्वार्तया यातो यामः कालो येषाम् ॥ १९ ॥ ❀ ❀ त्वद्वार्ताश्रोतॄणां गृहैर्न बन्ध इति कुतस्तत्राह नव्यवदिति । यद्यस्मात्कथाश्रवणात् ज्ञः सर्वज्ञोऽहमीश्वरो ब्रह्मवादिभिः प्रवक्तृभिर्निमित्तभूतैः श्रोतॄणां हृत् हृदयं नव्यवत्प्रतिपदं नूतनवत् अये प्राप्नोमि ब्रह्मसाक्षात्कारो भवतीत्यर्थः । ननु त्वत्कथाश्रवणे कथं ब्रह्मसाक्षात्कारस्तत्राह । योऽहमेतदेव ब्रह्म । तत्र हेतुः । यतो गताः यं मां प्राप्ताः सन्तो मोहशोकहर्षान्न प्राप्नुवन्त्यतो मत्कथाश्रवणेन नव्यवन्मम हृद्याविर्भावादस्यैव ब्रह्मसाक्षात्कारत्वाद् गृहेषु वसतामपि न बन्ध इत्यर्थः ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

लोकानन्वत्र सप्तम्यर्थेऽव्ययीभावकल्पनेऽनुपूर्वभवतेः सकर्मकत्वेन प्रसिद्धस्याकर्मकत्वकल्पने गौरवं मत्वाह—यद्वेति । इत्यर्थ इति । धातूनामुपसर्गाणां चानेकार्थत्वादनुपूर्वो भवतिर्व्याप्त्यर्थकोपीति भावः । एतेन विपुलकीर्तिकामैर्नरैर्गुर्वादेशोऽवश्यमनुष्ठेय इति ध्वनितम् ॥ ११ ॥ ❀ ❀ गुणैर्ब्रह्मणोऽन्यूनः समः ॥ १२ ॥ ❀ ❀ कस्यां भार्यायां पुत्रो भवितेत्येतदर्थम् । कन्यात्यागे हेतुर्मातृपितृमृतिप्रदयोगजनिरेवेति ध्येयम् ॥ १३ ॥ ❀ ❀ क्षुत्क्षामायाः क्षुत्पीडितायाः । निदधे स्थापितवान् ॥ १४ ॥ ❀ ❀ पित्रा प्राचीनबर्हिषा । नियुक्ताः प्रेरिताः ॥ १५ ॥ ❀ ❀ इति भाव इति । मदाशीर्वाद एव दृष्टादृष्टदोषमुपशमयिष्यतीति तात्पर्यम् । दृष्टविरोधो लोके बहूनामेकभार्यत्वे व्यभिचारकल्पनया निन्दा "दातव्यैका सुतैकस्मै बहुभ्यो न कदाचन" इति विहितमर्यादाभंगेनादृष्टविरोधोपीति द्वयोद्भवं पापं युष्मान्न स्प्रक्ष्यतीति ॥ १६ ॥ ❀ ❀ दिव्यवर्षसहस्राणां सम्बन्धिनं कालमभिव्याप्य सहस्रमनन्तान्भोगान्भोक्ष्यथेति । सहस्राणामिति—'कपिंजलानालभेत' इतिवत् त्रयाणामित्यर्थः । अत एव तीर्थेनोक्तं "मानुषाणां वत्सराणां लक्षद्वादशकं पुरा । प्रचेतोभिरियं भूमिः पालिताव्याहतेन्द्रियैः" इति ॥ १७ ॥ ❀ ❀ हे भक्त्या पक्वगुणाशयाः । अथ भौमभोगान्ते । मद्धाम यास्यथेति योज्यं, न तु भविष्यन्त्या भक्त्या पक्वगुणाशयाः सन्त एवेति व्याख्येयम् । अपक्वकषायाणां भगवद्दर्शनासम्भवात् । "अविपक्वकषायाणां दुर्दर्शोऽहं कुयोगिनाम्"

---

१. प्रा० पा०—गृहेष्वावसतां । २. प्रा० पा०—बन्धाय न ।

इति नारदं प्रत्यशरीरवागुक्तेः। अत इदंकारास्पदात्पारमेष्ठ्यादिपदादपि निर्विद्य निरयान्निरयतुल्यान्निर्गतोऽयः शुभावहो विधिर्यत्र स निरय इति निरुक्तेः। "आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोर्जुन" इति श्रीमुखोक्तेः पारमेष्ठ्यादिपदेभ्योऽप्यावृत्तिश्रवणेन तत्र शुभावहविधित्वाभावान्निरयतुल्यत्वमेवेति ॥ १८॥ ❀ ❀ ननु 'भौमान्भोक्ष्यथ' इत्याद्युक्त्या निरयतुल्ये विषयभोगे त्वद्भक्तिप्रतिकूले कथमस्मान्निक्षिपसीति भावेनाह—गृहेष्विति। आविशतां प्राप्नावेशानामपि कुशलं मत्परिचरणमेव कर्म येषां मत्कथया यातो यामः प्रहरोपि येषां प्रहरमध्ये मत्कथा येषामवश्यमेव भवतीत्यर्थः। अयमर्थः—कर्मजन्यानामेव भोगानां वन्धकत्वं निरयतुल्यत्वं भक्तिप्रातिकूल्यञ्च न तु मदनुग्रहजन्यानामत एव मदनुग्रहाद्भौमान्भोक्ष्यथेति मयोक्तमतोऽन्यत्रापि यत्र विषयभोगेपि मद्भक्तेरसंकोचः प्रत्युत वृद्धिरेव दृश्यते चेत्तदा स विषयभोगो मदनुग्रहजन्य एवानुमेयो न बन्धकः पृथुप्रह्लाद-ध्रुवमन्वादिषु तथा दर्शनात्। अविपक्वकषायेषु तु भक्तेषु मदनुग्रहो भोगाच्च्यावक एव द्रष्टव्यः। यदुक्तम् "यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः" इति। 'गृहाः पुंसि च भूम्नि' इत्यमरः॥ १९॥ ❀ ❀ तेषां भक्तानां कुतो बन्धदुःखं यतस्तेषां हृदयेऽहं सुखं प्राप्तुं नित्यं वसामीत्यभिप्रेत्याह—त्वद्वार्त्तेति। इत्यर्थं इति। सर्वदा तदा तच्छ्रवणादिना तदाकारवृत्तेरेव ब्रह्मसाक्षात्कारत्वमिति भावः। अत्राक्षिपति—नन्विति। उच्यते इति शेषः। तत्र ब्रह्मत्वे। अतो हर्षशोकाद्यभावात्। इत्यर्थं इति। बन्धनिवर्त्तकब्रह्मज्ञान-वत्त्वान्न बन्ध इति भावः॥ २०॥

### श्रीमद्वीरराघवव्याख्या

यद्यस्माद्यूयं पितुरादेशमाज्ञां मुदा युक्ताः सन्तोऽग्रहीष्ट गृहीतवन्तः अतो वः युष्माकमुशती कमनीया कीर्तिर्लोकाननु-भविष्यति प्राप्स्यति लोकेषु विस्तरिष्यति इत्यर्थः॥ ११॥ ❀ ❀ कण्डोर्मुनेर्दुहितरं यूयमुद्वहतेति वक्ष्यमाणस्तावत्कण्डुन्तत्कन्याञ्च प्रस्तौति भवितेति। विश्रुतः विश्रुन्नाम्नः पुत्रः गुणैर्विश्रुतः पितुर्नावमः न न्यूनः विश्रुता समः भविता भविष्यति इत्यर्थः। यः वैश्रुत एतां त्रिलोकीमात्मनो वीर्येण सन्तानेन पूरयिष्यति॥ १२॥ ❀ ❀ वैश्रुतस्य कण्डोः सकाशात् प्रम्लोचया तपोनाशार्थमिन्द्रेण प्रेषितया प्रम्लोचाख्यया अप्सरसा स्त्रिया या कन्या अमललोचना लब्धा तां कन्यामपविद्धां पुनः स्वर्गं प्रतिगच्छन्त्या प्रम्लोचया वृक्षेषु त्यक्तां भूरुहा वनस्पतयः जगृहुः दुहितरममन्यन्त हे नृपनन्दनाः॥ १३॥ ❀ ❀ क्षुधा क्षामायाः पीडितायाः अतो रोदमानायाः तस्याः कन्यायाः मुखे वनस्पतीनां राजा सोम इति प्रसिद्धः अमृतस्राविणीं देशिनीं तर्जनीमंगुलीं निदधे निहितवान्। अनेनाप्सरसो गर्भसम्भवेनामृताहारेण च तस्या लावण्यं क्लमस्वेददौर्गन्ध्यादिराहित्यं चोक्तम्॥ १४॥ ❀ ❀ मामनुवर्त्तमानेन पित्रा बर्हिष्मता वः युष्मभ्यं प्रजासर्ग आदिष्टः आज्ञापितः, अतस्तत्र प्रजासर्गे यतमाना यूयं तां पतिमाकांक्षन्तीं कन्यामुद्वहत चिरं विलम्बं मा कुरुत॥ १५॥ ❀ ❀ ननु वहूनां कथमेका भार्या स्यात्तत्राह। अपृथग्धर्मः शीलं येषां सर्वेषां वः युष्माकं पतिषु भवत्सु अर्पितः आशयो यया अपृथग्धर्मः शीलं यस्याः सेयं सुमध्यमा पत्नी भूयात्। धर्मशीलयोरैक्यान्मद्वाक्याच्च न दृष्टविरोध इति भावः॥ १६॥ ❀ ❀ दिव्यानां देवमानपरिच्छिन्नानां वर्षसहस्राणां साहस्रं कालममितौजसः अमितमोज इन्द्रिय-शक्तिर्येषां ते यूयं भौमान्भोगान् भोक्ष्यथ॥ १७॥ ❀ ❀ अनन्तरमव्यभिचारिण्या अपि भक्त्या पक्वगुणः धर्मकामादिमलः आशयोऽन्तःकरणं येषां तेऽतो निरयात्संसारान्निर्विद्य निर्वेदं लब्ध्वा, पक्वगुणाशया इति पाठे शान्तसत्त्वादिगुणवासनाः मद्धाम मत्स्थानमुपयास्यथ प्राप्स्यथ॥ १८॥ ❀ ❀ ननु भौमभोगासक्तानां नस्त्वद्भक्तिः कथं भविष्यति तत्राह गृहेष्वाविशतां प्रविष्टानामपि कुशलमनभिसंहितफलं कर्म येषां मद्वार्त्तायातयामानां मत्कथाक्षपितकालानां गृहाः बन्धाय न मताः बन्धका न भवन्तीत्यर्थः॥ १९॥ ❀ ❀ त्वद्वार्ताश्रोतॄणां गृहैर्न बन्ध इति कुतस्तत्राह नव्यवदिति। यत् यस्माद्यत्कथाश्रवणात् ज्ञः सर्वज्ञोऽहमीश्वरः ब्रह्मवादिभिः प्रवक्तृभिर्निमित्तभूतैः श्रोतणां हृत् हृदयं नव्यवत्प्रतिपदं नूतनवदये प्राप्नोमि। व्यवच्छिद्यते यज्ञ इति पाठे तु गृहेषु परब्रह्मभूतं मां कथयद्भिः यज्ञो मद्भक्त्यात्मना ज्ञानयज्ञो न व्यवच्छिद्यते विच्छिन्नो न भवतीत्यर्थः। यज्ञं विशिनष्टि यतो ज्ञानयोगात्मनि गताः प्राकृतैर्मोहादिभिर्युक्ता न भवन्तीत्याह॥ २०॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अन्यं च वरं दास्यामीत्याह यद्यूयमिति। अनेन विमलकीर्तिकामैः पुरुषैर्गुर्वादेशः सर्वथानुष्ठेय इति शिक्षा दर्शिता॥ ११॥ ❀ ❀ सत्पुत्राभावे किं प्रयोजनं जन्मना "सोऽयं मनुष्यलोकः पुत्रेण जय्य" इति श्रुतेस्तत्राह भवतेति। पुत्रशब्दार्थं ध्वनयति। य एतामिति॥ १२॥ ❀ ❀ अनुकूलभार्याभावे कथमौरसपुत्रसम्पदित्यतस्तत्प्राप्तिं वक्तुमुपक्रमते कण्डोरिति। प्रम्लोचयाप्सरसा मातापितृमरणकारणयोगे तज्जातत्वात्तत्परिहारार्थमपविद्धां त्यक्तां भूरुहा वृक्षा जगृहु-रित्यन्वयः॥ १३॥ ❀ ❀ क्षुत्क्षामायाः श्रान्तायाः स सोमः॥ १४॥ ❀ ❀ प्रजाविसर्गे प्रजानां विविधसृष्टौ ततः किमत्राह तत्रेति। तत्र तस्मिन् कार्ये कर्तव्ये सति॥ १५॥ ❀ ❀ बहूनामस्माकमियमेकानुकूला कथं स्यादत्रापि तादृशं वरं दास्यामीत्याह। अपृथग्धर्मशीलानामिति॥ १६॥ ❀ ❀ दिव्यवर्षसहस्राणामित्यत्र सहस्रशब्दो बहुलवाची प्रतीतार्थस्य प्रमाणविरुद्धत्वादनुपपन्नत्वं तदुक्तम् 'मनुष्याणां वत्सराणां लक्षद्वादशकं पुरा। प्रचेतोभिरियं पृथ्वी पालिताऽग्याह-

तेन्द्रियैरि"ति ॥ १७ ॥ ❀ ❀ एवमैहिकं वरं दत्त्वा पारत्रिकं वरं ददाति अथेति । पक्वः परिपाकं प्राप्तो गुणाशयः प्राकृतान्तःकरणं येषां ते तथा अतो निरयादस्मात्संसारात् "अतो निन्दाहेतुविचित्रेषु" इत्यभिधानात् चित्रात्पुण्यपापमिश्रितात् "चित्रमालेख्यमिश्रयोः" इत्यभिधानात् ॥ १८ ॥ ❀ ❀ गृहाविष्टचेतस्त्वेन पुत्रमित्रादिस्नेहबद्धानां कथं धामप्रवेशो घटत इति तत्राह गृहेष्विति । मद्वार्तया यातो गतो यामः कालविशेषो येषां ते तथा "गृहाः पुंसि च भूम्नि" इत्यमरः, जसि पुंलिङ्गः ॥ १९ ॥ ❀ ❀ ननु भवद्वार्ता संसारच्छेदिनी यदि तर्हि सर्वेऽपि किं न मुक्तास्तस्याः सुलभत्वादिति तत्राह न व्यवह्रियत इति । यतो यस्य हरेः प्रसादाद्गताः सूक्ष्मेण मनसावगच्छन्तो जानन्तो ये विपदि न मुह्यन्ति न शोचन्ति संपदि न हृष्यन्ति तैर्ब्रह्मवदिभिरप्येतद्यज्ञो ब्रह्मविष्ण्वाख्यं ब्रह्म यथानुभवं न व्यवह्रियत इत्यन्वयः । अतो मद्वार्ताया असुलभत्वान्न सर्वेषां मुक्तिरित्यर्थः । ब्रह्मवादिभिर्भवद्भिर्गृहेऽपि यज्ञो निजकर्म न व्यवच्छिद्यते यतो भवन्तो मदाज्ञया गृहागता न मोहादिकं कुर्वन्तीत्येवमादि मयोपदिष्टमेतद्रहस्यं तस्मान्मा शोचतेत्यपव्याख्यानं "सूक्ष्मेण मनसा विद्मो वाचा वक्तुं न शक्नुमः" इति वचनेन निरस्तमिति ज्ञायते । यज्ञपदस्य निजकर्मार्थत्वं ब्रह्मपदस्य रहस्यार्थत्वं च न व्यवच्छिद्यत इति ग्रन्थव्यत्यासश्च सम्प्रदायापरिज्ञानविजृम्भितं चेति यज्ञो विष्णुर्देवता ब्रह्मविदाप्नोति परमिति सूचनाय ब्रह्मवादिभिरिति प्रसिद्धयज्ञपरिहाराय ब्रह्मेति, विप्रादिव्यावृत्तये यज्ञ इति ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

न व्यवदिति तैर्व्याख्यातम् । यद्वा ज्ञः परमेश्वरोऽहं यन्नव्यवत् हृदये भामि एतदेव ब्रह्मेति ब्रह्मवादिभिरुच्यत इत्यर्थः ॥ २० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

लोकान् अनुलक्ष्यीकृत्य ॥ ११ ॥ ❀ ❀ गुणैर्ब्रह्मणः सकाशादनवमोऽन्यूनः ॥ १२ ॥ ❀ ❀ ननु कस्यां भार्य्यायां पुत्रो भवितेत्यत आह कण्डोरिति त्रिभिः । तपोनाशार्थमिन्द्रप्रेषितया प्रम्लोचया कण्डुर्नाम ऋषिर्बहुकालं रेमे । सा च ततः स्वर्गं गच्छन्ती कण्डोर्जातं गर्भं वृक्षेषु त्यक्त्वा जगामेत्यत आह । अपविद्धां त्यक्तां हे नृपनन्दनाः ! ॥ १३ ॥ ❀ ❀ सोमो वनस्पतीनां राजा स प्रसिद्धः ॥ १४ ॥ ❀ ❀ पित्रा प्राचीनबर्हिषा मामनुवर्त्तमानेन तत्र गत्वा ॥ १५ ॥ ❀ ❀ ननु बहूनां कथमेका भार्य्या स्यात्तत्राह अपृथगिति । भूयादिति मदाशीर्वाद एव दृष्टादृष्टदोषमुपशमयिष्यतीति भावः ॥ १६ ॥ ❀ ❀ दिव्यानां वर्षसहस्राणां सम्बन्धिनं कालमभिव्याप्य सहस्रमनन्तान् भोगान् भोक्ष्यथेत्यन्वयः । सहस्राणामिति कपिञ्जलानालभेतेतिवत् त्रयाणामित्यर्थः ॥ १७ ॥ ❀ ❀ हे भक्त्या पक्वगुणाशयाः ! अथ भौमभोगान्ते मद्धाम यास्यथेत्यन्वयः । न तु भविष्यन्त्या भक्त्या पक्वगुणाशयाः सन्त एवेति व्याख्येयम् । अपक्वकषायाणां भगवद्दर्शनासम्भवात् । तदुक्तम् "अविपक्वकषायाणां दुर्दर्शोऽहं कुयोगिनाम्" इति । अतः इदन्तास्पदत्वात् पारमेष्ठ्यादिपदादपि निरयतुल्यान्निर्विद्य ॥ १८ ॥ ❀ ❀ ननु तर्हि भौमान् भोक्ष्यथ भोगानित्युक्त्या निरयतुल्ये विषयभोगे त्वद्भक्तिप्रतिकूले कथमस्मान्निक्षिपसीति तत्राह । गृहेषु आविशतां प्राप्तावेशानामपि कुशलं मत्परिचरणमेव कर्म्म येषां मत्कथया यातो यामः प्रहरोऽपि येषां प्रहरमध्ये मत्कथा येषामवश्यमेव भवतीत्यर्थः । अयमर्थः—कर्म्मजन्यानामेव भोगानां बन्धकत्वं निरयतुल्यत्वं भक्तिप्रातिकूल्यञ्च न तु मदनुग्रहजन्यानामत एव ममानुग्रहाद्भौमान् भोक्ष्यथेति मयोक्तमतोऽन्यत्रापि यत्र विषयभोगेऽपि मद्भक्तेरसङ्कोचः प्रत्युत वृद्धिरेव दृश्यते चेत्तदा स विषयभोगो मदनुग्रहजन्य एवानुमेयो न बन्धकः । पृथुप्रह्लादध्रुवमन्वादिषु तथा दर्शनात् अविपक्वकषायेषु तु भक्तेषु मदनुग्रहो भोगच्यावक एव द्रष्टव्यः । यदुक्तम् "यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः" इत्यादि ॥ १९ ॥ ❀ ❀ तेषां भक्तानां कुतो बन्धदुःखं यतस्तेषां हृदयेऽहमपि सुखं प्राप्तुं नित्यं वसामीत्याह नव्येति । एतन्मत्स्वरूपं ब्रह्मवादिभिर्ब्रह्म उच्यत इति शेषः । यतो यत्र ब्रह्मणि गता लीना न मुह्यन्ति मोहशोकहर्षान्न प्राप्नुवन्ति सोऽहं ज्ञो विज्ञोऽपि यद्यस्मात्तेषां कुशलकर्म्मणां हृत् हृदयकमलं नव्यवत् प्रतिपदं नूतनवत् अये प्राप्नोमि जानामीति वा । तेषां हृदये नव्यवदहं भामीति सन्दर्भः ॥ २० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

लोकान् अनुलोकस्थितिपर्यन्तान् ॥ ११ ॥ ❀ ❀ अनवमोऽन्यूनः विश्रुतः विख्यातकीर्तिः आत्मवीर्येण स्वसन्तानेन ॥ १२ ॥ ❀ ❀ कण्डोः सकाशाल्लब्ध्वा तत्तपोनाशार्थमागतया तपोनाशानन्तरं तां कन्यामपविद्धां स्वर्गं गच्छन्त्या प्रम्लोचया त्यक्तां भूरुहा द्रुमा जगृहुः ॥ १३ ॥ ❀ ❀ यः राजा भूरुहाणामिति शेषः, सः सोमश्चन्द्रः ॥ १४ ॥ ❀ ❀ तत्र प्रजासर्गे निमित्ते ॥ १५ ॥ ❀ ❀ अपृथग्धर्मशीलानां भवतां समानधर्मशीला मदाज्ञया बहुभिरेकभार्यास्वीकारे न

कोऽपि दोष इति भावः ॥ १६ ॥ ❀ ❀ ममानुग्रहाददहतौजसः अव्याहतबलाः ॥ १७ ॥ ❀ ❀ पक्कगुणः दग्धवासन आशयो येषाम् "एते वै निरयास्तात लोकस्य परमात्मनः" इति स्मृतेः, अतो निरयात् प्राकृतमण्डलात् मद्धाम मदीयं लोकम् ॥ १८ ॥ ❀ ❀ मद्वार्तया यातो यामः कालो येषां तेषाम् ॥ १९ ॥ ❀ ❀ ब्रह्मवादिभिर्मद्वार्तोपदेष्टृभिर्हेतुभूतैः यज्ज्ञोऽहं येषां हृत् मनः नव्यवत् प्रत्यहं श्रुतोऽपि अभूतपूर्ववत् अत्यद्भुतत्वात् अये प्राप्नोमि । ते मोहादिकं न प्राप्नुवन्ति यतः एतत् मल्लक्षणं ब्रह्म गताः श्रवणादिना प्राप्ताः ॥ २० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं वराय चोदितेऽपि तान् स्वदर्शनजपरमानन्दपूर्णत्वेन वक्तुमशक्तानालक्ष्य स्वयमेव वरान् ददाति यत् यस्मात् यूयं पितुरादेशं प्रजावृद्ध्यादिविषयकं मुदाऽन्विताः हर्षयुक्ताः सन्तः अग्रहीष्ट गृहीतवन्तः । अथो तस्मात् वो युष्माकमुशती कमनीया कीर्तिर्लोकान् अनुभविष्यति व्याप्स्यतीत्यर्थः ॥ ११ ॥ ❀ ❀ युष्माकं पुत्रश्च गुणैः प्रजाविसर्गसत्कीर्त्यादिभिः ब्रह्मणोऽपि सकाशादनवमोऽन्यूनः, अत एव लोके विश्रुतः प्रख्यातश्च भविता भविष्यति । य एतां त्रिलोकीमात्मवीर्येण स्वसन्तानेन पूरयिष्यति ॥ १२ ॥ ❀ ❀ भार्याभावे कथं पुत्रोत्पत्तिरित्यपेक्षायां प्रतिदिशति—कण्डोरिति चतुर्भिः । तपोनाशार्थमिन्द्रेण प्रेषितया प्रम्लोचया सह कण्डुर्नाम ऋषिर्बहुकालं रेमे सा च ततो गर्भं दधार । ततः स्वर्गं गच्छन्ती गर्भं वृक्षेषु त्यक्त्वा जगाम तां च कन्यां तयाऽपविद्धां भूरुहा जगृहुः । तस्याः सौन्दर्यमाह—कमललोचनेति । यूयं च तद्योग्या इति सूचयन् सम्बोधयति—हे नृपनन्दना इति ॥ १३ ॥ ❀ ❀ तस्याः क्षुत्क्षामायाः क्षुधा पीडिताया अत एव रोदमानायाः मुखे स प्रसिद्धो वनस्पतीनां राजा सोमो दयान्वितः पीयूषवर्षिणीममृतस्राविणीं देशिनीं स्वतर्जनीं निदधे अमृतपानार्थं धारितवानित्यन्वयः । अनेनाप्सरोगर्भसम्भूतत्वेन अमृतपानेन च तस्या लावण्यातिशयवत्त्वेन क्रमस्वेददौर्गन्ध्यादिराहित्येन च युष्मद्योग्या सेति सूचितम् ॥ १४ ॥ ❀ ❀ यूयं च पित्रा प्रजाविसर्गे पुत्राद्युत्पत्तौ आदिष्टाः नियुक्ताः । तच्च युष्माभिरवश्यमनुष्ठेयम् । तत्र हेतुमाह—मामिति, मामनुवर्त्ततेति यतो मत्प्रेरितेनैव पित्रा तथाऽऽदिष्टा इत्यर्थः । तत्र भार्याग्रहणस्यावश्यकत्वे सति तामेव वरारोहां सर्वलावण्ययुक्तां कन्यामुद्वहत मा चिरं, विलम्बो न कार्य इत्यर्थः ॥ १५ ॥ ❀ ❀ ननु बहूनामेकैव भार्या कथं स्यात् दृष्टादृष्टविरोधादित्याशङ्क्याह—अपृथगिति । अपृथक् धर्मः प्रजापालनादिरूपः शीलं च सुस्वभावादि येषां तेषां युष्माकं सर्वेषामेव इयमर्पिताशया भवत्स्वेवार्पित आशयोऽन्तःकरणं यया सा अत एव अपृथग्धर्मशीला न युष्मद्भ्यः पृथक् धर्मः शीलं च यस्याः सा तथाभूता सती सुमध्यमा सुन्दरी पत्नी भूयादित्यन्वयः । तथा च धर्मशीलयोरैक्यान्मद्वाक्याच्च न दृष्टादृष्टविरोधः शङ्कनीय इति भावः ॥ १६ ॥ ❀ ❀ यूयं च ममाऽनुग्रहाद्दिव्यवर्षसहस्रपर्यन्तं कालमहतौजसः अप्रतिहतबलाः सन्तो भौमान् भुवि भवान् दिव्यान् दिवि भवांश्च भोगान् भोक्ष्यथेत्यन्वयः ॥ १७ ॥ ❀ ❀ ननु तर्हि भोगासक्तानामस्माकं मोक्षो न स्यादित्याशङ्क्याह—अथेति । अथ तावत्काल-भोगानन्तरं मय्यनपायिन्या अव्यभिचारिण्या भक्त्या पक्कगुणो दग्धकामादिमल आशयोऽन्तःकरणं येषां तथाभूताः सन्तो यूयमतो लोकद्वयोपभोगान्निरयात् नरकतुल्यात् निर्विद्य मद्धाम मत्स्वरूपमुपयास्यथ प्राप्स्यथेत्यन्वयः ॥ १८ ॥ ❀ ❀ ननु गृहाणां बन्धहेतुत्वात् कथं तत्र प्रविष्टानामव्यभिचारिणी भक्तिर्निर्वेदो वा घटते इत्याशङ्क्याह—गृहेष्विति । कुशलं मयि समर्पितं कर्म येषां तेषामत एव शुद्धान्तःकरणत्वेन विषयचिन्तनाद्यभावात् मद्वार्त्तयैव यातो यामः कालो येषां तेषां पुंसां गृहेष्वाविशतां प्रविष्टानां चापि गृहा बन्धाय न मताः न भवन्तीत्यन्वयः ॥ १९ ॥ ❀ ❀ ननु भगवत्कथाश्रवणस्य कथं गृहबन्धनिवर्त्तकत्वमित्य-पेक्षायामाह—नव्यवदिति । यत् यस्मात् मत्कथाश्रवणात् ज्ञः सर्वज्ञः अहं श्रोतृणां हृत् हृदयं नव्यवन् प्रतिपदं नूतनवत् अये प्राप्नोमि, यतो गताः यं मां प्राप्ताः सन्तो जनाः पुनर्मोहशोकहर्षान्न प्राप्नुवन्ति । ननु ब्रह्मसाक्षात्कार इदं फलं तत्र कः शोकः को मोह एकत्वमनुपश्यत इत्यादौ श्रूयते, तद्वत्साक्षात्कारे कथं स्यादित्याशङ्क्याह—ब्रह्मैतदिति । एतत् एष मम साक्षात्कार एव ब्रह्मवादिभि-र्ब्रह्मसाक्षात्कार इति व्यपदिश्यते इत्यर्थः ॥ २० ॥

## भाषानुवादः

तुम लोगोंने बड़ी प्रसन्नतासे अपने पिताकी आज्ञा शिरोधार्य की है, इससे तुम्हारी कमनीय कीर्ति समस्त लोकोंमें फैल जायगी ॥ ११ ॥ ❀ ❀ तुम्हारे एक बड़ा ही विख्यात पुत्र होगा। वह गुणोंमें किसी भी प्रकार ब्रह्माजीसे कम नहीं होगा तथा अपनी सन्तानसे तीनों लोकोंको पूर्ण कर देगा ॥ १२ ॥ ❀ ❀ राजकुमारो ! कण्डु ऋषिके तपोनाशके लिये इन्द्रकी भेजी हुई प्रम्लोचा अप्सरासे एक कमलनयनी कन्या उत्पन्न हुई थी। उसे छोड़कर वह स्वर्गलोकको चली गयी। तब वृक्षोंने उस कन्याको लेकर पाला-पोसा ॥ १३ ॥ ❀ ❀ जब वह भूखसे व्याकुल होकर रोने लगी तब ओषधियोंके राजा चन्द्रमाने दयावश उसके मुँहमें अपनी अमृतवर्षिणी तर्जनी अँगुली दे दी ॥ १४ ॥ ❀ ❀ तुम्हारे पिता आजकल मेरी सेवा ( भक्ति ) में लगे हुए हैं; उन्होंने तुम्हें सन्तान उत्पन्न करनेकी आज्ञा दी है। अतः तुम शीघ्र ही उस देवोपम सुन्दरी कन्यासे विवाह कर

लो ॥ १५ ॥ तुम सब एक ही धर्ममें तत्पर हो और तुम्हारा स्वभाव भी एक-सा ही है; इसलिये तुम्हारे ही समान धर्म और स्वभाववाली वह सुन्दरी कन्या तुम सभीकी पत्नी होगी तथा तुम सभीमें उसका समान अनुराग होगा ॥ १६ ॥ ❁ ❁ तुमलोग मेरी कृपासे दस लाख दिव्य वर्षोंतक पूर्ण बलवान् रहकर अनेकों प्रकारके पार्थिव और दिव्य भोग भोगोगे ॥ १७ ॥ ❁ ❁ अन्तमें मेरी अविचल भक्तिसे हृदयका समस्त वासनारूप मल दग्ध हो जानेपर तुम इस लोक तथा परलोकके नरक-तुल्य भोगोंसे उपरत होकर मेरे परमधामको जाओगे ॥ १८ ॥ ❁ ❁ जिन लोगोंके कर्म भगवदर्पणबुद्धिसे होते हैं और जिनका सारा समय मेरी कथावार्ताओंमें ही बीतता है, वे गृहस्थाश्रममें रहें तो भी घर उनके बन्धनका कारण नहीं होते ॥ १९ ॥ ❁ ❁ वे नित्यप्रति मेरी लीलाएँ सुनते रहते हैं, इसलिये ब्रह्मवादी वक्ताओंके द्वारा मैं ज्ञानस्वरूप परब्रह्म उनके हृदयमें नित्य नया-नया-सा भासता रहता हूँ और मुझे प्राप्त कर लेनेपर जीवोंको न मोह हो सकता है; न शोक और न हर्ष ही ॥ २० ॥

मैत्रेय उवाच

एवं ब्रुवाणं पुरुषार्थभाजनं जनार्दनं प्राञ्जलयः प्रचेतसः ।
तद्दर्शनध्वस्ततमोरजोमला गिराऽगृणन् गद्गदया सुहृत्तमम् ॥ २१ ॥

प्रचेतस ऊचुः

नमो नमः क्लेशविनाशनाय निरूपितोदारगुणाह्वयाय ।
मनो¹वचोवेगपुरोजवाय सर्वाक्षमार्गैरगताध्वने नमः ॥ २२ ॥
शुद्धाय शान्ताय नमः स्वनिष्ठया मनस्यपार्थं विलसद्द्वयाय ।
नमो जगत्स्थानलयोदयेषु गृहीतमायागुणविग्रहाय ॥ २३ ॥

नमो विशुद्धसत्त्वाय हरये हरिमेधसे । वासुदेवाय कृष्णाय प्रभवे सर्वसात्वताम् ॥ २४ ॥
नमः कमलनाभाय नमः कमलमालिने । नमः कमलपादाय नमस्ते कमलेक्षण ॥ २५ ॥
नमः कमलकिञ्जल्कपिशङ्गामलवाससे । सर्वभूतनिवासाय नमोऽयुङ्क्ष्महि साक्षिणे ॥ २६ ॥
रूपं भगवता त्वेतदशेषक्लेशसंक्षयम् । आविष्कृतं नः क्लिष्टानां किमन्यदनुकम्पितम् ॥ २७ ॥
एतावत्त्वं हि विभुभिर्भाव्यं दीनेषु वत्सलैः । यदनुस्मर्यते काले स्वबुद्ध्याभद्ररन्धन ॥ २८ ॥
येनोपशान्तिर्भूतानां क्षुल्लकानामपीहताम् । अन्तर्हितोऽन्तर्हृदये कस्मान्नो वेद नाशिषः ॥ २९ ॥
असावेव वरोऽस्माकमीप्सितो जगतः पते । प्रसन्नो भगवान् येषामपवर्गगुरुर्गतिः ॥ ३० ॥

अन्वयः—तद्दर्शनध्वस्ततमोरजोमलाः प्रांजलयः प्रचेतसः एवम् ब्रुवाणम् पुरुषार्थभाजनम् सुहृत्तमम् जनार्दनम् गद्गदया गिरा अगृणन् ॥ २१ ॥ ❁ ❁ क्लेशविनाशनाय नमो नमः मनोवचोवेगपुरोजवाय सर्वाक्षमार्गैः अगताध्वने निरूपितोदारगुणाह्वयाय नमः ॥ २२ ॥ ❁ ❁ शुद्धाय शांताय स्वनिष्ठया मनसि अपार्थम् विलसद्द्वयाय नमः जगत्स्थानलयोदयेषु गृहीतमायागुणविग्रहाय नमः ॥ २३ ॥ ❁ ❁ विशुद्धसत्त्वाय हरिमेधसे हरये वासुदेवाय कृष्णाय सर्वसात्वताम् प्रभवे नमः ॥ २४ ॥ ❁ ❁ कमलनाभाय नमः कमलमालिने नमः कमलपादाय नमः कमलेक्षण ते नमः ॥ २५ ॥ ❁ ❁ कमलकिंजल्कपिशंगामलवाससे नमः सर्वभूतनिवासाय साक्षिणे नमः अयुङ्क्ष्महि ॥ २६ ॥ ❁ ❁ भगवता तु एतत् अशेषक्लेशसंक्षयम् रूपम् आविष्कृतम् क्लिष्टानां नः अन्यत् अनुकंपितम् किम् ॥ २७ ॥ ❁ ❁ अभद्ररंधन दीनेषु वत्सलैः प्रभुभिः यत् स्वबुद्ध्या काले अनुस्मर्यते एतावत्त्वम् हि भाव्यम् ॥ २८ ॥ ❁ ❁ येन उपशांतिः क्षुल्लकानाम् अपि भूतानाम् अतर्हृदये अंतर्हितः न ईहताम् नः आशिषः कस्मात् न वेद ॥ २९ ॥ ❁ ❁ जगतः पते येषाम् अपवर्गगुरुः गतिः भगवान् प्रसन्नः अस्माकम् असौ एव वरः ईप्सितः ॥ ३० ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

पुरुषार्थं भाजयति प्रापयतीति तथा तम् ॥ २१ ॥ ❁ ❁ वेदैः ब्रह्मवादिभिश्च सकलश्रेयःसाधनत्वेन निरूपिता उदारगुणा आह्वया नामानि च यस्य मनोवचसोर्वेगादपि पुरोऽग्रतो जवो वेगो यस्य। मनोवचसोरगोचरायेत्यर्थः। अत एव

१. प्राचीने पाठे "मनोवचो" इत्यारभ्य 'विग्रहाय' पर्यन्तोंऽशोऽर्थात् द्वाविंशतितमश्लोकोत्तरार्द्धस्तथा त्रयोविंशतिश्लोको न ।

सर्वेषामक्षाणां मार्गैरगतोऽनवगतोऽध्वा यस्य तस्मै ते नमः ॥ २२ ॥ ❀ ❀ स्वनिष्ठया स्वरूपस्थित्या शुद्धाय अतः शान्ताय सुखाय मनसि निमित्ते सत्यपार्थं व्यर्थमेव विलसद्विस्फुरितं द्वयं यस्मिन्। गृहीता मायागुणैर्विग्रहा ब्रह्मादिमूर्तयो येन ॥ २३ ॥ ❀ ❀ स्वतस्तु विशुद्धसत्त्वरूपाय संसारं हरति मेधा ज्ञानं यस्य तस्मै ॥ २४-२५ ॥ ❀ ❀ अयुंक्ष्महि कृतवन्तो वयम् ॥ २६ ॥ ❀ ❀ यदुक्तं वरं वृणीध्वमिति तन्मनसि निधायाहुः। रूपमिति। समस्तानां क्लेशानां संक्षयो यस्मात् नः आविष्कृतं प्रकटितम्। अतोऽन्यत्किमनुकंपितमनुकम्पा। इयमेवास्माकं परमानुकम्पेत्यर्थः ॥ २७ ॥ ❀ ❀ कुत इत्यत आह। हे अभद्ररन्धनामंगलनाशन! त्वत्प्रत्ययोऽत्र न विवक्षितः, एतावदेव दीनेषु वत्सलैः प्रभुभिर्भाव्यं कार्यम्। किं तत्तदाह यदिति। अस्मदीया एत इति बुद्ध्या उचिते कालेऽनुस्मर्येत इति यत्। त्वया तु रूपमपि दर्शितमिति भावः ॥ २८ ॥ ❀ ❀ येनानुस्मरणेन स्मृतानां तेषामुपशान्तिः सुखं भवति किं च क्षुल्लकानां क्षुद्राणामपि भूतानामन्तर्हृदयेऽन्तर्हितोंऽ-तर्यामित्वेन स्थितो भवानीहितामिच्छतां त्वदुपासकानां नोऽस्माकमाशिषः कस्माद्धेतोर्न वेद जानात्येवेत्यर्थः ॥ २९ ॥ ❀ ❀ तथापि वक्तव्यं चेत्तर्हि येषामस्माकं भगवान्प्रसन्नोऽसावेव वरः भगवत्प्रसाद एवास्माकमीप्सितो वर इत्यर्थः। अपवर्गगुरुर्मोक्षमार्ग-प्रदर्शकः गतिः स्वतश्च पुरुषार्थभूतः ॥ ३० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इत्यर्थ इति। "तद्धावतोऽन्यानत्येति" इति श्रुतेरिति भावः। अत एव मनोवचोऽगोचरत्वादेव। "यतो वाचो निवर्तन्ते" इत्यादिश्रुतेः ॥ २२ ॥ ❀ ❀ अतः शुद्धत्वात्। द्वयं द्वैतरूपं विलसद्देदीप्यमानमपि द्वैतं यस्मात्तस्मै यं प्राप्तानां मनसि विविधभोगयुक्तमपि जगन्निष्प्रयोजनमेव स्यादित्यर्थः ॥ २३-२४ ॥ ❀ ❀ कमलेक्षणेति कृपालुतामाहुः ॥ २५-२६ ॥ ❀ ❀ इत्यर्थ इति। 'त्वद्दर्शनात्पूर्णकामः सत्यकामो भवेत्पुमान्' इत्युक्तेः। कृतार्था वयमिति भावः ॥ २७ ॥ ❀ ❀ परमानुकम्पात्वे हेतुमाशंक्य समाधत्ते—कुत इति। अभद्ररन्धनेति। पापनिवृत्तिस्तु त्वद्दर्शनादेव जाता तदर्थमपि नास्माभिस्त्वं प्रार्थ्य इति भावः। त्वत्प्रत्ययस्य विवक्षितत्वे तु ब्राह्मणत्ववदन्यत्रापि तत्तुल्यत्वापत्तेः तद्वारणाय स्वामि-चरणैर्व्याख्यातमेतावदेवेति। इयत्प्रमाणकमेव नातोधिकमित्यर्थः। इति भाव इति। त्वया तु परमकृपालुना परमप्रभुत्वमेव स्फुटितमित्याशयः ॥ २८ ॥ ❀ ❀ येन त्वत्कर्तृकानुस्मरणेन। स्मृतानां स्वीयत्वेन चिन्तितानाम्। अन्यदाह—किं चेति। क्षुल्लकानां सकामत्वेन तुच्छानाम्। इत्यर्थ इति। नहि परमसर्वज्ञस्य तव किञ्चिदप्यज्ञातमस्तीति भावः। 'क्षुल्लकस्त्रिषु नीचेल्पे' इति मेदिनी। यद्वान्तोन्तःकरणस्य हितं शुद्धिर्देस्यास्स तथा ॥ २९ ॥ ❀ ❀ यद्यप्यहं जानामि तथापि भवद्भिरेव वक्तव्यमिति चेत्—। इत्यर्थ इति। अत उत्कृष्टवरस्याभावादिति भावः। अत्र हेतुः—अपवर्गेति। अपवर्गान्मोक्षादपि गुरुस्त्वमेव यदि प्राप्तस्तदा मोक्षपर्यन्तैर्वरैरलमिति भावः। जगतः पते इति। सर्वपालकस्य तवास्माकं पालनं विनैव प्रार्थनमपि कार्यमेवेति भावः ॥ ३० ॥

## श्रीमद्वीरराघवव्याख्या

एवं भगवतोक्ताः प्रचेतसस्तमेव जनार्दनमगृणन्नित्याह। मैत्रेयः एवमुक्तप्रकारेण ब्रुवाणं पुरुषार्थानामाश्रयं सुहृत्तमं जना-र्दनं तस्य जनार्दनस्य दर्शनेन ध्वस्तानि कामक्रोधादीनि रजआदिकार्यरूपाणि मलानि येषां ते प्राञ्जलयः बद्धाञ्जलयो गद्गदगिरागृणन् तुष्टुवुः ॥ २१ ॥ ❀ ❀ आध्यात्मिकादिदुःखानां नाशाय उदारगुणाः यस्याह्वयैर्नामभिः निरूपिताः स निरूपितोदारगुणाह्वयः तस्मै मनोवचसोर्वेगादपि पुरोऽग्रतो वेगो यस्य वाङ्मनसागोचरायेत्यर्थः, सर्वेषामक्षाणामिन्द्रियाणां मार्गा वृत्तयः तैरगतः अविषयी-कृतः अध्वा स्वस्वप्राप्त्युपायः यस्य इन्द्रियद्वारागोचरस्य प्राप्त्युपायायेत्यर्थः ॥ २२ ॥ ❀ ❀ शुद्धाय कर्मोपाधिरहिताय शान्ताय ऊर्मिषट्करहिताय तत्र हेतुः स्वनिष्ठया स्वस्मिन्निष्ठाऽविच्छेदः अविच्छिन्नस्वानुभूत्याऽपार्थेऽवगतपुरुषार्थे पुरुषार्थभूतस्वरूपज्ञान-रहिते मनसि विलसत्परस्परवैलक्षण्येन स्फुरत् द्वयं देहात्मनोर्द्वयं येषां ते विलसद्द्वयाः स्वस्वरूपज्ञानविधुरेऽपि मनसि भगवत्प्रसाद-वशाद्देहात्मज्ञानसंपन्ना इत्यर्थः। तेषां जीवानामात्मने निरतिशयप्रीतिविषयाय जगतः स्थानलयोदयेषु स्थितिलयोत्पत्तिषु निमित्त-भूतासु जगत्स्थित्याद्यर्थं गृहीता माया सङ्कल्पात्मकं ज्ञानं 'माया वयुनं ज्ञानमि'ति ज्ञानपर्यायत्वान्मायाशब्दस्य गुणौ तमोरजसी एव विग्रहौ पृथक्सिद्धचनहौं यस्य स्थित्यर्थं स्वेच्छोपात्ताप्राकृतदिव्यमङ्गलविग्रहाः लयार्थमुत्पत्त्यर्थं तु तमोरजःप्रधानरुद्रब्रह्मविग्रहास्तस्मै इत्यर्थः ॥ २३ ॥ ❀ ❀ स्थित्यर्थं विष्णुतनोः प्राकृतत्वशङ्कापरिहाराय प्राहुः विशुद्धसत्त्वायेति। हरये बन्धहारिणे हरिमेधसे दुरितहारिमनीषाविषयाय सर्वभूतान्तरात्मने आनन्दकराय सात्वतां भक्तानां प्रभवे ॥ २४ ॥ कमलं जगदुत्पत्तिस्थानात्मकं नाभौ यस्य कमलमालास्यास्तीति तस्मै व्रीह्यादित्वान्मत्वर्थीय इनिः 'अत इनिठनावि'ति तपरकरणात्, कमलवत्पादौ कोमलौ सुगन्धी सुन्दरौ च यस्य कमलदलवद्विशाले अक्षिणी यस्य तस्मै ॥ २५ ॥ ❀ ❀ कमलकिञ्जल्कवत्पिशङ्गममलञ्च वासो वस्त्रं यस्य सर्वभूतानां निवासायाधाराय सर्वाणि भूतानि निवासः वासस्थानं शरीरं यस्येति वा। यद्यपीदं विशेषणद्वयं वासुदेवायेत्यनेनैवावगतं,

तथापि तद्विवरणरूपमिदं व्याख्येयं, साक्षिणे सर्वसाक्षाद्द्रष्ट्रे तुभ्यं नमः युंक्ष्महि करवाम ॥ २६ ॥ ❀ ❀ भगवद्दर्शनेनैवात्मनामवाप्तसमस्तपुरुषार्थतामाहुः आविष्कृतमिति । अशेषाणां क्लेशानां संक्षयो यस्मात्तदेतद्रूपं भवता तापत्रयातुराणामस्माकमाविष्कृतं प्रकटीकृतम्, इतोऽन्यत्किमनुकम्पनमस्ति इयमेव त्वया कर्तव्यानुकम्पेत्यर्थः, अतो नास्माभिर्विवरणीयोऽसीति भावः ॥ २७ ॥ ❀ ❀ हे अमङ्गलनिरासक ! वत्सलैः प्रभुभिर्दीनेषु भाव्यं कर्तव्यम् एतावदेव किन्तत्तदाह अस्मदीया एत इति । बुद्ध्या उचितकालेऽनुस्मर्येत इति यत्त्वया तु रूपमपि दर्शितमिति भावः ॥ २८ ॥ ❀ ❀ येनानुस्मरणेन क्षुल्लकानां क्षुद्राणामुपशान्तिः दुरितोपशान्तिर्भवति किञ्चेहतां कामयमानानां नोऽस्माकमन्तर्हृदये अन्तरात्मत्वेन स्थितो भवानाशिषः कामान् कस्माद्धेतोर्न वेद जानात्येवेत्यर्थः ॥ २९ ॥ ❀ ❀ तथापि वक्तव्यं चेत्तर्हि येषामस्माकं भगवान् प्रसन्नः असावेव वरः, कुतः यतस्त्वमपवर्गगुरुः मुक्तिसाधनोपदेष्टा गतिरपवर्गसाधनभूतश्च ॥ ३० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

प्रचेतोभिरेवं भगवतो मतमवाप्य स्वपरहितं किमकारीति तत्राह एवमिति ॥ २१ ॥ ❀ ❀ स्तुतिः प्रेक्षावच्चित्तहर्षणी चेदुपादेया स्यादन्यथेत्थं बधिरवदप्रयोजिकीत्यतोऽपि ग्राह्यगुणविशिष्टामाहुरित्याह । नमो नम इति । निरूपितोदारगुणाह्वाय निरूपिता उदारगुणा येषां ते तथा महागुणा आह्वया नामानि यस्य स तथा तस्मै मनोवचोवेगपुरोजवाय वाङ्मनसयोर्वेगादपि पुरःस्थितवेगाय यद्वा वाङ्मनसवेगमतीत्यवर्तनवेगाय "तद्धावतोऽन्यानत्येति" इति श्रुतेः सर्वाक्षाणां सर्वेन्द्रियाणां मार्गैर्निर्मार्गैरगताध्वनेऽज्ञातमार्गाय ॥ २२ ॥ ❀ ❀ शुद्धायेत्येतदशुद्धाक्षाज्ञेयत्वे लिङ्गं शान्ताय पूर्णानन्दस्वभावाय अपगतोऽपेक्षितोऽर्थो यस्मात्तदपार्थं तस्मिन् सुष्ठु निष्ठा व्यवस्था यस्य नास्ति तत्स्वनिष्ठं संशयात्मकमित्यर्थः, तच्च मनः स्वनिष्ठमनस्तस्मिन् समाधानरहिते मनसि विलसद्द्वयाय प्रकटितस्वतन्त्रवस्तुद्वयाय । "अनवस्थितबुद्धीनां द्वितीयं दृश्यते हरेः । सम्यक्सुस्थितबुद्धीनामिदं सर्वं हरेर्वशः ॥" इति वचनादुक्त एवार्थो न तु प्रकटितप्रपञ्चरूपायेति, नित्यं गृहीताः मायया गुणाः प्रकृतेः सत्त्वादिगुणाः सत्त्वादिगुणप्रवर्तनानुगुणाः सत्त्वादिगुणरहिता ज्ञानानन्दात्मका विग्रहा ब्रह्मादिशब्दवाच्याश्च येन स तथा तस्मै नित्यं गृहीता सत्त्वाद्या विग्रहाश्च त्रयः सदा "ज्ञानानन्दात्मकास्ते तु विग्रहा निर्गुणास्तथा । द्वौ तत्र ब्रह्मरुद्रस्थावेको वैकुण्ठधामगः" इति वचनान्न प्रकृतिगुणविरचितदेहत्वं हरेरङ्गीकर्तुं युक्तम् ॥ २३ ॥ ❀ ❀ विशुद्धश्चायं सत्त्वः सर्वगुणात्मकश्च विशुद्धसत्त्वस्तस्मै "हरिः सर्वगुणात्मत्वात्सत्त्व इत्यभिधीयते" इति वचनात् रजआदिमिश्ररहितसत्त्वगुणायेत्यर्थो नोचितः 'हरणात् ज्ञानरूपत्वाद्धरिमेधाविभोः स्मृतः' इत्यतः पापहरणात् ज्ञानरूपत्वाद्धरिमेधाः सृष्टौ रजःसम्पर्कात्कपिलवर्णज्ञान इत्यर्थो न ग्राह्यः "हरिर्नां कपिले त्रिषु" इत्यभिधानात् अतो गदित एवार्थस्तस्मै ॥ २४-२५ ॥ ❀ ❀ अयुङ्क्ष्महि नमस्काराख्यं योगमकार्ष्म ॥ २६ ॥ ❀ ❀ अनुकम्पया भवताप्येतद्रूपमाविष्कृतमन्यत्किमस्मदनुकम्पां विना न किमपीत्यर्थः ॥ २७ ॥ ❀ ❀ अभद्ररन्धन ! पापदहन ! ॥ २८ ॥ ❀ ❀ यदुक्तं हरिणा वरं वृणीध्वमिति तत्राहुरित्याह येनेति । क्षुल्लकानामल्पकानामपि भूतानामन्तर्हृदये अन्तर्हितस्त्वं तेषामीहितं चेष्टितं चावैषि तस्मान्न आशिषः कस्मान्न वेदापि तु वेदेत्यन्वयः ॥ २९ ॥ ❀ ❀ त्वत्प्रसादादन्यो वरो न प्रार्थनीय इत्याहुरित्याह असाविति । येषामस्माकं भगवान् प्रसन्नः असौ भगवत्प्रसाद एवेप्सितो वरो नान्य इत्यन्वयः ॥ ३० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तद्दर्शनात् ध्वस्तानि तमोरजोमलानि यैस्ते ॥ २१-२२ ॥ ❀ ❀ स्वस्य तव निष्ठया तन्निष्ठायां जातायां जनानां मनसि अपार्थमेव विलसदाभासमानं द्वयं कारणकार्यात्मकं जगत् किं वा कर्मज्ञानात्मकं साधनं यस्मात् जगत् स्थानादिषु निमित्तेषु गृहीता स्वाधिष्ठानीकृता मायागुणाः सत्त्वादयो यैः तादृशा विग्रहाः श्रीविष्णवादयो यस्य तस्मै ॥ २३-२८ ॥ ❀ ❀ तत्र च सति स्वदौरात्म्यं कथं गोपनीयमित्याहुः । क्षुल्लकानामिति सपादार्द्धेन ॥ २९ ॥ ❀ ❀ सत्यपि दौरात्म्ये विचारतस्त्विदमुपलभामह इत्याहुः । असाविति । भवत्प्रसाद एवास्माकमीप्सितो वर इत्यर्थः । अपवर्गतो ब्रह्मकैवल्यादपि गुरुर्महती या गतिः फलं तद्रूपः । यद्वा अपवर्गस्य भक्तियोगस्य गुरुरुपदेष्टा तदुचिता गतिश्च ॥ ३० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

पुरुषार्थानां भाजनं पात्रं ध्वस्ततमोरजसोऽपि यद्दर्शनात् अमलाः अदर्शनदुःखमालिन्यरहिता इत्यर्थः ॥ २१ ॥ ❀ ❀ निरूपिता वेदैरुक्ता उदारा गुणा आह्वया नामानि च यस्य तस्मै मनोवचसोर्वेगादपि पुरोऽग्रतो जवो वेगो यस्य तस्मै ॥ २२ ॥ ❀ ❀ मनसि अपार्थं निष्प्रयोजनं विलसद् देदीप्यमानमपि द्वयं द्वैतं यस्मात्तस्मै यं प्राप्तानां मनसि विविधभोगयुक्तमपि जगन्निष्प्रयोजनमेव स्यादित्यर्थः । गृहीता मायागुणमया ब्रह्मेन्द्ररुद्ररूपा विग्रहा येन तस्मै ॥२३-२५॥ ❀ ❀ नमो युङ्क्ष्महि कृतवन्तः ॥ २६-२७ ॥ ❀ ❀ एतावत्त्वं एतावदेव विभुभिः प्रभुभिस्तत्र भवद्भिः यत्काले स्वीयसेवाकाले

दासबुद्ध्या स्मर्यते हे अभद्रहन्तः! ॥ २८ ॥ ❀ ❀ येन त्वत्कर्तृकानुस्मरणेनैव तेषामुपशान्तिः सुखं क्षुल्लकानां क्षुद्राणामपि ईहितां सकामानामपि नोऽस्माकं अन्तर्हृदयमध्ये वर्त्तमानः सन्नस्माकमाशिषः कामान् कस्मान्न वेद कीदृशः अन्तः अन्तःकरणानां हितं शुद्धिर्यस्मात् सः ॥ २९ ॥ ❀ ❀ तदपि वाचाप्युच्यत इत्याहुः असाविति। अपवर्गान्मोक्षादपि गुरुस्त्वमेव यदि प्राप्तस्तदा मोक्षपर्यन्तैर्वरैरलमिति भावः ॥ ३० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पुरुषार्थान् भाजयति प्रापयतीति तथा तं अगृणन् अस्तुवन् ॥ २१ ॥ ❀ ❀ वेदैर्निरूपिता वर्णिता उदारा भक्तमनोरथपूरका गुणा आह्वया नामानि च तस्मै मनोवचसोः वेगादपि पुरः अग्रतो जवो वेगो यस्य तस्मै सर्वेषां प्राणिनामक्षमार्गेन्द्रियवृत्तिभिरगतोऽसंस्पृष्टः अध्वा दर्शनमार्गो यस्य तस्मै "नाहं प्रकाशः सर्वस्य योगमायासमावृतः" इति श्रीमुखोक्तेश्च ॥ २२ ॥ ❀ ❀ स्वनिष्ठया स्वकीये उपास्ये वासुदेवे या निष्ठा तया मनसि उपासकचित्ते अपार्थं यथा भवति तथा विलसत् द्वयं तदितरोपासनीयसाधनादिकं पुत्रवित्तादिकं च द्वैतं यस्मात् उपास्यात् तस्मै "योऽन्यां देवतामुपासते न स वेद किं प्रजया किं धनेन येषामयमात्मलोकः" इति श्रुतेः गृहीताः प्रकटीकृता मायागुणमया विग्रहा येषां ते मायागुणविग्रहाः 'यत्सत्त्वतः सुरगणा रजसः प्रजेशा मन्योस्तु भूतपतयः स भवान् गुणेशः' इति वक्ष्यमाणाः येन तस्मै। यद्वा गृहीतो मायागुणविग्रहो विराड्देहो येन तस्मै ॥ २३ ॥ ❀ ❀ हरति संसारं मेधा यस्य यद्विषया बुद्धिर्मुक्तिं ददाति तस्मै ॥ २४-२५ ॥ ❀ ❀ अयुङ्क्ष्महि कुर्मः ॥ २६ ॥ ❀ ❀ वरं वृणीध्वमित्युक्तं तत्र यद्यपि त्वद्दर्शनेनैव कृतार्थानां न वराकाङ्क्षा तथापि महत्सङ्गो दीयतामित्याहुः रूपमित्यादिसप्तभिः। गृहीताः प्रकटीकृताः ॥ २७ ॥ ❀ ❀ हे अभद्ररन्धन! दीनेषु अवनतेषु वत्सलैः विभुभिः एतावत्त्वं स्वार्थे त्वप्रत्ययः। एतावदेव भाव्यं कार्यम्। यत्काले उचितकाले स्वबुद्ध्या स्वकीयत्वेनानुस्मर्य्यते ॥२८॥ ❀ ❀ येन भगवतः अवनतजनस्मरणेन भूतानां स्मृतानां शान्तिः सुखं स्यात् किञ्च क्षुल्लकानां भोगार्थं कर्मासक्तानामपि भवान् अन्तर्हृदये अन्तर्हितः अन्तर्यामितया स्थितः आशिषो वेद नोऽस्माकमीहतामुपासनं कुर्वतामाशिषः कस्माद्धेतोर्न वेद जानात्येवेत्यर्थः ॥ २९ ॥ ❀ ❀ यत्प्रसन्नोऽभूत् प्रसन्नतया दृष्टिगोचरो जात इत्येष त्वत्प्रसाद एव नोऽस्माकमीप्सितो वरः ॥ ३० ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवं त्रिवर्गं पुरुषार्थं भाजयति प्रापयतीति तथा तम्, अत एव सुहृत्तमं परमहितकर्त्तारम्, जनार्दनं जनयति संसारमिति जना अविद्या तामर्दयति नाशयतीति तथा तम्, तस्य दर्शनेन ध्वस्तं निरस्तं तमोरजोमलं येषां ते प्रचेतसः प्राञ्जलयः सन्तो गद्गदया स्खलिताक्षरया गिरा अगृणन् अस्तुवन्नित्यन्वयः ॥ २१ ॥ ❀ ❀ स्तुतिमेव दर्शयति—नमो नम इत्याद्येकविंशतिभिः। चतुर्थ्यन्तानां नमो नम इत्यनेनान्वयः। भक्तानां क्लेशं विनाशयतीति तथा तस्मै। ननु भक्तपक्षपातित्वे तस्य समत्वं न स्यादित्याशङ्क्याहुः—निरूपितेति। वेदैः सर्वश्रेयस्साधनत्वेन निरूपिताः अत एव उदाराः सर्वपुरुषार्थप्रापका गुणा भक्तवात्सल्यैश्वर्यादयः आह्वया नामानि च यस्य तस्मै। तथा च वेदप्रतिपादितत्वाद्भजनानुसारेण भक्ताननुगृह्णतोऽपि न वैषम्यमिति भावः। अभक्तानां तु मनइन्द्रियाद्यगोचरत्वान्न क्लेशनाशक इत्याशयेनाहुः—मन इति पदद्वयम्। मनोवचसोर्वेगादपि पुरोऽग्रतो जवो वेगो यस्य तस्मै। सर्वेषामक्षाणामिन्द्रियाणां मार्गैरगतः अनवगतः अध्वा मार्गोऽपि यस्य तस्मै ॥ २२ ॥ ❀ ❀ शुद्धत्वेन समत्वमेव समर्थयन् प्रणमन्ति—शुद्धायेति। स्वनिष्ठया स्वरूपस्थित्या शुद्धाय अत एव शान्ताय कामादिदोषशून्याय। ननु कथं तर्हि लोके विषमतया प्रतीतिस्तत्राहुः—मनसीति। दुष्टे मनसि निमित्ते सत्येव अपार्थं वृथैव विलसत् स्फुरितं द्वयं निग्रहीतृत्वमनुग्रहीतृत्वं यस्मिंस्तस्मै। वस्तुत एकत्वेऽपि लीलार्थं जगतः स्थानं पालनं लयः प्रलयः उदयः उत्पत्तिः तेषु निमित्तेषु गृहीता मायागुणैः सत्त्वादित्रिविग्रहा ब्रह्मविष्णुरुद्रमूर्त्तयो येन तस्मै ॥ २३ ॥ ❀ ❀ तत्र शुद्धसत्त्वमूर्तिं भगवन्तं प्रणमन्ति—नम इति त्रिभिः। विशुद्धसत्त्वाय विशुद्धसत्त्वमूर्त्तये नमः। हरये भक्तदुःखहारकाय। हरति संसारं मेधा ज्ञानं यस्य तस्मै हरिमेधसे। वासुदेवाय वसुदेवपुत्रत्वेन प्रसिद्धाय कृष्णाय। सर्वेषां सात्त्वतां यादवानां भक्तानां वा प्रभवे पालकाय ॥ २४ ॥ ❀ ❀ ब्रह्माण्डात्मकं कमलं नाभौ यस्य तस्मै। कमलानां माला विद्यतेऽस्य तस्मै। कमलवत्कोमलौ पादौ यस्य तस्मै। कमलवदीक्षणे नेत्रे यस्य तत्सम्बोधनम् ॥ २५ ॥ ❀ ❀ कमलस्य किञ्जल्काः केसरास्तद्वत् पिशङ्गे पीते वाससी यस्य तस्मै। सर्वाणि भूतानि नितरां वसन्त्यस्मिन्निति तथा तस्मै। सर्वसाक्षिणे द्रष्टृत्वेऽपि विकाररहिताय वयं नमः अयुंक्ष्महि कृतवन्तः। नमःशब्दावृत्तिरादरार्था ॥ २६ ॥ ❀ ❀ भगवता यदुक्तं वरं वृणीध्वं तत्राहुः—रूपमिति। नोऽस्माकं क्लिष्टानामविद्याऽस्मितारागद्वेषाभिनिवेशात्मकैः क्लेशैर्व्याप्तानामशेषाणां समस्तानां क्लेशानां सङ्क्षयो यस्मात्तत्तथाभूतमेतत् दृश्यमानं रूपं भगवता त्वाविष्कृतं प्रकटितमतोऽन्यत्किमनुकम्पितमनुकम्पेत्यन्वयः। कृपातिशयद्योतनाय तुशब्दः ॥ २७ ॥ ❀ ❀ तदेव दर्शयन्ति—एतावत्त्वमिति सपादेन। त्वप्रत्ययोऽत्र न विवक्षितः। तादृशो दयालुस्त्वमेवेति सूचयन् सम्बोधयन्ति—हे अभद्ररन्धन अमङ्गलनाशन दीनेषु वत्सलैः कृपालुभिः प्रभुभिः स्वामिभिरेतावदेव भाव्यं कार्यम्। किं तदित्यपेक्षायामाहुः यदिति। एषोऽस्मदीय इति स्वबुद्ध्या काले

सेवादिसमयेऽनुस्मर्यते इति यत् ॥ २८ ॥ ❀ ❀ तेन किमित्यपेक्षायामाहुः—येनेति । येनानुस्मरणेन भूतानां स्मृतानामुपशान्तिः सर्वक्लेशनिवृत्तिः परमानन्दावाप्तिश्च भवति । भवता तु दर्शनमपि दत्तमिति कृपातिशयः । अस्मन्मनोरथस्तु त्वया ज्ञायते एव सर्वसाक्षित्वादित्याहुः—क्षुल्लकानामिति, अतितुच्छानामपि प्राणिनां ईहतामिच्छतामन्तर्हृदयेऽन्तर्हितः साक्षितया स्थितो भवांस्तेषां मनोरथान् जानाति । तर्हि नोऽस्माकं स्वभक्तानामाशिषो मनोरथान् कस्मान्न वेद न जानाति जानात्येवेत्यन्वयः ॥ २९ ॥ ❀ ❀ यद्यपि सर्वज्ञो भवान् सर्वं जानात्येव तथाप्यस्मन्मुखेन श्रोतव्यं चेत्तर्हि उच्यते इत्याशयेनाहुः—असावेवेति । हे जगत पते येषां भवान् प्रसन्नो जातः तेषामस्माकमीप्सितो वरः असौ भवत्प्रसाद एव नान्य इत्यन्वयः । कुत एवमित्यपेक्षायां सर्वस्य वरस्य भवत्प्रसादेऽन्तर्भावादित्याशयेन विशिंषन्ति—अपवर्गगुरुरिति, अपवर्गस्य मोक्षस्य गुरुर्मार्गप्रदर्शनेन दातेत्यर्थः । गतिः सर्वसाधनप्राप्यतत्तत्पुरुषार्थस्वरूपाचेत्यर्थः । कुत एवं तत्राहुः—भगवानिति, यत ऐश्वर्यादिषड्गुणवानित्यर्थः ॥ ३० ॥

### भाषानुवादः

श्रीमैत्रेयजी कहते हैं—भगवान्‌के दर्शनोंसे प्रचेताओंका रजोगुण-तमोगुण मल नष्ट हो चुका था । जब उनसे सफल पुरुषार्थोंके आश्रय और सबके परम सुहृद् श्रीहरिने इस प्रकार कहा, तब वे हाथ जोड़कर गद्गद वाणीसे कहने लगे ॥ २१ ॥ प्रचेताओंने कहा—प्रभो ! आप भक्तोंके क्लेश दूर करनेवाले हैं, हम आपको नमस्कार करते हैं । वेद आपके उदार गुण और नामोंका निरूपण करते हैं । आपका वेग मन और वाणीके वेगसे भी बढ़कर है तथा आपका स्वरूप सभी इन्द्रियोंकी गतिसे परे है । हम आपको बार-बार नमस्कार करते हैं ॥ २२ ॥ ❀ ❀ आप अपने स्वरूपमें स्थित रहनेके कारण नित्य शुद्ध और शान्त हैं, मनरूप निमित्तके कारण हमें आपमें यह मिथ्या द्वैत भास रहा है । वास्तवमें जगत्‌की उत्पत्ति, स्थिति और लयके लिये आप मायाके गुणोंको स्वीकार करके ही ब्रह्मा, विष्णु और महादेवरूप धारण करते हैं । हम आपको नमस्कार करते हैं ॥ २३ ॥ ❀ ❀ आप विशुद्ध सत्त्वस्वरूप हैं, आपका ज्ञान संसारबन्धनको दूर कर देता है । आप ही समस्त भागवतोंके प्रभु वसुदेवनन्दन भगवन् श्रीकृष्ण हैं, आपको नमस्कार है ॥ २४ ॥ ❀ ❀ आपकी ही नाभिसे ब्रह्माण्डरूप कमल प्रकट हुआ था, आपके कण्ठमें कमलकुसुमोंकी माला सुशोभित है तथा आपके चरण कमलके समान कोमल हैं; कमलनयन ! आपको नमस्कार है ॥ २५ ॥ ❀ ❀ आप कमलकुसुमकी केसरके समान स्वच्छ पीताम्बर धारण किये हुए हैं, समस्त भूतोंके आश्रयस्थान हैं तथा सबके साक्षी हैं; हम आपको नमस्कार करते हैं ॥ २६ ॥ ❀ ❀ भगवन् ! आपका यह स्वरूप सम्पूर्ण क्लेशोंकी निवृत्ति करनेवाला है, हम अविद्या, अस्मिता, रागद्वेषादि क्लेशोंसे पीड़ितोंके सामने आपने इसे प्रकट किया है । इससे बढ़कर हमपर और क्या कृपा होगी ॥ २७ ॥ ❀ ❀ अमङ्गलहारी प्रभो ! दीनोंपर दया करनेवाले समर्थ पुरुषोंको इतनी ही कृपा करनी चाहिये कि समय-समयपर उन दीनजनोंको 'ये हमारे हैं' इस प्रकार स्मरण कर लिया करें ॥ ३० ॥ ❀ ❀ इसीसे आश्रितोंका चित्त शान्त हो जाता है । आप तो क्षुद्र-से-क्षुद्र प्राणियोंके भी अन्तःकरणमें अन्तर्यामीरूपसे विराजमान रहते हैं । फिर आपके उपासक हमलोग जो-जो कामनाएँ करते हैं, हमारी उन कामनाओंको आप क्यों न जान लेंगे ॥ २९ ॥ ❀ ❀ जगदीश्वर ! आप मोक्षका मार्ग दिखानेवाले और स्वयं पुरुषार्थस्वरूप हैं । आप हमपर प्रसन्न हैं, इससे बढ़कर हमें और क्या चाहिये । बस, हमारा अभीष्ट वर तो आपकी प्रसन्नता ही है ॥ ३० ॥

वरं वृणीमहेऽथा[1]पि नाथ त्वत्परतः परात् । न ह्यन्त[2]स्त्वद्विभूतीनां सोऽनन्त इति गीयसे[3] ॥ ३१ ॥
पारिजातेऽञ्जसा लब्धे सारङ्गोऽन्यन्न सेवते । त्वदङ्घ्रिमूलमासाद्य साक्षात्किं किं वृणीमहि ॥ ३२ ॥
यावत्ते मायया स्पृष्टा भ्रमाम इह कर्मभिः । तावद्भवत्प्रसङ्गानां सङ्गः स्यान्नो भवे भवे ॥ ३३ ॥
तुलयाम [4]लवेनापि न स्वर्गं नापुनर्भवम् । [5]भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ ३४ ॥
यत्रेड्यन्ते कथा मृष्टास्तृष्णायाः प्रशमो यतः । निर्वैरं यत्र भूतेषु नोद्वेगो यत्र कश्चन ॥ ३५ ॥
यत्र नारायणः साक्षाद्भगवान्न्यासिनां गतिः । संस्तूयते सत्कथासु मुक्तसङ्गैः पुनः पुनः ॥ ३६ ॥
तेषां विचरतां पद्भ्यां तीर्थानां पावनेच्छया । भीतस्य किं न रोचेत तावकानां समागमः ॥ ३७ ॥
वयं तु साक्षाद्भगवन् भवस्य प्रियस्य सख्युः क्षणसङ्गमेन ।
सुदुश्चिकित्सस्य भवस्य मृत्योर्भिषक्तमं त्वाद्य गतिं गताः स्मः ॥ ३८ ॥

---

१. प्रा० पा०—ऽ्यापि । २. प्रा० पा०—न ह्यन्तो यद्वि० । ३. प्रा० पा०—गीयते । ४. प्रा० पा०—क्षणेनापि । ५. प्रा० पा०—भवत्प्रसङ्गिसङ्गस्य ।

यन्नः स्वधीतं गुरवः प्रसादिता विप्राश्च वृद्धाश्च सदानुवृत्त्या ।
आर्या नताः सुहृदो भ्रातरश्च सर्वाणि भूतान्यनसूययैव ॥ ३९ ॥
यन्नः सुतप्तं तप एतदीश निरन्धसां कालमदभ्रमप्सु ।
सर्वं तदेतत्पुरुषस्य भूम्नो वृणीमहे ते परितोषणाय ॥ ४० ॥

अन्वयः—अथापि नाथ परतः परात् त्वत् वरम् वृणीमहे हि त्वद्विभूतीनाम् अंतः न सः अनंतः इति गीयसे ॥ ३१ ॥ ❀ ❀ सारंगः अंजसा पारिजाते लब्धे अन्यत् न सेवते साक्षात् त्वदंघ्रिमूलम् आसाद्य किम् किम् वृणीमहि ॥ ३२ ॥ ❀ ❀ यावत् ते मायया स्पृष्टाः इह कर्मभिः भ्रमाम तावत् नः भवे भवे भवत्प्रसक्तानाम् संगः स्यात् ॥ ३३ ॥ ❀ ❀ भगवत्संगिसंगस्य लवेन अपि स्वर्गम् न तुलयाम अपुनर्भवम् न उत मर्त्यानाम् आशिषः किम् ॥ ३४ ॥ ❀ ❀ यत्र मृष्टाः कथाः ईड्यंते यतः तृष्णायाः प्रशमः सर्वभूतेषु निर्वैरं यत्र कश्चन उद्वेगः न ॥ ३५ ॥ ❀ ❀ यत्र मुक्तसंगैः पुनः पुनः सत्कथासु न्यासिनाम् गतिः साक्षात् भगवान् नारायणः संस्तूयते ॥ ३६ ॥ ❀ ❀ तीर्थानाम् पावनेच्छया पद्भ्याम् विचरताम् तेषाम् तावकानाम् समागमः भीतस्य न रोचेत किम् ॥ ३७ ॥ ❀ ❀ भगवन् वयम् तु साक्षात् प्रियस्य सख्युः भवस्य क्षणसंगमेन अद्य सुदुश्चिकित्सस्य भवस्य मृत्योः भिषक्तमम् त्वा गतिम् गताः स्मः ॥ ३८ ॥ ❀ ❀ यत् नः स्वधीतम् गुरवः च विप्राः च वृद्धाः सदा अनुवृत्त्या प्रसादिताः आर्याः सुहृदः च भ्रातरः नताः सर्वाणि भूतानि अनसूयया एव नतानि यत् निरंधसाम् नः अप्सु अदभ्रम् कालम् एतत् तपः सुतप्तं तत् एतत् सर्वम् ईश ते भूम्नः पुरुषस्य परितोषणाय वृणीमहे ॥ ३९-४० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

यद्यप्येवं तथापि हे नाथ त्वत्त्वत्तो वरमेकं वृणीमहि । कथंभूतात् । परतः कारणादपि परात् "अक्षरात्परतः परः" इति श्रुतेः । अतो यद्यपि त्वं दातुं समर्थो न च देवानां त्वद्विभूतीनामंतोऽस्ति यतोऽनंतविभूतित्वादनंत इति गीयसे ॥ ३१ ॥ ❀ ❀ तथापि यथा सारंगो भ्रमरः पारिजाते अंजसा सुखेन लब्धे सति सुलभमप्यन्यद् वृक्षांतरं न सेवते तथा वयमपि साक्षात्त्वदंघ्रिमूलं प्राप्य किं किं वृणीमहि न किंचिदित्यर्थः । यद्वा किमप्यन्यत्तुच्छं किमर्थं वृणीमहि । यद्वा यदि वृणीमहि किं किं तर्हि वृणीमहि । अनंतत्वेन मनोरथानामनवस्थानादित्यर्थः ॥ ३२ ॥ ❀ ❀ अत एतावदेव प्रार्थयाम इत्याहुः यावदिति । स्पृष्टा व्याप्ताः । भवति प्रकृष्टः संगो येषां तेषां संगोऽस्माकं स्यात् ॥ ३३ ॥ ❀ ❀ ननु राज्यभोगान्स्वर्गापवर्गौ च विहाय किमिदं प्रार्थ्यते तत्राहुः । तुलयामेति । भगवत्संगिनां भागवतानां संगस्य लवेनापि ॥ ३४ ॥ ❀ ❀ सत्संगस्य श्रैष्ठ्यं प्रपंचयति यत्रेति त्रिभिः । यत्र तेषु भगवत्संगिसंगेषु । यतो याभ्यः कथाभ्यः । निर्वैरं वैराभावः । उद्वेगो भयम् ॥ ३५-३६ ॥ ❀ ❀ पद्भ्यां पावनेच्छया संसाराद्भीतस्य ॥ ३७ ॥ ❀ ❀ सत्संगफलमस्माभिरेवानुभूतमित्याहुः । वयं त्विति । तव यः प्रियः सखा तस्य भवस्य रुद्रस्य । अत्यंतमचिकित्सस्य असाध्यरोगरूपस्य भवस्य जन्मनो मृत्योश्च भिषक्तमं सद्वैद्यं त्वां गतिं प्राप्ताः ॥ ३८ ॥ ❀ ❀ वरांतरं वृणुते यन्न इति द्वाभ्याम् । नता नमस्कृताः ॥ ३९ ॥ ❀ ❀ निरंधसां निरन्नानामस्माकम् । अदभ्रं बहुकालम् । ते परितोषणाय भवत्विति वृणीमहे ॥ ४० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यद्यपि त्वद्दर्शनमेव परो वरस्तथापि हे नाथ सर्वप्राप्यं । अक्षरात्प्रधानात्परतः पुरुषात् अपि परः तस्यापि कारणमिति श्रुतिपदार्थः । अतः सर्वकारणत्वात् । यतो देयानामंतो न अतः स एव वरस्त्वयावश्यं देय इति भावः ॥ ३१ ॥ ❀ ❀ त्रियंतो तर्हि बहवो वरा यथेष्टमिति चेन्मैवं त्वच्चरणांबुजमेवास्माकं वरणीयं तन्माधुर्यास्वादप्राप्त्यर्थमेव कश्चिदेको वरोऽभीष्टोऽस्ति तं विना बहूनन्यान्वरान्न वृणीम इत्याहुः पारीति त्रिभिः । यद्यपि त्वं बहुवरदोसि तथापीति । ननु पारिजातादेव बहूनभिलषितार्थान्प्रकामं गृह्णातु तत्राह-सारंग इति । सारंगस्य मकरंदमात्रग्राहित्वाद्वस्त्वंतरेषु वांछैव नोदेति यथा तथैव त्वदंघ्रिमूलं प्राप्य किं किमिति । इत्यर्थ इति । किं तु त्वच्चरणमकरंदं विना न किंचिदिति भावः । तथापि व्यवहारसिद्ध्यर्थं किञ्चिदन्यदपि वरणीयमेवेति चेदाह-यद्वेति । एककिंशब्दस्य तुच्छमित्यर्थः । द्वितीयस्य तादर्थ्यमिति । किं च नैकेन वरेण सांसारिकव्यवहारः सेत्स्यतीति चेत्तर्हि बहवो वरणीयास्तत्र पुनराह-यद्वेति । इत्यर्थ इति । वरणीयानवस्थानादेका त्वच्चरणांबुजसेवैव सुष्ठु वरणीया भातीति भावः ॥ ३२ ॥ ❀ ❀ अत एव मनोरथानवस्थानादेव । तेषां भवद्भक्तानाम् अयमेवास्माकमीप्सिततमो वर इति भावः ॥ ३३ ॥ ❀ ❀ अत्राक्षिपति-नन्विति । अत्र चक्रवर्ती-ननु मायया स्पृष्टा इत्युक्त्या मायाजयार्थं साधुसंगं प्रार्थयध्वे चेन्मोक्षार्थमेव साक्षात्किन्न गृह्णीतेत्यत आहुस्तुलयामेति । यावन्तो वरणीया वरास्ते सर्वे स्वर्गमोक्षांतःपातिन एवानुभूताः, साधुसंगस्य तु स्वर्गमोक्षाभ्यां परस्सहस्राधिक्य-

मवगम्यते । यतः साधुसंगे सति त्वद्रूपगुणकथामाधुर्यास्वादो भवेत् । स च स्वर्गसुखात्त्वदीयनिर्विशेषब्रह्मसुखादपि कोटिकोटिगुणाधिको "नाहं वसामि वैकुंठे योगिनां हृदये न च । मद्भक्ता यत्र गायंति तत्र तिष्ठामि नारद ॥" इति त्वदुक्त्या सर्वसुखदातुस्तवापि परमसुखप्रद इत्यत एकः साधुसंग एव व्रियते इति । किं च "अथानघांघ्रेस्तव कीर्त्तितीर्थयोरंतर्बहिःस्नानविधूतपाप्मनाम् । भूतेष्वनुक्रोशसुसत्त्वशीलिनां स्यात्संगमोऽनुग्रह एष नस्तव ॥" इति वचनात्परमोत्कृष्टमहादेवेनापि प्रार्थ्यत्वात्साधुसंग एव सर्वतोऽधिकवर इति भावः ॥ ३४ ॥ ❀ ❀ स च साधुसंगः सिद्धभक्तानां साधकभक्तानां च सर्वदैव सर्वथैव परमोपादेय इत्याहुः । येषु भक्तेषु मृष्टाः पवित्राः । उद्वेगः त्रासः । तासां च परमास्वाद्यत्वात्कथाश्रवणात्तृष्णानिवृत्तिरुचितैव, अत एव वैराभावस्ततश्च त्रासाभाव इति ध्येयम् ॥ ३५ ॥ ❀ ❀ यत्र यासु सत्कथासु । न्यासिनां कर्मफलत्यागिनां न तु कर्मत्यागिनां यज्ञादिविहितकर्मणां त्यागानौचित्यात् "यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत्" इति श्रीमुखोक्तेः । मुक्तसंगैर्नारदाद्यैः । पुनः पुनरित्युक्त्या मुहुर्मुहुर्हरिकथाश्रवणं ध्वनितम् ॥ ३६ ॥ ❀ ❀ परमदुर्लभानामपि भक्तानां सुलभत्वमाहुः—तेषामिति । तेषां तावकानां तीर्थानां पावनेच्छया स्नानादिभिरस्मान्पुनंत्विति तीर्थकर्तृका या पावनेच्छा तया हेतुभूतया तीर्थानां शुभादृष्टवशादेवेत्यर्थः, किं न रोचेतापि तु रोचेतैवेत्यर्थः ॥ ३७ ॥ ❀ ❀ तत्र न वयं भीतत्वेन सत्संगं प्रार्थयामहे किन्तु परमपुमर्थबुद्ध्यैव क्षणिकेनैव सच्छिरोमणिसंगलाभेन सर्वभयापवर्गस्य तव लब्धत्वात् । एवं चाभीष्टवरस्त्वत्प्राप्तिरेव तस्याः फलं साधुसंग एवास्माकं त्वत्प्राप्तिसाधनं च साधुसंग एवेत्याहुः—सत्संगफलमस्माभिरिति । वयं त्विति । सद्वैद्यं समूलरोगनिर्मूलनक्षमम् ॥ ३८ ॥ ❀ ❀ वयमज्ञास्त्वत्परितोषसाधनं न जानीमस्तदपि स्वेच्छया यद्यत्कृतं तेनापि त्वं प्रसीदेत्याशास्महे यन्न इति । स्वधीतं सम्यगध्ययनविधिना वेदाद्यधीतम् । गुरवः दक्षोपाख्याने लिखिताः पित्रादयः । वृद्धा ज्ञानादिना वृद्धाः । आर्या भक्तिवृद्धाः । भूतानि मानितानीति शेषः ॥ ३९ ॥ ❀ ❀ हे ईशेति । स्वामित्वात्तव नास्मत्कृतबहुसेवाद्यपेक्षास्तीति भावः । "न स्वामी भृत्यतः स्वाम्यमिच्छन्यो राति चाशिषः" इति कायाधवोक्तेः । 'ईशः स्वामिनि शंकरे' इत्यभिधानात् । भूम्न इति । सर्वथा सर्वाधिकस्य तव किंचिदपेक्षया न परितोषः, किन्तु भूमत्वादेवेति भावः ॥ ४० ॥

## श्रीमद्वीरराघवव्याख्या

यद्यप्येवमथापि हे नाथ ! परतो देहविलक्षणादात्मनः पराद्विलक्षणात्त्वत् त्वत्तः प्रकृतिपुरुषविलक्षणात्त्वत्त इत्यर्थः । वरं वृणीमहे ! कं वरं वृणुते इति विवित्सायां त्वदीयानन्तगुणगणानुकथनानुश्रवणपरायणानां भागवतानां सङ्गमिति वक्तुं तावदनन्तत्वमाहुः । यद्यस्मात्त्वद्विभूतीनामन्तो न ह्यस्ति अतस्त्वमनन्त इति गीयसे ॥ ३१ ॥ ❀ ❀ भागवतसङ्गलभ्यत्वाद् गुणानुभवमन्तरेणान्यं न वृणीमह इत्याहुः । पारिजाते मकरन्दनिर्भरे लब्धे सति सारङ्गो भृङ्गोऽन्यं न सेवते, एवं त्वदङ्घ्रिमूलं निरतिशयसुखावहमासाद्य किं किं वृणीमहे न किमपीत्यर्थः ॥ ३२ ॥ ❀ ❀ एतावदेव प्रार्थयाम इत्याहुः । ते तव मायया स्पृष्टा मोहिताः सन्तो वयं स्वकर्मभिरिह संसारे यावद्भ्रमामस्तावद्भवतः प्रसङ्गो येषां तेषां भागवतानां सङ्गं प्रतिजन्म नोऽस्माकं स्यादित्येष एव वरोऽस्माभिर्वरणीयः ॥ ३३ ॥ ❀ ❀ ननु राज्यभोगस्वर्गान् हित्वा किमिदं प्रार्थ्यते तत्राहुः । तुलयामेति । भगवत्सङ्गिनां सङ्गस्य लवेनापि लेशेनापि स्वर्गादिकं न तुलयाम न तुल्यं मन्यामहे किमुत मर्त्यानां मरणशीलानामाशिषः राज्यभोगादिरूपास्तुल्याम इत्यर्थः ॥ ३४ ॥ ❀ ❀ सत्सङ्गस्य श्रैष्ठ्यं प्रपञ्चयति यत्रेति त्रिभिः । यत्र भागवतेषु मृष्टाः कर्तरि क्तः पापशोधिका मधुरा वा कथा भगवत्कथा ईड्यन्ते प्रस्तूयन्ते यतः याभ्यः कथाभ्यः श्रूयमाणाभ्यः तृष्णाया विषयबुभुक्षायाः प्रशमः प्रशान्तिः यत्र सत्सङ्गे सति कश्चन उद्वेगः भयं च नास्ति ॥ ३५ ॥ ❀ ❀ यत्र सत्कथासु मुक्तसङ्गैः सद्भिः पुनः पुनः भगवान्नारायण एव न्यासिनां संन्यासिनां गतिरिष्टोपायः प्रस्तूयते ॥ ३६ ॥ ❀ ❀ तेषां सतां तीर्थानां गङ्गादीनां पावनेच्छया गङ्गादीन् पवित्रीकर्तुमिच्छया पद्भ्यां चरतां तावकानां त्वद्भक्तानां समागमः सङ्गमः संसाराद्भीतस्य किन्न रोचेत रोचेतैवेत्यर्थः ॥ ३७ ॥ ❀ ❀ सत्सङ्गस्य फलमस्माभिरेवानुभूतमित्याहुः । वयं त्विति । हे भगवन् त्वत्प्रियस्य त्वत्सखस्य भवरूपमृत्युचिकित्सकस्य भवस्य रुद्रस्य क्षणमात्रसङ्गमेन भिषक्तमं संसृतिरूपरोगनिवारकं त्वां गतिं शरणं गताः प्राप्ताः स्मः ॥ ३८ ॥ ❀ ❀ एवं सत्सङ्गं वृत्वा वरान्तरं वृणुते यन्न इति द्वाभ्याम् । यदस्मदीयमध्ययनादिकं तदेतत्सर्वं सर्वान्तरात्मनः परमपुरुषस्य तव परितोषणाय वृणीमहे त्वत्परितोषणाय भवत्वित्यन्वयः । नोऽस्माभिः प्रसादिताः प्रसादं प्रापिताः ये सन्तः तदनुवृत्त्या गुरवो वृद्धा विप्राश्च प्रसादिताः प्रसादं प्रापिताः आर्या गुर्वादयो नता नमस्कृताः तथा सुहृदादयः अनसूयथैव प्रसादिताः निरन्धसां निरन्नानां नोऽस्माकमदभ्रं बहुकालमप्सु जलेषु यत्संतप्तं तपः एतदध्यापनगुर्वादिप्रसादननमस्कारतपआदिकम् ॥ ३९-४० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

यद्यपि भगवत्प्रसाद एवेप्सितो वरस्तथापि परतः परास्त्वत्सङ्गलक्षणं वरं वृणीम इत्यन्वयः । परतः परत्वमुपपादयति नहीति "नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप । अन्तोऽनन्ते न तथा हि लिङ्गं परो मात्रया" इत्यादि प्रमाणात् ॥ ३१ ॥

❀ ❀ यतस्त्वमेवानन्तोऽतोऽन्यस्मान्मनसा वराभिलाषो नास्त्येवेति भावेनाह पारिजात इति । लुप्तोपममेतत् तथा पारिजाते पुष्पेऽञ्जसा तत्त्वेन लभ्ये लब्धुं योग्ये सारङ्गो भृङ्गोऽन्यच्चम्पकादिपुष्पं न सेवते तथा साक्षात्त्वदङ्घ्रिमूलमवाप्यान्यदर्भीष्टं किं किं वृणीमहे न किमपीत्यन्वयः ॥ ३२ ॥ ❀ ❀ मा भूदन्यतो वराभिलाषोऽस्मत्तः कोऽसौ वर इति तत्राह । यावदिति । भवतः प्रसङ्गो येषां ते भवत्प्रसङ्गास्तेषाम् ॥ ३३ ॥ ❀ ❀ सत्सङ्गो वाञ्छनीय इति भावेनाह । तुलयाम इति ॥ ३४ ॥ ❀ ❀ सत्सङ्गतावेते गुणा लभ्यन्ते इत्याह । यत्रेति ॥ ३५-३६ ॥ ❀ ❀ रुच्यभावे कथं घटत इति तत्राह तेषामिति । तीर्थानां पावनेच्छया पद्भ्यां तीर्थानि विचरतां तावकानां समागमः संसाराद्भीतस्य पुंसो न रोचेत किं रोचेत एवेत्यन्वयः । संसाररोगपरिहारौषधपानसम्भवादत्र रुचिर्जायत इत्यर्थः ॥ ३७ ॥ ❀ ❀ सत्सङ्गफलमनुभवसिद्धं चेत्याहुरित्याह वयन्त्विति । भगवान् प्रियो यस्य स तथा तस्य तव प्रियस्य सख्युः संसारादौ सह कारिणः शिवस्य मृत्योर्मारकस्य भिषक्तमं वैद्यश्रेष्ठम् ॥ ३८ ॥ ❀ ❀ वेदाध्ययनादिपुण्यं यत्तत्सर्वं भवत्प्रसादजनकमस्त्विति निवेदयन्तीत्याह यन्न इति । सुष्ठु अधीतं वेदाध्ययनमनाथा मृतभर्तृकाः ॥ ३९ ॥ ❀ ❀ निरन्धसां त्यक्तपितृदत्तान्नानां त्यक्तसर्वथान्नानां वा अदभ्रमनल्पम् ॥ ४० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

परतः सर्व्वश्रेष्ठरूपत्वाद् ब्रह्मतत्त्वादपि परस्तस्मात् ॥ ३१-३२ ॥ ❀ ❀ त्वदङ्घ्रिमूलसान्निध्यन्तु त्वन्मायास्पर्शिन्यां सांसारिकावस्थायां न नितरां सम्पद्येत । तस्मादिममेवादेशमधुना वृणीमहीत्याहुः । यावदिति ॥ ३३ ॥ ❀ ❀ न चैवमस्य गौणत्वमाशङ्क्यं यतस्तुलयामेति स्वर्गं सांसारिकभोगसुखम् ॥ ३४ ॥ ❀ ❀ तदेवं तस्य सर्व्वतः परमसाधनसाध्यत्वं दर्शितं तदेव दर्शयति यत्रेति त्रिकेण । तृष्णायाः प्रशम इति । तासां सर्वोपरिस्वाद्यत्वात् अत एव निर्व्वैरं वैराभावः सर्व्वोपरि स्वाद्यत्वमेव दर्शयति । यत्र नारायण इति । एवं परमदुर्लभानामपि तेषां सुलभत्वमाहुः । तेषामिति । पावनेच्छयेत्युत्प्रेक्षा गम्या, तीर्थानां या स्वपावनेच्छा तया तदाकृष्टतयैव चरतामिति वा तत्पादलग्नानां तीर्थानां पावनीया इच्छा तत्र तत्र जिगमिषा तयेति वा तीर्थानां पावनो भगवान् तदिच्छया तत्प्राप्तीच्छयेति वा तत्तीर्थं पावयितुं तत्कर्तृकेच्छयेति वा । तीर्थभूतानां तेषां संसारिपावनेच्छयेति वा । भीतस्यापि किमुत तत्रसज्जस्येत्यर्थः ॥ ३५-३७ ॥ ❀ ❀ तत्र न वयं भीतत्वेन सत्सङ्गं प्रार्थयामहे, किन्तु परमपुरुषार्थबुद्ध्यैव क्षणिकेनैव सच्छिरोमणिसङ्गलाभेन सर्व्वभयापवर्गस्य तव लब्धत्वादित्याहुः । वयन्त्विति । तुशब्दादन्यतो वैशिष्ट्यद्योतनाय प्रियस्य सख्युरिति गुर्व्वीश्वरयोर्महेश्वरयोश्चाभेदापदेशेऽपीत्थमेव तैः शुद्धभक्तैर्मतम् ॥ ३८ ॥ ❀ ❀ अत एव यन्न इति युग्मकं परितोषणायेति स्वविषयसन्तोषणैकपरत्वात् प्रीतिजातेः ॥ ३९-४० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अन्योऽपि कश्चिदेको वरोऽस्माकमीप्सितोऽस्तीत्याहुः । वरमिति । हे नाथ ! यस्मात्त्वद्विभूतीनां देयानामन्तो नास्तीत्यतः स वरस्त्वयावश्यं देय एवेति भावः ॥ ३१ ॥ ❀ ❀ व्रियन्तां तर्हि यथेष्टमनेके एव वरा इति चेन्मैवं त्वच्चरणाम्बुजमेवास्माकं वरणीयं तन्माधुर्य्यास्वादप्राप्त्यर्थमेव कश्चिदेको वरोऽभीष्टोऽस्ति तं विना बहूनन्यान् वरान्न वृणीम इत्याहुः पारीति त्रिभिः । सारङ्गो भ्रमरः अन्यद् वृक्षान्तरं ननु पारिजातात् कल्पद्रुमादेव प्रकाममभिवाञ्छितान् बहूनर्थान् गृह्णातु तत्राह सारङ्ग इति । सारङ्गस्य मकरन्दसात्रग्राहित्वाद्वस्त्वन्तरेषु वाञ्छैव नोत्पद्यते यथा तथैव त्वदङ्घ्रिमूलं प्राप्य किं किं वृणीमहि अपि च त्वच्चरणमकरन्दं विना न किमपीत्यर्थः ॥ ३२ ॥ ❀ ❀ ईप्सितस्त्वस्माकमेकोऽयमेव वर इत्याहुः यावत्ते इति । भवत्प्रसङ्गानां भक्तजनानाम् ॥ ३३ ॥ ❀ ❀ ननु मायया स्पृष्टा इत्युक्त्या मायाजयार्थं साधुसङ्गं प्रार्थयध्वे चेन्मोक्षमेव साक्षात् किं न गृह्णीतेत्यत आहुः । तुलयामेति । अयमर्थः—यावन्तो वरणीया वरास्ते सर्व्वे स्वर्गमोक्षान्तःपातिन एवानुभूताः, साधुसङ्गस्य तु स्वर्गमोक्षाभ्यां परस्सहस्राधिक्यमवगम्यते यतः साधुसङ्गे सति त्वद्रूपगुणकथामाधुर्य्यास्वादो भवेत् स च स्वर्गसुखात् त्वदीयनिर्विशेषस्वरूपब्रह्मसुखादपि कोटिकोटिगुणाधिको "नाहं वसामि वैकुण्ठे योगिनां हृदये न च । मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद" इत्यादित्वदुक्त्या सर्व्वसुखदातुस्तवापि परमसुखप्रद इत्यत एकः साधुसङ्ग एव व्रियते इति ॥ ३४-३५ ॥ ❀ ❀ स च साधुसङ्गः सिद्धभक्तानां साधकभक्तानाञ्च सर्व्वदैव सर्व्वथैव परमोपादेय इत्याहुः । यत्र येषु भक्तेषु यतो याभ्यः कथाभ्यः तीर्थानां पावनेच्छया स्नानादिभिरस्मान् पुनन्त्विति तीर्थकर्तृका या पावनेच्छा तया हेतुभूतया तीर्थानां शुभादृष्टवशादेवेत्यर्थः । भक्तानान्तु तीर्थेभ्यः स्वपावनेच्छयैव प्रयोजनं सम्मतं ज्ञेयम् । भीतस्य संसारात् ॥ ३६-३७ ॥ ❀ ❀ एवञ्चाभीष्टवरस्त्वत्प्राप्तिरेव तस्यास्त्वत्प्राप्तेः फलं साधुसङ्ग एवास्माकं त्वत्प्राप्तेः साधनञ्च साधुसङ्ग एवेत्याहुः । वयन्त्विति । तत्र यः प्रियः सखा तस्य भवस्य जन्मनः मृत्योर्मरणस्येति रोगद्वयस्य सद्वैद्यं त्वां गतिं प्राप्ताः ॥ ३८ ॥ ❀ ❀ वयमज्ञास्त्वत्परितोषसाधनं नैव जानीमस्तदपि स्वेच्छया यद्यत्कृतेनापि त्वं प्रसीदेत्याशासते यन्न इति । वृद्धा ज्ञानाधिका आर्य्या भक्त्यधिकाः भूतानि प्रसादितानीति शेषः ॥ ३९ ॥ ❀ ❀ निरन्धसां निरन्नानामदभ्रमनल्पं कालम् ॥ ४० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तथापि कल्पद्रुमवद्विविधविचित्रफलदो वरदेश्वरोऽनन्तविभूतिपतिस्त्वमस्माकं भ्रमरवत्सारग्राहिणां वाञ्छितः साधुसङ्गः जन्मनि जन्मनि देय इत्याहुः वरमिति त्रिभिः ॥ ३१-३३ ॥ ❀ ❀ सतां माहात्म्यमाहुः। तुलयामेति चतुर्भिः। भगवत्सङ्गिनां भागवतानां सङ्गस्य लवेन स्वर्गं न तुलयाम "उवाह कृष्णो भगवान् श्रीदामानं पराजितः। युधिष्ठिरस्य भीमस्य कृत्वा पादाभिवन्दनम्" इत्येवं विहारं मुक्तैः सह न करोति भगवत्सङ्गिसङ्गभावितैः स्वानन्यभक्तैः सह तु करोति, अतोऽपुनर्भवं मोक्षमपि न तुलयाम इति भावः ॥ ३४ ॥ ❀ ❀ यत्र सत्सङ्गे ॥ ३५ ॥ ❀ ❀ न्यासिनां भगवति कृतात्मीयभरन्यासानाम् गम्यते इति गतिः ॥ ३६ ॥ ❀ ❀ भीतस्य संसारादिति शेषः ॥ ३७ ॥ ❀ ❀ वयं तु शिवसङ्गेन त्वां प्राप्ता इत्याहुर्वयमिति भवस्य शिवस्य प्रियस्य तवेति शेषः। भवस्य जन्मनः मृत्योर्मरणस्य भिषक्तमं निवारकं गतिं गम्यं च त्वां गताः ॥ ३८ ॥ ❀ ❀ वरान्तरमाहुः यन्न इति द्वाभ्याम् ॥ ३९ ॥ ❀ ❀ यच्च निरन्धसां निरन्नानामदभ्रं कालं बहुकालम् अप्सु सुतप्तं तपः तदेतत्सर्वं च पुरुषस्य भूम्नस्तव तोषणायास्तु इति वरं वृणीमहे ॥ ४० ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

यद्यपि भवत्प्रसादेनैव वयं कृतार्था इत्याग्रहश्चेत्तर्हि परतो ब्रह्मादिभ्योऽपि परात् त्वत् त्वत्त एकं वरं वृणीमहे। परात्परत्वमेव स्फुटयन्ति-नहीति। हि यस्मात्त्वद्विभूतीनामैश्वर्यादीनामन्तो नास्त्यतो यस्त्वमनन्त इति गीयसे ॥ ३१ ॥ ❀ ❀ तर्हि एवम्भूतान्मत्त एकमेव वरं कुतो वृणीध्व इत्याशङ्क्य वरान्तरेच्छाभावादिति सदृष्टान्तमाहुः-पारिजात इति। यथा पारिजाते वृक्षे अञ्जसा अनायासेन लब्धे सति तद्रसस्य अत्युत्कृष्टत्वात्तं विहाय सारङ्गो भ्रमरोऽन्यत्सुलभमपि वृक्षान्तरं न सेवते तथा त्वत्कृपया सर्वपुरुषार्थमूलं त्वदङ्घ्रिमूलमासाद्य प्राप्य वयमपि किं किं वरान्तरं वृणीमहे ? न किञ्चिदित्यर्थः ॥ ३२ ॥ ❀ ❀ तर्हि कं वरं वृणीध्वे तत्राहुः-यावदिति। ते तव मायया स्पृष्टाः मोहिताः सन्तः स्वकर्मभिरिह संसारे यावद्वयं भ्रमामस्तावन्नोऽस्माकं भवे भवे जन्मनि जन्मनि भवति प्रकृष्टः सङ्गो येषां तेषां भगवद्भक्तानां सङ्गः स्यादित्यन्वयः ॥ ३३ ॥ ❀ ❀ ननु यावत्ते मायया स्पृष्टा इत्युक्तेर्मायानिवृत्त्या मोक्षार्थं चेन्मद्भक्तसङ्गप्रार्थनं तर्हि साक्षादेव मत्तः स्वर्गं वा मोक्षं वा कुतो न गृह्णीथ को वा भक्तसङ्गेऽतिशय इत्याशङ्क्य तत्सङ्गमाहात्म्यमाहुः-तुलयामेति पञ्चभिः। भगवतस्तव सङ्गिनो ये भक्तास्तेषां सङ्गस्य लवेनापि कालेन स्वर्गं न तुलयाम तथा अपुनर्भवं मोक्षमपि न तुलयाम तुल्यतया न गणयाम तर्हि मर्त्यानामाशिषो राज्यभोगान् न तुलयामेति किमुत वक्तव्यमित्यन्वयः ॥ ३४ ॥ ❀ ❀ कुत एवमित्यपेक्षायां हेतुप्रदर्शनेन भक्तसङ्गस्य श्रैष्ठ्यं प्रपञ्चयन्ति-यत्रेति त्रिभिः। यत्र भगवद्भक्तसमाजे मृष्टाः शुद्धाः परमानन्दजनिकाः भवत्कथा ईड्यन्ते भक्तैः स्तूयन्ते। यतो याभ्यः कथाभ्यस्तृष्णायास्तत्र तद्विषयभोगविषयिण्याः प्रशमः शान्तिर्भवति। यत्र सर्वेषु भूतेषु निर्वैरं वैरहेतुतृष्णाया निवृत्तत्वाद्वैराभावो भवति। अतः कश्चनापि चित्तोद्वेगो न भवति। तथा चैतस्य सर्वस्य स्वर्गे अभावात् स्वर्गो न प्रार्थ्य इति भावः ॥ ३५ ॥ ❀ ❀ यत्र च सत्कथासु मुक्तसङ्गैर्निरपेक्षैर्भगवद्भक्तैः नारायणः साक्षात् पुनः पुनः स्तूयते इत्यन्वयः। न तत उत्कृष्टः कश्चिदन्योऽस्तीत्यभिप्रेत्य विशेषणद्वयम्-भगवान् ऐश्वर्यादिगुणपूर्णः। न्यासिनां त्यक्तसर्वफलानामपि स एव गतिः फलम्। मुक्तसंगैरित्यनेन कथायां तेषां पक्षपातशून्यत्वं श्रोतृणां च धनादिदानचिन्ताभावेनानायासत्वादिकं सूचितम्। तथा च नैवं भजनानन्दो मोक्षेऽप्यस्त्यतः सोऽपि न प्रार्थ्य इति भावः ॥ ३६ ॥ ❀ ❀ एवं परमोपकारिणां तेषां तावकानां त्वद्भक्तानां तीर्थानामपि दुष्टसम्बन्धेन दुष्टानां पावनेच्छया पद्भ्यां विचरतां समागमः संसारात् भीतस्य किं न रोचेत कथं न स्वस्मिन् रुचिमुत्पादयेदित्यन्वयः ॥ ३७ ॥ ❀ ❀ अस्माभिस्तु सत्सङ्गफलमनुभूतमेवेति नात्र सन्देह इत्याशयेनाहुः-वयं त्विति। सर्वज्ञत्वात्तव तु न किञ्चिदविज्ञातमस्तीति सूचयन्तः सम्बोधयन्ति-हे भगवन्निति। यस्तव प्रियः सखा च तस्य भवस्य क्षणमात्रभवेन सङ्गमेन हेतुना सुदुश्चिकित्सस्य अतिप्रयत्नेनापि चिकित्सितुं निवर्त्तयितुमशक्यस्य भवस्य जन्मनो मृत्योर्मरणस्य च भिषक्तमं सद्वैद्यं निवर्त्तकं त्वा त्वामद्य साक्षाद्वयं गतिं गताः शरणं प्राप्ताः स्मेत्यन्वयः ॥ ३८ ॥ ❀ ❀ अतोऽस्मत्सर्वसाधनैस्तव सन्तोष एवास्तु नान्येन वरेण कृत्यमस्तीत्याह-यन्न इति द्वाभ्याम्। यत् नोऽस्माभिः सुष्ठु सम्यगधीतं वेदाध्ययनं कृतम्, तथा गुरवः उपदेष्टारः अन्ये च विप्राः वृद्धाः कुलवृद्धाः पित्रादयः आर्याः अन्येऽपि सदाचारपराः शिष्टाः सुहृदो मित्राणि भ्रातरः अन्यानि च सर्वाणि भूतानि प्राणिनः अनसूययैव शुद्धभावेनैव न तु लोकप्रदर्शनार्थं नताः नमस्कृताः सदानुवृत्त्या सदाचारेणास्माभिः प्रसादिताश्च ॥ ३९ ॥ ❀ ❀ एतावन्तं कालमप्सु जले स्थितानां निरन्धसां निरन्नानां नोऽस्माकं यदेतत् सुतप्तं सम्यगनुष्ठितं अत एवादभ्रमत्युग्रं तपस्तदेतत् सर्वमध्ययनाद्यनुष्ठानं भूम्नो व्यापकस्य अत एव पुरुषस्य सर्वान्तर्यामिणस्ते तव परितोषणाय भवत्विति वयं वृणीमहे इत्यन्वयः। अन्यत्सर्वमिहामुत्र फलजातं तु त्वया कालरूपेण ग्रस्तं नश्वरमेवेति वरणायोग्यमिति सूचयन्तः सम्बोधयन्ति-हे ईश इति ॥ ४० ॥

### भावानुवाद:

तथापि, नाथ ! हम एक वर आपसे अवश्य माँगते हैं। प्रभो ! आप प्रकृति आदिसे परे हैं और आपकी विभूतियोंका कोई अन्त नहीं है; इसलिये आप 'अनन्त' कहे जाते हैं ॥ ३१ ॥ ❀ ❀ यदि भ्रमरको अनायास ही कल्पवृक्ष मिल

जाय, तो क्या वह किसी दूसरे वृक्षका सेवन करेगा ? तब आपकी चरणशरणमें आकर अब हम क्या-क्या माँगें ॥ ३२ ॥ ❀ ❀ हम आपसे केवल यही माँगते हैं कि जब तक आपकी मायासे मोहित होकर हम अपने कर्मानुसार संसारमें भ्रमते रहें तब तक जन्म-जन्ममें हमे आपके प्रेमी भक्तोंका सङ्ग प्राप्त होता रहे ॥ ३३ ॥ ❀ ❀ हम तो भगवद्भक्तोंके क्षणभरके सङ्गके सामने स्वर्ग और मोक्षको भी कुछ नहीं समझते; फिर मानवी भोगोंकी तो बात ही क्या है ॥ ३४ ॥ ❀ ❀ भगवद्भक्तोंके समाजमें सदा-सर्वदा भगवान्‌की मधुर-मधुर कथाएँ होती रहती हैं, जिनके श्रवणमात्रसे भोगतृष्णा शान्त हो जाती है। वहाँ प्राणियोंमें किसी प्रकारका वैरविरोध या उद्वेग नहीं रहता ॥ ३५ ॥ ❀ ❀ अच्छे-अच्छे कथाप्रसङ्गोंद्वारा निष्काम-भावसे संन्यासियोंके एकमात्र आश्रय साक्षात् श्रीनारायणदेवका बार-बार गुणगान होता रहता है ॥ ३६ ॥ ❀ ❀ आपके वे भक्तजन तीर्थोंको पवित्र करनेके उद्देश्यसे पृथ्वीपर पैदल ही विचरते हैं। भला उनका समागम संसारसे भयभीत हुए पुरुषोंको कैसे रुचिकर न होगा ॥ ३७ ॥ ❀ ❀ भगवन् ! आपके प्रिय सखा भगवान् शङ्करके क्षणभरके समागमसे ही आज हमें आपका साक्षात् दर्शन प्राप्त हुआ है। आप जन्म-मरणरूप दुःसाध्य रोगके श्रेष्ठतम वैद्य हैं, अतः अब हमने आपका ही आश्रय लिया है ॥ ३८ ॥ ❀ ❀ प्रभो ! हमने समाहित चित्तसे जो कुछ अध्ययन किया है, निरन्तर सेवा-शुश्रूषा करके गुरु, ब्राह्मण और वृद्धजनोंको प्रसन्न किया है तथा दोषबुद्धि त्यागकर श्रेष्ठ पुरुष, सुहृद्गण, बन्धुवर्ग एवं समस्त प्राणियोंकी वन्दना की है और अन्नादिको त्यागकर दीर्घकालतक जलमें खड़े रहकर तपस्या की है, वह सब आप सर्वव्यापक पुरुषोत्तमके सन्तोषका कारण हो—यही वर हम माँगते हैं ॥ ३९-४० ॥

मनुः स्वयम्भूर्भगवान् भवश्च येऽन्ये तपोज्ञानविशुद्धसत्त्वाः ।
अदृष्टपारा अपि यन्महिम्नः स्तुवन्त्यथो त्वाऽऽत्मसमं गृणीमः ॥ ४१ ॥

नमः समाय शुद्धाय पुरुषाय पराय च । वासुदेवाय सत्त्वाय तुभ्यं भगवते नमः ॥ ४२ ॥

मैत्रेय उवाच

इति प्रचेतोभिरभिष्टुतो हरिः प्रीतस्तथेत्याह शरण्यवत्सलः ।
अनिच्छतां यानमतृप्तचक्षुषां ययौ स्वधामानपवर्गवीर्यः ॥ ४३ ॥

अथ निर्याय सलिलात्प्रचेतस उदन्वतः । वीक्ष्याकुप्यन्द्रुमैश्छन्नां गां गां रोद्धुमिवोच्छ्रितैः ॥ ४४ ॥

ततोऽग्निमारुतौ राजन्नमुञ्चन्मुखतो रुषा । महीं निर्वीरुधं कर्तुं संवर्तक इवात्यये ॥ ४५ ॥

अन्वयः—मनुः स्वयंभूः भगवान् भवः च ये अन्ये तपोज्ञानविशुद्धसत्त्वाः यन्महिम्नः अदृष्टपाराः अपि स्तुवंति अथो वयम् त्वा आत्मसमम् गृणीमः ॥ ४१ ॥ ❀ ❀ समाय शुद्धाय पराय च पुरुषाय नमः सत्त्वाय भगवते वासुदेवाय तुभ्यम् नमः ॥ ४२ ॥ ❀ ❀ इति प्रचेतोभिः अभिष्टुतः अनपवर्गवीर्यः शरण्यवत्सलः हरिः प्रीतः तथा इति आह अतृप्तचक्षुषाम् यानम् अनिच्छताम् स्वधाम ययौ ॥ ४३ ॥ ❀ ❀ अथ प्रचेतसः उदन्वतः सलिलात् निर्याय गाम् रोद्धुम् इव उच्छ्रितैः द्रुमैः गाम् छन्नाम् वीक्ष्य अकुप्यन् ॥ ४४ ॥ ❀ ❀ राजन् ततः अत्यये संवतर्क इव महीम् निर्वीरुधम् कर्तुम् रुषा मुखतः अग्निमारुतौ अमुञ्चन् ॥ ४५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अज्ञानामप्यस्माकं त्वत्स्तुतिर्नायुक्तेत्याहुः । मनुरिति । यस्य तव महिम्नो न दृष्टं पारं यैस्तेऽपि त्वामात्मसमं स्वमत्यनुरूपं यथा स्तुवंति अथो अतो वयमपि गृणीमः ॥ ४१ ॥ ❀ ❀ सत्त्वमूर्तये वासुदेवाय ॥ ४२ ॥ ❀ ❀ यानं स्वप्रयाणमनिच्छतामपि सतां स्वधाम ययौ भक्तहृदयं विवेश । अनपवर्गवीर्योऽकुंठितप्रभावः ॥ ४३ ॥ ❀ ❀ उदन्वतः सिंधोः सलिलान्निर्याय निर्गत्य गां स्वर्गं रोद्धुमिवोच्छ्रितैर्द्रुमैर्गां महीं छन्नां वीक्ष्य द्रुमेभ्योऽकुप्यन् । तदा हि प्राचीनबर्हिषः प्रव्रजितत्वादराजके कर्षणाद्यभावात् द्रुमैर्भूमिरछन्नाऽभूत् ॥ ४४ ॥ ❀ ❀ निरस्ता वीरुधोऽपि यस्यास्तथाभूतां कर्तुम् । संवर्तकः कालाग्निरुद्रः । अत्यये प्रलये ॥ ४५ ॥

---

१. प्रा० पा०—विक्रमः ।

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तेऽपि तव महिमनि सर्वात्मनाज्ञा एव यथा स्तुवन्ति ॥ ४१ ॥ ❀ ❀ समाय वैषम्यनैर्घृण्यरहिताय मा लक्ष्मीस्तया सहिताय वा । शुद्धाय सर्वपापनाशकाय । पुरुषाय सर्वदेहस्थाय । पराय सर्वोत्कृष्टाय । वासुदेवाय बलज्ञानात्ममुख्य-प्राणप्रवर्त्तकाय । सत्त्वाय पराक्रमरूपाय । भगवते सौभाग्यरूपाय ॥ ४२ ॥ ❀ ❀ तथेत्यनुमोदनं तद्वरस्य ज्ञेयम् । स्वधाम वैकुंठम् ॥ ४३ ॥ ❀ ❀ अथ भगवद्गमनोत्तरम् । अकुप्यन्निति । अहो भगवदादिष्टं राज्यं क्व करवाम तदाज्ञापालनं च भृत्या वयं कथं जिहासाम इह पुनरमी वृक्षा एव पृथ्वीमावव्रुः स्वर्गं च जिघृक्षंति तर्हि मनुष्याः क्व स्थास्यंतीत्यनय एव कोपे हेतुः ॥ ४४ ॥ ❀ ❀ राजन्निति । जितकोपत्वाद्भक्त्या विराजमान हे विदुरेत्यर्थः । ततो द्रुमाच्छन्नभूमिदर्शनोत्तरम् । अत्यये प्रलये ॥ ४५ ॥

## श्रीमद्वीरराघवव्याख्या

अजानतामप्यस्माकं त्वत्स्तुतिर्नियुक्ता इत्याहुः । मन्वादयः । तत्र भवो रुद्रः तथा ये तपोज्ञानाभ्यां कर्मयोगज्ञानयोगाभ्यां विशुद्धं सत्त्वमन्तःकरणं येषां ते तव महिम्नोऽदृष्टं पारं यैस्ते तथाभूता अपि त्वामात्मसमं स्वमत्यनुरूपं यथा स्तुवन्ति तथा वयमपि गृणीम इत्यर्थः ॥ ४१ ॥ ❀ ❀ एवमात्मनां स्तुत्यर्हतामाविष्कृत्य स्तुवन्तो नमस्कुर्वन्ति समाय सर्वभूतसमाय वैषम्यरहिता-येत्यर्थः, तत्र हेतुः शुद्धाय विशुद्धायापापविद्धाय पापहेतुकं हि वैषम्यं, परमपुरुषाय शुद्धसत्त्वमूर्तये वासुदेवाय नमः ॥ ४२ ॥ ❀ ❀ एवं प्रचेतोभिरभिष्टुतो भगवान् प्रीतः तत्स्तुत्या तथेत्याह युस्मद्वरणानुसारेण युष्मदिष्टसिद्धिरस्त्वित्याह । स्वलावण्यानुभवेनातृप्तानि चक्षूंषि येषामत एव स्वयानमनिच्छतां प्रचेतसामनपवर्गवीर्यैः अपारपराक्रमो भगवान् शरण्यवत्सलः स्वं लोकं प्रति ययौ ॥ ४३ ॥ ❀ ❀ अथ प्रचेतस उदन्वतः समुद्रस्य जलान्निर्गत्य गां स्वर्गं रोद्धुमिवोच्छ्रितैरुच्चङ्गैर्दुमैर्गां महीं छन्नां वीक्ष्य द्रुमेभ्योऽकुप्यत् तथापि प्राचीनबर्हिषः व्रजितत्वादराजके कृष्याद्यभावात् भूमिः द्रुमच्छन्नाभूत् ॥ ४४ ॥ ❀ ❀ निरस्ता वीरुधः यस्यास्तथाभूतां कर्तुं संवर्तके कल्पान्ते अत्यये नाशे उपस्थिते सति यथा तथा हे राजन् ! रुषा स्वमुखेभ्यः अग्निवायू अमुञ्चन् ॥ ४५ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ननु ब्रह्मादिवत्परिच्छिन्नत्वे पूर्वोक्तानन्तत्वं न युज्यते, अपरिच्छिन्नत्वे स्तुतिर्न घटत इति तत्राह मनुरिति । तन्महिम्नः पारमदृष्टवन्तोऽपि ब्रह्मादयो वेदाद्युक्तानुसारेण यद्यथा त्वां स्तुवन्ति अथो तथा वयमप्यात्मबुद्धिसमं गृणीमह इत्य-न्वयः ॥ ४१ ॥ ❀ ❀ आत्मसममित्युक्त्या प्रचेतसां बुद्धीनामस्मद्बुद्धितो महागुणितत्वात् तदुक्तं स्तुतिपदानामनेकार्थत्वेनास्मद्-बुद्ध्यविषयत्वेन नास्माभिस्तदर्थकथनाय प्रयत्नः क्रियते, किन्तु व्याख्यानप्रतिज्ञाभङ्गपरिहाराय प्रतीतोऽर्थः कथ्यते । तथा हि समाय वैषम्यनैर्घृण्यरहिताय सहिता मा लक्ष्मीर्यस्य स समस्तस्मा इति वा "शुद्धाय निरञ्जनाय यदयं पाप्मन उत्ससस्तस्मात्पुरुषो नाम" इति श्रुतेः समस्तपापविनाशनाय परायोत्कृष्टाय वासुदेवाय बलज्ञानात्मकमुख्यप्राणप्रवर्तकाय सर्वमाच्छाद्यातिकम्य दीव्यतीति वासुदेवस्तस्मै सत्त्वाय पराक्रमरूपाय भगवते सौभाग्यरूपाय ऐश्वर्यादिगुणवते वा ॥ ४२ ॥ ❀ ❀ हरेः स्वधामप्रयाणमाह इतीति । यानं गमनमनपवर्गः विक्रमोऽविनष्टपराक्रमः । अनेन कर्मणामपि नित्यत्वमसूचीति ज्ञायते ॥ ४३ ॥ ❀ ❀ इदानीं प्रचेतसां विक्रमविशेषं वक्तुमुपक्रमते । अथेति । गां भूमिम् ॥ ४४ ॥ ❀ ❀ अप्यते प्रलये सांवर्तकः प्रलयकालीनोऽ-ग्निरिव ॥ ४५ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

इदमप्यस्माकं निवेदनमात्मबुद्ध्यनुरूपमेव न तु तदनुरूपमित्यवधार्य यथायथमेव कृपयोत्पादनीयः तथेत्याहुः । मनुरिति ॥ ४१–४२ ॥ ❀ ❀ तत्र तथेति तदनुमोदनं तद्वरश्च ज्ञेयः । अनिच्छितमपि ययावित्यत्र हेतुः स्वधामेति । अनन्तानां स्वभक्तानामपेक्षणीयत्वादिति भावः ॥ ४३ ॥ ❀ ❀ अकुप्यन्निति । श्रीभगवदादिष्टराज्यशासनप्रतीघातात् तदादेश-पालनञ्च भृत्यानां योग्यत्वात् ॥ ४४–४६ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अज्ञानामप्यस्माकं त्वत्स्तुतिर्नियुक्तेत्याहुः । मनुरिति । त्वन्महिम्नो नदृष्टपारा इति परमविज्ञा अपि ते त्वन्महिमन्यज्ञा एव यथा स्तुवन्ति तथैव वयमप्यज्ञतमा अपि आत्मसमं स्वशक्त्यनुरूपमेव स्तुमः ॥ ४१ ॥ ❀ ❀ सत्त्वाय शुद्धसत्त्व-मूर्त्तये ॥ ४२ ॥ ❀ ❀ अनपवर्गवीर्य्यैः अकुण्ठप्रभावः ॥ ४३ ॥ ❀ ❀ गां पृथ्वीं गां स्वर्गं रोद्धुमावरितुमिव अकुप्य-

न्नियहो श्रीभगवदादिष्टं राज्यं क करवाम तदाज्ञापालनञ्च भृत्या वयं कथं जिहासाम इह पुनरमी वृक्षा एव पृथ्वीमावव्रुः स्वर्गञ्चेति जिघृक्षन्ति तर्हि मनुष्याः क स्थास्यन्तीत्यनय एव कोपहेतुः ॥ ४४ ॥ ❀ ❀ राजन् ! जितकोपत्वात् भक्त्या विराजमान ! हे विदुर ! नयैर्युक्तिभिः ॥ ४५-४७ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

इयता शून्यस्वरूपगुणं त्वां यथा मन्वादिवद्वयमपि गृणीम इत्याहुः मनुरिति । मन्वादयः त्वन्महिम्नोऽदृष्टपारा अपि आत्मसमं यथामति स्तुवन्ति । अथो अतो वयमप्यात्मसमं गृणीमः ॥ ४१ ॥ ❀ ❀ सत्त्वाय अप्राकृतसत्त्वमूर्त्तये ॥४२॥ ❀ ❀ अनपवर्गवीर्यः अनन्तप्रभावः ॥ ४३ ॥ ❀ ❀ गां स्वर्गं रोद्धुमिवोच्छ्रितैः गां भुवं छन्नां वीक्ष्याकुप्यन् ॥ ४४ ॥ ❀ ❀ अत्यये प्रलये, संवर्तकोऽग्निः ॥ ४५ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

तव ज्ञानं तु ब्रह्मादीनामपि दुर्लभं अतस्तैर्यथामति त्वं स्तूयसे तथाऽस्माकमपि स्तुतिरयुक्तेत्याहुः—मनुरिति । तपोज्ञानाभ्यां विशुद्धं सत्त्वमन्तःकरणं येषां ते तथाभूता अपि मन्वादयः यस्य तव महिम्नः न दृष्टः पारः अन्तः यैस्ते तथाभूता अपि तथा त्वामात्मसमं स्वज्ञानशक्त्यनुरूपमेव स्तुवन्ति अथो तथा वयमपि त्वामात्मसमं गृणीमः स्तुमः ॥ ४१ ॥ ❀ ❀ एवं प्रतिज्ञाय नमस्कारपूर्वकं स्तुवन्ति—नम इति । समाय शत्रुमित्रादिदृष्टिशून्याय शुद्धाय गुणकार्यरागलोभादिदोषरहिताय, पुरुषाय सर्वान्तर्यामिणे, पराय सर्वोत्तमाय, वासुदेवाय सर्वाधारभूताय, सत्त्वाय सत्त्वमूर्त्तये भगवते ज्ञानैश्वर्यादिगुणपरिपूर्णाय तुभ्यं नमः । चकारः सर्वत्र चतुर्थ्यन्ते तुभ्यं नम इति सम्बन्धार्थः । नमःशब्दावृत्तिरादरार्था ॥ ४२ ॥ ❀ ❀ इत्येवं प्रचेतोभिरभिष्टुतः अत एव प्रीतः सन् हरिस्तथेत्याह यद्भवद्भिः प्रार्थितं तत् तथास्त्वित्याहेत्यर्थः । नेदानीं तेष्वेवैवं प्रीतो जातः किन्तु शरणागतेषु सर्वदैव तस्य प्रीतिरित्याशयेनाहुः—शरण्यवत्सल इति । अत एव तद्दर्शनेन तृप्तानि चक्षूंषि येषाम् , अत एव तस्य यानं प्रयाणमनिच्छतामपि सतां स्वधाम वैकुण्ठं ययावित्यन्वयः । यानमनिच्छतां तेषामनादरं कृत्वा कथं गतस्तत्राहुः—अनपवर्गवीर्य इति, अकुण्ठितवैराग्यशक्तिरित्यर्थः । काप्यासक्त्यभावादिति भावः ॥ ४३ ॥ ❀ ❀ अथ भगवद्गमनानन्तरं प्रचेतस उदन्वतः समुद्रस्य सलिलान्निर्गत्य निर्गत्य तदा प्राचीनबर्हिषः प्रव्रजितत्वादराजके कर्षणाद्यभावात् गां स्वर्गं रोद्धुमिवोच्छ्रितैः द्रुमैर्गां महीं च्छन्नां वीक्ष्य एवं सति पित्रा भगवता चादिष्टः प्रजाविसर्गः कथं सिद्ध्येदिति व्याकुलचित्ता द्रुमेभ्योऽकुप्यन्नित्यन्वयः ॥ ४४ ॥ ❀ ❀ ततः क्रोधोत्पत्त्यनन्तरं रुषा क्रोधेनैव निर्गता वीरुधो द्रुमलतादयो यस्यास्तथाभूतां महीं कर्तुं मुखतोऽग्निमारुतौ असृजन्नित्यन्वयः । तत्र दृष्टान्तः—संवर्त्तक इति, अत्यये प्रलयकाले संवर्त्तकः सङ्कर्षणो मुखादग्निं विमुञ्चति यथा तथेत्यर्थः । त्वमेव निर्जितकोपादिदोषः केवलया भक्त्या विराजसे इति सूचयन् सम्बोधयति—हे राजन्निति ॥ ४५ ॥

### भाषानुवादः

स्वामिन् ! आपकी महिमाका पार न पाकर भी स्वायम्भुव मनु, स्वयं ब्रह्माजी, भगवान् शङ्कर तथा तप और ज्ञानसे शुद्धचित्त हुए अन्य पुरुष निरन्तर आपकी स्तुति करते रहते हैं । अतः हम भी अपनी बुद्धिके अनुसार आपका यशोगान करते हैं ॥ ४१ ॥ ❀ ❀ आप सर्वत्र समान, शुद्धस्वरूप और परमपुरुष हैं । आप सत्त्वमूर्ति भगवान् वासुदेवको हम नमस्कार करते हैं ॥ ४२ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—विदुरजी ! प्रचेताओंके इस प्रकार स्तुति करनेपर शरणागतवत्सल श्रीभगवान्ने प्रसन्न होकर कहा—'तथास्तु' । अप्रहितप्रभाव श्रीहरिकी मधुर मूर्तिके दर्शनोंसे अभी प्रचेताओंके नेत्र तृप्त नहीं हुए थे, इसलिये वे उन्हें जाने देना नहीं चाहते थे, तथापि वे अपने परमधामको चले गये ॥ ४३ ॥ ❀ ❀ इसके पश्चात् प्रचेताओंने समुद्रके जलसे बाहर निकलकर देखा कि सारी पृथ्वीको ऊँचे-ऊँचे वृक्षोंने ढक दिया है, जो मानो स्वर्गका मार्ग रोकनेके लिये ही इतने बढ़ गये थे । यह देखकर वे वृक्षोंपर बड़े कुपित हुए ॥ ४४ ॥ ❀ ❀ तब उन्होंने पृथ्वीको वृक्ष, लता आदिसे रहित कर देनेके लिये अपने मुखसे प्रचण्ड वायु और अग्निको छोड़ा, जैसे कालाग्निरुद्र प्रलयकालमें छोड़ते हैं ॥ ४५ ॥

**भस्मसात्क्रियमाणांस्तान्द्रुमान् वीक्ष्य पितामहः । आगतः शमयामास पुत्रान् बर्हिष्मतो नयैः ॥ ४६ ॥**

**तत्रावशिष्टा ये वृक्षा भीता दुहितरं तदा । उज्जहुस्ते प्रचेतोभ्य उपदिष्टाः स्वयम्भुवा ॥ ४७ ॥**

**ते च ब्रह्मण आदेशान्मारिषामुपयेमिरे । यस्यां महदवज्ञानादजन्यजनयोनिजः ॥ ४८ ॥**

चाक्षुषे त्वन्तरे प्राप्ते प्राक्सर्गे कालविद्रुते । यः ससर्ज प्रजा इ¹ष्टाः स दक्षो दैवचोदितः ॥ ४९ ॥
यो जायमानः सर्वेषां तेजस्तेजस्विनां रुचा । स्वयोपादत्त दाक्ष्याच्च कर्मणां दक्षमब्रुवन् ॥ ५० ॥
तं प्रजासर्गरक्षायामनादिर²भिषिच्य च । युयोज युयुजेऽन्य³ांश्च स वै सर्वप्रजापतीन् ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कन्धे⁴ त्रिंशोऽध्यायः ॥ ३० ॥

अन्वयः—भस्मसात् क्रियमाणान् तान् द्रुमान् वीक्ष्य आगतः पितामहः बर्हिष्मतः पुत्रान् नयैः शमयामास ॥ ४६ ॥ ❀ ❀ तदा तत्र अवशिष्टाः वृक्षाः भीताः स्वयंभुवा उपदिष्टाः दुहितरम् प्रचेतोभ्यः उज्जह्रुः ॥ ४७ ॥ ❀ ❀ ते च ब्रह्मणः आदेशात् मारिषाम् उपयेमिरे यस्याम् महदवज्ञानात् अजनयोनिजः अजनि ॥ ४८ ॥ ❀ ❀ चाक्षुषे अंतरे प्राप्ते तु प्राक्सर्गे कालविद्रुते यः दैवचोदितः इष्टाः प्रजाः ससर्ज सः दक्षः ॥ ४९ ॥ ❀ ❀ जायमानः यः स्वया रुचा सर्वेषाम् तेजस्विनाम् तेजः उपादत्त कर्मणाम् दाक्ष्यात् च दक्षम् अब्रुवन् ॥ ५० ॥ ❀ ❀ अनादिः तम् अभिषिच्य प्रजासर्गरक्षायाम् युयोज च सः वै अन्यान् सर्वप्रजापतीन् च युयुजे ॥ ५१ ॥

इति त्रिंशोऽध्यायः ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

नयैर्युक्तिभिः ॥ ४६ ॥ ❀ ❀ उज्जह्रुः समर्पयामासुः ॥ ४७ ॥ ❀ ❀ मारिषां वार्क्षीम् । अजनयोनिर्ब्रह्मा तस्माज्जातो दक्षः । महतः श्रीमहादेवस्यावज्ञानात् पूर्वमजनयोनिजो ब्रह्मपुत्रोऽपि सन् क्षत्रियजातौ यस्यां वार्क्ष्यामजनि जातः ॥ ४८ ॥ ❀ ❀ प्राक्सगे पूर्वदेहे कालेन विद्रुते गते दैवेनेश्वरेण चोदितः सन् यश्चाक्षुषेऽतरे इष्टाः प्रजाः ससर्ज । स दक्ष इति प्रसिद्धः ॥ ४९ ॥ ❀ ❀ यः स्वया रुचा प्रभया तेज उपादत्ताच्छादितवान् । यं च कर्मदाक्ष्याद्दक्षमब्रुवन् ॥ ५० ॥ ❀ ❀ तमभिषिच्यानादिर्ब्रह्मा प्रजासर्गरक्षायां युयोज । स च दक्षोऽन्यान्मरीच्यादींस्तत्तद्व्यापारेषु नियुक्तवान् ॥ ५१ ॥

इति श्रीमद्भागवते चतुर्थे टीकायां त्रिंशोऽध्यायः ॥ ३० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

"नयो नीतिद्यूतविशेषयोः" इति मेदिनी ॥ ४६ ॥ ❀ ❀ तत्र देशे । वृक्षाः सोमद्वारा उज्जह्रुः षष्ठे 'राजोवाच महान्सोमः' इत्याद्युक्तेः ॥ ४७ ॥ ❀ ❀ ननु ते प्रतिपक्षीभूतवृक्षदत्तां कन्यां कथं जगृहुरिति तत्राह-ब्रह्मण आज्ञस्यादेशादिति । अजनि गर्भवासजदुःखं प्राप पूर्वं वीरभद्रहस्तात् पुनश्च कालतश्चेति मरणद्वयं प्राप्येति ज्ञेयम् ॥ ४८ ॥ ❀ ❀ पुनश्चाशुतोषस्य तस्यैव स्तुत्युत्थादनुग्रहादैश्वर्यं स्वीयमवाप्येत्याह-चाक्षुष इति । प्रायः प्राचीनदेवादीनां तदानीं भोगकर्मक्षयात्पञ्चममन्वंतरावसाने मर्त्यलोकस्य दैवाज्जलाप्लुतत्वाच्चेति संदर्भः । प्राक्सर्गे कालतो दैवान्नष्टे सतीत्यर्थः । जन्मत्वस्य स्वायंभुवमन्वंतर एव पौर्वकालिकैश्वर्यप्राप्तिकामनया पंचमन्वंतरपर्यंतमस्य तपः षष्ठे चाक्षुषमन्वंतरेऽस्य तपःफलप्राप्तिर्ज्ञेयेति केचित् । तत्र 'यस्यां महदवज्ञानात्' इत्याद्युक्तिविरोधपरिहाराय द्वितीयजन्म प्राप्यैव पौर्वकालिकमैश्वर्यं लेभे इति व्याख्येयम् ॥ ४९ ॥ ❀ ❀ तदैश्वर्यमाह-य इति । अज इवाचरतीत्यजायतेऽजायत इत्यजायमानः ब्रह्मतुल्य इत्यर्थः । यद्वा-अजायमानो न जायमानः श्रीवशिष्ठवत्केवलं नंदीश्वरशापपूर्त्यै जन्मानुकृतिमेव भेजे न तु मुख्यं जन्मेत्यर्थः । यद्वा जायमान उत्पद्यमान इत्यर्थः ॥ ५० ॥ ❀ ❀ तं दक्षम् ॥ ५१ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कन्धे त्रिंशोऽध्यायः ॥ ३० ॥

## श्रीमद्वीरराघवव्याख्या

ताभ्यां द्रुमान्भस्मराशीक्रियमाणान् तान् प्रचेतसश्च वीक्ष्य चतुर्मुखः आगत्य नयैर्युक्तिभिर्बर्हिष्मतः सुतान् शमयामास शान्तानकरोत् ॥ ४६ ॥ ❀ ❀ तत्र तेषु शान्तेषु सत्स्ववशिष्टा ये वृक्षा वृक्षाभिमानिदेवाः भीताः सन्तः स्वयम्भुवोपदिष्टा दुहितरं प्रचेतोभ्य उपजह्रुः समर्पयामासुः ॥ ४७ ॥ ❀ ❀ ते च प्रचेतसः ब्रह्मण आज्ञया मारिषाख्यां स्त्रियमुपयेमिरे यस्यां मारिषामजनयोनिजः अजनो ब्रह्मा स एव योनिः तस्माज्जातो महदवज्ञानाद्रुद्रावहेलनाद्धेतोरजन्युत्पादितः प्रचेतोभिरिति शेषः ॥ ४८ ॥ ❀ ❀ कोऽसावजनयोनिजः यो मारिषायां जातस्तत्राह । चाक्षुषे मन्वन्तरे प्राप्ते पूर्वमन्वन्तरसर्गकालेनोपद्रुते उपसंहृते सति

---

१. प्रा० पा०—मृष्टाः । २. प्रा० पा०—मनादिर्भरतर्षभ । ३. प्रा० पा०—युयुजे तान्वै सर्वानन्यान् प्रजेश्वरान् । ४. प्रा पा०—स्कन्धे प्राचेतसे चरिते ।

दैवनेश्वरेण चोदितः सन् इष्टाः प्रजाः यः ससर्ज सृष्टवान् नाम्ना दक्षः ॥ ४९ ॥ ❁ ❁ तस्मिन् दक्षशब्दस्य प्रवृत्तिनिमित्तमाह य इति। यो जायमानः स्वया रुचा प्रभया सर्वेषां तेजस्विनां तेजोयुक्तानां तेज उपादत्त आच्छादितवान्, तस्माद्दक्षात्परतेजः-प्रच्छादनसमर्थत्वात्कर्मणा च निमित्तेन कर्मणि दक्षत्वाच्च दक्षमब्रुवन् लोका इति शेषः ॥ ५० ॥ ❁ ❁ यं च कर्मदाक्ष्याद्दक्षम-ब्रुवंस्तमादिर्भगवान् ब्रह्मा प्रजानां सर्गे रक्षायां च युयोजादिदेश। स दक्षोऽन्यान्मरीच्यादीन्प्रजापतींस्तद्वथापारेषु नियुक्तवान् ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमद्वीरराघवाचार्य्यकृतायां श्रीभागवतचंद्रचंद्रिकायां त्रिंशोऽध्यायः ॥ ३० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ब्रह्मणागत्य क्रियमाणं तत्क्रोधशमनप्रकारमाह भस्मसादिति। नयैर्युक्तिभिः ॥ ४६ ॥ ❁ ❁ प्रीतिकरणं विना केवलं नयैरेव कोपशान्तिः कथमभूदिति तत्राह। तत्रेति ॥ ४७ ॥ ❁ ❁ प्रतिपक्षभूतैर्वृक्षैर्दीयमानं कन्यादानं निःशङ्कं कथं सङ्गच्छत इति तत्राह। ते चेति। आप्तत्वे ब्रह्मणो वचनं कारणमित्यर्थः, वन्ध्या चेत्किमित्युपनयनमकार्षुरिति तत्राह यस्यामिति। न जायत इत्यजनो विष्णुः स एव योनिरुत्पत्तौ कारणं यस्य सोऽजनयोनिर्ब्रह्मा तस्माज्जातोऽजनयोनिजो दक्षः अजनि जज्ञे, तामुपयेमिरे इत्यन्वयः। महतो रुद्रस्यावज्ञानान्निन्दनात् ॥ ४८ ॥ ❁ ❁ तज्जन्मप्रयोजनमाह चाक्षुष इति। प्राक्सर्गे पूर्वसृष्टौ कालेन विप्लुते नष्टायां दैवेन विष्णुना ब्रह्मणा च चोदितः "चुद-प्रेरण" इति धातुः ॥ ४९ ॥ ❁ ❁ किन्नामायं जात इति निरुक्ति-पूर्वकं तन्नामाह य इति। स्वयोग्योपात्तदाक्ष्यात्स्वयोगसामर्थ्येन प्राप्तपदत्वात् ॥ ५० ॥ ❁ ❁ इदं च तन्नामकरणे लिङ्गमिति भावेनाह। तं प्रजेति। अनादिर्ब्रह्मा प्रजेश्वरा मरीच्यादयः। युयुजुरन्वाधानलक्षणं योगमकुर्वन्निति ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कंधे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां त्रिंशोऽध्यायः ॥ ३० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

वृक्षाः तदधिष्ठातृदेवताः ॥ ४७–४८ ॥ ❁ ❁ प्राक्सर्गे कालविद्रुत इति प्रायः प्राचीनदेवादीनां तदानीं भोगकर्म्मक्षयात् पञ्चमे मन्वन्तरावसाने मर्त्यलोकस्य जलाप्लुतत्वाच्च ॥ ४९–५१ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य त्रिंशोऽध्यायः ॥ ३० ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

मारिषां वार्क्षीमजनयोनिर्ब्रह्मा तस्माज्जातोऽपि दक्षः क्षत्रियजातौ यस्यां महतः श्रीमहादेवस्यावज्ञानात् अजनि क्षत्रियवीर्य्यतः गर्भवासजस्वदुःखं प्राप पूर्वं वीरभद्रहस्तात् पुनश्च कालतश्च मरणद्वयं प्राप्येति ज्ञेयम् ॥ ४८ ॥ ❁ ❁ पुनश्चाशुतोषस्य तस्यैव स्तुत्युत्थादनुग्रहादैश्वर्य्यञ्च स्वीयमवापेत्याह चाक्षुष इति। पञ्चममन्वन्तरावसाने प्राचीनसर्गे कालतो दैवादेव नष्टे सतीत्यर्थः। जन्म त्वस्य स्वायम्भुवमन्वन्तर एव पौर्व्वकालिकैश्वर्य्यप्राप्तिकामनया पञ्चममन्वन्तरपर्य्यन्तमस्य तपः, षष्ठे चाक्षुषे मन्वन्तरेऽस्य तपःफलप्राप्तिर्ज्ञेया ॥ ४९ ॥ ❁ ❁ तस्यैश्वर्य्यमाह। य इति। अजायमानः अजो ब्रह्मा तत्तुल्यः स्वया रुचा प्रभया तेज उपादत्त आच्छादितवान् ॥ ५० ॥ ❁ ❁ अनादिर्ब्रह्मा तं दक्षं प्रजानां सर्गे रक्षायां च युयोज। स च दक्षोऽन्यान् मरीच्यादीन् ॥ ५१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। त्रिंशोऽध्यायश्चतुर्थस्य सङ्गतः सङ्गतः सताम् ॥ ३० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

नयैर्नीतिवाक्यैः ॥ ४६ ॥ ❁ ❁ कण्डुतपोनाशार्थं तत एवोत्पादिता कन्या प्रम्लोचया स्वर्गं गच्छन्त्या वृक्षेषु न्यस्तातो दुहितरमित्युक्तम्। उपजह्रुः उद्धृतवन्तः समर्पितवन्तः इत्यर्थः ॥ ४७ ॥ ❁ ❁ मारिषां वार्क्षीम्। अजनयोनिर्ब्रह्मा तज्जो दक्षः महतः शिवस्य अवज्ञानादपराधात् पुनरजनि जातः ॥ ४८ ॥ ❁ ❁ कालेन विद्रुते नष्टे ॥ ४९ ॥ ❁ ❁ रुचा कान्त्या तेज उपादत्त तस्माद्धेतोः कर्मणां दाक्ष्याच्च दक्षमब्रुवन् जना इति शेषः ॥ ५० ॥ ❁ ❁ अनादिर्ब्रह्मान्तरात्मा भगवान् तमभिषिच्य प्रजासर्गे युयोज, स दक्षः अन्यान् युयुजे ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे त्रिंशाध्यायार्थप्रकाशः ॥ २७ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

तान् द्रुमान् भस्मसात्क्रियमाणान् वीक्ष्य पितामहो ब्रह्मा तत्रागतः सन् नयैर्युक्तिभिर्बर्हिष्मतः पुत्रान् प्रचेतसः शमयामास सान्त्वितवानित्यन्वयः ॥ ४६ ॥ ❁ ❁ तत्र भूमौ येऽवशिष्टाः दाहादुर्वरिता वृक्षास्ते तदा भीताः सन्तः स्वयम्भुवा ब्रह्मणा उपदिष्टाः प्रचेतोभ्यः स्वदुहितरं कन्यामुज्जह्रुः समर्पयामासुरित्यन्वयः ॥ ४७ ॥ ❁ ❁ ते च प्रचेतसो ब्रह्मण आदेशात् आज्ञातः मारिषानाम्नीं कन्यां वृक्षैर्दत्तामुपयेमिरे । भगवदाज्ञाऽनुसारिण्येव ब्रह्मणोऽप्याज्ञातो निस्सन्देहा विवाहितवन्त इत्यर्थः । अजनो नारायणो योनिः कारणं यस्य स अजनयोनिर्ब्रह्मा तस्मात् पूर्वं जातोऽपि दक्षो महतो महादेवस्यावज्ञानात् अपराधात् बस्तमुखत्वेन निन्दया च तं देहं हित्वा यस्यां मारिषायामजनि जातः ॥ ४८ ॥ ❁ ❁ अधिकारप्रभावादिकं तु पूर्ववदेव तस्यासीदित्याह–चाक्षुषे इति त्रिभिः । चाक्षुषे तु अन्तरे मन्वन्तरे प्राप्ते प्राक्सर्गे कालेन विद्रुते विनष्टे सति यो दैवेनेश्वरेण चोदितः सन्निष्टाः प्रजाः ससर्ज स प्रसिद्धो दक्ष इत्यन्वयः ॥ ४९ ॥ ❁ ❁ यो जायमान एव स्वया रुचा प्रभया सर्वेषां तेजस्विनां तेज उपादत्त तिरस्कृतवान् यं च कर्मणां दाक्ष्यात् चातुर्यात् सर्वे दक्षमब्रुवन् ॥ ५० ॥ ❁ ❁ तं च अनादिर्ब्रह्माऽभिषिच्य प्रजासर्गरक्षायां युयोज नियुक्तवान् । स एव दक्षोऽन्यान् सर्वान् प्रजापतीन् मरीच्यादींश्च युयुजे तत्तद्व्यापारेषु नियुक्तवान् ॥ ५१ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना । श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये । श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे मोक्षनिरूपणे । त्रिंशोऽपि विवृतोऽध्यायः प्रसादविनिरूपकः ॥ ३ ॥

## भाषानुवादः

जब ब्रह्माजीने देखा कि वे सारे वृक्षोंको भस्म कर रहे हैं तब वे वहाँ आये और प्राचीनबर्हिके पुत्रोंको उन्होंने युक्ति-पूर्वक समझाकर शान्त किया ॥ ४६ ॥ ❁ ❁ फिर जो कुछ वृक्ष वहाँ बचे थे, उन्होंने डरकर ब्रह्माजीके कहनेसे वह कन्या लाकर प्रचेताओंको दी ॥ ४७ ॥ ❁ ❁ प्रचेताओंने भी ब्रह्माजीके आदेशसे उस मारिषा नामकी कन्यासे विवाह कर लिया । इसीके गर्भसे ब्रह्माजीके पुत्र दक्षने, श्रीमहादेवजीकी अवज्ञाके कारण अपना पूर्वशरीर त्यागकर, जन्म लिया ॥ ४८ ॥ ❁ ❁ इन्हीं दक्षने चाक्षुष मन्वन्तर आनेपर, जब कालक्रमसे पूर्वसर्ग नष्ट हो गया, भगवान्‌की प्रेरणासे इच्छानुसार नवीन प्रजा उत्पन्न की ॥ ४९ ॥ ❁ ❁ इन्होंने जन्म लेते ही अपनी कान्तिसे समस्त तेजस्वियोंका तेज छीन लिया । कर्म करनेमें बड़े दक्ष ( कुशल ) थे, इसीसे इनका नाम 'दक्ष' हुआ ॥ ५० ॥ ❁ ❁ इन्हें ब्रह्माजीने प्रजापतियोंके नायकके पदपर अभिषिक्त कर सृष्टिकी रक्षाके लिये नियुक्त किया और इन्होंने मरीचि आदि दूसरे प्रजापतियोंको अपने-अपने कार्यमें नियुक्त किया ॥ ५१ ॥

## इति त्रिंशोऽध्यायः ॥ ३० ॥



# अथैकत्रिंशोऽध्यायः

## मैत्रेय उवाच

तत उत्पन्नविज्ञाना आश्वधोक्षजभाषितम् । स्मरन्त आत्मजे भार्यां विसृज्य प्राव्रजन् गृहात् ॥ १ ॥
दीक्षिता ब्रह्मसत्रेण सर्वभूतात्ममेधसा । प्रतीच्यां दिशि वेलायां सिद्धोऽभूद्यत्र जाजलिः ॥ २॥
तान्निर्जितप्राणमनोवचोदृशो जितासनान् शान्तसमानविग्रहान् ।
परेऽमले ब्रह्मणि योजितात्मनः सुरासुरेड्यो ददृशे स नारदः ॥ ३ ॥
तमागतं त उत्थाय प्रणिपत्याभिनन्द्य[1] च । पूजयित्वा यथादेशं सुखासीनमथाब्रुवन् ॥ ४ ॥

## प्रचेतस ऊचुः[2]

स्वागतं ते सुरर्षेऽद्य[3] दिष्ट्या नो दर्शनं गतः । तव चङ्क्रमणं ब्रह्मन्नभयाय यथा रवेः ॥ ५ ॥
यदादिष्टं भगवता शिवेनाधोक्षजेन च । तद् गृहेषु प्रसक्तानां प्रायशः[4] क्षपितं प्रभो ॥ ६ ॥
तन्नः प्रद्योतयाध्यात्मज्ञानं[5] तत्त्वार्थदर्शनम् । येनाञ्जसा तरिष्यामो दुस्तरं भवसागरम् ॥ ७ ॥

## मैत्रेय उवाच

इति प्रचेतसां पृष्टो भगवान्नारदो मुनिः । भगवत्युत्तमश्लोक आविष्टात्माब्रवीन्नृपान् ॥ ८ ॥

## नारद उवाच

तज्जन्म तानि कर्माणि तदायुस्तन्मनो वचः । नृणां येनेह[6] विश्वात्मा सेव्यते हरिरीश्वरः ॥ ९ ॥
किं जन्मभिस्त्रिभिर्वेह[7] शौक्लसावित्रयाज्ञिकैः[8] । कर्मभिर्वा त्रयीप्रोक्तैः पुंसोऽपि विबुधायुषा ॥ १० ॥

अन्वयः—ततः उत्पन्नविज्ञानाः ते अधोक्षजभाषितम् स्मरन्तः आत्मजे भार्याम् विसृज्य गृहात् आशु प्राव्रजन् ॥ १ ॥ ❀ ❀ यत्र जाजलिः सिद्धः अभूत् तत्र प्रतीच्याम् दिशि वेलायाम् सर्वभूतात्ममेधसा ब्रह्मसत्रेण दीक्षिताः ॥ २ ॥ ❀ ❀ सुरासुरेड्यः नारदः निर्जितप्राणमनोवचोदृशः जितासनान् शांतसमानविग्रहान् परे अमले ब्रह्मणि योजितात्मनः तान् ददृशे स ॥ ३ ॥ ❀ ❀ ते आगतम् तम् उत्थाय प्रणिपत्य अभिनंद्य च यथादेशम् पूजयित्वा अथ सुखासीनम् अब्रुवन् ॥ ४ ॥ ❀ ❀ सुरर्षे ते स्वागतम् अद्य दिष्ट्या नः दर्शनम् गतः ब्रह्मन् तव चंक्रमणम् यथा रवेः अभयाय ॥ ५ ॥ ❀ ❀ प्रभो भगवता शिवेन अधोक्षजेन च यत् आदिष्टम् तत् गृहेषु प्रसक्तानाम् प्रायशः क्षपितम् ॥ ६ ॥ ❀ ❀ येन दुस्तरम् भवसागरम् अंजसा तरिष्यामः तत् तत्त्वार्थदर्शनम् अध्यात्मज्ञानम् नः प्रद्योतय ॥ ७ ॥ ❀ ❀ इति प्रचेतसाम् पृष्टः भगवति उत्तमश्लोके आविष्टात्मा भगवान् नारदः मुनिः नृपान् अब्रवीत् ॥ ८ ॥ ❀ ❀ येन इह विश्वात्मा हरिः ईश्वरः सेव्यते तत् नृणाम् जन्म तानि कर्माणि तत् आयुः तत् मनः वचः ॥ ९ ॥ ❀ ❀ पुंसः इह शौक्लसावित्रयाज्ञिकैः त्रिभिः जन्मभिः वा त्रयीप्रोक्तैः कर्मभिः विबुधायुषा वा अपि किम् ॥ १० ॥

---

१. प्रा० पा०—भिवाद्य च । २. प्राचीने पाठे 'प्रचेतस ऊचुः' अयमंशो न । ३. प्राचीने पाठे 'ऽद्य' अयमंशः खण्डितः । ४. प्रा० पा०—प्रायो नः । ५. प्रा० पा०—ध्यात्मं ज्ञानं । ६. प्रा० पा०—येन हि । ७ प्रा०—पा०—मिस्त्रिभिर्वेदैः । ८. प्रा० पा०—शुक्लसा० ।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

एकत्रिंशे सुते दक्षे धुरं न्यस्य वने सताम्। नारदोक्तेन मार्गेण मुक्तिरुक्ता प्रचेतसाम् ॥ ( १ ) ॥

ततो दिव्यवर्षसहस्राणां सहस्रस्यांते उत्पन्नविवेकज्ञानास्ते "उपयास्यथ मद्धाम निर्विद्य निरयादतः" इत्यधोक्षजभाषितं स्मरंत आशु प्राव्रजन् ॥ १ ॥ ❀ ❀ ब्रह्मसत्रेणात्मविमर्शेन दीक्षिताः कृतसंकल्पा बभूवुः। सर्वेषु भूतेषु आत्मेति मेधा ज्ञानं यस्मिंस्तेन। क वेलायां समुद्रतटे। जाजलिर्नाम ऋषिः ॥ २ ॥ ❀ ❀ निर्जिताः प्राणमनोवचोदृशो यैस्तान्। शांता उपरताः समाना मूलाधारादारभ्य ऋजवो विग्रहा येषाम्। ब्रह्मणि योजित आत्मा यैस्तान्। सुरासुरैरीड्यः स्तुत्यः ददृशे दृष्टवान् ॥ ३ ॥ ❀ ❀ उत्थाय तं प्रणिपत्य यथादेशं यथाविधि पूजयित्वा ॥ ४-५ ॥ ❀ ❀ आदिष्टमुपदिष्टं यदात्मतत्त्वम्। क्षपितं विस्मृतम् ॥ ६-७ ॥ ❀ ❀ इति प्रचेतोभिः पृष्टः ॥ ८ ॥ ❀ ❀ अहो गृहप्रसक्त्या हरिसेवां विना सर्वं जन्मकर्मादिकं व्यर्थीकृतमिति तान् शोचन्नाह तज्जन्मेति चतुर्भिः। येन जन्मादिना विश्वात्मेति सुलभत्वमुक्तम्। यतो जन्मादेर्हरिसेवैव फलमतस्तद्विहीनं सर्वं व्यर्थमित्यर्थः ॥ ९ ॥ ❀ ❀ शौक्रं शुक्रसंबंधि जन्म विशुद्धमातापितृभ्यामुत्पत्तिः सावित्रमुपनयनेन याज्ञिकं दीक्षया विबुधानामिव दीर्घायुषाऽपि ॥ १० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

धुरं राज्यादिभारम् ( १ )। ततो दक्षाभिषेकानंतरं वा ॥ १ ॥ ❀ ❀ आत्मविमर्शेन परस्परं मिलित्वा ब्रह्मविचारेण यद्वा—वेदविचारेण श्रुतितात्पर्यालोचनेन 'वेदस्तत्त्वं तपो ब्रह्म' इत्यमरः। जाजलिर्जाजलात्मजः ॥ २ ॥ ❀ ❀ तान् प्रचेतसः ॥ ३ ॥ ❀ ❀ तं नारदम्। ते प्रचेतसः ॥ ४ ॥ ❀ ❀ सुरर्षे इति। सुरैस्सर्वतः शुद्धैरपि त्वं पूज्यसे किमुतास्माभिरहो भाग्यं मादृशां मनुष्याणां देवपूज्यस्य भवतो दर्शनं जातमिति भावः। यथा रवेर्दर्शनेन चौरादिभयमपगच्छति तथा तव दर्शनेन संसारभयमिति ॥ ५ ॥ ❀ ❀ ज्ञानं तु भवद्भ्यः शिवाधोक्षजाभ्यामेवोपदिष्टं मयाधुना तदर्थं न किमप्यनुष्ठेयमिति तत्राह—यदादिष्टमिति। प्रभो इति। योगसामर्थ्येन त्वं जानास्येवेति भावः ॥ ६ ॥ ❀ ❀ तत् ताभ्यामुपदिष्टज्ञानम्। अध्यात्मज्ञानमात्मनि यज्ज्ञानं विभक्त्यर्थेऽव्ययीभावः। जीवात्मनो यज्ज्ञातुमुचितं तदस्माकं जातमेवासीत्तदेव त्वं प्रद्योतयोद्दीपयेत्यर्थः ॥ ७ ॥ ❀ ❀ प्रचेतसां प्रचेतोभिः। नृपान् प्रचेतसः ॥ ८ ॥ ❀ ❀ देहं धृत्वा जीवात्मनो यद्यद्वस्तु स्वतः प्राप्तं तत्तद्धरिसेवायामेव नियुंजीतेत्येतदेवाध्यात्मज्ञानमित्यभिप्रेत्याह स्वामी—अहो गृहेत्यादि। इत्यर्थं इति। तदेव जन्म येन जन्मना हरिः सेव्यते। एवमग्रेपि योऽन्यमन्यथा मुधैवाखिलं शूकरादितुल्यत्वादिति भावः ॥ ९ ॥ ❀ ❀ अन्वयं विवृत्य व्यतिरेकं विवृणोति—किमिति। त्रिविधं ब्रह्म जन्मापि न तन्न जन्म किं तु शूकरादिजन्मैव फलतस्तुल्यत्वात्। चांडालादिजन्मापि हरिसेवानुकूलं साधु नृजन्म भगवत्प्रापकत्वादित्येवं कर्मादिष्वपि भावो व्याख्येयः। त्रयीप्रोक्तैरपि किं पुनर्व्यावहारिकैः। विबुधायुषापि किं पुनः शतायुषा ॥ १० ॥

## श्रीमद्वीरराघवव्याख्या

एवं तपस्तोषितप्रत्यक्षितपरमात्मानः प्रचेतसो मारिषामुपयम्य तस्यां पुत्रमुत्पादयामासुरित्युक्तमथ भगवदादिष्टदिव्यवर्षसहस्रपर्यन्तानुभूतराज्यभोगा आत्मजारोपितराज्यभाराः प्रविष्टजाजल्याश्रमाः नारदोपदिष्टात्मपरमात्मयाथात्म्या उपासितपरमात्मानस्तत्पदमापुरिति वदन्नुपसंहरति त्रिंशेन मुनिः। तत इति। दिव्यवर्षसहस्राणां सहस्रान्ते उत्पन्नविवेकात्मकज्ञाना अधोक्षजस्य भाषितं वचः स्मरन्तः आत्मजे दक्षे भार्यां विसृज्य भार्यापोषणमात्मजाधीनं कृत्वा गृहात्प्राव्रजन् ॥ १ ॥ ❀ ❀ ब्रह्मसत्रेण ज्ञानज्ञेन न्यासविधिना वा दीक्षिताः सङ्कल्पितब्रह्मसत्रा बभूवुरित्यर्थः। ब्रह्मसत्रं विशिनष्टि सर्वभूतात्ममेधसेति। सर्वभूतेष्वात्मा परमात्मा इति मेधा ज्ञानं यस्मिंस्तेन स सर्वात्मकब्रह्मोपासनात्मकज्ञानेनेत्यर्थः, प्रथमान्तपाठे प्रचेतसां विशेषणं सर्वात्मकब्रह्मोपासनयुक्ता क दीक्षितास्तत्राह। प्रतीच्यां दिशि वेलायां समुद्रतटे यत्र जाजलिर्नाम ऋषिः सिद्धोऽभूत् मुक्तो बभूव ॥ २ ॥ ❀ ❀ तान्प्रचेतसः निर्जिताः प्राणमनोवचोदृशो यैस्ते जितमासनं यैस्ते शान्ताः निर्व्यापाराः समाना मूलाधारादारभ्य ऋजवो विग्रहाः येषां ते परे ब्रह्मणि योजितः "ओमित्यात्मानं युञ्जीत" इत्युक्तरीत्या समर्पितः आत्मा प्रत्यगात्मा यैस्ते तान् सुरासुरैरीड्यः स्तुत्यो नारदः ददृशे दृष्टवान् ॥ ३ ॥ ❀ ❀ सम्यगुत्थाय प्रणिपत्य दण्डवत्प्रणम्य अभिवाद्य गोत्रसूत्रनामादिकं सङ्कीर्त्य यथाविधि पूजयित्वा सुखे मृदुले आसने आसीनमब्रुवन्नूचुः ॥ ४ ॥ ❀ ❀ उक्तमेवाह। स्वागतमिति। हे सुरर्षे! ते तव स्वागतं दिष्ट्या दैववशेन नोऽस्माकं दर्शनं गतः अस्मदीयचक्षुर्विषयो जातः। हे ब्रह्मन्! तव चङ्क्रमणं सञ्चरणं लोकानामभवाय मुक्तिसाधनोपदेशेन रक्षणाय, न विद्यते भयं यस्मात्तस्मै यथा रवेः चङ्क्रमणं तद्वत् सूर्यस्य चङ्क्रमणं हि समीहितसाधनानुष्ठापनेन लोकरक्षणार्थं तद्वदित्यर्थः ॥ ५ ॥ ❀ ❀ शिवेनाधोक्षजेन च यदात्मतत्त्वमुपदिष्टं तद्गृहेषु प्रसक्तानां नः क्षपितं विस्मृतम् ॥ ६ ॥ ❀ ❀ तद्विस्मृतं तत्त्वानामर्थानां प्रकृतिपुरुषेश्वरतत्त्वानामर्थानां पुरुषार्थानां दर्शनं ज्ञानं यस्मिंस्तद-

ध्यात्मज्ञानं नोऽस्मभ्यं प्रद्योतय प्रकाशय येन त्वया प्रद्योतितेनाध्यात्मज्ञानेन दुस्तरं भवार्णवमञ्जसा सुखेन तरिष्यामः ॥ ७ ॥ ❁ ❁ इत्येवं प्रचेतसा पृष्ट इति प्राधान्यादेकस्य निर्देशः प्रचेतोभिः पृष्ट इत्यर्थः । भगवत्याविष्ट आसक्त आत्मा मनो यस्य स भगवान्नारदः मुनीन्मननशीलान्प्रचेतसः प्रत्यब्रवीत् ॥ ८ ॥ ❁ ❁ अहो गृहप्रसक्त्या हरिसेवां विना सर्वं जन्मकर्मादिकं व्यर्थीकृतमिति तान् शोचन्नाह तज्जन्मेति चतुर्भिः । येन जन्मादिना विश्वात्मा हरिः सेव्यते तदेव जन्मकर्मादिकं सार्थकं भगवत्सेवाविधुरं तु व्यर्थमित्यर्थः ॥ ९ ॥ ❁ ❁ शुक्लं यौनं विशिष्टयोन्युत्पत्तिरूपं सावित्रमुपनयननिमित्तं जन्म याज्ञिकं यज्ञदीक्षया जन्म एभिस्त्रिभिर्जन्मभिर्भगवत्सेवाविधुरैः किं साध्यमस्तीति तथा त्रयीविहितैः कर्मभिः पुंसः विबुधानामिव दीर्घायुषापि ॥ १० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

शास्त्रान्तरेषु बहूनामितरेषां साधनानां मुक्तिसाधनत्वेन कथनस्य सावकाशत्वप्रकाशनायास्मिन्नध्याये पुनरपि मुक्तिसाधनं ब्रह्मज्ञानमेवेति निश्चीयते । तत्र तत्साधनमपि मुख्यं चतुर्थाश्रम एव सर्वस्मात्तस्य श्रैष्ठ्यादित्यभिप्रेत्य प्रचेतसां राज्यपालनानन्तरं तमाचष्टे । तत इति । आश्वाविर्भूताधोक्षजभाषितं ततो मानुषगणितद्वादशलक्षकालात्परमुत्पन्नविज्ञानाः वेदान्तविज्ञानसुनिश्चितार्थाः । अनेन संन्यासाधिकारे योग्यतां लक्षयति ॥ १ ॥ ❁ ❁ एतदेव विशिनष्टि दीक्षिता इति । सर्वभूतात्मनि सर्वभूतस्वामिनि सर्वभूतान्तर्यामिणि वा हरौ मेधा ज्ञानं यत्र तद् ब्रह्मसत्रं सर्वभूतात्ममेधः तेन ब्रह्मसत्रेण दीक्षिताः गृहीतसंन्यासाश्रमा इत्यर्थः "पारिव्राज्यं ब्रह्मसत्रं न्यास इत्यभिधीयते" इत्यभिधानात् ब्रह्मविषयेण यागविशेषेणेति नार्थोऽत्र ग्राह्यः प्राव्रजन्निति विरोधाच्च "हरिर्मेधस्तु संन्यासो हरौ मेधा यतो भवेत्" इति वचनेन संन्यासस्य विशेषितत्वाच्च न सर्वभूतानां स्वस्वरूपत्वज्ञानेनेत्यर्थः । उत्तरत्रापि तत्त्वं नापुः, किन्तु तद्गतमिति वक्ष्यमाणत्वात् यत्र जाजलस्तस्यापत्यं जाजलिः मुनिः सिद्धो मुक्तोऽभूत्तस्यां प्रतीच्यां दिशि समुद्रवेलायां हरिमुपासीनाः स्युरित्यन्वयः ॥ २ ॥ ❁ ❁ तत्रापि नारदसङ्गमं तेषामाह तान्निर्जितेति । शान्तश्च समानश्च विग्रहो देहो येषां ते तथा तान् योजितमेकाग्रतया स्थापितं मनो यैस्ते तथा तान् ॥ ३ ॥ ❁ ❁ यथादेशं यथोपदेशं देशानुसारेण वा ॥ ४ ॥ ❁ ❁ चङ्क्रमणं पुनः पुनरागमनं रवेरुदयाख्यागमनम् ॥ ५ ॥ ❁ ❁ सदाशिवाधोक्षजाख्यां ज्ञानस्योपदिष्टत्वात् न मया पृथगुपदेशाय प्रयतनीयमिति तत्राह यदादिष्टमिति । क्षपितं नष्टमिति यावत् ॥ ६ ॥ ❁ ❁ येनात्मज्ञानेन ॥ ७-८ ॥ ❁ ❁ यद्धरिसेवासाधनं जन्मादि तदेव सफलं न तु सत्कुलजन्मादीत्याह तज्जन्मेत्यादिना । येन जन्मादिना ॥ ९ ॥ ❁ ❁ किमित्येवं विशिष्य स्तौषीति तत्राह किं जन्मभिरिति । यत्र जन्मादौ हरिरात्मप्रदो न स्यात्तज्जन्मादिना किं फलमित्यन्वयः । शुक्लं जन्मोभयकुलशुद्धं सावित्रं जन्म उपनयनादि याज्ञीयमग्न्याधानलक्षणं जन्म ॥ १० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

ततो दक्षाभिषेकादनन्तरम् ॥ १ ॥ ❁ ❁ ब्रह्मसत्रेण परस्परं मिलित्वा सामान्यतः परमतत्त्वविचारेण वेलायां समुद्रतट इति प्रियव्रतकृतसमुद्राणां पूर्वजातत्वेन तद्राज्यस्यापि पूर्वत्वं गम्यते । तथैव पञ्चमादौ व्याख्यास्यते ॥ २-४ ॥ ❁ ❁ यथा रवेरिति । यथा रविदर्शनेन चौरादिभयमपगच्छति तथा तव दर्शनेन संसारभयमित्यर्थः ॥ ५ ॥ ❁ ❁ यदादिष्टमित्यत एवापाततो ब्रह्मानुसन्धानमेव कुर्वन्तः स्म इति भावः ॥ ६ ॥ ❁ ❁ तथैव सामान्याकारेण पृच्छन्ति तत्र इति ॥ ७ ॥ ❁ ❁ आविष्टात्मेति । स्वभावत एव वा तत्प्रश्नेन तेषु प्राचीनभगवत्कृपामनुस्मृत्य वा उभयथापि कथमसावन्यथोपदिशेदिति भावः ॥ ८ ॥ ❁ ❁ तत्र तेषां ब्रह्मनिष्ठां त्याजयितुं श्रीभगवन्निष्ठां प्रशंसति तज्जन्मेति ॥ ९ ॥ ❁ ❁ तथैव व्यतिरेकेण दर्शयति त्रिकेण ॥ १० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

एकत्रिंशे तु निर्विद्य राज्याद्गत्वा वनं पुनः । नारदप्रोक्तया भक्त्या कृष्णं प्रापुः प्रचेतसः ॥ ( १ ) ॥

उपयास्यथ मद्धाम निर्विद्येत्यधोक्षजभाषितं स्मरन्तः ॥ १ ॥ ❁ ❁ ब्रह्मसत्रेण 'स्वायम्भुवब्रह्मसत्रं जनलोकेऽभवन् पुरे तिवत् कृतेन वेदतात्पर्यविमर्शेन "वेदस्तत्त्वं तपो ब्रह्म" इत्यमरः । दीक्षिताः कृतसङ्कल्पाः सर्वभूतेष्वात्मन इव मेधा बुद्धिर्यतस्तेन वेलायां समुद्रतटे जाजलिनामा मुनिः ॥ २ ॥ ❁ ❁ परेऽमले ब्रह्मणि श्रीरुद्रगीतोक्ते स्निग्धप्रावृड्घनश्यामस्वरूपे ददृशे स ददर्श ॥ ३ ॥ ❁ ❁ यथादेशं यथाविधि यथा रवेर्दर्शनेन चौरादिभयमपगच्छति तथा तव दर्शनेन संसारभयमिति ॥ ४-५ ॥ ❁ ❁ ततः क्षपितमिति भक्त्युत्थेन दैन्येनोक्तिः ॥ ६ ॥ ❁ ❁ अध्यात्मज्ञानमात्मनि यज्ज्ञानमिति विभक्त्यर्थेऽव्ययीभावः, जीवात्मनो यज्ज्ञातुमुचितं तदस्माकं ज्ञातमेवासीत् तदेव त्वं प्रद्योतयेत्यर्थः ॥ ७ ॥ ❁ ❁ प्रचेतसां प्रचेतोभिः ॥ ८ ॥ ❁ ❁ देहं धृत्वा जीवात्मना यद्वस्तु स्वतः प्राप्तमभूत्तदेव भगवत्सेवायामेव नियुञ्जीतेत्येत-

देवाध्यात्मज्ञानमित्याह। तज्जन्मेति त्रयोदशभिः। तदेव जन्म येन हरिः सेव्यते तान्येव कर्म्माणि यैः हरिः सेव्यते इत्येवं सर्व्वत्र योज्यम्। मनोवच इत्युपलक्षणं बुद्धीन्द्रियबलतपःश्रुतयोगसाङ्ख्यसंन्यासब्रह्मचर्य्यादीनामप्युत्तरश्लोकार्थदृष्ट्या ज्ञेयं, नृणामिति तत्सेवयोपयोगीन्येव जन्मादीनि मनुष्यसम्बन्धीन्युच्यन्ते, अन्यथा तु शूकरादिपशुसम्बन्धीनीत्यर्थः ॥ ९ ॥ ❀ ❀ अन्वयं विवृत्य व्यतिरेकं विवृणोति किमिति त्रिभिः। शौक्लं विशुद्धमातापितृभ्यो जन्म, सावित्रमुपनयेन, याज्ञिकं दीक्षयेति त्रिविधं जन्म। जन्मापि न तन्नृजन्म किं तु शूकरादिजन्मैव फलतस्तुल्यत्वात्, चाण्डालादिजन्मापि यदि भगवत्सेवानुकूलं स्यात्तदेव साधु नृजन्म भगवत्प्रापकत्वादित्येवं कर्म्मादिष्वपि न व्याख्येयम्। त्रयीप्रोक्तैरपि किं पुनर्व्यावहारिकैः विबुधायुषापि किं पुनः शतायुषा ॥ १० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एकत्रिंशे प्रचेतसां श्रीनारदोपदेशतो मोक्षं चाह तत इति। ततो दिव्यवर्षसहस्राणां सहस्रस्यान्ते उत्पन्नविज्ञाना लब्धहेयोपादेयविवेकाः 'उपयास्यथ मद्धाम निर्विद्य निरयादतः' इत्यधोक्षजभाषितं स्मरन्तः भार्यामात्मजे दक्षे विन्यस्य आशु प्राव्रजन् ॥ १ ॥ ❀ ❀ प्रतीच्यां दिशि तत्रापि वेलायां समुद्रतीरे यत्र जाजलिर्मुनिः सिद्धोऽभूत्तत्र सर्वभूतात्मनि विश्वहेतौ भगवति मेधा निश्चयात्मिका बुद्धिर्येन तेन ब्रह्मसत्रेण विश्वहेतुविचारात्मकयज्ञेन दीक्षिताः कृतसङ्कल्पा बभूवुः ॥ २ ॥ ❀ ❀ शान्तोऽमलः समानोऽवक्रो विग्रहो येषां तान् ॥ ३ ॥ ❀ ❀ यथादेशं यथाविधि ॥ ४-५ ॥ ❀ ❀ यत्तत्त्वज्ञानमादिष्टमुपदिष्टं तत् क्षपितं विस्मृतम् ॥ ६ ॥ ❀ ❀ अध्यात्ममात्मानं परमात्मानमधिकृत्य वर्तमानं ज्ञानं तत्त्वार्थदर्शनं तत्त्वतः परमात्मस्वरूपगुणादिरूपार्थप्रकाशकम् ॥ ७-८ ॥ ❀ ❀ हरिभजनोपयोगि जन्मादिकं सर्वं सफलं तदनुपयोगि तु निष्फलं हरिरेव सर्वात्मा सर्वशक्तिः सर्वहेतुर्भजनीयस्तं कः कृतज्ञो विसृजेदिति श्रीनारद आह। तज्जन्मेत्यारभ्य कथमनुविसृजेत्पुमान् कृतज्ञ इत्यन्तेन ग्रन्थेन ॥ ९ ॥ ❀ ❀ शुक्ले विशुद्धे वंशे जातं शौक्लम्। सावित्रमुपनयनभावितम्। याज्ञिकं दीक्षाभावितम् ॥ १०-११ ॥

## गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एकत्रिंशे गृहं हित्वा वनस्थानां प्रचेतसाम्। नारदोक्तप्रकारेण फलप्राप्तिर्निरूप्यते ॥ (१) ॥

एवं दक्षकथां संक्षेपतो निरूप्य प्रकरणप्राप्तां प्रचेतसां कथामेव निरूपयति—तत इति। ततो भगवदुक्तसहस्राणां सहस्रानन्तरमुत्पन्नं विज्ञानं विवेको येषां ते प्रचेतसः 'उपयास्यथ मद्धाम निर्विद्य निरयादतः' इत्यधोक्षजस्य भगवतो भाषितं स्मरन्तः आत्मजे पुत्रे दक्षे भार्यां विसृज्य समर्प्य आशु शीघ्रमेव गृहात् प्राव्रजन्नित्यन्वयः ॥ १ ॥ ❀ ❀ केनाभिप्रायेण निर्गताः कुत्र गता इत्यपेक्षायामाह—दीक्षिता इति। सर्वभूतेष्वात्मेति मेधा ज्ञानं यस्मिंस्तेन ब्रह्मसत्रेण ब्रह्मविचारेण निमित्तेन दीक्षिताः कृतसङ्कल्पाः प्रतीच्यां दिशि वेलायां समुद्रतटे यत्र जाजलिर्नाम ऋषिः सिद्धोऽभूत् मुक्तिमवाप तत्र ययुरिति शेषेणान्वयः ॥ २ ॥ ❀ ❀ तत्र गत्वा किं कृतवन्त इत्यपेक्षायां तद्दर्शयन्नारदसङ्गतिमाह—तानिति। तान् सुरासुरेड्यो नारदो ददर्श स दृष्टवानित्यन्वयः। नारदस्योपदेष्टृत्वयोग्यताज्ञापनाय तं विशिनष्टि—सुरासुरेड्य इति। प्रचेतसां शुद्धत्वेन भगवद्भजनाधिकारित्वज्ञापनाय तान् विशिनष्टि—निर्जितेति। निर्जिताः प्राणमनोवचोदृशो यैस्तान्, जितमासनं यैस्तान्, शान्ताः उपरताः समाना मूलाधारादारभ्य ऋजवो विग्रहा येषां तान्, परे सर्वोत्तमेऽत एवामले शुद्धे प्रपञ्चातीतत्वेन सर्वविकारशून्ये ब्रह्मणि व्यापके भगवति योजित आत्मा मनो यैस्तान् ॥ ३ ॥ ❀ ❀ ते प्रचेतसस्तमागतमालोक्योत्थाय प्रणिपत्य दण्डवत्प्रणामं कृत्वा तदागमनमभिनन्द्य च यथादेशं यथाविधि पूजयित्वा अथानन्तरं सुखेनासीनमब्रुवन्नित्यन्वयः ॥ ४ ॥ ❀ ❀ तद्वाक्यान्येव दर्शयति—स्वागतमिति त्रिभिः। तव दर्शनं दुर्लभमिति भावेन सम्बोधयन्ति—हे सुरर्षे, ते तवागतमागमनं सुष्ठु अस्मत्कल्याणाय। अतो नोऽस्माकं दिष्ट्या भाग्येन त्वं दर्शनं गतोऽसि। यतस्तव चंक्रमणं पर्यटनं लोकस्याभयाय ज्ञानभक्त्यादिप्रकाशनेन संसारहेत्वज्ञाननिवर्त्तनेन संसारभयनिवर्त्तनाय। तत्र दृष्टान्तः—यथेति, यथा रवेश्चंक्रमणं तमोदूरीकरणेन चोरादिभयनिवर्त्तनाय तथेत्यर्थः ॥ ५ ॥ ❀ ❀ हे प्रभो यत्तत्त्वं भगवता सर्वज्ञेन शिवेन अधोक्षजेन विष्णुना चादिष्टमुपदिष्टं तद्गृहेषु प्रसक्तानामस्माकं प्रायशः क्षपितं विस्मृतमित्यन्वयः। तत्पुनः प्रकाशने त्वं समर्थोऽसीति सूचनाय सम्बोधनम्—प्रभो इति ॥ ६ ॥ ❀ ❀ तत् अध्यात्ममात्मतत्त्वप्रकाशं तत्त्वार्थदर्शनं भगवत्तत्त्वप्रकाशकं ज्ञानं नोऽस्माकं त्वं प्रद्योतय पुनः प्रकाशय, येन ज्ञानेन दुस्तरं भवसागरमञ्जसाऽनायासेनैव वयं तरिष्याम इत्यन्वयः ॥ ७ ॥ ❀ ❀ इत्येवं प्रचेतसां प्रचेतोभिः पृष्टः मुनिः मननशीलः अत एव भगवति ज्ञानैश्वर्यादिमति उत्तमश्लोके अज्ञाननिवर्त्तकयशोवति आविष्टात्मा संसक्तचित्तः अत एव तत्प्रसादाद्भगवान् लब्धतत्त्वज्ञानस्तान्नृपान् अब्रवीदित्यन्वयः ॥ ८ ॥ ❀ ❀ तद्वाक्यान्येव दर्शयति—तज्जन्मेति चतुर्दशभिः। नृणां तदेव जन्मादिकं सफलं येनेह संसारे हरिः सेव्यते इत्यन्वयः। नृणामित्यनेन अन्यथा पशुतुल्यत्वैव स्यादिति सूचितम्। हरिसेवाया अनायासत्वं

सूचयन् विशिनष्टि—विश्वात्मेति। अन्यथा दण्डं सूचयन् विशिनष्टि—ईश्वर इति॥ ९॥ ❀ ❀ विपक्षे जन्मादिवैयर्थ्यमाह—किमिति त्रिभिः। यत्र येषु जन्मादिषु सत्स्वपि हरिरात्मप्रदो न भवति तैर्जन्मादिभिः किं फलमिति तृतीयेनान्वयः। शौक्लं शुद्धमातापितृभ्यामुत्पत्तिः, सावित्रमुपनयनेन, याज्ञिकं यज्ञदीक्षयेति त्रिभिर्जन्मभिः किम्? त्रयीप्रोक्तैरित्यनेन यदि वेदोक्तकर्मणां वैयर्थ्यं तदा लौकिकानां किं वक्तव्यमिति सूचितम्। विबुधानामिव दीर्घेणायुषाऽपि किम्?॥ १०॥

## भाषानुवादः

### प्रचेताओंको श्रीनारदजीका उपदेश और उनका परमपद-लाभ

श्रीमैत्रेयजी कहते हैं—विदुरजी! दस लाख वर्ष बीत जानेपर जब प्रचेताओंको विवेक हुआ, तब उन्हें भगवान्के वाक्योंकी याद आयी और वे अपनी भार्या मारिषाको पुत्रके पास छोड़कर तुरंत घरसे निकल पड़े॥ १॥ ❀ ❀ वे पश्चिम दिशामें समुद्रके तटपर—जहाँ जाजलि मुनिने सिद्धि प्राप्त की थी—जा पहुँचे और जिससे 'समस्त भूतोंमें एक ही आत्मतत्त्व विराजमान है' ऐसा ज्ञान होता है, उस आत्मविचाररूप ब्रह्मसत्रका सङ्कल्प करके बैठ गये॥ २॥ ❀ ❀ उन्होंने प्राण, मन, वाणी और दृष्टिको वशमें किया तथा शरीरको निश्चेष्ट, स्थिर और सीधा रखते हुए आसनको जीतकर चित्तको विशुद्ध परब्रह्ममें लीन कर दिया। ऐसी स्थितिमें उन्हें देवता और असुर दोनोंके ही वन्दनीय श्रीनारदजीने देखा॥ ३॥ ❀ ❀ नारदजीको आया देख प्रचेतागण खड़े हो गये और प्रणाम करके आदर-सत्कारपूर्वक देश-कालानुसार उनकी विधिवत् पूजा की। जब नारदजी सुखपूर्वक बैठ गये तब वे कहने लगे॥ ४॥ ❀ ❀ प्रचेताओंने कहा—देवर्षे! आपका स्वागत है, आज बड़े भाग्यसे हमें आपका दर्शन हुआ। ब्रह्मन्! सूर्यके समान आपका घूमना-फिरना भी ज्ञानलोकसे समस्त जीवोंको अभयदान देनेके लिए ही होता है॥ ५॥ ❀ ❀ प्रभो! भगवान् शङ्कर और श्रीविष्णुभगवान्ने हमें जो उपदेश दिया था, उसे गृहस्थीमें आसक्त रहनेके कारण हमलोग प्रायः भूल गये हैं॥ ६॥ ❀ ❀ अतः आप हमारे हृदयोंमें उस परमार्थतत्त्वका साक्षात्कार करानेवाले अध्यात्मज्ञानको फिर प्रकाशित कर दीजिये जिससे हम सुगमतासे ही इस दुस्तर संसार-सागरसे पार हो जायँ॥ ७॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—भगवन्मय श्रीनारदजीका चित्त सर्वदा भगवान् श्रीकृष्णमें ही लगा रहता है। वे प्रचेताओंके इस प्रकार पूछनेपर उनसे कहने लगे॥ ८॥ ❀ ❀ श्रीनारदजीने कहा—राजाओ! इस लोकमें मनुष्यका वही जन्म, वही कर्म, वही आयु, वही मन और वही वाणी सफल हैं, जिसके द्वारा सर्वात्मा सर्वेश्वर श्रीहरिका सेवन किया जाता है॥ ९॥ ❀ ❀ जिनके द्वारा अपने स्वरूपका साक्षात्कार करानेवाले श्रीहरिको प्राप्त न किया जाय, उन माता-पिताकी पवित्रतासे, यज्ञोपवीत-संस्कारसे एवं यज्ञदीक्षासे प्राप्त होनेवाले उन तीन प्रकार के श्रेष्ठ जन्मोंसे, वेदोक्त कर्मोंसे, देवताओंके समान दीर्घ आयुसे, शास्त्रज्ञानसे, तपसे, वाणीकी चतुराईसे, अनेक प्रकारकी बातें याद रखनेकी शक्तिसे, तीव्र बुद्धिसे, बलसे, इन्द्रियोंकी पटुतासे, योगसे, सांख्य (आत्मानात्मविवेक) से, संन्यास और वेदाध्ययनसे तथा व्रत-वैराग्यादि अन्य कल्याण-साधनोंसे भी पुरुषका क्या लाभ है?॥ १०–१२॥

श्रुतेन तपसा वा किं वचोभिश्चित्तवृत्तिभिः। बुद्ध्या वा किं निपुणया बलेनेन्द्रियरा[१]धसा॥ ११॥
किं वा योगेन सांख्येन न्यासस्वाध्याययोरपि। किं वा श्रेयोभिरन्यैश्च न यत्रात्मप्रदो हरिः॥ १२॥
श्रेयसामपि सर्वेषामात्मा ह्यवधिरर्थतः। सर्वेषामपि भूतानां हरिरात्म[२]ाऽऽत्मदः प्रियः॥ १३॥

यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः।
प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या॥ १४॥
यथैव सूर्यात्प्रभवन्ति वारः पुनश्च तस्मिन् प्रविशन्ति काले।
भूतानि भूमौ स्थिरजङ्गमानि तथा हरावेव गुणप्रवाहः॥ १५॥
एत[३]त्पदं तज्जगदात्मनः परं सकृद्विभातं सवितुर्यथा प्रभा।
यथासवो जाग्रति सुप्तशक्तयो द्रव्यक्रियाज्ञानभिदाभ्रमात्ययः॥ १६॥
यथा नभस्यभ्रतमःप्रकाशा भवन्ति [४]भूपा न भवन्त्यनुक्रमात्।
एवं परे ब्रह्मणि शक्तयस्त्वमू रजस्तमःसत्त्वमिति प्रवाहः॥ १७॥

---

१. प्रा० पा०—रोधसा। २. प्रा० पा०—रात्मपदः प्रि०। ३. प्राचीने पाठे 'एतत्पदं' इत्यारभ्य 'मात्ययः' पर्यन्तः षोडशः श्लोको न। ४. प्रा० पा०—भूयो।

तेनैकमात्मानमशेषदेहिनां कालं प्रधानं पुरुषं परेशम् ।
स्वतेजसा ध्वस्तगुणप्रवाहमात्मैकभावेन भजध्वमद्धा ॥ १८ ॥
दयया सर्वभूतेषु सन्तुष्ट्या येन केन वा । सर्वेन्द्रियोपशान्त्या च तुष्यत्याशु जनार्दनः ॥ १९ ॥
अपहतसकलैषणामलात्मन्यविरतमेधितभावनोपहूतः ।
निजजनवशगत्वमात्मनोऽयन्न सरति छिद्रवदक्षरः सतां हि ॥ २० ॥

अन्वयः—यत्र आत्मप्रदः हरिः न श्रुतेन तपसा वा चित्तवृत्तिभिः वचोभिः किम् वा निपुणया बुद्ध्या बलेन इंद्रियराधसा किम् वा सांख्येन योगेन च न्यासस्वाध्याययोः अपि किम् वा अन्यैः श्रेयोभिः ॥ ११–१२ ॥ ❀ ❀ हि सर्वेषाम् श्रेयसाम् अपि आत्मा अर्थतः अवधिः हरिः अपि सर्वेषाम् भूतानाम् आत्मा आत्मदः प्रियः ॥ १३ ॥ ❀ ❀ यथा तरोः मूलनिषेचनेन तत्स्कंधभुजोपशाखाः तृप्यंति यथा च प्राणोपहारात् इंद्रियाणाम् तथा एव अच्युतेज्या सर्वार्हणम् ॥ १४ ॥ ❀ ❀ यथा काले वारः सूर्यात् एव प्रभवंति पुनः च तस्मिन् प्रविशंति भूमौ स्थिरजंगमानि भूतानि तथा हरौ एव गुणप्रवाहः ॥ १५ ॥ ❀ ❀ यथा सवितुः प्रभा यथा अजाग्रति सुप्तशक्तयः असवः द्रव्यक्रिया-ज्ञानभिदाभ्रमात्ययः तथा सकृत् विभातम् एतत् तज्जगदात्मनः परम् पदम् ॥ १६ ॥ ❀ ❀ भूपाः यथा नभसि अभ्रतमःप्रकाशाः अनुक्रमात् भवंति न भवंति एवं परे ब्रह्मणि अमूः रजस्तमः सत्त्वम् शक्तयः इति प्रवाहः ॥ १७ ॥ ❀ ❀ तेन एकम् अशेषदेहिनाम् आत्मानम् कालम् प्रधानम् परेशम् अद्धा स्वतेजसा ध्वस्तगुणप्रवाहम् पुरुषम् आत्मैकभावेन भजध्वम् ॥ १८ ॥ ❀ ❀ सर्वभूतेषु दयया वा येन केन संतुष्ट्या सर्वेन्द्रियोपशांत्या च जनार्दनः आशु तुष्यति ॥ १९ ॥ ❀ ❀ हि सताम् अपहतसकलैषणामलात्मनि अविरतम् एधितभावनोपहूतः आत्मनः निजजन-वशगत्वम् अयन् अक्षरः छिद्रवत् न सरति ॥ २० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

वचोभिर्वाग्विलासैः । चित्तवृत्तिभिर्नानावधानसामर्थ्यैः । बलेन शरीरशक्त्या इंद्रियाणां राधसा पाटवेन ॥ ११ ॥ ❀ ❀ योगेन प्राणायामादिना सांख्येन देहादिव्यतिरिक्तात्मज्ञानमात्रेण । संन्यासवेदाध्ययनाभ्यामपि । अन्यैरपि व्रतवैराग्यादिभिः श्रेयः-साधनैः ॥ १२ ॥ ❀ ❀ नन्वेषां नानाफलसाधनानां हरिसेवाभावमात्रेण कुतो वैयर्थ्यं तत्राह । श्रेयसां फलानामात्मैवावधिः परा काष्ठा । अर्थतः परमार्थतः । आत्मार्थत्वेनैवान्येषां श्रेयसां प्रियत्वादित्यर्थः । भवत्वात्मावधिर्हरेः किमायातं तत्राह । सर्वेषा-मपीति । आत्मा आत्मदश्चाविद्यानिरासेन स्वरूपाभिव्यंजकः, ऐश्वरेणापि रूपेण बलिप्रभृतिभ्य इवात्मप्रदः प्रियश्च परमानन्दरूप-त्वात् ॥ १३ ॥ ❀ ❀ किं च नानाकर्मभिस्तत्तद्देवताप्रीतिनिमित्तान्यपि फलानि हरिप्रीत्या भवंति केवलं तत्तद्देवताराधनेन तु न किंचिदिति सदृष्टान्तमाह यथेति । मूलात्प्रथमविभागाः स्कन्धाः तद्विभागा भुजाः तेषामप्युपशाखाः उपलक्षणं पत्रपुष्पा-दयोऽपि तृप्यन्ति न तु मूलसेकं विना ताः स्वस्वनिषेचनेन । प्राणस्योपहारो भोजनं तस्मादेवेन्द्रियाणां तृप्तिर्न तु तत्तदिन्द्रियेषु पृथक्पृथगन्नलेपनेन तथाऽच्युताराधनमेव सर्वदेवताराधनं न पृथगित्यर्थः ॥ १४ ॥ ❀ ❀ कुतः सर्वमूलत्वादिति सदृष्टांतां-तरमाह । यथैव वारो जलानि वर्षाकाले सूर्यादुद्भवन्ति ग्रीष्मे तस्मिन्नेव प्रविशन्ति । अस्याप्रसिद्धत्वेन दृष्टान्तान्तरमाह । यथा भूतानि भूमाविति । गुणप्रवाहश्चेतनाचेतनात्मकः प्रपंचः ॥ १५ ॥ ❀ ❀ ननु हरावेव गुणप्रवाह इत्युक्ते तदाधारत्वेन सोपाधिकत्वं हरेः स्यादित्याशंक्याह । एतदिति । एतद्विश्वं विष्णोस्तत्सर्वशास्त्रप्रसिद्धं पदं परं सर्वोपाधिरहितम् । तदुत्पन्नत्वान्न ततः पृथगित्यर्थः । तर्हि कथमन्यथा भाति तत्राह सकृदिति । सकृत्कदाचिद्विभातं स्फुरितं गन्धर्वनगरवत् यथा सवितुः प्रभा न ततो भिन्ना यथा च जाग्रत्यसव इन्द्रियाणि स्फुरन्ति सुषुप्तौ तु सुप्तशक्तयो भवन्तीत्यर्थः । कथंभूतोऽसौ हरिः द्रव्यादीनां त्रिविधा-हंकारकार्याणां तन्निमित्तस्य भेदभ्रमस्य चात्ययो यस्मात्सः । यद्वा अजाग्रति सुषुप्तावसवः सुप्ताः शक्तयो येषां ते भवन्ति द्रव्यादेरप्यत्ययो भवति । सवितुः प्रभेत्युद्गतौ दृष्टान्त इति ॥ १६ ॥ ❀ ❀ नन्वसंगे हरौ कथं प्रपंचोत्पत्तिलयौ तत्राह यथेति । अभ्रतमःप्रकाशा आगमापायिनो रजस्तमःसत्त्वस्थानीयाः ज्ञेयाः । हे भूपाः प्रचेतसः ! तथा अमूः रजआदयः शक्तयो भवन्ति उद्भवन्ति न भवन्ति लीयन्ते इत्येवमयं जगत्प्रवाहः ॥ १७ ॥ ❀ ❀ तेन सर्वकारणत्वेन हेतुना अशेषदेहिनामा-त्मानम् । कालो निमित्तम् । प्रधानमुपादानम् । पुरुषः कर्ता । एतत्त्रितयात्मकत्वात्सर्वकारणं परमेश्वरमद्धा साक्षाद्भजध्वम् । कथम् । आत्मन एकभावेनाभिन्नत्वेन ॥ १८ ॥ ❀ ❀ साधनमाह । दयादिभिः शीघ्रं तुष्यति ॥ १९ ॥ ❀ ❀ ततो न कदा-चिद्भक्तजनान् त्यजतीत्याह । अपहताः सकला एषणाः कामा यस्मात्स चासावमल आत्मा मनस्तस्मिन्सतां मनसि निरंतरमेधितया भावनयोपहूतः सन्निधापितः सन्नक्षरो हरिरच्छिद्रवत्तत्रत्याकाशवत्ततो न सरति नापयाति हि । किं कुर्वन् । आत्मनः स्वस्य निज-जनवशगत्वं स्वभक्ताधीनत्वमयन्नवगच्छन् ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

श्रुतेन वेदान्तादिश्रवणेन । वाग्विलासैः शास्त्रव्याख्यानचातुर्यैः । नानाशास्त्रार्थावधारणं नानावधानम् ॥ ११ ॥ ❀ ❀ आदिना तीर्थयात्रादिग्रहः । यत्र येषु सत्सु हरिरात्मप्रदो न भवतीति योगिप्रभृतयोऽपि योगादिभिः परमात्माद्यनुभवं न प्राप्नुवन्तीत्यर्थः । हरिः खल्वात्मानं च भक्तिं विना न प्रददातीत्येषां भक्तित्वाभावाद्भक्तिकारणत्वाभावाच्च वैयर्थ्यमेव । प्रकारान्तरेण भक्तिसद्भावे त्वेषां भक्तिमिश्रत्वेनैव सार्थक्यं न तु स्वत इति भावः ॥ १२ ॥ ❀ ❀ अत्राक्षिपति—नन्विति । तत्र युक्तिमाह—इत्यर्थ इति । "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति श्रुतेरयं भावः । पुनराक्षिपति—भवत्विति । सर्वेषामात्मनां हरिरेवात्मा जीवात्मनां तस्य तटस्थशक्तित्वात्स च हरिः प्रियः केवलया भक्त्या प्रीणाति चेदात्मदः "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुधा श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम् ॥" इति श्रुतेः । सन्दर्भस्तु—तत्र शुद्धजीवात्मब्रह्मात्मनः भावनामपि परित्यज्य श्रीहरावेव निष्ठापयितुमाह—श्रेयसामिति । सर्वेषां हरिरेवात्मा मूलं स्वरूपम् । शुद्धजीवानां तदीयतटस्थशक्तित्वात् । ब्रह्मणस्तन्निर्विशेषाविर्भावरूपत्वादिति भावः । ततो विलक्षणत्वेन निजभक्तेभ्यः स्पष्टमात्मानं ददाति ततस्ततोऽपि परमप्रेमास्पदं भवतीत्यर्थः ॥ १३ ॥ ❀ ❀ अन्यदाधिक्यमाह—किञ्चेति । इत्यर्थ इति । अच्युतस्य पूजायां सर्व एव पूजिताः स्युरित्यर्थः । नन्वशक्तस्यैव भवत्वेतच्छक्तेन तु अच्युतस्य पूजा कर्त्तव्या देवादीनां च, यथा मूलस्य स्कन्धादीनां च सेके न दोषः प्रत्युत गुण एवेत्याशंक्य दृष्टान्तान्तरमाह—प्राणोपहारेति । पृथक्पृथगन्नलेपेनांध्यबाधिर्योत्पादनाद्दोष एव । इत्यर्थ इति । अच्युतस्य सर्वाधिष्ठानत्वेन सर्वदेवमूलत्वं 'मूलं विष्णुर्हि देवानाम्' इत्याद्युक्तेरिति भावः ॥ १४ ॥ ❀ ❀ अच्युताराधने कुतः सर्वाराधनमित्याशंकते—कुत इति । स शुको दृष्टान्तान्तरमाह—यद्वा । दृष्टान्तान्तरेण सहितं सदृष्टान्तान्तरं दृष्टान्तान्तरं भूतानि भूमाविति यथैव सूर्यादित्युपादानकारणत्वमुक्तम् ॥ १५ ॥ ❀ ❀ अत्राशंकते । इत्यर्थ इति । स्वर्णादुत्पन्नं कुण्डलं यथा स्वर्णाभिन्नमिति भावः । इत्यर्थ इति । कारणे लीनत्वादिति भावः । पूर्वव्याख्याने सुषुप्तावित्यस्यानेयत्वादाह—यद्वेति । द्रव्यादेर्महाभूतादेः । केचित्तु—तदेतद्विष्णोः पदं तस्मादुत्पन्नत्वाज्जगदात्मन उपाधेः परं तत्संबद्ध आधाराधेयभावोपि गगनगन्धर्वनगरवद्बोध्यः । तर्हि शून्यं स्यात्तत्राह—सकृद्विभातं न दीपादिवद्विच्छिद्य प्रज्ञानघनमित्यर्थः । यथा सवितुः प्रभा सकृत्प्रभाता तद्वत् यज्ज्ञानाच्च द्रव्यक्रियाज्ञानानि तामसतैजसवैकारिकाहंकारभेदास्तन्निमित्तो भेदभ्रमस्तस्यात्ययो निवृत्तिर्भवति । किंलक्षणो हरिरित्याशंक्य लक्षणं वा तस्येदं द्रव्यक्रियेत्यादि नोच्यते इत्याहुस्तन्न ग्राह्यं स्वामिचरणैरप्यस्यैवार्थस्योक्तत्वात् ॥ १६ ॥ ❀ ❀ पुनराक्षिपति—नन्विति अत्र विश्वनाथः—ननु गुणमयस्य विश्वस्य गुणातीतो हरिः कथं कारणं न हि मृन्मयस्य घटस्य मृदतीतं वस्तूपादानकारणं भवितुमर्हति । उपादानत्वे च हरेः कथं वा निर्विकारत्वमित्यत आह—यथेति । अभ्रतमःप्रकाशा नभसि दृश्यमानाः सूर्यादेव भवन्ति तत्रैव लीयन्ते च । सूर्यादिति पूर्वेणानुषंगः । हिमोपि सूर्यादेवेति यद्वक्ष्यते च "प्राणादिभिः स्वविभवैरुपगूढमन्यो मन्येत सूर्यमिव मेघहिमोपरागैः" इति । उपरागशब्देन दुष्टजीवाविष्टं तमःखण्डमेवात्रोच्यते । हे भूपा इति । रजसाविष्टचेतसामेतच्चेतःप्रणिधानेन ज्ञेयमिति भावः । सूर्यो यथा मेघहिमाद्यतीतोऽपि तेषामुपादानकारणं तदपि यथा निर्विकारो भवति तथेत्यर्थः । यथैवाभ्रादिरहितेऽपि सूर्ये कारणत्वादभ्रादयः संतीत्युच्यते तथैव हरौ गुणरहितेप्यमूः शक्तयो रजआद्याः इत्येवं प्रकारेणायं जगत्प्रवाहः । अत्र यथाभ्रतमसी सूर्यस्य शुद्धज्योतिर्मात्रस्य न स्वरूपं दूरवर्त्तिमलिनः प्रकाशोपि न स्वरूपं तथैव हरे रजस्तमसी शुद्धचित्तस्य तस्य सत्त्वं च न स्वरूपमित्येवं श्रीनारदस्य मते भगवतो गुणमयजगदुपादानत्वं निर्विकारत्वं च सिद्धमत एव "आत्मनैवाविक्रियमाणेन सगुणमगुणः सृजसि हरसि पासि" इति देवैर्वक्ष्यते 'यत उदयास्तमयौ' 'विकृतेर्मृदिवाविकृतात्' इति श्रुतिभिश्च "नमो नमस्तेऽखिलकारणाय निष्कारणायाद्भुतकारणाय" इति गजेन्द्रेण च कारणस्य तदेवाद्भुतत्वं यदुपादानत्वेऽपि निर्विकारत्वं विवर्त्तांगीकारे च युक्तिसद्भावादद्भुतत्वं न स्यात् । व्याख्यातं तत्रैव स्वामिभिश्च कारणत्वे च मृदादिवद्विकारं वारयति अद्भुतकारणायेति ॥ १७ ॥ ❀ ❀ भजध्वं तद्भजनमेव देवपित्रादिसर्वभजनं भवेदिति । एकभावेनैकाग्र्येण । आत्मनो यो भावान्तरामिश्रो भावो दास्यादीनामेकतरत्वेनेति सन्दर्भः ॥ १८-१९ ॥ ❀ ❀ ततः स्वतोषे सति । एवमुक्तप्रकारया भक्त्या भक्तेभ्यो भगवान्स्वात्मप्रदो भवतीति पूर्वमुपपादितं तल्लक्षणं विवृणोति—अपहतेति । अवगच्छन्स्वनिघ्नां रक्षितुमिति भावः ॥ २० ॥

### श्रीमद्वीरराघवव्याख्या

वचोभिर्वाग्विलासैर्निपुणया सूक्ष्मया बलेन मनोदेहबलेनेन्द्रियाणां राधसा पाटवेन ॥ ११ ॥ ❀ ❀ योगेन प्राणायामादिना सांख्येन देहादिव्यतिरिक्तात्मज्ञानमात्रेण चतुर्थाश्रमाध्ययनाभ्यां श्रेयःसाधनैरन्यैर्व्रतैश्च "य आत्मदो बलदो" इति श्रुत्युक्तरीत्यात्मपर्यन्तप्रदानचतुरः आश्रितबन्धहरो भगवान् यत्र जन्मादिषु नास्ति यैर्जन्मादिभिर्नाराध्यते तैः किं प्रयोजनमित्यर्थः ॥ १२ ॥ ❀ ❀ ननु जन्मादीनां प्रतिनियतफलानां भगवत्सेवावैधुर्यमात्रेण कुतो निन्द्यता तत्राह श्रेयसामिति । अर्थतः वस्तुतः सर्वेषामपि श्रेयसां परमात्मा हरिरवधिः परा काष्ठा हरेरन्यच्छ्रेयो नास्तीत्यर्थः । कुतः हि यतो हरिः सर्वेषां प्रियः निरतिशयप्रीतिविषयः निरतिशयानन्दरूपप्रीतिविषय एव हि परमं श्रयः प्रियत्वं हेतुरात्मा, आत्मा हि निरतिशयप्रीतिविषयः यस्य

प्रत्यगात्मनः सम्बन्धात् देहापत्यगृहपश्वादिकं सम्बन्धपारम्पर्येण व्यवस्थितप्रीतिविषयं तस्याप्यात्मेत्यर्थः। न केवलं प्रिय एव किन्तु स्वात्मपर्यन्तपुरुषार्थप्रदश्च। बलिप्रभृतिभ्यः स्वात्मदानं प्रसिद्धम् ॥ १३ ॥ ❀ ❀ किञ्च तत्फलसाधनतयेन्द्रादिदेवताराधनमपि भगवत्येव पर्यवस्यति तस्य सर्वदेवतान्तरात्मत्वादतः साक्षात्तदाराधनमेव सर्वदेवताप्रीतिद्वारा समीहितपुरुषार्थहेतुरिति सदृष्टान्तमाह यथेति। तरोर्वृक्षस्य मूलनिषेचनेन जलसेचनेन स्कन्धादयः यथा तृप्यन्ति न तु प्रत्येकं स्कन्धादिसेचनेन तत्र स्कन्धा मूलात्पृथग्विभागाः भुजास्तेषां विभागाः उरवस्तेषामपि विभागाः शाखाः तेषामपि विभागाः तदुपरि शाखाः। एतदुपलक्षणं तत्र पुष्पफलादयोऽपि तृप्यन्ति यथा च प्राणोपहारात्प्राणाद्याहुतेर्भोजनादिति यावत् सर्वेन्द्रियाणां तृप्तिर्भवति, न तु तत्तदिन्द्रियेषु पृथगन्नलेपनेन तथाच्युतेज्या भगवदाराधनं सर्वार्हणं सर्वदेवतार्हणसाध्यं फलं साधयति ॥ १४ ॥ ❀ ❀ कुतः सर्वकारणत्वात्सर्वान्तरात्मत्वाच्चेति सदृष्टान्तमाह यथैवेति द्वाभ्याम्। यथैव वारः आपः वर्षाकाले सूर्यात्प्रभवन्ति उद्भवन्ति ग्रीष्मे च तस्मिन्नेव प्रविशन्ति अस्याप्रसिद्धत्वेन दृष्टान्तान्तरमाह। यथा भूतानि स्थावरजङ्गमात्मकानि भूमावेव प्रभवन्ति प्रविशन्ति च तथा गुणप्रवाहः गुणपरिणामरूपः प्रपञ्चः हरावेव कारणभूते उद्भवति लीनो भवति च ॥ १५ ॥ ❀ ❀ एवं सर्वकारणत्वमुक्तमथ सर्वात्मतामाह। तदेतज्जगदात्मनः परं पदं वासस्थानं गृहादिसाम्यव्यावृत्त्यर्थमाह सवितुर्यथा प्रभेति। सवितुः प्रभावत् कृत्स्नं जगत् परमात्मनोऽपृथक्सिद्धविशेषणं शरीरमित्यर्थः। जगतोऽनित्यत्वात्तन्निरूपितमात्मत्वमपि परमात्मन्यनियतमित्याशङ्कां निराकर्तुं जगद्विशिनष्टि। सकृद्विभातं सृष्टिदशायां स्थूलतया सकृद्विभातं सकृद्विभातमित्यनेन सकृत्संहारदशायां सूक्ष्मतया न विभातमिति विवक्षितं स्थूलसूक्ष्मधर्मनिवृत्तत्वेऽपि द्रव्यनित्यत्वमनेनाभिप्रेतम्, एतदेव स्पष्टयितुं सकृद्भानाभानयोर्दृष्टान्तमाह यथेति। असुशब्देन प्राणायत्तव्यापाराणीन्द्रियाणि लक्ष्यन्ते। असवः कदाचिज्जाग्रति व्याप्रियन्ते कदाचित्सुप्तशक्तयः निवृत्तव्यापाराः कदेत्यत्राह द्रव्येति। द्रव्यं भूतपञ्चकं ज्ञानक्रियाशब्दाभ्यां ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च लक्ष्यन्ते, इन्द्रियभूतसंघातरूपदेवमनुष्यादिदेहात्मभ्रमात्यये सुषुप्तावित्यर्थः। न हि तदानीं देहात्माभिमानः यथा प्राणाः जाग्रति सुप्तवृत्तयश्च भवन्त्येवं जगत आविर्भावतिरोभावनिमित्तं भानाभाने। न त्वेतावता द्रव्यानित्यताशङ्केति भावः ॥ १६ ॥ ❀ ❀ एतदेव दृष्टान्तान्तरेण साधयति यथा नभसीति। यथा नभस्याकाशेऽभ्रतमःप्रकाशा भवन्ति कदाचिद्विभाता भवन्ति कदाचिन्न विभाता भवन्ति, न हि भावाभावमात्रेणाभ्रादीनामसत्ता शङ्कितुं युक्ता एवं हे भूपाः! प्रवाहः प्रवहमाना रजस्तमः सत्त्वमित्येवंरूपा अमूः शक्तयः कार्योपयोग्यपृथक्सिद्धविशेषणभूताः परे ब्रह्मणि कदाचिद्भवन्ति न भवन्ति च। प्रवहते इति प्रवाहः वेदाः प्रमाणमितिवच्छक्तयः प्रवाह इत्युक्तम् ॥ १७ ॥ ❀ ❀ तेनावस्थानां स्थूलत्वसूक्ष्मत्वादीनामनित्यत्वेऽपि तदाश्रयस्य प्रकृतिपुरुषात्मकद्रव्यस्य नित्यत्वात्तस्य परमात्मानं प्रतिनियतशरीरत्वेनाशेषदेहिनामेकमात्मानं कालं कालशरीरकं प्रधानं प्रकृतिशरीरकं पुरुषं जीवशरीरकं प्रकृतिसम्बन्धप्रयुक्तसंसारित्वशङ्कां निरस्यति—स्वतेजसा स्वप्रकाशेन ध्वस्तः निरस्तः गुणप्रवाहोदयः संसारो यस्य नियन्तृतया प्रकृतिसम्बन्धो न तु जीवस्येव वश्यतयेति भावः, एवंभूतं परेषां ब्रह्मादीनामपीशमात्मैकभावेन सर्वात्मकत्वेन सर्वेषामात्मनामेकान्तरात्मेति बुद्ध्याद्धा साक्षाद्भजध्वम् ॥ १८ ॥ ❀ ❀ कीदृशं तद्ब्रह्मस्वरूपं यद्भजध्वमित्युच्यत इति विवित्सायां प्रकृतिपुरुषविलक्षणम् "सत्यं ज्ञानमनन्तम्" इति स्वरूपशोधकवाक्यावगतं ब्रह्मस्वरूपं शोधयंस्तद्भजध्वमित्याह निरस्तेति। निरस्तसङ्कल्पविकल्पं मानसबुद्धिसुखदुःखेच्छाद्वेषादिविकल्परहितमित्यर्थः, अनेन बद्धजीवव्यावृत्तिः अद्वये द्वयं द्वयोः समुदायः तदन्यत्स्वसजातीयद्वितीयवस्त्वभावात् यथा 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति अद्वितीयमित्यर्थः। अनेन मुक्तजीवव्यावृत्तिः, तेषां सजातीयद्वितीयसद्भावात्। द्वयापवादोपरमोपलम्भनम्। द्वयशब्देन द्वैतं विवक्षितं तदेवापवादः ब्रह्मज्ञानबाधकं देवमनुष्यादिभेदापवादविरमे उपलम्भनं यस्य तत्तथोक्तं देहात्मभ्रमनिवृत्तावुपलभ्यमित्यर्थः, अजस्रनिर्वृतं नित्यानन्दधर्मकं नित्यानन्दस्वरूपं वा, अतेऽपि प्रागुक्तार्थ उचितः—अनादिमध्यान्तमिति नित्यत्वस्य कथितत्वादजस्रशब्दस्य पुनरुक्तिप्रसङ्गात् संज्ञप्तिमात्रं कचिदप्यजडस्वरूपममुया दृशा पूर्वोक्तज्ञानेन भजत। निरस्तसंकल्पविकल्पमिति पदेन 'विशोको विजिघत्सोऽपिपासः अस्थूलमनण्वह्रस्वमि'ति वाक्योक्तप्रकृतिपुरुषवैलक्षण्यवदमलत्वमुक्तम्। अनादिमध्यान्तमिति सत्यत्वमुक्तं निर्विकारत्वं हि सत्यत्वं संज्ञप्तिमात्रमिति ज्ञानशब्दार्थ उक्तः। अजस्रनिर्वृतमित्यनेन 'स एको ब्रह्मण आनन्दः, आनन्दो ब्रह्मे'त्यर्थ उक्तः। समाभ्यधिकराहित्यवाचिना अद्वयशब्देनानन्तत्वमुक्तं, सद्वितीयं हि सर्वं देशादिभिः परिच्छिन्नमतोऽद्वितीयत्वादनन्तत्वसिद्धिः ॥ ० ॥ तदेवं सत्यत्वज्ञानत्वानन्दत्वामलत्वविशिष्टं शोधकवाक्यावगतं परमात्मस्वरूपमुक्तम्। अमुयेत्युक्ताया दृशः साधनान्याह दययेति। सर्वेषूच्चावचेषु भूतेषु यथोचितसत्कारोपयोगिन्या दयया येन केनचिद्दैवाल्लब्धेनान्नादिना अन्तर्बाह्येन्द्रियनिग्रहेण चानुगृहीतया दृशा जनार्दनस्तुष्यति ॥ १९ ॥ ❀ ❀ ततस्तुष्टो भगवान्न कदाचित्त्यजतीत्याह अपहतेति। अपहता निरस्ताः सकला एषणाः कामा यस्मात्स चासावमल आत्मा मनस्तस्मिन्नेवंविधे सतां मनसि निरन्तरमेधितया भावनया भक्त्या उपहूतः सन्निधापितः सन्नक्षरो हरिः छिद्रवत्पृथक्सिद्धवत्ततो न सरति नापयाति, किं कुर्वन्नात्मनो निजजनवश्यत्वं स्वभक्ताधीनत्वं यन् गच्छन् ॥ २० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

इन्द्रियराधसा बहुग्रहणसामर्थ्येन ॥ ११ ॥ ❀ ❀ सांख्येन यथार्थज्ञानेन न्यासस्वाध्याययोः क्रिययापि अन्यैस्तीर्थसेवादिभिः ॥ १२ ॥ ❀ ❀ इतोऽपि विहितानां पुण्यानां हरेरनुग्रहपर्यन्तमेव फलमित्याह श्रेयसामिति। यावत्प्रसीदति

तावत्पर्यन्तं पुण्यफलमित्यवधेरर्थः। ननु सेवितः किं फलं ददाति येन श्रेयसामवधिः स्यादित्याशङ्क्यान्ये सेविता यावत्प्रसीदन्ति तावत्पर्यन्तं पुंसां स्वव्यतिरिक्तमेव पुण्यफलं प्रयच्छन्ति अयं तु स्वात्मानमेव ददातीत्येतादृशः कृपासमुद्रः कोऽस्तीत्यभिसन्धायाह सर्वेषामिति। आत्मानन्दरूपः ॥ १३ ॥ ❀ ❀ किंवा श्रेयोभिरन्यैरित्यत्र देवादिसेवालक्षणश्रेयांसि कथं निषिध्यन्ते तत् सेवाया अपि तत्तत्फलावाप्तये कर्तव्यत्वादिति तत्राह यथेति। प्राणोपहारो भोजनलक्षणपूजा इन्द्रियाणां तृप्तिलक्षणपूजां जनयति अच्युतेज्या सर्वदेवाद्यर्हणफलं ददाति। अत्रैवकारेण प्राधान्यपूजा निषिध्यते न त्ववान्तरपूजा, तस्या विहितत्वेन अच्युतस्य पूजात्वादित्यभिप्रायः परिवारतया ग्राह्या "अपि हेया प्रधानतः" इत्युक्तेः ॥ १४ ॥ ❀ ❀ ननु हरिपूजया देवादिपूजाफलं कथं स्यान्नहि देवदत्तभोजनतृप्त्या यज्ञदत्तस्तृप्यतीति तत्राह यथेति। उदयकाले आषाढादिकाले वा गावो रश्मयो जलानि च सूर्याद्यथा प्रभवन्ति निर्गच्छन्ति उत्पद्यन्ते वा पुनश्च सन्ध्याकाले हेमन्तादिकाले वा तस्मिन् सूर्ये प्रविशन्ति गवां मण्डलप्रवेशो वारीणां मरीचिपीतत्वमित्येष विशेषः, यथा च स्थिरजङ्गमानि भूतानि भूमेरुत्पद्यन्ते भूमावेव प्रविशन्ति तथायं गुणप्रवाहस्त्रिगुणात्मकजगल्लक्षणो हरेरुत्पद्यते हर्याधारतया तिष्ठतीत्यन्वयः। अनेन हरेः सर्वकर्तृत्वेन स्वतृप्त्या देवादीनां स्वाश्रितत्वेन तृप्तिर्युज्यत इत्येतत्सूचितमिति ॥ १५ ॥ ❀ ❀ अस्तु सर्वश्रेयसामात्मावधित्वमेषु सत्सु कथं प्रकाशत इति तत्राह एतदिति। पूर्वसङ्कीर्णश्रेयस्सु सत्सु यदा सुप्तवृत्त्यो विलीनश्वासादिवृत्तयोऽसुप्तप्रवृत्तयः प्रबुद्धवृत्त्योऽसव इन्द्रियाणि जाग्रति पुरुषं बोधयन्ति उद्योगे स्थिता वा यदा च द्रव्यक्रियाकारकविभ्रमात्ययः तदा यत्तदुपनिषद्वेद्यं तदेतज्जगदात्मनः प्रपञ्चस्वामिनि हरेः परं पदं यथा सवितुः प्रभा सकलपदार्थप्रकाशिका सूक्ष्मापि तथा सकृद्विभातं भवति यथा नारदस्य पुनरभ्यासे सर्वदैवेत्यन्वयः। देहात्मभावभ्रमो द्रव्यभ्रमः अहं कर्तेति क्रियाभ्रमः, मदीयानीमानीन्द्रियाणीति कारकभ्रमः, मुख्यप्राणप्रसादेन प्राणशब्दवाच्येष्विन्द्रियेषु ज्ञानार्थं पुरुषोद्बोधनोद्योगवत्सु जाग्रतो योगिनो ज्ञानोत्पत्त्या द्रव्यादिविभ्रमनिवृत्त्या भगवत्स्वरूपं प्रकाशते इति भावः। हरावेव गुणप्रवाह इत्युक्तेः गुणप्रवाहाधारत्वेन सोपाधिकत्वं हरेः स्यादित्यत आह एतदिति। एतदेव विष्णोः पदं तदुत्पन्नं जगदात्मन उपाधेः परमुपाध्यसम्बन्धमाधाराधेयभावो गगनगन्धर्वनगरवत् ज्ञातव्यः, तर्हि शून्यं तत्राह सकृद्विभातमिति। प्रज्ञानघनं यथा सवितृप्रभाप्रभातातद्वत्स्थितं यज्ज्ञानात् द्रव्यक्रियाज्ञानभिदाभ्रमो जगद्भेदभ्रमस्तस्य निवृत्तिर्भवति किंलक्षणो हरिरित्यनेन तल्लक्षणं तज्ज्ञानं चोच्यते। ननु प्रज्ञानघनाज्जडस्य जगतः कथमुत्पत्तिरित्याशङ्क्य दृष्टान्तेनोपपादयति यथेति। यथाऽसव इन्द्रियाणि अजाग्रति सुप्तिकाले सुप्तवृत्त्योऽपहृतव्यापारा आत्मनि लीनास्ततः प्रबोधे प्रज्ञानघनादप्यात्मनो जायन्ते तद्ब्रह्मणो जगदित्येतदपव्याख्यानम् "आत्मभावः शरीरेषु द्रव्यभ्रम उदाहृतः। क्रियाभ्रमस्त्वहं कर्ता मदीयानीन्द्रियाणि तु॥ कारकभ्रम इत्युक्तस्त एते विभ्रमा यदा। श्वासादिवृत्तिलोपेन प्राणा उद्योगिनस्तदा॥ विलीयन्ते प्राणभक्त्या नित्यं स्वापवतां स्फुटम्। उद्योग एव जाग्रत्स्यायोगिनां मुक्तिसिद्धये॥" इत्यनेनैतद्व्याख्यानरूपेण सम्प्रदायविभ्रमप्रकाशकेन निरस्तमिति ज्ञायते "एको देवः सर्वभूतेषु गूढः" "यस्मिन् सर्वाणि भूतानि" इत्यादिश्रुतेकस्य हरेराधाराधेयभावस्य सत्यत्वावगमात्। न हि सुषुप्ताविन्द्रियाणामात्मनि लयः प्रज्ञानघनादुत्पादोऽपि स्वकपोलकल्पितत्वमन्तरेण प्रामाणिक इति ॥ १६ ॥ ❀ ❀ ननु पङ्किलप्रदेशे प्रवर्तमानदेवदत्तवत् सृष्ट्यादौ गुणपङ्के प्रवृत्तस्य तत्कृतलेपः स्यात् स चानुपपन्नः "असङ्गो ह्ययं पुरुषः" इति श्रुतेरिति तत्राह यथेति। यथा नभस्यभ्रतमःप्रकाशा आगमापायिनः अनुक्रमेण भवन्ति च न तावताकाशस्य तत्सम्बन्धलोपोऽस्ति एवं परेऽसङ्गे ब्रह्मणि रजस्तमःसत्त्वमित्यमूः शक्तयो भवन्ति तदेकाधीनत्वात् शक्तिशब्दवाच्याः। इत्ययं गुणप्रवाहो न तस्मिन्विशेषमापादयतीत्येतत्तुशब्दादवगन्तव्यम्। ननु शक्तीनां मिथ्यात्वात् शक्ति प्रकाशयितुं नैपुण्याभावात् ब्रह्मणि लेपाभाव इत्यतो वाह इतीति। अयं सत्य इति शेषः। एतदभिप्रायेण प्रवाह इत्युक्तं यथाग्निप्रतिष्टम्भनसमर्थस्यापि तत्प्रयुक्तदाहदुःखात्, एवं न त्वग्नेर्मिथ्यात्वादेवं ब्रह्मणो लेपकत्वशक्तिरपि द्रव्याणां भगवदधीनेति विशेषं तुशब्दो वक्तीति वा ॥ १७ ॥ ❀ ❀ मथितार्थमाह तेनेति। यत एवं प्रवृत्तिमत्त्वेऽपि तत्कृतदोषलेपाभावस्तेन विष्णुरेक एव पूर्णो न त्वन्य इति लक्षणात्मैक इति भावेन एतमितः प्रेत्याभिसम्भावितास्मीति बुद्ध्या परमात्मानं भजध्वमित्यन्वयः। "पूर्णो विष्णुः स एवैक इति भावो य ईरितः। आत्मैकभाव इति तं विदुर्ब्रह्मात्मदर्शिनः" इति वचनादात्मैकभावेनेति नैक्यमुच्यते "एकमेवाद्वितीयमात्मानमेव लोकमुपासीत प्रधानादिदमुत्पन्नम्" इत्यादिश्रुतिसप्रमाणीकर्तुमेकमित्यादीनि विशेषणानि बोद्धव्यानि ॥ १८ ॥ ❀ ❀ इत्थं भावान्तरमाह निरस्तेति। भक्तानां निरस्तौ सङ्कल्पविकल्पौ येन स तथा हरिप्रसादमन्तरेण तौ निरस्तौ न स्यातां पुंसामित्यर्थः, तमद्वयं द्वितीयसमरहितम् "सङ्कल्पश्च विकल्पश्च ऋते विष्णुप्रसादतः। नैव सम्भवतो विष्णोः समाभावात्तु सोऽद्वयः॥" इति वचनं चात्र मानम्। द्वयस्य पञ्चविधस्य भेदस्यापवादः कुतर्कनिरासस्तमुपरमन्ति न कुर्वन्तीति ते द्वयापवादोपरमास्तेषूपलम्भनं दर्शनं यस्य स तथा तं च न आदिमध्यान्ता यस्य स तथा तमजन्ननिर्वृतिं नित्यानन्दं संज्ञप्तिमात्रं विज्ञानघन इत्युक्तः यादृशेन दर्शनेन निरस्तसङ्कल्पादिगुणविशेषाः तादृशेन तानुपसंहृत्य भजतेत्यन्वयः॥ ० ॥ साधनान्तरं चाह दयेति। येन केनचिच्छास्त्रविहितेन लब्धेनान्नपानादिना सन्तुष्ट्यालंबुद्ध्या ॥ १९ ॥ ❀ ❀ ननु बहुजन्मचीर्णसुकृतानन्त्येन प्रसाद्य सकृद्विभातं यदि पश्चान्नेति पक्षे बहुक्लेशेन साधनानुष्ठानं व्यर्थं पारदसाधनवदिति तत्राह अपगतेति। अपगता दूरतो निरस्ताः समस्ताः सकला एषणाः पुत्रवित्तादिकामा यस्मात्स तथा अत एवामलश्चात्मा अपगतसकलैषणामलात्मा तस्मिन्नेवं विशुद्धान्तःकरणे निरन्तरमेधितया भावनया भक्त्या आहूत इवागत्यात्मानं प्रकाश्य सन्निहितो हरिः श्रीनारायणः सतां हृदयान्न सरति न

गच्छति न तिरोभवति तत्र हेतुमाह निजेति। स्वभक्तवशगतत्वं प्राप्तवानिति यत्तस्माच्छिद्रवदाकाशवदेतन्निदर्शनकथनेन व्याप्यव्यापकाभिव्यक्तिरेव विवक्षितेति ध्वनयति पूर्वदेशवियोगलक्षणक्रिययोत्तरदेशसंयोगसम्भवात् व्याप्तिभङ्गापत्तेरिति न क्षरति न स्रवतीत्यक्षरशब्दनिरुक्त्या च भक्तजनहृदयान्नापगच्छतीति भावेनोक्तमक्षर इति। हिशब्देन हरेर्ज्ञानिप्रियत्वं मानसिद्धमिति स्मारयति "ज्ञानी त्वात्मैव मे मतम्" इति॥ २०॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तत्र शुद्धजीवात्मब्रह्मात्मनोर्भावनामपि परित्यज्य श्रीहरावेव निष्ठापयितुमाह श्रेयसामपीति। सर्व्वेषां हरिरेवात्मा मूलं शुद्धजीवानां तदीयतटस्थांशत्वात् ब्रह्मणस्तन्निर्विशेषाविर्भावरूपत्वादिति भावः। अतो विलक्षणत्वेन निजभक्तेभ्यः स्पष्टमप्यात्मानं ददाति ततस्ततोऽपि परमप्रेमास्पदं भवतीत्यर्थः॥ ११-१३॥ ❀ ❀ एवं कर्म्मज्ञानकाण्डयोः श्रीहरावेव पर्य्यवसानमुक्त्वोपासनाकाण्डस्याप्याह यथेति॥ १४॥ ❀ ❀ यथैवेति पद्यस्यान्ते एतत् पदमित्यादिपद्यं सम्बन्धचित्सुखयोः सम्मतं, न तु स्वामिनः॥ १५-१६॥ ❀ ❀ परे ब्रह्मणि श्रीभगवति॥ १७॥ ❀ ❀ आत्मैकभावेन सर्व्वेषां मूलस्वरूपमित्यव्यभिचारिभावनया वा। यद्वा आत्मनो यो भावान्तरामिश्रो भावो दास्यादीनामेकतरस्तेन॥ १८॥ ❀ ❀ तत्रानुकूलान् धर्म्मानाह दययेति॥ १९॥ ❀ ❀ यन् सदैव सङ्गतः सन्॥ २०-२१॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

श्रुतेन वेदान्तादिश्रवणेन वचोभिः शास्त्रव्याख्यानचातुर्य्यैः चित्तवृत्तिभिर्नानाशास्त्रार्थावधारणसामर्थ्यैः। इन्द्रियाणां राधसा पाटवेन॥ ११॥ ❀ ❀ योगेनाष्टाङ्गेन संन्यासवेदाध्ययनाभ्याञ्च अन्यैरपि व्रतवैराग्यादिभिः श्रेयःसाधनैः यत्र येषु सत्सु हरिरात्मप्रदो न भवतीति योगिप्रभृतयोऽपि योगादिभिः परमात्माद्यनुभवं न प्राप्नुवन्तीत्यर्थः। हरिः खल्वात्मानञ्च भक्त्या विना न प्रददात्येषां भक्तित्वाभावात् भक्तिकारणत्वाभावाच्च वैयर्थ्यमेव। प्रकारान्तरेण भक्तिसद्भावे त्वेषां भक्तिमिश्रत्वेनैव सार्थकत्वं न तु स्वत इति भावः॥ १२॥ ❀ ❀ हरिभक्तिं विना सर्व्वेषां तु श्रेयःसाधनानां वैफल्ये युक्तिमाह। श्रेयसां फलानामात्मैवावधिः तेषामात्मप्रीत्यर्थकत्वात् सर्व्वभूतानामात्मनां तु हरिरेवात्मा जीवात्मनां तेषां तदीयतटस्थशक्तित्वात् स च हरिः प्रियः केवलया भक्त्या प्रीणाति चेदात्मदः "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति श्रुतेः॥ १३॥ ❀ ❀ ननु कर्म्मज्ञानादीनां यथा भक्तिमिश्रत्वमावश्यकं तथा भक्तेरपि कर्म्ममिश्रत्वमावश्यकमेव, देवर्षिपित्राद्यर्हणलक्षणस्य नित्यकर्म्मणोऽकरणे प्रत्यवायश्रवणादित्यत आह यथेति। मूलात् प्रथमविभागाः स्कन्धाः तद्विभागा भुजास्तेषामप्युपशाखाः-उपलक्षणं पत्रपुष्पादयोऽपि तृप्यन्ति। न तु मूलसेकं विना स्वस्वनिषेचनेन तथैव अच्युतेज्यैव सर्व्वार्हणमच्युतस्य पूजायां सर्व्व एव पूजिताः स्युरित्यर्थः। नन्वशक्तस्यैव भवत्वेतत्, भक्तेन तु अच्युतस्य पूजा कर्त्तव्या देवादीनाञ्च, यथा मूलस्य स्कन्धादीनाञ्च सेके न दोषः प्रत्युत गुण एवेत्याशंक्य दृष्टान्तान्तरमाह दृष्टान्तद्वयेन। प्राणस्योपहारो भोजनं तस्मादेवेन्द्रियाणां तृप्तिः, न तु तत्तदिन्द्रियेषु पृथक् पृथगन्नलेपात् प्रत्युत नयनकर्णादिष्वान्ध्यबाधिर्य्याद्युत्पादनात् दोष एव॥ १४॥ ❀ ❀ अच्युतस्य सर्व्वमूलत्वं दृष्टान्तद्वयेनाह। यथैव वारः जलानि वर्षाकाले सूर्य्याद्भवन्ति ग्रीष्मे तस्मिन्नेव प्रविशन्तीत्युपादानकारणं यथा च भूतानि भूमाविति। गुणप्रवाहः गुणमयः प्रपञ्चः॥ १५-१६॥ ❀ ❀ ननु गुणमयस्य विश्वस्य गुणातीतो हरिः कथं कारणं, न हि मृन्मयस्य घटस्य मृदतीतं वस्तूपादानकारणं भवितुमर्हति। उपादानत्वे च हरेः कथं वा निर्व्विकारत्वमित्यत आह। यथा अभ्रतमःप्रकाशा नभसि दृश्यमानाः सूर्य्यादेव भवन्ति तत्रैव लीयन्ते च सूर्य्यादिति पूर्व्वेणानुषङ्गः। हिमोऽपि सूर्य्यादेव भवति यद्वक्ष्यते 'प्राणादिभिः स्वविभवैरुपगूढमन्यो मन्येत सूर्य्यमिव मेघहिमोपरागैरि'ति उपरागशब्देन दुष्टजीवाविष्टं तमःखण्डमेव तत्रोच्यते। हे भूपाः! सूर्य्यो मेघः हिमाद्यतीतोऽपि यथा तेषामुपादानकारणं तदपि यथा निर्व्विकारो भवति तथेत्यर्थः। यथैवाभ्रादिरहितेऽपि सूर्य्ये कारणत्वादभ्रादयः सन्तीत्युच्यते तथैव हरौ गुणरहितेऽपि अमूः शक्तयो रजआद्याः इत्येवं प्रकारेणायं जगत्प्रवाहः। तत्र यथाभ्रतमसी सूर्य्यस्य शुद्धज्योतिर्मात्रस्य न स्वरूपं दूरवर्त्तिमलिनःप्रकाशोऽपि न स्वरूपं तथैव हरेः रजस्तमसी शुद्धचिन्मात्रस्य तस्य सत्त्वं च न स्वरूपमित्येवं श्रीनारदस्य मते भगवतो गुणमयजगदुपादानत्वं निर्व्विकारत्वञ्च सिद्धमत एवात्मनैवाविक्रियमाणेन सगुणमगुणः सृजसि हरसि पासीति देवैर्वक्ष्यते। "यत उदयास्तमयौ विकृतेर्मृदिवाविकृतादिति" श्रुतिभिश्च 'नमो नमस्तेऽखिलकारणाय निष्कारणायाद्भुतकारणाये'ति गजेन्द्रेण च कारणस्य तदेवाद्भुतत्वं यदुपादानत्वेऽपि निर्व्विकारत्वं विवर्त्ताङ्गीकारे युक्तिसद्भावादद्भुतत्वं न स्यात्। व्याख्यातं तत्रैव स्वामिभिश्च कारणत्वे च मृदादिवद्विकारं वारयति अद्भुतकारणायेति॥ १७॥ ❀ ❀ तेन सर्व्वकारणत्वेन हेतुना कालो निमित्तं प्रधानमुपादानं पुरुषः कर्त्ता एतत्त्रितयात्मकत्वात् सर्व्वकारणं परमीशमद्धा साक्षादेव भजध्वं तद्भजनेनैव देवपित्रादिसर्व्वभजनं भवेदिति आत्मना मनसा एकभावेन मनस ऐकाग्र्येणेति वा आत्मनो यो भावान्तरामिश्रो भावो दास्यादीनामेकतरस्तेनेति सन्दर्भः॥ १८॥ ❀ ❀

तत्रानुकूलान् कांश्चन धर्म्मानाह दययेति ॥ १९ ॥ ❀ ❀ एवमुक्तप्रकारया भक्त्या भक्तेभ्यो भगवान् स्वात्मप्रदो भवतीति पूर्व्वमुपपादितं तल्लक्षणं विवृणोति। अपहृता निरस्ताः सकला एषणाः कामा यस्मात् स चासावमल आत्मा मनश्च यस्मिन् सतां मनसि निरन्तरमेधितया भावनया उपहूतः हे हरे! गोविन्द! मत्प्राणैकवल्लभेति आहूतः सन्निधापितः सन् अक्षरो हरिर्न सरति छिद्रवत् तत्रत्याकाशवत्, ततः सकाशान्नापसरति कीदृशमात्मानं स्वस्य स्वभक्तजनवशगत्वम् अयन् जानन् स्वीयां निष्ठां रक्षितुमिति भावः ॥ २० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

योगेनाष्टाङ्गेन सांख्येन तत्त्वविवेकेन न्यासस्वाध्याययोः सन्न्यासब्रह्मचर्याभ्याम् अन्यैर्वैराग्यवृत्तादिभिः ॥ १२ ॥ ❀ ❀ सर्वेषां श्रेयसामुपायानामर्थतो वस्तुतोऽवधिः फलम् आत्मा परमात्मा। यतः सर्वेषां भूतानामात्माश्रयः अंशी हरिरेव प्रियश्च आत्मदः आत्मपर्यन्तप्रदः "य आत्मदो धनदः" इति श्रुतेः "अहं भक्तपराधीन" इति स्मृतेः ॥ १३ ॥ ❀ ❀ तस्यैव सर्वात्मनः पूजनेन सर्वेषां पूजनं भवतीत्याह यथेति ॥ १४ ॥ ❀ ❀ भगवतः सर्वहेतुत्वमाह यथैवेति। भगवतः असङ्गत्वसूचनाय सूर्याद्वारः प्रभवन्ति तस्मिन्नेव प्रविशन्तीत्युक्तम्, सर्वोपादानकारणत्वद्योतनाय भूतानि भूमाविति चोक्तम्। गुणप्रवाहः प्रकृतिगुणमयः प्रपञ्चः ॥ १५ ॥ ❀ ❀ अत्र सूर्याद्वारः यथा प्रभवन्ति तस्मिन्नेव प्रविशन्ति चेत्यनेन जगतोऽब्रह्मात्मकत्वप्रतीतिमागतां निराकरोति यथा सवितुः प्रभा अनतिरिक्तापि परा भवति तथा तत्तस्मात् पूर्वोक्ताद्धरेः एतत्पदं बद्धजीवस्थानं विश्वं परमनतिरिक्तं सदतिरिक्तं भवति, अभिन्नत्वेऽपि भिन्नं भवति सृष्टिसंहारयोस्त्वस्येन्द्रियाणामाविर्भावतिरोभावो यथा तद्वदित्याह। यथा असव इन्द्रियाणि जाग्रति आविर्भवन्ति सुषुप्तौ तु सुप्तशक्तयोऽनाविर्भूता भवन्ति तद्वत्कचित्सृष्टिसमये विभातं प्रलये तु नेति बोध्यम्। नन्वेवंभूताद् ब्रह्मात्मकात् प्रपञ्चात् जीवः कुतो विमुच्यते इत्यत्राह। द्रव्यक्रियाज्ञानभिदाभ्रमात्यय इति द्रव्ये देहे गृहादौ च अहमिति ममेति क्रियायामैहिकामुष्मिकसाधने काम्ये कर्मणि इयं परमपुरुषार्थरूपेति ज्ञानभिदासु कपिलकणादबौद्धादिज्ञानभेदेषु इदं श्रेयस्करमिदं श्रेयस्करमिति च यो भ्रमः संसारहेतुस्तस्यात्ययस्तस्माद्धरेर्जगदात्मन उपास्यादेव भवति ॥ १६ ॥ ❀ ❀ असङ्गत्वं ब्रह्मणः सूर्यदृष्टान्तेन सूचितमाकाशदृष्टान्तेन प्रपञ्चयति यथेति। अभ्रतमःप्रकाशाः रजस्तमःसत्त्वस्थानीयाः नभोऽदूषका एव भवन्ति उत्पद्यन्ते न भवन्ति विलीयन्ते एवं ब्रह्मणि शक्तयस्तच्छक्तिगुणाः भवन्ति विलीयन्ते च किं बहुना एवं ब्रह्मदूषकः सर्वोऽपि प्रवाहः जगत्सृष्टिसंहारप्रवाहः ॥ १७ ॥ ❀ ❀ तेन सर्वहेतुत्वेन अशेषदेहिनां ब्रह्मादीनामखिलजीवानामंशभूतानामात्मानमाश्रयमंशिनमेकमेव परेशं परनियन्तारं कालं प्रधानं चेति अचेतनरूपशक्तिद्वयरूपेण पुरुषमिति चेतनभूतांशरूपेण चानेकं स्वतेजसा ध्वस्तगुणप्रवाहम् आत्मन उपासकस्यांशस्य य एकभावः अंश्यनतिरिक्तस्थित्यादिमत्त्वं तेन अद्धा भजध्वम् ॥ १८ ॥ ❀ ❀ शीघ्रं तत्तोषकारणमाह दययेति ॥ १९ ॥ ❀ ❀ एवं दयादिगुणयुक्तेन भजनेन तुष्टो भगवान् स्वभक्तं कदाचिन्न त्यजतीत्याह अपहत इति। अपहताः विगताः सकला एषणा मनोरथाः यस्मात् स चासावमल आत्मा मनस्तस्मिन् सतां मनसि अविरतमेधितया प्रवृद्धया भावनया उपहूतः ध्यातो हरिः आत्मनो निजजनवशगत्वमयन् अवगच्छन् छिद्रवत्तत्रत्याकाशवत्ततो न सरति न गच्छति ॥ २० ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

श्रुतेन वेदान्तादिश्रवणेन। तपसा व्रतोपवासादिना। वचोभिः शास्त्रव्याख्यानैः। चित्तवृत्तिभिः नानार्थकल्पनसामर्थ्यैः। बुद्ध्या वा निपुणया शास्त्रावधारणसमर्थया। इन्द्रियाणां राधसा वस्तुविवेचनसामर्थ्येन ॥ ११ ॥ ❀ ❀ योगेन प्राणायामादिना। साङ्ख्येन देहादिव्यतिरिक्तात्मज्ञानमात्रेण संन्यासेन, स्वाध्यायेन वेदाध्ययनेन। अन्यैश्च दानतीर्थपर्यटनादिभिः श्रेयस्साधनैरपि किम् ॥ १२ ॥ ❀ ❀ नन्वेषां जन्मादीनां नानाफलसाधनानां कथं हरिसेवाभावमात्रेण वैयर्थ्यमित्याशङ्क्य युक्त्या तत्प्रतिपादयति—श्रेयसामिति। सर्वेषामपि श्रेयसां फलानामवधिः परा काष्ठा अर्थतः विचारतः आत्मैव, आत्मार्थत्वेनैवान्येषां प्रियत्वात्। हीति निश्चितमेतत्। "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति श्रुतेर्लोके तथा दर्शनाच्च। भवतु फलानामात्मार्थत्वे हरेः किमायातमित्यत आह—सर्वेषामिति। सर्वेषामपि भूतानां प्राणिनामात्मा हरिरेव, ऐश्वरेणात्मप्रदश्च प्रियश्च परमानन्दरूपत्वात्। तथा च जन्मादिकं भगवत्सेवायोग्यमपि तत्सेवाराहित्येन तत्तोषकारणं न भवति यदि तदा तस्य वैयर्थ्यमेवेति भावः ॥ १३ ॥ ❀ ❀ ननु हरिसन्तोषो मा भवतु तथापि कर्मभिस्तत्तद्देवताप्रसादनिमित्तानि फलानि तु भविष्यन्त्येवेत्याशङ्क्य तानि फलान्यपि भगवत्सन्तोषपूर्वकाण्येव, तदभावे तु भगवद्विमुखानां न तान्यपीति सदृष्टान्तमाह—यथेति। यथा तरोर्वृक्षस्य मूलनिषेचनेनैव तस्य स्कन्धादयस्तृप्यन्ति फलन्ति च, न तेषां पृथक्सेचनेन किञ्चित् फलं भवति, तत्करणमशक्यं च। प्राणस्योपहारो भोजनं तस्मादेव यथा सर्वेन्द्रियाणां तृप्तिर्न तु तत्तदिन्द्रियेषु पृथक्पृथगन्नलेपनेन, तथात्वे प्रत्युत चक्षुश्श्रोत्रादेरान्ध्यत्वबधिरत्वादिप्रसङ्गात्, तथैव सर्वेषां देवपित्रादीनामर्हणं पूजनमच्युतस्य भगवत इज्या पूजनमेव, न पृथक् सर्वेषां प्रसादनस्याशक्यत्वादिति भावः।

मूलात्प्रथमविभक्ताः स्कन्धास्ततो विभक्ता भुजास्ततोऽपि विभक्ताः उपशाखाः ॥ १४ ॥ ❀ ❀ ननु मूलत्वादेव मूलसेचनेन तरुशाखादेस्तृप्तिर्भोजनस्यापि सर्वेन्द्रियपोषकत्वादेव तेन सर्वेन्द्रियाणां तृप्तिर्युक्ता, हरिसेवातः कथं सर्वेषां सेवा स्यादित्याशङ्क्य तस्यापि सर्वमूलत्वं सदृष्टान्तमाह—यथेति । यथैव वारः जलानि वर्षाकाले सूर्यात् प्रभवन्ति पुनश्च ग्रीष्मे तस्मिन् सूर्ये एव प्रविशन्ति । अस्य दृष्टान्तस्य शास्त्रीयत्वेन लोके अप्रसिद्धत्वात्प्रसिद्धं लौकिकदृष्टान्तान्तरमाह—भूतानीति, स्थिरजङ्गमात्मकानि भूतानि देहा यथा भूमौ प्रभवन्ति भूमौ प्रविशन्ति च, तथा गुणप्रवाहश्चेतनाचेतनात्मकः प्रपञ्चः सृष्टिसमये हरेः सकाशादेव प्रभवति प्रलयकाले तस्मिन्नेव लीयते च । भूमिदृष्टान्तेनैव हरावेव तिष्ठति चेत्यपि ज्ञेयम् ॥ १५ ॥ ❀ ❀ अतो हर्युपादानकत्वाद्विश्वं न ततः पृथगित्याह—एतदिति । एतद्विश्वं सकृत् कदाचित् सृष्टिसमये विभातं स्फुरितं जगदात्मनो भगवतस्तत् 'सर्वं विष्णुमयं जगत्' इत्यादिशास्त्रप्रसिद्धं परं सर्वोत्तमं पदं स्वरूपमेव, तदुपादानत्वान्न ततः पृथगित्यर्थः । तत उद्गमे दृष्टान्तमाह—सवितुरिवेति, यथा सूर्यादुद्गता प्रभा ततो भिन्ना न भवति तथेत्यन्वयः । ननु तर्हि भगवतो नित्यत्वाज्जगतः कादाचित्कत्वं कथमित्याशङ्क्य दृष्टान्तेन स्पष्टयति—यथेति । यथा जाग्रदवस्थायां असव इन्द्रियाणि स्फुरन्त्यपि सुषुप्तौ तु सुप्तशक्तयो भवन्ति न स्फुरन्ति, तथा जगदपि सृष्टिसमये स्फुरदपि प्रलयकाले लीनसत्त्वादिशक्तित्वान्न स्फुरतीत्यर्थः । नन्वेवं तर्हि विकारिजगदुपादानत्वेन तदाधारत्वेन च भगवतोऽपि विकारित्वप्रसङ्गः स्यादित्याशङ्क्य 'नमो नमस्तेऽखिलकारणाय निष्कारणायाद्भुतकारणाय' इति गजेन्द्रोक्त्याऽद्भुतकारणत्वेन न लोकदृष्टान्ते भगवतो विकारित्वं युक्तमित्यभिप्रेत्य तं विशिनष्टि—द्रव्येति । द्रव्याणि पञ्चमहाभूतपञ्चतन्मात्रात्मकानि, क्रिया एकादशेन्द्रियाणि, ज्ञानानि इन्द्रियाधिष्ठातारो देवाः, तेषां भिदात्मकभ्रमस्यात्ययः असंश्लेषो यत्र सः ॥ १६ ॥ ❀ ❀ उक्तमेवासङ्गत्वं दृष्टान्तेन स्पष्टयति—यथेति । भूपत्वाद्विवेकिभिर्युष्माभिः सम्यग्विचारणीयमित्यभिप्रायेण सम्बोधयति—हे भूपा इति । यथा नभसि आकाशे अभ्रतमःप्रकाशा अनुक्रमात् कदाचिद्भवन्ति उपलभ्यन्ते न भवन्ति नोपलभ्यन्ते लीयन्ते च, न हि तैराकाशस्य संश्लेषोऽस्ति येन तस्य तद्धर्मयोगित्वं स्यात्, एवं परे ब्रह्मणि रजस्तमःसत्त्वमित्यमूः शक्तयोऽपि । तुशब्दोऽप्यर्थे । कदाचिदुद्भवन्ति कदाचिच्च लीयन्ते इत्येवमयं जगत्प्रवाहो भगवति । नहि तेन भगवतः संश्लेषोऽस्ति येन तद्धर्मभागित्वं स्यादित्यर्थः ॥ १७ ॥ ❀ ❀ फलितमाह—तेनेति । तेन सर्वमूलत्वेन हेतुना अशेषदेहिनामात्मा स्वरूपमपि स एव, कालो निमित्तकारणमपि स एव, प्रधानमुपादानमपि स एव, पुरुषः कर्त्ताऽपि स एव, परेशः परेषां ब्रह्मादीनामपीशो नियन्ता अन्तर्याम्यपि स एव, सर्वात्मकत्वेऽपि स्वतेजसा चिच्छक्त्या ध्वस्तो निरस्तो दूरीकृतो गुणप्रवाहः संसारो यस्मात्स तथा । अतस्तमेवैकमात्मैकभावेन आत्मनः अभेदेन अद्धा साक्षात् फलव्यवधानमन्तरेण भजध्वमित्यन्वयः ॥ १८ ॥ ❀ ❀ एवं सर्वात्मा भगवान् कथं तुष्येदित्यपेक्षायां तत्साधनमाह—दयेति । सर्वात्मकत्वात् सर्वभूतेषु प्राणिमात्रेषु दयया तेषां दुःखनिवर्त्तनेच्छया जनार्दनः अविद्यानिवर्त्तको भगवान् आशु शीघ्रमेव तुष्यतीत्यन्वयः । नन्वेवं सर्वत्र दयया स्वनिर्वाहः कथं स्यादिति तत्राह—सन्तुष्टयेति, येन केनचित् प्रारब्धलब्धेनैव सन्तुष्टयेत्यन्वयः । वाशब्दोऽवधारणे । नन्विन्द्रियाणां प्रबलत्वेन तदाकृष्टे मनसि कथं सन्तोषः स्यात्तत्राह—सर्वेति । सर्वेषां इन्द्रियाणामुपशान्त्या विषयेभ्यो निग्रहेण चकाराच्छ्रवणादिना चेत्यर्थः ॥ १९ ॥ ❀ ❀ तस्मिन् सन्तुष्टे किं फलमित्यपेक्षायां सन्तुष्टश्चात्मानमपि भक्ताधीनं करोति, अन्यफलदाने कः सन्देह इत्याह—अपहतेति । अपहता निरस्ताः सकलाः पुत्रवित्तलोकादिविषया एषणाः कामा यस्मात् स चासावत एव अमलश्चात्मान्तःकरणं तस्मिन् सतामन्तर्हृदये अविरतं निरन्तरमेधितया भावनया भक्त्या उपहूतः सन्निधापितः सन्नक्षरोऽप्रच्युतभगो भगवानात्मनो निजजनवशत्वं स्वभक्ताधीनत्वमयन् अवगच्छंस्ततो न सरति नापयातीत्यन्वयः । तत्र दृष्टान्तमाह—छिद्रवदिति, हृदयाकाशवदित्यर्थः । हि यस्मादेवं तस्मात् फलान्तरदाने कः सन्देहः ? ॥ २० ॥

## भाषानुवादः

वास्तवमें समस्त कल्याणोंकी अवधि आत्मा ही है और आत्मज्ञान प्रदान करनेवाले श्रीहरि ही सम्पूर्ण प्राणियोंकी प्रिय आत्मा हैं ॥ १३ ॥ ❀ ❀ जिस प्रकार वृक्षकी जड़ सींचनेसे उसके तना, शाखा, उपशाखा आदि सभीका पोषण हो जाता है और जैसे भोजनद्वारा प्राणोंको तृप्त करनेसे समस्त इन्द्रियाँ पुष्ट होती हैं, उसी प्रकार श्रीभगवान्की पूजा ही सबकी पूजा है ॥ १४ ॥ ❀ ❀ जिस प्रकार वर्षाकालमें जल सूर्यके तापसे उत्पन्न होता है और ग्रीष्म-ऋतुमें उसीकी किरणोंमें पुनः प्रवेश कर जाता है तथा जैसे समस्त चराचर भूत पृथ्वीसे उत्पन्न होते हैं और फिर उसीमें मिल जाते हैं, उसी प्रकार चेतनाचेतनात्मक यह समस्त प्रपञ्च श्रीहरिसे ही उत्पन्न होता है और उन्हींमें लीन हो जाता है ॥ १५ ॥ ❀ ❀ वस्तुतः यह विश्वात्मा श्रीभगवान्का वह शास्त्रप्रसिद्ध सर्वोपाधिरहित स्वरूप ही है । जैसे सूर्यकी प्रभा उससे भिन्न नहीं होती, उसी प्रकार कभी-कभी गन्धर्व-नगरके समान स्फुरित होनेवाला यह जगत् भगवान्से भिन्न नहीं है; तथा जैसे जाग्रत्-अवस्थामें इन्द्रियाँ क्रियाशील रहती हैं; किन्तु सुषुप्तिमें उनकी शक्तियाँ लीन हो जाती हैं, उसी प्रकार यह जगत् सर्गकालमें भगवान्से प्रकट हो जाता है और कल्पान्त होनेपर उन्हींमें लीन हो जाता है । स्वरूपतः तो भगवान्में द्रव्य, क्रिया और ज्ञानरूपी त्रिविध अहङ्कारके कार्योंकी तथा उनके निमित्तसे होनेवाले भेदभ्रमकी सत्ता है ही नहीं ॥ १६ ॥ ❀ ❀ नृपतिगण ! जैसे बादल, अन्धकार और प्रकाश—ये

क्रमशः आकाशसे प्रकट होते हैं और उसीमें लीन हो जाते हैं; किन्तु आकाश इनसे लिप्त नहीं होता, उसी प्रकार ये सत्त्व, रज और तमोमयी शक्तियाँ कभी परब्रह्मसे उत्पन्न होती हैं और कभी उसीमें लीन हो जाती हैं। इसी प्रकार इनका प्रवाह चलता है; किन्तु इससे आकाशके समान असङ्ग परमात्मामें कोई विकार नहीं होता ॥ १७ ॥ ❀ ❀ अतः तुम ब्रह्मादि समस्त लोकपालोंके भी अधीश्वर श्रीहरिको अपनेसे अभिन्न मानते हुए भजो, क्योंकि वे ही समस्त देहधारियोंके एकमात्र आत्मा हैं। वे ही जगत्के निमित्तकारण काल, उपादानकारण प्रधान और नियन्ता पुरुषोत्तम हैं तथा अपनी कालशक्तिसे वे ही इस गुणोंके प्रवाहरूप प्रपञ्चका संहार कर देते हैं ॥ १८ ॥ ❀ ❀ वे भक्तवत्सल भगवान् समस्त जीवोंपर दया करनेसे जो कुछ मिल जाय उसीमें सन्तुष्ट रहनेसे तथा समस्त इन्द्रियोंको विषयोंसे निवृत्त करके शान्त करनेसे शीघ्र ही प्रसन्न हो जाते हैं ॥ १९ ॥ ❀ ❀ पुत्रैषणा आदि सब प्रकारकी वासनाओंके निकल जानेसे जिनका अन्तःकरण शुद्ध हो गया है, उन संतोंके हृदयमें उनके निरन्तर बढ़ते हुए चिन्तनसे खिंचकर अविनाशी श्रीहरि आते हैं और अपनी भक्ताधीनताको चरितार्थ करते हुए हृदयाकाशकी भाँति वहाँसे हटते नहीं ॥ २० ॥

न भजति कुमनीषिणां स इज्यां हरिरधनात्मधनप्रियो रसज्ञः।
श्रुतधनकुलकर्मणां मदैर्ये विदधति पापमकिञ्चनेषु सत्सु ॥ २१ ॥
श्रियमनुचरतीं[1] तदर्थिनश्च द्विपदपतीन् विबुधांश्च यत्स्वपूर्णः[2]।
न भजति निजभृत्यवर्गतन्त्रः कथममुमुद्विसृजेत्पुमान् कृतज्ञः ॥ २२ ॥

मैत्रेय उवाच

इति प्रचेतसो राजन्नन्याश्च भगवत्कथाः। श्रावयित्वा ब्रह्मलोकं ययौ स्वायम्भुवो मुनिः ॥ २३ ॥
तेऽपि तन्मुखनिर्यातं यशो लोकमलापहम्। हरेर्निशम्य तत्पादं ध्यायन्तस्तद्गतिं ययुः ॥ २५ ॥
एतत्तेऽभिहितं क्षत्तर्यन्मां त्वं परिपृष्टवान्। प्रचेतसां नारदस्य संवादं हरिकीर्तनम् ॥ २५ ॥

अन्वयः—अधनात्मधनप्रियः रसज्ञः सः हरिः ये श्रुतधनकुलकर्मणाम् मदैः अकिंचनेषु सत्सु पापम् विदधति कुमनीषिणाम् इज्याम् न भजति ॥ २१ ॥ ❀ ❀ यत् स्वपूर्णः निजभृत्यवर्गतंत्रः अनुचरंतीम् श्रियम् च तदर्थिनः द्विपदपतीन् विबुधान् न भजति अमुम् कृतज्ञः पुमान् कथम् उद्विसृजेत् ॥ २२ ॥ ❀ ❀ राजन् इति स्वायंभुवः मुनिः प्रचेतसः अन्याः भगवत्कथाः च श्रावयित्वा ब्रह्मलोकम् ययौ ॥ २४ ॥ ❀ ❀ ते अपि तन्मुखनिर्यातम् लोकमलापहम् हरेः यशः निशम्य तत्पादम् ध्यायंतः तद्गतिम् ययुः ॥ २४ ॥ ❀ ❀ क्षत्तः यत् माम् त्वम् परिपृष्टवान् एतत् प्रचेतसाम् नारदस्य हरिकीर्तनम् संवादम् ते अभिहितम् ॥ २५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

सतामेव वश्योऽसावसतां तु पूजामपि न गृह्णातीत्याह नेति। कुमनीषिणां कुत्सितमतीनाम्। अधनाश्च ते आत्मधनाश्च भगवद्धनास्ते प्रिया यस्य। रसज्ञो भक्तिसुखज्ञः। के कुमनीषिणस्तानाह। श्रुतादिनिमित्तैर्मदैर्ये सत्सु पापं तिरस्कारं कुर्वन्ति ॥ २१ ॥ ❀ ❀ भक्ताधीनत्वं प्रपंचयन्नाह। अनुवर्तमानां संसेवमानामपि श्रियं तदर्थिनः सकामान् द्विपदपतीन्नरेन्द्रान्विबुधान् देवानपि यो नानुवर्तते। यतः स्वेनैव पूर्णोऽतः स्वभृत्यवर्गानुरक्त एव एवंभूतः कृतज्ञो भगवानमुम्। ईषदपि कथं परित्यजेत् ॥ २२ ॥ ❀ ❀ प्रचेतसः कर्मभूतान्। इत्येवं भगवन्माहात्म्यं श्रावयित्वा। अन्याश्च 'नूनं सुनीतेः' इत्यादिध्रुवचरिताद्याः। 'सत्रेऽगायत्प्रचेतसाम्' इत्युक्तत्वात् ॥ २३ ॥ ❀ ❀ तेऽपि प्रचेतसः तद्गतिं विष्णुलोकम् ॥ २४ ॥ ❀ ❀ प्रचेतसां नारदस्य च संवादरूपमेतदाख्यानं तेऽभिहितम्। हरेः कीर्तनं यस्मिंस्तत् ॥ २५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यद्वा—अधुना अकिंचना निष्कामा एवात्मनो धनानि प्रियाश्च यस्य सः। धनपुत्रादिषु ममतां परित्यज्य मय्येवामी ममतां दधत इति भक्तानां प्रेमरसं जानातीति रसज्ञः। पापं निन्दापि तद्वक्ष्यते सकर्मण उद्दिश्य "सतो विनिंदन्ति हरिप्रियान् खलाः" इति ॥ २१ ॥ ❀ ❀ भक्तानां भगवत्येव ममता नान्यत्र तथैव भगवतो भक्तेष्वेव ममतेति भक्ताधीनत्वं प्रपंचयति।

---

१. प्रा० पा०—मनुसरतस्तदर्थि०। २. प्रा० पा०—यत्सुपूर्णः।

श्रियं समष्टिसम्पत्तिरूपाम्। अनुचरन्तीं स्वसम्पत्तिवृद्ध्यर्थमनुवर्त्तमानाम्। तदर्थिनः व्यष्टिसम्पदर्थिनो द्विपदपतीन्नरेन्द्रान्विबुधान्देवानपि न भजन्ति नापेक्षन्ते यतः स्वेनैव पूर्णः स्वरूपत्वेपि निजभृत्यवर्गतन्त्र इत्यधीनत्वमप्यन्यस्येवास्य वास्तवं न सोपाधिकमित्यर्थः। अमुमेवंभूतमुदीषदपि कथं विसृजेत्। रसज्ञ इति। यथा प्रेमरसज्ञो भगवानुक्तस्तथा भक्तोपि भगवत्प्रेमरसज्ञ इत्युभावेव जगत्यस्मिन् रसज्ञाविति भावः। ननु तर्हि भक्तस्य भगवद्वशत्वमुचितमेव भगवतोपि भक्तवश्यत्वे रस एवोपाधिरभूत्। मैवम्। रसो हि विभावादिसंवलितः स्थायिभावः स्थायी च प्रेमा रसापरपर्यायः स च स्वाभाविकममत्वातिशयविषयीभूतभगवत्सुखकामिता भक्ताश्रयैव तस्याश्च निर्निमित्तत्वात्। भगवतश्च सुखपूर्णत्वेऽपि तस्याः सुखातिशयप्रदत्वं श्रुतिस्मृतिप्रसिद्धं निष्कारणकमेवातः कथमुपाधित्वं तेन भगवतः स्वाभाविकमेव प्रेमवशत्वमायातम्। प्रेमा च स्वाधारं स्वीकृतीकरोतीति भक्तवश्यत्वम् ॥ २२ ॥ ❀ ❀ राजन्निति। भक्तिरसेन दीप्यमान हे विदुरेत्यर्थः। अन्याश्च ध्रुवादिसम्बन्धिनीः कथाः ॥ २३ ॥ ❀ ❀ तेऽपि प्रचेतसोपि। तन्मुखान्नारदास्यात्। निर्यातं निर्गतम्। हरेर्यशः उभयत्र तत्पदं हरिं ब्रूते। गतिरत्र पार्षदादिरूपैव ज्ञेया ॥ २४ ॥ ❀ ❀ क्षत्तरिति। न जातिस्मारणमपि तु त्वमधुना शकलीकृताखिलाघो जात इति भावः। 'क्षद-शकलीकरणे' धातुः ॥ २५ ॥

## श्रीमद्वीरराघवव्याख्या

सतां वश्योऽसावसतां पूजामपि न गृह्णातीत्याह नेति। अधनाश्चात्मधनाश्च भगवद्धनास्ते प्रिया यस्य स च मम प्रिय इति भगवदुक्तेः भक्तसङ्गजन्यानन्दरसज्ञः स हरिः कुमनीषिणां कुत्सितमतीनामिज्यां न भजति न गृह्णाति के कुमनीषिणस्तत्राह। श्रुतादीनां मदाः श्रुतादिनिमित्ता मदास्तैरन्धा अकिञ्चनेषु विरागिषु सत्सु ये पापं तिरस्कारं विदधति कुर्वन्ति ॥ २१ ॥ ❀ ❀ भक्तपराधीनत्वमेव प्रपञ्चयंस्तं को न भजेदित्याह श्रियमिति। अनुचरतीमनुवर्तमानामपि श्रियं तदर्थिनः तां श्रियमर्थयन्ते इति तथोक्तान् श्रीकटाक्षलेशकाङ्क्षिणः द्विपदपतीन्नरेन्द्रान्विबुधान् देवांश्च निजभक्तवर्गरक्तो भगवान् न भजति नानुवर्तते कुतः यः स्वपूर्णः स्वत एवावाप्तसमस्तकामत्वात् न श्र्यादीन् भजति एवंभूतममुं भक्तवत्सलं रसज्ञः पुमान् कथमुद्विसृजेत् ॥ २२ ॥ ❀ ❀ इमं संवादमुपसंहरति मुनिः। इतीति त्रिभिः। हे राजन्! विदुर! यमाभिप्रायेण राजन्निति सम्बोधनमित्युक्त्वा अन्याश्च भगवत्कथाः प्रचेतसः प्रति श्रावयित्वा स्वायंभुवो नारदो मुनिः सत्यलोकं ययौ ॥ २३ ॥ ❀ ❀ ततस्ते प्रचेतसः नारदमुखनिःसृतं सकललोकाघहरं भगवद्यशो निशम्य भगवच्चरणारविन्दं ध्यायन्तस्तल्लोकमापुः ॥ २४ ॥ ❀ ❀ हे क्षत्तः! त्वं मां प्रति यत्पृष्टवान् प्रचेतसां नारदस्य च संवादव्याजं हरिकीर्तनं ते तुभ्यं मयाभिहितम् ॥ २५ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

व्यतिरेकमाह न भजतीति। अकिञ्चनेषु मदहेतुधनरहितेषु सत्सु श्रुतधनकुलकर्मणां मदैश्च ये पापमपराधं विदधति स हरिस्तेषां कुमनीषिणां पुंसामिज्यां यागादिपूजां न भजति स्वीकृत्य फलं न ददातीत्यन्वयः। कीदृशो हरिरधना हिरण्यादिधनरहिताश्चात एवात्मधनाश्चाधनात्मधनास्त एव प्रिया यस्य स तथा तेषां प्रियो वा। अस्मिन्नर्थे इदं प्रमाणम् "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इति च प्रियत्वे निमित्तमाह रसज्ञ इति। भक्तैः क्रियमाणं रसमनुरागं भक्तिं जानातीति रसज्ञः "रसो रागे विषे वीर्ये" इति यादवः "रागोऽनुरागे लाक्षादौ" इति च, श्रुतं च धनं च कुलं च कर्माणि च तानि तथा तेषां मदैर्बुद्धिभ्रंशहेतुवृत्तिविशेषैः ॥ २१ ॥ ❀ ❀ अस्मिन्नर्थेऽर्थवादं प्रमाणयति श्रियमिति। द्विपदपतीन्मनुष्यप्रधानान् तदर्थिनः श्रीप्रसादप्रार्थनाशीलान् स्वपूर्ण इत्ययं तदपेक्षामन्तरेण स्वापेक्षाभावे हेतुः निजभृत्यवर्गतन्त्र इति। जयस्तम्भप्रकटनार्थः, अन्यथा लक्ष्म्यादीनामभक्तत्वेन पृथक्करणं प्रसज्येत न च तद्युक्तं निजवने तुलसीभिरीशमभ्यर्चतीति लक्ष्म्या अपि मायापटलान्तरभावेऽपि सुखात्मकभक्त्या तत्पूजाविधानान् उद्विसृजेत् उद्विग्नो भूत्वा त्यजतीत्यर्थः ॥ २२ ॥ ❀ ❀ भवत्पूर्वजाः सर्वेऽपि भगवद्भक्तास्तत्र ध्रुवो विशेषभक्त इति तद्भक्तिफलं किञ्चिद्विशिनष्टि भवतामिति। चित्ररथ इति ध्रुवस्य नामान्तरं "भगवत्प्रसादपात्रत्वे कोऽपि चित्ररथानुगः यस्य प्रियश्रवाः कृष्णस्त्वात्मानमपि दत्तवान्" इति विष्णुपुराणोक्तेः रथ-गताविति धातोः चित्रा आश्चर्यभूता गतिर्यस्य स इति वा चित्रवन्नानावर्णो रथो यस्य स इति वा स्वमात्मानं राजयतीति स्वराट् राजान्तरवर्जितश्चक्रवर्तीत्यर्थः, गुरोः पितुर्दारा भार्याशब्दवाच्याः ॥ ० ॥ स्त्रैणं स्त्रीजितं पितरं पूजास्पदम् ॥ ० ॥ सर्वेषां वैमानिकानां धिष्ण्येभ्यः स्थानेभ्यः परमुत्तमम्, उत्तमत्वे कारणमाह मायेति। मायेन सर्वोत्तमेन विष्णुनाऽधिष्ठितं सन्निधाय स्थितमनिर्वाच्यमायाकल्पितमित्यङ्गीकारे 'सर्वोत्तमत्वाद्विष्णुर्हि-माय इत्येव शब्दितः' इति स्मृतिविरोधः स्यात्। तस्मिन्पक्षे मायाकल्पितमित्येव स्यान्न त्वधिष्ठितमिति मुनयो नृपाश्चार्वाक्स्थिता उदीक्षन्तं परं नापुरित्यत्र देवानुत्तममुनीन्विनानुसन्धेयं देवानत्युत्तममुनीन्विना के शैशुमारकं 'हरेर्गृहं प्रविष्टास्तु ध्रुवो देवाश्च तद्गताः' इति वचनात्। अनेनापि मायाधिष्ठितमित्यत्र पुल्लिङ्ग एवमायशब्दोऽत्र विवक्षितो न तु मायेत्याबन्तः ॥ ० ॥ उपसंहरति। तमिति। यस्यानुग्रहात् ध्रुवोऽत्युत्तमस्थानमाप तमीश्वरम् ॥ ० ॥ प्रचेतसामुक्तैव कथा कथिता नारदेन किमन्याश्च कथा उक्ताः सन्तीति

तत्राह। इतीति ॥ २३ ॥ ❀ ❀ यद्येतत्कथितं प्रचेतसां मुक्तिप्रापकं स्यात्तर्ह्येतदुपादेयं स्यात्तत्कथमित्याशङ्क्यानेनैवापेक्षितगतिरभूत्तेषामित्याह। तेऽपीति ॥ २४ ॥ ❀ ❀ हरेः कीर्तनं यत्र स तथा ॥ २५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

श्रियं जगत्सम्पत्तिरूपामनुचरन्तीं स्वसम्पत्तिवृद्ध्यर्थमनुवर्त्तमानां न तु भगवल्लक्ष्मीवन्निष्कामां तदर्थिनश्च ब्रह्मादीन् द्विपदपतीन् विबुधान् देवानपि यो नानुवर्त्तते यत् स्वरूपवैभवेनैव पूर्णः तथापि निजभृत्यवर्गतन्त्रः भक्तमात्रे दयापरवश इत्यर्थः ॥ २२-२७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

सतामेवायं वश्य एवमेव असतां तु पूजामपि न गृह्णातीत्याह। अधनाश्च ते आत्मधना भगवद्धनास्ते प्रिया यस्य सः यद्वा अधना अकिञ्चना निष्कामा एवात्मनो धनानि प्रियाश्च यस्य सः धनपुत्रादिषु ममतां परित्यज्य मय्येव ममताममी दधते इति भक्तानां प्रेमरसं जानातीति रसज्ञः कुमनीषित्वमाह श्रुतेति। श्रुतधनकुलैर्यानि कर्म्माणि योगादीनि तेषां मदैः पापं निन्दादिकं यद्वक्ष्यते कर्मिण एवोद्दिश्य सतो विनिन्दन्ति हरिप्रियान् खला इति ॥ २१ ॥ ❀ ❀ भक्तानां भगवत्येव ममता नान्यत्र यथा तथैव भगवतोऽपि भक्तेष्वेव ममतेति भक्ताधीनत्वं प्रपञ्चयति। श्रियं समष्टिसम्पत्तिरूपामनुचरतीं स्वसम्पत्तिवृद्ध्यर्थमनुवर्तमानां तदर्थिनः व्यष्टिसम्पदार्थिनः द्विपदपतीन् नरेन्द्रान् विबुधान् देवानपि न भजति नापेक्षते यतः स्वेनैव पूर्णस्वरूपत्वेऽपि निजभृत्यवर्गतन्त्र इत्यधीनत्वमप्यन्यस्यैवास्य वास्तवं न सोपाधिकमित्यर्थः। अमुमेवम्भूतम् उत् ईषदपि कथं विसृजेत् रसज्ञ इति यथा भक्तप्रेमरसज्ञो भगवानुक्तस्तथा भक्तोऽपि भगवत्प्रेमरसज्ञ इत्युभावेव जगत्यस्मिन् रसज्ञाविति भावः। ननु तर्हि भक्तस्य भगवद्वशत्वमुचितमेव भगवतोऽपि भक्तवश्यत्वे रस एवोपाधिरभूत्। मैवं रसो हि विभावादिसंवलितः स्थायिभावः स्थायी च प्रेमा रत्यपरपर्य्यायः, स च स्वाभाविकममत्वातिशयविषयीभूतभगवत्सुखकामिता भक्ताश्रयैव, तस्याश्च निर्निमित्तत्वात् भगवतश्च सुखपूर्णत्वेऽपि तस्याः सुखातिशयप्रदत्वं श्रुतिस्मृतिप्रसिद्धं निष्कारणमेवातः कथमुपाधित्वं तेन भगवतः स्वाभाविकमेव प्रेमवश्यत्वमायातं, प्रेमा च स्वाधारं स्वीकृतीकरोतीति भक्तवश्यत्वञ्च ॥ २२-२८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

निजजनवशगत्वं प्रपञ्चयति नेति द्वाभ्याम्। कुमनीषिणां स्वपराङ्मुखबुद्धीनाम् अधनाश्च ते आत्मा परमात्मैव धनं येषां ते प्रिया यस्य स हरिः ये श्रुतधनादिमदैः अकिञ्चनेषु सत्सु पापमवज्ञां विदधति कुर्वन्ति तेषामिज्यां पूजां न भजति ॥ २१ ॥ ❀ ❀ यो हरिः स्वपूर्णः स्वत एवावाप्तसमस्तकामः अतः अनुवर्ततीं श्रियं सकलां सम्पदं तदर्थिनश्च द्विपदपतीन् नरेन्द्रान् विबुधांश्च न भजति तेषां परतन्त्रो न भवति किन्तु निजभृत्यवर्गतन्त्रो भवति अमुं कृतज्ञः कथमुद्विसृजेत् ॥ २२ ॥ ❀ ❀ यः प्रिय इति। अस्मिन्नध्याये वर्णिताः अन्याः सत्रेऽगायत्प्रचेतसामिति पूर्वत्र सूचिता ध्रुवकीर्त्यन्तर्गताः भगवत्कथाः प्रचेतसः श्रोतॄन् श्रावयित्वा ॥ २३-२४ ॥ ❀ ❀ उपसंहरति प्रचेतसां नारदस्य सम्यक् वादः प्रश्नप्रतिवचनरूपं भाषणं यस्मिन् तत् एतत् हरिकीर्तनं ते तुभ्यं मयाभिहितम् ॥ २५ ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

सतां स्वभक्तानामेवं वश्योऽपि भगवान् असतां तु पूजामपि नाङ्गीकरोतीत्याह--नेति। स पूर्वोक्तो जगन्मूलभूतः सर्वफलदो हरिः कुमनीषिणां कुत्सितबुद्धीनां तु प्राणिनामिज्यां पूजामपि न भजति नाङ्गीकरोति। के ते कुमनीषिण इत्यपेक्षायामाह-- श्रुतेति। श्रुतादिनिमित्तैर्मदैर्ये अकिञ्चनेषु श्रुतधनाद्यभिमानरहितेषु सत्सु स्वभक्तेषु पापं विदधति तिरस्कारं कुर्वन्तीत्यर्थः। ननु तेषु ते तिरस्कारं कुर्वन्तु स्वपूजां कुतो नाङ्गीकरोतीत्याशङ्क्य स्वभक्तद्रोहेण कोपादेवेत्यभिप्रेत्य विशेषणद्वयम्--अधनाश्च ते आत्मधनाश्च भगवद्धनास्ते प्रिया यस्य स तथा रसज्ञः तेषां भक्तिरसं स्वप्रेमलक्षणं जानातीति तथा ॥ २१ ॥ ❀ ❀ अतो भगवद्विमुखो मूर्ख एवेत्याशयेनाह--श्रियमिति। एवं निजभृत्यवर्गतन्त्रः स्वभक्ताधीनोऽपि अनुचरतीं निरन्तरं सेवमानां श्रियं लक्ष्मीं तदर्थिनः श्रीकामान् द्विपदपतीन्नरेन्द्रान् विबुधांश्च यो न भजति नानुवर्त्तते। यत् यतः स्वेनैव परमानन्देन पूर्णस्तममुं कृतज्ञः कृतं तदुपकारं जानाति चेत् स पुमान् कथमुत् ईषदपि विसृजेत् परित्यजेत्। तमभजन् मूर्ख एव ज्ञेय इति भावः ॥ २२ ॥ ❀ ❀ इत्येवम्भूता वर्णितप्रकाराः कथा अन्याश्च 'सत्रे गायत् प्रचेतसाम्' इत्युक्तत्वान्नूनं सुनीतेः पतिदेवताया इत्याद्या ध्रुवसम्बन्धिनीर्भगवत्कथाः प्रचेतसः श्रावयित्वा स्वायम्भूर्ब्रह्मा तत्पुत्रो मुनिर्नारदो ब्रह्मलोकं ययाविव्यन्वयः। त्वमपि भगवद्भक्त्या विराजमानः कृतार्थ एव लक्ष्यसे इति सूचयन् सम्बोधयति--हे राजन्निति ॥ २३ ॥ ते प्रचेतसोऽपि तस्य नारदस्य मुखान्निर्यातं निस्सृतं

लोकमलापहं श्रवणादिपराणां रागलोभादिसर्वदोषनिवर्त्तकं हरेर्यशो निशम्य श्रुत्वा तेन शुद्धान्तःकरणात्स्तत्पदं तस्य भगवतः संसारादुद्धारकं चरणारविन्दं ध्यायन्तस्तद्गतिं स भगवानेव गम्यते इति गतिस्तां ययुः भगवत्सायुज्यं प्रापुरित्यर्थः ॥ २४ ॥ ❀ ❀ हे क्षत्तः 'के ते प्रचेतसो नाम कस्यापत्यानि सुव्रत' इत्यादिना यत्त्वं मां परिपृष्टवांस्तदेवं पूर्वोक्तप्रकारेण प्रचेतसां नारदस्य च संवादलक्षणमेतदाख्यानं ते तुभ्यं मया अभिहितं वर्णितम् । हरेः कीर्त्तनं यस्मिंस्तदिति स्वस्यापि एतदभिधाने हेतुर्दर्शितः । यद्येवं न स्यात्तदा न वर्णितं स्यादिति भावः । भगवद्भक्तस्य तव प्रेरणया हरिकीर्त्तनं जातमित्यादरसूचनार्थं सम्बोधनम् ॥ २५ ॥

भाषानुवादः

भगवान् तो अपनेको ( भगवान्को ) ही सर्वस्व माननेवाले निर्धन पुरुषोंपर ही प्रेम करते हैं; क्योंकि वे परम रसज्ञ हैं—उन अकिञ्चनोंकी अनन्याश्रया अहैतुकी भक्तिमें कितना माधुर्य होता है, इसे प्रभु अच्छी तरह जानते हैं। जो लोग अपने शास्त्रज्ञान, धन, कुल और कर्मोंके मदसे उन्मत्त होकर, ऐसे निष्किञ्चन साधुजनोंका तिरस्कार करते हैं, उन दुर्बुद्धियोंकी पूजा तो प्रभु स्वीकार ही नहीं करते ॥ २१ ॥ ❀ ❀ भगवान् स्वरूपानन्दसे ही परिपूर्ण हैं, उन्हें निरन्तर अपनी सेवामें रहनेवाली लक्ष्मीजी तथा उनकी इच्छा करनेवाले नरपति और देवताओंकी भी कोई परवा नहीं है। इतनेपर भी वे अपने भक्तोंके तो अधीन ही रहते हैं। अहो! ऐसे करुणासागर श्रीहरिको कोई भी कृतज्ञ पुरुष थोड़ी देरके लिये भी कैसे छोड़ सकता है ? ॥ २२ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—विदुरजी ! भगवान् नारदने प्रचेताओंको इस उपदेशके साथ-साथ और भी बहुत-सी भगवत्सम्बन्धी बातें सुनायीं। इसके पश्चात् वे ब्रह्मलोकको चले गये ॥ २३ ॥ ❀ ❀ प्रचेतागण भी उनके मुखसे सम्पूर्ण जगत्के पापरूपी मलको दूर करनेवाले भगवच्चरित्र सुनकर भगवान्के चरणकमलोंका ही चिन्तन करने लगे और अन्तमें भगवद्धामको प्राप्त हुए ॥ २४ ॥ ❀ ❀ इस प्रकार आपने जो मुझसे श्रीनारदजी और प्रचेताओंके भगवत्कथासम्बन्धी संवादके विषयमें पूछा था, वह मैंने आपको सुना दिया ॥ २५ ॥

श्रीशुक[1] उवाच

य एष उत्तानपदो मानवस्यानुवर्णितः । वंशः प्रियव्रतस्यापि निबोध नृप[2]सत्तम ॥ २६ ॥

यो नारदादात्मविद्यामधिगम्य पुनर्महीम् । भुक्त्वा विभज्य पुत्रेभ्य ऐश्वरं समगात्पदम् ॥ २७ ॥

इमां तु कौषारविणोपवर्णितां क्षत्ता निशम्याजितवादसत्कथाम् ।
प्रवृद्धभावोऽश्रु[3]कलाकुलो मुनेर्दधार मूर्ध्ना चरणं हृदा हरेः ॥ २८ ॥

विदुर उवाच

सोऽयमद्य महायोगिन् भवता करुणात्मना । दर्शितस्तमसः पारो यत्राकिञ्चनगो हरिः ॥ २९ ॥

श्री[4]शुक उवाच

इत्यानम्य तमामन्त्र्य विदुरो गजसाह्वयम् । स्वानां दिदृक्षुः प्रययौ ज्ञातीनां निर्वृताशयः ॥ ३० ॥

एतद्यः शृणुयाद्राजन् राज्ञां हर्यर्पितात्मनाम् । आयुर्धनं यशः स्वस्ति गतिमैश्वर्यमाप्नुयात् ॥ ३१ ॥

इति [5]श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामष्टा[6]दशसाहस्र्यां संहितायां चतुर्थस्कन्धे[7]
प्रचेतउपाख्यानं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

[8]इति चतुर्थः स्कन्धः समाप्तः ।

हरिः ॐ तत्सत्

अन्वयः—नृपसत्तम यः एषः मानवस्य उत्तानपदः वंशः सः अनुवर्णितः प्रियव्रतस्य अपि निबोध ॥ २६ ॥ ❀ ❀ यः नारदात् आत्मविद्याम् अधिगम्य पुनः महीम् भुक्त्वा पुत्रेभ्यः ताम् विभज्य ऐश्वरम् पदम् समगात् ॥ २७ ॥ ❀ ❀

---

१. प्राचीने पाठे 'श्रीशुक उवाच' अयमंशो न । २. प्रा० पा०—नृप सम्मतम् । ३. प्रा० पा०—भावाश्रु० । ४. प्राचीने पाठे 'श्रीशुक उवाच' न । ५. प्रा० पा०—श्रीभागवते । ६. प्राचीने पाठे 'ष्टादशसाहस्र्यां' अयमंशो न । ७. प्रा० पा०—चतुर्थे स्कन्धे । ८. प्रा० पा०—समाप्तश्च चतुर्थः स्कन्धः ।

क्षत्ता तु इमाम् कौषारविणा उपवर्णिताम् अजितवादसत्कथाम् निशम्य प्रवृद्धभावः अश्रुकलाकुलः मूर्ध्ना मुनेः चरणम् हृदा हरेः चरणम् दधार ॥ २८ ॥ ❁ ❁ महायोगिन् करुणात्मना भवता यत्र अकिंचनगः हरिः सः अयम् तमसः पारः अद्य दर्शितः ॥ २९ ॥ ❁ ❁ इति निर्वृताशयः विदुरः तम् आनम्य आमंत्र्य स्वानाम् ज्ञातीनाम् दिदृक्षुः गजसाह्वयम् प्रययौ ॥ ३० ॥ ❁ ❁ राजन् यः हर्यर्पितात्मनाम् राज्ञाम् एतत् शृणुयात् आयुः धनम् यशः स्वस्ति ऐश्वर्यम् गतिम् आप्नुयात् ॥ ३१ ॥

इत्येकत्रिंशोऽध्यायः ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

य एष वंशः सोऽनुवर्णितः ॥ २६ ॥ ❁ ❁ यः प्रियव्रतः ॥ २७–२९ ॥ ❁ ❁ स्वान् ज्ञातीन् दिदृक्षुः ॥ ३० ॥ ❁ ❁ राज्ञां एतत् चरितमिति शेषः ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीधरस्वामिविरचितायां भावार्थदीपिकाख्यायां टीकायामेकत्रिंशोऽध्यायः ॥३१॥ समाप्तोऽयं चतुर्थः स्कन्धः ॥ ४ ॥ श्रीकृष्णार्पणमस्तु ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

एष इति । तात्कालिकवर्णितत्वेन बुद्धिसंनिहितत्वादुक्तम् । नृपसत्तमेति । अहो धन्योऽयं मानवो वंशो यत्रैतादृशा ध्रुवादयो हरिभक्ता आसन्नहं तु तद्वंशकीर्तिं प्राप्तुमसमर्थ एवेति शोचमानं परीक्षितमुत्साहयति—त्वमपि नृपेषु सत्तमोसि यद्रक्षार्थं स्वयमेव विष्णुर्ब्रह्मास्त्रं ददाहेति भावः ॥ २६ ॥ ❁ ❁ श्रोतृजनप्रीत्यर्थं प्रियव्रतचरितं प्रस्तौति—य इति ॥ २७ ॥ ❁ ❁ अजितस्य हरेर्वादो यस्यां सत्कथायां ताम् यद्वा—अजितस्य हरेर्वादः कथनं येषां तेऽजितवादा ध्रुवाद्यास्तेषां सत्कथाम् । मुनेश्चरणं मूर्ध्ना हरेश्च हृदा दधार । यद्वा हरेर्हृदा हरिसम्बन्धिदृष्ट्या साक्षाद्धरिरेवायमिति दृष्ट्या हृच्छब्दस्य दृष्टिवाचकत्वे मानमाद्यपद्यमत्कृतव्याख्याशतकेऽवलोक्यम् ॥ २८ ॥ ❁ ❁ महायोगिन्निति । सर्वसामर्थ्यबोधनाय योगिनोपि परोद्धरणे समर्थाः किं पुनर्महायोगी त्वमिति भावः । तमसः संसारसमुद्रस्य यत्र पारे । हरिरकिंचनं प्राप्नोति किं पुनर्वक्तव्यमकिंचनो हरिं प्राप्नोतीति । यद्वा—अकिञ्चनैर्निरस्तदेहादिभावैर्गीयत इत्यकिञ्चनगः पारोऽत्र भक्तिमार्ग एव । तस्यैव भगवत्प्रापकत्वात् । 'भक्त्याहमेकया लभ्यः' इत्याद्युक्तेः ॥ २९ ॥ ❁ ❁ स्तुत्वा नत्वा च पुनः किमकार्षीदत्राह—इतीति । इत्युक्त्वा । स्वानामिति कर्मणि षष्ठी । निर्वृताशयः मैत्रेयद्वारा श्रीभगवदंगीकारानुसन्धानेनेति भावः । ज्ञातव्यांशाभावाद्वा जातानन्दः "यावतः कृतवान्प्रश्नान् क्षत्ता कौषारवाग्रतः । जातैकभक्तिर्गोविंदे तेभ्यश्चोपरराम ह ॥" इत्युक्तेः ॥ ३० ॥ ❁ ❁ एतच्छ्रोतुरैहिकामुष्मिकफलमाह—एतदिति ॥ ३१ ॥ ❁ ❁ श्रीमद्भागवते कृता गुणिगणैस्स्तव्या शुभा व्याकृतिस्स्वामिश्रीधरदण्डिभिः सुविशदा भावार्थदीपाभिधा । श्रीवंशीधरशर्मणा तदुपरि व्याख्याप्रकाशः कृतस्तुर्येऽनेन भवेद् वृषार्कतनयाधीशो हरिः प्रीतिमान् ॥१॥ अथास्य श्रवणादिमाहात्म्यं पाद्मे "विष्णुरुवाच । शृणु त्वं भोस्सुरवर स्कन्धं चैव चतुर्थकम् । तच्च मे ह्युदरं प्रोक्तं सकुक्षीकं महामते ॥ १ ॥ चतुर्थश्रवणेनैव कृतघ्नो मुक्तिमाप्नुयात् । इतिहासं मम मुखाच्छृणु त्वमघनाशकृत् ॥ २ ॥ मथुरायां पुरा कश्चिन्नाम्ना राजा परंतपः । धर्मशास्त्रानुसारेण प्रजापालनतत्परः ॥ ३ ॥ स कदाचिन्मृगयासक्तो वनं गत्वा मृगानहन् । रात्रि तस्मिन् मृगासक्ते सन्ध्याकालोऽभवत्तदा ॥ ४ ॥ ततः परतरं राजा द्विजाश्रममुपेयिवान् । सुदेवस्याश्रमे राजा सप्तरात्रं व्यवस्थितः ॥ ५ ॥ आतिथ्यमकरोद्राज्ञो यथाविधि महामुनिः । पञ्चमे दिवसे रात्रौ राजा दष्टोऽहिना मृतः ॥ ६ ॥ प्रभाते तं मृतं दृष्ट्वा सैन्यं दुःखसमन्वितम् । ऋषिर्जलं मन्त्रयित्वा ह्यभिषेकं चकार ह ॥ ७ ॥ समुत्थितोऽभून्नृपतिर्निद्रापाये यथा पुमान् । सैन्यं दृष्ट्वोत्थितं भूपं हर्षमाप तथा मुनिः ॥ ८ ॥ मुनिकर्म तु सैन्येन प्रोक्तं नृपतये तदा । राजा तमर्हयामास ततो गन्तुं प्रचक्रमे ॥ ९ ॥ आगत्य मथुरापुर्यां कालिन्दीनिकटे मखम् । चकार विधिना तत्र सुदेवोऽपि समागतः ॥ १० ॥ सुदेवमागतं दृष्ट्वा न बभाषे यदा नृपः । तदा मुनिर्गतः स्थानं निःश्वसन् क्रोधमूर्च्छितः ॥ ११ ॥ तेन दोषेण तद्यागो निष्फलत्वमगात्तदा । देवैरुक्ता नृपतये यज्ञे विफलता विधे ॥ १२ ॥ चिन्तासक्तः समाहूय विप्रान्पप्रच्छ तन्नृपः । केन पापेन भो विप्रा नष्टं यज्ञफलं मम ॥ १३ ॥ इति श्रुत्वा विचार्याशु विप्रैरुक्तमिदं हि तम् । महापापस्य करणाद्यद्दोषो जायते नृणाम् ॥ १४ ॥ स एव हि कृतघ्नस्य संजातस्ते नृपात्मज । एवमुक्त्वा गता विप्रा राजा चांडालतां गतः ॥ १५ ॥ कुष्ठाक्रान्तस्तु तद्देहो बहुकीटादिभिर्युतः । बभूव शृणु भो ब्रह्मंस्ततश्चक्रे नृपोऽटनम् ॥ १६ ॥ कदाचिद्दैवयोगेन कुरुक्षेत्रमुपेयिवान् । तत्र भागवती गाथा चतुर्थस्कंधसंभवा ॥ १७ ॥ तेन श्रुता देवलाच्च ततः पापचयो गतः । विमानमारुह्य गतो वैकुण्ठं तनुमुज्जहत् ॥ अतो भागवतीयां वै कीर्त्तिं को वक्तुमर्हति ॥ १८ ॥

इति श्रीखण्डनगरवासिश्रीवंशीधरशर्मगौडनिर्मिते श्रीमद्भागवतभावार्थदीपिकाप्रकाशे चतुर्थस्कंधे एकत्रिंशोऽध्यायः ॥ ३१ ॥
॥ समाप्तश्चायं चतुर्थस्स्कन्धः ॥ ४ ॥

### श्रीमद्वीरराघवव्याख्या

स्कन्धार्थमुपसंहरन्नुत्तरस्कन्धप्रवृत्तिनिमित्तभूतशङ्कामुत्थाप्याह। एष इति द्वाभ्याम्। मानवस्य मनुपुत्रस्य उत्तानपद एष वंशोऽनुवर्णितः। अथ प्रियव्रतस्य उत्तानपादानुजस्य नृपाणां सम्मतं वंशं निबोध शृणु॥ २६॥ ❀ ❀ तद्वंशबुभुत्सायै समासतस्तच्चरितमाह। यः प्रियव्रतः प्रथमं विरक्तया वनं प्रविष्टो नारदादात्मविद्यामधिगम्य प्राप्य पुनर्महीम्भुक्त्वा परिपाल्य पुत्रेभ्यः ऐश्वर्यं राज्यं विभज्य पदं भगवत्पदं समगात्सम्यक्साधनोपसंहारेणागात्॥ २७॥ ❀ ❀ विदुरमैत्रेयसंवादमुपसंहरति बादरायणिः। इदं त्विति त्रिभिः। कौषारविणा मैत्रेयेण उपवर्णितमजितस्य भगवतो वादः गुणानुवादः सतां कथाश्च तत्समाहाररूपमिदं तृतीयतुरीयस्कन्धात्मकं निशम्य विवृद्धेन भावेन स्नेहेन या अश्रूणां कला मात्रास्ताभिराकुलचित्तः क्षत्ता विदुरः मुनेर्मैत्रेयस्य चरणं मूर्ध्ना हरेश्चरणं हृदा दधार॥ २८॥ ❀ ❀ ततः हे तात! महायोगिन्! करुणात्मना दयालुना त्वया सोऽयं तमसः संसारस्य पारः पारप्राप्तिहेतुः उपायः दर्शितः यत्र तमसः पारे वर्तमानैरकिञ्चनैर्गम्यो भवति हरिः॥ २९॥ ❀ ❀ इत्येवं वदन्नानम्य प्रणम्य तमनुज्ञाप्य स्वानां ज्ञातीनां दिदृक्षुः शेषे षष्ठी। स्वान् द्रष्टुमिच्छुः ज्ञानयोगेन पूर्णान्तःकरणः गजसाह्वयं हास्तिनपुरं ययौ॥ ३०॥ ❀ ❀ विदुरमैत्रेयसंवादश्रवणफलमाह एतदिति। हे राजन्! हरावर्पित आत्मा मनो येषां तेषां राज्ञां स्वायंभुवमन्वादीनामेतच्चरित्रं यः शृणुयात्स आयुरादीन् प्राप्नुयात् स्वस्ति गतिं मुक्तिं तत्र स्वस्तिगतिः प्रधानफलं आयुरादय आनुषङ्गिकफलानि स्वस्तीति पृथक्पदं वा गतिं मुक्तिं स्वस्ति मङ्गलम्॥ ३१॥

इति श्रीवत्सान्वयपयःपारावारराकासुधाकरस्य सर्वविद्यानिधेः श्रीशैलगुरोः सुतेन तच्चरणकमलपरिचर्या-
प्रसन्नतत्सूक्तिसमधिगतश्रीमद्भागवतार्थहृदयेन श्रीवैष्णवदासेन श्रीवीरराघवविदुषा
कृतायां श्रीमद्भागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां
चतुर्थस्कन्धे एकत्रिंशोऽध्यायः॥ ३१॥
श्रीमते रामानुजाय नमः। श्रीमते निगमान्तमहादेशिकाय नमः॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अत्र शुको वृत्तानुवर्णनपूर्वकमुत्तरकथां प्रतिजानीते य एष इति। अनेन शुकेनोक्तमेव विदुरायोक्तं मैत्रेयेणेति ज्ञातव्यम्॥ २६॥ ❀ ❀ श्रोतृजनतृप्त्यर्थं प्रियव्रतचरितं प्रस्तौति। यो नारदादिति॥ २७॥ ❀ ❀ मैत्रेयोक्तहरिकथा-श्रवणेन विदुरे को विशेषोऽभूदत्राह इत्थमिति। "नारायणोऽजितपदो वामनो मधुसूदनः। श्रीधरः शङ्कराध्यक्षो ब्रह्माध्यक्षो महानदः" इत्यभिधानम्, अजितस्य हरेः पादसत्कथां चरणविषयां कथां वा अजितपादानां हरेरंशभूतानां विशेषावेशवतां राज्ञां वा मुनेः चरणं मूर्ध्नि दधार हरेश्चरणं हृदा॥ २८॥ ❀ ❀ नतेरष्टाङ्गत्वं द्योतयितुं मुनिं स्तौति सोऽयमिति। यत्र तमसः पारे स्थितः॥ २९॥ ❀ ❀ स्तुत्वा नत्वा पुनः किमकार्षीदत्राह इतीति। स्वानां ज्ञातीनामिति कर्मणि षष्ठी निर्वृताशय इत्यनेन ज्ञातव्यांशस्य पूर्तिं दर्शयति॥ ३०॥ ❀ ❀ शुक एतस्य श्रोतुरैहिकामुष्मिकं फलमाह एतद्य इति॥ ३१॥

चतुर्थस्कन्धोऽयं हरिचरितरत्नावलिनिधिः कथं चिद्व्याख्यातो हरिगुरुमहानुग्रहबलात्॥
महान्तः प्रीयन्तामनुगुणसुलुब्धा शुचिधियः सहन्तां चावद्यं मम विवृतिमार्गे स्खलनतः॥ १॥
सुमनःसुमनोमौलौ लसन्ती मुरभिद्गले। पदरत्नावलिर्नाम वनमालेव रोचताम्॥ २॥
इति श्रीमन्महेन्द्रतीर्थपूज्यपादशिष्यविजयध्वजभट्टारककृतश्रीमद्भागवतटीकायां
पदरत्नावल्यां चतुर्थस्कन्धे एकत्रिंशोऽध्यायः॥ ३१॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

इमां मद्भक्तस्वीकाररूपां तेनेत्यत्र तातेति क्वचित्॥ २८-२९॥ ❀ ❀ प्रथमस्कन्धोक्तं योजयति। इति निर्वृताशय इति मैत्रेयद्वारा श्रीभगवदङ्गीकारानुसन्धानेन इति भावः॥ ३०॥ ❀ ❀ परमानन्देन सकामश्रोतॄनप्याशिषयति एतद्य इति॥ ३१॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे एकत्रिंशोऽध्यायः॥ ३१॥
समाप्तोऽयं चतुर्थस्कन्धक्रमसन्दर्भः॥ ४॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तमसः संसारसमुद्रस्य पारः यत्र हरिरकिञ्चनं प्राप्नोति किं पुनर्वक्तव्यमकिञ्चनो हरिं प्राप्नोतीति ॥ २९ ॥ ❀ ❀ स्वानां स्वान् ज्ञातीन् ॥ ३०-३१ ॥

न कापि विद्या च न भक्तिगन्धोऽप्यहो न भक्तेष्वपि मन्दभावः । न मे विरक्तिर्न मनोवशं तन्न वेद्मि टीकां विदधे किमोजाः ॥
शुचौ सौम्यदिने शुक्लपञ्चम्यां यमुनातटे । टीकापूरि चतुर्थस्य समीपे कल्पशाखिनः ॥
इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । एकत्रिंशश्चतुर्थस्य सङ्गतः सङ्गतः सताम् ॥ ३१ ॥

॥ चतुर्थस्कन्धः समाप्तः ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

मानवस्य मनुपुत्रस्योत्तानपदः य एव वंशः सोऽनुवर्णितः ॥ २६ ॥ ❀ ❀ यः प्रियव्रतः आत्मविद्यापरमेश्वरज्ञानमधिगम्य प्राप्य ऐश्वरं पारमेश्वरं पदं स्थानम् ॥ २७ ॥ ❀ ❀ विदुरमैत्रेयसंवादं श्रीशुक उपसंहरति इमामिति । अजितस्य वादो वर्णनं यस्यां तां सत्कथां निशम्य श्रुत्वा मुनेश्चरणं मूर्ध्ना हरेश्चरणं हृदा दधार ॥ २८ ॥ ❀ ❀ तेन करुणात्मना भवता तमसः अज्ञानस्य पारः आत्मानात्मपरमात्मविवेकः य हरिः अकिञ्चनैरनन्यशरणैर्गम्यते इत्यकिञ्चनगो भवति ॥ १९ ॥ ❀ ❀ निर्वृतः सुखित आशयो यस्य सः स्वानां ज्ञातीनां दिदृक्षुस्तदुद्धाराय तान् द्रष्टुमिच्छुः ॥ ३० ॥ ❀ ❀ हरौ प्रत्यर्पित आत्मा यैस्तेषां हरिभक्तानामेतच्चरितमिति शेषः । स्वस्ति सुखं मोक्षमित्यर्थः । गम्यते अनयेति गतिर्मोक्षसाधनम् ॥ ३१ ॥

इति श्रीमद्भगवन्निम्बार्कचरणचिन्तकशुकसुधीप्रणीते चतुर्थस्कन्धीये श्रीमद्भागवतसिद्धान्तप्रदीपे एकत्रिंशाध्यायार्थप्रकाशः ॥ ३१ ॥

॥ चतुर्थस्कन्धः समाप्तः ॥

### गोस्वामिश्रीगिरिधरलालविहिता बालप्रबोधिनी

एवमुत्तानपदो वंशमनुवर्ण्य तदनुवादपूर्वकं प्रियव्रतवंशेऽपि बहूनां महात्मनां जातत्वात्तच्छ्रवणेऽभिमुखीकरोति—य इति द्वाभ्याम् । य एषोऽनुवर्णितः स तु मानवस्य स्वायम्भुवमनोः पुत्रस्योत्तानपद इति ज्ञेयम्, इदानीं प्रियव्रतस्य तस्य तद्द्वितीयपुत्रस्य वंशं वर्णयामि तन्निबोध । हे नृपसत्तमेति सम्बोधनं तत्रापि बहवो भक्ता जातास्तच्चरितश्रवणमपि तव योग्यमेव श्रेष्ठत्वादिति सूचनाय ॥ २६ ॥ ❀ ❀ प्रियव्रतवंशचरितश्रवणेच्छोत्पादनाय तन्माहात्म्यमाह—य इति । यः प्रियव्रतः प्रथमं नारदादात्मविद्यामधिगम्य प्राप्य पुनस्तदनन्तरं महीं भुक्त्वा राज्यं कृत्वा ततः पुत्रेभ्यः विभज्य विभागेन महीं दत्त्वा ऐश्वरं पदं भगवदीयं स्वयं स्वरूपं सम्यक् अनायासेन अगात् प्राप्तवान् ॥ २७ ॥ ❀ ❀ ननु विदुरमैत्रेयसंवादः समाप्तः किं येन कथान्तरं प्रस्तौषि तत्राह—इमां त्विति । इमां अजितवादसत्कथां अजितस्य भगवतो वादो माहात्म्यवर्णनं यस्यामत एव सतीं श्रोतॄणां रागादिदोषनिवारणीं कथां कौषारविणा मैत्रेयेण उपवर्णितां स्वबोधानुगुण्येन वर्णितां क्षत्ता विदुरो निशम्य श्रुत्वा प्रवृद्धो भावो भगवति भक्तिर्यस्य स तथा अत एवाश्रूणां कलाभिराकुलो व्याकुलः हृदा मनसा हरेः संसारदुःखहर्तुश्चरणं दधार, तथा मुनेर्मैत्रेयस्य गुरोश्चरणं मुर्ध्ना दधार दण्डवत् प्रणनामेत्यर्थः ॥ २८ ॥ ❀ ❀ उवाच तद्दर्शयति—सोऽयमिति । सोऽयं भगवद्भक्त्या विद्यात्मकः तमसः पारः तमसः अविद्याकार्यस्य अहन्ताममतात्मकस्य सर्वदुःखकारणस्य पारो निवर्त्तको भवता मह्यं दर्शितोऽहं कृतार्थो जात इति शेषेणान्वयः । कथं कृतार्थं इत्याशङ्क्य दुर्लभफलप्राप्त्येत्याह—यत्रेति, यस्मिन् सति अकिञ्चनगः अनन्यभक्तप्राप्यो हरिः प्राप्यते इति शेषः । दुर्लभमपि मया भवत्कृपयाऽनायासेनैव लब्धमिति सूचयन्नाह—करुणात्मनेति, करुणापूर्णचित्तेनेत्यर्थः । पितुः सकाशादपि महती कृपा मयि कृतेति सूचयन् सम्बोधयति—हे तातेति । एवं तत्त्वोपदेशेन कृतार्थीकरणे भवादृशां योगिनामेव सामर्थ्यमस्ति नान्यस्येति भावेन सम्बोधयति—हे महायोगिन्निति ॥ ९९ ॥ ❀ ❀ इत्युक्त्वा आनम्य ततो गमनार्थं पुनः प्रणामं कृत्वा तं मुनिमामन्त्र्य गमनप्रार्थनां कृत्वा तदनुज्ञातः निर्वृताशयः मैत्रेयकृपया भगवद्भक्त्या च परमानन्दपूर्णान्तःकरणो विदुरः स्वानां ज्ञातीनां स्वान् ज्ञातीन् धृतराष्ट्रादीन् दिदृक्षुः भ्रातुर्ज्येष्ठस्य श्रेयस्कृदिति प्रथमस्कन्धोक्तेर्धृतराष्ट्रस्योद्धारेच्छुः गजसाह्वयं हस्तिनापुरं प्रययावित्यन्वयः । अत्यपकारिण्यपि धृतराष्ट्रे विदुरस्योपकारबुद्ध्याऽत्यन्तशुद्धान्तःकरणत्वं सूचितम् । निर्वृताशय इत्यनेन 'यावतः कृतवान् प्रश्नान् क्षत्ता कौषारवाग्रतः । जातैकभक्तिर्गोविन्दे तेभ्यश्चोपरराम ह' इति प्रथमस्कन्धोक्तान्यप्रश्नोत्तरश्रवणविरक्तिहेतुर्भक्तिलक्षणः सूचितः ॥ ३० ॥ ❀ ❀ एतच्छ्रवणादिफलस्य मैत्रेयेणानुक्तत्वाच्छ्रीशुक आह—एतदिति । एतद्राज्ञां प्रचेतसां चरितं यः प्राणी श्रद्धया शृणुयात् श्रावयेत् स्मरेद्वा स आयुर्दीर्घ-

जीवनं यशः सत्कीर्तिं स्वस्ति पुत्रपौत्रादिमङ्गलमैश्वर्यं राज्यादिकं गतिं स्वर्गवैकुण्ठसायुज्यादिषु यथाभिलषितं फलं प्राप्नुयादित्यन्वयः। नन्वेतच्छ्रवणादेः कथमेवं फलहेतुत्वमित्याशङ्क्य 'योऽनुस्मरति सन्ध्यायां युष्माननुदिनं नर' इत्यादिना भगवतैव वरत्वेन दत्तत्वात् भगवत्प्रसादेनैवेत्यभिप्रेत्य तान् विशिनष्टि—हरीति। हरौ अर्पित आत्मा चित्तं यैस्तेषाम् ॥ ३१ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता तत्र तुर्येऽस्मिन् स्कन्धे मोक्षनिरूपणे। एकत्रिंशो गतो वृत्तिं फलप्राप्तिनिरूपकः ॥ ३ ॥
यत्कृपालवलेशेन चतुर्थो विवृतिं गतः। स तुष्यतु कृपासिन्धुर्मुकुन्दो दीनवत्सलः ॥ ४ ॥

समाप्तोऽयं चतुर्थस्स्कन्धः।

भाषानुवादः

श्रीशुकदेवजी कहते हैं—राजन्! यहाँतक स्वायम्भुव मनुके पुत्र उत्तानपादके वंशका वर्णन हुआ, अब प्रियव्रतके वंशका विवरण भी सुनो ॥ २६ ॥ ❀ ❀ राजा प्रियव्रतने श्रीनारदजीसे आत्मज्ञानका उपदेश पाकर भी राज्यभोग किया था तथा अन्तमें इस सम्पूर्ण पृथ्वीको अपने पुत्रोंमें बाँटकर वे भगवान्‌के परमधामको प्राप्त हुए थे ॥ २७ ॥ ❀ ❀ राजन्! इधर श्रीमैत्रेयजीके मुखसे यह भगवद्गुणानुवादयुक्त पवित्र कथा सुनकर विदुरजी प्रेममग्न हो गये, भक्तिभावका उद्रेक होनेसे उनके नेत्रोंसे पवित्र आँसुओंकी धारा बहने लगी तथा उन्होंने हृदयमें भगवच्चरणोंका स्मरण करते हुए अपना मस्तक मुनिवर मैत्रेयजीके चरणोंपर रख दिया ॥ २८ ॥ ❀ ❀ विदुरजी कहने लगे—महायोगिन्! आप बड़े ही करुणामय हैं। आज आपने मुझे अज्ञानान्धकारके उस पार पहुँचा दिया है, जहाँ अकिञ्चनोंके सर्वस्व श्रीहरि विराजते हैं ॥ २९ ॥ ❀ ❀ श्रीशुकदेवजी कहते हैं—मैत्रेयजीको उपर्युक्त कृतज्ञता-सूचक वचन कहकर तथा प्रणाम कर विदुरजीने उनसे आज्ञा ली और फिर शान्तचित्त होकर अपने बन्धुजनोंसे मिलनेके लिये वे हस्तिनापुर चले गये ॥ ३० ॥ राजन्! जो पुरुष भगवान्‌के शरणागत परमभागवत राजाओंका यह पवित्र चरित्र सुनेगा, उसे दीर्घ आयु, धन, सुयश, क्षेम, सद्गति और ऐश्वर्यकी प्राप्ति होगी ॥ ३१ ॥

इत्येकत्रिंशोऽध्यायः ॥ ३१ ॥

## समाप्तोऽयं चतुर्थः स्कन्धः

श्री हरिः शरणम्



परिशिष्टम् १

श्रीकृष्णः शरणं मम ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

श्रीभागवतप्रतिपदमणिवरभावांशुभूषितमूर्तिर्विजयते ।

श्रीमद्वैश्वानरावतारशुद्धाद्वैतनिर्गुणभक्तिमार्गप्रवर्त्तकाचार्यचक्रचूडामणिश्रीवल्लभाचार्यचरणविरचिते

# सप्रकाशतत्त्वार्थदीपनिबन्धे

# तृतीयं

## श्रीमद्भागवतार्थप्रकरणम् ।

सप्रकाशम्

( श्रीगो० श्रीपुरुषोत्तमचरणप्रणीतावरणभङ्गाख्यव्याख्यासमेतम् )

## अथ चतुर्थस्कन्धार्थः ।

अलौकिकं विसर्गं वदन् अनौचित्यमाशङ्क्य सर्गोप्येवमेव वर्णित इति पूर्वस्कन्धार्थमुक्तमनुवदति एवं सर्गं इति ॥

**निबन्धः—एवं सर्गस्तृतीये तु सफलः सुनिरूपितः । अथैकत्रिंशताध्यायैर्विसर्गस्तुर्य उच्यते ॥ १ ॥**

---

श्रीमत्पुरुषोत्तमपादप्रणीततत्त्वदीपप्रकाशावरणभङ्गः ।

अथ चतुर्थस्कंधे प्रकाशावरणभङ्गः

श्रीकृष्णाय नमः । अथ चतुर्थस्कन्धार्थं निबध्नन्तो विसर्गस्यैकदेशत्वात्तस्य समाप्तौ 'एतद्यः शृणुयाद्राजन्नि'त्यनेन फलकथनस्याङ्गे 'फलश्रुतिरर्थवादः' इति मीमांसकप्रसिद्ध्या स्तुत्यतिरिक्तप्रयोजनाभावेन विसर्गस्य च बाह्यलीलात्वात्स्तुत्यत्वाभावेन

---

[ यद्वा प्रथमद्वितीययोरधिकारः साङ्गश्रवणविधिश्च प्रतिपाद्य तृतीयादिदशस्कन्धेषु श्रोतव्यविषयः सर्गादिरुच्यते । तत्र पूर्वोक्ताधिकारिणां श्रवणादिविषयत्वेन लौकिकसर्गविसर्गादिनिरूपणमनुचितं, न ह्यलौकिके विषये प्रसक्तानामधिकारिणां लौकिकसर्गादिविषयाः प्रीतिकराः साधका वा भवन्ति, भिन्नाधिकारादित्यनौचिती भासते, तन्निवारणार्थं सर्गविसर्गयोरत्रालौकिकत्वमवश्यं वाच्यं, अधिकारबलादिति । तदिदमभिप्रेत्योक्तमलौकिकं विसर्गं वदन्नित्यादि । ननु पूर्वस्कन्धार्थानुवादः किमर्थमित्याकाङ्क्षायामाहुः । अनौचित्यमाशङ्क्येति । अलौकिकानामधिकारिणां श्रवणादिविषयतया लौकिकसर्गवर्णनमनौचितीं स्पृशेदिति तन्मा स्पृशत्विति पूर्वस्कन्धे सर्गोप्यनौचितीनिवृत्त्यर्थमलौकिकत्वेन निरूपितो यथा, तथात्रापि विसर्गोप्यलौकिक एव निरूप्यते इति ज्ञापयितुं पूर्वस्कन्धार्थानुवाद इत्यर्थः । तदेतत्तृतीयारम्भे स्पष्टमुक्तं "त्रयस्त्रिंशदथाध्यायास्तृतीये सर्गवर्णने" इत्यादिकारिकाद्वयेनेति । तेन पौराणिकी सृष्टिर्वैदिकसृष्टिवदलौकिकी, आधिदैविकरूपत्वादित्युक्तं भवति । ]

प्रकाशः—अनेन सर्वा लीलाः शृङ्खलारूपा अपि प्रत्येकं सफलाः ! तेनैकदेशसमुदाययोः सर्वत्र फलसिद्धिर्ज्ञापिता। अथेति भिन्नप्रक्रमे। तेन लौकिको विविधः सर्गो निराकृतः। विशिष्टः सर्गो हि विसर्गो देवतारूपः। ते च वसुरुद्रादित्यरूपा देवाः। भगवतो लीलाया विपरीतत्वाद्वसवोन्ते निरूप्यन्ते। रुद्रा मध्ये। आदित्या आदौ। अत एकत्रिंशदध्यायाश्चतुर्थे स्कन्धे ॥ १ ॥

विसर्गलक्षणमाह सर्वयुक्तरजोभाज इति ॥

**निबन्धः—सर्वयुक्तरजोभाजो लीला कार्यस्य जन्मदा। विसर्गो लौकिको ह्यत्र कार्यं बुद्ध्या चतुर्विधम् ॥ २ ॥**

प्रकाशः—सर्वैर्जीवैर्युक्तं यद्रजः क्रियाशक्तिस्तेनाऽत्रोत्पद्यमानाः सर्वसामर्थ्ययुक्ता भविष्यन्तीति विशिष्टत्वम्। कार्यपदं मुक्तजीवाभिप्रायम्। अत्रोत्पन्नाः सामर्थ्यं प्रकटीकृत्य मुक्ता भविष्यन्ति। अतो लौकिको विसर्गः। एवं स्कन्धार्थं निरूप्य प्रकरणभेदार्थमाह कार्यं बुद्ध्या चतुर्विधमिति ॥ यद्यपि भगवत्सामर्थ्यमनन्तम्, तथापि, सद्बुद्ध्या धर्मार्थकाममोक्षा एव साध्या इति कार्यं चतुर्विधम् ॥ २ ॥

भागवते विसर्गलक्षणं तथा नोक्तमित्याशङ्क्याह पौरुषस्त्वयमेवोक्त इति ॥

**निबन्धः—पौरुषस्त्वयमेवोक्तो माहात्म्यं सर्वथा यतः। वंशः प्रसङ्गसिद्ध्यर्थं लौकिकानुग्रहादपि ॥ ३ ॥**

**साधारणो न वै वाच्यः सारोद्धारत्वतोऽस्य हि।**

प्रकाशः—"विसर्गः पौरुषः स्मृतः" इति लक्षणम्। तत्र पौरुषपदं न पुरुषाद् ब्रह्मादीनामुत्पत्तिमाह, किन्तु माहात्म्यं सर्वथा यतो ज्ञातं भवति तेन पुरुषाकारो विसर्गः। एवं सति वंशेन कथं प्रारम्भस्तत्राह वंशः प्रसङ्गसिद्ध्यर्थमिति। असम्बद्धार्थकथने लीलानां परिज्ञानं न भवतीति प्रसङ्गो वक्तव्यः। लौकिकाश्च कथाश्रोतारोऽनुग्राह्याः। एवं स्वाभिप्रेतं विसर्गमुक्त्वा साधारणं निषेधति साधारण इति। "सर्ववेदेतिहासानां सारं सारं समुद्धृतम्" इति वाक्यात् ॥ ३ ॥ प्रकरणैर्विशिष्टं स्कन्धार्थमाह धर्मार्थेति ॥

---

तत्कथनस्यानुचितत्वमाशङ्क्य "पुराणेष्वर्थवादत्वं ये वदन्ति नराधमाः। तैरर्जितानि पुण्यानि तद्वदेव भवन्ति हि" "अहो हि वाक्ये चतुरक्षरे द्वे पुण्यस्य पापस्य निदानभूते। उच्चारणादेव नृणां मुनीन्द्रा नारायणश्चेति तदर्थवादः ॥" इति नारदीये तत्प्रसिद्धिनिन्दास्मरणात्तन्नानौचित्यमिति वक्तुमत्र तृतीयस्कन्धार्थानुवादः, न तु सङ्गतिबोधनार्थम्, द्वयोस्तादात्म्यस्य पूर्वमुक्तत्वेन सङ्गतेस्तत्रैव सिद्धत्वादित्याशयेनाहुः अलौकिकमित्यादि। एवमेवेति। 'य इदमभिशृणोति, योभिधत्ते, कपिलमुनेर्मतमि'त्यनेन सर्गैकदेशफलकथनपूर्वकमलौकिकत्वैनेव।

अनेनेति, एकदेशफलकथनेन लौकिको विविधः सर्ग इति, "पुरुषानुगृहीतानामेतेषां वासनामयः विसर्गोयं समाहारो बीजाद्बीजं चराचरमि"ति द्वादशस्कन्धोक्तो महापुराणान्तरसम्बन्धी ॥ १ ॥ सर्वैर्जीवैरिति, अमुक्तजीवैः। तेनेति, क्रियाशक्तिसंसर्गेण। अत्रेति, विसर्गलीलायाम्। मुक्ता भविष्यन्तीति, न च दक्षे फलव्यभिचारः दोषः शङ्क्यः, तस्य सर्गे उत्पन्नत्वेनाऽदोषत्वात्। नापि सत्याम्, तस्या अपि द्वितीयजन्मपर्यन्तं सामर्थ्यप्रकटनमित्यदोषात्। नापि सपरिकरे अधर्मे, तेषामपि देवतात्वेन स्वाधिकारसमाप्त्यनन्तरं फलस्याबाधात्। अत एव कठवल्ल्यां मृत्योर्ब्रह्मविस्त्वोक्तिरपि सङ्गच्छते। एवमन्यत्राप्यूह्यमिति न कोपि शङ्कालेशः। अत्र लक्षणे सर्वयुक्तपदं सर्गलीलोत्पन्नानाममुक्तानां जीवानां विसर्गे सहकारित्वबोधनाय। रजोभाज इति पदं मैत्रेयेण भागवतमुपक्रम्य रजोभाजो लीलानां कथनात्तन्मध्यपातित्वेन निर्गुणलीलात्वव्युदासाय। एतेनास्मिन् लक्षणे प्रमाणमुक्तम्। उपक्रमोपसंहारयोरर्थनिर्णयकत्वात्। मैत्रेयोक्तीनामेतत्स्कन्धान्त एव पूर्णत्वादिति। अत्र यद्यपि व्याख्यानान्तरं नास्ति, तथापि कारणसाम्यान्मुक्तिफलस्य पूर्ववत्कथनाच्च पूर्वतौल्येन मुख्यलीलाया अपि संग्राह्यतया "एतस्माज्जायते प्राणः" इति साक्षात्सृष्टिन्यायेन विसर्गस्यापि तथात्वाय तथा व्याख्यातव्यम्। प्रकरणभेदार्थमाहेति, अत्र रजोभाजो लीलायाः पूर्ववत्करणत्वेन गुणवैषम्यस्य व्यापारत्वेन कार्यरूपभूतमात्रेन्द्रियधीजन्मनश्च फलत्वेन स्कन्धार्थत्वम्। तत्र यथा पूर्वस्कन्धेषु व्यापाररूपः फलरूपो वा सामान्य एव स्कन्धार्थः प्रकारविशेषवैशिष्ट्येन प्रकरणभेदकः, तथानाऽत्र, किन्तु, द्वारविशेषवैशिष्ट्येन भेदक इति तद्विभागार्थं द्वारभूतमर्थमाहेत्यर्थः। कार्यं चतुर्विधमिति, सामर्थ्यकार्यं चतुर्विधम्। तथा च तद्द्वारा प्रकरणचतुष्टयविभाग इत्यर्थः ॥ २ ॥

ननु द्वितीयस्कन्धोक्तं लक्षणं विहायेदं मैत्रेयोक्त्यनुसारि लक्षणं किमित्यादृतमित्याकाङ्क्षायां कण्ठोक्तलक्षणसिद्ध्यर्थमेवादृतमित्याशयेनाहुः भागवत इत्यादि, आहेति एतस्य तस्मिन्नुपयोगमाह तत्र पौरुषेत्यादि। विसर्गलक्षणात्पूर्वं तस्मिन्नेव श्लोके सर्गलक्षणे जन्मपदादस्मिन्नपि तद्विवक्षायां पौरुषमिति नपुंसकं प्रयुञ्ज्यात्, अस्मिन् स्कन्धे च तामेव वदेदतस्तदुभयाभावात्तदुत्पत्तिर्न विवक्षिता, किन्तु, पुरुषमाहात्म्यज्ञापकोर्थो विवक्षितस्तेन हेतुना पुरुषकारोस्माभिरेतदर्थ आदृतः। स च फलं पुरुषार्थत्वादिति

---

१. तेन। २. वचनात्।

निबन्धः—धर्मार्थकाममोक्षाख्यं कार्यं कृष्णाङ्घ्रिसेवया ॥ ४ ॥
सिद्ध्येत सर्वजीवानां नाऽन्यथेत्यस्य सम्भवः।

प्रकाशः—अस्य स्कन्धस्य सम्भवः ॥ ४ ॥

विविच्य धर्माद्यधिकारिण आह धर्म इति।

निबन्धः—धर्मः सिद्धस्तु दक्षस्य ध्रुवस्याऽर्थस्तथा पृथोः ॥ ५ ॥
कामः प्रचेतसां मोक्षः सुरुच्यादेर्न सिद्ध्यति।

प्रकाशः—पृथोः कामः। पूर्वं दक्षस्याऽपि न धर्मसिद्धिः। सुरुचेर्नाऽर्थसिद्धिः। इन्द्रस्य न कामसिद्धिः। पूर्वं पुरञ्जनस्याऽपि न मोक्षः। अतः कृष्णाङ्घ्रिसेवयैव पुरुषार्थसिद्धिर्नाऽन्यथेति समर्थितम् ॥ ५ ॥

विसर्गस्यार्थान्तरत्वमाशङ्क्य निराकरोति विसर्ग इति ॥

निबन्धः—विसर्गः पौरुषो वाच्यः पुरुषार्थः स नेतरः ॥ ६ ॥
तत्कर्तारोऽथवा वाच्या विशिष्टत्वं तदेव हि।

मतान्तरमाशङ्क्य निराकरोति स्त्रीबालेति ॥

निबन्धः—स्त्रीबालयुववृद्धानां प्रक्रियेति मतिर्वृथा ॥ ७ ॥
स्त्रिया न कापि संसिद्धिस्तत्त्वं नाऽत्र प्रयोजकम्। सेन्द्रियत्वं न चाऽन्यद्धि भजनाङ्गं विवेकिनाम् ॥ ८ ॥

प्रकाशः—स्त्री सती। बालो ध्रुवः। युवा पृथुः। वृद्धः प्राचीनबर्हिः। एवं स्त्रीपुम्भेदोऽवस्थाभेदश्च विसर्गार्थ इत्युक्तं भवति। एवं मतिर्वृथा। सर्वथा साक्षाद्भगवत्कृतं कार्यं कथं पुरुषार्थरहितं वेदे अनर्थपर्यवसायि वा। तस्मात्स्त्रिया न प्रकरणित्वम्। स्वरूपतस्तु स्त्रीत्वं न प्रयोजकम्। भजने तु इन्द्रियत्वमेव प्रयोजकमित्याह सेन्द्रियत्वमिति। मनुष्याधिकारपक्षस्तु भ्रान्तपरिकल्पितो वानरादीनामप्यधिकारात् ॥ ८ ॥

तर्हि स्त्रीसतीप्रसङ्गः कथं प्रथमप्रकरणे कृत इत्याशङ्क्याह स्त्रीणामनर्थहेतुत्वमिति ॥

निबन्धः—स्त्रीणामनर्थहेतुत्वं न भार्यापरमेव हि। पुत्र्या मातुस्तथाऽन्यस्या देवताया अपि स्फुटम् ॥ ९ ॥
पुरुषार्थविरोधित्वकथनाय तथा वचः ॥ ९½ ॥

प्रकाशः—पुरुषार्थविरोधित्वात्तासां कथनम् ॥ ९½ ॥

---

न्यायेन पुरुषशेष इति पुरुषजन्माक्षिपतीत्येतदर्थमेव तदादृतमित्यर्थः। एवं सतीति, ननु विविधसर्गस्यावाच्यत्वे सति। असम्बद्धेत्यादि। तथा चैतदुभयार्थं वंशेन प्रारम्भो न तु विसर्गत्वज्ञापनार्थमनुपपत्तेरुक्तत्वादित्यर्थः। प्रकारान्तरेणापि तस्यावाच्यत्वमाहुः, एवं स्वेत्यादि। तथा चेतोपि केवला विविधोत्पत्तिर्न विसर्गः, किन्तु, माहात्म्यज्ञापकत्वविशिष्टो यः सर्गः स एव विसर्गत्वेनात्र विवक्षित इत्यर्थः। कथमेतस्य माहात्म्यज्ञापकत्वमित्यपेक्षायामाहुः प्रकरणैरित्यादि। तथा चैवं माहात्म्यज्ञापकत्वमित्यर्थः। येन भगवन्माहात्म्यं ज्ञायेत ॥ ३–४ ॥ तत्कार्यं कस्य सिद्धमित्यपेक्षायामाहुः विविच्येत्यादि ॥ ५ ॥ ननु विशिष्टः सर्गो विसर्गश्चेत्तदा यत्किंचिद्वैशिष्ट्येऽपि तथात्वसम्भवान्माहात्म्यज्ञापनत्वरूपवैशिष्ट्यस्यैवादरे किं बीजमित्यत आहुः विसर्गस्येत्यादि। "अस्यां वै श्रूयमाणायामि" ति वाक्यादत्र भक्त्युत्पादकं यत्तदेव वैशिष्ट्यं विवक्षितमत इदमाद्रियत इत्यर्थः ॥ ६½ ॥

एवं सार्द्धैः षड्भिः स्कन्धार्थः प्रकरणार्थश्च निर्धारितः। प्रकरणार्थे मतान्तरस्य विद्यमानत्वात्तन्निरासं विना स न निर्णेतुं शक्य इति तदर्थं यतन्ते मतान्तरमित्यादि विसर्गार्थ इति। वैशिष्ट्यप्रयोजकः प्रकरणार्थः। पर्य्यवसायि वेति भवतीति शेषः। स्वरूपत इत्यादि। स्वरूपानिरूपणात्स्वरूपतो न प्रकरणित्वप्रयोजकम्। ननु मास्तु फलित्वेन स्वरूपेण वा तथात्वम्। तथापि भजनोपयोगित्वेन तथात्वे किं बाधकमत आहुः भजन इत्यादि, "को नु राजन्निन्द्रियवान् मुकुन्दचरणाम्बुजम्। न भजेत्सर्वतो मृत्युरुपास्यममरोत्तमैरि"ति वाक्यात्तथेति न स्त्रीत्वादेस्तत्प्रयोजकत्वमित्यर्थः। नन्विन्द्रियवत्त्वमपि न केवलं प्रयोजकं तथा सति पशूनामप्यधिकारापत्तेः। अतस्तदपि मनुष्यत्वेन विशेषणीयं शास्त्रस्य मनुष्याधिकारत्वात्, तथा सति तद्गतधर्मस्य स्त्रीत्वस्य कुतो न प्रयोजकत्वमित्याकाङ्क्षायामाहुः, मनुष्येत्यादि। वानरादीत्यादिपदेनर्क्षपक्षिगजादिसंग्रहः। तथा च, विवेकित्वमेव प्रयोजकं न तु जातिविशेषवैशिष्ट्यम्, अतो न स्त्र्यादेः प्रकरणित्वमित्यर्थः। न च तत्त्वसूत्रविरोधः शङ्क्यः, 'तदुपर्यपि चे'ति चकारेण मनुष्यतो हीनानामपि संग्रहात्। हनुमदादिषु तथा दर्शनाच्चेति। एवं त्रिभिः परमतनिराकरणेन प्रकरणार्थो निर्णीतः ॥ ९½ ॥

प्रथमप्रकरणे सप्ताऽध्यायाः। द्वितीये पञ्च। उभौ मिलितावादित्यः। तत्र सप्तसङ्ख्यायां प्रयोजकमाह सप्ततन्तुरिति।

निबन्धः—सप्ततन्तुर्यतो यज्ञो धर्मे सप्त ततः कृ'ता ॥ १० ॥
धर्मः सिद्ध्येद्धरेरेव नाऽन्यथेति निरूप्यते। दक्षो मुख्यो यतो धर्मे ततस्तस्य कथा तता ॥ ११ ॥

प्रकाशः—तन्तुशब्दः सूत्रे सन्ततौ च वर्तते। यज्ञश्च सूत्रात्मकत्वात्तन्तुर्भवति सन्ततिरूपश्च। अतो ज्योतिष्टोमः सप्तसंस्थो भवतीति सप्ततन्तुः। अतो धर्मप्रकरणे सप्ताऽध्यायाः। वाजपेयो गणनार्थं सप्तम इति। तस्याऽप्युत्तराङ्गभूते बृहस्पतिसवे विघ्नो निरूप्यते। तस्य प्रयोजनमाह धर्मः सिद्ध्येदिति। वसिष्ठादिषु विद्यमानेषु दक्षनिरूपणस्य प्रयोजनमाह दक्ष इति। अन्वर्थनामा कर्ममार्गे दक्षः ॥ ११ ॥

अत्र प्रकरणे कथानां धर्मोपयोगं वक्तुमाह पीठिकासहित इति ॥

निबन्धः—पीठिकासहितोऽनर्थः प्रसङ्गः पोषकैर्युतः। प्रथमेऽनन्तरे हेतुर्भावित्वज्ञापनाय हि ॥ १२ ॥

प्रकाशः—तत्र प्रथमाध्याये अनर्थप्रसङ्गः सतीसम्बन्धो निरूप्यते। द्वितीयाध्याये तु तस्य प्रसङ्गस्य कार्यमनर्थहेतुरङ्कुरवच्छापकथा। तस्य प्रयोजनमाह भावित्वज्ञापनाय हीति। अन्यथाङ्कुरोत्पत्त्यभावे बीजात्फलं न भवेत् ॥ १२ ॥

द्विपत्ररूपस्तृतीयाध्यायार्थं इत्याह तृतीय इति ॥

निबन्धः—तृतीयेऽनर्थसम्भूतिः स्वशक्त्या च निवारणम्। चतुर्थे पञ्चमे नाशः षष्ठे पूर्वाङ्गमुत्तरे ॥ १३ ॥
सप्तमे यज्ञसंसिद्धिर्विष्णोः स्तोत्रे विनिर्णयः।

प्रकाशः—अनर्थवृक्षस्य सम्यग्भूतिरुद्गमो द्वेषस्थिरीकरणात्। द्वेषो न कर्तव्य इति ख्यापनमनर्थहेतुत्वज्ञापनाय। अतः स्वशक्त्या कन्यकया स्वबुद्ध्या निवारणमुक्तम्। चतुर्थाध्यायार्थो न सतीमरणं किन्तु द्वेषस्यानर्थहेतोरवान्तरव्यापारः। पञ्चमे यज्ञस्य नाशः पाङ्क्तत्वात्। षष्ठे सिद्धेः पूर्वाङ्गम्। उत्तरं रूपं सिद्धिः। यज्ञस्य सप्ततन्तोः सप्तमे सिद्धिः। तत्रैव स्तोत्रे विष्णोरेव सिद्धिरित्यंशः समर्थितः। एवं सप्ताध्यायार्था निरूपिताः ॥ १३½ ॥

अधुना प्रथमाध्याये प्रासङ्गिका बहवोऽर्था वर्तन्ते तेषां धर्मोपयोगं वक्तुमाह षड्भिरिति।

निबन्धः—षड्भिर्मन्वादिभिर्धर्मः प्रथमे त्वस्य सम्भवः ॥ १४ ॥
अतः प्रथमषट्कस्य स्वरूपं प्रथमं जगौ।

प्रकाशः—प्रथमं मन्वन्तरनिरूपणं धर्महेतुत्वात्। "मन्वन्तराणि सद्धर्मः" इति वाक्यात्। अस्यापि हेतुमाह प्रथमे त्वस्य सम्भव इति प्रथमाध्याये मन्वन्तरस्य षड्विधस्यापि सम्भवः। तेन धर्मे स्पष्ट एव हेतुः। अनेन कालो हेतुत्वेन निरूपितः ॥ १४½ ॥

---

अतः परन्तेष्वध्यायान्विभजते प्रथमेत्यादि। एतेन त्रिप्रकरणीपक्षोपि सङ्गृहीतः। तथा सति तृतीये एकादशे तुरीयेष्टाविंत्यर्थादुक्तम्। तेन यथा सर्गलीलायां देवभावेन त्रयस्त्रिंशतां यज्ञसाधकतया फलोपकारित्वं तथाऽत्रैकत्रिंशतां तथात्वं बोधितम्। सूत्रात्मकत्वादिति। अङ्गकर्मणां क्रमिकत्वेन फलावश्यंभावसूचकत्वेन च तथात्वात्। सप्तसंस्थ इति, अग्निष्टोमोत्यग्निष्टोम उक्थ्यः षोडश्यतिरात्र आप्तोर्यामोवाजपेयश्चेति सप्तसंस्थः। ननु वाजपेयात्पूर्वं बृहस्पतिसवस्यापि सत्त्वात्कथं सप्तेत्यत आहुः वाजपेयेत्यादि। बृहस्पतिसवस्य ततः पूर्वं पश्चाच्च करणात्स वाजेपयस्यैवाङ्गभूत इति गणनार्थं वाजपेय एव सप्तम इत्यर्थः ॥ १० ॥ धर्मः सिद्ध्येदित्यर्द्धस्यार्थमाहुः तस्यापीत्यादि। तस्य प्रयोजनमिति विघ्नस्य प्रयोजनम् ॥ ११ ॥ ननु सप्ताध्यायीरूपधर्मप्रकरणं चेत्प्रथमत एव धर्मः कुतो नोच्यत इत्याकाङ्क्षायामाहुः अत्रेत्यादि ॥ १२ ॥

कथमुद्गम इत्यपेक्षायामाहुः द्वेषेत्यादि। शिववाक्येषु तथा भानात्स एवार्थं इत्यर्थः। ननु नैतादृशानां स्वजनव्यपेक्षाया गृहात्प्रतियादित्यादिवाक्येषु द्वेषं न कुर्याद् गृह एव तिष्ठेदिति तात्पर्यं प्रतीयत इति कथं द्वेषस्थिरीकरणमर्थं इत्यत आहुः द्वेषो नेत्यादि। अनर्थत्वख्यापनायेति। सतीगमनस्य द्वेषस्य वा तथात्वख्यापनाय, 'यदि व्रजिष्यसी'त्यन्तिमश्लोके तथा भानादुक्तरूप एवाध्यायार्थं इत्यर्थः। अत इति अनर्थहेतुत्वात्। कन्यकयेत्यत्र कल्पनयेति पाठः प्रतिभाति। चतुर्थाध्यायार्थं इत्यादि। सतीमरणं सतीमरणत्वेन रूपेण नार्थः, किन्तु, द्वेषावान्तरव्यापारत्वेनार्थ इत्यर्थः। न च द्वेषस्यान्यनिष्ठत्वात्सतीमरणस्य च तज्जन्यत्वाभावेन कथं व्यापारत्वमिति शङ्क्यम्। तज्जन्यत्वस्यातन्त्रत्वेन द्वारत्वस्यैव तथात्वादिति। पाङ्क्तत्वादिति। अग्निहोत्रादिपञ्चात्मकत्वात्।

---

१ कृतः।

कर्त्तारश्च कर्दमजामातरो निरूप्यन्त इत्याह येऽग्निमन्त इति ।

निबन्धः—येऽग्निमन्तोऽतिसम्पुष्टा ऋत्विजस्ते हि सम्मताः ॥ १५ ॥

अतो वंशः पृथक् प्रोक्तः सर्वेषां समनुक्रमात् ।

प्रकाशः—ते धर्मात्मान इति ज्ञापयितुं वंशो निरूप्यते । धर्माभिमानिन्या देवताया निरूपणं स्पष्टमेव ॥ १५½ ॥

एवं कथासङ्गतिमुक्त्वा अनुपपत्तिपरिहारार्थमपेक्षितमर्थं निरूपयन् रुचिं निरूपयति पूर्वकल्प इति ।

निबन्धः—पूर्वकल्पे ऋषिः सिद्धः सत्ये चैव व्यवस्थितः[1] ॥ १६ ॥

रुचिर्ब्रह्मसुतैस्तुल्यस्तेनाऽयं पुत्रिकापतिः ।

प्रकाशः—दैनन्दिनकल्पेषु निरूप्यमाणकल्पात्पूर्वकल्पे रुचेरुत्पत्तिः । प्रलये सत्यलोके स्थितः । तस्य कारणत्वाभावान्न तृतीयस्कन्धे निरूपणम् । अत्र तस्य कीर्तनं प्रयोजनायेति । हीनत्वाभावायाह ब्रह्मसुतैस्तुल्य इति । अनेन किञ्चिद्धीनतापि निरूपिता । तत आह तेनाऽयं पुत्रिकापतिरिति । अन्यथा सर्वोत्तमो न पुत्रिकापतिर्भवेत् ॥ १६½ ॥

तत्रोत्पन्नयोर्विवाहो न युक्त इत्याह लक्ष्मीनारायणो भोक्तेति ।

निबन्धः—लक्ष्मीनारायणो भोक्ता यज्ञस्याऽवततार ह ॥ १७ ॥

इन्द्राधिकारी जीवानामभावादंशतः पृथक् । देवानाग्यभावेन स्वांशान् पुत्राँश्चकार ह ॥ १८ ॥

प्रकाशः—अनेन यज्ञप्रकरणे भोक्ता च निरूपित इति प्रयोजनान्तरम् । तस्य मन्वन्तरस्य पञ्चविधत्वात् षड्विधत्वाभावे हेतुमाह इन्द्राधिकारिजीवानामिति ॥ १७-१८ ॥

षड्विधत्वमाह यज्ञस्येति ॥

निबन्धः—यज्ञस्य तु द्विरूपत्वात् षड्विधत्वं भुजिद्वयात् । क्रियाज्ञानोभयैस्त्रेधा[2] धर्मायावतरिष्यति ॥ १९ ॥

प्रकाशः—अंशावतारित्वेन सर्वभोक्तृत्वमिन्द्रत्वेन हविर्भोक्तृत्वं चेति भुजिद्वयम् । अत्राऽध्यायेऽवतारत्रयं निरूपितम् । तस्य कथमुपयोग इत्याकाङ्क्षायामाह क्रियाज्ञानोभयैरिति क्रियावतारो यज्ञः । ज्ञानावतारो दत्तः । उभयावतारो नारायण इति धर्मार्थं त्रेधाऽवतरणम् ॥ १९ ॥

नारायणदत्तयोर्नैकमन्वन्तरोपयोग इति विशेषमाह नारायण इति ।

निबन्धः—नारायणस्तथा दत्तः सर्वसाधारणौ मतौ । क्रियाशक्त्यवतारस्तु तत्र तत्र भविष्यति ॥ २० ॥

प्रकाशः—अतो मन्वन्तरान्तरेषु न ज्ञानोभयावतरणनिरूपणम् । प्रथमस्तु वक्ष्यत इत्याह क्रियाशक्त्यवतारस्त्विति ॥२०॥ ननु धर्मप्रकरणे भगवद्भजननिरूपणस्याऽत्रेरुपाख्यानं किंप्रयोजनमित्याशङ्कायामाह अवश्येति ।

---

पूर्वाङ्गमिति रुद्रभागकल्पनेनानुनयः । 'यज्ञस्ते रुद्रभागेन कल्पतामद्य यज्ञहन्नि'ति । 'इति दक्षः कविर्यज्ञं भद्ररुद्राभिमर्शितम् । कीर्त्यमाने हृषीकेशे सन्निन्ये यज्ञभावनः' इत्युभयवाक्यदर्शनाद्यज्ञसिद्धिः केनेत्याशङ्कायामाहुः तत्रैवेत्यादि । तथा च, यदि रुद्रभागेनैव सिद्धिः स्यात्तथा स्तोत्रं न स्यादतो यज्ञसिद्धिर्भगवत एव, रुद्रभागकल्पनं तु प्रतिबन्धकाभावरूपमित्यर्थः । निरूपिता इति चतुर्भिरुक्ताः ॥ १३½ ॥ मूले षड्भिरिति, आद्यश्लोकत्रयादग्रिमैः षड्भिः । षड्विधस्येति, भगवदवतारेन्द्रमनुतत्पुत्रदेवर्षिभेदेन षड्विधस्य । हेतुत्वेनेति यज्ञात्मकधर्महेतुत्वेन ॥ १४-१५ ॥

कथासङ्गतिमिति, अत्र प्रथमे प्रकरणे धर्म उच्यत इति तत्कथासङ्गतिं निरूप्य कर्मसचिवानामभावे धर्मो न सिद्ध्यतीति तदनुपपत्तिपरिहारार्थमपेक्षितमर्थं सचिवसम्पत्तिरूपं निरूपयन्निन्द्रसिद्ध्यर्थं रुचिं वदन्तीत्यर्थः । कारणत्वाभावादिति, मुक्तत्वेना-मुक्तत्वेन च सर्गकारणत्वेनाविवक्षितत्वात् । अनेनेति, तुल्यत्वकथनेन । अन्यथा पुत्रिकाधर्मं नाङ्गीकुर्यात् । स्वस्योत्तमत्वाभिमाने तदङ्गीकारस्यासम्भवादिति ॥ १६ ॥ लक्ष्मीनारायण इति, शास्त्रस्य जीवाधिकारत्वेन भगवति तस्याप्रवृत्तेर्नायुक्तत्वम्, सम्बन्ध-नित्यत्वादिति । पञ्चविधत्वादिति, ल्यब्लोपे पञ्चमी, पञ्चविधत्वमालोच्येत्यर्थः । मूले-अभावादंशतः पृथगिति । अभावं दृष्ट्वा अंशतः पृथगवततारेति सम्बन्धः ॥ १७-१८ ॥ षड्विधत्वमाहेति । ननु तथापि स्वरूपभेदाभावात्कथं षड्विधत्वमित्याकाङ्क्षायां भोगभेदेन तथात्वमाहेत्यर्थः । कथमुपयोग इति, केन, रूपेण धर्मोपयोगः ॥ १९ ॥ विशेषमाहेति । सर्वसाधारण्यरूपं विशेष-

---

१. व्यवस्थितः । २. तत्र ।

निबन्धः—अवश्या कार्यसृष्टिर्हि बन्धोपि न भवेद्यथा । अतः सर्वत्र सृष्टो हि भगवद्भजनाभिधा ॥ २१ ॥

प्रकाशः—नन्वत्रेः सर्वज्ञस्य भगवद्भजनं परित्यज्य कथं साधारणभजनं तत्राऽऽह धर्मप्रकरणत्वादिति ।

निबन्धः—धर्मप्रकरणत्वाच्च निश्चयो नाऽभवत्पुरा । अत्रेः सामान्यरूपेण भजनं तेन वर्णितम् ॥ २२ ॥

प्रकाशः—कर्ममार्गे सर्वे देवास्तुल्याः । परब्रह्मणोऽपि देवत्वमेव ॥ २२ ॥

तथापि त्रयाणामागमने को हेतुस्तत्राऽऽह कर्मण इति ।

निबन्धः—कर्मणस्त्रिविधत्वाय त्रयाणां सम्भवाभिधा । अधिदैवं त्रिधा यस्मात् त्रैविध्ये धर्मकर्मणि ॥ २३ ॥

प्रकाशः—त्रिविधत्वज्ञापनाय ॥ २३ ॥

उत्तरं हरिणैवोक्तं त्रयाणां ज्ञानरूपम्, तत्र हेतुः—बोधोऽपि हरिणेति ।

निबन्धः—बोधोपि हरिणा पश्चादेवं द्वेषाद्यनुत्तये । तस्मादन्यतरद्वेषे नेतरत्कर्म सिद्ध्यति ॥ २४ ॥

प्रकाशः—अथवा दक्षं प्रति भगवद्वाक्यं सप्तमे वक्ष्यते । तदप्यत्र सम्मतित्वेनोच्यते । फलितमाह तस्मादिति ॥ २४ ॥

नन्वत्र भागवते ऋषयो निरूप्यमाणाः सर्वज्ञास्ते कथमन्यथाऽन्यथा परस्परविरुद्धानर्थान् वदन्ति । कथं कर्दमो विष्णुमेव सेवते । कथमत्रिः साधारण इत्याशङ्क्याह सर्वेषामिति ।

निबन्धः—सर्वेषां ब्रह्मवित्त्वेऽपि यन्निष्ठा यस्य तद्वचः । अतो हि भगवाँस्तेषु क्रियांशादिभिरुद्गतः ॥ २५ ॥

प्रकाशः—सर्वज्ञत्वेपि स्वभावभेदाद्रुचिर्भिन्ना । अतो रुच्यनुसारेण तेषां तथा वचनमित्यर्थः । ननु रुच्यनुसारेण वस्तु कथमन्यथा भवेत् । तेन मिथ्यावचनमेव केषांचिद्भवितुं युक्तमित्याशङ्क्याह अतो हि भगवानिति । भगवानेव तथा रूपाणि कृतवान् । तेन न प्रमेये तथा तथा वचनं दोषाय ॥ २५ ॥

इदानीं नारायणावतारस्य दत्तस्य चरित्रे उपपत्तिमाह धर्म इति ।

निबन्धः—धर्मे समाधिरुत्कृष्टो ज्ञाने साध्यं तपः परम् । गुणाभिमानिज्ञानं हि खण्डे तन्मत ईश्वरः ॥ २६ ॥

प्रकाशः—"अयं हि परमो धर्मः" इति वाक्यादिपतृवृद्ध्यर्थं नारायणः समाधिं कृतवान्, दत्तश्च ज्ञानावतार इति तपश्च । ननु दत्तात्रेयो न भगवदवतारो गुणाभिमानिदेवत्वाद्यथा चन्द्र इत्याशङ्क्याऽऽह गुणाभिमानिज्ञानं हीति । खण्डसिद्धान्त एव विष्णोर्गुणाभिमानित्वम् । मुख्यसिद्धान्ते तु सत्त्वेऽप्यवतार एव । यथा नराद्यवतारः—यथा मत्स्यत्वादिप्राकट्यं तथाभिमानित्वप्राकट्यमिति । तथापि सन्देहात्कथं जीवमध्ये भगवदवतार इत्याशङ्क्याह तन्मत ईश्वर इति । खण्डमते वैष्णवे स एवेश्वरस्तेन न सन्देहः ॥ २६ ॥

---

मुभयोराह अत इति, मन्वन्तरमात्रे त्रेधोपयोगापेक्षायामपि द्वयोर्विद्यमानत्वात् । प्रथमस्त्वित्यादि, अतो न न्यूनतेति भावः ॥ २० ॥ मूले, बन्धोपि न भवेद्यथा । अत इति । बन्धभावोपि विसर्गस्य भगवत्कृतत्वादावश्यकः । अत उभयोरपेक्षितत्वादित्यर्थः । भगवद्भजननिरूपणस्येति । प्रपत्तिरूपस्य तत्प्रवणचेतोरूपस्य वेत्यर्थः ॥ २१ ॥

धर्मप्रकरणत्वादित्यस्य विवरणं कर्ममार्ग इत्यादि ॥ २२ ॥ तथापीति 'य एव जगदीश्वरः' इति वाक्यादत्रेः परब्रह्मस्वरूपनिश्चयाभावेपि ब्रह्मादीनां परब्रह्मस्वरूपनिश्चयसद्भावान् । कर्मण इति, तपोरूपस्यात्रिकर्मणः । मूलान्वयस्तु, धर्मकर्मणि त्रैविध्ये दस्मादधिदैवं त्रिधा, तस्माद् दत्तादीनां त्रयाणां सम्भवाभिधेति । तथा च यस्मात्फलत्रैविध्येन कर्मत्रैविध्यमनुमीयते तेन च कर्माधिदैवत्रैविध्यं, तेन हेतुना त्रयाणामागमनम् । तथा च, तेषां परब्रह्मस्वरूपज्ञत्वेप्यत्रेस्तदभावात्तस्यात्रित्वेन त्रयाणामाकाङ्क्षया सोमपस्यैव ध्यातत्वात्र तदनुरोधेन तथेत्यर्थः । उत्तरं हरिणैवेति, यद्यपि मूले ऊचुरित्युक्तं, तथाप्येकदा त्रिभिः कथने चित्तविक्षेपात्तदभावाय तथेत्यर्थः ॥ २३ ॥ तथापि हरिणेत्यस्यानिश्चयात्पक्षान्तरमाहुः अथवेत्यादि । तथा च सप्तमानुरोधेनात्रापि हरेरेवोत्तरदातृत्वमङ्गीकार्यमित्यर्थः ॥ २४ ॥ रुच्यनुसारेणेति तदुक्तमेकादशे स्कन्धे, "कालेन नष्टा प्रलये वाणीयं वेदसञ्ज्ञिते" त्युपक्रम्य सर्वेषां भृग्वादीनां मनोः सकाशाद्वेदाध्ययनं वेदवक्तृत्वं चोक्त्वा, अर्थकथनविषये तेषां प्रकृतिवैचित्र्याच्छ्रुत्यर्थो बहुधोदितः" इति "यथा प्रकृति सर्वेषां चित्रा वाचः स्रवन्ति ही" ति च । तथा च प्रमेयनिर्णये भगवत एव वाक्यं प्रमाणं नान्यस्य "किं विधत्ते किमाचष्टे" इत्यादिश्लोकत्रयेण तत्र भगवतैव तथा निर्णयस्य कृतत्वादितिभावः । तेन नेत्यादि । तथा चान्धहस्तिन्यायेन तेषां तावन्मात्रज्ञानान्न मिथ्यावादित्वं, भगवतः सर्वरूपत्वाच्च न प्रमेये विरोध इति तथा वचनं न दोषायेत्यर्थः । अत एव गीतायां "येऽप्यन्यदेवताभक्ताः" इत्याद्युक्तम्, अतो मुख्यसिद्धान्तेऽनुपपत्तिलेशोऽपि नेति भावः ॥ २५ ॥ इदानीमिति ऋषिस्वरूपतद्वचनविरोधपरिहारानन्तरम् । उपपत्तिमिति, धर्मोपयोगबोधिकामुपपत्तिम् । गुणाभिमानिज्ञानमिति, एते गुणाभिमानिन इति ज्ञानम् ।

मुख्यसिद्धान्ते अंशतोऽविभक्त इति विष्णुर्भगवानेव । तत्र हेतुः तस्य सर्वकृत्येति ।

**निबन्धः—अविभक्तोंशतस्तस्य सर्वकृत्या स्वतः फलम् । नांशतोऽभिमतेः पुष्ट्या कार्यासिद्धेर्विभागशः ॥ २७ ॥**
**अतः सामन्यतो वाञ्छा दोषाभावेपि सिद्ध्यति ।**

प्रकाशः—स एव हि सर्वं करोति । उत्पत्तिविनाशौ यथाकथञ्चिदपि भवतः । स्थितौ तु सर्वा कृतिरपेक्ष्यत इति स्वतः परमेश्वरादेव सर्वं फलं नांशतः अ[१]भिमानात् । अन्यथा तामसान्न पालयेत् । हेत्वन्तरमाह पुष्ट्या कार्यासिद्धेरिति । पुष्टिमार्गेण कार्यं च न कुर्यात् । विभागशश्च सर्वमार्गप्रवर्तनं न स्यात् । अतो ब्रह्मादीनां सामान्यतो वाञ्छाऽपि सिद्ध्यति । स्वत एवोत्तमत्वा-तुल्यत्वादिदोषाभावश्च । तस्मात्सुष्ठूक्तं दत्तात्रेयस्य भगवत्त्वम् ॥ २७ ॥

ननु सोमादिषु ब्रह्मादीनां धर्मा न दृश्यन्ते उत्पत्त्यादयः । तत्कथमवतार इत्याशङ्क्याह भिन्ना जाता इति ।

**निबन्धः—भिन्ना जातास्त एवात्र भेदे कार्यस्य सम्भवात् ॥ २८ ॥**
**अधिकाभिमतित्यागादंशतस्ते हि जज्ञिरे ।**

प्रकाशः—त एवैते परं भिन्नप्रकारेण जाताः तत्र हेतुः, भेदे कार्यस्य सम्भवादिति । एवं प्रकारेणाऽवतारे स्वाभिप्रेतं कार्यं न सिद्ध्यति । तत्कार्यं वंशकरणम् । योगेन रक्षा । तपसा चानुग्रहनिग्रहौ । कथमेवमत आह अधिकाराभिमतित्यागादिति । अंशत एव जाता इति नात्यन्तं गुणाभिमानस्तेषु ॥ २८ ॥

एवं धर्मे परम्परोपयुक्तान्निरूप्य दक्षे साक्षाद्धर्मोपयोगं विचारयति, अत्यन्तधार्मिको दक्ष इति ।

**निबन्धः—अत्यन्तं धार्मिको दक्षः पितृदेवव्रतः पुमान् ॥ २९ ॥**
**अभिमानी च तेनाऽस्य कन्याः षोडश ताः स्मृताः ।**

---

तत्कुत्र सिद्धमित्याकाङ्क्षायामाहुः खण्डसिद्धान्ते इति, ब्रह्मविष्णुरुद्रेषु चैतन्यं भिन्नमिति सिद्धान्ते । सत्वेपीति, अपिशब्दाद्रजस्तम-सोरपि । ननु यदि चैतन्यैक्यं, तदा तत्तद्ध्याने स स एव न प्रकटीभवेत्, नियामकाभावादित्यत आहुः यथा मत्स्येत्यादि । तथा च "यद्धिया त उरुगाय विभावयन्ती"ति न्यायात्प्राकट्यमिति भावनाया नियामकत्वात्तथा प्राकट्येऽपि न चैतन्यभेदापत्ति-रित्यर्थः । तथापि सन्देहादिति, सोमदुर्वाससोरवतारत्वाप्रसिद्ध्या सन्देहात् । स एवेत्यादि, गुणाभिमान्येवेश्वर इति दत्तस्य जीवमध्ये प्राकट्येपि नावतारत्वे सन्देह इत्यर्थः ॥ २६ ॥ नन्वेवं सति खण्डसिद्धान्तान्मुख्यसिद्धान्ते को विशेष इत्यत आहुः मुख्येत्यादि । ब्रह्मशिवौ तु विभक्तत्वादंशाविति न भगवद्रूपावित्यर्थः । नन्वेतौ विभक्तौ विष्णुरविभक्त इति कथं निश्चेयमित्या-काङ्क्षायामाहुः तत्र हेतुरित्यादि । "स एव हि सर्वं करोती"ति, "यतो वा इमानी"त्यादिश्रुत्या ईश्वर एव सर्वं करोति, अंशस्तु प्रतिनियतं कार्यम्, यथान्तर्यामी । ननु त्रयाणां प्रतिनियतकार्यकारित्वस्यैव स्मरणात् स्थितिकर्त्तरि विष्णावेव कथं सर्वकर्तृत्वमत आहुः उत्पत्तीत्यादि । यथाकथञ्चिदिति, अभिमानेपि । सर्वा कृतिरिति, स्थित्यर्थं त्रयीद्विषां हननं तदनुसारिणामुत्पादनं स्थापिता-नामभिवृद्ध्यर्थं तत्तदभीष्टदानमित्यादिरूपा । तथा च, यद्यभिमानी स्यात्तदा स्थापनमात्रमेव कुर्यान्न हननमुत्पादनं च, तत्करणाच्चानभिमानित्वं निश्चीयते । तेन चाविभाग इति स ईश्वर इत्यर्थः । ननु स्ववर्गपालनं स्वीयसृष्टत्वं शिवेप्यस्तीति नैकान्ततोऽनभिमानित्वं तेन निश्चेतुं शक्यमित्यत आहुः अन्यथेत्यादि । तथा च, यदि विभक्तोभिमानी स्यात्, *पारक्यपालनं न कुर्यादतस्तेषां पालनात्तद्व्यतिरेकनिश्चय इत्यर्थः । ननु तामसादिकल्पेषु शिवब्रह्मणोरपि तथात्वं स्मर्यत एवेति चेत्तत्राहुः हेत्वन्तरमाहेति । कार्यमिति । दशमस्कन्धोक्तं सविनयं भृगुस्तवनादिकार्यम् । अन्यथेति पदमत्रापि सम्बध्यते । यद्ययं तथा स्यादिदं कार्यं न कुर्यात्, तथा च, तयोः सत्त्वयोगेन परिपालकत्वेऽप्येतादृशकार्यकर्तृत्वेन भूयस्त्वपरीक्षणस्य काप्यस्मरणाद्विष्णावा-वेवानभिमानित्वस्य सत्त्वाधिक्यस्य वा निश्चय इत्ययमेव तथेत्यर्थः । ननु शिवरात्रिव्रतकथायां भिल्लमूर्तितस्य बिल्वपत्रपातस्य च शिवेनाभिषेकपूजात्वेनाङ्गीकारकथनात्तत्रापि सत्त्वाधिक्यं निर्णीयत एवेति चेन्न, तत्र लिङ्गव्यवधानेन तथाङ्गीकृतेः साक्षात्तथा-त्वाभावादित्याशयेन हेत्वन्तरमाहुः, विभागश इत्यादि । अन्यथेति पदमत्राप्यनुषज्यते । तयोः कार्यस्य कल्पसन्ध्यारूपोल्प एव कालस्तत्र प्रथमकाल उत्पत्तिवैयग्र्यान्न सर्वमार्गप्रवर्त्तनमिति 'एष आत्मपथोऽव्यक्तो नष्टः कालेन भूयसा, तं प्रवर्तयितुं देहमिमं विद्धि मायाभृतमि"त्यादिवाक्येषु नाशप्रवर्त्तनबोधकपदादिभिरवसीयते । यदि तयोस्तादृशसामर्थ्यं स्यात् । स्वस्वकालेवतीर्य कुर्यातां, तदा प्रवृत्तिः स्यादेव, यद्ययमपि तथा स्यादेतत्कालेपि सा न स्यात् । अतो न विभक्त इति निश्चेयमित्यर्थः ।

---

१. अभिमानत्वात् । * "पारक्यपालनं कुर्यात्" इति शुद्धप्रतिफलके पाठः ।

प्रकाशः—अभिमानित्वेन तामसः। तेनाऽस्य षोडशकलस्य मनोमयस्य कन्याः षोडश जाताः। पञ्चदश सगुणाः। एकाऽतिरिक्ता चेति ॥ २९ ॥

धर्माय त्रयोदशसमर्पणे हेतुमाह सर्वेष्विति।

**निबन्धः—सर्वेषु धर्मो मासेषु तज्जाता शुद्धिरेव च ॥ ३० ॥**

**त्रयोदश ततः कन्यास्ता धर्माय समर्पिताः।**

प्रकाशः—कालोयं धर्मे निमित्तमिति। मासाभिमानिन्यः शुद्ध्यभिमानिनी चेति ताः ॥ ३० ॥

परमा सिद्धिः सत्त्वेनेति प्रार्थनाभावेपि शुद्धसत्त्वे भगवदवतारो जात इत्याह सत्त्वमूर्त्ताविति।

**निबन्धः—सत्त्वमूर्त्तौ हरेर्जन्म धर्मादाकल्परक्षणे ॥ ३१ ॥**

**केवलो धर्ममार्गो हि नाऽत्यन्तमुपयुज्यते। इति दर्शयितुं रूपद्वयेनाविरभूद्धरिः ॥ ३२ ॥**

प्रकाशः—मूर्त्तिरित्येकदेशनाम सत्यादिवत्। अवतारप्रयोजनमाकल्पान्तं रक्षणम्। अयं विशिष्टः सर्ग इति न केवलं पुष्टिरहितो धर्म उपयुज्यते अत उभयज्ञापनार्थं रूपद्वयेनाऽवतीर्ण इत्याह केवल इति ॥ ३२ ॥

स्वरूपद्वयस्वरूपमाह सर्वातिरिक्तरूपेणेति।

**निबन्धः—सर्वातिरिक्तरूपेण नरः स्वावेशधारकः। तपोतिरिक्तकार्यं तु पूर्णे कृष्णे न चाऽन्यथा ॥ ३३ ॥**

प्रकाशः—सर्वकार्यकर्तृत्वात्सर्वरूपो नारायणः पुष्टिकार्यकर्तृत्वादतिरिक्तोवतारः। तत्राऽधिकारमाशङ्क्य परिहरति स्वावेशधारक इति। नरस्तु तादृशमंशं बिभर्ति न त्ववतार इत्यर्थः। "ताविमौ वै भगवतः" इति मूलवाक्यं कृष्णः स्वयं भगवानेतेन विरुद्ध्यत इति समाधत्ते तपोतिरिक्तकार्यं त्विति। मार्गद्वयस्थापनार्थमवतीर्णोपि पूर्णप्राकट्याभावे कार्यं न सेत्स्यतीति पूर्णे कृष्ण एव प्रविष्टावंशाविति मूलार्थः ॥ ३३ ॥

---

अन्यमप्युत्कर्षगमकमाहुः अत इत्यादि। सामान्यतो वाञ्छेति, अवतरणाद्याकाङ्क्षा। यद्युत्कृष्टो न स्यादेतदवतारादिकं तेषामाकाङ्क्षितं न स्यात् यत एवम्, अत उत्कृष्ट इत्यर्थः। एतेनान्यस्यापि सिद्धिमाहुः स्वत इत्यादि। इदं यथा तथा प्रहस्ते भिन्दिपाले च निपुणतरमुपपादितं मयेत्युपरम्यते। एवं विष्णावीश्वरत्वं साधयित्वा प्रस्तुतमाहुः तस्मादित्यादि भिन्नप्रकारेणेति गुणाभिमानं तिरोधाप्य ॥ २७–२८ ॥ अभिमानित्वेनेति धर्माभिमानत्वेन। मूले, पितृदेवव्रत इति. रजोमिश्रो गृहासक्तः ॥ २९–३१ ॥

उभयज्ञापनार्थमिति मार्गद्वयसम्बन्धिक्रियाज्ञानयोर्ज्ञापनार्थम् ॥ ३२ ॥ सर्वातिरिक्तरूपेणेति। सर्वरूपं ब्रह्माण्डात्मकप्रथमपुरुषरूपम्, अतिरिक्तमन्तर्यामिरूपम्। तथा च, सर्वसहितातिरिक्तरूपेणेत्यर्थः। ननु'एतन्नानावताराणां बीजमि' त्युपक्रम्यावतारकथने, नरनारायणयोः कथनात् कथमतिरिक्तावतारत्वावगम इत्यत आहुः सर्वकार्यकर्तृत्वादित्यादि। "यो वै भारतवर्षेस्मिन् क्षेमाय स्वस्तये नृणाम्। धर्मज्ञानशमोपेतमाकल्पादास्थितस्तपः" इतिवाक्येन सहस्रकवचवधेन च सर्वोपकारकरणादुर्वशीदानलक्षणपुष्टिकार्यकरणाच्च यथायथं सर्वरूपत्वमतिरिक्तरूपत्वं चावगन्तव्यमित्यर्थः। नन्वत्र "मूर्त्तिः सर्वगुणोत्पत्तिर्नरनारायणावृषी। ययोर्जन्मन्यदो विश्वमभ्यनन्दत्सुनिर्वृतमि"ति द्वयोर्जन्मोपक्रम्य परमोत्सवकथनादुभयोरत्वमादरणीयं, न तु नारायण एव द्विरूपत्वम्, तथा चैकैककार्यकर्तृत्वमुभयोरुभयकर्तृत्वं वा युक्तमित्याशयेनाहुः तत्राधिकारमित्यादि। नरे तादृशकार्यकर्तृत्वयोग्यतामित्यर्थः। तादृशमिति। प्रथमपुरुषीयं धर्मरक्षोपयोगिनमंशम्। अयं भावः। "एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी" इतिवत् "तुर्ये धर्मकलासर्गे नरनारायणावृषी" स्कं० १–३ इत्यत्रावतारद्वयानङ्गीकाराच्च द्वयोः पृथगवतारत्वम्, किन्तु द्वावेकोवतार उतैकस्मिन्नावेशः ? एक एवावतार इति वक्तव्यम्। तत्र प्रत्यक्षविरोधादत्रत्यब्रह्मादिकर्तृकस्तुतौ "एतेन धर्मसदनेन ऋषिमूर्त्तिना" इत्येकवचनाद्, एकादशेपि (अ० ४) "धर्मस्य दक्षदुहितर्यजनिष्टमूर्त्यां नारायण" इत्यारभ्य "ऊचुर्नारायणबलं शक्रस्त्रास विस्मितः" इत्येतैर्नारायणस्यैव माहात्म्यकथनाच्च प्रथमपक्षो दुर्घट इति नारायणस्यैवावतारत्वम्, नरस्य तु तादृशांशधारकत्वमित्युभयसामञ्जस्यायाङ्गीक्रियत इति। एवमेकं विरोधं परिहृत्य विरोधान्तरं परिहर्तुमाहुः ताविमावित्यादि। तप इत्यादि। द्रोणपर्वणि भगवता, "चतुर्मूर्त्तिरहं शश्वल्लोकत्राणार्थमुद्यतः, आत्मानं प्रविभज्याहं लोकानां हितमादधे ॥ एकमूर्त्तिस्तपश्चर्यां कुरुते मे भुवि स्थिता। अपरा पश्यति जगत्कुर्वाणं साध्वसाधुना ॥ अपरा कुरुते कर्म मानुष्यं लोकसंस्थिता। शेते चतुर्थी च परा निद्रां वर्षसहस्रकीम् ॥ या सा वर्षसहस्रान्ते मूर्त्तिरुत्तिष्ठते मम। वरार्हेभ्यो वरान्श्रेष्ठान्स्तस्मै काले ददाति सा" इति मूर्त्तीनां प्रतिनियतकार्यबोधनान्नारायणांशेन तन्मात्रकार्यं तपआदिकमेव कार्यम्, न त्वतिरिक्तं मुक्तिभक्त्यादिदानरूपम्, अत्र चातिरिक्तं "यत एतद्विमुच्यते" "भक्तियोगवितानार्थमि"त्यादिभिरुक्तं दर्शितं च तथेति कार्यलिङ्गकानुमानबलात्"कृष्णस्तु भगवान्स्वयमि"ति वाक्यं न स्तावकमित्यर्थः। तथा सति कथं विरोधपरिहार इत्यत आहुः मार्गेत्यादि। पुष्टिमर्यादयोः स्थापनाय, यद्यपि नारायणोवतीर्णस्तथापि पुरुषोत्तमप्राकट्याभावे तथेत्युभयसामञ्जस्यायैतद्वाक्यमेवं व्याख्ये-

एतस्मात् स्वाहास्वधोत्पत्तिं समर्थयन्नेवाग्निपित्रोस्तद्दाने हेतुमाह पितृदेवेति ।

**निबन्धः—पितृदेवव्रतत्वाच्च स्वाहान्ये सर्वदेवता । तथा चाग्निः पितॄणां तु नोपायस्तेन तत्तथा ॥ ३४ ॥**

प्रकाशः—अन्या स्वधा ते उभे जाते इति शेषः । स्वाहाया अग्निसमर्पणे हेतुः सर्वदेवतेति । यतः स्वाहा सर्वदेवतारूपा । अग्निरपि तथा "अग्निः सर्वा देवता" इति श्रुतेः । अतस्तस्मै सा दत्तेत्यर्थः । पितॄणामेकरूपस्याभावात्सर्वेभ्य एव सा दत्ता । तुशब्देन स्वधायाः सर्वपितृरूपतया सा व्यवच्छिद्यते ॥ ३४ ॥

भवाय सत्याः समर्पणे हेतुमाह अभिमानेति ।

**निबन्धः—अभिमानांशमादाय दीपकज्जलवत्परा । षोडशी कन्यका जाता ब्रह्मावेत्य विचार्य च ॥ ३५ ॥**

**तदधिष्ठातृदेवाय दापयामास सिद्धये । अभिमानेन सम्बन्धस्तेन द्वेषः प्रवर्धितः ॥ ३६ ॥**

प्रकाशः—ननु धर्मिणं विहाय केवलधर्मस्यैव कथमुत्पत्तिः सम्भवतीत्यत आह दीपकज्जलवदिति । यथा तेजसः स्वतः शुद्धत्वेन स्नेहजत्वे तन्मलरूपं कज्जलं पृथक् भवति तथा वैदिककर्मणोपि सर्ववस्तुयाथात्म्यप्रकाशकस्य सदोषकर्तृकत्वेनाऽत्र तद्दोषभूतोभिमानः पृथक् जात इत्यर्थः । अत एव तस्याः स्वजनकगृहभर्तृमालिन्यहेतुत्वं नाशशापकारणात् । षो[1]डशत्वं च । तस्य प्रा[2]न्तभाग एवोत्पत्तेः । ब्रह्मा तस्या एवंरूपत्वं ज्ञात्वा तामसत्वेन स्वमूलकारणेऽर्पिता सती न स्वकार्यसमर्था भविष्यति स्वमूलकारणतैलार्पितवद्, अन्यत्र स्थापिता तु वायूपनीततद्वत्कालवशात्सर्वत्र स्वप्रचारं करिष्यतीति विचार्य तदधिष्ठातृदेवाय शिवाय दापयामासेत्यर्थः । सिद्धये स्वरूपसिद्धय इत्यर्थः । सात्त्विकादिभ्यो दाने तामसत्वेन तस्याः स्वरूपनाशप्रसङ्गादिति भावः । यद्वा । सिद्धिः स्वमूलरूपे लयः ।

( अ० २ ) शिवद्वेषहेतुमाह, अभिमानेति । तस्या भिन्नत्वेन स्थितत्वात्तत्रापि तत्कार्यमिति भावः ॥ ३५–३६ ॥

नन्वत्र तत्सम्बन्धेन द्वेषो युक्तो दक्षस्य त्वभिमानस्य पृथग्भावात्कथं स इत्याशङ्क्याऽस्याप्यभिमानं सम्बन्धहेतुमाह, दुहितुरिति ।

**निबन्धः—दुहितुः स्मरणान्नित्यमभिमानो विवर्द्धते । द्वेषश्च धर्माकरणात्कर्तुश्चाऽनादराद्बहिः ॥ ३७ ॥**

**उद्बोधविनिवृत्त्यर्थमदृष्ट्यै धर्मकर्मणि । सम्बन्धविनिवृत्त्यर्थं शापमाहाधिदैविके ॥ ३८ ॥**

प्रकाशः—अत एव द्वेषश्च । ननु शापे को हेतुस्तत्राप्येवंविधशापे को हेतुस्तत्राह धर्माकरणादिति । स्वयं वैदिकधर्माकरणात्तद्धर्मकर्तुर्दक्षस्यानादराच्चेति हेतुद्वयं शिवनिष्ठं शापे । द्वेषस्यान्तःसत्त्वेन तस्य हविर्भागित्वे दर्शननियमेन तत्सम्भवे च बहिरपि द्वेषोद्बोधः स्यादिति तन्निवृत्त्यर्थं धर्मरूपे कर्मणि तस्याऽदर्शनाय तादृशे कर्मणि सम्बन्धनिवारणं शापं दत्तवानित्यर्थः ॥ ३७–३८ ॥

ननु प्रभौ तूष्णीम्भूते स्वस्यापि तथैवोचितं तत्कथं नन्दिशाप इत्यत आह धर्म इति ।

**निबन्धः—धर्मोऽसहिष्णुस्तु नन्दिरधिदैवनिराकृतिम् । फलहानिर्मुखाचादौ साधनानामतः परम् ॥ ३९ ॥**

---

यमित्यर्थः । *मूलयोजना तु, तौ पूर्वोक्तौ नरनारायणाविमावेतत्कल्पीयौ वै निश्चयेन कार्यबलात्, भगवतो हरेरंशौ न त्ववतारबीजपुंस एव, मूलभूते कृष्णे आगतौ प्रविष्टौ, च पुनः भुवो भारव्ययाय कृष्णौ "कृष्णं च वर्णं तमसा जनात्यये" इति कार्योपहितस्य तमसः कृष्णवर्णत्वेन तादृशौ सन्तौ यदुकुरूद्वहौ जाताविति । तथा चोभयरूपविशिष्टो नारायणांशो भगवत्येव स्थितः । नरांशस्तु भगवति प्रविश्य ततोऽर्जुने प्रविष्ट इति बोध्यम् । तदुक्तं तन्त्रे, "अर्जुने तु नरावेशः कृष्णो नारायणः स्वयमि"ति श्रीधरीयात् स्वयमित्यनेन मूलरूपमुच्यते, अवतारस्य बदरिकाश्रमे सत्त्वादिति । अत्र सर्वत्र तत्तद्वाक्यबोधितकार्यलिङ्गकानुमानमेव मानमिति न कोपि चोद्यावसरः ॥ ३३ ॥ एतदन्तं श्रीमदाचार्यैः कृता व्याख्या, एतदग्रे प्राभवीया ।+

सर्वदेवतारूपेति, सर्वदेवतायास्तादृशेत्यर्थः । तद्वदिति कज्जलवत् ॥ ३५ ॥

एवं द्वाविंशतिभिः प्रथमाध्यायो विचारितः ।

अतः परं नवभिर्द्वितीध्यायार्थं विचारयन्ति । शिवद्वेषेत्यादि । तत्रापीति शिवेपि ॥ ३५–३८ ॥ स्वाधिदैवनिराकृतिमिति, धर्मस्य मूलं वेदः शिवस्तद्रूपो "वेदः शिवः शिवो वेद" इति वाक्यात् । अतो धर्मनियामकत्वात्तदेवं तस्य निराकृतिमित्यर्थः ।

---

१. षोडशी । २. शात । * भागवतपद्ययोजना तु । + श्रीपुरुषोत्तमचरणा इदमेवमाज्ञापयन्ति, इतोग्रे श्रीप्रभुचरणैः प्रकाशो विरचित इति ।

प्रकाशः—तुशब्देन शिवव्यवच्छेदः। शिवस्य सहिष्णुत्वेपि नन्दिनो धर्मरूपत्वेन स्वाधिदैवनिराकृतिमसहिष्णोः शापोक्तिरित्यर्थः। फलहानिस्तत्त्ववैमुख्यम्। सर्वस्यापि धर्मस्य तत्फलकत्वात्। धर्मेणाऽतथाभावेपि सत्सङ्गादिनापि कदाचिद्वैराग्यादिसाधनसम्पत्तौ तत्प्राप्तिः स्यादिति तन्निवृत्त्यर्थमपि पृथक्साधनहानिशापः। अन्यथा साधनानां स्वतोऽपुरुषार्थत्वात्फलाभावकथनेनैव चारितार्थ्यात्तद्धानिकथनं व्यर्थं स्यात्॥ ३९॥

नन्वेवं कथं ब्राह्मणानां सर्वनाशं कृतवाँस्तत्राह दैवाभाव इति।

**निबन्धः—दैवाभावे धर्महानिरित्येवं सुनिरूपितः। सम्बन्धवारकद्धर्मे तन्नाशासहनो भृगुः॥ ४०॥**

**अदृष्टयै धर्मरूपत्वे दर्शनात्क्षोभसम्भवः॥ ४०½॥**

प्रकाशः—नन्दिना स्वयमधिकं किञ्चिन्नोक्तं, किन्तु दक्षशापकृताधिदैवसम्बन्धाभावे धर्मस्य स्वत एव हीनत्वात्तत्फलाभावोप्यनुक्तसिद्ध एव स्पष्टतयोक्तोऽनेनेत्यर्थः। अत एव सुनिरूपित इत्युक्तम्। भृगुशापे हेतुमाह तन्नाशासहन इति। धर्मनाशासहन इत्यर्थः। तत्र हेतुः भृगुरिति। धर्मरूपब्रह्मशरीरत्वमूपत्वादिति भावः। प्रथमतो हि त्वच्येव बाह्यदुःखसम्भवः। अत एव धर्मे तत्सम्बन्धवारणकर्ता जातः। अत्र[1] हेतुः अदृष्टया इति। विपरीते बाधकमाह धर्मरूपत्व इति॥ ४०½॥

पञ्चभिर्भृगूक्तार्थमनुवदति सार्धेन मुख्य इति।

**निबन्धः—मुख्ये तदप्रवेशश्च तस्याधर्मत्वमेव च॥ ४१॥**

**अधर्मे परिनिष्ठा च तथा कापालिकावधि। तदुपाधेः स्वधर्मेऽस्मिन्नाधिदैवत्वमेव च॥ ४२॥**

प्रकाशः—वैदिके तद्धर्मस्याऽप्रवेश उक्त इति ज्ञेयम्। चकारात्तत्कर्तृणामपि। तस्य धर्मस्येत्यर्थः। एवकारेणेतरव्यवच्छेदः। चकारात्तेषामपि। अग्रिमचकारान्नरकोऽपि। "यत्र दैवं सुरासवम्" इत्यनेन कापालिकावधित्वम्। तेषां तथात्वात्। तदुपाधिः पाषण्डत्वोपाधि। पाषण्डत्वप्रयोजको वेदनिन्देति यावत्। यद्वा तदुपाधेस्तेषां पाषण्डिनां स्वमते निन्द्यत्वेनाऽधर्मतावच्छेदक उपाधिर्वेदस्तस्य स्वमत आधिदैवत्यमित्यर्थः। यद्वा तद्ब्रह्म, उपाधिः पाषण्डित्वावच्छेदको धर्मस्तन्निन्दा, तयोः समाहारस्तथा। तथा च, स्वधर्मे वेदस्याधिदैवत्वम्। अस्मिन् पाषण्डधर्मे तन्निन्दायास्तथात्वं मुख्यत्वमिति। यद्वा तत्पदेनाशौचवेदनिन्दादिकमुच्यते। तत्र स्वयं तदुक्तधर्माकरणात्तत्प्रयोजकात्तादृक्शरीरो वा शिव एव तस्य तथात्वमिति "दैवं वो यत्र भूतराट्" इति वाक्यात्। एवकारेणेतरव्यवच्छेदः। चाद्वक्तृत्वमपि॥ ४२॥

अस्य शापस्य पूर्वस्मादाधिक्यमाह, एतस्येति—

**निबन्धः—एतस्य प्रतिघातस्तु न कदाचिद्भविष्यति। शिवद्वेषनिवृत्त्या तु धर्मः सिद्ध्येदपि क्वचित्॥ ४३॥**

प्रकाशः—"ब्रह्मदण्डं दुरत्ययम्" इति वाक्यादिति भावः। एतेन वेदानुसारेण भगवद्भजनं विहाय नाऽन्यमार्गे यतनीयमिति सूचितम्। ननु नन्दिनापि धर्मसम्बन्धवारणात्कथं निस्तार इत्यत आह शिवद्वेषेति। "सम्मुह्यन्तु हरद्विषः" इति वाक्यात्तद्द्वेषयुक्तेष्वेव तस्य शापात्तन्निवृत्तौ धर्मः सिद्ध्येदित्यर्थः। अपीति सम्भावनायाम्। पूर्वोक्तवैपरीत्ये सम्भावनापि नास्तीति भावः। क्वचिदिति यदि भगवति समर्पितं भवतीत्यर्थः॥ ४३॥

---

तत्फलकत्वादिति, तत्त्वज्ञानफलत्वात्॥ ३९॥ मूले, सम्बन्धवारकदिति वारो वारणं, तत्कर्त्ता। धर्मरूपत्व इति, शिवभागदानस्य तथात्वे। अत्रेति शिव इत्यर्थः॥ ४०½॥ पञ्चभिर्भृगूक्तार्थमिति। "भवव्रते"त्यादिपञ्चश्लोकैर्भृगुणोक्तस्यार्थम्। एकेन श्लोकद्वयोक्तमर्थमुक्त्वा अर्धेन व्याख्यानभेदैस्त्रयाणामर्थं सङ्गृह्णन्ति तदुपाधिरित्यादि। तत्र हि "ब्रह्म च ब्राह्मणाँश्चे"ति श्लोके वेदनिन्दया पाषण्डित्वमुक्तम्। एष एव हीति द्वितीये भगवत्प्रमाणकस्य वेदमार्गस्य सनातनत्वमुक्तम्। तद्ब्रह्मपरममिति तृतीये च तादृशवेदमार्गगर्हणेन भूतनाथदैवकपाषण्डमार्गगमनमुक्तम्। तत्र प्रथमे पाषण्डित्वप्रयोजिकाया वेदनिन्दाया वैदिकधर्मे न नियामकत्वमित्युक्तम्। तेन "गिरः श्रुतायाः पुष्पिण्या मधुगन्धेन भूरिणा। माध्व्या चोन्मथितात्मानः" इति पादत्रयोक्तदोषपरिहारादकिञ्चित्करत्वमुक्तमित्येकोर्थः। द्वितीयमाहुः। यद्वा, तदुपाधेरित्यादि। तथा च "युष्मन्मते गिरः" इति वाक्याद्वेदो धर्मस्याधर्मतावच्छेदकः सोऽस्मन्मते तस्य धर्मतावच्छेदक इति वेदानुसरणे पूर्वोक्तदोषाऽसम्बन्धाच्छापोऽकिञ्चित्कर इत्यर्थः। अस्मिन्व्याख्याने 'एष एव ही'ति श्लोको बीजम्। एवं व्याख्यानद्वयेन 'ब्रह्म च ब्राह्मणाँश्चे'ति श्लोकतात्पर्यमुक्तम्। अग्रिमव्याख्यानद्वयेन 'तद्ब्रह्म परमं शुद्धमि'त्यस्य तात्पर्यमाहुः यद्वा तद्ब्रह्मेत्यादि। तयोः समाहार इति, तत्सहितो धर्मस्तद्धर्म इति समासबोधितं साहित्यम्। वेदतन्निन्दयोरेककार्यान्वयाभावात्साहित्यमसङ्गतमित्यरुच्या पक्षान्तरमाहुः यद्वा, तत्पदेनेत्यादि। स्वयमिति, नन्दी। तथात्वमिति,

---

१. तत्र।

शिवस्य पूर्वज्ञानत्वेन कथं वैमनस्येन गमनमित्याशङ्क्य तत्र हेतुमाह द्वैतेति ।

**निबन्धः—द्वैतोत्पत्त्या शिवः किञ्चिद्विमना न हि पूर्ववत् । अन्तरायसमुत्पत्त्या भीतास्ते कृष्णसात्कृतम् ॥ ४४ ॥**

**सत्रं विधाय तत्तीर्थे स्नाता निर्मलतां ययुः ॥ ४४½ ॥**

प्रकाशः—पाषण्डधर्मोत्पत्त्या शिवो विमना जात इत्यर्थः । तथापि स्वस्य न काचित्क्षतिरिति किञ्चिदेव तथा । नन्वेवं सति वैमनस्यमयुक्तम्, धर्मस्यापि सत्त्वादित्यत आह न हीति । पूर्वं यथा धर्मप्रचारस्तथाग्रे न हीत्यर्थः । पाषण्डानां प्रचुरत्वादिति भावः । कालमर्यादया तथात्वे स्वस्य वैमनस्यं न स्यात् स्वनिमित्तं तथात्वे युक्तमेव तथात्वमिति हिशब्द आह । ननु नन्दिशापे सति कथं स'त्रसमाप्तिरित्यत आह, अन्तरायेति । सत्रमध्य एव सत्रनाशकविघ्नोत्पत्त्या भीताः सन्त ऋषित्वेन भगवतैव निर्दोषत्वेन तत्सिद्धं ज्ञात्वा तदधीनं तत्र समर्पितं तदेकेज्यं च कृत्वेति तत्र समाप्तौ साधनमुक्तम् । तत्तीर्थे भगवत्तीर्थे, गङ्गया त्वलौकिकशरीर-सम्पत्तिर्भविष्यति पूर्वदोषनिवृत्तिश्च सर्वदोषनिवर्तकचरणरजोयुक्तत्वात् । कालिन्दी पुष्टिमार्गीयेति मर्यादया तथाभावेपि पुष्ट्यैव सर्वं करिष्यतीति विचार्य तदुभयसङ्गमे स्नाता निर्मलतां ययुरित्यग्रिमधर्मसम्पत्तौ हेतुरुक्तः ॥ ४४½ ॥

( अ० ३ ) अतः परं तृतीयाध्यायार्थं विचारयन् कर्मजनिताभिमानरूपसतीसम्बन्धप्रयुक्तत्वेन द्वेषस्य शापेन कर्म-सम्बन्धाभावे च तत्प्रयुक्तद्वेषः शिवेऽसम्भावितः दक्षेऽप्यत एवासम्भावित इत्यत्र द्वेषनिरूपणमनुपपन्नमित्याशङ्का शापेनेत्यादि-नाऽनूद्य समाधत्ते ।

**निबन्धः—शापेन धर्मसम्बन्धे वारितेपि शरीरतः ॥ ४५ ॥**

**सम्बन्धसत्तया द्वेषो ह्या[२]निमित्तं विवर्द्धते । सम्बन्धस्य द्विरूपत्वादुभयोर्द्वेषसङ्कथा ॥ ४६ ॥**

प्रकाशः—शरीरत इति । कारणसम्बन्धाभावेऽपि प्राचीनतत्कार्याभिमानरूपसतीशरीरस्य स्वजन्यत्वात्तत्सत्तया तत्प्रयुक्तसम्बन्धस्याऽपि सत्त्वाद् द्वेषोप्यनिमित्तं निमित्तभूतसतीशरीरं मर्यादीकृत्य विशेषेण वर्द्धत इत्यर्थः । शिवे हेतुमाह सम्बन्धस्येति ॥ ४६ ॥

ननु महद्द्वेषिणं ब्रह्मा कथमभिषिक्तवानित्याशङ्क्य तथाकरणे [३]तस्याभिप्रायमाह अतिवृद्ध्येति ।

**निबन्धः—अतिवृद्ध्या पतन् द्वेषं त्यक्ष्यतीति चतुर्मुखः । मानवृद्ध्यधिकारं हि दत्तवान् धर्मनाशकम् ॥ ४७ ॥**

प्रकाशः—महद्द्वेषेण पतनस्यावश्यकत्वेऽप्यतिवृद्धौ मानस्य शीघ्रं पतन् पाते तद्द्वेषस्य हेतुत्वं ज्ञात्वा तं त्यक्ष्यतीति विचार्य मानस्य वृद्धिर्यस्मात्तादृशमधिकारं दत्तवानित्यर्थः । अधिकारस्य महद्विषयत्वाद्धर्मनाशकत्वम् । तत्र तदवमाननसम्भवाच्छि-वावमानकर्तुस्तादृशाधिकारो युक्त एवेति हिशब्दार्थः । तेन शिवद्वेषजपातसहायकरणं ब्रह्मण उक्तम् । अत एव दक्षप्रतीत्या मानदानं स्वाभिप्रायस्त्वेतादृश इति सर्वतोमुखमेतत्करणमिति ज्ञापनाय चतुर्मुख इत्युक्तम् ॥ ४७ ॥

तेनाभिमानोऽभूत् । कर्मणा वाजपेयेनाप्यभूत् ब्रह्मिष्ठाभिभावनेन चेत्युक्तानुक्तसमुच्चयार्थश्चकारः । तत्र हेतुः वाजपेय इति ।

**निबन्धः—कर्मणा चाऽभिमानोऽभूद्वाजपेयो यतोऽधिकः । बृहस्पतिसवो मुख्यः क्रममात्रमिहोच्यते ॥ ४८ ॥**

**सा काष्ठा ब्राह्मणस्योक्ता चितिरङ्गमसत्रिणाम् ॥ ४८½ ॥**

प्रकाशः—सर्वेभ्यः कर्मभ्य इति शेषः । तदा बृहस्पतिसवकरणं किमर्थमित्यत आह बृहस्पतिसव इति । ब्राह्मणस्याऽयमेव मुख्य इत्येतत्करणार्थमेव तत्करणं "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इति विधिवाक्यात् । एतदेवाह क्रममात्रमिति । अत्र सर्वत्र हेतुः सा काष्ठेति उत्कर्षावधिरित्यर्थः । अस्यैतादृशत्वेनैतत्करणेऽन्यस्य वाजपेयादेः करणासम्भवेन तस्य च सर्वाधिकत्वेनो-

---

विगर्ह्यपाषण्डं यातेति कथनात्पाषण्डाधिदैवत्वम् । वक्तृत्वमिति, पाषण्डशास्त्रवक्तृत्वम् । तेनात्रेदं सिद्धम्-शैवव्रतकर्तॄणां शैवव्रतस्य च वैदिकधर्मेष्वप्रवेशस्तत्कर्तॄणां तदनुसारिणां च पाषण्डित्वम्, अन्ते कापालिकत्वम् । न चात्र कापालिकस्यैव निन्दा न तु व्रतान्तरस्येति वाच्यम् । "नष्टशौचा मूढधियः" इति शिवदीक्षावतां पृथक्शापवैयर्थ्यापत्तेः । तद्दीक्षारहितानामपि व्रतधारणतद्धार्यनुसरणमात्रेणापि सच्छास्त्रपरिपन्थित्वे शापान्तरं विनापि तत्सम्भवात् । तथा वेदवैदिकधर्मनिन्दाकरणेन तादृशशापभञ्जनाद्वेदनिन्दायाः पाषण्डताजननद्वारा नरकहेतुत्वमिति । अपीति सम्भावनायामित्यादि । तथा च शिवद्वेषो न कार्य इत्येव मुख्यः पक्ष इत्यर्थः ॥ ४२-४४½ ॥

एवं सत्रिणां नैर्मल्यकथनात्तेन द्वितीयाध्यायार्थ उक्तः ।

---

१ न तत्र । २. ध्यानिमित्तम् । ३. तथा ।

च्छित्तिर्मा भूदिति पूर्वकर्तव्यत्वेन विधिरिति भावः। ननु वाजपेयेऽग्निचयनस्य च्छान्दोग्य उक्तत्वात्कथं न तत्कृतिरित्यत आह चितिरिति अस्य सत्रित्वान्न करणापेक्षेति भावः ॥ ४८½ ॥

ननु "अपहतपाप्मा स्वाध्यायः" इति श्रुतेः कथं वैदिके कर्मणि तत्राऽप्युत्कर्षकाष्ठाभूते ब्रह्मिष्ठब्राह्मणकर्तृके नाश इत्यत आह दैवादित्यादि।

**निबन्धः—दैवा"न्निर्ऋतिगृहीते देवयजने"ऽभवन्मखः ॥ ४९ ॥**

**तेन नाशस्ततो नाऽत्र वैदिकेऽपि हि दूषणम्।**

प्रकाशः—"निर्ऋतिगृहीते देवयजने याजयेद्यं कामयेत निर्ऋत्याऽस्य यज्ञं ग्राहयेयमित्येतद्वै निर्ऋतिगृहीतं देवयजनं यत्सदृश्यै सत्याऋक्षं निर्ऋत्यैवाऽस्य यज्ञं ग्राहयति" इति श्रुतेस्तादृग्देवयजने मखस्य जातत्वान्नाशस्याऽऽवश्यकत्वे तन्नाशे वैदिके मार्गे न दूषणमित्यर्थः। श्रुत्युक्तत्वात्तत्प्रत्युत भूषणमिति भावः। इममेवाऽर्थं हिशब्देनाऽऽह। भृग्वादीनां सर्वज्ञत्वेन कथं तादृग्देवयजनसम्पत्तिरित्यत उक्तं दैवादिति। भगवदिच्छातो दक्षादिदुरदृष्टाद्वेत्यर्थः। एतेनाऽधिकारकर्म तादृग्देवयजनरूपं दोषत्रयमुक्तम् ॥ ४९½ ॥

ननु "तस्मिन् ब्रह्मार्पय" इत्यादिना दक्षयज्ञोत्सवनिरूपणस्य किं प्रयोजनं कथं वा पतिभक्तायाः सत्यास्तदगमने गमनाभिलाषेत्याशङ्क्य तदभिप्रायमाह, उच्छ्रितिरिति।

**निबन्धः—उच्छ्रितिः शिवविद्विषे नेयं भवति कस्यचित् ॥ ५० ॥**

**अतः सा विघ्नकर्त्री हि तत्प्रारब्धविनिर्मिता। अधिदेवो महादेवस्तेन वारणमुक्तवान् ॥ ५१ ॥**

प्रकाशः—अयमर्थः। "हन्ति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः" इति वाच्याच्छिवविद्वेषे सतीदृश्युन्नतिरसम्भावितेति जानन्ती तां दृष्ट्वा विघ्नकरणार्थमेव प्रवृत्तेति ज्ञापयितुं तन्निरूपणमिति तादृगुच्छ्रित्यदर्शने विघ्नमेव न कुर्यादिति भावः। पतिभक्तत्वाद्युक्तं तत्करणमिति हिशब्दार्थः। तदुन्नतौ कोपपत्तिरित्यत आह तत्प्रारब्धेति। भगवद्दत्तत्वाद्वृत्त्यर्थं च। तथा सति तत्र विघ्नकरणमशक्यमेव स्यात्। अथवा यतः सा विघ्नकर्त्री जाता तत्तस्मात्कारणात्प्रारब्धविनिर्मितैवोच्छ्रितिर्न भगवत्कृतेत्यर्थः। ननु प्रारब्धस्य भोगैकनाश्यत्वेन तन्निर्मितायाः कथमेतन्नाश्यत्वम्, न च तत्प्रारब्धं तावदेवेति वाच्यम्, स्वकारणाभावादेव तदभावे सत्यास्तत्राऽहेतुत्वापातात्, न च कारणनाश एवाऽनया कृत इति वाच्यम्। अनारब्धकार्ये एव तु पूर्वे तदवधेः। "भोगेन त्वितरे क्षपयित्वा सम्पद्यते" (अ. ४-१-१९) इति तत्त्वसूत्रविरोधात्। न च द्वारत्वम्, स्वतन्त्रकर्तृत्वोक्तिविरोधात्। अग्रे च तस्य भोगकथनाच्चेति चेत्सत्यम्। नाऽत्र प्रारब्धनाश उच्यते। किन्तु सर्वकर्मदहनतत्त्वज्ञानाप्रतिबद्धस्याऽपि प्रारब्धजनितभोगारम्भस्य महद्द्वेषेण प्रतिबन्धो जात इति महद्द्वेषस्याऽधिकबलत्वमिति सम्प्रदायविदः। वस्तुतस्तु महद्द्वेषेण तस्य शुभप्रारब्धमपि नष्टम्। न च तस्या अप्रयोजकत्वम्। द्वेषस्य स्वजनितत्वेन तस्मिन् फलपर्यवसायित्वकर्तृत्वादेतस्याः। न च तत्त्वसूत्रविरोधस्तयोरीदृग्भिन्नतद्विषयत्वात्। अत एव तादृक्प्रारब्धदक्षशरीरनाशोऽपि। अग्रिमा सम्पत्तिस्तु भगवतैव दत्ता जीवनमपि। अत एव भगवान् बादरायणो महता प्रबन्धेन तत्त्वज्ञानिनस्तूभयकर्मनाशं प्रतिपाद्याऽऽह "अतोऽन्यापि ह्येकेषामुभयोः" इति हि यस्मात्कारणात्पूर्वोक्तश्रुतिविलक्षणाऽन्यापि श्रुतिरस्ति, अतो हेतोरेकेषां पुरुषाणामुभयोः प्रारब्धाप्रारब्धयोर्नाशो भवतीत्यर्थः। श्रुतिस्तु "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इति। स्पष्टार्थेयम्। न च काम्यकर्मविषयेयमिति वाच्यम्। "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशाद्" (अ. ४-१-१३) इतिसूत्रेण ज्ञानप्राप्त्यनन्तरं पूर्वोत्तरपापसम्बन्धाभावमुक्त्वा "इतरस्याऽप्येवमसंश्लेषः पाते तु" (अ. ४-१-१४) इति सूत्रेण पुण्यस्याप्यविशेषेण तथोक्तत्वात्तत्कथनेनैव काम्यस्याऽप्युक्तत्वात्पुनस्तत्कथनमनुपपन्नमेव स्यात्। किञ्चैवं "द्विषन्तः पापकृत्याम्" इतिपदं निरर्थकं स्यात्। पापस्य काम्यस्याऽसम्भवात्। उभयशब्दस्य च व्यासजैमिनिपरत्वमसङ्गतम्। सन्निधौ जैमिनेरश्रुतत्वात्। सामान्यशब्दस्योपस्थितार्थार्थकत्वनियमात्। न च पुण्यपापयोरसूत्तत्वेन यथाश्रुतार्थस्याऽसम्भवाद् ब्रह्मविदि सौहार्दकरणद्वेषाकरणयोरेव श्रुतेस्तात्पर्यमिति वाच्यम्। एकादश्युपवासाशक्तस्य पत्नीकृतोपवासदानेन तत्पुण्यप्राप्तेः। पूरोश्च ययातिजराप्राप्तेः श्रवणादत्रापि तथा सम्भवात्। ननु तदुद्देशेन कृतकर्मणा तस्मिन्नेव पुण्यमुत्पद्यत इति चेन्न। पुण्यदानवैयर्थ्यापातात्। जरायामेवं वक्तुमशक्यत्वाच्च। किञ्च तदनुद्देशेनाऽपि कृतैकादशीरात्रिजागरणपुण्य-

---

अतः परं तृतीयाध्यायार्थसाधिकैः सप्तभिः विचारयन्ति, अतः परमित्यादि। महद्विषयत्वादिति प्रजापतिविषयत्वात् ॥ ४७ ॥ ननु वाजपेयात् पूर्वमपि बृहस्पतिसवस्य विहितत्वात्तन्मात्रकरणेपि काष्ठासिद्धेर्वाजपेयकरणं किमर्थमित्याशङ्कायां 'वाजपेयेनेष्ट्वे'तिवाक्यतात्पर्यमाहुः अस्येत्यादि। अधिकारकर्मेत्यत्र दोषत्रयगणने कर्मपदेन ब्रह्मिष्ठाभिभवरूपं कर्म ज्ञेयम् ॥ ४८½ ॥

सतीदृशीति, सति ईदृशीति पदच्छेदो बोध्यः। ननूच्छ्रितेः शिवद्वेषोत्तरकालीनत्वात्तस्मिन् सति तदसम्भवकथनमित्याशङ्क्य तत्सत्त्वेपि तद्भवनहेतुकथनाय पक्षान्तरमाहुः अथवेत्यादि। तत्राहेतुत्वापादादिति, उन्नतिविघ्ने अहेतुत्वापातात्। कारणनाश

---

१. पुस्तकान्तरेषु किञ्चेतिपदं नास्ति।

लेशदानेन प्रेतत्वमुक्तिश्रवणाच्च। न चोपाख्यानानामयथार्थत्वम्, बाधकाभावात्। ननूक्तममूर्त्तत्वमिति चेद्। अत्रेदं विचारणीयम्। लौकिकी युक्तिरलौकिकार्थनिरूपणे बाधिका न वेति। किमत्र युक्तम्, नेति, कुतः, भिन्नविषयत्वात्। अन्यथा स्वकृतकर्मणान्यस्मिन् फलभोगस्य युक्तिबाधितत्वेन तत्राऽपि प्रवृत्त्यनुपपत्तिरन्योद्देशेन कर्मकरणे गयाश्राद्धादिषु च, वचनमेव तत्र साधकमिति चेत्तुल्यम्। ननु स्यादेवं यदि "सुहृदः साधुकृत्याम्" इत्यादिषु पूर्वं वाक्यार्थबोधः स्यात्। स एव न सम्भवति। अमूर्त्तत्वेनाऽयोग्यताज्ञानस्य प्रतिबन्धकत्वात्। अन्यथाऽनलः शीतल इत्यत्राप्यन्वयबोधः स्यात्। अतोऽन्योर्थः कल्प्यते प्रमाणवाक्यत्वादिति चेन्न, अनवबोधात्। तथा हि न पित्तदूनरसनेन्द्रियस्येदम्प्रथमतया सितां भक्षयतः सिता मिष्टेति वाक्येऽयोग्यताज्ञानमस्तीति तद्वाक्यं बाधितार्थं भवति। न ह्यविद्यावलिप्तबुद्धीनामनुभवादिकं ब्रह्मविदनुभूतिविषयं श्रौतमर्थं बाधितुमर्हति। अत एव "पुत्रा दायमुपयन्ति" इत्युक्त्वा तदुक्तमेतत्साम्यसूचनार्थम्। तेन महदनुग्रहादन्याप्रतिबध्यशुभफलप्राप्तिर्विनापि पुण्यम्। तद्द्वेषात्तादृशदुःखप्राप्तिर्विनापि पापमिति फलितम्। एवमेव दक्षेऽपि। प्रकरणार्थोऽप्यत एव सङ्गच्छते। भगवतैव धर्मसिद्धिरितिरूपस्तेन महद्द्वेषतदनुग्रहासहकृतयोरेव शुभाशुभप्रारब्धयोर्भोगैकनाश्यत्वमित्यलं विस्तरेण। अथवा, सत्या विघ्नकरणावश्यकत्वे हेतुमाह तत्प्रारब्धेति। तद्धाविविघ्नजनकं यत्प्रारब्धं तन्निर्मिता सतीत्यर्थः। पत्यर्थमेव तथा प्रवृत्तावस्यास्तेन निवारणं कुत इत्यत आह अधिदेव इति। यज्ञस्य सत्या अप्यधिदेवः शिव इत्यस्यास्तत्र गमनेऽस्या अपि नाशो यज्ञस्यापीत्युभयरक्षणार्थं निवारणमुक्तवान्, न तु कृतवान्॥ ५१॥

(अ० ४) तत्र हेतुः स्वगृह इति।

**निबन्धः—स्वगृहे मरणे तस्या द्वेषवृद्धिर्भवेत्परा। उपेक्षिता ततश्चक्रे स्वकार्यं सा तु सर्वतः॥ ५२॥**

प्रकाशः—दुःखभरेण मरणमत्राऽप्यावश्यकम्। परन्तु तत्र मृतौ वक्ष्यमाणप्रकारेण कदाचिद् द्वेषनिवृत्तिः स्यादत्र मृतौ तु मद्द्वेषान्मत्पुत्र्यपि मद्गृहमाजिगमिषतीति मारिता शिवेनेति ज्ञात्वाऽधिकमेव द्वेषं कुर्यादिति न स्थापिता। तत्रापि मरणस्यावश्यकत्वान्नानुज्ञोचितेति उपेक्षितेत्यर्थः। (अ० ३ पूर्णः–अ० ४ प्रारम्भः) तुशब्दः शिवस्य तूष्णींभावेऽपि सती न तथेति भिन्न-

---

इति प्रारब्धनाशः। अनारब्ध इत्यादि। अ० ४–१–१५ सूत्रार्थस्तु, पूर्वे पूर्वसूत्रोक्ते पुण्यपापे अनारब्धकार्ये न आरब्धं भोगायतनशरीरलक्षणं कार्यं याभ्यां तादृशे एव ज्ञानेन दह्येते, न त्वारब्धकार्ये दह्यते, ननु ज्ञानस्य सर्वकर्मनाशकत्वं पूर्वं साधितमिति तस्मिन्कथं तददाह इत्यत आह तदवधेरिति, तद् आरब्धकार्यस्य कर्मणः अदहनम्, अवधेः सर्वकारणपूर्वावधिभूताया भगवदिच्छायाः सकाशादिति, इच्छा च देहसत्तानुमेयेति। भोगेन त्विति अ० ४–१–१९ सूत्रार्थस्तु, प्रारब्धभोगेन स्थूललिङ्गशरीरे दूरीकृत्य "अथ सम्पद्यते" अलौकिकभोगेन सम्पन्नो भवतीति। तथा च ज्ञानेनापि चेन्न प्रारब्धनाशस्तदा कथमनयेत्यर्थः। महद्द्वेषस्य साम्प्रदायिकाभिमतबलपेक्षयाप्यधिकबलत्वं बोधयितुं सिद्धान्तपक्षमाहुः वस्तुत इत्यादि। ननु महद्द्वेषेण शुभप्रारब्धे नष्टे निष्प्रतिबन्धेनाशुभप्रारब्धेनैव तस्य क्लेशो भावीति तस्या न स्वातन्त्र्येणोच्छ्रितिविघ्नकर्त्तृत्वमित्यत माहुः न च तस्या इत्यादि तस्मिन्निति द्वेषे। तयोरित्यादि। तत्त्वसूत्रयोर्महद्द्वेषासमानाधिकरणं यदारब्धकार्यम्, कर्म तद्विषयत्वात्। किमत्र गमकमित्यपेक्षायामाहुः अत एवेत्यादि। तथा च यदि तत्त्वसूत्रयोरारब्धकार्ययावत्कर्मविषयत्वं स्याद्दक्षशरीरनाशोऽपि न स्यादतस्तथेत्यर्थः। नन्वेवं महद्द्वेषस्यातिबलत्वे अग्रिमा सम्पत्तिरपि न स्यादतः साम्प्रदायिकोक्तं मध्यबलत्वमेव साधीय इत्यत आहुः अग्रिमेत्यादि। ननु अग्रिमसम्पत्तेर्भगवत्कृतत्वे किं गमकमत आहुः अत एवेत्यादि। न च काम्येत्यादि। तथा च, दक्षदेहस्य नित्यकर्मसिद्धत्वान्महद्द्वेषस्य न तन्नाशकत्वम्, किन्तु, भोगप्रतिबन्धकत्वमित्येव युक्तमित्यर्थः। तथोक्तत्वादिति, । असम्बन्धस्योक्तत्वात्। काम्यासम्भवादिति, काम्यत्वासम्भवात्। उभयशब्दस्येति, 'अतोन्येषामि' ति सूत्रस्थोभयशब्दस्य। यथा श्रुतार्थस्येति पुण्यपापयोरन्योन्यसङ्क्रमस्य × अयथार्थत्वमिति, असदर्थवादत्वम्। अमूर्त्तत्वमिति। बाधकमिति शेषः। भिन्नविषयत्वे विषयत्वेपि बाधकत्वाङ्गीकारे प्रतिवन्दीमाहुः अन्यथेत्यादि। अन्यथेति अमूर्त्तत्वस्य बाधकत्वे। वचनमिति, विधिरूपम्, तुल्यमिति, भूतार्थवादरूपवचनमत्रापि साधकम्, तस्य स्वार्थप्रामाण्यात्। नानवबोधादिति, किमत्र बोधस्याप्राप्तिरापद्यते, उत प्राप्तस्य बाधः। नाद्यः, प्रत्यक्षबाधात्। आपातबोधाभावे प्रतिबन्धकल्पनाया एवाशक्यत्वात्। द्वितीयश्चेत् तत्र बोधाभावो न वाक्यस्य बाधितार्थत्वं साधयितुमीष्ट इत्याशयेनाहुस्तथा हीत्यादि। बोधे गमकमाहुः, अत एवेत्यादि। तथा च, पूर्ववाक्यश्रवणोत्तरं अग्रिमवाक्ययोः क्रियाकाङ्क्षाया उपयन्तीति क्रियया पूरणे कृतेन्वयबोधसम्भवस्तदुत्तरमयोग्यताज्ञाने तस्य बाधसम्भावना, सा च वाक्यपूर्वापरभाव (विचार) दशायां वाक्यप्रमावलादेवापयान्ती (?) विचारकाणां बोधदार्ढ्यमेवाधत्ते न तु तमपनयतीत्यर्थः। सिद्धमाहुः तेनेत्यादि, विस्तरेणेत्यन्तम्। नन्वेवं शुभे प्रारब्धे महद्द्वेषेच्छाप्ययुक्तेत्याशङ्क्य तस्य द्विविधमपि प्रारब्धमस्तीति वक्तुं पक्षान्तरमाहुः अथवा सत्या इत्यादि। एवं सतीचरितादितात्पर्यमुक्त्वा शिववाक्यतात्पर्यमाहुः पत्यर्थमित्यादि, यज्ञस्य सत्या अप्यधिदेव इति 'आवोराजान मधुरस्य रुद्रमि' ति श्रुतेरहङ्काराधिष्ठातृत्वाच्च तथेत्यर्थः॥ ५१॥

---

१. अ० ४–१–१७ । × "अन्यत्र सङ्क्रमस्य" पाठः

प्रक्रमार्थः। स्वकार्यं स्वस्यैवाऽसाधारणं कार्यम्। न हि सतीशरीरनाशः शिवेन दक्षेणाऽन्येन वा कर्तुं शक्यः। न च तन्नाशं विना तद्द्वेषनाशः कदाचित्, पातिव्रत्यरक्षया पतिभक्त्या नन्दिशापसत्यत्वप्रयोजकतया च सर्वत इत्युक्तम्। जन्मान्तरेऽपि तस्यैव भजनात्। तद्द्वेषिजनितदेहस्याऽप्यनङ्गीकारादजमुखत्वप्रयोजकदक्षशिरश्छेदोपयोगित्वात्।

देहत्यागानन्तरं तस्या गतिमाह ध्यानादिति।

**निबन्धः—ध्यानात्प्रविष्टा सा पत्यौ नारदो देवगुह्यकृत्। सेवकानां त्वकथनं लज्जया प्रेषणादपि॥ ५३॥**

प्रकाशः—(अ० ५) ननु यज्ञादिनाशकं सतीमृतिश्रावणं नारदस्याऽयुक्तमित्यत आह नारद इति। सती त्वभिमानरूपेति स्वशरीरं दग्धवती। अधुना च शिवदेहे प्रविष्टा। अत्राऽपि तथा कृतौ देवानां महदनिष्टं स्यादिति तस्मात्तद्दूरीकरणार्थं स्फुटमहितकरणेऽपि गुप्ततया हितं चिकीर्षुस्तथोक्तवानित्यर्थः। लज्जा पराभवेन स्वजीवनेन च। अपिशब्दाद्भयात्॥ ५३॥

तदा नारदविचारितं जातमित्याह स्वप्रविष्टेति।

**निबन्धः—स्वप्रविष्टनिराकृत्यै जटामुत्कृत्य निर्ममे। वीरभद्रं द्वेषयुतमभिमानं सुदुर्जयम्॥ ५४॥**

प्रकाशः—अभिमानः कस्याऽप्यधो न तिष्ठतीति जटास्थ इति तस्याः कृन्तनं द्वेषयुतं कार्यसहितम्। अधिकारकर्मादिजनितदक्षाभिमानेनाऽस्याभिभवमाशङ्क्याह सुदुर्जयमिति। सुदुर्जयोऽयं तु तस्यापि तथेत्युपसर्गः॥ ५४॥

तद्द्वारा यज्ञनाशने शिवे दोषमाशङ्क्य तदभावायाऽऽह दैवेति।

**निबन्धः—दैवहीनो यतो यज्ञस्ततो नष्टोऽभिमानतः। तदभिव्यक्तिकर्तॄणां साधनानां तु संक्षयः॥ ५५॥**

प्रकाशः—यथा शिरोहीनो देहः स्वजनितकृमिभिर्विशीर्यते तथा प्रधानरूपदैवहीनो यज्ञः स्वजनिताभिमानरूपवीरभद्रेण नष्ट इत्यर्थः। तेन दक्षदोषेणैव दक्षयज्ञो नष्टो न तु शिवेनेति भावः। तादृशयज्ञाभिव्यक्तिकर्तॄणां शालापात्रादीनां तथाकरणं पुनस्तादृज्ञानाभिव्यञ्जनार्थम्॥ ५५॥

दक्षस्यैव शिरश्छेदे हेतुमाह प्रधानत्वादिति।

**निबन्धः—प्रधानत्वाच्छिरस्तस्य छिन्नं यज्ञोऽस्य भावतः। यजमानत्वमापन्नस्तेन तस्याऽपि संक्षयः॥ ५६॥**

प्रकाशः—हेत्वन्तरमाह यज्ञेति। "यज्ञो वै यजमानः" इति श्रुतेः। "यो यच्छ्रद्धः स एव सः" इति वाक्याच्च। तस्य यज्ञविषयकरतितो यज्ञस्तत्त्वं प्राप्त इति तदच्छेदे यज्ञस्य सर्वात्मना न नाश इति तथा कृतिरित्यर्थः। फलितमाह तेनेति। तस्यापि यज्ञस्याऽपीत्यर्थः॥ ५६॥

सञ्ज्ञापनेनैव तन्मारणे हेतुमाह प्राणा इति।

**निबन्धः—प्राणास्तत्रैव चेल्लीना मोक्षे ब्रह्मविदो यथा। तदौदनत्वमत्राऽपि तथा सञ्ज्ञपनं मतम्॥ ५७॥**

प्रकाशः—"नाऽस्य प्राणा ह्युत्क्रामन्तीहैव समवलीयन्ते प्राणाः" "ब्रह्मैव सन् ब्रह्माप्येति" इति श्रुत्युक्तप्रकारेण मोक्षे यथा ब्रह्मविदः प्राणा ब्रह्मण्येव लीनाश्चेत्स्युस्तदा तस्यौदनत्वम्। 'भगवद्भोजनयोग्यता भगवदन्तः प्रवेशयोग्यतेति यावत्। "यस्य ब्रह्म च क्षत्रं च" इतिश्रुतिरत्राऽनुसन्धेया। तथा दक्षप्राणा अपि यज्ञभावनया यज्ञभूततदात्मन्येव चेल्लीना भवन्ति तदा "यज्ञो वै विष्णुः" इतिश्रुतेर्यज्ञ एव सन् स्वाधिदैवयज्ञरूपे विष्णौ लीनः सन् पुनरुत्पत्तिशङ्कारहितो भवतीति हेतोस्तथेत्यर्थः। ननु "नास्य प्राणाः" इत्यादिश्रुतेर्ब्रह्मविदि तथात्वं युक्तमत्र तथात्वे कोपपत्तिरित्यत आह अत्रापीति। साक्षात्तादृशश्रुत्यभावेऽपि पश्वालम्भने प्रकारान्तरसम्भवेपि यत्सञ्ज्ञपनविधिरेवोक्तस्तेन तदाधेयविशेषस्यावश्यवाच्यत्वे विश्वजिन्न्यायेन तथैवान्तःश्वासतयोपरतज्ञानमार्गीयस्य ज्ञानरूपात्मनिलयं प्रसिद्धं दृष्टान्तीकृत्य कर्ममार्गीयत्वेनास्य यज्ञरूपात्मनिलय एव तथेति कर्मिणामभिमतमित्यर्थः। प्रसिद्धिनिरूपणार्थमेव पूर्वार्द्धे तदुक्तिरिति ज्ञेयम्॥ ५७॥

---

तत्र हेतुरिति, निवारणाकरणे हेतुः॥ ५२॥

एवं उपेक्षिता तत इत्यन्तैः सप्तभिस्तृतीयाध्यायार्थ उक्तः।

अतः परं "चक्रे स्वकार्यं सा तु सर्वतः। ध्यानात् सा पत्याविं" त्यन्तेनार्द्धेन चतुर्थाध्यायार्थमुक्त्वा, नारद इत्यारभ्य पादैर्नवभिः पञ्चमाध्यायार्थमाहुः ननु यज्ञादीत्यादि! मूले, सेवकानामिति सम्बन्धमात्रविवक्षया तृतीयार्थे षष्ठी सेवकैस्तदकथनमित्यर्थः। अकथने हेतुत्रयमाहुः लज्जेत्यादि॥ ५३–५६॥

सञ्ज्ञपनेनेति। विश्वसनीयपशोरिव मुखनासामुद्रणेन। तदात्मनीति, यजमानात्मनि। तदाधेयविशेषस्येति, सञ्ज्ञपनविध्याधेयशक्तिविशेषस्य। तथेति, आधेयशक्तिरूपः। तदुक्तिरिति, दृष्टान्तोक्तिः॥ ५७॥

---

१. "भजनयोग्यता" इतिपाठः।

तथापि साक्षाद्यज्ञं विहायौपचारिकं किमिति कृतवानित्यत आह साक्षादिति ।

**निबन्धः—साक्षाद्यज्ञशिरश्छेदो न युक्तो भगवत्त्वतः । यज्ञस्य यजमानत्वात्तच्छेदो योजनं तथा ॥ ५८ ॥**

प्रकाशः—अत एव यथा साक्षाद्यज्ञे तथाऽनुचितत्वेन तदतिदेशवति तथाकरणमेवं साक्षाद्यजमानशिरो योजयितुं दग्धत्वेनाशक्यत्वात् "यजमानः पशुः" इति श्रुत्या तत्त्वेनातिदिष्टपशुशिरोयोजनमित्याह योजनं तथेति ॥ ५८ ॥

ननु तदेव कुतो न रक्षितं दग्धं वेत्याशङ्क्य तत्र हेतुमाह ज्ञानेन्द्रियाणामिति ।

**निबन्धः—ज्ञानेन्द्रियाणां सर्वेषां स्थानं मूर्द्धा विभागशः । अदग्धे पूर्ववत्तस्य दोषः सम्भवतीति हि ॥ ५९ ॥**

**राक्षसानां तु सद्भागो दक्षिणाग्नौ ततोऽजुहोत् ।**

प्रकाशः—तस्य ज्ञानेन्द्रियाणामेव दुष्टत्वेन शिरसश्च तदाश्रयत्वेन तददाहे तद्योजने पुनः शिवद्वेषं कुर्यादिति तदभावाय दग्ध इत्यर्थः । तत्संस्कारवत्त्वेन तेषां पुनस्तथात्वं युक्तमेवेति हि शब्दार्थः दक्षिणाग्नावेव होमे हेतुमाह राक्षसानामिति । तत्पूर्वोक्तधर्मविशिष्टं शिरस्तामसत्वेन राक्षसानां भागो भवति ततो हेतोः "दक्षिणेऽग्नौ जुहोति भ्रातृव्यमेव वरुणपाशेन ग्राहयतीति" "अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेद्" इत्यादिभिश्च श्रुतिभिर्दक्षिणाग्नावेव क्रूरहोमस्योक्तत्वात्स क्रूर इति तस्मिन्नेवाऽजुहोदित्यर्थः ॥ ५९½ ॥

ननु सूचनादिदोषमात्रेण भगादीनां नेत्राद्युत्पाटनं न युक्तमित्यत आह पापसाम्येनेति ।

**निबन्धः—पापसाम्येन देहेषु च्छेदस्तेन पशोर्यथा ॥ ६० ॥**

**तथैव कृतवाँश्छेदं नाऽन्यथेत्यस्य सम्भवः ।**

प्रकाशः—"कर्तुः शास्तुरनुज्ञातुस्तुल्यं यत्प्रेत्य तत्फलम्" इतिवाक्यादनुज्ञातृणामेषां नेत्रादिसूचनादीनां दक्षपापसाम्येन ऋषीणां देहेषु तथेत्यर्थः । तर्हि यथैषां नान्येन्द्रिययोजनं तथा दक्षेपि युक्तमित्यत आह पशोरित्यादि । अन्यथा अस्त्रशस्त्रादिभिर्न कृतवानिति हेतोर्दक्षस्य पुनर्जीवनमित्यर्थः । अयं भावः । यथा क्रोधभरयुक्तद्वेषेण स्वसामर्थ्यसचिवशस्त्रादिभिश्च तेषु च्छेदस्तथैव चेदस्मिन्नपि स्यात्तथैव स्यात् । किन्तु शस्त्रादिवैफल्यजविस्मयध्यानादिभिश्च रोषभरस्य क्षीणत्वेन स्वाम्याज्ञया च वधस्याऽऽवश्यकत्वेन तत्साधनं तत्कर्मानुरूपमेव ज्ञात्वा तथा कृतवानिति तत्सञ्ज्ञप्तपशूनां देहान्तरप्राप्तिवदस्यापि तथात्वमिति नन्दिशापसत्यत्वार्थमीश्वरेच्छयैव तद्वैफल्यम् । ननु वैधहिंसाया धर्मत्वेन कथं तत्प्रकारस्यैतद्वधहेतुत्वं पापवदित्यत उक्तं तेनेति, पूर्वोक्तहेतुना । पापसाम्येन । अत्र लौकिकपशुहिंसापापसाम्येनेत्यर्थः । अधिदेवरहितत्वेन तन्मखस्य वैदिकत्वाभावाल्लौकिकत्वेऽपि तत्सारूप्येण मखपदप्रयोग इति भावः ॥ ६०½ ॥

अस्थित्या इति ।

**निबन्धः—अस्थित्यै कस्यचित्तत्र तथाऽनुपकृतिः फलम् ॥ ६१ ॥**

**मण्डपज्वालनस्येति गमनं कृतकृत्यता ।**

प्रकाशः—ज्वालनमिति शेषः । मुख्यं फलमाह तथेति । तत्र च्छायार्थमपि कस्याप्युपवेशने तदुपकृतिजनितधर्मोऽस्मिन्नागच्छेत्सोपि मा भूदिति मण्डपज्वालनं कृतमित्यर्थः । फलितमाह कृतकृत्यतेति । नाऽतः परमत्र कार्यमस्तीति हेतोर्गमनमित्यर्थः ॥ ६१ ॥

अथ षष्ठाध्यायार्थं विचारयन् ब्रह्मण एवान्तिकगमने तेषां हेतुमाह । "गमनं बोधनं स्थानवर्णनं स्तवनं तथा । प्रार्थनं चेति पञ्चार्थाः क्रमेणैव निरूपिताः (१) त्रिभिश्चतुर्भिस्त्रिंशद्भिस्त्र्यधिकैरष्टभिस्तथा । चतुर्भिश्च क्रमेणाऽत्र तत्तात्पर्यं निरूप्यते" । (२) अपराधेपीति ।

**निबन्धः—अपराधेपि जनकः प्रसीदति न चेतरः ॥ ६२ ॥**

**इति ब्रह्मसभां जग्मुर्बोधनं त्वैक्यदर्शने ॥ ६२½ ॥**

---

तथा करणमिति सञ्ज्ञपनम् ॥ ५८ ॥ दग्धं वेति । कुतो न योजितमिति शेषः । ननु दग्धयोजने को दोष इत्यत आहुः तत्संस्कारेत्यादि ।

तत्साधनमिति वधसाधनम्, योजनकर्मानुरूपम् । तद्वैफल्यमिति । सञ्ज्ञपनस्य मुक्तिफलकत्वाभावः । कथमित्यस्य पापवदित्यनेन योजना, पापस्य यथा न धर्मत्वम्, तथाऽस्याप्यवैधत्वान्नेत्यर्थः । एतदेव विवृण्वन्ति पूर्वोक्तेत्यादि ॥ ६०½ ॥

एवं पादोननवभिः पञ्चमाध्यायार्थ उक्तः ।

प्रकाशः—अपराधेन तथा भूत्वाऽप्यन्यान्तिकगमनेऽन्यः कोपमेव करोति। पिता तु तथात्वेपि स्वभावादेव प्रसीदतीति हेतोस्तथेत्यर्थः। चस्त्वर्थः। बोधनप्रयोजनमाह बोधनं त्विति। ते तु पितृत्वेनाऽस्मत्पक्षपातं कृत्वा शिवे तदनुरूपं किञ्चित्करिष्यति ब्रह्मेति शिवे दोषदृष्टय एवाऽऽगतास्तथा सति नाऽनर्थनिवृत्तिरिति स्वस्मिन् शिवे च तेषामैक्यज्ञाननिमित्तं बोधनं कृतवानित्यर्थः॥ ६२½ ॥

तत्र गत्वा शिवं दरिद्रं दृष्ट्वाऽस्मत्कृतहविर्भागप्रतिबन्धेनाऽयमेवं जात इति गर्वेपि कृते न सम्यगिति तदैश्वर्यज्ञापनार्थं वनादिवर्णनमित्याह निर्गतित्वेति।

**निबन्धः—निर्गतित्वव्युदासाय सख्युः स्वस्य च सर्वशः॥ ६३ ॥**
**वननादिसर्वरूपाणां वर्णनं स्तवनं तथा।**

प्रकाशः—सख्युर्धनदस्य। स्वस्य शिवस्य। आदिशब्देनाऽद्रिपुरीनदीवाप्यादय उच्यन्ते। तेषां सर्वाणि यानि रूपाणि पुष्पफलसौगन्ध्यखगमृगसुरस्त्रीविलासमुन्यादिचतुर्वर्गोपयोगीनि। तेषां तथा स्तुतिप्रयोजनमाह स्तवनमिति। तथा ब्रह्मत्वनिरूपणेन तन्माहात्म्यज्ञानार्थमित्यर्थः॥ ६३ ॥

एतच्चैकेनैव श्लोकेन निरूपितमित्यग्रिमाणां प्रयोजनमाह ब्रह्मत्वायेति।

**निबन्धः—ब्रह्मत्वायोपपत्तिश्च तथैव प्रार्थनं कृतम्॥ ६४ ॥**
**यज्ञसिद्धिं चकारेशो न तथाऽभगवत्त्वतः।**

प्रकाशः—चकारात्क्रोधाभावेपि यथा सर्वकर्तृत्वेन ब्रह्मत्वं निरूपितं तथा तेनैव धर्मेणैतेष्ववयवसृष्टिमपि करोत्विति प्रार्थनमपि कृतमित्याह तथेति। देवावयवानां भगवत्सृष्टिगतत्वेनाऽलौकिकत्वात्तथैवोचितमिति भावः।

( अ. ७ ) न तथेति। यथा प्रार्थनं न तथेत्यर्थः। तत्र हेतुः, अभगवत्त्वत इति पूर्णभगवत्त्वाभावादित्यर्थः। तथा च संहारशक्तिमात्रत्वेन तमोगुणमात्राधिकृतत्वेन च न तादृग्सृष्टिसामर्थ्यमितिभावः॥ ६४½ ॥

तर्हि प्रार्थनया भगवद्द्वारा कुतो न कृतवानित्याशङ्क्य तथाकारणे बाधकमाह, अन्यथेति।

**अन्यथा दण्डहानिः स्यादन्यथाकरणं स्वतः॥ ६५ ॥**

**निबन्धः—सान्निध्ये सर्वसंसिद्धिरिति सर्वैः समागमः।**

प्रकाशः—प्रार्थनानुरूपकरणे दण्डः कृतोप्यकृत एव स्यादित्यर्थः। किञ्च। अन्येन तथाकरणे स्वस्य यथापूर्वं समाधानमुचितं न तु स्वकृत इत्याशयवानाह, अन्यथाकरणमिति। अथवा दक्षादिमूर्द्धादिच्छेदे स्वकृतस्य देवैः सह हविर्भागप्राप्तिनिषेधस्यैव हेतुत्वात्स्वकृत एव दक्षादित एवाऽन्यथाकरणमित्यर्थः। तथा च तस्य यतो न यथापूर्वविधानं ततोऽत्रापि तथा। यथोच्छिष्टदानं तथान्योच्छिष्टैरिन्द्रियैरेव तत्कार्यदानमपीतिभावः। सान्निध्य इति। वचनेनैव सर्वकार्यसिद्धावपि यज्ञसिद्ध्या फलोपधानलक्षणा सम्यक्सिद्धिः सान्निध्ये शिवादीनां भवेदिति सर्वैः शिवादिभिः सह देवयजने समागम इत्यर्थः॥ ६५½ ॥

दक्षस्याजमुखकरणं[1] शिवस्याऽयुक्तमित्याशङ्क्य तस्य तात्पर्यमाहुः यजमान इति।

**निबन्धः—यजमानः पशुश्चैव तौ पशुर्देवपोषणात्[2]॥ ६६ ॥**
**सवनीयपशुर्मुख्यः शिष्टं तस्य शिरः परम्। अपेक्षितं तदेवाऽत्र तेन सन्धानमीरितम्॥ ६७ ॥**

प्रकाशः—एवकारेण लौकिकपशुव्यावृत्तिः। देवपोषणस्य हेतोरविशेषात्तावुभावपि पशुरूपावित्यर्थः। एकवचनं त्वेकस्यैवोभयत्र प्रयोजकत्वादुक्तम्। उपनिषत्सु 'यथा पशुः परपोषक एवं यजमानोऽपि पश्वादिद्वारा देवपोषक इति यजमानः पशुः' इत्युक्तत्वादितिभावः। अत एव नाऽयुक्तमितिभावः। तत्र कस्य पशोः शिरो योजितव्यमित्याकांक्षायां देवपोषणहेतुत्वेन सवनीयपशोरेव मुख्यत्वेन यजमानशिरस्त्वयोग्यत्वात्तदवयवानां च पूर्वमेव हुतत्वेन शिरोमात्रावशेषादत्र च तस्यैवापेक्षितत्वात्तस्यैव योजनमुक्तं मूल इत्याह सवनीयेतिश्लोकेन॥ ६७ ॥

ननु मध्ये वैष्णवयागस्य किं प्रयोजनमित्यत आह यज्ञ इति।

**निबन्धः—यज्ञस्तिरोहितः सर्वो विघ्नाद्रोषात्तथा मृतेः। पुनः कृतिरशक्या हि कालादेर्विनिवर्त्तितः॥ ६८ ॥**

---

अतः परं सार्द्धाभ्यां षष्ठाध्यायार्थं विचारयन्ति। मूले—ऐक्यदर्शन इति सप्तमी चतुर्थ्यर्थे। एतदिति, परमशिवत्वेन ब्रह्माभिन्नत्वम्॥ ६२ ॥

---

१. करणेऽयुक्तिम्। २. पशुः

प्रकाशः—सर्वं आधिभौतिकं आध्यात्मिक आधिदैविकश्च । तत्र क्रमेण हेतुमाह विघ्नादित्यादिना । अग्निशामनादिरूपविघ्नादाद्यः । रुद्रगणस्पर्शदोषाद् द्वितीयः । यजमानमृतेस्तृतीयः । पुनस्तादृक्क्रियया यज्ञप्रादुर्भावकरणे बाधकमाह कालादेरिति । कालः प्रातःसवनादिः । आदिशब्देन प्राग्वंशादिदेशप्रोक्षितद्रव्यादय उच्यन्ते ॥ ६८ ॥

निबन्धः—तस्मादशक्यसम्प्राप्तौ वैदिकत्वप्रसिद्धये । पुरोडाशं निरवपन् वैष्णवं सत्त्वमात्रतः ॥ ६९ ॥

प्रकाशः—यस्मात्साधनोच्छित्तिस्तस्मादशक्यसम्प्राप्तौ सत्यां विष्णुरेव पालकत्वेन यज्ञं पालयिष्यतीति विष्णुभजनेऽवश्यकर्त्तव्ये स्तोत्रादिना करणे चावैदिकत्वेन यागामध्यपातो भविष्यतीति स्वकृतस्य वैदिकत्वसिद्ध्यर्थं वैष्णवं पुरोडाशं निरवपन्निति सम्बन्धः । नन्वस्य यागस्य प्रधानाङ्गत्वेनैव करणाद्यज्ञस्य सर्वात्मनाभावे कुत्राङ्गत्वमित्यत आह सत्त्वमात्रत इति । पूर्वोक्तत्रितयरूपतिरोभावेऽपि यस्यैतत्त्रितयं रूपं तस्य यज्ञस्वरूपस्य धर्मिमात्रस्य सत्तारूपेण सत्त्वात्तन्मात्राद्धेतोस्तत्करणमित्यर्थः ॥६९॥

तर्हि व्यर्थमित्यत आह विशिष्टमिति ।

निबन्धः—विशिष्टं तत्तिरोभूतं विष्णुः सर्वोपपत्तये । ध्यातः सत्त्वं तिरोधाय तथा प्रादुरभूद्धरिः ॥ ७० ॥

प्रकाशः—तद्यज्ञस्वरूपं देशकालादिविशिष्टं तिरोभूतमित्यर्थः । तादृशस्यैव कार्यसाधकत्वात्तदभिव्यक्त्यर्थं करणमितिभावः । नन्वष्टभुजप्रादुर्भावस्य किं प्रयोजनमित्यत आह सर्वोपपत्तये ध्यात इति । यज्ञस्वरूपसम्पत्तिदोषाभावपालनाद्युपपत्तय इत्यर्थः । विष्णुर्हि सतो यज्ञादेः पालकः । अत्र यज्ञस्वरूपसत्तामपि विधाय स पालनीय इति द्विगुणक्रियाशक्तिप्रादुर्भाव इतिभावः । एतेन कर्मणैव फलमितिनिरस्तम् । प्रादुर्भावप्रकारमाह सत्त्वमिति । शुद्धसत्त्वं तिरोन्तरायरूपमधिष्ठानरूपमिति यावत् । तत्कृत्वा तत्र प्रादुर्भूत इत्यर्थः ॥ ७० ॥

अवतारनामाह प्रभुरूपमिति ।

निबन्धः—प्रभुरूपमिदं प्रोक्तं सर्वमेतेन सिद्ध्यति । सर्वोत्तमत्वबोधाय वर्णनं स्तोत्रमेव च ॥ ७१ ॥

प्रकाशः—प्रोक्तमिति प्रमाणसूचनम् । शुद्धसत्त्वावतारगणनायां "कल्किर्धन्वन्तरिः प्रभुः" इत्युक्तत्वात् । कार्यमाह सर्वमिति । सर्वं पूर्वोक्तम् । ननु यज्ञसिद्धिमात्रस्योद्देश्यत्वात्तस्य च स्वरूपमात्रेणैव सम्भवाद्विशेषवर्णनस्तोत्रयोः किं प्रयोजनमित्यत आह सर्वेति । एवकारेण स्तोत्रस्याऽऽवश्यकतोक्ता । चकारात्प्रणामादिः । अत एव सर्वैर्न यज्ञसिद्धिरितिभावः ॥ ७१ ॥

ननु प्रधानमुख्यतयैकमेव स्तोत्रं सर्वेषामुचितं तत्कथं प्रत्येकं पृथक्स्तोत्रकरणमित्यत आह दोषहानिरिति ।

निबन्धः—दोषहानिः पृथग् वाच्याः स्तोत्रभेदास्ततः स्मृताः । एकोनविंशतिर्भेदाः कृष्णावतरणात्तथा ॥ ७२ ॥
मुख्यं धर्मविरुद्धं च तत्प्रतिप्रसवं विना ।

प्रकाशः—स्तोत्रं हि स्वस्वापराधनिवृत्त्यर्थं स च प्रत्येकं भिन्न इति तन्निवृत्तिरपि तथैवेति स्तोत्रभेदोक्तिरित्यर्थः । तत्र कियन्तो भेदा इत्याकांक्षायां भ्रमाभावायाह, एकोनविंशतिरिति । दक्षादिब्राह्मणान्तैरुक्तास्तावन्तः प्रकारा इत्यर्थः ॥ ७२ ॥ ननु यथा यज्ञदोषनिवृत्त्यर्थं वैदिकमेव कर्म कृतं तथा स्वस्वदोषनिवृत्त्यर्थमपि तथैवोचितं तत्सम्बन्धित्वात्सर्वेषामित्यत आह कृष्णेति । भगवदप्राप्तौ हीतरसाधनकरणं न तु प्राप्तावपि । यतोऽयं कृष्णः सदानन्दरूपः । अतो यथाकथञ्चित्सम्बन्धेनैव सत्त्वेन दोषनिवर्त्तकस्यानन्दत्वेन च धर्मादिगुणसम्पादकस्यावतरणात्सेवकत्वेन च सर्वेषां स्वस्वदैन्यख्यापनेनैव दोषनिराकरणं तदपेक्ष्या मुख्यमित्यर्थः । स्तोत्रकरणे तूपपत्तिमुक्त्वा कर्मकरणे बाधकमाह मुख्यं धर्मविरुद्धमिति । यथा मुख्ययागनाशे "वैष्णवं त्रिकपालं निर्वपेद्" इति प्रतिप्रसवो विष्णुयागस्य, तथैतेषां दोषनाशहेतुकर्मणः प्रतिप्रसवाभावात्तदर्थं तत्करणं धर्ममार्गविरुद्धमित्यर्थः । चकाराद्भगवत्प्रादुर्भावानन्तरं तत्करणं भगवन्मार्गविरुद्धमपि ॥ ७२½ ॥

---

एवं षष्ठाध्यायं विचार्य सार्द्धैर्दशभिः सप्तमाध्यायं विचारयन्ति न तथेत्यादि । पूर्णेत्यादि, स्तुत्युपक्रमे "जाने त्वामीश विश्वस्ये"त्यनेन ब्रह्मत्वमुक्त्वाऽग्रे "भवांस्तु पुंसः परमस्य मायया दुरन्तयाऽस्पृष्टमतिरि"तिकथनेन तथात्वादित्यर्थः । तत्र गमकमप्याहुः तथा चेत्यादि । तथा चैतज्ज्ञापनायैवेयं कथानया विधया निरूपितेति हृदयम् । स्वकृत एवेति दक्षकृतस्य । तस्येत्यादि । दक्षादेर्यतो न प्राक्सिद्धरुद्रभागदानविधानम् । ननु देवपोषणादेव पशुःवेभिप्रेते 'अथ योऽन्यां देवतामि'ति श्रुतौ द्विवचनमुक्तं स्यान्नत्वेकवचनमित्याकांक्षायामाहुः एकवचनं त्वित्यादि । नायुक्तमिति पशुशिरोयोजनं नायुक्तम् । तस्यैवापेक्षितत्वादिति, देवपोषणस्यैवापेक्षितत्वात् ॥ ६७–७१ ॥

प्रकरणार्थमुपसंहरति धर्म इति।

**निबन्धः—धर्मस्तस्याऽतिसंसिद्धो बोधश्चाऽपि दृढीकृतः ॥ ७३ ॥**
**वराद्धर्मातिसंवृद्धिः कथासिद्ध्यै सतीकथा।**

प्रकाशः—कृष्णावतरणादेव हेतोर्दक्षस्य धर्मः सिद्ध इत्यर्थः। भगवत्कृतत्वमतिशयः। कालाद्यत्ययेपि तत्सहकृतस्य तस्य सिद्धेरायासाभावाच्च सम्यक्त्वम्। भगवद्वाक्यानां तात्पर्यमाह बोध इति। ब्रह्मविष्णुरुद्रेष्वैक्यदर्शनरूपो बोधः पूर्वसिद्ध एव भगवता दृढीकृत्य इत्यर्थः। तेन नाऽन्यथासिद्धिरिति भावः। "यथा शिवमयो विष्णुरेवं विष्णुमयः शिव" इत्यादिवाक्यैस्तद्बोधस्य धर्माङ्गत्वेन तद्दढीकरणेनाऽपि धर्म एव दृढीकृत इत्यपेरर्थः, अनुक्तसर्वसमुच्चयार्थश्च। ननु भगवतैव सर्वसिद्धौ देववरस्य किं प्रयोजनमित्यत आह वरादिति। नन्दिशापेन सहजधर्मस्याऽग्रे सम्भवेन वराद्धर्मस्य शापातिक्रमेण साङ्गस्य वृद्धिर्भवतीत्यर्थः। कथेति। प्रसूतिकन्याप्रसूतिकथनप्रस्तावे सत्याः पुत्रालाभहेतुकथायाः प्रस्तुतत्वात्तन्मध्ये दक्षकथयान्तरितत्वात्पूर्वकथासिद्ध्यर्थं पुनः सतीकथेत्यर्थः॥ ७३½ ॥

ननु पुनः शिवपत्नीत्वे गिरिदुहितृत्वे च को हेतुरित्यत आह तदर्थमिति।

**निबन्धः—तदर्थं व्यक्तदेहत्वात्तामसत्वात्पुनस्तथा ॥ ७४ ॥**
**प्रक्रियायाः समाप्तत्वात्कीर्तनादिफलाभिधा।**

प्रकाशः—शिवार्थं तथात्वात्। "यो यो यां तनुं भक्त" इतिन्यायेन पुनस्तत्पत्नीत्वमित्यर्थः। तामसत्वादिति हेत्वन्तरम्। तेनाद्रावुत्पत्तावपि हेतुरुक्त इतिज्ञेयम्। प्रकरणसमाप्तिज्ञापिका फलश्रुतिरित्याह प्रक्रियाया इति॥ ७४ ॥

अतः परं पञ्चभिरध्यायैरर्थप्रकरणमुच्यत इत्याह अत इति।

**निबन्धः—अतः पञ्चभिरध्यायैरर्थप्रकरणं मतम् ॥ ७५ ॥**
**बालस्यापि हरौ प्रीते सिद्ध्येदर्थ इति ध्रुवः।**

प्रकाशः—केचित्तु चतुर्भिरध्यायैर्बालप्रकरणमित्याहुस्तत्पूर्वोक्तसोपपत्तिकदूषणेन नाऽस्मत्सम्मतं किन्त्वेतदितिज्ञापनाय मतमित्युक्तम्। नन्वन्यथा बालं कथं वदेद्भगवत्सम्पादितार्थानां महतां सत्त्वादित्यत आह बालस्येति। अपिरसम्भावनायाम्। न हि पञ्चवार्षिकेण तादृग्रूपोऽर्थो वा साधयितुं शक्यः। हरिप्रीतेरेवार्थसाधनत्वेनोक्त्या तत्प्रयोजकतपआदिष्वपि तदेव साधनमिति सूचितम्। तथा चेतिज्ञापनाय ध्रुव उक्त इतिशेषः॥ ७५½ ॥

तर्ह्यर्थद्वयसाधनं व्यर्थमेकेनैव चरितार्थत्वादित्यत आह अर्थस्त्विति।

**निबन्धः—अर्थस्तु द्विविधस्तस्य ह्युभयोर्विषमत्वतः ॥ ७६ ॥**
**मातापित्रोस्ततो राज्यं ध्रुवस्थानं च कामितम्।**
**न्यायेनैकस्य सिद्धत्वान्नारदेऽन्यस्य संस्तुतिः ॥ ७७ ॥**

प्रकाशः—"यदीच्छसेऽध्यासनमुत्तमो यथा" इत्यारभ्य "भौमं सुखं दिव्यमथापवर्ग्यम्" इत्यन्तेन मातृवाक्येनैहिकस्य पारलौकिकस्य चार्थस्य फलत्वेन श्रुतत्वात्तस्य ध्रुवस्य सम्बन्धी कामनाविषयो द्विविधोऽर्थ इत्यर्थः। तुशब्दः पूर्वपक्षव्यवच्छेदकः। तेनोभयसाधनमितिभावः। नन्वश्वमेधचित्रायागादिभिरिन्द्रपदपश्वादिवत्तपसैव तदुभयसम्भवे पित्रादित एव चैहिकसम्भवे भगवतैव कुतस्तत्करणमित्याशङ्क्य तत्र बाधकमाह, उभयोरिति। ऐहिकपारलौकिकयोरेकैकस्मिन् विरुद्धत्वान्न तपसा तच्छक्यम्। मातापित्रोरस्मिन्विषमत्वान्न ततोपि राज्यम्। अतस्ततो भगवत एव हेतोर्मातापित्रो राज्यं निश्चलस्थानं चेत्यर्थः। तस्येत्युभयत्र सम्बद्ध्यते। तेनोपनयनादिसंस्काराभावेन तपस्यनधिकारात्तस्य ध्रुवस्याऽपि विषमत्वादित्यर्थः। एतदेव हिशब्देनाऽऽह। अत एव चकारादधिकारादिरपि। कामितपदेनाऽवज्ञातृतत्प्रयोजकभ्रातृनाशोपि गृह्यते, निर्गमकाले तथात्वात्। अन्यथा भगवान्न तद्वदेदिति भावः। ननु द्वयोरर्थत्वं न सङ्गतम्, ध्रुवेण नारदे साधनप्रार्थनदशायां "पदं त्रिभुवनोत्कृष्टम्" इत्यादिनैकस्यैव स्तुतत्वादित्यत आह न्यायेनेति। एकस्य पितृराज्यस्य स्वस्य ज्येष्ठपुत्रत्वेन न्यायत एव सिद्धत्वान्न विशेषसाधनापेक्षया भगवान् दास्यति, किं तु प्रतिबन्धनिरसनेनैवेति न प्रार्थना। अन्यस्य ध्रुवस्थानस्य प्रमाणान्तरेणाऽसिद्धत्वात्तथेत्यर्थः। अथवा सत्रे कृतनारदस्तुतौ तत्पदस्यैव कथने हेतुरुक्तः॥ ७६½ ॥

एवं प्रकरणार्थमुपपाद्याऽध्यायार्थानाह साधनेनेत्यादि ।

**निबन्धः**—साधनेन च साध्येन राज्ये दोषेण [१]हानतः ।
फलेन च द्वितीये तु पञ्चाध्यायाः प्रवर्तिताः ॥ ७८ ॥

प्रकाशः—साधनं प्रथमाध्यायार्थः । चकारात्साधनसाधनमवज्ञादिः । साध्यं द्वितीयार्थो भगवत्प्रादुर्भावादिराज्यप्राप्तिरूपः राज्ये क्रोधादिदोषनिरूपणं तृतीयार्थोऽग्रिमफलप्रयोजकः । उपदेशेन दोषत्यागश्चतुर्थार्थः । फलनिरूपणं पञ्चमार्थः । चकारान्नारदादिकृतस्तुतिरूपा कीर्तिः । एवं द्वितीयेऽर्थप्रकरणे तथेत्यर्थः ॥ ७८ ॥

अतः परं प्रथमाध्यायार्थं विचारयन् सर्गलीलायामेव मुक्तजीवसृष्टौ सनकादीनां निरूपितत्वात्पुनरत्रैकेन श्लोकेन तद्व्यर्थमित्याशङ्क्य तत्प्रयोजनमाह धर्मस्येति ।

**निबन्धः**—धर्मस्यानतियुक्तत्वाद्विवेकी तत्त्यजेद्ध्रुवम् ।
सनकादिकथा तस्माद्विसर्गे पुनरुच्यते ॥ ७९ ॥

प्रकाशः—मर्यादायां विहितत्वेन कर्तुं युक्तत्वेऽपि पुष्टिरूपपुरुषार्थलीलायामप्रयोजकत्वेनाऽनतियुक्तत्वादुक्तविवेकवानवश्यं तत्त्यजेदिति ज्ञापनार्थं तत्कथेत्यर्थः ॥ ७९ ॥

विहितत्यागे प्रत्यवायाऽऽशङ्कायां नाऽयं धर्मप्रतिपक्षो मार्गः, किं त्वयमिति ज्ञापयितुमधर्मकथेत्याह प्रतिपक्ष इति ।

**निबन्धः**—प्रतिपक्षौ ह्यधर्मस्तु धर्मस्येति ततः कथा । अर्थस्याऽनर्थहेतुत्वात्तत्सम्बन्धेन वर्ण्यते ॥ ८० ॥

तर्हि धर्मप्रकरण एवेदं वक्तुमुचितमित्यत आह अर्थस्येति ॥ ८० ॥

नन्वनर्थहेतुत्वे कथमर्थत्वेन निरूपणमस्मिन् प्रकरण इत्यत आह कृष्णप्रसादादिति ।

**निबन्धः**—कृष्णप्रसादादर्थत्वं तेनाऽर्थस्याऽत्र वर्णनम् । अधर्मेऽपि फलं तेन निवृत्तावुपयोगतः ॥ ८१ ॥

प्रकाशः—भगवत्प्रसादप्राप्तार्थस्यार्थत्वं तदितरस्याऽनर्थत्वमिति व्यवस्थेतिभावः । तत्र निदर्शनमाह अधर्मेपीति । ज्येष्ठे सति यवीयसो राज्यकरणधर्मस्तस्मिन्नपि सत्ये तादृशं फलं सिद्धम्, तेन भगवत्प्रसादेनेत्यर्थः । अनर्थहेतावप्यर्थसाधकत्वं नाऽन्यस्येति भावः । प्रसादात्प्राप्तार्थस्यानर्थत्वाभाव उपपत्त्यन्तरमाह निवृत्ताविति । अनर्थरूपसंसारप्रवृत्तिहेतुत्वेन ह्यर्थस्यानर्थत्वं न तु स्वतः, प्रसादकृतस्य तद्विपरीतत्वेन वैराग्यहेतुत्वार्थत्वमेवेत्यर्थः ॥ ८१ ॥

ननु ज्येष्ठानुक्रमेणैव कथनमुचितम् । तत्कथं पूर्वं कनीयस इत्याशङ्क्याऽत्र हि सर्गादिलीलाः क्रमेण वाच्या न तु मनुपुत्रादिराज्यम् । तथा च यस्यां लीलायां यस्योपयोगस्तस्यां स निरूप्यत इति नोक्तदोष इत्याह प्रियव्रतस्त्विति ।

**निबन्धः**—प्रियव्रतस्तु ज्येष्ठोऽत्र स्थाने तस्य प्रयोजनम् । प्रक्रिया नास्ति कस्याऽपि ह्यष्टमे त्वस्य सम्भवः ॥ ८२ ॥
ध्रुवादयस्त्वपेक्ष्यन्ते तेनोत्तानपदन्वयः ।

प्रकाशः—अत्र मनुवंशे स्थाने अग्रिमलीलायां तस्य प्रयोजनमस्तीति तत्रैव स निरूपणीयः । यथैतत्तथा वक्ष्यते तत्रैव । अत एवाऽत्र कस्यापि मन्वादेः प्रक्रियाक्रमेण निरूपणं मुख्यतया नास्ति, तत्र हेतुः । अष्टमे त्विति । "मन्वन्तरं मनुर्देवा मनुपुत्राः

---

दोषनिराकरणमिति भगवति सर्वनियामकत्वादिज्ञानस्य योऽभावस्तन्निराकरणम् ॥ ७२ ॥ दृढीकृत इति, एकस्यैव कार्यभेदेन पाचकपाठकवत् सञ्ज्ञाभेदकथनेन रूपभेदस्य गुणकृतत्वबोधनात् । यथा पुमान्न स्वाङ्गेषु शिरःपाण्यादिषु कचित्पारक्यबुद्धिं कुरुते, एवं 'भूतेषु मत्पर' इति भूतेष्ववयवत्वबोधनेनाग्रिमे त्रयाणां सर्वभूतत्वकथनेन च त्रयाणां तौल्यबोधनाच्च दृढीकृत इत्यर्थः । एवं सार्द्धैर्नवभिः सप्तमाध्यायार्थ उक्तः ।

अतः परं सार्द्धैस्त्रिभिः द्वितीयप्रकरणेऽर्थकथनपुरःसरमध्यायान्विभजन्ते । अतः परमित्यादि । अन्यथेति, प्रकरणत्वाभावे ॥ ७५ ॥ तत्प्रयोजकेति, अर्थप्रयोजकेत्यर्थः । तर्हीति अर्थस्य प्रकरणित्वे । चारितार्थत्वादिति, प्रकरणस्यार्थीयत्वसिद्धेः । तदीति, उभयम् ॥ ७६–७७–७८½ ॥

एवमर्थप्रकरणेऽध्यायान्विभज्य, तेषु प्रथमस्याष्टमाध्यायस्यार्थमष्टादशभिर्विचारयन्ति । अतः परमित्यादि । तद्व्यर्थमिति सनकादिनिरूपणं व्यर्थम् । धर्मस्येति गृहस्थधर्मस्य तत्त्यजेदिति, गृहं त्यजेत् ॥ ७९ ॥

अयमिति, गृहानावासः । किन्त्वयमिति, किन्त्वधर्मः ससन्तानः ॥ ८० ॥ इति भाव इति, तथा चैतां व्यवस्थां बोधयितुमधर्मकथोक्तिपूर्वकमर्थप्रकरणारम्भ इत्यर्थः । ज्येष्ठ इति प्रियव्रते ॥ ८१–८२ ॥

---

१. राज्यदोषेण ।

सुरेश्वरः । ऋषयोंशावतारश्च हरेः षड्विधमुच्यते" इतिवाक्यादेतेषां मन्वन्तररूपत्वादष्टमे स्कन्धेऽस्य मन्वादेः सम्भवो वक्ष्यत इत्यर्थः । अन्यत्र यथाप्रयोजनं निरूपणान्न दोष इतिभावः । तर्ह्युत्तानपदन्वये किं प्रयोजनं तत्राह ध्रुवादय इति । भगवतः पुरुषार्थचतुष्टयसर्गरूपलीलायां यस्य योऽर्थः साधितस्तस्यापि निरूपणस्यावश्यकत्वादर्थादिपुरुषार्थानां ध्रुवपृथुप्रचेतोभ्यः प्रत्येकं साधितत्वात्तेषां चोत्तानपदन्वयस्थत्वात्तन्निरूपणमित्यर्थः ॥ ८२½ ॥

ननु राज्यादेरितरसमानत्वाद्भगवत्कृतत्वेन को विशेषोऽस्यार्थ इत्याकाङ्क्षायां तदर्थस्वरूपमाह, अभिमानेनेति ।

**निबन्धः—अभिमानेन सुखदः पूर्वभागोऽपि यस्य हि ॥ ८३ ॥**

**अविद्यमानपूर्वः स्यादर्थः सोऽत्र निरूप्यते । विद्यमाने तु विषये कामः सोऽग्रे विविच्यते ॥ ८४ ॥**

प्रकाशः—यस्यार्थस्य पूर्वभागोपि साधनकालेपि सुखदो भगवदाविर्भावात्तत्राऽप्यनर्थसाधनेनाऽभिमानेन साधितस्तादृशो योऽर्थः सोऽत्र प्रकरणे निरूप्यत इत्यर्थः । न हि हरिकृतिं विनैवं सम्भवतीतिभावः । ननु पृथोरप्येवमेवेष्टसिद्धेः को भेद इत्यत आह अविद्यमानेति । न विद्यमानः पूर्वः स्वसजातीयो यस्य सोऽर्थः स्यादित्यर्थः । न हि ध्रुवस्थानं पूर्वं केनचित्प्राप्तमनेन ज्ञातं वा, अतस्तथात्वम्, विद्यमाने विषये यत्र सिद्धिः स काम इत्याह विद्यमाने इति । अयमेवोभयोर्भेद इतिभावः । भूमौ पूर्वमेव सिद्धानां दोहादिति । स यथा तथाऽग्रे कामप्रकरण एवोच्यत इत्याह सोऽग्र इति ॥ ८४ ॥

नन्वस्य मनुपुत्रत्वेन "मन्वन्तराणि सद्धर्मः" इतिवाक्यात्तद्रक्षार्थमेवावतारात्कथं बालावमाननम् । "बालाश्च कुलवृद्धाश्च निर्दहन्त्यवमानिताः" इति वाक्यादित्यत आह । धर्मार्थमिति ।

**निबन्धः—धर्मार्थमवतीर्णोऽपि जड एव स्त्रिया भवेत् । इत्यारुरुक्षोः पुत्रस्य नाऽभिनन्दनमीरितम् ॥ ८५ ॥**

प्रकाशः—प्रकरणादावेवैतन्निरूपणेन पूर्वोक्तं निवृत्त्युपयोगित्वं समर्थितम् ॥ ८५ ॥

ननु भजनोपदेशकर्त्र्याः सुरुचेः कथं नाश इत्यत आह नाशकारणमिति ।

**निबन्धः—नाशकारणमस्यास्तु सा[1]पेक्षकथनं हरेः । अन्यथा दूषणं नाऽस्ति न च मृत्युर्ध्रुवेष्टवः ॥ ८६ ॥**

प्रकाशः—"तपसाराध्य पुरुषं तस्यैवानुग्रहेण मे । गर्भे त्वं साधयात्मानं यदीच्छसि नृपासनम्" इति हरेरपि स्वगर्भसापेक्षत्वकथनमस्यास्तथेत्यर्थः ॥ ८६ ॥

**निबन्धः—रोदनं च मृतिश्रुत्या दुःखापारोऽत एव हि । साधनं तु तदेवाऽत्र मरणं तु न मन्यते ॥ ८७ ॥**

**असाध्यमपि संसिद्धं ब्रह्मादीनां यतो हरेः । सकामत्वाद्विद्ध्यभावे प्रकाराज्ञानतो मृतिः॥ ॥ ८८ ॥**

**विश्वासाद्भवतीत्येतन्नारदः कामवारकः ॥ ८८½[2] ॥**

प्रकाशः—ननु भजनार्थं प्रवृत्ते ध्रुवे नारदस्य निवारणमयुक्तमित्याशङ्क्य तत्र हेतुमाह सकामत्वादिति, निष्कामभजने तु न विध्याद्यपेक्षा, ध्रुवस्य च सकामत्वात्तादृशफलकामाधिकारिकतद्विधिश्रवणाभावेन तत्प्रकारस्य चाज्ञानादयथाकरणेन बालत्वाच्च मरणमेव स्यादिति ज्ञात्वागत्य नारदः कामनिवारको जात इत्यर्थः । ननु कञ्चित्कालं कृत्वा फलमप्राप्य क्लेशेन च स्वयमेव त्यक्ष्यतीति व्यर्थमिदमित्यत उक्तं विश्वासादिति । भजनेनाऽऽवश्यं फलमिति जनन्युक्तार्थे विश्वासादित्यर्थः । अतो न त्याग इतिभावः ॥ ८८½ ॥

तर्हि साधनान्तरं कुतो नोपदिष्टमित्यत आह साधनं त्विति ।

**निबन्धः—साधनं तु तदेवाऽत्र काममात्रं निवार्यते ॥ ८९ ॥**

**प्रतिबन्धोऽत एवाऽऽसीत्सामग्रीसाधनेऽपि हि ।**

प्रकाशः—"सर्वासामपि सिद्धीनाम्" इतिवाक्यान्नान्यदित्यर्थः । ध्यानादिकथनमपि कामवारणार्थमेवेत्याह काममात्रमिति । "एवं भगवतो रूपम्" इतिवाक्येन "विरक्तश्चेन्द्रियरतौ" इत्यनेन ध्यानस्य पूजादिसाधनानां चोपयोगस्य तेनैवोक्तत्वादितिभावः ॥ ८९ ॥ ननु कोऽयं निर्बन्धोऽस्य कामवारण इत्याशङ्क्याह प्रतिबन्ध इति । सत्कामत्वादेव हेतोर्नारदेन भजनसामग्र्याः

---

ध्रुवपृथुप्रचेतोभ्य इति चतुर्थीविभक्तिः ८२½ ॥ को भेद इति, पार्थवादर्थात् को विशेषः । तथा चाग्रिमप्रकरणस्य भिन्नत्वं नोचितमित्यर्थः । प्राप्तं ज्ञातं वेति, एतेन मूलस्थं विद्यमानपदं "विद्लृ लाभे" "विद ज्ञाने" इति धातुद्वयार्थसङ्ग्राहकमिति ज्ञापि-

---

१. सापेक्षा । २ सार्धश्लोको नास्ति ग्रन्थान्तरे ।

साधनेपि नारदागमनरूपः शीघ्रं भगवत्प्राप्तौ प्रतिबन्ध आसीदित्यर्थः । अयं भावः । स तदा यादृग्दैन्यभावेन चलितो यदि नारदो नागच्छेत्तदा तादृग्भावेन बालत्वेन शुद्धभावेन च सन्तुष्टः स्वयमेव भगवान् कियद्दूरे प्रकटो भवेत्तन्मिलने च प्रकारादिज्ञाने साधनदार्ढ्येन तादृग्दैन्यापचयान्नारदे तथात्वमिति । अत एव नारदः सकामत्वेनाधुना विघ्नोऽभूदग्रेपि मा भवत्विति तथोक्तवान् । अत एव निर्बन्धं दृष्ट्वा निराकृतदैत्यं सततं[1]सन्निहितहरिं च देशमुक्तवान् विघ्नाभावायेति ॥ ८९½ ॥

निबन्धः—चतुष्टयत्वसिद्ध्यर्थमर्थानां प्रेरणाद्धरेः ॥ ९० ॥
नोपदेशः फलायाऽऽसीदत्यन्ताभिनिवेशतः ।

प्रकाशः—तर्हि नारदस्य कथमागमनमित्यत आह प्रेरणादिति । ननु तदपि कुतस्तत्राह चतुष्टयत्वेति । यदि पूर्वोक्तरीतिः स्यात्तत्रैवास्य लयः स्यात् । तथा चार्थासिद्ध्या पुरुषार्थानां त्रितयत्वमेव स्यान्न चतुष्टयत्वमस्तेषां तथात्वसिद्ध्यर्थं तथेत्यर्थः । अस्यैव विसर्गलीलायामेवाङ्गीकारादितिभावः । ननु ध्यानादौ कृतेपि कुतो न कामनिवृत्तिरित्यत आह नोपदेश इति फलाय परमफलाय कामनिवृत्तय इत्यर्थः ॥ ९०½ ॥

अस्य गमने भगवदिच्छां ज्ञात्वा नारदस्तत्सिद्ध्यर्थमेव राजकृतो मनुष्यप्रेषणादिना प्रतिबन्धो मा भवत्विति तन्निकटे गत इत्याह प्रतिबन्धेति ।

निबन्धः—प्रतिबन्धनिवृत्त्यर्थं राजान्तिगमनं मुनेः ॥ ९१ ॥
वृथैव मरणं वा स्यात्साधने वार्थदुर्लभे ।

प्रकाशः—तदवज्ञातुरपि राज्ञश्चिन्तायां हेतुमाह वृथैवेति । पुरुषार्थसाधनव्यतिरेकेणैव वृकादितस्तथा स्यात् । पुरुषार्थ-साधने वाऽर्थो दुर्लभो यत्र तादृशे प्रवृत्तौ तथा स्यादिति संशयात्तथेत्यर्थः ॥ ९१½ ॥

ननु यदि प्रतिबन्धं कुर्यात्तदैव कुर्याद्विलम्बात्र न तथेत्यवगम्यत इति व्यर्थं मुनिगमनमित्यत आह विलम्बस्त्विति ।

निबन्धः—अतश्चिन्ता विलम्बस्तु भार्यातोऽसंशयो मुनेः ॥ ९२ ॥
पूर्वर्पित्वात्तपोत्युग्रं कामावेशात्पुनस्तथा ।

प्रकाशः—तावत्सा निकटे स्थिता तद्द्वयश्च स इति तथेत्यर्थः । ननु राजोक्तप्रकाराणां सम्भवात्कथं नारदस्य तादृक् सान्त्वनमित्याशङ्क्य मननशीलत्वेन सर्वज्ञत्वात्तथेत्याह, असंशय इति । तर्हि पञ्चवार्षिकस्य तादृशतपःप्रकरणे कोपपत्तिरित्यत आह पूर्वर्षित्वादिति । ऋषेः कथमेवं भावस्तत्राह कामावेशादिति । पूर्वजन्मनि तपः कुर्वाण एव कञ्चन राजकुमारं दृष्ट्वा तत्स्पृहावान् जातस्ततस्तद्वासनावानेव मृत इति जन्मान्तरे ध्रुवो जात इति पुराणान्तरप्रसिद्धिः । तदिदमुक्तं कामावेशादिति च । अतः पुनरग्रिम-जन्मन्यपि तथा सकाम एवेत्यर्थः ॥ ९२½ ॥

ननु ध्रुवहृदयस्थविश्वाधाररूपं देवप्रार्थितरूपं चैकमेव भिन्नं वा । आद्ये तस्यैव बहिष्ठत्वान्निरुच्छ्वासत्वं लोकानां न स्यात् । द्वितीये तयोः स्वरूपं वाच्यमित्याशङ्कायां हृदयस्थस्वरूपमाह जगदिति ।

निबन्धः—जगत्कारणरूपं हि यदक्षरमुदीरितम् ॥ ९३ ॥
मुख्यप्राणयुतं पूर्वमाविर्भूतं हरेः पदम् ।

प्रकाशः—"प्रकृतिः पुरुषश्चोभौ परमात्माऽभवत्पुरा" इत्यादिना सर्वनिर्णयप्रकरणोक्तोऽर्थोऽत्रानुसन्धेय इतिज्ञापनायोक्त-मुदीरितमिति मुख्यप्राणयुतमिति । लोकप्राणनिरोधे प्रयोजनमुक्तम्, पूर्वमिति भगवदाविर्भावात्पूर्वमित्यर्थः ॥ ९३½ ॥

नन्वेवं प्रादुर्भावेऽक्षरस्य को हेतुस्तत्राह भक्तिभावेनेति ।

निबन्धः—भक्तिभावेन संहृष्टः प्रादुर्भूतो भविष्यति ॥ ९४ ॥
कृपया सर्वरूपेण हरिरित्यक्षरं तथा । निरुच्छ्वासेन पीडाऽभूदतः सर्वशरीरिणाम् ॥ ९५ ॥

---

तम् । तथात्वमिति, पार्थवाद्विलक्षणत्वम् । तथाचैवं प्राप्ताप्राप्तादिभेदेनार्थकामयोः स्वरूपभेदात्प्रकरणभेद इत्यर्थः ॥ ८३–८९ ॥ नारदे तथात्वमिति, प्रतिबन्धकत्वम् ॥ ८९½ ॥ पूर्वोक्तरीतिरिति । निष्कामत्वदैन्यपूर्वकं भजननिर्बन्धः । अस्यैवेत्यादि यादृश-स्यैवाऽर्थस्य विसर्गलीलायामर्थत्वेन विवक्षितत्वात्तत्सिद्ध्यर्थं नारदप्रेरणमिति भावः ॥ ९०½ ॥

सर्वरूपेणेति अग्रिमारम्भे सहस्रशीर्षापि ततो गुरुत्मतेति सहस्रशीर्षपदसूचितेन तेनेत्यर्थः ॥ ९१–९५ ॥

---

१. सन्निहितं हरिम् ।

प्रकाशः—प्रादुर्भावे हेतुरयम्। सर्वरूपेण प्रादुर्भावे हेतुः कृपयैव। तस्य सकामत्वादतिकृपया सर्वमस्य सम्पाद्यतामिति सर्वरूपेण हरिः प्रादुर्भूतो भविष्यतीति हेतोस्तथा पूर्वोक्तरूपेणाऽक्षरमपि प्रादुर्भूतमित्यर्थः। अत एव सर्वोपरिभागस्थलोकप्राप्तिरिति भावः। निरुच्छ्वासेति। सर्वप्राणरूपमुख्यप्राणस्य यतः कारणादन्तर्निरोधोऽत एव ध्रुवस्योच्छ्वासाभावेन सर्वेषां पीडाऽभूदित्यर्थः॥ ९५॥

ननु प्राणनिरोधे भगवत्प्रार्थनं कथं जातमित्यत आह अद्यापीति।

**निबन्धः—अद्याऽपि भगवान्नाभूदिति सम्प्रार्थ्यते सुरैः। जाते गत्यादिशक्तिश्च नश्येदिति तथा वचः॥ ९६॥**

प्रकाशः—उक्तरूपाक्षररूपचरणप्रादुर्भावेति सर्वात्मरूपो भगवान् प्रादुर्भूतो नाभूदिति तथा। तथा सति किं स्यात्तत्राह जात इति। तद्धृदि प्रकटे जाते इत्यर्थः। आदिपदेन सर्वेन्द्रियशक्तिर्गृह्यते। इतीति। इतिहेतोरेव "प्रतियात स्वधाम" इति भगवद्वचनमित्यर्थः॥ ९६॥

(अ० ९) ननु कथमत्र समाधानम्? अन्तःप्राकट्ये पूर्वोक्तदूषणात्। बहिःप्राकट्ये चाऽन्तःप्रकटाक्षररूपस्य वैयर्थ्यापातादित्यत आह बहिरिति।

**निबन्धः—बहिःप्रकटनात्सर्वं साधयिष्यति वै हरिः। प्रसादे गरुडो नीतः कालग्रसनकारणात्॥ ९७॥**

प्रकाशः—बहिःप्राकट्येन ध्रुवस्योच्छ्वासादिसम्भवात्सर्वप्राणपीडापगमः। यो ह्यागच्छति स पूर्वं चरणस्थापनेनागच्छतीति तत्प्राकट्यहेतुत्वेन तद्वैयर्थ्यम्। केवलस्य तस्यान्तरेव प्राकट्यनियमेन च तथात्वम्। ततोऽक्षरस्य बहिश्चरणैक्यतयाविर्भावो मुख्यप्राणस्य भगवत्स्थितजगत्प्राणरूपतयेत्येतत्सर्वपदवाच्यम्। तद्बहिःप्रकटनादेव हरिः साधयिष्यतीत्यर्थः। गरुत्मता सह गमने विशेषप्रयोजनतमाह प्रसाद इति। कालरूपो हि गरुडः स चेत्तादृग्भगवत्प्रसादं तस्मिन् स्वयं पश्यति तदाऽन्ते न ग्रसतीति तन्निमित्तं स्वप्रसादसमये स नीत इत्यर्थः॥ ९७॥

आगतस्यान्तःस्फूर्तौ प्रयोजनमाह अस्फूर्ताविति।

**निबन्धः—अस्फूर्तौ पूर्ववत्स्फूर्तौ विश्वनाश इति स्वयम्। अवेक्षारूपधृक् कृष्णस्तडिद्वद्धृदये बभौ॥ ९८॥**

प्रकाशः—तदन्तर्भगवतोऽस्फूर्तौ सत्यां पूर्ववन्मुख्यप्राणयुतजगत्कारणरूपाक्षरस्फूर्तौ विश्वनाशः स्यादित्यर्थः। इदमत्राकूतम्। हृदि दृश्यमानरूपतिरोभावं विना न हि तस्य बाह्यानुसन्धानम्। तदर्थं च तत्तिरोभावे मुख्यप्राणस्य कारणरूपे लये जाते निरुच्छ्वासेन प्राणपीडावन्मरणमेव स्याद्विश्वस्य। इतो हेतोर्येन रूपेणेक्ष्यैव पालयति तद्रूपधृक् सत्तां सम्पाद्यानन्ददायकरूपो रक्षाया एव सम्पाद्यत्वात्तस्याश्च प्राकट्यमात्रेण सम्भवाच्चिरकालस्थितौ प्रयोजनाभावाच्च तडिद्वद्ध्रुवहृदये बभावित्यर्थः। एतत्स्फूर्तौ तत्प्रयत्नस्य हेतुत्वनिरासाय स्वयमिति। ततः पालकरूपसहभावेन न नाश इति भावः। पूर्ववत्स्फूर्तौ सत्यामेव पूर्वरूपस्याकस्मादस्फूर्त्ताविति वा योजना॥ ९८॥

मूले दरस्पर्शस्य वाणीप्राप्तिफलकत्वकथनमुपलक्षणपरमित्याह मध्येपीति।

**निबन्धः—मध्येपि जातकामानां पूरणाय दरस्पृशिः। अपां तत्त्वे स्वतृप्त्यर्थमासन्यो वर्तते हरेः॥ ९९॥**
**वेदमूलत्वतस्तस्य दरो ब्रह्ममयः स्मृतः।**

प्रकाशः—अत एव शस्त्रास्त्रसामर्थ्यशत्रुजयादिरितिभावः। "यस्य ध्वनिर्दानवदर्पहन्ता" इतिवाक्यात्। ननु "अपां तत्त्वं दरवरम्" इतिवाक्यात्तादृशेन तेन कथं शब्दब्रह्मस्फूर्तिरित्याशङ्क्य तत्रोपपत्तिमाह अपामिति। एतादृशे तस्मिन् हरेरासन्यप्राणवायुः पूरणाद्वर्तते, स च वेदमूलहेतुरिति शब्दब्रह्ममयः स इत्यर्थः। सततं तत्स्थितिप्रयोजनं स्वतृप्त्यर्थमिति। जलेन प्राणतृप्तिः प्रसिद्धा। स्मृत इति प्रमाणं सूचितं मूले "ब्रह्ममयेन कम्बुना" इतिवाक्यात्॥ ९९½॥

**निबन्धः—प्रेमबोधकनन्वद्धि सर्ववेदात्मसात्कृतौ॥ १००॥**
**यथा मतिस्तथा जाता ऋषित्वात्तु तदुद्भवः।**

---

प्रादुर्भूतो नाभूदिति। अन्तः प्रादुर्भूतो नाभूत्। तथा बहिर्भगवत्सत्तया तत्सामर्थ्येन प्रार्थनमित्यर्थः॥ ९६॥ एवं षोडशभिरष्टादशभिर्वाष्टमाध्यायो विचारितः।

अतः परं नवभिर्नवमाध्यायं विचारयन्ति। नन्वित्यादि। अत्रेति रूपभेदाङ्गीकारे। अन्तरेव प्राकट्यनियमेनेति। 'यो वेदनिहितं गुहायामि'ति श्रुतेस्तथानियमेन॥ ९७॥

मुख्यप्राणस्येति, ध्रौवमुख्यप्राणस्य। सत्तामिति, अक्षरात्पृथक् ध्रौवमुख्यप्राणसत्ताम्॥ ९८॥

प्रकाशः—अन्यदिति दृग्भ्यां प्रपश्यन्नित्यादीत्यर्थः । ननु मन्त्रादिभ्य इव दरस्पर्शेनाऽपि शब्दमात्रमुत्पद्यते न त्वर्थज्ञानमपीत्यत आह सर्वेति । सर्ववेदमूलभगवदासन्यपूर्णत्वात्तथेति भावः ॥१००॥ ननु क्षत्रियस्य तत्राऽप्यकृतसंस्कारस्य तथा मतिरयुक्तेत्यत आह ऋपित्वादिति । तुशब्दः पूर्वपक्षव्यवच्छेदकः । पुष्ट्यैवास्य कार्यसिद्धेर्मर्यादामार्गीयदूषणं न दोषायेतिज्ञापकः । ऋपित्वं तत्सिद्धौ स्वरूपयोग्यता मात्रसम्पादकमितिभावः ॥ १००½ ॥

तथापि स्वाधिकारानुसारेणैव स्तुतिरित्यभिप्रायेण स्तुत्यर्थमाह सर्वेश्वरत्वेति ।

निबन्धः—सर्वेश्वरत्वभजने स्तुत्या साधुनिरूपिते ॥ १०१ ॥

विसर्गार्थप्रकरणात्स्वकार्यादभिनन्दनम् । पुष्टावनभिनन्दश्च प्रक्रियाभेदतो भवेत् ॥ १०२ ॥

प्रकाशः—समासात्तत्त्वेनैव भजनं च, न त्वात्मत्वेन स्वार्थमेवाविर्भूतत्वेन वा । सर्वेश्वरत्वात्तद्भजनेनैवार्थसिद्धिरिति हेतुहेतुमद्भावेन स्वोपयोगित्वेन च निरूपणात्साधुत्वम् । अत्र हेतुः विसर्गेति । यतो विसर्गलीलेयमतो भजननिरूपणम् । एतल्लीलास्थानामन्ते मुक्त्यधिकारित्वात् । अर्थप्रकरणत्वात्पूर्वस्येत्यर्थः । स एव ह्यर्थसाधकः । ननु कथमन्त्यप्रार्थनाया एवाभिनन्दनं भगवता कृतम् । "भक्तिं मुहुः प्रवहताम्" इत्यादेर्न प्रार्थनाया अविशिष्टत्वादित्याशङ्कायां भगवदभिप्रायमाह स्वकार्यादिति । भगवदभिप्रेतं कार्यं हि स्थानदानम् । तेन तस्यैवाभिनन्दनमित्यर्थः । पूर्वपदमत्राऽनुषज्यते । तथा च भक्तिमित्यादिना प्रार्थितस्याऽभिनन्दनेन तद्दाने शीघ्रं मोक्षप्रसङ्गेनाऽर्थासिद्ध्या स्वाभिप्रेतलीलैव न सिद्ध्येदितिभावः । एतदेव स्पष्टयति । पुष्टाविति । पुष्टिमार्गे इच्छाया एव बलिष्ठत्वात्प्रार्थनाविशेषेपि स्वविचारितार्थप्रार्थनस्यैवाऽभिनन्दनमन्यस्याऽनभिनन्दश्च पूर्वोक्तप्रक्रियाभेदतो भवतीत्यर्थः । अन्यत्राऽप्येवमितिज्ञापनाय भवेदित्यतिदेशः ॥ १०२ ॥

ननु एवं न्यूनतेत्याशङ्क्य परिहरति दृष्टोत्कर्ष इति ।

निबन्धः—दृष्टोत्कर्षो ध्रुवान्नास्ति मरणाद्भावितान्मृतिः । प्रजापालनयज्ञो हि धर्मस्तेनेह संस्मृतिः ॥ १०३ ॥

प्रकाशः—ध्रुवादन्यत्र दृष्टपदार्थेर्थे उत्कर्षः स नास्तीत्यर्थः, न त्वदृष्टोत्कर्षोपि । अर्थप्रकरणत्वादस्य तस्य च दृष्टार्थत्वादितिभावः । 'एतेन नाऽन्यैरधिष्ठितमि'त्यादिभगवद्वाक्यानां प्रयोजनमुक्तम् । ननु भ्रातृतन्मात्रोरेतदानुकूल्येनाऽपि स्थितिसम्भवे कुतो भगवता तथोक्तमित्यत आह मरणादिति । ध्रुवेणातिदुःखेन तयोस्तत्स्वहृदये भावितमिति तथेत्यर्थः । तेन तद्भावितमिष्टमनिष्टनिवृत्तिं च भगवान् सम्पादितवानित्युक्तं भवति । अर्थभोगस्य भगवद्विस्मारकत्वेन प्रकृते तदभावाय तद्धेतुभूतस्वधर्मो भगवतोक्त इत्याह प्रजापालनेति । सोऽपि दृष्टफलक एवेत्याह, इहेति । अस्मिन्नेव जन्मनीत्यर्थः । 'धर्मैकान्तस्ये'तिवाक्यादर्थप्रकरणेपि धर्मकथनं युक्तम् । "धर्मस्य ह्यापवर्ग्यस्य" इति वचनात्तेन स्मृतिकथनं च युक्तम् । तथाह हिशब्देन । अन्यस्मरणराहित्यमेतदविच्छेदश्च सम्यक्त्वम् ॥ १०३ ॥

ननु पश्चादनुतापे को हेतुस्तथात्वे वा वैराग्यस्य सम्पन्नत्वाद् गृहे गमनं कुत इत्यत आह सिद्धेऽर्थ इति ।

निबन्धः—सिद्धेऽर्थे गुरुवाक्येन भगवद्दर्शनेन च । शुद्ध्या सिद्धेऽपि वैराग्ये कृष्णेच्छातो गृहं गतः ॥ १०४ ॥

प्रकाशः—"गुरोर्मातुः आराधय" इत्यादिवाक्येन, नारदस्य वा "भगवान्वासुदेवस्तम्" इत्यादिरूपेण, अथवा नारदेनापि "जनन्याऽभिहितः पन्थाः" इत्युक्तत्वादुभयोर्वाक्यमेवेति गुर्वोर्वाक्येनेत्यर्थः । भगवद्दर्शनेन चाऽर्थे सिद्धे ताभ्यामेव हेतुभ्यामन्तःकरणशुद्धिर्जातेति वैराग्यं जातम् । एतेनानुतापे हेतुरुक्तः । अत एवेच्छाज्ञानम् , तेन तथेत्यर्थः । अथवार्थे सिद्धे अर्थसिद्ध्यन्तरं पूर्वदर्शनजशुद्ध्या हृदि स्फुरितेन "दुराराध्यो मतो मम" इत्यादितद्वाक्येन भगवद्दर्शनेन च तथाविधेनेत्यग्रे पूर्ववत् ॥ १०४ ॥

गृहगमने हेत्वन्तरमाह भयादिति ।

निबन्धः—भयादपि हरेस्तस्मादन्यस्याऽप्यनुपायतः । आदरो दृढविश्वासे फले चोत्कर्षसूचकः ॥ १०५ ॥

प्रकाशः—प्रस्थिते त्विति "इष्ट्वा माम्" इत्याद्याज्ञोल्लङ्घने को वेद भगवान् किं कुर्यादितिभयाद् गृहं गत इति सम्बन्धः । किं च तस्माद्भगवदुक्तप्रकारादन्यस्यैतत्कालीनत्यागस्यास्मिन् भगवत्प्राप्त्यनुपायत्वादित्यर्थः । पित्रादिद्वारा कारितादरस्य सुरुचिकृतस्य वा प्रयोजनमाह आदर इति । द्वेषिणामपि तथात्वे भगवदुक्ते विश्वासः स्यादिति तन्निमित्तं स निरूपित इत्यर्थः । यत्र स्वगृहगमनेऽप्येवमवान्तरं फलं तत्र परमफले भगवदुक्ते का वार्तेति तदुत्कर्षोऽप्यनेन सूचित इत्याह फल इति ॥ १०५ ॥

---

स्वोपयोगिनेति, भगवदुपयोगित्वेन । अत्रेति, उक्तोपयोगित्वे । पूर्वस्येति, अर्थस्य त्रिवर्गस्य वा । स एवति भगवानेव । पूर्वपदमिति विसर्गार्थप्रकरणपदम् । प्रार्थनाविशेषेपीति, भगवदीयसङ्गप्रार्थनायामपि । प्रक्रियाभेदत इति, प्रकरणभेदात् ॥ १०२ ॥

पूर्वदर्शनजशुद्ध्येति, नारददर्शनजशुद्ध्या ॥ १०४ ॥ अस्मिन्निति ध्रुवे । ( नवमाध्यायः पूर्णः । )

( अ. १० ) ननु भ्रातृनाशस्य भगवतैवोक्तत्वाद्वैष्णवत्वाच्च क्रोधोनुचित इत्यत आह राज्यस्येति।

**निबन्धः—राज्यस्यानर्थबोधाय क्रोधावेशो हि लौकिके। भ्रातृवत्सलतासिद्ध्यै युद्धव्यसनतोऽपि हि ॥ १०६ ॥**

प्रकाशः—अनर्थपदं भावप्रधानम् "एते पञ्चदशाऽनर्थाः" इत्युपपत्तिर्हिशब्देनोच्यते। ननु वैष्णवत्वात्तथाऽप्यनुचितत्व-मुक्तमित्यरुच्या प्रयोजनान्तरमाह लौकिक इति। तदोपेक्षायां लोकेऽपकीर्तिर्भवेदिति लौकिके जने तथासिद्ध्यर्थमित्यर्थः। जात्यभि-प्रायमेकवचनं सर्वेषामेकरूपताभिज्ञापकम्। तथापि मारणं नोचितमित्यत आह युद्धेति। सप्तव्यसनित्वाद्राज्ञ इति भावः। एतेन दोषत्रयमुक्तम् ॥ १०६ ॥

**निबन्धः—ईशत्विस्मृतिरावेशादतो विप्रैर्विबोधनम्। पितामहेन गर्वस्य दोषस्याऽपि निवारणम् ॥ १०७ ॥**

प्रकाशः—अत एव तज्जनितमहारोगरूपादावेशात्क्रोधावेशाद्भगवद्विस्मृतिरपि। अस्य भगवदीयत्वात्तत्स्मरणेनैवाऽनर्थ-निवृत्तिर्भविष्यतीति तत्सिद्ध्यर्थं विप्रवचनमित्याह अत इति।

( अ. ११ ) तर्हि मनुवाक्यस्य किं प्रयोजनमित्यत आह पितामहेनेति। दोषस्य क्रोधावेशस्य। इदमत्राकूतम्। विप्रैस्तु मृत्युनिवारकत्वेनैव भगवान् स्मारितो न तु सर्वात्मत्वेन स्वप्रभुत्वेन सर्वकर्तृत्वेन वा। अतस्तथा स्मरणेन "ये यथा मां प्रपद्यन्ते" इति न्यायेन तत्कालीनदुःखमेव निवृत्तं न त्वन्यत्। प्रत्युत तन्निराकरणे दोषस्यानिवृत्तत्वात् स्वसामर्थ्यस्फूर्त्या गर्वो जातः, सोप्यनेनैव निराकृत इति ॥ १०७ ॥

**निबन्धः—संसारित्वादगमनं बालत्वात्तदुपेक्षणम्। तज्ज्ञापनायाऽऽगमनं वरश्चैव तथोच्यते ॥ १०८ ॥**

प्रकाशः—ननु "तं प्रसादय वत्स" इति श्रुत्वा तत्र गत्वा कथं न तं प्रसादितवानित्यत आह संसारित्वादिति। मानुषभावस्य सत्त्वादितिभावः। बालत्वादिति। "न वै शिशूनां गुणदोषयोः पदम्" इति वाक्यात्तदपराधोपेक्षणमित्यर्थः।

( अ. १२ ) तर्हि धनदागमनं कुत इत्यत आह तज्ज्ञापनायेति। तदुपेक्षाज्ञापनायेत्यर्थः। तथेति स्वप्रसाद-ज्ञापनायेत्यर्थः ॥ १०८ ॥

ननु पूर्वमपि भक्तेः सत्त्वाद्विप्रमनुभ्यां भगवत्स्मृतिदोषनाशयोः कृतत्वाच्च तद्वरेण किमायातमित्यत आह मारितेति।

**निबन्धः—मारिताकृष्णसम्बन्धिवधाद्युद्धाच्च राक्षसाः। ततो यज्ञस्मृतिध्यानगतयः परिकीर्तिताः ॥ १०९ ॥**

प्रकाशः—मारितोऽकृष्णसम्बन्ध्युत्तमो यैस्तेषां यक्षाणां वधादिति योजना। अयमर्थः। भगवदीयस्य प्राणिवधमात्रमेव नोचितं तत्रापि भगवद्धेतुरहितम्। तथात्वेऽपि भगवद्भ्रूनिरीक्षणमेवोचितं न तु स्वतो युद्धमपि। भगवदिच्छाभावश्च मनुवाक्यैरेव-गम्यते। तथा चास्मिन्नुभयोर्जातत्वादन्तःकरणसम्बन्धिषु क्रियासम्बन्धिषु चार्थेषु रक्षःसम्बन्धो जात इति ते राक्षसा जाता इति। एवं च पूर्वोक्तभक्त्यादेर्बीजभावेन सत्त्वेपि फलपर्यवसायित्वं न भविष्यतीति पूर्वोक्तदोषनिवर्त्तिका भक्तिस्तेन दत्तेतिभावः। किञ्च, एतद्दोषनिवृत्त्यर्थमेव यज्ञादिकमपीत्याह तत इति। यज्ञैः क्रियादोषनिवृत्तिः स्मृत्या वधदोषस्य निवृत्तिः। ध्यानेन भगवत्सम्बन्धाभावजस्य। एवं मनुवाक्यैर्वरेण यज्ञादिभिश्चाधिदैविकाध्यात्मिकाधिभौतिकदोषाणां निवृत्त्या शुद्धस्य पश्चा-द्गतिरुक्ता ॥ १०९ ॥

यद्यप्येवं निर्दोषस्य भक्त्या च विस्मृतप्रपञ्चस्य परममुक्तिरेव वाच्या, तथाऽप्यर्थप्रकरणे तथाकथनस्यानुपयोगात्तत्साधनानां फलोत्कर्षकारित्वमेवोक्तमित्याह फलाधिक्यमिति।

**निबन्धः—फलाधिक्यमतः प्रोक्तं तथाऽत्रानुपयोगतः। प्रकारोयं समीचीनो भगवत्प्रीणनाय हि ॥ ११० ॥**

प्रकाशः—भगवद्दत्तलोकप्राप्तिः फलम्। सा च पूर्वशरीरत्यागपूर्विकैवान्यत्र प्रसिद्धेत्यत्रान्येभ्य आधिक्यं तदत्यागः। अत इति। यतः पूर्वोक्तरीत्या तद्देहोपि निर्दोष इति भावः। यद्वा, ननु देहान्तरमेव कुतो नोक्तमित्यत आह तथेति। अत्र लोकान्तरप्राप्तौ तथा देहान्तरस्यानुपयोगादप्रयोजकत्वादित्यर्थः। निर्दोषत्वस्यैव प्रयोजकत्वादिति भावः। तच्चोक्तम्। प्रकरणार्थमुपसंहरं-स्तत्तात्पर्यमाह प्रकारोऽयमिति। संस्कारवेदाध्ययनतदर्थविचारानन्तरकर्त्तव्ययागतपस्यादिभ्यो विषयानभिवेशदशायामेव गुरूपदेशेन क्वचिद्भगवत्सान्निध्यवद्देशे भजनं समीचीनमिति ज्ञापितमेतत्प्रकरणेनेत्यर्थः। शीघ्रप्रसादहेतुत्वरूपोपपत्तिर्हिशब्देनोच्यते ॥ ११० ॥ अत्र निदर्शनमाह यत इति।

---

एवं नवभिर्नवमाध्यायो विचारितः। सार्द्धेन दशमार्थं विचारयन्ति ननु भ्रात्रित्यादि।

एकेनैकादशार्थमाहुः तर्हीत्यादि।

उपेक्षणमिति, धनदकृतमुपेक्षणम्। सार्द्धैश्चतुर्भिर्द्वादशस्यार्थमाहुः। तर्हीत्यादि ॥ १०८ ॥ एवं चेति, सम्बन्धिदोषेण क्रियान्तःकरणयोर्दुष्टत्वे। एतेन भगवदीयस्याधर्मप्रकरणे फलप्रतिबन्ध इति भगवदिच्छां विना तन्न कार्यमिति फलति ॥ १०९ ॥

निबन्धः—यतः सर्वनिषेधेन श्लोकानाह स नारदः । सर्वथा दुर्लभा सेवेत्यतस्तस्य कथा तता ॥ १११ ॥

प्रकाशः—"दृष्ट्वाऽभ्युपायानपि वेदवादिनः" इति वाक्यात्सर्वनिषेधः । ननु प्रचेतसां सत्रे तत्कथागाने हेतुः क इत्यत आह सर्वथेति । भगवत्साक्षात्कारे जातेऽपीत्यर्थः । अत एव स नारद इत्युक्तम् । 'दुराराध्यो मतो ममे'ति येनोक्तमिति ज्ञापनार्थम् ॥ १११ ॥

( ३. प्रकरणम् ) अथाग्रिमप्रकरणार्थं विचारयन् तत्रान्ते मोक्षस्य निरूपितत्वान्मोक्षप्रकरणत्वमाशङ्कयाह कामेनेति ।

निबन्धः—कामेन सिद्धः सर्वेषां कामस्य च स साधकः । कामः सम्पादितः स्वस्य कामप्रकरणं ततः ॥ ११२ ॥

प्रकाशः—कामनयेत्यर्थः । सर्वेषामित्युभयत्र सम्बद्ध्यते । तथा च आदिमध्यावसानेषु कामस्यैव निरूपितत्वात्कामप्रकरणमेवेत्यर्थः ॥ ११२ ॥

तस्यैकादशाध्याय्या निरूपणे हेतुमाह, एकादशेति ।

निबन्धः—एकादशेन्द्रियैः कामस्तेनाध्यायास्तथा मताः । चतुर्भिश्च तथा द्वाभ्यां पञ्चभिश्च क्रमात्त्रयम् ॥ ११३ ॥

प्रकाशः—कामः सिद्ध्यतीति शेषः । अध्यायसङ्ख्ययापि कामप्रकरणत्वमेव सिद्ध्यतीति भावः । अध्यायान् विभजते चतुर्भिरिति । सहेतुकपृथुप्रादुर्भावनिरूपणं चतुर्भिः । सर्वकामसाधनं द्वाभ्याम् । स्वकामसाधनं पञ्चभिः ॥ ११३ ॥

अध्यायार्थानाह स्वरूपेणेति ।

निबन्धः—स्वरूपेण गुणैश्चापि प्रथमे भेदकद्वयम् । हेतुकार्यविभेदेन राज्यान्यगुणभेदतः ॥ ११४ ॥

प्रकाशः—कामस्वरूपं गुणाश्च प्रथमप्रकरणस्यावान्तरप्रकरणद्वयार्थः । तावुभावपि प्रत्येकं द्विधेति चतुर्भिरध्यायैरिदं प्रकरणमुक्तम् । तद्द्वैविध्यमाह हेत्विति । कामहेतुः प्रथमाध्यायार्थो रक्षकाभावरूपः अधर्मस्थापनरूपं कार्यं द्वितीयाध्यायार्थः । राज्यं तृतीयस्य । आविष्टगुणाश्चतुर्थस्य ॥ ११४ ॥

द्वितीयप्रकरणस्याध्यायद्वयार्थं क्रमेणाह क्रियेति ।

निबन्धः—क्रियाफलविभेदेन सर्वकामे द्वयं तथा । शुद्धिः कृष्णप्रसादश्च स्वधर्मो ज्ञानमेव च ॥ ११५ ॥
मोक्षश्चेति विभेदेनं स्वकामेऽध्यायपञ्चकम् ।

प्रकाशः—तृतीयाध्यायार्थान् क्रमेणाह शुद्धिरित्यादिना ॥ ११५$\frac{1}{2}$ ॥

ननु कामस्य तृतीयपुरुषार्थस्य स्त्रीसम्भोगादिजसुखरूपत्वान्मोक्षस्य स्वतन्त्रत्वाच्च कामत्वमयुक्तमित्यत आह मोक्षकाम इति ।

निबन्धः—मोक्षकामोऽत्र युक्तो हि सर्वकामस्तथैव हि ॥ ११६ ॥
मोक्षप्रकरणार्थाय प्रक्रियेयमतः कृता ।

प्रकाशः—अत्र भगवच्छास्त्रे सकामभजने मोक्षकामः सर्वकामश्च पुरुषो युक्त इत्यर्थः । न तु स्त्रीकामः तस्य तुच्छत्वात् । यद्यपि भगवद्दत्तः सोपि नाऽनर्थरूपस्तथापि तदर्थं भजनं स्वस्यायुक्तमितिभावः । यत्तु द्वितीयस्कन्धे "स्त्रीकामोऽप्सर उर्वशीम्" इत्युक्त्वा "सर्वकामोपि पुरुषं यजेते" त्युक्तं तत्रापि भजनार्थमेव स्त्रीकामनायां तथेति शुकहृदयम् । यथा चैतत्तथा तत्रैव टीकायां निरूपितम् । अस्य च सकामत्वायुक्तमिति पूर्वार्द्धहिशब्दार्थः । "अकामः सर्वकामो वा" इतिश्लोकसम्मतिर्द्वितीयेन सूच्यते । प्रकरणार्थमुपसंहरति मोक्षेति, प्रचेतसां प्रश्ने कृते हीयं कथारब्धा तन्निरूपणार्थम् । तेषां च भक्तिमार्गीयमुक्तेर्वक्तव्यत्वान्मोक्षप्रकरणनिमित्तमेवेयं शुद्ध्यादिप्रक्रिया कृतेत्यर्थः । तर्हि मोक्षप्रकरणत्वमेवास्यापि न कुत इति चेन्न पृथुभक्तेर्ज्ञानसाधनत्वेनैवोक्तत्वात्तेन च मुक्तिनिरूपणात्तत्र चाऽस्य सकामत्वाद्भक्तिमार्गीयतद्विलक्षणत्वाच्च । एतदेवाह, अत इत्यनेन । यतः पृथुः सर्वकामो मोक्षकामश्चातस्तत्प्रकरणनिरूपणार्थमेवेयं प्रक्रिया कृतेति ज्ञायते, न तु तत्प्रकरणमेवेत्यर्थः ॥११६$\frac{1}{2}$ ॥

---

एवमत्र सार्द्धैः षट्त्रिंशद्भिरर्थप्रकरणे निरूपितम् । द्वाभ्यां प्रकरणाभ्यां कालरूपतया द्वादशभिस्तत्त्वैर्यज्ञनिष्पत्त्या तेषामलौकिकविसर्गोपयोगो निरूपितः । अतः परमन्येषां तत्त्वादीनां प्राणमनोरूपतया यज्ञनिष्पादनेन तथात्वाय तृतीयं प्रकरणं द्विचत्वारिंशतिभिर्विचारयन्ति अथाग्रिमेत्यादि ॥ ११२ ॥

कामहेतुरिति, कामनाप्रयोजको हेतुः । कार्यमिति, तस्य साक्षात्कार्यम् ॥ ११४ ॥ तर्हीति, वक्ष्यमाणप्रकरणोपोद्घातरूपत्वे । तत्र चास्य सकामत्वादिति, ज्ञानसाध्ये मोक्षेऽस्य सकामत्वात् । तद्विलक्षणादिति । अधिकारिविलक्षणत्वात् । एवं सार्द्धैश्चतुर्भिः प्रकरणार्थो निर्णीतः ॥ ११६$\frac{1}{2}$ ॥

( अ० १३ ) एवं प्रकरणार्थमुपपाद्य प्रथमाध्यायार्थं विचारयति साधितेति ।

**निबन्धः—साधिता कृष्णभक्तिर्हि पुत्रे वंशेऽथवा फलेत् ॥ ११७ ॥**
**नोपक्षीणा गौणफलादिति तद्वंशवर्णनम् ।**

प्रकाशः—ननु ध्रुववंशवर्णनं कुतः । न च कस्याऽन्वयाय इति प्रश्नाद् ध्रुववंश इत्येतावतैव तत्पूर्त्तिसम्भवात् । न च पुरुषार्थलीलाया निरूप्यत्वात्कामनिरूपणार्थम् । तथापि तद्वैय्यर्थ्यात्तस्य पृथुमात्रचरितनिरूप्यत्वादित्यत आह साधितेति । कृष्णपदेन भक्तिमार्गीया भक्तिः सूचिता । तस्या मुख्यं हि फलं पुरुषोत्तमस्वरूपमेव तद्भक्त्यनुवृत्तिश्च । तेन ब्रह्मानन्दान्तमपि फलं तस्या गौणमेव । अतो गौणं फलं साधयित्वापि मुख्ये कुण्ठितशक्तिर्न भवतीति ज्ञापनार्थं ध्रुववंशवर्णनमित्यर्थः । एतेन ध्रुवभक्त्यैव तुष्टो भगवान् प्रचेतस्सु मुख्यं पृथ्वादिषु च गौणं फलं साधितवानिति सूचितम् । अन्यथा कथमकस्मात्तादृगुपदेशं शिवः कुर्यादिति ॥ ११७½ ॥

ननु ज्येष्ठकनिष्ठयोर्वैराग्ये को हेतुस्तत्राह कल्पेति ।

**निबन्धः—कल्योत्कलौ तस्य पुत्रौ पूर्वपश्चाद्विभेदतः ॥ ११८ ॥**
**मुक्तौ तस्मात्तृतीयस्य राज्यमङ्गस्तु सप्तमः ।**

प्रकाशः—वरं प्राप्यागतस्य पूर्वानुतापेन विरक्तत्वात्तद्दशायामुत्पन्नः कल्पोऽपि तथैवाऽभूत् । राज्यभोगानन्तरजातवैराग्यदशायामुत्कल इति सोपि तथा । अत उभावपि मुक्तौ जातौ एतदेवाह पूर्वपश्चाद्विभेदत इति । मध्ये रागदशायामुत्पन्नो वत्सर इति तस्यैव राज्यम् । ननु कथमन्येषां निर्दोषत्वमङ्गस्य च सदोषत्वमित्याशङ्क्य भगवत ऐश्वर्यादिगुणा यथासङ्ख्यं तेषु स्थिता इति तद्रक्षया तेषां निर्दोषत्वम् । अङ्गस्तु सप्तम इति तद्रक्षाभावात्सदोषत्वमित्याशयवानाह, अङ्गस्त्विति । अत एवाग्रे दोषनिवृत्तिपूर्वकं स्वरूपेणैव भगवान् रक्षिष्यतीतिभावः ॥ ११८½ ॥

ननु तिग्मकेतुप्रभृतीनां वंशाः कुतो नोक्ता इत्याशङ्क्याऽस्य कामप्रकरणत्वात्तद्वंशे च केषाञ्चिद्देवत्वेन केषाञ्चिन्मुक्तिमार्गीयत्वेनाऽत्रानुपयोगान्न निरूपिता इत्याह, अन्येति ।

**निबन्धः—अन्यवंशास्तु नात्रोक्ता देवमुक्तिविभेदतः ॥ ११९ ॥**
**पूर्वत्राऽधर्मकरणप्रमादादङ्गकर्तृकम् ।**

प्रकाशः—तर्ह्युद्देशो व्यर्थ इति चेन्मैवम् , कालचक्राधिष्ठातृध्रुवात्मनो हि वत्सरात्मक एव, स च दक्षिणायनोत्तरायणाद्यवयवभेदेन कश्चन कालो मुक्त्युपयोगी कश्चन कर्मोपयोगीतितदवयवदेवतारूपा एवैत इतिज्ञापनार्थत्वात् । तेन तस्य वत्सरात्मकत्वं समर्थितं भवति ॥ ११९ ॥ अङ्गकृताधर्मस्वरूपमाह पूर्वत्रेति । यथाकालं धर्मकरणाभावलक्षणोऽधर्मो जातस्तत्र हेतुः प्रमादः । तेन स्वभावतस्तु धार्मिक इति सूचितम् । पूर्वजकृतस्यास्मिन् प्रतिफलनमाशङ्क्याङ्गकर्तृकमित्युक्तम् । अत एव तद्दोषरूपस्य वेनस्य 'न होतव्यम्' इत्याद्युद्घोषः इतिभावः ॥ ११९½ ॥

तत्कार्यमाह येनेति ।

**निबन्धः—येनाऽधर्मेण सम्बन्धो रुचिः सम्बन्ध एव च ॥ १२० ॥**
**वंशस्य धर्ममूलत्वात्पुत्रो नाऽभूत्स्वभावतः ।**

प्रकाशः—अधर्मेण मृत्युना सह सम्बन्धः । अधर्मरूपायामेव तत्पुत्र्यां रुचिस्तत्सम्बन्धश्च तत्सम्बन्धे वा रुचिरित्यर्थः । अरुचिरिति वा । देवतानामिति शेषः ॥ १२० ॥ तस्या दोषज्ञानेनाङ्गस्य सम्बन्धाभावादेव पुत्राभाव इत्यत आह वंशस्येति । अत एव सम्बन्धस्याऽऽवश्यकत्वज्ञापनाय पूर्वमेवकारो दत्तः । स्वभावत ऋतुकालीननिषेकादित्यर्थः । तत्र हेतुः धर्ममूलत्वादिति । तद्धेतुधर्माभावश्चोक्त एव । अत एव सर्वमारकेण सह सम्बन्ध इतिभावः ॥ १२०½ ॥

---

अतः परं त्रयोदशाध्यायमष्टभिर्विचारयन्ति एवमित्यादि तद्रक्षयेति । भगवद्गुणकृतया रक्षया ।

तदवयवदेवतारूपा इति । वत्सरावयवायनतुमासपक्षाधिष्ठातृदेवतारूपाः । न च ततः पूर्वं केन तत्कार्यसम्पत्तिरिति शङ्क्यम् । तत्त्वेन्द्रियन्यायेन मूलरूपैरेव तैस्तत्सम्पत्तेरिति । अङ्गकृतेत्यादि । राज्ञः कथमभूदुष्टाः प्रजा इति प्रश्नोत्तरस्य स 'बाल एव पुरुषः' इतिश्लोकेनैव पूर्त्तिसम्भवेप्य'ङ्गोऽश्वमेधमि'त्यादिसन्दर्भस्य किं प्रयोजनमित्याशङ्कायामङ्गकृताधर्मस्वरूपताहेत्यर्थः । जात इति, अङ्गपूर्वजन्मनि जातः । इतिसूचितमिति "तस्य शीलनिधेः साधोर्ब्रह्मण्यस्य महात्मन" इतिमूलवाक्ये सूचितम् । तत्कार्यमिति ।

तर्ह्यश्वमेधे कथं प्रवृत्तिरित्यत आह दोषाभावायेति।

निबन्धः—दोषाभावायाऽश्वमेधः कृष्णार्थो मुक्तये तु सः ॥ १२१ ॥

वंशाभावे न मुक्तिः स्यादुभयत्र प्रयोजनात्। अतो न देवागमनमुभयार्थं तथा सुतः ॥ १२२ ॥

प्रकाशः—तर्हि कुतो न देवागमनं किमर्थं वा वैष्णवयागः, अश्वमेधेनैव दोषनिर्हरणादित्यत आह कृष्णार्थ इति। "सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इतिश्रुतौ पाप्मतरणस्योक्तत्वात्केवलस्य पाप्मादिनिवर्त्तकत्वं यद्यपि तथापि मर्यादायां "नाऽपुत्रस्य लोकोऽस्ति" इति श्रुतेर्वंशाभावे सा न स्यादितिभगवदर्थंकरणेनैव दोषनिवृत्तिपूर्वकं वंशो मुक्तिश्च भवतीत्युभयत्र प्रयोजनसत्त्वात्कृष्णार्थः स इति पूर्वेण सम्बन्धः। यतो दोषाभावार्थमेव पूर्वं स कृतो न भगवदर्थो दोषश्च बलिष्ठोऽतो देवानागमनमित्याह, अत इति। ननु श्रुतेः का गतिरिति चेदुच्यते, आधिदैविकपाप्मतरणं तु भगवदर्थकृतादेव तस्माच्छ्रुतिराह। अन्यथा अश्वमेधेन दोषनिवृत्तिः, दोषानिवृत्तौ च देवाद्यङ्गसाहित्येन तत्सम्पत्तिरित्यन्योन्याश्रयेण श्रुत्यर्थबाधप्रसङ्गात्। आधिभौतिकादेः केवलादपि भवतीतिभावः। नन्वेवं सति कथं तादृशसुतोत्पत्तिरत आह, उभयार्थमिति। अङ्गस्य निर्दोषत्वाय तद्दोषमादायोत्पन्न इति दुष्ट इत्यर्थः। वंशार्थं सुत इत्यर्थः। अन्यथोरुमथनेनैवास्मादेव तादृश एव कश्चिद्भवेत्। तथा च वंशो न स्यादिति भावः ॥ १२२ ॥

ननु वैष्णवचरुभक्षणेन जातस्य सदोषत्वं कथमित्याशङ्क्याह चरोरिति।

निबन्धः—चरोः फलं पौत्रेऽभूद्दोषः पुत्रे प्रतिष्ठितः। शीघ्रं मुक्तिस्तथा वंशो दोषाभावश्च सिद्ध्यति ॥ १२३ ॥

प्रकाशः—दोषचरुफलयोर्मिथो विरोधेनैकत्राऽसम्भवेनाधुना चाङ्गदोषाभावस्यावश्यकत्वेन दोषः पुत्रे चरोः फलं पौत्रे प्रतिष्ठितमभूदित्यर्थः। एवं सति को विशेष इत्यत आह शीघ्रमिति। पुत्रदौष्ट्येन शीघ्रं वैराग्याच्छीघ्रं मुक्तिः ॥ १२३ ॥

ननु पुत्रे सति तदन्वेषणं कुत इत्यत आह, सशास्त्रेति।

निबन्धः—सशास्त्रागमनाल्लोके रक्षकाभावतोऽपि हि। अन्वेषणमुपेक्षा तु ऋषीणामङ्गमुक्तये ॥ १२४ ॥

हेतुस्त्वनेन संसिद्धः सर्वेषां कामनां प्रति ॥ १२४½ ॥

प्रकाशः—शासनं शास्त्रं प्रजानुशासनलक्षणो राजधर्म इतियावत्। राजा हि त्यागं कुर्वन् पुत्रे तं धर्मं स्थापयित्वा गच्छति। तेनैव च तस्य राजत्वं भवति। अङ्गस्य च तदकरणेन तत्सहितस्यैव गमनादन्वेषणमितिसम्बन्धः। ननु युद्धनिहतपितृराज्यवदस्याऽप्यावश्यकत्वेन पुत्राय राज्यदानमेवोचितम्, न तदन्वेषणमित्यत आह रक्षकाभावत इति। वेनस्याऽरक्षकत्वेन ज्ञानादितिभावः। ननु ऋषीणामलौकिकज्ञानवत्त्वेन कुतो नाङ्गज्ञापनमित्यत आह, उपेक्षेति। आगत्य तादृशाय राज्यदाने तत्कृतप्रजाद्रोहादिदोषेणाङ्गस्यापि दोषसम्भवेन मुक्तिर्न स्यात्स्वयं राज्यकरणेपि तथेति तदर्थं तथेत्यर्थः ॥ १२४ ॥ अध्यायार्थमुपसंहरति हेतुस्त्विति ॥ १२४½ ॥

( अ० १४ ) द्वितीयाध्यायार्थं विचारयँस्तत्र भृग्वादीनां सर्वज्ञत्वेन वेनकृतभाव्युपद्रवाभिज्ञत्वात्तदैव ( तत्कृतप्रजानाशदर्शनेन ) तदूर्वादिमथनमेव युक्तं न तु तादृशाय राज्यदानमित्याशङ्क्याह, अन्यथासिद्धीति सार्धेन।

---

अधर्मस्य दुःप्रजाजनने व्यापारभूतं कार्यम्। रुचिरिति। परिणयान्तरकरणाभावोऽत्रेया तस्यामासक्तिः। आहेति, तस्याः सम्बन्धे[1] मानमाह। किं मानमित्यत आहुः तत्रेत्यादि। उक्त एवेति, 'अस्त्येकं प्राक्तनमघं यदिहेदृक् त्वमप्रज' इति वाक्येन सदस्यैरुक्त एव। अत एवेति वंशहेतुभूतधर्माभावादेव। सम्बन्ध इति जामातृत्वम् ॥ १२०½ ॥ तदेव सदस्यै"रीदृक्" पदेन सूचितम्। अन्यथा यदिह त्वमप्रज इत्येतावता एवोत्तरसम्भवे 'इदृगि'ति न वदेयुः। एवं सति मृत्युजामातृत्वसुनीथासम्बन्धौ व्यापारीकृत्य पूर्वजन्मीनेन कालापराधरूपेणाऽधर्मेण प्रजाया अभाव इति फलति। तर्हीति। मृत्युजामातृत्वादिना अधर्मसंसर्गे सति। दोषाभावायेति अधर्मसम्बन्धदोषनिवृत्तये। आधिदैविकपाप्मतरणमिति। मुक्तिप्रतिबन्धकपाप्मतरणम्। दोषनिवृत्तिरिति, देवागमनप्रतिबन्धकदोषनिवृत्तिः। आधिभौतिकादेरिति, एतज्जन्मीनस्य कायिकादिभेदेन त्रिविधस्य। केवलादिति, पाप्मनिर्हरणार्थात्। तथा च, दोषस्य पूर्वजन्मीनतयाऽऽध्यात्मिकत्वेन बलिष्टत्वादश्वमेधेन तस्यानपायादेवानागमनागमनमिति भावः सिद्ध्यति। नन्वेवं सतीत्यादि। सदस्यवाक्येषु "आराधितो यथैवैष तथा पुंसां फलोदय" इतिवाक्यशेषश्रवणादपत्यदेवहविर्ग्रहणरूपकार्यद्वयार्थत्वेन निष्पद्यमानो वैष्णवयागो, 'यस्यैषा यज्ञे प्रायश्चित्तिः क्रियत इष्ट्वा वसीयान् भवती'तिवाक्यशेषात्प्रायश्चित्तत्वेन पर्यवसित इति। तेनाध्यात्मिके पापे निवृत्ते कथं तादृशसुतोत्पत्तिरित्याशङ्कायामाहेत्यर्थः। उभयार्थमिति। यतो विष्णुयागः स्वदोषाभावार्थं पुत्रार्थं च। अन्यथेत्यादि, यागस्य पुत्रमात्रार्थत्वे अङ्गादेव निषादतुल्यः कोपि स्यात्तथा सति मुक्त्युपयोगी वंशो न स्यादित्यर्थः ॥ १२४½ ॥

---

१. अत्रहेतुक एव वंशाभावो न तु सम्बन्धाभावहेतुक इति सदस्योक्तमेव सम्बन्धे मानमित्यर्थः। ( इत्यधिकम् )

निबन्धः—अन्यथासिद्धिशङ्कायां वारणायोपपत्तये ॥ १२५ ॥

सर्वज्ञा भृगुमुख्या हि मातृमात्रार्थसम्मतम् । वेनं तु भूपतिं चक्रुर्ज्ञात्वा पूर्वाघनिष्कृतिम् ॥ १२६ ॥

प्रकाशः—तदनभिषेकेण तत्कृतप्रजानाशादर्शनेन मथनेन पूर्वाध्यायोक्तसर्वकामनाहेतुभूतरक्षकाभावेऽन्यथासिद्धिशङ्का स्यात्तद्वारणाय वेनं भूपतिं चक्रुरितिसम्बन्धः । सामान्यं हेतुमुक्त्वा विशेषमाह, उपपत्तय इति । अयमर्थः । वीरस्य तस्याऽमूर्च्छायां मथनासम्भवेनाऽकृतद्रोहे च तस्मिँस्तथाकर्तुमयुक्तत्वेन लोकेचाऽपकीर्त्तिसम्भवेन सर्वमयथा स्यादित्यग्रिमसर्वकार्योपपत्तये सर्वज्ञत्वेन तथैव भगवदवतारादिकं ज्ञात्वा तथा चक्रुरिति । तथापि तत्कालीनधर्मनाशेऽप्यसहिष्णुत्वेन तेषामसम्मतिरेवेति ज्ञापनार्थं मातृमात्रार्थसम्मतमित्युक्तम् । मातुरेव सम्मतम् । तत्राऽपि न सर्वात्मनेत्यर्थः । तर्हि कोऽभिप्राय ऋषीणामित्यत आह ज्ञात्वेति । स्वकार्यैकरणेनाऽघस्योपक्षयं ज्ञात्वेत्यर्थः । अन्यथा तद्वंश एवाऽनुवर्तेतेतिभावः अस्त्यस्मिन्नंशद्वयं राजांशो दोषांशश्च । तु शब्देन दोषांशो व्यवच्छिद्यते । तथा च राजांशमादायाऽभिषेको युक्त इति हि शब्दार्थः ॥ १२६ ॥

तथापि दोषस्यैवोग्रत्वात्तत्कार्यमेवाभूदित्याह धर्महानिरिति ।

निबन्धः—धर्महानिस्ततोऽप्यासीत्कामानर्थश्च सूचितः । अधर्मस्थापनं कार्यं धर्माभावे स्वतो हि तत् ॥ १२७ ॥

प्रकाशः—ततः, अभिषिक्तराजांशादपीत्यर्थः । सर्वकामस्वरूपनिरूपणे लोकोपद्रवनिरूपणेन कामस्यानर्थतापि सूचिता । "एते पञ्चदशानर्थाः" इतिवाक्यात् । उक्तसमुच्चयार्थश्च । अध्यायार्थमप्यनुवदन् दोषस्याऽसाधारणं कार्यमाह, अधर्मेति । ननु 'न यष्टव्यमि'त्यादिना धर्मबाध एवोक्तो न त्वधर्मोपीत्यत आह धर्माभाव इति । धर्मेणैव हि धर्मरक्षा तदभावे तथात्वं युक्तमेवेत्युपपत्तिं हि शब्देनाह ॥ १२७ ॥

तेन लौकिकालौकिकनाश जात इत्याह, उपद्रव इति ।

निबन्धः—उपद्रवो धर्महानिस्तस्माद्भयमभून्महत् । आधिक्यदोषाभावाय स्वकृतत्वान्निवारणम् ॥ १२८ ॥

प्रकाशः—तस्मादधर्मस्थापनादित्यर्थः । अराजकदशातोप्यऽधिकमितिज्ञापनाय महदिति । तस्याधिक्ये लोकानामन्तःकरणनिष्ठोऽपि धर्मो गच्छेदिति तदभावाय निवारणवाक्यानि मुनीनामित्याह, आधिक्येति । ननु मुनीनां सर्वज्ञत्वेन तदाग्रहस्यापि ज्ञानात्कुतो निवारणे प्रवृत्तिरित्यत आह स्वकृतत्वादिति । वेनराजस्य स्वकृतत्वात् "कर्तुः शास्तुरनुज्ञातुः" इतिन्यायेन तद्दोषः स्वस्मिन्नप्यागच्छेत्तद्वारणे स दोषो गच्छतीति तथाकरणमित्यर्थः ॥ १२८ ॥

ननु "नराणां च नरेन्द्रोहम्" "यदसौ लोकपालानां बिभर्त्योजः स्वतेजसा" इत्यादिवाक्यसम्मत्या वेनोक्तो धर्म एवेत्यत आह अधर्मेति ।

निबन्धः—अधर्मकरणायैव च्छलवाक्यपरिग्रहः । अयमेव हि पाषण्डो लेशेनाऽखिलबाधनम् ॥ १२९ ॥

प्रकाशः—विप्रैस्तु देवाहेलनमुपदिष्टम् । धर्मरक्षार्थं तस्मिंस्तत्सान्निध्यार्थं च । स तु सर्वेषां मय्येव सत्त्वान्मद्यागेनैव तत्सन्माननं भविष्यतीति अधर्मशाखारूपेण छलेनाऽधर्मकरणार्थमेव तद्वाक्यं परिगृहीतवानित्यर्थः । विभूतिस्थवाक्यं चेज्यादिधर्मकरणेनाऽऽविष्टेश्वरांशपरम् । अत एवेन्द्रपदम् । तेन न तत्सम्मतिरितिभावः । अस्तु वाऽभिषेकमात्रेणैव देवसान्निध्यं तथापि तदुक्तस्त्वधर्म एवेति वक्तुमधर्मलक्षणमाह अयमिति । यथा "न हिंस्यात्सर्वभूतानि" इतिश्रुतिलेशेनाऽखिलश्रुतिकर्मकाण्डस्य बाधनं कृत्वा क्रियमाणधर्मस्याऽपि पाषण्डत्वमेव बाह्यानाम् । तथा देवतेजोलेशेन स्वनिष्ठेनाखिलतद्बाधनमित्यस्यापि पाषण्डत्वादधर्मत्वमेवेत्यर्थः ॥ १२९ ॥

राजहननस्य दोषावहत्वमाशङ्क्याह यथा पूर्वस्येति ।

निबन्धः—यथा पूर्वस्य करणान्मारणेऽपि न दूषणम् । मथनं ज्ञानतो युक्तमदोषायाऽधमाङ्गके ॥ १३० ॥

प्रकाशः—"स एष जीवन् खलु सम्परेतः" इति वाक्याद्धननात्पूर्वमपि तस्य जीवन्मृतत्वादृषीणां तथा करणं न दोषायेत्यर्थः । ननु मृतदेहस्याऽमङ्गलस्य मथनं राजवंशार्थमयुक्तं मनीषितोत्पत्त्यसम्भवाच्च । न हि जलमथनेनाऽग्निसम्भव इत्यत आह,

---

एवमष्टमित्रयोदशाध्यायो विचारितः । विचारयन्निति षड्भिर्विचारयन् । नाशादर्शनेनेति, अत्र नांशादर्शने उरुमथनेनेत्येतदपेक्षितमिति प्रतिभाति अन्यथा सिद्धीति, मथनस्यान्यथासिद्धिम् । पूर्वाघनिष्कृतौ हेतुं व्याकुर्वन्ति, स्वकार्यकरणेनेति ॥ १२७–१२८ ॥

अस्तु वेति यदसौ लोकपालानामितिवाक्यादस्तु वा ॥ १२९ ॥

मथनं ज्ञानत इति । तस्मिन् राजांशसत्त्वनिर्धारेण वहिस्तिरोहितमन्तश्चैतन्यमस्तीति ऋषीणां ज्ञानाद्धाव्यर्थज्ञानाच्च तदुक्तमित्यर्थः । एते नैकदे'त्यारभ्य श्लोकाष्टकावान्तरप्रकरणार्थ उक्तः । पूर्वमूरुमथनेन तेषामज्ञानमाशङ्क्य तत्र हेतुमाह, अदोषायेति । सदोषस्य मथने पुनः स एव दोषो भगवदंशासम्भवश्चेति ज्ञात्वा दोषाभावाय । "ऊर्ध्वं वै पुरुषस्य नाभ्यै मेध्यमर्वाचीनममेध्यम्" इतिश्रुतेर्दोषाश्रयत्वात्तदङ्गस्य तत्रैव तथाकरणमित्यर्थः ॥ १३० ॥ बाहुमथने हेतुमाह क्षत्रियत्वेति ।

निबन्धः—क्षत्रियत्वप्रसिद्ध्यर्थं कामे बाह्वोस्तु मन्थनम् । अप्राकृतत्वसिद्ध्यर्थमाविर्भावो हरेस्तनौ ॥ १३१ ॥

प्रकाशः—हृदयादिमथने नारायणवत्स्वातन्त्र्येणावतारे धर्मरक्षासम्भवेऽप्यक्षत्रियत्वेन तद्वंशारक्षा स्यादिति तत्सिद्ध्यर्थं क्षात्रधर्माधारबाहुमथनमित्यर्थः । तुशब्देन पूर्ववत्सदोषत्वं व्यावृत्तम् । ननु बाह्वोर्मथने को हेतुस्तत्राह काम इति । कामप्रकरणे सतीत्यर्थः । कामस्य मिथुनसाध्यत्वादितिभावः । अथवा काम इति निमित्तसप्तमी । तथा च कामनिमित्तं स्वकामसिद्ध्यर्थमित्यर्थः । राज्ञां बाहुभ्यामेव कामपूरणमिति तथा ।

( अ० १५-१६ ) तर्हि लोकरक्षायै तत्पुत्रमात्रापेक्षायां भगवत्प्रादुर्भावे को हेतुः । तस्माच्च तावतैव सम्भवादित्यत आह, अप्राकृतत्वेति । प्राकृतत्वे प्राकृतराजगुणत्वेनैतैर्मे पिता व्यापादित इति ज्ञात्वा प्रजासु द्वेषमेव कुर्यादिति नेष्टसिद्धिः स्यात् । अतस्तदभावाय पृथोस्तनौ हरेराविर्भाव इत्यर्थः । एवं चाऽप्राकृतगुणवत्त्वेन सर्वेष्टसिद्धिरितिभावः ॥ १३१ ॥

अभिषेकसम्बन्धिकृतिऋष्युक्त्योः प्रयोजनमाह कृतीति ।

निबन्धः—कृत्युक्तिभ्यां गुणोद्रेको वारणं च गुणाय हि । कामपूरणसम्बन्धात्प्रसादोऽन्यत्र कीर्त्तितः ॥ १३२ ॥
भविष्यमुक्तं बोधाय ह्याद्यशेषत्वमन्ययोः ॥ १३२½ ॥

प्रकाशः—उद्रेकः सहजानामेव राज्यगुणानां तत्कृत्या वाचा चाधिक्यं जातमित्यर्थः । पृथुकृतसूतादिवारणं च तथा । क्षुद्रो हि समक्षं स्तावयति । महाँस्तु लज्जत इति भगवदावेशात्तथात्वं युक्तमिति हिशब्देनाह । ननु स्वस्मिन्कृपया रक्षार्थमाविर्भावनुक्त्वा लोकेष्वेव तन्निरूपणं मुनिभिः सूतादिभिर्वा कृत इत्यत आह कामेति । कामपूरणलक्षणः सम्बन्धो लोकेष्वेवेति तेष्वेवाऽनुरञ्जनादिरूपः प्रसाद उक्त इत्यर्थः ॥ १३२ ॥ मुनीनां स्वतोऽकथनेऽप्ययमेव हेतुरिति ज्ञेयम् । बोधाय आवेशोद्बोधायेत्यर्थः । दोहनादिभविष्यस्याऽऽविष्टकार्यत्वादितिभावः । इदमेव हिशब्देन सूचयते ननु सूतस्य पौराणज्ञानवत्त्वेन भविष्यज्ञानं युक्तं न तु मागधबन्दिनोरित्यत आह, आद्येति । आद्यः सूतः । शेषत्वमुपजीवकत्वं तत्पश्चाद्भावेन कथकत्वमिति यावत् । अन्योर्मागध बन्दिनोः ॥ १३२½ ॥

( अ. १७-१८ ) ननु पृथुचरित्रस्य पूर्वमेवोपक्रान्तत्वान्मैत्रेयस्याऽतुष्णींभावेऽपि मध्ये विदुरप्रश्नोऽयुक्त इत्याशङ्क्योपक्रान्तत्वेऽपि विदुरस्य वैष्णवत्वेनाऽलौकिकाविष्टभगवच्चरित्रस्यैव मुख्यतया श्रोतव्यत्वेन को वेद मैत्रेयः सामान्यचरित्रमेव वदेदित्याशङ्क्य विशेषप्रश्न इत्याशङ्क्याह, अलौकिक इति ।

निबन्धः—अलौकिके हि सम्प्रश्नो ज्ञात्वैष्यंतत्तथाऽकरोत् ॥ १३३ ॥
आविष्टकृतिरेषा हि सर्वमेतेन सिद्ध्यति ॥ १३३½ ॥

प्रकाशः—ननु देवत्वेन स्त्रीत्वेन सर्वोपजीव्यत्वेन च भुवो मारणोद्योगो न युक्त इत्यत आह, ज्ञात्वेति । एवं कृते भयेन गोरूपधारणे सर्वं कार्यं भविष्यतीति सर्वमागामि ज्ञात्वा तत्कामपूरणं प्रजानां तथा शरसन्धानेनाऽकरोदित्यर्थः ॥ १३३ ॥ तथा कृतिसामर्थ्ये उपपत्तिमाह, आविष्टेति । ननु ऋष्यादीनां तथा सामर्थ्यं कथं तत्रावेशाभावदित्यत आह, सर्वमिति । अनेनैवावेशेनेत्यर्थः । अत एव मूले 'पृथुभाविता'मित्युक्तम् ॥ १३३½ ॥

( अ. १९ ) एवं पूर्वं सर्वं कामपूरणप्रकरणं निरूप्य स्वकामसाधनप्रकरणं विचारयँस्तत्र प्रथमतोऽश्वमेधस्य तत्रापि शतावधिकस्य करणे को हेतुरित्याशङ्क्य तत्र हेतुमाह स्वकाम्यानामिति ।

---

एवं बाह्वोस्तु मन्थनमित्यन्तैः षड्भिश्चतुर्दशाध्यायो विचारितः, द्वाभ्यां पञ्चदशषोडशयोरर्थमाहुः तर्हि लोकेत्यादि ॥१३१॥ अभिषेकसम्बन्धिकृतिऋष्युक्त्योरित्यादि । ननु यज्ञरूपेन्द्रस्यापि रक्षार्थावतारत्वात्तेनैतावान्सम्भ्रमः कुतोत्रेत्याकाङ्क्षायां "तस्मै जहार धनद" इत्याद्युक्तदेवादिकृतिषोडशारम्भीयर्षुक्त्योः प्रयोजनमाहेत्यर्थः । तत्कृत्येत्यादि । तथाचेन्द्रापेक्षयात्राधिक्यबोधनया तदित्यर्थः । स्वस्मिन् कृपयेति, मुन्यादिषु कृपया । तन्निरूपणमिति, कृपया प्रसादनिरूपणम् । एवं षोडशभिश्चतुरध्यायीविचारेणाविर्भावप्रकरणं विचारितम् ।

निबन्धः—स्वकाम्यानां हि सर्वेषां शुद्धिराद्या तदुद्भवे ॥ १३४ ॥
अश्वमेधान्न चाऽन्यद्धि शतान्नाऽस्त्यधिकाकृतिः ॥ १३४½ ॥

प्रकाशः—स्वकाम्यानां सर्वेषां पदार्थानां मध्ये आद्या प्रथमतः कामविषया शुद्धिरित्यर्थः। शुद्धो हि यत्करोति तत्सिद्ध्यति। अतस्तत्सिद्ध्यर्थं किं कार्यमित्यपेक्षायां सर्वस्य वा एषा प्रायश्चित्तिः। "सर्वस्य भेषजम्" इतिश्रुतेः। कामसाधनशुद्ध्युद्भवे त्वश्वमेधादन्यत्साधनं कर्म न सम्भवतीत्यश्वमेधकरणमिति शेषः। शुद्ध्यर्थमश्वमेधानां शतादधिका कृतिर्नाऽपेक्षितास्तीति तावत्करणमित्यर्थः ॥ १३४½ ॥

ननु "ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत" इति वाक्यात्कलावतारत्वेनाऽस्येन्द्रस्य विघ्नकरणमयुक्तमित्यत आह पूर्ण इति।

निबन्धः—पूर्णे पाक्षिकदोषत्वाद्यज्ञेन विनिवारणम् ॥ १३५ ॥
निष्कामत्वादागमनमुत्तमत्वाद्धरेः स्वकैः। तस्मात्सर्वगुणोद्भेदस्तेन सर्वोत्तमो मखः ॥ १३६ ॥

प्रकाशः—इन्द्रत्वे हि द्वयं प्रयोजकं शताश्वमेधित्वं सकामत्वं च। अत्र सकामत्वाभावेपि शतसङ्ख्याके पूर्णे तस्मिन् जाते पक्षे इन्द्रत्वमधुनैव भवेत्तच्च विरुद्धमिति पाक्षिकोऽपि दोषः परिहरणीय इति न्यायाद्यज्ञनाम्नेन्द्रेणाऽश्वहरणरूपं निवारणं कृतमित्यर्थः। ससेवकभगवदागमने हेतुं वदन् पक्षे सिद्धिमेव साधयति निष्कामत्वादिति। उत्तमत्वाद्धकत्वादित्यर्थः। तथा च निष्कामत्वाद्धरेरागमनमुत्तमत्वात्स्वकैः सहेतियोजना। सर्वेषां भगवद्गुणानामैश्वर्यादीनां सर्वेषां ब्रह्मादीनां राजसतामससात्त्विकैस्तन्मिश्रनिर्गुणानां भक्तानां च गुणानामुद्भेदः प्राकट्यं यत्रेति तथा। एतेनेन्द्रत्वस्य कर्मफलत्वेन कर्मणस्तुल्यत्वेन च स्वस्य च प्राप्तफलत्वात्स्वोपमर्दकत्वशङ्का कथमिन्द्रस्येति निरस्तम्। उक्तरीत्या अतुल्यकर्मत्वादिति भावः ॥ १३६ ॥

निबन्धः—राज्यस्य दोषरूपत्वात्सिद्धे धर्मे महेन्द्रताम्। इच्छेदिति हि पाषण्डाः सृष्टा यैर्नाशिते मखे ॥ १३७ ॥
लोके पापप्रवृद्ध्यापि राजा स्वर्गं न गच्छति। इति बुद्ध्या तथा चक्रे द्वेषेण सुतरां तथा ॥ १३८ ॥
चित्तशुद्धिर्दृढा तस्मादतो ब्रह्मनिवारणम्।

प्रकाशः—नन्वस्त्वेवं तथापि धर्मरक्षकत्वेन तस्य तन्नाशकपाषण्डप्रचारणं वेषधारणेन कुत इत्यत आह सिद्धे धर्मे इति। यथा कथञ्चिच्च ब्रह्मणो वाक्यैरश्वमेधासिद्धावपि तद्धर्मे सिद्धे तथात्वमिच्छेच्चेत्तदापि स दोष इति पाषण्डा सृष्टा इत्यर्थः। ननूक्तं निष्कामत्वमतोऽतिशुद्धान्तःकरणे कथं तदिच्छाशङ्केत्यत आह राज्यस्येति। एकदोषसत्त्वेन योग्यता निरूपिता तेनाग्रिमदोषोत्पत्तिशङ्केतिभावः। ततः किमत आह यैरिति। यैः पाषण्डैरुत्पन्नैरेव मखनाशे सति कारणाभावादेव राजा स्वर्गं न गच्छति। पश्चात्प्रचारे लोके पापवृद्धौ तत्पापस्य राज्ञि सङ्क्रमणेनाऽपि तथेतिप्रकारिकया बुद्ध्या तथाऽकरोत्। ननु मुहुः प्राचुर्यकरणे को हेतुस्तत्राह द्वेषेणेति। वारद्वयकरणेऽप्यनिवृत्तौ यागस्य मत्स्थानमेव जिघृक्षतीति ज्ञानेन द्वेषे जाते तेन सुतरां पाषण्डप्रवृत्तिं कृतवानित्यर्थः। अत एव पृथोश्चित्तशुद्धिर्जाता। तस्मिन्द्वेषरूपा मारणावधिका। ब्रह्मसन्धानेप्यगमनाद् दृढा। अत इति। यतश्चित्तशुद्धिनिमित्तं क्रियमाणे यागे पूर्वरीत्योत्तरोत्तरं चित्तशुद्धिरेवाऽतो ब्रह्मणा यागस्य निवारणं कृतमित्यर्थः ॥ १३७–१३८½ ॥

ननु ब्राह्मणानामपि सर्वज्ञत्वाद्ब्रह्मवत्स्वत एव निवारणं युक्तम्। तत्कथं वधोद्योग इत्यत आह ब्राह्मणानामिति।

निबन्धः—ब्राह्मणानां वधोद्योगो मखरक्षार्थमेव हि ॥ १३९ ॥
पश्चात्सिद्धिर्ब्रह्मवाक्यादेकन्यूनेऽपि साङ्गता। शङ्कैव न पूर्णत्वमनुज्ञातं शुचिस्ततः ॥ १४० ॥

प्रकाशः—मखनाशकामूलकपाषण्डमूलत्वादस्य वधे समूलकपाषण्डनाशेन मखरक्षा भविष्यतीति तथा। एवकारेण पृथुवद्देतेषामपि चित्तशुद्ध्या द्वेषेण तथाकृतिशङ्का निवारिता। तत्सम्पादकत्वात्तद्रक्षणं युक्तमिति हिशब्दार्थः। ननु तदमारणात्पाषण्डानामुत्पत्त्या च पूर्वकृतानामपि यज्ञानां सर्वथा नाश इत्यत आह पश्चादिति। क्रतुविरामानन्तरं वाक्याङ्गीकारानन्तरं वा। तत्र हेतुः ब्रह्मेति। "पृथुकीर्तेः पृथोर्भूयात्तर्ह्येकोनशतक्रतुः" इतिवाक्याद्यज्ञानां सिद्धिरित्यर्थः। एवमपि शताश्वमेधदीक्षाया अपूर्णत्वेन निरङ्गत्वान्न तैः फलमित्यत आह एकेति। ब्रह्मवाक्यादित्युभयत्राऽनुषज्यते। तथा च "माऽस्मिन्महाराज कृथाः स्म चिन्ताम्" इति

---

अतः परमध्यायविशिष्टं सर्वकामप्रकरणं विचारयन्त एकेन सप्तदशाष्टादशयोरर्थमाहुः ननु पृथुचरित्रेत्यादि।

अतः परं सार्द्धोनविंशतिभिः स्वकामप्रकरणं विचारयन्तः सार्द्धैः षड्भिरुनविंशाध्यायं विचारयन्ति, एवं सर्वेत्यादि।

पक्ष इति, शताश्वमेधमात्रकरणस्य प्रयोजकत्वपक्षे। साधयतीति, अतस्तदेव हि फलं कामाभावेपि सिद्ध्यतीतिन्यायात्साधयति। स इति द्वीन्द्रापत्तिरूपः।

ब्रह्मवाक्यादेकन्यूनेऽप्येकोनाश्वमेधशते साङ्गतेत्यर्थः । ननु साङ्गतानुज्ञावच्छतपूर्त्तिरेव कुतो नोक्तेत्यत आह शङ्कयेति । स तथा सति तस्मिन्निन्द्रे दोषदृष्टित्वादयं स्वयमेवेन्द्रो भवेदितिशङ्कयेत्यर्थः । अध्यायार्थमुपसंहरन् फलितमाह सुचिरैरिति ॥ १४० ॥

( अ. २० ) अग्रिमाध्यायार्थं विचारयन् भगवदुक्तौ हेतुभूतं भगवत्तात्पर्यमाह तत्रेति ।

**निबन्धः—तत्रैवाऽऽसक्तचित्तस्य न मनः शान्तिमृच्छति । इति कृष्णः स्वयं प्राह युक्तिपूर्वं हि तं मितम् ॥ १४१ ॥**

प्रकाशः—ब्रह्मणा कृतेपि सन्धाने द्वेषागमने कर्मासक्तेरेव प्रयोजकत्वात्कर्मणां च स्वतः कार्यतश्च क्षोभजनकत्वाच्छान्त्यभावेऽग्रिमज्ञानानधिकारः स्यादिति तन्निवृत्त्यर्थं युक्तिपूर्वकं प्राहेत्यर्थः । फलरूपेणैव साधनासक्तिर्निवारयितुं शक्येति ज्ञापनाय कृष्णपदम् । अत एव यज्ञनिवारणवदग्रे ज्ञानोपदेशवचान्येनैव न बोधनमपि । अशेषोक्तौ त्वग्रिमज्ञानोपदेशवैयर्थ्यापातादधुनैव च मुक्तिसम्भवादितरकार्यासिद्धिः स्यादिति मितं माह । यावत्कर्मासक्तिनिवारणोपयोगि तावदेवेत्यर्थः । कर्मणां विहितत्वेन तदासक्तिनिवारणमस्याऽहितमित्याशङ्काव्युदासाय हितपदम् । तेन पुष्टिमार्गेऽस्य प्रवेशनं सूचितम् । अत एव यागविघ्नोपीतिभावः ॥ १४१ ॥

ननु वाक्यैरेव द्वेषहेत्वपगमे पुनरिन्द्रेण सह सन्धानं व्यर्थमित्यत आह वैमनस्येति ।

**निबन्धः—वैमनस्यनिवृत्त्यर्थं सन्धानं छन्दनं वरे । शुद्धिसीमाविबुद्ध्यर्थं स्तोत्रं तस्यास्तु बोधकम् ॥ १४२ ॥**

प्रकाशः—द्वेषाभावेपि मनसोऽमेलनेन प्रीत्यभावे कालान्तरे पुनरुद्गतः स्यादिति तन्निवृत्त्यर्थमुभयोः सन्धानमित्यर्थः । ननु भगवतस्तद्धृदयज्ञत्वेऽपि "वरं च मत्कञ्चन" इति वचनं कुत इत्यत आह छन्दनमिति । शुद्धेरन्तःकरणशुद्धेर्या सीमा मर्यादा कियती शुद्धिः सम्पन्ना सम्पूर्णा न वेति यावत् । तद्बोधार्थमन्येषां लीलया स्वस्य च वरे छन्दनमुक्तमित्यर्थः । अत एव तस्याः शुद्धेर्बोधकं स्तोत्रमग्रे निरूपितमित्याह स्तोत्रमिति । तुनाऽल्पशुद्धिबोधनपक्षो व्यावृत्तः ॥ १४२ ॥

**निबन्धः—अत एव वरो दत्तो भक्तिराशंसितं तु यत् । राज्यभोगादिसिद्ध्यर्थं मर्यादापालनाय च ॥ १४३ ॥**

प्रकाशः--अत एवेति । यतः कारणात्तद्योग्या शुद्धिर्जाताऽतो भक्तिलक्षणो वरो दत्त इत्यर्थः । अन्यच्च यदाशंसितं पृथोः स्वस्य च तदपि दत्तम् । शुद्धान्तःकरणस्य प्राप्तभक्तेरन्यदानमनुचितमित्याशङ्क्य तत्र हेतुमाह राज्येति । केवलभक्तिदाने राज्यभोगमेव न कुर्यात्तस्याश्च स्वतन्त्रत्वान्मर्यादां च न पालयेत्तथा चावतारवैयर्थ्यं स्यादितिभावः ॥ १४३ ॥

नन्वावेशेन मर्यादापालनादिकं सेत्स्यत्यावेशवता च भक्तिरित्युभयसम्भवे कुतो न तथेत्याशङ्क्य भक्तेर्दुर्लभत्वं वक्तुं तत्साधनान्याह सत्सङ्ग इति ।

**निबन्धः—सत्सङ्गे सर्वविज्ञाने त्यागसाधनसेवया । अतिनिष्ठां गतस्यैव भक्तिर्भवति नान्यथा ॥ १४४ ॥**
**अत एवातिसौभाग्यवर्णनं तत्परस्य हि ।**

प्रकाशः--पूर्वं सत्सङ्गे जाते तदुपदेशेन सर्वतत्त्वविज्ञाने च जाते त्यागसाधनानां फलाननुसन्धानेन कृतयथोक्तकर्मणां ब्रह्मसात्करणदोषदर्शनपूर्वकं विषयानासक्तिप्रभृतीनां सेवया निरन्तरकरणेन वैराग्ये जातेऽपि भगवदाज्ञापरिपालनाय तदधीनतया सर्वकरणेनाऽतिशयितां निष्ठां प्राप्तस्यैव भक्तिर्भवतीत्यर्थः । "राजन्मयि भक्तिरस्तु ते" इतिभगवद्वाक्येऽप्येतदेव तात्पर्यविषय इति ज्ञेयम् । न चैवं वरस्याऽप्रयोजकत्वं साधनसम्पत्तावपि तदनुग्रहमन्तरेण भक्त्यनुत्पत्तेः । न चाऽऽवश्यकत्वाल्लाघवाच्चाऽनुग्रह एवाऽस्तु कृतं साधनैरितिवाच्यम् । तेषां स्वरूपयोग्यतासम्पादकत्वात् । दृश्यते हि सहकारियोग्यतायां सत्यामपि स्वरूपयोग्यताभावे कार्यानुत्पत्तिः शिलाशकलादिषु, तस्यामपि सत्यां तदभावे कार्याभावः कुसूलस्थव्रीहिषु । ननु नेतरसापेक्षतानुग्रह इति चेत्सत्यम् । भगवानेव भक्तिदित्सायां तादृशीं स्वरूपयोग्यतां सम्पाद्य तादृशानुग्रहं करोति । अत एव "यमूर्ध्वं निनीषति" इत्यादिश्रुतिः ॥१४४॥

( अ० २१ ) किञ्च । भगवत्यपि वरेणैव सर्वं यदि भगवदिच्छा तथा स्यादत्र च कार्यादेव तथेच्छेति ज्ञायत इति वक्तुं कार्यमेवाह, अत एवेति । तत्परस्य भक्तिपरस्येत्यर्थः । भगवद्दत्तत्वाद्युक्तमिति हिशब्दः ॥ १४४½ ॥

---

ततः किमिति पाषण्डनिर्माणतः किम् । अत एवेति पाषण्डनिर्माणादेव । ब्रह्मसन्धान इति, ब्रह्मणा क्रियमाणे सन्धाने । तत्सम्पादकत्वात्तद्रक्षणं युक्तमिति, ब्राह्मणानां यज्ञसम्पादकत्वाद्यज्ञरक्षणं युक्तम् ॥ १४० ॥

एवं सार्द्धैः षड्भिरूनविंशाध्यायं विचार्य चतुर्भिर्विंशाध्यायं विचारयन्ति । अग्रिमेत्यादि । द्वेषागमन इति, "मघोनापि सन्दध" इतिवाक्ये च शब्देन समुच्चयलाभादपेवैयर्थ्यमिति तत्प्रयोगः सन्धाने गर्हाबोधनार्थः । सा च द्वेषानपगम इति तथोक्तम् । अन्येनैवेति, युक्तिविशेषेणैव ॥ १४१-१४२ ॥

तदनुग्रहमन्तरेणेति, वररूपानुग्रहं विना । अत एवेति, कश्चित्सापेक्षोनुग्रहः कश्चिन्नानपेक्षस्तस्मादेव ॥ १४४½ ॥

वर्णनप्रयोजनमाह भोगायेति ।

निबन्धः—भोगाय धर्मस्त्रेधा हि यज्ञरक्षोपदेशनैः ॥ १४५ ॥
मध्यमः सिद्ध एवास्ति तथाऽऽद्यस्यानुवर्णनम् ।

प्रकाशः—भगवता दत्तत्वाद्भोगोऽस्य जात इति ज्ञापनायेत्यर्थः । स्वधर्माध्यायं विचारयन् प्रथमतस्तादुद्देशपूर्वं भेदानाह धर्म इति । रक्षाया विशेषत अनिरूपणे हेतुमाह मध्यम इति । ननु यज्ञस्याऽपि पूर्वमेव सिद्धत्वात्कथं पुनर्निरूपणमत आह तथेति । तथाभूतस्य पूर्वसिद्धस्याप्याद्यस्य यज्ञस्य मध्ये पाषण्डप्रचारेणास्मिन् यज्ञाभावशङ्काव्युदासायाऽनुवर्त्तमानत्वेन वर्णनमित्यर्थः ॥१४५½॥

ननु 'तत्प्रजाभर्तृपिण्डार्थमि'ति श्लोकेनैवोपदेशसिद्धेर्बहुधोक्तौ किं प्रयोजनमत आह पाषण्डेति सर्वसम्मतीति ।

निबन्धः—पाषण्डमतिनाशाय बोधनं बहुधोक्तिभिः ॥ १४६ ॥
सर्वसम्मतिसिद्ध्यर्थं तेषां प्रत्युत्तरं मतम् ।

प्रकाशः—येषामेव पाषण्डमोहस्तेषामेव पृथुवचने वैसम्मत्या सर्वेषां सम्मतिसिद्धौ सिद्धस्तदमोह इति सर्वसम्मतेः सिद्ध्यर्थं तेषां तदित्यर्थः । यद्वा लोकाः साधारणा हि ऋषिवाक्यमेव प्रमाणत्वेन मन्यन्ते, अतः पृथुवचनेपि ऋषिसम्मतिं विना न विश्वासः । तथा च सर्वेषां लोकानां पृथुवाक्ये सम्मतिसिद्ध्यर्थं तेषामृषीणां प्रत्युत्तरं पृथुं प्रतीत्यर्थः । तत्र हेतुः मतमिति । यतः सर्वेषामृष्युत्तरं मतं सम्मतमित्यर्थः ॥ १४६½ ॥

( अ० २२ ) ननु प्रचेतसामिव मोक्षसाधनत्वेन भक्त्युपदेष्टृनारदादेरेव कथमस्यापि न सङ्ग इत्यत आह कामप्रकरणादिति ।

निबन्धः—कामप्रकरणाज्ज्ञाने मार्गभक्तिप्रसिद्धये ॥ १४७ ॥
अनुदण्डान् ज्ञानसिद्धान् सनकादीन् ददर्श सः ।

प्रकाशः—कामप्रकरणाज्ज्ञानसिद्धान् सनकादीन् ददर्शेतिसम्बन्धः । प्रयोजनमाह ज्ञान इति । ज्ञाननिमित्तत्यर्थः । मार्गरूपा इष्टार्थप्रापिका साधनरूपेतियावत् । तादृश्या भक्तेः प्रकर्षेण सिद्धय इत्यर्थः ॥ १४७ ॥ ज्ञानसाधनत्वेनैव भक्तिकथने हेतुभूतं विशेषमाह, अनुदण्डानिति । यद्वा ननूपदेशमात्रेणैव रहूगणवदस्यापि कथं न भक्तिज्ञाने जाते इत्यत आह । अनतिमहत इत्यर्थः । तत्र हेतुः, ज्ञानसिद्धानिति । ज्ञानेनैव सिद्धा न तु भक्त्या । तथा सति तथैव स्यादित्यर्थः ॥ १४७½ ॥

नन्वात्मारामेषु पूजावत्कुशलप्रश्नोपि युक्तः स कुतो न कृत इत्यत आहुः, इयं रीतिरिति ।

निबन्धः—इयं रीतिर्ज्ञानमार्गे कृतिश्चैवं न चाऽन्यथा ॥ १४८ ॥
अत एव पुनस्तस्य पूर्ववत्सर्ववर्णनम् । प्रसादख्यापकं ह्येतन्मार्गं हेतुपरम्परा ॥ १४९ ॥
मुमुक्षुत्वान्न परमा कार्यार्थं तस्य चोद्यमः ।

प्रकाशः—ननु सर्वनिवेदनस्य भक्तिमार्गीयस्याऽग्रे प्राणा दारा इत्यादिना कथं करणमत आह कृतश्चैति । निवेदनलक्षणा कृतिरप्येवमेव ज्ञानमार्गीयैवेत्यर्थः । एतज्ज्ञापकमाह अत एवेति । यदि भक्तिमार्गानुसारेण निवेदनं स्यात्पुनः स्वोपयोगो न स्यात्तदैव त्यागोपि स्यादितिभावः । प्रकरणार्थोऽप्यत एव सङ्गच्छत इत्यभिप्रायेण सर्ववर्णनस्य तात्पर्यान्तरमाह प्रसादेति । उपदेशानन्तरं विषयभोगः—तस्य चाऽप्रतिबन्धकत्वमेव । तदुभयमपि भगवत्प्रसादं विना न सम्भवतीति तद्वर्णनेन स एव ख्याप्यते । अन्यथोपदेशादिनैव ज्ञानादिरूपकामसिद्धौ न भगवतैव कामसिद्धिरिति ॥ १४९½ ॥

यद्वा, ननु कर्मणां ब्रह्मसात्करणापेक्षया च भक्त्यर्थं तत्करणं युक्तम् । आत्मस्थित्यपेक्षया भगवत्कीर्त्तनादिकमेव युक्तमधिकरत्वात् । अनासक्त्यपेक्षया च भगवति निवेदनस्याऽधिकत्वेन तदेव कुतो न कृतमित्यत आह इयं रीतिरिति । ज्ञानमार्गीय-

---

एवं चतुर्भिर्विंशाध्यायं विचार्य सार्द्धाभ्यामेकविंशाध्यायार्थमाहुः, किञ्चेत्यादि ॥ १४५ ॥
सार्द्धाभ्यां द्वाविंशाध्यायार्थमाहुः ननु प्रचेतसामित्यादि । अनुदण्डानिति, भक्तसिद्धान् । तथा च तेषां साक्षान्मुक्तिसाधकत्वेन भक्त्यननुभवात्तथा कथनमितिभावः । ( मूले ) इयं रीतिरिति । पूजाकरणरूपा रीतिर्मर्यादा । पुनः स्वोपयोगो न स्यादिति, यथास्थितस्येतिशेषः । तथा सति न सिद्धान्तरहस्योक्तिविरोधः । तत्र हि प्रसादत्वेन तदुपयोगादत्र च तदनुपयोगेन यथास्थितया प्रसादत्वाभावादिति । न चात्रापि तथावक्तुं शक्यम्, तदवचनात् । 'तुष्यन्त्वदभ्रकरुणाः स्वकृतेने'ति विरुद्धवचनेन विनोदपात्रत्वोक्त्या च तादृशकृत्यनुपयोगादेर्दर्शितत्वाच्चेति ॥ १४९½ ॥

त्वादस्य तन्मार्गरीतिरूपैवात्मस्थित्यादिकृता । प्रकरणार्थोपि सङ्गत एव स्यादिति तत्ख्यापकं वर्णनं युक्तमिति हिशब्दार्थः । भोगं कुर्वाणस्यैव "वैन्यस्तु धुर्यो महताम्" इत्यादिनोक्तज्ञानहेतुपरम्परापि प्रसादख्यापिकैवेत्याह मार्ग इति । ज्ञानमार्गं इत्यर्थः ।

( अ० २३ ) ननु भगवत्प्रसादक्तस्य साधनपरम्परायां प्रेमभक्तिः कुतो नोक्तेत्यत आह मुमुक्षुत्वादिति । ननु भगवत्कलावतारस्य कथं मुमुक्षेत्यत आह कार्यार्थमिति । तस्य भगवदंशस्य भूदोहनधर्मप्रजापालनादिकार्यार्थमुद्गमः प्राकट्यमित्यर्थः । तथैव लक्ष्म्यास्तत्पोषकत्वेन तत्पत्न्यामाविर्भाव इति तत्समुच्चयार्थश्चकारः । एतेन कार्यस्य सम्पन्नत्वाद्भगवदंशतिरोधानं सूचिततम् । अत एव मूले "यदर्थमिह जज्ञिवान्" इत्युक्तमतः परं केवलजीवत्वायुक्ता सेतिभावः । यद्वा । ननु स्तुतौ "न कामये नाथ तदप्यहम्" इतिवाक्यं कथमुक्तमित्याशङ्क्य तदा भगवदावेशेन सान्निध्येन च तत्क्षणं भक्तिरसप्रादुर्भावात्तथोक्तम् । तस्य चोक्तकार्यार्थमेवाऽत्रावेशात्सपदि च कार्यस्य सम्पन्नत्वादावेशाभावान्मुमुक्षा युक्तेत्यभिप्रायेणाह कार्यार्थमिति । यद्वा, उक्ताशङ्कायामेव भगवदावेशस्य धर्मादिपालनार्थमेव प्राकट्यम्, न त्वस्मिन् भक्तिमार्गं प्रचारयितुमिति हेतोर्भगवदावेशे सत्यपि युक्ता मुमुक्षा । भगवदिच्छाया बलिष्ठत्वादिति भावेनाऽऽह कार्यार्थमिति । यद्वा कार्यार्थं ज्ञानार्थं तस्य पृथोश्चकारात्तत्पत्न्या उद्गमो गृहान्निर्गम इत्यर्थः । त्यागस्य ज्ञानाङ्गत्वादितिभावः ॥ १४९½ ॥

ननु पुरुषोत्तमभक्तेर्ज्ञानाद्यपेक्षयाऽधिकत्वादत्र च ज्ञानाद्यपेक्षाकथनाद्रूपान्तरेऽन्तर्याम्यादौ भजनं भविष्यतीत्याशङ्क्याह रूपं तदेवेति ।

**निबन्धः—रूपं तदेव स रसो बहुकालं न सेवितः ॥ १५० ॥**
**अतः स्वतन्त्रा सा नाऽभूत्कारणत्वेन चोद्गता ।**

प्रकाशः—पुरुषोत्तमरूपमेवेत्यर्थः । अत एव "आरिराधयिषुः कृष्णम्" इत्युक्तं मूल इति भावः । तर्हि कथं ज्ञानाद्यपेक्षेत्यत आह स रस इति । स प्रसिद्धः पुरुषोत्तमो बहुकालं न सेवितो यतः—अतस्तादृशभजनं विना रसानाविर्भावान्मुख्यभक्तिरसोऽपि न सेवितः । अतो ज्ञानसाधनत्वेनैवाऽस्य भानात्फलरूपा ज्ञानादिनिरपेक्षतया फलप्रदानसमर्था वा भक्तिर्नाऽभूदित्यर्थः । तर्हि भक्तेः किं प्रयोजनमित्यत आह कारणत्वेनेति । भक्तिं विना मोक्षाभावात्तत्कारणत्वेन प्रकटा जातेत्यर्थः । साधनरूपतायामपि भक्तेः फलरूपता न क्षतेति तत्समुच्चयार्थश्चः ॥ १५०½ ॥

नन्वाऽऽवश्यकत्वाल्लाघवाच्च भक्त्यैव मुक्तिरिति कुतो नोच्यते । तथा च सति "तस्याऽनया" इत्यादिना ज्ञानयोगकथनं व्यर्थमित्याशङ्क्य भक्तेः कल्पतरुस्वभावत्वाज्ज्ञानेनैव मोक्ष इति विजानतो ज्ञानमप्युत्पाद्य मुक्तिं ददातीति सिद्धान्ताभिप्रायं मूलमित्यभिप्रायवानाह वैराग्येति ।

**निबन्धः—वैराग्यज्ञानमुत्पाद्य तदविद्यां निवार्य च ॥ १५१ ॥**
**योगेन भङ्क्त्वा लिङ्गञ्च सद्वैकुण्ठेऽनयत्पृथुम् ।**

प्रकाशः—सद् ब्रह्म तदात्मके व्यापिवैकुण्ठे इत्यर्थः । भक्तिरिति शेषः । चकाराद्विद्यामपि ॥ १५१½ ॥ एतदर्थं वैकुण्ठावरकमायोद्घाटने हेतुमाह योगेनेति ।

**निबन्धः—योगेनोद्घाटितस्तस्य तस्यास्तु क्रमतोऽभवत् ॥ १५२ ॥**
**अनभिप्रेतरूपत्वात्फलमस्योच्यते बहु । असङ्गतिनिवृत्त्यर्थं भक्तिश्चाऽप्यस्य वै फलम् ॥ १५३ ॥**

प्रकाशः—तत्पत्न्यास्तु पातिव्रत्यधर्मनिष्ठया पूर्वं पतिलोकं गतायास्तत्र च निरन्तरं तद्भावनया तस्य च वैकुण्ठगतत्वेन क्रमेण वैकुण्ठ उद्घाटितोभवदित्याह तस्यास्त्विति । नन्वस्य शास्त्रस्य भक्तिफलकत्वादन्येषां फलत्वेन कथनं न युक्तमित्यत आह,

---

चतुर्भिस्त्रयोविंशाध्यायार्थमाहुः ननु भगवदित्यादि । 'यदर्थमि'ति वाक्यस्य 'दृष्ट्वात्मानं प्रवयसमि'ति प्रवयस्त्वमुपक्रम्योक्तत्वादावेशस्य तावत्पर्यन्तत्वमायाति । मुमुक्षा तु यज्ञसामयिकब्रह्मवाक्येषु 'यद्भवान्मोक्षधर्मविदि'ति 'तद्देहतो विष्णुकलासि वैन्ये'तिकथनादावेशसमानकालीना प्रतीयत इत्यरुच्या पक्षान्तरमाहुः यद्वा नन्वित्यादि । तदपीति, कैवल्यमपि । कथमिति, परमभक्त्यभावे कथम् । तस्येति भगवदंशस्य । तथा च पक्षद्वयमपि युक्तमित्यर्थः । एवमप्यावेशस्य कादाचित्कत्वापत्त्या तावत्कालीनत्वं विहन्यत इत्यरुच्या पक्षान्तरमाहुः यद्वा उक्तेत्यादि । उक्ताशङ्कायामिति । कलावतारस्य कथं मुमुक्षामुमुक्षायां वा कथमीदृशं वाक्यमितिशङ्कायाम् । तथा च, सनकादिषु नारदे च कलावतारत्वेपि मोक्षधर्मवित्त्वेन मुमुक्षायाः सत्त्ववदत्रापि तत्सत्त्वस्याविरुद्धत्वात्कार्यान्तरार्थावतारत्वेपि तादृशवाक्यस्य भगवत्सान्निध्यादेव भवनाच्च न किञ्चिदनुपपन्नमित्यर्थः । एवं मुमुक्षया अविरुद्धत्वं साधयित्वा यथागृहे सतत एव पृथोः सिद्धदर्शनज्ञानोपदेशौ तथा ज्ञानमोक्षावपि सुवचाविति गृहत्यागकथनं कुत इत्याकाङ्क्षायामाहुः यद्वा कार्येत्यादि । इतिभाव इति, निर्गम इतिभावः ॥ १४९½ ॥

अनभिप्रेतेति। स्वतन्त्रफलत्वेन भक्तेरनिरूपणेनास्य प्रकरणस्यानभिप्रेतरूपत्वम्। तथा च "मग्नश्चेत्पातालं विशेद्" इति न्यायेन सर्वमेव फलत्वेन वक्तुं युक्तमित्यभिप्रायेण तथोक्तिरित्यर्थः। एवमस्य प्रकरणस्यैतच्छास्त्रासङ्गतिरित्याशङ्क्य तन्निवृत्त्यर्थं भक्तिरपि फलत्वेनोक्ता। तथा चैकफलत्वेन शास्त्रसङ्गतिरिति भावः। पूर्वसमुच्चयार्थश्चः। तथाऽपि न स्वतन्त्रपुरुषार्थत्वेन कथनमिति ज्ञापनायाऽपिः। "भवसिन्धुपोतपादे" इतिमूलवाक्यादितिभावः। फलनिरूपणेन प्रकरणसमाप्तिः सूचिता ॥ १५३ ॥

अतः परं मोक्षकरणं विचारयति। तत्र विदुरस्य पुनः प्रश्नाभावे हेतुमाह।

अन्यार्थमिति।

**निबन्धः—अन्यार्थं कामकथनान्नात्र प्रश्नः पुरैव सः। अष्टभिर्मोक्षकथनं स द्वेधेति पुरोदितम् ॥ १५४ ॥**

प्रकाशः—कामादन्यो मोक्षस्तत्कथनार्थमेव कामप्रकरणकथनात्तदुपपादितं मोक्षप्रकरणार्थाय प्रक्रियेयमित्यत्र। तत्प्रकरणप्रश्नश्च "के ते प्रचेतसो नाम" इत्यादिना पुरैव कृत इति नात्र पुनः प्रश्न इत्यर्थः। यद्वा विदुरस्य भक्तिमात्रेच्छया प्रश्नकरणादस्य च तदतिरिक्तबहुफलोक्तेर्मदर्थमिदं नोक्तम्, किन्तु तत्तत्कामानामन्येषामर्थं इदं प्रकरणमुक्तमतो मत्प्रश्नस्योत्तरमनुक्तमिति स्वयमेव वक्ष्यतीति न पुनः प्रश्नः कृत इत्यर्थः। प्रकरणार्थं वक्तुमध्यायसङ्ख्यामाह अष्टभिरिति। पुरेति। शास्त्रार्थप्रकरणे 'विद्ययाऽविद्यानाशे त्वि'त्यारभ्य 'उभयं हरिसेवया' इत्यन्तेनोदितमित्यर्थः ॥ १५४ ॥

तदेवाह ब्रह्मत्वं कृष्णसायुज्यमिति।

**निबन्धः—ब्रह्मत्वं कृष्णसायुज्यं क्रमादत्रोच्यते द्वयम्। सायुज्ये तु रसाधिक्यं भेदेनाऽनुभवात्सदा ॥ १५५ ॥**

प्रकाशः—तत्र यादृशब्रह्मभावसायुज्येऽभिप्रेते तादृशयोरेवाऽत्रापि निरूपणं कथमित्यत आह सायुज्ये त्विति। "ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्" इति वाक्येन प्राप्तब्रह्मभावस्य भक्तिलाभेन पुरुषोत्तमज्ञाने सति तत्र प्रवेशलक्षणं सायुज्यं निरूपितमिति प्रवेशश्च भिन्नतयैव भवतीति भेद एव च रसानुभवसम्भवात्सायुज्ये रसाधिक्यमित्यर्थः। ब्रह्मत्वे चैक्यात्तथा रसाननुभवात्तद्व्यवच्छेदार्थस्तुशब्दः ॥ १५५ ॥

एवं च तस्य गौणत्वादस्यैव मुख्यत्वेन निरूप्यत्वाद्ब्रह्मभावलक्षणं मोक्षं मध्ये निरूपितमाद्यन्तयोस्तदधिकारिणः प्रचेतस एव भक्तत्वान्निरूपिता इति। एतदेवाह सन्दंशकथयेति।

**निबन्धः—तस्याऽधिकारिणस्तेन सन्दंशकथयोक्तवान्। मध्ये तु प्रथमः प्रोक्तो महत्त्वात्पञ्च तस्य तु ॥ १५६ ॥**

प्रकाशः—तेन ब्रह्मभावस्याऽपि सायुज्यसाधनत्वमितिभावः सूचितो भवति। अग्रे प्रचेतसां मोक्षं निरूपयिष्यन्नपि यत्पूर्वं तद्भक्तिं निरूप्य तत्पितुर्मध्ये निरूपणम्, तेन भक्तेषु मुख्यं फलं ददाति भगवांस्तत्सम्बन्धिषु भक्तिमार्गपरिनिष्ठत्वात्तत्सम्बन्धस्यैव प्रयोजकत्वाद्गौणमित्यपि सूचितम्। प्रथमो ब्रह्मत्वाधिकारी। अध्यायान् विभजते पञ्चेति। तस्य प्रथमाधिकारिणः सम्बन्धिनः पञ्चाध्याया इत्यर्थः। तत्र हेतुः महत्त्वादिति। भक्तानां स्वल्पेनैव प्रसादफले भवत इत्यध्यायत्रयेणैव तन्निरूपणम्। अस्य च पूर्वं कर्मित्वान्महता प्रयासेन फलं साधनीयमित्यस्य कार्यस्य महत्त्वात्पञ्चभिर्निरूपणमित्यर्थः ॥ १५६ ॥

ननु प्रथमाध्यायोऽपि तस्यैव भवितुमर्हति, प्रचेतसां तपोनिरूपणं तु तदाज्ञानिरूपणार्थं "पित्रादिष्टाः" इतिवाक्यात्। उपदेशनिरूपणं तु "यदुक्तं पथि दृष्टेन" इत्युक्ते विदुरेण प्रश्ने कृते तदुत्तरत्वेन कृतम्। अन्यथा स्वरूपमेव विनैव प्रश्नं निरूपयेत्। तेनात्र तत्कथायाः प्रासङ्गिकत्वान्न तत्प्रकरणीयत्वमस्याध्यायस्येति पडध्याया एवाऽस्येति चेत्तत्राह, अन्योन्यस्येति।

**निबन्धः—अन्योन्योपकारित्वबोधनार्थं तथा वचः। साधनं च प्रसादश्च फलं चेति त्रयं परे ॥ १५७ ॥**

प्रकाशः—अयमर्थः। अत्र प्राधान्येन तन्निरूपणमेव कृतम्। "पित्रादिष्टाः" इति वचनं तु "कर्तुः शास्तुरनुज्ञातुः" इतिन्यायेन तदाज्ञया भगवदर्थं तपःकरणे तस्याप्यन्तःकरणशुद्ध्युपकारो जात इतिज्ञापनार्थम्। तथा चैतेषां भगवत्प्राप्तिस्तत्प्रेरणया तपःकरणे सतीत्येतदुपकारित्वं तस्य। एतत्तपसा च तदन्तःकरणशुद्धिरिति तदुपकारित्वमेतेषामित्यन्यस्योपकारित्वम्। अन्यथा "ब्रूहि

---

पूर्वमिति। इदं पूर्वेण सम्बध्यते। पतिलोकं गताया इति, अन्वारूढायाः। एवं द्विचत्वारिंशतिभिः कामप्रकरणं रौद्रं विचारितम्।

अतः परं सप्तसप्ततिभिर्मोक्षप्रकरणं वासवं विचारयन्ति। अतः परमित्यादि ॥ १५५ ॥

अत्र तत्कथाया इति, चतुर्विंशाध्याये प्रचेतःकथायाः। तत्रेति अवान्तरपञ्चाध्याय्याम्। अत्रैवं षड्भिः प्रकरणार्थो विचारितोध्यायाश्च विभक्ताः ॥ १५७ ॥

मे विमलं ज्ञानम्" "गृहेषु कूटधर्मेषु" इत्यकस्मात्कथं वदेत् । उपदेशस्याऽतिदुर्लभत्वज्ञापनाय प्रश्नापेक्षा । तदुक्तमाद्यस्कन्धप्रकरणे "सामान्यतो बुभुत्सां हि वक्ता वारयति स्वयम् । उत्कण्ठा चेत्ततोपि स्यात्कथाप्रक्षेपणं ततः । ततो विशेषप्रश्नश्चेद्वाच्यं रीतिरियं सदा" इति तस्मात्सुष्ठूक्तं पञ्च तस्य त्विति । सायुज्यप्रकरणस्याऽध्यायार्थानाह साधनमिति । साधनमुपदेशः प्रथमाध्यायार्थः । चकारात्साधनसाधनं पित्रादेशरुद्रदर्शनादि । प्रसादफले सप्तमाष्टमयोः । चकारात्कृतिः राज्यभोगादिगौणप्रसादश्चोच्यते । द्वितीय-चकारादेतच्छ्रोतुर्विदुरस्याऽपि भक्तिरूपफलप्राप्त्या निर्गम उच्यते ॥ १५७ ॥

( अ. २४ ) एवं प्रकरणार्थं निरूप्य प्राचीनबर्हिष एवाष्टभिरध्यायैर्मोक्षकथनमिति मतं निराकुर्वन् पञ्चभिस्तन्निरूपणे हेतुमाह विद्या त्विति ।

**निबन्धः—विद्या तु पञ्चपर्वेति प्रथमे पञ्च सन्मताः । यत्र सर्वविनिर्द्धारः सर्वसन्देहवारकः ॥ १५८ ॥**

प्रकाशः—तुशब्दः शङ्काव्यावर्त्तकः । अस्मिन् ब्रह्मभावस्यैव वाच्यत्वात्तत्र चाविद्यानिवृत्तिमात्रस्य प्रयोजकत्वात्तस्याश्च विद्यासाध्यत्वात्तस्याश्च पञ्चपर्वात्मकत्वात्सा तावद्भिरेवाऽध्यायैर्निरूप्येति प्रथमे प्रकरणे पञ्चाध्याया एवेत्यर्थः । सन्मता इत्यनेन तन्मतस्याऽसत्त्वं सूचितम् । ज्ञानस्यैव प्राधान्येन तत्र निरूपितत्वादितिभावः । किञ्च, आत्मना सह प्रतीतानां सन्घातस्थपदार्थानां स्वरूपनिर्धारे हि निःसन्दिग्धा ब्रह्मात्मावगतिर्भवेत् । तस्य चात्र तावद्भिरेवाध्यायैर्निरूपणमिति हेतोस्तावन्त इव त इत्याशयेनाह यत्रेति ॥ १५८ ॥ द्वितीय इति ।

**निबन्धः—द्वितीयस्तु त्रिभिः सिद्धः सर्वेषां तत्र चोत्सवः । प्रथमो नारदेनैव फलं तेनाऽपि सिद्ध्यति ॥ १५९ ॥**

प्रकाशः—अध्यायाल्पतया पूर्वस्माद्धीनत्वशङ्का स्यात्तद्व्यावर्तकस्तुशब्दः । पूर्वस्माद्विशेषमाह सर्वेषामिति । पूर्वस्मिंस्तु सर्ववस्तुयाथात्म्यज्ञानेन ब्रह्मात्मावगत्यात्मन्येव सुखं भवेन्न तु सर्वेन्द्रियादिषु । अत्र तु सर्वेषामिन्द्रियाणां चकारादात्मनश्च सर्वविस्मारक आल्हादविशेषरूप उत्सवः सिद्धो न तु साध्य इत्यर्थः । तस्य गणितानन्दत्वादस्य च पूर्णानन्दत्वादितिभावः । ननूपदेशमात्रेण भगवत्प्रसादं विना कथं प्राचीनबर्हिषो मोक्षकथनं "फलमत" इतिन्यायविरोधात्, अतः प्रचेतसामिवाऽस्यापि भगवत्प्राकट्यं वाच्यमित्याशङ्क्याह प्रथम इति । नारं द्यति खण्डयतीति व्युत्पत्त्या जीवभावच्छेदकत्वात्तत्त्वं च भगवत एव सम्भवतीति तदाविष्टभगवद्रूपस्यैव तन्नाम । तथा च तेनैव प्रथमो ब्रह्मभावरूपो मोक्षो जात इत्यर्थः । उपपत्त्यन्तरमाह फलमिति । बर्हिः प्राकट्याभावेप्यात्मत्वेन स्फुरितब्रह्मस्वरूपेणाऽपि पूर्वोक्तं फलं सिद्धयतीत्यर्थः । यद्वा । तस्य ज्ञानोपदेशमात्रेणाऽन्यथासिद्धि-माशङ्क्याह फलमिति । भगवत्सहितगुरुणापि ज्ञानोपदेशफलं सिद्धयतीत्यर्थः ॥ १५९ ॥

एवं प्रकरणार्थं निरूप्य प्रथमाध्यायं विचारयति पृथोरित्यादिना ।

**निबन्धः—पृथोः प्रपौत्रपुत्राणां मुक्तिं वक्तुं तदन्तरा । अमुक्तौ प्रतिबन्धः स्यादतो मुक्तिकथान्तरा ॥ १६० ॥**
**पौत्रमुक्तिस्तु सन्दंशन्यायेनैव भविष्यति ।**

प्रकाशः—तत्र प्रचेतसां साधने निरूपणीये सत्यन्तर्धान्नमुक्तिनिरूपणं पूर्वं किमर्थमित्यत आह पृथोरिति । प्रपौत्रो बर्हिष-स्तत्पुत्राणां प्रचेतसामेव तन्मुक्तिं वक्तुमेतन्मुक्तिकथामध्ये तन्मुक्तिकथेत्यर्थः । एतत्कथनस्यावश्यकत्वायाह तदन्तरेति । तेषां पूर्वजानां मध्ये कस्यचिदमुक्तौ पितृदोषः पुत्रादावपि सङ्क्रामतीत्येतन्मुक्तावपि प्रतिबन्धः स्यादित्यर्थः । एतेन मुक्त्यधिकार एव निरूपित इत्युक्तं भवति ॥ १६० ॥ ननु पृथुपौत्रमुक्तेरनुक्तत्वात्तत्कृतः प्रतिबन्धो भविष्यतीत्याशङ्क्याह पौत्रेति । अस्य मुक्तिरनुक्तसिद्धैवेति न पृथगुक्तेत्यर्थः । एतेनाध्यात्मिकी शुद्धिः प्रचेतसामुक्ता । एतेन "विजिताश्वः" इत्यारभ्य सप्तश्लोकानां तात्पर्यमुक्तं ज्ञेयम् ॥ १६०½ ॥

हविर्धानादित्यादिपञ्चानां तात्पर्यमाह योगेनेति द्वाभ्याम् ।

**निबन्धः—योगेन कर्मणा चाऽपि शुद्धिः सर्वोत्तमा मता ॥ १६१ ॥**
**कुलसौन्दर्ययोगे तु स्त्रीशुद्धिश्चोत्तमा मता ।**

प्रकाशः—अत्राधिभौतिकी शुद्धिर्निरूप्यते, सा च पितृमात्रोः शुद्धत्वे भवति । तत्र पुरुषशुद्धिस्तु योगकर्मभ्यां जाता सत्कुलजातत्वाद्यपेक्षयोत्तमा भवति । स्त्रीशुद्धिस्तु सत्कुलजातत्वेन सौन्दर्यातिशयेन च । व्यभिचारादिदोषव्यावर्त्तक-स्तुशब्दः ॥१६१½ ॥

**निबन्धः—बीजयोनिविशुद्धत्वे शुद्धिः कार्ये विनिश्चिता ॥ १६२ ॥**
**विवाहोऽपि ब्रह्मवाक्यादतो न विषये स्पृहा ।**

प्रकाशः—तथा चोभयोस्तथात्वेन बीजयोन्योः शुद्धत्वेन तत्पुत्रेष्वपि शुद्धिर्भवत्येव । तत्रापि विषयरागजप्रवृत्त्या जनि-तानामपत्यानां बीजसंस्कारवशान्न नीरागत्वं भवेदिति शङ्काव्युदासाय तद्वैराग्यकथनाय ब्रह्मवाक्यादेव विवाहोक्तिरित्यर्थः॥ १६२½ ॥

फलितमाह एतादृशादिति ।

निबन्धः—एतादृशात्समुत्पन्नाः पितुरादेशकारिणः ॥ १६३ ॥

तपसा साधने तस्य न बन्धो भवतीति हि । तत्रापि कृष्णसेवायां कृतार्थत्वं हि सर्वथा ॥ १६४ ॥

प्रकाशः—तत्रापि न सनकादिवत्पित्रादेशोल्लङ्घकाः किन्तु तत्कारिणस्तेन गुर्वाज्ञापालनरूपो धर्मोऽप्युक्तः ॥ १६३ ॥ तत्रापि विशेषमाह तपसेति । तस्य पित्रादेशस्य तपसा साधने प्रवृत्तिमार्गत्वेन स्वस्य सर्गकरणजबन्धो यः स न भविष्यतीति तपसि प्रवृत्ताः । तत्राऽपि न केवलं तावन्मात्रत्वं किं तु तपस्यपि पुरुषोत्तमभजनं करिष्यामस्तेन कृतार्था भविष्याम इति निश्चयवन्तः ॥ १६४ ॥

निबन्धः—इति तान् सर्वथा शुद्धान् विलोक्येशो हरिप्रियः । प्रोवाच सर्वसन्देहवारकं सर्वबोधकम् ॥ १६५ ॥

अत इत्थम्भूतत्वेनाधिदैविक्यपि शुद्धिः सुसम्पन्नेति सर्वप्रकारेण शुद्धान् ज्ञात्वा तान् प्रति प्रोवाचेत्यर्थः । ईशत्वेनान्तरज्ञानम्, तत्रापि हरिभक्तिज्ञानं हरिप्रियत्वेन, अन्यथा कथमकस्माद्बहिरागच्छेत् । तथैश्वर्यज्ञापनायैव "समुद्रमुपविस्तीर्णम्" ( श्लो० २० ) इत्यारभ्य षट्श्लोका इतीशपदेन तावतां तात्पर्यमुक्तमिति ज्ञेयम् । 'यूय'मित्यादि रुद्रवचनानां चतुर्णां तात्पर्यं हरिप्रियपदेन ॥ १६५ ॥

मध्ये स्वरूपकथनस्य प्रयोजनमाह हेतुपूर्वमिति ।

निबन्धः—हेतुपूर्वं स्तोत्रमाह शीघ्रं तुष्यति यद्धरिः । अयमेवोपदेशो हि विश्वासार्थं परम्परा ॥ १६६ ॥

प्रकाशः—भगवत्प्रादुर्भावार्थमेव हि स्तोत्रम् । स च प्रेम्णैव भवति । प्रेम चातिसुन्दरस्वरूपस्य निरन्तरचिन्तनकीर्त्तनाभ्यामितीदृशं स्तोत्रमाहेत्यर्थः । एतदेव स्पष्टयति शीघ्रमिति । यद्वा । उपदेशे हेतुर्ह्येतेषां भागवतत्वम्, "अथ भागवता यूयम्" इतिश्लोकेन तन्निरूपणपूर्वकं यः स्तोत्रमाहाऽतो यद्यस्माद्धरिः शीघ्रं तुष्यति तादृशं तदाहेति सम्बन्धः । जप्यो मन्त्रः पृथगुपदिष्टो भविष्यतीत्याशङ्क्याह अयमेवेति । "इदं जपध्वम्" इतिवचनसम्मतिर्हिशब्दार्थः । इदमाहेत्यादीनां तात्पर्यमाह विश्वासार्थमिति । यद्यपि रुद्रवचनेऽप्यस्त्येव सः, अन्यथा परम्पराकथनेऽप्यविश्वासेन सर्वनाशः स्यात् । तथाप्येतेनाऽन्यस्यापि फलसिद्धिश्रवणेऽतिश्रद्धा भवतीति तथोक्तम् ॥ १६६ ॥

तर्ह्येतेषु कथं फले विलम्ब इत्यत आह अनुद्वेगेति ।

निबन्धः—अनुद्वेगपरीक्षार्थं विलम्बो हरिणा कृतः । तत्पुरैव विनिश्चित्य जले तप्तुं विनिश्चयः ॥ १६७ ॥

प्रकाशः—तपसि क्लेशादुद्वेगः कालविलम्बेपि तदा न भवेद्यदि भक्तिरसेनाऽन्यविस्मृतिः स्यादिति तत्परीक्षार्थं तथेत्यर्थः । ते त्वत्यन्तभक्तिरसिका इत्यत्र निदर्शनमाह तत्पुरैवेति । तत्राऽन्यप्रवेशाभावादत्यगाधे च जलचराणामप्यभावेन निर्विघ्नभजनं भविष्यतीति तथेत्यर्थः ॥ १६७ ॥

किञ्च । तेषां भजनं स्वतन्त्रपुरुषार्थत्वेनैव प्रतिभातम् । यतो भूमौ भजने प्रलये भूमिनाशेन तद्विघ्नो मा भूदिति विचार्यापि जले तपः कृतवन्त इत्याह प्रलयेपीति ।

निबन्धः—प्रलयेपि न भङ्गार्थं स्तोत्रमुख्यत्वसिद्धये । अध्यायपूरणं पूर्वं कृतं सम्बन्धसिद्धये ॥ १६८ ॥

अग्रे कथाप्रकथनं तपःसिद्धौ कथा परे ।

प्रकाशः—नन्वस्मिन्नध्याये हि साधनं निरूप्यं तच्च स्तोत्रतपोरूपम्, तत्कथं तपोऽनुक्त्वा तन्मात्रेणाऽध्यायपूरणं कृतमित्याशङ्क्य तत्तात्पर्यमाह स्तोत्रेति । एतेषां स्तोत्रमेव मुख्यं साधनं न तप इति ज्ञापनार्थं तपोनिरूपणात्पूर्वमेवाध्यायपूरणं कृतमित्यर्थः । तर्ह्येतत्प्रकरणे तत्तपोनिरूपणमादौ न युक्तमित्यत आह सम्बन्धसिद्धय इति । एतत्तपसः "कर्त्तुः शास्तुः" इतिन्यायेन बर्हिषदोऽपि चित्तशोधकत्वलक्षणः सम्बन्धोऽस्तीति ज्ञापनाय तत्प्रकरणादावेतत्तपःकथाकथनमित्यर्थः ॥ १६८ ॥ ननु प्रचेतसां निर्गमानन्तरमेव नारदस्यागतत्वात्तपसश्चोत्तरकालीनत्वात्कथं कारणत्वमित्याशङ्कायामाह तपःसिद्धाविति । एतत्तपसः सिद्ध्यनन्तरं परे बर्हिषदि कथाकथनं नारदेनेत्यर्थः । न चाऽत्र मानाभावः अन्यथाऽनुपपत्तेरेव सत्त्वात् । तथा हि "गृहेषु कूटधर्मेषु" इत्यादिना बर्हिषदा वैराग्यस्योक्तत्वात्तस्य च चित्तशुद्धिं विनाऽनुपपन्नत्वात्तस्याश्च तत्तपो विना हेत्वन्तराभावात् । न च तत्कर्मैव तच्चित्तशोधकम् । सकामकृतत्वात् । सकामत्वं च "नानाकामो यथा भवान्" इति नारदवाक्यादवगम्यत इतिभावः ॥ १६८½ ॥

---

अतः परं पादोनैर्नवभिश्चतुर्विंशाध्यायस्यार्थं विचारयन्ति, एवं प्रकरणार्थमित्यादि ॥ १५९–१६४ ॥
षट्श्लोका इति । तथा सतिसतानितिसप्तमस्य धर्मिबोधकत्वमित्यप्युक्तप्रायमिति बोधितम् ॥ १६५ ॥
मध्य इति । स्तोत्रमध्ये ।
स इति, प्रादुर्भावः । ईदृशमिति, स्वरूपकथनघटितम् ॥ १६६ ॥

अथ पूर्वप्रकरणार्थविचारं प्रतिजानीते सर्ववस्त्विति।

**निबन्धः—सर्ववस्तुविवेकस्तु जाग्रत्स्वप्नविभेदतः॥ १६९॥**

**विनश्यत्ता विनाशश्च सार्थकत्वादिरूपवान्। सर्वसन्देहराहित्यं सफलं पञ्चभिः क्रमात्॥ १७०॥**

प्रकाशः—अध्यायार्थानाह जाग्रदिति। जाग्रदवस्थानिरूपणं प्रथमाध्यायार्थः। स्वप्नावस्था द्वितीयस्य। विनाशहेतु-सामग्रीसान्निध्यं तृतीयस्य। विनाशश्चतुर्थस्य। चकारात्संसारनाशोऽपि सत्सङ्गभक्तिज्ञानसाहित्यनिरूपणेन। एतदेवाह सार्थकत्वेति। दुष्टस्याऽपि पूर्वदेहस्य नाशस्तदा सार्थको भवेद्यग्रे सत्सङ्गः स्यादन्यथा तु तन्नाशोऽप्यनाश इवेति सार्थकत्वविशिष्टः स निरूप्यत इत्यर्थः। आदिशब्देन भक्त्यादि। सर्वेति पञ्चमस्य॥ १७०॥

तत्र कोटिद्वयम्, संसारो मुक्तिमार्गश्च। एतयोः स्वरूपं निरूपणीयम्। तच्चैकदापि भवति। अत्र पृथङ्निरूपणं कुत इत्यत आह संसार इति।

**निबन्धः—संसारे मुक्तिमार्गे च जीवो द्वेधा हि गच्छति। तत्सामग्रीप्रकथनमुभयोरुच्यते पृथक्॥ १७१॥**

प्रकाशः—संसारे येन प्रकारेण जीवस्य गतिस्तेनैव न मोक्षमार्ग इति गतिभेदज्ञापनाय संसारमुक्तिमार्गयोः सामग्रीकथा पृथगुच्यते। चकारात्पुरुषरूपेणापि स्त्रीरूपेणाऽपि तयोर्मार्गयोर्गतिर्जीवस्याऽतस्तद्बोधनायोभयोः पुंस्त्रियोस्तथोच्यत इत्यर्थः। एतेन स्त्रीशरीरं प्राप्तस्य मुक्तिसाधननिरूपणात्तादृशस्यैव मुक्तिरिति शङ्का निरस्ता, तस्य पूर्ववासनानुरूपदेहप्राप्तितात्पर्यकत्वात्। तथा च सत्सङ्गादिसाधने स्त्रिया अपि मुक्तिः सूचितेति ज्ञेयम्। मां हि पार्थ" इति भगवद्वाक्यादिति भावः॥ १७१॥

तर्हि स्फुटतयैव कुतो नोक्तं तत्राह अपरोक्षेति।

**निबन्धः—अपरोक्षकथायां हि कौतुकाभावतः पुमान्। नाऽऽद्रियेत नवा बुद्धिरध्यात्मे प्रविशेद् द्रुतम्॥ १७२॥**

प्रकाशः—जन्मादिरूपेण निरूपणे चमत्काराभावान्मनुष्यदेहकथामात्रमुक्तमिति बुद्ध्या तदुक्तेऽनादरः स्यान्न वा ज्ञानमार्गे प्रविशेद्बुद्धिः। परोक्षकथायां तूक्तवैपरीत्यमिति तथोक्तमित्यर्थः॥ १७२॥

(अ. २५) ननु तत्फलाभावं ज्ञात्वाऽपि तस्मिन् कुतः प्रश्नं कृतवाँस्तत्राह प्रश्न इति।

**निबन्धः—प्रश्नः शुद्धिपरीक्षार्थमन्यथा कथनं वृथा। गृहादिसहितो देहः पुरं मध्यं तथोभयोः॥ १७३॥**

प्रकाशः—शुद्धिकथनस्यावश्यकत्वायाह, अन्यथेति शुद्ध्यभाव इत्यर्थः। ननु नवद्वारप्राकारादीनामितरदेहेष्वपि समान-त्वात्कुतस्तेष्वनभिरुचिः, कथं च नरदेह एव रुचिकथनमित्याशङ्क्य जीवस्याशेषभोगार्थित्वादन्येषां गृहादिविषयाभावेनाऽशेषभोगा-सम्भवान्नरदेहे च तत्सत्त्वात्सर्वकामसम्पत्तिसम्भवात्तस्मिन्नेव रुचिर्नाऽन्येषु। अत्र च तन्निरूपणाद्गृहवित्तादिसहित एव देहः पुरत्वेनाऽभिप्रेत इत्याह गृहादीति। अत एव मुल उक्तं "कामान्कामयमानोऽसौ तस्य तस्योपपत्तये" इति। व्याख्याने च "यदा जिघृक्षन् पुरुषः कार्त्स्न्येन प्रकृतेर्गुणान्" इति। तर्हि विषयपरिनिष्ठितबुद्धिसम्बन्ध एव देहसम्बन्ध इति विवक्षया "पुर्यास्तु बाह्योपवने" इत्यादिना विषयाणां पुर्याः सकाशाद्बाह्यत्वकथनमनुपपन्नमित्यत आह मध्यमिति। उभयोर्जीवपुरयोर्निरूपणे मध्ये यन्निरूपितं 'पुर्यास्त्वि'त्यादि तदपि तथा पुरमध्य एवेत्यर्थः। यद्वा। उभयोस्तयोरेव मध्यं मध्ये स्थितं सम्बन्धो ममाहम्बुद्धिरूप इति यावत्। सोऽपि तथेति पूर्ववत्। अत्र हि जीवस्य संसारो वाच्यः स चाहन्ताममताकृत एव। तयोरेवाऽविद्याकार्यत्वात्। देहादीनां प्रपञ्च-मध्यपातित्वेन भगवत्कार्यत्वात्। देहादिषु च जीवस्य सम्बन्धान्तरस्य निरूपयितुमशक्यत्वात्त एव सम्बन्धरूपे। अत एवाहम्ममेति बुद्धेरविद्याकार्यत्वेन देहादित उक्तवैलक्षण्यमस्तीति ज्ञापनाय बाह्यत्वनिरूपणम्। अत एव ज्ञाननाश्यत्वं तयोरेव। न च पुरदर्शना-नन्तरमस्योक्तत्वान्न तन्मध्यपातीदमितिवाच्यम्। पुरमध्यपातित्वेनैवाऽभिप्रेतत्वात्। अत एवैतद्व्याख्याने "नवद्वारं द्विहस्ताङ्घ्रिम्" (अ. २९-४) इत्येतावन्मात्रमुक्त्वा "तत्राऽमनुत साध्विति" इत्युक्तवान्। अन्यथा साधुमाननोक्तिरनुपपन्ना स्यात्। विषयभोगो-पयोगित्वेन ह्यस्मिन् सन्माननं तददर्शने कथं तथा मन्येतेति। यद्वा उभयोर्जीवान्तर्यामिणोर्मध्यमन्तरायरूपं विषयपरिनिष्ठितबुद्धिसहितं पुरमित्यर्थः। "निबन्धायाऽऽसुरी मता" इतिवाक्यादुक्तसामग्र्याश्च तथात्वादिति॥ १७३॥

---

अतः परं सपादाष्टादशभिः पञ्चविंशाध्यायं विचारयन्तः पादोनेनोपक्रमगतमर्थं वदन्ति तर्हीत्यादि। एतत्प्रकरण इति, प्राचीनबर्हिःप्रकरणे॥ १६८¾॥

अथेति, उपक्रमोक्तार्थकथनोत्तरं प्रतिजानीत इति, सार्द्धाभ्यां कर्त्तुं प्रतिजानीते॥ १७०॥ तत्रेति, पुरञ्जनप्रकरणे। तथा चेत्यादि, तादृशस्यैव मुक्तिरिति न किन्तूक्तगीतावाक्यात्तादृशस्यापि मुक्तिरित्यर्थः॥ १७१-१७२॥

एवं सार्द्धाभ्यां प्रकरणार्थमुक्त्वा पञ्चविंशार्थं विचारयन्ति, ननु तत्फलमित्यादि। कृतवानिति, नारदः कृतवान्। अत्र नारदोक्तिषु 'हिमवतो दक्षिणेषु सानुष्वि'त्यनेन कर्मक्षेत्रं भारतं वर्षमुच्यते। 'लक्षितलक्षणामि'त्यनेनान्धपङ्गुत्वादिदोषराहित्यम्।

पुरप्रवेशस्य जन्मरूपत्वात्तस्य च द्विरूपत्वात्कीदृशमत्र जन्मोच्यत इत्याशङ्काऽभावायोभयानुवादपूर्वं तन्निर्धारमाह जन्मादीति।

**निबन्धः—जन्मादि द्विविधं लोके पञ्चाग्निप्रक्रमेण हि। एकः स नाऽत्र वक्तव्यः पूर्वं दोषस्य सम्भवात्॥ १७४॥**

प्रकाशः—वेदान्तविज्ञानार्थं पञ्चाग्निविद्यया साधितमेकम्। "जायस्व म्रियस्वे"ति तृतीयमार्गीयं द्वितीयम्। तत्राद्यं त्वत्र नोच्यते, तत्र हेतुः पूर्वं दोषस्येति। तस्य निर्दोषत्वादितिभावः। द्वितीयनिरूपणेऽप्ययमेव हेतुः, अतो द्वितीयं त्वत्र निरूप्यते दोषसाध्यत्वादस्य॥ १७४॥

पूर्वोक्तं दोषमेव विवृणोति पूर्वं जीवेच्छयेति।

**निबन्धः—जायस्वेति द्वितीयस्तु पूर्वं जीवेच्छया तथा। ईश्वरत्वादनासक्तेर्हरिस्तत्कामतः कृती॥ १७५॥**

प्रकाशः—"कामान् कामयमानोऽसौ" इत्यनेन विषयभोगेच्छाया निरूपणात्तस्याश्च "आवृतं ज्ञानमेतेन" इति वाक्याज्ज्ञानप्रतिपक्षतया दोषरूपत्वात्तादृशमेव जन्मोच्यत इत्यर्थः। ननु जीवान्तर्यामिणोः सहैव प्रवेशात् स्थितेश्च तत्प्रेरणं विना जीवस्यासमर्थत्वेनैतस्यैव सर्वकर्तृत्वाच्च जीवस्येवान्तर्यामिणोपि कथं जन्मादिरूपः संसारो नोच्यत इत्यत आह ईश्वरत्वादिति। सहभावेपि न हि जीव इवातर्न्यामी बुद्ध्याद्यधीनः, किं तु स्वतन्त्रः। जन्मादीनां च कालकर्माधीन एव भावान्नास्मिंस्तथात्वम्। मायामोहाभावेन जीवत्वाभावाच्च। किं च प्रयोजककर्तृत्वेपि महाराजस्येव बन्धकं कर्म स्वाद्यद्यासक्त्या कारयेत्स च नेदृश इति न तथा। अत एव "अनश्नन्नन्यो अभिचाकशीहि" इति श्रुतिः। किं च जीवस्तु दुःखी, अयं तु तस्यापि दुःखहर्ता ज्ञानद्वारा, 'सोऽकामयत बहु स्यां प्रजायेय" इत्युच्चनीचभावेन भगवत एव प्राकट्यकामनयान्तर्यामिणस्तथात्वान्न संसारित्वमित्यर्थः। अथवा तस्य जीवस्य कामत- कामनया परं हरिः कृती कृतिमान् प्रेरकत्वान्नाऽन्या कृतिरित्यर्थः। अत्रायं भावः। देहप्राप्त्यनन्तरं हि कर्मकरणेन बन्धः। अत्र च तस्मात्पूर्वमेव जीवस्य काम उच्यते, स चान्तर्यामिप्रेरणं विना न सम्भवतीति यथा देहप्राप्तेः पूर्वमपि प्रेरकत्वेपि न तस्य संसारित्वं तथाऽग्रेपीति। कामाभावे हेतुरनासक्तेति। आसक्तो हि कामयते। अत्रापि हेतुरीश्वरत्वादिति। तथा सति कर्मणां बन्धसम्भवेन तदधीनत्वेऽनीश्वरत्वं स्यात्॥ १७५॥

देहप्राप्तेः पूर्वं बुद्ध्यादिनिरूपणस्य तात्पर्यमाह लिङ्गेनेति सार्धेन।

**निबन्धः—लिङ्गेन सहितो जीवः स्थूलदेहे सुखी भवेत्। अतो गर्भप्रवेशाद्धि पूर्वं कृष्णविनिर्मिते॥ १७६॥**
**बुद्धिप्राणेन्द्रियगणे तदध्यासोऽनुवर्ण्यते।**

---

एवमन्यदपि बोध्यम्। तर्हीति, सविपर्यस्य देहस्य पुरत्वे। पुरमध्य एवेति, विषयाणामहन्ताप्रकाराद्बाह्यत्वेपि ममताप्रकारान्तःपातित्वेन पुरमध्य एवेत्यर्थः। मूले, बाह्यत्वस्य कण्ठत उक्तत्वात्पुरमध्यगत्वकल्पनमयुक्तमित्यरुच्या पक्षान्तरमाहुः, यद्वेत्यादि। पूर्ववदिति, पुरवदित्यर्थः। पुरवदिति वा पाठः। एतदेव विवृण्वन्ति अत्र हीत्यादि।

ते इति अहन्ताममते। अत्र गमकमाहुः अत एवेत्यादि। अत इति सम्बन्धरूपत्वात्। उक्तवैलक्षण्यमिति, सम्बन्धिभ्यो भिन्नत्वात्तद्वैलक्षण्यम्। तथा च, पुरवैलक्षण्याद्बाह्यत्वेन कथनं वस्तुतस्तु पुरान्तःपातित्वमेवेत्यर्थः। नन्वेवं सति पुरदर्शनोत्तरं भिन्नतया कथनमस्य विरुद्ध्यत इत्याशङ्कायां प्रमाणान्तरार्थापत्त्या तथात्वमुपपादयन्ति, न चेत्यादि। तददर्शन इति, अहंममत्वेनादर्शने। तथा च, तादृशविपयादिविशिष्टे देहेऽहंममत्वेनादर्शने तस्य विषयभोगानुपयोगित्वात्साधु माननं न सङ्गच्छेतेति तदन्यथानुपपत्त्या तत्कारणीभूतोऽध्यासोपि पुरान्तःपाती पुरवैलक्षण्याच्च तस्याः सकाशाद्बाह्य इतिवाक्यद्वयसामञ्जस्यमित्यर्थः। अत लक्षणाया अदुष्टत्वा'त्तत्रामनुत साध्वि'तिवाक्ये 'तत्रे'तिपदस्याजहत्स्वार्थया पुरतत्सम्बन्धिबोधनेपि बाधकाभावाद् गृहादिषु विषयेषु भोगोपयोगित्वेन पुरबाह्यत्वेपि साधुसन्माननोपपत्तेर्नेदमन्तःपातित्वसाधिकमित्यरुच्या पक्षान्तरमाहुः, यद्वा उभयोरित्यादि। अस्मिन्पक्षे तथापदं समुच्चयार्थकम्। गृहादिसहितो देहः पुररूपो जीवान्तर्यामिणोरन्तरायरूपश्चेत्यर्थः। तथात्वादिति, अन्तरायरूपत्वात्। तथा च, गृहादीनां बाह्यत्वेप्युपश'[1]स्यन्यायेनान्तःपातित्वात्तत्सहितस्य पुरत्वं नायुक्तमित्यर्थः॥ १७३॥ (मूले) पूर्वं दोषस्य सम्भवादिति। अत्र हि सर्वक्लेशावहसंसारबोधनाय नारदः प्रवृत्त इति तन्निवृत्त्युपयोगिजन्मात्र न विवक्षितम्, किन्तु, पूर्वं पूर्वप्रज्ञासाधितं लौकिकं दोषस्य दृढाध्यासस्य तादृशजन्मनैव सम्भवादुत्पत्तेरित्यर्थः। तस्येति, वैदिकस्य॥१७४॥ तथात्वमिति, संसारित्वम्। तथात्वादिति, उच्चत्वात्। अस्मिन्पक्षे कृतीतिपदस्य कुशल इत्यर्थः। तदेवात्र विवृतं न संसारित्वमित्यनेन। अस्य लौकिकप्रकरणत्वादत्र वैदिको भगवदीयः कामः किमर्थं ग्राह्य इत्यरुच्या पक्षान्तरमाहुः अथवेत्यादि। तथा सतीति आसक्तत्वे सति॥ १७५॥ बुद्ध्यादिनिरूपणस्येति। 'यदृच्छये'त्यारभ्य 'गजगामिनी'मित्यन्तस्य। अध्यासस्येति, इन्द्रियान्तःकरणाध्यासस्य। सोयमध्यासो

---

१. "शाला" पाठः।

प्रकाशः—लिङ्गशरीरेणेत्यर्थः । अध्यासस्याऽविद्याकार्यत्वेन बुद्धयादीनामपि यथात्वमिति शङ्कावारणाय कृष्णनिर्मित इति विशेषणम् । "इति तौ दम्पती तत्र समुद्य समयं मिथः" इत्यन्तस्य तात्पर्यमुक्तम् ।। १७६ ।।

"तां प्रविश्य पुरी" मित्यादिग्रन्थस्य तात्पर्यं वदँस्तत्र बुद्धयादीनां स्वरूपमाह देहात्मेति ।

**निबन्धः—देहात्ममतिरेषा हि तथा स्थूलेन्द्रियादि च ।। १७७ ।।**
**पुंस्त्वं स्वतन्त्रता तस्य पारतन्त्र्यं तथेतरत् ।**

प्रकाशः—एतेन देहाध्यासो निरूपितः । अविद्यापूर्वरूपत्वादत्रायं युक्त इति हिशब्दः "सप्तोपरि" इत्यादिना स्थूलेन्द्रियाण्युक्तानि । तान्यप्यध्यस्तान्येवेति ज्ञापनाय तथेति पदम् ।। १७७ ।। ननु पुंस्त्वादयो धर्मा हि देहस्य, अत्र च तत्प्राप्तेः पूर्वं जीवे तथा कथनं नोपपन्नमित्याशङ्कय तत्स्वरूपमाह पुंस्त्वमिति । श्रुतिभागवताद्यनधीनो हि देहादौ रमत इति ज्ञापनाय पुम्प्रयोग इतिभावः । इतरत्स्त्रीत्वं श्रुत्याद्यधीनत्वम् । अत एव तस्यामग्रे भक्त्युत्पत्तिं वक्ष्यति ।। १७७½ ।।

**निबन्धः—तस्याः स्त्रीत्वं तु मायात्वाद्बहिस्तद्धर्मसिद्धये ।। १७८ ।।**
**वाक्योक्तिः स्वेच्छतासिद्ध्यै देवत्वाल्लोकवत्तथा ।**

प्रकाशः—तस्या बुद्धेः । अस्याः स्त्रीत्वं न पूर्ववत्किं त्वेतदधीनो जीव इति तद्व्यवच्छेदाय तुशब्दः । तत्त्वे हेतुमायात्वादिति । देहात्मभावरूपत्वादस्या अविद्यारूपत्वेनाऽविद्यायाश्च मोहकत्वेन स्त्रीरूपतया चाऽस्या अपि स्त्रीत्वमित्यर्थः । ततः किंमत आह बहिरिति । मोहितो हि मोहकानुवृत्तिं कुरुते, तथा चास्या मायात्वेन मोहकत्वे सिद्धे चान्तरत्वेनैतद्धर्माणां यथा बहिरपि सिद्धिर्भवति तदर्थं तथोक्तमित्यर्थः । तदेतत् "क्वचित्पिबन्त्याम्" इत्यादिना निरूपितम् ।। १७८ ।। जीववाक्यानां तात्पर्यं वदँस्तत्प्रयोजनमाह स्वेच्छतेति । यत्स्वस्य चिचिकीर्षितं तदेव चेत्तस्या अपि भवेत्तदा पुर्या तया सह भोगे स्वस्य स्वाच्छन्द्यं भवेत्, नो चेत्सशङ्कतया भोगे यथेष्टा प्रवृत्तिर्न स्यादिति तत्सिध्यर्थं जीववाक्योक्तिरित्यर्थः । ननु ताल्वोष्ठपुटव्यापाराभावेन कथमुक्तिरित्यत आह देवत्वादिति । आधिदैविकरूपे कारणरूपाणां ताल्वादीनां सत्त्वात्तथा । अत एव "चक्षुरुदगायत" इत्यादिश्रुतिः । तृतीयस्कन्धे च तत्त्वानां स्तुतिः । तर्हि देवत्वेऽवश्यं तत्स्वरूपमपि जानात्येव तत्कथं 'का त्वम्' इत्यादिप्रश्न इत्यत आह लोकवत्तथेति । यथा कामुकोऽपूर्वां कामिनीं दृष्ट्वा तत्सङ्गेऽन्याश्च दृष्ट्वा तामात्मसात्कर्तुं ज्ञात्वाऽपि रसार्थं पृच्छति तथेत्यर्थः ।। १७८½ ।।

अग्रे निषेधार्थं 'त्वं ह्री' इत्यादिविकल्पाः कुत इत्याशङ्कय तत्तात्पर्यमाह लीलेति ।

**निबन्धः—लीलाविग्रहसम्बन्धे ब्रह्मादीनां मतिर्न सा ।। १७९ ।।**
**अयोग्यमिच्छन् पुरुषः पतत्येव न संशयः । निराकृतिरतस्तासां पार्थिवत्वमतित्वतः ।। १८० ।।**

प्रकाशः—लीलार्थं देहसम्बन्धेपि देहात्ममतिस्तेषां नास्तीति ज्ञापयितुं तत्सम्बन्धिनीनां निरूपणमित्यर्थः ।। १७९ ।। इयं तु देहात्ममतिरूपेति तासां निराकरणम्, निराकृतौ तात्पर्यान्तरमप्यस्तीत्याह, अयोग्यमिति । गुर्वङ्गनादिकामनायां पतत्येवेत्यपि ज्ञापनाय "नाऽसां वरोरु" इत्यनेन तासां ह्रयादीनां निराकृतिः । तत्र हेतुः । पार्थिवत्वेन पृथिवीविकारत्वेनाऽऽत्मनि या मतिर्देहात्ममतिरिति यावत्तद्रूपत्वम् । एतदेव मूले 'भुविस्पृगि'ति पदेनोच्यते ।। १८० ।।

---

मूले, 'ददर्श प्रमदोत्तमामि'ति दर्शनक्रिययोच्यते । 'इति तौ दम्पती' इति समयसंवादेन तद्दार्ढ्यमुच्यते । ममाहमितियत्कृतमित्यनेन च व्याख्यायते । अत्रैवं ज्ञेयम् । बुद्धिः प्रमदा, तस्या उत्तमता अविद्या संवलितत्वम् । दशभृत्या दशेन्द्रियाणि । तेषां च सखित्वं ज्ञानकर्मकरणेन बुद्धिसहायत्वम् । तथैव तद्वृत्तीनामपि सखीत्वम् । एकैकशतपदेन यदत्रोक्तं, तदेव बृहद्बलत्वेन व्याख्यातं मनः । तस्य बहिर्विषयकज्ञानादाविन्द्रियाधीनत्वादुभयेन्द्रियाणि नायकानि यस्येति बृहद्बलरूपत्वम् । 'एकादशमहाभटा' इत्यत्र तस्य भिन्नतयाप्युक्तत्वाच्छतनायकत्वमपि । तस्याः व्रीडा चोत्तमत्वकृता, सा च जीवे भगवदीयत्वादिशङ्कया । अभगवदीयत्वादिकोटिस्फूर्त्या गजगामिनीत्वम् । एकतरनिश्चये तु पलायेत वा शीघ्रमागत्याश्लिष्येद्वा । न तु कटाक्षेण स्पृशेत् । तेन स्पर्शश्चैकतरनिश्चयार्थमेव तया कृतः । तत्रापाङ्गपुङ्गादयो ज्ञायमाना धर्मास्तेषां च जीवस्य व्यामोहने करणत्वं स्फुटमेव, तथैव स्नेहादीनां तद्वृत्तीनां व्यापारतापि । स्पर्शश्च तत्कार्योऽध्यासः । स च पुरीप्रवेशात्पूर्वमिति लिङ्गशरीराध्यासरूपः सिद्ध्यति । तदेतदुक्तमध्यासस्येत्यादिना ।। १७६½ ।। अतः परं देहाध्यासोऽवशिष्यते तमाहुः, तामित्यादि । एतेनेति 'तां प्रविश्य पुरीं राजन् मुमुदाते शतं समा' इत्यत्र पुरीप्रवेशोत्तरं मोदकथनेन निरूपित इत्यर्थः । अध्यस्तानीति, तेषां स्थूलदेहावयवरूपत्वेन तदध्यास एतान्यप्यध्यस्तानि, ममाहमितियत्कृतमित्यनेनैवं सङ्गृहीतानीत्यर्थः ।। १७७ ।। श्रुतिभागवताद्यनधीन इत्यादि । तथा च शास्त्रानुवर्त्तित्वरूपं स्वातन्त्र्यमेव तस्य पुंस्त्वमित्यर्थः । यथेति यथामोहितः ।। १७८–१७९ ।। त इति, बुद्धिप्राणादय इतीतिलिङ्गशरीराध्यासं विना

नन्वयं हि लिङ्गशरीराध्यास उच्यते, तस्य स्थूलदेहप्राप्तिहेतुत्वात्। तथा च ब्रह्मादीनामपि स्थूलदेहसत्त्वात्तद्धेतुर्बुद्धि-प्राणेन्द्रियगणाध्यासोऽवश्यं वाच्यः। ते च निरूप्यमाणरूपा एवेति कथं ब्रह्मादीनां मतिर्न सेत्युच्यत इत्याशङ्क्य तदीयानां तेषां स्वरूपमाह ज्ञानयोगमया इति।

**निबन्धः—ज्ञानयोगमयास्तेषामिच्छामात्रप्रकाशिनः। मामात्वसिद्ध्यै शङ्का तु प्रार्थनाऽन्यस्य सम्भवात्॥ १८१॥**

प्रकाशः—ते हि योगिनो ज्ञानपूर्णाश्च। तथा च ज्ञानप्रधाना बुद्धिचक्षुरादयो ज्ञानमयाः। क्रियाप्रधानाः प्राणवागा-दयो योगमया इत्यर्थः। तयोस्तथाभावे हेतुः इच्छामात्रेति। यदैव भगवदिच्छा भवत्येभिर्जीवैरेतानि कार्याणि करिष्य इति तेषामेव वा, तदा तेषु तदुभयसत्त्वात्ताभ्यामेव देहेन्द्रियादयः पूर्वमेव सम्पादिताः प्रकाशयुक्ता भवन्तीत्यर्थः। तथा च ज्ञानादि-रूपत्वेनाहङ्काराजन्यत्वादिच्छामात्राधीनत्वेन मायानधीनत्वात्तत्कार्योविद्यापर्वणामपि देहाद्यध्यासानामभाव इतिभावः। नन्वि-यमपि तादृश्येवेति चेन्नेत्याह मायात्वेति। तुशब्दस्तादृशत्वव्यवच्छेदकः। 'त्वं ह्रीः' इत्यादिशङ्का या तस्यां सा मायात्वमेव साधयति। अन्यथैकतरनिर्द्धारमेव कुर्यात्समानरूपत्वात्। "तासां वरोर्वन्यतमा" इति न वदेत्। अतो मोहिकात्वात्पूर्वमयथा-रूपाणि स्वात्मन्युत्तमत्वेन ख्यापितवतीति सा मायारूपैवेत्यर्थः। अत एवाऽन्यं कञ्चन मोहयित्वा मा रमयत्विति शङ्कया "पुरी-मिमाम्, इत्यादिप्रार्थनां कृतवान्॥ १८१॥

**निबन्धः—तत्सान्निध्ये स्वतः स्थातुमशक्तस्तादृशं जगौ। देवतात्वेन वाक् तस्या जीवसन्निधितोऽपि च॥ १८२॥**

प्रकाशः—किंच यद्यपि सा न किञ्चिदिदानीं करोति, तथापि तस्याः सन्निधिमात्रेणाऽपि तां विना क्षणमपि स्थातुमशक्तः सन् "त्वयोपसृष्टो भगवान् मनोभवः" इत्याद्युक्तवान्। देहात्ममतिसान्निध्ये सति देहं विना स्थातुमशक्तो वा तथोक्तवान्। तथा च जीववाक्यैस्तस्या मोहकत्वेन मायात्वमेव सिद्ध्यतीतिभावः। इदानीं बुद्धिवाक्यानि विचारयँस्तद्वचने पूर्ववदेवोपपत्तिमाह देवतात्वेनेति। ननु जीवस्य चेतनत्वेन देवत्वं युक्तं न त्वस्या जडत्वात्। अस्तु वाधिदैविक्याश्चेतनत्वम्, तथाप्यत्र तु भौतिक्या एव वचनानां वाच्यत्वात्कथमुक्तिरित्यत आह जीवसन्निधित इति। अपिना पूर्वसमुच्चयः। चकारात् प्राणेन्द्रियसान्निध्यादपि। १८२। अत्र हि "कस्यासी"ति प्रश्नस्योत्तरं " न विदाम वयम्" इत्यादिना स्वस्य परस्यापीत्यादिना जीवादेरपि कर्त्तुरज्ञानमेवोक्तं तया। तथा चैतेनापि भगवत्कर्तृत्वमेवायाति बुद्ध्यादीनां न मायिकत्वमित्याह अनेनैवेति।

**निबन्धः— अनेनैव मताः सर्वे विरुद्धा विनिवारिताः। मूलज्ञाने स्वनाशः स्यात्स्वरूपे त्वस्ति रूपतः॥ १८३॥**

प्रकाशः—विरुद्धा इति ये मताः अभिमता मायावादादयस्त इत्यर्थः। न च 'न विदामे'तिपदेन भावरूपमज्ञानमेव कारणतया तयोक्तमितिवाच्यम्, तस्य जीवनिष्ठत्वेनोत्तमपुरुषप्रयोगानुपपत्तेः। न च बहुवचनात्स्वस्मिन्नेव जीवं मेलयित्वा वदतीति तथा प्रयोग इतिवाच्यम्। एवं हि तदा वदेद्यदि सा तत्त्वज्ञा स्यान्न चैवम्। तथा च सति सैव न स्यात्, जीव एव ज्ञानसम्भ-वाच्चेति। एतदेव मनसि कृत्वाह मूलज्ञान इति। भगवज्ज्ञाने त्वविद्यानाशाद्देहात्ममतेः स्वरूपनाश एव स्यादित्यर्थः। ननु मायांस्वरूपमपीयं न जानातीति तदेवानयोच्यते। न च 'परस्यापी' त्यादिना जीवादिकर्तृविषयस्याऽप्यज्ञानस्योक्तत्वात्स्वाविद्यायाः स्वस्मिन् कारणत्वासम्भवात्तत्र च जीवाविद्याकार्यत्वेनैव त्वदभिमतत्वान्न तथेतिवाच्यम्। जीवस्याऽनाद्यविद्याकल्पितत्वेन

---

स्थूलेन कार्यासिद्ध्या ब्रह्मादिनामपि लिङ्गशरीराध्यासस्यावश्यकत्वात्। तदुभयसत्वादिति, ज्ञानयोगयोः सत्त्वात्। ताभ्यामित्यस्य प्रकाशयुक्ता इत्यनेन सम्बन्धः। ख्यापितवतीति, 'ऋतेर्थमि'त्यत्रोक्तया रीत्या व्यत्यासेन ख्यात्या प्रकाशितवती। ( मूले ) प्रार्थनान्यस्य सम्भवादित्यस्यार्थमाहुः अत एवेत्यादि॥ १८१॥ तत्सान्निध्येत्यर्द्धस्यार्थमाहुः किञ्चेत्यादि।

इतिभाव इति, इति हेतोर्न ह्ययादिसदृशीतिभावः। पूर्वं समुच्चय इति, देवतात्वसमुच्चयः॥ १८२½॥ ननु बुद्धेर्व-क्त्रीत्वाय देवतात्वाङ्गीकारो न युक्तः। तस्या अविद्याकार्यत्वेन मायिकत्वात्। न च वाक्यवक्तृत्वानुपपत्तिः। स्वाप्निकपुरुषा-णामिव तस्या अपि तथात्वसम्भवादित्याशङ्कां वारयितुं तद्वाक्यार्थं विचारयन्तः कारिकामवतारयन्ति अत्रेत्यादि। अत्र बुद्धि-वाक्येषु 'कस्यासि' 'कस्य पुत्र्यसी'ति प्रश्नस्योत्तरं 'न विदामे' त्यादिना श्लोकेन वर्त्तते। तत्रात्मनश्च परस्यापीत्यादिना स्वस्य जीवादेश्च यः कर्त्ता जनकस्तस्याज्ञानमेवोक्तं तया, तथा चैतेन स्वपरजनकस्वगोत्रनामकारकाज्ञानकथनेनापि कार्यदर्शनतः अज्ञातस्य भगवत एव कर्तृत्वमायातीति न मायिकत्वं बुद्ध्यादीनामित्याहेत्यर्थः। ( मूले ) अनेनैवेति स्वपरादिजनकाज्ञानकथनेनैव। नन्वस्मि-न्वाक्ये, 'न विदामे' त्यनेन भावरूपाज्ञानं परामृश्याग्रिमवाक्यस्थां विदामेति क्रियां चादायोक्तसर्वकारणविषयकज्ञानमेव तयोक्तम्, न तु तदज्ञानमतो न भगवत्कर्तृकत्वं बुद्ध्यादीनां वक्तुं शक्यमित्याशङ्कायां तदनूद्य दूषयति, न चेत्यादि। ननु वयमित्यनेन जीवमपि स्वमध्ये निवेश्य तथा वक्तीति नोत्तमपुरुषानुपपत्तिरित्यत आहुः न च बह्वित्यादि। अज्ञानस्य कर्तृत्वज्ञानं जीवस्य स्वस्मिन् मेलनं च कर्तृत्वादिशून्यब्रह्मज्ञानादपरोक्षात्, तादृशं तु ज्ञानं सकार्याविद्यानाशकमतोऽस्यां तथात्वे त्वज्ञानकार्यायास्याः स्वरूपमेव न

तत्स्वरूपस्याप्यज्ञानत्वेनैतदेव परस्यापीत्यादिनोच्यते यत इति चेद्, अत्र ब्रूमः । यदि जीवस्य जीवत्वमनाद्येव तदा तस्याऽविद्याकल्पितत्वे किं मानम् ? विद्यया तन्नाश एव, इति चेन् न, विद्ययाऽविद्याकार्यसंसारनाश एव, न तु भगवत्कार्यप्रपञ्चस्येति पूर्वमेवैतन्निरासात् । किं चैवं स्वरूपहानिरूपतां मोक्षे वदँस्तस्य च पुरुषार्थत्वेनोपादेयतां वदन्निरपत्रपोऽसि । ननु जीवभावसत्त्वान्मुक्तस्यापि पुनः संसारित्वं स्यादिति चेन्न । तत्कारणाविद्याया नाशात्, सततं भगवत्सङ्गतत्वात् "मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इत्यादिवाक्याच्चेत्यलं विस्तरेण । तस्याः स्वस्वरूपविषयकं परं ज्ञानमस्ति स्वरूपं पश्यतीति, तदपि न याथात्म्येनेति तद्व्यावर्त्तकस्तुशब्दः । एतदुक्त'मिहाद्य सन्तमि'त्यनेन ॥ १८३ ॥

ननु प्रार्थितस्यैवाभिनन्दनं युक्तं न त्वप्रार्थितस्यापि । तत्र च पुरीप्रवेशमात्रस्य प्रार्थना न शतवर्षावधिकस्य तत्कुतः "शतं समाः" इति वचनमस्य इत्याशङ्क्य तदभिप्रायमाह अविरक्तिरिति ।

निबन्धः—अविरक्तिर्वर्षशतमदभ्रवचनान्मतम् । अतोऽभिनन्दनं त्वन्यनिवृत्तिश्च निरूप्यते ॥ १८४ ॥

प्रकाशः—"कामभोगान् शतं समाः" इतिवाक्येन वर्षशतमध्ये कदाचिदपि न विरक्तिरित्युच्यते । ननूक्तं प्रार्थितार्थस्यैवेत्यादि तत्राह अदभ्रवचनादिति । प्रार्थनाया'मदभ्रकर्मणे'त्युक्त्वा तस्यापि वर्षशतं सम्मतम् । तथाहि यावत्पुर्यां स्थितिस्तन्मध्ये यदि विरागः स्याद्विषयेषु तदा क्रमेण देहात्ममतेस्त्यागात्कापट्यमेव स्यादनया सह पुरप्रवेशकर्मणि । मध्ये अत्यागे ह्यदभ्रत्वम् । पुरे च स्थितिः शतवर्षावधिकैव, अतो हेतोः "दिष्ट्यागतोसि" इत्यादिनाऽभिनन्दनम् । अन्यशङ्कयैव प्रार्थनायाश्च कृतत्वात् । 'कं नु त्वदन्यमि'त्यादिनाऽन्यनिवृत्तिश्च मूले निरूप्यत इत्यर्थः ॥ १८४ ॥

अन्तिमश्लोकस्य तात्पर्यमाह क्रियापरत्व इति ।

निबन्धः—क्रियापरत्वे सिद्धिः स्यादिति बाह्वोर्हि वर्णनम् । रोदने गीतिरेवाऽत्र गानं निद्रा च वर्णिते ॥ १८५ ॥

प्रकाशः—ज्ञानस्य देहात्ममतिविरोधित्वेन तत्परत्वे स्वयमेव न सिद्ध्येदिति क्रियापरत्वसिद्ध्यर्थं तत्प्रधानबाह्वोर्वर्णनमित्यर्थः । 'उपगीयमान' इत्यस्य श्लोकस्यार्थं निरूपयँस्तत्र गानस्वरूपमाह रोदन इति । बाल्यसम्बन्धिनी जाग्रदवस्था निद्रा चोच्यते तत्र रोदनविषये अत्र परोक्षवादे गानमेवाभिप्रेतम् । यद्वा । अत्र लोके यदैवोत्पन्नो रोदिति तदैव सर्वेषां गीतिर्भवतीति रोदनमेव गानमिति वर्णितम् । 'ह्रादिनीमाविशत्' इति निन्द्रा च वर्णितेत्यर्थः ॥ १८५ ॥

"महिषी यद्यदीहेत" इत्यारभ्याध्यायसमाप्तिपर्यन्तस्य तात्पर्यं वदति बुद्धेरिति ।

निबन्धः—बुद्धेः सर्वत्र मुख्यत्वात्तस्वेनाऽन्यस्य सङ्कथा । बाल्ये जागरणं सुप्तिर्न स्वप्न इति बोधितम् ॥ १८६ ॥

---

स्यादिति दूरापास्तं तथावचनमित्यर्थः । ननु जीवस्य तादृशज्ञानवत्त्वं त[1]त्सत्ताबाधकं न तु तदीयमपीत्यत आहुः जीव इत्यादि । सा हि जीवं स्वस्मिन् मेलयित्वा वदतीति त्वयोच्यत इति जीवे एव ज्ञानमागतम् । अ[2]न्यथा तु घटादिवत्केवलजडत्वादेव ज्ञानासम्भव इत्युभयथापि वाक्यकथनस्यैवानुपपत्तिरित्यर्थं मनसिकृत्वाहेत्यर्थः । एवमज्ञाननिष्ठकर्तृत्वज्ञानपक्षे दूषिते तत्स्वरूपविषयकाज्ञानपक्षमादाय पुनः शङ्कते ननु मायेत्यादि । ननु मायास्वरूपाज्ञानमत्र न वक्तुं शक्यम्, परस्यापीत्यनेन जीवप्राणादिकर्तृविषयकाज्ञानस्यापि तत्रोक्तत्वात् । स्वादिरूपस्य कार्यस्य प्रतीतिसिद्धत्वेन कर्त्रपेक्षायां स्वाद्यविद्यायाः कारणत्वस्यात्माश्रयान्योन्याश्रयाभ्यां वक्तुमशक्यत्वेन जीवाविद्याया एव कर्तृत्वस्य त्वया वाक्यत्वान्मायास्वरूपाज्ञानमस्यास्त्वया न वक्तुं शक्यमिति सिद्धान्तिशङ्कां न चेत्यादिनानूद्य समाधत्ते जीवस्येत्यादि । अज्ञानत्वेनेति जीवकल्पिकाऽविद्यास्वरूपस्यानादित्वादज्ञातत्वेन परस्यापीत्यादिनापि मायास्वरूपाज्ञानमेवोच्यते यतोऽतो न बुद्ध्यादीनां भगवत्कर्तृकत्वमित्यर्थः । अत्र समादधते, अत्र ब्रूम इत्यादि । पूर्वमेव तन्निरासादिति, शास्त्रार्थप्रकरण एव जीवस्वरूपस्य कल्पितत्वनिरासात् । ननु यथा अविद्यापक्षो भवद्भिर्न मन्यते, तथा भगवत्पक्षो मयापीति तौल्यमिति चेत्तत्राहुः, किञ्चेत्यादि, भगवत्कर्तृकत्वपक्षं न मन्यसे चेन्न मन्येथास्तथापि जीवस्वरूपस्याविद्याकल्पितत्वं मोक्षस्याविद्यानाशरूपत्वं च त्वयाङ्गीक्रियत एवेति मोक्षस्योपादेयता न साधयितुं शक्येति नारदप्रयासस्तव मते वृथैव स्यादितिमूलविरोधस्तव दुर्वार इत्यर्थः । जीवभावसत्वादिति, सायुज्ये ब्रह्मभावानङ्गीकारेण जीवभावसत्त्वात् । सततं भगवत्सङ्गतत्वादि, अलककौस्तुभादिरूपेण तत्सङ्गतत्वात् । मामित्यादि । उक्तगीतावाक्येन सालोक्यादावपि पुनर्जन्माभावस्य मर्यादया सिद्धत्वात् । अलं विस्तरेणेत्यनेन दूषणान्तराणामपि सत्ता बोधिता । तानि च तन्मते 'न विदामे'त्यादेर्विधेयकोटित्वेन तद्गतबहुवचनस्याविवक्षितत्वकल्पनं उपाख्यासदर्थवादत्वं विद्वन्मण्डनाद्युक्तानि च बोध्यानि । एवं 'न विदामे'तिवाक्यस्यार्थो विचारितः । अग्रिमस्य विचारयन्ति, तस्या इत्यादि । इदं 'स्वरूपे त्वस्ति रूपत' चरणस्य विवरणम् ॥ १८३–१८४ ॥ अन्तिमश्लोकस्येति, 'कस्या मनः स्यादि'त्यस्य । अत्रैवं विभागो ज्ञेयम् । 'का त्व'मित्यस्य ( ४–२५–२६ ) 'इहाद्य सन्तमात्मानं

---

१. बुद्धिसत्ताबाधकम् । २. बुद्धिनिष्ठां जीवस्य स्वस्मिन् मेळनाभावे । इति कस्यचित् टिप्पणम् ।

प्रकाशः—सर्वत्र सर्वकार्येषु। अन्यस्य जीवस्य तत्त्वेन तदनुवर्त्तित्वेन। 'सप्तोपरि कृतद्वार:' इत्यारभ्य 'याति जायात्मजोद्भवम्'' इत्यन्तेन भोगसाधनस्थानानां निरूपणाद्भोगस्य च बुद्ध्यधीनत्वात्तन्निरूपणेन बुद्धिवशजीवकथैव सम्यङ्निरूपिता भवतीति 'सप्तोपरी'त्यादिग्रन्थ इतिज्ञापनाय समित्युपसर्गः। अवस्थाद्वयनिरूपणेनैवाध्यायसमाप्तेस्तात्पर्यमाह बाल्य इति। अध्यायसमाप्त्येति ज्ञेयम्, (बाल्ये) पूर्ववासनया स्वप्नसम्भवेति निश्चये प्रमाणाभावात्तथा॥ १८६॥

(अ० २६) अग्रिमाध्याये स्वप्नावस्थानिरूपणे हेतुमाह किञ्चित्प्रौढ इति।

**निबन्धः—किञ्चित्प्रौढे तदप्याह रूपं चाऽस्यापि वर्ण्यते। बालत्वात्स्थिरता नास्तीत्यत एवं कथा ततः॥ १८७॥**

प्रकाशः—किञ्चित्प्रौढस्य स्वप्नानुभवो भवतीति तादृशे स्वप्नमप्याह। तत्कालीनस्य सपरिकरस्य जीवस्य स्वरूपं च "स एकदा महेष्वासः" इति त्रिभिर्वर्ण्यते। "चचार मृगयाम्" इति सप्तभिः स्वप्नस्वरूपं च। ननु गन्धर्वनगरत्वेनैव स्वप्नरूपनिरूपणं तत्प्रवेशजनितसुखाभिमतिनिर्वृत्तत्वेन जीवस्वरूपनिरूपणं च कुतो न कृतं भवाटव्यामिव। कुतश्च मृगयारूपं क्लिष्टं निरूपितमित्याशङ्क्य तत्र हेतुमाह बालत्वादिति। अत्र हि बालस्यैव किञ्चित्प्रौढस्याऽवस्थोच्यते। स चाऽस्थिर इति मृगयायां च तादृशत्वं भवतीत्येवम्रूपा कथोक्तेत्यर्थः। यद्वा। न स्वप्न इतिबोधितमित्युक्ते, तर्हि किं साऽवस्थैव नास्तीत्याशङ्कायां नेत्याह। किञ्चित्प्रौढे स्वप्नमप्याहाऽग्रिमाध्याये। 'सप्तोपरी'त्यादिना पुरस्य स्वरूपमपि वर्ण्यते। चकारात्तत्कार्यं च। ननु "महिषी यद्यदीहेत तत्तदेवान्वर्त्तत" इत्येतावतैव सर्वोक्तेः "क्वचित्पिबन्त्याम्" इत्यादेः किं प्रयोजनमत आह बालत्वादिति॥ १८७॥

दशभिः स्वप्ननिरूपणानन्तरं तदध्याय एवाऽग्रिमप्रकरणान् विभजते आक्रोश इति।

**निबन्धः—आक्रोशश्चाऽनुसन्धानं चिन्तनं चाऽपि वर्ण्यते। प्रौढस्य तु कथा प्रोक्ता दृढासक्तेरनन्तरम्॥ १८८॥**

प्रकाशः—"ततः क्षुत्तृट्परिश्रान्तः" इति षड्भिराक्रोशः। चकाराद्रामाणामुत्तरञ्च। ततस्त्रिभिरनुसन्धानम्। ततः षड्भिश्चिन्तनम्। च समुच्चये। संसारित्वेन वहिर्मुखत्वेपि चिन्तनेनन्तर्मुखत्वाद्ब्राह्मणकुलादन्यत्र मुररिपोर्दासादितरत्रेत्युक्तमित्यपिशब्दार्थः। अध्यायार्थमुपसंहरति प्रौढस्येति।

(अ. २७) अग्रिमाध्यायार्थं विचारयँस्तत्र विनश्यत्तायाः कथमध्यार्थत्वं पुत्रादिसम्पत्तेरपि निरूपणादितिशङ्कायां तत्रोपपत्तिमाह दृढासक्तेरिति। विनश्यता हि विनाशकारणसामग्रीसान्निध्यं जीवस्य जराज्वरादिसम्बन्ध एव हि सा। सा च देहादिविषयदृढासत्त्यनन्तरभाविभिर्देहात्मबुद्धिकृतैस्तादृगिन्द्रियपरिणामबुद्धिवृत्तिविषयभोगैश्च सम्पाद्यते। अन्यथा चेद्योगवान् स्यात्तदा जरादिसम्बन्ध एव न स्यात्। तथा च तन्निरूपणं विनश्यत्तानिरूपणमेवेत्यर्थः॥ १८८॥

**निबन्धः—देहात्मबुद्ध्या यत्सिद्ध्यै तद्धि तस्य प्रपञ्च्यते। प्रौढस्य राजसत्वाद्धि महिषी साऽपि तादृशी॥ १८९॥**

प्रकाशः—अत एव देहात्मबुद्धेरेवाऽत्र प्राधान्यमित्याद्यश्लोके तस्याः स्वातन्त्र्यं निरूपितम्। देहात्मसत्याभावे वक्ष्यमाणस्य कस्याऽप्यसम्भवात्तत्कारणत्वेन तस्याः कथनं युक्तमिति हितशब्दार्थः। तामस्या अपि देहात्मबुद्धेः "इत्थं पुरञ्जनम्" इत्यादिना राजसीत्वेन निरूपणे हेतुमाह प्रौढस्येति। साऽपि तामस्यपि तादृशी राजसीत्यर्थः। महिषीत्वाद्राजानुगुणत्वं युक्तमिति हिशब्दार्थः। विषयभोगे रजोगुणस्यैव प्रयोजकत्वात्सा तद्भोगानुकुलैव जातेत्यर्थः पर्यवस्यति॥ १८९॥

---

विदाम' (४–२५–३४) इत्युत्तरम्। (४–२५–२६) 'कुत' इत्यस्योत्तरं (४–२५–३४) 'न ततः परमि'ति। 'येनेयं निर्मिते'त्यादि (४–२५–२४) तु स्वसामर्थ्यबोधकम्। सामर्थ्यं शरणतानिमित्तत्वमात्रम्। ("निमातृत्वमात्रम्" पाठः) न च विचरन्यदमाद्राक्षीः कयाचिन्निर्म्मितं क्षिये'तिवाक्यविरोधः। 'अन्ते या मतिः सा गतिरि'तिन्यायेन पूर्वप्रज्ञायाः कर्मादिसहायमात्रतया तत्रापि पदत्वेन दर्शनस्यैव मुख्यतया विवक्षितत्वादिति। किञ्चिकीर्षसि' (४–२५–२६) त्यस्योत्तरं 'दिष्ट्ये'त्यादिभिः सप्तभिः [ ४–२५–३६ ] सोपपत्तिकमिति। तत्रेत्यादि तत्र बाल्यसम्बन्ध्यवस्थाद्वये रोदनविषये बालस्य मात्रादिकृतं गानमेव परोक्षवादे बाह्यसामग्रीरूपत्वेनाभिप्रेतमित्यर्थः। न च परोक्षवादत्वहानिः। एवमुक्तावपि विवक्षितार्थस्यास्फूर्त्त्या तस्याक्षतत्वात्। ननु गानांशे त्वपरोक्षतैवेति चेन् नायं दोषः, मोहप्रसादहर्षाणामग्रे ग्रहणादपरोक्षताया अपि प्रस्तुतोपयोगित्वेन क्वचित्क्वचिद्विवक्षितत्वादिति। अस्मिन्नध्याये बाल्यावस्था तु 'उपगीयमान' इतिपद्येन [ ५–२५–४४ ] 'नैच्छन्ननुकरोत्यज्ञः क्लैब्यात् क्रीडामृगो यथे'त्यर्द्धेन [ ४–२५–६२ ] च स्फुटतीति ज्ञेयम्। बुद्ध्यावर्त्तित्वेनैवात्र जीवकथास्तीत्यत्र गमकमाहुः सप्तेत्यादि। 'बोधितमि'ति पदस्यार्थमाहुः अध्यायेत्यादि॥ १८६॥ एवं सपादाष्टादशभिः पञ्चविंशाध्यायो विचारितः।

पादोनाभ्यां षड्विंशार्थमाहुः अग्रिमेत्यादि। एतस्याध्यायस्य पूर्वशेषताबोधनाय किञ्चित्प्रौढेतिपद्यस्य व्याख्यानान्तरमाहुः, यद्वेत्यादि। अस्मिन्पक्षे अयं श्लोकः पूर्वाध्यायार्थस्यैव सङ्ग्राहक इति सपादोनविंशतिभिस्तदर्थोक्तिः पादोनेनास्येतिबोध्यम्, उत्तरमिति, एकेनोत्तरम्। प्रौढेस्येति, किञ्चित्प्रौढस्य चेत्यर्थः॥ १८७¾॥

अतः परमष्टभिः सप्तविंशाध्यायार्थमाहुः अग्रिमेत्यादि। तन्निरूपणमिति, पुत्रादिसम्पत्तिनिरूपणम्॥ १८९॥

इन्द्रियपरिणामादीनां पुत्रादित्वेन निरूपणे तात्पर्यमाह बहिरिति।

**निबन्धः—बहिर्यावान् हि संसारो यस्यान्तःकरणेपि सः। अतः पुत्रादिसम्पत्तिरविशेषेण वर्ण्यते ॥ १९० ॥**

प्रकाशः—यस्य पुरुषस्य यावान् संसारो बहिरस्ति तावानन्तःकरणेप्यस्ति। अन्तःकरणे तदभावे बहिरपि तदसम्भवादिति ज्ञापनाय बाह्यवत्पुत्रादिसम्पत्तिरविशेषेणैवान्तरेत्युक्तेत्यर्थः। यद्वा ननु सर्वेषां जीवानां तावन्त इन्द्रियपरिणामास्तावत्यो वृद्धिवृत्त्यादयश्च भवन्त्येवेति न नियमः। केषाञ्चिन्मध्य एव मृतेः सम्भवात्। न च शतवर्षजीविन एवेदमुच्यत इति। साधारण्यव्याघातात्तत्कथं शतान्येकादशेत्यादीत्युक्तमत आह बहिरिति। पूर्ववद्, बाह्यसंसारस्यान्तःकरणपूर्वकत्वमात्रे यतस्तात्पर्यं तस्य सर्वत्राविष्टत्वादतो हेतोः सा सर्वेषां जीवानामविशेषेणैव निरूप्यत इत्यर्थः ॥ १९० ॥

यागे बहिः सर्वसाधारण्यासम्भवाद् "ईजे च क्रतुभिः"इत्यस्यार्थमाह स्वल्पेपीति।

**निबन्धः—स्वल्पेऽपि हि मनोराज्यं यथा तत्त्वत्र वर्ण्यते। नित्यातिरिक्ते दोषः स्याद्वधेनेति विनिश्चितम् ॥ १९१ ॥**

प्रकाशः—इज्यत्वेनाल्पफलदातृणामुक्तत्वादल्पेऽप्यर्थेऽस्य मनोरथ उच्यते। सोऽपि यथा येन प्रकारेण परोपद्रवरूपेण सोत्राऽस्मिन्वाक्ये वर्ण्यत इत्यर्थः। तुशब्दो बहिरपि यागपक्षं व्यावर्त्तयति। ननु प्राचीनबर्हिषो वैधहिंसाकर्तृत्वादस्य च तद्विपरीतत्वाद् "यथा भवान्" इति दृष्टान्तोऽयुक्त इत्यत आह नित्यातिरिक्त इति। अग्निहोत्रादिपञ्चकातिरिक्त इत्यर्थः। नित्योपयोगित्वेन पश्वादिकामनया कृतं यत्कर्म तदतिरिक्त इत्यपि ज्ञेयम्। अन्यथा विधिविरोधः स्यादित्येतत्सर्वं सर्वनिर्णयप्रकरणे निरूपितम्। एतदेवाभिसन्धाय विनिश्चितमित्युक्तम्। अत्र च 'नानाकाम' इति वचनादताद्दशत्वात्कर्मणो दोषजनकत्वमेवेति युक्तो दृष्टान्तः। अत एव "भो भो प्रजापते राजन् पशून् पश्य त्वयाऽध्वरे" इति सञ्ज्ञप्तपशुदर्शनमपि सङ्गच्छते। अन्यथा तेषां सद्गतिश्रवणं विरुद्धयेत ॥ १९१ ॥

अतः परं "आससाद स वै कालः" इत्यादि विचारयति। तत्र दिवसरात्री गन्धर्वत्वेन निरूप्य तैः सह प्राणस्य युद्धनिरूपणाभिप्रायमाह कालस्येति।

**निबन्धः—कालस्य नाशकत्वं हि सर्वथैव सदापि हि। नित्यप्रलयरूपेण सन्ततिर्न निवार्यते ॥ १९२ ॥**

प्रकाशः—कालस्तु दिनादिरूपोपि सर्व एव मरणकर्त्तैव। सदापि बाल्यादिष्वपि। तथापि स तु लयो निवार्यते, परं तु चतुर्विधप्रलये नित्यप्रलयरूपेण या सन्ततिः सा न निवार्यते। एतदुक्तं "परिवृत्त्या विलुम्पन्ति सर्वकामविनिर्मिताम्" इत्यन्तेन ग्रन्थेन ॥ १९२ ॥ अग्रिमश्लोकार्थमाह तत्रेति।

**निबन्धः—तत्र प्राणस्य हेतुत्वमिन्द्रियाणां बलं ततः। इन्द्रियाशक्तितो ज्ञातः स्थूलप्राणपरिक्षयः ॥ १९३ ॥**

प्रकाशः—सर्वथा यो नाशस्तन्निवारणे प्राणस्यैव हेतुत्वम्। प्राणस्थित्यैव देहस्थितेः। इन्द्रियाणामपि बलं प्राणत एव। ननु चिन्ताहेतुप्राणक्षयज्ञानमस्य कथमत आह इन्द्रियाशक्तित इति। स्थूलेति। महत्कार्यकरणसामर्थ्यमिन्द्रियाणां यस्मात्स स्थूलः प्राणः। तादृशं सामर्थ्यमेव वा स्थूलत्वं प्राणानाम्। केवलं जीवनसम्पादकः सूक्ष्मः। अतः कार्याभावेन कारणाभावानुमानमित्यर्थः ॥ १९३ ॥

ननु प्राणेन्द्रियादीनां स्वरूपतः सत्त्वात्तैश्च भोगसम्भवाच्चिन्ताकुत इत्यत आह पुत्रादीति।

**निबन्धः—पुत्रादिविषयाः सर्वे कालेन द्विविधाः कृताः। नाशोपयोगराहित्यभेदेनाऽऽस परं स्वतः ॥ १९४ ॥**

प्रकाशः—इन्द्रियपरिणामबुद्धिवृत्तिरत्यादिविषया इत्यर्थः। द्वैविध्यमेवाह नाशेति। केषाञ्चिन्नाशः केषाञ्चित्स्थितानामपि कार्योपयोगराहित्यम्। यद्यपि कालः सर्वदा विशिष्टः। न ह्यस्मिंस्तदा काचन नाशोपयोगिनी कृतिः कालेन क्रियते तदैवान्यस्येन्द्रियादिवृद्धिदर्शनाच्च, तथापि तावति काले गते सर्वत्र सर्वं तथा भवतीति कालकृतमित्युच्यते, परं तु स्वत एवेन्द्रियादिस्तथा भवति तदाह परं स्वत इति। स्वतः परमिन्द्रियादिस्तथा आसेत्यर्थः। तर्हि पूर्वमेवैवं कुतो न स्यात्? न स्यात्, स्वसम्बन्धितावत्कालस्य निमित्तत्वात्। तर्हि स्वत इति कथम्? इत्थम्, एकस्यैव कालस्य कञ्चित्प्रति शतवर्षात्मकत्वं कञ्चित्पोडशवर्षाद्यात्मकत्वं च दृश्यते। तत्रावच्छेदकेन भाव्यमवश्यम्। स च तत्तत्सम्बन्धनिरूपकः स स पदार्थ एवेति। यत्र कालसाम्येपि कस्यचिदिन्द्रियादिसामर्थ्यं नापैति तत्रेश्वरेच्छा प्रारब्धं वा नियामकं ज्ञेयम्। यद्वा परं स एवेत्यग्रिमश्लोकोक्तं भोगोऽज्ञानं च। तद्द्वयं स्वत एव प्रारब्धादेव, न त्विन्द्रियसामर्थ्येनेत्यर्थः ॥ १९४ ॥

---

ननु कालस्य नित्यप्रलयजनकत्वेन बलिष्ठत्वात्प्राणस्य तत्राकिञ्चित्करत्वात्तेन युद्धयतां किं क्रियत इत्यपेक्षायां प्राणस्य कार्यमाहुः तथापि स तु लयो निवार्यत इति, मरणरूपो लयः प्राणेन निवार्यत इति तस्य कार्यमित्यर्थः। सन्ततिरिति। प्रलयसन्ततिः। इदमेवोपपत्त्या वक्तुमाहुः अग्रिमेत्यादि। अग्रिमश्लोकार्थमिति 'ते चण्डवेगानुचरा' इत्यादिश्लोकद्वयार्थम्; (भा०)

इन्द्रियादिसामर्थ्यनाशमुक्त्वा शरीरसामर्थ्यनाशहेतुं निरूपयति स्वस्यापीति ।

**निबन्धः—स्वस्याप्यशक्तिकरणे कारणं तु जरैव हि । अप्रतीकरणं तस्या वक्तुमाह कथां तथा ॥ १९५ ॥**

प्रकाशः—जरासम्बन्धमात्रे निरूप्ये ततो विहितेत्यादिना तत्कथानिरूपणस्य प्रयोजनमाह अप्रतीकरणमिति ॥ १९५ ॥

तत्र "कालस्य दुहिता" इत्यादि श्लोकचतुष्टयस्य तात्पर्यमाह अनुग्रहादीति ।

**निबन्धः—अनुग्रहादिकर्तृत्वाद्देवता मृत्युबोधिका । विनश्यत्तवमेपैव नाशोऽतः परमुच्यते ॥ १९६ ॥**

प्रकाशः—अनुग्रहः पूरौ । आदिशब्देन निग्रहो नारदे । तेन देवता सेति ज्ञापितम् । तस्याः कार्यमाह मृत्युबोधिका । यदैव सा प्रविशति तदैव मृत्युरागत इति ज्ञायत इत्यर्थः । अध्यायार्थमुपसंहरति विनश्यत्तेति । कालेन कृत्वा जीवशक्तेरभिभवोऽध्यायार्थः । सोऽपि "एवं कृपणया बुद्ध्या" इत्येतदन्तो न तु "अव्यक्तो भीमसैनिकः" इत्यन्त इति मतनिराकरणायैवमेपैवेत्युक्तम् । तथा हि । अत्र हि जीवशक्त्यभिभवनिरूपणं न मुख्यप्रयोजनतया, किन्तु नाशहेतुत्वेनेति तेनापि वाच्यम् । तथा च, तदपेक्ष्येन्द्रियादिशक्तिह्रासेष्वप्यनुगतैका विनश्यत्तैवाध्यायार्थत्वेन वक्तुमुचिता । एतदुक्तमेवमेवेत्यनेन । नन्वस्त्वेवं तथाप्यध्यायस्तदवधिरेवेति चेत्तत्राह एषैवेति । अत्र विनश्यत्तैव निरूप्या सा चा'ऽव्यक्तो भीमसैनिक' इत्यन्तनिरूपितार्थरूपैवेत्यध्यायस्तावत्पर्यन्त एवेत्यर्थः ।

( अ. २८ ) अग्रिमाध्यायार्थं प्रतिजानीते नाश इति ॥ १९६ ॥ 'तत्र सैनिका' इत्यादिश्लोकपञ्चकस्यार्थं वदँस्तत्र प्रज्वारादीनामपि नाशकत्वे स्वातन्त्र्यभ्रमाभावायाह ज्वरेति ।

**निबन्धः—ज्वररोगादिसंयुक्ता सर्वनाशकरी तु सा । अधिकारि शरीरं च नाशयत्येव दोषतः ॥ १९७ ॥**

प्रकाशः—"ययाहि मे पृतनायुक्ता" इति वाक्ये भयेनान्येषां सहभावमात्रस्योक्तत्वात्सैव नाशकरी । एवं तेषामनुपयोगमाशङ्क्योक्तं संयुक्तेति सर्वेति । देहशक्तिबुद्धियादिनाशकत्वेपि सर्वांशेन नाशकत्वं ज्वरादियुक्ताया एवेति तत्सहभूता सा यथेत्यर्थः । हरिभक्तशरीरव्यावर्त्तनाय तुशब्दः । ननु तदैव देहस्याऽनाशान्नाऽस्या नाशकत्वं किं तु "तदुदितः स हि यो यदनन्तरः" इति न्यायाद्भयस्यैवेति शङ्कां वारयन्नव 'प्रार्दयन् सकलां पुरीम्' इत्यादिना सामान्यतो निरूप्य "कन्योपगूढो नष्टश्रीः" इत्यादिना पुनर्विशेषनिरूपणस्य तात्पर्यमाह अधिकारीति । कर्मादिष्वधिकारिरूपं तत्करणसमर्थं यच्छरीरं तन्नष्टश्रीत्वादिदोषकरणतो नाशयत्येवेत्यर्थः ॥ १९७ ॥

ननु चिन्तासमये प्राचीनबुद्धिवृत्त्यादीनामसम्भवात् "दुहितॄः पुत्रपौत्रांश्च" इत्यादि कथं सङ्गच्छत इत्यत आह अन्तस्थ इति ।

**निबन्धः—अन्तःस्थ एव विषयः सूक्ष्मरूपण यः स्थितः । देहत्यागे सर्वनाशो देहमत्या भविष्यति १९८ ॥**

प्रकाशः—विषयश्चिन्ताविषयः पुत्रादिः । सूक्ष्मरूपेण वासनारूपेण । सर्वस्य बुद्धिवृत्त्यादेर्नाशो भविष्यति, देहात्ममतिरेव तत्र हेतुः । देहस्यैवात्मत्वेन ज्ञानात्तत्त्यागे सर्वनाशं मन्वानस्तथा चिन्तां कृतवानित्यर्थः ॥ १९८ ॥

---

मूले 'प्रजागर'पदेन मुख्यः प्राण उच्यते । इतिबोध्यम् । 'क्षीयमाण' इतिश्लोकस्य [ ४-२७-१७ ] तात्पर्यमाहुः ननु चिन्तेत्यादि । कार्याभावेत्यादि । प्रयोगस्तु मम प्राणसामर्थ्यं पूर्वापेक्ष्या न्यूनम्, तत्कार्यरूपेन्द्रियसामर्थ्यस्य न्यूनत्वात्, यत्र यत्र कार्यसामर्थ्यस्य न्यूनत्वम् । तत्र कार्यकरणसामर्थ्यस्य न्यूनत्वम्, यथा वह्निज्वालासु । यत्र नैवं तत्र नैवम्, सद्वयस्ये इति ॥ १९४ ॥

तर्हीति, काले तत्कारकत्वस्यौपचारिकत्वेनेन्द्रियाणामेव स्वतः क्षीयमाणत्वे । तर्हीति स्वसम्बन्धिकालस्येन्द्रियाशक्तिजनकत्वे । स स पदार्थं इति, देहसम्बन्धोत्तरभावी भोग्यादृष्टसम्पादितो भोग्यपदार्थः । यथा बहुभोजन आलस्यम् । विरुद्धभोजने रोगोत्पत्तिः, स्वल्पभोजने बलाभावो, यथोचितभोजने तु सामर्थ्यमिति । अत्र शतवर्षाद्यात्मकत्वे देहसम्भवः प्रयोजकः । इन्द्रियसामर्थ्ये तु तदुत्तरं सम्बध्यमान उक्तविधपदार्थ इति विभागः । तथासतीन्द्रियादिसामर्थ्यं प्रतिकालस्य प्रयोजकत्वं वा सहकारित्वं वा, जनकत्वं तु भोगस्य पदार्थस्य वा । येन स्वत् इत्यस्य भोगाद्भोग्याद्वेत्यर्थः सिद्ध्यति । ननुकचित्कचिद्व्यभिचारोपि दृश्यत इति तत्परिहारायाहुः यत्रेत्यादि । अयं विचारः प्रकृतानुपयुक्तत्वाद् व्यर्थ इत्यरुचया व्याख्यानान्तरमाहुः यद्वेत्यादि । तेन देवता सेतिज्ञापितमिति । एनेन बुद्धिप्रभृतिषु देवतात्वशरीरित्वाद्यङ्गीकारस्यापि युक्तत्वं बोधितम् । तावत्पर्यन्त एवेत्यर्थ इति, तथा च, परमते ध्यायार्थातिक्रमकल्पना असङ्गतैवेत्यर्थः । एवमष्टभिः सप्तविंशाध्यायो विचारितः ।

अतः परं पादोनैः षोडशभिरष्टविंशाध्यायं विचारन्ति अग्रिमाध्यायेत्यादि निरूप्येति, नाशकत्वं निरूप्य । चिन्ताविषय इत्यादि, तथा चात्र बुद्ध्यादिवृत्तयस्तेन रूपेण नोच्यन्ते । किन्तु, ये बाह्याः सन्तो वासनारूपेणान्तरत्वमापन्नास्तेभिप्रेयन्त इत्यर्थः ।

पूर्वमनिरूपणेऽधुना च तन्निरूपणे हेतुमाह तद्धेतुरिति ।

निबन्धः—तद्धेतुः कण्ठरोधादि तस्मिन् जातेऽन्वतप्यत । न स्मृतिः कृष्णदेवस्य मरणेऽपीति तत्कथा ॥ १९९ ॥

जीवे गते तु सर्वेषां गतिस्तस्य बलाद्यमात् । नित्योऽपि विधिहीनश्चेन्नरकायैव नान्यथा ॥ २०० ॥

प्रकाशः—आदिपदेन तत्कार्यम्, 'लोकान्तरं गतवती' त्यादिना तत्कथनस्य प्रयोजनमाह न स्मृतिरिति । तत्कथा चिन्ताकथा, तदैव भयागमनकथा वा ॥ १९९ ॥ सर्वेषां प्राणादीनाम् । तस्य जीवस्य गतिस्तु यमाधीनेत्यर्थः । ब्रह्मांशत्वेनाऽयुक्तत्वेपि यमस्य स्वाधिकारबलात्तथा । ननु "तं यज्ञपशवोऽनेन" इति कथमुपपद्यते नित्यत्वेन विहितत्वात्तस्येत्यत आह नित्योपीति ॥ २०० ॥ 'अनन्तरपार' इत्यस्यार्थमाह कुटुम्बेति ।

निबन्धः—कुटुम्बपोषणफलमनुभूय चिरं पुनः । देहात्ममतिदाढर्च्येन प्राकृतोऽभूदितीर्यते ॥ २०१ ॥

प्रकाशः—"तामेव मनसा" इत्यस्यार्थमाह देहात्मेति । "यं यं वापि स्मरन् भावम्" इति वाक्यानुसारेण पुनस्तथैवाऽभूदित्युच्यत इत्यर्थः ॥ २०१ ॥

संसारमार्गकथनमुपसंहरन् पुनर्जन्मान्तरस्याप्यान्तरबाह्यकथानुक्तौ हेतुमाह पुरञ्जनेति ।

निबन्धः—पुरञ्जनकथा पूर्वसिद्धैवेति न सोच्यते । बहिः कथाऽपि येनाऽयं मुच्यते स निगद्यते ॥ २०२ ॥

प्रकाशः—बहिः कथापि पूर्वसिद्धैवेतिसम्बन्धः । अतः परं येन मार्गेणाऽयं मुक्तो भवति स मार्गः "अनन्तरं विदर्भस्य" इत्यादिना निरूप्यत इत्याह येनायमिति ॥ २०२ ॥

निबन्धः—बाह्यानामान्तरत्वेन न विशेषोऽस्ति कश्चन । तदा स्त्रीत्वेन जातस्य यदासीत्स्पष्टमेव तत् ॥ २०३ ॥

तथा परोक्षता नाऽर्थे शब्दमात्रे भविष्यति ।

( अथापि ह्यविवेकेन । )

प्रकाशः—ननु संसारमार्गान्मुक्तिमार्गे ह्यान्तरकृत एव विशेषो नाऽन्यः । तथा चैतत्सदृश एव सोपि मार्गः, परमन्तर्मुखतया क्रियमाणत्वेनान्तरोयम्, बहिर्मुखतया क्रियमाणत्वेन बाह्यत्वं तस्येति विशेष इत्यतिदेशेनैव ज्ञातुं शक्यत्वाद्विशेषनिरूपणं व्यर्थम् । तथाहि, तत्र देहात्ममतिसङ्गेनेन्द्रियाद्यध्यासेन च तद्वृत्तितत्परिणामादयः पुत्रादिसन्तानत्वेनोक्ता यथा तथा भगवानात्मेतिमतिसङ्गेन तत्र स्नेहे जाते तदुपदेष्टृसङ्गेन हरिसेवारुचिश्रवणादिरूपापत्यानि, यथा प्रज्वरादयोन्तर्बहिस्तापकास्तथा तन्निवर्तकोन्तर्बहिस्त्यागो यथा गन्धर्वैरायुःक्षयस्तथा भगवद्भक्त्या तदक्षयः । तदुक्तम्, "तस्यर्ते यत्क्षणो नीतः" इति । यथा जरयेन्द्रियवैकल्यं तथा योगेन तज्जयः, यथा प्राकृतबुद्ध्या प्राकृतत्वं तथा ब्रह्मात्मभावनया तद्भाव इति । यदि च विशेषतो निरूपणमेवेष्टं तदा यथान्तराणां बाह्यत्वेन निरूपणं कृतं तथा बाह्यानामपि पदार्थानामान्तरत्वेन निरूपणं कर्तुमुचितं स्यात् । एवं सति स्त्रीत्वेन जातस्यापि सर्वं स्पष्टमेवेति व्यर्थं निरूपणम् । किञ्च, पूर्वं ह्यान्तराणां बाह्यत्वेन निरूपणं कृतम् । प्रकृते च सत्सङ्गादिपदार्थानां बाह्यानां बाह्यत्वेन निरूपणेन नाऽर्थे परोक्षता किन्तु शब्दमात्र एव भवतीत्युपक्रमविरोध इति बाह्यानामान्तरत्वेनेति सार्द्धेनाशङ्क्य समाधत्ते । अथापीति । यद्यप्येवं तथापि प्राचीनबर्हिषस्तथा विवेचनासामर्थ्येन यथाकथञ्चित्परोक्षतामङ्गीकृत्येदं निरूप्यत इत्यर्थः । अस्य कर्मपरत्वेन तथाविवेकाभावो युक्त इति हिशब्दार्थः ।

यद्वा नन्वान्तरबुद्ध्यादीनां बाह्यस्त्रीत्वादिनिरूपणेन हि पूर्वं परोक्षतोक्ता, प्रकृते तु सत्सङ्गश्रवणादीनां बाह्यानामेव बाह्यत्वेन निरूपणे कथं कथायाः परोक्षतेत्यत आह बाह्यानामिति । अत्र हि भगवद्धर्मसम्बन्धेन मुक्तिर्वाच्या, स च बाह्याभ्यन्तरभेदेन द्विविधः । तत्र बाह्योप्यान्तर एवेति मन्तव्यः । एतत्सङ्गेनाऽहं कृतार्थो भूयासमिति बुद्धिपूर्वकस्यैव तस्य तत्साधनत्वात् । अन्यथा भक्तद्रोहार्थं कृतस्य सत्सङ्गस्यापि मोचकत्वं स्यात् । न चैवं, नरकसाधनत्वात् । तथा च । बाह्यत्वेन प्रतीयमानानां सत्सङ्गादीनामप्यान्तरत्वात्तेषां च बाह्यत्वेन निरूपणे पूर्वस्मान्न कश्चिद्विशेष इत्यर्थः । एतेन स्त्रीत्वेन जातस्य मुक्तिनिरूपणमन्यशास्त्रविरोधीत्यपि निरस्तम् । न ह्यत्र देहधर्मस्य स्त्रीत्वादेर्निरूपणं किन्त्वात्मधर्मस्य, तौ च "पुंस्त्वं स्वतन्त्रता तस्य पारतन्त्र्यं तथेतरत्" इति पुरैवोक्तौ । तदाह तदा स्त्रीत्वेनेति । अस्य पूर्वत्रानुषङ्गः कार्यः । तथा च बाह्यानां पुंस्त्वादीनामुक्तरूपाणामान्तरत्वेन स्त्रीत्वेन जातस्य तदा न कश्चिद्विशेष इत्यर्थः । तर्हि पारतन्त्र्यं भिन्नतया कुतो न निरूपितमित्यत आह यदासीदिति । वक्ष्यमाणरीत्या भगवतो भगवदीयस्य वाऽधीनत्वेन निरूपणात्तदेव निरूपितं भवतीति पृथक्तन्निरूपणं नापेक्ष्यत इत्यर्थः । एवमस्य प्रकरणस्य सर्वथा परोक्षता साधिता ॥ २०३ ॥ यस्मिन् पक्षे बाह्यानामपि बाह्यत्वेन निरूपणं तस्मिन्पक्षे बाह्यत्वात्सङ्गादेरर्थस्य तत्र न परोक्षता किन्तु 'पयेमे मलयध्वज' इत्यादिशब्दैर्निरूपणाच्छब्दमात्रे परोक्षतेत्याह तथेति ॥ २०३½ ॥

---

अनिरूपण इति, चिन्ताया अनिरूपणे । तत्कथनस्येति चिन्ताकारकथनस्य । प्राणादीनामिति, इदं 'अन्वद्रवन्ननुपथा' इत्यस्य तात्पर्यम् ॥ २००½ ॥ पुनर्जन्मान्तरस्येति, स्त्रीजन्मनः । सम्बन्ध इति पदानां पुनः सम्बन्धः । तथा च द्वितीयजन्मन्यप्यान्तरकथापूर्वतुल्येवेति सा नोच्यते, बहिः कथा तु ततो भिन्ना पूर्वसिद्धास्तीति सैवोच्यते इत्यर्थः ॥ २०२ ॥ यथाकथञ्चिदिति विवि-

एवं प्रकरणस्य परोक्षतामुक्त्वा तज्जन्म विचारयति। यद्यप्युक्तरीत्या पुंस्त्वादौ न विशेषस्तथापि "बभूव प्रमदोत्तमा" इति प्राकृतभावमुक्त्वा मध्ये जन्मान्तरमनुक्त्वैवाग्रिमवृत्तान्तकथनात्तद्भावापन्नस्यैव सा कथेत्यवसीयते। तच्चानुपपन्नमित्याशङ्क्य तज्जन्मस्वरूपमाह अथापीति।

निबन्धः—अथाऽपि ह्यविवेकेन दैवाद्देवालयादिषु ॥ २०४ ॥
दासेषु जन्म तस्याऽभूत्कृष्णकार्येषु सङ्गतिः।

प्रकाशः—अथेति भिन्नपक्रमे। यद्यपि प्राकृतदशायामेवैतन्न सम्भवति तथाप्युच्यत इत्यपेरर्थः। तत्रोपपत्तिमाह दैवादिति। भगवदिच्छात इत्यर्थः। यदि प्राकृतदशायामेव भगवत्कृपा न स्यादप्राकृतदशायामेव च स्यात्तदा कदाचिदपि न स्यादन्योन्याश्रयात्। अतः पूर्वं भगवत्कृपा युक्तेति हि शब्दार्थः। अविवेकेनेदं भगवत्कार्यमलौकिकमिति विवेकराहित्येन कृष्णकार्येषु सङ्गतिरिति सम्बन्धः। अविवेकेनोपलक्षितस्यैव तस्य तेषु जन्माऽभूदिति वा। दक्षिणदेशोक्तिरप्यत्र साधिकेति ज्ञेयम्। अन्यत्र तथापूजाप्रवाहाभावात्। यतस्तेषु जन्माभूदतः कृष्णकार्येषु साऽभूदित्यर्थः।

"तस्यां सञ्जनयाञ्चक्रे" इत्यस्यार्थमाह कार्यासक्तस्येति।

निबन्धः—कार्यासक्तस्य तस्याऽभूत्प्रेमाश्रुत्यादिसप्तकम् ॥ २०५ ॥
निरन्तरं कृतानां हि सप्तानां कोटिशो भवः।

प्रकाशः—प्रमेयबलेनैवेतिभावः।२०५। एकैकस्येत्यस्य तात्पर्यमाह निरन्तरमिति। सकृत्कृतानां बहुधा भवनाभावात्तथा कृतानामेव तथायुक्तमिति हिशब्दार्थः। तेन कोटिश आवृत्तानामेव श्रवणादीनां पुरुषार्थसाधकत्वं न सत्कृतानामितिभावः।

अग्रिमस्याऽर्थमाह कार्यं चिन्तयत इति।

निबन्धः—कार्यं चिन्तयतस्तस्य दृढः प्रेमा मनस्यभूत् ॥ २०६ ॥
येन वैराग्यसत्सङ्गौ यतः प्रेम्णाभजद्धरिम्।

प्रकाशः—पूर्वं तु स्वाधिकारवशादेव भगवत्कार्यमात्रं यथाकथञ्चित्कार्यमिति बुद्ध्या तत्करणम्। अन्यतः पुत्रादितस्तत्सम्पादने तूष्णीम्भावोऽप्यासीत्। तदनन्तरं निरन्तरं भगवत्कार्यचिन्तनेन कृत्वा मनसि प्रेमाभूत्। सोपि दृढोऽन्यथा कर्तुमशक्यः, अन्यस्मिन् सेवाकर्तरि सम्भवत्यपि येन स्वयमकृत्वा स्थातुमशक्तो भगवति तादृशः प्रेमाऽभूदित्यर्थः। तदान्येषां प्रतिबन्धकत्वज्ञानेन स्वभावतोप्यन्यत्र वैराग्यं जातम्। ततो भक्तेष्वेव सङ्गः। तत्र च सततं भगवत्कथाश्रवणेन माहात्म्यज्ञानपूर्वकसुदृढसर्वतोधिकस्नेहेन हरिमभजत्। एतेन प्राणेन्द्रियान्तःकरणाध्यासनिवृत्तिरुक्ता। प्राणेभ्योपि भगवत एवाऽधिकं प्रियत्वाद्, इन्द्रियाणां च तादर्थ्यात् ॥ २०६½ ॥

चतुर्विधान्तःकरणे चाहङ्कारमात्रमवशिष्यते। अहं सर्वं साधयामीतिरूपः। तस्य निवृत्तिप्रकारो 'विभज्ये'त्यादिना निरूप्यत इत्याह अहङ्कारेति।

निबन्धः—अहङ्कारप्रवृत्तस्य क्लेशः सर्वोपि वर्ण्यते ॥ २०७ ॥
ततो ज्ञाने समुत्पन्ने नष्टेहङ्करणे पुनः। चिन्ता कृष्णस्य सेवार्थमभूद्येनातिदुःखिता ॥ २०८ ॥

प्रकाशः—भगवदधीनतयैव चेत्स्थितिः स्यात्तयैव सर्वं सिद्ध्येत्। अहं स्वसाधितसाधनैः साधयिष्यामीति प्रमाणपरतया साधनेषु प्रवृत्तस्याधिभौतिकादिक्लेशो निरूप्यत इत्यर्थः। अत्राऽहङ्कारकार्यरूपं यत्कृष्णकार्यं तद्रूपो मलयध्वज उच्यते। अत एव कुलाचलमदिरेक्षणापदे मूले कार्यकारणयोरैक्यात्स एवाहङ्कारत्वेनाऽप्युच्यते। सुतत्यागस्याऽप्युक्तत्वान्न पूर्ववच्छ्रवणादिकं ज्ञेयम्। "आरिराधयिषुः कृष्णम्" इति वचनान्न सर्वात्मना त्यागः, अतः सुष्ठूक्तमहङ्कारप्रवृत्तस्येति। ततः सात्त्विकान्तःकरणे कियत्काला-

क्षितार्थगोपनमात्रेण। स चेति, भगवद्धर्मसम्बन्धश्च। पूर्वत्रेति बाह्यानामिति पूर्वार्धे। स्त्रीत्वेनेति, बाह्यस्त्रीत्वेन ॥ २०४ ॥ जन्मान्तरमिति मुक्त्युपयोगि पुरीप्रवेशरूपं दुहितृत्वेन जन्म। अनुपपन्नमितिमुक्तिसाधनकरणाभावादनुपपन्नम्। एतदिति, मुक्त्युपयोगि जन्म। तेष्विति, दासेषु। मूले, देवालयादिपदं 'राजसिंहस्य वेश्मनी'त्यस्य विवरणरूपम्। दासास्तु प्रकरणादेवोपलभ्यन्त इति ज्ञेयम् ॥ २०५ ॥ प्रमेयबलेनैवेति। एतद् अभूत् प्रेमाश्रुत्यादि सप्तकमि'तिमूलोक्त्या सम्बध्यते अत्र प्रेमा 'आत्मयामसितेक्षणामि'त्युक्ता कथारुचिः। असितस्य कृष्णस्य भगवत ईक्षणं ज्ञानं ययेति। सप्तसुतास्तु श्रवणकीर्त्तनस्मरणपादसेवनार्चनवन्दनदास्यानि। तदेतत् 'श्रुत्यादिसप्तकमि'त्यनेनोक्तम्। एतेषां यवीयस्त्वं रुच्यन्तरभावित्वात् ॥ २०६ ॥ दृढ इति, इदं धृतवतामित्यस्य तात्पर्यम्। वैराग्यमिति, इदं मुनिपदस्य तात्पर्यम् २०६½ ॥

अत एवेति अहङ्कारबोधनार्थत्वात् ॥ २०८ ॥

नन्तरं क भगवान् ब्रह्मादिदुरापः काहमतिनीच इत्येवंरूपे माहात्म्यानुभवे सति दैन्याविर्भावेनाहं साधयिष्यामीतिरूपेऽहङ्कारे नष्टे तादृशस्य भगवतः सेवा कथं स्यादिति चिन्ताऽभूत्। पूर्वं तु स्वस्यैव भजनायोग्यत्वेन चिन्ताऽभूत्। तत एवमतिदुरापत्वज्ञानेन तूष्णीम्भावे भजनमार्गोच्छित्तो सर्वपुरुषार्थोच्छित्तिर्भविष्यतीति महती चिन्ताभूदिति पुनःपदम्। अत एवाऽतिदुःखिता। इदं "यदा नोपालभेताङ्घ्रौ" इत्यादिना निरूपितम् ॥ २०८ ॥

अहङ्कारनाशे सति "पतिं परमधर्मज्ञम्" इत्यादिना पुनः कृष्णकार्यकथनमनुपपन्नमित्याशङ्क्य तत्रोपपत्तिमाह अहङ्कारस्येति।

**निबन्धः—अहङ्कारस्य लेशेन पुनः सेवापरो ह्यभूत्। ततस्तस्याप्यभावे तु मोहे साक्षाद्धरिर्बभौ ॥ २०९ ॥**

प्रकाशः—मद्दीनतयैव सन्तुष्टो भविष्यतीति तल्लेशः। तेन पुनस्तत्परोऽभूत्। तथापि भगवदप्राप्तौ तल्लेशोपि नष्टः। तदा सर्वं भगवदधीनं भगवाँश्चाऽतिदुराराध्य इति सर्वमशक्यमिति स्वरूपाज्ञानस्य सत्त्वात्स्वनाशमेव भावयमानायां सत्यां हरिरन्तर्यामी स्वयमेव बभावित्यर्थः। पतिशरीरमात्रं तल्लेशः चिन्ता वादीपनं तदभावः ॥ २०९ ॥

आविर्भूतकार्यमाह आद्यमिति।

**निबन्धः—आद्यं पर्व तु तेनैव नाशितं येन सोऽभवत्। अत एव हि सम्पन्नं न विविक्तं हि गोप्यतः ॥ २१० ॥**

**मूढत्वमेव कार्याय न कर्मजडतेति हि।**

प्रकाशः—स्वरूपाज्ञानमविद्याया आद्यं पर्व। तेनैव हरिणैव। नाशफलमाह येनेति। सोभवत्तत्पदार्थरूपोऽभवदित्यर्थः। एवकारेणेतरानाश्यत्वमस्योच्यते। ननु पञ्चेन्द्रियार्था इत्यादिव्याख्यानस्य किं प्रयोजनम्, अधिकारिणोऽन्तर्यामिसाक्षात्कारे स्वत एव तद्बोधसम्भवादित्यत आह अत एवेति। यतो व्याख्यानं कृतमत एव हेतोर्ज्ञानं सम्पन्नमित्यर्थः। तत्रोपपत्तिमाह न विविक्तं हीति। वाक्यार्थो यत्र गोप्यस्तादृशाद्वाक्याद्विविक्तमेकान्तरूपं सूक्ष्मं यज्ज्ञानं तन्न सिद्ध्यतीत्यर्थः। तस्य सर्ववस्तुयाथात्म्यज्ञानाभावाद्युक्तं तथा कथनमिति हि शब्दः। बोधनार्थमेवाविर्भावान्नाविर्भावमात्रेण सर्वसम्पत्तिः। प्रमेयबलं पुरुषोत्तम एव, तदपि प्रकटीकृतं चेद्भवति। अत एव मुचुकुन्दकथा तथा। अस्य चान्तर्यामिरूपत्वाद्युक्तमेवमिति पूर्वं हि शब्दः ॥ २१० ॥ तर्हि यथा तद्व्याख्यानेन तस्य ज्ञानं जातं तथा बर्हिषदोपि तच्छ्रवणात्कुतो न जातमित्यत आह मूढत्वमेवेति। स तु सर्वेति कर्तव्यतामूढ इत्येतत्कथनमात्रेणेदमेव गृहीतवान्। अयं तु कर्मैव कर्त्तव्यं नाऽन्यदिति निश्चयेन जड इव जातस्तेन विरुद्धज्ञानसत्त्वात्तन्नाभूदित्यर्थः। जडस्य ज्ञानाभावो युक्त इति हि शब्दः ॥ २१०½ ॥

स्वरूपाज्ञाननिवृत्त्यैव परममुक्तिरिति भ्रमाभावाय तन्मुक्तिं विवृण्वन्नुपसंहरति एवमिति।

**निबन्धः—एवं कृष्णकृपातोऽयं जीवन्मुक्तो बभूव ह ॥ २११ ॥**

**कथामात्रत्वविज्ञानविनिवृत्त्यै तथोक्तवान्।**

प्रकाशः—यदि भगवान् महतीं कृपां कुर्यात्तदा तदैव भक्तिमपि दत्वा स्वयं प्रकटीभूय परममुक्तिमपि दद्यात्परं त्वेवंरूपैव यतः कृपाऽतस्तथैवाऽऽसेत्यर्थः ॥ २११ ॥ ननु नारदेन "बर्हिष्मन् एतदि"तिश्लोकः किमर्थमुक्तस्तत्राह कथामात्रत्वेति। तथा सति बोधार्थमाकाङ्क्षैव न स्यात्। तदभावे चोक्तिः सर्वा व्यर्था स्यादिति तस्य स्वाबोधज्ञानेन बोधाकाङ्क्षोपादनार्थं तथाऽऽध्यात्म्यं पारोक्ष्येण प्रदर्शितमित्युक्तवानित्यर्थः ॥ २११½ ॥

( अ० २९ ) अग्रिमाध्यायं विचारयन्नीषद्व्याख्यायाग्रे यन्न व्याख्यातं तत्र परोक्षत्वं नास्तीतिशङ्काभावायेषद्व्याख्यानस्य तात्पर्यं वक्तुं तदनुवदति प्राणेन्द्रियादीति।

**निबन्धः—प्राणेन्द्रियादिपर्यन्तं कथञ्चिद्विवृतिः कृता ॥ २१२ ॥**

**अग्रे कथां परित्यज्य सर्वमाह स्वयं स्फुटम्।**

प्रकाशः—कथां परोक्षकथामित्यर्थः ॥ २१२½ ॥

---

तथाकथनमिति, प्रत्यक्षतया व्याख्यानम्। मुचुकुन्दकथा तथेति प्रमेयबलस्याप्रकटीकरणान्मुक्तिविलम्बबोधिकेत्यर्थः। युक्तमेवमिति आविर्भूय तथा बोधनं युक्तमित्यर्थः ॥ २१० ॥

एवं पादोनैः षोडशभिरष्टाविंशाध्यायार्थो विचारितः।

अतः परं चतुर्दशभिरूनत्रिंशाध्यायं विचारयन्ति अग्रिमेत्यादि। कथञ्चिदिति बर्हिषन्मनः परीक्षार्थं ब्राह्मणवाक्यमुखेन। तथा च, तावतैव बोधसम्पत्तावग्रे परममुक्त्युपयोगि वक्तव्यम्। अबोधे तु विस्तार्य वक्तव्यमिति तस्य बोधं परीक्षितुं ता विवृतिः कृता। अग्रे तद्वाक्येन बोधपरीक्षोत्तरं स्वयं नारदः सर्वं पूर्वोक्तं स्फुटं प्रत्यक्षवादेनाह। तस्य प्रयोजनं यथाकथञ्चिन्

अत्र तात्पर्यमाह कथञ्चिदिति।

निबन्धः—कथञ्चिद्बोधनं कार्यं न व्याख्यानं स्वतः फलम् ॥ २१३ ॥
अल्पं च तावता नैव ज्ञानं स्यादिति विस्तृतिः ।

प्रकाशः—तथा कथने हेत्वन्तरमाह अल्पं चेति। एतदेव विवृणोति तावतेति। अयं तु नोत्तमाधिकारी कर्मजडत्वादतो नाऽल्पकथनेनाऽस्य बोध इति परोक्षकथायां कथमुक्तादर्थादधिकार्थः 'कचित्पुमानि'त्यादिपूक्त इत्यर्थः ॥ २१३½ ॥॥

स्वतन्त्रोक्तौ श्लोकान् विभजते एकेनेति।

निबन्धः—एकेन पूर्वमखिलं दोषो हेतुस्तथा कृतिः ॥ २१४ ॥
फलं च द्विविधं हीनसाम्यं दार्ष्टान्तिकं तथा ।

प्रकाशः—एवं बहुविधैरित्येकेनैव "एवं कृपणया बुद्ध्या" इत्यन्तेन निरूपितं पूर्वजन्मवृत्तान्तं निरूपितवान्। ततः प्राणेन्द्रियेत्येकेन दोषवर्णनम्। ततो "यदात्मानम्" इत्येकेन प्राणादिधर्माध्यासे हेतुभूतस्वरूपाज्ञानस्य निरूपणम्। तत एकेन कृतिनिरूपणम् ॥ २१४ ॥ ततो द्वाभ्यां द्विविधं फलमुक्तम्। ततः "क्षुत्परीतः" इत्येकेन हीनसाम्यम्। तत एकेन दार्ष्टान्तिकम् ॥ २१४½ ॥

निबन्धः—दुःखसन्ततिरामुक्तेरन्यथा सिद्धिसङ्कथा ॥ २१५ ॥
हेतुनिर्द्धारणं चैव निस्तारोपायवर्णनम् ।

प्रकाशः—तत एकेन मुक्तिपर्यन्तं दुःखसन्ततिरेवेति निरूपणम्। तत एकेनाऽन्येषां दुःखप्रतीकारोपायानामनुपायत्वकथा। दृष्टान्तेन बोधनमुपसर्गार्थः। ततो दुःखहेतुर्निर्धारणं द्वाभ्याम्। तत एकेन निस्तारोपायकथनम् ॥ २१५½ ॥

निबन्धः—पञ्चभिः साधनं तस्य चतुर्भिः सर्वबाधनम् ॥ २१६ ॥
मुख्योपपत्तिः प्रकृते सिद्धत्यागोपदेशनम् ।

प्रकाशः—ततः पञ्चभिः श्लोकैर्निस्तारोपायरूपभक्तेः साधनं निरूपितम्। ततश्चतुर्भिर्भक्त्यतिरिक्तानां सर्वेषां साधनानां बाधनम् ॥ २१६ ॥ ततो भक्तिमार्गे भगवदनुग्रहरूपा मुख्योपपत्तिरेकेन। तत एकेन सिद्धस्य कर्मणस्त्यागोपदेशनम् ॥ २१६½ ॥

निबन्धः—तत्र हेतुभ्रमः श्रोतुः सार्द्धाभ्यां सर्वनिर्णयः ॥ २१७ ॥
शीघ्रनिर्गमनार्थाय दृष्टन्तेन तथा वचः ।

प्रकाशः—ततो द्वाभ्यां श्रोतुर्बर्हिषदः कर्मणि पुरुषार्थहेतुत्वज्ञानं भ्रम एवेति निरूप्यते। तत 'स्तत्कर्मे'ति सार्द्धाभ्यां सर्वनिर्णयः ॥ २१७ ॥ ततः पुत्रागमनावधिस्थितिनिवृत्त्यर्थं हरिणदृष्टान्तकथनपूर्वकं त्यागकथनं द्वाभ्याम् ॥ २१७½ ॥

बर्हिषदः शङ्काबीजमाह आत्मन इति।

निबन्धः—आत्मनोऽकर्तृताज्ञानाच्छङ्का सूक्ष्मो ह्यशक्तिमान् ॥ २१८ ॥
स्थूल एव ततः कर्ता तदभावे कृतं न च ।

प्रकाशः—कर्तृत्वसमानाधिकरणः कर्तृसमानकालीनो हि भोगः स चात्र जन्मान्तरीयः। तदर्थं कर्मकरणं तदा भवेद्यदि तत्समानकालीनात्मन एव कर्तृत्वं स्यात्। न चैवम्। अतस्तादृशफलार्थं कर्मकरणं कथं सङ्गच्छत इति राज्ञः शङ्का जातेत्यर्थः। शङ्कास्वरूपमेवाह सूक्ष्म इति, लिङ्गदेह इत्यर्थः। पूर्वोक्तशङ्कासमाधानार्थं भोगसमानकालीनस्य लिङ्गशरीरस्यैव कर्तृत्वं वाच्यम्। तच्च न सम्भवति। तस्य कर्मकरणेऽशक्तत्वाद्, अतः स्थूल एव देहः कर्ता। जन्मान्तरे च तत्कालीनभोगफलककर्मकर्तृभूतपूर्वशरीरस्याभावात्कस्मिन् फलं स्यात्। किं च कर्तरि हि कर्मोत्पद्यते। तादृशस्य देहस्याभावे कर्मापि न स्यादधिकरणाभावात्। एतदाह तदभाव इति ॥ २१८½ ॥

---

चित्तस्य बोधनं बोधसम्पादनं कार्यमिति। नारदस्य तदुपस्थप्रतिष्ठापेक्षित्वाभावाद्व्याख्यानं स्वतः फलं फलरूपं न भवतीत्यतो हेतोः स्फुटमाहेत्यर्थः ॥ २१३–२१६ ॥

फलितमाह कर्तुरिति ।

निबन्धः—कर्त्तुः फलेऽस्य सन्देहो लिङ्गे कर्तृत्वनिश्चयः ॥ २१९ ॥
स्थूलस्य पोषकत्वं हि येन केनाऽपि तद्भवेत् ।

प्रकाशः—अधिकरणकरणयोरभावात्कर्मकर्तुः कथं फलमुपपद्यत इत्यस्य राज्ञः सन्देह उत्पन्न इत्यर्थः । एवं प्रश्नार्थमुक्त्वोत्तरार्थमाह लिङ्ग इति । स्थूले यत्कृतिसामर्थ्यदर्शनं तत्सूक्ष्मस्यैवेतिमन्तव्यम् । अन्यथा मृतशरीरस्यापि सामर्थ्यं स्यात् । अतोन्वयव्यतिरेकानुविधानात्सूक्ष्मस्यैव कर्तृत्वम् । न हि स्थूलं विनापि तेनैव भोगः सम्पद्येतेत्यत आह स्थूलस्येति । भेरीदण्डन्यायेन स्थूलस्य तत्सामर्थ्यपोषकत्वमेवेत्यर्थः । ननु प्राग्भवीयदेहपोषणेन कृतकर्मणः फलभोगे कथमेतद्देहस्य पोषकत्वमत आह येन केनापीति । न हि तच्छरीरत्वेनावच्छिद्यते पोषकत्वं किं तु शरीरत्वेनैव । अतः केनापि शरीरेण तत्पोषकत्वं भवेदित्यर्थः ॥ २१९½ ॥

उपसंहरति अत इति ।

निबन्धः—अतो लिङ्गस्य कर्तृत्वात्तत्सत्त्वेन न दूषणम् ॥ २२० ॥
आत्मनश्चापि कर्तृत्वं ज्ञानाभावे तु लिङ्गिनः ।

प्रकाशः—तत्सत्त्वेन लिङ्गसत्त्वेन । कर्त्रभावप्रयुक्तं दूषणं नास्तीत्यर्थः । एतत्तु साङ्ख्यमतानुसारेणोक्तम् । वस्तुतस्त्वात्मैव कर्त्ता चेतनत्वात् । तस्य च जडत्वान्न कर्तृत्वं वक्तुं शक्यम् । न चात्माधिष्ठितं लिङ्गमेव कर्तृ, तस्य तु प्रयोजकत्वमात्रमिति वाच्यम् । एवं कार्वधिष्ठितवाश्या एव कर्तृत्वं स्यान्न तु कारोः । प्रयोजकत्वं चान्यथासिद्धया । आत्मनश्चाऽन्वयव्यतिरेकानुविधायिनो लिङ्गाधिष्ठानेन कर्मकरणातिरिक्तकार्याभावान्न तथात्वमित्याशयेनाऽऽह आत्मन इति । असंसार्यात्मनस्तत्रापि भगवद्भावेन गुणातीतस्य शुकादेर्भगवच्छ्रवणादिकर्तृत्वमात्मन एवेति मन्तव्यम् । लिङ्गस्य गुणात्मकत्वात् । किं च लिङ्गवादिनाऽप्यात्मसम्बद्धस्यैव तस्य कर्तृत्वं वाच्यम् । सम्बन्धश्चाऽध्यास एव वाच्यः, स चाऽविद्यारूपः । तेषां च सा निवृत्तेति न लिङ्गस्य कर्तृत्वं वक्तुं शक्यम् । संसारिणस्तु लिङ्गविशिष्टस्यैव तथानुभवाद्विशेषणत्वेन लिङ्गस्यापि कर्तृत्वमित्याशयेनोपसर्गद्वयमुक्तवान् । एतदेव विवृणोति ज्ञानाभाव इति । पूर्णज्ञानाभावे लिङ्गविशिष्टस्याऽऽत्मनः कर्तृत्वमित्यर्थः ॥ २२०½ ॥

पूर्वोक्तं लिङ्गकर्तृत्वं विवृणोति लिङ्गस्येति ।

निबन्धः—लिङ्गस्य करणत्वं च तत्पूर्वं साध्यते स्फुटम् ॥ २२१ ॥
स्वप्ने साधनं चैव फलितं चाऽऽह वै त्रिभिः ।

---

त्यागकथनं द्वाभ्यामिति 'सुमनः सर्वधर्माणामि'तिव्याख्यानगद्यसहितेन 'क्षुद्रं चरमि'तिश्लोकेन 'स त्वं विचक्ष्व मृगचेष्टितमि'त्यनेन चेतिद्वाभ्याम् । ( श्लोकौ ५४–५५ )

अत्र द्वाभ्यामिति कथनेन 'प्रश्न एवं ही'तिश्लोको गद्यं च स्पष्टार्थत्वाद्वा विगीतत्वाद्वा न संगृहीतमिति संशय एव तिष्ठति । तथापि प्रथमपक्ष एव साधीयानिति प्रतिभाति । चतुर्भिरिति वा पाठः ॥ २१७½ ॥ न चैवमिति, कर्त्तृभूतस्य देहस्य नष्टत्वेन भोगस्य कर्त्तृत्वं ( सामानाधिकरण्यं ) कर्त्तृसमानकालीनत्वाभावादित्यर्थः । पूर्वोक्तशङ्केत्यादि । अत्रायमर्थः । ऐहिकभोगस्य कर्त्तृत्वसामानाधिकरण्यं कर्त्तृसमानकालीनत्वं च दृष्ट्वा, जन्मान्तरीयो भोग उक्तधर्मवान्, भोगत्वादिदानीन्तनभोगवदित्यनुमातव्यम् । तत्र साध्यतावच्छेदकीभूतकर्त्तृजिज्ञासायामुक्तरीत्या प्रत्यक्षबाधात् । लिङ्गस्य तद्विशिष्टस्य केवलस्य चात्मनः कर्त्तृत्वं न सम्भवतीति 'सविशेषणे ही'तिन्यायेन स्थूल एव कर्तृत्वपर्यवसानं वक्तव्यम् । जन्मान्तरत्वे तदभावात्तद्वयधिकरण एतदसमानकालीनो भोगः कथमिति । एवं कस्मिन्फलं स्यादित्यन्तेन 'कर्माण्यारभते येने'तिसार्द्धश्लोकोक्तं संशयस्वरूपमुक्त्वा, 'कर्म तत्क्रियते प्रोक्तं परोक्षं न प्रकाशत' ( ५९ श्लोक ) इत्य'र्द्धोक्तस्य संशयान्तरस्य स्वरूपमाहुः किञ्चेत्यादि । तथा च, दूरापास्तो जन्मान्तरे भोग इतिभावः । श्रीधरीये तु, स्थूलस्य कर्तृत्वेन तन्नाश इतरेण फलभोगे कृतनाशाकृताभ्यागमप्रसङ्ग इतिदूषणमुक्तम् ॥ २१८½ ॥

अधिकरणकरणयोरिति भोगायतनस्य शरीरस्य यज्ञादिरूपस्य कर्मणश्चेत्यर्थः । स्थूल इत्यादि । तथा च, स्थूलशरीरं न कर्त्तृ, स्थूलशरीरत्वात्, मृतशरीरवदित्यनुमानान्न तस्य कर्त्तृत्वमित्यर्थः । भेरीदण्डन्यायेनेति । यथा पुरुषश्वासवायुनोत्पादित शब्दो दण्डेन वर्द्धते, दण्डस्यादीर्घत्वे तु न वर्द्धते इति तस्य यथा श्वाससामर्थ्यपोषकत्वमेव, न तु शब्दजनकत्वम् । तेन न्यायेनेत्यर्थः । एतद्देहस्येति, जन्मान्तरीयदेहस्य । 'कर्त्ता शास्त्रार्थवत्त्वादि'त्यधिकरणे जीवस्य कर्तृत्वं व्यासपादैः स्वीकृतमिति तदनुसारेण मुख्यपक्षमाहुः वस्तुत इत्यादि । तस्य चेति लिङ्गशरीरस्य । तथा चात्मा कर्त्ता चेतनत्वात्, यन्नैवं तन्नैवम्, घटादिवत् । लिङ्गशरीरमकर्तृ, जडत्वात्, घटादिवदित्यनुमानाभ्यां चेतन एव कर्तृत्वपर्यवसानादात्मैव कर्त्तेत्यर्थः । आत्माधिष्ठितस्य लिङ्गस्य कर्तृत्वमाशङ्क्य समादधते न चेत्यादि । तस्य त्विति जीवस्य । ननु वाश्याश्चेतनानधिष्ठितत्वदशायां कार्याजनकत्वाच्चैतनस्य कारोस्तथात्वमाद्रियते, प्रकृते तु केवलस्य कस्यापि स्वातन्त्र्यादर्शनाच्चेतनत्वमात्रेण केवलस्य जीवस्य प्रयोजकत्वमङ्गीक्रियतां योग्यत्वादिति चेत्तत्राहुः

प्रकाशः—तत्त्वं च वाशीवत्। एतत्त्रितयं सिद्धान्ते निरूप्यते। तत्र लिङ्गस्य करणत्वं पूर्वं साध्यते त्रिभिरित्याह तत्पूर्वमिति। त्रिभिराहेति सम्बन्धः। श्लोकान् विभजते साध्यत इति। येनैवेत्येकेन स्फुटं करणत्वमुच्यत इत्यर्थः। तत एकेन स्वप्नदृष्टान्तेन तत्साधनम्। तत एकेन फलितम्॥ २२१½॥

निबन्धः—कर्माभावस्तदद्दृष्ट्या न निश्चेतुं हि शक्यते॥ २२२॥

पूर्वकर्म यथेदानीं लक्ष्यतेऽस्तीति कार्यतः। तथाऽग्रेपीति भावेन कर्माध्यासौ निरूपितौ॥ २२३॥

प्रकाशः—ततः परं कर्माभावेन फलानुपपत्तिशङ्कां परिहर्तुं कर्म निरूपयँस्तदाश्रयत्वेनाऽऽत्मनि कर्तृत्वं निरूपयति, कर्मणः कर्त्राधारकत्वात्। कर्म चाध्यासं विना न भवतीत्यध्यासश्च निरूप्यते। तत्र कर्म तु न दृश्यत इति नास्तीति न वक्तुं शक्यम्। अयोग्यस्यापि सतोऽदृश्यत्वात्। तर्हि तत्सत्त्वे किं मानमित्याकाङ्क्षायां विचित्रचित्तवृत्तिलक्षणकार्यलिङ्गकानुमानं पूर्वजन्मकर्मणि प्रमाणं नारदेनोक्तम्॥ २२२॥ ननु प्रश्नत्वे तज्जन्मनि कृतकर्मणोऽदर्शनात्फलानुपपत्तिः शङ्किता, उत्तरे च पूर्वजन्मकर्मसाधनमित्यनुत्तरमिदमित्याशङ्क्य तदभिप्रायमाह पूर्वकर्मेति। तेन हि कर्ममात्राभाव उक्तस्तया रीत्या। अधुना चैतत्कर्म कार्यस्य कस्यचिदभावादेतज्जन्मसम्बन्धि कर्म न साधयितुं शक्यम्। अतोऽधुनानुभूयमानकार्येण लिङ्गेन पूर्वकर्मणि साधिते तद्दृष्टान्तेनाऽस्मिन्नपि जन्मनि यत्कर्म क्रियते तदप्यग्रिमदेहपर्यन्तं वर्तत इति ज्ञेयमित्यभिप्रायेण कर्माध्यासौ निरूपिताविर्थः। अध्यासनिरूपणप्रयोजनमनुपदमेव वक्ष्यति॥ २२३॥

श्लोकान् विभजते सप्तभिर्दशभिश्चेति।

निबन्धः—सप्तभिर्दशभिश्चैव चिन्तानुमितियुक्तिभिः। मनसाऽनुभवाच्चापि कर्माऽस्तित्वं विनिश्चितम्॥ २२४॥

प्रकाशः—यथाऽनुमीयत इति सप्तभिः कर्मनिरूपणम्, ततो दशभिरध्यासस्य कर्मप्रकरणोक्तानर्थान् स्फुटीकरोति। चिन्तानुमितीति। लौकिककारणासम्भवे सति भवन्त्यो विचित्राश्चित्तवृत्तयो विचित्रकारणजन्या विचित्रकार्यत्वात्, चित्रतन्तुपटवदित्यनुमानेन तादृक्कर्मसिद्धिः। युक्तिश्च कदाचिदुपलब्धत्वे सत्येव मनस उपलम्भयोग्याः साक्षादनुपस्थिताश्चार्था यदि पूर्वं कदाचिदुपलब्धा न स्युरधुनापि मनसा नोपलभ्येरन्। तथा च पूर्वजन्मन्यनुभूतानामर्थानामुपनायकस्याऽन्यस्यासम्भवेन तदुपनायकत्वेन कर्मसिद्धिः। अनुमितिरेकेन, युक्तिर्द्वाभ्याम्। मनोनिरूपणमेकेन त्रिभिरनुभवस्य॥ २२४॥

---

प्रयोजकत्वं चेत्यादि। राजा युद्धयतीत्यादौ यद्राज्ञः प्रयोजकत्वमङ्गीक्रियते तदाज्ञापनादिरूपकार्यान्तरं प्रतिगृहीतकारणताकत्वेन। प्रकृते तु लिङ्गविशिष्टस्यात्मन उक्तकार्यातिरिक्तकार्यादर्शनान्न प्रयोजकत्वं वक्तुं शक्यमित्याशयेनात्मनः कर्तृत्वमाहेत्यर्थः। उपसर्गद्वयमिति उपसर्गेण द्वयम्। च अपि इति पदद्वयमित्यर्थः॥ २२०½॥ तत्त्वमिति करणत्वम्। एतत्त्रयमिति केवलस्य कर्तृत्वं, लिङ्गविशिष्टस्य कर्तृत्वं लिङ्गस्य करणत्वं चेतित्रयम्। स्फुटमिति 'लिङ्गेन मनसा स्वयमि'ति तृतीयानिर्देशात्स्फुटम्। न च कर्तर्यपि तदनुशासनान्नैकान्ततो निर्णय इतिशङ्क्यम्। 'पुमान् भुङ्क्ते इति कर्तुरत्र भिन्नतया निर्दिष्टत्वेन सन्देहनिरासात्। किञ्च, जन्मान्तरीयभोगसूक्ष्मदेहकरणक; तदन्वयव्यतिरेकानुविधायित्वात्, एतज्जन्मीनभोगवत्। यदेवं तदेवम्, कुठारान्वयव्यतिरेकानुविधायिच्छिदावच्चेति। इदं च मूले साध्यत इति पदात्सम्भवमादाय दर्शितम्। प्रभुचरणैस्तु शब्दापेक्षयानुमानस्य मन्थरगामित्वादुपेक्षितमिति न विरोधः। तत्साधनमिति लिङ्गविशिष्टश्च भोक्तृत्वसाधनम्। 'शयानमिममुत्सृज्येति (६१) श्लोके यथा पुरुष-आत्मा, शयानं श्वसन्तं इमं देहमुत्सृज्य आत्मनि मनस्याहितं कर्म सुप्तदेहसदृशेन तद्विलक्षणेन वा देहेन भुङ्क्ते इति स्वप्नदृष्टान्तेन, लिङ्गविशिष्ट आत्मा भोक्ता, समनस्कत्वात्, स्वाप्निकभोक्तृवदि'त्यनुमानेन साधनमित्यर्थः। फलितमिति 'ममैते मनसे'ति (६१) श्लोके ममैते पुत्रादयः असावहमेतन्नामा एतज्जातीय इति ब्रुवन् पुमान् यद्यत् शरीरं मनसा गृह्णीयात् तत्तस्मादेहाद्राद्धं सिद्धं पुनर्जन्मोत्पादकं कर्मैव गृह्णीयात्' इतिकथनेन। मनसा गृह्यमाणाः पुत्रदेहादयः लिङ्गतद्विशिष्टान्तरनिष्ठादृष्टजन्याः, ममाहमितिबुद्ध्या गृह्यमाणत्वात्, यन्नैवं तन्नैवम्, पारक्यपुत्रदेहादिवदित्यनुमानेन भोगस्य कर्तृत्वसामानाधिकरण्यं कर्तृसमानकालीनत्वं च निगमयित्वा संशयो निवारित इति विचार्यमाणे आत्मनि सन्देहाभावात्सोपपत्तिकं सपरिकरं लिङ्गस्य करणत्वमेवोक्तमित्यर्थः॥ २२१½॥ ततः परमिति, एकप्रश्नोत्तरकथनानन्तरम्। कर्माभावस्तद्वद् दृष्ट्वा न निश्चेतुं हि शक्यत इत्यर्द्धस्यार्थमाहुः तत्र कर्मेत्यादि। न दृश्यत इति क्षणत्रयानन्तरं न दृश्यते। अयोग्यस्येति दिकालादेः। तर्हीति। एवं सत्तासम्भावनायाम्। अत्रानुमानं स्वार्थं (परार्थं च) बोध्यम्। कार्यस्य स्वयमेवानुभूयमानत्वात्। न्यायस्याग्रे वक्ष्यमाणत्वाच्च। तया रीत्येति कर्म नास्ति अप्रकाशमानत्वात्, नष्टघटादिवदित्यनुमानबोधनेन। कस्यचिदिति आमुष्मिकभोगरूपस्य विहितकर्मकार्यस्य। नन्वपृष्टमध्यासं किमित्युक्तवानित्यपेक्षायामाहुः अध्यासेत्यादि॥ २२३॥ चिन्तानुमितीति। अनुभवभिन्ना संस्कारजन्या वा चित्तवृत्तिश्चिन्तातत्पक्षकानुमितिश्चिन्तानुमितिः, सा च युक्तयश्च ताभिरित्यर्थः। अथवा चिन्तापदेन चित्तसाधकानुमानं सङ्गृह्यत इति न बहुवचनानुपपत्तिः। अत्र यद्यपि मूले 'यथानुमीयते चित्त'मित्यत्र ज्ञानकर्मेन्द्रियवृत्तयः कारणान्तरसंसर्गजन्याः, कारणसद्भावेपि

ननु प्रश्नोत्तरमेतावतैव भवतीत्यध्यासनिरूपणं व्यर्थमित्यत आह करणेति।

**निबन्धः—करणाध्यासराहित्ये सर्वमेवाऽन्यथा भवेत्। तन्निवृत्तिः कृष्णसाध्या तेन सेव्यः स एव हि॥ २२५॥**

प्रकाशः—अध्यासनिरूपणं विनाऽऽत्मनः कर्तृत्वं लिङ्गस्य करणत्वं च न निरूपयितुं शक्यम्। कारुवत्कराद्यभावेन तद्ग्रहणाद्यसम्भवात्। न च चेतनसंयोगमात्रेण व्यापारः सम्भवति जडे, लोके तथानुपलब्धेः। तथा च लिङ्गात्मनोः सम्बन्धाभावे तत्कृतपुण्यपापैरात्मनः सम्बन्धाभावे प्रवृत्तिमार्गो निवृत्तिमार्गश्च व्यर्थः स्यादतोऽध्यासनिरूपणेन तत्सम्बन्धे (तत्सम्बन्धिनि) निरूपिते सर्वमुपपद्यत इत्यध्यासनिरूपणं कृतमित्यर्थः। अन्यथोत्तरितमप्यनुत्तरितमेव स्यात्कर्मण एवाभावादितिभावः। अत एवान्ते तस्याविद्यारूपत्वेन तन्निवर्त्तकश्च भगवानेवेति तद्भजनमुक्तवान्। "मामेव ये प्रपद्यन्ते" इत्याद्युपपत्तिर्हिशब्देनोच्यते॥ २२५॥

ननु पुत्रमुक्तिप्रकरणे पितृमुक्तिनिरूपणं कुत्रोपयुज्यते तत्राह मुक्त इति।

**निबन्धः—मुक्ते पितरि पुत्राणां न बन्धस्तत्कृतो भवेत्। प्रोवाचाऽतस्तु पुत्राणामैहिकामुष्मिकं फलम्॥ २२६॥**

प्रकाशः—अतो हेतोः प्रोवाच पितृमुक्तिमिति शेषः। ब्रह्मलक्षणां मुक्तिमुक्त्वा कृष्णसायुज्यरूपां तत्फलरूपां तामाह। तुशब्दः पितृकथासम्बन्धं व्यावर्त्तयति एतदध्यायद्वयार्थमाह पुत्राणामिति। एकेनैहिकमपरेणाऽऽमुष्मिकं फलं प्रोवाचेत्यत्रैव सम्बध्यते॥ २२६॥

ननु पूर्वं स्तुतिरुचिता तत्कथं भगवद्वाक्यान्येव पूर्वमुच्यन्त इत्यत आह परमानन्देति।

**निबन्धः—परमानन्दसम्प्राप्तिः पौरुषं यशसा सुखम्। कृष्णेनैव तु संसिद्धमधिकारे स्तुतिर्मता॥ २२७॥**

प्रकाशः—एतेषामेतत्सर्वं भगवतैव दत्तं सिद्धम्। "अनुग्रहान्मम" इति वचनात्। न तु स्वतपसेति ज्ञापयितुं पूर्वं भगवद्वाक्यैस्तद्दानमेवोक्तवान्। परमानन्दप्राप्तिस्तु तद्दर्शनं कृष्णे सायुज्यं च। एतेन पितुः सकाशादाधिक्यमुक्तम्, तस्य दर्शनाभावादानन्दमात्रप्राप्तेश्च पूर्णानन्दाप्राप्तेः। तरुदहनादिसामर्थ्यं पौरुषम्। तर्हि स्तुतेः कोपयोगस्तत्राह अधिकार इति। भगवत्स्वरूपमेव फलं यथा सिद्ध्यति तथाऽधिकारनिमित्तं स्तुतिरित्यर्थः। अथवाऽन्यत्र स्तुतिकरणेन तुष्टाद्भगवतः फलं प्राप्नोति, भक्तिमार्गे तु भगवान् स्वत एव यदा भक्तेषु सर्वं सम्पादयति स्वीयत्वेन तदा भक्तः स्वाङ्गीकारं सर्वात्मना ज्ञात्वा स्तुत्यादिषु स्वाधिकारं जानाति ततः स्तौति। अथवा सर्वात्मना स्वाङ्गीकारज्ञानेनान्तरानन्दे पूर्णे बहिरपि सर्वेन्द्रियेषु प्राकट्यसमये वाचि स निर्गच्छन् स्तुतिरूपो भवतीत्यानन्दस्यैवाऽधिकाररूपत्वम्। अत एव पूर्वं प्रभुवाक्यैस्तस्मिन् सिद्धे जाते पश्चात्स्तुतिर्भक्तिमार्गे मतेति पश्चान्निरूपितेत्यर्थः॥ २२७॥

---

युगपदनुत्पद्यमानत्वात्, यदेवं तदेवम्, घटादिवत्, यन्नैवं तन्नैवम्, सव्येतरगोविषाणवदित्यनुमानेन चित्तसाधनमधिकं निःसरति। अक्षपादेन च युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमितिज्ञानेन्द्रियकार्यकादाचित्कत्वेन मनः साधितम्। अत्र द्विविधेन्द्रियकार्यकादाचित्कत्वेनेतिविशेषः। श्रीधरीये तु, तासामपि चित्तवृत्तीनां युगपदनुत्पत्तेरितिकथनात्, नानाचित्तवृत्तयः कारणान्तरसमवधानजन्याः युगपदनुत्पन्नमानत्वादित्यनुमानं मनसि कृतम्। तथापि, युगपदनुत्पत्तेरिन्द्रियसंसर्गकादाचित्कत्वेनापि सम्भवादनुमानस्यार्थान्तरसाधकत्वसिद्धसाधनत्वाभ्यां दुष्टत्वात्तदनादृत्य पक्षताद्यवच्छेदकत्वेन वैचित्र्यं निर्दिष्टम्। चित्तसाधकानुमानं च स्फुटत्वादुपेक्षितमितिज्ञेयम्। युक्तिश्चेति 'नानुभूतं क चाननेन' तिश्लोकद्वयोक्तायुक्तिः। स्वशिरच्छेदादेः कदाप्यनुपलब्धत्वेपि मनसोपलभ्यमानत्वात्तद्वारणाय कादाचित्यादिकं पक्षविशेषणं ज्ञेयम्। नोपलभ्येरन्निति यद्युपलभ्येरन् अदृष्टरजतस्यापि रजतभ्रममुत्पादयेयुरितिभावः। एताभ्यामनुमानयुक्तिभ्यां कारणान्तरमात्रसिद्धिर्न तु विशेषतः कर्मण एव सिद्धिरित्यपेक्षायां तत्सिद्धिप्रकारमाहुः तथा चेत्यादि, मनोनिरूपणमेकेनेति 'मन एव मनुष्यस्ये'तिश्लोकेन एतद्देहानन्तरं पुनरुत्पत्स्यतो मोक्षतश्च पूर्वंचिह्नानि संसारावेशभगवदावेशादीनि मन एव शंसतीति मनसस्तादृशत्वं च न मनस्त्वेन साधारणत्वात् किन्तु, सदसत्कर्मवासनावत्त्वेनैवेति पूर्वरूपबोधनद्वारा कर्मसत्ताबोधनार्थं मनोनिरूपणम्, पूर्वरूपपदस्य भाविचिन्हबोधकत्वं वैद्यके प्रसिद्धम्। ज्वरस्य पूर्वरूपं प्रमेहस्य पूर्वरूपमिति तेषामभिलापादिति न कोपि शङ्कालेशः। त्रिभिरनुभवस्येति 'अदृष्टमश्रुतं चे'त्यारभ्य 'उपरज्यावभासत' इत्यन्तेषु त्रिषु पूर्वेणादृष्टाश्रुतं पर्वताग्रे समुद्रो, दिवा नक्षत्राणि, स्वशिरच्छेद इत्यादिकमन्यदेशकालक्रियाश्रयं देशकालक्रियान्तराश्रयतया निद्रादिदोषेण स्वस्य यथा मनसि दृश्यते, तथान्येषामपीति स्वदृष्टान्तेनानुमन्तव्यम्, यत्र यत्र निद्रादिदोषवन्मनस्कत्वं तत्र कदाचिदीदृशानुभववत्त्वमिति व्याप्तेः स्वस्मिन्ननुभवात्। हेतोः पक्षमात्रे तुल्यत्वात्। अयं कादाचित्कः कचित्कश्चानुभवः कर्मैवानुमापयति नोचेन्निद्रादोषस्य सर्वदा सर्वेषां तौल्यात्सर्वेषां सर्वदा स्यादित्यनुभवः पूर्वकर्मसत्तासाधक उक्तः। द्वितीये च सर्वेषामिन्द्रियार्थानां मनसि क्रमेण हानोपादानत्वानुभवकथनादनुभवधर्मेण क्रमेण प्राक्कर्मसत्ता साधिता। अन्यथा मनसः सर्वदा सत्त्वात् क्रमिकत्वं तादृशानुभवस्य न स्यादिति। तृतीये च सत्त्वैकनिष्ठे भगवत्पार्श्ववर्तिनीति मनसो विशेषणाभ्यां दृष्टादृष्टसर्वविषयकयुगपदनुभवप्रतियोगरूपस्य भगवद्ध्यानरूपस्य च कर्मणो हेतुताबोधनात्तेन तत्सत्ता साधितेत्येवं त्रिभिः कर्मसाधकानुभवनिरूपणमित्यर्थः॥ २२४॥ एवं सप्तभिः कर्मसत्ता साधिता।

( अ० ३१ ) तर्हि नारदोपदेशो व्यर्थ इत्यत आह शास्त्रार्थेति ।

**निबन्धः—शास्त्रार्थसिद्धये याञ्चावशतश्चाऽपि नारदः । शोचन्मध्ये त्वभजनाद्भजनं प्राह सर्वथा ॥ २२८ ॥**

प्रकाशः—"आचार्यवान् पुरुषो वेद" इति शास्त्रार्थसिद्धय इत्यर्थः । यद्यपि शिवोपदेशोऽप्यस्ति तथापि तस्य भगवत्प्रादुर्भावसाधतेनैवान्यथासिद्धत्वेन सृष्ट्युपयोगित्वेन च कथनान्मोक्षानुपयोगमभिसन्धायैवमुक्तम् । तथाप्यपरितोषेण पक्षान्तरमाह याञ्चावशत इति । "यदादिष्टं भगवता शिवेनाधोक्षजेन च" इति वचनात्तदुक्तस्मारकत्वेनैव नारदवाक्योपयोगः । विस्मरणे त्वभजनमेव हेतुरिति गृहमध्ये तदभावात्तदेवोक्तवाँस्तेनैव सर्वं भविष्यतीति ॥ २२८ ॥

एवं सम्पूर्णं प्रकरणं निरूप्यैतच्छ्रवणानन्तरमेव निर्गमने हेतुमाह हरिरिति ।

**निबन्धः—हरिः सर्वात्मना सेव्यो ज्ञात्वा माहात्म्यमादरात् । इत्यर्थः सकले स्कन्धे तथांशेऽल्पेपि निश्चितः ॥ २२९ ॥**

प्रकाशः—अल्पेऽप्यंश इति अवान्तरप्रकरणेष्वपीत्यर्थः ॥ २२९ ॥

**निबन्धः—अतोऽत्र विदुरस्तुष्टो भजनार्थं विनिर्गतः । अपकार्युपकारस्य करणान्निर्मलो मतः ॥ २३० ॥**

इति श्रीवल्लभदीक्षितविरचिते तत्त्वदीपे भागवते चतुर्थस्कन्धविवरणं समाप्तम् ॥

भजनेनैव सर्वसिद्धिर्नान्यथेति सर्वशास्त्रार्थं ज्ञात्वा भजनार्थमेव निर्गतः । ननु भगवच्चरणादप्युच्चैर्गुरुचरणधरणमयुक्तमित्याशङ्कयाह तुष्ट इति । एतादृशशास्त्रार्थकथनेन तुष्टः सँस्तथाकृतवानित्यर्थः । भगवद्भजने दोष एव प्रतिबन्धक इति तस्य भजनं सम्पन्नमिति ज्ञापयितुं सर्वदोषनिवृत्तौ निदर्शनमाह अपकारीति । धृतराष्ट्रस्याऽपकारिणोऽप्युपकारं कृतवानिति तथा ॥ २३० ॥

इति श्रीमद्वल्लभदीक्षितात्मजश्रीविट्ठलदीक्षितविरचितायां श्रीभागवततत्त्वदीपटीकायां
श्रीभागवतीयचतुर्थस्कन्धप्रकरणं समाप्तम् ॥

---

अतः परं दशभिरध्यायनिरूपणप्रयोजनं विचारयन्ति नन्वित्यादि । तद्ग्रहणाद्यसम्भवादिति लिङ्गशरीरग्रहणाद्यसम्भवात् । एवं 'प्रोवाचे'त्यन्तैश्चतुर्दशभिरुनत्रिंशाध्यायो विचारितः ।

किञ्चिदधिकसपादेन त्रिंशार्थमाहुः एवमित्यादि । ( 'एवम्' मूले न दृश्यते ) त्रिभिरेकत्रिंशार्थमाहुः तर्हीत्यादि ॥ २३० ॥

इति श्रीतत्त्वदीपप्रकाशावरणभङ्गे चतुर्थस्कन्धावरणभङ्गः सम्पूर्णः ॥

## चतुर्थस्कन्धः सम्पूर्णः ॥



श्रीकृष्णः शरणं मम

परिशिष्टम् २

चतुर्थः स्कन्धः ।

श्री गणेशाय नमः

विद्वच्छिरोमणिश्रीवोपदेवप्रणीतं

# हरिलीलामृतम्

एवं सर्गमुक्त्वा तद्भेदो विसर्गश्चतुर्थ उच्यत इत्याह—

एकोनत्रिंशताऽध्यायैर्विसर्गस्तुर्य ईरितः । विसर्गः कार्यसम्भूतिः कार्यं बुद्ध्वा चतुर्विधम् ॥ १ ॥
स्त्रीबालप्रौढवृद्धत्वैश्चतुष्प्रकरणी कृता । सतीध्रुवपृथुप्राचीनेतिहासैस्तदुक्तये ॥ २ ॥

एकोनत्रिंशतेति । तल्लक्षणमाह—विसर्गः कार्यसम्भूतिरिति । सर्ग एव विविधकार्यरूपो विसर्गः । प्रकरणान्याह—कार्यं बुद्ध्वेत्यादिना । स्त्रीबालप्रौढवृद्धत्वभेदाच्चतुर्द्धा कार्यमिति ज्ञात्वा ऋषिणा चतुष्प्रकरणी कृतेत्यर्थः । ननु सत्स्वपि परःसहस्रेषु किमिदं चतुर्विधमिति । यदि तावल्लिङ्गमुपलक्षकं तदा सर्वकार्यव्याप्तिः स्यात्, लिङ्गस्य सर्ववस्तुनिष्ठत्वात् । यदाह—भर्तृहरिः—

आविर्भावस्तिरोभावः स्थितिश्चेत्यनपायिनः । धर्मा मूर्त्तिषु सर्वासु लिङ्गत्वेनानुदर्शिताः ॥ इति ॥

किञ्च वयोविशेषानुत्सृज्य पुंस्त्वमात्रं वाच्यं स्यात्, क्लीबग्रहणं च कर्त्तव्यम्, लिङ्गानां त्रित्वादिष्टं चातुर्विध्यं च न सिद्ध्येत् । तेन न लिङ्गमुपलक्षणं, नापि वयः, स्त्रीग्रहणानर्थक्यप्रसङ्गात् । घटादिष्वव्याप्तेश्च । वयो हि प्राणिनां कालकृता शरीरावस्था, पौगण्डे चाव्याप्तिः । चतुष्टयहानिस्तूक्तैव । तस्मान्न वयः, नाप्युभयम् । उक्तसर्वदोषानुषङ्गात् । लिङ्गवयसोः प्रत्येकं त्रैविध्येन कार्यस्य षड्विधत्वप्रसङ्गाच्च । तदेतदत्यन्तसन्दिग्धमाचार्याणां "कार्यं बुद्ध्वा चतुर्विधम्" इति चेत्, न । इह उच्चावचे कार्ये सत्यपि पुरुषार्थोपयोगिनश्चतुर्विधस्योपादानात् । तत्र मनुष्याधिकारं शास्त्रमिति मनुष्या एवोपात्तास्तत्रापि नाग्निहोत्रादिवद्भक्तौ नियतलिङ्गवयस्क एवाधिकारी किन्तु सर्वोऽप्यधिक्रियत इति वक्तुमृषिणा स्त्रीबालप्रौढवृद्धा दर्शिताः । षण्ढस्य तु भक्त्यधिकारित्वेऽपि तस्य शुक्रशोणितसाम्यरूपत्वेन स्त्रीपुंसयोरेवान्तर्भाव इति मत्वा न पृथग्ग्रहणम् । तथा च शारीरे—( वाग्भ० शा० स्था० )

अत एव हि शुक्रस्य बाहुल्याज्जायते पुमान् । रक्तस्य स्त्री तयोः साम्ये क्लीबः, शुक्रार्त्तवे पुनः ॥ ( अ० १ श्लो० ५ )

अत एव महाभाष्ये—संस्त्यानप्रसवो लिङ्गमित्युक्तम् । संस्त्यानं संहतिरपचयः, प्रसूतिरुपचय इत्यर्थः । पुंग्रहणं तु बालप्रौढवृद्धत्वैरित्यत्र सवयस्कानां पुंसामेवोपादानान्न कृतम् । अन्यथा स्त्री इति पृथक् न ब्रूयात् । पौगण्डस्तु प्रौढान्तर्भूत इति न पृथगुपात्तः । तदुक्तम्—

गर्भस्थैः सदृशो ज्ञेयः आष्टमाद्वत्सराच्छिशुः । बाल आषोडशाद्वर्षात्पौगण्डश्चेति शब्दितः ॥ इति ॥

तस्मात्सुष्ठूक्तं कार्यं बुद्ध्वा चतुर्विधमिति । तदेतद्बुद्ध्वेत्यस्य गर्भे द्रष्टव्यम् । उक्तं चातुर्विध्यं ग्रन्थे स्पष्टयति सतीति । सती स्त्री, ध्रुवो बालः, पृथुः प्रौढः, प्राचीनः प्राचीनबर्हिः सवृद्धः । भीमादिवदुत्तरपदलोपः । सत्यादीनामितिहासैस्तस्य चतुर्विधस्य कार्यस्योक्तये चतुष्प्रकरणी कृतेत्यन्वयः ॥ १–२ ॥

अस्यामध्यायान्विभजति—

**सप्तभिश्च चतुर्भिश्च दशभिश्चाष्टभिस्तथा । मनुकन्यान्वयः सत्यै द्विषस्तत्पतितातयोः ॥ ३ ॥**

सप्तभिरिति । सतीतिहासः सप्तभिः । एवमन्यत् । अथ क्रमात्पादैरध्यायार्थानाह—मन्विति । सत्यै सतीप्रसङ्गार्थम् । तस्याः सत्याः पतिश्च तातश्च तौ । तयो रुद्रदक्षयोरित्यर्थः ॥ ३ ॥

**पत्या निषेधनं सत्या देहत्यागः पितुर्मखे । गणैर्दक्षमखध्वंसो ब्रह्मणा रुद्रसान्त्वनम् ॥ ४ ॥**

दक्षगृहं मा गच्छेति निषेधनम् । देहत्यागः सत्या इत्येव । गणाः प्रमथास्तैः । सान्त्वनं क्रोधहरणम् ॥ ४ ॥

**विष्णुना यज्ञसंसिद्धिध्रु वेणाऽऽराधनं हरेः । कामलाभो ध्रुवस्याऽस्माद्यक्षान्ताद्वारणं मनोः ॥ ५ ॥**

संसिद्धिः समाप्तिरर्थाद्दक्षयज्ञस्य । स्त्रियमुक्त्वा बालमाह—ध्रुवेणेति । कामलाभ इष्टप्राप्तिः अस्माद्धरेः । अन्तो नाशस्तस्मात् मनोः स्वायंभुवः । कर्त्तरि षष्ठी । मनुकर्तृकं वारणमित्यर्थः । ध्रुवस्येत्येव ॥ ५ ॥

**विष्णोर्ध्रु वपदप्राप्तिः पृथवे वेनसम्भवः । वेनबाहोः पृथूत्पत्तिः सूताद्यैः स्तवनं पृथोः ॥ ६ ॥**

विष्णुनादत्तं तद्ध्रुवमचलं पदं तत्प्राप्तिर्ध्रुवस्येत्यर्थः । प्रौढमाह—पृथव इति । पृथवे पृथोः प्रसङ्गार्थम् । सूताद्यैरित्यादिशब्दान्मागधवन्दिनौ ॥ ६ ॥

**पृथुना निग्रहो भूमेस्तत्तद्दुग्धस्य दोहनम् । जयोऽऽश्वमेधे शक्रस्य साक्षात्कारो मधुद्विषः ॥ ७ ॥**

तस्य तस्यौषधिच्छन्दोवलरूपस्य दुग्धस्य । जयः शक्रस्य पृथुनेत्येव ॥ ७ ॥

**सभामध्ये स्वधर्मोक्तिः कुमारेभ्यः परात्मधीः । तया वने स्वधर्माप्तिस्तपः पित्रे प्रचेतसाम् ॥ ८ ॥**

स्वधर्मो विष्णुसेवा । कुमाराः सनकाद्याः । परात्मधीः तत्त्वज्ञानम् । तया=परात्मधिया । पृथोरिति मण्डूकप्लुतिन्यायेन चतुर्षु वर्त्तते । वृद्धकार्यमाह—तप इति । पित्रे प्राचीनबर्हिषे । तत्प्रसङ्गार्थमित्यर्थः । रुद्रगीतमित्यन्तोऽध्यायार्थः ॥ ८ ॥

**ध्यात्मोक्तिर्नारदेनास्मै पापर्द्धिस्तां विनाऽऽत्मनः । कालाभिभूतिस्तच्छक्तेर्मुक्तिर्द्वन्द्वविपर्यये ॥ ९ ॥**

धीश्चात्मा च ध्यात्मानौ तयोरुक्तिर्बुद्ध्यात्मनोर्निरूपणमित्यर्थः । अस्मै=प्राचीनबर्हिषे । तां=धियं पुरञ्जनीरूपां विना तद्रहितस्यात्मनः पुरञ्जनरूपस्य पापर्द्धिर्मृगया । समासगतमपि धीशब्दं बुद्ध्या विच्छिद्य तच्छब्देन परामृशति । अथ शब्दानुशासनम् । केषां शब्दानामितिवत् । पुरञ्जन्यनुनयस्तु तत्प्रसङ्गात् । तस्य=स्त्रीसङ्गिनः पुरञ्जनस्य शक्तेः कालेन तिरस्कारः । "एवं कृपणया बुद्ध्या" इत्येतदन्तमध्यायार्थं मत्वोक्तम् । द्वन्द्वानि शीतोष्णादीनि, तेषां विपर्यये=अस्वीकारे सति । यद्वा । द्वन्द्वेषु विपर्यये जन्मान्तरेऽन्यथाभावे सति मुक्तिः आत्मन इत्येव ॥ ९ ॥

**पुरञ्जनादिव्याख्यानं तपःसिद्धिः प्रचेतसाम् । दक्षमुत्पाद्य निर्वाणमध्यायार्थस्पृशोऽङ्घ्रयः ॥ १० ॥**

निर्वाणं प्रचेतसामित्येव । दक्षोत्पत्तिस्तु पूर्वाध्यायशेषः । अत एव दक्षमुत्पाद्येति ल्यबन्तस्योपसर्जनत्वेन निर्देशः ॥ १० ॥

नन्विह प्रकरणे प्राचीनबर्हिर्नायक इत्युक्तम् । तच्चायुक्तम् । उपक्रमोपसंहारयोः प्रचेतसामेव प्रतीतेः । अतः सन्दंशन्यायेन तेषामेव प्रकरणार्थत्वमस्तु न प्राचीनबर्हिष इति चेत् तत्राह—

**उपक्रमोपसंहारौ प्रचेतोभिस्तदात्मजैः । तथाप्यध्यात्मपारोक्ष्याच्छ्रैष्ट्यं प्राचीनबर्हिषः ॥ ११ ॥**

उपक्रमोपसंहाराविति । यद्यपि प्राचीनबर्हिषः पुत्रैः प्रचेतोभिः प्रकरणस्योपक्रमोपसंहारौ इति दृश्यते । तथापि प्राचीनबर्हिष एव श्रैष्ठ्यम् । कुत आत्मपारोक्ष्यात् । अध्यात्मस्य तु तदधिकारेणैव परोक्षतयोपदेशात् "बर्हिष्मन्नेतदध्यात्मं पारोक्ष्येण प्रदर्शितम्" इत्युक्तम् ॥ ११ ॥

नन्वेवं किं प्रचेतसां वृत्तवर्णनेनात आह—

पुण्यं पुत्रस्य पितुरप्यन्तःकरणशुद्धये । भवेदिति द्योतयितुं प्रचेतोवृत्तवर्णनम् ॥ १२ ॥

इति श्रीभागवते चतुर्थः स्कन्धः ॥

पुण्यमिति । पुत्रस्य पुण्यं तस्यैवान्तःकरणशुद्धये स्यादिति सिद्धमेव । किन्तु तत्पितुरप्यन्तःकरणशुद्धये भवेदिति द्योतयितुं प्रचेतसां तपःकथनमित्यर्थः । तथाच कात्यायनः—

पुत्रेण वसुतामेति पौत्राद्रुद्रत्वमाप्नुयात् । आदित्यत्वं प्रपौत्रेण तस्मादेवमुपास्यताम् ॥ इति ॥

विवृतं चेदमाचार्यैः सूर्यस्तुतौ "मर्त्यः प्रेत्य द्युषु प्राग्वसति वसुवपुः पुत्रपुण्येन पुण्यो धर्मिष्ठः पौत्रधर्मैः"इत्यादिना । तस्मात्पुत्रपुण्येन स्वपुण्येन च शुद्धात्मनो राज्ञो ज्ञानदीप्तिर्जातेति सिद्धम् ॥ १२ ॥

इति श्रीमधुसूदनसरस्वतीकृतायां हरिलीलामृतटीकायां चतुर्थः स्कन्धः ।

श्रीहरिः शरणम् ॥



परिशिष्टम् ३

[ अकारादिक्रमेण ]

# श्रीमद्भागवतचतुर्थस्कन्धीयश्लोकानुक्रमणिका

